॥ श्रीगणेशाय नमः ॥

# पाठभेदादिविषयकविचारः

मॅ = मॅक्समुल्लरमुद्रितपुस्तके । एतस्मात्पूर्वं यत्र *एतच्चिह्नं दत्तं तत्र तादृशः पाठः मॅक्समुल्लरमहाशयेन लिखितपुस्तकेषु तथानुपलम्भात् स्वयमभ्यूहित इति मन्तव्यम् ॥

मु = मुम्बापुरीमुद्रितपुस्तके ।

§ = सर्वेषु लिखितपुस्तकेषूपलभ्यते ।

× = सर्वेषु लिखितपुस्तकेषु नास्ति ।

## ॥ षष्ठं मण्डलम् ॥

( चतुर्थाष्टकभाष्यसंशोधनार्थमुपयुक्तानि लिखितपुस्तकानि–ख, घ, ज्ञ, झ, त, न, भ, य, र, श )

[ ६. १ ] १. १० **पूर्वमन्त्रे**—ज्ञ-झ-त-न-भ-र-श-मु । पूर्वे मन्त्रे–मॅ ॥ ३. ८ **उभयासः**—मॅ-मु । त्वामुभयासः–§ ॥ ४. ४ **अगमय इति वा** –मॅ-मु । गम इति–ख; अगमय इति–ज्ञ; गमय इति–झ-त-न-भ-य-र; गमय इति वा– श ॥ ५. २ **समिधा वा**—घ-श-*मॅ-मु । वा समिधा–ज्ञ-झ-त-न-भ-र ॥ ६. ६–७ **अत्र भरतस्वामी...संबुद्ध्यन्तं चकार** । सामवेदस्य भरतस्वामिकृतं भाष्यमुपलभ्यते । किंतु सामवेदे प्रकृतो मन्त्रो नास्ति । अयं मन्त्रः तैत्तिरीयब्राह्मणेऽपि ( ३. ६. १०. ५ ) दृश्यते । तत्र भट्टभास्करमिश्रैः ‘ वसुताते ’ इत्येकपदं संबुद्ध्यन्तं कृत्वा व्याख्यातम् । सायणाचार्यैरपि तत्र तथैव व्याख्यातम् ॥

[ ६. २ ] ९. ६ **तादृशः पुत्र इव**—ख-झ-न-भ-श । तादृशः पुत्र इति–ज्ञ-त-र-मॅ-मु ॥ ९. १८. **°श्रितमिति वा इति**—न-भ-य । °श्रितमिति–त२-मॅ । धामन्ते विश्वमिति–मु ॥ ९. २४. **अत्सीति**—ज्ञ-न-भ-श-*मॅ-मु । असीति–ख; अपीति–घ; अशीति–त ॥ ९. २७. **भक्षयन्ति**—ख-घ-ज्ञ-झ-त-न-भ-य-श । तक्षंति–र-मॅ-मु ॥ १०. १९. **दुर्गमनानि च**—ख-झ-न-भ-य-र । दुर्गमनानि–घ-त-श-मॅ-मु ॥

[ ६. ३ ] ११. १३. **शान्तश्च**—*मॅ-मु । श्रांतश्च–ख-त-न-भ; शातो–घ; श्रांतो–श ॥ १२. १. **गमनसाधनभूतो**—ख-झ-न-भ-य । गमनभूतो–घ-ज्ञ-त-र-श-मॅ-मु ॥ **स्प्रष्टुमशक्यत्वान्**—ख-ज्ञ-*मॅ-मु । प्रष्टुमशक्यत्वात्–झ-त-न-भ-य-र-श ॥ १२. ६. **मूर्तभूतं सर्वम्**—ख-घ-ज्ञ-झ-त-न-भ-श-मु । मूर्तंभूतं–र-मॅ ॥ १२. ११. **बाणादेः**—ख-घ-झ-न-भ-श-मु । वाणादेः–ज्ञ-त-र-मॅ ॥ १२. २३. **य ईं योऽयम्**—ख-झ-न-भ-य-र-श । य ईञ्यो यं– त । य ईमयं–घ-मॅ-मु ॥

[ ६. ४ ] १४. १२. **प्रबुद्धो**—*मॅ-मु । प्रवृद्धो–§ ॥ १५. १२. **यष्टृभिर्दीयमानम्**—न-भ-*मॅ-मु । यष्टभिर्दीयमानं–ख; यज्वभिर्दीयमानं–घ-ज्ञ-त; यज्ञे त्रीयमाणं–श ॥ १५. १७. **अरातीः अरातिरदाता**—ज्ञ-न-भ-*मॅ-मु । अरातीरराति:–घ; अरातीररातिवदातां–त; अरातीररातिवदतो–श ॥ १५. १८. **°माचक्षाणानाम°**—ज्ञ-न-भ-*मॅ-मु । °माचक्षाणाम°–त-श ॥ १५. २०. **ह्वरते°**—मॅ । ह्रियते°–ख; ह्वरयते°–ज्ञ-त-न-मु; हूयते°–झ-भ; ह्वयते°–र-श ॥ १६. ३. **दिग्भागा°**–न-भ-*मॅ-मु । दिगंमा°–ज्ञ; दिग्नामा°–त; दीप्तोग्निः– श ॥

[ ६. ५ ] १७. १५. **वैश्वानरात्मना**—ख-ज्ञ-न-भ । विश्वान्तरात्मना–मॅ-मु । वैश्वात्मना–र ॥ १८. १२. **तप्तृतमाग्ने**—ख-झ-भ-र । तपस्विन्नग्ने–घ; तपस्वितमाग्ने–ज्ञ-त-न-श । तृप्ततमाग्ने–मॅ-मु ॥ १९. १५. **ते त्वदीयम्**—ख-घ-मु । त्वदीयं–त-मॅ ॥

[ ६. ६ ] १९. २३. **उपगन्तव्यम्**—ख-ज्ञ-न-भ-श-*मॅ । उपमंतव्यं–घ-त-मु ॥ २०.१७. **बहूनि काष्ठानि**—घ-ज्ञ-झ-न-भ-य । तुविकाष्ठानि–घ-त-श । बहुकाष्ठानि–र-मॅ-मु ॥ २१. १०. **असुरैरपहृतासु**—ख-झ-न-भ । असुरैरप्रहृतासु–र । असुरप्रहृतासु–ज्ञ-त-मॅ-मु ॥ २१.११. **यथान्यै-र्दुःसह°**—ख-ज्ञ-न-भ-*मॅ-मु । यथान्ये दुःसह°– त ॥

[ ६. ७ ] २३. १. **अभि अभितः**—ज्ञ-त-*मॅ-मु । अभितः–ख-न-भ; अभि–घ-श ॥

[ ६. ८ ] २५. १२. **कामानां वर्षितुः**—ख-घ-भ । वर्पितुः–ज्ञ-झ-त-न-र-श-मॅ-मु ॥

[ ६. ९ ] २८. २. **रात्रिवचनः**—ख-ज्ञ-झ-त-न-भ-य-मु । रात्रिवाचनः–र । रात्रिवाचकः–श-मॅ ॥ २८. ३. **°द्रञ्जयन्तौ**—ख-न-भ-*मॅ-मु । °द्रक्षयंतौ–घ-त-श ॥ २८. २३. **तन्तुस्था-नानि**—मॅ-मु-§ । उत्तरवाक्ये 'ओतुस्थानीयानि' इतिवदत्रापि 'तन्तुस्थानीयानि' इति युक्तम् ॥ २९. ५. **वदति**—ख-ज्ञ-न-भ-श-*मॅ-मु । वेदति–त ॥ २९. ७. **कर्माणि**—*मॅ-मु । कर्माणि स एव–§ ॥ २९. ८. **वदाति वदेत्**—ख-घ-ज्ञ-त-न-श । वदाति वदति वदेत्–मॅ-मु ॥

[ ६. १० ] ३१. ११. **द्विपदान्तम् इति**—ज्ञ-न-भ-य । द्विपदांतं–ख-त-श-मॅ-मु ॥ ३२. ३. **पादपूरणम्**—मॅ-मु । यास्कनिरुक्ते भाष्यलिखितपुस्तकेष्वपि प्रायशः सर्वत्र 'पादपूरणम्' इत्यस्य स्थाने 'पदपूरणम्' इति पाठः उपलभ्यते ॥ ३२. २२. **तिरः तिरस्कुर्वन्**—ख-झ-न-भ-य । तिरस्कुर्वन्–घ-त-र-श-मॅ-मु ॥

[ ६. ११ ] ३४. १९. **चिद्धि इत्येतत्**—ख-ज्ञ-झ-त-न-भ-र-मु । चिदित्येतत्–श-मॅ ॥ ३४. २२. **मधुवत्**—§-मु । मधुमत्–मॅ ॥ ३५.८. **यं पञ्च**—घ-*मॅ-मु । पंच–ख-ज्ञ-झ-त-न-भ-र ॥ ३५. ९. **शोभनहविर्लक्षणान्नमग्निम्**—§ । शोभनहविर्लक्षणं यमग्नि–मु । शोभनहविर्लक्षणमग्निं–मॅ ॥ ३५. १५. **आह्रियत**— ख-ज्ञ-न-भ*-मॅ-मु । आसाद्यत–घ; आहियत–त; आस्त्रियत–श ॥

[ ६. १२ ] ३६. २०. **त्वे त्वयि**—§-मॅ-मु । अत्र 'त्वे' इति पदस्य पुनर्ग्रहणमनावश्य-कम् ॥ ३७.७. **अद्यौत् द्योतते**—ख-ज्ञ-झ-न-भ-य-र-मु । अद्यौत् ते– त; अद्यौत्–घ-श-मॅ ॥ ३८. ३. **स्पन्द्रः स्पन्दनवान्** । मॅक्समुल्लरमहाशयैः सर्वत्र ( १. १८०. ९; ५. ५२. ३; ८; ८७. ३; ६. १२. ५ ) स्पन्द्रशब्दे पकारस्थाने यकारः पठितः । परंतु वैदिकैः सर्वत्र पकार एव पठ्यते । नागरीलिपिलिखितपुस्तकेषु प्रायेण यकारपकारयोः साम्यं दृश्यते । किंतु ग्रन्थलिप्यां तयोर्लेखने साम्यं नास्ति । यद्यपि प्रकृते ग्रन्थलिपिलिखितं भाष्यपुस्तकं नोपलब्धमस्माभिः तथापि ऋ. सं. १. १८०. ९; १०. ४२. ५ अनयोर्मन्त्रयोः भाष्ये ग्रन्थलिपिलिखितपुस्तकेषु पकारः स्पष्टं दृश्यते । प्रथममण्डले ( १. १८०. ९ ) संहितापदपाठयोः भाष्ये च 'स्पन्द्रा' इत्यस्य स्थाने 'स्यन्द्रा' इति मुद्रितम् । तत्र पकारः पठनीयः । मु-पुस्तकेऽपि सर्वत्र पकारविशिष्ट एव पाठः ॥ ३८. १३. **पाहीति**—ख-ज्ञ-न-भ-*मॅ-मु । आयाहीति–घ; यहीति–श ॥ ३८. १४. **गमय प्रापय**— ख-झ-त-न-भ-य-र । गमय–घ-श-मॅ-मु ॥

[ ६. १३ ] ३९. २०. **एतन्नाम्नोऽसुरस्य वा**—ख-झ-न-भ-य। एतन्नाम्नोऽसुरस्य—घ-ञ-त-श-मॅ-मु ॥ ४०. २. **यज्ञैः यजनसाधनै°**—ञ-मु। यज्ञैः यजमानसाधनै°—घ-मॅ। यज्ञसाधनै°—ख-झ-न-भ-य; यजमानसाधनै°—त; यज्ञमानसाधनै°—र; यजमानः साधनै°—श ॥ **वेद्याम्**—ख-घ-ञ-झ-त-न-भ-र। वेद्यायां—श-मॅ-मु ॥ ४०. २०. **संपूर्तिम्**—ख-घ-झ-न-भ-य-श। पूर्ति—ञ-त-र-मॅ-मु ॥

[ ६. १५ ] ४३. ८. **आद्यं नवर्चम्**—ञ-झ-न-भ-श। आज्यं नवर्चं—त-र। नवर्चं—मॅ-मु ॥ ४८. २७. **तस्मात्**—ख-ञ-झ-त-न-भ-र। तस्मात्त्वं—श-मॅ-मु ॥ ४८. २९. **हव्या**—मॅ-मु-× ॥ ४९. १९. **गुग्गुल्वादि°**—ञ-न-मु। गुल्गुल्वादि°—त-भ-मॅ ॥ **°संभारेणोपेतम्**—ख-ञ-झ-त-न-भ-य-र। °संभरणोपेतं—घ-श-मॅ-मु ॥ ४९. २०. **गुग्गुलूर्णा°**—ञ-मु। गुल्गुलूर्णा°—त-न-भ-मॅ ॥

[ ६. १६ ] ५२. १२. **अमरणधर्मः (?)**—मॅ-मु। 'धर्मादनिच् केवलात्' (५. ४. १२४) इति पाणिनिसूत्रेण 'अमरणधर्मा' इति भाव्यम् ॥ ५२. २०. **प्रयजे**—*मॅ। प्रयक्षे—ख-ञ-त-भ-श-मु ॥ ५६. १. **स हि स खलु**—ख-घ-भ-श-मु। स हि खलु—ञ-त-न-र-मॅ ॥ ५६. ३. **महित्वना**—ख-घ-न-श-*मॅ-मु। महित्वभा—त; महित्वेन—भ ॥ ५६. १४. **प्रयच्छत**—घ-ञ। प्रयच्छ—त-न-भ-मॅ-मु ॥ ६०. ८. **°मुपगच्छन्ति**—ख-घ-झ-न-भ-श-मु। °मुपागच्छंति—त-र-मॅ ॥ ६२. १६. **देवानां होतारम्**—ख-घ-झ-न-भ-य-श। होतारं—ञ-त-र-मॅ-मु ॥

[ ६. १७ ] ६३. १८. **पञ्चदशर्चं द्वितीयम्**—ख-घ-झ-न-भ-य-श-मु। द्वितीयं—त-र-मॅ ॥ ६४.२. **पणिभिरपहृतम्**—ख-झ-न-भ-य। पणिभिराहृतं—घ-त-र-श-मॅ-मु ॥ ६४. ४. **अमित्रम्**—ख-ञ-झ-त-न-भ-य-र। अमित्रं यं—श। अमित्रियं—घ-मॅ-मु ॥ ६५. ७. **न्यूनतारहितम्**—मॅ-मु। न्यूनरहितं—ख-ञ-भ; नूनरहितं—झ-त-र; नूनं रहितं—न; न्यूनतारहितः—श ॥ ६७. १२. **येन**—ख-घ-ञ-झ-त-न-भ-य-र-श-मु। त्वं येन—त४-मॅ ॥ ६७. २२. **अगच्छन्**—*मॅ। गच्छन्—§। गच्छन् भवति पूषा विष्णुश्च—मु ॥ ६९. २. **शतहिमाः शतसंवत्सरान्**—घ-ञ-श-मु। 'शत... संवत्सरान्' नास्ति—ख-झ-त-य-र। शतहिमाः शतं संवत्सरान्—मॅ ॥

[ ६. १८ ] ६९. १४. **वातेर्वातम्**—*मॅ-मु। वातेर्वाः—ख-झ-भ; वातेर्वा—ञ-न-भ; वातेर्वासं—त-र ॥ ७२. २. **हिंसितवान्**—घ-ञ। हिंसितवानसि—त-न-भ-श-मॅ-मु ॥ ७२. ३. **हिंसितवान्**—घ-ञ। हिंसितवानसि—त-न-भ-श-मॅ-मु ॥ ७२. २०. **करोति च तथा**—झ-न-भ। करोति तथा च—घ-ञ-त-श-मॅ-मु ॥ ७३. २३. **इन्द्र त्वं धृषता**—ख-झ-न-भ। इंद्र धृषता—घ-ञ-त-र-श-मॅ-मु ॥

[ ६. १९ ] ७५. १. **भृत्यादीनाम्**—ख-झ-न-भ-र। भृत्यादीनां—ञ-त-मॅ-मु ॥ ७७. १९. **दक्षिणभागात्**—ख-झ-न-भ-य। दाक्षिणात्—घ-ञ-त-र-श-मॅ-मु ॥ ७८. २३. **बहुभिः**—§-मु। पुरुभिः—मॅ ॥

[ ६. २० ] ७९. १८. **दिवो न दिवे सूर्यायेव**—ख-न-भ-य। दिवो न सूर्यस्येव—घ-ञ; दिवे सूर्यायेव—त-र; दिवो न सूर्य इव—श। दिवो न सूर्यायेव—मॅ-मु ॥ ७९. २२. **हन् अहन्**—ख-ञ-झ-न-भ-य-र-मु। हन्—घ-त-श-मॅ ॥ ८०. १०. **अपाद्रवन्**—घ-श-*मॅ-मु। ८०. २२. **तथा चोक्तं–कुत्साय...**। अयं सार्धः श्लोकः कुत्रत्य इति न ज्ञायते ॥ ८०. २३. **अहंस्ततः**—

§-मु। अहंस्ततश्च—मॅ॥ ८१. २१. **बहुवञ्चनम्**—ञ-भ-*मॅ-मु॥ ८३. १४. **पक्कवान्**। पचनवान्—§। पक्तवान्(?)—*मॅ-मु। 'पचो वः' (८. २. ५२) इति पाणिनिसूत्रेण 'पक्कवान्' इति भाव्यम्॥

[६. २१] ८४. ८. **बहुवञ्चनस्य**—त-भ-*मॅ। बहुवचनस्य—ख-ञ-झ-न-र-श-मु॥ ८४. २४. **उक्तानि प्रसिद्धानि**—श। उक्तानि—घ-ञ; उक्तप्रसिद्धानि—ख-त-मॅ-मु॥ ८५. २६. **नियोज्येन**—ख-ञ-झ-त-न-भ-र। घ-श-पुस्तकयोरेतन्नास्ति। योज्येन—मॅ-मु॥ ८६. १७. **पुरुधियम्**—ञ-त-न-*मॅ-मु॥ ८७. ६. **मदीया वाचः स्तुतिरूपाणि वचांसि**—मॅ-मु; घ-वर्जेषु लिखितपुस्तकेषु च। 'वार्चम्' इति पदपाठः। मदीयां वाचं स्तुतिरूपां—घ॥ ८७. ९. **उपक्षपणाय**—ख-ञ-न-भ। उपक्षेपणाय—त-मॅ-मु॥

[६. २२] ८८. २२. **जराहानिरहितः**—झ-न-र-*मॅ-मु॥ ८९. २२. **त्यं तम्**—ख-घ-झ-न-भ-र-श-मु। त्यं—त-मॅ॥ ९०. १७. **अन्तरिक्षं च**—ख-झ-न-भ-य। अन्तरिक्षं—घ-ञ-त-र-श-मॅ-मु॥ ९१. ५. **संयतीम्**—*मॅ-मु। एतन्नास्ति ख-घ-पुस्तकयोः; सर्याति—ञ; संयति—झ-त-न-र; सचिवेन—श; संचनी—त४; संयनी—ग्वालियरलिखितपुस्तके॥ ९१. १७. **अद्यागमस्य**—*मॅ-मु। मद्यागमनस्य—ख-ञ-झ-त-न-भ-र; मद्यद्रिगिति—श॥

[६. २३] ९२. १२. **येऽरयः**—ख-ञ-झ-त-न-भ-र। चारयः—श। अपारयः—*मॅ-मु॥ ९३. १९. **त्वामुद्दिश्य सुते सोमेऽभिषुते सति**—ञ-मु। त्वं—घ-त-न-भ-श-मॅ॥ ९४. ७. **प्र अश्नुवन्तु**—*मॅ-मु-×॥ **पुरुहूत बहुभिराहूत इन्द्र**—मॅ-मु। 'पुरुऽहूतम्' इति पदकाराः पठन्ति॥

[६. २४] ९६. ११. **यथा**—*मॅ-मु-×॥ ९६. १२. **यत्र नियतैः**—ञ-*मॅ। यस्य नियते—ख-झ-न-भ-र; यत्र नियतेः—घ; यत्र नियंते—श। तत्र नियतैः—मु॥ ९६. २८. **स्वप्राधान्येन**—ञ-त-न-भ-श-मु। स्वप्रधान्येन—त४-मॅ॥ ९६. ३०. **स्मृते**—ञ-*मॅ-मु। स्मृतौ—त-न-भ-य-श॥ ९८. १. **सुगमनाः**—मॅ। अमुगमनाः—ख-ञ-झ-त-न-र-मु; अमुरागमनाः—घ-श; अमुतागमनाः—भ॥ ९८. १७. **समुच्चयार्थः**—ञ-मु। समुच्चयः—ख-झ-त-न-भ-मॅ॥

[६. २५] १००. ११. **स त्वया**—ख-झ-न-भ। अतस्त्वया—ञ-त-श-मॅ-मु॥

[६. २६] १०२. २१. **प्रतिपालयते**—*मॅ। प्रतिपालयन्त—ख-झ-भ-र; मां प्रतिपालयेति ञ; प्रतिपाल्यत—त; प्रतिपालयति—न; प्रविभालयते—श। प्रतिभालयते—मु॥

[६. २७] १०५. १३. **शुभं कर्म चकार**—ख-न-भ-य। शुभं चकार—ञ-त-श-मॅ-मु॥

[६. २८] १०७. २७-२८. **संततिसहिताः......भवेयुः**—घ-श-मॅ। संततिसहिताः स्युर्भवेयुः इन्द्रायेन्द्रार्थं पूर्वीर्बह्वीः उपसो दिवसान् सर्वेषु दिवसेष्वित्यर्थः दुहानाः क्षीरदाः क्षीरं दोह्माना भवेयुः—ख-ञ-झ-त-न-भ-य-र-मु॥ १०७. २८. **दोग्ध्र्यः**—घ। दोह्मानाः—मॅ-मु इतरेषु च॥ १०८. २०. **नाक्रामतु**—ञ-त। नाक्रमतु—घ-न-भ-मॅ-मु॥ १०९. १. **रेणुकस्य रेणोः**—ख-ञ-झ-त-न-भ-य-र। रेणोः—घ-श-मॅ-मु। पदकाराः 'रेणुऽकंकाटः' इत्यत्र रेणुशब्दोत्तरमवग्रहं कुर्वते। परंतु 'कटिर्भेदनकर्मा' इति भाष्यपर्यालोचनया 'रेणुक-काट' इति पदद्वयसमासेन निष्पन्नमिदं समस्तं पदमिति भाष्यकाराणां मतमिति विज्ञायते। एतत्पर्यालोचनया बहुषु पुस्तकेषूपलभ्यमानत्वाच्च 'रेणुकस्य रेणोः' इति पाठोऽ-

स्माभिः स्वीकृतः। मॅक्समुल्लरमहाशयैरप्युपलब्धोऽयं पाठः ॥ १०९. ११. **संस्क्रियमाणत्वात्**—घ-श। संश्रयणत्वात्—ख-ज्ञ-त-न-भ-र-मॅ-मु ॥१०९. १९. **मेदयथ स्नेहयथ**—ख-घ-झ-न-भ-य। मेदयथ—त-र-मॅ मु ॥ १०९. २०. **अश्लीलमपि**—ख-झ-न-भ-य-र। अमंगलांगमपि—घ-श। अमंगलमपि—मॅ-मु ॥ ११०. ३. **भवत**—ज्ञ-त-न-भ-*मॅ-मु। भवेयुः—घ; भवेत्—श ॥

[ ६. २९ ] १११. १३. **हन्तर्यस्मिन्**—त-न-भ-*मॅ। हंतरि यस्मिन्—ज्ञ-मु। व्यत्ययेन हंतेर्यस्मिन्—श ॥ १११. १४. **वर्तमाना नृहिता**—ख-झ-न-भ-य। वर्तमानान् हिता—त-र। वर्तमाना—ज्ञ-श-*मॅ-मु ॥ १११. १६. **अभिवर्षति**—ज्ञ-त-न-भ-*मॅ-मु। अभिवर्षयति—श ॥

[ ६. ३० ] ११४. ५. **संबन्धि**—ख-घ-ज्ञ। संबंधिकं—श-मॅ-मु ॥

[ ६. ३१ ] ११५. ६. **पृष्ठ्यस्य**—ख-न-भ-*मॅ-मु। पृष्ठ्य— ज्ञ-त-श ॥ ११५. १८. **पौत्रे**—ख-घ-भ। पौत्रेषु—झ-त-न-र-मॅ-मु। पुत्रेषु—श ॥ ११६. ६. **साहाय्यार्थम्**—*मॅ-मु। सहार्थे—ख; सहायार्थे—घ-ज्ञ-न-भ-श ॥ ११६. ८. **दंश दशने**—भ-मु। दन्श दशने—*मॅ। दश दशने—ख-न-श; ददंशने—ज्ञ-त ॥ ११६. ११. **तत्साहाय्यार्थम्**—*मॅ-मु। सहायार्थे—ख-त-न-भ-श; साहायार्थे—ज्ञ; तत्सहार्थे—त४ ॥

[ ६. ३२ ] ११७. ६. **अपूर्व्या इत्यनुक्रान्तम्**—न। अपूर्वेत्यनुक्रांतं—ख-न-भ; अपूर्व्येत्यनुक्रमणिका—ज्ञ; 'अपूर्व्या...क्रान्तं' नास्ति—झ-त-य-र-श-मॅ-मु ॥ ११७. १५. **त्रिविधम्**—न। विविध°—ख-ज्ञ-त-भ-य-श-मॅ-मु ॥ **शत्रूणामीरयित्रे**—ख-न-भ-य। शत्रूणां मारयित्रे—ज्ञ-त-श-मॅ-मु। ऋ. सं. ६. ४५. १३; ४९. १२. द्रष्टव्यम् ॥ ११७. २२. **प्राकाशयत्**—ज्ञ-न-*मॅ-मु। प्रकाशयत्—ख-घ-झ-भ-र-श ॥ ११८. १६. **वडवाभिः**—ख-न-भ-*मॅ-मु। प्रजाभिः—घ-ज्ञ; वहवाभिः—न ॥

[ ६. ३३ ] ११९. ७. **वर्षितः**—घ-श। वर्षयितः—ख-ज्ञ-त-मॅ-मु ॥ ११९. २५. **उभयान् वक्ष्यमाणान् उभयविधान्**। '**वक्ष्यमाणान् उभयान् उभयविधान्**' इति पठनीयम्। एवमेव घ-त-य-र-पुस्तकेषु। वक्ष्यमाणान् उभयान् उभयविधान् द्विप्रकारान्—ख-ज्ञ-झ-न-भ-श। उभयान् उभयविधान्—मॅ-मु ॥ १२०. २१. **गवां संभक्तृतमाः सन्तः**—ज्ञ-मु। गवां सत्कृततमाः—ख-घ-भ-श। 'गवां...सन्तः' नास्ति—झ-त-न-र-मॅ। 'गवां संभक्तृतमाः' इति मॅक्समुल्लरमहाशयः संभावयति स्म ॥

[ ६. ३४ ] १२०. २४. **त्रैष्टुभमैन्द्रम्**—ख-भ। ऐंद्रं त्रैष्टुभं—ज्ञ-मु। एतन्नास्ति-त-य-श-मॅ ॥

[ ६. ३५ ] १२३. ३. **दाः दद्याः**—ख-ज्ञ-भ-मु। दाः—त-य-श-मॅ ॥ १२३. १५. **त्रिधातूः**—झ-त-र। त्रिधातूनां—घ-भ-श-मॅ-मु; त्रिधातून्—ज्ञ ॥

[ ६. ३७ ] १२६. २०. **सुष्ठु अरणीयम्**—घ-न-श-*मॅ। सुष्ठु वरणीयं—ख-ज्ञ-झ-त-भ-र-मु ॥ १२७. १३. **ततः पुरैव**—ज्ञ-न-*मॅ-मु। तत्रैव—ख-झ-भ-य; ततः पुत्रैव—त-र ॥

[ ६. ३८ ] १२९. ९. **उक्थानि शस्त्राणि**—ख-घ-ज्ञ-न-भ-य। उक्थशस्त्राणि—त-र-श-मॅ-मु ॥

[ ६. ३९ ] १२९. २६. **मन्मानः**—ख-ज्ञ-झ-न-भ। मन्मनः—त-र-मॅ। मन्मः—मु ॥ १३०. ११. **युक्तश्च**—*मॅ-मु। च युक्तश्च—ख-ज्ञ-त-न-भ; च युजानः युक्तश्च—घ-श ॥ **सानुं समुच्छ्रितम्**—ख-घ-झ-न-भ-श। सानुमुच्छ्रितं—ज्ञ-त-र-मॅ-मु। सानु समुच्छ्रितं—य ॥

[ ६. ४० ] १३२. ७. **श्रपणसाधनाः**—त४-मॅ-मु । श्रयणसाधनाः–ख-झ-त-न-भ-र ॥

[ ६. ४१ ] १३३. २७. **तया**—मॅ-मु । पूर्वं तया–§ ॥ १३४. १८. **यज्ञम्**—ख-घ-ज्ञ-न-भ-य-मु । त-श-मॅ पुस्तकेषु एतन्नास्ति ॥

[ ६. ४२ ] १३६. १४. **प्रभर संप्रहर प्रयच्छेति यावत्**—मॅ-मु । 'प्रयच्छेति यावत्' इत्युक्तत्वात् 'संप्रहर' इत्यनुपपन्नमिव प्रतिभाति ॥

[ ६. ४३ ] १३६. १८. **निष्केवल्ये**—ज्ञ-न-र-श-मु । निष्केवल्येऽपि–मॅ ॥

[ ६. ४४ ] १३९. १७. **बृहत्त्वम्**—ख-झ-न-भ । बहुत्वं–ज्ञ-त-र-श-मॅ-मु ॥ १३९. २१. **यस्मिंश्चेन्द्रे**—झ-त-न-र-*मॅ-मु । यस्मिन्निंद्रे–ख-घ-ज्ञ-भ-श ॥ १४०. १०. **देवासो देवाः**—ख-झ-न-भ-य । देवाः–घ-ज्ञ-त-र-श-मॅ-मु ॥ १४५. २२. **सूर्येऽन्तर्ज्योतिः**—न-भ-*मॅ । सूर्यो ज्योतिः–श । सूर्ये तज्ज्योतिः–मु । **त्रितेषु त्रिस्थानगतेषु**—ख-ज्ञ-झ-त-न-भ-य । त्रिषु त्रिस्थानगतेषु–श । त्रिस्थानगतेषु–मॅ-मु ॥ १४६. ११. **दशैतानध्वर्युः...गृह्णाति**—मॅ-मु-§ । शाङ्खायनब्राह्मणे (१४.२) 'दश प्रातःसवने अध्वर्युर्ग्रहान् गृह्णाति' इति पाठः ॥

[ ६. ४५ ] १४७. २०. **अस्मभ्यम्**—*मॅ-मु । अस्मान्–§ ॥ १४८. २८. **तन्तस**—न-श-*मॅ-मु । ततसाय्य–ख-ज्ञ-झ-त-भ-र ॥ १५०. २५. **सीमिमाः**—ख-झ-न-भ-य । सी सर्वतः–ज्ञ-मु । सीमयं–मॅ ॥ १५१. ११. **बहुविधप्रज्ञ वा इन्द्र**—ज्ञ-न-भ-*मॅ-मु । बहुविधप्रज्ञवन्निंद्र–ख; बहुविधप्रज्ञः वेंद्र–त; बहुविधप्रज्ञानेंद्र–श ॥ १५३. ५. **तत् तम्**—घ-ज्ञ-*मॅ-मु । तत्–ख-त-न-भ ॥

[ ६. ४६ ] १५३. २०. **आह्वयामः**—मॅ-मु । आह्वयामहे–ख-झ-न-भ; आह्वयोमे–घ; आह्वयाम–ज्ञ-त-र-श ॥ १५३. २२. **यत्राश्वः क्रान्त्वा**—*मॅ-मु । यास्वश्वः क्रांतत्वात्–ज्ञ; यथाश्वः क्रांतत्वात्–त; यथाश्वः क्रांत्वा–ख-झ-न-भ-र; अश्वः क्रांत्वा–श ॥ १५४. १३. **यां कां च...कौषीतकिभिराम्नातम्**—इयं श्रुतिः नोपलभ्यते ॥ १५५. २४. **स्वभूतम्**—ज्ञ । स्वरूपं–घ-त-न-भ-श-मॅ-मु ॥ १५६. १८.**शत्रुप्रेरितम्**—त२-*मॅ-मु । सर्वर्षिप्रेरितं–ख-झ-भ; सरोप्रेरितं–त-न-र; सर्वेषां प्रेरितुं–य ॥ १५७. ६. **कदेत्याह**—ख-झ-न-भ-य । कदेत्यत आह–ज्ञ-त-र-श-मॅ-मु ॥ **पर्णिनः**—*मॅ-मु । यद्यदा पर्णिनः–ख-घ-झ-त-न-भ-र-श ॥

[ ६. ४७ ] १५८. २१. **त्रिष्टुम्महि द्विपदा**—न-भ-य । त्रिष्टुप् द्विपदा–त१-२. । 'त्रिष्टु...पदा' नास्ति–ज्ञ-श-मॅ-मु ॥ १५९. १६. **षण्मोर्वीरंहस...चौषधयश्च** । शतपथब्राह्मणे 'षण्मोर्वीरंहसस्पान्तु अग्निश्च पृथिवी चापश्च वाजश्चाहश्च रात्रिश्च' (१. ५. १. २२) इत्येवं पाठः । ऋ. सं. १०. १४. १६. द्रष्टव्यम् ॥ १६२. ३. **जुषस्व सेवस्व**—ख-झ-न-भ-य । जुषस्व–घ-ज्ञ-त-श-मॅ-मु ॥ १६३. ९. **अभिगच्छन्ति**—ख-झ-न-भ-य । अवगच्छंति–घ-ज्ञ-त-र-श-मॅ-मु ॥ १६३. १३. **श्रपणार्थम्**—*मॅ । श्रयणार्थं–§-मु ॥ १६३. १४. **श्रपणद्रव्यैः**—*-मॅ-मु । श्रयणद्रव्यैः–§ ॥ १६४. ७. **पूर्वमपरम्**—*मॅ-मु । पूर्वत इत्येवं–ख-ज्ञ-झ-त-न-भ-र-श । अन्यमन्यं पूर्वमपरं परव्यतिहारेण–घ । १६५. २६. २८. **अत्रोक्तम्– अरण्ये...च्युतोऽनया, अगव्यूती...स्तुतः**—एतच्छ्लोकद्वयं कुत्रत्यमिति न ज्ञायते ॥ १६५. ३०. **अस्मानतः सापि रक्षतु**—*मॅ-मु । नास्मानतः सापि रक्षतु–ज्ञ-त; नोस्मानतः सापि रक्षतु–न-भ; अस्मानतः कारणात्–श ॥ १६८. ४. **बलरूपम्**—मॅ-मु । बलं रूपं–ख-झ-त-न-भ-र; बलं तं

रूपं–ज्ञ; बलं–घ ॥ १६८. ६. **इन्द्रो वृत्राय...स्तृतीयम्**—झ-न-भ-य-श । इंद्रो वृत्राय वज्रमुदयच्छत् स त्रेधा व्यभवत् वज्रस्तृतीयं रथस्तृतीयं यूपस्तृतीयं–घ-मॅ-मु । तैत्तिरीयसंहितायां (५. २. ६. २; ६. १. ३. ४) ‘इन्द्रो वृत्राय वज्रं प्राहरत् स त्रेधा व्यभवत् स्फ्यस्तृतीयं रथस्तृतीयं यूपस्तृतीयम्’ एवं पाठो दृश्यते । एतदनुसारेण लिखितपुस्तकानुसारेण च पाठोऽस्माभिः स्वीकृतः । तै. सं. ६.५.१.१. अत्र केवलम् ‘इंद्रो वृत्राय वज्रमुदयच्छत्’ इतीयानंशोः विद्यते ॥ १६८. ७. **स्फ्यस्तृतीयम्**—भ-य । स्फ्यत्तृतीयं–ज्ञ-झ-र-श; स्तृतीयं–त२ । वज्रस्तृतीयं–घ-मॅ-मु ॥ १६८. १४. **शीघ्रगामी**—ज्ञ-*मॅ-मु । शीघ्रगामिनं–ख-घ-झ-त२-न-भ-र-श ॥ १६८. १६. **अवस्थितः**—ख-न-भ-य-श । एव स्थितः–ज्ञ-त-र-मॅ-मु ॥

[ ६. ४८ ] १७०. १०. **तृतीयाचतुर्थ्यौ**— न । तृतीयाचतुर्थौ–ज्ञ । तृतीयाचतुर्थी–ख-त-र-मॅ-मु ॥ १७०. ११. **द्वादशाक्षरौ**—ज्ञ-त-न-भ-मु । द्वादशाक्षरा–मॅ ॥ १७०. ११, १३. **अष्टाक्षरा...बृहती; अष्टिन...बृहती**—§-मॅ-मु । महासतोबृहत्या लक्षणं द्विरुक्तम् ॥ १७०. २०. **सा चापि**—ख-ज्ञ-न-भ-मु । सा च – श । स चापि–झ-त-र-मॅ ॥ १७३. १२. **पालनैः**—ख-झ-न-भ-य । पालकैः–घ-ज्ञ-त-श-मॅ-मु ॥ १७३. १३. कर्तरि–मॅ-मु । कर्तारं–ख-घ-झ-त-न-भ-र; कर्तारः–ज्ञ ॥ १७३.२०. **अस्य सर्वत्र लोके**— ज्ञ-*मॅ । लोके–ख; अस्य सर्वस्य लोकस्य–घ; सर्वत्र लोके–झ-त-न-भ-र-मु; सर्वस्य लोकस्य–श ॥ १७५. २७. **उपदोद्राव इति**—न-भ-*मॅ । उपदोद्रावेति–ख; उपदोद्रवयति–ज्ञ; उपदोद्रावयति–त-मु ॥ १७६. ६. **काकम्बीरम्**—ख-ज्ञ-भ । मा काकंबीरं–त-र-श-मॅ-मु ॥ १७७. १६. **वृत्रहम्**—श-*-मॅ-मु । वृत्रहन्–ख-घ-त-न-भ; वृत्रंहं–ज्ञ ॥

[ ६. ४९ ] १७९. २६. **त्मने आत्मने**—ज्ञ-त-भ-श-मु । त्मने आत्मने आत्मनि–घ; त्मने–न-य-मॅ ॥

[ ६. ५० ] १८५. २५. **पोषको**—ज्ञ-न-*मॅ-मु । पूषको–त-र; प्रेषको–श ॥

[ ६. ५१ ] १९१. २३. **भुंक्ष्महि (?)**-मॅ-मु । भुंज्महि–ज्ञ-त२ । ‘भुञ्जीमहि’ इति भाव्यम् ॥ १९२. ९. **यतस्तेन**—ज्ञ-त-न-र-श-मु । अतस्तेन–ख-भ-मॅ ॥ १९२. २८. **वक्मराजाः**—त-न-र । वक्मराजानः–ख-ज्ञ-श-मॅ-मु ॥ १९३. २०. **इत्येष**—ज्ञ-न-मु । इत्येषा–त-भ-मॅ ॥

[ ६. ५२ ] १९५. ८. **यियक्षुरास**—*मॅ-मु । इयक्षुराह–ख-त-न-श; इयक्षाह–झ-र; इयक्षुरास–घ-ज्ञ-भ ॥ १९५. २१. **स्वस्याधिक्यम्**—ज्ञ-*मॅ-मु । स्वाधिक्यं–ख-भ-श; स्वस्वाधिक्यं–झ-त-न-र ॥ १९६. ३. **शत्रुभ्यः**—ख-झ-न-भ-य । एतन्नास्ति–ज्ञ-त-र-श-मॅ-मु ॥ १९७. २४. ‘**तप्ते पयसि...मिक्षा**–इयं श्रुतिः कुत्रत्येति न ज्ञायते । तै. ब्रा. १. ६. २. ५ अत्र ‘वैश्वदेव्यामिक्षा भवति’ इति वचनमुपलभ्यते ॥ १९८.२५. **चित्ते**—ख-ज्ञ-न-भ-*मॅ-मु । चते–त१; चत्ते-त२ ॥

[ ६. ५३ ] २००. १२. **युञ्ज्महि (?)**–§मॅ-मु- । ‘युञ्जीमहि’ इति भाव्यम् ॥

[ ६. ५७ ] २०७. २६. **यद्यदा**—*मॅ । यद्यदा इंद्रः–§-मु ॥ २०८. ४. **इन्द्रस्य**—ज्ञ-*मॅ-मु । इतरलिखितपुस्तकेषु ‘इन्द्रस्य’ नास्ति ॥ २०८. ११. **यथा**—*मॅ-× । मु–पुस्तकेऽप्येतन्नास्ति ॥

[ ६. ५८ ] २०८. १३. **पौष्णस्य**—त४-श । वैश्वदेवस्य–ज्ञ-त२-मॅ-मु ॥ २०८. १६. **प्रवर्ग्याभिष्टवे**—न । अमाभिष्टवे–ज्ञ-त-मॅ-मु; सोमाभिष्टवे–श ॥ २०८. २४. **प्रकाशेन**—ज्ञ-*मॅ-

मु । प्रकाशे–इतरेषु ॥ २०८. २५. **एकम्**—त४-*मॅ-मु । इतरेषु नास्ति ॥ २०९. २२. **संजातौत्सुक्या**—*मॅ । संजातोत्सुका–ख-ज्ञ-त-न-भ-श-मु; संजातौत्सुका–घ ॥ २०९. २३. **प्राहैशीत्**—*मॅ-मु । प्राहौषीत्–ख-घ-ज्ञ-झ-न-भ-र; प्राहुशीत्–ज्ञ-त२-श ॥ २०९. २४. **कृतः**—' कृत ' इति पदपाठः । ' कृतः ' इति भाष्यकारैः स्वीकृतम् ॥

[ ६. ५९ ] २११. १६. **अप्रीतिकरम्**—मॅ-मु । अप्रीतिकरं जोषं–§ ॥ २११. १९. **अथ योऽयम्**—ज्ञ-त-भ-निरु. ५. २२ । योऽय–न-*मॅ-मु ॥ २११. २८. **व्यापकान्** । अत्र किमपि विशेष्यमावश्यकम् । 'दिवसान्' इति स्यादिति मॅक्समुल्लरमहाशयः संभावयति । व्यापकान् रश्मीन् – मु ॥

[ ६. ६१ ] २१७. १०. **इयमित्ये......बुद्धिमान्**—§-मॅ-मु । इयमित्येतदाद्यन्तं सूक्तं सारस्वतं द्विजः । नित्यं जपेच्छुचिर्भूत्वा वाग्मी भवति बुद्धिमान् ' ॥ इति निर्णयसागरमुद्रितपुस्तकस्थः पाठः । । २१८. ४. **परार्वाची तीरे**—त-मु । पारार्वाची तीरे–श-मॅ । पारावाची तीरे–न-भ । ' पारावारे परार्वाची तीरे ' इत्यमरः ( १. १०. ८ ) ॥ २१८. १५. **लब्धवत्यसि**—ज्ञ । लब्धवानसि–त-न-भ-श-मॅ-मु ॥ २१९. १४. **ऋतावरीः**—मॅ-मु-§ । ' ऋतऽवरी ' इति पदपाठः । ' ऋतावरीः ' इति भाष्यकाराः पठन्ति ॥

**॥ पञ्चमाष्टकः ॥**

( पञ्चमाष्टकभाष्यसंशोधनार्थमुपयुक्तानि लिखितपुस्तकानि–ख, घ, झ, त, न, भ, श. )

[ ६. ६२ ] २२१. **वागीशाद्याः......गजाननम्**—मॅ-× । मु-पुस्तकेऽपि नास्ति ॥ २२१. १६. **प्रसन्तौ प्रभवन्तौ**—*मॅ-मु । प्रसवंतौ–ख-झ-न-भ; प्रसनवंतौ–घ; प्रसनवंतौ प्रभुवंतौ–त; प्रसन्नवंतौ प्रभुवतौ–श ॥ २२१. १७. **अश्वैरन्वितौ**—ज्ञ-श-*मॅ-मु । ख-घ-ज्ञ-त२-४-न-भ-पुस्तकेषु एतन्नास्ति । अश्वैरश्विनौ–त१-३ ॥ **अप्रगीतमन्त्र**°–ख-झ-न-भ । अर्चनीयैरप्रगीतमंत्र°–श; अर्चनीयमंत्र°–त-मॅ-मु ॥ २२१. २१. **परि युयूषतः**—ज्ञ-त१-*मॅ-मु । पर्युयूषतः–ख-झ-त२-३-४-न-भ-श ॥ २२३. ३. **वलनशीलौ**—त१-२-३-*मॅ-मु । वलानशीलौ–ख-झ-ज्ञ-त४; वल्गानशीलौ–भ-श; वलाशीलौ–न ॥ २२४. १३. **मध्यमपुरुषेण**—ज्ञ-मॅ-मु । उत्तमपुरुषेण–इतरेषु ॥ २२५. २. **दृळ्हस्य चिद्दृढापिधानस्यापि**—घ-ज्ञ । दृळ्हस्य दृढापिधानस्यापि–ख-झ-त४-न-भ; दृळ्हस्य चित् दृळ्हापिधानस्यापि–त१-२-३-य-श-मॅ-मु ॥

[ ६. ६३ ] २२५. ७. **छन्दस्युक्तो**—ख-झ-त-४-न-भ । छंदसि–ज्ञ-त१-२-३-य-श-मॅ-मु ॥ २२५. २३–२५. **अन्तरः संनिकृष्टोऽपि ...... कुरुथ इति**—त४-*मॅ-मु । ' अन्तरः न हिंस्यात् ' नास्ति–ख१; ' रिपो...यथास्मदीयं गृहं ' नास्ति–ज्ञ-त१-२-श; ' यद्वा...... तुतुर्यात् ' नास्ति–ज-ज्ञ-त३-न-भ ॥ २२६. ३. **बहुरक्षाकम्**—घ-ज-झ-त४-न-भ । बहुरक्षकं–ख१--ज्ञ-त१-२-३-श-मॅ-मु ॥ २२८.११. **सहस्राणि च**—ख-झ-न-भ । सहस्राणि–त-श-मॅ-मु ॥

[ ६. ६५ ] २३०. २६. **जिगर्तिर्गिरतिकर्मा**—ज्ञ-त१-भ । जागर्ति°–झ-त२-न-भ । जीगर्ति°–ख-त३-४-मॅ-मु ॥ २३१. २७. **नि वहथ**—ज्ञ-त२-*मॅ-मु । निर्वहथ–घ-झ-त१-३-न-भ-श; हविर्वहथ–ख ॥ २३२. १५. **प्राणो वै भरद्वाजवत्**—इयं श्रुतिः कुत्रत्येति न ज्ञायते ॥

[ ६. ६६ ] २३२. २२. **नवानुयाजाः**—§ । नवानुयाज्याः–मॅ-मु ॥ २३३. २. **मर्तेषु**–ज्ञ-त२ । मर्त्येषु–मॅ-मु-इतरेषु च ॥ २३३. १९. सर्वज्ञाता–*मॅ-मु । सर्वज्ञानां–ज्ञ; सर्वज्ञाते–इतरेषु ॥

२३५. २२. **य इति**—ञ-*मॅ-मु । इय इति–इतरेषु ॥ २३५. २३. **राजपुरुषः**—ञ-*-मॅ-मु । राज्ञः पुरुषः–इतरेषु ॥ २३५.२८. **अध्वरस्येव यज्ञस्येव**—' अध्वरस्येव ' इति षष्ठयन्तपदस्यान्वयः क्वेति न ज्ञायते ॥

[ ६.६७ ] २३७. ११. **स्तूयमानौ वा**—ख-झ-त-न-भ-श । स्तूयमानौ–घ-मॅ-मु ॥ यौ–घ-*मॅ-मु । या यौ–इतरेषु ॥ २३७. २७. **धत्तवन्तः** (?)–ख१-घ-झ-त१-२-३-४-भ-श-मॅ-मु । धृतवंतः–ज-ञ; यत्नवंतः–न । हितवन्तः इति भाव्यम् ॥

[ ६. ६८ ] २४०. १३. **वाम्**—*मॅ-मु । वाम्–ख-झ-त३-४-न-भ-श; ' वां ' नास्ति–घ; वा–ञ-त१-२ ॥ २४०. २४. **सत्येन**—ञ-मॅ-मु । सत्यमेव–इतरेषु ॥ २४१. १०. **देवाः स्तोतारः**—घ-त१-२-श । देवाः स्तारः—झ-त३-४-न; देवाः–ख-ञ-भ-य-मॅ-मु । ऋ. सं. ७.९७.३; ९८. ३ द्रष्टव्यम् ॥ २४१. २०. **ऋतावा**–§-मु । ऋतावान्—मॅ ( मुद्रणदोषः ? ) ॥ २४१. २१. **प्राप्येत**—घ-त-श । प्राप्यते—ख-झ-न-भ । प्राप्येत्–मॅ-मु ॥ २४२. २४. **युक्तः**—ख-घ-झ-त३-४-न-भ-श । युक्तः शोचिषा तेजसा युक्तः–ञ-त२-मॅ-मु ॥ २४२. २५. **शोचिषा दीप्त्या विभाति**–ख-घ-त१-२-३-४-न-भ-श । विभाति–ञ-मॅ-मु ॥ २४३. १३. **सोमपानेनेति**—ख-घ-ञ-त१-२-३-भ-श-मु । सोमपानेति–झ-त४-न । सोमपान इति–मॅ ॥

[ ६. ६९ ] २४३. १५. **उक्थ्ये**—ञ-झ-न-भ-श२ । उक्थे–ख-त२-४-श१-मॅ-मु ॥ २४३. २९. **सेवेथाम्**—ञ-झ-न-भ-श-*मॅ-मु । सेवतां–ख१; सेवयेथां–त२ ॥ २४४. ७. **निपातनात् णिलोपः**—ञ-मॅ-मु । निपाताल्लोपः–ख-झ-न-भ; निपातनात् सिलोपः–श ॥ २४५. १८. **सोमनिधानः**—झ२-*मॅ-मु । सोमाभिधानाः–ख; सोमाभिधानः–झ१-न-श; सोमाभिधान°–त१-२ ॥

[ ६. ७० ] २४७. १. **द्यावापृथिव्यौ**—ख-झ-न-भ-श । हे द्यावापृथिव्यौ–घ-ञ-त२-मॅ-मु ॥ २४७. ३. **अनुसंधेयम्**—ख-झ-त१-न-भ-श । अनुसाधयं–त२-४; अनुसंबंधनीयं–ञ-मॅ-मु ॥ २४७. ५. **स्तुतिः प्रसङ्गात्**— ञ । स्तुतिप्रसंगात्–मॅ-मु-इतरेषु च ॥ २४७. १६. **समृद्धिहेतुम्**—ख-ञ-झ-त१-२-४-न-भ-श । समृद्धिहेतुकं–त३; समृद्धिघृतहेतु–य । समृद्धिहेतु–मॅ-मु ॥

[ ६. ७१ ] २४९. १०. **बृहस्पतिसवेऽपि......इत्यनूत्तिष्ठेत् इति** । एतद्विनियोग-विधायके आश्वलायनश्रौतसूत्रे ' इत्यनूत्तिष्ठेत् ' इत्ययमंशो नास्ति । किंतु ' उदुप्य देवः सविता हिरण्यया घृतवती भुवनानामभिश्रिया ' इति दृश्यते । अग्निष्टोमप्रवर्ग्ये ' महावीरमादायोत्तिष्ठत्सुदुप्य देवः सविता हिरण्ययेत्यनूत्तिष्ठेत् ' इति विनियोगान्तरविधायकं सूत्रं ( ४. ७ ) दृश्यते । तेन अत्र भाष्ये मध्ये कियांश्चिदंशो गत इति प्रतिभाति । मॅक्समुल्लरमहाशयेन स्वकीयटिप्पण्यां ' इत्यनूत्तिष्ठेत् ' इति भागः आश्वलायनश्रौतसूत्रे नास्ति इत्येतावदेवोक्तम् ॥ २४९. २०. **सुवनाय**—*मॅ-मु । एतन्नास्ति–ख-घ-न-भ; प्रसवनाय–ञ-त१-२; प्रसवाय–श । ' सवनाय सुवनाय प्रेरणाय दानाय वा ' इति स्यादिति मॅक्समुल्लरमहाशयः संभावयति ॥ २४९. २८. **दाने च**—मॅ-मु । दाने वयं–§ ॥ २४९. २९. **यः त्वम्**—मॅ । यश्च त्वं–§ । यस्तं–मु ॥ २५०. ५. **सुखकरैः**—§ । सुखकारिभिः–मॅ-मु ॥

[ ६. ७२ ] २५१. १६. **प्रथमानि...वा**—मॅ-मु । ' वा ' इत्ययुक्तं प्रतिभाति ॥ २५१. १८. **अलम्भयतं च**—*मॅ-मु । अलभयत वा–ख; अलभयतं–घ; अलभयतं वा–झ-भ; अलंभयतं

वा–त१-२-४-य; अलभंत अलभयंत वा–श; अलभेथां अलभयतं वा–झ ॥ २५१. २५. **व्युच्छन्तीम्**—*मॅ-मु । व्युच्छतं–ख-भ; व्युच्छनं–झ-न-ञ; व्युच्छंतीं व्युच्छनं–त ॥ २५२. २६. **रयिं धनम्** । 'रयिम्' इति मन्त्रे नास्ति ॥

[ ६. ७३ ] २५३. ४. **°द्वसूनीति**—मॅ । °द्वसुनि–ख-झ-त-न-भ-श-मु ॥ २५३. २८. **अपः** । एतत् मन्त्रगतं पदं भाष्ये न व्याख्यातम् ॥ २५४. ३. **संभक्तुकामः**—मॅ । **संभक्तुमिच्छन्**—§-मु । एवमेव पठनीयम् ॥

[ ६. ७४ ] २५५. ४. **शिथिलबन्धम्**–ञ-त२-*मॅ-मु । शिथिलबद्धं–इतरेषु ॥

[ ६.७५ ] २५५. २३. **°द्यावापृथिवीपूषणो**—§।°द्यावापृथिवीपूषाणो–मॅ-मु ॥ २५५. ३२. **मण्डलान्तहोमे**—ख-झ-त४-न-भ । मण्डलान्ताहोमे–श । मण्डलान्त्यहोमे–ञ-त१-२-मॅ-मु ॥ २५७. १०. **चुर्यगिभ्याम्**—त२-४-श-मॅ-मु । ऋर्यगिभ्यां–ञ ॥ २५८. ७. **पश्चात्सन्तो**—ख-त२-भ । पश्चात्सतो–ञ-झ-त४-न-श-मॅ-मु ॥ २५८. २१. **सार्वविभक्तिकत्वात्**—§-मु । सर्वविभक्तिकत्वात्–मॅ ॥ २५८. २७. **संसीदन्तः**—मॅ-मु । संसदंतः–§ ॥ २५९. १. **शक्तीवन्तः शक्तिहस्ताः**—ञ-त२-श-मु । शक्तिवंतः शक्तिहस्ताः—झ-न-भ; शक्तीवंतः शक्तीहस्ताः–त४-मॅ ॥ २५९. ३. **प्राप्तवीर्याः**—मॅ-मु । प्राप्तवीर्यैः–ञ । प्राप्तवीराः–इतरेषु ॥ २५९. १०. **सत्यस्य यज्ञस्य वा**—§ । ऋतस्य यज्ञस्य वा–मु । ऋतस्य यज्ञस्य सत्यस्य वा–मॅ ॥ २५९. १४. **भवताम्**—मॅ-मु । भवेतां–ञ; भवतं–इतरेषु ॥ २५९. १५. **मा ईशिष्ट**—ख-ञ-झ-त१-२-भ । माष्ठ–घ; मा इशिष्ट–त४; मा ईशिष्टे–न; मा ईष्टि–श; मा ईष्ट–मु । मैशिष्ट–मॅ ॥ २५९. ३०. **शर्म शरणं प्रयच्छन्तु**—मॅ-मु । शर्म यच्छंति–ख१-झ; शर्म यच्छंतु–ज-ञ-त२-४-न-भ; शर्म प्रयच्छंतु–त१; शर्म शरणं यच्छंतु–श ॥ २६०. १४. **उपजिघ्नन्ति**—ख-झ-त-भ-श-मु । उपजिघ्नति–घ-न-मॅ ॥ २६२. १. **उरुतरम्**—*मॅ-मु । उरुतुभ्यं–ख-झ-त-न-भ-श । उरु–घ ॥

---

## ॥ सप्तमं मण्डलम् ॥

[ ७. १ ] २६३. २९. **आगम्यमतनवन्तम्**—*मॅ-मु । आगम्यतनवतं–ख-झ-त१-४-भ; गम्यं–घ; अगम्यमतनवंतं–ञ-त२; आगम्यतनवंतं–न; अगम्यतनवंतं–श ॥ २६४. २६. **सुवीरं... पौत्रोपेतम्**—घ । सुवीरं शोभनपुत्रपौत्रोपेतं–ख-झ-न-भ; सुवीरं शोभनपुत्रपौत्रोपेतं स्वपत्यं शोभनपौत्रोपेतं–त-मॅ-मु; सुवीरं शोभनपुत्रपौत्रोपेतं स्वपत्यं शोभनपुत्रपौत्रोपेतं–श ॥ २६९. ११. **नोपक्षीयेत**—*मॅ । मोपक्षीयत—मु । मोपक्षीयते–ख१-भ; मापक्षीयतां–घ; नोपक्षीयते–ज; मापक्षीयता–ञ; मोपक्षीयंते–झ; मापक्षीयंत–त१-२; नोपक्षीयत–त३-न; मोपक्षीयंत–त४; मोपक्षीयतां–य; मीपक्षीयत–श१; मौपक्षीयत–श२ ॥ २६९. २८. **ददाति**—मॅ । दधाति धारयति—त-मु । अयमेव युक्तः पाठः । 'दधाति ददाति' इति स्यादिति मॅक्समुल्लरमहाशयेन संभावितम् ॥

[ ७. २ ] २७०. २४. **पशाविष्टौ**—*मॅ-मु । सोविष्टौ–ख-त१-२-४-न; सोविष्ठौ–घ; सौविष्टौ–ञ-झ-त३-भ; वसिष्ठानां–श । 'वासिष्ठमिदम्' इति स्यादिति पीटर्सनमहाशयः[1] संभावयति

---

1. Handbook to the Ṛgveda Maṇḍala VII, pp. 2–3

स्म । अयं पाठः मॅक्सुल्लरमहाशयस्य[1] संमतः । 'पशौ वासिष्ठानाम्' इति युक्तं प्रतिभाति ॥ २७२. १. **पादौ भरन्तः**—ख-ञ-त-न-भ । अग्नौ भरंतः–म; अग्निभरंतः–श१ । पादैर्भरंतः–घ-मॅ-मु । 'पादौ भरंतः' इति पाठो युक्त इति मॅक्समुल्लरमहाशयः[2] अभिप्रैति ॥ २७४. २. **अस्माकम्**—*मॅ-मु । अस्मात्–§॥

[ ७. ३ ] २७४. २३. **संततेषु**—ञ-त१ । आस्ते–ख; असतेषु–भ; सतते–श; सततेषु–घ-ञ-त२-३-४-न-मॅ-मु ॥ २७५. १७. **आहवनीयायतने**—*मॅ । आवहनीयायतने (?)–मु । आहवनीयातने–ख; आयतने–घ; आहवनीय°–ज्ञ; आहवनीयायते–ञ-त३-न-श१; आहवनीयायेति-त१-२-४; आहवनीयायने–भ; आवहनीयायते–श२ ॥ २७५. १०. **खादति**—*मॅ-मु । सीदति–ख-घ; सादति–ञ-त-न-भ; सादयति–श ॥ २७६. ८. **नगरीभिरिव**—ख-ञ-त३-न-भ-श । नगरीभिः–घ-ज्ञ; नगरीव–त१-२-४ । नगरीभिरेव–मॅ-मु ॥ २७६. १५. **अप्रधृषिताः**—ञ-त२-३-न-श-मॅ-मु । '**अप्रधर्षिताः**'—इति घ-पुस्तकानुसारेण पठनीयम् ॥ २७६. १६. **रक्षेः**—*मॅ-मु । रक्ष– ख-घ-त१-२-३-४-भ-श । रक्ष्याः–ज्ञ; रक्षि–ञ-न ॥

[ ७. ४ ] २७७. २३. **भवति**—§-मॅ-मु । 'अस्तु भवति' इति स्यादिति मॅक्समुल्लर-महाशयः संभावयति ॥ २७८. ९. **अयम्**—घ-*मॅ-मु । यः–इतरेषु ॥ २७८. १९. **अतारीत् दुर्गेभ्यस्तारयति तमिममग्निम्**—त । अतारीत्–मॅ-मु इतरेषु च ॥ २७८. २०. **सन्तं बिभ्रति**—§ । संतं तं बिभ्रति–मॅ-मु ॥ २७८. २१. **वनिभिश्च**—ख-ज्ञ *-मॅ-मु । वनिनश्च–इतरेषु ॥ २७९. १. **अप्स इति रूपनाम**—मॅ-मु; ज्ञ-वर्जेलिखितपुस्तकेषु च । 'रूपरहिताः' इति यतो व्याख्यातं तस्मात् 'न विद्यते प्सुः येषाम्' इति विग्रहोऽभिमतः प्रतिभाति । एवं सति 'अप्स इति रूपनाम' इति निरुक्तोपन्यासोऽप्रासङ्गिकः । 'प्सुः' इति शब्दोऽपि निघण्टौ रूपनामसु दृश्यते ॥ २७९. २८. **सहसावन्...नि पाहि**—ज्ञ-त१-२-य-मु । एतन्नास्ति इतरेषु । त्वमु त्वमेवावद्यात् पापात् नोऽस्मान्नि पाहि–मॅ ॥

[ ७. ५ ] २८०. २३. **तेजसा वा**—ज्ञ-*मॅ-मु । तेजसा–इतरेषु ॥ २८१. १. **असितवर्णाः**—ज्ञ-*मॅ-मु । असिक्तवर्णाः–इतरेषु ॥ २८१. १३. **शोचिषा नित्येन**—घ-ज्ञ-त१-२ । शोचिषा–त३-४-न-भ-श-मॅ । नित्येन शोचिषा–मु ॥ २८१. २०. **उषसाम् अह्नाम्**—ज्ञ-मॅ । एतदनन्तरं 'महांतं' इति पदं बहुषु लिखितपुस्तकेषु मु-पुस्तके च दृश्यते । 'मह्नाम्' इति पदं स्यादिति भ्रान्त्या केनचित् तद्व्याख्यानत्वेन 'महांतं' इति लिखितं स्यात् । तथा चानन्तरमेव 'हरितः' इत्यस्य पुरस्तात् 'हरणात्' इति लिखितपुस्तकेषु दृश्यते ॥ २८१. २८. **असेवन्त हि**—*मॅ-मु । सेवंते हि–ख-ज्ञ-त४; सेवंत हि–घ-त१-२-३-श; सेवंतर्हि–ञ-न ॥ २८२. ११. **प्रयच्छन्**—*मॅ । च यच्छन्–मु । वांच्छन्–ख-भ; यच्छन्–घ; वा यच्छन्–ञ-त-न-श ॥

[ ७. ६ ] २८४. २३. **प्रार्थयमानाः**—ख-च-भ । प्रार्थ्यमानाः–य; प्रार्थमानाः–घ१-ञ-त-न-श-मॅ-मु ॥ २८५. १. **आन्तरिक्षाणि**—*मॅ । अंतरिक्षाणि–§ मु ॥ २८५. ४. **सगरः समुद्रः**—ज्ञ-त१-२-श-मु-नि. १. ३. १४ । सगरं समुद्रः–ख-ञ-त३-४-भ-मॅ । सागरं समुद्रः–न ॥

[ ७. ७ ] २८५. २४. **शब्दायमानः**—§-मॅ-मु । 'शब्दाययमानः' इति भाव्यम् ॥ २८७. १. **प्र तिरन्त**—घ-*मॅ । च तिरंत–त१-मु । वातिरंत–ख-ञ-त३-न-भ; चातिरंत–ज्ञ-त२-४ ॥

---

१. Preface to the 2nd Edition Vol. IV p. 184.

२. Preface to the 2nd Edition Vol. IV. p. 184.

२८७. २. **माषाणामभीयात्।** ऋ. सं. १. २०. ६. अत्र द्रष्टव्यम्। मानुषाणामभीयात्–§-मॅ-मु। यद्यपि लिखितपुस्तकेषु 'मानुषाणामभीयात्' इत्युपलभ्यते, तथापि 'माषाणामभीयात्' इत्येव भाष्यकाराणामभिप्रेतमासीदिति मॅक्समुल्लरमहाशयेन स्वकीयटिप्पण्यां लिखितम्॥

[ ७. ८ ] २८८. १५. **बृहद्भाः।** 'बृहत्। भाः' इति पदपाठः॥

[ ७. ९ ] २९०. १८. **संगन्ता**—मॅ। संगंतः (?) मु। संगता–ख-त३-न-भ; गंता–घ-ज-झ-त१-२-४-श॥

[ ७. १० ] २९२. २२. **रयीणाम्**—घ-ज। रयीणां सूर्यस्य–मॅ-मु इतरेषु च॥ २९२. २३. **दूतः अभवत्**—घ-ज-त१-२-य। अभवत्–मॅ-मु इतरेषु च॥ **यस्माद्दूतोऽभवत्**—*मॅ-मु। यस्मादूतोभवः–ख; यस्माद्दूतोभवः–ज-त२-३-भ-श; तस्मादूतोभवः–झ-त४; यस्माद्दूतोभव–न। इयं श्रुतिः कुत्रत्येति न विज्ञायते॥ २९२. २४. **विशः**—*मॅ-मु। विश्वः–§॥

[ ७. ११ ] २९४. ५. **किमर्थमित्यत आह**—*मॅ-मु। किं-घ१; किंच–च; किमित्यत आह–इतरेषु॥

[ ७. १२ ] २९४. २४. **साह्वान्**—ख-च-ज-झ-त२-य-श। सह्वान्–घ१-त३-४-न-भ-मॅ-मु॥

[ ७. १४ ] २९६. २. **ब्राह्मणाः**—ज-श। ब्रह्मणा–त१-२-३-४-भ-मॅ-मु॥

[ ७. १५ ] २९७. ४. **भगिनो याज्या**—*मॅ-मु। भागयाज्या–ज-त१; भगीयाज्या–झ; भगियाज्या–त२-४-श॥ २९९. १७. **°प्राकारादिर्वा**—भ-*मॅ-मु। °प्रकारादिर्वा–ख-झ-त-न; °प्रकारादि वा–श॥

[ ७. १६ ] ३००. १३. **युज्यते**—ख-भ। अयुज्यत–मॅ-मु इतरेषु च॥ ३०१. ११. **कामयस्व**—*मॅ-मु। कामय च–ख; कामय त्वं–इतरेषु॥ ३०१. १९. **यः**—*मॅ-मु-×॥ ३०१. २७. **प्रियासः**—मॅ-मु। प्रियाश्च–ख-घ-झ-त१-२-३-४-न-भ-श१; प्रियाः–ज; प्रियासश्च–श२॥

[ ७. १८ ] ३०४. १६. **पञ्चविंशत्यृचम्**—श१-मॅ-मु। पंचविंशर्चं–इतरेषु। एतादृशोऽशुद्धः पाठः लिखितपुस्तकेषु बहुवारमुपलभ्यते॥ ३०४. १८. **त्वे ह यत्**—§-मॅ। त्वे ह–मु-अनु.॥ **चतस्रोऽन्त्या**—§–मॅ-मु। अंत्याश्चतस्रो–अनु.॥ ३०६. ३. **उत्सहमानम्।** उत्साहमानं–§-मॅ-मु। ऋ. सं. ७. १८. १६, १८. अत्र द्रष्टव्यम्॥ **बाधमानम्**—ज। बोधमानं–मॅ-मु इतरेषु च। 'बाधमानम्' इति स्यादिति मॅक्समुल्लरमहाशयेन संभावितम्॥ ३०६. ११. **जालनिहिता**—§। जले निहिता–मॅ-मु॥ ३०७. १२. **यथापूर्वम् अर्थम्**—ज-*मॅ-मु। यथापूर्व मदर्थं–ख-श; यथापूर्वमर्थमित्–घ; यथापूर्व्य मदर्थं–झ-त-न-भ॥ ३०७. १७. **सुतोकान्**—मॅ-मु। सतोकमानान्–ख; सुतोकमानान्–झ-त-न-भ श२; सुतुकमानान्–श१; सुष्ठपत्यसहितान्–च॥ ३०८. ५-६. **सपत्नान्...युद्धे**—ज-त१-*मॅ-मु। एतन्नास्ति इतरलिखितपुस्तकेषु॥ ३०९. १. **दुवोयुवे**—§-मॅ-मु (? दुवोयवे)॥ ३०९. १०. **विश्वानि**—घ-ज-*मॅ। विश्वा विश्वानि–मु इतरेषु च॥ ३०९. २७. **अश्नीन्**—*मॅ-मु। असीन्–घ; असान्–इतरेषु॥ **वेश्यादेः कृत्यं सूच्यैवाकरोत्**—*मॅ-मु। वेश्यादेः कृत्यं सूच्यैव करोत्–ख; वेश्यादेः कृत्यसूत्यैवाकरोत्–झ-त३-श; वेश्यादेः कृत्यसूच्येवाकरोत्–त१-२-४-भ; वेश्यादेः कृत्यसूच्यैवाकरोत्–न। **वाश्यादेः कृत्यं सूच्यैवाकरोत्**—ज। अयमेव पाठः समीचीनः प्रतिभाति। 'वाशीति तक्षणसाधनमायुधम्' (ऋ. भा. ५.५७.२)। 'पर्श्वादेः कृत्यं' इति

स्यादिति मॅक्समुल्लरमहाशयः संभावयति ॥ ३१०. ९. **वशीकरम्**—§-मॅ-मु (? वशीकरणम्)॥ **विन्द् लभस्व यो भेद्:**—*मॅ। विंद लभ यो भेदः–मु। विंद उभयोरभेदः–ख-त२-भ; विंद लब्धवानसि उभयोरभेदः–ञ; वद उभयोरभेदः–झ-त१-३-४-न-श ॥ ३११. ९. **द्वितीयार्थे**—मॅ-मु-× ॥ ३११. ११. **पालकस्य**—ख-घ-भ-य-मु। पालस्य–मॅ-इतरेषु च ॥ **मृषन्त**—घ-ञ-त१-२-मु। मृषंति–मॅ इतरेषु च ॥ ३११. १४. **उपगच्छन्ति**—*मॅ-मु। अवगच्छंति–ख-न-भ; अपगच्छंति–झ-त-श ॥ ३११. २०. **इन्द्रम्**—घ१-*-मॅ। इंद्रः–ख-च-झ-त-न-भ-श२; 'इंद्रं' नास्ति–ञ; इंद्र–श१ ॥ ३११. २२. **अतद्देवताकत्वात्**—ञ-भ-*मॅ। अतदेवताकरत्वात्–ख। अतस्तद्देवताकत्वात्–मु इतरेषु च ॥

[ ७. १९ ] ३१३. २. **तृम्नन्तत्वात्**—§-मु। तृनंतत्वात्–मॅ। एवं ३१६ पृष्ठे २३, २६ पङ्क्तयोरपि ॥ ३१३. ९. **मर्यैः**—ञ-मॅ-मु। एतन्नास्ति–ख-त२-भ; समर्यैः–झ-त४-न-श; समार्ये–त३ ॥

[ ७. २० ] ३१६. अध्यायप्रारम्भे 'वागीशाद्याः' इति श्लोकः मॅक्समुल्लरमुद्रितपुस्तके दृश्यते। परंतु अस्माभिः लिखितपुस्तकेष्वनुपालम्भादुपेक्षितः। मु-पुस्तकेऽप्ययं नास्ति केवलमष्टक-प्रारम्भेऽयं श्लोको दृश्यते॥ ३१६. ९. **मध्यंदिनः**। आश्वलायनश्रौतसूत्रेऽपि 'मध्यंदिनः' इत्येव पाठः। लिखितपुस्तकेषु बहुत्र 'माध्यंदिनः' इत्युपलभ्यते ॥ ३१८. ६. **प्रीणाति**—§-मॅ-मु। पृणाति–नि. ३. २० ॥ ३१८. १४. **यः**—*मॅ-मु- ॥ ३१८. २७. **वस्वी षु**। भाष्यकारैः 'वस्वीषु' इत्येकं सप्तम्यन्तं पदं कृत्वा व्याख्यातमनन्तरं पदपाठानुसारेण 'वस्वी सु' इति भिन्ने पदे कृत्वा व्याख्यानान्तरं कृतम् ॥

[ ७. २१ ] ३१९. २५. **गृहमध्यमग्रावा**—मॅ-मु। 'गृहमध्यमश्मा वा' इति स्यादिति मॅक्समुल्लरमहाशयः संभावयति ॥ ३२०. २०. **उत्सहेत**–*मॅ-मु। उत्सहेच्च–ख; उत्सहे च–घ-झ-त१-२-३-४-न-भ-श; उत्सहते–ञ ॥ **दीव्यन्ति**—ञ-*मॅ-मु। दीव्यंत इति–ख-घ-त-श; दिव्यंत–झ; दीप्यंते–न-भ ॥ ३२०. २१. **क्रीडन्त इति**—§-मॅ-मु। 'क्रीडन्तीति' इति भाष्यम्। अयं धातुः परस्मैपदी ॥

[ ७. २२ ] ३२२. २६. **अनुगुणः**—*मॅ। गुणः–§-मु ॥ ३२३. २९. **ह्वयति स्तौति**—*मॅ। स्तौति ह्वयति–ख-त३-न-भ-श; आह्वयति–घ; स्तौति आह्वयति–ञ-त१-२-मु; स्तौति–झ; स्तौव ह्वयति–त४ ॥

[ ७. २३ ] ३२५. ९. **रुन्धन्तीति**—ख-ञ-झ-त१-२-४-भ-श। संरुंधंतीति–त३-न-मॅ-मु॥ ३२५. ११. **नहि चिकिते न ज्ञायते**—घ-ञ-*मॅ। नहि चिकिते ज्ञायते–ख-भ-मु। चिकिते ज्ञायते–झ-त१-२-३-४-न-श ॥ ३२५. १८. **उप अस्थुः**—च-ञ-*मॅ-मु। उपस्थुः–ख-घ१-त१-२-४-भ; उपतस्थुः–झ-त३-श ॥ ३२६. १२. **वज्रकल्पबाहुम्**—ञ-*मॅ-मु। वज्रकल्पनाहं–झ-त१-३-४-न-भ; वज्रकल्पनाई–त२-श ॥

[ ७. २४ ] ३२६. २५. **मादयस्व**—*मॅ-मु। मादय–§ ॥ ३२७. ११. **इदं बर्हिरि-मम्**—ञ-*मॅ-मु। इदं बर्हिरिदं–ख-घ-झ-त३-न-भ-श; इंद्रं बर्हिरिदं–त१-२-४ ॥

[ ७. २६ ] ३२९. २९. **नवमम्**—मॅ-मु । दशमं–§ । एतादृशी गणनाशुद्धिः लिखित-पुस्तकेषु क्वचिदुपलभ्यते ॥ ३३०. १७. **हवन्ते**—ञ-*मॅ-मु । वह्रंते–ख-घ-झ-त३-४-न-भ-श; हवते वह्रंते–त१-२ ॥ ३३०. २३. **अपि अन्या अन्यानि**—*मॅ । अन्या अन्यान्यपि–मु । अन्या अन्यानि–ख-घ-झ-भ; अन्याप्यन्यानि–ञ-त१-२-४; अन्याप्यन्या अन्यानि-त३-न-श ॥

[ ७. २७ ] ३३३. २. **मंहनीयाय**—§-मु । 'धनाय' इति विशेष्यमध्याहर्तव्यम् । मंहनीयायै–*मॅ । 'मंहनीयाय दानाय' इति स्यादिति मॅक्समुल्लरमहाशयः संभावयति ॥

[ ७. २८ ] ३३३. ५. **पञ्चमत्वेन**—मॅ-मु; ञ-त१-वर्जितेषु लिखितपुस्तकेषु च । पंचमेहनि–ञ-त१ (प्रान्ते[1]) । 'चतुर्थत्वेन' इति भाव्यम् । उत्तरसूक्ते च 'महाव्रते निष्केवल्ये पञ्चमत्वेनास्य सूक्तस्य विनियोगः' इत्यप्यधिकं वक्तव्यम् । 'आ ते महः' इति सूक्तस्य (७. २५) प्रस्तावना द्रष्टव्या ॥ ३३३. २५. न । न व्याख्यातम् । नृन्न स्तोतॄनिव–मु ॥ ३३४. १८. **प्रायच्छत्**—*मॅ-मु । प्रयच्छत्–ख-ञ-न-भ; प्रयच्छतु–घ१-झ; प्रयच्छेत्–च-त१-२-३-४-श ॥

[ ७. ३० ] ३३६. २२. **सुहन्तुना**—ञ । सुहंतुनाम–इतरेषु । सुहंतुनाम्ना–मॅ-मु । ऋ. सं. ७. १९. ४. अत्र द्रष्टव्यम् । मॅक्समुल्लरमहाशयेन स्वकीयटिप्पण्यां 'सुहन्तुना' इत्येव संभावितम् ॥ ३३६. २८. **तदा**—थ-*मॅ-मु । तथा– इतरलिखितपुस्तकेषु ॥

[ ७. ३१ ] ३३७. १४. **गायत्रम्**—*मॅ । त्रैष्टुभं–§-मु ॥ ३३७. २०. **आहवनीयः**—§ मॅ-मु । 'आवपनीयः' इति भाव्यम् ॥ **तदर्थाः**—*मॅ-मु । तदर्थे–ख-भ; तदर्थो–झ-त-न-श ॥ ३३९. ४. **व्याप्नुवती**—घ-न-श२; व्याप्नुवंती–ख-झ-त-भ-श१-मॅ-मु ॥ ३४०. २. **स्तोतॄणाम्**—ञ-श१ । स्तोत्राणां–ख-झ-त३; स्तोत्रीणां–त१-२-४-न-श२ । स्तोत्राणि–*मॅ-मु ॥ **शत्रून्**—ञ । शत्रूणां–मॅ-मु-इतरेषु च ॥

[ ७. ३२ ] ३४०. १६. **प्रगाथादनन्तरम्**—ञ-*मॅ-मु । प्रगाथानंतरं–इतरेषु ॥ ३४०. १७. **मरुत्वतीया ऊर्ध्वम्**—ञ-त२-भ-*मॅ । मरुत्वतीयादूर्ध्वे–ख-त४-मु । मरुत्वतीयमूर्ध्वे–त१; मरुत्वतीयावूर्ध्वा–झ-त३-श ॥ ३४०. २१. **कस्तमिन्द्रेति**—मॅ-मु । अच्छावाकस्तमिंद्रेति–§ ॥ ३४०. २८. **तरणिरित्सिषासति**—मॅ । तरणिरित्सिषासतीति प्रगाथौ स्तोत्रियानुरूपौ–§-मु ॥ ३४०. ३०. **प्रगाथौ**—*मॅ-आश्व. श्रौ.; रथंतरस्य–ख । 'प्रगाथौ' नास्ति–झ-त३-न-भ-श-मु ॥ ३४१. ७. **त्वाम्**—ञ; त्वया–मॅ-मु इतरेषु च । 'त्वाम्' इति समीचीनमिति मॅक्समुल्लरमहाशयेनोक्तम् ॥ ३४१. २७. **सुता बभूवुः**—ञ-*मॅ-मु । सुषुवः–ख; अभिषुतवंतः–घ; सबभूः–झ; सुबभूः–त२-३-४-न-श२; सुषुवतुः–भ; अभिषुता भवन्–य; सुबभूवुः–श१ ॥ ३४३. १. **अभिषुणुत**—मॅ-मु । अभिषुत–§ ॥

[ ७. ३३ ] ३४८. २१. **चूडाकर्मणि दक्षिणतो वसिष्ठानाम्** । इदं कृत्यमिति न ज्ञायते ॥ ३५०. २५. **दुर्ज्ञानान्**–मु । दुर्ज्ञानात्–घ-झ-त-न-श-मॅ ॥ ३५१. ५–८. **हे वसिष्ठाः...न शक्यः**—त१-२-मॅ जोधपूर-लिखितपुस्तके च । मु-पुस्तके 'गंभीरः' इति नास्ति 'अन्येन अन्वेतवे' इत्येतयोश्च मध्ये 'तव महिमा' इत्यधिकमस्ति । हे वसिष्ठाः एषां वो युष्माकं स्तोमोऽपि वातस्येव

1. Margin

प्रजवः यथा वातस्य (वातस्येव–श) प्रवेगो नान्वेतुमशक्यः (अन्येनान्वेतुं न शक्यः–श) तद्वदन्येनान्वेतवे अन्वेतुं न शक्यः—ख-त४-श; हे वसिष्ठाः एषां वो युष्माकं स्तोमोपि वातस्येव प्रजवः। यथा वातस्य प्रवेगः अन्येनान्वेतुं न शक्यते तद्वदन्येनान्वेतवे अन्वेतुं न शक्यः। किंच युष्माकं वक्षथः तेजः सूर्यस्येव सूर्यज्योतिरिव तथा युष्माकं महिमा समुद्रस्येव गभीरः गंभीर इव–घ॥ ३५१. २८-२९. **उतापि च...आजहार**—§-मॅ-मु। अनन्वितार्थकमिदं वाक्यम्॥ ३५२. ५. **मित्रावरुणयोः**—घ-श-ञ्च-भ-मु। अयोः—ख; मैत्रावरुणयोः—त४-श; मित्रवरुणयोः—त३-न-मॅ॥ ३५२. ८. **अहंभुवा युक्तम्**—श-त२-श१-मॅ-मु। 'स्वयंभुवा युक्तम्' इति स्यादिति मॅक्समुल्लर-महाशयः संभावयति॥ ३५२. १०. **तत्कुम्भे**—न-श-*मॅ-मु। तं कुंभे–ख-भ; तत्कुंभ–ञ्च; तत्कुंभे–श-त१-२-३; नकुंभे–त४-न॥ ३५२. ११. **पतितं रेतः कलशे च**—§-मॅ-मु। पतिते शुक्रे कलशेऽथ–बृहद्दे.॥ ३५२. १३. **महातपाः**—§-मॅ-मु। महायशाः–बृहद्दे.॥ ३५२. १४. **इत्यभिधानं च**—मॅ-मु। इत्यभिधानं तु– बृहद्दे.॥ ३५२. १५. **सर्वतः पुष्करे तं हि**–§-मॅ-मु। सर्वत्र पुष्करं तत्र–बृहद्दे.॥

[ ७. ३४ ] ३५३. १९-२०. **षोडशिनि...द्विपदा इति**—§-मॅ-मु। मध्ये किंचिद्गतमिति प्रतिभाति। अत्र एवं भाव्यं—'षोडशिनि आ धूर्ष्वस्मा इति द्विपदा। सूत्रितं च–आ धूर्ष्वस्मा इति द्विपदा इति'॥ ३५४. १. **पूर्वस्यामिन्द्रस्य**—*मॅ-मु। पूर्वस्यामि—ख१ञ्च-त१-३-४-न-भ; पूर्वस्यापि—ज-त२-श; पूर्वस्यामचि (? °मृचि)–श। 'पूर्वस्यामिदमः' इति पीटर्सन-महाशयस्वीकृतः[1] पाठो युक्ततर इति मॅक्समुल्लरमहाशयेनोक्तम्[2]। परंतु 'पूर्वस्यामिन्द्रस्य' इत्येव समीचीनः पाठ इत्यस्माकं प्रतिभाति। पूर्वप्रकृतार्थपरामर्शित्वे हि 'अस्मै' इत्यस्यानुदात्तत्वं भवति। न हि सर्वानुदात्तत्वे इदमः (इदंशब्दस्य) प्रकृतत्वं हेतुः स्यात्॥ ३५५. १९. **अस्मान्**—*मॅ-मु। नोस्मान्–§॥ ३५६. ३. **स्तोतारः**—श। स्तोतः–मॅ-मु इतरेषु च॥ ३५६. २१. **प्रीयमाणाः**—मु। प्रियमाणाः–§-मॅ। ऋ. सं. ७. ६६. १९. भाष्ये द्रष्टव्यम्॥ ३५७. २१. **अव्ययम्**—श-त२। अन्ययः–मॅ-मु इतरलिखितपुस्तकेषु च॥ ३५८. ५. **अनु जिहीताम्**—*मॅ। अनु जीहीतां–श; अनु जिहातां–मु इतरेषु च॥ ३५८. १३. **अस्मदीयम्**—श। ऋ. सं. ७. ५६. २५. अत्र द्रष्टव्यम्। अस्मभ्यं– मॅ-मु इतरेषु च॥

[ ७. ३५ ] ३५८. १९. **एव -- सु**—ञ्च-त३-४-न-य-मॅ। एवतमस्तु–ख१-भ; एव-मुक्तस्तु–ज; एवमेतासु–श-त१-२-मु जोधपूर-लिखितपुस्तके च; एवमु–श॥

[ ७. ३६ ] ३६३. १६. **नान्यस्य कस्यचित्**—श-थ। नान्यस्य चित्–ञ्च-त२-३-४-न-श-मॅ-मु। नान्यचित्–त१। 'नान्यस्य कस्यचित्' इति स्यादिति मॅक्समुल्लरमहाशयेन संभावितम्॥ ३६४. १४. **युञ्ज्यात्**—*मॅ-मु। युंजान्–ख-ञ्च-त३-न-भ-श; युंजन्–घ; युनक्ति–श; युजान्–त१-२-४॥ ३६४. २३. **पूजयन्ति**—श१। पूजयंतु–मॅ-मु इतरलिखितपुस्तकेषु च॥

[ ७. ३७ ] ३६७. १५. **विवेषः**—घ-*मॅ। विवेष–मु इतरेषु च॥ ३६७. २८. **निवहेत्**—*मॅ-मु। न्यवहेत्–ख-घ-ञ्च-त१-२-३-४-भ-श; न्विवहेत्–श; न्युवहेत्–न॥ ३६८. ३. **ईशितव्या स्वभूता**—§-मु। ईशितव्यास्वभूता–मॅ (–अस्वभूता?)॥

---

1. Handbook to Ṛgveda Maṇḍala VII pp. 11-12
2. Preface to the 2nd Edition Vol. IV p. 185.

[ ७. ३९ ] ३७२. १. **पृथिव्यां भवाः**—*मॅ। पृथिव्याः म—ख१; पृथिव्याः—घ-श१; म—ज; पृथिव्यासा—घ-त३-४-न-श२; पृथिव्याः सा—त१-२; पृथिव्याम—भ। पृथिव्यां—मु॥ ३७२. १२. **आक्रामन्ति**—मॅ-मु। आक्रमंति-§॥ ३७२. १९. **गरणीयान्**—*मॅ। गरीयां—ख-झ-त२-३-न-भ-श। गरीयान्—घ-मु। गिरा—ज; गिरीया—त१-४॥ ३७३. ९–१०. **सर्वे देवाः...अस्मिन् सूक्ते**—झ-श। नः अस्मभ्यमर्कमर्चनीयमुपमं सर्वोत्कृष्टमन्नं यच्छंतु चंद्रा आह्लादकाः—घ; आह्लादयितारो देवा नोस्मभ्यं उपमं प्राप्तलक्ष्मीकं अर्कमर्चनीयं धनं यच्छन्तु ददतु सूक्ते—ज; 'चंद्राः......ददतु' नास्ति—त१-२-४-य; 'सर्वे देवाः......देवास्ते' नास्ति—ख-त३-न-भ। देवा नोऽस्मभ्यमर्कमर्चनीयमन्नमुपमं सर्वोत्कृष्टं यच्छंतु ददतु सूक्ते-*मॅ-मु। (अयमंशः मॅक्समुल्लरमहाशयेन ऋ. सं. ७. ४०. ७. एतन्मन्त्रभाष्यानुसारेण निबद्धः)॥

[ ७. ४० ] ३७३. २०. **युष्मान्**—*मॅ-मु। युष्मदीयान्—§॥

[ ७. ४१ ] ३७६. १ **प्रातुःऽजितम्**। भाष्यकारैः 'प्रातः जितम्' इति विभज्य व्याख्यातम्॥ ३७६. ६. **यम्**—घ-*मॅ-मु। इतरेषु नास्ति॥ ३७६. १५. **फलयुक्ताम्**—ज। सफलयुक्तां—मॅ-मु इतरेषु च॥ ३७७. १. **वा**—*मॅ-मु—×। 'धनेन' इति मु-पुस्तके नास्ति। 'भगेन देवेन वयं भगवन्तः स्याम' इति पाठो युक्त इति मॅक्समुल्लरमहाशयः[1] अभिप्रैति॥

[ ७. ४२ ] ३७८. ५. **सुते**—। 'सु ते' इति भिन्ने पदे भाष्यकारैः कृते॥ ३७८. ६. **जनिमानि सुक्तः**। भाष्यकारैः 'जनिमा निसत्तः' इति पदच्छेदः कृतः॥

[ ७. ४३ ] ३८०. ५. **साधकम्**—*मॅ। साधुकं—§-मु॥ ३८०. १२. **जननीम्**—*मॅ-मु। जननीं यं—श; जननीयं—इतरेषु। मातरम् इति षष्ठ्यर्थे द्वितीया स्यात्। मातुर्भर्तव्याः पुत्रा इव अस्माकं भरणीया इत्याद्यर्थो ज्ञेयः॥ **अस्माकम्**—*मॅ-मु। अस्मात्—ख१-त१; अस्मान्—इतरेषु॥ ३८०. १९. **जुहूः**—ज२-श१; जहुः—त४-न। जुहुः—मॅ-मु इतरेषु च॥ ३८०. २६. **यूयं --- आगन्तन**—§-मॅ। यूयं यतिष्ठ आ गंतन—मु॥

[ ७. ४४ ] ३८१. १४. **अश्विनौ देवौ**—ज-झ-त१-२-४-य-श-मु। अश्विनौ—घ। अश्विदेवौ—ख-त३-न-मॅ॥

[ ७. ४५ ] ३८२. २६. **आ देवो यातु -----इत्येषा**—§-मॅ। आ देवो यात्वित्येषा—मु। 'आ देवो यातु प्र द्यावेति (आश्व. श्रौ. ८. ८) इति। सावित्रे पशौ आ देवो यातु इत्येषा' इति स्यादिति मॅक्समुल्लरमहाशयः संभावयति॥ 'आ देवो यातु प्र द्यावेति वासिष्ठम्' इति सूत्रम् (८. ८)। ऋ. सं. ७. ५३ प्रस्तावनायां द्रष्टव्यम्॥

[ ७. ४६ ] ३८४. २२. **भवः**। अस्मादनन्तरं 'क्षम्यः' इति शब्दो गलितः स्यादिति मॅक्समुल्लरमहाशयः संभावयति॥

[ ७. ४७ ] ३८५. २२. **अभिषवणपवनादिभिः**—झ। °वचनादिभिः—ज-त४-मॅ-मु। °सेचनादिभिः—श१; °एचनादिभिः—श२॥ **समस्कुर्वत अद्य**—*मॅ-मु। समस्कुर्वत अथ—झ-श; सम्यक्कुर्वत अथ—ज-त१-२-४॥

---

[1] Preface to the 2nd Edition Vol. iv. p. 185.

[ ७. ४८ ] ३८७. २. **अस्मदभिमुखाः सन्तः**—ज्ञ-झ-त२-४-य-श-मु। अस्मदभिमुखाः—मॅ इतरेषु च ॥ **मनुष्यहितं रथम्**—*मॅ-मु। नराई रथं—घ; मनुष्यरथं—इतरेषु ॥ ३८७. ८. **उरु भवन्तीत्यृभवः**—*मॅ-मु। निरुभवन् ऋभवः—घ१; उरु भवन् ऋभव—च; उरु भवंत्यभवः—न; उरु भवंत्यृभवः—इतरेषु। 'उरु भवंतीत्यृभवः व्यत्ययेनैकवचनं ऋभवः संतः' इति स्यादिति मॅक्समुल्लरमहाशयः संभावयति ॥ ३८७. २२. **मेथतेः**—*मॅ। मिथतेः—मु; मिथ्रातेः—ख-त१-२-३-४-न-भ-श२; मिथ्रतेः—झ; मिश्रातेः—श१; मिप्रातेः—ज्ञ; मित्थातेः—थ। 'मिथतेः' इति सम्यगिति मॅक्समुल्लरमहाशयेनोक्तम्[१]। मिथधातुः तुदादावपि पठितः स्यादिति मॅक्समुल्लरमहाशयः संभावयति। परंतु पाणिनीयधातुपाठे तुदादावयं धातुर्न दृश्यते। ऋ. सं. ७. ९३. ५. अत्र 'मेथतिः' इति दृश्यते ॥

[ ७. ४९ ] ३८८. १७. **निर्वृत्ताः**—ख-मु। निचृताः—घ। निवृत्ताः—मॅ इतरेषु च ॥

[ ७. ५० ] ३८९. ७. **वैश्वदेवी**—श-*मॅ-मु। वैश्वानरी—इतरेषु ॥ ३९०. १९. **शिमिर्वधकर्मा अहिंसाप्रदाः**—ख१-भ-श१-*मॅ-मु। शमिर्वर्धनकर्मा असाप्रा—ज्ञ-त१-४; शमिवर्धनकामा असाप्रदा—झ; शिमिर्बधनकर्मा अहिंसाप्रदा—त३-न-श२; शिमिर्बेधकर्मा अहिंसाप्रदा—थ ॥

[ ७. ५१ ] ३९०. २४. **आदित्यग्रहस्यैषानुवाक्या**—ख-भ-मु। °स्यैवानुवाक्या—मॅ इतरेषु च ॥ ३९०. २५. **यक्षदादित्यान्**—*मॅ-मु। यक्षदादित्यानां—§ ॥

[ ७. ५५ ] ३९४. २७. **पञ्चम्याद्याश्चतस्रो... उपरिष्टाद्बृहत्यः**—*मॅ-मु। द्वितीयाद्यास्तिस्र उपरिष्टाद्बृहत्यः पंचम्याद्यास्तिस्रोनुष्टुभः (°श्चतस्रो°—न-श)—ख-न-भ-श; द्वितीयाद्याश्चतस्रोनुष्टुभः पंचम्याद्यास्तिस्र उपरिष्टाद्बृहत्यः—झ-त ॥ ३९४. २८. **तल्लक्षणयोगात्**—*मॅ-मु। स्वलक्षण°—ख; स्वश्वलक्षण°—झ; चलक्षण°—ज्ञ-त१-२; श्वलक्षण°—न-भ ॥ ३९५.१. **सान्त्वयित्वा ह्यसूषुपत्**—*मॅ। सांत्वयित्वा ह्यसुष्वपत्—मु। सांतयित्वा प्रसूषयत् (प्रसूषपत्-भ)—ख-भ; सांतयित्वा ह्यसूषयत्—ज्ञ-झ-त१-२; सांतयित्वा ह्यसूषपत्—त३-न-श२; सांतयित्वा ह्यसूषुपत्—श१ ॥ ३९५. २. **प्रस्वापयामास**—झ-भ-श१। प्रकृतिरथापयामास—ख१। प्रस्थापयामास—मॅ-मु इतरेषु च ॥ ३९५. ४. **गृहमेत्य तु**—ख-घ-झ-त२-३-४-न-भ-अनु. भा. ७. ५५। गृहमेत्या नु—च; गृहमध्य तु—श। गृहमेत्य नु—ज्ञ-मॅ-मु ॥ बृहद्देवतागतः पाठ एवं विद्यते—वरुणस्य गृहान् रात्रौ वसिष्ठः स्वप्न आचरत् ॥ प्राविवेशाथ तं तत्र श्वा नदन्नभ्यधावत। क्रंदंतं सारमेयं स धावंतं दष्टुमुद्यतम् ॥ यदर्जुनेति च द्वाभ्यां सांत्वयित्वा व्यसुष्वपत्। स तं प्रस्वापयामास जनमन्यं च वारुणम् ॥ **यदर्जुनेति**—§-मॅ-मु। यदर्जुनादि—अनु. भा. ॥ ३९५. ९. **कामयते तत्तद्देवता विशति**—भ। कामयते तद्देवता भवति—ख; कामयते तत्तद्देवा विशंति—झ-त१-श१; कामयते तत्तदेवा विशति—ज्ञ-श२; कामयते तत्तद्देवा विशति—त२-३-४-न। कामयते तत्तद्देवता भवति—निरु.। कामयंते तत्तद्देवा विशंति—मॅ-मु ॥

[ ७. ५६ ] ३९८. १९. **कम्पयितु(?तृ)वेगः**। कंपयितुवेगः—मॅ। 'कम्पयितुः' अथवा 'कम्पयिता' इति स्यादिति मॅक्समुल्लरमहाशयः संभावयति। कंपयितुर्वेगः—मु। ऋ. सं. १. ७९. १; १७४. ९; १०. ८९. ५ अत्र 'धुनिः' इत्यस्य 'कम्पयिता' इति व्याख्यानं कृतमस्ति ॥ ख१-झ१-त३-४-न-भ-य-श एतेषु लिखितपुस्तकेषु नवमदशममन्त्रयोर्भाष्यं नास्ति। ज्ञ-झ२-त१-२-

---

१. Preface to the 2nd Edition Vol. IV. p. 177.

मु-पुस्तकेषु नवममन्त्रस्य भाष्यमेवं विद्यते–' हे मरुतः सनेमि सनातनं दिद्युं दीप्यमानं ऋष्ट्याख्यं युष्मदीयमायुधं अस्मत्तः ( अस्मदस्मत्तः–मु ) सकाशात् युयोत पृथक्कुरुत । तथा युष्मदीया दुर्मतिः निग्रहबुद्धिः नोऽस्मान् इहास्मिन् लोके मा प्रणक् मा प्राप्नोत् ' । एतेष्वेव दशममन्त्रभाष्यमेवमस्ति–' हे मरुतः तुराणां यजमानार्थं त्वरया आगच्छतां वो युष्माकं नाम आहुवे आह्वयामि यत् येनाह्वानेन प्रियाः स्नेहयुक्ताः वावशानाः अस्माकमाह्वानं कृतमिति शब्दायमानाश्च संतः तृपत् संतुष्टाः भविष्यथ तदाह्वानमिति ' ॥ घ-ज-पुस्तकयोर्नवममन्त्रस्य भाष्यमेवम्–' सनेमि पुराणं परंपरागतं दिद्युं दीप्यमानं वर्धमानमित्यर्थः वः युष्मत्सख्यं अस्मदस्मत्तः मा युयोत मा पृथक्कुरुत । किंच इह युष्मत्सख्ये नोऽस्मान् दुर्मतिः मा प्रणक् न प्राप्नोतु ' । मॅक्समुल्लरमुद्रितपुस्तकगतमेतन्मन्त्रद्वयभाष्यमेवास्माभिः समावेशितम् । एकस्य ( C. Colebr. ) लिखितपुस्तकस्य प्रान्ते मॅक्समुल्लरमहाशयेन तदुपलब्धम् ॥ ३९९. १७. **वर्क्षःऽसु रुक्माः** । भाष्यकारैः ' वक्षः सुरुक्माः ' इति पदच्छेदः कृतः ॥ ४००. १. **प्र**—मॅ-मु-× ॥ ४००. ९. **हविष्मति**—मॅ-मु । हविर्मति–ख-त । हविर्मनि–झ-न-भ-श ॥ ४०१. ११. **त्वदीयम्** । 'युष्मदीयम्' इति भाष्यम् ॥ ४०१. १९. **क्षिप्रवन्तम्**—§-मॅ-मु । भावप्रधानो निर्देशः । शैघ्र्यवन्तमित्यर्थः ॥ ४०२. ६. **परित्यक्त्वा** । ' परित्यज्य ' इति भाष्यम् ॥ ४०२. ९. **शोभनजनम्**---§-मॅ-मु । ' शोभनजननम् ' इति स्यात् ॥

[ ७. ५७ ] ४०४. ८. **आभरणैरायुधैः**—*मॅ । आयुधैराभरणैः–§-मु ॥ ४०४. १९. **हि प्रमादः**–*मॅ-मु । क्षिप्रमार्गः–ख; क्षिप्रयागः–ज; क्षिप्रमदः–इतरेषु ॥

[ ७. ५८ ] ४०७. २. **नमन्ताम्**—*मॅ-मु । नवतां–ख; नवंतां–इतरेषु ॥

[ ७. ५९ ] ४०८. १७. **न सहते**—§-मॅ । ' सहते ' इति मु-पुस्तकस्थः पाठः समीचीनतर इति मॅक्समुल्लरमहाशयेन[1] लिखितम् ॥ ४०९. १३. **निषीदतु**—* मॅ-मु । निषेदतु–§ ॥ ४१०. १३. **यूयम्**—§-मॅ । ' वः युष्मभ्यम् ' इति भाष्यम् । वः यूयं(!)–मु ॥ ४१०. १७-२९. **अत्र शौनकः...वावैतदाह इति**—ञ-त१-२-मॅ-मु । ' त्रयाणां...वावैतदाह ' इति ख-झ-त३-४-न-भ-श-पुस्तकेषु नास्ति । घ-पुस्तके–' त्र्यंबकं त्रिलोकस्य मातृभूतं पालकमित्यर्थः सुगंधिं सुष्ठु व्यापकं पुष्टिवर्धनं यजमानस्य बलं वर्धयितारं एतादृशं रुद्रं यजामहे वयं यजमानऋत्विजः हविर्भिः पूजयामहे । किमर्थं । मृत्योः सकाशात् मुक्षीय मुंचेय । मामृतात् अमृतात् मोक्षात् नैव मुक्षीय इत्येतदर्थं । दृष्टांतः । बंधनाद्वृंतादुर्वारुकमिव उर्वारुकफलमिव तद्यथा ईषत्प्रयत्नेन मुंचत इति तद्वत् ' । त१-प्रान्तगतः पाठः–' वयं त्र्यंबकं त्रिलोचनं यजामहे । किंलक्षणं । सुगंधिं शोभनगंधोपेतं पुष्टिवर्धनं पुष्टेः पोषकं । प्रत्यक्षस्तुतिः । हे रुद्र मा मां मृतान्मरणान्मुक्षीय मां मोचय । कस्मात् कमिव । बंधनाद्वृंतादुर्वारुकमिव ' ॥ ४१०. २८. **चतुर्थपादार्थे मन्त्रस्य** । चतुर्थपादार्थमंत्रस्य–ञ-त१-२-मॅ-मु ॥

[ ७. ६० ] ४११. १५. **अदीन देव**—*मॅ-मु । अदीन देव वयं–§ ॥ ४११. २७. **वृजिना वृजिनानि**—घ१-ज-झ-त१-श-मु । वृजिनानि–ख-च-त२-३-४-न-भ-मॅ ॥ ४१२. २. **एतत्संख्याकान्**—ख-झ-श१ । ते तत्संख्याकान्–त३-भ-श२ । तत्संख्याकान्–त२-४-मॅ-मु ॥ ४१२. ६. **तदवान्तरगोव्यक्तिम्**—श१-*मॅ । तदवांतरगोयुक्तिं–मु । तदेवांतरेणाव्यक्तिं–ख-त३-भ; तदवांतरगोभ्यक्तं–श-त१-२-४; तदवीतरगोव्यक्तिं–झ; तदवांतरेणाव्यक्ति–न; तदवांतर-

1. Preface to the 2nd Edition Vol. IV. p. 177.

गोभ्यक्ति–श२ ॥ ४१२. ३०. **ऋतुं कर्तारम्**—झ-श२-*मॅ-मु । कृतं कर्तारं–त४; कर्तारं–इतरेषु ॥ ४१३. १० **व्यापितस्य** (?)–श-वर्जेषु लिखितपुस्तकेषु मॅ-पुस्तके च । व्यापितस्य–श-मु । 'विततस्य' इति स्यादिति प्रतिभाति । ऋ. सं. ८. ८३. ३; निरु. ६. २० अत्र द्रष्टव्यम् ॥ ४१४. १८. **उरुक्षयाय** । पदकाराः 'उरु क्षयाय' इति भिन्ने पदे पठन्ति ॥ ४१४. २५. **दुःखेन**—*मॅ-मु । दुःखानि–§ ॥

[ ७. ६१ ] ४१५. ८. **क्रत्वा न** । भाष्ये न व्याख्यातम् ॥ ४१५. १३ **यत् कर्म**—मॅ घ-वर्जेषु लिखितपुस्तकेषु च । शोभनकर्माणौ क्रत्वा समर्थेन कर्मणा–घ । यत् क्रत्वा न कर्म–मु । 'यत्कर्मणा' इति स्यादिति मॅक्समुल्लरमहाशयः ॥ ४१५. २४. **ऋधग्यतः...विवेकात्**—*मॅ । ऋधक् सत्येन यतो विवेकात्–मु । ऋधक्सत्यो न यतः विवेकान्–ख१; ऋधग्यतः ऋधक्सत्यो न यतः विवेकान्–थ; ऋधग्यत सत्यानयतो–घ; ऋधक् सत्यान् यतः विवेकात्–झ-न-श; ऋधक् यत् ऋधक् सत्यानयतः–त३-भ ॥ ४१६. ७. **वां युवाभ्याम्**—मॅ-मु । वां युवां–घ; युवां–इतरेषु ॥ ४१६. १०. **वां युवाभ्याम्**—*मॅ-मु बहुषु लिखितपुस्तकेषु च । युवाभ्यां–ख-भ; वां युवां–त१ । सर्वेषु लिखितपुस्तकेषु 'युवां' इति विद्यते इति मॅक्समुल्लरमहाशयेनोक्तम् । वस्तुतः ७ पङ्क्तौ विद्यमानस्य 'युवाभ्याम्' इत्यस्य स्थाने 'युवां' इति सर्वेषु लिखितपुस्तकेषूपलभ्यते ॥ ४१६. ११-१२. **नाभूवन्न भवन्ति**—*मॅ-मु । अभूवन् भवति– घ-ज्ञ; भूवन् भवंति–इतरेषु ॥

[ ७. ६२ ] ४१७. ९ **क्रत्वा...कृतः**—च-श-*मॅ-मु । कर्ता( कृत्वा–ख१; कर्त्वा–झ-त४; क्रत्वी-थ ) सर्वस्य कर्ता कृतः–ख१-झ-त४-थ-न-भ-श; कर्ता स देवस्य कर्ता ततः–त१-२ ॥ ४१७. १८. **उद्गाः**—घ-*मॅ-मु । उदगात्–ख; उद्गाः उदगाः–झ-य-श; उदगाः–त-न-भ ॥ ४१७.२६. **शुचेर्दुःखस्य**—§-मॅ-मु । 'शुचो दुःखस्य' इति भाव्यम् । ऋ. सं. ६. ३. ३; ४९. ८ इत्यादिषु द्रष्टव्यम् ॥ ४१८. १६. **युवाभ्याम्?**—§-मॅ-मु । 'युवयोः' इति भाव्यम् ॥ ४१८. २०. **विश्रुतम्**—§-मॅ-मु । 'विश्रुतान्' इति भाव्यम् ॥

[ ७. ६४ ] ४२१. ६. **यज्ञस्य वा**—ख-भ । यज्ञस्य–मॅ-मु इतरेषु च ॥ ४२१. १०. **पुष्टिम्**—§-मॅ-मु । 'वृष्टिम्' इति पदपाठः ॥ **तत्साधिकाम्**—मॅ । तत्साधकां–§-मु ॥ ४२१. २५. **स्तोमेन**—मॅ-मु । स्तोमेति–ख-झ-त-न-भ-श । स्तौमिति–घ ॥ ४२१. २७. **जनम्**—§-मॅ-मु । एतस्मात्पूर्वं 'तम्' इति पदमावश्यकमिति मॅक्समुल्लरमहाशयः ॥

[ ७. ६५ ] ४२२. २४. **पुत्रादिरूपाः**—*मॅ-मु । पुत्रादिरूपा–§ ॥

[ ७. ६६ ] ४२३. २७. **आद्यन्त्यौ**—*मॅ । अद्यतौ–न । आद्यंतौ–मु इतरेषु च ॥ ४२४. ५ **अहोरात्रे**—ख-भ-तै.सं. । अहोरात्रं–मॅ-मु इतरलिखितपुस्तकेषु च ॥ ४२४. १५. **स्तयो गृहाः**—*मॅ । सूर्यो ग्रहाः–ख-भ; स्तिया ग्रहाः–घ; स्तयो ग्रहाः–त-न-श२-मु; स्तियो ग्रहाः–श१ । ऋ. सं. ७. १९. ११; १०. ६९. ४. अत्र द्रष्टव्यम् ॥ ४२४. १७. **फलवन्ति**—ख-भ । सफलवंति–मॅ-मु इतरेषु च ॥ ४२५. १८. **विप्राः** । 'विप्रा' इति विसर्गरहितः पदपाठः ॥ **इयमेव**—त१-भ-श-मु । इयं मम–ख; इयं मे–घ; इयमव–श; इयं मेव–त२-४; इयं मे च–झ-त३-न-मॅ ॥ ४२६. ४. **अदनसाधनः**—§-मॅ-मु । 'अदनसाधनम्' इति सम्यक् ॥ ४२६. ५. **क्षित्यादीनि**—§-मॅ-मु । एतत्पदमनावश्यकम् ॥ ४२७. १८-१९. **सूर्यं वहन्ती°**—*मॅ-मु ।

इव–य ) त१-य ॥ **परिपदां समानाधिकरणः**—*मॅ-मु । परिपदी समानक–ख-ञ-त२-३-४-न-भ१; परिपदां समानक–त१; पद्यमानानां–भ१-३ ॥ ६७३. १९. **विशेषेण**—भ । विशेषणं–ग । निःशेषेण–त-मॅ-मु ॥ ६७३. २५. **संन्यसे**—त२-भ२-*मॅ-मु। सन्यसे–ख-ग-घ-ञ-भ१-३; संन्यासे–त३; सन्यासे–त४ । 'सन्यसे' इति पदपाठः ॥ ६७४. १. **ऋन्**—*मॅ-मु । ऋन–जोषपूरलिखित-पुस्तके । ऋन्–इतरेषु ॥ **क्षणोतेः**—*मॅ-मु । अर्तेः–ग; ऋणोतेः–इतरेषु ॥ ६७४. ३. **किं पुनस्तं हन्ति**—*मॅ-मु । किं पुना हंति–ख-त; किं पुनः हंति–ग-घ-श; किंतु नाहंति–न-भ१-२-य; किमु न हंति–भ३ ॥ ६७४. ७. **हननसाधनम्**—ग-घ-न-भ-मु । हननसा( युधं )–ख-त-श । हनन-साधकं–मॅ ॥ ६७४. १६. **वाजनम्**—मॅ-मु । बर्जनं–ख-ग-त-न-श; वर्धनं–भ ॥ ६७४. १९. **प्रापितवती**—*मॅ-मु । प्रापितवान्–§ ॥ ६७४. २०. **करोषि**—*मॅ-मु । करोति–§ । 'कारय' इति भाव्यम् ॥ ६७४. २४. **आदत्तवान्**—*मॅ-मु । दत्तवान्–§ ॥ ६७५. २. **यदा**—भ३-*मॅ-मु । यद्वा यथा–ख-त१-२-३-न-भ१-२; यद्वा यदा–ग ॥

[ ८. २५ ] ६७५. ७. **विश्वमना**—ख-ञ-त२-भ-*मॅ । वैयश्वनामा–मु ॥ ६७५. २२. **कर्त्रपेक्षत्वात्**—ग-भ३ । कर्तृपेक्षत्वात्–न-भ१-२ । कर्तृपक्षत्वात्–ख-ञ-त२-३-श-मॅ-मु ॥ ६७६. ४. **ऋतावाना**—§-मॅ । 'ऋतऽवानौ' इति पदपाठः । ऋतावानौ–मु ॥ ६७६. १०. **बलाद्वेगः**—भ-*मॅ-मु । बलाद्देग–ख-त; बलोवेग–श; द्वेग—न ॥ ६७६. १२. **क्षयतेः**—त२-न-श-मॅ-मु । क्षीयतेः–भ । 'क्षियतेः' इति भाव्यम् ॥ ६७६. २०. **वृष्ट्यवेला तदा**—*मॅ । वृष्ट्यवेजानाद्–ख-त-न-भ२; वृष्ट्यभावो जातः तदा–भ१-३-श । मु-पुस्तक एतद्वाक्यं नास्ति ॥ ६७७. १३. **तद्वद्दुःसहेन**—भ१-श-*मॅ-मु । तद्वदः दुःसहेन–ख-त-न; तद्वदुःसहेन–भ२-३ । तद्वत् दुःसहेन–मु ॥ **अहोरात्रयोः**—*मॅ-मु । अहोतात्रयोः–ख-त-न-श; लोकत्रयेन–भ१; लोकत्रय–भ२-य; लोकत्रये–भ३ ॥ ६७७.१९. **वृद्धश्रवसः** । 'वृद्धऽश्रवसः' इति पदपाठः ॥ ६७८. १. **पालनवत्त्वात्**—*मॅ-मु । पालनैवत्त्वान–ख-ञ-त३-४; पालनैवत्त्वात्–त१-२; पालनैतत्त्वान–न; पलितेतत्त्वात्–भ१; पलिनेवत्त्वात्–भ२; मरुत्पालितत्वात्–भ३ ॥ ६७८. ४. **कर्म**—भ-श-*मॅ-मु । कर्मक–ख-त-न ॥ ६७८. १०. **उरुतरम्**—*मॅ-मु । गुरुतरं–§ ॥ ६७८. १९. **पालयताम्**—भ१-२-*मॅ-मु । पालयंतां–इतरेषु ॥ ६७९. ११. **वरुणस्य**—श-*मॅ । वरुर्षण–भ१; वर्षणस्य–इतरेषु ॥ **च**—*मॅ । धां–ख; व–त१; वा–मु इतरेषु च ॥ ६७९. १६. **पर्यन्तान्**—*मॅ-मु । रपानति–ख-ञ-त२-३-४-न-भ१-२; स्थानति–त१; अंतरान्–घ; अंतानपि–भ३; पारं परितो मिनोमि–श ॥ ६७९. २३. **रूपम्**—*मॅ-मु-X ॥ ६८०. ५. **लुक्**—*मॅ-मु । षष्ठी–§ ॥ ६८०. ११. **उक्षण्शब्दात्**—न-भ-*मॅ । उक्षणशब्दात्–ख-त-श-मु ॥ ६८०. १२. **वृद्धिभावोऽपि**—*मॅ । वृद्धयभावोपि–ख-त-न-भ१-३-मु; वृद्धभावोपि–भ२; वृद्धयभावेपि–श ॥ ६८०. १३. **बहुवत्पितृशब्देन (?)**—§-मॅ-मु ॥ ६८०. २१. **स्वकुशलं**—ख-त-न-भ२-श । स्वकुलं–भ१; स्वकुशले–भ३ । कुशलं–मु । नु कुशलं–मॅ । एतदुर्बोधं दृश्यते ॥ **आयुधनेतॄणाम्**—श-*मॅ-मु । अयुतनेतॄणां–ख; अधुयनेनृणां–त-न; अधूयने-तॄणां–भ१-२; अध्वरनेतॄणां–भ३ ॥ ६८०. २२. **भवेताम्**—भ३-*मॅ । भवेत–§ । भवेतं–मु ॥ ६८०. २७-२८. **मेधाविनामुच्चितौ**—*मॅ-मु । मेधाविनामरिथतौ–ख-त-न; मेधाविनौ–घ-श; मेधाविनावस्थितौ–भ ॥ ६८१. २. **प्रत्यग्रहीषम्**—*मॅ-मु । प्रत्यगृहीतं–§ ॥

[ ८. २६. ] ६८१. ४. **तत्पूर्वाः**—त२-*मॅ-मु-अनु. । तत्पूर्व्यः-इतरेषु ॥ ६८१. ७. **पञ्च-दशार्चः**—भ३-मु । पंचर्चः-त-न-भ१-२-श-मॅ ॥ ६८१.१४. **युवयो रथम्**—घ-मु । युवयोरर्थे-मॅ इतरेषु च ॥ ६८१. २२. **तनोतीति**—भ३-श-*मॅ-मु । तनोति-इतरेषु ॥ ६८२. १२. **रोदन-शीलौ रुवन्तौ**—*मॅ-मु । रोदनशीलो देवत्यौ-न; रोदनशीले देवत्यौ-ख-त-भ-श ॥ ६८२. १४. **संक्लेशयतम्**—*मॅ-मु । संक्लेदयतं-ख-श-त१-२-३-भ२-३; संकेदयतं-त४-न; संक्लेदयतं-भ१; संकेत-यनं-श ॥ °**संक्लेशनयोः**—*मॅ-मु । °संक्लेदनयोः-ख-त-भ२-३; ( हिं)सकेदनयोः-न; °सनकेदनयोः-भ१; °संकेतनयोः-श ॥ ६८२. २०. **युवयोः**—*मॅ-मु । युवां-§ ॥ **ते तत्रैव**—*मॅ-मु । ते तु तत्रैव-न-भ-श; वे तु तत्रैवं-ख-त ॥ ६८२. ३०. **तैरपच्यावनीयौ**—*मॅ-मु । तैरुष्यचावनीयौ-ख-भ१; तैरुष्यच्यावनीयौ-त-न-भ२; कैरप्यच्यावनीयौ-भ३; तैरुपच्यावंनीयौ-श ॥ ६८३. १२ **स्तुत्वा**—मॅ-मु । स्तुत्या-§ ॥ ६८३. २१. **अपनेतॄन्**—*मॅ-मु । आनेतॄन्-§ ॥ ६८३. २२. **आडागमः**—भ२ । अडागमः-त२-न-भ१-श-मॅ-मु ॥ ६८३. २७. **आत्मीयतया**—§ । आत्माय-त्तया-*मॅ-मु ॥ ६८३. २८. **संगतौ सन्तौ**—ख-घ-त-न-भ१-२-श-मु । संगतौ-भ३-मॅ ॥ ६८४. २८. **क्रतौ**—श-*मॅ-मु । इतरेषु नास्ति ॥ **हवानाम् इति**—भ३-श-*मॅ-मु । हवानां-त-न-भ२ ॥ ६८५. ६. **सप्तम्याः सः**—§-मॅ । सप्तम्याः सुः-मु । अयमेव साधुः ॥ ६८५. ८. **अमनुष्यौ**—*मॅ-मु । मनुष्यौ-§ ॥ ६८५. १२. **श्वेतयावरीनाम्न्या**—भ । श्वेतयावरीनान्यो-त-न-श । श्वेतया-वरीनाम्न्यो-मॅ-मु ॥ ६८५. २१. **हिरण्मयकूलवत्त्वात्**—ख-त-न-भ-श । हिरण्मयकूलवत्या-मॅ-मु ॥ ६८५.२८. **करतलास्फालनैः**—त१-२-३-न-भ-श-मु । करलास्फालनैः-ख; करललास्फालनैः-श-त४। करल्तास्फालनैः-*मॅ । 'करतलास्फालनैः' इति पाठः समीचीनतर इति मॅक्समुल्लरमहाशयः[1] ॥ **आश्वास्य पोषणीयौ**—भ३-*मॅ-मु । आश्वाश्व( अश्वाश्व-भ१-२ )पेषणीया-त१-२-३-न-भ१-२; आश्वास्य पोषणीया-श ॥ ६८६.२२. **अश्वावावह**—*मॅ-मु । अश्वावाह-श-त२-भ;अश्व्यावाह-त३-४-न-श ॥

[ ८. २७ ] ६८७. ११. **प्रागाथम्**—भ-श-*मॅ-अनु. । प्रगाथं-ख-त-न-मु ॥ ६८७.३२. **ओषध्यः**—§-मु । ओषधयः-मॅ ॥ ६८८. २०. **वा**—*मॅ-मु-× ॥ ६८८. २८. **स्तोतृषु**—§ । स्तोत्रेषु-मॅ-मु ॥ ६८८. २९. **शुश्रूषुतया प्राप्तव्यया**—*मॅ-मु । शिश्रूषतया प्रातव्यत्यया-श-त२-३-४-भ२; शुश्रूषुतया प्राप्तव्यत्यया-त१; शिश्रूषतया मातव्यया-न-भ१; शुश्रूषिततया जानव्यया-भ३; शुश्रूषतया प्राप्तव्यतया-श ॥ **तया**—भ३-*मॅ-मु । गिरा-श; गतया-इतरेषु ॥ ६८९. २८. °**कर्मणि**—§-मु । °कर्माणि-मॅ ( मुद्रणदोषः ? ) ॥ ६९०. १५. **विभाषितणिच्त्वात् यदा णिच्**—*मॅ-मु । विभाषिताणिरत्वात् यदा णिङ्-श-त२-३-४; विभाषितणित्वात् यदा णिङ्-न-भ; विभाषिताणित्वात्पदाण्णिङ्-श ॥ ६९१. १३. **कुर्वते**—§ । कुर्वति-मॅ-मु ॥ ६९१. ३१. **अपरम्**—*मॅ-मु-× ॥ ६९२. ८. **क्रियमाणत्वात्**—*मॅ-मु । क्रियमाणा°-ख-त-न-भ२; क्रिय-माणानां-ग-भ१-३ ॥ ६९२. ११. **हविर्भाक्त्वम्**—ग-भ२-य । हविर्भाक्तं-त४-न; हविर्भक्षं-श-त२ । हविर्भक्षणं-श-मॅ-मु ॥ ६९३. ८. **ऋजुगमने प्रस्थे**—*मॅ-मु । ऋजुगमनप्रेरन्-ख-त-भ१; ऋजुगमनप्रेरयन्-न-भ२-३-श ॥ ६९३. १८. **मुचिः**—*मॅ । निर्मुचिः-§-मु ॥ ६९३. २०. **धनं मनवे**—*मॅ-मु । धनं मध्ये-ग-भ३; धने मध्ये-त-भ१-२ ॥ ६९३. २५. **आयुधानाम्**—

1. Preface to the 2nd Edition Vol. IV. p. 178.

ग । आसानां–मॅ-मु इतरेषु च ॥ ६९४. ९. **निम्रोचने**—मॅ। आनिम्रोचने–ख-घ-त-न-भ-श-मु; आनिचेने–ग ॥ ६९४. १७. **तद्धनम्**—§-मॅ। तद्धनमावृणीमहे संभजामः तथा हविर्जुह्वतः यागं कुर्वतो वयं हे आदित्याः तद्धनं–मु ॥ ६९४. १८. **अनशामहै**—ख-ग-त-न-भ-श-मॅ-मु। अनशामहै अश्नुयाम हे आदित्याः अदितेः पुत्रा देवा बर्हिः (? हविः) जुह्वतः अस्माभिर्दत्तं हविः स्वीकुरुत ततः धनंत्त तद्धनमावृणीमहे वयं संभजामहे–घ । एतन्मन्त्रभाष्ये कानिचिन्मन्त्रगतानि पदानि न व्याख्यातानि । मु-पुस्तके तेषां व्याख्यानं दृश्यते। 'तत् धनम्' इत्यस्यानन्तरं मु-पुस्तके 'आ वृणीमहे संभजामः । तथा हविः जुह्वतः यागं कुर्वतो वयं हे आदित्याः तद्धनं' इत्यधिकं विद्यते ॥

[ ८. २८ ] ६९४. २१. **विश्वे देवाः**—§-मु। विश्वे देवे–मॅ ॥ ६९५. १३. **निर्दिशति**—भ१-३-श-मु। निदिशति–इतरेषु मॅ-पुस्तके च ॥ ६९५. २८. **अदितेः (?)**—§-मॅ। **दितेः**–मु। एतदेव युक्तम् ॥ ६९५.३१. **सप्रपञ्चेन (?)**—§-मॅ-मु। 'सप्रपञ्चम्' अथवा 'प्रपञ्चेन' इति भाव्यम् ॥

[ ८. २९ ] ६९६. ५. **वैश्वदेवशस्त्रे**—§-मु। मॅ-पुस्तक एतन्नास्ति ॥ ६९६. ९. **किंचित्पदलिङ्गात् पृथक्देवताः**—ग-श-मु। किंचित्पदंलिंगात् (°पदलिंगात्–भ२-३-य) पृथक् पृथक् (पृथक्–ख-त३-४) देवताः–ख-त१-२-३-४-न-भ; किंचित्पदविभागात् लिंगात् पृथक्देवताः–श। किंचित्पदं लिंगात्पृथक्देवतं (?)–मॅ ॥ ६९६. १०. **सौम्यम्**—ग-न-भ-*मॅ। सोम्यं–त-श-मु ॥ ६९६. ११. **शबलतादिषु(?)**—*मॅ। सवलतादिषु–त४; सचलतादिषु–श; सर्वलतादिषु–इतरेषु मु-पुस्तके च ॥ ६९६. १२. **तावदुद्गते**—*मॅ-मु। तावुदिते–ख-त३; तानुभानुपुष्टे उदक्षे–ग, ताबुउदिते–श-त१-२; तावुदते–त४-भ१-२; तायुदात–न; लताः पुष्यंते–भ३; तापोपनुदत्–श ॥ **दुःखोपशमनानि पुष्टानि खलु**—*मॅ-मु। सर्वे स्वदुःखोपशमनेन (स्वदुःखशमनेन–य) पुष्यंति खलु–ख-श-त१-२-भ; सर्वदुःखोपशमनेन (सर्वस्वदुःखापशमनेन–त३-४-न) पुष्टानि खलु–ग-त३-४-न-श ॥ ६९६. १३. **रात्रयश्चन्द्रनेतृकाः**—ग-*मॅ-मु। शस्त्रयश्चंद्रनेतृकाः–त-न-भ२-श; रत्त्रयश्चंद्रनेत्रकाः–भ१-३ ॥ ६९६. ३१. **आवरकाणि**—मॅ। अपामावरकाणि–§-मु ॥ ६९७. १४. **यथा**—*मॅ-×। मु-पुस्तकेऽप्येतन्नास्ति ॥ ६९७.१६. **तदाहृत्य**—§-मॅ-मु। 'तानि आहृत्य' इति भाव्यम् ॥ **स्वसहायेभ्यः**—*मॅ। तस्य सहायेभ्यः–§-मु ॥

[ ८. ३० ] ६९८. २१. **लेटि**—*मॅ-मु। लोटि–§ ॥ ६९८. २२. **लुगभावः**—न-भ-*मॅ-मु। नुगभावः–त-श; स्वभावः–ग ॥ **असतिः**—न-भ। असयेति–त-श-मॅ-मु। ६९९. १. **धनादिमन्तश्च**—भ३-*मॅ-मु। धनादिमन्त्रश्च–इतरेषु ॥ ६९९. १-२. **मानवात्......तस्मात्**—*मॅ। मानवात् (मनुः–न; मानवाः–श) सर्वेषां मनुः पिता तत (तेन–श) आगतात् परावतः पिता मुहुरं (दूरं–श) मार्गं चक्रे तस्मात्–श-त३-४-न-श; मानवात् पित्र्यात् सर्वेषां मनुः पिता ततः आगतात् परावतः दूरात् पथः–घ। त२-भ-पुस्तकयोः 'सर्वेषाम्' इत्यस्मादनन्तरं 'मनुः' इति पदमधिकमस्ति। मु-पुस्तके–'मानवात् पित्र्यात् मनुः सर्वेषां पिता तत आगतात् परावतः पिता मनुर्दूरं मार्गं चक्रे तस्मात्' ॥ ६९९.४. **अस्मान्**—*मॅ-मु। मास्मान्–§ ॥ ६९९.११. **विश्वानरः**—*मॅ। वैश्वानरः–§-मु ॥ ६९९. १३. **शृणाति**–*मॅ। शृणोति–§-मु ॥

[ ८. ३१ ] ६९९. २८. **लेट्यडागमाः**—*मॅ। लेट्यडागमौ–§। **लेट्यडागमः**–मु। 'लेट्याडागमाः' इति भाव्यम् ॥ **ब्रह्म**—मॅ। ब्रह्मेत्–घ; इतरलिखितपुस्तकेषु एतन्नास्ति। '**ब्रह्मा**' इति

पदपाठः । एवमेव मु–पुस्तके ॥ ७००. ८-९ **दीप्तिमान्...असत्**—*मॅ । दीप्तिमान् ( दीप्तिमान् सन्–ग ) रथः स्यंदनः देवानां हविष्प्रदानरूपेण यज्ञेन ( यज्ञे–ग; पूजनेन–भ३ ) असत्–म-भ३-मु; दीप्तिमान् रथः असत्–घ; दीप्तिमान् शीलो स्यंदनः देवानां हविष्प्रदानरूपेण पूजायज्ञेन ( यूपयज्ञेन–त ३-न-भ१; पू - यज्ञेन–ज्ञ-त२-४ ) असत्–ज्ञ-त२-३-४-न-भ१-२-श ॥ ७००.११. **येन मे रथः**—*मॅ-मु । यो हेमंरथैः–ख-त-न; यागे रथै–ग; यो हेमरथः-भ; यो हैमरथे–श ॥ ७००. १२. **येन**—*मॅ-मु । तेन–§ ॥ ७००.१७. **अहरहः**—ख-त१-२-न-भ-श-मु । ग-घ-त३-४-*मॅ-पुस्तकेष्वेतन्नास्ति ॥ **देवैः**—ख-घ-ज्ञ-त१-२-न भ-श-मु । ग-*मॅ-पुस्तकयोरेतन्नास्ति ॥ ७०१. ३. **प्राशितव्यान्**—*मॅ । प्राशव्यान्–§-मु ॥ ७०१. ५. **तिष्ठेताम्**—ग-घ । तिष्ठतां–भ१ । तिष्ठातां–मॅ-मु इतरेषु च ॥ ७०१. ८. **न अपि**—*मॅ-मु । अपि–§ ॥ ७०१.९. **अपलपन्ति**—मॅ-मु । अपलपति–§ । 'अपलपतः' इति भाव्यम् ॥ ७०२. ५. **भवतो**—ग-*मॅ-मु । भवथ–इतरेषु ॥ ७०२. ६. **वर्तामह इत्यर्थः**—ग-भ३-*मॅ । वर्तमिदमित्यर्थः–ख; वर्तमित्यर्थः–ज्ञ; वर्तमिदंत्यर्थः-त२; वर्ताम इत्यर्थः–मु इतरेषु च ॥ ७०२. १०. **प्रत्यागच्छतु**—ग-घ । प्रतिगच्छतु–मॅ-मु इतरेषु च ॥ ७०२. २०. **गोपायितारो**—ख-ग-घ-ज्ञ-त१-२-भ२-३-मु । गोपयितारो–त३-४-न-श-मॅ ॥ ७०२. ३०. **क्षेत्रो**—§-मॅ-मु । 'क्षेत्रम्' इति भाव्यम् । ऋ. सं. ३. ८. ७. द्रष्टव्यम् ॥ ७०३. १६. **मनः**—ग-घ-*मॅ । न–त-न-मु ॥ ७०४. ६. **आशुगमनाश्व°**—भ३-*मॅ-मु । शीघ्रगमनाश्व°–ग; गमनाश्व°–ज्ञ-त२-३-भ१-२ ॥

[ ८. ३२ ] ७०४. २४. **अच्छावाकवादे**—*मॅ-मु । अच्छावाको–ग; आच्छादको–त-न-भ ॥ **पत्नीयजमानस्थाने**—§-मॅ-मु । 'प्रत्यस्मा इत्यस्य तृचस्य स्थाने' इति भाव्यम् । 'अच्छा वो अग्निमवसे प्रत्यस्मा इति तृचयोः स्थानेऽच्छा नः शीरशोचिषं प्रति श्रुताय वो धृषदिति तृचावच्छावाकः' इति हि आश्व. श्रौ. सूत्रम् । मॅक्समुल्लरमहाशयेनाप्येवमेव संभावितम् ॥ ७०५. २. **सृबिन्दं सृबिन्दनामकम्** । सुबिंदं सुविंदनामकं–न-भ; सुविंदं एतन्नामकं–घ । सुबिंदनामकं–ख-ग-त-श-मॅ-मु ॥ ७०५. १८. **नगरीमिव**—§ । नगरमिव–मॅ-मु ॥ ७०६. २८. **शोभनपारणश्च**—ग-*मॅ-मु । शोभनपारश्च–भ३; शोभनवरणश्च–इतरेषु ॥ ७०७. १३. **यज्वा ब्रह्मचारिवासी**—भ३-*मॅ-तै. सं. । यद्वा ब्रह्मसूचारिवासी–ख-त; यद्वा ब्रह्मचारिवासी–न-भ१-२-श । यज्वा ब्रह्मचारीति–मु ॥ ७०८.७. **बुसं तुभ्यमिति**—*मॅ । बुसं तुभ्येति–भ२-३-मु । नुसः स्वधा तुभ्येति–ज्ञ-त१-२; तुसं संतुग्धं–न; नुसः संनुग्धेति–त३-४; तुसं बुसं तुभ्येति–भ१ ॥ ७०८. २६. **निम्नं देशम्**—§-मु । निम्नदेशं–मॅ ॥ ७०८. २९. **अध्वर्यो**—घ-मु । अध्वर्यवः–मॅ इतरेषु च ॥

[ ८. ३३ ] ७१०.२२-२३. **इन्द्रः...आगमत्**—§-मॅ । 'आ गमः इन्द्र' इति पदपाठः । इन्द्रः...आगमः आगमत्–मु ॥ ७११. २१ **अपरिवृतः**—*मॅ-मु । परिवृतः–ग; आवृतः–ज्ञ-त३; अवृतः–त१-२-४; अवृतः–न; रपवृतः–भ ॥ ७११. २२. **श्रवः श्रयन्त्यस्मिन्निति**—भ२-*मॅ-मु । युध शृण्वन्त्यस्मिन्निति–ग; श्रितः सन् श्रवं श्रयंत्यस्मिन्निति–ज्ञ-त१-२; घश्रवं श्रयंत्यस्मिन्निति–त३-४; श्रवा श्रयंत्यस्मिन्निति–भ१-२; श्रवयंत्यस्मिन्निति–न ॥ ७१२. २४. **वृषभिश्चाकृष्टः**—*मॅ-मु । वृषाश्चाकृष्टौ–ख-त३; वृषाश्वकृष्टो–ग; वृषाश्चाकृष्टो–न-श; वृषभिः सेक्तृभिः सोमरसस्य सोतृभिः ( सेक्तृभिः–भ३ ) चाकृष्टो–भ; वृषैश्चाकृष्टो–घ ॥ ७१२. २५. **वृषा**—§-मॅ । 'वृषो इति' इति पदपाठः । वृषो वृषैव–मु ॥ ७१३.२४. **रथस्थम्**—घ-भ-श-मु । रथस्थां–ख-ग-त-

मॅ ॥ ७१४. ३. **महम्**—ग-*मॅ । महान्–मु इतरेषु च ॥ ७१४.५. **सुखतमानि**—ख-ञ-त१-२-न-भ-मु । ग-घ-त४-श-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ७१४. ९. **तव**—*मॅ-मु । ते तव–§ ॥ ७१४. १५. **प्रायोगिः**—*मॅ-मु । प्रायोगिः–§ ॥ ७१४. २३. **रथस्य**—घ । रथः–मॅ-मु इतरेषु च ॥

[ ८. ३४ ] ७१५. ९. **एन्द्र**—ञ-त३-न-भ-मु-अनु. । ऐंद्र–ग-त४-मॅ. ॥ **गायत्रः**—न-भ-मु-अनु. । गायत्र्यः–ग-त-मॅ ॥ ७१६. १. **सोमलताम्**—भ-श । सोमलता–मॅ-मु इतरेषु च ॥ ७१७. १५. **अर्य** । ' अर्यः ' इति पदपाठः ॥ ७१७. १६. **स्वाहा**—ख-ग-घ-त-न-भ२-श-मु । भ१-३-मॅ एतेष्वेतन्नास्ति ॥ ७१७.२१. **उपश्रुति उपश्रुतौ**—*मॅ-मु । उपश्रुति–ग-घ; उपश्रुतेः–त-न-भ२; उप-श्रुतिश्रुतेः–भ१-३-य ॥ ७१८. १२. **वा** । एतस्मादनन्तरं ' धनानि ' इत्यावश्यकमिति मॅक्समुल्लरमहाशयः मन्यते ॥ ७१९.१. **तेषु**—मॅ । तेषु तेषु –ग; तेष्वेषु–इतरलिखितपुस्तकेषु । तेष्वश्वेषु–मु ॥ ७१९. २. **तिष्ठम् इति**—*मॅ-मु । तिष्ठति–ख-त-न-भ१-२-श; तिष्ठदिति–ग; तिष्ठं–घ; तिष्ठंति–भ३ ॥

[ ८.३५ ] ७१९. ५. **औपरिष्टाज्ज्योतिषम्**—त२-४-मॅ । उपरिष्टा°–ञ-श-मु; ओपरिष्टा°–न-भ । औपरिष्टाज्ज्यौतिषम्–अनु. ॥ ७१९. ८. **अप्तोर्यामे**—भ३ । ऋ. सं. ५. ७६. सूक्तप्रस्तावनायां द्रष्टव्यम् । अश्विनोर्यामे–त-न-भ१-श-मॅ-मु । अश्विनोर्ध्वे–ग; अश्विनोर्यागे–भ२; 'अप्तोर्यामे' इति स्यादिति मॅक्समुल्लरमहाशयेन संभावितम् ॥ **होतुरतिरिक्तोक्थे**—न । °रिक्तोक्थ्ये–मॅ-मु इतरेषु च । ऋ. सं. ५. ७६. सूक्तप्रस्तावनायां ' °रिक्तोक्थ्ये ' इत्यस्य स्थाने ' °रिक्तोक्थे ' इति पठनीयम् ॥ ७१९. १५. **सजोषसा** । ' सुऽजोषसौ ' इति पदपाठः ॥ ७२०.५-६. **विश्वा सवना सर्वाणि**—घ-न-भ३-मु । विश्वा विश्वानि–भ२ । विश्वा सर्वाणि–मॅ ॥ ७२०. २५. **वाः वनम्**—ख-त-न-भ-श । वा वनं (?)–मॅ-मु ॥ ७२१. ११. **गगनम्**—घ-मु । वेगेन–ग; वागमन–ख-त-श । गगणं–*मॅ । ७२२.९. **मित्रावरुणवन्ता**—§-मॅ । 'मित्रावरुणऽवन्तौ' इति पदपाठः । मित्रावरुणवन्तौ–मु ॥ **धर्मवन्ता**—घ-श-मु । धर्मवंतौ–मॅ इतरेषु च ॥ ७२३. १९. **सोमाभिषवम्**—§-मु । अभिषवं–मॅ ॥ ७२४. २०. शतपथब्राह्मणे ' सह ' नास्ति । ७२४. २१. **एव यत्**—श. ब्रा. मॅ-× । मु-पुस्तकेऽप्येतन्नास्ति ॥ ७२४. २८. **तृम्पतं तृप्यतम्**—मु । तृप्यतां–ख-ञ-त३-४-न-भ१-३; तृप्यतः–ग; तृंपतं तृप्यतां–घ; तृप्यतं–त१-२-भ२-य-श ॥

[ ८. ३६ ] ७२५.१३. **अन्यासु**—*मॅ-तै. सं. । अन्यान्यासु–ग; अन्या–त-भ । अन्य–मु ॥ ७२५. २२. **रक्ष**—ग-*मॅ-मु । रक्षसि–घ-त-न-भ२ ॥ ७२६. २७. **प्राविथ**—भ३-*मॅ-मु । प्रत्रस्यमाविथ–ख-त२-३-४-न-भ१-२; माविथ–ग; पुरुकुत्सपुत्रं प्राविथ रक्षिथ–घ-ञ-त१; पुत्रं त्वमाविथ–श ॥

[ ८. ३७ ] ७२७.१. **महाव्रते निष्केवल्य एतत्सूक्तम्** । ' प्रेदं ब्रह्मेन्द्रो मदाय सत्रा मदास इति निष्केवल्यम् ' इति आश्व. श्रौ. सूत्रानुसारेण ' पृष्ठ्यस्य पञ्चमेऽहनि निष्केवल्य एतत्सूक्तम् ' इति भाव्यमिति प्रतिभाति । मॅक्समुल्लरमहाशयेनाप्येवमेव संभावितम् ॥ ७२७. ८. **प्ररक्ष**–न-भ-मॅ-मु । प्ररक्षः–घ; रक्ष–त२-श । ' प्रारक्षः ' इति स्यादिति मॅक्समुल्लरमहाशयः ॥ ७२७. २१. **अस्य भुवनस्य**—ग-घ-भ१-३-मु । स्य भुवनस्य–इतरेषु । भुवनस्य–मॅ ॥

[ ८. ३८ ] ७२८. २३. **°स्तोत्रियसंज्ञकस्तृचः**—*मॅ-मु । °स्तोत्रियसंज्ञक–त-भ ॥ ७२८. २५. **प्रातःसवनीयस्य**—*मॅ-मु । प्रातःसवनीय–ग-त४-भ२; प्रातःसवन–ञ-त२-भ३;

प्रातःसवनि–भ१ ॥ ७२९.१. स्थः । अस्मादनन्तरं 'क्रतौ कालेकाले यष्टव्यौ ' इति ञ-भ२-य-पुस्तकेष्वधिकं विद्यते ॥ भवथो हि—§-मु । भवथः–मॅ ॥ ७२९. २. युद्धेषु कर्मसु—ञ-त१-२-भ२-य । कर्मसु युद्धेषु–ग-त४-मॅ-मु ॥ चोपतिष्ठन्तौ—ख-ग-ञ-त३-४-न । यज्ञादिषु बोपतिष्ठंतौ–त१-२-भ२ । बोपतिष्ठंतौ–मॅ-मु ॥

[८. ३९] ८३०. ३०. अभिगच्छन्तः—मॅ । अभिगच्छन्त (?)–मु । गच्छतः–ग; अभिच्छतः–घ; अभिगच्छतः–त-न-भ१; अभिगच्छत–भ२; अभिगच्छता–भ३ ॥ ७३१.२५-२६. अभीवृतः परिवृतः—घ-मु । आवृतः–त१; आवृतः परिवृतः–इतरेषु । अभीवृतः–मॅ ॥ ७३३. ६. इरज्यसि ईशिषे—मॅ-मु । राजासि–घ; राजासाशिषे–त३-४-न; राजासशिषे–ग; राजामाशिषे–ञ-त२; राजासीशिषे–भ ॥

[८. ४०] ७३३. ११. ऊरुभाग—*मॅ-मु । उरुभाग–ग; ऊरुभाग–ञ-त२; उरुभीग–त३-४-भ२; उरुभिग–भ१; ऊरुणि–भ३ ॥ एतत्—ग-न-भ-ञ । एव–मॅ-मु इतरेषु च ॥ ७३३. १३. आरम्भणीयाभ्यः—भ३-*मॅ-मु । आरंभणीयारम्य–इतरेषु ॥ ७३३. २६. सहिषीमहि—ख-त-न-भ-मु । साहिषीमहि–ञ । सहीषिमहि–घ-मॅ ॥ ७३४. २०. नाभाक नभाकवत्—*मॅ । नाभाक नभाकवत् नभाकवंतौ–मु । नाभाक नभावंतौ–ख; नाभाकवंतौ–ग-ञ; नभाकवत् नभाकवंतौ–घ; नाभाक नभाकवंतौ–त-न-भ ॥ ७३४. २८. प्र इरज्यत—मॅ-मु । इरज्यत–§ ॥ ७३५. ५. वल्ल्याः—*मॅ । वल्याः–घ; तमाया–ख-त-न-भ१-२-ञ; लताया–ग-भ३ ॥ गुष्पितम्—घ-त-न-भ२-*मॅ-मु । गुल्पितं–ग; पुष्पितां–भ१-३ ॥ ७३५. ६. ओजः—मॅ-मु-× ॥ ७३५. १५. अस्माकीनैः—§-मॅ-मु । 'आस्माकीनैः' इति भाष्यम् ॥ ७३६. १. हरिवः वज्रिन् ? ॥ ७३६. ३. पूर्वीः......अन्यत्—*मॅ । पूर्वी वयः प्रज्ञां साधंतां साधयन् सिद्धमन्यत्–ख-त-न-भ१-२-ञ; पूर्वी धियः प्रज्ञां सधंति साधन् सिद्धमन्यत्–ग; पूर्वीः बह्वयः प्रज्ञाः नः याः धियः अस्मद्बुद्धयः नु क्षिप्रं साधंत साधयंतु–घ; पूर्वीः बह्वयः धियः प्रज्ञाः साधंतासाधयन् सिद्धमन्यत्–भ३ । पूर्वीः याः नोऽस्माकं धियः प्रज्ञां नु क्षिप्रं साधंतासाधयन् सिद्धमन्यत्–मु ॥ ७३६. २०. आण्डा—मॅ-× । मु-पुस्तकेऽप्येतन्नास्ति ॥

[८. ४१] ७३७. ११. मरुद्वृधश्च—ग-ञ-भ३-*मॅ-मु । मरुद्भिश्च–त३-४-भ२ ॥ ७३७. १९. समानया—मॅ-मु । समान्या–§ ॥ ७३७. २१. समीपे यः—*मॅ । समीपे–§-मु ॥ ७३७. २३. समानया—मॅ-मु । समान्या–§ ॥ ७३८. १३. रक्षिता—भ२-३-*मॅ-मु । रक्षति–ग-घ-ञ-त१-२; ररक्षति–त३-४; रराक्षिता–भ१ ॥ ७३९. ८ - - - त्परिमृशतः......पुरस्तात्—त३-४-भ१-३-ञ-मॅ । यः वरुणः आसु दिक्षु अत्कः व्याप्तः सन् आशये जाग्रतो वर्तते यः वरुणः एषां शत्रूणां विश्वा सर्वाणि परिजातानि परितो भूतानि धामानि पुराणि मर्मृशत् विनाशयत् अस्य वरुणस्य पुरोगये रथस्य पुरस्तात्–ख-घ-ञ-त१-२-भ२ । यः वरुणः आसु दिक्षु अत्कः व्याप्तः सन् आशये जाग्रतो वर्तते यः वरुणः एषां शत्रूणां विश्वा सर्वाणि परिजातानि परितो भूतानि धामानि पुराणि मर्मृशत् परिमृशतो वरुणस्य पुरोगये रथस्य पुरस्तात् भवति तस्य वरुणस्य पुरस्तात्–मु । परिमर्मृशत् परिमृशतो–न ॥ ७३९. २५. अन्तरिक्षेऽधिवसतः—*मॅ-मु । अंतरिक्षेधिवश्रुतः–§ ॥ ७३९. २६. भूमीः......पप्रतुः—*मॅ-मु । भूमी( °मि–त१-भ३ )रधिस्थिता पप्रतुः–त-भ३;

भूमी( °मि–म१ )रवस्थिता पप्रतुः–भ१-२; भूमीः द्यौरंतरिक्षभूमीः–घ ॥ ७४०. १. अधिऽ-
निर्निजः । भाष्यकारः ‘ अधि ’, ‘ निर्णिजः ’ इति भिन्ने पदे कृत्वा व्याख्यातवान् ॥ ७४०. ७.
व्यधारयत्—ख-घ-त-न-भ-मु । अधारयत्–श-मॅ ॥

[ ८. ४२ ] ७४२. १२. ऐकादशिनाः–ज्ञ-भ२-*मॅ-आश्व. श्रौ. । एकादशिनः–त२-३-मु ।
एकादशिनाः–ग ॥ ७४०. १६. देवेति–ग-ज्ञ-*मॅ-मु-आश्व. श्रौ. । इतरलिखितपुस्तकेषु नास्ति ॥
७४०. ३०. गोपायितारम्–घ-श-त१-२-३-भ१-२-मु । गोपथितारं–ग-त४-भ३-मॅ ॥ ७४१. ८.
बलम्—ख-श-त१-२-न-भ-मु । ग-घ-त३-श-मॅ-पुस्तकेषु नास्ति ॥

[ ८. ४३ ] ७४२.४. कारीर्यवभृथेष्टयोः—मॅ । कारीर्यावभृथेष्टयोः–ख-ग-त१-न-भ१-२-
श; कारीर्यावभृथेष्टयाः–त३-मु ॥ ७४२. ५. आज्यभागौ—§-मॅ-मु । आश्व. श्रौ. सूत्र एतन्नास्ति ॥
७४२. २६. बप्सति भक्षयन्ति—*मॅ-मु । बप्सति भक्षयति–घ; बप्संति भक्षयंति–त-भ ॥ ७४२.
३०. पृथगित्येव—श-भ२-३-*मॅ-मु । पृथगिति–ग; पृथिगितोव–त२; पृथगितोर्व–त४; बृथगित्येव–
भ१ । वाजसनेयिसंहितायां वेबरमहाशयमुद्रितपुस्तके निर्णयसागरमुद्रितपुस्तके च ‘ बृथक् ’ इत्येव पाठो
दृश्यते ॥ ७४३. २. अग्निहोत्रिभिः—§-मु । अग्निहोतृभिः–मॅ ॥ ७४३. १०. क्षुत् धासि—त-
न-भ-मॅ । क्षु धासिः–श-मु-नि. ॥ ७४४.२. सोमघृतपृष्ठाय—घ-*मॅ-मु । सोमघृते पृष्ठाय–त-न-भ;
सोमसिक्तद्रुते पृष्ठाय यद्वा सोमयुक्तानि पृष्ठस्तोत्राणि यस्यासौ सोमपृष्ठ अनेकस्तोतृभ्रितसोमान
इत्यर्थः–ग ॥ ७४३. ११ अङ्गिरस्वत्—§-मु । मॅ-पुस्तक एतन्नास्ति ॥ ७४५. १५. प्रभु
प्रभुः—ग-भ२-३-मॅ-मु । अनुप्रभुः प्रभुप्रभुः–घ; प्रभुः–न । ‘ प्रभुः ’ इति सविसर्गः संहितापाठः ।
‘सुलोपश्छान्दसः’ इति भाष्यकारेणोक्तं तच्चिन्त्यम् ॥ ७४५. १६. अनु—*मॅ-मु-× ॥ ७४६. २.
यमिमम्—ख-घ-त-न-भ-श । यं–ग । इमं–मॅ-मु ॥ सर्वदा—मॅ-मु । सर्वहा–§ ॥ ७४६. १९.
सहस्कृतः—§-मॅ । ‘सहःऽकृत’ इति पदपाठः । सहस्कृत–मु ॥ ७४६. २७. अहा—मॅ-मु-× ॥
७४६. २८. गाहयितव्यानि—*मॅ-मु । गाहितव्यानि–भ३; ग्राहयितव्यानि–इतरेषु ॥ ७४७. ८.
दीप्तिधनः—ख-न-भ२-श । दीप्तधनः–ग; दीप्तिचनः–त । दीप्तिरोचनः–घ-मॅ-मु ॥

[ ८. ४४ ] ७४९.३. ज्वलद्दीप्ते—मु । उज्ज्वलदीप्ते–ग; ज्वालदीप्ते–न; ज्वलदीप्ते–मॅ इतरेषु
च । ऋ. सं. ८. २३. २३. द्रष्टव्यम् । ‘ज्वलद्दीप्ते’ इति स्यादिति मॅक्समुल्लरमहाशयः ॥ ७४९. ८.
पताका°—ग-घ । पताक°–त-न-भ-मॅ-मु । ऋ. सं. १०. १. ५. द्रष्टव्यम् ॥ ७४९. १६. वव्रृधे
§-मु । वावृधे–मॅ ॥ ७५०. ७. ते तव—§-मॅ । ‘ तव ’ इत्येव पदपाठः । तव–मु ॥ ७५०. १७
वर्धयन्तु—*मॅ-मु । वर्धयंति–§ ॥ ७५०. २०. अग्ने–§-मॅ-मु । ‘ अग्नेः ’ इति पदपाठः ॥
७५०. २९. वर्धयन्तु—*मॅ-मु । वर्धयंति–§ ॥ ७५१. १० अनुग्रहबुद्धौ—मॅ । अनुग्रहबुद्धौ
सुष्टुतौ कं सुखं यथा तथा–घ; अनुग्रहबुद्धौ सुष्टुतौ–इतरेषु मु-पुस्तके च ॥ ७५१. २७. तं सुखय
वा—*मॅ-मु । सुखय वा–ग; तं सुखय–ज्ञ; तसुय व–त१-२-३; तसुय वा–त४-न-भ ॥ ७५२. २.
द्यवि—मॅ-मु । सदिवि–घ; दिवि–त-न-भ ॥

[ ८. ४५ ] ७५२. १५. इति स्तोत्रम्—§-*मॅ-मु । आश्व. श्रौ. सूत्र एतन्नास्ति ॥ ७५२.
१६. °तिरिक्तोक्थे । °तिरिक्तोक्थ्ये–§-मॅ-मु ॥ ७५४. १६. भक्षकारम्—*मॅ-मु । भोकारं–ख-घ-
त-न-भ; भेत्तारं–ग-श ॥ ७५६. १५. प्रेरितवान्—भ-*मॅ-मु । प्रेरयितवान्–इतरेषु ॥ ७५७. ५.

**बुर्बुरमिति**—*मॅ-मु। बुबुरेति–ग-त४-न-भ१-२; बुर्बुरेति–भ३; बुधुरिति–श-त१-२-३ ॥ ७५७.१८. **प्रयच्छस्येव**—मॅ-मु। प्रगच्छस्येव–§ ॥ **माकार्षीः**—*मॅ-मु। माकार्षीः–§ ॥ ७५८. ३. **भूरिषु**—घ-न-भ। भूरिष्वपि–मॅ-मु इतरेषु च ॥ **असंख्यातेष्वपि**—ख-ग-त-न-भ-श-मु। °ष्वति–घ। असंख्यातेषु–मॅ ॥ ७५९. ७. **हिंधि अतः**—*मॅ। हिंस च–मु। हिंसि अतः–ख-श-त१-२-३-श; हतान् कुरु–ग; हिंस्य–घ; विस्यतः–त४; हिंस्याः–न-भ१-३ ॥ ७५९. १३. **विमर्शनक्षमे**—न-*मॅ-मु। विमर्शके राक्षसे–ग; विमर्शकेनक्षमे–घ-त-भ ॥

[ ८. ४६. ] ७६०. ४. **अष्टाक्षरा**—*मॅ। अष्टाक्षरवती–ख-ग-त-न-भ-मु; द्वादशाक्षरवती -घ ॥ **द्वितीयचतुर्थयोः**—ख-श-भ-*मॅ-मु। द्वितीयतृतीययोः–ग-घ-त-न ॥ ७६०. १०. **नवका... पदा**। 'युजावष्टकावयुजौ नवैकादशिनौ बृहती विषमपदा' इत्यनुक्रमणीपरिभाषा। 'नवकाष्टकैकादशाष्टिनो विषमपदा' इति वा. सं. सर्वानुक्रमण्याम् ॥ ७६१.८. **कमित्याह**—§-मॅ-मु। 'क इत्याह' इति भाव्यम् ॥ ७६१. २५. **सर्वा रक्षणाः**—§-मॅ-मु। ? ॥ ७६१. २६. **सुतम्**—§-मु। सुतमभिसुतं–मॅ ॥ ७६२. ११. **यः तव**। पूर्वमन्त्रोक्तो मदशब्दो विशेष्यत्वेनाध्याहर्तव्यः ॥ ७६२. १२. **स त्वम्**। तादृशमदयुक्तस्त्वमित्यर्थः ॥ ७६२. १८. **यथास्माकम्**—मॅ-मु। यथास्माकं यागं–§ ॥ ७६३. २२. **मह्यम्**—§-मॅ-मु। ममेत्यर्थः ॥ ७६३. २३. **अद्य**—मॅ। 'अर्थ' इति पदपाठः। अथाति चित्–मु ॥ ७६३. २५. **लिङ्भावात्**—§-मॅ-मु। 'लिङ्वद्भावात्' इति भाव्यमिति मॅक्समुल्लरमहाशयः अभिप्रैति ॥ ७६४.२. **स्तुवत इति**—§। स्तुवंत इति–मॅ-मु ॥ ७६४.३. **अद्यापीदानीमपि**। 'अर्तिं अर्थ' इति पदपाठः। अथाति चित्–मु ॥ ७६४.११. **वा**—ग२-*मॅ-मु। इतरलिखितपुस्तकेषु 'वा' नास्ति ॥ ७६५.७. **चेतयितः**—मॅ-मु। चेतितः–§ ॥ ७६५.८. **वा**—ग-भ-*मॅ-मु। त्वा–ख-त-न-श ॥ ७६५.१५. **वशायाश्व्याय**—*मॅ-मु। वशायास्याय–ग; वशायाख्याय–इतरेषु ॥ **कानीतस्तु**—न-भ१-३-*मॅ-मु-बृहद्दे.। कानीतस्स–ग; कानीतस्य–इतरेषु ॥ बृहद्देवतायां 'स्तूयते' इत्यस्य स्थाने 'संस्तुतं', 'एत्वेव' इत्यस्य स्थाने 'इत्येव' इति च पाठो दृश्यते ॥ ७६५. २०. **कनीतपुत्रे**—भ-*मॅ। कानीतपुत्रे–घ-न-मु। कानीते पुत्रे–ख-त; पुत्रे–श; कानीतेषु पुत्र–ग ॥ ७६६.२२. **तदुच्यते**–ख-त-श। चेदुच्यते–ग-न-भ-मॅ-मु ॥ ७६७.१३. **अन्वशात्**—ख-भ-*मॅ-मु। अप्सान्–ग; अन्वशान्–श-त२; अन्वप्सान्–त३-४-न; अन्वस्यान्–श ॥ ७६८. २५. **योज्यम्**—भ२-३-श-*मॅ। योजनया–ग; योज्य–ख-त-न-भ१-मु ॥

[ ८. ४७. ] ७६८. २९. **लैङ्गिकः**—*मॅ-मु-X ॥ ७६९. १९. **अधि**। एतन्मन्त्रे नास्ति ॥ ७७०. १२. **अघा**—ख-श-त१-२-भ-श-मु। ग-घ-त३-४-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ७७०. १३. **अवटधिष्ण्यादिकान्**—*मॅ-मु। अवहृधि°–ख-त३-४-न-भ२; अवदधि°–श-भ१-३; अवनधि°–ग; धिष्ण्यादिकान्–श ॥ ७७०. २०. **आशवः**—§-मॅ-मु। 'आशु वः' इति भिन्नः पदपाठः ॥ **यम्**—ग-*मॅ-मु। इतरेषु नास्ति ॥ ७७०. २८. **प्रवृद्धम्**—*मॅ-मु। अप्रवृद्धं–ख-त-न-भ२-श; अतिप्रवृद्धः–ग; आभिप्रवृद्धं–घ ॥ **अपरिहारार्हम्**—*मॅ-मु। अपरिहारार्थं–ख-घ-त-भ१-श; अपरिहार्यं–ग-न-य ॥ **कस्य**—*मॅ-मु। यस्य–§ ॥ ७७२. २८. **°शेषेण**—*मॅ-मु। शेषे–§ ॥ **उपतिष्ठेत**—§-मु। उपतिष्ठेत्–मॅ ॥ ७७२. २९. **उपतिष्ठेत**—श-न-भ१-श-मु-आश्व. गृ.। उपतिष्ठेत्–ख-त२-३-४-भ३-मॅ ॥ ७७३. १८. **दुःस्वप्नम्**—ख-त-न-भ-श। दुःष्वप्न्यं–ग; दुःष्वप्नं–घ;

स्वप्नं–मु । दुःस्वप्न्यं–मॅ ॥ ७७३. २६. यद्देव—*मॅ-मु । तं देव–न; तदेव–इतरेषु ॥ ७७३. २७. भोक्त्रे—*मॅ-मु । भोक्तुः–§ ॥ तदपसे यद्देवापः—*मॅ-मु । तदपसे देवापः–ख-ग-त-भ१-२-श; दपसे तदेवापः–घ; तदपसे वदेवापः–न; तदपसे तदेवपः–भ३ ॥ ७७४. २. अनुभूतवत्—ख-ग-त-भ-श । अनुभूतं च–न । अनुरूपवत्–मॅ-मु ॥ ७७४. ८. संज्ञपितम्—ख-ग-त-न-भ । संज्ञापितं–श-मॅ-मु ॥ संदाय—श-*मॅ-मु । समादाय–ग; दानाय–भ३; सदाय–इतरेषु ॥ ७७४. १८. स्मः—न-भ२ । स्म–मॅ-मु इतरेषु च ॥

[ ८. ४८ ] ७७५. २२. ततः—*मॅ-मु । त्वातामृभा–ख-त२-३-४; पीत्वा–ग; त्वत्तः–घ१; इतः–च; त्वामाभृन्ना–न; त्वावामृभा–भ१; त्वमाः–भ३; त्वां पीत्वा–श ॥ ७७६. ३. सखा स स्वसख्ये—त-न-भ१-२ । सखाय स्वसख्य–ख; सखा स्वसख्ये–ग-श; सख सख्ये–भ३ । सखायं स्वसख्ये–मॅ-मु ॥ ७७६. ११. वध्र्यः—*मॅ । वध्वः–ख-त-श-मु; वध्यः–ग; बध्वः–घ; वध्वाः–न-भ ॥ ७७७. ८. स्मः—न-भ । स्म–मॅ-मु इतरेषु च । ऋ. सं. ८. ४६. १. द्रष्टव्यम् ॥ ७७८. ४. अत्रसन् प्राप्नुवन्—मॅ-मु । अत्रसन् प्राप्तवान्–ख-ग-श-त२; अत्रसन्–घ; अरमं प्राप्तबान्–त३-४; अरन्–भ१-३; अरमन् प्राप्तवान्–भ२; अरमन् प्रापूर्वन्–श ॥ ७७८. ५. यस्मात्—ग-*मॅ-मु । तस्मात्–इतरलिखितपुस्तकेषु ॥ ७७८. १७. सौम्यस्य—§-मु । सोमस्य–मॅ ॥ ७७८. ३१. निद्राः—घ-मॅ । निद्रा–ख-ग-भ-श-मु । निंद्रा–त-न । ‘ निऽद्रा ’ इति पदपाठः ॥

[ ८. ५८ ] ८०२. १३. यमृत्विज...स्तुतिर्वा—मॅकडोनलमुद्रितपुस्तक एतन्न दृश्यते । वैदिकास्त्वेतत्पठन्ति ॥

[ ८. ६० ] ८०६. १९. प्रदीप्तकेश°—ग-श-भ-मु । प्रदीप्तकलश°–मॅ इतरेषु च ॥ ८०७. २७ तेजो वा । अत्र किमपि गलितं प्रतिभाति । ऋ. सं. २. १. ५. भाष्ये ‘ मित्रमहः ’ इत्यस्य ‘ हितकारितेजः ’ इति व्याख्यानं कृतमस्ति ॥ ८०८. १२. ऋचा गिरा—§-मॅ-मु । ‘ गिरा ऋचा ’ इति साधु इति मॅक्समुल्लरमहाशयः ॥ ८०८. २८. माति नो—ग-*मॅ-मु । माननितिनि–ख; मातिर्नो–घ; मातितिर्नो–त-भ२-श; मातीतिर्नो–भ१-३॥ ८०९. ८. तद्धनम्—ग-श-*मॅ-मु । त धन–भ१; तं धनं–इतरेषु ॥ कर्मधन—§-मु । कर्म धनं–मॅ ॥ ८१०. १९. हे यजमानाः—ग-च-*मॅ-मु । गेहे यजमानाः–ख-घ१-त-भ३-श; गेह यजमानाः–भ१; ग्रहे यजमानाः–भ२ ॥ ८११. १९. यातना—ग-*मॅ-मु । याना–ख-त-न-श; याता–भ ॥ ८११. २१. बाह्यानि—घ-त-न-भ१-मु । बाह्यानि–ख-ग-भ२-मॅ ॥ च न—*मॅ-मु । च–ख-ग-त-न-भ१-२-श; न–घ; मा–भ३ ॥

[ ८. ६१ ] ८११. २३ प्रागाथस्य—मॅ–मु । प्रगाथः–घ; प्रगाथस्य–इतरेषु ॥ ८११. २८-३०. चातुर्विंशिकेऽहनि......पुरूवसो इति—ग-त-न-भ२-श-मु । ‘ चातुर्विंशिकेऽहनि... शृणवच्च न इति ’ इत्यंशः ख-पुस्तके नास्ति । चातुर्विंशिकेऽहनि निष्केवल्य उभयमिति बृहत्साम-प्रगाथः । तथा च सूत्रितं । उभयं शृणवच्च न आ वृषस्व पुरूवसो । आ.७.४ । इति–मॅ ॥ ८१२. १२. जगदुपकारिकायाः । जगदुपकारकस्य–ख-त-न-भ-श-मु; जगदुपकारक–ग । जगदुपकारकायाः (?)–*मॅ ॥ ८०३. १. भवति—§-मॅ-मु । ‘ भवतु ’ इति स्यादिति मॅक्समुल्लरमहाशयः ॥ ८१३. १६. पौरः—ग-भ-*मॅ-मु । पुरुकृत्–ख-घ-श-त१-२; पुर–त३; पूरयि–त४; पूरः–न; पुरयि –श ॥ ८१३. २२. बृहतः—*मॅ-ऐ.आ. । बृहत्–ख-ग-त-भ२-मु; बृहत–श-न-भ१-३-श ॥

८१४. २६. **जल्हवः** । एवं संहितायां पदपाठे सर्वेषु भाष्यलिखितपुस्तकेषु च । मॅक्समुल्लरमहाशयः सर्वत्र 'जळ्हवः' इति पठति ॥ ८१५.२. **अरायाः**—§-मॅ-मु (?)। 'अरायः' इति भाष्यम् ॥ ८१५. १४. **वेद्**—*मॅ। देवः वेद–ख-ग-घ-श-मु; देवः–त१-३-४-न-भ२-श; वेदः–भ१; वेदा–भ३ ॥ ८१६. ४. **आह्वयामः**—ख-घ-श-त३-भ । आह्वयाम–ग-त२-४-न-श-मॅ-मु ॥ ८१६. १७. **पश्चात् पश्चाद्भागात्**—*मॅ-मु । पश्चाद्भागो–ख-घ-श-त२-३-४-न-भ१-२; पश्चाद्भागे–ग-भ-३-य; पश्चाद्भागात्–त१॥ **पूर्वभागात्**—*मॅ-मु । पूर्वभागः–ख-ग-भ१-२; पूर्वो भागो–घ-त-न-श; पूर्वभागे–भ३-य ॥ **अधोभागात्**—*मॅ-मु । अधोभागः–ख-घ-भ१; अधोभाग–ग-त-न-भ२; अधोभागे–भ३-य ॥ ८१६. २०. **आसुराणि**—*मॅ-मु । आसुरीः–§॥ ८१६. २७. **रक्षसि (रक्ष वा)**—*मॅ-मु । क्षत्रास्वसि–ख-त-न-भ१-२-श; त्रासयसि–ग; त्रास्व–भ३ ॥

[८. ६२] ८१७. ८. **सप्तम्याद्याश्च**—ख-त-न-भ१-३-मॅ । सप्तम्याद्याः–ग-भ२-श-मु-अनु. ॥ ८१८. १. **चिदर्वता**—*मॅ-मु । चार्वता–ग-घ-त-श; बार्वता–न-भ१-२; नार्वता–भ३ ॥ ८१८. २३. **दृष्ट्वा**—*मॅ-मु । गत्य–ख-ग-घ-न-श; अवगत्य–भ ॥ ८१८. २६. **अवेक्षितम्**—*मॅ-मु । अवक्षितं–न; अवेक्षितुं–इतरेषु ॥

[८. ६३] ८२०.२६. **आनजिः**—मॅ-मु । नजिः–§ । (?) ऋ. सं. १.१०२.१; १६१. ४. भाष्ये 'आनजे' इत्यस्य प्रक्रिया द्रष्टव्या ॥ ८२१. ५. **उपायज्ञः**—भ२-३-*मॅ-मु । उपायचास्मैशः–ख-न; उपायचास्मैशः–त२-३-४-श; अनुष्ठेयवरतैश–ग; उपायाद्र–भ१ ॥ ८२१. ६. **अपवारितवान्**—ग२-*मॅ-मु । ऊवारितवान्–ख-त३; अपावारितवान्–ग१; उत्सारितवान्–श-त२-४; उपवारितवान्–भ१-२; अपवारितान्–भ३; उच्चारितवान्–श ॥ ८२१. १३. **गन्तु**—ख-घ-श-त१-२-न-भ-मु । ग-त३-४-श-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ८२१.१८. **स्वाहावरस्य** । 'स्वाहा । वरस्य' इति पदपाठः । भाष्यकार एकपदं चकारेति स्पष्टम् । स्वाहा वरस्य–मॅ । ८२२. १४. **लब्धे लब्धव्ये**—*मॅ । लब्धेव्ये–ख-त-भ३-श; लब्धेव्य–ग; लब्धे–घ; लब्धव्ये–भ१-२-मु ॥ **अस्मानिति पूरणः**—§-मॅ-मु । ? ॥

[८.६४] ८२३. १९. **तव**—ग-*मॅ-मु । स तव–ख-त-न-भ; सदशः–श ॥ ८२४.१३. **त्वा त्वाम्**—ख-ग-त२-३-न-भ२-३-मॅ । 'तम्' इति पदपाठः । तमिंद्रं–मु ॥ ८२५.८. **अधिश्रितः** । 'अधि श्रियः' इति पदपाठः ॥ ८२५. ११. **अभिषुतः तम्**—ग । अभिषुतं–मॅ-मु इतरेषु च ॥

[८. ६५] ८२५. २७. °**निष्यन्दनस्थाने**—मॅ । °निस्यंदने स्थाने–ख-त; °निष्यंदिनि स्थाने–ग; °निष्यंदने स्थाने–घ-न-भ; °निष्पंदस्थाने–श । °निस्पंदने स्थाने–मु ॥ ८२७. १९. **इन्द्रे प्रीत इत्यर्थः**—*मॅ । इंद्रः प्रीत इत्यर्थः–§-मु ॥

[८. ६६] ८२७. २५. **अयं प्रगाथः**—*मॅ । प्रगाथौ–त१-२; प्रगाथः–मु इतरेषु च ॥ ८२८. १६. **यः**—*मॅ-मु-× ॥ ८२८. २३. **प्रक्षालितोऽश्वः**—मॅ-मु । प्रक्षाळिताश्वः–§ ॥ ८२८. २४. **व** - - - –त-न-भ३-मॅ । ग-भ२-श-पुस्तकेष्वेतन्नास्ति । जातमिति च–मु । 'वचनात्' अथवा 'च व्युत्पत्तिः' इति स्यादिति मॅक्समुल्लरमहाशयः संभावयति ॥ ८२८. २६. **अपवरणीयम्**—§-मॅ-मु । अस्मादनन्तरं 'व्रजम्' इत्येतादृशं पदमावश्यकमिति मॅक्समुल्लरमहाशयस्याभिप्रायः ॥ ८२९. १. **पुरुऽसंभृतम्** । भाष्यकारः 'पुरु' 'संभृतम्' इति भिन्ने पदे कृत्वा व्याख्यातवान् ॥

८२९.६. **प्रकामयते**—§। कामयते-मॅ-मु ॥ ८२९. १२. **अचीकमथाः**—मॅ। अचीकमाः—ग; अचीकमथ-मु इतरेषु च ॥ ८२९.२९. **हरत**—*मॅ-मु। हर-घ-भ२; हरवाम-त१; हरवा-इतरेषु ॥ ८३०. ७. **अस्येति**—§-मु। स्येति-मॅ (मुद्रणदोषः ?) ॥ **वृकोऽपि**—*मॅ-मु। क्रूरोपि च-ख-ञ-त१-२-भ; कोपि-ग; क्रूपि-त४-न ॥ ८३०. १६. **किं नु**—ग-न-भ१-२। किंतु-मॅ-मु इतरेषु च ॥ **अनाचरितम्**—ग। अनामचरितं-ञ-त२-४; आनाचरितं-भ। अनाचारितं-मॅ-मु ॥ ८३०. २०-२१. **वृत्रहेत्येतत्पुंस्त्व°**—ग-न-भ। वृत्रहत्येतत्पुंस्त्व°-ख-त-श। वृत्रहत्यं तत्पुंस्त्व°-मॅ-मु ॥ **°प्रदर्शनद्योतनाय**—ग-भ-श। °प्रदर्शनाद्योतनाय-त-न-मॅ-मु ॥ ८३०. २६. **महीः-महान्ति**—ख-घ-ञ-त२-मु। महीः-त१; मही महांति-न। ग-त३-४-भ-श-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ८३०. २८. ------**व्यहं अभवदि°**—ञ-त३-न-भ२। ------व्यहंत्र्यभवदि°-ख-ग-त१-२-४-भ१; ∵न कदाचिदित्यर्थः-श-मु। ------न्ययंहं अभवदि°-मॅ। मॅक्समुल्लरमहाशयस्य अयं पाठः C 2, C 4 लिखितपुस्तकयोरुपलब्धः। 'न कदाचिदित्यभिप्रायः। सर्वं हंतव्यं हतमभवदित्यर्थः' इति स्यादिति मॅक्समुल्लरमहाशयः संभावयति ॥ ८३१. २-३. **दातव्य---नयेन**—ख-त-न-भ१-२-श-मॅ। दातव्यौ नयेन-ग-मु; दातव्यमिति येन-भ३। 'दातव्याविस्येवमभिनयेन' इति स्यादिति मॅक्समुल्लरमहाशयः संभावयति ॥ ८३१. ५. **पश्यन्ति**—ग२-भ-*मॅ-मु। पश्यति-ख-ग१-घ-त-न-श ॥ ८३१. ६. **अहानि पश्यन्ति**—ग-न-भ-श-*मॅ-मु। अहानि पश्यति-ख-त ॥ ८३१. ७. **ईदृशान्**—घ। अतो ईदृशान्-ख-ञ-त२-श-मु; अतोतान्-ग; अतोतीदृशान्-त१; अतो --- श्यान-न; अतो --- शान्-त३-४-भ-मॅ ॥ ८३१. ९. **कारुकुशीलवान्**—*मॅ। कारुकशीलकान्-ख; वै काराशिल्पकान्-ग; कारुकुशिलकान्-ञ-भ१; कारुशीलकान्-त२-३-४-भ२-श; कारुकशिल्पिकान्-भ३। च कारुशीलकान्-मु। गोरक्षकान् वाणिजिकांस्तथा कारुकुशीलवान् इ.-मनु. ॥ ८३१. १७. **ताम्**—§-मु। तं-मॅ ॥ ८३१. १८. **°तात्पर्याद्भूति°**—ग१-ञ-न-भ-श-*मॅ-मु। °तात्पर्याद्भवति°-ख; °तात्पर्यात्स्तुतिति°-ग२; °तात्पर्याद्भ्रति°-त२; °तात्पर्यादुति°-त३। ८३२. ३. **वर्तामहे**—भ१-३-य। वर्तते-मॅ-मु इतरेषु च ॥ ८३२. ११. **शविष्ठ**। 'शविष्ठ' इति पदपाठः ॥ ८३२. २०. **उ इति पूरणः**। 'इत्' इति पदपाठः ॥

[ ८. ६७ ] ८३२. २२. **संमदाख्यस्य**—ग-त२-न-भ१-*मॅ। समदाख्यस्य-ख-घ-त३-श-मु ॥ ८३२. २४. **आदित्यान्**—त२-*मॅ। आदित्यं-मु इतरेषु च ॥ ८३२. २५. **आदित्याः**—ख-ग-त२-३-*मॅ-मु। आदित्यो-इतरेषु ॥ ८३३. ९. **अलंकर्त्रे**—§-मु। अरंकर्त्रे-मॅ ॥ ८३३. १६. **जीवान् इदानीम्**—§-मु। इदानीं जीवान्-मॅ ॥ ८३३. १७. **पुरा**—§। मॅ-मु-पुस्तकयोरेतन्नास्ति ॥ **क्व**—न-भ। के-इतरेषु मॅ-पुस्तके च। कद्ध क नु-मु ॥ ८३४. ९. **मर्चयता**—ख-ग-ञ-न-भ३-श-*मॅ-मु। मर्चयंना-त३-४; मर्चता-भ१; मर्चयेते-भ२ ॥ ८३४. ११. **प्राप्ता बाधा नोऽस्माकम्**—*मॅ-मु। प्राप्तबाधा नोस्माकं-ग; प्राप्तां बाधा मा नोस्माकं-ख-त-न-श; प्राप्तां बाधां नोस्माकं-भ ॥ ८३४. १७. **मत्स्यपक्षे**—ग-घ-त-न-भ-श-मु। ख-मॅ-पुस्तकयोरेतन्नास्ति ॥ ८३४. २१. **गम्भीरम्**—न-भ-श-नि.। गंभीरं-ख-ग-त-मॅ-मु ॥ ८३४. २८. **भूमिरूपा**—*मॅ। भूरिरूपा-§-मु ॥ ८३४. २९. **उरूचि उरुत्वम्**—§-मॅ-मु। 'उरूचि' इत्यस्मादनन्तरं किंचित्पदं गलितं स्यात्, अथवा 'उरुत्वम्' इत्यस्य स्थाने 'उर्वि त्वम्' इति स्यादिति मॅक्समुल्लरमहाशयः

मन्यते। किंतु तदनावश्यकम्। 'उरूचि' इत्यस्य 'पृथिवी' इत्यर्थः। ऋ. सं. ७. ३५. ३. द्रष्टव्यम्। 'उरुत्वम्' इति कर्मपदं च वाक्ये आवश्यकम्॥ ८३५. १. **तस्य**—§-मु। एतन्नास्ति मॅ॥ **जीवेम पुत्रान् रक्षितुम्।** जीवेनापृत्यान्नक्षितुं–ख-त३-मॅ। जालेन रक्षिताः जीवेम पुत्रान् रक्षितुं–ग; जीवेनापत्यान्नक्षितुं–त२; जीवेनापत्यान्भक्षयितुं–भ१-२; जीवेन मत्स्यान् भक्षयितुं–भ३; जीवेनामृतात्रक्षितुं–न; जीवेन्यस्मात्पाद्रक्षितुं–श। जीवनेनापत्यान् रक्षितुं–मु॥ ८३५. ५. **उच्छ्रिताः**—ख-ग-ज्ञ-त२-३-न-भ-श-मु। उच्छ्रियंता–त४; उच्छ्रितीनां–त१। उच्छ्रयंतः–मॅ॥ ८३५. १०. **आदातृणाम्**—ख-ग-ज्ञ-त१-३-४-न-भ१-२-श। अदातृणां–ख-त२-मॅ-मु॥ ८३५.११ **मुमोचत**—§-मु। मुमोचत विमोचत–मॅ॥ ८३५.२१. **भुञ्ज्महे**—भ१-*मॅ। बुबुज्महे–ख-न; भुजंजमहे–ग; भुज्महे–त-भ-श। बुभुज्महे–मु॥ ८३५. २४. **प्रकृष्टमतयः**—त२-भ। प्रकृष्टमयो–ख-त-न-श; प्रकृष्टधियो–ग; प्रकृष्टमायाः–घ-मॅ-मु॥ ८३६. ११. **अतिस्कन्दनाय**—ज्ञ-त२-३-भ३-श-मु। अतिष्कंदनाय–मॅ इतरेषु च॥ ८३६. १५. **पुत्रे पितृशब्दः**—ग-भ-*मॅ-मु। पुत्रे पित्वशब्दः–ख-त॥ ८३६. २३. **रिप्रमिति**—त२-*मॅ-मु-निरु.। रिप इति–भ१-३; रिप्र इति–इतरेषु॥

[ ८. ६८. ] ८३७. ९. अन्ततः—*मॅ-मु। अथ ततः–ख-ग-त-न; अथ तत्–भ; अथ–श॥ ८३७. १७. **रथं यथा**—मॅ-×। मु-पुस्तकेऽप्येतन्नास्ति॥ ८३७. २३. **मते**—मॅ-मु-×॥ ८३८. ८-९. **सैनिकानां......चर्षणीनाम्**—ख-त-न-भ-श-मु। सैनिकानां एवैः गमनैः–घ। मॅ-पुस्तक एतन्नास्ति॥ ८३८. २२. **°योगादिच्छा°**—ग। °योगत्वादिच्छा°–*मॅ-मु। °योगस्वदिच्छा°–ख-ज्ञ-त१-२-३; °योगास्वदिच्छा°–त४-न-भ-श॥ ८३९. १०. **कर्तुम्**—भ२-*मॅ-मु। कुर्वन्–इतरलिखितपुस्तकेषु॥ ८३९. ११. **वज्रवन्**—ख-घ-त-न-भ-श-मु। वज्रिन्–ग-मॅ॥ ८३९. १२-१३. **प्रतिपत्...सुतमन्ध इति**—*मॅ-मु-×॥ ८३९. २०. **ररक्षिथ**—*मॅ-मु। रक्षिथ–ख-ज्ञ-त२-३; रक्षथ–ग-घ-त४-न-भ-श॥ ८३९.२६. **तननीयः**—ग-*मॅ-मु। तंतनीयः–ख-घ-त-न-श; संतननीयः–भ॥ ८४०. २. **तथा तने**—*मॅ-मु-×॥ ८४०. ६. **याचामहे**—ख-घ-ज्ञ-त१-२-मु। ग-त३-४-न-भ-मॅ-पुस्तकेष्वेतन्नास्ति॥ ८४०.११. **दानप्रशंसकाः**—§-मॅ-मु। दानस्तुतिः पराः–बृहद्दे.॥ ८४०. १२. **अविरोधः**—ग-श-मु। अनिरोधः–ख-त-भ-मॅ॥ **अनेनैवाशयेन**—ग। अनयैवाशया–मॅ-मु इतरेषु च॥ ८४०. १५. **पितृपुत्ररूपेण**—*मॅ-मु। पितृपितृरूपेण–ख-त-भ१-श; पितृपुत्रपितृरूपेण–ग; पितृरूपेण–घ-भ२॥ ८४०. २०. **अतिथिग्वाय**—ख-ग-त-न-श। इत्यतिथिग्वाय–भ-मॅ-मु॥ ८४०. २१. **इन्द्रोते**—ग-*मॅ। इंद्र–इतरलिखितपुस्तकेषु। इंद्रोतः–मु॥ ८४०. २५. **प्रस्तुतम्**—ग-न-भ२-श। प्रस्तुत–ख-त; प्रलुतं–भ१। प्रस्तुत्य–मॅ-मु॥ ८४०. २६. **एवमृक्षाश्वमेधयोः**—*मॅ-मु। एवं त्यपृक्षाश्वमेधयोः–ख-त१-भ१-२; एवं सति ऋक्षाश्वमेधयोः–ग; एतं त्यपृपृक्षाश्वमेधयोः–त२। पितृपुत्रयोरभेदात्तयोः पक्षकर्तृत्वाच्च ऋक्षाश्वमेधयोर्दानस्तुतित्वं न व्याहन्यते इत्यन्वयः। मॅ-पुस्तके तु 'न व्याहन्यते' इत्यत्र वाक्यपरिसमाप्तिं कृत्वा 'पितृपुत्रयो°' इत्यारभ्य 'विस्पष्टयिष्यते' इत्यन्तमेकं वाक्यं कृतम् (!)॥ ८४०. २७. **इन्द्रोतदानस्य**—ग-*मॅ-मु। इंद्रं तद्दानस्य–ख; इंद्र तद्दानस्य–त-भ-श॥ ८४१. १०. **आज्ञायते**—मॅ-मु। आज्ञायत–ख-घ-त-न-भ-श; अज्ञायत–ग-श॥

[ ८. ६९. ] ८४१. १९. **आयासुयोऽर्धर्चा:**—ग-न-भ१-२-मु । आयासु योर्धर्चाः-ख-श-त३-४-श । आयासु येऽर्धर्चाः–मॅ ॥ ८४१. २९. **उनत्ति**—*मॅ-मु । उंदिति–ख-त-श इंदति–ग; उदति–न; उदिति–भ१; उंदति–भ२ ॥ ८४२. ७. **युग्म्य इति**—*मॅ । युगप इति-ख-त; युग्म्य इति–ग-त४-भ२-मु; युवत्य इति–न; युत्प इति–भ१; युग्म इति–श ॥ ८४२. २२ **दिवीत्यर्थः**—*मॅ । दिवीत्येषः–ख-ज्ञ-त१-२-भ१-२; दिवीत्यषः–त३ । दिवीति शेषः–मु ॥ ८४२ २३. **आरोचमाने**—श-*मॅ-मु । आरोचने–ख-त१-२-३-४; अरोचमाने–श ॥ ८४२. २५-२६ **सूत्रितं च......इति**—ग-*मॅ-मु । इतरलिखितपुस्तकेष्वेतन्नास्ति ॥ ८४२. ३०. **तथार्चेति**—ख-श-त१-२-३-न-श-मु । तथा चेति–ग-त४-भ१-२ । तथा वेति–मॅ ॥ ८४३. १. **तत्रानु रक्तत्वात्**—*मॅ-मु । तत्रानुक्तत्वात्–ख-त-भ-श; तत्रानुत्पन्नत्वात्–ग ॥ ८४४. १०. **युद्ध संनद्धः**—§-मॅ-मु । ! ॥ ८४४. १५. **अप्रवृद्धाः**—घ-त-न-भ२-श । अमवृद्धाः–ख; अवृद्धाः-ग; प्रवृद्धाः–भ१ । अपवृद्धाः–मॅ-मु ॥ ८४४. १९. **आ पतन्ति वृष्टिरल्पा यदा**—*मॅ-मु सापतितं वृष्टिरल्पाय यदा–ख-त-श; आपतंति वृष्टिरहिता यद्यता–ग ॥ ८४४.२६. **तम्**—मॅ-मु-× ८४५. ११. **वृष्टिनिवारकैः**—श-न-भ-मु । धृनिवारकैः–ख-त१-२-३-४-श । वृष्टिवारकैः-मॅ ॥ ८४५. २५. **कुमारकः**—§-मु । कुमारः–मॅ ॥ ८४६. ३. **गृहो ( ? )**—§-मॅ-मु । 'गृहा पुंसि च भूम्न्येव ' इति कोशात् ( अमर. २. २. ५ ( पुंलिङ्गैकवचनान्तगृहशब्दप्रयोगश्चिन्त्यः । ८४६. ४. **आरोहामि**—§-मु । रथमारोहामि–मॅ ॥ ८४६. १५. **स्तुतिवन्तः**—§-मॅ स्तुतिमन्तः–मु । एतदेव समीचीनम् ॥

[ ८. ७०. ] ८४६. ३१. **चतुर्दश्यनुष्टुप्**—ग-*मॅ । मु-इतरेषु च नास्ति ॥ **पञ्चदशी पुर उष्णिक्**—ग-*मॅ । मु-इतरेषु च नास्त्येतत् ॥ ८४७. २. **यो राजा...इति**—ख-त१-श *मॅ-मु । इतरेषु नास्ति ॥ ८४७. १५. **आत्मानम्**—ग-त३ । अस्मास्वमात्मानं–घ । आत्म स्वात्मानं–त२-न-भ-श-मॅ । आत्मना स्वात्मानं–मु ॥ ८४७. २६. **अनुकूलम्**—§-मॅ-मु । अस्मा दनन्तरं ' करोति ' इत्येतादृशं पदमावश्यकमिति मॅक्समुल्लरमहाशयः ॥ ८४८. १५. **मूर्ति°**—भ३ श-*मॅ-मु । गूर्त°–ख-त; गूर्ति°–न-भ१-२ ॥ ८४८. १६. **त्वा**—घ-मु । ते–मॅ इतरेषु च । ८४८. १७. **किंचन**—*मॅ । किंच मनु–ख-त-भ-श; किंच अनु–ग-मु ॥ ८४९.४. **यो मर्त्योऽस्य**—*मॅ-मु । स मर्त्यो यस्य–ख-ग-त-न-भ-श; स मर्त्यो अस्य–घ । क्लिष्टा वाक्यरचना ॥ ८४९. ६. त **न**—मु । त न–घ । तन्न–मॅ इतरेषु च ॥ ८४९. २०. **उत्थापय**—*मॅ-मु । उत्पादयत–ख; उत्था पयत–घ-त-भ-श; उत्थापयितः–ग ॥ ८४९. २९. **नि शिश्रथः**—घ-*मॅ-मु । बि शिश्रथो–इतर लिखितपुस्तकेषु ॥ ८५०. १५. **भृष्टयवाः**—ख-ग-घ-त१-२-३-४-न-भ-मु । भ्रष्टयवाः—श-श-मॅ ॥ ८५१. २. **य इन्द्रः** । त्वम् इत्यध्याहार्यम् ॥ ८५१. ३. **एकमेकमेव वत्समित्येवम्**—न । एकमेव वत्समित्येवं–भ; एकमेकमेवं–ख-त-श । एकमेकमेव–मॅ-मु ॥ ८५१. ९. **हितं शौरदेवं युद्धम्**—*मॅ । हितः शौरदेवयुद्धं–ख-ग-च१-त-न-भ-श; हिताः शौरदेवा युद्धं–च; हितः शौरदेव युद्धं–मु ॥ ८५१. १०. **न** । 'नः ' इति पदपाठः ॥ ८५१. १२. **कर्णे**—§-मु । मॅ-पुस्तक एतन्नास्ति ।

[ ८. ७१. ] ८५१. १६. **वादितो**—न-भ३-य । वादितो–ख-त१-२-भ१-२; दोदितो-त३; त्वं नो अग्ने इत्यादितो–श; एतदादितो–ग; आदितो–श-त४-मॅ-मु ॥ ८५१. २०. **रक्ष**—

*मॅ। रक्ष कस्य महोभिः–§-मु ॥ ८५१. २८. **अस्मदादिभिः—***मॅ-मु । अस्मादिभिः–ख-त-भ; अस्माभिः–ग; अस्मादादिभिः–श ॥ ८५२. २. **वस्वो...प्रयच्छसि**। अत्र 'स नो विश्वेभिर्देवेभिरूर्जो नपात्' इति ऋक्पाठः। 'स नो वस्व उप मास्यूर्जो नपात्' (८. ७१. ९) इति व्याख्यात्रा पठितम्। विश्वेभिर्देवेभिः धनं प्रयच्छसि–घ-मु ॥ ८५२. ३. **स्तुत्यप्रकाश तदेवादरार्थम्—**न-भ। स्तुत्यप्रकाशन तदेवा°–श; स्तुत्यप्रकाश देवा°–घ-त१; स्तुत्यप्रकाशन देवा°–ख-ग-ञ-त२-३-४-मॅ। स्तुत्यप्रकाशन देव आदरार्थे–मु। ऋ. सं. ७. ७०. ७. द्रष्टव्यम् ॥ ८५२. ४. **तच्च**। 'तं च' इति भाव्यम् ॥ ८५२. ९. **यम्—**ग-*मॅ-मु। यदा–ख-त-न-भ-श; यदा यं–घ ॥ ८५२. १३. गोषु–घ-भ३। यागोषु–ग; यागेषु–ख-त२-न-भ१-२-श-मॅ-मु ॥ ८५३. २. **नपात्त्वम्—**ग-भ३-*मॅ-मु। नपादित्वं–इतरलिखितपुस्तकेषु ॥ ८५३. ३. **एव—***मॅ। वा–§-मु ॥ ८५३. २५. **होता—**ख-घ-ञ-त२-न-भ-मु। ग-त३-४-श-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ८५४. १२. **वा—***मॅ। अति वा–ख-त-भ; सति वा–ग; अथवा–मु ॥ ८५४. २३ **धनाय—**§। मॅ-पुस्तक एतन्नास्ति। धनायाग्निं–मु ॥ ८५५. १. **नः अस्माकम्—**ख-ञ-त१-न-भ-मु। ग-त४-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ८५५. २. **भयानाममिश्रणम्—***मॅ-मु। भयानं मम श्रवणं च–ख-ञ-त२-४-भ१; भयानाममिश्रवणं–ग; भयानाममश्रणं–त१; भयानामश्रवणं–भ२ ॥

[८. ७२.] ८५५. २४. **ससं स्वपन्तम्—***मॅ-मु। ससं स्थापनं–ख-ग-ञ-त२-भ२-श; ससं स्थपनं–घ-त३-४-भ१; संस्थापनं–त१; संसं स्थपनं–न ॥ ८५६. ८. **स्तोतुम् अन्ध्यम्—**मॅ। स्तोतामन्यं–ख-त-न-भ-श; स्तोतामंध्यं–ग; स्तोतुमन्य–घ१; स्तोतुमंध्यमन्यं–च-मु ॥ ८५६. ९. **अयं रुशंश्चरंश्च—***मॅ-मु। अयं चरंश्च–ख-ग-त-भ; यच्चरन्रश्च–श ॥ ८५६. १४. **स्थूलम्—***मॅ-मु। स्थलं–ख-त-श; स्थल–घ; स्थलो–भ१-२ ॥ ८५६. १५. **नियोजयतीत्यर्थः—***मॅ-मु। यारुजर्नियोजयेति सेत्यर्थः–ख-त१-२-३-न-भ; यारुजर्नियोजयेति श्रुत्यर्थः–श ॥ ८५६. २२. **ब्रह्माणम्—**ग-घ-श-मु। ब्राह्मणं–ख-त-भ-मॅ ॥ ८५६. २५. **ओ—**घ-ञ-भ-मु। तो–ख-ग-त; बो–श। ओं–मॅ ॥ ८५६. २६. **च आ—**ग-न-भ। वा–ख-त-श-मॅ-मु ॥ ८५७. १३. **परितो व्याप्तम्—**ग। परिणेव्याभं–ख-त-भ-श। परिणत्याभं–घ-मॅ-मु। 'परिगंतारम्' इति स्यादिति मॅक्समुल्लरमहाशयः ॥ ८५७. १४. **नीचीनद्वारम्—**न-भ-*मॅ-मु। ग्भुतद्वारं–घ। इतरलिखितपुस्तकेषु नास्त्येतत् ॥ ८५७. २०. **आसन्ध्यामासादयन्ति**। आसद्यामा°–घ१; आसादयंति–च; असंध्यमा°–ख; आलंध्यामा°–श। आसंध्यमासादयंति–मॅ-मु इतरेषु च ॥ ८५७. २६. **गवाजयोः—**ग-*मॅ-मु। गवाश्वयोः–ख-ञ-त१-२-भ; गवायोः–त३-४-श ॥ ८५८. १३-१४. **संगच्छन्ति... संगच्छन्ते—**§-मॅ-मु। 'समो गम्यृच्छिभ्याम्' (पा. सू. १. ३. २९) इति सूत्रेण प्रथमं 'संगच्छन्ते' इति अनन्तरं 'संगच्छन्ति' इति च भाव्यम् ॥ ८५८. १८. **धारकम्—**घ। धारकमग्निं–ख-त-न-भ-श; धारकमन्नं–ग; धारकमाजं–मॅ-मु ॥ ८५८. २८. **मधुधुक्त्वम्—***मॅ-मु। मधुक्षं–ख; मधुकल्कत्वं–ग; मधूदकं–ञ; मधुकं–त१-२-४; मधुदकं–त३; मधुष्णं–भ१-२; मधुव्रणं–भ३; मधुत्वं–श ॥ ८५९. २. **हेतुमाह—***मॅ-मु। हेतुं–§ ॥ ८५९. ६. **पवमाने—***मॅ-मु। एवमाने–ख-त-भ; एवमात्ते–ग; एवंमाने–घ; एवंभूते–श। 'पवमाने सोमे' इत्यनन्वितम् ॥

[८. ७३.] ८६०. २२. **आवारयतम्—**मॅ-मु। आवरयंतं–घ; आवरयतं–इतरेषु ॥ ८६०. २७-२८. '**प्रवेशः...निर्गमश्च...स्पष्टमुक्तम्—**§-मॅ। १। स्पष्टमुक्तः–मु ॥ ८६१. ८.

**युवयोरर्थमागमनाय**—*मॅ। युवयोरर्थागमनाय–ख-घ-त-न-भ-श; युवयोरात्रार्थागमानाय–ग। **युवयोरर्थं** गमनाय–मु ॥ ८६१. १४. **सजात्यम्**—च-भ२-श-*मॅ-मु। साजात्यं–ख-ग-त; संजात्यं–घ१; साजत्यं–भ१ ॥ ८६१. १५. **बन्धकः स्तुवः**—*मॅ-मु। बंधकस्तुवः–ख-त-भ२; बंधकस्तुवः–भ१-श; बंधकं **स्तुवः**–ग; बंधुकः स्तुतः–घ१; बधुकः स्ततः–च ॥ ८६१.१६. **अथवर्षिरहम्**—*मॅ-मु। अद्य वायुरहं–ख-त-न; अथवा युवयोरहं–ग; आद्या वायुरहं–भ१-२; अथवा रहं–श ॥ ८६२. ३. **अश्विनौ**—मॅ। अश्विनौ नोस्मान्–ख-ग-त-न-भ-श-मु; अश्विनौ नः–घ ॥ **अश्व्यैः अश्वसमूहैः**—*मॅ। अश्व्यैश्च–ख-ग-घ-त-न-श-मु। अश्व्यैः अश्व–भ२ ॥ ८६२. १४. **निशारयति**—*मॅ-मु। निशरयति–ख-त; निःसारयति–ग; निवारयति–घ-न-भ; निशातयति–श ॥ **एवम्**—ग-न-भ। एव–ख-त-श-मॅ-मु ॥ ८६२. १९. **आकर्षया**—मॅ। लिखितपुस्तकेषु 'कृष्णयाकर्षया' इति निरन्तरं लिखितत्वात् 'आकर्षया' 'कर्षया' इत्युभयथापि पदच्छेदः शक्यते कर्तुम्। कर्षया–मु। 'आकर्षकया' इति स्यादिति मॅक्समुल्लरमहाशयः संभावयति ॥

[ ८. ७४. ] ८६२. २३. **पञ्चमम्**—भ२-*मॅ। चतुर्थ–मु इतरेषु च ॥ ८६२. २७. **व्योमविश्वदेवस्तुत्**—*मॅ-मु। त्वाव्योमविश्वेदेवस्तुत्–ख-न-भ; व्योमविश्वोदेवस्तुत्–ज्ञ-त१-२; त्वाव्योमविश्वेदेवस्वत्यं–त३-४-श। केवलं पञ्चशारदीय एवेदं सूक्तमाज्यशस्त्रं, न व्योमविश्वदेवस्तुतोरिति आश्व. श्रौ. सूत्रादवगम्यते ॥ ८६३. ५. **स्तुषे**—ख-घ-ज्ञ-त१-२-मु। नु स्तुषे–मॅ इतरेषु च ॥ ८६३. २७. °**तेज आद्युपलक्षण**°—*मॅ-मु। °तेजोद्युपलक्षण°–ख-ग-त-न-भ ॥ ८६३. २८. **नाशयन्तम्**—ग-घ-ज्ञ-भ२-श। नार्शयंतं–ख-त२-३-४-न-भ१। दर्शयंतं–मॅ-मु ॥ ८६४. २०. **संबन्धीति**—*मॅ। संबंधिनमिति–ख-ज्ञ-त१-३-न-भ-श-मु; संबंधिनि इति–ग; संबंधि सर्वे—त२ ॥ ८६४. २५. **स्तुवते**। स्तुवंति–ग। स्तुवंते–मॅ-मु इतरलिखितपुस्तकेषु च ॥ ८६५. १२. **वृत्रतूर्ये**—ग-न-भ-श। वृत्रस्य तूर्ये–ख-त-मॅ-मु। ८६५. १९. **वृक्षा**। 'मृक्षा' इति पदपाठः। **वृश्च्यन्त**—ग-*मॅ-मु। व्रश्चत–ख-ज्ञ-त२-३; व्रश्च्यंते–त१; व्रश्च्यंते–भ ॥ ८६५. २७. **शत्रूणाम्**—मॅ। शत्रूणां संबंधिनां–ख-त-न-भ-श। शत्रूणां संबंधिनं–घ-मु ॥

[ ८. ७५. ] ८६६. २६. **आहूत वा**। आहूतो वा–भ१; आहुतोद्य–ख; आहुतो वा–ग-त-भ२-श-मु। आहुत वा–*मॅ। ऋ. सं. ८. २५. १९. द्रष्टव्यम् ॥ ८६७. ११. °**दीप्तये**—ग। °तृप्तये–मॅ-मु इतरेषु च ॥ ८६८. ६. **ते**—घ-न-भ-मु। ख-ग-त-श-मॅ-पुस्तकेष्वेतन्नास्ति। ८६८. २३. **अस्मदन्यमस्तोतारम्**—*मॅ-मु। अस्मदन्यस्तोतारं–ख-त-न-भ; अस्मदन्यं स्तोरं–ग; अस्मदन्यं स्तोतारं–घ-श ॥ ८६८. २९. **विधावति**–त-न। विधाति–भ। बधावति–घ। वृधावति–श-मॅ-मु। 'वृधावति' इत्यस्य स्थाने 'विधावति' इति भाष्यकारः पठितवानिति तद्व्याख्यानतोऽपि स्पष्टम् ॥ ८६८. ३०. **भवाम**—ख-ग-ज्ञ-त१-२-३-भ-श-मु। भवेम–घ-त४-न-मॅ ॥ **इति भावः** §-मु। इति–मॅ। ८६९. ४. **अन्यस्याः**—ग२। अन्यायाः–मॅ-मु इतरेषु च ॥

[ ८. ७६. ] ८६९. २८. **अपः सृजन्**—च-भ३। अपः असृजत्–ख; अपः असृजन्–ज्ञ-त१-२-३; अपसृजन्–ग-त४-भ१-२; अपः अपसृजन्–घ१-श-मॅ। अपः सृजन् असृजन्–मु। मु-पुस्तकगतः पाठः शुद्ध इति मॅक्समुल्लरमहाशयेनोक्तम्[1] (!) ॥ ८७०. २२. **बहुकर्मन्निन्द्र**—

---

१. Preface to the 2nd Edition Vol. IV. p. 178.

ग-घ। बहुकर्मेंद्र–ख-त-भ-श-मॅ-मु॥ ७७१.३. **अह्वाम्—**ग१-*मॅ-मु। अह्वां–इतरलिखितपुस्तकेषु॥ ८७१. ६. **इति ब्राह्मणाच्छंसिनः—**ख-त-न-भ-श-मु। इदं नास्ति मॅ-पुस्तके॥ ८७१. २०. **साष्टापदी—**ख-*मॅ। साष्टापदीं–त१-२-३-४-न-भ२-३-मु; प्राप्ता–घ; प्राप्तापदीं–ज्ञ-भ१ (प्रान्ते)॥ ८७१. २२. **तनुम्—**ख-घ-त न-भ२-श-मु। तनून्–भ१-३। तनूं–मॅ॥ **स्वरूपं...अशक्यत्वात्।** 'स्वरूपस्य...अशक्यत्वात्' इति भाष्यम्॥

[८. ७७] ८७१. २४. **कुरुसुतेः—**श-*मॅ। पुरुसुतेः–ख-त-भ-मु; पुरुसुतिः–घ॥ ८७२. ६. **एनम्—**ख-त-न-भ-श। ईमेनं–घ-मु। एतं–मॅ॥ ८७२. ७. **तौ—**मॅ-मु। ते–§॥ ८७२. १३. **रज्ज्वा इव तया—***मॅ-मु। नक्ष्वेव लया–ख-त; रज्ज्वा–ग; वल्या–घ; रज्वेव लया–न-भ-श॥ ८७३. १७. **नतानि—***मॅ-मु। निता–ख-त-भ-श; नीतानि–घ॥ **भूमेः कीलबद्धारणाय—***मॅ। भूमे किलवद्धारणया–ख; भूमेः किलबद्धधारणाय–घ; भूमे किलवद्धारणाय–ज्ञ; भूमे किल बद्धा धारणाय–त१-२; भूमे किल बद्धा धारणया–त३-४-भ; भूमे किलवद्धा धारणप्रा–श। भूमेः कीलबद्धारणानि–मु॥ ८७३. २४. **नैरुक्तैतिहासिक°—**ख-ज्ञ-त१-२-४-न-भ-मु। निरुक्तैतिहासिक°–ग-त३-श-मॅ॥ ८७३.२६. **स्वविरोधेन नेत्याह—**न-भ-श। स्वविरोधन नेत्याह–ग; स्वविरोधेनेत्याह–ख-त-मॅ-मु॥ ८७३. २८. **°वचनः—**§-मु। °बचने–मॅ॥ ८७४. १४. **तानि—**भ। एतन्नास्ति ख-ग-त-न-श-मॅ-मु-पुस्तकेषु॥ ८७४. १६. **उक्तोऽर्थश्च चरमपादेन—***मॅ-मु। उक्तार्थाच्च वारमपादिना–ख-ज्ञ-त१-२-३; इत्यत्रोर्थाश्च चारमपादेन–ग; उक्तोर्थोच्च चारमपादिना–त४-न-भ-श॥ ८७४.२३. **यास्केन व्याख्याता—***मॅ-मु। व्याख्यातत्वात्–§॥ **लिख्यते—***मॅ-मु। लिख्यते यास्कः–§॥ ८७४. २५. **गमनपातिनौ—**§-मॅ-मु। गमनपातिनौ वा–निरु.॥

[८. ७८] ८७६. ४. **यदा तं निन्दितुमिच्छति—***मॅ-मु। यदा त्वं निंदितुमिच्छसि–ख-ग-त-न-भ-श॥ ८७६. १४. **इन्द्रः...अभिहितः—***मॅ-मु। चेंद्रः पीतं सोमोभिहितः–ख-त-न-भ-श; चेंद्रपीताः सोमोभिहितः–ग॥ ८७६. १८. **एषते—**ग-घ-भ। ईषते–ख-त-मॅ-मु॥ ८७६. १९. **आप्रेच्छम्—***मॅ-मु। आप्तछुं–ख-त२-३-श; दातुमिच्छां अदच्छशु–ग; त्वामिछुं–घ१; त्वामिछां–च; आप्तेछुं–त१; प्राप्तेछुं–भ॥ ८७६. २७. **निष्कृतस्य—***मॅ-मु। निष्कस्य–ख-त-भ-श; संभृतस्य–ग॥

[८. ७९] ८७७. १६. **°साधनश्च अन्धः सन्नन्धोऽपि—**मु। °साधनस्य अंध संनद्धोपि–भ१-३; °साधनस्य अंध संनद्धोपि–न; °साधनश्च अंध(अध–त३-४) संनद्धोपि–त३-४-भ२; °साधनश्च अयमंधोपि–ग। °साधनश्च अंधः संनद्धोऽपि–मॅ॥ ८७७. २१. **कृत्याभ्य इत्यर्थः—**ग-त४-भ-श। कृत्यभ्येत्यर्थः–ख-ज्ञ-त२-३-न। कृत्येभ्य इत्यर्थः–मॅ-मु॥ ८७७. २२. **अन्यकृतानि हि रक्षांसि।** इदं ब्राह्मणवचनं कुत्रत्यमिति न ज्ञायते॥ ८७७. २७. **दिवश्च—**§-मु। एतन्नास्ति मॅ-पुस्तके॥ ८७८. १४-१६. **हे सोम ...... हृदे हृदये ...... नः पूरणः।** हे सोम...... कृत् हृदये ... ... नः पुराणः–भ। हे सोम पीतः त्वं नः अस्माकं हृदे हृदये वर्तमानः सुशेवः सुसुखः मृळयाकुः सुखकर्ता अदप्तक्रतुः असमाप्तकर्मा पुनःपुनः यागप्रवर्तकः अवातः निश्चलश्च भवेत्यन्वयः–ख-घ। हे सोम पीतः त्वं नः अस्माकं हृदे हृदये वर्तमानः सुशेवः सुसुखः सुखहेतुः अगर्वितकर्मा अहिंसितः। एतादृश हे सोम नः अस्मभ्यं शं भव मनसे अतिर्नितेवं साधयतीत्यर्थः–ग। हे

सोम पीतः त्वं नः अस्माकं हृदे हृदये पीताय शं सुखं भव किंच नः अस्माकं सुशेवः सुसुखः मृळयाकुः सुखकर्मा अदृप्तक्रतुः असमाप्तकर्मा पुनःपुनः यागप्रवर्तकः अवातः निश्चलश्च भवेत्यन्वयः—श-त१-२। हे सोम नः अस्माकं कृत् हृदये पीताय हृदयसंभव। अपरो नः पुराणः—त४-न-श। हे सोम पीतस्त्वं नः अस्माकं हृदे हृदये वर्तमानः शं सुखं भव। किंच नः अस्माकं सुशेवः सुसुखः मृळयाकुः सुखकर्ता अदृप्तक्रतुः असमाप्तकर्मा पुनःपुनः यागप्रवर्तकः अवातः निश्चलश्च भवेत्यन्वयः—मु। हे सोम पीतस्त्वं नोऽस्माकं हृदे हृदये वर्तमानः सुशेवः ‾ ‾। अपरो नः पूरणः—मॅ॥ ८७९. २. **वा**—भ-*मॅ-मु। च—घ। इतरलिखितपुस्तकेषु नास्ति॥ ८७९. ३. **हिन्धीत्यर्थः**—ग-त४-भ१-श। हिंसीत्यर्थः—ख-भ२-३; भिषीत्यर्थः—घ; इंतीत्यर्थः—श; हिंथीत्यर्थः—त२-३। भिंधीत्यर्थः—मॅ-मु॥

[८. ८०.] ८७९. ४. **एकादशम्**—*मॅ। द्वादशं—§। दशमं—मु॥ ८७९. ५. **°र्नाम**—घ१-मु। °र्नामा—इतरलिखितपुस्तकेषु मॅ-पुस्तके च॥ ८७९. १२. **बद् सत्यं नाकरम्**। बहुकृत्यं( °त्य—घ ) नाकरं—ख-घ-ञ-त१; बद् सत्यं न्नाकरं—ग-भ३; बहुकृत्यन्नाकरं—त२; बद् ‾ त्यन्नाकरं—त३-४-न; बद् ‾ ‾ न्नाकरं—भ१; वरं ‾ ‾ न्नाकरं—भ२; बल इत्यत्राकरं—श। बद् तन्नाकरं—मु। बद् ‾ तन्नाकरं—मॅ॥ ८७९. १७. **अन्नलाभाय**—घ-भ३। एतन्नास्ति मॅ-पुस्तके॥ ८८०. ९-१०. **वाजयु ... इच्छन्**—मॅ-मु। 'वाजयुः ... इच्छन्' इति (घ-पुस्तकगतः) पाठः साधीयानिति मॅक्समुल्लरमहाशयस्याभिप्रायः॥ ८८०. २०. **पुरमसि**—ग२। पूरयसि—मॅ-मु इतरेषु च॥ ८८०. २७. **अवद्यः**—ख-ग-त-न-भ-श। अवद्ये—मॅ-मु पदपाठश्च। अवद्ये अवद्यः—घ। 'अवद्ये' इति पाठः मॅक्समुल्लरमहाशयेन लिखितपुस्तकेषूपलब्धो न वा इति न ज्ञायते। अस्मत्प्राप्तेषु बहुषु लिखितपुस्तकेषु 'अवद्यः' इत्येव पाठः। अतः भाष्यकारैः 'अवद्ये' इत्यस्य स्थाने 'अवद्यः' इति पठितमिति शक्यमनुमातुम्॥ ८८०. २८. **बह्वन्तरालमाज्यन्तः**। बह्वंतरळं ( °लं—त२-३; °ळ—भ१ ) आज्यंते—ख-त-न-भ१; बह्वंतराळ—ग; बह्वंतराल आज्यंते—भ३; बह्वंतरलं आज्यंतो—श। बह्वंतराल आज्यन्तः—मॅ-मु॥ ८८०.२९. **स्थिता**—§-मॅ। स्थितो—मु-निरु.॥

[८. ८१.] ८८१. २०. **स्तोत्रियः**—§-मु। मॅ-पुस्तक इदं नास्ति॥ ८८१. २३. **नः अस्मभ्यम्**—§। अस्मभ्यं—*मॅ-मु॥ **दातुम्**—घ। दातुं नोऽस्मदर्थे—ख-त-न-भ-श-मॅ-मु॥ ८८२. १६. **उपगानम्**—ग१-भ३-*मॅ-मु। उपमानं—इतरलिखितपुस्तकेषु॥ ८८२. १८. **स्वीकुर्विति**—ख-ग-त-भ-श-मु। स्वीर्निति—न। घ-मॅ-पुस्तकयोरेतन्नास्ति। ऋ. सं. १. १४०. १३. द्रष्टव्यम्॥ ८८३. ८. **तव वाजाः**—*मॅ-मु। तव आ—त-भ१-२; तव—ग; अश्वाः—घ-भ३॥

[८. ८२.] ८८४. ७. **लिटि**—ख-ग-ञ-त२-३। टेटिले—भ१; लटि—श; लेटि—त४-भ२-३-मॅ-मु॥ ८८४. २९. **सोऽस्माभिः**—*मॅ-मु। अस्माभिः—ग; सह अस्माभिः—इतरलिखितपुस्तकेषु॥ ८८५. २८. **त्वम्**—ग-भ३-श-*मॅ-मु। ता—ख-त-भ१-२; तां—ञ॥

[८. ८३.] ८८६. ७. **महनीयम्**—§। मंहनीयं—मॅ-मु॥ ८८६. १३. **सर्वेषु कालेषु**—ख-ञ-त१-२-भ। सर्वेषु—ग-घ-त३-४-न-श। सर्वेष्वहःसु—*मॅ-मु॥ ८८६. १९. **संबन्धि ‾ ‾ ‾ त्वात्**—मॅ बहुषु लिखितपुस्तकेषु च। संबंधेः—न। मु-पुस्तक एतन्नास्ति। 'संबन्धिशब्दत्वात्' इति स्यात्॥ ८८६. २०. **विष्पितानि**—*मॅ-मु-×। बहुषु लिखितपुस्तकेषु 'विष्पिता' इत्यस्यानन्तरं लेखनार्थं कश्चिदवकाशो (Lacuna) दृश्यते। 'विष्पितानि' इति पदमत्राभिप्रेतं स्यादिति कृत्वा

मॅक्समुल्लरमहाशयेन विनिवेशितम् ॥ ८८६. २१. वा—ख-ञ-त१-२-भ२-य। ग-त३-श-मॅ-मु-पुस्तकेषु नास्ति ॥ ८८७. ४. याचामहे—ख-घ-ञ-त२-४-मु। याचामः—ग-न-भ-श-मॅ ॥ ८८७. ६. न प्राप्नोतु—घ-न-भ। प्राप्नोतु—ख-त-श-मॅ-मु ॥ ८८७. १०. वः इत्—ग-घ-मु। इत्—ख-त-भ-श। इद्वो—मॅ ॥ ८८७. १६. तेषामेषाम्—§-मु। तेषां—मॅ ॥ ८८७. २१. सामान्येन—ख-घ। समाने—ग। समान्येन—त-न-भ-श-मॅ-मु ॥ ८८७. २४. तस्मै पूषा चार्यमा चाजायेताम्। इयं श्रुतिः तैत्तिरीयसंहितायां (६. ५. ६.) नोपलभ्यते ॥ ८८७. २९. सर्वे देवाः—ख-घ-त-न-भ-श-मु। सर्वदेवाः—ग-मॅ ॥ ८८७. ३०. ब्रुवे—*मॅ-मु-X। उतापि च ब्रुवे—घ ॥

[ ८. ८४. ] ८८८. ३. उकथ्येषु—ग-त-न-भ१-२-श-मु। उक्थेषु—ख-भ३-मॅ ॥ ८८८. १२. काव्यः—*मॅ-मु। अहं—ग; कः—इतरेषु ॥ ८८८. २१. अग्ने—*मॅ-मु। इंद्र—§ ॥ ८८८. २३. नृन्पे—*मॅ-मु। नृन् पति—ग; तत्प्रति—इतरेषु ॥ ८८८. २६. त्मनेति—ख-त-न-य-श-मु। आत्मनेति—भ१-३-मॅ ॥ रक्ष त्वदन्यम्—भ२-*मॅ-मु। रजनदन्य—ख-भ१; नवतदन्यं—ग; रजनदन्यं—त-भ२; त्वदन्यं—श ॥ ८९०. ६. साधयद्भिः—*मॅ-मु। साधायोभिः—ख-त-भ३; साधीयोभिः—ग; साधोयोभिः—भ१-२ ॥

[ ८. ८५. ] ८९१. २. संप्रति—ग-भ१-३-श-मु। सप्रति—ख-त-न-भ२। घ-मॅ-पुस्तकयोर्नास्ति ॥ ८९१. २९. सोमस्य—ग-*मॅ-मु। इतरेषु नास्त्येतत् ॥

[ ८. ८६. ] ८९२. ९. नराः—§-मु। नरः—मॅ ॥ ८९२. १०. भीतिमपनयतः—*मॅ। भीतिं समनयन—ख-त; भीतिं समनयत—भ-श-मु ॥ ८९२.१२. अस्ताविषाथाम्—*मॅ-मु। अस्ताविद्याढ्या—ख-ञ-त२-४-भ२; स्ताविद्याढग—ग; अस्ताविद्याथाः—घ; अस्ताविद्याया—त१-३; अस्तावीयाद्या—भ१-३ ॥ ८९२. १४. विष्णाप्वो निमित्तम्—*मॅ-मु। विष्णोः प्रसनिमित्तं—ख-त; विष्णोः प्रसवनिमित्तं—ग-भ२-३; विष्णोः निमित्तं—घ; विष्णोः प्रसविमितं—भ१ ॥ ८९२. २३. कथं वाम्—§-मु। मॅ-पुस्तक इदं नास्ति ॥ ८९२. २४. प्रशस्तं धनं तस्याभिलषितस्य—*मॅ-मु। प्रशस्तधनं तस्याभिलषितस्य—ग; प्रशस्तधनवतमभिलषितस्य—ख-त-भ-श; प्रशस्तधनमभिलषितस्य—घ ॥ ८९२. २५. अददाथाम्। अदाथां—ख-त-न-भ-श; अदातं—ग; अद्याथां—घ। अदधाथां—मॅ-मु ॥ ८९३. ५. आपुनाति—§-मु। पुनाति—मॅ ॥ ८९३. ७. अदत्तम्—मॅ-मु। दत्तं—§ ॥ ८९३. १४. ऋजीषोऽपार्जितोऽभिषुतः सोमः—ग-त३-मु। निरु.५.१२.; ९३२. पृ.२०५. टिप्पणी च द्रष्टव्ये। ऋजीषोपार्जितोभिषुतसोमः—ञ-त४-भ-श। उपार्जितः अभिषुतसोमः—घ। ऋजीष उपार्जितोऽभिषुतः सोमः—मॅ। ऋजीषशब्दः यद्यपि निरुक्तादिषु नपुंसकलिङ्गः दृश्यते तथापि सायणाचार्यैः प्रायेण पुंलिङ्ग एव प्रयुक्तो दृश्यते (ऋ. सं. ५.४०.४; ६.४२.२; ८.७६.५.) ॥ ८९३. १५. रक्षति—ग-न-भ। रक्षत—ख-ञ-त२-३। रक्षते—घ-त४-श-मॅ-मु ॥ ८९३. १८. मा नो इति—ख-त१-२-मु। मा न इति—ग-ञ-भ३; म मे इति—त३-४-न-श; इमे इति—भ१; मे इति—भ२। मेति—मॅ ॥

[ ८. ८७. ] ८९४. ३. यत्स्थ इति—मॅ-मु-आश्व. श्रौ.। यत्स्थो—ख-ग-त; यत्स्थो इति—भ-श ॥ ८९४. ८. अनुपक्षीणस्तोत्रः—ग-*मॅ। अनुक्षीणस्तोत्रः—ख-त-भ-मु; मनुष्यः क्षीणस्तोत्रः—श ॥ स्तोमः स्तोता भवति—*मॅ-मु। स्तोमस्ता भवसि—ख-ञ-त२-३-भ; स्तोम भवसि—त१-४ ॥ ८९४. १२. प्रयच्छतः—§-मु। प्रयच्छथः—मॅ ॥ प्रति आ गतम्—ख-ग-घ-त-न-भ२-

श-मु । प्रत्यागं-भ१ । प्रत्यागच्छतं-भ३-मॅ ॥ ८९४.१४. **शीघ्रमागत्य पिबतम्**—त-भ-मु । शीघ्रमागत्य पिबतः-ख । एतन्नास्ति घ-मॅ-पुस्तकयोः ॥ ८९४.२७. **आ**—भ१-२ । आ नि पातं-ख-श-त१-२-मु । भ३-मॅ-पुस्तकयोरेतन्नास्ति । इतरलिखितपुस्तकेषु २-४ मंत्राणां भाष्यं नास्ति ॥ ८९५. ४. **अवतिः**—भ२-३-मु । अवतीः-भ१; अविति-त२ । अवति-ख-मॅ ॥ **याच्ञाकर्मा**—ख-त२-भ-मु । याच्ञाकर्म-मॅ ॥ ८९५. ५. **आत्मनः** । आत्मनां-ख-ज्ञ-त२-भ३; आत्मानं-त१; आत्मानां-भ१-२ । आत्मना-मॅ-मु ॥ **पालनहेतुकत्वेन**—ख-त२-भ-मॅ-मु । ? ॥ ८९५.६. **ता तौ**—ख-घ-त१-२-मु । ततो-भ-मॅ ॥ ८९५. ७. **सर्वैर्देवैः**—ख-घ-ज्ञ-त१-२-मु । सर्वदेवैः-भ१-२ । सर्वदेवेषु-मॅ ॥ ८९५. १५. **ववृधानौ**—ख-घ-ज्ञ-त१-२-भ१-२-मु । वावृधानौ-भ३-मॅ ॥ ८९५. १६. **शोभनाम्**—§-मु । मॅ-पुस्तक एतन्न विद्यते ॥ ८९६. २. **अन्नलाभाय**—§-मु । अन्नकामाय-मॅ ॥

[ ८. ८८. ] ८९६. २०. **वसोः पात्रे निवसतः**—*मॅ-मु । वसे पात्रः प्रतिवसतः-ख-त-भ१; वसोः पात्रं प्रतिवसतः-ग-भ३-श; वसो पात्रः प्रतिवसतः-भ२ ॥ ८९६. २५. **अत्रेति**—§-मु । यत्रेति-मॅ ॥ ८९६. ३०. **अतिशयितदीप्तिम्**—§ । °दीप्तं-मु । अतिशयेन दीप्तं-मॅ ॥ ८९७. ५. **शोभनदानयोग्यं बलादियुक्तम्** । शोभनदानयोग्यबलादियुक्तं-ग । शोभनयोग्यं बलादियुक्तं-ख-त-भ-मॅ-मु ॥ ८९७. ६. **याचामहे इति**—ग-*मॅ । याचामहेति-श; याचाम इति-ख-त-न-भ-मु ॥ ८९७. ७. **ब्राह्मणाच्छंसिनः** । 'अच्छावाकस्य' इति भाव्यमिति प्रतिभाति ॥ ८९७. १४. **न निवारयन्ति**—ग२-घ१-भ-मु । च निवारयंति-श; निवारयंति-ख-ग१-च-ज्ञ-त३-४-न-मॅ ॥ ८९७. १५. **त्वम्**—मॅ । त्वं तत्-§-मु ॥ ८९७. २३-२४. **मज मुजि...शब्दार्थः**—§-मॅ-मु । इदं पुनरुक्तमिवाभाति । धातुपाठे 'मुज मुजि शब्दार्थाः' इति दृश्यते । 'मजमुजी च' इति नास्ति । 'मुज मुजि' इत्येतयोः स्थाने 'मृज मृजि इति स्वामिचन्द्रौ' इति माधवीयधातुवृत्तावुक्तम् । 'मृज मृजि शब्दार्थाः मजमुजी च' इति पाठः संभाव्यते । अन्यत्र ( ऋ. सं. १. ५१. १०; ५५. ५ ) 'टुमस्जो शुद्धौ' इति धातोः मज्मञ्शब्दो व्युत्पादितः ॥ **शत्रूणामाक्रोशनसमर्थेन**—मॅ-मु । येन शत्रूणामाकोसनसमर्थेन-ख-ज्ञ-त२-३-४-भ१-२; येन शत्रूणां रोदनसमर्थेन-ग; येन शत्रूणाकोशन(°सन-न )समर्थेन-त१-न; येन शत्रूणामाकोशनसमर्थेन-श ॥ ८९७. २९. **प्रादुरबीभवन्**—मॅ-मु । प्रादुरभीरयन्-ख-घ१-त-न-भ-श; प्रादुरचीकरन्-ग; प्रादुरभिरयन्-च ॥ ८९८. ६. **लटि**—ख-त-भ-श । लेटि-ग-मॅ-मु ॥

[ ८. ८९. ] ८९८.२१. **इन्द्रो देवता**—ख-ग-त-न-भ-श-मु । मॅ-पुस्तके नास्तीदम् ॥ ८९८.२४. **मरुत्वतीया ऊर्ध्वं नित्यात्** । मरुत्वदीया ऊर्ध्वं नित्यात्-ग; मरुत्वतीय ऊर्ध्वं नित्या-ख-त-भ-श । मरुत्वतीय ऊर्ध्वं नित्यात्-मॅ ॥ ९००. ३. **गच्छन्तु**—*मॅ-मु । गच्छति-ख-त; गच्छंति-घ-न-भ ॥ ९००. १०. **त्वत्तो**—§-मु । स्वतो-मॅ ॥ ९००. १८. **त्वदर्थम्**—§ । त्वदर्थो-मॅ-मु ॥ ९००. २९-३१. **ततोऽङ्गिरस...मारोहितवान्** । अशुद्धेयं वाक्यरचना ॥

[ ८. ९०. ] ९०१. १५. **अनुभवतु**—भ३-श । उत्कृष्टमनुभवतु-ग; उदकमनुभावतु-त; उदकमनुभवेतु-न-भ१-२ । उदकमनुभावयतु-घ-मॅ-मु ॥ ९०१. १६. **वा**—श-*मॅ-मु । एतन्नास्ति ख-ग-त-न-भ-पुस्तकेषु ॥ ९०१. १८. **जिनाति**—भ२-३-मु । जिनातीति-ख-त-भ१-श; जीनातीति-ग । जीनाति-न-मॅ । ऋ. सं. ८. १. ३०. द्रष्टव्यम् ॥ ९०१. २७. **तत्पुत्रस्य**—

ग-*मॅ-मु। नपुत्रस्य–ख-त-भ१-२-श; पुत्रस्य–भ३ ॥ ९०२. ३. **त्वद्गुणान् सर्वान्**—न-भ-श। (अनति)द्गुणान् सर्वान्–ख-त। सर्वान्–ग-घ-मॅ-मु॥ ९०२. ४. **ब्रह्म**—घ-न-भ-मु। ख-ग-त-मॅ-पुस्तकेष्वेतन्नास्ति॥ ९०२. १३. **प्रह्वीभावयसि**—*मॅ-मु। प्रह्वीभवसि–ख-त-भ-श; प्रह्वीभवंती–ग॥ ९०२. २४. **ऋजीषी ऋजीषोऽपार्जितोऽभिषुतः सोमः**। ऋजीषोपार्जितोभिषुतसोमः–ख-त-भ२-३-श; ऋजीषोपार्जितोभिषुतः सोमः–ग; ऋजीषी उपार्जितोभिषुतः सोमः–घ-मु; ऋजीषी॰ ऋजीषोपार्जितोभिषुतसोमः–भ१। ऋजीषी ऋजीष उपार्जितोऽभिषुतः सोमः–मॅ। ८९३. पृ. १४ प. टिप्पणी द्रष्टव्या॥ ९०३. ११. **अश्नुवताम्**—ग-त४-श-मु। अश्नुवता–ख-ञ-त२-३; अश्नुवंतु–घ; अश्नुतां–भ। अश्नुवंतां–मॅ॥

[८. ९१] ९०३. १६. **चिरकालम्**—§-मॅ-मु। चिरं कालं–आउफरेख्ट्महाशयप्रकाशित एतत्सूक्तभाष्ये (Indische studien Vol. IV)॥ ९०३.१९. **दंतघर्षण॰**—मॅ-मु। दंतघर्ष॰–आउफ्रेख्ट्॥ ९०३. २०. **अत्र कन्या**—§-मॅ। अत्रिकन्या–मु-आउफरेख्ट्॥ ९०३. २७. **अपालायामुक्तायाम्**—§-मॅ-मु-आउफरेख्ट्। 'अपालायामुक्तवत्याम्' इति भाष्यम्॥ ९०३. २९. **एतानि रोमफलादियुक्तं कुरु**—§-मॅ-मु-आउफरेख्ट्। 'रोमफलादियुक्तानि' इति भाष्यम्॥ **उक्तायाम्**—§-मॅ-मु। 'उक्तवत्याम्' इति भाष्यम्। उक्तवत्यां–आउफरेख्ट्॥ **॰शिरःस्थितं खलतिमपहाय**—भ-मॅ। ॰शिरःस्थितां खलतिमपहाय–ग-त-मु। ॰शिरःस्थितं खलतित्वमपहाय–आउफरेख्ट्। खलतिशब्दः पुनरपि (५ मंत्रे) आगतः। मॅक्समुल्लरमहाशयस्यैतद्विषयकटिप्पणी द्रष्टव्या॥ ९०३. ३१. **पूर्वापहृता या**—*मॅ। पूर्वाभिहृतायाः–ख-ग-त२-३-४-भ-मु; पूर्वाभिहितायाः–ञ-त१; पूर्वाभिहृता या–श-आउफरेख्ट्। बृहद्देवतायां (६.१०६)–'तस्यास्त्वगपहृता या पूर्वा सा शल्यकोऽभवत्'॥ ९०४. ६. **लतारूपम्**—भ३। अविरूपं–ख-त-भ२; अची रूपं–भ१; अटि रूपं–श-आउफरेख्ट्। लङि रूपं–ग-*मॅ-मु। 'लङि रूपम्' इति यत् मॅक्समुल्लरमहाशयैः स्वीकृतं तदयुक्तं प्रतिभाति। यतः लङि 'अविन्दत्' इति रूपं स्यात्। लुङि तु 'अविदत्' इति भवति। मॅक्समुल्लरमहाशयस्य टिप्पणी द्रष्टव्या॥ ९०४. ९. **दन्तध्वनिम्**—घ-मॅ। दंते दंतध्वनिं–मु। दंतराजिध्वनिं–आउफरेख्ट्॥ ९०४. १०. **सोमांशुमविन्दत्**—ग-*मॅ-मु-आउफरेख्ट्। सोमं सुमविंदत्–ख-ञ-त२-३-४-भ; सोमं समविंदत्–श। शाट्यायनब्राह्मणवचनविषये मॅक्समुल्लरमहाशयस्य टिप्पणी द्रष्टव्या। एतद्ग्रन्थस्याद्याप्यनुपलब्धेः न किमप्यधिकं वक्तुं शक्यतेऽस्मिन् विषये॥ ९०४. ११. **सा तमभिव्याजहार**—*मॅ-मु। साभिव्याहार–ख-त-भ-श; साभिव्याहरत्–ग। साभिव्याजहार–आउफरेख्ट्॥ **त इदम्**—*मॅ-मु-आउफरेख्ट्। ता इदं–ख-त-भ-श; वा इदं–ग। 'त इह' इत्यपि स्यादिति मॅक्समुल्लरमहाशयः॥ ९०४. २०. **भृष्टयवाः**—भ३-मु। पृष्टयवाः–भ१। भ्रष्टयवाः–ख-त-श-मॅ-आउफरेख्ट्॥ ९०४. २८.–९०५. १. **इच्छाम एव...... तमिन्द्रमुक्त्वा**—*मॅ। इच्छाम एव मम गृहमागच्छंत त्वामिंद्र इति जानीम (न जानीम–ख) एव इह मार्ग एवागतं त्वा त्वां नाधीमसि नाधिगम (न जानीम–ख; निधिगम–भ१) अत्रापि चनेत्यवधारणे इह त्वामिंद्र इति न जानीम इत्यपालय तमिंद्रमुक्त्वा–ख-ञ-त१-४-भ; इच्छाम एव मम गृहमागच्छतं (॰मागच्छंतं–श) त्वामिंद्र इति जानीम एव इत्यपालय(॰लया–श)तमिंद्रमुक्त्वा–त३-श। इच्छाम एव मम गृहमागच्छ तं त्वामिंद्र इति जानीम एव इह मार्ग एवागतं

त्वा त्वां नाधीमसि नाधिगच्छामः। अत्रापि चनेत्यवधारणे। इह त्वामिंद्र इति न जानीमः। इत्यपाला तमिंद्रमुक्त्का(?क्त्वा)–मु। इच्छामः एवं मम गृहमागच्छंतं त्वामिंद्र इति जानीम एव। इह मार्गे एवागतं त्वा त्वां नाधीमसि नाधिगच्छामः। अत्रापि चनेत्यवधारणे। इह त्वामिंद्रेति न जानीम इत्यपाला तमिंद्रमुक्त्वा–आउफ्रेख्ट्॥ १०५. २. **कुत्सितम्**—*मॅ-मु। कुत्सितः–§-आउफ्रेख्ट्॥ १०५. ५. **एवाधासीत्**—*मॅ-मु। एवौवधासीत्–ख-त-भ-श; एवोच्चैरधासीत्–ग। एवाधासीत (मुद्रणदोषः?)–आउफ्रेख्ट्॥ १०५. १५. **बहु**—§-मॅ-मु। आउफ्रेख्ट्महाशयप्रकाशितभाष्य एतन्नास्ति॥ १०५. १७. **बहु**—§-मॅ-मु-आउफ्रेख्ट्। मॅक्समुल्लरमहाशयः इमं शब्दमनावश्यकं मन्यते 'बहुवारम्' इति पदस्याग्रे सद्भावात्॥ १०५. १८. **एव**—भ३-*मॅ-मु-आउफ्रेख्ट्। इतरलिखितपुस्तकेषु नास्ति॥ १०५. ३१. **तम्**—मॅ-मु-आउफ्रेख्ट्। तां–§॥ **सो ह जज्ञे**—आउफ्रेख्ट्। सोहं जज्ञे–ख-श-त१-भ; सो जज्ञे–ग-त४-श-मॅ-मु; जज्ञे–त२-३॥ १०५. ३२. **नामुस्तान्यु ह**—*मॅ-मु-आउफ्रेख्ट्। वस्युस्थान्यु ह–§॥ १०६. ५. **या असौ**—मॅ-मु। या सा–आउफ्रेख्ट्॥ १०६. ६. **अथापि**—ख-ग-त-भ-श-मॅ-मु। अपि–घ-आउफ्रेख्ट्॥ १०६. १५. **निष्कर्षणेन पूत्वी**—*मॅ-आउफ्रेख्ट्। निष्कर्षणे वा–त-भ१-२; निष्कर्षेणैव–ग; निष्कर्षणेन–भ३; निष्कर्षणेन वा–श। निष्कर्षेण पूत्वी–मु॥ १०६. १७-१८. **रथस्य...अभवत्**—*मॅ। रथस्याव्य (ध्य–श-त२-३) बृहत्सा मोर्धाभवत्तां खेनसेनसो(खेनसो–भ२-३) त्यबृहत् (त्यहरत्–श) सा संश्लिष्टकाभवत्–ख-त-भ-श; रथस्यात्यबृहत्सा मोद्धवा भवतो खेनसेनसो बृहत्सामंशिष्टकाभवत्–ग। रथस्याध्यबृहत्सा गोधाभवत्तां खेऽनसोऽत्यबृहत्सा संश्लिष्टकाभवत्–मु। रथस्यासाद्य बृहत्सामोर्ध्वाभवत्तं खेऽनस आसाद्य बृहत्सामसंश्लिष्टकाभवत्–आउफ्रेख्ट्॥ १०६.२०. **तस्य...त्वग्दोषम्**—§-मॅ-मु। तद्दोषं–आउफ्रेख्ट्॥ १०६. २१. **सूक्तम्**—ग-न-भ-*मॅ-मु। युक्तं–ख-त-श-आउफ्रेख्ट्॥ अपालायाः कथाविषये ऋग्वि. २. ५२.; बृहद्दे. ६. ९९–१०७; अनु. भा. ८. ९१. द्रष्टव्यम्। मॅक्समुल्लरमहाशयस्य एतत्सूक्तटिप्पणी च द्रष्टव्या॥

[८. ९२.] १०७. ९. **गानयोग्यम्**—त१-३-मु। गातयोग्यं–ख-श-त२-४-भ-श; गातव्यं योग्यं–ग। गाथायोग्यं–*मॅ। 'गानयोग्यम्' इति पाठः समीचीनतर इति मॅक्समुल्लरमहाशयेनोक्तम्[1]। १०७. ३०. **लोटि**—*मॅ-मु। लिटि–ख-त-भ-श; लिङि–ग॥ **ध्वमस्तनबादेशः**—ग-भ३-*मॅ-मु। ध्ववस्तनबादेशः–इतरेषु॥ **व्यत्ययेन...गुणः**। अत्र व्यत्ययाश्रयणमनावश्यकम्। ब्रूञ उभयपदित्वात् 'तस्य तनबादेशः' इति वक्तुं शक्यम्। ऋ. सं. १. ८४. ५. द्रष्टव्यम्॥ १०७. १९. **यत्वा**—*मॅ। दत्वा–§। गृहीत्वा–मु॥ १०७. २५. **श्रीङ् पाके**—ख-ग-भ-मॅ-मु। प्रीङ् पाके–त२-३-श; श्रीङ् पाके–श-भ१। 'श्रीञ् पाके' इति भाव्यम्॥ १०७. २६. **इन्दोः**—ग-*मॅ-मु। इंद्रः–ख-त-न-भ२-श; इंद्रः इंदोः–घ॥ **क्षरत्**—*मॅ। क्षरतः–ग; क्षरंतं–त-भ-श; क्षरंत–घ-मु॥ १०८. ७. **ग्रहेषु**—ग-त-न-भ२-श। गृहेषु–भ१-३-मॅ-मु॥ १०८. ११. **भूताभिभवनादीनि**—ख-त-न-भ-श-मु। भूतानि अभिभूतानि–ग। भूतानि भुवनादीनि–मॅ॥ १०८. १४. **°तिरिक्तोक्थे**—त-भ-श। °तिरिक्तोक्थ्ये–ग-मॅ-मु॥ १०८. १५. **स्तोत्रियानुरूपौ**। स्तोत्रियानुरूपाः–आश्व. श्रौ.॥ १०८. २३. **प्लुङ्**—ख-ग-त-न-भ-*मॅ-मु। प्लुङ्–श॥ १०९. १८. **अदा-**

1. Preface to the 2nd Edition Vol. IV, p. 178.

**तृन्**—ग-*मॅ-मु । दातृन्—ख-त-भ-श; शत्रून्—घ ॥ १०९. २५. **औतोमित्यात्वाभावः**—ग । ओत्वाभावः—ख-त-न-भ२-मु; ओऔत्वाभावः—श । औत्वाभावः—भ३-*मॅ ॥ ११०. २. **अनुकामा**—मॅ-मु । कामा—§ ॥ ११०. ४. **अवगच्छाम**—ख-ग-त-न-भ-श । **अवगच्छामः**—घ-मॅ-मु ॥ **लेटि** । 'लङि' इति युक्तम् । ऋ. सं. १. ५०. १०; ११३. १६. द्रष्टव्यम् ॥ ११०. १८. **पोषयित्र्या**—ख-त-न-भ-श-मु । ग-घ-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ११०. १९. **°वचनात्**—ख-ग-त१-२-३-भ१-३-मु । °वदनात्—त४-भ२-श-मॅ ॥ ११०. २६. **प्रदीयमानेन सोमेन**—भ३-*मॅ । प्रदीयमानसोमेन—ख-ग-त-भ१-२-मु; प्रदीयमानः सोमो न—श ॥ १११. २८. **इन्द्रादयः**—§-मु । मॅ-पुस्तके नास्ति ॥ ११२. १६. **कुक्षये**—§-*मॅ-मु । सर्वेषु लिखितपुस्तकेषु 'कुक्षये' इत्यस्य स्थाने 'तुनहु' इति पाठो विद्यते इति मॅक्समुल्लरमहाशयः । वस्तुतस्तु १८ पङ्क्तौ विद्यमानस्य 'कुक्षये' इत्यस्य स्थाने 'तुनहु' इति पाठो लिखितपुस्तकेषूपलभ्यते ॥ ११२. १७. **तेजसाम्**—§ । तेजसा—मॅ-मु (मुद्रणदोषः ?) ॥ ११२. २४. **स्तौति**—*मॅ-मु ग्वालियर-जोधपूरलिखितपुस्तकयोश्च । नौत—ख-त१-२-३-४-भ-श; स्तौत—ज्ञ ॥ ११३. ४. **समीपात्त्वाम्**—भ३-*मॅ-मु । मृगपाव्नां—ख-त; मृगपाल्वां—भ१-२; मृगपाजां—श; मृपातारं—ग ॥ **अश्नुवतामिति**—ख-ग-त-भ-श-मु । अश्नुवंतामिति—मॅ ॥ ११३. २६. **तन्द्रयुक्तः**—*मॅ-मु । तं प्रयुक्तं—ख-त; मंद्रयुक्तं—ग; तंद्रयुक्तं—न-भ-श ॥ ११३. २७. **°कर्मान्वितो**—*मॅ-मु । °कर्मवतो—ख-घ-त-भ१-२; °कर्मयुतो—ग; °कर्मवान्—भ३; °कर्मवते—श ॥ ११४. ४. **वन**—मु । क्त—ख-त-न-भ१-२-श; श्न—भ३; वनु—ग२-मॅ ॥ ११४.११. **त्वमिदं...त्वमस्माकमसि** । इदमारण्यकवचनं कुत्रत्यमिति न ज्ञायते ॥ ११४. १८. **आडागमः**—ग । अडागमः—मॅ-मु इतरेषु च ॥

[ ८. ९३. ] ११४. २४. **°तिरिक्तोक्थे**—ज्ञ-भ-श-मु । °तिरिक्तोरवे—ख-त१-२-३-४ । °तिरिक्तोक्थ्ये—ग-मॅ ॥ ११४. ३०. **एतादृशानुभावम्**—*मॅ-मु । एतादृशं अनुभवि—ख-त-भ१-२; एतादृशं मनुष्यमभि—ग; एतादृशमभि—भ३; एव तादृशं अनुभवि—श ॥ ११५. ६. **केनापि**—मॅ । न केनापि—§-मु ॥ ११५. १२. **प्रतिषेधात्**—ख-ग-ज्ञ-त१-२-३-भ । षप्रतिषेधात्—त४-श । वप्रतिषेधात्—मॅ-मु ॥ ११५. १३. **दोहनकाले**—ख-ज्ञ-त१-२-न-भ-मु । ग-घ-त४-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ११५. १५. **°तिरिक्तोक्थे**—ख-त-न-भ१-२-श-मु । °तिरिक्तोक्ते—भ३ । °तिरिक्तोक्थ्ये—ग-मॅ ॥ ११५. २२. **तदा**—§-मॅ-मु । अयं शब्दोऽनावश्यकः प्रतिभाति ॥ ११६. ६. **ये सोमाः**—घ-*मॅ । ते सोमाः सुनोतेः कर्मणि लिटि व्यत्ययेन श्नुः (श्लुः छः—त३-४-भ३-श; श्नुः छ—न; श्नुः उच्छ—भ१ )—ख-ग-त-न-भ-श । सुनोतेः कर्मणि लिटि व्यत्ययेन श्लुः ये सोमाः—मु । केनचिदध्येत्रा प्रान्ते लिखितं केनचिल्लेखकेन प्रमादान्मूले समावेशितं स्यात् । मॅक्समुल्लरमहाशयोऽप्येवमभिप्रैति ॥ ११६. ८. **सूचितम्**—§ । सूचितं च—मॅ-मु ॥ ११६. ९. **°तिरिक्तोक्थे**—भ१-श । °तिरिक्तोक्थ्ये—ख-ग-त-भ२-मॅ-मु ॥ ११६. १५. **वा**—त-न-भ-श-मु । ख-ग-मॅ-पुस्तकेषु नास्ति ॥ ११६. १७. **स्तुतः सन्**—मॅ । स्तुतः सन् वृत्रहंतवे वाजयामसि वाजवंतं करोतीत्यर्थे तत्करोतीति णिच् णाविष्ठवदिति णेरिष्ठवद्भावात् टेरिति टिलोपः विन्मतोर्लुक् इति वचनान्मतुपो लुक्—ख-ग-त-न-भ-श-मु (लिखितपुस्तकेषु क्वचिदशुद्धिर्विद्यते)। इयमपि प्रक्रिया लेखकप्रमादाद्भाष्ये प्रविष्टा ॥ ११६. २८. **वज्र आयुधम्**—*मॅ । वज्रायुधं—§-मु ॥ ११७. ११. **सर्वत्रामयेति**—मु ।

सर्वत्रमनुयंति–ख; सर्वमनेति नेति–ग; सर्वत्रमनयंति–त-श; सर्वत्रमानयेति–भ। सर्वत्रानयतीति–*मॅ॥ ११७. २०. °शिरस्त्राणेन्द्र—§-मॅ-मु। '°शिरस्त्राण वेन्द्र' इति भाष्यम्। '°शिरस्त्राण वेंद्रः' इति भाष्यमिति मॅक्समुल्लरमहाशयेनोक्तं तदयुक्तम् (मुद्रणदोषः?)॥ ११७. २२. ते त्वदीयम्—ख-त१-२-भ-मु। घ-त३-न-श-मॅ-पुस्तकेष्विदं नास्ति॥ ११७. २८. त्वद्बलम्—ख-ग-घ-त-न-भ२-य-श-मु। तद्बलं–भ१-मॅ॥ ११८. ४. परिगमिताः—*मॅ-मु। वनिगमितां–ख-त२-३-श; च निर्गमिता–ग; वनिगमिता–ज्ञ-त४-भ२; चर्मिनामिता–भ१॥ ११८. २०. आशुषे। 'आ शुषे' इति भिन्नः पदपाठः। 'आश्नुषे' इति भाष्यकारेण स्वीकृतं स्यादित्यपि संभावयितुं शक्यमिति मॅक्समुल्लरमहाशयः॥ ११८. २६. वशं नयन्तीति—§-मॅ। वशं नयंत्यनेनेति–मु। अयं समीचीनतरः पाठः लिखितपुस्तकेष्वभावादस्माभिर्न स्वीकृतः॥ ११९. १३. °यूतीत्यादिना—ख-ग-ज्ञ-त१-२-भ३-मु। °थूत्यादिना–त४-न-भ१-२-श-मॅ॥ ११९. २४. आगच्छतु—*मॅ-मु। आगच्छति–ख-त-भ; आगच्छेति–ग॥ ११९. ३०. भवानि—ज्ञ-भ३-*मॅ-मु। भवामि–इतरेषु॥ १२०. ३. वसतीवर्यः—मॅ-मु। वसतीवरा–ख-त-न-भ१-२; वसतीवरीः–घ-भ३-श; वसतीवरिः–ग॥ १२०. ४. ग्रहस्थाः—ग-घ। गृहस्थाः–ख-त-न-भ-श-मॅ-मु॥ १२०. ५. निचान्तपृणः—मॅ-मु। निचांतपुणः–§॥ १२०.१४. एव ···· र ¨ वि ¨ जः—त४-न-भ१-२-मॅ। एव–ख-ज्ञ-त२-३-मु। एव ऋत्विजः विसर्ग–ग; एव ओजसा ओजः–त१; एव ऋजः–भ३; एव ऋजीषं–श॥ °त्युक्तम्—ग-ज्ञ-त२-३-श-*मॅ-मु। °त्युक्त–ख-त१-४-भ१-२; °त्युक्त(त्वात्प्रसंगात्)–भ३॥ १२०. १६. अच्छ—§-मु। अच्छा–मॅ॥ १२०. १७. विसृजन्ति—ग-*मॅ-मु। विसृजत–ख-ज्ञ-त१-२; विसृजन्–त३-४ भ-श॥ १२०. २१. हविर्भिः—*मॅ-मु। हविः–§॥ १२०. २२. हितं ·· वादिषु—त-भ१-२-मॅ। हितं ···· वेदिषु–ग; हितं ··· वाषु–श; हितं गवादिषु–भ३। हितं हितकरं प्रयः–मु॥ १२०. २७-२८. ता निवसन्त्यत्रेति। ते निवसंतेत्यत्रेति–ख-त-भ१-२-श; ते निवसंतत्रेति–ग; ते निवसंत्यत्रेति–न-भ३। निवसंत्यत्रेति–मु। निवसत्यत्रेति–मॅ॥ १२१. २१. आडागमः-ग। अडागमः–मॅ-मु इतरेषु च॥ १२२. १०. श्रुतेरत्रापि—मु। श्रुते तत्रापि–ख-ग-त-न-श; श्रुतेन तत्रापि–भ। श्रुतेऽत्रापि–*मॅ॥ १२२. ११.इत्यादरार्थः—ख-ग-घ-त-मु। इत्यादरार्था–न-भ-श। इत्यादरार्थे–मॅ॥ १२२. २४. धत्तनेति...रत्नानि—*मॅ-मु-×॥

[८. १४] १२३. ३. बिन्दु°—ख-ग-ज्ञ-भ२-*मॅ-मु। विंदु°–त१-२-३-४-भ१-श; बिंदुः–घ॥ १२३. २८. पूर्वाभिहिते—ज। पूर्ववेनिहित–ख; पूर्व अभिहिते–ग; पूर्वनिहित–ज्ञ; पूर्ववेभिहिते–त२-न; पूर्वभवेभिहिः–त४; पूर्वचोभिहित–भ; पूर्ववेभिहित–त३-श। पूर्वमेवाभिहिते–मु। पूर्वत्राभिहिते–मॅ॥ १२४. ८. ततमूर्णास्तुकेनेति—*मॅ-मु। ततपूर्णास्तुकोनेति–ख-ज्ञ-त१-२-३; तन्यते ऊर्णास्तुकेनेति–ग; ततपूर्णास्तुकेनेति–त४-भ; ततपूर्णास्तुकोनति–श॥ आलादेशः—ग-ज-न-भ-श। अडादेशः–ख; अलादेशः–त-मॅ-मु॥ १२४. १०. तं तथोक्तम्—ग। ततथोक्तं–मॅ-मु इतरेषु च॥ १२४. १६. सेवाम्—ग-*मॅ-मु। सतां–ख; सवां–त-भ-श॥ १२४. १७. सोमसेवां कामयते—ज-न-भ। सोममेवां कामयते–ख-त-श; स्तोता कामयते–ग। सोममेव कामयते–मु। सोममेवाकामयते–मॅ॥ १२५.२०. विश्रुतम्—ज। विस्रुतं–भ१; विष्टतं–श; विस्तृतं–ख-ग-घ-त-न-भ२-मॅ-मु॥

[ ८. ९५. ] ९२६. १५. **निहितम्**—§-मु। मॅ-पुस्तके नास्ति॥ ९२६. २२. **मरुद्गणानाम्**—*मॅ-मु। मरुत्सोमानां–ख-त-न-भ-श; मरुत्संवन्धिनं–ग; मरुत्समानानां–घ। 'मरुत्संघानाम्' इति स्यादिति मॅक्समुल्लरमहाशयः॥ ९२७. ३. **सुपुत्रवतः**—ख-ग-ज-श-त१-२-न-भ-मु। सुपुत्रतः–त३-४; सुपुत्रमतः–श। सुपुत्रस्य–मॅ॥ ९२७. १५. **त्वदीयम्**—§-मु। मॅ-पुस्तके नास्ति॥ ९२७. २२. **सिषासन्तः**—च-ज-मु। सिषासंतः–मॅ इतरेषु च॥ ९२७. २४. **सन्तः**—ख-घ-ज-त-न-भ-श-मु। ग-मॅ-पुस्तकयोर्नास्ति॥ ९२८. १. **इन्द्राय यागादिकर्मणि**—ग-ज-भ१-श-मु। इंद्रयागादिकर्मणि–न-भ२। इंद्रयागादिकर्माणि–ख-त-मॅ॥ ९२८. ६. आगच्छतैव–§-मु। गच्छतैव–मॅ॥ ९२८. ९. **माद्यतेः**—ग। मादतेः–ख-त-भ-श। मदायतेः–मु। मादयतेः–मॅ॥ ९२८. १७. **त्वम्**—§-मु। त्वं च–मॅ॥

[ ८. ९६. ] ९२८. ३२. **अध द्रप्सः**—*मॅ। अव द्रप्स–§-मु॥ ९२९. ७. **अर्तेरू च**। 'अर्तेरुच्च' इत्युणादिसूत्रम्॥ ९२९. १२. **सप्त**—न-भ। इतरेषु मॅ-मु-पुस्तकयोश्च नास्ति॥ ९२९. १३. **हननेनोत्पादकत्वात्**—मु। हननेनोत्पादत्वात्–ख-त-न-भ२; हननोत्पादकत्वात्–ग; हननोत्पादत्वात्–ज-भ१। हननोत्पादित्वात्–मॅ॥ ९२९. २१. **अतिविद्धा**—ग-घ-ज-श-त१-३-४-न-भ-श-मु। ख-त२-मॅ-पुस्तकेषु नास्ति॥ ९२९. २३. **°पिञ्जूलमुद्धृत्य**। '°पुञ्जीलमुद्गृह्य' इति तै. सं.॥ ९३०. ७. **निस्पूर्वात्**—§-मु। निष्पूर्वात्–मॅ॥ ९३१. १६. **धारयेम**—ख-श-त१-२-भ-मु। एतन्नास्ति ग-घ-त३-४-श-मॅ॥ ९३१. १८. **भवाम**—§-मु। भवेम–मॅ॥ ९३१. ३०. **वृत्रं घ्नन्तम्**—ग-भ१। वृत्रं जघ्नंतं–ज। वृत्रघ्नं तं–ख-त-भ२-श-मॅ-मु॥ ९३२. ४. **षष्टित्र्युत्तरसंख्याकाः**। 'त्र्युत्तरषष्टिसंख्याकाः' इति भाव्यम्॥ ९३२. ५. **नवसु गणेषु**—*मॅ-मु। वसुगणेषु–ख-त-श; नवसु गणोषु–ग; सुरगणेषु–ज-भ॥ **प्रतिपादिताः**—ख-ज-श-त१-२-भ। तिपादिताः–ग-त३-४-श। निपादिताः–*मॅ-मु॥ **आदितः**—ग-*मॅ। अदितेः–इतरेषु। आदिपंचगणाः–मु॥ ९३२. ७. **गणः**—*मॅ-मु। गर्भाः–ख-त-भ; वर्गाः–ज; गणाः–ग॥ ९३२.११. **विदध्म**—ख-घ-त-श-मु। विदध्यम–ग; विदधाम–ज-भ। विदध्मः–मॅ॥ ९३२. १७. **च**—§-मु। ते–मॅ॥ ९३२. २०. **अभिषुतः**—ग-भ। अभिषुत्यः–ख-घ-त-श-मॅ-मु। अत्र 'अपार्जितः' इत्येव पाठः सर्वेषु लिखितपुस्तकेषु दृश्यते। ऋ. सं. ८. ८६. ४; ९०. ५. द्रष्टव्यम्॥ **ऋजीषः**—ग। ऋजीषी–ख-घ-त-भ-श-मु। ऋजीषं–*मॅ। ८९३. पृ. १४. प. टिप्पणी द्रष्टव्या॥ ९३३. ८. **ईषाम्**—ख-ग-ज-त-भ२-मु। ईशां–भ१-श-मॅ॥ ९३३.२१. **शोभना**—§-मु। शोभमाना–मॅ॥ ९३४.८. **नाम**। नाम्ना–बृहद्दे.॥ **सोऽभ्ययात्**। अभ्ययात्–बृहद्दे.॥ **योत्स्यमानः सुसंहृष्टैः**—बृहद्दे.। योत्स्यमानस्तु संहृष्टैः (हृष्टैः–त३)-ख-श-त२-३-४; योत्स्यमानस्तु संहृष्टैः—ग-त१-भ; यात्स्यामातं स्तुतं हृष्टैः–श। योत्स्यमानं सुसंहृष्टैः–*मॅ-मु॥ ९३४. ९. **तानायतः**—*मॅ-मु-बृहद्दे.। तानायुतान्–ख-त-भ; तानायतासन्–ग; तानायुधान्–श॥ **प्रेहि**। एहि–बृहद्दे.॥ ९३४. ११. **पुनर्विभो**। अस्मादनन्तरं "श्रुत्वा देवगुरोर्वाक्यम् अनर्थं वृत्रशङ्कया" इति बृहद्देवतायामधिकं विद्यते॥ **स्वर्ग एव**–बृहद्दे.। खङ्ग एव-ख-त-भ; खग एव–ग। ओजसैव–*मॅ-मु॥ **देवानादाय**–त१-*मॅ-मु-बृहद्दे.। देवायायाय—ख; देवाघनाय–ग; देवयतनं–ज; देवानायाय–श-त२-३-४-भ१; देवानाय–भ१; देवानायातं–श॥

पपुर्विधिवत्सुराः—*मॅ-मु-बृहदे. । पुनर्विधिवत्पुरा—ख-ग-ज-त-भ२; पुनर्विधिवत्पुराः—भ१ ॥ १३४. १२. तृचे—ग-ज-बृहदे. । दचे—ख-त-भ; ऋचि—श । द्वृचे—मॅ । ऋचे—मु । तदव द्रप्स इत्यस्मिन् । तदेतदप्यवेत्यस्मिन्—बृहदे. ॥ अयं बृहद्देवतागतः कथाभागः केनचित् पश्चाद्विनिवेशितो भाष्ये इति मॅक्समुल्लरमहाशयस्याभिप्रायः ॥ १३४. १३. अनार्षत्वेनानादरणीयम्—ज । अनात्वान् नादरणीयं—ग; अनार्षादनारणीयं—श । अनार्षत्वे नादरणीयं—मॅ-मु इतरेषु च ॥ १३४. १६. उदकस्य—ग-ज्ञ-श-मु । उदस्य—ख-त२-४-भ-मॅ । अनन्तरऋग्भाष्यं द्रष्टव्यम् ॥ १३५. १. केचिदिष्यामि...पठन्ति । 'इष्यामि वो वृषणो' इति संहितापाठः । 'शाखान्तरे' इति मु-पुस्तके टिप्पणी दत्ता ॥ १३५. १८. °न्नेवाशत्रुभ्यः—*मॅ-मु । °न्नेव शत्रुभ्यः—§ । १६ पङ्क्तौ विद्यमानस्य '°न्नेवाशत्रुभ्यः' इत्यस्य स्थाने '°न्नेव शत्रुभ्यः' इति पाठो लिखितपुस्तकेषूपलभ्यत इति मॅक्समुल्लरमहाशयेनोक्तं तत्प्रामादिकम् ॥ १३५. २०. प्रकाश्य—ग-भ-*मॅ-मु । प्रकाश्यः—ख-घ-त-श ॥ १३६. ११. छन्दोविषयत्वान्निपातनम्—ग-*मॅ-मु । छन्दोविषयत्वानिपातनं—ख-त१-२-३-भ२; छंदोविषयत्वांनिपातनं—ज्ञ; छंदोविषयत्वानिपात्यते—त४; छंदोविषयत्वान्निपातत्वं—श ॥ १३६. १३. सप्त गङ्गाद्याः—§-मु । गंगाद्याः सत—मॅ ॥ १३६.२३. अहानि—§-मु । अहा अहानि—मॅ ॥ १३७. ३. वृत्रहा—§-मु । स वृत्रहा—मॅ ॥ चर्षणीधृत्—ख-ग-घ-त३-भ१-मु । चर्षणिधृत्—ज्ञ-त२-४-भ२-श-मॅ ॥ १३७. १४. महान्—ज । स महन्—ख; सहमन्—ज्ञ-त२; सहमा—त४-श; सहम—त३; सहन्—भ । स महान्—ग-मॅ-मु ॥

[ ८. ९७. ] १३७. २७. च—ख-ग-ज-ज्ञ-त१-२-३-न-भ-श-मु-आश्व. श्रौ. । वा—त४-मॅ ॥ १३८.३. त्वे—मु । ते—ग-घ-ज-न-भ; न—ख-त । मॅ-पुस्तके नास्ति ॥ १४०. १६. एतत्—ग-त-न-भ-श-मु । एत्—ख । एव तत्—मॅ ॥ १४०.२९ संग्रामनाम—ज । संग्रामः—ख-ग-ज्ञ-त२-३; संग्राम—त४-न-भ-श । संग्रामाः—मॅ-मु ॥ १४०. ३०. स्तुते—ग-ज-भ-मु । सुते—ख-त-न-श-मॅ ॥ १४१. ११. रेभाः—§-मु । रेभासः—मॅ ॥ १४१. २७. इत्याद्या—§ । इत्याद्याः—मॅ-मु ॥ १४२. १०. सर्वदिक्स्थम्—न-*मॅ-मु । सर्वदिक्वं—ख-त; सर्वदिग्भवं—ग; सर्वदिग्गतं—ज; सर्वदिग्—भ१; सर्वदिग्नु—भ२; सर्वद्दिकं—श ॥

[ ८. ९८. ] १४३. १३. नृमेधाख्यस्य—ग-भ१-२ । नृमेधाक्षस्य—ख-त-न-श । नृमेधस्य—भ३-मॅ-मु ॥ १४३. १५. पुरउष्णिक्—*मॅ-मु । ककुप्—§ ॥ १४४. १०. प्राप्नोः—*मॅ । अप्राप्नोः—§-मु ॥ १४४. २८. त्वम्—§-मु । मॅ-पुस्तके नास्ति ॥ १४५. ६. ससृज्महे—ज्ञ-त१-भ२-*मॅ-मु । ससूज्महे—ख; सृज्महे—ग-घ१-त३-४-भ१-श; सृज्यमहे—च; ससुज्महे—त२ ॥ १४५. १४. वर्धन्ति—ग-घ-भ । वर्धयंति—ख-त-मॅ-मु ॥ १४५. १८. उरूयुगे—ख-ग-च-ज्ञ-त१-२-न-भ१-श-मॅ । उरूयुगे-घ१-त३-४-भ२-३-मॅ ॥

[ ८. ९९. ] १४६. १२. ऐन्द्रम्—न-भ । इंद्रो देवता—घ । ख-ग-त-श-मॅ-मु-पुस्तके-ष्वेतन्नास्ति ॥ १४६. २५. वज्रिन्निन्द्र—ख-ग-घ-त-न-श-मु । वज्रवन्निंद्र—भ । वज्रिन् वज्रवन्निंद्र—मॅ ॥ १४६. २७. स्वसरं गृहम्—§-मु । स्वसरं च गृहं—मॅ ॥ १४७. १३. करोति—*मॅ । करोत्यतो—§-मु ॥ १४७. १४. रश्मयः—*मॅ-मु । श्रयः—ख-त-भ-श । ऋश्मयः—ग ॥ १४७.२५. स्तोतः—न । स्तोतारः—मॅ-मु इतरेषु च ॥ १४८. १६. श्रथयन्त श्रथिताः—त२-४-*मॅ । श्रथयंत

श्रथिताः—ख; श्रयंत श्रयिता—ग; श्रथयंत श्रथिताः—ञ-त३-श-मु; श्रथयंत श्रथयिताः—भ; श्रथयंत श्रथिताः—न । 'श्रथयंत' इति संहितापदपाठौ ॥ १४८. २२. **गन्तारम्**—ग-ञ-भ२-श-*मॅ-मु । गगा—ख; गंगारं—त ॥

[ ८. १००. ] १४९. ८. **ते**—ख-त-न-भ-मु । ग-श-मॅ-पुस्तकेषु नास्ति ॥ **अयमिति... वाग्देवत्ये**—*मॅ-मु । अयमिति दृचेनेंद्र आत्मानमस्तौदिति वाग्देवत्ये—ख-त२-भ; अयमिति दृचेन त्ये—न; वाग्देवत्ये—श ॥ १४९. १२. **प्रयाण...वाचः**—भ३-*मॅ-मु । **प्रणवो** याज्यासनये वयं सामये वयंसा मनोज्ञा वचः—ख-ग-त२-३-४; वयसाममनोज्ञा वाचः—ञ; प्राणा - - समये वयं सामये वयंसामननोज्ञा वचः—न; प्रयाणसमये वयंसा मनोज्ञा वाचः—भ१; प्रणवो याज्यासमये वयंसा मनोज्ञा वाचः—भ२-म; प्रयाणे वयसाममनोज्ञा वाचः—श ॥ १५२. २२. **विश्वरूपाः** । सर्वरूपाः—निरु. ॥ १५३. ३. **अभिवृत्यैतान्**—§-मॅ-मु । अभितप्येमान्—बृहद्दे. ॥ १५३. ४. **उद्यतस्य तु**—§-मॅ-मु । उद्यतस्यैव—बृहद्दे. ॥ १५३. ५. **विष्णो इति**—§-मॅ-मु । विष्णविति—बृहद्दे. ॥ **त्वृचा**—मॅ । तृचा—ख; त्युचा—ग; दृचा—ञ-त२-न-श; द्दचा-त३-४; बृचा—भ१; *चृचा—भ२ । त्युचा—मु । त्वृचि—बृहद्दे. ॥

[ ८. १०१. ] १५३. १०. **तृतीया**—ग-*मॅ-मु । तृतीयादि—ख-ञ-त१-२-न-भ-श; तृतीया हि—त३-४ ॥ १५३. २३. **अहनि माध्यंदिने**—ख-त१-भ-श-मु । माध्यंदिने—ग; गामुपकर्मणि—ञ-त२; माध्यंदिनो—त३-४-न-मॅ ॥ १५४. ५. **वर्षिष्ठक्षत्रौ**—ञ-त१-२-भ-मु । वर्षिष्ठक्षेत्रौ—ख-घ । वर्षिष्ठक्षत्रा—ग-त३-४-न-श-मॅ ॥ १५४. १८. **पुनःपुनर्हवीतवे**—ञ-त१-३-*मॅ-मु । पुनःपुनर्हवीतये—ख-त२; पुनर्हवीतवे—ग-घ-ञ-त४-भ; पुनपुनर्हवीतवे—श ॥ १५५. १३. **उभा उभौ**—घ-न-भ-मु । उभौ उभौ—ख-ञ-त१-२ । उभौ—ग-त३-४-श-मॅ ॥ १५६. २७. **ते**—श-मु । तव—ग-न-भ२; त—त२-३-४; भुवि—भ१; विभु—भ३; तत्—ख-घ-ञ-मॅ ॥ १५७. ५. **आगच्छन्ती**—भ१-२ । आगच्छती—ख-ग-घ-त१-२-न-श-मॅ-मु ॥ १५७. १४. **चैतरेय**—*मॅ । चैतस्य—ख-ग-ञ-त१-२-३-भ२-३-मु; चेतस्ये—त४; चैतस्ये—न; चैतास्य—भ; चैतास्येव—श ॥ १५७. १८. **स प्रजा असृजत**—*मॅ-मु । ससृजे—ख-ग१-त-न-भ-श; सं ससृजे—ग२ ॥ १५७. २०. **पराभूताः**—ग-न-भ-*मॅ-मु । पारभूताः—ख-त१-२-३; परभूताः—ञ; पाराभूताः—त४ । भाष्योद्धृतः शतपथब्राह्मणगतः पाठः तद्ब्राह्मणस्य काण्वमाध्यंदिनशाखयोः पाठाभ्यां भिन्नः ॥

[ ८.१०२. ] १५८.१०. **पावकविशेषणविशिष्टो**—ग-भ३-श । पावकविशेषणेन विशिष्टो—भ१; पावकविशेषणे विशिष्टो—भ२; पावकविशेषेण विशिष्टो—ख-त-न-मॅ-मु ॥ १५८. १२-१३. **°यविष्ठयोर्वा**—ग-श-*मॅ-मु । यविष्ययोर्वा—ख-त; यविष्टयोर्वा—न-भ ॥ १५८. १४. **इत्यष्टा°**—ग-त२-भ१-*मॅ-मु । अष्टा°—ख-त३-श; इष्टा°—न ॥ १५८. ३०. **सः त्वम्**—§-मु । मॅ-पुस्तके नास्ति ॥ १५९. २५. **भवामेति**—ख-ग-घ-त-न-श । भवोमेति—भ१; भवति—भ३ । भवेमेति—भ२-मॅ-मु ॥ १६०. १२. **वाशिममिति वा**—ख-ग१-ञ-त१-२-४-न-भ२-*मॅ-मु । वाशिनामिति वा—त३-श; च—भ१-३ ॥ १६०. २७. **अन्तरिक्ष्या माध्यमिके**—ख-ञ-त२-३-न-भ१-२-श । अंतरिक्षा माध्यमिकं—ग; अंतरिक्षं माध्यमिके—घ; अत्‌चित्‌रक्ष्या माध्यमेके—त१; अंतरिक्ष्या माध्यमिको—

त४ । आंतरिक्ष्या माध्यमिके–भ३-मॅ-मु ॥ १६१. ८. **धीतिभिः निधानैः**—ग-मॅ-मु । 'धीतिभिरिधानः' इति स्यादिति मॅक्समुलरमहाशयः ॥ १६१.२२. **वनन्वति काष्ठानि हन्ति**—ग-भ२-*मॅ-मु । वनन्वती काष्ठानि संति–ख-त१-२; वनन्वति काष्ठानि संति–श-भ१-३; वनन्वती काष्ठानि हंति–त४-श; वनन्वती काष्ठानि न–घ१; वनन्वती काष्ठानि त्वंति–च ॥ १६१. २३. **काष्ठानि**—ख-ग-त-न-भ-श-मु । घ-मॅ-पुस्तकयोः नास्ति ॥ १६२. १. **यानि कानि चेति**—ग-श-भ-श-*मॅ-मु-तै. सं. । यानि कानि चेवि–ख-त१-२; यानि चेवि–त३-४ ॥ १६२. २. **सर्वमस्मै स्वदते**—ग१-त१-२-३-भ-श-*मॅ-मु-तै. सं. । सर्वदस्मै स्वदक्ष–ख; अस्मै स्वदते–ग२; सर्वस्मै स्वदते–श-त४ ॥ १६२.१२. **प्रज्वलयति**—ग-घ-भ२-३ । प्रज्वलंति–श । प्रज्वलति–ख-त-न-भ१-मॅ-मु ॥

[ ८. १०३ ] १६२. १८–२१. **आभिप्लविके...राजन्नग्ने इति**—मु । प्र मंहिष्ठायेति आभिप्लविकेषूक्थ्येषु मैत्रावरुणस्य वैकल्पिकः स्तोत्रियस्तृचः । सूत्रितं च । प्र मंहिष्ठाय गायत प्र सो अग्ने इति । उपाकर्मणि मंडलाद्याग्ने याहीत्येषा । सूत्रितं मा चिदाग्ने याहि मरुत्सखा यत्ते राजन्नग्न इति–ग । आभिप्लविकेषूक्थ्येषु मैत्रावरुणस्य वैकल्पिकः स्तोत्रियस्तृचः । सूत्रितं च । मा चिदाग्ने याहि मरुत्सखा यत्ते राजन्नग्न इति–ख-त-न-भ-श-मॅ । मॅक्समुलरमहाशयः एवमत्र पाठः स्यादिति संभावयति–'आभिप्लविकेषूक्थ्येषु मैत्रावरुणस्य प्र मंहिष्ठायेति वैकल्पिकः स्तोत्रियस्तृचः । सूत्रितं च । अभि प्रयांसि वाहसा प्र मंहिष्ठाय गायत । आ. ७. ८. । इति । उपाकरणोत्सर्जनयोर्मण्डलाद्यंतहोम आग्ने याहीत्येषा । सूत्रितं च । आग्ने याहि मरुत्सखा यत्ते राजञ्छृतं हविः । आ. गृ. ३. ५.७. । इति' ॥ अस्माभिस्तु ग-पुस्तकानुसारेण मु-पुस्तकानुसारेण च स्वीकृतः पाठः ॥ १६३. १३. **कुर्वाणात् मनुष्यात्** । कुर्वाणान् मनुष्यान्–§-मॅ-मु । **रेजन्ते कम्पन्ते**—§-मॅ । 'रेजन्त' इति पदपाठः । रेजन्त कम्पन्ते–मु ॥ १६३. २०. **प्रणेतुम्**—ग । प्रनेतुं–मॅ-मु इतरेषु च ॥ १६३. २१. **मर्तो**—ख-ज्ञ-त१-२-३-भ३-मु । मतेः–घ१; मर्ता–त४-न-श । मर्त्यो–ग-भ१-२-मॅ ॥ १६३. २८. **तथा**—ग-त४-न-भ१-३ । यथा–ख-घ-ज्ञ-त२-भ२-मॅ-मु ॥ १६४. २. **धारयाम**—ख-ग-घ-त-न । धारयामः–भ-श-मॅ-मु ॥ १६४. १६. **सः**—मॅ-× । मु-पुस्तकेऽपि नास्ति ॥ १६४. २०. **हे**—मॅ । हे ये–त१ । ये–मु इतरेषु च ॥ १६४. २१. **प्र गायत**—ख-घ-ज्ञ-त१-२-भ-श-मु । ग-त३-४-मॅ-पुस्तकेष्वेतन्नास्ति ॥ १६४. २७. **अस्य अग्नेः**—ख-घ-त१-श-*मॅ-मु । तस्याग्नेः–ग-न; तस्यासाग्नेः–त३-श; तस्यास्याग्नेः–भ ॥ १६५. २६. **अभिगमनैरपि** । अस्मादनन्तरं 'स्तुवन्ति' इत्येतादृशं क्रियापदमावश्यकमिति मॅक्समुलरमहाशयः ॥

---

# ॥ ऋग्वेदसंहिता ॥

श्रीमत्सायणाचार्यविरचितभाष्यसमेता

६—८ मण्डलानि

ॐ

# ऋग्वेदसंहिता

## श्रीमत्सायणाचार्यविरचितभाष्यसमेता

---

## ॥ अथ षष्ठं मण्डलम् ॥

भारद्वाजे षष्ठे मण्डले षडनुवाकाः। तत्र प्रथमेऽनुवाके पञ्चदश सूक्तानि। तत्र ‘त्वं ह्यग्ने’ इति त्रयोदशर्चं प्रथमं सूक्तम्। ‘त्वं ह्यग्ने सप्तोनेति बार्हस्पत्यो भरद्वाजः षष्ठं मण्डलमपश्यत्’ इत्यनुक्रान्तत्वात् मण्डलद्रष्टा स एव भरद्वाज ऋषिः। अनादेशपरिभाषया त्रिष्टुप्। मण्डलादिपरिभाषया अग्निर्देवता। पशोः[1] हविषि अवदीयमाने मैत्रावरुणेनानुवचनीयमिदं मनोतासूक्तम्। सूत्रितं च— ‘त्वं ह्यग्ने प्रथम इत्यन्वाह’ (आश्व. श्रौ. ३. ६) इति। प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छन्दसि एतदादिसूक्तषट्कं द्वितीयवर्जम्। सूत्रितं च—‘त्वं ह्यग्ने प्रथम इति षण्णां द्वितीयमुद्धरेत्’ (आश्व. श्रौ. ४. १३) इति। आद्या उपाकरणे विनियुक्ता। सूत्रं तु पूर्वमन्त्र उक्तम्॥

त्वं ह्य॑ग्ने प्र॒थ॒मो म॒नोता॒स्या धि॒यो अभ॑वो दस्म॒ होता॑।
त्वं सीं॑ वृषन्नकृणोर्दु॒ष्टरी॑तु॒ सहो॒ विश्व॑स्मै॒ सह॑से॒ सह॑ध्यै ॥ १ ॥

त्वम्। हि। अ॒ग्ने॒। प्र॒थ॒मः। म॒नोता॑। अ॒स्याः। धि॒यः। अभ॑वः। द॒स्म॒। होता॑।
त्वम्। सी॒म्। वृ॒ष॒न्। अ॒कृ॒णोः॒। दु॒स्तरी॑तु। सहः॑। विश्व॑स्मै। सह॑से। सह॑ध्यै ॥ १ ॥

हे ᵛअग्ने ᵛप्रथमः देवानां मध्ये प्रथमः प्रतमः प्रकृष्टतमः पूर्वभावी वा ᵛत्वं ᵛमनोता ᵛहि देवानां मनो यत्रोतं संबद्धं भवति तादृशो भवसि। हिशब्दः ‘अग्निः सर्वा मनोताग्नौ मनोताः संगच्छन्ते’ (ऐ. ब्रा. २. १०) इत्यादिब्राह्मणप्रसिद्धिद्योतनार्थः। हे ᵛदस्म दर्शनीय ᵛअस्याः ᵛधियः अस्य कर्मणः ᵛहोता देवानामाह्वाता ᵛअभवः भवसि। हे ᵛवृषन् कामानां वर्षितः ᵛत्वं ᵛसीं सर्वतः ᵛदुष्टरीतु दुर्हिंस्यमहिंस्यं ᵛसहः बलम् ᵛअकृणोः अकरोः। किमर्थम्। ᵛविश्वस्मै ᵛसहसे सर्वस्यापि बलवतः शत्रोः ᵛसहध्यै अभिभवनाय॥

---

१. झ-त-न-भ-र–पशौ।

अधा होता न्यसीदो यजीयानिळस्पद इषयन्नीड्यः सन् ।
तं त्वा नरः प्रथमं देवयन्तो महो राये चितयन्तो अनु ग्मन् ॥ २ ॥

अध । होता । नि । असीदः । यजीयान् । इळः । पदे । इषयन् । ईड्यः । सन् ।
तम् । त्वा । नरः । प्रथमम् । देवऽयन्तः । महः । राये । चितयन्तः । अनु । ग्मन् ॥२॥

अध अधुना हे अग्ने यजीयान् अतिशयेन यष्टा त्वं होता होमनिष्पादकः सन् इळः भूम्याः वेदिलक्षणायाः पदे स्थाने न्यसीदः निषण्णवानसि । किं कुर्वन् । इषयन् पशुपुरोडाशादिलक्षणमन्नमिच्छन् ईड्यः स्तुत्यः सन् । तं तादृशं त्वा त्वां प्रथमम् इतरदेवताभ्यः पूर्वं देवयन्तः देवं त्वामात्मन इच्छन्तः नरः नेतारो मनुष्या ऋत्विग्यजमानाः महः महते राये धनाय चितयन्तः जानन्तः स्तुत्या ज्ञापयन्तो वा अनु ग्मन् अन्वगच्छन् पूर्वम् ॥

वृतेव यन्तं बहुभिर्वसव्यैः३स्त्वे रयिं जागृवांसो अनु ग्मन् ।
रुशन्तमग्निं दर्शतं बृहन्तं वपावन्तं विश्वहा दीदिवांसम् ॥ ३ ॥

वृताऽइव । यन्तम् । बहुऽभिः । वसव्यैः । त्वे इति । रयिम् । जागृऽवांसः । अनु । ग्मन् ।
रुशन्तम् । अग्निम् । दर्शतम् । बृहन्तम् । वपाऽवन्तम् । विश्वहा । दीदिऽवांसम् ॥ ३ ॥

वृतेव मार्गेण । इवेति संप्रत्यर्थे । लोकद्वयमध्यगतेन मार्गेण बहुभिः अनेकैः वसव्यैः वसुभिः ॥ स्वार्थिकस्तद्धितप्रत्ययः ॥ यजमानानां निवासयोग्यैर्वा सार्धं यन्तं गच्छन्तं त्वाम् अनु ग्मन् अनुगच्छन्ति । संभजन्ते यजमानाः । कीदृशास्ते । त्वे त्वयि देवे रयिं धनं जागृवांसः प्रयच्छन्त इत्यर्थः । कीदृशं त्वामित्युच्यते । रुशन्तं दीप्तवर्णम् अग्निम् अङ्गनादिगुणविशिष्टं दर्शतं दर्शनीयं बृहन्तं महान्तं वपावन्तं विश्वहा सर्वेषु कालेषु दीदिवांसं दीप्यमानम् ॥

पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव आपन्नमृक्तम् ।
नामानि चिद्दधिरे यज्ञियानि भद्रायां ते रणयन्त संदृष्टौ ॥ ४ ॥

पदम् । देवस्य । नमसा । व्यन्तः । श्रवस्यवः । श्रवः । आपन् । अमृक्तम् ।
नामानि । चित् । दधिरे । यज्ञियानि । भद्रायाम् । ते । रणयन्त । समऽदृष्टौ ॥ ४ ॥

देवस्य द्योतमानस्याग्नेः पदम् आहवनीयस्थानं[1] नमसा हविषा स्तोत्रेण वा व्यन्तः गच्छन्तः श्रवस्यवः अन्नमिच्छन्तः पूर्वे यजमानाः श्रवः सर्वत्र श्रूयमाणमन्नम् अमृक्तम् अन्यैरपरिबाध्यम् आपन् आप्नुवन्ति । हे अग्ने ते तव भद्रायां स्तुत्यायां संदृष्टौ निमित्तायां रणयन्त[2] रमयन्ति[2] ।

---

१. ख-आहवनीयं स्थानम्; ग-श-आहवनीयादिस्थानम् । २. ख-घ-ज्ञ-त-न-भ-य-र-' रणयन्त रमयन्ति ' नास्ति ।

ᵛयज्ञियानि यज्ञयोग्यानि ᵛनामानि नमनीयानि वैश्वानरो जातवेदा इत्यादीनि ᵛदधिरे धारयन्ति। अथवा नमनसाधनानि स्तोत्राणि दधिरे ॥

त्वां वर्धन्ति क्षितयः पृथिव्यां त्वां राय उभयासो जनानाम् ।
त्वं त्राता तरणे चेत्यो भूः पिता माता सदमिन्मानुषाणाम् ॥ ५ ॥

त्वाम् । वर्धन्ति । क्षितयः । पृथिव्याम् । त्वाम् । रायः । उभयासः । जनानाम् ।
त्वम् । त्राता । तरणे । चेत्यः । भूः । पिता । माता । सदम् । इत् । मानुषाणाम् ॥ ५ ॥

हे अग्ने ᵛत्वां ᵛक्षितयः मनुष्या ऋत्विजः ᵛपृथिव्यां वेदिलक्षणायां ᵛवर्धन्ति वर्धयन्ति। ᵛउभयासः उभयविधानि पश्वपशुरूपाणि ᵛजनानां यजमानानां संबन्धीनि ᵛरायः धनानि ऋत्विजः अध्वर्य्वादयः ᵛत्वां त्वामुद्दिश्य वर्धन्ति । अथवा उभयविधानि धनानि गवादीनि जनानां पुत्रादीनाम् अर्थाय प्राप्तुं त्वां वर्धन्ति । हे ᵛतरणे दुःखात्तारकाग्ने ᵛत्वं ᵛचेत्यः ज्ञातव्यः स्तुत्यः सन् ᵛत्राता रक्षिता ᵛभूः भवसि । किंच ᵛमानुषाणां मनुष्याणां स्तोतॄणामस्माकं ᵛसदमित् सर्वदा ᵛपिता ᵛमाता च मातापितृस्थानीयो भूः भवसि ॥ ॥ ३५ ॥

सपर्येण्यः स प्रियो विक्ष्वग्निर्होता मन्द्रो नि षसादा यजीयान् ।
तं त्वा वयं दम आ दीदिवांसमुप ज्ञुबाधो नमसा सदेम ॥ ६ ॥

सपर्येण्यः । सः । प्रियः । विक्षु । अग्निः । होता । मन्द्रः । नि । ससाद । यजीयान् ।
तम् । त्वा । वयम् । दमे । आ । दीदिऽवांसम् । उप । ज्ञुऽबाधः । नमसा । सदेम ॥ ६ ॥

ᵛसः ᵛअग्निः ᵛसपर्येण्यः पूज्यः ᵛप्रियः कामानां पूरकः ᵛविक्षु प्रजासु[1] ᵛहोता होमनिष्पादकः ᵛमन्द्रः मदनीयः ᵛयजीयान् अतिशयेन इतरदेवानां यष्टा यजनीयो वा । एवं महानुभावोऽग्निः ᵛनि ᵛषसाद निषण्णोऽभूत् । अथ प्रत्यक्षकृतः। ᵛतं ᵛत्वा तादृशं त्वां ᵛवयं यजमानाः ᵛदमे गृहे ᵛदीदिवांसं दीप्यमानं ᵛज्ञुबाधः जानुनी बाधयन्तः अवनतजानवः प्रणताः सन्तः ᵛनमसा स्तोत्रेण ᵛउप ᵛआ ᵛसदेम आसादयेम । अथवा उपासीदेमेत्येवमाशास्ते ॥

तं त्वा वयं सुध्यो नव्यमग्ने सुम्नायव ईमहे देवयन्तः ।
त्वं विशो अनयो दीद्यानो दिवो अग्ने बृहता रोचनेन ॥ ७ ॥

तम् । त्वा । वयम् । सुऽध्यः । नव्यम् । अग्ने । सुम्नऽयवः । ईमहे । देवऽयन्तः ।
त्वम् । विशः । अनयः । दीद्यानः । दिवः । अग्ने । बृहता । रोचनेन ॥ ७ ॥

---

१. ख-ङ्ग-त-न-भ-य-र-प्रजासु प्रियः ।

हे ^v^अग्ने ^v^तं तादृशं महानुभावं ^v^नव्यं स्तुत्यं ^v^त्वा त्वां ^v^सुध्यः शोभनबुद्धयः ^v^सुम्नायवः सुखमिच्छन्तः ^v^देवयन्तः देवं त्वामिच्छन्तः ^v^वयम् ^v^ईमहे याचामहे। स्तुम इत्यर्थः। हे ^v^अग्ने ^v^त्वं ^v^दीद्यानः दीप्यमानः सन्। केन। ^v^बृहता महता ^v^रोचनेन रोचमानेन तेजसा दीद्यानः ^v^विशः प्रजाः स्तोतॄनस्मान् ^v^दिवः स्वर्गम् ^v^अनयः अगमयः। रोचनेनादित्येन दिवमगमय इति वा संबन्धः। आदित्यमार्गेणेत्यर्थः ॥

विशां कविं विश्पतिं शश्वतीनां नितोशनं वृषभं चर्षणीनाम्।
प्रेतीषणिमिषयन्तं पावकं राजन्तमग्निं यजतं रयीणाम् ॥ ८ ॥

विशाम्। कविम्। विश्पतिम्। शश्वतीनाम्। निऽतोशनम्। वृषभम्। चर्षणीनाम्।
प्रेतिऽइषणिम्। इषयन्तम्। पावकम्। राजन्तम्। अग्निम्। यजतम्। रयीणाम् ॥ ८ ॥

^v^शश्वतीनां नित्यानां ^v^विशाम् ऋत्विग्यजमानलक्षणानां ^v^विश्पतिं स्वामिनं ^v^कविं क्रान्तदर्शिनं ^v^नितोशनं शत्रूणां हिंसकं ^v^वृषभं कामानां वर्षकं ^v^चर्षणीनां स्तोतॄणां मनुष्याणां ^v^प्रेतीषणिं प्राप्तगमनम् ^v^इषयन्तम् अन्नं कुर्वन्तं ^v^पावकं शोधकं ^v^राजन्तं दीप्यमानं दीपयन्तं वा ^v^रयीणां लाभाय ^v^यजतं यष्टव्यम् ^v^अग्निं स्तुम इति शेषः ॥

सो अग्न ईजे शशमे च मर्तो यस्त आनट् समिधा हव्यदातिम्।
य आहुतिं परि वेदा नमोभिर्विश्वेत्स वामा दधते त्वोतः ॥ ९ ॥

सः। अग्ने। ईजे। शशमे। च। मर्तः। यः। ते। आनट्। सम्ऽइधा। हव्यऽदातिम्।
यः। आऽहुतिम्। परि। वेद। नमःऽभिः। विश्वा। इत्। सः। वामा। दधते। त्वाऽऊतः ॥ ९ ॥

हे ^v^अग्ने त्वां ^v^सः ^v^मर्तः स यजमानः ^v^ईजे यजते। ^v^शशमे ^v^च स्तौति। 'शशमानः' (नि. ३. १४. २२) इति स्तुतिकर्मसु पाठादिदमपि स्तुतिकर्म। ^v^यः यजमानः ^v^ते तव ^v^समिधा सह ^v^हव्यदातिं हविषां दानम् ^v^आनट् करोति। किंच ^v^यः यजमानः ^v^नमोभिः स्तुतिभिः ^v^आहुतिम् आज्यादिलक्षणां ^v^परि ^v^वेद परितो वेत्ति। ददातीत्यर्थः। ^v^सः यजमानः ^v^त्वोतः त्वया रक्षितः सन् ^v^विश्वेत् सर्वाणि ^v^वामा वननीयानि धनानि ^v^दधते धारयति ॥

अस्मा उ ते महि महे विधेम नमोभिरग्ने समिधोत हव्यैः।
वेदी सूनो सहसो गीर्भिरुक्थैरा ते भद्रायां सुमतौ यतेम ॥ १० ॥

अस्मै। ऊँ इति। ते। महि। महे। विधेम। नमःऽभिः। अग्ने। सम्ऽइधा। उत। हव्यैः।
वेदी। सूनो इति। सहसः। गीःऽभिः। उक्थैः। आ। ते। भद्रायाम्। सुऽमतौ। यतेम ॥ १० ॥

हे ᵛअग्ने ᵛमहे महते ᵛअस्मै ᵛते तुभ्यं ᵛमहि महत् अत्यधिकं ᵛविधेम परिचरेम। कैरित्युच्यते। ᵛनमोभिः नमस्कारैः ᵛसमिधा वा ᵛउत अपि च ᵛहव्यैः हविर्भिः । हे ᵛसहसः ᵛसूनो[1] ᵛवेदी वेद्यां ᵛगीर्भिः स्तोत्रैः ᵛउक्थैः शस्त्रैश्च विधेमेति संबन्धः। किंच ᵛते तव ᵛभद्रायां स्तुत्यायां ᵛसुमती शोभनानुग्रहबुद्धौ ᵛआ ᵛयतेम आगच्छेम। भवेमेत्यर्थः ॥

आ यस्त॒तन्थ॒ रोद॑सी॒ वि भा॒सा श्रवो॑भिश्च श्र॒वस्य१॒॑स्तरु॑त्रः ।
बृ॒हद्भि॒र्वाजै॒ः स्थवि॑रेभिर॒स्मे रे॒वद्भि॑रग्ने वित॒रं वि भा॑हि ॥ ११ ॥

आ । यः । त॒तन्थ॑ । रोद॑सी॒ इति॑ । वि । भा॒सा । श्रव॑ःऽभिः । च॒ । श्र॒वस्य॑ः । तरु॑त्रः ।
बृ॒हत्ऽभि॑ः । वाजैः॑ । स्थवि॑रेभिः । अ॒स्मे इति॑ । रे॒वत्ऽभि॑ः । अ॒ग्ने॒ । वि॒ऽत॒रम् । वि । भा॒हि॒ ॥ ११ ॥

हे अग्ने ᵛयः त्वं ᵛरोदसी द्यावापृथिव्यौ ᵛभासा दीप्त्या ᵛवि ᵛआ ᵛततन्थ व्यतनोः। किंच ᵛतरुत्रः तारकस्त्वं ᵛश्रवोभिः स्तुतिभिः ᵛश्रवस्यः ᵛच भवसि हे तादृश ᵛअग्ने ᵛबृहद्भिः महद्भिः ᵛवाजैः अन्नैः ᵛस्थविरेभिः स्थविरैः स्थूलैः ᵛरेवद्भिः रयिमद्भिः ᵛअस्मे अस्मदर्थं ᵛवितरं विशिष्टतरं ᵛवि ᵛभाहि विशेषेण दीप्यस्व ॥

नृ॒वद्व॑सो॒ सद॒मिद्धे॑ह्य॒स्मे भूरि॑ तो॒काय॒ तन॑याय प॒श्वः ।
पू॒र्वीरिषो॑ बृह॒तीरा॒रेअ॑घा अ॒स्मे भ॒द्रा सौ॑श्रव॒सानि॑ सन्तु ॥ १२ ॥

नृ॒ऽवत् । व॒सो॒ इति॑ । सद॑म् । इत् । धे॒हि॒ । अ॒स्मे इति॑ । भूरि॑ । तो॒काय॑ । तन॑याय । प॒श्वः ।
पू॒र्वीः । इष॑ः । बृ॒ह॒तीः । आ॒रेऽअ॑घाः । अ॒स्मे इति॑ । भ॒द्रा । सौ॒श्र॒व॒सानि॑ । स॒न्तु॒ ॥ १२ ॥

हे ᵛवसो वासक धनवन् वाग्ने ᵛनृवत् मनुष्यैरुपेतं धनं ᵛसदमित् सर्वदा ᵛअस्मे अस्मासु ᵛधेहि स्थापय। किंच ᵛभूरि प्रभूतान् ᵛपश्वः पशूंश्च[2] धेहि[2]। किमर्थम्। ᵛतोकाय अस्मत्पुत्राय ᵛतनयाय तत्पुत्राय। किंच ᵛपूर्वीः पूरयित्र्यः[3] कामानां बह्व्यो वा ᵛबृहतीः[4] महत्यः[4] ᵛआरेअघाः। आरे दूरेऽघानि यासु ताः। तादृश्यः ᵛइषः उत्कलक्षणान्यन्नानि ᵛभद्रा भद्राणि ᵛसौश्रवसानि सुश्रवस्त्वानि ᵛअस्मे अस्मासु ᵛसन्तु भवन्तु।

'पुरूण्यग्ने' इति त्रयोदशी उखासंभरणीयेष्टौ अग्नेः क्षत्रवतोऽनुवाक्या। सूत्रितं च—'पुरूण्यग्ने पुरुधा त्वाया स चित्र चित्रं चितयन्तमस्मे' (आश्व. श्रौ. ४. १) इति ॥

---

१. त-सूनो देव। २. ख-ज्ञ-न-भ-र-पशूंश्चाधेहि; श-पशून् विधेहि। ३. ख-ज्ञ-भ-प्रेरयित्र्यः। ४. ख-ज्ञ-न-भ-र-बृहतीर्महतीर्महत्यः; त-य-महतीर्महत्यः।

पुरूण्य॑ग्ने पुरुधा त्वाया वसू॑नि राजन्वसुता ते अश्याम् ।
पुरूणि हि त्वे पुरुवार सन्त्यग्ने वसु विधते राज॑नि त्वे ॥ १३ ॥

पुरूणि । अग्ने । पुरुधा । त्वाऽया । वसू॑नि । राजन् । वसुता । ते । अश्याम् ।
पुरूणि । हि । त्वे इति॑ । पुरुऽवार । सन्ति । अग्ने॑ । वसु॑ । विधते । राज॑नि । त्वे इति॑ ॥१३॥

हे ᵛअग्ने ᵛराजन् ᵛते तव ᵛपुरूणि बहूनि ᵛपुरुधा गवाश्वादिरूपेण बहुप्रकाराणि ᵛवसूनि धनानि ᵛवसुता वसुतायै वसुमत्त्वाय ᵛअश्यां व्याप्नुयां भुञ्जीय वा । अत्र भरतस्वामी वसुतात इत्येकपदं सप्तम्यन्तं चकार भट्टभास्करमिश्रोऽप्येकपदं संबुद्ध्यन्तं चकार । हे ᵛपुरुवार बहुभिर्वरणीय ᵛअग्ने ᵛराजनि राजमाने ᵛत्वे त्वयि ᵛपुरूणि बहूनि ᵛवसु वसूनि ᵛत्वे त्वां ᵛविधते परिचरते मह्यं दातव्यानि ᵛसन्ति ॥ ॥ ३६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥
इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
चतुर्थाष्टके चतुर्थोऽध्यायः समाप्तः ॥

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ पञ्चमाध्याय आरभ्यते । षष्ठमण्डलस्य षडनुवाकात्मकस्य प्रथमेऽनुवाके पञ्चदश सूक्तानि । तत्र 'त्वं हि' इत्येकादशर्चं द्वितीयं सूक्तं भरद्वाजस्यार्षमाग्नेयम् । अन्त्या षट्पञ्चाशदक्षरा शक्वरी आदितो दशानुष्टुभः । अनुक्रम्यते हि—'त्वं ह्येकादशानुष्टुभं शक्वर्यन्तम्' इति । प्रातरनुवाक आग्नेये क्रतौ आनुष्टुभे छन्दसीदं सूक्तमुत्तमावर्जं विनियुक्तम् । सूत्र्यते हि—'त्वं हि क्षैतवद्यशो योऽग्ने होताजनिष्ट' (आश्व. श्रौ. ४. १३) इति । आश्विनशस्त्रे चैतत् शंसनीयं प्रातरनुवाकन्यायेनेत्यतिदिष्टत्वात् । अङ्गिरसां द्विरात्रे द्वितीयेऽहनीदमेव सूक्तमाज्यशस्त्रम् । सूत्रितं च—'त्वं हि क्षैतवदिति चाज्यम्' (आश्व. श्रौ. १०. २) इति ॥

त्वं हि क्षैत॑वद्यशोऽग्ने॑ मित्रो न पत्य॑से ।
त्वं वि॑चर्षणे श्रवो वसो॑ पुष्टिं न पुष्यसि ॥ १ ॥

त्वम् । हि । क्षैत॑ऽवत् । यश॑ः । अग्ने॑ । मित्रः । न । पत्य॑से ।
त्वम् । विऽचर्षणे । श्रव॑ः । वसो इति॑ । पुष्टिम् । न । पुष्यसि ॥ १ ॥

हे ᵛअग्ने ᵛत्वं ᵛहि त्वं खलु ᵛक्षैतवत् । क्षितिः क्षयोऽपचयः । तत्संबन्धि क्षैतं शुष्कं काष्ठम् । तद्युक्तं ᵛयशः अन्नं हविर्लक्षणं ᵛपत्यसे अभिपतसि[1] गच्छसि । तत्र दृष्टान्तः । ᵛमित्रो ᵛन । अहरभिमानी

---

1. ख—अभितपसि; ञ-न-भ—अतिपतसि।

देवो मित्रः । स इव । यद्वा यश इति गृहनाम । क्षैतवत् । क्षैतं निवासकं हविर्लक्षणमन्नम् । तद्युक्तं यजमानगृहं मित्रभूतः पुरुष इवाभिपतसि । यद्वा पत्यतिरैश्वर्यकर्मा । ईदृशमन्नं पत्यसे ईशिषे । अतः कारणात् हे विचर्षणे विशेषेण सर्वस्य द्रष्टः वसो वासकाग्ने त्वं श्रवः श्रवणीयमन्नं यजमानगृहस्थं न । अयं नशब्दश्चार्थे । अन्नकार्यभूतां पुष्टिं च पुष्यसि वर्धयसि ॥

त्वां हि ष्मा चर्षणयो यज्ञेभिर्गीर्भिरीळते ।
त्वां वाजी यात्यवृको रजस्तूर्विश्वचर्षणिः ॥ २ ॥

त्वाम् । हि । स्म । चर्षणयः । यज्ञेभिः । गीःऽभिः । ईळते ।
त्वाम् । वाजी । याति । अवृकः । रजःऽतूः । विश्वऽचर्षणिः ॥ २ ॥

हे अग्ने त्वां हि स्म त्वामेव खलु चर्षणयः मनुष्याः यज्ञेभिः यज्ञसाधनैर्हविर्भिः गीर्भिः स्तुतिभिः ईळते स्तुवन्ति । अपि च वाजी । वाजो गमनम् । तद्वान् सूर्यः त्वां याति गच्छति । प्रविशतीत्यर्थः । तथा च श्रूयते—'अग्निं वावादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे' (तै. ब्रा. २. १. २९) इति । वाजिशब्दश्च सूर्यवाचकत्वेन क्वचित् श्रूयते—'अग्निर्वायुः सूर्यस्ते वै वाजिनः' (तै. ब्रा. १. ६. ३. ९) इति 'वायुः सप्तिरादित्यो वाजी' (तै. ब्रा. १. ७. ८) इति च । कीदृशो वाजी । अवृकः हिंसकरहितः रजस्तूः । उदकमत्र रज उच्यते । तस्य वृष्टिलक्षणस्य प्रेरयिता । यद्वा । रजसां लोकानां तरिता गन्ता विश्वचर्षणिः सर्वस्य द्रष्टा ॥

सजोषस्त्वा दिवो नरो यज्ञस्य केतुमिन्धते ।
यद्ध स्य मानुषो जनः सुम्नायुर्जुह्वे अध्वरे ॥ ३ ॥

सऽजोषः । त्वा । दिवः । नरः । यज्ञस्य । केतुम् । इन्धते ।
यत् । ह । स्यः । मानुषः । जनः । सुम्नऽयुः । जुह्वे । अध्वरे ॥ ३ ॥

हे अग्ने सजोषः सजोषसः सह प्रीयमाणाः दिवः स्तुतेः नरः नेतार ऋत्विजः यज्ञस्य केतुं प्रज्ञापकं त्वा त्वाम् इन्धते समिद्धं कुर्वन्ति । कदेति चेदुच्यते । यद्ध यदा खलु स्यः सः मानुषः मनोरपत्यभूतः जनः जातो यजमानो होता वा सुम्नायुः[१] सुम्नं सुखमात्मन इच्छन् अध्वरे हिंसाप्रत्यवायरहिते यज्ञे जुह्वे त्वामाह्वयति तदेत्यर्थः ॥

ऋधद्यस्ते सुदानवे धिया मर्तः शशमते ।
ऊती ष बृहतो दिवो द्विषो अंहो न तरति ॥ ४ ॥

ऋधत् । यः । ते । सुऽदानवे । धिया । मर्तः । शशमते ।
ऊती । सः । बृहतः । दिवः । द्विषः । अंहः । न । तरति ॥ ४ ॥

१. त-सुम्नयुः ।

ऋधत्। स यजमान ऋध्नुयात् हे अग्ने सुदानवे शोभनदानाय तुभ्यम्॥ षष्ठ्यर्थे चतुर्थी॥ तव संबन्धिना[1] धिया कर्मणा यः[2] मर्तः[2] मरणधर्मा यजमानः शशमते शाम्यति। यद्वा। शमतिः[3] स्तुतिकर्मा। त्वदर्थं कर्मणा युक्तः सन् स्तौति। सः यजमानः बृहतः महतः दिवः दीप्तस्य[4] तव संबन्धिन्या ऊती ऊत्या रक्षया द्विषः द्वेष्टॄन् अंहो न आहननशीलं पापमिव[5] तरति[5] अतिक्रामति॥

समिधा यस्त आहुतिं निशितिं मर्त्यो नशत्।
वयावन्तं स पुष्यति क्षयमग्ने शतायुषम्॥ ५॥

सम्ऽइधा। यः। ते। आऽहुतिम्। निऽशितिम्। मर्त्यः। नशत्।
वयाऽवन्तम्। सः। पुष्यति। क्षयम्। अग्ने। शतऽआयुषम्॥ ५॥

हे अग्ने, समिधा समिन्धनहेतुभूतेनेध्मेन सह ते त्वदीयां निशितिं निशितां तनूकृतां[6] मन्त्रसंस्कृताम्[6] आहुतिं यः मर्त्यः मनुष्यः नशत् व्याप्नुयात्। नशतिर्व्याप्तिकर्मा। सः मनुष्यो यजमानः वयावन्तम्। वयाः शाखाः पुत्रपौत्रादिलक्षणाः। तद्युक्तं शतायुषं बहुविधान्नं चिरकाल-जीवनं वा क्षयं गृहं पुष्यति पोषयति वर्धयति। तत्र चिरकालमवतिष्ठत इत्यर्थः॥ ॥ १॥

त्वेषस्ते धूम ऋण्वति दिवि षञ्छुक्र आततः।
सूरो न हि द्युता त्वं कृपा पावक रोचसे॥ ६॥

त्वेषः। ते। धूमः। ऋण्वति। दिवि। सन्। शुक्रः। आऽततः।
सूरः। न। हि। द्युता। त्वम्। कृपा। पावक। रोचसे॥ ६॥

हे अग्ने त्वेषः दीप्तस्य ते तव शुक्रः निर्मलः शुभ्रवर्णो वा धूमः दिवि अन्तरिक्षे आततः विस्तीर्णः सन् ऋण्वति मेघात्मना परिणतो गच्छति। अपि च हे पावक शोधकाग्ने सूरो न सूर्य इव कृपा अभिमुखीकरणसमर्थया स्तुत्या स्तूयमानः त्वं द्युता दीप्त्या रोचसे हि दीप्यसे खलु॥

अधा हि विक्ष्वीड्योऽसि प्रियो नो अतिथिः।
रण्वः पुरीव जूर्यः सूनुर्न त्रययाय्यः॥ ७॥

अध। हि। विक्षु। ईड्यः। असि। प्रियः। नः। अतिथिः।
रण्वः। पुरिऽइव। जूर्यः। सूनुः। न। त्रययाय्यः॥ ७॥

अध अपि च विक्षु प्रजासु हे अग्ने त्वम् ईड्यः स्तुत्यः असि भवसि। हि यस्मादर्थे। यस्मादेवं तस्मात् नः अस्माकम् अतिथिः। लुप्तोपममेतत्। अतिथिरिव प्रियः असि। यद्वा।

---

१. घ-त-संबन्धिन्या। २. त-मर्त्यः। ३. न-शाम्यतिः। ४. ग-त-व्याप्तस्य। ५. ख-पापं चरति; भ-य-पापं च तरति। ६. त-तनूकृत्वा संस्कृताम्।

हविर्वहनाय सततगामी भूत्वास्माकं प्रियोऽसि। तथा ᵛपुरीव नगर्यां ᵛजूर्यः जीर्णो वृद्धो हितोपदेष्टा राजेव ᵛरण्वः रमणीयो गन्तव्यो वा भवसि। तथा ᵛसूनुर्न पुत्र इव ᵛत्रययाय्यः यजमानैः त्रातव्यः[१] पालयितव्यो भवसि। त्रायतेरेतद्रूपम्। यद्वैतत्सूनोर्विशेषणम्। विद्यातपःकर्मलक्षणं त्रयं यातीति त्रययाय्यः। यातेरौणादिक आय्यप्रत्ययः। स्पृहयाय्य इति यथा। अथवा त्रययाय्यो जन्मत्रयं प्राप्तः। जन्मत्रयं स्मर्यते—'मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धनात्। तृतीयं यज्ञदीक्षाया इति जन्मत्रयं स्मृतम्' (मनु. २. १६९) इति। तादृशः पुत्र इव रण्वो रमणीयोऽसि॥

क्रत्वा हि द्रोणे अज्यसेऽग्ने वाजी न कृत्व्यः।
परिज्मेव स्वधा गयोऽत्यो न ह्वार्यः शिशुः॥ ८॥

क्रत्वा। हि। द्रोणे। अज्यसे। अग्ने। वाजी। न। कृत्व्यः।
परिज्माऽइव। स्वधा। गयः। अत्यः। न। ह्वार्यः। शिशुः॥ ८॥

हे ᵛअग्ने ᵛक्रत्वा कर्मणा मन्थनरूपेण ᵛद्रोणे द्रुमे काष्ठेऽरण्यां विद्यमानस्त्वम् ᵛअज्यसे ᵛहि व्यज्यसे[२] खलु। तथा ᵛवाजी ᵛन वेजनवानश्व इव ᵛकृत्व्यः। कृत्वीति कर्मनाम। हविर्वहनादीनां कर्मणां कर्ता। स यथा पुरुषं वहति तद्वद्धविर्वहनमग्नेरश्वसादृश्यम्। तथा ᵛपरिज्मेव परितः सर्वत्र गन्ता वायुरिव दावानलादिरूपेण सर्वत्र गन्ता त्वं ᵛस्वधा। अन्ननामैतत्। अन्नं ᵛगयः गृहं च भवसि। उभयोर्दातेत्यर्थः। अपि च ᵛशिशुः जातमात्रो बालोऽपि त्वम् ᵛअत्यो ᵛन सततगामी जात्यश्व इव ᵛह्वार्यः कुटिलमितस्ततो गन्तासि। 'ह्वृ कौटिल्ये' इत्यस्यैतद्रूपम्॥

कारीर्यामग्नेर्धामच्छदो वैकल्पिक्यनुवाक्या 'त्वं त्या' इति। सूत्रितं च—'त्वं त्या चिदच्युता धामन्ते विश्वं भुवनमधिश्रितमिति वा' (आश्व. श्रौ. २. १३) इति॥

त्वं त्या चिदच्युताग्ने पशुर्न यवसे।
धामा ह यत्ते अजर वना वृश्चन्ति शिक्वसः॥ ९॥

त्वम्। त्या। चित्। अच्युता। अग्ने। पशुः। न। यवसे।
धाम। ह। यत्। ते। अजर। वना। वृश्चन्ति। शिक्वसः॥ ९॥

हे ᵛअग्ने ᵛत्वं ᵛत्या तानि काष्ठानि। चिच्छब्दोऽपिशब्दसमानार्थो भिन्नक्रमः। ᵛअच्युता अच्युतानि च्यावयितुमशक्यान्यपि। अत्सीति शेषः। तत्र दृष्टान्तः। ᵛयवसे घासे विसृष्टः ᵛपशुर्न पशुरिव। स यथा सर्वं भक्षयति तथा त्वं प्रौढकाष्ठादीनि क्षणमात्रेण दहसीत्यर्थः। हे ᵛअजर जरारहिताग्ने ᵛयत् यस्य॥ 'सुपां सुलुक्°' इति षष्ठ्या लुक्॥ ᵛशिक्वसः दीप्तस्य ᵛते तव ᵛधाम[३] धामानि तेजांसि ᵛवना वननीयानि संभजनीयान्यरण्यानि ᵛवृश्चन्ति छिन्दन्ति भक्षयन्ति स त्वमिति पूर्वत्रान्वयः। ᵛह इत्येतत्पादपूरणम्॥

---

१. ख-न-भ-र-स्तोतव्यः। २. त-यजसे। ३. त-धामा।

वेषि ह्यध्वरीयतामग्ने होता दमे विशाम् ।
समृधो विश्पते कृणु जुषस्व हव्यमङ्गिरः ॥ १० ॥

वेषि । हि । अध्वरिऽयताम् । अग्ने । होता । दमे । विशाम् ।
सम्ऽऋधः । विश्पते । कृणु । जुषस्व । हव्यम् । अङ्गिरः ॥ १० ॥

हे Vअग्ने Vअध्वरीयताम् अध्वरं यज्ञमात्मन इच्छतां Vविशां यजमानानां Vदमे गृहे त्वं Vहोता देवानामाह्वाता सन् Vवेषि Vहि स्तुतिं हवींषि वा यतः कामयसे अतः कारणात् Vविश्पते विशां पालकाग्ने Vसमृधः समृद्धानस्मान् यजमानान् Vकृणु कुरु। कृत्वा च हे Vअङ्गिरः अङ्गनादिगुणयुक्त अङ्गाररूप वाग्ने Vहव्यम् अस्मदीयं हविः Vजुषस्व सेवस्व ॥

अच्छा नो मित्रमहो देव देवानग्ने वोचः सुमतिं रोदस्योः ।
वीहि स्वस्तिं सुक्षितिं दिवो नॄन्द्विषो अंहांसि दुरिता तरेम
ता तरेम तवावसा तरेम ॥ ११ ॥

अच्छ । नः । मित्रऽमहः । देव । देवान् । अग्ने । वोचः । सुऽमतिम् । रोदस्योः ।
वीहि । स्वस्तिम् । सुऽक्षितिम् । दिवः । नॄन् । द्विषः । अंहांसि । दुःऽइता । तरेम ।
ता । तरेम । तव । अवसा । तरेम ॥ ११ ॥

हे Vमित्रमहः अनुकूलदीप्ते Vदेव दानादिगुणयुक्त Vअग्ने Vरोदस्योः द्यावापृथिव्योर्वर्तमानस्त्वं Vदेवान् यष्टव्यानिन्द्रादीन् Vअच्छ आभिमुख्येन Vनः अस्माकं Vसुमतिं स्तुतिं Vवोचः ब्रूहि । Vदिवः स्तुतेः Vनॄन् नेतॄनस्मान् Vसुक्षितिं शोभननिवासयुक्तं Vस्वस्तिम् अविनाशं Vवीहि गमय ॥ वेतिरत्र अन्तर्भावितण्यर्थो द्रष्टव्यः ॥ वयं च Vद्विषः द्वेष्टॄन् शत्रून् Vअंहांसि पापानि Vदुरिता तत्फलरूपाणि दुर्गमनानि च Vतरेम अतिक्रामेम । तथा Vता तानि व्यवहितानि जन्मान्तरकृतानि च पापादीनि Vतरेम । उक्त एवार्थो दार्ढ्याय पुनरुच्यते । हे अग्ने Vतव Vअवसा रक्षणेन द्वेष्टृप्रभृतीनत्यन्तं Vतरेम ॥ ॥ २ ॥

‘ अग्ने स क्षेषत् ’ इत्यष्टर्चं तृतीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयम् । अनुक्रान्तं च—‘अग्नेऽष्टौ’ इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

अग्ने स क्षेषदृतपा ऋतेजा उरु ज्योतिर्नशते देवयुष्टे ।
यं त्वं मित्रेण वरुणः सजोषा देव पासि त्यजसा मर्तमंहः ॥ १ ॥

अग्ने । सः । क्षेषत् । ऋतऽपाः । ऋतेऽजाः । उरु । ज्योतिः । नशते । देवऽयुः । ते ।
यम् । त्वम् । मित्रेण । वरुणः । सऽजोषाः । देव । पासि । त्यजसा । मर्तम् । अंहः ॥ १ ॥

हे अग्ने सः यजमानः क्षेषत् क्षियति[1] निवसति । चिरकालं जीवेदित्यर्थः । कीदृशो यजमानः । ऋतपाः ऋतस्य यज्ञस्य पालकः ऋतेजाः यज्ञनिमित्तं जातः । उषित्वा च ते त्वदीयं देवयुः देवानात्मन इच्छन् स यजमानः उरु विस्तीर्णं ज्योतिः सूर्याख्यं नशते प्राप्नोति । हे देव द्योतमानाग्ने यं मर्तं मनुष्यं यजमानं मित्रेण वरुणः । तृतीयार्थे प्रथमा । वरुणेन च सजोषाः सह प्रीयमाणः त्वं यजसा यजनसाधनेनायुधेन अंहः अंहसः पापात् पासि रक्षसि स यजमानः इति पूर्वत्र संबन्धः ॥

ईजे यज्ञेभिः शशमे शमीभिर्ऋधद्वारायाग्नये ददाश ।
एवा चन तं यशसामजुष्टिर्नांहो मर्तं नशते न प्रदृप्तिः ॥ २ ॥

ईजे । यज्ञेभिः । शशमे । शमीभिः । ऋधत्ऽवाराय । अग्नये । ददाश ।
एव । चन । तम् । यशसाम् । अजुष्टिः । न । अंहः । मर्तम् । नशते । न । प्रऽदृप्तिः ॥ २ ॥

यः यजमानः ऋधद्वाराय ऋधत्समृद्धं वारं वरणीयं धनं यस्य तादृशाय अग्नये ददाश हवींषि ददाति स यजमानः यज्ञेभिः सर्वैर्यज्ञैः ईजे इष्टवान् भवति । तथा शमीभिः कर्मभिः कृच्छ्रचान्द्रायणादिभिः शशमे शान्तश्च भवति । आग्नेयेन यागेन सर्वं फलं लभत इत्यर्थः । अपि च तं यजमानं यशसां यशस्विनां पुत्राणाम् अजुष्टिः अप्राप्तिः न एव नशते नैव प्राप्नोति । पुत्रवान् भवत्येवेत्यर्थः । तथा मर्तं मनुष्यं तम् अंहः पापं न नशते । तथा प्रदृप्तिः अनर्थहेतुः प्रदर्पश्च[2] तं न प्राप्नोति ॥

सूरो न यस्य दृशतिररेपा भीमा यदेति शुचतस्त आ धीः ।
हेषस्वतः शुरुधो नायमक्तोः कुत्रा चिद्रण्वो वसतिर्वनेजाः ॥ ३ ॥

सूरः । न । यस्य । दृशतिः । अरेपाः । भीमा । यत् । एति । शुचतः । ते । आ । धीः ।
हेषस्वतः । शुरुधः । न । अयम् । अक्तोः । कुत्र । चित् । रण्वः । वसतिः । वनेऽजाः ॥ ३ ॥

सूरो न सूर्यस्येव[3] यस्य अग्नेः दृशतिः दर्शनम् अरेपाः पापरहितम् । हे अग्ने यत् यस्य ते तव शुचतः ज्वलतः धीः धारयित्री ज्वाला भीमा भयंकरा सती आ समन्तात् एति गच्छति । यः अयम् अग्निः हेषस्वतः शब्दयुक्ताः शुरुधो न[4] शुचः शोकस्य रोधयित्रीर्गाश्च अक्तोः । अक्तुरिति रात्रिनाम । तेन च तत्र संचारी राक्षसादिर्लक्ष्यते । राक्षसादेः स्वभूता ददातीति शेषः । सोऽयं वसतिः सर्वेषामावासभूतः वनेजाः अरण्ये जायमानः कुत्रा चित् क्वचिदेव स्थाने पर्वताग्रादौ रण्वः रमणीयो भवति ॥

तिग्मं चिदेम महि वर्पो अस्य भसदश्वो न यमसान आसा ।
विजेहमानः परशुर्न जिह्वां द्रविर्न द्रावयति दारु धक्षत् ॥ ४ ॥

तिग्मम् । चित् । एम । महि । वर्पः । अस्य । भसत् । अश्वः । न । यमसानः । आसा ।
विऽजेहमानः । परशुः । न । जिह्वाम् । द्रविः । न । द्रवयति । दारु । धक्षत् ॥ ४ ॥

---

१. ख-ङ-न-भ-र—क्षयति । २. त—दर्पश्च । ३. य—सूर्य इव । ४. ख-घ-भ—न । न चार्थे ।

२८७. २. **माषाणामश्नीयात्** । ऋ. सं. १. २०. ६. अत्र द्रष्टव्यम् । मानुषाणामश्नीयात्–§-मॅ-मु । यद्यपि लिखितपुस्तकेषु 'मानुषाणामश्नीयात्' इत्युपलभ्यते, तथापि 'माषाणामश्नीयात्' इत्येव भाष्यकाराणामभिप्रेतमासीदिति मॅक्समुल्लरमहाशयेन स्वकीयटिप्पण्यां लिखितम् ॥

[ ७. ८ ] २८८. १५. **बृहद्भाः** । 'बृहत् । भाः' इति पदपाठः ॥

[ ७. ९ ] २९०. १८. **संगन्ता**—मॅ । संगंतः (?) मु । संगता–ख-त३-न-भ; गंता–घ-ज-झ-त१-२-४-श ॥

[ ७. १० ] २९२. २२. **रयीणाम्**—घ-ज । रयीणां सूर्यस्य–मॅ-मु इतरेषु च ॥ २९२. २३. दूतः **अभवत्**—घ-ज-त१-२-य । अभवत्–मॅ-मु इतरेषु च ॥ **यस्माद्दूतोऽभवत्**—*मॅ-मु । यस्मादूतोभवः–ख; यस्माद्दूतोभवः–ज-त२-३-भ-श; तस्मादूतोभवः–झ-त४; यस्माद्दूतोभव–न । इयं श्रुतिः कुत्रत्येति न विज्ञायते ॥ २९२. २४. **विशः**—*मॅ-मु । विश्वः–§ ॥

[ ७. ११ ] २९४. ५. **किमर्थमित्यत आह**—*मॅ-मु । किं-घ१; किंच–च; किमित्यत आह–इतरेषु ॥

[ ७. १२ ] २९४. २४. **साह्वान्**—ख-च-ज-झ-त२-य-श । सह्वान्–घ१-त३-४-न-भ-मॅ-मु ॥

[ ७. १४ ] २९६. २. **ब्राह्मणाः**—ज-श । ब्रह्मणा–त१-२-३-४-भ-मॅ-मु ॥

[ ७. १५ ] २९७. ४. **भगिनो याज्या**—*मॅ-मु । भागयाज्या–ज-त१; भगीयाज्या–झ; भगियाज्या–त२-४-श ॥ २९९. १७. **°प्राकारादिर्वा**—भ-*मॅ-मु । °प्रकारादिर्वा–ख-झ-त-न; °प्रकारादि वा–श ॥

[ ७. १६ ] ३००. १३. **युज्यते**—ख-भ । अयुज्यत–मॅ-मु इतरेषु च ॥ ३०१. ११. **कामयस्व**—*मॅ-मु । कामय च–ख; कामय त्वं–इतरेषु ॥ ३०१. १९. **यः**—*मॅ-मु- × ॥ ३०१. २७. **प्रियासः**—मॅ-मु । प्रियाश्च–ख-घ-झ-त१-२-३-४-न-भ-श१; प्रियाः–ज; प्रियासश्च–श२ ॥

[ ७. १८ ] ३०४. १६. **पञ्चविंशत्यृचम्**—श१-मॅ-मु । पंचविंशर्चे–इतरेषु । एतादृशोऽशुद्धः पाठः लिखितपुस्तकेषु बहुवारमुपलभ्यते ॥ ३०४. १८. **त्वे ह यत्**—§-मॅ । त्वे ह्–मु-अनु. ॥ **चतस्रोऽन्त्या**—§–मॅ-मु । अंत्याश्चतस्रो–अनु. ॥ ३०६. ३. **उत्सहमानम्** । उत्साहमानं–§-मॅ-मु । ऋ. सं. ७. १८. १६, १८. अत्र द्रष्टव्यम् ॥ **बाधमानम्**—ज । बोधमानं–मॅ-मु इतरेषु च । 'बाधमानम्' इति स्यादिति मॅक्समुल्लरमहाशयेन संभावितम् ॥ ३०६. ११. **जालनिहिता**—§ । जले निहिता–मॅ-मु ॥ ३०७. १२. **यथापूर्वम् अर्थम्**—ज-*मॅ-मु । यथापूर्वं मदर्थं–ख-श; यथापूर्वमर्थमित्–घ; यथापूर्व्यं मदर्थं–झ-त-न-भ ॥ ३०७. १७. **सुतोकान्**—मॅ-मु । सतोकमानान्–ख; सुतोकमानान्–झ-त-न-भ श२; सुतुकमानान्–श१; सुष्ठ्वपत्यसहितान्–च ॥ ३०८. ५-६. **सपत्नान्...युद्धे**—ज-त१-*मॅ-मु । एतन्नास्ति इतरलिखितपुस्तकेषु ॥ ३०९. १. **दुवोयुवे**—§-मॅ-मु (? दुवोयवे) ॥ ३०९. १०. **विश्वानि**—घ-ज-*मॅ । विश्वा विश्वानि–मु इतरेषु च ॥ ३०९. २७. **अश्नीन्**—*मॅ-मु । अस्तीन्–घ; अस्तान्–इतरेषु ॥ **वेश्यादेः कृत्यं सूच्यैवाकरोत्**—*मॅ-मु । वेश्यादेः कृत्यं सूच्यैव करोत्–ख; वेश्यादेः कृत्यसूत्यैवाकरोत्–झ-त३-श; वेश्यादेः कृत्यसूच्येवाकरोत्–त१-२-४-भ; वेश्यादेः कृत्यसूच्यैवाकरोत्–न । **वाश्यादेः कृत्यं सूच्यैवाकरोत्**—ज । अयमेव पाठः समीचीनः प्रतिभाति । 'वाशीति तक्षणसाधनमायुधम्' ( ऋ. भा. ५. ५७. २ ) । 'पर्श्वादेः कृत्यं' इति

५८०. २१. **तत्संबन्धिनी**—*मॅ। तत्संबंधि–§-मु ॥ ५८०. २३. **रथकत्र्यया**—झ-त-न-श-*मॅ-मु। (केषुचिल्लिखितपुस्तकेषु 'टय' इत्यक्षरं 'द्य' इत्येवं लिखितमस्ति।) रथकद्वया–घ१-श; रथकक्षया–ख१-च-ज-भ ॥

[ ८. ८ ] ५८२. १५. **आनुष्टुभं त्विति**—*मॅ-अनु.। आनुष्टुभमिति–§-मु ॥ ५८३. १९. **ऋषेः**—घ-न-*मॅ-मु। ऋषिः–ख-झ-त-भ-श ॥ ५८४. १. **पक्षे**—*मॅ-मु। यज्ञे–§ ॥ ५८४. २. **धीतिभिरित्य...श्छान्दसः**—§-मॅ-मु ॥ 'धीतिभिरिति पराङ्ग°' इति भाष्यम् ॥ ५८५. १२. **व्रियमाणा**—ख१-भ-*मॅ। प्रियमाणा–मु। क्षीयमाणा–इतरेषु ॥ ५८५. २९. **रैशब्दात्**—§-मॅ-मु। 'रयिशब्दात्' इति भाष्यम् ॥ ५८६. २. **अभिप्राप्तावश्रैष्ठाम्**—*मॅ-मु। अभिप्राप्तोश्रेष्ठां–ख-भ; अभिप्राप्ताश्रौष्टां–झ-त-न-श ॥ ५८७. ८. **भक्षयितारौ**—झ-त२-४-मु। भक्षितारौ–मॅ इतरेषु च। ऋ. सं. १. ७७. ४; ६. ५१. ४ द्रष्टव्यम् ॥

[ ८. ९ ] ५८९. ८. **गायत्र्यावुपाद्ये**। 'गायत्र्या उपाद्ये' इत्यनुक्रमण्याम् ॥ ५८९.१० **अतिरिक्तोक्थे**—त-मु। अतिरिक्तोक्थ्ये–मॅ। ५६४. १८. टिप्पणी द्रष्टव्या ॥ ५९०. १५. **इत्यादिना**—ज्ञ-झ-*मॅ-मु। इति–श; इत्यादि–ख-त-न-भ ॥ ५९४. ५. **वा**—*मॅ-मु-× ॥ ५९४. २७. **द्युम्नादीनि**—मॅ-मु। द्युम्रादीन्–§ ॥

[ ८. १० ] ५९६. १४. **यज्ञस्य शिरो**—*मॅ। स्य यज्ञशिरसो–थ; यज्ञस्य शिरसो–श; यज्ञशिरसो–ख१-झ-त-न-भ-मु। 'तावेतद्यज्ञशिरः' इत्यस्य स्थाने 'ततो वै तौ यज्ञस्य शिरः' इति तैत्तिरीयसंहितायाम् ॥ ५९६. १६. **असूरे स्तोतृरहितेऽपि**—घ-ज्ञ-झ त१-२-४-य-मु। असूरे स्तोत्ररहिते–ख-भ; असूरे स्तोतृरहिते–न; असुरेभ्यो रहितेपि–श। असूरे स्तोत्ररहितेपि–त३ ॥

[ ८. ११ ] ५९७. ६-७. **षट्कसप्तकाष्टकैः**—ख१-ज्ञ-त१-२-न-श-मु-पि. सू.। षट्कसप्तकाष्टकै–ज-श-त३-४-भ। षट्कसप्तकाष्टकैव–मॅ ॥ ५९७. १४. **देवेषु**—मॅ। आ देवेषु–§-मु ॥ ५९८. ३. **गीर्भिः स्तुतिभिः**—ख-ज्ञ-झ-त३-न-भ-श-मु। गीर्भिः–घ-त२-४-मॅ ॥ ५९८. २७. **अङ्प्रत्ययः**। अजप्रत्ययः–झ१। अङ्प्रत्ययः–मॅ-मु इतरेषु च। अत्र 'अञ्प्रत्ययः' इत्येव साधुः। ऋ. सं. १. ३६. १७; ३८. ३; ४८. ९; ९२. १५ इत्यादिमन्त्रभाष्ये द्रष्टव्यम् ॥

## ॥ षष्ठाष्टकः ॥

(षष्ठाष्टकभाष्यसंशोधनार्थमुपयुक्तानि लिखितपुस्तकानि—ख, ग, घ, त, न, भ, श)

[ ८. १२ ] ६००. २. **तं त्वदीयम्**—ग१-भ१-य। त्वदीयं–मॅ-मु इतरेषु च ॥ ६०१. १. **यः**—ग-न-भ१। यो नः–मॅ-मु इतरेषु च ॥ ६०१. १७. **लुङि सिपि मन्त्रे**—ग-भ१-२-*मॅ-मु। लुङि मंत्रे–ख-ज्ञ-त२-३-श; लुङि सि मंत्रे–थ; लुङि सिमंघेत्रे–न ॥ ६०१. २४. **अत्र**—ग-भ। अ–ख-त-न-श। अयं–मॅ-मु ॥ ६०२. १०. **ग्रहीता**—§। गृहीता–मॅ-मु ॥ ६०२. १४. **नामानुपूर्व्यस्य**। 'नामानुपूर्वस्य' इति निरुक्तपाठः ॥ ६०२. २४. **प्राञ्चन्ती**—*मॅ। प्रांचती–ख-घ-त-न-भ-श-मु। प्रांचं–ग ॥ **स्तुत्यगुणगणम्**—भ-मु। स्तुत्यगुणं–घ, स्तुत्यं गुणंगण–त-न। स्तुत्यं गुणगणं–श-मॅ ॥ ६०२. २६. **स्तुत्यगुण°**—ग-भ-*मॅ-मु। स्तुत्यं गुणं–श-त४; स्तुत्या गुण°—

इतरेषु ।। ६०३.२. **परस्मैपदं । द्विर्वचनप्रकरणे** । परद्विर्वचनप्रकरणे–ग; परस्परं द्विर्वचनं ( द्विवचनं–न ) परेण–न-श । परस्परं द्विर्वचनपरेण–मॅ-मु इतरलिखितपुस्तकेषु च ।। ६०३. ४. ‘ शुद्धम् ’ इत्यस्यानन्तरं ‘ हविः ’ इति पदं गलितमिति मॅक्समुल्लरमहाशयेनोक्तं तदनावश्यकं प्रतिभाति । ‘ हविः ’ इति विशेष्यमग्रे विद्यत एव ।। ६०३. १८. **नू**–ग-न-भ-श । नु–ख-त-मॅ-मु ।। ६०४. २६. **यजनसाधनैः**—ग-भ । यजमानसाधनैः–मॅ-मु इतरेषु च ।। ६०४. २७. **वा**—*मॅ-मु-X ।। ६०५. २९. **तित्विषे**—ग । स तित्विषे–मॅ-मु इतरेषु च ।। ६०६. १. **षोडशिशस्त्रे**—ग-न-भ-मु । षोडशस्त्रे–ख । षोडशशस्त्रे–त-श-मॅ-मु ।। ६०७. १३. **प्र इयर्ति प्रेरयति**–मु । इयर्ति प्रेरयति–ग; यिप्रर्ति । प्रेरयति–य । प्रेरयति–मॅ इतरेषु च । ‘ प्रेयर्ति प्रेरयति ’ इति स्यादिति मॅक्समुल्लरमहाशयेन संभावितम् ।। ६०७. २०. **अयाळिन्द्रस्य**—ग१-श-*मॅ-मु । अयालिंद्रस्य–ख-न-भ१; अथालिंद्रस्य–त; अयाडिंद्रस्य–ग२-तै. ब्रा. । वा. सं. २१. ४७. अत्र द्रष्टव्यम् ।। ६०७. २२. **दोहनाधिकरणे**—ख-ग-ञ-भ३-श-मु । दोहनाधिकारणे–मॅ इतरेषु च ।।

[ ८. १३. ] ६०८. १७. **वर्धयिता**—ग-घ-मु । वर्धयिताय–भ१; वर्धयितार–श । वर्धयिता च–मॅ इतरेषु च ।। ६०८. २७. **लुङि**—भ-श-मु । ( छांदसो ) लङ्–ग१; लिङि–ग२; लङि–मॅ इतरेषु च ।। ६०९. ४. **यज्ञस्य**—भ-*मॅ-मु । यज्ञे–ग-श; यज्ञ–ख-त२-३-४; वेद्यास्तीर्णे बर्हिषि–घ; यज्ञवेद्यास्तीर्णे बर्हिषि वा–ञ ।। ६०९. १०. **ईमहे याचामहे**—ग-घ-न-भ । ईमहे–त-मॅ-मु ।। **वेदितारम्**—ग-भ-*मॅ-मु । विदितारं– इतरलिखितपुस्तकेषु ।। ६०९. १७. **बद्धयः**—भ । वृद्धाः–श; वद्धाः–ख-त । बद्धाः–ग-घ-न-मॅ-मु ।। ६१०. ८. **पूर्वोक्ते**—मॅ-मु । पूर्वोक्तैः–§ ।। ६११. १९. **अवितेदसि**—ग-घ-मु । अवितासि–मॅ इतरेषु च ।। **रक्षितैव**—ग-घ-न-भ-मु । रक्षिते–ख-त२-३; रक्षितो–ञ-त४; रक्षिता–श-मॅ। एतत्सूक्तस्य २६ मन्त्रभाष्यं द्रष्टव्यम् ।। ६१२. २४. **ज्ञायते वर्तते**—*मॅ-मु । जान् वर्तते–ख-त; ना अनुवर्तते–ग; जानन् वर्तते–घ-भ; तानन्–थ; जा वर्तते–न; ज्ञात्व वर्तते–श ।। ६१३. २७. **ऋषिभिरुत्पादिताभिः**—*मॅ-मु । ऋषिरुच्यति ताभिः–ख-त-भ२; प्रकृतो नारदऋषिरुच्यते ताभिः–ग; ऋषिरुच्चरिताभिः–भ१-३; ऋषिरुच्यते ताभिः–श ।। ६१४.१२. **प्रततवसू**—ग२ । प्रत्तवसू–ग१; प्रतवसू–ख-त-भ । प्रात्तवसू–मॅ-मु-निरु. ६. २१. ।। ६१४. १९. **अन्या अपि दैवीः प्रजाः**—घ । अन्यापि दैवी प्रजा–ख-त-न-श-मॅ । अन्यापि दैवीः प्रजाः–मु । अन्यापि देवाः प्रजा–भ । अन्या अपि देवप्रजाः–ग ।। ६१४. २४. **हिंसित्र्यः सत्यः**—ग । हिंसित्र्यः स्यः–ख-त-न-भ-श; हिंसित्र्यः–घ-मॅ-मु । ‘ हिंसित्र्यः सत्यः ’ इति स्यादिति मॅक्समुल्लरमहाशयेन संभावितम् ।। ६१५. ८. **बहुप्रज्ञ वेन्द्र**—ग-न-भ१-३ । बहुप्रज्ञेंद्र–ख-त-भ२-मॅ-मु । बहुप्रज्ञै इंद्र–श ।। ६१५. १६. **अभीष्टस्य फलस्य**—ख-घ-त-न-भ-श-मु । अभीष्टस्य–ग । अभीष्टफलस्य–मॅ ।।

[ ८.१४ ] ६१५.२५. **काण्वायनौ**—§-मॅ-मु । काण्व्यायनौ–अनु. भा. ।। ६१६. १. **एवमहमपि**—ग । एवमपि–ख-त-न-भ२-श-मॅ । एवमपि यद्यदि अहं–मु । मह एव ईश्वरो भवसिमपि–भ१; एव महश्वइरो भवसिमपि–भ३; ईश्वरो भवसि–य ।। ६१७. १८. **दृढीकृतानि**—ग-भ१-३-*मॅ-मु । दृढीकृतारो–न; दृढां कृता–श; दृढीकृता–इतरेषु ।। ६१७. १९. **दृह दृहि बृहि**

**वृद्धौ**—न। वृह दहि वृहि वृद्धौ–ख-ञ-त२-३-भ२-मॅ-मु। दह दहि वृद्धौ–ग-भ१-३-श; वृह दहि वृद्धौ–त४ ॥ ६१७. २१. **कृत्यार्थे**—ग-भ१-३-श-मु। कृतार्थे–मॅ इतरेषु च ॥ ६१८. ११. **जगृहे**—ख-त-न-भ-श-मु। जग्रहे–ग-मॅ ॥ ६१८.१६. **इन्द्रो वृत्रं हत्वासुरान्**---—ख-ञ-त३-४-न-भ१-३-मॅ। तदा अच्छैत्सीरित्यर्थः–ग; 'इंद्रो...असुरान्' नास्ति–त१-२-मु। इंद्रो वृत्रं हत्वासुरान-जयन्–श। इंद्रो वृत्रं हत्वासुरान् च–भ२ ॥ ६१८. १९. ---**हे इन्द्र...प्रेरितवानसि**—ख-ञ-त३-४-न-भ१-३-मॅ। हे इंद्र ( इन्द्र त्वं द्यां द्युलोकं–श ) मायाभिः उत्सिसृप्सतः ( उत्सिसृप्सतः उत्स्रष्टु-मिच्छतः–श ) सर्वत्र प्रसरतः द्यामारुरुक्षतः द्युलोकमारोहतः दस्यून् ( दस्यून् शत्रुन् उपक्षेप्तृन्–ख ) हे इंद्र ( इंद्र त्वं–ख ) अवाधूनुथाः–ख-घ-श। मायाभिरुत्सर्पणमिच्छतः द्यामारुरुक्षतः दस्यून् उपक्ष-पयितृन् हे इंद्र त्वं वृत्रस्यासुरान् अवाधूनुथाः अवाङ्मुखं प्रेरितवानसि–ग। हे इंद्र मायाभिरुत्सिसृप्सतः सर्वत्र प्रसरतः द्यामारुरुक्षतः द्युलोकमारोहतः दस्यून् शत्रूनुपक्षेप्तृन् इंद्रो वृत्रं हत्वा असुरान् हे इंद्र त्वं अवाधूनुथाः अवाङ्मुखं प्रेरितवानसि ( प्रेरितवानसि उत्कृष्टतरो भवत्–त१ )–त१-२-भ२ ॥

[ ८. १५ ] ६१९. १५. **शत्रुजातानि**—भ१-३-*मॅ-मु। शत्रून्–घ; शत्रुहननादिजातानि–इतरेषु ॥

[ ८. १६ ] ६२२. २४. **प्राप्तव्येषु**—ग-भ। प्राप्तेषु–न-*मॅ-मु। 'प्राप्तेषु' नास्ति–घ; प्रत्येषु–ञ-त२-३; त्येषु–त४ ॥ ६२३. १०. **वा**—भ। ऋ. सं. ८. २. ३६. अत्र द्रष्टव्यम्। मॅ-मु-पुस्तकयोः इतरलिखितपुस्तकेषु च 'वा' नास्ति ॥ **एवमतः**–ग-घ-न-भ। एवातः–मॅ-मु इतरेषु च ॥ ६२३. २१. **युधा युद्धेन**—§-मु। युधायुधेन–मॅ।

[ ८. १७ ] ६२४. १०. **आद्यस्तृचो**—ग-भ१-*मॅ-मु। आद्या च–ख-त; आद्य–न; आद्यस्तुचो–भ२ ॥ ६२४. १९. **केशिना केशिनौ केशवन्तौ**—त-भ-मु। केशिनौ केशवंतौ–ग-न; केशिना केशवंतौ–घ-मॅ। ६२४. २५. **सुतवन्तः**—ख-त३-न-भ-मु। सुतेवंतः–घ; सुतवतः–त२-४। सुतावंतः–श-मॅ ॥ ६२४. २९. **सुतवतः**–§-मु। सुतावतः–मॅ ॥ ६२४. ३०. **सुशिप्रिन्**। 'सु। शिप्रिन्।' इति पदपाठः ॥ ६२५. ४. **ओभा कुक्षी... माघोनं च**। इयं श्रुतिः कुत्रत्येति न ज्ञायते ॥ 'वार्त्रघ्नं' इत्यस्य स्थाने 'वार्त्रघ्ने' इति मॅ–पुस्तके ॥ ६२५. ५. **सव्यदक्षिणभेदेन**—ग-भ१-*मॅ-मु। °दक्षिणे पदेन–ख-ञ-त२-४-न; °दक्षिणपदेन–त३; °दक्षिणेन पदेन–श ॥ ६२५. ६. **शरीरावयवानि**—§-मॅ-मु। 'शरीरावयवान्' इति भाव्यम्। ६२५. १३. **सुखजनकम्**—§-मॅ-मु। 'सुखजनकः' इति भाव्यम् ॥ ६२६. २०. **शाचिपूजन**—ग-भ-*मॅ-मु। शाचिषा–ख-त-श; शाचिषापूजन–न ॥ ६२६. २१. **यतः**—*मॅ-मु। अतः–§ ॥ ६२६. २६. **स्वयमेव**—ग-भ-*मॅ। स्वयं–मु; स्वयं ते तव–ख-त-श; स्वयतेव–न ॥ ६२६. ३१. **ण्यत्प्रत्ययो**—मॅ। यत्प्रत्ययो—§-मु ॥

[ ८. १८ ] ६२७. २५. **द्वाविंशत्यृचम्**—भ-*मॅ। द्वाविंशर्चे–मु इतरेषु च ॥ ६२७. ३१. **देवानाम्**—ग१ ( पश्चाच्छोधितः )-*मॅ। देवादीनां–मु इतरेषु च ॥ ६२९. ७. **करणेऽर्थे**–§-मु। करणार्थे–मॅ ॥ ६२९. २७. **शिष्यते**–भ-*मॅ-मु। शिष्टाते–ख-त-न; शिष्टः ते–श ॥ ६२९. २८. **पूर्वस्यामन्त्रितस्य**—§-मु। पूर्वस्य–मॅ। ६३०. २४. **अयमर्थः**—*मॅ-मु। अयमर्त्य–ख-त; योमर्त्यः–ग१; यथा मर्त्यः–ग२; अयर्त्यः–न; अथमर्त्यः–भ; अयं मर्त्यः–श ॥

६३१. २१. **कृणोतन कुरुत**—ख-घ-त१-२-भ-मु। कृणोतन—ग-त३-४-न-श-मॅ॥ ६३२. १०. **नः अस्मभ्यम्**—ख-घ-ञ-त१-मु। एतन्नास्ति ग-त२-३-४-न-भ-श-मॅ-पुस्तकेषु॥

[८. १९] ६३२. १८. **सोभरेः**—त४-भ-श-*मॅ-मु। सोभरिः ऋषिः—घ; सौभरेः—इतरेषु॥ ६३२. २३. **सोभरि°**—ञ-भ-श-*मॅ-मु। सौभरिः—ग; सौभरं—ख-त१-२-३-न॥ **पितुर्न**—ख-ञ-त२-न-भ-श-*मॅ-मु-अनु.। वितुर—ग; पितु—त३॥ ६३३. ३. **वहेर्लिटि**—ख-ग-ञ-त१-२-न-भ-श-मु। वहेः—त३-मॅ॥ ६३३. ९. **ईमिमम्**—त२-न-भ-श-*मॅ-मु। ई इमं—श॥ **व्यात्तधनं प्रभूतदानं वा**—ख-त-न-भ-श-मु। विभूतदानं वा—ग; व्यात्तधनं—घ। विभूतदानं—मॅ॥ ६३३. १७. **यष्टृतमम्**—ख-ग-घ१-त२-न-भ-श-मु। इष्टृतमं—च; यष्टतमं—ञ। इष्टतमं—त३-मॅ॥ ६३३. २५. **प्रकृतिभावः**—§-मु। प्रकृतिता च—मॅ। ६३४. १. **ब्राह्मणान्तरप्रदर्शनेन**—ख-ग-ञ-त१-२-न-भ२-य-श। ब्राह्मणांतरप्रदर्शनेन व्याख्याता यः समिधा य आहुती यो वेदेनेत्यादिना—भ१। 'ब्राह्मणान्तरप्रदर्शनेन' नास्ति—त३-मॅ-मु॥ ६३४. २. **मर्तः**—ख-ग१-ञ-त१-२-न-भ१-मु। मर्त्यः—ग२-त३-भ२-श-मॅ॥ ६३४. ३. **ब्रह्मयज्ञेन**—ग-त-भ१-श-मु। ब्रह्मयज्ञ—न-भ२-य। मॅ-पुस्तक एतन्नास्ति॥ ६३४. १२. **देवैः कृतम्**—त३-४-वर्जेषु लिखितपुस्तकेषु मु-पुस्तके च। त३-४-मॅ-पुस्तकेष्वेतन्नास्ति। ६३४. २४. **अतिथिर्न**—मु-त३-वर्जेषु लिखितपुस्तकेषु च। एतन्नास्ति त३-मॅ॥ ६३४. २६. **अभीष्टफल°**—§-मु। आभिषवफल°—मॅ॥ **प्रत्यक्षकृतः**—ग-ञ-त१-२-न-भ-श-मु। प्रत्यक्षत्वकृतः—ख-त३। प्रत्यक्षत्वकर्ता—मॅ॥ ६३४. २७. **क्षेमासो धारणान्यपि**—*मॅ-मु। त्वेक्षेमा रक्षकणान्यपि—ख; क्षेमासो रम्यान्यपि—घ-न-भ; त्वेसमा धीरणान्यपि—त३; क्षेमासो रक्षणा धारणान्यपि—श॥ ६३४. २८. **त्वमेव**—ग-घ-न-भ। एव—ख-त-श-मॅ-मु॥ ६३५. १. **दाश्वध्वरः**—§-मु। दाश्वध्वरश्च—मॅ॥ ६३५. ३. **सनिता अस्तु**—ख-ग-घ-त३-न-भ-श। सनिता—ञ-त२-मॅ। अस्तु भवतु—मु॥ ६३५. २५. **ज्ञातवतो**—न-भ२-श। ज्ञानवतो—ग-भ३; ज्ञातव—त; ज्ञातवो—भ१; ज्ञातव्यस्य—ख-मॅ-मु॥ ६३६. ११. **निशान°**—*मॅ-मु। निश्वान°—ख; निश्यान°—ग-न-भ-श; निश्श्यान°—न॥ ६३६. १२. **सः**—ग। एतन्नास्ति मॅ-इतरलिखितपुस्तकेषु च। सोऽग्निर्धीभिः—मु॥ ६३७. १३. **सौत्ये**—भ१-३-मु। सौम्ये—ग; स्तौत्ये—भ२; स्वोत्ये—श। स्तोत्ये—मॅ इतरेषु च॥ ६३९. १३-१४. **ये यथा······भवन्ति**। 'यं यथायथोपासते तथैव भवति' इति मुद्गलोप. ३. ३॥ ६३९. १४. **भवेयमिति**—*मॅ-मु। भवति—ख-त-श; भवानि—ग-न-भ॥ ६३९. १९. **वा**—ग-भ१। व—ख-त-न-श। च—मॅ-मु॥ ६४१. ९. **मुष्काणि**—मॅ। मुष्कानि—§-मु॥ ६४१. ११. **स्तोतव्यत्वेन**—ग-त-भ१-३-*मॅ-मु। स्तोतव्येन—ख-न-भ२-श॥ ६४१.१९. **लभेय**—*मॅ। लभेयं—§-मु॥ ६४१. ३०. **शत्रुं सर्वमपि**—ख-ञ-त१-२-३-भ-श-मु। सर्व—ग। एतन्नास्ति घ-त४-मॅ॥ ६४२. १४. त२-३-४-न-श-मॅ-पुस्तकेषु प्रकृतमन्त्रभाष्यं न विद्यते। ख-ञ-त१-भ-मु-पुस्तकेषु—'अप्येतद्यदुक्तमपि यदेतत् वक्ष्यमाणमिति। उतशब्दः एवमुभयं तं ('तं' नास्ति भ-निरुक्तटीकायां च) संभावयति। मे मह्यं (मम—निरु. टी.) प्रयियो प्रयायते प्रगम्यते (शाम्यते—य) येन तत् प्रयियु (प्रयियुः—मु) धनमश्वादि। तस्य प्रयियोः धनस्य बहुदात् (धनं दात्—ख)। ताभिः कन्याभिः सह वयियोः। ऊयते येन तद्वयियु वस्त्रादि तस्य च बहुदात्। तिसृणां (तिसृणां—ख-भ१-निरु. टी.) सप्ततीनां गवां श्यावः श्यामवर्णो वृषः श्यामवर्णानां प्रणेता प्रकर्षेण नेता अग्रतो गामी भुवद्वसुः

भावयिता वसूनां प्रशस्तः पूजितलक्षणः दियानां ( दिव्यानां–त१; दीयानां–ख-ञ-भ१; देयानां–य ) दानार्हाणां गवां ( गवां देया यास्तासां–निरु. टी. ) पतिः। ताश्च गाः एतत्संख्यायुक्ताः एतद्गुण-युक्ताश्च मह्यमदात्। क्व पुनरसावदात्। सुवास्त्वाः सुष्ठुनिवासाया नद्याः अधि तुग्वनि तीर्थेऽधि एतददात् मह्यम्। सुवास्तुर्नाम ( सुवास्तुः–ञ-भ१-निरु. ) नदी तुग्व तीर्थं भवतीति निरुक्तम्। अस्या ऋचो व्याख्यानं निरुक्तटीकाया उद्धृतम्[१] ॥ ग-पुस्तकपाठः–' कूलं या प्रयौति सा प्रयियुः। वृक्षादिकं यावयौति सा वयियुः। एवंभूता या सुवास्त्वा नद्या अधि तुग्वनि तीर्थे तिसृणां सप्ततीनां श्यावः श्यामवर्णः ऋषभः दियानां देयानां गवां पतिः वसुर्वासकः प्रणेता नायको भवदभवत् इति दानस्तुतिः ' ॥ घ-पुस्तके – ' उताप्येतद्यदुक्तं मे मह्यं प्रयियोः अश्वादिषः श्यामवर्णानां प्रणेता प्रकर्षेण नेता मह्यमदात्। क्व पुनरसावदात्। सुवास्त्वाः सुष्ठुनिवासाया नद्याः अधि तुग्वनि तीर्थे अधि एतददात् मह्यम्। सुवास्तुनाम नदी तुग्व तीर्थं भवतीति निरुक्तम्। अग्रतो गामी भुवद्वसुः भावयता वसूनां (बहूनां–च) पूजितलक्षणः दियानां दानार्हाणां गवां पतिः ताश्च गाः एतत्संख्यायुक्ताः' ॥

[ ८. २० ] ६४२. १६. गन्त। 'गन्ता' इत्यनुक्रमण्याम् ॥ ६४२. २२. **हे प्रस्थावानः ........अस्मानागच्छत**—ख-ग-ञ-त१-२-भ-मु। हे प्रस्थावानः गमनशीलाः अयं आगंतव्यं गच्छत–घ। हे प्रस्थावानो गमनशीला मरुतः यूयमा गंत आगच्छत–मॅ[२] ॥ ६४३. १. **महान्तः**—ख-ञ-भ-*मॅ-मु। तद्वंतः–ग-श; तद्वातः–त२-३-४; तद्वांतः–न ॥ ६४३. ४. **कामयमानाः**—ख-ञ-त१-२-भ-*मॅ-मु। ग-घ-त३-४-न-श-पुस्तकेष्वेतन्नास्ति ॥ ६४३. १८-१९. **परोऽर्धर्चैः परोक्षकृतः**। 'प्रत्यक्षकृतः' इति भाष्यम् ॥ ६४३. २१. **निष्पद्यते**—ख-ग-त-न-भ१-२-य। विद्यते–श। निष्पाद्यते–भ३-मॅ-मु ॥ ६४४. ६. **आन्तरिक्षम्**—*मॅ-मु। अंतरिक्ष°–श; अंतरिक्षं–इतरेषु ॥ ६४४. ७. **पलायते**—ग-घ-भ१-३-मु। पाल्यते–ख-त-न-भ२-श-मॅ ॥ ६४४. ३०.

---

१. Cf. Max Müller : Preface to the 2nd Edition, Vol. IV, p. 172 :
" *R* ( i. e. Bombay Edition) borrows the commentary from the commentary on the Nirukta IV. 15, adding at the end of the verse (*not in a note*) : अस्या ऋचो व्याख्यानं निरुक्तटीकाया उद्धृतं, which might give the impression, as if Sāyaṇa, not the Editors, had copied from the Nirukta-ṭīkā. At all events, this throws some light on the manner in which lacunas have been filled in *R*." As Max Müller could not find in his Mss. material this part of commentary, it is but natural that he should charge the Editors of the Bombay Edition with adding this portion of their own accord. Since, however, this portion is found in a good number of Mss. ( some of them really old ), it is quite clear that the Editors of Bombay Edition reproduced it from some Ms., and did not add of their own accord. It is evident that the scribe of the original copy of the Mss. ख-ञ-त१-भ, not having found commentary on this verse, reproduced it from the Nirukta-ṭīkā.

२. Cf. Max Müller : Preface to the 2nd Edition, Vol. IV. p. 169 : " R ( Bombay Edition ) reads हे प्रस्थावानः प्रस्थातारः प्रगंतारः मरुतः आगंत अस्मानागच्छत quite different from our Ms. B., the only Ms. which has the passage. Is this a conjectural reading ? " It is rather striking that Max Müller could not find this reading found in so many Mss. by us and also most probably by the Editors of the Bombay Edition, in his *apparatus criticus*.

**शर्धे विशेष्यते**—त३-न-*मॅ-मु। शर्धा विशेष्यंत-ख-त२; शर्धो विशेष्यते-ग-ञ-त४-भ; कीदृशे शर्धाय-घ ॥ ६४५. १४. **शक्त्यादीन्यायुधानि**—*मॅ-मु। शक्त्यान्यायुधानि-ख-त-न-श; शक्त्याख्यान्यायुधानि-ग-भ ॥ ६४६. ६. **स्मः**—घ-न-भ। रः-ग। स्म-त-मॅ-मु ॥ ६४६. ७. **हीनः**—ग-*मॅ-मु। हिनः-ख-त२-३-न-भ१; नहिनः-ञ-त४-भ२-३; हीन-श ॥ ६४६. २४. **सुम्ना सुम्नानि सुखानि**—ग-न-भ-मु। सुम्ना सुखानि-घ-श। सुखानि-त-मॅ ॥ ६४७. १५. **वर्षितॄन्**—ग-भ। वर्षितान्-घ; वर्षिन्-न; वर्षिष्ठान्-ख-त-श-मॅ-मु। ऋ. सं. ८. ७. ३३; २०. २०. द्रष्टव्यम् ॥ ६४७. १७. **शक्तान्**—*मॅ-मु। सत्कृतान्-ख-त; सेक्तॄन्-घ-भ; सेक्षन्-न; सनूतने-श ॥ ६४८. ११-१२. **धारयितव्ये स्तोत्रे यज्ञे**—भ-*मॅ-मु। धारयितव्यस्तोतॄयज्ञे-ख-त-न; धारयितरि यष्टरि स्तोतरि यज्ञे-ग; धारयितव्यस्तोमे यज्ञे-श ॥ ६४८. २३. **असक्तशत्रवः**—मॅ। अशक्तशत्रवः-§-मु ॥ ६४८. २४. **कल्याणीभिस्ताभिः**—ग-भ१-३। कल्याणीभिः स्तोत्रीभिः-ख-ञ-त१-२-४-श; कल्याणीभिः स्तोत्राभिः-त३-मु; कल्याणीभिः स्तोतृभिः-न-भ२; कल्याणीभिस्ततभिः-य। कल्याणीभिः-मॅ ॥

[ ८. २१ ] ६५०. २. **वाजयन्ति**—ग-त१। वाजंति-मॅ-मु इतरेषु च ॥६५०. ३. **वा**—ग-न-भ। त्वा-त२-३-श। ख-ञ-त४-मॅ-मु-पुस्तकेषु 'वा' नास्ति ॥ ६५१. ३. **गोविकारे दधिपयसी**—*मॅ-मु। गोविकारो दधिपयस्य-ख-त-न; गोविकारो दधि पयश्च-ग-भ; गोर्विकारो दधिपयसोः-श ॥ **उच्येते**—*मॅ-मु। उच्यते-§ ॥ ६६१. ४. **श्रीते**—भ१-३। श्रीतेन-ख-त-न-भ२-श-मॅ-मु ॥ ६५१. २१. **अभूम भवामः**—न-भ-श-मु। अभूमः-घ। भवामः-ख-ग-त-मॅ ॥ ६५१. २२. **सुब्व्यत्ययः**—श-*मॅ-मु। सुव्यत्ययः-ख-त-भ२; सुप्व्यत्ययः-ग; सुव्यत्ययः-न; सुष्पत्ययः-भ१; सुप्तयः-भ३ ॥ ६५१. २३. **तु ते त्वां**—*मॅ। ते त्वां-मु। उत त्वं-ख-ञ-त१-२; तु त्वां-ग१; तु त त्वा-ग२; नुत त्वं-त३-न; तु त्वं-त४; तु ते त्वं-भ१-३; ननु ते त्वं-श ॥ **रक्ष्या इति**—ग-*मॅ-मु। रक्षंत इति-त१-२-४-भ२; रक्षत इति-ञ; इति-भ१; मिति-भ३ ॥ ६५१. २९. **अभ्यवहार्यम्**—ग-घ-भ। अभ्यवहार्थे-न। अभ्यवहारार्थे-ख-त-श-मॅ-मु ॥ ६५३. २८. **तान्नाश्रयसीत्यर्थः**—त३-४-न-श-मॅ। तान्नाश्रयसीत्यर्थः यदा त्वं नदनुं नद अव्यक्ते शब्दे यं स्तोतारं कृणोषि मदीयोयमिति यदा भावयसि तदानीं समूहसि धनादिकं तस्मै वहसि। आदित् अनंतरमेव तेन लब्धधनेन स्तोत्रा पितेव पालयिता जनक इव हूयसे स्तुतिभिराहूयसे स्तूयस इत्यर्थः-ख-ञ-त१-२-भ-मु। तान्नाश्रयसीत्यर्थः यदा मानवस्य नदनुं दानादिराहित्यं समूहसि निराकरोषि यष्ट्रत्वं कृणोषि करोषि आदित् अनंतरमेव पितेव सन् तेन हूयसे-घ ॥ ६५४. १६. **मा**—घ। तस्मादन्नं न-ग२-ञ-त१-४-भ१-२; तस्माद्धनं-भ३; तस्मादन्यन्न-ख-ग१-त२-३-न-श-मॅ-मु ॥ **ग्रहेः**—ख-त२-३-४-न-भ२-श-मु। गृहेः-ग-ञ-भ१-३-मॅ ॥ ६५४. १८. **धनादिभिः**—ख-ग-त२-न-भ-*मॅ-मु। नादिभिः-त३; भरणादिभिः-श ॥ ६५४. १९. **कैश्चित्**—ग-*मॅ-मु। कश्चित्-इतरेषु ॥ ६५५. ५. **वर्तन्ते तान्**—भ३-*मॅ-मु। त्रतंत तान्-ख-त-न; ततान्-घ; तत्रंते तान्-भ१; त्रतंते तान्-भ२; तान् ततान्-श ॥ ६५५. ६. **धनैस्तनोति**—ग२-भ३-*मॅ-मु। धनौ सनोति-ख-ञ-त२-३-४-न; सनोति-घ; धनै सनोति-त१; धनैः सनोति-भ२; धनं सनोति-श; धनैस्तनोमि-भ१ ॥

[ ८. २२ ] ६५५. ११. **आश्विनम्**—ग-ञ-त२-भ१-३-*मॅ-मु-अनु. । अश्विनं—ख-त३-४-न-भ२ ॥ ६५५. १८. **उपक्षपयितारम्**—भ१-३-*मॅ-मु । उपजनायतारं—ख-त-न; उपयितारं—ग; उपजनयितारं—श ॥ ६५५. १९. **सुहवा सुहवौ**—ख-ग-ञ-त१-२-भ-श-मु । सुहहवौ—त३-४-न । सुहवा—घ-मॅ ॥ ६५५. २१ **सूर्या स्वयंवरे**—ग-भ-श-मु । सूर्यास्वयंवरे—ख-घ-त-मॅ ॥ ६५५. २७. **यक्षेषु**—ख-ग-ञ-त१-२-न-भ-श । यक्तेषु—त३-४ । युद्धेषु—*मॅ-मु ॥ ६५५. २९. **कैश्चिदप्यनुपद्रवम्**—§-मॅ-मु । ? ॥ ६५६. ३. **द्योतनशीलौ**—ख-ग-ञ-त३-४-भ-श-*मॅ-मु । द्यौतन°—त२ ॥ ६५६. ११. **परि ईयते**—घ-भ१-३ । मॅ इतरेषु चैतन्नास्ति । ईयते गच्छति—मु ॥ ६५६. १३. **मन्त्रान्तरम्**—*मॅ-मु । मंत्रांतरं सति—ख-त-य; मंत्रांतरं संति—न-भ१-२; मंत्रांतरे सति—भ३-श ॥ ६५६. २३. **द्यावापृथिवी द्यावापृथिव्यौ**—ग-घ-भ-मु । द्यावापृथिव्यौ—ख-त-श-मॅ ॥ ६५६. ३१. **वृकेण**—*मॅ-मु । वृकेण लांगलेन—§ ॥ ६५७. १. **धान्यम्**—*मॅ-मु । धान्यं वा—ग; धनं वा—इतरेषु ॥ ६५७. ९. **अस्मानुपयातमागच्छतम्**—घ१-*मॅ-मु । अस्माकं नुपमानं गच्छंतौ ( गच्छतौ—त२-४ )—ख-त१-२-३-४-न-भ२; अस्मानुपयातं गच्छतं—ग; अस्माकमुपयातमागच्छतं—च-य; अस्माकमुपयातं गच्छतं—भ३; अस्माकं उपमानं गच्छंतौ ( गच्छतौ—श )-ञ-भ१-श ॥ ६५७. ११. **एवम्**—§-मु । एव—मॅ ॥ **आगच्छतम्**—ग । आगं—भ२ । आगतं—मॅ-मु इतरेषु च ॥ ६५८. १. **यत्**—ग-घ-भ । यद्यच्छत्—ख-त-न-श; यद्यत्—*मॅ-मु ॥ ६५८. ६. **अधृतगमनाः**—ग-भ१-३-*मॅ-मु । अधृतनाः—त४; अधृतधनाः—इतरेषु ॥ ६५८. १९. **वन्दनो**—भ-*मॅ । वंदन—मु इतरेषु च ॥ ६५८. २०. **मायाभिः**—*मॅ । मालाभिः—§-मु ॥ ६५९. १. **स्तूयमानमार्गौ**—ख-ञ-त२-न-भ१-३-*मॅ-मु । यामन् मार्गे—ग; स्तूयमार्गौ—त३-४; स्तूयमानमार्गैः—भ२ ॥ ६११. ४. **नः अस्मान्**—घ । नोस्मत्—मॅ-मु इतरेषु च ॥ ६५९. ८. **सेवनीयशीलौ**—*मॅ । सेचनीयशीलौ—ख-घ-त-न-भ-श-मु । सचनशीलौ—ग । 'सचनीयौ' अथवा 'सेवनीयौ' इति साधु इति मॅक्समुल्लरमहाशयेनाभिप्रेतम् । ऋ. सं. २. ३१. ४; ८. ७०. ८. अत्र द्रष्टव्यम् ॥ ६५९. १७. **गच्छन्तीभिः**—ग । गच्छद्भिः—मॅ-मु इतरेषु च ॥ ६५९. १८. **आरात्तावित्**—ग-घ-मु । आरात्तात्—मॅ इतरेषु च ॥ ६६०. १. **प्रयच्छति**—ख-त-न-भ-श-*मॅ-मु । प्रयच्छंति—ग ॥ ६६०. ६. **लिङ्कि**—मॅ-मु । लिटि—§ ॥

[ ८. २३ ] ६६१. १३. **अनुषक्तम्**—ख-ग-त-न-भ-श-मु । अनुषगनुषक्तं—घ । आनुषक्तं—मॅ । निरु. ६. १४ द्रष्टव्यम् ॥ ६६१. २०. **यष्टृत्वेन**—*मॅ-मु । यष्टृयष्टव्येन—ख-त-न-भ-श; याज्ययष्टृत्वेन—ग; यष्टव्येन—घ ॥ ६६१. २७. **यज्ञवति**—ग-भ३-*मॅ-मु । यज्ञं प्रति—ख-घ-ञ-त१-२-भ२-य-श; धत्रयज्ञं प्रति—त३-४-न; ज्ञं प्रति—भ१ ॥ ६६३. १४-१५. **माययापि तस्य**—ग-घ-*मॅ-मु । मायावि(व्योवि—श)तस्य—ख-ञ-त३-४-भ२-श; वमायावि तस्य—त२; मायावि तस्य—न; मायान्वि तस्य—भ१-३ ॥ ६६३. २१. **त्वा त्वाम्**—ग-घ-न-भ-मु । त्वां—ख-त-श-मॅ ॥ ६६३. २६. **गृहे**—*मॅ-मु । यज्ञे—ग; सह—इतरेषु ॥ ६६४. ३. **अस्माकम्**—मॅ-मु । नोस्माकं—§ ॥ ६६४. ४. **त्वा**—घ१-वर्जेषु लिखितपुस्तकेषु । घ१-मॅ-मु-पुस्तकेषु नास्ति ॥ ६६५. ५. **ज्वलत्तेजसे**—ख-ग-घ-त१-३-भ । ज्वलतेजसो—त२-४; ज्वालंत्तेजसे—न । ज्वालातेजसे—मॅ-मु ॥ **कथमिव**—ख-ग-ञ-त१-२-४-भ-श । वयमिव—त३-न । वयमिह—मॅ-मु ॥ ६६५. १०. **बाध-**

**परिहारेण**—ग-भ१-२-श-*मॅ-मु । बाधपरिपूरेण—ख-श-त२-३-४-न; बाधापरिहारेण—भ३ ॥ ६६५. १७. **अरणीभिः**—ग-घ-*मॅ-मु । वारणीभिः—मु इतरेषु च ॥ ६६६. १९. **यशस्वी असि**—घ-भ-मु । साति यशस्वी—ग; यशासि—श; यशस्त्वं—श; यशस्वासि—ख-त२-३-४-न-मॅ ॥

[ ८. २४ ] ६६६. २४ **विश्वमना ऋषिः**—*मॅ । वैयश्वनाम ऋषिः—§-मु ॥ ६६७. ४. **इत्वषत्वे**—ग-भ१-३-मु । इत्वषत्वे—मॅ । ईत्वषत्वे—भ२; इतिषत्वे—ख-त-न-श ॥ ६६७. १०. **हि प्रसिद्धौ**—मॅ-मु । हि प्रसिद्धो भूः—ग; हि प्रसिद्धो भूत्—इतरेषु ॥ ६६७. १७ **नानाविधान्नोपेतम्**—भ१-३-श-*मॅ-मु । नानाविधौपेतं—ग२; नानाविधानोपेतं—ख-घ-त-न-भ२ ॥ ६६७. २३ **निरेकम्**—*मॅ-× । मु—पुस्तकेऽप्येतन्नास्ति ॥ ६६७. २५. **स्तवमानः**—श-*मॅ । स्तवानः—ख-ग-त१-३-४-न-भ२-३-मु; स्तवनः—घ; स्तवान—श । ६६८. १२. **तथा मनः**—*मॅ-× । तथा मदीयं मनो—मु ॥ ६६८. १७. **नामन्त्रिते**—ग-भ । आमंत्रिते—ख-त-न-श-मॅ-मु ॥ ६६९. ३. **नर्तयितः**—ग-*मॅ-मु । वर्तयितः—ख-घ-त-न-भ; वर्तमानं—श ॥ ६७०. २. **अभिषुणुत**—ग-भ२-य । अभिषुत—मॅ-मु इतरेषु च ॥ **मदकरम्**—भ२ । मधुरं—ग । मधुकरं—मॅ-मु इतरेषु च ॥ ६७०. ९. **दृक्षम्**—ग-भ१-श-*मॅ-मु । रक्षं—इतरेषु ॥ ६७०. २७. **ऋत्विक् मघ्वः**—ख-ग-त-न-भ-श-मु । ऋत्विक् सदावृधः सर्वदा वृद्धिमतो मघ्वः—घ-मॅ ॥ ६७०. २८-२९. **अभिषुणु......वर्धकः**—ग-भ । एतन्नास्ति ख-त-न-श-मॅ-मु । ऋ. सं. ४. ३१. १; ५. ३६. ३; ८. ६८. ५ एतेषु 'सदावृधः' इत्यस्य, ऋ. सं. ८. २४. १३. अत्र 'सिंच' इत्यस्य च व्याख्यानं द्रष्टव्यम् ॥ **अयमेवेन्द्रः**—ग-भ-मॅ-मु । कोपे( कोये—त१-२ )नेवेन्द्रः—ख-त; इत् वा उ अयमेवेंद्रः—घ; कोयमेवेंद्रः—न-श[1] । 'स्तूयते खलु' इत्यस्यानन्तरं मु-पुस्तके 'कीदृशः वीरः विक्रांतः सदावृधः सर्वदा वर्धमानः' इत्यधिकं विद्यते ॥ ६७१. ५. **उपलक्षणमेतत्**—भ । उपलक्षणं—*मॅ-मु इतरेषु च । 'उपलक्षणमेतत्' इति भाष्ये साधारणः पाठ इति मॅक्समुल्लरमहाशयेनोक्तम् ॥ ६७१. ६. **छान्दसो मुम्**—*मॅ । छांदसो वोम—ख-त-न; छांदसो द्वितीयो नुट्—भ; छांदसो लोपः—श । छांदस आगमः—मु ॥ ६७१. ७. **सर्वैः**—ग-श-भ३-*मॅ-मु । सर्वैरिति—त२-४-भ२ ॥ ६७१. ३१. **ऋत्विग्भिः**—ग-श-न-भ-श-*मॅ । ऋत्विस्तः—ख त२-३ । ऋत्विग्भ्यः—मु ॥ **मदीयम्**—ग-त-न-भ । यदिदं—श-मॅ-मु ॥ ६७२. १. **घृताश्च मधुनश्च**—ख-ग-त२-भ-श-मु-आश्व. गृ. । घृतान्मावुश्च—त३; घृताश्च मधुनश्च—भ२ । घृतान्मधुनश्च—घ-न-मॅ ॥ ६७२. ९. **धनदानम्**—ग-घ-मु । धनं दानं—मॅ इतरेषु च ॥ ६७२. २५-२६. **नव वै......दशधा चरन्तम्** । 'नव वै पुरुषे प्राणाः' एतावन्मात्रोंऽशः तैत्तिरीयब्राह्मणे ( १. ३. ७. ४ ) उपलभ्यते । 'दशधा' इत्यस्य स्थाने 'दशमो' इति स्यादिति मॅक्समुल्लरमहाशयः ॥ ६७३. ६. **संबोध्याह**—ग-भ१-३-*मॅ-मु । संबोध्य—इतरेषु ॥ ६७३. ८. **भवन्तीति**—*मॅ-मु । भवन्ति—§ ॥ **शोधनहेतुत्वात्**—ग-भ२-३ । शोधने हेतुत्वात्—भ१; शोभनहेतुत्वात्—इतरेषु । शोभाहेतुत्वात्—मॅ-मु ॥ ६७३. ९. **यजमानानामिव**—*मॅ-मु । पद्यमानानां यजमानानां—ख; पतमानानां—ग२-त४-भ; पद्यमानानां पतमानानां—श-त२; पद्यमानानां यजमानानां राया ( राया

---

१. The fact that many Mss. have को before यमेवेंद्रः suggests that some portion is here wanting whose last letter may be को. This want is fulfilled by the passage reconstructed on the basis of Mss., which has वर्धको as the last word.

इव–य ) त१-य ॥ **परिपदां समानाधिकरणः**—*मॅ-मु । परिपदी समानक–ख-ञ-त२-३-४-न-भ१; परिपदां समानक–त१; पद्यमानानां–भ१-३ ॥ ६७३. १९. **विशेषेण**—भ । विशेषणं–ग । निःशेषेण–त-मॅ-मु ॥ ६७३. २५. **संन्यसे**—त२-भ२-*मॅ-मु। सन्यसे–ख-ग-घ-ञ-भ१-३; संन्यासे–त३; सन्यासे–त४ । ‘ सन्यसे ’ इति पदपाठः ॥ ६७४. १. **ॠन्**—*मॅ-मु । ॠन–जोधपूरलिखित-पुस्तके । ऋन्–इतरेषु ॥ **क्षणोतेः**—*मॅ-मु । अर्तेः–ग; ऋणोतेः–इतरेषु ॥ ६७४. ३. **किं पुनस्तं हन्ति**—*मॅ-मु । किं पुना हंति–ख-त; किं पुनः हंति–ग-घ-श; किंतु नाहंति–न-भ१-२-य; किमु न हंति–भ३ ॥ ६७४. ७. **हननसाधनम्**—ग-घ-न-भ-मु । हननसा( धुयं )–ख-त-श । हनन-साधकं–मॅ ॥ ६७४. १६. **वाजनम्**—मॅ-मु । वर्जनं–ख-ग-त-न-श; वर्धनं–भ ॥ ६७४. १९. **प्रापितवती**—*मॅ-मु । प्रापितवान्–§ ॥ ६७४. २०. **करोषि**—*मॅ-मु । करोति–§ । ‘ कारय ’ इति भाव्यम् ॥ ६७४. २४. **आदत्तवान्**—*मॅ-मु । दत्तवान्–§ ॥ ६७५. २. **यदा**—भ३-*मॅ-मु । यद्वा यथा–ख-त१-२-३-न-भ१-२; यद्वा यदा–ग ॥

[ ८. २५ ] ६७५. ७. **विश्वमना**—ख-ञ-त२-भ-*मॅ । वैयश्वनामा–मु ॥ ६७५. २२. **कर्त्रपेक्षत्वात्**—ग-भ३ । कर्तृपेक्षत्वात्–न-भ१-२ । कर्तृपक्षत्वात्–ख-ञ-त२-३-श-मॅ-मु ॥ ६७६. ४. **ऋतावाना**—§-मॅ । ‘ ऋतऽवानौ ’ इति पदपाठः । ऋतावानौ–मु ॥ ६७६. १०. **बलाद्वेगः**—भ-*मॅ-मु । बलाद्देग–ख-त; बलोवेग–श; द्वेग—न ॥ ६७६. १२. **क्षयतेः**—त२-न-श-मॅ-मु । क्षीयतेः–भ । ‘ क्षियतेः ’ इति भाव्यम् ॥ ६७६. २०. **वृष्टयवेला तदा**—*मॅ । वृष्टयवेजानाद–ख-त-न-भ२; वृष्टयभावो जातः तदा–भ१-३-श । मु-पुस्तक एतद्वाक्यं नास्ति ॥ ६७७. १३. **तद्वद्दुःसहेन**—भ१-श-*मॅ-मु । तद्वदः दुःसहेन–ख-त-न; तद्वदुःसहेन–भ२-३ । तद्वत् दुःसहेन–मु ॥ **अहोरात्रयोः**—*मॅ-मु । अहोतात्रयोः–ख-त-न-श; लोकत्रयेन–भ१; लोकत्रय–भ२-य; लोकत्रये–भ३ ॥ ६७७.१९. **वृद्धश्रवसः** । ‘ वृद्धऽश्रवसः ’ इति पदपाठः ॥ ६७८. १. **पालनवत्त्वात्**—*मॅ-मु । पालनैवत्त्वान–ख-ञ-त३-४; पालनैवत्त्वात्–त१-२; पालनैतत्त्वान–न; पलितेतत्त्वात्–भ१; पलिनेवत्त्वात्–भ२; मरुत्पालितत्वात्–भ३ ॥ ६७८. ४. **कर्म**—भ-श-*मॅ-मु । कर्मक–ख-त-न ॥ ६७८. १०. **उरुतरम्**—*मॅ-मु । गुरुतरं–§ ॥ ६७८. १९. **पालयताम्**—भ१-२-*मॅ-मु । पालयंतां–इतरेषु ॥ ६७९. ११. **वरुणस्य**—श-*मॅ । वरुर्षण–भ१; वर्षणस्य–इतरेषु ॥ **च**—*मॅ । धां–ख; व–त१; वा–मु इतरेषु च ॥ ६७९. १६. **पर्यन्तान्**—*मॅ-मु । रपानति–ख-ञ-त२-३-४-न-भ१-२; स्थानति–त१; अंतरान्–घ; अंतानपि–भ३; पारं परितो मिनोमि–श ॥ ६७९. २३. **रूपम्**—*मॅ-मु-X ॥ ६८०. ५. **लुक्**—*मॅ-मु । षष्ठी–§ ॥ ६८०. ११. **उक्ष्णशब्दात्**—न-भ-*मॅ । उक्षणशब्दात्–ख-त-श-मु ॥ ६८०. १२. **वृद्धिभावोऽपि**—*मॅ । वृद्धयभावोपि–ख-त-न-भ१-३-मु; वृद्धभावोपि–भ२; वृद्धयभावेपि–श ॥ ६८०. १३. **बहुवत्पितृशब्देन (?)**—§-मॅ-मु ॥ ६८०. २१. **स्वकुशलं**—ख-त-न-भ२-श । स्वकुलं–भ१; स्वकुशले–भ३ । कुशलं–मु । नु कुशलं–मॅ । एतद्दुर्बोधं दृश्यते ॥ **आयुधनेतॄणाम्**—श-*मॅ-मु । अयुतनेतॄणां–ख; अधुयनेतॄणां–त-न; अधूयने-तॄणां–भ१-२; अध्वरनेतॄणां–भ३ ॥ ६८०. २२. **भवेताम्**—भ३-*मॅ । भवेत–§ । भवेतं–मु ॥ ६८०. २७-२८. **मेधाविनामुचितौ**—*मॅ-मु । मेधाविनामस्थितौ–ख-त-न; मेधाविनौ–घ-श; मेधाविनावस्थितौ–भ ॥ ६८१. २. **प्रत्यग्रहीषम्**—*मॅ-मु । प्रत्यगृहीतं–§ ॥

[ ८. २६. ] ६८१. ४. **तत्पूर्वाः**—त२-*मॅ-मु-अनु. । तत्पूर्व्यः—इतरेषु ॥ ६८१. ७. **पञ्च-दशर्चः**—भ३-मु । पंचर्चः—त-न-भ१-२-श-मॅ ॥ ६८१.१४. **युवयो रथम्**—घ-मु । युवयोरर्थं—मॅ इतरेषु च ॥ ६८१. २२. **तनोतीति**—भ३-श-*मॅ-मु । तनोति—इतरेषु ॥ ६८२. १२. **रोदन-शीलौ रुवन्तौ**—*मॅ-मु । रोदनशीलो देवत्यौ—न; रोदनशीले देवत्यौ—ख-त-भ-श ॥ ६८२. १४. **संक्लेशयतम्**—*मॅ-मु । संक्लेदयतं—ख-श-त१-२-३-भ२-३; संकेदयतं—त४-न; संक्लंदयतं—भ१; संकेत-यनं—श ॥ °**संक्लेशनयोः**—*मॅ-मु । °संक्लेदनयोः—ख-त-भ२-३; (हिं)सकेदनयोः—न; °सनकेदनयोः—भ१; °संकेतनयोः—श ॥ ६८२. २०. **युवयोः**—*मॅ-मु । युवां—§ ॥ **ते तत्रैव**—*मॅ-मु । ते तु तत्रैव—न-भ-श; वे तु तत्रैवं—ख-त ॥ ६८२. ३०. **तैरपच्यावनीयौ**—*मॅ-मु । तैरुष्यचावनीयौ—ख-भ१; तैरुष्यच्यावनीयौ—त-न-भ२; कैरप्यच्यावनीयौ—भ३; तैरुपच्यावंनीयौ—श ॥ ६८३. १२ **स्तुत्वा**—मॅ-मु । स्तुत्या—§ ॥ ६८३. २१. **अपनेतृन्**—*मॅ-मु । आनेतृन्—§ ॥ ६८३. २२. **आडागमः**—भ२ । अडागमः—त२-न-भ१-श-मॅ-मु ॥ ६८३. २७. **आत्मीयतया**—§ । आत्माय-ततया—*मॅ-मु ॥ ६८३. २८. **संगतौ सन्तौ**—ख-घ-त-न-भ१-२-श-मु । संगतौ—भ३-मॅ ॥ ६८४. २८. **क्रतौ**—श-*मॅ-मु । इतरेषु नास्ति ॥ **हवानाम् इति**—भ३-श-*मॅ-मु । हवानां—त-न-भ२ ॥ ६८५. ६. **सप्तम्याः सः**—§-मॅ । सप्तम्याः सुः—मु । अयमेव साधुः ॥ ६८५. ८. **अमनुष्यौ**—*मॅ-मु । मनुष्यौ—§ ॥ ६८५. १२. **श्वेतयावरीनाम्न्या**—भ । श्वेतयावरीनान्यो—त-न-श । श्वेतया-वरीनाम्न्यो—मॅ-मु ॥ ६८५. २१. **हिरण्मयकूलवत्त्वात्**—ख-त-न-भ-श । हिरण्मयकूलवत्या—मॅ-मु ॥ ६८५.२८. **करतलास्फालनैः**—त१-२-३-न-भ-श-मु । करलास्फालनैः—ख; करललास्फालनैः—श-त४। करल्तास्फालनैः—*मॅ । 'करतलास्फालनैः' इति पाठः समीचीनतर इति मॅक्समुल्लरमहाशयः[१]॥ **आश्वास्य पोषणीयौ**—भ३-*मॅ-मु । आश्वाश्व( अश्वाश्व—भ१-२ )पेषणीया—त१-२-३-न-भ१-२; आश्वास्य पोषणीया—श ॥ ६८६.२२. **अश्वावावह**—*मॅ-मु । अश्वावाह—श-त२-भ;अश्व्यावाह—त३-४-न-श ॥

[ ८. २७ ] ६८७. ११. **प्रागाथम्**—भ-श-*मॅ-अनु. । प्रगाथं—ख-त-न-मु ॥ ६८७.३२. **ओषध्यः**—§-मु । ओषधयः—मॅ ॥ ६८८. २०. **वा**—*मॅ-मु-× ॥ ६८८. २८. **स्तोतृषु**—§ । स्तोत्रेषु—मॅ-मु ॥ ६८८. २९. **शुश्रूषुतया प्राप्तव्यया**—*मॅ-मु । शिश्रूषतया प्रातव्यत्यया—श-त२-३-४-भ२; शुश्रूषुतया प्राप्तव्यत्यया—त१; शिश्रूषतया मातव्यया—न-भ१; शुश्रूषिततया जानव्यया—भ३; शुश्रूषतया प्राप्तव्यतया—श ॥ **तया**—भ३-*मॅ-मु । गिरा—श; गतया—इतरेषु ॥ ६८९. २८. °**कर्मणि**—§-मु । °कर्माणि—मॅ (मुद्रणदोषः?) ॥ ६९०. १५. **विभाषितणिच्त्वात् यदा णिच्**—*मॅ-मु । विभाषिताणिस्त्वात् यदा णिङ्—श-त२-३-४; विभाषितणित्वात् यदा णिङ्—न-भ; विभाषिताणित्वात्पदाण्णिङ्—श ॥ ६९१. १३. **कुर्वते**—§ । कुर्वति—मॅ-मु ॥ ६९१. ३१. **अपरम्**—*मॅ-मु-× ॥ ६९२. ८. **क्रियमाणत्वात्**—*मॅ-मु । क्रियमाणा°—ख-त-न-भ२; क्रिय-माणानां—ग-भ१-३ ॥ ६९२. ११. **हविर्भाक्त्वम्**—ग-भ२-य । हविर्भाक्तं—त४-न; हविर्भक्षं—श-त२ । हविर्भक्षणं—श-मॅ-मु ॥ ६९३. ८. **ऋजुगमने प्रस्थे**—*मॅ-मु । ऋजुगमनप्रेरन्—ख-त-भ१; ऋजुगमनप्रेरयन्—न-भ२-३-श ॥ ६९३. १८. **मुचिः**—*मॅ । निम्रुचिः—§-मु ॥ ६९३. २०. **धनं मनवे**—*मॅ-मु । धनं मध्ये—ग-भ३; धने मध्ये—त-भ१-२ ॥ ६९३. २५. **आयुधानाम्**—

१. Preface to the 2nd Edition Vol. IV. p. 178.

ग । आसानां–मॅ-मु इतरेषु च ॥ ६९४. ९. **निम्रोचने—**मॅ । आनिम्रोचने–ख-घ-त-न-भ-श-मु; आनिचेने–ग ॥ ६९४. १७. **तद्धनम्—**§-मॅ । तद्धनमावृणीमहे संभजामः तथा हविर्जुह्वतः यागं कुर्वतो वयं हे आदित्याः तद्धनं–मु ॥ ६९४. १८. **अनशामहै—**ख-ग-त-न-भ-श-मॅ-मु । अनशामहै अश्नुयाम हे आदित्याः अदितेः पुत्रा देवा बर्हिः (? हविः) जुह्वतः अस्माभिर्दत्तं हविः स्वीकुरुत ततः धनंत्त तद्धनमावृणीमहे वयं संभजामहे–घ । एतन्मन्त्रभाष्ये कानिचिन्मन्त्रगतानि पदानि न व्याख्यातानि । मु-पुस्तके तेषां व्याख्यानं दृश्यते । 'तत् धनम्' इत्यस्यानन्तरं मु-पुस्तके 'आ वृणीमहे संभजामः । तथा हविः जुह्वतः यागं कुर्वतो वयं हे आदित्याः तद्धनं' इत्यधिकं विद्यते ॥

[ ८. २८ ] ६९४. २१. **विश्वे देवाः—**§-मु । विश्वे देवे–मॅ ॥ ६९५. १३. **निर्दिशति—**भ१-३-श-मु । निदिशति–इतरेषु मॅ-पुस्तके च ॥ ६९५. २८. **अदितेः (?)—**§-मॅ । दितेः–मु । एतदेव युक्तम् ॥ ६९५.३१. **सप्रपञ्चेन (?)—**§-मॅ-मु । 'सप्रपञ्चम्' अथवा 'प्रपञ्चेन' इति भाव्यम् ॥

[ ८. २९ ] ६९६. ५. **वैश्वदेवशस्त्रे—**§-मु । मॅ-पुस्तक एतन्नास्ति ॥ ६९६. ९. **किंचित्पदलिङ्गात् पृथक्देवताः—**ग-ञ-मु । किंचित्पदंलिंगात् (॰पदलिंगात्–भ२-३-य) पृथक् पृथक् (पृथक्–ख-त३-४) देवताः–ख-त१-२-३-४-न-भ; किंचित्पदविभागात् लिंगात् पृथक्देवताः–श । किंचित्पदं लिंगात्पृथक्देवतं (?)–मॅ ॥ ६९६. १०. **सौम्यम्—**ग-न-भ-*मॅ । सोम्यं–त-श-मु ॥ ६९६. ११. **शबलतादिषु(?)—***मॅ । सवलतादिषु–त४; सचलतादिषु–श; सर्वलतादिषु–इतरेषु मु-पुस्तके च ॥ ६९६. १२. **तावदुद्गते—***मॅ-मु । तावुदिते–ख-त३; तानुभानुपुष्टे उदक्षे–ग, ताबुउदिते–ञ-त१-२; तावुदते–त४-भ१-२; तायुदात–न; लताः पुष्यंते–भ३; तापोपनुदत्–श ॥ **दुःखोपशमनानि पुष्टानि खलु—***मॅ-मु । सर्वे स्वदुःखोपशमनेन (स्वदुःखशमनेन–य) पुष्यंति खलु–ख-ञ-त१-२-भ; सर्वदुःखोपशमनेन (सर्वस्वदुःखापशमनेन–त३-४-न) पुष्टानि खलु–ग-त३-४-न-श ॥ ६९६. १३. **रात्रयश्चन्द्रनेतृकाः—**ग-*मॅ-मु । शस्त्रयश्चंद्रनेतृकाः–त-न-भ२-श; रत्रयश्चंद्रनेत्रकाः–भ१-३ ॥ ६९६. ३१. **आवरकाणि—**मॅ । अपामावरकाणि–§-मु ॥ ६९७. १४. **यथा—***मॅ-× । मु-पुस्तकेऽप्येतन्नास्ति ॥ ६९७.१६. **तदाहृत्य—**§-मॅ-मु । 'तानि आहृत्य' इति भाव्यम् ॥ **स्वसहायेभ्यः—***मॅ । तस्य सहायेभ्यः–§-मु ॥

[ ८. ३० ] ६९८. २१. **लेटि—***मॅ-मु । लोटि–§ ॥ ६९८. २२. **लुगभावः—**न-भ-*मॅ-मु । नुगभावः–त-श; स्वभावः–ग ॥ **असतिः—**न-भ । असथेति–त-श-मॅ-मु । ६९९. १. **धनादिमन्तश्च—**भ३-*मॅ-मु । धनादिमन्त्रश्च–इतरेषु ॥ ६९९. १-२. **मानवात्......तस्मात्—***मॅ । मानवात् (मनुः–न; मानवाः–श) सर्वेषां मनुः पिता तत (तेन–श) आगतात् परावतः पिता मुहुरं (दूरं–श) मार्गे चक्रे तस्मात्–ञ-त३-४-न-श; मानवात् पित्र्यात् सर्वेषां मनुः पिता ततः आगतात् परावतः दूरात् पथः–घ । त२-भ-पुस्तकयोः 'सर्वेषाम्' इत्यस्मादनन्तरं 'मनुः' इति पदमधिकमस्ति । मु-पुस्तके–'मानवात् पित्र्यात् मनुः सर्वेषां पिता तत आगतात् परावतः पिता मनुर्दूरं मार्गे चक्रे तस्मात्' ॥ ६९९.४. **अस्मान्—***मॅ-मु । मास्मान्–§ ॥ ६९९.११. **विश्वानरः—***मॅ । वैश्वानरः–§-मु ॥ ६९९. १३. शृणाति–*मॅ । शृणोति–§-मु ॥

[ ८. ३१ ] ६९९. २८. **लेट्यडागमाः—***मॅ । लेट्यडागमौ–§ । **लेट्यडागमः**–मु । 'लेट्याडागमाः' इति भाव्यम् ॥ **ब्रह्म—**मॅ । ब्रह्मेत्–घ; इतरलिखितपुस्तकेषु एतन्नास्ति । '**ब्रह्मा**' इति

पदपाठः । एवमेव मु–पुस्तके ॥ ७००. ८-९ दीप्तिमान्...असत्—*मॅ । दीप्तिमान् ( दीप्तिमान् सन्–ग ) रथः स्यंदनः देवानां हविष्प्रदानरूपेण यज्ञेन ( यज्ञे–ग; पूजनेन–भ३ ) असत्–म-भ३-मु; दीप्तिमान् रथः असत्–घ; दीप्तिमान् शीलो स्यंदनः देवानां हविष्प्रदानरूपेण पूजायज्ञेन ( यूपयज्ञेन–त ३-न-भ१; पू॰ यज्ञेन–ञ-त२-४ ) असत्–ञ-त२-३-४-न-भ१-२-श ॥ ७००.११. येन मे रथः—*मॅ-मु । यो हेमंरथैः–ख-त-न; यागे रथै–ग; यो हेमरथः-भ; यो हैमरथे–श ॥ ७००. १२. येन—*मॅ-मु । तेन–§ ॥ ७००.१७. अहरहः—ख-त१-२-न-भ-श-मु । ग-घ-त३-४-*मॅ-पुस्तकेष्वेतन्नास्ति ॥ देवैः—ख-घ-ञ-त१-२-न भ-श-मु । ग-*मॅ-पुस्तकयोरेतन्नास्ति ॥ ७०१. ३. प्राशितव्यान्—*मॅ । प्राशन्यान्–§-मु ॥ ७०१. ५. तिष्ठेताम्—ग-घ । तिष्ठतां–भ१ । तिष्ठातां–मॅ-मु इतरेषु च ॥ ७०१. ८. न अपि—*मॅ-मु । अपि–§ ॥ ७०१.९. अपलपन्ति—मॅ-मु । अपलपति–§ । 'अपलपतः' इति भाव्यम् ॥ ७०२. ५. भवतो—ग-*मॅ-मु । भवथ–इतरेषु ॥ ७०२. ६. वर्तामह इत्यर्थः—ग-भ३-*मॅ । वर्तमिदमित्यर्थः–ख; वर्तमित्यर्थः–ञ; वर्तमिदंत्यर्थः–त२; वर्ताम इत्यर्थः–मु इतरेषु च ॥ ७०२. १०. प्रत्यागच्छतु—ग-घ । प्रतिगच्छतु–मॅ-मु इतरेषु च ॥ ७०२. २०. गोपायितारो—ख-ग-घ-ञ-त१-२-भ२-३-मु । गोपयितारो–त३-४-न-श-मॅ ॥ ७०२. ३०. क्षेत्रो—§-मॅ-मु । 'क्षेत्रम्' इति भाव्यम् । ऋ. सं. ३. ८. ७. द्रष्टव्यम् ॥ ७०३. १६. मनः—ग-घ-*मॅ । न–त-न-मु ॥ ७०४. ६. आशुगमनाश्व॰—भ३-*मॅ-मु । शीघ्रगमनाश्व॰–ग; गमनाश्व॰–ञ-त२-३-भ१-२ ॥

[ ८. ३२ ] ७०४. २४. अच्छावाकवादे—*मॅ-मु । अच्छावाको–ग; आच्छादको–त-न-भ ॥ पत्नीयजमानस्थाने—§-मॅ-मु । 'प्रत्यस्मा इत्यस्य तृचस्य स्थाने' इति भाव्यम् । 'अच्छा वो अग्निमवसे प्रत्यस्मा इति तृचयोः स्थानेऽच्छा नः शीरशोचिषं प्रति श्रुताय वो धृषदिति तृचावच्छावाकः' इति हि आश्व. श्रौ. सूत्रम् । मॅक्समुल्लरमहाशयेनाप्येवमेव संभावितम् ॥ ७०५. २. सृबिन्दं सृबिन्दनामकम् । सुविंदं सुविंदनामकं–न-भ; सुविंदं एतन्नामकं–घ । सुविंदनामकं–ख-ग-त-श-मॅ-मु ॥ ७०५. १८. नगरीमिव—§ । नगरमिव–मॅ-मु ॥ ७०६. २८. शोभनपारणश्च—ग-*मॅ-मु । शोभनपारश्च–भ३; शोभनवरणश्च–इतरेषु ॥ ७०७. १३. यज्वा ब्रह्मचारिवासी—भ३-*मॅ-तै. सं. । यद्वा ब्रह्मसूचारिवासी–ख-त; यद्वा ब्रह्मचारिवासी–न-भ१-२-श । यज्वा ब्रह्मचारीति–मु ॥ ७०८.७. बुसं तुभ्यमिति—*मॅ । बुसं तुभ्येति–भ२-३-मु । नुसः स्वधा तुभ्येति–ञ-त१-२; तुसं संतुग्धं–न; नुसः संनुग्धेति–त३-४; तुसं बुसं तुभ्येति–भ१ ॥ ७०८. २६. निम्नं देशम्—§-मु । निम्नदेशं–मॅ ॥ ७०८. २९. अध्वर्यो—घ-मु । अध्वर्यवः–मॅ इतरेषु च ॥

[ ८. ३३ ] ७१०.२२-२३. इन्द्रः...आगमत्—§-मॅ । 'आ गमः इन्द्र' इति पदपाठः । इन्द्रः...आगमः आगमत्–मु ॥ ७११. २१ अपरिवृतः—*मॅ-मु । परिवृतः–ग; आवृतः–ञ-त३; अवृतः–त१-२-४; अवृतः–न; रपवृतः–भ ॥ ७११. २२. श्रवः श्रयन्त्यस्मिन्निति—भ२-*मॅ-मु । युष शृण्वन्त्यस्मिन्निति–ग; श्रितः सन् श्रवं श्रयंत्यस्मिन्निति–ञ-त१-२; घश्रवं श्रयंत्यस्मिन्निति–त३-४; श्रवा श्रयंत्यस्मिन्निति–भ१-२; श्रवयंत्यस्मिन्निति–न ॥ ७१२. २४. वृषभिश्चाकृष्टः—*मॅ-मु । वृषाश्चाकृष्टौ–ख-त३; वृषाश्वकृष्टो–ग; वृषाश्चाकृष्टो–न-श; वृषभिः सेक्तृभिः सोमरसस्य सोतृभिः ( सेक्तृभिः–भ३ ) चाकृष्टो–भ; वृषैश्चाकृष्टो–घ ॥ ७१२. २५. वृषा—§-मॅ । 'वृषो इति' इति पदपाठः । वृषो वृषैव–मु ॥ ७१३.२४. रथस्थम्—घ-भ-श-मु । रथस्थां–ख-ग-त-

मॅ ॥ ७१४. ३. **महन्**—ग-*मॅ । महान्–मु इतरेषु च ॥ ७१४.५. **सुखतमानि**—ख-ञ-त१-२-न-भ-मु । ग-घ-त४-श-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ७१४. ९. **तव**—*मॅ-मु । ते तव–§ ॥ ७१४. १५. **प्रायोगिः**—*मॅ-मु । प्रायोगिः–§ ॥ ७१४. २३. **रथस्य**—घ । रथः–मॅ-मु इतरेषु च ॥

[ ८. ३४ ] ७१५. ९. **एन्द्र**—ञ-त३-न-भ-मु-अनु. । ऐंद्र–ग-त४-मॅ. ॥ **गायत्रः**—न-भ-मु-अनु. । गायत्र्यः–ग-त-मॅ ॥ ७१६. १. **सोमलताम्**—भ-श । सोमलता–मॅ-मु इतरेषु च ॥ ७१७. १५. **अर्य** । ' अ॒र्यः ' इति पदपाठः ॥ ७१७. १६. **स्वाहा**—ख-ग-घ-त-न-भ२-श-मु । भ१-३-मॅ एतेष्वेतन्नास्ति ॥ ७१७.२१. **उपश्रुति उपश्रुतौ**—*मॅ-मु । उपश्रुति–ग-घ; उपश्रुतेः–त-न-भ२; उप-श्रुतिश्रुतेः–भ१-३-य ॥ ७१८. १२. **वा** । एतस्मादनन्तरं ' धनानि ' इत्यावश्यकमिति मॅक्समुल्लरमहा-शयः मन्यते ॥ ७१९.१. **तेषु**—मॅ । तेषु तेषु -ग; तेष्वेषु–इतरलिखितपुस्तकेषु । तेष्वश्वेषु–मु ॥ ७१९. २. **तिष्ठम् इति**—*मॅ-मु । तिष्ठति–ख-त-न-भ१-२-श; तिष्ठदिति–ग; तिष्ठं–घ; तिष्ठंति–भ३ ॥

[ ८.३५ ] ७१९. ५. **औपरिष्टाज्ज्योतिषम्**—त२-४-मॅ । उपरिष्टा°–ञ-श-मु; ओपरिष्टा°–न-भ । औपरिष्टाज्ज्यौतिषम्–अनु. ॥ ७१९. ८. **अप्तोर्यामे**—भ३ । ऋ. सं. ५. ७६. सूक्तप्रस्ता-वनायां द्रष्टव्यम् । अश्विनोर्यामे–त-न-भ१-श-मॅ-मु । अश्विनोर्ध्वे–ग; अश्विनोर्यागे–भ२; 'अप्तोर्यामे ' इति स्यादिति मॅक्समुल्लरमहाशयेन संभावितम् ॥ **होतुरतिरिक्तोक्थे**—न । °रिक्तोक्थ्ये–मॅ-मु इतरेषु च । ऋ. सं. ५. ७६. सूक्तप्रस्तावनायां ' °रिक्तोक्थ्ये ' इत्यस्य स्थाने ' °रिक्तोक्थे ' इति पठनीयम् ॥ ७१९. १५. **सजोषसा** । ' स॒ऽजोषसौ ' इति पदपाठः ॥ ७२०.५-६. **विश्वा सवना सर्वाणि**—घ-न-भ३-मु । विश्वा विश्वानि–भ२ । विश्वा सर्वाणि–मॅ ॥ ७२०. २५. **वाः वनम्**—ख-त-न-भ-श । वा वनं (?)–मॅ-मु ॥ ७२१. ११. **गगनम्**—घ-मु । वेगेन–ग; वागमन–ख-त-श । गगणं–*मॅ । ७२२.९. **मित्रावरुणवन्ता**—§-मॅ । 'मि॒त्रावरु॑णऽवन्तौ' इति पदपाठः । मित्रावरुणवन्तौ–मु ॥ **धर्मवन्ता**—घ-श-मु । धर्मवंतौ–मॅ इतरेषु च ॥ ७२३. १९. **सोमाभिषवम्**—§-मु । अभिषवं–मॅ ॥ ७२४. २०. शतपथब्राह्मणे ' **सह** ' नास्ति । ७२४. २१. **एव यत्**—श. ब्रा. मॅ-× । मु-पुस्तकेऽप्येतन्नास्ति ॥ ७२४. २८. **तृम्पतं तृप्यतम्**—मु । तृप्यतां–ख-ञ-त३-४-न-भ१-३; तृप्यतः–ग; तृंपतं तृप्यतां–घ; तृप्यतं–त१-२-भ२-य-श ॥

[ ८. ३६ ] ७२५.१३. **अन्यासु**—*मॅ-तै. सं. । अन्यान्यासु–ग; अन्या–त-भ । अन्य–मु ॥ ७२५. २२. **रक्ष**—ग-*मॅ-मु । रक्षसि–घ-त-न-भ२ ॥ ७२६. २७. **प्राविथ**—भ३-*मॅ-मु । प्रत्रस्यमाविथ–ख-त२-३-४-न-भ१-२; माविथ–ग; पुरुकुत्सपुत्रं प्राविथ रक्षिथ–घ-ञ-त१; पुत्रं त्वमाविथ–श ॥

[ ८. ३७ ] ७२७.१. **महाव्रते निष्केवल्य एतत्सूक्तम्** । ' प्रेदं ब्रह्मेन्द्रो मदाय सत्रा मदास इति निष्केवल्यम् ' इति आश्व. श्रौ. सूत्रानुसारेण ' पृष्ठ्यस्य पञ्चमेऽहनि निष्केवल्य एतत्सूक्तम् ' इति भाव्यमिति प्रतिभाति । मॅक्समुल्लरमहाशयेनाप्येवमेव संभावितम् ॥ ७२७. ८. **प्ररक्ष**–न-भ-मॅ-मु । प्ररक्षः–घ; रक्ष–त२-श । ' प्रारक्षः ' इति स्यादिति मॅक्समुल्लरमहाशयः ॥ ७२७. २१. **अस्य भुवनस्य**—ग-घ-भ१-३-मु । स्य भुवनस्य–इतरेषु । भुवनस्य–मॅ ॥

[ ८. ३८ ] ७२८. २३. **°स्तोत्रियसंज्ञकस्तृचः**—*मॅ-मु । °स्तोत्रियसंज्ञक–त-भ ॥ ७२८. २५. **प्रातःसवनीयस्य**—*मॅ-मु । प्रातःसवनीय–ग-त४-भ२; प्रातःसवन–ञ-त२-भ३;

प्रातःसवनि–भ१ ॥ ७२९.१. स्थः । अस्मादनन्तरं 'क्रतौ कालेकाले यष्टव्यौ ' इति श-भ२-य-पुस्तकेष्वधिकं विद्यते ॥ भवथो हि—§-मु । भवथः–मॅ ॥ ७२९. २. युद्धेषु कर्मसु—श-त१-२-भ२-य। कर्मसु युद्धेषु–ग-त४-मॅ-मु ॥ चोपतिष्ठन्तौ—ख-ग-श-त३-४-न । यज्ञादिषु बोपतिष्ठंतौ–त१-२-भ२। बोपतिष्ठंतौ–मॅ-मु ॥

[ ८. ३९ ] ८३०. ३०. अभिगच्छन्तः—मॅ। अभिगच्छन्त (?)–मु । गच्छतः–ग; अभिच्छतः–घ; अभिगच्छतः–त-न-भ१; अभिगच्छत–भ२; अभिगच्छता–भ३ ॥ ७३१.२५-२६. अभीवृतः परिवृतः—घ-मु । आवृतः–त१; आवृतः परिवृतः–इतरेषु। अभीवृतः–मॅ ॥ ७३३. ६. इरज्यसि ईशिषे—मॅ-मु। राजासि–घ; राजासाशिषे–त३-४-न; राजासशिषे–ग; राजामाशिषे–श-त२; राजासीशिषे–भ ॥

[ ८. ४० ] ७३३. ११. ऊरुभाग—*मॅ-मु। उरुभाग–ग; ऊरुभाग–श-त२; उरुभीग–त३-४-भ२; उरुभिग–भ१; ऊरुणि–भ३ ॥ एतत्—ग-न-भ-श। एव–मॅ-मु इतरेषु च ॥ ७३३. १३. आरम्भणीयाभ्यः—भ३-*मॅ-मु। आरंभणीयारभ्य–इतरेषु ॥ ७३३. २६. सहिषीमहि—ख-त-न-भ-मु। साहिषीमहि–श। सह्नीषिमहि–घ-मॅ ॥ ७३४. २०. नाभाक नभाकवत्—*मॅ। नाभाक नभाकवत् नमाकवंतौ–मु। नाभाक नभावंतौ–ख; नाभाकवंतौ–ग-श; नभाकवत् नभाकवंतौ–घ; नाभाक नभाकवंतौ–त-न-भ ॥ ७३४. २८. प्र इरज्यत—मॅ-मु। इरज्यत–§ ॥ ७३५. ५. वल्ल्याः—*मॅ। बल्याः–घ; तमाया–ख-त-न-भ१-२-श; लताया–ग-भ३ ॥ गुष्पितम्—घ-त-न-भ२-*मॅ-मु। गुल्पितं–ग; पुष्पितां–भ१-३ ॥ ७३५. ६. ओजः—मॅ--मु-× ॥ ७३५. १५. अस्माकीनैः—§-मॅ-मु। 'आस्माकीनैः' इति भाव्यम् ॥ ७३६. १. हरिवः वज्रिन् ? ॥ ७३६. ३. पूर्वीः......अन्यत्—*मॅ। पूर्वी वयः प्रज्ञां साधंतां साधयन् सिद्धमन्यत्–ख-त-न-भ१-२-श; पूर्वी धियः प्रज्ञां सधंति साधन् सिद्धमन्यत्–ग; पूर्वीः बह्वयः प्रज्ञाः नः याः धियः अस्मद्बुद्धयः नु क्षिप्रं साधंत साधयंतु–घ; पूर्वीः बह्वयः धियः प्रज्ञाः साधंतासाधयन् सिद्धमन्यत्–भ३। पूर्वीः याः नोऽस्माकं धियः प्रज्ञां नु क्षिप्रं साधंतासाधयन् सिद्धमन्यत्–मु ॥ ७३६. २०. आण्डा—मॅ-×। मु-पुस्तकेऽप्येतन्नास्ति ॥

[ ८. ४१ ] ७३७. ११. मरुद्वृधश्च—ग-श-भ३-*मॅ-मु। मरुद्धिश्च–त३-४-भ२ ॥ ७३७. १९. समानया—मॅ-मु। समान्या–§ ॥ ७३७. २१. समीपे यः—*मॅ। समीपे–§-मु ॥ ७३७. २३. समानया—मॅ-मु। समान्या–§ ॥ ७३८. १३. रक्षिता—भ२-३-*मॅ-मु। रक्षति–ग-घ-श-त१-२; ररक्षति–त३-४; रराक्षिता–भ१ ॥ ७३९. ८ - - - त्परिमृशतः......पुरस्तात्—त३-४-भ१-३-श-मॅ। यः वरुणः आसु दिक्षु अत्कः व्याप्तः सन् आशये जागृतो बर्तते यः वरुणः एषां शत्रूणां विश्वा सर्वाणि परिजातानि परितो भूतानि धामानि पुराणि मर्मृशत् विनाशयत् अस्य वरुणस्य पुरोगये रथस्य पुरस्तात्–ख-घ-श-त१-२-भ२। यः वरुणः आसु दिक्षु अत्कः व्याप्तः सन् आशये जागृतो वर्तते यः वरुणः एषां शत्रूणां विश्वा सर्वाणि परिजातानि परितो भूतानि धामानि पुराणि मर्मृशत् परिमृशतो वरुणस्य पुरोगये रथस्य पुरस्तात् भवति तस्य वरुणस्य पुरस्तात्–मु। परिमर्मृशत् परिमृशतो–न ॥ ७३९. २५. अन्तरिक्षेऽधिवसतः—*मॅ-मु। अंतरिक्षेध्विबश्रुतः–§ ॥ ७३९. २६. भूमीः......पप्रतुः—*मॅ-मु। भूमी( °मि–त१-भ३ )रधिरिथता पप्रतुः–त-भ३;

भूमी( °मि–भ१ )रथस्थिता पप्रतुः–भ१-२; भूमीः द्यौरंतरिक्षभूमीः–घ ॥ ७४०. १. **अधिऽनिर्निजः** । भाष्यकारः ‘ अधि ’, ‘ निर्णिजः ’ इति भिन्ने पदे कृत्वा व्याख्यातवान् ॥ ७४०. ७. **ऽथधारयत्**—ख-घ-त-न-भ-मु । अधारयत्–श-मॅ ॥

[ ८. ४२ ] ७४२. १२. **ऐकादशिनाः**–श-भ२-*मॅ-आश्व. श्रौ. । एकादशिनः–त२-३-मु । एकादशिनाः–ग ॥ ७४०. १६. **देवेति**–ग-श-*मॅ-मु-आश्व. श्रौ. । इतरलिखितपुस्तकेषु नास्ति ॥ ७४०. ३०. **गोपायितारम्**–घ-श-त१-२-३-भ१-२-मु । गोपयितारं–ग-त४-भ३-मॅ ॥ ७४१. ८. **बलम्**—ख-श-त१-२-न-भ-मु । ग-घ-त३-श-मॅ-पुस्तकेषु नास्ति ॥

[ ८. ४३ ] ७४२.४. **कारीर्यवभृथेष्ट्योः**—मॅ । कारीर्यावभृथेष्टयोः–ख-ग-त१-न-भ१-२-श; कारीर्यावभृथेष्टयाः–त३-मु ॥ ७४२. ५. **आज्यभागौ**—§-मॅ-मु । आश्व. श्रौ. सूत्र एतन्नास्ति ॥ ७४२. २६. **बप्सति भक्षयन्ति**—*मॅ-मु । बप्सति भक्षयति–घ; बप्संति भक्षयंति–त-भ ॥ ७४२. ३०. **पृथगित्येव**—श-भ२-३-*मॅ-मु । पृथगिति–ग; पृथिगितोव–त२; पृथगितोर्वे–त४; बृथगित्येव–भ१ । वाजसनेयिसंहितायां वेबरमहाशयमुद्रितपुस्तके निर्णयसागरमुद्रितपुस्तके च ‘ बृथक् ’ इत्येव पाठो दृश्यते ॥ ७४३. २. **अग्निहोत्रिभिः**—§-मु । अग्निहोतृभिः–मॅ ॥ ७४३. १०. **क्षुत् धासि**—त-न-भ-मॅ । क्षु धासिः–श-मु-नि. ॥ ७४४.२. **सोमघृतपृष्ठाय**—घ-*मॅ-मु । सोमघृते पृष्ठाय–त-न-भ; सोमसिक्तद्रुते पृष्ठाय यद्वा सोमयुक्तानि पृष्ठस्तोत्राणि यस्यासौ सोमपृष्ठ अनेकस्तोतृभिर्तसोमान्न इत्यर्थः–ग ॥ ७४३. ११ **अङ्गिरस्वत्**—§-मु । मॅ-पुस्तक एतन्नास्ति ॥ ७४५. १५. **प्रभु प्रभुः**—ग-भ२-३-मॅ-मु । अनुप्रभुः प्रभुप्रभुः–घ; प्रभुः–न । ‘ प्रभुः ’ इति सविसर्गः संहितापाठः । ‘सुलोपश्छान्दसः’ इति भाष्यकारेणोक्तं तच्चिन्त्यम् ॥ ७४५. १६. **अनु**—*मॅ-मु-× ॥ ७४६. २. **यमिमम्**—ख-घ-त-न-भ-श । यं–ग । इमं–मॅ-मु ॥ **सर्वदा**—मॅ-मु । सर्वहा–§ ॥ ७४६. १९. **सहस्कृतः**—§-मॅ । ‘सहःऽकृत’ इति पदपाठः । सहस्कृत–मु ॥ ७४६. २७. **अहा**—मॅ-मु-× ॥ ७४६. २८. **गाहयितव्यानि**—*मॅ-मु । गाहितव्यानि–भ३; ग्राहयितव्यानि–इतरेषु ॥ ७४७. ८. **दीप्तिधनः**—ख-न-भ२-श । दीप्तधनः–ग; दीप्तिचनः–त । दीप्तिरोचनः–घ-मॅ-मु ॥

[ ८. ४४ ] ७४९.३. **ज्वलद्दीप्ते**—मु । उज्ज्वलदीते–ग; ज्वाल्दीते–न; ज्वलदीते–मॅ इतरेषु च । ऋ. सं. ८. २३. २३. द्रष्टव्यम् । ‘ज्वलद्दीप्ते’ इति स्यादिति मॅक्समुल्लरमहाशयः ॥ ७४९. ८. **पताका°**—ग-घ । पताक°–त-न-भ-मॅ-मु । ऋ. सं. १०. १. ५. द्रष्टव्यम् ॥ ७४९. १६. **ववृधे** §-मु । वावृधे–मॅ ॥ ७५०. ७. **ते तव**—§-मॅ । ‘ तवे ’ इत्येव पदपाठः । तव–मु ॥ ७५०. १७ **वर्धयन्तु**—*मॅ-मु । वर्धयंति–§ ॥ ७५०. २०. **अग्ने**–§-मॅ-मु । ‘ अग्नेः ’ इति पदपाठः ॥ ७५०. २९. **वर्धयन्तु**—*मॅ-मु । वर्धयंति–§ ॥ ७५१. १० **अनुग्रहबुद्धौ**—मॅ । अनुग्रहबुद्धौ सुष्टुतौ कं सुखं यथा तथा–घ; अनुग्रहबुद्धौ सुष्टुतौ–इतरेषु मु-पुस्तके च ॥ ७५१. २७. **तं सुखय वा**—*मॅ-मु । सुखय वा–ग; तं सुखय–श; तसुय व–त१-२-३; तसुय वा–त४-न-भ ॥ ७५२. २. **द्यवि**—मॅ-मु । सदिवि–घ; दिवि–त-न-भ ॥

[ ८. ४५ ] ७५२. १५. **इति स्तोत्रम्**—§-*मॅ-मु । आश्व. श्रौ. सूत्र एतन्नास्ति ॥ ७५२. १६. **°तिरिक्तोक्थे** । °तिरिक्तोक्थ्ये–§-मॅ-मु ॥ ७५४. १६. **भक्तारम्**—*मॅ-मु । भोक्तारं–ख-घ-त-न-भ; भेत्तारं–ग-श ॥ ७५६. १५. **प्रेरितवान्**—भ-*मॅ-मु । प्रेरयितवान्–इतरेषु ॥ ७५७. ५.

**बुर्बुरमिति**—*मॅ-मु । बुबुरेति—ग-त४-न-भ१-२; बुर्बुरेति—भ३; बुधुरिति—श-त१-२-३ ॥ ७५७.१८. **प्रयच्छस्येव**—मॅ-मु । प्रगच्छस्येव—§ ॥ **नाकार्षीः**—*मॅ-मु । माकार्षीः—§ ॥ ७५८. ३. **भूरिषु**—घ-न-भ । मूरिष्वपि—मॅ-मु इतरेषु च ॥ **असंख्यातेष्वपि**—ख-ग-त-न-भ-श-मु । ०ष्वति—घ । असंख्यातेषु—मॅ ॥ ७५९. ७. **हिंधि अतः**—*मॅ । हिंस च—मु । हिंसि अतः—ख-ञ-त१-२-३-श; हतान् कुरु—ग; हिंस्य—घ; विस्यतः—त४; हिंस्याः—न-भ१-३ ॥ ७५९. १३. **विमर्शनक्षमे**—न-*मॅ-मु । विमर्शके राक्षसे—ग; विमर्शकेनक्षमे—घ-त-भ ॥

[ ८. ४६. ] ७६०. ४. **अष्टाक्षरा**—*मॅ । अष्टाक्षरवती—ख-ग-त-न-भ-मु; द्वादशाक्षरवती-घ ॥ **द्वितीयचतुर्थयोः**—ख-ञ-भ-*मॅ-मु । द्वितीयतृतीययोः—ग-घ-त-न ॥ ७६०. १०. **नवका... पदा** । 'युजावष्टकावयुजौ नवैकादशिनौ बृहती विषमपदा' इत्यनुक्रमणीपरिभाषा । 'नवकाष्टकैकादशाष्टिनो विषमपदा' इति वा. सं. सर्वानुक्रमण्याम् ॥ ७६१.८. **कमित्याह**—§-मॅ-मु । 'क इत्याह' इति भाष्यम् ॥ ७६१. २५. **सर्वा रक्षणाः**—§-मॅ-मु । ? ॥ ७६१. २६. **सुतम्**—§-मु । सुतमभिसुतं—मॅ ॥ ७६२. ११. **यः तव** । पूर्वमन्त्रोक्तो मदशब्दो विशेष्यत्वेनाध्याहर्तव्यः ॥ ७६२. १२. **स त्वम्** । तादृशमदयुक्तस्त्वमित्यर्थः ॥ ७६२. १८. **यथास्माकम्**—मॅ-मु । यथास्माकं यागं—§ ॥ ७६३. २२. **मह्यम्**—§-मॅ-मु । ममेत्यर्थः ॥ ७६३. २३. **अद्य**—मॅ । 'अर्थ' इति पदपाठः । अथाति चित्—मु ॥ ७६३. २५. **लिङ्भावात्**—§-मॅ-मु । 'लिङ्वद्भावात्' इति भाष्यमिति मॅक्समुल्लरमहाशयः अभिप्रैति ॥ ७६४.२. **स्तुवत इति**—§ । स्तुवंत इति—मॅ-मु ॥ ७६४.३. **अद्यापीदानीमपि** । 'अर्ति अर्थ' इति पदपाठः । अथाति चित्—मु ॥ ७६४.११. **वा**—ग२-*मॅ-मु । इतरलिखितपुस्तकेषु 'वा' नास्ति ॥ ७६५.७. **चेतयितः**—मॅ-मु । चेतितः—§ ॥ ७६५.८. **वा**—ग-भ-*मॅ-मु । त्वा—ख-त-न-श ॥ ७६५.१५. **वशायाश्व्याय**—*मॅ-मु । वशायास्याय—ग; वशायाख्याय—इतरेषु ॥ **कानीतस्तु**—न-भ१-३-*मॅ-मु-बृहदे. । कानीतस्त—ग; कानीतस्य—इतरेषु ॥ बृहद्देवतायां 'स्तूयते' इत्यस्य स्थाने 'संस्तुतं', 'एत्वेव' इत्यस्य स्थाने 'इत्येव' इति च पाठो दृश्यते ॥ ७६५. २०. **कनीतपुत्रे**—भ-*मॅ । कानीतपुत्रे—घ-न-मु । कानीते पुत्रे—ख-त; पुत्रे—श; कानीतेषु पुत्र—ग ॥ ७६६.२२. **तदुच्यते**—ख-त-श । चेदुच्यते—ग-न-भ-मॅ-मु ॥ ७६७.१३. **अन्वशात्**—ख-भ-*मॅ-मु । अप्सान्—ग; अन्वशान्—ञ-त२; अन्वप्सान्—त३-४-न; अन्वस्यान्—श ॥ ७६८. २५. **योज्यम्**—भ२-३-श-*मॅ । योजनया—ग; योज्य—ख-त-न-भ१-मु ॥

[ ८. ४७. ] ७६८. २९. **लैङ्गिकः**—*मॅ-मु-× ॥ ७६९. १९. **अधि** । एतन्मन्त्रे नास्ति ॥ ७७०. १२. **अघा**—ख-ञ-त१-२-भ-श-मु । ग-घ-त३-४-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ७७०. १३. **अवटधिष्ण्यादिकान्**—*मॅ-मु । अवद्दधि°—ख-त३-४-न-भ२; अवदधि°—ञ-भ१-३; अवनधि°—ग; धिष्ण्यादिकान्—श ॥ ७७०. २०. **आशवः**—§-मॅ-मु । 'आशु वः' इति भिन्नः पदपाठः ॥ **यम्**—ग-*मॅ-मु । इतरेषु नास्ति ॥ ७७०. २८. **प्रवृद्धम्**—*मॅ-मु । अप्रवृद्धं—ख-त-न-भ२-श; अतिप्रवृद्धः—ग; आभिप्रवृद्धं—घ ॥ **अपरिहारार्हम्**—*मॅ-मु । अपरिहारार्थं—ख-घ-त-भ१-श; अपरिहार्यं—ग-न-य ॥ **कस्य**—*मॅ-मु । यस्य—§ ॥ ७७२. २८. **°शेषेण**—*मॅ-मु । शेषे—§ ॥ **उपतिष्ठेत**—§-मु । उपतिष्ठेत्—मॅ ॥ ७७२. २९. **उपतिष्ठेत**—ञ-न-भ१-श-मु-आश्व. गृ. । उपतिष्ठेत्—ख-त२-३-४-भ३-मॅ ॥ ७७३. १८. **दुःस्वप्नम्**—ख-त-न-भ-श । दुःष्वप्न्यं—ग; दुःष्वप्नं—घ;

स्वप्नं–मु । दु:स्वप्न्यं–मॅ ॥ ७७३. २६. **यदेव**—*मॅ-मु । तं देव–न; तदेव–इतरेषु ॥ ७७३. २७. **भोक्त्रे**—*मॅ-मु । भोक्तुः–§ ॥ **तदपसे यदेवापः**—*मॅ-मु । तदपसे देवापः–ख-ग-त-भ१-२-श; दपसे तदेवापः–घ; तदपसे वदेवापः–न; तदपसे तदेवपः–भ३ ॥ ७७४. २. **अनुभूतवत्**—ख-ग-त-भ-श । अवुभूतं च–न । अनुरूपवत्–मॅ-मु ॥ ७७४. ८. **संज्ञपितम्**—ख-ग-त-न-भ । संज्ञापितं–श-मॅ-मु ॥ **संदाय**—श-*मॅ-मु । समादाय–ग; दानाय–भ३; सदाय–इतरेषु ॥ ७७४. १८. **स्मः**—न-भ२ । स्म–मॅ-मु इतरेषु च ॥

[ ८. ४८ ] ७७५. २२. ततः—*मॅ-मु । त्वातामृभा–ख-त२-३-४; पीत्वा–ग; त्वत्तः–घ१; इतः–च; त्वामाभृन्ना–न; त्वावामृभा–भ१; त्वमाः–भ३; त्वां पीत्वा–श ॥ ७७६. ३. **सखा स स्वसख्ये**—त-न-भ१-२ । सखाय स्वसख्य–ख; सखा स्वसख्ये–ग-श; सख सख्ये–भ३ । सखायं स्वसख्ये–मॅ-मु ॥ ७७६. ११. **बभ्र्यः**—*मॅ । बभ्वः–ख-त-श-मु; बध्यः–ग; बभ्वः–घ; बभ्वाः–न-भ ॥ ७७७. ८. **स्मः**—न-भ । स्म–मॅ-मु इतरेषु च । ऋ. सं. ८. ४६. १. द्रष्टव्यम् ॥ ७७८. ४. **अत्रसन् प्राप्नुवन्**—मॅ-मु । अत्रसन् प्राप्तवान्–ख-ग-श-त२; अत्रसन्–घ; अरमं प्राप्तवान्–त३-४; अरन्–भ१-३; अरमन् प्राप्तवान्–भ२; अरमन् प्रापूर्वन्–श ॥ ७७८. ५. **यस्मात्**—ग-*मॅ-मु । तस्मात्–इतरलिखितपुस्तकेषु ॥ ७७८. १७. **सौम्यस्य**—§-मु । सोमस्य–मॅ ॥ ७७८. ३१. **निद्राः**—घ-मॅ । निद्रा–ख-ग-भ-श-मु । निंद्रा–त-न । ‘ नुिऽद्रा ’ इति पदपाठः ॥

[ ८. ५८ ] ८०२. १३. **यमृत्विज...स्तुतिर्वा**—मॅकडोनल्मुद्रितपुस्तक एतन्न दृश्यते । वैदिकास्त्वेतत्पठन्ति ॥

[ ८. ६० ] ८०६. १९. **प्रदीप्तकेश°**—ग-श-भ-मु । प्रदीप्तकलश°–मॅ इतरेषु च ॥ ८०७. २७ **तेजो वा** । अत्र किमपि गलितं प्रतिभाति । ऋ. सं. २. १. ५. भाष्ये ‘ मित्रमहः ’ इत्यस्य ‘ हितकारितेजः ’ इति व्याख्यानं कृतमस्ति ॥ ८०८. १२. **ऋचा गिरा**—§-मॅ-मु । ‘ गिरा ऋचा ’ इति साधु इति मॅक्समुल्लरमहाशयः ॥ ८०८. २८. **माति नो**—ग-*मॅ-मु । माननितिनि–ख; मातिर्नो–घ; माततितिर्नो–त-भ२-श; मातीतिर्नो–भ१-३॥ ८०९. ८. **तद्धनम्**—ग-श-*मॅ-मु । त धन–भ१; तं धनं–इतरेषु ॥ **कर्मधन**—§-मु । कर्म धनं–मॅ ॥ ८१०. १९. **हे यजमानाः**—ग-च-*मॅ-मु । गेहे यजमानाः–ख-घ१-त-भ३-श; गेह यजमानाः–भ१; ग्रहे यजमानाः–भ२ ॥ ८११. १९. **यातना**—ग-*मॅ-मु । याना–ख-त-न-श; याता–भ ॥ ८११. २१. **बाह्यानि**—घ-त-न-भ१-मु । बाह्यनि–ख-ग-भ२-मॅ ॥ **च न**—*मॅ-मु । च–ख-ग-त-न-भ१-२-श; न–घ; मा–भ३ ॥

[ ८. ६१ ] ८११. २३ **प्रागाथस्य**—मॅ-मु । प्रगाथः–घ; प्रगाथस्य–इतरेषु ॥ ८११. २८-३०. **चातुर्विंशिकेऽहनि......पुरूवसो इति**—ग-त-न-भ२-श-मु । ‘ चातुर्विंशिकेहनि... शृणवच्च न इति ’ इत्यंशः ख-पुस्तके नास्ति । चातुर्विंशिकेऽहनि निष्केवल्य उभयमिति बृहत्साम-प्रगाथः । तथा च सूत्रितं । उभयं शृणवच्च न आ वृषस्व पुरूवसो । आ. ७. ४ । इति–मॅ ॥ ८१२. १२. **जगदुपकारिकायाः** । जगदुपकारकस्य–ख-त-न-भ-श-मु; जगदुपकारक–ग । जगदुपकारकायाः (?)–*मॅ ॥ ८०३. १. **भवति**—§-मॅ-मु । ‘ भवतु ’ इति स्यादिति मॅक्समुल्लरमहाशयः ॥ ८१३. १६. **पौरः**—ग-भ-*मॅ-मु । पुरुकृत्–ख-घ-श-त१-२; पुर–त३; पूरयि–त४; पूरः–न; पुरयि –श ॥ ८१३. २२. **बृहतः**—*मॅ-ऐ.आ. । बृहत्–ख-ग-त-भ२-मु; बृहत–श-न-भ१-३-श ॥

८१४. २६. **जल्हव:** । एवं संहितायां पदपाठे सर्वेषु भाष्यलिखितपुस्तकेषु च । मॅक्समुल्लरमहाशयः सर्वत्र 'जळ्हवः' इति पठति ॥ ८१५.२. **अरायाः**—§-मॅ-मु (!) । 'अरायः' इति भाष्यम् ॥ ८१५. १४. **वेद्**—*मॅ । देवः वेद-ख-ग-घ-ज्ञ-मु; देवः-त१-३-४-न-भ२-श; वेदः-भ१; वेदा-भ३ ॥ ८१६. ४. **आह्वयामः**—ख-घ-ज्ञ-त३-भ । आह्वयाम-ग-त२-४-न-श-मॅ-मु ॥ ८१६. १७. **पश्चात् पश्चाद्भागात्**—*मॅ-मु । पश्चाद्भागो-ख-घ-ज्ञ-त२-३-४-न-भ१-२; पश्चाद्भागे-ग-भ-३-य; पश्चाद्भागात्-त१॥ **पूर्वभागात्**—*मॅ-मु । पूर्वभागः-ख-ग-भ१-२; पूर्वो भागो-घ-त-न-श; पूर्वभागे-भ३-य ॥ **अधोभागात्**—*मॅ-मु । अधोभागः-ख-घ-भ१; अधोभाग-ग-त-न-भ२; अधोभागे-भ३-य ॥ ८१६. २०. **आसुराणि**—*मॅ-मु । आसुरीः-§ ॥ ८१६. २७. **रक्षसि ( रक्ष वा )**—*मॅ-मु । क्षत्रास्वसि-ख-त-न-भ१-२-श; त्रासयसि-ग; त्रास्व-भ३ ॥

[ ८. ६२ ] ८१७. ८. **सप्तम्याद्याश्च**—ख-त-न-भ१-३-मॅ । सतम्याद्याः-ग-भ२-श-मु-अनु. ॥ ८१८. १. **चिदर्वता**—*मॅ-मु । चार्वता-ग-घ-त-श; बार्वता-न-भ१-२; नार्वता-भ३ ॥ ८१८. २३. **दृष्ट्वा**—*मॅ-मु । गत्य-ख-ग-घ-न-श; अवगत्य-भ ॥ ८१८. २६. **अवेक्षितम्**—*मॅ-मु । अवक्षितं-न; अवेक्षितुं-इतरेषु ॥

[ ८. ६३ ] ८२०.२६. **आनजिः**—मॅ-मु । नजिः-§ । (?) ऋ. सं. १.१०२.१; १६१. ४. भाष्ये 'आनजे' इत्यस्य प्रक्रिया द्रष्टव्या ॥ ८२१. ५. **उपायज्ञः**—भ२-३-*मॅ-मु । उपायचास्मैशः-ख-न; उपायचास्मैशः-त२-३-४-श; अनुष्ठेयवरतैश-ग; उपायाद्र-भ१ ॥ ८२१. ६. **अपवारितवान्**—ग२-*मॅ-मु । ऊवारितवान्-ख-त३; अपावारितवान्-ग१; उत्वारितवान्-ज्ञ-त२-४; उपवारितवान्-भ१-२; अपवारितान्-भ३; उच्चारितवान्-श ॥ ८२१. १३. **गन्तु**—ख-घ-ज्ञ-त१-२-न-भ-मु । ग-त३-४-श-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ८२१.१८. **स्वाहावरस्य** । 'स्वाहा । वरस्य' इति पदपाठः । भाष्यकार एकपदं चकारेति स्पष्टम् । स्वाहा वरस्य-मॅ । ८२२. १४. **लब्धे लब्धव्ये**—*मॅ । लब्धेव्ये-ख-त-भ३-श; लब्धेव्य-ग; लब्धे-घ; लब्धव्ये-भ१-२-मु ॥ **अस्मानिति पूरणः**—§-मॅ-मु । ? ॥

[ ८.६४ ] ८२३. १९. **तव**—ग-*मॅ-मु । स तव-ख-त-न-भ; सदशः-श ॥ ८२४.१३. **त्वा त्वाम्**—ख-ग-त२-३-न-भ२-३-मॅ । 'तम्' इति पदपाठः । तमिंद्रं-मु ॥ ८२५.८. **अधिश्रितः** । 'अधि श्रियः' इति पदपाठः ॥ ८२५. ११. **अभिषुतः तम्**—ग । अभिषुतं-मॅ-मु इतरेषु च ॥

[ ८. ६५ ] ८२५. २७. **°निष्यन्दनस्थाने**—मॅ । °निस्यंदने स्थाने-ख-त; °निष्यंदिनि स्थाने-ग; °निष्यंदने स्थाने-घ-न-भ; °निष्पंदस्थाने-श । °निस्पंदने स्थाने-मु ॥ ८२७. १९. **इन्द्रे प्रीत इत्यर्थः**—*मॅ । इंद्रः प्रीत इत्यर्थः-§-मु ॥

[ ८. ६६ ] ८२७. २५. **अयं प्रगाथः**—*मॅ । प्रगाथौ-त१-२; प्रगाथः-मु इतरेषु च ॥ ८२८. १६. **यः**—*मॅ-मु-X ॥ ८२८. २३. **प्रक्षालितोऽश्वः**—मॅ-मु । प्रक्षाळिताश्वः-§ ॥ ८२८. २४. **व ‐ ‐ ‐**-त-न-भ३-मॅ । ग-भ२-श-पुस्तकेष्वेतन्नास्ति । जातमिति च-मु । '**बचनात्**' अथवा 'च व्युत्पत्तिः' इति स्यादिति मॅक्समुल्लरमहाशयः संभावयति ॥ ८२८. २६. **अपवरणीयम्**—§-मॅ-मु । अस्मादनन्तरं 'व्रजम्' इत्येतादृशं पदमावश्यकमिति मॅक्समुल्लरमहाशयस्याभिप्रायः ॥ ८२९. १. **पुरुऽसंभृतम्** । भाष्यकारः 'पुरु' 'संभृतम्' इति भिन्ने पदे कृत्वा व्याख्यातवान् ॥

८२९.६. **प्रकामयते**—§ । कामयते–मॅ-मु ॥ ८२९. १२. **अचीकमथाः**—मॅ । अचीकमाः—ग; अचीकमथ–मु इतरेषु च ॥ ८२९.२९. **हरत**—*मॅ-मु । हर–घ-भ२; हरवाम–त१; हरवा–इतरेषु ॥ ८३०. ७. **अस्येति**—§-मु । स्येति–मॅ (मुद्रणदोषः ?)॥ **वृकोऽपि**—*मॅ-मु । क्रूरोपि च–ख-ज्ञ-त१-२-भ; कोपि–ग; कृपि–त४-न ॥ ८३०. १६. **किं नु**—ग-न-भ१-२ । किंतु–मॅ-मु इतरेषु च ॥ **अनाचरितम्**—ग । अनामचरितं–ज्ञ-त२-४; आनाचरितं–भ । अनाचारितं–मॅ-मु ॥ ८३०. २०-२१. **वृत्रहेत्येतत्पुंस्त्व°**—ग-न-भ । वृत्रहत्येतत्पुंस्त्व°–ख-त-श । **वृत्रहत्यं तत्पुंस्त्व°**–मॅ-मु ॥ **°प्रदर्शनद्योतनाय**—ग-भ-श । °प्रदर्शनाद्योतनाय–त-न-मॅ-मु ॥ ८३०. २६. **महीः–महान्ति**—ख-घ-ज्ञ-त२-मु । महीः–त१; मही महांति–न । ग-त३-४-भ-श-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ८३०. २८. ------**व्यहं अभवदि°**—ज्ञ-त३-न-भ२ । ------व्यहंत्र्यभवदि°–ख-ग-त१-२-४-भ१; .न कदाचिदित्यर्थः–श-मु । ------व्ययंहं अभवदि°–मॅ । मॅक्समुल्लरमहाशयस्य अयं पाठः C 2, C 4 लिखितपुस्तकयोरुपलब्धः । 'न कदाचिदित्यभिप्रायः। सर्वं हंतव्यं हतमभवदित्यर्थः' इति स्यादिति मॅक्समुल्लरमहाशयः संभावयति ॥ ८३१. २-३. **दातव्य---नयेन**—ख-त-न-भ१-२-श-मॅ । दातव्यौ नयेन–ग-मु; दातव्यमिति येन–भ३ । 'दातव्यावित्येवमभिनयेन' इति स्यादिति मॅक्समुल्लरमहाशयः संभावयति ॥ ८३१. ५. **पश्यन्ति**—ग२-भ-*मॅ-मु । पश्यति–ख-ग१-घ-त-न-श ॥ ८३१. ६. **अहानि पश्यन्ति**—ग-न-भ-श-*मॅ-मु । अहानि पश्यति–ख-त ॥ ८३१. ७. **ईदृशान्**—घ । अतो ईदृशान्–ख-ज्ञ-त२-श-मु; अतोतान्–ग; अतोतीदृशान्–त१; अतो --- श्यान–न; अतो --- शान्–त३-४-भ-मॅ ॥ ८३१. ९. **कारुकुशीलवान्**—*मॅ । कारुकशील्कान्–ख; वै कारुशिल्पकान्–ग; कारुकुशिलकान्–ज्ञ-भ१; कारुशील्कान्–त२-३-४-भ२-श; कारुकशिल्पिकान्–भ३ । च कारुशील्कान्–मु । गोरक्षकान् वाणिजिकांस्तथा कारुकुशीलवान् इ.–मनु. ॥ ८३१. १७. **ताम्**—§-मु । तं–मॅ ॥ ८३१. १८.**°तात्पर्याद्भृति°**—ग१-ज्ञ-न-भ-श-*मॅ-मु । °तात्पर्याद्भवति°–ख; °तात्पर्यात्स्तुतिति°–ग२; °तात्पर्याद्भुति°–त२; °तात्पर्यादुति°–त३ । ८३२. ३. **वर्तामहे**—भ१-३-य । वर्तते–मॅ-मु इतरेषु च ॥ ८३२. ११. **शविष्ठ** । '<u>श</u>ुवि<u>ष्ठ</u>' इति पदपाठः ॥ ८३२. २०. **उ इति पूरणः** । 'इत्' इति पदपाठः ॥

[८. ६७] ८३२. २२. **संमदाख्यस्य**—ग-त२-न-भ१-*मॅ । समदाख्यस्य–ख-घ-त३-श-मु ॥ ८३२. २४. **आदित्यान्**—त२-*मॅ । आदित्यं–मु इतरेषु च ॥ ८३२. २५. **आदित्याः**—ख-ग-त२-३-*मॅ-मु । आदित्यो–इतरेषु ॥ ८३३. ९. **अलंकर्त्रे**—§-मु । अरंकर्त्रे–मॅ ॥ ८३३. १६. **जीवान् इदानीम्**—§-मु । इदानीं जीवान्–मॅ ॥ ८३३. १७. **पुरा**—§ । मॅ-मु-पुस्तकयोरेतन्नास्ति ॥ **क**—न-भ । के–इतरेषु मॅ-पुस्तके च । कद्ध क नु–मु ॥ ८३४. ९. **मर्चयता**—ख-ग-ज्ञ-न-भ३-श-*मॅ-मु । मर्चयंना–त३-४; मर्चता–भ१; मर्चयेंते–भ२ ॥ ८३४. ११. **प्राप्ता बाधा नोऽस्माकम्**—*मॅ-मु । प्राप्तबाधा नोस्माकं–ग; प्राप्तां बाधा मा नोस्माकं–ख-त-न-श; प्राप्तां बाधां नोस्माकं–भ ॥ ८३४. १७. **मत्स्यपक्षे**—ग-घ-त-न-भ-श-मु । ख-मॅ-पुस्तकयोरेतन्नास्ति ॥ ८३४. २१. **गभीरम्**—न-भ-श-नि.। गंभीरं–ख-ग-त-मॅ-मु ॥ ८३४. २८. **भूमिरूपा**—*मॅ । भूमिरूपा–§-मु ॥ ८३४. २९. **उरूचि उरुत्वम्**—§-मॅ-मु । 'उरूचि' इत्यस्मादनन्तरं किंचित्पदं गलितं स्यात्, अथवा 'उरुत्वम्' इत्यस्य स्थाने 'उर्वि त्वम्' इति स्यादिति मॅक्समुल्लरमहाशयः

न्यते। किंतु तदनावश्यकम्। ‘ उरूचि ’ इत्यस्य ‘ पृथिवी ’ इत्यर्थः। ऋ. सं. ७. ३५. ३. द्रष्टव्यम्। उरुत्वम् ’ इति कर्मपदं च वाक्ये आवश्यकम्॥ ८३५. १. **तस्य**—§-मु। एतन्नास्ति मॅ॥ **गीवेम पुत्रान् रक्षितुम्।** जीवेनापृत्यान्नक्षितुं—ख-त३-मॅ। जालेन रक्षिताः जीवेम पुत्रान् क्षितुं—ग; जीवेनापत्यान्नक्षितुं—त२; जीवेनापत्यान्भक्षयितुं—भ१-२; जीवेन मत्स्यान् भक्षयितुं—।३; जीवेनामृतात्रक्षितुं—न; जीवेन्यस्मात्पाद्रक्षितुं—श। जीवनेनापत्यान् रक्षितुं—मु॥ ८३५. .. **उच्छ्रिताः**—ख-ग-ञ-त२-३-न-भ-श-मु। उच्छ्रियंता—त४; उच्छ्रितीनां—त१। उच्छ्रयंतः—॥ ८३५. १०. **आदातृणाम्**—ख-ग-ञ-त१-३-४-न-भ१-२-श। अदातृणां—ख-त२-मॅ-मु॥ ३५.११ **मुमोचत**—§-मु। मुमोच्चत विमोचत—मॅ॥ ८३५.२१. **भुञ्जमहे**—भ१-*मॅ। बुबुज्महे—-न; भुजंजमहे—ग; भुज्महे—त-भ-श। बुभुज्महे—मु॥ ८३५. २४. **प्रकृष्टमतयः**—त२-भ। कृष्टमयो—ख-त-न-श; प्रकृष्टधियो—ग; प्रकृष्टमायाः—घ-मॅ-मु॥ ८३६. ११. **अतिस्कन्दनाय**—-त२-३-भ३-श-मु। अतिष्कंदनाय—मॅ इतरेषु च॥ ८३६. १५. **पुत्रे पितृशब्दः**—ग-भ-*मॅ-मु। त्रे पित्वशब्दः—ख-त॥ ८३६. २३. **रिप्रमिति**—त२-*मॅ-मु-निरु.। रिप इति—भ१-३; रिप्र ति—इतरेषु॥

[ ८. ६८. ] ८३७. ९. **अन्ततः**—*मॅ-मु। अथ ततः—ख-ग-त-न; अथ तत्—भ; अथ—॥ ८३७. १७. **रथं यथा**—मॅ-×। मु-पुस्तकेऽप्येतन्नास्ति॥ ८३७. २३. **मते**—मॅ-मु-×॥ ३८. ८-९. **सैनिकानां......चर्षणीनाम्**—ख-त-न-भ-श-मु। सैनिकानां एवैः गमनैः—घ। मॅ-स्तक एतन्नास्ति॥ ८३८. २२. °**योगादिच्छा**°—ग। °योगत्वादिच्छा°—*मॅ-मु। °योगस्वदिच्छा°—।-ञ-त१-२-३; °योगास्वदिच्छा°—त४-न-भ-श॥ ८३९. १०. **कर्तुम्**—भ२-*मॅ-मु। कुर्वन्—इतर-लिखितपुस्तकेषु॥ ८३९. ११. **वज्रवन्**—ख-घ-त-न-भ-श-मु। वज्रिन्—ग-मॅ॥ ८३९. १२-१३. **तिपत्...सुतमन्ध इति**—*मॅ-मु-×॥ ८३९. २०. **ररक्षिथ**—*मॅ-मु। रक्षिथ—ख-ञ-त२-३; क्षथ—ग-घ-त४-न-भ-श॥ ८३९.२६. **तननीयः**—ग-*मॅ-मु। तंतनीयः—ख-घ-त-न-श; संतननीयः—॥ ८४०. २. **तथा तने**—*मॅ-मु-×॥ ८४०. ६. **याचामहे**—ख-घ-ञ-त१-२-मु। ग-त३-४--भ-मॅ-पुस्तकेष्वेतन्नास्ति॥ ८४०.११. **दानप्रशंसकाः**—§-मॅ-मु। दानस्तुतिः पराः—बृहद्दे.॥ ८४०. २. **अविरोधः**—ग-श-मु। अनिरोधः—ख-त-भ-मॅ॥ **अनेनैवाशयेन**—ग। अनयैवाशया—मॅ-मु तरेषु च॥ ८४०. १५. **पितृपुत्ररूपेण**—*मॅ-मु। पितृपितृरूपेण—ख-त-भ१-श; पितृपुत्रपितृ-पेण—ग; पितृरूपेण—घ-भ२॥ ८४०. २०. **अतिथिग्वाय**—ख-ग-त-न-श। इत्यतिथिग्वाय—।-मॅ-मु॥ ८४०. २१. **इन्द्रोते**—ग-*मॅ। इंद्र—इतरलिखितपुस्तकेषु। इंद्रोतः—मु॥ ८४०. २५. **स्तुतम्**—ग-न-भ२-श। प्रस्तुत—ख-त; प्रस्तुतं—भ१। प्रस्तुत्य—मॅ-मु॥ ८४०. २६. **एवमृक्षाश्व-धयोः**—*मॅ-मु। एवं त्यपृक्षाश्वमेधयोः—ख-त१-भ१-२; एवं सति ऋक्षाश्वमेधयोः—ग; एतं त्यपृ-क्षाश्वमेधयोः—त२। पितृपुत्रयोरभेदात्तयोः पक्षकर्तृत्वाच्च ऋक्षाश्वमेधयोर्दानस्तुतित्वं न व्याहन्यते त्यन्वयः। मॅ-पुस्तके तु ‘ न व्याहन्यते ’ इत्यत्र वाक्यपरिसमाप्तिं कृत्वा ‘ पितृपुत्रयो° ’ इत्यारभ्य विस्पष्टयिष्यते ’ इत्यन्तमेकं वाक्यं कृतम् ( ! )॥ ८४०. २७. **इन्द्रोतदानस्य**—ग-*मॅ-मु। इंद्रं दानस्य—ख; इंद्र तद्दानस्य—त-भ-श॥ ८४१. १०. **आज्ञायते**—मॅ-मु। आज्ञायत—ख-घ-त-न-।-श; अज्ञायत—ग-श॥

[ ८. ६९. ] ८४१. १९. **आद्यास्वयोऽर्धर्चाः**—ग-न-भ१-२-मु। आद्यासु योर्धर्चाः-ख-ञ-त३-४-श। आद्यासु येऽर्धर्चाः-मॅ॥ ८४१. २९. **उनत्ति**—*मॅ-मु। उंदिति-ख-त-श; इंदति-ग; उदति-न; उदिति-भ१; उंदति-भ२॥ ८४२. ७. **सुग्म्य इति**—*मॅ। युगप इति-ख-त; युग्म्य इति-ग-त४-भ२-मु; युवल्य इति-न; युत्प इति-भ१; युग्म इति-श॥ ८४२. २२. **दिवीत्यर्थः**—*मॅ। दिवीत्येषः-ख-ञ-त१-२-भ१-२; दिवीत्यषः-त३। दिवीति शेषः-मु॥ ८४२. २३. **आरोचमाने**—श-*मॅ-मु। आरोचने-ख-त१-२-३-४; अरोचमाने-श॥ ८४२. २५-२६. **सूत्रितं च......इति**—ग-*मॅ-मु। इतरलिखितपुस्तकेष्वेतन्नास्ति॥ ८४२. ३०. **तथार्चेति**—ख-श-त१-२-३-न-श-मु। तथा चेति-ग-त४-भ१-२। तथा वेति-मॅ॥ ८४३. १. **तत्रानुरक्तत्वात्**—*मॅ-मु। तत्रानुक्तत्वात्-ख-त-भ-श; तत्रानुत्पन्नत्वात्-ग॥ ८४४. १०. **युद्धः संनद्धः**—§-मॅ-मु। ?॥ ८४४. १५. **अप्रवृद्धाः**—घ-त-न-भ२-श। अमवृद्धाः-ख; अवृद्धाः-ग; प्रवृद्धाः-भ१। अपवृद्धाः-मॅ-मु॥ ८४४. १९. **आ पतन्ति वृष्टिरल्पा यदा**—*मॅ-मु। सापतितं वृष्टिरल्पाय यदा-ख-त-श; आपतंति वृष्टिरहिता यद्यता-ग॥ ८४४.२६. **तम्**—मॅ-मु-×॥ ८४५. ११. **वृष्टिनिवारकैः**—श-न-भ-मु। धृनिवारकैः-ख-त१-२-३-४-श। वृष्टिवारकैः-मॅ॥ ८४५. २५. **कुमारकः**—§-मु। कुमारः-मॅ॥ ८४६. ३. **गृहो ( ? )**—§-मॅ-मु। 'गृहाः पुंसि च भूम्न्येव' इति कोशात् ( अमर. २. २. ५ ( पुंलिङ्गैकवचनान्तगृहशब्दप्रयोगश्चिन्त्यः॥ ८४६. ४. **आरोहामि**—§-मु। रथमारोहामि-मॅ॥ ८४६. १५. **स्तुतिवन्तः**—§-मॅ। स्तुतिमन्तः-मु। एतदेव समीचीनम्॥

[ ८. ७०. ] ८४६. ३१. **चतुर्दश्यनुष्टुप्**—ग-*मॅ। मु-इतरेषु च नास्ति॥ **पञ्चदशी पुरउष्णिक्**—ग-*मॅ। मु-इतरेषु च नास्त्येतत्॥ ८४७. २. **यो राजा...इति**—ख-त१-श-*मॅ-मु। इतरेषु नास्ति॥ ८४७. १५. **आत्मानम्**—ग-त३। अस्मास्वमात्मानं-घ। आत्मा स्वात्मानं-त२-न-भ-श-मॅ। आत्मना स्वात्मानं-मु॥ ८४७. २६. **अनुकूलम्**—§-मॅ-मु। अस्मादनन्तरं 'करोति' इत्येतादृशं पदमावश्यकमिति मॅक्समुल्लरमहाशयः॥ ८४८. १५. **मूर्ति°**—भ३-श-*मॅ-मु। मूर्त°-ख-त; मूर्ति°-न-भ१-२॥ ८४८. १६. **त्वा**—घ-मु। ते-मॅ इतरेषु च॥ ८४८. १७. **किंचन**—*मॅ। किंच मनु-ख-त-भ-श; किंच अनु-ग-मु॥ ८४९.४. **यो मर्त्योऽस्य**—*मॅ-मु। स मर्त्यो यस्य-ख-ग-त-न-भ-श; स मर्त्यो अस्य-घ। क्लिष्टा वाक्यरचना॥ ८४९. ६. **तं न**—मु। त न-घ। तन्न-मॅ इतरेषु च॥ ८४९. २०. **उत्थापय**—*मॅ-मु। उत्पादयत-ख; उत्थापयत-घ-त-भ-श; उत्थापयितः-ग॥ ८४९. २९. **नि शिश्नथः**—घ-*मॅ-मु। वि शिश्नथो-इतरलिखितपुस्तकेषु॥ ८५०. १५. **भृष्टयवाः**—ख-ग-घ-त१-२-३-४-न-भ-मु। भ्रष्टयवाः—ञ-श-मॅ॥ ८५१. २. **य इन्द्रः**। त्वम् इत्यध्याहार्यम्॥ ८५१. ३. **एकमेकमेव वत्समित्येवम्**—न। एकमेव वत्समित्येवं-भ; एकमेकमेवं-ख-त-श। एकमेकमेव-मॅ-मु॥ ८५१. ९. **हितं शौरदेवं युद्धम्**—*मॅ। हितः शौरदेवयुद्धं-ख-ग-घ१-त-न-भ-श; हिताः शौरदेवा युद्धं-च; हितः शौरदेवं युद्धं-मु॥ ८५१. १०. न। 'नः' इति पदपाठः॥ ८५१. १२. **कर्णे**—§-मु। मॅ-पुस्तक एतन्नास्ति॥

[ ८. ७१. ] ८५१. १६. **वादितो**—न-भ३-य। वादितो-ख-त१-२-भ१-२; दोदितो-त३; त्वं नो अग्ने इत्यादितो-श; एतदादितो-ग; आदितो-ञ-त४-मॅ-मु॥ ८५१. २०. **रक्ष**—

*मॅ। रक्ष कस्य महोभिः–§-मु ॥ ८५१. २८. **अस्मदादिभिः**—*मॅ-मु। अस्मादिभिः–ख-त-भ; अस्माभिः–ग; अस्मादादिभिः–श ॥ ८५२. २. **वस्वो...प्रयच्छसि**। अत्र 'स नो विश्वेभिर्देवेभिरूर्जो नपात्' इति ऋक्पाठः। 'स नो वस्व उप मास्यूर्जो नपात्' (८. ७१. ९) इति व्याख्यात्रा पठितम्। विश्वेभिर्देवेभिः धनं प्रयच्छसि–घ-मु ॥ ८५२. ३. **स्तुत्यप्रकाश तदेवादरार्थम्**—न-भ। स्तुत्यप्रकाशन तदेवा°–श; स्तुत्यप्रकाश देवा°–घ-त१; स्तुत्यप्रकाशन देवा°–ख-ग-ज्ञ-त२-३-४-मॅ। स्तुत्यप्रकाशन देव आदरार्थ–मु। ऋ. सं. ७. ७०. ७. द्रष्टव्यम् ॥ ८५२. ४. **तच्च**। 'तं च' इति भाव्यम् ॥ ८५२. ९. **यम्**—ग-*मॅ-मु। यदा–ख-त-न-भ-श; यदा यं–घ ॥ ८५२. १३. गोषु–घ-भ३। यागोषु–ग; यागेषु–ख-त२-न-भ१-२-श-मॅ-मु ॥ ८५३. २. **नपात्त्वम्**—ग-भ३-*मॅ-मु। नपादित्वं–इतरलिखितपुस्तकेषु ॥ ८५३. ३. **एव**—*मॅ। वा–§-मु ॥ ८५३. २५. **होता**—ख-घ-ज्ञ-त२-न-भ-मु। ग-त३-४-श-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ८५४. १२. **वा**—*मॅ। अति वा–ख-त-भ; सति वा–ग; अथवा–मु ॥ ८५४. २३ **धनाय**—§। मॅ-पुस्तक एतन्नास्ति। धनायाग्निं–मु ॥ ८५५. १. **नः अस्माकम्**—ख-ज्ञ-त१-न-भ-मु। ग-त४-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ८५५. २. **भयानाममिश्रणम्**—*मॅ-मु। भयानं मम श्रवणं च–ख-ज्ञ-त२-४-भ१; भयानाममिश्रवणं–ग; भयानाममश्रणं–त१; भयानामश्रवणं–भ२ ॥

[८. ७२.] ८५५. २४. **ससं स्वपन्तम्**—*मॅ-मु। ससं स्थापनं–ख-ग-ज्ञ-त२-भ२-श; ससं स्थपनं–घ-त३-४-भ१; संस्थापनं–त१; संसं स्थपनं–न ॥ ८५६. ८. **स्तोतुम् अम्ब्यम्**—मॅ। स्तोतामन्यं–ख-त-न-भ-श; स्तोतामंब्यं–ग; स्तोतुमन्य–घ१; स्तोतुमंब्यमन्यं–च-मु ॥ ८५६. ९. **अयं रुशंश्चरंश्च**—*मॅ-मु। अयं चरंश्च–ख-ग-त-भ; यच्चरन्रश्च–श ॥ ८५६. १४. **स्थूलम्**—*मॅ-मु। स्थलं–ख-त-श; स्थल–घ; स्थलो–भ१-२ ॥ ८५६. १५. **नियोजयतीत्यर्थः**—*मॅ-मु। यारुजर्नियोजयेति सेत्यर्थः–ख-त१-२-३-न-भ; यारुजर्नियोजयेति श्रुत्यर्थः–श ॥ ८५६. २२. **ब्रह्माणम्**—ग-घ-श-मु। ब्राह्मणं–ख-त-भ-मॅ ॥ ८५६. २५. **ओ**—घ-ज्ञ-भ-मु। तो–ख-ग-त; बो–श। ओं–मॅ ॥ ८५६. २६. च **आ**—ग-न-भ। वा–ख-त-श-मॅ-मु ॥ ८५७. १३. **परितो व्याप्तम्**—ग। परिणेव्याभं–ख-त-भ-श। परिणत्याभं–घ-मॅ-मु। 'परिगंतारम्' इति स्यादिति मॅक्समुल्लरमहाशयः ॥ ८५७. १४. **नीचीनद्वारम्**—न-भ-*मॅ-मु। ग्भूतद्वारं–घ। इतरलिखितपुस्तकेषु नास्त्येतत् ॥ ८५७. २०. **आसन्ध्यामासादयन्ति**। आसद्यामा°–घ१; आसादयंति–च; असंध्यमा°–ख; आलंध्यामा°–श। आसंध्यमासादयंति–मॅ-मु इतरेषु च ॥ ८५७. २६. **गवाजयोः**—ग-*मॅ-मु। गवाश्वयोः–ख-ज्ञ-त१-२-भ; गवायोः–त३-४-श ॥ ८५८. १३-१४. **संगच्छन्ति... संगच्छन्ते**—§-मॅ-मु। 'समो गम्यृच्छिभ्याम्' (पा. सू. १. ३. २९) इति सूत्रेण प्रथमं 'संगच्छन्ते' इति अनन्तरं 'संगच्छन्ति' इति च भाव्यम् ॥ ८५८. १८. **धारकम्**—घ। धारकमग्निं–ख-त-न-भ-श; धारकमन्नं–ग; धारकमाजं–मॅ-मु ॥ ८५८. २८. **मधुधुक्त्वम्**—*मॅ-मु। मधुक्षं–ख; मधुकत्कत्वं–ग; मधूदकं–ज्ञ; मधुकं–त१-२-४; मधुदकं–त३; मधुष्णं–भ१-२; मधुष्णं–भ३; मधुत्वं–श ॥ ८५९. २. **हेतुमाह**—*मॅ-मु। हेतुं–§ ॥ ८५९. ६. **पवमाने**—*मॅ-मु। एवमाने–ख-त-भ; एवमात्ते–ग; एवंमाने–घ; एवंभूते–श। 'पवमाने सोमे' इत्यनन्वितम् ॥

[८. ७३.] ८६०. २२. **आवारयतम्**—मॅ-मु। आवरयंतं–घ; आवरयतं–इतरेषु ॥ ८६०. २७-२८. '**प्रवेशः...निर्गमश्च...स्पष्टमुक्तम्**—§-मॅ। ?। स्पष्टमुक्तः–मु ॥ ८६१. ८.

**युवयोरर्थमागमनाय**—*मॅ। युवयोरर्थागमनाय–ख-घ-त-न-भ-श; युवयोरात्रार्थागमानाय–ग। युवयोरर्थे गमनाय–मु ॥ ८६१. १४. **सजात्यम्**—च-भ२-श-*मॅ-मु। साजात्यं–ख-ग-त; संजात्यं–घ१; साजत्यं–भ१ ॥ ८६१. १५. **बन्धकः स्तुवः**—*मॅ-मु। बंधकस्तुवः–ख-त-भ२; बंधकस्तुवः–भ१-श; बंधकं स्तुवः–ग; बंधुकः स्तुतः–घ१; बधुकः स्ततः–च ॥ ८६१.१६. **अथवर्षिरहम्**—*मॅ-मु। अद्य वायुरहं–ख-त-न; अथवा युवयोरहं–ग; आद्या वायुरहं–भ१-२; अथवा रहं–श ॥ ८६२. ३. **अश्विनौ**—मॅ। अश्विनौ नोस्मान्–ख-ग-त-न-भ-श-मु; अश्विनौ नः–घ ॥ **अश्व्यैः अश्वसमूहैः**—*मॅ। अश्व्यैश्व–ख-ग-घ-त-न-श-मु। अश्व्यैः अश्व–भ२ ॥ ८६२. १४. **निशारयति**—*मॅ-मु। निशरयति–ख-त; निःसारयति–ग; निवारयति–घ-न-भ; निशातयति–श ॥ **एवम्**—ग-न-भ। एव–ख-त-श-मॅ-मु ॥ ८६२. १९. **आकर्षया**—मॅ। लिखितपुस्तकेषु ‘कृष्णयाकर्षया’ इति निरन्तरं लिखितत्वात् ‘आकर्षया’ ‘कर्षया’ इत्युभयथापि पदच्छेदः शक्यते कर्तुम्। कर्षया–मु। ‘आकर्षकया’ इति स्यादिति मॅक्समुल्लरमहाशयः संभावयति ॥

[ ८. ७४. ] ८६२. २३. **पञ्चमम्**—भ२-*मॅ। चतुर्थं–मु इतरेषु च ॥ ८६२. २७. **व्योमविश्वदेवस्तुत्**—*मॅ-मु। त्वाव्योमविश्वेदेवस्तुत्–ख-न-भ; व्योमविश्वोदेवस्तुत्–ज्ञ-त१-२; त्वाव्योमविश्वेदेवस्वत्यं–त३-४-श। केवलं पञ्चशारदीय एवेदं सूक्तमाज्यशस्त्रं, न व्योमविश्वदेवस्तुतोरिति आश्व. श्रौ. सूत्रादवगम्यते ॥ ८६३. ५. **स्तुषे**—ख-घ-ज्ञ-त१-२-मु। नु स्तुषे–मॅ इतरेषु च ॥ ८६३. २७. **°तेज आद्युपलक्षण°**—*मॅ-मु। °तेजोद्युपलक्षण°–ख-ग-त-न-भ ॥ ८६३. २८. **नाशयन्तम्**—ग-घ-ज्ञ-भ२-श। नार्शयंतं–ख-त२-३-४-न-भ१। दर्शयंतं–मॅ-मु ॥ ८६४. २०. **संबन्धीति**—*मॅ। संबंधिनमिति–ख-ज्ञ-त१-३-न-भ-श-मु; संबंधिनि इति–ग; संबंधि सर्वे—त२ ॥ ८६४. २५. **स्तुवते**। स्तुवंति–ग। स्तुवंते–मॅ-मु इतरलिखितपुस्तकेषु च ॥ ८६५. १२. **वृत्रतूर्ये**—ग-न-भ-श। वृत्रस्य तूर्ये–ख-त-मॅ-मु। ८६५. १९. **वृक्षा**। ‘मृक्षा’ इति पदपाठः। **वृश्च्यन्त**—ग-*मॅ-मु। व्रश्चत–ख-ज्ञ-त२-३; व्रश्च्यंते–त१; व्रश्च्यंते–भ ॥ ८६५. २७. **शत्रूणाम्**—मॅ। शत्रूणां संबंधिनां–ख-त-न-भ-श। शत्रूणां संबंधिनं–घ-मु ॥

[ ८. ७५. ] ८६६. २६. **आहूत वा**। आहूतो वा–भ१; आहुतोद्य–ख; आहुतो वा–ग-त-भ२-श-मु। आहुत वा–*मॅ। ऋ. सं. ८. २५. १९. द्रष्टव्यम् ॥ ८६७. ११. **°दीप्तये**—ग। °तृप्तये–मॅ-मु इतरेषु च ॥ ८६८. ६. **ते**—घ-न-भ-मु। ख-ग-त-श-मॅ-पुस्तकेष्वेतन्नास्ति। ८६८. २३. **अस्मदन्यमस्तोतारम्**—*मॅ-मु। अस्मदन्यस्तोतारं–ख-त-न-भ; अस्मदन्यं स्तोरं–ग; अस्मदन्यं स्तोतारं–घ-श ॥ ८६८. २९. **विधावति**–त-न। विधाति–भ। वधावति–घ। वृधावति–श-मॅ-मु। ‘वृधावति’ इत्यस्य स्थाने ‘विधावति’ इति भाष्यकारः पठितवानिति तद्व्याख्यानतोऽपि स्पष्टम् ॥ ८६८. ३०. **भवाम**—ख-ग-ज्ञ-त१-२-३-भ-श-मु। भवेम–घ-त४-न-मॅ ॥ **इति भावः** §-मु। इति–मॅ। ८६९. ४. **अन्यस्याः**—ग२। अन्यायाः–मॅ-मु इतरेषु च ॥

[ ८. ७६. ] ८६९. २८. **अपः सृजन्**—च-भ३। अपः असृजत्–ख; अपः असृजन्–ज्ञ-त१-२-३; अपसृजन्–ग-त४-भ१-२; अपः अपसृजन्–घ१-श-मॅ। अपः सृजन् असृजन्–मु। मु-पुस्तकगतः पाठः शुद्ध इति मॅक्समुल्लरमहाशयेनोक्तम्[1] (!) ॥ ८७०. २२. **बहुकर्मन्निन्द्र**—

1. Preface to the 2nd Edition Vol. IV. p. 178.

ग-घ । बहुकर्मेंद्र–ख-त-भ-श-मॅ-मु ॥ ७७१.३. अह्राम्—ग१-*मॅ-मु । अह्रां–इतरलिखितपुस्तकेषु ॥ ८७१. ६. इति ब्राह्मणाच्छंसिनः—ख-त-न-भ-श-मु । इदं नास्ति मॅ-पुस्तके ॥ ८७१. २०. साष्टापदी—ख-*मॅ । साष्टापदीं–त१-२-३-४-न-भ२-३-मु; प्राप्ता–घ; प्राप्तापदीं–ञ-भ१( प्रान्ते ) ॥ ८७१. २२. तनुम्—ख-घ-त न-भ२-श-मु । तनून्–भ१-३ । तनूं–मॅ ॥ स्वरूपं...अशक्यत्वात् । ‘ स्वरूपस्य...अशक्यत्वात् ’ इति भाष्यम् ॥

[ ८. ७७ ] ८७१. २४. कुरुसुतेः—श-*मॅ । पुरुसुतेः–ख-त-भ-मु; पुरुसुतिः–घ ॥ ८७२. ६. एनम्—ख-त-न-भ-श । ईमेनं–घ-मु । एतं–मॅ ॥ ८७२. ७. तौ—मॅ-मु । ते–§ ॥ ८७२. १३. रज्ज्वा इव तया—*मॅ-मु । नक्ष्वेव लया–ख-त; रज्ज्वा–ग; वलया–घ; रज्वेव लया–न-भ-श ॥ ८७३. १७. नतानि—*मॅ-मु । निता–ख-त-भ-श; नीतानि–घ ॥ भूमेः कीलबद्धारणाय—*मॅ । भूमे किलवद्धारणया–ख; भूमेः किलवद्धधारणाय–घ; भूमे किलवद्धारणाय–ञ; भूमे किल बद्धा धारणाय–त१-२; भूमे किल बद्धा धारणया–त३-४-भ; भूमे किलवद्धा धारणप्रा–श । भूमेः कीलवद्धारणानि–मु ॥ ८७३. २४. नैरुक्तैतिहासिक°—ख-ञ-त१-२-४-न-भ-मु । निरुक्तैतिहासिक°–ग-त३-श-मॅ ॥ ८७३.२६. स्वविरोधेन नेत्याह—न-भ-श । स्वविरोधन नेत्याह–ग; स्वविरोधेनेत्याह–ख-त-मॅ-मु ॥ ८७३. २८. °वचनः—§-मु । °वचने–मॅ ॥ ८७४. १४. तानि—भ । एतन्नास्ति ख-ग-त-न-श-मॅ-मु-पुस्तकेषु ॥ ८७४. १६. उक्तोऽर्थश्च चरमपादेन–*मॅ-मु । उक्तार्थाञ्च वारमपादिना–ख-ञ-त१-२-३; इत्यत्रोर्थाश्च चारमपादेन–ग; उक्तोर्थोञ्च चारमपादिना–त४-न-भ-श ॥ ८७४.२३. यास्केन व्याख्याता—*मॅ-मु । व्याख्यातत्वात्–§ ॥ लिख्यते–*मॅ-मु । लिख्यते यास्कः–§ ॥ ८७४. २५. गमनपातिनौ—§-मॅ-मु । गमनपातिनौ वा–निरु. ॥

[ ८. ७८ ] ८७६. ४. यदा तं निन्दितुमिच्छति—*मॅ-मु । यदा त्वं निंदितुमिच्छसि–ख-ग-त-न-भ-श ॥ ८७६. १४. इन्द्रः...अभिहितः—*मॅ-मु । चेंद्रः पीतं सोमोभिहितः–ख-त-न-भ-श; चेंद्रपीताः सोमोभिहितः–ग ॥ ८७६. १८. एषते—ग-घ-भ । ईषते–ख-त-मॅ-मु ॥ ८७६. १९. आप्रेच्छम्—*मॅ-मु । आप्तछुं–ख-त२-३-श; दातुमिच्छां अदच्छशु–ग; त्वामिछुं–घ१; त्वामिछां–च; आप्तेछुं–त१; प्राप्तेछुं–भ ॥ ८७६. २७. निष्कृतस्य—*मॅ-मु । निष्कस्य–ख-त-भ-श; संभृतस्य–ग ॥

[ ८. ७९ ] ८७७. १६. °साधनश्च अन्धः सन्नन्धोऽपि—मु । °साधनस्य अंध संनद्धोपि–भ१-३; °साधनस्य अंध संनद्धोपि–न; °साधनश्च अंध( अध–त३-४ ) संनद्धोपि–त३-४-भ२; °साधनश्च अयमंधोपि–ग । °साधनश्च अंधः संनद्धोऽपि–मॅ ॥ ८७७. २१. कृत्याभ्य इत्यर्थः—ग-त४-भ-श । कृत्यभ्येत्यर्थः–ख-ञ-त२-३-न । कृत्येभ्य इत्यर्थः–मॅ-मु ॥ ८७७. २२. अन्यकृतानि हि रक्षांसि । इदं ब्राह्मणवचनं कुत्रत्यमिति न ज्ञायते ॥ ८७७. २७. दिवश्च—§-मु । एतन्नास्ति मॅ-पुस्तके ॥ ८७८. १४-१६. हे सोम ...... हृदे हृदये ...... नः पूरणः । हे सोम...... कृत् हृदये ... ... नः पुराणः–भ । हे सोम पीतः त्वं नः अस्माकं हृदे हृदये वर्तमानः सुशेवः सुसुखः मृळयाकुः सुखकर्ता अदप्तक्रतुः असमाप्तकर्मा पुनःपुनः यागप्रवर्तकः अवातः निश्चलश्च भवेत्यन्वयः–ख-घ । हे सोम पीतः त्वं नः अस्माकं हृदे हृदये वर्तमानः सुशेवः सुसुखः सुखहेतुः अगर्वितकर्मा अहिंसितः । एतादृश हे सोम नः अस्मभ्यं शं भव मनसे अतिर्नितेवं साधयतीत्यर्थः–ग । हे

सोम पीतः त्वं नः अस्माकं हृदे हृदये पीताय शं सुखं भव किंच नः अस्माकं सुशेवः सुसुखः मृळयाकुः सुखकर्मा अदृप्तक्रतुः असमाप्तकर्मा पुनःपुनः यागप्रवर्तकः अवातः निश्चलश्च भवेत्यन्वयः–ञ-त१-२। हे सोम नः अस्माकं कृत् हृदये पीताय हृदयसंभव। अपरो नः पुराणः–त४-न-श। हे सोम पीतस्त्वं नः अस्माकं हृदे हृदये वर्तमानः शं सुखं भव। किंच नः अस्माकं सुशेवः सुसुखः मृळयाकुः सुखकर्ता अदृप्तक्रतुः असमाप्तकर्मा पुनःपुनः यागप्रवर्तकः अवातः निश्चलश्च भवेत्यन्वयः–मु। हे सोम पीतस्त्वं नोऽस्माकं हृदे हृदये वर्तमानः सुशेवः ˉ ˉ। अपरो नः पूरणः–मॅ॥ ८७९. २. वा—भ-*मॅ-मु। च–घ। इतरलिखितपुस्तकेषु नास्ति॥ ८७९. ३. हिन्धीत्यर्थः—ग-त४-भ१-श। हिंसीत्यर्थः–ख-भ२-३; भिषीत्यर्थः–घ; हंतीत्यर्थः–ञ; हिंथीत्यर्थः–त२-३। भिंधीत्यर्थः–मॅ-मु॥

[ ८. ८०. ] ८७९. ४. एकादशम्—*मॅ। द्वादशं–§। दशमं–मु॥ ८७९. ५. °र्नाम—घ१-मु। °र्नामा–इतरलिखितपुस्तकेषु मॅ-पुस्तके च॥ ८७९. १२. बट् सत्यं नाकरम्। बहुकृत्यं( °त्य–घ ) नाकरं–ख-घ-ञ-त१; बट् सत्यं न्नाकरं–ग-भ३; बहुकृत्यन्नाकरं–त२; बट् ˉ त्यन्नाकरं–त३-४-न; बट् ˉ ˉ न्नाकरं–भ१; वरं ˉ ˉ न्नाकरं–भ२; बल इत्यत्राकरं–श। बट् तन्नाकरं–मु। बट् ˉ तन्नाकरं–मॅ॥ ८७९. १७. अन्नलाभाय—घ-भ३। एतन्नास्ति मॅ-पुस्तके॥ ८८०. ९-१०. वाजयु ... इच्छत्—मॅ-मु। 'वाजयुः ... इच्छन्' इति ( घ-पुस्तकगतः ) पाठः साधीयानिति मॅक्समुल्लरमहाशयस्याभिप्रायः॥ ८८०. २०. पुरमसि—ग२। पूरयसि–मॅ-मु इतरेषु च॥ ८८०. २७. अवद्यः—ख-ग-त-न-भ-श। अवद्ये–मॅ-मु पदपाठश्च। अवद्ये अवद्यः–घ। 'अवद्ये' इति पाठः मॅक्समुल्लरमहाशयेन लिखितपुस्तकेषूपलब्धो न वा इति न ज्ञायते। अस्मत्प्राप्तेषु बहुषु लिखितपुस्तकेषु 'अवद्यः' इत्येव पाठः। अतः भाष्यकारैः 'अवद्ये' इत्यस्य स्थाने 'अवद्यः' इति पठितमिति शक्यमनुमातुम्॥ ८८०. २८. बह्वन्तरालमाज्यन्तः। बह्वंतरळं ( °लं–त२-३; °ळ–भ१ ) आज्यंते–ख-त-न-भ१; बह्वंतराळ–ग; बह्वंतराल आज्यंते–भ३; बह्वंतरलं आज्यंतो–श। बह्वंतराल आज्यन्तः–मॅ-मु॥ ८८०.२९. स्थिता—§-मॅ। स्थितो–मु-निरु.॥

[ ८. ८१. ] ८८१. २०. स्तोत्रियः—§-मु। मॅ-पुस्तक इदं नास्ति॥ ८८१. २३. नः अस्मभ्यम्—§। अस्मभ्यं–*मॅ-मु॥ दातुम्—घ। दातुं नोऽस्मदर्थे–ख-त-न-भ-श-मॅ-मु॥ ८८२. १६. उपगानम्—ग१-भ३-*मॅ-मु। उपमानं–इतरलिखितपुस्तकेषु॥ ८८२. १८. स्वीकुर्विति—ख-ग-त-भ-श-मु। स्वीर्निति–न। घ-मॅ-पुस्तकयोरेतन्नास्ति। ऋ. सं. १. १४०. १३. द्रष्टव्यम्॥ ८८३. ८. तव वाजाः—*मॅ-मु। तव आ–त-भ१-२; तव–ग; अश्वाः–घ-भ३॥

[ ८. ८२. ] ८८४. ७. लिटि—ख-ग-ञ-त२-३। टेटिले–भ१; लटि–श; लेटि–त४-भ२-३-मॅ-मु॥ ८८४. २९. सोऽस्माभिः—*मॅ-मु। अस्माभिः–ग; सह अस्माभिः–इतरलिखितपुस्तकेषु॥ ८८५. २८. त्वम्—ग-भ३-श-*मॅ-मु। ता–ख-त-भ१-२; तां–ञ॥

[ ८. ८३. ] ८८६. ७. महनीयम्—§। मंहनीयं–मॅ-मु॥ ८८६. १३. सर्वेषु कालेषु—ख-ञ-त१-२-भ। सर्वेषु–ग-घ-त३-४-न-श। सर्वेष्वहःसु–*मॅ-मु॥ ८८६. १९. संबान्धि ˉ ˉ ˉ त्वात्—मॅ बहुषु लिखितपुस्तकेषु च। संबंधेः–न। मु-पुस्तक एतन्नास्ति। 'संबन्धिशब्दत्वात्' इति स्यात्॥ ८८६. २०. विष्पितानि—*मॅ-मु-×। बहुषु लिखितपुस्तकेषु 'विष्पिता' इत्यस्यानन्तरं लेखनार्थे कश्चिदवकाशो (Lacuna) दृश्यते। 'विष्पितानि' इति पदमत्राभिप्रेतं स्यादिति कृत्वा

मॅक्समुल्लरमहाशयेन विनिवेशितम् ॥ ८८६. २१. वा—ख-ञ-त१-२-भ२-य। ग-त३-श-मॅ-मु-पुस्तकेषु नास्ति ॥ ८८७. ४. याचामहे—ख-घ-ञ-त२-४-मु। याचामः—ग-न-भ-श-मॅ॥ ८८७. ६. न प्राप्नोतु—घ-न-भ। प्राप्नोतु—ख-त-श-मॅ-मु॥ ८८७. १०. वः इत्—ग-घ-मु। इत्—ख-त-भ-श। इद्धो—मॅ॥ ८८७. १६. तेषामेषाम्—§-मु। तेषां—मॅ॥ ८८७. २१. सामान्येन—ख-घ। समाने—ग। समान्येन—त-न-भ-श-मॅ-मु॥ ८८७. २४. तस्मै पूषा चार्यमा चाजायेताम्। इयं श्रुतिः तैत्तिरीयसंहितायां (६. ५. ६.) नोपलभ्यते॥ ८८७. २९. सर्वे देवाः—ख-घ-त-न-भ-श-मु। सर्वदेवाः—ग-मॅ॥ ८८७. ३०. ब्रुवे—*मॅ-मु-X। उतापि च ब्रुवे—घ॥

[८. ८४.] ८८८. ३. उक्थ्येषु—ग-त-न-भ१-२-श-मु। उक्थेषु—ख-भ३-मॅ॥ ८८८. १२. काव्यः—*मॅ-मु। अहं—ग; कः—इतरेषु॥ ८८८. २१. अग्ने—*मॅ-मु। इंद्र—§॥ ८८८. २३. नृन्पे—*मॅ-मु। नृन् पति—ग; तत्प्रति—इतरेषु॥ ८८८. २६. त्मनेति—ख-त-न-य-श-मु। आत्मनेति—भ१-३-मॅ॥ रक्ष त्वदन्यम्—भ२-*मॅ-मु। रजनदन्य—ख-भ१; नवतदन्यं—ग; रजनदन्यं—त-भ२; त्वदन्यं—श॥ ८९०. ६. साधयद्भिः—*मॅ-मु। साधायोभिः—ख-त-भ३; साधीयोभिः—ग; साधोयोभिः—भ१-२॥

[८. ८५.] ८९१. २. संप्रति—ग-भ१-३-श-मु। सप्रति—ख-त-न-भ२। घ-मॅ-पुस्तकयोर्नास्ति॥ ८९१. २९. सोमस्य—ग-*मॅ-मु। इतरेषु नास्त्येतत्॥

[८. ८६.] ८९२. ९. नराः—§-मु। नरः—मॅ॥ ८९२. १०. भीतिमपनयतः—*मॅ। भीतिं समनयन—ख-त; भीतिं समनयत—भ-श-मु॥ ८९२.१२. अस्ताविषाथाम्—*मॅ-मु। अस्ताविद्याढ्या—ख-ञ-त२-४-भ२; स्ताविद्याढग—ग; अस्ताविद्याथाः—घ; अस्ताविद्याया—त१-३; अस्तावीयाद्या—भ१-३॥ ८९२. १४. विष्णाप्वो निमित्तम्—*मॅ-मु। विष्णोः प्रसनिमित्तं—ख-त; विष्णोः प्रसवनिमित्तं—ग-भ२-३; विष्णोः निमित्तं—घ; विष्णोः प्रसाविमितं—भ१॥ ८९२. २३. कथं वाम्—§-मु। मॅ-पुस्तक इदं नास्ति॥ ८९२. २४. प्रशस्तं धनं तस्याभिलषितस्य—*मॅ-मु। प्रशस्तधनं तस्याभिलषितस्य—ग; प्रशास्तधनवतमभिलषितस्य—ख-त-भ-श; प्रशास्तधनमभिलषितस्य—घ॥ ८९२. २५. अदद्याथाम्। अदाथां—ख-त-न-भ-श; अदातं—ग; अद्याथां—घ। अदधाथां—मॅ-मु॥ ८९३. ५. आपुनाति—§-मु। पुनाति—मॅ॥ ८९३. ७. अदत्तम्—मॅ-मु। दत्तं—§॥ ८९३. १४. ऋजीषोऽपार्जितोऽभिषुतः सोमः—ग-त३-मु। निरु.५.१२.; ९३२. पृ.२० प. टिप्पणी च द्रष्टव्ये। ऋजीषोपार्जितोभिषुतसोमः—ञ-त४-भ-श। उपार्जितः अभिषुतसोमः—घ। ऋजीष उपार्जितोऽभिषुतः सोमः—मॅ। ऋजीषशब्दः यद्यपि निरुक्तादिषु नपुंसकलिङ्गः दृश्यते तथापि सायणाचार्यैः प्रायेण पुंलिङ्ग एव प्रयुक्तो दृश्यते (ऋ. सं. ५.४०.४; ६.४२.२; ८.७६.५.)॥ ८९३. १५. रक्षति—ग-न-भ। रक्षत—ख-ञ-त२-३। रक्षते—घ-त४-श-मॅ-मु॥ ८९३. १८. मा नो इति—ख-त१-२-मु। मा न इति—ग-ञ-भ३; म मे इति—त३-४-न-श; इमे इति—भ१; मे इति—भ२। मेति—मॅ॥

[८. ८७.] ८९४. ३. यत्स्थ इति—मॅ-मु-आश्व. श्रौ.। यत्स्थो—ख-ग-त; यत्स्थो इति—भ-श॥ ८९४. ८. अनुपक्षीणस्तोत्रः—ग-*मॅ। अनुक्षीणस्तोत्रः—ख-त-भ-मु; मनुष्यः क्षीणस्तोत्रः—श॥ स्तोमः स्तोता भवति—*मॅ-मु। स्तोमस्ता भवसि—ख-ञ-त२-३-भ; स्तोम भवसि—त१-४॥ ८९४. १२. प्रयच्छतः—§-मु। प्रयच्छथः—मॅ॥ प्रति आ गतम्—ख-ग-घ-त-न-भ२-

श-मु । प्रत्यागं-भ१ । प्रत्यागच्छतं-भ३-मॅ ॥ ८९४.१४. **शीघ्रमागत्य पिबतम्**—त-भ-मु । शीघ्रमागत्य पिबतः-ख । एतन्नास्ति घ-मॅ-पुस्तकयोः ॥ ८९४.२७. **आ**—भ१-२ । आ नि पातं-ख-ञ-त१-२-मु । भ३-मॅ-पुस्तकयोरेतन्नास्ति । इतरलिखितपुस्तकेषु २-४ मंत्राणां भाष्यं नास्ति ॥ ८९५. ४. **अवतिः**—भ२-३-मु । अवतीः-भ१; अविति-त२ । अवति-ख-मॅ ॥ **याच्ञाकर्मा**—ख-त२-भ-मु । याच्ञाकर्म-मॅ ॥ ८९५. ५. **आत्मनः** । आत्मनां-ख-ञ-त२-भ३; आत्मानं-त१; आत्मानां-भ१-२ । आत्मना-मॅ-मु ॥ **पालनहेतुकत्वेन**—ख-त२-भ-मॅ-मु । ? ॥ ८९५.६. **ता तौ**—ख-घ-त१-२-मु । ततो-भ-मॅ ॥ ८९५. ७. **सर्वैर्देवैः**—ख-घ-ञ-त१-२-मु । सर्वदेवैः-भ१-२ । सर्वदेवेषु-मॅ ॥ ८९५. १५. **ववृधानौ**—ख-घ-ञ-त१-२-भ१-२-मु । वावृधानौ-भ३-मॅ ॥ ८९५. १६. **शोभनाम्**—§-मु । मॅ-पुस्तक एतन्न विद्यते ॥ ८९६. २. **अन्नलाभाय**—§-मु । अन्नकामाय-मॅ ॥

[ ८. ८८. ] ८९६. २०. **वसोः पात्रे निवसतः**—*मॅ-मु । वसे पात्रः प्रतिवसतः-ख-त-भ१; वसोः पात्रं प्रतिवसतः-ग-भ३-श; वसो पात्रः प्रतिवसतः-भ२ ॥ ८९६. २५. **अत्रेति**—§-मु । यत्रेति-मॅ ॥ ८९६. ३०. **अतिशयितदीप्तिम्**—§ । °दीप्तं-मु । अतिशयेन दीप्तं-मॅ ॥ ८९७. ५. **शोभनदानयोग्यं बलादियुक्तम्** । शोभनदानयोग्यबलादियुक्तं-ग । शोभनयोग्यं बलादियुक्तं-ख-त-भ-मॅ-मु ॥ ८९७. ६. **याचामह इति**—ग-*मॅ । याचामहेति-श; याचाम इति-ख-त-न-भ-मु ॥ ८९७. ७. **ब्राह्मणाच्छंसिनः** । 'अच्छावाकस्य' इति भाव्यमिति प्रतिभाति ॥ ८९७. १४. **न निवारयन्ति**—ग२-घ१-भ-मु । च निवारयंति-श; निवारयंति-ख-ग१-च-ञ-त३-४-न-मॅ ॥ ८९७. १५. **त्वम्**—मॅ । त्वं तत्-§-मु ॥ ८९७. २३-२४. **मज मुजि...शब्दार्थः**—§-मॅ-मु । इदं पुनरुक्तमिवाभाति । धातुपाठे 'मुज मुजि शब्दार्थाः' इति दृश्यते । 'मजमुजी च' इति नास्ति । 'मुज मुजि' इत्येतयोः स्थाने 'मृज मृजि इति स्वामिचन्द्रौ' इति माधवीयधातुवृत्तावुक्तम् । 'मृज मृजि शब्दार्थाः मजमुजी च' इति पाठः संभाव्यते । अन्यत्र ( ऋ. सं. १. ५१. १०; ५५. ५ ) 'टुमस्जो शुद्धौ' इति धातोः मज्मञ्शब्दो व्युत्पादितः ॥ **शत्रूणामाक्रोशनसमर्थेन**—मॅ-मु । येन शत्रूणामाकोसनसमर्थेन-ख-ञ-त२-३-४-भ१-२; येन शत्रूणां रोदनसमर्थेन-ग; येन शत्रूणाकोशन(°सन-न )समर्थेन-त१-न; येन शत्रूणामाकोशनसमर्थेन-श ॥ ८९७. २९. **प्रादुरबीभवन्**—मॅ-मु । प्रादुरभीरयन्-ख-घ१-त-न-भ-श; प्रादुरचीकरन्-ग; प्रादुरभिरयन्-च ॥ ८९८. ६. **लटि**—ख-त-भ-श । लेटि-ग-मॅ-मु ॥

[ ८. ८९. ] ८९८.२१. **इन्द्रो देवता**—ख-ग-त-न-भ-श-मु । मॅ-पुस्तके नास्तीदम् ॥ ८९८.२४. **मरुत्वतीया ऊर्ध्वं नित्यात्** । मरुत्वदीया ऊर्ध्वं नित्यात्-ग; मरुत्वतीय ऊर्ध्वं नित्या-ख-त-भ-श । मरुत्वतीय ऊर्ध्व नित्यात्-मॅ ॥ ९००. ३. गच्छन्तु-*मॅ-मु । गच्छति-ख-त; गच्छंति-घ-न-भ ॥ ९००. १०. **त्वत्तो**—§-मु । स्वतो-मॅ ॥ ९००. १८. **त्वदर्थम्**—§ । त्वदर्थो-मॅ-मु ॥ ९००. २९-३१. **ततोऽङ्गिरस...मारोहितवान्** । अशुद्धेयं वाक्यरचना ॥

[ ८. ९०. ] ९०१. १५. **अनुभवतु**—भ३-श । उत्कृष्टमनुभवतु-ग; उदकमनुभावतु-त; उदकमनुभवेतु-न-भ१-२ । उदकमनुभावयतु-घ-मॅ-मु ॥ ९०१. १६. **वा**—श-*मॅ-मु । एतन्नास्ति ख-ग-त-न-भ-पुस्तकेषु ॥ ९०१. १८. **जिनाति**—भ२-३-मु । जिनातीति-ख-त-भ१-श; जीनातीति-ग । जीनाति-न-मॅ । ऋ. सं. ८. १. ३०. द्रष्टव्यम् ॥ ९०१. २७. **तत्पुत्रस्य**—

ग-*मॅ-मु। नपुत्रस्य-ख-त-भ१-२-श; पुत्रस्य-भ३ ॥ ९०२. ३. **त्वद्गुणान् सर्वान्**—न-भ-श। (अनति)द्गुणान् सर्वान्-ख-त। सर्वान्-ग-घ-मॅ-मु ॥ ९०२. ४. **ब्रह्म**—घ-न-भ-मु। ख-ग-त-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ९०२. १३. **प्रह्वीभावयसि**—*मॅ-मु। प्रह्वीभवसि-ख-त-भ-श; प्रह्वीभवंती-ग ॥ ९०२. २४. **ऋजीषी ऋजीषोऽपार्जितोऽभिषुतः सोमः**। ऋजीषोपार्जितोभिषुतसोमः-ख-त-भ२-३-श; ऋजीषोपार्जितोभिषुतः सोमः-ग; ऋजीषी उपार्जितोभिषुतः सोमः-घ-मु; ऋजीषी॰ ऋजीषोपार्जितोभिषुतसोमः-भ१। ऋजीषी ऋजीष उपार्जितोऽभिषुतः सोमः-मॅ। ८९३. पृ. १४ प. टिप्पणी द्रष्टव्या ॥ ९०३. ११. **अश्नुवताम्**—ग-त४-श-मु। अश्नुवता-ख-ञ-त२-३; अश्नुवंतु-घ; अश्नुतां-भ। अश्नुवंतां-मॅ ॥

[ ८. ९१ ] ९०३. १६. **चिरकालम्**—§-मॅ-मु। चिरं कालं-आउफ्रेख्ट्महाशयप्रकाशित एतत्सूक्तभाष्ये (Indische studien Vol. IV) ॥ ९०३.१९. **दंतघर्षण॰**—मॅ-मु। दंतघर्ष॰-आउफ्रेख्ट् ॥ ९०३. २०. **अत्र कन्या**—§-मॅ। अत्रिकन्या-मु-आउफ्रेख्ट् ॥ ९०३. २७. **अपालायामुक्तायाम्**—§-मॅ-मु-आउफ्रेख्ट्। 'अपालायामुक्तवत्याम्' इति भाव्यम् ॥ ९०३. २९. **एतानि रोमफलादियुक्तं कुरु**—§-मॅ-मु-आउफ्रेख्ट्। 'रोमफलादियुक्तानि' इति भाव्यम् ॥ **उक्तायाम्**—§-मॅ-मु। 'उक्तवत्याम्' इति भाव्यम्। उक्तवत्यां-आउफ्रेख्ट् ॥ **॰शिरःस्थितं खलतिमपहाय**—भ-मॅ। ॰शिरःस्थितां खलतिमपहाय-ग-त-मु। ॰शीरःस्थितं खलतित्वमपहाय-आउफ्रेख्ट्। खलतिशब्दः पुनरपि (५ मंत्रे) आगतः। मॅक्समुल्लरमहाशयस्यैतद्विषयकटिप्पणी द्रष्टव्या ॥ ९०३. ३१. **पूर्वापहृता या**—*मॅ। पूर्वाभिहृतायाः-ख-ग-त२-३-४-भ-मु; पूर्वाभिहितायाः-ञ-त१; पूर्वाभिहृता या-श-आउफ्रेख्ट्। बृहद्देवतायां (६.१०६)-'तस्यास्त्वगपहृता या पूर्वा सा शल्यकोऽभवत्' ॥ ९०४. ६. **लतारूपम्**—भ३। अविरूपं-ख-त-भ२; अची रूपं-भ१; अटि रूपं-श-आउफ्रेख्ट्। लङि रूपं-ग-*मॅ-मु। 'लङि रूपम्' इति यत् मॅक्समुल्लरमहाशयैः स्वीकृतं तदयुक्तं प्रतिभाति। यतः लङि 'अविन्दत्' इति रूपं स्यात्। लुङि तु 'अविदत्' इति भवति। मॅक्समुल्लरमहाशयस्य टिप्पणी द्रष्टव्या ॥ ९०४. ९. **दन्तध्वनिम्**—घ-मॅ। दंते दंतध्वनिं-मु। दंतराजिध्वनिं-आउफ्रेख्ट् ॥ ९०४. १०. **सोमांशुमविन्दत्**—ग-*मॅ-मु-आउफ्रेख्ट्। सोमं सुमविंदत्-ख-ञ-त२-३-४-भ; सोमं समविंदत्-श। शाट्यायनब्राह्मणवचनविषये मॅक्समुल्लरमहाशयस्य टिप्पणी द्रष्टव्या। एतद्ग्रन्थस्याद्याप्यनुपलब्धेः न किमप्यधिकं वक्तुं शक्यतेऽस्मिन् विषये ॥ ९०४. ११. **सा तमभिव्याजहार**—*मॅ-मु। साभिव्याहार-ख-त-भ-श; साभिव्याहरत्-ग। साभिव्याजहार-आउफ्रेख्ट् ॥ **त इदम्**—*मॅ-मु-आउफ्रेख्ट्। ता इदं-ख-त-भ-श; वा इदं-ग। 'त इह' इत्यपि स्यादिति मॅक्समुल्लरमहाशयः ॥ ९०४. २०. **भृष्टयवाः**—भ३-मु। पृष्टयवाः-भ१। भ्रष्टयवाः-ख-त-श-मॅ-आउफ्रेख्ट् ॥ ९०४. २८.-९०५. १. **इच्छाम एव...... तमिन्द्रमुक्त्वा**—*मॅ। इच्छाम एव मम गृहमागच्छंत त्वामिंद्र इति जानीम (न जानीम-ख) एव इह मार्ग एवागतं त्वा त्वां नाधीमसि नाधिगम (न जानीम-ख; निधिगम-भ१) अत्रापि चनेत्यवधारणे इह त्वामिंद्र इति न जानीम इत्यपालय तमिंद्रमुक्त्वा-ख-ञ-त१-४-भ; इच्छाम एव मम गृहमागच्छतं (॰मागच्छंतं-श) त्वामिंद्र इति जानीम एव इत्यपालय(॰लया-श)तमिंद्रमुक्त्वा-त३-श। इच्छाम एव मम गृहमागच्छ तं त्वामिंद्र इति जानीम एव इह मार्ग एवागतं

त्वा त्वां नाधीमसि नाधिगच्छामः। अत्रापि चनेत्यवधारणे। इह त्वामिंद्र इति न जानीमः। इत्यपाला तमिंद्रमुक्त्का(?क्त्वा)–मु। इच्छामः एवं मम गृहमागच्छंतं त्वामिंद्र इति जानीम एव। इह मार्गे एवागतं त्वा त्वां नाधीमसि नाधिगच्छामः। अत्रापि चनेत्यवधारणे। इह त्वामिंद्रेति न जानीम इत्यपाला तमिंद्रमुक्त्वा–आउफ्रेख्ट्॥ १०५. २. **कुत्सितम्**—*मॅ-मु। कुत्सितः–§-आउफ्रेख्ट्॥ १०५. ५. **एवाधासीत्**—*मॅ-मु। एवौवधासीत्–ख-त-भ-श; एवोच्चैरधासीत्–ग। एवाधासीत् (मुद्रणदोषः?)–आउफ्रेख्ट्॥ १०५. १५. **बहु**—§-मॅ-मु। आउफ्रेख्ट्महाशयप्रकाशितभाष्य एतन्नास्ति॥ १०५. १७. **बहु**—§-मॅ-मु-आउफ्रेख्ट्। मॅक्समुल्लरमहाशयः इमं शब्दमनावश्यकं मन्यते 'बहुवारम्' इति पदस्याग्रे सद्भावात्॥ १०५. १८. **एव**—भ३-*मॅ-मु-आउफ्रेख्ट्। इतरलिखितपुस्तकेषु नास्ति॥ १०५. ३१. **तम्**—मॅ-मु-आउफ्रेख्ट्। तां–§॥ **सो ह जज्ञे**—आउफ्रेख्ट्। सोहं जज्ञे–ख-ज्ञ-त१-भ; सो जज्ञे–ग-त४-श-मॅ-मु; जज्ञे–त२-३॥ १०५. ३२. **नासुस्तान्यु ह**—*मॅ-मु-आउफ्रेख्ट्। वस्युस्थान्यु ह–§॥ १०६. ५. **या असौ**—मॅ-मु। या सा–आउफ्रेख्ट्॥ १०६. ६. **अथापि**—ख-ग-त-भ-श-मॅ-मु। अपि–घ-आउफ्रेख्ट्॥ १०६. १५. **निष्कर्षणेन पूत्वी**—*मॅ-आउफ्रेख्ट्। निष्कर्षणे वा–त-भ१-२; निष्कर्षेणैव–ग; निष्कर्षणेन–भ३; निष्कर्षणेन वा–श। निष्कर्षेण पूत्वी–मु॥ १०६. १७-१८. **रथस्य...अभवत्**—*मॅ। रथस्याध्य (°ध्य–ज्ञ-त२-३) बृहत्सा मोर्धाभवत्तां खेनसेनसो(खेनसो–भ२-३) त्यबृहत् (त्यहरत्–श) सा संश्लिष्टकाभवत्–ख-त-भ-श; रथस्यात्यबृहत्सा मोद्धवा भवतो खेनसेनसो बृहत्सामंशिष्टकाभवत्–ग। रथस्याध्यबृहत्सा गोधाभवत्तां खेऽनसोऽत्यबृहत्सा संश्लिष्टकाभवत्–मु। रथस्यासाद्य बृहत्सामोर्ध्वाभवत्तं खेऽनस आसाद्य बृहत्सामसंश्लिष्टकाभवत्–आउफ्रेख्ट्॥ १०६.२०. **तस्य...त्वग्दोषम्**—§-मॅ-मु। तद्दोषं–आउफ्रेख्ट्॥ १०६. २१. **सूक्तम्**—ग-न-भ-*मॅ-मु। युक्तं–ख-त-श-आउफ्रेख्ट्॥ अपालायाः कथाविषये ऋग्वि. २. ५२.; बृहद्दे. ६. ९९–१०७; अनु. भा. ८. ९१. द्रष्टव्यम्। मॅक्समुल्लरमहाशयस्य एतत्सूक्तटिप्पणी च द्रष्टव्या॥

[८. ९२.] १०७. ९. **गानयोग्यम्**—त१-३-मु। गातयोग्यं–ख-ज्ञ-त२-४-भ-श; गातव्यं योग्यं–ग। गाथायोग्यं–*मॅ। 'गानयोग्यम्' इति पाठः समीचीनतर इति मॅक्समुल्लरमहाशयेनोक्तम्[1]॥ १०७. ३०. **लोटि**—*मॅ-मु। लिटि–ख-त-भ-श; लिङि–ग॥ **ध्वमस्तनबादेशः**—ग-भ३-*मॅ-मु। ध्ववस्तनबादेशः–इतरेषु॥ **व्यत्ययेन...गुणः**। अत्र व्यत्ययाश्रयणमनावश्यकम्। ब्रूञ उभयपदित्वात् 'तस्य तनबादेशः' इति वक्तुं शक्यम्। ऋ. सं. १. ८४. ५. द्रष्टव्यम्॥ १०७. १९. **यत्वा**—*मॅ। दत्वा–§। गृहीत्वा–मु॥ १०७. २५. **श्रीङ् पाके**—ख-ग-भ-मॅ-मु। प्रीङ् पाके–त२-३-श; शीङ् पाके–ज्ञ-भ१। 'श्रीञ् पाके' इति भाव्यम्॥ १०७. २६. **इन्दोः**—ग-*मॅ-मु। इंद्रः–ख-त-न-भ२-श; इंद्रः इंदोः–घ॥ **क्षरत्**—*मॅ। क्षरतः–ग; क्षरंतं–त-भ-श; क्षरंत–घ-मु॥ १०८. ७. **ग्रहेषु**—ग-त-न-भ२-श। गृहेषु–भ१-३-मॅ-मु॥ १०८. ११. **भूताभिभवनादीनि**—ख-त-न-भ-श-मु। भूतानि अभिभूतानि–ग। भूतानि भुवनादीनि–मॅ॥ १०८. १४. **°तिरिक्तोक्थे**—त-भ-श। °तिरिक्तोक्थ्ये–ग-मॅ-मु॥ १०८. १५. **स्तोत्रियानुरूपौ**। स्तोत्रियानुरूपाः–आश्व. श्रौ.॥ १०८. २३. **प्लुङ्**—ख-ग-त-न-भ-*मॅ-मु। प्लुङ्–श॥ १०९. १८. **अदा-**

१. Preface to the 2nd Edition Vol. IV, p. 178.

**तृन्**—ग-*मॅ-मु । दातृन्–ख-त-म-श; शत्रून्–घ ॥ १०९. २५. **औतोमित्यात्वाभावः**—म । ओत्वाभावः–ख-त-न-भ२-मु; ओर्ऋत्वाभावः–श । औत्त्वाभावः–भ३-*मॅ ॥ ११०. २. **अनुकामा**—मॅ-मु । कामा–§ ॥ ११०. ४. **अवगच्छाम**—ख-ग-त-न-भ-श । अवगच्छामः–घ-मॅ-मु ॥ **लेटि** । 'लुङि' इति युक्तम् । ऋ. सं. १. ५०. १०; ११३. १६. द्रष्टव्यम् ॥ ११०. १८. **पोषयिष्ण्या**—ख-त-न-भ-श-मु । ग-घ-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ११०. १९. **°वचनात्**—ख-ग-त१-२-३-भ१-३-मु । °वदनात्–त४-भ२-श-मॅ ॥ ११०. २६. **प्रदीयमानेन सोमेन**—भ३-*मॅ । प्रदीयमानसोमेन–ख-ग-त-भ१-२-मु; प्रदीयमानः सोमो न– श ॥ १११. २८. **इन्द्रादयः**—§-मु । मॅ-पुस्तके नास्ति ॥ ११२. १६. **कुक्षये**—§-*मॅ-मु । सर्वेषु लिखितपुस्तकेषु 'कुक्षये' इत्यस्य स्थाने 'तुनहु' इति पाठो विद्यते इति मॅक्समुल्लरमहाशयः । वस्तुतस्तु १८ पङ्क्तौ विद्यमानस्य 'कुक्षये' इत्यस्य स्थाने 'तुनहु' इति पाठो लिखितपुस्तकेषूपलभ्यते ॥ ११२. १७. **तेजसाम्**—§ । तेजसा–मॅ-मु ( मुद्रणदोषः ? ) ॥ ११२. २४. **स्तौति**—*मॅ-मु ग्वालियर-जोधपूरलिखितपुस्तकयोश्च । नौत–ख-त१-२-३-४-भ-श; स्तौत–ञ ॥ ११३. ४. **समीपास्त्वाम्**—भ३-*मॅ-मु । मृगपाव्नां–ख-त; सुगपात्वां–भ१-२; मृगपाजां–श; मृपातारं–ग ॥ **अश्नुवतामिति**—ख-ग-त-भ-श-मु । अश्नुवंतामिति–मॅ ॥ ११३. २६. **तन्द्रयुक्तः**—*मॅ-मु । तं प्रयुक्तं–ख-त; मंद्रयुक्तं–ग; तंद्रयुक्तं–न-भ-श ॥ ११३. २७. **°कर्मान्वितो**—*मॅ-मु । °कर्मवतो–ख-घ-त-भ१-२; °कर्मयुतो–ग; °कर्मवान्–भ३; °कर्मवते–श ॥ ११४. ४. **वन**—मु । क्त–ख-त-न-भ१-२-श; श्न–भ३; वनु–ग२-मॅ ॥ ११४.११. **त्वमिदं...त्वमस्माकमसि** । इदमारण्यकवचनं कुत्रत्यमिति न ज्ञायते ॥ ११४. १८. **आडागमः**—ग । अडागमः–मॅ-मु इतरेषु च ॥

[ ८. १३. ] ११४. २४. **°तिरिक्तोक्थे**—ञ-भ-श-मु । °तिरिक्तोत्वे–ख-त१-२-३-४ । °तिरिक्तोक्थ्ये–ग-मॅ ॥ ११४. ३०. **एतादृशानुभावम्**—*मॅ-मु । एतादृशं अनुभवि–ख-त-भ१-२; एतादृशं मनुष्यमभि–ग; एतादृशमभि–भ३; एव तादृशं अनुभवि–श ॥ ११५. ६. **केनापि**—मॅ । न केनापि–§-मु ॥ ११५. १२. **प्रतिषेधात्**—ख-ग-ञ-त१-२-३-भ । षप्रतिषेधात्–त४-श । वप्रतिषेधात्–मॅ-मु ॥ ११५. १३. **दोहनकाले**—ख-ञ-त१-२-न-भ-मु । ग-घ-त४-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ११५. १५. **°तिरिक्तोक्थे**—ख-त-न-भ१-२-श-मु । °तिरिक्तोक्ते–भ३ । °तिरिक्तोक्थ्ये–ग-मॅ ॥ ११५. २२. **तदा**—§-मॅ-मु । अयं शब्दोऽनावश्यकः प्रतिभाति ॥ ११६. ६. **ये सोमाः**—घ-*मॅ । ते सोमाः सुनोतेः कर्मणि लिटि व्यत्ययेन श्नुः ( श्लुः छः–त३-४-भ३-श; श्नुः छ–न; श्नुः उच्छ–भ१ )–ख-ग-त-न-भ-श । सुनोतेः कर्मणि लिटि व्यत्ययेन श्लुः ये सोमाः–मु । केनचिदध्येत्रा प्रान्ते लिखितं केनचिल्लेखकेन प्रमादान्मूले समावेशितं स्यात् । मॅक्समुल्लरमहाशयोऽप्येवमभिप्रैति ॥ ११६. ८. **सूचितम्**—§ । सूचितं च–मॅ-मु ॥ ११६. ९. **°तिरिक्तोक्थे**—भ१-श । °तिरिक्तोक्थ्ये–ख-ग-त-भ२-मॅ-मु ॥ ११६. १५. **वा**—त-न-भ-श-मु । ख-ग-मॅ-पुस्तकेषु नास्ति ॥ ११६. १७. **स्तुतः सन्**—मॅ । स्तुतः सन् वृत्रहंतवे वाजयामसि वाजवंतं करोतीत्यर्थे तत्करोतीति णिच् णाविष्ठवदिति णेरिष्ठवद्भावात् टेरिति टिलोपः विन्मतोर्लुक् इति वचनान्मतुपो लुक्–ख-ग-त-न-भ-श-मु ( लिखितपुस्तकेषु क्वचिदशुद्धिर्विद्यते ) । इयमपि प्रक्रिया लेखकप्रमादाद्भाष्ये प्रविष्टा ॥ ११६. २८. **वज्र आयुधम्**—*मॅ । वज्रायुधं–§-मु ॥ ११७. ११. **सर्वत्रानयेति**—मु ।

सर्वत्रमनुयंति–ख; सर्वमनेति नेति–ग; सर्वत्रमनयंति–त-श; सर्वत्रमानयेति–भ । सर्वत्रानयतीति–*मॅ ॥ ९१७. २०. °शिरस्त्राणेन्द्र—§-मॅ-मु । '°शिरस्त्राण बेन्द्र' इति भाष्यम् । '°शिरस्त्राण वेंद्रः' इति भाष्यमिति मॅक्समुल्लरमहाशयेनोक्तं तदयुक्तम् (मुद्रणदोषः ?) ॥ ९१७. २२. ते त्वदीयम्—ख-त१-२-भ-मु । घ-त३-न-श-मॅ-पुस्तकेष्विदं नास्ति ॥ ९१७. २८. त्वद्रुलम्—ख-ग-घ-त-न-भ२-य-श-मु । तद्रुलं–भ१-मॅ ॥ ९१८. ४. परिगमिताः—*मॅ-मु । वनिगमितां–ख-त२-३-श; च निर्गमिता–ग; वनिगमिता–ञ-त४-भ२; चर्मिनामिता–भ१ ॥ ९१८. २०. आशुषे । 'आ शुषे' इति भिन्नः पदपाठः । 'आऽनुषे' इति भाष्यकारेण स्वीकृतं स्यादित्यपि संभावयितुं शक्यमिति मॅक्समुल्लरमहाशयः ॥ ९१८. २६. वशं नयन्तीति—§-मॅ । वशं नयंत्यनेनेति–मु । अयं समीचीनतरः पाठः लिखितपुस्तकेष्वभावादस्माभिर्न स्वीकृतः ॥ ९१९. १३. °यूतीत्यादिना—ख-ग-ञ-त१-२-भ३-मु । °यूत्यादिना–त४-न-भ१-२-श-मॅ ॥ ९१९. २४. आगच्छतु—*मॅ-मु । आगच्छति–ख-त-भ; आगच्छेति–ग ॥ ९१९. ३०. भवानि—ञ-भ३-*मॅ-मु । भवामि–इतरेषु ॥ ९२०. ३. वसतीवर्यः—मॅ-मु । वसतीवरा–ख-त-न-भ१-२; वसतीवरीः–घ-भ३-श; वसतीवरिः–ग ॥ ९२०. ४. ग्रहस्थाः—ग-घ । गृहस्थाः–ख-त-न-भ-श-मॅ-मु ॥ ९२०. ५. निचान्तपृणः—मॅ-मु । निचांतपुणः–§ ॥ ९२०.१४. एव - - - - र - वि - जः—त४-न-भ१-२-मॅ । एव–ख-ञ-त२-३-मु । एव ऋत्विजः विसर्गे–ग; एव ओजसा ओजः–त१; एव ऋजः–भ३; एव ऋजीषं–श ॥ °त्युक्तम्—ग-ञ-त२-३-श-*मॅ-मु । °त्युक्त–ख-त१-४-भ१-२; °त्युक्त(त्वात्प्रसंगात्)–भ३ ॥ ९२०. १६. अच्छ—§-मु । अच्छा–मॅ ॥ ९२०. १७. विसृजन्ति—ग-*मॅ-मु । विसृजत–ख-ञ-त१-२; विसृजन्–त३-४ भ-श ॥ ९२०. २१. हविर्भिः—*मॅ-मु । हविः–§ ॥ ९२०. २२. हितं - - वादिषु—त-भ१-२-मॅ । हितं - - - - वेदिषु–ग; हितं - - - वाषु–श; हितं गवादिषु–भ३ । हितं हितकरं प्रयः–मु ॥ ९२०. २७-२८. ता निवसन्त्यत्रेति । ते निवसंतेत्यत्रेति–ख-त-भ१-२-श; ते निवसंतत्रेति–ग; ते निवसंत्यत्रेति–न-भ३ । निवसंत्यत्रेति–मु । निवसत्यत्रेति–मॅ ॥ ९२१. २१. आडागमः-ग । अडागमः–मॅ-मु इतरेषु च ॥ ९२२. १०. श्रुतेरत्रापि—मु । श्रुते तत्रापि–ख-ग-त-न-श; श्रुतेन तत्रापि–भ । श्रुतेऽत्रापि–*मॅ ॥ ९२२. ११.इत्यादरार्थः–-ख-ग-घ-त-मु । इत्यादरार्था–न-भ-श । इत्यादरार्थे–मॅ ॥ ९२२. २४. धत्तनेति...रत्नानि—*मॅ-मु-× ॥

[८. ९४] ९२३. ३. बिन्दु°—ख-ग-ञ-भ२-*मॅ-मु । विंदु°–त१-२-३-४-भ१-श; बिंदुः–घ ॥ ९२३. २८. पूर्वाभिहिते—ज । पूर्ववेनिहित–ख; पूर्व अभिहिते–ग; पूर्वनिहित–ञ; पूर्ववेभिहिते–त२-न; पूर्वभवेभिहिः–त४; पूर्वचोभिहित–भ; पूर्ववेभिहित–त३-श । पूर्वमेवाभिहिते–मु । पूर्वत्राभिहिते–मॅ ॥ ९२४. ८. ततमूर्णास्तुकेनेति—*मॅ-मु । ततपूर्णास्तुकोनेति–ख-ञ-त१-२-३; तन्यते ऊर्णास्तुकेनेति–ग; ततपूर्णास्तुकेनेति–त४-भ; ततपूर्णास्तुकोनति–श ॥ आलादेशः—ग-ज-न-भ-श । अडादेशः–ख; अलादेशः–त-मॅ-मु ॥ ९२४. १०. तं तथोक्तम्—ग । तत्तथोक्तं–मॅ-मु इतरेषु च ॥ ९२४. १६. सेवाम्—ग-*मॅ-मु । सतां–ख; सवां–त-भ-श ॥ ९२४. १७. सोमसेवां कामयते—ज-न-भ । सोममेवां कामयते–ख-त-श; स्तोता कामयते–ग । सोममेव कामयते–मु । सोममेवाकामयते–मॅ ॥ ९२५.२०. विश्रुतम्—ज । विसृतं–भ१; विष्टतं–श; विस्तृतं–ख-ग-घ-त-न-भ२-मॅ-मु ॥

[ ८. ९५. ] १२६. १५. **निहितम्**—§-मु। मॅ-पुस्तके नास्ति॥ १२६. २२. **मरुद्गणानाम्**—*मॅ-मु। मरुत्सोमानां–ख-त-न-भ-श; मरुत्संवन्धिनं–ग; मरुत्समानानां–घ। 'मरुत्संघानाम्' इति स्यादिति मॅक्समुल्लरमहाशयः॥ १२७. ३. **सुपुत्रवतः**—ख-ग-ज-श-त१-२-न-भ-मु। सुपुत्रतः–त३-४; सुपुत्रमतः–श। सुपुत्रस्य–मॅ॥ १२७. १५. **त्वदीयम्**—§-मु। मॅ-पुस्तके नास्ति॥ १२७. २२. **सिषासन्तः**—च-ज-मु। सिसासंतः–मॅ इतरेषु च॥ १२७. २४. **सन्तः**—ख-घ-ज-त-न-भ-श-मु। ग-मॅ-पुस्तकयोर्नास्ति॥ १२८. १. **इन्द्राय यागादिकर्मणि**—ग-ज-भ१-श-मु। इंद्रयागादिकर्मणि–न-भ२। इंद्रयागादिकर्माणि–ख-त-मॅ॥ १२८. ६. आगच्छतैव–§-मु। गच्छतैव–मॅ॥ १२८. ९. **माद्यतेः**—ग। मादतेः–ख-त-भ-श। मदायतेः–मु। मादयतेः–मॅ॥ १२८. १७. **त्वम्**—§-मु। त्वं च–मॅ॥

[ ८. ९६. ] १२८. ३२. **अध द्रप्सः**—*मॅ। अव द्रप्स–§-मु॥ १२९. ७. **अर्तेरुच** । 'अर्तेरुच्च' इत्युणादिसूत्रम्॥ १२९. १२. **सप्त**—न-भ। इतरेषु मॅ-मु-पुस्तकयोश्च नास्ति॥ १२९. १३. **हननेनोत्पादकत्वात्**—मु। हननेनोत्पादत्वात्–ख-त-न-भ२; हननोत्पादकत्वात्–ग; हननोत्पादत्बात्–ज-भ१। हननोत्पादित्वात्–मॅ॥ १२९. २१. **अतिविद्धा**—ग-घ-ज-श-त१-३-४-न-भ-श-मु। ख-त२-मॅ-पुस्तकेषु नास्ति॥ १२९. २३. **°पिञ्जूलमुद्धृत्य**। '°पुञ्जीलमुद्गृह्य' इति तै. सं.॥ १३०. ७. **निस्पूर्वात्**—§-मु। निष्पूर्वात्–मॅ॥ १३१. १६. **धारयेम**—ख-श-त१-२-भ-मु। एतन्नास्ति ग-घ-त३-४-श-मॅ॥ १३१. १८. **भवाम**—§-मु। भवेम–मॅ॥ १३१. ३०. **वृत्रं घ्नन्तम्**—ग-भ१। वृत्रं जघ्नंतं–ज। वृत्रघ्नं तं–ख-त-भ२-श-मॅ-मु॥ १३२. ४. **षष्टिभ्युत्तरसंख्याकाः**। 'त्र्युत्तरषष्टिसंख्याकाः' इति भाव्यम्॥ १३२. ५. **नवसु गणेषु**—*मॅ-मु। वसुगणेषु–ख-त-श; नवसु गणोषु–ग; सुरगणेषु–ज-भ॥ **प्रतिपादिताः**—ख-ज-श-त१-२-भ। तिपादिताः–ग-त३-४-श। निपादिताः–*मॅ-मु॥ **आदितः**—ग-*मॅ। अदितेः–इतरेषु। आदिपंचगणाः–मु॥ १३२. ७. **गणः**—*मॅ-मु। गर्भाः–ख-त-भ; वर्गाः–ज; गणाः–ग॥ १३२.११. **विदध्म**—ख-घ-त-श-मु। विदध्यम–ग; विदधाम–ज-भ। विदध्मः–मॅ॥ १३२. १७. **च**—§-मु। ते–मॅ॥ १३२. २०. **अभिषुतः**—ग-भ। अभिषुत्यः–ख-घ-त-श-मॅ-मु। अत्र 'अपार्जितः' इत्येव पाठः सर्वेषु लिखितपुस्तकेषु दृश्यते। ऋ. सं. ८. ८६. ४; ९०. ५. द्रष्टव्यम्॥ **ऋजीषः**—ग। ऋजीषी–ख-घ-त-भ-श-मु। ऋजीषं–*मॅ। ८९३. पृ. १४. प. टिप्पणी द्रष्टव्या॥ १३३. ८. **ईषाम्**—ख-ग-ज-त-भ२-मु। ईशां–भ१-श-मॅ॥ १३३.२१. **शोभना**—§-मु। शोभमाना–मॅ॥ १३४.८. **नाम**। नाम्ना–बृहद्दे.॥ **सोऽभ्ययात्**। अभ्ययात्–बृहद्दे.॥ **योत्स्यमानः सुसंहृष्टैः**—बृहद्दे.। योत्स्यमानस्तु संहृष्टैः (हृष्टैः–त३)-ख-श-त२-३-४; योत्स्यमानस्तु संहृष्टैः—ग-त१-भ; यात्स्यामातं स्तुतं हृष्टैः–श। योत्स्यमानं सुसंहृष्टैः–*मॅ-मु॥ १३४. ९. **तानायतः**—*मॅ-मु-बृहद्दे.। तानायुतान्–ख-त-भ; तानायतासन्–ग; तानायुधान्–श॥ **प्रेहि**। एहि–बृहद्दे.॥ १३४. ११. **पुनर्विभो**। अस्मादनन्तरं "श्रुत्वा देवगुरोर्वाक्यम् अनर्थं वृत्रशङ्कया" इति बृहद्देवतायामधिकं विद्यते॥ **स्वर्ग एव**–बृहद्दे.। खड्ग एव-ख-त-भ; खग एव–ग। ओजसैव–*मॅ-मु॥ **देवानादाय**–त१-*मॅ-मु-बृहद्दे.। देवायायाय—ख; देवाघनाय–ग; देवयतनं–ज; देवानायाय–श-त२-३-४-भ१; देवानाय–भ१; देवानायातं–श॥

**पपुर्विधिवत्सुराः**—*मॅ-मु-बृहदे. । पुनर्विधिवत्पुरा—ख-ग-ज-त-भ२; पुनर्विधिवत्पुराः—भ१ ॥ ९३४. १२. **तृचे**—ग-ज-बृहदे. । दृचे—ख-त-भ; ऋचि—श । द्वृचे—मॅ । ऋचे—मु । **तदुव द्रप्स इत्यस्मिन्** । तदेतदप्यवेत्यस्मिन्—बृहदे. ॥ अयं बृहद्देवतागतः कथाभागः केनचित् पश्चाद्विनिवेशितो भाष्ये इति मॅक्समुल्लरमहाशयस्याभिप्रायः ॥ ९३४. १३. **अनार्षत्वेनानादरणीयम्**—ज । अनात्वान् नादरणीयं—ग; अनार्षादनारणीयं—श । अनार्षत्वे नादरणीयं—मॅ-मु इतरेषु च ॥ ९३४. १६. **उदकस्य**—ग-ञ-श-मु । उदस्य—ख-त२-४-भ-मॅ । अनन्तरऋग्भाष्यं द्रष्टव्यम् ॥ ९३५. १. **केचिदिष्यामि...पठन्ति** । 'इष्यामि वो वृषणो' इति संहितापाठः । 'शाखान्तरे' इति मुपुस्तके टिप्पणी दत्ता ॥ ९३५. १८. **°न्नेवाशत्रुभ्यः**—*मॅ-मु । °न्नेव शत्रुभ्यः—§ । १६ पङ्क्तौ विद्यमानस्य '°न्नेवाशत्रुभ्यः' इत्यस्य स्थाने '°न्नेव शत्रुभ्यः' इति पाठो लिखितपुस्तकेषूपलभ्यत इति मॅक्समुल्लरमहाशयेनोक्तं तत्प्रामादिकम् ॥ १३५. २०. **प्रकाश्य**—ग-भ-*मॅ-मु । प्रकाश्यः—ख-घ-त-श ॥ ९३६. ११. **छन्दोविषयत्वान्निपातनम्**—ग-*मॅ-मु । छन्दोविषयत्वानिपातनं—ख-त१-२-३-भ२; छंदोविषयत्वांनिपातनं—ञ; छंदोविषयत्वानिपात्यते—त४; छंदोविषयत्वान्निपातत्वं—श ॥ ९३६. १३. **सप्त गङ्गाद्याः**—§-मु । गंगाद्याः सप्त—मॅ ॥ ९३६.२३. **अहानि**—§-मु । अहा अहानि—मॅ ॥ ९३७. ३. **वृत्रहा**—§-मु । स वृत्रहा—मॅ ॥ **चर्षणीधृत्**—ख-ग-घ-त३-भ१-मु । चर्षणिधृत्—ञ-त२-४-भ२-श-मॅ ॥ ९३७. १४. **महान्**—ज । स महन्—ख; सहमन्—ञ-त२; सहमा—त४-श; सहम—त३; सहन्—भ । स महान्—ग-मॅ-मु ॥

[ ८. ९७. ] ९३७. २७. **च**—ख-ग-ज-ञ-त१-२-३-न-भ-श-मु-आश्व. श्रौ. । वा—त४-मॅ ॥ ९३८.३. **त्वे**—मु । ते—ग-घ-ज-न-भ; न—ख-त । मॅ-पुस्तके नास्ति ॥ ९४०. १६. **एतत्**—ग-त-न-भ-श-मु । एत्—ख । एव तत्—मॅ ॥ ९४०.२९ **संग्रामनाम**—ज । संग्रामः—ख-ग-ञ-त२-३; संग्राम—त४-न-भ-श । संग्रामाः—मॅ-मु ॥ ९४०. ३०. **स्तुते**—ग-ज-भ-मु । सुते—ख-त-न-श-मॅ ॥ ९४१. ११. **रेभाः**—§-मु । रेभासः—मॅ ॥ ९४१. २७. **इत्याद्या**—§ । इत्याद्याः—मॅ-मु ॥ ९४२. १०. **सर्वदिक्स्थम्**—न-*मॅ-मु । सर्वदिक्वं—ख-त; सर्वदिग्भवं—ग; सर्वदिग्गतं—ज; सर्वदिग्—भ१; सर्वदिग्धु—भ२; सर्वद्दिकं—श ॥

[ ८. ९८. ] ९४३. १३. **नृमेधाख्यस्य**—ग-भ१-२ । नृमेधाक्षस्य—ख-त-न-श । नृमेधस्य—भ३-मॅ-मु ॥ ९४३. १५. **पुरउष्णिक्**—*मॅ-मु । ककुप्—§ ॥ ९४४. १०. **प्राप्नोः**—*मॅ । अप्राप्नोः—§-मु ॥ ९४४. २८. **त्वम्**—§-मु । मॅ-पुस्तके नास्ति ॥ ९४५. ६. **ससृज्महे**—ञ-त१-भ२-*मॅ-मु । ससूज्महे—ख; सृज्महे—ग-घ१-त३-४-भ१-श; सृज्यमहे—च; ससुज्महे—त२ ॥ ९४५. १४. **वर्धन्ति**—ग-घ-भ । वर्धयंति—ख-त-मॅ-मु ॥ ९४५. १८. **उरुयुगे**—ख-ग-च-ञ-त१-२-न-भ१-श-मॅ । उरूयुगे—घ१-त३-४-भ२-३-मॅ ॥

[ ८. ९९. ] ९४६. १२. **ऐन्द्रम्**—न-भ । इंद्रो देवता—घ । ख-ग-त-श-मॅ-मु-पुस्तकेष्वेतन्नास्ति ॥ ९४६. २५. **वज्रिन्निन्द्र**—ख-ग-घ-त-न-श-मु । वज्रवन्निंद्र—भ । वज्रिन् वज्रवन्निंद्र—मॅ ॥ ९४६. २७. **स्वसरं गृहम्**—§-मु । स्वसरं च गृहं—मॅ ॥ ९४७. १३. **करोति**—*मॅ । करोत्यतो—§-मु ॥ ९४७. १४. **रश्मयः**—*मॅ-मु । श्रयः—ख-त-भ-श । ऋश्रयः—ग ॥ ९४७.२५. **स्तोतः**—न । स्तोतारः—मॅ-मु इतरेषु च ॥ ९४८. १६. **श्रथयन्त श्रथिताः**—त२-४-*मॅ । श्रथयंत

श्रयिताः—ख; श्रयंत श्रयिता—ग; श्रथयंत श्रथिताः—ञ-त३-श-मु; श्रथयंत श्रथयिताः—भ; श्रथयंत श्रथिताः—न। 'श्रथयंत' इति संहितापदपाठौ ॥ ९४८. २२. **गन्तारम्**—ग-ञ-भ२-श-*मॅ-मु। गगा—ख; गंगारं—त ॥

[८. १००.] ९४९. ८. **ते**—ख-त-न-भ-मु। ग-श-मॅ-पुस्तकेषु नास्ति ॥ **अयमिति... वाग्देवत्ये**—*मॅ-मु। अयमिति द्वूचेनेंद्र आत्मानमस्तौदिति वाग्देवत्ये—ख-त२-भ; अयमिति द्वूचेन त्ये—न; वाग्देवत्ये—श ॥ ९४९. १२. **प्रयाण...वाचः**—भ३-*मॅ-मु। प्रणवो याज्यासनये वयं सामये वयंसा मनोज्ञा वचः—ख-ग-त२-३-४; वयसाममनोज्ञा वाचः—ञ; प्राणा - - समये वयं सामये वयंसामननोज्ञा वचः—न; प्रयाणसमये वयंसा मनोज्ञा वाचः—भ१; प्रणवो याज्यासमये वयंसा मनोज्ञा वाचः—भ२-म; प्रयाणे वयसाममनोज्ञा वाचः—श ॥ ९५२. २२. **विश्वरूपाः**। सर्वरूपाः—निरु. ॥ ९५३. ३. **अभिवृत्यैतान्**—§-मॅ-मु। अभितप्येमान्—बृहद्दे. ॥ ९५३. ४. **उचथ्यतस्य तु**—§-मॅ-मु। उचथ्यतस्यैव—बृहद्दे. ॥ ९५३. ५. **विष्णो इति**—§-मॅ-मु। विष्णविति—बृहद्दे. ॥ **त्वृचा**—मॅ। तृचा—ख; त्यृचा—ग; द्वूचा—ञ-त२-न-श; द्दचा-त३-४; **वृचा**—भ१; *त्त्वृचा—भ२। त्युचा—मु। त्वचि—बृहद्दे. ॥

[८. १०१.] ९५३. १०. **तृतीया**—ग-*मॅ-मु। तृतीयादि—ख-ञ-त१-२-न-भ-श; तृतीया हि—त३-४ ॥ ९५३. २३. **अहनि माध्यंदिने**—ख-त१-भ-श-मु। माध्यंदिने—ग; गामुपकर्मणि—ञ-त२; माध्यंदिनो—त३-४-न-मॅ ॥ ९५४. ५. **वर्षिष्ठक्षत्रौ**—ञ-त१-२-भ-मु। वर्षिष्ठक्षेत्रौ—ख-घ। वर्षिष्ठक्षत्रा—ग-त३-४-न-श-मॅ ॥ ९५४. १८. **पुनःपुनर्हवीतवे**—ञ-त१-३-*मॅ-मु। पुनःपुनर्हवीतये—ख-त२; पुनर्हवीतवे—ग-घ-ञ-त४-भ; पुनपुनर्हवीतवे—श ॥ ९५५. १३. **उभा उभौ**—घ-न-भ-मु। उभौ उभौ—ख-ञ-त१-२। उभौ—ग-त३-४-श-मॅ ॥ ९५६. २७. **ते**—श-मु। तव—ग-न-भ२; त—त२-३-४; भुवि—भ१; विभु—भ३; तत्—ख-घ-ञ-मॅ ॥ ९५७. ५. **आगच्छन्ती**—भ१-२। आगच्छती—ख-ग-घ-त१-२-न-श-मॅ-मु ॥ ९५७. १४. **चैतरेय**—*मॅ। चैतस्य—ख-ग-ञ-त१-२-३-भ२-३-मु; चेतस्ये—त४; चैतस्ये—न; चैतास्य—भ; चैतास्येव—श ॥ ९५७. १८. **स प्रजा असृजत**—*मॅ-मु। ससृजे—ख-ग१-त-न-भ-श; सं ससृजे—ग२ ॥ ९५७. २०. **पराभूताः**—ग-न-भ-*मॅ-मु। पारभूताः—ख-त१-२-३; परभूताः—ञ; पाराभूताः—त४। भाष्योद्धृतः शतपथब्राह्मणगतः पाठः तद्ब्राह्मणस्य काण्वमाध्यंदिनशाखयोः पाठाभ्यां भिन्नः ॥

[८.१०२.] ९५८.१०. **पावकविशेषणविशिष्टो**—ग-भ३-श। पावकविशेषणेन विशिष्टो—भ१; पावकविशेषणे विशिष्टो—भ२; पावकविशेषेण विशिष्टो—ख-त-न-मॅ-मु ॥ ९५८. १२-१३. **°यविष्ठयोर्वा**—ग-श-*मॅ-मु। यविष्ययोर्वा—ख-त; यविष्टयोर्वा—न-भ ॥ ९५८. १४. **इत्यष्टा°**—ग-त२-भ१-*मॅ-मु। अष्टा°—ख-त३-श; इष्टा°—न ॥ ९५८. ३०. **सः त्वम्**—§-मु। मॅ-पुस्तके नास्ति ॥ ९५९. २५. **भवामेति**—ख-ग-घ-त-न-श। भवोमेति—भ१; भवति—भ३। भवेमेति—भ२-मॅ-मु ॥ ९६०. १२. **वाशिनमिति वा**—ख-ग१-ञ-त१-२-४-न-भ२-*मॅ-मु। वाशिनामिति वा—त३-श; च—भ१-३ ॥ ९६०. २७. **अन्तरिक्ष्या माध्यमिके**—ख-ञ-त२-३-न-भ१-२-श। अंतरिक्षा माध्यमिकं—ग; अंतरिक्षं माध्यमिके—घ; अतन्चित्‌रक्ष्या माध्यमेके—त१; अंतरिक्ष्या माध्यमिको—

त४ । आंतरिक्ष्या माध्यमिके–भ३-मॅ-मु ॥ ९६१. ८. धीतिभिः निधानैः—ग-मॅ-मु । 'धीतिभिरिधानः' इति स्यादिति मॅक्समुल्लरमहाशयः ॥ ९६१.२२. वनन्वति काष्ठानि हन्ति—ग-भ२-*मॅ-मु । वनन्वती काष्ठानि संति–ख-त१-२; वनन्वति काष्ठानि संति–ञ-भ१-३; वनन्वती काष्ठानि हंति–त४-श; वनन्वती काष्ठानि न–घ१; वनन्वती काष्ठानि त्वंति–च ॥ ९६१. २३. काष्ठानि—ख-ग-त-न-भ-श-मु । घ-मॅ-पुस्तकयोः नास्ति ॥ ९६२. १. यानि कानि चेति—ग-ञ-भ-श-*मॅ-मु-तै. सं. । यानि कानि चेवि–ख-त१-२; यानि चेवि–त३-४ ॥ ९६२. २. सर्वमस्मै स्वदते—ग१-त१-२-३-भ-श-*मॅ-मु-तै. सं. । सर्वदस्मै स्वदक्ष–ख; अस्मै स्वदते–ग२; सर्वस्मै स्वदते–ञ-त४ ॥ ९६२.१२. प्रज्वलयति—ग-घ-भ२-३ । प्रज्वलंति–श । प्रज्वलति–ख-त-न-भ१-मॅ-मु ॥

[ ८. १०३ ] ९६२. १८–२१. आभिप्लविके...राजन्नग्ने इति—मु । प्र मंहिष्ठायेति आभिप्लविकेषूक्थ्येषु मैत्रावरुणस्य वैकल्पिकः स्तोत्रियस्तृचः । सूत्रितं च । प्र मंहिष्ठाय गायत प्र सो अग्ने इति । उपाकर्मणि मंडलाद्याग्ने याहीत्येषा । सूत्रितं मा चिदाग्ने याहि मरुत्सखा यत्ते राजन्नग्न इति–ग । आभिप्लविकेषूक्थ्येषु मैत्रावरुणस्य वैकल्पिकः स्तोत्रियस्तृचः । सूत्रितं च । मा चिदाग्ने याहि मरुत्सखा यत्ते राजन्नग्न इति–ख-त-न-भ-श-मॅ । मॅक्समुल्लरमहाशयः एवमत्र पाठः स्यादिति संभावयति–'आभिप्लविकेषूक्थ्येषु मैत्रावरुणस्य प्र मंहिष्ठायेति वैकल्पिकः स्तोत्रियस्तृचः । सूत्रितं च । अभि प्रयांसि वाहसा प्र मंहिष्ठाय गायत । आ. ७. ८. । इति । उपाकरणोत्सर्जनयोर्मण्डलाद्यंतहोम आग्ने याहीत्येषा । सूत्रितं च । आग्ने याहि मरुत्सखा यत्ते राजञ्छृतं हविः । आ. गृ. ३. ५.७. । इति' ॥ अस्माभिस्तु ग-पुस्तकानुसारेण मु-पुस्तकानुसारेण च स्वीकृतः पाठः ॥ ९६३. १३. कुर्वाणात् मनुष्यात् । कुर्वाणान् मनुष्यान्–§-मॅ-मु । रेजन्ते कम्पन्ते—§-मॅ । 'रेजन्त' इति पदपाठः । रेजन्त कम्पन्ते–मु ॥ ९६३. २०. प्रणेतुम्—ग । प्रनेतुं–मॅ-मु इतरेषु च ॥ ९६३. २१. मर्तो—ख-ञ-त१-२-३-भ३-मु । मतेः–घ१; मर्ता–त४-न-श । मर्त्यो–ग-भ१-२-मॅ ॥ ९६३. २८. तथा—ग-त४-न-भ१-३ । यथा–ख-घ-ञ-त२-भ२-मॅ-मु ॥ ९६४. २. धारयाम—ख-ग-घ-त-न । धारयामः–भ-श-मॅ-मु ॥ ९६४. १६. सः—मॅ-× । मु-पुस्तकेऽपि नास्ति ॥ ९६४. २०. हे—मॅ । हे ये–त१ । ये–मु इतरेषु च ॥ ९६४. २१. प्र गायत—ख-घ-ञ-त१-२-भ-श-मु । ग-त३-४-मॅ-पुस्तकेष्वेतन्नास्ति ॥ ९६४. २७. अस्य अग्नेः—ख-घ-त१-श-*मॅ-मु । तस्याग्नेः–ग-न; तस्यासाग्नेः–त३-श; तस्यास्याग्नेः–भ ॥ ९६५. २६. अभिगमनैरपि । अस्मादनन्तरं 'स्तुवन्ति' इत्येतादृशं क्रियापदमावश्यकमिति मॅक्समुल्लरमहाशयः ॥

# ॥ ऋग्वेदसंहिता ॥

श्रीमत्सायणाचार्यविरचितभाष्यसमेता

६—८ मण्डलानि

ॐ

# ऋग्वेदसंहिता

## श्रीमत्सायणाचार्यविरचितभाष्यसमेता

---

## ॥ अथ षष्ठं मण्डलम् ॥

भारद्वाजे षष्ठे मण्डले षडनुवाकाः। तत्र प्रथमेऽनुवाके पञ्चदश सूक्तानि। तत्र 'त्वं ह्यग्ने' इति त्रयोदशर्चं प्रथमं सूक्तम्। 'त्वं ह्यग्ने सप्तोनेति बार्हस्पत्यो भरद्वाजः षष्ठं मण्डलमपश्यत्' इत्यनुक्रान्तत्वात् मण्डलद्रष्टा स एव भरद्वाज ऋषिः। अनादेशपरिभाषया त्रिष्टुप्। मण्डलादिपरिभाषया अग्निर्देवता। पशोः[1] हविषि अवदीयमाने मैत्रावरुणेनानुवचनीयमिदं मनोतासूक्तम्। सूत्रितं च— 'त्वं ह्यग्ने प्रथम इत्यन्वाह' (आश्व. श्रौ. ३. ६) इति। प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छन्दसि एतदाद्यादिसूक्तषट्कं द्वितीयवर्जम्। सूत्रितं च—'त्वं ह्यग्ने प्रथम इति षण्णां द्वितीयमुद्धरेत्' (आश्व. श्रौ. ४. १३) इति। आद्या उपाकरणे विनियुक्ता। सूत्रं तु पूर्वमन्त्र उक्तम्॥

त्वं ह्यग्ने प्रथमो मनोतास्या धियो अभवो दस्म होता।
त्वं सीं वृषन्नकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यै ॥ १ ॥

त्वम्। हि। अग्ने। प्रथमः। मनोता। अस्याः। धियः। अभवः। दस्म। होता।
त्वम्। सीम्। वृषन्। अकृणोः। दुस्तरीतु। सहः। विश्वस्मै। सहसे। सहध्यै ॥ १ ॥

हे vअग्ने vप्रथमः देवानां मध्ये प्रथमः प्रतमः प्रकृष्टतमः पूर्वभावी वा vत्वं vमनोता vहि देवानां मनो यत्रोतं संबद्धं भवति तादृशो भवसि। हिशब्दः 'अग्निः सर्वा मनोताग्नौ मनोताः संगच्छन्ते' (ऐ. ब्रा. २. १०) इत्यादिब्राह्मणप्रसिद्धिद्योतनार्थः। हे vदस्म दर्शनीय vअस्याः vधियः अस्य कर्मणः vहोता देवानामाह्वाता vअभवः भवसि। हे vवृषन् कामानां वर्षितः vत्वं vसीं सर्वतः vदुष्टरीतु दुर्हिंस्यमहिंस्यं vसहः बलम् vअकृणोः अकरोः। किमर्थम्। vविश्वस्मै vसहसे सर्वस्यापि बलवतः शत्रोः vसहध्यै अभिभवनाय ॥

---

1. झ-त-न-भ-र-पशौ।

अधा होता न्यसीदो यजीयानिळस्पद इषयन्नीड्यः सन् ।
तं त्वा नरः प्रथमं देवयन्तो महो राये चितयन्तो अनु ग्मन् ॥ २ ॥

अध । होता । नि । असीदः । यजीयान् । इळः । पदे । इषयन् । ईड्यः । सन् ।
तम् । त्वा । नरः । प्रथमम् । देवऽयन्तः । महः । राये । चितयन्तः । अनु । ग्मन् ॥२॥

अध अधुना हे अग्ने यजीयान् अतिशयेन यष्टा त्वं होता होमनिष्पादकः सन् इळः भूम्याः वेदिलक्षणायाः पदे स्थाने न्यसीदः निषण्णवानसि । किं कुर्वन् । इषयन् पशुपुरोडाशादिलक्षणमन्नमिच्छन् ईड्यः स्तुत्यः सन् । तं तादृशं त्वा त्वां प्रथमम् इतरदेवताभ्यः पूर्वं देवयन्तः देवं त्वामात्मन इच्छन्तः नरः नेतारो मनुष्या ऋत्विग्यजमानाः महः महते राये धनाय चितयन्तः जानन्तः स्तुत्या ज्ञापयन्तो वा अनु ग्मन् अन्वगच्छन् पूर्वम् ॥

वृतेव यन्तं बहुभिर्वसव्यै३स्त्वे रयिं जागृवांसो अनु ग्मन् ।
रुशन्तमग्निं दर्शतं बृहन्तं वपावन्तं विश्वहा दीदिवांसम् ॥ ३ ॥

वृताऽइव । यन्तम् । बहुऽभिः । वसव्यैः । त्वे इति । रयिम् । जागृऽवांसः । अनु । ग्मन् ।
रुशन्तम् । अग्निम् । दर्शतम् । बृहन्तम् । वपाऽवन्तम् । विश्वहा । दीदिऽवांसम् ॥ ३ ॥

वृतेव मार्गेण । इवेति संप्रत्यर्थे । लोकद्वयमध्यगतेन मार्गेण बहुभिः अनेकैः वसव्यैः वसुभिः ॥ स्वार्थिकस्तद्धितप्रत्ययः ॥ यजमानानां निवासयोग्यैर्वा सार्धं यन्तं गच्छन्तं त्वाम् अनु ग्मन् अनुगच्छन्ति । संभजन्ते यजमानाः । कीदृशास्ते । त्वे त्वयि देवे रयिं धनं जागृवांसः प्रयच्छन्त इत्यर्थः । कीदृशं त्वामित्युच्यते । रुशन्तं दीप्तवर्णम् अग्निम् अङ्गनादिगुणविशिष्टं दर्शतं दर्शनीयं बृहन्तं महान्तं वपावन्तं विश्वहा सर्वेषु कालेषु दीदिवांसं दीप्यमानम् ॥

पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव आपन्नमृक्तम् ।
नामानि चिद्दधिरे यज्ञियानि भद्रायां ते रणयन्त संदृष्टौ ॥ ४ ॥

पदम् । देवस्य । नमसा । व्यन्तः । श्रवस्यवः । श्रवः । आपन् । अमृक्तम् ।
नामानि । चित् । दधिरे । यज्ञियानि । भद्रायाम् । ते । रणयन्त । सम्ऽदृष्टौ ॥ ४ ॥

देवस्य द्योतमानस्याग्नेः पदम् आहवनीयस्थानं[1] नमसा हविषा स्तोत्रेण वा व्यन्तः गच्छन्तः श्रवस्यवः अन्नमिच्छन्तः पूर्वे यजमानाः श्रवः सर्वत्र श्रूयमाणमन्नम् अमृक्तम् अन्यैरपरिबाध्यम् आपन् आप्नुवन्ति । हे अग्ने ते तव भद्रायां स्तुत्यायां संदृष्टौ निमित्तायां रणयन्त[2] रमयन्ति[2] ।

---

१. ख-आहवनीयं स्थानम्; ग-श-आहवनीयादिस्थानम्। २. ख-घ-ज्ञ-त-न-भ-य-र–' रणयन्त रमयन्ति ' नास्ति ।

^v^यज्ञियानि यज्ञयोग्यानि ^v^नामानि नमनीयानि वैश्वानरो जातवेदा इत्यादीनि ^v^दधिरे धारयन्ति । अथवा नमनसाधनानि स्तोत्राणि दधिरे ॥

त्वां वर्धन्ति क्षितयः पृथिव्यां त्वां राय उभयासो जनानाम् ।
त्वं त्राता तरणे चेत्यो भूः पिता माता सदमिन्मानुषाणाम् ॥ ५ ॥

त्वाम् । वर्धन्ति । क्षितयः । पृथिव्याम् । त्वाम् । रायः । उभयासः । जनानाम् ।
त्वम् । त्राता । तरणे । चेत्यः । भूः । पिता । माता । सदम् । इत् । मानुषाणाम् ॥ ५ ॥

हे अग्ने ^v^त्वां ^v^क्षितयः मनुष्या ऋत्विजः ^v^पृथिव्यां वेदिलक्षणायां ^v^वर्धन्ति वर्धयन्ति । ^v^उभयासः उभयविधानि पश्वपशुरूपाणि ^v^जनानां यजमानानां संबन्धीनि ^v^रायः धनानि ऋत्विजः अध्वर्य्वादयः ^v^त्वां त्वामुद्दिश्य वर्धन्ति । अथवा उभयविधानि धनानि गवादीनि जनानां पुत्रादीनाम् अर्थाय प्राप्तुं त्वां वर्धन्ति । हे ^v^तरणे दुःखात्तारकाग्ने ^v^त्वं ^v^चेत्यः ज्ञातव्यः स्तुत्यः सन् ^v^त्राता रक्षिता ^v^भूः भवसि । किंच ^v^मानुषाणां मनुष्याणां स्तोतॄणामस्माकं ^v^सदमित् सर्वदा ^v^पिता ^v^माता च मातापितृस्थानीयो भूः भवसि ॥　　॥ ३५ ॥

सपर्येण्यः स प्रियो विक्ष्व१ग्निर्होता मन्द्रो नि षसादा यजीयान् ।
तं त्वा वयं दम आ दीदिवांसमुप ज्ञुबाधो नमसा सदेम ॥ ६ ॥

सपर्येण्यः । सः । प्रियः । विक्षु । अग्निः । होता । मन्द्रः । नि । ससाद । यजीयान् ।
तम् । त्वा । वयम् । दमे । आ । दीदिऽवांसम् । उप । ज्ञुऽबाधः । नमसा । सदेम ॥ ६ ॥

^v^सः ^v^अग्निः ^v^सपर्येण्यः पूज्यः ^v^प्रियः कामानां पूरकः ^v^विक्षु प्रजासु[1] ^v^होता होमनिष्पादकः ^v^मन्द्रः मदनीयः ^v^यजीयान् अतिशयेन इतरदेवानां यष्टा यजनीयो वा । एवं महानुभावोऽग्निः ^v^नि ^v^षसाद निषण्णोऽभूत् । अथ प्रत्यक्षकृतः। ^v^तं ^v^त्वा तादृशं त्वां ^v^वयं यजमानाः ^v^दमे गृहे ^v^दीदिवांसं दीप्यमानं ^v^ज्ञुबाधः जानुनी बाधयन्तः अवननजानवः प्रणताः सन्तः ^v^नमसा स्तोत्रेण ^v^उप ^v^आ ^v^सदेम आसादयेम । अथवा उपासीदेमेत्येवमाशास्ते ॥

तं त्वा वयं सुध्यो३ नव्यमग्ने सुम्नायव ईमहे देवयन्तः ।
त्वं विशो अनयो दीद्यानो दिवो अग्ने बृहता रोचनेन ॥ ७ ॥

तम् । त्वा । वयम् । सुऽध्यः । नव्यम् । अग्ने । सुम्नऽयवः । ईमहे । देवऽयन्तः ।
त्वम् । विशः । अनयः । दीद्यानः । दिवः । अग्ने । बृहता । रोचनेन ॥ ७ ॥

---

१. ख-क्ष-त-न-भ-य-र—प्रजासु प्रियः ।

हे ᵛअग्ने ᵛतं तादृशं महानुभावं ᵛनव्यं स्तुत्यं ᵛत्वा त्वां ᵛसुध्यः शोभनबुद्धयः ᵛसुम्नायवः सुखमिच्छन्तः ᵛदेवयन्तः देवं त्वामिच्छन्तः ᵛवयम् ᵛईमहे याचामहे । स्तुम इत्यर्थः । हे ᵛअग्ने ᵛत्वं ᵛदीद्यानः दीप्यमानः सन् । केन । ᵛबृहता महता ᵛरोचनेन रोचमानेन तेजसा दीद्यानः ᵛविशः प्रजाः स्तोतॄनस्मान् ᵛदिवः स्वर्गम् ᵛअनयः अगमयः । रोचनेनादित्येन दिवमगमय इति वा संबन्धः । आदित्यमार्गेणेत्यर्थः ॥

विशां कविं विश्पतिं शश्वतीनां नितोशनं वृषभं चर्षणीनाम् ।
प्रेतीषणिमिषयन्तं पावकं राजन्तमग्निं यजतं रयीणाम् ॥ ८ ॥

विशाम् । कविम् । विश्पतिम् । शश्वतीनाम् । निऽतोशनम् । वृषभम् । चर्षणीनाम् ।
प्रेतिऽइषणिम् । इषयन्तम् । पावकम् । राजन्तम् । अग्निम् । यजतम् । रयीणाम् ॥ ८ ॥

ᵛशश्वतीनां नित्यानां ᵛविशाम् ऋत्विग्यजमानलक्षणानां ᵛविश्पतिं स्वामिनं ᵛकविं क्रान्तदर्शिनं ᵛनितोशनं शत्रूणां हिंसकं ᵛवृषभं कामानां वर्षकं ᵛचर्षणीनां स्तोतॄणां मनुष्याणां ᵛप्रेतीषणिं प्राप्तगमनम् ᵛइषयन्तम् अन्नं कुर्वन्तं ᵛपावकं शोधकं ᵛराजन्तं दीप्यमानं दीपयन्तं वा ᵛरयीणां लाभाय ᵛयजतं यष्टव्यम् ᵛअग्निं स्तुम इति शेषः ॥

सो अग्न ईजे शशमे च मर्तो यस्त आनट् समिधा हव्यदातिम् ।
य आहुतिं परि वेदा नमोभिर्विश्वेत्स वामा दधते त्वोतः ॥ ९ ॥

सः । अग्ने । ईजे । शशमे । च । मर्तः । यः । ते । आनट् । सम्ऽइधा । हव्यऽदातिम् ।
यः । आऽहुतिम् । परि । वेद । नमःऽभिः । विश्वा । इत् । सः । वामा । दधते । त्वाऽऊतः ॥ ९ ॥

हे ᵛअग्ने त्वां ᵛसः ᵛमर्तः स यजमानः ᵛईजे यजते । ᵛशशमे ᵛच स्तौति । 'शशमानः' ( नि. ३. १४. २२ ) इति स्तुतिकर्मसु पाठादिदमपि स्तुतिकर्म । ᵛयः यजमानः ᵛते तव ᵛसमिधा सह ᵛहव्यदातिं हविषां दानम् ᵛआनट् करोति । किंच ᵛयः यजमानः ᵛनमोभिः स्तुतिभिः ᵛआहुतिम् आज्यादिलक्षणां ᵛपरि ᵛवेद परितो वेत्ति । ददातीत्यर्थः । ᵛसः यजमानः ᵛत्वोतः त्वया रक्षितः सन् ᵛविश्वेत् सर्वाणि ᵛवामा वननीयानि धनानि ᵛदधते धारयति ॥

अस्मा उ ते महि महे विधेम नमोभिरग्ने समिधोत हव्यैः ।
वेदी सूनो सहसो गीर्भिरुक्थैरा ते भद्रायां सुमतौ यतेम ॥ १० ॥

अस्मै । ऊँ इति । ते । महि । महे । विधेम । नमःऽभिः । अग्ने । सम्ऽइधा । उत । हव्यैः ।
वेदी । सूनो इति । सहसः । गीःऽभिः । उक्थैः । आ । ते । भद्रायाम् । सुऽमतौ । यतेम ॥ १० ॥

हे अग्ने महे महते अस्मै ते तुभ्यं महि महत् अत्यधिकं विधेम परिचरेम। कैरित्युच्यते। नमोभिः नमस्कारैः समिधा वा उत अपि च हव्यैः हविर्भिः । हे सहसः सूनो[1] वेदी वेद्यां गीर्भिः स्तोत्रैः उक्थैः शस्त्रैश्च विधेमेति संबन्धः। किंच ते तव भद्रायां स्तुत्यायां सुमती शोभनानुग्रहबुद्धौ आ यतेम आगच्छेम। भवेमेत्यर्थः ॥

आ यस्ततन्थ रोदसी वि भासा श्रवोभिश्च श्रवस्य१स्तरुत्रः ।
बृहद्भिर्वाजैः स्थविरेभिरस्मे रेवद्भिरग्ने वितरं वि भाहि ॥ ११ ॥

आ । यः । ततन्थ । रोदसी इति । वि । भासा । श्रवःऽभिः । च । श्रवस्यः । तरुत्रः ।
बृहत्ऽभिः । वाजैः । स्थविरेभिः । अस्मे इति । रेवत्ऽभिः । अग्ने । विऽतरम् । वि । भाहि ॥ ११ ॥

हे अग्ने यः त्वं रोदसी द्यावापृथिव्यौ भासा दीप्त्या वि आ ततन्थ व्यतनोः। किंच तरुत्रः तारकस्त्वं श्रवोभिः स्तुतिभिः श्रवस्यः च भवसि हे तादृश अग्ने बृहद्भिः महद्भिः वाजैः अन्नैः स्थविरेभिः स्थविरैः स्थूलैः रेवद्भिः रयिमद्भिः अस्मे अस्मदर्थं वितरं विशिष्टतरं वि भाहि विशेषेण दीप्यस्व ॥

नृवद्वसो सदमिद्धेह्यस्मे भूरि तोकाय तनयाय पश्वः ।
पूर्वीरिषो बृहतीरारेअघा अस्मे भद्रा सौश्रवसानि सन्तु ॥ १२ ॥

नृऽवत् । वसो इति । सदम् । इत् । धेहि । अस्मे इति । भूरि । तोकाय । तनयाय । पश्वः ।
पूर्वीः । इषः । बृहतीः । आरेऽअघाः । अस्मे इति । भद्रा । सौश्रवसानि । सन्तु ॥ १२ ॥

हे वसो वासक धनवन् वाग्ने नृवत् मनुष्यैरुपेतं धनं सदमित् सर्वदा अस्मे अस्मासु धेहि स्थापय। किंच भूरि प्रभूतान् पश्वः पशूंश्च[2] धेहि[2]। किमर्थम्। तोकाय अस्मत्पुत्राय तनयाय तत्पुत्राय। किंच पूर्वीः पूरयित्र्यः[3] कामानां बह्व्यो वा बृहतीः[4] महत्यः[4] आरेअघाः। आरे दूरेऽघानि यासु ताः। तादृश्यः इषः उक्तलक्षणान्यन्नानि भद्रा भद्राणि सौश्रवसानि सुश्रवस्त्वानि अस्मे अस्मासु सन्तु भवन्तु।

'पुरूण्यग्ने' इति त्रयोदशी उखासंभरणीयेष्टौ अग्नेः क्षत्रवतोऽनुवाक्या। सूत्रितं च—'पुरूण्यग्ने पुरुधा त्वाया स चित्र चित्रं चितयन्तमस्मे' (आश्व. श्रौ. ४. १) इति ॥

---

१. त–सूनो देव। २. ख-ङ्ग-न-भ-र–पशूंश्चाधेहि; श–पशून् विधेहि। ३. ख-ङ्ग-भ–प्रेरयित्र्यः। ४. ख-ङ्ग-न-भ-र–बृहतीर्महतीर्महत्यः; त-य–महतीर्महत्यः।

पुरूण्यग्ने पुरुधा त्वाया वसूनि राजन्वसुता ते अश्याम् ।
पुरूणि हि त्वे पुरुवार सन्त्यग्ने वसु विधते राजनि त्वे ॥ १३ ॥

पुरूणि । अग्ने । पुरुधा । त्वाऽया । वसूनि । राजन् । वसुता । ते । अश्याम् ।
पुरूणि । हि । त्वे इति । पुरुऽवार । सन्ति । अग्ने । वसु । विधते । राजनि । त्वे इति ॥ १३ ॥

हे ^v^अग्ने ^v^राजन् ^v^ते तव ^v^पुरूणि बहूनि ^v^पुरुधा गवाश्वादिरूपेण बहुप्रकाराणि ^v^वसूनि धनानि ^v^वसुता वसुतायै वसुमत्त्वाय ^v^अश्यां व्याप्नुयां भुञ्जीय वा । अत्र भरतस्वामी वसुतात इत्येकपदं सप्तम्यन्तं चकार भट्टभास्करमिश्रोऽप्येकपदं संबुद्ध्यन्तं चकार । हे ^v^पुरुवार बहुभिर्वरणीय ^v^अग्ने ^v^राजनि राजमाने ^v^त्वे त्वयि ^v^पुरूणि बहूनि ^v^वसु वसूनि ^v^त्वे त्वां ^v^विधते परिचरते मह्यं दातव्यानि ^v^सन्ति ॥ ॥ ३६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
चतुर्थाष्टके चतुर्थोऽध्यायः समाप्तः ॥

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ पञ्चमाध्याय आरभ्यते । षष्ठमण्डलस्य षडनुवाकात्मकस्य प्रथमेऽनुवाके पञ्चदश सूक्तानि । तत्र 'त्वं हि' इत्येकादशर्चं द्वितीयं सूक्तं भरद्वाजस्यार्षमाग्नेयम् । अन्त्या षट्पञ्चाशदक्षरा शक्करी आदितो दशानुष्टुभः । अनुक्रम्यते हि—'त्वं ह्येकादशानुष्टुभं शक्कर्यन्तम्' इति । प्रातरनुवाक आग्नेये क्रतौ आनुष्टुभे छन्दसीदं सूक्तमुत्तमावर्जं विनियुक्तम् । सूत्र्यते हि—'त्वं हि क्षैतवदग्ना यो होताजनिष्ट' (आश्व. श्रौ. ४. १३) इति । आश्विनशस्त्रे चैतत् शंसनीयं प्रातरनुवाकन्यायेनेत्यतिदिष्टत्वात् । अङ्गिरसां द्विरात्रे द्वितीयेऽहनीदमेव सूक्तमाज्यशस्त्रम् । सूत्रितं च—'त्वं हि क्षैतवदिति चाज्यम्' (आश्व. श्रौ. १०. २) इति ॥

त्वं हि क्षैतवद्यशोऽग्ने मित्रो न पत्यसे ।
त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि ॥ १ ॥

त्वम् । हि । क्षैतऽवत् । यशः । अग्ने । मित्रः । न । पत्यसे ।
त्वम् । विऽचर्षणे । श्रवः । वसो इति । पुष्टिम् । न । पुष्यसि ॥ १ ॥

हे ^v^अग्ने ^v^त्वं ^v^हि त्वं खलु ^v^क्षैतवत् । क्षितिः क्षयोऽपचयः । तत्संबन्धि क्षैतं शुष्कं काष्ठम् । तद्युक्तं ^v^यशः अन्नं हविर्लक्षणं ^v^पत्यसे अभिपतसि[1] गच्छसि । तत्र दृष्टान्तः । ^v^मित्रो ^v^न । अहरभिमानी

---

१. ख—अभितपसि; छ-न-भ—अतिपतसि ।

देवो मित्रः । स इव । यद्वा यश इति गृहनाम । क्षैतवत् । क्षैतं निवासकं हविर्लक्षणमन्नम्¹ । तद्युक्तं यजमानगृहं मित्रभूतः पुरुष इवाभिपतसि । यद्वा पत्यतिरैश्वर्यकर्मा । ईदृशमन्नं पत्यसे ईशिषे । अतः कारणात् हे vविचर्षणे विशेषेण सर्वस्य द्रष्टः vवसो वासकाग्ने vत्वं vश्रवः श्रवणीयमन्नं यजमानगृहस्थं vन । अयं नशब्दश्चार्थे । अन्नकार्यभूतां पुष्टिं च vपुष्यसि वर्धयसि ॥

त्वां हि ष्मा चर्षणयो यज्ञेभिर्गीर्भिरीळते ।

त्वां वाजी यात्यवृको रजस्तूर्विश्वचर्षणिः ॥ २ ॥

त्वाम् । हि । स्म । चर्षणयः । यज्ञेभिः । गीःऽभिः । ईळते ।

त्वाम् । वाजी । याति । अवृकः । रजःऽतूः । विश्वऽचर्षणिः ॥ २ ॥

हे अग्ने vत्वां vहि vस्म त्वामेव खलु vचर्षणयः मनुष्याः vयज्ञेभिः यज्ञसाधनैर्हविर्भिः vगीर्भिः स्तुतिभिः vईळते स्तुवन्ति । अपि च vवाजी । वाजो गमनम् । तद्वान् सूर्यः vत्वां vयाति गच्छति । प्रविशतीत्यर्थः । तथा च श्रूयते—'अग्निं वावादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे' (तै. ब्रा. २. १. २९) इति । वाजिशब्दश्च सूर्यवाचकत्वेन क्वचित् श्रूयते—'अग्निर्वायुः सूर्यस्ते वै वाजिनः' (तै. ब्रा. १. ६. ३. ९) इति 'वायुः सप्तिरादित्यो वाजी' (तै. ब्रा. १. ७. ८) इति च । कीदृशो वाजी । vअवृकः हिंसकरहितः vरजस्तूः । उदकमत्र रज उच्यते । तस्य वृष्टिलक्षणस्य प्रेरयिता । यद्वा । रजसां लोकानां तरिता गन्ता vविश्वचर्षणिः सर्वस्य द्रष्टा ॥

सजोषस्त्वा दिवो नरो यज्ञस्य केतुमिन्धते ।

यद्ध स्य मानुषो जनः सुम्नायुर्जुह्वे अध्वरे ॥ ३ ॥

सऽजोषः । त्वा । दिवः । नरः । यज्ञस्य । केतुम् । इन्धते ।

यत् । ह । स्यः । मानुषः । जनः । सुम्नऽयुः । जुह्वे । अध्वरे ॥ ३ ॥

हे अग्ने vसजोषः सजोषसः सह प्रीयमाणाः vदिवः स्तुतेः vनरः नेतार ऋत्विजः vयज्ञस्य vकेतुं प्रज्ञापकं vत्वा त्वाम् vइन्धते समिद्धं कुर्वन्ति । कदेति चेदुच्यते । vयद्ध यदा खलु vस्यः सः vमानुषः मनोरपत्यभूतः vजनः जातो यजमानो होता वा vसुम्नायुः¹ सुम्नं सुखमात्मन इच्छन् vअध्वरे हिंसाप्रत्यवायरहिते यज्ञे vजुह्वे त्वामाह्वयति तदेत्यर्थः ॥

ऋधद्यस्ते सुदानवे धिया मर्तः शशमते ।

ऊती ष बृहतो दिवो द्विषो अंहो न तरति ॥ ४ ॥

ऋधत् । यः । ते । सुऽदानवे । धिया । मर्तः । शशमते ।

ऊती । सः । बृहतः । दिवः । द्विषः । अंहः । न । तरति ॥ ४ ॥

---

१. त–सुम्नयुः ।

vऋधत्। स यजमान ऋध्नुयात् हे अग्ने vसुदानवे शोभनदानाय तुभ्यम्॥ षष्ठ्यर्थे चतुर्थी॥ तव संबन्धिना[1] vधिया कर्मणा vयः[2] vमर्तः[2] मरणधर्मा यजमानः vशशमते शाम्यति। यद्वा। शमतिः[3] स्तुतिकर्मा। त्वदर्थं कर्मणा युक्तः सन् स्तौति। vसः यजमानः vबृहतः महतः vदिवः दीप्तस्य[4] तव संबन्धिन्या vऊती ऊत्या रक्षया vद्विषः द्वेष्टॄन् vअंहो vन आहननशीलं पापमिव[5] vतरति[5] अतिक्रामति॥

समिधा यस्त आहुतिं निशितिं मर्त्यो नशत्।
वयावन्तं स पुष्यति क्षयमग्ने शतायुषम्॥ ५॥

सम्ऽइधा। यः। ते। आऽहुतिम्। निऽशितिम्। मर्त्यः। नशत्।
वयाऽवन्तम्। सः। पुष्यति। क्षयम्। अग्ने। शतऽआयुषम्॥ ५॥

हे vअग्ने, vसमिधा समिन्धनहेतुभूतेनेध्मेन सह vते त्वदीयां vनिशितिं निशितां तनूकृतां[6] मन्त्रसंस्कृताम्[6] vआहुतिं vयः vमर्त्यः मनुष्यः vनशत् व्याप्नुयात्। नशतिर्व्याप्तिकर्मा। vसः मनुष्यो यजमानः vवयावन्तम्। वयाः शाखाः पुत्रपौत्रादिलक्षणाः। तद्युक्तं vशतायुषं बहुविधान्नं चिरकालजीवनं वा vक्षयं गृहं vपुष्यति पोषयति वर्धयति। तत्र चिरकालमवतिष्ठत इत्यर्थः॥ ॥ १॥

त्वेषस्ते धूम ऋण्वति दिवि षञ्छुक्र आततः।
सूरो न हि द्युता त्वं कृपा पावक रोचसे॥ ६॥

त्वेषः। ते। धूमः। ऋण्वति। दिवि। सन्। शुक्रः। आऽततः।
सूरः। न। हि। द्युता। त्वम्। कृपा। पावक। रोचसे॥ ६॥

हे अग्ने vत्वेषः दीप्तस्य vते तव vशुक्रः निर्मलः शुभ्रवर्णो वा vधूमः vदिवि अन्तरिक्षे vआततः विस्तीर्णः vसन् vऋण्वति मेघात्मना परिणतो गच्छति। अपि च हे vपावक शोधकाग्ने vसूरो vन सूर्य इव vकृपा अभिमुखीकरणसमर्थया स्तुत्या स्तूयमानः vत्वं vद्युता दीप्त्या vरोचसे vहि दीप्यसे खलु॥

अधा हि विक्ष्वीड्योऽसि प्रियो नो अतिथिः।
रण्वः पुरीव जूर्यः सूनुर्न त्रययाय्यः॥ ७॥

अध। हि। विक्षु। ईड्यः। असि। प्रियः। नः। अतिथिः
रण्वः। पुरिऽइव। जूर्यः। सूनुः। न। त्रययाय्यः॥ ७॥

vअध अपि च vविक्षु प्रजासु हे अग्ने त्वम् vईड्यः स्तुत्यः vअसि भवसि। vहि यस्मादर्थे। यस्मादेवं तस्मात् vनः अस्माकम् vअतिथिः। लुप्तोपममेतत्। अतिथिरिव vप्रियः असि। यद्वा।

---

१. घ-त-संबन्धिन्या। २. त-मर्त्यः। ३. न-शाम्यतिः। ४. ग-त-व्याप्तस्य। ५. ख-पापं तरति; भ-य-पापं च तरति। ६. त-तनूकृत्वा संस्कृताम्।

हविर्वहनाय सततगामी भूत्वास्माकं प्रियोऽसि। तथा ᵛपुरीव नगर्यां ᵛजूर्यः जीर्णो वृद्धो हितोपदेष्टा राजेव ᵛरण्वः रमणीयो गन्तव्यो वा भवसि। तथा ᵛसूनुर्न पुत्र इव ᵛत्रययाय्यः यजमानैः त्रातव्यः[1] पालयितव्यो भवसि। त्रायतेरेतद्रूपम्। यद्वैतत्सूनोर्विशेषणम्। विद्यातपःकर्मलक्षणं त्रयं यातीति त्रययाय्यः। यातेरौणादिक आय्यप्रत्ययः। स्पृहयाय्य इति यथा। अथवा त्रययाय्यो जन्मत्रयं प्राप्तः। जन्मत्रयं स्मर्यते—'मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धनात्। तृतीयं यज्ञदीक्षाया इति जन्मत्रयं स्मृतम्' (मनु. २. १६९) इति। तादृशः पुत्र इव रण्वो रमणीयोऽसि॥

क्रत्वा हि द्रोणे अज्यसेऽग्ने वाजी न कृत्व्यः।
परिज्मेव स्वधा गयोऽत्यो न ह्वार्यः शिशुः॥ ८॥

क्रत्वा। हि। द्रोणे। अज्यसे। अग्ने। वाजी। न। कृत्व्यः।
परिज्माऽइव। स्वधा। गयः। अत्यः। न। ह्वार्यः। शिशुः॥ ८॥

हे ᵛअग्ने ᵛक्रत्वा कर्मणा मन्थनरूपेण ᵛद्रोणे द्रुमे काष्ठेऽरण्यां विद्यमानस्त्वम् ᵛअज्यसे ᵛहि व्यज्यसे[2] खलु। तथा ᵛवाजी ᵛन वेजनवानश्व इव ᵛकृत्व्यः। कृत्वीति कर्मनाम। हविर्वहनादीनां कर्मणां कर्ता। स यथा पुरुषं वहति तद्वद्धविर्वहनमग्नेरश्वसादृश्यम्। तथा ᵛपरिज्मेव परितः सर्वत्र गन्ता वायुरिव दावानलादिरूपेण सर्वत्र गन्ता त्वं ᵛस्वधा। अन्ननामैतत्। अन्नं ᵛगयः गृहं च भवसि। उभयोर्दातेत्यर्थः। अपि च ᵛशिशुः जातमात्रो बालोऽपि त्वम् ᵛअत्यो ᵛन सततगामी जात्यश्व इव ᵛह्वार्यः कुटिलमितस्ततो गन्तासि। 'ह्वृ कौटिल्ये' इत्यस्यैतद्रूपम्॥

कारीर्यामग्नेर्धामच्छदो वैकल्पिक्यनुवाक्या 'त्वं त्या' इति। सूत्रितं च—'त्वं त्या चिदच्युता धामन्ते विश्वं भुवनमधिश्रितमिति वा' (आश्व. श्रौ. २. १३) इति॥

त्वं त्या चिदच्युताग्ने पशुर्न यवसे।
धामा ह यत्ते अजर वना वृश्चन्ति शिक्वसः॥ ९॥

त्वम्। त्या। चित्। अच्युता। अग्ने। पशुः। न। यवसे।
धाम। ह। यत्। ते। अजर। वना। वृश्चन्ति। शिक्वसः॥ ९॥

हे ᵛअग्ने ᵛत्वं ᵛत्या तानि काष्ठानि। चिच्छब्दोऽपिशब्दसमानार्थो भिन्नक्रमः। ᵛअच्युता अच्युतानि च्यावयितुमशक्यान्यपि। अत्सीति शेषः। तत्र दृष्टान्तः। ᵛयवसे घासे विसृष्टः ᵛपशुर्न पशुरिव। स यथा सर्वं भक्षयति तथा त्वं प्रौढकाष्ठादीनि क्षणमात्रेण दहसीत्यर्थः। हे ᵛअजर जरारहिताग्ने ᵛयत् यस्य॥ 'सुपां सुलुक्°' इति षष्ठ्या लुक्॥ ᵛशिक्वसः दीप्तस्य ᵛते तव ᵛधाम[3] धामानि तेजांसि ᵛवना वननीयानि संभजनीयान्यरण्यानि ᵛवृश्चन्ति छिन्दन्ति भक्षयन्ति स त्वमिति पूर्वत्रान्वयः। ᵛह इत्येतत्पादपूरणम्॥

---

१. ख-न-भ-र-स्तोतव्यः। २. त-यजसे। ३. त-धामा।

वेषि ह्यध्वरीयतामग्ने होता दमे विशाम् ।
समृधो विश्पते कृणु जुषस्व हव्यमङ्गिरः ॥ १० ॥

वेषि । हि । अध्वरिऽयताम् । अग्ने । होता । दमे । विशाम् ।
सम्ऽऋधः । विश्पते । कृणु । जुषस्व । हव्यम् । अङ्गिरः ॥ १० ॥

हे अग्ने अध्वरीयताम् अध्वरं यज्ञमात्मन इच्छतां विशां यजमानानां दमे गृहे त्वं होता देवानामाह्वाता सन् वेषि हि स्तुतिं हवींषि वा यतः कामयसे अतः कारणात् विश्पते विशां पालकाग्ने समृधः समृद्धानस्मान् यजमानान् कृणु कुरु। कृत्वा च हे अङ्गिरः अङ्गनादिगुणयुक्त अङ्गाररूप वाग्ने हव्यम् अस्मदीयं हविः जुषस्व सेवस्व ॥

अच्छा नो मित्रमहो देव देवानग्ने वोचः सुमतिं रोदस्योः ।
वीहि स्वस्तिं सुक्षितिं दिवो नॄन्द्विषो अंहांसि दुरिता तरेम
ता तरेम तवावसा तरेम ॥ ११ ॥

अच्छ । नः । मित्रऽमहः । देव । देवान् । अग्ने । वोचः । सुऽमतिम् । रोदस्योः ।
वीहि । स्वस्तिम् । सुऽक्षितिम् । दिवः । नॄन् । द्विषः । अंहांसि । दुःऽइता । तरेम ।
ता । तरेम । तव । अवसा । तरेम ॥ ११ ॥

हे मित्रमहः अनुकूलदीप्ते देव दानादिगुणयुक्त अग्ने रोदस्योः द्यावापृथिव्योर्वर्तमानस्त्वं देवान् यष्टव्यानिन्द्रादीन् अच्छ आभिमुख्येन नः अस्माकं सुमतिं स्तुतिं वोचः ब्रूहि । दिवः स्तुतेः नॄन् नेतॄनस्मान् सुक्षितिं शोभननिवासयुक्तं स्वस्तिम् अविनाशं वीहि गमय ॥ वेतिरत्र अन्तर्भावितण्यर्थो द्रष्टव्यः ॥ वयं च द्विषः द्वेष्टॄन् शत्रून् अंहांसि पापानि दुरिता तत्फलरूपाणि दुर्गमनानि च तरेम अतिक्रामेम । तथा ता तानि व्यवहितानि जन्मान्तरकृतानि च पापादीनि तरेम । उक्त एवार्थो दार्ढ्याय पुनरुच्यते । हे अग्ने तव अवसा रक्षणेन द्वेष्टृप्रभृतीनत्यन्तं तरेम ॥　॥ २ ॥

‘ अग्ने स क्षेषत् ’ इत्यष्टर्चं तृतीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयम् । अनुक्रान्तं च—‘अग्नेऽष्टौ’ इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

अग्ने स क्षेषदृतपा ऋतेजा उरु ज्योतिर्नशते देवयुष्टे ।
यं त्वं मित्रेण वरुणः सजोषा देव पासि त्यजसा मर्तमंहः ॥ १ ॥

अग्ने । सः । क्षेषत् । ऋतऽपाः । ऋतेऽजाः । उरु । ज्योतिः । नशते । देवऽयुः । ते ।
यम् । त्वम् । मित्रेण । वरुणः । सऽजोषाः । देव । पासि । त्यजसा । मर्तम् । अंहः ॥ १ ॥

हे ᵛअग्ने ᵛसः यजमानः ᵛक्षेषत् क्षियति[1] निवसति। चिरकालं जीवेदित्यर्थः। कीदृशो यजमानः। ᵛऋतपाः ऋतस्य यज्ञस्य पालकः ᵛऋतेजाः यज्ञनिमित्तं जातः। उषित्वा च ᵛते त्वदीयं ᵛदेवयुः देवानात्मन इच्छन् स यजमानः ᵛउरु विस्तीर्णं ᵛज्योतिः सूर्याख्यं ᵛनशते प्राप्नोति। हे ᵛदेव द्योतमानाग्ने ᵛयं ᵛमर्तं मनुष्यं यजमानं ᵛमित्रेण ᵛवरुणः। तृतीयार्थे प्रथमा। वरुणेन च ᵛसजोषाः सह प्रीयमाणः ᵛत्वं ᵛत्यजसा त्याजनसाधनेनायुधेन ᵛअंहः अंहसः पापात् ᵛपासि रक्षसि स यजमानः इति पूर्वत्र संबन्धः॥

ईजे यज्ञेभिः शशमे शमीभिर्ऋधद्वारायाग्नये ददाश।
एवा चन तं यशसामजुष्टिर्नांहो मर्तं नशते न प्रदृप्तिः॥ २॥

ईजे। यज्ञेभिः। शशमे। शमीभिः। ऋधत्ऽवाराय। अग्नये। ददाश।
एव। चन। तम्। यशसाम्। अजुष्टिः। न। अंहः। मर्तम्। नशते। न। प्रऽदृप्तिः॥ २॥

यः यजमानः ᵛऋधद्वाराय ऋधत्समृद्धं वारं वरणीयं धनं यस्य तादृशाय ᵛअग्नये ᵛददाश हवींषि ददाति स यजमानः ᵛयज्ञेभिः सर्वैर्यज्ञैः ᵛईजे इष्टवान् भवति। तथा ᵛशमीभिः कर्मभिः कृच्छ्रचान्द्रायणादिभिः ᵛशशमे शान्तश्च भवति। आग्नेयेन यागेन सर्वं फलं लभत इत्यर्थः। अपि च ᵛतं यजमानं ᵛयशसां यशस्विनां पुत्राणाम् ᵛअजुष्टिः अप्राप्तिः न ᵛएव ᵛनशते नैव प्राप्नोति। पुत्रवान् भवत्येवेत्यर्थः। तथा ᵛमर्तं मनुष्यं तम् ᵛअंहः पापं ᵛन नशते। तथा ᵛप्रदृप्तिः अनर्थहेतुः प्रदर्पश्च[2] तं ᵛन प्राप्नोति॥

सूरो न यस्य दृशतिररेपा भीमा यदेति शुचतस्त आ धीः।
हेषस्वतः शुरुधो नायमक्तोः कुत्रा चिद्रण्वो वसतिर्वनेजाः॥ ३॥

सूरः। न। यस्य। दृशतिः। अरेपाः। भीमा। यत्। एति। शुचतः। ते। आ। धीः।
हेषस्वतः। शुरुधः। न। अयम्। अक्तोः। कुत्र। चित्। रण्वः। वसतिः। वनेऽजाः॥ ३॥

ᵛसूरो ᵛन सूर्यस्येव[3] ᵛयस्य अग्नेः ᵛदृशतिः दर्शनम् ᵛअरेपाः पापरहितम्। हे अग्ने ᵛयत् यस्य ᵛते तव ᵛशुचतः ज्वलतः ᵛधीः धारयित्री ज्वाला ᵛभीमा भयंकरा सती ᵛआ समन्तात् ᵛएति गच्छति। यः ᵛअयम् अग्निः ᵛहेषस्वतः शब्दयुक्ताः ᵛशुरुधो ᵛन[4] शुचः शोकस्य रोधयित्रीर्गाश्च ᵛअक्तोः। अक्तुरिति रात्रिनाम। तेन च तत्र संचारी राक्षसादिर्लक्ष्यते। राक्षसादेः स्वभूता ददातीति शेषः। सोऽयं ᵛवसतिः सर्वेषामावासभूतः ᵛवनेजाः अरण्ये जायमानः ᵛकुत्रा ᵛचित् क्वचिदेव स्थाने पर्वताग्रादौ ᵛरण्वः रमणीयो भवति॥

तिग्मं चिदेम महि वर्पो अस्य भसदश्वो न यमसान आसा।
विजेहमानः परशुर्न जिह्वां द्रविर्न द्रावयति दारु धक्षत्॥ ४॥

तिग्मम्। चित्। एम। महि। वर्पः। अस्य। भसत्। अश्वः। न। यमसानः। आसा।
विऽजेहमानः। परशुः। न। जिह्वाम्। द्रविः। न। द्रवयति। दारु। धक्षत्॥ ४॥

---

१. ख-ङ-न-भ-र—क्षयति। २. त—दर्पश्च। ३. य—सूर्य इव। ४. ख-घ-भ—न। न चार्थे।

vअस्य[1] अग्नेः vएम गमनसाधनभूतो मार्गः vतिग्मं तीक्ष्णं स्प्रष्टुमशक्यत्वात्। अस्य च vवर्पः रूपं vमहि महत् प्रभूतं vभसत् दीप्यते ॥ ' भस भर्त्सनदीप्त्योः ' इति धातुः ॥ कीदृशोऽग्निः । vअश्वो vन अश्व इव vआसा आस्येन vयमसानः तृणादिकं नियच्छन् । तथा vपरशुर्न । यथा परशुः स्वकीयां धारां काष्ठे प्रक्षिपति तथा स्वकीयां vजिह्वां ज्वालां vविजेहमानः तरुगुल्मादौ प्रक्षिपन् । तथा vदारु काष्ठं vधक्षत् दहन् vद्रविर्न । द्रविर्द्रावयिता स्वर्णकारः । स यथा स्वर्णादिकं द्रावयति तथा सर्वं वनं vद्रावयति । मूर्तभूतं सर्वं भस्मसात्करोतीत्यर्थः ॥

स इद॑स्तेव॒ प्रति॑ धाद॑सि॒ष्यञ्छि॑शी॑त॒ तेजोऽय॑सो॒ न धारा॑म् ।
चि॒त्रध्र॑जतिरर॒तिर्यो॑ अ॒क्तोर्वेर्न द्रु॒षद्वा॑ रघु॒पत्म॑जंहाः ॥ ५ ॥

सः । इत् । अस्ता॑ऽइव । प्रति॑ । धा॒त् । अ॒सि॒ष्यन् । शिशी॑त । तेज॑ः । अय॑सः । न । धारा॑म् ।
चि॒त्रऽध्र॑जतिः । अ॒र॒तिः । यः । अ॒क्तोः । वेः । न । द्रु॒ऽसद्वा॑ । र॒घु॒पत्म॑ऽजंहाः ॥ ५ ॥

vस vइत् स खल्वग्निः vअस्तेव बाणादेः क्षेप्तेव vप्रति vधात् स्वकीयज्वालां प्रतिधत्ते । यथा धन्वी लक्ष्याभिमुख्येन बाणं संधत्ते तथा ज्वालां संधत्त इत्यर्थः । प्रतिधाय च vअसिष्यन् ज्वालां प्रक्षेप्स्यन्[2] vतेजः स्वकीयं vशिशीत निश्यति तीक्ष्णीकरोति । तत्र दृष्टान्तः । vअयसो vन vधाराम् । यथा अयोमयस्य परश्वादेर्धारां प्रक्षेप्तुकामस्तीक्ष्णीकरोति तद्वत् । तीक्ष्णीकृत्य च vचित्रध्रजतिः विचित्रगतिः vअक्तोः रात्रेः vअरतिः अभिगन्ता vवेर्न पक्षीव vद्रुषद्वा वृक्षेषु सीदन् vरघुपत्मजंहाः लघुपतनसमर्थपादः । एवंभूतः सन् vयः अग्निर्वर्तते स इति पूर्वत्रान्वयः ॥ ॥ ३ ॥

स ईं॑ रे॒भो न प्रति॑ वस्त उ॒स्राः शो॒चिषा॑ रारपीति मि॒त्रम॑हाः ।
नक्तं॒ य ईम॑रु॒षो यो दिवा॒ नॄनम॑र्त्यो अ॒रु॒षो यो दिवा॒ नॄन् ॥ ६ ॥

सः । ईम् । रे॒भः । न । प्रति॑ । व॒स्ते॒ । उ॒स्राः । शो॒चिषा॑ । र॒र॒पी॒ति॒ । मि॒त्रऽम॑हाः ।
नक्त॑म् । यः । ई॒म् । अ॒रु॒षः । यः । दिवा॑ । नॄन् । अम॑र्त्यः । अ॒रु॒षः । यः । दिवा॑ । नॄन् ॥ ६ ॥

vस vईं सोऽयमग्निः vरेभो vन स्तुत्यः सूर्य इव vउस्राः दीप्ता ज्वालाः[3] vप्रति vवस्ते आच्छादयति । तथा vमित्रमहाः सर्वेषामनुकूलप्रकाशः सन् vशोचिषा तेजसा vरारपीति भृशं शब्दं करोति । vयः vईं योऽयमग्निः vनक्तं रात्रौ vअरुषः आरोचमानः सन् vदिवा अहनीव vनॄन् मनुष्यान् स्वस्वकार्ये प्रेरयति । पुनर्यच्छब्दः पूरकः । तथा vअमर्त्यः अमरणधर्मा vअरुषः आरोचमानो रोषरहितो वा vयः अग्निः vदिवा द्योतमानेन तेजसा vनॄन् नेतॄनात्मीयान् रश्मीन् प्रेरयति स इति पूर्वत्र संबन्धः । यद्वा । नक्तं रात्रौ योऽयमग्निररुष आरोचमानो यश्च मरणरहितोऽग्निर्दिवा अह्नि नॄन् नेतॄन् देवान् हविर्भिः संयोजयति । यः दिवा नॄनिति पुनरुक्तिरादरार्था ॥

---

१. ग-त—यस्य । २. त—प्रक्षिपन् । ३. ख-ञ-त-न-भ-र-श—' ज्वालाः ' नास्ति ।

दिवो न यस्य॑ विध॒तो नवी॑नो॒द्वृषा॑ रु॒क्ष ओष॑धीषु नूनोत् ।
घृणा॒ न यो ध्रज॑सा॒ पत्म॑ना॒ यन्ना रोद॑सी॒ वसु॑ना॒ दं सु॒पत्नी॑ ॥ ७ ॥

दि॒वः । न । यस्य॑ । वि॒ध॒तः । नवी॑नोत् । वृषा॑ । रु॒क्षः । ओष॑धीषु । नू॒नो॒त् ।
घृणा॑ । न । यः । ध्रज॑सा । पत्म॑ना । यन् ।
आ । रोद॑सी॒ इति॑ । वसु॑ना । दम् । सु॒पत्नी॒ इति॑ सु॒ऽपत्नी॑ ॥ ७ ॥

<sup>v</sup>दिवो <sup>v</sup>न दीप्तस्य सूर्यस्येव <sup>v</sup>विधतः विधातू रश्मीकुर्वतः <sup>v</sup>यस्य अग्नेः <sup>v</sup>नवीनोत् भृशं शब्दोऽभूत् । एतदेव व्याचष्टे । <sup>v</sup>वृषा कामानां वर्षिता <sup>v</sup>रुक्षः दीप्तः सोऽग्निः <sup>v</sup>ओषधीषु दह्यमानासु <sup>v</sup>नूनोत् भृशं शब्दमकरोत् । <sup>v</sup>यः च <sup>v</sup>घृणा <sup>v</sup>न संचलनशीलेन दीप्तेनेव <sup>v</sup>ध्रजसा गमनशीलेन तेजसा <sup>v</sup>पत्मना इतस्तत उत्पतता <sup>v</sup>यन् गच्छन् वर्तते सोऽग्निः <sup>v</sup>दम् अस्मच्छत्रून् दमयन् <sup>v</sup>सुपत्नी शोभनपतिके <sup>v</sup>रोदसी द्यावापृथिव्यौ <sup>v</sup>वसुना धनेन <sup>v</sup>आ पूरयति ॥

धायो॑भिर्वा॒ यो युज्ये॑भिर॒र्कैर्वि॒द्युन्न द॑वि॒द्योत्स्वेभिः॒ शुष्मैः॑ ।
शर्धो॑ वा॒ यो म॒रुतां॑ त॒तक्ष॑ ऋ॒भुर्न त्वे॒षो र॑भसा॒नो अ॑द्यौत् ॥ ८ ॥

धाय॑ःऽभिः । वा॒ । यः । युज्ये॑भिः । अ॒र्कैः । वि॒ऽद्युत् । न । द॒वि॒द्यो॒त् । स्वेभिः॑ । शुष्मैः॑ ।
शर्धः॑ । वा॒ । यः । म॒रुता॑म् । त॒तक्ष॑ । ऋ॒भुः । न । त्वे॒षः । र॒भ॒सा॒नः । अ॒द्यौ॒त् ॥ ८ ॥

<sup>v</sup>यः अग्निः <sup>v</sup>धायोभिर्वा धारकैरश्वैरिव <sup>v</sup>युज्येभिः युज्यैः स्वयमेव युज्यमानैः <sup>v</sup>अर्कैः अर्चनीयैः दीप्तिभिर्गच्छति सोऽग्निः <sup>v</sup>विद्युन्न विद्युदिव <sup>v</sup>स्वेभिः स्वकीयैः <sup>v</sup>शुष्मैः शोषकैस्तेजोभिः <sup>v</sup>दविद्योत् विद्योतते । <sup>v</sup>यः च <sup>v</sup>मरुताम् एतत्संज्ञकानां देवानां <sup>v</sup>शर्धो <sup>v</sup>वा बलमिव <sup>v</sup>ततक्ष तनूकरोति सर्वं तीक्ष्णीकरोति । शोषयतीति यावत् । सोऽयम् <sup>v</sup>ऋभुर्न उरु भासमानः सूर्य इव <sup>v</sup>त्वेषः दीप्तः <sup>v</sup>रभसानः वेगं कुर्वन् <sup>v</sup>अद्यौत् विद्योतते प्रकाशते ॥ ॥ ४ ॥

'यथा होतः' इत्यष्टर्चं चतुर्थं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयम् । 'यथा होतः' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

यथा॑ होत॒र्मनु॑षो दे॒वता॑ता य॒ज्ञेभिः॑ सूनो सहसो॒ यजा॑सि ।
ए॒वा नो॑ अ॒द्य स॑म॒ना स॑मा॒नानु॒शन्न॑ग्न उश॒तो य॑क्षि दे॒वान् ॥ १ ॥

यथा॑ । हो॒त॒रिति॑ । मनु॑षः । दे॒वऽता॑ता । य॒ज्ञेभिः॑ । सू॒नो॒ इति॑ । स॒ह॒सः॒ । यजा॑सि ।
ए॒व । नः॒ । अ॒द्य । स॒म॒ना । स॒मा॒नान् । उ॒शन् । अ॒ग्ने॒ । उ॒श॒तः । य॒क्षि॒ । दे॒वान् ॥ १ ॥

हे <sup>v</sup>होतः देवानामाह्वातः <sup>v</sup>सहसः <sup>v</sup>सूनो बलस्य पुत्राग्ने <sup>v</sup>यथा येन प्रकारेण <sup>v</sup>मनुषः मनोः प्रजापतेर्यजमानस्य <sup>v</sup>देवताता । यज्ञनामैतत् । देवतातौ यज्ञे <sup>v</sup>यज्ञेभिः यजमानसाधनैर्हविर्भिः <sup>v</sup>यजासि

देवान् यजसि vएव[1] एवं[1] हे vअग्ने vनः अस्माकम् vअद्य अस्मिन् यज्ञे vसमानान् त्वत्सदृशानिन्द्रादीन् vउशन् कामयमानस्त्वम् vउशतः कामयमानान् यष्टव्यान् vदेवान् vसमना क्षिप्रं vयक्षि यज । यद्वा । समानं मन्यन्ते[2] अस्मिन् देवानिति समनो यज्ञः । तस्मिन्निति योऽयम् ॥

स नो॑ वि॒भावा॑ च॒क्षणि॒र्न वस्तो॑र॒ग्निर्व॒न्दारु॒ वेद्य॒श्चनो॑ धात् ।
वि॒श्वायु॒र्यो अ॒मृतो॒ मर्त्ये॑षूष॒र्भुद्भूदति॑थिर्जा॒तवे॑दाः ॥ २ ॥

सः । नः॒ । वि॒भाऽव॑ । च॒क्षणिः॑ । न । वस्तोः॑ । अ॒ग्निः । व॒न्दारु॑ । वेद्यः॑ । चनः॑ । धा॒त् ।
वि॒श्वऽआ॑युः । यः । अ॒मृतः॑ । मर्त्ये॑षु । उ॒षः॒ऽभुत् । भूत् । अति॑थिः । जा॒तऽवे॑दाः ॥ २ ॥

vवस्तोः अहनि vचक्षणिर्न प्रकाशकः सूर्य इव vविभावा विशेषेण दीप्यमानः vवेद्यः सर्वैर्ज्ञातव्यो लम्भनीयो वा vसः vअग्निः vनः अस्मभ्यं vवन्दारु वन्दनीयं स्तुत्यं vचनः अन्नं vधात् दधातु प्रयच्छत्वित्यर्थः । vविश्वायुः सर्वान्नः सर्वेषां जीवनहेतुर्वा vअमृतः मरणरहितः vअतिथिः हविर्वहनाय सततगामी vजातवेदाः जातानां वेदिता जातधनो वा एवंभूतः vयः अग्निः vमर्त्येषु मनुष्येषु यजमानेषु vउषर्भुद्भूत्[3] उषःकालेऽग्निहोत्रहोमार्थं प्रबुद्धो भवति स इति पूर्वत्रान्वयः ॥

द्यावो॒ न यस्य॑ प॒नय॒न्त्यभ्वं॒ भासां॑सि वस्ते॒ सूर्यो॒ न शु॒क्रः ।
वि य इ॒नोत्य॒जरः॑ पाव॒कोऽश्न॑स्य चिच्छिश्नथत्पू॒र्व्याणि॑ ॥ ३ ॥

द्याव॑ः । न । यस्य॑ । प॒नय॑न्ति । अभ्व॑म् । भासां॑सि । व॒स्ते॒ । सूर्यः॑ । न । शु॒क्रः ।
वि । यः । इ॒नोति॑ । अ॒जरः॑ । पा॒व॒कः । अश्न॑स्य । चि॒त् । शि॒श्न॒थ॒त् । पू॒र्व्याणि॑ ॥ ३ ॥

vन इति संप्रत्यर्थे । उक्तं च—‘ अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः ’ ( निरु. ७. ३१ ) इति । vद्यावः स्तोतारः संप्रतीदानीं vयस्य अग्नेः vअभ्वं महत्कर्म vपनयन्ति स्तुवन्ति सोऽग्निः vसूर्यो vन सूर्य इव vशुक्रः शुक्लवर्णः[4] सन् vभासांसि तेजांसि vवस्ते आच्छादयति । vयः च vअजरः जरारहितः vपावकः सर्वस्य शोधकोऽग्निः vवि vइनोति[5] भासा सर्वं व्याप्नोति सोऽयम्[6] vअश्नस्य vचित् व्यापनशीलस्यापि राक्षसादेः vपूर्व्याणि चिरंतनानि पुराणि vशिश्नथत् हिनस्ति । ‘ श्नथ क्नथ हिंसायाम् ’ इति धातुः ॥

व॒घा हि सू॒नो अस्य॑द्म॒सद्वा॑ च॒क्रे अ॒ग्निर्ज॒नुषाज्मान्न॑म् ।
स त्वं न॑ ऊर्जसन॒ ऊर्जं॑ धा॒ राजे॑व जेरवृ॒के क्षे॑ष्य॒न्तः ॥ ४ ॥

व॒घा । हि । सू॒नो॒ इति॑ । असि॑ । अ॒द्म॒ऽसद्वा॑ । च॒क्रे । अ॒ग्निः । ज॒नुषा॑ । अज्म॑ । अन्न॑म् ।
सः । त्वम् । न॒ः । ऊ॒र्ज॒ऽस॒ने॒ । ऊर्ज॑म् । धाः॒ । राजा॑ऽइव । जेः॒ । अ॒वृ॒के । क्षे॒षि॒ । अ॒न्तरिति॑ ॥ ४ ॥

---

१. त—एवमेव । २. त—मन्यते । ३. श—उषर्भुद्भूदभूत् । ४. घ-श—शुक्रवर्णः । ५. त-य— य इनोति । ६. श— सोऽयमग्निः ।

हे ᵛसूनो सहसः पुत्र । यद्वा ' षू प्रेरणे ' । सर्वस्य प्रेरकाग्ने ᵛवद्मा वदनीयः स्तुत्यः ᵛअसि ᵛहि । परः पादः परोक्षकृतः । ᵛअग्रसद्वा अग्रसु अदनीयेषु हविःषु सीदन् हविःस्वीकरणायोपविशन् ᵛअग्निः ᵛजनुषा जन्मना स्वभावतः[1] एव ᵛअज्म । गृहनामैतत् । गृहम् ᵛअन्नं च यजमानानां ᵛचक्रे करोति । ᵛऊर्जसने[2] ऊर्जस्यान्नस्य दातरग्ने ᵛनः अस्मभ्यं ᵛसः तादृशः ᵛत्वम् ᵛऊर्जम् अन्नं ᵛधाः देहि । तथा ᵛराजेव ᵛजेः अस्मच्छत्रून् जय । एतत्सर्वार्थम् ᵛअवृके राक्षसादिभिर्बाधकैर्वियुक्तेऽस्मदीयेऽग्न्यागारे ᵛअन्तः मध्ये ᵛक्षेषि निवस[3] ॥

नितिक्ति यो वारणमन्नमत्ति वायुर्न राष्ट्र्यत्येत्यक्तून् ।
तुर्याम यस्त आदिशामरातीरत्यो न हुतः पततः परिहुत् ॥ ५ ॥

निऽतिक्ति । यः । वारणम् । अन्नम् । अत्ति । वायुः । न । राष्ट्री । अति । एति । अक्तून् ।
तुर्याम । यः । ते । आऽदिशाम् । अरातीः । अत्यः । न । हुतः । पततः । परिऽहुत् ॥ ५ ॥

ᵛयः अग्निः ᵛवारणं तमसां निवारकं स्वकीयं तेजः ᵛनितिक्ति निश्यति तीक्ष्णीकरोति । ' तिज निशाने ' इति धातुः । यश्च ᵛअन्नं यष्टृभिर्दीयमानं हविर्लक्षणम् ᵛअत्ति भक्षयति । तथा च श्रूयते–' अन्नादो वा एषोऽन्नपतिर्यदग्निः ' ( ऐ. ब्रा. १·८ ) इति। सोऽग्निः ᵛवायुर्न वायुरिव ᵛराष्ट्री । ईश्वरनामैतत् । राष्ट्रं राज्यम् । तद्वान् । वायुर्यथा स्वमाहात्म्येन सर्वमीष्टे[4] तद्वत् । सर्वस्येश्वर इत्यर्थः । तादृशः सन् ᵛअक्तून् रात्रीः ᵛअत्येति अतिक्रामति । तद्गतमन्धकारं तिरस्करोतीत्यर्थः । वयं च त्वत्प्रसादात् ᵛतुर्याम तं हिंस्याम ᵛयः जनः ᵛते तुभ्यम् ᵛआदिशाम् आदिश्यमानानां दीयमानानां हविषाम् ᵛअरातीः अरातिरदाता । छान्दसो दीर्घः । यद्वा । अरातीर्धनस्य अदातॄन्[5] ते त्वां प्रत्यादिशामादेष्टॄणामाचक्षाणानामस्माकं यो जनो विरोधी तं हिंस्याम । त्वं च ᵛअत्यो ᵛन शीघ्रगामी जात्यश्व इव ᵛहुतः हिंसकान्[6] ᵛपततः[6] आभिमुख्येन गच्छतः शत्रून् ᵛपरिहुत् परिगत्य हन्ता भव ॥ ह्वरतेर्हिंसार्थस्यैतद्रूपम् ॥ ॥ ५ ॥

आ सूर्यो न भानुमद्भिरर्कैरग्ने ततन्थ रोदसी वि भासा ।
चित्रो नयत्परि तमांस्यक्तः शोचिषा पत्मन्नौशिजो न दीयन् ॥ ६ ॥

आ । सूर्यः । न । भानुमत्ऽभिः । अर्कैः । अग्ने । ततन्थ । रोदसी इति । वि । भासा ।
चित्रः । नयत् । परि । तमांसि । अक्तः । शोचिषा । पत्मन् । औशिजः । न । दीयन् ॥६॥

हे ᵛअग्ने ᵛरोदसी द्यावापृथिव्यौ ᵛभासा दीप्त्या ᵛवि ᵛआ ᵛततन्थ विशेषेणाच्छादयसि । तत्र दृष्टान्तः । ᵛभानुमद्भिः प्रभावद्भिः ᵛअर्कैः अर्चनीयैः किरणैः ᵛसूर्यो ᵛन । यथा सूर्य आतनोति तद्वत् । परोऽर्धर्चः परोक्षकृतः । ᵛपत्मन् । पतत्यस्मिन्निति पत्म मार्गः । तस्मिन् ᵛऔशिजोᵛ न । उशिजः

---

१. त–स्वभावेन । २. त–हे ऊर्जसने । ३. घ१-ग-श–निवससि; च–निवसति; त–निवासैः । ४. ख-ञ-भ-र–सर्वमेष्टे; घ-त-श–सर्वमीष्टे । ५. ख१-ञ-न-भ-य-र–दातॄन् । ६. त–हिंसकादन्यतः; य–हिंसकान्पततः अभिपततः ।

स्तोतारः । स्तुत्यतया तत्संबन्ध्यौशिजः सूर्यः । स इव ^vदीयन् गच्छन् ^vशोचिषा तेजसा ^vअक्तः[1] संश्लिष्टः अत एव ^vचित्रः चायनीयोऽग्निः ^vतमांसि नैशान्यन्धकाराणि ^vपरि ^vणयत् परिणयति परितो गमयति । सर्वस्मादपि दिग्भागान्निवर्तयतीत्यर्थः ॥

त्वां हि मन्द्रतममर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने ।

इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति राधसा नृतमाः ॥ ७ ॥

त्वाम् । हि । मन्द्रऽतमम् । अर्कऽशोकैः । ववृमहे । महि । नः । श्रोषि । अग्ने ।

इन्द्रम् । न । त्वा । शवसा । देवता । वायुम् । पृणन्ति । राधसा । नृऽतमाः ॥ ७ ॥

हे ^vअग्ने ^vमन्द्रतमं स्तुत्यतमं ^vत्वाम् ^vअर्कशोकैः अर्चनीयैः पूजनीयैः शोकैर्दीप्तिभिर्युक्तं ^vहि यस्मात् ^vववृमहे वृणीमहे संभजामहे । यद्वा । अर्कशोकैरर्चनीयैः प्रशस्यैर्दीप्तिकरणैः स्तोत्रैः साधनभूतैस्त्वां संभजामहे तस्मात् ^vमहि महत् ^vनः अस्मदीयं स्तोत्रं ^vश्रोषि शृणु । हे अग्ने ^vनृतमाः स्तुतीनां नेतृतमा ऋत्विजः ^vशवसा बलेन ^vवायुं गन्तारम् । यद्वा[2] । वायुमिव शवसा युक्तम्[3] ^vइन्द्रं ^vन इन्द्रमिव ^vदेवता देवतात्मानं त्वां ^vराधसा हविर्लक्षणेन धनेन ^vपृणन्ति प्रीणयन्ति । देवताशब्दात् द्वितीयायाः 'सुपां सुलुक्°' इति लुक् ॥

नू नो अग्नेऽवृकेभिः स्वस्ति वेषि रायः पथिभिः पर्ष्यंहः ।

ता सूरिभ्यो गृणते रासि सुम्नं मदेम शतहिमाः सुवीराः ॥ ८ ॥

नु । नः । अग्ने । अवृकेभिः । स्वस्ति । वेषि । रायः । पथिऽभिः । पर्षि । अंहः ।

ता । सूरिऽभ्यः । गृणते । रासि । सुम्नम् । मदेम । शतऽहिमाः । सुऽवीराः ॥ ८ ॥

हे ^vअग्ने ^vनः अस्मान् ^vअवृकेभिः । वृकाः स्तेनाः । तद्रहितैः ^vपथिभिः मार्गैः ^vरायः धनानि ^vनु क्षिप्रं ^vस्वस्ति क्षेमेण ^vवेषि गमय प्रापय । ^vअंहः अंहसः पापात् ^vपर्षि । उक्तलक्षणैर्मार्गैः पारय चास्मान् । यानि त्वया ^vसूरिभ्यः स्तोतृभ्यो देयानि सुम्नानि[4] ^vता तानि[4] ^vसुम्नं सुम्नानि सुखानि ^vगृणते स्तुवते मह्यं ^vरासि देहि । वयं च ^vशतहिमाः शतं हेमन्तान् संवत्सरान् ^vसुवीराः । वीर्याज्जायन्त इति वीराः पुत्रादयः । शोभनपुत्रपौत्रादिसहिताः[5] सन्तः ^vमदेम[6] हृष्याम[7] ॥ ॥ ६ ॥

'हुवे वः' इति सप्तर्चं पञ्चमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयम् । तथा चानुक्रम्यते—'हुवे वः सप्त' इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

---

१. ख-भ-य-अक्तः सिक्तः । २. त-अथवा । ३. त-बलयुक्तम् । ४. त-'सुम्नानि ता तानि' नास्ति । ५. त-शोभनपुत्रादिसहिताः । ६. ख-ञ-त-न-भ-य-र-मदेम मोदेम । ७. घ-हृष्येम; त-हृष्यामः ।

हुवे वः सूनुं सहसो युवानमद्रोघवाचं मतिभिर्यविष्ठम् ।
य इन्वति द्रविणानि प्रचेता विश्ववाराणि पुरुवारो अध्रुक् ॥ १ ॥

हुवे । वः । सूनुम् । सहसः । युवानम् । अद्रोघऽवाचम् । मतिऽभिः । यविष्ठम् ।
यः । इन्वति । द्रविणानि । प्रऽचेताः । विश्वऽवाराणि । पुरुऽवारः । अध्रुक् ॥ १ ॥

हे अग्ने वः । व्यत्ययेन बहुवचनम् । त्वां मतिभिः मननीयैः स्तोत्रैः हुवे आह्वयामि । कीदृशम् । सहसः बलस्य सूनुं पुत्रम् । अग्निर्हि बलेन मथ्यमानो जायते । युवानं नित्यतरुणं फलस्य मिश्रयितारं वा अद्रोघवाचम् । अद्रोग्धव्या[1] प्रशस्ता स्तुतिरूपा वाक् यस्मिन् प्रयुज्यते तादृशम् । यविष्ठम् अतिशयेन युवानम् । प्रचेताः प्रकृष्टज्ञानः पुरुवारः पुरुभिर्बहुभिर्वरणीयः संभजनीयः अध्रुक् अद्रोग्धा यजमानानाम् एवंभूतः यः अग्निः विश्ववाराणि सर्वैर्वरणीयानि संभजनीयानि प्रशस्यानि द्रविणानि धनानि इन्वति प्रेरयति । स्तोतृभ्यो ददातीति यावत् । तं त्वां हुव इति पूर्वत्र संबन्धः ॥

त्वे वसूनि पुर्वणीक होतर्दोषा वस्तोरेरिरे यज्ञियासः ।
क्षामेव विश्वा भुवनानि यस्मिन्त्सं सौभगानि दधिरे पावके ॥ २ ॥

त्वे इति । वसूनि । पुरुऽअनीक । होतः । दोषा । वस्तोः । आ । ईरिरे । यज्ञियासः ।
क्षामऽइव । विश्वा । भुवनानि । यस्मिन् । सम् । सौभगानि । दधिरे । पावके ॥ २ ॥

हे पुर्वणीक बहुज्वाल होतः देवानामाह्वातरग्ने त्वे त्वयि दोषा रात्रौ वस्तोः अहनि च यज्ञियासः यज्ञार्हा यजमानाः वसूनि हविर्लक्षणानि धनानि एरिरे आभिमुख्येन[2] प्रेरयन्ति प्रापयन्ति । जुह्वतीत्यर्थः । विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि क्षामेव क्षमायां भूम्यामिव यस्मिन् पावके शोधकेऽग्नौ सौभगानि धनानि सं दधिरे देवाः सम्यक् निहितवन्तः । 'अग्नौ वामं वसु सं न्यदधत' (तै. सं. १. ५. १. १) इति ब्राह्मणम्[3] । तस्मिंस्त्वयीति पूर्वत्र योज्यम् ॥

त्वं विक्षु प्रदिवः सीद आसु क्रत्वा रथीरभवो वार्याणाम् ।
अत इनोषि विधते चिकित्वो व्यानुषग्जातवेदो वसूनि ॥ ३ ॥

त्वम् । विक्षु । प्रऽदिवः । सीदः । आसु । क्रत्वा । रथीः । अभवः । वार्याणाम् ।
अतः । इनोषि । विधते । चिकित्वः । वि । आनुषक् । जातऽवेदः । वसूनि ॥ ३ ॥

हे अग्ने त्वं प्रदिवः । पुराणनामैतत् । पुरातनकालीनासु विक्षु प्रजासु आसु परिदृश्यमानासु च सीदः सीदसि । वैश्वानरात्मना वर्तसे । तथा क्रत्वा आत्मीयेन कर्मणा वार्याणां वरणीयानां

---

१. श–अद्रोग्ध्री । २. त–आ आभिमुख्येन । ३. ख-भ– तैत्तिरीयं ब्राह्मणम् ।

धनानां ᵛरथीरभवः । रंहयिता[1] यजमानेभ्यः प्रापयिताभूः । ᵛअतः कारणात् हे ᵛचिकित्वः विद्वन् ᵛजातवेदः जातानां प्राणिनां वेदितरग्ने ᵛविधते परिचरते यजमानाय ᵛवसूनि धनानि ᵛआनुषक् अनुषक्तं सततं यथा भवति तथा ᵛवि ᵛऋणोषि विविधं प्रेरयसि ॥

प्रवर्ग्येऽभिष्टवे ' यो नः सनुत्यः ' इति तृचः । सूत्रितं च–' यो नः सनुत्यो अभिदासदग्ने भवा नो अग्ने सुमना उपेताविति तृचाः ' ( आश्व. श्रौ. ४. ६ ) इति ॥

यो नः सनुत्यो अभिदासदग्ने यो अन्तरो मित्रमहो वनुष्यात् ।
तमजरेभिर्वृषभिस्तव स्वैस्तपा तपिष्ठ तपसा तपस्वान् ॥ ४ ॥

यः । नः । सनुत्यः । अभिऽदासत् । अग्ने । यः । अन्तरः । मित्रऽमहः । वनुष्यात् ।
तम् । अजरेभिः । वृषऽभिः । तव । स्वैः । तप । तपिष्ठ । तपसा । तपस्वान् ॥ ४ ॥

हे ᵛअग्ने ᵛयः शत्रुः ᵛसनुत्यः । सनुतरित्यन्तर्हितनाम । अन्तर्हिते देशे वर्तमानः सन् ᵛनः अस्मान् ᵛअभिदासत् उपक्षयति बाधते । ᵛयः च ᵛअन्तरः अभ्यन्तरवर्ती सन् हे ᵛमित्रमहः अनुकूलदीप्ते मित्राणां महयितर्वाग्ने ᵛवनुष्यात् हिंस्यात् ᵛतम् उभयविधं हे ᵛतपिष्ठ तप्ततमाग्ने ᵛतपसा तेजसा ᵛतपस्वान् तेजस्वी त्वम् ᵛअजरेभिः जरारहितैः ᵛवृषभिः वर्षितृभिः वृष्टिहेतुभूतैः[2] ᵛतव ᵛस्वैः स्वभूतैः असाधारणैस्तेजोभिः ᵛतप दह ॥

यस्ते यज्ञेन समिधा य उक्थैरर्केभिः सूनो सहसो ददाशत् ।
स मर्त्येष्वमृत प्रचेता राया द्युम्नेन श्रवसा वि भाति ॥ ५ ॥

यः । ते । यज्ञेन । सम्ऽइधा । यः । उक्थैः । अर्केभिः । सूनो इति । सहसः । ददाशत् ।
सः । मर्त्येषु । अमृत । प्रऽचेताः । राया । द्युम्नेन । श्रवसा । वि । भाति ॥ ५ ॥

हे ᵛसहसः ᵛसूनो बलस्य पुत्राग्ने ᵛते त्वां ᵛयः यजमानः ᵛयज्ञेन यागेन ᵛददाशत् परिचरति । ᵛयः च ᵛसमिधा समिन्धनसाधनेनेध्मेन । यश्च ᵛउक्थैः शस्त्रैः ᵛअर्केभिः अर्चनीयैः स्तोत्रैश्च परिचरति हे ᵛअमृत मरणधर्मरहिताग्ने ᵛसः यजमानः ᵛमर्त्येषु मनुष्येषु ᵛप्रचेताः प्रकृष्टज्ञानः सन् ᵛराया धनेन ᵛद्युम्नेन द्योतमानेन ᵛश्रवसा श्रवणीयेनान्नेन यशसा वा ᵛवि ᵛभाति विशेषेण प्रकाशते ॥

स तत्कृधीषितस्तूयमग्ने स्पृधो बाधस्व सहसा सहस्वान् ।
यच्छस्यसे द्युभिरक्तो वचोभिस्तज्जुषस्व जरितुर्घोषि मन्म ॥ ६ ॥

सः । तत् । कृधि । इषितः । तूयम् । अग्ने । स्पृधः । बाधस्व । सहसा । सहस्वान् ।
यत् । शस्यसे । द्युऽभिः । अक्तः । वचःऽभिः । तत् । जुषस्व । जरितुः । घोषि । मन्म ॥६॥

---

१. झ-त–रंहिता । २. झ-त–वृष्टेर्हेतुभूतैः ।

हे ᵛअग्ने ᵛसः त्वम् ᵛइषितः प्रेषितः सन् ᵛतूयं क्षिप्रं ᵛतत् ᵛकृधि कुरु । किं तदित्यत आह । ᵛसहस्वान् बलवांस्त्वं ᵛस्पृधः स्पर्धमानान् ᵛसहसा बलेन परेषामभिभवनसमर्थेन[1] तेजसा वा ᵛबाधस्व विनाशय । ᵛद्युभिः द्योतमानैस्तेजोभिः ᵛअक्तः संसिक्तस्त्वं ᵛवचोभिः स्तुतिरूपैर्वाक्यैः ᵛयच्छस्यसे यत्स्तूयसे[2] । त्वामुद्दिश्य यत् स्तोत्रं स्तोतृभिः क्रियत इत्यर्थः । ᵛतत् ᵛमन्म मननीयं ᵛघोषि घोषणीयं ᵛजरितुः स्तोत्रं ᵛजुषस्व सेवस्व ॥

अग्नये कामाय पुरोडाशमष्टाकपालमित्यस्य ‘ अश्याम ’ इत्येषा याज्या । सूत्रितं च—‘ अश्याम तं काममग्ने तवोतीति कामाय ’ ( आश्व. श्रौ. २. १० ) इति ॥

अश्याम तं काममग्ने तवोती अश्याम रयिं रयिवः सुवीरम् ।
अश्याम वाजमभि वाजयन्तोऽश्याम द्युम्नमजराजरं ते ॥ ७ ॥

अश्याम । तम् । कामम् । अग्ने । तव । ऊती । अश्याम । रयिम् । रयिऽवः । सुवीरम् ।
अश्याम । वाजम् । अभि । वाजयन्तः । अश्याम । द्युम्नम् । अजर । अजरम् । ते ॥ ७ ॥

हे ᵛअग्ने ᵛतव संबन्धिन्या ᵛऊती ऊत्या रक्षया ᵛतं ᵛकामम् ᵛअश्याम प्राप्नुयाम । तमेव कामं विवृणोति । हे ᵛरयिवः धनवन्नग्ने ᵛसुवीरं शोभनपुत्रादियुक्तं ᵛरयिं धनम् ᵛअश्याम प्राप्नुयाम । तथा ᵛवाजयन्तः वाजमन्नमात्मन इच्छन्तो वयं ᵛवाजं त्वया दत्तमन्नम् ᵛअभि आभिमुख्येन ᵛअश्याम प्राप्नुयाम । हे ᵛअजर जरारहिताग्ने ᵛते त्वदीयम् ᵛअजरं जरारहितं ᵛद्युम्नं द्योतमानं यशश्च ᵛअश्याम प्राप्नुयाम ॥　॥ ७ ॥

‘ प्र नव्यसा ’ इति सप्तर्चं षष्ठं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयम् । ‘ प्र नव्यसा ’ इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

प्र नव्यसा सहसः सूनुमच्छा यज्ञेन गातुमव इच्छमानः ।
वृश्चद्वनं कृष्णयामं रुशन्तं वीती होतारं दिव्यं जिगाति ॥ १ ॥

प्र । नव्यसा । सहसः । सूनुम् । अच्छ । यज्ञेन । गातुम् । अवः । इच्छमानः ।
वृश्चत्ऽवनम् । कृष्णयामम् । रुशन्तम् । वीती । होतारम् । दिव्यम् । जिगाति ॥ १ ॥

ᵛगातुम् उपगन्तव्यं स्तोतव्यं वा ᵛसहसः ᵛसूनुं बलस्य पुत्रमग्निम् ᵛअवः अन्नं रक्षणं वा ᵛइच्छमानः इच्छन् स्तोता ᵛनव्यसा[3] नवतरेण ᵛयज्ञेन युक्तः सन् ᵛअच्छ आभिमुख्येन ᵛप्र ᵛजिगाति प्रकर्षेण गच्छति । कीदृशमग्निम् । ᵛवृश्चद्वनं वृक्णं[4] छिन्नं दग्धं[4] वनं येन तादृशं ᵛकृष्णयामं कृष्णवर्त्मानं ᵛरुशन्तं श्वेतवर्णं ᵛवीती वीत्या कान्तेन यज्ञेन ᵛहोतारं यष्टारं ᵛदिव्यं दिवि भवम् ॥

---

१. ज्ञ-त—परेषामभिभव० । २. ज्ञ-त—स्तूयसे । ३. ज्ञ-त—नव्यसा नवीयसा (त-नवीयस्य) । ४. घ—निर्दग्धम्; श—वृक्णं निर्दग्धम् ।

स श्चितानस्तन्यतू रोचनस्था अजरेभिर्नानदद्भिर्यविष्ठः ।
यः पावकः पुरुतमः पुरूणि पृथून्यग्निरनुयाति भर्वन् ॥ २ ॥

सः । श्चितानः । तन्यतुः । रोचनऽस्थाः । अजरेभिः । नानदत्ऽभिः । यविष्ठः ।
यः । पावकः । पुरुऽतमः । पुरूणि । पृथूनि । अग्निः । अनुऽयाति । भर्वन् ॥ २ ॥

सः अग्निः श्चितानः श्वेतमानः श्वेतवर्णो वर्तते । तन्यतुः शब्दकारी रोचनस्थाः । रोचन्ते अस्मिन् ग्रहनक्षत्रादीनीति रोचनमन्तरिक्षम् । तत्र स्थितः अजरेभिः जरारहितैः नानदद्भिः अत्यर्थं शब्दं कुर्वद्भिर्मरुद्भिर्युक्तो रश्मिभिर्वा यविष्ठः युवतमः । यः पावकः शोधकः अग्निः पुरुतमः अतिशयेन प्रभूतः सन् पुरूणि बहूनि पृथूनि स्थूलानि काष्ठानि भर्वन्[1] भक्षयन् अनुयाति अनुगच्छति स इत्थमित्थं वर्तत इति पूर्वत्र संबन्धः ॥

गार्हपत्यादीनां मिथः संसर्गेऽग्नये विविचय इष्टिः कर्तव्या । तत्र 'वि ते' इत्येषानुवाक्या[2] (आश्व. श्रौ. ३. १३) ॥

वि ते विष्वग्वातजूतासो अग्ने भामासः शुचे शुचयश्चरन्ति ।
तुविम्रक्षासो दिव्या नवग्वा वना वनन्ति धृषता रुजन्तः ॥ ३ ॥

वि । ते । विष्वक् । वातऽजूतासः । अग्ने । भामासः । शुचे । शुचयः । चरन्ति ।
तुविऽम्रक्षासः । दिव्याः । नवऽग्वाः । वना । वनन्ति । धृषता । रुजन्तः ॥ ३ ॥

हे शुचे शुद्ध दीप्त वा अग्ने ते त्वदीयाः वातजूतासः वातेन प्रेरिताः शुचयः निर्मलाः भामासः दीप्तयः विष्वक् सर्वतः वि चरन्ति विविधं गच्छन्ति । तुविम्रक्षासः बहूनि काष्ठानि स्पृशन्तः दिव्याः दिवि द्योतमानेऽग्नौ भवाः नवग्वाः नूतनगमनास्ते रश्मयः वना वनानि वनन्ति संभजन्ते । दहन्तीत्यर्थः । किं कुर्वन्तः । धृषता धर्षकेण तेजसा रुजन्तः वनानि[3] भञ्जयन्तः ॥

ये ते शुक्रासः शुचयः शुचिष्मः क्षां वपन्ति विषितासो अश्वाः ।
अध भ्रमस्त उर्विया वि भाति यातयमानो अधि सानु पृश्नेः ॥ ४ ॥

ये । ते । शुक्रासः । शुचयः । शुचिष्मः । क्षाम् । वपन्ति । विऽसितासः । अश्वाः ।
अध । भ्रमः । ते । उर्विया । वि । भाति । यातयमानः । अधि । सानु । पृश्नेः ॥ ४ ॥

हे शुचिष्मः दीप्तिमन्नग्ने ते तव शुक्रासः शुभ्राः ये शुचयः दीप्तयः क्षां पृथिवीं भूमिं वपन्ति मुण्डयन्ति । केशस्थानीयानोषधिवनस्पतीन् दहन्तीत्यर्थः । 'अग्निर्ह दाति रोमा पृथिव्याः'

---

१. त१–भर्वन् भजन् । २. न–अनुवाक्या । सूत्रितं च–वि ते विष्वग्वातजूतासो अग्ने त्वामग्ने मानुषीरीळते विश इति । ३. ख-ङ्ग-भ-य–वना वनानि ।

( ऋ. सं. १. ६५. ४ ) इति निगमान्तरम् । ते रश्मयः विषितासः विमुक्ताः अश्वाः इव इतस्ततो गच्छन्तीति शेषः । अध अस्मिन् काले ते त्वदीयः भ्रमः भ्रमणशीलो ज्वालासमूहः पृश्नेः नानारूपाया भूमेः अधि उपरि सानु समुच्छ्रितं देशं पर्वताग्रादिकं प्रति यातयमानः स्वकीयमग्रं व्यापारयन् उर्विया उरु बहुलं वि भाति विशेषेण प्रकाशते ॥

अध जिह्वा पापतीति प्र वृष्णो गोषुयुधो नाशनिः सृजाना ।
शूरस्येव प्रसितिः क्षातिरग्नेर्दुर्वर्तुर्भीमो दयते वनानि ॥ ५ ॥

अध । जिह्वा । पापतीति । प्र । वृष्णः । गोषुऽयुधः । न । अशनिः । सृजाना ।
शूरस्यऽइव । प्रऽसितिः । क्षातिः । अग्नेः । दुःऽवर्तुः । भीमः । दयते । वनानि ॥ ५ ॥

अध अपि च वृष्णः वर्षितुरग्नेः जिह्वा ज्वाला प्र पापतीति प्रकर्षेण पुनःपुनः पतति गच्छति । तत्र दृष्टान्तः । गोषुयुधो नाशनिः सृजाना । असुरैरपहृतासु गोषु युध्यन्निन्द्रो गोषुयुत् । तस्मात् सृज्यमानाशनिर्वज्र इव । तथा शूरस्येव शौर्योपेतस्य नरस्य प्रसितिः प्रबन्धनं यथान्यैः दुःसहमेवम् अग्नेः क्षातिः ज्वाला सोढुमशक्येत्यर्थः । क्षीयन्ते दह्यन्तेऽस्यामोषधिवनस्पतय इति क्षायतेरधिकरणे क्तिन् ॥ अपि च दुर्वर्तुः दुर्वारोऽन्यैर्वारयितुमशक्यः भीमः भयंकरोऽग्निः वनानि दयते दहति । दयतिरत्र दहतिकर्मा ॥

आ भानुना पार्थिवानि ज्रयांसि महस्तोदस्य धृषता ततन्थ ।
स बाधस्वाप भया सहोभिः स्पृधो वनुष्यन्वनुषो नि जूर्व ॥ ६ ॥

आ । भानुना । पार्थिवानि । ज्रयांसि । महः । तोदस्य । धृषता । ततन्थ ।
सः । बाधस्व । अप । भया । सहःऽभिः । स्पृधः । वनुष्यन् । वनुषः । नि । जूर्व ॥ ६ ॥

हे अग्ने भानुना दीप्त्या पार्थिवानि पृथिव्यां भवानि ज्रयांसि ॥ ज्रयतिर्गतिकर्मा ॥ गन्तव्यानि स्थानानि महः महतः तोदस्य प्रेरकस्य धृषता धर्षकेण रश्मिना सह आ ततन्थ आस्तृणासि आच्छादयसि । सः त्वं भया भयकरणानि अप बाधस्व । तथा सहोभिः अभिभवनसमर्थैर्बलैस्तेजोभिर्वा स्पृधः स्पर्धमानान् वनुष्यन् हिंसन् वनुषः हिंसकान् । शत्रूनिति । नि जूर्व निजहि ॥ जूर्वतिर्हन्तिकर्मा ॥

उखासंभरणीयेष्टावग्नेः क्षत्रवतः ‘ स चित्र ’ इत्येषा याज्या । सूत्रितं च—‘ स चित्र चित्रं चितयन्तमस्मे अग्निरीशे बृहतः क्षत्रियस्य ’ ( आश्व. श्रौ. ४. १ ) इति ॥

स चित्र चित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयोधाम् ।
चन्द्रं रयिं पुरुवीरं बृहन्तं चन्द्र चन्द्राभिर्गृणते युवस्व ॥ ७ ॥

सः । चित्र । चित्रम् । चितयन्तम् । अस्मे इति । चित्रऽक्षत्र । चित्रऽतमम् । वयःऽधाम् ।
चन्द्रम् । रयिम् । पुरुऽवीरम् । बृहन्तम् । चन्द्र । चन्द्राभिः । गृणते । युवस्व ॥ ७ ॥

हे ᵛचित्र चायनीय हे ᵛचित्रक्षत्र विचित्रबल चायनीयधन वा हे ᵛचन्द्र आह्लादकाग्ने ᵛसः तादृशस्त्वं ᵛचन्द्राभिः आह्लादयित्रीभिः स्तुतिभिः ᵛगृणते स्तुवते। वचनव्यत्ययः। स्तुवद्भ्यः ᵛअस्मे अस्मभ्यं दातुं ᵛरयिं धनं ᵛयुवस्व पृथक् कुरु। कीदृशं रयिम्। ᵛचित्रं चायनीयं ᵛचितयन्तं ज्ञापयन्तम्। धनेन हि पुरुषः प्रख्यायते। ᵛचित्रतमम् अतिशयेनाश्चर्यभूतं ᵛवयोधां वयसोऽन्नस्य धातारं प्रदातारं ᵛचन्द्रम् आह्लादकं ᵛपुरुवीरं पुरुभिर्बहुभिर्वीरैः पुत्रपौत्रादिभिर्युक्तं ᵛबृहन्तं महान्तम्। ईदृशं धनमस्मभ्यं प्रयच्छेत्यर्थः॥ ॥ ८ ॥

'मूर्धानम्' इति सप्तर्चं सप्तमं सूक्तं भरद्वाजस्यार्षं वैश्वानराग्निदेवताकम्। षष्ठीसप्तम्यौ जगत्यौ शिष्टाः पञ्च त्रिष्टुभः। तथा चानुक्रान्तं—'मूर्धानं वैश्वानरीयं हि द्विजगत्यन्तम्' इति। गतः सूक्तविनियोगः। विषुवत्याग्निमारुत आद्यस्तृचो वैकल्पिकः स्तोत्रियः। तथैव सूत्रितं—'मूर्धानं दिवो अरतिं पृथिव्या मूर्धा दिवो नाभिरग्निः पृथिव्या इति वा' (आश्व. श्रौ. ८. ६) इति॥

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्।
कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः॥ १॥

मूर्धानम्। दिवः। अरतिम्। पृथिव्याः। वैश्वानरम्। ऋते। आ। जातम्। अग्निम्।
कविम्। सम्ऽराजम्। अतिथिम्। जनानाम्। आसन्। आ। पात्रम्। जनयन्त। देवाः॥१॥

ᵛमूर्धानं शिरोभूतम्। कस्य। ᵛदिवः द्युलोकस्य ᵛपृथिव्याः प्रथिताया भूमेः ᵛअरतिं गन्तारम्। यद्वा। गन्तव्यं स्वामिनं ᵛवैश्वानरं विश्वेषां नराणां संबन्धिनम् ᵛऋते। ऋतमिति सत्यस्य यज्ञस्य वा नाम। निमित्तसप्तम्येषा। ऋतनिमित्तम् ᵛआ आभिमुख्येन ᵛजातं सृष्ट्यादावुत्पन्नं ᵛकविं क्रान्तदर्शिनं ᵛसम्राजं सम्यग्राजमानं ᵛजनानां यजमानानाम् ᵛअतिथिं हविर्वहनाय सततं गन्तारम्। यद्वा[1]। अतिथिवत्पूज्यम्[1]। ᵛआसन् आसनि आस्ये। द्वितीयार्थे सप्तमी। आस्यभूतम्। अग्निलक्षणेनास्येन हि देवा हवींषि भुञ्जते। ᵛपात्रं पातारं रक्षकम्। यद्वा। आस्येन धारकम्। एवंगुणविशिष्टं वैश्वानराग्निं ᵛदेवाः स्तोतार ऋत्विजो देवा एव वा ᵛआ ᵛजनयन्त। यज्ञाभिमुख्येन अजीजनन्[2]। अरण्योः सकाशादुदपादयन्॥

नाभिं यज्ञानां सदनं रयीणां महामाहावमभि सं नवन्त।
वैश्वानरं रथ्यमध्वराणां यज्ञस्य केतुं जनयन्त देवाः॥ २॥

नाभिम्। यज्ञानाम्। सदनम्। रयीणाम्। महाम्। आऽहावम्। अभि। सम्। नवन्त।
वैश्वानरम्। रथ्यम्। अध्वराणाम्। यज्ञस्य। केतुम्। जनयन्त। देवाः॥ २॥

ᵛयज्ञानां ज्योतिष्टोमादियागानां ᵛनाभिं नहनं बन्धकं तथा ᵛरयीणां धनानां ᵛसदनं स्थानमेकनिलयं ᵛमहां महान्तम् ᵛआहावम्। आहूयन्तेऽस्मिन्नाहुतय इत्याहावः। तादृशम्। यद्वा।

---

1. ख-घ-ङ-भ-य-र—'यद्वा...पूज्यं' नास्ति। २. य—अजनयन्।

वृष्ट्युदकधारणमाहावं निपानस्थानीयम्। एवंभूतमग्निम् Vअभि अभितः Vसं Vनवन्त स्तोतारः सम्यक् स्तुवन्ति। तथा Vवैश्वानरं विश्वेषां नराणां संबन्धिनम् Vअध्वराणां यज्ञानां[1] Vरथ्यं रथिनम्। यथा रथी स्वरथं नयति तद्वन्नेतारं ग्राहयितारं[2] गमयितारं Vयज्ञस्य Vकेतुं प्रज्ञापकम्। एवंविधमग्निं Vदेवाः स्तोतार ऋत्विजो देवा एव वा Vजनयन्त जनयन्ति मथनेनोत्पादयन्ति ॥

त्वद्विप्रो जायते वाज्यग्ने त्वद्वीरासो अभिमातिषाहः ।

वैश्वानर त्वमस्मासु धेहि वसूनि राजन्त्स्पृहयाय्याणि ॥ ३ ॥

त्वत् । विप्रः । जायते । वाजी । अग्ने । त्वत् । वीरासः । अभिमातिऽसहः ।

वैश्वानर । त्वम् । अस्मासु । धेहि । वसूनि । राजन् । स्पृहयाय्याणि ॥ ३ ॥

हे Vअग्ने Vवाजी हविर्लक्षणान्नवान् पुरुषः Vत्वत् त्वत्तः सकाशात् Vविप्रः मेधावी Vजायते। तुभ्यं हविर्दानेन मेधावी भवति। तथा Vवीरासः वीराः Vत्वत् त्वत्तः Vअभिमातिषाहः अभिमातीनां शत्रूणामभिभवितारो जायन्ते। यस्मादेवं तस्मात् हे Vवैश्वानर Vराजन् राजमानाग्ने Vत्वमस्मासु त्वद्भक्तेषु Vस्पृहयाय्याणि स्पृहणीयानि Vवसूनि धनानि Vधेहि निधेहि ॥

त्वां विश्वे अमृत जायमानं शिशुं न देवा अभि सं नवन्ते ।

तव क्रतुभिरमृतत्वमायन्वैश्वानर यत्पित्रोरदीदेः ॥ ४ ॥

त्वाम् । विश्वे । अमृत । जायमानम् । शिशुम् । न । देवाः । अभि । सम् । नवन्ते ।

तव । क्रतुऽभिः । अमृतऽत्वम् । आयन् । वैश्वानर । यत् । पित्रोः । अदीदेः ॥ ४ ॥

हे Vअमृत मरणधर्मरहिताग्ने[3] Vविश्वे सर्वे Vदेवाः स्तोतारः Vजायमानम् अरण्योः सकाशात् उत्पद्यमानं Vत्वां Vशिशुं Vन पुत्रमिव Vअभि Vसं Vनवन्ते अभिसंस्तुवन्ति[4]। यद्वा। दीव्यन्तीति देवा रश्मयः। ते सर्वे जायमानं त्वामभि सं नवन्ते अभिसंगच्छन्ते यथा पितरः पुत्रमभिगच्छन्ति। अपि च हे Vवैश्वानर अग्ने Vयत् यदा Vपित्रोः पालयित्र्योर्द्यावापृथिव्योर्मध्ये Vअदीदेः दीप्यसे तदानीं Vतव त्वदीयैः Vक्रतुभिः कर्मभिर्ज्योतिष्टोमादिभिर्यागैः Vअमृतत्वं देवत्वम् Vआयन् यजमानाः प्राप्नुवन्ति ॥

वैश्वानर तव तानि व्रतानि महान्यग्ने नकिरा दधर्ष ।

यज्जायमानः पित्रोरुपस्थेऽविन्दः केतुं वयुनेष्वह्नाम् ॥ ५ ॥

वैश्वानर । तव । तानि । व्रतानि । महानि । अग्ने । नकिः । आ । दधर्ष ।

यत् । जायमानः । पित्रोः । उपऽस्थे । अविन्दः । केतुम् । वयुनेषु । अह्नाम् ॥ ५ ॥

---

१. घ-ज्ञ-त-न-श—यज्ञानां संबन्धिनम्। २. ज्ञ-त—ग्रहीतारम्। ३. य—मरणरहिताग्ने। ४. न—अभिसंगच्छन्ते; श—अभिसंगच्छन्ते अभिसंस्तुवन्ति।

हे ^v^वैश्वानर विश्वेषां नराणां संबन्धिन् ^v^अग्ने ^v^तव त्वदीयानि ^v^तानि प्रसिद्धानि ^v^व्रतानि कर्माणि ^v^महानि महान्ति ^v^नकिरा ^v^दधर्ष न कश्चनान्यो धर्षयति बाधते[1]। ^v^यत् यदा त्वं ^v^पित्रोः द्यावापृथिव्योः ^v^उपस्थे उपस्थानेऽन्तरिक्षे ^v^वयुनेषु गन्तव्येषु मार्गेषु ^v^जायमानः सन् ^v^अह्नां ^v^केतुं प्रज्ञापकं सूर्यं स्वर्भानुनावृतम् ^v^अविन्दः अलम्भयः। तमोरूपमसुरं स्वतेजसा निवारयन्नस्थापय इत्यर्थः। तदा तानि व्रतानीति पूर्वत्रान्वयः॥

वैश्वानरस्य विमितानि चक्षसा सानूनि दिवो अमृतस्य केतुना।
तस्येदु विश्वा भुवनाधि मूर्धनि वयाइव रुरुहुः सप्त विस्रुहः॥ ६॥

वैश्वानरस्य। विऽमितानि। चक्षसा। सानूनि। दिवः। अमृतस्य। केतुना।
तस्य। इत्। ऊँ इति। विश्वा। भुवना। अधि। मूर्धनि। वयाःऽइव। रुरुहुः। सप्त। विऽस्रुहः॥६॥

^v^वैश्वानरस्य विश्वनरहितस्याग्नेः ^v^चक्षसा तेजसा ^v^अमृतस्य उदकस्य ^v^केतुना प्रज्ञापकेन ^v^दिवः द्युलोकस्य ^v^सानूनि समुच्छ्रितस्थलानि नक्षत्ररूपाणि ^v^विमितानि निर्मितानि। यद्वा। दिवोऽन्तरिक्षस्य सानूनि समुच्छ्रितप्रदेशा मेघात्मका विमितानि निर्मिताः। धूमविकारत्वात्तेषाम्। ^v^तस्येदु तस्यैव वैश्वानरस्य ^v^मूर्धनि मूर्धस्थानीय उपरि वर्तमाने धूमे मेघात्मना परिणते ^v^विश्वा विश्वानि व्याप्तानि ^v^भुवना भुवनान्युदकानि ^v^अधि वसन्ति। यद्वा। वैश्वानरात्मकस्य परब्रह्मणो मूर्धन्युपरिप्रदेशे सर्वाणि भूतजातान्यधिवसन्ति। तथा ^v^वयाः शाखाः ^v^इव ^v^सप्त सर्पणशीलाः सप्तसंख्याः[2] वा ^v^विस्रुहः नद्यश्च गङ्गाद्याः ^v^रुरुहुः रोहन्ति। अस्मादेव वैश्वानरात् प्रादुर्भवन्ति। आहुतिद्वारा सकलं जगदग्नेः सकाशादुत्पद्यत इत्यर्थः।

वि यो रजांस्यमिमीत सुक्रतुर्वैश्वानरो वि दिवो रोचना कविः।
परि यो विश्वा भुवनानि पप्रथेऽदब्धो गोपा अमृतस्य रक्षिता॥ ७॥

वि। यः। रजांसि। अमिमीत। सुऽक्रतुः। वैश्वानरः। वि। दिवः। रोचना। कविः।
परि। यः। विश्वा। भुवनानि। पप्रथे। अदब्धः। गोपाः। अमृतस्य। रक्षिता॥ ७॥

^v^सुक्रतुः सुकर्मा ^v^वैश्वानरः विश्वेषां नराणां हितः ^v^यः अग्निः ^v^रजांसि उदकानि लोकान् वा ^v^वि ^v^अमिमीत निर्मितवान्। तथा ^v^दिवः द्युलोकस्य संबन्धीनि ^v^रोचना रोचमानानि दीप्यमानानि नक्षत्रादीनि ^v^कविः क्रान्तदर्शी सन् योऽग्निः ^v^वि अमिमीत। ^v^यः च ^v^विश्वा सर्वाणि ^v^भुवनानि भूतजातानि व्याप्तान्युदकानि वा ^v^परि ^v^पप्रथे परितोऽप्रथयत् सोऽयम् ^v^अदब्धः केनाप्यहिंसितः ^v^गोपाः सर्वस्य गोपायिता रक्षिता ^v^अमृतस्य अमरणहेतोरुदकस्य ^v^रक्षिता पालयिता सन् वर्तत इति शेषः॥ ॥ ९॥

---

१. श—न बाधते। २. य—सप्तसंख्याकाः।

'पृक्षस्य' इति सप्तर्चमष्टमं सूक्तं भरद्वाजस्यार्षं वैश्वानराग्निदेवताकम्। आदितः[1] षट् जगत्यः सप्तमी त्रिष्टुप्। तथा चानुक्रान्तं—'पृक्षस्यान्त्या त्रिष्टुप्' इति। चातुर्विंशिकेऽहन्याग्निमारुते इदं सूक्तं वैश्वानरीयनिविद्धानम्। सूत्रितं च—'पृक्षस्य वृष्णो वृष्णे शर्धाय' (आश्व. श्रौ. ७. ४) इति। आभिप्लविके पृष्ठ्याभिप्लवषडहयोः पञ्चमेऽहनीदमेव सूक्तं वैश्वानरनिविद्धानम्। सूत्रितं च—'पृक्षस्य वृष्णो वृष्णे शर्धाय नू चित्सहोजा इत्याग्निमारुतम्' (आश्व. श्रौ. ७. ७) इति। विषुवत्याग्निमारुत आद्यौ तृचौ स्तोत्रियानुरूपौ। सूत्रितं च—'पृक्षस्य वृष्णो अरुषस्य नू सह इति स्तोत्रियानुरूपौ' (आश्व. श्रौ. ८. ६) इति॥

पृक्षस्य वृष्णो अरुषस्य नू सहः प्र नु वोचं विदथा जातवेदसः।
वैश्वानराय मतिर्नव्यसी शुचिः सोमइव पवते चारुरग्नये॥ १॥

पृक्षस्य। वृष्णः। अरुषस्य। नु। सहः। प्र। नु। वोचम्। विदथा। जातऽवेदसः।
वैश्वानराय। मतिः। नव्यसी। शुचिः। सोमःऽइव। पवते। चारुः। अग्नये॥ १॥

पृक्षस्य संपृक्तस्य व्याप्तस्य। यद्वा। पृक्षं हविर्लक्षणमन्नम्। तद्वतः। वृष्णः कामानां वर्षितुः अरुषस्य आरोचमानस्य जातवेदसः जातानां वेदितुर्वैश्वानराग्नेः सहः बलमभिभवनसमर्थं विदथा विदथे यज्ञे नु क्षिप्रं प्र वोचं प्रब्रवीमि। प्रकर्षेण स्तौमीत्यर्थः। एको नुशब्दः पूरकः। नव्यसी नवतरा शुचिः निर्मला यद्वा स्तोतॄणां शोधयित्री चारुः शोभना मतिः मननीया स्तुतिश्चास्मै वैश्वानराय अग्नये पवते। मत्सकाशात् स्रवति। स्वयमेव निर्गच्छतीत्यर्थः। सोमइव। यथा सोमो दशापवित्रात् स्रवति तद्वत्॥

स जायमानः परमे व्योमनि व्रतान्यग्निर्व्रतपा अरक्षत।
व्यन्तरिक्षममिमीत सुक्रतुर्वैश्वानरो महिना नाकमस्पृशत्॥ २॥

सः। जायमानः। परमे। विऽओमनि। व्रतानि। अग्निः। व्रतऽपाः। अरक्षत।
वि। अन्तरिक्षम्। अमिमीत। सुऽक्रतुः। वैश्वानरः। महिना। नाकम्। अस्पृशत्॥ २॥

सः वैश्वानरः अग्निः व्रतपाः व्रतस्य पालकः परमे उत्कृष्टे व्योमनि व्योम्न्याकाशे जायमानः सूर्यात्मना प्रादुर्भवन् व्रतानि कर्माणि लौकिकानि वैदिकानि च अरक्षत रक्षति। अन्तरिक्षं च वि अमिमीत। एतदुपलक्षितांस्त्रीन् लोकान्निर्मितवान्। तथा सुक्रतुः शोभनकर्मा वैश्वानरः अग्निः महिना स्वमहिम्ना तेजसा नाकं द्युलोकम् अस्पृशत् स्पृशति स्म॥

---

१. त–आद्याः।

व्यस्तभ्नाद्रोदसी मित्रो अद्भुतोऽन्तर्वावदकृणोज्ज्योतिषा तमः ।
वि चर्मणीव धिषणे अवर्तयद्वैश्वानरो विश्वमधत्त वृष्ण्यम् ॥ ३ ॥

वि । अस्तभ्नात् । रोदसी इति । मित्रः । अद्भुतः । अन्तःऽवावत् । अकृणोत् । ज्योतिषा । तमः ।
वि । चर्मणी इवेति चर्मणीऽइव । धिषणे इति । अवर्तयत् ।
वैश्वानरः । विश्वम् । अधत्त । वृष्ण्यम् ॥ ३ ॥

ˇमित्रः मित्रभूतः सर्वेषाम् ˇअद्भुतः महान् आश्चर्यभूतो वा वैश्वानरोऽग्निः ˇरोदसी द्यावापृथिव्यौ ˇव्यस्तभ्नात् विशेषेण स्तम्भितवान्। यथाधो न पततस्तथा स्वकीयदेशे स्थापितवानित्यर्थः । तथा ˇज्योतिषा तेजसा ˇतमः अन्धकारं च ˇअन्तर्वावत् अन्तर्हितं तिरोहितम् ˇअकृणोत् अकरोत् ॥ वावदिति वातेर्गतिकर्मणो यङ्लुगन्तस्य रूपम् ॥ अपि च ˇधिषणे धारयित्र्यौ द्यावापृथिव्यौ ˇचर्मणीव यथा पशोर्विशसिता द्वे चर्मणी शोषणार्थं प्रसारयति तथा ˇवि ˇअवर्तयत् विवृते विस्तृते अकरोत्। किं बहुना ˇवैश्वानरः अयमग्निः ˇविश्वं सर्वं ˇवृष्ण्यं वीर्यम् ˇअधत्त धत्ते धारयति ॥

अपामुपस्थे महिषा अगृभ्णत विशो राजानमुप तस्थुर्ऋग्मियम् ।
आ दूतो अग्निमभरद्विवस्वतो वैश्वानरं मातरिश्वा परावतः ॥ ४ ॥

अपाम् । उपऽस्थे । महिषाः । अगृभ्णत । विशः । राजानम् । उप । तस्थुः । ऋग्मियम् ।
आ । दूतः । अग्निम् । अभरत् । विवस्वतः । वैश्वानरम् । मातरिश्वा । पराऽवतः ॥ ४ ॥

आप इत्यन्तरिक्षनाम । ˇअपाम् अन्तरिक्षस्य ˇउपस्थे उपस्थाने मध्ये ˇमहिषाः । महन्नामैतत्। महान्तो मरुतः ˇअगृभ्णत अगृह्णन् । इमं वैश्वानरं वैद्युतात्मना वर्तमानमजानन्नित्यर्थः । गृहीत्वा च ˇविशः प्रजाः ˇराजानं स्वामिनम् ˇऋग्मियम् अर्चनीयम्[1] ˇउप ˇतस्थुः अस्तुवन् । अपि चेमं ˇवैश्वानरम् ˇअग्निं पुरा सूर्यसमीपे विद्यमानं ˇदूतः वेगवान् देवानां दूतो वा ˇमातरिश्वा वायुः ˇपरावतः दूरदेशात् ˇविवस्वतः आदित्यात् ˇआ ˇअभरत् इमं लोकं प्रत्याजहार ॥

युगेयुगे विदथ्यं गृणद्भ्योऽग्ने रयिं यशसं धेहि नव्यसीम् ।
पव्येव राजन्नघशंसमजर नीचा नि वृश्च वनिनं न तेजसा ॥ ५ ॥

युगेऽयुगे । विदथ्यम् । गृणत्ऽभ्यः । अग्ने । रयिम् । यशसम् । धेहि । नव्यसीम् ।
पव्याऽइव । राजन् । अघऽशंसम् । अजर । नीचा । नि । वृश्च । वनिनम् । न । तेजसा ॥५॥

हे ˇअग्ने ˇयुगेयुगे काले काले ˇविदथ्यम् । विदथो यज्ञः । तदर्हं त्वामुद्दिश्य ˇनव्यसीं नवतरां स्तुतिं ˇगृणद्भ्यः उच्चारयितृभ्योऽस्मभ्यं ˇरयिं धनं ˇयशसं यशस्विनं पुत्रं च ˇधेहि विधेहि कुरु ।

---

१. ख-ग्र-त-न-भ-र–अर्चनीयं तम् ।

किंच हे ᵛराजन् राजमान ᵛअजर जराहिताग्ने ᵛपव्येव वज्रेणेवात्मीयेन ᵛतेजसा ᵛवनिनं ᵛन वृक्षमिव ᵛअघशंसम् अघस्यानर्थस्य शंसितारं शत्रुं ᵛनीचा नीचीनो न्यग्भूतो यथा भवति तथा ᵛनि ᵛवृश्च निजहि[1] ॥

अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरं सुवीर्यम् ।
वयं जयेम शतिनं सहस्रिणं वैश्वानर वाजमग्ने तवोतिभिः ॥ ६ ॥

अस्माकम् । अग्ने । मघवत्ऽसु । धारय । अनामि । क्षत्रम् । अजरम् । सुऽवीर्यम् ।
वयम् । जयेम । शतिनम् । सहस्रिणम् । वैश्वानर । वाजम् । अग्ने । तव । ऊतिऽभिः ॥ ६ ॥

हे ᵛअग्ने ᵛअस्माकम् । सप्तम्यर्थे षष्ठी । अस्मासु ᵛमघवत्सु हविर्लक्षणेन धनेन युक्तेषु ᵛक्षत्रं धनं ᵛधारय स्थापय । कीदृशम् । ᵛअनामि अनमनीयमनपहार्यम् ᵛअजरं जरारहितमनश्वरं ᵛसुवीर्यं शोभनवीर्योपेतम् । किंच हे ᵛवैश्वानर ᵛअग्ने ᵛतवोतिभिः त्वत्संबन्धिभी रक्षणैः ᵛवयं ᵛशतिनं शतसंख्यायुक्तं शतपुरुषयुक्तं वा तथा ᵛसहस्रिणं ᵛवाजम् अन्नं ᵛजयेम लभेमहि ॥

अदब्धेभिस्तव गोपाभिरिष्टेऽस्माकं पाहि त्रिषधस्थ सूरीन् ।
रक्षा च नो ददुषां शर्धो अग्ने वैश्वानर प्र च तारीः स्तवानः ॥ ७ ॥

अदब्धेभिः । तव । गोपाभिः । इष्टे । अस्माकम् । पाहि । त्रिऽसधस्थ । सूरीन् ।
रक्ष । च । नः । ददुषाम् । शर्धः । अग्ने । वैश्वानर । प्र । च । तारीः । स्तवानः ॥ ७ ॥

हे ᵛइष्टे यष्टव्य एषणीय वा ᵛत्रिषधस्थ त्रिषु लोकेषु सहावस्थायिन् यद्वा आहवनीयादिषु त्रिष्वायतनेषु यष्टव्यैर्देवैः सहावतिष्ठमानाग्ने ᵛअदब्धेभिः केनाप्यहिंसितैः ᵛतव त्वदीयैः ᵛगोपाभिः गोपकैः रक्षकैस्तेजोभिः ᵛअस्माकं ᵛसूरीन् अस्मदीयान् स्तोतॄन् ᵛपाहि रक्ष । हे ᵛवैश्वानर ᵛअग्ने ᵛददुषां हवींषि दत्तवतां ᵛनः अस्माकं ᵛशर्धः बलं ᵛरक्ष ᵛच । ᵛस्तवानः स्तूयमानस्त्वं ᵛप्र ᵛच ᵛतारीः प्रवर्धय च ॥ ॥ १० ॥

'अहश्च' इति सप्तर्चं नवमं सूक्तं भरद्वाजस्यार्षं वैश्वानराग्निदेवताकम् । अनुक्रान्तं च—'अहश्च' इति । व्यूळ्हे दशरात्रे षष्ठेऽहन्याग्निमारुतशस्त्रे वैश्वानरनिविद्धानमिदम् । सूत्र्यते हि—'अहश्च कृष्णं मध्वो वो नाम' ( आश्व. श्रौ. ८. ८ ) इति ॥

अहश्च कृष्णमहरर्जुनं च वि वर्तेते रजसी वेद्याभिः ।
वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि ॥ १ ॥

अहः । च । कृष्णम् । अहः । अर्जुनम् । च । वि । वर्तेते इति । रजसी इति । वेद्याभिः ।
वैश्वानरः । जायमानः । न । राजा । अव । अतिरत् । ज्योतिषा । अग्निः । तमांसि ॥ १ ॥

---

१. श—नितरां छिन्द्धि ।

आहरति पुरुषोऽस्मिन् कर्माणीति ᵛअहः। ᵛकृष्णं कृष्णवर्णम्। एतत्सामानाधिकरण्यादहःशब्दो रात्रिवचनः। तमसा कृष्णवर्णा रात्रिः ᵛच ᵛअर्जुनं ᵛच सौरेण तेजसा शुक्लवर्णम् ᵛअहः दिवसश्च ᵛरजसी स्वस्वभासा सर्वं जगद्रञ्जयन्तौ ᵛवेद्याभिः वेदितव्याभिरनुकूलतया ज्ञातव्याभिः स्वप्रवृत्तिभिः[1] ᵛवि ᵛवर्तेते विविधं पर्यावर्तेते। यद्वा। रजसी द्यावापृथिव्यौ। उपलक्षणमेतत्। लोकत्रयं प्रत्यावर्तेते। एतच्च[2] वैश्वानराग्नेराज्ञया[3] इति शेषः। स हि देवतात्वेनात्र प्रतिपाद्यः। स च ᵛवैश्वानरः ᵛअग्निः ᵛजायमानो ᵛन ᵛराजा प्रादुर्भवन् प्रवर्धमानः राजेव ᵛज्योतिषा तेजसा ᵛतमांसि ᵛअवातिरत् अवतिरतिर्वधकर्मा। अवतिरति विनाशयति॥

नाहं तन्तुं न वि जानाम्योतुं न यं वयन्ति समरेऽतमानाः।
कस्य स्वित्पुत्र इह वक्त्वानि परो वदात्यवरेण पित्रा॥ २॥

न। अहम्। तन्तुम्। न। वि। जानामि। ओतुम्। न। यम्। वयन्ति। सम्ऽअरे। अतमानाः।
कस्य। स्वित्। पुत्रः। इह। वक्त्वानि। परः। वदाति। अवरेण। पित्रा॥ २॥

वैश्वानरस्य महत्त्वमाख्यास्यन्नृषिस्तदर्थं यज्ञं वस्त्रात्मकतया रूपयन् तस्य दुर्ज्ञानत्वमनया प्रतिपादयतीति यज्ञवादिनो मन्यन्ते। ᵛतन्तुम्। तन्तवः पटस्य प्रागायतानि सूत्राणि। तानि च यज्ञात्मकस्य वस्त्रस्य गायत्र्यादीनि छन्दांसि स्तुतशस्त्राणि च। तानि ᵛअहं ᵛन ᵛवि ᵛजानामि। तथा ᵛओतुम्। ओतवस्तिरश्चीनानि सूत्राणि। तानि चात्र यजूंष्याध्वर्यवाणि कर्माणि च। तान्यहं ᵛन वि जानामि। अपि चैतदुभयसाध्यं तं पटं यज्ञलक्षणं ᵛन वि जानामि ᵛयं पटं यज्ञलक्षणं ᵛसमरे संगमने देवयजने ᵛअतमानाः सततं चेष्टमाना ऋत्विजः ᵛवयन्ति तन्तूनोतूंश्च संतन्वन्ति। वस्त्ररूपेण निष्पादयन्ति इत्यर्थः। ᵛइह अस्मिन् लोके ᵛकस्य ᵛस्वित्। स्विदिति वितर्के। कस्य खलु ᵛपुत्रः मनुष्यः ᵛवक्त्वानि वक्तव्यानि तानीमानि ᵛपरः परस्तादमुष्मिन् लोके वर्तमानो यः सूर्यस्तस्य ᵛपित्रा ᵛअवरेण अवस्तात् अस्मिन् लोके वर्तमानेन वैश्वानराग्निनानुशिष्टः सन् ᵛवदाति वदेत्। न कश्चिदपि प्रवदितुं शक्नोतीत्यर्थः। एतच्च संप्रदायविद्भिरुक्तं–'वैश्वानरस्य पुत्रोऽसौ परस्ताद्दिवि यः स्थितः। छन्दांस्यध्वरवस्त्रस्य स्तुतशस्त्राणि तन्तवः॥ यजूंषि चेष्टाश्चोतुः स्याद्वस्त्रं वातव्यमध्वरः। परः परः स्थितः सूर्यः पिताग्निः पार्थिवो मतः' इति॥ रूपकतया जगत्सृष्टेर्दुर्ज्ञानत्वमनया प्रतिपादयतीत्यात्मविदो मन्यन्ते। तन्तुं तन्तून् तन्तुस्थानानि सूक्ष्माणि वियदादीन्यपञ्चीकृतानि भूतानि न विजानामि। ओतुमोतून् पञ्चीकृतानि स्थूलान्योतुस्थानीयान्यपि वियदादीनि न विजानामि। न च तत्कार्यं पटस्थानीयं प्रपञ्चं विजानामि यं प्रपञ्चं समरे तन्तूनामोतूनां च संगमनेऽतमानाः सततं चेष्टमानाः संसारिणो वयन्ति उत्पादयन्ति। तेषां भोगार्थमीश्वरः सृजतीति कर्तृत्वमुपचर्यते। इहास्मिन्विषये परः परस्ताद्बुद्धेरविषये वर्तमानानि वक्त्वानि वक्तव्यानीमान्यवरेणार्वाचीनेन सृष्ट्युत्तरकालमुत्पन्नेन पित्रा स्वजनकेनानुशिष्टः सन् कस्य खलु पुत्रो वदाति। वदेत्। स्वोत्पत्तेः प्राचीनं वृत्तान्तमजानानः कश्चिदपि न वदेदित्यर्थः॥

---

१. ख-झ-त-न-भ-र–'स्वप्रवृत्तिभिः' नास्ति; श–स्ववृत्तिभिः। २. ध–एतस्य। ३. ख-झ-न-भ–वैश्वानरस्याग्नेराज्ञया; र–वैश्वानराज्ञया; श–वैश्वानरो राज्ञः।

स इत्तन्तुं स वि जानात्योतुं स वक्त्वान्यृतुथा वदाति ।
य ईं चिकेतदमृतस्य गोपा अवश्चरन्परो अन्येन पश्यन् ॥ ३ ॥

सः । इत् । तन्तुम् । सः । वि । जानाति । ओतुम् । सः । वक्त्वानि । ऋतुऽथा । वदाति ।
यः । ईम् । चिकेतत् । अमृतस्य । गोपाः । अवः । चरन् । परः । अन्येन । पश्यन् ॥ ३ ॥

यद्यपि उक्तेन[1] प्रकारेण[1] दुर्ज्ञानानि तथाप्येतानि वैश्वानरोऽग्निः जानाति वदति चेत्यनया प्रतिपादयति । स इत् स एव वैश्वानरोऽग्निः तन्तुं तन्तुस्थानीयानि गायत्र्यादीनि छन्दांसि स्तुतशस्त्राणि वि जानाति तथा सः एव ओतुम् ओतुस्थानीयानि यजूंष्याध्वर्यवाणि च कर्माणि वि जानाति । ऋतुथा काले काले तत्तदनुष्ठानसमये वक्त्वानि वक्तव्यानि च तानि वदाति वदेत् । यः अयं वैश्वानरः अमृतस्य गोपाः उदकस्य गोपायिता रक्षिता अवः अवस्तात् भूलोके चरन् पार्थिवाग्निरूपेण संचरन् परः परस्ताद्दिवि अन्येन सूर्यात्मना पश्यन् सर्वं जगत् प्रकाशयन् ईम् इमानि परिदृश्यमानानि सर्वाणि भूतानि चिकेतत् जानाति स एवेति पूर्वत्र संबन्धः । यद्वा । स इत् स एव तन्तुं तन्तुस्थानीयानि सूक्ष्मभूतानि वि जानाति नान्यः कश्चित् । तथौतुमोतुस्थानीयानि स्थूलभूतानि च स एव वि जानाति । स एव वक्त्वानि वक्तव्यान्युपदेष्टव्यानीमान्यृतुथा काले काले यदा यदा विद्यासंप्रदायोच्छेदस्तदा तदा वदाति वदेत् । कोऽसौ यो विजानीयाद्वदेच्चेत्यत आह । यो वैश्वानरो विश्वनरात्मकः परमात्मामृतस्यामृतत्वस्य विमोक्षणस्य गोपा रक्षितावोऽवस्तात् संसारदशायां चरन् अन्तःकरणोपेतः[2] जीवात्मभावेन संचरन् परः परस्तादविद्याया ऊर्ध्वं वर्तमानेनान्येनोक्तविलक्षणेन निरुपाधिकेन सच्चिदादिलक्षणेन रूपेण पश्यन् सर्वं जगत् प्रकाशयन् ईमिमानि चिकेतत् जानाति । तथा च परमात्मानं प्रकृत्य श्रूयते—'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' ( श्वे. उ. ६.१४ ) इति ॥

अयं होता प्रथमः पश्यतेममिदं ज्योतिरमृतं मर्त्येषु ।
अयं स जज्ञे ध्रुव आ निषत्तोऽमर्त्यस्तन्वा३ वर्धमानः ॥ ४ ॥

अयम् । होता । प्रथमः । पश्यत । इमम् । इदम् । ज्योतिः । अमृतम् । मर्त्येषु ।
अयम् । सः । जज्ञे । ध्रुवः । आ । निऽसत्तः । अमर्त्यः । तन्वा । वर्धमानः ॥ ४ ॥

अयं वैश्वानरोऽग्निः प्रथमः आद्यः होता । मानुषो हि होता द्वितीयः । हे मनुष्यास्तम् इमं पश्यत भजतेत्यर्थः । मर्त्येषु मरणस्वभावेषु[3] शरीरेषु[3] अमृतं मरणरहितम् इदं वैश्वानराख्यं ज्योतिः जाठररूपेण वर्तत इत्यर्थः । अपि च सः अयम् अग्निः ध्रुवः निश्चलः आ समन्तात् निषत्तः निषण्णः सर्वव्यापी अत एव अमर्त्यः मरणरहितोऽपि तन्वा शरीरेण संबन्धात् जज्ञे जायते । वर्धमानः च भवतीति उपचर्यते[4] ॥

---

१. श—उक्तप्रकारेण । २. श—अन्तःकरणोपेतेन । ३. श—मरणस्वभावशरीरेषु । ४. ख—उच्यते

ध्रुवं ज्योतिर्निहितं दृशये कं मनो जविष्ठं पतयत्स्वन्तः ।
विश्वे देवाः समनसः सकेता एकं क्रतुमभि वि यन्ति साधु ॥ ५ ॥

ध्रुवम् । ज्योतिः । निऽहितम् । दृशये । कम् । मनः । जविष्ठम् । पतयत्ऽसु । अन्तरिति ।
विश्वे । देवाः । सऽमनसः । सऽकेताः । एकम् । क्रतुम् । अभि । वि । यन्ति । साधु ॥ ५ ॥

vध्रुवं निश्चलं vमनः मनसः तस्मादपि vजविष्ठम् अतिशयेन वेगवत् ईदृशं वैश्वानराख्यं vज्योतिः vपतयत्सु गच्छत्सु[1] जङ्गमेषु प्राणिषु vअन्तः मध्ये vनिहितं प्रजापतिना स्थापितम् । किमर्थम् । vदृशये vकम् । दर्शनार्थम् । किंच vविश्वे सर्वे vदेवाः च vसमनसः समानमनस्काः vसकेताः समानप्रज्ञाश्च सन्तः vएकं मुख्यं गन्तारं वा vक्रतुं कर्मणां कर्तारं vसाधु सम्यक् vअभि vवि vयन्ति आभिमुख्येन विविधं प्राप्नुवन्ति सेवन्त इत्यर्थः । यद्वा । पतयत्सु गच्छत्सु प्राणिष्वन्तर्मध्ये हृदये मनो जविष्ठं मनसोऽप्यतिशयेन वेगयुक्तं ध्रुवं निश्चलं निर्विकल्पम् । तथा च वाजसनेयकम्—' अनेजदेकं मनसो जवीयः ' ( वा. सं. ४०. ४ ) इति । ज्योतिर्ब्रह्म चैतन्यं निहितम् । न केनचित् स्थापितम् । ' यो वेद निहितं गुहायां परमे व्योमन् ' ( तै. आ. ८. १ ) इति हि श्रूयते । किमर्थम् । दृशये दर्शनार्थम् । ज्ञानेन हि सर्वं जानन्ति[2] । अपि च । दीव्यन्तीति देवा इन्द्रियाणि । विश्वे सर्वे देवाः सर्वाणीन्द्रियाणि चक्षुराद्याः समनसो मनसा सह वर्तमानाः सकेताः सतेजस्काः सन्त एकमद्वितीयं क्रतुं सृष्ट्यादीनां कर्मणां कर्तारं विश्वनरात्मकं[3] परमात्मानमभिलक्ष्य साधु सम्यक् वि यन्ति विविधं गच्छन्ति । देवा एव वेममभि वि यन्ति । आभिमुख्येन विविधमुपयन्ति । उपासत इत्यर्थः । तथा च श्रूयते—' तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ' ( बृ. उ. ४. ४. १६ ) इति ॥

वि मे कर्णा पतयतो वि चक्षुर्वी३दं ज्योतिर्हृदय आहितं यत् ।
वि मे मनश्चरति दूरआधीः किं स्विद्वक्ष्यामि किमु नू मनिष्ये ॥ ६ ॥

वि । मे । कर्णा । पतयतः । वि । चक्षुः । वि । इदम् । ज्योतिः । हृदये । आऽहितम् । यत् ।
वि । मे । मनः । चरति । दूरेऽआधीः । किम् । स्वित् । वक्ष्यामि । किम् ।
ऊँ इति । नु । मनिष्ये ॥ ६ ॥

वैश्वानरं श्रोतुकामस्य vमे मम vकर्णा कर्णौ vवि vपतयतः विविधं गच्छतः । श्रोतव्यानां तदीयगुणानां बहुत्वात् । तथा वैश्वानरं दिदृक्षमाणस्य मम vचक्षुः इन्द्रियं vवि पतयति विविधं गच्छति । द्रष्टव्यानां तदीयरूपाणां बहुत्वात् । तथा vज्योतिः प्रकाशकं vहृदये हृदयपुण्डरीके vआहितं निहितं vयत् बुद्ध्याख्यं तत्त्वम् vइदमपि vवि पतयति विविधं गच्छति वैश्वानरात्मानं ज्ञातुम् । अपि च vदूरआधीः । दूरे विप्रकृष्टे विषय आधीराध्यानं यस्य तादृशम् । छान्दसो लिङ्गव्यत्ययः । vमे मदीयं vमनः च vवि vचरति विविधं प्रवर्तते । एवमहमहमिकया सर्वेष्विन्द्रियेषु प्रवृत्तेषु vकिं vस्वित् अहं

१. ख-ज्ञ-न-भ-र—' गच्छत्सु ' नास्ति । २. ख-श—जानाति । ३. ख-श—विश्वानरात्मकम् ।

वैश्वानरस्य रूपमिति ᵛवक्ष्यामि । ᵛकिमु ᵛनु किमु खलु संप्रति ᵛमनिष्ये मनसा प्रपत्स्ये । वैश्वानरस्य गुणानामनन्तत्वात् मन्दप्रज्ञेन मया ज्ञातुं न शक्यत इत्यर्थः ॥

विश्वे देवा अनमस्यन्भियानास्त्वामग्ने तमसि तस्थिवांसम् ।
वैश्वानरोऽवतूतये नोऽमर्त्योऽवतूतये नः ॥ ७ ॥

विश्वे । देवाः । अनमस्यन् । भियानाः । त्वाम् । अग्ने । तमसि । तस्थिऽवांसम् ।
वैश्वानरः । अवतु । ऊतये । नः । अमर्त्यः । अवतु । ऊतये । नः ॥ ७ ॥

हे वैश्वानर[1] ᵛतमसि अन्धकारे ᵛतस्थिवांसं स्थितवन्तं ᵛत्वां ᵛविश्वे सर्वे ᵛदेवाः ᵛअनमस्यन् नमस्कुर्वन्ति । कुतो हेतोः । ᵛभियानाः अन्धकाराद्भीताः । तादृशः ᵛअमर्त्यः मरणरहितः ᵛवैश्वानरः अग्निः ᵛनः अस्मान् ᵛऊतये ऊत्या रक्षणेन ᵛअवतु रक्षतु । पुनरुक्तिरादरार्था ॥ ॥ ११ ॥

'पुरो वः' इति सप्तर्चं दशमं सूक्तं भरद्वाजस्यार्षमाग्नेयम् । सप्तमी त्रिशिका द्विपदा विराट् शिष्टास्त्रिष्टुभः । तथा चानुक्रान्तं—'पुरो वो द्विपदान्तम्' इति । प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छन्दसीदमादीनि चत्वारि सूक्तानि । सूत्रितं च—'पुरो वो मन्द्रमिति चत्वारि तं सुप्रतीकमिति षट्' (आश्व. श्रौ. ४. १३) इति ॥

पुरो वो मन्द्रं दिव्यं सुवृक्तिं प्रयति यज्ञे अग्निमध्वरे दधिध्वम् ।
पुर उक्थेभिः स हि नो विभावा स्वध्वरा करति जातवेदाः ॥ १ ॥

पुरः । वः । मन्द्रम् । दिव्यम् । सुऽवृक्तिम् । प्रऽयति । यज्ञे । अग्निम् । अध्वरे । दधिध्वम् ।
पुरः । उक्थेभिः । सः । हि । नः । विभाऽवा । सुऽअध्वरा । करति । जातऽवेदाः ॥ १ ॥

हे ऋत्विग्यजमानाः ᵛवः यूयं ᵛमन्द्रं मोदनं स्तुत्यं वा ᵛदिव्यं दिवि भवं ᵛसुवृक्तिं सुष्ठु दोषैर्वर्जितं सुखेनावर्जनीयं वा एवंगुणम् ᵛअग्निं ᵛप्रयति प्रगच्छति प्रवर्तमाने ᵛअध्वरे रक्षःप्रभृतिभिरहिंस्ये हिंसाप्रत्यवायरहिते वास्मिन् ᵛयज्ञे ᵛपुरः ᵛदधिध्वं पुरस्तादाहवनीयरूपेण धारयत । यद्वा । पुरोधसं कुरुत । ᵛउक्थेभिः स्तुतशस्त्रैश्च ᵛपुरः दधिध्वम् । ᵛविभावा विशेषेण दीप्यमानः ᵛजातवेदाः जातानां वेदिता ᵛसः[2] अग्निः ᵛहि यस्मात् ᵛनः अस्मान् ᵛस्वध्वरा शोभनयागान् ᵛकरति करोति तस्मात् पुरो दधिध्वमित्यन्वयः ॥

तमु द्युमः पुर्वणीक होतरग्ने अग्निभिर्मनुष इधानः ।
स्तोमं यमस्मै ममतेव शूषं घृतं न शुचि मतयः पवन्ते ॥ २ ॥

तम् । ऊँ इति । द्युऽमः । पुरुऽअनीक । होतः । अग्ने । अग्निऽभिः । मनुषः । इधानः ।
स्तोमम् । यम् । अस्मै । ममताऽइव । शूषम् । घृतम् । न । शुचि । मतयः । पवन्ते ॥ २ ॥

---

१. ख-घ-भ—वैश्वानर अग्ने । २. ज्ञ-त-र—यः ।

हे ᵛद्युमः दीप्तिमन् ᵛपुर्वणीक बहुज्वाल ᵛहोतः देवानामाह्वातः ᵛअग्ने ᵛअग्निभिः तवावयवभूतैरन्यैरग्निभिः सार्धम् ᵛइधानः समिध्यमानः दीप्तः सन् ᵛमनुषः मनुष्यस्य स्तोतुः ᵛतमु तं स्तोमं शृण्विति शेषः । उ इति पादपूरणम् । ᵛयं ᵛस्तोमं स्तोत्रं ᵛशूषं सुखकरं ᵛघृतं ᵛन पवित्राभ्याम् उत्पूतं घृतमिव ᵛशुचि शुद्धम् ᵛअस्मै अग्नये ᵛमतयः मन्तारः स्तोतारः ᵛममतेव । ममता नाम ब्रह्मवादिनी दीर्घतमसो माता । सेव ᵛपवन्ते पुनन्ति संस्कुर्वन्ति दोषवर्जितमुच्चारयन्तीत्यर्थः । तं स्तोममित्यन्वयः ॥

पीपाय स श्रवसा मर्त्येषु यो अग्नये ददाश विप्र उक्थैः ।
चित्राभिस्तमूतिभिश्चित्रशोचिर्व्रजस्य साता गोमतो दधाति ॥ ३ ॥

पीपाय । सः । श्रवसा । मर्त्येषु । यः । अग्नये । ददाश । विप्रः । उक्थैः ।
चित्राभिः । तम् । ऊतिऽभिः । चित्रऽशोचिः । व्रजस्य । साता । गोऽमतः । दधाति ॥३॥

ᵛसः[1] यजमानः ᵛमर्त्येषु मनुष्येषु[2] मध्ये[2] ᵛश्रवसा अन्नेन ᵛपीपाय वर्धते ᵛविप्रः मेधावी ᵛयः यजमानः ᵛउक्थैः स्तुतिभिः सार्धं हवींषि ᵛददाश प्रयच्छति । ᵛतं यजमानं ᵛचित्रशोचिः विचित्रदीप्तिरग्निः ᵛचित्राभिः आश्चर्यभूताभिः ᵛऊतिभिः[3] रक्षाभिः[3] ᵛगोमतः गोभिर्युक्तस्य ᵛव्रजस्य गोष्ठस्य ᵛसाता सातौ संभजने ᵛदधाति धारयति ॥

आ यः पप्रौ जायमान उर्वी दूरेदृशा भासा कृष्णाध्वा ।
अध बहु चित्तम ऊर्म्यायास्तिरः शोचिषा ददृशे पावकः ॥ ४ ॥

आ । यः । पप्रौ । जायमानः । उर्वी इति । दूरेऽदृशा । भासा । कृष्णऽअध्वा ।
अध । बहु । चित् । तमः । ऊर्म्यायाः । तिरः । शोचिषा । ददृशे । पावकः ॥ ४ ॥

ᵛकृष्णाध्वा कृष्णवर्त्मा ᵛयः अग्निः ᵛजायमानः प्रादुर्भवन् ᵛउर्वी विस्तीर्णे द्यावापृथिव्यौ ᵛदूरेदृशा दूरे दृश्यमानया ᵛभासा दीप्त्या ᵛआ ᵛपप्रौ आपूरयति सः ᵛपावकः अग्निः ᵛअध अनन्तरम् ᵛऊर्म्यायाः । रात्रिनामैतत् । रात्रेः संबन्धि ᵛबहु ᵛचित् बह्वपि ᵛतमः अन्धकारं ᵛशोचिषा दीप्त्या ᵛतिरः तिरस्कुर्वन् ᵛददृशे दृश्यते ॥

नू नश्चित्रं पुरुवाजाभिरूती अग्ने रयिं मघवद्भ्यश्च धेहि ।
ये राधसा श्रवसा चात्यन्यान्त्सुवीर्येभिश्चाभि सन्ति जनान् ॥ ५ ॥

नु । नः । चित्रम् । पुरुऽवाजाभिः । ऊती । अग्ने । रयिम् । मघवत्ऽभ्यः । च । धेहि ।
ये । राधसा । श्रवसा । च । अति । अन्यान् । सुऽवीर्येभिः । च । अभि । सन्ति । जनान् ॥५॥

---

१. श–सोऽयम् । २. झ–न–मध्ये; झ–त२–र–मनुष्येषु । ३. ख–झ–झ–त–न–भ–य–र–श–‘ ऊतिभी रक्षाभिः ’ नास्ति ।

हे ᵛअग्ने ᵛमघवद्भ्यः हविर्लक्षणधनयुक्तेभ्यः ᵛनः अस्मभ्यं ᵛपुरुवाजाभिः बहुभिः ᵛऊती ऊतिभिः रक्षणैः सह ᵛचित्रं चायनीयं ᵛरयिं धनं ᵛनु क्षिप्रं ᵛधेहि देहि प्रयच्छ। चशब्दो वक्ष्यमाणेन समुच्चयार्थः। ᵛये ᵛराधसा धनेन ᵛश्रवसा अन्नेन ᵛच ᵛसुवीर्येभिः शोभनैर्वीर्यैश्च ᵛअन्यान् ᵛजनान् मनुष्यान् ᵛअति अतिशयेन ᵛअभि ᵛसन्ति अभिभवन्ति तादृशान् पुत्रांश्चास्मभ्यं देहीत्यर्थः ॥

इमं यज्ञं चनो धा अग्न उशन्यं त आसानो जुहुते हविष्मान्।
भरद्वाजेषु दधिषे सुवृक्तिमवीर्वाजस्य गध्यस्य सातौ ॥ ६ ॥

इमम्। यज्ञम्। चनः। धाः। अग्ने। उशन्। यम्। ते। आसानः। जुहुते। हविष्मान्।
भरत्ऽवाजेषु। दधिषे। सुऽवृक्तिम्। अवीः। वाजस्य। गध्यस्य। सातौ ॥ ६ ॥

हे ᵛअग्ने ᵛउशन् कामयमानस्त्वम् ᵛइमं पुरोवर्ति ᵛयज्ञं यागसाधनं ᵛचनः हविर्लक्षणमन्नं ᵛधाः धेहि। स्वात्मनि धारय। ᵛयं च पुरोडाशादिकम् ᵛआसानः आसीन[1] उपविशन्[1] ᵛहविष्मान् हविर्युक्तो यजमानः ᵛते तुभ्यं त्वदर्थं ᵛजुहुते जुहोति तमिममित्यन्वयः। अपि च ᵛभरद्वाजेषु ऋषिषु ᵛसुवृक्तिं सुष्ठु दोषैर्वर्जितां स्तुतिं ᵛदधिषे धारय। ᵛगध्यस्य। गध्यतिर्मिश्रीभावकर्मा। मिश्रणीयस्य प्राप्यस्य ᵛवाजस्य अन्नस्य ᵛसातौ संभजने निमित्तभूते ᵛअवीः तानृषीन्[2] रक्ष च[2] ॥

वि द्वेषांसीनुहि वर्धयेळां मदेम शतहिमाः सुवीराः ॥ ७ ॥

वि। द्वेषांसि। इनुहि। वर्धय। इळाम्। मदेम। शतऽहिमाः। सुऽवीराः ॥ ७ ॥

हे अग्ने ᵛद्वेषांसि द्वेष्टॄन् शत्रून् ᵛवि ᵛइनुहि विविधं गमय। ᵛइळाम् अन्नं चास्मदीयं ᵛवर्धय। वयं च ᵛसुवीराः शोभनैर्वीरैः पुत्रपौत्रादिभिरुपेताः सन्तः ᵛशतहिमाः शतं हेमन्तान् संवत्सरान् ᵛमदेम मोदेम तृप्ता भूयास्म ॥　　॥ १२ ॥

'यजस्व होतः' इति षडृचमेकादशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयम्। अनुक्रम्यते च— 'यजस्व षट्' इति। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

यजस्व होतरिषितो यजीयानग्ने बाधो मरुतां न प्रयुक्ति।
आ नो मित्रावरुणा नासत्या द्यावा होत्राय पृथिवी ववृत्याः ॥ १ ॥

यजस्व। होतः। इषितः। यजीयान्। अग्ने। बाधः। मरुताम्। न। प्रऽयुक्ति।
आ। नः। मित्रावरुणा। नासत्या। द्यावा। होत्राय। पृथिवी इति। ववृत्याः ॥ १ ॥

हे ᵛहोतः देवानामाह्वातः ᵛअग्ने ᵛयजीयान् यष्टृतमस्त्वम् ᵛइषितः प्रेषितोऽस्माभिः प्रार्थितः सन्। ᵛन इति संप्रत्यर्थे। संप्रति ᵛप्रयुक्ति प्रयुक्तौ प्रयुज्यमाने यज्ञे ᵛमरुतां देवानां ᵛबाधः शत्रूणां बाधकं

---

१. त–आविशन्। २. श–अस्मानृषीनवात्सीः।

गणं ᵛयजस्व । यद्वैतद्वाक्यद्वयम् । हे होतरग्ने यजस्व देवानित्येकं वाक्यम् । प्रयुज्यत इति प्रयुक्ति बलम् । मरुतां न प्रयुक्ति मरुतां बलमिवास्मच्छत्रून् बाधः बाधस्वेति द्वितीयं वाक्यम् । अपि च ᵛमित्रावरुणा । अहरभिमानी देवो मित्रो वरुणो रात्र्यभिमानी । तौ च ᵛनासत्या सत्यस्य नेतारौ सत्यस्वभावावेव वा नासिकाप्रभवौ वाश्विनौ ᵛद्यावापृथिवी दिवं च पृथिवीं च एतांश्च देवान् ᵛहोत्राय अस्मद्यज्ञाय तदर्थम् ᵛआ ᵛववृत्याः आवर्तय आवहेत्यर्थः ॥

त्वं होता मन्द्रतमो नो अध्रुगन्तर्देवो विदथा मर्त्येषु ।
पावकया जुह्वा३ वह्निरासाग्ने यजस्व तन्वं१ तव स्वाम् ॥ २ ॥

त्वम् । होता । मन्द्रऽतमः । नः । अध्रुक् । अन्तः । देवः । विदथा । मर्त्येषु ।
पावकया । जुह्वा । वह्निः । आसा । अग्ने । यजस्व । तन्वम् । तव । स्वाम् ॥ २ ॥

हे अग्ने ᵛत्वं ᵛमर्त्येषु मनुष्येषु ᵛअन्तः मध्ये वर्तमानः[1] ᵛविदथा विदथे यज्ञे ᵛहोता देवानामाह्वाता भवसि । कीदृशस्त्वम् । ᵛमन्द्रतमः स्तुत्यतमः ᵛनः अस्माकम् ᵛअध्रुक् अद्रोग्धास्मदर्थं द्रोहरहितो वा । सर्वदा मित्रभूत इत्यर्थः[2] । ᵛदेवः दानादिगुणयुक्तः । अपि च हे ᵛअग्ने ᵛजुह्वा । हूयन्तेऽस्यामाहुतय इति जुहूर्ज्वाला । तया ᵛपावकया शोधयित्र्या ᵛआसा आस्येन देवानामास्यभूतया ᵛवह्निः हविषां वोढा त्वं ᵛतव ᵛस्वां स्वभूतां स्विष्टकृदाख्यां ᵛतन्वं तनूं ᵛयजस्व ॥

धन्या चिद्धि त्वे धिषणा वष्टि प्र देवाञ्जन्म गृणते यजध्यै ।
वेपिष्ठो अङ्गिरसां यद्ध विप्रो मधुच्छन्दो भनति रेभ इष्टौ ॥ ३ ॥

धन्या । चित् । हि । त्वे इति । धिषणा । वष्टि । प्र । देवान् । जन्म । गृणते । यजध्यै ।
वेपिष्ठः । आङ्गिरसाम् । यत् । ह । विप्रः । मधु । छन्दः । भनति । रेभः । इष्टौ ॥ ३ ॥

ᵛधन्या धनमिच्छन्ती धनहेतुभूता[3] ᵛधिषणा स्तुतिर्हे अग्ने ᵛत्वे त्वां ᵛवष्टि कामयते । ᵛचिद्धि इत्येतत् पादपूरणम् । किमर्थम् । ᵛदेवान् यष्टव्यानिन्द्रादीन् ᵛप्र ᵛयजध्यै प्रकर्षेण यष्टुं त्वदीयं ᵛजन्म प्रादुर्भावं ᵛगृणते स्तुवते यजमानायेदंभूतयजमानार्थम् । ᵛयद्ध यदा खलु ᵛअङ्गिरसाम् ऋषीणां मध्ये ᵛवेपिष्ठः अतिशयेन स्तुतेः प्रेरयिता ᵛविप्रः मेधावी ᵛरेभः स्तोता भरद्वाजः ᵛइष्टौ यज्ञे ᵛमधु मधुवत् मदकरं ᵛछन्दः स्तोत्रं ᵛभनति उच्चारयति तदा धिषणा वष्टीत्यन्वयः ।

१. ख-ङ्ग-त-न-भ-र-वर्तमाने । २. ख-ङ्ग-न-भ-य-'इत्यर्थः' नास्ति । ३. श-धनहेतुभूता धनं लभमाना वा । धनगणं लब्धेति यत् ।

अदिद्युतत्स्वपाको विभावाग्ने यजस्व रोदसी उरूची ।
आयुं न यं नमसा रातहव्या अञ्जन्ति सुप्रयसं पञ्च जनाः ॥ ४ ॥

अदिद्युतत् । सु । अपाकः । विऽभावा । अग्ने । यजस्व । रोदसी इति । उरूची इति ।
आयुम् । न । यम् । नमसा । रातऽहव्याः । अञ्जन्ति । सुऽप्रयसम् । पञ्च । जनाः ॥ ४ ॥

अयमग्निः vसु vअदिद्युतत् । सुष्ठु द्योतते दीप्यते । कथंभूतः । vअपाकः । पाकः पक्तव्यप्रज्ञो मूर्खः । तद्विलक्षणोऽपाकः । vविभावा दीप्तिमान् । शेषः प्रत्यक्षकृतः । हे vअग्ने स त्वम् vउरूची उरु विस्तीर्णमञ्चन्त्यौ विस्तृते vरोदसी द्यावापृथिव्यौ vयजस्व हविषा पूजय । vआयुं vन मनुष्यमतिथिमिव vयं vपञ्च vजनाः मनुष्या ऋत्विग्यजमानलक्षणाः vरातहव्याः दत्तहविष्काः सन्तः vसुप्रयसं शोभनहविर्लक्षणान्नमग्निं vनमसा अन्नेन हविर्लक्षणेन vअञ्जन्ति सिञ्चन्ति तर्पयन्ति स त्वं यजस्वेत्यन्वयः॥

वृञ्जे ह यन्नमसा बर्हिरग्नावयामि स्रुग्घृतवती सुवृक्तिः ।
अम्यक्षि सद्म सदने पृथिव्या अश्रायि यज्ञः सूर्ये न चक्षुः ॥ ५ ॥

वृञ्जे । ह । यत् । नमसा । बर्हिः । अग्नौ । अयामि । स्रुक् । घृतऽवती । सुऽवृक्तिः ।
अम्यक्षि । सद्म । सदने । पृथिव्याः । अश्रायि । यज्ञः । सूर्ये । न । चक्षुः ॥ ५ ॥

vयत् vह यदा खलु vनमसा हविषा सह[1] vअग्नौ अग्निसमीपे vबर्हिः[1] vवृञ्जे । वृजिश्छेदनार्थः । छिद्यते । आह्रियत इत्यर्थः । vसुवृक्तिः सुष्ठु दोषैर्वर्जिता vघृतवती घृतपूर्णा vस्रुक् vअयामि नियम्यते बर्हिष्यासाद्यते । तथा vपृथिव्याः भूमेः vसदने स्थाने vसद्म हविरासादनार्था वेदिः vअम्यक्षि । म्यक्षतिर्गतिकर्मा । गम्यते परिगृह्यते । तदानीं vयज्ञः vअश्रायि यजमाने आश्रितो भवति । तत्र दृष्टान्तः । vसूर्ये vन vचक्षुः । यथा सूर्ये सर्वस्य प्रेरक आदित्ये प्रकाशकं तेजः समवैति तद्वत् ॥

दशस्या नः पुर्वणीक होतर्देवेभिरग्ने अग्निभिरिधानः ।
रायः सूनो सहसो वावसाना अति स्रसेम वृजनं नांहः ॥ ६ ॥

दशस्य । नः । पुरुऽअनीक । होतरिति । देवेभिः । अग्ने । अग्निऽभिः । इधानः ।
रायः । सूनो इति । सहसः । ववसानाः । अति । स्रसेम । वृजनम् । न । अंहः ॥ ६ ॥

हे vपुर्वणीक बहुज्वाल vहोतः देवानामाह्वातः vअग्ने vदेवेभिः देवैर्द्योतमानैरन्यैः vअग्निभिः त्वद्विभूतिभूतैः सार्धम् vइधानः इध्यमानो दीप्यमानः सन् vनः अस्मभ्यं vरायः धनानि vदशस्य

---

1. ख-ङ्म-न-भ-य– सह बर्हिः अग्नौ अग्निसमीपे ।

प्रयच्छ। हे ᐯसहसः ᐯसूनो बलस्य पुत्राग्ने ᐯवावसानाः हविषा त्वामाच्छादयन्तो वयं ᐯवृजनं ᐯन शत्रुमिव ᐯअंहः पापम् ᐯअति ᐯस्यसेम अतिगच्छेम। अतिक्रामेमेत्यर्थः[1] ॥ ॥ १३ ॥

'मध्ये होता' इति षडृचं द्वादशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयम्। 'मध्ये' इत्यनुक्रान्तम्। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

मध्ये होता दुरोणे बर्हिषो राळग्निस्तोदस्य रोदसी यजध्यै।
अयं स सूनुः सहस ऋतावा दूरात्सूर्यो न शोचिषा ततान ॥ १ ॥

मध्ये। होता। दुरोणे। बर्हिषः। राट्। अग्निः। तोदस्य। रोदसी इति। यजध्यै।
अयम्। सः। सूनुः। सहसः। ऋतऽवा। दूरात्। सूर्यः। न। शोचिषा। ततान ॥१॥

ᐯहोता देवानामाह्वाता ᐯबर्हिषः यज्ञस्य ᐯराट् राजा ᐯअग्निः ᐯतोदस्य। तुद्यते तपसा पीड्यत इति तोदो यजमानः। तस्य ᐯदुरोणे गृहे ᐯमध्ये निषीदतीति शेषः। किमर्थम्। ᐯरोदसी द्यावापृथिव्यौ ᐯयजध्यै यष्टुम्। ᐯसः तादृशः ᐯअयं ᐯसहसः ᐯसूनुः सहसस्पुत्रः ᐯऋतावा सत्यवान् यज्ञवान् वाग्निः ᐯसूर्यो ᐯन सूर्य इव ᐯदूरात् दूरत एव ᐯशोचिषा तेजसा ᐯततान आतनोति विस्तारयति। दूरदेशे वर्तमानोऽपि सूर्य इव सर्वं जगद्भासयतीत्यर्थः ॥

आ यस्मिन्त्वे स्वपाके यजत्र यक्षद्राजन्त्सर्वतातेव नु द्यौः।
त्रिषधस्थस्ततरुषो न जंहो हव्या मघानि मानुषा यजध्यै ॥ २ ॥

आ। यस्मिन्। त्वे इति। सु। अपाके। यजत्र। यक्षत्। राजन्। सर्वताताऽइव। नु। द्यौः।
त्रिऽसधस्थः। ततरुषः। न। जंहः। हव्या। मघानि। मानुषा। यजध्यै ॥ २ ॥

ᐯद्यौः स्तोता ᐯसर्वतातेव। इवशब्दः पूरकः। यज्ञनामैतत्। सर्वतातौ सर्वैस्तायमाने यज्ञे। यद्वा। सर्वशब्दात् स्वार्थिकस्तातिल्प्रत्ययः। सर्वः स्तोता हे ᐯयजत्र यष्टव्य ᐯराजन् राजमानाग्ने ᐯअपाके प्राज्ञे ᐯत्वे ᐯयस्मिन् त्वे त्वयि ᐯसु[2] अत्यन्तं ᐯनु क्षिप्रम् ᐯआ ᐯयक्षत् आयजति हवींषि जुहोति ᐯत्रिषधस्थः त्रिषु लोकेषु सह स्थितः। यद्वा। गार्हपत्यादिरूपेण त्रिधावस्थितः। तादृशस्त्वं ᐯततरुषो ᐯन तरिता सूर्य इव ᐯजंहः शीघ्रं गन्ता भव। जंह इति हन्तेर्गतिकर्मणो रूपम्। यद्वा। 'तॄ प्लवनतरणयोः' इत्यस्मात् क्वसौ रूपं ततर्वानिति। तस्य षष्ठ्यां[3] रूपमेतत् ततरुष इति ॥ तरितुः सूर्यस्येव जंहो वेगः तव[4] भवत्वित्यर्थः। किमर्थम्। ᐯमघानि मंहनीयानि प्रशस्यानि ᐯमानुषा मनुष्याणां[5] संबन्धीनि ᐯहव्या हव्यानि हवींषि ᐯयजध्यै यष्टुं देवेभ्यो दातुम् ॥

---

१. ख-न-भ—अतिक्रमेमेत्यर्थः; झ—अतिक्रमेत्यर्थः; त२—अतिक्रामेत्यर्थः। २. ख-झ-त-न-भ-र—'सु' नास्ति। ३. य—षष्ठ्याः। ४. ख-झ-भ-य-र—तद्वत्। ५. ख-झ-न-भ-य—मानुषाणाम्।

तेजिष्ठा यस्यारतिर्वनेराट् तोदो अध्वन्न वृधसानो अद्यौत् ।
अद्रोघो न द्रविता चेतति त्मन्नमर्त्योऽवर्त्र ओषधीषु ॥ ३ ॥

तेजिष्ठा । यस्य । अरतिः । वनेऽराट् । तोदः । अध्वन् । न । वृधसानः । अद्यौत् ।
अद्रोघः । न । द्रविता । चेतति । त्मन् । अमर्त्यः । अवर्त्रः । ओषधीषु ॥ ३ ॥

यस्य अग्नेः अरतिः गन्त्री ज्वाला तेजिष्ठा अतिशयेन तेजस्विनी सती वनेराट् दावरूपेण[1] अरण्ये राजमाना वर्तते वृधसानः वर्धमानः सोऽग्निः तोदो अध्वन्न । तोदः सर्वस्य प्रेरकः सूर्यः । स इवाध्वनि स्वमार्गेऽन्तरिक्षे अद्यौत् द्योतते प्रकाशते । अपि च अद्रोघो न अद्रोग्धव्यः । यद्वा । प्राणरूपेण सर्वेषामद्रोग्धा वायुरिव तादृशः अमर्त्यः मरणरहितः सोऽग्निः ओषधीषु । ओषः पाक एषु धीयत इत्योषधयो वनानि । तेषु द्रविता शीघ्रगामी सन् अवर्त्रः केनाप्यवारणीयश्च भवन् त्मन् आत्मना स्वप्रकाशेनैव चेतति चेतयति[2] सर्वं जगत् ज्ञापयति ॥

सास्माकेभिरेतरी न शूषैरग्निः ष्टवे दम आ जातवेदाः ।
द्र्वन्नो वन्वन् क्रत्वा नार्वोस्रः पितेव जारयायि यज्ञैः ॥ ४ ॥

सः । अस्माकेभिः । एतरि । न । शूषैः । अग्निः । स्तवे । दमे । आ । जातऽवेदाः ।
द्रुऽअन्नः । वन्वन् । क्रत्वा । न । अर्वा । उस्रः । पिताऽइव । जारयायि । यज्ञैः ॥ ४ ॥

जातवेदाः जातधनो जातप्रज्ञो वा सः अग्निः अस्माकेभिः अस्मदीयैः स्तोतृभिः एतरी[3] न । एतरि गन्तरि[3] याचमाने पुरुषे विद्यमानानि स्तोत्राणि यथात्यन्तं सुखकराणि तथा शूषैः सुखकरैः स्तोत्रैः दमे अस्मदीये यज्ञगृहे आ आभिमुख्येन स्तवे स्तूयते । अपि च द्र्वन्नः । द्रुर्द्रुमः । स एवान्नं यस्य स तथोक्तः । अत एव वन्वन् वनानि संभजन् क्रत्वा न क्रतुना आत्मीयेन[4] कर्मणा च अर्वा गन्ता च[5] भवति । तत्र दृष्टान्तः । उस्रः पितेव । पिता पालयिता वत्सानां जनको वोस्रो वृषभ इव । स यथा मैथुनार्थं शीघ्रं गच्छति तद्वत् । यज्ञैः यज्ञवद्भिर्यजमानैश्च जारयायि स्तूयते । जरतेः स्तुतिकर्मणः एतद्रूपम्[6] ।

अध स्मास्य पनयन्ति भासो वृथा यत्तक्षदनुयाति पृथ्वीम् ।
सद्यो यः स्पन्द्रो विषितो धवीयानृणो न तायुरति धन्वा राट् ॥ ५ ॥

अध । स्म । अस्य । पनयन्ति । भासः । वृथा । यत् । तक्षत् । अनुऽयाति । पृथ्वीम् ।
सद्यः । यः । स्पन्द्रः । विऽसितः । धवीयान् । ऋणः । न । तायुः । अति । धन्व । राट् ॥५॥

---

१. झ-न-भ—दावरूपे । २. ख—' चेतयति ' नास्ति; त२-र—चितयति; न— चिन्तयति । ३. ख—एतरि तदुपरि; ज्ञ—एतरी न उपगन्तरि; झ-त१-भ—एतरि तदुपगन्तरि; त२-र—एतरी नदुपगन्तर्; न—एतरि तद्वउपगन्तरि । ४. ख-ज्ञ-झ-त-न-भ-र—' आत्मीयेन ' नास्ति । ५. घ—वर्जितेषु ' च ' नास्ति । ६. ख-झ-न-भ-य—इदं रूपम् ।

vअध अस्मिँल्लोके। vस्म इति पूरकः। vअस्य अग्नेः vभासः रश्मीन् vपनयन्ति स्तोतारः स्तुवन्ति। vयत् यदा vवृथा अनायासेन vतक्षत् तक्षन् तनकुर्वन् वनानि सम्यग्दहन् vपृथ्वीं विस्तीर्णामरण्यभुवम् vअनुयाति अनुगच्छति तदानीं पनयन्ति इत्यन्वयः। vयः अग्निः vस्पन्द्रः स्पन्दनवान् vविषितः विमुक्तः प्रतिबन्धरहितः अत एव vसद्यः शीघ्रं vधवीयान् गन्तृतमो भवति। क इव। vऋणो vन vतायुः। ऋणोतिर्गतिकर्मा। तायुरिति स्तेननाम। यथा स्तेनः शीघ्रं गन्ता भवति तद्वत् सोऽयमग्निः vधन्व मरुभूमिमतिक्रम्य vराट् राजते। यद्वा। धन्वन्त्यस्मादाप इति धन्वान्तरिक्षम्। अतिशयेनान्तरिक्षम् आक्रम्य[1] राजते॥

स त्वं नो अर्वन्निदाया विश्वेभिरग्ने अग्निभिरिधानः।
वेषि रायो वि यासि दुच्छुना मदेम शतहिमाः सुवीराः॥ ६॥

सः। त्वम्। नः। अर्वन्। निदायाः। विश्वेभिः। अग्ने। अग्निऽभिः। इधानः।
वेषि। रायः। वि। यासि। दुच्छुनाः। मदेम। शतऽहिमाः। सुऽवीराः॥ ६॥

हे vअर्वन् गन्तः vअग्ने vसः तादृशः vत्वं vनिदायाः निन्दित्र्याः प्रजाया निन्दाया एव वा पाहीति शेषः। कथंभूतः सन्। vविश्वेभिः सर्वैः vअग्निभिः स्वच्छाखाभूतैः vइधानः[2] इध्यमानः[2] सन्। vरायः धनानि चास्मान् vवेषि गमय प्रापय। यद्वा। हविर्लक्षणानि धनानि वेषि कामयसे। vदुच्छुनाः दुःखकारिणीः शत्रुसेनाः vवि vयासि च विविधं गमयसि च। वयं च vसुवीराः शोभनपुत्रपौत्राः सन्तः vशतहिमाः शतं[3] संवत्सरान्[3] vमदेम मोदेम॥ ॥ १४॥

'त्वद्विश्वा' इति षडृचं त्रयोदशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयम्। 'त्वद्विश्वा' इत्यनुक्रान्तम्। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः॥

त्वद्विश्वा सुभग सौभगान्यग्ने वि यन्ति वनिनो न वयाः।
श्रुष्टी रयिर्वाजो वृत्रतूर्ये दिवो वृष्टिरीड्यो रीतिरपाम्॥ १॥

त्वत्। विश्वा। सुऽभग। सौभगानि। अग्ने। वि। यन्ति। वनिनः। न। वयाः।
श्रुष्टी। रयिः। वाजः। वृत्रऽतूर्ये। दिवः। वृष्टिः। ईड्यः। रीतिः। अपाम्॥ १॥

हे vसुभग शोभनधन vअग्ने vविश्वा विश्वानि सर्वाणि vसौभगानि धनानि[4] vत्वत् त्वत्तः vवि vयन्ति विविधं निर्गच्छन्ति। हिरण्यमूलत्वात् सर्वेषां धनानां हिरण्यं चाग्नेः सकाशादुत्पन्नम्। 'तस्य रेतः परापतत्तद्धिरण्यमभवत्' (तै. ब्रा. १. १. ३. ८) इति श्रुतेः। निर्गमने दृष्टान्तः। vवनिनो vन vवयाः। यथा वृक्षाच्छाखा विविधं निर्गच्छन्ति तद्वत्। तथा vरयिः पशुसंघश्च त्वत्सकाशादेव vश्रुष्टी क्षिप्रं व्येति निर्गच्छति। 'पशवो वै रयिः पशूनेवावरुन्धे' (तै. सं. १. ५. ७. २) इति तैत्तिरीयकम्।

---

१. श–अतिक्रम्य। २. ख१-भ–स इधानः इध्यमानः; ज-झ-ण-त-न-र–स इधानः। ३ ख-ज्ञ-झ-त-न-भ-र-श–शतसंवत्सरान्। ४. न–शोभनधनानि।

वृत्रतूर्ये वृत्राणां शत्रूणां हिंसके संग्रामे शत्रून् जेतुं वाजः बलं च त्वत्तो व्येति । दिवः अन्तरिक्षात् या वृष्टिः सापि त्वत्त एव व्येति । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' ( मनु. ३. ७६ ) इति स्मरणात् । अतस्त्वम् ईड्यः सर्वैः स्तुत्यः सन् अपाम् उदकानां रीतिः गमयिता भवसि ॥

त्वं भगो न आ हि रत्नमिषे परिज्मेव क्षयसि दस्मवर्चाः ।
अग्ने मित्रो न बृहत ऋतस्यासि क्षत्ता वामस्य देव भूरेः ॥ २ ॥

त्वम् । भगः । नः । आ । हि । रत्नम् । इषे । परिज्माऽइव । क्षयसि । दस्मऽवर्चाः ।
अग्ने । मित्रः । न । बृहतः । ऋतस्य । असि । क्षत्ता । वामस्य । देव । भूरेः ॥ २ ॥

हे अग्ने भगः[1] भजनीयः त्वं[1] नः अस्मभ्यं रत्नं रमणीयं धनम् आ इषे आगमय प्रयच्छ ॥ 'इण् गतौ' इत्यस्यैतद्रूपम् । हि इति पूरकः । दस्मवर्चाः दर्शनीयदीप्तिस्त्वं परिज्मेव परितो गन्ता वायुरिव क्षयसि सर्वत्र निवससि । यद्वा । क्षयतिरैश्वर्यकर्मा । सर्वस्येशिषे । हे अग्ने मित्रो न प्रमीतेस्त्रायको देव इव बृहतः महतः ऋतस्य उदकस्य[2] यज्ञस्य वा क्षत्ता असि । क्षदतिरत्र दानकर्मा । दाता भवसि । तथा हे देव द्योतमानाग्ने भूरेः बहुलस्य वामस्य वननीयस्य धनस्य च दाता भवसीत्यनुषङ्गः ॥

स सत्पतिः शवसा हन्ति वृत्रमग्ने विप्रो वि पणेर्भर्ति वाजम् ।
यं त्वं प्रचेत ऋतजात राया सजोषा नप्त्रापां हिनोषि ॥ ३ ॥

सः । सत्ऽपतिः । शवसा । हन्ति । वृत्रम् । अग्ने । विप्रः । वि । पणेः । भर्ति । वाजम् ।
यम् । त्वम् । प्रऽचेतः । ऋतऽजात । राया । सऽजोषाः । नप्त्रा । अपाम् । हिनोषि ॥ ३ ॥

हे अग्ने सत्पतिः सतां पालयिता सः पुरुषः वृत्रम् आवरकं शत्रुं शवसा बलेन हन्ति । स च विप्रः मेधावी सन् पणेः वणिजः एतन्नाम्नोऽसुरस्य वा वाजम् अन्नं बलं वा वि भर्ति वियुज्य हरति ॥ 'हृग्रहोर्भः०' इति भत्वम् ॥ हे प्रचेतः प्रकृष्टज्ञान ऋतजात । ऋतमिति यज्ञनाम । तदर्थं जाताग्ने अपां नप्त्रा न पातयित्रा[3] पुत्रेण मध्यमस्थानेन वैद्युताग्निना सजोषाः संगतः त्वं यं पुरुषं राया ॥ चतुर्थ्यर्थे तृतीया ॥ धनार्थं हिनोषि प्रेरयसि स हन्तीत्यन्वयः ॥

यस्ते सूनो सहसो गीर्भिरुक्थैर्यज्ञैर्मर्तो निशितिं वेद्यानट् ।
विश्वं स देव प्रति वारमग्ने धत्ते धान्यं[1] पत्यते वसव्यैः ॥ ४ ॥

यः । ते । सूनो इति । सहसः । गीःऽभिः । उक्थैः । यज्ञैः । मर्तः । निऽशितिम् । वेद्या । आनट् ।
विश्वम् । सः । देव । प्रति । वा । अरम् । अग्ने । धत्ते । धान्यम् । पत्यते । वसव्यैः ॥ ४ ॥

---

१. य–त्वं भगो भजनीयः । २. ख-भ–उदकस्य सत्यस्य; श–सत्यस्य । ३. ख-ञ-त-भ-य–प्रापयित्रा; न-र–पापयित्रा ।

हे सहसः सूनो बलस्य पुत्राग्ने ते तव निशितिं तैक्ष्ण्यं यः मर्तः मनुष्यो यजमानः गीर्भिः स्तुतिभिः उक्थैः शस्त्रैः यज्ञैः यजनसाधनैर्हविर्भिश्च वेद्या वेद्यां यज्ञभूमौ आनट् प्रापयति सः मर्तो हे देव द्योतमान अग्ने विश्वं सर्वम् अरं पर्याप्तम्। वाशब्दश्चार्थे। धान्यं च प्रति धत्ते प्रतिधारयति। वसव्यैः वसुभिश्च पत्यते संगच्छते ॥

ता नृभ्य आ सौश्रवसा सुवीराग्ने सूनो सहसः पुष्यसे धाः ।
कृणोषि यच्छवसा भूरि पश्वो वयो वृकायारये जसुरये ॥ ५ ॥

ता । नृऽभ्यः । आ । सौश्रवसा । सुऽवीरा । अग्ने । सूनो इति । सहसः । पुष्यसे । धाः ।
कृणोषि । यत् । शवसा । भूरि । पश्वः । वयः । वृकाय । अरये । जसुरये ॥ ५ ॥

हे सहसः सूनो सहसस्पुत्र अग्ने सुवीरा शोभनैः पुत्रैरुपेतानि सौश्रवसा सुश्रवांसि शोभनान्यन्नानि ता तानि नृभ्यः शत्रुजनेभ्यः आ आहृत्य धाः अस्मासु धेहि । किमर्थम् । पुष्यसे पोषार्थम्[1] । यद्वा । नृभ्यः स्तुतीनां नेतृभ्योऽस्मभ्यम् आ धेहि आभिमुख्येन प्रयच्छ । शवसा बलेन युक्तस्त्वं भूरि बहुलं पश्वः पशोः संबन्धि दध्यादिलक्षणं यत् वयः अन्नं वृकाय अदात्रे जसुरये उपक्षपयित्रे अरये शत्रवे कृणोषि करोषि तदन्नमाहृत्य प्रयच्छेत्यर्थः[2] ॥

वद्मा सूनो सहसो नो विहाया अग्ने तोकं तनयं वाजि नो दाः ।
विश्वाभिर्गीर्भिरभि पूर्तिमश्यां मदेम शतहिमाः सुवीराः ॥ ६ ॥

वद्मा । सूनो इति । सहसः । नः । विऽहायाः । अग्ने । तोकम् । तनयम् । वाजि । नः । दाः ।
विश्वाभिः । गीःऽभिः । अभि । पूर्तिम् । अश्याम् । मदेम । शतऽहिमाः । सुऽवीराः ॥ ६ ॥

हे सहसः सूनो अग्ने विहायाः । महन्नामैतत् । महांस्त्वं नः अस्माकं वद्मा वदिता हितोपदेष्टा भव । अपि च तोकं पुत्रं तनयं तत्पुत्रं च वाजि अन्नयुक्तं नः अस्मभ्यं दाः देहि । अहं स्तोता विश्वाभिः सर्वाभिः गीर्भिः त्वद्विषयाभिः[3] पूर्तिं कामानां संपूर्तिम् अभि अश्याम् अभिप्राप्नुयाम् । अन्यद्गतम् ॥ ॥ १५ ॥

'अग्ना यः' इति षळृचं चतुर्दशं सूक्तं भरद्वाजस्यार्षमाग्नेयम् । षष्ठी शक्करी शिष्टाः पञ्चानुष्टुभः । तथा चानुक्रान्तम्—'अग्ना य आनुष्टुभं शक्कर्यन्तम्' इति । प्रातरनुवाक आग्नेये क्रतावाश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च—'अग्ना यो होताजनिष्ट' ( आश्व. श्रौ. ४. १३ ) इति । अग्नेश्चतुर्वीराख्ये चतूरात्रेऽहीने तृतीयेऽहनीदं सूक्तमाज्यशस्त्रम् । सूत्रितं च—'अग्ना यो मर्त्यो दुव इति तृतीये' ( आश्व. श्रौ. १०. २ ) इति ॥

---

१. श-पोषणार्थम् । २. श-अस्मभ्यं प्रयच्छेत्यर्थः । ३. ज्ञ-त्वद्विषयाभिः स्तुतिभिः ।

अग्ना यो मर्त्यो दुवो धियं जुजोष धीतिभिः ।
भसन्नु ष प्र पूर्व्य इषं वुरीतावसे ॥ १ ॥

अग्ना । यः । मर्त्यः । दुवः । धियम् । जुजोष । धीतिऽभिः ।
भसत् । नु । सः । प्र । पूर्व्यः । इषम् । वुरीत । अवसे ॥ १ ॥

Vयो Vमर्त्यः मनुष्यः Vअग्ना अग्नावग्निविषयं Vदुवः परिचरणं Vधियं कर्म च यज्ञादिलक्षणं Vधीतिभिः स्तुतिभिः सार्धं Vजुजोष सेवते आचरति Vसः मर्त्यः Vपूर्व्यः पूर्वेषां मुख्यः सन् Vनु क्षिप्रं Vप्र Vभसत् प्रभासेत । प्रकृष्टप्रकाशवान् भवेत् । Vअवसे पुत्रादीनां रक्षणार्थम् Vइषम् अन्नं च Vवुरीत वृणीत संभजेत । शत्रुसकाशाल्लभेतेत्यर्थः ॥

अग्निरिद्धि प्रचेता अग्निर्वेधस्तम ऋषिः ।
अग्निं होतारमीळते यज्ञेषु मनुषो विशः ॥ २ ॥

अग्निः । इत् । हि । प्रऽचेताः । अग्निः । वेधःऽतमः । ऋषिः ।
अग्निम् । होतारम् । ईळते । यज्ञेषु । मनुषः । विशः ॥ २ ॥

Vअग्निरित् अग्निरेव Vप्रचेताः प्रकृष्टज्ञानवान् नान्यः[1] कश्चित् । Vहि यस्मादेवं तस्मात् Vवेधस्तमः विधातृतमोऽतिशयेन हविर्वहनादीनां कर्मणां कर्ता Vऋषिः सर्वस्य द्रष्टा च भवति । Vमनुषः मनुष्यस्य यजमानस्य Vविशः प्रजाः ऋत्विग्लक्षणाः Vहोतारं देवानामाह्वातारं तादृशम् Vअग्निं Vयज्ञेषु यागेषु Vईळते स्तुवन्ति ॥

नाना ह्य१ग्नेऽवसे स्पर्धन्ते रायो अर्यः ।
तूर्वन्तो दस्युमायवो व्रतैः सीक्षन्तो अव्रतम् ॥ ३ ॥

नाना । हि । अग्ने । अवसे । स्पर्धन्ते । रायः । अर्यः ।
तूर्वन्तः । दस्युम् । आयवः । व्रतैः । सीक्षन्तः । अव्रतम् ॥ ३ ॥

हे Vअग्ने Vअर्यः अरेः शत्रोः Vरायः धनानि Vअवसे त्वत्स्तोतॄणां रक्षणार्थं Vनाना शत्रुसकाशात् पृथग्भूताः Vस्पर्धन्ते । अहमेव पालयान्यहमेव पालयानीति स्पर्धां कुर्वन्ति । Vआयवः मनुष्यास्ते च स्तोतारः Vदस्युम् उपक्षपयितारं शत्रुं Vतूर्वन्तः हिंसन्तः Vव्रतैः त्वद्देवत्यैर्यागैः Vअव्रतं व्रतविरोधिनं[2] च पुरुषं Vसीक्षन्तः सोढुमभिभवितुमिच्छन्तो भवन्ति ॥

---

१. ख-झ-त-न-भ-य-र–' नान्यः ' नास्ति । २. ख-ग-घ१-ज्ञ-झ-त-न-भ-य-र-श–व्रतविरोधिनं यागविरोधिनम् ।

अग्निरप्सामृतीषहं वीरं ददाति सत्पतिम् ।
यस्य त्रसन्ति शवसः संचक्षि शत्रवो भिया ॥ ४ ॥

अग्निः । अप्साम् । ऋतिऽसहम् । वीरम् । ददाति । सत्ऽपतिम् ।
यस्य । त्रसन्ति । शवसः । सम्ऽचक्षि । शत्रवः । भिया ॥ ४ ॥

अयम् अग्निः वीरं पुत्रं ददाति स्तोतृभ्यः प्रयच्छति । कीदृशं पुत्रम् । अप्साम् अपामाप्तव्यानां कर्मणां सनितारं संभक्तारम् ऋतीषहम् ऋतीनामरातीनां सोढारमभिभवितारं सत्पतिं सतां कर्मणां पालयितारम् । यस्य वीरस्य संचक्षि संदर्शने सति शवसः बलात् भिया भीत्या शत्रवः त्रसन्ति उद्विजन्ते तं वीरमित्यन्वयः ॥

अग्निर्हि विद्मना निदो देवो मर्तमुरुष्यति ।
सहावा यस्यावृतो रयिर्वाजेष्ववृतः ॥ ५ ॥

अग्निः । हि । विद्मना । निदः । देवः । मर्तम् । उरुष्यति ।
सहऽवा । यस्य । अवृतः । रयिः । वाजेषु । अवृतः ॥ ५ ॥

सहावा । सहो बलम् । तद्वान् देवः दानादिगुणयुक्तः अग्निः विद्मना ज्ञानेन युक्तः सन् तं मर्तं मनुष्यं यजमानं निदः निन्दकात् उरुष्यति रक्षति । हि इति पूरकः । यस्य मर्तस्य रयिः हविर्लक्षणं धनम् अवृतः रक्षःप्रभृतिभिरनाच्छादितं वाजेषु यज्ञेषु अवृतः अन्यैर्यजमानैः असंभक्तं[1] तं[1] हविष्मन्तं यजमानमुरुष्यतीत्यन्वयः ॥

अच्छा नो मित्रमहो देव देवानग्ने वोचः सुमतिं रोदस्योः ।
वीहि स्वस्तिं सुक्षितिं दिवो नॄन्द्विषो अंहांसि दुरिता तरेम ता तरेम तवावसा तरेम ॥ ६ ॥

अच्छ । नः । मित्रऽमहः । देव । देवान् । अग्ने । वोचः । सुऽमतिम् । रोदस्योः ।
वीहि । स्वस्तिम् । सुऽक्षितिम् । दिवः । नॄन् । द्विषः । अंहांसि । दुःऽइता । तरेम ।
ता । तरेम । तव । अवसा । तरेम ॥ ६ ॥

व्याख्यातेयम्* । अक्षरार्थस्तु । अनुकूलदीप्ते दानादिगुणयुक्ताग्ने द्यावापृथिव्योरभिगतस्त्वमस्मदीयां सुष्टुतिं यष्टव्यान् देवान् प्रति वोचः प्रब्रूहि । स्तुतेर्नेतॄनस्मांश्च सुनिवासमविनाशं गमय । वयं च

---

१. ख१-घ-ज-भ-श–असंभक्तं तस्यैव असाधारणम्; ण–असंभक्त तस्यैव साधारणम्; त–असंभक्तं न । * ख-घ–पुस्तकयोरस्य मन्त्रस्य संपूर्णं भाष्यं विद्यते (ऋ. सं. ६. २. ११) ।

त्वत्प्रसादात् द्वेष्टॄन् पापानि तत्फलानि दुर्गमनानि चातिक्रामेम । व्यवहितानि जन्मान्तरकृतानि च तान्यतिक्रामेम । त्वदीयेन रक्षणेनात्यन्तमतिक्रामेमेति ॥ ॥ १६ ॥

'इममू षु वः' इत्येकोनविंशत्यृचं पञ्चदशं सूक्तमाङ्गिरसस्य वीतहव्यस्य भरद्वाजस्य वार्षमाग्नेयम्। आदौ नव जगत्यस्तृतीयाषष्ठ्यौ तु शक्वर्यतिशक्वर्यौ पञ्चदशी शक्वरी सप्तदश्यनुष्टुबष्टादशी बृहती दशम्याद्याः पञ्च षोडश्येकोनविंशी चेति सप्त त्रिष्टुभः । तथा चानुक्रान्तम्—'इममू त्वेकोना वीतहव्य ऋषिर्वा जागतं प्राग्दशम्यास्तृतीयापञ्चदश्यौ शक्वर्यौ षष्ठ्यतिशक्वर्यनुष्टुब्बृहत्या उपान्त्ये' इति । प्रातरनुवाक आग्नेये क्रतावाश्विनशस्त्रे चादितो नवर्चः । सूत्रितं च—'इममू षु वो अतिथिमुषर्बुधमिति नव' (आश्व. श्रौ. ४. १३) इति । दशरात्रे पञ्चमेऽहनि आद्यं नवर्चमाज्यशस्त्रम् । सूत्रितं च—'इममू षु वो अतिथिमुषर्बुधमिति नवाज्यम्' (आश्व. श्रौ. ७. १२) इति ॥

इ॒ममू॒ षु वो॒ अति॑थिमुष॒र्बुधं॒ विश्वा॑सां वि॒शां पति॑मृञ्जसे गि॒रा ।
वेतीद्दि॒वो ज॒नुषा॒ कच्चि॒दा शुचि॒र्ज्योक्चि॑दत्ति॒ गर्भो॒ यदच्यु॑तम् ॥ १ ॥

इ॒मम् । ऊँ इति॑ । सु । व॒: । अति॑थिम् । उ॒ष॒:ऽबुध॑म् । विश्वा॑साम् । वि॒शाम् । पति॑म् । ऋ॒ञ्ज॒से । गि॒रा ।
वेति॑ । इत् । दि॒वः । ज॒नुषा॑ । कत् । चि॒त् । आ । शुचि॑: ।
ज्योक् । चि॒त् । अ॒त्ति॒ । गर्भ॑: । यत् । अच्यु॑तम् ॥ १ ॥

हे वीतहव्य ऋषे भरद्वाज वा ᵛवः त्वम् । विभक्तिवचनयोर्व्यत्ययः ॥ ᵛइममु इममेवाग्निं ᵛगिरा स्तुत्या ᵛसु ᵛऋञ्जसे सुष्ठु प्रसाधय । 'ऋञ्जतिः प्रसाधनकर्मा' इति यास्कः । कीदृशम् । ᵛअतिथिं सततं गन्तारम् । यद्वा । अतिथिवत्पूज्यम् । ᵛउषर्बुधम् उषसि प्रबुद्धं ᵛविश्वासां सर्वासां ᵛविशां प्रजानां ᵛपतिं पालयितारम् । ᵛजनुषा[1] जन्मना स्वत एव ᵛशुचिः शुद्धो निर्मलो वाग्निः ᵛकच्चित् कदाचित् कस्मिंश्चिद्यागकाले ᵛदिवः द्युलोकात् ᵛआ ᵛवेति आगच्छति । तदानीं प्रसाधयेत्यन्वयः । एवं प्रसाधितोऽग्निः ᵛगर्भः अरण्योर्मध्ये गर्भवद्वर्तमानः । यद्वा । द्यावापृथिव्योर्गर्भभूतः सन् ᵛयत् हविः ᵛअच्युतं च्युतिरहितं नित्यमग्निहोत्रादिसाधनभूतं पयःप्रभृतिकं तत् ᵛज्योक्चित् चिरकालम् ᵛअत्ति भक्षयति ॥

मि॒त्रं न यं सुधि॑तं॒ भृग॑वो द॒धुर्वन॒स्पता॒वीड्य॑मू॒र्ध्वशो॑चिषम् ।
स त्वं सुप्री॑तो वी॒तह॑व्ये अद्भु॒त प्रश॑स्तिभिर्महयसे दि॒वेदि॑वे ॥ २ ॥

मि॒त्रम् । न । यम् । सुऽधि॑तम् । भृग॑वः । द॒धुः । वन॒स्पतौ॑ । ईड्य॑म् । ऊ॒र्ध्वऽशो॑चिषम् ।
स: । त्वम् । सुऽप्री॑तः । वी॒तऽह॑व्ये । अ॒द्भु॒त॒ । प्रश॑स्तिऽभिः । म॒ह॒य॒से॒ । दि॒वेऽदि॑वे ॥ २ ॥

ᵛवनस्पतौ अरण्यां ᵛसुधितं सुष्ठु निहितम् ᵛईड्यं स्तुत्यम् ᵛऊर्ध्वशोचिषम् उच्छ्रिततेजस्कं ᵛयम् अग्निं त्वां ᵛमित्रं ᵛन मित्रमिव सखिभूतमिव ᵛभृगवः महर्षयः ᵛदधुः आदधुः गृहे स्थापितवन्तः हे

१. ख-घ-भ – जनुषा इत् ।

**ᵛअद्भुत महत्तमाग्ने ᵛसः तादृशः ᵛत्वं ᵛवीतहव्ये एतत्संज्ञ ऋषौ ᵛसुप्रीतः सुष्ठु प्रीयमाणो भव। यतः ᵛदिवेदिवे प्रतिदिनं ᵛप्रशस्तिभिः प्रकृष्टैः स्तोत्रैः ᵛमहयसे पूज्यसे। भरद्वाज ऋषिश्चेत् वीतहव्ये दत्तहविष्के भरद्वाज इति योजनीयम्॥**

स त्वं दक्षस्यावृको वृधो भूरर्यः परस्यान्तरस्य तरुषः।

रायः सूनो सहसो मर्त्येष्वा छर्दिर्यच्छ वीतहव्याय सप्रथो भरद्वाजाय सप्रथः॥३॥

सः। त्वम्। दक्षस्य। अवृकः। वृधः। भूः। अर्यः। परस्य। अन्तरस्य। तरुषः।

रायः। सूनो इति। सहसः। मर्त्येषु। आ।

छर्दिः। यच्छ। वीतऽहव्याय। सऽप्रथः। भरत्ऽवाजाय। सऽप्रथः॥ ३॥

**हे अग्ने ᵛसः तादृशः ᵛअवृकः बाधकरहितः ᵛत्वं ᵛदक्षस्य अनुष्ठानसमर्थस्य ᵛवृधः वर्धयिता ᵛभूः भवसि। तथा ᵛपरस्य विप्रकृष्टस्य ᵛअर्यः अरेः शत्रोः ᵛअन्तरस्य अन्तिकतरस्य संनिकृष्टस्य शत्रोः ᵛतरुषः तरिता भवसि। अतः कारणात् हे ᵛसहसः ᵛसूनो ᵛसप्रथः सर्वतः पृथुस्त्वं ᵛमर्त्येषु मनुष्येषु मध्ये ᵛभरद्वाजाय संभृतहविर्लक्षणान्नाय ᵛवीतहव्याय। वीतं गमितं हव्यं हविर्येन तादृशाय भरद्वाजायेति वा योज्यम्। ᵛरायः[1] धनानि ᵛछर्दिः गृहं ᵛआ ᵛयच्छ प्रयच्छ। सप्रथ इति पुनरुक्तिरादरार्था[1]॥**

द्युतानं वो अतिथिं स्वर्णरमग्निं होतारं मनुषः स्वध्वरम्।

विप्रं न द्युक्षवचसं सुवृक्तिभिर्हव्यवाहमरतिं देवमृञ्जसे॥ ४॥

द्युतानम्। वः। अतिथिम्। स्वःऽनरम्। अग्निम्। होतारम्। मनुषः। सुऽअध्वरम्।

विप्रम्। न। द्युक्षऽवचसम्। सुवृक्तिऽभिः। हव्यऽवाहम्। अरतिम्। देवम्। ऋञ्जसे॥४॥

**हे वीतहव्य त्वं ᵛसुवृक्तिभिः शोभनाभिः स्तुतिभिः ᵛहव्यवाहं हविषां वोढारं ᵛदेवम् ᵛअग्निम् ᵛऋञ्जसे प्रसाधय। कीदृशम्। ᵛद्युतानं दीप्यमानं ᵛवः युष्माकम् ᵛअतिथिम् अतिथिवत्पूज्यं ᵛस्वर्णरं स्वर्गस्य नेतारं ᵛमनुषः मनोः प्रजापतेर्यज्ञे ᵛहोतारं देवानामाह्वातारं ᵛस्वध्वरं शोभनयज्ञं ᵛविप्रं ᵛन मेधाविनं विपश्चितमिव ᵛद्युक्षवचसम्। दीप्तेर्निवासभूतं द्युक्षम्। तादृशवाक्योपेतम् ᵛअरतिम् अर्यं स्वामिनम्॥**

---

१. ख-ङ-न-भ-य-र-सप्रथ इति पुनरुक्तिरादरार्था ( ख-ङ-र-२'एवंविधस्त्वं' नास्ति ) रायो धनानि छर्दिर्गृहं चायच्छ प्रयच्छ; त—सप्रथ इति पुनरुक्तिरादरार्था।

पावकया यश्चितयन्त्या कृपा क्षामन्रुरुच उषसो न भानुना ।
तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणे न ततृषाणो अजरः ॥ ५ ॥

पावकया । यः । चितयन्त्या । कृपा । क्षामन् । रुरुचे । उषसः । न । भानुना ।
तूर्वन् । न । यामन् । एतशस्य । नु । रणे । आ । यः । घृणे । न । ततृषाणः । अजरः ॥५॥

यः अग्निः पावकया शोधयित्र्या चितयन्त्या चेतयन्त्या प्रज्ञापयन्त्या कृपा दीप्त्या क्षामन् भूम्यां रुरुचे दीप्यते । उषसो न भानुना । यथोषसः प्रकाशेन भासन्ते तद्वत् । अपि च यामन् यामनि संग्रामे तूर्वन्न शत्रून् हिंसन् पुरुष इव एतशस्य एतत्संज्ञकस्य ऋषेः रणे सूर्येण सह संग्रामे सहायार्थं यः अग्निः नु क्षिप्रम् आ घृणे आदीप्यते । 'प्रैतशं सूर्ये पस्पृधानम्' ( ऋ. सं. १. ६१. १५ ) इति निगमान्तरम् । नूनं सर्वे देवास्तस्य साहाय्यमकार्षुः । यश्च ततृषाणः तृषितः प्रभावेन सर्वभक्षणशीलः अजरः जरारहितश्च भवति तं देवमृञ्जस इति पूर्वस्यामृचि संबन्धः ॥　　॥ १७ ॥

अग्निमग्निं वः समिधा दुवस्यत प्रियंप्रियं वो अतिथिं गृणीषणि ।
उप वो गीर्भिरमृतं विवासत देवो देवेषु वनते हि वार्यं देवो देवेषु वनते हि नो दुवः ॥६॥

अग्निम्ऽअग्निम् । वः । सम्ऽइधा । दुवस्यत । प्रियम्ऽप्रियम् । वः । अतिथिम् । गृणीषणि ।
उप । वः । गीःऽभिः । अमृतम् । विवासत । देवः । देवेषु । वनते । हि । वार्यम् ।
देवः । देवेषु । वनते । हि । नः । दुवः ॥ ६ ॥

हे अस्मदीयाः स्तोतारः वः यूयं प्रियंप्रियम् अत्यन्तं प्रियं वः युष्माकम् अतिथिम् अतिथिवत्पूज्यं गृणीषणि शब्दनीयं स्तुत्यम् अग्निमग्निम् अग्निमेव । नान्यं देवमित्यर्थः । समिधा समिन्धनेन समिद्भिर्वा दुवस्यत परिचरत । यद्वा । गृणीषणीति सप्तम्यन्तम् । गृणीषणि स्तोत्रे विषयतया वर्तमानम् । अपि च वः यूयम् अमृतम् अमरणमग्निं गीर्भिः स्तुतिभिरुपेत्य विवासत परिचरत । हि यस्मात् देवेषु मध्ये देवः दानादिगुणयुक्तोऽग्निः वार्यं वरणीयं समिदादिकं वनते संभजते । हि यस्माच्च देवेषु मध्ये देवः अग्निः नः अस्माकं दुवः परिचरणं वनते संभजते तस्मात् दुवस्यतेत्यन्वयः ॥

दशमेऽहन्याग्निमारुते 'समिद्धम्' इति तृचो जातवेदस्यनिविद्धानार्थः । सूत्रितं च— 'समिद्धमग्निं समिधा गिरा गृण इति तृचश्च' ( आश्व. श्रौ. ८. १२ ) इति[1] ॥

---

१. न–इति । बृहस्पतिसवे आग्निमारुते शस्त्रे समिद्धमग्निमिति तृचः । सूत्रितं च–समिद्धमग्निं समिधा गिरा गृण इत्याग्निमारुतम् ( आश्व. श्रौ. ९.५. ) इति ।

समिद्धमग्निं समिधा गिरा गृणे शुचिं पावकं पुरो अध्वरे ध्रुवम् ।
विप्रं होतारं पुरुवारमद्रुहं कविं सुम्नैरीमहे जातवेदसम् ॥ ७ ॥

सम्ऽइद्धम् । अग्निम् । सम्ऽइधा । गिरा । गृणे । शुचिम् । पावकम् । पुरः । अध्वरे । ध्रुवम् ।
विप्रम् । होतारम् । पुरुऽवारम् । अद्रुहम् । कविम् । सुम्नैः । ईमहे । जातऽवेदसम् ॥ ७ ॥

ᵛसमिद्धं सम्यग्दीप्तम् ᵛअग्निं ᵛसमिधा समिन्धनहेतुभूतया ᵛगिरा स्तुत्या ᵛगृणे स्तौमि । यद्वा । समिधा समिद्भिर्दारुभिः समिद्धं सम्यगिद्धम् । अपि च ᵛशुचिं स्वयं शुद्धं ᵛपावकं सर्वेषां शोधकं ᵛध्रुवं निश्चलं तमग्निम् ᵛअध्वरे यज्ञे पुरस्करोमीति शेषः । तथा ᵛविप्रं मेधाविनं ᵛहोतारं देवानामाह्वातारं ᵛपुरुवारं बहुभिर्वरणीयम् ᵛअद्रुहम् अद्रोग्धारं सर्वेषामनुकूलं ᵛकविं क्रान्तदर्शिनं ᵛजातवेदसं जातानां वेदितारमग्निं ᵛसुम्नैः सुखकरैः स्तोत्रैः ᵛईमहे संभजामहे । यद्वा द्वितीयार्थे तृतीया । सुम्नानि धनानीमहे याचामहे ॥

त्वां दूतमग्ने अमृतं युगेयुगे हव्यवाहं दधिरे पायुमीड्यम् ।
देवासश्च मर्तासश्च जागृविं विभुं विश्पतिं नमसा नि षेदिरे ॥ ८ ॥

त्वाम् । दूतम् । अग्ने । अमृतम् । युगेऽयुगे । हव्यऽवाहम् । दधिरे । पायुम् । ईड्यम् ।
देवासः । च । मर्तासः । च । जागृविम् । विऽभुम् । विश्पतिम् । नमसा । नि । सेदिरे ॥८॥

हे ᵛअग्ने ᵛत्वां ᵛदेवासः देवाः ᵛच ᵛमर्तासः मनुष्याः ᵛच ᵛदूतं ᵛदधिरे विदधिरे कृतवन्तः । कीदृशं त्वाम् । ᵛअमृतम् अमरणं ᵛयुगेयुगे काले काले तत्तद्यागानुष्ठानसमये ᵛहव्यवाहं हव्यानां हविषां वोढारं ᵛपायुं पालयितारम् ᵛईड्यं स्तुत्यम् । अपि च त उभयविधा ᵛजागृविं जागरणशीलं ᵛविभुं व्याप्तं ᵛविश्पतिं विशां प्रजानां पालयितारं तमग्निं ᵛनमसा नमस्कारेण हविर्लक्षणान्नेन वा ᵛनि ᵛषेदिरे उपसेदिरे ॥

विभूषन्नग्न उभयाँ अनु व्रता दूतो देवानां रजसी समीयसे ।
यत्ते धीतिं सुमतिमावृणीमहेऽध स्मा नस्त्रिवरूथः शिवो भव ॥ ९ ॥

विऽभूषन् । अग्ने । उभयान् । अनु । व्रता । दूतः । देवानाम् । रजसी इति । सम् । ईयसे ।
यत् । ते । धीतिम् । सुऽमतिम् । आऽवृणीमहे । अध । स्म । नः । त्रिऽवरूथः । शिवः । भव ॥९॥

हे ᵛअग्ने ᵛउभयान् उभयविधान् देवान् मनुष्यांश्च ᵛविभूषन् विशेषेण भूषयन् अलंकुर्वंस्त्वम् ᵛअनु ᵛव्रता व्रतान्यनु व्रतेषु कर्मसु यागेषु ᵛदेवानां ᵛदूतः सन् ᵛरजसी द्यावापृथिव्यौ ᵛसमीयसे संचरसि । देवानानेतुं द्युलोकं गच्छसि हवींषि च नेतुमिमं लोकम् । किंच ᵛयत् यस्मात् ᵛते तुभ्यं त्वदर्थं

Vधीतिं कर्म Vसुमतिं शोभनां स्तुतिं च Vआवृणीमहे वयं संभजामहे Vअध अतः कारणात् Vत्रिवरूथः त्रिस्थानस्त्वं Vनः अस्माकं Vशिवः सुखकरः Vभव । Vस्म इत्येतत् पादपूरणम् ॥

प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ त्रैष्टुभे छन्दसि 'तं सुप्रतीकम्' इत्याद्याः षडृचः । सूत्रितं च—'तं सुप्रतीकमिति षट्' (आश्व. श्रौ. ४. १३) इति ॥

तं सुप्रतीकं सुदृशं स्वञ्चमविद्वांसो विदुष्टरं सपेम ।
स यक्षद्विश्वा वयुनानि विद्वान्प्र हव्यमग्निरमृतेषु वोचत् ॥ १० ॥

तम् । सुऽप्रतीकम् । सुऽदृशम् । सुऽअञ्चम् । अविद्वांसः । विदुःऽतरम् । सपेम ।
सः । यक्षत् । विश्वा । वयुनानि । विद्वान् । प्र । हव्यम् । अग्निः । अमृतेषु । वोचत् ॥ १० ॥

Vअविद्वांसः वैदुष्यरहिता अल्पमतयो वयं Vविदुष्टरं विद्वत्तरं सर्वज्ञं Vतम् अग्निं Vसपेम परिचरेम । कीदृशम् । Vसुप्रतीकं शोभनाङ्गं Vसुदृशं शोभनद्रष्टारं[1] Vस्वञ्चं सुष्ठ्वञ्चन्तं गच्छन्तम् । किंच Vसः तादृशः अग्निः Vयक्षत् देवान् यजतु । Vविश्वा सर्वाणि Vवयुनानि । ज्ञाननामैतत् । इह तु ज्ञातव्ये वर्तते । ज्ञातव्यान्यर्थजातानि Vविद्वान् जानन् Vअग्निः Vअमृतेषु मरणरहितेषु देवेषु Vहव्यम् अस्मदीयं हविः Vप्र Vवोचत् प्रब्रवीतु । युष्मदर्थं हविः कल्पितं तदर्थं यूयमागच्छतेत्येवं कथयतु ॥ ॥ १८ ॥

तमग्ने पास्युत तं पिपर्षि यस्त आनट्कवये शूर धीतिम् ।
यज्ञस्य वा निशितिं वोदितिं वा तमित्पृणक्षि शवसोत राया ॥ ११ ॥

तम् । अग्ने । पासि । उत । तम् । पिपर्षि । यः । ते । आनट् । कवये । शूर । धीतिम् ।
यज्ञस्य । वा । निऽशितिम् । वा । उत्ऽइतिम् । वा । तम् । इत् । पृणक्षि । शवसा । उत । राया ॥ ११ ॥

हे Vअग्ने Vतं पुरुषं Vपासि रक्षसि । Vउत अपि च Vतं Vपिपर्षि कामैः पूरयसि । Vयः पुरुषो हे Vशूर शौर्यवन्नग्ने Vकवये क्रान्तदर्शनाय Vते तुभ्यं त्वदर्थं Vधीतिं कर्म स्तुतिं वा Vआनट् प्राप्नोति । यद्वा । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी । कविं त्वां धीतिमानट् प्रापयति । तं पासीत्यन्वयः । अपि[2] च Vयज्ञस्य यागस्य Vवा तत्साधनभूतस्य हविषो वा Vनिशितिं Vवा । निशितिः संस्कारः । तं वा Vउदितिम् उद्गमनं Vवा आनट् प्रापयति Vतमित् तमेव Vशवसा बलेन Vपृणक्षि पूरयसि । Vउत अपि च Vराया धनेन पूरयसि[3] ॥

त्वमग्ने वनुष्यतो नि पाहि त्वमु नः सहसावन्नवद्यात् ।
सं त्वा ध्वस्मन्वदभ्येतु पाथः सं रयिः स्पृहयाय्यः सहस्री ॥ १२ ॥

त्वम् । अग्ने । वनुष्यतः । नि । पाहि । त्वम् । ऊँ इति । नः । सहसाऽवन् । अवद्यात् ।
सम् । त्वा । ध्वस्मन्ऽवत् । अभि । एतु । पाथः । सम् । रयिः । स्पृहयाय्यः । सहस्री ॥ १२ ॥

---

१. ज्ञ-त-य-शोभनं द्रष्टारम् । २. ध-श—उतापि । ३. ख-ज्ञ-झ-त१-न-भ-य-र— च पूरयसि; घ-त२—आपूरयसि

हे ᵛअग्ने ᵛत्वं ᵛवनुष्यतः हिंसकाच्छत्रोः ᵛनि नितरामस्मान्रक्ष। हे ᵛसहसावन् बलवन्नग्ने ᵛत्वमु त्वमेव ᵛनः अस्मान् ᵛअवद्यात् पापात् निपाहि। ᵛत्वा त्वां ᵛध्वस्मन्वत् ध्वंसनवत् ध्वस्तदोषं ᵛपाथः हविर्लक्षणमस्माभिर्दत्तमन्नं ᵛसम् ᵛअभ्येतु सम्यगभिगच्छतु। ᵛस्पृहयाय्यः स्पृहणीयः ᵛसहस्री सहस्रसंख्यायुक्तः ᵛरयिः त्वया दत्तं धनं सम्यगभिगच्छतु ॥

व्यूळ्हे दशरात्रे पञ्चमेऽहन्याग्निमारुते 'अग्निर्होता' इति तृचो जातवेदसनिविद्धानीयः। सूत्रितं च—'अग्निर्होता गृहपतिः स राजेति तिस्रः' (आश्व. श्रौ. ८. ८) इति। पत्नीसंयाजेषु गृहपतेराद्यानुवाक्या। सूत्रितं च—'अग्निर्होता गृहपतिः स राजा हव्यवाळग्निरजरः पिता न इति पत्नीसंयाजाः' (आश्व श्रौ. १. १०) इति। आश्विनशस्त्रस्यैषैव प्रतिपत्। सूत्रितं च—'अग्निर्होता गृहपतिः स राजेति प्रतिपदेकपातिनी पच्छः' (आश्व. श्रौ. ६. ५) इति ॥

अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा जातवेदाः।
देवानामुत यो मर्त्यानां यजिष्ठः स प्र यजतामृतावा ॥ १३ ॥

अग्निः। होता। गृहऽपतिः। सः। राजा। विश्वा। वेद। जनिम। जातऽवेदाः।
देवानाम्। उत। यः। मर्त्यानाम्। यजिष्ठः। सः। प्र। यजताम्। ऋतऽवा ॥ १३ ॥

ᵛहोता देवानामाह्वाता ᵛराजा राजमानः ᵛसः ᵛअग्निः ᵛगृहपतिः गृहाणां पतिरधिपतिर्भवति। तथा ᵛविश्वा विश्वानि सर्वाणि ᵛजनिम जन्मानि जन्मवन्ति भूतजातानि ᵛजातवेदाः जातप्रज्ञः सन् ᵛवेद वेत्ति जानाति। ᵛयः अग्निः ᵛदेवानाम् इन्द्रादीनाम् ᵛउत अपि च ᵛमर्त्यानां मनुष्याणां च मध्ये ᵛयजिष्ठः अतिशयेन यष्टा भवति ᵛऋतावा। ऋतं सत्यं यज्ञो वा। तद्वान् ᵛसः अग्निः ᵛप्र ᵛयजतां प्रकर्षेण देवान् यजतु ॥

'अग्ने यदद्य' इति दर्शपूर्णमासयोः स्विष्टकृतो याज्या। सूत्रितं च—'अग्ने यदद्य विशो अध्वरस्य होतरित्यनवानं यजति' (आश्व. श्रौ. १. ६) इति ॥

अग्ने यदद्य विशो अध्वरस्य होतः पावकशोचे वेष्ट्वं हि यज्वा।
ऋता यजासि महिना वि यद्भूर्हव्या वह यविष्ठ या ते अद्य ॥ १४ ॥

अग्ने। यत्। अद्य। विशः। अध्वरस्य। होतरिति। पावकऽशोचे। वेः। त्वम्। हि। यज्वा।
ऋता। यजासि। महिना। वि। यत्। भूः। हव्या। वह। यविष्ठ। या। ते। अद्य ॥ १४ ॥

हे ᵛअध्वरस्य ᵛहोतः यज्ञस्य निष्पादक ᵛपावकशोचे शोधकदीप्ते एवंभूत हे ᵛअग्ने ᵛअद्य अस्मिन् काले ᵛविशः मनुष्यस्य यजमानस्य ᵛयत् कर्तव्यं तत् ᵛवेः कामयस्व। ᵛहि यस्मात् ᵛत्वं ᵛयज्वा देवानां यष्टा भवसि तस्मात् ᵛऋता ऋते यज्ञे ᵛयजासि देवान् यज। अपि च ᵛमहिना महिम्ना स्वमाहात्म्येन ᵛयत् यस्मात् ᵛवि ᵛभूः विभवसि व्याप्तो भवसि अतः कारणात् हे ᵛयविष्ठ युवतमाग्ने ᵛते तुभ्यं त्वदर्थम् ᵛअद्य इदानीं ᵛया यानि हव्यानि जुहुमस्तानि ᵛहव्या हव्यानि हवींषि ᵛवह। स्वकीयां स्विष्टकृदाख्यां तनुं प्रापय ॥

अभि प्रयांसि सुधितानि हि ख्यो नि त्वा दधीत रोदसी यजध्यै ।
अवा नो मघवन्वाजसातावग्ने विश्वानि दुरिता तरेम ता तरेम तवावसा तरेम ॥१५॥

अभि । प्रयांसि । सुऽधितानि । हि । ख्यः । नि । त्वा । दधीत । रोदसी इति । यजध्यै ।
अव । नः । मघऽवन् । वाजऽसातौ । अग्ने । विश्वानि । दुःऽइता । तरेम ।
ता । तरेम । तव । अवसा । तरेम ॥ १५ ॥

हे अग्ने सुधितानि सुनिहितानि[1] वेद्यामासादितानि प्रयांसि अन्नानि हविर्लक्षणानि[2] अभि ख्यः अभिपश्यसि । हि पूरकः । तादृशं[3] त्वां[3] रोदसी द्यावापृथिव्यावेतदुपलक्षितान् सर्वान् देवान् यजध्यै यष्टुं नि दधीत । अयं यजमानो निहितवान् । हे मघवन् अग्ने नः अस्मान् वाजसातौ संग्रामे अन्नस्य संभजने वा निमित्तभूते अव रक्ष । वयं च विश्वानि सर्वाणि दुरिता दुरितानि दुःखानि तरेम अतिक्रामेम । अन्यद्गतम् ॥ ॥ १९ ॥

अग्निप्रणयने ' अग्ने विश्वेभिः ' इत्येषानुवक्तव्या[4] । सूत्रितं च—' अग्ने विश्वेभिः स्वनीक देवैरित्यर्धर्चं आरमेत् ' ( आश्व. श्रौ. २. १७ ) इति ॥

अग्ने विश्वेभिः स्वनीक देवैरूर्णावन्तं प्रथमः सीद योनिम् ।
कुलायिनं घृतवन्तं सवित्रे यज्ञं नय यजमानाय साधु ॥ १६ ॥

अग्ने । विश्वेभिः । सुऽअनीक । देवैः । ऊर्णाऽवन्तम् । प्रथमः । सीद । योनिम् ।
कुलायिनम् । घृतऽवन्तम् । सवित्रे । यज्ञम् । नय । यजमानाय । साधु ॥ १६ ॥

हे स्वनीक सुज्वाल अग्ने विश्वेभिः विश्वैः सर्वैः देवैः सह ऊर्णावन्तम् ऊर्णास्तुकावन्तं योनिम् उत्तरवेदिलक्षणं स्थानं प्रथमः सर्वेषु देवेषु मुख्यस्त्वं सीद उपविश । कीदृशं योनिम् । कुलायिनम् । कुलायो नीडम् । तत्सदृशं गुग्गुल्वादिसंभारेणोपेतम् । तथा च श्रूयते–' कुलायमिव ह्येतद्यज्ञे क्रियते यत्पैतुदारवाः परिधयो गुग्गुलूर्णास्तुकाः सुगन्धितेजनानि ' ( ऐ. ब्रा. १. २८ ) इति । घृतवन्तं व्याघारणाज्ययुक्तम् । एवमुत्तरवेद्यां निषण्णस्त्वं सवित्रे हविषां प्रेरयित्रे यजमानाय । षष्ठ्यर्थे चतुर्थ्येषा । ईदृशस्य यजमानस्य यज्ञं साधु आर्जवेन नय देवान् प्रापय ॥

इममु त्यमथर्ववदग्निं मन्थन्ति वेधसः ।
यमङ्कूयन्तमानयन्नमूरं श्याव्याभ्यः ॥ १७ ॥

इमम् । ऊँ इति । त्यम् । अथर्वऽवत् । अग्निम् । मन्थन्ति । वेधसः ।
यम् । अङ्कुऽयन्तम् । आ । अनयन् । अमूरम् । श्याव्याभ्यः ॥ १७ ॥

---

१. ख-ग्र-न-भ-य-श–सुहितानि । २. त-य–हविर्लक्षणान्यन्नानि । ३. ख-भ–त्वा त्वां तादृशम्; ग्र–त्वा तादृशम्; न-र–त्वा त दृशं त्वाम्; श–त्वादृशं त्वाम् । ४. ख-ग्र-न-भ-श–इत्येषानुवाक्या ।

<sup>v</sup>वेधसः कर्मणां विधातार ऋत्विजः <sup>v</sup>इमं दृश्यमानं <sup>v</sup>त्यं तं पूर्वोक्तगुणम् <sup>v</sup>अग्निम् <sup>v</sup>अथर्ववत् यथाथर्वाख्य ऋषिः पुरामध्नात् तथा <sup>v</sup>मन्थन्ति मथ्नन्ति । अरण्योः सकाशाज्जनयन्ति । <sup>v</sup>अह्रयन्तम् । कुत्सितमह्नं गमनम् अह्नः[1] । तदात्मन इच्छन्तं देवेभ्यो निर्गत्येतस्ततः पलायमानम् <sup>v</sup>अमूरम् अमूढं <sup>v</sup>यम् अग्निं <sup>v</sup>श्याव्याभ्यः । श्यावीति रात्रिनाम । तत्र भवास्तमसः संहतयः श्याव्याः । ताभ्यः सकाशात् <sup>v</sup>आनयन् आगमयन् तं मन्थन्तीत्यन्वयः[2] ॥

जनि॑ष्वा दे॒ववी॑तये स॒र्वता॑ता स्व॒स्तये॑ ।
आ दे॒वान्व॑क्ष्य॒मृताँ॑ ऋता॒वृधो॑ य॒ज्ञं दे॒वेषु॒ पिस्पृशः ॥ १८ ॥

जनि॑ष्व । दे॒वऽवी॑तये । स॒र्वऽता॑ता । स्व॒स्तये॑ ।
आ । दे॒वान् । व॒क्षि॒ । अ॒मृता॑न् । ऋ॒त॒ऽवृधः॑ । य॒ज्ञम् । दे॒वेषु॑ । पि॒स्पृ॒शः॒ ॥ १८ ॥

हे अग्ने <sup>v</sup>सर्वताता सर्वैस्तायमाने यज्ञे मथ्यमानस्त्वं <sup>v</sup>जनिष्व प्रादुर्भव । किमर्थम् । <sup>v</sup>देववीतये देवकामाय यजमानाय । षष्ठ्यर्थे चतुर्थ्येषा । ईदृशस्य यजमानस्य <sup>v</sup>स्वस्तये अविनाशार्थम् । जनित्वा च <sup>v</sup>अमृतान् मरणरहितान् <sup>v</sup>ऋतावृधः यज्ञस्य वर्धयितॄन् <sup>v</sup>देवान् <sup>v</sup>आ <sup>v</sup>वक्षि आवह । तदनन्तरं तेषु <sup>v</sup>देवेषु अस्मदीयं <sup>v</sup>यज्ञं <sup>v</sup>पिस्पृशः स्पर्शय । प्रापयेत्यर्थः ॥

व॒यमु॑ त्वा गृहपते जनाना॒मग्ने॒ अक॑र्म स॒मिधा॑ बृ॒हन्त॑म् ।
अ॒स्थू॒रि नो॒ गार्ह॑पत्यानि सन्तु ति॒ग्मेन॑ न॒स्तेज॑सा सं शि॑शाधि ॥ १९ ॥

व॒यम् । ऊँ इति॑ । त्वा॒ । गृ॒ह॒ऽप॒ते॒ । ज॒ना॒ना॒म् । अग्ने॑ । अक॑र्म । स॒म्ऽइधा॑ । बृ॒हन्त॑म् ।
अ॒स्थू॒रि । नः॒ । गार्ह॑ऽपत्यानि । स॒न्तु॒ । ति॒ग्मेन॑ । नः॒ । तेज॑सा । सम् । शि॒शा॒धि॒ ॥ १९ ॥

हे <sup>v</sup>गृहपते यज्ञानां पालक <sup>v</sup>अग्ने <sup>v</sup>जनानां प्राणिनां मध्ये <sup>v</sup>वयमु वयमेव <sup>v</sup>त्वा त्वां <sup>v</sup>समिधा समिन्धनेन <sup>v</sup>बृहन्तं महान्तम् <sup>v</sup>अकर्म कृतवन्तः स्मः । अतः कारणात् <sup>v</sup>नः अस्माकं <sup>v</sup>गार्हपत्यानि गृहपतित्वानि <sup>v</sup>अस्थूरि अस्थूरीणि । एकाश्वयुक्तः शकटः स्थूरिरित्युच्यते तद्विपरीतो बहुभिरश्वैरुपेतः शकटोऽस्थूरिः । तेन च संपूर्णता लक्ष्यते । अस्थूरीणि पुत्रपशुधनादिभिः संपूर्णानि भवन्तु । अपि च <sup>v</sup>नः अस्मान् <sup>v</sup>तिग्मेन तीक्ष्णेन <sup>v</sup>तेजसा <sup>v</sup>सं <sup>v</sup>शिशाधि सम्यङ्निश्य सम्यक् तीक्ष्णीकुरु । संयोजयेत्यर्थः ॥ ॥ २० ॥ ॥ १ ॥

द्वितीयेऽनुवाकेऽष्ट सूक्तानि । तत्र 'त्वमग्ने यज्ञानाम्' इत्यष्टाचत्वारिंशदृचं प्रथमं सूक्तं भरद्वाजस्यार्षमाग्नेयम् । आद्या षष्ठी च वर्धमाना गायत्री 'षट्कसप्तकाष्टकाः सा वर्धमाना' इत्युक्तलक्षणोपेतत्वात् । सप्तविंश्यनुष्टुप् । 'आ ते अग्ने, अग्निं देवासः' इत्येते ऋचावनुष्टुभौ । तयोः पूर्वा 'वीती यो देवम्' इति त्रिष्टुप् । शिष्टा द्वाचत्वारिंशदृचो गायत्र्यः । तथा[3] चानुक्रम्यते[3]—'त्वमग्नेऽष्टाचत्वारिंशद्गायत्रं वर्ध-

---

१. ख-ञ-ञ-त-न-भ-र—अह्नः । २. मथ्नन्तीत्यन्वयः । ३. ख-न-भ—तथानुक्रम्यते; श—तथा चानुक्रान्तम् ।

मानाद्या षष्ठी च सप्तविंश्यनुष्टुप् त्रिष्टुप्पूर्वे चान्त्ये ' इति । प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ गायत्रे छन्दसीदं सूक्तमुच्यते । तत्रान्त्यास्तिस्र ऋच उद्धर्तव्याः । सूत्र्यते हि—' त्वमग्ने यज्ञानामिति तिस्र उत्तमा उद्धरेत् ' ( आश्व. श्रौ. ४. १३ ) इति । विश्वजित्याग्निमारुते बृहत्साम यद्यग्निष्टोमसाम स्यात्तदानीमाद्याः षड्चः स्तोत्रियानुरूपार्थाः । सूत्रितं हि—' त्वमग्ने यज्ञानामिति स्तोत्रियानुरूपौ ' ( आश्व. श्रौ. ८. ७ ) इति ॥

त्वम॑ग्ने य॒ज्ञानां॒ होता॒ विश्वे॑षां हि॒तः । दे॒वेभि॒र्मानु॑षे॒ जने॑ ॥ १ ॥

त्वम् । अ॒ग्ने॒ । य॒ज्ञाना॑म् । होता॑ । विश्वे॑षाम् । हि॒तः । दे॒वेभिः॑ । मानु॑षे । जने॑ ॥ १ ॥

हे ^v^अग्ने ^v^त्वं ^v^विश्वेषां सर्वेषां सप्तसंस्थारूपेण भिन्नानां ^v^यज्ञानां ^v^होता होमनिष्पादकोऽसि । यद्वा । यज्ञानां[1] संबन्धी देवानामाह्वाता भवसि । कुत इत्यत आह । यस्मात् त्वं ^v^मानुषे मनोः संबन्धिनि मनुष्ये ^v^जने यजमाने ^v^देवेभिः देवैः ^v^हितो होतृत्वेन निहितोऽसि तस्मादित्यर्थः ॥

स नो॑ म॒न्द्राभि॑रध्व॒रे जि॒ह्वाभि॑र्यजा म॒हः । आ दे॒वान्व॑क्षि॒ यक्षि॑ च ॥ २ ॥

सः । नः॒ । म॒न्द्राभिः॑ । अ॒ध्व॒रे । जि॒ह्वाभिः॑ । य॒ज॒ । म॒हः । आ । दे॒वान् । व॒क्षि॒ । यक्षि॑ । च॒ ॥२॥

हे अग्ने ^v^सः त्वं ^v^नः अस्माकम् ^v^अध्वरे यज्ञे ^v^मन्द्राभिः मदकरीभिः[2] स्तुत्याभिर्वा ^v^जिह्वाभिः ज्वालाभिः ^v^महः महतः ^v^देवान् ^v^यज हविर्भिस्तर्पय । कथं तदित्युच्यते । देवान् यष्टव्यानिन्द्रादीन् ^v^आ ^v^वक्षि आवह । ततः ^v^यक्षि ^v^च यज च । हवींषि तेभ्यो देहीत्यर्थः ॥

पाथिकृत्यामग्नेः पथिकृतोऽनुवाक्या ' वेत्था ' इत्येषा । सूत्रितं च—' वेत्था हि वेधो अध्वन आ देवानामपि पन्थामगन्म ' ( आश्व. श्रौ. ३. १० ) इति ॥

वेत्था॒ हि वे॑धो॒ अध्व॑नः प॒थश्च॑ दे॒वाञ्ज॑सा । अग्ने॑ य॒ज्ञेषु॑ सुक्रतो ॥ ३ ॥

वेत्थ॑ । हि । वे॒धः॒ । अध्व॑नः । प॒थः । च॒ । दे॒व॒ । अञ्ज॑सा ।

अग्ने॑ । य॒ज्ञेषु॑ । सु॒क्र॒तो॒ इति॑ सुऽक्रतो ॥ ३ ॥

हे ^v^वेधः विधातः ^v^सुक्रतो शोभनकर्मन् ^v^देव दानादिगुणयुक्त ^v^अग्ने त्वं ^v^यज्ञेषु दर्शपूर्णमासादियागेषु ^v^अध्वनः महामार्गान् ^v^पथश्च क्षुद्रमार्गांश्च ^v^अञ्जसा आर्जवेन ^v^वेत्थ जानासि । ^v^हि यस्मादेवं तस्मात् कारणाद्यज्ञमार्गात् भ्रष्टं यजमानं पुनस्तं मार्गं प्रापयेत्यर्थः ॥

त्वामी॑ळे॒ अध॑ द्वि॒ता भ॑र॒तो वा॒जिभिः॑ शु॒नम् । ई॒जे य॒ज्ञेषु॑ य॒ज्ञिय॑म् ॥ ४ ॥

त्वाम् । ई॒ळे॒ । अध॑ । द्वि॒ता । भ॒र॒तः । वा॒जिऽभिः॑ । शु॒नम् । ई॒जे । य॒ज्ञेषु॑ । य॒ज्ञिय॑म् ॥ ४ ॥

---

१. ख-भ—होता यज्ञानां; ञ-य—देवः यज्ञानां; ञ-त-न-र—देवयज्ञानाम् । २. घ-श—मदकारिभिः ।

हे अग्ने ᐯत्वां ᐯभरतः दौष्यन्तिरेतत्संज्ञो राजा ᐯवाजिभिः। वाजो हविर्लक्षणमन्नम्। तद्वद्भिः ऋत्विग्भिः सह ᐯद्विता द्विविधमिष्टप्राप्त्यनिष्टपरिहाररूपेण द्विधा भिन्नं ᐯशुनं सुखमुद्दिश्य ᐯईळे स्तुतवान्। स्तुत्वा च[1] ᐯयज्ञियं यज्ञार्हं त्वां ᐯयज्ञेषु। तृतीयार्थे सप्तमी। यज्ञैः ᐯईजे इष्टवान्। तस्मै त्वम् उभयविधं[2] सुखं[2] प्रादा इत्यर्थः॥

त्वमि॒मा वार्या॑ पु॒रु दिवो॑दासाय सु॒न्व॒ते। भ॒रद्वा॑जाय दा॒शुषे॑ ॥ ५ ॥

त्वम्। इ॒मा। वार्या॑। पु॒रु। दिवः॑ऽदासाय। सु॒न्व॒ते। भ॒रत्ऽवा॑जाय। दा॒शुषे॑ ॥ ५ ॥

हे अग्ने ᐯत्वम् ᐯइमा इमानि दृश्यमानानि ᐯपुरु पुरूणि बहूनि ᐯवार्या वार्याणि वरणीयानि संभजनीयानि धनानि ᐯदिवोदासाय ᐯसुन्वते। लुप्तोपममेतत्। यथा सोमाभिषवं कुर्वते दिवोदासाख्याय[3] राज्ञे प्रादास्तथा ᐯदाशुषे हवींषि दत्तवते ᐯभरद्वाजाय ऋषये देहीति शेषः॥ ॥ २१ ॥

त्वं दू॒तो अम॑र्त्य॒ आ व॑हा॒ दैव्यं॒ जन॑म्। शृ॒ण्वन्विप्र॑स्य सुष्टु॒तिम् ॥ ६ ॥

त्वम्। दू॒तः। अम॑र्त्यः। आ। व॒ह॒। दैव्य॑म्। जन॑म्। शृ॒ण्वन्। विप्र॑स्य। सु॒ऽस्तु॒तिम् ॥ ६ ॥

ᐯअमर्त्यः अमरणधर्मः[4] ᐯत्वं ᐯदूतः भूत्वा ᐯदैव्यं देवसंबन्धिनं ᐯजनम् ᐯआ ᐯवह अस्मद्यज्ञ आनय। किं कुर्वन्। ᐯविप्रस्य मेधाविनो भरद्वाजस्य ᐯसुष्टुतिं शोभनां स्तुतिं ᐯशृण्वन्॥

त्वाम॑ग्ने स्वा॒ध्यो॒३॑ मर्ता॑सो दे॒ववी॑तये। य॒ज्ञेषु॑ दे॒वमी॑ळते ॥ ७ ॥

त्वाम्। अ॒ग्ने॒। सु॒ऽआ॒ध्यः॑। मर्ता॑सः। दे॒वऽवी॑तये। य॒ज्ञेषु॑। दे॒वम्। ई॒ळ॒ते॒ ॥ ७ ॥

हे ᐯअग्ने ᐯदेवं द्योतमानं ᐯत्वां ᐯस्वाध्यः शोभनाध्यानाः[5] ᐯमर्तासः मनुष्याः ᐯदेववीतये देवानां तर्पणार्थं यज्ञेषु ᐯईळते स्तुवन्ति याचन्ते वा॥

तव॒ प्र य॑क्षि सं॒दृश॑मु॒त क्रतुं॑ सु॒दान॑वः। विश्वे॑ जुषन्त का॒मिनः॑ ॥ ८ ॥

तव॑। प्र। य॒क्षि॒। स॒म्ऽदृश॑म्। उ॒त। क्रतु॑म्। सु॒ऽदान॑वः। विश्वे॑। जु॒ष॒न्त॒। का॒मिनः॑ ॥ ८ ॥

हे अग्ने ᐯतव ᐯसंदृशं सम्यग्दर्शनीयं यद्वा सम्यग्द्रष्टारं सर्वस्य भासकं तेजः ᐯप्र ᐯयक्षि प्रयजे। प्रकर्षेण पूजयामि। ᐯउत अपि च ᐯसुदानवः सुदानोः शोभनदानस्य तव ᐯक्रतुं कर्म प्रज्ञानं वा पूजयामि। न केवलमहमेव किन्त्वन्ये ᐯविश्वे सर्वेऽपि यजमानाः ᐯकामिनः त्वदनुग्रहात्तैस्तैः कामैः उपेताः सन्तः ᐯजुषन्त। त्वदीयं संदृशं क्रतुं च सेवन्ते॥

---

१. ख-घ-भ– च अध अथ। २. ग-घ१–उभयविधसुखम्; ज्ञ-झ-त-न-र–उभयसुखम्। ३. ख-घ–दिवोदासाय; श–दिवोदासाय दिवोदासाख्याय। ४. ज्ञ–मरणधर्मरहितः। ५. ख-घ-श–शोभनध्यानाः; ज्ञ-र–शोभनाध्येनाः; ज्ञ-त-न-य–शोभनाध्ययनाः।

त्वं होता मनुर्हितो वह्निरासा विदुष्टरः । अग्ने यक्षि दिवो विशः ॥ ९ ॥

त्वम् । होता । मनुःऽहितः । वह्निः । आसा । विदुःऽतरः । अग्ने । यक्षि । दिवः । विशः ॥९॥

हे अग्ने त्वं होता होतृत्वेन मनुर्हितः मनुनाहितोऽसि । आसा आस्येनास्यभूतया ज्वालया वह्निः हविषां वोढा विदुष्टरः अतिशयेन विद्वान् । अतः कारणात् त्वं दिवः द्युलोकसंबन्धिनीः विशः दैवीः प्रजाः यक्षि यज ॥

दर्शपूर्णमासयोः सामिधेनीषु 'अग्न आ याहि' इत्याद्यास्तिस्रः । सूत्रितं च– 'अग्न आ याहि वीतये गृणान ईळेऽन्यो नमस्यस्तिरः' ( आश्व. श्रौ. १.२ ) इति । गार्हपत्याहवनीययोर्मिथः संसर्गेऽग्नये वीतयेऽष्टाकपालः पुरोडाशः । तस्य 'अग्न आ याहि' इत्येषानुवाक्या । सूत्रितं च– 'अग्न आ याहि वीतये यो अग्निं देववीतये' ( आश्व. श्रौ. ३. १३ ) इति ॥

अग्न आ याहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥ १० ॥

अग्ने । आ । याहि । वीतये । गृणानः । हव्यऽदातये । नि । होता । सत्सि । बर्हिषि ॥१०॥

हे अग्ने त्वम् आ याहि आगच्छ । किमर्थम् । वीतये हविषां भक्षणार्थम् । किंच हव्यदातये हव्यानि हवींषि देवेभ्यो दातुम् । गृणानः स्तूयमानस्त्वं बर्हिषि आस्तीर्णे दर्भे होता सन् नि सत्सि निषीद उपविश ॥ ॥ २२ ॥

तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य ॥ ११ ॥

तम् । त्वा । समित्ऽभिः । अङ्गिरः । घृतेन । वर्धयामसि । बृहत् । शोच । यविष्ठ्य ॥११॥

हे अङ्गिरः अङ्गनादिगुणयुक्त अङ्गाररूप वाङ्गिरसः पुत्र वाग्ने तं पूर्वोक्तगुणं त्वा त्वां समिद्भिः समिन्धनहेतुभिर्दारुभिः घृतेन आज्येन च वर्धयामसि वर्धयामः । अतो[1] हे यविष्ठ्य युवतमाग्ने बृहत् महदत्यन्तं शोच दीप्यस्व ॥

स नः पृथु श्रवाय्यमच्छा देव विवाससि । बृहदग्ने सुवीर्यम् ॥ १२ ॥

सः । नः । पृथु । श्रवाय्यम् । अच्छ । देव । विवाससि । बृहत् । अग्ने । सुऽवीर्यम् ॥ १२ ॥

हे देव द्योतमानाग्ने सः पूर्वोक्तगुणस्त्वं पृथु विस्तीर्णं श्रवाय्यं श्रवणीयं प्रशस्यं बृहत् महत् सुवीर्यं शोभनवीर्योपेतं धनं नः अस्मान् अच्छ विवाससि अभिगमय । अत्र वाजसनेयकम्– 'अच्छा देव विवाससीति तन्नो गमयेत्येवैतदाह' ( श. ब्रा. १. ४. १. २७ ) इति ॥

---

१. श–अतो हेतोः ।

अग्निमन्थने 'त्वामग्ने पुष्करादधि' इत्याद्यास्तिस्र ऋचोऽनूच्याः। सूत्रितं च–'त्वामग्ने पुष्करादधीति तिसृणामर्धर्चं शिष्ट्वा रमेत्' (आश्व. श्रौ. २.१६) इति ॥

**त्वाम॑ग्ने॒ पुष्क॑रा॒दध्यथ॑र्वा॒ निर॑मन्थत। मू॒र्ध्नो विश्व॑स्य वा॒घतः॑ ॥ १३ ॥**

त्वाम्। अ॒ग्ने॒। पुष्क॑रात्। अधि। अथ॑र्वा। निः। अ॒म॒न्थ॒त॒। मू॒र्ध्नः। विश्व॑स्य। वा॒घतः॑ ॥१३॥

हे अग्ने अथर्वा एतत्संज्ञक ऋषिः त्वां पुष्करादधि पुष्करपर्णे[1] निरमन्थत। अरण्योः सकाशात् अजनयत्। कीदृशात् पुष्करात्। मूर्ध्नः मूर्धवद्धारकात् विश्वस्य सर्वस्य जगतः वाघतः वाहकात्। पुष्करपर्णे हि प्रजापतिर्भूमिमप्रथयत् 'तत्पुष्करपर्णेऽप्रथयत्' (तै. ब्रा. १.१.३.६) इति श्रुतेः। भूमिश्च सर्वजगत आधारभूतेति पुष्करपर्णस्य सर्वजगद्धारकत्वम्। अत्र पुष्करशब्देन पुष्करपर्णमभिधीयत इति। एतच्च तैत्तिरीयके विस्पष्टमाम्नातं–'त्वामग्ने पुष्करादधीत्याह पुष्करपर्णे ह्येनमुपश्रितमविन्दत्' (तै. सं. ५.१.४.४) इति ॥

**तमु॑ त्वा द॒ध्यङ्ङृषिः॑ पु॒त्र ई॑धे॒ अथ॑र्वणः। वृ॒त्र॒हणं॑ पुरं॒द॒रम् ॥ १४ ॥**

तम्। ऊँ इति॑। त्वा॒। द॒ध्यङ्। ऋषिः॑। पु॒त्रः। ई॒धे॒। अथ॑र्वणः। वृ॒त्र॒ऽहनं॑म्। पु॒र॒म्ऽद॒रम् ॥१४॥

हे अग्ने य उक्तगुणः तमु तमेव त्वाम् अथर्वणः पुत्रः दध्यङ् एतत्संज्ञः ऋषिः ईधे दीपितवान्। कीदृशम्। वृत्रहणम् आवरकाणां शत्रूणां हन्तारं पुरंदरम् असुरपुराणां दारयितारम् ॥

**तमु॑ त्वा पा॒थ्यो वृषा॒ समी॑धे दस्यु॒हन्त॑मम्। ध॒नं॒ज॒यं रणे॑रणे ॥ १५ ॥**

तम्। ऊँ इति॑। त्वा॒। पा॒थ्यः। वृषा॑। सम्। ई॒धे॒। द॒स्यु॒हन्ऽत॑मम्। ध॒न॒म्ऽज॒यम्। रणे॑ऽरणे॥१५॥

पाथ्यो[2] वृषा नाम कश्चिदृषिः[2] तमु[3] तमेव त्वा त्वां हे अग्ने समीधे[3] समैन्ध[4] समदीपयत्। कीदृशम्। दस्युहन्तमम् अतिशयेन दस्यूनामुपक्षपयितॄणां शत्रूणां हन्तारं रणेरणे युद्धे युद्धे धनंजयं धनानां जेतारम् ॥ ॥ २३ ॥

उक्थ्ये क्रतौ तृतीयसवने मैत्रावरुणस्य 'एह्यू षु' इत्यादिकौ तृचौ स्तोत्रियानुरूपौ (आश्व. श्रौ. ६. १)। आभिप्लविकेषूक्थ्येषु त्वेतौ वैकल्पिकौ स्तोत्रियानुरूपौ। आभिप्लविकेषूक्थ्येषु सूत्रितं च–'एह्यू षु ब्रवाणि त आग्निरगामि भारतः' (आश्व. श्रौ. ७.८) इति। पौनराधेयिक्यामिष्टावुत्तराज्यभागस्य 'एह्यू षु' इत्यनुवाक्या। सूत्रितं च– 'एह्यू षु ब्रवाणि त इत्याग्नेयावाज्यभागौ' (आश्व. श्रौ. २.८) इति ॥

---

१. ख-ङ-भ-य-र–पुष्करे पुष्करपर्णे। २. ख–भ–पाथ्य इति पाथ्यो वृषा (वृषो-ख) नाम कश्चिदृषिः; घ-श–पाथ्यो वृषा (वृषो-घ) कश्चिदृषिः स्तौति। ३. ख-ङ-त-न-भ-य-र–एवंगुण (गुणः–त-र) त्वामथर्वणः सोऽपि हे अग्ने तमु तमेव त्वां समीधे; घ-श–हे अग्ने तमु तमेव त्वा त्वां हे अग्ने समीधे; ङ–सोऽपि हे अग्ने तमु तमेव त्वा त्वां समीधे। ४. ख-ङ-भ-र–समैन्धत; घ-श–साधु; न–समैधत।

एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः । एभिर्वर्धास इन्दुभिः ॥ १६ ॥

आ । इहि । ऊँ इति । सु । ब्रवाणि । ते । अग्ने । इत्था । इतराः । गिरः ।

एभिः । वर्धासे । इन्दुऽभिः ॥ १६ ॥

हे अग्ने एहि आगच्छ । ते तुभ्यं त्वदर्थं गिरः स्तुतीः इत्था इत्थमनेन प्रकारेण सु सुष्ठु ब्रवाणि[1] इत्याशास्यते । ताः स्तुतीः शृण्वित्यर्थः । उ इत्येतत्पूरकम् । इतराः असुरैः कृताः स्तुतीः शृण्विति शेषः । तथा च ब्राह्मणम्– 'अग्न इत्थेतरा गिर इत्यसुर्या ह वा इतरा गिरः' ( ऐ. ब्रा. ३.४९ ) इति । अपि चागतस्त्वम् एभिः एतैः इन्दुभिः सोमैः वर्धासे वर्धस्व ॥

यत्र क्व च ते मनो दक्षं दधस उत्तरम् । तत्रा सदः कृणवसे ॥ १७ ॥

यत्र । क्व । च । ते । मनः । दक्षम् । दधसे । उत्ऽतरम् । तत्र । सदः । कृणवसे ॥ १७ ॥

हे अग्ने ते तव मनः अनुग्रहात्मकमन्तःकरणं यत्र यस्मिन् देशे क्व च कस्मिंश्चिद्यजमाने वर्तते तत्र तस्मिन् यजमाने उत्तरम् उद्गततरं श्रेष्ठं दक्षं बलकरमन्नं वा दधसे धारयसि । तथा सदः स्थानं च कृणवसे । तस्मिन् यजमाने करोषि ॥

नहि ते पूर्तमक्षिपद्भुवन्नेमानां वसो । अथा दुवो वनवसे ॥ १८ ॥

नहि । ते । पूर्तम् । अक्षिऽपत् । भुवत् । नेमानाम् । वसो इति । अथ । दुवः । वनवसे ॥ १८ ॥

हे अग्ने ते त्वदीयं पूर्तं पूरकं तेजः अक्षिपत् अक्ष्णोः पातकं विनाशकं नहि भुवत् न भवतु । सर्वदास्माकं दर्शनसामर्थ्यं करोतु । हे नेमानां वसो । नेमशब्दोऽल्पवाची । मनुष्याणां मध्ये कतिपयानां यजमानानां वासक । अथ अतः कारणात् दुवः अस्माभिर्यजमानैः कृतं परिचरणं वनवसे संभजस्व ॥

आग्निरगामि भारतो वृत्रहा पुरुचेतनः । दिवोदासस्य सत्पतिः ॥ १९ ॥

आ । अग्निः । अगामि । भारतः । वृत्रऽहा । पुरुऽचेतनः । दिवःऽदासस्य । सत्ऽपतिः ॥ १९ ॥

अयम् अग्निः आ अगामि । अस्माभिः[2] स्तुतिभिरभ्यगम्यत[2] । कीदृशः । भारतः हविषां भर्ता दिवोदासस्य एतत्संज्ञस्य राज्ञः वृत्रहा वृत्राणां शत्रूणां हन्ता पुरुचेतनः पुरूणां बहूनां चेतयिता ज्ञाता । सर्वज्ञ इत्यर्थः । सत्पतिः सतां यजमानानां पालयिता ॥

स हि विश्वाति पार्थिवा रयिं दाशन्महित्वना । वन्वन्नवातो अस्तृतः ॥ २० ॥

सः । हि । विश्वा । अति । पार्थिवा । रयिम् । दाशत् । महिऽत्वना ।

वन्वन् । अवातः । अस्तृतः ॥ २० ॥

---

१. श–ब्रवाणि प्रब्रवाणि । २. घ–स्तुतिभि°; श–अस्मत्स्तुतिभि° ।

ᵛस ᵛहि स खल्वग्निः ᵛविश्वा विश्वानि सर्वाणि ᵛपार्थिवा पृथिव्यां भवानि भूतजातानि ᵛमहित्वना महत्त्वेन स्वमहिम्नातिक्रामन् ᵛरयिं धनं ᵛदाशत् अस्मभ्यं ददातु । यद्वा । विश्वं सर्वं पार्थिवं पृथिव्यां विद्यमानं रयिं[1] धनम् ᵛअति[1] अतिशयेन दाशत् ददातु । कीदृशोऽग्निः । महित्वना महत्त्वेन तेजसा ᵛवन्वन् काष्ठानि शत्रून् वा हिंसन् ᵛअवातः अन्यैः शत्रुभिरप्रतिगतः ᵛअस्तृतः केनाप्यहिंसितः ॥ ॥ २४ ॥

स प्रत्नवन्नवीयसाग्ने द्युम्नेन संयता । बृहत्ततन्थ भानुना ॥ २१ ॥

सः । प्रत्नऽवत् । नवीयसा । अग्ने । द्युम्नेन । सम्ऽयता । बृहत् । ततन्थ । भानुना ॥ २१ ॥

हे ᵛअग्ने यः पूर्वोक्तगुणविशिष्टः ᵛसः तादृशस्त्वं ᵛप्रत्नवत् प्रत्नेन पुराणेन ᵛनवीयसा नवतरेण ᵛद्युम्नेन द्योतमानेन ᵛसंयता संगच्छता सम्यग्व्याप्नुवता ᵛभानुना तेजसा ᵛबृहत् महदन्तरिक्षं ᵛततन्थ विस्तारयसि ॥

प्र वः सखायो अग्नये स्तोमं यज्ञं च धृष्णुया । अर्च गाय च वेधसे ॥ २२ ॥

प्र । वः । सखायः । अग्नये । स्तोमम् । यज्ञम् । च । धृष्णुऽया । अर्च । गाय । च । वेधसे ॥ २२ ॥

हे ᵛसखायः समानख्याना ऋत्विजः ᵛवः यूयं ᵛधृष्णुया शत्रूणां धर्षकाय ᵛवेधसे विधात्रे ᵛअग्नये ᵛस्तोमं स्तोत्रं ᵛगाय गायत । तथा ᵛयज्ञं यजनसाधनं[2] हविः ᵛच ᵛप्र ᵛअर्च प्रयच्छत ॥

स हि यो मानुषा युगा सीदद्धोता कविक्रतुः । दूतश्च हव्यवाहनः ॥ २३ ॥

सः । हि । यः । मानुषा । युगा । सीदत् । होता । कविऽक्रतुः । दूतः । च । हव्यऽवाहनः ॥ २३ ॥

ᵛस ᵛहि स खल्वग्निः ᵛसीदत् सीदतु । अस्मदीये यज्ञे बर्हिष्युपविशतु । ᵛयः अग्निः ᵛहोता देवानामाह्वाता ᵛकविक्रतुः क्रान्तप्रज्ञः ᵛमानुषा ᵛयुगा मानुषाणि युगानि मनुष्यसंबन्धिनो यज्ञार्हान् कालविशेषान् येषु यागाः[3] अनुष्ठीयन्ते ॥ अत्यन्तसंयोगे द्वितीया ॥ एतावन्तं कालं देवानां ᵛदूतः । सः[4] ᵛहव्यवाहनः हविषां वोढा ᵛच भवति[5] ॥

ता राजाना शुचिव्रतादित्यान्मारुतं गणम् । वसो यक्षीह रोदसी ॥ २४ ॥

ता । राजाना । शुचिऽव्रता । आदित्यान् । मारुतम् । गणम् ।

वसो इति । यक्षि । इह । रोदसी इति ॥ २४ ॥

ᵛता तौ प्रसिद्धौ ᵛराजाना राजमानौ ᵛशुचिव्रता शुचिकर्माणौ मित्रावरुणौ ᵛआदित्यान् अदितेः पुत्रान् धात्रादीन् ᵛमारुतं ᵛगणं मरुतां संघं च ᵛरोदसी द्यावापृथिव्यौ च एतान् देवान् हे ᵛवसो वासकाग्ने ᵛइह अस्मिन् यज्ञे ᵛयक्षि यज ॥

---

१. ख-ञ-झ-त-न-भ-र—धनम् । २. झ-त-भ-य-र—यजमानसाधनम् । ३. श—यागादयः । ४. ख-भ— स त्वम्; घ-श—त्वम्; झ—सन् । ५. घ—भवसि ।

**वस्वी ते अग्ने संदृष्टिरिषयते मर्त्याय । ऊर्जो नपादमृतस्य ॥ २५ ॥**

वस्वी । ते । अग्ने । सम्ऽदृष्टिः । इषऽयते । मर्त्याय । ऊर्जः । नपात् । अमृतस्य ॥ २५ ॥

**हे ^v^ऊर्जो ^v^नपात् बलस्य पुत्र ^v^अग्ने ^v^अमृतस्य मरणरहितस्य ^v^ते तव ^v^संदृष्टिः दीप्तिः ^v^वस्वी वासयित्री । प्रशस्येत्यर्थः । सा ^v^मर्त्याय मनुष्याय यजमानाय ^v^इषयते । इषमन्नमिच्छति[1] । ददातीत्यर्थः[2] ॥ ॥ २५ ॥**

**क्रत्वा दा अस्तु श्रेष्ठोऽद्य त्वा वन्वन्त्सुरेक्णाः ।**
**मर्त आनाश सुवृक्तिम् ॥ २६ ॥**

क्रत्वा । दाः । अस्तु । श्रेष्ठः । अद्य । त्वा । वन्वन् । सुऽरेक्णाः । मर्तः । आनाश । सुऽवृक्तिम् ॥ २६ ॥

**हे अग्ने ^v^अद्य इदानीं ^v^क्रत्वा कर्मणा परिचरणात्मना त्वां ^v^वन्वन् संभजन् ^v^दाः हवींषि दाता यजमानः ^v^श्रेष्ठः अतिशयेन प्रशस्यः ^v^अस्तु । ^v^सुरेक्णाः शोभनधनश्चास्तु । तथा सः ^v^मर्तः मनुष्यः ^v^सुवृक्तिं त्वद्विषयां सुष्टुतिं च ^v^आनाश व्याप्नोतु । तव[3] सर्वदा स्तोता[3] भवत्वित्यर्थः ॥**

**ते ते अग्ने त्वोता इषयन्तो विश्वमायुः ।**
**तरन्तो अर्यो अरातीर्वन्वन्तो अर्यो अरातीः ॥ २७ ॥**

ते । ते । अग्ने । त्वाऽऊताः । इषयन्तः । विश्वम् । आयुः ।
तरन्तः । अर्यः । अरातीः । वन्वन्तः । अर्यः । अरातीः ॥ २७ ॥

**हे ^v^अग्ने ^v^ते त्वदीया ये त्वां स्तुवन्ति ^v^ते[4] स्तोतारः ^v^त्वोताः त्वयोता रक्षिता अत एव ^v^इषयन्तः इषमात्मन इच्छन्तः[5] सन्तः ^v^विश्वं सर्वम् ^v^आयुः अन्नं लभन्त इति शेषः । आयुरेव वा शतवर्षलक्षणमिषयन्त इच्छन्तः प्राप्नुवन्तीति शेषः । तथा ^v^अर्यः अरीनभिगन्त्रीः ^v^अरातीः काश्चित् शत्रुसेनाः ^v^तरन्तः अतिक्रामन्तः ^v^अर्यः अभिगन्त्रीः ^v^अरातीः काश्चन शत्रुसेनाः ^v^वन्वन्तः हिंसन्तश्च भवन्तीति शेषः ॥**

**अग्निस्तिग्मेन शोचिषा यासद्विश्वं न्य१त्रिणम् ।**
**अग्निर्नो वनते रयिम् ॥ २८ ॥**

अग्निः । तिग्मेन । शोचिषा । यासत् । विश्वम् । नि । अत्रिणम् । अग्निः । नः । वनते । रयिम् ॥ २८ ॥

---

१. घ-श–°मिच्छते । २. घ-श–ददासीत्यर्थः । ३. घ–सर्वदा त्वत्स्तोता; श–तत्सर्वदा स्तोता ।
४. ख-झ-त-न-भ-र–'ते' नास्ति । ५. ख–इष्यन्ति, ञ-झ-त-भ-र–इष्यन्तः; न–इत्थन्तः ।

अयम् ᵛअग्निः ᵛतिग्मेन तीक्ष्णेन ᵛशोचिषा तेजसा ᵛविश्वं सर्वम् ᵛअत्रिणम् अत्तारं राक्षसादिकं ᵛनि ᵛयासत् निहन्तु। अपि च ᵛनः अस्मभ्यम् ᵛअग्निः ᵛरयिं धनं ᵛवनते ददातु॥

सुवीरं रयिमा भर जातवेदो विचर्षणे। जहि रक्षांसि सुक्रतो॥ २९॥

सुऽवीरम्। रयिम्। आ। भर। जातऽवेदः। विऽचर्षणे। जहि। रक्षांसि। सुक्रतो इति सुऽक्रतो॥२९॥

हे ᵛजातवेदः जातप्रज्ञान[1] जातधन वा ᵛविचर्षणे विशेषेण द्रष्टरग्ने ᵛसुवीरं शोभनैर्वीरैः पुत्रपौत्रादिभिरुपेतं ᵛरयिं धनम् ᵛआ ᵛभर आहर। तथा हे ᵛसुक्रतो सुकर्मन्नग्ने ᵛरक्षांसि च ᵛजहि विनाशय॥

त्वं नः पाह्यंहसो जातवेदो अघायतः। रक्षा णो ब्रह्मणस्कवे॥ ३०॥

त्वम्। नः। पाहि। अंहसः। जातऽवेदः। अघऽयतः। रक्ष। नः। ब्रह्मणः। कवे॥ ३०॥

हे ᵛजातवेदः ᵛत्वं ᵛनः अस्मान् ᵛअंहसः पापात् ᵛपाहि रक्ष। तथा हे ᵛब्रह्मणस्कवे स्तुतिरूपस्य मन्त्रस्य कवे कावयितः शब्दयितरग्ने। अग्निर्हि शब्दमुत्पादयति। तथा च स्मर्यते–'मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्। मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्' (पा. शि. ६-७) इति। तादृशाग्ने ᵛअघायतः अघमनर्थमस्माकमिच्छतः शत्रोश्च ᵛनः अस्मान् ᵛरक्ष॥ ॥ २६॥

यो नो अग्ने दुरेव आ मर्तो वधाय दाशति। तस्मान्नः पाह्यंहसः॥ ३१॥

यः। नः। अग्ने। दुःऽएवः। आ। मर्तः। वधाय। दाशति। तस्मात्। नः। पाहि। अंहसः॥३१॥

हे ᵛअग्ने ᵛदुरेवः दुष्टाभिप्रायः ᵛयः[2] ᵛमर्तः मनुष्यः ᵛवधाय स्वस्यायुधाय ᵛनः अस्मान् ᵛआ ᵛदाशति अभिप्रयच्छति। आयुधेनास्मान् हन्तीत्यर्थः। ᵛतस्मात् मनुष्यात् ᵛअंहसः पापाच्च ᵛनः अस्मान् ᵛपाहि रक्ष॥

त्वं तं देव जिह्वया परि बाधस्व दुष्कृतम्। मर्तो यो नो जिघांसति॥ ३२॥

त्वम्। तम्। देव। जिह्वया। परि। बाधस्व। दुःऽकृतम्। मर्तः। यः। नः। जिघांसति॥३२॥

हे ᵛदेव द्योतमानाग्ने ᵛत्वं ᵛतं वक्ष्यमाणं ᵛदुष्कृतं दुष्कर्मकारिणं मनुष्यं ᵛजिह्वया ज्वालया ᵛपरि ᵛबाधस्व सर्वतो जहि। ᵛयः ᵛमर्तः मनुष्यः ᵛनः अस्मान् ᵛजिघांसति हन्तुमिच्छति॥

भरद्वाजाय सप्रथः शर्म यच्छ सहन्त्य। अग्ने वरेण्यं वसु॥ ३३॥

भरत्ऽवाजाय। सऽप्रथः। शर्म। यच्छ। सहन्त्य। अग्ने। वरेण्यम्। वसु॥ ३३॥

---

१. ख-घ-श–जातप्रज्ञ। २. ख-न-भ–'यः' नास्ति।

हे सहस्य शत्रूणामभिभवितः अग्ने भरद्वाजाय मह्यमृषये सप्रथः सर्वतः पृथु विस्तीर्णं शर्म सुखं गृहं वा यच्छ देहि। तथा वरेण्यं वरणीयं वसु धनं च[1] देहि ॥

पौर्णमास्यामाग्नेयाज्यभागस्यानुवाक्या 'अग्निर्वृत्राणि' इत्येषा। सूत्रितं च— 'अग्निर्वृत्राणि जङ्घनदिति पूर्वस्याज्यभागस्यानुवाक्या' (आश्व. श्रौ. १. ५) इति। इष्टिपशुसोमेषु च यत्र वृधन्वन्तौ पुष्टिमन्तावित्यादिविशेषविधिर्न दृश्यते तत्र सर्वत्रैषैव प्रथमाज्यभागानुवाक्या। उपसद्याग्नेयस्यैषानुवाक्या सायंकालीनस्य त्वेषैव याज्या। सूत्रितं च— 'अग्निर्वृत्राणि जङ्घनद्य उग्रइव शर्यहेति विपर्यासो याज्यानुवाक्यानाम्' (आश्व. श्रौ. ४. ८) इति ॥

**अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतः ॥ ३४ ॥**

अग्निः। वृत्राणि। जङ्घनत्। द्रविणस्युः। विपन्यया। सम्ऽइद्धः। शुक्रः। आऽहुतः ॥३४॥

विपन्यया स्तुत्या स्तूयमानः द्रविणस्युः द्रविणं धनं स्तोतॄणामिच्छन् यद्वा हविर्लक्षणं धनमात्मन इच्छन् अग्निः वृत्राणि आवरकाणि रक्षःप्रभृतीनि तमांसि वा जङ्घनत् भृशं हन्तु। कीदृशोऽग्निः। समिद्धः सम्यग्दीप्तः अत एव शुक्रः शुक्लवर्णः आहुतः हविर्भिरभिहुतः ॥

**गर्भे मातुः पितुष्पिता विदिद्युतानो अक्षरे। सीदन्नृतस्य योनिमा ॥ ३५ ॥**

गर्भे। मातुः। पितुः। पिता। विऽदिद्युतानः। अक्षरे। सीदन्। ऋतस्य। योनिम्। आ ॥३५॥

अत्र मातृपितृशब्दाभ्यां भूद्यावौ अभिधीयेते। 'द्यौर्वः[2] पिता पृथिवी माता' (ऋ. सं. १. १९१. ६) इति श्रुतेः। मातुः भूम्याः गर्भे गर्भस्थाने मध्ये अक्षरे क्षरणरहिते वेद्याख्ये स्थाने विदिद्युतानः विशेषेण दीप्यमानः पितुः पिता द्युलोकस्य पालयिता हविषां प्रदानेन। एवंभूतोऽग्निः ऋतस्य यज्ञस्य योनिम् उत्तरवेद्याख्यं धिष्ण्यम् ॥ सप्तम्यर्थे द्वितीया ॥ आ सीदन् उत्तरवेद्यामुपविशन् अग्निर्वृत्राणि जङ्घनदित्यन्वयः ॥ ॥ २७ ॥

**ब्रह्म प्रजावदा भर जातवेदो विचर्षणे। अग्ने यद्दीदयद्दिवि ॥ ३६ ॥**

ब्रह्म। प्रजाऽवत्। आ। भर। जातऽवेदः। विऽचर्षणे। अग्ने। यत्। दीदयत्। दिवि ॥३६॥

हे जातवेदः जातानां वेदितः विचर्षणे विशेषेण द्रष्टः अग्ने प्रजावत् पुत्रपौत्रसहितं ब्रह्म अन्नम् आ भर आहर। यत् ब्रह्म दिवि द्युलोके दीदयत् दीप्यते देवेषु मध्ये यत्प्रशस्तमन्नं राजते तदाहरेत्यर्थः ॥

**उप त्वा रण्वसंदृशं प्रयस्वन्तः सहस्कृत। अग्ने ससृज्महे गिरः ॥ ३७ ॥**

उप। त्वा। रण्वऽसंदृशम्। प्रयस्वन्तः। सहःऽकृत। अग्ने। ससृज्महे। गिरः ॥ ३७ ॥

---

१. ख-झ-न-भ–'च' नास्ति। २. ख-झ-त-न-भ-र–द्यौः।

हे ᐯसहस्कृत सहसा बलेनोत्पन्न ᐯअग्ने ᐯप्रयस्वन्तः हविर्लक्षणान्नवन्तो वयं ᐯरण्वसंदृशं[1] रमणीयसंदर्शनं स्तोतव्यसंदर्शनं वा ᐯत्वा त्वाम् ᐯउप प्रति ᐯगिरः स्तुतीः ᐯससृज्महे विसृजामः उच्चारयाम इत्यर्थः ॥

उप॑च्छा॒यामि॑व॒ घृणे॑रग॑न्म॒ शर्म॑ ते व॒यम् । अग्ने॒ हिर॑ण्यऽसंदृशः ॥ ३८ ॥

उप॑ । छा॒याम्ऽइ॑व । घृणे॑: । अग॑न्म । शर्म॑ । ते॒ । व॒यम् । अग्ने॑ । हिर॑ण्यऽसंदृशः ॥ ३८ ॥

हे ᐯअग्ने ᐯहिरण्यसंदृशः हितरमणीयतेजसो हिरण्यवद्रोचमानतेजसो वा ᐯघृणेः दीप्तस्य ᐯते तव ᐯशर्म शरणमाश्रयणम्[2] ᐯउप ᐯअगन्म उपगच्छाम । तत्र दृष्टान्तः । ᐯछायामिव । यथा घर्मार्ताः संतप्ताश्छायामुपगच्छन्ति तद्वत् ॥

उपसदि प्रातःकालीनस्याग्नेयस्य ' य उग्रइव ' इति याज्या सायंकालीनस्य सैवैवानुवाक्या । सूत्रितं च—' अग्निर्वृत्राणि जङ्घनद्य उग्रइव शर्यहा ' ( आश्व. श्रौ. ४. ८ ) इति ॥

य उ॒ग्रइ॑व शर्य॒हा ति॒ग्मशृ॑ङ्गो॒ न वंस॑गः । अग्ने॒ पुरो॑ रु॒रोजि॑थ ॥ ३९ ॥

यः । उ॒ग्रःऽइ॑व । श॒र्य॒ऽहा । ति॒ग्मऽशृ॑ङ्गः । न । वंस॑गः । अग्ने॑ । पुर॑: । रु॒रोजि॑थ ॥ ३९ ॥

ᐯयः अग्निः ᐯउग्रइव उद्गूर्णबलो धन्वीव ᐯशर्यहा शर्यैर्बाणैः[3] शत्रूणां हन्ता ᐯतिग्मशृङ्गो ᐯन ᐯवंसगः तीक्ष्णशृङ्गो वननीयगतिर्वृषभ इव हे ᐯअग्ने स त्वं ᐯपुरः आसुरीस्तिस्रः पुरीः ᐯरुरोजिथ भग्नवानसि । ' रुद्रो वा एष यदग्निः ' ( तै. ब्रा. २. १. ३. १ ) इति श्रुतेः रुद्रकृतमपि त्रिपुरदहनमग्निकृतमेवेत्यग्निः स्तूयते । यद्वा । त्रिपुरदहनसाधनभूते बाणेऽग्नेरनीकत्वेनावस्थानादग्निः पुराणि भग्नवानित्युच्यते । ' देवासुरा वा एषु लोकेषु समयतन्त ' ( ऐ. ब्रा. १. २३ ) इत्यादिकं ब्राह्मणमनुसंधेयम् ॥

अग्निमन्थने जायमानेऽग्नौ ' आ यं हस्ते ' इत्येषानुवाक्या । सूत्रितं च—' आ यं हस्ते न खादिनमित्यर्धर्चे आरमेत् ' ( आश्व. श्रौ. २. १६ ) इति ॥

आ यं हस्ते॒ न खा॒दिनं॒ शिशुं॑ जा॒तं न बिभ्र॑ति । वि॒शाम॒ग्निं स्व॑ध्व॒रम् ॥ ४० ॥

आ । यम् । हस्ते॑ । न । खा॒दिन॑म् । शिशु॑म् । जा॒तम् । न । बिभ्र॑ति ।

वि॒शाम् । अ॒ग्निम् । सु॒ऽअ॒ध्व॒रम् ॥ ४० ॥

मन्थनोत्पन्नं ᐯयम् अग्निं ᐯशिशुम् ᐯजातं ᐯन जातं पुत्रमिव ᐯहस्ते ᐯआ ᐯबिभ्रति हस्तेष्वभिमुखं धारयन्त्यध्वर्यवः । पूर्वो नशब्दः पुरस्तादुपचारोऽप्युपमार्थीयः । ᐯखादिनं ᐯन भक्षकं व्याघ्रादिमिव[4] । यथा तं बिभ्रतः पुरुषा अवहितास्तथाभूता इत्यर्थः । यद्वा संप्रत्यर्थे संप्रतीदानीं खादिनं

---

१. ख-झ-न-भ-र-रण्वसंदृशं रण्वम् । २. त-श-°माश्रयणं सुखं वा । ३. ख-झ-त-न-भ-र-शर्यैर्बलैः । ४. ख-भ-व्याघ्रादिकमिव; घ-व्याघ्रमिव ।

हविषां भक्षकं यम् अग्निं हस्ते धारयन्ति ᵛविशां जनानां ᵛस्वध्वरं शोभनयागस्य निष्पादकं तम् ᵛअग्निं हे ऋत्विजः परिचरतेति शेषः ॥ ॥ २८ ॥

अग्निमन्थने जातस्याग्नेराहवनीये प्रहरणसमये 'प्र देवं देववीतये' इति तृचोऽनुवक्तव्यः। सूत्रितं च—'प्र देवं देववीतय इति द्वे अग्निनाग्निः समिध्यते' (आश्व. श्रौ. २. १६) इति ॥

प्र देवं देववीतये भरता वसुवित्तमम् । आ स्वे योनौ नि षीदतु ॥ ४१ ॥

प्र । देवम् । देवऽवीतये । भरत । वसुवित्ऽतमम् । आ । स्वे । योनौ । नि । सीदतु ॥ ४१ ॥

हे अध्वर्यवः[1] ᵛदेवं द्योतमानं ᵛवसुवित्तमं वसूनां धनानां वेदयितारं लम्भयितारमग्निं ᵛप्र ᵛभरत प्रहरत । आहवनीयेऽग्नौ प्रक्षिपत । किमर्थम् । ᵛदेववीतये देवानां भक्षणार्थम् । तथा च ब्राह्मणं— 'प्र देवं देववीतये भरता वसुवित्तममिति प्रह्रियमाणायाभिरूपा यद्यज्ञेऽभिरूपं तत्समृद्धम्'[2] (ऐ.ब्रा.१. १६) इति । स चाग्निः ᵛस्वे ᵛयोनौ कारणे स्थाने आहवनीये ᵛआ ᵛनि ᵛषीदतु अभिनिषण्णो भवतु । ब्राह्मणं च भवति—'एष[3] ह वा अस्य स्वो योनिर्यदग्निरग्नेः' (ऐ. ब्रा. १. १६) इति ॥

आ जातं जातवेदसि प्रियं शिशीतातिथिम् । स्योन आ गृहपतिम् ॥ ४२ ॥

आ । जातम् । जातऽवेदसि । प्रियम् । शिशीत । अतिथिम् । स्योने । आ । गृहऽपतिम् ॥ ४२ ॥

हे अध्वर्यवः ᵛजातं प्रादुर्भूतम् ᵛअतिथिम् । लुप्तोपममेतत् । अतिथिमिव ᵛप्रियं अत एव ᵛगृहपतिं गृहाणां स्वामिनमग्निं ᵛजातवेदसि जातप्रज्ञे ᵛस्योने सुखकरे आहवनीयेऽग्नौ ᵛआ ᵛशिशीत ॥ अन्तर्णीतण्यर्थस्य शीङ एतद्रूपम् ॥ शाययत स्थापयत ॥ यद्वा । 'श्यैङ् गतौ' इत्यस्य छान्दसं रूपम् ॥ गमयत । प्रापयतेत्यर्थः ॥ 'शो तनूकरणे' इत्यस्य वा रूपम् । श्यत[4] तीक्ष्णीकुरुत[4] । संस्कुरुत । प्रहरतेति यावत् । द्वितीय आकारः पूरकः । 'जात इतरो जातवेदा इतरः' (ऐ. ब्रा. १. १६) इत्यादिकं ब्राह्मणमत्रानुसंधेयम् ॥

अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्ति मन्यवे ॥ ४३ ॥

अग्ने । युक्ष्व । हि । ये । तव । अश्वासः । देव । साधवः । अरम् । वहन्ति । मन्यवे ॥ ४३ ॥

हे ᵛदेव द्योतमान ᵛअग्ने तानश्वान् ᵛयुक्ष्व आत्मीये रथे योजय । ᵛये ᵛतव त्वदीयाः ᵛसाधवः साधकाः सुशीला वा ᵛअश्वासः अश्वाः ᵛअरम् अलं पर्याप्तं ᵛवहन्ति । किमर्थम् । ᵛमन्यवे । मन्यते यष्टव्यत्वेन देवानत्रेति मन्युर्यागः । तदर्थं तानश्वान् रथे युङ्क्ष्वेत्यर्थः । ᵛहि खलु ॥

अच्छा नो याह्या वहाभि प्रयांसि वीतये । आ देवान्त्सोमपीतये ॥ ४४ ॥

अच्छ । नः । याहि । आ । वह । अभि । प्रयांसि । वीतये । आ । देवान् । सोमऽपीतये ॥ ४४ ॥

---

१. ख-घ-भ—अध्वर्य्वादयः । २. ख-ङ्ग-त-न-भ-र—तत्समृद्धमा स्वे योनौ निषीदत्वित्येष ह वा अस्य स्वो योनिः यदग्निरग्नेः । ३. ङ्ग—आ स्वे योनौ निषीदत्वित्येष । ४. ख—शातनं कुरुत; ङ्ग-भ—श्यत तनूकुरुत ।

हे अग्ने ^v^नः अस्मान् ^v^अच्छ आभिमुख्येन ^v^याहि आगच्छ। तथा ^v^प्रयांसि हविर्लक्षणान्यन्नानि अभिलक्ष्य ^v^देवान् ^v^आ ^v^वह। किमर्थम्। ^v^वीतये तेषां हविषां स्वादनार्थम्[1]। तथा ^v^सोमपीतये सोमपानार्थं च तान् देवान् ^v^आ वह॥

उद॑ग्ने भारत द्युमदज॑स्रेण दवि॑द्युतत्। शोचा वि भा॑ह्यजर॥ ४५॥

उत्। अग्ने। भारत। द्युऽमत्। अज॑स्रेण। दवि॑द्युतत्। शोच॑। वि। भाहि। अजर॥४५॥

हे ^v^भारत हविषां भर्तः ^v^अग्ने ^v^उत् ^v^शोच उद्गततरं दीप्यस्व। तदेव विवृणोति। हे ^v^अजर जरारहिताग्ने ^v^दविद्युतत् भृशं द्योतमानस्त्वं ^v^द्युमत् द्युमता दीप्तिमता॥ 'सुपां सुलुक्°' इति तृतीयाया लुक्॥ ^v^अजस्रेण अविच्छेदेन तेजसा ^v^वि ^v^भाहि विशेषेण प्रकाशस्व॥ यद्वा। भातिरत्रान्तर्णीतण्यर्थः॥ त्वं प्रथममुद्दीप्यस्व पश्चादात्मीयेन तेजसा सर्वं जगत् प्रकाशयेति योजनीयम्॥ ॥२९॥

वीती यो दे॒वं मर्तो॑ दुवस्ये॑द॒ग्निमी॑ळीताध्व॒रे ह॒विष्मा॑न्।
होता॑रं सत्य॒यजं॒ रोद॑स्योरुत्ता॒नह॑स्तो॒ नम॒सा विवा॑सेत्॥ ४६॥

वीती। यः। देवम्। मर्तः। दुवस्येत्। अग्निम्। ईळीत। अध्वरे। हविष्मान्।
होता॑रम्। सत्यऽयज॑म्। रोद॑स्योः। उत्तानऽह॑स्तः। नम॑सा। आ। विवासेत्॥ ४६॥

^v^यः ^v^मर्तः मनुष्यः ^v^हविष्मान् हविर्भिर्युक्तो यजमानः ^v^वीती वीत्या कान्तेन हविर्लक्षणेनान्नेन यं कंचन ^v^देवं ^v^दुवस्येत् परिचरेत् तस्मिन् ^v^अध्वरे यज्ञे ^v^अग्निम् ^v^ईळीत स्तुवीत। सर्वेषु यागेष्वग्निः पूज्यत इत्यर्थः। कीदृशमग्निम्। ^v^रोदस्योः द्यावापृथिव्योर्लोकद्वये वर्तमानानां देवानां ^v^होतारम् आह्वातारं ^v^सत्ययजं सत्येनावितथेन हविषा यष्टारम्। किंचायं यजमान ईदृशमग्निम् ^v^उत्तानहस्तः कृताञ्जलिपुटः सन् ^v^नमसा नमस्कारेण हविषा वा ^v^आ ^v^विवासेत् परिचरेत्॥

आ ते॑ अग्न ऋ॒चा ह॒विर्हृ॒दा त॒ष्टं भ॑रामसि।
ते ते॑ भवन्तू॒क्षण॑ ऋष॒भासो॑ व॒शा उ॒त॥ ४७॥

आ। ते। अग्ने। ऋचा। हविः। हृदा। तष्टम्। भरामसि।
ते। ते। भवन्तु। उक्षणः। ऋषभासः। वशाः। उत॥ ४७॥

अनयाध्ययनं प्रशस्यत इत्याश्वलायनो मन्यते[2] (आश्व. गृ. १. १. ५)। हे ^v^अग्ने ^v^ते तुभ्यं ^v^हृदा हृदयेन ^v^तष्टं संस्कृतम् ^v^ऋचा ऋग्रूपेण वर्तमानं हविः ऋचमेव हविः कृत्वा ^v^आ ^v^भरामसि आहरामः। त इति तच्छब्देन प्रकृतमृग्रूपं हविः परामृश्यते। प्रतिनिर्दिश्यमानापेक्षया पुंस्त्वबहुत्वे। ऋग्रूपं तद्धविः ^v^ते तुभ्यम् ^v^उक्षणः उक्षाणः सेचनसमर्थाः ^v^ऋषभासः ऋषभाः ^v^उत अपि च ^v^वशाः च ^v^भवन्तु। ऋषभवशारूपेण परिणतं सत् त्वद्भक्षणाय भवत्विति शेषः॥

---

१ ख-ञ-न-भ-य-स्वादनार्थम्; त-र-सादनार्थम्। २. न-मन्यते। उक्तानि वैतानिकानीति खण्डे विद्ययैवाप्यस्ति प्रीतिरित्युपक्रम्य सूत्रितम्-आ ते अग्न ऋचा हविः हृदा तष्टं भरामसि ते ते भवन्तूक्षण ऋषभासो वशा उतेत्येत एव म उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति य इमं स्वाध्यायमधीयत इतीति।

अ॒ग्निं दे॒वासो॑ अग्रि॒यमि॒न्धते॑ वृत्र॒हन्त॑मम् ।
येना॒ वसू॑न्याभृ॑ता तृ॒ळ्हा रक्षां॑सि वा॒जिना॑ ॥ ४८ ॥
अ॒ग्निम् । दे॒वास॑ः । अ॒ग्रि॒यम् । इ॒न्धते॑ । वृ॒त्र॒हन्ऽत॑मम् ।
येन॑ । वसू॑नि । आऽभृ॑ता । तृ॒ळ्हा । रक्षां॑सि । वा॒जिना॑ ॥ ४८ ॥

ᵛअग्रियं मुख्यं ᵛवृत्रहन्तमम् अतिशयेन वृत्रस्य हन्तारमिमम् ᵛअग्निं ᵛदेवासः देवाः ᵛइन्धते दीपयन्ति[1]। ᵛयेन अग्निना ᵛवसूनि असुरैरपहृतानि धनानि हविर्लक्षणान्यन्नानि वा ᵛआभृता असुरसकाशाद्यजमानाद्वाहृतानि। येन च ᵛवाजिना बलवताग्निना ᵛरक्षांसि यज्ञविरोधीनि ᵛतृळ्हा तृढानि हिंसितानि तमग्निमिन्धत इत्यन्वयः ॥ ॥ ३० ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण
सायणाचार्येण[2] विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
चतुर्थाष्टके पञ्चमोऽध्यायः समाप्तः ॥

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

चतुर्थाष्टके षष्ठोऽध्याय आरभ्यते। षष्ठे मण्डले द्वितीयेऽनुवाके प्रथमं सूक्तं व्याख्यातम्। तत्र 'पिबा सोमम्' इति पञ्चदशर्चं द्वितीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभम्। अन्त्या द्विपदा त्रिष्टुप्। तथा चानुक्रान्तं—'पिब पञ्चोनैन्द्रं त्रैष्टुभं द्विपदान्तम्' इति। अभिजिति मरुत्वतीयशस्त्रे एतन्निविद्धानम्। सूत्रितं च—'पिबा सोमं तमु ष्टुहीति मध्यंदिनः' ( आश्व. श्रौ. ८. ५ ) इति। समूळ्हे दशरात्रेऽष्टमेऽहनि मरुत्वतीयशस्त्रे एतत्सूक्तम्। सूत्रितं च—'पिबा सोममभि तमस्य द्यावापृथिवी' (आश्व. श्रौ. ८. ७) इति। सूर्यस्तुन्नाम्न्येकाहे मरुत्वतीये[3] एतत्सूक्तं निविद्धानम्। सूत्र्यते हि—'सूर्यस्तुता यशस्कामः पिबा सोममभि' ( आश्व. श्रौ. ९. ८ ) इति। महाव्रतेऽपि मरुत्वतीये एतत्सूक्तम्। तथैव पञ्चमारण्यके सूत्रितं—'पिबा सोममभि यमुग्र तर्दः कया शुभा सवयसः सनीळाः' ( ऐ. आ. ५. १. १ ) इति। माध्यंदिने[4] सवने[4] आद्यास्तिस्रो होतृमैत्रावरुणब्राह्मणाच्छंसिनां प्रस्थितयाज्याः। सूत्रितं च—'पिबा सोममभि यमुग्र तर्द इति तिस्रोऽर्वाङेहि सोमकामं त्वाहुः' ( आश्व. श्रौ. ५. ५ ) इति ॥

पिबा॒ सोम॑म॒भि य॑मुग्र॒ तर्द॑ ऊ॒र्वं गव्यं॒ महि॑ गृणा॒न इ॑न्द्र ।
वि यो धृ॑ष्णो॒ वधि॑षो वज्रहस्त॒ विश्वा॑ वृ॒त्रम॑मि॒त्रिया॒ शवो॑भिः ॥ १ ॥
पिब॑ । सोम॑म् । अ॒भि । यम् । उ॒ग्र॒ । तर्द॑ः । ऊ॒र्वम् । गव्य॑म् । महि॑ । गृ॒णा॒नः । इ॒न्द्र॒ ।
वि । यः । धृ॒ष्णो॒ इति॑ । वधि॑षः । व॒ज्र॒ऽह॒स्त॒ । विश्वा॑ । वृ॒त्रम् । अ॒मि॒त्रिया॑ । शव॑ःऽभिः ॥ १ ॥

---

१. ख-ञ-न-भ—दीपयन्ते। २. ख-ञ-भ—सायणामात्येन; र—सायणार्येण। ३. त१—मरुत्वति। ४. ञ-त-भ-य—माध्यंदिनसवने।

हे उग्र उद्गूर्णबल इन्द्र गृणानः अङ्गिरोभिः स्तूयमानस्त्वं यं सोमम् अभि उद्दिश्य। पातुमित्यर्थः। महि महत् गव्यं गोसंबन्धि ऊर्वं पणिभिरपहृतं समूहं तर्दः प्रकाशितवानसि[1]। तृदिर्हिंसाकर्मात्र प्रकाशनार्थः। तं सोमं पिब पानं कुरु। हे धृष्णो शत्रूणां धर्षक वज्रहस्त वज्रपाणे हे इन्द्र यः त्वं शवोभिः बलैः सहितः सन् विश्वा विश्वं वृत्रम् आवरकम् अमित्रिया अमित्रं शत्रुम्॥ अमित्रशब्दात् द्वितीयैकवचनस्येयादेशः॥ वि वधिषः व्यवधीः स त्वं सोमं पिबेति संबन्धः॥

स ईं पाहि य ऋजीषी तरुत्रो यः शिप्रवान्वृषभो यो मतीनाम्।
यो गोत्रभिद्वज्रभृद्यो हरिष्ठाः स इन्द्र चित्राँ अभि तृन्धि वाजान्॥ २॥

सः। ईम्। पाहि। यः। ऋजीषी। तरुत्रः। यः। शिप्रऽवान्। वृषभः। यः। मतीनाम्।
यः। गोत्रऽभित्। वज्रऽभृत्। यः। हरिऽस्थाः।
सः। इन्द्र। चित्रान्। अभि। तृन्धि। वाजान्॥ २॥

हे इन्द्र ऋजीषी। ऋजीषशब्देन गतरसः सोमोऽभिधीयते। तद्वान्[2] यः त्वं तरुत्रः शत्रूणां तारकोऽसि यः त्वं शिप्रवान् शोभनहनुरसि यः त्वं मतीनां स्तोतॄणाम्॥ मन्यतेः स्तुतिकर्मणः कर्तरि क्तिच्॥ वृषभः कामानां वर्षितासि सः त्वम् ईम् एनं सोमं पाहि पिब। हे इन्द्र यस्त्वं[3] वज्रभृत् वज्रधरः यः त्वं गोत्रभित् गोत्राणां पर्वतानां मेघानां वा भेत्तासि यः त्वं हरिष्ठाः हर्योः स्थातासि हे इन्द्र सः त्वं चित्रान् विचित्रान् वाजान् अन्नानि अभि तृन्धि अस्मभ्यं प्रकाशय॥

एवा पाहि प्रत्नथा मन्दतु त्वा श्रुधि ब्रह्म वावृधस्वोत गीर्भिः।
आविः सूर्यं कृणुहि पीपिहीषो जहि शत्रूँरभि गा इन्द्र तृन्धि॥ ३॥

एव। पाहि। प्रत्नऽथा। मन्दतु। त्वा। श्रुधि। ब्रह्म। ववृधस्व। उत। गीःऽभिः।
आविः। सूर्यम्। कृणुहि। पीपिहि। इषः। जहि। शत्रून्। अभि। गाः। इन्द्र। तृन्धि॥ ३॥

हे इन्द्र त्वं प्रत्नथा प्रत्नान् पुराणान् सोमान् यथापिबः तथा एव एवम् इममस्मदीयं सोमं पाहि पिब। स च सोमस्त्वया पीतः सन् त्वा त्वां मन्दतु मदयतु[4]। ब्रह्म अस्माभिः कृतं स्तोत्रं श्रुधि शृणु। उत अपि च गीर्भिः स्तुतिरूपाभिर्वाग्भिः ववृधस्व त्वं वर्धस्व। अपि च सूर्यं सर्वस्य प्रेरकं देवम् आविः कृणुहि आविष्कुरु। वयं सूर्यं यथा पश्येम तथा कुर्वित्यर्थः। इषः अन्नानि च पीपिहि अस्मभ्यं प्यायय[5]। शत्रून् अस्मत्सपत्नान् जहि नाशय। हे इन्द्र त्वं पणिभिरपहृताः गाः अभि तृन्धि प्रकाशय॥

---

१. ङ–प्राकाशयः प्रकाशितवानसि; त-भ-य–प्रकाशय। २. घ-श–तद्वान् गतसारमपि सोमम-परित्यजन्। ३. ख-ङ-त-न-भ-र–'यस्त्वं' नास्ति। ४. ङ–मादयतु किंच; घ-श–मदयुक्तं करोतु। ५. ख-भ–पायय; श–आप्यायय।

ते त्वा मदा बृहदिन्द्र स्वधाव इमे पीता उक्षयन्त द्युमन्तम् ।
महामनूनं तवसं विभूतिं मत्सरासो जर्हृषन्त प्रसाहम् ॥ ४ ॥

ते । त्वा । मदाः । बृहत् । इन्द्र । स्वधाऽवः । इमे । पीताः । उक्षयन्त । द्युऽमन्तम् ।
महाम् । अनूनम् । तवसम् । विऽभूतिम् । मत्सरासः । जर्हृषन्त । प्रऽसहम् ॥ ४ ॥

हे स्वधावः अन्नवन् इन्द्र मदाः मदकराः ते इमे पीताः सोमाः द्युमन्तं दीप्तिमन्तं त्वा त्वां बृहत् अत्यन्तम् उक्षयन्त सेचयन्तु[1] । अपि च हे इन्द्र त्वां मत्सरासः मदकराः सोमाः जर्हृषन्त भृशं हर्षयन्तु । कीदृशम् । महां महान्तं प्रभूतम् अनूनं सर्वगुणैर्न्यूनतारहितम् । संपूर्णगुणमित्यर्थः[2] । तवसं प्रवृद्धं विभूतिं विभवन्तं प्रसाहं शत्रूणामभिभवितारम् ॥

येभिः सूर्यमुषसं मन्दसानोऽवासयोऽप दृळ्हानि दर्द्रत् ।
महामद्रिं परि गा इन्द्र सन्तं नुत्था अच्युतं सदसः परि स्वात् ॥ ५ ॥

येभिः । सूर्यम् । उषसम् । मन्दसानः । अवासयः । अप । दृळ्हानि । दर्द्रत् ।
महाम् । अद्रिम् । परि । गाः । इन्द्र । सन्तम् । नुत्थाः । अच्युतम् । सदसः । परि । स्वात् ॥५॥

हे इन्द्र येभिः यैः सोमैः मन्दसानः मोदमानस्त्वं सूर्यं सर्वस्य प्रेरकं देवम् उषसम् उषोदेवतां च अवासयः स्वस्थाने न्यवासयः । अथवा सूर्योषसौ यथा तमांसि विवासयतस्तथाकार्षीः । किं कुर्वन् । दृळ्हानि दृढानि तमांसि अप दर्द्रत् अपदारयन् । किंच हे इन्द्र त्वं पणिभिः अपहृताः गाः परि सन्तं परितो विद्यमानं महां महान्तम् अद्रिं पर्वतं नुत्थाः अनुदः। कीदृशम् । स्वात् स्वकीयात् सदसः स्थानात् परि परितः अच्युतम् अविचालितं[3] विनाशरहितम् । स्थिरमित्यर्थः[4] ॥  ॥ १ ॥

तव क्रत्वा तव तद्दंसनाभिरामासु पक्वं शच्या नि दीधः ।
और्णोर्दुर उस्रियाभ्यो वि दृळ्होदूर्वाद्गा असृजो अङ्गिरस्वान् ॥ ६ ॥

तव । क्रत्वा । तव । तत् । दंसनाभिः । आमासु । पक्वम् । शच्या । नि । दीधरिति दीधः ।
और्णोः । दुरः । उस्रियाभ्यः । वि । दृळ्हा ।
उत् । ऊर्वात् । गाः । असृजः । अङ्गिरस्वान् ॥ ६ ॥

हे इन्द्र तव क्रत्वा त्वदीयया प्रज्ञया[5] तव दंसनाभिः त्वदीयैः कर्मभिः शच्या सामर्थ्येन आमासु अपक्वासु गोषु पक्वं परिणतं तत् प्रसिद्धं पयः नि दीधः नितरां धारयसि । अपि च हे इन्द्र त्वम् उस्रियाभ्यः गोभ्यः[6] । गा निर्गमयितुमित्यर्थः[7] । दृळ्हा दृढानि । बलेन पाषाणादिभिर्दृढी-

---

१. ख-ज्ञ-त-न-भ-य-र–सिञ्चयन्तु; झ–सिचयन्तु; श–सेचयन्त । २. ख-ज्ञ-झ-त-न-भ-य-र–' संपूर्णमित्यर्थः । ३. ख-ज्ञ-झ-त-न-भ-य-र–' अविचालितं ' नास्ति । ४. ज्ञ-त–स्थितमित्यर्थः । ५. घ-श–प्रकृत्या । ६. श–गोभ्यः । तादर्थ्ये चतुर्थी । अङ्गिरसाम् । ७. श–नियमितमित्यर्थः ।

कृतानीत्यर्थः । vदुरः द्वाराणि vवि vऔर्णोः उद्घाटितवानसि । vअङ्गिरस्वान् अङ्गिरोभिर्युक्तस्त्वम् vऊर्वात् समूहात् । गोष्ठादित्यर्थः । vगाः vउत् vअसृजः उदगमयः ॥

पप्राथ क्षां महि दंसो व्यु१र्वीमुप द्यामृष्वो बृहदिन्द्र स्तभायः ।
अधारयो रोदसी देवपुत्रे प्रत्ने मातरा यह्वी ऋतस्य ॥ ७ ॥

पप्राथ । क्षाम् । महि । दंसः । वि । उर्वीम् । उप । द्याम् । ऋष्वः । बृहत् । इन्द्र । स्तभायः ।
अधारयः । रोदसी इति । देवपुत्रे इति देवऽपुत्रे ।
प्रत्ने इति । मातरा । यह्वी इति । ऋतस्य ॥ ७ ॥

हे इन्द्र त्वं vमहि महता vदंसः दंससा कर्मणा vउर्वीं विस्तीर्णां vक्षां भूमिं vवि vपप्राथ विशेषेण पूरितवानसि । 'प्रा पूरणे' इति धातुः । हे vइन्द्र vऋष्वः महांस्त्वं vबृहत् बृहतीं vद्यां दिवम् vउप vस्तभायः उपस्तभ्नासि । निरालम्बं वितिष्ठन्ती द्यौर्यथा न पततीन्द्रस्तथा करोतीत्यर्थः । अपि च त्वं vरोदसी द्यावापृथिव्यौ vअधारयः पोषणैर्धारयसि । कीदृश्यौ । vदेवपुत्रे । देवाः पुत्रा ययोस्ते । vप्रत्ने पुराणे vमातरा मातरौ निर्मात्र्यौ vऋतस्य उदकस्य यज्ञस्य वा vयह्वी यह्व्यौ महत्यौ । यद्वा । विश्वस्य मातरौ ऋतस्य ब्रह्मणो यह्वी पुत्र्यौ । यह्वुरित्यपत्यनामैतत् ॥

अध त्वा विश्वे पुर इन्द्र देवा एकं तवसं दधिरे भराय ।
अदेवो यदभ्यौहिष्ट देवान्त्स्वर्षाता वृणत इन्द्रमत्र ॥ ८ ॥

अध । त्वा । विश्वे । पुरः । इन्द्र । देवाः । एकम् । तवसम् । दधिरे । भराय ।
अदेवः । यत् । अभि । औहिष्ट । देवान् । स्वःऽसाता । वृणते । इन्द्रम् । अत्र ॥ ८ ॥

vअध अधुना अस्मिन् काले vविश्वे vदेवाः[1] सर्वे[1] वह्न्यादयो हे vइन्द्र vएकं मुख्यं vतवसं प्रवृद्धं बलवन्तं vत्वा त्वां vभराय संग्रामाय vपुरः vदधिरे पुरस्तात् चक्रिरे । vयत् यदा vअदेवः वृत्रोऽसुरः vदेवान् vअभ्यौहिष्ट संग्रामार्थमभिगतवान् । ओहतिर्गतिकर्मा । किंचास्मिन् काले vस्वर्षाता स्वर्षातौ संग्रामे vइन्द्रं[2] vवृणते संभजन्ते स्म । मरुत इति शेषः[2] । मरुतो हीन्द्रं देवेषु पलायितेषु समभजन्नित्यर्थः । अधुना पुरो दधिरे इति संबन्धः ॥

अध द्यौश्चित्ते अप सा नु वज्राद्द्वितानमद्भियसा स्वस्य मन्योः ।
अहिं यदिन्द्रो अभ्योहसानं नि चिद्विश्वायुः शयथे जघान ॥ ९ ॥

अध । द्यौः । चित् । ते । अप । सा । नु । वज्रात् । द्विता । अनमत् । भियसा । स्वस्य । मन्योः ।
अहिम् । यत् । इन्द्रः । अभि । ओहसानम् । नि । चित् । विश्वऽआयुः । शयथे । जघान ॥ ९ ॥

---

१. ज्ञ–सर्वे देवाः; त–सर्वे देवाः सर्वे । २. ख-ज्ञ-झ-त-न-भ-य-र–देवा मरुत इति शेषः । इन्द्रं वृणते संभजन्ते स्म ।

Vसा प्रसिद्धा देवानामाश्रयत्वेन Vद्यौश्चित् द्युलोकोऽपि हे इन्द्र Vअध अधुनास्मिन् काले Vद्विता[1] द्विधा द्विप्रकारात्[1] Vते त्वदीयात् Vवज्रात् Vस्वस्य आत्मीयात् Vमन्योः क्रोधाच्च Vभियसा भयेन[2] Vअप Vअनमत् अपननाम। Vनु[3] इति[3] पूरणः। Vविश्वायुः बहुन्नः Vइन्द्रः Vयत् यदा Vअभ्योहसानम् अभिगच्छन्तम् Vअहिं वृत्रं Vशयथे शयननिमित्ते। मरणायेत्यर्थः। Vनि Vजघान न्यवधीत्। Vचित् इति पूरणः। यदा वृत्रं जघानास्मिन्[4] काले द्यौर्ननामेति संबन्धः ॥

अध त्वष्टा ते मह उग्र वज्रं सहस्रभृष्टिं ववृतच्छताश्रिम्।
निकाममरमणसं येन नवन्तमहिं सं पिणगृजीषिन् ॥ १० ॥

अध। त्वष्टा। ते। महः। उग्र। वज्रम्। सहस्रऽभृष्टिम्। ववृतत्। शतऽअश्रिम्।
निऽकामम्। अरऽमनसम्। येन। नवन्तम्। अहिम्। सम्। पिणक्। ऋजीषिन् ॥ १० ॥

Vअध अधुना हे Vउग्र उद्गूर्णबलेन्द्र Vमहः महतः Vते तव Vत्वष्टा देवशिल्पी Vवज्रं Vववृतत् न्यवर्तयत् निष्पन्नं कृतवान्। कीदृशम्। Vसहस्रभृष्टिं सहस्रधारं Vशताश्रिं शतपर्वाणम्। हे Vऋजीषिन् गतरससोमवन्निन्द्र Vयेन वज्रेण Vनिकामम्। नियतः कामो यस्य तम्। Vअरमणसम्[5]। शत्रूणामरमभिगन्तृ मनो यस्य तम्। Vनवन्तं शब्दायमानम् Vअहिं वृत्रमसुरं Vसं Vपिणक् संपिष्टवानसि तं वज्रं कृतवानित्यर्थः ॥ ॥ २ ॥

वर्धान्यं विश्वे मरुतः सजोषाः पचच्छतं महिषाँ इन्द्र तुभ्यम्।
पूषा विष्णुस्त्रीणि सरांसि धावन्वृत्रहणं मदिरमंशुमस्मै ॥ ११ ॥

वर्धान्। यम्। विश्वे। मरुतः। सऽजोषाः। पचत्। शतम्। महिषान्। इन्द्र। तुभ्यम्।
पूषा। विष्णुः। त्रीणि। सरांसि। धावन्। वृत्रऽहनम्। मदिरम्। अंशुम्। अस्मै ॥ ११ ॥

Vसजोषाः सह प्रीयमाणाः Vविश्वे Vमरुतः सर्वे देवा हे Vइन्द्र Vयं त्वां Vवर्धान् स्तोत्रैर्वर्धयन्ति हे इन्द्र तस्मै Vतुभ्यं Vपूषा एतन्नामको देवः Vविष्णुः एतन्नामकश्च Vशतं शतसंख्याकान् Vमहिषान् पुंपशून् Vपचत् पचेत्। अपि च Vअस्मै तुभ्यं Vसरांसि द्रोणकलशपूतभृदाधवनीयाख्यानि Vत्रीणि पात्राणि Vअंशुं सोमं Vधावन् अगच्छन्। सोमैः पात्राणि पूर्यन्त इत्यर्थः। कीदृशं सोमम्। Vमदिरं मदकरं Vवृत्रहणं वृत्राणां शत्रूणां हन्तारम्। अत्र वृत्रहञ्छब्देन सोमोऽभिधीयते। पीते[6] हि सति सोमे वृत्राणि हन्तुमिन्द्रः समर्थो भवतीति यावत् ॥

आ क्षोदो महिं वृतं नदीनां परिष्ठितमसृज ऊर्मिमपाम्।
तासामनु प्रवत इन्द्र पन्थां प्रार्दयो नीचीरपसः समुद्रम् ॥ १२ ॥

आ। क्षोदः। महिं। वृतम्। नदीनाम्। परिऽस्थितम्। असृजः। ऊर्मिम्। अपाम्।
तासाम्। अनु। प्रऽवतः। इन्द्र। पन्थाम्। प्र। आर्दयः। नीचीः। अपसः। समुद्रम् ॥ १२ ॥

---

१. ख-घ-भ-श–'द्विता...द्विप्रकारात्' नास्ति। २. ख-घ-भ-श–भयेन द्विता द्विप्रकारेण काष्ठेन (भ-कालेन) मनसा च। ३. नू चिदिति। ४. श–जघान तस्मिन्। ५. ज्ञ-त-न-भ–अरमनसम्। ६. ख-भ–आपीते।

हे इन्द्र त्वं ᵛमहि महत् ᵛवृतं वृत्रेण परिवृतमाच्छादितं ᵛपरिष्ठितं परितः स्थितं ᵛनदीनां सिन्धूनां संबन्धि ᵛक्षोदः उदकम् ᵛआ ᵛअसृजः आ समन्तात् सृष्टवानसि । येन नद्यः पूर्णाः प्रवहंयुस्तदित्यर्थः । ᵛअपाम् उदकानाम् ᵛऊर्मिं समूहं सृष्टवानसि । पुनर्वचनमादरार्थम् । हे ᵛइन्द्र ᵛतासां नदीनां संबन्धिनः ᵛपन्थां पथो मार्गान् ᵛप्रवतः प्रवणान् ᵛअनु अकार्षीरिति शेषः । अन्वित्युपसर्गयोग्यक्रियाध्याहारः । किंच ᵛनीचीः प्रवणाभिमुखीः । वेगयुक्ता इत्यर्थः । ᵛअपसः अपः उदकानि । अपस इत्यप एवार्थे वर्तते । ᵛसमुद्रम् उदधिं ᵛप्रार्दयः प्रागमयः । अत्रार्दयतिर्नयनकर्मा ॥

एवा ता विश्वा चकृवांसमिन्द्रं महामुग्रमजुर्यं सहोदाम् ।
सुवीरं त्वा स्वायुधं सुवज्रमा ब्रह्म नव्यमवसे ववृत्यात् ॥ १३ ॥

एव । ता । विश्वा । चकृऽवांसम् । इन्द्रम् । महाम् । उग्रम् । अजुर्यम् । सहःऽदाम् ।
सुऽवीरम् । त्वा । सुऽआयुधम् । सुऽवज्रम् । आ । ब्रह्म । नव्यम् । अवसे । ववृत्यात् ॥ १३ ॥

हे इन्द्र ᵛत्वा त्वां ᵛनव्यं नूतनमन्यैरकृतपूर्वं[1] ᵛब्रह्म अस्माभिः कृतं स्तोत्रम् ᵛअवसे अस्माकं रक्षणाय ᵛआ ᵛववृत्यात् आवर्तयतु । कीदृशं त्वाम् । ᵛएव एवमुक्तप्रकारेण[2] ᵛता तानि प्रसिद्धानि ᵛविश्वा विश्वानि सर्वाणि कर्माणि ᵛचकृवांसं कृतवन्तम् ᵛइन्द्रम् ईश्वरं ᵛमहां महान्तम् ᵛउग्रम् ओजस्विनम् ᵛअजुर्यम् अजरं ᵛसहोदां सहसो बलस्य दातारं ᵛसुवीरं शोभना वीरा मरुतो यस्य तं ᵛस्वायुधं शोभनायुधं ᵛसुवज्रं शोभनवज्रोपेतम् ॥

स नो वाजाय श्रवस इषे च राये धेहि द्युमत इन्द्र विप्रान् ।
भरद्वाजे नृवत इन्द्र सूरीन्दिवि च स्मैधि पार्ये न इन्द्र ॥ १४ ॥

सः । नः । वाजाय । श्रवसे । इषे । च । राये । धेहि । द्युऽमतः । इन्द्र । विप्रान् ।
भरत्ऽवाजे । नृऽवतः । इन्द्र । सूरीन् । दिवि । च । स्म । एधि । पार्ये । नः । इन्द्र ॥ १४ ॥

हे ᵛइन्द्र ᵛसः त्वं ᵛद्युमतः दीप्तिमतः ᵛविप्रान् मेधाविनः ᵛनः अस्मान् ᵛवाजाय बलाय ᵛश्रवसे यशसे ᵛइषे ᵛच अन्नाय च ᵛराये धनाय ᵛधेहि धारय । अपि च हे ᵛइन्द्र ᵛभरद्वाजे मयि ᵛनृवतः मनुष्यवतः । परिचारकयुक्तानित्यर्थः । ᵛसूरीन् तव स्तोतॄन् पुत्रपौत्रान्[3] कुर्विति शेषः । हे ᵛइन्द्र त्वं ᵛपार्ये पारणीये आगामिनि ᵛच ᵛदिवि दिवसे ᵛएधि ᵛस्म ᵛनः । अस्माकं रक्षिता[4] खलु[4] भवेत्यर्थः ॥

षष्ठेऽहनि[5] तृतीयसवने ब्राह्मणाच्छंसिशस्त्रेऽनुरूपतृचस्य 'अया वाजम्' इति तृतीया । सूत्रितं च—'अया वाजं देवहितं सनेमेति स्तोत्रियानुरूपौ' (आश्व. श्रौ. ८. ३) इति ॥

अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः ॥ १५ ॥

अया । वाजम् । देवऽहितम् । सनेम । मदेम । शतऽहिमाः । सुऽवीराः ॥ १५ ॥

---

१. घ-ञ-र-°कृतं पूर्वम्; त२-°कृते पूर्वम् । २. घ-°मुक्तेन प्रकारेण । ३. ख-भ-पुत्रपौत्रादीन् । ४. भ-य-खलु रक्षिता । ५. ख१-ज-ञ-झ-त-भ-र-पृष्ठ्येऽहनि; ण-पक्ष्येऽहनि; न-पृष्ठ्यस्य षष्ठेऽहनि, य-पृष्ठेऽहनि ।

Vअया अनया स्तुत्या Vदेवहितं देवेन द्योतमानेनेन्द्रेण दत्तं Vवाजम् अन्नं Vसनेम वयं संभजेम। अपि च Vसुवीराः शोभनपुत्रोपेताः[1] वयं Vशतहिमाः शतसंवत्सरान् Vमदेम हृष्याम[2] ॥ ॥ ३ ॥

'तमु ष्टुहि' इति पञ्चदशर्चं तृतीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम्। तथा चानुक्रम्यते— 'तमु ष्टुहि' इति। अभिजिति निष्केवल्य एतन्निविद्धानम्। सूत्रितं च—'तमु ष्टुहीति मध्यंदिनः' (आश्व. श्रौ. ८. ५) इति। इन्द्राग्न्योः कुलायनाम्न्येकाहेऽपि निष्केवल्य एतन्निविद्धानम्। सूत्रितं च—'तिष्ठा हरी तमु ष्टुहीति मध्यंदिनः' (आश्व. श्रौ. ९. ७) इति। महाव्रतेऽपि निष्केवल्ये। तथैव पञ्चमारण्यके सूत्रितं—'तमु ष्टुहि यो अभिभूत्योजाः सुत इत्त्वं निमिश्ल इन्द्र सोम इति त्रीणि' (ऐ. आ. ५. २. २) इति ॥

तमु॑ ष्टु॒हि॒ यो अ॒भिभू॑त्योजा व॒न्वन्नवा॑तः पुरुहू॒त इन्द्रः॑।
अषा॑ळ्हमु॒ग्रं सह॑मानमा॒भिर्गी॒र्भिर्व॑र्ध वृष॒भं च॑र्षणी॒नाम् ॥ १ ॥

तम्। ऊँ इति॑। स्तु॒हि॒। यः। अ॒भिभू॑तिऽओजाः। व॒न्वन्। अवा॑तः। पु॒रु॒ऽहू॒तः। इन्द्रः॑।
अषा॑ळ्हम्। उ॒ग्रम्। सह॑मानम्। आ॒भिः। गी॒ःऽभिः। व॒र्ध॒। वृ॒ष॒भम्। च॒र्ष॒णी॒नाम् ॥ १ ॥

Vअभिभूत्योजाः अभिभावुकतेजाः Vवन्वन् शत्रून् हिंसन् Vअवातः शत्रुभिरहिंसितः ॥ वनोतेर्निष्ठान्तस्य नञ्पूर्वस्य रूपम्। यद्वा वातेर्वातम् ॥ अनभिगतः Vपुरुहूतः बहुभिराहूतः Vयः Vइन्द्रः अस्तीति शेषः। हे भरद्वाज Vतमु Vष्टुहि तमेवेन्द्रं स्तुहि। अपि च Vआभिः वक्ष्यमाणाभिः Vगीर्भिः स्तुतिरूपाभिर्वाग्भिः तमिन्द्रं Vवर्ध वर्धय। कीदृशम्। Vअषाळ्हम् अनभिभूतम् Vउग्रम् उद्गूर्णम् ओजस्विनं वा Vसहमानं शत्रूनभिभवन्तं Vचर्षणीनां प्रजानां संबन्धिनं[3] Vवृषभं वर्षितारम् ॥

स यु॒ध्मः सत्वा॑ खज॒कृत्स॒मद्वा॑ तुविम्र॒क्षो न॑दनु॒माँ ऋ॑जी॒षी।
बृ॒हद्रे॑णु॒श्च्यव॑नो॒ मानु॑षीणा॒मेकः॑ कृ॒ष्टीना॒म॑भवत्स॒हावा॑ ॥ २ ॥

सः। यु॒ध्मः। सत्वा॑। ख॒ज॒ऽकृत्। स॒मत्ऽवा॑। तु॒वि॒ऽम्र॒क्षः। न॒द॒नु॒ऽमान्। ऋ॒जी॒षी।
बृ॒हत्ऽरे॑णुः। च्यव॑नः। मानु॑षीणाम्। एकः॑। कृ॒ष्टीना॑म्। अ॒भ॒व॒त्। स॒ह॒ऽवा॑ ॥ २ ॥

Vबृहद्रेणुः[4] बृहतो महतो रेणोः पांसोरुत्थापकः। संग्रामेष्विति यावत्। Vएकः मुख्यः Vसहावा बलवान् Vसः इन्द्रः Vमानुषीणां मनोः संबन्धिनीनां Vकृष्टीनां प्रजानां यजमानानां Vच्यवनः अभिगन्ता Vअभवत् आसीत्। कीदृशः। Vयुध्मः योद्धा Vसत्वा दाता। सनोतेरिदं रूपम्। Vखजकृत् खजानां संग्रामाणां कर्ता। खज इति संग्रामनामैतत्। Vसमद्वा। यजमानैः सह मदः समत् तद्वान्। Vतुविम्रक्षः। म्रक्षतिः संस्नेहनकर्मा। तुवीनां बहूनां वर्षणेन संस्नेहनकर्ता Vनदनुमान् शब्दवान् Vऋजीषी। ऋजीषशब्देन सवनद्वयाभिषुतः पुनस्तृतीयसवनेऽप्यभिषुतः सोम उच्यते। तद्वान् ॥

---

१. भ-य-'पुत्रपौत्रोपेताः। २. ख-हृष्टाः स्म; घ-ज्ञ-हृष्येम; ज्ञ-त-र-हृष्यास्म; न-भ-हृष्याः स्म।
३. ख-ज्ञ-न-भ-य-संबन्धिनां कामानाम्; ज्ञ-त-संबन्धिनाम्। ४. ख-भ-स इन्द्रः बृहद्रेणुः।

त्वं ह नु त्यद॑दमायो दस्यूँरेकः॑ कृष्टीर॑वनोरार्या॑य ।
अस्ति॑ स्विन्नु वीर्यं१॒॑ तत्त॑ इन्द्र॒ न स्वि॑दस्ति॒ तदृ॑तु॒था वि वो॑चः ॥ ३ ॥

त्वम् । ह । नु । त्यत् । अ॒द॒मयः । दस्यू॑न् । एकः॑ । कृ॒ष्टीः । अ॒व॒नोः । आर्या॑य । अस्ति॑ ।
स्वि॒त् । नु । वी॒र्य॑म् । तत् । ते॒ । इ॒न्द्र॒ । न । स्वि॒त् । अ॒स्ति॒ । तत् । ऋ॒तु॒ऽथा । वि । वो॒च॒ः ॥३॥

हे इन्द्र vत्यत् त्यः स vत्वम् । त्यदिति तच्छब्दपर्यायः । अत्र लिङ्गव्यत्ययः । vदस्यून् कर्महीनान् जनान् vनु क्षिप्रम् vअदमयः दान्तानकरोः । हशब्दः पूरणार्थः । अपि च vएकः मुख्यस्त्वं vकृष्टीः पुत्रदासादीन्[1] vआर्याय कर्मकृते जनाय vअवनोः अददाः । एवं स्तुवन्नप्यृषिरिन्द्रं यदा नाद्राक्षीत् तदा तस्य वीर्यसद्भावे विचिकित्समानः परार्धर्चमाह । हे vइन्द्र vते तव यत् पूर्वमुक्तं vतत्[2] vवीर्यं[2] सामर्थ्यं vस्विन्नु vअस्ति । किं स्विद्भवति । स्विन्नु इति विचिकित्सायाम् । यद्वा vनास्ति vस्वित् । vतत् बलम् vऋतुथा काले काले vवि vवोचः विशेषेण ब्रूहि ॥

सदिद्धि ते॑ तुविजा॒तस्य॒ मन्ये॒ सहः॑ सहिष्ठ तुर॒तस्तु॒रस्य॑ ।
उ॒ग्रमु॒ग्रस्य॑ त॒वस॒स्तवी॒योऽर॑ध्रस्य रध्र॒तुरो॑ बभूव ॥ ४ ॥

सत् । इत् । हि । ते॒ । तु॒वि॒ऽजा॒तस्य॑ । मन्ये॑ । सहः॑ । स॒हि॒ष्ठ॒ । तु॒र॒तः । तु॒रस्य॑ ।
उ॒ग्रम् । उ॒ग्रस्य॑ । त॒वसः॑ । तवी॑यः । अर॑ध्रस्य । र॒ध्र॒ऽतुरः॑ । ब॒भू॒व ॥ ४ ॥

पूर्वमन्त्रे इन्द्रस्य बलसदसद्भावं संदिह्य अनया बलमस्त्येवेत्यवधारयन्नाह । हि यस्मादर्थे । vहि यस्मात् कारणात् हे vसहिष्ठ बलवत्तमेन्द्र vतुविजातस्य बहुयज्ञेषु प्रादुर्भूतस्य vतुरतः अस्मान् हिंसतः vतुरस्य शत्रूणां हिंसितुर्बलवतो वा vते तव vसहः बलं vसदित् विद्यमानमेवाहं vमन्ये । vउग्रस्य ओजस्विनः vतवसः प्रवृद्धस्य vअरध्रस्य शत्रुभिर्वशीकर्तुमशक्यस्य । रधेर्वशीकरणार्थस्य रूपम् । vरध्रतुरः वशीकरणीयानां[3] सपत्नानां हिंसकस्य तव बलं vबभूव भवत्येव । कीदृशम् । vउग्रम् उद्गूर्णं vतवीयः प्रवृद्धतरम् । यतस्त्वं वृत्रादीन् शत्रून् हंसि[4] अतस्ते बलं विद्यत एवेत्यर्थः ॥

तन्नः॑ प्र॒त्नं स॒ख्यम॑स्तु यु॒ष्मे इ॒त्था वद॑द्भिर्व॒लमङ्गि॑रोभिः ।
हन्न॑च्युतच्युद्दस्मे॒षय॑न्तमृ॒णोः पुरो॒ वि दुरो॑ अस्य॒ विश्वाः॑ ॥ ५ ॥

तत् । नः॒ । प्र॒त्नम् । स॒ख्यम् । अ॒स्तु॒ । यु॒ष्मे इति॑ । इ॒त्था । वद॑त्ऽभिः । व॒लम् । अङ्गि॑रःऽभिः ।
हन् । अ॒च्यु॒त॒ऽच्यु॒त् । द॒स्म॒ । इ॒षय॑न्तम् । ऋ॒णोः । पुरः॑ । वि । दुरः॑ । अ॒स्य॒ । विश्वाः॑ ॥५॥

vप्रत्नं पुराणम् । चिरकालानुवर्तीत्यर्थः[5] । vतत् प्रसिद्धं vनः अस्मदीयं vसख्यं स्तुत्यस्तोतृलक्षणं[6] सखित्वं हे इन्द्र vयुष्मे युष्मासु vअस्तु । पूजार्थं बहुवचनम् । हे vअच्युतच्युत् अच्युतानामविचलितानां च्यावक हे vदस्म दर्शनीयेन्द्र त्वम् vइषयन्तम् आयुधानि प्रेरयन्तं vवलम् एतन्नामानमसुरम् vइत्था

---

१. श–पुत्रदारादीन् । २. ङ्ग-त-न-भ-र–त्वद्वीर्यम् । ३. ख-ङ्ग-त-न-भ-र–वशीकरणानाम् । ४. ख-भ–अहंसि; ङ्ग-य–अहिंसः; न–अहिंसी; श–हिंसि । ५. ख–चिरकालं वर्तत इत्यर्थः । ६. ख–स्तोत्रं स्तोत्रलक्षणम् ; ज-ङ्ग-त-न-भ-य-र–स्तोत्रलक्षणम् ।

सत्यमेव Vवदद्भिः त्वां स्तुवद्भिः Vअङ्गिरोभिः सह Vहन् हतवानसि । अपि च Vअस्य वलस्य Vपुरः नगराणि Vवि Vऋणोः व्यगमयः । वियुक्तान्यकार्षीरित्यर्थः । Vविश्वाः सर्वाः Vदुरः पुरीणां द्वारश्च व्यृणोः ॥ ॥ ४ ॥

स हि धीभिर्हव्यो अस्त्युग्र ईशानकृन्महति वृत्रतूर्ये ।
स तोकसाता तनये स वज्री वितन्तसाय्यो अभवत्समत्सु ॥ ६ ॥

सः । हि । धीभिः । हव्यः । अस्ति । उग्रः । ईशानऽकृत् । महति । वृत्रऽतूर्ये ।
सः । तोकऽसाता । तनये । सः । वज्री । वितन्तसाय्यः । अभवत् । समत्ऽसु ॥ ६ ॥

Vउग्रः ओजस्वी Vईशानकृत् । स्तोतॄन् ईशानान् समर्थान् करोतीति ईशानकृत् । Vसः इन्द्रः Vमहति प्रभूते Vवृत्रतूर्ये संग्रामे । वृत्रतूर्य इति संग्रामनामैतत् । Vधीभिः स्तोतृभिः स्तुतिभिर्वा Vहव्यः जयार्थिभिराह्वातव्यः Vअस्ति भवति । हिशब्दः पादपूरणः । Vतोकसाता तोकस्य पुत्रस्य सातौ लाभे निमित्ते Vतनये तत्पुत्रे निमित्ते सति Vसः इन्द्रः आह्वातव्योऽस्ति । Vवज्री वज्रवान् Vसः इन्द्रः Vसमत्सु संग्रामेषु Vवितन्तसाय्यः विशेषेण विस्तार्यः स्तोत्रैर्वन्दनीयः Vअभवत् भवति । यद्वा वितन्तसाय्यः शत्रूणां हिंसकः । तन्तस इति धातुर्हिंसाकर्मा । तस्य कर्तरि रूपम् ॥

स मज्मना जनिम मानुषाणाममर्त्येन नाम्नाति प्र सर्स्रे ।
स द्युम्नेन स शवसोत राया स वीर्येण नृतमः समोकाः ॥ ७ ॥

सः । मज्मना । जनिम । मानुषाणाम् । अमर्त्येन । नाम्ना । अति । प्र । सर्स्रे ।
सः । द्युम्नेन । सः । शवसा । उत । राया । सः । वीर्येण । नृऽतमः । समऽओकाः ॥ ७ ॥

Vसः इन्द्रः Vअमर्त्येन विनाशरहितेन Vनाम्ना शत्रूणां नमयित्रा Vमज्मना बलेन । मज्मनेति बलनामैतत् । Vमानुषाणां मनुष्याणां Vजनिम जन्म । संघमित्यर्थः । Vअति Vप्र Vसर्स्रे अतिप्रपेदे । Vसः इन्द्रः Vद्युम्नेन यशसा Vसमोकाः समानस्थानो भवति । किंच Vसः इन्द्रः Vशवसा बलेन समोका भवति । Vउत अपि च Vनृतमः नेतृतमः Vसः इन्द्रः Vराया धनेन Vवीर्येण सामर्थ्येन च समोका भवति ॥

स यो न मुहे न मिथू जनो भूत्सुमन्तुनामा चुमुरिं धुनिं च ।
वृणक्पिप्रुं शम्बरं शुष्णमिन्द्रः पुरां च्यौत्नाय शयथाय नू चित् ॥ ८ ॥

सः । यः । न । मुहे । न । मिथु । जनः । भूत् । सुमन्तुऽनामा । चुमुरिम् । धुनिम् । च ।
वृणक् । पिप्रुम् । शम्बरम् । शुष्णम् । इन्द्रः । पुराम् । च्यौत्नाय । शयथाय । नु । चित् ॥८॥

Vयः इन्द्रः Vन Vमुहे संग्रामे कदापि न मुह्यति । यश्च Vमिथु मिथ्या वृथा Vजनः जनयिता Vन Vभूत् न भवति किंतु Vसुमन्तुनामा प्रज्ञाननामा[1] । प्रख्यातनामेत्यर्थः । Vसः Vइन्द्रः Vपुरां शत्रु-

1. ख-न-भ–प्रज्ञातनामा; झ–प्रजातनामा ।

संबन्धिनीनां पुरीणां च्यौत्नाय च्यवनाय नाशनाय श्नथाय शत्रूणां मरणाय च नू चित् शीघ्रमेव कर्म कुरुत इति शेषः। तथा चुमुरिं धुनिं च एतन्नामकावसुरौ वृणक् अवृणक् हिंसितवान्। वृणक्तिर्हिंसाकर्मा। अपि च पिप्रुं शम्बरं शुष्णम् एतन्नामकान् त्रीनसुरान् हिंसितवान्॥

उदावता त्वक्षसा पन्यसा च वृत्रहत्याय रथमिन्द्र तिष्ठ।
धिष्व वज्रं हस्त आ दक्षिणत्राभि प्र मन्द पुरुदत्र मायाः॥ ९॥

उत्ऽअवता। त्वक्षसा। पन्यसा। च। वृत्रऽहत्याय। रथम्। इन्द्र। तिष्ठ।
धिष्व। वज्रम्। हस्ते। आ। दक्षिणऽत्रा। अभि। प्र। मन्द। पुरुऽदत्र। मायाः॥ ९॥

हे इन्द्र उदवता उद्गच्छता। अवतिरत्र गतिकर्मा। त्वक्षसा शत्रूणां तनूकर्त्रा पन्यसा स्तुत्यतरेण[1] बलेन युक्तस्त्वं वृत्रहत्याय शत्रुहननाय स्वकीयं रथं च तिष्ठ आरोह। तथा दक्षिणत्रा दक्षिणे[2] हस्ते[2] पाणौ वज्रं स्वकीयमायुधम् आ धिष्व आधत्स्व। तदनन्तरं हे पुरुदत्र बहुधनेन्द्र त्वमासुरीः मायाः अभि अभिगम्य प्र मन्द प्रकर्षेण जहि[3]। अत्र मन्दतिर्वधकर्मा[3]॥

अग्निर्न शुष्कं वनमिन्द्र हेती रक्षो नि धक्ष्यशनिर्न भीमा।
गम्भीरय ऋष्वया यो रुरोजाध्वानयद्दुरिता दम्भयच्च॥ १०॥

अग्निः। न। शुष्कम्। वनम्। इन्द्र। हेतिः। रक्षः। नि। धक्षि। अशनिः। न। भीमा।
गम्भीरया। ऋष्वया। यः। रुरोज। अध्वनयत्। दुःऽइता। दम्भयत्। च॥ १०॥

अग्निर्न अग्निरिव। नशब्द उपमार्थीयः। यथाग्निः शुष्कं नीरसं वनं वृक्षसमूहं दहति हे इन्द्र हेतिः त्वदीयं वज्रं तद्वच्छत्रून् नाशयति। तदेवाह। अशनिर्न भीमा। यथाशनिर्भीमा भवति तद्वद्भयंकरस्त्वं रक्षः राक्षसं नि धक्षि वज्रेण नितरां दह। यः इन्द्रः गम्भीरया शत्रुभिरधर्षणीयया ऋष्वया महत्या। ऋष्व इति महन्नामैतत्। हेत्या रुरोज शत्रून् बभञ्ज। अध्वनयत् युद्धे गर्जनलक्षणं शब्दं करोति च। तथा दुरिता दुरितानि दम्भयच्च भिनत्ति च। स त्वं रक्षो नि धक्षीति पूर्वेणान्वयः॥ ॥ ५॥

आ सहस्रं पथिभिरिन्द्र राया तुविद्युम्न तुविवाजेभिरर्वाक्।
याहि सूनो सहसो यस्य नू चिददेव ईशे पुरुहूत योतोः॥ ११॥

आ। सहस्रम्। पथिऽभिः। इन्द्र। राया। तुविऽद्युम्न। तुविऽवाजेभिः। अर्वाक्।
याहि। सूनो इति। सहसः। यस्य। नु। चित्। अदेवः। ईशे। पुरुऽहूत। योतोः॥ ११॥

हे तुविद्युम्न बहुधन हे सहसः सूनो बलस्य पुत्र इन्द्र। 'ओजसो जातमुत मन्य एनम्' (ऋ. सं. १०. ७३. १०) इति निगमान्तरे बलपुत्रत्वं सिद्धम्[4]। राया धनेन युक्तस्त्वं सहस्रं

---

१. ख-ञ्ञ-न-भ-र-स्तुत्यन्तरेण। २. ख-ञ्ञ-झ-त-न-भ-र-दक्षिणहस्ते; श-दक्षिणहस्तेन। ३. ख-झ-त-न-भ-य-र-गमय (त-'गमय' नास्ति)। अत्र मन्दति(भ-मन्दयति)र्गतिकर्मा। ४. भ-य-प्रसिद्धम्।

सहस्रेण । बहुभिरित्यर्थः । ᵛतुविवाजेभिः बहुबलैः ᵛपथिभिः । पतन्ति गच्छन्त्यमीभिरिति पन्थानो वाहाः । तैः ᵛअर्वाक् मदभिमुखः सन् ᵛआ ᵛयाहि आगच्छ । हे ᵛपुरुहूत बहुभिराहूतेन्द्र ᵛयस्य तव ᵛयोतोः बलादिभिः पृथक्कर्तुं ᵛअदेवः कश्चिदसुरः ᵛनू ᵛचित् ᵛईशे नेष्टे । अत्र नू चिदिति निषेधार्थे वर्तते ॥

**प्र तुविद्युम्नस्य स्थविरस्य घृष्वेर्दिवो ररप्शे महिमा पृथिव्याः ।**
**नास्य शत्रुर्न प्रतिमानमस्ति न प्रतिष्ठिः पुरुमायस्य सह्योः ॥ १२ ॥**

प्र । तुविऽद्युम्नस्य । स्थविरस्य । घृष्वेः । दिवः । ररप्शे । महिमा । पृथिव्याः ।
न । अस्य । शत्रुः । न । प्रतिऽमानम् । अस्ति । न । प्रतिऽस्थिः । पुरुऽमायस्य । सह्योः ॥ १२ ॥

ᵛतुविद्युम्नस्य बहुयशसो बहुधनस्य[1] वा ᵛस्थविरस्य प्रवृद्धस्य ᵛघृष्वेः शत्रूणां घर्षकस्येन्द्रस्य ᵛमहिमा महत्त्वं ᵛदिवः द्युलोकात् ᵛपृथिव्याः भूमेश्च ᵛप्र ᵛररप्शे प्ररिरिचे । विरप्शीति महन्नामसु पाठात् नाम्नां च प्रायेण धातुजन्यत्वात्[2] रप्शतिरत्रातिशयवाची । ᵛपुरुमायस्य बहुप्रज्ञस्य ᵛसह्योः शत्रूणामभिभवितुः ᵛअस्य इन्द्रस्य ᵛशत्रुः शातयिता ᵛन अस्ति । ᵛप्रतिमानं प्रतिनिधिः ᵛन ᵛअस्ति । अस्य ᵛप्रतिष्ठिः प्रतिष्ठाश्रयः ᵛन अस्ति । स एव सर्वस्य प्रतिष्ठेत्यर्थः ॥

**प्र तत्ते अद्या करणं कृतं भूत्कुत्सं यदायुमतिथिग्वमस्मै ।**
**पुरू सहस्रा नि शिशा अभि क्षामुत्तूर्वयाणं धृषता निनेथ ॥ १३ ॥**

प्र । तत् । ते । अद्य । करणम् । कृतम् । भूत् । कुत्सम् । यत् । आयुम् । अतिथिऽग्वम् । अस्मै ।
पुरु । सहस्रा । नि । शिशाः । अभि । क्षाम् । उत् । तूर्वयाणम् । धृषता । निनेथ ॥ १३ ॥

ᵛअद्य इदानीमपि हे इन्द्र ᵛते त्वया ᵛकृतं ᵛकरणं तत्कर्म ᵛप्र ᵛभूत् प्रभवति प्रकाशते । किं तदित्युच्यते । ᵛकुत्सं शुष्णात् राक्षसादेतन्नामानमृषिं च ᵛआयुं शत्रुभ्यः सकाशात् एतत्संज्ञकं पौरूरवसम् ᵛअतिथिग्वम् अतिथीनामभिगन्तारं दिवोदासं च शम्बरात् ररक्षिथेति ᵛयत् करणं ᵛतत् प्रभवतीति पूर्वेण संबन्धः । ररक्षिथेति द्वितीयाश्रुतेरुचितक्रियाध्याहारः । अपि च ᵛअस्मै अनन्तरोक्ताय अतिथिग्वाय ᵛपुरु पुरूणि बहूनि ᵛसहस्रा सहस्राणि शम्बरस्य धनानि ᵛनि ᵛशिशाः अददाः । इन्द्रः शम्बरं हत्वा तस्य धनानि दिवोदासाय ददावित्यर्थः । तथा हे इन्द्र त्वं ᵛधृषता धर्षणेन त्वदीयेन वज्रेण शम्बरं हत्वा ᵛक्षां पृथिवीम् ᵛअभि अभिलक्ष्य पृथिव्यां वर्तमानं ᵛतूर्वयाणं त्वरितगमनं दिवोदासम् ᵛउत् ᵛनिनेथ आपद्भ्य उदगमयः ॥

अनुक्रीनाम्न्येकाहे मरुत्वतीयशस्त्रे 'अनु त्वाहिघ्ने' इति सूक्तमुखीया । सूत्रितं च—'अनु त्वाहिघ्ने अध देव देवा अनु ते दायि मह इन्द्रियाय' ( आश्व. श्रौ. ९. ५ ) इति ॥

---

१. न-बहुबलस्य । २. ज्ञ-त-धातुजत्वात् ।

अनु त्वाहिघ्ने अध देव देवा मदन्विश्वे कवितमं कवीनाम् ।
करो यत्र वरिवो बाधिताय दिवे जनाय तन्वे गृणानः ॥ १४ ॥

अनु । त्वा । अहिऽघ्ने । अध । देव । देवाः । मदन् । विश्वे । कविऽतमम् । कवीनाम् ।
करः । यत्र । वरिवः । बाधिताय । दिवे । जनाय । तन्वे । गृणानः ॥ १४ ॥

हे ᵛदेव द्योतमानेन्द्र ᵛत्वा त्वाम् ᵛअध अस्मिन् काले ᵛविश्वे सर्वे ᵛदेवाः स्तोतारः ᵛअहिघ्ने मेघहननाय । वृष्टिप्रदानायेत्यर्थः । ᵛअनु ᵛमदन् अनुमदन्ति अनुस्तुवन्ति । कीदृशं त्वाम् । ᵛकवीनां मेधाविनां मध्ये ᵛकवितमम् अत्यन्तं कविम् । ᵛयत्र यस्मिन् काले ᵛगृणानः स्तोतृभिः स्तूयमानस्त्वं ᵛबाधिताय दारिद्र्यादिभिः पीडिताय ᵛदिवे स्तोत्रे ᵛजनाय ᵛतन्वे स्तोतॄणां तनयाय च ᵛवरिवः धनं ᵛकरः अकरोः अददाः । अथवा हे देवेन्द्र अधास्मिन् काले विश्वे सर्वे देवाः सुराः । अहिर्वृत्र एवोच्यते । तस्य[1] हननाय कवीनां कवितमं त्वामनुमदन्ति । यत्र यस्मिन् स्तोत्रे सति बाधिताय असुरैः पीडिताय दिवे द्युलोकनिवासाय जनाय तन्वे शोभायै वृत्रहननेन तव शोभार्थं वरिवश्चकर्थ ॥

अनु द्यावापृथिवी तत्त ओजोऽमर्त्या जिहत इन्द्र देवाः ।
कृष्वा कृत्नो अकृतं यत्ते अस्त्युक्थं नवीयो जनयस्व यज्ञैः ॥ १५ ॥

अनु । द्यावापृथिवी इति । तत् । ते । ओजः । अमर्त्याः । जिहते । इन्द्र । देवाः ।
कृष्व । कृत्नो इति । अकृतम् । यत् । ते । अस्ति । उक्थम् । नवीयः । जनयस्व । यज्ञैः ॥ १५ ॥

हे ᵛइन्द्र ᵛते त्वदीयं ᵛतत् प्रसिद्धम् ᵛओजः बलं ᵛद्यावापृथिवी ᵛअनु[2] जिहाते[2] । ᵛअमर्त्याः अमरणधर्माणः ᵛदेवाः त्वदीयं बलमनु ᵛजिहते अनुगच्छन्ति । हे ᵛकृत्नो बहूनां कर्मणां कर्तः ᵛते त्वदीयम् ᵛअकृतं ᵛयत् कर्म ᵛअस्ति तत् ᵛकृष्व कुरुष्व । तदनन्तरं ᵛयज्ञैः यज्ञेषु ᵛनवीयः नवतरम् ᵛउक्थं स्तोत्रं ᵛजनयस्व ॥ ॥ ६ ॥

'महाँ इन्द्रः' इति त्रयोदशर्चं चतुर्थं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । अनुक्रान्तं च—'महान्त्सप्तोना' इति । माध्यंदिने सवने सोमातिरेके[3] शस्त्रं[3] भवति । तत्रेदं सूक्तम् । सूत्रितं च—महाँ इन्द्रो नृवद्विष्णोर्नु कम्' ( आश्व. श्रौ. ६. ७ ) इति । समूळ्हे द्वितीये छन्दोमे मरुत्वतीयशस्त्रे एतत्सूक्तम् । सूत्रितं च—'महाँ इन्द्रो नृवदिति मरुत्वतीयम्' ( आश्व. श्रौ. ८. ७ ) इति ॥

महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।
अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ॥ १ ॥

महान् । इन्द्रः । नृऽवत् । आ । चर्षणिऽप्राः । उत । द्विऽबर्हाः । अमिनः । सहःऽभिः ।
अस्मद्र्यक् । ववृधे । वीर्याय । उरुः । पृथुः । सुऽकृतः । कर्तृऽभिः । भूत् ॥ १ ॥

---

१. ख-झ-न-भ-य—अहिघ्ने तस्य वृत्रस्य । २. ख-घ-ज्ञ-भ—अनुजिहते अनुगच्छतः; झ-त-न—अनुजिहते ।
३. ख-झ-भ-सोमातिरेकं शस्त्रम्; ज्ञ-त-न-र—सोमातिरेके एकं (ज्ञ—एक°) शस्त्रम्; श—सोमातिरेकशस्त्रम् ।

ᵛनृवत् यथा नेता राजा भृत्यादीनां कामानां पूरयिता तद्वत् ᵛचर्षणिप्राः चर्षणीनां स्तोतृजनानां कामानां पूरकः ᵛमहान् प्रभूतः ᵛइन्द्रः ᵛआ गच्छतु । आ इत्युपसर्गदर्शनात् गच्छत्वित्याख्यातस्याध्याहारः । ᵛउत अपि च ᵛद्विबर्हाः द्वयोर्लोकयोः परिवृढः ᵛसहोभिः शत्रुबलैः ᵛअमिनः अहिंसनीयः[1] इन्द्रः ᵛअस्मद्र्यक् अस्मदभिमुखं यथा भवति तथा ᵛवीर्याय वीरकर्मकरणाय ᵛववृधे वर्धते । ᵛउरुः शरीरेण विस्तीर्णः ᵛपृथुः गुणैः प्रथितः ᵛकर्तृभिः यजमानैः ᵛसुकृतः ᵛभूत् सुष्ठु परिचरितो भवति ॥

इन्द्रमेव धिषणा सातये धाद्बृहन्तमृष्वमजरं युवानम् ।
अषाळ्हेन शवसा शूशुवांसं सद्यश्चिद्यो वावृधे असामि ॥ २ ॥

इन्द्रम् । एव । धिषणा । सातये । धात् । बृहन्तम् । ऋष्वम् । अजरम् । युवानम् ।
अषाळ्हेन । शवसा । शूशुऽवांसम् । सद्यः । चित् । यः । ववृधे । असामि ॥ २ ॥

ᵛधिषणा अस्मदीया स्तुतिः ᵛसातये दानाय ᵛइन्द्रमेव ᵛधात् धारयति । कीदृशम् । ᵛबृहन्तं महान्तम् ᵛऋष्वं गन्तारम् ᵛअजरं जरारहितं ᵛयुवानं नित्यतरुणम् ᵛअषाळ्हेन शत्रुभिरनभिभूतेन ᵛशवसा बलेन ᵛशूशुवांसं प्रवृद्धम् । श्वयतेरिदं रूपम् । ᵛयः इन्द्रः ᵛसद्यश्चित् सद्य एव जातमात्रः सन् ᵛअसामि अनल्पमधिकं यथा भवति तथा ᵛववृधे वर्धते[2] ॥

पृथू करस्ना बहुला गभस्ती अस्मद्र्य१क्सं मिमीहि श्रवांसि ।
यूथेव पश्वः पशुपा दमूना अस्माँ इन्द्राभ्या ववृत्स्वाजौ ॥ ३ ॥

पृथू इति । करस्ना । बहुला । गभस्ती इति । अस्मद्र्यक् । सम् । मिमीहि । श्रवांसि ।
यूथाऽइव । पश्वः । पशुऽपाः । दमूनाः ।
अस्मान् । इन्द्र । अभि । आ । ववृत्स्व । आजौ ॥ ३ ॥

हे इन्द्र त्वं ᵛपृथू विस्तीर्णौ ᵛकरस्ना[3] कर्मणां कर्तारौ ᵛबहुला बहुप्रदौ ᵛगभस्ती त्वदीयौ बाहू ᵛश्रवांसि अन्नानि । दातुमिति शेषः । ᵛअस्मद्र्यक् अस्मदभिमुखं ᵛसं ᵛमिमीहि कुरु । किंच हे ᵛइन्द्र ᵛदमूनाः दान्तमनास्त्वम् ᵛआजौ संग्रामे ᵛअस्मान् ᵛअभि ᵛआ ᵛववृत्स्व अभ्यावर्तस्व । तत्र दृष्टान्तः । ᵛपशुपाः पशूनां पालकः ᵛपश्वः पशूनां ᵛयूथेव यूथानि यथा आवर्तयति[4] तद्वत् ॥

तं व इन्द्रं चतिनमस्य शाकैरिह नूनं वाजयन्तो हुवेम ।
यथा चित्पूर्वे जरितार आसुरनेद्या अनवद्या अरिष्टाः ॥ ४ ॥

तम् । वः । इन्द्रम् । चतिनम् । अस्य । शाकैः । इह । नूनम् । वाजऽयन्तः । हुवेम ।
यथा । चित् । पूर्वे । जरितारः । आसुः । अनेद्याः । अनवद्याः । अरिष्टाः ॥ ४ ॥

---

१. घ-श—अहिंसितः यः । २. ख-भ—अवर्धयत्; ज्ञ—अवर्धत; ज्ञ-त-न-य-र—अवर्धयत; श—वर्धयते । ३. ख-घ-भ—करस्ना कारनौ; श—करस्नौ । ४. ज्ञ-त-य-र—आववृत्स्व; न—आववृत्स्वति ।

ᵛनूनम् अद्य ᵛइह अस्मिन् यज्ञे ᵛवाजयन्तः अन्नमिच्छन्तो वयं स्तोतारः ᵛशाकैः शक्तैः समर्थैः ᵛअस्य तव सहायैर्मरुद्भिः सहितं ᵛघनिनं शत्रूणां घातकम् । नाशकमित्यर्थः । ᵛइन्द्रं[1] परमेश्वरं[1] ᵛतं ᵛवः प्रसिद्धं त्वां ᵛहुवेम स्तुमः । ᵛयथा ᵛचित् यथैव ᵛपूर्वे पुरातनाः ᵛजरितारः स्तोतारः ᵛअनेद्याः अनिन्द्याः ᵛअनवद्याः पापरहिताः ᵛअरिष्टाः अहिंसिताश्च ᵛआसुः बभूवुः हे इन्द्र त्वत्प्रसादात् वयमपि तथैव भवेमेत्यर्थः ॥

धृतव्र॑तो धन॒दाः सोम॑वृद्धः॒ स हि वा॒मस्य॒ वसु॑नः पुरु॒क्षुः ।
सं ज॑ग्मिरे प॒थ्या॒३॒ रायो॑ अस्मि॑न्त्समु॒द्रे न सिन्ध॑वो॒ याद॑मानाः ॥ ५ ॥

धृत॒ऽव्र॑तः । ध॒न॒ऽदाः । सोम॑ऽवृद्धः । सः । हि । वा॒मस्य॑ । वसु॑नः । पु॒रु॒ऽक्षुः ।
सम् । ज॒ग्मि॒रे॒ । प॒थ्याः॑ । रायः॑ । अ॒स्मि॒न् । स॒मु॒द्रे । न । सिन्ध॑वः । याद॑मानाः ॥ ५ ॥

ᵛस ᵛहि स खलु इन्द्रः ᵛधृतव्रतः धृतकर्मा । ᵛधनदाः स एव धनप्रदः । कीदृशस्य धनस्येत्याकाङ्क्षायामुपसर्जनीभूतस्यापि धनस्य विशेषणे[2] वामस्य वसुन इति । ᵛवामस्य वननीयस्य ᵛवसुनः श्रेष्ठस्य । यद्वा वसुनो धनस्य स्वामीति शेषः। ᵛसोमवृद्धः स एव सोमेन प्रवृद्धः । ᵛपुरुक्षुः बहून्नः स एव । ᵛअस्मिन् इन्द्रे एव ᵛपथ्याः स्तोतॄणां हितानि ᵛरायः धनानि ᵛसं ᵛजग्मिरे संगच्छन्ते । तत्र दृष्टान्तः । ᵛसिन्धवः नद्यः ᵛसमुद्रे ᵛन यथा समुद्रे ᵛयादमानाः[3] अभिगच्छन्त्यस्तद्वत् ॥ ॥ ७ ॥

शवि॑ष्ठं न॒ आ भ॑र शूर॒ शव॒ ओजि॑ष्ठमोजो॑ अभिभूत उ॒ग्रम् ।
विश्वा॑ द्यु॒म्ना वृष्ण्या॒ मानु॑षाणाम॒स्मभ्यं॑ दा हरिवो माद॒यध्यै॑ ॥ ६ ॥

शवि॑ष्ठम् । न॒ः । आ । भ॒र॒ । शू॒र॒ । शव॑ः । ओजि॑ष्ठम् । ओजः॑ । अ॒भि॒ऽभू॒ते॒ । उ॒ग्रम् ।
विश्वा॑ । द्यु॒म्ना । वृष्ण्या॑ । मानु॑षाणाम् । अ॒स्मभ्य॑म् । दा॒ः । ह॒रि॒ऽवः॒ । मा॒द॒यध्यै॑ ॥ ६ ॥

हे ᵛशूर विक्रान्तेन्द्र ᵛशविष्ठं बलवत्तमं ᵛशवः बलं ᵛनः अस्मभ्यम् ᵛआ ᵛभर आहर । हे ᵛअभिभूते शत्रूणामभिभावुकेन्द्र ᵛउग्रम् अप्रसह्यम् ᵛओजिष्ठम् ओजस्वितमम्[4] ᵛओजः दीप्तिमस्मभ्यमा भर । ᵛविश्वा विश्वानि सर्वाणि ᵛवृष्ण्या वृष्ण्यानि सेचनसमर्थानि ᵛद्युम्ना द्युम्नानि द्योतमानानि यानि धनानि ᵛमानुषाणां मनुष्याणां भोग्यतया कल्पितानि हे ᵛहरिवः हरिवन्निन्द्र तानि धनानि ᵛमादयध्यै अस्मान् मादयितुम् ᵛअस्मभ्यं ᵛदाः प्रयच्छ ॥

यस्ते॒ मदः॑ पृतना॒षाळमृ॑ध्र॒ इन्द्र॒ तं न॒ आ भ॑र शूशु॒वांस॑म् ।
येन॑ तो॒कस्य॒ तन॑यस्य सा॒तौ मं॑सी॒महि॑ जिगी॒वांस॒स्त्वोताः॑ ॥ ७ ॥

यः । ते॒ । मदः॑ । पृ॒त॒ना॒षाट् । अमृ॑ध्रः । इन्द्र॑ । तम् । न॒ः । आ । भ॒र॒ । शू॒शु॒ऽवांस॑म् ।
येन॑ । तो॒कस्य॑ । तन॑यस्य । सा॒तौ । मं॒सी॒महि॑ । जि॒गी॒वांसः॑ । त्वाऽऊ॑ताः ॥ ७ ॥

---

१. ख१-ञ-हे इन्द्र परमेश्वर; घ-तमिन्द्रं परमेश्वरम् ; ज-झ-ण-त-न-भ-र-हे इन्द्र परमेश्वरम् । २. ख-भ-श-विशेषणम् । ३. ख-झ-न-भ-य-यादमानाः यातयमानाः; त-र-यातयमानाः । ४. ख-ञ-झ-त-न-भ-र-ओजस्तमम्; श-ओजस्विनम् ।

ᵛपृतनाषाट् शत्रुसेनानामभिभविता ᵛअमृध्रः अहिंसितः ᵛयः ᵛमदः हर्षः हे ᵛइन्द्र ᵛते त्वया देयः ᵛशूशुवांसं प्रवृद्धं ᵛतं मदं ᵛनः अस्मभ्यम् ᵛआ ᵛभर आहर। ᵛत्वोताः त्वया रक्षिताः ᵛजिगीवांसः जितवन्तो वयं ᵛतोकस्य पुत्रस्य ᵛतनयस्य तत्पुत्रस्य च ᵛसातौ लाभे निमित्तभूते सति ᵛयेन हर्षेण ᵛमंसीमहि त्वां स्तुवीमहि तमा भरेति पूर्वेणान्वयः ॥

आ नो भर वृषणं शुष्ममिन्द्र धनस्पृतं शूशुवांसं सुदक्षम्।
येन वंसाम पृतनासु शत्रून्तवोतिभिरुत जामीँरजामीन् ॥ ८ ॥

आ। नः। भर। वृषणम्। शुष्मम्। इन्द्र। धनऽस्पृतम्। शूशुऽवांसम्। सुऽदक्षम्।
येन। वंसाम। पृतनासु। शत्रून्। तव। ऊतिऽभिः। उत। जामीन्। अजामीन् ॥ ८ ॥

हे ᵛइन्द्र त्वं ᵛवृषणं वर्षितारं ᵛशुष्मं सेनालक्षणं बलं ᵛनः अस्मभ्यम् ᵛआ ᵛभर आहर। कीदृशम्। ᵛधनस्पृतं धनस्य पालकं ᵛशूशुवांसं प्रवृद्धं ᵛसुदक्षं शोभनबलम्। हे इन्द्र ᵛतवोतिभिः त्वदीयाभी रक्षाभिः ᵛपृतनासु संग्रामेषु। पृतना इति संग्रामनाम। ᵛयेन बलेन ᵛशत्रून् ᵛवंसाम हनाम[1]। उतेत्यत्र भिन्नक्रमः। ᵛजामीन् बन्धून् ᵛउत अपि च ᵛअजामीन् शत्रूंश्च येन शुष्मेण वंसाम तं शुष्ममा भरेति पूर्वेण संबन्धः ॥

आ ते शुष्मो वृषभ एतु पश्चादोत्तरादधरादा पुरस्तात्।
आ विश्वतो अभि समेत्वर्वाङिन्द्र द्युम्नं स्वर्वद्धेह्यस्मे ॥ ९ ॥

आ। ते। शुष्मः। वृषभः। एतु। पश्चात्। आ। उत्तरात्। अधरात्। आ। पुरस्तात्।
आ। विश्वतः। अभि। सम्। एतु। अर्वाङ्। इन्द्र। द्युम्नम्। स्वःऽवत्। धेहि। अस्मे इति ॥ ९॥

हे इन्द्र ᵛवृषभः वर्षिता ᵛते त्वदीयं ᵛशुष्मः बलम् ᵛअर्वाङ् अस्मदभिमुखः सन् ᵛपश्चात् पश्चिमभागात् ᵛआ ᵛएतु आगच्छतु। ᵛउत्तरात् उत्तरभागात् ᵛआ गच्छतु। ᵛअधरात् दक्षिणभागाचैतु। ᵛपुरस्तात् पूर्वभागाच्च ᵛआ गच्छतु। ᵛविश्वतः सर्वस्माद्दिग्भागात् ᵛअभि अस्मानभिलक्ष्य ᵛआ ᵛसमेतु सम्यगागच्छतु। हे ᵛइन्द्र त्वं ᵛस्वर्वत् सुखयुक्तं ᵛद्युम्नं धनम् ᵛअस्मे अस्मभ्यं ᵛधेहि प्रयच्छ ॥

नृवत्त इन्द्र नृतमाभिरूती वंसीमहि वामं श्रोमतेभिः।
ईक्षे हि वस्व उभयस्य राजन्धा रत्नं महि स्थूरं बृहन्तम् ॥ १० ॥

नृऽवत्। ते। इन्द्र। नृऽतमाभिः। ऊती। वंसीमहि। वामम्। श्रोमतेभिः।
ईक्षे। हि। वस्वः। उभयस्य। राजन्। धाः। रत्नम्। महि। स्थूरम्। बृहन्तम् ॥ १०

ᵛनृवत् मनुष्यैः परिचारकजनैर्युक्तं ᵛश्रोमतेभिः श्रोतव्यैर्यशोभिः सहितं ᵛवामं वननीयं धनं हे ᵛइन्द्र ᵛते त्वत्तः ᵛनृतमाभिः नेतृतमाभिः ᵛऊती ऊतिभी रक्षाभिः ᵛवंसीमहि वयं संभजेमहि। ᵛहि यस्मात् कारणात् हे ᵛराजन् राजमानेन्द्र त्वम् ᵛउभयस्य पार्थिवस्य दिव्यस्य च ᵛवस्वः धनस्य

---

१. ख-झ-त-न-भ-र-‘ हनाम ’ नास्ति।

ईक्षे ईशिषे तस्मात् कारणात् महि महान्तं स्थूरं विपुलं बृहन्तं गुणैः परिवृढं रत्नं रमणीयं धनम्। अत्र रत्नशब्दः पुंलिङ्गः। धाः धेहि ॥

मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यं शासमिन्द्रम्।
विश्वासाहमवसे नूतनायोग्रं सहोदामिह तं हुवेम ॥ ११ ॥

मरुत्वन्तम्। वृषभम्। ववृधानम्। अकवऽअरिम्। दिव्यम्। शासम्। इन्द्रम्।
विश्वऽसहम्। अवसे। नूतनाय। उग्रम्। सहःऽदाम्। इह। तम्। हुवेम ॥ ११ ॥

इह अस्मिन् यज्ञे नूतनाय अभिनवाय अवसे रक्षणाय तं प्रसिद्धम् इन्द्रं हुवेम स्तुमः। आह्वयामो वा। कीदृशम्। मरुत्वन्तं मरुद्भिर्युक्तं वृषभं कामानां वर्षितारं ववृधानं प्रवृद्धम् अकवारिम् अकुत्सितशत्रुं दिव्यं द्योतमानं शासं शासितारं विश्वसहं[1] विश्वस्य लोकस्य अभिभवितारम् उग्रम् ओजस्विनं सहोदां बलप्रदम् ॥

जनं वज्रिन्महि चिन्मन्यमानमेभ्यो नृभ्यो रन्धया येष्वस्मि।
अधा हि त्वा पृथिव्यां शूरसातौ हवामहे तनये गोष्वप्सु ॥ १२ ॥

जनम्। वज्रिन्। महि। चित्। मन्यमानम्। एभ्यः। नृऽभ्यः। रन्धय। येषु। अस्मि।
अध। हि। त्वा। पृथिव्याम्। शूरऽसातौ। हवामहे। तनये। गोषु। अप्ऽसु ॥ १२ ॥

येषु येषां नृणां मध्येऽहम् अस्मि एको भवामि हे वज्रिन् वज्रवन् इन्द्र त्वम् एभ्यो नृभ्यः मनुष्येभ्यः महि महदत्यन्तमात्मानं मन्यमानं जनम्। बहुमन्यमानमित्यर्थः। रन्धय वशीकुरु। चिन् इति पादपूरणः। अध अधुना पृथिव्यां भूम्यां शूरसातौ युद्धे प्रवृत्ते सति तनये पुत्रे निमित्ते च गोषु पशुषु अप्सु उदकेषु च निमित्तेषु हे इन्द्र त्वा द्युलोके स्थितं त्वां हवामहे वयमाह्वयामः ॥

वयं त एभिः पुरुहूत सख्यैः शत्रोःशत्रोरुत्तर इत्स्याम।
घ्नन्तो वृत्राण्युभयानि शूर राया मदेम बृहता त्वोताः ॥ १३ ॥

वयम्। ते। एभिः। पुरुऽहूत। सख्यैः। शत्रोःऽशत्रोः। उत्ऽतरे। इत्। स्याम।
घ्नन्तः। वृत्राणि। उभयानि। शूर। राया। मदेम। बृहता। त्वाऽऊताः ॥ १३ ॥

हे पुरुहूत बहुभिराहूतेन्द्र एभिः प्रसिद्धैः सख्यैः स्तोत्रलक्षणैः सखिकर्मभिः ते त्वया सह वयम् उभयानि जामिरूपाण्यजामिरूपाणि वृत्राणि अमित्राणि घ्नन्तः हिंसन्तः शत्रोःशत्रोः सर्वस्माच्छत्रोः उत्तरे इत् स्याम अधिका एव भवेम। हे शूर विक्रान्तेन्द्र त्वोताः वयं त्वया रक्षिताः सन्तः बृहता महता राया धनेन मदेम हृष्याम[2] ॥ ॥ ८ ॥

'द्यौर्न य इन्द्र' इति त्रयोदशर्चं पञ्चमं सूक्तं भरद्वाजस्यार्षमैन्द्रं त्रैष्टुभम्। 'वि पिप्रोः' इत्येषा सप्तमी दशाक्षरचतुष्टययुक्ता[3] विराट्। अनुक्रम्यते च—'द्यौर्न वि पिप्रोर्विराट्' इति। पृष्ठ्य-

---

१. श–विश्वासाहम्। २. झ-र–हृष्यास्म। ३. ख-भ–दशकचतुष्टय°; झ-ञ-त-न-र–दशचतुष्टय°।

षडहस्य षष्ठेऽहनि तृतीयसवने उक्थ्यस्तोत्राणि यदि द्विपदासु स्तुवीरन् यदि वाग्निष्टोमसंस्थः स्यात् तदानीं माध्यंदिने सवनेऽच्छावाकः स्वशस्त्र आरम्भणीयाभ्य ऊर्ध्वमेतत्सूक्तं शंसेत् । सूत्रितं च—' द्यौर्न य इन्द्रेत्यच्छावाकः ' ( आश्व. श्रौ. ८. ४ ) इति । इदमेव सूक्तम् इन्द्राविष्णवोरुत्क्रान्तिनाम्न्येकाहे निष्केवल्यनिविद्धानम् । ' द्यौर्न य इन्द्रेति मध्यंदिनः ' ( आश्व, श्रौ. ९. ७ ) इति ॥

द्यौर्न य इन्द्राभि भूमार्यस्तस्थौ रयिः शवसा पृत्सु जनान् ।
तं नः सहस्रभरमुर्वरासां दद्धि सूनो सहसो वृत्रतुरम् ॥ १ ॥

द्यौः । न । यः । इन्द्र । अभि । भूम । अर्यः । तस्थौ । रयिः । शवसा । पृत्ऽसु । जनान् ।
तम् । नः । सहस्रऽभरम् । उर्वराऽसाम् । दद्धि । सूनो इति । सहसः । वृत्रऽतुरम् ॥ १ ॥

यः रयिः पुत्ररूपं धनं शवसा बलेन पृत्सु संग्रामेषु अर्यः अरीन् शत्रून् जनान् अभि तस्थौ आक्रामेत्[1] । तत्र दृष्टान्तः। द्यौर्न । द्योतमानः सूर्यो यथा भूम भूतानि आक्रामति[2] तद्वत् । हे सहसः सूनो बलस्य पुत्र इन्द्र त्वं तं पुत्रं नः अस्मभ्यं दद्धि देहि । कीदृशम् । सहस्रभरं सहस्रस्य धनस्य भर्तारम् उर्वरासाम् उर्वराणां सस्याढ्यानां भूमीनां सनितारं संभक्तारं वृत्रतुरं वृत्राणां शत्रूणां तरितारं तुर्वितारं वा ॥

दिवो न तुभ्यमन्विन्द्र सत्रासुर्यं देवेभिर्धायि विश्वम् ।
अहिं यद्वृत्रमपो वव्रिवांसं हन्नृजीषिन्विष्णुना सचानः ॥ २ ॥

दिवः । न । तुभ्यम् । अनु । इन्द्र । सत्रा । असुर्यम् । देवेभिः । धायि । विश्वम् ।
अहिम् । यत् । वृत्रम् । अपः । वव्रिऽवांसम् । हन् । ऋजीषिन् । विष्णुना । सचानः ॥२॥

दिवो न दिवे सूर्यायेव हे इन्द्र तुभ्यं सत्रा सत्यमेव विश्वं व्याप्तम् असुर्यम् असुरत्वं बलं देवेभिः देवैः स्तोतृभिः अनु धायि व्यधायि । अकारि । स्तोत्रैः स्तूयमाना देवता बलवती भवतीत्यर्थः । हे ऋजीषिन् विगतरससोमेन्द्र विष्णुना सचानः संगच्छमानस्त्वम् । ' षच समवाये ' इति धातो रूपम् । यत् येनासुर्येण अपः उदकानि वव्रिवांसं परिवृण्वन्तम् अहिम् आगत्य हन्तारं वृत्रम् असुरं हन् अहन् अवधीः तद्बलं व्यधार्यीति पूर्वेण संबन्धः ॥

तूर्वन्नोजीयान्तवसस्तवीयान्कृतब्रह्मेन्द्रो वृद्धमहाः ।
राजाभवन्मधुनः सोम्यस्य विश्वासां यत्पुरां दर्त्नुमावत् ॥ ३ ॥

तूर्वन् । ओजीयान् । तवसः । तवीयान् । कृतऽब्रह्मा । इन्द्रः । वृद्धऽमहाः ।
राजा । अभवत् । मधुनः । सोम्यस्य । विश्वासाम् । यत् । पुराम् । दर्त्नुम् । आवत् ॥ ३ ॥

यत् यदा इन्द्रः विश्वासां सर्वासां पुरां पुरीणां[3] दर्त्नुं दारकं वज्रम् आवत् प्रापत् तदा सोम्यस्य सोममयस्य मधुनः मधुररसस्य[4] राजा अभवत् स्वामी आसीत् । कीदृशः । तूर्वन्

---

१. ख-न-भ–आक्रमेत्; ज्ञ–आक्रम्यते। २. ख-ज्ञ-त-न-र–आक्रमति; घ–अतिक्रामति। ३. ज्ञ-त–असुरपुरीणाम्। ४. ख-ज्ञ-न-भ–मधुरस्य; ज्ञ-त-र–मधुरसस्य।

हिंसकान् हिंसन् ˅ओजीयान् अतिशयेनौजस्वी ˅तवसः बलवतः ˅तवीयान् बलवत्तरः ˅कृतब्रह्मा । कृतं ब्रह्म स्तोत्रं यस्मै स्तोतृभिः सः । अथवा कृतं दत्तं ब्रह्म अन्नं येन स्तोतृभ्यः सः । ˅वृद्धमहाः वृद्धतेजाः[1] । एवंभूत इन्द्रो राजाभवदिति ॥

शतैरपद्रन्पणय इन्द्रात्र दशोणये कवयेऽर्कसातौ ।
वधैः शुष्णस्याशुषस्य मायाः पित्वो नारिरेचीत्किं चन प्र ॥ ४ ॥

शतैः । अपद्रन् । पणयः । इन्द्र । अत्र । दशऽओणये । कवये । अर्कऽसातौ ।
वधैः । शुष्णस्य । अशुषस्य । मायाः । पित्वः । न । अरिरेचीत् । किम् । चन । प्र ॥ ४ ॥

˅अत्र अस्मिन् ˅अर्कसातौ । अर्कोऽन्नं प्राप्यतेऽस्मिन्नित्यर्कसातिर्युद्धम् । तस्मिन् ˅दशोणये[2] बहुहविष्कात्[3] ˅कवये मेधाविनः । पञ्चम्यर्थे चतुर्थी । हे ˅इन्द्र त्वत्सहायात् कुत्सात् बिभ्यतः ˅पणयः एतन्नामकासुराः ˅शतैः शतसंख्याकैः बलैः सार्धम् ˅अपद्रन् अपाद्रवन्[4] । अपलायन्त । अपि चेन्द्रः ˅अशुषस्य अशुष्कस्य । संपूर्णबलस्येत्यर्थः । ˅शुष्णस्य एतन्नामकासुरस्य कुत्सस्य[5] शत्रोः ˅मायाः कपटान् ˅वधैः हननसाधनैरायुधैः ˅न ˅प्र ˅अरिरेचीत् प्ररिक्तानतिरिक्तान्नाकरोत् । ˅पित्वः अन्नस्य । पितुरित्यन्ननामैतत् । ˅किं ˅चन किंचिदपि न प्रारिरेचीत् । तदीयमन्नं सर्वमप्यपाहारयत् ॥

महो द्रुहो अप विश्वायु धायि वज्रस्य यत्पतने पादि शुष्णः ।
उरु ष सरथं सारथये करिन्द्रः कुत्साय सूर्यस्य सातौ ॥ ५ ॥

महः । द्रुहः । अप । विश्वऽआयु । धायि । वज्रस्य । यत् । पतने । पादि । शुष्णः ।
उरु । सः । सऽरथम् । सारथये । कः । इन्द्रः । कुत्साय । सूर्यस्य । सातौ ॥ ५ ॥

˅यत् यदा सः[6] ˅शुष्णः असुरः ˅वज्रस्य ˅पतने पाते ˅पादि अगच्छत् । अम्रियतेत्यर्थः । तदा ˅महः महतः ˅द्रुहः द्रोग्धुः शुष्णस्य संबन्धि ˅विश्वायु सर्वगतम् । बलमिति शेषः । ˅अप ˅धायि अपहितमकारि[7] । निरस्कृतमित्यर्थः । ˅सः ˅इन्द्रः ˅सारथये सारथिभूताय ˅कुत्साय ˅सरथं समानरथं ˅सूर्यस्य ˅सातौ भजने निमित्तभूते ˅उरु विस्तीर्णं यथा भवति तथा ˅कः अकरोत् । तथा चोक्तं—'कुत्सायेन्द्रोऽसुरं शुष्णं जिघांसुः कुत्समात्मनः । सारथिं कल्पयित्वास्य शत्रुं शुष्णमहंस्ततः । कुत्सस्य रक्षां बहुलां चकारेत्यनयोच्यते ' इति ॥ ॥ ९ ॥

प्र श्येनो न मदिरमंशुमस्मै शिरो दासस्य नमुचेर्मथायन् ।
प्रावन्नमीं साप्यं ससन्तं पृणग्राया समिषा सं स्वस्ति ॥ ६ ॥

प्र । श्येनः । न । मदिरम् । अंशुम् । अस्मै । शिरः । दासस्य । नमुचेः । मथायन् ।
प्र । आवत् । नमीम् । साप्यम् । ससन्तम् । पृणक् । राया । सम् । इषा । सम् । स्वस्ति ॥ ६ ॥

---

१. ख-झ-न-भ-य–प्रवृद्धतेजाः । २. श–दशोणये । अवतेस्तर्पणार्थात् छान्दसो णिः । ३. ख-झ-भ–°हविष्मतः; न–°हविष्येतत् । ४. ख-झ-न-भ-र–अपद्रवन्; ज्ञ-त–'अपाद्रवन्' नास्ति । ५. ख-झ-झ-त-न-भ-य-र–'कुत्सस्य' नास्ति । ६. ज्ञ-त–'सः' नास्ति । ७. ख-ञ-न-भ-र-°मपकारि ।

vश्येनः सुपर्णश्च । vन[1] इत्ययं शब्दः[1] समुच्चये वर्तते । vअस्मै इन्द्राय vमदिरं मदकरम् vअंशुं सोमम् । vप्र इति आ इत्यस्यार्थे वर्तते । आहरत् । उपसर्गदर्शनादाख्यातमध्याह्रियते । किंचायमिन्द्रोऽपि vदासस्य प्राणिनामुपक्षपयितुः vनमुचेः एतन्नाम्नोऽसुरस्य vशिरः शीर्षं vमथायन् मन्थनं कुर्वन् vसाप्यं सपस्य पुत्रं vससन्तं स्वपन्तं vनमीम् एतत्संज्ञकमृषिं vप्रावत् प्रारक्षत् । vस्वस्ति अविनाशेन vराया पश्वादिधनेन vइषा अन्नेन च तमृषिं vसं vपृणक् समयोजयत् ॥

वि पिप्रोरहिमायस्य दृळ्हाः पुरो वज्रिञ्छवसा न दर्दः ।
सुदामन्तद्रेक्णो अप्रमृष्यमृजिश्वने दात्रं दाशुषे दाः ॥ ७ ॥

वि । पिप्रोः । अहिऽमायस्य । दृळ्हाः । पुरः । वज्रिन् । शवसा । न । दर्दरिति दर्दः ।
सुऽदामन् । तत् । रेक्णः । अप्रऽमृष्यम् । ऋजिश्वने । दात्रम् । दाशुषे । दाः ॥ ७ ॥

हे vवज्रिन् वज्रवन्निन्द्र त्वम् vअहिमायस्य आहन्त्र्यो माया यस्य[2] vपिप्रोः एतन्नाम्नोऽसुरस्य संबन्धिनीः vदृळ्हाः दृढानि vपुरः प्राकारादीनि दुर्गाणि vशवसा बलेन vवि vदर्दः विदारितवानसि । vन इति पादपूरणः । 'त्वं पिप्रोर्नृमणः प्रारुजः पुरः' (ऋ. सं. १. ५१. ५); 'शतं पूर्भिरायसीभिर्नि पाहि' (ऋ. सं. ७. ३. ७) इति दर्शनात् । अपि च हे vसुदामन् शोभनदानेन्द्र त्वं vदात्रं हविर्लक्षणं धनं vदाशुषे दत्तवते vऋजिश्वने एतन्नामकाय राजर्षये vअप्रमृष्यं केनाप्यबाध्यं vतत् तस्य स्वभूतं vरेक्णः धनं vदाः अदाः दत्तवानसि ॥

स वैतसुं दशमायं दशोणिं तूतुजिमिन्द्रः स्वभिष्टिसुम्नः ।
आ तुग्रं शश्वदिभं द्योतनाय मातुर्न सीमुप सृजा इयध्यै ॥ ८ ॥

सः । वेतसुम् । दशऽमायम् । दशऽओणिम् । तूतुजिम् । इन्द्रः । स्वभिष्टिऽसुम्नः ।
आ । तुग्रम् । शश्वत् । इभम् । द्योतनाय । मातुः । न । सीम् । उप । सृज । इयध्यै ॥ ८ ॥

vस्वभिष्टिसुम्नः सुष्ठु अभ्येषणीयान्यभिगम्यानि सुम्नानि सुखानि येन देयानि vसः vइन्द्रः vदशमायं बहुवञ्चनं[3] vवेतसुं वेतसुनामानमसुरं vदशोणिम् एतन्नामकं च vतूतुजिं तूतुजिनामकं च vआ अपि च vतुग्रं तुग्रनामकमसुरं तथा vइभम् एतन्नामकमसुरं च vइयध्यै एतुं vद्योतनाय एतत्संज्ञाय राज्ञे vशश्वत vउप vसृज उपासृजत् । वशीचकार । तत्र दृष्टान्तः । vमातुर्न मातुर्जनन्या इव पुत्रम् । यथा मात्रे पुत्रो[4] वशीभवति[4] तद्वत् वशं चकारेत्यर्थः । vसीम् इति पादपूरणः ॥

स ईं स्पृधो वनते अप्रतीतो बिभ्रद्वज्रं वृत्रहणं गभस्तौ ।
तिष्ठद्धरी अध्यस्तेव गर्ते वचोयुजा वहत इन्द्रमृष्वम् ॥ ९ ॥

सः । ईम् । स्पृधः । वनते । अप्रतिऽइतः । बिभ्रत् । वज्रम् । वृत्रऽहनम् । गभस्तौ ।
तिष्ठत् । हरी इति । अधि । अस्ताऽइव । गर्ते । वचःऽयुजा । वहतः । इन्द्रम् । ऋष्वम् ॥ ९ ॥

---

१. भ–नशब्दः; श–अत्र नञ्शब्दः । २. झ–यस्य तस्य । ३. ख-घ-त-न-श–°वचनम् । ४. त–पुत्रा वशीभवन्ति ।

ᵛगभस्तौ हस्ते ᵛवृत्रहणं वृत्राणां शत्रूणां हन्तारं ᵛवज्रं स्वकीयमायुधं ᵛबिभ्रत् धारयन् ᵛअप्रतीतः शत्रुभिरप्रतिगतः ᵛसः इन्द्रः ᵛस्पृधः स्पर्धमानान् ᵛईम् इमान् वृत्रप्रभृतीन् शत्रून् ᵛघनते हन्ति। ᵛहरी स्वकीयावश्वौ ᵛअधि ᵛतिष्ठत् आरोहति । तत्र दृष्टान्तः । ᵛअस्तेव ᵛगर्ते । यथा क्षेप्ता शूरो रथेऽधितिष्ठति तद्वत् । तथा ᵛवचोयुजा वचोमात्रेण[१] युज्यमानौ । यद्वा । स्तोतॄणां स्तुतिभिर्युज्यमानौ तौ हरी च ᵛऋष्वं महान्तम् ᵛइन्द्रं ᵛवहतः ॥

सनेम तेऽवसा नव्य इन्द्र प्र पूरवः स्तवन्त एना यज्ञैः ।
सप्त यत्पुरः शर्म शारदीर्दर्द्धन्दासीः पुरुकुत्साय शिक्षन् ॥ १० ॥

सनेम । ते । अवसा । नव्यः । इन्द्र । प्र । पूरवः । स्तवन्ते । एना । यज्ञैः ।
सप्त । यत् । पुरः । शर्म । शारदीः । दर्त् । हन् । दासीः । पुरुऽकुत्साय । शिक्षन् ॥ १० ॥

हे ᵛइन्द्र ᵛते त्वदीयेन ᵛअवसा रक्षणेन ᵛनव्यः नवीयः नवतरं त्वया दीयमानं धनं ᵛसनेम वयं स्तोतारो भजेमहि । ᵛपूरवः मनुष्याः स्तोतारः ᵛएना अनेन[२] स्तोत्रेण युक्तैः ᵛयज्ञैः ᵛप्र ᵛस्तवन्ते त्वां स्तुवन्ति । ᵛयत् यस्मात् कारणात् ᵛदासीः कर्मणामुपक्षपयित्रीः शत्रुप्रजाः ᵛहन् घ्नन् हिंसन् ᵛपुरुकुत्साय एतन्नामकाय राज्ञे ᵛशिक्षन् धनानि प्रयच्छन् हे इन्द्र त्वं ᵛशारदीः शरन्नाम्नोऽसुरस्य संबन्धिनीः ᵛसप्त सप्तसंख्याकाः ᵛपुरः पुरीः ᵛशर्म शर्मणा वज्रेण ᵛदर्त् विदारितवानसि तस्मात् कारणात् त्वां स्तोतारः स्तुवन्तीत्यर्थः ॥

त्वं वृध इन्द्र पूर्व्यो भूर्वरिवस्यन्नुशने काव्याय ।
परा नववास्त्वमनुदेयं महे पित्रे ददाथ स्वं नपातम् ॥ ११ ॥

त्वम् । वृधः । इन्द्र । पूर्व्यः । भूः । वरिवस्यन् । उशने । काव्याय ।
परा । नवऽवास्त्वम् । अनुऽदेयम् । महे । पित्रे । ददाथ । स्वम् । नपातम् ॥ ११ ॥

हे ᵛइन्द्र ᵛपूर्व्यः पुरातनः ᵛत्वं ᵛकाव्याय कविपुत्राय ᵛउशने उशनसे भार्गवाय ᵛवरिवस्यन् धनमिच्छन् ᵛवृधः ᵛभूः स्तोतॄणां वर्धको भवसि । ᵛअनुदेयम् अनुदातव्यं धनं ᵛनववास्त्वम् एतन्नामकमसुरं पराहत्य ᵛस्वं स्वकीयमौशनसं ᵛनपातं युद्धे शत्रुभिर्गृहीतं[३] पुत्रं ᵛमहे महते ᵛपित्रे पालयितव्याय उशनसे ᵛपरा ᵛददाथ । तस्य शत्रुं हत्वा प्रकर्षेण दत्तवानसि ॥

त्वं धुनिरिन्द्र धुनिमतीर्ऋणोरपः सीरा न स्रवन्तीः ।
प्र यत्समुद्रमति शूर पर्षि पारया तुर्वशं यदुं स्वस्ति ॥ १२ ॥

त्वम् । धुनिः । इन्द्र । धुनिऽमतीः । ऋणोः । अपः । सीराः । न । स्रवन्तीः ।
प्र । यत् । समुद्रम् । अति । शूर । पर्षि । पारय । तुर्वशम् । यदुम् । स्वस्ति ॥ १२ ॥

---

१. ख-झ-भ-वचनमात्रे; न-य-वचनमात्रेण; श-वाचामात्रेण । २. ख-झ-भ-य-एनेन । ३. ख-ज्ञ-झ-त-न-भ-य-र-शत्रूणां गृहीतम् ।

हे vइन्द्र vधुनिः शत्रूणां कम्पयिता vत्वं vधुनिमतीः धुनिर्नामासुरो यासु निरोधकतया विद्यते ताः vअपः उदकानि vसीरा vन नदीरिव vस्रवन्तीः प्रवहन्तीः vकृणोः अगमयः। धुनिं हत्वा तेन निरोधितान्युदकानि[1] प्रवाहयतीत्यर्थः। हे vशूर वीरेन्द्र vयत् यदा vसमुद्रम् vअति अतिक्रम्य vप्र vपर्षि प्रतीर्णो भवसि तदा समुद्रपारे तिष्ठन्तौ vतुर्वशं vयदुं च vस्वस्ति क्षेमेण vपारय अपारयः। समुद्रमतारयः ॥

तव ह त्यदिन्द्र विश्वमाजौ सस्तो धुनीचुमुरी या ह सिष्वप्।
दीदयदित्तुभ्यं सोमेभिः सुन्वन्दभीतिरिध्मभृतिः पक्थ्य१र्कैः ॥ १३ ॥

तव। ह। त्यत्। इन्द्र। विश्वम्। आजौ। सस्तः। धुनीचुमुरी इति। या। ह। सिस्वप्।
दीदयत्। इत्। तुभ्यम्। सोमेभिः। सुन्वन्। दभीतिः। इध्मऽभृतिः। पक्थी। अर्कैः ॥१३॥

हे vइन्द्र vआजौ संग्रामे vतव vह तवैव vविश्वं व्याप्तं vत्यत् तादृशं कर्म भवति। कीदृशमिति तदुच्यते। vया यौ vधुनीचुमुरी। धुनिश्च चुमुरिश्चेत्येतन्नामकावसुरौ। vसिष्वप् त्वमस्वापयः तावसुरौ vसस्तः संग्रामे सुप्तवन्तौ। मृतावित्यर्थः ॥ भूतार्थे व्यत्ययेन लट्। द्वितीयो हशब्दः पादपूरणः ॥ तदनन्तरं हे इन्द्र vतुभ्यं त्वदर्थं vसुन्वन् सोमानभिषुण्वन् vपक्थी पक्थवान् हवींषि पक्ववान् vइध्मभृतिः इध्मानां भर्ता आहर्ता वा vदभीतिः नाम राजर्षिः vसोमेभिः सोमैः vअर्कैः हविर्लक्षणैरन्नैः vदीदयदित् दीप्यत एव। धुनिं चुमुरिं तस्मै जघन्थेत्यर्थः। 'त्वं नि दस्युं चुमुरिं धुनिं च' (ऋ. सं. ७. १९. ४) इति हि दर्शनात् ॥ ॥ १० ॥

'इमा उ त्वा' इति द्वादशर्चं षष्ठं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम्। नवम्येकादशी च वैश्वदेव्यौ[2]। तथा चानुक्रम्यते—'इमा उ[3] द्वादश नवम्येकादश्यौ वैश्वदेव्यौ' इति। उपहव्यनाम्न्येकाहे इदं सूक्तं मरुत्वतीयनिविद्धानम्। सूत्रितं च—'इमा उ त्वा य एक इदिति मध्यंदिनः' (आश्व. श्रौ. ९. ७) इति। इन्द्राविष्णवोरुत्क्रान्तिनाम्न्येकाहेऽपीदं मरुत्वतीयनिविद्धानम्। सूत्रितं च—'इमा उ त्वा द्यौर्न य इन्द्रेति मध्यंदिनः' (आश्व. श्रौ. ९. ७) इति। तृतीये छन्दोमेऽपि मरुत्वतीय इदं सूक्तम्। सूत्रितं च—'प्र मन्दिन इमा उ त्वेति मरुत्वतीयम्' (आश्व. श्रौ. ८. ७) इति ॥

इमा उ त्वा पुरुतमस्य कारोर्हव्यं वीर हव्या हवन्ते।
धियो रथेष्ठामजरं नवीयो रयिर्विभूतिरीयते वचस्या ॥ १ ॥

इमाः। ऊँ इति। त्वा। पुरुऽतमस्य। कारोः। हव्यम्। वीर। हव्याः। हवन्ते।
धियः। रथेऽस्थाम्। अजरम्। नवीयः। रयिः। विऽभूतिः। ईयते। वचस्या ॥ १ ॥

vपुरुतमस्य बहुलं कामं काङ्क्षतः। 'तमु अभिकाङ्क्षायाम्' इति धातुः। vकारोः स्तोतुर्भरद्वाजस्य संबन्धिन्यः vहव्याः स्तुत्याः प्रशस्याः vइमाः vधियः स्तुतयो हे vवीर शूरेन्द्र vहव्यं[4] vत्वा त्वां vहवन्ते ह्वयन्ति। कीदृशम्। vरथेस्थां रथे स्थितम् vअजरं जरारहितं vनवीयः नवीयांसं[5] नवतरम्।

---

१. ख-ज्ञ-झ-त-भ-र-निरोधयितान्युदकानि। २. ख-विश्वेदेवा देवता; ज्ञ-झ-त२-न-भ-य-र-विश्वेदेवा(ज्ञ-व)देवताके; त१-विश्वेदेवताके। ३. ख-ज्ञ-झ-त-न-भ-र-उ त्वा। ४. ख१-हव्यं ह्वातव्यम्; ज-ण-हव्यं होतव्यम्; भ-य-हव्यं ह्वातव्यम्। ५. ख-झ-भ-र-नवीयाम्।

उ इति पूरणः । अपि च वयस्या स्तुत्या श्रेष्ठा विभूतिः जगतो विभवहेतुः रयिः हविर्लक्षणं धनम् ईयते त्वामभिगच्छति ॥

तमु स्तुष इन्द्रं यो विदानो गिर्वाहसं गीर्भिर्यज्ञवृद्धम् ।
यस्य दिवमति मह्ना पृथिव्याः पुरुमायस्य रिरिचे महित्वम् ॥ २ ॥

तम् । ऊँ इति । स्तुषे । इन्द्रम् । यः । विदानः । गिर्वाहसम् । गीःऽभिः । यज्ञऽवृद्धम् ।
यस्य । दिवम् । अति । मह्ना । पृथिव्याः । पुरुऽमायस्य । रिरिचे । महिऽत्वम् ॥ २ ॥

यः इन्द्रः विदानः सर्वं विद्वान् सर्वैर्ज्ञायमानो वा गिर्वाहसं गीर्भिर्वहनीयं[1] यज्ञवृद्धं यज्ञैः प्रवृद्धं तमु तमेव इन्द्रं स्तुषे स्तुवे । पुरुमायस्य बहुप्रज्ञस्य बहुवञ्चनस्य वा यस्य इन्द्रस्य महित्वं माहात्म्यं दिवं दिवो द्युलोकात् । पञ्चम्यर्थे द्वितीया । पृथिव्याः भूलोकात् मह्ना महिम्ना अति रिरिचे अतिरिच्यते तं स्तुवे इति संबन्धः ॥

स इत्तमोऽवयुनं ततन्वत्सूर्येण वयुनवच्चकार ।
कदा ते मर्ता अमृतस्य धामेयक्षन्तो न मिनन्ति स्वधावः ॥ ३ ॥

सः । इत् । तमः । अवयुनम् । ततन्वत् । सूर्येण । वयुनऽवत् । चकार ।
कदा । ते । मर्ताः । अमृतस्य । धाम । इयक्षन्तः । न । मिनन्ति । स्वधाऽवः ॥ ३ ॥

स इत् स एवेन्द्रः अवयुनम् अप्रज्ञानम् । प्रज्ञाननाशनमित्यर्थः । ततन्वत् वृत्रेण विस्तीर्यमाणं तमः अन्धकारं दिवि सूर्येण दिव्यारोपितेन देवेन वयुनवत् प्रकाशवत् चकार कृतवान् । परोऽर्धर्चः प्रत्यक्षकृतः । हे स्वधावः बलवन्निन्द्र मर्ताः मनुष्याः अमृतस्य नित्यस्य ते त्वदीयं धाम स्वर्गाख्यं स्थानम् । तत्रस्थान् देवानित्यर्थः । इयक्षन्तः यष्टुमिच्छन्तः कदा कदाचित् । सर्वदेत्यर्थः । न मिनन्ति किमपि प्राणिजातं न हिंसन्ति ॥

यस्ता चकार स कुह स्विदिन्द्रः कमा जनं चरति कासु विक्षु ।
कस्ते यज्ञो मनसे शं वराय को अर्क इन्द्र कतमः स होता ॥ ४ ॥

यः । ता । चकार । सः । कुह । स्वित् । इन्द्रः । कम् । आ । जनम् । चरति । कासु । विक्षु ।
कः । ते । यज्ञः । मनसे । शम् । वराय । कः । अर्कः । इन्द्र । कतमः । सः । होता ॥ ४ ॥

यः इन्द्रः ता तान्युक्तानि प्रसिद्धानि वृत्रवधादीनि कर्माणि चकार अकरोत् सः इन्द्रः अद्य कुह स्वित् क्व स्विद्वर्तते । कं जनं कमपि देशम् आ चरति कासु विक्षु प्रजासु वर्तत इतीन्द्रस्य विभूतिमहत्त्वात्[2] न निश्चेतुं शक्यम् । अथ प्रत्यक्षस्तुतिः । हे इन्द्र कः कीदृशः यज्ञः ते तव मनसे चेतसे शं सुखकरो भवति । वराय तव वरणाय कः कीदृशः अर्कः मन्त्रः समर्थो भवति । होता[3] आह्वाता तव[4] वरणाय यः[4] समर्थो भवति सः होता कतमः च भवति ॥

---

१. ख-घ-श–गीर्भिर्हवनीयम् । २. घ–विभूतिं मत्वा; श–विभूतिमत्त्वात् । ३. घ-श–य होता । ४. घ-ङ-भ-श–भवति वरणाय; य–अभवति वरणाय ।

इदा हि ते वेविषतः पुराजाः प्रत्नास आसुः पुरुकृत्सखायः ।
ये मध्यमास उत नूतनास उतावमस्य पुरुहूत बोधि ॥ ५ ॥

इदा । हि । ते । वेविषतः । पुराऽजाः । प्रत्नासः । आसुः । पुरुऽकृत् । सखायः ।
ये । मध्यमासः । उत । नूतनासः । उत । अवमस्य । पुरुऽहूत । बोधि ॥ ५ ॥

vपुराजाः पूर्वस्मिन् काले जाताः vप्रत्नासः पुराणाः अङ्गिरःप्रभृतयः vइदा vहि इदानीमिव । हिशब्द उपमार्थे वर्तते । vवेविषतः कर्माणि प्राप्नुवन्तो हे vपुरुकृत् बहूनां कर्मणां कर्तरिन्द्र vते तव vसखायः स्तोतारः vआसुः बभूवुः । vये vमध्यमासः मध्यमकालजाः vउत अपि च ये vनूतनासः अद्यतना यतस्तेऽपि सर्वे ते स्तोतारो बभूवुः अतः कारणात् vउत अपि च vअवमस्य अर्वाचीनस्य ममापि स्तोत्रं हे vपुरुहूत बहुभिराहूतेन्द्र त्वं vबोधि बुध्यस्व ॥ ॥ ११ ॥

तं पृच्छन्तोऽवरासः पराणि प्रत्ना त इन्द्र श्रुत्यानु येमुः ।
अर्चामसि वीर ब्रह्मवाहो यादेव विद्म तात्त्वा महान्तम् ॥ ६ ॥

तम् । पृच्छन्तः । अवरासः । पराणि । प्रत्ना । ते । इन्द्र । श्रुत्या । अनु । येमुः ।
अर्चामसि । वीर । ब्रह्मऽवाहः । यात् । एव । विद्म । तात् । त्वा । महान्तम् ॥ ६ ॥

हे vवीर शूर vब्रह्मवाहः ब्रह्मभिर्मन्त्रैर्वहनीय vइन्द्र vअवरासः अर्वाचीनाः मनुष्याः vतम् उक्तगुणोपेतं त्वां vपृच्छन्तः अर्चन्तः । पृच्छतिरर्चतिकर्मा । vपराणि प्रकृष्टानि vप्रत्ना प्रत्नानि पुराणानि vश्रुत्या श्रुत्यानि श्रोतव्यानि vते त्वदीयानि कर्माणि vअनु vयेमुः । अनुयमनं निबन्धनम् । स्तुतिरूपाभिर्वाग्भिर्निबबन्धुः । तथा वयमपि vमहान्तं प्रभूतं vत्वा त्वाम् vअर्चामसि अर्चामः स्तुमः । vयादेव यान्येव कर्माणि vविद्म जानीमः vतात् तैः कर्मभिः स्तुम इति संबन्धः ॥

अभि त्वा पाजो रक्षसो वि तस्थे महि जज्ञानमभि तत्सु तिष्ठ ।
तव प्रत्नेन युज्येन सख्या वज्रेण धृष्णो अप ता नुदस्व ॥ ७ ॥

अभि । त्वा । पाजः । रक्षसः । वि । तस्थे । महि । जज्ञानम् । अभि । तत् । सु । तिष्ठ ।
तव । प्रत्नेन । युज्येन । सख्या । वज्रेण । धृष्णो इति । अप । ता । नुदस्व ॥ ७ ॥

vरक्षसः रक्षसां संबन्धि vपाजः सेनालक्षणं बलं हे इन्द्र vत्वा vअभि त्वामभिमुखं vवि vतस्थे प्रतिष्ठते । तथा त्वमपि vमहि महत् vजज्ञानं प्रादुर्भवत् vतत् बलम् vअभि अभिमुखः सन् vसु सुष्ठु vतिष्ठ स्थिरो भव । स्थित्वा च हे vधृष्णो शत्रूणां धर्षकेन्द्र vतव त्वदीयेन vवज्रेण vता तद्बलम् vअप vनुदस्व अपगतं प्रेरय । छिन्धीत्यर्थः । कीदृशेन । vप्रत्नेन पुराणेन vयुज्येन नियोज्येन vसख्या नित्यसहायेन ॥

स तु श्रुधीन्द्र नूतनस्य ब्रह्मण्यतो वीर कारुधायः ।
त्वं ह्या३पिः प्रदिवि पितृणां शश्वद्बभूथ सुहव एष्टौ ॥ ८ ॥

सः । तु । श्रुधि । इन्द्र । नूतनस्य । ब्रह्मण्यतः । वीर । कारुऽधायः ।
त्वम् । हि । आपिः । प्रऽदिवि । पितृणाम् । शश्वत् । बभूथ । सुऽहवः । आऽइष्टौ ॥ ८ ॥

हे कारुधायः कारूणां स्तोतॄणां धारक हे वीर इन्द्र सः प्रसिद्धस्त्वं नूतनस्य इदानींतनस्य ब्रह्मण्यतः ब्रह्म स्तोत्रं कर्तुमिच्छतो मम स्तोत्रं तु क्षिप्रं श्रुधि शृणुहि । यस्मात् कारणात् हे इन्द्र त्वम् एष्टौ आयजने अभिकामने वा सति सुहवः शोभनाह्वानः सन् प्रदिवि पूर्वस्मिन् काले पितृणाम् अङ्गिरसाम् आपिः बन्धुः शश्वत् चिरकालं बभूथ अभूः तस्मात् कारणात् मदीयं स्तोत्रं श्रुधीति संबन्धः ॥

प्रोतये वरुणं मित्रमिन्द्रं मरुतः कृष्वावसे नो अद्य ।
प्र पूषणं विष्णुमग्निं पुरंधिं सवितारमोषधीः पर्वतांश्च ॥ ९ ॥

प्र । ऊतये । वरुणम् । मित्रम् । इन्द्रम् । मरुतः । कृष्व । अवसे । नः । अद्य ।
प्र । पूषणम् । विष्णुम् । अग्निम् । पुरम्ऽधिम् । सवितारम् । ओषधीः । पर्वतान् । च ॥९॥

अस्यामृचि विश्वे देवाः स्तूयन्ते । हे भरद्वाज अद्य इदानीं वरुणं राज्यभिमानिनं च मित्रम् अहरभिमानिनं च इन्द्रं च प्रसिद्धं मरुतः मरुद्गणांश्च नः अस्माकम् ऊतये तर्पणाय अवसे रक्षणाय च प्र कृष्व अभिमुखीकुरुष्व । किंच पूषणम् एतत्संज्ञकं च विष्णुं सर्वव्यापिनं देवं च पुरंधिं पुरुधियं[1] पुरुकर्माणम् अग्निं च सवितारं सर्वस्य प्रेरकं देवम् ओषधीः ओषध्यभिमानिनो देवान् पर्वतांश्च अद्रीनित्येतान् देवान्[2] अस्माकं तर्पणाय[3] रक्षणाय च प्रकृष्व स्तुत्या अभिमुखीकुरु ॥

इम उ त्वा पुरुशाक प्रयज्यो जरितारो अभ्यर्चन्त्यर्कैः ।
श्रुधी हवमा हुवतो हुवानो न त्वावाँ अन्यो अमृत त्वदस्ति ॥ १० ॥

इमे । ऊँ इति । त्वा । पुरुऽशाक । प्रयज्यो इति प्रऽयज्यो । जरितारः । अभि । अर्चन्ति । अर्कैः ।
श्रुधि । हवम् । आ । हुवतः । हुवानः । न । त्वाऽवान् । अन्यः । अमृत । त्वत् । अस्ति ॥ १० ॥

हे पुरुशाक बहुशक्ते हे प्रयज्यो प्रकृष्टेन यजनीयेन्द्र त्वा त्वाम् इमे जरितारः स्तोतारः अर्कैः अर्चनीयैः स्तोत्रैः अभ्यर्चन्ति अभिष्टुवन्ति । तथा हे अमृत अमरणशीलेन्द्र हुवानः स्तूयमानस्त्वम् आ हुवतः अभिष्टुवतो मम हवं स्तोत्रं श्रुधि शृणु । किंच त्वावान् त्वत्सदृशो देवः त्वत् अन्यः न अस्ति ॥

---

१. ख-क्ष-त२-न-भ-र-पुरंधियम्; घ-श-'पुरुधियं' नास्ति । २. ख-ज्ञ-क्ष-न-न-भ-विश्वान् देवान । ३. ख-क्ष-भ-य-ऊतये तर्पणाय ।

नू म आ वाचमुप याहि विद्वान्विश्वेभिः सूनो सहसो यजत्रैः ।
ये अग्निजिह्वा ऋतसाप आसुर्ये मनुं चक्रुरुपरं दसाय ॥ ११ ॥
नु । मे । आ । वाचम् । उप । याहि । विद्वान् । विश्वेभिः । सूनो इति । सहसः । यजत्रैः ।
ये । अग्निऽजिह्वाः । ऋतऽसापः । आसुः । ये । मनुम् । चक्रुः । उपरम् । दसाय ॥ ११ ॥

इयं च वैश्वदेवीत्युक्तम् । हे ^v^सहसः ^v^सूनो बलस्य पुत्रेन्द्र ^v^विद्वान् सर्वज्ञस्त्वं ^v^यजत्रैः यजनीयैः ^v^विश्वेभिः सर्वैर्देवैः सह ^v^नु क्षिप्रं ^v^मे मदीया वाचः स्तुतिरूपाणि वचांसि ^v^उप अभि ^v^आ ^v^याहि आगच्छ । एवंभूतमिन्द्रं[1] प्रार्थयत ऐन्द्रत्वात् सूक्तस्य । ^v^ये देवाः ^v^अग्निजिह्वाः । अग्निर्जिह्वा-स्थानीयो येषां ते । ^v^ऋतसापः[2] ऋतं यज्ञं स्पृशन्तः ^v^आसुः भवन्ति ^v^ये च देवाः ^v^दसाय शत्रूणामुपक्षपणाय ^v^मनुं राजर्षिम् ^v^उपरं दस्यूनामुपरिभवं ^v^चक्रुः कृतवन्तः तैः सहागच्छेति पूर्वेण संबन्धः ॥

स नो बोधि पुरएता सुगेषूत दुर्गेषु पथिकृद्विदानः ।
ये अश्रमास उरवो वहिष्ठास्तेभिर्न इन्द्राभि वक्षि वाजम् ॥ १२ ॥
सः । नः । बोधि । पुरःऽएता । सुऽगेषु । उत । दुःऽगेषु । पथिऽकृत् । विदानः ।
ये । अश्रमासः । उरवः । वहिष्ठाः । तेभिः । नः । इन्द्र । अभि । वक्षि । वाजम् ॥ १२ ॥

हे ^v^इन्द्र ^v^पथिकृत् वर्त्मनां कर्ता ^v^विदानः सर्वं विद्वान् ^v^सः त्वं ^v^सुगेषु सुखेन गन्तव्येषु ^v^उत अपि च ^v^दुर्गेषु दुःखेन गन्तव्येषु च मार्गेषु ^v^नः अस्माकं ^v^पुरएता पुरो गन्ता ^v^बोधि भव । बोधीति भवतेर्लोण्मध्यमपुरुषैकवचनस्य छान्दसं रूपम् । ^v^अश्रमासः श्रमरहिताः ^v^उरवः महान्तः ^v^वहिष्ठाः वोढृतमाः तव ^v^ये अश्वाः सन्ति हे इन्द्र ^v^तेभिः तैरश्वैः ^v^नः अस्मभ्यं ^v^वाजम् अन्नम् ^v^अभि ^v^वक्षि अभिवह ॥　॥ १२ ॥

'य एक इत्' इत्येकादशर्चं सप्तमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रान्तं— 'य एक एकादश[3]' इति । आभिप्लविके प्रथमेऽहनि दशरात्रस्य प्रथमेऽहनि च माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रेऽहीनसूक्तस्य स्थाने त्रीणि संपातसूक्तानि । तेष्विदं द्वितीयं सूक्तम् । सूत्रितं च— 'य एक इद्यस्तिग्मशृङ्गः' ( आश्व. श्रौ. ७. ५ ) इति । उपहव्यनाम्न्येकाहेऽपीदं निष्केवल्यनिविद्धानम् । सूत्रितं च—'य एक इदिति मध्यंदिनः' ( आश्व. श्रौ. ९. ७ ) इति ॥

य एक इद्धव्यश्चर्षणीनामिन्द्रं तं गीर्भिरभ्यर्च आभिः ।
यः पत्यते वृषभो वृष्ण्यावान्त्सत्यः सत्वा पुरुमायः सहस्वान् ॥ १ ॥
यः । एकः । इत् । हव्यः । चर्षणीनाम् । इन्द्रम् । तम् । गीःऽभिः । अभि । अर्चे । आभिः ।
यः । पत्यते । वृषभः । वृष्ण्यऽवान् । सत्यः । सत्वा । पुरुऽमायः । सहस्वान् ॥ १ ॥

---

१. ख-झ-त-न-भ-र—एवंभूतमितीन्द्रम् ।　२. ख-ज्ञ-झ-त-भ-र—ते ऋतसापः ।　३. ख-ज्ञ-झ-त-न-भ-य-र—इदेकादश ।

ᐯयः इन्द्रः ᐯचर्षणीनां प्रजानामापत्सु ᐯएक ᐯइत् एक एव ᐯहव्यः ह्वातव्यः ᐯआभिः ᐯगीर्भिः स्तुतिरूपाभिर्वाग्भिः ᐯतम् ᐯइन्द्रम् ᐯअभ्यर्चे अभिष्टौमि। ᐯयः इन्द्रः ᐯपत्यते स्तोतॄनभिगच्छति[1]। यद्वा। पत्यते लोकानामीष्टे। कीदृशः। ᐯवृषभः कामानां वर्षिता ᐯवृष्ण्यावान् बलवान् ᐯसत्यः अविसंवादी ᐯसत्वा शत्रूणां सादयिता कामानां दाता वा। सदेर्वा सनोतेर्वेदं रूपम्। ᐯपुरुमायः बहुप्रज्ञः ᐯसहस्वान् अभिभवनवान् तमिन्द्रमभिष्टौमीति संबन्धः॥

तमु नः पूर्वे पितरो नवग्वाः सप्त विप्रासो अभि वाजयन्तः।
नक्षद्दाभं ततुरिं पर्वतेष्ठामद्रोघवाचं मतिभिः शविष्ठम्॥ २॥

तम्। ऊँ इति। नः। पूर्वे। पितरः। नवऽग्वाः। सप्त। विप्रासः। अभि। वाजयन्तः। नक्षत्ऽदाभम्। ततुरिम्। पर्वतेऽस्थाम्। अद्रोघऽवाचम्। मतिऽभिः। शविष्ठम्॥ २॥

ᐯपूर्वे प्रत्नाः ᐯनवग्वाः नवभिर्मासैः सत्रमनुष्ठितवन्तः ᐯसप्त सप्तसंख्याकाः ᐯविप्रासः विप्रा मेधाविनः ᐯवाजयन्तः वाजमन्नं हविर्लक्षणमिन्द्रस्य कुर्वन्तः। इन्द्रं वा वाजिनं बलिनं कुर्वन्तः। तत्करोतीति णिच्। एवंभूताः ᐯनः अस्माकं ᐯपितरः अङ्गिरसः ᐯतमु तमेवेन्द्रं ᐯमतिभिः स्तुतिभिः ᐯअभि। तुष्टुवुरिति शेषः। कीदृशम्। ᐯनक्षद्दाभम्। नक्षतिर्गतिकर्मा। अभिगच्छतां शत्रूणां दम्भितारं[2] हिंसितारं ᐯततुरिं तरितारं ᐯपर्वतेष्ठां पर्वतेष्ववस्थितम् ᐯअद्रोघवाचम्। अद्रोग्धव्या अनतिक्रमणीया वागाज्ञारूपा[3] यस्य तम्। ᐯशविष्ठं बलवत्तमम्॥

तमीमह इन्द्रमस्य रायः पुरुवीरस्य नृवतः पुरुक्षोः।
यो अस्कृधोयुरजरः स्वर्वान्तमा भर हरिवो मादयध्यै॥ ३॥

तम्। ईमहे। इन्द्रम्। अस्य। रायः। पुरुऽवीरस्य। नृऽवतः। पुरुऽक्षोः। यः। अस्कृधोयुः। अजरः। स्वःऽवान्। तम्। आ। भर। हरिऽवः। मादयध्यै॥ ३॥

ᐯपुरुवीरस्य बहुपुत्रपौत्रयुक्तस्य ᐯनृवतः परिचारकजनसहितस्य ᐯपुरुक्षोः बह्वन्नस्य बहुयशसो वा ᐯअस्य ᐯरायः इदं धनम्। द्वितीयार्थे षष्ठी। ᐯतम् ᐯइन्द्रम् ᐯईमहे याचामहे। ᐯयः रयिः ᐯअस्कृधोयुः अविच्छिन्नः ᐯअजरः जराहानिरहितः[4] ᐯस्वर्वान् सुखयुक्तो हे ᐯहरिवः हरिवन् स्वकीयाश्वोपेतेन्द्र त्वं ᐯतं रयिं ᐯमादयध्यै अस्मान् मादयितुम् ᐯआ ᐯभर आहर॥

तन्नो वि वोचो यदि ते पुरा चिज्जरितार आनशुः सुम्नमिन्द्र।
कस्ते भागः किं वयो दुध्र खिद्वः पुरुहूत पुरूवसोऽसुरघ्नः॥ ४॥

तत्। नः। वि। वोचः। यदि। ते। पुरा। चित्। जरितारः। आनशुः। सुम्नम्। इन्द्र। कः। ते। भागः। किम्। वयः। दुध्र। खिद्वः। पुरुऽहूत। पुरूवसो इति पुरुऽवसो। असुरऽघ्नः॥ ४॥

---

१. ख-म्र-भ-य-शत्रूनभि°। २. त १-दभितारम्। ३. घ-ञ-भ-श-वागयज्ञरूपा। ४. ख-घ-भ-श-जरारहितः; ञ-त-जराहानिसहितः।

हे ^v^इन्द्र ^v^यदि ^v^ते तव ^v^पुरा ^v^चित् पूर्वस्मिन् काले ^v^जरितारः स्तोतारः ^v^सुम्नं सुखम् ^v^आनशुः ^v^तत् तत्सुखं ^v^नः अस्माकं ^v^वि ^v^वोचः विब्रूहि। ^v^दुध्र दुर्धर हे ^v^खिद्वः शत्रूणां खेदयितर्हे ^v^पुरुहूत[1] हे ^v^पुरुवसो[2] इन्द्र ^v^असुरघ्नः असुराणां हन्तुः ^v^ते तव यज्ञेषु ^v^कः ^v^भागः कृतः। ^v^वयः हविर्लक्षणमन्नं ^v^किं कृतम्। यदि केचित् चिरंतनाः पूर्वकालेऽपि त्वत्तः सकाशात् सुखं लेभिरे तर्ह्यहमपि तत् सुखं लप्स्ये इति विचार्य सुखप्राप्तिविलम्बो ममासोढव्यो भवेदित्यर्थः॥

तं पृच्छन्ती वज्रहस्तं रथेष्ठामिन्द्रं वेपी वक्करी यस्य नू गीः।
तुविग्राभं तुविकूर्मिं रभोदां गातुमिषे नक्षते तुम्रमच्छ॥ ५॥

तम्। पृच्छन्ती। वज्रऽहस्तम्। रथेऽस्थाम्। इन्द्रम्। वेपी। वक्करी। यस्य। नु। गीः।
तुविऽग्राभम्। तुविऽकूर्मिम्। रभःऽदाम्। गातुम्। इषे। नक्षते। तुम्रम्। अच्छ॥ ५॥

पूर्वयोपालब्ध[3] इन्द्र ऋषये कामान् प्रायच्छत् ततः स कामपूर्ण ऋषिराह। ^v^वज्रहस्तं वज्रपाणिं ^v^रथेष्ठां रथे स्थितं ^v^तम् ^v^इन्द्रं ^v^पृच्छन्ती अर्चयन्ती। पृच्छतिरर्चतिकर्मा। ^v^वेपी। वेपो यागादिलक्षणं कर्म। तद्वती ^v^वक्करी गुणानां वक्त्री ^v^गीः ईदृशी स्तुतिः ^v^यस्य यजमानस्य भवति। कीदृशमिन्द्रं पृच्छन्ती। ^v^तुविग्राभं तुवीनां बहूनां ग्रहीतारं ^v^तुविकूर्मिं बहुकर्माणं ^v^रभोदां रभसो बलस्य दातारम्। ^v^नु इति पूरणः। स यजमानः ^v^गातुं सुखम् ^v^इषे गच्छति। किंच ^v^तुम्रं ग्लापयितारं[4] शत्रुम् ^v^अच्छ अभिमुखं ^v^नक्षते गच्छति॥    ॥ १३॥

अया ह त्यं मायया वावृधानं मनोजुवा स्वतवः पर्वतेन।
अच्युता चिद्वीळिता स्वोजो रुजो वि दृळ्हा धृषता विरप्शिन्॥ ६॥

अया। ह। त्यम्। मायया। ववृधानम्। मनःऽजुवा। स्वऽतवः। पर्वतेन।
अच्युता। चित्। वीळिता। सुऽओजः। रुजः। वि। दृळ्हा। धृषता। विऽरप्शिन्॥ ६॥

हे ^v^स्वतवः स्वभूतबलेन्द्र त्वं ^v^मनोजुवा मनोवद्गच्छता अनेन[5] ^v^पर्वतेन बहुपर्वणा स्वकीयेनायुधेन वज्रेण। 'वज्रेण शतपर्वणा' (ऋ. सं. १. ८०. ६) इति दर्शनात्। ^v^अया[6] अनया[6] ^v^मायया ^v^ववृधानं वर्धमानं ^v^त्यं तं प्रसिद्धं वृत्रं ^v^वि ^v^रुजः विशेषेणाभाङ्क्षीः। तथा हे ^v^स्वोजः शोभनतेजः हे ^v^विरप्शिन् हे महन्निन्द्र त्वम् ^v^अच्युता अच्युतानि ^v^चित्[7] विनाशरहितान्यपि ^v^वीळिता वीळितानि अशिथिलीकृतानि ^v^दृळ्हा दृढानि पुराणि ^v^धृषता धर्षकेण वज्रेण व्यरुजः भग्नवानसि॥

---

१. ख-घ-भ – पुरुहूत बहुभिराहूत। २. घ – पुरुवसो बहुधन। ३. ख-ज्ञ-भ-य – पूर्वयोपालब्धव्यः; त-र – पूर्वयोपालब्ध वा। ४. ख-घ-ज्ञ-भ – ग्लापयितारम्; झ-त२-न-य-र – म्रापयितारम्; त१ – म्रवायितारम्। ५. ख-ज्ञ-झ-त-न-य-र – अयानेन। ६. ज्ञ-झ-त-न-य-र–'अया अनया' नास्ति। ७. ख-भ – चिद्ध।

तं वो धिया नव्यस्या शविष्ठं प्रत्नं प्रत्नवत्परितंसयध्यै ।
स नो वक्षदनिमानः सुवह्मेन्द्रो विश्वान्यति दुर्गहाणि ॥ ७ ॥

तम् । वः । धिया । नव्यस्या । शविष्ठम् । प्रत्नम् । प्रत्नऽवत् । परिऽतंसयध्यै ।
सः । नः । वक्षत् । अनिऽमानः । सुऽवह्मा । इन्द्रः । विश्वानि । अति । दुःऽगहानि ॥७॥

नव्यस्या नवतरया धिया स्तुत्या शविष्ठं बलवत्तमं प्रत्नं पुराणं हे इन्द्र तं वः त्वां प्रत्नवत् चिरंतना ऋषयः इव परितंसयध्यै परितो विस्तारयितुम् । अहं प्रवृत्तोऽस्मीति शेषः । अनिमानः अपरिमाणः सुवह्मा शोभनवहनः सः इन्द्रः विश्वानि समस्तानि दुर्गहाणि दुर्गाणि नः अस्मभ्यम् अति वक्षत् अतिवहतु ॥

आ जनाय द्रुह्वणे पार्थिवानि दिव्यानि दीपयोऽन्तरिक्षा ।
तपा वृषन्विश्वतः शोचिषा तान्ब्रह्मद्विषे शोचय क्षामपश्च ॥ ८ ॥

आ । जनाय । द्रुह्वणे । पार्थिवानि । दिव्यानि । दीपयः । अन्तरिक्षा ।
तप । वृषन् । विश्वतः । शोचिषा । तान् । ब्रह्मऽद्विषे । शोचय । क्षाम् । अपः । च ॥ ८ ॥

हे इन्द्र त्वं द्रुह्वणे साधुजनानां द्रोग्धुः जनाय जनस्य राक्षसादेः । षष्ठ्यर्थे चतुर्थी ॥ पार्थिवानि पृथिव्यां भवानि दिव्यानि दिवि भवानि अन्तरिक्षा अन्तरिक्षे भवानि च स्थानानि आ दीपयः आ समन्तात् तापय[1] । हे वृषन् कामानां वर्षितरिन्द्र त्वं विश्वतः सर्वतो विद्यमानान् तान् राक्षसादीन् शोचिषा त्वदीयया दीप्त्या तप दह । किंच ब्रह्मद्विषे ब्राह्मणद्वेष्ट्रे राक्षसादये । ब्रह्मद्विषं दग्धुमित्यर्थः[2] । क्षां पृथिवीम् अपश्च अन्तरिक्षं च शोचय दीपय । आप इत्यन्तरिक्षनामैतत् ॥

भुवो जनस्य दिव्यस्य राजा पार्थिवस्य जगतस्त्वेषसंदृक् ।
धिष्व वज्रं दक्षिण इन्द्र हस्ते विश्वा अजुर्य दयसे वि मायाः ॥ ९ ॥

भुवः । जनस्य । दिव्यस्य । राजा । पार्थिवस्य । जगतः । त्वेषऽसंदृक् ।
धिष्व । वज्रम् । दक्षिणे । इन्द्र । हस्ते । विश्वाः । अजुर्य । दयसे । वि । मायाः ॥ ९ ॥

हे त्वेषसंदृक् दीप्तदर्शनेन्द्र दिव्यस्य दिवि भवस्य जनस्य राजा ईश्वरः भुवः भवसि । जगतः जङ्गमस्य पार्थिवस्य च राजा भवसि । दक्षिणे हस्ते वज्रं धिष्व[3] निधेहि । तेन[4] च[4] निहितेन वज्रेण विश्वाः सर्वा आसुरीः मायाः[5] वि दयसे विबाधसे । ‘ दय[6] दानहिंसागतिरक्षणेषु ’ इति धातुः[6] । हे इन्द्र अजुर्य जरयितुमशक्येन्द्र त्वमिति[7] ॥

---

१. ख-घ-ङ-भ–तापयः; श–दीपय । २. ख-घ-भ–द्रोग्धुमि°; श–द्राग्धुमि° । ३. घ–धिष्व धारय । ४. ख-भ–‘ तेन च ’ नास्ति । ५. श–पुरीः । ६. ख-भ–‘ दय... धातुः ’ नास्ति । ७. श–त्वमिति शेषः ।

आ संयतमिन्द्र णः स्वस्तिं शत्रुतूर्याय बृहतीममृध्राम् ।
यया दासान्यार्याणि वृत्रा करो वज्रिन्त्सुतुका नाहुषाणि ॥ १० ॥

आ । सम्ऽयतम् । इन्द्र । नः । स्वस्तिम् । शत्रुऽतूर्याय । बृहतीम् । अमृध्राम् ।
यया । दासानि । आर्याणि । वृत्रा । करः । वज्रिन् । सुऽतुका । नाहुषाणि ॥ १० ॥

हे ^v^इन्द्र ^v^शत्रुतूर्याय शत्रूणां तारणाय ^v^बृहतीं महतीम् ^v^अमृध्राम् अहिंसितां ^v^संयतं संयतीं संगच्छमानां ^v^स्वस्तिं क्षेमलक्षणां संपदं हे इन्द्र[1] ^v^नः अस्मभ्यम् ^v^आ भर। ^v^वज्रिन् वज्रवन्निन्द्र ^v^यया स्वस्त्या ^v^दासानि कर्महीनानि मनुष्यजातानि ^v^आर्याणि कर्मयुक्तानि ^v^करः अकरोः। ^v^नाहुषाणि मनुष्यसंबन्धीनि। नहुषा इति मनुष्यनामैतत्। ^v^वृत्रा वृत्राणि शत्रून् ^v^सुतुका सुतुकानि शोभनहिंसोपेतान्यकरोः ॥

स नो नियुद्भिः पुरुहूत वेधो विश्ववाराभिरा गहि प्रयज्यो ।
न या अदेवो वरते न देव आभिर्याहि तूयमा मद्र्यद्रिक् ॥ ११ ॥

सः । नः । नियुत्ऽभिः । पुरुऽहूत । वेधः । विश्वऽवाराभिः । आ । गहि । प्रयज्यो इति प्रऽयज्यो ।
न । याः । अदेवः । वरते । न । देवः । आ । आभिः । याहि । तूयम् । आ । मद्र्यद्रिक् ॥ ११ ॥

हे ^v^पुरुहूत हे ^v^वेधः विधातर्हे ^v^प्रयज्यो प्रकृष्टेन[2] यजनीयेन्द्र ^v^सः त्वं ^v^विश्ववाराभिः विश्वैर्वरणीयाभिः संभजनीयाभिः ^v^नियुद्भिः अश्वैः ^v^नः अस्मान् ^v^आ ^v^गहि आगच्छ। ^v^अदेवः असुरः ^v^याः नियुतो यानश्वान् ^v^न ^v^वरते न वारयति ^v^देवः च ^v^न वरते ^v^आभिः नियुद्भिः ^v^तूयम् ^v^आ क्षिप्रमेव ^v^मद्र्यद्रिक् मदभिमुखः सन् ^v^आ ^v^याहि आगच्छ। अद्र्यागमस्य द्विर्वचनं छान्दसम् ॥ ॥ १४ ॥

'सुत इत्' इति दशर्चमष्टमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम्। 'सुत इद्दश' इत्यनुक्रान्तम्। विषुवति निष्केवल्ये इदं सूक्तम्। सूत्रितं च—सुत इत्त्वमेव प्र पूर्वीः' ( आश्व. श्रौ. ८. ६ ) इति। महाव्रतेऽपि निष्केवल्ये इदमादीनि त्रीणि सूक्तानि। तथैव पञ्चमारण्यके सूत्रितं—'सुत इत्त्वं निमिश्ल इन्द्र सोम इति त्रीणि' ( ऐ. आ. ५. २. २ ) इति ॥

सुत इत्त्वं निमिश्ल इन्द्र सोमे स्तोमे ब्रह्मणि शस्यमान उक्थे ।
यद्वा युक्ताभ्यां मघवन्हरिभ्यां बिभ्रद्वज्रं बाह्वोरिन्द्र यासि ॥ १ ॥

सुते । इत् । त्वम् । निऽमिश्लः । इन्द्र । सोमे । स्तोमे । ब्रह्मणि । शस्यमाने । उक्थे ।
यत् । वा । युक्ताभ्याम् । मघऽवन् । हरिऽभ्याम् । बिभ्रत् । वज्रम् । बाह्वोः । इन्द्र । यासि ॥ १ ॥

^v^सोमे ^v^सुते ^v^इत् अभिषुत एव सति ^v^ब्रह्मणि बृहति महति[3] ^v^स्तोमे स्तोत्रे उच्चार्यमाणे सति ^v^उक्थे शस्त्रे ^v^शस्यमाने सति हे ^v^इन्द्र ^v^त्वं ^v^निमिश्लः निमिश्रः सन् हरी संयोजयन् हे ^v^मघवन्

१. ख-झ-न-भ-य—इन्द्र त्वम्। २. घ-श—प्रकर्षेण। ३. ख-ञ-झ-त-न-भ-र—'महति' नास्ति; श—मरुत।

धनवन् इन्द्र त्वं बाह्वोः हस्तयोः वज्रं स्वकीयमायुधं बिभ्रत् धारयन् युक्ताभ्यां रथे नियुक्ताभ्यां हरिभ्याम् अश्वाभ्यां यासि यद्वा आगच्छसीति यच्च तत्सोमेऽभिषुते इति संबन्धः ॥

यद्वा दिवि पार्ये सुष्विमिन्द्र वृत्रहत्येऽवसि शूरसातौ ।
यद्वा दक्षस्य बिभ्युषो अबिभ्यदरन्धयः शर्धत इन्द्र दस्यून् ॥ २ ॥

यत् । वा । दिवि । पार्ये । सुस्विम् । इन्द्र । वृत्रऽहत्ये । अवसि । शूरऽसातौ ।
यत् । वा । दक्षस्य । बिभ्युषः । अबिभ्यत् । अरन्धयः । शर्धतः । इन्द्र । दस्यून् ॥ २ ॥

हे इन्द्र त्वं दिवि द्युलोके शूरसातौ शूरैः भटैः संभजनीये वृत्रहत्ये युद्धे च पार्ये प्रासव्ये सति सुष्विम् अभिषोतारं यजमानम् अवसि यद्वा रक्षसीति यच्च । वेति समुच्चये । दक्षस्य यज्ञादिषु समर्थस्य बिभ्युषः शत्रुभ्यो बिभ्यतो जनस्य शर्धतः संग्रामे उत्सहमानान् दस्यून् उपक्षपयितॄन् शत्रून् हे इन्द्र त्वम् अबिभ्यत् भीतिरहितः सन् अरन्धयः[1] यद्वा वशीकरोषीति यच्च तत्सर्वं सोमेऽभिषुते इति पूर्वेण संबन्धः ॥ तथा चोक्तं—'यद्बाह्वोर्धारयन्वज्रं हरिभ्यां यासि वृत्रहन् । यच्च रक्षसि संग्रामे नॄन् सोममभिषुण्वतः ॥ यच्च कर्मसु दक्षस्य यजमानस्य येऽरयः । वशीकरोषि तांस्तस्मै बिभ्यते भीतिवर्जितः ॥ तत्सोमेऽभिषुते स्तोत्रशस्त्रयोश्च प्रवृत्तयोः । इति द्वृचोऽयमेकार्थः सुत इत्त्वमिति द्वयम्' इति ॥

पाता सुतमिन्द्रो अस्तु सोमं प्रणेनीरुग्रो जरितारमूती ।
कर्ता वीराय सुष्वय उ लोकं दाता वसु स्तुवते कीरये चित् ॥ ३ ॥

पाता । सुतम् । इन्द्रः । अस्तु । सोमम् । प्रऽनेनीः । उग्रः । जरितारम् । ऊती ।
कर्ता । वीराय । सुस्वये । ऊँ इति । लोकम् । दाता । वसु । स्तुवते । कीरये । चित् ॥३॥

इन्द्रः सुतम् अभिषुतं सोमं पाता अस्तु पानशीलो भवतु ॥ तृनन्तत्वात् 'न लोकाव्ययनिष्ठा॰' इति षष्ठीप्रतिषेधः ॥ कीदृशः । ऊती ऊत्या मार्गेण जरितारं स्तोतारं प्रणेनीः प्रकर्षेण नेता उग्रः उद्गूर्णः वीराय यज्ञादिकर्मसु दक्षाय सुष्वये सोमाभिषवं कुर्वते यजमानाय लोकं स्थानं कर्ता । दातेत्यर्थः । उ इति पादपूरणः । स्तुवते स्तोत्रं कुर्वते कीरये चित् । चिदिति चार्थे । स्तोत्रे च । कीरिरिति स्तोतृनामैतत् । वसु धनं दाता अस्तु ॥

गन्तेयान्ति सवना हरिभ्यां बभ्रिर्वज्रं पपिः सोमं ददिर्गाः ।
कर्ता वीरं नर्यं सर्ववीरं श्रोता हवं गृणतः स्तोमवाहाः ॥ ४ ॥

गन्ता । इयन्ति । सवना । हरिऽभ्याम् । बभ्रिः । वज्रम् । पपिः । सोमम् । ददिः । गाः ।
कर्ता । वीरम् । नर्यम् । सर्वऽवीरम् । श्रोता । हवम् । गृणतः । स्तोमऽवाहाः ॥ ४ ॥

इन्द्रः हरिभ्यां स्वकीयाभ्याम् इयन्ति हृदयस्थानि त्रीणि सवना सवनानि गन्ता गमनशीलो भवतु । कीदृशः । वज्रं स्वकीयमायुधं बभ्रिः भर्ता धारकः सोमम् अभिषुतं पपिः पाता गाः

1. ख-ज्ञ-झ-त-न-भ-र—अरन्धयं इति ।

<sup>v</sup>ददिः दाता <sup>v</sup>नर्यं मनुष्यहितं <sup>v</sup>सर्ववीरं बहुपुत्रोपेतं <sup>v</sup>वीरं पुत्रं <sup>v</sup>कर्ता यजमानाय दाता <sup>v</sup>गृणतः स्तुवतः स्तोतुः संबन्धि <sup>v</sup>हवं स्तोत्रं <sup>v</sup>श्रोता श्रावकः <sup>v</sup>स्तोमवाहाः स्तोमैः स्तोत्रैर्वहनीयः ॥

अस्मै वयं यद्वावान तद्विविष्म इन्द्राय यो नः प्रदिवो अपस्कः ।
सुते सोमे स्तुमसि शंसदुक्थेन्द्राय ब्रह्म वर्धनं यथासत् ॥ ५ ॥

अस्मै । वयम् । यत् । ववान । तत् । विविष्मः । इन्द्राय । यः । नः । प्रऽदिवः । अपः । करिति कः ।
सुते । सोमे । स्तुमसि । शंसत् । उक्था । इन्द्राय । ब्रह्म । वर्धनम् । यथा । असत् ॥ ५ ॥

vप्रदिवः पुराणः vयः इन्द्रः vनः अस्मदर्थम् vअपः पोषणादिकं कर्म vकः करोति अयमिन्द्रः vयत् स्तोत्रादिकं vववान कामयते vअस्मै vइन्द्राय vवयं vतद्विविष्मः व्याप्नुमः । कुर्म इत्यर्थः । vसोमे vसुते अभिषुते सति vस्तुमसि स्तुमः । इन्द्राय स्तोत्राणि कुर्मः । vउक्था उक्थानि शस्त्राणि vशंसत् शंसन्तः । प्रथमाबहुवचनस्य लुक् । vब्रह्म हविर्लक्षणमन्नम् vइन्द्राय इन्द्रार्थं vवर्धनं vयथा वृद्धिकरम् vअसत् स्यात् तथा कुर्म इत्यर्थः ॥ ॥ १५ ॥

ब्रह्माणि हि चकृषे वर्धनानि तावत्त इन्द्र मतिभिर्विविष्मः ।
सुते सोमे सुतपाः शंतमानि रान्द्र्या क्रियास्म वक्षणानि यज्ञैः ॥ ६ ॥

ब्रह्माणि । हि । चकृषे । वर्धनानि । तावत् । ते । इन्द्र । मतिऽभिः । विविष्मः ।
सुते । सोमे । सुतऽपाः । शम्ऽतमानि । रान्द्र्या । क्रियास्म । वक्षणानि । यज्ञैः ॥ ६ ॥

हे vइन्द्र त्वं vहि यस्मात् कारणात् vब्रह्माणि स्तोत्राणि vवर्धनानि स्वयमेव वृद्धिकराणि vचकृषे कृतवानसि तस्मात् कारणात् vतावत् तावन्ति तादृशानि स्तोत्राणि vते तुभ्यं vमतिभिः बुद्धिभिर्वयं vविविष्मः व्याप्नुमः । वर्धनानि स्तोत्राणि मम यथा भवेयुस्त्वं तादृशानि कल्पितवानसीत्यर्थः । अपि च[1] हे vसुतपाः अभिषुतस्य सोमस्य पातस्त्वामुद्दिश्य vसुते vसोमे अभिषुते सति vशंतमानि सुखकृत्तमानि vरान्द्र्या रान्द्र्याणि रमणीयानि vयज्ञैः हविर्भिर्युक्तानि vवक्षणानि वाहकानि स्तोत्राणि vक्रियास्म करवाम ॥

स नो बोधि पुरोळाशं रराणः पिबा तु सोमं गोऋजीकमिन्द्र ।
एदं बर्हिर्यजमानस्य सीदोरुं कृधि त्वायत उ लोकम् ॥ ७ ॥

सः । नः । बोधि । पुरोळाशम् । रराणः । पिब । तु । सोमम् । गोऽऋजीकम् । इन्द्र ।
आ । इदम् । बर्हिः । यजमानस्य । सीद । उरुम् । कृधि । त्वाऽयतः । ॐ इति । लोकम् ॥७॥

हे vइन्द्र vरराणः रममाणः vसः त्वं vनः अस्मदीयं vपुरोडाशम् एतल्लक्षणं हविः vबोधि बुध्यस्व । किंच vगोऋजीकं गोविकारदध्यादिभिः[2] संस्कृतमभिषुतं vसोमं vतु क्षिप्रं vपिब पिब । तदर्थं च vयजमानस्य संबन्धि vइदं vबर्हिः vआ vसीद अभिविश । तदनन्तरं vत्वायतः त्वामिच्छतो यजमानस्य vलोकं स्थानम् vउरुं[3] विस्तीर्णं[3] vकृधि कुरु । vउ इति पूरणः ॥

---

१. घ – च सुते सोमे । २. घ – गोविकारैर्दध्यादिभिः; श – गोविकारं दध्यादिभिः ।
३. ख-ङ-झ-त-न-भ-र–' उरुं विस्तीर्णं ' नास्ति ।

स मन्दस्वा ह्यनु जोषमुग्र प्र त्वा यज्ञास इमे अश्नुवन्तु ।
प्रेमे हवासः पुरुहूतमस्मे आ त्वेयं धीरवस इन्द्र यम्याः ॥ ८ ॥

सः । मन्दस्व । हि । अनु । जोषम् । उग्र । प्र । त्वा । यज्ञासः । इमे । अश्नुवन्तु ।
प्र । इमे । हवासः । पुरुऽहूतम् । अस्मे इति । आ । त्वा । इयम् । धीः । अवसे । इन्द्र । यम्याः ॥ ८ ॥

हे उग्र उद्गूर्णबलेन्द्र सः त्वम् अनु जोषं कामानुगुणं यथा भवति तथा मन्दस्व मोदस्व ॥ हिशब्दः पादपूरणः । हियोगे मन्दस्वेत्याख्यातस्य व्यत्ययात् सर्वानुदात्तत्वम् ॥ इमे यज्ञासः यज्ञाः सोमाः त्वा त्वां प्र अश्नुवन्तु प्राप्नुवन्तु । हे[1] पुरुहूत बहुभिराहूत इन्द्र[1] त्वाम् अस्मे अस्मदीयानि इमे हवासः हवाः स्तोत्राणि प्राप्नुवन्तु[१] । इयं धीः स्तुतिः त्वा त्वाम् अवसे अस्माकं रक्षणाय आ यम्याः आयच्छतु[३] नियच्छतु[३] ॥

तं वः सखायः सं यथा सुतेषु सोमेभिरीं पृणता भोजमिन्द्रम् ।
कुवित्तस्मा असति नो भराय न सुष्विमिन्द्रोऽवसे मृधाति ॥ ९ ॥

तम् । वः । सखायः । सम् । यथा । सुतेषु । सोमेभिः । ईम् । पृणत । भोजम् । इन्द्रम् ।
कुवित् । तस्मै । असति । नः । भराय । न । सुस्विम् । इन्द्रः । अवसे । मृधाति ॥ ९ ॥

हे सखायः स्तोतारः वः यूयं सोमेषु सुतेषु अभिषुतेषु सत्सु भोजं दातारं तम् ईम् एतम्[४] इन्द्रं सोमेभिः सोमैर्यथाकामं सं पृणत संपूरयत । तस्मै इन्द्राय कुवित् बहूपकरणम् । कुविदिति बहुनामैतत् । असति अस्तु । किमर्थम् । नः अस्माकं भराय भरणाय पोषणाय । इन्द्रः सुष्विम् अभिषवणशीलं यजमानम् अवसे तर्पणाय न मृधाति न बाधते ॥

एवेदिन्द्रः सुते अस्तावि सोमे भरद्वाजेषु क्षयदिन्मघोनः ।
असद्यथा जरित्र उत सूरिरिन्द्रो रायो विश्ववारस्य दाता ॥ १० ॥

एव । इत् । इन्द्रः । सुते । अस्तावि । सोमे । भरत्ऽवाजेषु । क्षयत् । इत् । मघोनः ।
असत् । यथा । जरित्रे । उत । सूरिः । इन्द्रः । रायः । विश्वऽवारस्य । दाता ॥ १० ॥

मघोनः धनवतो हविष्मतो यजमानस्य क्षयत् ईश्वरः इन्द्रः सोमे सुते अभिषुते सति भरद्वाजेषु भरद्वाजे मयि एव एवम् अस्तावि स्तुतोऽभूत् । इन्द्रः जरित्रे स्तोत्रे सूरिः सन्मार्गे प्रेरकः यथा असत् भवेत् । उत अपि च विश्ववारस्य विश्वैर्वरणीयस्य रायः धनस्य दाता यथा भवेत् तथा अस्तावीति संबन्धः । इदिति द्वयं पूरणम् ॥ ॥ १६ ॥ ॥ २ ॥

---

१. घ–पुरुहूतं बहुभिराहूतमिन्द्रम् । २. ख-ङ्ग-न-भ–आयम्याः आगच्छन्तु ( ख-ङ्ग-०च्छतु ) नियच्छन्तु; ङ्ग-त२–आयम्याः आगच्छन्तु; त१-र–आयम्याः आगच्छतु । ३. ख-ङ्ग-ञ-न-भ-र–आगच्छतु; त२-आच्छतु; य-आगच्छतु नियच्छतु । ४. ख-ङ्ग-ञ-त१-न-भ-य-र–एनम् ।

तृतीयेऽनुवाके विंशतिसूक्तानि । तत्र 'वृषा मदः' इति दशर्चं प्रथमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । 'वृषा' इत्यनुक्रान्तम् । विषुवति निष्केवल्य एतत्सूक्तम् । सूत्रितं च—'वृषा मदः प्र मंहिष्ठाय' ( आश्व. श्रौ. ८. ६ ) इति ॥

वृषा मद इन्द्रे श्लोक उक्था सचा सोमेषु सुतपा ऋजीषी ।
अर्चत्र्यो मघवा नृभ्य उक्थैर्द्युक्षो राजा गिरामक्षितोतिः ॥ १ ॥

वृषा । मदः । इन्द्रे । श्लोकः । उक्था । सचा । सोमेषु । सुतऽपाः । ऋजीषी ।
अर्चत्र्यः । मघऽवा । नृऽभ्यः । उक्थैः । द्युक्षः । राजा । गिराम् । अक्षितऽऊतिः ॥ १ ॥

सोमेषु सोमवत्सु यागेषु इन्द्रे सोमपानजनितः मदः वृषा यजमानस्य कामानां वर्षको भवति । यद्वा । सर्वजनाह्लादकस्य वर्षणस्य कर्ता भवति । उक्था उक्थेन शस्त्रेण सचा सह श्लोकः स्तोत्ररूपः शब्दः वृषा भवति । सुतपाः अभिषुतस्य सोमस्य पाता ऋजीषी ऋजीषं गतरसमपि सोमं न परित्यजन् मघवा धनवान् स चेन्द्रः नृभ्यः स्तुतीनां नेतृभ्यः[1] उक्थैः स्तोत्रैः अर्चत्र्यः अर्चनीयो भवति । द्युक्षः द्युलोकनिवासः गिरां स्तुतीनां राजा ईश्वर इन्द्रः अक्षितोतिः अक्षीणरक्षश्च[2] भवति ॥

ततुरिर्वीरो नर्यो विचेताः श्रोता हवं गृणत उर्व्यूतिः ।
वसुः शंसो नरां कारुधाया वाजी स्तुतो विदथे दाति वाजम् ॥ २ ॥

ततुरिः । वीरः । नर्यः । विऽचेताः । श्रोता । हवम् । गृणतः । उर्विऽऊतिः ।
वसुः । शंसः । नराम् । कारुऽधायाः । वाजी । स्तुतः । विदथे । दाति । वाजम् ॥ २ ॥

वाजी अश्ववान् इन्द्रः विदथे यज्ञेऽस्माभिः स्तुतः सन् वाजम् अन्नं दाति अस्मभ्यं ददाति । कीदृश इन्द्रः । ततुरिः शत्रूणां हिंसकः वीरः विक्रान्तः नर्यः नरहितः विचेताः विविक्तज्ञानः हवम् अस्मदीयं स्तोत्रं श्रोता गृणतः स्तुवतः स्तोतृजनस्य उर्व्यूतिः विस्तृतरक्षः वसुः वासयिता नरां नृणां स्तोतृजनानां शंसः शंसनीयः कारुधायाः कारूणां स्तोतॄणां धारयिता । एवंभूत इन्द्रो वाजं ददातीति संबन्धः ॥

अक्षो न चक्र्योः शूर बृहन्प्र ते मह्ना रिरिचे रोदस्योः ।
वृक्षस्य नु ते पुरुहूत वया व्यू३तयो रुरुहुरिन्द्र पूर्वीः ॥ ३ ॥

अक्षः । न । चक्र्योः । शूर । बृहन् । प्र । ते । मह्ना । रिरिचे । रोदस्योः ।
वृक्षस्य । नु । ते । पुरुऽहूत । वयाः । वि । ऊतयः । रुरुहुः । इन्द्र । पूर्वीः ॥ ३ ॥

---

१. ख-भ–नेतृभ्यो मनुष्येभ्यः । २. ख१-न-भ–अक्षीणरक्षिणश्च; ज-ण-अक्षीणः रक्षिणश्च; ज्ञ-अक्षीण-रक्षणश्च; त-अक्षीणरक्षकश्च ।

हे शूर विक्रान्तेन्द्र बृहन् महान्[1] ते त्वदीयः महा महिमा रोदस्योः द्यावापृथिव्योः प्र रिरिचे अतिरिच्यते[2]। द्यावापृथिवीभ्यामित्यर्थः। अत्र[3] दृष्टान्तः। चक्र्योः चक्रयोः अक्षो न। रथसंबन्ध्यक्षो यथा चक्राभ्यां बहिर्गतस्तद्वत्। हे पुरुहूत बहुभिराहूत इन्द्र त्वदीयाः पूर्वीः बह्व्यः ऊतयः रक्षाः वि रुरुहुः विशेषेण रोहन्ति। तत्र दृष्टान्तः। वृक्षस्य नु। यथा वृक्षस्य वयाः शाखाः विरोहन्ति तद्वत्॥

शचीवतस्ते पुरुशाक शाका गवामिव स्रुतयः संचरणीः।
वत्सानां न तन्तयस्त इन्द्र दामन्वन्तो अदामानः सुदामन्॥ ४॥

शचीऽवतः। ते। पुरुऽशाक। शाकाः। गवाम्ऽइव। स्रुतयः। सम्ऽचरणीः।
वत्सानाम्। न। तन्तयः। ते। इन्द्र। दामन्ऽवन्तः। अदामानः। सुऽदामन्॥ ४॥

हे पुरुशाक बहुकर्मन्निन्द्र[4] शचीवतः प्रज्ञावतः ते त्वदीयाः शाकाः शक्तयः कर्माणि वा सर्वतः संचरन्तीति शेषः। तत्र दृष्टान्तः। गवामिव धेनूनां स्रुतयः मार्गा यथा संचरणीः सर्वत्र संचारिणो भवन्ति तद्वत्। अपि च वत्सानां न तन्तयः। तन्तिर्नाम दीर्घप्रसारिता रज्जुः यत्र नियतैर्विशाखदामभिः बहवो वत्सा बध्यन्ते। यथा तन्तयो बहूनां वत्सानां बन्धका हे सुदामन् शोभनदान इन्द्र तथा ते त्वदीयाः शाकाः दामन्वन्तः बन्धनवन्तः बहूनां शत्रूणां बन्धकाः अदामानः स्वयमन्यैरबद्धाः॥

अन्यदद्य कर्वरमन्यदु श्वोऽसच्च सन्मुहुराचक्रिरिन्द्रः।
मित्रो नो अत्र वरुणश्च पूषार्यो वशस्य पर्येतास्ति॥ ५॥

अन्यत्। अद्य। कर्वरम्। अन्यत्। ऊँ इति। श्वः। असत्। च। सत्। मुहुः। आऽचक्रिः। इन्द्रः।
मित्रः। नः। अत्र। वरुणः। च। पूषा। अर्यः। वशस्य। परिऽएता। अस्ति॥ ५॥

अयमिन्द्रः अद्य अस्मिन् दिवसे अन्यत् कर्वरम्। कर्मनामैतत्। कर्म करोति। अन्यदु अन्यदेव उक्तविलक्षणमेव कर्म श्वः परस्मिन् दिने करोति। एतदेव विव्रियते। असच्च अशुभम् अशनिपातनादिकं सत् वर्षणादिकं शोभनं कर्म च। यद्वा। त्रिशिरसो विश्वरूपस्य वधादिकम् असत्कर्म लोकोपद्रवकारिणो वृत्रादेरसुरस्य वधादिरूपं सत्कर्म च मुहुः पुनःपुनरसौ इन्द्रः आचक्रिः कर्ता भवति। एवं परस्परविलक्षणं कर्म स्वमहिम्ना पुनःपुनरावर्तयन् प्रतिदिवसमन्यदेव परेषामसाधारणं कर्म करोतीत्यर्थः। एवंविध इन्द्रः अत्र अस्मिन् यज्ञे नः अस्माकं वशस्य कामयितव्यस्य फलस्य स्वर्गादेः पर्येतास्ति परिगमयिता भवतु। अस्तेर्लेटि रूपम्। मित्रः अहरभिमानी देवः वरुणः राज्यभिमानी पूषा पोषको देवः अर्यः प्रेरकः सविता एते च इन्द्रेण नियम्यमाना अस्मदीयस्य कामस्य परिगमयितारः सन्तु। यद्वा। मित्रादयोऽप्यत्र स्वप्राधान्येन अभिधीयन्ते। मित्रादय इन्द्रः प्रत्येकमस्मदीयस्य कामस्य पर्येतास्तु। तथा च बृहद्देवतायामुक्तं—'प्रोतयेऽन्यदिति त्वेते वैश्वदेव्यावृचौ स्मृते' इति॥ ॥ १७॥

---

१. ख-भ—महन्। २. ख-भ—प्रिरिरिच्यते अतिरिच्यते; ज्ञ-त-न—प्रारिच्यते; र-प्ररिरिच्यते। ३. ख-न-भ-य-श—तत्र। ४. ख-घ भ-श—बहुशक्तिमन्निन्द्र।

**वि त्वदापो न पर्वतस्य पृष्ठादुक्थेभिरिन्द्रानयन्त यज्ञैः ।**
**तं त्वाभिः सुष्टुतिभिर्वाजयन्त आजिं न जग्मुर्गिर्वाहो अश्वाः ॥ ६ ॥**

वि । त्वत् । आपः । न । पर्वतस्य । पृष्ठात् । उक्थेभिः । इन्द्र । अनयन्त । यज्ञैः ।
तम् । त्वा । आभिः । सुस्तुतिऽभिः । वाजयन्तः । आजिम् । न । जग्मुः । गिर्वाहः । अश्वाः ॥ ६ ॥

हे इन्द्र त्वत् त्वत्सकाशात् उक्थेभिः उक्थैः शस्त्रैः यज्ञैः हविर्भिश्च स्तोतारः कामानात्मनः वि अनयन्त विविधं प्रापयन्ति । तत्र दृष्टान्तः । पर्वतस्य अद्रेः पृष्ठात् उपरिभागात् आपो न अप उदकानि यथा तद्वत् । अपि च हे गिर्वाहः गीर्भिः स्तुतिरूपाभिर्वाग्भिः वहनीयेन्द्र तं प्रसिद्धं त्वा त्वां वाजयन्तः बलिनं कुर्वन्तः । यद्वा । वाजमन्नमिच्छन्तो भरद्वाजाः स्तोतारः आभिः पूर्वोक्ताभिः सुष्टुतिभिः शोभनाभिः[1] स्तुतिभिः[1] जग्मुः[2] प्रापुः । क्षिप्रगमने दृष्टान्तः । अश्वाः वाहाः आजिं न संग्रामं यथा शीघ्रं प्रापुस्तद्वत्[3] ॥

**न यं जरन्ति शरदो न मासा न द्याव इन्द्रमवकर्शयन्ति ।**
**वृद्धस्य चिद्वर्धतामस्य तनूः स्तोमेभिरुक्थैश्च शस्यमाना ॥ ७ ॥**

न । यम् । जरन्ति । शरदः । न । मासाः । न । द्यावः । इन्द्रम् । अवऽकर्शयन्ति ।
वृद्धस्य । चित् । वर्धताम् । अस्य । तनूः । स्तोमेभिः । उक्थैः । च । शस्यमाना ॥ ७ ॥

शरदः संवत्सराः यम् इन्द्रं न जरन्ति न जरयन्ति नापक्षीणयन्ति । तथा मासाः च नापक्षीणयन्ति । तथा द्यावः दिवसाश्च यम् इन्द्रं न अवकर्शयन्ति नाल्पीभावयन्ति वृद्धस्य चित् प्रवृद्धस्यापि अस्य इन्द्रस्य तनूः शरीरं स्तोमेभिः अस्मदीयैः स्तोत्रैः उक्थैश्च शस्त्रैश्च शस्यमाना स्तूयमाना सती वर्धतां प्रवृद्धा भवतु ॥

**न वीळवे नमते न स्थिराय न शर्धते दस्युजूताय स्तवान् ।**
**अज्रा इन्द्रस्य गिरयश्चिदृष्वा गम्भीरे चिद्भवति गाधमस्मै ॥ ८ ॥**

न । वीळवे । नमते । न । स्थिराय । न । शर्धते । दस्युऽजूताय । स्तवान् ।
अज्राः । इन्द्रस्य । गिरयः । चित् । ऋष्वाः । गम्भीरे । चित् । भवति । गाधम् । अस्मै ॥ ८ ॥

स्तवान् अस्माभिः स्तूयमान इन्द्रः वीळवे दृढगात्राय यजमानाय न नमते न वशीभवति । स्थिराय[4] युद्धेऽविचलिताय च न नमते । शर्धते उत्सहमानाय[5] दस्युजूताय कर्मवर्जितैः प्रेरिताय यजमानाय न वशीभवति । यद्यपि स्तोतारो बहुगुणाः सन्ति तथापीन्द्रस्तेभ्यो दस्युसहितेभ्यो न वशीभवतीत्यर्थः । अपि च ऋष्वाः महान्तः गिरयश्चित् पर्वता अपि इन्द्रस्य

---

१. ज्ञ-त-शोभनस्तुतिभिः । २. ख-न-भ-य-क्षिप्रं जग्मुः । ३. ख-न-भ-य-प्राप्नुवन्ति तद्वत् । ४. ख-घ-भ-श- न स्थिराय । ५. ख-उत्सायनाय; ज्ञ-न-भ-उत्साहनाय ।

ˇअत्राः सुगमनाः क्षेपणीया भवन्ति । ˇगम्भीरे ˇचित् अगाधेऽपि स्थाने ˇअस्मै इन्द्राय ˇगाधम्[1] एव स्थानं विषयो[1] ˇभवति ॥

गम्भीरेण न उरुणामत्रिन्प्रेषो यन्धि सुतपावन्वाजान् ।
स्था ऊ षु ऊर्ध्व ऊती अरिषण्यन्नक्तोर्व्युष्टौ परितक्म्यायाम् ॥ ९ ॥

गम्भीरेण । नः । उरुणा । अमत्रिन् । प्र । इषः । यन्धि । सुतऽपावन् । वाजान् ।
स्थाः । ऊँ इति । सु । ऊर्ध्वः । ऊती । अरिषण्यन् । अक्तोः । विऽउष्टौ । परिऽतक्म्यायाम् ॥९॥

हे ˇअमत्रिन् । अमत्रं बलम् । तद्वन् हे ˇसुतपावन् सुतस्य सोमस्य पातरिन्द्र ˇगम्भीरेण केनापि दुरवगाहेन ˇउरुणा विस्तीर्णेन मनसा ˇनः अस्मभ्यम् ˇइषः अन्नानि ˇवाजान् बलानि च ˇप्र ˇयन्धि प्रयच्छ । किंच ˇअक्तोः रात्रेः ˇव्युष्टौ विवासे अह्नि ˇपरितक्म्यायां रात्रौ हे इन्द्र त्वम् ˇऊती अस्माकं रक्षायै हे इन्द्र ˇअरिषण्यन् अहिंसंस्त्वम् ˇऊर्ध्वः उद्युक्तः ˇस्था ˇऊ ˇषु सुष्ठु तिष्ठैव ॥

सचस्व नायमवसे अभीक इतो वा तमिन्द्र पाहि रिषः ।
अमा चैनमरण्ये पाहि रिषो मदेम शतहिमाः सुवीराः ॥ १० ॥

सचस्व । नायम् । अवसे । अभीके । इतः । वा । तम् । इन्द्र । पाहि । रिषः ।
अमा । च । एनम् । अरण्ये । पाहि । रिषः । मदेम । शतऽहिमाः । सुऽवीराः ॥ १० ॥

हे ˇइन्द्र त्वं ˇनायं कर्मणां स्तुतीनां च नेतारम् ˇअभीके संग्रामे ˇअवसे रक्षणाय ˇसचस्व सेवस्व । ˇइतो ˇवा अस्मात् संनिकृष्टाच्च ˇरिषः शत्रोः अमुतो विप्रकृष्टाच्छत्रोश्च । वाशब्दोऽनुक्तेन विवक्षितेन समुच्चयार्थः । हे इन्द्र ˇतं स्तोतारं ˇपाहि रक्ष । तथा ˇअमा ˇच गृहे च । अमेति गृहनाम । ˇअरण्ये कानने च ˇरिषः शत्रोः ˇपाहि तं[2] रक्ष । तदनन्तरं ˇसुवीराः शोभनपुत्रा वयं ˇशतहिमाः शतसंवत्सरान् ˇमदेम हृष्याम ॥ ॥ १८ ॥

'या त ऊतिः' इति नवर्चं द्वितीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रान्तं— 'या ते नव' इति । पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहनीदं सूक्तं निष्केवल्यनिविद्धानम् । सूत्रितं च— 'या त ऊतिरवमेति मध्यंदिनः' (आश्व. श्रौ. ७. ६) इति ॥

या त ऊतिरवमा या परमा या मध्यमेन्द्र शुष्मिन्नस्ति ।
ताभिरू षु वृत्रहत्येऽवीर्न एभिश्च वाजैर्महान्न उग्र ॥ १ ॥

या । ते । ऊतिः । अवमा । या । परमा । या । मध्यमा । इन्द्र । शुष्मिन् । अस्ति ।
ताभिः । ऊँ इति । सु । वृत्रऽहत्ये । अवीः । नः । एभिः । च । वाजैः । महान् । नः । उग्र ॥१॥

---

१. ख–गाधमवस्था अवस्थानविषयो; ज्ञ-झ-त-न-भ-र–गाधमवस्थानविषयो । २. श-एनम् ।

हे ˇशुष्मिन् बलवन् ˇइन्द्र ˇते त्वदीया ˇया ˇऊतिः या रक्षा ˇअवमा अधमा ˇअस्ति । ˇया ˇपरमा उत्कृष्टास्ति । ˇया ˇमध्यमा अस्ति । ˇताभिः ऊतिभिः ˇवृत्रहत्ये युद्धे ˇनः अस्मान् ˇसु अत्यन्तम् ˇअवीः पालय । किंच हे ˇउग्र उद्गूर्णेन्द्र ˇमहान् त्वम् ˇएभिः भोज्यसाधनैः ˇवाजैः अन्नैः ˇच ˇनः अस्मान् संयोजयेति शेषः ॥

आभिः स्पृधो मिथतीररिषण्यन्नमित्रस्य व्यथया मन्युमिन्द्र ।
आभिर्विश्वा अभियुजो विषूचीरार्याय विशोऽव तारीर्दासीः ॥ २ ॥

आभिः । स्पृधः । मिथतीः । अरिषण्यन् । अमित्रस्य । व्यथय । मन्युम् । इन्द्र ।
आभिः । विश्वाः । अभिऽयुजः । विषूचीः । आर्याय । विशः । अव । तारीः । दासीः ॥२॥

हे ˇइन्द्र ˇआभिः अस्मदीयाभिः स्तुतिभिः ˇमिथतीः शत्रुसैन्यानि हिंसतीः ˇस्पृधः अस्मदीयाः सेनाः ˇअरिषण्यन् अहिंसन् । पालयन्नित्यर्थः । ˇअमित्रस्य शत्रोः ˇमन्युं संग्रामादिषु विद्यमानं कोपं ˇव्यथय नाशय । अपि च ˇआभिः स्तुतिभिरेव ˇअभियुजः अभियोक्त्रीः ˇविषूचीः सर्वतो विद्यमानाः ˇदासीः कर्मणामुपक्षपयित्रीः ˇविश्वाः सर्वाः ˇविशः प्रजाः ˇआर्याय यज्ञादिकर्मकृते यजमानाय ˇअव ˇतारीः विनाशय ॥

इन्द्र जामय उत येऽजामयोऽर्वाचीनासो वनुषो युयुज्रे ।
त्वमेषां विथुरा शवांसि जहि वृष्ण्यानि कृणुही पराचः ॥ ३ ॥

इन्द्र । जामयः । उत । ये । अजामयः । अर्वाचीनासः । वनुषः । युयुज्रे ।
त्वम् । एषाम् । विथुरा । शवांसि । जहि । वृष्ण्यानि । कृणुहि । पराचः ॥ ३ ॥

हे ˇइन्द्र ˇजामयः ज्ञातिरूपाः संनिकृष्टा ये शत्रवः । ˇउत अपि च ˇअजामयः दूरदेशे स्थिता ˇये शत्रवः ˇअर्वाचीनासः अस्मदभिमुखाः ˇवनुषः हिंसन्तः ˇयुयुज्रे उद्युक्ता भवन्ति ˇएषाम् उभयविधानां शत्रूणां संबन्धीनि ˇशवांसि बलानि ˇविथुरा[1] विथुराणि[1] हीनानि ˇत्वं कुर्विति शेषः । तथा ˇवृष्ण्यानि एषां वीर्याणि ˇजहि नाशय । किंच ˇपराचः उभयविधान् शत्रून् पराचः पराङ्मुखान् ˇकृणुहि कुरु ॥

शूरो वा शूरं वनते शरीरैस्तनूरुचा तरुषि यत्कृण्वैते ।
तोके वा गोषु तनये यदप्सु वि क्रन्दसी उर्वरासु ब्रवैते ॥ ४ ॥

शूरः । वा । शूरम् । वनते । शरीरैः । तनूऽरुचा । तरुषि । यत् । कृण्वैते इति ।
तोके । वा । गोषु । तनये । यत् । अप्ऽसु । वि । क्रन्दसी इति । उर्वरासु । ब्रवैते इति ॥ ४ ॥

हे इन्द्र ˇशूरः त्वदनुगृहीतो वीरः ˇशरीरैः अङ्गैः ˇशूरं ˇवा वीरमपि ˇवनते हन्ति । वेत्ययमपीत्यस्यार्थे वर्तते । यद्वा । वेत्यनेन विकल्पाभिधायकेन अशूरो[2] वा त्वदनुगृहीतः सन् शूरं वनते ।

---

१. ख-ज्ञ-न-भ-र–विधुरा विधुराणि; ज्ञ-त–विथुरा विधुराणि; श–विथुराणि । २. ख-ज्ञ-न-भ-य–अशूरोऽभिधीयते ( य–असुरोऽभि° ) शूरो वाशूरो; र–अशूरोऽभिधीयते । शूरो ।

कदा चनत इत्येतदाह। vतनूरुचा शरीरेण शोभमानौ परस्परविरोधिनौ vतरुषि युद्धे vयत् यदा vकृण्वते संग्रामं कुर्वाते। vयत् यदा च vतोके vवा पुत्रनिमित्ते वा vगोषु निमित्तभूतासु वा vतनये पौत्रे निमित्तभूते वा vअप्सु उदकेषु निमित्तेषु वा vउर्वरासु सर्वसस्याढ्यासु भूमिषु निमित्तासु vक्रन्दसी क्रन्दमानावाक्रोशन्तौ vवि vब्रवैते विवदेते। हे इन्द्र पुत्रादिलाभजयः[1] त्वदनुगृहीतस्य भवतीत्यर्थः ॥

नहि त्वा शूरो न तुरो न धृष्णुर्न त्वा योधो मन्यमानो युयोध।
इन्द्र नकिष्ट्वा प्रत्यस्त्येषां विश्वा जातान्यभ्यसि तानि ॥ ५ ॥

नहि। त्वा। शूरः। न। तुरः। न। धृष्णुः। न। त्वा। योधः। मन्यमानः। युयोध।
इन्द्र। नकिः। त्वा। प्रति। अस्ति। एषाम्। विश्वा। जातानि। अभि। असि। तानि ॥५॥

हे इन्द्र vत्वा त्वया सह vशूरः विक्रान्तजनः vनहि vयुयोध न युध्यते[2]। तथा vतुरः अन्येषां शत्रूणां हिंसकः स त्वया vन युयोध। vधृष्णुः धर्षकः vन युयोध। vमन्यमानः युद्धे क्रुध्यन् vयोधः भटः vत्वा त्वया vन युयोध। हे vइन्द्र vएषां शूरादीनां मध्ये कश्चन vत्वा तव vनकिः vप्रत्यस्ति प्रतिनिधिर्नास्ति। vविश्वा विश्वानि vजातानि प्रादुर्भूतानि vतानि[3] शूरादीनि त्वम् vअभ्यसि अभिभवसि ॥ ॥ १९ ॥

स पत्यत उभयोर्नृम्णमयोर्यदी वेधसः समिथे हवन्ते।
वृत्रे वा महो नृवति क्षये वा व्यचस्वन्ता यदि वितन्तसैते ॥ ६ ॥

सः। पत्यते। उभयोः। नृम्णम्। अयोः। यदि। वेधसः। सम्ऽइथे। हवन्ते।
वृत्रे। वा। महः। नृऽवति। क्षये। वा। व्यचस्वन्ता। यदि। वितन्तसैते इति ॥ ६ ॥

vअयोः अनयोः vउभयोः मध्ये vसः जनः vनृम्णं धनं vपत्यते ईष्टे। कयोर्मध्ये क ईष्ट इत्येतदुभयमाह। vयदि यस्य जनस्य। यदीति निपातो यस्यार्थे वर्तते। vसमिथे यज्ञे vवेधसः कर्मणां विधातार ऋत्विजः vहवन्ते इन्द्रं स्तुवन्ति स ईष्ट इति संबन्धः। vमहः महति प्रभूते vवृत्रे vवा निरोधे निमित्ते वा vनृवति परिचारकमनुष्ययुक्ते vक्षये vवा गृहनिमित्ते[4] वा व्यचस्वन्तौ[5] vयदि यौ[6] जनौ। यदीति याविस्यर्थे वर्तते[7]। vवितन्तसैते वियुध्येते तयोर्मध्ये इति[8] संबन्धः ॥ तसेः उपक्षयकर्मणः विपूर्वात् वितन्तसैते इति भवति। यद्वा। तन्तस इति धातुः कण्ड्वादिषु पठ्यते तस्मादिदं रूपमिति ॥

---

१. ख-पुत्रादि; भ-पुत्रादिलाभः; श-पुत्रादिलाभाय। २. ख-ज्ञ-झ-त-न-भ-य-र-युध्येत्। ३. ख-झ-त२-न-भ-श-'तानि' नास्ति। ४. ख१-ज्ञ-गृहे निमित्ते। ५. ख-भ-य-र-व्यचस्वन्तौ व्याप्तिमन्तौ; घ-व्यचस्वन्ता व्यचस्वन्तौ उद्योगवन्तौ; ज्ञ-त१-व्यचस्वतौ; झ-न-व्यचस्वन्ता व्यचस्वन्तौ व्याप्तिमन्तौ; श-व्यचस्वन्ता व्यचस्वन्तौ। ६. ख-घ-भ-श-तौ। ७. ख-झ-त-भ-र- न वर्तते। ८. ख-घ-भ-त्वदनुगृहीतः जयतीति (ख-घ-जयति)।

अधं स्मा ते चर्षणयो यदेजानिन्द्र त्रातोत भवा वरूता ।
अस्माकासो ये नृतमासो अर्य इन्द्र सूरयो दधिरे पुरो नः ॥ ७ ॥

अध । स्म । ते । चर्षणयः । यत् । एजान् । इन्द्र । त्राता । उत । भव । वरूता ।
अस्माकासः । ये । नृऽतमासः । अर्यः । इन्द्र । सूरयः । दधिरे । पुरः । नः ॥ ७ ॥

अध स्म अपि च हे इन्द्र ते[1] त्वदीयाः चर्षणयः पुरुषाः यत् यदा एजान् एजेयुः भीत्या कम्पेयुः त्वं तेषां त्राता पालकः भव । उत अपि च वरूता संभक्ता भव । अस्माकासः अस्मदीयाः नृतमासः नेतृतमाः ये मनुष्या हे इन्द्र त्वाम् अर्यः अरयः । प्रापयितार इत्यर्थः । तेषां त्राता भव । हे इन्द्र सूरयः ये स्तोतारः नः अस्मान् पुरः दधिरे पुरश्चक्रिरे । तेषां च त्राता भवेति ॥

साकमेधेषु माहेन्द्र्यामिष्टौ इन्द्रस्य वृत्रघ्नो[2] याज्या । सूत्रितं च—' अनु ते दायि मह इन्द्रियाय विश्वकर्मन्हविषा वावृधानः ' ( आश्व. श्रौ. २. १८ ) इति । अनुक्रीनाम्न्येकाहे निष्केवल्य एषैव सूक्तमुखीया । सूत्रितं च—' अनु ते दायि मह इन्द्रियाय कथो नु ते परि चराणि विद्वानिति द्वे ' ( आश्व. श्रौ. ९. ५ ) इति ॥

अनु ते दायि मह इन्द्रियायं सत्रा ते विश्वमनु वृत्रहत्ये ।
अनु क्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्ये ॥ ८ ॥

अनु । ते । दायि । महे । इन्द्रियाय । सत्रा । ते । विश्वम् । अनु । वृत्रऽहत्ये ।
अनु । क्षत्रम् । अनु । सहः । यजत्र । इन्द्र । देवेभिः । अनु । ते । नृऽसह्ये ॥ ८ ॥

हे इन्द्र महे महते ते तुभ्यम् इन्द्रियाय ऐश्वर्यार्थम् अनु दायि अन्वदायि । अनुदीयते स्म । वृत्रहत्ये वृत्रवधे निमित्ते ते तुभ्यं विश्वं समस्तं सत्रा सत्यम् अनु दायि । कैः किमनु दायीति तदुभयमाह । येन विश्वं बिभर्ति तत् क्षत्रं बलम् अनु दायि । येन शत्रूनभिभवति तद्गुणविशिष्टं[3] सहः बलम् अनु दायि । हे यजत्र यजनीय इन्द्र ते तुभ्यं नृषह्ये[4] युद्धे देवेभिः सर्वैर्देवैरेतत्सर्वम् अनु दायि ॥

एवा नः स्पृधः समजा समत्स्विन्द्र रारन्धि मिथतीरदेवीः ।
विद्याम वस्तोरवसा गृणन्तो भरद्वाजा उत त इन्द्र नूनम् ॥ ९ ॥

एव । नः । स्पृधः । सम् । अज । समत्ऽसु । इन्द्र । ररन्धि । मिथतीः । अदेवीः ।
विद्याम । वस्तोः । अवसा । गृणन्तः । भरत्ऽवाजाः । उत । ते । इन्द्र । नूनम् ॥ ९ ॥

हे इन्द्र[5] एव एवं स्तुतस्त्वं नः अस्मदीयाः स्पृधः शत्रुसेनाः[6] समत्सु संग्रामेषु समज शत्रुवधार्थं प्रेरय । किंच मिथतीः हिंसतीः अदेवीः आसुरीः सेनाः ररन्धि अस्मदर्थं वशीकुरु ।

१. ख-ञ-ञ-त-न-भ-र-श—' ते ' नास्ति । २. ख-ञ-ञ-भ—वृत्रहणः; त-र—वृत्रहणे; श—वृत्रहणेति । ३. ख-ञ-त२-न-भ-र—°विशिष्टकम् । ४. ञ-त—नृसह्ये । ५. ख-भ-श—इन्द्र त्वम् । ६. ञ—स्पर्धमानाः सेनाः ।

उत अपि च हे इन्द्र ते[1] गृणन्तः त्वां स्तुवन्तः भरद्वाजाः वयम् अवसा अन्नेन सह वस्तोः वासस्य । निवासमित्यर्थः । नूनम् अवश्यं विद्याम लभेमहि ॥ ॥ २० ॥

'श्रुधी न इन्द्र' इत्यष्टर्चं तृतीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रम्यते—'श्रुधी नोऽष्टौ' इति । विनियोगो लैङ्गिकः ॥

श्रुधी न इन्द्र ह्वयामसि त्वा महो वाजस्य सातौ वावृषाणाः ।
सं यद्विशोऽयन्त शूरसाता उग्रं नोऽवः पार्ये अहन्दाः ॥ १ ॥

श्रुधि । नः । इन्द्र । ह्वयामसि । त्वा । महः । वाजस्य । सातौ । ववृषाणाः ।
सम् । यत् । विशः । अयन्त । शूरऽसातौ । उग्रम् । नः । अवः । पार्ये । अहन् । दाः ॥१॥

हे इन्द्र ववृषाणाः सोमैस्त्वां सिञ्चन्तो वयं स्तोतारः महः महतः वाजस्य अन्नस्य सातौ लाभार्थं त्वा त्वां ह्वयामसि आह्वयामः । हे इन्द्र त्वं नः अस्माकं तदाह्वानं श्रुधि शृणु । यत् यदा विशः जनाः शूरसातौ[2] युद्धे सम् अयन्त संगच्छन्ते तदा पार्ये अन्तिमे अहन् अहनि दिवसे नः अस्मभ्यम् उग्रम् उद्गूर्णम् अवः रक्षणं दाः अदाः प्रयच्छ ॥

त्वां वाजी हवते वाजिनेयो महो वाजस्य गध्यस्य सातौ ।
त्वां वृत्रेष्विन्द्र सत्पतिं तरुत्रं त्वां चष्टे मुष्टिहा गोषु युध्यन् ॥ २ ॥

त्वाम् । वाजी । हवते । वाजिनेयः । महः । वाजस्य । गध्यस्य । सातौ ।
त्वाम् । वृत्रेषु । इन्द्र । सत्ऽपतिम् । तरुत्रम् । त्वाम् । चष्टे । मुष्टिऽहा । गोषु । युध्यन् ॥२॥

वाजी हविर्लक्षणान्नवान् वाजिनेयः वाजिन्याः पुत्रो भरद्वाजो हे इन्द्र त्वां गध्यस्य सर्वैः प्राप्यस्य महः महतः वाजस्य अन्नस्य सातौ लाभे निमित्ते हवते स्तौति । अपि च हे इन्द्र सत्पतिं सज्जनानां पालकं तरुत्रं दुर्जनानां तारकं त्वां वृत्रेषु उपद्रवेषु निमित्तेषु भरद्वाजो हवते । मुष्टिहा मुष्टिबलेन शत्रूणां हन्ता गोषु निमित्तभूतासु युध्यन् शत्रुभिः सह युद्धं कुर्वन् भरद्वाजः त्वां चष्टे पश्यति । प्रतिपालयते ॥

त्वं कविं चोदयोऽर्कसातौ त्वं कुत्साय शुष्णं दाशुषे वर्क् ।
त्वं शिरो अमर्मणः पराहन्नतिथिग्वाय शंस्यं करिष्यन् ॥ ३ ॥

त्वम् । कविम् । चोदयः । अर्कऽसातौ । त्वम् । कुत्साय । शुष्णम् । दाशुषे । वर्क् ।
त्वम् । शिरः । अमर्मणः । परा । अहन् । अतिथिऽग्वाय । शंस्यम् । करिष्यन् ॥ ३ ॥

हे इन्द्र त्वम् अर्कसातौ अन्नलाभार्थं कविं भार्गवमृषिं चोदयः अचोदयः । प्रैरयः । किंच हे इन्द्र त्वं दाशुषे हविर्दत्तवते कुत्साय शुष्णम् असुरं वर्क् छेदितवानसि ॥ वर्क् इति

---

१. ख-ज्ञ-ज्ञ-त-न-भ-य-र—ते त्वत्तः । २. ख-ज्ञ-ज्ञ-त-न-भ-र—शूरसाता शूरसातौ ।

वृणक्तेश्छेदनार्थस्य[1] लुङि रूपम् ॥ तथा ^v त्वम् ^v अतिथिग्वाय अतिथीनामभिगन्त्रे दिवोदासाय ^v शंस्यं स्तुत्यं सुखं ^v करिष्यन् ^v अमर्मणः मर्महीनमात्मानं मन्यमानस्य शम्बरस्य ^v शिरः शीर्षं ^v पराहन् अवधीः ॥

त्वं रथं॒ प्र भ॑रो यो॒धमृ॒ष्वमावो॑ युध्य॑न्तं वृष॒भं दश॑द्युम् ।
त्वं तुग्रं॑ वेत॒सवे॒ सचा॑ह॒न्त्वं तुजिं॑ गृ॒णन्त॑मिन्द्र तू॒तोः ॥ ४ ॥

त्वम् । रथ॑म् । प्र । भ॒रः॒ । यो॒धम् । ऋ॒ष्वम् । आवः॑ । युध्य॑न्तम् । वृ॒ष॒भम् । दश॑ऽद्युम् ।
त्वम् । तुग्र॑म् । वे॒त॒सवे॑ । सचा॑ । अ॒ह॒न् । त्वम् । तुजि॑म् । गृ॒णन्त॑म् । इ॒न्द्र॒ । तू॒तो॒रिति॑ तू॒तोः ॥४॥

हे इन्द्र ^v त्वं वृषभसंज्ञकाय राज्ञे ^v योधं युद्धसाधनम् ^v ऋष्वं महान्तं ^v रथं ^v प्र ^v भरः प्रापयः । अपि च ^v युध्यन्तं शत्रुभिः सह युद्धं कुर्वन्तं ^v दशद्युं दश दिवसा युध्यतो[2] यस्य गताः तं ^v वृषभम् एतदाख्यं राजानम् ^v आवः युद्धादपीपलः । किंच ^v त्वं ^v वेतसवे एतन्नाम्ने राज्ञे ^v सचा सहायभूतः सन् ^v तुग्रम् असुरम् ^v अहन् हतवानसि । वेतसुर्नाम कश्चिदसुरः । अत्र तस्मादन्योऽसावुच्यते । यद्वा । वेतसव इति तृतीयार्थे चतुर्थी । वेतसुनासुरेण सहितं तुग्रं हतवानसि । तथा च मन्त्रान्तरे श्रूयते— 'अहं पितेव वेतसूँरभिष्टये तुग्रं कुत्साय स्मदिभं च रन्धयम्' ( ऋ. सं. १०. ४९. ४ ) इति । हे ^v इन्द्र ^v त्वं ^v गृणन्तं त्वां स्तुवन्तं ^v तुजिम् एतदाख्यं राजानं ^v तूतोः अवर्धयः ॥

त्वं तदु॒क्थमि॑न्द्र ब॒र्हणा॑ कः॒ प्र यच्छ॒ता स॒हस्रा॑ शूर॒ दर्षि॑ ।
अव॑ गि॒रेर्दास॒ं शम्ब॑रं ह॒न्प्रावो॒ दिवो॑दासं चि॒त्राभि॑रू॒ती ॥ ५ ॥

त्वम् । तत् । उ॒क्थम् । इ॒न्द्र॒ । ब॒र्हणा॑ । क॒रिति॑ कः॒ । प्र । यत् । श॒ता । स॒हस्रा॑ । शू॒र॒ । दर्षि॑ ।
अव॑ । गि॒रेः । दास॑म् । शम्ब॑रम् । ह॒न् । प्र । आ॒वः॒ । दिवः॑ऽदासम् । चि॒त्राभिः॑ । ऊ॒ती ॥५॥

हे ^v इन्द्र ^v बर्हणा बर्हणः शत्रूणां हिंसकः ^v त्वम् ^v उक्थं प्रशस्यं ^v तत् कर्म ^v कः अकरोः । किं तत्कर्मेत्युच्यते । हे ^v शूर वीरेन्द्र त्वं ^v शता शतानि ^v सहस्रा सहस्राणि च शम्बरस्य अनुचरान् भटान् ^v प्र ^v दर्षि विदारितवानसि । तथा च निगमान्तरे—'अध्वर्यवो यः शतं शम्बरस्य' ( ऋ. सं. २. १४. ६ ) इति । तथा त्वं ^v दासं यज्ञादिकर्मणामुपक्षपयितारं ^v गिरेः पर्वतान्निर्गतं ^v शम्बरम् असुरम् ^v अव ^v हन् अवावधीः । तथापि[3] श्रूयते—'यः शम्बरं पर्वतेषु क्षियन्तम्' ( ऋ. सं. २. १२. ११ ) इति । किंच ^v चित्राभिः विचित्राभिः[4] ^v ऊती ऊतिभिः रक्षाभिः ^v दिवोदासं राजानं ^v प्रावः प्रकर्षेण पालयसि स्म ॥ ॥ २१ ॥

त्वं श्र॒द्धाभि॑र्मन्दसा॒नः सोमै॑र्द॒भीत॑ये॒ चुमु॑रिमिन्द्र सिष्वप् ।
त्वं र॒जिं पिठी॑नसे दश॒स्यन्ष॒ष्टिं स॒हस्रा॒ शच्या॒ सचा॑हन् ॥ ६ ॥

त्वम् । श्र॒द्धाभिः॑ । म॒न्द॒सा॒नः । सोमैः॑ । द॒भीत॑ये । चुमु॑रिम् । इ॒न्द्र॒ । सि॒स्व॒प् ।
त्वम् । र॒जिम् । पिठी॑नसे । द॒श॒स्यन् । ष॒ष्टिम् । स॒हस्रा॑ । शच्या॑ । सचा॑ । अ॒ह॒न् ॥ ६ ॥

---

१. ख-झ-त-न-भ-र-छेदनार्थस्य । २. ख-झ-न-भ-र-श-युध्यन्तो; त-युद्धन्तो । ३. ख-न-भ-तथा च । ४. घ-श-विचित्राभिर्हे इन्द्र त्वमाभिः ।

हे इन्द्र श्रद्धाभिः श्रद्धापुरःसरमादरातिशयेनानुष्ठितैः कर्मभिः मन्दसानः मोदमानः। यच्छ्रद्धया युक्तं कर्म तत्सारवत् भवति। तथा च श्रूयते—'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा. उ. १. १. १०) इति। सोमैः च मन्दसानः त्वं दभीतये एतन्नामकाय राजर्षये चुमुरिम् एतदाख्यमसुरं सिष्वप् अस्वापयः। अवधीरित्यर्थः। किंच हे इन्द्र त्वं पिठीनसे एतन्नामकाय रजिम् एतदाख्यां कन्यां वा राज्यं वा दशस्यन् प्रयच्छन् शच्या प्रज्ञया षष्टिं षष्टिसंख्याकानि सहस्रा भटानां सहस्राणि सचा सह युगपदेव अहन् अवधीः॥

अहं चन तत्सूरिभिरानश्यां तव ज्याय इन्द्र सुम्नमोजः।
त्वया यत्स्तवन्ते सधवीर वीरास्त्रिवरूथेन नहुषा शविष्ठ॥ ७॥

अहम्। चन। तत्। सूरिऽभिः। आनश्याम्। तव। ज्यायः। इन्द्र। सुम्नम्। ओजः।
त्वया। यत्। स्तवन्ते। सधऽवीर। वीराः। त्रिऽवरूथेन। नहुषा। शविष्ठ॥ ७॥

हे सधवीर वीरैः सहित शविष्ठ बलवत्तमेन्द्र वीराः स्तोतारः त्रिवरूथेन। त्रीणि वरूथान्यावरकाणि भुवनानि यस्य तेन। नहुषा शत्रूणां बन्धकेन[1] त्वया दत्तं यत् सुम्नं सुखम् ओजः बलं च स्तवन्ते स्तुवन्ति हे इन्द्र तव त्वया दत्तं ज्यायः अतिशयेन प्रशस्यं तत् सुम्नमोजः अहं चन अहमपि भरद्वाजः सूरिभिः मदीयैः स्तोतृभिः सह आनश्यां प्राप्नुयाम्॥

वयं ते अस्यामिन्द्र द्युम्नहूतौ सखायः स्याम महिन प्रेष्ठाः।
प्रातर्दनिः क्षत्रश्रीरस्तु श्रेष्ठो घने वृत्राणां सनये धनानाम्॥ ८॥

वयम्। ते। अस्याम्। इन्द्र। द्युम्नऽहूतौ। सखायः। स्याम। महिन। प्रेष्ठाः।
प्रातर्दनिः। क्षत्रऽश्रीः। अस्तु। श्रेष्ठः। घने। वृत्राणाम्। सनये। धनानाम्॥ ८॥

हे महिन पूजनीय इन्द्र ते त्वदर्थं सखायः स्तोतारः वयम् अस्यां द्युम्नहूतौ अस्मिन्[2] धननिमित्ते स्तोत्रे प्रेष्ठाः अतिशयेन प्रियाः स्याम भवेम। प्रातर्दनिः प्रतर्दनो नाम राजा। तस्य पुत्रः क्षत्रश्रीः एतन्नामको मम याज्यो राजा श्रेष्ठः अस्तु सर्वेषामुत्कृष्टो भवतु। किमर्थम्। वृत्राणां शत्रूणां घने वधाय च धनानां वसूनां सनये संभजनाय च श्रेष्ठोऽस्त्विति संबन्धः॥ ॥२२॥

'किमस्य मदे' इत्यष्टर्चं चतुर्थं सूक्तं भरद्वाजस्यार्षम्। अनुक्रान्तं च—'किमस्यान्त्या चायमानस्याभ्यावर्तिनो दानस्तुतिः' इति। भरद्वाज ऋषिः। त्रिष्टुप् छन्दः। अन्त्यायास्तु दानस्तुतिरूपत्वात्[3] 'या तेनोच्यते' इति न्यायेन दानमेव देवता। विनियोगो लैङ्गिकः॥

किमस्य मदे किम्वस्य पीताविन्द्रः किमस्य सख्ये चकार।
रणा वा ये निषदि किं ते अस्य पुरा विविद्रे किमु नूतनासः॥ १॥

किम्। अस्य। मदे। किम्। ऊँ इति। अस्य। पीतौ। इन्द्रः। किम्। अस्य। सख्ये। चकार।
रणाः। वा। ये। निऽसदि। किम्। ते। अस्य। पुरा। विविद्रे। किम्। ऊँ इति। नूतनासः॥ १॥

१. ख-ञ-न-भ-य—बाधकेन। २. ख१-ञ-न-भ—'अस्मिन्' नास्ति ३. ख-ञ-भ-र—°रूपत्वम्।

भरद्वाज ऋषिः फलविलम्बनासहिष्णुः सन् अनयेन्द्रमाक्षिपति । Vअस्य सोमस्य Vमदे सति Vइन्द्रः Vकिं Vचकार कृतवान् । Vकिमु किंच Vअस्य सोमस्य Vपीतौ पाने सति किं चकार । Vअस्य सोमस्य Vसख्ये सखित्वे Vकिं चकार । पानात् पूर्वम् इन्द्रः सोमेन सह वसतीत्यर्थः । Vअस्य सोमस्य Vनिषदि गृहे Vरणा Vवा Vये स्तोतारश्च सन्ति ते स्तोतारः Vपुरा पूर्वं हे इन्द्र Vते त्वत्तः Vकिं Vविविद्रे किं लेभिरे । Vनूतनासः नूतना इदानींतनाः स्तोतारश्च Vकिमु लेभिरे ॥

सद॑स्य॒ मदे॒ सद्व॑स्य पी॒ताविन्द्र॒ः सद॑स्य स॒ख्ये च॑कार ।
रणा॑ वा॒ ये नि॒षदि॒ सत्ते अ॑स्य पुरा वि॑विद्रे सदु॒ नूत॑नासः ॥ २ ॥

सत् । अ॒स्य॒ । मदे॑ । सत् । ऊँ॒ इति॑ । अ॒स्य॒ । पी॒तौ । इन्द्र॑ः । सत् । अ॒स्य॒ । स॒ख्ये । च॒का॒र॒ ।
रणा॑ः । वा॒ । ये । नि॒ऽसदि॑ । सत् । ते । अ॒स्य॒ । पु॒रा । वि॒वि॒द्रे॒ । सत् । ऊँ॒ इति॑ । नूत॑नासः ॥२॥

एवमाक्षिप्त इन्द्रस्तस्मा ऋषय ईप्सितं धनं प्रददौ । तदनन्तरमृषिरिन्द्रसकाशात् संपूर्णकामः सन् पुरा यान्युपालम्भप्रतिपादकानि वाक्यान्युवाच इदानीं तानि निराकरोति । Vइन्द्रः Vअस्य सोमस्य Vमदे Vसत् शुभं कर्म Vचकार । Vअस्य सोमस्य Vपीतौ पाने Vसत् शुभं कर्म चकार । Vअस्य Vसख्ये Vसत् शुभं कर्म चकार । Vये Vरणा Vवा स्तोतारश्च ते Vनिषदि गृहे । यज्ञगृह इत्यर्थः । Vपुरा पूर्वं हे इन्द्र Vते त्वत्तः Vसत् शुभं कर्म Vविविद्रे लेभिरे । Vनूतनासः इदानींतनाः स्तोतारः Vसदु शुभमेव कर्म लेभिरे ॥

न॒हि नु ते॑ म॒हि॒मन॑ः सम॒स्य॒ न म॑घवन्मघव॒त्त्वस्य॑ वि॒द्म ।
न राध॑सोराध॒सो नूत॑न॒स्येन्द्र॒ नकि॑र्ददृश इन्द्रि॒यं ते॑ ॥ ३ ॥

न॒हि । नु । ते॒ । म॒हि॒मन॑ः । स॒म॒स्य॒ । न । म॒घ॒ऽव॒न् । म॒घ॒व॒त्ऽत्वस्य॑ । वि॒द्म ।
न । राध॑सःऽराधसः । नूत॑नस्य । इन्द्र॑ । नकि॑ः । द॒दृ॒शे॒ । इ॒न्द्रि॒यम् । ते॒ ॥ ३ ॥

हे Vमघवन् धनवन्निन्द्र Vते त्वदीयस्य Vसमस्य समस्तस्य Vमहिमनः महिम्नो महिमानं Vनहि Vविद्म वयं न जानीमः । नुशब्दः पूरणः । तथा Vमघवत्त्वस्य त्वदीयस्य धनिकत्वस्य च वयं न जानीमः । Vनूतनस्य स्तुत्यस्य Vराधसोराधसः त्वदीयं सर्वं धनं च न जानीमः । सर्वत्र द्वितीयार्थे षष्ठी । हे Vइन्द्र Vते त्वदीयम् Vइन्द्रियं सामर्थ्यं Vनकिर्ददृशे केनापि न दृश्यते ॥

ए॒तत्त्यत्त॑ इन्द्रि॒यम॑चेति॒ येनाव॑धीर्व॒रशि॑खस्य॒ शेष॑ः ।
वज्र॑स्य य॒त्ते निह॑तस्य॒ शुष्मा॑त्स्व॒नाच्चि॑दिन्द्र प॒र॒मो द॒दार॑ ॥ ४ ॥

ए॒तत् । त्यत् । ते॒ । इ॒न्द्रि॒यम् । अ॒चे॒ति॒ । येन॑ । अव॑धीः । व॒रऽशि॑खस्य । शेष॑ः ।
वज्र॑स्य । यत् । ते॒ । नि॒ऽह॑तस्य । शुष्मा॑त् । स्व॒नात् । चि॒त् । इ॒न्द्र॒ । प॒र॒मः । द॒दार॑ ॥ ४ ॥

हे इन्द्र Vयेन वीर्येण Vवरशिखस्य । वरशिखो नाम कश्चिदसुरः । तस्य Vशेषः शेषांसि पुत्रान् । शेष इत्यपत्यनामैतत् । Vअवधीः अहिंसीः Vते त्वदीयम् Vएतत्त्यत् तदिदम् Vइन्द्रियं वीर्यम्

ᐯअचेति अस्माभिरज्ञायि । हे ᐯइन्द्र ᐯयत् यस्मात् ᐯशुष्मात् बलात् ᐯनिहतस्य प्रेरितस्य त्वदीय-ᐯवज्रस्य ᐯस्वनाच्चित् ध्वनेरेव ᐯपरमः वरशिखस्य पुत्राणां मध्ये बलाद्याधिक्येनोत्कृष्टः[१] कश्चित् पुत्रः ᐯददार अदीर्यत ॥

वधीदिन्द्रो वरशिखस्य शेषोऽभ्यावर्तिने चायमानाय शिक्षन् ।
वृचीवतो यद्धरियूपीयायां हन्पूर्वे अर्धे भियसापरो दर्त् ॥ ५ ॥

वधीत् । इन्द्रः । वरऽशिखस्य । शेषः । अभिऽआवर्तिने । चायमानाय । शिक्षन् ।
वृचीवतः । यत् । हरिऽयूपीयायाम् । हन् । पूर्वे । अर्धे । भियसा । अपरः । दर्त् ॥ ५ ॥

पूर्वोक्तमेवार्थमनया विवृणोति । अयम् ᐯइन्द्रः ᐯचायमानाय चयमानस्य राज्ञः पुत्राय ᐯअभ्या-वर्तिने एतन्नामकाय राज्ञे ᐯशिक्षन् ईप्सितानि वसूनि प्रयच्छन् ᐯवरशिखस्य असुरस्य ᐯशेषः पुत्रान् ᐯवधीत् अवधीत् । अहिंसीत् । वरशिखस्य पुत्रान् कथमवधीदित्युच्यते । ᐯयत् यदा अयमिन्द्रः ᐯहरियूपीयायाम् । हरियूपीया नाम काचिन्नदी काचिन्नगरी वा । तस्यां ᐯपूर्वे ᐯअर्धे प्राग्भागे स्थितान् ᐯवृचीवतः । वृचीवान् नाम वरशिखस्य कुलोत्पन्नः पूर्वः । तद्गोत्रजान् वरशिखस्य पुत्रान् ᐯहन् अवधीत् तदा ᐯअपरः अपरभागे स्थितः वरशिखस्य श्रेष्ठः[२] पुत्रः ᐯभियसा भीत्या ᐯदर्त् दीर्णोऽभूत ॥ ॥ २३ ॥

त्रिंशच्छतं वर्मिण इन्द्र साकं यव्यावत्यां पुरुहूत श्रवस्या ।
वृचीवन्तः शरवे पत्यमानाः पात्रा भिन्दाना न्यर्थान्यायन् ॥ ६ ॥

त्रिंशत्ऽशतम् । । वर्मिणः । इन्द्र । साकम् । यव्याऽवत्याम् । पुरुऽहूत । श्रवस्या ।
वृचीवन्तः । शरवे । पत्यमानाः । पात्रा । भिन्दानाः । निऽअर्थानि । आयन् ॥ ६ ॥

इदानीमुक्तमेवार्थं विवृणोति । हे ᐯपुरुहूत बहुभिराहूत ᐯइन्द्र ᐯश्रवस्या श्रवस्यया । श्रवोऽन्नं यशो वा । तदिच्छया[३] । युद्धे त्वां जित्वा अन्नं प्राप्नुयाम यशो वा प्राप्नुयामेति कामयमानाः ᐯशरवे हिंसायै । त्वां हिंसितुमित्यर्थः । ᐯपत्यमानाः अभिपतन्तोऽभिगच्छन्तः ᐯपात्रा पात्राणि यज्ञसाधनानि ᐯभिन्दानाः भिन्दन्तः ᐯवर्मिणः कवचभृतः ᐯत्रिंशच्छतं त्रिंशदधिकशतसंख्याकाः ᐯवृचीवन्तः वरशिखस्य पुत्राः ᐯसाकं युगपदेव ᐯयव्यावत्यां पूर्वोक्तायां हरियूपीयायां ᐯन्यर्थानि अर्थशून्यानि ᐯआयन् अगच्छन्[४] । विनाशं प्रापुरित्यर्थः ॥

यस्य गावावरुषा सूयवस्यू अन्तरू षु चरतो रेरिहाणा ।
स सृञ्जयाय तुर्वशं परादाद्वृचीवतो दैववाताय शिक्षन् ॥ ७ ॥

यस्य । गावौ । अरुषा । सुयवस्यू इति सुऽयवस्यू । अन्तः । ऊँ इति । सु । चरतः । रेरिहाणा ।
सः । सृञ्जयाय । तुर्वशम् । परा । अदात् । वृचीवतः । दैवऽवाताय । शिक्षन् ॥ ७ ॥

---

१. ञ-त-बलाधिक्येनो० । २. ञ-त-र-शेषः । ३. ख-ञ-न-भ-य-तदिच्छया । ४. ख-घ-ञ-न-भ-य-आगच्छन् ; श-गच्छन् ।

ˇअरुषा अरुषौ रोचमानौ ˇसुयवस्यू[1] शोभनतृणानीच्छन्तौ ˇरेरिहाणा लेलिहानौ पुनःपुनः घासमास्वादयन्तौ । यद्वा । गतिविशेषं कुर्वन्तौ । ˇयस्य इन्द्रस्य संबन्धिनौ ˇगावौ अश्वौ ˇअन्तः द्यावापृथिव्योर्मध्ये अन्तरिक्षे[2] ˇचरतः गच्छतः । ˇउ ˇसु इतीमौ पूरणौ । ˇसः इन्द्रः ˇसृञ्जयाय एतन्नामकाय राज्ञे ˇतुर्वशं राजानं ˇपरादात् प्रददौ । किं कुर्वन् । ˇवृचीवतः वारशिखान् ˇदैववाताय देववातवंशोत्पन्नायाभ्यावर्तिने राज्ञे ˇशिक्षन् वशीकुर्वन् । तेषां धनानि प्रयच्छन्निति वा ॥

द्वयाँ अग्ने रथिनो विंशतिं गा वधूमतो मघवा मह्यं सम्राट् ।
अभ्यावर्ती चायमानो ददाति दूणाशेयं दक्षिणा पार्थवानाम् ॥ ८ ॥

द्वयान् । अग्ने । रथिनः । विंशतिम् । गाः । वधूऽमतः । मघऽवा । मह्यम् । सम्ऽराट् ।
अभिऽआवर्ती । चायमानः । ददाति । दुःऽनशा । इयम् । दक्षिणा । पार्थवानाम् ॥ ८ ॥

अधुना भरद्वाजः स्वस्मा अभ्यावर्तिना दत्तं धनजातमग्नये प्रकथयति । हे ˇअग्ने ˇमघवा धनवान् प्रभूतदानो वा ˇसम्राट् राजसूययाजी ˇचायमानः चयमानस्य पुत्रः ˇअभ्यावर्ती एतदाह्वयो राजा ˇरथिनः रथसहितान् ˇवधूमतः स्त्रीयुक्तान् ˇद्वयान् मिथुनभूतान् ˇविंशतिं विंशतिसंख्याकान् ˇगाः पशून् ˇमह्यं ˇददाति प्रायच्छत् । ˇपार्थवानां पृथोर्वंशजस्याभ्यावर्तिनो राज्ञः संबन्धिनी । पूजार्थं बहुवचनम् । ˇइयं ˇदक्षिणा ˇदुर्नशा केनापि नाशयितुमशक्या भवति ॥ ॥ २४ ॥

‘आ गावः’ इत्यष्टर्चं पञ्चमं सूक्तम् । अत्रेयमनुक्रमणिका—‘आ गावो गव्यं द्वितीयैन्द्री वान्त्यश्च पादोऽन्त्यानुष्टुप् जागतस्तृचो द्वितीयादिः’ इति । भरद्वाज ऋषिः । ‘इन्द्रो यज्वने’ इत्याद्यस्तृचो जागतः । ‘उपेदम्’ इति अन्त्यानुष्टुप् शिष्टाश्चतस्रस्त्रिष्टुभः । कृत्स्नस्य गौर्देवता द्वितीयायाः सूक्तान्त्यपादस्य च विकल्पेनेन्द्रो देवता । गवामुपस्थान एतत् सूक्तम् । सूत्रितं च—‘आगावीयमेके’ ( आश्व. गृ. २. १०. ७ ) इति ॥

आ गावो अग्मन्नुत भद्रमक्रन्त्सीदन्तु गोष्ठे रणयन्त्वस्मे ।
प्रजावतीः पुरुरूपा इह स्युरिन्द्राय पूर्वीरुषसो दुहानाः ॥ १ ॥

आ । गावः । अग्मन् । उत । भद्रम् । अक्रन् । सीदन्तु । गोऽस्थे । रणयन्तु । अस्मे इति ।
प्रजाऽवतीः । पुरुऽरूपाः । इह । स्युः । इन्द्राय । पूर्वीः । उषसः । दुहानाः ॥ १ ॥

ˇगावः ˇआ ˇअग्मन् । अस्मदीयं गृहमागच्छन्तु । ˇउत अपि च ˇभद्रं भजनीयं शुभम् ˇअक्रन् कुर्वन्तु । तथा ˇगोष्ठे अस्मदीये गवां स्थाने ˇसीदन्तु उपविशन्तु । तदनन्तरम् ˇअस्मे अस्मासु ˇरणयन्तु रमन्ताम् । अपि च ˇइह अस्मिन् गोष्ठे ˇपुरुरूपाः नानावर्णा गावः ˇप्रजावतीः प्रजावत्यः संततिसहिताः ˇपूर्वीः बह्व्यः ˇइन्द्राय इन्द्रार्थम् ˇउषसः उषःकालान् प्रति ˇदुहानाः दोग्ध्र्यः ˇस्युः भवेयुः ॥

---

१. घ-ज-ण-श–सूयवस्यू । २. ख-झ-न-भ–‘अन्तरिक्षे’ नास्ति ।

इन्द्रो यज्वने पृणते च शिक्षत्युपेद्ददाति न स्वं मुषायति ।
भूयोभूयो रयिमिदस्य वर्धयन्नभिन्ने खिल्ये नि दधाति देवयुम् ॥ २ ॥

इन्द्रः । यज्वने । पृणते । च । शिक्षति । उप । इत् । ददाति । न । स्वम् । मुषायति ।
भूयःऽभूयः । रयिम् । इत् । अस्य । वर्धयन् । अभिन्ने । खिल्ये । नि । दधाति । देवऽयुम् ॥ २ ॥

इन्द्रो यज्वने यजनशीलाय पृणते च स्तुतिभिः प्रीणयित्रे च स्तोत्रे शिक्षति अपेक्षितं धनं ददाति । न केवलं सकृदेव दानम् अपि तु सर्वदैवेत्याह उपेद्ददाति उपेत्य सर्वदा ददात्येव । यज्वनः स्तोतुश्च स्वं स्वभूतं धनं न मुषायति कदाचिदपि नापहरति । अपि च अस्य उभयविधस्य रयिं धनमात्मना दत्तं भूयोभूयः पुनःपुनः वर्धयन् इत् वृद्धिं प्रापयन्नेव देवयुं देवमिन्द्रमात्मन इच्छन्तं तं जनम् अभिन्ने शत्रुभिरभेद्ये खिल्ये । खिलमप्रतिहतं स्थानम् । तदेव खिल्यम् । स्वार्थिको यत् । अन्यैर्गन्तुमशक्ये स्थले नि दधाति निक्षिपति । निवासयतीत्यर्थः ॥

दैवीनां हविःषु 'न ता नशन्ति' 'न ता अर्वा' इति गोदेवताया याज्यापुरोनुवाक्ये (आश्व. श्रौ. ६. १४)। गोस्तोमेऽपि मरुत्वतीयनिष्केवल्ययोरेते सूक्तमुखीये । सूत्रितं च—'न ता अर्वा रेणुककाटो अश्नुते न ता नशन्ति न दभाति तस्करः' (आश्व. श्रौ. ९. ५) इति ॥

न ता नशन्ति न दभाति तस्करो नासामामित्रो व्यथिरा दधर्षति ।
देवाँश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह ॥ ३ ॥

न । ताः । नशन्ति । न । दभाति । तस्करः । न । आसाम् । आमित्रः । व्यथिः । आ । दधर्षति ।
देवान् । च । याभिः । यजते । ददाति । च । ज्योक् । इत् । ताभिः । सचते । गोऽपतिः । सह ॥ ३ ॥

ताः गावः न नशन्ति । अस्मत्सकाशान्न नश्यन्तु । किंच तस्करः चोरोऽपि न दभाति । अस्मदीया गा न हिंस्यात् । तथा आमित्रः अमित्रस्य शत्रोः संबन्धि व्यथिः शस्त्रम् आसाम् इमा गाः न आ दधर्षति नाक्रामतु । गोपतिः एवंभूतानां गवां स्वामी यजमानः याभिः गोभिः देवांश्च इन्द्रादीनुद्दिश्य यजते यजनं करोति । या गा इन्द्रार्थं ददाति च प्रयच्छति च ताभिः तादृशीभिर्गोभिः सह ज्योगित् चिरकालमेव सचते संगच्छताम् ॥

न ता अर्वा रेणुककाटो अश्नुते न संस्कृतत्रमुप यन्ति ता अभि ।
उरुगायमभयं तस्य ता अनु गावो मर्तस्य वि चरन्ति यज्वनः ॥ ४ ॥

न । ताः । अर्वा । रेणुऽककाटः । अश्नुते । न । संस्कृतऽत्रम् । उप । यन्ति । ताः । अभि ।
उरुऽगायम् । अभयम् । तस्य । ताः । अनु । गावः । मर्तस्य । वि । चरन्ति । यज्वनः ॥ ४ ॥

रेणुककाटः रेणुकस्य रेणोः पार्थिवस्य रजस उद्भेदकः। कटिर्भेदनकर्मा । अर्वा युद्धार्थमागतोऽश्वः ताः गाः न अश्नुते न प्राप्नुयात्[1] । तथा ताः गावः संस्कृतत्रं विशसनादिसंस्कारं न अभि उप यन्ति नाभिगच्छन्तु । अपि च ताः गावः यज्वनः यागशीलस्य तस्य मर्तस्य मनुष्यस्य उरुगायं विस्तीर्णगमनम् अभयं भयवर्जितं प्रदेशम्[2] अनु उद्दिश्य वि चरन्ति विशेषेण गच्छन्तु॥

गावो भगो गाव इन्द्रो मे अच्छान् गावः सोमस्य प्रथमस्य भक्षः ।
इमा या गावः स जनास इन्द्र इच्छामीद्धृदा मनसा चिदिन्द्रम् ॥ ५ ॥

गावः । भगः । गावः । इन्द्रः । मे । अच्छान् । गावः । सोमस्य । प्रथमस्य । भक्षः ।
इमाः । याः । गावः । सः । जनासः । इन्द्रः । इच्छामि । इत् । हृदा । मनसा । चित् । इन्द्रम् ॥५॥

गावः एव मह्यं भगः धनं भवन्तु । इन्द्रः च मे मह्यं गावः गाः अच्छान् यच्छतु । गावः[3] प्रथमस्य हविषां श्रेष्ठस्य सोमस्य भक्षः भक्षणं भवन्तु । अभिषुतस्य हि सोमस्य गव्येनाज्यादिना संस्क्रियमाणत्वात् । हे जनासः जनाः इमाः एवंभूताः या गावः सन्ति सः । ता इत्यर्थः । ता एव गावः इन्द्रः भवन्ति । दधिघृतादिरूपेण इन्द्रस्याप्यायनत्वात् । एवंभूतम् इन्द्रं हृदा श्रद्धायुक्तेन मनसा चित् । चिदित्यप्यर्थे । इच्छामीत् कामय एव । साधनभूताभिर्गोभिः एवंभूतमिन्द्रं यष्टुमिच्छामीत्यर्थः ॥

यूयं गावो मेदयथा कृशं चिदश्रीरं चित्कृणुथा सुप्रतीकम् ।
भद्रं गृहं कृणुथ भद्रवाचो बृहद्वो वय उच्यते सभासु ॥ ६ ॥

यूयम् । गावः । मेदयथ । कृशम् । चित् । अश्रीरम् । चित् । कृणुथ । सुऽप्रतीकम् ।
भद्रम् । गृहम् । कृणुथ । भद्रऽवाचः । बृहत् । वः । वयः । उच्यते । सभासु ॥ ६ ॥

हे गावः यूयं मेदयथ स्नेहयथ । आप्यायनं कुरुथेत्यर्थः । तथा कृशं चित् क्षीणमपि अश्रीरं चित् अश्लीलमपि सुप्रतीकं शोभनाङ्गं कृणुथ कुरुथ । हे भद्रवाचः कल्याणध्वन्युपेता गावः अस्मदीयं गृहं भद्रं कल्याणं कृणुथ । गोभिरुपेतं कुरुथ । सभासु यागपरिषत्सु हे गावः युष्माकं बृहत् महत् वयः अन्नम्[4] उच्यते[4] । सर्वैर्दीयत इत्यर्थः ॥

प्रजावतीः सूयवसं रिशन्तीः शुद्धा अपः सुप्रपाणे पिबन्तीः ।
मा वः स्तेन ईशत माघशंसः परि वो हेती रुद्रस्य वृज्याः ॥ ७ ॥

प्रजाऽवतीः । सुऽयवसम् । रिशन्तीः । शुद्धाः । अपः । सुऽप्रपाने । पिबन्तीः ।
मा । वः । स्तेनः । ईशत । मा । अघऽशंसः । परि । वः । हेतिः । रुद्रस्य । वृज्याः ॥७॥

---

१. ख–प्राप्नोतु; न-भ–प्राप्नोत् । २. ख-ज्ञ-त२-भ-र-श–प्रवेशम् । ३. ख-ज्ञ-ज्ञ-त-न-भ-र–'गावः' नास्ति । ४. ख-ज्ञ-न-भ-य–अन्नं भक्षणमुच्यते; ज्ञ–अन्नमुच्यते समवेतं क्रियते; त-र–अन्नम् ।

**हे गावो यूयं vप्रजावतीः प्रजावत्यो वत्साभिर्युक्ता भवतेति शेषः । vसुयवसं शोभनतृणं vरिशन्तीः रिशन्त्यो भक्षणार्थं हिंसन्त्यो भवत । vसुप्रपाणे सुखेन पातव्ये तटाकादौ vशुद्धाः निर्मलाः vअपः उदकानि vपिबन्तीः पिबन्त्यश्च भवत । vवः युष्मान् vस्तेनः तस्करः[1] vमा vईशत मेशिष्ट । ईश्वरो मा भूत् । तथापि vअघशंसः व्याघ्रादिः शत्रुः vमा ईशत । अपि च vवः युष्मान् vरुद्रस्य कालात्मकस्य परमेश्वरस्य vहेतिः आयुधं च[2] vपरि vवृज्याः परिवृणक्तु । परिहरतु[3] ॥**

उपेदमुपपर्चनमासु गोषूप पृच्यताम् । उप ऋषभस्य रेतस्युपेन्द्र तव वीर्ये ॥ ८ ॥

उप । इदम् । उपऽपर्चनम् । आसु । गोषु । उप । पृच्यताम् ।
उप । ऋषभस्य । रेतसि । उप । इन्द्र । तव । वीर्ये ॥ ८ ॥

**vआसु vगोषु vइदमुपपर्चनम् आप्यायनम् vउप vपृच्यतां संपृच्यताम् । हे vइन्द्र vतव vवीर्ये त्वदीयवीर्ये निमित्ते vऋषभस्य गवां गर्भमादधानस्य वृषभस्य vरेतसि इदमुपपर्चनमाप्यायनम्[4] । गोषु हि आप्यायितासु सतीषु तत्संबन्धिक्षीरादिहविर्द्वारेणेन्द्र आप्यायितो भवतीत्यर्थः । vउप इति पुनर्वचनं पादभेदानां[5] पूरणार्थमिति ॥ ॥ २५ ॥**

**वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।**
**पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥**

**इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये चतुर्थाष्टके षष्ठोऽध्यायः समाप्तः ॥**

---

**॥ श्रीगणेशाय नमः ॥**

**यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।**
**निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥**

**अथ सप्तमोऽध्याय आरभ्यते । षष्ठस्य मण्डलस्य तृतीयेऽनुवाके पञ्च सूक्तानि व्याकृतानि । 'इन्द्रं वः ' इति षड्‌ऋचं षष्ठं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । अनुक्रम्यते च—' इन्द्रं षट् ' इति । गतो विनियोगः ॥**

इन्द्रं वो नरः सख्याय सेपुर्महो यन्तः सुमतये चकानाः ।
महो हि दाता वज्रहस्तो अस्ति महामु रण्वमवसे यजध्वम् ॥ १ ॥

इन्द्रम् । वः । नरः । सख्याय । सेपुः । महः । यन्तः । सुऽमतये । चकानाः ।
महः । हि । दाता । वज्रऽहस्तः । अस्ति । महाम् । ऊँ इति । रण्वम् । अवसे । यजध्वम् ॥ १ ॥

**हे यजमानाः vवः युष्माकं संबन्धिनः vनरः नेतार ऋत्विजः vसख्याय सखिभावार्थम्[6] vइन्द्रं vसेपुः परिचरन्ति स्पृशन्ति वा । कथंभूताः । vमहः महान्ति स्तोत्राणि vयन्तः उपयन्तः प्राप्नुवन्तः ।**

---

१. ख-भ्र-न-भ-र—चौरः; य—चोरः । २. ख-भ्र-त-न-भ-य-र—च मा । ३. ख-झ-त-न-भ-य-र—न परिहरतु । ४. ख-ज्ञ-झ-त-न-भ-य-र—°माप्यायताम् । ५. ख-भ्र-न-भ—पादभेदेन; ज्ञ—पादभेदात्; त-र—पादभेदान् । ६. ज्ञ-त—सखिभावार्थे ।

कुर्वन्त इत्यर्थः । तथा सुमतये । सुमतिः शोभनानुग्रहात्मिका तदीया बुद्धिः । तां चकानाः कामयमानाः ॥ 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानसंज्ञा । चकाना इति कामयतेश्छान्दसं रूपम् ॥ यद्वा । महो महत्कर्म यन्तः[1] अनुतिष्ठन्तः सुमतये सुमतिं शोभनां स्तुतिं चकानाः शब्दयन्तः ॥ 'कै गै शब्दे' इत्यस्माल्लिटः कानचि रूपम् ॥ हि यस्मात् वज्रहस्तः वज्रपाणिरिन्द्रः महः महतो धनस्य दाता अस्ति भवति तस्मात् रण्वं रमणीयं महाम् महान्तमेव अवसे रक्षणाय यजध्वं हविर्भिः पूजयत ॥

आ यस्मि॑न्ह॒स्ते नर्या॑ मिमि॒क्षुरा रथे॑ हिर॒ण्यये॑ रथे॒ष्ठाः ।
आ र॒श्मयो॒ गभ॑स्त्योः स्थू॒रयो॒राध्व॑न्न॒श्वासो॒ वृष॑णो यु॒जा॒नाः ॥ २ ॥

आ । यस्मि॑न् । ह॒स्ते॑ । नर्याः॑ । मि॒मि॒क्षुः । आ । रथे॑ । हि॒र॒ण्यये॑ । र॒थे॒ऽस्थाः ।
आ । र॒श्मयः॑ । गभ॑स्त्योः । स्थू॒रयोः॑ । आ । अध्व॑न् । अश्वा॑सः । वृष॑णः । यु॒जा॒नाः ॥ २ ॥

यस्मिन् इन्द्रे नर्याः नृभ्यो हिता रायः आ मिमिक्षुः आसिच्यन्ते आपूर्यन्ते । व्यत्ययेन कर्मणि कर्तृप्रत्ययः । इन्द्रे कुत्रेति चेत् । हस्ते तदीये बाहौ । यद्वा । एतत्समानाधिकरणमिन्द्रस्य विशेषणम् । हस्ते हन्तर्यस्मिन्निन्द्र इत्यर्थः । उक्तं[2] यास्केन–'हस्तो हन्तेः प्राशुर्हनने' (निरु. १.७) इति । यद्वा । ईदृशे यस्मिन्निन्द्रे वर्तमाना नृहिता राय आमिमिक्षुः आसिञ्चन्ति आपूरयन्ति स्तोतॄन् । यश्चेन्द्रः रथेष्ठाः रथे स्थाता तत्स्वभावः सन् हिरण्यये सुवर्णमये रथे आ तिष्ठति । यद्वा । रथेष्ठा रथेऽवस्थिता रायो धनानि हिरण्मये रथे तिष्ठन् य इन्द्र आ सिञ्चति अभिवर्षति । यस्य च स्थूरयोः स्थूलयोर्विस्तृतयोः गभस्त्योः । बाहुनामैतत् । बाह्वोः रश्मयः अभीशवः आ[3] सिच्यन्ते आयम्यन्ते[3] । यस्य च अश्वासः अश्वाः वृषणः सेक्तारः युवानः युजानाः रथे युज्यमानाः अध्वन् अध्वनि मार्गे आ मिमिक्षुः आसिञ्चन्ति आपूरयन्ति । आगच्छन्तीत्यर्थः । तमिन्द्रं स्तुम इति शेषः ॥

श्रि॒ये ते॒ पादा॒ दुव॒ आ मि॑मिक्षुर्धृ॒ष्णुर्व॒ज्री शव॑सा॒ दक्षि॑णावान् ।
वसा॑नो॒ अत्कं॑ सुर॒भिं दृ॒शे कं स्व१॒॑र्ण नृ॑तविषि॒रो ब॑भूथ ॥ ३ ॥

श्रि॒ये । ते॒ । पादा॑ । दुवः॑ । आ । मि॒मि॒क्षुः॒ । धृ॒ष्णुः । व॒ज्री । शव॑सा । दक्षि॑णऽवान् ।
वसा॑नः । अत्क॑म् । सु॒र॒भिम् । दृ॒शे । कम् । स्वः॑ । न । नृ॒तो॒ इति॑ । इ॒षि॒रः । ब॒भू॒थ ॥ ३ ॥

हे इन्द्र श्रिये ऐश्वर्यार्थं ते त्वदीययोः पादा पादयोः दुवः परिचरणम् आ मिमिक्षुः आसिञ्चन्ति समर्पयन्ति । भरद्वाजः समर्पयति । व्यत्ययेन बहुवचनम् । यद्वा । ते तव पादौ श्रिये श्रयितुं सेवितुं दुवः परिचरणम् आ सिञ्चन्ति अनुतिष्ठन्ति । यस्त्वं शवसा बलेन धृष्णुः शत्रूणां धर्षकः वज्री वज्रवान् दक्षिणावान् । दक्षिणा स्तोतृभ्यो दातव्यं धनम् । तद्वान् हे नृतो नेतरिन्द्र स त्वं सुरभिं प्रशस्तम् अत्कं सततगमनशीलमात्मीयं[4] रूपं दृशे सर्वेषां दर्शनार्थं वसानः आच्छादयन् स्वर्ण सूर्य इव इषिरः गन्तैषणीयो वा बभूथ भवसि । कमिति पूरकः ॥

---

१. ख-ञ-झ-त-न-भ-य–यन्तो गच्छन्तः ।　२. श–उक्तं च ।　३. ख-भ–आमिमिक्षुः आसिच्यन्ते आयन्ते; घ–आमिमिक्षुः; ञ–आसिच्यन्ते आश्रीयन्ते; श–आमिमिक्षुः आसिच्यन्ते आश्रीयन्ते ।
४. ख-ञ-झ-त-न-भ-र–संतत० ।

स सोम आमिश्लतमः सुतो भूद्यस्मिन्पक्तिः पच्यते सन्ति धानाः ।
इन्द्रं नरः स्तुवन्तो ब्रह्मकारा उक्था शंसन्तो देववाततमाः ॥ ४ ॥

सः । सोमः । आमिश्लऽतमः । सुतः । भूत् । यस्मिन् । पक्तिः । पच्यते । सन्ति । धानाः ।
इन्द्रम् । नरः । स्तुवन्तः । ब्रह्मऽकाराः । उक्था । शंसन्तः । देववातऽतमाः ॥ ४ ॥

यः सोमो वक्ष्यते ^सः ^सोमः ^सुतः अभिषुतः सन् ^आमिश्लतमः आभिमुख्येन मिश्रतमः[1] ^भूत् । इन्द्रेणात्यर्थं संगच्छते । ^यस्मिन् सोमेऽभिषुते सति ^पक्तिः पक्तव्यः पुरोडाशादिः ^पच्यते । भृष्टयवाः ^धानाः । ताश्च ^सन्ति हविरर्थं संस्कृता भवन्ति । यस्मिंश्च सोमेऽभिषुते ^नरः नेतारः ^ब्रह्मकाराः ब्रह्मणः अन्नस्य हविर्लक्षणस्य कर्तारः[2] ऋत्विजः ^इन्द्रं स्तोत्रैः ^स्तुवन्तः ^उक्था उक्थानि शस्त्राणि च ^शंसन्तः उच्चारयन्तः ^देववाततमाः देवानतिशयेनोपगता[3] भवन्ति स सोम इन्द्रेण संमिश्रितोऽभूदित्यन्वयः ॥

न ते अन्तः शवसो धाय्यस्य वि तु बाबधे रोदसी महित्वा ।
आ ता सूरिः पृणति तूतुजानो यूथेवाप्सु समीजमान ऊती ॥ ५ ॥

न । ते । अन्तः । शवसः । धायि । अस्य । वि । तु । बाबधे । रोदसी इति । महिऽत्वा ।
आ । ता । सूरिः । पृणति । तूतुजानः । यूथाऽइव । अप्ऽसु । सम्ऽईजमानः । ऊती ॥ ५ ॥

हे इन्द्र ^ते तव ^अस्य उक्तगुणस्य ^शवसः बलस्य ^अन्तः अवसानं ^न ^धायि । अत्र केवलोऽपि दधातिरवपूर्वार्थो द्रष्टव्यः । नावाधायि । अस्माभिर्नाज्ञायीत्यर्थः । यद्बलं ^रोदसी द्यावापृथिव्यौ ^महित्वा महत्त्वेन ^तु क्षिप्रं ^वि ^बाबधे यस्माद्बलात् द्यावापृथिव्यौ बिभीत इत्यर्थः । ^ता तद्बलं ^सूरिः स्तोता ^तूतुजानः त्वरितः सन् ^ऊती ऊत्या तर्पकेण हविषा ^समीजमानः सम्यग्यजन् ^आ ^पृणति आपूरयति । तत्र दृष्टान्तः । ^यूथेव ^अप्सु उदकेषु गवां यूथानीव यथा गोपालः अपः पाययन्नद्भिस्तर्पयति तद्वत् ॥

एवेदिन्द्रः सुहव ऋष्वो अस्तूती अनूती हिरिशिप्रः सत्वा ।
एवा हि जातो असमात्योजाः पुरू च वृत्रा हनति नि दस्यून् ॥ ६ ॥

एव । इत् । इन्द्रः । सुऽहवः । ऋष्वः । अस्तु । ऊती । अनूती । हिरिऽशिप्रः । सत्वा ।
एव । हि । जातः । असमातिऽओजाः । पुरु । च । वृत्रा । हनति । नि । दस्यून् ॥ ६ ॥

^एव एवमुक्तेन प्रकारेण ^ऋष्वः महान् ^इन्द्रः ^सुहवः ^अस्तु सुखेनाह्वातव्यो[4] भवतु । ^इत् इति पूरणः । ^हिरिशिप्रः । शिप्रे हनू नासिके वा । हरितवर्णे शिप्रे यस्य तादृश इन्द्रः ^ऊती ऊत्यागमनेन ^अनूती अनूत्यानागमनेन वा ^सत्वा गमयिता भवति धनानाम् । स्वयमागतोऽनागतोऽपि

---

१. ख-झ-भ-य-मिश्रिततमो; घ-श-मिश्रिवततमो । २. श-काराः कर्तारः । ३. ख-घ-भ-॰नोपगन्तारो । ४. य-सुखेन ह्वातव्यो ।

स्तोतृभ्यो धनं प्रयच्छतीत्यर्थः । vएवा vहि एवं हि vजातः प्रादुर्भूतोऽयमिन्द्रः vअसमात्योजाः असमाति असमानम् अनुपमम् उत्कृष्टतरमोजो बलं यस्य तादृशः सन् vपुरु पुरूणि बहूनि vच vवृत्रा वृत्राण्यावरकाणि रक्षःप्रभृतीनि vहनति हिनस्तु । तथा vदस्यून् उपक्षपयितॄन् शत्रूंश्च vनि हन्तु ॥ ॥ १ ॥

'भूय इत्' इति पञ्चर्चं सप्तमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । 'भूयः पञ्च' इत्यनुक्रान्तम् । अग्निष्टोमे माध्यंदिनसवनेऽच्छावाकशस्त्र एतत्सूक्तं शंसनीयम् । सूत्रितं च—'उदिन्न्वस्य रिच्यते भूय इत्' ( आश्व. श्रौ. ५·१६ ) इति । महाव्रतेऽपि निष्केवल्य एतत्सूक्तम् । तथैव पञ्चमारण्यके सूत्रितं— 'भूय इद्वावृधे वीर्याय नृणामु त्वा' ( ऐ. आ. ५· १· ६ ) इति ॥

भूय इद्वावृधे वीर्यायँ एको अजुर्यो दयते वसूनि ।
प्र रिरिचे दिव इन्द्रः पृथिव्या अर्धमिदस्य प्रति रोदसी उभे ॥ १ ॥

भूयः । इत् । ववृधे । वीर्याय । एकः । अजुर्यः । दयते । वसूनि ।
प्र । रिरिचे । दिवः । इन्द्रः । पृथिव्याः । अर्धम् । इत् । अस्य । प्रति । रोदसी इति । उभे इति ॥ १ ॥

अयमिन्द्रः vभूयः vइत् बहुतरमेव vवावृधे प्रवृद्धोऽभूत् । किमर्थम् । vवीर्याय वीरकर्माणि वृत्रवधादीनि कर्तुम् । vएकः मुख्यः vअजुर्यः जरयितुमशक्यः स च vइन्द्रः vवसूनि धनानि vदयते स्तोतृभ्यो ददाति । तथा vदिवः द्युलोकात् vपृथिव्याः भूमेश्चायमिन्द्रः vप्र vरिरिचे अतिरिच्यते । किंच vअस्य इन्द्रस्य vउभे vरोदसी द्यावापृथिव्यौ vअर्धमित् अर्धमेव vप्रति । अस्येन्द्रस्यार्धो भागो द्यावापृथिव्योः प्रतिनिधिर्भवतीत्यर्थः ॥

अधा मन्ये बृहदसुर्यमस्य यानि दाधार नकिरा मिनाति ।
दिवेदिवे सूर्यो दर्शतो भूद्वि सद्मान्युर्विया सुक्रतुर्धात् ॥ २ ॥

अध । मन्ये । बृहत् । असुर्यम् । अस्य । यानि । दाधार । नकिः । आ । मिनाति ।
दिवेऽदिवे । सूर्यः । दर्शतः । भूत् । वि । सद्मानि । उर्विया । सुऽक्रतुः । धात् ॥ २ ॥

vअध अधुना vअस्य इन्द्रस्य vबृहत् महत् vअसुर्यम् असुरहननकुशलं बलं vमन्ये स्तौमि । मन्यतिः स्तुतिकर्मा । स चेन्द्रः vयानि[1] कर्माणि vदाधार धारयति तानि vनकिः vआ vमिनाति न कश्चिदपि हिनस्ति । कानि पुनस्तानि । उच्यते । vदिवेदिवे प्रतिदिनं वृत्रेणावृतः vसूर्यो vदर्शतः दर्शनीयः vभूत् भवति । आवरकस्यासुरस्य वधेन सूर्यं प्रकाशितवानित्येकं कर्म । vसुक्रतुः शोभनकर्मा स इन्द्रः vसद्मानि भुवनानि vउर्विया उरूणि विस्तीर्णानि vवि vधात् व्यधात् अकार्षीत् । इदमपरं कर्म । एतदादीनि बहूनि कर्माणि कृतवानित्यर्थः ॥

---

१. ख-ज्ञ-ज्ञ-त-न-भ-य-र—यानि च ।

अधा चिन्नू चित्तदपो नदीनां यदाभ्यो अरदो गातुमिन्द्र ।
नि पर्वता अद्मसदो न सेदुस्त्वया दृळ्हानि सुक्रतो रजांसि ॥ ३ ॥

अध । चित् । नु । चित् । तत् । अपः । नदीनाम् । यत् । आभ्यः । अरदः । गातुम् । इन्द्र ।
नि । पर्वताः । अद्मऽसदः । न । सेदुः । त्वया । दृळ्हानि । सुक्रतो इति सुऽक्रतो । रजांसि ॥३॥

हे इन्द्र अधा चित् अद्यापि नू चित् पुरापि तव नदीनां संबन्धि तदपः कर्म वर्तते । आभ्यः नदीभ्यः गातुं मार्गम् अरदः प्रवहनार्थं व्यलिख इति यत् कर्म तत्सर्वदानुपक्षीणं सद्वर्तत इत्यर्थः । अपि च त्वदाज्ञया पर्वताः गिरयः नि षेदुः निषण्णाः । उत्पतनं परित्यज्य कचिदेव स्थाने नैश्चल्येनोपविष्टा बभूवुः । अद्मसदो न । अद्म अदनीयमन्नम्[1] । तदर्थं सीदन्तः पुरुषा इव । यथा ते भोजनार्थं नैश्चल्येनासते तथेत्यर्थः[2] । अतः कारणात् हे सुक्रतो शोभनकर्मन्निन्द्र त्वया रजांसि सर्वे लोकाः दृळ्हानि दृंहितानि[3] स्थिरीकृताः[3] आसन् ॥

सत्यमित्तन्न त्वावाँ अन्यो अस्तीन्द्र देवो न मर्त्यो ज्यायान् ।
अहन्नहिं परिशयानमर्णोऽवासृजो अपो अच्छा समुद्रम् ॥ ४ ॥

सत्यम् । इत् । तत् । न । त्वाऽवान् । अन्यः । अस्ति । इन्द्र । देवः । न । मर्त्यः । ज्यायान् ।
अहन् । अहिम् । परिऽशयानम् । अर्णः । अव । असृजः । अपः । अच्छ । समुद्रम् ॥ ४ ॥

हे इन्द्र वक्ष्यमाणं तत् सत्यमित् सत्यमेव नानृतम् । त्वावान् त्वत्सदृशः अन्यः देवः न अस्ति । त्वत्सदृशोऽन्यः मर्त्यः मनुष्योऽपि न एव विद्यते । ज्यायान् अधिकोऽपि देवो मनुष्यो वा न खल्वस्ति । इति यद्गीयते तत्सत्यमेवेत्यर्थः । अपि च त्वम् अर्णः उदकं परिशयानं परिवृत्य शयानम् अहिम् मेघम् अहन् अवधीः । हत्वा च समुद्रम् अन्तरिक्षं जलधिं वा अच्छ आभिमुख्येन अपः उदकानि अवासृजः अवाङ्मुखतया विसृष्टवानसीत्यर्थः ॥

त्वमपो वि दुरो विषूचीरिन्द्र दृळ्हमरुजः पर्वतस्य ।
राजाभवो जगतश्चर्षणीनां साकं सूर्यं जनयन्द्यामुषासम् ॥ ५ ॥

त्वम् । अपः । वि । दुरः । विषूचीः । इन्द्र । दृळ्हम् । अरुजः । पर्वतस्य ।
राजा । अभवः । जगतः । चर्षणीनाम् । साकम् । सूर्यम् । जनयन् । द्याम् । उषसम् ॥ ५ ॥

हे इन्द्र त्वं दुरः वृत्रेणावृताः[3] अपः विषूचीः विविधमञ्चन्त्यो यथा सर्वतः प्रसृता भवन्ति तथा वि असृजः । यतस्त्वं पर्वतस्य पर्ववतो मेघस्य दृळ्हं दृढमपां बन्धकप्रदेशम् अरुजः अभाङ्क्षीः । अपि च त्वं जगतः संबन्धिनीनां चर्षणीनां प्रजानां राजाभवः अधिपतिर्भवसि ।

---

१. ख-झ-त२-भ—सदनीयम॰ । २. ख-झ-त२-न-भ-र—इत्यर्थः । ३. ख-भ—दृढानि । ३. झ—वृत्रेणावृतद्वाराः ।

किं कुर्वन्। सूर्यं द्यां द्युलोकम् उषसं च तमसा प्रावृतम् एतत्त्रितयं[1] साकं युगपदेव जनयन् प्रादुर्भावयन्। प्रकाशयन्नित्यर्थः ॥ ॥ २ ॥

'अभूरेकः' इति पञ्चर्चमष्टमं सूक्तं भरद्वाजस्य सुहोत्रस्यार्षम्। उपान्त्या शक्करी शिष्टाश्चतस्त्रिष्टुभः। इन्द्रो देवता। अनुक्रम्यते च—'अभूरेकः सुहोत्रस्तु चतुर्थी शक्करी' इति। महाव्रतस्य निष्केवल्ये इदमादीन्यष्ट सूक्तानि शंसनीयानि। तथा पञ्चमारण्यकम्—'अभूरेको रयिपते रयीणामित्यष्टौ सूक्तानि' ( ऐ. आ. ५. २. २ ) इति। पृष्ठ्यस्य षष्ठेऽहनि निष्केवल्य इदं सूक्तं निविद्धानम्। सूत्रितं च—'एन्द्र याह्युप नः प्र घा न्वस्याभूरेक इति निष्केवल्यम्' ( आश्व. श्रौ. ८. १ ) इति। विश्वजिति माध्यंदिनेऽच्छावाकशस्त्रे सामसूक्ताख्यमेतच्छंसनीयम्। सूत्रितं च—'अभूरेको रयिपते रयीणामिति सामसूक्तानि' ( आश्व. श्रौ. ८. ७ ) ॥

अभूरेको रयिपते रयीणामा हस्तयोरधिथा इन्द्र कृष्टीः।
वि तोके अप्सु तनये च सूरेऽवोचन्त चर्षणयो विवाचः ॥ १ ॥

अभूः। एकः। रयिऽपते। रयीणाम्। आ। हस्तयोः। अधिथाः। इन्द्र। कृष्टीः।
वि। तोके। अप्ऽसु। तनये। च। सूरे। अवोचन्त। चर्षणयः। विऽवाचः ॥ १ ॥

हे रयिपते धनस्य[2] पालक[2] इन्द्र एकः प्रधानभूतस्त्वं रयीणां धनानां स्वामी अभूः भवसि। यद्वा। रयीणां रयिपत इति संबन्धः। एको रयिशब्दोऽनुवादो यथा 'गवामसि गोपतिरेक इन्द्र' ( ऋ. सं. ७. ९८. ६ ) इति। तदानीमेको मुख्यस्त्वं भवसीति योजनीयम्। अपि च हे इन्द्र त्वं हस्तयोः आत्मीययोर्बाह्वोः कृष्टीः प्रजाः आ अधिथाः आधत्से। सर्वं जगत्तवाज्ञायां वर्तत इत्यर्थः। किंच चर्षणयः मनुष्याः तोके पुत्रे अप्सु उदकेषु सूरे शत्रूणां प्रेरके तनये पौत्रे चैतेषु निमित्तभूतेषु सत्सु विवाचः विशिष्टाः स्तुतीः वि अवोचन्त विविधं ब्रुवन्ति ॥

त्वद्भियेन्द्र पार्थिवानि विश्वाच्युता चिच्च्यावयन्ते रजांसि।
द्यावाक्षामा पर्वतासो वनानि विश्वं दृळ्हं भयते अज्मन्ना ते ॥ २ ॥

त्वत्। भिया। इन्द्र। पार्थिवानि। विश्वा। अच्युता। चित्। च्यवयन्ते। रजांसि।
द्यावाक्षामा। पर्वतासः। वनानि। विश्वम्। दृळ्हम्। भयते। अज्मन्। आ। ते ॥ २ ॥

हे इन्द्र त्वत् त्वत्तः भिया भयेन विश्वा विश्वानि व्यापकानि पार्थिवानि। पृथिव्यन्तरिक्षनाम[3]। तत्र भवानि रजांसि उदकानि अच्युता चित् च्यावयितुमशक्यान्यपि[4] च्यावयन्ते मेघाः प्रच्यावयन्ति। वर्षन्तीत्यर्थः। अपि च हे इन्द्र ते तव आ[5] अज्मन् आगमने सति द्यावाक्षामा द्यावापृथिव्यौ पर्वतासः गिरयः वनानि वृक्षाश्च भयं प्राप्नुवन्ति। किं बहुना विश्वं सर्वं दृळहं स्थिरं प्राणिजातं भयते बिभेति ॥

---

१. ख-ङ्ग-न-भ-य—इत्येतात्त्रितयम्। २. घ-श—धनपालक। ३. श—°नामैतत्। ४. ख-ङ्ग-त-भ-य-र—च्यवयितुम°। ५. त-न—'आ' नास्ति।

त्वं कुत्सेनाभि शुष्णमिन्द्राशुषं युध्य कुयवं गविष्टौ ।

दश प्रपित्वे अध सूर्यस्य मुषायश्चक्रमविवे रपांसि ॥ ३ ॥

त्वम् । कुत्सेन । अभि । शुष्णम् । इन्द्र । अशुषम् । युध्य । कुयवम् । गोऽइष्टौ ।

दश । प्रऽपित्वे । अध । सूर्यस्य । मुषायः । चक्रम् । अविवेः । रपांसि ॥ ३ ॥

हे vइन्द्र vत्वं vकुत्सेन सह[1] vअशुषं शोषयितुमशक्यं प्रबलं vशुष्णं सर्वस्य शोषकमेतत्संज्ञमसुरम् vअभि vयुध्य अभ्ययुध्यः । कुत्सस्य साहाय्यार्थं तेनासुरेण सह युद्धं कृतवानसीत्यर्थः । तथा vगविष्टौ । गावो बाणा इष्यन्ति गच्छन्तीति गविष्टिः संग्रामः । तस्मिन् vकुयवम् एतत्संज्ञमसुरं च vदश अदशः । हिंसितवानसि ॥ ' दंश दशने ' इत्येतस्माच्छान्दसे लोटि रूपम् ॥ vअध अपि च vप्रपित्वे प्रपतने युद्धे vसूर्यस्य vचक्रं रथावयवभूतं vमुषायः अमुष्णाः । तदाप्रभृति सूर्यस्य रथ एकचक्रोऽभूत् । तथा चाम्नातं—' सप्त युञ्जन्ति रथमेकचक्रम् ' ( ऋ. सं. १. १६४. २ ) इति । एतशाख्यस्य ऋषेः सूर्येण सह युद्धे तत्साहाय्यार्थमागत इन्द्रः सूर्यस्य चक्रमपहृतवान् इत्याख्यातम्[2] । ' सूरश्चक्रं प्र वृहज्जात ओजसा ' ( ऋ. सं. १. १३०. ९ ) इति च निगमान्तरम् । अपि च vरपांसि पापकारीणि रक्षःप्रभृतीनि vअविवेः अस्माल्लोकादगमयः । अवधीरित्यर्थः[3] ॥

त्वं शतान्यव शम्बरस्य पुरो जघन्थाप्रतीनि दस्योः ।

अशिक्षो यत्र शच्या शचीवो दिवोदासाय सुन्वते सुतक्रे

भरद्वाजाय गृणते वसूनि ॥ ४ ॥

त्वम् । शतानि । अव । शम्बरस्य । पुरः । जघन्थ । अप्रतीनि । दस्योः ।

अशिक्षः । यत्र । शच्या । शचीऽवः । दिवःऽदासाय । सुन्वते । सुतऽक्रे ।

भरत्ऽवाजाय । गृणते । वसूनि ॥ ४ ॥

हे इन्द्र vत्वं vशतानि शतसंख्यानि[4] vदस्योः उपक्षपयितुरसुरस्य vशम्बरस्य एतत्संज्ञस्य vपुरः पुरीः vअप्रतीनि । लिङ्गव्यत्ययः । केनाप्यप्रतिगताः vअव vजघन्थ अवाहन् । हे vशचीवः प्रज्ञावन् हे vसुतक्रे अभिषुतेन सोमेन क्रीतेन्द्र vयत्र यस्मिन् काले vसुन्वते सोमाभिषवं कुर्वते vदिवोदासाय vशच्या प्रज्ञया vअशिक्षः धनानि प्रादाः vगृणते स्तुवते vभरद्वाजाय च vवसूनि प्रादाः तस्मिन् काले शाम्बरीः पुरोऽव जघन्थेत्यन्वयः ॥

स सत्यसत्वन्महते रणाय रथमा तिष्ठ तुविनृम्ण भीमम् ।

याहि प्रपथिन्नवसोप मद्रिक्प्र च श्रुत श्रावय चर्षणिभ्यः ॥ ५ ॥

सः । सत्यऽसत्वन् । महते । रणाय । रथम् । आ । तिष्ठ । तुविऽनृम्ण । भीमम् ।

याहि । प्रऽपथिन् । अवसा । उप । मद्रिक् । प्र । च । श्रुत । श्रवय । चर्षणिऽभ्यः ॥ ५ ॥

---

१. ख-घ-भ-श–सह युध्यमानम् । २. ख-ज्ञ-झ-त-र–इत्याख्यानम्; न–इत्याम्नोतम् । ३. ख-घ-झ-त२-भ-र–अवधीदित्यर्थः । ४. ज्ञ–°संख्याकाः ।

हे सत्यसत्वन् । सत्याः[1] सत्वानो भटा[2] यस्य स तथोक्तः । हे तुविनृम्ण । तुवि बहुलं नृम्णं धनं यस्य स तथोक्तः । हे तादृशेन्द्र सः त्वं महते रणाय संग्रामाय तदर्थं भीमं भयंकरमात्मीयं रथमा तिष्ठ । हे प्रपथिन् प्रकृष्टमार्गेन्द्र अवसा रक्षणेन सह तेन च रथेन उप याहि आगच्छ मद्रिक् मदभिमुखः । तथा हे श्रुत विश्रुतेन्द्र चर्षणिभ्यः प्रजाभ्यः प्र श्रावय च अस्मान् प्रख्यापय च । सर्वासु प्रजासु मध्ये अस्मान् प्रख्यातान् कुर्वित्यर्थः ॥　　॥ ३ ॥

'अपूर्व्या' इति पञ्चर्चं नवमं सूक्तं त्रैष्टुभमैन्द्रम् । 'अपूर्व्या' इत्यनुक्रान्तम् । द्वितीये छान्दोमिकेऽहनि निष्केवल्य एतत्सूक्तम् । सूत्रितं च—'अपूर्व्या पुरुतमानि तां सु ते कीर्तिम्' ( आश्व. श्रौ. ८.७ ) इति । महाव्रतेऽपि निष्केवल्येऽस्य[3] सूक्तस्य विनियोग उक्तः ॥

अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय ।
विरप्शिने वज्रिणे शंतमानि वचांस्यासा स्थविराय तक्षम् ॥ १ ॥

अपूर्व्या । पुरुऽतमानि । अस्मै । महे । वीराय । तवसे । तुराय ।
विऽरप्शिने । वज्रिणे । शम्ऽतमानि । वचांसि । आसा । स्थविराय । तक्षम् ॥ १ ॥

अपूर्व्या अपूर्व्याणि पूर्वैरकृतानि नूतनानि पुरुतमानि बहुतमानि शंतमानि सुखकृत्तमानि वचांसि स्तुतिरूपाणि वाक्यानि आसा आस्येन अस्मै इन्द्राय तक्षम् अतक्षम् । करोमि । कीदृशाय । महे महते वीराय विविधं शत्रूणामीरयित्रे तवसे तवस्विने बलवते तुराय त्वरमाणाय विरप्शिने विशेषेण स्तुत्याय वज्रिणे वज्रवते स्थविराय प्रवृद्धाय ॥

स मातरा सूर्येणा कवीनामवासयद्रुजदद्रिं गृणानः ।
स्वाधीभिर्ऋक्वभिर्वावशान उदुस्रियाणामसृजन्निदानम् ॥ २ ॥

सः । मातरा । सूर्येण । कवीनाम् । अवासयत् । रुजत् । अद्रिम् । गृणानः ।
सुऽआधीभिः । ऋक्वऽभिः । वावशानः । उत् । उस्रियाणाम् । असृजत् । निऽदानम् ॥ २ ॥

सः इन्द्रः मातरा मातरौ दिवं च पृथिवीं च कवीनां क्रान्तदर्शिनामङ्गिरसामर्थाय सूर्येण अवासयत् प्राकाशयत् । किं कुर्वन् । अद्रिं गवामदर्शनाय वलेन स्थापितं पर्वतं रुजत् भञ्जन् । यद्वा । कवीनाम्[4] अङ्गिरसामिति तृतीयार्थे षष्ठी । अङ्गिरोभिः गृणानः स्तूयमान इति संबन्धः । अपि च स्वाधीभिः शोभनध्यानैः ऋक्वभिः स्तोतृभिरङ्गिरोभिः वावशानः पुनः पुनः काम्यमानः सन् उस्रियाणां वलस्य भृत्यैः पणिभिरपहृतानां गवां निदानं बन्धनम् उत् असृजत् अमोचयत् ॥

---

१. ज्ञ—सत्या अबाध्याः । २. ख१—भरा; ज्ञ-य-र—भावा नो; त-न—भावा । ३. ख-ज्ञ-त-न-भ-र—निष्केवल्येऽप्यस्य । ४. ख-ज्ञ-ज्ञ त-न-भ-र—'कवीनाम्' नास्ति ।

स वह्निभिर्ऋक्वभिर्गोषु शश्वन्मितज्ञुभिः पुरुकृत्वा जिगाय ।
पुरः पुरोहा सखिभिः सखीयन्दृळ्हा रुरोज कविभिः कविः सन् ॥ ३ ॥

सः । वह्निऽभिः । ऋक्वऽभिः । गोषु । शश्वत् । मितज्ञुऽभिः । पुरुऽकृत्वा । जिगाय ।
पुरः । पुरःऽहा । सखिऽभिः । सखिऽयन् । दृळ्हाः । रुरोज । कविऽभिः । कविः । सन् ॥ ३ ॥

vपुरुकृत्वा बहुकर्मकृत् vसः इन्द्रः vवह्निभिः हविषां वोढृभिः vऋक्वभिः स्तोतृभिः vशश्वत् सर्वदा vमितज्ञुभिः संकुचितजानुभिरङ्गिरोभिः सह vगोषु निमित्तभूतेषु vजिगाय असुरान् जितवान् । जित्वा च vपुरोहा पुराणां हन्ता सः इन्द्रः vसखिभिः समानख्यानैः vकविभिः क्रान्तप्रज्ञैरङ्गिरोभिः सह vसखीयन् सखित्वमात्मन इच्छन् vकविः vसन् स्वयमपि क्रान्तप्रज्ञो भवन् vदृळ्हाः,स्थिराः vपुरः आसुरीः पुरीः vरुरोज[1] ॥

स नीव्याभिर्जरितारमच्छा महो वाजेभिर्महद्भिश्च शुष्मैः ।
पुरुवीराभिर्वृषभ क्षितीनामा गिर्वणः सुविताय प्र याहि ॥ ४ ॥

सः । नीव्याभिः । जरितारम् । अच्छ । महः । वाजेभिः । महत्ऽभिः । च । शुष्मैः ।
पुरुऽवीराभिः । वृषभ । क्षितीनाम् । आ । गिर्वणः । सुविताय । प्र । याहि ॥ ४ ॥

हे vवृषभ कामानां वर्षक हे vगिर्वणः गिरा स्तुत्या संभजनीयेन्द्र vसः[2] त्वं vमहः महद्भिः vवाजेभिः वाजैरन्नैः vमहद्भिः vशुष्मैः बलैः vच सह vक्षितीनां प्रजानां मध्ये vजरितारं स्तोतारम् vअच्छ आभिमुख्येन vनीव्याभिः नव्याभिर्नवतराभिः vपुरुवीराभिः पुरूणां बहूनां वीरयित्रीभिः बडवाभिः vआ vप्र vयाहि आगच्छ । किमर्थम् । vसुविताय शोभनाय । सुखप्राप्त्यर्थमित्यर्थः ॥

स सर्गेण शवसा तक्तो अत्यैरप इन्द्रो दक्षिणतस्तुराषाट् ।
इत्था सृजाना अनपावृदर्थं दिवेदिवे विविषुरप्रमृष्यम् ॥ ५ ॥

सः । सर्गेण । शवसा । तक्तः । अत्यैः । अपः । इन्द्रः । दक्षिणतः । तुराषाट् ।
इत्था । सृजानाः । अनपऽवृत् । अर्थम् । दिवेऽदिवे । विविषुः । अप्रऽमृष्यम् ॥ ५ ॥

vतुराषाट् तुराणां हिंसकानां सोढाभिभविता vसः vइन्द्रः vसर्गेण सर्वदोद्युक्तेन vशवसा बलेन vअत्यैः अश्वैः सततगामिभिस्तेजोभिर्वा vतक्तः संगतः सन् vदक्षिणतः दक्षिणायने vअपः उदकानि विसृजतीति[3] शेषः । vइत्था इत्थमनेन प्रकारेण vसृजानाः सृज्यमानास्ता आपः vअर्थं गन्तव्यम् vअप्रमृष्यम् अन्यैरक्षोभ्यं समुद्रं vदिवेदिवे प्रतिदिनम् vअनपावृत् अपावर्तनं पुनरागमनं[4] यथा न[5] भवति तथा vविविषुः व्याप्नुवन्ति ॥ अर्तेस्थन्प्रत्ययान्तस्य रूपमर्थमिति ॥ ॥ ४ ॥

---

१. झ–रुरोज बभञ्ज । २. ज्ञ-त-य–' सः ' नास्ति । ३. ख-ज्ञ-झ-त-भ-र-श–सृजतीति । ४. ख१-झ-भ-न-य–पुनरागमनं न अपावर्तनम् अनपावर्तनम् अपुनरागमनम्; ज-ण–पुनरागमनम् अपावर्तनम अनपावर्तनम् पुनरागमनम् ५. ख१-त-न-भ-य–' न ' नास्ति ।

'य ओजिष्ठः' इति पञ्चर्चं दशमं सूक्तं शुनहोत्रस्यार्षं त्रैष्टुभमैन्द्रम्। अनुक्रम्यते च—'य ओजिष्ठः शुनहोत्रस्तु' इति। महाव्रतेऽपि निष्केवल्य उक्तो विनियोगः॥

य ओजिष्ठ इन्द्र तं सु नो दा मदो वृषन्त्स्वभिष्टिर्दास्वान्।
सौवश्व्यं यो वनवत्स्वश्वो वृत्रा समत्सु सासहदमित्रान्॥ १॥

यः। ओजिष्ठः। इन्द्र। तम्। सु। नः। दाः। मदः। वृषन्। सुऽअभिष्टिः। दास्वान्।
सौवश्व्यम्। यः। वनवत्। सुऽअश्वः। वृत्रा। समत्ऽसु। ससहत्। अमित्रान्॥ १॥

हे वृषन् कामानां वर्षितः इन्द्र त्वं यः पुत्रः ओजिष्ठः ओजस्वितमो बलवत्तमः मदः तव मादयिता स्तुतिभिः स्तोतेत्यर्थः। स्वभिष्टिः शोभनाभ्येषणः दास्वान्। हविषां दानं[1] दाः[1]। तद्वान्। एवंगुणविशिष्टं तं पुत्रं नः अस्मभ्यं सु सुष्ठु दाः देहि। यः पुत्रः स्वश्वः सन् समत्सु संग्रामेषु सौवश्व्यं शोभनाश्वानां समूहं वनवत् हिंस्यात्। तथा वृत्रा वृत्रान् वारयितॄन् अमित्रान् शत्रूंश्च[2] सासहत् अत्यर्थमभिभवेत् तं दा इत्यन्वयः॥

त्वां हीऽन्द्रावसे विवाचो हवन्ते चर्षणयः शूरसातौ।
त्वं विप्रेभिर्वि पणीँरशायस्त्वोत इत्सनिता वाजमर्वा॥ २॥

त्वाम्। हि। इन्द्र। अवसे। विऽवाचः। हवन्ते। चर्षणयः। शूरऽसातौ।
त्वम्। विप्रेभिः। वि। पणीन्। अशायः। त्वाऽऊतः। इत्। सनिता। वाजम्। अर्वा॥२॥

हे इन्द्र त्वां हि त्वामेव विवाचः विविधाः स्तुतिरूपा वाचो येषां तादृशाः चर्षणयः मनुष्याः शूरसातौ शूरैः संभजनीये संग्रामे अवसे रक्षणार्थं हवन्ते आह्वयन्ति। किंच त्वं विप्रेभिः विप्रैर्मेधाविभिरङ्गिरोभिः सार्धं पणीन्। वलस्यानुचरा असुराः पणयः। तान् वि अशायः विशेषेणाशाययः। हतवानित्यर्थः। अतः त्वोत इत् त्वयोतो रक्षित एव सनिता संभक्ता पुरुषः वाजम् अन्नम् अर्वा अभिगन्ता भवति॥

त्वं ताँ इन्द्रोभयाँ अमित्रान्दासा वृत्राण्यार्या च शूर।
वधीर्वनेव सुधितेभिरत्कैरा पृत्सु दर्षि नृणां नृतम॥ ३॥

त्वम्। तान्। इन्द्र। उभयान्। अमित्रान्। दासा। वृत्राणि। आर्या। च। शूर।
वधीः। वनाऽइव। सुऽधितेभिः। अत्कैः। पृत्ऽसु। दर्षि। नृणाम्। नृऽतम॥ ३॥

हे इन्द्र त्वं तान् उभयान् वक्ष्यमाणान् उभयविधान् अमित्रान् शत्रून् वधीः अहिंसीः। के त उभयविधाः। दासा उपक्षपयितॄन् कर्मविरोधिनो वलप्रभृतीनसुरान्[3]॥ 'सुपां सुलुक्' इति डास

---

१. ख१-दातारः; ज-झ-ण-न-भ-दाता दाः; त-र-दातारं दाः। २. ख-भ-शत्रूंश्च समत्सु संग्रामेषु। ३. ख-झ भ-वृत्रप्र°; ञ-त२-र-श-बलप्र°, न-बलवृत्रप्र°।

आकारः ॥ आर्या आर्याणि कर्मानुष्ठातृत्वेन श्रेष्ठानि वृत्राणि आवरकाणि विश्वरूपादीनि च तान्[1] उभयविधान् हे शूर त्वं हतवानित्यर्थः । नृणां नेतॄणां मध्ये नृतम अतिशयेन नेतर्हे इन्द्र पृत्सु संग्रामेषु सुधितेभिः सुष्ठु निहितैः अत्कैः आत्मीयैरायुधैः आ दर्षि अन्यानपि शत्रूनाहणासि विदारयसि । तत्र दृष्टान्तः । वनेव वनानीव । यथा[2] वृक्षजातानि कुठारादिभिश्छिनत्ति तद्वत् ॥

स त्वं न॑ इन्द्राक॑वाभिरू॒ती सखा॑ वि॒श्वायु॑रवि॒ता वृ॒धे भूः॑ ।
स्व॑र्षाता॒ यद्ध्वया॑मसि त्वा॒ युध्य॑न्तो ने॒मधि॑ता पृ॒त्सु शू॑र ॥ ४ ॥

सः । त्वम् । नः॒ । इ॒न्द्र॒ । अक॑वाभिः । ऊ॒ती । सखा॑ । वि॒श्वऽआ॑युः । अ॒वि॒ता । वृ॒धे । भूः॒ ।
स्वः॑ऽसाता । यत् । ह्वया॑मसि । त्वा॒ । युध्य॑न्तः । ने॒मऽधि॑ता । पृ॒त्ऽसु । शू॒र॒ ॥ ४ ॥

हे इन्द्र सः तादृशः त्वम् अकवाभिः अकुत्सिताभिः ऊती ऊतिभी रक्षाभिः नः अस्माकं वृधे वर्धनाय अविता रक्षिता भूः भव । तथा विश्वायुः सर्वतो गन्ता त्वमस्माकं सखा च भव । नेमधिता नेमशब्दोऽर्धवाची । उक्तं च—'त्वो नेम इत्यर्धस्य' (निरु ३. २०) इति । अर्धाः कतिपयाः पुरुषा धीयन्त एष्विति नेमधितयः संग्रामाः । तादृशेषु पृत्सु पृतनासु संग्रामेषु युध्यन्तः युद्धं कुर्वन्तो वयं स्वर्षाता स्वः सुष्ठु अरणीयं[3] धनं तस्य संभजनार्थं हे शूर त्वां यत् यदा ह्वयामसि आह्वयामः तदानीं त्वमविता सखा च भवेत्यर्थः ॥

नू॒नं न॑ इन्द्रापरा॒य च॑ स्या॒ भवा॑ मृळी॒क उ॒त नो॑ अ॒भिष्टौ॑ ।
इ॒त्था गृ॒णन्तो॑ म॒हिन॑स्य॒ शर्म॑न्दि॒वि ष्या॑म॒ पार्ये॑ गो॒षत॑माः ॥ ५ ॥

नू॒नम् । नः॒ । इ॒न्द्र॒ । अ॒प॒राय॑ । च॒ । स्याः॒ । भव॑ । मृ॒ळी॒कः । उ॒त । नः॒ । अ॒भिष्टौ॑ ।
इ॒त्था । गृ॒णन्तः॑ । म॒हिन॑स्य । शर्म॑न् । दि॒वि । स्या॒म॒ । पार्ये॑ । गो॒सऽत॑माः ॥ ५ ॥

हे इन्द्र त्वं नूनम् अद्य नः अस्माकं स्याः अस्मदीयो भव । अपराय च अपरस्मिन्नन्यस्मिन्नपि कालेऽस्मदीयो भव । उत अपि च त्वं नः अस्माकम् अभिष्टौ अभिगमने सति मृळीकः सुखयिता भव । इत्था इत्थमनेन प्रकारेण गृणन्तः स्तुवन्तो वयं गोषतमाः गवां संभक्तृतमाः सन्तः महिनस्य महतस्तव संबन्धिनि दिवि द्योतमाने पार्ये दुःखस्य पारके शर्मन् शर्मणि सुखे स्याम वर्तमाना भवेम ॥ ॥ ५ ॥

'सं च त्वे जग्मुः' इति पञ्चर्चमेकादशं सूक्तं शुनहोत्रस्यार्षं त्रैष्टुभमैन्द्रम् । 'सं च त्वे' इत्यनुक्रान्तम् । तृतीये छान्दोमिकेऽहनीदमादिके द्वे सूक्ते । सूत्रितं च—'सं च त्वे जग्मुरिति सूक्ते' (आश्व. श्रौ. ८. ७) इति । महाव्रतेऽपि निष्केवल्य उक्तो विनियोगः ॥

---

१. ख-ञ-न-भ-एतान् । २. ञ-यथा कश्चित् । ३. ख-भ-श-रक्षणीयम्; ञ-य-क्षरणीयम् ।

संं च त्वे जग्मुर्गिर इन्द्र पूर्वीर्वि च त्वद्यन्ति विभ्वो मनीषाः ।
पुरा नूनं च स्तुतय ऋषीणां पस्पृध्र इन्द्रे अध्युक्थार्का ॥ १ ॥

सम् । च । त्वे इति । जग्मुः । गिरः । इन्द्र । पूर्वीः । वि । च । त्वत् । यन्ति । विऽभ्वः । मनीषाः ।
पुरा । नूनम् । च । स्तुतयः । ऋषीणाम् । पस्पृध्रे । इन्द्रे । अधि । उक्थऽअर्का ॥ १ ॥

हे इन्द्र त्वे त्वयि पूर्वीः बह्व्यः गिरः स्तुतयश्च सं जग्मुः संगच्छन्ते । त्वत् त्वत्तः विभ्वः विभवो विस्तृताः मनीषाः स्तोतॄणां मतयश्च वि यन्ति विविधं निर्गच्छन्ति । शेषः परोक्षकृतः । पुरा पूर्वस्मिन्काले नूनम् अद्य च ऋषीणाम् अतीन्द्रियार्थदर्शिनां भरद्वाजादीनां स्तुतयः स्तोत्राणि इन्द्रे अधि अधिकं पस्पृध्रे अस्पर्धन्त । अहमहमिकयेन्द्रस्य स्तवने त्वरिता बभूवुरित्यर्थः । तथा उक्थार्का । उक्थं शस्त्रम् । तद्रूपाण्यर्काणि अर्चनसाधनानि स्तोत्राणि च पस्पृध्रे अस्पर्धन्त ॥

पुरुहूतो यः पुरुगूर्त ऋभ्वाँ एकः पुरुप्रशस्तो अस्ति यज्ञैः ।
रथो न महे शवसे युजानो३स्माभिरिन्द्रो अनुमाद्यो भूत् ॥ २ ॥

पुरुऽहूतः । यः । पुरुऽगूर्तः । ऋभ्वा । एकः । पुरुऽप्रशस्तः । अस्ति । यज्ञैः ।
रथः । न । महे । शवसे । युजानः । अस्माभिः । इन्द्रः । अनुऽमाद्यः । भूत् ॥ २ ॥

पुरुहूतः बहुभिराहूतः पुरुगूर्तः बहुभिरुद्यमितः ऋभ्वा महान् एकः प्रधानभूत एवंगुणविशिष्टः यः इन्द्रः यज्ञैः यष्टृभिः पुरुषैः यजनसाधनैः[1] स्तोत्रैर्वा पुरुप्रशस्तः अस्ति बहुधा प्रशस्तः स्तुतो भवति सः इन्द्रः रथो न रथ इव महे महते शवसे बलाय तदर्थं युजानः अस्मत्स्तुतिभिर्युज्यमानः सन् अस्माभिः स्तोतृभिः अनुमाद्यो भूत् सर्वदा स्तुत्यो भवतु ॥

न यं हिंसन्ति धीतयो न वाणीरिन्द्रं नक्षन्तीदभि वर्धयन्तीः ।
यदि स्तोतारः शतं यत्सहस्रं गृणन्ति गिर्वणसं शं तदस्मै ॥ ३ ॥

न । यम् । हिंसन्ति । धीतयः । न । वाणीः । इन्द्रम् । नक्षन्ति । इत् । अभि । वर्धयन्तीः ।
यदि । स्तोतारः । शतम् । यत् । सहस्रम् । गृणन्ति । गिर्वणसम् । शम् । तत् । अस्मै ॥ ३ ॥

यम् इन्द्रं धीतयः कर्माणि परिचरणानि न हिंसन्ति न बाधन्ते । वाणीः वाण्यः स्तुतयश्च यं न बाधन्ते । दातुमसमर्थः पुरुषोऽन्यकृतैः परिचरणैः स्तुतिभिश्च भृशं खिद्यते[2] अस्य चेन्द्रस्य बहुधनत्वाद्दातृत्वाच्च तस्मिन् प्रयुज्यमानानि परिचरणानि स्तोत्राणि च बाधहेतवो नाभूवन्नित्यर्थः । किं तर्हीत्यत आह । तमिन्द्रं वर्धयन्तीः वर्धयन्त्यः अभि नक्षन्ति अभिगच्छन्ति[3] । अपि च गिर्वणसं गिरां संभक्तारमिन्द्रं शतं शतसंख्याकाः स्तोतारः यदि गृणन्ति स्तुवन्ति । यत् यदि च सहस्रं सहस्रसंख्याकाः स्तोतारः स्तुवन्ति तत् सर्वं स्तोत्रम् अस्मै इन्द्राय शं सुखकरं भवति ॥

---

१. ख१-ज्ञ-त—यजमानसाधनैः । २. ज-ज्ञ-ण-न-भ-य—व्यथते । ३. ख भ—इत् अभिगच्छन्ति एव ।

अस्मा एतद्दिव्य१र्चेव मासा मिमिक्ष इन्द्रे न्ययामि सोमः ।
जनं न धन्वन्नभि सं यदापः सत्रा वावृधुर्हवनानि यज्ञैः ॥ ४ ॥

अस्मै । एतत् । दिवि । अर्चाऽइव । मासा । मिमिक्षः । इन्द्रे । नि । अयामि । सोमः ।
जनम् । न । धन्वन् । अभि । सम् । यत् । आपः । सत्राः । ववृधुः । हवनानि । यज्ञैः ॥४॥

एतत् एतस्मिन् दिवि दिवसे सौत्येऽहनि अर्चेव अर्चनसाधनेन स्तोत्रेणेव मासा मानेन ‘ इन्द्राय त्वा वृत्रघ्ने ’ इत्यादिमन्त्रसाध्येन युक्तः मिमिक्षः वसतीवर्यैकधनाख्याभिरद्भिरासिक्तः सोमः अस्मै । विभक्तिव्यत्ययः । अस्मिन् इन्द्रे न्ययामि नियतोऽभूत् । यद्वा । अस्मै इन्द्रायैतत्स्तोत्रं ब्रवाणीति शेषः । दिवि द्युलोके अर्चेव अर्कः सूर्य इव मासा । लुप्तोपममेतत् । माति परिच्छिनत्तीति मासश्चन्द्रमाः । स इव मिमिक्षो वृष्ट्युदकानां सेक्ता य इन्द्रो वर्ततेऽस्मिन्निन्द्रेऽभिषुतः सोमो नियम्यते स्म । किंच तमिन्द्रं यज्ञैः यजनसाधनैः पुरोडाशादिभिर्हविर्भिः सार्धं हवनानि स्तोत्राणि सत्रा सह वावृधुः अवर्धयन् । तत्र दृष्टान्तः । धन्वन् धन्वनि मरुदेशे अभि अभिमुखं सं यत् सम्यग्यत्यो[1] गच्छन्त्यः आपः जनं प्राणिनमिव । यथा मरुदेश उपलभ्यमाना आपः प्राणिनं वर्धयन्ति तद्वत् ॥

अस्मा एतन्मह्याङ्गूषमस्मा इन्द्राय स्तोत्रं मतिभिरवाचि ।
असद्यथा महति वृत्रतूर्य इन्द्रो विश्वायुरविता वृधश्च ॥ ५ ॥

अस्मै । एतत् । महि । आङ्गूषम् । अस्मै । इन्द्राय । स्तोत्रम् । मतिऽभिः । अवाचि ।
असत् । यथा । महति । वृत्रऽतूर्ये । इन्द्रः । विश्वऽआयुः । अविता । वृधः । च ॥ ५ ॥

अस्मै इन्द्राय महि महत् एतत् आङ्गूषं स्तोत्रं मतिभिः स्तोतृभिः अवाचि उक्तमभूत् । अस्मा इन्द्राय स्तोत्रम् इति पुनरुक्तिरादरार्था । विश्वायुः सर्वत्र गन्ता सः इन्द्रः महति प्रभूते वृत्रतूर्ये संग्रामे यथा येन प्रकारेणास्माकम् अविता रक्षकः वृधः वर्धयिता च असत् भवेत् तथावाचीत्यन्वयः ॥ ॥ ६ ॥

‘ कदा भुवन् ’ इति पञ्चर्चं द्वादशं सूक्तं नरस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रान्तं—‘ कदा नरस्तु ’ इति । तृतीये छन्दोमे महाव्रते च निष्केवल्य उक्तो विनियोगः ॥

कदा भुवन्रथक्षयाणि ब्रह्म कदा स्तोत्रे सहस्रपोष्यं दाः ।
कदा स्तोमं वासयोऽस्य राया कदा धियः करसि वाजरत्नाः ॥ १ ॥

कदा । भुवन् । रथऽक्षयाणि । ब्रह्म । कदा । स्तोत्रे । सहस्रऽपोष्यम् । दाः ।
कदा । स्तोमम् । वासयः । अस्य । राया । कदा । धियः । करसि । वाजऽरत्नाः ॥ १ ॥

---

१. ख-झ-भ- तं सम्यग्यन्त्यो; ज्ञ-य-सम्यग्यन्त्यो ।

हे इन्द्र vब्रह्म ब्रह्माणि स्तोत्राण्यस्मदीयानि vरथक्षयाणि रथनिवासानि vकदा कस्मिन्काले vभुवन् भवेयुः । रथेऽवस्थितं त्वां कदा प्राप्नुवन्तीत्यर्थः । vकदा कस्मिन् काले vस्तोत्रे स्तुवते मह्यं vसहस्रपोष्यं सहस्रसंख्याकपुरुषपोषकं गोसमूहं पुत्रं वा vदाः दद्याः । vकदा च vअस्य मम स्तोतुः vस्तोमं स्तोत्रं vराया धनेन vवासयः व्यापयेः । vधियः कर्माणि चाग्निहोत्रादीनि vवाजरत्नाः वाजैरन्नैः रमणीयाः vकदा कस्मिन् काले vकरसि कुर्याः । एवं स्तोता फलस्य विलम्बमसहमानः[1] इन्द्रमनया पृष्टवान् ॥

कर्हि स्वित्तदिन्द्र यन्नृभिर्नॄन्वीरैर्वीरान्नीळयासे जयाजीन् ।
त्रिधातु गा अधि जयासि गोष्विन्द्र द्युम्नं स्वर्वद्धेह्यस्मे ॥ २ ॥

कर्हि । स्वित् । तत् । इन्द्र । यत् । नृऽभिः । नॄन् । वीरैः । वीरान् । नीळयासे । जय । आजीन् ।
त्रिऽधातु । गाः । अधि । जयासि । गोषु । इन्द्र । द्युम्नम् । स्वःऽवत् । धेहि । अस्मे इति ॥ २ ॥

फलस्य विलम्बमसहमान ऋषिरनयापीन्द्रं पृच्छति । हे vइन्द्र vकर्हि vस्वित् कदा खलु vतत् भवेत् । vनृभिः अस्मदीयैः पुरुषैः vनॄन् शत्रुपुरुषान् तथा vवीरैः अस्मदीयैः पुत्रैः vवीरान् शत्रुपुत्रांश्च vयत् vनीळयासे त्वं संश्लेषयेः[2] संयोजयेः[2] ॥ नीळयतिः संश्लेषणकर्मा[3] ॥ ईदृशं युद्धे यत्संश्लेषणं तत्कदा भवेदिति वितर्कः । अपि चास्मदर्थं त्वम् vआजीन् संग्रामान् कदा vजय जयेः । कदा च vगोषु अभिगन्तृषु शत्रुषु विद्यमानाः vत्रिधातु त्रिधातूः क्षीरदधिघृतानां त्रयाणां धारयित्रीः vगाः vअधि vजयासि अधिकं जयेः । हे vइन्द्र त्वं vस्वर्वत् व्याप्तिमत् vद्युम्नं धनम् vअस्मे अस्मासु कदा vधेहि धारयेः ॥

कर्हि स्वित्तदिन्द्र यज्जरित्रे विश्वप्सु ब्रह्म कृणवः शविष्ठ ।
कदा धियो न नियुतो युवासे कदा गोमघा हवनानि गच्छाः ॥ ३ ॥

कर्हि । स्वित् । तत् । इन्द्र । यत् । जरित्रे । विश्वऽप्सु । ब्रह्म । कृणवः । शविष्ठ ।
कदा । धियः । न । निऽयुतः । युवासे । कदा । गोऽमघा । हवनानि । गच्छाः ॥ ३ ॥

अनयापि कतिचित् प्रश्नाः क्रियन्ते । हे vइन्द्र vकर्हि vस्वित् कदा खलु vतत् भवेत् । हे vशविष्ठ बलवत्तमेन्द्र त्वं vजरित्रे स्तोत्रे vविश्वप्सु बहुविधरूपं vब्रह्म अन्नं vकृणवः करोषीति vयत् तत्कदा भवेदिति वितर्कः। vकदा च vधियः कर्माणि। vन इति समुच्चये । vनियुतः स्तुतीश्च vयुवासे आत्मनि[4] योजयेः[4] । vकदा च त्वं vगोमघा गोमघानि गवां दातॄणि ॥ मंहतेर्दानार्थस्य रूपमुत्तरपदम् ॥ vहवनानि स्तोत्राणि vगच्छाः अभिगच्छेः[5] ॥

स गोमघा जरित्रे अश्वश्चन्द्रा वाजश्रवसो अधि धेहि पृक्षः ।
पीपिहीषः सुदुघामिन्द्र धेनुं भरद्वाजेषु सुरुचो रुरुच्याः ॥ ४ ॥

सः । गोऽमघाः । जरित्रे । अश्वऽचन्द्राः । वाजऽश्रवसः । अधि । धेहि । पृक्षः ।
पीपिहि । इषः । सुऽदुघाम् । इन्द्र । धेनुम् । भरत्ऽवाजेषु । सुऽरुचः । रुरुच्याः ॥ ४ ॥

---

१. घ–°मसहमानः स; श–°मसहमानः सन् । २. घ-संहरेः । ३. ख-न-भ–संश्लेषकर्मा । ४. ज्ञ-त-य–आत्मना नियोजयेः । ५. ख१-ज-ज्ञ-न-भ–आगच्छेः ।

हे इन्द्र <sup>v</sup>सः त्वं <sup>v</sup>जरित्रे स्तोत्रे <sup>v</sup>गोमघाः गवां दात्रीः <sup>v</sup>अश्वश्चन्द्राः अश्वैराह्लादयन्तीः <sup>v</sup>वाजश्रवसः वाजैर्बलैः प्रसिद्धा एवंभूताः <sup>v</sup>पृक्षः अन्नानि <sup>v</sup>भरद्वाजेषु भरद्वाजपुत्रेष्वस्मासु <sup>v</sup>अधि <sup>v</sup>धेहि धारय । तथा <sup>v</sup>इषः तान्यन्नानि <sup>v</sup>सुदुघां शोभनदोग्ध्रीं <sup>v</sup>धेनुं गां च हे <sup>v</sup>इन्द्र <sup>v</sup>पीपिहि प्यायय । अपि च ता इषो गौश्च <sup>v</sup>सुरुचः शोभनदीप्तयो यथा भवन्ति तथा त्वं <sup>v</sup>रुरुच्याः दीपयेः । शोभनदीप्तियुक्ताश्च ताः सन्त्वित्यर्थः ॥

तमा नूनं वृजनमन्यथा चिच्छूरो यच्छक्र वि दुरो गृणीषे ।
मा निररं शुक्रदुघस्य धेनोराङ्गिरसान्ब्रह्मणा विप्र जिन्व ॥ ५ ॥

तम् । आ । नूनम् । वृजनम् । अन्यथा । चित् । शूरः । यत् । शक्र । वि । दुरः । गृणीषे ।
मा । निः । अरम् । शुक्रऽदुघस्य । धेनोः । आङ्गिरसान् । ब्रह्मणा । विप्र । जिन्व ॥ ५ ॥

हे इन्द्र त्वं <sup>v</sup>नूनम्[1] अद्यतनं <sup>v</sup>वृजनं बाधकमस्मदीयं शत्रुम् <sup>v</sup>अन्यथा <sup>v</sup>चित् अन्येनैव प्रकारेण योजय । येन प्रकारेण सर्वे जीवन्ति तद्विलक्षणं प्रकारं मरणाख्यं प्रापयेत्यर्थः । आकारः पूरकः । हे <sup>v</sup>शक्र सर्वकार्येषु शक्तेन्द्र <sup>v</sup>शूरः शौर्योपेतः <sup>v</sup>वि <sup>v</sup>दुरः विशेषेण दारयिता शत्रूणाम् । यद्वा । दुरो द्वाराणि शत्रुसंबन्धीनि विघटयंस्त्वं <sup>v</sup>यत् यस्मात् <sup>v</sup>गृणीषे अस्माभिः स्तूयसे तस्मात् कारणात् <sup>v</sup>शुक्रदुघस्य शुक्राणां निर्मलानां दोग्धुरिन्द्रस्य <sup>v</sup>धेनोः वाचः स्तोत्रात् <sup>v</sup>मा <sup>v</sup>निररं मा निर्गच्छेयम् । यद्वा । शुक्रस्य पयसो दोग्ध्र्या धेनोस्त्वया दत्ताया गोः सकाशात् मा निर्गच्छेयम् ॥ अरमित्याख्यातम् 'ऋ गतौ' इत्यस्य रूपम् ॥ सा सर्वदास्मासु निवसत्वित्यर्थः । हे <sup>v</sup>विप्र प्राज्ञेन्द्र <sup>v</sup>आङ्गिरसान् अङ्गिरोगोत्रजानस्मान् <sup>v</sup>ब्रह्मणा अन्नेन <sup>v</sup>जिन्व प्रीणय ॥ ॥ ७ ॥

'सत्रा मदासः' इति पञ्चर्चं त्रयोदशं सूक्तं नरस्यार्षं त्रैष्टुभमैन्द्रम् । 'सत्रा' इत्यनुक्रान्तम् । पृष्ठ्यस्य पञ्चमेऽहनि निष्केवल्य एतत्सूक्तं शस्यम्[2] । सूत्रितं च–'प्रेदं ब्रह्मेन्द्रो मदाय सत्रा मदास इति निष्केवल्यम्' ( आश्व. श्रौ. ७. १२ ) इति । विश्वजिति माध्यंदिनसवने प्रशास्तुः शस्त्र इदं सामसूक्ताख्यं शंसनीयम् । सूत्रितं च—'सत्रा मदासो यो जात एवाभूरेक इति सामसूक्तानि' ( आश्व. श्रौ. ८. ७ ) इति । महाव्रतेऽपि[3] निष्केवल्य उक्तो विनियोगः ॥

सत्रा मदासस्तव विश्वजन्याः सत्रा रायोऽध ये पार्थिवासः ।
सत्रा वाजानामभवो विभक्ता यद्देवेषु धारयथा असुर्यम् ॥ १ ॥

सत्रा । मदासः । तव । विश्वऽजन्याः । सत्रा । रायः । अध । ये । पार्थिवासः ।
सत्रा । वाजानाम् । अभवः । विऽभक्ता । यत् । देवेषु । धारयथाः । असुर्यम् ॥ १ ॥

हे इन्द्र <sup>v</sup>तव त्वदीयाः <sup>v</sup>मदासः सोमपानजनिता मदाः <sup>v</sup>सत्रा । सत्यनामैतत् । सत्यं <sup>v</sup>विश्वजन्याः सर्वजनहिता भवन्ति । यद्वा । सत्रेति महन्नाम । महान्तस्तव मदा इति योज्यम् । <sup>v</sup>अध अपि च <sup>v</sup>पार्थिवासः पृथिव्युपलक्षिते लोकत्रये भवास्त्वदीयाः <sup>v</sup>ये <sup>v</sup>रायः धनसमूहाः सन्ति तेऽपि

१. ख-झ-त२-न-भ-र–अनूनम् । २. ख-घ-झ-त१-न-भ-र-श–'शस्यं' नास्ति; झ–शंस्यम् । ३. त–महाव्रते ।

सत्रा सत्यं विश्वजनहिता भवन्तीत्यन्वयः । किंच त्वं वाजानाम् अन्नानां सत्रा सत्यं विभक्ता दाता अभवः भवसि । यद्वा । सत्रा महतां वाजानामिति योज्यम् । यत् यस्मात्त्वं देवेषु मध्ये असुर्यं बलं धारयथाः अतः कारणात्त्वमेवं करोषीत्यर्थः ॥

अनु प्र येजे जन ओजो अस्य सत्रा दधिरे अनु वीर्याय ।
स्यूमगृभे दुधयेऽर्वते च क्रतुं वृञ्जन्त्यपि वृत्रहत्ये ॥ २ ॥

अनु । प्र । येजे । जनः । ओजः । अस्य । सत्रा । दधिरे । अनु । वीर्याय ।
स्यूमऽगृभे । दुधये । अर्वते । च । क्रतुम् । वृञ्जन्ति । अपि । वृत्रऽहत्ये ॥ २ ॥

अस्य इन्द्रस्य ओजः बलं जनः यजमानः अनु प्र येजे संततं प्रकर्षेण यजते पूजयति । अपि च तमिन्द्रं वीर्याय वीरकर्म कर्तुं सत्रा सत्यम् अनु दधिरे पुरो[1] दधिरे[1] यजमानाः । यद्वा । सत्रा महान्तमिन्द्रमिति योज्यम् । अपि च स्यूमगृभे स्यूम्नः स्यूतान् अविच्छेदेन वर्तमानान् शत्रून् गृह्णते दुधये । दुधिर्हिंसाकर्मा । तेषां हिंसकाय अर्वते शत्रूणामभिगन्त्रे च तस्मा इन्द्राय क्रतुं कर्म परिचरणात्मकं वृञ्जन्ति निष्पादयन्ति । किमर्थम् । वृत्रहत्ये वृत्रस्य वारकस्य[2] शत्रोर्हनननिमित्तम् ॥

तं सध्रीचीरूतयो वृष्ण्यानि पौंस्यानि नियुतः सश्चुरिन्द्रम् ।
समुद्रं न सिन्धव उक्थशुष्मा उरुव्यचसं गिर आ विशन्ति ॥ ३ ॥

तम् । सध्रीचीः । ऊतयः । वृष्ण्यानि । पौंस्यानि । निऽयुतः । सश्चुः । इन्द्रम् ।
समुद्रम् । न । सिन्धवः । उक्थऽशुष्माः । उरुऽव्यचसम् । गिरः । आ । विशन्ति ॥ ३ ॥

तम् इन्द्रम् ऊतयः मरुतः सध्रीचीः सहाञ्चन्त्यः संगता भूत्वा सश्चुः सचन्ते सेवन्ते । यद्वा । ऊतयस्तर्पकाण्यन्नानि सह वर्तमानानि भूत्वा सेवन्ते । तथा वृष्ण्यानि वीर्याणि पौंस्यानि बलानि च नियुतः रथे युज्यमानाः[3] वडवाश्च तम्[4] इन्द्रं सेवन्ते । अपि च उक्थशुष्माः । उक्थं शस्त्रम् । तदेव बलं[5] यासां तादृशाः गिरः स्तुतयश्च उरुव्यचसं विस्तीर्णव्याप्तिकं तमिन्द्रम् आ विशन्ति प्रविशन्ति । तत्र दृष्टान्तः । समुद्रं न सिन्धवः । यथा स्यन्दनशीला नद्यः समुद्रमाविशन्त्याविश्य च विभक्ततया न दृश्यन्ते एवं सर्वा अपि स्तुतय इन्द्रेणैकीभवन्तीत्यर्थः ॥

स रायस्खामुप सृजा गृणानः पुरुश्चन्द्रस्य त्वमिन्द्र वस्वः ।
पतिर्बभूथासमो जनानामेको विश्वस्य भुवनस्य राजा ॥ ४ ॥

सः । रायः । खाम् । उप । सृज । गृणानः । पुरुऽचन्द्रस्य । त्वम् । इन्द्र । वस्वः ।
पतिः । बभूथ । असमः । जनानाम् । एकः । विश्वस्य । भुवनस्य । राजा ॥ ४ ॥

हे इन्द्र गृणानः स्तूयमानः सः त्वं रायः धनस्य खाम् । नदीनामैतत् । अत्र तत्संबद्धा धारा लक्ष्यते । धाराम् उप सृज विमुञ्च । अस्माभिः संयोजयेत्यर्थः । कीदृशस्य धनस्य । पुरु-

---

१. ख-ङ्ग-न-भ-र-‘ पुरो दधिरे ’ नास्ति । २. ख-ङ्ग-भ-आवरकस्य । ३. श – नियुज्यमानाः । ४. ख-ज्ञ-ङ्ग-त-न-भ-य-र-तमेव । ५. ङ्ग–शुष्मं बलम् ।

श्चन्द्रस्य बहूनामाह्लादकस्य ᵛवस्वः निवासकस्य । अपि च ᵛअसमः अनुपमः सर्वोत्कृष्टस्त्वं ᵛजनानां सर्वेषां प्राणिनां ᵛपतिः अधिपतिः ᵛबभूथ[1] । तथा ᵛविश्वस्य सर्वस्य ᵛभुवनस्य भूतजातस्य ᵛएकः असाधारणो ᵛराजा ईश्वरश्च बभूविथ[2] ॥

**स तु श्रुधि श्रुत्या यो दुवोयुर्द्यौर्न भूमाभि रायो अर्यः ।**
**असो यथा नः शवसा चकानो युगेयुगे वयसा चेकितानः ॥ ५ ॥**

सः । तु । श्रुधि । श्रुत्या । यः । दुवःऽयुः । द्यौः । न । भूम । अभि । रायः । अर्यः ।
असः । यथा । नः । शवसा । चकानः । युगेऽयुगे । वयसा । चेकितानः ॥ ५ ॥

हे इन्द्र ᵛश्रुत्या श्रुत्यानि श्रोतव्यानि स्तोत्राणि ᵛतु क्षिप्रं ᵛश्रुधि शृणु । ᵛयः त्वं ᵛदुवोयुः अस्मदीयं परिचरणमात्मन इच्छन् ᵛअर्यः अरेः संबन्धीनि ᵛरायः धनानि ᵛभूम बहुतराणि ᵛद्यौर्न सूर्य इव ᵛअभि भवसि ᵛसः त्वं श्रुधीत्यन्वयः । अपि च ᵛशवसा आत्मीयेन बलेन स्तोतव्येन युक्तः ᵛचकानः स्तूयमानः ᵛयुगेयुगे काले काले ᵛवयसा हविर्लक्षणेनान्नेन ᵛचेकितानः प्रज्ञायमानस्त्वं ᵛयथा येन प्रकारेण ᵛनः अस्माकमसाधारणोऽसि तथा ᵛअसः स्याः ॥ ॥ ८ ॥

'अर्वाग्रथम्' इति पञ्चर्चं चतुर्दशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । 'अर्वाग्रथम्' इत्यनुक्रान्तम् । महाव्रते निष्केवल्ये उक्तो विनियोगः ॥

**अर्वाग्रथं विश्ववारं त उग्रेन्द्र युक्तासो हरयो वहन्तु ।**
**कीरिश्चिद्धि त्वा हवते स्वर्वानृधीमहि सधमादस्ते अद्य ॥ १ ॥**

अर्वाक् । रथम् । विश्वऽवारम् । ते । उग्र । इन्द्र । युक्तासः । हरयः । वहन्तु ।
कीरिः । चित् । हि । त्वा । हवते । स्वःऽवान् । ऋधीमहि । सधऽमादः । ते । अद्य ॥ १ ॥

हे ᵛउग्र उद्गूर्णबल ᵛइन्द्र ᵛयुक्तासः रथेन युक्ताः ᵛहरयः अश्वाः ᵛते त्वदीयं ᵛविश्ववारं विश्वैर्वरणीयं ᵛरथम् ᵛअर्वाक् अस्मदभिमुखं ᵛवहन्तु आनयन्तु । ᵛहि यस्मात् ᵛस्वर्वान् । स्वः सुष्ठु अरणीयं गुणजातम् । तद्वान् ᵛकीरिश्चित् स्तोता भरद्वाज ऋषिः ᵛत्वा त्वां ᵛहवते आह्वयति तस्मात् कारणात् त्वदीयं रथमभिमुखं वहन्त्वित्यर्थः । वयं च ᵛअद्य इदानीं ᵛते त्वया ᵛसधमादः सह माद्यन्तः ᵛऋधीमहि समृद्धा भवेम ॥

तृतीये पर्यायेऽच्छावाकस्य 'प्रो द्रोणे' इत्येषा शस्त्रयाज्या । सूत्रितं च—'प्रो द्रोणे हरयः कर्माग्मन्निति याज्या' ( आश्व. श्रौ. ६. ४ ) इति ॥

**प्रो द्रोणे हरयः कर्माग्मन्पुनानास ऋज्यन्तो अभूवन् ।**
**इन्द्रो नो अस्य पूर्व्यः पपीयाद्द्युक्षो मदस्य सोम्यस्य राजा ॥ २ ॥**

प्रो इति । द्रोणे । हरयः । कर्म । अग्मन् । पुनानासः । ऋज्यन्तः । अभूवन् ।
इन्द्रः । नः । अस्य । पूर्व्यः । पपीयात् । द्युक्षः । मदस्य । सोम्यस्य । राजा ॥ २ ॥

---

१. ञ-बभूथ बभूविथ । २. ञ-बभूथ ।

ᵛहरयः हरितवर्णाः सोमाः ᵛनः ᵛकर्म अस्मदीयं यज्ञं ᵛप्रो ᵛअग्मन् प्रकर्षेण गच्छन्ति प्राप्नुवन्ति । प्राप्य च ᵛपुनानासः पूयमानाः ᵛद्रोणे द्रोणकलशे ᵛऋज्यन्तः ऋजु गच्छन्तः ᵛअभूवन् भवन्ति । ᵛपूर्व्यः पुरातनः ᵛद्युक्षः दीप्तिनिवासभूतो द्युस्थानो वा ᵛमदस्य मदकरस्य ᵛसोम्यस्य सोमस्य ᵛराजा ईश्वर एवंभूतः ᵛइन्द्रः च ᵛअस्य इमं सोमं ᵛपपीयात् पिबतु ॥

आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो अश्वाः ।
अभि श्रव ऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं वि दस्येत् ॥ ३ ॥

आऽसस्राणासः । शवसानम् । अच्छ । इन्द्रम् । सुऽचक्रे । रथ्यासः । अश्वाः ।
अभि । श्रवः । ऋज्यन्तः । वहेयुः । नु । चित् । नु । वायोः । अमृतम् । वि । दस्येत् ॥ ३ ॥

ᵛआसस्राणासः परितो गच्छन्तः ᵛरथ्यासः रथे युक्ताः ᵛअश्वाः ᵛऋज्यन्तः ऋजुगमनाः सन्तः ᵛसुचक्रे शोभनचक्रे रथेऽवस्थितं ᵛशवसानं बलमिवाचरन्तम् ᵛइन्द्रं ᵛश्रवः श्रवणीयमस्मदीयं हविः ᵛअच्छ आभिमुख्येन ᵛअभि ᵛवहेयुः आवहेयुः । नू चित् इति निपातो निषेधेऽत्र वर्तते । ᵛअमृतम् अमरणहेतुभूतं सोमलक्षणं हविः ᵛवायोः हेतोः ᵛनु इदानीं ᵛनू ᵛचित् नैव ᵛवि ᵛदस्येत् क्षयं न प्राप्नुयात् । पात्रे गृहीतः सोमो वायुना शुष्यति ततः पुरैव तत्पानार्थमश्वा इन्द्रमभिवहेयुरित्यर्थः ॥

वरिष्ठो अस्य दक्षिणामियर्तीन्द्रो मघोनां तुविकूर्मितमः ।
यया वज्रिवः परियास्यंहो मघा च धृष्णो दयसे वि सूरीन् ॥ ४ ॥

वरिष्ठः । अस्य । दक्षिणाम् । इयर्ति । इन्द्रः । मघोनाम् । तुविकूर्मिऽतमः ।
यया । वज्रिऽवः । परिऽयासि । अंहः । मघा । च । धृष्णो इति । दयसे । वि । सूरीन् ॥४॥

ᵛवरिष्ठः उरुतमः ᵛतुविकूर्मितमः अतिशयेन बहुविधकर्मा ᵛइन्द्रो ᵛमघोनां मघवतां हविर्लक्षणधनोपेतानां मध्ये ᵛअस्य यजमानस्य ᵛदक्षिणां यज्ञे दातव्याम् ᵛइयर्ति प्रेरयति । यद्वा । मघोनामिति अस्येत्यनेन समानाधिकरणम् ॥ वचनव्यत्ययः ॥ मघोनो हविष्मतोऽस्य यजमानस्येत्यर्थः । शेषः प्रत्यक्षकृतः । हे ᵛवज्रिवः वज्रवन्निन्द्र ᵛयया दक्षिणया दत्तया ᵛअंहः पापं यज्ञसंबन्धि ᵛपरियासि विनाशयसि हे ᵛधृष्णो धर्षक ᵛमघा मघानि धनानि ᵛसूरीन् स्तोतॄन् पुत्रांश्च यया च दक्षिणया ᵛवि ᵛदयसे प्रयच्छसि तादृशीं दक्षिणां प्रेरयसीत्यर्थः ॥

इन्द्रो वाजस्य स्थविरस्य दातेन्द्रो गीर्भिर्वर्धतां वृद्धमहाः ।
इन्द्रो वृत्रं हनिष्ठो अस्तु सत्वा ता सूरिः पृणति तूतुजानः ॥ ५ ॥

इन्द्रः । वाजस्य । स्थविरस्य । दाता । इन्द्रः । गीःऽभिः । वर्धताम् । वृद्धऽमहाः ।
इन्द्रः । वृत्रम् । हनिष्ठः । अस्तु । सत्वा । आ । ता । सूरिः । पृणति । तूतुजानः ॥ ५ ॥

अयम् ᵛइन्द्रः ᵛस्थविरस्य[1] ᵛवाजस्य अन्नस्य बलस्य वा ᵛदाता भवतु । स च ᵛइन्द्रः ᵛवृद्धमहाः प्रवृद्धतेजस्कः सन् ᵛगीर्भिः अस्मदीयाभिः स्तुतिभिः ᵛवर्धताम् । ᵛसत्वा शत्रूणां शातयिता

---

१. ज्ञ—स्थविरस्य श्रेष्ठस्य ।

सः ᵛइन्द्रः ᵛवृत्रम् आवरकं शत्रुं ᵛहनिष्ठः हन्तृतमः ᵛअस्तु भवतु । अपि च ᵛसूरिः प्रेरकः स इन्द्रः ᵛतूतुजानः त्वरमाणः ᵛता तानि धनानि ᵛआ ᵛपृणाति अस्मभ्यं प्रयच्छतु ॥ ॥ ९ ॥

'अपादितः' इति पञ्चर्चं पञ्चदशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । 'अपात्' इत्यनुक्रान्तम् । महाव्रते निष्केवल्य उक्तो विनियोगः ॥

अपादित उदु नश्चित्रतमो महीं भर्षद्द्युमतीमिन्द्रहूतिम् ।
पन्यसीं धीतिं दैव्यस्य यामञ्जनस्य रातिं वनते सुदानुः ॥ १ ॥

अपात् । इतः । उत् । ऊँ इति । नः । चित्रऽतमः । महीम् । भर्षत् । द्युऽमतीम् । इन्द्रऽहूतिम् ।
पन्यसीम् । धीतिम् । दैव्यस्य । यामन् । जनस्य । रातिम् । वनते । सुऽदानुः ॥ १ ॥

ᵛचित्रतमः चायनीयतम आश्चर्यतमो वा स इन्द्रः ᵛनः अस्मदीयात् ᵛइतः अस्मात् ग्रहचमसादेः ᵛअपात् सोमं पिबतु । यद्वा । इतोऽस्मात् शत्रोर्नोऽस्मान् अपात् पातु रक्षतु । ᵛउदु इत्येतौ पूरणौ । तथा ᵛमहीं महतीं ᵛद्युमतीं दीप्तिमतीम् ᵛइन्द्रहूतिम् इन्द्रस्य स्तुतिं ᵛभर्षत् स इन्द्रो बिभर्तु धारयतु । ᵛदैव्यस्य देवसंबन्धिनो ᵛजनस्य ᵛयामन् यामनि यज्ञे क्रियमाणां ᵛपन्यसीं स्तुत्यतमां ᵛधीतिं परिचरणरूपां क्रियां ᵛरातिं दातव्यं हविश्च ᵛसुदानुः शोभनदान इन्द्रः ᵛवनते संभजतु ॥

दूराच्चिदा वसतो अस्य कर्णा घोषादिन्द्रस्य तन्यति ब्रुवाणः ।
एयमेनं देवहूतिर्ववृत्यान्मद्र्य१गिन्द्रमियमृच्यमाना ॥ २ ॥

दूरात् । चित् । आ । वसतः । अस्य । कर्णा । घोषात् । इन्द्रस्य । तन्यति । ब्रुवाणः ।
आ । इयम् । एनम् । देवऽहूतिः । ववृत्यात् । मद्र्यक् । इन्द्रम् । इयम् । ऋच्यमाना ॥ २ ॥

ᵛअस्य इन्द्रस्य ᵛकर्णा कर्णौ ᵛदूराच्चित् दूरदेशादपि ᵛआ ᵛवसतः स्तोत्रश्रवणार्थमागच्छतः । ᵛइन्द्रस्य ᵛघोषात् घोषणीयात् स्तोत्राद्धेतोः ᵛब्रुवाणः स्तुवन् स्तोता ᵛतन्यति शब्दं करोति । यद्वा । सर्वत्र विस्तारयति । ᵛदेवहूतिः देवस्येन्द्रस्याह्वानरूपा ᵛइयं स्तुतिश्च ᵛऋच्यमाना स्वयं प्रेर्यमाणा सती ᵛएनम् ᵛइन्द्रम् ᵛमद्र्यक् मदभिमुखम् ᵛआ ᵛववृत्यात् आवर्तयतु । पुनः ᵛइयम् इति पूरणः ॥

तं वो धिया परमया पुराजामजरमिन्द्रमभ्यनूष्यर्कैः ।
ब्रह्मा च गिरो दधिरे समस्मिन्महांश्च स्तोमो अधि वर्धदिन्द्रे ॥ ३ ॥

तम् । वः । धिया । परमया । पुराऽजाम् । अजरम् । इन्द्रम् । अभि । अनूषि । अर्कैः ।
ब्रह्म । च । गिरः । दधिरे । सम् । अस्मिन् । महान् । च । स्तोमः । अधि । वर्धत् । इन्द्रे ॥ ३ ॥

हे इन्द्र ᵛतं तादृशम् ᵛइन्द्रं ᵛवः त्वाम् ॥ व्यत्ययेन बहुवचनम् ॥ ᵛपरमया उत्कृष्टतमया ᵛधिया स्तुत्या ᵛअर्कैः अर्चनसाधनैर्हविर्भिः सार्धम् ᵛअभ्यनूषि अभिष्टौमि । कीदृशम् । ᵛपुराजां पूर्वस्मिन् काले जातं चिरंतनम् ᵛअजरं जरारहितं नित्यम्[1] । अतः कारणात् ᵛअस्मिन् ᵛइन्द्रे ᵛब्रह्म

१. ख-भ—नित्यमिन्द्रमैश्वर्यवन्तम् ।

ब्रह्माणि हविर्लक्षणान्यन्नानि ᵛगिरः स्तुतयश्च ᵛसं ᵛदधिरे संधीयन्ते संश्लिष्यन्ते । ᵛमहान् प्रवृद्धः ᵛस्तोमः ᵛच ᵛअधि ᵛवर्धत् अधिकं वर्धते ॥

वर्धाद्यं यज्ञ उत सोम इन्द्रं वर्धाद्ब्रह्म गिर उक्था च मन्म ।
वर्धाहैनमुषसो यामन्नक्तोर्वर्धान्मासाः शरदो द्याव इन्द्रम् ॥ ४ ॥

वर्धात् । यम् । यज्ञः । उत । सोमः । इन्द्रम् । वर्धात् । ब्रह्म । गिरः । उक्था । च । मन्म ।
वर्ध । अह । एनम् । उषसः । यामन् । अक्तोः । वर्धान् । मासाः । शरदः । द्यावः । इन्द्रम् ॥४॥

ᵛयम् ᵛइन्द्रं ᵛयज्ञः यागः ᵛवर्धात् वर्धयति । ᵛउत अपि च तत्साधनभूतः ᵛसोमः च यमिन्द्रं वर्धयति । तथा ᵛब्रह्म हविर्लक्षणमन्नं च पुरोडाशादिकं यमिन्द्रं ᵛवर्धात् वर्धयति । ᵛगिरः स्तोत्राणि ᵛमन्म मननीयानि ᵛउक्था उक्थानि शस्त्राणि ᵛच यं वर्धयन्ति ᵛएनम् इन्द्रम् ᵛउषसः च ᵛअक्तोः रात्रेः ᵛयामन् यामनि गमने सति ᵛवर्ध[1] वर्धयन्ति[1]। ᵛमासाः ᵛशरदः संवत्सराश्च ᵛद्यावः दिवसाश्चैनम् ᵛइन्द्रं ᵛवर्धान् वर्धयन्ति[2] ॥

एवा जज्ञानं सहसे असामि वावृधानं राधसे च श्रुताय ।
महामुग्रमवसे विप्र नूनमा विवासेम वृत्रतूर्येषु ॥ ५ ॥

एव । जज्ञानम् । सहसे । असामि । ववृधानम् । राधसे । च । श्रुताय ।
महाम् । उग्रम् । अवसे । विप्र । नूनम् । आ । विवासेम । वृत्रऽतूर्येषु ॥ ५ ॥

हे ᵛविप्र मेधाविन्निन्द्र ᵛएव एवं ᵛजज्ञानं प्रादुर्भवन्तं ᵛसहसे शत्रूणामभिभवार्थम् ᵛअसामि[3] बहुलं ᵛवावृधानं[4] वर्धमानं ᵛमहां महान्तम् ᵛउग्रम् उद्गूर्णबलं त्वां ᵛनूनम् अद्य ᵛवृत्रतूर्येषु[5] ᵛश्रुताय[6] विश्रुताय ᵛराधसे धनाय ᵛच ᵛअवसे रक्षणाय च ᵛआ ᵛविवासेम परिचरेम ॥ ॥ १० ॥

‘ मन्द्रस्य कवेः ’ इति पञ्चर्चं षोडशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम्। ‘ मन्द्रस्य ’ इत्यनुक्रान्तम् । गतो विनियोगः ॥

मन्द्रस्य कवेर्दिव्यस्य वह्नेर्विप्रमन्मनो वचनस्य मध्वः ।
अपा नस्तस्य सचनस्य देवेषो युवस्व गृणते गोअग्राः ॥ १ ॥

मन्द्रस्य । कवेः । दिव्यस्य । वह्नेः । विप्रऽमन्मनः । वचनस्य । मध्वः ।
अपाः । नः । तस्य । सचनस्य । देव । इषः । युवस्व । गृणते । गोऽअग्राः ॥ १ ॥

ᵛमन्द्रस्य मोदनस्य मदकरस्य वा ᵛकवेः विक्रान्तस्य ᵛदिव्यस्य दिवि भवस्य ᵛवह्नेः वोढुः ᵛविप्रमन्मनः । विप्रा मेधाविनो मन्मानः स्तोतारो यस्य स तथोक्तः । तस्य ᵛवचनस्य वचनीयस्य स्तुत्यस्य

१. ख१-भ—वर्धय आवर्धयन्ति; ज्ञ-झ-न—वर्धा वर्धयन्ति; त२—वर्धा वर्धयंसि । २. ख१-घ-ज-ण-भ—वर्धन्ति अह ( ख१-भ—अहः ) पूरणः । ३. ख-घ-भ—असामि संपूर्णम् । ४. घ—ववृधानम् । ५. घ—वृत्रतूर्येषु रणेषु; ज्ञ-श—वृत्रतूर्येषु संग्रामेषु । ६. ख-झ-त-न-भ-र—‘ श्रुताय ’ नास्ति ।

ᵛतस्य सर्वत्र प्रसिद्धस्य ᵛसचनस्य सेव्यस्य¹ एवंभूतस्य ᵛमध्वः मधुनः सोमस्य ॥ 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी ॥ एवंभूतं ᵛनः अस्मदीयं सोमं हे इन्द्र त्वम् ᵛअपाः पिब । अपि च हे ᵛदेव द्योतमानेन्द्र ᵛगृणते स्तुवते । तृतीयार्थे चतुर्थी । स्तुवता मया ᵛगोअग्राः । गावोऽग्रे प्रमुखे यासां तादृशाः ᵛइषः अन्नानि ᵛयुवस्व संयोजय ॥

अयमुशानः पर्यद्रिमुस्रा ऋतधीतिभिर्ऋतयुग्युजानः ।
रुजदरुग्णं वि वलस्य सानुं पणीँर्वचोभिरभि योधदिन्द्रः ॥ २ ॥

अयम् । उशानः । परि । अद्रिम् । उस्राः । ऋतधीतिऽभिः । ऋतऽयुक् । युजानः ।
रुजत् । अरुग्णम् । वि । वलस्य । सानुम् । पणीन् । वचःऽभिः । अभि । योधत् । इन्द्रः ॥२॥

ᵛअयम् इन्द्रः ᵛअद्रिं वलेन गोपिधानाय निर्मितं शिलोच्चयं ᵛपरि परितः पर्वतसमीपे विद्यमानाः ᵛउस्राः गाः ᵛउशानः कामयमानः ᵛऋतधीतिभिः सत्यकर्मभिरङ्गिरोभिः ᵛयुजानः संगच्छमानः ᵛऋतयुक् ऋतेन² तत्कृतेन² स्तोत्रेण युक्तश्च भूत्वा ᵛवलस्य असुरस्य स्वभूतं ᵛसानुं समुच्छ्रितं पर्वतम् ᵛअरुग्णम् अन्यैरभग्नं ᵛवि ᵛरुजत् व्यभाङ्क्षीत् । किंच ᵛपणीन् वलानुचरानेतत्संज्ञानसुरांश्च ᵛवचोभिः स्तुत्यरायुधैः संतर्जनरूपैर्वाक्यैरेव³ वा अयम्³ ᵛइन्द्रः ᵛअभि ᵛयोधत् अभ्ययुध्यत ॥

अयं द्योतयदद्युतो व्य१क्तून्दोषा वस्तोः शरद इन्दुरिन्द्र ।
इमं केतुमदधुर्नू चिदह्नां शुचिजन्मन उषसश्चकार ॥ ३ ॥

अयम् । द्योतयत् । अद्युतः । वि । अक्तून् । दोषा । वस्तोः । शरदः । इन्दुः । इन्द्र ।
इमम् । केतुम् । अदधुः । नु । चित् । अह्नाम् । शुचिऽजन्मनः । उषसः । चकार ॥ ३ ॥

हे ᵛइन्द्र त्वया नियम्यमानः पीयमानो वा ᵛअयम् ᵛइन्दुः सोमः ᵛअद्युतः अद्योतमानान् ᵛअक्तून् । अक्तुरिति रात्रिनाम । अत्र च तत्संबन्धात् पक्षमासादयो लक्ष्यन्ते । पक्षमासादीन् तथा ᵛदोषा रात्रिं ᵛवस्तोः दिवसं ᵛशरदः संवत्सरांश्च ᵛवि ᵛद्योतयत् व्यदीपयत् । कुत इत्यत आह । ᵛनू ᵛचित् पुरा देवाः ᵛइमं सोमं चन्द्रात्मना नभसि वर्तमानम् ᵛअह्नां दिवसानां ᵛकेतुं प्रज्ञापकं यस्मात् ᵛअदधुः व्यदधुः अकुर्वन् तस्मादनेन पक्षमासादयः सर्वे प्रकाश्यन्ते । चन्द्रगत्यधीनत्वात्तिथिविभागानाम् । अपि चायं सोमः ᵛउषसः उषःकालान् ᵛशुचिजन्मनः आत्मीयेन तेजसा शुद्धोदयान् ᵛचकार करोति ॥

अयं रोचयदरुचो रुचानो३ऽयं वासयद्व्य१तेन पूर्वीः ।
अयमीयत ऋतयुग्भिरश्वैः स्वर्विदा नाभिना चर्षणिप्राः ॥ ४ ॥

अयम् । रोचयत् । अरुचः । रुचानः । अयम् । वासयत् । वि । ऋतेन । पूर्वीः ।
अयम् । ईयते । ऋतयुक्ऽभिः । अश्वैः । स्वःऽविदा । नाभिना । चर्षणिऽप्राः ॥ ४ ॥

---

१. ख–सेवनस्य; झ-न-भ-य–सेवनीयस्य; 'त–सेव्यस्य' नास्ति । २. घ–ऋतेन तत्कृतेन स्तोत्रेण च युजानः; श–तेन कृतेन स्तोत्रेण च युज्यमानः । ३. झ–°र्वाक्यैर्वायम; त–°र्वाक्यैरेतायम ।

ᵛअयम् इन्द्रः ᵛरुचानः रोचमानः सूर्यात्मना दीप्यमानः ᵛअरुचः प्रकाशरहितान् तमसा मलीमसान् सर्वाँल्लोकान् ᵛरोचयत् प्रकाशयति। तथा ᵛपूर्वीः बह्वीरुषसश्च ᵛअयम् इन्द्रः ᵛऋतेन सत्यभूतेन सर्वत्र गमनशीलेन वा तेजसा ᵛवि ᵛवासयत् व्यापयति। तत्रत्यानि तमांसि निवर्तयतीत्यर्थः। तथा ᵛऋतयुग्भिः ऋतेन स्तोत्रेण युज्यमानैः ᵛअश्वैः ᵛनाभिना संनद्धेन ᵛस्वर्विदा सुष्ठुरणीयस्य[1] धनस्य लम्भकेन रथेन ᵛचर्षणिप्राः चर्षणीनां मनुष्याणां कामैः पूरयिता सन् ᵛअयम् एवेन्द्रः ᵛईयते गच्छति ॥

नू गृ॒णा॒नो गृ॑ण॒ते प्र॑त्न राज॒न्निषः॑ पिन्व वसु॒देया॑य पू॒र्वीः।
अ॒प ओष॑धीरवि॒षा वना॑नि॒ गा अर्व॑तो॒ नॄनृ॒चसे॑ रिरीहि ॥ ५ ॥

नु। गृ॒णा॒नः। गृ॒ण॒ते। प्र॒त्न॒। रा॒ज॒न्। इषः॑। पि॒न्व॒। व॒सु॒ऽदेया॑य। पू॒र्वीः।
अ॒पः। ओष॑धीः। अ॒वि॒षाः। वना॑नि। गाः। अर्व॑तः। नॄन्। ऋ॒चसे॑। रि॒री॒हि॒ ॥ ५ ॥

हे ᵛप्रत्न पुरातन ᵛराजन् राजमानेन्द्र ᵛगृणानः स्तूयमानस्त्वं ᵛवसुदेयाय वसूनि धनानि त्वया देयानि यस्मै तादृशाय ᵛगृणते स्तुवते ᵛपूर्वीः बह्वीः ᵛइषः अन्नानि ᵛनु क्षिप्रं ᵛपिन्व सिञ्च प्रयच्छेत्यर्थः। किंच ᵛऋचसे अर्चयित्रे स्तोत्रे ᵛअपः वृष्टिलक्षणान्युदकानि ᵛओषधीः व्रीह्यादीन् ᵛअविषा विषरहितानि रक्षकाणि वा ᵛवनानि वृक्षजातानि चूतपनसादीनि ᵛगा ᵛअर्वतः अश्वान् ᵛनॄन् मनुष्यांश्च कर्मकरान् ᵛरिरीहि देहि ॥ ॥ ११ ॥

'इन्द्र पिब' इति पञ्चर्चं सप्तदशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम्। 'इन्द्र पिब' इत्यनुक्रान्तम्। गतः सूक्तविनियोगः। प्रथमे रात्रिपर्यायेऽच्छावाकस्याद्या[2] शस्त्रयाज्या[2]। सूत्रितं च— 'इन्द्र पिब तुभ्यं सुतो मदायेति याज्या (आश्व. श्रौ. ६. ४) इति ॥

इन्द्र॒ पिब॒ तुभ्यं॑ सु॒तो मदा॒याव॑ स्य॒ हरी॒ वि मु॑चा॒ सखा॑या।
उ॒त प्र गा॑य ग॒ण आ नि॒षद्याथा॑ य॒ज्ञाय॑ गृ॒ण॒ते वयो॑ धाः ॥ १ ॥

इन्द्र॑। पिब॑। तुभ्य॑म्। सु॒तः। मदा॑य। अव॑। स्य॒। हरी॒ इति॑। वि। मु॒च॒। सखा॑या।
उ॒त। प्र। गा॒य॒। ग॒णे। आ। नि॒ऽसद्य॑। अथ॑। य॒ज्ञाय॑। गृ॒ण॒ते। वयः॑। धाः॒ ॥ १ ॥

हे ᵛइन्द्र तं सोमं ᵛपिब यः सोमः ᵛतुभ्यं ᵛमदाय मदार्थं ᵛसुतः अभिषुतः। यतस्त्वया सोमः पातव्योऽतः कारणात् ᵛसखाया समानख्यानौ मित्रभूतौ वा ᵛहरी अश्वौ ᵛअव ᵛस्य अवस्थापय। तदनन्तरं ᵛवि ᵛमुच रथाद्विमुञ्च। ᵛउत अपि च ᵛगणे अस्मत्स्तोतृसंघे ᵛआ आभिमुख्येन ᵛनिषद्य उपविश्य ᵛप्र ᵛगाय अस्माभिः कृतं स्तोत्रमुपश्लोकय। ᵛअथ अनन्तरं ᵛयज्ञाय यजमानाय ᵛगृणते स्तुवते ᵛवयः अन्नं ᵛधाः देहि ॥

द्वितीये रात्रिपर्याये[3] अच्छावाकस्य 'अस्य पिब' इति शस्त्रयाज्या। सूत्रितं च—'अस्य[4] पिबेति याज्या[4]' (आश्व. श्रौ. ६. ४) इति ॥

---

१. घ-श-सुष्ठु वरणीयस्य। २. झ-भ- °स्याज्यशस्त्रयाज्या; र-°स्याज्या शस्त्रयाज्या; श-°स्याज्यशस्त्रस्य याज्या। ३. झ-ञ-त२-न-भ-य-र-पर्याये। ४. न-अस्य पिब यस्य जज्ञान इन्द्रेति याज्या।

अस्य पिब यस्य जज्ञान इन्द्र मदाय क्रत्वे अपिबो विरप्शिन् ।
तमु ते गावो नर आपो अद्रिरिन्दुं समह्यन्पीतये समस्मै ॥ २ ॥

अस्य । पिब । यस्य । जज्ञानः । इन्द्र । मदाय । क्रत्वे । अपिबः । विऽरप्शिन् ।
तम् । ऊँ इति । ते । गावः । नरः । आपः । अद्रिः । इन्दुम् । सम् । अह्यन् । पीतये । सम् । अस्मै ॥२॥

हे vइन्द्र vअस्य इमं सोमं vपिब । हे vविरप्शिन् महन् vजज्ञानः जायमान एव त्वं vयस्य यं सोमम् vअपिबः पूर्वं पीतवानसि । किमर्थम् । vमदाय हर्षाय vक्रत्वे कर्मणे वृत्रवधादिलक्षणं वीर्यकर्म[1] कर्तुं च । vतमु तादृशमेव vइन्दुं सोमं vगावः गवि भवाः श्रपणसाधनाः क्षीरादयः vनरः नेतारोऽध्वर्यवः vआपः वसतीवर्याख्याः vअद्रिः अभिषवार्थो ग्रावा एते सर्वे vअस्मै अस्येन्द्रस्य vते तव vपीतये पानार्थं vसमह्यन् समगमयन् । 'हि गतौ' इत्यस्यैतद्रूपम् । पुनः vसम् इति पूरकः ॥

समिद्धे अग्नौ सुत इन्द्र सोम आ त्वा वहन्तु हरयो वहिष्ठाः ।
त्वायता मनसा जोहवीमीन्द्रा याहि सुविताय महे नः ॥ ३ ॥

सम्ऽइद्धे । अग्नौ । सुते । इन्द्र । सोमे । आ । त्वा । वहन्तु । हरयः । वहिष्ठाः ।
त्वाऽयता । मनसा । जोहवीमि । इन्द्र । आ । याहि । सुविताय । महे । नः ॥ ३ ॥

vअग्नौ vसमिद्धे[2] दीप्ते[2] vसोमे vसुते अभिषुते सति हे vइन्द्र vत्वा त्वां vवहिष्ठाः वोढृतमाः vहरयः अश्वाः vआ vवहन्तु । इमं यज्ञं प्रत्यानयन्तु । अहं च vत्वायता त्वां कामयमानेन vमनसा vजोहवीमि पुनःपुनराह्वयामि । हे vइन्द्र त्वं vनः अस्माकं vमहे महते vसुविताय कल्याणाय vआ vयाहि आगच्छ ॥

आ याहि शश्वदुशता ययाथेन्द्र महा मनसा सोमपेयम् ।
उप ब्रह्माणि शृणव इमा नोऽथा ते यज्ञस्तन्वे३ वयो धात् ॥ ४ ॥

आ । याहि । शश्वत् । उशता । ययाथ । इन्द्र । महा । मनसा । सोमऽपेयम् ।
उप । ब्रह्माणि । शृणवः । इमा । नः । अथ । ते । यज्ञः । तन्वे । वयः । धात् ॥ ४ ॥

हे vइन्द्र पुरा vशश्वत् बहुकृत्वः vययाथ सोमपानार्थं यज्ञं गतवानसि । अतः कारणात् vउशता अस्मान् कामयमानेन vमहा महता vमनसा सह vसोमपेयं सोमः पीयते यस्मिन्[3] तादृशमस्मदीयं यज्ञम् vआ vयाहि अभिगच्छ । आगत्य च vब्रह्माणि स्तोत्राणि vइमा इदानीं प्रयुज्यमानानि vनः अस्मदीयानि vउप vशृणवः उपशृणु । vअथ अनन्तरं vयज्ञः यजमानः vते तव vतन्वे शरीराय त्वच्छरीरपोषार्थं vवयः अन्नं सोमात्मकं vधात् ददातु ॥

---

१. घ-ङ-न-भ-श—वीर्यं कर्म । २. ङ-त-न-श—समिद्धे सम्यगिन्धनैः दीप्ते । ३. घ-ङ-त-न-भ-र-श—अस्मिन ।

यदिन्द्र दिवि पार्ये यदृधग्यद्वा स्वे सदने यत्र वासि।
अतो नो यज्ञमवसे नियुत्वान्त्सजोषाः पाहि गिर्वणो मरुद्भिः ॥ ५ ॥

यत्। इन्द्र। दिवि। पार्ये। यत्। ऋधक्। यत्। वा। स्वे। सदने। यत्र। वा। असि।
अतः। नः। यज्ञम्। अवसे। नियुत्वान्। सऽजोषाः। पाहि। गिर्वणः। मरुत्ऽभिः ॥५॥

हे ᵛइन्द्र ᵛपार्ये पारगे दूरदेशे ᵛदिवि द्युलोकाख्ये ᵛयत् यदि त्वं वर्तसे। यदि वा ऋधक्। एतत्पृथक्शब्देन समानार्थम्। पृथगन्यस्मिन् देशे वर्तसे। ᵛयद्वा ᵛस्वे स्वकीये ᵛसदने गृहे। अथवा किमनेन विशेषणेन ᵛयत्र यस्मिन् देशे ᵛअसि भवसि ᵛअतः अस्मात् स्थानादागत्य हे ᵛगिर्वणः गिरां संभक्तरिन्द्र ᵛनियुत्वान् नियुतोऽश्वाः। तद्वान् ᵛमरुद्भिः ᵛसजोषाः सह प्रीयमाणस्त्वं ᵛनः अस्माकम् ᵛअवसे रक्षणाय ᵛयज्ञम् अस्मदीयं यागं ᵛपाहि रक्ष। यद्वा। यज्ञं यजनसाधनमस्मदीयं[1] सोममवसे तर्पणाय पाहि पिब॥ ॥ १२ ॥

'अहेळमानः' इति पञ्चर्चमष्टादशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम्'। अनुक्रान्तं च– 'अहेळमानः' इति। गतो विनियोगः॥

अहेळमान उप याहि यज्ञं तुभ्यं पवन्त इन्दवः सुतासः।
गावो न वज्रिन्त्स्वमोको अच्छेन्द्रा गहि प्रथमो यज्ञियानाम् ॥ १ ॥

अहेळमानः। उप। याहि। यज्ञम्। तुभ्यम्। पवन्ते। इन्दवः। सुतासः।
गावः। न। वज्रिन्। स्वम्। ओकः। अच्छ। इन्द्र। आ। गहि। प्रथमः। यज्ञियानाम् ॥१॥

हे इन्द्र ᵛअहेळमानः अक्रुध्यंस्त्वं ᵛयज्ञम् अस्मदीयम् ᵛउप ᵛयाहि उपगच्छ[2]। यतः कारणात् ᵛतुभ्यं त्वदर्थं ᵛसुतासः अभिषुताः ᵛइन्दवः सोमाः ᵛपवन्ते पूयन्ते दशापवित्रेण शोध्यन्ते। हे ᵛवज्रिन् वज्रवन् इन्द्र ᵛगावो ᵛन गावः स्वकीयं गोष्ठमिव ᵛस्वं स्वकीयम् ᵛओकः स्थानं द्रोणकलशादिलक्षणम् ᵛअच्छ आभिमुख्येन प्राप्नुवन्तीति शेषः। अतः कारणात् हे ᵛइन्द्र ᵛयज्ञियानां यज्ञार्हाणां देवानां मध्ये ᵛप्रथमः मुख्यस्त्वं ᵛआ ᵛगहि आगच्छ॥

या ते काकुत्सुकृता या वरिष्ठा यया शश्वत्पिबसि मध्व ऊर्मिम्।
तया पाहि प्र ते अध्वर्युरस्थात्सं ते वज्रो वर्ततामिन्द्र गव्युः ॥ २ ॥

या। ते। काकुत्। सुऽकृता। या। वरिष्ठा। यया। शश्वत्। पिबसि। मध्वः। ऊर्मिम्।
तया। पाहि। प्र। ते। अध्वर्युः। अस्थात्। सम्। ते। वज्रः। वर्तताम्। इन्द्र। गव्युः ॥२॥

हे इन्द्र ᵛया ᵛते तव ᵛकाकुत् जिह्वा ᵛसुकृता सुष्ठु धात्रा निर्मिता। ᵛया च ᵛवरिष्ठा उरुतमा विस्तीर्णतमा। ᵛयया च ᵛमध्वः मधुनः सोमस्य ᵛऊर्मिं रसं ᵛशश्वत् बहुकृत्वः ᵛपिबसि ᵛतया जिह्वयास्मदीयं सोमं ᵛपाहि पिब। तदर्थम् ᵛअध्वर्युः अध्वरस्य नेता ऋत्विग्गृहीतसोमः सन् ᵛप्र

---

१. ख-ञ-त-य-र–यजमान°। २. श–उपागच्छ।

ᵛअस्थात् हविर्धानादुत्तरवेदिदेशं प्रत्यगमत्। अपि च हे ᵛइन्द्र ᵛगव्युः शत्रुसंबन्धिनीर्गा आत्मन इच्छन् ᵛते त्वदीयः ᵛवज्रः ᵛसं ᵛवर्ततां शत्रुभिः संगतो भवतु। तान् हन्त्वित्यर्थः॥

एष द्रप्सो वृषभो विश्वरूप इन्द्राय वृष्णे समकारि सोमः।
एतं पिब हरिवः स्थातरुग्र यस्येशिषे प्रदिवि यस्ते अन्नम्॥ ३॥

एषः। द्रप्सः। वृषभः। विश्वऽरूपः। इन्द्राय। वृष्णे। सम्। अकारि। सोमः।
एतम्। पिब। हरिऽवः। स्थातः। उग्र। यस्य। ईशिषे। प्रऽदिवि। यः। ते। अन्नम्॥३॥

ᵛद्रप्सः द्रवणशीलः ᵛवृषभः कामानां वर्षिता ᵛविश्वरूपः बहुविधरूपोपेत ईदृग्विधः ᵛएषः ᵛसोमः ᵛवृष्णे कामानां वर्षित्रे ᵛइन्द्राय इन्द्रस्य पानार्थं ᵛसमकारि अभिषवादिभिः संस्कृतोऽभूत्। हे ᵛहरिवः। हरी अश्वौ। तद्वन् हे ᵛस्थातः सर्वेषामधिष्ठातः ᵛउग्र उद्गूर्णबलेन्द्र ᵛएतम् ईदृशं सोमं ᵛपिब। ᵛयस्य सोमस्य ᵛप्रदिवि। जातावेकवचनम्। प्रभूतेषु दिवसेषु प्रगतेष्वहःसु वा ᵛईशिषे त्वमेवेश्वरो भवसि। ᵛयः च सोमः ᵛते तव ᵛअन्नम् अन्नत्वेन परिकल्पित एतं पिबेत्यन्वयः॥

सुतः सोमो असुतादिन्द्र वस्यानयं श्रेयाञ्चिकितुषे रणाय।
एतं तितिर्व उप याहि यज्ञं तेन विश्वास्तविषीरा पृणस्व॥ ४॥

सुतः। सोमः। असुतात्। इन्द्र। वस्यान्। अयम्। श्रेयान्। चिकितुषे। रणाय।
एतम्। तितिर्वः। उप। याहि। यज्ञम्। तेन। विश्वाः। तविषीः। आ। पृणस्व॥ ४॥

हे ᵛइन्द्र ᵛसुतः अभिषुतः ᵛअयं ᵛसोमः ᵛअसुतात् अकृताभिषवात् सोमादन्यदीयात् ᵛवस्यान् वसीयान् वसुमत्तरः प्रशस्यतरः। तथा ᵛचिकितुषे विदुषेऽभिज्ञाय तुभ्यं ᵛरणाय रमणीयाय तदर्थं ᵛश्रेयान् श्रेष्ठश्च भवति। त्वामतिशयेन रमयितेत्यर्थः। हे ᵛतितिर्वः शत्रूणां तरितरिन्द्र[1] ᵛयज्ञं यजनसाधनम् ᵛएतं सोमम् ᵛउप ᵛयाहि उपागच्छ[2]। ᵛतेन[3] च सोमेन ᵛविश्वास्तविषीः सर्वाणि[4] बलानि ᵛआ ᵛपृणस्व आपूरय॥

ह्वयामसि त्वेन्द्र याह्यर्वाङरं ते सोमस्तन्वे भवाति।
शतक्रतो मादयस्वा सुतेषु प्रास्माँ अव पृतनासु प्र विक्षु॥ ५॥

ह्वयामसि। त्वा। आ। इन्द्र। याहि। अर्वाङ्। अरम्। ते। सोमः। तन्वे। भवाति।
शतक्रतो इति शतऽक्रतो। मादयस्व। सुतेषु। प्र। अस्मान्। अव। पृतनासु। प्र। विक्षु॥ ५॥

हे ᵛइन्द्र ᵛत्वा त्वां ᵛह्वयामसि आह्वयामः। अतः कारणात् त्वम् ᵛअर्वाङ् अस्मदभिमुखः सन् ᵛआ ᵛयाहि आगच्छ। अस्मदीयः ᵛसोमः च ᵛते ᵛतन्वे तव शरीराय ᵛअरं पर्याप्तं ᵛभवाति भवतु। त्वदीयं शरीरं यथाभिलाषं[5] तर्पयत्वित्यर्थः। हे ᵛशतक्रतो बहुविधकर्मन्निन्द्र त्वं च ᵛसुतेषु अभिषुतेषु

---

१. ख-ञ-भ-जेतरिन्द्र; घ-नेतरिन्द्र। २. ञ-उपगच्छ। ३. ञ-त-न-र-उपगतेन। ४. ख-ञ-न-भ-सर्वाणि च। ५. ञ-यथाभिलषितम्।

अस्मदीयेषु सोमेषु मादयस्व तृप्यस्व । 'मद तृप्तियोगे' । तदनन्तरं पृतनासु संग्रामेषु अस्मान् प्र अव प्रकर्षेण रक्ष । न केवलं पृतनासु किंतु विक्षु सर्वासु प्रजास्वस्मान् प्र अव प्ररक्ष ॥ ॥१३॥

'प्रत्यस्मै' इति चतुर्ऋचमेकोनविंशं सूक्तं भरद्वाजस्यार्षमैन्द्रम् । चतुर्थी बृहती शिष्टा अनुष्टुभः । तथा चानुक्रान्तं—'प्रत्यस्मै चतुष्कमानुष्टुभं बृहत्यन्तम्' इति । प्रातःसवनेऽच्छावाकस्येदमुन्नीयमानसूक्तम् । सूत्रितं च—'प्रत्यस्मा इत्युन्नीयमानायानूच्य' ( आश्व. श्रौ. ५. ७ ) इति ॥

प्रत्यस्मै पिपीषते विश्वानि विदुषे भर ।
अरंगमाय जग्मयेऽपश्चाद्दघ्वने नरे ॥ १ ॥

प्रति । अस्मै । पिपीषते । विश्वानि । विदुषे । भर ।
अरम्ऽगमाय । जग्मये । अपश्चात्ऽदघ्वने । नरे ॥ १ ॥

हे अध्वर्यो अस्मै इन्द्राय प्रति भर अभिहर । सोमं प्रयच्छेत्यर्थः । कीदृशायेन्द्राय । पिपीषते पातुमिच्छते विश्वानि सर्वाणि वेद्यानि विदुषे जानते अरंगमाय पर्याप्तगमनाय जग्मये यज्ञेषु गमनशीलाय अपश्चाद्दघ्वने । दघिर्गतिकर्मा । अपश्चाद्गमनाय सर्वेषामग्रगामिने नरे नेत्रे यज्ञानाम् ॥

तृतीये स्वरसाम्नि निष्केवल्ये 'एमेनम्' इति स्तोत्रियस्तृचः । सूत्रितं च—'एमेनं प्रत्येतनेत्याद्यो वा सर्वेषाम्' ( आश्व. श्रौ. ८. ५ ) इति ॥

एमेनं प्रत्येतन सोमेभिः सोमपातमम् ।
अमत्रेभिर्ऋजीषिणमिन्द्रं सुतेभिरिन्दुभिः ॥ २ ॥

आ । ईम् । एनम् । प्रतिऽएतन । सोमेभिः । सोमऽपातमम् ।
अमत्रेभिः । ऋजीषिणम् । इन्द्रम् । सुतेभिः । इन्दुऽभिः ॥ २ ॥

हे अध्वर्यवः सोमेभिः सोमैः करणभूतैः सोमपातमम् अतिशयेन सोमस्य पातारम् एनम् इन्द्रम् आ अभिमुखं प्रत्येतन प्रतिगच्छत । ईम् इति निपातोऽनर्थकः । कीदृशमिन्द्रम् । अमत्रेभिः अमत्रैः सोमपात्रैर्ग्रहचमसादिभिः ऋजीषिणम् । ऋजीषं शत्रूणामुपार्जकं बलम् । तद्वन्तम् । यद्वा । ऋजीषिणमित्युत्तरत्र संबन्धनीयम् । सुतेभिः अभिषुतैः इन्दुभिः सोमैर्ऋजीषिणम् । गतसारः सोम ऋजीषः । तद्वन्तम् । अथवा अमत्रेभिरमत्रैरमात्रैः[1] अपरिमितैरभिषुतैः सोमैर्ऋजीषिणम् ॥ ऋजेर्गत्यर्थाद्भावसाधन ऋजीषशब्दः । ततो मत्वर्थीय इनिः ॥ संगतमित्यर्थः । एवंविधमिन्द्रं प्रतिगच्छतेत्यन्वयः । अन्य[2] आह । अमत्रेभिर्ग्रहचमसादिगतैरभिषुतैः सोमैर्ऋजीषिणं बलवन्तमेनमिन्द्रं प्रतिगच्छतेति ॥

---

१. त१–अमत्रैः; त२–अमत्रैरमात्रैः । २. श–अन्यस्तु ।

यदीं सुतेभिरिन्दुभिः सोमेभिः प्रतिभूषथ ।
वेदा विश्वस्य मेधिरो धृषत्तंतमिदेषते ॥ ३ ॥

यदि । सुतेभिः । इन्दुऽभिः । सोमेभिः । प्रतिऽभूषथ ।
वेद । विश्वस्य । मेधिरः । धृषत् । तम्ऽतम् । इत् । आ । ईषते ॥ ३ ॥

हे अध्वर्यवः ᵛसुतेभिः अभिषुतैः ᵛइन्दुभिः उन्दनशीलैर्दीप्तैर्वा[1] ᵛसोमेभिः सोमैः ᵛयदि ᵛप्रतिभूषथ इन्द्रं प्रति यूयं प्रतिगच्छथ ॥ 'भू प्राप्तौ' इत्यस्यैतद्रूपम् ॥ तदानीं ᵛमेधिरः मेधावी । मेधो यज्ञस्तद्वान्वा । स इन्द्रः ᵛविश्वस्य विश्वं सर्वं भवदीयं कामं ᵛवेद वेत्ति जानाति । ज्ञात्वा च ᵛधृषत् शत्रूणां धर्षकः सन् ᵛतंतमित् तं तं काममेव ᵛएषते प्रापयति ॥

अस्माअस्मा इदन्धसोऽध्वर्यो प्र भरा सुतम् ।
कुवित्समस्य जेन्यस्य शर्धतोऽभिशस्तेरवस्परत् ॥ ४ ॥

अस्मैऽअस्मै । इत् । अन्धसः । अध्वर्यो इति । प्र । भर । सुतम् ।
कुवित् । समस्य । जेन्यस्य । शर्धतः । अभिऽशस्तेः । अवऽस्परत् ॥ ४ ॥

ᵛअस्माअस्मा ᵛइत् अस्मा एवेन्द्राय नान्यस्मै हे ᵛअध्वर्यो त्वम् ᵛअन्धसः सोमलक्षणस्यान्नस्य ᵛसुतम् अभिषुतं रसं ᵛप्र ᵛभर संप्रहर[2] । प्रयच्छेति यावत् । स चेन्द्रः ᵛसमस्य सर्वस्य ᵛजेन्यस्य जेतव्यस्य ᵛशर्धतः उत्सहमानस्य शत्रोः ᵛअभिशस्तेः अभिशंसनात् तत्कृताद्धिंसनात् ᵛकुवित् बहुशः ᵛअवस्परत् अस्मान् पालयतु ॥ ॥ १४ ॥

'यस्य त्यत्' इति चतुर्ऋचं विंशं सूक्तं भरद्वाजस्यार्षमौष्णिहमैन्द्रम् । अनुक्रम्यते च— 'यस्यौष्णिहम्' इति । महाव्रतेऽपि निष्केवल्ये औष्णिहतृचाशीतावेतत्सूक्तम् । तथैव पञ्चमारण्यके सूत्रितं—'यस्य त्यच्छम्बरं मद इति त्रयस्तृचा गायत्र्यः' ( ऐ. आ. ५. २. ५ ) इति ॥

यस्य त्यच्छम्बरं मदे दिवोदासाय रन्धयः ।
अयं स सोम इन्द्र ते सुतः पिब ॥ १ ॥

यस्य । त्यत् । शम्बरम् । मदे । दिवःऽदासाय । रन्धयः ।
अयम् । सः । सोमः । इन्द्र । ते । सुतः । पिब ॥ १ ॥

हे इन्द्र[3] ᵛयस्य सोमस्य ᵛमदे पानेन जनिते हर्षे सति ᵛशम्बरम् असुरं ᵛदिवोदासाय राज्ञे ᵛरन्धयः अहिंसीः । यद्वा । वशीकृतवानसि । 'रध्यतिर्वशगमने' (निरु. ६. ३२) इति यास्कः । त्यत् इति क्रियाविशेषणम् । ᵛत्यत् तत् प्रसिद्धं यथा भवति तथा अरन्धय[4] इत्यर्थः[4] । हे ᵛइन्द्र ᵛसः ᵛअयं ᵛसोमः ᵛते त्वदर्थं ᵛसुतः अभिषुतः अतस्तं ᵛपिब ॥

---

१. भ-अमृतेन जगत् क्लेदयितृभिर्दीप्तैर्वा । २. ख-घ-ञ-त-भ-श-प्रहर । ३. त-इन्द्र त्वम् । ४. ख-अरन्धयः अहिंसीत्यर्थः ; त२-अरंधयदित्यर्थः ; भ-अरन्धयः अहिंसीदित्यर्थः ।

यस्य तीव्रसुतं मदं मध्यमन्तं च रक्षसे ।
अयं स सोम इन्द्र ते सुतः पिब ॥ २ ॥

यस्य । तीव्रऽसुतम् । मदम् । मध्यम् । अन्तम् । च । रक्षसे ।
अयम् । सः । सोमः । इन्द्र । ते । सुतः । पिब ॥ २ ॥

हे vइन्द्र त्वं vयस्य सोमस्यावयवभूतं vतीव्रसुतम्। तीक्ष्णं सुतमभिषवो यस्य स तीव्रसुतः प्रातःसवनिकः। तं vमदं मदकरं सोमरसं vमध्यं मध्यंदिनसवनगतम् vअन्तं तृतीयसवनगतं vच सोमरसं vरक्षसे रक्षसि vसः vअयं vसोमः त्वदर्थमभिषुतस्तं vपिब इति ॥

यस्य गा अन्तरश्मनो मदे दृळ्हा अवासृजः ।
अयं स सोम इन्द्र ते सुतः पिब ॥ ३ ॥

यस्य । गाः । अन्तः । अश्मनः । मदे । दृळ्हाः । अवऽअसृजः ।
अयम् । सः । सोमः । इन्द्र । ते । सुतः । पिब ॥ ३ ॥

vयस्य सोमस्य vमदे मदकरे रसे पीते सति vअश्मनः वलासुरेण निहितस्य पर्वतस्य vअन्तः मध्ये विद्यमानाः vदृळ्हाः दृढपिधानाश्च vगाः पणिभिरपहृताः vअवासृजः वलस्य बन्धनाद्व्यसृजः स सोम इत्यादि गतम् ॥

यस्य मन्दानो अन्धसो माघोनं दधिषे शवः ।
अयं स सोम इन्द्र ते सुतः पिब ॥ ४ ॥

यस्य । मन्दानः । अन्धसः । माघोनम् । दधिषे । शवः ।
अयम् । सः । सोमः । इन्द्र । ते । सुतः । पिब ॥ ४ ॥

हे vइन्द्र त्वं vयस्य vअन्धसः सोमलक्षणस्यान्नस्य पानेन[1] vमन्दानः मन्दमानो हृष्टः सन् vमाघोनम् ऐन्द्रं vशवः असाधारणं बलं vदधिषे धारयसि। येन सोमेन तवेन्द्रत्वं जातमित्यर्थः vसः vअयं vसोमः vसुतः अभिषुतस्तं vपिब ॥ ॥ १५ ॥ ॥ ३ ॥

चतुर्थेऽनुवाके षट् सूक्तानि। तत्र 'यो रयिवः' इति चतुर्विंशत्यृचं प्रथमं सूक्तं बृहस्पतिपुत्रस्य शंयोरार्षमैन्द्रम्। आदितः षडनुष्टुभः सप्तम्यष्टमीनवम्यो विराजोऽष्टम्येकैव वा विराट् शिष्टास्त्रिष्टुभः तथा चानुक्रान्तं—'यो रयिवश्चतुर्विंशतिः शंयुर्बार्हस्पत्यो ह्यादौ षळनुष्टुभस्तिस्रश्च विराजो मध्यमैः वासाम्' इति। गतः सूक्तविनियोगः।

---

1. ख-ग्न-भ—अन्नेन।

यो रयिवो रयिंतमो यो द्युम्नैर्द्युम्नवत्तमः ।
सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥ १ ॥

यः । रयिऽवः । रयिम्ऽतमः । यः । द्युम्नैः । द्युम्नवत्ऽतमः ।
सोमः । सुतः । सः । इन्द्र । ते । अस्ति । स्वधाऽपते । मदः ॥ १ ॥

हे रयिवः धनवन् इन्द्र यः सोमः रयिंतमः अतिशयेन रयिमान् धनवान् । यः च द्युम्नैः द्योतमानैर्यशोभिः द्युम्नवत्तमः अतिशयेन यशस्वी हे स्वधापते स्वधाया अन्नस्य सोमलक्षणस्य पालक इन्द्र सः सोमः अभिषुतः सन् ते तव मदः मदकरः अस्ति भवति ॥

यः शग्मस्तुविशग्म ते रायो दामा मतीनाम् ।
सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥ २ ॥

यः । शग्मः । तुविऽशग्म । ते । रायः । दामा । मतीनाम् ।
सोमः । सुतः । सः । इन्द्र । ते । अस्ति । स्वधाऽपते । मदः ॥ २ ॥

हे तुविशग्म बहुसुखेन्द्र यः शग्मः सुखकरः ते त्वदीयः यः सोमः मतीनां स्तोतॄणां रायः धनस्य दामा दाता भवति हे स्वधापते इन्द्र सः सोमः अभिषुतस्तव मदकरो भवति ॥

येन वृद्धो न शवसा तुरो न स्वाभिरूतिभिः ।
सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥ ३ ॥

येन । वृद्धः । न । शवसा । तुरः । न । स्वाभिः । ऊतिऽभिः ।
सोमः । सुतः । सः । इन्द्र । ते । अस्ति । स्वधाऽपते । मदः ॥ ३ ॥

इमौ नशब्दौ समुच्चयार्थौ । येन पीतेन सोमेन वृद्धो न प्रवृद्धश्च सन् स्वाभिरूतिभिः आत्मीयैर्मरुद्भिः सार्धं शवसा बलेन तुरः' शत्रूणां हिंसकश्च भवसि स सोम इत्यादि पूर्ववत् ॥

पृष्ठ्यषडहस्य चतुर्थेऽहनि प्रउगशस्त्रे 'त्यमु वः' इत्यैन्द्रस्तृचः । सूत्रितं च—'त्यमु वो अप्रहणमप त्यं वृजिनं रिपुम्' ( आश्व. श्रौ. ७. ११ ) इति ॥

त्यमु वो अप्रहणं गृणीषे शवसस्पतिम् ।
इन्द्रं विश्वासाहं नरं मंहिष्ठं विश्वचर्षणिम् ॥ ४ ॥

त्यम् । ऊँ इति । वः । अप्रऽहनम् । गृणीषे । शवसः । पतिम् ।
इन्द्रम् । विश्वऽसहम् । नरम् । मंहिष्ठम् । विश्वऽचर्षणिम् ॥ ४ ॥

---

१. ख-भ—तुरो न ।

हे ऋत्विग्यजमानाः ᵛवः युष्मदर्थं ᵛत्यमु तमेव ᵛइन्द्रं ᵛगृणीषे स्तौमि । यद्वा । वो यूयं गृणीषे गृणीत स्तुत । वचनव्यत्ययः । कीदृशमिन्द्रम् । ᵛअप्रहणम् अप्रहन्तारं भक्तानामनुग्राहकं ᵛशवसः बलस्य ᵛपतिं पालकं ᵛविश्वासाहं विश्वस्य शत्रोरभिभवितारं ᵛनरं नेतारं ᵛमंहिष्ठं दातृतमं ᵛविश्व चर्षणिं सर्वस्य द्रष्टारम् ॥

यं वर्धयन्तीद्गिरः पतिं तुरस्य राधसः ।
तमिन्न्वस्य रोदसी देवी शुष्मं सपर्यतः ॥ ५ ॥

यम् । वर्धयन्ति । इत् । गिरः । पतिम् । तुरस्य । राधसः ।
तम् । इत् । नु । अस्य । रोदसी इति । देवी इति । शुष्मम् । सपर्यतः ॥ ५ ॥

ᵛगिरः स्तुतय इन्द्रसंबन्धिनं ᵛयम् ᵛइत् यमेव शुष्मं बलं ᵛवर्धयन्ति । कीदृशम् । ᵛपतिम् ईश्वरम् । कस्य । ᵛतुरस्य हिंसकस्य शत्रोः ᵛराधसः धनस्य । शत्रुधनानामपहर्तारमित्यर्थः । ᵛअस्य इन्द्रस्य ᵛतमित् तमेव ᵛशुष्मं शोषकं बलं ᵛदेवी देवनशीले ᵛरोदसी द्यावापृथिव्यौ ᵛनु क्षिप्रं ᵛसपर्यतः परिचरतः ॥ ॥ १६ ॥

तद्व उक्थस्य बर्हणेन्द्रायोपस्तृणीषणि ।
विपो न यस्योतयो वि यद्रोहन्ति सक्षितः ॥ ६ ॥

तत् । वः । उक्थस्य । बर्हणा । इन्द्राय । उपऽस्तृणीषणि ।
विपः । न । यस्य । ऊतयः । वि । यत् । रोहन्ति । सऽक्षितः ॥ ६ ॥

हे स्तोतारः ᵛवः युष्मदीयस्य ᵛउक्थस्य स्तोत्रस्य ᵛतत् ᵛबर्हणा बृहत्त्वं माहात्म्यम् ᵛइन्द्राय इन्द्रार्थम् ᵛउपस्तृणीषणि उपस्तरणीयम् । उपेत्य विस्तरणीयम् । इन्द्रो यथा स्तोत्रस्य माहात्म्यं जानीयात् तथा विस्तारयत इत्यर्थः । ᵛयस्य इन्द्रस्य ᵛऊतयः रक्षाः ᵛविपो ᵛन मेधाविन इव भवन्ति । सर्वकार्यकुशला इत्यर्थः । यद्वा नेति पूरकः । विपो विप्रस्य मेधाविनो यस्येन्द्रस्येति योज्यम् । ᵛयत् यस्मिंश्चेन्द्रे ᵛसक्षितः समाननिवासाः संहता ऊतयः ᵛवि ᵛरोहन्ति प्रादुर्भवन्ति तस्मा इन्द्रायेत्यर्थः ॥

अविदद्दक्षं मित्रो नवीयान्पपानो देवेभ्यो वस्यो अचैत् ।
ससवान्स्तौलाभिर्धौतरीभिरुरुष्या पायुरभवत्सखिभ्यः ॥ ७ ॥

अविदत् । दक्षम् । मित्रः । नवीयान् । पपानः । देवेभ्यः । वस्यः । अचैत् ।
ससऽवान् । स्तौलाभिः । धौतरीभिः । उरुष्या । पायुः । अभवत् । सखिऽभ्यः ॥ ७ ॥

स इन्द्रः ᵛदक्षं कर्मसु समर्थं प्रवृद्धं वा यष्टारम् ᵛअविदत् जानाति । कीदृशः । ᵛमित्रः मित्रभूतः ᵛनवीयान् नवतरः कल्याणतरः स्तुत्यतरो वा । स च ᵛपपानः सोमं पिबन् ᵛदेवेभ्यः स्तोतृभ्यः ᵛवस्यः वसीयः श्रेष्ठं धनम् ᵛअचैत् चिनोति उपचितं करोति ददातीति यावत् । अपि च ᵛससवान् । ससमित्यन्ननाम । हविर्लक्षणान्नोपेतः स इन्द्रः ᵛस्तौलाभिः स्थूलाभिः प्रवृद्धाभिः ᵛधौतरीभिः

कम्पनकारिणीभिर्वडवाभिरीदृशैर्महद्भिर्वा युक्तः सन् ᵛसखिभ्यः स्तोतृभ्यः ᵛउरुष्या रक्षणेच्छया आगत्य ᵛपायुरभवत् रक्षको भवति । यद्वा । ससवानिति सनतेः क्वसौ रूपम् । स्तौलाभिर्धौतरीभिः ससवान् संभजमान इति संबन्धः ॥

ऋतस्य॑ प॒थि वे॒धा अ॑पायि श्रि॒ये मनां॑सि दे॒वासो॑ अक्रन् ।
दधा॑नो॒ नाम॑ म॒हो वचो॑भि॒र्वपु॑र्दृ॒शये॑ वे॒न्यो व्या॑वः ॥ ८ ॥

ऋ॒तस्य॑ । प॒थि । वे॒धाः । अ॒पा॒यि॒ । श्रि॒ये । मनां॑सि । दे॒वासः॑ । अ॒क्र॒न् ।
दधा॑नः । नाम॑ । म॒हः । वचः॑ऽभिः । वपुः॑ । दृ॒शये॑ । वे॒न्यः । वि । आ॒व॒रित्या॑वः ॥ ८ ॥

ᵛऋतस्य यज्ञस्य ᵛपथि मार्गे ᵛवेधाः विधाता सर्वस्य स्रष्टा सोमः ᵛअपायि । इन्द्रेण पीतोऽभून् । यद्वा । वेधा विधातेन्द्रोऽपायि । सोमं पिबतु॥ व्यत्ययेन कर्तरि चिण् ॥ तस्मिन् सोमे इन्द्रस्य ᵛमनांसि ᵛश्रिये श्रयितुं ᵛदेवासः देवाः स्तोतारः ऋत्विजः ᵛअक्रन् कर्माणि कुर्वन्ति । स चेन्द्रः ᵛनाम शत्रूणां नामकं ᵛमहः महदात्मीयं[1] ᵛवपुः शरीरं ᵛदधानः धारयन् ᵛवचोभिः स्तुतिभिः ᵛवेन्यः वननीयः संभजनीयश्च सन् ᵛदृशये दर्शनार्थं ᵛव्यावः विवृणोतु प्रकाशयतु । अनुकूलं तेज इति शेषः । यद्वा । वेन्य इति वेनतेः कान्तिकर्मणो रूपं वपुरिति च रूपनाम । वेन्यः कमनीयो वपुर्भास्वरं रूपं दृशये दर्शनार्थं व्यावः विवृणोतु वचोभिः स्तूयमानः सन् ॥

द्यु॒मत्त॑मं॒ दक्षं॑ धेह्य॒स्मे सेधा॒ जना॑नां पू॒र्वीररा॑तीः ।
वर्षी॑यो॒ वयः॑ कृणु॒हि॒ शची॑भि॒र्धन॑स्य सा॒ताव॒स्माँ अ॑विड्ढि ॥ ९ ॥

द्यु॒मत्ऽत॑मम् । दक्ष॑म् । धे॒हि॒ । अ॒स्मे इति॑ । सेध॑ । जना॑नाम् । पू॒र्वीः । अरा॑तीः ।
वर्षी॑यः । वयः॑ । कृ॒णु॒हि॒ । शची॑भिः । धन॑स्य । सा॒तौ । अ॒स्मान् । अ॒वि॒ड्ढि॒ ॥ ९ ॥

हे इन्द्र ᵛद्युमत्तमं दीप्तिमत्तमं ᵛदक्षं बलम् ᵛअस्मे अस्मासु ᵛधेहि धारय । ᵛजनानां[2] स्तोतृणामस्माकं ᵛपूर्वीः बह्वीः ᵛअरातीः शत्रुसेनाः ᵛसेध निषेध निवारय । अपि चास्माकं ᵛवर्षीयः वृद्धतरं ᵛवयः अन्नं ᵛशचीभिः आत्मीयाभिः प्रज्ञाभिः ᵛकृणुहि कुरु । तथा ᵛधनस्य ᵛसातौ संभजने ᵛअस्मानविड्ढि गमय । यद्वा । धनस्य संभजनार्थमस्मान् रक्ष ॥

इन्द्र॒ तुभ्य॒मिन्म॑घवन्नभूम व॒यं दा॒त्रे ह॑रिवो॒ मा वि वे॑नः ।
नकि॑रा॒पिर्द॑दृशे मर्त्य॒त्रा किम॒ङ्ग र॑ध्र॒चोद॑नं त्वाहुः ॥ १० ॥

इन्द्र॑ । तुभ्य॑म् । इत् । म॒घ॒ऽव॒न् । अ॒भू॒म॒ । व॒यम् । दा॒त्रे । ह॒रि॒ऽवः॒ । मा । वि । वे॒नः॒ ।
नकि॑ः । आ॒पिः । द॒दृ॒शे॒ । म॒र्त्य॒ऽत्रा । किम् । अ॒ङ्ग । र॒ध्र॒ऽचोद॑नम् । त्वा॒ । आ॒हुः॒ ॥ १० ॥

हे ᵛमघवन् धनवन् ᵛइन्द्र ᵛदात्रे कामानां दात्रे ᵛतुभ्यमित् तुभ्यमेव ᵛवयं शेषभूताः ᵛअभूम । यद्वा । त्वदर्थमेव दात्रे हविषां दाने वर्तमाना अभूम । हे ᵛहरिवः हरिवन्निन्द्र अतः कारणात्

१. ख-ज्ञ-क्ष-त-न-य-र-श—°दात्मीयं च । २. श—जनानां यजमानानाम् ।

ᵛमा ᵛवि ᵛवेनः मा विगतकामो भूः । अस्मान् सर्वदा कामयस्व । वेनतिः कान्तिकर्मा । ᵛमर्त्यत्रा मर्त्येषु मनुष्येषु मध्ये ᵛआपिः बन्धुस्त्वत्तोऽन्यः कश्चिदपि ᵛनकिः ᵛददृशे नैव दृश्यते । किमनेन विशेषकथनेन । ᵛअङ्ग हे इन्द्र ᵛत्वा त्वां ᵛरध्रचोदनं रध्रस्य राधकस्य समृद्धस्य धनस्य चोदनं चोदयितारम् ᵛआहुः कथयन्ति पुराजाः ॥  ॥ १० ॥

मा जस्वने वृषभ नो ररीथा मा ते रेवतः सख्ये रिषाम ।
पूर्वीष्ट इन्द्र निष्षिधो जनेषु जह्यसुष्वीन्प्र वृहापृणतः ॥ ११ ॥

मा । जस्वने । वृषभ । नः । ररीथाः । मा । ते । रेवतः । सख्ये । रिषाम ।
पूर्वीः । ते । इन्द्र । निःऽसिधः । जनेषु । जहि । असुस्वीन् । प्र । वृह । अपृणतः ॥ ११ ॥

हे ᵛवृषभ कामानां वर्षितरिन्द्र ᵛजस्वने । जसिरुपक्षयकर्मा । उपक्षपयित्रे राक्षसादये ᵛनः अस्मान् ᵛमा ᵛररीथाः मा दाः । ᵛरेवतः धनवतः ᵛते तव ᵛसख्ये सखित्वे वर्तमाना वयं ᵛमा ᵛरिषाम हिंसिता मा भूम । हे ᵛइन्द्र ᵛते त्वदीयाः ᵛपूर्वीः बह्वीः ᵛनिष्षिधः निःषेधा निवारणानि ᵛजनेषु शत्रुषु निहिताः सन्ति । यद्वा । निष्षिधो निषेधार्था रज्जवः । ताः शत्रुजनेषु तव बह्व्यो विद्यन्ते । अतः कारणात् ᵛअसुष्वीन् अनभिषोतॄनयजमानान्[1] ᵛजहि मारय । ᵛअपृणतः हवींष्यप्रयच्छतश्च ᵛप्र ᵛवृह उन्मूलय । 'पृण दाने' इति धातुः ॥

उदभ्राणीव स्तनयन्नियर्तीन्द्रो राधांस्यश्व्यानि गव्या ।
त्वमसि प्रदिवः कारुधाया मा त्वादामान आ दभन्मघोनः ॥ १२ ॥

उत् । अभ्राणिऽइव । स्तनयन् । इयर्ति । इन्द्रः । राधांसि । अश्व्यानि । गव्या ।
त्वम् । असि । प्रऽदिवः । कारुऽधायाः । मा । त्वा । अदामानः । आ । दभन् । मघोनः ॥ १२ ॥

ᵛअभ्राणीव ᵛस्तनयन् गर्जयन् पर्जन्यो यथा मेघानुद्गमयत्येवम् ᵛइन्द्रः ᵛअश्व्यानि अश्वसंबन्धीनि ᵛगव्या गव्यानि गोसंबन्धीनि एतत्समूहद्वयरूपाणि ᵛराधांसि धनानि ᵛउत् ᵛइयर्ति उदीरयति । उद्गमयति स्तोतृभ्यो दातुम् । उत्तरार्धः प्रत्यक्षकृतः । हे इन्द्र ᵛप्रदिवः पुराणः ᵛत्वं ᵛकारुधायाः कारूणां स्तोतॄणां धारयिता ᵛअसि भवसि । तादृशं ᵛत्वा त्वां ᵛमघोनः धनवन्तः कृपणाः ᵛअदामानः हविषामदातारः ᵛमा ᵛआ ᵛदभन् मा हिंसिषुः । यद्वा । वचनव्यत्ययः । मघवानं धनवन्तं त्वामिति संबन्धः ॥

अध्वर्यो वीर प्र महे सुतानामिन्द्राय भर स ह्यस्य राजा ।
यः पूर्व्याभिरुत नूतनाभिर्गीर्भिर्वावृधे गृणतामृषीणाम् ॥ १३ ॥

अध्वर्यो इति । वीर । प्र । महे । सुतानाम् । इन्द्राय । भर । सः । हि । अस्य । राजा ।
यः । पूर्व्याभिः । उत । नूतनाभिः । गीःऽभिः । ववृधे । गृणताम् । ऋषीणाम् ॥ १३ ॥

हे ᵛवीर हविषां विशेषेण प्रेरयितः ᵛअध्वर्यो ᵛमहे महते अस्मै ᵛइन्द्राय ᵛसुतानाम् । कर्मणि षष्ठी । सुतानभिषुतान् सोमान् ᵛप्र ᵛभर प्रहर प्रगमय । ᵛस ᵛहि खलु इन्द्रः ᵛअस्य सोमस्य

---

१ ख-घ-भ-°नयजमानान् शत्रून् ।

ᵛराजा स्वामी भवति । ᵛयः इन्द्रः ᵛपूर्व्याभिः पूर्वकाले कृताभिः ᵛउत अपि च ᵛनूतनाभिः इदानीं क्रियमाणाभिः ᵛगृणतां स्तुवताम् ᵛऋषीणां संबन्धिनीभिः ᵛगीर्भिः उभयविधाभिः स्तुतिभिः ᵛवावृधे वर्धते । स इन्द्रो यस्मात् सोमस्य राजा तस्मादस्मै सोमः प्रदेय इत्यर्थः ॥

प्रथमे रात्रिपर्याये मैत्रावरुणस्य 'अस्य मदे' इति शस्त्रयाज्या । सूत्रितं च—'अस्य मदे पुरु वर्पांसि विद्वानिति याज्या' ( आश्व. श्रौ. ६. ४ ) इति ॥

अस्य मदे॑ पु॒रु वर्पां॑सि वि॒द्वानिन्द्रो॑ वृ॒त्राण्य॑प्र॒ती ज॑घान ।
तमु॒ प्र हो॑षि॒ मधु॑मन्तमस्मै॒ सोमं॑ वी॒राय॑ शि॒प्रिणे॒ पिब॑ध्यै ॥ १४ ॥

अ॒स्य । मदे॑ । पु॒रु । वर्पां॑सि । वि॒द्वान् । इन्द्रः॑ । वृ॒त्राणि॑ । अ॒प्र॒ति । ज॒घा॒न ।
तम् । ऊँ इति॑ । प्र । हो॒षि॒ । मधु॑ऽमन्तम् । अ॒स्मै॒ । सोम॑म् । वी॒राय॑ । शि॒प्रिणे॑ । पिब॑ध्यै ॥ १४ ॥

ᵛअस्य सोमस्य पानेन ᵛमदे हर्षे सति ᵛविद्वान् अभिज्ञः ᵛइन्द्रः ᵛपुरु पुरूणि बहूनि ᵛवर्पांसि आवरकाणि ᵛवृत्राणि शत्रून् ᵛअप्रति स्वयमन्यैरप्रतिगतः सन् ᵛजघान हतवान् । यद्वा । वर्प इति रूपनाम । बहूनि वर्पांस्यसुरमायया निर्मितानि रूपाणि विद्वान् जानन्निन्द्रो वृत्राणि आवरकाणि रक्षःप्रभृतीनि इतः पूर्वमन्यैरप्रतिगतानि जघान हतवान् । ᵛमधुमन्तं माधुर्यवन्तं ᵛतमु तमेव ᵛसोमं ᵛशिप्रिणे शोभनहनुकाय ᵛअस्मै ᵛवीराय शत्रूणां वीरयित्र इन्द्राय ᵛपिबध्यै पातुं ᵛप्र ᵛहोषि हे अध्वर्यो प्रजुहुधि ॥

द्वितीये रात्रिपर्याये मैत्रावरुणस्यैव 'पाता सुतम्' इति शस्त्रयाज्या । सूत्रितं च—'पाता सुतमिन्द्रो अस्तु सोमं हन्ता वृत्रमिति याज्या' ( आश्व. श्रौ. ६. ४ ) इति ॥

पाता॑ सु॒तमिन्द्रो॑ अस्तु॒ सोमं॑ ह॒न्ता वृ॒त्रं वज्रे॑ण मन्दसा॒नः ।
गन्ता॑ य॒ज्ञं प॑रा॒वत॑श्चि॒दच्छा॒ वसु॑र्धी॒नाम॑वि॒ता का॒रुधा॑याः ॥ १५ ॥

पाता॑ । सु॒तम् । इन्द्रः॑ । अ॒स्तु॒ । सोम॑म् । ह॒न्ता । वृ॒त्रम् । वज्रे॑ण । म॒न्द॒सा॒नः ।
गन्ता॑ । य॒ज्ञम् । प॒रा॒ऽवतः॑ । चि॒त् । अच्छ॑ । वसुः॑ । धी॒नाम् । अ॒वि॒ता । का॒रुऽधा॑याः ॥ १५ ॥

अयम् ᵛइन्द्रः ᵛसुतम् अभिषुतं ᵛसोमं ᵛपाता ᵛअस्तु साधु पाता भवतु ॥ साधुकारिणि तृन् । अत एव 'न लोकाव्यय°' इति षष्ठीप्रतिषेधात् द्वितीया । एवं हन्तेत्यादावपि द्रष्टव्यम् ॥ तेन च सोमेन ᵛमन्दसानः माद्यन् ᵛवज्रेण आयुधेन ᵛवृत्रम् आवरकं शत्रुं ᵛहन्ता अस्तु भवतु । एतदुभयार्थं ᵛपरावतश्चित् दूरदेशादपि ᵛयज्ञम् ᵛअच्छ अस्मदीयं यज्ञमभि ᵛगन्ता भवतु । दूरदेशस्थोऽपि शीघ्रमस्मद्यज्ञे सोमपानाय आगच्छत्वित्यर्थः । कीदृश इन्द्रः । ᵛवसुः सर्वेषां निवासयिता ᵛधीनां ध्यातॄणां स्तोतॄणां कर्मणां वा ᵛअविता रक्षिता ᵛकारुधायाः कारूणां[1] कर्तॄणां यजमानानां धारयिता ॥ ॥ १८ ॥

तृतीये रात्रिपर्याये प्रशास्तुः 'इदं त्यत्' इति शस्त्रयाज्या । सूत्रितं च—'इदं त्यत्पात्रमिन्द्रपानमिति याज्या' ( आश्व. श्रौ. ६. ४ ) इति ॥

---

१. ख-ङ्ग-न-भ य-कारूणा स्तोतॄणाम् ।

इदं त्यत्पात्रमिन्द्रपानमिन्द्रस्य प्रियममृतमपायि ।
मत्सद्यथा सौमनसाय देवं व्य१स्मद्द्वेषो युयवद्व्यंहः ॥ १६ ॥

इदम् । त्यत् । पात्रम् । इन्द्रऽपानम् । इन्द्रस्य । प्रियम् । अमृतम् । अपायि ।
मत्सत् । यथा । सौमनसाय । देवम् । वि । अस्मत् । द्वेषः । युयवत् । वि । अंहः ॥ १६ ॥

पात्रं पातव्यम् इन्द्रपानम् इन्द्रस्य पानार्हम् इन्द्रस्य प्रियम् अनुकूलं त्यत् तत् इदं सोमात्मकम् अमृतमपायि । इन्द्रः पिबतु ॥ व्यत्ययेन कर्तरि चिण् ॥ यद्वा । एतदमृतमपायि । इन्द्रेण पीयताम् । यथा येन प्रकारेण पीतः सोमः सौमनसाय सुमनस्त्वाय देवम् इन्द्रं मत्सत् मादयेत्तथा पीयतामित्यर्थः । स पीतसोम इन्द्रः द्वेषः द्वेष्टॄन् अस्मत् अस्मत्तः वि युयवत् वियोजयतु । अंहः पापं चास्मत्तो वियोजयतु ॥

एना मन्दानो जहि शूर शत्रूञ्जामिमजामिं मघवन्नमित्रान् ।
अभिषेणाँ अभ्या३देदिशानान्पराच इन्द्र प्र मृणा जही च ॥ १७ ॥

एना । मन्दानः । जहि । शूर । शत्रून् । जामिम् । अजामिम् । मघऽवन् । अमित्रान् ।
अभिऽसेनान् । अभि । आऽदेदिशानान् । पराचः । इन्द्र । प्र । मृण । जहि । च ॥ १७ ॥

हे मघवन् धनवन् शूर शौर्यवन्निन्द्र एना एनेन प्रकृतेनानेन सोमेन मन्दानः मन्दमानो माद्यन् जामिं ज्ञातिम् अजामिं तद्विलक्षणमेवमुभयविधान् अमित्रान् अस्मत्प्रतिकूलाचरणपरान् शत्रून् जहि हिंसितान् कुरु । किंच अभिषेणान् अस्मान्प्रत्यभिगताः सेना येषां तादृशानस्मदभिमुखम् आदेदिशानान् आयुधानि पुनःपुनरादिशतो विसृजतः शत्रूंश्च हे इन्द्र पराचः प्र मृण । ते यथा पराङ्मुखा भवन्ति तथा बाधस्व । तदनन्तरं तान् जहि च ॥

आसु ष्मा णो मघवन्निन्द्र पृत्स्व१स्मभ्यं महि वरिवः सुगं कः ।
अपां तोकस्य तनयस्य जेष इन्द्र सूरीन्कृणुहि स्मा नो अर्धम् ॥ १८ ॥

आसु । स्म । नः । मघऽवन् । इन्द्र । पृत्ऽसु । अस्मभ्यम् । महि । वरिवः । सुऽगम् । करिति कः ।
अपाम् । तोकस्य । तनयस्य । जेषे । इन्द्र । सूरीन् । कृणुहि । स्म । नः । अर्धम् ॥ १८ ॥

हे मघवन् धनवन् इन्द्र नः अस्मदीयासु आसु पृत्सु पृतनासु संग्रामेषु अस्मभ्यं महि महत् सुगं सुखेन प्राप्यं वरिवः धनं कः कुरु । स्म इति पूरणः ॥ अपि च हे इन्द्र अपाम् आप्तव्यानां धनानां वा उदकानां वा तोकस्य पुत्रस्य तनयस्य पौत्रस्य च जेषे जयार्थं सूरीन् स्तोतॄन् नः अस्मान् अर्धम् अर्धान् समृद्धान् कृणुहि कुरु । यद्वा । अर्धकारिणः शत्रूणां खण्डयितॄन् कुरु । स्म इति पूरकः ।

आ त्वा हर॑यो॒ वृष॑णो यु॒जा॒ना वृष॑रथासो॒ वृष॑रश्मयो॒ऽत्याः॑ ।
अ॒स्म॒त्राञ्चो॒ वृष॑णो व॒ज्रवा॒हो॒ वृष्णे॒ मदा॑य सु॒युजो॑ वहन्तु ॥ १९ ॥

आ । त्वा॒ । हर॑यः । वृष॑णः । यु॒जा॒नाः । वृष॑ऽरथासः । वृष॑ऽरश्मयः । अत्याः॑ ।
अ॒स्म॒त्राञ्चः॑ । वृष॑णः । व॒ज्र॒ऽवा॒हः॑ । वृष्णे॑ । मदा॑य । सु॒ऽयुजः॑ । व॒ह॒न्तु॒ ॥ १९ ॥

हे इन्द्र त्वा त्वां हरयः अश्वाः वृष्णे वर्षित्रे मदाय मदकराय सोमायेदृशं सोमं पाययितुम् आ वहन्तु[1] । कीदृशा अश्वाः । वृषणः कामानां वर्षितारः युजानाः स्वयमेव रथे युज्यमानाः वृषरथासः । वृषा कामाभिवर्षको रथो येषां ते तथोक्ताः । वृषरश्मयः । वर्षितारो रश्मयः प्रग्रहा येषां तादृशाः । अत्याः सततगामिनः अस्मत्राञ्चः अस्मान् प्रत्यञ्चन्तो गच्छन्तः वृषणः नित्यतरुणाः वज्रवाहः वज्रादीन्यायुधानि वहन्तः सुयुजः शोभनयोजनाः ॥

आ ते॑ वृष॒न्वृष॑णो॒ द्रोण॑मस्थुर्घृत॒प्रुषो॒ नोर्मयो॒ मद॑न्तः ।
इन्द्र॒ प्र तुभ्यं॒ वृष॑भिः सु॒ताना॒ं वृष्णे॒ भर॑न्ति वृष॒भाय॒ सोम॑म् ॥ २० ॥

आ । ते॒ । वृ॒ष॒न् । वृष॑णः । द्रोण॑म् । अ॒स्थुः॒ । घृ॒त॒ऽप्रुषः॑ । न । ऊ॒र्मयः॑ । मद॑न्तः ।
इन्द्र॑ । प्र । तुभ्य॑म् । वृष॑ऽभिः । सु॒ताना॑म् । वृष्णे॑ । भ॒र॒न्ति॒ । वृ॒ष॒भाय॑ । सोम॑म् ॥ २० ॥

हे वृषन् कामानां वर्षितरिन्द्र वृषणः सेक्तारो युवानस्त्वदीया अश्वाः घृतप्रुषः नोर्मयः घृतमुदकं सिञ्चन्तः[2] सामुद्रास्तरङ्गा इव मदन्तः हृष्यन्तो मत्ताः सन्तः ते त्वदीयं द्रोणं द्रुममयं रथम् आ अस्थुः[3] आतिष्ठन्त[4] । अतस्त्वमागच्छेति भावः । कुत इत्यत आह । हे इन्द्र वृष्णे यूने नित्यतरुणाय वृषभाय कामानां वर्षयित्रे तुभ्यं वृषभिः कामाभिवर्षकैर्ग्रावभिः[5] सुतानाम् अभिषुतानां सोमानां मध्ये त्वद्भागरूपं सोमं यस्मादध्वर्यवः प्र भरन्ति प्रहरन्ति होमार्थं प्रणयन्ति तस्मादागच्छेत्यर्थः ॥ ॥ १९ ॥

वृषा॑सि दि॒वो वृ॑ष॒भः पृ॑थि॒व्या वृषा॒ सिन्धू॑नां वृष॒भः स्तिया॑नाम् ।
वृष्णे॑ त॒ इन्दु॑र्वृषभ पीपाय स्वा॒दू रसो॑ मधु॒पेयो॒ वरा॑य ॥ २१ ॥

वृषा॑ । अ॒सि॒ । दि॒वः । वृ॒ष॒भः । पृ॒थि॒व्याः । वृषा॑ । सिन्धू॑नाम् । वृ॒ष॒भः । स्तिया॑नाम् ।
वृष्णे॑ । ते॒ । इन्दुः॑ । वृ॒ष॒भ॒ । पी॒पा॒य॒ । स्वा॒दुः । रसः॑ । म॒धु॒ऽपेयः॑ । वरा॑य ॥ २१ ॥

हे इन्द्र त्वं दिवः द्युलोकस्य वृषासि । हविर्भिः सेक्ता भवसि । पृथिव्याः भूमेश्च वृषभः कामानां वर्षिता । सिन्धूनां स्यन्दनशीलानां च नदीनां वृषा वर्षेण पूरयितासि । तथा स्तियानां संघीभूतानां स्थावरजङ्गमात्मनां प्राणिनां वृषभः कामानां वर्षिता भवसि । यद्वा । स्तियाः संघीभूता आपः । तासां वर्षितासि । वृषभ कामानां[6] वर्षकेन्द्र[6] वराय श्रेष्ठाय वृष्णे सेक्त्रे ते तुभ्यं त्वदर्थं

---

१. ख-ङ-न-भ-य-आवहन्तु आनयन्तु । २. ख-पृषन्तः सिञ्चन्तः ; न-पृषोतः सिञ्चन्तः ; भ-पृषतः सिञ्चन्तः । ३. ख-ङ-ञ-त-न-भ-र-तस्थुः । ४. ख-ञ-त२-न-भ-आतिष्ठन्तः; घ-ङ-श-आस्थितवन्तः । ५. ख-न-वर्षकैर्ग्रावभिः । ६. ध-कामानां वर्षितरिन्द्र ; र-कामाभिवर्षकेन्द्र ।

vस्वादुः मधुरः vरसः रसनीयः प्रशस्यो रसवान् वा रसात्मको वा vमधुपेयः मधुवत् पातव्यः vइन्दुः सोमः vपीपाय प्यायते वर्धते । अतस्त्वमागत्य तं सोमं पिबेति भावः ॥

अयं देवः सहसा जायमान इन्द्रेण युजा पणिमस्तभायत् ।
अयं स्वस्य पितुरायुधानीन्दुरमुष्णादशिवस्य मायाः ॥ २२ ॥

अयम् । देवः । सहसा । जायमानः । इन्द्रेण । युजा । पणिम् । अस्तभायत् ।
अयम् । स्वस्य । पितुः । आयुधानि । इन्दुः । अमुष्णात् । अशिवस्य । मायाः ॥ २२ ॥

vदेवः द्योतमानः vअयम् vइन्दुः सोमः vइन्द्रेण vयुजा सख्या सह vजायमानः प्रादुर्भवन् vपणिं वणिजं गवामादातारं वलाख्यमसुरम् । यद्वा । पणीनां स्वामित्वात् पणिरित्युच्यते । तमसुरं vसहसा बलेन vअस्तभायत् अस्तभ्नात् न्यरुधत् । अपि च[1] vस्वस्य धनस्य गोरूपस्य vपितुः पालयितुः vअशिवस्य असुखकरस्य वलस्य vआयुधानि वज्रादीनि vअमुष्णात् अपाहरत् । तदीयाः vमायाः च अमुष्णात् । हे इन्द्र त्वत्सख्यबलादेतत्सर्वं सोमः कृतवान् अतस्तत्र महिमा केन वर्णयितुं शक्यत इतीन्द्रस्तुतिः ॥

अयमकृणोदुषसः सुपत्नीरयं सूर्ये अदधाज्ज्योतिरन्तः ।
अयं त्रिधातु दिवि रोचनेषु त्रितेषु विन्ददमृतं निगूळ्हम् ॥ २३ ॥

अयम् । अकृणोत् । उषसः । सुऽपत्नीः । अयम् । सूर्ये । अदधात् । ज्योतिः । अन्तरिति ।
अयम् । त्रिऽधातु । दिवि । रोचनेषु । त्रितेषु । विन्दत् । अमृतम् । निऽगूळ्हम् ॥ २३ ॥

vअयं सोमः vउषसः उषःकालान् vसुपत्नीः शोभनः पतिः पालकः सूर्यो यासामुषसां तादृशीः vअकृणोत् अकरोत् । vअयम् एव vसूर्ये सूर्यमण्डले vअन्तः मध्ये vज्योतिः तेजः vअदधात् निहितवान् । vत्रिधातु सवनत्रयरूपेण त्रिप्रकारम् vअयं लतारूपः सोमः vदिवि द्युलोके vरोचनेषु रोचमानेषु vत्रितेषु तृतीये स्थाने ततेषु विस्तृतेषु देवेषु vनिगूळ्हं नितरां गूढमदृश्यतया वर्तमानम् vअमृतम् अमृतत्वकारणं पीयूषं vविन्दत् अविन्दत् अलभत । हे इन्द्र त्वत्साहाय्यादेवमेवं सोमः कृतवानिति इन्द्रस्य[2] स्तुतिरधिगन्तव्या[2] । यद्वा । इदंशब्देनेन्द्र एव परामृश्यते । अयमिन्द्र उषसः शोभनपतिका अकरोत् । अयमेव सूर्येऽन्तर्ज्योतिरदधात् । दिवि द्युलोके रोचमानेषु त्रितेषु त्रिस्थानगतेषु देवेषु मध्येऽयमेवेन्द्रस्त्रिधातु सवनत्रयात्मना त्रिप्रकारं निगूढं पात्रैः संवृतममृतममरणहेतुभूतं सोममविन्दत् अलभत ॥

अयं द्यावापृथिवी वि ष्कभायदयं रथमयुनक्सप्तरश्मिम् ।
अयं गोषु शच्या पक्वमन्तः सोमो दाधार दशयन्त्रमुत्सम् ॥ २४ ॥

अयम् । द्यावापृथिवी इति । वि । स्कभायत् । अयम् । रथम् । अयुनक् । सप्तऽरश्मिम् ।
अयम् । गोषु । शच्या । पक्वम् । अन्तरिति । सोमः । दाधार । दशऽयन्त्रम् । उत्सम् ॥ २४ ॥

---

१. झ—च अयं सोमः । २. ख-घ-झ-न-भ-य—इन्द्रस्तुति° ।

^v^अयं सोमः ^v^द्यावापृथिवी दिवं च पृथिवीं च ^v^वि ^v^स्कभायत् विविधमस्थापयत्। अपि च ^v^अयं सोमः सूर्यस्य च ^v^रथं ^v^सप्तरश्मिं सप्तरश्मिभिः किरणैरुपेतं सप्ताश्वं सप्तचक्रं वा ^v^अयुनक् अयोजयत्। तथा ^v^अयं ^v^सोमः ^v^गोषु ^v^अन्तः मध्ये ^v^पक्वं निष्पन्नं ^v^शच्या प्रज्ञया संकल्परूपया ^v^उत्सम् उत्सरणशीलं पयः ^v^दाधार धारयति। ^v^दशयन्त्रम्। उत्सस्य हेतुगर्भविशेषणमेतत्[1]। उत्सरणहेतुभूतैर्दशभिश्चक्षुःश्रोत्रादिभिर्यन्त्रैरुपायैर्युक्तम्। इदं च पदं खैलिकेन मन्त्रान्तरेण व्याख्यायते—'चक्षुश्च श्रोत्रं च मनश्च वाक्च प्राणापानौ देह इदं शरीरम्। द्वौ प्रत्यञ्चावनुलोमौ विसर्गावेतं तं मन्ये दशयन्त्रमुत्सम्' इति। यद्वा। अयमिन्द्रो द्यावापृथिवी वि स्कभायत्। स्वे स्वे स्थाने स्थिते अकरोत्। अयमेव सप्तरश्मिं सूर्यस्य रथमयुनक्। अयमेवेन्द्रो गोष्वन्तः शच्यात्मीयेन कर्मणा पक्वं पयो धारयति। एवंभूतेन्द्रार्थं[2] सोमो दशयन्त्रं दशसंख्याकैरैन्द्रवायवादिभिर्ग्रहैर्यन्त्रितैर्गृहीतैरुपेतमुत्समुत्सरणशीलं रसं दाधार धारयति। प्रातःसवन ऐन्द्रवायवादयो दश ग्रहा गृह्यन्ते। तथा च ब्राह्मणं-'नव प्रातर्ग्रहा गृह्यन्ते नवभिर्बहिष्पवमाने स्तुवते स्तुते स्तोमे[3] दशमं गृह्णाति' ( ऐ. ब्रा. ३. १ ) इति। अन्यत्राम्नातं—'दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति' ( श. ब्रा. १४. २ ) इति। तदभिप्रायेणेदं दशयन्त्रमिति विशेषणम्॥ ॥ २० ॥

'य आनयत्' इति त्रयस्त्रिंशदृचं द्वितीयं सूक्तं बृहस्पतिपुत्रस्य शंयोरार्षम्। 'पुरूतमम्' इत्येषातिनिचृत् 'त्रयः सप्तकाः पादनिचृन् मध्यमः षट्कश्चेदतिनिचृत्' इत्युक्तलक्षणात्[4]। त्रयस्त्रिंश्यनुष्टुप् शिष्टा गायत्र्यः। 'अधि बृबुः पणीनाम्' इत्यस्मिन्नन्त्ये तृचे बृबुर्नाम तक्षा स्तूयते। अतः स तृचस्तद्देवताकः। शिष्टास्त्रिंशदैन्द्र्यः। तथा चानुक्रान्तं—'य आनयत्त्रयस्त्रिंशद्गायत्रं पुरूतममतिनिचृदन्त्यानुष्टुप् तृचेऽन्त्ये बृबुस्तक्षा दैवतम्' इति। महाव्रतेऽपि निष्केवल्येऽन्त्यतृचवर्जमेतत्सूक्तम्। तथैव पञ्चमारण्यकं—'य आनयत्परावत इति तिस्र उत्तमा उद्धरति' ( ऐ. आ. ५. २. ५ ) इति॥

य आन॑यत्परा॒वतः॒ सुनी॑ती तु॒र्वशं॒ यदु॑म्। इन्द्रः॒ स नो॒ युवा॒ सखा॑ ॥ १ ॥

यः। आ। अन॑यत्। प॒रा॒ऽवतः॑। सु॒ऽनीती॑। तु॒र्वश॑म्। यदु॑म्। इन्द्रः॑। सः। नः॒। युवा॑। सखा॑ ॥ १ ॥

^v^यः इन्द्रः ^v^तुर्वशं ^v^यदुं चैतत्संज्ञौ राजानौ शत्रुभिर्दूरदेशे प्रक्षिप्तौ ^v^सुनीती सुनीत्या शोभनेन नयनेन ^v^परावतः तस्माद्दूरदेशात् ^v^आनयत् आनीतवान् ^v^युवा तरुणः ^v^सः ^v^इन्द्रः ^v^नः अस्माकं ^v^सखा भवतु॥

अ॒वि॒प्रे चि॒द्वयो॒ दध॑दना॒शुना॑ चि॒दर्व॑ता। इन्द्रो॒ जेता॑ हि॒तं धन॑म् ॥ २ ॥

अ॒वि॒प्रे। चि॒त्। वयः॑। दध॑त्। अ॒ना॒शुना॑। चि॒त्। अर्व॑ता। इन्द्रः॑। जेता॑। हि॒तम्। धन॑म् ॥ २ ॥

^v^अविप्रे ^v^चित्। विप्रः स्तोता[5]। तद्विलक्षणेऽपि पुरुषे ^v^वयः अन्नं ^v^दधत् इन्द्रो धारयति। किमु वक्तव्यं स्तोतरि धारयतीति। सः ^v^इन्द्रः ^v^अनाशुना ^v^चित् अक्षिप्रगमनेनापि ^v^अर्वता अश्वेन ^v^हितं शत्रुषु निहितं स्थापितं ^v^धनं ^v^जेता जयशीलो भवति॥ जयतेस्ताच्छीलिकस्तृन्। अतो 'न लोकाव्यय°' इति षष्ठीप्रतिषेधः॥

म॒हीर॑स्य॒ प्रणी॑तयः पू॒र्वीरु॒त प्रश॑स्तयः। नास्य॑ क्षीयन्त ऊ॒तयः॑ ॥ ३ ॥

म॒हीः। अ॒स्य॒। प्रऽनी॑तयः। पू॒र्वीः। उ॒त। प्रऽश॑स्तयः। न। अ॒स्य॒। क्षी॒य॒न्ते॒। ऊ॒तयः॑ ॥ ३ ॥

---

१. ड-त१-र-हेतुगर्भं विशे°। २. घ-ज-झ-त२-न-भ-र-°तेन्द्रार्थं। ३. ख-झ-त-न-भ-र-सोम; घ-श- 'स्तोमे' नास्ति। ४. ख-झ-न-भ-°लक्षणत्वात्। ५. श-मेधावी।

vअस्य इन्द्रस्य vप्रणीतयः प्रकृष्टा नीतयः प्रापणानि vमहीः मह्यो महत्यो भवन्ति । vउत अपि च vप्रशस्तयः प्रकृष्टाः स्तुतयः स्तोतृभिः क्रियमाणाः vपूर्वीः बह्व्यो भवन्ति । तथा vअस्य इन्द्रस्य vऊतयः रक्षाः vन vक्षीयन्ते नापक्षीयन्ते । किन्तु सर्वदा वर्धन्त एव ॥

सखा॑यो॒ ब्रह्म॑वाहसेऽर्च॑त॒ प्र च॑ गायत । स हि नः॒ प्रम॑तिर्म॒ही ॥ ४ ॥

सखा॑यः । ब्रह्म॑ऽवाहसे । अर्च॑त । प्र । च॒ । गा॒य॒त॒ । सः । हि । नः॒ । प्रऽम॑तिः । म॒ही ॥ ४ ॥

हे vसखायः समानख्यानाः स्तोतारः vब्रह्मवाहसे ब्रह्मभिर्मन्त्रैर्वहनीयाय प्राप्तव्यायेन्द्राय vअर्चत शस्त्राणि शंसत । vप्र vगायत vच स्तोत्राणि । vस vहि स खल्विन्द्रः vनः अस्माकं vमही महती vप्रमतिः प्रकृष्टा बुद्धिः । ईदृश्या बुद्धेः प्रदातेत्यर्थः ॥

त्वमेक॑स्य वृत्रहन्नवि॒ता द्वयो॑रसि । उ॒तेदृशे॒ यथा॑ व॒यम् ॥ ५ ॥

त्वम् । एक॑स्य । वृ॒त्र॒ऽह॒न् । अ॒वि॒ता । द्वयोः॑ । अ॒सि॒ । उ॒त । ई॒दृशे॑ । यथा॑ । व॒यम् ॥ ५ ॥

हे vवृत्रहन् वृत्राणां शत्रूणां हन्तरिन्द्र vत्वमेकस्य स्तोतुः vद्वयोः च स्तोत्रोः vअविता रक्षिता vअसि । सर्वेषां स्तोतॄणां रक्षको भवसीत्यर्थः । vउत अपि च vईदृशे जनेऽप्यविता भवसि vयथा यादृशाः vवयं त्वया रक्षिता बहुविधपुत्रपौत्रा[1] अभूम । ईदृशस्यापि जनस्य त्वमेव रक्षको नान्य इत्यर्थः ॥ ॥ २१ ॥

नय॑सी॒द्वति॒ द्विषः॑ कृ॒णोष्यु॑क्थशं॒सिनः॑ । नृभिः॑ सु॒वीर॑ उच्यसे ॥ ६ ॥

नय॑सि । इत् । ऊँ इति॑ । अति॑ । द्विषः॑ । कृ॒णोषि॑ । उ॒क्थ॒ऽशं॒सिनः॑ । नृ॒ऽभिः॑ । सु॒ऽवीरः॑ । उ॒च्य॒से॒ ॥ ६ ॥

हे इन्द्र vइत् त्वमेव vद्विषः द्वेष्टॄन् vअति vनयसि अस्मान्नयसि[2] तारयसि[2] । vउ इति पूरकः । तथा vउक्थशंसिनः उक्थानि शस्त्राणि शंसतः स्तोतॄनस्मान् vकृणोषि समृद्धान् करोषि । यस्मात् त्वं vनृभिः स्तुतीनां नेतृभिः पुरुषैः vसुवीरः शोभनैर्वीरैः पुत्रपौत्रादिभिः स्तोतृभ्यो दातव्यैरुपेत इति vउच्यसे स्तूयसे अतस्तानप्यस्मभ्यं प्रयच्छेति शेषः ॥

ब्र॒ह्माणं॒ ब्रह्म॑वाहसं गी॒र्भिः सखा॑यमृ॒ग्मिय॑म् । गां न दो॒हसे॑ हुवे ॥ ७ ॥

ब्र॒ह्माण॑म् । ब्रह्म॑ऽवाहसम् । गी॒ःऽभिः । सखा॑यम् । ऋ॒ग्मिय॑म् । गाम् । न । दो॒हसे॑ । हु॒वे॒ ॥ ७ ॥

vब्रह्माणं परिवृढं vब्रह्मवाहसं ब्रह्मभिः स्तुतिरूपैर्मन्त्रैर्वहनीयं vसखायम् अस्माकं सखिभूतम् vऋग्मियम् । ऋग्मा ऋचः । तदर्हम् । स्तुत्यर्हमित्यर्थः । एवंभूतमिन्द्रं vदोहसे दोग्धुं vगां vन गामिव vगीर्भिः स्तुतिभिः[3] vहुवे आह्वयाम्यस्मदीयान् कामान् दोग्धुम् ॥

यस्य॒ विश्वा॑नि॒ हस्त॑योरू॒चुर्वसू॑नि॒ नि द्वि॒ता । वी॒रस्य॑ पृत॒ना॒षहः॑ ॥ ८ ॥

यस्य॑ । विश्वा॑नि । हस्त॑योः । ऊ॒चुः । वसू॑नि । नि । द्वि॒ता । वी॒रस्य॑ । पृ॒त॒ना॒ऽसहः॑ ॥ ८ ॥

---

१. ख-ङ्ग-न-भ-विविध० । २. ख-ङ्ग-भ-अस्मानतितारयसि; ङ्ग-न-य-अस्मानतिनयसि तारयसि; घ-तारयासि । ३. घ-श-स्तुतिरूपाभिः ।

vवीरस्य वीर्यवतः vपृतनासहः। पृतनाः शत्रुसेनाः। तासामभिभवितुः vयस्य इन्द्रस्य vहस्तयोः बाह्वोः vविश्वानि सर्वाणि vद्विता दिव्यपार्थिवरूपेण द्वैधं वर्तमानानि vवसूनि विधीयन्ते इति vनि vऊचुः ऋषयो नितरां वदन्ति तमिन्द्रं हुव इति पूर्वत्र संबन्धः ॥

वि दृळ्हानि चिदद्रिवो जनानां शचीपते। वृह माया अनानत ॥ ९ ॥

वि। दृळ्हानि। चित्। अद्रिऽवः। जनानाम्। शचीऽपते। वृह। मायाः। अनानत ॥ ९ ॥

हे vअद्रिवः। आदृणात्यनेनेत्यद्रिर्वज्रः। तद्वन् vशचीपते इन्द्र vजनानां शत्रूणां vदृळ्हानि vचित् दृढानि स्थिराण्यपि पुराणि बलानि वा vवि vवृह विभिन्धि। विविधमुन्मूलयेत्यर्थः। हे vअनानत अप्रह्वीभूत सर्वोच्छ्रितेन्द्र vमायाः च शत्रुभिर्निर्मिता वि वृह विनाशय ॥

तमु त्वा सत्य सोमपा इन्द्र वाजानां पते। अहूमहि श्रवस्यवः ॥ १० ॥

तम्। ऊँ इति। त्वा। सत्य। सोमऽपाः। इन्द्र। वाजानाम्। पते। अहूमहि। श्रवस्यवः ॥ १० ॥

हे vसत्य अवितथस्वभाव vसोमपाः सोमस्य[1] पातर्हे[1] vवाजानां vपते अन्नानां पालयितरेवंभूत हे vइन्द्र vश्रवस्यवः श्रवोऽन्नमात्मन इच्छन्तो वयं vतमु vत्वा तादृशं त्वामेव vअहूमहि आह्वयामः स्तुम इत्यर्थः ॥ ॥ २२ ॥

तमु त्वा यः पुरासिथ यो वा नूनं हिते धने। हव्यः स श्रुधी हवम् ॥ ११ ॥

तम्। ऊँ इति। त्वा। यः। पुरा। आसिथ। यः। वा। नूनम्। हिते। धने।
हव्यः। सः। श्रुधि। हवम् ॥ ११ ॥

हे इन्द्र vतमु vत्वा तमेव त्वां स्तुम इति शेषः। vयः त्वं vपुरा पूर्वस्मिन् काले vहव्यः ह्वातव्यः vआसिथ बभूविथ धनलाभार्थम्। vयो vवा यश्च त्वं vहिते शत्रुषु निहिते vधने निमित्तभूते[2] सति vनूनम् अद्यापि हव्यः ह्वातव्यो बभूविथ vसः त्वमस्मदीयं vहवं स्तोत्रं vश्रुधि शृणु ॥

धीभिरर्वद्भिरर्वतो वाजाँ इन्द्र श्रवाय्यान्। त्वया जेष्म हितं धनम् ॥ १२ ॥

धीभिः। अर्वत्ऽभिः। अर्वतः। वाजान्। इन्द्र। श्रवाय्यान्। त्वया। जेष्म। हितम्। धनम् ॥ १२ ॥

हे vइन्द्र vधीभिः स्तुतिभिस्त्वद्विषयाभिः प्रीतेन vत्वया अनुगृहीता वयम् vअर्वद्भिः अस्मदीयैः अश्वैः vअर्वतः शत्रुसंबन्धिनोऽश्वान् vश्रवाय्यान् श्रवणीयान् प्रशस्यान् vवाजान् अन्नानि च vहितं शत्रुषु निहितं vधनं च vजेष्म त्वदनुग्रहाज्जयेम ॥

अभूरु वीर गिर्वणो महाँ इन्द्र धने हिते। भरे वितन्तसाय्यः ॥ १३ ॥

अभूः। ऊँ इति। वीर। गिर्वणः। महान्। इन्द्र। धने। हिते। भरे। वितन्तसाय्यः ॥ १३ ॥

हे vवीर विविधमीरयितः शत्रूणां हे vगिर्वणः गीर्भिर्वननीय vइन्द्र vहिते शत्रुषु निहिते vधने निमित्तभूते सति vमहान् प्रवृद्धस्त्वं vभरे संग्रामे vवितन्तसाय्यः शत्रूणां जेता vअभूः ॥ तन्तस इति धातुर्जयार्थः कण्ड्वादौ पठ्यते। तस्मात् व्युपसृष्टादौणादिकः कर्तर्याय्यप्रत्ययः ॥

---

१. ख–सोमपातर्हे। २. ख–निमित्ते।

या ते ऊतिरमित्रहन्मक्षूजवस्तमासति । तया नो हिनुही रथम् ॥ १४ ॥

या । ते । ऊतिः । अमित्रऽहन् । मक्षुजवःऽतमा । असति । तया । नः । हिनुहि । रथम् ॥ १४ ॥

हे अमित्रहन् अमित्राणां शत्रूणां हन्तरिन्द्र ते त्वदीया मक्षुजवस्तमा अतिशयेन शीघ्रजवा या ऊतिः गतिः असति अस्ति तया गत्या नः अस्माकं रथं हिनुहि प्रेरय शत्रुजयार्थं शीघ्रं गमय ॥

स रथेन रथीतमोऽस्माकेनाभियुग्वना । जेषि जिष्णो हितं धनम् ॥ १५ ॥

सः । रथेन । रथिऽतमः । अस्माकेन । अभिऽयुग्वना । जेषि । जिष्णो इति । हितम् । धनम् ॥ १५ ॥

हे जिष्णो जयशीलेन्द्र रथीतमः अतिशयेन रथी महारथः सः त्वम् अस्माकेन अस्मदीयेन अभियुग्वना अभियोक्त्रा शत्रूणामभिभवित्रा रथेन हितं शत्रुषु निहितं धनं जेषि अस्मदर्थं जय ॥    ॥ २३ ॥

य एक इत्तमु ष्टुहि कृष्टीनां विचर्षणिः । पतिर्जज्ञे वृषक्रतुः ॥ १६ ॥

यः । एकः । इत् । तम् । ऊँ इति । स्तुहि । कृष्टीनाम् । विऽचर्षणिः । पतिः । जज्ञे । वृषऽक्रतुः ॥ १६ ॥

विचर्षणिः विशेषेण सर्वस्य द्रष्टा वृषक्रतुः वर्षकर्मा यः इन्द्रः एकः[1] इत् एक एव कृष्टीनां प्रजानां पतिः अधिपतिः जज्ञे अजायत नान्यः कश्चित् तमु तमेवेन्द्रं हे स्तोतः स्तुहि ॥

यो गृणतामिदासिथापिरूती शिवः सखा । स त्वं न इन्द्र मृळय ॥ १७ ॥

यः । गृणताम् । इत् । आसिथ । आपिः । ऊती । शिवः । सखा । सः । त्वम् । नः । इन्द्र । मृळय ॥ १७ ॥

हे इन्द्र यः त्वम् ऊती ऊत्या रक्षया शिवः सुखकरोऽत एव सखा मित्रभूतश्च सन् गृणतामित् स्तुवतामस्माकमेव आपिः बन्धुः आसिथ पुरा बभूविथ सः तादृशः त्वं नः अस्मान् इदानीं मृळय सुखय ॥

धिष्व वज्रं गभस्त्यो रक्षोहत्याय वज्रिवः । सासहीष्ठा अभि स्पृधः ॥ १८ ॥

धिष्व । वज्रम् । गभस्त्योः । रक्षःऽहत्याय । वज्रिऽवः । ससहीष्ठाः । अभि । स्पृधः ॥ १८ ॥

हे वज्रिवः वज्रवन्निन्द्र गभस्त्योः आत्मीययोर्हस्तयोः वज्रं कुलिशं धिष्व धारय । किमर्थम् । रक्षोहत्याय रक्षसां हननार्थम् । धृत्वा च स्पृधः स्पर्धमानाः अभि[2] अभिगन्त्रीरासुरीः सेनाः ससहीष्ठाः अत्यर्थमभिभव ॥

प्रत्नं रयीणां युजं सखायं कीरिचोदनम् । ब्रह्मवाहस्तमं हुवे ॥ १९ ॥

प्रत्नम् । रयीणाम् । युजम् । सखायम् । कीरिऽचोदनम् । ब्रह्मवाहःऽतमम् । हुवे ॥ १९ ॥

---

१. ख-ज्ञ-त-न-भ-र-य एकः ।    २. ख-ज्ञ-न-भ-र-श-'अभि' नास्ति; त- न ।

vप्रत्नं चिरंतनं सर्वेषामाद्यं vरयीणां धनानां vयुजं योजयितारं दातारं vसखायं मित्रभूतं vकीरिचोदनं कीरीणां स्तोतृणां चोदयितारं vब्रह्मवाहस्तमम् अतिशयेन ब्रह्मभिर्मन्त्रैर्वहनीयमेवंविधमिन्द्रं vहुवे आह्वयामि ॥

स हि विश्वानि पार्थिवाँ एको वसूनि पत्यते । गिर्वणस्तमो अध्रिगुः ॥ २० ॥

सः । हि । विश्वानि । पार्थिवा । एकः । वसूनि । पत्यते । गिर्वणःऽतमः । अध्रिऽगुः ॥ २० ॥

vस vहि स खल्विन्द्रः vविश्वानि सर्वाणि vपार्थिवा पृथिव्यां भवानि vवसूनि धनानि vएकः एव vपत्यते ईष्टे नान्यः कश्चित् । पत्यतिरैश्वर्यकर्मा । कीदृश इन्द्रः । vगिर्वणस्तमः अतिशयेन गीर्भिः स्तुतिभिः संभजनीयः vअध्रिगुः अधृतगमनः । अप्रतिहतगतिरित्यर्थः ॥ ॥ २४ ॥

स नो नियुद्भिरा पृण कामं वाजेभिरश्विभिः । गोमद्भिर्गोपते धृषत् ॥ २१ ॥

सः । नः । नियुत्ऽभिः । आ । पृण । कामम् । वाजेभिः । अश्विऽभिः ।

गोमत्ऽभिः । गोऽपते । धृषत् ॥ २१ ॥

हे vगोपते गवां पालयितः vसः त्वं vनः अस्माकं vकामं vनियुद्भिः वडवाभिः vधृषत् धृष्टं दारिद्र्यनाशनसमर्थं यथा भवति तथा vआ vपृण आपूरय[1] । यद्वा धृषदितीन्द्रविशेषणम् । शत्रूणां धर्षकस्त्वमित्यर्थः । तथा vगोमद्भिः बहुभिर्गोभिर्युक्तैः vअश्विभिः बहुभिरश्वैरुपेतैर्वाजैरन्नैश्चास्मदीयं काममापूरय ॥

तद्वो गाय सुते सचा पुरुहूताय सत्वने । शं यद्गवे न शाकिने ॥ २२ ॥

तत् । वः । गाय । सुते । सचा । पुरुऽहूताय । सत्वने । शम् । यत् । गवे । न । शाकिने ॥२२॥

हे स्तोतारः vवः यूयं vसुते अभिषुते सोमे सति vपुरुहूताय बहुभिर्यजमानैराहूताय vसत्वने शत्रूणां सादयित्रे धनानां[2] वा[2] सनित्रे दात्रे इन्द्राय vतत् स्तोत्रं vसचा सह संहता भूत्वा vगाय गायत । vयत् स्तोत्रं vशाकिने शक्तिमते इन्द्राय vशं सुखकरं भवति vगवे vन । यथा गवे यवसं सुखकरं तद्वदित्यर्थः ॥

न घा वसुर्नि यमते दानं वाजस्य गोमतः । यत्सीमुप श्रवद्गिरः ॥ २३ ॥

न । घ । वसुः । नि । यमते । दानम् । वाजस्य । गोऽमतः ।

यत् । सीम् । उप । श्रवत् । गिरः ॥ २३ ॥

vवसुः वासयिता स इन्द्रः vगोमतः बहुभिर्गोभिर्युक्तस्य vवाजस्य अन्नस्य बलस्य वा vदानं प्रदानं vन vघ न खलु vनि vयमते नियच्छति उपरतं करोति । vयत् यदि vसीम् इमाः vगिरः अस्मदीयाः स्तुतीः vउप vश्रवत् उपशृणुयात् । स्तोत्रश्रवणे सति सर्वदा ददातीत्यर्थः ॥

---

१. ख-ज-झ-त-न-भ-र-पूरय । २. ख-न-भ-यद्वा शत्रुधनानाम् ; झ-यद्वा धनानाम ।

कुवित्सस्य प्र हि व्रजं गोमन्तं दस्युहा गमत्। शचीभिरप नो वरत् ॥ २४ ॥

कुवित्ऽसस्य। प्र। हि। व्रजम्। गोऽमन्तम्। दस्युऽहा। गमत्।
शचीभिः। अप। नः। वरत् ॥ २४ ॥

ᐯकुवित्सस्य। कुविद्बहुशः स्यति हिनस्तीति कुवित्सो नाम कश्चित्। तस्य स्वभूतं ᐯगोमन्तं बहुभिर्गोभिर्युक्तं ᐯव्रजं गोष्ठं ᐯदस्युहा दस्यूनामुपक्षपयितॄणां हन्तेन्द्रः ᐯप्र ᐯगमत् प्रकर्षेण गच्छति। ᐯहि यस्मादेवं तस्मात् ᐯशचीभिः आत्मीयैः कर्मभिः प्रज्ञाभिर्वा ᐯनः अस्माकं ता गा ᐯअप ᐯवरत् निगूढास्ता अपावृणोत् ॥

इमा उ त्वा शतक्रतोऽभि प्र णोनुवुर्गिरः। इन्द्र वत्सं न मातरः ॥ २५ ॥

इमाः। ऊँ इति। त्वा। शतक्रतो इति शतऽक्रतो। अभि। प्र। नोनुवुः। गिरः।
इन्द्र। वत्सम्। न। मातरः ॥ २५ ॥

हे ᐯशतक्रतो बहुविधकर्मन् बहुविधप्रज्ञ वा ᐯइन्द्र ᐯत्वा त्वाम् ᐯअभि ᐯइमाः अस्मदीयाः ᐯगिरः स्तुतयः ᐯप्र ᐯणोनुवुः प्रकर्षेण पुनःपुनर्गच्छन्ति। नौतिरत्र गतिकर्मा। तत्र दृष्टान्तः। ᐯवत्सं ᐯन ᐯमातरः। यथा मातरो गावो गृहे वर्तमानं वत्सं शीघ्रमभिगच्छन्ति तद्वत्। यद्वा। अस्मदीया वाचस्त्वाम् अभि नोनुवुः अभितः शब्दयन्ति स्तुवन्ति। यथा गावो वत्समभिलक्ष्य हम्भारवं कुर्वन्ति तद्वत् ॥ ॥ २५ ॥

दूणाशं सख्यं तव गौरसि वीर गव्यते। अश्वो अश्वायते भव ॥ २६ ॥

दुःऽनशम्। सख्यम्। तव। गौः। असि। वीर। गव्यते।
अश्वः। अश्वऽयते। भव ॥ २६ ॥

हे इन्द्र ᐯतव त्वदीयं ᐯसख्यं सखित्वं ᐯदूणाशं दुर्णाशं[1] नाशयितुमशक्यम्। अतिदृढमित्यर्थः। अतो हे ᐯवीर वीरयितरिन्द्र ᐯगव्यते गामात्मन इच्छते त्वं ᐯगौरसि गवां प्रदाता भवसि। उपचारात् कारणे कार्यशब्दः। तथा ᐯअश्वायते अश्वानात्मन इच्छते ᐯअश्वः ᐯभव अश्वप्रदो भवसि ॥

स मन्दस्वा ह्यन्धसो राधसे तन्वा महे। न स्तोतारं निदे करः ॥ २७ ॥

सः। मन्दस्व। हि। अन्धसः। राधसे। तन्वा। महे।
न। स्तोतारम्। निदे। करः ॥ २७ ॥

हे इन्द्र ᐯसः तादृशस्त्वम् ᐯअन्धसः सोमस्य पानेन हृष्टया ᐯतन्वा आत्मीयेन शरीरेण ᐯमन्दस्व मोदस्व। किमर्थम्। ᐯमहे महते ᐯराधसे धनार्थम्। ᐯहि पूरणः। अपि च त्वदीयं ᐯस्तोतारं ᐯनिदे निन्दकाय तस्य वशं ᐯन ᐯकरः न कुर्याः ॥

इमा उ त्वा सुतेसुते नक्षन्ते गिर्वणो गिरः। वत्सं गावो न धेनवः ॥ २८ ॥

इमाः। ऊँ इति। त्वा। सुतेऽसुते। नक्षन्ते। गिर्वणः। गिरः। वत्सम्। गावः। न। धेनवः ॥ २८ ॥

---

१. ञ–दुर्नशम्।

हे ^v^गिर्वणः गीर्भिर्वननीयेन्द्र ^v^सुतेसुते सोमेऽभिषुते अभिषुते[1] सति ^v^इमाः अस्मदीयाः ^v^गिरः स्तुतयः ^v^त्वा त्वां ^v^नक्षन्ते व्याप्नुवन्ति। ^v^धेनवः दोग्ध्र्यः ^v^गावो ^v^न गाव इव ^v^वत्सम्। यथा शीघ्रं वत्सं व्याप्नुवन्ति तद्वत् ॥

पुरूतमं पुरूणां स्तोतॄणां विवाचि। वाजेभिर्वाजयताम् ॥ २९ ॥

पुरुऽतमम्। पुरूणाम्। स्तोतॄणाम्। विऽवाचि। वाजेभिः। वाजऽयताम् ॥ २९ ॥

हे इन्द्र ^v^पुरुतमं[2] पुरूणां बहूनां शत्रूणां तमयितारं ग्लपयितारं[3] त्वां ^v^पुरूणां बहूनां ^v^स्तोतॄणाम् अस्माकं स्तुतिः प्राप्नोत्विति शेषः। कीदृशानाम्। ^v^विवाचि विविधाः स्तुतशस्त्रात्मिका वाचो यस्मिन् यज्ञे तस्मिन् ^v^वाजेभिः वाजैर्हविर्लक्षणैरन्नैः ^v^वाजयतां वाजवन्तं बलवन्तं[4] वा[5] त्वां[6] कुर्वताम् ॥

अस्माकमिन्द्र भूतु ते स्तोमो वाहिष्ठो अन्तमः। अस्मान्राये महे हिनु ॥ ३० ॥

अस्माकम्। इन्द्र। भूतु। ते। स्तोमः। वाहिष्ठः। अन्तमः।

अस्मान्। राये। महे। हिनु ॥ ३० ॥

हे ^v^इन्द्र ^v^वाहिष्ठः वोढृतमः ^v^अस्माकं ^v^स्तोमः स्तोत्रं ^v^ते तव ^v^अन्तमः अन्तिकतमः ^v^भूतु भवतु। त्वं च ^v^अस्मान् ^v^महे महते ^v^राये धनाय ^v^हिनु प्रेरय ॥

अधि बृबुः पणीनां वर्षिष्ठे मूर्धन्नस्थात्। उरुः कक्षो न गाङ्ग्यः ॥ ३१ ॥

अधि। बृबुः। पणीनाम्। वर्षिष्ठे। मूर्धन्। अस्थात्। उरुः। कक्षः। न। गाङ्ग्यः ॥ ३१ ॥

बृबुर्नाम पणीनां तक्षा। तत्सकाशाल्लब्धधनो भरद्वाजस्तदीयं दानमनेन तृचेनास्तौत्। एतच्च मनुना स्मर्यते—'भरद्वाजः क्षुधार्तस्तु सपुत्रो विजने[7] वने। बह्वीर्गाः प्रतिजग्राह बृबोस्तक्ष्णो महायशाः' (मनु. १०. १०७) इति ॥ पणनात् पणयो वणिज एतत्संज्ञा असुरा वा। तेषां तक्षा बृबुः ^v^वर्षिष्ठे[8] ^v^मूर्धन् मूर्धनि मूर्धवदुच्छ्रिते स्थले ^v^अधि ^v^अस्थात् अधिष्ठितोऽभूत् ^v^गाङ्ग्यः गङ्गायाः कूले उन्नते भवः ^v^कक्षो ^v^न कक्ष इव ^v^उरुः विस्तीर्णः सन्। जातितो हीनोऽपि दातृत्वात् सर्वत्र श्रेष्ठो भवतीत्यर्थः ॥

यस्य वायोरिव द्रवद्भद्रा रातिः सहस्रिणी। सद्यो दानाय मंहते ॥ ३२ ॥

यस्य। वायोःऽइव। द्रवत्। भद्रा। रातिः। सहस्रिणी। सद्यः। दानाय। मंहते ॥ ३२ ॥

^v^वायोरिव ^v^द्रवत् क्षिप्रगामिनः ^v^यस्य बृबोः ^v^भद्रा कल्याणी ^v^सहस्रिणी सहस्रसंख्यायुक्ता ^v^रातिः दानं ^v^सद्यः स्तुतिसमय एव ^v^दानाय दानकामाय याचमानाय मह्यं ^v^मंहते अपेक्षितं धनं ददाति तं बृबुमित्युत्तरस्यामृचि संबन्धः ॥

---

१. ज्ञ-त-'अभिषुते' नास्ति। २. ज्ञ-त-पुरुतमम्। ३. य-श्लथयितारम्। ४. ज्ञ-वेगवन्तं बलवन्तम्। ५. ख-घ-ज्ञ-न-भ-'वा' नाति। ६. घ-ज्ञ-र-श-'त्वां' नास्ति। ७. ख-ज्ञ-ज्ञ-त१-न-भ-य-र-निर्जने। ८. न-वर्षिष्ठे वर्षके।

तत्सु नो विश्वे अर्य आ सदा गृणन्ति कारवः ।
बृबुं सहस्रदातमं सूरिं सहस्रसातमम् ॥ ३३ ॥

तत् । सु । नः । विश्वे । अर्यः । आ । सदा । गृणन्ति । कारवः ।
बृबुम् । सहस्रऽदातमम् । सूरिम् । सहस्रऽसातमम् ॥ ३३ ॥

तत् तं बृबुं नः अस्मदीयाः विश्वे सर्वे अर्यः स्तुतीनामीरयितारः कारवः स्तोत सदा सु सुष्ठु आ गृणन्ति अभिगृणन्ति अभिष्टुवन्ति । कीदृशम् । सहस्रदातमम् अतिशं सहस्रसंख्यस्य धनस्य दातारं सूरिं प्राज्ञं यद्वा प्रेरयितारं सहस्रसातमम् अतिशयेन सहस्रसंख्य स्तोत्रस्य धनस्य वा संभक्तारम् ॥  ॥ २६ ॥

'त्वामिद्धि' इति चतुर्दशर्चं तृतीयं सूक्तं बृहस्पतिपुत्रस्य शंयोरार्षमैन्द्रम् । प्रथमातृतीया अयुजो बृहत्यो द्वितीयाचतुर्थ्याद्या युजः सतोबृहत्यः । तथा चानुक्रान्तं—'त्वामिद्धि षळूना प्रा थम्' इति । सूक्तविनियोगो लैङ्गिकः । यदि ज्योतिष्टोमो बृहत्पृष्ठः स्यात्तदानीं निष्केवल्यस्या प्रगाथः स्तोत्रियः । सूत्रितं च—'यद्यु वै बृहत्त्वामिद्धि हवामहे' ( आश्व. श्रौ. ५. १५ ) इ महाव्रतेऽपि निष्केवल्येऽयं प्रगाथः शंसनीयः । तथैव पञ्चमारण्यके सूत्रितं—'त्वामिद्धि हवामहे ह्येहि चेरव इति बृहतः स्तोत्रियानुरूपौ' ( ऐ. आ. ५. २. २ ) इति ॥

त्वामिद्धि हवामहे साता वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ १ ॥

त्वाम् । इत् । हि । हवामहे । साता । वाजस्य । कारवः ।
त्वाम् । वृत्रेषु । इन्द्र । सत्ऽपतिम् । नरः । त्वाम् । काष्ठासु । अर्वतः ॥ १ ॥

कारवः स्तोतारो वयं वाजस्य अन्नस्य साता सातौ संभजने निमित्तभूते सति हे त्वामिद्धि त्वामेव हवामहे स्तुतिभिराह्वयामः । हे इन्द्र सत्पतिं सतां पालयितारं श्रेष्ठं नरः अन्येऽपि मनुष्याः वृत्रेषु आवरकेषु शत्रुषु सत्सु हवन्ते आह्वयन्ति[1] तज्जयार्थम् । अपि अर्वतः अश्वस्य संबन्धिनीषु काष्ठासु यत्राश्वः क्रान्त्वा तिष्ठति तासु काष्ठासु संग्रामेषु युद्धकाम त्वाम् एवाह्वयन्ति । अतो वयं त्वामेवाह्वयाम इत्यर्थः ॥

स त्वं नश्चित्र वज्रहस्त धृष्णुया महः स्तवानो अद्रिवः ।
गामश्वं रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे ॥ २ ॥

सः । त्वम् । नः । चित्र । वज्रऽहस्त । धृष्णुऽया । महः । स्तवानः । अद्रिऽवः ।
गाम् । अश्वम् । रथ्यम् । इन्द्र । सम् । किर । सत्रा । वाजम् । न । जिग्युषे ॥ २ ॥

हे चित्र चायनीय वज्रहस्त वज्रबाहो अद्रिवः वज्रवन् । यद्वा । आदरणात्यनेनेत्यद्रिरशनि तद्वन् । एवंभूत इन्द्र धृष्णुया धृष्णुः शत्रूणां धर्षयिता महः महान् सः तादृशः त्वं स्तव

1. ख-भ—आह्वयन्ते ।

अस्माभिः स्तूयमानः सन् vगां vरथ्यं रथवाहनम् vअश्वं च vसं vकिर सम्यक् प्रयच्छ। vजिग्युषे जितवते पुरुषाय भोगार्थं vसत्रा महत् प्रभूतं vवाजं vन अन्नमिव। यथा शत्रून् जितवते भोगार्थं बह्वन्नं प्रयच्छसि तद्वत् ॥

महाव्रते निष्केवल्ये 'यः सत्राहा' इत्यादिसूक्तशेषः शंसनीयः। सूत्र्यते हि—'यः सत्राहा विचर्षणिरिति शेषोऽयं ते अस्तु हर्यत इति सूक्ते' (ऐ. आ ५. २. ४) इति। चातुर्विंशिकेऽहनि माध्यंदिनसवने[1] 'यः सत्राहा' इति प्रगाथो वैकल्पिकोऽनुरूपः। सूत्रितं च—'यः सत्राहा विचर्षणिः स्वादोरित्था विषूवतः' (आश्व. श्रौ. ७. ४) इति ॥

यः संत्राहा विचर्षणिरिन्द्रं तं हूमहे वयम् ।
सहस्रमुष्क तुविनृम्ण सत्पते भवा समत्सु नो वृधे ॥ ३ ॥

यः । सत्राऽहा । विऽचर्षणिः । इन्द्रम् । तम् । हूमहे । वयम् ।
सहस्रऽमुष्क । तुविऽनृम्ण । सत्ऽपते । भव । समत्ऽसु । नः । वृधे ॥ ३ ॥

vयः इन्द्रः vसत्राहा महतां शत्रूणां हन्ता vविचर्षणिः विशेषेण सर्वस्य द्रष्टा vतम् vइन्द्रं vवयं vहूमहे स्तुतिपदैराह्वयामः। उत्तरार्धः प्रत्यक्षकृतः। हे vसहस्रमुष्क सहस्रशेफ। यां कां[2] च[2] स्त्रियं संभवन्निन्द्रो भोगलोलुपतया स्वशरीरे पर्वणि पर्वणि शेफान् ससर्जेति कौषीतकिभिराम्नातम्। तदभिप्रायेणेदं संबोधनम्। हे vतुविनृम्ण बहुधन[3] vसत्पते सतां पालयितरिन्द्र vसमत्सु संग्रामेषु vनः अस्माकं vवृधे वर्धनाय vभव ॥

बाधसे जनान्वृषभेव मन्युना घृषौ मीळ्ह ऋचीषम ।
अस्माकं बोध्यविता महाधने तनूष्वप्सु सूर्ये ॥ ४ ॥

बाधसे । जनान् । वृषभाऽइव । मन्युना । घृषौ । मीळ्हे । ऋचीषम ।
अस्माकम् । बोधि । अविता । महाऽधने । तनूषु । अप्ऽसु । सूर्ये ॥ ४ ॥

हे vऋचीषम ऋचा सम ऋग्याद्दशं रूपं प्रतिपादयति तादृग्रूपेन्द्र vघृषौ शत्रूणां घर्षके बाधके vमीळ्हे संग्रामे vजनान् अस्मदीयान् शत्रून् vवृषभेव वृषभेणेव बलवता vमन्युना क्रोधेन vबाधसे बाधस्व। तथा vमहाधने महतो धनस्य निमित्तभूते संग्रामे च vअस्माकम् vअविता रक्षिता vबोधि बुध्यस्व। रक्षितृत्वेनात्मानं जानीहि। रक्षको भवेति यावत्। किमर्थम्। vतनूषु तनयेषु vअप्सु उदकेषु vसूर्ये च लब्धव्येषु सत्स्वेतेषां लाभार्थम्। सूर्यस्य[4] लाभः संदर्शनम्। तदर्थमित्यर्थः[4] ॥

चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिनः 'इन्द्र ज्येष्ठं न आ भर' इति प्रगाथो वैकल्पिकोऽनुरूपः। सूत्रितं च—'इन्द्र ज्येष्ठं न आ भरा त्वा सहस्रमा शतम्' (आश्व. श्रौ. ७. ४) इति ॥

---

१. न–°सवनेऽच्छावाकशस्त्रे। २. र–कांचन। ३. घ–बहुविधधन; श–बहुविधधनवन्। ४. ख-भ-र–सूर्यलाभः संदर्शनं तदर्थमि°; क्ष-न–सूर्यलाभसंदर्शनं तदर्थमि°; श–सूर्यस्य लाभः संदर्शनार्थमि°।

इन्द्र ज्येष्ठं न आ भरँ ओजिष्ठं पपुरि श्रवः ।
येनेमे चित्र वज्रहस्त रोदसी ओभे सुशिप्र प्राः ॥ ५ ॥

इन्द्र । ज्येष्ठम् । नः । आ । भर । ओजिष्ठम् । पपुरि । श्रवः ।
येन । इमे इति । चित्र । वज्रऽहस्त । रोदसी इति । आ । उभे इति । सुऽशिप्र । प्राः ॥५॥

हे इन्द्र ज्येष्ठं प्रशस्यतमम् ओजिष्ठम् ओजस्वितममतिशयेन बलकरं पपुरि पूरकं श्रवः अन्नं नः अस्मभ्यम् आ भर आहर प्रयच्छ। हे चित्र चायनीय वज्रहस्त वज्रबाहो हे सुशिप्र शोभनहनुक एवंभूत हे इन्द्र येन अन्नेन इमे परिदृश्यमाने उभे रोदसी द्यावापृथिव्यौ आ प्राः आपूरयसि तदन्नमा भरेत्यन्वयः ॥ ॥ २७ ॥

त्वामुग्रमवसे चर्षणीसहं राजन्देवेषु हूमहे ।
विश्वा सु नो विथुरा पिब्दना वसोऽमित्रान्त्सुषहान्कृधि ॥ ६ ॥

त्वाम् । उग्रम् । अवसे । चर्षणिऽसहम् । राजन् । देवेषु । हूमहे ।
विश्वा । सु । नः । विथुरा । पिब्दना । वसो इति । अमित्रान् । सुऽसहान् । कृधि ॥ ६ ॥

हे राजन् राजमानेन्द्र देवेषु देवानां मध्ये उग्रम् उद्गूर्णबलं चर्षणीसहं चर्षणीनां शत्रुभूतानां प्रजानामभिभवितारं त्वाम् अवसे रक्षणाय हूमहे आह्वयामः[1] । त्वं विश्वा सर्वाणि पिब्दना पिब्दनानि रक्षांसि । पिहितमव्यक्तं शब्दयन्त इति पिब्दनानि । पृषोदरादिः । तानि सु सुष्ठु विथुरा व्यथितानि बाधितानि कुरु । हे वसो वासकेन्द्र नः अस्मदीयान् अमित्रान् शत्रूंश्च सुषहान् सुखेनाभिभवितुं शक्यान् कृधि कुरु ॥

यदिन्द्र नाहुषीष्वाँ ओजो नृम्णं च कृष्टिषु ।
यद्वा पञ्च क्षितीनां द्युम्नमा भर सत्रा विश्वानि पौंस्या ॥ ७ ॥

यत् । इन्द्र । नाहुषीषु । आ । ओजः । नृम्णम् । च । कृष्टिषु ।
यत् । वा । पञ्च । क्षितीनाम् । द्युम्नम् । आ । भर । सत्रा । विश्वानि । पौंस्या ॥ ७ ॥

हे इन्द्र नाहुषीषु । नहुष इति मनुष्यनाम । तत्संबन्धिनीषु कृष्टिषु प्रजासु । आकारः समुच्चये। यत् च ओजः बलं नृम्णं धनं च विद्यते। यद्वा यच्च पञ्च पञ्चानां क्षितीनाम्। निषादपञ्चमाश्चत्वारो वर्णाः पञ्च क्षितयः । तेषां स्वभूतं द्युम्नं द्योतमानमन्नं तत् सर्वमस्मभ्यम् आ भर आहर प्रयच्छ । तथा सत्रा महान्ति विश्वानि सर्वाणि पौंस्यानि[2] बलानि चास्मभ्यमाहर[3] ॥

---

१. ख-झ-न-भ-र-आह्वयामहे । २. श-पौस्या पौस्यानि । ३. ख-झ-न-भ-°माभर ।

यद्वा तृक्षौ मघवन्द्रुह्यावा जने यत्पूरौ कच्च वृष्ण्यम् ।
अस्मभ्यं तद्रिरीहि सं नृषाह्येऽमित्रान्पृत्सु तुर्वणे ॥ ८ ॥

यत् । वा । तृक्षौ । मघऽवन् । द्रुह्यौ । आ । जने । यत् । पूरौ । कत् । च । वृष्ण्यम् ।
अस्मभ्यम् । तत् । रिरीहि । सम् । नृऽसह्ये । अमित्रान् । पृत्ऽसु । तुर्वणे ॥ ८ ॥

हे vमघवन् धनवन्निन्द्र vतृक्षौ एतत्संज्ञे राजनि vयद्वा यच्च बलं विद्यते vद्रुह्यौ vआ द्रुह्यौ चैतत्संज्ञे च vजने यत् बलमस्ति । vपूरौ एतत्संज्ञे नृपे च vयत् vकच्च यत्किंचन vवृष्ण्यं वीर्यं विद्यते vतत् सर्वम् vअस्मभ्यं स्तोतृभ्यः vसं सम्यक् vरिरीहि प्रयच्छ। कदा । vनृसह्ये[1] नृभिर्योद्धृभिः सोढव्ये युद्धे प्रवृत्ते । किमर्थम् । vपृत्सु पृतनासु संग्रामेषु vअमित्रान् शत्रून् vतुर्वणे तुर्वितुं हिंसितुम् ॥

चातुर्विंशिकेऽहनि निष्केवल्ये ‘ इन्द्र त्रिधातु ’ इति वैरूपस्य सामप्रगाथः शंसनीयः । सूत्रितं च—‘ इन्द्र त्रिधातु शरणं त्वमिन्द्र प्रतूर्तिषु ’ ( आश्व. श्रौ. ७. ३ ) इति ॥

इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तिमत् ।
छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥ ९ ॥

इन्द्र । त्रिऽधातु । शरणम् । त्रिऽवरूथम् । स्वस्तिऽमत् ।
छर्दिः । यच्छ । मघवत्ऽभ्यः । च । मह्यम् । च । यवय । दिद्युम् । एभ्यः ॥ ९ ॥

हे vइन्द्र vत्रिधातु त्रिप्रकारं त्रिभूमिकं vत्रिवरूथं त्रयाणां शीतातपवर्षाणां वारकं vस्वस्तिमत् अविनाशयुक्तं vछर्दिः छदिष्मत्[2] आच्छादनयुक्तमेवंगुणविशिष्टं vशरणं गृहं vमघवद्भ्यश्च । मघं हविर्लक्षणं धनम् । तद्वद्भ्यश्चास्मदीयेभ्यः vमह्यं भरद्वाजाय vच vयच्छ देहि । अपि च vएभ्यः सकाशात् vदिद्युं शत्रुप्रेरितं द्योतमानमायुधं vयवय[3] पृथक्कुरु ॥

ये गव्यता मनसा शत्रुमादभुरभिप्रघ्नन्ति धृष्णुया ।
अध स्मा नो मघवन्निन्द्र गिर्वणस्तनूपा अन्तमो भव ॥ १० ॥

ये । गव्यता । मनसा । शत्रुम् । आऽदभुः । अभिऽप्रघ्नन्ति । धृष्णुऽया ।
अध । स्म । नः । मघऽवन् । इन्द्र । गिर्वणः । तनूऽपाः । अन्तमः । भव ॥ १० ॥

vये जनाः vगव्यता शत्रूणां गा इच्छता vमनसा युक्ताः सन्तः vशत्रुं शातयितारं वैरिणम् vआदभुः अहिंसिषुः । ये च vधृष्णुया धृष्णवो धृष्टाः सन्तः अस्मानभिलक्ष्य vप्रघ्नन्ति प्रकर्षेण हिंसन्ति हे vमघवन् धनवन् vगिर्वणः गिरां संभक्तः vइन्द्र vअध vस्म अस्मिन् काले तेभ्यः सकाशात् vनः अस्माकं vतनूपाः तनूनां शरीराणां रक्षिता सन् vअन्तमः अन्तिकतमः vभव ॥ ॥ २८ ॥

---

१. अ-त—नृषह्ये । २. ख-अ-न-भ—छर्दिष्मत् । ३. र—यावय ।

अधं स्मा नो वृधे भवेन्द्र नायमंवा युधि ।
यदन्तरिक्षे पतयन्ति पर्णिनो दिद्यवस्तिग्ममूर्धानः ॥ ११ ॥

अधं । स्म । नः । वृधे । भव । इन्द्र । नायम् । अव । युधि ।
यत् । अन्तरिक्षे । पतयन्ति । पर्णिनः । दिद्यवः । तिग्मऽमूर्धानः ॥ ११ ॥

हे vइन्द्र vअध vस्म तदानीं vनः अस्माकं vवृधे वर्धनाय vभव । अपि च vनायं योऽस्माकं नयो नेता vयुधि युद्धे तमपि vअव रक्ष । तदेवोक्तं कदेत्याह । vपर्णिनः पक्षवन्तः vतिग्ममूर्धानः तीक्ष्णास्याः vदिद्यवः दीप्ता बाणाः vयत्[1] यदा[1] vअन्तरिक्षे व्योम्नि vपतयन्ति शत्रुभिर्विसृष्टाः पतन्ति तदानीं वृधे भवेत्यन्वयः ॥

यत्र शूरासस्तन्वो वितन्वते प्रिया शर्म पितृणाम् ।
अधं स्मा यच्छ तन्वे तने च छर्दिरचित्तं यावय द्वेषः ॥ १२ ॥

यत्रं । शूरासः । तन्वः । विऽतन्वते । प्रिया । शर्म । पितृणाम् ।
अधं । स्म । यच्छ । तन्वे । तने । च । छर्दिः । अचित्तम् । यवय । द्वेषः ॥ १२ ॥

vयत्र यस्मिन् काले vशूरासः शूराः शौर्यवन्तो योद्धारः vतन्वः स्वकीयानि शरीराणि vवितन्वते विस्तारयन्ति स्वामिनो जयाय शत्रूणां पुरतो दर्शयन्ति[2] । तथास्मिन् काले vप्रिया प्रियाणि vशर्म शर्माणि स्थानानि vपितृणां जनकानां संबन्धीनि । तैरर्जितानीति यावत् । एतानि च वितन्वते शत्रूणां पुरस्तात् विस्तारयन्ति । परित्यजन्तीति यावत् । vअध vस्म अस्मिन् काले vतन्वे शरीराय vतने तनयाय vच vछर्दिः छादनम् आयुधानां निवारकं कवचम् vअचित्तं शत्रुभिरज्ञातं यथा भवति तथा vयच्छ प्रयच्छ । शत्रुज्ञानात् पूर्वमेव देहीत्यर्थः । अपि च vद्वेषः द्वेष्टॄन् शत्रून् vयावय तेभ्यो वियोजय ॥

यदिन्द्र सर्गे अर्वतश्चोदयासे महाधने ।
असमने अध्वनि वृजिने पथि श्येनाँइव श्रवस्यतः ॥ १३ ॥

यत् । इन्द्र । सर्गे । अर्वतः । चोदयासे । महाऽधने ।
असमने । अध्वनि । वृजिने । पथि । श्येनान्ऽइव । श्रवस्यतः ॥ १३ ॥

हे vइन्द्र vमहाधने जेतव्यस्य महतो[3] धनस्य[3] निमित्ते महति संग्रामे vसर्गे उद्योगे सति vअसमने विषमे vअध्वनि मार्गे vअर्वतः अस्मदीयानश्वान् vयत् यदा vचोदयासे प्रेरयसि[4] । vवृजिने कुटिले vपथि मार्गेऽन्तरिक्षलक्षणे vश्रवस्यतः श्रवोऽन्नमामिषरूपमात्मन इच्छतः vश्येनानिव यथामिषार्थिनः श्येना अन्तरिक्षे शीघ्रं गच्छन्ति तथास्मदीयानश्वान् यदा त्वं शीघ्रं गमयसि तदानीमस्माकं तन्वे तनयाय च छर्दिर्यच्छेति पूर्वस्यामृचि संबन्धः ॥

---

१. ज्ञ–' यद्यदा ' नास्ति । २. त-न-य-र–जयन्ति । ३. ख-ज्ञ-त-न-र–' महतो धनस्य ' नास्ति; ज्ञ–धनस्य । ४. ज्ञ-र–प्रेरये:; त२–प्रेरये; न–भ–प्रेरय ।

सिन्धूँरिव प्रवण आशुया यतो यदि क्लोशमनु ष्वणि।
आ ये वयो न वर्वृतत्यामिषि गृभीता बाह्वोर्गवि ॥ १४ ॥

सिन्धून्ऽइव। प्रवणे। आशुऽया। यतः। यदि। क्लोशम्। अनु। स्वनि।
आ। ये। वयः। न। वर्वृतति। आमिषि। गृभीताः। बाह्वोः। गवि ॥ १४ ॥

उक्तस्यैवार्थस्यातिशयप्रतिपादनार्थेयम्। "प्रवणे निम्नदेशे "सिन्धूनिव स्यन्दमाना नदीरिव "आशुया आशु शीघ्रं "यतः गच्छतोऽश्वान् हे इन्द्र "यदि चोदयासे प्रेरयसि[1]। कदा। "क्लोशमनु। क्लोश इति भयनाम। भयमनुलक्ष्य "स्वनि स्वने आक्रोशे सति। कीदृशास्ते अश्वाः। "बाह्वोः बाहुमूलयोः "गृभीताः कक्ष्यया बद्धाः "ये अश्वाः "गवि गोरूपे धने जेतव्ये सति "आ "वर्वृतति पुनःपुनरावर्तन्ते। "आमिषि आमिषे मांसे ग्रहीतव्ये सति "वयो "न यथा श्येनादयः पक्षिणः पुनःपुनरावर्तन्ते तद्वत्। एवंभूतानश्वान् भयेन क्रोशे सति यदा त्वं प्रेरयसि तदानीमस्मदीयेभ्यश्छर्दिः प्रयच्छेति संबन्धः। यद्यपि ऋषेर्युद्धे[2] प्रसक्तिर्नास्ति[2] तथापि राजपुरोहितत्वेन राजकीयानां पुरुषाणां जयः प्रार्थ्यत इति न कश्चिद्विरोधः ॥ ॥ २९ ॥

'स्वादुः' इत्येकत्रिंशदृचं चतुर्थं सूक्तं भरद्वाजपुत्रस्य गर्गस्यार्षम्। 'प्रस्तोक इत्' इत्येषा त्रिष्टुप्, 'दशाश्वान्' इत्यनुष्टुप्, 'दश रथान्' इति गायत्री, 'महि राधः' इति द्विपदा द्व्येकादशका, 'युजानो हरिता' इत्येषा बृहती, 'दिवस्पृथिव्याः' इति जगती शिष्टास्त्रिष्टुभः। आदितः पञ्चानामृचां सोमो देवता। 'अगव्यूति क्षेत्रम्' इत्यर्धर्चप्रथमपादे देवा उत्तरस्य भूमिस्तृतीयस्य बृहस्पतिश्चतुर्थस्येन्द्रः। 'प्रस्तोकः' इत्याद्यास्तिस्रः सृञ्जयपुत्रस्य राज्ञो दानस्तुतिरूपत्वात् तद्देवताकाः। 'वनस्पते वीड्वङ्गः' इत्ययं तृचो रथदेवत्यः। 'उप श्वासय' इति तृचो दुन्दुभिदेवत्यः। 'समश्वपर्णाः' इत्यर्धर्च ऐन्द्रः। शिष्टा इन्द्रदेवताकाः। तथा चानुक्रान्तं—'स्वादुरेकत्रिंशद्गर्गः पञ्चादौ सौम्योऽगव्यूत्यर्धर्चो लिङ्गोक्तदेवतः प्रस्तोक इति त्रिष्टुबनुष्टुब्गायत्री द्विपदा साञ्जयस्य प्रस्तोकस्य दानस्तुतिः परौ तृचौ रथदुन्दुभिदेवत्यावैन्द्रोऽन्त्योऽर्धर्चो युजानो बृहती त्रिष्टुम्महि द्विपदा दिवस्पृथिव्या जगती' इति। आग्निमारुत आदितश्चतस्रः शंसनीयाः। सूत्रितं च—'स्वादुष्किलायमिति चतस्रो मध्ये चाह्वानम्' (आश्व. श्रौ. ५. २०) इति ॥

स्वादुष्किलायं मधुमाँ उतायं तीव्रः किलायं रसवाँ उतायम्।
उतो न्व१स्य पपिवांसमिन्द्रं न कश्चन सहत आहवेषु ॥ १ ॥

स्वादुः। किल। अयम्। मधुऽमान्। उत। अयम्। तीव्रः। किल। अयम्। रसऽवान्। उत। अयम्।
उतो इति। नु। अस्य। पपिऽवांसम्। इन्द्रम्। न। कः। चन। सहते। आऽहवेषु ॥ १ ॥

"अयम् अभिषुतः सोमः "स्वादुः आस्वादनीयः "किल भवति। "उत अपि च "मधुमान् माधुर्यवांश्च "अयं सोमो भवति। तथा "अयं सोमः "तीव्रः "किल मदोत्पादने तीक्ष्णः खलु भवति। "उत अपि च "अयं सोमः "रसवान् सारवांश्च भवति। अनेन वाक्यचतुष्टयेन सोमस्य माधुर्यातिशयत्वं च प्रतिपादितम्[3]। "उतो अपि च "अस्य सोमस्य। द्वितीयार्थे षष्ठी। इमं सोमं "पपिवांसं पीतवन्तम् "इन्द्रम् "आहवेषु संग्रामेषु "न "कश्चन न कोऽपि "सहते अभिभवति। "नु इति पूरकः ॥

---

१. ख-ज्ञ-झ-त-न-भ-र-प्रेरयेः; श-प्रेरयसे। २. ख-°युद्धप्रसक्ति°। ३. त-प्रतिपाद्यते।

अयं स्वादुरिह मदिष्ठ आस यस्येन्द्रो वृत्रहत्ये ममाद ।
पुरूणि यश्च्यौत्ना शम्बरस्य वि नवतिं नव च देह्यो३ हन् ॥ २ ॥

अयम् । स्वादुः । इह । मदिष्ठः । आस । यस्य । इन्द्रः । वृत्रऽहत्ये । ममाद ।
पुरूणि । यः । च्यौत्ना । शम्बरस्य । वि । नवतिम् । नव । च । देह्यः । हन् ॥ २ ॥

इह अस्मिन् यज्ञे अयं सोमः स्वादुः आस्वादितः पीतः सन् मदिष्ठः अतिशयेन मदयिता आस बभूव । यस्य सोमस्य पानेन इन्द्रो वृत्रहत्ये वृत्रहननकाले ममाद मत्तो बभूव । यः सोमः शम्बरस्य असुरस्य पुरूणि बहूनि च्यौत्ना च्यौत्नानि बलानि जघान । तथा देह्यः दिग्धा उपचिता आसुरीः पुरीः तदीयान् देहान् वा नवतिं नव च नवोत्तरनवतिसंख्याका यः सोमः वि हन् व्यहन् अयं सोम इति प्रथमपादेन संबन्धः ॥

अयं मे पीत उदियर्ति वाचमयं मनीषामुशतीमजीगः ।
अयं षळुर्वीरमिमीत धीरो न याभ्यो भुवनं कच्चनारे ॥ ३ ॥

अयम् । मे । पीतः । उत् । इयर्ति । वाचम् । अयम् । मनीषाम् । उशतीम् । अजीगरिति ।
अयम् । षट् । उर्वीः । अमिमीत । धीरः । न । याभ्यः । भुवनम् । कत् । चन । आरे ॥३॥

अयं सोमः पीतः सन् मे मम वाचम् उदियर्ति उद्गमयति । अयम् एव सोमः उशतीं कान्तां मनीषां बुद्धिम् उत् अजीगः उद्गारयति । प्रकाशयति ॥ ‘ गॄ निगरणे ’ इत्यस्माण्ण्यन्ताल्लुङि चङि रूपम् ॥ अपि च अयं धीरः धीमान् सोमः षळुर्वीः ‘ षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्च ’ इति प्रतिपादिता[1] द्युपृथिव्याद्याः षट् अमिमीत निर्मितवान् । याभ्यः उर्वीभ्यः आरे दूरे विप्रकृष्टे देशे कच्चन किंचन भुवनं भूतजातं न भवति अपि तु आस्वेव सर्वं भूतजातं वर्तते तादृशीरुर्वीर्निर्मितवान् ॥

अयं स यो वरिमाणं पृथिव्या वर्ष्माणं दिवो अकृणोदयं सः ।
अयं पीयूषं तिसृषु प्रवत्सु सोमो दाधारोर्व१न्तरिक्षम् ॥ ४ ॥

अयम् । सः । यः । वरिमाणम् । पृथिव्याः । वर्ष्माणम् । दिवः । अकृणोत् । अयम् । सः ।
अयम् । पीयूषम् । तिसृषु । प्रवत्ऽसु । सोमः । दाधार । उरु । अन्तरिक्षम् ॥ ४ ॥

सः खलु अयं सोमः यः पृथिव्याः वरिमाणम् उरुत्वं विस्तृततरत्वम् अकृणोत् अकरोत् । तथायं सोमः दिवः द्युलोकस्य वर्ष्माणं संहतत्वं[2] दृढत्वमकृणोदकरोत् । अयं सोमः सः हि भवति । अपि च अयं सोमः तिसृषु ओषधीष्वप्सु गोषु च प्रवत्सु प्रकृष्टास्वेतासु पीयूषं रसं दाधार धारयति । तथा उरु विस्तीर्णम् अन्तरिक्षं च धारयति । तथा च मन्त्रान्तरं—‘त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः । त्वमा ततन्थोर्वन्तरिक्षम् ’ ( ऋ. सं. १. ९१. २२ ) इति ॥

---

१. घ-श–प्रतिपादनात् । २. ख-झ-भ-र–सहत्वम्; न–महत्त्वम् ।

अयं विदच्चित्रदृशीकमर्णः शुक्रसद्मनामुषसामनीके ।
अयं महान्महता स्कम्भनेनोद्द्यामस्तभ्नाद्वृषभो मरुत्वान् ॥ ५ ॥

अयम् । विदत् । चित्रऽदृशीकम् । अर्णः । शुक्रऽसद्मनाम् । उषसाम् । अनीके ।
अयम् । महान् । महता । स्कम्भनेन । उत् । द्याम् । अस्तभ्नात् । वृषभः । मरुत्वान् ॥ ५ ॥

अयं सोमः चित्रदृशीकं विचित्रदर्शनं यद्वा आश्चर्यत्वेन दर्शनीयम् अर्णः सर्वस्य प्रेरकं सौरं ज्योतिः विदत् लम्भयति । कस्मिन् काले । शुक्रसद्मनां शुक्रं निर्मलमन्तरिक्षं सद्म सदनं यासां तासाम् उषसाम् अनीके प्रमुखे । उषःकाल इत्यर्थः । अपि च महान् प्रवृद्धः अयं सोमः महता स्थविष्ठेन स्कम्भनेन स्तम्भनसाधनेन मध्यवर्तिनान्तरिक्षेण द्यां द्युलोकम् उत् अस्तभ्नात् ऊर्ध्वमस्थापयत् । यथाधो न पतति तथान्तरिक्षं तस्याधारत्वेन कृतवानित्यर्थः । कीदृशः सोमः । वृषभः वृष्टेर्जनयिता । सोमाहुत्या हि वृष्टिर्जन्यते । मरुत्वान् मरुद्भिर्युक्तः ॥ ॥ ३० ॥

धृषत्पिब कलशे सोममिन्द्र वृत्रहा शूर समरे वसूनाम् ।
माध्यंदिने सवन आ वृषस्व रयिस्थानो रयिमस्मासु धेहि ॥ ६ ॥

धृषत् । पिब । कलशे । सोमम् । इन्द्र । वृत्रऽहा । शूर । सम्ऽअरे । वसूनाम् ।
माध्यंदिने । सवने । आ । वृषस्व । रयिऽस्थानः । रयिम् । अस्मासु । धेहि ॥ ६ ॥

हे शूर शौर्यवन् इन्द्र वृत्रहा वृत्राणामावरकाणां शत्रूणां हन्ता त्वं वसूनां धनानां समरे संग्रामे निमित्तभूते[1] सति कलशे द्रोणकलशेऽवस्थितं सोमं धृषत् धृष्टं यथा भवति तथा पिब । अपि च माध्यंदिने सवने आ वृषस्व आसिञ्चस्व । जठरं सोमेन पूरय । सर्वैन्द्रं हि माध्यंदिनं सवनम् । किंच रयिस्थानः रयीणां धनानां स्थानभूतस्त्वं रयिं धनम् अस्मासु धेहि धारय ॥

इन्द्र प्र णः पुरएतेव पश्य प्र नो नय प्रतरं वस्यो अच्छ ।
भवा सुपारो अतिपारयो नो भवा सुनीतिरुत वामनीतिः ॥ ७ ॥

इन्द्र । प्र । नः । पुरएताऽइव । पश्य । प्र । नः । नय । प्रऽतरम् । वस्यः । अच्छ ।
भव । सुऽपारः । अतिऽपारयः । नः । भव । सुऽनीतिः । उत । वामऽनीतिः ॥ ७ ॥

हे इन्द्र त्वं पुरएतेव पुरतो गन्तेव नः अस्मान् प्र पश्य प्रकर्षेणेक्षस्व । यथा मार्गरक्षकः स्वयं पुरतो गच्छन्ननुगच्छतो रक्षणीयान् पथिकान् पश्यति तथा पश्येत्यर्थः । तथा वस्यः वसीयः श्रेष्ठं धनम् अच्छ आभिमुख्येन प्रतरं प्रकृष्टतरमतिशयेन प्र णय अस्मान् प्रापय । तथा सुपारः सुष्ठु पारयिता दुःखेभ्यस्तारयिता भव । तथा नः अस्मान् स्तोतॄन् अतिपारयः शत्रूनतिक्रामय । सुनीतिः शोभननयनश्चास्माकं भव । उत अपि च वामनीतिः वामानां वननीयानां धनानां नेता भव । यद्वा । अस्मदर्थं श्रेष्ठप्रापणो भव ॥

---

१. घ-श — निमित्ते ।

ऐन्द्रे पशौ ' उरुं नः ' इत्येषा वपाया याज्या । सूत्रितं च—' उरुं नो लोकमनु नेषि विद्वान् प्र ससाहिषे पुरुहूत शत्रून् ' ( आश्व. श्रौ. ३. ७ ) इति । होत्रकैः सदःप्रसर्पणसमयेऽप्येषा जप्या । सूत्रितं च—' उरुं नो लोकमनु नेषि विद्वानिति जपन्तः ' ( आश्व. श्रौ. ५. ३ ) इति । चातुर्विंशिकेऽन्यहर्गणेषु च द्वितीयादिष्वहःसु माध्यंदिनसवनेऽच्छावाकस्यैषा चारम्भणीया[1] । सूत्रितं च— ' उरुं नो लोकमनु नेषि विद्वानिति कद्वन्त आरम्भणीयाः' ( आश्व. श्रौ. ७. ४ ) इति ॥

उरुं नो लोकमनु नेषि विद्वान्त्स्वर्वज्ज्योतिरभयं स्वस्ति ।
ऋष्वा त इन्द्र स्थविरस्य बाहू उप स्थेयाम शरणा बृहन्ता ॥ ८ ॥

उरुम् । नः । लोकम् । अनु । नेषि । विद्वान् । स्वःऽवत् । ज्योतिः । अभयम् । स्वस्ति ।
ऋष्वा । ते । इन्द्र । स्थविरस्य । बाहू इति । उप । स्थेयाम । शरणा । बृहन्ता ॥ ८ ॥

हे इन्द्र ^v^विद्वान् जानंस्त्वम् ^v^उरुं विस्तीर्णं ^v^लोकं स्थानं स्वर्गाख्यं ^v^नः अस्मान् ^v^अनु ^v^नेषि अनुगमय । तथा ^v^स्वर्वत् सुखवत् ^v^अभयं भयरहितं ^v^ज्योतिः च ^v^स्वस्ति क्षेमेणानु नेषि अस्माननुगमय । हे ^v^इन्द्र ^v^स्थविरस्य स्थूलस्य वृद्धस्य ^v^ते तव संबन्धिनौ[2] ^v^ऋष्वा दर्शनीयौ ^v^बृहन्ता महान्तौ ^v^बाहू त्वदीयौ हस्तौ ^v^शरणा शरणौ रक्षकौ रक्षकतया ^v^उप ^v^स्थेयाम उपतिष्ठेम । सेवेमहि ॥

वरिष्ठे न इन्द्र वन्धुरे धा वहिष्ठयोः शतावन्नश्वयोरा ।
इषमा वक्षीषां वर्षिष्ठां मा नस्तारीन्मघवन्रायो अर्यः ॥ ९ ॥

वरिष्ठे । नः । इन्द्र । वन्धुरे । धाः । वहिष्ठयोः । शतऽवन् । अश्वयोः । आ ।
इषम् । आ । वक्षि । इषाम् । वर्षिष्ठाम् । मा । नः । तारीत् । मघऽवन् । रायः । अर्यः ॥ ९ ॥

हे ^v^इन्द्र ^v^वरिष्ठे उरुतमे विस्तीर्णतमे ^v^वन्धुरे आत्मीये रथे ^v^नः अस्मान् ^v^धाः धेहि । धारय । अपि च हे ^v^शतावन्[3] शतसंख्यधनेन्द्र ^v^वहिष्ठयोः वोढृतमयोः । आकारः समुच्चये । ^v^अश्वयोरा त्वदीययोरश्वयोश्चास्मान् धारय । तथा ^v^इषाम् अन्नानां मध्ये ^v^वर्षिष्ठां वृद्धतमाम् ^v^इषम् अन्नम् ^v^आ ^v^वक्षि अस्मदर्थमावह । आनय । हे ^v^मघवन् धनवन्निन्द्र ^v^अर्यः धनस्य स्वामी अन्यः कश्चित् ^v^नः अस्माकं ^v^रायः धनानि ^v^मा ^v^तारीत् मा हिंसीत् ॥

इन्द्र मृळ मह्यं जीवातुमिच्छ चोदय धियमयसो न धाराम् ।
यत्किं चाहं त्वायुरिदं वदामि तज्जुषस्व कृधि मा देववन्तम् ॥ १० ॥

इन्द्र । मृळ । मह्यम् । जीवातुम् । इच्छ । चोदय । धियम् । अयसः । न । धाराम् ।
यत् । किम् । च । अहम् । त्वाऽयुः । इदम् । वदामि ।
तत् । जुषस्व । कृधि । मा । देवऽवन्तम् ॥ १० ॥

हे ^v^इन्द्र ^v^मृळ मृळय । अस्मान् सुखय । ^v^जीवातुं जीवनौषधं च ^v^मह्यं दातुम् ^v^इच्छ । तथा ^v^धियं बुद्धिं ^v^चोदय । स्तुतिविषयां कर्मविषयां वा प्रेरय । तीक्ष्णीकुरु । ^v^अयसो ^v^न

१. ज्ञ-ञ्ञ-त२-र—वारम्भणीया । २. ज्ञ—संबन्धिनो वयम् । ३. घ-ज्ञ-त-र-श—शतवन् ।

ᵛधाराम् अयोमयस्य खड्गादेर्धारामिव । सा यथा सूक्ष्मा तद्वत् सूक्ष्मविषयां धियं चोदयेत्यर्थः । किंच ᵛत्वायुः त्वामात्मन इच्छन् ᵛइदम् इदानीं यत्किंचन ᵛअहं ᵛवदामि समीचीनमसमीचीनं वा ᵛतज्जुषस्व सेवस्व । ᵛमा मां च ᵛदेववन्तं रक्षकैर्देवैरुपेतं ᵛकृधि कुरु ॥ ॥ ३१ ॥

आयुष्कामेष्टयामिन्द्रस्य त्रातुः ' त्रातारम् ' इत्यनुवाक्या । सूत्रितं च—' त्रातारमिन्द्रमवितारमिन्द्रं मा ते अस्यां सहसावन्परिष्टौ ' ( आश्व. श्रौ. २. १० ) इति[1] ॥

त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं शूरमिन्द्रम् ।
ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः ॥ ११ ॥

त्रातारम् । इन्द्रम् । अवितारम् । इन्द्रम् । हवेऽहवे । सुऽहवम् । शूरम् । इन्द्रम् ।
ह्वयामि । शक्रम् । पुरुऽहूतम् । इन्द्रम् । स्वस्ति । नः । मघऽवा । धातु । इन्द्रः ॥ ११ ॥

ᵛत्रातारं शत्रुभ्यः पालयितारम् ᵛइन्द्रम् आह्वयामि । तथा ᵛअवितारं कामैस्तर्पयितारम् ᵛइन्द्रम् आह्वयामि । ᵛहवेहवे सर्वेष्वाहवनेषु ᵛसुहवं सुखेनाह्वातुं[2] शक्यं ᵛशूरं शौर्यवन्तं ᵛशक्रं सर्वकार्येषु शक्तं ᵛपुरुहूतं पुरुभिर्बहुभिः पालनार्थमाहूतमेवंविधम् ᵛइन्द्रं ᵛह्वयामि आह्वयामि । एवमाहूतः ᵛमघवा धनवान् सः ᵛइन्द्रः ᵛस्वस्ति अविनाशं ᵛनः अस्मभ्यं ᵛधातु ददातु । यद्वा[3] । अस्माकं विदधातु[3] ॥

इन्द्रः सुत्रामा स्ववाँ अवोभिः सुमृळीको भवतु विश्ववेदाः ।
बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम ॥ १२ ॥

इन्द्रः । सुऽत्रामा । स्वऽवान् । अवःऽभिः । सुऽमृळीकः । भवतु । विश्वऽवेदाः ।
बाधताम् । द्वेषः । अभयम् । कृणोतु । सुऽवीर्यस्य । पतयः । स्याम ॥ १२ ॥

ᵛसुत्रामा सुष्ठु त्राता ᵛस्ववान् धनवान् सः ᵛइन्द्रः ᵛअवोभिः रक्षणैः ᵛसुमृळीकः सुष्ठु सुखयिता ᵛभवतु । तथा च ᵛविश्ववेदाः सर्वधनः सर्वविद्वान् वा स इन्द्रः ᵛद्वेषः द्वेष्टॄन् शत्रून् ᵛबाधतां हिनस्तु । ᵛअभयं भयरहितं चास्माकं ᵛकृणोतु करोतु । वयं च तत्प्रसादात् ᵛसुवीर्यस्य शोभनवीर्यस्य ᵛपतयः ᵛस्याम भवेम ॥

तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ।
स सुत्रामा स्ववाँ इन्द्रो अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु ॥ १३ ॥

तस्य । वयम् । सुऽमतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ।
सः । सुऽत्रामा । स्वऽवान् । इन्द्रः । अस्मे इति । आरात् । चित् । द्वेषः । सनुतः । युयोतु ॥ १३ ॥

ᵛयज्ञियस्य यज्ञार्हस्य ᵛसुमतौ शोभनायामनुग्रहात्मिकायां बुद्धौ ᵛवयं ᵛस्याम । तद्विषयभूताः[4] भवेम । तथा ᵛभद्रे कल्याणे ᵛसौमनसे सुमनसो भावे ᵛअपि तदीये स्याम भवेम । स

---

१. न–इति । दीक्षितानामुपतापे एषा ऋग्विनियुक्ता । सूत्रितं च दीक्षितानामुपतापे इति खण्डे–त्रातारमिन्द्रमवितारमिति तार्क्ष्यादिः ( आश्व. श्रौ. ६. ९ ) इति । २. ख-ज्ञ-ज्ञ-त-न-भ-र–सुखेन ह्वातुम् । ३. ख-भ–' यद्वा ... विदधातु ' नास्ति । ४. ख-ज्ञ-ज्ञ-त-न-भ-र–विषयभूताः ।

इन्द्रोऽस्मास्वनुग्रहात्मिकां बुद्धिं सौमनस्यं च करोत्वित्यर्थः। ᵛसुत्रामा सुष्ठु त्राता ᵛस्ववान् धनवान् ᵛसः ᵛइन्द्रः च ᵛअस्मे अस्मत्तः ᵛआराच्चित् दूरदेश एव ᵛद्वेषः द्वेष्टॄन् ᵛसनुतः। अन्तर्हितनामैतत्। अन्तर्हितान् ᵛयुयोतु पृथक्करोतु ॥

**अव त्वे इन्द्र प्रवतो नोर्मिर्गिरो ब्रह्माणि नियुतो धवन्ते।**
**उरू न राधः सवना पुरूण्यपो गा वज्रिन्युवसे समिन्दून् ॥ १४ ॥**

अव। त्वे इति। इन्द्र। प्रऽवतः। न। ऊर्मिः। गिरः। ब्रह्माणि। निऽयुतः। धवन्ते।
उरु। न। राधः। सवना। पुरूणि। अपः। गाः। वज्रिन्। युवसे। सम्। इन्दून् ॥१४॥

हे ᵛइन्द्र ᵛत्वे त्वां ᵛनियुतः स्तोतुः ᵛगिरः उक्थात्मिका वाचः ᵛब्रह्माणि सामरूपाणि स्तोत्राणि च ᵛअव ᵛधवन्ते अभिगच्छन्ति। तत्र दृष्टान्तः। ᵛऊर्मिः जलसंघः ᵛप्रवतो ᵛन प्रवणदेशानिव। यथोच्छ्रितात् स्थलात् निम्नदेशं शीघ्रं गच्छति तद्वत्। नशब्दः समुच्चये। ᵛउरु उरूणि बहु ᵛराधः राधांसि च हविर्लक्षणानि धनानि ᵛपुरूणि बहूनि ᵛसवना सवनानि बहवोऽभिषुताः सोमाश्च त्वामेवाभिगच्छन्ति[1]। हे ᵛवज्रिन् वज्रवन्निन्द्र ᵛअपः वसतीवर्याख्याः ᵛगाः गोविकारान् शृतदध्यादीन् श्रपणार्थान् ᵛइन्दून् सोमांश्च ᵛसं ᵛयुवसे सम्यक् मिश्रयसि। त्वां यष्टुं वसतीवरीभिरभिषुत्य[2] तं[2] सोममाशिरादिभिः श्रपणद्रव्यैः संस्कुर्वन्तीत्यर्थः ॥

**क ईं स्तवत्कः पृणात्को यजाते यदुग्रमिन्मघवा विश्वहावेत्।**
**पादाविव प्रहरन्नन्यमन्यं कृणोति पूर्वमपरं शचीभिः ॥ १५ ॥**

कः। ईम्। स्तवत्। कः। पृणात्। कः। यजाते। यत्। उग्रम्। इत्। मघऽवा। विश्वहा। अवेत्।
पादौऽइव। प्रऽहरन्। अन्यम्ऽअन्यम्। कृणोति। पूर्वम्। अपरम्। शचीभिः ॥ १५ ॥

ᵛकः स्तोता ᵛईम् एनमिन्द्रं ᵛस्तवत् स्तुयात्। स्तोतुं शक्नुयात्। ᵛकः वा ᵛपृणात् एनं प्रीणयेत्। ᵛकः च ᵛयजाते एनं हविर्भिर्यजेत[3]। ᵛयत् यस्मात् अयं ᵛमघवा धनवानिन्द्रः ᵛउग्रमित् उद्गूर्णमेव ᵛविश्वहा सर्वदा ᵛअवेत् आत्मानं वेत्ति जानाति सर्वदा उग्र एव भवति तस्मात् कारणात् न कोऽप्येनं स्तोतुं प्रीणयितुं यष्टुं वा शक्नोतीति भावः। इतोऽपि स्तुत्यादेरविषय इत्याह। यस्मादयमिन्द्रः ᵛशचीभिः आत्मीयाभिः प्रज्ञाभिः ᵛपूर्वं प्रथमभाविनं सन्तं स्तोतारम् ᵛअपरं पश्चाद्भाविनं च ᵛअन्यमन्यं परस्परव्यतिहारेण ᵛकृणोति करोति। यः प्रथमभावी मुख्यः स्तोता तं जघन्यं करोति यश्च जघन्यः स्तोता तं मुख्यं करोति। तत्र दृष्टान्तः। ᵛप्रहरन् ᵛपादाविव। यथा पादौ प्रहरन् मार्गे प्रक्षिपन् पुरुषः पूर्वं पादमपरं करोत्यपरं च पूर्वं तद्वत्। अतोऽपि कारणात् इन्द्रः स्तुत्यादेरविषय इति भावः। एतदादिकेन पञ्चर्चेन इन्द्रस्यातिस्वातन्त्र्यं प्रतिपाद्यते ॥ ॥ ३२ ॥

---

१. श–°वावगच्छन्ति। २. ख-ज्ञ-झ-न-भ–°रभिषुतम्; त२–°रभिषुत्यं तम्। ३. ख-ज्ञ-झ-त-न-भ–°यजते।

शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः ।
एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥ १६ ॥

शृण्वे । वीरः । उग्रम्ऽउग्रम् । दमऽयन् । अन्यम्ऽअन्यम् । अतिऽनेनीयमानः ।
एधमानऽद्विट् । उभयस्य । राजा । चोष्कूयते । विशः । इन्द्रः । मनुष्यान् ॥ १६ ॥

अयमिन्द्रः ^v^वीरः वीर्यवानिति ^v^शृण्वे श्रूयते। किं कुर्वन्। ^v^उग्रमुग्रम् उद्गूर्णमुद्गूर्णं बलिनं शत्रुं प्रति ^v^दमायन्। दमः दमनम्। बाधनमिच्छन्। ^v^अन्यमन्यं प्रथमं नेतव्यमन्यं पश्चान्नेतव्यं चान्यं पूर्वमपरं परस्परव्यतिहारेण स्तोतॄन् ^v^अतिनेनीयमानः अत्यन्तं पुनःपुनर्नयन्। अपि[1] च[1] ^v^एधमानद्विट् एधमानानां वर्धमानानामसुन्वतां द्वेष्टा ^v^उभयस्य दिव्यस्य पार्थिवस्य च धनस्य ^v^राजा ईश्वरोऽयम् ^v^इन्द्रः ^v^विशः निवेशयितॄन् स्वस्य परिचारकान् ^v^मनुष्यान् ^v^चोष्कूयते रक्षणार्थं पुनःपुनराह्वयति ॥

परा पूर्वेषां सख्या वृणक्ति वितर्तुराणो अपरेभिरेति ।
अनानुभूतीरवधून्वानः पूर्वीरिन्द्रः शरदस्तर्तरीति ॥ १७ ॥

परा । पूर्वेषाम् । सख्या । वृणक्ति । विऽतर्तुराणः । अपरेभिः । एति ।
अननुऽभूतीः । अवऽधून्वानः । पूर्वीः । इन्द्रः । शरदः । तर्तरीति ॥ १७ ॥

अयमिन्द्रः ^v^पूर्वेषां पूर्वभाविनां प्रशस्तानां कर्मणां कुर्वतां पुरुषाणां ^v^सख्या सखित्वानि ^v^परा ^v^वृणक्ति वर्जयति। अपि च ^v^वितर्तुराणः तान् हिंसन् ^v^अपरेभिः अपरैः अमुख्यैरप्रशस्तैरपि कर्मानुष्ठातृभिः[2] ^v^एति सख्यं प्राप्नोति। तथा ^v^अनानुभूतीः अपरिचरणाः प्रजाः ^v^अवधून्वानः परित्यजन् ^v^पूर्वीः बह्वीः ^v^शरदः संवत्सरान् अयम् ^v^इन्द्रः ^v^तर्तरीति भृशमतिक्रामति। स्तोतृभिः सह सख्यं कुर्वन् चिरकालं वसतीत्यर्थः ॥

रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।
इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ॥ १८ ॥

रूपम्ऽरूपम् । प्रतिऽरूपः । बभूव । तत् । अस्य । रूपम् । प्रतिऽचक्षणाय ।
इन्द्रः । मायाभिः । पुरुऽरूपः । ईयते । युक्ताः । हि । अस्य । हरयः । शता । दश ॥ १८ ॥

अयमिन्द्रः ^v^प्रतिरूपः रूपाणां प्रतिनिधिः सन् ^v^रूपंरूपं तत्तदग्न्यादिदेवतास्वरूपं ^v^बभूव। प्राप्नोति। 'भू प्राप्तौ' इति धातुः। इन्द्रः स्वमाहात्म्येन तत्तद्देवतारूपो भवतीत्यर्थः। ^v^अस्य चेन्द्रस्य ^v^तत् प्राप्तमग्न्यादिदेवतास्वरूपं ^v^प्रतिचक्षणाय प्रतिनियतदर्शनाय अयमग्निरयं विष्णुरयं रुद्र इत्येवमसंकीर्णदर्शनाय भवति। अपि चायम् ^v^इन्द्रो ^v^मायाभिः। ज्ञाननामैतत्। ज्ञानैः आत्मीयैः संकल्पैः ^v^पुरुरूपः बहुविधशरीरः सन् ^v^ईयते बहून् यजमानान् गच्छति। ननु द्वावेवास्याश्वावेकश्च रथः कथमनेन युगपद्बहून् गच्छतीत्यत[3] आह। ^v^अस्य इन्द्रस्य ^v^हरयः अश्वाः ^v^युक्ताः रथे योजिताः

१. ख-झ-भ-'अपि च' नास्ति। २. भ-°ष्ठातृभिः स्तोतृभिः। ३. श-गच्छतीत्येतत्।

ᵛशता ᵛदश सहस्रसंख्याका अपरिमिताः सन्ति । ᵛहि यस्मादेवं तस्माद्बहुशरीराणि स्वीकृत्य युगपत् हविष्मतो यजमानान् गच्छतीत्यर्थः ॥ अन्ये मन्यन्ते । 'इदि परमैश्वर्ये' इत्यस्य धातोरर्थानुगमात् इन्द्रः परमात्मा । स चाकाशवत् सर्वगतः सदानन्दरूपः । स एव उपाधिभिरन्तःकरणैः प्रतिशरीरमवच्छिन्नः[1] सन् जीवात्मेति व्यपदिश्यते । स एव अनादिमायाशक्तिभिः वियदादिजगदात्मना विवर्तते शब्दादिविषयहरणशीला इन्द्रियवृत्तयश्च तेनैव संबद्धाः । एतत्सर्वं तस्य परमात्मनो यद्वास्तवं रूपं तस्य दर्शनायेति । अयमर्थोऽनया प्रतिपाद्यते । रूपंरूपम् । रूप्यत इति रूपं शरीरादि । प्रतिशरीरं चिद्रूपः सर्वगतः परमात्मा प्रतिरूपः प्रतिबिम्बरूपः सन् सर्वाणि शरीराणि बभूव । प्राप्नोत् । तच्च प्राप्तं प्रतिबिम्बरूपमस्य परमात्मनः प्रतिचक्षणाय प्रतिनियताकारस्य दर्शनाय भवति । स चेन्द्रः परमेश्वरो मायाभिर्मायाशक्तिभिः पुरुरूपो वियदादिभिर्बहुविधरूपैरुपेतः सन् ईयते चेष्टते । एतदप्यस्य परमात्मनः प्रतिचक्षणाय भवति । अस्य च दश शता सहस्रसंख्याका हरय इन्द्रियवृत्तयः युक्ता विषयग्रहणायोद्युक्ताः सन्ति । तदप्यस्य वास्तवरूपस्य दर्शनाय भवतीति । एवं स्थूलसूक्ष्मशरीरयोर्वियदादिमहाप्रपञ्चस्य[2] च तत्त्वज्ञानहेतुत्वमनया प्रत्यपादीति ॥

युजानो हरिता रथे भूरि त्वष्टेह राजति ।
को विश्वाहा द्विषतः पक्ष आसत उतासीनेषु सूरिषु ॥ १९ ॥

युजानः । हरिता । रथे । भूरि । त्वष्टा । इह । राजति ।
कः । विश्वाहा । द्विषतः । पक्षः । आसते । उत । आसीनेषु । सूरिषु ॥ १९ ॥

ᵛहरिता हरितावश्वौ ᵛरथे ᵛयुजानः युञ्जन् ᵛत्वष्टा दीप्त इन्द्रः ᵛइह त्रैलोक्ये ᵛभूरि भूरिषु बहुषु प्रदेशेषु ᵛराजति दीप्यते । ᵛउत अपि च ᵛसूरिषु स्तोतृष्वस्मादशेषु ᵛआसीनेषु सत्सु ᵛविश्वाहा सर्वदा इन्द्रादन्यः ᵛकः नाम ᵛद्विषतः शत्रोः ᵛपक्षः पाचको बाधकः सन् ᵛआसते आस्ते । इन्द्र एव सर्वदा शत्रून् बाधत इत्यर्थः । यद्वा । पक्ष इति सकारान्तं समीपवचनम् । इन्द्रादन्यः को नाम द्विषतः शत्रोः समीप आसते आस्ते । इन्द्र एव निर्भयः सन् शत्रुसमीपे स्थातुं शक्नोतीति भावः ॥

अगव्यूति क्षेत्रमागन्म देवा उर्वी सती भूमिरंहूरणाभूत् ।
बृहस्पते प्र चिकित्सा गविष्टावित्था सते जरित्र इन्द्र पन्थाम् ॥ २० ॥

अगव्यूति । क्षेत्रम् । आ । अगन्म । देवाः । उर्वी । सती । भूमिः । अंहूरणा । अभूत् ।
बृहस्पते । प्र । चिकित्स । गोऽइष्टौ । इत्था । सते । जरित्रे । इन्द्र । पन्थाम् ॥ २० ॥

अत्रोक्तम्—'अरण्ये निर्जने गर्गो देवान् भूमिं बृहस्पतिम् । इन्द्रं चास्तौत् स्वरक्षार्थमृचा मार्गच्युतोऽनया' इति, 'अगव्यूतीत्यत्र देवान् पादे भूमिमथोत्तरे । बृहस्पतिं तृतीये तु इन्द्र[3] एवोत्तमे स्तुतः[3]' इति च ॥ हे ᵛदेवाः ᵛअगव्यूति अगोचरं गोसंचाररहितं निर्जनं ᵛक्षेत्रं देशम् ᵛआगन्म आगताः स्मः । अतो मां[4] रक्षतेति शेषः । ᵛउर्वी विस्तीर्णा ᵛसती ᵛभूमिः च ᵛअंहूरणा । अंहव आहन्तारो दस्यवः तेषां रमणा रमयित्री ᵛअभूत् भवति । अस्मानतः सापि रक्षतु । हे ᵛबृहस्पते

---

१. श–°मवस्थितः । २. श–°मायाप्रपञ्चस्य । ३. ज्ञ–इन्द्रमस्तौदथोत्तमे । ४. ख–भ–अस्मान् ।

त्वं गविष्टौ गवामन्वेषण उपाये प्र चिकित्स प्रवेदय[1]। इत्था इत्थमनेन प्रकारेण सते भवते दुःखमनुभवते जरित्रे स्तोत्रे मह्यं हे इन्द्र पन्थां पन्थानं मार्गं प्र चिकित्स प्रज्ञापय ॥ ॥ ३३ ॥

दिवेदिवे सदृशीरन्यमर्धं कृष्णा असेधदप सद्मनो जाः ।
अहन्दासा वृषभो वस्नयन्तोदव्रजे वर्चिनं शम्बरं च ॥ २१ ॥

दिवेऽदिवे । सऽदृशीः । अन्यम् । अर्धम् । कृष्णाः । असेधत् । अप । सद्मनः । जाः ।
अहन् । दासा । वृषभः । वस्नऽयन्ता । उदऽव्रजे । वर्चिनम् । शम्बरम् । च ॥ २१ ॥

अयमिन्द्रः सद्मनः सदनात् स्वकीयादन्तरिक्षैकदेशात् स्थानात् जाः जायमानः सूर्यात्मना प्रादुर्भवन् सदृशीः तुल्यरूपाः कृष्णाः कृष्णवर्णा रात्रीः दिवेदिवे प्रतिदिवसम् अप असेधत् निवर्तयति। किमर्थम्। अन्यम् अर्धम् अहरर्धम्[2] अपरं भागं प्रकाशयितुम्। अहोरात्रात्मकस्य दिवसस्य हि रात्रिरेको भागः। अपि च वृषभः वर्षयिता स इन्द्रः दासा दासौ उपक्षपयितारौ यज्ञकर्मणां वस्नयन्ता। वस्नं निवासहेतुभूतं धनम्। तदिच्छन्तौ वर्चिनं शम्बरं च एतत्संज्ञावसुरौ उदव्रजे। उदकानि व्रजन्त्यस्मिन्नित्युदव्रजो देशविशेषः। तस्मिन् अहन् हतवान् ॥

प्रस्तोक इन्नु राधसस्त इन्द्र दश कोशयीर्दश वाजिनोऽदात् ।
दिवोदासादतिथिग्वस्य राधः शाम्बरं वसु प्रत्यग्रभीष्म ॥ २२ ॥

प्रऽस्तोकः । इत् । नु । राधसः । ते । इन्द्र । दश । कोशयीः । दश । वाजिनः । अदात् ।
दिवःऽदासात् । अतिथिऽग्वस्य । राधः । शाम्बरम् । वसु । प्रति । अग्रभीष्म ॥ २२ ॥

एतदाद्यासु चतसृषु सृञ्जयपुत्रस्य प्रस्तोकस्य राज्ञो दानस्तुतिः। स एव दिवोदासोऽश्वथोऽतिथिग्व इति चाख्यायते। हे इन्द्र ते तव राधसः आराधयितुः स्तोतुः। चतुर्थ्यर्थे षष्ठी। त्वां स्तुवते मह्यं गर्गाय प्रस्तोकः राजा दश कोशयीः सुवर्णपूर्णान् दशसंख्याकान् कोशान् दश वाजिनः अश्वांश्च नु क्षिप्रम् अदात् प्रायच्छत्। इत् इति पूरणः। वयं च तस्मात् दिवोदासात् एतत्संज्ञात् प्रस्तोकात् वसु धनं प्रत्यग्रभीष्म प्रतिगृहीतवन्तः। कीदृशम्। अतिथिग्वस्य तस्यैव प्रस्तोकस्य स्वभूतं राधः राधकं शाम्बरं शम्बरादसुरादागतम्। शम्बरं हत्वा त्वया दत्तं तदीयमित्यर्थः ॥

दशाश्वान्दश कोशान्दश वस्त्राधिभोजना ।
दशो हिरण्यपिण्डान्दिवोदासादसानिषम् ॥ २३ ॥

दश । अश्वान् । दश । कोशान् । दश । वस्त्रा । अधिऽभोजना ।
दशो इति । हिरण्यऽपिण्डान् । दिवःऽदासात् । असानिषम् ॥ २३ ॥

दश दशसंख्याकान् अश्वान् दशसंख्याकान् हिरण्यपूर्णान् कोशान् अधिभोजना। भोजनमिति धननाम। अधिकं धनं येषां मूल्यम्। तादृशानि दशसंख्याकानि वस्त्राणि[3] च। दशो दश च

१. ख-न-भ—प्रचोदय; त—प्रदेवय। २. ज्ञ-त-न—अपरार्धम्; श—अहरात्मकम्। ३. घ—वस्त्रा वस्त्राणि।

दशसंख्याकांश्च ^v^हिरण्यपिण्डान् सुवर्णपिण्डानेतान् सर्वान् ^v^दिवोदासात् प्रस्तोकादहम् ^v^असानिषं समभजम् । लब्धवानस्मि ॥

दश रथान्प्रष्टिमतः शतं गा अथर्वभ्यः । अश्वथः पायवेऽदात् ॥ २४ ॥

दश । रथान् । प्रष्टिऽमतः । शतम् । गाः । अथर्वऽभ्यः ।

अश्वथः । पायवे । अदात् ॥ २४ ॥

^v^दश दशसंख्याकान् ^v^प्रष्टिमतः । प्रष्टिस्त्रिपद आधारः । तद्वद्वहन्तीति प्रष्टयोऽश्वाः । तद्युक्तान् ^v^रथान् ^v^शतं शतसंख्याकाः ^v^गाः च ^v^अथर्वभ्यः अथर्वगोत्रेभ्य ऋषिभ्यः ^v^पायवे भरद्वाजपुत्राय एतत्संज्ञायास्मद्भ्रात्रे च ^v^अश्वथः अश्ववानेतत्संज्ञः प्रस्तोकः ^v^अदात् दत्तवान् ॥

महि राधो विश्वजन्यं दधानान्भरद्वाजान्त्सार्ञ्जयो अभ्ययष्ट ॥ २५ ॥

महि । राधः । विश्वऽजन्यम् । दधानान् । भरत्ऽवाजान् । सार्ञ्जयः । अभि । अयष्ट ॥२५॥

^v^विश्वजन्यं सर्वजनहितं ^v^महि महत् ^v^राधः धनं ^v^दधानान् धारयतः ^v^भरद्वाजान् भरद्वाजपुत्रानस्मान् ^v^सार्ञ्जयः सृञ्जयपुत्रः प्रस्तोकः ^v^अभ्ययष्ट अपूजयत्[1] ॥ ॥ ३४ ॥

'वनस्पते' इत्येषा रथारोहणे विनियुक्ता । सूत्रितं च—'वनस्पते वीड्वङ्गो हि भूया इत्येतयान्यान्यपि वानस्पत्यानि' ( आश्व. गृ. २. ६. ५ ) इति ॥

वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः ।
गोभिः संनद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ॥ २६ ॥

वनस्पते । वीळुऽअङ्गः । हि । भूयाः । अस्मत्ऽसखा । प्रऽतरणः । सुऽवीरः ।
गोभिः । सम्ऽनद्धः । असि । वीळयस्व । आऽस्थाता । ते । जयतु । जेत्वानि ॥ २६ ॥

हे ^v^वनस्पते वनस्पतिविकार रथ त्वं ^v^वीड्वङ्गः दृढावयवः ^v^भूयाः भव । ^v^अस्मत्सखा वयं सखायो यस्य स तादृशश्च भव । ^v^प्रतरणः प्रवर्धयिता ^v^सुवीरः शोभनैर्वीरैः शूरभटैः पुत्रादिभिर्वा युक्तश्च भव । अपि च त्वं ^v^गोभिः गोविकारैश्चर्मभिः ^v^संनद्धो ^v^असि सम्यक् बद्धो भवसि । तादृशस्त्वं ^v^वीळयस्व अस्मान् दृढीकुरु । ^v^ते[2] तव ^v^आस्थाता[2] त्वयि अवस्थितो रथी च ^v^जेत्वानि जेतव्यानि शत्रुसैन्यानि ^v^जयतु ॥

दिवस्पृथिव्याः पर्योज उद्भृतं वनस्पतिभ्यः पर्याभृतं सहः ।
अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्रं हविषा रथं यज ॥ २७ ॥

दिवः । पृथिव्याः । परि । ओजः । उत्ऽभृतम् । वनस्पतिऽभ्यः । परि । आऽभृतम् । सहः ।
अपाम् । ओज्मानम् । परि । गोभिः । आऽवृतम् । इन्द्रस्य । वज्रम् । हविषा । रथम् । यज ॥२७॥

---

१. ख–अभ्यपूजयतु; झ-न-भ-य–अभ्यपूजयत्; त२–पूजयत्; श–पूजयत । २. य–आस्थाता ते ।

दिवः द्युलोकात् पृथिव्याः भूमेश्च उद्भृतम् उद्धृतं सारत्वेनोपात्तं यत् ओजः बलमस्ति तद्रूपम्। वनस्पतिविकारत्वाद्रथस्य। वनस्पतयो हि पृथिव्याः सारभूताः ते च द्युसंबन्धिभिरुदकैः प्रवृद्धाः। अतो रथस्य लोकद्वयसारत्वमुपपन्नम्। परि[1] पञ्चम्यर्थानुवादी। अपि च वनस्पतिभ्यः वृक्षेभ्यः। परि पूर्ववत्। आभृतम् आहृतं सहः बलरूपम् अपाम् उदकानाम् ओज्मानं प्रेरकम्। यद्वा। ओज्मा वेगः। अपां वेग इव वेगवन्तं गोभिः गोविकारैश्चर्मभिः परि परितः आवृतम् आवेष्टितम् इन्द्रस्य वज्रं वज्रैकदेशम्। श्रूयते हि—‘इन्द्रो वृत्राय वज्रमुदयच्छत् स त्रेधा व्यभवत् स्फ्यस्तृतीयं रथस्तृतीयं यूपस्तृतीयम्’ इति। एवंगुणविशिष्टं रथं हविषा पुरोडाशादिना हे अध्वर्यो यज॥ नूनमेषोत्तरा च रथदेवत्यस्य हविषो याज्यानुवाक्ये लिङ्गादवगन्तव्ये॥

इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः।
सेमां नो हव्यदातिं जुषाणो देव रथ प्रति हव्या गृभाय॥ २८॥

इन्द्रस्य। वज्रः। मरुताम्। अनीकम्। मित्रस्य। गर्भः। वरुणस्य। नाभिः।
सः। इमाम्। नः। हव्यऽदातिम्। जुषाणः। देव। रथ। प्रति। हव्या। गृभाय॥ २८॥

यो रथः इन्द्रस्य वज्रः उक्तप्रकारेण वज्रैकदेशः मरुताम् एतत्संज्ञानां देवगणानाम् अनीकम् अग्रभूतं तद्वच्छीघ्रगामी मित्रस्य अहरभिमानिनो देवस्य गर्भः गर्भवदन्तर्वर्तमानः। अहनि हि रथः संचरति। वरुणस्य रात्र्यभिमानिदेवस्य नाभिः नाभिस्थानीयः। नाभिर्यथा देहमध्ये नैश्चल्येनावतिष्ठते तद्वत् रात्रौ क्वचिदवस्थितः। हे देव द्योतमान रथ य उक्तगुणः सः तादृशस्त्वम् इमां नः अस्मदीयां हव्यदातिं हविर्दानवतीं यागक्रियां जुषाणः सेवमानः सन् हव्या हव्यान्यस्मदीयानि हवींषि प्रति गृभाय प्रतिगृहाण॥

परेण तृचेन संग्रामे दुन्दुभिरभिमर्शनीयः। सूत्रितं च—‘उप श्वासय पृथिवीमुत द्यामिति तृचेन दुन्दुभिमभिमृशेत्’ (आश्व. गृ. ३. १२. १७) इति॥

उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत्।
स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अप सेध शत्रून्॥ २९॥

उप। श्वासय। पृथिवीम्। उत। द्याम्। पुरुऽत्रा। ते। मनुताम्। विऽस्थितम्। जगत्।
सः। दुन्दुभे। सऽजूः। इन्द्रेण। देवैः। दूरात्। दवीयः। अप। सेध। शत्रून्॥ २९॥

हे दुन्दुभे पृथिवीमुत अपि च द्यां दिवम् उप श्वासय आत्मीयेन जयघोषेणाश्वासय। यथा लोकद्वयं त्वदीयेन शब्देनापूरितं भवति तादृशं शब्दं कुर्वित्यर्थः। अपि च विस्थितं[2] विशेषेण स्थितं जगत् स्थावरं जङ्गमं चोभयविधं प्राणिजातं ते त्वदीयं शब्दं पुरुत्रा बहुधा मनुतां मन्यताम्। जानातु। हे दुन्दुभे सः त्वम् इन्द्रेण अन्यैः देवैः च सजूः सह दूराद्दवीयः दूरादपि दूरतरं[3] शत्रून् अस्मदीयान् अप सेध अपगमय। अत्र निरुक्तं—‘दुन्दुभिरिति शब्दानुकरणं द्रुमो भिन्न इति वा दुन्दुभ्यतेर्वा स्याद्धधकर्मणः[4]’ (निरु. ९. १२) इत्यादि॥

---

१. ख-ङ्ग-त-न-भ—परिः। २. ख-ङ्ग-न-भ—विष्ठितम्; त—स्थितम्। ३. ख-ङ्ग-न-भ-य—दूरतरमतिशयेन दूरतरम्। ४. ङ्ग—स्याच्छब्दकर्मणः।

आ क्रन्दय बलमोजो न आ धा निः ष्टनिहि दुरिता बाधमानः ।
अप प्रोथ दुन्दुभे दुच्छुना इत इन्द्रस्य मुष्टिरसि वीळयस्व ॥ ३० ॥

आ । क्रन्दय । बलम् । ओजः । नः । आ । धाः । निः । स्तनिहि । दुःऽइता । बाधमानः ।
अप । प्रोथ । दुन्दुभे । दुच्छुनाः । इतः । इन्द्रस्य । मुष्टिः । असि । वीळयस्व ॥ ३० ॥

हे दुन्दुभे ᵛआ ᵛक्रन्दय अस्मच्छत्रून् रोदय । ᵛबलं सेनारूपम् ᵛओजः शरीरबलं च ᵛनः अस्मभ्यम् ᵛआ ᵛधाः आधेहि । प्रयच्छ । तथा ᵛदुरिता दुरितानि दुर्गमनानि ᵛबाधमानः हिंसंस्त्वं ᵛनिः ᵛस्तनिहि नितरां शब्दं कुरु । 'स्तन शब्दे' इति धातुः । हे ᵛदुन्दुभे ᵛदुच्छुनाः अस्मदुःख-हेतुभूतं शुनं सुखं यासां तादृशीः शत्रुसेनाः ᵛइतः अस्मत्स्थानात्[1] ᵛअप ᵛप्रोथ बाधस्व । त्वं च ᵛइन्द्रस्य ᵛमुष्टिरसि । मुष्टिरिव शत्रूणां हन्ता भवसि । अतोऽस्मान् ᵛवीळयस्व दृढीकुरु ॥

आमूरज प्रत्यावर्तयेमाः केतुमद्दुन्दुभिर्वावदीति ।
समश्वपर्णाश्चरन्ति नो नरोऽस्माकमिन्द्र रथिनो जयन्तु ॥ ३१ ॥

आ । अमूः । अज । प्रतिऽआवर्तय । इमाः । केतुऽमत् । दुन्दुभिः । वावदीति ।
सम् । अश्वऽपर्णाः । चरन्ति । नः । नरः । अस्माकम् । इन्द्र । रथिनः । जयन्तु ॥ ३१ ॥

अस्याः पूर्वार्धो दुन्दुभिदेवत्य उत्तरार्धश्चैन्द्रः । यद्वा । उभावप्यर्धावैन्द्रौ । हे इन्द्र ᵛअमूः शत्रुषु स्थितास्ता गाः ᵛआ ᵛअज अस्मान् प्रत्यागमय । ᵛइमाः अस्मदीया गाः शत्रुभिर्जिघृक्षिताः ᵛप्रत्यावर्तय प्रतिनिवर्तय । अयं च ᵛदुन्दुभिः ᵛकेतुमत् प्रज्ञानवत् यथा सर्वैर्ज्ञायते तथा ᵛवावदीति भृशं शब्दं करोति । ᵛअश्वपर्णाः अश्वपतना अश्ववाहाश्च ᵛनः अस्मदीयाश्च ᵛनरः पुरुषाः ᵛसं ᵛचरन्ति शत्रुभिर्युध्यमाना वर्तन्ते । तथा सति हे ᵛइन्द्र ᵛअस्माकं ᵛरथिनः रथारूढाः पुरुषाः शत्रून् ᵛजयन्तु ॥　　॥ ३५ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण[2] विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये चतुर्थाष्टके सप्तमोऽध्यायः समाप्तः ॥

---

१. ख-म्र-न-भ-श–अस्मात्स्थानात् । २. ख-म्र-न-भ–सायणामात्येन; र–सायणार्येण ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथाष्टमोऽध्याय आरभ्यते। षष्ठमण्डलस्य चतुर्थेऽनुवाके चत्वारि सूक्तानि व्याख्यातानि[1] । 'यज्ञायज्ञा' इति द्वाविंशत्यृचं पञ्चमं सूक्तं बृहस्पतिपुत्रस्य शंयोरार्षम् । अत्रानुक्रम्यते—'यज्ञायज्ञा द्व्यधिका शंयुस्तृणपाणिकं पृश्निसूक्तं प्रगाथौ बृहती महासतोबृहती महाबार्हतबार्हतौ प्रगाथावित्याग्नेय्यः काकुभः प्रगाथः पुरउष्णिग्बृहत्यतिजगतीति मारुत्योऽन्त्यास्तिस्रो वासां लिङ्गोक्तदेवताः काकुभः प्रगाथः पुरउष्णिग्बृहतीति पौष्ण्यो बृहती महाबृहती यवमध्यान्त्यानुष्टुप्[2] द्यावाभूम्योर्वा पृश्नेर्वा' इति। 'यज्ञायज्ञा वः' इत्येषा बृहती। 'तृतीयो द्वादशकः[3]' इति[3] तल्लक्षणसद्भावात्। द्वितीया सतोबृहती। 'अयुजौ जागतौ सतोबृहती' इत्युक्तलक्षणोपेतत्वात्। तृतीयाचतुर्थ्यौ बृहतीसतोबृहत्यौ पञ्चमी बृहती षष्ठी महासतोबृहती। अष्टाक्षरास्त्रयः पादा द्वादशाक्षरौ द्वौ पादौ सा महासतोबृहती। सप्तमी महाबृहती। अष्टाक्षराश्चत्वारः पादा एको द्वादशाक्षरः सा महाबृहती । अष्टमी महासतोबृहती। अष्टिनस्त्रयो द्वौ जागतौ सा महासतोबृहती। नवमी बृहती दशमी सतोबृहती। एता दश अग्निदेवत्याः। एकादशी ककुप्। मध्यमो यदि द्वादशाक्षर उभयतोऽष्टकौ द्वौ पादौ सा ककुप् । द्वादशी सतोबृहती त्रयोदशी पुरउष्णिक्। आद्यो जागतो द्वितीयतृतीयौ गायत्रौ सा पुरउष्णिक् । चतुर्दशी बृहती पञ्चदशी अतिजगती द्वापञ्चाशदक्षरा । एकादश्याद्याः पञ्च मरुद्देवताकाः। त्रयोदश्यादीनां तिसृणां लिङ्गोक्ता इन्द्रादयो वा देवताः। षोडशी ककुप् सप्तदशी सतोबृहती अष्टादशी पुरउष्णिक् एकोनविंशी बृहती। षोडश्यादीनां चतसृणां पूषा देवता। विंशी बृहती एकविंशी यवमध्या महाबृहती । आद्यौ द्वावष्टकौ तृतीयो द्वादशकश्चतुर्थपञ्चमावष्टकौ सा यवमध्या महाबृहती। विंश्येकविंश्योः 'पृश्निसूक्तम्' इत्युक्तत्वात् मरुतां माता पृश्निर्देवता। द्वाविंशी अनुष्टुप्। सा चापि पृश्निदेवत्या द्यावाभूमिदेवत्या वा। सूक्तविनियोगो लैङ्गिकः। आग्निमारुते 'यज्ञायज्ञा वः' इत्ययं स्तोत्रियप्रगाथः। सूत्रितं च—'यज्ञायज्ञा वो अग्नये देवो वो द्रविणोदा इति प्रगाथौ स्तोत्रियानुरूपौ' (आश्व. श्रौ. ५. २०) इति॥

यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे ।
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् ॥ १ ॥

यज्ञाऽयज्ञा । वः । अग्नये । गिराऽगिरा । च । दक्षसे ।
प्रऽप्र । वयम् । अमृतम् । जातऽवेदसम् । प्रियम् । मित्रम् । न । शंसिषम् ॥ १ ॥

हे स्तोतारः वः यूयं यज्ञायज्ञा यज्ञेयज्ञे सर्वेषु यागेषु दक्षसे प्रवृद्धाय अग्नये गिरागिरा स्तुतिरूपया वाचावाचा स्तोत्रं कुरुतेति शेषः। चशब्दो भिन्नक्रमो व इत्यस्मात् परो द्रष्टव्यः। यूयं च स्तोत्रं कुरुत। वयम् अपि तमग्निं प्र शंसिषम्[4] ॥ 'प्रसमुपोदः पादपूरणे' इति प्रशब्दस्य द्विरुक्तिः पादपूरणार्था। व्यत्ययेनैकवचनम्। छान्दसो लुङ् ॥ प्रशंसाम। कीदृशम्। अमृतं मरणरहितं जातवेदसं जातानां वेदितारं जातप्रज्ञं जातधनं वा मित्रं न सखिभूतमिव प्रियम्

---

१. ख-झ-न-भ-य–व्याकृतानि तत्र; ज्ञ-त–व्याकृतानि । २. ज्ञ-त-न-र-श–°नुष्टुम्मारुत्योऽन्त्या । ३. ख-झ-त१-न-भ–द्वादशको अष्टकेति; ज्ञ-त२-र–द्वादशका त्र्य(अ-र )ष्टकेति । ४. ख-ज्ञ-झ-त-न-भ-र–प्रशंसिषम् ।

अनुकूलम् ॥ यद्वा । व्यत्ययेन त्वमित्यस्य वसादेशः । अग्नये इति च कर्मणि चतुर्थी । क्रियाग्रहणमपि कर्तव्यमिति कर्मणः संप्रदानत्वात् । चशब्दः 'चण्' इति निपातश्चेदर्थे वर्तते । दक्षसे इति च दक्षे- र्वृद्धिकर्मणोऽन्तर्भावितण्यर्थात् लटि रूपम् । चणा योगात् 'निपातैर्यद्यदिहन्त°' इति निघातप्रति- षेधः ॥ तत्रायमर्थः । हे स्तोतस्त्वं यज्ञेयज्ञे इममग्निं गिरागिरा स्तुत्या दक्षसे च वर्धयसि चेत् वय- मपि अमृतत्वादिगुणकं तं प्रशंसाम ॥

ऊर्जो नपातं स हिनायमस्मयुर्दाशेम हव्यदातये ।
भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनाम् ॥ २ ॥

ऊर्जः । नपातम् । सः । हिन । अयम् । अस्मऽयुः । दाशेम । हव्यऽदातये ।
भुवत् । वाजेषु । अविता । भुवत् । वृधः । उत । त्राता । तनूनाम् ॥ २ ॥

<sup>v</sup>ऊर्जः अन्नस्य बलस्य वा <sup>v</sup>नपातं पुत्रं प्र शंसिषमित्यनुषङ्गात् प्रशंसामेत्यर्थः । <sup>v</sup>हिन इति निपातद्वयसमुदायो हीत्यस्यार्थे । <sup>v</sup>सः खलु <sup>v</sup>अयम् अग्निः <sup>v</sup>अस्मयुः अस्मान् कामयमानो भवति । वयं च <sup>v</sup>हव्यदातये हव्यानां हविषां देवेभ्यो दात्रे तस्मा अग्नये <sup>v</sup>दाशेम हवींषि दद्याम । स चाग्निः <sup>v</sup>वाजेषु संग्रामेषु <sup>v</sup>अविता रक्षिता <sup>v</sup>वृधः वर्धकश्चास्माकं <sup>v</sup>भुवत् भवतु । <sup>v</sup>उत अपि च <sup>v</sup>तनूनां तनयानामस्मत्पुत्राणां च <sup>v</sup>त्राता रक्षिता भवतु ॥

वृषा ह्यग्ने अजरो महान्विभास्यर्चिषा ।
अजस्रेण शोचिषा शोशुचच्छुचे सुदीतिभिः सु दीदिहि ॥ ३ ॥

वृषा । हि । अग्ने । अजरः । महान् । विऽभासि । अर्चिषा ।
अजस्रेण । शोचिषा । शोशुचत् । शुचे । सुदीतिऽभिः । सु । दीदिहि ॥ ३ ॥

हे <sup>v</sup>अग्ने <sup>v</sup>वृषा वर्षिता कामानां वृष्टेः कर्ता वा <sup>v</sup>अजरः जरारहितः <sup>v</sup>महान् गुणैरधिकः एवंभूतस्त्वम् <sup>v</sup>अर्चिषा दीप्त्या <sup>v</sup>विभासि <sup>v</sup>हि विशेषेण प्रकाशसे खलु । हे <sup>v</sup>शुचे दीप्ताग्ने <sup>v</sup>अजस्रेण अविच्छिन्नेन <sup>v</sup>शोचिषा तेजसा <sup>v</sup>शोशुचत् भृशं दीप्यमानस्त्वं <sup>v</sup>सुदीतिभिः सुदीप्तिभिः <sup>v</sup>सु <sup>v</sup>दीदिहि सुष्ठु अस्मान् दीपय । प्रकाशय ॥

महो देवान्यजसि यक्ष्यानुषक्तव क्रत्वोत दंसना ।
अर्वाचः सीं कृणुह्यग्नेऽवसे रास्व वाजोत वंस्व ॥ ४ ॥

महः । देवान् । यजसि । यक्षि । आनुषक् । तव । क्रत्वा । उत । दंसना ।
अर्वाचः । सीम् । कृणुहि । अग्ने । अवसे । रास्व । वाजा । उत । वंस्व ॥ ४ ॥

हे <sup>v</sup>अग्ने त्वं <sup>v</sup>महः महतः <sup>v</sup>देवान् <sup>v</sup>यजसि । यजमानानां यज्ञे हविर्भिः पूजयसि । अतोऽस्माकमपि यज्ञे <sup>v</sup>आनुषक् अनुषक्तं संततं यथा भवति तथा <sup>v</sup>यक्षि तान् देवान् यज । तदर्थं <sup>v</sup>तव <sup>v</sup>क्रत्वा प्रज्ञया <sup>v</sup>उत अपि च <sup>v</sup>दंसना कर्मणा च । <sup>v</sup>सीम् इति परिग्रहार्थीयः । तान् सर्वान् देवान् <sup>v</sup>अर्वाचः अस्मदभिमुखान् <sup>v</sup>कृणुहि कुरु <sup>v</sup>अवसे अस्मद्रक्षणार्थम् । तथा <sup>v</sup>वाजा वाजान् हविर्लक्ष-

णाम्यन्नानि ᵛरास्व । तेभ्यो देवेभ्यो देहि । ᵛउत अपि च त्वमपि ᵛवंस्व । तुभ्यं प्रत्तानि हवींषि संभजस्व ॥

यमापो अद्र॑यो वना गर्भमृतस्य॑ पिप्र॑ति ।
सह॑सा यो म॑थितो जाय॑ते नृभिः॑ पृथिव्या अधि सान॑वि ॥ ५ ॥

यम् । आप॑: । अद्र॑यः । वना॑ । गर्भ॑म् । ऋतस्य॑ । पिप्र॑ति ।
सह॑सा । यः । मथितः । जाय॑ते । नृऽभिः॑ । पृथिव्याः । अधि॑ । सान॑वि ॥ ५ ॥

ᵛआपः वसतीवर्याख्याः ᵛअद्रयः ग्रावाणः ᵛवना वनानि काष्ठानि च ᵛऋतस्य यज्ञस्योदकस्य वा ᵛगर्भं गर्भवदन्तर्वर्तमानं ᵛयम् अग्निं ᵛपिप्रति पूरयन्ति । यद्वा । आपः समुद्रिया अद्रयो मेघा वनान्यरण्यानि च ऋतस्य गर्भं वाडववैद्युतदावरूपेण वर्तमानं यमग्निं पिप्रति पूरयन्ति । ᵛयः चाग्निः ᵛनृभिः नेतृभिर्ऋत्विग्भिः ᵛसहसा बलेन ᵛमथितः सन् ᵛपृथिव्या ᵛअधि भूमेरुपरि ᵛसानवि समुच्छ्रिते उत्कृष्टे देवयजनदेशे ᵛजायते प्रादुर्भवति स त्वं वंस्वेत्यन्वयः । यद्वा । 'यः पप्रौ' इत्यनया संबन्धः ॥ ॥ १ ॥

आ यः पप्रौ भानुना रोद॑सी उभे धूमेन॑ धावते दिवि ।
तिरस्तमो॑ ददृश ऊर्म्यास्वा श्यावास्व॑रुषो वृषा श्यावा अ॑रुषो वृषा॑ ॥ ६ ॥

आ । यः । पप्रौ । भानुना॑ । रोद॑सी इति॑ । उभे इति॑ । धूमेन॑ । धावते । दिवि ।
तिरः॑ । तम॑: । ददृशे । ऊर्म्या॑सु । आ । श्यावासु । अरुष॑: । वृषा॑ ।
आ । श्यावाः॑ । अरुष॑: । वृषा॑ ॥ ६ ॥

ᵛयः अग्निः ᵛभानुना दीप्त्या ᵛउभे ᵛरोदसी द्यावापृथिव्यौ ᵛआ ᵛपप्रौ आपूरयति सः ᵛधूमेन ᵛदिवि अन्तरिक्षे ᵛधावते गच्छति । धूमो हि मेघात्मना परिणतः सन् अन्तरिक्षे गच्छति । कार्यकारणयोरभेदविवक्षया[1] तद्गमनमग्नावुपचर्यते[1] । अपि चायम् ᵛअरुषः आरोचमानः ᵛवृषा वर्षिता कामानामेवंगुणकोऽग्निः ᵛश्यावासु श्याववर्णासु कृष्णासु ᵛऊर्म्यासु । रात्रिनामैतत् । निशासु ᵛतमः अन्धकारं तिरस्कृत्य ᵛआ समन्तात् ᵛददृशे दृश्यते । ᵛश्यावाः श्याववर्णा रात्रीश्च ᵛआ तिष्ठति । ᵛअरुषो ᵛवृषा इति पुनरुक्तिरादरार्था पादपूरणार्था वा ॥

बृहद्भिरग्ने अर्चिभिः शुक्रेण॑ देव शोचिषा॑ ।
भरद्वाजे समिधानो य॑विष्ठ्य रेवन्नः॑ शुक्र दीदिहि द्युमत्पा॑वक दीदिहि ॥७॥

बृहत्ऽभिः॑ । अग्ने । अर्चिऽभिः॑ । शुक्रेण॑ । देव । शोचिषा॑ ।
भरतऽवा॑जे । सम्ऽइधानः॑ । यविष्ठ्य । रेवत् । नः॑ । शुक्र । दीदिहि ।
द्युऽमत् । पावक । दीदिहि ॥ ७ ॥

---

१. ख-ग्ग-भ-°विवक्षायां बहुमतमग्ना°; य-°विवक्षायां तद्गमनमग्ना° ।

हे देव दानादिगुणयुक्त यविष्ठ्य युवतम शुक्र दीप्त अग्ने शुक्रेण निर्मलेन शोचिषा तेजसा भरद्वाजे अस्मद्भ्रातरि समिधानः समिध्यमानस्त्वं बृहद्भिः महद्भिः अर्चिभिः तेजोभिः नः अस्मदर्थं रेवत् धनयुक्तं यथा भवति तथा दीदिहि दीप्यस्व । तथा पावक हे शोधकाग्ने द्युमत् द्योतमानेन[1] च युक्तं यथा भवति तथा दीदिहि दीप्यस्व ॥

विश्वासां गृहपतिर्विशामसि त्वमग्ने मानुषीणाम् ।
शतं पूर्भिर्यविष्ठ पाह्यंहसः समेद्धारं शतं हिमाः स्तोतृभ्यो ये च ददति ॥८॥

विश्वासाम् । गृहऽपतिः । विशाम् । असि । त्वम् । अग्ने । मानुषीणाम् ।
शतम् । पूःऽभिः । यविष्ठ । पाहि । अंहसः । सम्ऽएद्धारम् । शतम् । हिमाः ।
स्तोतृऽभ्यः । ये । च । ददति ॥ ८ ॥

हे अग्ने त्वं मानुषीणां मनोरपत्यभूतानां विश्वासां सर्वासां विशां प्रजानां गृहपतिः असि गृहस्वामी भवसि । हे यविष्ठ युवतमाग्ने अतस्त्वं शतं हिमाः शतं हेमन्तान् संवत्सरान् समेद्धारं त्वां सम्यगिद्धं कृतवन्तं मां शतं शतेन शतसंख्याकैः पूर्भिः पालनैः अंहसः पापात् आहन्तुः शत्रोर्वा पाहि रक्ष । ये च स्तोतृभ्यः ददति धनं तव समिन्धनस्य कर्तरि प्रयच्छन्ति तांश्च पाहि ॥

त्वं नश्चित्र ऊत्या वसो राधांसि चोदय ।
अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥ ९ ॥

त्वम् । नः । चित्रः । ऊत्या । वसो इति । राधांसि । चोदय ।
अस्य । रायः । त्वम् । अग्ने । रथीः । असि । विदाः । गाधम् । तुचे । तु । नः ॥ ९ ॥

* हे वसो वासक अग्ने चित्रः दर्शनीयः त्वम् ऊत्या रक्षया सह राधांसि धनानि नः अस्मभ्यं चोदय प्रेरय । अस्य सर्वत्र लोके परिदृश्यमानस्य[2] रायः धनस्य त्वं रथीरसि रंहिता नेता भवसि । अतः कारणात् अस्मभ्यं धनानि प्रेरयेत्यर्थः । अपि च नः अस्माकं तुचे । अपत्यनामैतत् । अपत्यायापतनहेतुभूताय पुत्रादये गाधं प्रतिष्ठां तु क्षिप्रं विदाः लम्भय ॥

पर्षि तोकं तनयं पर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः ।
अग्ने हेळांसि दैव्या युयोधि नोऽदेवानि ह्वरांसि च ॥ १० ॥

पर्षि । तोकम् । तनयम् । पर्तृऽभिः । त्वम् । अदब्धैः । अप्रयुत्वऽभिः ।
अग्ने । हेळांसि । दैव्या । युयोधि । नः । अदेवानि । ह्वरांसि । च ॥ १० ॥

---

१. ङ–द्योतनेन । *न–'वाजपेये आग्निमारुते त्वं नश्चित्र इति प्रगाथः स्तोत्रियः। चित्रवतीषु चेत्स्तुवीरंस्त्वं नश्चित्र ऊत्याग्ने विवस्वदुषस इत्यग्निष्टोमसाम्नः स्तोत्रियानुरूपौ ( आश्व. श्रौ. ९.९ ) इति हि सूत्रितम् ' इत्यधिकम् । २. ख-भ-र–दृश्यमानस्य ।

हे ᐯअग्ने ᐯत्वम् ᐯअदब्धैः केनाप्यहिंसितैः ᐯअप्रयुत्वभिः। यौतिरत्र पृथग्भावार्थः। अपृथग्भूतैः संहतैः ᐯपर्तृभिः पालनसाधनैः ᐯतोकं पुत्रं ᐯतनयं पौत्रं च ᐯपर्षि पालय। ᐯदैव्या देवसंबन्धीनि ᐯच ᐯहेळांसि क्रोधान् ᐯनः अस्मत्तः ᐯयुयोधि पृथक्कुरु। ᐯअदेवानि मनुष्यसंबन्धीनि ᐯच ᐯह्रुरांसि हिंसनानि चास्मत्तः पृथक्कुरु॥ ॥ २ ॥

आ सखायः सबर्दुघां धेनुमजध्वमुप नव्यसा वचः। सृजध्वमनपस्फुराम् ॥ ११॥

आ। सखायः। सबःऽदुघाम्। धेनुम्। अजध्वम्। उप। नव्यसा। वचः।
सृजध्वम्। अनपऽस्फुराम् ॥ ११ ॥

हे ᐯसखायः समानख्याना अध्वर्यवः ᐯसबर्दुघाम्। सबरिति पयसो नाम। अमरणहेतुभूतस्य पयसो दोग्ध्रीं ᐯधेनुं गाम् ᐯआ ᐯअजध्वम् अभिगच्छत। प्राप्नुत। केन साधनेन। ᐯनव्यसा नवीयसा नवतरेण ᐯवचः वचसाह्वानरूपेण शब्देन। तदनन्तरम् ᐯअनपस्फुराम्। स्फुरतिर्वधकर्मा। अनपबाध्यां तां धेनुम् ᐯउप ᐯसृजध्वम्। वत्सेनोपसृष्टां कुरुत। मरुद्देवत्यत्वात् मरुतां यागाय पयो दोग्धुमिति शेषः। अथवा मरुतां माता पृश्न्याख्या माध्यमिका वाक् धेनुः। हे सखायः स्तोतारः सबर्दुघां मरुज्जनहेतुभूतस्य[1] पयसो दोग्ध्रीं धेनुं पृश्निं नव्यसा नवतरेण वचसा स्तोत्रेणोपाजध्वम् उपागच्छत। अनपस्फुरामनपबाधनीयां तां सृजध्वम्। बन्धनात् विसृजत। मुञ्चत। ईदृशी महती धेनुर्मरुतां माता किमु वक्तव्यं तेषां माहात्म्यमिति मरुत्स्तुतिः॥

या शर्धाय मारुताय स्वभानवे श्रवोऽमृत्यु धुक्षत।
या मृळीके मरुतां तुराणां या सुम्नैरेवयावरी ॥ १२ ॥

या। शर्धाय। मारुताय। स्वऽभानवे। श्रवः। अमृत्यु। धुक्षत।
या। मृळीके। मरुताम्। तुराणाम्। या। सुम्नैः। एवऽयावरी ॥ १२ ॥

ᐯया धेनुः ᐯअमृत्यु अमरणहेतु ᐯश्रवः अन्नं पयोलक्षणं ᐯमारुताय मरुत्संघाय ᐯधुक्षत अधुक्षत्[2]। कीदृशाय। ᐯशर्धाय प्रसहनशीलाय ᐯस्वभानवे स्वायत्तदीप्तये। ᐯया च ᐯतुराणां क्षिप्रकारिणां ᐯमरुतां ᐯमृळीके सुखे तत्परा वर्तते। ᐯया च ᐯसुम्नैः सुखैर्हेतुभूतैः ᐯएवयावरी एवैर्गन्तृभिरश्वैर्मध्यमस्थानैरुदकैर्वा[3] सह यान्ती[4] अन्येषामपि सुखार्थं वृष्टिजलैः सहागच्छन्ती[5] तां धेनुमुपाजध्वमिति पूर्वत्रान्वयः। अत्रापि पूर्ववत् मरुत्स्तुतिरधिगन्तव्या॥

भरद्वाजायाव धुक्षत द्विता। धेनुं च विश्वदोहसमिषं च विश्वभोजसम् ॥ १३ ॥

भरत्ऽवाजाय। अव। धुक्षत। द्विता।
धेनुम्। च। विश्वऽदोहसम्। इषम्। च। विश्वऽभोजसम् ॥ १३ ॥

हे मरुतः ᐯभरद्वाजाय अस्मद्भ्रात्रे ᐯद्विता द्वितयम् ᐯअव ᐯधुक्षत[6]। किं तत् द्वितयम्। ᐯधेनुं ᐯच गां च ᐯइषं ᐯच अन्नं च। कीदृशीं धेनुम्। ᐯविश्वदोहसं विश्वस्य व्याप्तस्य बहुलस्य दोग्ध्रीम्। कीदृशमन्नम्। ᐯविश्वभोजसं सर्वेषां भोगपर्याप्तम्॥

---

१. ख–मरुद्यजन°। २. ज्ञ-त–अधुक्षत। ३. ख-भ–°र्मध्यस्थानै°। ४. ख-भ–याति; ज्ञ-श–यान्ति। ५. ख-भ–सहागच्छति; ज्ञ-श–सहागच्छन्ति। ६. ज्ञ–धुक्षत दत्त।

तं व इन्द्रं न सुक्रतुं वरुणमिव मायिनम् ।
अर्यमणं न मन्द्रं सृप्रभोजसं विष्णुं न स्तुष आदिशे ॥ १४ ॥

तम् । वः । इन्द्रम् । न । सुऽक्रतुम् । वरुणम्ऽइव । मायिनम् ।
अर्यमणम् । न । मन्द्रम् । सृप्रऽभोजसम् । विष्णुम् । न । स्तुषे । आऽदिशे ॥ १४ ॥

हे मरुद्गण ᵛतं तादृशं ᵛवः त्वां ᵛस्तुषे स्तौमि । किमर्थम् । ᵛआदिशे आदेशनाय धनानामतिसर्जनाय प्रदानाय । कीदृशं त्वाम् । ᵛइन्द्रं ᵛन इन्द्रमिव ᵛसुक्रतुं सुकर्माणं ᵛवरुणमिव ᵛमायिनं मायावन्तं प्रज्ञावन्तम् ᵛअर्यमणं ᵛन अर्यमणमिव ᵛमन्द्रं स्तुत्यं ᵛविष्णुं ᵛन विष्णुमिव ᵛसृप्रभोजसं प्रसृतधनम्[1] । यदा त्वस्या लिङ्गोक्तदेवतास्तदानीं नेवशब्दौ चशब्दार्थे द्रष्टव्यौ ॥

त्वेषं शर्धो न मारुतं तुविष्वण्यनर्वाणं पूषणं सं यथा शता ।
सं सहस्रा कारिषच्चर्षणिभ्य आँ आविर्गूळ्हा वसू करत्सुवेदा नो वसू करत् ॥१५॥

त्वेषम् । शर्धः । न । मारुतम् । तुविऽस्वनि । अनर्वाणम् । पूषणम् । सम् । यथा । शता ।
सम् । सहस्रा । कारिषत् । चर्षणिऽभ्यः । आ । आविः । गूळ्हा । वसु । करत् ।
सुऽवेदा । नः । वसु । करत् ॥ १५ ॥

नेति संप्रत्यर्थे । ᵛन संप्रति इदानीं ᵛत्वेषं दीप्तं ᵛतुविष्वणि बहुस्वनम् ᵛअनर्वाणम् अप्रत्यृतं शत्रुभिरनभिगतं ᵛपूषणं पोषकं ᵛमारुतं मरुत्संघरूपमीदृशं ᵛशर्धः बलं स्तौमीति शेषः । स च मरुद्गणः ᵛयथा येन प्रकारेण ᵛशता शतसंख्याकानि धनानि ᵛसं सहैव ᵛचर्षणिभ्यः मनुष्येभ्योऽस्मभ्यं ᵛकारिषत् कुर्यात् । आकारः समुच्चये । यथा वा ᵛसहस्रा सहस्रसंख्याकानि धनानि च ᵛसं सहैव कारिषत् कुर्यात् तथा स्तौमीति पूर्वत्रान्वयः । अपि च स मरुद्गणः ᵛगूळ्हा गूढानि संवृतानि ᵛवसु वसूनि धनानि ᵛआविः ᵛकरत् अस्मभ्यमाविष्करोतु । तथा ᵛवसु वसूनि धनानि ᵛसुवेदा सुलभानि च ᵛनः अस्माकं ᵛकरत् करोतु । यदा तु लिङ्गादियं पौष्णी तदा मारुतं शर्ध इव त्वेषं पूषणं पोषकमेतत्संज्ञं देवं स्तौमीति योजनीयम् ॥

आ मा पूषन्नुप द्रव शंसिषं नु ते अपिकर्ण आघृणे । अघा अर्यो अरातयः ॥१६॥

आ । मा । पूषन् । उप । द्रव । शंसिषम् । नु । ते । अपिऽकर्णे । आघृणे ।
अघाः । अर्यः । अरातयः ॥ १६ ॥

हे ᵛपूषन् ᵛमा माम् ᵛआ ᵛद्रव रक्षणार्थमभिगच्छ । हे ᵛआघृणे आगतदीप्ते ᵛअघाः आहन्त्रीः ᵛअर्यः अरीरभिगन्त्रीः ᵛअरातयः शत्रुभूताः प्रजाः ᵛउप द्रव बाधस्व ॥ उपपूर्वो द्रवतिः बाधायां वर्तते । यथा 'प्रजां पशून्यजमानस्योप दोद्राव' (तै. सं. १. ५. १. ४) इति ॥ अहं च ᵛते तव ᵛअपिकर्णे कर्णावपिगते समीपदेशे स्थितः सन् ᵛनु क्षिप्रं ᵛशंसिषं प्रशंसामि ॥ ॥ ३ ॥

---

१. ख-झ-श-सृप्रधनम्; ज-त-प्रसृप्रधनम्; न-सृप्रं धनम्; भ-सृप्तधनम् ।

मा काकम्बीरमुद्वृहो वनस्पतिमशस्तीर्वि हि नीनशः ।
मोत सूरो अह एवा चन ग्रीवा आदधते वेः ॥ १७ ॥

मा । काकम्बीरम् । उत् । वृहः । वनस्पतिम् । अशस्तीः । वि । हि । नीनशः ।
मा । उत । सूरः । अहरिति । एव । चन । ग्रीवाः । आऽदधते । वेरिति वेः ॥ १७ ॥

ऋषिः पुत्रपौत्रसहितमात्मानं बहुपक्ष्याश्रयवनस्पतित्वेन रूपयन्[१] तस्यानुद्धारमाशास्ते । हे पूषन् ᵛकाकम्बीरं काकानां भर्तारं ᵛवनस्पतिं वृक्षं ᵛमा ᵛउद्वृहः उद्धर । मा बाधस्व । पुत्रपौत्रादिभिः सखीभूतैरुपेतमन्यैश्च बहुभिराश्रितं मां मा हिंसीरित्यर्थः । हिशब्दश्चार्थे । ᵛअशस्तीः अशंसनीया अशंसनीयस्य दुःखस्य कीर्तयित्रीर्वा शत्रुभूताः प्रजाः ᵛवि ᵛनीनशः ᵛहि विनाशय च । ᵛउत[२] अपि च[२] ᵛसूरः प्रेरकः शत्रुः ᵛएव एवं ᵛमा ᵛअहः अस्मान् मा हार्षीत् ॥ एवमित्यभिसंबन्धात् आख्यातस्योदात्तवत्त्वाच्च अश्रुतोऽपि यथेत्येतद्वाक्ये[३] अध्याह्रियते ॥ ᵛग्रीवाः । गिरन्त्यन्तरवस्थापयन्ति बध्नन्तीति ग्रीवा दामानि । यथा व्याधाः ᵛवेः पक्षिणो हरणार्थं ग्रीवा दामानि जालरूपाणि ᵛआदधते भूम्यां निदधते तैश्च निहितैः पक्षिणो हरन्ति एवमस्मान् बन्धनोपायैः[४] शत्रुर्मा हार्षीदित्यर्थः ॥

दृतेरिव तेऽवृकमस्तु सख्यम् । अच्छिद्रस्य दधन्वतः सुपूर्णस्य दधन्वतः ॥ १८ ॥

दृतेःऽइव । ते । अवृकम् । अस्तु । सख्यम् ।
अच्छिद्रस्य । दधन्ऽवतः । सुऽपूर्णस्य । दधन्ऽवतः ॥ १८ ॥

हे पूषन् ᵛते तव ᵛसख्यं सखित्वम् ᵛअवृकं बाधकरहितं[५] सर्वदा ऐकरूप्येण वर्तमानमस्माकम् ᵛअस्तु सर्वदा भवतु । ᵛदृतेरिव । यथा दृतेस्त्वदीयं सख्यमविच्छिन्नं तद्वत् । कीदृशो दृतिः । ᵛअच्छिद्रस्य छिद्ररहितस्य संश्लिष्टस्य ᵛदधन्वतः दधिमतः ᵛसुपूर्णस्य दध्ना सुष्ठु पूरितस्य । पुनर्दधन्वत इति दध्नोऽधिकत्वद्योतनार्थः । ईदृशो दृतिः सर्वदा पूर्णो रथे वर्तते । स इव वयमपि तव सखायो भवेमेत्यृषिराशास्ते ॥

परो हि मर्त्यैरसि समो देवैरुत श्रिया ।
अभि ख्यः पूषन्पृतनासु नस्त्वमवा नूनं यथा पुरा ॥ १९ ॥

परः । हि । मर्त्यैः । असि । समः । देवैः । उत । श्रिया ।
अभि । ख्यः । पूषन् । पृतनासु । नः । त्वम् । अव । नूनम् । यथा । पुरा ॥ १९ ॥

हे ᵛपूषन् ᵛमर्त्यैः मर्त्येभ्यो मनुष्येभ्यः ᵛपरः परस्तात् स्थितः ᵛअसि । ᵛश्रिया संपदा ᵛदेवैरुत सर्वैर्देवैश्च ᵛसमः समानोऽसि । अतः ᵛत्वं ᵛपृतनासु संग्रामेषु ᵛनः अस्मान् ᵛअभि ᵛख्यः अभिपश्य अनुग्रहदृष्ट्या[६] विलोकय[७] । ᵛयथा ᵛपुरा येन प्रकारेण पूर्वकालीनान् पुरुषान्[८] ररक्षिथ एवं ᵛनूनम् अद्येदानीम् ᵛअव अस्मान् रक्ष ॥

---

१. ख-ङ्ग-न-भ-श-निरूपयन् । २. ज्ञ-ङ्ग-त-न-य-र-श-मोत मा च । ३. ज्ञ-यथेत्युत्तरवाक्ये; त-यथेत्येतरवाक्ये । ४. घ-बाधनोपायैः । ५. घ-श-बाधरहितम् । ६. ख-भ-अनुग्रहबुद्ध्या । ७. ख-ङ्ग-भ-र-'विलोकय' नास्ति । ८. श-मनुष्यान् ।

वामी वामस्य धूतयः प्रणीतिरस्तु सूनृता ।
देवस्य वा मरुतो मर्त्यस्य वेजानस्य प्रयज्यवः ॥ २० ॥

वामी । वामस्य । धूतयः । प्रऽनीतिः । अस्तु । सूनृता ।
देवस्य । वा । मरुतः । मर्त्यस्य । वा । ईजानस्य । प्रऽयज्यवः ॥ २० ॥

हे धूतयः कम्पयितारः प्रयज्यवः प्रकर्षेण यष्टव्याः मरुतः सा सूनृता प्रियसत्यात्मिका माध्यमिका युष्मदीया वाक् प्रणीतिरस्तु । अस्मदर्थं धनानां प्रणेत्री भवतु । देवस्य वा मर्त्यस्य मनुष्यस्य वा ईजानस्य इष्टवतः उभयविधस्य पुरुषस्य वामी प्रशस्ता या वाक् वामस्य वननीयस्य धनस्य प्रणीतिः प्रणेत्री सा सूनृतेत्यन्वयः । प्रणीतिरस्त्वस्मदर्थम् ॥

सद्यश्चिद्यस्य चर्कृतिः परि द्यां देवो नैति सूर्यः ।
त्वेषं शवो दधिरे नाम यज्ञियं मरुतो वृत्रहं शवो ज्येष्ठं वृत्रहं शवः ॥२१॥

सद्यः । चित् । यस्य । चर्कृतिः । परि । द्याम् । देवः । न । एति । सूर्यः ।
त्वेषम् । शवः । दधिरे । नाम । यज्ञियम् । मरुतः । वृत्रऽहम् । शवः ।
ज्येष्ठम् । वृत्रऽहम् । शवः ॥ २१ ॥

यस्य च मरुद्गणस्य चर्कृतिः कर्म सद्यश्चित् सद्य एव द्यां परि एति परिगच्छति दिव्यन्तरिक्षे परितो वर्तते देवो न देवो द्योतमानः सूर्यः इव तादृशगणात्मकाः[1] मरुतः त्वेषं दीप्तं नाम शत्रूणां नमयितृ यज्ञियं यज्ञार्हं शवः बलं दधिरे अधारयन् । तच्च शवः बलं वृत्रहं वृत्रादेरसुरस्य हन्तृ भवति । तच्च[2] वृत्रहं शवः ज्येष्ठं सर्वेभ्यः प्रशस्ततमं भवति ॥

सकृद्ध द्यौरजायत सकृद्भूमिरजायत ।
पृश्न्या दुग्धं सकृत्पयस्तदन्यो नानु जायते ॥ २२ ॥

सकृत् । ह । द्यौः । अजायत । सकृत् । भूमिः । अजायत ।
पृश्न्याः । दुग्धम् । सकृत् । पयः । तत् । अन्यः । न । अनु । जायते ॥ २२ ॥

सकृद्ध सकृदेव द्यौरजायत उदपद्यत । सकृदुत्पन्नैव स्थिता भवति । न पुनस्तस्यां[3] नष्टायामन्या तत्सदृशी द्यौर्जायते[4] । भूमिः च सकृत् एव अजायत । पृश्न्याः मरुतां मातुर्गोः पयः च सकृत् एकवारमेव दुग्धं यस्मात् पयसो मरुतो जज्ञिरे । 'पृश्न्यै वै पयसो मरुतो जाताः' (तै. सं. २. २. ११. ४) इति तैत्तिरीयकम् । यथा द्यावापृथिव्यौ सकृदेवोत्पद्येते एवं पृश्निरपि सकृद्दुग्धेनैव पयसा मरुतोऽजीजनत् । तत् ततः परम् अन्यः पदार्थः नानु जायते तत्सदृशो नोत्पद्यते ॥ ॥ ४ ॥

---

१. ख–तादृशा एवंगुणात्मकाः; श–तादृशो मरुद्गणात्मकः । २. ख–एतच्च । ३. य–पुनरस्याम् । ४. ख-भ-य-र–द्यौर्न जायते ।

'स्तुषे जनम्' इति पञ्चदशर्चं षष्ठं सूक्तं भारद्वाजस्य ऋजिश्वन आर्षं वैश्वदेवम्। अन्त्या षट्पञ्चाशदक्षरा शक्वरी शिष्टास्त्रिष्टुभः। तथा चानुक्रान्तं—'स्तुषे पञ्चोन ऋजिश्वा ह वैश्वदेवं ह शक्वर्यन्तम्' इति। व्यूळ्हे दशरात्रे पञ्चमेऽहनीदं वैश्वदेवनिविद्धानम्[1]। सूत्रितं च—'ऋभुर्विभ्वा स्तुषे जनमिति वैश्वदेवम्' (आश्व. श्रौ. ८. ८) इति। आद्या महानाम्नीव्रते जप्या॥

स्तुषे जनं सुव्रतं नव्यसीभिर्गीर्भिर्मित्रावरुणा सुम्नयन्ता।
त आ गमन्तु त इह श्रुवन्तु सुक्षत्रासो वरुणो मित्रो अग्निः॥ १॥

स्तुषे। जनम्। सुऽव्रतम्। नव्यसीभिः। गीःऽभिः। मित्रावरुणा। सुम्नऽयन्ता।
ते। आ। गमन्तु। ते। इह। श्रुवन्तु। सुऽक्षत्रासः। वरुणः। मित्रः। अग्निः॥ १॥

सुव्रतं सुकर्माणं जनं दैव्यं जनं देवसंघं नव्यसीभिः नवतराभिः गीर्भिः स्तुतिभिः स्तुषे अहं स्तुवे। तथा मित्रावरुणा। मित्रः प्रमीतेस्त्रायको वरुणः पापान्निवारयिता[2]। एतावपि देवौ स्तौमि। कीदृशौ। सुम्नयन्ता सुम्नं सुखं स्तोतॄणामिच्छन्तौ। सुक्षत्रासः शोभनबलाः ते वरुणादयः सर्वे देवाः इह अस्मिन् यज्ञे आ गमन्तु आगच्छन्तु। ते तादृशाः श्रुवन्तु। अस्मदीयाः स्तुतीः शृण्वन्तु च। अत्र मित्रादीनां परिगणनमुपलक्षणं सूक्तस्य सर्वदेवताप्रतिपादकत्वात्[3]। अत एव पूर्वं जनमिति सामान्यनिर्देशः॥

विशोविश ईड्यमध्वरेष्वदृप्तक्रतुमरतिं युवत्योः।
दिवः शिशुं सहसः सूनुमग्निं यज्ञस्य केतुमरुषं यजध्यै॥ २॥

विशःऽविशः। ईड्यम्। अध्वरेषु। अदृप्तऽक्रतुम्। अरतिम्। युवत्योः।
दिवः। शिशुम्। सहसः। सूनुम्। अग्निम्। यज्ञस्य। केतुम्। अरुषम्। यजध्यै॥ २॥

विशोविशः सर्वस्याः प्रजायाः अध्वरेषु यज्ञेषु ईड्यम् ऋत्विग्भिः स्तुत्यम् अदृप्तक्रतुं दर्परहितकर्माणम् अमूढप्रज्ञं वा युवत्योः द्यावापृथिव्योः अरतिम् अभिगन्तारम् अर्यं स्वामिनं दिवः द्युलोकस्य शिशुं पुत्रम्। 'दिवस्परि प्रथमं जज्ञे अग्निः' (ऋ. सं. १०.४५.१) इति निगमः। यद्वा। दिवः स्तोतुः पुत्रभूतम्। तथापि निगमो भवति—'त्वं पुत्रो भवसि यस्तेऽविधत्' (ऋ. सं. २. १. ९) इति। सहसः बलस्य सूनुं पुत्रं यज्ञस्य यागस्य केतुं प्रज्ञापकम् अरुषम् आरोचमानम् एवंगुणकम् अग्निं यजध्यै यष्टुम्। स्तुषे इत्यनुषज्यते। स्तुषे स्तुवे॥

अरुषस्य दुहितरा विरूपे स्तृभिरन्या पिपिशे सूरो अन्या।
मिथस्तुरा विचरन्ती पावके मन्म श्रुतं नक्षत ऋच्यमाने॥ ३॥

अरुषस्य। दुहितरा। विरूपे इति विऽरूपे। स्तृऽभिः। अन्या। पिपिशे। सूरः। अन्या।
मिथःऽतुरा। विचरन्ती इति विऽचरन्ती। पावके इति।
मन्म। श्रुतम्। नक्षतः। ऋच्यमाने इति॥ ३॥

---

१. ज्ञ—वैश्वदेवं निविद्धानम्; श—वैश्वदेवं हविर्धानम्। २. ज्ञ-त—पापानां निवारयिता। ३. ज्ञ—सर्वं देवता°; ज्ञ-त-न-र—सर्वस्य देवता°।

इयमहोरात्रयोः स्तुतिः । अरुषस्य आरोचमानस्य सूर्यस्य दुहितरा दुहितरौ । सूर्येण हि अहोरात्रयोर्विभागः क्रियते । अतस्तदधीनात्मलाभत्वात् तस्य दुहितरावित्युच्येते । विरूपे शुक्लकृष्णतया नानारूपे । तयोः अन्या एका रात्रिः स्तृभिः नक्षत्रैः पिपिशे पिश्यते संश्लिष्यते । 'पिश अवयवे' इति धातुः । अन्या अहरात्मिका दुहिता सूरः सूर्येण पिपिशे संश्लिष्यते । ते च नक्षत्रैः सूर्येण चालंकृते भवत इत्यर्थः । मिथस्तुरा परस्परं बाधयन्त्यौ । अह्ना रात्रिर्निवर्त्यते रात्र्या चाहरिति परस्परं बाधः । अत एव विचरन्ती विविधं पृथक् चरन्त्यौ पावके सर्वस्य शोधयित्र्यौ । एवंभूते अहश्च रात्रिश्च ऋच्यमाने अस्माभिः स्तूयमाने सत्यौ श्रुतं श्रोतव्यं मन्म मननीयं स्तोत्रमस्मत्कृतं नक्षतः व्याप्नुताम् ॥

प्र वायुमच्छा बृहती मनीषा बृहद्रयिं विश्ववारं रथप्राम् ।
द्युतद्यामा नियुतः पत्यमानः कविः कविमियक्षसि प्रयज्यो ॥ ४ ॥

प्र । वायुम् । अच्छ । बृहती । मनीषा । बृहत्ऽरयिम् । विश्वऽवारम् । रथऽप्राम् ।
द्युतत्ऽयामा । निऽयुतः । पत्यमानः । कविः । कविम् । इयक्षसि । प्रयज्यो इति प्रऽयज्यो ॥ ४ ॥

*बृहती महती मनीषा अस्मदीया स्तुतिः वायुम् अच्छ आभिमुख्येन प्र गच्छतु ॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥ कीदृशं वायुम् । बृहद्रयिं महाधनं विश्ववारं विश्वैर्वरणीयं संभजनीयं रथप्रां रथस्यात्मीयस्य प्रातारं पूरयितारम् । यद्वा । स्तोतॄणां रथं धनैः पूरयितारम् । अथ प्रत्यक्षस्तुतिः । हे प्रयज्यो प्रकर्षेण यष्टव्य वायो द्युतद्यामा प्रदीप्तयानः नियुतः आत्मीयरथयोज्याः वडवाः ताः पत्यमानः अभिपतन्नभिगच्छन् । यद्वा । पत्यतिरैश्वर्यकर्मा । तासां वडवानामीश्वरः कविः क्रान्तदर्शी । एवंभूतः त्वं कविं मेधाविनं स्तोतारम् इयक्षसि धनेन पूजय ॥

स मे वपुश्छदयदश्विनोर्यो रथो विरुक्मान्मनसा युजानः ।
येन नरा नासत्येषयध्यै वर्तिर्याथस्तनयाय त्मने च ॥ ५ ॥

सः । मे । वपुः । छदयत् । अश्विनोः । यः । रथः । विरुक्मान् । मनसा । युजानः ।
येन । नरा । नासत्या । इषयध्यै । वर्तिः । याथः । तनयाय । त्मने । च ॥ ५ ॥

अश्विनोः स्वभूतः सः रथः मे मदीयं वपुः शरीरं छदयत् छादयतु । तेजसाच्छादयतु । यो रथो विरुक्मान् विरोचनवान् विशेषेण दीप्यमानः मनसा मनोव्यापारमात्रेण युजानः अश्वैः संप्रयुज्यमानो[1] भवति । हे नरा नेतारौ हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ नासिकाप्रभवौ वाश्विनौ येन रथेन वर्तिः स्तोतृगृहं तनयाय पुत्राय त्मने आत्मने तत्पित्रे स्तोत्रे च इषयध्यै कामान् प्रापयितुं याथः गच्छथः स रथः इति पूर्वत्रान्वयः ॥ ॥ ५ ॥

---

* न–'नियुत्वद्वायुदेवताके पशौ हविषो याज्या प्र वायुमिति । सूत्रितं च–राये नु यं जज्ञतू रोदसी मे प्र वायुमच्छा बृहती मनीषा ( आश्व. श्रौ. ३. ८ ) इति' इत्यधिकम् । १. झ-त-न-र–संयुज्यमानो ।

पर्जन्यवाता वृषभा पृथिव्याः पुरीषाणि जिन्वतमप्यानि ।
सत्यश्रुतः कवयो यस्य गीर्भिर्जगतः स्थातर्जगदा कृणुध्वम् ॥ ६ ॥

पर्जन्यवाता । वृषभा । पृथिव्याः । पुरीषाणि । जिन्वतम् । अप्यानि ।
सत्यऽश्रुतः । कवयः । यस्य । गीःऽभिः । जगतः । स्थातः । जगत् । आ । कृणुध्वम् ॥६॥

हे ᵛपर्जन्यवाता पर्जन्यवायू ᵛवृषभा वृष्टेः कर्तारौ ᵛपृथिव्याः । अन्तरिक्षनामैतत् । अन्तरिक्षात् ᵛअप्यानि आप्तव्यानि ᵛपुरीषाणि पूरकाण्युदकानि ᵛजिन्वतं प्रेरयतम् । उत्तरोऽर्धर्चो मारुतः । हे ᵛसत्यश्रुतः सत्यस्य स्तोत्रस्य श्रोतारः ᵛकवयः मेधाविनो मरुतः ᵛयस्य स्तोतुः ᵛगीर्भिः स्तुतिभिः यूयं स्तुता भवथ तस्य स्तोतुः ᵛजगत् स्थावरजङ्गमात्मकं सर्वं प्राणिजातम् ᵛआ ᵛकृणुध्वम् आभिमुख्येन कुरुत । हे ᵛजगतः ᵛस्थातः । गणाभिप्रायमेकवचनम्[1] । स्थावरजङ्गमात्मकस्य जगतोऽवस्थापक[2] हे मरुद्गण इति योज्यम् ॥

अन्वारम्भणीयायां सारस्वतस्य हविषो याज्या 'पावीरवी' इत्येषा । सूत्रितं च—' पावीरवी कन्या चित्रायुः पीपिवांसं सरस्वतः' ( आश्व. श्रौ. २. ८ ) इति । एकादशिने सारस्वते पशावेषैव पुरोडाशस्य याज्या । सूत्रितं च—' पावीरवी कन्या चित्रायुर्यस्ते स्तनः शशयो यो मयोभूः ' ( आश्व. श्रौ. ३.७) इति । आग्निमारुते शस्त्रेऽप्येषा । सूत्रितं च—' राकामहमिति द्वे पावीरवी कन्या चित्रायुः' ( आश्व. श्रौ. ५. २० ) इति ॥

पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् ।
ग्नाभिरच्छिद्रं शरणं सजोषा दुराधर्षं गृणते शर्म यंसत् ॥ ७ ॥

पावीरवी । कन्या । चित्रऽआयुः । सरस्वती । वीरऽपत्नी । धियम् । धात् ।
ग्नाभिः । अच्छिद्रम् । शरणम् । सऽजोषाः । दुःऽआधर्षम् । गृणते । शर्म । यंसत् ॥ ७ ॥

ᵛपावीरवी शोधयित्री ᵛकन्या कमनीया ᵛचित्रायुः चित्रगमना चित्रान्ना वा ᵛवीरपत्नी । वीरः प्रजापतिः पतिर्यस्यास्तादृशी । यद्वा । वीराणां पालयित्री । एवंभूता ᵛसरस्वती ᵛधियम् अस्मदीयं कर्म यज्ञाख्यं ᵛधात् दधातु । धारयतु । ददातु वा । शब्देन प्रतिपादितो ह्यर्थोऽनुष्ठीयते । अपि च ᵛग्नाभिः देवपत्नीभिः ᵛसजोषाः सह प्रीयमाणा । यद्वा । ग्नाः गायत्र्यादीनि छन्दांसि । ' छन्दांसि वै ग्नाः' ( तै. सं. ५. १. ७. २ ) इति श्रुतेः । तैः सह प्रीयमाणा ᵛगृणते स्तुवते मह्यम् ᵛअच्छिद्रं छिद्ररहितं ᵛदुराधर्षं शत्रुभिः शीतवातादिभिश्च धर्षितुमशक्यं ᵛशरणं गृहं ᵛशर्म सुखं च ᵛयंसत् प्रयच्छतु ॥

एकादशिने पौष्णे पशौ ' पथस्पथः ' इति हविषो याज्या । सूत्रितं च—' पथस्पथः परिपतिं वचस्या बृहस्पते या परमा परावदिति द्वे ' ( आश्व. श्रौ. ३. ७ ) इति ॥

---

१. ख-ङ्ग-न-भ-य-गणाभिप्रायेणैक° । २. घ-श–जगतः स्थापक ।

पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानळर्कम् ।
स नो रासच्छुरुधश्चन्द्राग्रा धियंधियं सीषधाति प्र पूषा ॥ ८ ॥

पथःऽपथः । परिऽपतिम् । वचस्या । कामेन । कृतः । अभि । आनट् । अर्कम् ।
सः । नः । रासत् । शुरुधः । चन्द्रऽअग्राः । धियम्ऽधियम् । सीसधाति । प्र । पूषा ॥८॥

पथस्पथः सर्वस्य मार्गस्य परिपतिम् अधिपतिम् अर्कम् अर्चनीयं पूषणं कामेन काम्यमानेन फलेन कृतः वशीकृतः स्तोता वचस्या[1] स्तुत्या अभ्यानट् अभ्यश्नुताम् । प्राप्नोतु । सः च पूषा नः अस्मभ्यं शुरुधः शुचो रोधयित्रीः गाः चन्द्राग्राः । चन्द्रमिति हिरण्यनाम । हिरण्यप्रमुखा यद्वा स्वर्णशृङ्गाः रासत् ददातु ॥ ' रा दाने ' । अस्माल्लेटि रूपम् ॥ तथा धियंधियं सर्वमस्मदीयं कर्म स पूषा प्र सीषधाति प्रसाधयतु ॥

त्वाष्ट्रे पशौ ' प्रथमभाजम् ' इति हविषो याज्या । सूत्रितं च—' प्रथमभाजं यशसं वयोधां सोमापूषणा जनना रयीणामिति सूक्तम् ' ( आश्व. श्रौ. ३.८ ) इति ॥

प्रथमभाजं यशसं वयोधां सुपाणिं देवं सुगभस्तिमृभ्वम् ।
होता यक्षद्यजतं पस्त्यानामग्निस्त्वष्टारं सुहवं विभावा ॥ ९ ॥

प्रथमऽभाजम् । यशसम् । वयःऽधाम् । सुऽपाणिम् । देवम् । सुऽगभस्तिम् । ऋभ्वम् ।
होता । यक्षत् । यजतम् । पस्त्यानाम् । अग्निः । त्वष्टारम् । सुऽहवम् । विभाऽवा ॥ ९ ॥

प्रथमभाजं प्रथम उत्पत्तिकाल[2] एव विभक्तारं जन्तूनाम् । ' यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत्प्र जायते' ( तै. सं. १. ५. ९. १ ) इति श्रुतेः । यशसं यशस्विनं वयोधां वयसोऽन्नस्य हविर्लक्षणस्य धातारं धारयितारं यद्वा स्तोतृभ्योऽन्नप्रदं सुपाणिम् । हस्तस्य मणिबन्धादूर्ध्वप्रदेशः पाणिः । शोभनपाणिकं देवं दानादिगुणयुक्तं सुगभस्तिम् । गभस्तिरिति बाहुनाम । शोभनदोर्दण्डम्[3] ऋभ्वम् उरु भासमानं महान्तं वा पस्त्यानाम् । पस्त्यमिति गृहनाम । तत्स्थानां यजतं यष्टव्यम् । गृहस्थैर्यजनीयमित्यर्थः । सुहवं सुखेन ह्वातुं[4] शक्यम् । एवंभूतं त्वष्टारं होता देवानामाह्वाता विभावा दीप्यमानः अग्निः यक्षत् यजत् । अनेन हविषा यजतु ॥

भुवनस्य पितरं गीर्भिराभी रुद्रं दिवा वर्धया रुद्रमक्तौ ।
बृहन्तमृष्वमजरं सुषुम्नमृधग्घुवेम कविनेषितासः ॥ १० ॥

भुवनस्य । पितरम् । गीःऽभिः । आभिः । रुद्रम् । दिवा । वर्धय । रुद्रम् । अक्तौ ।
बृहन्तम् । ऋष्वम् । अजरम् । सुऽसुम्नम् । ऋधक् । हुवेम । कविना । इषितासः ॥१०॥

---

१. ज्ञ-त—वचस्या वचसा । २. घ-श—उषःकाले । ३. ज्ञ-त-र-श—सुगभस्तिं शोभनदोर्दण्डम् । ४ थ-ज्ञ-त-भ-श—आह्वातुम् ।

भुवनस्य भूतजातस्य पितरं पालयितारं रुद्रम् । रुत् दुःखम् । तत्[1] द्रावयितारमीश्वरम् आभिः गीर्भिः स्तुतिभिः दिवा अहनि हे स्तोतः वर्धय । अक्तौ राञ्यां च तमेव रुद्रं स्तुतिभिर्वर्धय । वयं च कविना प्राज्ञेन रुद्रेण इषितासः प्रेरिताः[2] सन्तः बृहन्तं महान्तम् ऋष्वं दर्शनीयम् अजरं जरारहितं सुषुम्नं शोभनसुखमेवंगुणविशिष्टं रुद्रम्[3] ऋधक् ऋद्धं समृद्धं यथा भवति तथा हुवेम स्तवाम ॥ ॥ ६ ॥

आ युवानः कवयो यज्ञियासो मरुतो गन्त गृणतो वरस्याम् ।
अचित्रं चिद्धि जिन्वथा वृधन्त इत्था नक्षन्तो नरो अङ्गिरस्वत् ॥ ११ ॥

आ । युवानः । कवयः । यज्ञियासः । मरुतः । गन्त । गृणतः । वरस्याम् ।
अचित्रम् । चित् । हि । जिन्वथ । वृधन्तः । इत्था । नक्षन्तः । नरः । अङ्गिरस्वत् ॥ ११ ॥

हे युवानः नित्यतरुणाः कवयः प्राज्ञाः यज्ञियासः यज्ञार्हा एवंभूता हे मरुतः गृणतः स्तुवतः वरस्यां वरणीयां स्तुतिं प्रति आ गन्त आगच्छत । अपि च हे नरः नेतारो मरुतः इत्था इत्थमनेन प्रकारेण वृधन्तः वर्धमानाः । यद्वा इत्था अमुत्रान्तरिक्षे नक्षन्तः व्याप्नुवन्तः अङ्गिरस्वत् । अङ्गिरसो गमनशीला रश्मयः । ते यथा शीघ्रं नभस्तलं[4] व्याप्नुवन्ति तद्वत् । यद्वा । ऋषय एवाङ्गिरसः । तद्वच्छीघ्रगामिनः । एवंभूता यूयम् अचित्रं चित् । ओषधिवनस्पतिभिर्नैबिडो देशश्चित्रम्[5] । तद्विलक्षणम् ओषध्यादिभिर्वियुक्तमपि देशं जिन्वथ वृष्ट्या तर्पयथ । हि इति पूरणः ॥

प्र वीराय प्र तवसे तुरायाजा यूथेव पशुरक्षिरस्तम् ।
स पिस्पृशति तन्वि श्रुतस्य स्तृभिर्न नाकं वचनस्य विपः ॥ १२ ॥

प्र । वीराय । प्र । तवसे । तुराय । अज । यूथाऽइव । पशुऽरक्षिः । अस्तम् ।
सः । पिस्पृशति । तन्वि । श्रुतस्य । स्तृऽभिः । न । नाकम् । वचनस्य । विपः ॥ १२ ॥

वीराय विक्रान्ताय विविधं शत्रूणामीरकाय वा मरुद्गणाय प्र अज हे स्तोतः स्तुतिं प्रगमय । तथा तवसे बलिने[6] तुराय क्षिप्रगमनाय[7] च तस्मै गणाय प्र अज । तत्र दृष्टान्तः । पशुरक्षिः पशुपालकः यूथेव । स यथा गोयूथानि सायंकाले अस्तं गृहं शीघ्रं गमयति तद्वत् शीघ्रं स्तुतिं प्रेरयेत्यर्थः । सः च मरुद्गणः वचनस्य वक्तुः विपः विप्रस्य मेधाविनः स्तोतुः श्रुतस्य ॥ क्रियाग्रहणमपि कर्तव्यमिति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी ॥ श्रुतं श्रोतव्यं स्तोत्रं तन्वि आत्मीये शरीरे पिस्पृशति स्पर्शयतु । संश्लेषयतु । तत् स्तोत्रं हृद्गतं भवत्वित्यर्थः । स्पर्शने दृष्टान्तः । स्तृभिर्न नाकम् । यथा नक्षत्रैर्नाकमन्तरिक्षं स्पर्शयति संश्लेषयति तद्वत् ॥

---

१. ज्ञ-क्ष-त-न-भ-य-र—तस्य । २. ख-ज्ञ-त-न-भ-र—प्रेषिताः प्रेरिताः । ३. ख-क्ष-न-भ—तं रुद्रम् । ४. ख-घ-ज्ञ-क्ष-त-न-भ-र—नभस्थलम् । ५. ख-घ-ज्ञ-क्ष-त-न-भ-य-श—देशश्चित्रः । ६. ख-घ-भ—बलाय; श—बले । ७. ख-घ-भ-श—क्षिप्रगामिने ।

**यो रजांसि विममे पार्थिवानि त्रिश्चिद्विष्णुर्मनवे बाधिताय ।**
**तस्य ते शर्मन्नुपदद्यमाने राया मदेम तन्वा३ तना च ॥ १३ ॥**

यः । रजांसि । विऽममे । पार्थिवानि । त्रिः । चित् । विष्णुः । मनवे । बाधिताय ।
तस्य । ते । शर्मन् । उपऽदद्यमाने । राया । मदेम । तन्वा । तना । च ॥१३॥

ᵛयः ᵛविष्णुः ᵛबाधिताय असुरैर्हिंसिताय ᵛमनवे प्रजापतये तदर्थं ᵛपार्थिवानि पृथिव्या[1] संबद्धानि[1] ᵛरजांसि लोकान् । त्रीँल्लोकानिति यावत् । ᵛत्रिः ᵛविममे । ᵛचित् इत्यवधारणे । त्रिभिरेव विक्रमणैः[2] परिमितवान् । हे विष्णो ᵛतस्य तादृशस्य ᵛते तव । तृतीयार्थे षष्ठी । ईदृशेन त्वया ᵛउपदद्यमाने अस्मभ्यं दीयमाने ᵛशर्मन् शर्मणि गृहे सुखे वा वर्तमानाः सन्तो वयं ᵛराया धनेन ᵛतन्वा रोगादिरहितेन शरीरेण च ᵛतना तनयेन पुत्रेण ᵛच ᵛमदेम मोदेम । हृष्टा भवेम[3] ॥

**तन्नोऽहिर्बुध्न्यो अद्भिरर्कैस्तत्पर्वतस्तत्सविता चनो धात् ।**
**तदोषधीभिरभि रातिषाचो भगः पुरंधिर्जिन्वतु प्र राये ॥ १४ ॥**

तत् । नः । अहिः । बुध्न्यः । अत्ऽभिः । अर्कैः । तत् । पर्वतः । तत् । सविता । चनः । धात् ।
तत् । ओषधीभिः । अभि । रातिऽसाचः । भगः । पुरम्ऽधिः । जिन्वतु । प्र । राये ॥१४॥

ᵛबुध्न्यः । बुध्नमन्तरिक्षम् । तत्र भवः ᵛअहिः । एत्यन्तरिक्ष इत्यहिः । उक्तं च—' अहिरयनादेत्यन्तरिक्षे ' ( निरु. २. १७ ) इति । एतत्पदद्वयाभिधेयो देवः ᵛअर्कैः अर्चनसाधनैर्मन्त्रैः स्तूयमानः सन् ᵛनः अस्मभ्यं ᵛतत् लोके प्रसिद्धं ᵛचनः अन्नम् ᵛअद्भिः उदकैः सार्धं ᵛधात् दधातु विदधातु । प्रयच्छतु । ᵛपर्वतः पूरयिता । ' पर्व पूरणे ' इति धातुः । यद्वा । पर्ववद्वज्रं पर्वतः । तद्वान् । पर्वतस्य गिरेः शत्रुरिति वा पर्वतः । स च ᵛतत् चनो दधातु । तथा ᵛसविता प्रेरको देवश्च ᵛतत् चनो दधातु । अपि च ᵛरातिषाचः । रातिं दानं सचन्ते सेवन्ते इति रातिषाचो विश्वे देवाः । ते च ᵛओषधीभिः । ओषः पाकः आसु धीयते इत्योषधयस्तिलमाषाद्याः । ताभिः सार्धं ᵛतत् अन्नम् ᵛअभि प्रयच्छन्तु । तथा ᵛपुरंधिः बहुधीर्बहुप्रज्ञो वा बहुकर्मा वा ᵛभगः भजनीय एतत्संज्ञो देवश्च ᵛराये धनार्थं ᵛप्र ᵛजिन्वतु अस्मान् प्रेरयतु ॥

**नू नो रयिं रथ्यं चर्षणिप्रां पुरुवीरं मह ऋतस्य गोपाम् ।**
**क्षयं दाताजरं येन जनान्त्स्पृधो अदेवीरभि च क्रमाम**
**विश आदेवीरभ्य१श्नवाम ॥ १५ ॥**

नु । नः । रयिम् । रथ्यम् । चर्षणिऽप्राम् । पुरुऽवीरम् । महः । ऋतस्य । गोपाम् ।
क्षयम् । दात । अजरम् । येन । जनान् । स्पृधः । अदेवीः । अभि । च । क्रमाम ।
विशः । आऽदेवीः । अभि । अश्नवाम ॥ १५ ॥

---

१. ख-झ–पृथिव्यां संबन्धान्; घ–पृथिव्यां संबद्धाः; झ-त-र–पृथिव्यां संबद्धानि; न-य–पृथिव्या संबद्धान्; भ–पृथिव्यां संबद्धान्; श–पृथिवीसंबन्धीनि । २. ख-झ-न-भ-य–क्रमणैः । ३. ख-झ-त-भ-य-र–स्म भवेम; न–संभवेम ।

हे सर्वे देवाः नः अस्मभ्यं रयिं धनं क्षयं गृहं च दात प्रयच्छत। कीदृशं रयिम्। रथ्यं रथसंबन्धिनम्। रथयुक्तमित्यर्थः। चर्षणिप्राम्। चर्षणयो मनुष्याः। तेषां पूरयितारं पुरुवीरम्। वीर्याज्जायन्त इति वीराः पुत्रादयः। बहुभिर्वीरैरुपेतम्। महः महतः ऋतस्य यज्ञस्य गोपां रक्षकम्। दक्षिणारूपेण धनेन हि यज्ञो रक्ष्यते। 'मृतो यज्ञस्त्वदक्षिणः' इति वचनात्। कीदृशं क्षयम्। अजरं जरारहितम्। येन रयिणा क्षयेण च जनान् शत्रून् स्पृधः स्पर्धमानाः अदेवीः[1] अदेवसंबन्धिनीः आसुरीः सेनाः च अभि क्रमाम अभिभवेम। तथा आदेवीः। आगता देवा यासु हविःस्वीकारार्थं ता आदेव्यः। तादृशीश्च विशः प्रजा यज्ञानुष्ठायिनीर्येन धनेन गृहेण च अभ्यश्नवाम अभिप्राप्नवाम तादृशं धनं गृहं च दातेत्यन्वयः॥ ॥ ७ ॥ ॥ ४ ॥

पञ्चमेऽनुवाके द्वादश सूक्तानि। तत्र 'हुवे वः' इति पञ्चदशर्चं प्रथमं सूक्तमृजिश्वन आर्षं बहुदेवताकं त्रैष्टुभम्। 'हुवे वः' इत्यनुक्रान्तम्। गतः सूक्तविनियोगः॥

हुवे वो देवीमदितिं नमोभिर्मृळीकाय वरुणं मित्रमग्निम्।
अभिक्षदामर्यमणं सुशेवं त्रातॄन्देवान्त्सवितारं भगं च ॥ १ ॥

हुवे। वः। देवीम्। अदितिम्। नमःऽभिः। मृळीकाय। वरुणम्। मित्रम्। अग्निम्।
अभिऽक्षदाम्। अर्यमणम्। सुऽशेवम्। त्रातॄन्। देवान्। सवितारम्। भगम्। च ॥१॥

हे देवाः वः युष्माकं मातरं देवीं द्योतमानाम् अदितिम् अखण्डनीयामदीनां वा एतत्संज्ञां देवतां मृळीकाय सुखार्थं नमोभिः नमस्कारैः स्तोत्रैर्वा हुवे ह्वयामि। स्तौमि। तथा वरुणं वारकं मित्रं प्रमीतेस्त्रायकं देवम् अग्निं चैतांश्च देवान् नमोभिर्हुवे। तथा अभिक्षदाम्। क्षदिर्हिंसाकर्मा। अभिक्षत्तारं शत्रूणां हिंसितारं सुशेवं सुसुखम् अर्यमणं च नमोभिर्हुवे। सवितारं भगं च नमोभिर्हुवे। किं बहुना त्रातॄन् पालयितॄन् सर्वान् देवान् नमोभिः स्तोत्रैर्हुवे स्तौमि॥

सुज्योतिषः सूर्य दक्षपितॄननागास्त्वे सुमहो वीहि देवान्।
द्विजन्मानो य ऋतसापः सत्याः स्वर्वन्तो यजता अग्निजिह्वाः ॥ २ ॥

सुऽज्योतिषः। सूर्य। दक्षऽपितॄन्। अनागाःऽत्वे। सुऽमहः। वीहि। देवान्।
द्विऽजन्मानः। ये। ऋतऽसापः। सत्याः। स्वःऽवन्तः। यजताः। अग्निऽजिह्वाः ॥२॥

हे सुमहः शोभनदीप्ते सूर्य सर्वस्य प्रेरक दक्षपितॄन्। दक्षः पितामहो[2] येषां ते दक्षपितरः। पितृशब्दो हि सामान्येन पूर्वपुरुषत्वमात्रं ब्रूते। यथा—'अहं पितॄन्त्सुविदत्राँ अवित्सि' (ऋ. सं. १०. १५. ३) इति। एषां दक्षपितृत्वं च 'अदितिर्ह्यजनिष्ट' (ऋ. सं. १०. ७२. ५) इति मन्त्रादवगम्यते। ईदृशान् सुज्योतिषः शोभनज्योतिष्कान् देवान् अनागास्त्वे अनपराधत्वे वीहि कामयस्व। यथास्माकमपराधं ते न कुर्वन्ति तथा कुर्या इत्यर्थः। ये देवाः द्विजन्मानः द्वयोर्लोकयोर्जायमानाः प्रादुर्भवन्तः ऋतसापः ऋतं यज्ञं स्पृशन्तः सत्याः अवितथाः सत्यवादिनो वा

१. ख-घ-ज्ञ-न-भ-र-आदेवीः। २. ज्ञ-ज्ञ-त-न-र-पिता मातामहो।

ᵛस्वर्वन्तः धनवन्तः ᵛयजताः यष्टव्याः ᵛअग्निजिह्वाः । अग्निर्जिह्वास्थानीयो येषां ते। एवंभूता ये देवाः सन्ति तान् देवान् वीहीत्यन्वयः ॥

उत द्यावापृथिवी क्षत्रमुरु बृहद्रोदसी शरणं सुषुम्ने ।
महस्करथो वरिवो यथा नोऽस्मे क्षयाय धिषणे अनेहः ॥ ३ ॥

उत । द्यावापृथिवी इति । क्षत्रम् । उरु । बृहत् । रोदसी इति । शरणम् । सुसुम्ने इति सुऽसुम्ने ।
महः । करथः । वरिवः । यथा । नः । अस्मे इति । क्षयाय । धिषणे इति । अनेहः ॥ ३ ॥

ᵛउत अपि च हे ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛउरु विस्तीर्णं ᵛक्षत्रं बलं ᵛकरथः कुरुतम् । तथा हे ᵛरोदसी द्यावापृथिव्यौ ᵛसुसुम्ने सुसुखे युवां ᵛबृहत् महत् ᵛशरणं गृहं च करथः कुरुतम् । ᵛमहः महत् ᵛवरिवः धनं ᵛनः अस्माकं ᵛयथा स्यात्तथा कुरुतमित्यर्थः । अपि च हे ᵛधिषणे धारयित्र्यौ द्यावापृथिव्यौ ᵛअनेहः पापराहित्यं च ᵛअस्मे अस्माकं ᵛक्षयाय निवासार्थं कुरुतम् ॥

आ नो रुद्रस्य सूनवो नमन्तामद्या हूतासो वसवोऽधृष्टाः ।
यदीमर्भे महति वा हितासो बाधे मरुतो अह्वाम देवान् ॥ ४ ॥

आ । नः । रुद्रस्य । सूनवः । नमन्ताम् । अद्य । हूतासः । वसवः । अधृष्टाः ।
यत् । ईम् । अर्भे । महति । वा । हितासः । बाधे । मरुतः । अह्वाम । देवान् ॥४॥

ᵛरुद्रस्य ᵛसूनवः पुत्रा मरुतः ᵛअद्य अस्मिन् काले ᵛहूतासः आहूताः सन्तः ᵛनः अस्मान् प्रति ᵛआ ᵛनमन्ताम् आनता भवन्तु । आगच्छन्तु । कीदृशाः । ᵛवसवः वासयितारः ᵛअधृष्टाः अन्यैरहिंसिताः[1] । ᵛयत् यदा ᵛईम् एनान् ᵛमरुतः ᵛदेवान् ᵛअर्भे अल्पे ᵛमहति प्रभूते ᵛवा ᵛबाधे संग्रामे ᵛहितासः निहिताः स्थिताः सन्तो वयम् ᵛअह्वाम आह्वयाम तदानीमित्येत्यन्वयः ॥

मिम्यक्ष येषु रोदसी नु देवी सिषक्ति पूषा अभ्यर्धयज्वा ।
श्रुत्वा हवं मरुतो यद्ध याथ भूमा रेजन्ते अध्वनि प्रविक्ते ॥ ५ ॥

मिम्यक्ष । येषु । रोदसी । नु । देवी । सिसक्ति । पूषा । अभ्यर्धऽयज्वा ।
श्रुत्वा । हवम् । मरुतः । यत् । ह । याथ । भूम । रेजन्ते । अध्वनि । प्रऽविक्ते ॥५॥

ᵛयेषु मरुत्सु ᵛरोदसी रुद्रस्य पत्नी ᵛदेवी द्योतमाना माध्यमिका वाक् ᵛमिम्यक्ष ᵛनु क्षिप्रं संगच्छते । तथा ᵛअभ्यर्धयज्वा स्तोतॄनभ्यर्धयन् समृद्धान् कुर्वन् यो यजति धनेन पूजयति तादृशः ᵛपूषा पोषको देवश्च ᵛसिषक्ति यान् मरुतः सेवते । 'अभ्यर्धयज्वाभ्यर्धयन्यजति' (निरु. ६.६) इति यास्कः । हे ᵛमरुतः ते यूयं ᵛहवम् अस्मदीयमाह्वानं ᵛश्रुत्वा ᵛयद्ध यदा खलु ᵛयाथ[2] आगच्छथ[2] तदानीम् ᵛअध्वनि मार्गे ᵛप्रविक्ते गमनार्थं पृथक्कृते सति तत्र विद्यमानानि ᵛभूम भूतजातानि

---

१. श—अन्यैरहताः । २. घ-त-भ-श—याथ गच्छथ; ख-झ-न-र—यथागच्छथ ।

vरेजन्ते कम्पन्ते । तथा च मन्त्रान्तरं—'प्र वेपयन्ति पर्वतान्वि विञ्चन्ति वनस्पतीन्' (ऋ. सं. १. ३९.५) इति ॥ ॥ ८ ॥

अभि त्यं वीरं गिर्वणसमर्चेन्द्रं ब्रह्मणा जरितर्नवेन ।
श्रवदिद्धवमुप च स्तवानो रासद्वाजाँ उप महो गृणानः ॥ ६ ॥

अभि । त्यम् । वीरम् । गिर्वणसम् । अर्च । इन्द्रम् । ब्रह्मणा । जरितः । नवेन ।
श्रवत् । इत् । हवम् । उप । च । स्तवानः । रासत् । वाजान् । उप । महः । गृणानः ॥६॥

हे vजरितः स्तोतः vत्यं तं प्रसिद्धं vवीरं वीर्यवन्तं विशेषेण शत्रूणामीरकं वा vगिर्वणसं गिरां संभक्तारमेवंविधम् vइन्द्रं vनवेन अभिनवेन शोभनेन vब्रह्मणा स्तोत्रेण vअभि vअर्च अभिष्टुहि । स च vस्तवानः स्तूयमानः सन् vहवम् अस्मदीयं स्तोत्रम् vउप vश्रवदित् उपशृणुयादेव । अपि च vगृणानः स्तूयमान इन्द्रः vमहः महतः प्रभूतान् vवाजान् अन्नानि vच vउप vरासत् प्रदेयात्[1] । यत एवमतः स्तुहीत्यर्थः ॥

ओमानमापो मानुषीरमृक्तं धात तोकाय तनयाय शं योः ।
यूयं हि ष्ठा भिषजो मातृतमा विश्वस्य स्थातुर्जगतो जनित्रीः ॥ ७ ॥

ओमानम् । आपः । मानुषीः । अमृक्तम् । धात । तोकाय । तनयाय । शम् । योः ।
यूयम् । हि । स्थ । भिषजः । मातृऽतमाः । विश्वस्य । स्थातुः । जगतः । जनित्रीः ॥७॥

हे vआपः vमानुषीः मनुष्यहिता यूयम् vअमृक्तम् अहिंसितम्[2] vओमानम् । अवति रक्षतीत्योमा रक्षकमन्नम् । vतोकाय पुत्राय vतनयाय तत्पुत्राय[3] च vधात धत्त । प्रयच्छत । तथा vशं शमनमुपद्रवाणां vयोः यावनं पृथक्करणं च पृथक्कर्तव्यानां[4] धत्त प्रयच्छत । कुत इत्यत आह । vहि यस्मात् vयूयं vमातृतमाः मातृभ्योऽप्यधिकाः vभिषजः[5] vस्थ भवथ तस्मात् धातेत्यन्वयः । कथं मातृभ्योऽप्यधिकं भैषज्यमस्तीत्यत[6] आह । vविश्वस्य सर्वस्य vस्थातुः स्थावरस्य vजगतः जङ्गमस्य vजनित्रीः जनयित्र्यो भवथ । अतो यूयं भिषजः स्थ ॥

आ नो देवः सविता त्रायमाणो हिरण्यपाणिर्यजतो जगम्यात् ।
यो दत्रवाँ उषसो न प्रतीकं व्यूर्णुते दाशुषे वार्याणि ॥ ८ ॥

आ । नः । देवः । सविता । त्रायमाणः । हिरण्यऽपाणिः । यजतः । जगम्यात् ।
यः । दत्रऽवान् । उषसः । न । प्रतीकम् । विऽऊर्णुते । दाशुषे । वार्याणि ॥ ८ ॥

vत्रायमाणः रक्षन् vहिरण्यपाणिः सुवर्णहस्तो हितरमणीयपाणिर्वा vयजतः यष्टव्यः एवंभूतः vसविता प्रेरकः vदेवः vनः अस्मान् vआ vजगम्यात् आगच्छतु । vयः देवः vदत्रवान् धनवान्

---

१. ख-घ-भ—प्रदद्यात् । २. ख—हिंसन्तम्; घ-भ-श—अहिंसन्तम् । ३. ख-ङ्ग-न-भ—तत्सुताय । ४. ख-ङ्ग-न-भ—पृथक्कर्तव्यानां भयानाम् । ५. ख-घ-भ—भिषजः आरोग्यकर्तारः । ६. त—भैषज्यमास्त्वित्यत ।

ᐯउषसो ᐯन ᐯप्रतीकम् उषसः प्रमुखमिव ᐯदाशुषे हवींषि दत्तवते यजमानाय ᐯवार्याणि वरणीयानि धनानि[1] ᐯव्यूर्णुते विवृणोति प्रकाशयति स सवितेत्यन्वयः ॥

उत त्वं सूनो सहसो नो अद्या देवाँ अस्मिन्नध्वरे ववृत्याः ।
स्यामहं ते सदमिद्रातौ तव स्यामग्नेऽवसा सुवीरः ॥ ९ ॥

उत । त्वम् । सूनो इति । सहसः । नः । अद्य । आ । देवान् । अस्मिन् । अध्वरे । ववृत्याः ।
स्याम् । अहम् । ते । सदम् । इत् । रातौ । तव । स्याम् । अग्ने । अवसा । सुऽवीरः ॥९॥

ᐯउत अपि च हे ᐯसहसः ᐯसूनो बलस्य पुत्राग्ने ᐯत्वम् ᐯअद्य अस्मिन् काले ᐯनः अस्मदीये ᐯअस्मिन्नध्वरे यागे ᐯदेवान् यष्टव्यानिन्द्रादीन् ᐯआ ᐯववृत्याः आवर्तय । आगमय । अपि च ᐯअहं ᐯते तव ᐯरातौ धनस्य दाने ᐯसदमित् सर्वदैव वर्तमानः ᐯस्यां भवेयम् । तथा हे ᐯअग्ने ᐯतव ᐯअवसा त्वदीयेन रक्षणेन ᐯसुवीरः शोभनैर्वीरैः पुत्रपौत्रादिभिरुपेतश्च ᐯस्यां भवेयम् ॥

उत त्या मे हवमा जग्म्यातं नासत्या धीभिर्युवमङ्ग विप्रा ।
अत्रिं न महस्तमसोऽमुमुक्तं तूर्वतं नरा दुरितादभीके ॥ १० ॥

उत । त्या । मे । हवम् । आ । जग्म्यातम् । नासत्या । धीभिः । युवम् । अङ्ग । विप्रा ।
अत्रिम् । न । महः । तमसः । अमुमुक्तम् । तूर्वतम् । नरा । दुःऽइतात् । अभीके ॥१०॥

ᐯउत अपि च हे ᐯविप्रा प्राज्ञौ ᐯनासत्या सत्यस्वभावौ सत्यस्य नेतारौ वा हे अश्विनौ ᐯत्या तौ प्रसिद्धौ ᐯयुवं युवां ᐯधीभिः परिचरणकैः[2] कर्मभिरुपेतं ᐯमे मदीयं ᐯहवं स्तोत्रम् ᐯअङ्ग क्षिप्रम् ᐯआ ᐯजग्म्यातम् आगच्छतम् । आगत्य च ᐯमहः महतः ᐯतमसः असुरकृतादन्धकारात् ᐯअत्रिं ᐯन यथात्रिमृषिम् ᐯअमुमुक्तं मोचितवन्तौ स्थः हे ᐯनरा नेतारावश्विनौ तथास्मानपि ᐯअभीके अभ्यक्ते प्राप्ते संग्रामे ᐯदुरितात् दुःखात् शत्रुकृतात् ᐯतूर्वतम् अस्मांस्तारयतम् ॥ ॥ ९ ॥

ते नो रायो द्युमतो वाजवतो दातारो भूत नृवतः पुरुक्षोः ।
दशस्यन्तो दिव्याः पार्थिवासो गोजाता अप्या मृळता च देवाः ॥ ११ ॥

ते । नः । रायः । द्युऽमतः । वाजऽवतः । दातारः । भूत । नृऽवतः । पुरुऽक्षोः ।
दशस्यन्तः । दिव्याः । पार्थिवासः । गोऽजाताः । अप्याः । मृळत । च । देवाः ॥११॥

हे ᐯदेवाः ᐯते यूयं ᐯद्युमतः दीप्तिमतः ᐯवाजवतः बलयुक्तस्य ᐯनृवतः नृभिः पुत्रादिभिरुपेतस्य ᐯपुरुक्षोः बहुभिः कीर्तनीयस्य ᐯरायः धनस्य ᐯनः अस्मभ्यं ᐯदातारो ᐯभूत भवत । अपि च ᐯदशस्यन्तः कामान् प्रयच्छन्तः ᐯदिव्याः दिवि भवा आदित्याः ᐯपार्थिवासः पृथिव्यां भवा वसवः ᐯगोजाताः । गौः पृश्निर्माध्यमिका वाक् । तत उत्पन्ना मरुतः ᐯअप्याः अप्सु अन्तरिक्षे भवा रुद्राः[3] ᐯच ते सर्वे यूयम् अस्मान् ᐯमृळत सुखयत ॥

---

१. ख-क्ष-न-भ—संभजनीयानि धनानि । २. ख-घ-भ-श—परिचारकैः । ३. ख-घ-भ-श—सेन्द्राः ।

ते नो रुद्रः सरस्वती सजोषा मीळ्हुष्मन्तो विष्णुर्मृळन्तु वायुः ।
ऋभुक्षा वाजो दैव्यो विधाता पर्जन्यावाता पिप्यतामिषं नः ॥ १२ ॥

ते । नः । रुद्रः । सरस्वती । सऽजोषाः । मीळ्हुष्मन्तः । विष्णुः । मृळन्तु । वायुः ।
ऋभुक्षाः । वाजः । दैव्यः । विऽधाता । पर्जन्यावाता । पिप्यताम् । इषम् । नः ॥ १२ ॥

ᵛमीळ्हुष्मन्तः वर्षणवन्तः ᵛते देवाः ᵛनः अस्मान् ᵛमृळन्तु मृळयन्तु सुखयन्तु । के त इति चेदुच्यते । ᵛरुद्रः ᵛसरस्वती च ᵛसजोषाः सह प्रीयमाणाः ᵛविष्णुः ᵛवायुः च ᵛऋभुक्षाः । ऋभुर्विभ्वा वाज इति त्रयः सौधन्वनाः । तेषामाद्यो ऋभुश्च ᵛवाजः अन्तिमश्च । उपलक्षणमेतत् । विभ्वा च । ᵛदैव्यः देवेभ्यो हितः ᵛविधाता प्रजापतिश्च । अपि च ᵛपर्जन्यावाता पर्जन्यश्च वायुश्चोभौ ᵛनः अस्मभ्यम् ᵛइषम् अन्नं ᵛपिप्यतां वर्धयताम् ॥

उत स्य देवः सविता भगो नोऽपां नपादवतु दानु पप्रिः ।
त्वष्टा देवेभिर्जनिभिः सजोषा द्यौर्देवेभिः पृथिवी समुद्रैः ॥ १३ ॥

उत । स्यः । देवः । सविता । भगः । नः । अपाम् । नपात् । अवतु । दानु । पप्रिः ।
त्वष्टा । देवेभिः । जनिऽभिः । सऽजोषाः । द्यौः । देवेभिः । पृथिवी । समुद्रैः ॥ १३ ॥

ᵛउत अपि च ᵛस्यः स यः प्रेरकतया सर्वत्र प्रख्यातः सः ᵛसविता ᵛदेवः ᵛभगः च[1] ᵛअपां ᵛनपात् च अपां मेघस्थानां पुत्रो माध्यमिकोऽग्निः स च ᵛनः अस्मान् ᵛअवतु रक्षतु । कीदृशोऽपां नपात् । ᵛदानु दातव्यं धनं ᵛपप्रिः प्राता पूरयिता ॥ ' प्रा पूरणे ' इत्यस्मात् ' आदृगमहन० ' इति किनो लिड्वद्भावात् ' न लोकाव्यय० ' इति षष्ठीप्रतिषेधः ॥ तथा ᵛदेवेभिः देवैः ᵛजनिभिः तत्पत्नीभिश्च ᵛसजोषाः सहप्रीतिः[2] ᵛत्वष्टा च ᵛदेवेभिः देवैः सह प्रीयमाणा ᵛद्यौः च ᵛसमुद्रैः सह प्रीयमाणा ᵛपृथिवी चैताश्च सर्वा देवता अस्मानवन्तु ॥

आग्निमारुते ' उत नोऽहिः ' इत्येषा । सूत्रितं च—' उत नोऽहिर्बुध्न्यः शृणोतु देवानां पत्नीरुशतीरवन्तु नः ' ( आश्व. श्रौ. ५. २० ) इति ॥

उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः ।
विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु ॥ १४ ॥

उत । नः । अहिः । बुध्न्यः । शृणोतु । अजः । एकऽपात् । पृथिवी । समुद्रः ।
विश्वे । देवाः । ऋतऽवृधः । हुवानाः । स्तुताः । मन्त्राः । कविऽशस्ताः । अवन्तु ॥ १४ ॥

ᵛउत अपि च ᵛअहिर्बुध्न्यः ᵛनः अस्माकं स्तोत्रं ᵛशृणोतु । ᵛअजः जन्मरहितः । एकः असहाय एव पद्यते गच्छतीति ᵛएकपात् । एतत्पदद्वयाभिधेयो देवश्च ᵛपृथिवी ᵛसमुद्रः च अस्मदीयं

---

१. ख-घ-भ— च नोऽस्मान् रक्षताम् । २. श—सहप्रीतियुक्ताः ।

स्तोत्रं शृणोतु । अपि च ᵛऋतावृधः ऋतस्य यज्ञस्य सत्यस्य वा वर्धयितारः ᵛहुवानाः अस्माभिराहूयमानाः पूर्वैर्ऋषिभिश्च स्तोत्रैः ᵛस्तुता ᵛमन्त्राः मन्त्रणीया गुप्तं भाषितव्या मन्त्रप्रतिपाद्या वा ᵛकविशस्ताः कविभिर्मेधाविभिः ऋषिभिः[1] शस्त्रैः शंसिता ईदृशाः ᵛविश्वे ᵛदेवाः ᵛअवन्तु अस्मान् रक्षन्तु ॥

एवा नपातो मम तस्य धीभिर्भरद्वाजा अभ्यर्चन्त्यर्कैः ।
ग्ना हुतासो वसवोऽधृष्टा विश्वे स्तुतासो भूता यजत्राः ॥ १५ ॥

एव । नपातः । मम । तस्य । धीभिः । भरत्ऽवाजाः । अभि । अर्चन्ति । अर्कैः ।
ग्नाः । हुतासः । वसवः । अधृष्टाः । विश्वे । स्तुतासः । भूत । यजत्राः ॥ १५ ॥

ᵛएव एवं योऽहं देवान् स्तुतवान् ᵛतस्य ᵛमम ऋजिश्वनः ᵛनपातः पुत्राः ᵛभरद्वाजाः भरद्वाजगोत्रजाः[2] सुहोत्रादयः ᵛधीभिः स्तोत्रैः ᵛअर्कैः अर्चनसाधनैः ᵛअभ्यर्चन्ति अभिष्टुवन्ति । हे ᵛयजत्राः यष्टव्या देवाः ᵛहुतासः पुरोडाशादिभिर्हविभिः हुतास्तर्पिताः ᵛवसवः[3] निवासयितारः ᵛअधृष्टाः कैरप्यहिंसिताः[3] एवंभूताः ᵛविश्वे ते सर्वे यूयं ᵛग्नाः देवपत्न्यश्च ᵛस्तुतासो ᵛभूत । तैः सुहोत्रादिभिः स्तुता भवत ॥ ॥ १० ॥

'उदु त्यत्' इति षोडशर्चं द्वितीयं सूक्तमृजिश्वन आर्षं वैश्वदेवम् । त्रयोदश्याद्यास्तिस्र उष्णिहः षोडश्यनुष्टुप् शिष्टास्त्रिष्टुभः । तथा चानुक्रान्तम्—'उदु त्यत्षोळश त्र्युष्णिगनुष्टुबन्तम्' इति । गतः सूक्तविनियोगः ॥

उदु त्यच्चक्षुर्महि मित्रयोराँ एति प्रियं वरुणयोरदब्धम् ।
ऋतस्य शुचि दर्शतमनीकं रुक्मो न दिव उदिता व्यद्यौत् ॥ १ ॥

उत् । ऊँ इति । त्यत् । चक्षुः । महि । मित्रयोः । आ । एति । प्रियम् । वरुणयोः । अदब्धम् ।
ऋतस्य । शुचि । दर्शतम् । अनीकम् । रुक्मः । न । दिवः । उत्ऽइता । वि । अद्यौत् ॥ १ ॥

ᵛत्यत् तत् प्रसिद्धं ᵛचक्षुः प्रकाशकं ᵛमहि महत् विस्तृतं ᵛमित्रयोः[4] ᵛवरुणयोः[4] ᵛप्रियं । मित्रशब्दो वरुणशब्दश्च इतरेतरयोगात् मित्रावरुणावुभावप्याचष्टे । मित्रावरुणयोः प्रियम्[5] ᵛअदब्धं रक्षोभिरहिंसितं ᵛशुचि शुद्धं निर्मलं ᵛदर्शतं दर्शनीयम् । एवंभूतम् ᵛऋतस्य आदित्यस्य ᵛअनीकं तेजः ᵛआ सर्वेषामभिमुखम् ᵛउत् ᵛएति उद्गच्छति । ᵛउदिता उदितौ सूर्यस्योदये सति उदितं तत्तेजः ᵛदिवः अन्तरिक्षस्य ᵛरुक्मो ᵛन भूषणमिव ᵛव्यद्यौत् विद्योतते । प्रकाशते[6] ॥

---

१. ख-ञ्ज-न-भ-'ऋषिभिः' नास्ति । २. घ-श-°गोत्रकाः । ३. ञ्ज-ञ्ज-त-न-भ-य-र-अधृष्टाः शत्रुभिरहिंसिता वसवो निवासयितारः । ४. ख-भ-मित्रयोः मित्रावरुणयोः; श-मित्रयोः वरुणमित्रयोः प्रियमित्रयोः । ५. ञ्ज-ञ्ज-त-न-भ-र-श-अतिप्रियम्; य-इति प्रियम् । ६. ख-भ-प्रकाशते उ पूरणः ।

वेद यस्त्रीणि विदथान्येषां देवानां जन्म सनुतरा च विप्रः ।
ऋजु मर्तेषु वृजिना च पश्यन्नभि चष्टे सूरो अर्य एवान् ॥ २ ॥

वेद । यः । त्रीणि । विदथानि । एषाम् । देवानाम् । जन्म । सनुतः । आ । च । विप्रः ।
ऋजु । मर्तेषु । वृजिना । च । पश्यन् । अभि । चष्टे । सूरः । अर्यः । एवान् ॥ २ ॥

यः सूर्यः त्रीणि त्रिसंख्यानि विदथानि वेदितव्यानि स्थानानि त्रीँल्लोकान् वेद वे जानाति । एषाम् एतल्लोकत्रयवर्तिनां देवानां वसुरुद्रादित्यात्मनां सनुतः । अन्तर्हितनामैतत् अन्तर्हितमप्रज्ञायमानं जन्म जननं च यः विप्रः मेधावी सूर्यो वेत्ति । आकारः पूरकः । स सूरः सूर्यः मर्तेषु मनुष्येषु विद्यमानानि ऋजु ऋजूनि शोभनानि कर्माणि वृजिना वृजिनान् शोभनानि कर्माणि च पश्यन् साक्षितया जानन् अभि चष्टे अभितः सर्वं जगत् प्रकाशयति तथा अर्यः स्वामी भूत्वा एवान् प्राप्तव्यान् कामांश्च मनुष्येषु प्रकाशयति ॥

स्तुष उ वो मह ऋतस्य गोपानदितिं मित्रं वरुणं सुजातान् ।
अर्यमणं भगमदब्धधीतीनच्छा वोचे सधन्यः पावकान् ॥ ३ ॥

स्तुषे । ऊँ इति । वः । महः । ऋतस्य । गोपान् । अदितिम् । मित्रम् । वरुणम् । सुऽजातान्
अर्यमणम् । भगम् । अदब्धऽधीतीन् । अच्छ । वोचे । सऽधन्यः । पावकान् ॥३॥

हे देवाः महः महतः ऋतस्य यज्ञस्य गोपान् रक्षकान् वः युष्मान् स्तुषे स्तुवे । उ इति पूरणः । तानेव देवानाह । अदितिम् अदीनां देवमातरं मित्रं वरुणं चैतान् सुजाता शोभनजननान् अर्यमणं भगं च अदब्धधीतीन् अहिंसितकर्मणः सधन्यः धनसहितान् पावका विश्वस्य शोधकान् । ईदृशान् सर्वान् देवान् अच्छ वोचे अभिप्रब्रवीमीत्यर्थः ॥

रिशादसः सत्पतीँरदब्धान्महो राज्ञः सुवसनस्य दातॄन् ।
यूनः सुक्षत्रान्क्षयतो दिवो नॄनादित्यान्याम्यदितिं दुवोयु ॥ ४ ॥

रिशादसः । सत्ऽपतीन् । अदब्धान् । महः । राज्ञः । सुऽवसनस्य । दातॄन् ।
यूनः । सुऽक्षत्रान् । क्षयतः । दिवः । नॄन् । आदित्यान् । यामि । अदितिम् । दुवःऽयु ॥

रिशादसः रिशतां हिंसकानामसितॄन् क्षेप्तॄन् यद्वा रिशानां हिंसकानामत्तॄन् भक्षयितॄन् सत्पती सतां पालयितॄन् अदब्धान् अहिंसितान् महः महतः राज्ञः राजमानानीश्वरान् वा सुवसन शोभननिवासस्य दातॄन् यूनः नित्यतरुणान् सुक्षत्रान् शोभनधनान् शोभनबलान् वा क्षय सर्वत्र निवसतः[1] । यद्वा । क्षयतिरैश्वर्यकर्मा । ईशानान् दिवः द्युलोकस्य नॄन् नेतॄन् आदित्या अदितेः पुत्रान् । ईदृशान् सर्वान् देवान् दुवोयु । लुप्तविभक्तिकमेतत् । दुवोयुं दुवोऽस्मर्द परिचरणं कामयमानाम् अदितिं देवमातरं च यामि प्राप्नोमि । यद्वा । यामि याचामि ॥

---

१. झ-त-न-भ-र – निवासतः ।

द्यौ३ष्पितः पृथिवि मातरध्रुगग्ने भ्रातर्वसवो मृळता नः ।
विश्व आदित्या अदिते सजोषा अस्मभ्यं शर्म बहुलं वि यन्त ॥ ५ ॥

द्यौः । पितरिति । पृथिवि । मातः । अध्रुक् । अग्ने । भ्रातः । वसवः । मृळत । नः ।
विश्वे । आदित्याः । अदिते । सऽजोषाः । अस्मभ्यम् । शर्म । बहुलम् । वि । यन्त ॥ ५ ॥

हे पितः पितृस्थानीय द्यौः द्युलोक हे मातः मातृस्थानीये अध्रुक् अद्रोग्धि पृथिवि हे भ्रातः भ्रातृस्थानीय अग्ने हे वसवः वासयितारो[1] देवाः ते सर्वे यूयं नः अस्मान् मृळत सुखयत । हे विश्वे आदित्याः सर्वेऽदितिपुत्रा देवा हे अदिते यूयं सजोषाः संगता भूत्वा अस्मभ्यं बहुलम् अधिकं शर्म सुखं विस्तृतं वा गृहं वि यन्त प्रयच्छत ॥ ॥ ११ ॥

मा नो वृकाय वृक्यै समस्मा अघायते रीरधता यजत्राः ।
यूयं हि ष्ठा रथ्यो नस्तनूनां यूयं दक्षस्य वचसो बभूव ॥ ६ ॥

मा । नः । वृकाय । वृक्यै । समस्मै । अघऽयते । रीरधत । यजत्राः ।
यूयम् । हि । स्थ । रथ्यः । नः । तनूनाम् । यूयम् । दक्षस्य । वचसः । बभूव ॥ ६ ॥

हे यजत्राः यष्टव्या देवाः नः अस्मान् वृकाय हिंसकाय स्तेनाय वृक्ये तस्य स्त्रियै च मा रीरधत मा वशं नैष्ट । मा वशीकुरुत । यद्वा । वृकोऽरण्यश्वा तस्य स्त्री वृकी । अपि च समस्मै सर्वस्मै अघायते अघमनर्थमस्माकमिच्छते शत्रुजनायास्मान् मा वशं नयत । यूयं हि यूयं खलु नः अस्माकं तनूनां शरीराणां रथ्यः नेतारः स्थ भवथ । यूयम् एव दक्षस्य अस्मदीयस्य बलस्य वचसः वाक्यस्य च नेतारः बभूव[2] । अतः कारणात् अस्मान् मा रीरधतेत्यन्वयः ॥

मा व एनो अन्यकृतं भुजेम मा तत्कर्म वसवो यच्चयध्वे ।
विश्वस्य हि क्षयथ विश्वदेवाः स्वयं रिपुस्तन्वं रीरिषीष्ट ॥ ७ ॥

मा । वः । एनः । अन्यऽकृतम् । भुजेम । मा । तत् । कर्म । वसवः । यत् । चयध्वे ।
विश्वस्य । हि । क्षयथ । विश्वऽदेवाः । स्वयम् । रिपुः । तन्वम् । रिरिषीष्ट ॥ ७ ॥

हे देवाः वः युष्माकं स्वभूता वयम् अन्यकृतम् अन्यैः शत्रुभिः कृतमुत्पादितम् एनः पापं मा भुजेम मा भुंक्ष्महि । हे वसवः वासयितारो देवाः यत् येन कृतेन पापेन चयध्वे अस्मान् बाधध्वे । चयतिर्हिंसाकर्मा । तत् च पापं मा कर्म मा कार्ष्म ॥ करोतेर्माङि लुङि 'मन्त्रे घस°' इति च्लेर्लुक् ॥ हे विश्वदेवाः सर्वे देवाः विश्वस्य सर्वस्य जगतो यूयं हि क्षयथ ईश्वरा भवथ । अतः कारणात् अस्मदीयः रिपुः शत्रुः तन्वं स्वशरीरं स्वयम् एव रिरिषीष्ट[3] हिंस्यात् । यथैवं भवति तथा कुरुतेति भावः ॥

---

१. ख-घ-ङ्ग-त-न-भ-श – निवासयितारो । २. ङ्ग-न – बभूव बभूवथ; र – बभूवथ । ३. ख-घ-भ-श – मा रीरिषीष्ट ।

नम॑ इदु॒ग्रं नम॒ आ वि॑वासे॒ नमो॑ दाधार पृथि॒वीमु॒त द्याम् ।
नमो॑ दे॒वेभ्यो॒ नम॒ ईश एषां कृ॒तं चि॒देनो॒ नम॒सा वि॑वासे ॥ ८ ॥

नम॑ः । इत् । उ॒ग्रम् । नम॑ः । आ । वि॒वा॒से॒ । नम॑ः । दा॒धा॒र॒ । पृ॒थि॒वीम् । उ॒त । द्याम् ।
नम॑ः । दे॒वेभ्य॑ः । नम॑ः । ई॒शे॒ । ए॒षा॒म् । कृ॒तम् । चि॒त् । एन॑ः । नम॑सा । आ । वि॒वा॒से॒ ॥८॥

आस्तां तावद्देवानां माहात्म्यं तदीयो नमस्कारोऽपीत्थंमहाभाग इति ब्रुवाणः कैमुतिकन्यायेन देवान् स्तौति । ᵛनम ᵛइत् नमस्कार एव ᵛउग्रम् उद्गूर्णबलं सर्वोत्कृष्टम् । तेन हि सर्वं लभ्यते । अतः ᵛनमः नमस्कारम् ᵛआ ᵛविवासे परिचरामि । ᵛनमः नमस्कार एव ᵛपृथिवीमुत ᵛद्यां द्युलोकं च ᵛदाधार धारयति । द्यावापृथिव्यौ प्राणिभिर्नमस्क्रियमाणे सत्यौ तदुपभोगाय चिरकालमवतिष्ठेते । अतः ᵛदेवेभ्यः ईदृशं ᵛनमः करोमि[1] । ᵛएषां देवानां ᵛनमः नमस्कारः ᵛईशे ईष्टे । यतस्तेन ते वशीकृताः । ᵛकृतं ᵛचित् कृतमप्याचरितमपि ᵛएनः पापं ᵛनमसा नमस्कारेण ᵛआ ᵛविवासे । विवासो वर्जनम् । वर्जयामि । विनाशयामि ॥

ऋ॒तस्य॑ वो र॒थ्य॑ः पू॒तद॑क्षानृ॒तस्य॑ पस्त्य॒सदो॒ अद॑ब्धान् ।
ताँ आ नमो॑भिरुरु॒चक्ष॑सो॒ नॄन्विश्वा॑न्व॒ आ न॑मे म॒हो यज॑त्राः ॥ ९ ॥

ऋ॒तस्य॑ । व॒ः । र॒थ्य॑ः । पू॒तऽद॑क्षान् । ऋ॒तस्य॑ । प॒स्त्य॒ऽसद॑ः । अद॑ब्धान् ।
तान् । आ । नम॑ःऽभिः । उ॒रु॒ऽचक्ष॑सः । नॄन् । विश्वा॑न् । व॒ः । आ । न॒मे॒ । म॒हः । य॒ज॒त्रा॒ः ॥९॥

हे ᵛयजत्राः यष्टव्या देवाः ᵛवः युष्मदीयस्य ᵛऋतस्य यज्ञस्य ᵛरथ्यः रंहितॄन् नेतॄन् ᵛपूतदक्षान् शुद्धबलान् ᵛऋतस्य यज्ञस्य ᵛपस्त्यसदः यज्ञसंबन्धिनि पस्त्ये देवयजनलक्षणे गृहे सीदतो निषण्णान् ᵛअदब्धान् रक्षःप्रभृतिभिरहिंसितान् ᵛउरुचक्षसः बहुद्रष्टॄन् ᵛनॄन् नेतॄन् ᵛमहः महतः ᵛतान् ᵛविश्वान् सर्वान् ᵛवः युष्मान् ᵛआ आभिमुख्येन क्रियमाणैः ᵛनमोभिः नमस्कारैः ᵛआ ᵛनमे आनतोऽस्मि ॥

ते हि श्रेष्ठ॑वर्चस॒स्त उ॑ नस्ति॒रो विश्वा॑नि दु॒रि॒ता नय॑न्ति ।
सु॒क्ष॒त्रासो॒ वरु॑णो मि॒त्रो अ॒ग्निर्ऋ॒तधी॑तयो वक्म॒राज॑सत्याः ॥ १० ॥

ते । हि । श्रेष्ठ॑ऽवर्चसः । ते । ऊँ॒ इति॑ । न॒ः । ति॒रः । विश्वा॑नि । दु॒ःऽइ॒ता । नय॑न्ति ।
सु॒ऽक्ष॒त्रास॑ः । वरु॑णः । मि॒त्रः । अ॒ग्निः । ऋ॒तऽधी॑तयः । व॒क्म॒रा॒ज॑ऽसत्याः ॥ १० ॥

ये देवा वक्ष्यमाणगुणाः ᵛते ᵛहि ते खलु ᵛश्रेष्ठवर्चसः प्रशस्यतमदीप्तयो भवन्ति । अतः ᵛत ᵛउ त एव ᵛनः अस्माकं ᵛविश्वानि सर्वाणि ᵛदुरिता[2] पापानि ᵛतिरः तिरोहितानि यथा भवन्ति तथा ᵛनयन्ति नयन्तु । विनाशयन्त्वित्यर्थः । ये वरुणादयो देवाः ᵛसुक्षत्रासः शोभनबलाः शोभनधना वा ᵛऋतधीतयः सत्यकर्माणः ᵛवक्मराजसत्याः । वक्म वचनं स्तोत्रम् । तस्य राजान ईशाना वक्मराजाः स्तोतारः । तेषु सत्या अवितथाः । एवंभूतास्ते हीत्यन्वयः ॥ ॥ १२ ॥

---

१. ख-भ-नमस्करोमि । २. श-दुरिता दुरितानि ।

ते न॒ इन्द्रः॑ पृथि॒वी क्षाम॑ वर्धन्पू॒षा भगो॒ अदि॑तिः॒ पञ्च॒ जनाः॑ ।
सु॒शर्मा॑णः॒ स्ववसः सुनी॒था भव॑न्तु नः सु॒त्रा॒त्रासः॑ सुगो॒पाः ॥ ११ ॥

ते । न॒ः । इन्द्रः॑ । पृ॒थि॒वी । क्षाम॑ । व॒र्धन् । पू॒षा । भगः॑ । अदि॑तिः । पञ्च॑ । जनाः॑ ।
सु॒ऽशर्मा॑णः । सु॒ऽअव॑सः । सु॒ऽनी॒थाः । भव॑न्तु । न॒ः । सु॒ऽत्रा॒त्रासः॑ । सु॒ऽगो॒पाः ॥११॥

ᵛते[1] देवाः ᵛनः अस्माकं ᵛक्षाम निवासभूमिं[2] ᵛवर्धन् वर्धयन्तु । के ते । ᵛइन्द्रः ᵛपृथिवी च ᵛपूषा च ᵛभगः च ᵛअदितिः अदीना देवमाता च ᵛपञ्च ᵛजनाः 'देवमनुष्याणां गन्धर्वाप्सरसाम्' (ऐ. ब्रा. ३. ३१) इत्यादिब्राह्मणोक्ता देवमनुष्यादयश्च[3] ते च ᵛनः अस्मदर्थं ᵛसुशर्माणः सुसुखाः ᵛस्ववसः शोभनान्नाः ᵛसुनीथाः सुप्रापणाश्च ᵛभवन्तु । अस्मभ्यं शोभनसुखादिकं प्रयच्छन्त्विति भावः । तथा ᵛसुत्रात्रासः सुष्ठु त्रातारः ᵛसुगोपाः शोभनगोपायितारश्च भवन्तु । उपस्थितेभ्यः शत्रुभ्यो रक्षणं त्राणम् । तेषामुत्पत्तिनिरोधेन रक्षणं गोपनम् ॥

नू स॒द्मानं॑ दि॒व्यं नंशि॑ देवा॒ भार॑द्वाजः सु॒म॒तिं या॑ति॒ होता॑ ।
आ॒सा॒नेभि॒र्यज॑मानो मि॒येधै॑र्दे॒वानां॒ जन्म॑ वसू॒युर्व॑वन्द ॥ १२ ॥

नु । स॒द्मान॑म् । दि॒व्यम् । नंशि॑ । दे॒वाः॒ । भार॑त्ऽवाजः । सु॒ऽम॒तिम् । या॒ति॒ । होता॑ ।
आ॒सा॒नेभिः॑ । यज॑मानः । मि॒येधैः॑ । दे॒वाना॑म् । जन्म॑ । व॒सु॒ऽयुः । व॒व॒न्द ॥ १२ ॥

अनया ऋषिरात्मानं परोक्षवदाह[4] । हे ᵛदेवाः ᵛभारद्वाजः भरद्वाजगोत्रजः ᵛहोता स्तोता अयमृषिः ᵛदिव्यं दिवि भवं ᵛसद्मानं सदनं स्थानं ᵛनु क्षिप्रं ᵛनंशि व्याप्नोतु । तथा ᵛसुमतिं शोभनां मतिं युष्मदीयामनुग्रहबुद्धिं च ᵛयाति याचते । यातिर्याच्ञाकर्मा । तदर्थम् ᵛआसानेभिः आसीनैः सत्रासनं कुर्वद्भिः ᵛमियेधैः मेध्यैर्मेधार्हैः अन्ययजमानैः[5] सार्धं ᵛयजमानः यागं कुर्वन्नयमृषिः ᵛवसूयुः वसूनि धनान्यात्मन इच्छन् ᵛदेवानां ᵛजन्म जनं[6] संघं[6] ᵛववन्द वन्दते । स्तौति ॥

दशरात्रस्य चतुर्थेऽहनि प्रउगशस्त्रे 'अप त्यं वृजिनम्' इत्येष वैश्वदेवस्तृचः । सूत्रितं च— 'अप त्यं वृजिनं रिपुमश्विनतमे नदीतम इत्यानुष्टुभं प्रउगम्' (आश्व. श्रौ. ७.११) इति ॥

अप॒ त्यं वृ॑जि॒नं रि॒पुं स्ते॒नम॑ग्ने दुरा॒ध्य॑म् । दवि॒ष्ठम॑स्य सत्पते कृ॒धी सु॒गम् ॥१३॥

अप॑ । त्यम् । वृ॒जि॒नम् । रि॒पुम् । स्ते॒नम् । अ॒ग्ने॒ । दुः॒ऽआ॒ध्य॑म् ।
द॒वि॒ष्ठम् । अ॒स्य॒ । स॒त्ऽप॒ते॒ । कृ॒धि । सु॒ऽगम् ॥ १३ ॥

हे ᵛअग्ने त्वं ᵛत्यं तं प्रसिद्धं ᵛवृजिनं कुटिलं ᵛरिपुं पापकारिणं ᵛदुराध्यं दुःखस्याध्यातारं दुष्टाभिप्रायमेवंभूतं ᵛस्तेनं हिंसकं ᵛदविष्ठं दूरतमम् ᵛअप ᵛअस्य अपक्षिप । 'असु क्षेपणे' इति

१. ख-भ–ते तादृशाः । २. झ-न-र–भूमिम् । ३. ख-भ–देवमनुष्यादयः पितृसर्पाश्च । ४. ख-घ-भ-श–परोक्षतयाह । ५. घ-झ-त-भ-र–अन्ययाजमानैः । ६. ख-घ-भ–जनसंघम्; श–जननं सर्वम् ।

धातुः । हे सत्पते सतां पालयितरग्ने अस्माकं सुगं शोभनेन[1] गन्तव्यं[1] सुखं कृधि कुरु । अत्र सर्वदेवात्मकस्याग्नेः स्तवनाद्वैश्वदेवत्वम् ॥

**ग्रावा॑णः सोम नो॒ हि कं॑ सखित्व॒नाय॑ वाव॒शुः ।**
**ज॒ही न्य१॒॑त्रिणं॑ प॒णिं वृको॒ हि षः ॥ १४ ॥**

ग्रावा॑णः । सोम॒ । न॒ः । हि । कम् । स॒खि॒ऽत्व॒नाय॑ । वा॒व॒शुः ।
ज॒हि । नि । अ॒त्रिण॑म् । प॒णिम् । वृकः॑ । हि । सः ॥ १४ ॥

हे सोम नः अस्मदीया इमे ग्रावाणः अभिषवार्थाः पाषाणाः तव सखित्वनाय सख्यार्थं वावशुः कामयन्ते । कम् इति पूरकः । हि यस्मादर्थे । यस्मादेवं तस्मात्त्वं पणिं वणिजमदातारम् अत्रिणम् अदनशीलं राक्षसादिकं नि जहि विनाशय । सः पणिः वृको हि आदानपरः[2] खलु । सर्वदास्मत्तोऽपहरणशीलः । अतस्त्वं जहीत्यर्थः ॥ 'वृक वृक आदाने' इति धातुः ॥

**यू॒यं हि ष्ठा सु॑दानव॒ इन्द्र॑ज्येष्ठा अ॒भिद्य॑वः ।**
**कर्ता॑ नो॒ अध्व॒न्ना सु॒गं गो॒पा अ॒मा ॥ १५ ॥**

यू॒यम् । हि । स्थ । सु॒ऽदा॒न॒वः॒ । इन्द्र॑ऽज्येष्ठाः । अ॒भिऽद्य॑वः ।
कर्त॑ । न॒ः । अध्व॑न् । आ । सु॒ऽगम् । गो॒पाः । अ॒मा ॥ १५ ॥

हे सुदानवः शोभनदाना देवाः यूयं हि ष्ठ यूयं खलु प्रभवथ । समृद्धाः स्थ । इन्द्रज्येष्ठाः । इन्द्रो ज्येष्ठो मुख्यो येषां ते । अभिद्यवः अभिगतदीप्तयस्ते यूयम् अध्वन् अध्वनि मार्गे नः अस्माकम् अमा सहैव गोपाः गोपायितारो रक्षितारः सन्तः सुगं सुखम् । आकारः समुच्चये । सुखं च कर्त कुरुत ॥

प्रवासादागमने 'अपि पन्थाम्' इत्येषा यजमानेन जप्या । सूत्रितं च—'अपि पन्थामगन्महीति प्रत्येत्य समित्पाणिः' ( आश्व. श्रौ. २.५ ) इति ॥

**अपि॒ पन्था॑मगन्महि स्वस्ति॒गाम॑ने॒हस॑म् ।**
**येन॒ विश्वा॒ः परि॒ द्विषो॑ वृ॒णक्ति॑ वि॒न्दते॒ वसु॑ ॥ १६ ॥**

अपि॑ । पन्था॑म् । अ॒ग॒न्म॒हि॒ । स्व॒स्ति॒ऽगाम् । अ॒ने॒हस॑म् ।
येन॑ । विश्वाः॑ । परि॑ । द्विषः॑ । वृ॒णक्ति॑ । वि॒न्दते॑ । वसु॑ ॥ १६ ॥

पन्थां पन्थानं मार्गम् अपि अगन्महि । अपिगताः प्राप्ताः स्मः । कीदृशम् । स्वस्तिगां सुखेन गन्तव्यम् अनेहसं पापरहितम्[3] । येन पथा गच्छन् विश्वाः सर्वाः द्विषः द्वेष्ट्रीः प्रजाः परि वृणक्ति परिवर्जयति बाधते वसु धनं च विन्दते लभते । तादृशं पन्थानमित्यर्थः ॥ ॥१३॥

---

१. ख-ग्न-न-भ-य—शोभनगन्तव्यम् । २. ख-ग्न-भ—अदानपरः । ३. ग्न-त-न-र—पापराहित्यम् ।

'न तद्दिवा' इति सप्तदशर्चं तृतीयं सूक्तम् ऋजिश्वन आर्षं वैश्वदेवम्। आदितः षट् त्रिष्टुभः सप्तम्याद्याः षट् गायत्र्यस्त्रयोदशी त्रिष्टुप् चतुर्दशी जगती शिष्टास्तिस्त्रस्त्रिष्टुभः। तथा चानुक्रान्तं– 'न तत्र्यूना सप्तम्याद्याः षड्गायत्र्यश्चतुर्दशी जगती' इति। गतो विनियोगः॥

न तद्दिवा न पृथिव्यानु मन्ये न यज्ञेन नोत शमीभिराभिः।
उब्जन्तु तं सुभ्वः पर्वतासो नि हीयतामतियाजस्य यष्टा॥ १॥

न। तत्। दिवा। न। पृथिव्या। अनु। मन्ये। न। यज्ञेन। न। उत। शमीभिः। आभिः।
उब्जन्तु। तम्। सुऽभ्वः। पर्वतासः। नि। हीयताम्। अतिऽयाजस्य। यष्टा॥ १॥

अतियाजो नाम कश्चिदृषिरस्मादृजिश्वन उत्कृष्टः स्यामहमिति बुद्ध्या देवान् यियक्षुरास। ऋषिस्तदीयं यजनं निराचष्टाद्यया। न तत् अतियाजस्य ऋषेः तत् यजनं दिवा द्युलोकेन तत्रस्थेन देवगणेन युक्तमित्यहं न अनु मन्ये। अनुमतिं न करोमि। न च पृथिव्या पार्थिवेनापि देवगणेन युक्तमिति नानु मन्ये। न च यज्ञेन मयानुष्ठितेन सदृशं तदित्यहं[1] नानु मन्ये[1]। उत अपि च आभिः शमीभिः अन्यैरपि मया कृतैरेभिः कर्मभिः सदृशमित्यपि न अनु मन्ये। मया वशीकृता देवाः तदीयं यजनं नाङ्गीकुर्वन्ति स चानभिज्ञत्वात् सम्यक् यष्टुमपि न शक्नोतीति भावः। अपि च तम् ऋषिं सुभ्वः सुष्ठु भवन्तः पर्वतासः पर्वता इन्द्रेण प्रहिताः सन्तः उब्जन्तु हिंसन्तु। उब्जिर्हिंसा-कर्मा। तथा तस्य अतियाजस्य ऋजिश्वनोऽप्यतिशयेनाहं देवान् यजामीति बुद्ध्या युक्तस्य ऋषेर्यो यष्टा याजकः सः नि हीयतां नितरां हीनो भवतु॥

अति वा यो मरुतो मन्यते नो ब्रह्म वा यः क्रियमाणं निनित्सात्।
तपूंषि तस्मै वृजिनानि सन्तु ब्रह्मद्विषमभि तं शोचतु द्यौः॥ २॥

अति। वा। यः। मरुतः। मन्यते। नः। ब्रह्म। वा। यः। क्रियमाणम्। निनित्सात्।
तपूंषि। तस्मै। वृजिनानि। सन्तु। ब्रह्मऽद्विषम्। अभि। तम्। शोचतु। द्यौः॥ २॥

हे मरुतः यः पुरुषः नः अस्मान् अति मन्यते अतीत्य स्वस्याधिक्यं मन्यते अस्मत्तोऽपि स्वयमधिक इति बुध्यते। अस्माभिः क्रियमाणं ब्रह्म स्तोत्रं वा यः निनित्सात् निन्दितुमिच्छेत् तस्मै पुरुषाय तपूंषि तेजांसि वृजिनानि बाधकानि सन्तु भवन्तु। ब्रह्मद्विषं तं शत्रुं द्यौः आदित्यश्च अभि शोचतु अभितपतु। अभिदहतु॥

किमङ्ग त्वा ब्रह्मणः सोम गोपां किमङ्ग त्वाहुरभिशस्तिपां नः।
किमङ्ग नः पश्यसि निद्यमानान्ब्रह्मद्विषे तपुषिं हेतिमस्य॥ ३॥

किम्। अङ्ग। त्वा। ब्रह्मणः। सोम। गोपाम्। किम्। अङ्ग। त्वा। आहुः। अभिशस्तिऽपाम्। नः।
किम्। अङ्ग। नः। पश्यसि। निद्यमानान्। ब्रह्मऽद्विषे। तपुषिम्। हेतिम्। अस्य॥ ३॥

---

१. ख–तदित्यपि नानुमन्ये; ञ-त-न-र–तदित्यप्यनुमन्ये।

किमङ्ग इति प्रसिद्धिद्योतकौ निपातौ। हे सोम त्वा त्वां खलु ब्रह्मणः मन्त्रस्य कर्मणो वा ब्रह्मजातेर्वा[1] गोपां गोपायितारम् आहुः कथयन्ति पुराविदः। तथा नः अस्माकम् अभिशस्तिपाम् अभिशंसकेभ्यः शत्रुभ्यः पालयितारं त्वामेव खल्वाहुः। यद्वा। अङ्गेत्यभिमुखीकरणे। अङ्ग हे सोम किंकारणं त्वां ब्रह्मणो गोपामाहुः। किंकारणं वा त्वामस्माकमभिशस्तिपामाहुः। निद्यमानान् परैर्दूष्यमाणान् नः अस्मान् अङ्ग हे सोम किंकारणं पश्यसि। त्वामेव सर्वे ब्रह्मणो[2] रक्षकं[2] शत्रुभ्यः पालकं च कथयन्ति अतोऽस्मासु परैर्निन्द्यमानेष्वौदासीन्यं तवानुचितम्। अतः ब्रह्मद्विषे ब्राह्मणद्वेष्ट्रे तस्मै तपुर्षि तापकं हेतिम् आयुधम् अस्य क्षिप। प्रेरय ॥

अवन्तु मामुषसो जायमाना अवन्तु मा सिन्धवः पिन्वमानाः।
अवन्तु मा पर्वतासो ध्रुवासोऽवन्तु मा पितरो देवहूतौ ॥ ४ ॥

अवन्तु। माम्। उषसः। जायमानाः। अवन्तु। मा। सिन्धवः। पिन्वमानाः।
अवन्तु। मा। पर्वतासः। ध्रुवासः। अवन्तु। मा। पितरः। देवऽहूतौ ॥ ४ ॥

जायमानाः प्रादुर्भवन्त्यः उषसः माम् अवन्तु रक्षन्तु। तथा पिन्वमानाः वर्धमानाः सिन्धवः स्यन्दनशीला नद्यश्च मा माम् अवन्तु। तथा ध्रुवासः निश्चलाः पर्वतासः पर्वताश्च मा माम् अवन्तु। तथा देवहूतौ। देवानां हूतिराह्वानमस्मिन्निति देवहूतिर्यागः। तत्र विद्यमानाः पितरः पितृदेवताश्च माम् अवन्तु ॥

विश्वदानीं सुमनसः स्याम पश्येम नु सूर्यमुच्चरन्तम्।
तथा करद्वसुपतिर्वसूनां देवाँ ओहानोऽवसागमिष्ठः ॥ ५ ॥

विश्वऽदानीम्। सुऽमनसः। स्याम। पश्येम। नु। सूर्यम्। उत्ऽचरन्तम्।
तथा। करत्। वसुऽपतिः। वसूनाम्। देवान्। ओहानः। अवसा। आऽगमिष्ठः ॥ ५ ॥

हे देवाः विश्वदानीं सर्वदा वयं सुमनसः स्याम शोभनमनस्का भवेम। नुशब्दः समुच्चये। उच्चरन्तम् उद्यन्तं सूर्यं सर्वदा पश्येम च। वसूनां वसुपतिः उत्कृष्टधनाधिपतिरग्निः[3] देवान् अवसा अस्मदीयेन हविषा ओहानः वहन् प्रापयन् आगमिष्ठः आगन्तृतम एवंगुणविशिष्टः सन् तथा करत्। अस्मान् तथाविधानुक्तप्रकारान् करोतु ॥ ॥ १४ ॥

इन्द्रो नेदिष्ठमवसागमिष्ठः सरस्वती सिन्धुभिः पिन्वमाना।
पर्जन्यो न ओषधीभिर्मयोभुरग्निः सुशंसः सुहवः पितेव ॥ ६ ॥

इन्द्रः। नेदिष्ठम्। अवसा। आऽगमिष्ठः। सरस्वती। सिन्धुऽभिः। पिन्वमाना।
पर्जन्यः। नः। ओषधीभिः। मयःऽभुः। अग्निः। सुऽशंसः। सुऽहवः। पिताऽइव ॥ ६ ॥

---

१. ख-न-भ-य—ब्राह्मणजातेर्वा; ज्ञ-त२—ब्राह्मजातेर्वा। २. ख-भ—ब्राह्मणरक्षकम्; ज्ञ-न—ब्राह्मणा रक्षकम्। ३. ज्ञ-त—°धनानामधिपति°।

अयम् ᵛइन्द्रो ᵛनेदिष्ठम् अन्तिकतमं यथा भवति तथा ᵛअवसा रक्षणेन सार्धम् ᵛआगमिष्ठः आगन्तृतमोऽस्तु । ᵛसिन्धुभिः स्यन्दनैरुदकैः ᵛपिन्वमाना वर्धमाना नदीरूपा ᵛसरस्वती चागन्तृतमा भवतु । ᵛओषधीभिः सार्धं ᵛपर्जन्यः च ᵛनः अस्माकं ᵛमयोभुः सुखस्य भावयिता भवतु । ᵛअग्निः च ᵛपितेव पुत्रस्य जनक इव ᵛसुशंसः सुखेन शंसनीयः ᵛसुहवः सुखेनाह्वातव्यश्च[1] भवतु ॥

आग्रयणे वैश्वदेवस्य चरोः 'विश्वे देवास आ गत' इत्यनुवाक्या । सूत्रितं च—'विश्वे देवास आ गत ये के च ज्मा महिनो अहिमायाः' (आश्व. श्रौ. २. ९) इति ॥

विश्वे॑ दे॒वास॒ आ ग॑त शृणु॒ता म॑ इ॒मं हव॑म् । एदं ब॒र्हिर्नि षी॑दत ॥ ७ ॥

विश्वे॑ । दे॒वासः॑ । आ । ग॒त॒ । शृ॒णु॒त । मे॒ । इ॒मम् । हव॑म् । आ । इ॒दम् । ब॒र्हिः । नि । सी॒द॒त॒ ॥७॥

हे ᵛविश्वे ᵛदेवासः सर्वे देवाः ᵛआ ᵛगत आगच्छत । आगत्य च ᵛमे मदीयम् ᵛइमं ᵛहवम् इदमाह्वानं ᵛशृणुत । श्रुत्वा च ᵛइदम् आस्तीर्णं ᵛबर्हिः ᵛआ ᵛनि ᵛषीदत आस्तीर्णे बर्हिषि निषण्णा[2] भवत ॥

यो वो॑ देवा घृ॒तस्नु॑ना ह॒व्येन॑ प्रति॒भूष॑ति । तं विश्व॒ उप॑ गच्छथ ॥ ८ ॥

यः । व॒ः । दे॒वाः॒ । घृ॒तऽस्नु॑ना । ह॒व्येन॑ । प्र॒ति॒ऽभूष॑ति । तम् । विश्वे॑ । उप॑ । ग॒च्छ॒थ॒ ॥८॥

हे ᵛदेवाः ᵛवः युष्मान् ᵛयः जनः ᵛघृतस्नुना घृतप्रक्षरणेन ᵛहव्येन हविषा ᵛप्रतिभूषति परिचरति ᵛतं जनं ᵛविश्वे सर्वे यूयम् ᵛउप ᵛगच्छथ उपगता भवथ ॥

उप॑ नः सू॒नवो॒ गिरः॑ शृ॒ण्वन्त्व॒मृत॑स्य॒ ये । सु॒मृ॒ळी॒का भ॑वन्तु नः ॥ ९ ॥

उप॑ । न॒ः । सू॒नवः॑ । गिरः॑ । शृ॒ण्वन्तु॑ । अ॒मृत॑स्य । ये । सु॒ऽमृ॒ळी॒काः । भ॒व॒न्तु॒ । न॒ः ॥ ९॥

ᵛअमृतस्य मरणरहितस्य प्रजापतेः ᵛये ᵛसूनवः पुत्राः ते देवाः ᵛनः अस्माकं ᵛगिरः स्तुतीः ᵛउप ᵛशृण्वन्तु । ᵛनः अस्माकं ᵛसुमृळीकाः सुष्ठु मृडयितारः सुखयितारश्च ᵛभवन्तु ॥

विश्वे॑ दे॒वा ऋ॑ता॒वृध॑ ऋ॒तुभि॑र्हवन॒श्रुतः॑ । जु॒षन्तां॒ युज्यं॒ पयः॑ ॥ १० ॥

विश्वे॑ । दे॒वाः॒ । ऋ॒त॒ऽवृधः॑ । ऋ॒तुऽभिः॑ । ह॒व॒न॒ऽश्रुतः॑ । जु॒षन्ता॑म् । यु॒ज्य॑म् । पयः॑ ॥१०॥

ᵛऋतावृधः ऋतस्य यज्ञस्य वर्धकाः ᵛऋतुभिः कालविशेषैः ᵛहवनश्रुतः हवनस्य स्तोत्रस्य श्रोतारः तस्मिंस्तस्मिन् यागकाले स्तूयमाना ईदृशाः ᵛविश्वे सर्वे ᵛदेवाः ᵛयुज्यं योग्यं ᵛपयः आमिक्षारूपं ᵛजुषन्तां सेवन्ताम् । श्रूयते हि—'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा' इति ॥ ॥ १५ ॥

स्तो॒त्रमिन्द्रो॑ म॒रुद्ग॑ण॒स्त्वष्टृ॑मान्मि॒त्रो अ॑र्य॒मा । इ॒मा ह॒व्या जु॑षन्त नः ॥ ११ ॥

स्तो॒त्रम् । इन्द्रः॑ । म॒रुत्ऽग॑णः । त्वष्टृ॑ऽमान् । मि॒त्रः । अ॒र्य॒मा । इ॒मा । ह॒व्या । जु॒ष॒न्त॒ । न॒ः ॥११॥

---

१. ख-ञ-झ-त-न-भ-सुखेन ह्वातव्यश्च । २. ख-उपानिषण्णा; भ-उपविशत निषण्णा ।

मरुद्गणः मरुतो गणभूताः परिजनभूता[1] यस्य तादृशः इन्द्रः त्वष्टृमान् त्वष्टृसहितः मित्रो अर्यमा च नः अस्माकं स्तोत्रम् इमा हव्या इमानि हवींषि च जुषन्त सेवन्ताम् ॥

**इमं नो अग्ने अध्वरं होतर्वयुनशो यज । चिकित्वान्दैव्यं जनम् ॥ १२ ॥**

इमम् । नः । अग्ने । अध्वरम् । होतः । वयुनऽशः । यज । चिकित्वान् । दैव्यम् । जनम् ॥ १२ ॥

हे होतः देवानामाह्वातः अग्ने दैव्यं देवसंबन्धिनं जनं[2] संघं[2] यजनीयं चिकित्वान् जानंस्त्वं नः अस्मदीयम् इमम् अध्वरं हिंसारहितं यज्ञं वयुनशः ज्ञानक्रमेण यथानुपूर्व्या देवा बुद्धिस्थाः तथा यज यागं कुरु ॥

वैश्वदेवशस्त्रस्य ' विश्वे देवाः ' इति याज्या । सूत्रितं च—' आश्रुत्यै त्वेति शस्त्वा जपेद्विश्वे देवाः शृणुतेमं हवं म इति याज्या ' ( आश्व. श्रौ. ५. १८ ) इति । वैश्वदेवे पशावेषैव याज्या । सूत्रितं च—' विश्वे देवाः शृणुतेमं हवं मे ये के च ज्मा महिनो अहिमायाः ' ( आश्व. श्रौ. ३. ७ ) इति ॥

**विश्वे देवाः शृणुतेमं हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ ।**
**ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम् ॥ १३ ॥**

विश्वे । देवाः । शृणुत । इमम् । हवम् । मे । ये । अन्तरिक्षे । ये । उप । द्यवि । स्थ ।
ये । अग्निऽजिह्वाः । उत । वा । यजत्राः । आऽसद्य । अस्मिन् । बर्हिषि । मादयध्वम् ॥ १३ ॥

हे विश्वे देवाः मे मदीयम् इमं हवम् आह्वानं शृणुत । ये यूयम् अन्तरिक्षे स्थ अन्तरिक्षलोके वर्तमाना भवथ । ये च उप तत्समीपस्थे भूलोके भवथ । ये च द्यवि द्युलोके स्थ । ये च अग्निजिह्वाः । अग्निर्जिह्वास्थानीयो येषाम् । यद्वा । अग्नेर्जिह्वा[3] । तया[3] पोष्यमाणत्वात् अग्निजिह्वा[4] इत्युच्यन्ते[4] । उत वा अपि वा ये यजत्राः यजनीयाः ते सर्वे यूयम् आस्तीर्णे अस्मिन् बर्हिषि आसद्य उपविश्य मादयध्वं सोमेनात्मानं तर्पयथ ॥

**विश्वे देवा मम शृण्वन्तु यज्ञिया उभे रोदसी अपां नपाच्च मन्म ।**
**मा वो वचांसि परिचक्ष्याणि वोचं सुम्नेष्विद्वो अन्तमा मदेम ॥ १४ ॥**

विश्वे । देवाः । मम । शृण्वन्तु । यज्ञियाः । उभे इति । रोदसी इति । अपाम् । नपात् । च । मन्म ।
मा । वः । वचांसि । परिऽचक्ष्याणि । वोचम् । सुम्नेषु । इत् । वः । अन्तमाः । मदेम ॥ १४ ॥

यज्ञियाः[5] यज्ञार्हाः विश्वे देवाः मम मदीयं मन्म मननीयं स्तोत्रं शृण्वन्तु । चित्तेऽवधारयन्तु । तथा उभे रोदसी द्यावापृथिव्यौ अपां नपात् मध्यमस्थानोऽग्निः[6] च अस्मदीयं

---

१. ख-ज्ञ-त-न-भ-र—परितो जनभूताः । २. ख-भ-श—जनसंघम् ; त—संघम् । ३. न—अग्नेर्जिह्वया । ४. ख-ज्ञ-न-भ—जिह्वा इत्युच्यन्ते; त-श—जिह्वा इत्युच्यते । ५. ख-घ-भ—हे यज्ञियाः; श—ये यज्ञियाः । ६. ख-भ—मध्यमस्थानोऽग्निः ।

स्तोत्रं शृण्वन्तु । अथ प्रत्यक्षकृतः । हे देवाः ᵛवः युष्मभ्यं ᵛपरिचक्ष्याणि वर्जनीयानि ᵛवचांसि स्तोत्राणि ᵛमा ᵛवोचं मा ब्रवीमि । अपि तु समीचीनानि । अतः ᵛवः युष्माकम् ᵛअन्तमाः अन्तिकतमाः सन्तो वयं ᵛसुम्नेष्वित् युष्माभिर्दत्तेषु सुखेष्वेव वर्तमानाः ᵛमदेम मोदेम ॥

आग्रयणे वैश्वदेवस्य ‘ ये के च ज्मा ’ इति याज्या । सूत्रितं च—‘ विश्वे देवास आ गत ये के च ज्मा महिनो अहिमायाः ’ ( आश्व. श्रौ. २.९ ) इति । वैश्वदेवपुरोडाशस्यैषैव याज्या । सूत्रमुदाहृतम् ॥

ये के च ज्मा महिनो अहिमाया दिवो जज्ञिरे अपां सधस्थे ।
ते अस्मभ्यमिषये विश्वमायुः क्षप उस्रा वरिवस्यन्तु देवाः ॥ १५ ॥

ये । के । च । ज्मा । महिनः । अहिऽमायाः । दिवः । जज्ञिरे । अपाम् । सधऽस्थे ।
ते । अस्मभ्यम् । इषये । विश्वम् । आयुः । क्षपः । उस्राः । वरिवस्यन्तु । देवाः ॥ १५ ॥

ᵛमहिनः महान्तः ᵛअहिमायाः । माया प्रज्ञानाम[1] । आहन्तृप्रज्ञाः । एवंभूताः ᵛये ᵛके चन देवाः ᵛज्मा । पृथिवीनामैतत् । ज्मायां[2] पृथिव्यां ᵛजज्ञिरे प्रादुर्बभूवुः । ये[3] के चन[3] ᵛदिवः द्युलोकाज्जज्ञिरे । ये के चन[4] ᵛअपां ᵛसधस्थे सहान्तरिक्षे जज्ञिरे ᵛते सर्वे ᵛदेवाः ᵛअस्मभ्यमिषये । इष्यत इतीषिः पुत्रादिः । तस्मै च ᵛविश्वं सर्वम् ᵛआयुः अन्नं जीवनं वा ᵛक्षपः सर्वा रात्रीः ᵛउस्राः सर्वाण्यहानि च सर्वदा नैरन्तर्येण ᵛवरिवस्यन्तु प्रयच्छन्तु ॥

अग्नीपर्जन्याववतं धियं मेऽस्मिन्हवे सुहवा सुष्टुतिं नः ।
इळामन्यो जनयद्गर्भमन्यः प्रजावतीरिष आ धत्तमस्मे ॥ १६ ॥

अग्नीपर्जन्यौ । अवतम् । धियम् । मे । अस्मिन् । हवे । सुऽहवा । सुऽस्तुतिम् । नः ।
इळाम् । अन्यः । जनयत् । गर्भम् । अन्यः । प्रजाऽवतीः । इषः । आ । धत्तम् । अस्मे इति ॥ १६ ॥

हे ᵛअग्नीपर्जन्यौ ᵛमे मदीयं ᵛधियं कर्म यज्ञलक्षणम् ᵛअवतं गच्छतं रक्षतं वा । हे ᵛसुहवा सुखेन ह्वातुं शक्यौ ᵛअस्मिन् ᵛहवे यज्ञे ᵛनः अस्मदीयां[5] ᵛसुष्टुतिं शोभनां स्तुतिं च रक्षतम् । यद्वा । अनुवृत्तोऽवतिः श्रवणार्थः । अवतं शृणुतम् । युवयोर्मध्ये ᵛअन्यः पर्जन्यः ᵛइळाम् अन्नं ᵛजनयत् जनयति । वृष्ट्या हि ओषधिवनस्पतयो जायन्ते तेभ्यश्चान्नं जायते । ᵛअन्यः अग्निः ᵛगर्भं जनयति । पुरुषेण भुक्तमन्नं जाठरेणाग्निना पक्वं सत् रेतोरूपेण परिणमते तदेव योषित्सु गर्भो भवति । अतो युवां ᵛप्रजावतीः प्रजाभिर्युक्ताः ᵛइषः अन्नानि ᵛअस्मे अस्मासु ᵛआ ᵛधत्तम् अवस्थापयतम् ॥

स्तीर्णे बर्हिषि समिधाने अग्नौ सूक्तेन महा नमसा विवासे ।
अस्मिन्नो अद्य विदथे यजत्रा विश्वे देवा हविषि मादयध्वम् ॥ १७ ॥

स्तीर्णे । बर्हिषि । सम्ऽइधाने । अग्नौ । सुऽउक्तेन । महा । नमसा । आ । विवासे ।
अस्मिन् । नः । अद्य । विदथे । यजत्राः । विश्वे । देवाः । हविषि । मादयध्वम् ॥ १७ ॥

---

१. ख–प्रज्ञाननाम । २. ख-ङ-झ-त-न-भ-र–‘ ज्मायां ’ नास्ति । ३. ख१-न-भ– ये के च; ज-ण–एके च । ४. ज-ण–न । ५. ख-घ-भ-अस्माकम् ।

हे विश्वे देवाः बर्हिषि दर्भपुञ्जे वेद्यां स्तीर्णे सति अग्नौ च समिधाने समिद्धे[1] सति अनेन सूक्तेन स्तोत्रेण च महा महता नमसा नमस्कारेण च आ विवासे पर्यचरम्। हे यजत्राः यजनीयाः विश्वे देवाः अद्य अस्मिन् दिने नः अस्मदीये अस्मिन् विदथे यज्ञे हविषि। तृतीयार्थे सप्तमी। हविषा अस्माभिर्दत्तेन मादयध्वं[2] तृप्यध्वम्॥ ॥ १६ ॥

'वयमु त्वा' इति दशर्चं चतुर्थं सूक्तं भरद्वाजस्यार्षं पौष्णम्। 'यां पूषन्' इत्यनुष्टुप् शिष्टा गायत्र्यः। तथा चानुक्रान्तं—'वयं दश पौष्णं तद्गायत्रं वै यां पूषन्ननुष्टुप्' इति। अर्थार्थिभिः प्रवसद्भिरेतज्जप्यम्। सूत्रितं च—'वयमु त्वा पथस्पते इत्यर्थचर्यां चरिष्यन्' (आश्व. गृ. ३. ७. ८) इति। जपेदिति शेषः[3]॥

वयमु त्वा पथस्पते रथं न वाजसातये। धिये पूषन्नयुज्महि॥ १॥

वयम्। ऊँ इति। त्वा। पथः। पते। रथम्। न। वाजऽसातये। धिये। पूषन्। अयुज्महि॥ १॥

हे पथस्पते मार्गस्य पालयितः पूषन् धिये कर्मार्थं वाजसातये अन्नस्य लाभाय च वयं रथं न युद्धे रथमिव त्वा त्वाम् अयुज्महि युञ्ज्महि। अस्मदभिमुखं कुर्मः। उ इति पूरकः॥

अभि नो नर्यं वसु वीरं प्रयतदक्षिणम्। वामं गृहपतिं नय॥ २॥

अभि। नः। नर्यम्। वसु। वीरम्। प्रयतऽदक्षिणम्। वामम्। गृहऽपतिम्। नय॥ २॥

हे पूषन् नर्यं नृभ्यो हितं वसु धनम् अभि प्राप्तुं वीरं दारिद्र्यस्य विशेषेण ईरयितारं गमयितारं प्रयतदक्षिणं पूर्वमन्येभ्योऽपि दत्तधनम्। यद्वा। प्रयतं शुद्धं दक्षिणं धनं यस्य तादृशम्। वामं वननीयमेवंविधं गृहपतिं गृहस्थं नः अस्मान् नय प्रापय॥

अदित्सन्तं चिदाघृणे पूषन्दानाय चोदय। पणेश्चिद्वि म्रदा मनः॥ ३॥

अदित्सन्तम्। चित्। आघृणे। पूषन्। दानाय। चोदय। पणेः। चित्। वि। म्रद। मनः॥ ३॥

हे आघृणे आगतदीप्ते पूषन् अदित्सन्तं चित् दातुमनिच्छन्तमपि पुरुषं दानाय अस्मद्दानार्थं चोदय प्रेरय। पणेश्चित् वणिजोऽपि वार्धुषिकस्य लुब्धस्यापि मनः हृदयं वि म्रद दानार्थं मृदूकुरु॥

वि पथो वाजसातये चिनुहि वि मृधो जहि। साधन्तामुग्र नो धियः॥ ४॥

वि। पथः। वाजऽसातये। चिनुहि। वि। मृधः। जहि। साधन्ताम्। उग्र। नः। धियः॥ ४॥

हे उग्र उद्गूर्णबल पूषन् पथः मार्गान् वाजसातये अन्नलाभाय वि चिनुहि। शोधितान् कुरु। यैः पथिभिर्गता धनं लभेमहि तादृशान् पथः पृथक्कुर्वित्यर्थः। मृधः बाधकान् तस्करादींश्च वि जहि बाधस्व। तथा नः अस्माकं धियः कर्माणि अन्नलाभार्थं क्रियमाणानि साधन्तां सिध्यन्तु। सफलानि भवन्तु॥

---

१. घ–समिध्यमाने। २. श–अन्नेन मादयध्वम्। ३. ञ–शेषः। तथाह शौनकः–वयमु त्वेति

परि॑ तृन्धि प॒णी॒नामार॑या हृ॒द॑या कवे । अथे॑म॒स्मभ्यं॑ रन्धय ॥ ५ ॥

परि॑ । तृ॒न्धि॒ । प॒णी॒नाम् । आर॑या । हृद॑या । क॒वे॒ । अथ॑ । ई॒म् । अ॒स्मभ्य॑म् । र॒न्ध॒य॒ ॥५॥

हे ᵛकवे प्राज्ञ पूषन् ᵛपणीनां वणिजां लुब्धानां ᵛहृदया हृदयानि कठिनानि ᵛआरया । सूक्ष्मलोहाग्रो दण्डः प्रतोद[1] इति आरा इति चाख्यायते । तया ᵛपरि ᵛतृन्धि परिविध्य । हृद्गतं काठिन्यमपनयेत्यर्थः । ᵛअथ अनन्तरम् ᵛईम् एनान् पणीन् ᵛअस्मभ्यं ᵛरन्धय वशीकुरु ॥　॥ १७ ॥

वि पू॑ष॒न्नार॑या तुद प॒णेरि॑च्छ हृ॒दि प्रि॒यम् । अथे॑म॒स्मभ्यं॑ रन्धय ॥ ६ ॥

वि । पू॒ष॒न् । आर॑या । तु॒द॒ । प॒णेः । इ॒च्छ॒ । हृ॒दि । प्रि॒यम् । अथ॑ । ई॒म् । अ॒स्मभ्य॑म् । र॒न्ध॒य॒ ॥६॥

हे ᵛपूषन् ᵛआरया प्रतोदेन ᵛपणेः वणिजः हृदयं ᵛवि ᵛतुद विविध्य । तस्य पणेः ᵛहृदि हृदये ᵛप्रियम् अस्मभ्यमनुकूलं धनम् ᵛइच्छ दातव्यमितीच्छां जनय । ᵛअथ अनन्तरम् ᵛअस्मभ्यम् ᵛईम् एनान् ᵛरन्धय वशीकुरु ॥

आ रि॑ख किकि॒रा कृ॑णु प॒णी॒नां हृ॒द॑या कवे । अथे॑म॒स्मभ्यं॑ रन्धय ॥ ७ ॥

आ । रि॒ख॒ । कि॒कि॒रा । कृ॒णु॒ । प॒णी॒नाम् । हृद॑या । क॒वे॒ । अथ॑ । ई॒म् । अ॒स्मभ्य॑म् । र॒न्ध॒य॒ ॥७॥

हे ᵛकवे प्राज्ञ पूषन् ᵛपणीनां वणिजां ᵛहृदया हृदयानि ᵛआ ᵛरिख आलिख । आलिख्य च ᵛकिकिरा कीर्णानि प्रशिथिलानि ᵛकृणु कुरु । मृदूनि कुर्वित्यर्थः । अन्यद्गतम् ॥

यां पू॑षन्ब्रह्म॒चोद॑नी॒मारां॒ बिभ॑र्ष्याघृणे ।

तया॑ समस्य॒ हृद॑य॒मा रि॑ख किकि॒रा कृ॑णु ॥ ८ ॥

याम् । पू॒ष॒न् । ब्र॒ह्म॒ऽचोद॑नीम् । आरा॑म् । बिभ॑र्षि । आ॒घृ॒णे॒ ।

तया॑ । स॒म॒स्य॒ । हृद॑यम् । आ । रि॒ख॒ । कि॒कि॒रा । कृ॒णु॒ ॥ ८ ॥

हे ᵛआघृणे आगतदीप्ते ᵛपूषन् ᵛब्रह्मचोदनीं ब्रह्मणोऽन्नस्य प्रेरयित्रीं[2] ᵛयाम् ᵛआरां ᵛबिभर्षि हस्ते धारयसि ᵛतया ᵛसमस्य सर्वस्य लुब्धजनस्य ᵛहृदयम् ᵛआ ᵛरिख आलिख । ᵛकिकिरा किकिराणि कीर्णानि प्रशिथिलानि च ᵛकृणु कुरु ॥

या ते॒ अष्ट्रा॒ गोओ॑पशाघृणे पशु॒साध॑नी । तस्या॑स्ते सु॒म्नमी॑महे ॥ ९ ॥

या । ते॒ । अष्ट्रा॑ । गोऽओ॑पशा । आघृ॑णे । प॒शु॒ऽसाध॑नी ।

तस्याः॑ । ते॒ । सु॒म्नम् । ई॒म॒हे॒ ॥ ९ ॥

हे ᵛआघृणे आगतदीप्ते पूषन् ᵛते त्वदीया ᵛया ᵛअष्ट्रा आरा ᵛगोओपशा । उपशेरते इत्योपशाः । गाव ओपशा यस्यास्तादृशी । अतएव ᵛपशुसाधनी पशूनां साधयित्री भवति ᵛते त्वदीयायाः ᵛतस्याः संबन्धि ᵛसुम्नं सुखम् ᵛईमहे याचामहे ॥

---

१. ख-भ-प्रतोदन । २. ज्ञ-त-श-दात्रीं प्रेरयित्रीम् ।

उत नो गोषणिं धियमश्वसां वाजसामुत । नृवत्कृणुहि वीतये ॥ १० ॥

उत । नः । गोऽसनिम् । धियम् । अश्वऽसाम् । वाजऽसाम् । उत ।
नृऽवत् । कृणुहि । वीतये ॥ १० ॥

उत अपि च हे पूषन् गोषणिं गवां सनित्रीम् अश्वसाम् अश्वानां सनित्रीं वाजसां वाजानामन्नानां सनित्रीम् उत अपि च नृवत् नृवतीं यद्वा नृणां वनित्रीं दात्रीमेवंभूतां धियं बुद्धिं कर्म वा नः अस्माकं वीतये खादनायोपभोगार्थं[1] कृणुहि कुरु ॥ ॥ १८ ॥

' सं पूषन् ' इति दशर्चं पञ्चमं सूक्तं भरद्वाजस्यार्षं पौष्णं गायत्रम् । ' सं पूषन् ' इत्यनुक्रान्तम् । नष्टधनमन्विच्छता पुरुषेणैतज्जप्यम् । सूत्रितं च—' सं पूषन्विदुषेति नष्टमधिजिगमिषन्मूळ्हो वा ' ( आश्व. गृ. ३. ७. ९ ) इति[2] ॥

सं पूषन्विदुषा नय यो अञ्जसानुशासति । य एवेदमिति ब्रवत् ॥ १ ॥

सम् । पूषन् । विदुषा । नय । यः । अञ्जसा । अनुऽशासति ।
यः । एव । इदम् । इति । ब्रवत् ॥ १ ॥

हे पूषन् पोषक देव विदुषा जानता तेन जनेन सं नय अस्मान् संगमय यः विद्वान् अञ्जसा ऋजुमार्गेण अनुशासति अनुशास्ति नष्टद्रव्यप्राप्त्युपायमुपदिशति । यः च एव एवम् इदं नष्टं भवदीयं धनम् इति ब्रवत् ब्रवीति । नष्टं धनं दर्शयतीत्यर्थः । तेन विदुषेत्यन्वयः ॥

समु पूष्णा गमेमहि यो गृहाँ अभिशासति । इम एवेति च ब्रवत् ॥ २ ॥

सम् । ऊँ इति । पूष्णा । गमेमहि । यः । गृहान् । अभिऽशासति ।
इमे । एव । इति । च । ब्रवत् ॥ २ ॥

पूष्णा अनुगृहीता वयं सं गमेमहि तेन जनेन संगच्छेमहि यः जनः गृहान् येषु गृहेषु अस्मदीया नष्टाः पशवस्तिष्ठन्ति तान् गृहान् अभिशासति अभिशास्ति आभिमुख्येन बोधयति । यश्च इमे त्वदीया नष्टाः पशवः एव एवं तिष्ठन्ति इति च ब्रवत् ब्रूयात् ॥

पूष्णश्चक्रं न रिष्यति न कोशोऽव पद्यते । नो अस्य व्यथते पविः ॥ ३ ॥

पूष्णः । चक्रम् । न । रिष्यति । न । कोशः । अव । पद्यते ।
नो इति । अस्य । व्यथते । पविः ॥ ३ ॥

पूष्णः पोषकस्य देवस्य चक्रम् आयुधं न रिष्यति न विनश्यति । अस्य चक्रस्य कोशः च न अव पद्यते न हीयते । अस्य पविः धारा च नो नैव व्यथते कुण्ठीभवति[3] । तेन चक्रेण चोरान् हत्वा अस्मदीयं धनं प्रकाशयेति भावः ॥

---

१. घ-श-स्वादनायोप° । २. ञ-इति । तथाह शौनकः-यस्य नष्टं भवेत् किंचिद्द्रव्यं गौर्द्विपदं धनम् । नश्येद्वाध्वनि यो मोहात् सं पूषन् स जपेत्त्रिशि । ३. भ-न कुण्ठीभवति ।

**यो अ॑स्मै ह॒विषावि॑धन्न तं पू॒षापि॑ मृष्यते । प्र॒थ॒मो वि॑न्दते॒ वसु॑ ॥ ४ ॥**

यः । अ॒स्मै॑ । ह॒विषा॑ । अवि॑धत् । न । तम् । पू॒षा । अपि॑ । मृ॒ष्य॒ते॒ ।

प्र॒थ॒मः । वि॒न्द॒ते॒ । वसु॑ ॥ ४ ॥

ᵛयः यजमानः ᵛअस्मै पूष्णे ᵛहविषा चरुपुरोडाशादिना ᵛअविधत् परिचरति ᵛतं यजमानं ᵛपूषा ᵛन ᵛअपि ᵛमृष्यते । अपिशब्द ईषदर्थे । ईषदपि न हिनस्ति । स च ᵛप्रथमः मुख्यः सन् ᵛवसु धनं ᵛविन्दते लभते ॥

**पू॒षा गा अन्वे॑तु नः पू॒षा र॑क्ष॒त्वर्व॑तः । पू॒षा वाजं॑ सनोतु नः ॥ ५ ॥**

पू॒षा । गाः । अनु॑ । ए॒तु॒ । नः॒ । पू॒षा । र॒क्ष॒तु॒ । अर्व॑तः । पू॒षा । वाज॑म् । स॒नो॒तु॒ । नः॒ ॥५॥

ᵛपूषा पोषको देवः ᵛनः अस्मदीयाः ᵛगाः ᵛअन्वेतु रक्षणार्थमनुगच्छतु[1] । स च ᵛपूषा ᵛअर्वतः अश्वान् ᵛरक्षतु चोरेभ्यः । तथा ᵛवाजम् अन्नं च ᵛनः अस्मभ्यं ᵛपूषा ᵛसनोतु प्रयच्छतु ॥ ॥१९॥

**पूष॒न्ननु॒ प्र गा इ॑हि॒ यज॑मानस्य सु॒न्व॒तः । अ॒स्माकं॑ स्तुव॒तामु॒त ॥ ६ ॥**

पूष॑न् । अनु॑ । प्र । गाः । इ॒हि॒ । यज॑मानस्य । सु॒न्व॒तः । अ॒स्माक॑म् । स्तु॒व॒ताम् । उ॒त ॥६॥

हे ᵛपूषन् ᵛसुन्वतः सोमाभिषवं कुर्वतः ᵛयजमानस्य ᵛगाः पशून् ᵛअनु ᵛप्र ᵛइहि रक्षणार्थमनुगच्छ । ᵛउत अपि च ᵛस्तुवतां त्वद्विषयं स्तोत्रं कुर्वताम् ᵛअस्माकं गाश्चानुगच्छ ॥

**माकि॑र्नेश॒न्माकीं॑ रिष॒न्माकीं॒ सं शा॑रि॒ केव॑टे । अथारि॑ष्टाभि॒रा ग॑हि ॥ ७ ॥**

माकिः॑ । ने॒श॒त् । माकी॑म् । रि॒ष॒त् । माकी॑म् । सम् । शा॒रि॒ । केव॑टे ।

अथ॑ । अरि॑ष्टाभिः । आ । ग॒हि॒ ॥ ७ ॥

हे पूषन् अस्मदीयं[2] गोधनं ᵛमाकिर्नेशत् मा नश्यतु । माकिर्माकीम् इत्येतौ प्रतिषेधमात्रे वर्तेते । ᵛमाकीं ᵛरिषत् । मा व्याघ्रादिभिर्हिंस्यताम् । ᵛमाकीं मा च ᵛकेवटे कूपे ᵛसं ᵛशारि संशीर्णं भूत् । कूपपातेनापि हिंसितं मा भवतु । ᵛअथ एवं सति ᵛअरिष्टाभिः अहिंसिताभिर्गोभिः सह ᵛआ ᵛगहि सायंकाले आगच्छ ॥

**शृ॒ण्वन्तं॑ पू॒षणं॑ व॒यमिर्य॑मनष्टवेदसम् । ईशा॑नं रा॒य ई॑महे ॥ ८ ॥**

शृ॒ण्वन्त॑म् । पू॒षण॑म् । व॒यम् । इर्य॑म् । अन॑ष्टऽवेदसम् । ईशा॑नम् । रा॒यः । ई॒म॒हे॒ ॥ ८ ॥

अस्मत्स्तोत्राणि ᵛशृण्वन्तम् ᵛइर्यं दारिद्र्यस्य प्रेरकम् ᵛअनष्टवेदसम् अविनष्टधनम् ᵛईशानं सर्वस्येश्वरमेवंविधं ᵛपूषणं देवं ᵛवयं ᵛरायः धनानि ᵛईमहे याचामहे ॥

चातुर्मास्येषु वैश्वदेवे पर्वणि पौष्णस्य हविषः ' पूषन्तव व्रते ' इत्येषानुवाक्या । सूत्रितं च— ' वाममद्य सवितर्वाममु श्वः पूषन्तव व्रते वयम् ' ( आश्व. श्रौ. २. १६ ) इति ॥

---

१ ख-क्ष-त-न-भ-र– अनुरक्षणार्थं॰ । २. ख-क्ष-न-भ-य–नोऽस्मदीयम् ।

पूषन्तव व्रते वयं न रिष्येम कदा चन । स्तोतारस्त इह स्मसि ॥ ९ ॥

पूषन् । तव । व्रते । वयम् । न । रिष्येम । कदा । चन ।
स्तोतारः । ते । इह । स्मसि ॥ ९ ॥

हे पूषन् पोषक तव त्वदीये व्रते कर्मणि वर्तमानाः वयं कदा चन कदाचिदपि न रिष्येम हिंसिता न भवेम । तादृशाश्च वयम् इह अस्मिन् कर्मणि ते तव स्तोतारः स्मसि स्मः । भवामः ॥

परि पूषा परस्ताद्धस्तं दधातु दक्षिणम् । पुनर्नो नष्टमाजतु ॥ १० ॥

परि । पूषा । परस्तात् । हस्तम् । दधातु । दक्षिणम् ।
पुनः । नः । नष्टम् । आ । अजतु ॥ १० ॥

पूषा पोषको देवः परस्तात् परस्मिन् देशे सुसंचारादन्यस्मिन् चोरव्याघ्रादिभिरुषिते देशे गच्छतो गोधनस्य निवारणाय स्वकीयं दक्षिणं हस्तं परि दधातु । परिधानं निवारकं करोतु । नः अस्मदीयं नष्टं च गोधनं पुनः आजतु आगच्छतु । आगमयतु ॥ ॥ २० ॥

' एहि वाम् ' इति षड्टचं षष्ठं सूक्तं भरद्वाजस्यार्षं गायत्रं पौष्णम् । अनुक्रम्यते च—' एहि वां षट् ' इति । गतो विनियोगः ॥

एहि वां विमुचो नपादाघृणे सं सचावहै । रथीर्ऋतस्य नो भव ॥ १ ॥

आ । इहि । वाम् । विऽमुचः । नपात् । आघृणे । सम् । सचावहै ।
रथीः । ऋतस्य । नः । भव ॥ १ ॥

हे विमुचो नपात् । विमुञ्चति सृष्टिकाले स्वसकाशात् सर्वाः प्रजा विसृजतीति विमुक् प्रजापतिः । तस्य पुत्र आघृणे आगतदीप्ते पूषन् वाम् । वाति गच्छति स्तुतिं प्राप्नोतीति वाः स्तोता ॥ ' वा गतिगन्धनयोः ' इत्यस्मात् ' आतो मनिन्° ' इति विच् ॥ वां गन्तारं स्तोतारं माम् एहि आगच्छ । आवां च[1] सं सचावहै समयाव । संगच्छावहै[2] । तादृशस्त्वं नः अस्माकम् ऋतस्य यज्ञस्य रथीः रंहिता नेता भव । तथा सति तत्रत्यं हविस्त्वयापि लभ्यत इत्यर्थः ॥

रथीतमं कपर्दिनमीशानं राधसो महः । रायः सखायमीमहे ॥ २ ॥

रथिऽतमम् । कपर्दिनम् । ईशानम् । राधसः । महः । रायः । सखायम् । ईमहे ॥ २ ॥

रथीतमम् अतिशयेन रथिनम् । यद्वा । अतिशयेन रंहितारं नेतारं कपर्दिनम् । कपर्दश्चूडा । तद्वन्तम् । राध्नोत्यनेनेति राधो धनम् । महः महतः राधसः धनस्य ईशानं स्वामिनं सखायम् अस्माकं मित्रमेवंविधं पूषणं रायः धनानि ईमहे याचामहे ॥

---

१. ख-न-भ-' च ' नास्ति । २. ञ-त-संगच्छावहै । यद्वा आवामित्यस्याद्याक्षरलोपे वामिति भवति । आवां सचावहै इति संबन्धः । याव संगच्छावहै ।

रायो धारास्याघृणे वसो राशिरजाश्व । धीवतोधीवतः सखा ॥ ३ ॥

रायः । धारा । असि । आघृणे । वसोः । राशिः । अजऽअश्व । धीवतःऽधीवतः । सखा ॥ ३ ॥

हे आघृणे आगतदीप्ते पूषन् रायः धनस्य धारा असि प्रवाहो भवसि । स्तोतृभ्यो बहुधनं नैरन्तर्येण प्रयच्छसीत्यर्थः । अजाश्व । अजाश्छागा एवाश्वा अश्वकार्यापन्ना यस्य तादृश पूषन् वसोः वसुनः धनस्य राशिः संघश्च भवसि । धनसंघश्च त्वय्येव निवसतीत्यर्थः । धीवतोधीवतः सर्वस्य स्तोत्रवतः पुरुषस्य सखा मित्रभूतश्च[1] भवसि ॥

पूषणं न्वजाश्वमुप स्तोषाम वाजिनम् । स्वसुर्यो जार उच्यते ॥ ४ ॥

पूषणम् । नु । अजऽअश्वम् । उप । स्तोषाम । वाजिनम् । स्वसुः । यः । जारः । उच्यते ॥ ४ ॥

अजाश्वं छागवाहनं वाजिनम् अन्नवन्तं बलवन्तं वा पूषणं पोषकं देवं नु अद्य उप स्तोषाम उपस्तवाम । यः पूषा स्वसुः उषसः जारः उपपतिरिति उच्यते तं पूषणमित्यन्वयः ॥

मातुर्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः । भ्रातेन्द्रस्य सखा मम ॥ ५ ॥

मातुः । दिधिषुम् । अब्रवम् । स्वसुः । जारः । शृणोतु । नः ।
भ्राता । इन्द्रस्य । सखा । मम ॥ ५ ॥

मातुः निर्मात्र्या रात्रेः दिधिषुं पतिं[2] पूषणम् अब्रवं स्तौमि । स्वसुः उषसः जारः च पूषा नः अस्माकं स्तोत्राणि शृणोतु । इन्द्रस्य भ्राता सहजातः पूषा मम स्तोतुः सखा मित्रभूतोऽस्तु ॥

आजासः पूषणं रथे निशृम्भास्ते जनश्रियम् । देवं वहन्तु बिभ्रतः ॥ ६ ॥

आ । अजासः । पूषणम् । रथे । निऽशृम्भाः । ते । जनऽश्रियम् ।
देवम् । वहन्तु । बिभ्रतः ॥ ६ ॥

अजासः अजाश्छागाः निशृम्भाः निश्रथ्य संबध्य हर्तारः ते पूष्णो वाहनतया प्रसिद्धाश्छागाः जनश्रियम् । जनं स्तोतृसंघं श्रयति गच्छतीति जनश्रीः । तं पूषणं देवं रथे बिभ्रतः धारयन्तः आ वहन्तु आनयन्तु ॥  ॥ २१ ॥

' य एनम् ' इति षडृचं सप्तमं सूक्तं भरद्वाजस्यार्षं पौष्णम् । अन्त्यानुष्टुप् आदौ पञ्च गायत्र्यः । तथा चानुक्रान्तं—' य एनमन्त्यानुष्टुप् ' इति । गतो विनियोगः ॥

य एनमादिदेशति करम्भादिति पूषणम् । न तेन देव आदिशे ॥ १ ॥

यः । एनम् । आऽदिदेशति । करम्भऽअत् । इति । पूषणम् ।

न । तेन । देवः । आऽदिशे ॥ १ ॥

---

१. ङ–मित्रं च ।  २. ख–उपपतिम् ।

ˇयः स्तोता ˇएनं ˇपूषणं पोषकं ˇकरम्भात् करम्भाणां घृतमिश्राणां यवसक्तूनाम् अत्ता[1] ˇइति ˇआदिदेशति[2] अभिष्टौति ˇतेन पुरुषेण अन्यः[3] ˇदेवः ˇन ˇआदिशे आदेष्टव्यः स्तोतव्यो न[4] भवति। पूष्ण एव सर्वस्याभिमतस्य धनस्य लाभात् देवतान्तरं न स्तौतीत्यर्थः ॥

उत घा स रथीतमः सख्या सत्पतिर्युजा। इन्द्रो वृत्राणि जिघ्नते ॥ २ ॥

उत। घ। सः। रथिऽतमः। सख्या। सत्ऽपतिः। युजा। इन्द्रः। वृत्राणि। जिघ्नते ॥२॥

ˇउत ˇघ अपि च ˇसः यः शत्रूणां हन्तृत्वेन प्रसिद्धस्तादृशः ˇरथीतमः अतिशयेन रथी महारथः ˇसत्पतिः सतां पालयिता एवंगुणः ˇइन्द्रः ˇसख्या मित्रभूतेन पूष्णा ˇयुजा सहायभूतेन युक्तः सन् ˇवृत्राणि शत्रून् ˇजिघ्नते हन्ति। इन्द्रस्यापि अयमेव साहाय्यकारीत्यर्थः[5] ॥

उतादः परुषे गवि सूरश्चक्रं हिरण्ययम्। न्यैरयद्रथीतमः ॥ ३ ॥

उत। अदः। परुषे। गवि। सूरः। चक्रम्। हिरण्ययम्। नि। ऐरयत्। रथिऽतमः ॥३॥

ˇउत अपि च ˇसूरः प्रेरकः ˇरथीतमः अतिशयेन रथी नेतृतमो वा पूषा ˇपरुषे परुष्मति पर्ववति भास्वति वा ˇगवि। गच्छतीति गौरादित्यः। तस्मिन् ˇहिरण्ययं हिरण्मयं सुवर्णनिर्मितम् ˇअदः तत् रथस्य ˇचक्रं ˇन्यैरयत् नितरां प्रेरयति स्म ॥

यदद्य त्वा पुरुष्टुत ब्रवाम दस्र मन्तुमः। तत्सु नो मन्म साधय ॥ ४ ॥

यत्। अद्य। त्वा। पुरुऽस्तुत। ब्रवाम। दस्र। मन्तुऽमः।
तत्। सु। नः। मन्म। साधय ॥ ४ ॥

हे ˇपुरुष्टुत बहुभिर्यजमानैः स्तुत[6] ˇदस्र दर्शनीय ˇमन्तुमः ज्ञानवन् पूषन् ˇअद्य इदानीं ˇयत्[7] उद्दिश्य[7] ˇत्वा त्वां ˇब्रवाम स्तवाम ˇनः अस्माकं ˇमन्म मननीयं ˇतत् धनं ˇसु ˇसाधय उत्पादय ॥

इमं च नो गवेषणं सातये सीषधो गणम्। आरात्पूषन्नसि श्रुतः ॥ ५ ॥

इमम्। च। नः। गोऽएषणम्। सातये। सीसधः। गणम्।
आरात्। पूषन्। असि। श्रुतः ॥ ५ ॥

हे पूषन् ˇनः अस्माकं ˇसातये लाभाय ˇइमं ˇच ˇगणं मनुष्यसंघं ˇगवेषणं गवामेषयितारं ˇसीषधः साधय। हे ˇपूषन् ˇआरात् दूरदेशेऽपि त्वं ˇश्रुतः विश्रुतः प्रख्यातः ˇअसि भवसि ॥

आ ते स्वस्तिमीमह आरेअघामुपावसुम्। अद्या च सर्वतातये श्वश्च सर्वतातये ॥६॥

आ। ते। स्वस्तिम्। ईमहे। आरेऽअघाम्। उपऽवसुम्।
अद्य। च। सर्वऽतातये। श्वः। च। सर्वऽतातये ॥ ६ ॥

---

१. ख-भ-श—अत् अत्ति। २. ख-घ-ङ्ग-भ-श—आदिदेशति आदिशति; न—आदिदेशति पुनःपुनरादिशति। ३. घ-भ-श—अन्योऽपि। ४. ङ्ग-त-य—'न' नास्ति। ५. ख-न-भ—सहकारीत्यर्थः। ६. ख-ङ्ग-त-न-भ-र—स्तुतेन्द्र। ७. ख-भ—यद्यमुद्दिश्य; घ—यत्त्वामुद्दिश्य; ङ्ग-त-न-र—यमुद्दिश्य।

हे पूषन् ते त्वदीयां त्वया देयां स्वस्ति कल्याणीं रक्षाम् आरेअघाम्। आरे दूरे अघं पापं यस्यास्तादृशीम्। उपावसुम् उपगतधनाम्। ईदृशीं स्वस्तिम् अद्य च अस्मिंश्च काले सर्वतातये। सर्वैर्ऋत्विग्भिस्तायते इति सर्वतातिर्यज्ञः। तदर्थम्। यद्वा। सर्वेषां भोगानां[1] विस्ताराय। श्वश्च परस्मिन्नपि दिने सर्वतातये सर्वदा सर्वतात्यर्थम्[2] आ ईमहे अभियाचामहे ॥ ॥ २२ ॥

'इन्द्रा नु पूषणा' इति षडृचमष्टमं सूक्तं भरद्वाजस्यार्षं गायत्रमैन्द्रापौष्णम्। अनुक्रान्तं च— 'इन्द्रा न्वैन्द्रं च' इति। गतो विनियोगः ॥

इन्द्रा नु पूषणा वयं सख्याय स्वस्तये। हुवेम वाजसातये ॥ १ ॥

इन्द्रा। नु। पूषणा। वयम्। सख्याय। स्वस्तये। हुवेम। वाजऽसातये ॥ १ ॥

इतरेतरयोगात् इन्द्रपूषञ्शब्दयोः उभयत्र द्विवचनम्। इन्द्रापूषणौ[3] देवौ नु अद्य च वयं स्वस्तये सख्याय शोभनाय सखित्वाय वाजसातये वाजस्यान्नस्य बलस्य वा सातये संभजनाय च हुवेम आह्वयाम। स्तवाम[4] ॥

सोममन्य उपासदत्पातवे चम्वोः सुतम्। करम्भमन्य इच्छति ॥ २ ॥

सोमम्। अन्यः। उप। असदत्। पातवे। चम्वोः। सुतम्। करम्भम्। अन्यः। इच्छति ॥ २ ॥

चम्वोः अधिषवणफलकयोः सुतम् अभिषुतं सोमम् अन्यः अनयोरेकतर इन्द्रः पातवे पातुम् उपासदत् उपसीदति। उपगच्छति। अन्यः एकतरः पूषा करम्भं घृतसिक्तं सक्तवात्मकं हविः भक्षयितुम् इच्छति ॥

अजा अन्यस्य वह्नयो हरी अन्यस्य संभृता। ताभ्यां वृत्राणि जिघ्नते ॥ ३ ॥

अजाः। अन्यस्य। वह्नयः। हरी इति। अन्यस्य। सम्ऽभृता।
ताभ्याम्। वृत्राणि। जिघ्नते ॥ ३ ॥

अनयोरिन्द्रापूष्णोः अन्यस्य एकस्य पूष्णः अजाः छागाः वह्नयः वाहका अश्वाः। अन्यस्य अपरस्येन्द्रस्य संभृता संभृतौ सम्यक् पुष्टौ हरी एतत्संज्ञावश्वौ वाहकौ। स चेन्द्रः ताभ्यां वृत्राणि शत्रून् जिघ्नते हन्ति ॥

यदिन्द्रो अनयद्रितो महीरपो वृषन्तमः। तत्र पूषाभवत्सचा ॥ ४ ॥

यत्। इन्द्रः। अनयत्। रितः। महीः। अपः। वृषन्ऽतमः।
तत्र। पूषा। अभवत्। सचा ॥ ४ ॥

यत् यदा वृषन्तमः अतिशयेन वर्षिता इन्द्रः रितः[5] गन्त्रीः महीः महतीः अपः वृष्ट्युदकानि अनयत् इमं लोकं प्रापयति तत्र तदानीं पूषा पोषको देवः सचा अभवत् अस्येन्द्रस्य सहायो भवति ॥

---

१. ख-झ-न-भ—सोमानाम्। २. श—यज्ञार्थम्। ३. ख-घ-भ—इन्द्रापूषणा इन्द्रापूषणौ। ४. झ-ञ-त-न-र—स्तवाम वा। ५. ख-घ-ञ-भ—रितः परितः; त-श—परितः।

तां पूष्णः सुमतिं वयं वृक्षस्य प्र वयामिव । इन्द्रस्य चा रभामहे ॥ ५ ॥

ताम् । पूष्णः । सुऽमतिम् । वयम् । वृक्षस्य । प्र । वयाम्ऽइव ।
इन्द्रस्य । च । आ । रभामहे ॥ ५ ॥

पूष्णः[1] पोषकस्य देवस्य इन्द्रस्य च तां प्रसिद्धां सुमतिं कल्याणीं मतिमनुग्रहबुद्धिं वृक्षस्य महीरुहस्य प्र वयां प्रकृष्टां दृढां शाखाम् इव वयम् आ रभामहे अवलम्बामहे । आश्रयामह इत्यर्थः ॥

उत्पूषणं युवामहेऽभीशूँरिव सारथिः । मह्या इन्द्रं स्वस्तये ॥ ६ ॥

उत । पूषणम् । युवामहे । अभीशून्ऽइव । सारथिः । मह्यै । इन्द्रम् । स्वस्तये ॥ ६ ॥

पूषणं पोषकं देवम् इन्द्रं च मह्यै महत्यै स्वस्तये रक्षार्थम् उत् युवामहे उद्योजयामः । उद्योजनमाकर्षणम् । तत्र दृष्टान्तः । सारथिः सूतः अभीशूनिव । अभीशून् रश्मीन् अश्वबन्धनार्थान् यथाकर्षति तद्वत् ॥ ॥ २३ ॥

'शुक्रं ते' इति चतुर्ऋचं नवमं सूक्तं भरद्वाजस्यार्षं पौष्णम् । द्वितीया जगती शिष्टास्त्रिष्टुभः । तथा चानुक्रान्तं—'शुक्रं चतुष्कं द्वितीया जगती' इति । वैश्वदेवे पर्वणि पौष्णस्य हविषः 'शुक्रं ते' इति याज्या । सूत्रितं च—'शुक्रं ते अन्यद्यजतं ते अन्यदिहेह वः स्वतवसः' ( आश्व. श्रौ. २·१६ ) इति । एकादशिनस्य पौष्णस्य पशोर्वपाया एषैव याज्या । सूत्रितं च—'शुक्रं ते अन्यद्यजतं ते अन्यत्प्रपथे पथामजनिष्ट पूषा' (आश्व. श्रौ. ३·७) इति । प्रवर्ग्याभिष्टवेऽप्येषा । सूत्रितं च—'शुक्रं ते अन्यद्यजतं ते अन्यदपश्यं गोपामनिपद्यमानम्' ( आश्व. श्रौ. ४. ६ ) इति ॥

शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥ १ ॥

शुक्रम् । ते । अन्यत् । यजतम् । ते । अन्यत् ।
विषुरूपे इति विषुऽरूपे । अहनी इति । द्यौःऽइव । असि ।
विश्वाः । हि । मायाः । अवसि । स्वधाऽवः । भद्रा । ते । पूषन् । इह । रातिः । अस्तु ॥ १ ॥

हे पूषन् ते तव शुक्रं शुक्लवर्णम् अन्यत् एकम् अहर्भवति वासरात्मकम् । तथा ते तव संबन्धि यजतम् । यजिरत्र संगतिकरणे वर्तते । यजनीयं प्रकाशेन संगमनीयं स्वतः कृष्णवर्णम् अन्यत् एकम् अहर्भवति रात्र्याख्यम् । इत्थं विषुरूपे शुक्लकृष्णतया नानारूपे अहनी तव महिम्ना निष्पद्येते । यद्वा । हे पूषन् त्वदीयमन्यदेकं रूपं शुक्रं निर्मलं दिवसस्योत्पादकम् । त्वदीयमन्यदेकं रूपं यजतं केवलं यजनीयं न प्रकाशकं रात्रेरुत्पादकम् । अत एव विषुरूपे विषमरूपे अहनी अहश्च रात्रिश्च भवतः । अहोरात्रयोर्निर्माणे सूर्य एव कर्ता कथमस्य प्रसक्तिरिति तत्राह । द्यौरिवासि । यथा द्यौरादित्यः प्रकाशयिता तथा त्वं प्रकाशकोऽसि । कुत इत्यत आह । हे स्वधावः अन्नवन् पूषन् विश्वाः

---

१. ख-घ-भ—इन्द्रस्य पूष्णः ।

सर्वाः ᵛमायाः प्रज्ञाः ᵛहि यस्मात् कारणात् ᵛअवसि रक्षसि अतः कारणात् त्वं सूर्य इव भवसीत्यर्थः। तादृशस्य ᵛते तव ᵛभद्रा कल्याणी ᵛरातिः दानम् ᵛइह अस्मासु ᵛअस्तु भवतु। यास्कस्त्वाह— 'शुक्रं ते अन्यल्लोहितं ते अन्यद्यज्ञियं[1] ते अन्यद्यज्ञियं ते अन्यत्[1] इति[2] वा[2] विषमरूपे अहनी[3] कर्मणा द्यौरिव चासि। सर्वाणि च प्रज्ञानान्यवस्यन्नवन्' (निरु. १२. १७) इति॥

अजाश्वः पशुपा वाजपस्त्यो धियंजिन्वो भुवने विश्वे अर्पितः।

अष्ट्रां पूषा शिथिरामुद्वरीवृजत्संचक्षाणो भुवना देव ईयते॥ २॥

अजऽअश्वः। पशुऽपाः। वाजऽपस्त्यः। धियम्ऽजिन्वः। भुवने। विश्वे। अर्पितः।

अष्ट्राम्। पूषा। शिथिराम्। उत्ऽवरीवृजत्। सम्ऽचक्षाणः। भुवना। देवः। ईयते॥ २॥

ᵛअजाश्वः छागवाहनः ᵛपशुपाः पशूनां पालयिता ᵛवाजपस्त्यः। वाजा अन्नानि पस्त्ये गृहे यस्य तादृशः। ᵛधियंजिन्वः। धियः स्तोतारः कर्माणि वा। तेषां प्रीणयिता ᵛविश्वे विश्वस्मिन् सर्वस्मिन् ᵛभुवने लोके ᵛअर्पितः प्रजापतिना पोषकत्वेन स्थापितः। अत एवंभूतः ᵛपूषा पोषको ᵛदेवः ᵛअष्ट्राम् आरां स्वहस्तगतां ᵛशिथिरां शिथिलां सतीम् ᵛउद्वरीवृजत् उद्यच्छन् ᵛभुवना भुवनानि सर्वान् लोकान् भूतजातानि वा ᵛसंचक्षाणः संपश्यन् सूर्यात्मना प्रकाशयन् ᵛईयते नभसि गच्छति॥

पौष्णस्य पशोर्वपापुरोडाशयोः 'यास्ते पूषन्' इत्यादिके द्वे ऋचौ अनुवाक्ये। सूत्रितं च— 'यास्ते पूषन्नावो अन्तः समुद्र इति द्वे पूषेमा आशा अनु वेद सर्वाः' (आश्व. श्रौ. ३. ७) इति॥

यास्ते पूषन्नावो अन्तः समुद्रे हिरण्ययीरन्तरिक्षे चरन्ति।

ताभिर्यासि दूत्यां सूर्यस्य कामेन कृत श्रव इच्छमानः॥ ३॥

याः। ते। पूषन्। नावः। अन्तरिति। समुद्रे। हिरण्ययीः। अन्तरिक्षे। चरन्ति।

ताभिः। यासि। दूत्याम्। सूर्यस्य। कामेन। कृत। श्रवः। इच्छमानः॥ ३॥

हे ᵛपूषन् ᵛते त्वदीयाः ᵛयाः ᵛहिरण्ययीः हिरण्मय्यो हितरमणीयाः ᵛनावः ᵛसमुद्रे उदधौ ᵛअन्तः मध्ये ᵛअन्तरिक्षे नभसि ᵛचरन्ति संचरन्ति ᵛताभिः नौभिः ᵛसूर्यस्य ᵛदूत्यां ᵛयासि गच्छसि। कदाचित् देवैः सार्धं सूर्येऽसुरवधार्थं प्रस्थिते सति तस्य भार्या स्वभर्तरि संजातौत्सुक्या बभूव तां प्रति सूर्यः पूषणं प्राहैषीत् तेन चात्र पूषा स्तूयते। अपि च त्वं ᵛश्रवः हविर्लक्षणमन्नम् ᵛइच्छमानः इच्छन् ᵛकामेन पश्वादिविषयेण स्तोतृभिः ᵛकृतः वशीकृतोऽसि॥

पूषा सुबन्धुर्दिव आ पृथिव्या इळस्पतिर्मघवा दस्मवर्चाः।

यं देवासो अददुः सूर्यायै कामेन कृतं तवसं स्वञ्चम्॥ ४॥

पूषा। सुऽबन्धुः। दिवः। आ। पृथिव्याः। इळः। पतिः। मघऽवा। दस्मऽवर्चाः।

यम्। देवासः। अददुः। सूर्यायै। कामेन। कृतम्। तवसम्। सुऽअञ्चम्॥ ४॥

---

१. ख-ज्ञ-त-न-भ-र—अन्यद्यजतं ते अन्यद्यज्ञियं ते अन्यत्; श—अन्यद्यज्ञियं ते अन्यत्। २. ज्ञ-भ—'इति वा' नास्ति। ३. ज्ञ—ते अहनी।

ᵛपूषा पोषको देवः ᵛदिव ᵛआ द्युलोकस्य च ᵛपृथिव्याः च ᵛसुबन्धुः शोभनो[1] बन्धुर्भवति[1]। तथा ᵛइळस्पतिः इळाया अन्नस्य पतिः ᵛमघवा। मघमिति धननाम। तद्वान्। यद्वा। मंहतेर्दानकर्मणो भावसाधनो मघशब्दः। दानवान् ᵛदस्मवर्चाः। वर्च इति रूपनाम। दस्मं दर्शनीयं वर्चो यस्य तादृशः। ᵛयं पूषणं ᵛदेवासः सर्वे देवाः ᵛसूर्यायै सूर्यस्य पत्न्यै यद्वा सावित्र्यै सूर्याख्यायै अश्विनोर्वरणाय ᵛअददुः दत्तवन्तः। 'पुत्रः पितरावबृणीत पूषा' ( ऋ. सं. १०. ८५. १४ ) इति हि श्रूयते। कीदृशं पूषणम्। ᵛकामेन पश्वादिविषयेण ᵛकृतं स्तोतृभिर्वशीकृतं ᵛतवसं बलवन्तं प्रवृद्धं वा ᵛस्वञ्चं स्वञ्चनं सुष्ठु गच्छन्तम्। एवंविधं यं पूषणमददुः स पूषा सुबन्धुरित्यन्वयः॥ ॥ २४ ॥

'प्र नु वोचा' इति दशर्चं दशमं सूक्तं भरद्वाजस्यार्षमिन्द्राग्निदेवताकम्। सप्तम्याद्याश्चतस्रोऽनुष्टुभः शिष्टाः षट् बृहत्यः। तथा चानुक्रान्तं—'प्र नु दशैन्द्राग्नं तु बार्हतं चतुरनुष्टुबन्तम्' इति। गतो विनियोगः॥

प्र नु वो॑चा सु॒तेषु॑ वां वी॒र्या॒३॑ यानि॑ च॒क्रथुः॑ ।
ह॒तासो॑ वां पि॒तरो॑ दे॒वश॑त्रव॒ इन्द्रा॑ग्नी॒ जीव॑थो यु॒वम् ॥ १ ॥

प्र । नु । वो॒च॒ । सु॒तेषु॑ । वा॒म् । वी॒र्या॑ । यानि॑ । च॒क्रथुः॑ ।
ह॒तासः॑ । वा॒म् । पि॒तरः॑ । दे॒वऽश॑त्रवः । इन्द्रा॑ग्नी॒ इति॑ । जीव॑थः । यु॒वम् ॥ १ ॥

हे इन्द्राग्नी ᵛयानि ᵛवीर्या वीर्याणि वीरकर्माणि ᵛचक्रथुः कृतवन्तौ युवां ᵛसुतेषु अभिषुतेषु सोमेषु अस्मद्यज्ञे ᵛवां युवयोः तानि वीर्याणि ᵛनु क्षिप्रं ᵛप्र ᵛवोच प्रवोचं प्रब्रवीमि। तदेव वीर्यं दर्शयति। हे ᵛइन्द्राग्नी ᵛदेवशत्रवः। देवाः शत्रवः[2] शातयितारो येषां तादृशाः। असुराः ᵛपितरः हिंसकाः। पीयतिर्हिंसाकर्मा। तस्यैतद्रूपम्। ईदृशा असुराः ᵛवां युवाभ्यां ᵛहतासः हताः आसन्। ᵛयुवं युवां तु ᵛजीवथः जीवनवन्तौ[3] भवथः। असुरैर्न बाधिताविति यावत्॥

बळि॒त्था म॑हि॒मा वा॒मिन्द्रा॑ग्नी॒ पनि॑ष्ठ॒ आ ।
स॒मा॒नो वां॑ ज॒नि॒ता भ्रात॑रा यु॒वं य॒मावि॒हेह॑मातरा ॥ २ ॥

बट् । इ॒त्था । म॒हि॒मा । वा॒म् । इन्द्रा॑ग्नी॒ इति॑ । पनि॑ष्ठः । आ ।
स॒मा॒नः । वा॒म् । ज॒नि॒ता । भ्रात॑रा । यु॒वम् । य॒मौ । इ॒हेह॑ऽमातरा ॥ २ ॥

हे ᵛइन्द्राग्नी ᵛवां युवयोः ᵛमहिमा महत्त्वम् ᵛइत्था इत्थमनेन प्रकारेण ᵛबट् सत्यम्। युष्मद्विषयं यज्जन्ममहत्त्वं प्रतिपाद्यते तत्सर्वं यथार्थमित्यर्थः। ᵛपनिष्ठ ᵛआ पनिष्ठः स्तुत्यतमश्च प्रजापतिः ᵛसमानः एक एव ᵛवां युवयोः ᵛजनिता जनयिता। अतः ᵛयुवं युवां ᵛभ्रातरा भ्रातरौ स्थः। अपि च ᵛयमौ यमलौ सहोत्पन्नौ ᵛइहेहमातरा। इह चेह च सर्वत्र माता ययोस्तादृशौ स्थः। अदितिर्हि अनयोर्माता सैव विस्तीर्णा भूमिरिति इहेहमातराविति श्रूयते[4]॥

---

१. श—शोभनबन्धु°। २. ख-झ-न-भ—'शत्रवः' नास्ति। ३. ख-भ-जीववन्तौ। ४. ख-ज्ञ-झ-त-न-भ-र—स्तूयते।

ओकिवांसा सुते सचाँ अश्वा सप्ती इवादने ।
इन्द्रा न्व१ग्नी अवसेह वज्रिणा वयं देवा हवामहे ॥ ३ ॥
ओकिऽवांसा । सुते । सचा । अश्वा । सप्ती इवेति सप्तीऽइव । आदने ।
इन्द्रा । नु । अग्नी इति । अवसा । इह । वज्रिणा । वयम् । देवा । हवामहे ॥ ३ ॥

हे इन्द्राग्नी सुते अभिषुते सोमे युवां सचा सह ओकिवांसा ओकिवांसौ समवेतौ संगतौ भवतम् । 'उच समवाये' इत्यस्यैतद्रूपम् । तत्र दृष्टान्तः । आदने भक्षणीये घासे सप्तीइव अश्वा सर्पणशीलावश्वाविव । नु अद्य वयं तादृशौ इन्द्राग्नी इह अस्मिन् यज्ञे अवसा रक्षणेन हेतुना हवामहे आह्वयामहे ॥ इतरेतरयोगात् इन्द्रशब्दे अग्निशब्दे च द्विवचनम् ॥ कीदृशाविन्द्राग्नी । वज्रिणा वज्रिणावायुधोपेतौ देवा[1] दानादिगुणयुक्तौ ॥

य इन्द्राग्नी सुतेषु वां स्तवत्तेष्वृतावृधा ।
जोषवाकं वदतः पज्रहोषिणा न देवा भसथश्चन ॥ ४ ॥
यः । इन्द्राग्नी इति । सुतेषु । वाम् । स्तवत् । तेषु । ऋतऽवृधा ।
जोषऽवाकम् । वदतः । पज्रऽहोषिणा । न । देवा । भसथः । चन ॥ ४ ॥

हे ऋतावृधा ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितारौ इन्द्राग्नी सुतेषु अभिषुतेषु सोमेषु यः स्तोता वां युवां स्तवत् कुत्सितं स्तूयात् तेषु सोमेषु मध्ये जोषवाकं वदतः जोषं जोषयितव्यं प्रीतिहेतुत्वेन कर्तव्यं स्वयमप्रीतिकरं तादृशं वाकं[2] वाक्यं वदतस्तस्य स्तोतुः सोमं हे पज्रहोषिणा पज्रः प्रार्जितः प्रसिद्धो होषो घोषः स्तोत्रं ययोस्तादृशौ हे देवा देवौ युवां न भसथः न भक्षयथः । चन इति पादपूरणः । अत्र निरुक्तं—'जोषवाकमित्यविज्ञातनामधेयं जोषयितव्यं भवति । य इन्द्राग्नी सुतेषु वां सोमेषु स्तौति तेष्वृतस्य वर्धयितारौ न तस्याश्नीथः । अथ योऽयं जोषवाकं वदति विजञ्जपः प्रार्जितहोषिणौ देवौ[3] न[3] तस्याश्नीथः' ( निरु. ५ . २२ ) इति ॥

इन्द्राग्नी को अस्य वां देवौ मर्तश्चिकेतति ।
विषूचो अश्वान्युयुजान ईयत एकः समान आ रथे ॥ ५ ॥
इन्द्राग्नी इति । कः । अस्य । वाम् । देवौ । मर्तः । चिकेतति ।
विषूचः । अश्वान् । युयुजानः । ईयते । एकः । समाने । आ । रथे ॥ ५ ॥

हे देवौ द्योतमानौ इन्द्राग्नी वां युवयोः अस्य इदं कर्म कः मर्तः मनुष्यः चिकेतति जानीयात् । न कोऽपीत्यर्थः । किं तत्कर्म । विषूचः[4] नानाञ्चतो गच्छतः अश्वान् समाने उभयार्थे एकस्मिन् रथे युवयोः एकः इन्द्रः सूर्यात्मना वर्तमानः युयुजानः तादृशानश्वान् योजयन् आ ईयते सर्वं जगदभिगच्छति । यद्वा । विषूचो नानारूपानश्वान् व्यापकान् समान एकरूपे रथे संवत्सरात्मके युयुजानो योजयन् युवयोरेकः सूर्यात्मेन्द्र एयते आगच्छति । एतद्युवयोः कर्म को यथावज्जानीयादित्यर्थः ॥ ॥ २५ ॥

---

१. ख-भ—देवा देवौ । २. ख-ज्ञ-भ—'वाकं' नास्ति । ३. ज्ञ—न देवौ । ४. श—विषूचः विष्वक् ।

इन्द्राग्नी अपादियं पूर्वागात्पद्वतीभ्यः ।
हित्वी शिरो जिह्वया वावदच्चरत्त्रिंशत्पदा न्यक्रमीत् ॥ ६ ॥

इन्द्राग्नी इति । अपात् । इयम् । पूर्वी । आ । अगात् । पत्ऽवतीभ्यः ।
हित्वी । शिरः । जिह्वया । वावदत् । चरत् । त्रिंशत् । पदा । नि । अक्रमीत् ॥ ६ ॥

हे ˇइन्द्राग्नी ˇअपात् पादरहिता ˇइयम् उषाः ˇपद्वतीभ्यः पादयुक्ताभ्यः सुप्ताभ्यः प्रजाभ्यः ˇपूर्वा प्रथमभाविनी सती ˇआगात् आगच्छति। तथा प्राणिनां ˇशिरः ˇहित्वी प्रेरयित्री। यद्वा। शिरो हित्वा त्यक्त्वा स्वयमशिरस्का सती। ˇजिह्वया प्राणिस्थया तदीयेन वागिन्द्रियेण ˇवावदत् भृशं शब्दं कुर्वती ˇचरत्। एवं चरन्ती उषाः ˇत्रिंशत् पदानि अवयवभूतान् त्रिंशन्मुहूर्तान् ˇन्यक्रमीत् एकेन दिवसेनातिक्रामति। एतच्च युवयोः कर्म। तत् को जानीयादिति पूर्वत्रान्वयः ॥

इन्द्राग्नी आ हि तन्वते नरो धन्वानि बाह्वोः ।
मा नो अस्मिन्महाधने परा वर्क्तं गविष्टिषु ॥ ७ ॥

इन्द्राग्नी इति । आ । हि । तन्वते । नरः । धन्वानि । बाह्वोः ।
मा । नः । अस्मिन् । महाऽधने । परा । वर्क्तम् । गोऽइष्टिषु ॥ ७ ॥

हे ˇइन्द्राग्नी ˇनरः योद्धारो मनुष्याः ˇबाह्वोः हस्तयोः ˇधन्वानि धनूंषि ˇआ ˇतन्वते ˇहि आततज्यानि कुर्वते ˇहि। युवां च ˇअस्मिन् ˇमहाधने जेतव्येन महाधनेनोपेते संग्रामे ˇगविष्टिषु गवामन्वेषणेषु ˇनः अस्मान् ˇमा ˇपरा ˇवर्क्तम्। मा परित्यजतम् ॥

इन्द्राग्नी तपन्ति माघा अर्यो अरातयः । अप द्वेषांस्या कृतं युयुतं सूर्यादधि ॥८॥

इन्द्राग्नी इति । तपन्ति । मा । अघाः । अर्यः । अरातयः ।
अप । द्वेषांसि । आ । कृतम् । युयुतम् । सूर्यात् । अधि ॥ ८ ॥

हे ˇइन्द्राग्नी ˇअघाः आहन्त्यः ˇअर्यः अभिगन्त्र्यः ˇअरातयः शत्रुसेनाः ˇमा ˇतपन्ति मां बाधन्ते। ताः ˇअप ˇआ ˇकृतम् अपाकुरुतम्। तथा ˇद्वेषांसि द्वेष्टॄन् शत्रून् ˇसूर्यादधि। अधिः पञ्चम्यर्थानुवादकः। सूर्यदर्शनात् ˇयुयुतं पृथक्कुरुतं च। यथा ते सूर्यं न पश्यन्ति तथा कुरुतम्। मारयतमित्यर्थः ॥

इन्द्राग्नी युवोरपि वसु दिव्यानि पार्थिवा ।
आ न इह प्र यच्छतं रयिं विश्वायुपोषसम् ॥ ९ ॥

इन्द्राग्नी इति । युवोः । अपि । वसु । दिव्यानि । पार्थिवा ।
आ । नः । इह । प्र । यच्छतम् । रयिम् । विश्वायुऽपोषसम् ॥ ९ ॥

हे ˇइन्द्राग्नी ˇयुवोः युवयोः ˇदिव्यानि दिवि भवानि ˇपार्थिवा पृथिव्यां भवानि लोकद्वय-संबन्धीनि ˇवसु वसूनि ˇअपि हितानि युवयोरेव वर्तन्ते। अतः कारणात् ˇइह अस्मिन् यज्ञे ˇनः

अस्मभ्यं ᵛरयिं धनम् ᵛआ अभि ᵛप्र ᵛयच्छतम्। कीदृशं रयिम्। ᵛविश्वायुपोषसम्। आयव इति मनुष्यनाम। सर्वेषां मनुष्याणां पोषणाय पर्याप्तम्। यद्वा। सर्वस्यायुषः पोषणे शक्तम्। छान्दसो वर्णलोपः॥

इन्द्राग्नी उक्थवाहसा स्तोमेभिर्हवनश्रुता।
विश्वाभिर्गीर्भिरा गतमस्य सोमस्य पीतये॥ १०॥

इन्द्राग्नी इति। उक्थऽवाहसा। स्तोमेभिः। हवनऽश्रुता।
विश्वाभिः। गीःऽभिः। आ। गतम्। अस्य। सोमस्य। पीतये॥ १०॥

हे ᵛउक्थवाहसा उक्थैः स्तुतिभिः वहनीयौ हे ᵛहवनश्रुता हवनस्याह्वानस्य श्रोतारौ एवंभूतौ हे ᵛइन्द्राग्नी ᵛस्तोमेभिः स्तोत्रैः ᵛविश्वाभिः सर्वाभिः ᵛगीर्भिः शस्त्ररूपाभिर्वाग्भिश्च[1] हेतुभूताभिः ᵛआ ᵛगतम् आगच्छतम्। किमर्थम्। ᵛअस्य अस्मदीयस्य ᵛसोमस्य ᵛपीतये पानार्थम्॥ ॥ २६॥

'श्नथद्वृत्रम्' इति पञ्चदशर्चमेकादशं सूक्तं भरद्वाजस्यार्षमैन्द्राग्नम्। आदौ तिस्रस्त्रिष्टुभः चतुर्थ्याद्या नव गायत्र्यः त्रयोदशी त्रिष्टुप् चतुर्दशी बृहती पञ्चदश्यनुष्टुप्। तथा चानुक्रान्तं— 'श्नथत्पञ्चोना गायत्रं तु त्रित्रिष्टुबादि त्रिष्टुब्बृहत्यनुष्टुबन्तम्' इति। गतः सूक्तविनियोगः। वरुणप्रघासेषु ऐन्द्राग्नस्य हविषः 'श्नथत्' इत्येषा याज्या। सूत्रितं च—'इन्द्राग्नी अवसा गतं श्नथद्वृत्रमुत सनोति वाजम्' (आश्व. श्रौ. २. १७) इति॥

श्नथद्वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात्।
इरज्यन्ता वसव्यस्य भूरेः सहस्तमा सहसा वाजयन्ता॥ १॥

श्नथत्। वृत्रम्। उत। सनोति। वाजम्। इन्द्रा। यः। अग्नी इति। सहुरी इति। सपर्यात्।
इरज्यन्ता। वसव्यस्य। भूरेः। सहःऽतमा। सहसा। वाजऽयन्ता॥ १॥

स पुरुषः ᵛवृत्रम् आवरकं शत्रुं ᵛश्नथत् हिनस्ति। ᵛउत अपि च ᵛवाजम् अन्नं बलं वा ᵛसनोति लभते। ᵛयः पुरुषः ᵛसहुरी शत्रूणामभिभवितारौ इन्द्राग्नी ᵛसपर्यात् परिचरेत्। इतरेतरयोगात् उभयत्र पूर्ववत् द्विवचनम्। कीदृशाविन्द्राग्नी। ᵛभूरेः प्रभूतस्य ᵛवसव्यस्य वसुसमूहस्य[2]। यद्वा। स्वार्थिको यत्। धनस्य ᵛइरज्यन्ता ईशानौ स्वामिनौ। इरज्यतिरैश्वर्यकर्मा। ᵛसहसा बलेन ᵛसहस्तमा अतिशयेनाभिभवितारौ शत्रूणां ᵛवाजयन्ता वाजं हविर्लक्षणमन्नमात्मन इच्छन्तौ। यद्वा। वाजं स्तोतृभ्यो दातव्यमन्नं कामयमानौ॥

ता योधिष्टमभि गा इन्द्र नूनमपः स्वरुषसो अग्न ऊळ्हाः।
दिशः स्वरुषस इन्द्र चित्रा अपो गा अग्ने युवसे नियुत्वान्॥ २॥

ता। योधिष्टम्। अभि। गाः। इन्द्र। नूनम्। अपः। स्वः। उषसः। अग्ने। ऊळ्हाः।
दिशः। स्वः। उषसः। इन्द्र। चित्राः। अपः। गाः। अग्ने। युवसे। नियुत्वान्॥ २॥

---

१. श–स्तुतिरूपाभि°। २. ख-ङ-भ-र–वासशितव्यस्य।

हे इन्द्र हे अग्ने ता तौ युवां गाः अपः उदकानि स्वः सूर्यम् उषसः उषःकालान् ऊळ्हाः पणिभिरपहृता एतान् गवादीनभिलक्ष्य योधिष्टम्। तैरसुरैर्युद्धं कृतवन्तौ। नूनम् इति पादपूरणार्थः। हे इन्द्र त्वं दिशः प्राच्याद्याः स्वः सूर्यम् उषसः च चित्राः चायनीयाः अपः उदकानि च गाः च पणिभिरपहृतानेतान् युवसे अनेन लोकेनायोजयः। यद्वा। असुरैरावृतान् दिगादीन् असुरवधेनावरणमपनीय पृथक्कृतवानसीत्यर्थः। हे अग्ने नियुत्वान् नियुद्भिरश्वैर्युक्तः सन् त्वमप्येवमकार्षीरित्यर्थः॥

ऐन्द्राग्नस्य पशोर्वपायाः 'आ वृत्रहणा' इत्यनुवाक्या। सूत्रितं च—'आ वृत्रहणा वृत्रहभिः शुष्मैरा भरतं शिक्षतं वज्रबाहू' (आश्व. श्रौ. ३. ७) इति॥

**आ वृत्रहणा वृत्रहभिः शुष्मैरिन्द्र यातं नमोभिरग्ने अर्वाक्।**
**युवं राधोभिरकवेभिरिन्द्राग्ने अस्मे भवतमुत्तमेभिः॥ ३॥**

आ। वृत्रऽहना। वृत्रहऽभिः। शुष्मैः। इन्द्र। यातम्। नमःऽभिः। अग्ने। अर्वाक्।
युवम्। राधःऽभिः। अकवेभिः। इन्द्र। अग्ने। अस्मे इति। भवतम्। उत्ऽतमेभिः॥३॥

हे वृत्रहणा वृत्रस्यासुरस्य हन्तारौ हे इन्द्र हे अग्ने वृत्रहभिः वृत्रस्य हन्तृभिः वृत्रहनननिमित्तैः शुष्मैः बलैः नमोभिः अस्मभ्यं दातव्यैरन्नैश्च सार्धम् अर्वाक् अस्मदभिमुखम् आ यातम् आगच्छतम्। हे इन्द्र हे अग्ने युवं युवाम् अकवेभिः अकुत्सितैः महद्भिः उत्तमेभिः उत्कृष्टतमैः राधोभिः धनैः सह अस्मे अस्मासु भवतम् आविर्भवतम्॥

चातुर्विंशिकेऽहनि प्रातःसवनेऽच्छावाकशस्त्रे 'ता हुवे' इति षडहस्तोत्रियस्तृचः। सूत्रितं च—'ता हुवे ययोरिदमियं वामस्य मन्मनः' (आश्व. श्रौ. ७. २) इति। पृष्ठ्याभिप्लवषडहयोः स्तोमवृद्धौ 'ता हुवे' इत्याद्या नवर्च आवापार्थाः। सूत्रितं च—'ता हुवे ययोरिदमिति नवेयं वामस्य मन्मन इत्येकादश' (आश्व. श्रौ. ७. ५) इति॥

**ता हुवे ययोरिदं पप्ने विश्वं पुरा कृतम्। इन्द्राग्नी न मर्धतः॥ ४॥**

ता। हुवे। ययोः। इदम्। पप्ने। विश्वम्। पुरा। कृतम्। इन्द्राग्नी इति। न। मर्धतः॥४॥

ता तौ तादृशाविन्द्राग्नी हुवे आह्वये। ययोः इन्द्राग्न्योः पुरा पूर्वस्मिन् काले कृतं विश्वं सर्वम् इदं पूर्वासु ऋक्षु कीर्तितं वीर्यं पप्ने पन्यते ऋषिभिः स्तूयते। ताविन्द्राग्नी हुवे इत्यन्वयः। तौ च इन्द्राग्नी न मर्धतः स्तोतॄन्न हिंस्तः। अतोऽस्मानप्याहूतौ रक्षतामिति भावः। मर्धतिर्हिंसाकर्मा॥

**उग्रा विघनिना मृध इन्द्राग्नी हवामहे। ता नो मृळात ईदृशे॥ ५॥**

उग्रा। विऽघनिना। मृधः। इन्द्राग्नी इति। हवामहे। ता। नः। मृळातः। ईदृशे॥५॥

उग्रा उग्रौ उद्गूर्णबलावत एव मृधः शत्रून् विघनिना विघनिनौ विशेषेण हतवन्तौ इन्द्राग्नी हवामहे आह्वयामहे। तौ[1] चेन्द्राग्नी ईदृशे अस्मिन् संग्रामे नः अस्मान् मृळातः सुखयताम्। यद्वा। मृळतिरुपदयाकर्मा। नोऽस्माकं मृळातः उपदयां कुरुताम्॥ ॥ २७॥

---

१. ख-भ—ता तौ।

हतो वृत्राण्यार्या हतो दासानि सत्पती । हतो विश्वा अप द्विषः ॥ ६ ॥

हतः । वृत्राणि । आर्या । हतः । दासानि । सत्पती इति सत्ऽपती ।

हतः । विश्वाः । अप । द्विषः ॥ ६ ॥

ताविन्द्राग्नी ᵛआर्या आर्यैः कर्मानुष्ठातृभिः कृतानि ᵛवृत्राणि उपद्रवजातानि ᵛहतः हिंस्तः । तथा ᵛसत्पती सतां पालयितारौ इन्द्राग्नी ᵛदासानि । दासाः कर्महीनाः शत्रवः । तैः कृतानि चोपद्रवजातानि ᵛहतः । अपि च ᵛविश्वाः सर्वाः ᵛद्विषः द्वेष्ट्रीः शत्रुभूताः प्रजाः ᵛअप ᵛहतः विनाशयतः । अतोऽस्माकमप्येवमेव कुरुतामिति भावः ॥

चातुर्विंशिकेऽहनि प्रातःसवनेऽच्छावाकशस्त्रे 'इन्द्राग्नी युवाम्' इति षडहस्तोत्रियस्तृचः । सूत्रितं च—'इन्द्राग्नी युवामिमे यज्ञस्य हि स्थ ऋत्विजेत्यच्छावाकस्य' ( आश्व. श्रौ. ७.२ ) इति ॥

इन्द्राग्नी युवामिमे३ऽभि स्तोमा अनूषत । पिबतं शंभुवा सुतम् ॥ ७ ॥

इन्द्राग्नी इति । युवाम् । इमे । अभि । स्तोमाः । अनूषत । पिबतम् । शम्ऽभुवा । सुतम् ॥७॥

हे ᵛइन्द्राग्नी ᵛयुवामिमे ᵛस्तोमाः स्तोतारः ᵛअभि ᵛअनूषत अभिष्टुवन्ति । हे ᵛशंभुवा सुखस्य भावयिताराविन्द्राग्नी ᵛसुतम् अभिषुतमस्मदीयं सोमं ᵛपिबतम् ॥

या वां सन्ति पुरुस्पृहो नियुतो दाशुषे नरा । इन्द्राग्नी ताभिरा गतम् ॥ ८ ॥

याः । वाम् । सन्ति । पुरुऽस्पृहः । निऽयुतः । दाशुषे । नरा ।

इन्द्राग्नी इति । ताभिः । आ । गतम् ॥ ८ ॥

हे ᵛनरा नेताराविन्द्राग्नी ᵛवां युवयोः स्वभूताः ᵛपुरुस्पृहः पुरुभिर्बहुभिः स्पृहणीयाः ᵛदाशुषे हवींषि दत्तवते यजमानार्थमुत्पन्नाः ᵛयाः ᵛनियुतः अश्वाः ᵛसन्ति हे ᵛइन्द्राग्नी ᵛताभिः नियुद्भिः ᵛआ ᵛगतम् आगच्छतम् ॥

ताभिरा गच्छतं नरोपेदं सवनं सुतम् । इन्द्राग्नी सोमपीतये ॥ ९ ॥

ताभिः । आ । गच्छतम् । नरा । उप । इदम् । सवनम् । सुतम् । इन्द्राग्नी इति । सोमऽपीतये ॥९॥

हे ᵛनरा नेतारौ ᵛइन्द्राग्नी । सूयतेऽभिषूयत इति सवनः सोमः । ᵛइदं ᵛसवनम् इमं सोमं ᵛसुतम् अभिषुतम् ᵛउप प्रति । यद्वा । इदं प्रातःसवनमुप अस्मिन् सवने सुतमभिषुतं सोमं प्रति ᵛताभिः नियुद्भिः ᵛआ ᵛगच्छतम् । किमर्थम् । ᵛसोमपीतये तस्य सोमस्य पानार्थम् ॥

तमीळिष्व यो अर्चिषा वना विश्वा परिष्वजत् । कृष्णा कृणोति जिह्वया ॥१०॥

तम् । ईळिष्व । यः । अर्चिषा । वना । विश्वा । परिऽस्वजत् । कृष्णा । कृणोति । जिह्वया ॥१०॥

हे स्तोतः ᵛतम् अग्निम् ᵛईळिष्व स्तुहि । ᵛयः अग्निः ᵛअर्चिषा ज्वालारूपेण तेजसा ᵛविश्वा सर्वाणि ᵛवना[1] अरण्यानि[1] ᵛपरिष्वजत् परिष्वजति परितो वेष्टयति । यश्च तानि वनानि ᵛजिह्वया ज्वालया दग्ध्वा ᵛकृष्णा कृष्णवर्णानि ᵛकृणोति करोति[2] ॥ ॥ २८ ॥

---

१. ख-झ-न-भ-र-श—वनान्यरण्यानि; ज्ञ-त-वनान्यारण्यानि; य-वन्यान्यरण्यानि । २. घ-ज्ञ-त-न-श—करोति तमीळिष्वेति संबन्धः ।

य इ॒द्ध आ॒विवा॑सति सु॒म्नमिन्द्र॑स्य॒ मर्त्यः॑ । द्यु॒म्नाय॑ सु॒तरा॑ अ॒पः ॥ ११ ॥

यः । इ॒द्धे । आ॒ऽविवा॑सति । सु॒म्नम् । इन्द्र॑स्य । मर्त्यः॑ । द्यु॒म्नाय॑ । सु॒ऽतराः॑ । अ॒पः ॥ ११ ॥

ᵛयः ᵛमर्त्यः मनुष्यः ᵛइद्धे दीप्तेऽग्नौ ᵛसुम्नं सुखकरं हविः ᵛइन्द्रस्य इन्द्राय ᵛआविवासति परिचरति प्रयच्छति । चतुर्थ्यर्थे षष्ठी । तस्य मर्त्यस्य ᵛद्युम्नाय द्योतमानायान्नाय तदर्थं ᵛसुतराः सुखेन तरणीयाः ᵛअपः उदकानि वृष्ट्यात्मकानि[1] इन्द्रः करोतीति शेषः ॥

ता नो॒ वाज॑वती॒रिष॑ आ॒शून्पि॑पृत॒मर्व॑तः । इन्द्र॑म॒ग्निं च॒ वोळ्ह॑वे ॥ १२ ॥

ता । नः॒ । वाज॑ऽवतीः । इषः॑ । आ॒शून् । पि॒पृ॒तम् । अर्व॑तः । इन्द्र॑म् । अ॒ग्निम् । च॒ । वोळ्ह॑वे ॥ १२ ॥

हे इन्द्राग्नी ᵛता तौ युवां ᵛवाजवतीः अन्नवतीः ᵛइषः इष्यमाणा वृष्टीः । यद्वा । वाजो बलम् । तद्वतीरिषोऽन्नानि ᵛआशून् शीघ्रगान् ᵛअर्वतः अश्वांश्च ᵛनः अस्मभ्यं ᵛपिपृतं पूरयतम् । प्रयच्छतम् । किमर्थम् । ᵛइन्द्रमग्निं ᵛच युवां ᵛवोळ्हवे वोढुं हविर्भिः प्रापयितुम् ॥

ऐन्द्राग्नस्य पशोर्हविषोऽनुवाक्या 'उभा वाम्' इत्येषा । सूत्रितं च—'उभा वामिन्द्राग्नी आहुवध्यै शुचिं नु स्तोमं नवजातमद्य' ( आश्व. श्रौ. ३. ७ ) इति ॥

उ॒भा वा॑मिन्द्राग्नी आहु॒वध्या॑ उ॒भा राध॑सः स॒ह मा॑द॒यध्यै॑ ।
उ॒भा दा॒तारा॑वि॒षां र॑यी॒णामु॒भा वाज॑स्य सा॒तये॑ हुवे वाम् ॥ १३ ॥

उ॒भा । वा॒म् । इ॒न्द्रा॒ग्नी॒ इति॑ । आ॒ऽहु॒वध्यै॑ । उ॒भा । राध॑सः । स॒ह । मा॒द॒यध्यै॑ ।
उ॒भा । दा॒तारौ॑ । इ॒षाम् । र॒यी॒णाम् । उ॒भा । वाज॑स्य । सा॒तये॑ । हु॒वे॒ । वा॒म् ॥ १३ ॥

हे ᵛइन्द्राग्नी ᵛउभा उभौ संहत्य वर्तमानौ ᵛवां युवां ᵛहुवे आह्वयामि । किमर्थम् । ᵛआहुवध्यै आभिमुख्येन होतुम् । तथा ᵛउभा उभौ युवामाह्वये ᵛराधसः राधसा राधकेन हविषा ᵛसह युगपदेव ᵛमादयध्यै मादयितुं तर्पयितुम् । सर्वेषु देवेषु सत्सु आवयोराह्वाने किं कारणमिति चेदुच्यते । ᵛउभा उभौ तौ युवाम् ᵛइषाम् अन्नानां ᵛरयीणां धनानां च ᵛदातारौ स्थः । अतः कारणात् ᵛउभा उभौ ᵛवां युवां ᵛवाजस्य अन्नस्य ᵛसातये संभजनाय हुवे आह्वये ॥

आ नो॒ गव्ये॑भि॒रश्व्यै॒र्वस॒व्यै॒३॒॑रुप॑ गच्छतम् ।
सखा॑यौ दे॒वौ स॒ख्याय॑ शं॒भुवे॑न्द्रा॒ग्नी ता ह॑वामहे ॥ १४ ॥

आ । नः॒ । गव्ये॑भिः । अश्व्यैः॑ । व॒स॒व्यैः॑ । उप॑ । ग॒च्छ॒त॒म् ।
सखा॑यौ । दे॒वौ । स॒ख्याय॑ । श॒म्ऽभुवा॑ । इ॒न्द्रा॒ग्नी इति॑ । ता । ह॒वा॒म॒हे॒ ॥ १४ ॥

हे इन्द्राग्नी ᵛगव्येभिः गोसमूहैः ᵛअश्व्यैः अश्वसमूहैः ᵛवसव्यैः वसुसमूहैश्च साधं ᵛनः अस्मानाभिमुख्येन ᵛउप ᵛआ ᵛगच्छतम् । शेषः परोक्षकृतः । ᵛसखायौ समानख्यानौ ᵛदेवौ दानादिगुणयुक्तौ ᵛशंभुवा शंभुवौ सुखस्य भावयितारौ ᵛता[2] तादृशौ ᵛइन्द्राग्नी ᵛसख्याय सखित्वार्थं वयं ᵛहवामहे आह्वयामहे ॥

---

१. ख-घ-वृष्ट्युदकानि; श—वृष्ट्या त्यक्तानि । २. ख-ङ-भ—वा ।

इन्द्राग्नी शृणुतं हवं यजमानस्य सुन्वतः ।
वीतं हव्यान्या गतं पिबतं सोम्यं मधु ॥ १५ ॥

इन्द्राग्नी इति । शृणुतम् । हवम् । यजमानस्य । सुन्वतः ।
वीतम् । हव्यानि । आ । गतम् । पिबतम् । सोम्यम् । मधु ॥ १५ ॥

हे ᵛइन्द्राग्नी ᵛसुन्वतः सोमाभिषवं कुर्वतः ᵛयजमानस्य ᵛहवम् आह्वानं स्तोत्रं ᵛशृणुतम् । श्रुत्वा च तदीयानि ᵛहव्यानि हवींषि ᵛवीतं कामयेथाम् । कामयित्वा च ᵛआ ᵛगतम् आगच्छतम् । आगत्य च ᵛसोम्यं सोमात्मकं ᵛमधु ᵛपिबतम् ॥  ॥ २९ ॥

'इयमददात्' इति चतुर्दशर्चं द्वादशं सूक्तं भरद्वाजस्यार्षं सरस्वतीदेवताकम् । आदितस्तिस्रो जगत्यः त्रयोदश्यपि जगती चतुर्दशी त्रिष्टुप् शिष्टा गायत्र्यः । तथा चानुक्रान्तम्—'इयं षळूना सारस्वतं त्रिजगत्यादि जगतीत्रिष्टुबन्तम्' इति । अत्र शौनकः—'इयमित्येतदाद्यं तु सूक्तं सारस्वतं जपेत् । द्विजः प्रातः शुचिर्भूत्वा वाग्मी भवति बुद्धिमान्' (ऋग्वि. २. २९५) इति । पार्ष्ठिके षष्ठेऽहनि प्रउगे 'इयमददात्' इति सारस्वतस्तृचः । सूत्रितं च—'इयमददाद्रभसमृणच्युतमिति प्रउगम्' (आश्व. श्रौ. ८. १) इति ॥

इयमददाद्रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे ।
या शश्वन्तमाचखादावसं पणिं ता ते दात्राणि तविषा सरस्वति ॥ १ ॥

इयम् । अददात् । रभसम् । ऋणऽच्युतम् । दिवःऽदासम् । वध्रिऽअश्वाय । दाशुषे ।
या । शश्वन्तम् । आऽचखाद । अवसम् । पणिम् । ता । ते । दात्राणि । तविषा । सरस्वति ॥ १ ॥

ᵛइयं सरस्वती ᵛरभसं वेगवन्तम् ᵛऋणच्युतं वैदिकस्य देवर्षिपितृसंबन्धिनो लौकिकस्य च ऋणस्य च्यावयितारं ᵛदिवोदासम् एतत्संज्ञं पुत्रं ᵛदाशुषे हवींषि दत्तवते ᵛवध्र्यश्वाय एतत्संज्ञाय ऋषये ᵛअददात् दत्तवती । ᵛया सरस्वती ᵛशश्वन्तं बहुलं ᵛपणिं पणनशीलं वणिजमदातृजनम् ᵛअवसं केवलं स्वात्मन एव तर्पकम् ᵛआचखाद आजघान सेयमददादित्यन्वयः । अथ प्रत्यक्षीकृत्य स्तौति । हे ᵛसरस्वति देवि ᵛता तानि पुत्रदानादीनि ᵛते त्वदीयानि ᵛदात्राणि दानानि ᵛतविषा तविषाणि महान्ति भवन्ति ॥

इयं शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः ।
पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः ॥ २ ॥

इयम् । शुष्मेभिः । बिसखाःऽइव । अरुजत् । सानु । गिरीणाम् । तविषेभिः । ऊर्मिऽभिः ।
पारावतऽघ्नीम् । अवसे । सुवृक्तिऽभिः । सरस्वतीम् । आ । विवासेम । धीतिऽभिः ॥ २ ॥

सरस्वती देवतारूपेण नदीरूपेण च वर्तते । देवतारूपा स्तुता । अधुनानया नदीरूपां सरस्वतीं स्तौति । ᵛइयं नदीरूपा सरस्वती शुष्मैः[1] शोषकैरात्मीयैर्बलैः ᵛतविषेभिः महद्भिः ᵛऊर्मिभिः तरङ्गैः

१. घ-श—शुष्मेभिः शुष्मैः ।

ᵛगिरीणां पर्वतानां तीरसंबद्धानां ᵛसानु सानूनि ᵛअरुजत् भनक्ति[1] । ᵛबिसखाइव । बिसं खनतीति बिसखाः । स यथा बिसार्थं पङ्कं रुजति तद्वत् । तां ᵛसरस्वतीं ᵛपारावतघ्नीं परावति दूरदेशे विद्यमानस्यापि वृक्षादेर्हन्त्रीं ᵛसुवृक्तिभिः स्तुतिभिः ᵛधीतिभिः कर्मभिश्च ᵛअवसे रक्षणार्थम् ᵛआ ᵛविवासेम परिचरेम । यद्वा । पारावतघ्नीं पारावारे परावांची तीरे । तयोर्घातिनीम् । उक्तं च— 'पारावतघ्नीं पारावारघातिनीम्' (निरु. २. २४) इति ॥

**सरस्वति देवनिदो नि बर्हय प्रजां विश्वस्य बृसयस्य मायिनः ।**
**उत क्षितिभ्योऽवनीरविन्दो विषमेभ्यो अस्रवो वाजिनीवति ॥ ३ ॥**

सरस्वति । देवऽनिदः । नि । बर्हय । प्रऽजाम् । विश्वस्य । बृसयस्य । मायिनः ।
उत । क्षितिऽभ्यः । अवनीः । अविन्दः । विषम् । एभ्यः । अस्रवः । वाजिनीऽवति ॥३॥

हे ᵛसरस्वति ᵛदेवनिदः देवानां निन्दकानसुरान् ᵛनि ᵛबर्हय न्यबर्हयः । अवधीः । तथा ᵛविश्वस्य व्याप्तस्य ᵛमायिनः मायाविनः ᵛबृसयस्य । बृसय इति त्वष्टुर्नामधेयम् । त्वष्टुः ᵛप्रजां पुत्रं वृत्रासुरं च न्यवधीः । त्वत्साहाय्यादेवेन्द्रो[2] हतवानित्यर्थः । ᵛउत अपि च हे ᵛवाजिनीवति अन्नवति सरस्वति त्वं ᵛक्षितिभ्यः मनुष्येभ्यः ᵛअवनीः असुरैरपहृता भूमीः ᵛअविन्दः अलम्भयः । ᵛएभ्यः मनुष्येभ्यः ᵛविषम् उदकं च ᵛअस्रवः अक्षारयः । यद्वा । क्षितयोऽसुरजनाः । तेभ्यः सकाशात् अवनीर्भूमीरविन्दः लब्धवत्यसि । तान् हत्वैभ्यश्चासुरेभ्यो विषं मृतिहेतुभूतं गरलमस्रवः ॥

**प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु ॥ ४ ॥**

प्र । नः । देवी । सरस्वती । वाजेभिः । वाजिनीऽवती । धीनाम् । अवित्री । अवतु ॥ ४ ॥

ᵛदेवी दानादिगुणयुक्ता ᵛवाजिनीवती । वाजोऽन्नं यस्यां[3] क्रियायां[4] सा वाजिनी । तद्युक्ता । ᵛधीनां ध्यातॄणां स्तोतॄणाम् ᵛअवित्री रक्षित्री । एवंभूता ᵛसरस्वती ᵛवाजेभिः अन्नैः ᵛनः अस्मान् ᵛप्र ᵛअवतु प्रकर्षेण तर्पयतु ॥

**यस्त्वा देवि सरस्वत्युपब्रूते धने हिते । इन्द्रं न वृत्रतूर्ये ॥ ५ ॥**

यः । त्वा । देवि । सरस्वति । उपऽब्रूते । धने । हिते । इन्द्रम् । न । वृत्रऽतूर्ये ॥ ५ ॥

हे ᵛदेवि ᵛसरस्वति ᵛयः स्तोता ᵛवृत्रतूर्ये संग्रामे ᵛधने ᵛहिते निहिते निमित्तभूते सति ᵛइन्द्रं ᵛन इन्द्रमिव त्वाम् ᵛउपब्रूते स्तौति तं[5] रक्षेति[6] शेषः ॥ ॥ ३० ॥

**त्वं देवि सरस्वत्यवा वाजेषु वाजिनि । रदा पूषेव नः सनिम् ॥ ६ ॥**

त्वम् । देवि । सरस्वति । अव । वाजेषु । वाजिनि । रद । पूषाऽइव । नः । सनिम् ॥ ६ ॥

हे ᵛदेवि दानादिगुणयुक्ते हे ᵛवाजिनि । वाजो बलमन्नं वा । तद्युक्ते हे ᵛसरस्वति ᵛत्वं ᵛवाजेषु संग्रामेषु ᵛअव अस्मान् रक्ष । अपि च ᵛनः अस्मभ्यं ᵛपूषेव पोषको देव इव ᵛसनिं संभजनीयं धनं ᵛरद विलिख । प्रयच्छेति यावत् ॥

---

१. ख-भ-भिनत्ति दृष्टान्तः; त-भुनक्ति । २. ख-भ-त्वत्सहायो देव इन्द्रो । ३. श-यस्याः । ४. ज्ञ-त-र-श-'क्रियायां' नास्ति । ५. ख-घ-भ-श-तं त्वम् । ६. घ-रक्षसीति ।

उत स्या नः सरस्वती घोरा हिरण्यवर्तनिः । वृत्रघ्नी वष्टि सुष्टुतिम् ॥ ७ ॥

उत । स्या । नः । सरस्वती । घोरा । हिरण्यऽवर्तनिः । वृत्रऽघ्नी । वष्टि । सुऽस्तुतिम् ॥७॥

ᵛउत अपि च ᵛस्या सा प्रसिद्धा ᵛसरस्वती ᵛघोरा शत्रूणां भयकारिणी ᵛहिरण्यवर्तनिः । वर्ततेऽनेनेति वर्तनी रथः । हिरण्यमयो वर्तनिर्यस्याः सा तथोक्ता । ᵛवृत्रघ्नी वृत्राणां शत्रूणां हन्त्री । एवंभूता सा सरस्वती ᵛनः अस्मदीयां ᵛसुष्टुतिं शोभनां स्तुतिं ᵛवष्टि कामयताम् ॥

यस्या अनन्तो अह्रुतस्त्वेषश्चरिष्णुरर्णवः । अमश्चरति रोरुवत् ॥ ८ ॥

यस्याः । अनन्तः । अह्रुतः । त्वेषः । चरिष्णुः । अर्णवः । अमः । चरति । रोरुवत् ॥ ८ ॥

ᵛयस्याः सरस्वत्याः ᵛअमः बलम् ᵛअनन्तः अपर्यन्तोऽपरिमितः ᵛअह्रुतः अहिंसितोऽकुटिलो वा ᵛत्वेषः दीप्तः ᵛचरिष्णुः चरणशीलः । सर्वत्राप्रतिहतगतिरित्यर्थः । ᵛअर्णवः उदकवान् । उदकप्रद इत्यर्थः । एवंभूतः सन् ᵛरोरुवत् भृशं शब्दं कुर्वन् ᵛचरति वर्तते सा नो विश्वा इत्युत्तरत्र संबन्धः ॥

सा नो विश्वा अति द्विषः स्वसॄरन्या ऋतावरी । अतन्नहेव सूर्यः ॥ ९ ॥

सा । नः । विश्वाः । अति । द्विषः । स्वसॄः । अन्याः । ऋतऽवरी । अतन् । अहाऽइव । सूर्यः ॥९॥

ᵛसा[1] सरस्वती ᵛनः अस्मान् ᵛविश्वाः सर्वाः ᵛद्विषः द्वेष्ट्रीः प्रजाः ᵛअति नयतु अतितारयतु । तथा ᵛस्वसॄः स्वयं सारिणीः सहोत्पन्ना वा ᵛऋतावरीः । ऋतमित्युदकनाम । तद्युक्ताः ᵛअन्याः च नदीरस्मानतिनयतु । यद्वा । जस्येव 'वा छन्दसि[2]' इति[2] पूर्वसवर्णदीर्घः । उदकवत्यः स्वसारो भगिन्योऽन्या गङ्गाद्या नद्यश्चास्मान्[3] शत्रून् अतिनयन्तु । तत्र दृष्टान्तः । ᵛसूर्यः सर्वस्य प्रेरक आदित्यः ᵛअतन् सततं गच्छन् ᵛअहेव अहानीव । यथाहानि शीघ्रमतिनयति तद्वत् ॥

दशरात्रे तृतीयेऽहनि प्रउगे 'उत नः प्रिया' इति सारस्वतस्तृचः । सूत्रितं च—'उत नः प्रिया प्रियास्वित्यौष्णिहं प्रउगम्' ( आश्व. श्रौ. ७. १० ) इति । पवित्रेष्ट्याम् 'उत नः प्रिया' इति सारस्वतस्य हविषोऽनुवाक्या । सूत्रितं च—'उत नः प्रिया प्रियास्विमा जुह्वाना युष्मदा नमोभिः' ( आश्व. श्रौ. २. १२ ) इति ॥

उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा । सरस्वती स्तोम्या भूत् ॥१०॥

उत । नः । प्रिया । प्रियासु । सप्तऽस्वसा । सुऽजुष्टा । सरस्वती । स्तोम्या । भूत् ॥ १० ॥

ᵛउत अपि च ᵛनः अस्माकं ᵛप्रियासु प्रियाणां मध्ये ᵛप्रिया प्रियतमा ᵛसप्तस्वसा । गायत्र्यादीनि सप्त छन्दांसि स्वसारो यस्यास्तादृशी । नदीरूपायास्तु गङ्गाद्याः सप्त नद्यः स्वसारः । ᵛसुजुष्टा सुष्ठु पुरातनैर्ऋषिभिः सेविता । एवंभूता ᵛसरस्वती देवी ᵛस्तोम्या ᵛभूत् स्तोतव्या भवतु ॥ ॥ ३१ ॥

आपप्रुषी पार्थिवान्युरु रजो अन्तरिक्षम् । सरस्वती निदस्पातु ॥ ११ ॥

आऽपप्रुषी । पार्थिवानि । उरु । रजः । अन्तरिक्षम् । सरस्वती । निदः । पातु ॥ ११ ॥

ᵛपार्थिवानि पृथिव्याः संबन्धीनि ᵛउरु उरूणि विस्तीर्णानि ᵛरजः रजांसि लोकान् ᵛअन्तरिक्षम् अन्तरा क्षान्तं नभश्च ᵛआपप्रुषी स्वतेजसा पूरितवती ᵛसरस्वती देवी ᵛनिदः निन्दकाच्छत्रोः ᵛपातु अस्मान् रक्षतु ॥

---

१. झ-त-ऋतावरी उदकवती (ऋतवत्युदकवती-झ ) सा । २. ख-ञ-झ-त-न-भ-र-छान्दसः । ३. ख-झ-न-भ-य-नद्यश्चान्यान् ।

त्रिषधस्था सप्तधातुः पञ्च जाता वर्धयन्ती । वाजेवाजे हव्या भूत् ॥ १२ ॥

त्रिऽसधस्था । सप्तऽधातुः । पञ्च । जाता । वर्धयन्ती । वाजेऽवाजे । हव्या । भूत् ॥ १२ ॥

ᵛत्रिषधस्था त्रिषु लोकेषु सहावतिष्ठमाना त्रिलोकव्यापिनी ᵛसप्तधातुः । सप्त धातवोऽवयवा गायत्र्याद्या गङ्गाद्या वा यस्याः सा तथोक्ता । ᵛपञ्च ᵛजाता जातानि निषादपञ्चमांश्चतुरो वर्णान् गन्धर्वादीन् वा ᵛवर्धयन्ती अभिवृद्धान् कुर्वती । ईदृशी सरस्वती ᵛवाजेवाजे युद्धे युद्धे सर्वेषु युद्धेषु ᵛहव्या ᵛभूत् ह्वातव्या भवति ॥

प्र या महिम्ना महिनासु चेकिते द्युम्नेभिरन्या अपसामपस्तमा ।
रथइव बृहती विभ्वने कृतोपस्तुत्या चिकितुषा सरस्वती ॥ १३ ॥

प्र । या । महिम्ना । महिना । आसु । चेकिते । द्युम्नेभिः । अन्याः । अपसाम् । अपःऽतमा ।
रथःऽइव । बृहती । विऽभ्वने । कृता । उपऽस्तुत्या । चिकितुषा । सरस्वती ॥ १३ ॥

ᵛमहिम्ना माहात्म्येन ᵛमहिना महती ᵛद्युम्नेभिः द्युम्नैर्द्योतमानैर्यशोभिरन्नैर्वा युक्ता सती ᵛआसु आसां नदीनां देवतानां वा मध्ये ᵛया सरस्वती ᵛप्र ᵛचेकिते प्रकर्षेण ज्ञायते । या च ᵛअन्याः अन्यासाम् ॥ 'सुपां सुलुक्°' इति षष्ठीबहुवचनस्य जस् ॥ ᵛअपसां वेगवतीनां नदीनां मध्ये ᵛअपस्तमा वेगवत्तमा । या च ᵛरथइव ᵛविभ्वने विभुत्वाय ᵛबृहती परिवृढा गुणैरधिका ᵛकृता प्रजापतिना निर्मिता सा ᵛसरस्वती ᵛचिकितुषा जानता स्तोत्रा ᵛउपस्तुत्या उपस्तोतव्या भवति ॥

सरस्वत्यभि नो नेषि वस्यो माप स्फरीः पयसा मा न आ धक् ।
जुषस्व नः सख्या वेश्या च मा त्वत्क्षेत्राण्यरणानि गन्म ॥ १४ ॥

सरस्वति । अभि । नः । नेषि । वस्यः । मा । अप । स्फरीः । पयसा । मा । नः । आ । धक् ।
जुषस्व । नः । सख्या । वेश्या । च । मा । त्वत् । क्षेत्राणि । अरणानि । गन्म ॥ १४ ॥

हे ᵛसरस्वति ᵛनः अस्मान् ᵛवस्यः वसीयः प्रशस्तं वसु धनम् ᵛअभि ᵛनेषि अभिप्रापय । ᵛमाप ᵛस्फरीः अप्रवृद्धान् मा कार्षीः । स्फारो वृद्धिः । उपसर्गवशात् तद्विपरीते वर्तते । तथा ᵛपयसा उदकेनाधिकेन ᵛनः अस्मान् ᵛमा ᵛआ ᵛधक् नाभिदह[1] । न बाधस्व । अपि च ᵛनः अस्माकं ᵛसख्या सख्यानि सखिकर्माणि ᵛवेश्या प्रवेशनानि ᵛच ᵛजुषस्व सेवस्व । वयं च त्वत्सकाशात् ᵛअरणानि अरमणानि[2] निकृष्टानि ᵛक्षेत्राणि ᵛमा ᵛगन्म मा प्राप्नवाम । अपि तु रमणीयान्येव[3] ॥ ॥ ३२ ॥ ॥ ५ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण[4] विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये चतुर्थाष्टकेऽष्टमोऽध्यायः समाप्तः ।

---

१. न–माभि° । २. ख-भ–अरमणीयानि; न-अरणमाणानि । ३. घ-श–रमणीयान्येव प्राप्नवाम । ४. ख-भ–सायणामात्येन; र-सायणार्येण ।

ॐ

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ पञ्चमाष्टके प्रथमोऽध्याय आरभ्यते । षष्ठमण्डलस्य षष्ठेऽनुवाके चतुर्दश सूक्तानि । तत्र 'स्तुषे नरा' इत्येकादशर्चं प्रथमं सूक्तम् । अत्रेयमनुक्रमणिका—'स्तुष एकादशाश्विनं तु' इति । मण्डलद्रष्टा बार्हस्पत्यो भरद्वाज[1] ऋषिः । अनुक्तत्वात् त्रिष्टुप् । अश्विनौ देवता[2] । प्रातरनुवाक[3] आश्विने क्रतौ[3] इदमादिके द्वे सूक्ते । आश्विनशस्त्रे चैते एव । सूत्रितं च—'स्तुषे नरेति सूक्ते' ( आश्व. श्रौ. ४. १५ ) इति ॥

स्तुषे नरा दिवो अस्य प्रसन्ताश्विना हुवे जरमाणो अर्कैः ।
या सद्य उस्रा व्युषि ज्मो अन्तान्युयूषतः पर्युरू वरांसि ॥ १ ॥

स्तुषे । नरा । दिवः । अस्य । प्रऽसन्ता । अश्विना । हुवे । जरमाणः । अर्कैः ।
या । सद्यः । उस्रा । विऽउषि । ज्मः । अन्तान् । युयूषतः । परि । उरु । वरांसि ॥ १ ॥

दिवः द्युलोकस्य नरा नेतारौ अस्य भुवनस्य प्रसन्ता प्रसन्तौ प्रभवन्तावीश्वरौ अश्विना अश्विनौ अश्वैरन्वितौ स्तुषे प्रगीतमन्त्रसाध्यैः स्तोत्रैः स्तोतुम् अर्कैः अप्रगीतमन्त्रसाध्यैः शस्त्रैः जरमाणः स्तुतिं कुर्वन् हुवे आह्वयामि । कीदृशावित्यपेक्षायाम् । या यौ सद्यः एव उस्रा शत्रूणां निवारकौ व्युषि व्युष्टौ निशायाः समाप्तौ ज्मः पृथिव्याः अन्तान् पर्यन्तान् उरु उरूणि वरांसि रूपस्यावरकाणि तमांसि च परि परितः युयूषतः पृथक्कुरुतः । अथवा वरांसि तेजांसि तमोनिवारणात् परि युयूषतः विस्तारयतः ॥

ता यज्ञमा शुचिभिश्चक्रमाणा रथस्य भानुं रुरुचू रजोभिः ।
पुरू वरांस्यमिता मिमानापो धन्वान्यति याथो अज्रान् ॥ २ ॥

ता । यज्ञम् । आ । शुचिऽभिः । चक्रमाणा । रथस्य । भानुम् । रुरुचुः । रजःऽभिः ।
पुरु । वरांसि । अमिता । मिमाना । अपः । धन्वानि । अति । याथः । अज्रान् ॥ २ ॥

किंच ता तौ प्रसिद्धावश्विनौ यज्ञम् अस्मदीयं यागम् आ चक्रमाणा अभिचक्रमाणौ[4] शुचिभिः निर्मलैः रजोभिः स्वीयैस्तेजोभिः । 'रजो रजतेर्ज्योती रज उच्यते' ( निरु ४. १९ ) इति

---

१. घ-त—भारद्वाज । २. घ-ज्ञ-न-भ—देवते; ख—देवतौ । ३. ख-ज्ञ-न-भ—प्रातरनुवाकाश्विनेय-क्रतौ; ज्ञ-श—प्रातरनुवाकाश्विने क्रतौ; त-य-प्रातरनुवाकाश्विनक्रतौ । ४. ज्ञ—अभिचंक्रममाणौ ।

यास्केनोक्तत्वात् । रथस्य स्वकीयस्य रथस्य भानुं दीप्तिं रुरुचुः रोचयेते । अपि च पुरु बहूनि वरांसि तमोनिवारकाणि तेजांसि अमिता अपरिमितानि मिमाना निर्मिमाणौ अपः उद्दिश्य धन्वानि मरुप्रदेशान् अज्रान् स्वकीयानश्वान् अति याथः अतिक्रामयथः[1] ॥

ता ह त्यद्वर्तिर्यदरध्रमुग्रेत्था धिय ऊहथुः शश्वदश्वैः ।
मनोजवेभिरिषिरैः शयध्यै परि व्यथिर्दाशुषो मर्त्यस्य ॥ ३ ॥

ता । ह । त्यत् । वर्तिः । यत् । अरध्रम् । उग्रा । इत्था । धियः । ऊहथुः । शश्वत् । अश्वैः ।
मनःऽजवेभिः । इषिरैः । शयध्यै । परि । व्यथिः । दाशुषः । मर्त्यस्य ॥ ३ ॥

ता ह तौ खलु उग्रा उग्रावश्विना युवां यत् अरध्रम् असमृद्धं त्यत् वर्तिः यजमानस्य तत् गृहं समर्धयितुं गच्छथः । किंच इत्था इत्थं धियः स्तोतॄन् इषिरैः एषणीयैः काम्यैः मनोजवेभिः मनोवेगैः अश्वैः स्वीयैरश्वैः शश्वत् सर्वदा ऊहथुः स्वर्गं प्रापयथः । मर्त्यस्य मनुष्यस्य दाशुषः यजमानस्य व्यथिः हिंसकः परि शयध्यै परिशयनाय[2] दीर्घनिद्रायै युवाभ्यां क्रियताम्[3] ॥

ता नव्यसो जरमाणस्य मन्मोप भूषतो युयुजानसप्ती ।
शुभं पृक्षमिषमूर्जं वहन्ता होता यक्षत्प्रत्नो अध्रुग्युवाना ॥ ४ ॥

ता । नव्यसः । जरमाणस्य । मन्म । उप । भूषतः । युयुजानसप्ती इति युयुजानऽसप्ती ।
शुभम् । पृक्षम् । इषम् । ऊर्जम् । वहन्ता । होता । यक्षत् । प्रत्नः । अध्रुक् । युवाना ॥४॥

ता तावश्विनौ युयुजानसप्ती रथे युज्यमानाश्वौ शुभं शोभनं पृक्षम् अन्नम् । 'पयः[4] पृक्षः' इत्यन्ननामसु पाठात् । इषं पुष्टिम् ऊर्जं रसं च वहन्ता वहन्तौ नव्यसः नवतरस्य जरमाणस्य स्तुतिं कुर्वतः मन्म मननीयं स्तोत्रम् उप भूषतः उपगच्छतः । यद्वा । स्तोत्रसमीपे भवतः । किंच युवाना नित्यतरुणौ तौ[5] होता[5] देवानामाह्वाता अध्रुक् अद्रोग्धा प्रियः[6] प्रत्नः पुराणोऽग्निः यक्षत् यजतु ॥

ता वल्गू दस्रा पुरुशाकतमा प्रत्ना नव्यसा वचसा विवासे ।
या शंसते स्तुवते शंभविष्ठा बभूवतुर्गृणते चित्रराती ॥ ५ ॥

ता । वल्गू इति । दस्रा । पुरुशाकऽतमा । प्रत्ना । नव्यसा । वचसा । आ । विवासे ।
या । शंसते । स्तुवते । शम्ऽभविष्ठा । बभूवतुः । गृणते । चित्रराती इति चित्रऽराती ॥५॥

---

१. ख–अतिक्रामथः । २. ख-घ-ञ-न-भ–परिशयनार्थम्; त–परिशयनायै । ३. ख-घ-ञ-न-भ–क्रियते । ४. त२–श्रवः । ५. ख–तो वा होता; त–होता; भ–तौ वां होता । ६. य–सर्वप्रियः ।

ᵛया यौ ᵛशंसते शस्त्रैः स्तुतिं कुर्वते ᵛस्तुवते स्तोत्रैः स्तुतिं कुर्वते जनाय[1] ᵛशंभविष्ठा अतिशयेन सुखस्य भावयितारौ अतिशयेन सुखस्वरूपौ वा ᵛगृणते स्तोत्रशस्त्रव्यतिरिक्तलौकिकस्तुतिभिः स्तुवते च ᵛचित्रराती विचित्रदानौ ᵛबभूवतुः ᵛता तौ ᵛवल्गू वलनशीलौ रुचिरौ वा ᵛपुरुशाकतमा अतिशयेन बहुकर्माणौ बहुसहायौ वा ᵛप्रत्ना प्रत्नौ पुराणौ। 'प्रत्नं प्रदिवः' इति पुराणनामसु पाठात्। ᵛदस्रा दर्शनीयौ[2] अश्विनौ ᵛनव्यसा नवतरेण ᵛवचसा स्तुत्या ᵛआ ᵛविवासे परिचरामि ॥ ॥ १ ॥

ता भुज्युं विभिरद्भ्यः समुद्रात्तुग्रस्य सूनुमूहथू रजोभिः।
अरेणुभिर्योजनेभिर्भुजन्ता पतत्रिभिरर्णसो निरुपस्थात् ॥ ६ ॥

ता। भुज्युम्। विऽभिः। अत्ऽभ्यः। समुद्रात्। तुग्रस्य। सूनुम्। ऊहथुः। रजःऽभिः।
अरेणुऽभिः। योजनेभिः। भुजन्ता। पतत्रिऽभिः। अर्णसः। निः। उपऽस्थात् ॥ ६ ॥

ᵛता तावश्विनौ युवां ᵛतुग्रस्य ᵛसूनुं ᵛभुज्युं भुज्युनामकं समुद्रमध्ये भग्ननावं ᵛभुजन्ता रक्षन्तौ ᵛअरेणुभिः रेणुरहितैः आन्तरिक्षैः ᵛरजोभिः मार्गैः ᵛयोजनेभिः रथयुक्तैः[3] ᵛपतत्रिभिः पतनवद्भिः ᵛविभिः अश्वैः ᵛअर्णसः जलस्य ᵛउपस्थात् योनेः ᵛसमुद्रात् ᵛअद्भ्यः ᵛनिः ᵛऊहथुः निरगमयतम्। समुद्रादद्भ्य इति प्रयोगो मातुर्गृहाद्गच्छतीतिवत्[4] ॥

वि जयुषा रथ्या यातमद्रिं श्रुतं हवं वृषणा वध्रिमत्याः।
दशस्यन्ता शयवे पिप्यथुर्गामिति च्यवाना सुमतिं भुरण्यू ॥ ७ ॥

वि। जयुषा। रथ्या। यातम्। अद्रिम्। श्रुतम्। हवम्। वृषणा। वध्रिऽमत्याः।
दशस्यन्ता। शयवे। पिप्यथुः। गाम्। इति। च्यवाना। सुऽमतिम्। भुरण्यू इति ॥ ७ ॥

ᵛरथ्या हे रथारूढावश्विनौ[5] ᵛजयुषा जयशीलेन रथेन ᵛअद्रिं मार्गे[6] स्थितं पर्वतं ᵛवि ᵛयातं व्यबाधेथाम्। यातिरत्र वधकर्मा। तथा च निगमान्तरं—'विभिन्दुना नासत्या रथेन वि पर्वताँ अजरयू अयातम्' (ऋ. सं. १. ११६. २०) इति। ᵛवृषणा कामानां वर्षितारौ ᵛवध्रिमत्याः पुत्रार्थिन्याः ᵛहवम् आह्वानं ᵛश्रुतं श्रृणुतम्। ᵛदशस्यन्ता स्तोतृभ्यः कामान् प्रयच्छन्तौ ᵛशयवे युवां स्तुवते ᵛगां निवृत्तप्रसवां ᵛपिप्यथुः क्षीरेणाप्याययतम्। तथा च निगमान्तरं—'शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम्' (ऋ. सं. १.११६.२२) इति। ᵛइति इत्थं ᵛसुमतिं सुष्टुतिं ᵛच्यवाना गच्छन्तौ ᵛभुरण्यू सर्वत्र गन्तारौ यज्ञस्य भर्तारौ वा भवतम् ॥

यद्रोदसी प्रदिवो अस्ति भूमा हेळो देवानामुत मर्त्यत्रा।
तदादित्या वसवो रुद्रियासो रक्षोयुजे तपुरघं दधात ॥ ८ ॥

यत्। रोदसी इति। प्रऽदिवः। अस्ति। भूम। हेळः। देवानाम्। उत। मर्त्यऽत्रा।
तत्। आदित्याः। वसवः। रुद्रियासः। रक्षःऽयुजे। तपुः। अघम्। दधात ॥ ८ ॥

---

१. ख–यजमानाय; झ–यजनाय। २. ख-झ-न-भ–दस्रौ। ३. ख-घ-झ-न-भ–रथे युक्तैः। ४. श–°गृहाद्रक्षती°। ५. ख-घ-झ-न-भ-श–रथिनाव°। ६. झ-त१-२–मध्ये; त३–मूर्ध्नि।

ᵛरोदसी हे द्यावापृथिव्यौ हे ᵛआदित्याः हे ᵛवसवः ᵛरुद्रियासः हे रुद्रपुत्रा मरुतः ᵛमर्त्येत्रा मर्त्येषु अश्विनोः परिचारकेषु ᵛदेवानां ᵛयत् ᵛहेळः क्रोधः ᵛभूम[1] महान् ᵛअस्ति ᵛतत् हेळः ᵛतपुः तापकं ᵛरक्षोयुजे रक्षोभिर्युक्ताय रक्षसां स्वामिने प्रेरकाय वा ᵛअघम् आहन्तृ[2] ᵛदधात कुरुत। अथवा रक्षोयुजे रक्षोभिर्युक्ताय यज्वने अघमाहन्तृ[3] कुरुत ॥

य ईं राजा॑नावृतु॒था वि॒दध॒द्रज॑सो मि॒त्रो वरु॑णश्चि॒केत॑त् ।
ग॒म्भी॒राय॒ रक्ष॑से हे॒तिम॑स्य॒ द्रोघा॑य चि॒द्वच॑स॒ आन॑वाय ॥ ९ ॥

यः । ईम् । राजा॑नौ । ऋ॒तु॒ऽथा । वि॒ऽदध॑त् । रज॑सः । मि॒त्रः । वरु॑णः । चिके॑तत् ।
ग॒म्भी॒राय॑ । रक्ष॑से । हे॒तिम् । अ॒स्य॒ । द्रोघा॑य । चि॒त् । वच॑से । आन॑वाय ॥ ९ ॥

ᵛयः नरः ᵛरजसः समस्तस्य लोकस्य। 'लोका रजांस्युच्यन्ते' इति यास्केनोक्तत्वात्। ᵛराजानौ ᵛईम् एतौ अश्विनौ ᵛऋतुथा काले काले ᵛविदधत् परिचरति[4] तं ᵛमित्रो ᵛवरुणः च ᵛचिकेतत् जानीयात्। मित्रवरुणप्रभृतयो[5] देवा एनं विदुरित्यर्थः। किंचायं परिचारकः ᵛगम्भीराय महाबलाय ᵛरक्षसे राक्षसाय ᵛहेतिं घातकमायुधम् ᵛअस्य अस्यति। क्षिपति। प्रथमपुरुषस्य मध्यमपुरुषेण व्यत्ययः। ᵛद्रोघाय अभिद्रोहात्मकाय ᵛआनवाय मनुष्यसंबन्धिने ᵛवचसे ᵛचित् वचनायैव हेतिमस्यति। मनुष्याणामभिद्रोहाय[6] एनम्[7] आस्कन्दतीति[8] ॥

अन्त॑रैश्च॒क्रैस्तन॑याय व॒र्तिर्द्यु॒मता या॑तं नृ॒वता॒ रथे॑न ।
सनु॑त्येन॒ त्यज॑सा॒ मर्त्य॑स्य वनुष्य॒ताम॑पि॒ शी॒र्षा व॑वृक्तम् ॥ १० ॥

अन्त॑रैः । च॒क्रैः । तन॑याय । व॒र्तिः । द्यु॒ऽमता॑ । आ । या॒त॒म् । नृ॒ऽवता॑ । रथे॑न ।
सनु॑त्येन । त्यज॑सा । मर्त्य॑स्य । व॒नु॒ष्य॒ताम् । अपि॑ । शी॒र्षा । व॒वृ॒क्त॒म् ॥ १० ॥

हे अश्विनौ ᵛअन्तरैः अनिकृष्टैः ᵛचक्रैः युक्तेन ᵛद्युमता दीप्तिमता ᵛनृवता नेत्रा सारथिना युक्तेन। यद्वा। अश्वयुक्तेन। 'पतङ्गाः नरः' (नि. १. १४. २२) इत्यश्वनामसु पाठात्। ᵛरथेन ᵛवर्तिः अस्माकं गृहं ᵛतनयाय तनयं दातुम् ᵛआ ᵛयातम्। अपि च ᵛसनुत्येन तिरोहितेन ᵛत्यजसा क्रोधेन। 'हृणिः त्यजः' इति क्रोधनामसु पाठात्। ᵛमर्त्यस्य मनुष्यस्य ᵛवनुष्यतां बाधमानानाम्। 'वनुष्यतिर्हन्तिकर्मा' इति यास्केनोक्तत्वात्। ᵛशीर्षा शिरांसि ᵛअपि ᵛववृक्तं प्रवृक्तम्[9] ॥

आ प॒रमा॑भिरु॒त म॑ध्य॒मा॑भिर्नि॒युद्भि॑र्यातमव॒माभि॑र॒र्वाक् ।
दृ॒ळ्हस्य॑ चि॒द्गोम॑तो॒ वि व्र॒जस्य॒ दुरो॑ वर्तं गृ॒ण॒ते चि॑त्ररा॒ती ॥ ११ ॥

आ । प॒रमा॑भिः । उ॒त । म॒ध्य॒मा॑भिः । नि॒युत्ऽभिः॑ । या॒त॒म् । अ॒व॒माभिः॑ । अ॒र्वाक् ।
दृ॒ळ्हस्य॑ । चि॒त् । गोऽम॑तः । वि । व्र॒जस्य॑ । दुरः॑ । व॒र्त॒म् । गृ॒ण॒ते । चि॒त्र॒रा॒ती इति॑ चि॒त्रऽरा॒ती ॥ ११ ॥

---

१. घ-ङ-त-न-श–भूमा। २. ख-ङ-न-भ–अहन्तृ। ३. ख–अघमहन्त; ङ-त-न-श–अघमहन्तृ। ४. ख-ङ-न-भ–परिचरत्; घ–परिचरन्। ५. थ–मित्रावरुण°। ६. ख-भ-श२–न तु मनुष्याणामभि°; ङ-त-न–ननु मनुष्याणामभि°। ७. त–एवम्। ८. ख-ङ-न-भ-श२–आस्कन्दन्तीति। ९. ख-ङ-भ-य-श–प्रववृक्तम्; घ–छिनतम्।

हे अश्विनौ ᵛपरमाभिः उत्कृष्टाभिः ᵛउत अपि च ᵛमध्यमाभिः अनुत्कृष्टाभिः ᵛअवमाभिः निकृष्टाभिश्च ᵛनियुद्भिः वाहैः ᵛअर्वाक् अस्मदभिमुखम् ᵛआ ᵛयातम् । ᵛदृळ्हस्य ᵛचित् दृढापिधानस्यापि ᵛगोमतः गोयुक्तस्य ᵛव्रजस्य गोष्ठस्य ᵛदुरः द्वाराणि ᵛवि ᵛवर्तं विवृणुतम् । किंच ᵛगृणते स्तुवते मह्यं ᵛचित्रराती विचित्रदानौ[1] भवतम् ॥ ॥ २ ॥

'क्व त्या' इत्येकादशर्चं द्वितीयं सूक्तं भरद्वाजस्यार्षम् । अत्रेयमनुक्रमणिका—'क्व त्यैकपदान्तं त्रैष्टुभम्' इति । 'आ वां सुम्ने' इत्येकादशी एकपदा त्रिष्टुप् शिष्टास्त्रिष्टुभः । 'आश्विनं तु' इत्युक्त्वादस्यापि सूक्तस्याश्विनौ देवता । प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छन्दस्युक्तो विनियोगः ॥

क्व१ त्या वल्गू पुरुहूताद्य दूतो न स्तोमोऽविदन्नमस्वान् ।
आ यो अर्वाङ्नासत्या ववर्त प्रेष्ठा ह्यसथो अस्य मन्मन् ॥ १ ॥

क्व । त्या । वल्गू इति । पुरुऽहूता । अद्य । दूतः । न । स्तोमः । अविदत् । नमस्वान् ।
आ । यः । अर्वाक् । नासत्या । ववर्त । प्रेष्ठा । हि । असथः । अस्य । मन्मन् ॥ १ ॥

ᵛक्व कुत्र स्थितौ[2] ᵛवल्गू रुचिरौ ᵛपुरुहूता बहुभिराहूतौ ᵛत्या तावश्विनौ ᵛनमस्वान् हविषा युक्तः । 'नमः आयुः' इत्यन्ननामसु पाठात् । ᵛस्तोमः पञ्चदशादिस्तोमः ᵛअद्य ᵛदूतो ᵛन प्रेरितो[3] दूत इव ᵛअविदत् विन्देत् । ᵛयः स्तोमः ᵛअर्वाक् अस्मदभिमुखं ᵛनासत्या अश्विनौ ᵛआ ᵛववर्त आवर्तयत् । हे अश्विनौ युवाम् ᵛअस्य स्तोतुः ᵛमन्मन् स्तोत्रे ᵛप्रेष्ठा ᵛहि प्रियतमौ हि ᵛअसथः भवथः॥

अरं मे गन्तं हवनायास्मै गृणाना यथा पिबाथो अन्धः ।
परि ह त्यद्वर्तिर्याथो रिषो न यत्परो नान्तरस्तुतुर्यात् ॥ २ ॥

अरम् । मे । गन्तम् । हवनाय । अस्मै । गृणाना । यथा । पिबाथः । अन्धः ।
परि । ह । त्यत् । वर्तिः । याथः । रिषः । न । यत् । परः । न । अन्तरः । तुतुर्यात् ॥ २ ॥

हे अश्विनौ युवां ᵛमे मदीयाय ᵛअस्मै ᵛहवनाय आह्वानाय ᵛअरं पर्याप्तं ᵛगन्तं गच्छतम् । ᵛगृणाना स्तूयमानौ ᵛअन्धः सोमं ᵛयथा ᵛपिबाथः पिबतम् । ᵛरिषः हिंसकस्य शत्रोः ᵛत्यद्वर्तिः तद्गृहं ᵛपरि ᵛयाथः परितो याथः ᵛयत् वर्तिः ᵛपरः विप्रकृष्टः ᵛन ᵛतुतुर्यात् न हिंस्यात् । ᵛअन्तरः संनिकृष्टोऽपि ᵛन तुतुर्यात् । यद्वा । त्यद्वर्तिस्तदस्मदीयं गृहं रिषो हिंसकात् परि याथः । त्यद्वर्तिः परो विप्रकृष्टोऽन्तरः संनिकृष्टोऽपि न तुतुर्यात् । अयं भावः । यथास्मदीयं गृहं दूरस्थः संनिकृष्टोऽपि न हिंस्यात्तथा रक्षां कुरुथ इति ॥

अकारि वामन्धसो वरीमन्नस्तारि बर्हिः सुप्रायणतमम् ।
उत्तानहस्तो युवयुर्ववन्दा वां नक्षन्तो अद्रय आञ्जन् ॥ ३ ॥

अकारि । वाम् । अन्धसः । वरीमन् । अस्तारि । बर्हिः । सुप्रऽअयनतमम् ।
उत्तानऽहस्तः । युवऽयुः । ववन्द । आ । वाम् । नक्षन्तः । अद्रयः । आञ्जन् ॥ ३ ॥

---

१. ख-घ-ञ-न-भ—चित्रदानौ । २. श—अवस्थितौ । ३. ख-घ-ञ-न-भ—प्राहितः ।

ᵛवां युवयोरर्थे ᵛअन्धसः सोमस्य ᵛवरीमन् विस्तृतेऽभिषवादौ यत् कृत्यमस्ति तत् ᵛअकारि कृतम्। ᵛसुप्रायणतमं मृदुतमं ᵛबर्हिः ᵛअस्तारि स्तीर्णम्। ᵛउत्तानहस्तः कृताञ्जलिः ᵛयुवयुः युवां कामयमानो होता ᵛववन्द स्तौति। ᵛवां युवां ᵛनक्षन्तः व्याप्नुवन्तः॥ 'तृक्ष पृक्ष नक्ष गतौ' इति धातुः॥ ᵛअद्रयः ग्रावाणः ᵛआ ᵛआञ्जन् सोमरसम् आ[1] समन्तात् व्यक्तीकृतवन्तः[2]॥

ऊर्ध्वो वामग्निरध्वरेष्वस्थात्प्र रातिरेति जूर्णिनी घृताची।
प्र होता गूर्तमना उराणोऽयुक्त यो नासत्या हवीमन्॥ ४॥

ऊर्ध्वः। वाम्। अग्निः। अध्वरेषु। अस्थात्। प्र। रातिः। एति। जूर्णिनी। घृताची।
प्र। होता। गूर्तऽमनाः। उराणः। अयुक्त। यः। नासत्या। हवीमन्॥ ४॥

ᵛअग्निः ᵛवां युवयोर्यज्ञार्थम् ᵛऊर्ध्वः ᵛअस्थात् उदतिष्ठत्। ᵛअध्वरेषु यज्ञेषु ᵛप्र ᵛएति समिद्ध[3] आहवनीयं[3] गच्छति च। ᵛरातिः[4] धनं[4] हविः ᵛजूर्णिनी प्रगामिनी। 'जूर्णिर्जवतेर्वा' (निरु. ६.४) इति यास्केनोक्तत्वात्। ᵛघृताची घृतेनाक्ता। उपस्तीर्णाभिघारितेत्यर्थः। किंच ᵛहोता ᵛउराणः उरु कुर्वाणः ᵛप्र ᵛगूर्तमनाः प्रकर्षेणोद्युक्तमनाः भवति ᵛयः होता ᵛनासत्या अश्विनौ ᵛहवीमन् आह्वाने स्तोत्रे वा ᵛअयुक्त योजयति॥

अधि श्रिये दुहिता सूर्यस्य रथं तस्थौ पुरुभुजा शतोतिम्।
प्र मायाभिर्मायिना भूतमत्र नरा नृतू जनिमन्यज्ञियानाम्॥ ५॥

अधि। श्रिये। दुहिता। सूर्यस्य। रथम्। तस्थौ। पुरुऽभुजा। शतऽऊतिम्।
प्र। मायाभिः। मायिना। भूतम्। अत्र। नरा। नृतू इति। जनिमन्। यज्ञियानाम्॥ ५॥

ᵛपुरुभुजा हे पूर्णभुजौ बहूनां रक्षकौ वाश्विनौ युवयोः ᵛशतोतिं बहुरक्षाकं बहुगमनं वा ᵛरथं ᵛसूर्यस्य ᵛदुहिता सूर्या ᵛश्रिये श्रयितुम्[5] ᵛअधि ᵛतस्थौ अध्यतिष्ठत्। अपि च ᵛयज्ञियानां देवानाम् ᵛअत्र ᵛजनिमन् अस्मिन् जन्मनि प्रादुर्भावे ᵛमायाभिः प्रज्ञानैः। 'शची माया' इति प्रज्ञानामसु पाठात्। मायिनौ प्रज्ञावन्तौ ᵛनरा नेतारौ ᵛनृतू नृत्यन्तौ ᵛभूतं भवतम्। यद्वा। हे मायिनौ प्राज्ञौ नरौ नेतारौ नृतू नृत्यन्तावश्विनौ यज्ञियानां देवानामत्र जनिमन् जन्मनि प्रादुर्भावे प्रभूतं प्राज्ञतममग्न्यादिकं देवं मायाभिः प्रज्ञानैः कौशलैर्वा जितवन्तौ स्थ इत्यर्थः। अयमर्थः 'प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत्सूर्यां सावित्रीम्' (ऐ. ब्रा. ४.७) इत्यादिना स्पष्टीकृतः॥ ॥ ३॥

युवं श्रीभिर्दर्शताभिराभिः शुभे पुष्टिमूहथुः सूर्यायाः।
प्र वां वयो वपुषेऽनु पप्तन्नक्षद्वाणी सुष्टुता धिष्ण्या वाम्॥ ६॥

युवम्। श्रीभिः। दर्शताभिः। आभिः। शुभे। पुष्टिम्। ऊहथुः। सूर्यायाः।
प्र। वाम्। वयः। वपुषे। अनु। पप्तन्। नक्षत्। वाणी। सुऽस्तुता। धिष्ण्या। वाम्॥६॥

---

१. ख-घ-झ-न-भ-'आ' नास्ति। २. ख-झ-भ-व्यनक्तिकृतवन्तः; त-व्याक्तोकुर्वतः; न-व्यनर्क्तास्थनवन्तः; श-व्यक्तीकुर्वतः। ३. ख-सिद्ध आहवनीयम्; त-श-समिद्धमाहवनीयम्। ४. ख-झ-भ-रातिवर्धनम्; न-रातिवद्धनम्। ५. ख-झ-न-भ-श्र्यर्थम्; घ-श्रेयार्थम्।

हे अश्विनौ ᵛयुवं युवां ᵛदर्शताभिः दर्शनीयाभिः ᵛआभिः श्रीमतां परिदृश्यमानाभिः ᵛश्रीभिः लक्ष्मीभिः कान्तिभिर्वा ᵛसूर्यायाः युवयोः पत्न्याः ᵛशुभे शोभनार्थं ᵛपुष्टिं पूर्तिम् ᵛऊहथुः प्रापयथः। किंच ᵛवां युवां ᵛवयः अश्वाः ᵛवपुषे शोभायै ᵛप्र ᵛअनु ᵛपप्तन् प्रकर्षेणान्वपतन्। अपि च हे ᵛधिष्ण्या स्तुत्यर्हावश्विनौ ᵛवां युवां ᵛसुष्टुता ᵛवाणी ऋषीणां स्तुतिः ᵛनक्षत् व्याप्नोति ॥

आ वां वयोऽश्वासो वहिष्ठा अभि प्रयो नासत्या वहन्तु।
प्र वां रथो मनोजवा असर्जीषः पृक्ष इषिधो अनु पूर्वीः ॥ ७ ॥

आ। वाम्। वयः। अश्वासः। वहिष्ठाः। अभि। प्रयः। नासत्या। वहन्तु।
प्र। वाम्। रथः। मनःऽजवाः। असर्जि। इषः। पृक्षः। इषिधः। अनु। पूर्वीः ॥ ७ ॥

हे नासत्यौ ᵛवां युवां ᵛवयः गन्तारः ᵛवहिष्ठाः वोढृतमाः ᵛअश्वासः अश्वाः ᵛप्रयः सोमरूपमन्नम् ᵛअभि ᵛआ ᵛवहन्तु प्रापयन्तु। ᵛवां युवयोः ᵛमनोजवाः मनोवेगः ᵛरथः ᵛपृक्षः संपर्चनीयाः ᵛइषिधः एषणीयाः ᵛपूर्वीः बह्वीः ᵛइषः अन्नानि सोमान् ᵛअनु ᵛप्र ᵛअसर्जि विसृष्टः ॥

पुरु हि वां पुरुभुजा देष्णं धेनुं न इषं पिन्वतमसक्राम्।
स्तुतश्च वां माध्वी सुष्टुतिश्च रसाश्च ये वामनु रातिमग्मन् ॥ ८ ॥

पुरु। हि। वाम्। पुरुऽभुजा। देष्णम्। धेनुम्। नः। इषम्। पिन्वतम्। असक्राम्।
स्तुतः। च। वाम्। माध्वी इति। सुऽस्तुतिः। च।
रसाः। च। ये। वाम्। अनु। रातिम्। अग्मन् ॥ ८ ॥

ᵛपुरुभुजा हे पूर्णभुजौ बहुपालकौ वा ᵛवां युवयोः ᵛदेष्णं दातव्यं धनं ᵛपुरु बहु ᵛहि भवति। अतः कारणात् ᵛनः अस्मभ्यं ᵛधेनुं प्रीणयित्रीम् ᵛअसक्रां मत्तोऽन्यत्रासंक्रमणीम्। 'असक्रामसंक्रमणीम्' (निरु. ६. २९) इति यास्केनोक्तत्वात्। ᵛइषम् अन्नं ᵛपिन्वतं प्रयच्छतम्। यद्वा। इषमेषणीयां धेनुमित्यन्वयः। किंच ᵛवां ᵛस्तुतः। स्तुवन्तीति स्तुतः स्तोतारः। सन्ति। ᵛमाध्वी मदयितारावश्विनौ ᵛसुष्टुतिः शोभना स्तुतिः ᵛच स्तोतृषु भवति। ᵛरसाः सोमरसाः ᵛच सन्ति। ᵛये रसाः ᵛवां युवयोः ᵛरातिं दानम् ᵛअनु उद्दिश्य ᵛअग्मन् देवयजनं प्राप्ताः। अयं भावः। सुष्टुतिं श्रुत्वा देवयजनं प्राप्तान् सोमरसान् पीत्वा स्तोतृभ्यः कामान् प्रयच्छतमिति शेषः ॥

उत म ऋज्रे पुरयस्य रघ्वी सुमीळ्हे शतं पेरुके च पक्वा।
शाण्डो दाद्धिरणिनः स्मद्दिष्टीन्दश वशासो अभिषाच ऋष्वान् ॥ ९ ॥

उत। मे। ऋज्रे इति। पुरयस्य। रघ्वी इति। सुऽमीळ्हे। शतम्। पेरुके। च। पक्वा।
शाण्डः। दात्। हिरणिनः। स्मत्ऽदिष्टीन्। दश। वशासः। अभिऽसाचः। ऋष्वान् ॥ ९ ॥

ᵛउत[1] अपि च ᵛपुरयस्य पुरयनामकस्य स्वभूते ᵛऋज्रे ऋजुगमने ᵛरघ्वी क्षिप्रगामिन्यौ वडवे ᵛमे आश्विनोः स्तुतिं कुर्वतो मम अभूताम्। ᵛसुमीळ्हे राज्ञि विद्यमानाः सन्तः[2] ᵛशतं गावो ममाभूवन्। ᵛपेरुके राज्ञि विद्यमानानि ᵛपक्वा पक्वान्यन्नानि ममासन्। ᵛशाण्डः च राजा ᵛहिरणिनः हिरण्यवतः ᵛस्महिष्टीन् प्रशस्तदर्शनान् रथान्[3] अश्वान् वा ᵛदश दशसंख्याकान् ᵛवशासः अनुगुणान्[4] ᵛअभिषाचः शत्रूणामभिभावुकान् ᵛऋष्वान् दर्शनीयान् पुरुषान् अश्विनोः स्तोतृभ्यः ᵛदात् ददातु ॥

सं वां शता नासत्या सहस्राश्वानां पुरुपन्था गिरे दात्।
भरद्वाजाय वीर नू गिरे दाद्धता रक्षांसि पुरुदंससा स्युः ॥ १० ॥

सम्। वाम्। शता। नासत्या। सहस्रा। अश्वानाम्। पुरुऽपन्थाः। गिरे। दात्।
भरत्ऽवाजाय। वीर। नु। गिरे। दात्। हता। रक्षांसि। पुरुऽदंससा। स्युरिति स्युः ॥१०॥

ᵛनासत्या हे अश्विनौ ᵛवां युवयोः ᵛगिरे। गृणातीति गीः स्तोता। तस्मै ᵛअश्वानां ᵛशता शतानि ᵛसहस्रा सहस्राणि च ᵛपुरुपन्थाः पुरुपन्था नाम राजा ᵛसं ᵛदात् संददाति। ᵛवीर हे वीरावश्विनौ ॥ द्विवचनस्य लुक् ॥ ᵛगिरे युवयोः स्तोत्रे ᵛभरद्वाजाय मह्यमपि[5] ᵛनु क्षिप्रं ᵛदात् ददातु। किंच हे ᵛपुरुदंससा बहुकर्माणावश्विनौ युवयोरनुग्रहात् ᵛरक्षांसि ᵛहता हतानि ᵛस्युः ॥

आ वां सुम्ने वरिमन्त्सूरिभिः ष्याम् ॥ ११ ॥

आ। वाम्। सुम्ने। वरिमन्। सूरिऽभिः। स्याम् ॥ ११ ॥

हे अश्विनौ ᵛवरिमन् विस्तृते ᵛसुम्ने ᵛवां युवाभ्यां दत्ते सुखावहे धने। 'जलाषं सुम्नम्' इति सुखनामसु पाठात्। ᵛसूरिभिः विद्वद्भिः पुत्रादिभिः सह ᵛआ समन्तात् ᵛस्यां भवेयम् ॥ ॥४॥

'उदु श्रिये' इति षड्चं तृतीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमुषोदेवताकम्। अनुक्रम्यते च— 'उदु श्रिये षळुषस्यं तु' इति। प्रातरनुवाक उषस्ये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चैतदादिके द्वे सूक्ते। सूत्र्यते हि—'उदु श्रिय इति सूक्ते' (आश्व. श्रौ. ४.१४) इति ॥

उदु श्रिय उषसो रोचमाना अस्थुरपां नोर्मयो रुशन्तः।
कृणोति विश्वा सुपथा सुगान्यभूदु वस्वी दक्षिणा मघोनी ॥ १ ॥

उत्। ऊँ इति। श्रिये। उषसः। रोचमानाः। अस्थुः। अपाम्। न। ऊर्मयः। रुशन्तः।
कृणोति। विश्वा। सुऽपथा। सुऽगानि। अभूत्। ऊँ इति। वस्वी। दक्षिणा। मघोनी ॥ १ ॥

ᵛरोचमानाः दीप्यमानाः ᵛरुशन्तः शुक्लवर्णाः। 'रुशदिति वर्णनाम' (निरु. २.२०) इति यास्कः। ᵛउषसः ᵛश्रिये जगतः शोभायै जगद्व्याप्तुं वा ᵛअपाम् ᵛऊर्मयः ᵛन उदकसंबन्धिनस्तरङ्गा इव ᵛउत् ᵛअस्थुः उत्तिष्ठन्ति। अनन्तरमेकवन्निगमः। उषाः ᵛविश्वा विश्वानि स्थानानि ᵛसुपथा

---

१. ख-झ-न-भ—'उत' नास्ति। २. ख-घ-झ-न-भ—'सन्तः' नास्ति। ३. ख-झ-त-न-भ—पुरुषान् रथान्; श—पुरुषान्। ४. ख-झ-त-न-भ—अनुगुणाः; श—आनुगुणाः। ५. ख-झ-न-भ—मह्यमधि।

सुमार्गाणि Vसुगानि सुखेन गम्यानि Vकृणोति करोति । अपि च Vमघोनी धनवत्युषाः Vवस्वी प्रशस्ता Vदक्षिणा समर्धयित्री च Vअभूत् ॥

भद्रा ददृक्ष उर्विया वि भास्युत्ते शोचिर्भानवो द्यामपप्तन् ।
आविर्वक्षः कृणुषे शुम्भमानोषो देवि रोचमाना महोभिः ॥ २ ॥

भद्रा । ददृक्षे । उर्विया । वि । भासि । उत् । ते । शोचिः । भानवः । द्याम् । अपप्तन् ।
आविः । वक्षः । कृणुषे । शुम्भमाना । उषः । देवि । रोचमाना । महःऽभिः ॥ २ ॥

हे उषो देवि Vभद्रा कल्याणी Vददृक्षे दृश्यसे[1] । Vउर्विया विस्तीर्णा च Vवि Vभासि। Vते तव Vशोचिः शोचिषः ॥ जसो लुक् ॥ दीप्यमानाः Vभानवः रश्मयः Vद्याम् अन्तरिक्षम् Vउत् Vअपप्तन् उत्पतन्ति । किंच हे Vउषो Vदेवि Vमहोभिः तेजोभिःVशुम्भमाना शोभमाना Vरोचमाना दीप्यमाना Vवक्षः त्वदीयं रूपम् Vआविः Vकृणुषे प्रकटीकरोषि ॥

वहन्ति सीमरुणासो रुशन्तो गावः सुभगामुर्विया प्रथानाम् ।
अपेजते शूरो अस्तेव शत्रून्बाधते तमो अजिरो न वोळ्हा ॥ ३ ॥

वहन्ति । सीम् । अरुणासः । रुशन्तः । गावः । सुऽभगाम् । उर्विया । प्रथानाम् ।

अप । ईजते । शूरः । अस्ताऽइव । शत्रून् । बाधते । तमः । अजिरः । न । वोळ्हा ॥ ३ ॥

Vअरुणासः लोहितवर्णाः Vरुशन्तः दीप्यमानाः Vगावः रश्मयः । 'किरणा गावः' इति रश्मिनामसु पाठात्। Vसुभगाम् Vउर्विया उर्वी विस्तीर्णां Vप्रथानां प्रथमानां Vसीम् एनामुषोदेवतां Vवहन्ति । सेयमुषोदेवता Vशूरो Vअस्तेव वीरः क्षेप्तेव Vशत्रून्[2] Vतमः Vअपेजते अपगमयति । Vवोळ्हा सेनायाः Vअजिरो Vन क्षिप्रगामी शत्रून् यथा[3] बाधते तथा[3] तमांसि Vबाधते च ॥

सुगोत ते सुपथा पर्वतेष्ववाते अपस्तरसि स्वभानो ।
सा न आ वह पृथुयामन्नृष्वे रयिं दिवो दुहितरिषयध्यै ॥ ४ ॥

सुऽगा । उत । ते । सुऽपथा । पर्वतेषु । अवाते । अपः । तरसि । स्वभानो इति स्वऽभानो ।
सा । नः । आ । वह । पृथुऽयामन् । ऋष्वे । रयिम् । दिवः । दुहितः । इषयध्यै ॥ ४ ॥

हे उषो देवि Vपर्वतेषु Vउत दुर्गेष्वपि Vअवाते गमनसाधनरहिते देशे Vसुपथा सुपथानि मार्गाणि Vसुगा सुगानि सुखेन गम्यानि Vते तव भवन्ति । Vस्वभानो हे स्वप्रकाशे Vअपः अन्तरिक्षमाकाशम् । 'आपः' इत्यन्तरिक्षनामसु पाठात् । सामुद्रिकीरपो वा Vतरसि । Vपृथुयामन् पृथुरथे Vऋष्वे दर्शनीये Vदिवो Vदुहितः अन्तरिक्षसुते हे उषो देवि Vसा त्वम् Vइषयध्यै एषणीयं Vरयिं धनं Vनः अस्मभ्यम् Vआ Vवह ॥

---

१. ख-झ-त-श–दृश्यते । २. ख-घ-झ-त-न-भ-श–'शत्रून्' नास्ति । ३. ख-घ-झ-त-न-भ-श–इव ।

सा व॑ह॒ योक्ष॒भिर॑वा॒तोषो॒ वरं॒ वह॑सि॒ जोष॒मनु॑ ।
त्वं दि॑वो दुहित॒र्या ह॑ दे॒वी पू॒र्वहू॑तौ मं॒हना॑ दर्श॒ता भूः ॥ ५ ॥

सा । आ । व॒ह॒ । या । उ॒क्षऽभिः॑ । अवा॑ता । उषः॑ । वर॑म् । वह॑सि । जोष॑म् । अनु॑ ।
त्वम् । दि॒वः॒ । दु॒हि॒तः॒ । या । ह॒ । दे॒वी । पू॒र्वऽहू॑तौ । मं॒हना॑ । द॒र्श॒ता । भूः॒ ॥ ५ ॥

हे ᵛउषः ᵛसा त्वं ᵛवरं धनं मह्यम् ᵛआ ᵛवह । ᵛया त्वम् ᵛअवाता अप्रतिगता ᵛजोषं प्रीतिम्[1] ᵛअनु ᵛउक्षभिः अनडुद्भिरश्वैर्वा स्तोतृभ्यो वरं ᵛवहसि । किंच हे ᵛदिवो ᵛदुहितः अन्तरिक्षसुते ᵛया ᵛत्वं ᵛदेवी द्योतमाना ᵛपूर्वहूतौ प्रथमाह्वाने प्रातरनुवाके ᵛमंहना पूजनीया भवसि[2] सा त्वं ᵛदर्शता दर्शनीया ᵛभूः इति योजना । या दर्शता भूरित्यन्वये यद्वृत्तेन सामानाधिकरण्यात् भूरित्यस्य निघातो न स्यात् ॥

उत्ते॒ वय॑श्चिद्वस॒तेर॑पप्त॒न्नर॑श्च॒ ये पि॑तु॒भाजो॒ व्यु॑ष्टौ ।
अ॒मा स॒ते व॑हसि॒ भूरि॑ वा॒ममुषो॑ देवि दा॒शुषे॒ मर्त्या॑य ॥ ६ ॥

उत् । ते॒ । वयः॑ । चि॒त् । व॒स॒तेः । अ॒प॒प्त॒न् । नरः॑ । च॒ । ये । पि॒तु॒ऽभाजः॑ । विऽउ॑ष्टौ ।
अ॒मा । स॒ते । व॒ह॒सि॒ । भूरि॑ । वा॒मम् । उषः॑ । दे॒वि॒ । दा॒शुषे॑ । मर्त्या॑य ॥ ६ ॥

हे उषो देवि ᵛते तव ᵛव्युष्टौ सत्यां ᵛवयश्चित् पक्षिणोऽपि ᵛवसतेः निवासस्थानात् ᵛउत् ᵛअपप्तन् उत्पतन्ति । ᵛये ᵛपितुभाजः हविषां संभक्तारः अन्नस्योपार्जका वा । 'पितुः' इत्यन्ननामसु पाठात् । ᵛनरः तेऽपि ᵛच उत्पतन्ति । किं च हे ᵛउषो ᵛदेवि त्वम् ᵛअमा समीपे ᵛसते वर्तमानाय ᵛदाशुषे हविषां प्रदात्रे ᵛमर्त्याय ᵛभूरि प्रभूतं ᵛवामं धनं ᵛवहसि ॥ ॥ ५ ॥

'एषा स्या' इति षड्चं चतुर्थं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभम् । अनुक्रम्यते च—'एषा स्या' इति । 'उषस्यं तु' इति पूर्वसूक्ते उक्तत्वात् इदमपि उषोदेवताकम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

ए॒षा स्या नो॑ दुहि॒ता दि॑वो॒जाः क्षि॒तीरु॒च्छन्ती॒ मानु॑षीरजीगः ।
या भा॒नुना॒ रुश॑ता रा॒म्यास्वज्ञा॑यि ति॒रस्तम॑सश्चिद॒क्तून् ॥ १ ॥

ए॒षा । स्या । नः॒ । दु॒हि॒ता । दि॒वः॒ऽजाः । क्षि॒तीः । उ॒च्छन्ती॑ । मानु॑षीः । अ॒जी॒ग॒रिति॑ ।
या । भा॒नुना॑ । रुश॑ता । रा॒म्यासु॑ । अज्ञा॑यि । ति॒रः । तम॑सः । चि॒त् । अ॒क्तून् ॥ १ ॥

ᵛएषा ᵛस्या सा ᵛदिवोजाः दिवो जाता अत एव ᵛदुहिता दिवः पुत्री उषाः ᵛनः अस्मदर्थम् ᵛउच्छन्ती तमांसि वर्जयन्ती ᵛक्षितीः प्रजाः ᵛमानुषीः ᵛअजीगः उद्गिरति । 'जिगर्तिगिरतिकर्मा वा' ( निरु. ६. ८ ) इति यास्कः । प्रकाशयतीति यावत् । ᵛया ᵛरुशता दीप्यमानेन

---

१. ख-ङ्ग-त-न-भ-श—प्रति । २. ख-घ-ङ्ग-त-न-भ-श—वहसि ।

ᐯभानुना युक्ता ᐯराम्यासु याम्यासु रात्रिषु। रेफयकारयोर्व्यत्ययः। ᐯअक्तून् नक्षत्रादितेजांसि ᐯतमसश्चित् तमांसि च ᐯतिरः तिरस्कुर्वती ᐯअज्ञायि दृश्यते[1] ॥

वि तद्ययुररुणयुग्भिरश्वैश्चित्रं भान्त्युषसंश्चन्द्ररथाः ।
अग्रं यज्ञस्यं बृहतो नयन्तीर्वि ता बाधन्ते तम ऊर्म्यायाः ॥ २ ॥

वि । तत् । ययुः । अरुणयुक्ऽभिः । अश्वैः । चित्रम् । भान्ति । उषसः । चन्द्रऽरथाः ।
अग्रम् । यज्ञस्यं । बृहतः । नयन्तीः । वि । ताः । बाधन्ते । तमः । ऊर्म्यायाः ॥ २ ॥

ᐯचन्द्ररथाः कान्तिरथाः। 'चन्द्रश्चन्दतेः कान्तिकर्मणः' (निरु. ११·५) इति यास्कः। ताः ᐯउषसः ᐯतत् तदानीं प्रातःकाले ᐯबृहतः बृंहणशीलस्य[2] ᐯयज्ञस्य[3] ᐯअग्रं मुखं ᐯनयन्तीः संपादयन्त्यः ᐯअरुणयुग्भिः अरुणवर्णयुक्तैः ᐯअश्वैः ᐯवि ᐯययुः विस्तीर्णं यान्ति। ᐯचित्रं यथा भवति तथा ᐯभान्ति च। ᐯऊर्म्यायाः रात्रेः। 'अक्तुः ऊर्म्या' इति रात्रिनामसु पाठात्। ᐯतमः ᐯवि ᐯबाधन्ते सम्यगपनयन्ति च ॥

श्रवो वाजमिषमूर्जं वहन्तीर्नि दाशुषं उषसो मर्त्याय ।
मघोनीर्वीरवत्पत्यमाना अवो धात विधते रत्नमद्य ॥ ३ ॥

श्रवः । वाजम् । इषम् । ऊर्जम् । वहन्तीः । नि । दाशुषे । उषसः । मर्त्याय ।
मघोनीः । वीरऽवत् । पत्यमानाः । अवः । धात । विधते । रत्नम् । अद्य ॥ ३ ॥

हे ᐯउषसः ᐯदाशुषे हविषां[4] दात्रे[4] ᐯमर्त्याय ᐯश्रवः कीर्तिं ᐯवाजं बलम् ᐯइषम् अन्नम् ᐯऊर्जं रसं च ᐯवहन्तीः वहन्त्यो यूयं ᐯमघोनीः धनवत्यः ᐯपत्यमानाः गच्छन्त्यः ᐯअद्य ᐯविधते परिचरते मह्यं ᐯवीरवत् पुत्रपौत्रादिसहितम् ᐯअवः अन्नम्। 'सिनम् अवः' इत्यन्ननामसु पाठात्। ᐯरत्नं धनं च। 'क्षात्रं रत्नम्' इति धननामसु पाठात्। ᐯनि ᐯधात नितरां धत्त ॥

इदा हि वो विधते रत्नमस्तीदा वीराय दाशुषं उषासः ।
इदा विप्राय जरते यदुक्था नि ष्म मावते वहथा पुरा चित् ॥ ४ ॥

इदा । हि । वः । विधते । रत्नम् । अस्ति । इदा । वीराय । दाशुषे । उषसः ।
इदा । विप्राय । जरते । यत् । उक्था । नि । स्म । माऽवते । वहथ । पुरा । चित् ॥४॥

हे ᐯउषसः ᐯइदा ᐯहि इदानीमेव ᐯवः युष्माकं ᐯविधते परिचरते दातुं ᐯरत्नं धनम् ᐯअस्ति। ᐯइदा हि इदानीमेव ᐯवीराय प्रेरयित्रे हविषां ᐯदाशुषे यजमानाय दातुं वो रत्नमस्ति। ᐯइदा हि इदानीमेव ᐯविप्राय प्राज्ञाय ᐯजरते स्तुवते[5] दातुं वो रत्नमस्ति। ᐯयत् यस्मिन् विप्रे ᐯउक्था उक्थनामकानि स्तोत्राणि विद्यन्ते ᐯमावते मत्सदृशाय यजमानाय[6] तद्रत्नं ᐯनि ᐯवहथ। ᐯपुरा ᐯचित् पुरापि रत्नं मह्यं दत्तम् ॥

---

१. ख-घ-ज्ञ-त-न-भ-श—अदृश्यत। २. ख-ज्ञ-न-भ-श—बृंहणस्य। ३. ख-ज्ञ-न-भ—'यज्ञस्य' नास्ति। ४. ख-घ-ज्ञ-त-न-भ-श—हवींषि प्रदात्रे। ५. ख-घ-ज्ञ-न-भ—'स्तुवते' नास्ति। ६. श—जनाय।

इदा हि त उषो अद्रिसानो गोत्रा गवामङ्गिरसो गृणन्ति ।
व्य१र्केण बिभिदुर्ब्रह्मणा च सत्या नृणामभवद्देवहूतिः ॥ ५ ॥

इदा । हि । ते । उषः । अद्रिसानो इत्यद्रिऽसानो । गोत्रा । गवाम् । अङ्गिरसः । गृणन्ति ।
वि । अर्केण । बिभिदुः । ब्रह्मणा । च । सत्या । नृणाम् । अभवत् । देवऽहूतिः ॥ ५ ॥

हे उषो[1] अद्रिसानो आदृतसानो ते तव प्रसादात् इदा हि सद्य एव गवां गोत्रा संघान् अङ्गिरसो गृणन्ति उत्सृजन्ति । तथा च निगमान्तरं— ' गवां गोत्रमुदसृजो यदङ्गिरः ' ( ऋ. सं. २.२३.१८ ) इति । अर्केण अर्चनीयेन ब्रह्मणा स्तोत्रेण वि बिभिदुः तमांसि विदारयन्ति च । नृणां नेतॄणां तेषामङ्गिरसां देवहूतिः देवविषया स्तुतिः सत्या सत्यफला[2] अभवत् ॥

उच्छा दिवो दुहितः प्रत्नवन्नो भरद्वाजवद्विधते मघोनि ।
सुवीरं रयिं गृणते रिरीह्युरुगायमधि धेहि श्रवो नः ॥ ६ ॥

उच्छ । दिवः । दुहितरिति । प्रत्नऽवत् । नः । भरद्वाजऽवत् । विधते । मघोनि ।
सुऽवीरम् । रयिम् । गृणते । रिरीहि । उरुऽगायम् । अधि । धेहि । श्रवः । नः ॥६॥

हे दिवो दुहितः उषः प्रत्नवत् पुरातनेभ्य इव नः अस्मदर्थम् उच्छ तमांसि वर्जय । हे मघोनि भरद्वाजवत् विधते परिचरते । भरद्वाजवदिति वचनात् अन्योऽप्यस्ति भरद्वाजः । तथा च ब्राह्मणं— ' प्राणो वै भरद्वाजवत् ' इति । गृणते स्तुतिं कुर्वते मह्यं सुवीरं कल्याणपुत्रपौत्रादियुक्तं रयिं धनं रिरीहि देहि । किंच नः अस्मभ्यम् उरुगायं बहुभिर्गातव्यं श्रवः अन्नम् अधि धेहि अधिकं प्रयच्छ ॥ ॥ ६ ॥

' वपुर्नु तत् ' इत्येकादशर्चं पञ्चमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभं मारुतम् । तथा चानुक्रम्यते— ' वपुर्न्वेकादश मारुतम् ' इति । व्यूळ्हे दशरात्रे षष्ठेऽहनि आग्निमारुत इदं सूक्तं मारुतनिविद्धानम् । सूत्रितं च—' हविष्पान्तं वपुर्नु तत् ' ( आश्व. श्रौ. ८.८ ) इति । वैश्वदेवे पर्वणि मारुतसप्तकपालस्य ' प्र चित्रमर्कम् ' इति याज्या । सूत्रितं च—' प्र चित्रमर्कं गृणते तुरायेति नवानुयाजाः ' ( आश्व. श्रौ. २.१६ ) इति । एकादशिने मारुते पशौ ' प्र चित्रमर्कम् ' इत्येषैव याज्या । सूत्रितं च– ' प्र चित्रमर्कं गृणते तुरायारा इवेदचरमा अहेव ' ( आश्व. श्रौ. ३.७ ) इति ॥

वपुर्नु तच्चिकितुषे चिदस्तु समानं नाम धेनु पत्यमानम् ।
मर्तेष्वन्यद्दोहसे पीपाय सकृच्छुक्रं दुदुहे पृश्निरूधः ॥ १ ॥

वपुः । नु । तत् । चिकितुषे । चित् । अस्तु । समानम् । नाम । धेनु । पत्यमानम् ।
मर्तेषु । अन्यत् । दोहसे । पीपाय । सकृत् । शुक्रम् । दुदुहे । पृश्निः । ऊधः ॥ १ ॥

तत् प्रसिद्धं समानम् एकरूपम् । मरुतः सर्वदा समानरूपाः । तथा च निगमान्तरम्— ' अज्येष्ठासो अकनिष्ठास एते ' ( ऋ. सं. ५.६०.५ ) इति । नाम स्थिराणामपि नामकं धेनु

---

१. ख-झ-त-न-भ-श–उषसः । २. ख-झ-न-भ–सफला ।

प्रीणयितृ ᵛपत्यमानं सर्वदा गच्छत् ᵛवपुः मरुतां रूपं[1] ᵛचिकितुषे विदुषे[2] स्तोत्रे ᵛनु क्षिप्रम् ᵛअस्तु प्रादुर्भवतु। ᵛचित् इति पूरकम्। किंच तद्रूपं ᵛमर्तेषु मर्त्यलोके[3] ᵛअन्यत् ओषधिवनस्पत्यादिकं ᵛदोहसे कामान् दोग्धुं ᵛपीपाय आप्याययति। किंच मरुतामेव निर्देशात् ᵛपृश्निः अन्तरिक्षं ᵛसकृत् संवत्सरस्य वर्षासु ᵛशुक्रं शुक्लवर्णम् ᵛऊधः उदकं ᵛदुदुहे क्षरति ॥

ये अ॒ग्नयो॒ न शोशु॑च॒न्निधा॑ना॒ द्वि॒र्यत्त्रि॒र्म॒रुतो॑ वावृ॒धन्त॑।
अ॒रे॒णवो॑ हिर॒ण्ययास॑ एषां सा॒कं नृ॒म्णैः पौंस्ये॑भिश्च भूवन् ॥ २ ॥

ये। अ॒ग्नयः॑। न। शोशु॑चन्। इ॒धा॒नाः। द्विः। यत्। त्रिः। म॒रुतः॑। व॒वृ॒धन्त॑।
अ॒रे॒णवः॑। हि॒र॒ण्यया॑सः। ए॒षा॒म्। सा॒कम्। नृ॒म्णैः। पौंस्ये॑भिः। च॒। भु॒व॒न् ॥ २ ॥

ᵛये ᵛमरुतः ᵛइधानाः ᵛअग्नयो ᵛन समिध्यमाना अग्नय इव ᵛशोशुचन् दीप्यन्ते। ᵛयत् ये मरुतः ᵛद्विः द्विगुणं ᵛत्रिः त्रिगुणं च ᵛववृधन्त इच्छानुरूपं वर्धन्ते ॥ संहितायां दीर्घश्छान्दसः ॥ ᵛएषां मरुतां रथाः ᵛअरेणवः रेणुरहिताः ᵛहिरण्ययासः हिरण्मयालंकाराश्च भवन्ति। ते[4] मरुतः ᵛनृम्णैः धनैः ᵛपौंस्येभिः बलैः ᵛच ᵛसाकं सार्धं ᵛभूवन् प्रादुर्भवन्ति। तथा च निगमान्तरं—' ये पृषतीभिर्ऋष्टिभिः ' ( ऋ. सं. १. ३७. २ ) इति ॥

रु॒द्रस्य॒ ये मी॒ळ्हुषः॒ सन्ति॑ पु॒त्रा यांश्चो॒ नु दाधृ॑वि॒र्भर॑ध्यै।
वि॒दे हि मा॒ता म॒हो म॒ही षा सेत्पृश्निः॑ सु॒भ्वे॒३॒ गर्भ॒माधा॑त् ॥ ३ ॥

रु॒द्रस्य॑। ये। मी॒ळ्हुषः॑। सन्ति॑। पु॒त्राः। यान्। चो॒ इति॑। नु। दाधृ॑विः। भर॑ध्यै।
वि॒दे। हि। मा॒ता। म॒हः। म॒ही। सा। सा। इत्। पृश्निः॑। सु॒ऽभ्वे॑। गर्भ॑म्। आ। अ॒धा॒त् ॥ ३ ॥

ᵛमीळ्हुषः सेक्तुः ᵛरुद्रस्य ᵛपुत्राः ᵛये मरुतः ᵛसन्ति ᵛदाधृविः धरित्री पृश्निः अन्तरिक्षं ᵛयांश्चो ᵛनु यांश्च मरुतो नु ᵛभरध्यै भर्तुं क्षमा भवति। ᵛविदे ᵛहि सर्वज्ञाता हि ᵛमहः महतामेषां ᵛमाता ᵛसा पृश्निः ᵛमही महती। किंच ᵛसा ᵛपृश्निः ᵛसुभ्वे नृणां सम्यक् भवनाय ᵛगर्भम् उदकम् ᵛआधात् आदधाति ॥

न य ईष॑न्ते ज॒नुषो॒ऽया न्व१॒॑न्तः सन्तो॑ऽव॒द्यानि॑ पुना॒नाः।
निर्यद्दु॒ह्रे शुच॑यो॒ऽनु जोष॒मनु॑ श्रि॒या त॒न्व॑मु॒क्षमा॑णाः ॥ ४ ॥

न। ये। ईष॑न्ते। ज॒नुषः॑। अया॑। नु। अ॒न्तरिति॑। सन्तः॑। अ॒व॒द्यानि॑। पु॒ना॒नाः।
निः। यत्। दु॒ह्रे। शुच॑यः। अनु॑। जोष॑म्। अनु॑। श्रि॒या। त॒न्व॑म्। उ॒क्षमा॑णाः ॥ ४ ॥

ᵛये प्रसिद्धा मरुतः ᵛजनुषः जनान् स्तोतॄन् प्रति ᵛअया अयेन गमनसाधनेन ᵛन ᵛईषन्ते न गच्छन्ति। किं तेषां रक्षणीयत्वाभावात् गमनाभावो नेत्याह। ᵛअन्तः ᵛसन्तः सर्वेषां हृदि वर्तमाना एव ᵛअवद्यानि पापानि ᵛपुनानाः शोधयन्तः। तथा च निगमान्तरं—'प्राणा वै मरुतः स्वापयः'

---

१. ख-घ-ङ-न-भ-श-' रूपं ' नास्ति। २. ख-घ-ङ-त-न-भ-श-' विदुषे ' नास्ति। ३. घ—मनुष्यलोके; त-य-श—मर्त्यलोकेषु। ४. ख-घ-ङ-त-न-भ-श—तेऽमी।

(ऐ. ब्रा. ३.१६) इति । अतः सर्वप्राणिनां हृदि वर्तमानत्वात् तेषां गमनं नास्तीति अध्यात्मं प्राणरूपेणावस्थानं[1] दर्शितं भवति । शीघ्रगामित्वं तु तेषामधिदैवतरूपेणेति[2] द्रष्टव्यम् । यत् यदा शुचयः दीप्यमाना मरुतः जोषमनु स्तोतॄणां काममनु निः दुह्रे नितरां दुहन्त्युदकम् । तथा श्रिया दीप्त्या अनु अनुगताः तन्वम् आत्मीयं शरीरं प्रकाशयन्तः उक्षमाणाः भूमिं सिञ्चन्तो भवन्ति । यद्वा । तन्वं विस्तीर्णं यथा भवति तथा उक्षमाणा भूमिं सिञ्चन्तो भवन्तीत्यर्थः ।

मक्षू न येषु दोहसे चिदया आ नाम धृष्णु मारुतं दधानाः ।
न ये स्तौना अयासो मह्ना नू चित्सुदानुरव यासदुग्रान् ॥ ५ ॥

मक्षु । न । येषु । दोहसे । चित् । अयाः । आ । नाम । धृष्णु । मारुतम् । दधानाः ।
न । ये । स्तौनाः । अयासः । मह्ना । नु । चित् । सुऽदानुः । अव । यासत् । उग्रान् ॥५॥

येषु प्रसिद्धेषु मरुत्सु धृष्णु धर्षकं मारुतं नाम मरुत्संज्ञकं शब्दम् आ[3] दधानाः उच्चारयन्तः अयाः उपगच्छन्तः स्तोतारः मक्षु क्षिप्रं दोहसे कामान् दोग्धुं क्षमा भवन्ति । न इति संप्रत्यर्थे । ये स्तौनाः स्तेनास्तिरोहिता वा स्तोतृधनानामपहर्तारः अयासः गन्तारो भवन्ति । मह्ना महत्त्वेन युक्ताश्च भवन्ति उग्रान् तान् । क्रुद्धान् सुदानुः शोभनहविर्दानो यजमानः अव यासत् अवयजते । अपगतक्रोधान् करोति । न इति संप्रत्यर्थे ॥ ॥ ७ ॥

त इदुग्राः शवसा धृष्णुषेणा उभे युजन्त रोदसी सुमेके ।
अध स्मैषु रोदसी स्वशोचिरामवत्सु तस्थौ न रोकः ॥ ६ ॥

ते । इत् । उग्राः । शवसा । धृष्णुऽसेनाः । उभे इति । युजन्त । रोदसी इति । सुमेके इति सुऽमेके ।
अध । स्म । एषु । रोदसी । स्वऽशोचिः । आ । अमवत्ऽसु । तस्थौ । न । रोकः ॥ ६ ॥

ते मरुतः उग्राः शवसा बलेन वेगेन[4] युक्ताः धृष्णुषेणाः धर्षकसेनाः सुमेके सुरूपे उभे रोदसी द्यावापृथिव्यौ युजन्त योजयन्ति । वृष्ट्या पृथिवीं तर्पयन्तीत्यभिप्रायः । अध स्म अपि च एषु[5] येषु[5] मरुत्सु रोदसी रुद्रस्य पत्नी माध्यमिकी वाक् स्वशोचिः स्वदीप्तिर्वर्तते अमवत्सु बलवत्सु तेषु रोकः दीप्तिः बाधको वा न आ तस्थौ न तिष्ठति । न निःसरत्येवेत्यर्थः ॥

अनेनो वो मरुतो यामो अस्त्वनश्वश्चिद्यमजत्यरथीः ।
अनवसो अनभीशू रजस्तूर्वि रोदसी पथ्या याति साधन् ॥ ७ ॥

अनेनः । वः । मरुतः । यामः । अस्तु । अनश्वः । चित् । यम् । अजति । अरथीः ।
अनवसः । अनभीशुः । रजःऽतूः । वि । रोदसी इति । पथ्याः । याति । साधन् ॥ ७ ॥

हे मरुतः वः युष्माकं संबन्धी यामः रथः अनेनः पापरहितं यथा भवति तथा अस्तु प्रादुर्भवतु । किंच यं यामम् अरथीः । रथिः सारथिः । न रथिररथीः[6] । असारथिरपि स्तोता

१. ख-ञ-न-भ—प्राणिरूपेणा° । २. ख-ञ-भ—नामाधि°; त-न-श—तामधि° । ३. ख-ञ-त-न-भ-श—'आ' नास्ति । ४. ञ—वेगेन वा । ५. ख-ञ-त-न-भ-श—येषु; घ-ञ—एषु; य—तेषु । ६. ख-ञ-त-न-भ—रथिररथिः ।

अजति प्रेरयति स रथः[1] अनश्वश्चित् अश्वरहितोऽपि अनवसः पथ्यदनरहितः अनभीशुः पाशरहितोऽपि रजस्तूः उदकस्य प्रेरकः साधन् स्तोतॄणां कामान् साधयन् रोदसी द्यावापृथिव्यौ पथ्याः पथोऽन्तरिक्षमार्गान् वि याति विविधं गच्छति ॥

नास्य॑ व॒र्ता न त॑रु॒ता न्व॑स्ति॒ मरु॑तो॒ यमव॑थ॒ वाज॑सातौ ।
तो॒के वा॒ गोषु॒ तन॑ये॒ यम॒प्सु स व्र॒जं दर्ता॒ पार्ये॒ अध॒ द्योः ॥ ८ ॥

न । अ॒स्य॒ । व॒र्ता । न । त॒रु॒ता । नु । अ॒स्ति॒ । मरु॑तः । यम् । अव॑थ । वाज॑ऽसातौ ।
तो॒के । वा॒ । गोषु॑ । तन॑ये । यम् । अ॒प्ऽसु । सः । व्र॒जम् । दर्ता॑ । पार्ये॑ । अध॑ । द्योः ॥८॥

हे मरुतः वाजसातौ संग्रामे यम् अवथ रक्षथ अस्य जनस्य वर्ता प्रेरकः न अस्ति । अस्य तरुता नु हिंसिता च न अस्ति । अध अपि च तोके पुत्रे तनये पौत्रे धने वा गोषु वा अप्सु वा निमित्तभूतेषु यम् अवथ सः[2] पार्ये संग्रामे द्योः दीप्तस्यापि[3] विजिगीषोर्वा शत्रोः व्रजं गवां संघं दर्ता दारयिता भवति ॥

प्र चि॒त्रम॒र्कं गृ॑ण॒ते तु॒राय॒ मारु॑ताय॒ स्वत॑वसे भरध्वम् ।
ये सहां॑सि॒ सह॑सा॒ सह॑न्ते॒ रेज॑ते अग्ने पृथि॒वी म॒खेभ्य॑ः ॥ ९ ॥

प्र । चि॒त्रम् । अ॒र्कम् । गृ॒ण॒ते । तु॒राय॑ । मारु॑ताय । स्वऽत॑वसे । भ॒र॒ध्व॒म् ।
ये । स॒हांसि । सह॑सा । सह॑न्ते । रेज॑ते । अ॒ग्ने॒ । पृ॒थि॒वी । म॒खेभ्य॑ः ॥ ९ ॥

हे अग्ने गृणते शब्दं कुर्वते स्तूयमानाय वा तुराय त्वरिताय स्वतवसे स्वभूतबलाय मारुताय मरुतां गणाय चित्रं दर्शनीयम् अर्कम् अन्नं हविः । 'स्वधा अर्कः' इत्यन्ननामसु पाठात् । प्र भरध्वम् । त्वत्सहायभूताः[4] ऋत्विजस्त्वं च सर्वे यूयं प्रभरत । यथा लोके बहुष्वेककार्यकरेषु मुख्यमेकं संबोध्य यूयमेवं कुरुतेति प्रार्थना तद्वदत्रापि मुख्यमग्निमेकमेव संबोध्य प्रभरध्वमिति बहुवचनप्रयोगः । ये मरुतः सहांसि शत्रूणां बलानि सहसा बलेन सहन्ते अभिभवन्ति मखेभ्यः मंहनीयेभ्यो मरुद्भ्यो भयात् पृथिवी रेजते कम्पते ॥ मारुतायेति तद्धितवृत्तावन्तर्भूतानामपि मरुतां बुद्ध्या प्रविभागात् य इति प्रत्यवमर्शः । यथा महाभाष्ये–'अथ शब्दानुशासनम् । केषां शब्दानाम्' ( पा. म. १. १. १ ) इति । यथा वा लोके राजपुरुष इत्युक्ते कस्य राज्ञ इति ॥

त्विषी॑मन्तो अध्व॒रस्ये॑व दि॒द्युत्तृ॑षु॒च्यव॑सो जु॒ह्वो॒३॒॑ नाग्नेः ।
अ॒र्चत्र॑यो॒ धुन॑यो॒ न वी॒रा भ्राज॑ज्जन्मानो म॒रुतो॒ अधृ॑ष्टाः ॥ १० ॥

त्विषि॑ऽमन्तः । अ॒ध्व॒रस्य॑ऽइव । दि॒द्युत् । तृ॒षु॒ऽच्यव॑सः । जु॒ह्व॑ः । न । अ॒ग्नेः ।
अ॒र्चत्र॑यः । धुन॑यः । न । वी॒राः । भ्राज॑त्ऽजन्मानः । म॒रुत॑ः । अधृ॑ष्टाः ॥ १० ॥

मरुतः अध्वरस्येव यज्ञस्येव दिद्युत् द्योतमानाः तृषुच्यवसः क्षिप्रगमनाः अग्नेः जुह्वो न रश्मय इव त्विषीमन्तः दीप्तिमन्तः अर्चत्रयः अर्चनीयाः धुनयो न सपत्नान् कम्पयन्त इव वीराः शूराः भ्राजज्जन्मानः दीप्तशरीराः अधृष्टाः परैरनभिभूताश्च भवन्ति ॥

---

१. त३-श–यामः । २. ख-ञ्ज-त-न-भ-श–'सः' नास्ति । ३. ख–दीप्तस्य; ञ्ज-त-न-भ-श–दीप्तस्यास्य । ४. ख-ञ्ज-न-भ–त्वत्सहायप्रभूताः ।

तं वृधन्तं मारुतं भ्राजदृष्टिं रुद्रस्य सूनुं हवसा विवासे ।
दिवः शर्धाय शुचयो मनीषा गिरयो नाप उग्रा अस्पृध्रन् ॥ ११ ॥

तम् । वृधन्तम् । मारुतम् । भ्राजत्ऽऋष्टिम् । रुद्रस्य । सूनुम् । हवसा । आ । विवासे ।
दिवः । शर्धाय । शुचयः । मनीषाः । गिरयः । न । आपः । उग्राः । अस्पृध्रन् ॥ ११ ॥

तं प्रसिद्धं वृधन्तं वर्धमानं भ्राजदृष्टिं भ्राजमानर्ष्टिं रुद्रस्य सूनुं पुत्रं मारुतं मरुद्गणं हवसा स्तोत्रेण आ विवासे परिचरामि । किंच दिवः स्तोतुः शुचयः निर्मलाः मनीषाः स्तुतयः उग्राः उद्गूर्णाः शर्धाय मारुताय बलाय । ' तृक्षः शर्धः ' इति बलनामसु पाठात् । आपः आप्नुवन्तः गिरयो न मेघा इव । ' गिरिः व्रजः ' इति मेघनामसु पाठात् । अस्पृध्रन् अस्पर्धन्त[1] ॥ ॥ ८ ॥

' विश्वेषां वः ' इत्येकादशर्चं षष्ठं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभं मैत्रावरुणम् । तथा चानुक्रम्यते— ' विश्वेषां मैत्रावरुणम् ' इति । सूक्तविनियोगो लैङ्गिकः । मैत्रावरुणे पशौ ' आ यातं मित्रावरुणा ' इति पशुपुरोडाशस्यानुवाक्या । सूत्रितं च— ' आ यातं मित्रावरुणा सुशस्त्या नो मित्रावरुणा हव्यजुष्टिम् ' ( आश्व. श्रौ. ३ . ८ ) इति । व्यूळ्हे दशरात्रे सप्तमेऽहनि प्रउगशस्त्रे ' प्र यद्वाम् ' इति मैत्रावरुणस्तृतीयस्तृचः । तथा च सूत्रितं—' प्र यद्वां मित्रावरुणा स्पूर्धन्ना गोमता नासत्या रथेन ' ( आश्व. श्रौ. ८ . ९ ) इति ॥

विश्वेषां वः सतां ज्येष्ठतमा गीर्भिर्मित्रावरुणा वावृधध्यै ।
सं या रश्मेव यमतुर्यमिष्ठा द्वा जनाँ असमा बाहुभिः स्वैः ॥ १ ॥

विश्वेषाम् । वः । सताम् । ज्येष्ठऽतमा । गीःऽभिः । मित्रावरुणा । ववृधध्यै ।
सम् । या । रश्माऽइव । यमतुः । यमिष्ठा । द्वा । जनान् । असमा । बाहुऽभिः । स्वैः ॥ १ ॥

विश्वेषां[2] सतां मध्ये ज्येष्ठतमा ज्येष्ठतमौ मित्रावरुणौ वः वां गीर्भिः स्तुतिभिः ववृधध्यै वर्धयितुं प्रवृत्तोऽस्मि । या यौ द्वा द्वौ सहितौ असमा विषमौ । ' त्रिरश्रिं हन्ति चतुरश्रिरुग्रः ' ( ऋ. सं. १ . १५२ . २ ) इति निगमान्तरेणासाम्यं दर्शितम् । यमिष्ठा यन्तृतमौ स्वैः आत्मीयैः बाहुभिः रश्मेव रश्मिनेवाश्वान् जनान् सं यमतुः संयच्छतः[3] । बाहुभिरिति बहुवचनं पूजार्थम् ॥

इयं मद्वां प्र स्तृणीते मनीषोप प्रिया नमसा बर्हिरच्छ ।
यन्तं नो मित्रावरुणावधृष्टं छर्दिर्यद्वां वरूथ्यं सुदानू ॥ २ ॥

इयम् । मत् । वाम् । प्र । स्तृणीते । मनीषा । उप । प्रिया । नमसा । बर्हिः । अच्छ ।
यन्तम् । नः । मित्रावरुणौ । अधृष्टम् । छर्दिः । यत् । वाम् । वरूथ्यम् । सुदानू इति सुऽदानू ॥ २ ॥

---

१. घ-ङ्ग-त-न-श – अस्पर्धन्ते; ज्ञ-य—स्पर्धन्ते । २. ख—विश्वेषां देवानाम् । ३. ख-घ-ङ्ग-त-न-भ-श—संगच्छतः ।

हे मित्रावरुणौ ᵛवां युवां ᵛमत् मम ᵛइयं ᵛमनीषा स्तुतिः ᵛप्र ᵛस्तृणीते प्रच्छादयति। ᵛप्रिया हे प्रियौ युवां ᵛनमसा अन्नेन हविषा सह ᵛउप गच्छति च। युवयोः ᵛबर्हिः यज्ञम् ᵛअच्छ अभिगच्छति च। हे ᵛमित्रावरुणौ ᵛनः अस्मभ्यम् ᵛअधृष्टम् अनभिभूतं ᵛछर्दिः गृहं ᵛयन्तं प्रयच्छतम्। हे ᵛसुदानू शोभनदानौ ᵛवां युवयोः संबन्धि युवाभ्यां देयं ᵛयत् गृहं ᵛवरूथ्यं शीतवातातपानां वारयितृ भवति ॥

आ यातं मित्रावरुणा सुशस्त्युप प्रिया नमसा हूयमाना।
सं यावप्नःस्थो अपसेव जनाञ्छ्रुधीयतश्चिद्यतथो महित्वा ॥ ३ ॥

आ। यातम्। मित्रावरुणा। सुऽशस्ति। उप। प्रिया। नमसा। हूयमाना।
सम्। यौ। अप्नःऽस्थः। अपसाऽइव। जनान्। श्रुधिऽयतः। चित्। यतथः। महिऽत्वा ॥३॥

हे मित्रावरुणौ ᵛसुशस्ति शोभनशंसनं ᵛनमसा अन्नेन हविषा स्तोत्रेण वा ᵛहूयमाना[1] स्तूयमानौ वा ᵛप्रिया विश्वस्य प्रियौ ᵛउप ᵛआ ᵛयातम् उपागच्छतम्। ᵛयौ ᵛमहित्वा महत्त्वेन युक्तौ युवां ᵛश्रुधीयतः श्रुधिमन्नं यशो वात्मन इच्छतो ᵛजनान् ᵛअप्नःस्थः कर्मण्यधिकृतः पुरुषः। 'अपः अप्नः' इति कर्मनामसु पाठात्। ᵛअपसेव कर्मणेव ᵛसं ᵛयतथः संयच्छथः ॥

अश्वा न या वाजिना पूतबन्धू ऋता यद्गर्भमदितिर्भरध्यै।
प्र या महि महान्ता जायमाना घोरा मर्ताय रिपवे नि दीधः ॥ ४ ॥

अश्वा। न। या। वाजिना। पूतबन्धू इति पूतऽबन्धू। ऋता। यत्। गर्भम्। अदितिः। भरध्यै।
प्र। या। महि। महान्ता। जायमाना। घोरा। मर्ताय। रिपवे। नि। दीधरिति दीधः ॥४॥

ᵛया यौ ᵛअश्वा ᵛन अश्वाविव ᵛवाजिना वाजिनौ बलिनौ ᵛपूतबन्धू पूतस्तोत्रौ ᵛऋता सत्यौ च। ᵛयत् यौ ᵛगर्भं गर्भभूतौ ᵛअदितिः देवी ᵛभरध्यै बभार। किंच ᵛया यौ ᵛजायमाना जायमानावेव ᵛमहि महतः ᵛमहान्ता महत्तरौ प्रभूतौ मित्रावरुणौ ᵛमर्ताय मर्त्याय ᵛरिपवे हिंसकाय ᵛघोरा घोरौ घातकौ ᵛनि ᵛदीधः निदधारादितिः स्वोदरे ॥

विश्वे यद्वां मंहना मन्दमानाः क्षत्रं देवासो अदधुः सजोषाः।
परि यद्भूथो रोदसी चिदुर्वी सन्ति स्पशो अदब्धासो अमूराः ॥ ५ ॥

विश्वे। यत्। वाम्। मंहना। मन्दमानाः। क्षत्रम्। देवासः। अदधुः। सऽजोषाः।
परि। यत्। भूथः। रोदसी इति। चित्। उर्वी इति। सन्ति। स्पशः। अदब्धासः। अमूराः ॥५॥

ᵛविश्वे सर्वे ᵛदेवासः देवाः ᵛसजोषाः परस्परं प्रीतियुक्ताः ᵛयत् यौ ᵛवां युवां ᵛमंहना महत्त्वेन ᵛमन्दमानाः स्तुवन्तः ᵛक्षत्रं बलम् ᵛअदधुः धत्तवन्तः। किंच ᵛयत् यौ युवाम् ᵛउर्वी विस्तीर्णे ᵛरोदसी द्यावापृथिव्यौ ᵛपरि ᵛभूथः परिभवथः तयोर्युवयोः ᵛअदब्धासः अहिंसिताः ᵛअमूराः अमूढाः ᵛस्पशः रश्मयश्चरा वा ᵛसन्ति ॥ ॥ ९ ॥

१. झ–हूयमाना आहूयमानौ।

ता हि क्षत्रं धारयेथे अनु द्यून्दृंहेथे सानुमुपमादिव द्योः ।
दृळ्हो नक्षत्र उत विश्वदेवो भूमिमातान्द्यां धासिनायोः ॥ ६ ॥

ता । हि । क्षत्रम् । धारयेथे इति । अनु । द्यून् । दृंहेथे इति । सानुम् । उपमात्ऽइव । द्योः ।
दृळ्हः । नक्षत्रः । उत । विश्वऽदेवः । भूमिम् । आ । अतान् । द्याम् । धासिना । आयोः ॥६॥

ᵛता तौ मित्रावरुणौ युवाम् ᵛअनु ᵛद्यून् दिवसे दिवसे ᵛक्षत्रं बलं ᵛधारयेथे ᵛहि । ᵛद्योः अन्तरिक्षस्य ᵛसानुं समुच्छ्रितप्रदेशं मेघं सूर्यं वा ᵛदृंहेथे दृढीकुरुतम् । ᵛउपमादिव । उपमीयते प्रक्षिप्यते इति उपमात् स्थूणा । सा यथा वत्सं धारयति तद्वदित्यर्थः । ᵛदृळ्हः युवाभ्यां दृढीकृतश्च मेघः ᵛनक्षत्रः अन्तरिक्षं व्याप्नुवानः ᵛउत अपि च ᵛविश्वदेवः सूर्यः ᵛभूमिं ᵛद्यां दिवं च ᵛआयोः मनुष्यस्य । 'द्रुह्यवः आयवः' इति मनुष्यनामसु पाठात् । ᵛधासिना अन्नेन हविषा । 'क्षुत् धासिः' इत्यन्ननामसु पाठात् । आप्यायितः सन् ᵛआतान् आतनोति युवाभ्यां दृढीकृत एव ॥

ता विप्रं धैथे जठरं पृणध्या आ यत्सद्म सभृतयः पृणन्ति ।
न मृष्यन्ते युवतयोऽवाता वि यत्पयो विश्वजिन्वा भरन्ते ॥ ७ ॥

ता । विप्रम् । धैथे इति । जठरम् । पृणध्यै । आ । यत् । सद्म । सऽभृतयः । पृणन्ति ।
न । मृष्यन्ते । युवतयः । अवाताः । वि । यत् । पयः । विश्वऽजिन्वा । भरन्ते ॥ ७ ॥

ᵛता तौ मित्रावरुणौ युवां ᵛविप्रं प्राज्ञं[1] यजमानम् । 'विप्रः विग्रः' इति मेधाविनामसु पाठात् । ᵛधैथे धारयथः ᵛजठरम् उदरं ᵛपृणध्यै सोमेन पूरयितुम् । ᵛयत् यदा ᵛसभृतयः सह भ्रियमाणा ऋत्विजः ᵛसद्म यज्ञसदनम् ᵛआ ᵛपृणन्ति आपूरयन्ति । ᵛविश्वजिन्वा हे विश्वजिन्वानौ ᵛयत् यदा ᵛपयः जलं भवद्भ्यां प्रहितं तदा ᵛयुवतयः नद्यः दिशो वा ᵛन ᵛमृष्यन्ते रजसा नाभिभूयन्ते । ᵛअवाताः अशुष्काश्च ᵛवि ᵛभरन्ते विभूतिं धारयन्ति ॥

ता जिह्वया सदमेदं सुमेधा आ यद्वां सत्यो अरतिर्ऋते भूत् ।
तद्वां महित्वं घृतान्नावस्तु युवं दाशुषे वि चयिष्टमंहः ॥ ८ ॥

ता । जिह्वया । सदम् । आ । इदम् । सुऽमेधाः । आ । यत् । वाम् । सत्यः । अरतिः । ऋते । भूत् ।
तत् । वाम् । महिऽत्वम् । घृतऽअन्नौ । अस्तु । युवम् । दाशुषे । वि । चयिष्टम् । अंहः ॥८॥

ᵛता तौ मित्रावरुणौ युवां ᵛसुमेधाः प्राज्ञः ᵛजिह्वया वाचा ᵛसदं सर्वदा ᵛइदं जलम् ᵛआ याचते । आ इत्युपसर्गदर्शनात् योग्यक्रियाध्याहारात् याचत इत्यध्याह्रियते । पूर्वस्यामृचि जलस्य प्रकृतत्वात् बुद्धौ विपरिवर्तमानं जलमिदंशब्देन परामृश्यते । ᵛयत् यदा ᵛवां युवयोः ᵛअरतिः अभिगन्ता ᵛऋते यज्ञे ᵛसत्यः मायारहितः ᵛआ ᵛभूत् आभवति हे ᵛघृतान्नौ ᵛतत् ᵛमहित्वम् अपेक्षितप्रदातृत्वलक्षणं ᵛवां युवयोः ᵛअस्तु । किंच ᵛयुवं युवां ᵛदाशुषे दाशुषो यजमानस्य ॥ षष्ठ्यर्थे चतुर्थी ॥ ᵛअंहः पापं ᵛवि ᵛचयिष्टं विनाशयतमित्यर्थः ॥

१. ख-भ–मेधाविनम् ।

प्र यद्वां मित्रावरुणा स्पूर्धन्प्रिया धाम युवधिता मिनन्ति ।
न ये देवास ओहसा न मर्ता अयज्ञसाचो अप्यो न पुत्राः ॥ ९ ॥

प्र । यत् । वाम् । मित्रावरुणा । स्पूर्धन् । प्रिया । धाम । युवऽधिता । मिनन्ति ।
न । ये । देवासः । ओहसा । न । मर्ताः । अयज्ञऽसाचः । अप्यः । न । पुत्राः ॥ ९ ॥

हे मित्रावरुणौ वां युवयोः प्रिया प्रियाणि धाम धामानि कर्माणि युवधिता युवाभ्यां विहितानि यत् ये[1] अयजन्तो जनाः[1] स्पूर्धन् स्पर्धमानाः प्र मिनन्ति हिंसन्ति। ये च देवासः देवाः ओहसा वहनसाधनेन स्तोत्रेण न युज्यन्ते । मर्ताः मनुष्याश्च ओहसा न युज्यन्ते । ये च अप्यः । अपः कर्म । तद्वन्तः अयज्ञसाचः न[2] यज्ञयुक्ताः[2] वृथाकर्माणि कुर्वन्त[3] इत्यर्थः[3] । ये च न पुत्राः । पृणन्तीति पुत्राः । न पुत्रा अपृणन्त इत्यर्थः । तान् सर्वान् वि चयिष्टमित्यनुषज्यते ॥

वि यद्वाचं कीस्तासो भरन्ते शंसन्ति के चिन्निविदो मनानाः ।
आद्वां ब्रवाम सत्यान्युक्था नकिर्देवेभिर्यतथो महित्वा ॥ १० ॥

वि । यत् । वाचम् । कीस्तासः । भरन्ते । शंसन्ति । के । चित् । निऽविदः । मनानाः ।
आत् । वाम् । ब्रवाम । सत्यानि । उक्था । नकिः । देवेभिः । यतथः । महिऽत्वा ॥ १० ॥

यत् यदा कीस्तासः मेधाविन उद्गातारः । 'उशिजः कीस्तासः' इति मेधाविनामसु पाठात् । वाचं स्तुतिं वि भरन्ते पृथक् उच्चारयन्ति तदा के चित् बह्वृचाः मनानाः अग्न्यादीन् स्तुवन्तः निविदः शंसन्ति । आत् तथा सति वां युवाभ्यां सत्यानि उक्थानि स्तोत्राणि वयं ब्रवाम । महित्वा महत्वेन देवेभिः अन्यैर्देवैः सह नकिः यतथः न गच्छथः ॥

अवोरित्था वां छर्दिषो अभिष्टौ युवोर्मित्रावरुणावस्कृधोयु ।
अनु यद्गावः स्फुरानृजिप्यं धृष्णुं यद्रणे वृषणं युनजन् ॥ ११ ॥

अवोः । इत्था । वाम् । छर्दिषः । अभिष्टौ । युवोः । मित्रावरुणौ । अस्कृधोयु ।
अनु । यत् । गावः । स्फुरान् । ऋजिप्यम् । धृष्णुम् । यत् । रणे । वृषणम् । युनजन् ॥ ११ ॥

हे मित्रावरुणौ अवोः अवतोः वां युवयोः अभिष्टौ अभिगमने छर्दिषः गृहाय सुखाय वा । चतुर्थ्यर्थे षष्ठी । युवामभिगतेषु स्तोतृषु युवोः युवयोः संबन्धि[4] युवाभ्यां देयं तद्गृहादिकम् अस्कृधोयु अविच्छिन्नं भवति । तथा च यास्कः—'अस्कृधोयुरकृध्वायुः । कृध्विति ह्रस्वनाम निकृत्तं भवति' ( निरु. ६. ३ ) इति । इत्था सत्यमेव । कदा मित्रावरुणयोरभिगमनमित्यत आह । यत् यदा गावः स्तुतयः अनु स्फुरान् अनुस्फुरेयुः । यदा[5] च ऋजिप्यम् ऋजुगामिनं धृष्णुं शत्रूणां धर्षकं वृषणं कामानां वर्षितारं सोमं रणे रमणे यज्ञे युनजन् यजमाना युञ्ज्युः ॥ ॥ १० ॥

---

१. ख-झ-त-भ—ये यजः; न—ये यज्ञाः; श—ये यजमानाः । २. ख-झ-त-न-भ-श—यज्ञयुक्ता न । ३. ख-त-न-श—कुर्वन्तीत्यर्थः; झ-भ—कुर्वतीत्यर्थः । ४. ख-झ-न-भ—'संबन्धि' नास्ति । ५. ख-झ-न-भ—तदा ।

'श्रुष्टी वाम्' इत्येकादशर्चं सप्तमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रावरुणम्। तथा चानुक्रम्यते– 'श्रुष्टी वामैन्द्रावरुणमुपान्त्ये जगत्यौ' इति। 'प्र सम्राजे, इन्द्रावरुणा सुतपौ' इत्येते जगत्यौ शिष्टास्त्रिष्टुभः। इन्द्रावरुणौ देवता। आभिप्लविकेषूक्थ्येषु तृतीयसवने होत्रकशस्त्रेषु स्तोमवृद्धौ मैत्रावरुणस्येदमावापार्थं सूक्तम्। सूत्रितं च– 'श्रुष्टी वां यज्ञो युवां नरा' (आश्व. श्रौ. ७. ९) इति। तृतीयसवने 'इन्द्रावरुणा सुतपाविमं सुतम्' इति प्रशास्तुः प्रस्थितयाज्या। सूत्रितं च–'इन्द्रावरुणा सुतपाविमं सुतमिन्द्रश्च सोमं पिबतं बृहस्पते' (आश्व. श्रौ. ५. ५) इति। उक्थ्ये तृतीयसवने 'इन्द्रावरुणा मधुमत्तमस्य' इति मैत्रावरुणस्य शस्त्रयाज्या। सूत्रितं च—'इन्द्रावरुणा मधुमत्तमस्येति याज्या' (आश्व. श्रौ. ६. १) इति॥

श्रुष्टी वां यज्ञ उद्यतः सजोषा मनुष्वद्वृक्तबर्हिषो यजध्यै।
आ य इन्द्रावरुणाविषे अद्य महे सुम्नाय मह आववर्तत्॥ १॥

श्रुष्टी। वाम्। यज्ञः। उत्ऽयतः। सऽजोषाः। मनुष्वत्। वृक्तऽबर्हिषः। यजध्यै।
आ। यः। इन्द्रावरुणौ। इषे। अद्य। महे। सुम्नाय। महे। आऽववर्तत्॥ १॥

ᵛमहे मंहनीयौ हे ᵛइन्द्रावरुणौ ᵛवां युवयोरर्थे ᵛश्रुष्टी क्षिप्रः। तथा च यास्कः—'श्रुष्टीति क्षिप्रनामाशु अष्टीति' (निरु. ६. १२)। ᵛयज्ञः सोमः ᵛसजोषाः ऋत्विग्भिः सहितः ᵛअद्य ᵛआ समन्तात् ᵛउद्यतः प्रवृत्तः। ᵛयः सोमः ᵛमनुष्वत् मनोरिव ᵛवृक्तबर्हिषः स्तीर्णबर्हिषः यजमानस्य ᵛइषे अन्नार्थं ᵛमहे महते ᵛसुम्नाय सुखाय च ᵛयजध्यै यष्टुं वाम् ᵛआववर्तत् आवर्तयति॥

ता हि श्रेष्ठा देवताता तुजा शूराणां शविष्ठा ता हि भूतम्।
मघोनां मंहिष्ठा तुविशुष्म ऋतेन वृत्रतुरा सर्वसेना॥ २॥

ता। हि। श्रेष्ठा। देवऽताता। तुजा। शूराणाम्। शविष्ठा। ता। हि। भूतम्।
मघोनाम्। मंहिष्ठा। तुविऽशुष्मा। ऋतेन। वृत्रऽतुरा। सर्वऽसेना॥ २॥

हे इन्द्रावरुणौ ᵛता तौ प्रसिद्धौ युवां ᵛश्रेष्ठा श्रेष्ठौ ᵛदेवताता देवतातौ यज्ञे। 'इष्टिः देवताता' इति यज्ञनामसु पाठात्। ᵛतुजा धनानां प्रेरकौ ᵛहि ᵛभूतं भवतम्। किंच ᵛता तौ ᵛहि युवां ᵛशूराणां मध्ये ᵛशविष्ठा अतिशयेन बलवन्तौ भूतम्। किंच ᵛमघोनां[1] दानवतां ᵛमंहिष्ठा दातृतमौ ᵛतुविशुष्मा बहुबलौ ᵛऋतेन सत्येन ᵛवृत्रतुरा शत्रूणां हिंसकौ ᵛसर्वसेना कृत्स्नसेनौ च भूतमिति॥

ता गृणीहि नमस्येभिः शूषैः सुम्नेभिरिन्द्रावरुणा चकाना।
वज्रेणान्यः शवसा हन्ति वृत्रं सिषक्त्यन्यो वृजनेषु विप्रः॥ ३॥

ता। गृणीहि। नमस्येभिः। शूषैः। सुम्नेभिः। इन्द्रावरुणा। चकाना।
वज्रेण। अन्यः। शवसा। हन्ति। वृत्रम्। सिसक्ति। अन्यः। वृजनेषु। विप्रः॥ ३॥

---

१. ख-क्ष-न-भ-मघोनां देवानाम्।

हे भरद्वाज ᵛनमस्येभिः स्तुत्यैः ᵛशूषैः बलैः । 'शूषम्' इति बलनामसु पाठात् । ᵛसुम्नेभिः सुखैश्च सर्वैः ᵛचकाना स्तुतौ ॥ कायतिः शब्दकर्मा । तस्य लिटः कानचि रूपमिदम् ॥ ᵛता ताविन्द्रावरुणौ ᵛगृणीहि स्तुहि । ᵛअन्यः तयोरन्य इन्द्रः ᵛवृत्रं वृत्रनामकमसुरं ᵛवज्रेण ᵛहन्ति । ᵛअन्यः वरुणः ᵛविप्रः प्राज्ञः ᵛवृजनेषु स्तोतॄणामुपद्रवेषु रक्षितुं ᵛशवसा बलेन ᵛसिषक्ति संगच्छते ॥

**ग्नाश्च यन्नरश्च वावृधन्त विश्वे देवासो नरां स्वगूर्ताः ।**
**प्रैभ्य इन्द्रावरुणा महित्वा द्यौश्च पृथिवि भूतमुर्वी ॥ ४ ॥**

ग्नाः । च । यत् । नरः । च । ववृधन्त । विश्वे । देवासः । नराम् । स्वऽगूर्ताः ।
प्र । एभ्यः । इन्द्रावरुणा । महिऽत्वा । द्यौः । च । पृथिवि । भूतम् । उर्वी इति ॥ ४ ॥

ᵛनरां नृणां मनुष्याणां मध्ये ᵛग्नाश्च स्त्रियश्च । 'मेना ग्ना इति स्त्रीणाम्' ( निरु. ३ . २१ ) इति यास्कवचनात् । ᵛनरश्च पुरुषाश्च ᵛविश्वे सर्वे ᵛदेवासः देवाः स्तोतारः ॥ देवासः इत्यत्र 'पुमान् स्त्रिया' इत्येकशेषात् देव्यश्च देवाश्च देवास इति निर्देशः पुंवन्निर्देशः ॥ ᵛस्वगूर्ताः स्वयमुद्यताः ᵛयत् यदा ᵛववृधन्त स्तुतिभिर्वर्धयन्ते[1] तदा हे इन्द्रावरुणौ ᵛमहित्वा महत्त्वयुक्तौ ᵛएभ्यः स्तोतृभ्यः ᵛप्र ᵛभूतं प्रभवतम् । हे ᵛद्यौः ᵛपृथिवि ᵛच उभे ᵛउर्वी विस्तीर्णे युवामेभ्यः प्र भूतमित्यनुषङ्गः ॥

**स इत्सुदानुः स्ववाँ ऋतावेन्द्रा यो वां वरुण दाशति त्मन् ।**
**इषा स द्विषस्तरेद्दास्वान्वंसद्रयिं रयिवतश्च जनान् ॥ ५ ॥**

सः । इत् । सुऽदानुः । स्वऽवान् । ऋतऽवा । इन्द्रा । यः । वाम् । वरुणा । दाशति । त्मन् ।
इषा । सः । द्विषः । तरेत् । दास्वान् । वंसत् । रयिम् । रयिऽवतः । च । जनान् ॥ ५ ॥

हे ᵛइन्द्रा इन्द्रौ ᵛवरुणा हे वरुणौ ॥ इतरेतरयोगादुभयत्र द्विवचनप्रयोगः । वरुणेत्यत्र संहितायां ह्रस्वश्छान्दसः ॥ ᵛवां युवाभ्यां ᵛयः यजमानः ᵛत्मन् आत्मनैव ᵛदाशति हवींषि ददाति ᵛस ᵛइत् स एव ᵛसुदानुः शोभनदानो भवति । ᵛस्ववान् धनवांश्च ᵛऋतावा यज्ञवांश्च भवति । किंच ᵛसः ᵛदास्वान् दानवान् ᵛद्विषः द्वेष्टॄः ᵛइषा अन्नेन जयलब्धेन सह ᵛतरेत् प्राप्येत । अपि च ᵛरयिं धनं ᵛरयिवतः धनवतः ᵛजनान् पुत्रान् ᵛच ᵛवंसत् संभजेत्[2] ॥ ॥ ११ ॥

**यं युवं दाश्वध्वराय देवा रयिं धत्थो वसुमन्तं पुरुक्षुम् ।**
**अस्मे स इन्द्रावरुणावपि ष्यात्प्र यो भनक्ति वनुषामशस्तीः ॥ ६ ॥**

यम् । युवम् । दाशुऽअध्वराय । देवा । रयिम् । धत्थः । वसुऽमन्तम् । पुरुऽक्षुम् ।
अस्मे इति । सः । इन्द्रावरुणौ । अपि । स्यात् । प्र । यः । भनक्ति । वनुषाम् । अशस्तीः ॥ ६ ॥

ᵛदेवा देवौ स्तूयमानौ हे ᵛइन्द्रावरुणौ ᵛयुवं युवां ᵛदाश्वध्वराय दत्तहविष्काय ᵛवसुमन्तं धनानुबन्धिनं ᵛपुरुक्षुं बहन्नं पूर्णयशस्कं वा ᵛयं यादृशं ᵛरयिं धनं ᵛधत्थः प्रयच्छथः । ᵛयः ᵛअपि च ᵛवनुषां हिंसकानाम् ᵛअशस्तीः अकीर्तीः । शत्रुकृतान्ययशांसीत्यर्थः । ᵛप्र ᵛभनक्ति प्ररुजति ᵛसः तादृशो रयिः ᵛअस्मे अस्मासु ᵛस्यात् भूयात् ॥

---

१. य–स्तुत्या वर्धन्ते वर्धयन्ति । २. ख-ञ-भ–संभजते; न-श– संभजेत ।

उत नः सुत्रात्रो देवगोपाः सूरिभ्य इन्द्रावरुणा रयिः ष्यात् ।
येषां शुष्मः पृतनासु साह्वान्प्र सद्यो द्युम्ना तिरते ततुरिः ॥ ७ ॥

उत । नः । सुऽत्रात्रः । देवऽगोपाः । सूरिऽभ्यः । इन्द्रावरुणा । रयिः । स्यात् ।
येषाम् । शुष्मः । पृतनासु । सह्वान् । प्र । सद्यः । द्युम्ना । तिरते । ततुरिः ॥ ७ ॥

ᵛउत अपि च ᵛइन्द्रावरुणा हे इन्द्रावरुणौ ᵛसूरिभ्यः स्तोतृभ्यः ᵛनः अस्मभ्यं ᵛसुत्रात्रः सुरक्षः ᵛदेवगोपाः । देवा गोपा गोप्तारो यस्य स तथाविधः । ᵛरयिः धनं ᵛस्यात् भूयात् । किंच ᵛयेषाम् अस्माकं ᵛशुष्मः बलं ᵛपृतनासु युद्धेषु ᵛसाह्वान् शत्रूणामभिभविता ᵛततुरिः हिंसकश्च सन् ᵛद्युम्ना यशांसि ᵛसद्यः एव ᵛप्र ᵛतिरते सम्यक् तिरस्कुर्यात् ॥

नू न इन्द्रावरुणा गृणाना पृङ्क्तं रयिं सौश्रवसाय देवा ।
इत्था गृणन्तो महिनस्य शर्धोऽपो न नावा दुरिता तरेम ॥ ८ ॥

नु । नः । इन्द्रावरुणा । गृणाना । पृङ्क्तम् । रयिम् । सौश्रवसाय । देवा ।
इत्था । गृणन्तः । महिनस्य । शर्धः । अपः । न । नावा । दुःऽइता । तरेम ॥ ८ ॥

हे ᵛइन्द्रावरुणा इन्द्रावरुणौ ᵛगृणाना स्तूयमानौ युवां ᵛनः अस्मभ्यं ᵛसौश्रवसाय । सुश्रवसो भावः सौश्रवसम् । तस्मै सुश्रवस्त्वाय[1] ᵛरयिं धनं ᵛनु क्षिप्रं ᵛपृङ्क्तं प्रयच्छतम् । किंच ᵛदेवा हे देवौ ᵛमहिनस्य महतोर्युवयोः ᵛशर्धः बलम् ᵛइत्था इत्थं ᵛगृणन्तः स्तुवन्तो वयं ᵛदुरिता दुरितानि ᵛनावा ᵛअपो ᵛन उदकानीव ᵛतरेम ॥

प्र सम्राजे बृहते मन्म नु प्रियमर्च देवाय वरुणाय सप्रथः ।
अयं य उर्वी महिना महिव्रतः क्रत्वा विभात्यजरो न शोचिषा ॥ ९ ॥

प्र । सम्ऽराजे । बृहते । मन्म । नु । प्रियम् । अर्च । देवाय । वरुणाय । सऽप्रथः ।
अयम् । यः । उर्वी इति । महिना । महिऽव्रतः । क्रत्वा । विऽभाति । अजरः । न । शोचिषा ॥९॥

हे स्तोतः ᵛसम्राजे आज्ञया राज्ञां शासकाय ᵛबृहते परिवृढाय ᵛदेवाय द्योतमानाय ᵛवरुणाय ᵛप्रियं मनोहरं ᵛसप्रथः सर्वतः पृथु । तथा च यास्कः—‘ सप्रथाः सर्वतः पृथुः ’ ( निरु. ६. ७ ) इति । ᵛमन्म स्तोत्रं ᵛनु अद्य ᵛप्र ᵛअर्च प्रोच्चारय । ᵛअयं ᵛयः योऽयं वरुणः ᵛमहिना महिम्ना युक्तः ᵛमहिव्रतः[2] महाकर्मा ᵛक्रत्वा प्रज्ञया च युक्तः ᵛअजरो ᵛन जरारहितश्च ᵛउर्वी विस्तीर्णे द्यावापृथिव्यौ ᵛशोचिषा दीप्त्या ᵛविभाति विभासयति ॥

इन्द्रावरुणा सुतपाविमं सुतं सोमं पिबतं मद्यं धृतव्रता ।
युवो रथो अध्वरं देववीतये प्रति स्वसरमुप याति पीतये ॥ १० ॥

इन्द्रावरुणा । सुतऽपौ । इमम् । सुतम् । सोमम् । पिबतम् । मद्यम् । धृतऽव्रता ।
युवोः । रथः । अध्वरम् । देवऽवीतये । प्रति । स्वसरम् । उप । याति । पीतये ॥ १० ॥

---

१. ख-भ–सौश्रवसाय; झ-न–सुयअवस्वाय; श–सुयशस्त्वाय । २. ख-झ-न-भ–महिव्रतो महाव्रतः ।

ᵛइन्द्रावरुणा हे इन्द्रावरुणौ ᵛसुतपौ सुतस्य सोमस्य पातारौ युवां ᵛमद्यं मदकरं ᵛसुतम् अभिषुतम् ᵛइमं ᵛसोमं ᵛपिबतम् । किंच ᵛधृतव्रता हे धृतकर्माणौ ᵛयुवोः युवयोः ᵛरथः ᵛअध्वरम् उद्दिश्य ᵛदेववीतये देवानां पानार्थं ᵛपीतये युवयोरपि सोमपानार्थं ᵛस्वसरं मार्गं ᵛप्रति ᵛउप ᵛयाति ॥

**इन्द्रा॑वरुणा॒ मधु॑मत्तमस्य॒ वृष्ण॒ः सोम॑स्य वृष॒णा वृ॑षेथाम् ।**
**इ॒दं वा॒मन्ध॒ः परि॑षिक्तम॒स्मे आ॒सद्या॒स्मिन्ब॒र्हिषि॑ मादयेथाम् ॥ ११ ॥**

इन्द्रा॑वरुणा । मधु॑मत्ऽतमस्य । वृष्ण॑ः । सोम॑स्य । वृ॒षणा । आ । वृ॒षेथाम् ।
इ॒दम् । वा॒म् । अन्ध॑ः । परि॑ऽसिक्तम् । अ॒स्मे इति॑ ।
आ॒ऽसद्य॑ । अ॒स्मिन् । ब॒र्हिषि॑ । मा॒दये॑थाम् ॥ ११ ॥

ᵛइन्द्रावरुणा हे इन्द्रावरुणौ ᵛवृषणा कामानां वर्षितारौ युवां ᵛमधुमत्तमस्य अतिशयेन मधुमन्तं[1] रसवन्तं ᵛवृष्णः वर्षितारं ᵛसोमस्य सोमम् ᵛआ ᵛवृषेथाम् अश्नीतम् । तथा च शतपथ-ब्राह्मणं—' यथाभागमावृषायध्वमिति यथाभागमश्नीतेत्येवैतदाह ' ( श. ब्रा. २. ४. २. २० ) इति । ᵛवां युवयोरर्थे ᵛइदम् ᵛअन्धः सोमरूपमन्नम् ᵛअस्मे अस्माभिः ᵛपरिषिक्तं पात्रेषु । अतः ᵛआसद्य उपविश्य ᵛअस्मिन् ᵛबर्हिषि यज्ञे ᵛमादयेथां सोमपानेनेति शेषः ॥ ॥ १२ ॥

' सं वां कर्मणा ' इत्यष्टर्चमष्टमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रावैष्णवम् । अनुक्रम्यते च— ' सं वामष्टावैन्द्रावैष्णवम् ' इति । उक्थ्ये तृतीयसवनेऽच्छावाकशस्त्र एतत् सूक्तम् । सूत्र्यते हि—' सं वां कर्मणेन्द्राविष्णू मदपती मदानामिति याज्या ' ( आश्व. श्रौ. ६. १ ) इति । सोमातिरेके प्रातः-सवने नैमित्तिके शस्त्रे परिहिते सति गाणगारिमते ' सं वाम् ' इति तस्य शस्त्रयाज्या । सूत्रितं च— ' ऐन्द्रावैष्णव्येति गाणगारिर्दैवतप्रधानत्वात् सं वां कर्मणा समिषा हिनोमि ' ( आश्व. श्रौ. ६. ७ ) इति । सोमातिरेके माध्यंदिनसवने ' या विश्वासाम् ' इत्येषा शस्त्रयाज्या । सूत्रितं च— ' या विश्वासां जनितारा मतीनामिति याज्या ' ( आश्व. श्रौ. ६. ७ ) इति । उक्थ्ये तृतीयसवनेऽच्छा-वाकस्य ' इन्द्राविष्णू मदपती ' इति शस्त्रयाज्या । सूत्रं तूदाहृतम् । तृतीयसवनेऽच्छावाकस्य ' इन्द्रा-विष्णू पिबतम् ' इति प्रस्थितयाज्या । सूत्रितं च — ' इन्द्राविष्णू पिबतं मध्वो अस्येमं स्तोममर्हते जातवेदसे ' ( आश्व. श्रौ. ५. ५ ) इति ॥

**सं वां॒ कर्म॑णा॒ समि॒षा हि॑नो॒मीन्द्रा॑विष्णू॒ अप॑सस्पा॒रे अ॒स्य ।**
**जु॒षेथां॑ य॒ज्ञं द्रवि॑णं च धत्त॒मरि॑ष्टैर्नः प॒थिभि॑ः पा॒रय॑न्ता ॥ १ ॥**

सम् । वा॒म् । कर्म॑णा । सम् । इ॒षा । हि॒नो॒मि॒ । इन्द्रा॑विष्णू॒ इति॑ । अप॑सः । पा॒रे । अ॒स्य ।
जु॒षेथा॑म् । य॒ज्ञम् । द्रवि॑णम् । च॒ । ध॒त्त॒म् । अरि॑ष्टैः । न॒ः । प॒थिऽभि॑ः । पा॒रय॑न्ता ॥ १ ॥

हे ᵛइन्द्राविष्णू ᵛवां युवां ᵛकर्मणा स्तोत्रेण ᵛइषा हविषा च ᵛसं ᵛहिनोमि सम्यक् प्रेरयामि । ᵛअपसः कर्मणः ᵛअस्य उक्थस्य ᵛपारे समाप्तौ ᵛयज्ञं ᵛजुषेथां सेवेथाम् । किंच ᵛअरिष्टैः अनुपद्रवैः ᵛपथिभिः मार्गैः ᵛनः अस्मान् ᵛपारयन्ता पारं नयन्तौ युवां ᵛद्रविणं धनं ᵛधत्तम् अस्मभ्यं दत्तम् ॥

---

१. ख-घ-ङ-त-न-भ-श–' मधुमन्तं ' नास्ति ।

या विश्वासां जनितारा मतीनामिन्द्राविष्णू कलशा सोमधाना ।
प्र वां गिरः शस्यमाना अवन्तु प्र स्तोमासो गीयमानासो अर्कैः ॥ २ ॥

या । विश्वासाम् । जनितारा । मतीनाम् । इन्द्राविष्णू इति । कलशा । सोमऽधाना ।
प्र । वाम् । गिरः । शस्यमानाः । अवन्तु । प्र । स्तोमासः । गीयमानासः । अर्कैः ॥ २ ॥

या यौ प्रसिद्धौ इन्द्राविष्णू विश्वासां सर्वासां मतीनां स्तुतीनां जनितारा जनितारौ ॥ 'जन जनने' इत्यस्मात् धातोः तृचि इदं रूपम् । यद्वा । 'जनी प्रादुर्भावे' इत्यस्मात् धातोरेव तृचि 'जनिता मन्त्रे' इति निपातनात् णिलोपः ॥ कलशा कलशौ सोमधाना सोमस्य निधानभूतौ च स्याताम् । अथ प्रत्यक्षस्तुतिः । हे इन्द्राविष्णू वां युवां शस्यमानाः उच्चार्यमाणाः शस्त्ररूपाः गिरः वाचः प्र अवन्तु प्राप्नुवन्तु । अर्कैः स्तोतृभिः गीयमानासः गीयमानाः स्तोमासः स्तोमाः स्तोत्राणि च प्र अवन्तु प्राप्नुवन्तु ॥

इन्द्राविष्णू मदपती मदानामा सोमं यातं द्रविणो दधाना ।
सं वामञ्जन्त्वक्तुभिर्मतीनां सं स्तोमासः शस्यमानास उक्थैः ॥ ३ ॥

इन्द्राविष्णू इति । मदपती इति मदऽपती । मदानाम् । आ । सोमम् । यातम् । द्रविणो इति । दधाना ।
सम् । वाम् । अञ्जन्तु । अक्तुऽभिः । मतीनाम् । सम् । स्तोमासः । शस्यमानासः । उक्थैः ॥ ३ ॥

हे इन्द्राविष्णू मदानां सोमानां मदपती स्वामिनौ । मदपती इत्यत्र मदशब्दः[1] अनुवादः । द्रविणो द्रविणानि धनान्यपि ॥ द्रविणा उ इति पदद्वयमेकीभूय द्रविणो इति निष्पन्नं पदम् ॥ दधाना ददानौ युवां सोमम् अभि[2] आ यातम् । मतीनां स्तोतॄणां स्तोमासः स्तोत्राणि उक्थैः शस्त्रैः सार्धं शस्यमानासः उच्चार्यमाणाः वां युवाम् अक्तुभिः तेजोभिः सम् अञ्जन्तु[3] समर्धयन्तु । सं समिति द्विरुक्तिरादरार्था ॥

आ वामश्वासो अभिमातिषाह इन्द्राविष्णू सधमादो वहन्तु ।
जुषेथां विश्वा हवना मतीनामुप ब्रह्माणि शृणुतं गिरो मे ॥ ४ ॥

आ । वाम् । अश्वासः । अभिमातिऽसहः । इन्द्राविष्णू इति । सधऽमादः । वहन्तु ।
जुषेथाम् । विश्वा । हवना । मतीनाम् । उप । ब्रह्माणि । शृणुतम् । गिरः । मे ॥ ४ ॥

हे इन्द्राविष्णू वां युवाम् अभिमातिषाहः अभिमातीनां हिंसकानामभिभवितारः सधमादः सह माद्यन्तः अश्वासः अश्वाः आ वहन्तु । मतीनां स्तोतॄणां विश्वा विश्वानि सर्वाणि हवना हवनानि स्तोत्राणि जुषेथां सेवेथाम् । तदर्थं मे मदीयानि ब्रह्माणि स्तोत्राणि गिरः शस्त्ररूपा वाचश्च उप शृणुतम् ॥

---

1. क्ष-न-श-द्वेमदशब्दः । २. ख-भ-प्रति । ३. क्ष-त-न-य-श-समञ्जन्तु ।

इन्द्राविष्णू तत्पनयाय्यं वां सोमस्य मद उरु चक्रमाथे ।
अकृणुतमन्तरिक्षं वरीयोऽप्रथतं जीवसे नो रजांसि ॥ ५ ॥

इन्द्राविष्णू इति । तत् । पनयाय्यम् । वाम् । सोमस्य । मदे । उरु । चक्रमाथे इति ।
अकृणुतम् । अन्तरिक्षम् । वरीयः । अप्रथतम् । जीवसे । नः । रजांसि ॥ ५ ॥

हे इन्द्राविष्णू वां युवयोः तत् कर्म पनयाय्यं स्तुत्यम् । किं तत् कर्मेत्यत आह । सोमस्य मदे सति यत् उरु विस्तीर्णं चक्रमाथे विचक्रमाथे[1] । यद्यपि विष्णोरेव विक्रमः तथापि एकार्थत्वादुभयोरित्युच्यते । यच्च अन्तरिक्षं वरीयः उरुतरम् अकृणुतम् अकुरुतम् । यदपि च रजांसि लोकान् सर्वान् । 'लोका रजांस्युच्यन्ते' इति यास्कः । नः अस्माकं जीवसे जीवनाय अप्रथतम् अप्रथयतम् ॥

इन्द्राविष्णू हविषा वावृधानाग्राद्वाना नमसा रातहव्या ।
घृतासुती द्रविणं धत्तमस्मे समुद्रः स्थः कलशः सोमधानः ॥ ६ ॥

इन्द्राविष्णू इति । हविषा । ववृधाना । अग्रेऽअद्वाना । नमसा । रातऽहव्या ।
घृतासुती इति घृतऽआसुती । द्रविणम् । धत्तम् । अस्मे इति ।
समुद्रः । स्थः । कलशः । सोमऽधानः ॥ ६ ॥

घृतासुती घृताञ्चौ इन्द्राविष्णू युवां हविषा सोमेन वावृधाना वर्धमानौ अग्राद्वाना सोमाग्रस्य[2] शुक्रस्य अत्तारौ नमसा नमस्कारेण रातहव्या दत्तहविष्कौ यजमानैः अस्मे अस्मभ्यं द्रविणं धनं धत्तं प्रयच्छतम् । किंच युवां समुद्रः उदधिरिव स्थः भवथः । यतः सोमधानः सोमनिधानः कलशः भवथः ॥

इन्द्राविष्णू पिबतं मध्वो अस्य सोमस्य दस्रा जठरं पृणेथाम् ।
आ वामन्धांसि मदिराण्यग्मन्नुप ब्रह्माणि शृणुतं हवं मे ॥ ७ ॥

इन्द्राविष्णू इति । पिबतम् । मध्वः । अस्य । सोमस्य । दस्रा । जठरम् । पृणेथाम् ।
आ । वाम् । अन्धांसि । मदिराणि । अग्मन् । उप । ब्रह्माणि । शृणुतम् । हवम् । मे ॥ ७ ॥

दस्रा हे दर्शनीयौ इन्द्राविष्णू युवां मध्वो[3] अस्य मदकरमिमं सोमस्य सोमं पिबतम् । किंच जठरम् उदरं पृणेथां सोमेन पूरयेथाम् । हे इन्द्राविष्णू वां युवां[3] मदिराणि मदकराणि अन्धांसि सोमात्मकान्यन्नानि आ अग्मन् अभिगच्छन्तु । मे मदीयानि ब्रह्माणि स्तोत्राणि हवं मदीयमाह्वानं च उप शृणुतम् ॥

---

१. ख-घ-ङ-न-भ-श-' विचक्रमाथे ' नास्ति। २. ख-घ-ङ-न-भ-सोमस्य। ३. ख-ङ-न-भ-श-' मध्वो...युवां ' नास्ति; घ-मध्वः मधुरस्य मधुरमस्य सोमस्य इमं सोमं पिबतं जठरं पृणेथां पूरयेथाम् । वां युवाम्; त-अस्य सोमस्य इमं सोमं मध्वः मधुरं पिबतम् । तेन च जठरमुदरं सोमेन पृणेथां पूरयेथाम् । हे इन्द्राविष्णू वां युवाम् ।

उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः ।
इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् ॥ ८ ॥

उभा । जिग्यथुः । न । परा । जयेथे इति । न । परा । जिग्ये । कतरः । चन । एनोः ।
इन्द्रः । च । विष्णो इति । यत् । अपस्पृधेथाम् ।
त्रेधा । सहस्रम् । वि । तत् । ऐरयेथाम् ॥ ८ ॥

हे इन्द्राविष्णू ᵛउभा उभौ युवां ᵛजिग्यथुः शत्रूनजैष्टम् । ᵛन ᵛपरा ᵛजयेथे न पुनः कदाचन पराजयेथे । ᵛएनोः एनयोर्युवयोर्मध्ये ᵛकतरश्चन एकतरोऽपि ᵛन ᵛपरा ᵛजिग्ये न पराजैष्ट। हे ᵛविष्णो ᵛइन्द्रश्च[1] त्वं च युवां ᵛयत् यद्वस्तु प्रति ᵛअपस्पृधेथाम् असुरैः सहास्पृधेथां ᵛत्रेधा लोकवेदवागात्मना त्रिधा स्थितं ᵛसहस्रम् अमितं च ᵛवि ᵛतत् ᵛऐरयेथां व्यक्रमेथामित्यर्थः । तथा च ब्राह्मणम्—' उभा जिग्यथुरित्यच्छावाकस्योभौ हि तौ जिग्यतुर्न परा जयेथे न परा जिग्य इति न हि तयोः कतरश्चन पराजिग्य इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथामितीन्द्रश्च ह वै विष्णुश्चासुरैर्युयुधाते तान् ह स्म जित्वोचतुः कल्पामहा इति ते ह तथेत्यसुरा ऊचुः सोऽब्रवीदिन्द्रो यावदेवायं विष्णुस्त्रिर्विक्रमते तावदस्माकमथ युष्माकमितरदिति स इमाँल्लोकान्विचक्रमेऽथो वेदानथो वाचं तदाहुः किं तत्सहस्रमितीमे लोका इमे वेदा अथो वागिति ब्रूयादैरयेथामैरयेथाम् ' ( ऐ. ब्रा. ६·१५ ) इति । यद्वा । तत् सहस्रं गवां सहस्रं त्रेधा व्यैरयेथामित्यर्थः ॥ ॥ १३ ॥

' घृतवती भुवनानाम् ' इति षडृचं नवमं सूक्तं भरद्वाजस्यार्षं जागतं द्यावापृथिवीदेवताकम् । तथा चानुक्रम्यते—' घृतवती षट् द्यावापृथिवीयं[2] जागतम् ' इति । आभिप्लविके पञ्चमेऽहनि वैश्वदेवशस्त्र आद्यस्तृचो द्यावापृथिव्यनिविद्धानार्थः । सूत्रितं च—' घृतवती भुवनानामभिश्रियेन्द्र ऋभुभिर्वाजवद्भिरिति तृचौ ' ( आश्व. श्रौ. ७ . ७) इति । बृहस्पतिसवेऽपि वैश्वदेवशस्त्र एष तृचः । सूत्रितं च ( आश्व. श्रौ. ९ . ५ )। आभिप्लविके तृतीयेऽहनि वैश्वदेवशस्त्रे ' घृतेन द्यावापृथिवी ' इति तिस्रो द्यावापृथिव्यनिविद्धानार्थाः । सूत्रितं च– ' घृतेन द्यावापृथिवी इति तिस्रोऽनश्वो जातः ' ( आश्व. श्रौ. ७ . ७ ) इति ॥

घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा ।
द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥ १ ॥

घृतवती इति घृतऽवती । भुवनानाम् । अभिऽश्रिया ।
उर्वी इति । पृथ्वी इति । मधुदुघे इति मधुऽदुघे । सुऽपेशसा ।
द्यावापृथिवी इति । वरुणस्य । धर्मणा ।
विस्कभिते इति विऽस्कभिते । अजरे इति । भूरिऽरेतसा ॥ १ ॥

---

१. ख-ङ्ग-त-श–इन्द्र; घ–इन्द्रः । २. ख-ङ्ग-न-भ–द्यावापृथिव्यम् ।

द्यावापृथिवी द्यावापृथिव्यौ घृतवती दीप्तिमत्यौ उदकवत्यौ वा । 'वनं घृतम्' इत्युदकनामसु पाठात् । भवत इति शेषः । भुवनानां भूतानाम् अभिश्रिया अभिश्रयणीये[1] भवत इति सर्वत्रानुसंधेयम् । उर्वी विस्तीर्णे पृथ्वी बहुकार्यरूपेण प्रथिते च मधुदुघे मधुन उदकस्य दोग्ध्र्यौ सुपेशसा सुरूपे वरुणस्य सर्वस्य नियामकस्य धर्मणा धारणेन[2] विष्कभिते पृथग्धारिते अजरे नित्ये भूरिरेतसा बहुरेतस्के बहुकार्ये[3] वा भवतः[3]। अत्र साक्षात् द्यावापृथिव्योः स्तुतिः प्रसङ्गात् वरुणस्येति द्रष्टव्यम् ॥

अस॑श्चन्ती॒ भूरि॑धारे॒ पय॑स्वती घृ॒तं दु॑हाते सु॒कृते॒ शुचि॑व्रते ।
राज॑न्ती अ॒स्य भुव॑नस्य रोदसी अ॒स्मे रेतः॑ सिञ्चतं॒ यन्मनु॑र्हितम् ॥ २ ॥

अस॑श्चन्ती॒ इति॑ । भूरि॑धारे॒ इति॒ भूरि॑ऽधारे । पय॑स्वती॒ इति॑ ।
घृ॒तम् । दु॒हा॒ते॒ इति॑ । सु॒ऽकृते॑ । शुचि॑व्रते॒ इति॒ शुचि॑ऽव्रते ।
राज॑न्ती॒ इति॑ । अ॒स्य । भुव॑नस्य । रो॒द॒सी॒ इति॑ ।
अ॒स्मे इति॑ । रेतः॑ । सि॒ञ्च॒त॒म् । यत् । मनुः॑ऽहितम् ॥ २ ॥

असश्चन्ती असज्यमाने व्युदस्यन्त्यौ वा भूरिधारे बहुधारे । दिवो वृष्टिधाराः पृथिव्याश्चाहुत्युत्कृतरसधाराः । एवमुभयोरपि बहुधारत्वम्[4] । पयस्वती उदकवत्यौ । तथा च यास्कः– 'असज्यमाने इति वा व्युदस्यन्त्याविति वा बहुधारे उदकवत्यौ' (निरु. ५.२) इति । शुचिव्रते शुचिक्रिये द्यावापृथिव्यौ सुकृते शोभनकारिणे यजमानाय घृतं सस्यादिसमृद्धिहेतुमुदकं दुहाते । अथ प्रत्यक्षस्तुतिः । रोदसी हे द्यावापृथिव्यौ अस्य भुवनस्य भूतजातस्य राजन्ती ईशाने युवाम् अस्मे अस्मासु रेतः प्रजननसमर्थं वीर्यं सिञ्चतम् । यत् रेतः मनुर्हितं मनुष्येभ्यो हितम् ॥

यो वा॑मृ॒जवे॒ क्रम॑णाय रोदसी॒ मर्तो॑ द॒दाश॑ धिषणे॒ स साध॑ति ।
प्र प्र॒जाभि॑र्जायते॒ धर्म॑ण॒स्परि॑ यु॒वोः सि॒क्ता विषु॑रूपाणि॒ सव्र॑ता ॥ ३ ॥

यः । वा॒म् । ऋ॒जवे॑ । क्रम॑णाय । रो॒द॒सी॒ इति॑ । मर्तः॑ । द॒दाश॑ । धि॒ष॒णे॒ इति॑ । सः । सा॒ध॒ति॒ ।
प्र । प्र॒ऽजाभिः॑ । जा॒य॒ते॒ । धर्म॑णः । परि॑ । यु॒वोः । सि॒क्ता । विषु॑ऽरूपाणि । सऽव्र॑ता ॥ ३ ॥

धिषणे धृष्टे सर्वस्य भुवनस्य निवासभूते वा हे रोदसी वां युवाभ्यां यः मर्तः मर्त्यः ऋजवे क्रमणाय युवयोः सुखगमनाय ददाश हवींषि ददाति सः मर्त्यः साधति[5] कामान् साधयति । किंच प्रजाभिः पुत्रपौत्रादिभिः प्र जायते प्रवृद्धो भवति । धर्मणः कर्मणः परि उपरि युवोः युवयोः सिक्ता सिक्तानि रेतांसि विषुरूपाणि नानावर्णानि सव्रता समानकर्माणि भूतानि जायन्ते ॥

---

१. ख-घ-ङ-न-भ-श–अभिश्रयणीयेन । २. य–धारकेन । ३. य–बहुकार्येति भावः । ४. ख-ङ-न-भ–बहुधारम्; श–बहुधारं त्वम् । ५. ख-ङ-न-भ– स साधति ।

घृतेन द्यावापृथिवी अभीवृते घृतश्रिया घृतपृचा घृतावृधा ।
उर्वी पृथ्वी होतृवूर्ये पुरोहिते ते इद्विप्रा ईळते सुम्नमिष्टये ॥ ४ ॥

घृतेन । द्यावापृथिवी इति । अभिवृते इत्यभिऽवृते । घृतऽश्रिया । घृतऽपृचा । घृतऽवृधा ।
उर्वी इति । पृथ्वी इति । होतृऽवूर्ये । पुरोहिते इति पुरःऽहिते ।
ते इति । इत् । विप्राः । ईळते । सुम्नम् । इष्टये ॥ ४ ॥

ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛघृतेन उदकेन ᵛअभिवृते आवृते[1] भवतः। ᵛघृतश्रिया उदकं श्रयन्त्यौ च ᵛघृतपृचा घृतसंपृक्ते च ᵛघृतावृधा[2] घृतं वर्धयन्त्यौ च ᵛउर्वी विस्तीर्णे ᵛपृथ्वी प्रथिते च भवतः। ᵛहोतृवूर्ये[3] यज्ञे ᵛपुरोहिते यजमानैः पुरस्कृते च भवतः। ᵛविप्राः प्राज्ञाः[4] स्तोतारः ᵛते ᵛइत् द्यावापृथिव्यावेव ᵛइष्टये यज्ञाय। 'होत्रा इष्टिः' इति यज्ञनामसु पाठात्। ᵛसुम्नं सुखम् ᵛईळते याचन्ते। सुखे सति हि यागाः प्रवर्तन्ते ॥

मधु नो द्यावापृथिवी मिमिक्षतां मधुश्चुता मधुदुघे मधुव्रते ।
दधाने यज्ञं द्रविणं च देवता महि श्रवो वाजमस्मे सुवीर्यम् ॥ ५ ॥

मधु । नः । द्यावापृथिवी इति । मिमिक्षताम् ।
मधुऽश्चुता । मधुदुघे इति मधुऽदुघे । मधुव्रते इति मधुऽव्रते ।
दधाने इति । यज्ञम् । द्रविणम् । च । देवता ।
महि । श्रवः । वाजम् । अस्मे इति । सुऽवीर्यम् ॥ ५ ॥

ᵛमधुश्चुता उदकस्य क्षारयित्र्यौ ᵛमधुदुघे उदकदोग्ध्र्यौ ᵛमधुव्रते उदकार्यकर्माणौ ᵛदेवता देवताभूते ᵛअस्मे अस्मासु ᵛयज्ञं ᵛद्रविणं धनं ᵛच ᵛमहि महत् ᵛश्रवः यशः ᵛवाजम् अन्नं ᵛसुवीर्यं सुवीरत्वं च ᵛदधाने ददत्यौ ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛनः अस्मान् ᵛमधु मधुना॥ तृतीयैकवचनस्य लुक् ॥ ᵛमिमिक्षतां सिञ्चताम् ॥

ऊर्जं नो द्यौश्च पृथिवी च पिन्वतां पिता माता विश्वविदा सुदंससा ।
संरराणे रोदसी विश्वशंभुवा सनिं वाजं रयिमस्मे समिन्वताम् ॥ ६ ॥

ऊर्जम् । नः । द्यौः । च । पृथिवी । च । पिन्वताम् । पिता । माता । विश्वऽविदा । सुऽदंससा ।
संरराणे इति समऽरराणे । रोदसी इति । विश्वऽशंभुवा ।
सनिम् । वाजम् । रयिम् । अस्मे इति । सम् । इन्वताम् ॥ ६ ॥

---

१. ख-घ-ज्ञ-न-भ-श—अपवृते । २. ख-ज्ञ-त-न-भ-श—घृतवृधा । ३. ज्ञ—होतृवूर्ये होतृभिर्वरणीये । ४. ख-ज्ञ-न-भ—प्रजाः ।

vपिता वर्षस्य[1] सेक्तृत्वेन पितृभूता vद्यौश्च vमाता धारकत्वेन मातृभूता vपृथिवी vच उभे vनः अस्मभ्यम् vऊर्जम् अन्नं vपिन्वतां यच्छताम् । किंच vविश्वविदा विश्वं जानन्त्यौ विश्वस्य वेदयित्र्यौ वा vसुदंससा सुकर्माणौ vसंरराणे परस्परोपकार्योपकारकभावेन सह रममाणे vविश्वशंभुवा[2] सर्वस्य भावयित्र्यौ[2] vरोदसी द्यावापृथिव्यौ vअस्मे अस्मासु vसनिं संभजनीयं पुत्रादिकं vवाजं बलं vरयिं धनं च vसमिन्वतां संप्रेरयताम् ॥ ॥ १४ ॥

' उदु ष्य देवः ' इति षडृचं दशमं सूक्तं भरद्वाजस्यार्षं सवितृदेवताकम् । आद्यास्तिस्रो जगत्यश्चतुर्थ्याद्यास्तिस्रस्त्रिष्टुभः । तथा चानुक्रान्तम्—' उदु ष्य सावित्रं त्रित्रिष्टुबन्तम्[3] ' इति । सूक्तविनियोगो लैङ्गिकः । चातुर्विंशिकेऽहनि वैश्वदेवशस्त्रे आद्यस्तृचः सावित्रसूक्तस्थान आवपनीयः । सूत्रितं च—'उदु ष्य देवः सविता हिरण्ययेति तिस्रस्ते हि द्यावापृथिवी ' ( आश्व. श्रौ. ७ · ४ ) इति । बृहस्पतिसवेऽपि वैश्वदेवशस्त्रे सावित्रसूक्तस्थान एष तृचः । सूत्रितं च—' उदु ष्य देवः सविता हिरण्ययेत्यनूत्तिष्ठेत् ' (आश्व. श्रौ.९ · ५) इति । व्यूळ्हे पञ्चमेऽहनि वैश्वदेवशस्त्रे 'उदु ष्य देवः सविता दमूनाः ' इति तृचः सावित्रनिविद्धानार्थः । सूत्रितं च—'उदु ष्य देवः सविता दमूना इति तिस्रः ' ( आश्व. श्रौ. ८ · ८ ) इति । वैश्वदेवपर्वणि सावित्रद्वादशकपालस्य ' वाममद्य ' इति याज्या । सूत्रितं च—' वाममद्य सवितर्वाममु श्वः पूपन्त्तव व्रते वयम् ' ( आश्व. श्रौ. २ . १६ ) इति ॥

उदु ष्य देवः सविता हिरण्यया बाहू अयंस्त सवनाय सुक्रतुः ।
घृतेन पाणी अभि प्रुष्णुते मखो युवा सुदक्षो रजसो विधर्मणि ॥ १ ॥

उत् । ऊँ इति । स्यः । देवः । सविता । हिरण्यया । बाहू इति । अयंस्त । सवनाय । सुऽक्रतुः ।
घृतेन । पाणी इति । अभि । प्रुष्णुते । मखः । युवा । सुऽदक्षः । रजसः । विऽधर्मणि ॥१॥

vदेवः द्योतमानः vसुक्रतुः सुकर्मा vस्यः स प्रसिद्धः vसविता vहिरण्यया हिरण्मयौ आत्मीयौ vबाहू vसवनाय सुवनाय दानाय वा vउत् vअयंस्त उद्यच्छति । किंच vमखः मंहनीयः vयुवा नित्यतरुणः vसुदक्षः सुप्रज्ञः vरजसः लोकस्योदकस्य वा vविधर्मणि विधारणे स्थितः vघृतेन उदकेन पूर्णौ स्वौ vपाणी vअभि vप्रुष्णुते अभिप्रेरयति ॥

देवस्य वयं सवितुः सवीमनि श्रेष्ठे स्याम वसुनश्च दावने ।
यो विश्वस्य द्विपदो यश्चतुष्पदो निवेशने प्रसवे चासि भूमनः ॥ २ ॥

देवस्य । वयम् । सवितुः । सवीमनि । श्रेष्ठे । स्याम । वसुनः । च । दावने ।
यः । विश्वस्य । द्विऽपदः । यः । चतुःऽपदः । निऽवेशने । प्रऽसवे । च । असि । भूमनः ॥२॥

तस्य vदेवस्य vसवितुः प्रेरकस्य vसवीमनि प्रसवेऽनुज्ञाने । तथा च यास्कः—' सवीमनि प्रसवे ' ( निरु. ६ . ७ ) इति । vश्रेष्ठे अतिशयेन प्रशस्ते vवसुनः धनस्य vदावने दाने vच vस्याम समर्था भूयास्म । vयः त्वं vविश्वस्य सर्वस्य vद्विपदः vनिवेशने स्थितौ vप्रसवे vच स्वतन्त्रः vअसि । vयः त्वं vभूमनः भूरेः vचतुष्पदः निवेशने प्रसवे च स्वतन्त्रोऽसि ॥

---

१. ख-ज्ञ-न-भ-श–वर्षकस्य । २. ख-ज्ञ-त-न-भ-श–' विश्वशंभुवा...भावयित्र्यौ ' नास्ति । ३. ख-ज्ञ-न-भ-श–त्रिष्टुबन्तमिति ।

अदब्धेभिः सवितः पायुभिष्ट्वं शिवेभिरद्य परि पाहि नो गयम् ।
हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नो अघशंस ईशत ॥ ३ ॥

अदब्धेभिः । सवितरिति । पायुऽभिः । त्वम् । शिवेभिः । अद्य । परि । पाहि । नः । गयम् ।
हिरण्यऽजिह्वः । सुविताय । नव्यसे । रक्ष । माकिः । नः । अघऽशंसः । ईशत ॥ ३ ॥

हे सवितः अदब्धेभिः अहिंसितैः पायुभिः तेजोभिः रक्षणसाधनैर्वा शिवेभिः सुखकरैः नः अस्माकं गयं गृहं धनं वा । 'गयः कृदरः' इति गृहनामसु 'मीळ्हं गयः' इति धननामसु पाठात् । अद्य परि पाहि रक्ष । हिरण्यजिह्वः हितरमणीयवाक् त्वम् । तथा च यास्कः—'हिरण्यं कस्मात्' इत्युपक्रम्य 'हितरमणं भवतीति वा' (निरु. २ · १० ) इति । सुविताय सुखाय नव्यसे नवतराय भव । रक्ष[1] अस्मान्[1] पालय च । नः अस्माकम् अघशंसः अनर्थमाशंसमानः[2] शत्रुः[3] माकिः ईशत मेशत ॥

उदु ष्य देवः सविता दमूना हिरण्यपाणिः प्रतिदोषमस्थात् ।
अयोहनुर्यजतो मन्द्रजिह्व आ दाशुषे सुवति भूरि वामम् ॥ ४ ॥

उत् । ॐ इति । स्यः । देवः । सविता । दमूनाः । हिरण्यऽपाणिः । प्रतिऽदोषम् । अस्थात् ।
अयःऽहनुः । यजतः । मन्द्रऽजिह्वः । आ । दाशुषे । सुवति । भूरि । वामम् ॥ ४ ॥

देवः द्योतमानः दमूनाः दममनाः दानमना वा । तथा च यास्कः—'दमूना दममना वा दानमना[4] वा[4] दान्तमना वा' ( निरु. ४. ४ ) इति । हिरण्यपाणिः हिरण्मयपाणिः अयोहनुः हिरण्मयहनुः । 'रुक्मम् अयः' इति हिरण्यनामसु पाठात् । यजतः यष्टव्यः मन्द्रजिह्वः मोदमानवाक् स्यः सः सविता प्रतिदोषं प्रतिरात्रं रात्रेः अवसानेऽवसाने उत् अस्थात् उत्तिष्ठतु । यः दाशुषे यजमानाय मह्यं भूरि प्रभूतं वामं वननीयं संभजनीयमन्नम् । 'वामं वननीयम्' ( निरु. ६ · ३१ ) इति यास्कः । आ सुवति प्रेरयति ॥

उदू अयाँ उपवक्तेव बाहू हिरण्यया सविता सुप्रतीका ।
दिवो रोहांस्यरुहत्पृथिव्या अरीरमत्पतयत्कच्चिदभ्वम् ॥ ५ ॥

उत् । ॐ इति । अयान् । उपवक्ताऽइव । बाहू इति । हिरण्यया । सविता । सुऽप्रतीका ।
दिवः । रोहांसि । अरुहत् । पृथिव्याः । अरीरमत् । पतयत् । कत् । चित् । अभ्वम् ॥५॥

सविता उपवक्तेव अस्माकमधिवक्तेव हिरण्यया हिरण्मयौ सुप्रतीका शोभनावयवौ बाहू उत् अयान् उद्यच्छतु । योऽयं पृथिव्याः पृथिवीपर्यन्तात् दिवः अन्तरिक्षस्य रोहांसि उच्छ्रितप्रदेशान् अरुहत् रोहति । पतयत् गच्छत् कच्चित् यत्किंचित् अभ्वं महत् सर्वं वस्तुजातं तिरोहितम् अरीरमत् रमयति च ॥

---

१. ख-ज्ञ—रक्षणेस्मान्; घ—अस्मान् रक्ष; न-भ—रक्षणेन; श-रक्षणास्मान् । २. ख-भ—अघमा°; ज्ञ-न—अर्थमा° । ३. ख-ज्ञ-त-न-भ-श—शत्रुः नोऽस्माकम् । ४. ख-ज्ञ-न-भ—'दानमना वा' नास्ति ।

वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यं सावीः ।
वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥ ६ ॥

वामम् । अद्य । सवितः । वामम् । ऊँ इति । श्वः । दिवेऽदिवे । वामम् । अस्मभ्यम् । सावीः ।
वामस्य । हि । क्षयस्य । देव । भूरेः । अया । धिया । वामऽभाजः । स्याम ॥ ६ ॥

हे ᵛसवितः ᵛअस्मभ्यं ᵛवामं धनम् ᵛअद्य ᵛसावीः सुव । ᵛश्वः च ᵛवामं धनं प्रसुव । किं[1] बहूक्त्या[1] । ᵛदिवेदिवे प्रतिदिनं ᵛवामं धनं[2] प्रसुव । हे ᵛदेव ᵛहि यस्मात् ᵛक्षयस्य निवासभूतस्य ᵛभूरेः प्रभूतस्य ᵛवामस्य दातासि अतो वयम् ᵛअया अनया ᵛधिया स्तुत्या ᵛवामभाजः धनवन्तः ᵛस्याम भूयास्म ॥　　॥ १५ ॥

' इन्द्रासोमा महि ' इति पञ्चर्चमेकादशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमिन्द्रासोमदेवताकम् । अनुक्रम्यते च–' इन्द्रासोमा पञ्चैन्द्रासोमम् ' इति । सूक्तविनियोगो लैङ्गिकः ॥

इन्द्रासोमा महि तद्वां महित्वं युवं महानि प्रथमानि चक्रथुः ।
युवं सूर्यं विविदथुर्युवं स्व१र्विश्वा तमांस्यहतं निदश्च ॥ १ ॥

इन्द्रासोमा । महि । तत् । वाम् । महिऽत्वम् । युवम् । महानि । प्रथमानि । चक्रथुः ।
युवम् । सूर्यम् । विविदथुः । युवम् । स्वः । विश्वा । तमांसि । अहतम् । निदः । च ॥ १ ॥

ᵛइन्द्रासोमा हे इन्द्रासोमौ ᵛवां युवयोः ᵛतत् ᵛमहित्वं महत्त्वं ᵛमहि महत् । किं तदित्यत आह । ᵛयुवं युवां ᵛमहानि महान्ति ᵛप्रथमानि प्रतमानि[3] मुख्यानि वा भूतानि । ' प्रथम इति मुख्यनाम प्रतमो[4] भवति ' ( निरु. २·२२ ) इति यास्कः । ᵛचक्रथुः अकार्ष्टम् । किंच ᵛयुवं युवां ᵛसूर्यं ᵛविविदथुः अलम्भयतं च जनान् । ᵛयुवं युवां ᵛस्वः उदकं च विविदथुः । ' हेम स्वः ' इत्युदकनामसु पाठात् । अपि च ᵛविश्वा विश्वानि ᵛतमांसि ᵛनिदश्च निन्दितॄनसुरांश्च ᵛअहतम् अहिंस्तम् ॥

इन्द्रासोमा वासयथ उषासमुत्सूर्यं नयथो ज्योतिषा सह ।
उप द्यां स्कम्भथुः स्कम्भनेनाप्रथतं पृथिवीं मातरं वि ॥ २ ॥

इन्द्रासोमा । वासयथः । उषसम् । उत् । सूर्यम् । नयथः । ज्योतिषा । सह ।
उप । द्याम् । स्कम्भथुः । स्कम्भनेन । अप्रथतम् । पृथिवीम् । मातरम् । वि ॥ २ ॥

ᵛइन्द्रासोमा हे इन्द्रासोमौ ᵛउषसं ᵛवासयथः विवासयथः । उषसं व्युच्छन्तीं कारयथ इत्यर्थः । किंच ᵛसूर्यं ᵛज्योतिषा तेजसा ᵛसह ᵛउत् ᵛनयथः । अपि च ᵛद्यां

---

१. ख-झ-त-न-भ-य-श–किंच बहूक्त्या; घ–किच । २. ख-घ-झ-न-भ-श–'धनं' नास्ति । ३. ख-झ-त-न-भ-श–प्रततानि । ४. झ-न-श–प्रथमो ।

दिवं स्कम्भनेन स्तम्भनहेतुनान्तरिक्षेण[1] मध्ये स्थापितेन उप स्कम्भथुः अस्तम्भयतम्[2] । मातरं विश्वस्य मातृभूतां पृथिवीं वि अप्रथतं व्यप्रथयतम् ॥

इन्द्रासोमावहिमपः परिष्ठां हथो वृत्रमनु वां द्यौरमन्यत ।
प्रार्णांस्यैरयतं नदीनामा समुद्राणि पप्रथुः पुरूणि ॥ ३ ॥

इन्द्रासोमौ । अहिम् । अपः । परिऽस्थाम् । हथः । वृत्रम् । अनु । वाम् । द्यौः । अमन्यत ।
प्र । अर्णांसि । ऐरयतम् । नदीनाम् । आ । समुद्राणि । पप्रथुः । पुरूणि ॥ ३ ॥

हे इन्द्रासोमौ अहिं जगत आहन्तारम् अपः मेघस्थान्युदकानि परिष्ठां परिवृत्य स्थितं वृत्रम् असुरं हथः हतम् । तदानीं द्यौः वां युवाम् अनु अमन्यत । किंच नदीनाम् अर्णांसि उदकानि प्र ऐरयतम् । पुरूणि बहूनि । 'तुवि पुरु' इति बहुनामसु पाठात् । समुद्राणि उदकस्थानानि आ पप्रथुः उदकैरापूरयतं च । अथवा समुन्दन्तीत्युदकान्येव समुद्राणि । तानि रसेनापूरयतमित्यर्थः । तथा च यास्कः–'समुद्रः कस्मात्समुद्द्रवन्त्यस्मादापः समभिद्रवन्त्येनमापः संमोदन्तेऽस्मिन्भूतानि समुदको भवति समुनत्तीति[3] वा' (निरु. २·१०) इति ॥

इन्द्रासोमा पक्वमामास्वन्तर्नि गवामिद्दधथुर्वक्षणासु ।
जगृभथुरनपिनद्धमासु रुशच्चित्रासु जगतीष्वन्तः ॥ ४ ॥

इन्द्रासोमा । पक्वम् । आमासु । अन्तः । नि । गवाम् । इत् । दधथुः । वक्षणासु ।
जगृभथुः । अनपिऽनद्धम् । आसु । रुशत् । चित्रासु । जगतीषु । अन्तरिति ॥ ४ ॥

इन्द्रासोमा हे इन्द्रासोमौ आमासु अपक्वासु गवां वक्षणासु ऊधःसु अन्तः मध्ये पक्वं पयः नि दधथुः । किंच चित्रासु नानावर्णासु आसु जगतीषु गोषु । 'इळा जगती' इति गोनामसु पाठात् । अन्तः मध्ये अनपिनद्धं केनाप्यबद्धं रुशत् शुक्लवर्णं पयः जगृभथुः । यथा पृथिव्यां स्वयं न क्षरति तथा धारितवन्तावित्यर्थः । इत् इति पूरणः ॥

इन्द्रासोमा युवमङ्ग तरुत्रमपत्यसाचं श्रुत्यं रराथे ।
युवं शुष्मं नर्यं चर्षणिभ्यः सं विव्यथुः पृतनाषाहमुग्रा ॥ ५ ॥

इन्द्रासोमा । युवम् । अङ्ग । तरुत्रम् । अपत्यऽसाचम् । श्रुत्यम् । रराथे इति ।
युवम् । शुष्मम् । नर्यम् । चर्षणिऽभ्यः । सम् । विव्यथुः । पृतनाऽसहम् । उग्रा ॥ ५ ॥

इन्द्रासोमा हे इन्द्रासोमौ युवं युवां तरुत्रं तारकम् अपत्यसाचं संतानयुक्तं श्रुत्यं श्रवणीयं[4] रयिं धनम् अङ्ग क्षिप्रं रराथे अस्मभ्यं धत्थः । किंच उग्रा हे उद्गूर्णाविन्द्रासोमौ युवं युवां नर्यं नृभ्यो हितं पृतनासहं शत्रुसैन्याभिभावुकं[5] शुष्मं बलं चर्षणिभ्यः मनुष्येभ्यः । 'कृष्टयः चर्षणयः' इति मनुष्यनामसु पाठात् । सं विव्यथुः समतनुतम् । परिवेष्टयथो वा ॥ ॥१६॥

१. ख-घ-ङ्ग-त-न-भ–स्तम्भनेन हेतुना°; य–स्कम्भनहेतुना° । २. य–अस्कम्भयतम् । ३. ख-ङ्ग-न-भ-श–समुनत्तीति । ४. ख-ङ्ग-न-भ-श–श्रयणीयम् । ५. ख-ङ्ग-त-न-भ-श–'शत्रुसैन्याभिभावुकं' नास्ति ।

'यो अद्रिभित्' इति तृचं द्वादशं सूक्तं बार्हस्पत्यं भरद्वाजस्यार्षं त्रैष्टुभम्। तथा चानुक्रम्यते— 'यो अद्रिभित्तृचं बार्हस्पत्यम्' इति। आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिशस्त्रे स्तोमातिशंसनार्थमिदं सूक्तम्। सूत्र्यते हि—'यो अद्रिभिद्यज्ञे दिव इति सूक्ते' (आश्व. श्रौ. ७.९) इति। वाजपेये बार्हस्पत्ये चरौ 'बृहस्पतिः समजयद्वसूनीति - - - त्वामीळते अजिरं दूत्याय' (आश्व. श्रौ. ९.९) इति॥

यो अद्रिभित्प्रथमजा ऋतावा बृहस्पतिराङ्गिरसो हविष्मान्।
द्विबर्हज्मा प्राघर्मसत्पिता न आ रोदसी वृषभो रोरवीति ॥ १ ॥

यः। अद्रिऽभित्। प्रथमऽजाः। ऋतऽवा। बृहस्पतिः। आङ्गिरसः। हविष्मान्।
द्विबर्हऽज्मा। प्राघर्मऽसत्। पिता। नः। आ। रोदसी इति। वृषभः। रोरवीति ॥ १ ॥

ᵛयः ᵛबृहस्पतिः ᵛअद्रिभित् पणिभिर्विरचितानां शिलोच्चयानां भेत्ता मेघानां विदारको वा। 'अद्रिः ग्रावः' इति मेघनामसु पाठात्। ᵛप्रथमजाः प्रजापतेर्वीर्यात् प्रथमं जातः ᵛऋतावा सत्यवान् उदकवान् वा ᵛआङ्गिरसः पश्चाज्जातः। तथा च निगमः—'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्यदङ्गाराः पुनरवशान्ता उददीप्यन्त तत् बृहस्पतिरभवत्' (ऐ. ब्रा. ३. ३४) इति। ᵛहविष्मान् यज्ञभागवान् ᵛद्विबर्हज्मा द्वयोर्लोकयोर्बृंहितगमनः ᵛप्राघर्मसत् प्रकर्षेण दीप्तस्थाने वर्तमानः ᵛनः अस्माकं ᵛपिता पालयिता भवति स बृहस्पतिः ᵛवृषभः वर्षकः सन् ᵛरोदसी द्यावापृथिव्यौ ᵛआ ᵛरोरवीति अभिगर्जति॥

जनाय चिद्य ईवत उ लोकं बृहस्पतिर्देवहूतौ चकार।
घ्नन्वृत्राणि वि पुरो दर्दरीति जयञ्छत्रूँरमित्रान्पृत्सु साहन् ॥ २ ॥

जनाय। चित्। यः। ईवते। ऊँ इति। लोकम्। बृहस्पतिः। देवऽहूतौ। चकार।
घ्नन्। वृत्राणि। वि। पुरः। दर्दरीति। जयन्। शत्रून्। अमित्रान्। पृत्ऽसु। सहन् ॥ २ ॥

अपि च ᵛयः ᵛबृहस्पतिः ᵛदेवहूतौ यज्ञे वर्तमानाय ᵛईवते उपगच्छते स्तोत्रे ᵛजनाय ᵛलोकं स्थानं ᵛचकार करोति। ᵛचित् इति पूरणः। सः ᵛवृत्राणि आवरकाणि तमांसि ᵛघ्नन् निवारयन् ᵛपृत्सु युद्धेषु ᵛशत्रून् ᵛजयन् ᵛअमित्रान् ᵛसहन् अभिभवन् ᵛपुरः आसुरीः पुरीः ᵛवि ᵛदर्दरीति भृशं विदारयति॥

बृहस्पतिः समजयद्वसूनि महो व्रजान् गोमतो देव एषः।
अपः सिषासन्त्स्व१रप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः ॥ ३ ॥

बृहस्पतिः। सम्। अजयत्। वसूनि। महः। व्रजान्। गोऽमतः। देवः। एषः।
अपः। सिसासन्। स्वः। अप्रतिऽइतः। बृहस्पतिः। हन्ति। अमित्रम्। अर्कैः ॥ ३ ॥

ᵛदेवः द्योतमानः ᵛएषः प्रसिद्धः ᵛबृहस्पतिः ᵛवसूनि पणीनामसुराणां वलस्य वा धनानि ᵛमहः महतः ᵛगोमतः गोसहितान् ᵛव्रजान् च ᵛसमजयत्। तथा च निगमौ—'बृहस्पतिर्गोवपुषो

वलस्य निर्मज्जानं न पर्वणो जभार ' ( ऋ. सं. १०. ६८. ९ ) इति, ' दूरमित पणयो वरीय उद्गावो यन्तु मिनतीर्ऋतेन । बृहस्पतिर्या अविन्दन्निगूळ्हाः सोमो ग्रावाण ऋषयश्च विप्राः ' ( ऋ. सं. १०. १०८. ११) इति । किंच ᵛबृहस्पतिः ᵛअप्रतीतः केनाप्यप्रतिगतः ᵛसिषासन् संभक्तुकामः ᵛस्वः स्वर्गस्य ᵛअमित्रम् असुरम् ᵛअर्कैः अर्चनसाधनैर्मन्त्रैः ᵛहन्ति । ' अर्को मन्त्रो भवति यदेनेनार्चन्ति ' ( निरु. ५. ४ ) इति यास्कः ॥ ॥ १७ ॥

' सोमारुद्रा ' इति चतुर्ऋचं त्रयोदशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभं सोमारुद्रदेवताकम् । अनुक्रम्यते च—' सोमारुद्रा चतुष्कं सोमारौद्रम् ' इति । विनियोगो लैङ्गिकः ॥

सोमा॑रुद्रा धा॒रये॑थामसु॒र्यं१॒॑ प्र वा॑मि॒ष्टयोऽर॑मश्नुवन्तु ।
दमे॑दमे स॒प्त रत्ना॒ दधा॑ना॒ शं नो॑ भूतं द्वि॒पदे॒ शं चतु॑ष्पदे ॥ १ ॥

सोमा॑रुद्रा । धा॒रये॑थाम् । अ॒सु॒र्य॑म् । प्र । वा॒म् । इ॒ष्टयः॑ । अर॑म् । अ॒श्नु॒व॒न्तु॒ ।
दमे॑ऽदमे । स॒प्त । रत्ना॑ । दधा॑ना । शम् । नः॒ । भू॒तम् । द्वि॒ऽपदे॑ । शम् । चतुः॑ऽपदे ॥१॥

ᵛसोमारुद्रा हे सोमारुद्रौ ᵛअसुर्यम् असुरसंबन्धि बलमस्मासु ᵛधारयेथाम् । किंच ᵛदमेदमे सर्वेष्वस्मद्गृहेषु ᵛइष्टयः यज्ञाः ᵛवां युवाम् ᵛअरम् अलं पर्याप्तं ᵛप्र ᵛअश्नुवन्तु प्रकर्षेण व्याप्नुवन्तु । अपि च युवां ᵛसप्त ᵛरत्ना[1] रत्नानि ᵛदधाना धारयन्तौ ᵛनः अस्मभ्यं ᵛशं सुखकरौ सुखरूपौ वा ᵛभूतं भवतम् । ᵛद्विपदे अस्मदीयाय पुत्रादये ᵛचतुष्पदे पश्वादये च ᵛशं भूतं भवतम् ॥

सोमा॑रुद्रा॒ वि वृ॑हतं॒ विषू॑ची॒ममी॑वा॒ या नो॒ गय॑मावि॒वेश॑ ।
आ॒रे बा॑धेथां॒ निर्ऋ॑तिं परा॒चैर॒स्मे भ॒द्रा सौ॑श्रव॒सानि॑ सन्तु ॥ २ ॥

सोमा॑रुद्रा । वि । वृ॒ह॒तम् । विषू॑चीम् । अमी॑वा । या । नः॒ । गय॑म् । आ॒ऽवि॒वेश॑ ।
आ॒रे । बा॒धे॒था॒म् । निः॒ऽऋ॑तिम् । प॒रा॒चैः । अ॒स्मे इति॑ । भ॒द्रा । सौ॒श्र॒व॒सानि॑ । स॒न्तु॒ ॥२॥

ᵛसोमारुद्रा हे सोमारुद्रौ ᵛनः अस्माकं ᵛगयं गृहं गृहगतं प्राणिजातं वा ᵛया ᵛअमीवा यो रोगः ᵛआविवेश तां ᵛविषूचीं विष्वक् सर्वतो गच्छन्तीममीवां ᵛवि ᵛवृहतं वियोजयतम् । अपि च ᵛनिर्ऋतिम् अलक्ष्मीं ᵛपराचैः पराग्यथा भवति तथा ᵛआरे दूरे ᵛबाधेथां निवारयतम् । ᵛअस्मे अस्माकं ᵛभद्रा भद्राणि ᵛसौश्रवसानि अन्नानि यशांसि च ᵛसन्तु भवन्तु । सुश्रवसो भावः सौश्रवसम् । श्रवोऽन्नं यशश्च ॥

सोमा॑रुद्रा यु॒वमे॒तान्य॒स्मे विश्वा॑ त॒नूषु॑ भेष॒जानि॑ धत्तम् ।
अव॑ स्यतं मु॒ञ्चतं॒ यन्नो॒ अस्ति॑ त॒नूषु॑ ब॒द्धं कृ॒तमेनो॑ अ॒स्मत् ॥ ३ ॥

सोमा॑रुद्रा । यु॒वम् । ए॒तानि॑ । अ॒स्मे इति॑ । विश्वा॑ । त॒नूषु॑ । भे॒ष॒जानि॑ । ध॒त्तम् ।
अव॑ । स्य॒तम् । मु॒ञ्चत॑म् । यत् । नः॒ । अस्ति॑ । त॒नूषु॑ । ब॒द्धम् । कृ॒तम् । एनः॑ । अ॒स्मत् ॥३॥

---

१. ख-ङ्ग-न-भ-श-' रत्ना ' नास्ति ।

हे ^v^सोमारुद्रा सोमारुद्रौ ^v^युवं युवाम् ^v^अस्मे अस्माकं ^v^तनूषु अङ्गेषु ^v^एतानि प्रसिद्धानि ^v^विश्वा सर्वाणि ^v^भेषजानि ^v^धत्तं धारयतम्। किंच ^v^नः अस्माकं ^v^तनूषु अङ्गेषु अस्माभिः ^v^कृतं ^v^बद्धं च ^v^यत् ^v^एनः पापम् ^v^अस्ति विद्यते तत् पापम् ^v^अव ^v^स्यतं क्षपयतं[1] श्लथयतम्। शिथिलबन्धं कुरुतमित्यर्थः। ^v^अस्मत् अस्मत्तः ^v^मुञ्चतं च ॥

तिग्मायुधौ तिग्महेती सुशेवौ सोमारुद्राविह सु मृळतं नः।
प्र नो मुञ्चतं वरुणस्य पाशाद्गोपायतं नः सुमनस्यमाना ॥ ४ ॥

तिग्मऽआयुधौ। तिग्महेती इति तिग्मऽहेती। सुऽशेवौ। सोमारुद्रौ। इह। सु। मृळतम्। नः।
प्र। नः। मुञ्चतम्। वरुणस्य। पाशात्। गोपायतम्। नः। सुऽमनस्यमाना ॥ ४ ॥

हे ^v^सोमारुद्रौ ^v^तिग्मायुधौ दीप्तधनुष्कौ ^v^तिग्महेती तीक्ष्णशरौ ^v^सुशेवौ शोभनसुखप्रदौ ^v^सुमनस्यमाना शोभनं मनः स्तोत्रमिच्छन्तौ सुमनस्यमानौ स्तूयमानौ सुमनसौ वा सन्तौ युवाम् ^v^इह लोके ^v^नः अस्मान् ^v^सु अत्यन्तं ^v^मृळतं[2] सुखयतम्। ^v^नः अस्मान् ^v^वरुणस्य ^v^पाशात् ^v^प्र ^v^मुञ्चतम्। ^v^नः अस्मान् ^v^गोपायतम् आपद्भ्यो रक्षतं च ॥ ॥ १८ ॥

'जीमूतस्य' इत्येकोनविंशत्यृचं चतुर्दशं सूक्तं भारद्वाजस्य पायोरार्षम्। अनुक्रम्यते च– 'जीमूतस्येवैकोना पायुर्भारद्वाजः संग्रामाङ्गान्यृक्शोऽभितुष्टाव वर्म धनुर्ज्यामार्त्नी इषुधिं जगत्यर्धे सारथिमर्धे रश्मीनश्वान् रथं रथगोपान् जगत्यां[3] लिङ्गोक्तदेवता[3] द्वाभ्यामिषूः प्रतोदं हस्तघ्नं द्वाभ्यामिषूः पराः पङ्क्त्यादयो लिङ्गोक्तदेवताः संग्रामाशिषोऽन्त्यानुष्टुब्नृजीत आलाक्तेति च द्वे द्वे' इति। 'रथे तिष्ठन्' 'ब्राह्मणासः' इति षष्ठीदशम्यौ जगत्यौ अन्त्या 'यो नः स्वः[4]' इत्येषानुष्टुप् 'ऋजीते' 'आ जङ्घन्ति' 'आलाक्ता' 'अवसृष्टा' 'यो नः स्वः' इति पञ्चानुष्टुभः 'यत्र बाणाः' इति पङ्क्तिः शिष्टास्त्रिष्टुभः। आद्यया वर्म स्तूयते, द्वितीयया धनुः, तृतीयया ज्या, चतुर्थ्या आर्त्नी, पञ्चम्या इषुधिः। अतः पञ्चानां वर्माद्या देवताः। षष्ठ्याः पूर्वार्धेन सारथिः स्तूयते। अतः सोऽर्धस्तद्देवताकः[5]। उत्तरार्धेन रश्मयः स्तूयन्ते। सप्तम्या अश्वाः, अष्टम्या रथः, नवम्या रथगोपाः। अतस्तास्तद्देवताकाः। 'ब्राह्मणासः' इत्यस्यां ब्राह्मणपितृसोम्यद्यावापृथिवीपूषणो लिङ्गोक्तदेवताः। एकादशीद्वादश्यौ इषुस्तुतिरूपत्वात् इषुदेवताके। त्रयोदश्या प्रतोदः। चतुर्दश्या हस्तघ्नः। पञ्चदशीषोडश्यौ इषुदेवताके। सप्तदश्याः युद्धभूमिब्रह्मणस्पत्यदितिरूपा लिङ्गोक्तदेवताः। अष्टादश्याः कवचसोमवरुणा देवताः। अन्त्याया देवा ब्रह्म च देवताः[6]। युद्धे अनेन सूक्तेन राजानं संनाहयेत्। तथा चाश्वलायनः–'संग्रामे समुपोळ्हे राजानं संनाहयेदा त्वाहार्षमन्तरेधीति पश्चाद्रथस्यावस्थाय जीमूतस्येव भवति प्रतीकमिति कवचं प्रयच्छेत् उत्तरया धनुरुत्तरां वाचयेत्स्वयं चतुर्थीं जपेत्पञ्चम्येषुधिं प्रयच्छेदभिप्रवर्तमाने षष्ठीं सप्तम्याश्वानष्टमीमिषूनवेक्षमाणं वाचयत्यहिरिव भोगैः पर्येति बाहुमिति तलं नह्यमानम्' (आश्व. गृ. ३·१२) इति। तथा च 'अवसृष्टा परा पतेतीषून्विसर्जयेद्यत्र बाणाः संपतन्तीति युध्यमानेषु जपेत् संशिष्याद्वा' (आश्व. गृ. ३·१२) इति। अध्यायोपाकरणोत्सर्जनयोर्मण्डलान्तहोमे 'यो नः स्वः' इत्येषा (आश्व. गृ. ३. ५. ७) ॥

---

१ ख-घ-ज्ञ-त-न-भ-श–'क्षपयतं' नास्ति। २. य–मृळयतं; श–मृळतं मृळयतम्। ३. ख–जगत्याद्या लिङ्गोक्त°; श–जगत्याद्या लिङ्गोक्ता देवताः। ४. ख-ज्ञ-त-न-भ-श–स्वो अरणो। ५. ख-ज्ञ-त-न-भ–सोऽर्धचस्त°। ६. ख-ज्ञ-त-न-भ-श–देवता।

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे ।
अनाविद्धया तन्वा जय त्वं स त्वा वर्मणो महिमा पिपर्तु ॥ १ ॥

जीमूतस्यऽइव । भवति । प्रतीकम् । यत् । वर्मी । याति । सऽमदाम् । उपऽस्थे ।
अनाविद्धया । तन्वा । जय । त्वम् । सः । त्वा । वर्मणः । महिमा । पिपर्तु ॥ १ ॥

ᵛसमदां संग्रामाणाम् ᵛउपस्थे उपस्थाने सति ᵛयत् यदा अयं राजा ᵛवर्मी कवची ᵛयाति तदा लोहमयेन वर्मणा संनद्धस्य राज्ञः ᵛप्रतीकं रूपं ᵛजीमूतस्येव मेघस्येव ᵛभवति । मेघस्य[1] यादृशं रूपं तादृशमस्य भवतीत्यर्थः । हे राजन् ᵛत्वम् ᵛअनाविद्धया शत्रुभिरबाधितया ᵛतन्वा शरीरेण शत्रून् ᵛजय । ᵛवर्मणः ᵛसः तादृशः ᵛमहिमा ᵛत्वा त्वां ᵛपिपर्तु पालयतु ॥

धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम ।
धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥ २ ॥

धन्वना । गाः । धन्वना । आजिम् । जयेम । धन्वना । तीव्राः । सऽमदः । जयेम ।
धनुः । शत्रोः । अपऽकामम् । कृणोति । धन्वना । सर्वाः । प्रऽदिशः । जयेम ॥ २ ॥

ᵛधन्वना चापेन ᵛगाः शत्रूणां ᵛजयेम वयं वशीकरवाम । ᵛधन्वना ᵛआजिं संग्रामं च जयेम । ᵛधन्वना ᵛतीव्राः उद्धताः ᵛसमदः अत्यन्तं[2] मदवतीः[2] शत्रुसेनाश्च ᵛजयेम । तथा च यास्कः– 'समदः समदो वात्तेः संमदो वा मदतेः' (निरु. ९·१७) इति । ᵛधनुः ᵛशत्रोः ᵛअपकामं कामस्यापायं ᵛकृणोति करोतु । किंच ᵛधन्वना वयं ᵛसर्वाः ᵛप्रदिशः सर्वासु दिक्षु वर्तमानान् शत्रून् ᵛजयेम । प्रदिक्शब्दो लक्षणया तत्स्थेषु पुरुषेषु वर्तते मञ्चाः क्रोशन्तीतिवत् । धन्वन्शब्दस्य जयतेश्चावृत्तिरादरार्था ॥

वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना ।
योषेव शिङ्क्ते वितताधि धन्वञ्ज्या इयं समने पारयन्ती ॥ ३ ॥

वक्ष्यन्तीऽइव । इत् । आ । गनीगन्ति । कर्णम् । प्रियम् । सखायम् । परिऽसस्वजाना ।
योषाऽइव । शिङ्क्ते । विऽतता । अधि । धन्वन् । ज्या । इयम् । समने । पारयन्ती ॥३॥

पूर्वत्र ऋग्द्वयेन कवचधनुषी स्तुते । अत्र ज्यास्तुतिः । ᵛइयं ᵛज्या ᵛसमने संग्रामे ᵛधन्वन् धन्वनि । ᵛअधि इति सप्तम्यर्थानुवादः । ᵛवितता विस्तृता ᵛपारयन्ती पारं नयन्ती ᵛप्रियं प्रियकरं वाक्यं ᵛवक्ष्यन्तीव ᵛकर्णं धन्विनो राज्ञः कर्णप्रदेशम् ᵛआ ᵛगनीगन्ति आगच्छति । ᵛइत् इति पूरणः। ᵛयोषा नारी ᵛसखायं पतिम् ᵛइव ᵛपरिषस्वजाना इषुं परिष्वजमाना ᵛशिङ्क्ते शब्दायते च । तथा च यास्कः—'वक्ष्यन्तीवागच्छति कर्णं प्रियमिव सखायमिषुं परिष्वजमाना योषेव शिङ्क्ते शब्दं करोति वितताधि धनुषि ज्येयं समने संग्रामे पारयन्ती पारं नयन्ती' (निरु. ९ . १८) इति ॥

---

१. ख-ञ-न-भ-श–मेघस्येव । २. ख–घ-ञ-त-न-भ–अत्यन्त° ।

ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे ।
अप शत्रून्विध्यतां संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ॥ ४ ॥

ते इति । आचरन्ती इत्याऽचरन्ती । समनाऽइव । योषा ।
माताऽइव । पुत्रम् । बिभृताम् । उपऽस्थे ।
अप । शत्रून् । विध्यताम् । संविदाने इति सम्ऽविदाने ।
आर्त्नी इति । इमे इति । विस्फुरन्ती इति विऽस्फुरन्ती । अमित्रान् ॥ ४ ॥

अत्र धनुष्कोट्योः स्तुतिः । vते[1] धनुष्कोट्यौ vसमनेव समनस्केव vयोषा पतिसमीपं न त्यजति तद्वत् vआचरन्ती अभितश्चरन्त्यौ vउपस्थे उपस्थाने vमातेव vपुत्रं यथा माता पुत्रं धारयति तद्वत् vबिभृतां राजानं धारयेताम् । किंच vइमे धनुष्कोट्यौ vसंविदाने संजानाने विसंवादरहिते vआर्त्नी गच्छन्त्यौ ॥ 'ऋ गतौ' इति धातोः 'सुर्यंगिभ्यां निः' इति बाहुलकात् निप्रत्ययो धातोरार्तभावश्च । ततः 'कृदिकारादक्तिनः' (पा. सू. ४. १. ४५ ग.) इति ङीष् । द्विवचनस्य पूर्वसवर्णः ॥ अस्य राज्ञः vअमित्रान् vविष्फुरन्ती विहिंसन्त्यौ vशत्रून् च vअप vविध्यताम् । तथा च यास्कः—'ते आचरन्त्यौ समनसाविव योषे मातेव पुत्रं बिभृतामुपस्थ उपस्थानेऽपविध्यतां शत्रून् संविदाने आर्त्न्याविमे विघ्नत्यावमित्रान्' ( निरु. ९. ४० ) इति ॥

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य ।
इषुधिः संकाः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥ ५ ॥

बह्वीनाम् । पिता । बहुः । अस्य । पुत्रः । चिश्चा । कृणोति । समना । अवऽगत्य ।
इषुऽधिः । संकाः । पृतनाः । च । सर्वाः । पृष्ठे । निऽनद्धः । जयति । प्रऽसूतः ॥ ५ ॥

इषुधिरत्र स्तूयते । vइषुधिः vबह्वीनाम् इषूणां vपिता भवति । रक्षणहेतुत्वात् पितेत्युच्यते । इषुशब्दस्योभयलिङ्गत्वात् बह्वीनामिति प्रयोगः । vअस्य इषुधेः vपुत्रः इषुः vबहुः भवति । बहव इषवो हीषुधौ निधीयन्ते । इषूणां निधानत्वादिषुधिः । तथा च यास्कः—'इषुधिरिषूणां निधानम्' ( निरु. ९. १३ ) इति । vचिश्चा vकृणोति । चिश्चेति शब्दानुकृतिः । इषुषु उद्ध्रियमाणेषु[2] इषुधिश्चिश्चाशब्दं करोति । किंच इषुधिः vपृष्ठे vनिनद्धः धन्विनो राज्ञः पृष्ठभागे बद्धः vसमना युद्धानि vअवगत्य प्राप्य vप्रसूतः प्रसुवन् । कर्तरि निष्ठा । इषून् प्रेरयन् vसंकाः[3] । सह कायन्ति शब्दायन्त इति संकाः vपृतनाः vसर्वाः सेनाः vजयति ॥ ॥ १९ ॥

रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः ।
अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः ॥ ६ ॥

रथे । तिष्ठन् । नयति । वाजिनः । पुरः । यत्रऽयत्र । कामयते । सुऽसारथिः ।
अभीशूनाम् । महिमानम् । पनायत । मनः । पश्चात् । अनु । यच्छन्ति । रश्मयः ॥ ६ ॥

---

१. ख-ङ्ग-न-भ-'ते' नास्ति । २. ङ्ग-त-न-भ-ध्रियमाणेषु; श-धियमाणेषु । ३. ख-ङ्ग-न-भ-श-'संकाः' नास्ति ।

अत्र पूर्वार्धे सारथिस्तुतिरुत्तरार्धेऽभीशूनां स्तुतिः। ᵛसुषारथिः शोभनसारथिः ᵛरथे ᵛतिष्ठन् ᵛपुरः पुरस्तात् वर्तमानान् ᵛवाजिनः[1] अश्वान्[1] ᵛयत्रयत्र नेतुं ᵛकामयते तत्र तत्र ᵛनयति। ये रथे ᵛरश्मयः अश्वग्रीवाभ्यां व्याप्य वर्तमानाः पाशाः ᵛपश्चात् रथस्य पृष्ठभागे विद्यमानाः[2] अश्वान् ᵛमनः सारथेर्मनोऽनुकूलम् ᵛअनु ᵛयच्छन्ति नियच्छन्ति। तेषाम् ᵛअभीशूनां रश्मीनां ᵛमहिमानं महत्त्वं ᵛपनायत हे जनाः स्तुत। तथा च यास्कः—'रथे तिष्ठन्नयति वाजिनः पुरस्तात्सतो यत्र यत्र कामयते सुषारथिः कल्याणसारथिरभीशूनां महिमानं पूजयत मनः पश्चात्सन्तोऽनुयच्छन्ति रश्मयः' (निरु. ९.१६) इति॥

ती॒व्रान्घोषा॑न्कृण्वते॒ वृष॑पाणयोऽश्वा॒ रथे॑भिः स॒ह वा॒जय॑न्तः।
अ॒व॒क्राम॑न्तः॒ प्रप॑दैर॒मित्रा॑न् क्षि॒णन्ति॒ शत्रूँ॒रन॑पव्ययन्तः॥ ७॥

ती॒व्रान्। घोषा॑न्। कृ॒ण्व॒ते॒। वृष॑ऽपाणयः। अश्वाः॑। रथे॑भिः। स॒ह। वा॒जय॑न्तः।
अ॒व॒ऽक्राम॑न्तः। प्र॒ऽप॑दैः। अ॒मित्रा॑न्। क्षि॒णन्ति॑। शत्रू॑न्। अन॑पऽव्ययन्तः॥ ७॥

अत्र अश्वस्तुतिः। ᵛअश्वाः ᵛवृषपाणयः पांसूनां वर्षकखुराः[3] ᵛरथेभिः रथैः ᵛसह ᵛवाजयन्तः वेगमाचरन्तः ᵛतीव्रान् उच्चतरान् ᵛघोषान् शब्दान् ᵛकृण्वते कुर्वते। किंच ᵛअनपव्ययन्तः अपलायमानाः ᵛअमित्रान् हिंसकान् ᵛशत्रून् ᵛप्रपदैः पादाग्रैः ᵛअवक्रामन्तः ᵛक्षिणन्ति हिंसन्ति॥

र॒थ॒वाह॑नं ह॒विर॑स्य॒ नाम॒ यत्रायु॑धं॒ निहि॑तमस्य॒ वर्म॑।
तत्रा॒ रथ॒मुप॑ श॒ग्मं स॑देम वि॒श्वाहा॑ व॒यं सु॑मन॒स्यमा॑नाः॥ ८॥

र॒थ॒ऽवाह॑नम्। ह॒विः। अ॒स्य॒। नाम॑। यत्र॑। आयु॑धम्। निऽहि॑तम्। अ॒स्य॒। वर्म॑।
तत्र॑। रथ॑म्। उप॑। श॒ग्मम्। स॒दे॒म॒। वि॒श्वाहा॑। व॒यम्। सु॒ऽम॒न॒स्यमा॑नाः॥ ८॥

ᵛअस्य राज्ञः ᵛरथवाहनं शत्रून् जित्वा रथेनोह्यमानं धनं ᵛहविः भवति[4]। अग्नेर्हविरिव वर्धकं भवतीत्यर्थः। ᵛनाम इति संमतिः। ᵛयत्र रथे ᵛअस्य राज्ञः ᵛआयुधं धनुःशरादिकं ᵛवर्म कवचं च ᵛनिहितं भवति ᵛतत्र तम्॥ तत्रेत्यव्ययस्य सार्वविभक्तिकत्वात्॥ ᵛशग्मं सुखकरं ᵛविश्वाहा सर्वदा ᵛसुमनस्यमानाः सुखमनसो भवन्तः ᵛवयं पायवो भरद्वाजाः ᵛउप ᵛसदेम उपगच्छेम॥

स्वा॒दु॒षं॒सदः॑ पि॒तरो॑ वयो॒धाः कृ॑च्छ्रे॒श्रितः॑ शक्ती॑वन्तो गभी॒राः।
चि॒त्रसे॑ना॒ इषु॑बला॒ अमृ॑ध्राः स॒तोवी॑रा उ॒रवो॑ व्रातसा॒हाः॥ ९॥

स्वा॒दु॒ऽसं॒सदः॑। पि॒तरः॑। व॒यः॒ऽधाः। कृ॒च्छ्रे॒ऽश्रितः॑। शक्ति॑ऽवन्तः। ग॒भी॒राः।
चि॒त्रऽसे॑नाः। इषु॑ऽबलाः। अमृ॑ध्राः। स॒तः॒ऽवी॑राः। उ॒रवः॑। व्रा॒त॒ऽस॒हाः॥ ९॥

अत्र रथगोपस्तुतिः[5]। ᵛपितरः रथस्य पालयितारः ᵛस्वादुषंसदः शत्रूणां स्वादुनि अन्ने संसीदन्तः शत्रूणामन्नमवसादयन्तो वा ᵛवयोधाः अन्नस्य दातारः[6] ᵛकृच्छ्रेश्रितः आपदि श्रयन्तः ᵛशक्तीवन्तः।

---

१. ख-झ-न-भ-श—'वाजिनोऽश्वान्' नास्ति। २. ख-झ-त-श—विद्यमानान्। ३. ख-झ-त-न-भ—वर्षुकखुराः। ४. ख-झ-त-न-भ-श—भवति अग्नेर्हविर्भवति। ५. ख-झ-त२-न-भ-श१—रथगोपास्तुतिः; त१—गोपास्तुतिः; श२—गोपस्तुतिः। ६. ख-भ—प्रदातारः; झ-न—सदातारः।

शक्तिरायुधविशेषः तद्वन्तः शक्तीवन्तः। शक्तिहस्ता इति यावत्। यद्वा। शक्तिर्बलम्। तद्वन्तः। vगभीराः अनाधृष्याः vचित्रसेनाः दर्शनीयसेनाः vइषुबलाः बाणबलाः vअमृध्राः हिंसितुमशक्याः vसतोवीराः प्राप्तवीर्याः। तथा च यास्कः—'तिरः सत इति प्राप्तस्य तिरस्तीर्णं भवति सतः संसृतं भवति' (निरु. ३. २०) इति। vउरवः महान्तः vव्रातसाहाः[1] समूहानामभिभवितारो भवन्तीति॥

ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा।
पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशंस ईशत॥ १०॥

ब्राह्मणासः। पितरः। सोम्यासः। शिवे इति। नः। द्यावापृथिवी इति। अनेहसा।
पूषा। नः। पातु। दुःऽइतात्। ऋतऽवृधः। रक्ष। माकिः। नः। अघऽशंसः। ईशत॥१०॥

vब्राह्मणासः हे ब्राह्मणाः vपितरः vऋतावृधः सत्यस्य यज्ञस्य वा वर्धयितारः vसोम्यासः सोमार्हाः सोमसंपादिनो वा। तथा च यास्कः—'सोम्याः सोमसंपादिनः' (निरु. ११. १८) इति। नः अस्मान् रक्षत। रक्ष इत्युपरितनमेकवचनान्तं सत्यपि व्यवधाने बहुवचनान्ततया विपरिणतं सदत्र संबध्यतेऽध्याहारस्यातिजघन्यत्वात्। किंच vअनेहसा अपापे vद्यावापृथिवी द्यावापृथिव्यौ vनः अस्माकं vशिवे सुखकृतौ भवताम्। vपूषा पोषको देवोऽपि vनः अस्मान् vदुरितात् दुष्कृतात् vपातु रक्षतु। vनः अस्माकम् vअघशंसः पापशंसः शत्रुरपि vमाकिः vईशत मा ईशिष्ट॥　॥२०॥

सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः संनद्धा पतति प्रसूता।
यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन्॥ ११॥

सुऽपर्णम्। वस्ते। मृगः। अस्याः। दन्तः। गोभिः। सम्ऽनद्धा। पतति। प्रऽसूता।
यत्र। नरः। सम्। च। वि। च। द्रवन्ति। तत्र। अस्मभ्यम्। इषवः। शर्म। यंसन्॥११॥

अस्यामृचि इषवः स्तूयन्ते। vसुपर्णं शोभनं वाजं vवस्ते। इयमिषुर्धारयति। vअस्याः इषोः vमृगः मृगावयवः शृङ्गं vदन्तः भवति। इषवः काश्चित् दन्तमुखा भवन्ति हि। अथवा अस्या दन्तो मृगः शत्रून् मृगयमाणो भवति। किंच vगोभिः गोविकारैः स्नायुभिः vसंनद्धा सम्यक् बद्धा। अथवा गौरिति ज्यानाम। तया संबद्धा[2]। अत्र वचनव्यत्ययः। तथा च निगमः—'वृक्षेवृक्षे नियता मीमयद्गौः' (ऋ. सं. १०. २७. २२) इति। अस्यायमर्थः। वृक्षेवृक्षे धनुषि धनुषि गौर्ज्या नियता[3] मीमयत् शब्दं करोतीति। तथा च यास्कः—'वृक्षेवृक्षे धनुषि धनुषि। वृक्षो व्रश्चनात् वृत्वा क्षां तिष्ठतीति वा। क्षा क्षियतेर्निवासकर्मणः। नियता मीमयद्गौः शब्दं करोति। मीमयतिः शब्दकर्मा' (निरु. २.६) इति। vप्रसूता प्रेरिता सती vपतति। vयत्र युद्धे vनरः vसं vच सह च vवि vच पृथक् च vद्रवन्ति चरन्ति vतत्र vअस्मभ्यम् vइषवः शराः vशर्म सुखं vयंसन् प्रयच्छन्तु। तथा च यास्कः—'सुपर्णं वस्त इति वाजानभिप्रेत्य मृगमयोऽस्या दन्तो मृगयतेर्वा गोभिः संनद्धा पतति प्रसूतेति व्याख्यातम्। यत्र नराः संद्रवन्ति च विद्रवन्ति च तत्रास्मभ्यमिषवः शर्म शरणं प्रयच्छन्तु' (निरु. ९. १९) इति॥

---

१. त–व्रातसहाः। २. त१–सबद्धा। ३. ख-क्ष-त१-२–नियता नियता; ङ–नियता संबद्धा; श–नियता नियमिता।

ऋजीते परि वृङ्धि नोऽश्मा भवतु नस्तनूः ।
सोमो अधि ब्रवीतु नोऽदितिः शर्म यच्छतु ॥ १२ ॥

ऋजीते । परि । वृङ्धि । नः । अश्मा । भवतु । नः । तनूः ।
सोमः । अधि । ब्रवीतु । नः । अदितिः । शर्म । यच्छतु ॥ १२ ॥

ऋजीते । ऋजु गच्छतीति ऋजीतिः इषुः । हे इषो नः अस्मान् परि वृङ्धि परितो वर्धय[1]। नः अस्माकं तनूः शरीरम् अश्मा भवतु । अश्मवदभेद्या दृढा भवतु । किंच नः अस्मभ्यं सोमो अधि ब्रवीतु पक्षपातेन ब्रवीतु । अदितिः अपि शर्म सुखं यच्छतु ॥

आ जङ्घन्ति सान्वेषां जघनाँ उप जिघ्नते ।
अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥ १३ ॥

आ । जङ्घन्ति । सानु । एषाम् । जघनान् । उप । जिघ्नते ।
अश्वऽअजनि । प्रऽचेतसः । अश्वान् । समत्ऽसु । चोदय ॥ १३ ॥

अश्वाजनि अश्वानां क्षेप्त्रि कशे यया त्वया प्रचेतसः प्रकृष्टज्ञानाः सादिनः सारथयो वा एषाम् अश्वानां सानु सानूनि सक्थीनि आ जङ्घन्ति आघ्नन्ति जघनान् जघनानि च उप जिघ्नते उपजिघ्नन्ति सा त्वं समत्सु संग्रामेषु अश्वान् चोदय प्रेरय । तथा च यास्कः—'आघ्नन्ति सानून्येषां सरणानि सक्थीनि । सक्थि सचतेरासक्तोऽस्मिन् कायः । जघनानि चोपघ्नन्ति । जघनं जङ्घन्यतेः । अश्वाजनि प्रचेतसः प्रवृद्धचेतसोऽश्वान् समत्सु समरणेषु संग्रामेषु चोदय' (निरु. ९. २०) इति ॥

अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ।
हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसं परि पातु विश्वतः ॥ १४ ॥

अहिःऽइव । भोगैः । परि । एति । बाहुम् । ज्यायाः । हेतिम् । परिऽबाधमानः ।
हस्तऽघ्नः । विश्वा । वयुनानि । विद्वान् । पुमान् । पुमांसम् । परि । पातु । विश्वतः ॥ १४ ॥

अत्र धन्विनः प्रकोष्ठे बन्धनीयस्य हस्तघ्नस्य स्तुतिः । हस्तघ्नः । हस्ते हस्तसमीपे वर्तिनि[2] प्रकोष्ठे स्थितः सन् ज्यया हन्यते इति हस्तघ्नः ॥ 'घञर्थे कविधानम्' इति कः ॥ ज्यायाः हेतिं ज्याहेतुकां हिंसां परिबाधमानः निवारयन् भोगैः शरीरेण । वचनव्यत्ययः । अहिरिव सर्प इव बाहुं प्रकोष्ठम् । लक्षणया बाहुशब्दः प्रकोष्ठे वर्तते । पर्येति परिवेष्टयति । किंच विश्वा विश्वानि वयुनानि ज्ञानानि ज्ञातव्यानि । 'माया वयुनम्' इति तन्नामसु पाठात् । विद्वान्[3] जानन् पुमान् पौरुषोपेतः स्वयं पुमांसं धन्विनं विश्वतः सर्वतः परि पातु रक्षति । तथा च यास्कः—'अहिरिव भोगैः परिवेष्टयति बाहुं ज्याया वधात्परित्रायमाणो हस्तघ्नः सर्वाणि प्रज्ञानानि प्रजानन् पुमान्पुरुमना भवति पुंसतेर्वा' (निरु. ९. १५) इति[3] ॥

---

१. ख-नो वर्जय; ज्ञ-न-भ-नो वृद्धय । २. ख-घ-ज्ञ-त-न-भ-श-वर्तमानः । ३. ख-ज्ञ-न-न-श-विद्वान् जानन् पुमान् पुरुमना भवति पुंसतेर्वा इति यास्कः । बहुमनस्कः पुमांसं धन्विनं विश्वतः सर्वतः परिपातु रक्षतु ।

आलांक्ता या रुरुंशीर्ष्ण्यथो यस्या अयो मुर्खम् ।
इदं पर्जन्यंरेतस इष्वै देव्यै बृहन्नमः ॥ १५ ॥

आलंऽअक्ता । या । रुरुंऽशीर्ष्णी । अथो इति । यस्याः । अयः । मुर्खम् ।
इदम् । पर्जन्यंऽरेतसे । इष्वै । देव्यै । बृहत् । नर्मः ॥ १५ ॥

या इषुः आलाक्ता आलेन विषेण अक्ता रुरुशीर्ष्णी हन्तृशिरस्का ॥ अर्तेः[1] हिंसाकर्मणो रुरुशब्दोत्पत्तिः ॥ श्रृङ्गशीर्ष्णी वा । अथो किंच यस्याः इषोः मुखम् अयः अयोमयं भवति । पर्जन्यरेतसे । पर्जन्यो रेतो यस्याः सा पर्जन्यरेताः । तस्यै[2] पर्जन्यकार्यभूतायै । शरकाण्डस्य पर्जन्यजन्यत्वात्[3] । बृहत् बृहत्यै तस्यै इष्वै देव्यै इदं नमः क्रियते इति ॥ ॥ २१ ॥

अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते ।
गच्छामित्रान्प्र पद्यस्व मामीषां कं चनोच्छिषः ॥ १६ ॥

अवंऽसृष्टा । परा । पत । शरव्ये । ब्रह्मंऽसंशिते ।
गच्छं । अमित्रान् । प्र । पद्यस्व । मा । अमीषाम् । कम् । चन । उत् । शिषः ॥ १६ ॥

ब्रह्मसंशिते मन्त्रेण तीक्ष्णीकृते शरव्ये हिंसाकुशले इषो त्वम् अवसृष्टा क्षिप्ता परा पत परागच्छ । इतो देशात् गच्छ च । अमित्रान् हिंसकान् प्र पद्यस्व प्राप्नुहि च । अमीषाम् अमित्राणां मध्ये कं चन कंचिदपि मा उच्छिषः अवशिष्टं मा कुरु ॥

यत्र बाणाः संपतन्ति कुमारा विंशिखाइव ।
तत्रा नो ब्रह्मणस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ॥ १७ ॥

यत्रं । बाणाः । सम्ऽपतन्ति । कुमाराः । विशिखाःऽइव ।
तत्रं । नः । ब्रह्मणः । पतिः । अदितिः । शर्म । यच्छतु । विश्वाहा । शर्म । यच्छतु ॥१७॥

यत्र युद्धे कुमारा विशिखाइव मुण्डिता इव बाणाः संपतन्ति तत्र नः अस्मभ्यं ब्रह्मणस्पतिः शर्म सुखं विश्वाहा सर्वदा यच्छतु । अदितिः च शर्म यच्छतु । द्विरुक्तिरादरार्था ॥

मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानु वस्ताम् ।
उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु ॥ १८ ॥

मर्माणि । ते । वर्मणा । छादयामि । सोमः । त्वा । राजा । अमृतेन । अनु । वस्ताम् ।
उरोः । वरीयः । वरुणः । ते । कृणोतु । जयन्तम् । त्वा । अनु । देवाः । मदन्तु ॥ १८ ॥

हे राजन् ते त्वदीयानि मर्माणि । येषु स्थानेषु विद्धः सद्यो म्रियते तानि मर्माणि । वर्मणा कवचेन छादयामि । सोमः राजा त्वा त्वाम् अनु मर्मच्छादनानन्तरम् अमृतेन वस्ताम्

१. ख-झ-न-भ-श-‘ अर्तेः ’ नास्ति । २. ख-झ-न-भ–तस्यैव । ३. ख-घ-झ-न-भ–पर्जन्यत्वात् ।

आच्छादयतु। किंच vवरुणः अपि vते तुभ्यम् vउरोर्वरीयः उरुतरं सुखं vकृणोतु करोतु। vजयन्तं vत्वा त्वां vदेवाः सर्वेऽपि vअनु vमदन्तु अनुहृष्यन्तु ॥

यो नः स्वो अरणो यश्च निष्ट्यो जिघांसति ।
देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरम् ॥ १९ ॥

यः । नः । स्वः । अरणः । यः । च । निष्ट्यः । जिघांसति ।
देवाः । तम् । सर्वे । धूर्वन्तु । ब्रह्म । वर्म । मम । अन्तरम् ॥ १९ ॥

vयः[1] vस्वः ज्ञातिः vअरणः अरममाणः vयश्च vनिष्ट्यः तिरोभूतो दूरे स्थितः vनः अस्मान् vजिघांसति हन्तुमिच्छति vतं vदेवाः vसर्वे देवाः vधूर्वन्तु हिंसन्तु। vब्रह्म मन्त्रः vमम vअन्तरं शराणां निवारकं vवर्म विद्यते ॥ ॥ २२ ॥

॥ इति सायणाचार्यविरचिते[2] दाशतय्याः षष्ठे मण्डले षष्ठोऽनुवाकः समाप्तं मण्डलं च ॥

---

१. ख-घ-ङ-न-भ-स्वः। २. श–°विरचिते वेदार्थप्रकाशे।

॥ श्रीः ॥

# ॥ अथ सप्तमं मण्डलम् ॥

अथ सप्तमं मण्डलमारभ्यते । तस्मिन् मण्डले षडनुवाकाः । प्रथमेऽनुवाके सप्तदश सूक्तानि । तत्र 'अग्निः नरः' इति पञ्चविंशत्यृचं प्रथमं सूक्तम् । अत्रेयमनुक्रमणिका—'अग्निं पञ्चाधिका विराजोऽष्टादशाद्याः' इति । 'सप्तमं मण्डलं वसिष्ठोऽपश्यत्' इत्युक्तत्वात् मण्डलद्रष्टा वसिष्ठ ऋषिः । आदितोऽष्टादश विराजस्त्र्येकादशकाः शिष्टा अनादेशपरिभाषया त्रिष्टुभः । मण्डलादिपरिभाषया अग्निर्देवता । विश्वजितीदं सूक्तमाज्यशस्त्रम् । सूत्रितं च—'विश्वजितोऽग्निं नर इत्याज्यम्' (आश्व. श्रौ. ८. ७) इति । अत्रेश्चतुर्वीराख्ये[1] चतूरात्रे[1] चतुर्थेऽहनीदमेव सूक्तमाज्यशस्त्रम् । सूत्र्यते हि—'अग्निं नर इति चतुर्थे' (आश्व. श्रौ. १०. २) इति । व्यूळ्हे दशरात्रे चतुर्थेऽहनीदं सूक्तं जातवेदस्यनिविद्धानम् । सूत्रितं च—'अग्निं नर इत्याग्निमारुतम्' (आश्व. श्रौ. ८. ८) इति । महाव्रतेऽपीदमाज्यशस्त्रम् । तथैव पञ्चमारण्यके सूत्र्यते—'आज्यप्रउगे विश्वजितः' (ऐ. आ. ५. १. १) इति । अविवाक्येऽहनि प्रातरनुवाके 'त्वमग्ने वसून्' इत्यादीनामनुष्टुभां स्थान आद्यस्तृचः प्रक्षेपणीयः । सूत्र्यते हि—'दशमेऽहन्यनुष्टुभां स्थानेऽग्निं नरो दीधितिभिररण्योरिति तृचमाग्नेये क्रतौ' (आश्व. श्रौ. ८. १२) इति । आद्याः षडृचः तस्मिन्नेवाहनि आग्निमारुते शस्त्रे स्तोत्रियानुरूपार्थाः । सूत्रितं च—'अग्निं नरो दीधितिभिररण्योरिति स्तोत्रियानुरूपौ' (आश्व. श्रौ. ८. १२) इति । मण्डलादिहोमेऽप्येषा[2] । आधाने तृतीयायामिष्टौ 'प्रेद्धः' इति स्विष्टकृतोऽनुवाक्या । सूत्रितं च—'प्रेद्धो अग्न इमो अग्न इति संयाज्ये' (आश्व. श्रौ. २. १) इति । एवमन्यत्रापि दीक्षणीयादिषु स्विष्टकृतोऽनुवाक्या । प्रायणीयेष्टौ 'सेदग्निरग्नीन्' इत्यादिके द्वे स्विष्टकृतो याज्यानुवाक्ये । सूत्रितं च—'सेदग्निरग्नीँरत्यस्त्वन्यानिति द्वे संयाज्ये' (आश्व. श्रौ. ४. ३) इति । आधाने तृतीयायामिष्टौ 'इमो अग्ने' इति स्विष्टकृतो याज्या । सूत्रितं च—'इमो अग्न इति संयाज्ये' (आश्व. श्रौ. २. १) इति । एवमन्यत्रापि दीक्षणीयादिष्वेषा सौविष्टकृती याज्या । प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे च 'त्वमग्ने सुहवः' इत्याद्याः पञ्चर्चः । सूत्रितं च—'त्वमग्ने सुहवो रण्वसंदृक्' (आश्व. श्रौ. ४. १३) इति ॥

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् ।
दूरेदृशं गृहपतिमथर्युम् ॥ १ ॥

अग्निम् । नरः । दीधितिऽभिः । अरण्योः । हस्तऽच्युती । जनयन्त । प्रऽशस्तम् ।
दूरेऽदृशम् । गृहऽपतिम् । अथर्युम् ॥ १ ॥

नरः नेतार ऋत्विजः प्रशस्तं प्रकर्षेण स्तुतं दूरेदृशं दूरे दृश्यमानं दूरे पश्यन्तं वा गृहपतिं गृहाणां पालकम् अथर्युम्[3] आगम्यमतनवन्तं वा[4] अग्निम्[4] अरण्योः विद्यमानं हस्तच्युती हस्तप्रच्युत्या हस्तगत्या दीधितिभिः अङ्गुलिभिः जनयन्त[5] । 'दीधितयोऽङ्गुलयो भवन्ति धीयन्ते कर्मसु । अरणी प्रत्यृत एने अग्निः समरणाज्जायत इति वा । हस्तच्युती हस्तप्रच्युत्या जनयन्त प्रशस्तं दूरेदर्शनं गृहपतिमतनवन्तम्' (निरु. ५. १०) इति ॥

---

१. ख-ङ्ग-त-भ—°श्चतुराख्ये चतुरात्रे; न—°श्चतुवाराख्ये चतूरात्रे; श—°श्चतुर्वारात्रे चतूरात्रे। २. ख-ङ्ग-न-भ-श—मण्डलादिहोता। ३. ङ्ग—अथर्युमध्वर्यु। ४. ख-ङ्ग-न-भ—वाग्निं वा; श—अग्निं वा। ५. ङ्ग—जनयंत अत्र यास्कः; त२—जनयंत तथा च यास्कः; श—जनयंत अजनयंत।

तम॒ग्निमस्ते॒ वस॑वो॒ न्यृ॑ण्वन्त्सुप्रति॒चक्ष॒मव॑से॒ कुत॑श्चित् ।
द॒क्षाय्यो॒ यो दम॒ आस॒ नित्यः॑ ॥ २ ॥

तम् । अ॒ग्निम् । अस्ते॑ । वस॑वः । नि । ऋ॒ण्वन् । सु॒ऽप्र॒ति॒चक्ष॑म् । अव॑से । कुत॑ः । चि॒त् ।
द॒क्षाय्य॑ः । यः । दमे॑ । आस॑ । नित्य॑ः ॥ २ ॥

ᵛयः अग्निः ᵛदमे गृहे ᵛदक्षाय्यः पूजनीयो हविर्भिः समर्धनीयो वा ᵛनित्यः अजस्रः ᵛआस बभूव ᵛतं ᵛसुप्रतिचक्षं सुप्रतिदर्शनम् ᵛअग्निं ᵛकुतश्चित् सर्वस्मादपि भयहेतोः ᵛअवसे रक्षणाय ᵛवसवः वासका ये वसिष्ठाः ᵛअस्ते गृहे ᵛन्यृण्वन् न्यदधुः ॥

प्रेद्धो॑ अग्ने दीदिहि पु॒रो नोऽज॑स्रया सू॒र्म्या॑ यविष्ठ ।
त्वां शश्व॑न्त॒ उप॑ यन्ति॒ वाजा॑ः ॥ ३ ॥

प्रऽई॑द्धः । अ॒ग्ने॒ । दी॒दि॒हि॒ । पु॒रः । न॒ः । अज॑स्रया । सू॒र्म्या॑ । य॒वि॒ष्ठ॒ ।
त्वाम् । शश्व॑न्तः । उप॑ । य॒न्ति॒ । वाजा॑ः ॥ ३ ॥

ᵛयविष्ठ युवतम हे ᵛअग्ने ᵛप्रेद्धः प्रकर्षेण समिद्धस्त्वम् ᵛअजस्रया अशरणशीलया[1] ᵛसूर्म्या ज्वालया ᵛनः अस्मदर्थं ᵛपुरः[2] पुरस्तात् आहवनीयायतने ᵛदीदिहि दीप्यस्व । ᵛत्वां ᵛशश्वन्तः बहवः ᵛवाजाः अन्नानि हवींषि ᵛउप ᵛयन्ति उपगच्छन्ति ॥

प्र ते अ॒ग्नयो॑ऽग्निभ्यो॒ वरं॒ निः सु॒वीरा॑सः शोशुचन्त द्यु॒मन्त॑ः ।
यत्रा॒ नर॑ः स॒मास॑ते सुजा॒ताः ॥ ४ ॥

प्र । ते । अ॒ग्नय॑ः । अ॒ग्निऽभ्य॑ः । वर॑म् । निः । सऽवीरा॑सः । शो॒शु॒च॒न्त॒ । द्यु॒ऽमन्त॑ः ।
यत्र॑ । नर॑ः । स॒म्ऽआस॑ते । सु॒ऽजा॒ताः ॥ ४ ॥

ᵛअग्निभ्यः लौकिकेभ्योऽग्निभ्यः ᵛवरम् अत्यन्तं ᵛद्युमन्तः दीप्तिमन्तः ᵛसुवीरासः कल्याणपुत्रपौत्रप्रदाः ᵛते ᵛअग्नयः ᵛप्र ᵛनिः ᵛशोशुचन्त प्रकर्षेण नितरां दीप्यन्ते । ᵛयत्र येष्वग्निषु ᵛसुजाताः[3] सुजन्मानः ᵛनरः कर्मणां नेतारो यजमाना ऋत्विजो वा ᵛसमासते सहासते ॥

दा नो॑ अग्ने धि॒या र॒यिं सु॒वीरं॑ स्वप॒त्यं स॑हस्य प्र॒शस्त॑म् ।
न यं यावा॒ तर॑ति यातु॒मावा॑न् ॥ ५ ॥

दाः । न॒ः । अ॒ग्ने॒ । धि॒या । र॒यिम् । सु॒ऽवीर॑म् । सु॒ऽअ॒प॒त्यम् । स॒ह॒स्य॒ । प्र॒ऽश॒स्तम् ।
न । यम् । याव॑ । तर॑ति । या॒तु॒ऽमावा॑न् ॥ ५ ॥

ᵛसहस्य अभिभवकुशल हे ᵛअग्ने ᵛसुवीरं शोभनपुत्रोपेतं ᵛस्वपत्यं शोभनपौत्रोपेतं ᵛप्रशस्तं श्रेष्ठं ᵛरयिं धनं ᵛधिया स्तोत्रेण ᵛनः अस्मभ्यं ᵛदाः देहि । ᵛयं रयिं ᵛयावा अभिगन्ता शत्रुः ᵛयातुमावान् हिंसाया निर्गतः । नलोपाभावश्छान्दसः । यद्वा । हिंसायुक्तः । परो वतिर्मत्वर्थीयः पूरकः । ᵛन ᵛतरति न बाधते ॥ ॥ २३ ॥

---

१. घ—सरणशीलया; ङ—संसरण° । २. ख-ङ-न-भ—'पुरः' नास्ति । ३. ख-घ-ङ-न-भ—जाताः ।

उप॒ यमेति॑ युव॒तिः सु॒दक्षं॑ दो॒षा वस्तो॑र्ह॒विष्म॑ती घृ॒ताची॑ ।
उप॒ स्वैन॑म॒रम॑तिर्वसू॒युः ॥ ६ ॥

उप॑ । यम् । एति॑ । यु॒व॒तिः । सु॒ऽदक्ष॑म् । दो॒षा । वस्तोः॑ । ह॒विष्म॑ती । घृ॒ताची॑ ।
उप॑ । स्वा । ए॒न॒म् । अ॒रम॑तिः । व॒सु॒ऽयुः ॥ ६ ॥

ᵛसुदक्षं सुबलं ᵛयम् अग्निं ᵛहविष्मती हविषा युक्ता ᵛघृताची । घृतमञ्चतीति घृताची जुहूः । ᵛयुवतिः अग्निना नित्ययुक्ता ᵛदोषा ᵛवस्तोः रात्रावहनि च ᵛउप ᵛएति उपगच्छति तम् ᵛएनं ᵛस्वा स्वकीया ᵛअरमतिः दीप्तिः ᵛवसूयुः स्तोतॄणां धनमिच्छन्ती ᵛउप एति ॥

विश्वा॑ अग्ने॒ऽप॑ द॒हारा॑ती॒र्येभि॒स्तपो॑भि॒रद॑हो॒ जरू॑थम् ।
प्र नि॑स्व॒रं चा॑तय॒स्वामी॑वाम् ॥ ७ ॥

विश्वाः॑ । अ॒ग्ने॒ । अप॑ । द॒ह॒ । अरा॑तीः । येभिः॑ । तपः॑ऽभिः । अद॑हः । जरू॑थम् ।
प्र । नि॒ऽस्व॒रम् । चा॒त॒य॒स्व॒ । अमी॑वाम् ॥ ७ ॥

हे ᵛअग्ने ᵛविश्वाः विश्वान् ᵛअरातीः शत्रून् ᵛतपोभिः तेजोभिः ᵛअप ᵛदह । ᵛयेभिः यैः तपोभिः ᵛजरूथं परुषशब्दकारिणं राक्षसम् ॥ गृणातेरूथन्प्रत्यये सति जरूथशब्दनिष्पत्तिः ॥ ᵛअदहः दहसि । किंच ᵛअमीवां रोगं ᵛनिस्वरं न्यक्कृतोपतापं यथा भवति तथा ॥ 'स्वृ शब्दोपतापयोः' इति धातुः ॥ ᵛप्र ᵛचातयस्व प्रकर्षेण नाशय । 'चततिर्गत्यर्थो वा' इति भट्टभास्करमिश्रः ॥

आ यस्ते॑ अग्न इ॒धते॒ अनी॑कं॒ वसि॑ष्ठ॒ शुक्र॒ दीदि॑वः॒ पाव॑क ।
उ॒तो न॑ ए॒भिः स्त॒वथै॑रि॒ह स्याः॑ ॥ ८ ॥

आ । यः । ते॒ । अ॒ग्ने॒ । इ॒धते॑ । अनी॑कम् । वसि॑ष्ठ । शुक्र॑ । दीदि॑ऽवः । पाव॑क ।
उ॒तो इति॑ । नः॒ । ए॒भिः । स्त॒वथैः॑ । इ॒ह । स्याः॒ ॥ ८ ॥

ᵛवसिष्ठ श्रेष्ठ ᵛशुक्र शुभ्र ᵛदीदिवः दीप्त[1] ᵛपावक शोधक हे ᵛअग्ने ᵛते तव ᵛअनीकं तेजः ᵛयः ᵛआ ᵛइधते समेधयति तस्येव ᵛनः अस्माकम् ᵛउतो अपि च ᵛएभिः ᵛस्तवथैः स्तोत्रैः ᵛइह अस्मिन् यज्ञे ᵛस्याः भव ॥

वि ये ते॑ अग्ने भेजि॒रे अनी॑कं॒ मर्ता॒ नरः॒ पित्र्या॑सः पुरु॒त्रा ।
उ॒तो न॑ ए॒भिः सु॒मना॑ इ॒ह स्याः॑ ॥ ९ ॥

वि । ये । ते॒ । अ॒ग्ने॒ । भे॒जि॒रे । अनी॑कम् । मर्ताः॑ । नरः॑ । पित्र्या॑सः । पु॒रु॒ऽत्रा ।
उ॒तो इति॑ । नः॒ । ए॒भिः । सु॒ऽमनाः॑ । इ॒ह । स्याः॒ ॥ ९ ॥

---

१. ख-भ—दीप्तिमन् ।

हे ᵛअग्ने ᵛते तव ᵛअनीकं तेजः ᵛपित्र्यासः पितृहिताः आर्षेया वा ᵛमर्ताः मनुष्याः ᵛनरः कर्मणां नेतारः ᵛये यजमानाः ᵛपुरुत्रा बहुषु देशेषु ᵛवि ᵛभेजिरे विभजन्ते । आदधुरिति यावत् । तेषामिव ᵛनः अस्माकम् ᵛउतो अपि ᵛएभिः स्तुतैः सह स्तोत्रैर्वा ᵛसुमनाः अनुग्राहकमनाः सन् ᵛइह यज्ञे ᵛस्याः भव ॥

इमे नरो वृत्रहत्येषु शूरा विश्वा अदेवीरभि सन्तु मायाः ।
ये मे धियं पनयन्त प्रशस्ताम् ॥ १० ॥

इमे । नरः । वृत्रऽहत्येषु । शूराः । विश्वाः । अदेवीः । अभि । सन्तु । मायाः ।
ये । मे । धियम् । पनयन्त । प्रऽशस्ताम् ॥ १० ॥

ᵛये मनुष्याः ᵛमे मदीयां ᵛप्रशस्तां प्रकृष्टां ᵛधियं कर्म स्तुतिं वा ᵛपनयन्त स्तुवन्ति स्रुवन्ति वा ते ᵛइमे मयि स्निग्धाः ᵛनरः मनुष्याः ᵛवृत्रहत्येषु संग्रामेषु ᵛशूराः ᵛअदेवीः आसुरीः ᵛविश्वाः सर्वाः ᵛमायाः ᵛअभि ᵛसन्तु अभिभवन्तु ॥ ॥ २४ ॥

मा शूने अग्ने नि षदाम नृणां माशेषसोऽवीरता परि त्वा ।
प्रजावतीषु दुर्यासु दुर्य ॥ ११ ॥

मा । शूने । अग्ने । नि । सदाम । नृणाम् । मा । अशेषसः । अवीरता । परि । त्वा ।
प्रजाऽवतीषु । दुर्यासु । दुर्य ॥ ११ ॥

हे ᵛअग्ने ᵛशूने शून्ये पुत्रादिरहिते गृहे ᵛमा ᵛनि ᵛषदाम न निवसाम । ᵛनृणाम् अन्येषां च गृहे ᵛमा नि षदाम । ᵛदुर्य गृहेभ्यो हित हे अग्ने ᵛअशेषसः अपुत्राः । 'तोक्म शेषः' इति पुत्रनामसु पाठात् । ᵛअवीरता अवीरतया युक्ताश्च सन्तः ᵛत्वा त्वां ᵛपरि चरन्तः ᵛप्रजावतीषु एव ᵛदुर्यासु गृहेषु निवसाम ॥

यमश्वी नित्यमुपयाति यज्ञं प्रजावन्तं स्वपत्यं क्षयं नः ।
स्वजन्मना शेषसा वावृधानम् ॥ १२ ॥

यम् । अश्वी । नित्यम् । उपऽयाति । यज्ञम् । प्रजाऽवन्तम् । सुऽअपत्यम् । क्षयम् । नः ।
स्वऽजन्मना । शेषसा । ववृधानम् ॥ १२ ॥

ᵛयं ᵛयज्ञं यज्ञाश्रयम् ᵛअश्वी अश्ववानग्निः ᵛनित्यमुपयाति तं ᵛप्रजावन्तं भृत्यादिसहितं ᵛस्वपत्यं शोभनसंतानोपेतं ᵛस्वजन्मना औरसेन ᵛशेषसा पुत्रेण ᵛववृधानं वर्धमानं ᵛक्षयं गृहं ᵛनः अस्मभ्यं हे अग्ने देहीति शेषः ॥

पाहि नो अग्ने रक्षसो अजुष्टात्पाहि धूर्तेरररुषो अघायोः ।
त्वा युजा पृतनायूँरभि ष्याम् ॥ १३ ॥

पाहि । नः । अग्ने । रक्षसः । अजुष्टात् । पाहि । धूर्तेः । अररुषः । अघऽयोः ।
त्वा । युजा । पृतनाऽयून् । अभि । स्याम् ॥ १३ ॥

हे अग्ने नः अस्मान् अजुष्टात् अप्रीतिविषयात् रक्षसः राक्षसात् पाहि रक्ष । किंच अररुषः अदातुः अघायोः पापमिच्छतः धूर्तेः हिंसकात् पाहि । अपि च त्वा त्वया युजा सहायभूतेन पृतनायून् पृतनाकामान् अभि ष्याम् अहमभिभवेयम् ॥

सेदुग्निरुग्नीँरत्यस्त्वन्यान्यत्र वाजी तनयो वीळुपाणिः ।
सहस्रपाथा अक्षरा समेति ॥ १४ ॥

सः । इत् । अग्निः । अग्नीन् । अति । अस्तु । अन्यान् । यत्र । वाजी । तनयः । वीळुऽपाणिः ।
सहस्रऽपाथाः । अक्षरा । सम्ऽएति ॥ १४ ॥

स इत् स एव अग्निः आहवनीयादिरस्मदीयः अन्यान् इतरान् अन्यदीयान् अग्नीन् अत्यस्तु अतिभवतु । यत्र यस्मिन्नग्नौ वाजी अशनवान्[1] बलवान् वा वीळुपाणिः दृढहस्तः । 'वीळु च्यौत्नम्' इति बलनामसु पाठात् । सहस्रपाथाः बह्वन्नो बहुस्थानो वा बहूदको वा तनयः अस्मत्पुत्रः अक्षरा अक्षरेण क्षयरहितेन स्तोत्रेण समेति सम्यक् परिचरतीति । समर्थपुत्रवत एवाग्निः अन्यदीयानग्नीनभिभवतीति भावः ॥

सेदुग्निर्यो वनुष्यतो निपाति समेद्धारमंहस उरुष्यात् ।
सुजातासः परि चरन्ति वीराः ॥ १५ ॥

सः । इत् । अग्निः । यः । वनुष्यतः । निऽपाति । सम्ऽएद्धारम् । अंहसः । उरुष्यात् ।
सुऽजातासः । परि । चरन्ति । वीराः ॥ १५ ॥

यः समेद्धारं प्रबोधकं[2] वनुष्यतः हिंसकात् । 'वनुष्यतिर्हन्तिकर्मा' (निरु. ५. २) इति यास्कः । उरुष्यात् अधिकात् अंहसः पापात् च निपाति अत्यन्तं रक्षति । यं[3] च सुजातासः सुजन्मान एव वीराः स्तोतारः सुता वा परि चरन्ति स इत् स एव अग्निः ॥ ॥२५॥

अयं सो अग्निराहुतः पुरुत्रा यमीशानः समिदिन्धे हविष्मान् ।
परि यमेत्यध्वरेषु होता ॥ १६ ॥

अयम् । सः । अग्निः । आऽहुतः । पुरुऽत्रा । यम् । ईशानः । सम् । इत् । इन्धे । हविष्मान् ।
परि । यम् । एति । अध्वरेषु । होता ॥ १६ ॥

यम् अग्निम् ईशानः समृद्ध ऐश्वर्यमिच्छन् वा हविष्मान् यजमानः सम्[4] इन्धे[4] सम्यक् दीपयति । यं च अध्वरेषु हिंसारहितेषु यज्ञेषु होता देवानामाह्वाता परि एति परिगच्छति सः अयम् अग्निः पुरुत्रा बहुषु देशेषु बहुषु यज्ञेषु वा आहुतः आहुतिभिरभिहुतः ॥

त्वे अग्न आहवनानि भूरीशानास आ जुहुयाम नित्या ।
उभा कृण्वन्तो वहतू मियेधे ॥ १७ ॥

---

१. ख-घ—अन्नवान्; य—वेजनवान् । २. ख-म्र-त-न-म-श—प्रबोधकं सेदग्निर्यो । ३. ख—यत्; घ-म्र-त-न-म-श—ये । ४. घ-त-न-श—समिदिंधे; म्र—समिधे ।

त्वे इति । अग्ने । आऽहवनानि । भूरि । ईशानासः । आ । जुहुयाम । नित्या ।
उभा । कृण्वन्तः । वहतू इति । मियेधे ॥ १७ ॥

हे vअग्ने vत्वे त्वयि vईशानासः धनानामीश्वराः सन्तः vनित्या नित्यान्यग्निहोत्रादीनि vउभा उभौ vवहतू वहनहेतू स्तोत्रं शस्त्रं च vकृण्वन्तः कुर्वन्तः vमियेधे यज्ञे vभूरि बहूनि vआहवनानि हवींषि vआ vजुहुयाम आजुहवाम[1] ॥

इमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ ।
प्रति न ईं सुरभीणि व्यन्तु ॥ १८ ॥

इमो इति । अग्ने । वीतऽतमानि । हव्या । अजस्रः । वक्षि । देवऽतातिम् । अच्छ ।
प्रति । नः । ईम् । सुरभीणि । व्यन्तु ॥ १८ ॥

हे vअग्ने त्वम् vअजस्रः अनवरतः सन् vइमो इमानि vवीततमानि अतिशयेन कान्तानि vहव्या हव्यानि vदेवतातिं देवानां समूहम् अभि vवक्षि वह । vअच्छ गच्छ च । vनः अस्मदीयानि vसुरभीणि शोभनानि vईम् एतानि हव्यानि देवाः vप्रति vव्यन्तु प्रत्येकं कामयन्ताम् ॥

मा नो अग्नेऽवीरते परा दा दुर्वाससेऽमतये मा नो अस्यै ।
मा नः क्षुधे मा रक्षस ऋतावो मा नो दमे मा वन आ जुहूर्थाः ॥ १९ ॥

मा । नः । अग्ने । अवीरते । परा । दाः । दुःऽवाससे । अमतये । मा । नः । अस्यै ।
मा । नः । क्षुधे । मा । रक्षसे । ऋतऽवः । मा । नः । दमे । मा । वने । आ । जुहूर्थाः ॥ १९ ॥

हे vअग्ने vनः अस्मान् vअवीरते अपुत्रताय vमा vपरा vदाः मा देहि । vदुर्वाससे दुष्टवस्त्राय च नो मा परा दाः । vअस्यै vअमतये अभिहान्यै vनः अस्मान् vमा परा दाः । vक्षुधे अशनायायै vनः अस्मान् vमा च परा दाः । vरक्षसे बलिने चास्मान् vमा परा दाः । हे vऋतावः[2] सत्यवन् अग्ने vनः अस्मान् vदमे गृहे vमा vजुहूर्थाः मा हिंसीः ॥ 'हुर्च्छा कौटिल्ये' इति धातुः ॥ vवने चास्मान् vमा जुहूर्थाः ॥

नू मे ब्रह्माण्यग्न उच्छशाधि त्वं देव मघवद्भ्यः सुषूदः ।
रातौ स्यामोभयास आ ते यूयं पात स्वस्तिभिः सदा नः ॥ २० ॥

नु । मे । ब्रह्माणि । अग्ने । उत् । शशाधि । त्वम् । देव । मघवत्ऽभ्यः । सुसूदः ।
रातौ । स्याम । उभयासः । आ । ते । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ २० ॥

हे vअग्ने vमे मम मदर्थं vब्रह्माणि अन्नानि vनु क्षिप्रम् vउच्छशाधि उत्कर्षेण शोधितानि कुरु । किंच हे vदेव द्योतमानाग्ने vमघवद्भ्यः हविष्मद्भ्योऽस्मभ्यं vसुषूदः अन्नानि प्रेरय । vते त्वदीयायां vरातौ दाने vउभयासः[3] स्तोत्रिणः शस्त्रिणश्च अथवा[4] स्तुवन्तो यजमानाश्च वयम् vआ

---

१. ख-घ-ङ-त-भ—आहुवाम; न—आजुहावाम; श—जुहुवाम । २. ङ-श—ऋतवः । ३. त-य—उभयासः उभये । ४. ङ—यथ वा; त-न-भ-य-श—यथा वा ।

ᵛस्याम अस्यर्थं भवेम । ᵛनः अस्मान् ᵛयूयं त्वत्परिवाराश्च सर्वे ᵛस्वस्तिभिः अविनाशिभिर्मङ्गलैः । तथा च यास्कः—‘ स्वस्तीत्यविनाशनामास्तिरभिपूजितः स्वस्ति ’ (निरु. ३. २१) इति । ᵛसदा ᵛपात रक्षत ॥ ॥ २६ ॥

त्वमग्ने सुहवो रण्वसंदृक्सुदीती सूनो सहसो दिदीहि ।
मा त्वे सचा तनये नित्य आ धङ्मा वीरो अस्मन्नर्यो वि दासीत् ॥२१॥

त्वम् । अग्ने । सुऽहवः । रण्वऽसंदृक् । सुऽदीती । सूनो इति । सहसः । दिदीहि ।
मा । त्वे इति । सचा । तनये । नित्ये । आ । धक् । मा । वीरः । अस्मत् । नर्यः । वि । दासीत् ॥२१॥

ᵛसहसः ᵛसूनो सहसः सुत हे ᵛअग्ने ᵛसुहवः स्वाह्वानः ᵛरण्वसंदृक् रमणीयसंदर्शनः ᵛत्वं ᵛसुदीती शोभनया दीप्त्या ᵛदिदीहि दीप्यस्व । किंच ᵛतनये ᵛनित्ये औरसे पुत्रे ᵛत्वे त्वं ᵛसचा सहायभूतः ᵛमा ᵛआ ᵛधक् माभिधाक्षीः । अपि च ᵛअस्मत् पृथग्भूतः अस्माकं वा । षष्ठ्यर्थे पञ्चमी । ᵛवीरः पुत्रः ᵛनर्यः नरहितः ᵛमा ᵛवि ᵛदासीत् नोपक्षीयेत ॥

मा नो अग्ने दुर्भृतये सचैषु देवेद्धेष्वग्निषु प्र वोचः ।
मा ते अस्मान्दुर्मतयो भृमाच्चिद्देवस्य सूनो सहसो नशन्त ॥ २२ ॥

मा । नः । अग्ने । दुःऽभृतये । सचा । एषु । देवऽइद्धेषु । अग्निषु । प्र । वोचः ।
मा । ते । अस्मान् । दुःऽमतयः । भृमात् । चित् । देवस्य । सूनो इति । सहसः । नशन्त ॥२२॥

हे ᵛअग्ने ᵛसचा सहायभूतस्त्वं ᵛदेवेद्धेषु ऋत्विग्भिः समिद्धेषु ᵛएषु ᵛअग्निषु ᵛदुर्भृतये कृच्छ्र-भरणाय ᵛनः अस्मान् ᵛमा ᵛप्र ᵛवोचः न ब्रूहि । त्वत्सहायभूता अग्नयो यथा मामकृच्छ्रेण बिभृयुः तथा ब्रूहीत्यर्थः । किंच ᵛसहसः ᵛसूनो हे बलस्य पुत्र अग्ने ᵛदेवस्य द्योतमानस्य ᵛते तव ᵛदुर्मतयः निग्रहबुद्धयः ᵛभृमाच्चित् भ्रमादपि । अत्र संप्रसारणं छान्दसम् । प्रमादादपीत्यर्थः । ᵛअस्मान् ᵛमा ᵛनशन्त मा व्याप्नुवन्तु । नशदिति व्याप्तिकर्मसु पाठात् ॥

स मर्तो अग्ने स्वनीक रेवानमर्त्ये य आजुहोति हव्यम् ।
स देवता वसुवनिं दधाति यं सूरिरर्थी पृच्छमान एति ॥ २३ ॥

सः । मर्तः । अग्ने । सुऽअनीक । रेवान् । अमर्त्ये । यः । आऽजुहोति । हव्यम् ।
सः । देवता । वसुऽवनिम् । दधाति । यम् । सूरिः । अर्थी । पृच्छमानः । एति ॥ २३ ॥

ᵛस्वनीक सुतेजस्क हे ᵛअग्ने ᵛअमर्त्ये अमनुष्ये देवतात्मनि त्वयि ᵛहव्यं हविः ᵛयः ᵛआजु-होति ᵛस ᵛमर्तः मनुष्यः ᵛरेवान् धनवान् भवति । ᵛयं मर्त्यं ᵛसूरिः प्राज्ञः ᵛअर्थी धनादिकामः ᵛपृच्छमानः असौ उदारः क्वास्ते[1] इति पृच्छन् ᵛएति अभिगच्छति ᵛसः एव मनुष्यः ᵛदेवता देवताभ्यः ᵛवसुवनिं धनपोषं ददाति[2] । यद्वा । स देवताग्निर्वसुवनिं यजमानं दधाति धारयति यमग्निं सूरिः स्तोता अर्थी प्रयोजनवान् पृच्छमानः कोऽसावग्निरिति पृच्छमान एति ॥

---

१. त—कोस्ति । २. ख-ग-न-भ—ददाति धारयति; त—दधाति धारयति ।

महो नो अग्ने सुवितस्य विद्वान्रयिं सूरिभ्य आ वहा बृहन्तम् ।
येन वयं सहसावन्मदेमाविक्षितास आयुषा सुवीराः ॥ २४ ॥

महः । नः । अग्ने । सुवितस्य । विद्वान् । रयिम् । सूरिऽभ्यः । आ । वह । बृहन्तम् ।
येन । वयम् । सहसाऽवन् । मदेम । अविऽक्षितासः । आयुषा । सुऽवीराः ॥ २४ ॥

हे अग्ने नः अस्मदीयस्य महः महतः सुवितस्य कल्याणस्य कर्मणः विद्वान्[1] । अस्मदीयं कल्याणं कर्म[2] जानन्नित्यर्थः । त्वं सूरिभ्यः स्तोतृभ्योऽस्मभ्यं बृहन्तं महान्तं रयिं धनम् आ वह । रयिमेव विशिनष्टि । हे सहसावन् बलवन् अग्ने येन धनेन वयं स्तोतारः अविक्षितासः अविक्षीणाः आयुषा पूर्णायुषः सुवीराः कल्याणपुत्रपौत्राश्च सन्तः मदेम हृष्येम ॥

नू मे ब्रह्माण्यग्न उच्छशाधि त्वं देव मघवद्भ्यः सुषूदः ।
रातौ स्यामोभयास आ ते यूयं पात स्वस्तिभिः सदा नः ॥ २५ ॥

नु । मे । ब्रह्माणि । अग्ने । उत् । शशाधि । त्वम् । देव । मघवत्ऽभ्यः । सुसूदः ।
रातौ । स्याम । उभयासः । आ । ते । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ २५ ॥

इयमृक् प्रागेव व्याख्याता ॥ ॥ २७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्क-
भूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते
माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
पञ्चमाष्टके प्रथमोऽध्यायः समाप्तः ॥

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

‘ जुषस्व नः ’ इत्येकादशर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभम् । आप्रशब्दोक्तत्वादिदं तनूनपाद्र-हितम् । समिद्धाद्या अग्निविशेषाः प्रत्यृचं देवता उक्ताः । तथा चानुक्रम्यते—‘ जुषस्वैकादशाप्रम् ’ इति । पशाविष्टाविदमाप्रीसूक्तम् । सूत्रितं च—‘ जुषस्व नः समिधमिति वसिष्ठानाम् ’ ( आश्व. श्रौ. ३. २ ) इति । पत्नीसंयाजे त्वाष्ट्रयागस्य याज्या त्वाष्ट्रे पशावपि पुरोडाशस्यानुवाक्येयमिति पूर्वसुक्तम् ॥

जुषस्व नः समिधमग्ने अद्य शोचा बृहद्यजतं धूममृण्वन् ।
उप स्पृश दिव्यं सानु स्तूपैः सं रश्मिभिस्ततनः सूर्यस्य ॥ १ ॥

जुषस्व । नः । सम्ऽइधम् । अग्ने । अद्य । शोच । बृहत् । यजतम् । धूमम् । ऋण्वन् ।
उप । स्पृश । दिव्यम् । सानु । स्तूपैः । सम् । रश्मिऽभिः । ततनः । सूर्यस्य ॥ १ ॥

---

१. ख-झ-त-न-भ-य-श-विद्वान् जानन् । २. श-कर्मजातं ।

हे ᵛअग्ने ᵛनः अस्माकं ᵛसमिधम् ᵛअद्य ᵛजुषस्व सेवस्व । ᵛयजतं यजनीयं प्रशस्तं ᵛधूमम् ᵛऋण्वन् प्रेरयन् ᵛबृहत् अत्यन्तं ᵛशोच दीप्यस्व च । किंच ᵛदिव्यम् अन्तरिक्षभवं ᵛसानु समुच्छ्रितं ᵛस्तूपैः तप्तैः[1] रश्मिभिः ᵛउप ᵛस्पृश । अपि च ᵛसूर्यस्य ᵛरश्मिभिः तेजोभिः ᵛसं ᵛततनः संगच्छस्व ॥

नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः ।
ये सुक्रतवः शुचयो धियंधाः स्वदन्ति देवा उभयानि हव्या ॥ २ ॥

नराशंसस्य । महिमानम् । एषाम् । उप । स्तोषाम । यजतस्य । यज्ञैः ।
ये । सुऽक्रतवः । शुचयः । धियम्ऽधाः । स्वदन्ति । देवाः । उभयानि । हव्या ॥ २ ॥

ᵛये ᵛदेवाः ᵛसुक्रतवः सुप्रज्ञाः सुकर्माणो वा ᵛशुचयः दीप्तिमन्तः ᵛधियंधाः कर्मणां धारयितारः ᵛउभयानि सौमिकानि[2] च हविःसंस्थादीनि च[2] ᵛहव्या हव्यानि ᵛस्वदन्ति स्वदयन्ति भक्षयन्ति तेषाम् ᵛएषां मध्ये ᵛयज्ञैः हविर्भिः स्तोत्रैर्वा ᵛयजतस्य यजनीयस्य ᵛनराशंसस्य नरैः प्रशंसनीयस्य अग्निविशेषस्य ᵛमहिमानं महत्त्वम् ᵛउप ᵛस्तोषाम वयमुपस्तुमः । तथा च यास्कः—' नरा अस्मिन्नासीनाः शंसन्ति । अग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति । तस्यैषा भवति । नराशंसस्य महिमानमेषामुप स्तोषाम[3] यजतस्य[3] यज्ञैर्ये सुकर्माणः[4] शुचयो धियं धारयितारः स्वदयन्तु देवा उभयानि हवींषि सोमं चेतराणि च ' ( निरु. ८. ६ ) इति ॥

ईळेन्यं वो असुरं सुदक्षमन्तर्दूतं रोदसी सत्यवाचम् ।
मनुष्वदग्निं मनुना समिद्धं समध्वराय सदमिन्महेम ॥ ३ ॥

ईळेन्यम् । वः । असुरम् । सुऽदक्षम् । अन्तः । दूतम् । रोदसी इति । सत्यऽवाचम् ।
मनुष्वत् । अग्निम् । मनुना । सम्ऽइद्धम् । सम् । अध्वराय । सदम् । इत् । महेम ॥ ३ ॥

हे अध्वर्यवः ᵛवः यूयम् ᵛईळेन्यं स्तुत्यम् ᵛअसुरं बलवन्तं ᵛसुदक्षं सुप्रज्ञं ᵛरोदसी रोदस्योः ᵛअन्तः मध्ये ᵛदूतं देवानां हविर्वहनार्थं चरन्तं ᵛसत्यवाचं ᵛमनुष्वत् मनुष्यवत्[5] ᵛमनुना ᵛसमिद्धं यथेदानीं मनुष्याः समिन्धते तथा पूर्वं मनुना प्रजापतिना समिद्धम् ᵛअग्निम् ᵛअध्वराय यज्ञाय ᵛसदमित् सदैव ᵛसं ᵛमहेम संपूजयत ॥ मध्यमपुरुषस्य व्यत्ययेनोत्तमपुरुषत्वम् ॥

सपर्यवो भरमाणा अभिज्ञु प्र वृञ्जते नमसा बर्हिरग्नौ ।
आजुह्वाना घृतपृष्ठं पृषद्वदध्वर्यवो हविषा मर्जयध्वम् ॥ ४ ॥

सपर्यवः । भरमाणाः । अभिऽज्ञु । प्र । वृञ्जते । नमसा । बर्हिः । अग्नौ ।
आऽजुह्वानाः । घृतऽपृष्ठम् । पृषत्ऽवत् । अध्वर्यवः । हविषा । मर्जयध्वम् ॥ ४ ॥

---

१. झ-श—तन्वैः; त—त्वदीयैः; न—' तप्तैः ' नास्ति । २. ख—सौमिकानि इतराणि च; घ—इतराणि सौमिकानि च; झ-त-न-भ-श—सौमिकानि च । ३. त—स्तुमो यज्ञियस्य । ४. य-श—सुकर्माणः सुक्रतवः । ५. ख-झ-त-न-भ-श—' मनुष्यवत् ' नास्ति ।

vसपर्यवः परिचरणमिच्छन्तः vअभिज्ञु अभिगतजानुकं vभरमाणाः पादौ भरन्तः vबर्हिः vनमसा हविषा सह vअग्नौ vप्र vवृञ्जते प्रभरन्ति । तदेव विशदयति । हे vअध्वर्यवः vघृतपृष्ठं घृतसंसिक्तपृष्ठं vपृषद्वत् स्थूलबिन्दुभिर्युक्तं बर्हिः vहविषा सह vआजुह्वानाः vमर्जयध्वम् अग्निं परिचरत ॥

स्वाध्यो३ वि दुरो देवयन्तोऽशिश्रयू रथयुर्देवताता ।
पूर्वी शिशुं न मातरा रिहाणे समग्रुवो न समनेष्वञ्जन् ॥ ५ ॥

सुऽआध्यः । वि । दुरः । देवऽयन्तः । अशिश्रयुः । रथऽयुः । देवऽताता ।
पूर्वी इति । शिशुम् । न । मातरा । रिहाणे इति । सम् । अग्रुवः । न । समनेषु । अञ्जन् ॥५॥

vस्वाध्यः सुकर्माणः vदेवयन्तः देवकामा यजमानाः vरथयुः रथकामाश्च[1] ॥ जसि पूर्वसवर्णो ह्रस्वश्च ॥ vदेवताता देवतातौ यज्ञे vदुरः यज्ञगृहद्वाराणि vवि vअशिश्रयुः आश्रितवन्तः । किंच vसमनेषु यज्ञेषु vपूर्वी प्राचीने प्रागग्रे जुहूपभृतौ vशिशुं vन वत्समिव मातरौ गावौ vरिहाणे अग्निं लिहाने vअग्रुवो vन यथा नद्यः क्षेत्राण्युदकेन तद्वत् vसम् vअञ्जन् अध्वर्यवः आज्येन समञ्जन्ति ॥ ॥ १ ॥

उत योषणे दिव्ये मही न उषासानक्ता सुदुघेव धेनुः ।
बर्हिषदा पुरुहूते मघोनी आ यज्ञिये सुविताय श्रयेताम् ॥ ६ ॥

उत । योषणे इति । दिव्ये इति । मही इति । नः । उषसानक्ता । सुदुघाऽइव । धेनुः ।
बर्हिऽसदा । पुरुहूते इति पुरुऽहूते । मघोनी इति । आ । यज्ञिये इति । सुवितार्य । श्रयेताम् ॥६॥

vउत अपि च vयोषणे युवत्यौ स्त्रीरूपे[2] वा vदिव्ये[3] दिवि भवे vमही महत्यौ[3] vबर्हिषदा बर्हिषि सीदन्त्यौ vपुरुहूते बहुभिः स्तुते vमघोनी धनवत्यौ vयज्ञिये यज्ञार्हे vउषासानक्ता अहोरात्रे vसुदुघेव vधेनुः कामधुग्धेनुरिव vनः अस्मान् vसुविताय कल्याणाय vआ vश्रयेताम् ॥

विप्रा यज्ञेषु मानुषेषु कारू मन्ये वां जातवेदसा यजध्यै ।
ऊर्ध्वं नो अध्वरं कृतं हवेषु ता देवेषु वनथो वार्याणि ॥ ७ ॥

विप्रा । यज्ञेषु । मानुषेषु । कारू इति । मन्ये । वाम् । जातऽवेदसा । यजध्यै ।
ऊर्ध्वम् । नः । अध्वरम् । कृतम् । हवेषु । ता । देवेषु । वनथः । वार्याणि ॥ ७ ॥

हे दैव्या होतारौ vविप्रा मेधाविनौ vजातवेदसा जातधनौ vमानुषेषु मनुष्यैः क्रियमाणेषु vयज्ञेषु vकारू कर्मणां कर्तारौ vवां युवां vयजध्यै यष्टुं vमन्ये स्तौमि । किंच vहवेषु हवनेषु स्तोत्रेषु सत्सु vनः अस्माकम् vअध्वरम् अकुटिलं यज्ञम् vऊर्ध्वं देवाभिमुखं vकृतं कुरुतं च । अपि च vता तौ युवां vदेवेषु विद्यमानानि vवार्याणि धनानि vवनथः संभजथः । तान्यस्मभ्यं संप्रयच्छथ इत्यर्थः॥

---

१. ख-त-भ-रथकामश्च; श-रथमात्मन इच्छंतश्च । २. ख-भ-मिश्ररूपे । ३. ख-ज्ञ-त-न-भ-श- 'दिव्ये...महत्यौ' नास्ति ।

आ भारती भारतीभिः सजोषा इळा देवैर्मनुष्येभिरग्निः ।
सरस्वती सारस्वतेभिरर्वाक् तिस्रो देवीर्बर्हिरेदं सदन्तु ॥ ८ ॥

आ । भारती । भारतीभिः । सऽजोषाः । इळा । देवैः । मनुष्येभिः । अग्निः ।
सरस्वती । सारस्वतेभिः । अर्वाक् । तिस्रः । देवीः । बर्हिः । आ । इदम् । सदन्तु ॥ ८ ॥

एतदाद्यृक्चतुष्टयं द्वितीयाष्टकस्याष्टमाध्याये (ऋ. सं. ३. ४. ८-११) यद्यपि व्याख्यातं तथापि व्यवधानात् संक्षेपतोऽत्रापि व्याख्यायते। भारती भरतस्यादित्यस्य पत्नी भारतीभिः सजोषाः सहिता इळा मनुष्येभिः मनुष्यलोकभवैः देवैः सार्धम् अग्निः आ गच्छतु। सरस्वती सारस्वतेभिः सारस्वतैः मध्यमस्थानैर्देवैः सार्धम् अर्वाक् अस्मदभिमुखमागच्छतु। आगत्य तिस्रो देवीः देव्यः ॥ प्रथमार्थे द्वितीया ॥ बर्हिः इदम् आ सदन्तु[1] ॥

तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व ।
यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः ॥ ९ ॥

तत् । नः । तुरीपम् । अध । पोषयित्नु । देव । त्वष्टः । वि । रराणः । स्यस्वेति स्यस्व ।
यतः । वीरः । कर्मण्यः । सुऽदक्षः । युक्तऽग्रावा । जायते । देवऽकामः ॥ ९ ॥

देव द्योतमान हे त्वष्टः रराणः रममाणस्त्वं नः अस्माकं तुरीपं त्वरितमाप्नुवत् पोषयित्नु पोषकरं तत् रेतः वि स्यस्व विशेषेणावसानं प्रापय। विमोचयेत्यर्थः। यतः रेतसः कर्मण्यः कर्मसु साधुः सुदक्षः सुबलः युक्तग्रावा सोमसुत् देवकामः वीरः पुत्रः जायते ॥

वनस्पतेऽव सृजोप देवानग्निर्हविः शमिता सूदयाति ।
सेदु होता सत्यतरो यजाति यथा देवानां जनिमानि वेद ॥ १० ॥

वनस्पते । अव । सृज । उप । देवान् । अग्निः । हविः । शमिता । सूदयाति ।
सः । इत् । ऊँ इति । होता । सत्यऽतरः । यजाति । यथा । देवानाम् । जनिमानि । वेद ॥ १० ॥

हे वनस्पते देवान्[2] उप अव[2] सृज। अथ परोक्षस्तुतिः। अग्निः वनस्पतिः शमिता शामित्ररूपः सन् हविः सूदयाति प्रेरयतु। सेत् स एव वनस्पतिः होता देवानामाह्वाता सत्यतरः अपि सन् यजाति यजतु। देवानां जनिमानि जननानि[3] यथा स्वयं वेद तथा ॥

आ याह्यग्ने समिधानो अर्वाङिन्द्रेण देवैः सरथं तुरेभिः ।
बर्हिर्न आस्तामदितिः सुपुत्रा स्वाहा देवा अमृता मादयन्ताम् ॥ ११ ॥

आ । याहि । अग्ने । सम्ऽइधानः । अर्वाङ् । इन्द्रेण । देवैः । सऽरथम् । तुरेभिः ।
बर्हिः । नः । आस्ताम् । अदितिः । सुऽपुत्रा । स्वाहा । देवाः । अमृताः । मादयन्ताम् ॥ ११ ॥

---

१. ख-न-भ-श-सीदन्तु; घ-सदन्तु आसीदन्तु । २. ख-ज्ञ-झ-त३-भ-श-देवानुप; त१-२-देवानुरूप । ३. ख-त३-न-भ-जानन्; ज्ञ-जन्मानि; झ-श-जनान्; त१-२-जनानाम् ।

हे ᵛअग्ने ᵛसमिधानः[1] ᵛअर्वाक् अस्मदभिमुखस्त्वम् ᵛइन्द्रेण ᵛतुरेभिः त्वरितैः ᵛदेवैः च ᵛसरथं समानरथं यथा भवति तथा ᵛआ ᵛयाहि आगच्छ । ᵛनः अस्माकं ᵛबर्हिः अधि ᵛआस्ताम् ᵛअदितिः च ᵛसुपुत्रा कल्याणपुत्रा । ᵛस्वाहा ᵛदेवाः च सर्वे ᵛअमृताः सन्तः ᵛमादयन्ताम् इति ॥ ॥ २ ॥

'अग्निं वो देवम्' इति दशर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । अत्रेयमनुक्रमणिका– 'अग्निं वो दश' इति । 'अग्निं वो देवम्' इत्येतदादीनि दश सूक्तानि तृतीयचतुर्थवर्जितानि प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे च विनियुक्तानि । सूत्रितं च—'अग्निं वो देवमिति दशानां तृतीयचतुर्थे उद्धरेत्' (आश्व. श्रौ. ४·१३) इति । व्यूळ्हे दशरात्रेऽष्टमेऽहनीदं सूक्तमाज्यशस्त्रम् । सूत्र्यते हि—'द्वितीयस्याग्निं वो देवमित्याज्यम्' (आश्व. श्रौ. ८·१०) इति ॥

अ॒ग्निं वो॑ दे॒वम॒ग्निभिः॑ स॒जोषा॒ यजि॑ष्ठं दू॒तम॑ध्व॒रे कृ॑णुध्वम् ।
यो मर्त्ये॑षु॒ निध्रु॑विर्ऋ॒तावा॒ तपु॑र्मूर्धा घृ॒तान्नः॑ पाव॒कः ॥ १ ॥

अ॒ग्निम् । व॒ः । दे॒वम् । अ॒ग्निऽभिः॑ । स॒ऽजोषाः॑ । यजि॑ष्ठम् । दू॒तम् । अ॒ध्व॒रे । कृ॒णु॒ध्व॒म् ।
यः । मर्त्ये॑षु । निऽध्रु॑विः । ऋ॒तऽवा॑ । तपुः॑ऽमूर्धा । घृ॒तऽअ॑न्नः । पा॒व॒कः ॥ १ ॥

हे देवाः ᵛवः यूयं ᵛदेवं द्योतमानम् ᵛअग्निभिः अन्यैरग्निभिः ᵛसजोषाः सजोषसं सहितम् । द्वितीयार्थे प्रथमा । ᵛयजिष्ठं यष्टृतमम् ᵛअग्निम् ᵛअध्वरे कौटिल्यरहिते यज्ञे ᵛदूतं ᵛकृणुध्वं कुरुत । ᵛयः अग्निर्देवोऽपि सन् ᵛमर्त्येषु ᵛनिध्रुविः नितरां ध्रुवस्तिष्ठति ᵛऋतावा यज्ञवान् सत्यवान् वा ᵛतपुर्मूर्धा तापकतेजाः ᵛघृतान्नः ᵛपावकः शोधकश्च भवति ॥

प्रोथ॒दश्वो॒ न यव॑सेऽवि॒ष्यन्य॒दा म॒हः सं॒वर॑णा॒द्व्यस्था॑त् ।
आद॑स्य॒ वातो॒ अनु॑ वाति शो॒चिरध॑ स्म ते॒ व्रज॑नं कृ॒ष्णम॑स्ति ॥ २ ॥

प्रोथ॑त् । अश्वः॑ । न । यव॑से । अ॒वि॒ष्यन् । य॒दा । म॒हः । स॒म्ऽवर॑णात् । वि । अ॒स्था॑त् ।
आत् । अ॒स्य॒ । वातः॑ । अनु॑ । वा॒ति॒ । शो॒चिः । अध॑ । स्म॒ । ते॒ । व्रज॑नम् । कृ॒ष्णम् । अ॒स्ति॒ ॥ २ ॥

ᵛयवसे घासे ᵛअविष्यन् भक्षयन् ᵛप्रोथत् शब्दं कुर्वन् संचरन् वा ᵛअश्वो ᵛन अश्व इव ᵛमहः महतः ᵛसंवरणात् निरोधात् दावरूपोऽग्निः ᵛयदा ᵛव्यस्थात् संततेषु वृक्षेषु वितिष्ठते ᵛआत् तदा ᵛअस्य अग्नेः ᵛशोचिः अर्चिः ᵛअनु ᵛवातः ᵛवाति । अथ प्रत्यक्षस्तुतिः । ᵛअध अनन्तरं हे अग्ने ᵛते तव ᵛव्रजनं वर्त्म ᵛकृष्णमस्ति भवति । ᵛस्म इति पूरणः ॥

उद्यस्य॑ ते॒ नव॑जातस्य॒ वृष्णोऽग्ने॒ चर॑न्त्य॒जरा॑ इधा॒नाः ।
अच्छा॒ द्याम॑रु॒षो धू॒म ए॑ति॒ सं दू॒तो अ॑ग्न॒ ईय॑से॒ हि दे॒वान् ॥ ३ ॥

उत् । यस्य॑ । ते॒ । नव॑ऽजातस्य । वृष्णः॑ । अग्ने॑ । चर॑न्ति । अ॒जराः॑ । इ॒धा॒नाः ।
अच्छ॑ । द्याम् । अ॒रु॒षः । धू॒मः । ए॒ति॒ । सम् । दू॒तः । अ॒ग्ने॒ । ईय॑से । हि । दे॒वान् ॥ ३ ॥

---

१. त–समिधानः समिध्यमानः ।

हे ^v^अग्ने ^v^नवजातस्य नवप्रादुर्भावस्य ^v^वृष्णः वर्षितुः ^v^यस्य ^v^ते तव ^v^अजराः जरारहिता ज्वालाः ^v^इधानाः[1] ^v^उत् ^v^चरन्ति उद्गच्छन्ति अस्य ^v^अरुषः आरोचमानः ^v^धूमः ^v^द्याम् ^v^अच्छ दिवमभि ^v^एति गच्छति[2]। हे ^v^अग्ने त्वं ^v^दूतः सन् ^v^देवान् ^v^सम् ^v^ईयसे ^v^हि संप्राप्नोषि च ॥

वि यस्य॑ ते पृथि॒व्यां पाजो॒ अश्रे॑त्तृ॒षु यदन्ना॑ स॒मवृ॑क्त॒ जम्भैः॑ ।
सेने॑व सृ॒ष्टा प्रसि॑तिष्ट एति॒ यवं॒ न द॑स्म जु॒ह्वा॑ विवे॑क्षि ॥ ४ ॥

वि । यस्य॑ । ते॒ । पृ॒थि॒व्याम् । पाजः॑ । अश्रे॑त् । तृ॒षु । यत् । अन्ना॑ । स॒म्ऽअवृ॑क्त । जम्भैः॑ ।
सेना॑ऽइव । सृ॒ष्टा । प्रऽसि॑तिः । ते॒ । ए॒ति॒ । यव॑म् । न । द॒स्म॒ । जु॒ह्वा॑ । वि॒वे॒क्षि॒ ॥ ४ ॥

हे अग्ने ^v^यस्य दावरूपस्य ^v^ते तव ^v^पाजः तेजः ^v^पृथिव्यां भूम्यां ^v^तृषु क्षिप्रं ^v^वि ^v^अश्रेत् विश्रयति ^v^यत् यदा अन्नानि[3] काष्ठादीनि ^v^जम्भैः दन्तैः। ज्वालाभिरित्यर्थः। ^v^समवृक्त वृङ्क्ते खादति। तथा ^v^सेनेव ^v^सृष्टा उद्युक्ता ^v^ते तव ^v^प्रसितिः ज्वाला ^v^एति गच्छति । ^v^दस्म हे दर्शनीयाग्ने त्वं ^v^यवं ^v^न यवमिव ^v^जुह्वा ज्वालया ^v^विवेक्षि काष्ठादीनि भक्षयसि व्याप्नोषि वा ॥

तमिद्दो॒षा तमु॒षसि॒ यवि॑ष्ठम॒ग्निमत्यं॒ न म॑र्जयन्त॒ नरः॑ ।
नि॒शिशा॑ना॒ अति॑थिमस्य॒ योनौ॑ दी॒दाय॑ शो॒चिराहु॑तस्य॒ वृष्णः॑ ॥ ५ ॥

तम् । इत् । दो॒षा । तम् । उ॒षसि॑ । यवि॑ष्ठम् । अ॒ग्निम् । अत्य॑म् । न । म॒र्ज॒य॒न्त॒ । नरः॑ ।
नि॒ऽशिशा॑नाः । अति॑थिम् । अ॒स्य॒ । योनौ॑ । दी॒दाय॑ । शो॒चिः । आऽहु॑तस्य । वृष्णः॑ ॥५॥

^v^यविष्ठं युवतमम् ^v^अतिथिम् अतिथिवत् पूज्यं ^v^तमित् तमेव ^v^अग्निं ^v^दोषा दोषायां रात्रौ ^v^उषसि वासरेऽपि ^v^तम् एव ^v^अस्य अग्नेः ^v^योनौ स्थाने आहवनीयायतने धिष्ण्ये वा ^v^निशिशानाः दीपयन्तः ^v^नरः मनुष्याः ^v^अत्यं ^v^न सततगमनयुक्तं वोढारमश्वमिव ^v^मर्जयन्त परिचरन्ति । ^v^आहुतस्य च ^v^वृष्णः कामानां वर्षितुरग्नेस्तस्य ^v^शोचिः ज्वाला ^v^दीदाय दीप्यते ॥ ॥ ३ ॥

सु॒सं॒दृक्ते॑ स्वनीक॒ प्रती॑कं॒ वि यद्रु॒क्मो न रोच॑स उपा॒के ।
दि॒वो न ते॑ तन्य॒तुरे॑ति॒ शुष्म॑श्चि॒त्रो न सूरः॒ प्रति॑ चक्षि भा॒नुम् ॥ ६ ॥

सु॒ऽसं॒दृक् । ते॒ । सु॒ऽअ॒नी॒क॒ । प्रती॑कम् । वि । यत् । रु॒क्मः । न । रोच॑से । उ॒पा॒के ।
दि॒वः । न । ते॒ । त॒न्य॒तुः । ए॒ति॒ । शुष्मः॑ । चि॒त्रः । न । सूरः॑ । प्रति॑ । च॒क्षि॒ । भा॒नुम्॥६॥

^v^स्वनीक हे सुतेजस्काग्ने त्वं ^v^यत् यदा ^v^रुक्मो ^v^न सूर्य इव। सुवर्णमिव वा । ^v^उपाके अन्तिके ^v^वि ^v^रोचसे विशेषेण दीप्यसे तदा ^v^ते तव ^v^प्रतीकं रूपमङ्गं वा ^v^सुसंदृक् सुसंदर्शनं भवति। किंच ^v^ते तव ^v^शुष्मः ^v^दिवः अन्तरिक्षात् ^v^तन्यतुः ^v^न अशनिरिव ^v^एति निर्गच्छति । ^v^चित्रः दर्शनीयः ^v^सूरः ^v^न सूर्य इव ^v^भानुं स्वां दीप्तिं ^v^प्रति ^v^चक्षि प्रदर्शयसि ॥

---

१. त–इधानाः समिध्यमानाः। २. त–अभिगच्छति। ३. ज्ञ–त२–अन्ना अन्नानि।

यथा वः स्वाहाग्नये दाशेम परीळाभिर्घृतवद्भिश्च हव्यैः ।
तेभिर्नो अग्ने अमितैर्महोभिः शतं पूर्भिरायसीभिर्नि पाहि ॥ ७ ॥

यथा । वः । स्वाहा । अग्नये । दाशेम । परि । इळाभिः । घृतवत्ऽभिः । च । हव्यैः ।
तेभिः । नः । अग्ने । अमितैः । महःऽभिः । शतम् । पुःऽभिः । आयसीभिः । नि । पाहि ॥ ७ ॥

हे अग्ने अग्नये अग्रस्य नेत्रे वः तुभ्यं स्वाहा स्वाहुतं हविः । किंच यथा वयम् इळाभिः गोभिर्गोविकारैः क्षीरादिभिः घृतवद्भिः घृतसहितैः हव्यैः पुरोडाशादिभिः च दाशेम परिचरेम तथा त्वमपि तेभिः प्रसिद्धैः अमितैः अपरिमितैः महोभिः तेजोभिः शतम् अपरिमिताभिः आयसीभिः हिरण्मयीभिः । 'रुक्मम् अयः' इति हिरण्यनामसु पाठात् । पूर्भिः नगरीभिरिव नः अस्मान् नि पाहि नितरां रक्ष ॥

या वा ते सन्ति दाशुषे अधृष्टा गिरो वा याभिर्नृवतीरुरुष्याः ।
ताभिर्नः सूनो सहसो नि पाहि स्मत्सूरीञ्जरितॄञ्जातवेदः ॥ ८ ॥

याः । वा । ते । सन्ति । दाशुषे । अधृष्टाः । गिरः । वा । याभिः । नृऽवतीः । उरुष्याः ।
ताभिः । नः । सूनो इति । सहसः । नि । पाहि । स्मत् । सूरीन् । जरितॄन् । जातऽवेदः ॥ ८ ॥

सहसः सूनो हे बलस्य पुत्र जातवेदः अग्ने दाशुषे दाशुषः ते तव याः वा याश्च ज्वालाः सन्ति । अधृष्टाः रक्षोभिः अप्रधृषिताः[1] गिरो वा गिरश्च सन्ति । याभिः गीर्भिः नृवतीः पुत्रवतीः प्रजाः उरुष्याः रक्षेः । ताभिः उभयीभिः नः अस्मान् । स्मत् इति प्रशस्तवचनः । प्रशस्तान् सूरीन् हविषां प्रेरकान् जरितॄन् स्तोतॄंश्च नि पाहि नितरां रक्ष ॥

निर्यत्पूतेव स्वधितिः शुचिर्गात्स्वया कृपा तन्वा३ रोचमानः ।
आ यो मात्रोरुशेन्यो जनिष्ट देवयज्याय सुक्रतुः पावकः ॥ ९ ॥

निः । यत् । पूताऽइव । स्वऽधितिः । शुचिः । गात् । स्वया । कृपा । तन्वा । रोचमानः ।
आ । यः । मात्रोः । उशेन्यः । जनिष्ट । देवऽयज्याय । सुऽक्रतुः । पावकः ॥ ९ ॥

यत् यदा शुचिः अग्निः स्वया स्वकीयया तन्वा ततया कृपा कृपया दीप्त्या रोचमानः पूतेव स्वधितिः तीक्ष्णीकृता स्वधितिरिव निः गात् काष्ठान्निर्गच्छति तदानीं देवयज्याय भवति । तदेव विशदयति । यः अग्निः उशेन्यः कमनीयः सुक्रतुः सुकर्मा पावकः शोधकश्च मात्रोः अरण्योः आ जनिष्ट आजायत स देवयज्याय भवतीति ॥

एता नो अग्ने सौभगा दिदीह्यपि क्रतुं सुचेतसं वतेम ।
विश्वा स्तोतृभ्यो गृणते च सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥

एता । नः । अग्ने । सौभगा । दिदीहि । अपि । क्रतुम् । सुऽचेतसम् । वतेम ।
विश्वा । स्तोतृऽभ्यः । गृणते । च । सन्तु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ १० ॥

---

१. ख-भ-अभिधृषिताः; घ-अप्रधर्षिताः ।

हे ᐯअग्ने ᐯएता एतानि परिदृश्यमानानि ᐯसौभगा सौभगानि शोभनानि धनानि ᐯनः अस्मभ्यं ᐯदिदीहि दीपय देहि वा । ᐯअपि अपि च ᐯक्रतुं कर्म यज्ञानां कर्तारं वा ᐯसुचेतसं शोभनप्रज्ञानयुक्तं सुप्रज्ञानं पुत्रं वा ᐯवतेम संभजेमहि ॥ वनतेः संभजनार्थस्य वर्णान्तरागमे सति रूपम् ॥ ᐯविश्वा विश्वानि धनानि ᐯस्तोतृभ्यः उद्गातृभ्यः ᐯगृणते शंसते ᐯच ᐯसन्तु । ᐯयूयं त्वत्परिवाराश्च सर्वे यूयं ᐯनः अस्मान् ᐯस्वस्तिभिः क्षेमैः ᐯसदा सर्वदा ᐯपात रक्षत ॥ ॥ ४ ॥

'प्र वः शुक्राय' इति दशर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । 'प्र वः' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्तमध्ये द्वितीयत्वेनोक्तः सूक्तविनियोगः । एकादशिन आग्नेये पशौ 'प्र वः शुक्राय' इत्येषा वपाया याज्या । सूत्रितं च—'प्र वः शुक्राय भानवे भरध्वं यथा विप्रस्य मनुषो हविर्भिः' (आश्व. श्रौ. ३.७) इति ॥

प्र वः॑ शु॒क्राय॑ भा॒नवे॑ भरध्वं ह॒व्यं म॒तिं चा॒ग्नये॒ सुपू॑तम् ।
यो दैव्या॑नि॒ मानु॑षा ज॒नूंष्य॒न्तर्विश्वा॑नि वि॒द्मना॒ जिगा॑ति ॥ १ ॥

प्र । व॒ः । शु॒क्राय॑ । भा॒नवे॑ । भ॒र॒ध्व॒म् । ह॒व्यम् । म॒तिम् । च॒ । अ॒ग्नये॑ । सुऽपू॑तम् ।
यः । दैव्या॑नि । मानु॑षा । ज॒नूंषि॑ । अ॒न्तः । विश्वा॑नि । वि॒द्मना॑ । जिगा॑ति ॥ १ ॥

हे हविषां वोढारः ᐯवः यूयं ᐯशुक्राय शुभ्राय ᐯभानवे दीप्ताय ᐯअग्नये ᐯसुपूतं सुशुद्धं[1] ᐯहव्यं ᐯमतिं स्तुतिं ᐯच ᐯप्र ᐯभरध्वम् । ᐯयः अग्निः ᐯदैव्यानि ᐯमानुषा मानुषाणि च ᐯविश्वानि[2] ᐯजनूंषि जातानि ᐯअन्तः अन्तरा ᐯविद्मना प्रज्ञानेन मार्गेण वा ᐯजिगाति गच्छति । देवान् मनुष्यांश्च अन्तरा हवींषि नेतुं वर्तत इत्यर्थः ॥

स गृत्सो॑ अ॒ग्निस्तरु॑णश्चिदस्तु॒ यतो॒ यवि॑ष्ठो॒ अज॑निष्ट मा॒तुः ।
सं यो वना॑ यु॒वते॒ शुचि॑द॒न्भूरि॑ चि॒दन्ना॒ समिद॑त्ति स॒द्यः ॥ २ ॥

सः । गृत्सः॑ । अ॒ग्निः । तरु॑णः । चि॒त् । अ॒स्तु॒ । यत॑ः । यवि॑ष्ठः । अज॑निष्ट । मा॒तुः ।
सम् । यः । वना॑ । यु॒वते॑ । शुचि॑ऽदन् । भूरि॑ । चि॒त् । अन्ना॑ । सम् । इत् । अ॒त्ति॒ । स॒द्यः ॥ २ ॥

ᐯसः ᐯचित् स एव ᐯगृत्सः मेधावी । तथा च यास्कः—'गृत्स इति मेधाविनाम' (निरु. ९.५) । ᐯअग्निः ᐯतरुणः तारको भवति[3] । तदा ᐯयतः यदा ᐯमातुः अरण्याः ᐯयविष्ठः युवतमः सन् ᐯअजनिष्ट । ᐯयः अग्निः ᐯशुचिदन् दीप्तदन्तः ᐯवना वनानि ᐯसं ᐯयुवते आत्मना संयोजयति । किंच ᐯभूरि ᐯचित् भूरीण्यपि ᐯअन्ना स्वीयान्यन्नानि ᐯसद्यः ᐯइत् सद्य एव ᐯसम्[4] ᐯअत्ति[4] सम्यक् भक्षयति ॥

अ॒स्य दे॒वस्य॑ सं॒सद्यनी॑के॒ यं मर्ता॑सः श्ये॒तं ज॑गृ॒भ्रे ।
नि यो गृभं॒ पौरु॑षेयीमु॒वोच॑ दु॒रोक॑म॒ग्निरा॒यवे॑ शुशोच ॥ ३ ॥

अ॒स्य । दे॒वस्य॑ । स॒म्ऽसदि॑ । अनी॑के । यम् । मर्ता॑सः । श्ये॒तम् । ज॒गृ॒भ्रे ।
नि । यः । गृभ॑म् । पौरु॑षेयीम् । उ॒वोच॑ । दु॒ःऽओक॑म् । अ॒ग्निः । आ॒यवे॑ । शु॒शो॒च॒ ॥ ३ ॥

---

१. ख-झ-भ-शुद्धम् । २. ख-झ-त-न-भ-य-श-विश्वा विश्वानि । ३. ख-बिभ्रति भूमिश्च भवति; घ-अस्तु भवति । ४. ख-भ-समिदत्ति; न-श-समदत्ति ।

अस्य देवस्य अग्नेः अनीके मुख्ये संसदि स्थाने श्येतं श्वेतं शुभ्रं यम्[1] अग्निं[1] मर्तासः मनुष्याः जगृभ्रे परिगृह्णन्ति[2] । यः च अग्निः पौरुषेयीं पुरुषैः क्रियमाणां गृभं गृभीतं[3] नि उवोच ॥ अत्र वचिः सेवार्थे वर्तते ॥ निषेवत इत्यर्थः । सः अग्निः आयवे मनुष्यार्थम् । ‘ द्रुह्यवः आयवः ’ इति मनुष्यनामसु पाठात् । दुरोकं सपत्नैर्दुःसेवं यथा भवति तथा शुशोच दीप्यते ॥

अयं कविरकविषु प्रचेता मर्तेष्वग्निरमृतो नि धायि ।
स मा नो अत्र जुहुरः सहस्वः सदा त्वे सुमनसः स्याम ॥ ४ ॥

अयम् । कविः । अकविषु । प्रऽचेताः । मर्तेषु । अग्निः । अमृतः । नि । धायि ।
सः । मा । नः । अत्र । जुहुरः । सहस्वः । सदा । त्वे इति । सुऽमनसः । स्याम ॥ ४ ॥

कविः क्रान्तदृक् प्रचेताः प्रकाशकः अमृतः मरणधर्मरहितः अयम् अग्निः अकविषु अक्रान्तदृक्षु मर्तेषु मरणधर्मकेषु नि धायि निहितः । अथ प्रत्यक्षस्तुतिः । सहस्वः बलवन्नग्ने त्वे यस्मिन् त्वयि सदा वयं सुमनसः सुमतयः स्याम सः त्वम् अत्र अस्मिन् लोके नः अस्मान् मा जुहुरः मा हिंसीः ॥

आ यो योनिं देवकृतं ससाद क्रत्वा ह्य१ग्निरमृताँ अतारीत् ।
तमोषधीश्च वनिनश्च गर्भं भूमिश्च विश्वधायसं बिभर्ति ॥ ५ ॥

आ । यः । योनिम् । देवऽकृतम् । ससाद । क्रत्वा । हि । अग्निः । अमृतान् । अतारीत् ।
तम् । ओषधीः । च । वनिनः । च । गर्भम् । भूमिः । च । विश्वऽधायसम् । बिभर्ति ॥५॥

यः अग्निः देवकृतं देवैः कल्पितं योनिं स्थानम् आ ससाद अध्यास्ते । किमर्थं देवाः स्थानं कल्पयन्त्यग्नेः इत्यत आह । हि यस्मात् कारणात् अग्निः क्रत्वा प्रज्ञया अमृतान् देवान् अतारीत् दुर्गेभ्यस्तारयति । तम् इममग्निं विश्वधायसं विश्वस्य[4] धारकम्[5] ओषधीः ओषधयः वनिनश्च वृक्षाश्च गर्भं गर्भं सन्तं बिभ्रति । भूमिश्च बिभर्ति । श्रुतमेव बिभर्तीति पद बहुवचनान्ततया विपरिणतं सत् ओषधीभिर्वनिभिश्च संबध्यते ॥ ॥ ५ ॥

ईशे ह्य१ग्निरमृतस्य भूरेरीशे रायः सुवीर्यस्य दातोः ।
मा त्वा वयं सहसावन्नवीरा माप्सवः परि षदाम मादुवः ॥ ६ ॥

ईशे । हि । अग्निः । अमृतस्य । भूरेः । ईशे । रायः । सुऽवीर्यस्य । दातोः ।
मा । त्वा । वयम् । सहसाऽवन् । अवीराः । मा । अप्सवः । परि । सदाम । मा । अदुवः ॥६॥

अमृतस्य अन्नमुदकं[5] वा[5] । द्वितीयार्थे षष्ठी । भूरेः अधिकं दातोः दातुम् अग्निः ईशे ईष्टे हि । सुवीर्यस्य शोभनवीर्ययुक्तं रायः धनं दातुम् ईशे ईष्टे । अथ प्रत्यक्षस्तुतिः सहसावन् हे बलवन्नग्ने वयं वसिष्ठाः अवीराः पुत्रादिरहिताः सन्तः मा परि षदाम म

१. ख-झ-न-भ-श—अग्निम्; त—अग्निं यम् । २. न-भ—परिगृह्णाति । ३. त-न-भ-श—गृभीतिम्
४. ख-घ-झ-न-भ—विश्वधारकम् । ५. घ-त—अमृतमन्नमुदकं च ।

पर्युपविशाम । ᵛअप्सवः रूपरहिताश्च सन्तः ᵛमा परि षदाम । तथा च यास्कः—'अप्स' इति रूपनाम' ( निरु. ५.१३ ) इति । ᵛअदुवः परिचरणहीनाश्च ᵛमा परि षदाम ॥

परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम ।
न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो वि दुक्षः ॥ ७ ॥

परिऽसद्यम् । हि । अरणस्य । रेक्णः । नित्यस्य । रायः । पतयः । स्याम ।
न । शेषः । अग्ने । अन्यऽजातम् । अस्ति । अचेतानस्य । मा । पथः । वि । दुक्षः ॥ ७ ॥

ᵛअरणस्य अनृणस्य ᵛरेक्णः धनं ᵛपरिषद्यं पर्याप्तं भवति ᵛहि । अतः ᵛनित्यस्य अपुनर्देयस्य ᵛरायः धनस्य ᵛपतयः ᵛस्याम । यद्वा । अरणस्य[1] रेक्णो धनं परिषद्यं परिहर्तव्यं भवति । अतो नित्यस्य औरसस्य रायः पुत्राख्यस्य धनस्य पतयः स्याम । हे ᵛअग्ने ᵛअन्यजातम् अनौरसं ᵛशेषः अपत्यं ᵛन ᵛअस्ति न भवति । ᵛअचेतानस्य अविदुषः ᵛपथः मार्गान् पुत्रोत्पादनप्रमुखान् मार्गान् ᵛमा ᵛवि ᵛदुक्षः मा विदुदुषः ॥ 'दुष वैकृत्ये' इति धातुः ॥ तथा च यास्कः—'परिहर्तव्यं हि नोपसर्तव्यमरणस्य रेक्णोऽरणोऽपार्णो भवति रेक्ण इति धननाम रिच्यते प्रयतः । नित्यस्य रायः पतयः स्याम[2] । न शेषो अग्ने अन्यजातमस्ति । शेष इत्यपत्यनाम शिष्यते प्रयतोऽचेतयमानस्य तत्प्रमत्तस्य भवति मा नः पथो विदूदुषः' ( निरु. ३.२ ) इति ॥

नहि ग्रभायारणः सुशेवोऽन्योदर्यो मनसा मन्तवा उ ।
अधा चिदोकः पुनरित्स एत्या नो वाज्यभीषाळेतु नव्यः ॥ ८ ॥

नहि । ग्रभाय । अरणः । सुऽशेवः । अन्यऽउदर्यः । मनसा । मन्तवै । ऊँ इति ।
अध । चित् । ओकः । पुनः । इत् । सः । एति । आ । नः । वाजी । अभीषाट् । एतु । नव्यः ॥ ८ ॥

पूर्वस्यामृचि उक्त एवार्थोऽत्र प्रपञ्च्यते । ᵛअरणः अरममाणः ᵛअन्योदर्यः ᵛसुशेवः सुखतमः[4] सन् ᵛग्रभाय पुत्रत्वेन ग्रहणाय ᵛमनसा ᵛमन्तवा ᵛउ मनसापि मन्तव्यः ᵛन भवति ᵛहि । ᵛअध ᵛचित् अपि च ᵛसः अन्योदर्यः ᵛओकः ᵛइत् संस्थानमेव ᵛपुनः ᵛएति प्राप्नोति । अतः ᵛवाजी अन्नवान् ᵛअभीषाट् शत्रूणामभिभविता ᵛनव्यः नवजातः पुत्रः ᵛनः अस्मान् ᵛआ ᵛएतु आगच्छतु ॥

त्वमग्ने वनुष्यतो नि पाहि त्वमु नः सहसावन्नवद्यात् ।
सं त्वा ध्वस्मन्वदभ्येतु पाथः सं रयिः स्पृहयाय्यः सहस्री ॥ ९ ॥

त्वम् । अग्ने । वनुष्यतः । नि । पाहि । त्वम् । ऊँ इति । नः । सहसाऽवन् । अवद्यात् ।
सम् । त्वा । ध्वस्मन्ऽवत् । अभि । एतु । पाथः । सम् । रयिः । स्पृहयाय्यः । सहस्री ॥ ९ ॥

हे ᵛअग्ने ᵛत्वं ᵛवनुष्यतः हिंसकात् ᵛनः अस्मान् ᵛनि ᵛपाहि । ᵛसहसावन् हे बलवन्नग्ने ᵛत्वम् ᵛअवद्यात् पापाच्चास्मान् नि पाहि । ᵛत्वा त्वां ᵛध्वस्मन्वत् ध्वस्तदोषं ᵛपाथः अन्नं हविः ᵛसम्

---

१. झ–प्सु । २. झ-श–अरणस्य अरममाणस्य । ३. त–स्याम पित्र्यस्येव धनस्य । ४. ख-भ–सुसुखतमोऽपि ।

ˇअभ्येतु सम्यक् प्राप्नोतु । अपि च अस्मान् ˇस्पृहयाय्यः स्पृहणीयः ˇसहस्री सहस्रसंख्याकः ˇरयिः अभ्येतु ॥

एता नो अग्ने सौभगा दिदीह्यपि क्रतुं सुचेतसं वतेम ।
विश्वा स्तोतृभ्यो गृणते च सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥

एता । नः । अग्ने । सौभगा । दिदीहि । अपि । क्रतुम् । सुऽचेतसम् । वतेम ।
विश्वा । स्तोतृऽभ्यः । गृणते । च । सन्तु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ १० ॥

एषा ऋग्व्याख्याता ॥　　॥ ६ ॥

'प्राग्नये तवसे' इति नवर्चं पञ्चमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वानराग्निदेवताकम् । तथा चानुक्रान्तं—'प्राग्नये नव वैश्वानरीयं तु' इति । विनियोगो लैङ्गिकः ॥

प्राग्नये तवसे भरध्वं गिरं दिवो अरतये पृथिव्याः ।
यो विश्वेषाममृतानामुपस्थे वैश्वानरो वावृधे जागृवद्भिः ॥ १ ॥

प्र । अग्नये । तवसे । भरध्वम् । गिरम् । दिवः । अरतये । पृथिव्याः ।
यः । विश्वेषाम् । अमृतानाम् । उपऽस्थे । वैश्वानरः । ववृधे । जागृवत्ऽभिः ॥ १ ॥

हे स्तोतारः ˇतवसे प्रवृद्धाय ˇदिवः अन्तरिक्षस्य ˇपृथिव्याः च ˇअरतये गन्त्रे ˇअग्नये वैश्वानरसंज्ञकायाग्नये ˇगिरं स्तुतिं ˇप्र ˇभरध्वम् । ˇयः ˇवैश्वानरः विश्वनरहितोऽग्निः ˇविश्वेषां सर्वेषाम् ˇअमृतानां देवानाम् ˇउपस्थे उपस्थाने यज्ञे ˇजागृवद्भिः प्रबुद्धैर्देवैः सहितः सन् ˇववृधे स्तुतिभिर्हविर्भिश्च वर्धते ॥

पृष्टो दिवि धाय्यग्निः पृथिव्यां नेता सिन्धूनां वृषभः स्तियानाम् ।
स मानुषीरभि विशो वि भाति वैश्वानरो वावृधानो वरेण ॥ २ ॥

पृष्टः । दिवि । धायि । अग्निः । पृथिव्याम् । नेता । सिन्धूनाम् । वृषभः । स्तियानाम् ।
सः । मानुषीः । अभि । विशः । वि । भाति । वैश्वानरः । ववृधानः । वरेण ॥ २ ॥

ˇसिन्धूनां नदीनां ˇनेता ˇस्तियानाम् अपाम् । 'स्तिया आपो भवन्ति स्त्यायनात्[1]' ( निरु. ६. १७) इति यास्कवचनात् । ˇवृषभः वर्षिता ˇपृष्टः अर्चितः तेजसा संपृक्तो वा यः ˇअग्निः ˇदिवि अन्तरिक्षे ˇपृथिव्यां च ˇधायि न्यधायि ˇसः ˇवैश्वानरः विश्वनरहितोऽग्निः ˇवरेण श्रेष्ठेन हविषा तेजसा वा ˇवावृधानः वर्धमानः सन् ˇमानुषीः ˇविशः ˇअभि मानुषीः प्रजाः प्रति ˇवि ˇभाति ॥

त्वद्भिया विश आयन्नसिक्नीरसमना जहतीर्भोजनानि ।
वैश्वानर पूरवे शोशुचानः पुरो यदग्ने दरयन्नदीदेः ॥ ३ ॥

त्वत् । भिया । विशः । आयन् । असिक्नीः । असमनाः । जहतीः । भोजनानि ।
वैश्वानर । पूरवे । शोशुचानः । पुरः । यत् । अग्ने । दरयन् । अदीदेः ॥ ३ ॥

१. ख-य-श–स्तियानात्; न–स्तियाना ।

हे वैश्वानर विश्वनरहित अग्ने त्वत् त्वत्तः भिया भीत्या असिक्नीः असितवर्णा राजस्यः ॥ प्रथमार्थे द्वितीया ॥ विशः प्रजाः असमनाः परस्परमसमेताः[1] भोजनानि धनानि जहतीः त्यजन्त्यः आयन् आगच्छन् । कदेत्यत आह । यत् यदा पूरवे राज्ञे शोशुचानः दीप्यमानः पुरः तस्य शत्रूणां पुरः दरयन् दारयन् अदीदेः अज्वलः । तथा च निगमः—'अंहो राजन्वरिवः पूरवे कः' (ऋ. सं. १. ६३. ७) इति ॥

**तव॑ त्रि॒धातु॑ पृथि॒वी उ॒त द्यौर्वैश्वा॑नर व्र॒तम॑ग्ने सचन्त ।**
**त्वं भा॒सा रोद॑सी॒ आ त॑त॒न्थाज॑स्रेण शो॒चिषा॒ शोशु॑चानः ॥ ४ ॥**

तव॑ । त्रि॒ऽधातु॑ । पृथि॒वी । उ॒त । द्यौः । वैश्वा॑नर । व्र॒तम् । अ॒ग्ने । स॒च॒न्त॒ ।
त्वम् । भा॒सा । रोद॑सी॒ इति॑ । आ । त॒त॒न्थ॒ । अज॑स्रेण । शो॒चिषा॑ । शोशु॑चानः ॥ ४ ॥

हे वैश्वानर विश्वेषां नराणां नेतः अग्ने । तथा च यास्कः—'वैश्वानरः कस्मात् विश्वान्नराान्नयति विश्व एनं नरा नयन्तीति वा' (निरु. ७. २१) इति । तव व्रतं त्वत्प्रीतिकरं कर्म त्रिधातु अन्तरिक्षं पृथिवी च उत अपि च द्यौः इति त्रयो लोकाः सचन्त सेवन्ते । त्रैलोक्यवर्तिन्यः प्रजास्त्वदर्थं कर्म कुर्वन्तीत्यर्थः । अपि च त्वम् अजस्रेण शोचिषा नित्येन प्रकाशेन शोशुचानः दीप्यमानः भासा दीप्त्या रोदसी द्यावापृथिव्यौ च आ ततन्थ विस्तारयसि ॥

**त्वाम॑ग्ने ह॒रितो॑ वावशा॒ना गिर॑ः सचन्ते॒ धुन॑यो घृ॒ताचीः॑ ।**
**पतिं॑ कृ॒ष्टी॒नां र॒थ्यं॑ र॒यी॒णां वै॑श्वान॒रमु॒षसां॑ के॒तुमह्ना॑म् ॥ ५ ॥**

त्वाम् । अ॒ग्ने॒ । ह॒रित॑ः । वा॒व॒शा॒नाः । गिर॑ः । स॒च॒न्ते॒ । धुन॑यः । घृ॒ताचीः॑ ।
पति॑म् । कृ॒ष्टी॒नाम् । र॒थ्य॑म् । र॒यी॒णाम् । वै॒श्वा॒न॒रम् । उ॒षसा॑म् । के॒तुम् । अह्ना॑म् ॥ ५ ॥

हे अग्ने कृष्टीनां प्रजानाम् । 'क्षितयः कृष्टयः' इति मनुष्यनामसु पाठात् । पतिं स्वामिनं रयीणां धनानां रथ्यं नेतारम् उषसाम् अह्नां केतुं[2] प्रज्ञापकं वैश्वानरं विश्वनरहितं त्वां हरितः[3] अश्वाः वावशानाः कामयमानाः सचन्ते सेवन्ते । तथा गिरः नृणां[4] स्तुतिरूपा वाचः धुनयः पापं धुन्वानाः घृताचीः घृतमञ्चन्त्यः । हविषा सहिता इत्यर्थः । सचन्ते ॥　॥ ७ ॥

**त्वे अ॑सु॒र्यं१॒॑ वस॑वो॒ न्यृ॑ण्व॒न्क्रतुं॒ हि ते॑ मित्रमहो जु॒षन्त॑ ।**
**त्वं दस्यूँ॒रोक॑सो अग्न आज उ॒रु ज्योति॑र्ज॒नय॒न्नार्या॑य ॥ ६ ॥**

त्वे इति॑ । अ॒सु॒र्य॑म् । वस॑वः । नि । ऋ॒ण्व॒न् । क्रतु॑म् । हि । ते॒ । मि॒त्र॒ऽम॒हः॒ । जु॒षन्त॑ ।
त्वम् । दस्यू॑न् । ओक॑सः । अ॒ग्ने॒ । आ॒जः॒ । उ॒रु । ज्योति॑ः । ज॒नय॑न् । आर्या॑य ॥ ६ ॥

हे मित्रमहः मित्राणां पूजयितः अग्ने त्वे त्वयि वसवः वासका देवाः असुर्यं बलं न्यृण्वन् न्यगमयन् । ते क्रतुं त्वत्प्रीतिकरं कर्म जुषन्त असेवन्त हि । किंच त्वम् आर्याय

१. ख-श-°मसमवेताः । २. ख-घ-ङ्म-त-न-भ-श-महान्तं केतुम् । ३. ख-ञ-ङ्म-त३-भ-य-श-हरितो हरणात्; त१-२-हरितो हरिणात्; न-हरणात् । ४. श-स्तोतृणाम् ।

कर्मवते[1] जनाय vउरु vज्योतिः अधिकं तेजः vजनयन् vदस्यून् कर्महीनान् vओकसः स्थानात् vआजः निरगमयः ॥

**स जायमानः परमे व्योमन्वायुर्न पाथः परि पासि सद्यः ।**
**त्वं भुवना जनयन्नभि क्रन्नपत्याय जातवेदो दशस्यन् ॥ ७ ॥**

सः । जायमानः । परमे । विऽओमन् । वायुः । न । पाथः । परि । पासि । सद्यः ।
त्वम् । भुवना । जनयन् । अभि । क्रन् । अपत्याय । जातऽवेदः । दशस्यन् ॥ ७ ॥

हे वैश्वानर vसः प्रसिद्धस्त्वं vपरमे दूरस्थे vव्योमन् अन्तरिक्षे vजायमानः सूर्यरूपेण प्रादुर्भवन् vवायुर्न यथा वायुः द्विदेवत्यग्रहेषु[2] प्रथमं सोमं पिबति तथा vपाथः सोमं vसद्यः vपरि vपासि परिपिबसि । यद्वा । वायुरिव पाथो जलं परि पासि परिपिबसि । शोषयसीत्यर्थः । किंच हे vजातवेदः जातधनाग्ने vत्वं vभुवना भुवनान्युदकानि । 'भूतं भुवनम्' इत्युदकनामसु पाठात् । vजनयन् vअपत्याय अपत्यवत्पालनीयाय यजमानाय[3] vदशस्यन् कामान् प्रयच्छन् vअभि vक्रन् वैद्युतात्मना अभिक्रन्दसि अभिगर्जसि वा ॥

**तामग्ने अस्मे इषमेरयस्व वैश्वानर द्युमतीं जातवेदः ।**
**यया राधः पिन्वसि विश्ववार पृथु श्रवो दाशुषे मर्त्याय ॥ ८ ॥**

ताम् । अग्ने । अस्मे इति । इषम् । आ । ईरयस्व । वैश्वानर । द्युऽमतीम् । जातऽवेदः ।
यया । राधः । पिन्वसि । विश्वऽवार । पृथु । श्रवः । दाशुषे । मर्त्याय ॥ ८ ॥

हे vजातवेदः जातप्रज्ञ vवैश्वानर विश्वनरहित vअग्ने vताम् vइषम् एषणीयां वृष्टिं vद्युमतीं दीप्तिमतीम् vअस्मे अस्मभ्यम् vएरयस्व प्रेरयस्व । वृष्ट्या त्रैलोक्यं द्योतते हि । यद्वा । द्युमतीं तामिषमन्नमेरयस्व । तथा च श्रूयते—'तस्माद्यस्यैवेह भूयिष्ठमन्नं भवति स एव भूयिष्ठं लोके विराजति' ( ऐ. ब्रा. १.५ ) इति । अथवा इषमेषणीयां तां द्युमतीं भास्वतीं दीप्तिमेरयस्व । vयया इषा vराधः धनं vपिन्वसि पालयसि । अपि च हे vविश्ववार विश्वैर्वरणीयाग्ने vपृथु विस्तीर्णं vश्रवः यशः vदाशुषे vमर्त्याय यजमानाय पिन्वसि[4] ॥

**तं नो अग्ने मघवद्भ्यः पुरुक्षुं रयिं नि वाजं श्रुत्यं युवस्व ।**
**वैश्वानर महि नः शर्म यच्छ रुद्रेभिरग्ने वसुभिः सजोषाः ॥ ९ ॥**

तम् । नः । अग्ने । मघवत्ऽभ्यः । पुरुऽक्षुम् । रयिम् । नि । वाजम् । श्रुत्यम् । युवस्व ।
वैश्वानर । महि । नः । शर्म । यच्छ । रुद्रेभिः । अग्ने । वसुऽभिः । सऽजोषाः ॥ ९ ॥

हे vअग्ने vमघवद्भ्यः धनवद्भ्यः । हविष्मद्भ्य इत्यर्थः । vनः अस्मभ्यं vपुरुक्षुं बह्वन्नं बहुयशस्कं वा vतं प्रसिद्धं vरयिं vश्रुत्यं श्रवणीयं vवाजं बलं च vनि vयुवस्व नितरां मिश्रयस्व ।

१. श—कर्मकृते । २. ख—द्विदैवत्यग्रहेषु; त—द्विदेवत्यगृहेषु; न—द्विदेवत्यः ग्रहेषु । ३. ख-ज्ञ-न-भ-य-श—जनाय । ४. ख-भ—पिन्वसि पाल्यासि ।

किंच हे ^v^वैश्वानर विश्वनरहित ^v^अग्ने त्वं ^v^रुद्रेभिः रुद्रैः ^v^वसुभिः च देवैः ^v^सजोषाः सहितश्च सन् ^v^नः अस्मभ्यं ^v^महि महत् ^v^शर्म सुखं ^v^यच्छ प्रयच्छ ॥ ॥ ८ ॥

'प्र सम्राजः' इति सप्तर्चं षष्ठं सूक्तं वसिष्ठस्यार्षम्[1]। अनुक्रम्यते च—'प्र सम्राजः सप्त[2]'। 'वैश्वानरीयं तु' इत्युक्तत्वादस्यापि वैश्वानरोऽग्निर्देवता। विनियोगो लैङ्गिकः ॥

प्र सम्राजो असुरस्य प्रशस्तिं पुंसः कृष्टीनामनुमाद्यस्य।
इन्द्रस्येव प्र तवसस्कृतानि वन्दे दारुं वन्दमानो विवक्मि ॥ १ ॥

प्र। सम्ऽराजः। असुरस्य। प्रऽशस्तिम्। पुंसः। कृष्टीनाम्। अनुऽमाद्यस्य।
इन्द्रस्यऽइव। प्र। तवसः। कृतानि। वन्दे। दारुम्। वन्दमानः। विवक्मि ॥ १ ॥

^v^दारुं पुरां भेत्तारं ^v^वन्दे। ^v^वन्दमानः सन् ^v^सम्राजः सर्वस्य भुवनस्येश्वरस्य ^v^असुरस्य बलवतः ^v^पुंसः वीरस्य। पौंस्यमिति[3] वीर्यमुच्यते। तथा च यास्कः—'पुमान् पुरुमना भवति पुंसतेर्वा' ( निरु. ९.१५ ) इति। ^v^कृष्टीनां जनानाम् ^v^अनुमाद्यस्य स्तुत्यस्य ^v^तवसः बलवतः ^v^इन्द्रस्येव तस्य वैश्वानरस्य ^v^प्रशस्तिं स्तुतिं ^v^कृतानि कर्माणि च ^v^प्र ^v^विवक्मि प्रब्रवीमि ॥

कविं केतुं धासिं भानुमद्रेर्हिन्वन्ति शं राज्यं रोदस्योः।
पुरंदरस्य गीर्भिरा विवासेऽग्नेर्व्रतानि पूर्व्या महानि ॥ २ ॥

कविम्। केतुम्। धासिम्। भानुम्। अद्रेः। हिन्वन्ति। शम्। राज्यम्। रोदस्योः।
पुरम्ऽदरस्य। गीःऽभिः। आ। विवासे। अग्नेः। व्रतानि। पूर्व्या। महानि ॥ २ ॥

^v^कविं प्राज्ञं ^v^केतुं विश्वस्य प्रज्ञापकं ^v^धासिम् ^v^अद्रेः धर्तारमादर्तुः स्तोतुर्वा ^v^भानुं भासकं ^v^शं सुखकरं ^v^रोदस्योः द्यावापृथिव्योः ^v^राज्यं राजानं वैश्वानरमग्निं ^v^हिन्वन्ति। मदीयाः प्रीणयन्ति प्रेरयन्ति वा देवाः। अहं च ^v^पुरंदरस्य पुरां दारयितुः ^v^अग्नेः ^v^पूर्व्या पूर्व्याणि पुरातनानि ^v^महानि महान्ति ^v^व्रतानि कर्माणि ^v^गीर्भिः ^v^आ ^v^विवासे परिचरामि ॥

न्यक्रतून्ग्रथिनो मृध्रवाचः पणीँरश्रद्धाँ अवृधाँ अयज्ञान्।
प्रप्र तान्दस्यूँरग्निर्विवाय पूर्वश्चकारापराँ अयज्यून् ॥ ३ ॥

नि। अक्रतून्। ग्रथिनः। मृध्रऽवाचः। पणीन्। अश्रद्धान्। अवृधान्। अयज्ञान्।
प्रऽप्र। तान्। दस्यून्। अग्निः। विवाय। पूर्वः। चकार। अपरान्। अयज्यून् ॥ ३ ॥

^v^अक्रतून् अयज्ञान् ^v^ग्रथिनः जल्पकान् ^v^मृध्रवाचः हिंसितवचस्कान् ^v^पणीन् पणिनामकान् वार्धुषिकान् ^v^अश्रद्धान् यज्ञादिषु श्रद्धारहितान् ^v^अवृधान् स्तुतिभिरग्निमवर्धयतः ^v^अयज्ञान् यज्ञहीनान् ^v^तान् ^v^दस्यून् वृथा कालस्य नेतॄन् ^v^अग्निः ^v^प्रप्र अत्यन्तं ^v^नि ^v^विवाय नितरां गमयेत्। तदेवाह। अग्निः[4] ^v^पूर्वः मुख्यः सन् ^v^अयज्यून् अयजमानान् ^v^अपरान् जघन्यान् ^v^चकार[4] ॥

---

१. ञ-य-°स्यार्षं त्रैष्टुभम्। २. य-सप्त इति। ३. ख-भ-पुंस्त्वमिति; ञ-त-न-पौंस्यमिति; श-पौष्णमिति। ४. ख-ञ-न-भ-श-'अग्निः...चकार' नास्ति; घ-पूर्वः पुरातनोऽग्निः अपरान् पुरुषान् अयज्यून् यागानर्हान् चकार; त-नृतमः नेतृतमोऽग्निः...... चकार करोतीत्यर्थः।

योऽअपाचीने तमसि मदन्तीः प्राचीश्चकार नृतमः शचीभिः ।
तमीशानं वस्वो अग्निं गृणीषेऽनानतं दमयन्तं पृतन्यून् ॥ ४ ॥

यः । अपाचीने । तमसि । मदन्तीः । प्राचीः । चकार । नृऽतमः । शचीभिः ।
तम् । ईशानम् । वस्वः । अग्निम् । गृणीषे । अनानतम् । दमयन्तम् । पृतन्यून् ॥ ४ ॥

vनृतमः नेतृतमः vयः अग्निः vअपाचीने अप्रकाशमाने vतमसि निमग्नाः प्रजाः vमदन्तीः स्तुवन्तीः vशचीभिः ताभ्यो दत्ताभिः प्रज्ञाभिः vप्राचीः ऋजुगामिनीः vचकार । यद्वा । नेतृतमो योऽग्निः अपाचीने तमसि[1] निशायां मदन्तीर्माद्यन्तीरुषसः शचीभिः प्रज्ञाभिः प्राचीश्चकारेत्यर्थः । vतं vवस्वः धनस्य vईशानम् vअनानतम् अप्रह्वं vपृतन्यून् युद्धकामांश्च vदमयन्तम् vअग्निं vगृणीषे स्तौमि[2] ॥

यो देह्यो३ अनमयद्वधस्नैर्यो अर्यपत्नीरुषसश्चकार ।
स निरुध्या नहुषो यह्वो अग्निर्विशश्चक्रे बलिहृतः सहोभिः ॥ ५ ॥

यः । देह्यः । अनमयत् । वधऽस्नैः । यः । अर्यऽपत्नीः । उषसः । चकार ।
सः । निऽरुध्य । नहुषः । यह्वः । अग्निः । विशः । चक्रे । बलिऽहृतः । सहःऽभिः ॥५॥

vयः अग्निः vदेह्यः देहीरुपचिताः[3] आसुरीर्विद्याः vवधस्नैः वधैरायुधैर्वा vअनमयत् हीना अकरोत् । vयः च vअर्यपत्नीः । अर्यः सूर्यः पतिर्यासां ता अर्यपत्न्यः । ताः vउषसश्चकार अकरोत् vसः vयह्वः महान् vअग्निः vविशः प्रजाः vसहोभिः बलैः vनिरुध्य vनहुषः राज्ञः vबलिहृतः करप्रदाः vचक्रे ॥

यस्य शर्मन्नुप विश्वे जनास एवैस्तस्थुः सुमतिं भिक्षमाणाः ।
वैश्वानरो वरमा रोदस्योराग्निः ससाद पित्रोरुपस्थम् ॥ ६ ॥

यस्य । शर्मन् । उप । विश्वे । जनासः । एवैः । तस्थुः । सुऽमतिम् । भिक्षमाणाः ।
वैश्वानरः । वरम् । आ । रोदस्योः । आ । अग्निः । ससाद । पित्रोः । उपऽस्थम् ॥ ६ ॥

vविश्वे सर्वे vजनासः जनाः vशर्मन् शर्मणि सुखनिमित्तं vयस्य वैश्वानरस्य vसुमतिं vभिक्षमाणाः प्रार्थयमानाः vएवैः कर्मभिः हविर्भिर्वा vउप vतस्थुः यमेवोपतिष्ठन्ते सः vवैश्वानरः विश्वनरहितः vअग्निः सूर्यः सन् vपित्रोः मातापित्रोः vरोदस्योः द्यावापृथिव्योः vवरम् उत्कृष्टम् vउपस्थं मध्यमन्तरिक्षम् vआ vससाद आगच्छत् ॥

आ देवो ददे बुध्न्या३ वसूनि वैश्वानर उदिता सूर्यस्य ।
आ समुद्रादवरादा परस्मादाग्निर्ददे दिव आ पृथिव्याः ॥ ७ ॥

आ । देवः । ददे । बुध्न्या । वसूनि । वैश्वानरः । उत्ऽइता । सूर्यस्य ।
आ । समुद्रात् । अवरात् । आ । परस्मात् । आ । अग्निः । ददे । दिवः । आ । पृथिव्याः ॥७॥

---

१. ख–तमसि अप्रकाशमाने तमसि । २. ख-न-भ–स्तौति । ३. ख–देहैरुपचिताः ।

वैश्वानरः विश्वनरहितोऽग्निः देवः द्योतमानः बुध्न्या बुध्न्यानि आन्तरिक्षाणि । बुध्नमन्तरिक्षम् । तथा च यास्कः—'बुध्नमन्तरिक्षं बद्धा अस्मिन् धृता आप इति वा' ( निरु. १०·४४ ) इति । वसूनि आच्छादकानि तमांसि ॥ 'वस आच्छादने' इति धातुः ॥ सूर्यस्य उदिता उदितावुदये[1] सति[1] आ ददे । समुद्रात् अन्तरिक्षात् । 'सगरः समुद्रः' इत्यन्तरिक्षनामसु पाठात् । अवरात् पृथिव्याः तमांसि आ ददे । समुद्रात् परस्मात् दिवोऽपि तमांसि आ ददे । तदेव दर्शयति । अग्निः दिवः तमांसि आ ददे पृथिव्याः च तमांसि आ ददे ॥ ॥ ९ ॥

'प्र वो देवम्' इति सप्तर्चं सप्तमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । 'प्र वो देवम्' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्ते[2] उक्तो विनियोगः ॥

**प्र वो॑ दे॒वं चि॑त्सहसा॒नम॒ग्निमश्वं॒ न वा॒जिनं॑ हिषे॒ नमो॑भिः ।**

**भवा॑ नो दू॒तो अ॑ध्व॒रस्य॑ वि॒द्वान्त्मना॑ दे॒वेषु॑ विविदे मि॒तद्रुः॑ ॥ १ ॥**

प्र । व॒ः । दे॒वम् । चि॒त् । स॒ह॒सा॒नम् । अ॒ग्निम् । अश्व॑म् । न । वा॒जिन॑म् । हि॒षे॒ । नम॑ःऽभिः ।

भव॑ । न॒ः । दू॒तः । अ॒ध्व॒रस्य॑ । वि॒द्वान् । त्मना॑ । दे॒वेषु॑ । वि॒वि॒दे॒ । मि॒तऽद्रुः॑ ॥ १ ॥

हे अग्ने वः[3] त्वां[3] देवं द्योतमानादिगुणयुक्तं सहसानं राक्षसानभिभवन्तं बलमाचरन्तं वा अग्निम् अग्रस्य नेतारम् अश्वं न अश्वमिव वाजिनं वेगवन्तं बलवन्तं वा नमोभिः स्तुतिभिर्हविर्भिर्वा प्र हिषे हे अग्ने त्वां[4] चित् प्रहिणोम्येव[5] । किंच हे अग्ने त्वं विद्वान् जानन्[6] नः अस्माकम् अध्वरस्य यज्ञस्य दूतः भव । अथ परोक्षस्तुतिः । त्मना आत्मना स्वयमेव देवेषु मितद्रुः दग्धद्रुमोऽग्निरिव विविदे प्रज्ञायते ॥

**आ या॑ह्यग्ने प॒थ्या॒३॒॑ अनु॒ स्वा म॒न्द्रो दे॒वानां॑ स॒ख्यं जु॑षा॒णः ।**

**आ सानु॒ शुष्मै॑र्न॒दय॑न्पृथि॒व्या जम्भे॑भि॒र्विश्व॑मु॒शध॒ग्वना॑नि ॥ २ ॥**

आ । या॒हि॒ । अ॒ग्ने॒ । प॒थ्या॑ः । अनु॑ । स्वाः । म॒न्द्रः । दे॒वाना॑म् । स॒ख्यम् । जु॒षा॒णः ।

आ । सानु॑ । शुष्मै॑ः । न॒दय॑न् । पृ॒थि॒व्याः । जम्भे॑भिः । विश्व॑म् । उ॒शध॑क् । वना॑नि ॥ २ ॥

हे अग्ने त्वं मन्द्रः मदयिता स्तुत्यो वा देवानां सख्यम् । देवैः सह सख्यमित्यर्थः । जुषाणः सेवमानः[7] पृथिव्याः सानु समुच्छ्रितं तृणगुल्मादिकं शुष्मैः शोषकैर्दाहकैस्तेजोभिः नदयन् शब्दायमानः । दह्यमानं हि शब्दायते । जम्भेभिः दंष्ट्राभिः । ज्वालाभिरित्यर्थः । विश्वं विश्वानि वनानि उशधक् कामयमानः दहन् स्वाः पथ्याः अनु । स्वैर्मार्गैरित्यर्थः । आ आ याहि । आकारस्य पुनर्वचनमादरार्थम् ॥

**प्रा॒चीनो॑ य॒ज्ञः सुधि॑तं॒ हि ब॒र्हिः प्री॑णी॒ते अ॒ग्निरी॑ळि॒तो न होता॑ ।**

**आ मा॒तरा॑ वि॒श्ववा॑रे हुवा॒नो यतो॑ यविष्ठ जज्ञि॒षे सु॒शेवः॑ ॥ ३ ॥**

प्रा॒चीन॑ः । य॒ज्ञः । सु॒ऽधि॑तम् । हि । ब॒र्हिः । प्री॒णी॒ते । अ॒ग्निः । ई॒ळि॒तः । न । होता॑ ।

आ । मा॒तरा॑ । वि॒श्वऽवा॑रे॒ इति॑ वि॒श्वऽवा॑रे । हु॒वा॒नः । यत॑ः । य॒वि॒ष्ठ॒ । ज॒ज्ञि॒षे । सु॒ऽशेव॑ः ॥ ३ ॥

---

१. ख-भ—उदितौ सूर्ये । २. त—°र्दशसूक्तेषु । ३. ख-ग्न-त-श—त्वाम्; न-भ—त्वम् । ४. ख-ग्न-श—त्वम् । ५. ख-भ—प्रहिणोम्येव । ६. ज्ञ-त२-य—देवान् जानन् । ७. त—सेवमानः सन् ।

अयं ᵛयज्ञः ᵛप्राचीनः । सम्यगनुष्ठीयत इत्यर्थः । यद्वा । यज्ञो यष्टा होता प्राचीनः । यद्वा । यज्ञो हविः प्राचीनः प्राचीनं प्राङ्मुखमासन्नम्[1] । ᵛबर्हिः[1] ᵛहि बर्हिश्च ᵛसुधितं सुनिहितम् । ᵛईळितः स्तुतः ᵛअग्निः ᵛप्रीणीते तृप्तश्च भवति । ᵛहोता ᵛन होता च । नेति चार्थे । ᵛविश्ववारे विश्वैर्वरणीये ᵛमातरा द्यावापृथिव्यौ इडायाम् ᵛआ ᵛहुवानः भवति । कदेत्यत आह । ᵛयतः यदा ᵛयविष्ठ हे युवतमाग्ने त्वं ᵛसुशेवः सुसुखः ᵛजज्ञिषे जायसे ॥

स॒द्यो अ॑ध्व॒रे र॑थि॒रं ज॑नन्त॒ मानु॑षासो॒ विचे॑तसो॒ य ए॑षाम् ।
वि॒शाम॑धायि वि॒श्पति॑र्दुरो॒णे॒३॑ग्निर्म॒न्द्रो मधु॑वचा ऋ॒तावा॑ ॥ ४ ॥

स॒द्यः । अ॒ध्व॒रे । र॒थि॒रम् । ज॒न॒न्त॒ । मानु॑षासः । विऽचे॑तसः । यः । ए॒षाम् ।
वि॒शाम् । अ॒धा॒यि॒ । वि॒श्पतिः॑ । दु॒रो॒णे । अ॒ग्निः । म॒न्द्रः । मधु॑ऽवचाः । ऋ॒तऽवा॑ ॥ ४ ॥

ᵛविचेतसः विविक्तप्रज्ञाः ᵛमानुषासः मनुष्याः ᵛअध्वरे यज्ञे ᵛरथिरं रथिनं[2] नेतारमग्निं ᵛसद्यः ᵛजनन्त जनयन्ति । ᵛयः ᵛएषां हविर्वहति सोऽयम् ᵛअग्निः ᵛविश्पतिः विशां पतिर्विश्वस्य पतिर्वा ᵛमन्द्रः मदयिता ᵛमधुवचाः मादयितृवचस्कः[3] ᵛऋतावा[4] यज्ञवान् ᵛविशां मनुष्याणां ᵛदुरोणे गृहे ᵛअधायि आहितः ॥

असा॑दि वृ॒तो वह्नि॑राजग॒न्वान॒ग्निर्ब्र॒ह्मा नृ॒षद॑ने विध॒र्ता ।
द्यौश्च॒ यं पृ॑थि॒वी वा॑वृ॒धाते॒ आ यं होता॒ यज॑ति वि॒श्ववा॑रम् ॥ ५ ॥

असा॑दि । वृ॒तः । वह्निः॑ । आ॒ऽज॒ग॒न्वान् । अ॒ग्निः । ब्र॒ह्मा । नृ॒ऽसद॑ने । वि॒ऽध॒र्ता । 
द्यौः । च॒ । यम् । पृ॒थि॒वी । व॒वृ॒धाते॒ इति॑ । आ । यम् । होता॑ । यज॑ति । वि॒श्वऽवा॑रम् ॥५॥

ᵛवृतः होतृत्वेन ᵛवह्निः हविषां वोढा ᵛब्रह्मा परिवृढः ᵛविधर्ता विश्वस्य धारकः ᵛअग्निः ᵛआजगन्वान् द्युलोकादागत आगमनशीलो वा ᵛनृषदने होतुः स्थाने ᵛअसादि उपविष्टः । ᵛयम् अग्निं ᵛद्यौश्च ᵛपृथिवी चोभे ᵛववृधाते वर्धयतः । ᵛयं च ᵛविश्ववारं विश्वैर्वरणीयं ᵛहोता मानुषः ᵛआ ᵛयजति ॥

ए॒ते द्यु॒म्नेभि॒र्विश्व॒मात्ति॑रन्त॒ मन्त्रं॒ ये वारं॒ नर्या॒ अत॑क्षन् ।
प्र ये विश॑स्ति॒रन्त॒ श्रोष॑माणा॒ आ ये मे॑ अ॒स्य दीध॑यन्नृ॒तस्य॑ ॥ ६ ॥

ए॒ते । द्यु॒म्नेभिः॑ । विश्व॑म् । आ । अ॒ति॒र॒न्त॒ । मन्त्र॑म् । ये । वा॒ । अर॑म् । नर्याः॑ । अत॑क्षन् ।
प्र । ये । विशः॑ । ति॒रन्त॑ । श्रोष॑माणाः । आ । ये । मे॒ । अ॒स्य । दीध॑यन् । ऋ॒तस्य॑ ॥६॥

ᵛएते मदीयाः पुरुषाः ᵛद्युम्नेभिः अन्नैः ᵛविश्वं पोष्यवर्गम् ᵛआतिरन्त वर्धयन्ति । अथवा द्युम्नेभिर्यशोभिर्विश्वं जगदातिरन्त[5] । अभ्यगच्छन्नित्यर्थः । क इत्यत आह । ᵛये ᵛनर्याः मनुष्याः ᵛमन्त्रं स्तोत्रं स्तुत्यं ᵛवा ᵛअरं[6] पर्याप्तम् ᵛअतक्षन् समस्कुर्वन् । वेति समुच्चये । ᵛये च ᵛविशः जनाः ᵛश्रोषमाणाः ॥ श्रृणोतेः ' सन्यङोः ' इति द्वित्वम् ' इको झल् ' इति सनः किर्त्वं च ' सर्वे विधय-

१. ख—°मासन्नम्; झ-त-न-भ-श—°मासनम् । २. ख-भ—' रथिनं ' नास्ति । ३. ख. मदयितृ° । ४. त—ऋतवा । ५. झ—°दातिरन्त आभरन्त । ६. य—अरमलम् ।

श्छन्दसि विकल्प्यन्ते[1] ' इति न भवतः। 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदम् ॥ ᵛप्र ᵛतिरन्त वर्धयन्ति। ᵛमे मदीयाः ᵛये वा ᵛऋतस्य ᵛअस्य सत्यमिममग्निम्। कर्मणि षष्ठी। माषाणामश्नीयादितिवत्। ᵛआ ᵛदीधयन् आदीपयन् ॥

नू त्वामग्न ईमहे वसिष्ठा ईशानं सूनो सहसो वसूनाम्।
इषं स्तोतृभ्यो मघवद्भ्य आनड्यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

नु। त्वाम्। अग्ने। ईमहे। वसिष्ठाः। ईशानम्। सूनो इति। सहसः। वसूनाम्।
इषम्। स्तोतृऽभ्यः। मघवत्ऽभ्यः। आनट्। यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥७॥

ᵛसहसः ᵛसूनो बलस्य पुत्र ᵛअग्ने ᵛवसिष्ठाः वयं ᵛवसूनाम् ᵛईशानं ᵛत्वाम् अस्मदीयेभ्यः ᵛस्तोतृभ्यः ᵛमघवद्भ्यः हविष्मद्भ्यश्च ᵛइषम् अन्नं ᵛनु क्षिप्रम् अद्य वा ᵛआनट् प्रापयेः ॥ नशेर्व्याप्तिकर्मणोऽन्तर्णीतण्यर्थात् लुङि[2] 'छन्दस्यपि दृश्यते' इत्याडागमः। ᵛयूयं त्वत्परिवाराश्च[3] सर्वे यूयं ᵛनः अस्मान् ᵛसदा ᵛस्वस्तिभिः ᵛपात इत्येवम् ᵛईमहे याचामहे ॥ ॥ १० ॥

'इन्धे राजा' इति सप्तर्चमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम्। 'इन्धे राजा' इत्यनुक्रान्तम्। प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगः[4]। आतिथ्यायां 'प्रप्रायमग्निः' इति स्विष्टकृतो याज्या। सूत्रितं च—'प्रप्रायमग्निर्भरतस्य शृण्व इति संयाज्ये' (आश्व. श्रौ. ४.५) इति ॥

इन्धे राजा समर्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन।
नरो हव्येभिरीळते सबाध आग्निरग्र उषसामशोचि ॥ १ ॥

इन्धे। राजा। सम्। अर्यः। नमःऽभिः। यस्य। प्रतीकम्। आऽहुतम्। घृतेन।
नरः। हव्येभिः। ईळते। सऽबाधः। आ। अग्निः। अग्रे। उषसाम्। अशोचि ॥ १ ॥

ᵛराजा दीप्तः ᵛअर्यः स्वामी हविषां[5] प्रेरको वाग्निः ᵛनमोभिः स्तुतिभिः सह ᵛसम् ᵛइन्धे समिध्यते। ᵛयस्य अग्नेः ᵛप्रतीकं रूपं ᵛघृतेन ᵛआहुतं भवति। यं[6] च ᵛनरः अस्मदीयाः ᵛसबाधः संश्लिष्टाः संजातबाधा वा ᵛहव्येभिः हव्यैः सार्धम् ᵛईळते स्तुवन्ति सः ᵛअग्निः ᵛउषसाम् ᵛअग्रे ᵛआ ᵛअशोचि आदीप्यते ॥

अयमु ष्य सुमहाँ अवेदि होता मन्द्रो मनुषो यह्वो अग्निः।
वि भा अकः ससृजानः पृथिव्यां कृष्णपविरोषधीभिर्ववक्षे ॥ २ ॥

अयम्। ऊँ इति। स्यः। सुऽमहान्। अवेदि। होता। मन्द्रः। मनुषः। यह्वः। अग्निः।
वि। भाः। अकरित्यकः। ससृजानः। पृथिव्याम्। कृष्णऽपविः। ओषधीभिः। ववक्षे ॥२॥

ᵛस्यः सः ᵛअयं ᵛहोता देवानामाह्वाता ᵛमन्द्रः मदयिता ᵛयह्वः महान् ᵛअग्निः ᵛमनुषः मनुष्यस्य ᵛसुमहान् ᵛअवेदि सुमहत्त्वेन प्रज्ञायते। अपि च सोऽयं ᵛभाः दीप्तीः ᵛवि ᵛअकः विकरोत्यन्तरिक्षे। किंच सोऽयं ᵛकृष्णपविः कृष्णमार्गोऽग्निः ᵛपृथिव्यां[7] ᵛससृजानः सृज्यमानः सन् ᵛओषधीभिर्ववक्षे वर्धते ॥

---

१. ख-त-भ-विकल्पन्ते; ङ्ग-न-श-विलुप्यन्ते। २. य-लिङर्थे लुङि। ३. ख-न-भ-त्वत्परिचराश्च। ४. त-°शस्त्रयोरुक्तो विनियोगः। ५. ख-भ-अरीणाम्। ६. ख-ङ्ग-त-न-भ-श-ये। ७. ङ्ग-न-भ-श-पृथिव्याः।

कया नो अग्ने वि वसः सुवृक्तिं कामु स्वधामृणवः शस्यमानः ।
कदा भवेम पतयः सुदत्र रायो वन्तारो दुष्टरस्य साधोः ॥ ३ ॥

कया । नः । अग्ने । वि । वसः । सुऽवृक्तिम् । काम् । ऊँ इति । स्वधाम् । ऋणवः । शस्यमानः ।
कदा । भवेम । पतयः । सुऽदत्र । रायः । वन्तारः । दुस्तरस्य । साधोः ॥ ३ ॥

हे अग्ने त्वं कया स्वधया हविषा नः अस्माकं सुवृक्तिं स्तुतिं वि वसः व्याप्नुषे आच्छादयसि वा । कामु कां च स्वधां शस्यमानः स्तूयमानस्त्वम् ऋणवः प्राप्नुयाः । हे सुदत्र शोभनदानाग्ने । तथा च यास्कः—'सुदत्रः कल्याणदानः' (निरु. ६.१४) इति । वयं कदा दुष्टरस्य शत्रुभिर्दुर्हिंसकस्य[1] साधोः समीचीनस्य रायः धनस्य पतयः स्वामिनः भवेम । वन्तारः संभक्तारश्च कदा भवेम ॥

प्रप्रायमग्निर्भरतस्य शृण्वे वि यत्सूर्यो न रोचते बृहद्भाः ।
अभि यः पूरुं पृतनासु तस्थौ द्युतानो दैव्यो अतिथिः शुशोच ॥ ४ ॥

प्रऽप्र । अयम् । अग्निः । भरतस्य । शृण्वे । वि । यत् । सूर्यः । न । रोचते । बृहत् । भाः ।
अभि । यः । पूरुम् । पृतनासु । तस्थौ । द्युतानः । दैव्यः । अतिथिः । शुशोच ॥ ४ ॥

अयं प्रसिद्धः[2] अग्निः भरतस्य यजमानस्य मम प्रप्र अत्यन्तं शृण्वे प्रथितो भवति । कदेत्यत्राह । यत् यदा सूर्यो न सूर्य इव बृहद्भाः बृहद्भासमानो वि रोचते प्रकाशते[3] । किंच यः अग्निः पृतनासु संग्रामेषु पूरुं पूरुनामकमसुरम् अभि तस्थौ अभिबभूव सोऽयं द्युतानः दीप्यमानः दैव्यः अतिथिः देवानामतिथिवत् पूज्यः सन् शुशोच जज्वाल ॥

असन्नित्त्वे आहवनानि भूरि भुवो विश्वेभिः सुमना अनीकैः ।
स्तुतश्चिदग्ने शृण्विषे गृणानः स्वयं वर्धस्व तन्वं सुजात ॥ ५ ॥

असन् । इत् । त्वे इति । आऽहवनानि । भूरि । भुवः । विश्वेभिः । सुऽमनाः । अनीकैः ।
स्तुतः । चित् । अग्ने । शृण्विषे । गृणानः । स्वयम् । वर्धस्व । तन्वम् । सुऽजात ॥ ५ ॥

हे अग्ने त्वे त्वयि आहवनानि हवींष्याहुतयो वा भूरि बहूनि असन्नित् भवन्त्येव । त्वं च विश्वेभिः विश्वैः अनीकैः तेजोभिस्त्वद्विभूतिभिरग्निभिर्वा सह सुमनाः भुवः भव । हे अग्ने स्तुतः[4] स्तोतुः । स्तौतीति स्तुत् । स्तोत्रं शृण्विषे शृणु । हे सुजात कल्याणप्रादुर्भावाग्ने गृणानः स्तूयमानस्त्वं स्वयं स्वयमेव तन्वं स्वां तनुं मम तनुं वा वर्धस्व वर्धयस्व ॥

इदं वचः शतसाः संसहस्रमुदग्नये जनिषीष्ट द्विबर्हाः ।
शं यत्स्तोतृभ्य आपये भवाति द्युमदमीवचातनं रक्षोहा ॥ ६ ॥

इदम् । वचः । शतऽसाः । सम्ऽसहस्रम् । उत् । अग्नये । जनिषीष्ट । द्विऽबर्हाः ।
शम् । यत् । स्तोतृऽभ्यः । आपये । भवाति । द्युऽमत् । अमीवऽचातनम् । रक्षःऽहा ॥ ६ ॥

---

१. ज्ञ–°र्दुर्हिंस्यस्य । २. ख–समिद्धः । ३. ख-न-भ–विकाशते । ४. त–स्तुतश्चित् ।

$^{v}$शतसाः गवां शतस्य संभक्ता $^{v}$संसहस्रं गवां सहस्रेण च संयुतः $^{v}$द्विबर्हाः द्वाभ्यां विद्याकर्मभ्यां बृहन् वसिष्ठो द्वयोः स्थानयोर्द्युलोकयोर्महान् वा । तथा च यास्कः—'द्विबर्हा द्वयोः स्थानयोः परिवृढः' ( निरु. ६. १७ ) इति । $^{v}$इदं $^{v}$वचः इदं स्तोत्रम् $^{v}$अग्नये[1] $^{v}$उत् $^{v}$जनिषीष्ट उदजीजनत् । किं तदित्यत आह । $^{v}$यत् वचः $^{v}$द्युमत् दीप्तिमत्[2] । यशस्करमित्यर्थः । $^{v}$अमीवचातनं रोगाणां निवारकं $^{v}$रक्षोहा रक्षसां हन्तृ च $^{v}$स्तोतृभ्यः $^{v}$आपये तद्बन्धवे पुत्रादिकायापि $^{v}$शं सुखदं $^{v}$भवाति भवेत् ॥

नू त्वामग्न ईमहे वसिष्ठा ईशानं सूनो सहसो वसूनाम् ।
इषं स्तोतृभ्यो मघवद्भ्य आनड्यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

नु । त्वाम् । अग्ने । ईमहे । वसिष्ठाः । ईशानम् । सूनो इति । सहसः । वसूनाम् ।
इषम् । स्तोतृऽभ्यः । मघवत्ऽभ्यः । आनट् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

इयमृक् प्रागेव व्याख्याता ॥ ॥ ११ ॥

'अबोधि जारः' इति षडृचं नवमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । 'अबोधि षट्' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्तमध्ये उक्तो[3] विनियोगः[3] ॥

अबोधि जार उषसामुपस्थाद्धोता मन्द्रः कवितमः पावकः ।
दधाति केतुमुभयस्य जन्तोर्हव्या देवेषु द्रविणं सुकृत्सु ॥ १ ॥

अबोधि । जारः । उषसाम् । उपऽस्थात् । होता । मन्द्रः । कविऽतमः । पावकः ।
दधाति । केतुम् । उभयस्य । जन्तोः । हव्या । देवेषु । द्रविणम् । सुकृत्ऽसु ॥ १ ॥

$^{v}$जारः सर्वेषां प्राणिनां जरयिता $^{v}$होता देवानामाह्वाता $^{v}$मन्द्रः मदयिता स्तुत्यो वा $^{v}$कवितमः प्राज्ञतमः $^{v}$पावकः शोधकोऽग्निः $^{v}$उषसाम् $^{v}$उपस्थात् मध्ये $^{v}$अबोधि अबुध्यत । किंच $^{v}$उभयस्य द्विपदश्च[4] चतुष्पदश्च दैव्यस्य मानुषस्य वा $^{v}$जन्तोः प्राणिनः $^{v}$केतुं प्रज्ञानं $^{v}$दधाति विदधाति । $^{v}$देवेषु च $^{v}$हव्या हव्यानि दधाति । $^{v}$सुकृत्सु यजमानेषु च $^{v}$द्रविणं धनं दधाति ॥

स सुक्रतुर्यो वि दुरः पणीनां पुनानो अर्कं पुरुभोजसं नः ।
होता मन्द्रो विशां दमूनास्तिरस्तमो ददृशे राम्याणाम् ॥ २ ॥

सः । सुऽक्रतुः । यः । वि । दुरः । पणीनाम् । पुनानः । अर्कम् । पुरुऽभोजसम् । नः ।
होता । मन्द्रः । विशाम् । दमूनाः । तिरः । तमः । ददृशे । राम्याणाम् ॥ २ ॥

$^{v}$सः अग्निः $^{v}$सुक्रतुः सुकर्मा सुप्रज्ञो वा भवति । $^{v}$यः अग्निः $^{v}$पणीनाम् असुराणां $^{v}$दुरः द्वाराणि गवां पिधानानि विवृतवान् । $^{v}$पुरुभोजसं बहुक्षीरम् $^{v}$अर्कम् अर्चनीयं गवां संघं $^{v}$नः अस्मदर्थं $^{v}$पुनानः शोधयन् । हरन्नित्यर्थः । $^{v}$होता देवानामाह्वाता $^{v}$मन्द्रः मदयिता स्तुत्यो वा

---

१. ख-ञ-त-न-भ-श–'अग्नये' नास्ति । २. ख-न-भ–'दीप्तिमत्' नास्ति । ३. श–इदं सूक्तम् ।
४. घ-ञ-त-श–द्विपदः ।

दमूनाः दान्तमना[1] दममना दानमना वा[1] राम्याणां रात्रीणां रमयित्रीणां[2] वा विशां जनानां यजमानानां वा तमः अन्धकारं तिरस्कुर्वन् ददृशे दृश्यते च। यद्वा। तमस्तिरो ददृशे नाशयतीत्यर्थः ॥

अमूरः कविरदितिर्विवस्वान्त्सुसंसन्मित्रो अतिथिः शिवो नः ।
चित्रभानुरुषसां भात्यग्रेऽपां गर्भः प्रस्व१ आ विवेश ॥ ३ ॥

अमूरः । कविः । अदितिः । विवस्वान् । सुऽसंसत् । मित्रः । अतिथिः । शिवः । नः ।
चित्रऽभानुः । उषसाम् । भाति । अग्रे । अपाम् । गर्भः । प्रऽस्वः । आ । विवेश ॥ ३ ॥

योऽग्निः अमूरः अमूढः कविः प्राज्ञः अदितिः अदीनः विवस्वान् दीप्तिमान् सुसंसत् शोभनसदनः शोभनसंवेदनो वा मित्रः प्रमीतेस्त्राता सर्वेषाम् अतिथिः अतिथिवत् पूज्यः शिवः शिवकरो जगतः चित्रभानुः चित्रदीप्तिः उषसाम् अग्रे मुखे भाति सोऽयम् अपां गर्भः सन् प्रस्वः जायमाना ओषधीः आ विवेश ॥

ईळेन्यो वो मनुषो युगेषु समनगा अशुचज्जातवेदाः ।
सुसंदृशा भानुना यो विभाति प्रति गावः समिधानं बुधन्त ॥ ४ ॥

ईळेन्यः । वः । मनुषः । युगेषु । समनऽगाः । अशुचत् । जातऽवेदाः ।
सुऽसंदृशा । भानुना । यः । विऽभाति । प्रति । गावः । सम्ऽइधानम् । बुधन्त ॥ ४ ॥

हे अग्ने वः त्वम् । अत्र विभक्तिवचनव्यत्ययः[3] । मनुषः मनुष्यस्य युगेषु यागकालेषु सर्वेष्वपि दिवसेषु वा ईळेन्यः स्तुत्यः । अतः परं परोक्षस्तुतिः । यः अग्निः जातवेदाः जातधनः समनगाः युद्धेषु संगन्ता सन् अशुचत् दीप्यते । सुसंदृशा सुसंदर्शनेन भानुना तेजसा विभाति च । तमग्निं समिधानं समिध्यमानं गावः स्तुतयः प्रति बुधन्त प्रतिबोधयन्ति ॥

वैश्वदेवे पशौ 'अग्ने याहि' इति हविषो याज्या । सूत्रितं च—'अग्ने याहि दूत्यं मा रिषण्य इन्द्रं नरो नेमधिता हवन्त इति तिस्रः' (आश्व. श्रौ. ३ · ७) इति ॥

अग्ने याहि दूत्यं१ मा रिषण्यो देवाँ अच्छा ब्रह्मकृता गणेन ।
सरस्वतीं मरुतो अश्विनापो यक्षि देवान् रत्नधेयाय विश्वान् ॥ ५ ॥

अग्ने । याहि । दूत्यम् । मा । रिषण्यः । देवान् । अच्छ । ब्रह्मऽकृता । गणेन ।
सरस्वतीम् । मरुतः । अश्विना । अपः । यक्षि । देवान् । रत्नऽधेयाय । विश्वान् ॥ ५ ॥

हे अग्ने दूत्यं दूतस्य कर्म हविर्वहनादि याहि देवान् अच्छ अभिगच्छ । गणेन संघेन सह ब्रह्मकृता ब्रह्मकृतोऽस्मानस्मदीयांश्च तव स्तोतॄन् मा रिषण्यः मा हिंसीः । सरस्वतीं मरुतः अश्विना अश्विनौ अपः चैतान् देवान् रत्नधेयाय अस्मभ्यं रत्नदानाय यक्षि च[4] ॥

---

१. त–दममना वा दानमना वा दान्तमना वा । २. ख-न-भ–'रमयित्रीणां' नास्ति । ३. झ-त-न-भ-श–विभक्तेर्वचन° । ४. झ–यज ।

त्वाम॑ग्ने समि॒धा॒नो वसि॑ष्ठो॒ जरू॑थं हन्य॒क्षि रा॒ये पुरं॑धिम् ।
पु॒रु॒णी॒था जा॑तवेदो जरस्व यू॒यं पा॑त स्व॒स्तिभि॒: सदा॑ नः ॥ ६ ॥

त्वाम् । अ॒ग्ने॒ । स॒म्ऽइ॒धा॒नः । वसि॑ष्ठः । जरू॑थम् । ह॒न् । यक्षि॑ । रा॒ये । पुर॑म्ऽधिम् ।
पु॒रु॒ऽनी॒था । जा॒त॒ऽवे॒दः॒ । ज॒र॒स्व॒ । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । नः॒ ॥ ६ ॥

हे अग्ने त्वां वसिष्ठः ऋषिः[1] समिधानः भवति । त्वं च जरूथं परुषभाषिणं जरणीयं वा रक्षोगणं हन् जहि । राये धनवते यजमानाय पुरंधिं बहुधियं देवगणम् । तथा च यास्कः—'पुरंधिर्बहुधीः' इति । यक्षि यज । किंच हे जातवेदः अग्ने पुरुणीथा पुरुनीथेन बहुना स्तोत्रेण जरस्व देवान् स्तुहि । यद्वा । पुरुणीथानेकमार्गाणि रक्षांसि जरयेत्यर्थः ॥ ॥ १२ ॥

'उषो न जारः' इति पञ्चर्चं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । तथा चानुक्रान्तम्—'उषो न पञ्च' इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

उ॒षो न जा॒रः पृ॒थु पाजो॑ अश्रे॒द्दवि॑द्युत॒द्दीद्य॒च्छोशु॑चानः ।
वृषा॒ हरि॒: शुचि॒रा भा॑ति भा॒सा धियो॑ हिन्वा॒न उ॑श॒तीर॑जीगः ॥ १ ॥

उ॒षः । न । जा॒रः । पृ॒थु । पाजः॑ । अ॒श्रे॒त् । दवि॑द्युतत् । दीद्य॑त् । शोशु॑चानः ।
वृषा॑ । हरि॑ः । शुचि॑ः । आ । भा॒ति॒ । भा॒सा । धियः॑ । हि॒न्वा॒नः । उ॒श॒तीः । अ॒जी॒ग॒रिति॑ ॥ १ ॥

अग्निः उषो न जारः उषसो जारः सूर्यस्तद्वत् पृथु विस्तीर्णं पाजः तेजः अश्रेत् श्रयति[2] । किंच दविद्युतत् दीद्यत् शोशुचानः इति त्रयोऽपि शब्दा यद्यपि दीप्तिकर्माणः तथापि दीप्तेः भूयस्त्वज्ञापनाय प्रयुक्ता इति न पुनरुक्तिः । अत्यन्तं दीप्यमान इत्यर्थः । वृषा कामानां वर्षिता हरिः हविषां प्रेरकः शुचिः शुद्धिकृदग्निः धियः कर्माणि हिन्वानः प्रेरयन् भासा दीप्त्या आ भाति प्रकाशते । अपि च उशतीः कामयमानाः अजीगः जागरयति । तमसा तिरोहिताः प्रजा उद्गिरति वा ॥

स्व१॒र्ण वस्तो॑रु॒षसा॑मरोचि य॒ज्ञं त॑न्वा॒ना उ॒शिजो॒ न मन्म॑ ।
अ॒ग्निर्जन्मा॑नि दे॒व आ वि वि॒द्वान्द्र॒वद्दू॒तो दे॑व॒यावा॒ वनि॑ष्ठः ॥ २ ॥

स्व१रिति॑ । न । वस्तोः॑ । उ॒षसा॑म् । अ॒रो॒चि॒ । य॒ज्ञम् । त॒न्वा॒नाः । उ॒शिजः॑ । न । मन्म॑ ।
अ॒ग्निः । जन्मा॑नि । दे॒वः । आ । वि । वि॒द्वान् । द्र॒वत् । दू॒तः । दे॒व॒ऽयावा॑ । वनि॑ष्ठः ॥ २ ॥

अग्निः वस्तोः अहनि । 'वस्तोः द्युः' इत्यहर्नामसु पाठात् । उषसाम् अग्रे स्वर्ण आदित्य इव । तथा च यास्कः—'स्वरादित्यो भवति सु अरणः सु ईरणः' ( निरु. २·१४ ) इति । अरोचि दीप्यते । उशिजो न ऋत्विजश्च यज्ञं तन्वानाः विस्तारयन्तः मन्म मन्मानि मननीयानि स्तोत्राणि पठन्तीति शेषः । नेति संप्रत्यर्थे । अपि च विद्वान्[3] जानन् दूतः देवानां देवयावा देवान् प्रति गच्छन् वनिष्ठः दातृतमः अग्निः वि आ द्रवत् विविधमाद्रवति ॥

---

१. ख-भ-वसिष्ठ ऋषिः । २. य—आश्रयति । ३. ज्ञ-देवो दीप्यमानोऽग्निः जन्मानि सर्वेषामुत्पत्तीः विद्वान् ।

अच्छा गिरो मतयो देवयन्तीरग्निं यन्ति द्रविणं भिक्षमाणाः ।
सुसंदृशं सुप्रतीकं स्वञ्चं हव्यवाहमरतिं मानुषाणाम् ॥ ३ ॥

अच्छ । गिरः । मतयः । देवऽयन्तीः । अग्निम् । यन्ति । द्रविणम् । भिक्षमाणाः ।
सुऽसंदृशम् । सुऽप्रतीकम् । सुऽअञ्चम् । हव्यऽवाहम् । अरतिम् । मानुषाणाम् ॥ ३ ॥

ᵛमतयः स्तुतिरूपाः ᵛदेवयन्तीः देवानिच्छन्त्यः ᵛद्रविणं धनं ᵛभिक्षमाणाः याचमानाः ᵛगिरः वाचः ᵛसुसंदृशं कल्याणसंदर्शनं ᵛसुप्रतीकं सुरूपं शोभनाङ्गं वा ᵛस्वञ्चं सुष्ठु गच्छन्तं ᵛहव्यवाहं हव्यानां वोढारं ᵛमानुषाणाम् ᵛअरतिं स्वामिनम् ᵛअग्निम् ᵛअच्छ अभि ᵛयन्ति अभिगच्छन्ति ॥

इन्द्रं नो अग्ने वसुभिः सजोषा रुद्रं रुद्रेभिरा वहा बृहन्तम् ।
आदित्येभिरदितिं विश्वजन्यां बृहस्पतिमृक्वभिर्विश्ववारम् ॥ ४ ॥

इन्द्रम् । नः । अग्ने । वसुऽभिः । सऽजोषाः । रुद्रम् । रुद्रेभिः । आ । वह । बृहन्तम् ।
आदित्येभिः । अदितिम् । विश्वऽजन्याम् । बृहस्पतिम् । ऋक्वऽभिः । विश्वऽवारम् ॥ ४ ॥

हे ᵛअग्ने ᵛवसुभिः देवैः ᵛसजोषाः संगतस्त्वं ᵛनः अस्मदर्थम् ᵛइन्द्रम् ᵛआ ᵛवह । ᵛरुद्रेभिः रुद्रैर्देवैः संगतः ᵛबृहन्तं महान्तं ᵛरुद्रं चा वह । ᵛआदित्येभिः आदित्यैर्देवैः संगतः ᵛविश्वजन्यां विश्वजनहिताम् ᵛअदितिं चा वह । ᵛऋक्वभिः स्तुत्यैः अङ्गिरोभिर्देवैः संगतः ᵛविश्ववारं विश्वैः संभजनीयं ᵛबृहस्पतिं चा वह ॥

मन्द्रं होतारमुशिजो यविष्ठमग्निं विश ईळते अध्वरेषु ।
स हि क्षपावाँ अभवद्रयीणामतन्द्रो दूतो यजथाय देवान् ॥ ५ ॥

मन्द्रम् । होतारम् । उशिजः । यविष्ठम् । अग्निम् । विशः । ईळते । अध्वरेषु ।
सः । हि । क्षपाऽवान् । अभवत् । रयीणाम् । अतन्द्रः । दूतः । यजथाय । देवान् ॥ ५ ॥

ᵛउशिजः कामयमानाः ᵛविशः मनुष्याः ᵛमन्द्रं स्तुत्यं ᵛहोतारम् आह्वातारं ᵛयविष्ठं युवतमम् ᵛअग्निम् ᵛअध्वरेषु यागेषु ᵛईळते स्तुवन्ति । ᵛहि यस्मात् कारणात् ᵛसः अग्निः ᵛक्षपावान् रात्रिमान् । रात्रौ खल्वग्नयेऽग्निहोत्रं हूयते । ᵛरयीणां रयिमतां हविष्मतां यजमानानां ᵛदेवान् ᵛयजथाय यष्टुम् ᵛअतन्द्रः तन्द्रारहितः ᵛदूतः ᵛअभवत् । तथा च श्रूयते— 'यस्माद्दूतोऽभवत्तस्माद्विशस्तमध्वर ईळते' इति ॥ ॥ १३ ॥

'महाँ असि' इति पञ्चर्चमेकादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । 'महान्' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

महाँ अस्यध्वरस्य प्रकेतो न ऋते त्वदमृता मादयन्ते ।
आ विश्वेभिः सरथं याहि देवैर्न्यग्ने होता प्रथमः सदेह ॥ १ ॥

महान् । असि । अध्वरस्य । प्रऽकेतः । न । ऋते । त्वत् । अमृताः । मादयन्ते ।
आ । विश्वेभिः । सऽरथम् । याहि । देवैः । नि । अग्ने । होता । प्रथमः । सद । इह ॥ १ ॥

हे ᵛअग्ने त्वम् ᵛअध्वरस्य ᵛप्रकेतः प्रज्ञापनः सन् ᵛमहानसि । ᵛत्वत् ᵛऋते त्वया विना ᵛअमृताः देवाः ᵛन ᵛमादयन्ते न माद्यन्ति[1] । ᵛविश्वेभिः विश्वैः ᵛदेवैः ᵛसरथं यथा भवति[2] ᵛआ ᵛयाहि च । ᵛइह आस्तीर्णे बर्हिषि ᵛप्रथमः मुख्यः ᵛहोता आह्वाता सन् ᵛनि ᵛसद निषीद च ॥

वाजपेये बार्हस्पत्यचरोः स्विष्टकृतोऽनुवाक्या । सूत्रितं च—'त्वामीळते अजिरं दूत्यायाग्निं सुदीतिं सुदृशं गृणन्तः' (आश्व. श्रौ. ९. ९) इति ॥

त्वामी॑ळते अजि॒रं दू॒त्या॑य ह॒विष्म॑न्तः॒ सद॒मिन्मानु॑षासः ।
यस्य॑ दे॒वैरास॑दो ब॒र्हिर॒ग्नेऽहा॑न्यस्मै सु॒दिना॑ भवन्ति ॥ २ ॥

त्वाम् । ई॒ळ॒ते॒ । अ॒जि॒रम् । दू॒त्या॑य । ह॒विष्म॑न्तः । सद॑म् । इत् । मानु॑षासः ।
यस्य॑ । दे॒वैः । आ । अस॑दः । ब॒र्हिः । अ॒ग्ने॒ । अहा॑नि । अ॒स्मै॒ । सु॒ऽदिना॑ । भ॒व॒न्ति॒ ॥२॥

हे ᵛअग्ने ᵛअजिरं प्रगामिनं ᵛत्वां ᵛमानुषासः मानुषाः ᵛहविष्मन्तः यजमानाः ᵛसदमित् सदैव ᵛदूत्याय दूतकर्मणे हविर्वहनाय ᵛईळते याचन्ते । किमर्थमित्यत आह । ᵛयस्य हविष्मतः ᵛबर्हिः ᵛदेवैः सार्धम् ᵛआसदः त्वमधितिष्ठसि ᵛअस्मै हविष्मते ᵛअहानि ᵛसुदिना सुदिनानि शोभनदिनानि ᵛभवन्ति ॥

त्रिश्चि॑द॒क्तोः प्र चि॑कितु॒र्वसू॑नि॒ त्वे अ॒न्तर्दा॒शुषे॒ मर्त्या॑य ।
म॒नु॒ष्वद॑ग्न इ॒ह य॑क्षि दे॒वान्भवा॑ नो दू॒तो अ॑भिशस्ति॒पावा॑ ॥ ३ ॥

त्रिः । चि॒त् । अ॒क्तोः । प्र । चि॒कि॒तुः॒ । वसू॑नि । त्वे इति॑ । अ॒न्तः । दा॒शुषे॑ । मर्त्या॑य ।
म॒नु॒ष्वत् । अ॒ग्ने॒ । इ॒ह । य॒क्षि॒ । दे॒वान् । भव॑ । नः॒ । दू॒तः । अ॒भि॒श॒स्ति॒ऽपावा॑ ॥ ३ ॥

हे ᵛअग्ने ᵛत्वे त्वयि ᵛअन्तः मध्ये ᵛअक्तोः अह्नः । यद्यप्यक्तुरिति रात्रेर्नाम[3] तथाप्यत्राज्यन्ते व्यज्यन्ते रूपादीन्यस्मिन्नित्यह्नो नाम । ᵛत्रिः त्रिवारं त्रिषु सवनेषु ᵛवसूनि हवींषि ᵛदाशुषे हविषां प्रदात्रे ᵛमर्त्याय मनुष्याय । तदर्थमित्यर्थः । ᵛप्र ᵛचिकितुः प्रवेदयन्त्यृत्विजः । यद्वा । अक्तोरह्नि त्रिलीन् अग्निमश्वमजं च त्वय्यन्तर्निहितानि प्र चिकितुः । अविदन्नित्यर्थः । अपि च ᵛमनुष्वत् मनोरिव ᵛइह ममास्मिन् यज्ञे ᵛदूतः त्वं ᵛदेवान् ᵛयक्षि यज । ᵛनः अस्माकम् ᵛअभिशस्तिपावा अभिशस्तेः अभिशंसकात् शात्रवात् पावा रक्षिता ᵛभव ॥

अ॒ग्निरी॑शे बृह॒तो अ॑ध्व॒रस्या॒ग्निर्विश्व॑स्य ह॒विषः॑ कृ॒तस्य॑ ।
क्रतुं॒ ह्य॑स्य॒ वस॑वो जु॒षन्ताथा॑ दे॒वा द॑धिरे हव्य॒वाह॑म् ॥ ४ ॥

अ॒ग्निः । ई॒शे॒ । बृ॒ह॒तः । अ॒ध्व॒रस्य॑ । अ॒ग्निः । विश्व॑स्य । ह॒विषः॑ । कृ॒तस्य॑ ।
क्रतु॑म् । हि । अ॒स्य॒ । वस॑वः । जु॒षन्त॑ । अथ॑ । दे॒वाः । द॒धि॒रे॒ । ह॒व्य॒ऽवाह॑म् ॥ ४ ॥

ᵛबृहतः महतः ᵛअध्वरस्य कौटिल्यरहितस्य यज्ञस्य ᵛअग्निः ᵛईशे ईष्टे । ᵛविश्वस्य सर्वस्य ᵛकृतस्य संस्कृतस्य ᵛहविषः च ᵛअग्निः एवेष्टे । ᵛहि यस्मात् ᵛअस्य अग्नेः ᵛक्रतुं कर्म ᵛवसवः देवाः ᵛजुषन्त सेवन्ते । ᵛअथ अपि च ᵛदेवाः अग्निं ᵛहव्यवाहं हव्यानां वोढारं ᵛदधिरे चक्रिर इत्यर्थः ॥

---

१. श—मादयन्ति । २. भ—भवति तथा । ३. ख-भ—रात्रिनाम ।

आग्ने वह हविरद्याय देवानिन्द्रज्येष्ठास इह मादयन्ताम् ।
इमं यज्ञं दिवि देवेषु धेहि यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

आ । अग्ने । वह । हविःऽअद्याय । देवान् । इन्द्रऽज्येष्ठासः । इह । मादयन्ताम् ।
इमम् । यज्ञम् । दिवि । देवेषु । धेहि । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

हे अग्ने हविरद्याय हविषां भक्षणाय देवान् आ वह । किमर्थमित्यत आह । इह अस्मिन् यज्ञे इन्द्रज्येष्ठासः इन्द्रप्रमुखा देवाः मादयन्ताम् । इमं यज्ञम् इदं यष्टव्यं हविः दिवि स्थितेषु देवेषु धेहि निधेहि । देवान्वेह नयेदं[1] हविर्वा देवेषु नयेति भावः । अन्तिमः पादो व्याख्यातचरः ॥ ॥ १४ ॥

‘ अगन्म महा ’ इति तृचात्मकं द्वादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । तथा चानुक्रान्तम्— ‘ अगन्म तृचम् ’ इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः । व्यूळ्हे दशरात्रे नवमेऽहनीदं सूक्तमाज्यशस्त्रम् । सूत्रितं च—‘तृतीयस्यागन्म महेत्याज्यम् ’ ( आश्व. श्रौ. ८. ११ ) इति ॥

अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धः स्वे दुरोणे ।
चित्रभानुं रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चम् ॥ १ ॥

अगन्म । महा । नमसा । यविष्ठम् । यः । दीदाय । सम्ऽइद्धः । स्वे । दुरोणे ।
चित्रऽभानुम् । रोदसी इति । अन्तः । उर्वी इति । सुऽआहुतम् । विश्वतः । प्रत्यञ्चम् ॥ १ ॥

यः अग्निः स्वे दुरोणे स्वे स्थान आहवनीये समिद्धः काष्ठैः समिद्धः सन् दीदाय दीप्यते तमिमं यविष्ठं युवतमम् उर्वी विस्तीर्णयोः रोदसी रोदस्योः द्यावापृथिव्योः अन्तः मध्ये अन्तरिक्षे चित्रभानुं चित्रज्वालं स्वाहुतं सुष्ठु आहुतिभिर्हुतं सन्तं विश्वतः सर्वतः प्रत्यञ्चं प्रतिगच्छन्तमग्निं महा महता नमसा नमस्कारेण अगन्म वयमुपगच्छाम ॥

स मह्ना विश्वा दुरितानि साह्वानग्निः ष्टवे दम आ जातवेदाः ।
स नो रक्षिषद्दुरितादवद्यादस्मान्गृणत उत नो मघोनः ॥ २ ॥

सः । मह्ना । विश्वा । दुःऽइतानि । सह्वान् । अग्निः । स्तवे । दमे । आ । जातऽवेदाः ।
सः । नः । रक्षिषत् । दुःऽइतात् । अवद्यात् । अस्मान् । गृणतः । उत । नः । मघोनः ॥ २ ॥

योऽग्निः मह्ना महत्त्वेन विश्वा विश्वानि दुरितानि साह्वान् अभिभवन् जातवेदाः जातधनो जातप्रज्ञो वा दमे यज्ञगृहे स्तवे अस्माभिः स्तूयते सः अग्निः अस्मान् दुरितात् पापात् अवद्यात् निन्दिताच्च कर्मणः रक्षिषत् रक्षतु । अस्मान् गृणतः स्तुवतोऽपि रक्षिषत् । उत अपि च सोऽग्निः नः मघोनः हविष्मतः रक्षिषत् ॥

त्वं वरुण उत मित्रो अग्ने त्वां वर्धन्ति मतिभिर्वसिष्ठाः ।
त्वे वसु सुषणनानि सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥

त्वम् । वरुणः । उत । मित्रः । अग्ने । त्वाम् । वर्धन्ति । मतिऽभिः । वसिष्ठाः ।
त्वे इति । वसु । सुऽसननानि । सन्तु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ३ ॥

हे ᵛअग्ने ᵛत्वं ᵛवरुणः असि। ᵛउत अपि च त्वं ᵛमित्रः असि जगतः प्रमीतेस्त्रातासि। ᵛत्वां ᵛवसिष्ठाः ᵛमतिभिः स्तुतिभिः ᵛवर्धन्ति[1] वर्धयन्ति। ᵛत्वे त्वयि विद्यमानानि ᵛवसु वसूनि ᵛसुसननानि सुसंभजनानि[2] ᵛसन्तु इति। स्पष्टमन्यत्॥ ॥ १५॥

'प्राग्नये' इति तृचं त्रयोदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वानराग्निदेवताकम्। तथा चानुक्रान्तं– 'प्राग्नये वैश्वानरीयम्' इति। विनियोगो लैङ्गिकः॥

प्राग्नये॑ विश्व॒शुचे॑ धियं॒धे॑ऽसुर॒घ्ने मन्म॑ धी॒तिं भ॑रध्वम्।
भरे॑ ह॒विर्न ब॒र्हिषि॑ प्रीणा॒नो वै॑श्वान॒राय॒ यत॑ये म॒तीनाम्॥ १॥

प्र। अ॒ग्नये॑। वि॒श्व॒ऽशुचे॑। धि॒यम्ऽधे। अ॒सु॒र॒ऽघ्ने। मन्म॑। धी॒तिम्। भ॒र॒ध्व॒म्।
भरे॑। ह॒विः। न। ब॒र्हिषि॑। प्री॒णा॒नः। वै॒श्वा॒न॒राय॑। यत॑ये। म॒ती॒नाम्॥ १॥

हे सखायः ᵛविश्वशुचे विश्वं यो दीपयति तस्मै ᵛधियंधे धियां कर्मणां यो धाता तस्मै ᵛअसुरघ्ने असुराणां यो हन्ता तस्मै ᵛअग्नये ᵛमन्म मननीयं स्तोत्रं ᵛधीतिं कर्म च ᵛप्र ᵛभरध्वम्। ᵛमतीनाम् अभिमतानां कामानां ᵛयतये दात्रे ᵛवैश्वानराय विश्वनरहितायाग्निविशेषाय ᵛबर्हिषि यज्ञे ᵛहविर्न हविरिव स्तुतिं ᵛप्रीणानः प्रीयमाणोऽहं ᵛभरे भरामि। यद्वा। हविः प्रीणानः प्रीणयन्नहं बर्हिषि हविर्भरे संभरामि। नेति संप्रत्यर्थे॥

त्वम॑ग्ने शो॒चिषा॒ शोशु॑चा॒न आ रोद॑सी अपृणा॒ जाय॑मानः।
त्वं दे॒वाँ अ॒भिश॑स्तेरमु॒ञ्चो वैश्वा॑नर जातवे॑दो महि॒त्वा॥ २॥

त्वम्। अ॒ग्ने। शो॒चिषा॑। शोशु॑चानः। आ। रोद॑सी॒ इति॑। अ॒पृ॒णाः। जाय॑मानः।
त्वम्। दे॒वान्। अ॒भिऽश॑स्तेः। अ॒मु॒ञ्चः। वैश्वा॑नर। जा॒त॒ऽवे॒दः। म॒हि॒ऽत्वा॥ २॥

हे ᵛअग्ने ᵛत्वं ᵛशोचिषा दीप्त्या ᵛशोशुचानः दीप्यमानः ᵛजायमानः जायमान एव ᵛरोदसी द्यावापृथिव्यौ ᵛआ ᵛअपृणाः आपूरयः। अपि च ᵛजातवेदः जातप्रज्ञ जातधन वा ᵛवैश्वानर विश्वनरहित हे अग्ने ᵛत्वं ᵛदेवान् ᵛमहित्वा महत्त्वेन ᵛअभिशस्तेः अभिशंसकात् शत्रोः ᵛअमुञ्चः अमोचयः॥

जा॒तो यद॑ग्ने॒ भुव॑ना॒ व्यख्यः॑ प॒शून्न गो॒पा इर्यः॒ परि॑ज्मा।
वैश्वा॑नर॒ ब्रह्म॑णे विन्द गा॒तुं यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः॥ ३॥

जा॒तः। यत्। अ॒ग्ने॒। भुव॑ना। वि। अ॒ख्यः॑। प॒शून्। न। गो॒पाः। इर्यः॑। परि॑ऽज्मा।
वैश्वा॑नर। ब्रह्म॑णे। वि॒न्द॒। गा॒तुम्। यु॒यम्। पा॒त। स्व॒स्तिऽभिः॑। सदा॑। नः॒॥ ३॥

हे ᵛअग्ने ᵛजातः सूर्यात्मना जातस्त्वम् ᵛइर्यः स्वामी प्रेरयन् वा ᵛपरिज्मा परितो गन्ता सन् ᵛपशून् ᵛगोपाः। यथा गवां पालकः पशून् पश्यति तद्वत्। ᵛयत् यदा ᵛभुवना भूतानि ᵛव्यख्यः

---

१. ख-घ-ङ-न-भ-श–' वर्धन्ति ' नास्ति। २. ङ–सुसंभजनीयानि।

रक्षार्थं पश्यसि तदा ब्रह्मणे। ब्रह्म स्तोत्रम्। तदर्थं गातुं गतिं फलप्राप्तिं विन्द। यद्वा। ब्रह्मणे ब्राह्मणार्थं गातुं विन्द। येन ब्राह्मणा उपद्रवान्निर्गच्छन्ति तं[1] गातुं विन्देत्यर्थः। स्पष्टमन्यत्॥ ॥ १६ ॥

'समिधा जातवेदसे' इति तृचं चतुर्दशं सूक्तं वसिष्ठस्यार्षमाग्नेयम्। आद्या बृहती द्वितीयातृतीये त्रिष्टुभौ। तथा चानुक्रम्यते—'समिधा बृहत्यादि' इति। विनियोगो लैङ्गिकः॥

**समिधा जातवेदसे देवाय देवहूतिभिः।**
**हविर्भिः शुक्रशोचिषे नमस्विनो वयं दाशेमाग्नये ॥ १ ॥**

सम्ऽइधा। जातऽवेदसे। देवाय। देवहूतिऽभिः।
हविःऽभिः। शुक्रऽशोचिषे। नमस्विनः। वयम्। दाशेम। अग्नये॥ १ ॥

जातवेदसे जातवेदसं जातप्रज्ञम् अग्नये अग्निं समिधा वयं वसिष्ठाः दाशेम परिचरेम। देवाय देवं स्तुत्यमग्निं देवहूतिभिः देवस्तुतिभिः दाशेम। शुक्रशोचिषे शुक्रशोचिषं शुभ्रदीप्तिं[2] नमस्विनः हविष्मन्तो वयं हविर्भिः दाशेम। अत्र दाशतियोगात् कर्मणि चतुर्थी। प्रायेण सर्वत्र दाशतियोगे कर्मणि चतुर्थी दृश्यते॥

**वयं ते अग्ने समिधा विधेम वयं दाशेम सुष्टुती यजत्र।**
**वयं घृतेनाध्वरस्य होतर्वयं देव हविषा भद्रशोचे ॥ २ ॥**

वयम्। ते। अग्ने। सम्ऽइधा। विधेम। वयम्। दाशेम। सुऽस्तुती। यजत्र।
वयम्। घृतेन। अध्वरस्य। होतः। वयम्। देव। हविषा। भद्रऽशोचे॥ २ ॥

हे अग्ने ते त्वां वयं वसिष्ठाः समिधा विधेम परिचरेम। हे यजत्र यष्टव्याग्ने वयं सुष्टुती शोभनया स्तुत्या दाशेम त्वां परिचरेम। अध्वरस्य यज्ञस्य होतः अग्ने वयं घृतेन आज्येन त्वां दाशेम। हे भद्रशोचे कल्याणज्वाल देव द्योतमानाग्ने त्वां वयं हविषा दाशेम॥

**आ नो देवेभिरुप देवहूतिमग्ने याहि वषट्कृतिं जुषाणः।**
**तुभ्यं देवाय दाशतः स्याम यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥**

आ। नः। देवेभिः। उप। देवऽहूतिम्। अग्ने। याहि। वषट्ऽकृतिम्। जुषाणः।
तुभ्यम्। देवाय। दाशतः। स्याम। यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥ ३ ॥

हे अग्ने नः अस्माकं देवहूतिं स्तोत्रं यज्ञं वा देवेभिः देवैः सार्धं वषट्कृतिं हविः जुषाणः सेवमानस्त्वम् उप आ याहि। देवाय द्योतमानाय तुभ्यं वयं दाशतः परिचरन्तः स्याम भवेम। सिद्धमन्यत्॥ ॥ १७ ॥

'उपसद्याय' इति पञ्चदशर्चं पञ्चदशं सूक्तं वसिष्ठस्यार्षं गायत्रमाग्नेयम्। तथा चानुक्रान्तम्—'उपसद्याय पञ्चोना गायत्रम्' इति। प्रातरनुवाक आग्नेये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चेदं सूक्तम्। सूत्रितं च—'उपसद्याय त्वमग्ने यज्ञानामिति तिस्र उत्तमा उद्धरेत्' (आश्व. श्रौ. ४·१३) इति।

१. ख-भ-'तं' नास्ति। २. क्ष-न-भ-श—शुभ्रदीतिनम्।

उपसदि[1] पौर्वाह्णिक्याम् 'उपसद्याय' इत्याद्यास्तिस्र ऋचः सामिधेन्यः। सूत्र्यते च—'उपसद्याय मीळ्हुष इति तिस्र एकैकां त्रिरनवानम्' ( आश्व. श्रौ. ४. ८ ) इति। पवित्रेष्टयाम् 'अग्नी रक्षांसि' इत्येषा प्रथमाज्यभागानुवाक्या। सूत्रितं च—'पावकवन्तावाज्यभागावग्नी रक्षांसि सेधति' ( आश्व. श्रौ. २·१२ ) इति। अन्वारम्भणीयायामग्नेर्भगिनो याज्या। सूत्रितं च—'आ सर्वं सवितुर्यथा स नो राधांस्या भर' (आश्व. श्रौ. २. ८) इति। स्वस्त्ययन्यामिष्टौ 'अग्ने रक्षा णः' इति प्रथमाज्यभागानुवाक्या। सूत्रितं च—'स्वस्त्ययन्यां रक्षितवन्तावग्ने रक्षा णो अंहसः' ( आश्व. श्रौ. २·१० ) इति॥

उपसद्याय मीळ्हुष आस्ये जुहुता हविः। यो नो नेदिष्ठमाप्यम्॥ १॥

उपऽसद्याय। मीळ्हुषे। आस्ये। जुहुत। हविः। यः। नः। नेदिष्ठम्। आप्यम्॥ १॥

हे अध्वर्यवः ᵛउपसद्याय उपसदनीयाय ᵛमीळ्हुषे कामानां वर्षित्रेऽग्नये तत्प्रीत्यर्थम् ᵛआस्ये तस्यैव मुखे ᵛहविः ᵛजुहुत। ᵛयः अग्निः ᵛनेदिष्ठम् आसन्नतमम् ᵛआप्यं भवति। आसन्नतमो बन्धुर्भवतीत्यर्थः। आप्यमिति स्वार्थिकस्तद्धितः॥

यः पञ्च चर्षणीरभि निषसाद दमेदमे। कविर्गृहपतिर्युवा॥ २॥

यः। पञ्च। चर्षणीः। अभि। निऽससाद। दमेऽदमे। कविः। गृहऽपतिः। युवा॥ २॥

ᵛयः अग्निः ᵛकविः प्राज्ञः ᵛगृहपतिः गृहाणां पालयिता ᵛयुवा नित्यतरुणः सन् ᵛपञ्च ᵛचर्षणीः पञ्च जनान् मनुष्यान् ᵛअभि अभिमुखं ᵛदमेदमे गृहेगृहे ᵛनिषसाद निषीदति। उत्तरया वाक्यपरिसमाप्तिः॥

स नो वेदो अमात्यमग्नी रक्षतु विश्वतः। उतास्मान् पात्वंहसः॥ ३॥

सः। नः। वेदः। अमात्यम्। अग्निः। रक्षतु। विश्वतः। उत। अस्मान्। पातु। अंहसः॥३॥

ᵛसः ᵛअग्निः ᵛनः अस्माकं ᵛवेदः धनम् ᵛअमात्यम् अन्तिके भवं सहभूतं वा ᵛविश्वतः सर्वतः बाधकात् ᵛरक्षतु। ᵛउत अपि च ᵛअस्मान् वसिष्ठान् ᵛअंहसः पापात् ᵛपातु रक्षतु॥

नवं नु स्तोममग्नये दिवः श्येनाय जीजनम्। वस्वः कुविद्वनाति नः॥ ४॥

नवम्। नु। स्तोमम्। अग्नये। दिवः। श्येनाय। जीजनम्। वस्वः। कुवित्। वनाति। नः॥४॥

ᵛदिवः द्युलोकस्य ᵛश्येनाय श्येनसदृशाय ᵛनु क्षिप्रं गन्त्रे ᵛअग्नये यस्मै ᵛनवं नूतनं ᵛस्तोमं ᵛजीजनं[2] जनयामि सोऽग्निः ᵛनः अस्मभ्यं ᵛकुवित् बहु ᵛवस्वः वसु धनम्। कर्मणि षष्ठी। ᵛवनाति। ददात्वित्यर्थः॥

स्पार्हा यस्य श्रियो दृशे रयिर्वीरवतो यथा। अग्रे यज्ञस्य शोचतः॥ ५॥

स्पार्हाः। यस्य। श्रियः। दृशे। रयिः। वीरऽवतः। यथा। अग्रे। यज्ञस्य। शोचतः॥ ५॥

ᵛयज्ञस्य ᵛअग्रे पुरस्ताद्भागे ᵛशोचतः दीप्यमानस्य ᵛयस्य अग्नेः ᵛश्रियः दीप्तयः ᵛवीरवतः पुत्रवतः ᵛरयिः धनं ᵛयथा तद्वत् ᵛदृशे द्रष्टुं चक्षुषे वा ᵛस्पार्हाः स्पृहणीया भवन्ति तस्मै नवं स्तोमं जीजनमित्यनुषङ्गः। उत्तरत्र संबन्धो वा॥　　॥ १८॥

---

१. ख-भ-उपसदि सौमिक्याम्। २. म-त-श-जीजनमजीजनम्।

सेमां वेतु वषट्कृतिमग्निर्जुषत नो गिरः । यजिष्ठो हव्यवाहनः ॥ ६ ॥

सः । इमाम् । वेतु । वषट्ऽकृतिम् । अग्निः । जुषत । नः । गिरः । यजिष्ठः । हव्यऽवाहनः ॥ ६ ॥

यजिष्ठः यजनीयतमो यष्टृतमो वा हव्यवाहनः हव्यानां हविषां वोढा सः अग्निः इमां वषट्कृतिम् अस्माभिर्दीयमानामाहुतिं वेतु कामयतां भक्षयतु वा । नः अस्माकं गिरः स्तुतीश्च जुषत सेवताम् ॥

नि त्वा नक्ष्य विश्पते द्युमन्तं देव धीमहि । सुवीरमग्न आहुत ॥ ७ ॥

नि । त्वा । नक्ष्य । विश्पते । द्युऽमन्तम् । देव । धीमहि । सुऽवीरम् । अग्ने । आऽहुत ॥ ७ ॥

नक्ष्य उपगन्तव्य । नक्षतिर्व्याप्तिकर्मा । विश्पते विशां पते देव द्योतमान आहुत सर्वैर्यजमानैरभिहुत हे अग्ने द्युमन्तं दीप्तिमन्तं सुवीरं कल्याणस्तोतृकं त्वा त्वां वयं नि धीमहि निहितवन्तः ॥

क्षप उस्रश्च दीदिहि स्वग्नयस्त्वया वयम् । सुवीरस्त्वमस्मयुः ॥ ८ ॥

क्षपः । उस्रः । च । दीदिहि । सुऽअग्नयः । त्वया । वयम् । सुऽवीरः । त्वम् । अस्मऽयुः ॥ ८ ॥

हे अग्ने त्वं क्षपः रात्रीः उस्रः अहानि[1] च । सर्वदेति यावत् । दीदिहि[2] दीप्यस्व । दीप्यमानेन त्वया वयं वसिष्ठाः स्वग्नयः शोभमानाग्नयो भवाम । अस्मयुः अस्मान् कामयमानः ॥ 'सुप आत्मनः क्यच्' इति क्यचि कृते 'क्याच्छन्दसि' इत्युप्रत्ययः । दकारलोपश्छान्दसः । तथा च यास्कः— 'अस्मयुरस्मान् कामयमानः' ( निरु. ६·२१ ) इति ॥ त्वं सुवीरः सुस्तोतृको भव ॥

उप त्वा सातये नरो विप्रासो यन्ति धीतिभिः । उपाक्षरा सहस्रिणी ॥ ९ ॥

उप । त्वा । सातये । नरः । विप्रासः । यन्ति । धीतिऽभिः । उप । अक्षरा । सहस्रिणी ॥ ९ ॥

हे अग्ने त्वा त्वां नरः नेतारो यजमानाः विप्रासः विप्रा मेधाविनः धीतिभिः कर्मभिः सातये धनाय कामानां लाभाय वा उप यन्ति उपगच्छन्ति । सहस्रिणी सहस्रसंख्याका अक्षरा क्षयरहिता स्तुतिरूपा अस्मदीया वाक् त्वाम् उप याति च ॥

अग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्यः ॥ १० ॥

अग्निः । रक्षांसि । सेधति । शुक्रऽशोचिः । अमर्त्यः । शुचिः । पावकः । ईड्यः ॥ १० ॥

शुक्रशोचिः शुभ्रज्वालः अमर्त्यः मरणरहितो देवतात्मा शुचिः स्वयं शुद्धः पावकः अन्येषामपि शोधकः ईड्यः स्तुत्यः अग्निः रक्षांसि राक्षसान् सेधति बाधताम् ॥ ॥ १९ ॥

स नो राधांस्या भरेशानः सहसो यहो । भगश्च दातु वार्यम् ॥ ११ ॥

सः । नः । राधांसि । आ । भर । ईशानः । सहसः । यहो इति । भगः । च । दातु । वार्यम् ॥ ११ ॥

हे सहसो यहो बलस्य पुत्राग्ने सः प्रसिद्धस्त्वम् ईशानः सर्वस्य[3] जगतः[3] ईश्वरः सन् नः अस्मभ्यं राधांसि धनानि । 'रायो राधः' इति धननामसु पाठात् । आ[4] भर आहर । भगश्च

---

१. ख-न-भ-श–अहनि । २. घ-ङ्ग-त–दीदिहि च । ३. ख-न-भ–सर्वजगतः । ४. ख-ङ्ग-त-न-भ-श–नोऽस्मभ्यमा ।

भगो देवोऽपि ᵛवार्यं[1] धनं ᵛदातु अस्मभ्यं ददातु। अभ्यासलोपश्छान्दसः। भगोऽत्र सूक्ते निपातभागिनी देवता ॥

**त्वम॑ग्ने वी॒रव॒द्यशो॑ दे॒वश्च॑ सवि॒ता भगः॑। दिति॑श्च दाति॒ वार्य॑म् ॥ १२ ॥**

त्वम्। अ॒ग्ने॒। वी॒रऽव॑त्। यशः॑। दे॒वः। च॒। स॒वि॒ता। भगः॑। दिति॑ः। च॒। दा॒ति॒। वार्य॑म् ॥ १२ ॥

हे ᵛअग्ने ᵛत्वं ᵛवीरवत् पुत्रपौत्रोपेतं ᵛयशः अन्नं देहीति शेषः। ᵛदेवश्च ᵛसविता सविता देवोऽपि ᵛवार्यं वरणीयं धनं ᵛदाति ददातु। ᵛभगः च देवोऽपि ददातु। ᵛदितिश्च दितिरपि देवी ददातु। सवित्रादिः सूक्ते निपातभागिनी देवता ॥

**अग्ने॒ रक्षा॑ णो॒ अंह॑सः॒ प्रति॑ ष्म देव॒ रीष॑तः। तपि॑ष्ठैर॒जरो॑ दह ॥ १३ ॥**

अग्ने॑। रक्ष॑। न॒ः। अंह॑सः। प्रति॑। स्म॒। दे॒व॒। रिष॑तः। तपि॑ष्ठैः। अ॒जर॑ः। द॒ह॒ ॥ १३ ॥

हे ᵛअग्ने त्वं ᵛनः अस्मान् ᵛअंहसः पापात् ᵛरक्ष पाहि। संहितायां दीर्घश्छान्दसः। अपि च हे ᵛदेव द्योतमानाग्ने ᵛअजरः जरारहितस्त्वं ᵛरिषतः हिंसतः शत्रून् ᵛतपिष्ठैः अतिशयेन तापकैस्तेजोभिः ᵛदह भस्मीकुरु ॥

**अधा॑ म॒ही न॒ आय॒स्यना॑धृष्टो॒ नृपी॑तये। पूर्भ॑वा श॒तभु॑जिः ॥ १४ ॥**

अध॑। म॒ही। न॒ः। आय॑सी। अना॑धृष्टः। नृऽपी॑तये। पूः। भ॒व॒। श॒तऽभु॑जिः ॥ १४ ॥

ᵛअध अधुना हे अग्ने ᵛअनाधृष्टः अप्रतिधर्षणीयस्त्वं ᵛनः अस्माकं ᵛनृपीतये[2] नृणां रक्षणार्थं ᵛमही महती ᵛआयसी अयसा निर्मिता ᵛशतभुजिः अत्यन्तं विस्तृता शतगुणा ᵛपूः पुरी। तद्रक्षासाधनभूतप्राकारादिर्वा पूरुच्यते[3]। ᵛभव। यथायसा निर्मिता पुरी तद्रक्षासाधनभूतप्राकारादिर्वा शत्रुभ्यो भीतान् रक्षति तद्वद्राक्षसेभ्यो भीतानस्मान् पाहीत्यर्थः ॥

**त्वं नः॑ पा॒ह्यंह॑सो॒ दोषा॑वस्तरघाय॒तः। दिवा॒ नक्त॑मदाभ्य ॥ १५ ॥**

त्वम्। न॒ः। पा॒हि॒। अंह॑सः। दोषा॑ऽवस्तः। अ॒घ॒ऽय॒तः। दिवा॑। नक्त॑म्। अ॒दा॒भ्य॒ ॥ १५ ॥

हे ᵛअदाभ्य अहिंस्य ᵛदोषावस्तः रात्रेराच्छादयितः। तमसो वारयितरित्यर्थः। अग्ने ᵛत्वं ᵛनः अस्मान् ᵛअंहसः पापात् ᵛअघायतः पापमिच्छतः शत्रोश्च ᵛदिवा ᵛनक्तम् अहनि रात्रौ च सर्वदा ᵛपाहि रक्ष ॥ ॥ २० ॥

'एना वः' इति द्वादशर्चं षोडशं सूक्तं वसिष्ठस्यार्षमग्निदेवताकम्। अयुजो बृहत्यो युजः सतोबृहत्यः। तथा चानुक्रान्तम्—'एना वो द्वादश प्रागाथम्' इति। प्रातरनुवाक आग्नेये क्रतौ बार्हते छन्दस्याश्विनशस्त्रे चेदं सूक्तम्। सूत्रितं च—'एना वो अग्निं प्र वो यह्वम्' (आश्व. श्रौ. ४·१३) इति। आग्निमारुतशस्त्रे 'देवो वो द्रविणोदाः' इति प्रगाथोऽनुरूपः। सूत्रितं च—'देवो वो द्रविणोदा इति प्रगाथौ स्तोत्रियानुरूपौ' (आश्व. श्रौ. ५·२०) इति ॥

**ए॒ना वो॑ अ॒ग्निं नम॑सो॒र्जो नपा॑त॒मा हु॑वे।**
**प्रि॒यं चेति॑ष्ठमर॒तिं स्व॑ध्व॒रं विश्व॑स्य दू॒तम॒मृत॑म् ॥ १ ॥**

---

१. त-य-वार्यं वरणीयम्। २. ख-क्ष-त-न-भ-श-'नृपीतये' नास्ति। ३. ख१-थ-पुरीत्युच्यते; ज-पूरित्युच्यते।

एना । वः । अग्निम् । नमसा । ऊर्जः । नपातम् । आ । हुवे ।
प्रियम् । चेतिष्ठम् । अरतिम् । सुऽअध्वरम् । विश्वस्य । दूतम् । अमृतम् ॥ १ ॥

ऊर्जः बलस्य नपातं पुत्रम् । 'सूनुः नपात्' इत्यपत्यनामसु पाठात् । प्रियं प्रियमस्माकं[1] चेतिष्ठम् अतिशयेन ज्ञातारं प्रज्ञापकं वा अरतिं गन्तारं स्वामिनं वा स्वध्वरं सुयज्ञं विश्वस्य सर्वस्य यजमानस्य दूतम् अमृतं नित्यम् अग्निम् एना एनेन नमसा स्तोत्रेण । यद्यप्यत्रान्वादेशो नास्ति तथापि छान्दसत्वादिदंशब्दस्यैनादेशः । यद्वा । एनैनमित्यग्नेर्विशेषणम् । समानार्षत्वात्[2] पूर्वेषु सूक्तेष्वादिष्टत्वाद्वसिष्ठेनान्वादिश्यते । वः युष्मदर्थम् आ हुवे आह्वयामि ॥

स योजते अरुषा विश्वभोजसा स दुद्रवत्स्वाहुतः ।
सुब्रह्मा यज्ञः सुशमी वसूनां देवं राधो जनानाम् ॥ २ ॥

सः । योजते । अरुषा । विश्वऽभोजसा । सः । दुद्रवत् । सुऽआहुतः ।
सुऽब्रह्मा । यज्ञः । सुऽशमी । वसूनाम् । देवम् । राधः । जनानाम् ॥ २ ॥

सः अग्निः अरुषा आरोचमानौ विश्वभोजसा विश्वस्य पालयितारावश्वौ योजते रथे युनक्तु । यद्वा । सोऽरुषा आरोचमानेन तेजसा विश्वभोजसा विश्वस्य रक्षकेण योजते युज्यते । किंच सः अग्निः दुद्रवत् आनेतुं देवान् प्रति भृशं द्रवतु द्रवति वा । स्वाहुतः सुष्ठु आहुतः सुब्रह्मा सुस्तुतिः[3] शोभनान्नो वा यज्ञः यष्टव्यः सुशमी सुकर्मा च भवति । तमिमं देवं द्योतमानं वसूनां वासकानां जनानां वसिष्ठानां[4] राधः हविः अभिगच्छत्विति शेषः । यद्वा । एवंगुणविशिष्टोऽग्निर्वसूनां धनानां मध्ये देवमत्यन्तप्रकाशमानं राधो धनं जनानां यजमानानाम् । धनवत् प्रियतम इत्यर्थः ॥

उदस्य शोचिरस्थादाजुह्वानस्य मीळ्हुषः ।
उद्धूमासो अरुषासो दिविस्पृशः समग्निमिन्धते नरः ॥ ३ ॥

उत् । अस्य । शोचिः । अस्थात् । आऽजुह्वानस्य । मीळ्हुषः ।
उत् । धूमासः । अरुषासः । दिविऽस्पृशः । सम् । अग्निम् । इन्धते । नरः ॥ ३ ॥

मीळ्हुषः कामानां वर्षितुः आजुह्वानस्य अभिहूयमानस्याग्नेः शोचिः तेजः उत् अस्थात् उत्तिष्ठति । अरुषासः आरोचमानाः दिविस्पृशः अन्तरिक्षस्पृशः धूमासः धूमाश्च उत् अस्थुः । अस्थादित्येकवचनान्तं बहुवचनान्ततया विपरिणतं सदत्रान्वेति । तमिमम् अग्निं नरः कर्मणां नेतार ऋत्विजः सम् इन्धते सम्यग्दीपयन्ति ॥

तं त्वा दूतं कृण्महे यशस्तमं देवाँ आ वीतये वह ।
विश्वा सूनो सहसो मर्तभोजना रास्व तद्यत्त्वेमहे ॥ ४ ॥

तम् । त्वा । दूतम् । कृण्महे । यशःऽतमम् । देवान् । आ । वीतये । वह ।
विश्वा । सूनो इति । सहसः । मर्तऽभोजना । रास्व । तत् । यत् । त्वा । ईमहे ॥ ४ ॥

---

१. ख-भ—अस्माकम्; घ—अस्माकं प्रियम् । २. ख-भ—समानार्थत्वात् । ३. ज्ञ—सुष्टुतिः । ४. ख-ज्ञ-न-भ—वसिष्ठा ।

हे सहसः सूनो बलस्य पुत्राग्ने यशस्तमम् अतिशयेन यशस्विनं तं प्रसिद्धं यं त्वा त्वां दूतं कृण्महे कुर्मः स त्वं देवान् वीतये हविषां भक्षणाय आ वह । किंच यत् यदा त्वा त्वाम् ईमहे याचामहे तदैव विश्वा विश्वानि मर्तभोजनानि[1] मनुष्याणां भोग्यानि कल्याणानि धनानि रास्व अस्मभ्यं देहि ॥

त्वमग्ने गृहपतिस्त्वं होता नो अध्वरे ।
त्वं पोता विश्ववार प्रचेता यक्षि वेषि च वार्यम् ॥ ५ ॥

त्वम् । अग्ने । गृहऽपतिः । त्वम् । होता । नः । अध्वरे ।
त्वम् । पोता । विश्वऽवार । प्रऽचेताः । यक्षि । वेषि । च । वार्यम् ॥ ५ ॥

हे विश्ववार विश्वैर्वरणीय अग्ने त्वं नः अस्माकम् अध्वरे यागे गृहपतिः असि यजमानोऽसि । त्वं होता देवानामाह्वाता । त्वं त्वमेव पोता असि । अतः प्रचेताः प्रकृष्टमतिस्त्वं वार्यं वरणीयं हविः यक्षि यज । वेषि च कामयस्व भक्षय वा ॥

कृधि रत्नं यजमानाय सुक्रतो त्वं हि रत्नधा असि ।
आ न ऋते शिशीहि विश्वमृत्विजं सुशंसो यश्च दक्षते ॥ ६ ॥

कृधि । रत्नम् । यजमानाय । सुक्रतो इति सुऽक्रतो । त्वम् । हि । रत्नऽधाः । असि ।
आ । नः । ऋते । शिशीहि । विश्वम् । ऋत्विजम् । सुऽशंसः । यः । च । दक्षते ॥ ६ ॥

हे सुक्रतो शोभनकर्मन्नग्ने यजमानाय मह्यं रत्नं धनम् । ‘ श्वात्रं रत्नम् ’ इति धननामसु पाठात् । कृधि कुरु । देहीत्यर्थः । हि यस्मात् त्वं रत्नधाः रत्नस्य दाता असि । नः[2] अस्माकम् ऋते यज्ञे विश्वं सर्वम् ऋत्विजम् आ शिशीहि तीक्ष्णीकुरु । किंच यः सुशंसः सुस्तुतिरस्मत्पुत्रः दक्षते वर्धते तं वर्धय । यद्वा । यः सुशंसो होता वर्धते तं वर्धयेत्यर्थः । होतुः पृथगुपादानमादरार्थम् ॥　॥ २१ ॥

त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः ।
यन्तारो ये मघवानो जनानामूर्वान्दयन्त गोनाम् ॥ ७ ॥

त्वे इति । अग्ने । सुऽआहुत । प्रियासः । सन्तु । सूरयः ।
यन्तारः । ये । मघऽवानः । जनानाम् । ऊर्वान् । दयन्त । गोनाम् ॥ ७ ॥

हे अग्ने स्वाहुत यजमानैः सुष्ठु आहुत त्वे तव सूरयः प्रेरकाः स्तोतारो वा प्रियासः प्रियाः सन्तु भवन्तु । किंच ये[3] मघवानः धनवन्तः यन्तारः प्रदातारः जनानाम् अस्मदीयानाम् ऊर्वान् समूहान् गोनां गवां चोर्वान् दयन्त प्रयच्छन्ति ते च तव प्रियासः सन्त्विति पूर्वेणान्वयः ॥

येषामिळा घृतहस्ता दुरोण आँ अपि प्राता निषीदति ।
ताँस्त्रायस्व सहस्य द्रुहो निदो यच्छा नः शर्म दीर्घश्रुत् ॥ ८ ॥

---

१. घ–मर्तभोजना भोजनानि; य–मर्तभोजना । २. ख-न-भ–त्वं नः । ३. ख-न-भ–‘ ये ’ नास्ति ।

येषाम् । इळा । घृतऽहस्ता । दुरोणे । आ । अपि । प्राता । निऽसीदति ।
तान् । त्रायस्व । सहस्य । द्रुहः । निदः । यच्छ । नः । शर्म । दीर्घऽश्रुत् ॥ ८ ॥

ᵛयेषां ᵛदुरोणे गृहे ᵛघृतहस्ता । घृतयुक्तौ हस्तौ यस्या असौ घृतहस्ता । घृतेनाभिघारितेत्यर्थः । ᵛइळा अन्नरूपा हविर्लक्षणा देवी । 'इरा इळा'. इत्यन्ननामसु पाठात् । ᵛप्राता पूर्णा ᵛआ ᵛनिषीदति आसीदति । ᵛअपि इति पूरणः । ᵛतान् हविष्मतो यजमानान् हे ᵛसहस्य सहसे बलाय हिताग्ने ᵛद्रुहः द्रोग्धुः ᵛनिदः निन्दकाच्च शत्रोः ᵛत्रायस्व । ᵛनः अस्मभ्यं ᵛदीर्घश्रुत् दीर्घकालं श्रोतव्यं ᵛशर्म सुखं गृहं वा ᵛयच्छ च देहि ॥

**स मन्द्रया च जिह्वया वह्निरासा विदुष्टरः ।**
**अग्ने रयिं मघवद्भ्यो न आ वह हव्यदातिं च सूदय ॥ ९ ॥**

सः । मन्द्रया । च । जिह्वया । वह्निः । आसा । विदुःऽतरः ।
अग्ने । रयिम् । मघवत्ऽभ्यः । नः । आ । वह । हव्यऽदातिम् । च । सूदय ॥ ९ ॥

हे ᵛअग्ने ᵛमन्द्रया ᵛच[1] मोदयित्र्या[1] देवानाम् ᵛआसा आस्यस्थानीयया ᵛजिह्वया ज्वालया ᵛवह्निः हविषां वोढा ᵛविदुष्टरः विद्वत्तरः ᵛसः प्रसिद्धस्त्वं ᵛमघवद्भ्यः हविष्मद्भ्यः[2] ᵛनः अस्मभ्यं ᵛरयिं धनम् ᵛआ ᵛवह च । ᵛहव्यदातिम् । हव्यानि ददातीति हव्यदातिर्यजमानः तम् । तथा च वाजसनेयिन आमनन्ति—'यजमानो वै हव्यदातिः' (श. ब्रा. १. ४. १. २४) इति । ᵛसूदय ᵛच कर्मसु प्रेरय च ॥

**ये राधांसि ददत्यश्व्या मघा कामेन श्रवसो महः ।**
**ताँ अंहसः पिपृहि पर्तृभिष्ट्वं शतं पूर्भिर्यविष्ठ्य ॥ १० ॥**

ये । राधांसि । ददति । अश्व्या । मघा । कामेन । श्रवसः । महः ।
तान् । अंहसः । पिपृहि । पर्तृऽभिः । त्वम् । शतम् । पूःऽभिः । यविष्ठ्य ॥ १० ॥

हे ᵛयविष्ठ्य युवतमाग्ने ᵛत्वं ᵛये यजमानाः ᵛमहः महतः ᵛश्रवसः यशसः ᵛकामेन इच्छया । यशस्कामाः सन्त इत्यर्थः । ᵛराधांसि साधकानि ᵛअश्व्या अश्वात्मकानि ᵛमघा मघानि ᵛददति ᵛतान् दातॄन् ᵛअंहसः पापात् शत्रोर्वा ᵛपर्तृभिः रक्षासाधनभूतैः ᵛशतम् अपरिमिताभिः ᵛपूर्भिः नगरीभिश्च ᵛपिपृहि पालय ॥

**देवो वो द्रविणोदाः पूर्णां विवष्ट्यासिचम् ।**
**उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते ॥ ११ ॥**

देवः । वः । द्रविणःऽदाः । पूर्णाम् । विवष्टि । आऽसिचम् ।
उत् । वा । सिञ्चध्वम् । उप । वा । पृणध्वम् । आत् । इत् । वः । देवः । ओहते ॥ ११ ॥

ᵛद्रविणोदाः धनानां दाता ᵛदेवः अग्निः ᵛवः युष्मदीयां ᵛपूर्णां हविषा ᵛआसिचम् आसिक्तां स्रुचं ᵛविवष्टि कामयते । अतः ᵛउत् ᵛसिञ्चध्वं ᵛवा सोमेन पात्रम् । ᵛउप ᵛपृणध्वं ᵛवा सोमम् ।

---

१. ख-न-भ-श—मादयित्र्या । २. ख-न-भ—'हविष्मद्भ्यः' नास्ति ।

वाशब्दौ समुच्चयार्थौ । ध्रुवग्रहेण होतृचमसं पूरयत चाग्नये सोमं यच्छत चेत्यर्थः । ᵛआदित् अनन्तरमेव ᵛदेवः अग्निः ᵛवः युष्मान् ᵛओहते वहति ॥

तं होतारमध्वरस्य प्रचेतसं वह्निं देवा अकृण्वत ।
दधाति रत्नं विधते सुवीर्यमग्निर्जनाय दाशुषे ॥ १२ ॥

तम् । होतारम् । अध्वरस्य । प्रऽचेतसम् । वह्निम् । देवाः । अकृण्वत ।
दधाति । रत्नम् । विधते । सुऽवीर्यम् । अग्निः । जनाय । दाशुषे ॥ १२ ॥

ᵛदेवाः ᵛप्रचेतसं प्रकृष्टमतिमग्निम् ᵛअध्वरस्य यज्ञस्य ᵛवह्निं वोढारं ᵛहोतारं च ᵛअकृण्वत अकुर्वन् । किमर्थमित्यत आह । स च अग्निः ᵛविधते परिचरते ᵛदाशुषे हविषां प्रदात्रे ᵛजनाय ᵛसुवीर्यं शोभनवीर्योपेतं ᵛरत्नं रमणीयं धनं ᵛदधाति ददात्वित्यर्थः ॥ ॥ २२ ॥

'अग्ने भव सुषमिधा' इति सप्तर्चं सप्तदशं सूक्तं वसिष्ठस्यार्षमग्निदेवताकम् । सप्तापि द्विपदास्त्रिष्टुभः । तथैवानुक्रम्यते—'अग्ने भव सप्त द्वैपदं त्रैष्टुभम्' इति । अतिरात्रे षष्ठेऽहनि तृतीयसवने मैत्रावरुणशस्त्रे 'अग्ने भव' इति तृचोऽनुरूपः । सूत्र्यते हि—'अग्ने त्वं नोऽअन्तमोऽग्ने भव सुषमिधा समिद्ध इति स्तोत्रियानुरूपौ' ( आश्व. श्रौ. ८. २ ) इति ॥

अग्ने भव सुषमिधा समिद्ध उत बर्हिरुर्विया वि स्तृणीताम् ॥ १ ॥

अग्ने । भव । सुऽसमिधा । सम्ऽइद्धः । उत । बर्हिः । उर्विया । वि । स्तृणीताम् ॥ १ ॥

हे ᵛअग्ने ᵛसुषमिधा शोभनया समिधा ᵛसमिद्धः ᵛभव सम्यग्दीप्तो भव । ᵛउत अपि च ᵛबर्हिः ᵛउर्विया विस्तीर्णम् उपस्तृणीतामध्वर्युः[1] ॥

उत द्वार उशतीर्वि श्रयन्तामुत देवाँ उशत आ वहेह ॥ २ ॥

उत । द्वारः । उशतीः । वि । श्रयन्ताम् । उत । देवान् । उशतः । आ । वह । इह ॥२॥

ᵛउत अपि च ᵛउशतीः देवान् कामयमानाः ᵛद्वारः यज्ञगृहस्य देव्यो वा । तथा च यास्कः—'द्वारो जवतेर्वा द्रवतेर्वा वारयतेर्वा' ( निरु. ८. ९ ) इति । ᵛवि ᵛश्रयन्ताम् । ᵛउत अपि च ᵛउशतः यज्ञं कामयमानान् ᵛदेवान् ᵛइह यज्ञे ᵛआ ᵛवह ॥

अग्ने वीहि हविषा यक्षि देवान्त्स्वध्वरा कृणुहि जातवेदः ॥ ३ ॥

अग्ने । वीहि । हविषा । यक्षि । देवान् । सुऽअध्वरा । कृणुहि । जातऽवेदः ॥ ३ ॥

हे ᵛजातवेदः जातधन ᵛअग्ने ᵛवीहि देवानभिगच्छ । ᵛहविषा ᵛदेवान् ᵛयक्षि यज च । ᵛस्वध्वरा स्वध्वरान् शोभनयज्ञांश्च ᵛकृणुहि कुरु ॥

स्वध्वरा करति जातवेदा यक्षद्देवाँ अमृतान्पिप्रयच्च ॥ ४ ॥

सुऽअध्वरा । करति । जातऽवेदाः । यक्षत् । देवान् । अमृतान् । पिप्रयत् । च ॥ ४ ॥

---

१. श—विस्तृणीता° ।

ᵛजातवेदाः जातधनोऽग्निः ᵛअमृतान् मरणरहितान् ᵛदेवान् ᵛस्वध्वरा स्वध्वरान् शोभनयज्ञान् ᵛकरति करोतु ᵛयक्षत् हविषा यजतु च। ᵛपिप्रयत् स्तोत्रैः प्रीणयतु[1] ᵛच ॥

वंस्व विश्वा वार्याणि प्रचेतः सत्या भवन्त्वाशिषो नो अद्य ॥ ५ ॥

वंस्व । विश्वा । वार्याणि । प्रचेत इति प्रऽचेतः । सत्याः । भवन्तु । आऽशिषः । नः । अद्य ॥५॥

हे ᵛप्रचेतः प्रकृष्टमतिमन्नग्ने ᵛविश्वा विश्वानि ᵛवार्याणि वरणीयानि धनानि ᵛवंस्व अस्मभ्यं देहि। ᵛनः अस्माकम् ᵛआशिषः ᵛअद्य ᵛसत्याः यथार्थाः ᵛभवन्तु ॥

त्वामु ते दधिरे हव्यवाहं देवासो अग्न ऊर्ज आ नपातम् ॥ ६ ॥

त्वाम् । ऊँ इति । ते । दधिरे । हव्यऽवाहम् । देवासः । अग्ने । ऊर्जः । आ । नपातम् ॥६॥

हे ᵛअग्ने ᵛऊर्जः बलस्य ᵛनपातं पुत्रम्। 'सूनुर्नपात्' इत्यपत्यनामसु पाठात्। ᵛत्वामु त्वामेव ᵛते प्रसिद्धाः ᵛदेवासः देवाः ᵛहव्यवाहं हविषो[2] वोढारम् ᵛआ ᵛदधिरे। अकुर्वन्नित्यर्थः ॥

ते ते देवाय दाशतः स्याम महो नो रत्ना वि दध इयानः ॥ ७ ॥

ते । ते । देवाय । दाशतः । स्याम । महः । नः । रत्ना । वि । दधः । इयानः ॥ ७ ॥

हे अग्ने ᵛदेवाय द्योतमानाय ᵛते तुभ्यं ᵛते प्रसिद्धा वसिष्ठा वयं ᵛदाशतः हवींषि ददतः ᵛस्याम भवेम। अतः[3] ᵛमहः महांस्त्वम् ᵛइयानः उपगम्यमानो याच्यमानो वा ᵛनः अस्मभ्यं ᵛरत्ना रत्नानि रमणीयानि धनानि[4] ᵛवि ᵛदधः विधत्स्व ॥ ॥ २३ ॥ ॥ १ ॥

द्वितीयेऽनुवाके षोडश सूक्तानि। तत्र 'त्वे ह यत्पितरः' इति पञ्चविंशत्यृचं प्रथमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमिन्द्रदेवताकम्। द्वाविंशादिभिश्चतसृभिः सुदासनाम्नो[5] राज्ञो दानं स्तूयते। अतस्तास्तद्देवताकाः। अनुक्रम्यते हि—'त्वे ह यत्पञ्चाधिकैन्द्रं सुदासः पैजवनस्य चतस्रोऽन्त्या[6] दानस्तुतिः' इति। महाव्रत आदितः पञ्चदशर्चः शंसनीयाः। तथैव पञ्चमारण्यके सूत्रितं—'त्वे ह यत्पितरश्चिन्न इन्द्रेति पञ्चदश' (ऐ. आ. ५. २. २) इति ॥

त्वे ह यत्पितरश्चिन्न इन्द्र विश्वा वामा जरितारो असन्वन् ।
त्वे गावः सुदुघास्त्वे ह्यश्वास्त्वं वसु देवयते वनिष्ठः ॥ १ ॥

त्वे इति । ह । यत् । पितरः । चित् । नः । इन्द्र । विश्वा । वामा । जरितारः । असन्वन् ।
त्वे इति । गावः । सुऽदुघाः । त्वे इति । हि । अश्वाः । त्वम् । वसु । देवऽयते । वनिष्ठः ॥१॥

हे ᵛइन्द्र ᵛत्वे ᵛह त्वय्येव ᵛनः अस्माकं ᵛपितरश्चिन् पितरोऽपि ᵛजरितारः स्तोतारः सन्तः ᵛयत् यस्मात्कारणात् ᵛविश्वा विश्वानि ᵛवामा वामानि वननीयानि धनानि। तथा च यास्कः— 'वामं वननीयं भवति' (निरु. ६. ३१) इति। ᵛअसन्वन् अलभन्त तस्माद्वयमपि धनकामास्त्वां स्तुमः। तदुक्तम्। ᵛहि यस्मात् कारणात् ᵛत्वे त्वयि ᵛगावः ᵛसुदुघाः दोग्धुं सुशकाः सन्ति ᵛत्वे त्वयि ᵛअश्वाः सन्ति ᵛत्वं ᵛवसु धनं ᵛदेवयते देवं त्वामिच्छते यजमानाय ᵛवनिष्ठः दातृतमो भवसि ॥

---

१. ख-भ—प्रीणयति। २. त-य—हविषाम्। ३. ख-भ—'अतः' नास्ति। ४. ख-भ—'धनानि' नास्ति। ५. ज्ञ—सुदानाम्नो। ६. ज्ञ—अन्त्याश्चतस्रो।

राजेव हि जनिभिः क्षेष्येवाव द्युभिरभि विदुष्कविः सन् ।
पिशा गिरो मघवन्गोभिरश्वैस्त्वायतः शिशीहि राये अस्मान् ॥ २ ॥

राजाऽइव । हि । जनिऽभिः । क्षेषि । एव । अव । द्युऽभिः । अभि । विदुः । कविः । सन् ।
पिशा । गिरः । मघऽवन् । गोभिः । अश्वैः । त्वाऽयतः । शिशीहि । राये । अस्मान् ॥२॥

हे इन्द्र त्वं ᵛजनिभिः जायाभिः ᵛराजेव ᵛद्युभिः दीप्तिभिः सह ᵛक्षेष्येव निवसस्येव। ᵛहि इति पूरणः। किंच हे ᵛमघवन् धनवन्निन्द्र ᵛविदुः विद्वान् ᵛकविः क्रान्तकर्मा क्रान्तप्रज्ञो वा ᵛसन् ᵛगिरः स्तोतॄनस्मान् ᵛपिशा रूपेण हिरण्यादिना वा ᵛगोभिः च ᵛअश्वैः च ᵛअभि अभितः रक्ष। ᵛत्वायतः त्वत्कामान् ᵛअस्मान् ᵛराये ᵛशिशीहि धनार्थं च संस्कुरु[1] ॥

इमा उ त्वा पस्पृधानासो अत्र मन्द्रा गिरो देवयन्तीरुप स्थुः ।
अर्वाची ते पथ्या राय एतु स्याम ते सुमताविन्द्र शर्मन् ॥ ३ ॥

इमाः । ऊँ इति । त्वा । पस्पृधानासः । अत्र । मन्द्राः । गिरः । देवऽयन्तीः । उप । स्थुः ।
अर्वाची । ते । पथ्या । रायः । एतु । स्याम । ते । सुऽमतौ । इन्द्र । शर्मन् ॥ ३ ॥

हे ᵛइन्द्र ᵛत्वा त्वाम् ᵛअत्र यज्ञे स्तोतरि वा प्रवर्तमानाः ᵛपस्पृधानासः स्पर्धमानाः ᵛमन्द्राः मोदमानाः ᵛइमाः[2] ᵛगिरः स्तुतयः ᵛउप ᵛस्थुः उपतिष्ठन्ति। अतः ᵛते तव ᵛरायः धनस्य ᵛपथ्या सृतिः ᵛअर्वाची अस्मदभिमुखी ᵛएतु गच्छतु। हे इन्द्र वयं च ᵛते ᵛसुमतौ सुष्टुतौ वर्तमानाः ᵛशर्मन् शर्मणि सुखे ᵛस्याम भूयास्म ॥

धेनुं न त्वा सूयवसे दुदुक्षन्नुप ब्रह्माणि ससृजे वसिष्ठः ।
त्वामिन्मे गोपतिं विश्व आहा न इन्द्रः सुमतिं गन्त्वच्छ ॥ ४ ॥

धेनुम् । न । त्वा । सुऽयवसे । दुधुक्षन् । उप । ब्रह्माणि । ससृजे । वसिष्ठः ।
त्वाम् । इत् । मे । गोऽपतिम् । विश्वः । आह । आ । नः । इन्द्रः । सुऽमतिम् । गन्तु । अच्छ ॥४॥

हे इन्द्र ᵛसुयवसे सुतृणे गोष्ठे वर्तमानां ᵛधेनुं ᵛन धेनुमिव सुहविष्के यज्ञगृहे। दृष्टान्तसामर्थ्यात् दार्ष्टान्तिकलाभः। वर्तमानं त्वां ᵛदुधुक्षन्। संहितायां व्यत्ययेन दकारः। कामान् दोग्धुमिच्छन् ᵛवसिष्ठः ᵛब्रह्माणि वत्सस्थानीयानि स्तोत्राणि ᵛउप ᵛससृजे उपसृजते। ᵛमे मम ᵛविश्वः सर्वः जनः ᵛत्वामित् त्वामेव ᵛगोपतिं गवां स्वामिनम् ᵛआह ब्रवीति। अथ परोक्षस्तुतिः। ᵛनः अस्माकं ᵛसुमतिं सुष्टुतिम् ᵛअच्छ अभि ᵛइन्द्रः ᵛआ ᵛगन्तु आगच्छतु ॥

अर्णांसि चित्पप्रथाना सुदास इन्द्रो गाधान्यकृणोत्सुपारा ।
शर्धन्तं शिम्युमुचथस्य नव्यः शापं सिन्धूनामकृणोदशस्तीः ॥ ५ ॥

अर्णांसि । चित् । पप्रथाना । सुऽदासे । इन्द्रः । गाधानि । अकृणोत् । सुऽपारा ।
शर्धन्तम् । शिम्युम् । उचथस्य । नव्यः । शापम् । सिन्धूनाम् । अकृणोत् । अशस्तीः ॥५॥

---

१. ख-भ-कुरु। २. घ-देवयन्तीः देवं त्वामिच्छयन्तीः इमाः; य-इमाः देवयन्तीः देवान् कामयमानाः।

ᵛनव्यः स्तुत्यः ᵛइन्द्रः ᵛअर्णांसि शत्रुभिर्विदारितायाः परुष्ण्याः उदकानि ᵛपप्रथाना ᵛचित् प्रथमानान्यपि ᵛसुदासे राज्ञे ᵛगाधानि[1] ᵛसुपारा सुपाराणि पारयितुं तर्तुं योग्यानि च ᵛअकृणोत् अकरोत्। अपि च ᵛशर्धन्तम् उत्सहमानं[2] ᵛशिम्युं बाधमानं ᵛशापं विश्वरूपोऽन्नवमात्मनोऽभिशापम् ᵛअशस्तीः अभिशस्तीश्च ᵛउचथस्य स्तोतुः ᵛसिन्धूनां नदीनाम् ᵛअकृणोत् अकरोत् ॥ ॥ २४ ॥

पुरोळा इत्तुर्वशो यक्षुरासीद्राये मत्स्यासो निशिता अपीव।
श्रुष्टिं चक्रुर्भृगवो द्रुह्यवश्च सखा सखायमतरद्विषूचोः ॥ ६ ॥

पुरोळाः। इत्। तुर्वशः। यक्षुः। आसीत्। राये। मत्स्यासः। निऽशिताः। अपिऽइव।
श्रुष्टिम्। चक्रुः। भृगवः। द्रुह्यवः। च। सखा। सखायम्। अतरत्। विषूचोः ॥ ६ ॥

ᵛयक्षुः यज्ञकुशलः ॥ यजेः सन्प्रत्ययो न तु सनन्तः। अतो न द्विर्भावः ॥ ᵛपुरोळाः पुरोगामी पुरोदाता वा। ᵛइत् इति पूरणः। ᵛतुर्वशः नाम राजासीत्। सः तुर्वशः ᵛराये धनप्राप्तये इन्द्रस्य सखायं सुदासं जगाम। ᵛमत्स्यासः ᵛइव जालनिहिता मत्स्या इव ᵛनिशिताः[3] नियन्त्रिताः[3] ᵛअपि ᵛभृगवः ᵛद्रुह्यवश्च योधाश्च सुदासः तुर्वशस्य च ᵛश्रुष्टिम् आशुप्राप्तिं ᵛचक्रुः। ᵛविषूचोः विष्वगञ्चतोरुभयोर्मध्ये ᵛसखा सुदासश्चेन्द्रः ᵛसखायं सुदासम् ᵛअतरत् अतारयत्। तुर्वशं चावधीदित्यर्थः। यद्वा। यक्षुर्यज्ञशीलः पुरोळाः पुरोदाता तुर्वशो नाम राजासीत्। तेन मत्स्यासो मत्स्यजनपदा[4] निशिता बाधिता[5] आसन्। अपि च भृगवो द्रुह्यवश्च श्रुष्टिं सुखं तुर्वशस्य चक्रुः। विषूचोर्विष्वगञ्चतोरुभयोर्मध्ये सखा तुर्वशस्य सखेन्द्रः सखायं राजानमतरत् अतारयत् ॥

आ पक्थासो भलानसो भनन्तालिनासो विषाणिनः शिवासः।
आ योऽनयत्सधमा आर्यस्य गव्या तृत्सुभ्यो अजगन्युधा नॄन् ॥ ७ ॥

आ। पक्थासः। भलानसः। भनन्त। आ। अलिनासः। विषाणिनः। शिवासः।
आ। यः। अनयत्। सधऽमाः। आर्यस्य। गव्या। तृत्सुऽभ्यः। अजगन्। युधा। नॄन् ॥ ७ ॥

ᵛपक्थासः पक्था हविषां पाचकाः ᵛभलानसः भद्रमुखाः। भलेति भद्रवाची। ᵛअलिनासः अलिनाः। तपोभिरप्रवृद्धा[6] इत्यर्थः। ᵛविषाणिनः कण्डूयनार्थं कृष्णविषाणहस्ताः। दीक्षिता इत्यर्थः। ᵛशिवासः शिवाः यागादिना सर्वस्य लोकस्य शिवकराः[7]। यागेन हि शिवं भवति लोकस्य। ᵛआ ᵛभनन्त अभिष्टुवन्ति तमिन्द्रम्। भनतिः शब्दकर्मा 'नौति भनति' इति शब्दकर्मसु पाठात्। ᵛयः इन्द्रः ᵛसधमाः। सोमपानेन सह माद्यतीति सधमादः। सधमाद एव सधमाः। ᵛआर्यस्य कर्मशीलस्य ᵛगव्या गोसंघान् ᵛतृत्सुभ्यः हिंसकेभ्यः ᵛआ ᵛअनयत्। ᵛअजगन् अजगत् स्वयं च गोसंघान् लेभे। ᵛयुधा युद्धेन तान् ᵛनॄन्[8] शत्रून् जघान चेति शेषः ॥

दुराध्यो३ अदितिं स्रेवयन्तोऽचेतसो वि जगृभ्रे परुष्णीम्।
मह्नाविव्यक्पृथिवीं पत्यमानः पशुष्कविरशयच्चायमानः ॥ ८ ॥

---

१. घ—गाधानि तलस्पर्शानि। २. ख-घ-ङ-त-न-भ-श—उत्साहमानम्। ३. ख—निशिताः अवयन्त्रिताः; ङ-न-भ—निशितावनियन्त्रिताः; त—निशितावयन्त्रिताः। ४. ख—मत्स्या इव जानपदाः; भ—मत्स्य इव जनपदाः। ५. ङ-त-न-श—बावधिता। ६. घ-श—तपोभिः प्रवृद्धाः। ७. ख-न-भ—शिवतराः। ८. ख-ङ-त-न-भ-श—'नॄन्' नास्ति।

दुःऽआध्यः । अदितिम् । स्रेवयन्तः । अचेतसः । वि । जगृभ्रे । परुष्णीम् ।
मह्ना । अविव्यक् । पृथिवीम् । पत्यमानः । पशुः । कविः । अशयत् । चायमानः ॥ ८ ॥

ᐯदुराध्यः दुष्टाभिसंधयः ᐯअचेतसः मन्दमतयः सुदासः शत्रवः ᐯअदितिम् अदीनां ᐯपरुष्णीं नदीं ᐯस्रेवयन्तः ᐯवि ᐯजगृभ्रे । विग्रहः कूलभेदः । तमकुर्वन् । परुष्ण्याः कूलं बिभिदुरित्यर्थः । सः[1] सुदासः ᐯमह्ना इन्द्रप्रसादलब्धेन महिम्ना ᐯपृथिवीम् ᐯअविव्यक् तदैव व्याप्नोत् । न पुनरुदकेनाबाध्यत । ततः सुदासः शत्रुः ᐯचायमानः चयमानस्य पुत्रः ᐯकविः कविनामा ᐯपत्यमानः पलायमानः[2] ᐯपशुः यागे संज्ञप्तः पशुरिव ᐯअशयत् अशेत । सुदासा निहत इत्यर्थः ॥

ईयुरर्थं न न्यर्थं परुष्णीमाशुश्चनेदभिपित्वं जगाम ।
सुदास इन्द्रः सुतुकाँ अमित्रानरन्धयन्मानुषे वध्रिवाचः ॥ ९ ॥

ईयुः । अर्थम् । न । निऽअर्थम् । परुष्णीम् । आशुः । चन । इत् । अभिऽपित्वम् । जगाम ।
सुऽदासे । इन्द्रः । सुऽतुकान् । अमित्रान् । अरन्धयत् । मानुषे । वध्रिऽवाचः ॥ ९ ॥

अथेन्द्रः परुष्ण्या विच्छिन्नानि पर्वाणि संदधे । ततः परुष्ण्या आपः यथापूर्वम् ᐯअर्थं गन्तव्यमेव प्रवणदेशं[3] प्रति ᐯपरुष्णीम् ᐯईयुः आययां चक्रुः ॥ 'इण् गतौ' इति धातोरन्तर्भावितण्यर्थात् लिटि ईयुः इति[4] । अतो द्विकर्मकमाख्यातम् ॥ ᐯन्यर्थम् अगन्तव्यं[5] परुष्ण्याः पार्श्वयोः स्थितं निम्नं देशं प्रति परुष्णीं ᐯन ईयुः । ᐯआशुश्चन राज्ञः सुदासोऽश्वोऽपि ᐯअभिपित्वम् अभिप्राप्तव्यमेव ᐯजगाम । ᐯइन्द्रः च ᐯसुदासे राज्ञे ᐯमानुषे लोके ᐯवध्रिवाचः जल्पकान् ᐯअमित्रान् शत्रून् ᐯसुतुकान् सुतोकान् । 'तुक् तोकम्' इत्यपत्यनामसु पाठात् । ᐯअरन्धयत् वशमानयत् ॥

ईयुर्गावो न यवसादगोपा यथाकृतमभि मित्रं चितासः ।
पृश्निगावः पृश्निनिप्रेषितासः श्रुष्टिं चक्रुर्नियुतो रन्तयश्च ॥ १० ॥

ईयुः । गावः । न । यवसात् । अगोपाः । यथाऽकृतम् । अभि । मित्रम् । चितासः ।
पृश्निऽगावः । पृश्निऽनिप्रेषितासः । श्रुष्टिम् । चक्रुः । निऽयुतः । रन्तयः । च ॥ १० ॥

यदेन्द्रः सुदासो रक्षणार्थमागच्छति तदा ᐯपृश्निनिप्रेषितासः पृश्निनिप्रेषिताः पृश्न्या मात्रा नितरां प्रहिताः ᐯचितासः संहता जानन्तो वा ᐯपृश्निगावः । पृश्निवर्णा गावोऽश्वा येषां ते पृश्निगावः मरुतः ᐯयथाकृतम् इन्द्रस्य साहाय्यं करवामेति यथा पूर्वं समयः कृतस्तं समयमनतिक्रम्य ᐯमित्रम् इन्द्रं ᐯयवसात् । निमित्तार्थे पञ्चमी । यवसं निमित्तीकृत्य ᐯअगोपाः गोपालेनारक्षिताः ᐯगावो ᐯन गाव इव ᐯअभि ᐯईयुः अभिजग्मुः । ᐯरन्तयः रममाणाः ᐯनियुतः मरुतामश्वाः ᐯच । ᐯश्रुष्टिं शीघ्रप्राप्तिं ᐯचक्रुः । तस्मिन् युद्धे मरुत इन्द्रं साहाय्यार्थमभ्यगच्छन्नित्यर्थः ॥　　॥ २५ ॥

एकं च यो विंशतिं च श्रवस्या वैकर्णयोर्जनान्राजा न्यस्तः ।
दस्मो न सद्मन्नि शिशाति बर्हिः शूरः सर्गमकृणोदिन्द्र एषाम् ॥ ११ ॥

---

१. ख-भ-'सः' नास्ति । २. ख-ञ-त-न-भ-श-पालयमानः । ३. ख-घ-भ-प्रवणं देशम् ।
४. ख-इति रूपम् । ५. ख-ञ-त-न-भ-श-आगन्तव्यम् ।

एकम् । च । यः । विंशतिम् । च । श्रवस्या । वैकर्णयोः । जनान् । राजा । नि । अस्तरित्यस्तः ।
दस्मः । न । सद्मन् । नि । शिशाति । बर्हिः । शूरः । सर्गम् । अकृणोत् । इन्द्रः । एषाम् ॥ ११॥

यः सुदासो[1] राजा श्रवस्या यशस इच्छया अन्नेच्छया वा परुष्ण्याः पार्श्वस्थयोः वैकर्णयोः जनपदयोर्विद्यमानान् एकं च विंशतिं च जनान् न्यस्तः आत्मना अहन् सः राजा दस्मो न दर्शनीयो युवाध्वर्युरिव सद्मन् यज्ञगृहे बर्हिः यस्मिन् युद्धे सपत्नान् नि शिशाति नितरां लुनाति तस्मिन् युद्धे शूरः इन्द्रः एषां मरुतां सर्गं प्रसवम् अकृणोत् सुदासः साहाय्यार्थमकरोत् ॥

अध श्रुतं कवषं वृद्धमप्स्वनु द्रुह्युं नि वृणग्वज्रबाहुः ।
वृणाना अत्र सख्याय सख्यं त्वायन्तो ये अमदन्ननु त्वा ॥ १२ ॥

अध । श्रुतम् । कवषम् । वृद्धम् । अप्ऽसु । अनु । द्रुह्युम् । नि । वृणक् । वज्रऽबाहुः ।
वृणानाः । अत्र । सख्याय । सख्यम् । त्वाऽयन्तः । ये । अमदन् । अनु । त्वा ॥ १२ ॥

अध अपि च वज्रबाहुः इन्द्रः श्रुतं कवषं च वृद्धं च त्रीन् तथा द्रुह्युम् अनु आनुपूर्व्येण अप्सु उदकेषु नि वृणक् न्यमज्जयदित्यर्थः । अत्र अस्मिन्नवसरे ये त्वायन्तः त्वत्कामाः त्वा त्वाम् अनु अमदन् अस्तुवन् ते सखायः सख्याय[2] सख्यार्थं[2] त्वां वृणानाः सख्यं लेभिर इति शेषः ॥

वि सद्यो विश्वा दृंहितान्येषामिन्द्रः पुरः सहसा सप्त दर्दः ।
व्यानवस्य तृत्सवे गयं भाग्जेष्म पूरुं विदथे मृध्रवाचम् ॥ १३ ॥

वि । सद्यः । विश्वा । दृंहितानि । एषाम् । इन्द्रः । पुरः । सहसा । सप्त । दर्दरिति दर्दः ।
वि । आनवस्य । तृत्सवे । गयम् । भाक् । जेष्म । पूरुम् । विदथे । मृध्रऽवाचम् ॥ १३ ॥

एषां कवषादीनां विश्वा विश्वानि दृंहितानि दृढानि दुर्गाणि पुरः नगरीश्च तद्रक्षासाधनभूतान् सप्त प्राकारांश्च इन्द्रः सहसा बलेन सद्यः एव वि दर्दः विदारयामास । अपि च आनवस्य अनोः संबन्धिनो बलस्य अनोः पुत्रस्य वा गयं गृहं धनं वा तृत्सवे तृत्सुनामकाय राज्ञे तृत्सूनां गणाय वा वि भाक् व्यभजत् । अदादित्यर्थः । इत्थमिन्द्रं स्तुवन्तो वयं विदथे युद्धे मृध्रवाचं बाधवाचं पूरुं मनुष्यं जेष्म जयेम ॥

नि गव्यवोऽनवो द्रुह्यवश्च षष्टिः शता सुषुपुः षट् सहस्रा ।
षष्टिर्वीरासो अधि षड् दुवोयु विश्वेदिन्द्रस्य वीर्या कृतानि ॥ १४ ॥

नि । गव्यवः । अनवः । द्रुह्यवः । च । षष्टिः । शता । सुसुपुः । षट् । सहस्रा ।
षष्टिः । वीरासः । अधि । षट् । दुवःऽयु । विश्वा । इत् । इन्द्रस्य । वीर्या । कृतानि ॥१४॥

गव्यवः गोकामाः अनवः अनोः संबन्धिनः द्रुह्यवः द्रुह्योः संबन्धिनः च वीरासः वीराः षष्टिः शता शतानि । सहस्राणीत्यर्थः । षट् सहस्रा सहस्राणि च षष्टिः च अधि षट् अधिकाः

---

१. ञ–सुदाः । २. ख-घ-ञ-भ–सख्याय; ञ-त२-श–सखायः; त३-न–सख्यायः ।

षद् च दुवोयु दुवोयुवे। चतुर्थीलुक्। परिचरणकामाय सुदासे। 'नमस्यति दुवस्यति' इति परिचरणकर्मसु पाठात्। नि सुषुपुः नितरां शेरते। निहता[1] इत्यर्थः। तान्येतानि विश्वा विश्वानि कृतानि कार्याणि इन्द्रस्य इत् इन्द्रस्यैव वीर्या वीर्याणीति ॥

इन्द्रेणैते तृत्सवो वेविषाणा आपो न सृष्टा अधवन्त नीचीः।
दुर्मित्रासः प्रकलविन्मिमाना जहुर्विश्वानि भोजना सुदासे ॥ १५ ॥

इन्द्रेण। एते। तृत्सवः। वेविषाणाः। आपः। न। सृष्टाः। अधवन्त। नीचीः।
दुःऽमित्रासः। प्रकलऽवित्। मिमानाः। जहुः। विश्वानि। भोजना। सुऽदासे ॥ १५ ॥

कदाचिदिन्द्रेण रक्षिता अप्यन्यदा तेनैव बाध्यन्ते[2]। एते तृत्सवः दुर्मित्रासः दुष्टमित्राः प्रकलवित् अजानन्तः[3] इन्द्रेण वेविषाणाः युद्धार्थं संगताः सृष्टाः पलायनार्थमुद्युक्ताः नीचीः नीचीनाः आपो न आप इव अधवन्त अधावन्त। ततः मिमानाः सुदासा बाध्यमानाः विश्वानि भोजना भोग्यानि धनानि सुदासे राज्ञे जहुः ॥ ॥ २६ ॥

अर्धं वीरस्य शृतपामनिन्द्रं परा शर्धन्तं नुनुदे अभि क्षाम्।
इन्द्रो मन्युं मन्युम्यो मिमाय भेजे पथो वर्तनिं पत्यमानः ॥ १६ ॥

अर्धम्। वीरस्य। शृतऽपाम्। अनिन्द्रम्। परा। शर्धन्तम्। नुनुदे। अभि। क्षाम्।
इन्द्रः। मन्युम्। मन्युऽम्यः। मिमाय। भेजे। पथः। वर्तनिम्। पत्यमानः ॥ १६ ॥

इन्द्रः अभि क्षां भूमिमभि। भूम्यामित्यर्थः। वीरस्य वीर्ययुक्तस्य[4] सुदासः अर्धं हिंसकम् ॥ अर्धोहिंसाकर्मणोऽर्धशब्दस्य निष्पत्तिः ॥ अनिन्द्रम्। यस्य बुद्धाविन्द्रो नास्त्यसावनिन्द्रः। तम्। इन्द्रमगणयन्तमित्यर्थः। शृतपां शृतस्य क्षीरादेर्हविषः पातारं शर्धन्तम् उत्सहमानं[5] परा नुनुदे। किंच मन्युम्यः मन्युकर्तुर्मन्युना मिनतो हिंसतो वा शत्रोः मन्युं क्रोधं मिमाय बबाधे। अथ सुदासः शत्रुः पथः मार्गान् पत्यमानः गच्छन् वर्तनिं पलायनमार्गं भेजे प्राप ॥

आध्रेण चित्तद्वेकं चकार सिंह्यं चित्पेत्वेना जघान।
अव स्रक्तीर्वेश्यावृश्चदिन्द्रः प्रायच्छद्विश्वा भोजना सुदासे ॥ १७ ॥

आध्रेण। चित्। तत्। ऊँ इति। एकम्। चकार। सिंह्यम्। चित्। पेत्वेन। जघान।
अव। स्रक्तीः। वेश्या। अवृश्चत्। इन्द्रः। प्र। अयच्छत्। विश्वा। भोजना। सुऽदासे ॥ १७ ॥

इन्द्रः तत् तदा आध्रेण चित् दरिद्रेणापि सुदासा एकं मुख्यं दानकर्म चकार कारयामास। सिंह्यं चित्। प्रवयाः सिंहः सिंह्यः। तमपि पेत्वेन छागेन जघान घातयामास। वेश्या। वेशी सूची। तया स्रक्तीः यूपादेरश्रीन् अव अवृश्चत् अववृक्तवान्। वेश्यादेः कृत्यं सूच्यैवाकरोदित्यर्थः। तान्येतानि त्रीणि कर्माणि असंभावितानीति नाशङ्कनीयानि इन्द्रस्य

---

१. ख-झ-त-न-भ-श—निहिताः। २. त-न—बाधन्ते। ३. ख-भ—प्रकलविदः वणिजः। प्रकलवित् वणिक् भवति कलाश्च वेद प्रकलाश्चेति यास्कः। ४. ख-श—वीर्युक्तस्य। ५. ख-घ-झ-त-न-भ-श—उत्साहमानम्।

महिम्नोऽधिकत्वात् । vविश्वा विश्वानि vभोजना भोजनानि भोग्यानि धनानि vसुदासे राज्ञे vप्राय-च्छत् अदाच्च ॥

शश्वन्तो हि शत्रवो रारधुष्टे भेदस्य चिच्छर्धतो विन्द रन्धिम् ।
मर्ताँ एनः स्तुवतो यः कृणोति तिग्मं तस्मिन्नि जहि वज्रमिन्द्र ॥ १८ ॥

शश्वन्तः । हि । शत्रवः । ररधुः । ते । भेदस्य । चित् । शर्धतः । विन्द । रन्धिम् ।
मर्तान् । एनः । स्तुवतः । यः । कृणोति । तिग्मम् । तस्मिन् । नि । जहि । वज्रम् । इन्द्र ॥ १८ ॥

हे vइन्द्र vते तव vशत्रवः अरयः vशश्वन्तः बहवः vररधुः वशमीयुः । vचित् अपि च vशर्धतः उत्सहमानस्य[1] vभेदस्य । भिनत्ति मर्यादा इति भेदो नास्तिकः । तस्य । यद्वा । भेदो नाम सुदासः शत्रुः कश्चित् । तस्येत्यर्थः । vरन्धिं वशीकरं vविन्द लभस्व । vयः भेदः vस्तुवतः त्वां स्तुवतः vमर्तान् मर्त्यान् प्रति vएनः पापं vकृणोति करोति vतस्मिन् भेदे vतिग्मं निशितं योद्धारमुत्साहयन्तम् । तथा च यास्कः—‘ तिग्मं तेजतेरुत्साहकर्मणः ’ ( निरु. १०. ६ ) इति । vवज्रम् । वजति गच्छत्येव शत्रुं न प्रतिहन्यत इति वज्रः । तम् ॥ वज्रशब्दो वजेः ‘ ऋज्रेन्द्राग्रवज्रविप्र° ’ इत्यादिना रन्प्रत्ययान्तो निपातितः ॥ तं[2] vजहि । वज्रेण भेदं प्रहरेत्यर्थः ॥

आवदिन्द्रं यमुना तृत्सवश्च प्रात्र भेदं सर्वताता मुषायत् ।
अजासश्च शिग्रवो यक्षवश्च बलिं शीर्षाणि जभ्रुरश्व्यानि ॥ १९ ॥

आवत् । इन्द्रम् । यमुना । तृत्सवः । च । प्र । अत्र । भेदम् । सर्वऽताता । मुषायत् ।
अजासः । च । शिग्रवः । यक्षवः । च । बलिम् । शीर्षाणि । जभ्रुः । अश्व्यानि ॥ १९ ॥

vअत्र अस्मिन् vसर्वताता सर्वतातौ युद्धे य इन्द्रः vभेदं नास्तिकं भेदनामकं वा सुदासः शत्रुं vप्र vमुषायत् प्रामुष्णात् । अवधीदित्यर्थः । तम् vइन्द्रं vयमुना vआवत् अतोषयत् । तत्तीर-वासी जनः सर्वोऽप्यतोषयदित्यर्थः । vतृत्सवः तृत्सोः पुरुषाश्चावन् । आवत् इत्येकवचनं बहुवचनान्ततया विपरिणतं सदत्र संबध्यते । किंच vअजासः अजाः जनपदाः vशिग्रवः जनपदाः vयक्षवश्च जनपदाः vअश्व्यानि अश्वसंबन्धीनि vशीर्षाणि शिरांसि । युद्धे हतानामश्वानां शिरांसीत्यर्थः । vबलिम् उपहारं तस्मा इन्द्राय[3] उप vजभ्रुः उपजह्रुः । यद्वा । अश्व्यानि शीर्षाणि युद्धे गृहीतान् मुख्यानश्वानिन्द्राय उपहारं जह्रुरित्यर्थः ॥

न त इन्द्र सुमतयो न रायः संचक्षे पूर्वा उषसो न नूत्नाः ।
देवकं चिन्मान्यमानं जघन्थाव त्मना बृहतः शम्बरं भेत् ॥ २० ॥

न । ते । इन्द्र । सुऽमतयः । न । रायः । सम्ऽचक्षे । पूर्वाः । उषसः । न । नूत्नाः ।
देवकम् । चित् । मान्यमानम् । जघन्थ । अव । त्मना । बृहतः । शम्बरम् । भेत् ॥ २० ॥

हे vइन्द्र vते तव vपूर्वाः पुरातनाः vसुमतयः शोभनमतयः vरायः धनानि च vउषसो vन उषस इव vन[4] vसंचक्षे संख्यातुं न शक्याः । vन vनूत्नाः नूतनाश्च सुमतयो रायश्च न संचक्षे ।

१. घ-श—उत्साहमानस्य । २. य—तेन । ३. ख-न-भ—बलाय । ४. ख-झ-त-न-भ-श—‘ न ’ नास्ति ।

किंच त्वं मान्यमानं मन्यमानस्य पुत्रं देवकं देवकनामानं शत्रुं जघन्थ अवधीः । त्मना स्वयमेव बृहतः महतः शैलात् शम्बरं च अव भेत् अवाभैत्सीरिति ॥ ॥ २७ ॥

प्र ये गृहादममदुस्त्वाया पराशरः शतयातुर्वसिष्ठः ।
न ते भोजस्य सख्यं मृषन्ताधा सूरिभ्यः सुदिना व्युच्छान् ॥ २१ ॥

प्र । ये । गृहात् । अममदुः । त्वाऽया । पराऽशरः । शतऽयातुः । वसिष्ठः ।
न । ते । भोजस्य । सख्यम् । मृषन्त । अध । सूरिऽभ्यः । सुऽदिना । वि । उच्छान् ॥२१॥

हे इन्द्र पराशरः शतयातुः बहुरक्षाः । बहूनि रक्षांसि बाधितुं यं कामयन्ते स शतयातुः, बहूनां रक्षसां शातयिता वा । शक्तिः वसिष्ठः चैवमादयः ये ऋषयः त्वाया त्वदिच्छया गृहात् गृहं प्राप्य ॥ ल्यब्लोपे द्वितीयार्थे पञ्चमी ( पा. सू. २. ३. २८. १ ) ॥ यद्वा गृहात् गृहे । सप्तम्यर्थे पञ्चमी । प्र अममदुः त्वां प्रतुष्टुवुः प्रकर्षेण तर्पितवन्तो वा ते पराशरप्रभृतयः भोजस्य भोजकस्य पालकस्य ते तव सख्यं सख्युः कर्म स्तोत्रं यजनं वा न मृषन्त न विस्मरन्ति । 'मृष मर्षे' । मर्षो मर्षणम् । तन्न कुर्वन्तीत्यर्थः । यतो न विस्मरन्ति अध अतो हेतोः सूरिभ्यः सूरीणां स्तोतॄणामेषाम् । अत्र विभक्तिव्यत्ययः । सुदिना सुदिनानि व्युच्छान् व्युच्छन्ति निवसन्ति । उपगच्छन्तीत्यर्थः ॥

द्वे नप्तुर्देववतः शते गोर्द्वा रथा वधूमन्ता सुदासः ।
अर्हन्नग्ने पैजवनस्य दानं होतेव सद्म पर्येमि रेभन् ॥ २२ ॥

द्वे इति । नप्तुः । देवऽवतः । शते इति । गोः । द्वा । रथा । वधूऽमन्ता । सुऽदासः ।
अर्हन् । अग्ने । पैजऽवनस्य । दानम् । होताऽइव । सद्म । परि । एमि । रेभन् ॥ २२ ॥

देववतः राज्ञः नप्तुः पौत्रस्य पैजवनस्य पिजवनपुत्रस्य सुदासः राज्ञः गोः गवां द्वे शते वधूमन्ता वधूसंयुक्तौ द्वा द्वौ रथा रथौ च देयं दानं दानभूतान् रेभन् इन्द्रं स्तुवन् अत एव अर्हन् योग्योऽहं वसिष्ठो हे अग्ने सद्म यज्ञगृहं होतेव वषट्कर्तेव पर्येमि । अत्राग्नेः संबोधनं सर्वदेवमुख्यत्वप्रतिपादनार्थं न तु देवतात्वज्ञापनार्थमतद्देवताकत्वादस्य सूक्तस्य ॥

चत्वारो मा पैजवनस्य दानाः स्मद्दिष्टयः कृशनिनो निरेके ।
ऋज्रासो मा पृथिविष्ठाः सुदासस्तोकं तोकाय श्रवसे वहन्ति ॥ २३ ॥

चत्वारः । मा । पैजऽवनस्य । दानाः । स्मत्ऽदिष्टयः । कृशनिनः । निरेके ।
ऋज्रासः । मा । पृथिविऽस्थाः । सुऽदासः । तोकम् । तोकाय । श्रवसे । वहन्ति ॥२३॥

पैजवनस्य पिजवनपुत्रस्य सुदासः राज्ञः स्मद्दिष्टयः प्रशस्तातिसर्जनाः श्रद्धादिदानाङ्गयुक्ताः कृशनिनः हिरण्यालंकारवन्तः निरेके दुर्गतौ सत्याम् ऋज्रासः ऋजुगामिनः पृथिविष्ठाः पृथिव्यां सुप्रतिष्ठिताः[1] दानाः देयभूताः चत्वारः अश्वाः तोकं पुत्रवत्पालनीयं मां वसिष्ठं रथे स्थितं तोकाय तोकस्य पुत्रस्य । षष्ठ्यर्थे चतुर्थी । श्रवसे अन्नाय यशसे वा वहन्ति । पुनः मा इति पूरणः ॥

---

१. ख–समधिष्ठिताः ।

यस्य श्रवो रोदसी अन्तरुर्वी शीर्ष्णेशीर्ष्णे विबभाजा विभक्ता ।
सप्तेदिन्द्रं न स्रवतो गृणन्ति नि युध्यामधिमशिशादभीके ॥ २४ ॥

यस्य । श्रवः । रोदसी इति । अन्तः । उर्वी इति । शीर्ष्णेऽशीर्ष्णे । विऽबभाज । विऽभक्ता ।
सप्त । इत् । इन्द्रम् । न । स्रवतः । गृणन्ति । नि । युध्यामधिम् । अशिशात् । अभीके ॥२४॥

ᵛयस्य सुदासः ᵛश्रवः यशः ᵛउर्वी विस्तीर्णे ᵛरोदसी द्यावापृथिव्यौ ᵛअन्तः । विस्तीर्णयोर्द्यावापृथिव्योर्मध्ये वर्तत इत्यर्थः । यश्च सुदाः ᵛविभक्ता धनस्य प्रदाता ᵛशीर्ष्णेशीर्ष्णे श्रेष्ठाय श्रेष्ठाय ᵛविबभाज धनं प्रददौ तं सुदासं ᵛसप्तेत् सप्तैव लोकाः ᵛइन्द्रं ᵛन इन्द्रमिव ᵛगृणन्ति स्तुवन्ति । किंच ᵛस्रवतः नद्यः ᵛअभीके युद्धे ᵛयुध्यामधिं युध्यामधिनामकं सपत्नं ᵛनि ᵛअशिशात् न्यहन् ॥

इमं नरो मरुतः सश्चतानु दिवोदासं न पितरं सुदासः ।
अविष्टना पैजवनस्य केतं दूणाशं क्षत्रमजरं दुवोयु ॥ २५ ॥

इमम् । नरः । मरुतः । सश्चत । अनु । दिवःऽदासम् । न । पितरम् । सुऽदासः ।
अविष्टन । पैजऽवनस्य । केतम् । दुःऽनशम् । क्षत्रम् । अजरम् । दुवःऽयु ॥ २५ ॥

हे ᵛनरः नेतारः ᵛमरुतः ᵛइमं सुदासं राजानं ᵛसुदासः राज्ञः ᵛपितरं ᵛदिवोदासं ᵛन दिवोदासमिव । दिवोदास इति पिजवनस्यैव[1] नामान्तरम् । ᵛअनु ᵛसश्चत अनुसेवध्वम् । किंच ᵛदुवोयु परिचरणकामस्य ॥ षष्ठ्या लुक् ॥ ᵛपैजवनस्य पिजवनपुत्रस्य सुदासः ᵛकेतं मन्त्रं गृहं वा ᵛअविष्टन रक्षत । अपि चास्य सुदासः ᵛक्षत्रं बलं ᵛदूणाशं दुर्नशमविनाशि ᵛअजरम् अशिथिलं चास्तु ॥ ॥ २८॥

'यस्तिग्मशृङ्गः' इत्येकादशर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रान्तं— 'यस्तिग्मशृङ्ग एकादश' इति । आभिप्लविके पञ्चमेऽहन्येतन्निविद्धानम् । सूत्रितं च—'कया शुभा यस्तिग्मशृङ्ग इति मध्यंदिनः[2]' (आश्व. श्रौ. ७. ७) इति । विषुवति निष्केवल्यशस्त्रेऽप्येतत्सूक्तम् । सूत्रितं च—'यस्तिग्मशृङ्गोऽभि त्यं मेषम्' (आश्व. श्रौ. ८. ६) इति । महाव्रते निष्केवल्येऽप्येतत् सूक्तम् । सूत्रितं च—'यस्तिग्मशृङ्गो वृषभो न भीम उग्रो जज्ञे वीर्याय स्वधावान्' (ऐ. आ. ५. २. २) इति । आयुष्कामेष्ट्यां 'मा ते अस्याम्' इतीन्द्रस्य त्रातुर्याज्या । सूत्रितं च—'मा ते अस्यां सहसावन्परिष्टौ पाहि नो अग्ने पायुभिः[3]' (आश्व. श्रौ. २. १०) इति ॥

यस्तिग्मशृङ्गो वृषभो न भीम एकः कृष्टीश्च्यावयति प्र विश्वाः ।
यः शश्वतो अदाशुषो गयस्य प्रयन्तासि सुष्वितराय वेदः ॥ १ ॥

यः । तिग्मऽशृङ्गः । वृषभः । न । भीमः । एकः । कृष्टीः । च्यवयति । प्र । विश्वाः ।
यः । शश्वतः । अदाशुषः । गयस्य । प्रऽयन्ता । असि । सुस्विऽतराय । वेदः ॥ १ ॥

ᵛयः इन्द्रः ᵛतिग्मशृङ्गः तीक्ष्णशृङ्गः ᵛवृषभो ᵛन वृषभ इव ᵛभीमः भयंकरः सन् ᵛएकः असहाय एव ᵛविश्वाः सर्वान् ᵛकृष्टीः शत्रुजनान् स्थानात् ᵛप्र ᵛच्यावयति । ᵛयः चेन्द्रः ᵛअदाशुषः अयजमानस्य ᵛशश्वतः बहोः ᵛगयस्य गृहस्य धनस्य वा । अपहर्ता भवतीति शेषः । हे इन्द्र

१. ख-श—पैजवनस्यैव । २. ख-ङ-न भ-श—माध्यंदिनः । ३. ख—पायुभिरजस्रैः ।

स त्वं ᵛसुष्वितराय[1] अतिशयेन सोमाभिषवं कुर्वते जनाय ᵛवेदः धनं ᵛप्रयन्ता प्रदाता ᵛअसि ॥ तृन्नन्तत्वादत्र षष्ठ्या अभावः । असि इत्यस्याख्यातस्यानुदात्तत्वात् यद्वृत्तयोगाच्चानुदात्तत्वासंभवात् यद्वृत्तयुक्तमाख्यातान्तरमध्याहृत्य योजना कृता ॥

त्वं ह त्यदिन्द्र कुत्समावः शुश्रूषमाणस्तन्वा समर्ये ।
दासं यच्छुष्णं कुयवं न्यस्मा अरन्धय आर्जुनेयाय शिक्षन् ॥ २ ॥

त्वम् । ह । त्यत् । इन्द्र । कुत्सम् । आवः । शुश्रूषमाणः । तन्वा । सऽमर्ये ।
दासम् । यत् । शुष्णम् । कुयवम् । नि । अस्मै । अरन्धयः । आर्जुनेयाय । शिक्षन् ॥२॥

हे ᵛइन्द्र ᵛत्वं ᵛह त्वं खलु ᵛत्यत् तदा ᵛतन्वा शरीरेण ᵛशुश्रूषमाणः उपचरन् ᵛसमर्ये मर्यैर्मर्त्यैर्योद्धृभिः सहिते युद्धे ᵛकुत्सम् ᵛआवः अरक्षः । कदेत्यत्राह । ᵛयत् यदा ᵛआर्जुनेयाय अर्जुन्याः पुत्राय ᵛअस्मै कुत्साय ᵛशिक्षन् धनं प्रयच्छन् ᵛदासं दासनामकमसुरं ᵛशुष्णं च ᵛकुयवं च ᵛनि ᵛअरन्धयः नितरां वशमानयः ॥

त्वं धृष्णो धृषता वीतहव्यं प्रावो विश्वाभिरूतिभिः सुदासम् ।
प्र पौरुकुत्सिं त्रसदस्युमावः क्षेत्रसाता वृत्रहत्येषु पूरुम् ॥ ३ ॥

त्वम् । धृष्णो इति । धृषता । वीतऽहव्यम् । प्र । आवः । विश्वाभिः । ऊतिऽभिः । सुऽदासम् ।
प्र । पौरुऽकुत्सिम् । त्रसदस्युम् । आवः । क्षेत्रऽसाता । वृत्रऽहत्येषु । पूरुम् ॥ ३ ॥

हे ᵛधृष्णो शत्रूणां धर्षकेन्द्र ᵛधृषता[2] धर्षकेण वज्रेण बलेन वा ᵛवीतहव्यं दत्तहविष्कं प्रजनितहविष्कं वा ᵛसुदासं राजानं ᵛविश्वाभिः सर्वाभिः ᵛऊतिभिः रक्षाभिः ᵛप्रावः प्रकर्षेणारक्षः । किंच ᵛवृत्रहत्येषु युद्धेषु ᵛक्षेत्रसाता क्षेत्रसातौ क्षेत्रस्य भूमेर्भजने निमित्ते ᵛपौरुकुत्सिं पुरुकुत्सस्यापत्यं ᵛत्रसदस्युं ᵛपूरुं च ᵛप्र ᵛआवः ॥

त्वं नृभिर्नृमणो देववीतौ भूरीणि वृत्रा हर्यश्व हंसि ।
त्वं नि दस्युं चुमुरिं धुनिं चास्वापयो दभीतये सुहन्तु ॥ ४ ॥

त्वम् । नृऽभिः । नृऽमनः । देवऽवीतौ । भूरीणि । वृत्रा । हरिऽअश्व । हंसि ।
त्वम् । नि । दस्युम् । चुमुरिम् । धुनिम् । च । अस्वापयः । दभीतये । सुऽहन्तु ॥ ४ ॥

हे ᵛनृमणः नृभिर्यज्ञानां नेतृभिः स्तोतृभिर्मननीय स्तोतव्येन्द्र । नृषु मनो यस्येति बहुव्रीहिर्वा । ᵛदेववीतौ यज्ञे क्रियमाणे सति संग्रामे वा । देवा विजिगीषवो यस्मिन् वियन्ति गच्छन्तीति संग्रामो[3] देववीतिः[3] । ᵛनृभिः मरुद्भिः सह ᵛभूरीणि बहूनि ᵛवृत्रा वृत्राणि शत्रून् ᵛहंसि मारितवानसि । किंच हे ᵛहर्यश्व इन्द्र ᵛत्वं ᵛदभीतये दभीतिनामकाय राजर्षये । तदर्थमित्यर्थः । ᵛदस्युं ᵛचुमुरिं च ᵛधुनिं ᵛच ᵛसुहन्तु सुहन्तुना वज्रेण ᵛनि नितराम् ᵛअस्वापयः । मारितवानसीत्यर्थः ॥

तव च्यौत्नानि वज्रहस्त तानि नव यत्पुरो नवतिं च सद्यः ।
निवेशने शततमाविवेषीरहंश्च वृत्रं नमुचिमुताहन् ॥ ५ ॥

---

१. त–सुस्वितराय । २. ख-भ–त्वं धृषता । ३. य–देववीतिः सग्रामः ।

तव॑ । च्यौ॒त्नानि॑ । व॒ज्र॒ऽह॒स्त॒ । तानि॑ । नव॑ । यत् । पुरः॑ । न॒व॒तिम् । च॒ । स॒द्यः ।
नि॒ऽवेश॑ने । श॒त॒ऽत॒मा । अ॒वि॒वे॒षीः॒ । अह॑न् । च॒ । वृ॒त्रम् । नमु॑चिम् । उ॒त । अ॒ह॒न् ॥५॥

हे वज्रहस्त तव च्यौत्नानि बलानि तानि तादृशानि । यत् यदा त्वं शम्बरस्य नव नवतिं च पुरः सद्यः युगपदेव विदारितवानसीति शेषः । तदा निवेशने निवेशनार्थं शततमा शततमीं पुरम् अविवेषीः व्याप्नोः । वृत्रं च अहन् । उत अपि च नमुचिम् अहन् ॥ ॥ २९ ॥

**सना॒ ता त॑ इन्द्र॒ भोज॑नानि रा॒तह॑व्याय दा॒शुषे॑ सु॒दासे॑ ।**
**वृष्णे॑ ते॒ हरी॒ वृष॑णा युनज्मि॒ व्यन्तु॒ ब्रह्मा॑णि पुरुशाक॒ वाज॑म् ॥ ६ ॥**

सना॑ । ता । ते॒ । इ॒न्द्र॒ । भोज॑नानि । रा॒तऽह॑व्याय । दा॒शुषे॑ । सु॒ऽदासे॑ ।
वृष्णे॑ । ते॒ । हरी॒ इति॑ । वृष॑णा । यु॒न॒ज्मि॒ । व्यन्तु॑ । ब्रह्मा॑णि । पु॒रु॒ऽशा॒क॒ । वाज॑म् ॥६॥

हे इन्द्र ते तव रातहव्याय दत्तहव्याय दाशुषे यजमानाय सुदासे ता[1] तानि त्वया दत्तानि भोजनानि भोग्यानि धनानि सना सनानि सनातनानि बभूवुरिति शेषः । हे पुरुशाक बहुकर्मन्निन्द्र वृष्णे कामानां वर्षित्रे ते तुभ्यम् । त्वामानेतुमित्यर्थः । वृषणा वृषणौ हरी अश्वौ युनज्मि रथे योजयामि । ब्रह्माणि अस्मदीयानि स्तोत्राणि वाजं बलिनं त्वां व्यन्तु गच्छन्तु ॥

**मा ते॑ अ॒स्यां स॑हसाव॒न्परि॑ष्टाव॒घाय॑ भूम हरिवः परा॒दै ।**
**त्राय॑स्व नोऽवृ॒केभि॒र्वरू॑थै॒स्तव॑ प्रि॒यासः॑ सू॒रिषु॑ स्याम ॥ ७ ॥**

मा । ते॒ । अ॒स्याम् । स॒ह॒सा॒ऽव॒न् । परि॑ष्टौ । अ॒घाय॑ । भू॒म॒ । ह॒रि॒ऽव॒ः । प॒रा॒ऽदै ।
त्राय॑स्व । न॒ः । अ॒वृ॒केभि॑ः । वरू॑थैः । तव॑ । प्रि॒यासः॑ । सू॒रिषु॑ । स्या॒म॒ ॥ ७ ॥

हे सहसावन् बलवन् हरिवः हरिवन्निन्द्र ते तव अस्यां स्तोत्रेणास्माभिः क्रियमाणायां परिष्टौ अन्वेषणायां परादै परादानाय अघाय अ(?आ)हन्त्रे[2] वयं मा भूम । किंच नः अस्मान् अवृकेभिः अबाधैः वरूथैः । वारयन्त्युपद्रवेभ्य इति वरूथानि रक्षणानि । तैः त्रायस्व पाहि । तव सूरिषु स्तोतृषु मध्ये वयं प्रियासः प्रियाः स्याम भूयास्म ॥

**प्रि॒यास॒ इत्ते॑ मघवन्न॒भिष्टौ॒ नरो॑ मदेम शर॒णे सखा॑यः ।**
**नि तु॒र्वशं॒ नि याद्वं॑ शिशीह्यतिथि॒ग्वाय॒ शंस्यं॑ करि॒ष्यन् ॥ ८ ॥**

प्रि॒यास॑ः । इत् । ते॒ । म॒घ॒ऽव॒न् । अ॒भिष्टौ॑ । नर॑ः । म॒दे॒म॒ । श॒र॒णे । सखा॑यः ।
नि । तु॒र्वश॑म् । नि । याद्व॑म् । शि॒शी॒हि॒ । अ॒ति॒थि॒ऽग्वाय॑ । शंस्य॑म् । क॒रि॒ष्यन् ॥ ८ ॥

हे मघवन् धनवन्निन्द्र ते तव अभिष्टौ अभ्येषणे नरः स्तोत्राणां नेतारो वयं सखायः समानख्यातयः प्रियासः प्रियाश्च सन्तः शरणे इत् गृह एव मदेम मोदेम । किंच अतिथिग्वाय । पूजयातिथीन् गच्छतीत्यतिथिग्वः । तस्मै सुदासे दिवोदासाय वास्मदीयाय[3] राज्ञे शंस्यं

१. ख-ङ्ग-त-न-भ-श-'ता' नास्ति । २. ख-अघाय; घ-ङ्ग-त-न-भ-श-अघाय अहन्त्रे । ३. ङ्ग-त-न-भ-श- वा मदीयाय ।

शंसनीयं सुखं ᵛकरिष्यन् कुर्वन् ᵛतुर्वशं राजानं ᵛनि ᵛशिशीहि वशं कुरु । ᵛयाद्वं च राजानं ᵛनि शिशीहीत्यर्थः ॥

सद्यश्चिन्नु ते मघवन्नभिष्टौ नरः शंसन्त्युक्थशास उक्था ।
ये ते हवेभिर्वि पणीरदाशन्नस्मान्वृणीष्व युज्याय तस्मै ॥ ९ ॥

सद्यः । चित् । नु । ते । मघऽवन् । अभिष्टौ । नरः । शंसन्ति । उक्थऽशासः । उक्था ।
ये । ते । हवेभिः । वि । पणीन् । अदाशन् । अस्मान् । वृणीष्व । युज्याय । तस्मै ॥९॥

हे ᵛमघवन् धनवन्निन्द्र ᵛते तव ᵛनु अद्य ᵛअभिष्टौ अभ्येषणे ᵛये ᵛनरः ᵛउक्थशासः उक्थानां शंसितारः ᵛउक्था उक्थानि शस्त्राणि ᵛसद्यश्चित् सद्य एव ᵛशंसन्ति । किंच ᵛते तव ᵛहवेभिः स्तोत्रैः ᵛपणीन् अप्रदानशीलान् वणिजोऽपि ᵛवि ᵛअदाशन् । धनानि विशेषेणादापयन्नित्यर्थः । तान् ᵛअस्मान् ᵛतस्मै ᵛयुज्याय सख्याय तत्सख्यमनुवर्तयितुं ᵛवृणीष्व परिगृहाण ॥

एते स्तोमा नरां नृतम तुभ्यमस्मद्र्यञ्चो ददतो मघानि ।
तेषामिन्द्र वृत्रहत्ये शिवो भूः सखा च शूरोऽविता च नृणाम् ॥ १० ॥

एते । स्तोमाः । नराम् । नृऽतम । तुभ्यम् । अस्मद्र्यञ्चः । ददतः । मघानि ।
तेषाम् । इन्द्र । वृत्रऽहत्ये । शिवः । भूः । सखा । च । शूरः । अविता । च । नृणाम् ॥१०॥

हे ᵛनृतम नेतृतम ᵛइन्द्र ᵛतुभ्यं ᵛनरां नेतॄणां ये ᵛएते ᵛस्तोमाः संघाः ᵛमघानि मंहनीयानि हवींषि ᵛददतः ददन्तः ᵛअस्मद्र्यञ्चः अस्मदभिमुखाः अभूवन्निति शेषः । ᵛतेषां ᵛनृणां ᵛवृत्रहत्ये संग्रामे ᵛशिवः कल्याणकृत् ᵛभूः भव । ᵛसखा ᵛच भूः । ᵛअविता[1] रक्षिता ᵛच भूः ॥

नू इन्द्र शूर स्तवमान ऊती ब्रह्मजूतस्तन्वा वावृधस्व ।
उप नो वाजान्मिमीह्युप स्तीन्यूयं पात स्वस्तिभिः सदा नः ॥ ११ ॥

नु । इन्द्र । शूर । स्तवमानः । ऊती । ब्रह्मऽजूतः । तन्वा । ववृधस्व ।
उप । नः । वाजान् । मिमीहि । उप । स्तीन् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥११॥

हे ᵛशूर ᵛइन्द्र ᵛनु अद्य ᵛस्तवमानः अस्माभिः स्तूयमानः ᵛब्रह्मजूतः ब्रह्मणा स्तोत्रेण प्रेरितः ᵛतन्वा शरीरेण ऊत्या[2] रक्षणेन[2] ᵛववृधस्व । अपि च ᵛनः अस्मभ्यं ᵛवाजान् अन्नानि ᵛउप ᵛमिमीहि । प्रयच्छेत्यर्थः । ᵛस्तीन् गृहांश्च ᵛउप मिमीहि । स्पष्टमन्यत् ॥ ॥ ३० ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
पञ्चमाष्टके द्वितीयोऽध्यायः समाप्तः ॥

---

१. ज्ञ– शूरः शौर्योपेतः अविता । २. ख-ज्ञ-त-न-भ-श–' ऊत्या रक्षणेन ' नास्ति ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ[1] तृतीयोऽध्याय आरभ्यते । 'उग्रो जज्ञे' इति दशर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रम्यते—'उग्रो दश' इति । आभिप्लविके चतुर्थेऽहनि निष्केवल्य एतत्सूक्तं निविद्धानम् । सूत्रितं च—'चतुर्थस्योग्रो जज्ञ इति निष्केवल्यम्' (आश्व. श्रौ. ७·७) इति । महाव्रतेऽपि निष्केवल्य एतत्सूक्तम् । तथैव पञ्चमारण्यके सूत्रितम्—'उग्रो जज्ञे वीर्याय स्वधावानुदु ब्रह्माण्यैरत श्रवस्या' (ऐ. आ. ५. २. २.) इति । सौमिकचातुर्मास्येषु वैश्वदेवस्य स्थाने प्रथमं पृष्ठ्यमहः । तत्रापि[2] निष्केवल्य एतत्सूक्तं निविद्धानम् । सूत्रितं च—'जनिष्ठा उग्र उग्रो जज्ञ इति मध्यंदिनः[3]' (आश्व. श्रौ. ९·२) इति ॥

उग्रो जज्ञे वीर्याय स्वधावाञ्चक्रिरपो नर्यो यत्करिष्यन् ।
जग्मिर्युवा नृषदनमवोभिस्त्राता न इन्द्र एनसो महश्चित् ॥ १ ॥

उग्रः । जज्ञे । वीर्याय । स्वधाऽवान् । चक्रिः । अपः । नर्यः । यत् । करिष्यन् ।
जग्मिः । युवा । नृऽसदनम् । अवःऽभिः । त्राता । नः । इन्द्रः । एनसः । महः । चित् ॥ १ ॥

Vस्वधावान् बलवान् Vउग्रः ओजस्वी उद्गूर्णो वा Vइन्द्रः Vवीर्याय वीर्यं कर्तुं Vजज्ञे बभूव । Vनर्यः नरहितः सन् Vयत् कर्म Vकरिष्यन् भवति तत् Vअपः कर्म Vचक्रिः कर्तैव ॥ चक्रिः इति किन्प्रत्ययस्य लिड्वद्भावात् 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीप्रतिषेधः ॥ अपि च Vनृषदनं यज्ञगृहं Vयुवा नित्यतरुणः सन् Vअवोभिः रक्षणैः सार्धं Vजग्मिः गन्ता Vमहश्चित् महतोऽपि Vएनसः पापात् Vनः अस्माकं Vत्राता रक्षिता च भवेति[4] ॥

हन्ता वृत्रमिन्द्रः शूशुवानः प्रावीन्नु वीरो जरितारमूती ।
कर्ता सुदासे अह वा उ लोकं दाता वसु मुहुरा दाशुषे भूत् ॥ २ ॥

हन्ता । वृत्रम् । इन्द्रः । शूशुवानः । प्र । आवीत् । नु । वीरः । जरितारम् । ऊती ।
कर्ता । सुऽदासे । अह । वै । ऊँ इति । लोकम् । दाता । वसु । मुहुः । आ । दाशुषे । भूत् ॥ २ ॥

Vइन्द्रः Vशूशुवानः वर्धमानः सन् Vवृत्रम् असुरम् Vहन्ता भवति ॥ तृन्नन्तत्वादत्र षष्ठ्यभावः ॥ Vवीरः वीरः सन् Vजरितारं स्तोतारं Vनु क्षिप्रम् Vऊती ऊत्या रक्षया Vप्रावीत् प्रारक्षच्च । Vसुदासे राज्ञे Vलोकं जनपदं Vकर्ता च । यद्वा । सुदासे कल्याणदानाय यजमानाय लोकं कर्ता च भवति ॥ इहाप्युत्तरत्रापि तृन्नन्तत्वात् षष्ठ्यभावः ॥ Vअह Vवा Vउ इति त्रयः पूरणाः । Vदाशुषे यजमानाय Vवसु धनं Vमुहुः भूयो भूयः Vदाता च Vभूत् अभूत् । Vआ इति चार्थे ॥

युध्मो अनर्वा खजकृत्समद्वा शूरः सत्राषाड्जनुषेमषाळ्हः ।
व्यास इन्द्रः पृतनाः स्वोजा अधा विश्वं शत्रूयन्तं जघान ॥ ३ ॥

युध्मः । अनर्वा । खजऽकृत् । समत्ऽवा । शूरः । सत्राषाट् । जनुषा । ईम् । अषाळ्हः ।
वि । आसे । इन्द्रः । पृतनाः । सुऽओजाः । अध । विश्वम् । शत्रुऽयन्तम् । जघान ॥ ३ ॥

---

१. न-श—अथ पञ्चमस्य । २. ख-ज्ञ-न-भ-श—तत्र । ३. ख-ज्ञ-भ-श—माध्यंदिनः । ४. ज्ञ—भवति ।

युध्मः योद्धा अनर्वा अभिगन्तृरहितो युद्धेष्वपराङ्मुखो वा खजकृत् युद्धकृत्। 'खले खजे' इति युद्धनामसु पाठात्। समद्वा। समत् कलहः। तद्वान् शूरः शौर्योपेतः जनुषा जन्मना स्वभावत एव सत्राषाट् बहूनामभिभविता अषाळ्हः स्वयं च केनाप्यनभिभूतः स्वोजाः सुबलः ईम् अयम् इन्द्रः पृतनाः शत्रूणां सेनाः व्यासे विक्षिपति। अध अपि च शत्रूयन्तं शात्रवमाचरन्तं विश्वं सर्वं जघान हन्ति ॥

उभे चिदिन्द्र रोदसी महित्वा पप्राथ तविषीभिस्तुविष्मः ।
नि वज्रमिन्द्रो हरिवान्मिमिक्षन्त्समन्धसा मदेषु वा उवोच ॥ ४ ॥

उभे इति । चित् । इन्द्र । रोदसी इति । महिऽत्वा । आ । पप्राथ । तविषीभिः । तुविष्मः ।
नि । वज्रम् । इन्द्रः । हरिऽवान् । मिमिक्षन् । सम् । अन्धसा । मदेषु । वै । उवोच ॥४॥

हे तुविष्मः बहुधन इन्द्र महित्वा महत्त्वेन तविषीभिः बलैश्च उभे चित् उभे अपि रोदसी द्यावापृथिव्यौ आ पप्राथ आपूरितवानसि। अथ परोक्षस्तुतिः। हरिवान् अश्ववान् इन्द्रः वज्रं नि मिमिक्षन् शत्रुषु प्रापयन् मदेषु यज्ञेषु निवित्सु वा अन्धसा सोमेन सम् उवोच संसेव्यते संगच्छते वा ॥ 'उच समवाये' इति धातुः। वै इति पूरणः ॥

वृषा जजान वृषणं रणाय तमु चिन्नारी नर्यं ससूव ।
प्र यः सेनानीरध नृभ्यो अस्तीनः सत्वा गवेषणः स धृष्णुः ॥ ५ ॥

वृषा । जजान । वृषणम् । रणाय । तम् । ऊँ इति । चित् । नारी । नर्यम् । ससूव ।
प्र । यः । सेनाऽनीः । अध । नृऽभ्यः । अस्ति । इनः । सत्वा । गोऽएषणः । सः । धृष्णुः ॥५॥

वृषा सेक्ता पिता कश्यपः वृषणं कामानां वर्षितारमिन्द्रं रणाय युद्धार्थं जजान। 'जन जनने' इति धातुः। नर्यं नरहितं तमु तमेवेन्द्रं नारी चित् अदितिरपि ससूव सुषुवे। अध अपि च यः इन्द्रः नृभ्यः नृणां सेनानीः सेनानां नेता सन् प्र अस्ति प्रभवति सः इन्द्रः इनः सर्वस्य जगत ईश्वरो भवति। 'नियुत्वान् इनः' इति ईश्वरनामसु पाठात्। सत्वा शत्रूणां सादकश्च गवेषणः गवामन्वेष्टा च धृष्णुः शत्रूणां धर्षकश्च भवतीति शेषः ॥ ॥ १ ॥

नू चित्स भ्रेषते जनो न रेषन्मनो यो अस्य घोरमाविवासात् ।
यज्ञैर्य इन्द्रे दधते दुवांसि क्षयत्स राय ऋतपा ऋतेजाः ॥ ६ ॥

नु । चित् । सः । भ्रेषते । जनः । न । रेषत् । मनः । यः । अस्य । घोरम् । आऽविवासात् ।
यज्ञैः । यः । इन्द्रे । दधते । दुवांसि । क्षयत् । सः । राये । ऋतऽपाः । ऋतेऽजाः ॥६॥

यः जनः अस्य इन्द्रस्य घोरं शत्रूणां बाधकं मनः यज्ञैः आविवासात् परिचरति सः जनः। नु इति प्रतिषेधे वर्तते। चिदित्येवकारार्थे। नू चित् नैव भ्रेषते स्थानान्न भ्रश्यति। न रेषत् नैव क्षीयेत[1]। अपि च यः जनः दुवांसि परिचरणसाधनानि स्तोत्रशस्त्राणि इन्द्रे दधते निधत्ते तस्मै जनाय ऋतपाः यज्ञपाता ऋतेजाः यज्ञे जातश्च सः इन्द्रः राये धनाय क्षयत् निवसति। भवेदित्यर्थः ॥

1. ख-घ-त-भ-य-क्षीयते ।

यदिन्द्र पूर्वो अपराय शिक्षन्नयज्ज्यायान्कनीयसो देष्णम् ।
अमृत इत्पर्यासीत दूरमा चित्र चित्र्यं भरा रयिं नः ॥ ७ ॥

यत् । इन्द्र । पूर्वः । अपराय । शिक्षन् । अयत् । ज्यायान् । कनीयसः । देष्णम् ।
अमृतः । इत् । परि । आसीत । दूरम् । आ । चित्र । चित्र्यम् । भर । रयिम् । नः ॥७॥

हे चित्र चायनीय इन्द्र यत् धनं पूर्वः पिता ज्येष्ठो भ्राता वा अपराय पुत्राय कनीयसे वा शिक्षन् प्रयच्छन्। शिक्षतिर्दानकर्मा 'प्रीणाति शिक्षति' इति दानकर्मसु पाठात्। भवतीति शेषः। यच्च देष्णं देयं धनं ज्यायान् ज्येष्ठः कनीयसः अयत् प्राप्नुयात्। यच्चापि धनं पितृतो लब्ध्वा पुत्रः अमृत इत् अमृत एव सन् पितृगृहं विहाय दूरं पर्यासीत आस्ते तत्त्रिविधं चित्र्यं चायनीयं रयिं धनं नः अस्मभ्यम् आ भर आहर ॥

यस्त इन्द्र प्रियो जनो ददाशदसन्निरेके अद्रिवः सखा ते ।
वयं ते अस्यां सुमतौ चनिष्ठाः स्याम वरूथे अघ्नतो नृपीतौ ॥ ८ ॥

यः । ते । इन्द्र । प्रियः । जनः । ददाशत् । असत् । निरेके । अद्रिऽवः । सखा । ते ।
वयम् । ते । अस्याम् । सुऽमतौ । चनिष्ठाः । स्याम । वरूथे । अघ्नतः । नृऽपीतौ ॥८॥

हे इन्द्र यः ते तुभ्यं प्रियः सखा जनः ददाशत् हवींषि दद्यात् हे अद्रिवः सः सखा ते तव निरेके दाने असत् स्यात्। वयं च वसिष्ठाः अघ्नतः अहिंसतः ते तव अस्यां सुमतौ अनुग्रहबुद्धौ वर्तमानाः चनिष्ठाः स्तुतिमत्तरा अतिशयेनान्नवन्तो वा। चनोऽन्नम्। नृपीतौ नृणां रक्षके वरूथे गृहे वरणीये वा धने स्याम वसेम भवेम वा ॥

एष स्तोमो अचिक्रदद्वृषा त उत स्तामुर्मघवन्नक्रपिष्ट ।
रायस्कामो जरितारं त आगन्त्वमङ्ग शक्र वस्व आ शको नः ॥ ९ ॥

एषः । स्तोमः । अचिक्रदत् । वृषा । ते । उत । स्तामुः । मघऽवन् । अक्रपिष्ट ।
रायः । कामः । जरितारम् । ते । आ । अगन् । त्वम् । अङ्ग । शक्र । वस्वः । आ । शकः । नः ॥९॥

हे मघवन् धनवन्निन्द्र ते त्वदर्थं वृषा सेक्ता एषः स्तोमः सोमः सूयमानः[1] अचिक्रदत् क्रन्दति। उत अपि च स्तामुः स्तोता अक्रपिष्ट अस्तौत्। अपि च हे शक्र ते तव जरितारं स्तोतारं मां रायः धनस्य कामः अभिलाषः आगन् आगतः। अतः त्वं वस्वः धनम्। कर्मणि षष्ठी। नः अस्मभ्यम् अङ्ग क्षिप्रम् आ शकः धेहि ॥

स न इन्द्र त्वयताया इषे धास्त्मना च ये मघवानो जुनन्ति ।
वस्वी षु ते जरित्रे अस्तु शक्तिर्यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥

सः । नः । इन्द्र । त्वऽयतायै । इषे । धाः । त्मना । च । ये । मघऽवानः । जुनन्ति ।
वस्वी । सु । ते । जरित्रे । अस्तु । शक्तिः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥१०॥

---

१. ख-भ-श-स्तूयमानः ।

हे ^v^इन्द्र ^v^सः त्वं ^v^त्वयताया ^v^इषे त्वया दत्तमन्नं भोक्तुं ^v^नः अस्मान् ^v^धाः धारय। ^v^ये ^v^च ^v^मघवानः हविष्मन्तः ^v^त्मना स्वयमेव ^v^जुनन्ति हवींषि त्वां प्रति प्रेरयन्ति तानपि त्वयताया इषे धाः। अपि च वरूत्रीषु अत्यन्तं प्रशस्तासु स्तुतिषु ^v^ते तव ^v^जरित्रे स्तोत्रे मह्यं ^v^शक्तिः सामर्थ्यम् ^v^अस्तु। यद्वा। जरित्रे मह्यं ते तव वस्वी षु प्रशस्ता शक्तिर्दानमस्तु। स्पष्टमन्यत्॥ ॥ २ ॥

'असावि देवम्' इति दशर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम्। तथा चानुक्रान्तम्— 'असावि' इति। माध्यंदिनसवने मैत्रावरुणस्योन्नीयमानमिदं सूक्तम्[1]। 'असावि देवमिहोप याते-त्यनुसवनम्' (आश्व. श्रौ. ५.५) इति। इन्द्रस्य वृत्रघ्नः पशौ 'अभिक्रत्वा' इति वपाया अनु-वाक्या। सूत्रितं च—'अभि क्रत्वेन्द्र भूरध ज्मंस्त्वं महाँ इन्द्र तुभ्यं ह क्षाः' (आश्व. श्रौ. ३.८) इति॥

असावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच।
बोधामसि त्वा हर्यश्व यज्ञैर्बोधा नः स्तोममन्धसो मदेषु॥ १ ॥

असावि। देवम्। गोऽऋजीकम्। अन्धः। नि। अस्मिन्। इन्द्रः। जनुषा। ईम्। उवोच।
बोधामसि। त्वा। हरिऽअश्व। यज्ञैः। बोध। नः। स्तोमम्। अन्धसः। मदेषु॥ १ ॥

^v^देवं दीप्तं ^v^गोऋजीकं गोभिः संस्कृतम्। गव्येन मिश्रितमित्यर्थः। ^v^अन्धः सोमरूपमन्नम् ^v^असावि अभिषुतम्। ^v^ईम् अयम् ^v^इन्द्रः ^v^अस्मिन् अभिषुते सोमरूपेऽन्धसि ^v^जनुषा स्वभावत एव ^v^नि ^v^उवोच नितरां संगतो भवति। अथ प्रत्यक्षस्तुतिः। हे ^v^हर्यश्व ^v^त्वा त्वां ^v^यज्ञैः स्तोत्रै-र्हविर्भिर्वा ^v^बोधामसि बोधयामः। ^v^अन्धसः सोमस्य ^v^मदेषु ^v^नः अस्माकं ^v^स्तोमं स्तोत्रं ^v^बोध बुध्यस्व च॥

प्र यन्ति यज्ञं विपयन्ति बर्हिः सोममादो विदथे दुध्रवाचः।
न्यु भ्रियन्ते यशसो गृभादा दूरउपब्दो वृषणो नृषाचः॥ २ ॥

प्र। यन्ति। यज्ञम्। विपयन्ति। बर्हिः। सोमऽमादः। विदथे। दुध्रऽवाचः।
नि। ऊँ इति। भ्रियन्ते। यशसः। गृभात्। आ। दूरेऽउपब्दः। वृषणः। नृऽसाचः॥२॥

^v^यज्ञं ^v^प्र ^v^यन्ति यष्टारः ^v^बर्हिः च ^v^विपयन्ति स्तृणन्ति। विपिः स्तरणकर्मा। ^v^विदथे यज्ञे ^v^सोममादः ग्रावाणश्च ^v^दुध्रवाचः दुर्धरवाचः भवन्ति। अपि च ^v^यशसः यशस्विनः ^v^दूरउपब्दः। दूर उपब्दिः शब्दो येषां ते दूरउपब्दः। ^v^नृषाचः। नृभिर्नृत्विजः सचन्त इति नृषाचः। ^v^वृषणः ग्रावाणः ^v^गृभात् गृहात्। गृहमध्यमग्रावा[2]। तस्मात्। ^v^आ इति चार्थे। ^v^नि ^v^भ्रियन्ते अभि-षववेलायां निगृह्यन्ते। ^v^उ इति पूरणः॥

त्वमिन्द्र स्रवितवा अपस्कः परिष्ठिता अहिना शूर पूर्वीः।
त्वद्वावक्रे रथ्यो३ न धेना रेजन्ते विश्वा कृत्रिमाणि भीषा॥ ३ ॥

त्वम्। इन्द्र। स्रवितवै। अपः। करिति कः। परिऽस्थिताः। अहिना। शूर। पूर्वीः।
त्वत्। वावक्रे। रथ्यः। न। धेनाः। रेजन्ते। विश्वा। कृत्रिमाणि। भीषा॥ ३ ॥

---

१. ङ—सूक्तम्। सूत्रितं च। २. ङ—ग्रहं मध्यमग्रावा; श—गृहमध्यमग्रामा वा।

हे शूर इन्द्र त्वम् अहिना वृत्रेण परिष्ठिताः आक्रान्ताः पूर्वीः बह्वीः अपः उदकानि स्रवितवै स्रवितुं कः अकार्षीः । धेनाः नद्यश्च त्वत् त्वत्तो हेतोः रथ्यो न रथिन इव वावक्रे निर्गच्छन्ति । ‘ वकि कौटिल्ये ’ इति धातुः । विश्वा विश्वानि कृत्रिमाणि भुवनानि च भीषा त्वत्तो भीत्या रेजन्ते कम्पन्ते ॥

भीमो विवेषायुधेभिरेषामपांसि विश्वा नर्याणि विद्वान् ।
इन्द्रः पुरो जर्हृषाणो वि दूधोद्वि वज्रहस्तो महिना जघान ॥ ४ ॥

भीमः । विवेष । आयुधेभिः । एषाम् । अपांसि । विश्वा । नर्याणि । विद्वान् ।
इन्द्रः । पुरः । जर्हृषाणः । वि । दूधोत् । वि । वज्रऽहस्तः । महिना । जघान ॥ ४ ॥

इन्द्रः नर्याणि नरहितानि विश्वा विश्वानि अपांसि कर्माणि विद्वान् जानन् आयुधेभिः आयुधैः भीमः भयंकरः सन् एषाम् । कर्मणि षष्ठी । एतानसुरान् विवेष व्याप्तवान् । पुरः च तेषां वि दूधोत् अकम्पयत् । अपि च जर्हृषाणः हृष्यन् महिना महिम्ना युक्तः वज्रहस्तः सन् तान् वि जघान ॥

न यातव इन्द्र जूजुवुर्नो न वन्दना शविष्ठ वेद्याभिः ।
स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः ॥ ५ ॥

न । यातवः । इन्द्र । जूजुवुः । नः । न । वन्दना । शविष्ठ । वेद्याभिः ।
सः । शर्धत् । अर्यः । विषुणस्य । जन्तोः । मा । शिश्नऽदेवाः । अपि । गुः । ऋतम् । नः ॥ ५ ॥

हे इन्द्र यातवः राक्षसाः नः अस्मान् न जूजुवुः न हिंस्युः । जूजुवुरिति हिंसाक्रियः पृथक्करणक्रियो वा । अपि च हे शविष्ठ बलवत्तमेन्द्र वन्दना वन्दनानि रक्षांसि वेद्याभिः वेद्याभ्यः प्रजाभ्यो नोऽस्मान् न जूजुवुः न पृथक्कुर्वन्तु । किंच अर्यः स्वामी सः इन्द्रः विषुणस्य विषमस्य जन्तोः प्राणिनः शासने शर्धत् उत्सहेत । अथ च शिश्नदेवाः । शिश्नेन दीव्यन्ति क्रीडन्त इति शिश्नदेवाः । अब्रह्मचर्या इत्यर्थः । नः अस्माकम् ऋतं यज्ञं सत्यं वा मा अपि गुः मा अपिगमन् । तथा च यास्कः—‘ स उत्सहतां यो विषुणस्य जन्तोर्विषमस्य मा शिश्नदेवा अब्रह्मचर्याः । शिश्नं श्नथतेः । अपि गुर्ऋतं नः सत्यं वा यज्ञं वा ’ ( निरु. ४. १९ ) इति ॥ ॥ ३ ॥

अभि क्रत्वेन्द्र भूरध ज्मन्न ते विव्यङ्महिमानं रजांसि ।
स्वेना हि वृत्रं शवसा जघन्थ न शत्रुरन्तं विविदद्युधा ते ॥ ६ ॥

अभि । क्रत्वा । इन्द्र । भूः । अध । ज्मन् । न । ते । विव्यक् । महिमानम् । रजांसि ।
स्वेन । हि । वृत्रम् । शवसा । जघन्थ । न । शत्रुः । अन्तम् । विविदत् । युधा । ते ॥ ६ ॥

हे इन्द्र त्वं क्रत्वा कर्मणा ज्मन् पृथिव्यां[1] वर्तमानान् जन्तून् वा अभि भूः अभ्यभूः । अध अपि च ते तव महिमानं रजांसि सर्वे[2] लोकाः[2] न विव्यक् । व्यचिर्व्याप्तिकर्मा ।

१. ख-न-भ-श–पृथिवीं पृथिव्याम् । २. ख-श–सर्वलोकाः; घ–लोकाः; झ–सर्वे लोके ।

न व्याप्नुवन्नित्यर्थः । vस्वेन vहि आत्मीयेन च vशवसा बलेन vवृत्रं vजघन्थ त्वमवधीः । vशत्रुः च vयुधा युद्धेन vते तव vअन्तं हिंसां vन vविविदन् न लब्धवान् ॥

देवाश्चित्ते असुर्याय पूर्वेऽनु क्षत्राय ममिरे सहांसि ।
इन्द्रो मघानि दयते विषह्येन्द्रं वाजस्य जोहुवन्त सातौ ॥ ७ ॥

देवाः । चित् । ते । असुर्याय । पूर्वे । अनु । क्षत्राय । ममिरे । सहांसि ।
इन्द्रः । मघानि । दयते । विऽसह्य । इन्द्रम् । वाजस्य । जोहुवन्त । सातौ ॥ ७ ॥

vपूर्वे vदेवाश्चित् असुरा अपि vअसुर्याय बलाय vक्षत्राय । क्षदिर्हिंसाकर्मा । बलं हिंसां चोभे कर्तुमित्यर्थः । हे इन्द्र vते तव vसहांसि बलानि vअनु vममिरे ॥ 'हीने' (पा. सू. १.४.८६) इत्यनुः कर्मप्रवचनीयः ॥ तव बलेभ्यो हीना ममिर इत्यर्थः । तथा च निगमान्तरम्—'अनु ते द्यौर्बृहती वीर्यं ममे' (ऋ. सं. १.५७.५) इति । अथ परोक्षस्तुतिः । vइन्द्रः शत्रून् vविषह्य vमघानि मंहनीयानि धनानि vदयते भक्तेभ्यः प्रयच्छति । अपि च vइन्द्रं vवाजस्य अन्नस्य vसातौ लाभार्थं vजोहुवन्त स्तुवन्ति स्तोतार आह्वयन्ति वा ॥

कीरिश्चिद्धि त्वामवसे जुहावेशानमिन्द्र सौभगस्य भूरेः ।
अवो बभूथ शतमूते अस्मे अभिक्षत्तुस्त्वावतो वरूता ॥ ८ ॥

कीरिः । चित् । हि । त्वाम् । अवसे । जुहाव । ईशानम् । इन्द्र । सौभगस्य । भूरेः ।
अवः । बभूथ । शतम्ऽऊते । अस्मे इति । अभिऽक्षत्तुः । त्वाऽवतः । वरूता ॥ ८ ॥

हे vइन्द्र vईशानं vत्वां vकीरिः स्तोता । 'कारुः कीरिः' इति स्तोतृनामसु पाठात् । वसिष्ठः vअवसे रक्षणाय vजुहाव vहि स्तौति हि ह्वयति वा । vचित् इति पूरणः । अपि च हे vशतमूते बहुरक्षेन्द्र vअस्मे अस्माकं vभूरेः प्रभूतस्य vसौभगस्य धनस्य vअवः रक्षा[1] vबभूथ बभूविथ । vअभिक्षत्तुः अभिहिंसकस्य vत्वावतः त्वत्सदृशस्य vवरूता वारयिता च भव ॥

सखायस्त इन्द्र विश्वह स्याम नमोवृधासो महिना तरुत्र ।
वन्वन्तु स्मा तेऽवसा समीके३भीतिमर्यो वनुषां शवांसि ॥ ९ ॥

सखायः । ते । इन्द्र । विश्वह । स्याम । नमःऽवृधासः । महिना । तरुत्र ।
वन्वन्तु । स्म । ते । अवसा । सम्ऽईके । अभिऽईतिम् । अर्यः । वनुषाम् । शवांसि ॥ ९ ॥

हे vइन्द्र vते तव vनमोवृधासः नमसा स्तुत्या हविषा वा वर्धयितारो वयं vविश्वह सर्वदा vसखायः vस्याम भवेम । vमहिना महिम्ना vतरुत्र अत्यन्तं तारकेन्द्र vते तव vअवसा रक्षणेन vसमीके संग्रामे vअर्यः vअभीतिम् अभिगमनं vवनुषां हिंसकानां vशवांसि बलानि च vवन्वन्तु स्तोतारो हिंसन्तु ॥

---

१ त–रक्षकः ।

स न इन्द्र त्वयताया इषे धास्त्मना च ये मघवानो जुनन्ति ।
वस्वी षु ते जरित्रे अस्तु शक्तिर्यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥

सः । नः । इन्द्र । त्वऽयताये । इषे । धाः । त्मना । च । ये । मघऽवानः । जुनन्ति ।
वस्वी । सु । ते । जरित्रे । अस्तु । शक्तिः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ १० ॥

इयमृग्व्याख्यातचरा ॥ ॥ ४ ॥

'पिबा सोममिन्द्र मन्दतु त्वा' इति नवर्चं पञ्चमं सूक्तम् । अनुक्रम्यते च—'पिब नव वैराजमृतेऽन्त्याम्' इति । वसिष्ठ ऋषिः । आदितोऽष्टौ विराजो नवमी त्रिष्टुप् । इन्द्रो देवता । दशरात्रे चतुर्थेऽहनि निष्केवल्यशस्त्रे 'पिबा सोममिन्द्र' इति षट् स्तोत्रियानुरूपौ । सूत्रितं च—'वैराजं चेत्पृष्ठं पिबा सोममिन्द्र मन्दतु त्वेति षट् स्तोत्रियानुरूपौ' (आश्व. श्रौ. ७. ११) इति । महाव्रतेऽपि निष्केवल्य आद्याः षडृचः । सूत्रितं च—'पिबा सोममिन्द्र मन्दतु त्वेति षट्' (ऐ. आ. ५. ३. १) इति । आद्या निष्केवल्यशस्त्रयाज्या । सूत्रितं च—'पिबा सोममिन्द्र मन्दतु त्वेति याज्या' (आश्व. श्रौ. ५. १५) इति । चतुर्थेऽहनि माध्यंदिनसवने होत्रकशस्त्रेषु सप्त विराजस्त्रीं-स्तृचान् कृत्वैकैकस्तृचः शंसनीयः । तत्र 'न ते गिरः' इत्याद्याश्चतस्र ऋचः । सूत्रितं च—'न ते गिरो अपि मृष्ये तुरस्य प्र वो महे महिवृधे भरध्वम्' (आश्व. श्रौ. ७. ११) इति ॥

पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः ।
सोतुर्बाहुभ्यां सुयतो नार्वा ॥ १ ॥

पिब । सोमम् । इन्द्र । मन्दतु । त्वा । यम् । ते । सुसाव । हरिऽअश्व । अद्रिः ।
सोतुः । बाहुऽभ्याम् । सुऽयतः । न । अर्वा ॥ १ ॥

हे इन्द्र सोमं पिब । स सोमः त्वा त्वां मन्दतु मादयतु । हे हर्यश्व ते त्वदर्थं सोतुः अभिषवकर्तुः बाहुभ्याम् अर्वा न रश्मिभ्यामश्व इव सुयतः सुष्ठु परिगृहीतः अद्रिः ग्रावा यं सोमं सुषाव ॥

यस्ते मदो युज्यश्चारुरस्ति येन वृत्राणि हर्यश्व हंसि ।
स त्वामिन्द्र प्रभूवसो ममत्तु ॥ २ ॥

यः । ते । मदः । युज्यः । चारुः । अस्ति । येन । वृत्राणि । हरिऽअश्व । हंसि ।
सः । त्वाम् । इन्द्र । प्रभुवसो इति प्रभुऽवसो । ममत्तु ॥ २ ॥

हे हर्यश्व ते तव यः[1] युज्यः अनुगुणः चारुः समीचीनः मदः मदकरः सोमः अस्ति विद्यते येन च पीतेन सोमेन वृत्राणि हंसि हे प्रभूवसो प्रभूतधन इन्द्र त्वां सः सोमः ममत्तु मादयतु ॥

बोधा सु मे मघवन्वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम् ।
इमा ब्रह्म सधमादे जुषस्व ॥ ३ ॥

१ ख-त-न-भ-श-'यः' नास्ति ।

बोध । सु । मे । मघऽवन् । वाचम् । आ । इमाम् । याम् । ते । वसिष्ठः । अर्चति । प्रऽशस्तिम् ।
इमा । ब्रह्म । सधऽमादे । जुषस्व ॥ ३ ॥

हे मघवन् धनवन्निन्द्र ते तव प्रशस्तिं स्तुतिरूपां यां वाचं वसिष्ठः अर्चति वदति ताम् इमां मे वसिष्ठस्य संबन्धिनीं वाचं सु आ बोध सुष्ठु अभिबुध्यस्व । किंच इमा इमानि ब्रह्म ब्रह्माणि सधमादे यज्ञे जुषस्व सेवस्व ॥

श्रुधी हवं विपिपानस्याद्रेर्बोधा विप्रस्यार्चतो मनीषाम् ।
कृष्वा दुवांस्यन्तमा सचेमा ॥ ४ ॥

श्रुधि । हवम् । विऽपिपानस्य । अद्रेः । बोध । विप्रस्य । अर्चतः । मनीषाम् ।
कृष्व । दुवांसि । अन्तमा । सचा । इमा ॥ ४ ॥

हे इन्द्र विपिपानस्य विपीतवतो विपिबतो वा मम अद्रेः ग्राव्णः हवम् आह्वानं श्रुधि शृणु । तथा च निगमान्तरं—'ग्रावभ्यो वाचं वदता वदद्भ्यः' (ऋ. सं. १०. ९४. १) इति । विप्रस्य प्राज्ञस्य वसिष्ठस्य अर्चतः स्तुवतः मनीषां स्तुतिं बोध बुध्यस्व च । इमा इमानि क्रियमाणानि दुवांसि परिचरणानि अन्तमा अन्तिकतमानि बुद्धिस्थानि सचा सह सहायभूतः सन् वा कृष्व कुरु च ॥

न ते गिरो अपि मृष्ये तुरस्य न सुष्टुतिमसुर्यस्य विद्वान् ।
सदा ते नाम स्वयशो विवक्मि ॥ ५ ॥

न । ते । गिरः । अपि । मृष्ये । तुरस्य । न । सुऽस्तुतिम् । असुर्यस्य । विद्वान् ।
सदा । ते । नाम । स्वऽयशः । विवक्मि ॥ ५ ॥

हे इन्द्र तुरस्य शत्रूणां हिंसकस्य ते तव गिरः स्तुतीः असुर्यस्य । द्वितीयार्थे षष्ठी । त्वदीयमसुर्यं बलं विद्वान् जानन्नहं न अपि मृष्ये । मृषिर्मार्जनकर्मा । न मार्जयामि । न परित्यजामीत्यर्थः । सुष्टुतिं शोभनां स्तुतिं च न अपि मृष्ये । मृषेर्मार्जनकर्मत्वमन्यत्रापि दृश्यते । तथथा—'मा नो अग्ने सख्या पित्र्याणि प्र मर्षिष्ठाः' (ऋ. सं. १. ७१. १०) इति । किंतु स्वयशः असाधारणयशः ते तव नाम स्तोत्रं सदैव विवक्मि ब्रवीमि ॥ ॥ ५ ॥

भूरि हि ते सवना मानुषेषु भूरि मनीषी हवते त्वामित् ।
मारे अस्मन्मघवञ्ज्योक्कः ॥ ६ ॥

भूरि । हि । ते । सवना । मानुषेषु । भूरि । मनीषी । हवते । त्वाम् । इत् ।
मा । आरे । अस्मत् । मघऽवन् । ज्योक् । करिति कः ॥ ६ ॥

हे मघवन् ते तव सवना सवनानि सोमाभिषवणानि भूरि भूरीणि मानुषेषु अस्मासु वर्तन्त इति शेषः । मनीषी स्तोता त्वामित् त्वामेव भूरि हवते नितरां ह्वयति स्तौति । अतः अस्मत् अस्मत्तः आरे दूरे ज्योक् चिरकालं मा कः आत्मानं मा कार्षीः । क्षिप्रमात्मानमस्मदासन्नं कुर्वित्यर्थः ॥

**तुभ्येदिमा सर्वना शूर विश्वा तुभ्यं ब्रह्माणि वर्धना कृणोमि ।**
**त्वं नृभिर्हव्यो विश्वधासि ॥ ७ ॥**

तुभ्यं । इत् । इमा । सर्वना । शूर । विश्वा । तुभ्यम् । ब्रह्माणि । वर्धना । कृणोमि ।
त्वम् । नृऽभिः । हव्यः । विश्वधा । असि ॥ ७ ॥

हे शूर तुभ्येत् तुभ्यमेव इमा इमानि विश्वा विश्वानि सवना सोमाभिषवणानि मया क्रियन्त इति शेषः । तुभ्यं त्वदर्थमेव वर्धना वर्धनानि ब्रह्माणि स्तोत्राणि कृणोमि करोमि । त्वम् एव नृभिः यज्ञानां नेतृभिः विश्वधा सर्वप्रकारैः हव्यः ह्वातव्यः स्तुत्यो वा असि ॥

**नू चिन्नु ते मन्यमानस्य दस्मोदश्नुवन्ति महिमानमुग्र ।**
**न वीर्यमिन्द्र ते न राधः ॥ ८ ॥**

नु । चित् । नु । ते । मन्यमानस्य । दस्म । उत् । अश्नुवन्ति । महिमानम् । उग्र ।
न । वीर्यम् । इन्द्र । ते । न । राधः ॥ ८ ॥

हे दस्म दर्शनीय मन्यमानस्य स्तूयमानस्य ते तव महिमानम् । नू चिदिति प्रतिषेधार्थः । नु क्षिप्रं नू चित् उदश्नुवन्ति केचन न प्राप्नुवन्ति । हे उग्र उद्गूर्ण ते तव राधः धनं न उदश्नुवन्ति ॥

**ये च पूर्व ऋषयो ये च नूत्ना इन्द्र ब्रह्माणि जनयन्त विप्राः ।**
**अस्मे ते सन्तु सख्या शिवानि यूयं पात स्वस्तिभिः सदा नः ॥ ९ ॥**

ये । च । पूर्वे । ऋषयः । ये । च । नूत्नाः । इन्द्र । ब्रह्माणि । जनयन्त । विप्राः ।
अस्मे इति । ते । सन्तु । सख्या । शिवानि । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥९॥

ये च पूर्वे प्राक्तनाः ऋषयः ये च नूत्नाः नूतनाः विप्राः मेधाविन ऋषयः ब्रह्माणि स्तोत्राणि जनयन्त अजनयन्त तेष्विव अस्मे अस्मास्वपि हे इन्द्र ते तव सख्या सख्यानि शिवानि भद्राणि सन्तु । स्पष्टमन्यत् ॥ ॥ ६ ॥

'उदु ब्रह्माणि' इति षड्चं षष्ठं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम् । अनुक्रम्यते च— 'उदु षट्' इति । अग्निष्टोमे माध्यंदिने सवने ब्राह्मणाच्छंसिशस्त्र एतत्सूक्तम् । सूत्रितं च— 'उदु ब्रह्माण्यृजीषी वज्री वृषभस्तुराषाळिति याज्या' (आश्व. श्रौ. ५. १६) इति । चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्र एतदहरहःशस्यसंज्ञकं सूक्तम् । सूत्रितं च— 'उदु ब्रह्माण्यभि तष्टेवेतीतरावहरहःशस्ये' (आश्व. श्रौ. ७. ४) इति । अहर्गणेषु द्वितीयादिष्वहःसु एतदेव सूक्तम् । महाव्रतेऽपि निष्केवल्य एतत्सूक्तम् । सूत्रितं च— 'उदु ब्रह्माण्यैरत श्रवस्या ते मह इन्द्रोत्युग्रेति पञ्च सूक्तानि' (ऐ. आ. ५. २. २) इति ॥

**उदु ब्रह्माण्यैरत श्रवस्येन्द्रं समर्ये महया वसिष्ठ ।**
**आ यो विश्वानि शवसा ततानोपश्रोता म ईवतो वचांसि ॥ १ ॥**

उत् । ऊँ इति । ब्रह्माणि । ऐरत । श्रवस्या । इन्द्रम् । सऽमर्ये । महय । वसिष्ठ ।
आ । यः । विश्वानि । शवसा । ततान । उपऽश्रोता । मे । ईवतः । वचांसि ॥ १ ॥

^v^श्रवस्या अन्नेच्छया ^v^ब्रह्माणि स्तोत्राणि हवींषि च इन्द्रार्थम् ^v^उत् ^v^ऐरत[1] सर्वे ऋषय इति शेषः। ^v^उ इति पूरणः। हे ^v^वसिष्ठ त्वमपि ^v^समर्ये यज्ञे ^v^इन्द्रं ^v^महय स्तोत्रेण हविषा च पूजय। अपि च ^v^यः इन्द्रः ^v^विश्वानि भुवनानि ^v^शवसा बलेन ^v^आ ^v^ततान सः[2] ^v^ईवतः उपगमनवतः ^v^मे मम ^v^वचांसि स्तुतिरूपाणि वाक्यानि ^v^उपश्रोता भवतु ॥

**अया॑मि॒ घोष॑ इन्द्र दे॒वजा॑मिरिर॒ज्यन्त॒ यच्छु॒रुधो॒ विवा॑चि ।**
**न॒हि स्वमायु॑श्चिकि॒ते जने॑षु॒ तानीदंहां॒स्यति॑ पर्ष्य॒स्मान् ॥ २ ॥**

अया॑मि । घोषः॑ । इन्द्र॒ । दे॒वऽजा॑मिः । इ॒र॒ज्यन्त॑ । यत् । शु॒रुधः॑ । विऽवा॑चि ।
न॒हि । स्वम् । आयुः॑ । चि॒कि॒ते । जने॑षु । तानि॑ । इत् । अंहां॑सि । अति॑ । प॒र्षि॒ । अ॒स्मान् ॥२॥

^v^यत् यदा ^v^शुरुधः। शुचं रुन्धन्तीति शुरुध ओषध्यः। ^v^इरज्यन्त वर्धन्ते तदा हे ^v^इन्द्र त्वदर्थं ^v^विवाचि स्तोतरि ^v^देवजामिः देवानां बन्धुः ^v^घोषः। स्तुतिरूपः शब्दो घोषः। ^v^अयामि अकारि। अपि च ^v^जनेषु मध्ये केनापि ^v^स्वमायुः स्वजीवितं[3] ^v^नहि ^v^चिकिते न ज्ञायते। यैः ^v^आयुः क्षीयते ^v^तानीत् तानि सर्वाण्येव ^v^अंहांसि पापानि ^v^अस्मान् ^v^अति ^v^पर्षि अतिपारय ॥

**यु॒जे रथं॑ ग॒वेष॑णं॒ हरि॑भ्या॒मुप॒ ब्रह्मा॑णि जुजुषा॒णम॑स्थुः ।**
**वि बा॑धिष्ट॒ स्य रोद॑सी महि॒त्वेन्द्रो॑ वृ॒त्राण्य॑प्र॒ती ज॑घ॒न्वान् ॥ ३ ॥**

यु॒जे । रथ॑म् । गो॒ऽएष॑णम् । हरि॑ऽभ्याम् । उप॑ । ब्रह्मा॑णि । जु॒जु॒षा॒णम् । अ॒स्थुः॒ ।
वि । बा॒धि॒ष्ट॒ । स्यः । रोद॑सी॒ इति॑ । म॒हि॒ऽत्वा । इन्द्रः॑ । वृ॒त्राणि॑ । अ॒प्र॒ति । ज॒घ॒न्वान् ॥३॥

^v^गवेषणं गवां प्रापकमिन्द्रस्य ^v^रथं ^v^हरिभ्याम् इन्द्रवाहाभ्यां ^v^युजे स्तोत्रैरहं युनज्मि। ^v^ब्रह्माणि स्तोत्राणि ^v^जुजुषाणं परिवारैः सेव्यमानमिन्द्रम्[4] ^v^उप ^v^अस्थुः उपातिष्ठन्त। ^v^स्यः सोऽयमिन्द्रः ^v^महित्वा महत्त्वेन ^v^रोदसी द्यावापृथिव्यौ ^v^वि ^v^बाधिष्ट व्यबाधिष्ट च। अपि च ^v^इन्द्रः ^v^वृत्राणि शत्रून् अप्रतिद्वन्द्वानि[5] ^v^जघन्वान् हतवान् ॥

**आप॑श्चित्पिप्युः स्त॒र्यो॒३॒॑ न गावो॒ नक्ष॑न्नृ॒तं ज॑रि॒तार॑स्त इन्द्र ।**
**या॒हि वा॒युर्न नि॒युतो॑ नो॒ अच्छा॒ त्वं हि धी॒भिर्दय॑से॒ वि वाजा॑न् ॥ ४ ॥**

आपः॑ । चि॒त् । पि॒प्यु॒ः । स्त॒र्यः॑ । न । गावः॑ । नक्ष॑न् । ऋ॒तम् । ज॒रि॒तारः॑। ते॒ । इन्द्र॒ ।
या॒हि । वा॒युः । न । नि॒ऽयुतः॑ । नः॒ । अच्छ॑ । त्वम् । हि । धी॒भिः । दय॑से । वि । वाजा॑न् ॥४॥

हे ^v^इन्द्र त्वत्प्रसादात् ^v^आपश्चित् आपः ^v^स्तर्यो ^v^न ^v^गावः स्तर्यो वशा गाव इव ^v^पिप्युः वर्धन्ताम्। अप्रसूता गावो मांसला भवन्ति हि। ^v^ते तव ^v^जरितारः स्तोतारश्च ^v^ऋतम् उदकं ^v^नक्षन् व्याप्नुवन्। अपि च त्वं ^v^नः अस्मान् ^v^नियुतः ^v^वायुर्न वायुरिव ^v^अच्छ ^v^याहि अभियाहि। ^v^त्वं ^v^हि ^v^धीभिः प्रज्ञाभिः कर्मभिर्वा ^v^वाजान् अन्नानि ^v^वि ^v^दयसे स्तोतृभ्यः प्रयच्छसि ॥

---

१. ज्ञ–ऐरत प्रेरितवन्तः। २. त–व्याप्तवान्। ३. त-न-भ-श–स्वं जीवितम्। ४. ख-भ–सेव्यमिन्द्रम्। ५. ख–अप्रतिद्वन्द्विनो; ज्ञ–प्रतिद्वन्द्वानि; न-भ–इति द्वन्द्वानि।

ते त्वा मदा इन्द्र मादयन्तु शुष्मिणं तुविराधसं जरित्रे ।
एको देवत्रा दयसे हि मर्तानस्मिञ्छूर सवने मादयस्व ॥ ५ ॥

ते । त्वा । मदाः । इन्द्र । मादयन्तु । शुष्मिणम् । तुविऽराधसम् । जरित्रे ।
एकः । देवऽत्रा । दयसे । हि । मर्तान् । अस्मिन् । शूर । सवने । मादयस्व ॥ ५ ॥

हे इन्द्र त्वा त्वां ते एते मदाः मदकराः सोमाः मादयन्तु । अपि च जरित्रे स्तोत्रे शुष्मिणं बलवन्तं तुविराधसं बहुधनं पुत्रं प्रयच्छतीति शेषः । हे शूर त्वं देवत्रा देवेषु एकः एव मर्तान् मनुष्यान् दयसे हि । दयतिरनुकम्पार्थः । अस्मिन् सवने यज्ञे मादयस्व ॥

एवेदिन्द्रं वृषणं वज्रबाहुं वसिष्ठासो अभ्यर्चन्त्यर्कैः ।
स नः स्तुतो वीरवद्धातु गोमद्यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

एव । इत् । इन्द्रम् । वृषणम् । वज्रऽबाहुम् । वसिष्ठासः । अभि । अर्चन्ति । अर्कैः ।
सः । नः । स्तुतः । वीरऽवत् । धातु । गोऽमत् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥६॥

वसिष्ठासः वसिष्ठाः वज्रबाहुं वज्रकल्पबाहुं वृषणं कामानां वर्षितारम् इन्द्रम् एवेत् उक्तेन प्रकारेणैव अर्कैः अर्चनीयैः स्तोत्रैः अभ्यर्चन्ति अभिपूजयन्ति । स्तुतः सः इन्द्रः नः अस्मभ्यं वीरवत् पुत्रादियुक्तं गोमत् गोयुक्तं[1] च धनं धातु ददातु । स्पष्टमन्यत् ॥ ॥ ७ ॥

' योनिष्ट इन्द्र सदने अकारि ' इति षडृचं सप्तमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम् । अनुक्रम्यते च—' योनिः ' इति । महाव्रते निष्केवल्य एतत्सूक्तम् । सूत्रितं च—' योनिष्ट इन्द्र सदने अकारीत्येतस्य चतस्रः शस्त्वोत्तमामुपसंतत्योपोत्तमया परिदधाति ' ( ऐ. आ. ५. ३. १ ) इति ॥

योनिष्ट इन्द्र सदने अकारि तमा नृभिः पुरुहूत प्र याहि ।
असो यथा नोऽविता वृधे च ददो वसूनि ममदश्च सोमैः ॥ १ ॥

योनिः । ते । इन्द्र । सदने । अकारि । तम् । आ । नृऽभिः । पुरुऽहूत । प्र । याहि ।
असः । यथा । नः । अविता । वृधे । च । ददः । वसूनि । ममदः । च । सोमैः ॥ १ ॥

हे इन्द्र ते तव सदने सदनार्थं योनिः स्थानम् अकारि । हे पुरुहूत नृभिः मरुद्भिः सार्धं तं योनिम् आ प्र याहि । नः अस्माकं यथा अविता रक्षिता असः भवसि नोऽस्माकं वृधे वर्धनाय च असः । तथा च वसूनि ददः अस्मभ्यं देहि । सोमैः अस्मदीयैः ममदः मादयस्व च ॥

गृभीतं ते मन इन्द्र द्विबर्हाः सुतः सोमः परिषिक्ता मधूनि ।
विसृष्टधेना भरते सुवृक्तिरियमिन्द्रं जोहुवती मनीषा ॥ २ ॥

---

१. ख-न-भ-श—गोयुतम्; त—गोयुतं कम् ।

गृभीतम् । ते । मनः । इन्द्र । द्विऽबर्हाः । सुतः । सोमः । परिऽसिक्ता । मधूनि ।
विसृष्टऽधेना । भरते । सुऽवृक्तिः । इयम् । इन्द्रम् । जोहुवती । मनीषा ॥ २ ॥

हे इन्द्र द्विबर्हाः । षष्ठ्यर्थे प्रथमा । द्विबर्हसो द्वयोः स्थानयोः[1] परिवृढस्य ते तव मनः गृभीतम् अस्माभिः परिगृहीतम् । सोमः च सुतः अभिषुतः । मधूनि च परिषिक्ता पात्रेषु परिषिक्तानि । विसृष्टधेना विसृष्टजिह्वा मध्यमस्वरेणोच्चार्यमाणा सुवृक्तिः सुसमाप्तिः इयं मनीषा स्तुतिः इन्द्रं जोहुवती भृशमाह्वयन्ती भरते संभ्रियते च ॥

आ नो दिव आ पृथिव्या ऋजीषिन्निदं बर्हिः सोमपेयाय याहि ।
वहन्तु त्वा हरयो मद्र्यञ्चमाङ्गूषमच्छा तवसं मदाय ॥ ३ ॥

आ । नः । दिवः । आ । पृथिव्याः । ऋजीषिन् । इदम् । बर्हिः । सोमऽपेयाय । याहि ।
वहन्तु । त्वा । हरयः । मद्र्यञ्चम् । आङ्गूषम् । अच्छ । तवसम् । मदाय ॥ ३ ॥

हे ऋजीषिन् इन्द्र नः अस्माकम् इदं बर्हिः इमं यज्ञं सोमपेयाय दिवः स्वर्गात् आ याहि आगच्छ । पृथिव्याः अन्तरिक्षाच्च । 'आपः पृथिवी' इत्यन्तरिक्षनामसु पाठात् । आ याहि । अपि च तवसं प्रवृद्धं बलवन्तं वा मद्र्यञ्चं मदभिमुखं त्वा त्वाम् आङ्गूषं स्तोत्रम् अच्छ अभि मदाय मदार्थं हरयः अश्वाः वहन्तु ॥

आ नो विश्वाभिरूतिभिः सजोषा ब्रह्म जुषाणो हर्यश्व याहि ।
वरीवृजत्स्थविरेभिः सुशिप्रास्मे दधद्वृषणं शुष्ममिन्द्र ॥ ४ ॥

आ । नः । विश्वाभिः । ऊतिऽभिः । सऽजोषाः । ब्रह्म । जुषाणः । हरिऽअश्व । याहि ।
वरीवृजत् । स्थविरेभिः । सुऽशिप्र । अस्मे इति । दधत् । वृषणम् । शुष्मम् । इन्द्र ॥४॥

हे हर्यश्व हरिनामकाश्व सुशिप्र शोभनहनो इन्द्र विश्वाभिः सर्वाभिः ऊतिभिः रक्षाभिः सजोषाः संगतः स्थविरेभिः वृद्धैर्मरुद्भिः सह वरीवृजत् शत्रून् भृशं हिंसन् अस्मे अस्मभ्यं वृषणं कामानां वर्षितारं शुष्मं बलवन्तं पुत्रं दधत् प्रयच्छन्[2] ब्रह्म स्तोत्रं जुषाणः सेवमानः नः अस्मान् आ याहि ॥

एष स्तोमो मह उग्राय वाहे धुरी३वात्यो न वाजयन्नधायि ।
इन्द्र त्वायमर्क ईट्टे वसूनां दिवीव द्यामधि नः श्रोमतं धाः ॥ ५ ॥

एषः । स्तोमः । महे । उग्राय । वाहे । धुरिऽइव । अत्यः । न । वाजयन् । अधायि ।
इन्द्र । त्वा । अयम् । अर्कः । ईट्टे । वसूनाम् । दिविऽइव । द्याम् । अधि । नः । श्रोमतम् । धाः ॥५॥

महे महते उग्राय उद्गूर्णाय ओजस्विने वा वाहे विश्वस्य वोढ्रे इन्द्राय धुरीव रथस्य अत्यो न अश्व इव वाजयन् बलं कुर्वन् एष स्तोमः अधायि व्यधायि । अथ प्रत्यक्षस्तुतिः । हे इन्द्र यं त्वाम् अयमर्कः स्तोता वसूनां वसूनि धनानि ईट्टे याचते स त्वं नः अस्मासु द्यां दिवीव श्रोमतं श्रवणीयमन्नं पुत्रं वा अधि धाः अधिधेहि ॥

---

१. श–स्थानयोः । तथा च निरुक्तं–'परिवृढो मध्यमे च स्थाने उत्तमे च' (निरु. ६. १७)।
२. श–प्रयच्छंस्त्वम् ।

एवा न इन्द्र वार्यस्य पूर्धि प्र ते महीं सुमतिं वेविदाम ।
इषं पिन्व मघवद्भ्यः सुवीरां यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

एव । नः । इन्द्र । वार्यस्य । पूर्धि । प्र । ते । महीम् । सुऽमतिम् । वेविदाम ।
इषम् । पिन्व । मघवत्ऽभ्यः । सुऽवीराम् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥६॥

हे इन्द्र नः अस्मान् एव एवं वार्यस्य । तृतीयार्थे षष्ठी । वरणीयेन धनेन पूर्धि पूरय । ते तव महीं महतीं सुमतिम् अनुग्रहबुद्धिं वेविदाम भृशं लभेमहि । मघवद्भ्यः हविष्मद्भ्योऽस्मभ्यं सुवीरां शोभनपुत्रादियुताम् इषम् अन्नं पिन्व प्रयच्छेत्यर्थः । स्पष्टमन्यत् ॥ ॥ ८ ॥

'आ ते मह इन्द्र' इति षडृचमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम् । 'आ ते' इत्यनुक्रान्तम् । महाव्रते निष्केवल्य इदमादीनि पञ्च सूक्तानि । सूत्रितं च—'आ ते मह इन्द्रोत्युग्रेति पञ्च सूक्तानि' (ऐ. आ. ५. २. २) इति ॥

आ ते मह इन्द्रोत्युग्र समन्यवो यत्समरन्त सेनाः ।
पताति दिद्युन्नर्यस्य बाह्वोर्मा ते मनो विष्वद्र्यग्वि चारीत् ॥ १ ॥

आ । ते । महः । इन्द्र । ऊती । उग्र । सऽमन्यवः । यत् । सम्ऽअरन्त । सेनाः ।
पताति । दिद्युत् । नर्यस्य । बाह्वोः । मा । ते । मनः । विष्वद्र्यक् । वि । चारीत् ॥ १ ॥

हे उग्र उद्गूर्ण ओजस्विन् इन्द्र यत् यदा समन्यवः । समो मन्युरभिमानो यासां ताः समन्यवः । सेनाः समरन्त युध्यन्ते संगच्छन्ते[1] वा तदा नर्यस्य नरहितस्य महः महतः ते तव बाह्वोः स्थिता दिद्युत् आयुधम् । 'दिद्युत् हेतिः' इति वज्रनामसु पाठात् । ऊती ऊत्यै अस्मद्रक्षायै आ पताति आपततु । तव[2] विष्वद्र्यक् विष्वग्गन्तृ मनः च मा वि चारीत् अस्मास्वेव स्थिरं भवतु ॥

नि दुर्ग इन्द्र श्नथिह्यमित्राँ अभि ये नो मर्तासो अमन्ति ।
आरे तं शंसं कृणुहि निनित्सोरा नो भर संभरणं वसूनाम् ॥ २ ॥

नि । दुःऽगे । इन्द्र । श्नथिहि । अमित्रान् । अभि । ये । नः । मर्तासः । अमन्ति ।
आरे । तम् । शंसम् । कृणुहि । निनित्सोः । आ । नः । भर । सम्ऽभरणम् । वसूनाम् ॥२॥

हे इन्द्र दुर्गे युद्धे ये मर्तासः मर्ताः अभि अभिमुखाः सन्तः नः अस्मान् अमन्ति अभिभवन्ति तान् अमित्रान् शत्रून् नि श्नथिहि निजहि । अपि च निनित्सोः अस्मान्निन्दितुमिच्छतो नरस्य तं शंसम् आशंसनम् आरे दूरे कृणुहि कुरु । अपि च नः अस्मभ्यं वसूनां धनानां संभरणं समूहम् आ भर आहर ॥

शतं ते शिप्रिन्नूतयः सुदासे सहस्रं शंसा उत रातिरस्तु ।
जहि वधर्वनुषो मर्त्यस्यास्मे द्युम्नमधि रत्नं च धेहि ॥ ३ ॥

---

१. झ–युद्धार्थं संगच्छन्ते; त-श–युद्धार्थे सगच्छन्ते । २. त२–ते तव ।

शतम् । ते । शिप्रिन् । ऊतयः । सुऽदासे । सहस्रम् । शंसाः । उत । रातिः । अस्तु ।
जहि । वधः । वनुषः । मर्त्यस्य । अस्मे इति । द्युम्नम् । अधि । रत्नम् । च । धेहि ॥३॥

हे शिप्रिन् उष्णीषिन्निन्द्र ते त्वदीयाः शतं बह्वयः ऊतयः रक्षाः सुदासे शोभनदानाय मह्यं सन्तु । सहस्रं शंसाः शंसनीयाः कामाश्च सन्तु । उत अपि च रातिः धनम् अस्तु । वनुषः हिंसकस्य मर्त्यस्य वधः हिंसासाधनमायुधं च जहि । अपि च अस्मे अधि अस्मासु द्युम्नं दीप्तिमदन्नं यशो वा रत्नं च धेहि । तथा च यास्कः—' द्युम्नं द्योततेर्यशो वान्नं वा । अस्मे द्युम्नमधि रत्नं च धेहि । अस्मासु द्युम्नं च रत्नं च धेहि ' ( निरु. ५. ५ ) इति ॥

त्वावतो हीन्द्र क्रत्वे अस्मि त्वावतोऽवितुः शूर रातौ ।
विश्वेदहानि तविषीव उग्रँ ओकः कृणुष्व हरिवो न मर्धीः ॥ ४ ॥

त्वाऽवतः । हि । इन्द्र । क्रत्वे । अस्मि । त्वाऽवतः । अवितुः । शूर । रातौ ।
विश्वा । इत् । अहानि । तविषीऽवः । उग्र । ओकः । कृणुष्व । हरिऽवः । न । मर्धीः ॥४॥

हे इन्द्र त्वावतः त्वत्सदृशस्य क्रत्वे कर्मणे अस्मि भवामि हि । हे शूर अवितुः विश्वस्य रक्षितुः त्वावतः त्वत्सदृशस्य रातौ दाने चास्मीति शेषः । हे तविषीवः बलवन् उग्र ओजस्विन्निन्द्र[1] विश्वेत् विश्वान्येव अहानि ओकः अस्माकं स्थानं कृणुष्व कुरु । हे हरिवः हरिवन् न मर्धीः अस्मान्न हिंस्याः ॥

कुत्सा एते हर्यश्वाय शूषमिन्द्रे सहो देवजूतमियानाः ।
सत्रा कृधि सुहना शूर वृत्रा वयं तरुत्राः सनुयाम वाजम् ॥ ५ ॥

कुत्साः । एते । हरिऽअश्वाय । शूषम् । इन्द्रे । सहः । देवऽजूतम् । इयानाः ।
सत्रा । कृधि । सुऽहना । शूर । वृत्रा । वयम् । तरुत्राः । सनुयाम । वाजम् ॥ ५ ॥

एते वयं वसिष्ठाः हर्यश्वाय हरिनामकाश्वायेन्द्राय शूषं सुखकरं स्तोत्रं कुत्साः कुर्वाणाः । करोतेः कुत्सशब्दनिष्पत्तिः । इन्द्रे देवजूतं देवैः प्रेरितं सहः बलम् इयानाः याचमानाः तरुत्राः दुर्गाणि तीर्णाः सन्तः वाजं बलं सनुयाम लभेमहि । अपि च हे शूर वृत्रा वृत्राणि शत्रून् सुहना हन्तुं सुशकानि सत्रा सर्वदा कृधि कुरु ॥

एवा न इन्द्र वार्यस्य पूर्धि प्र ते महीं सुमतिं वेविदाम ।
इषं पिन्व मघवद्भ्यः सुवीरां यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

एव । नः । इन्द्र । वार्यस्य । पूर्धि । प्र । ते । महीम् । सुऽमतिम् । वेविदाम ।
इषम् । पिन्व । मघवत्ऽभ्यः । सुऽवीराम् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥६॥

इयं व्याख्यातचरा ॥ ॥ ९ ॥

' न सोम इन्द्रम् ' इति पञ्चर्चं नवमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रम्यते— ' न सोमः पञ्च ' इति । महाव्रत उक्तो विनियोगः ॥

---

१. श—तेजस्विन्निन्द्र ।

न सोम॒ इन्द्र॒मसु॑तो ममाद॒ नाब्र॑ह्माणो म॒घवा॑नं सु॒तासः॑ ।
तस्मा॑ उ॒क्थं ज॑नये॒ यज्जुजो॑षन्नृ॒वन्नवी॑यः शृ॒णव॒द्यथा॑ नः ॥ १ ॥

न । सोमः॑ । इन्द्र॑म् । असु॑तः । म॒मा॒द॒ । न । अब्र॑ह्माणः । म॒घऽवा॑नम् । सु॒तासः॑ ।
तस्मै॑ । उ॒क्थम् । ज॒न॒ये॒ । यत् । जु॒जोष॑त् । नृ॒ऽवत् । नवी॑यः । शृ॒णव॑त् । यथा॑ । नः॒ ॥१॥

मघवानं धनवन्तम् इन्द्रम् असुतः नाभिषुतः सोमः न ममाद न तर्पयति । सुतासः अभिषुता अपि सोमाः अब्रह्माणः स्तोत्रहीनाः न ममदुः । ममाद इत्येतदाख्यातं बहुवचनान्ततया विपरिणतं सदत्र संबध्यते । अत एव त्रिष्वपि सवनेषु पावमानैः स्तोत्रैः स्तुता एव सोमा हूयन्ते । अपि च नः अस्मदीयं यत् उक्थम् इन्द्रः जुजोषत् सेवेत यथा च नृवत् राजेवादरेण शृणवत् शृणुयात् तथा नवीयः नवतरम्[1] उक्थं शस्त्रं तस्मै इन्द्राय जनये । पठामीत्यर्थः ॥

उ॒क्थउ॑क्थे॒ सोम॒ इन्द्रं॑ ममाद नी॒थेनी॑थे म॒घवा॑नं सु॒तासः॑ ।
यदीं॑ स॒बाधः॑ पि॒तरं॒ न पु॒त्राः स॑मा॒नद॑क्षा॒ अव॑से॒ हव॑न्ते ॥ २ ॥

उ॒क्थेऽउ॑क्थे । सोमः॑ । इन्द्र॑म् । म॒मा॒द॒ । नी॒थेऽनी॑थे । म॒घऽवा॑नम् । सु॒तासः॑ ॥
यत् । ई॒म् । स॒ऽबाधः॑ । पि॒तर॑म् । न । पु॒त्राः । स॒मा॒नऽद॑क्षाः । अव॑से । हव॑न्ते ॥ २ ॥

यत् यस्मात् उक्थेउक्थे शस्त्रेशस्त्रे क्रियमाणे सोमः मघवानम् इन्द्रं ममाद मादयति नीथेनीथे स्तोत्रेस्तोत्रे क्रियमाणे सुतासः अभिषुताः सोमाः मादयन्ति तस्मात् ईम् एनमिन्द्रं सबाधः परस्परं मिलिताः समानदक्षाः समानोत्साहा ऋत्विजः पुत्राः पितरं न पितरमिव अवसे तर्पणाय स्वरक्षणाय वा हवन्ते । शस्त्रैः स्तोत्रैश्च स्तुवन्ति ॥

च॒कार॒ ता कृ॒णव॑न्नू॒नम॒न्या यानि॑ ब्रु॒वन्ति॑ वे॒धसः॑ सु॒तेषु॑ ।
जनी॑रिव॒ पति॒रेकः॑ समा॒नो नि मा॑मृजे॒ पुर॒ इन्द्रः॒ सु सर्वाः॑ ॥ ३ ॥

च॒कार॑ । ता । कृ॒णव॑त् । नू॒नम् । अ॒न्या । यानि॑ । ब्रु॒वन्ति॑ । वे॒धसः॑ । सु॒तेषु॑ ।
जनीः॑ऽइव । पतिः॑ । एकः॑ । स॒मा॒नः । नि । म॒मृ॒जे॒ । पुरः॑ । इन्द्रः॑ । सु । सर्वाः॑ ॥ ३ ॥

वेधसः स्तोत्राणां विधातारः सुतेषु सोमेष्वभिषुतेषु यानि कर्माणि ब्रुवन्ति तानि वृत्रवधादीनि कर्माणीन्द्रः पूर्वस्मिन् काले चकार । नूनं संप्रत्यपि अन्या अन्यानि कर्माणि कृणवत् कुर्यात् । अपि च सः इन्द्रः सर्वाः पुरः शत्रुनगरीः समानः समवृत्तिः एकः[2] असहायः[2] पतिः जनीरिव जाया इव सु नि मामृजे सम्यक् शोधयेत् ॥

ए॒वा तमा॑हुरु॒त शृ॑ण्व॒ इन्द्र॒ एको॑ विभ॒क्ता त॒रणि॑र्म॒घाना॑म् ।
मि॒थ॒स्तुर॑ ऊ॒तयो॒ यस्य॑ पू॒र्वीर॒स्मे भ॒द्राणि॑ सश्चत प्रि॒याणि॑ ॥ ४ ॥

१. ख-न-भ—नवम् । २. ख-ज्ञ-त-न-भ-श—‘ एकः असहायः ’ नास्ति ।

एव । तम् । आहुः । उत । शृण्वे । इन्द्रः । एकः । विऽभक्ता । तरणिः । मघानाम् ।
मिथःऽतुरः । ऊतयः । यस्य । पूर्वीः । अस्मे इति । भद्राणि । सश्चत । प्रियाणि ॥ ४ ॥

यस्य इन्द्रस्य मिथः परस्परं तुरः बाधमानाः संश्लिष्टा वा पूर्वीः पूर्व्यो बह्व्यः ऊतयः रक्षाः सन्ति तम् एव एवमुक्तगुणम् आहुः पूर्वे ऋषयः। उत अपि चाद्यापि सः इन्द्रः मघानां मंहनीयानां धनानां विभक्ता दाता इति तरणिः आपदस्तारयितेति शृण्वे श्रूयते। तस्य च प्रसादात् अस्मे अस्मान् प्रियाणि भद्राणि कल्याणानि सश्चत सेवन्ताम् ॥

एवा वसिष्ठ इन्द्रमूतये नृन्कृष्टीनां वृषभं सुते गृणाति ।
सहस्रिण उप नो माहि वाजान्यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

एव । वसिष्ठः । इन्द्रम् । ऊतये । नॄन् । कृष्टीनाम् । वृषभम् । सुते । गृणाति ।
सहस्रिणः । उप । नः । माहि । वाजान् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥५॥

वसिष्ठः नॄन् नृणाम्। षष्ठ्यर्थे द्वितीया। ऊतये रक्षार्थं कृष्टीनां प्रजानां वृषभं कामानां वर्षितारम् इन्द्रम् एव एवं पूर्वोक्तप्रकारेण गृणाति स्तौति। अथ प्रत्यक्षस्तुतिः। हे इन्द्र नः अस्मभ्यं सहस्रिणः सहस्रसंख्याकान् वाजान् अन्नानि उप माहि। प्रयच्छेत्यर्थः। स्पष्टमन्यत् ॥ ॥ १० ॥

‘ इन्द्रं नरः ’ इति पञ्चर्चं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम्। ‘ इन्द्रं नरः ’ इत्यनुक्रान्तम्। महाव्रते निष्केवल्य एतत्सूक्तमुक्तं तृतीयत्वेन। ऐन्द्रे पशौ वपापुरोडाशहविषामाद्यास्तिस्रः क्रमेणानुवाक्याः। सूत्रितं च—‘ इन्द्रं नरो नेमधिता हवन्त इत्युरुं[1] नो लोकमनु नेषि विद्वान् ’ ( आश्व. श्रौ. ३. ७ ) इति ॥

इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः ।
शूरो नृषाता शवसश्चकान आ गोमति व्रजे भजा त्वं नः ॥ १ ॥

इन्द्रम् । नरः । नेमऽधिता । हवन्ते । यत् । पार्याः । युनजते । धियः । ताः ।
शूरः । नृऽसाता । शवसः । चकानः । आ । गोऽमति । व्रजे । भज । त्वम् । नः ॥ १ ॥

यत् यदा पार्याः युद्धभरणनिमित्ताः ताः प्रसिद्धाः धियः कर्माणि युनजते प्रयुज्यन्ते तदा[2] नरः नेतारः यम् इन्द्रं नेमधिता नेमधितौ संग्रामे हवन्ते[2] ह्वयन्ति सः त्वं शूरः नृषाता नृणां संभक्ता च शवसः बलस्य बलं चकानः कामयमानश्च सन् गोमति[3] व्रजे गोष्ठे गोसमूहे नः अस्मान् आ भज प्रापय[3] ॥

---

१. ज्ञ—इति तिस्र उरुम्। २. ख-ज्ञ-न-भ-श—‘ तदा नरो नेतारो यमिन्द्रं हवन्ते; त-य—नेमधिता नेमधितौ संग्रामे नरः कर्मणां नेतार इन्द्रं हवन्त आह्वयन्तीत्यर्थः। यमिन्द्रं हवन्ते। ३. ख-ज्ञ-भ-श—‘ गोमति...प्रापय ’ नास्ति; घ— नः अस्माकं गोमति गोयुक्ते व्रजे गोष्ठे गोष्ठमाभज संरक्ष; ज्ञ—गोमति गावः सन्त्यस्मिन्निति गोमत् तस्मिन् व्रजे गोष्ठे समूहे नोऽस्मानाभज प्रापय; त२—गोमति गावः सन्त्यस्मिन्निति गोमत् व्रजे गोष्ठे समूहे नोऽस्माना भज प्रापय; य—गोमति व्रजे नोऽस्माना भज देहीत्यर्थः।

य इन्द्र शुष्मो मघवन्ते अस्ति शिक्षा सखिभ्यः पुरुहूत नृभ्यः ।
त्वं हि दृळ्हा मघवन्विचेता अपा वृधि परिवृतं न राधः ॥ २ ॥

यः । इन्द्र । शुष्मः । मघऽवन् । ते । अस्ति । शिक्ष । सखिऽभ्यः । पुरुऽहूत । नृऽभ्यः ।
त्वम् । हि । दृळ्हा । मघऽवन् । विऽचेताः । अप । वृधि । परिऽवृतम् । न । राधः ॥२॥

हे ᵛपुरुहूत बहुभिराहूत ᵛइन्द्र ᵛते तव ᵛयः ᵛशुष्मः बलम् ᵛअस्ति तं शुष्मं ᵛसखिभ्यः स्तोतृभ्यः ᵛनृभ्यः ᵛशिक्ष देहि । अपि च हे ᵛमघवन् ᵛहि यस्मात् ᵛदृळ्हा दृढानि । पुरां[१] द्वाराणि[१] बिभेदिथेति शेषः । तस्मात् सः ᵛत्वं ᵛविचेताः विविक्तप्रज्ञः सन् ᵛपरिवृतं तिरोहितं ᵛराधः धनम् ᵛअप ᵛवृधि अस्मभ्यमपवृणु । ᵛन इति संप्रत्यर्थे ॥

इन्द्रो राजा जगतश्चर्षणीनामधि क्षमि विषुरूपं यदस्ति ।
ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतश्चिदर्वाक् ॥ ३ ॥

इन्द्रः । राजा । जगतः । चर्षणीनाम् । अधि । क्षमि । विषुऽरूपम् । यत् । अस्ति ।
ततः । ददाति । दाशुषे । वसूनि । चोदत् । राधः । उपऽस्तुतः । चित् । अर्वाक् ॥ ३ ॥

सः[२] ᵛइन्द्रः ᵛजगतः जङ्गमस्य पश्वादेर्यतः ᵛराजा ईश्वरो भवति ᵛचर्षणीनां मनुष्याणां च राजा भवति ᵛअधि ᵛक्षमि क्षमायां ᵛविषुरूपं नानारूपं ᵛयत् धनम् ᵛअस्ति तस्यापि राजा भवति ᵛततः ᵛदाशुषे यजमानाय ᵛवसूनि धनानि ᵛददाति । स इन्द्रोऽस्माभिः ᵛउपस्तुतः एव सन् ᵛराधः धनम् ᵛअर्वाक् अस्मदभिमुखं ᵛचोदत् प्रेरयतु ॥

नू चिन्न इन्द्रो मघवा सहूती दानो वाजं नि यमते न ऊती ।
अनूना यस्य दक्षिणा पीपाय वामं नृभ्यो अभिवीता सखिभ्यः ॥ ४ ॥

नु । चित् । नः । इन्द्रः । मघऽवा । सऽहूती । दानः । वाजम् । नि । यमते । नः । ऊती ।
अनूना । यस्य । दक्षिणा । पीपाय । वामम् । नृऽभ्यः । अभिऽवीता । सखिऽभ्यः ॥ ४ ॥

ᵛमघवा धनवान् ᵛदानः ददानः सः ᵛइन्द्रः ᵛनः अस्माकं ᵛसहूती सहूत्या मरुद्भिः सहाह्वानेन ᵛवाजम् अन्नं ᵛनः अस्मभ्यं ᵛऊती ऊत्यै रक्षायै ᵛनू ᵛचित् क्षिप्रमेव ᵛनि ᵛयमते प्रयच्छतु । ᵛयस्य इन्द्रस्य ᵛअनूना संपूर्णा ᵛअभिवीता अभिप्राप्ता ᵛदक्षिणा दानं ᵛसखिभ्यः स्तोतृभ्यः ᵛनृभ्यः ᵛवामं वननीयं धनं ᵛपीपाय दोग्धि ॥

नू इन्द्र राये वरिवस्कृधी न आ ते मनो ववृत्याम मघाय ।
गोमदश्वावद्रथवद्व्यन्तो यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

नु । इन्द्र । राये । वरिवः । कृधि । नः । आ । ते । मनः । ववृत्याम । मघाय ।
गोऽमत् । अश्वऽवत् । रथऽवत् । व्यन्तः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥५॥

१. ख-भ- पुरद्वाराणि । २. ख-झ-त३-न-भ-श- यः ।

हे ^v^इन्द्र ^v^नः अस्मभ्यं ^v^राये धनप्राप्तये ^v^नु क्षिप्रं ^v^वरिवः धनम्। 'वेदो वरिवः' इति धननामसु पाठात्। त्वं ^v^कृधि देहि। वयं ^v^ते तव ^v^मनः ^v^मघाय मंहनीयाय स्तुत्या ^v^आ ^v^ववृत्याम आवर्तयाम। स्पष्टमन्यत्॥ ॥ ११ ॥

'ब्रह्मा ण इन्द्र' इति पञ्चर्चमेकादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम्। 'ब्रह्मा णः' इत्यनुक्रान्तम्। महाव्रते निष्केवल्ये पञ्चमस्वेनास्य सूक्तस्य विनियोग उक्तः। अष्टमेऽहनि प्रउगशस्त्र आद्यस्तृच ऐन्द्रः (आश्व. श्रौ. ८. १०)॥

ब्रह्मा ण इन्द्रोप याहि विद्वानर्वाञ्चस्ते हरयः सन्तु युक्ताः।
विश्वे चिद्धि त्वा विहवन्त मर्ता अस्माकमिच्छृणुहि विश्वमिन्व ॥ १ ॥

ब्रह्म। नः। इन्द्र। उप। याहि। विद्वान्। अर्वाञ्चः। ते। हरयः। सन्तु। युक्ताः।
विश्वे। चित्। हि। त्वा। विऽहवन्त। मर्ताः। अस्माकम्। इत्। शृणुहि। विश्वम्ऽइन्व॥१॥

हे ^v^इन्द्र त्वं ^v^विद्वान् जानन् ^v^नः अस्माकं ^v^ब्रह्म स्तोत्रं ^v^उप ^v^याहि। ^v^ते तव ^v^हरयः अश्वाश्च ^v^अर्वाञ्चः अस्मदभिमुखाः ^v^युक्ताः ^v^सन्तु। हे ^v^विश्वमिन्व विश्वप्रीणयितरिन्द्र ^v^त्वा त्वां ^v^विश्वे सर्वे ^v^मर्ताः मनुष्याः ^v^चित् ^v^हि यद्यपि ^v^विहवन्त पृथग्हवन्ते तथापि ^v^अस्माकमित् अस्माकमेव हवं ^v^शृणुहि शृणु॥

हवं त इन्द्र महिमा व्यानड् ब्रह्म यत्पासि शवसिन्नृषीणाम्।
आ यद्वज्रं दधिषे हस्त उग्र घोरः सन्क्रत्वा जनिष्ठा अषाळ्हः ॥ २ ॥

हवम्। ते। इन्द्र। महिमा। वि। आनट्। ब्रह्म। यत्। पासि। शवसिन्। ऋषीणाम्।
आ। यत्। वज्रम्। दधिषे। हस्ते। उग्र। घोरः। सन्। क्रत्वा। जनिष्ठाः। अषाळ्हः ॥२॥

हे ^v^शवसिन् बलवन् ^v^इन्द्र ^v^यत् यदा ^v^ऋषीणां ^v^ब्रह्म स्तोत्रं ^v^पासि रक्षसि। स्तोत्रस्य रक्षणं नाम फलप्रदानम्[1]। तदा ^v^ते तव ^v^महिमा ^v^हवं हवः स्तोता तं ^v^व्यानट् व्याप्नोतु[2]। हे ^v^उग्र ओजस्विन्निन्द्र ^v^यत् यदा ^v^हस्ते पाणौ ^v^वज्रम् ^v^आ ^v^दधिषे धारयसि तदा ^v^क्रत्वा शत्रुवधादिना कर्मणा ^v^घोरः ^v^सन् ^v^अषाळ्हः शत्रुभिरनभिभूतः ^v^जनिष्ठाः अजनिष्ठाः अभवः॥

तव प्रणीतीन्द्र जोहुवानान्त्सं यन्नॄन्न रोदसी निनेथ।
महे क्षत्राय शवसे हि जज्ञेऽतूतुजिं चित्तूतुजिरशिश्नत् ॥ ३ ॥

तव। प्रऽनीती। इन्द्र। जोहुवानान्। सम्। यत्। नॄन्। न। रोदसी इति। निनेथ।
महे। क्षत्राय। शवसे। हि। जज्ञे। अतूतुजिम्। चित्। तूतुजिः। अशिश्नत् ॥ ३ ॥

हे ^v^इन्द्र ^v^यत् यस्त्वं ^v^तव ^v^प्रणीती प्रणीत्या प्रणयनेन ^v^जोहुवानान् भृशं स्तुवतः ^v^नॄन् ^v^रोदसी द्यावापृथिव्यौ ^v^सं ^v^निनेथ संगमयसि। दिवि पृथिव्यां च स्तोतॄन् प्रतिष्ठापयसीत्यर्थः[3]। स त्वं ^v^महे महते ^v^क्षत्राय धनाय। 'रयिः क्षत्रम्' इति धननामसु पाठात्। ^v^शवसे बलाय च।

---

१. ख-न-भ-प्रदानम्। २. ख-व्याप्नोति। ३. ख-झ-त-न-भ-प्रतिष्ठापयतीत्यर्थः; श-प्रतिष्ठापयन्तीत्यर्थः।

यजमानेभ्यो महद्धनं बलं च दातुमित्यर्थः। ᵛजज्ञे जज्ञिषे। ᵛहि इति हेत्वर्थे। यत एवमतः कारणात् ᵛअतुतुजिम् अदातारमयजमानं ᵛतुतुजिः दाता यजमानः ᵛअशिश्नत्। श्नथतिर्हिंसाकर्मा। तस्माल्लङर्थे लुङ्। हिनस्ति। ᵛचित् इत्येवकारार्थे ॥

एभिर्न इन्द्राहभिर्दशस्य दुर्मित्रासो हि क्षितयः पवन्ते।
प्रति यच्चष्टे अनृतमनेना अव द्विता वरुणो मायी नः सात् ॥ ४ ॥

एभिः। नः। इन्द्र। अहऽभिः। दशस्य। दुःऽमित्रासः। हि। क्षितयः। पवन्ते।
प्रति। यत्। चष्टे। अनृतम्। अनेनाः। अव। द्विता। वरुणः। मायी। नः। सात् ॥४॥

हे ᵛइन्द्र ᵛदुर्मित्रासः दुष्टमित्रभूता[1] बाधकाः ᵛक्षितयः जनाः ᵛपवन्ते अभिगच्छन्ति। पवतिर्गतिकर्मा। तेभ्यो धनमाच्छिद्य ᵛनः अस्मभ्यम् ᵛएभिः सात्त्विकैः ᵛअहभिः अहोभिः ᵛदशस्य देहि। किंच ᵛअनेनाः एनसां निहन्ता ᵛमायी प्रज्ञावान् ᵛवरुणः ᵛयत् ᵛअनृतं ᵛनः अस्मासु ᵛप्रति ᵛचष्टे अभिपश्यति तदनृतं हे इन्द्र त्वत्प्रसादात् ᵛद्विता द्विधा ᵛअव ᵛसात् अवस्यतु विमोचयतु। तथा च यास्कः—' स्यतिरुपसृष्टो विमोचने ' ( निरु. १. १७ ) इति ॥

वोचेमेदिन्द्रं मघवानमेनं महो रायो राधसो यद्ददन्नः।
यो अर्चतो ब्रह्मकृतिमविष्ठो यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

वोचेम। इत्। इन्द्रम्। मघऽवानम्। एनम्। महः। रायः। राधसः। यत्। ददत्। नः।
यः। अर्चतः। ब्रह्मऽकृतिम्। अविष्ठः। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ५ ॥

ᵛयत् य इन्द्रः ᵛमहः महतः ᵛराधसः संराधकस्य ᵛरायः धनस्य। द्वितीयार्थे षष्ठी। संराधकं महद्धनं ᵛनः अस्मभ्यं ᵛददत् प्रायच्छत् ᵛयः चेन्द्रः ᵛअर्चतः स्तुवतः ᵛब्रह्मकृतिं क्रियमाणं ब्रह्म स्तोत्रम् ᵛअविष्ठः अतिशयेन रक्षिता गन्ता भवति तम् ᵛएनं ᵛमघवानं धनवन्तम् ᵛइन्द्रं ᵛवोचेमेत् स्तुवेमैव। स्पष्टमन्यत् ॥ ॥ १२ ॥

' अयं सोम इन्द्र ' इति पञ्चर्चं द्वादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम्। ' अयं सोमः ' इत्यनुक्रान्तम्। व्यूळ्हे दशरात्रे नवमेऽहनि ' अयं सोम इन्द्र ' इति प्रउगशस्त्र ऐन्द्रस्तृचः। सूत्रितं च—' अयं सोम इन्द्र तुभ्यं सुन्व आ तु प्र ब्रह्माणः ' ( आश्व. श्रौ. ८. ११ ) इति। षोडशिशस्त्रे ' ब्रह्मन्वीर ' इत्येषा त्रिष्टुप्। सूत्रितं च—' ब्रह्मन्वीर ब्रह्मकृतिं जुषाण इति त्रिष्टुप् ' ( आश्व. श्रौ. ६. २ ) इति ॥

अयं सोम इन्द्र तुभ्यं सुन्व आ तु प्र याहि हरिवस्तदोकाः।
पिबा त्व१स्य सुषुतस्य चारोर्ददो मघानि मघवन्नियानः ॥ १ ॥

अयम्। सोमः। इन्द्र। तुभ्यम्। सुन्वे। आ। तु। प्र। याहि। हरिऽवः। तत्ऽओकाः।
पिब। तु। अस्य। सुऽसुतस्य। चारोः। ददः। मघानि। मघऽवन्। इयानः ॥ १ ॥

---

१. ख-भ–दुष्टभूताः; य–दुष्टमित्राः; श–दुष्टा मित्रभूताः।

हे ᵛइन्द्र ᵛतुभ्यं त्वदर्थम् ᵛअयम् एषः ᵛसोमः ᵛसुन्वे अभिषुतोऽभवत्। हे ᵛहरिवः हरिवन्निन्द्र ᵛतदोकाः। सवनीयो[1] यस्यासौ तदोकाः। ᵛतु क्षिप्रम् ᵛआ ᵛप्र ᵛयाहि। ᵛसुषुतस्य सम्यगभिषुतस्य ᵛचारोः शोभनस्य ᵛअस्य सोमस्य। द्वितीयार्थे षष्ठी। सम्यगभिषुतं शोभनमित्यर्थः। ᵛतु क्षिप्रं ᵛपिब च। अपि च हे ᵛमघवन् ᵛइयानः उपगम्यमानो याच्यमानो वा त्वं ᵛमघानि धनानि ᵛददः अस्मभ्यं देहि॥

ब्रह्मन्वीर ब्रह्मकृतिं जुषाणोऽर्वाचीनो हरिभिर्याहि तूयम्।
अस्मिन्नू षु सवने मादयस्वोप ब्रह्माणि शृणव इमा नः॥ २॥

ब्रह्मन्। वीर। ब्रह्मऽकृतिम्। जुषाणः। अर्वाचीनः। हरिऽभिः। याहि। तूयम्।
अस्मिन्। ऊँ इति। सु। सवने। मादयस्व। उप। ब्रह्माणि। शृणवः। इमा। नः॥२॥

हे ᵛब्रह्मन् परिवृढ ᵛवीर इन्द्र ᵛब्रह्मकृतिं क्रियमाणं स्तोत्रं ᵛजुषाणः सेवमानः ᵛअर्वाचीनः अस्मदभिमुखः सन् ᵛहरिभिः अश्वैः ᵛतूयं क्षिप्रं ᵛयाहि। ᵛअस्मिन्नु अस्मिन्नेव ᵛसवने यज्ञे ᵛसु सुष्ठु ᵛमादयस्व च। ᵛनः अस्मदीयानि ᵛइमा इमानि ᵛब्रह्माणि स्तोत्राणि च ᵛउप ᵛशृणवः उपशृणु॥

का ते अस्त्यरंकृतिः सूक्तैः कदा नूनं ते मघवन्दाशेम।
विश्वा मतीरा ततने त्वायाधा म इन्द्र शृणवो हवेमा॥ ३॥

का। ते। अस्ति। अरम्ऽकृतिः। सुऽउक्तैः। कदा। नूनम्। ते। मघऽवन्। दाशेम।
विश्वाः। मतीः। आ। ततने। त्वाऽया। अध। मे। इन्द्र। शृणवः। हवा। इमा॥ ३॥

हे इन्द्र ᵛते तव ᵛसूक्तैः अस्माभिः क्रियमाणैः स्तोत्रैः ᵛअरंकृतिः अलंकृतिः ᵛका ᵛअस्ति कीदृशी भवति। हे ᵛमघवन् ᵛते तव ᵛकदा ᵛनूनं कदा खलु ᵛदाशेम प्रीतिमुत्पादयेम। ᵛत्वाया त्वत्कामनयैव ᵛविश्वाः ᵛमतीः सर्वाः स्तुतीः ᵛआ ᵛततने करोमि। ᵛअध अतः कारणात् हे ᵛइन्द्र ᵛमे मदीयानि ᵛइमा इमानि ᵛहवा हवानि स्तोत्राणि ᵛशृणवः शृणु॥

उतो घा ते पुरुष्या३ इदासन्येषां पूर्वेषामशृणोर्ऋषीणाम्।
अधाहं त्वा मघवञ्जोहवीमि त्वं न इन्द्रासि प्रमतिः पितेव॥ ४॥

उतो इति। घ। ते। पुरुष्याः। इत्। आसन्। येषाम्। पूर्वेषाम्। अशृणोः। ऋषीणाम्।
अध। अहम्। त्वा। मघऽवन्। जोहवीमि। त्वम्। नः। इन्द्र। असि। प्रऽमतिः। पिताऽइव॥४॥

ᵛउत अपि च। ᵛघ इति पूरणः। हे ᵛमघवन् ᵛयेषां ᵛपूर्वेषाम् ᵛऋषीणां स्तुतीः ᵛअशृणोः ᵛते पूर्वे ऋषयः ᵛपुरुष्याः ᵛइत् पुरुषेभ्यो हिता एव ᵛआसन्। ᵛअध अतः ᵛअहं ᵛत्वा त्वां ᵛजोहवीमि भृशं स्तौमि। अपि च हे ᵛइन्द्र ᵛत्वं ᵛनः अस्माकं ᵛपितेव जनक इव ᵛप्रमतिः बन्धुः ᵛअसि॥

वोचेमेदिन्द्रं मघवानमेनं महो रायो राधसो यद्ददन्नः।
यो अर्चतो ब्रह्मकृतिमविष्ठो यूयं पात स्वस्तिभिः सदा नः॥ ५॥

---

१. ख—संवनायः; घ-ङ्ग-त३-न-श-सेवनीयः; ङ—तत् स सेवनीयः; त१-२—तत्सेवनीयः; य—सवनीस्तदेव सः।

वोचेम । इत् । इन्द्रम् । मघऽवानम् । एनम् । महः । रायः । राधसः । यत् । ददत् । नः ।
यः । अर्चतः । ब्रह्मऽकृतिम् । अविष्ठः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

इयं व्याख्यातचरा ॥ ॥ १३ ॥

'आ नो देव' इति पञ्चर्चं त्रयोदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम्। 'आ नो देव' इत्यनुक्रान्तम्। प्रथमे छन्दोमे प्रउगशस्त्रे 'आ नः' इत्ययमैन्द्रस्तृचः। सूत्र्यते हि—'आ नो देव शवसा याहि शुष्मिन् प्र वो यज्ञेषु देवयन्तो अर्चन्' (आश्व. श्रौ. ८. ९) इति ॥

आ नो देव शवसा याहि शुष्मिन्भवा वृध इन्द्र रायः अस्य ।
महे नृम्णाय नृपते सुवज्र महि क्षत्राय पौंस्याय शूर ॥ १ ॥

आ । नः । देव । शवसा । याहि । शुष्मिन् । भव । वृधः । इन्द्र । रायः । अस्य ।
महे । नृम्णाय । नृऽपते । सुऽवज्र । महि । क्षत्राय । पौंस्याय । शूर ॥ १ ॥

हे ᵛदेव द्योतमान ᵛशुष्मिन् बलवन् ᵛइन्द्र ᵛनः अस्मान् ᵛशवसा बलेन सार्धम् ᵛआ ᵛयाहि। ᵛअस्य अस्मभ्यं देयस्य ᵛरायः धनस्य ᵛवृधः वर्धयिता च ᵛभव। हे ᵛनृपते ᵛसुवज्र ᵛमहे महते ᵛनृम्णाय बलाय च भव। 'बाधो नृम्णम्' इति बलनामसु पाठात्। हे ᵛशूर ᵛमहि महते ᵛक्षत्राय शत्रूणां हिंसकाय। क्षदिर्हिंसाकर्मा। ᵛपौंस्याय वीर्याय च भव ॥

हवन्त उ त्वा हव्यं विवाचि तनूषु शूराः सूर्यस्य सातौ ।
त्वं विश्वेषु सेन्यो जनेषु त्वं वृत्राणि रन्धया सुहन्तु ॥ २ ॥

हवन्ते । ऊँ इति । त्वा । हव्यम् । विऽवाचि । तनूषु । शूराः । सूर्यस्य । सातौ ।
त्वम् । विश्वेषु । सेन्यः । जनेषु । त्वम् । वृत्राणि । रन्धय । सुऽहन्तु ॥ २ ॥

हे इन्द्र ᵛहव्यं ह्वातव्यं ᵛत्वा त्वां ᵛविवाचि विविधा वाचो यस्मिन् प्रादुर्भवन्ति तस्मिन् युद्धे ᵛशूराः पुरुषाः ᵛतनूषु अङ्गेषु रक्षणीयासु ᵛसूर्यस्य ᵛसातौ संभजने। सरति गच्छतीत्यायुरत्र सूर्यो विवक्षितः। तस्य चिरकालं प्राप्त्यर्थं ᵛहवन्ते ह्वयन्ति। ᵛविश्वेषु सर्वेषु ᵛजनेषु ᵛत्वम् एव ᵛसेन्यः सेनार्होऽसि। अपि च ᵛत्वं ᵛवृत्राणि शत्रून् ᵛसुहन्तु सुहन्तुना वज्रेण ᵛरन्धय अस्मभ्यं वशीकुरु ॥

अहा यदिन्द्र सुदिना व्युच्छान्दधो यत्केतुमुपमं समत्सु ।
न्य१ग्निः सीददसुरो न होता हुवानो अत्र सुभगाय देवान् ॥ ३ ॥

अहा । यत् । इन्द्र । सुऽदिना । विऽउच्छान् । दधः । यत् । केतुम् । उपऽमम् । समत्ऽसु ।
नि । अग्निः । सीदत् । असुरः । न । होता । हुवानः । अत्र । सुऽभगाय । देवान् ॥ ३ ॥

हे ᵛइन्द्र ᵛयत् यदा ᵛअहा अहानि ᵛसुदिना सुदिनानि ᵛव्युच्छान् व्युच्छेयुः ᵛयत् यदा[1] च ᵛसमत्सु संग्रामेषु ᵛकेतुं ज्ञानम् ᵛउपमम् अन्तिकं ᵛदधः धारयेः तदा ᵛअसुरः बलवान् ᵛहोता देवानामाह्वाता ᵛअग्निः ᵛसुभगाय अस्माकं शोभनधनप्राप्तये ᵛदेवान् ᵛहुवानः ह्वयन् ᵛअत्र अस्मिन् यज्ञे ᵛनि ᵛषीदत् न्यसीदत् ॥

१. घ-ञ-त-श—यथा ।

वयं ते त इन्द्र ये च देव स्तवन्त शूर ददतो मघानि ।
यच्छा सूरिभ्य उपमं वरूथं स्वाभुवो जरणामश्नवन्त ॥ ४ ॥

वयम् । ते । ते । इन्द्र । ये । च । देव । स्तवन्त । शूर । ददतः । मघानि ।
यच्छ । सूरिऽभ्यः । उपऽमम् । वरूथम् । सुऽआभुवः । जरणाम् । अश्नवन्त ॥ ४ ॥

हे देव शूर इन्द्र ते तव वयं वसिष्ठाः स्वभूताः । ये जना मदीयपुत्रपौत्रादयः मघानि मंहनीयानि हवींषि ददतः प्रयच्छन्तः स्तवन्त स्तुवन्ति ते अपि तव स्वभूताः । तेभ्य उभयेभ्यः सूरिभ्यः स्तोतृभ्यः उपमं श्रेष्ठं वरूथं गृहं यच्छ प्रयच्छ । अपि च त उभे स्वाभुवः सुसमृद्धाः सन्तः जरणां जराम् अश्नवन्त प्राप्नुवन्तु ॥

वोचेमेदिन्द्रं मघवानमेनं महो रायो राधसो यद्ददन्नः ।
यो अर्चतो ब्रह्मकृतिमविष्ठो यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

वोचेम । इत् । इन्द्रम् । मघऽवानम् । एनम् । महः । रायः । राधसः । यत् । ददत् । नः ।
यः । अर्चतः । ब्रह्मऽकृतिम् । अविष्ठः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥५॥

एषा सिद्धा ॥ ॥ १४ ॥

'प्र व इन्द्राय' इति द्वादशर्चं चतुर्दशं सूक्तं वसिष्ठस्यार्षं गायत्रमैन्द्रम् । दशम्याद्यास्तिस्रो विराजः शिष्टा गायत्र्यः । तथा चानुक्रान्तं–'प्र वो द्वादश गायत्रं त्रिविराळन्तम्' इति । सूक्तविनियोगो लैङ्गिकः । प्रथमे रात्रिपर्याये मैत्रावरुणशस्त्रे 'प्र व इन्द्राय' इत्याद्यस्तृचः स्तोत्रियः । सूत्रितं च– 'प्र व इन्द्राय मादनं प्र कृतान्यृजीषिणः' (आश्व. श्रौ. ६. ४) इति । अतिरात्रे प्रथमे पर्याये ब्राह्मणाच्छंसिशस्त्रे 'वयमिन्द्र त्वायवोऽभि' इत्यनुरूपस्तृचः । तथा च सूत्रितं–'वयमिन्द्र त्वायवोऽभि वार्त्रहत्यायेत्युत्तमामुद्धरेत्' (आश्व. श्रौ. ६. ४) इति । चतुर्थेऽहनि माध्यंदिनसवने होत्रकशस्त्र आरम्भणीयाभ्य ऊर्ध्वं वैराज एकस्तृच आहवनीयः । तदर्थाः 'प्र वो महे महिवृधे भरध्वम्' इत्याद्यास्तिस्रः । सूत्रितं च–'प्र वो महे महिवृधे भरध्वमिति चतस्रस्तिस्रश्च विराजः' (आश्व. श्रौ. ७. ११) इति ॥

प्र व इन्द्राय मादनं हर्यश्वाय गायत । सखायः सोमपाव्ने ॥ १ ॥

प्र । वः । इन्द्राय । मादनम् । हरिऽअश्वाय । गायत । सखायः । सोमऽपाव्ने ॥ १ ॥

हे सखायः वः यूयं हर्यश्वाय सोमपाव्ने सोमानां पात्रे इन्द्राय मादनं मदकरं स्तोत्रं प्र गायत ॥

शंसेदुक्थं सुदानव उत द्युक्षं यथा नरः । चकृमा सत्यराधसे ॥ २ ॥

शंस । इत् । उक्थम् । सुऽदानवे । उत । द्युक्षम् । यथा । नरः । चकृम । सत्यऽराधसे ॥२॥

उत अपि च हे स्तोतः सुदानवे शोभनदानाय सत्यराधसे सत्यधनायेन्द्राय उक्थं स्तोत्रं यथा नरः अन्ये स्तोतारः द्युक्षं दीप्तेः साधनभूतं स्तोत्रं शंसन्ति तद्वत्त्वमपि शंस उच्चारय । इत् इति पूरणः । वयं च चकृम स्तोत्रं करवाम ॥

त्वं न॑ इन्द्र वाज॒युस्त्वं ग॒व्युः श॑तक्रतो । त्वं हि॑रण्य॒युर्व॑सो ॥ ३ ॥

त्वम् । नः॒ । इन्द्र॑ । वा॒ज॒ऽयुः । त्वम् । ग॒व्युः । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो ।
त्वम् । हि॒र॒ण्य॒ऽयुः । व॒सो॒ इति॑ ॥ ३ ॥

हे ᵛइन्द्र ᵛत्वं ᵛनः अस्माकं ᵛवाजयुः अन्नकामो भव । हे ᵛशतक्रतो ᵛत्वं नोऽस्माकं ᵛगव्युः गोकामो भव । हे ᵛवसो वासयितरिन्द्र ᵛत्वं ᵛहिरण्ययुः हिरण्यकामोऽपि भव । ‘ छन्दसि परेच्छायामपि दृश्यते क्यच् ’ इति क्यच् ॥

व॒यमि॑न्द्र त्वा॒यवो॒ऽभि प्र णो॑नुमो वृषन् । वि॒द्धी त्व१॒॑स्य नो॑ वसो ॥ ४ ॥

व॒यम् । इन्द्र॑ । त्वा॒ऽयवः॑ । अ॒भि । प्र । नो॒नु॒मः॒ । वृ॒ष॒न् ।
वि॒द्धि । तु । अ॒स्य । नः॒ । व॒सो॒ इति॑ ॥ ४ ॥

हे ᵛवृषन् कामानां वर्षितः ᵛइन्द्र ᵛत्वायवः त्वत्कामाः ᵛवयं वसिष्ठास्त्वाम् ᵛअभि ᵛप्र ᵛणोनुमः प्रकर्षेण स्तुमः । हे ᵛवसो वासयितरिन्द्र ᵛअस्य इदमस्मदीयं स्तोत्रं ᵛतु क्षिप्रं ᵛविद्धि अवधारय ॥

मा नो॑ नि॒दे च॒ वक्त॑वे॒ऽर्यो र॑न्धी॒ररा॑व्णे । त्वे अपि॒ क्रतु॒र्मम॑ ॥ ५ ॥

मा । नः॒ । नि॒दे । च॒ । वक्त॑वे । अ॒र्यः । र॒न्धीः॒ । अरा॑व्णे ।
त्वे इति॑ । अपि॑ । क्रतुः॑ । मम॑ ॥ ५ ॥

हे इन्द्र ᵛअर्यः स्वामी त्वं ᵛवक्तवे परुषवाक्यानां वक्त्रे ᵛनिदे निन्दित्रे ᵛअराव्णे अदात्रे ᵛनः अस्मान् ᵛमा ᵛरन्धीः वशं मा कार्षीः । ᵛअपि अपि च ᵛत्वे त्वयि ᵛमम ᵛक्रतुः मदीयं स्तोत्रलक्षणं कर्म गच्छत्विति शेषः । अस्मदीयं स्तोत्रं भवच्चित्ते प्रविशत्वित्यर्थः ॥

त्वं वर्मा॑सि स॒प्रथः॑ पुरोयो॒धश्च॑ वृत्रहन् । त्वया॒ प्रति॑ ब्रुवे यु॒जा ॥ ६ ॥

त्वम् । वर्म॑ । अ॒सि॒ । स॒ऽप्रथः॑ । पु॒रः॒ऽयो॒धः । च॒ । वृ॒त्र॒ऽह॒न् ।
त्वया॑ । प्रति॑ । ब्रु॒वे॒ । यु॒जा ॥ ६ ॥

हे ᵛवृत्रहन् शत्रूणां हिंसकेन्द्र ᵛत्वं ᵛवर्म अस्माकं कवचम् ᵛअसि । कवचवद्रक्षकोऽसीत्यर्थः । ᵛसप्रथः सर्वतः पृथुश्चासि । ᵛपुरोयोधश्च पुरो योद्धा चासि । ᵛत्वया ᵛयुजा त्वया सहायेन ᵛप्रति ᵛब्रुवे शत्रून् प्रतिब्रवीमि । प्रतिहन्मीत्यर्थः ॥ ॥ १५ ॥

म॒हाँ उ॒तासि॒ यस्य॒ तेऽनु॑ स्व॒धाव॑री॒ सहः॑ । म॒म्नाते॒ इ॑न्द्र॒ रोद॑सी ॥ ७ ॥

म॒हान् । उ॒त । अ॒सि॒ । यस्य॑ । ते॒ । अनु॑ । स्व॒धाव॑री॒ इति॑ स्व॒धाऽव॑री । सहः॑ ।
म॒म्नाते॒ इति॑ । इन्द्र॑ । रोद॑सी॒ इति॑ ॥ ७ ॥

ᵛउत अपि च हे ᵛइन्द्र त्वं ᵛमहान् ᵛअसि सर्वाधिकोऽसि । हे इन्द्र ᵛयस्य ᵛते तव ᵛसहः बलं ᵛस्वधावरी अन्नवत्यौ ᵛरोदसी द्यावापृथिव्यौ ᵛअनु ᵛमम्नाते अनुमन्येते । त्वदीयं सहः सर्वाधिकमित्यत्रोभावपि लोकौ विसंवादं न कुरुत इत्यर्थः ॥

तं त्वा मरुत्वती परि भुवद्वाणी सयावरी । नक्षमाणा सह द्युभिः ॥ ८ ॥

तम् । त्वा । मरुत्वती । परि । भुवत् । वाणी । सऽयावरी । नक्षमाणा । सह । द्युऽभिः ॥ ८ ॥

हे इन्द्र vतम् उक्तगुणविशिष्टं vत्वा त्वां vसयावरी त्वया सह गन्त्री । यत्र यत्र त्वं यासि तत्र तत्र यान्तीत्यर्थः । vद्युभिः तेजोभिः vनक्षमाणा व्याप्नुवती vमरुत्वती । मरुतः स्तोतारः । तद्वती vवाणी स्तुतिः vपरि vभुवत् परिभवतु । परिभवतिरत्र परिग्रहार्थीयः । परिगृह्णात्वित्यर्थः ॥

ऊर्ध्वासस्त्वान्विन्दवो भुवन्दस्ममुप द्यवि । सं ते नमन्त कृष्टयः ॥ ९ ॥

ऊर्ध्वासः । त्वा । अनु । इन्दवः । भुवन् । दस्मम् । उप । द्यवि । सम् । ते । नमन्त । कृष्टयः ॥ ९ ॥

हे इन्द्र vउप vद्यवि द्युलोकसमीपे स्थितं vदस्मं दर्शनीयं vत्वा त्वाम् vअनु उद्दिश्य vऊर्ध्वासः ऊर्ध्वाः vइन्दवः अस्मदीयाः सोमाः vभुवन् भवन्ति । vकृष्टयः प्रजाश्च vते तुभ्यं vसं vनमन्त । भुवि सोमास्त्वदर्थमेव जायन्ते प्रजाश्च त्वामेव प्रणमन्तीतीन्द्रस्तुतिः ॥

प्र वो महे महिवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् ।
विशः पूर्वीः प्र चरा चर्षणिप्राः ॥ १० ॥

प्र । वः । महे । महिऽवृधे । भरध्वम् । प्रऽचेतसे । प्र । सुऽमतिम् । कृणुध्वम् ।
विशः । पूर्वीः । प्र । चर । चर्षणिऽप्राः ॥ १० ॥

हे मदीयाः पुरुषाः vवः यूयं vमहिवृधे महतां धनानां वर्धयित्रे vमहे महते इन्द्राय vप्र vभरध्वं सोमान् प्रणयत । vप्रचेतसे प्रकृष्टमतये इन्द्राय vसुमतिं सुष्टुतिं च vप्र vकृणुध्वं प्रकुरुत । अथ प्रत्यक्षस्तुतिः । हे इन्द्र vचर्षणिप्राः कामैः प्रजानां पूरयिता त्वं vपूर्वीः हविषां पूरयित्रीः vविशः प्रजाः vप्र vचर अभिगच्छ ॥

उरुव्यचसे महिने सुवृक्तिमिन्द्राय ब्रह्म जनयन्त विप्राः ।
तस्य व्रतानि न मिनन्ति धीराः ॥ ११ ॥

उरुऽव्यचसे । महिने । सुऽवृक्तिम् । इन्द्राय । ब्रह्म । जनयन्त । विप्राः ।
तस्य । व्रतानि । न । मिनन्ति । धीराः ॥ ११ ॥

vउरुव्यचसे पृथुव्याप्तये vमहिने महते यस्मै vइन्द्राय vसुवृक्तिं स्तुतिं vब्रह्म अन्नं हविश्च vविप्राः प्राज्ञाः vजनयन्त जनयन्ति vतस्य इन्द्रस्य vव्रतानि रक्षणादीनि कर्माणि vधीराः प्राज्ञा देवा अपि vन vमिनन्ति न हिंसन्ति ॥

इन्द्रं वाणीरनुत्तमन्युमेव सत्रा राजानं दधिरे सहध्यै ।
हर्यश्वाय बर्हया समापीन् ॥ १२ ॥

इन्द्रम् । वाणीः । अनुत्तऽमन्युम् । एव । सत्रा । राजानम् । दधिरे । सहध्यै ।
हरिऽअश्वाय । बर्हय । सम् । आपीन् ॥ १२ ॥

ᵛसम्रा ᵛराजानं सर्वजगत[1] ईश्वरम्[1] ᵛअनुत्तमन्युम्। केनाप्यनुत्तोऽबाधितो मन्युः क्रोधो यस्य सः। तम् ᵛएव ᵛइन्द्रं ᵛवाणीः स्तुतयः ᵛसहध्यै स्तोतॄणां शत्रूनभिभवितुं ᵛदधिरे। अतो हेतोर्हे स्तोतः त्वमपि ᵛहर्यश्वाय इन्द्राय। हर्यश्वमिन्द्रं स्तोतुमित्यर्थः। ᵛआपीन् बन्धून् ᵛसं ᵛबर्हय उत्साहय॥ ॥ १६ ॥

'मो षु त्वा' इति सप्तविंशत्यृचं पञ्चदशं सूक्तम्। अत्रेयमनुक्रमणिका—'मो षु सप्ताधिका प्रागाथं तृतीया द्विपदा सौदासैरग्नौ प्रक्षिप्यमाणः शक्तिरन्त्यं प्रगाथमालेभे सोऽर्धर्चं उक्तेऽदह्यत। तं पुत्रोक्तं वसिष्ठः समापयतेति शाट्यायनकं वसिष्ठस्यैव हतपुत्रस्यार्षमिति ताण्डकम्' इति। मण्डलद्रष्टा वसिष्ठ ऋषिः। 'इन्द्र क्रतुं नः' इति प्रगाथस्यार्धर्चस्य च वसिष्ठपुत्रः शक्तिर्वसिष्ठो वा। इन्द्रो देवता। अयुजो बृहत्यो युजः सतोबृहत्यः। तृतीया तु द्विपदा विराट्। महाव्रते निष्केवल्ये बार्हततृचाशीतावेतत्सूक्तम्। तत्र द्विपदाम् 'अभि त्वा शूर' इत्येतं राथन्तरं प्रगाथं 'नकिः सुदासः' इति प्रगाथं च वर्जयेत्। तथैव पञ्चमारण्यके सूत्रितं—'मो षु त्वा वाघतश्चनेत्येतस्य द्विपदां चोद्धरति राथन्तरं च प्रगाथमथ ह्यस्य नकिः सुदासो रथमित्येतं प्रगाथमुद्धृत्य[2] त्वामिदा ह्यो नर इत्येतं[2] प्रगाथं प्रत्यवदधाति' (ऐ. आ. ५. २. ४) इति। चातुर्विंशिकेऽहनि पञ्चमेऽहनि च निष्केवल्ये 'मो षु त्वा वाघतः' इति प्रगाथः सद्विपदः। सूत्रितं च—'मो षु त्वा वाघतश्चनेति सद्विपद उपसमस्येद्द्विपदाम्' (आश्व. श्रौ. ७. ३) इति। चातुर्विंशिकेऽहनि मरुत्वतीये प्राकृतात्[3] मरुत्वतीयात् प्रगाथादनन्तरं 'नकिः सुदासः' इति प्रगाथं शंसेत्। पृष्ठ्याभिप्लवषडहयोः तृतीये षष्ठेऽहनि चायं प्रगाथः। तथैव सूत्रितं—'नकिः सुदासो रथमिति मरुत्वतीया ऊर्ध्वं नित्यात्' इति। 'एवं स्थितान् प्रगाथान् पृष्ठ्याभिप्लवयोरन्वहं पुनःपुनरावर्तयेयुः' (आश्व. श्रौ. ७. ३) इति। अग्निष्टोमे माध्यंदिनसवनेऽच्छावाकशस्त्रे 'उदिद्न्वस्य रिच्यते' इति प्रगाथः। तथा च सूत्रितम्—'उदिद्न्वस्य रिच्यते भूय इत्' (आश्व. श्रौ. ५. १६) इति। अग्निष्टोमे माध्यंदिनसवने मैत्रावरुणशस्त्रे 'कस्तमिन्द्र' इति प्रगाथः। सूत्रितं च—'कस्तमिन्द्र त्वावसुं सद्यो ह जातः' (आश्व. श्रौ. ५. १६) इति। चातुर्विंशिकेऽहनि माध्यंदिनसवने मैत्रावरुणशस्त्रस्यायं प्रगाथः। अहर्गणेष्वपि द्वितीयादिष्वहःसु। सूत्रितं च—'कस्तमिन्द्र त्वावसुं कन्नव्यो अतसीनाम्' (आश्व. श्रौ. ७. ४) इति। 'आरम्भणीयाः पर्यासान् कद्वतोऽहरहःशस्यानीति होत्रकाः' (आश्व. श्रौ. ७. १) इति। पृष्ठ्यषडहस्य तृतीयेऽहनि निष्केवल्ये वैरूपसामपक्षे 'यदिन्द्र यावतः' इत्यनुरूपस्तृचः। सूत्रितं च—'यदिन्द्र यावतस्त्वमिति प्रगाथौ स्तोत्रियानुरूपौ' (आश्व. श्रौ. ७. १०) इति। अग्निष्टोमे चातुर्विंशिकेऽहनि माध्यंदिनसवनेऽच्छावाकशस्त्रे 'तरणिरित्सिषासति' इति वैकल्पिकस्तृचः। सूत्रितं च—'तरोभिर्वो विदद्वसुं तरणिरित्सिषासति' (आश्व. श्रौ. ७. ४) इति। अग्निष्टोमे निष्केवल्यशस्त्रे रथन्तरसामपक्षे 'अभि त्वा शूर' इति प्रगाथः स्तोत्रियः। सूत्रितं च—'अभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति प्रगाथौ स्तोत्रियानुरूपौ' (आश्व. श्रौ. ५. १५) इति। आश्विनशस्त्रेऽप्ययं प्रगाथः। तथैव सूत्रितं च—'अभि त्वा शूर नोनुमो बहवः सूरचक्षस इति प्रगाथाः' (आश्व. श्रौ. ६.५) इति। महाव्रते निष्केवल्ये दक्षिणपक्षेऽयं प्रगाथः। तथैव पञ्चमारण्यके सूत्रितम्—'अभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति रथन्तरस्य स्तोत्रियानुरूपौ प्रगाथौ' (ऐ. आ. ५. २. २) इति। आश्विनशस्त्रे 'इन्द्र क्रतुं नः' इति प्रगाथः। सूत्रितं च—'इन्द्र क्रतुं न आ भराभि त्वा शूर नोनुमः' (आश्व. श्रौ. ६. ५)

---

१. ख-ग-ञ-त२-४–सर्वतः जगत ईश्वरं; न-भ-म-श२–सर्वत जगत ईश्वरं; श१–जगत ईश्वरं।
२. ख-ञ-त३-४-म–'प्रगाथ॰......इत्येतं' नास्ति। ३. ख-ञ-त३-४-न-भ-श–प्रकृतात्।

इति। चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रेऽयं वैकल्पिकः स्तोत्रियः प्रगाथः। सूत्रितं च —'इन्द्र क्रतुं न आ भरेन्द्र ज्येष्ठं न आ भर' (आश्व. श्रौ. ७. ४) इति॥

मो षु त्वा वाघतश्चनारे अस्मन्नि रीरमन्।
आरात्ताच्चित्सधमादं न आ गहीह वा सन्नुप श्रुधि॥ १॥

मो इति। सु। त्वा। वाघतः। चन। आरे। अस्मत्। नि। रीरमन्।
आरात्तात्। चित्। सधऽमादम्। नः। आ। गहि। इह। वा। सन्। उप। श्रुधि॥ १॥

हे इन्द्र vत्वा त्वां vवाघतश्चन यजमाना अपि[1] vअस्मत् अस्मत्तः vआरे दूरे vमो[2] vनि vरीरमन् न[3] नितरां रमयन्तु। अतस्त्वम् vआरात्ताच्चित् दूरेऽपि वर्तमानोऽस्मदीयं vसधमादं यज्ञम् vआ vगहि आगच्छ। vइह vवा अत्रापि वा vसन् विद्यमानः vउप vश्रुधि अस्मदीयं स्तोत्रमुपश्रृणु॥

इमे हि ते ब्रह्मकृतः सुते सचा मधौ न मक्ष आसते।
इन्द्रे कामं जरितारो वसूयवो रथे न पादमा दधुः॥ २॥

इमे। हि। ते। ब्रह्मऽकृतः। सुते। सचा। मधौ। न। मक्षः। आसते।
इन्द्रे। कामम्। जरितारः। वसुऽयवः। रथे। न। पादम्। आ। दधुः॥ २॥

हे इन्द्र vते त्वदर्थं vसुते अभिषुते सोमे vब्रह्मकृतः स्तोत्रकृतः vमधौ vन मधुनीव vमक्षः मक्षिकाः vसचा सह vआसते उपविशन्ति। अथ परोक्षस्तुतिः। vवसूयवः धनकामाः vजरितारः स्तोतारः vकामम् इष्टम् vइन्द्रे vरथे vन vपादं रथे पादमिव vआ vदधुः समर्पयन्ति॥

रायस्कामो वज्रहस्तं सुदक्षिणं पुत्रो न पितरं हुवे॥ ३॥

रायःऽकामः। वज्रऽहस्तम्। सुऽदक्षिणम्। पुत्रः। न। पितरम्। हुवे॥ ३॥

vरायस्कामः धनकामोऽहं vसुदक्षिणं शोभनदानं vवज्रहस्तम् इन्द्रं vपुत्रो vन पुत्र इव vपितरं vहुवे ह्वयामि॥

इम इन्द्राय सुन्विरे सोमासो दध्याशिरः।
ताँ आ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक आ॥ ४॥

इमे। इन्द्राय। सुन्विरे। सोमासः। दधिऽआशिरः।
तान्। आ। मदाय। वज्रऽहस्त। पीतये। हरिऽभ्याम्। याहि। ओकः। आ॥ ४॥

हे vवज्रहस्त vदध्याशिरः दधिमिश्रणाः vइमे vसोमासः सोमाः vइन्द्राय तुभ्यं vसुन्विरे सुता बभूवुः। vतान् सोमान् vमदाय मदार्थं vपीतये पानाय vओकः यज्ञसदनम् vआ अभि vहरिभ्याम् अश्वाभ्याम् vआ vयाहि आगच्छ॥

---

१. ख-म्र-त-न-भ-श—अप्येनो; ज्ञ—अपि यतो। २. ख-भ-त३—'मो' नास्ति; म्र-त४-श—मा; न—जा। ३. ख-भ-त३—'न' नास्ति।

श्रवच्छ्रुत्कर्ण ईयते वसूनां नू चिन्नो मर्धिषद्गिरः ।
सद्यश्चिद्यः सहस्राणि शता ददन्नकिर्दित्सन्तमा मिनत् ॥ ५ ॥

श्रवत् । श्रुत्ऽकर्णः । ईयते । वसूनाम् । नु । चित् । नः । मर्धिषत् । गिरः ।
सद्यः । चित् । यः । सहस्राणि । शता । ददत् । नकिः । दित्सन्तम् । आ । मिनत् ॥५॥

श्रुत्कर्णः[1] याच्ञाश्रवणरूपकर्ण इन्द्रः वसूनां वसूनि ईयते याच्यते। नः अस्मदीयाः गिरः याच्ञावाक्यानि श्रवत् शृणोतु। नू चित् नैव मर्धिषत् हिनस्तु। अश्रवणेन याच्ञावाक्यानि निष्फलानि न करोत्वित्यर्थः। अपि चेन्द्रः[2] सद्यश्चित् सद्य एव याच्ञानन्तरमेव सहस्राणि शतानि च ददत् प्रयच्छेत्। दित्सन्तं दातुमिच्छन्तं तमिन्द्रं नकिः आ मिनत् न हिंस्यात्। कश्चिदपि न वारयेदित्यर्थः॥ ॥ १७ ॥

स वीरो अप्रतिष्कुत इन्द्रेण शूशुवे नृभिः ।
यस्ते गभीरा सवनानि वृत्रहन्त्सुनोत्या च धावति ॥ ६ ॥

सः । वीरः । अप्रतिऽस्कुतः । इन्द्रेण । शूशुवे । नृऽभिः ।
यः । ते । गभीरा । सवनानि । वृत्रऽहन् । सुनोति । आ । च । धावति ॥ ६ ॥

हे वृत्रहन् ते त्वदर्थं यः पुमान् गभीरा गभीराणि सवनानि सोमान् सुनोति आ धावति च त्वां स्तुतिभिरुपधावति च स वीरः इन्द्रेण हेतुना अप्रतिष्कुतः केनाप्यप्रतिगतोऽप्रतिशब्दितो वा भवेत्। नृभिः परिचारकैः शूशुवे उपगम्यते च। श्वयतिर्गतिकर्मा॥

भवा वरूथं मघवन्मघोनां यत्समजासि शर्धतः ।
वि त्वाहतस्य वेदनं भजेमह्या दूणाशो भरा गयम् ॥ ७ ॥

भव । वरूथम् । मघऽवन् । मघोनाम् । यत् । सम्ऽअजासि । शर्धतः ।
वि । त्वाऽहतस्य । वेदनम् । भजेमहि । आ । दुःऽनशः । भर । गयम् ॥ ७ ॥

हे मघवन् धनवन्निन्द्र मघोनां हविष्मतां वरूथम् उपद्रवाणां वारकं वर्म भव। यत् यस्त्वं शर्धतः उत्सहमानाञ्छत्रून् समजासि संप्रेरयेः। अपि च त्वाहतस्य त्वया हतस्य शत्रोः वेदनं धनं वि भजेमहि विशेषेण लभेमहि। किंच दुर्नशः नाशयितुमशक्यस्त्वं गयं गृहं धनं वा आ भर अस्मभ्यमाहर॥

सुनोता सोमपाव्ने सोममिन्द्राय वज्रिणे ।
पचता पक्तीरवसे कृणुध्वमित्पृणन्नित्पृणते मयः ॥ ८ ॥

सुनोत । सोमऽपाव्ने । सोमम् । इन्द्राय । वज्रिणे ।
पचत । पक्तीः । अवसे । कृणुध्वम् । इत् । पृणन् । इत् । पृणते । मयः ॥ ८ ॥

---

१. झ—यः श्रुत्कर्णः। २. झ—च य इन्द्रः।

हे मदीयाः पुरुषाः ᵛवज्रिणे ᵛसोमपाव्ने सोमस्य पात्रे ᵛइन्द्राय ᵛसोमं ᵛसुनोत अभिषुणुत । ᵛअवसे इन्द्रं तर्पयितुं ᵛपक्तीः पक्तव्यान् पुरोडाशादीन् ᵛपचत च । ᵛकृणुध्वमित् इन्द्रप्रियकराणि कर्माणि च कुरुतैव । इन्द्रो हि ᵛमयः सुखं ᵛपृणन्नित् यजमानाय प्रयच्छन्नेव ᵛपृणते हवींषीति शेषः ॥

मा स्रेधत सोमिनो दक्षता महे कृणुध्वं राय आतुजे ।
तरणिरिज्जयति क्षेति पुष्यति न देवासः कवत्नवे ॥ ९ ॥

मा । स्रेधत । सोमिनः । दक्षत । महे । कृणुध्वम् । राये । आऽतुजे ।
तरणिः । इत् । जयति । क्षेति । पुष्यति । न । देवासः । कवत्नवे ॥ ९ ॥

हे मदीया जनाः ᵛसोमिनः सोमवतो यागान् ᵛमा ᵛस्रेधत मा हिंसिष्ट । ᵛदक्षत यागादिकं कर्तुमुत्सहध्वं च । ᵛमहे महते ᵛआतुजे । तुजिर्हिंसाकर्मा दानकर्मा वा । शत्रूणामभिहिंसकाय धनानां प्रदात्रे वेन्द्राय ᵛराये धनलाभार्थं ᵛकृणुध्वं कर्माणि[1] कुरुत[2] च[2] । ᵛतरणिरित् कर्मसु त्वरित एव ᵛजयति शत्रून् । ᵛक्षेति गृहे निवसति च । ᵛपुष्यति प्रजया पशुभिश्च पुष्टो भवति । ᵛकवत्नवे कुत्सितक्रियायै । कवोपसृष्टस्यातेः सातत्यगमनकर्मणो रूपं कवत्नुरिति । ᵛदेवासः देवाः ᵛन भवन्तीति शेषः । सुखप्राप्तये भवन्तीत्यर्थः ॥

नकिः सुदासो रथं पर्यास न रीरमत् ।
इन्द्रो यस्याविता यस्य मरुतो गमत्स गोमति व्रजे ॥ १० ॥

नकिः । सुऽदासः । रथम् । परि । आस । न । रीरमत् ।
इन्द्रः । यस्य । अविता । यस्य । मरुतः । गमत् । सः । गोऽमति । व्रजे ॥ १० ॥

ᵛसुदासः शोभनदानस्य यजमानस्य ᵛरथं ᵛनकिः ᵛपर्यास कश्चिन्न पर्यस्यति । ᵛन ᵛरीरमत् न रमयति च । आत्मार्थं[3] न कश्चिदेनं गृह्णातीत्यर्थः । अपि च ᵛयस्य ᵛइन्द्रः ᵛअविता रक्षिता ᵛयस्य च ᵛमरुतः अवितारः ᵛसः ᵛगोमति गोयुक्ते ᵛव्रजे गोष्ठे ᵛगमत् गच्छेत् ॥ ॥ १८ ॥

गमद्वाजं वाजयन्निन्द्र मर्त्यो यस्य त्वमविता भुवः ।
अस्माकं बोध्यविता रथानामस्माकं शूर नृणाम् ॥ ११ ॥

गमत् । वाजम् । वाजयन् । इन्द्र । मर्त्यः । यस्य । त्वम् । अविता । भुवः ।
अस्माकम् । बोधि । अविता । रथानाम् । अस्माकम् । शूर । नृणाम् ॥ ११ ॥

हे ᵛइन्द्र ᵛत्वं ᵛयस्य मर्त्यस्य ᵛअविता रक्षिता ᵛभुवः भवेः सः ᵛमर्त्यः ᵛवाजयन् स्तोत्रेण त्वां बलिनं कुर्वन् ᵛवाजम् अन्नं ᵛगमत् गच्छेत् । अपि च हे ᵛशूर ᵛअस्माकं वासिष्ठानां ᵛरथानाम् ᵛअविता रक्षिता ᵛबोधि भव ॥ भवतेर्लोटि रूपम् । भकारस्य बकारश्छान्दसः ॥ ᵛअस्माकं ᵛनृणां पुत्रादीनां चाविता भव ॥

उदिन्न्वस्य रिच्यतेंऽशो धनं न जिग्युषः ।
य इन्द्रो हरिवान्न दभन्ति तं रिपो दक्षं दधाति सोमिनि ॥ १२ ॥

---

१. ख-भ-कर्म । २. त-कुरुत; श-च कुरुत । ३. ख-घ-त३-न-भ-आत्मानं ।

उत् । इत् । नु । अस्य । रिच्यते । अंशः । धनम् । न । जिग्युषः ।
यः । इन्द्रः । हरिऽवान् । न । दभन्ति । तम् । रिपः । दक्षम् । दधाति । सोमिनि ॥१२॥

ᵛअस्य इन्द्रस्य ᵛअंशः यज्ञे सोमस्य भागः अतिरिच्यतेऽन्येभ्योऽपि देवेभ्यः । इन्द्रस्य त्रिष्वपि सवनेषु सोमपानमस्ति[1] माध्यंदिनं हि सर्वमैन्द्रमिति । ᵛजिग्युषः जितवतः ᵛधनं ᵛन धनमिव । ᵛउदिन्नु इति त्रयः पूरणाः । अपि च ᵛयः ᵛहरिवान् ᵛइन्द्रः ᵛसोमिनि यजमाने ᵛदक्षं बलं ᵛदधाति संदधाति ᵛतं ᵛरिपः रिपवः ᵛन ᵛदभन्ति न हिंसन्ति ॥

**मन्त्रमखर्वं सुधितं सुपेशसं दधात यज्ञियेष्वा ।**
**पूर्वीश्चन प्रसितयस्तरन्ति तं य इन्द्रे कर्मणा भुवत् ॥ १३ ॥**

मन्त्रम् । अखर्वम् । सुऽधितम् । सुऽपेशसम् । दधात । यज्ञियेषु । आ ।
पूर्वीः । चन । प्रऽसितयः । तरन्ति । तम् । यः । इन्द्रे । कर्मणा । भुवत् ॥ १३ ॥

हे जनाः ᵛअखर्वम् अनल्पं ᵛसुधितं सुविहितं ᵛसुपेशसं शोभनरूपं ᵛमन्त्रं स्तोत्रं ᵛयज्ञियेषु यजनीयेषु देवेषु मध्य इन्द्राय ᵛदधात विधत्त । ᵛयः जनः ᵛकर्मणा स्तुत्यादिरूपेण ᵛइन्द्रे इन्द्रस्य चित्ते ᵛभुवत् भवेत् ᵛतं जनं ᵛपूर्वीः बह्व्यः ᵛप्रसितयः पाशादीनि बन्धनानि । ᵛचन इति समुदायो नेत्यर्थे वर्तते । न ᵛतरन्ति । न व्याप्नुवन्ति[2] इत्यर्थः ॥

**कस्तमिन्द्र त्वावसुमा मर्त्यो दधर्षति ।**
**श्रद्धा इत्ते मघवन्पार्ये दिवि वाजी वाजं सिषासति ॥ १४ ॥**

कः । तम् । इन्द्र । त्वाऽवसुम् । आ । मर्त्यः । दधर्षति ।
श्रद्धा । इत् । ते । मघऽवन् । पार्ये । दिवि । वाजी । वाजम् । सिसासति ॥ १४ ॥

हे ᵛइन्द्र तव चित्ते यो भवेत् ᵛत्वावसुम् । त्वं वसुर्व्यापको यस्येति बहुव्रीहिः । ᵛतं जनं ᵛकः ᵛमर्त्यः ᵛआ ᵛदधर्षति आधर्षेत् । हे ᵛमघवन् ᵛते त्वदर्थं यः ᵛश्रद्धा श्रद्धया युक्तः सन् ᵛवाजी हविष्मान् भवेत् ᵛपार्ये ᵛदिवि सौत्येऽहनि सः ᵛवाजम् अन्नं बलं वा ᵛसिषासति सेवते ॥

**मघोनः स्म वृत्रहत्येषु चोदय ये ददति प्रिया वसु ।**
**तव प्रणीती हर्यश्व सूरिभिर्विश्वा तरेम दुरिता ॥ १५ ॥**

मघोनः । स्म । वृत्रऽहत्येषु । चोदय । ये । ददति । प्रिया । वसु ।
तव । प्रऽनीती । हरिऽअश्व । सूरिऽभिः । विश्वा । तरेम । दुःऽइता ॥ १५ ॥

हे इन्द्र ᵛमघोनः धनवतस्ते । त्वदर्थमित्यर्थः । ᵛप्रिया प्रियाणि ᵛवसु ᵛवसूनि धनानि ᵛये जनाः ᵛददति प्रयच्छन्ति तान् जनान् ᵛवृत्रहत्येषु संग्रामेषु ᵛचोदय प्रेरय । हे ᵛहर्यश्व ᵛतव ᵛप्रणीती प्रणीत्या प्रणयनेन ᵛसूरिभिः स्तोतृभिः पुत्रादिभिः सार्धं ᵛविश्वा विश्वानि ᵛदुरिता दुरितानि ᵛतरेम ॥ ॥ १९ ॥

---

१. क्ष-त१-२—समानमस्ति; त४—सोमानमस्ति । २. क्ष-त-शा—प्राप्नुवंति ।

तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम् ।
सत्रा विश्वस्य परमस्य राजसि नकिष्ट्वा गोषु वृण्वते ॥ १६ ॥

तव । इत् । इन्द्र । अवमम् । वसु । त्वम् । पुष्यसि । मध्यमम् ।
सत्रा । विश्वस्य । परमस्य । राजसि । नकिः । त्वा । गोषु । वृण्वते ॥ १६ ॥

हे ᵛइन्द्र ᵛअवमम् अधमं त्रपुसीसादिकं ᵛवसु धनम्। यद्वा भौमं वस्ववमम्। ᵛतवेत् तवैव। ᵛत्वं त्वमेव ᵛमध्यमं वसु रजतहिरण्यादिकमान्तरिक्षं वा ᵛपुष्यसि। ᵛविश्वस्य सर्वस्य ᵛपरमस्य उत्तमस्यापि रत्नादेर्दिव्यस्य वा वसुनः ᵛराजसि ईशिषे। ᵛसत्रा सत्यमेव[1]। अपि च ᵛत्वा त्वां ᵛगोषु निमित्तेषु ᵛनकिः ᵛवृण्वते केऽपि न वारयन्ति ॥

त्वं विश्वस्य धनदा असि श्रुतो य ईं भवन्त्याजयः ।
तवायं विश्वः पुरुहूत पार्थिवोऽवस्युर्नाम भिक्षते ॥ १७ ॥

त्वम् । विश्वस्य । धनऽदाः । असि । श्रुतः । ये । ईम् । भवन्ति । आजयः ।
तव । अयम् । विश्वः । पुरुऽहूत । पार्थिवः । अवस्युः । नाम । भिक्षते ॥ १७ ॥

हे इन्द्र ᵛत्वं ᵛविश्वस्य सर्वस्य स्तोतुर्यजमानस्य वा ᵛधनदाः धनस्य दाता सन् ᵛश्रुतः प्रसिद्धः ᵛअसि। ᵛये ᵛईं य एते ᵛआजयः युद्धानि ᵛभवन्ति तेष्वपि धनदाः श्रुतोऽसि। हे ᵛपुरुहूत ᵛविश्वः सर्वोऽपि ᵛअयं ᵛपार्थिवः जनः ᵛतव। त्वत्त इत्यर्थः। ᵛअवस्युः रक्षामिच्छन् ᵛनाम अन्नमुदकं वा। 'बर्हिः नाम' इत्युदकनामसु पाठात्। ᵛभिक्षते याचते। त्वामेवेति शेषः ॥

यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
स्तोतारमिद्दिधिषेय रदावसो न पापत्वाय रासीय ॥ १८ ॥

यत् । इन्द्र । यावतः । त्वम् । एतावत् । अहम् । ईशीय ।
स्तोतारम् । इत् । दिधिषेय । रदवसो इति रदऽवसो । न । पापऽत्वाय । रासीय ॥ १८ ॥

हे ᵛइन्द्र[2] ᵛयत् यतः ᵛयावतः धनस्य ᵛत्वम्[3] इशिषे ᵛएतावत्। षष्ठ्या लुक्। एतावतो धनस्य ᵛअहमीशीय ईश्वरो भवेयं हे ᵛरदवसो। रदति ददाति वसूनीति रदवसुः। ततोऽहमस्मदीयं ᵛस्तोतारमित् ᵛदिधिषेय धनप्रदानेन धारयेयमेव। ᵛपापत्वाय ᵛन ᵛरासीय न दद्याम् ॥

शिक्षेयमिन्महयते दिवेदिवे राय आ कुहचिद्विदे ।
नहि त्वदन्यन्मघवन्न आप्यं वस्यो अस्ति पिता चन ॥ १९ ॥

शिक्षेयम् । इत् । महऽयते । दिवेऽदिवे । रायः । आ । कुहचित्ऽविदे ।
नहि । त्वत् । अन्यत् । मघऽवन् । नः । आप्यम् । वस्यः । अस्ति । पिता । चन ॥ १९ ॥

---

१. ख-न-भ-सत्यस्य; श१-सदैव सत्यमेव। २. य - इन्द्र त्वं। ३. ख-ग्र-न-भ-य-श-'त्वं' नास्ति।

ᐯकुहचिद्विदे। कुत्रचिद्विद्यमानः कुहचिद्वित्। तस्मै। यत्र क्वापि विद्यमानायेत्यर्थः। ᐯमहयते पूजयते जनाय ᐯदिवेदिवे प्रतिदिनं ᐯरायः धनानि ᐯशिक्षेयमित् दद्यामेव। आकारः पूरणः। एवमिन्द्रस्य वाक्यं श्रुत्वा संतुष्ट ऋषिर्वदति। हे ᐯमघवन् ᐯत्वत् त्वत्तः ᐯअन्यत् अस्माकम् ᐯआप्यं ज्ञातेयं ᐯनहि ᐯअस्ति। ᐯवस्यः प्रशस्यः ᐯपिता ᐯचन पालयिता च त्वदन्यो नास्तीत्यर्थः॥

**तरणिरित्सिषासति वाजं पुरंध्या युजा।**

**आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुम्॥ २०॥**

तरणिः। इत्। सिसासति। वाजम्। पुरम्ऽध्या। युजा।

आ। वः। इन्द्रम्। पुरुऽहूतम्। नमे। गिरा। नेमिम्। तष्टाऽइव। सुऽद्रुम्॥ २०॥

ᐯतरणिरित् स्तुत्यादौ कर्मणि त्वरित एव पुमान् ᐯपुरंध्या महत्या धिया ᐯयुजा सहायभूतया ᐯवाजम् अन्नं ᐯसिषासति संभजते। ᐯपुरुहूतं बहुभिराहूतम् ᐯइन्द्रं ᐯवः त्वां ᐯगिरा स्तुत्या अहम् ᐯआ ᐯनमे ᐯनेमिं चक्रस्य वलयं ᐯसुद्रुं शोभनदारुं ᐯतष्टेव। यथा वर्धकिर्दारुनेमिमानमयते तद्वदित्यर्थः॥ ॥ २०॥

**न दुष्टुती मर्त्यो विन्दते वसु न स्रेधन्तं रयिर्नशत्।**

**सुशक्तिरिन्मघवन् तुभ्यं मावते देष्णं यत्पार्ये दिवि॥ २१॥**

न। दुःऽस्तुती। मर्त्यः। विन्दते। वसु। न। स्रेधन्तम्। रयिः। नशत्।

सुऽशक्तिः। इत्। मघऽवन्। तुभ्यम्। माऽवते। देष्णम्। यत्। पार्ये। दिवि॥ २१॥

ᐯमर्त्यः मनुष्यः ᐯदुष्टुती दुष्टुत्या ᐯवसु धनं ᐯन ᐯविन्दते। इन्द्रं स्तुवन्नेव वसु लभत इत्यर्थः। ᐯस्रेधन्तं हिंसन्तम्। इन्द्रविषयस्तुत्यादिकर्माण्यकुर्वन्तमित्यर्थः। ᐯरयिः धनं ᐯन ᐯनशत् न व्याप्नोति। हे ᐯमघवन् त्वया ᐯपार्ये ᐯदिवि सौत्ये दिवसे ᐯमावते मत्सदृशाय ᐯदेष्णं दातव्यं ᐯयत् धनमस्ति तत् ᐯतुभ्यं त्वत्तः ᐯसुशक्तिरित् सुकर्मैव। विन्दत इति व्यवहितमप्यनुषज्यते अध्याहारस्यान्तिकत्वात्॥

**अभि त्वा शूर नोनुमोऽदुग्धाइव धेनवः।**

**ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः॥ २२॥**

अभि। त्वा। शूर। नोनुमः। अदुग्धाःऽइव। धेनवः।

ईशानम्। अस्य। जगतः। स्वःऽदृशम्। ईशानम्। इन्द्र। तस्थुषः॥ २२॥

हे ᐯशूर ᐯइन्द्र ᐯअस्य ᐯजगतः जङ्गमस्य ᐯईशानम् ईश्वरं ᐯतस्थुषः स्थावरस्य च ᐯईशानम्। ईशानमिति पदस्यावृत्तिरादरार्था। ᐯस्वर्दृशं सर्वदृशं ᐯत्वा त्वाम् ᐯअदुग्धाइव ᐯधेनवः यथादुग्धा धेनवः क्षीरपूर्णोधस्त्वेन वर्तन्ते तद्वत्सोमपूर्णचमसत्वेन वर्तमाना वयम् ᐯअभि ᐯनोनुमः भृशमभिष्टुमः॥

न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥ २३ ॥
न । त्वाऽवान् । अन्यः । दिव्यः । न । पार्थिवः । न । जातः । न । जनिष्यते ।
अश्वऽयन्तः । मघऽवन् । इन्द्र । वाजिनः । गव्यन्तः । त्वा । हवामहे ॥ २३ ॥

हे मघवन् इन्द्र दिव्यः दिवि भवः त्वावान् त्वत्सदृशः अन्यः न जायते । पार्थिवः पृथिव्यां भवोऽपि त्वावानन्यो न जायते । दिव्यः पार्थिवो वा त्वावानन्यो न जातः । न च जनिष्यते । पृथिव्यां दिवि च त्रिष्वपि लोकेषु त्वत्सदृशः कश्चिन्नास्तीत्यर्थः । अश्वायन्तः अश्वानिच्छन्तः वाजिनः वाजमिच्छन्तः । इच्छायामिनिप्रत्ययः ॥ हविष्मन्तो वा गव्यन्तः गा इच्छन्तश्च वयं त्वा त्वां हवामहे ह्वयामः ॥

अभी षतस्तदा भरेन्द्र ज्यायः कनीयसः ।
पुरूवसुर्हि मघवन्त्सनादसि भरेभरे च हव्यः ॥ २४ ॥
अभि । सतः । तत् । आ । भर । इन्द्र । ज्यायः । कनीयसः ।
पुरुऽवसुः । हि । मघऽवन् । सनात् । असि । भरेऽभरे । च । हव्यः ॥ २४ ॥

हे ज्यायः ज्यायन् इन्द्र ॥ 'आमन्त्रितं पूर्वमविद्यमानवत्' इतीन्द्रपदस्याविद्यमानवद्भावात् ज्याय इत्यस्य सर्वानुदात्तत्वाभावः नकारस्य रुत्वं व्यत्ययात्नुमभावो वा ॥ कनीयसः सतः[1] मम तत् प्रसिद्धं धनम् अभि आ भर । हे मघवन् त्वं सनात् चिरादेवारभ्य पुरूवसुर्हि बहुधनो हि असि । भरेभरे संग्रामे यज्ञे वा हव्यः हविष्यः च असि ॥

परा णुदस्व मघवन्नमित्रान्त्सुवेदा नो वसू कृधि ।
अस्माकं बोध्यविता महाधने भवा वृधः सखीनाम् ॥ २५ ॥
परा । नुदस्व । मघऽवन् । अमित्रान् । सुऽवेदा । नः । वसु । कृधि ।
अस्माकम् । बोधि । अविता । महाऽधने । भव । वृधः । सखीनाम् ॥ २५ ॥

हे मघवन् परा पराचीनान् अमित्रान् शत्रून् नुदस्व प्रेरय । नः अस्मभ्यं वसु वसूनि सुवेदा सुलभानि कृधि कुरु । महाधने संग्रामे । 'वाजसातौ महाधने' इति संग्रामनामसु पाठात् । सखीनां स्तोतृणाम् अस्माकं वसिष्ठानाम् अविता रक्षिता बोधि भव । वृधः वर्धयिता च भव ॥

इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥ २६ ॥
इन्द्र । क्रतुम् । नः । आ । भर । पिता । पुत्रेभ्यः । यथा ।
शिक्ष । नः । अस्मिन् । पुरुऽहूत । यामनि । जीवाः । ज्योतिः । अशीमहि ॥ २६ ॥

---

१. ख-म-त-श—अतो ।

हे ᵛइन्द्र ᵛनः अस्मभ्यं ᵛक्रतुं कर्म प्रज्ञानं वा ᵛआ ᵛभर आहर। अपि च ᵛयथा ᵛपिता ᵛपुत्रेभ्यः धनं प्रयच्छति तथा ᵛनः अस्मभ्यं ᵛशिक्ष धनं देहि। हे ᵛपुरुहूत बहुभिराहूत ᵛयामनि यज्ञे ᵛजीवाः वयं ᵛज्योतिः सूर्यम् ᵛअशीमहि प्रतिदिनं प्राप्नुयाम ॥

मा नो॒ अज्ञा॑ता वृ॒जना॑ दुरा॒ध्यो॑३॒ माशि॑वासो॒ अव॑ क्रमुः ।
त्वया॑ व॒यं प्र॒वत॒: शश्व॑तीर॒पोऽति॑ शूर तरामसि ॥ २७ ॥

मा । न॒: । अज्ञा॑ताः । वृ॒जना॑ः । दु॒:ऽआ॒ध्य॑: । मा । अशि॑वासः । अव॑ । क्र॒मु॒: ।
त्वया॑ । व॒यम् । प्र॒ऽवत॑: । शश्व॑तीः । अ॒प॒: । अति॑ । शू॒र॒ । त॒रा॒म॒सि॒ ॥ २७ ॥

हे इन्द्र ᵛअज्ञाताः अज्ञातगमनाः ᵛवृजनाः हिंसकाः ᵛदुराध्यः ᵛनः अस्मान् ᵛमा ᵛअव ᵛक्रमुः मावचक्रमुः। हे ᵛशूर ᵛत्वया ᵛवयं वसिष्ठाः ᵛप्रवतः प्रवणकाः सन्तः ᵛशश्वतीः बह्वीः ᵛअपः ᵛअति ᵛतरामसि अतितराम ॥ ॥ २१ ॥

'श्वित्यञ्चः' इति चतुर्दशर्चं षोडशं सूक्तम्। अत्रेयमनुक्रमणिका—'श्वित्यञ्चः षळूना संस्तवो वसिष्ठस्य सपुत्रस्येन्द्रेण वा संवादः' इति। आदितो नवानां वसिष्ठ ऋषिः। वसिष्ठपुत्राणां स्तूयमानत्वात्त एव देवता। 'विद्युतो ज्योतिः' इत्यादिभिर्दशम्यादिभिः स्वपुत्रैर्वसिष्ठः स्तूयते। अतो वसिष्ठो देवता। त एव ऋषयः। 'या तेनोच्यते' इति न्यायात्। अनुक्तत्वात् त्रिष्टुप् ॥

श्वि॒त्यञ्चो॑ मा दक्षिण॒तस्क॑पर्दा धियंजि॒न्वासो॑ अ॒भि हि प्र॑म॒न्दुः ।
उ॒त्तिष्ठ॑न्वोचे॒ परि॑ ब॒र्हिषो॒ नॄन्न मे॑ दू॒राद॑वित॒वे वसि॑ष्ठाः ॥ १ ॥

श्वि॒त्यञ्च॑: । मा॒ । द॒क्षि॒ण॒तःऽक॑पर्दाः । धि॒य॒म्ऽजि॒न्वास॑: । अ॒भि । हि । प्र॒ऽम॒न्दुः ।
उ॒त्ऽतिष्ठ॑न् । वो॒चे॒ । परि॑ । ब॒र्हिष॑: । नॄन् । न । मे॒ । दू॒रात् । अवि॑तवे । वसि॑ष्ठाः ॥ १ ॥

ᵛश्वित्यञ्चः। श्वित्यं श्वेतवर्णमञ्चन्तीति श्वित्यञ्चः। श्वेतवर्णा इत्यर्थः। ᵛधियंजिन्वासः कर्मणां पूरयितारः ᵛदक्षिणतस्कपर्दाः। दक्षिणे शिरसो भागे कपर्दाश्चूडा येषां[1] ते दक्षिणतस्कपर्दाः। चूडाकर्मणि दक्षिणतो वसिष्ठानामिति स्मर्यते। ᵛमा माम् ᵛअभि ᵛप्रमन्दुः विद्याबलेनाभिप्राहर्षयन्। यतो मामभि प्रमन्दुरतः ᵛबर्हिषः यज्ञात्। ᵛपरि इति पञ्चम्यर्थानुवादः[2]। ᵛउत्तिष्ठन् अहं ᵛनॄन् यज्ञस्य नेतॄन् ᵛवोचे ब्रवीमि। ᵛमे मत्तः ᵛदूरात् ᵛवसिष्ठाः वसिष्ठस्य मम पुत्राः[3] ᵛअवितवे गन्तुं ᵛन[4] अर्हन्तीति शेषः ॥

दू॒रादिन्द्र॑मनय॒न्ना सु॒तेन॑ ति॒रो वै॑श॒न्तमति॒ पान्त॑मु॒ग्रम् ।
पाश॑द्युम्नस्य वाय॒तस्य॒ सोमा॑त्सु॒तादिन्द्रो॑ऽवृणीता॒ वसि॑ष्ठान् ॥ २ ॥

दू॒रात् । इन्द्र॑म् । अ॒न॒य॒न् । आ । सु॒तेन॑ । ति॒रः । वै॒श॒न्तम् । अति॑ । पान्त॑म् । उ॒ग्रम् ।
पाश॑ऽद्युम्नस्य । वा॒य॒तस्य॑ । सोमा॑त् । सु॒तात् । इन्द्र॑ः । अवृ॒णी॒त॒ । वसि॑ष्ठान् ॥ २ ॥

---

१. ख–एषां। २. ख-भ–°नुवादी। ३. झ–पुत्राः सुदासं राजानं; त१–पुत्राः सुदासराजानः; त२–पुत्राः सुदासराजान। ४. ख-त-न-भ-श–'न' नास्ति।

यदा वसिष्ठस्य पुत्राः सुदासं राजानमयाजयन् तदैव पाशद्युम्नाख्योऽपि राजा सोमान् यष्टुमुद्यमं चकार। तदा ते वसिष्ठपुत्राः पाशद्युम्नं तिरस्कृत्य तदीये यागे सोमं पिबन्तमिन्द्रं मन्त्रबलेन तस्मादाच्छिद्य सुदासो यज्ञे स्थापयामासुः। तदेतद्वृत्तान्तं कीर्तयन् वसिष्ठः स्वसुताननेन मन्त्रेण स्तौति। ᵛवैशन्तम्। वेशन्तः पल्वलम्। अत्र वेशन्तशब्देन सोमाधारश्चमसो लक्ष्यते। तत्स्थं सोमं ᵛपान्तं पिबन्तम् ᵛउग्रम् उद्गूर्णम् ᵛइन्द्रं ᵛसुतेन सुदासो यज्ञेऽभिषुतेन सोमेन हेतुना ᵛतिरः पाशद्युम्नं तिरस्कृत्य ᵛदूरात् ᵛआ ᵛअनयन् वसिष्ठा मन्त्रबलेनानीतवन्तः। ᵛइन्द्रः अपि ᵛवायतस्य वयतः पुत्रस्य ᵛपाशद्युम्नस्य। द्वितीयार्थे षष्ठी। वायतं पाशद्युम्नम् ᵛअति अतिहाय सुदासो यज्ञेऽभिषुतात् ᵛसोमात् हेतोः ᵛवसिष्ठान् वसिष्ठस्य पुत्रान् ᵛअवृणीत। पाशद्युम्नस्य सोमयागे चमसस्थं सोमं पिबन्नपीन्द्रस्तं पाशद्युम्नं तिरस्कृत्य मन्त्रसामर्थ्यबलेन सुदासो यज्ञ आह्वनकाले वसिष्ठानाजगामेत्यर्थः॥

एवेन्नु कं सिन्धुमेभिस्ततारेवेन्नु कं भेदमेभिर्जघान।
एवेन्नु कं दाशराज्ञे सुदासं प्रावदिन्द्रो ब्रह्मणा वो वसिष्ठाः॥ ३॥

एव। इत्। नु। कम्। सिन्धुम्। एभिः। ततार। एव। इत्। नु। कम्। भेदम्। एभिः। जघान।
एव। इत्। नु। कम्। दाशऽराज्ञे। सुऽदासम्। प्र। आवत्। इन्द्रः। ब्रह्मणा। वः। वसिष्ठाः॥३॥

ᵛएवेत् यथा पाशद्युम्नस्य सवाख्ये[1] सोमयागे चमसस्थं सोमं पिबन्तमपीन्द्रं वसिष्ठैः सुदाः प्राप्तवान् एवमेव ᵛसिन्धुं नदीम् ᵛएभिः वसिष्ठैः ᵛकं सुखेन ᵛततार तीर्ण आसीत्। ᵛनु इति पूरणः। तथा च निगमान्तरम्–'अर्णांसि चित्पप्रथाना सुदासे' (ऋ. सं. ७. १८. ५) इति। ᵛएवेत् एवमेव ᵛभेदं भेदनामकं शत्रुमपि ᵛएभिः वसिष्ठैरेव ᵛजघान। अथ प्रत्यक्षस्तुतिः। ᵛएवेत् एवमेव हे ᵛवसिष्ठाः ᵛवः युष्मदीयेन ᵛब्रह्मणा स्तोत्रेण ᵛदाशराज्ञे दशभी राजभिः सह युद्धे प्रवृत्ते[2] सति ᵛसुदासं राजानम् ᵛइन्द्रः ᵛप्रावत् प्रारक्षत्। तथा च निगमान्तरं–'दश राजानः समिता अयज्यवः सुदासमिन्द्रावरुणा न युयुधुः' (ऋ. सं. ७. ८३. ७) इति 'दाशराज्ञे परियत्ताय विश्वतः' (ऋ. सं. ७. ८३. ८) इति च॥

जुष्टी नरो ब्रह्मणा वः पितॄणामक्षमव्ययं न किला रिषाथ।
यच्छक्वरीषु बृहता रवेणेन्द्रे शुष्ममदधाता वसिष्ठाः॥ ४॥

जुष्टी। नरः। ब्रह्मणा। वः। पितॄणाम्। अक्षम्। अव्ययम्। न। किल। रिषाथ।
यत्। शक्वरीषु। बृहता। रवेण। इन्द्रे। शुष्मम्। अदधात। वसिष्ठाः॥ ४॥

हे ᵛनरः ᵛवः युष्मदीयेन ᵛब्रह्मणा स्तोत्रेण ᵛपितॄणां ᵛजुष्टी प्रीतिर्भवति। पितॄणामित्यनेन पारोक्ष्येण[3] वसिष्ठस्यैव कीर्तनम्। अहं प्रीतो भवामीत्यर्थः। अथेदानीं स्वमाश्रमं गन्तुमुद्यतोऽहम् ᵛअक्षं रथस्याक्षम् ᵛअव्ययं व्ययामि। लडर्थे लङ्। चालयामीत्यर्थः। यूयं ᵛन ᵛकिल ᵛरिषाथ न च क्षीणा भवथ हे ᵛवसिष्ठाः ᵛयत् यस्मात् ᵛशक्वरीषु ऋक्षु ᵛबृहता श्रेष्ठेन ᵛरवेण साम्ना ᵛइन्द्रे ᵛशुष्मं बलम् ᵛअदधात अधारयत॥

---

१. ख-न-भ–संसवाख्ये; ज्ञ–'सवाख्ये' नास्ति; ज्ञ-त३-श–संवाख्ये; त१–ख्ये; त२–ख्ये।
२. श–प्रवृद्धे। ३. ज्ञ-त२–परोक्षेण; त४– परोक्ष्येण।

उद्द्यामिवेत्तृष्णजो नाथितासोऽदीधयुर्दाशराज्ञे वृतासः ।
वसिष्ठस्य स्तुवत इन्द्रो अश्रोदुरुं तृत्सुभ्यो अकृणोदु लोकम् ॥ ५ ॥

उत् । द्याम्ऽइव । इत् । तृष्णऽजः । नाथितासः । अदीधयुः । दाशऽराज्ञे । वृतासः ।
वसिष्ठस्य । स्तुवतः । इन्द्रः । अश्रोत् । उरुम् । तृत्सुऽभ्यः । अकृणोत् । ऊँ इति । लोकम् ॥५॥

vतृष्णजः जाततृष्णाः vवृतासः तृत्सुभी राजभिर्वृताः vनाथितासः वृष्टिं याचमानाः वसिष्ठाः vद्यामिव आदित्यमिव इन्द्रं vदाशराज्ञे दशानां राज्ञां संग्रामे vउत्[1] vअदीधयुः[1] उददीधयन् । vस्तुवतः vवसिष्ठस्य स्तोत्रम् vइन्द्रः vअश्रोत् अशृणोच्च । vउरुं विस्तीर्णं vलोकं vतृत्सुभ्यः राजभ्यः vअकृणोत् अकरोच्च अददाच्चेत्यर्थः ॥ ॥ २२ ॥

दण्डाइवेद्गोअजनास आसन्परिच्छिन्ना भरता अर्भकासः ।
अभवच्च पुरएता वसिष्ठ आदित्तृत्सूनां विशो अप्रथन्त ॥ ६ ॥

दण्डाःऽइव । इत् । गोऽअजनासः । आसन् । परिऽछिन्नाः । भरताः । अर्भकासः ।
अभवत् । च । पुरःऽएता । वसिष्ठः । आत् । इत् । तृत्सूनाम् । विशः । अप्रथन्त ॥ ६ ॥

vगोअजनासः गवां प्रेरकाः vदण्डाइव यथा दण्डाः परिच्छिन्नपत्रोपशाखा भवन्ति तद्वत् vभरताः । तृत्सूनामेव राज्ञां भरता इति नामान्तरेणोपादानम् । शत्रुभिः vपरिच्छिन्नाः एव vआसन् । vअर्भकासः अर्भकाः अल्पाश्चासन् । vआदित् परिच्छिन्नत्वादनन्तरमेव तेषां vतृत्सूनां vवसिष्ठः vपुरएता पुरोहितः vअभवच्च । तत्पौरोहित्यसामर्थ्यात्[2] तृत्सूनां vविशः प्रजाः vअप्रथन्त अवर्धन्त ॥

त्रयः कृण्वन्ति भुवनेषु रेतस्तिस्रः प्रजा आर्या ज्योतिरग्राः ।
त्रयो घर्मास उषसं सचन्ते सर्वाँ इत्ताँ अनु विदुर्वसिष्ठाः ॥ ७ ॥

त्रयः । कृण्वन्ति । भुवनेषु । रेतः । तिस्रः । प्रऽजाः । आर्याः । ज्योतिःऽअग्राः ।
त्रयः । घर्मासः । उषसम् । सचन्ते । सर्वान् । इत् । तान् । अनु । विदुः । वसिष्ठाः ॥ ७ ॥

vभुवनेषु पृथिव्यन्तरिक्षद्युषु vत्रयः अग्निवायुसूर्याः यथाक्रमेण vरेतः विश्वस्य धारकमुदकं vकृण्वन्ति कुर्वन्ति । तेषां त्रयाणां vज्योतिरग्राः आदित्यप्रमुखाः vआर्याः श्रेष्ठाः vतिस्रः प्रजाः भवन्ति । ते च vत्रयः अग्निवायुसूर्याः vघर्मासः दीप्यमानाः vउषसं vसचन्ते समवयन्ति[3] । दुर्ज्ञानान्[3] vसर्वानित् सर्वानेव vतान् vवसिष्ठाः vअनु vविदुः अभिजानन्ति । तेषां रहस्यविज्ञानादियमपि वसिष्ठानामेव स्तुतिः । तथा च शाठ्यायनकं—'त्रयः कृण्वन्ति भुवनेषु रेत इत्यग्निः पृथिव्यां रेतः कृणोति वायुरन्तरिक्ष आदित्यो दिवि तिस्रः प्रजा आर्या ज्योतिरग्रा इति वसवो रुद्रा आदित्यास्तासां ज्योतिर्यदसावादित्यस्त्रयो घर्मास उपसं सचन्त इत्यग्निरुषसं सचते वायुरुषसं सचत आदित्य उषसं सचते ' इति ॥

---

१. ख-झ-त३-४-न-भ-श–'उददीधयुः' नास्ति; झ-त१-२–अदीधयुः । २. ख-न-भ–यत्पौरोहित्य°; झ–तत्पौरोहित्यं°; त३–यत्पौरोहित्यं° । ३. ख-भ–सेवंते ।

सूर्यस्येव वक्षथो ज्योतिरेषां समुद्रस्येव महिमा गभीरः ।
वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वेतवे वः ॥ ८ ॥

सूर्यस्यऽइव । वक्षथः । ज्योतिः । एषाम् । समुद्रस्यऽइव । महिमा । गभीरः ।
वातस्यऽइव । प्रऽजवः । न । अन्येन । स्तोमः । वसिष्ठाः । अनुऽएतवे । वः ॥ ८ ॥

हे वसिष्ठाः एषां वः युष्माकं स्तोमः महिमापि वा सूर्यस्य ज्योतिः इव वक्षथः प्रकाशोऽस्ति । हे वसिष्ठाः वो युष्माकं महिमा स्तोमोऽपि वा समुद्रस्येव गभीरः गम्भीरोऽस्ति । तथा हे वसिष्ठाः एषां वो युष्माकं स्तोम ऋक्समूहो महिमापि वा वातस्येव प्रजवः यथा वातस्य प्रवेगोऽन्येनान्वेतुं न शक्यस्तद्वत् अन्येन अन्वेतवे[1] अन्वेतुं न शक्यः ॥

त इन्निण्यं हृदयस्य प्रकेतैः सहस्रवल्शमभि सं चरन्ति ।
यमेन ततं परिधिं वयन्तोऽप्सरस उप सेदुर्वसिष्ठाः ॥ ९ ॥

ते । इत् । निण्यम् । हृदयस्य । प्रऽकेतैः । सहस्रऽवल्शम् । अभि । सम् । चरन्ति ।
यमेन । ततम् । परिऽधिम् । वयन्तः । अप्सरसः । उप । सेदुः । वसिष्ठाः ॥ ९ ॥

त इत् त एव वसिष्ठाः निण्यं निरोहितं दुर्ज्ञानम् । 'निण्यं सस्वः' इत्यन्तर्हितनामसु पाठात् । सहस्रवल्शं सहस्रशाखं संसारं हृदयस्य प्रकेतैः प्रज्ञानैः अभि सं चरन्ति । एवं स्वाच्छन्द्येन[2] अभिसंचरन्तस्ते वसिष्ठाः यमेन कारणात्मना सर्वनियन्त्रा ततं विस्तृतं परिधिं वस्त्रम् । परिधिरित्यनेन जन्मादिप्रवाहो विवक्षितः । तं वयन्तोऽप्सरसः जननीत्वेन उप सेदुः । अत्र वसिष्ठा इति बहुवचनं पूजायाम् । वसिष्ठः पूर्वं प्रजापतेस्त्पन्नं देहमुत्सृज्याप्सरःसु जायेयेति बुद्धिमकरोदिति भावः ॥

विद्युतो ज्योतिः परि संजिहानं मित्रावरुणा यदपश्यतां त्वा ।
तत्ते जन्मोतैकं वसिष्ठागस्त्यो यत्त्वा विश आजभार ॥ १० ॥

विऽद्युतः । ज्योतिः । परि । सम्ऽजिहानम् । मित्रावरुणा । यत् । अपश्यताम् । त्वा ।
तत् । ते । जन्म । उत । एकम् । वसिष्ठ । अगस्त्यः । यत् । त्वा । विशः । आऽजभार ॥ १० ॥

एतास्वृक्षु वसिष्ठस्यैव देहपरिग्रहः प्रतिपाद्यते । एताश्चेन्द्रस्य वाक्यमित्येके वर्णयन्त्यपरे वसिष्ठपुत्राणामिति । हे वसिष्ठ यत् यदा विद्युतः विद्युत इव स्वीयं ज्योतिः देहान्तरपरिग्रहार्थं परि संजिहानं परित्यजन्तं त्वा त्वाम् । छान्दसमात्मनेपदम् । यद्वा । जिघृक्षितदेहार्थं[3] स्वीयं ज्योतिः परि संजिहानम् । परिजिघृक्षन्तमित्यर्थः । अस्मिन् पक्षे जहातेर्गत्यर्थत्वादात्मनेपदं छान्दसं न भवति । मित्रावरुणा मित्रावरुणौ अपश्यताम् । आवाभ्यामयं जायेतेति समकल्पतामित्यर्थः । तत् तदा ते तव एकं जन्म । उत अपि च यत् यदा अगस्त्यः विशः निवेशनान्मित्रावरुणौ आवां[4] जनयिष्याव इत्येतस्मात् पूर्वावस्थानात् त्वाम् आजभार आजहार ॥ ॥ २३ ॥

१. ज्ञ—भवन्महिमा अन्वेतवे; त१-२-४— तव महिमा अन्वेतवे । २. ज्ञ-त१-२—स्वच्छंदेन । ३. ख-भ—जिघृक्षिकदेहाय; ज्ञ—जिघृक्षितं देहार्थं; न—जिघृक्षितदेहाय । ४. श— वा कदा ।

उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधि जातः ।
द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करे त्वाददन्त ॥ ११ ॥

उत । असि । मैत्रावरुणः । वसिष्ठ । उर्वश्याः । ब्रह्मन् । मनसः । अधि । जातः ।
द्रप्सम् । स्कन्नम् । ब्रह्मणा । दैव्येन । विश्वे । देवाः । पुष्करे । त्वा । अददन्त ॥ ११ ॥

Vउत अपि च हे Vवसिष्ठ Vमैत्रावरुणः मित्रावरुणयोः पुत्रः Vअसि। हे Vब्रह्मन् वसिष्ठ Vउर्वश्याः अप्सरसः Vमनसः[1] ममायं पुत्रः स्यादितीदृशात् संकल्पात् Vद्रप्सं रेतः मित्रावरुणयोरुर्वशीदर्शनात् Vस्कन्नम् आसीत्। तस्मात् Vअधि[2] Vजातः असि। तथा च वक्ष्यते 'सत्रे ह जातौ' इत्यृचि। एवं जातं Vत्वा त्वां Vदैव्येन देवसंबन्धिना Vब्रह्मणा वेदराशिना अहंभुवा[3] युक्तं[3] Vपुष्करे Vविश्वे Vदेवाः Vअददन्त अधारयन्त। तथा च अदितेर्मित्रावरुणौ जज्ञाते इति प्रकृत्य पठ्यते–' तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम्। रेतश्चस्कन्द तत्कुम्भे न्यपतद्वासतीवरे॥ तेनैव तु मुहूर्तेन वीर्यवन्तौ तपस्विनौ। अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतुः॥ बहुधा पतितं रेतः कलशे च जले स्थले। स्थले वसिष्ठस्तु मुनिः संभूत ऋषिसत्तमः॥ कुम्भे त्वगस्त्यः संभूतो जले मत्स्यो महाद्युतिः। उदियाय ततोऽगस्त्यः शम्यामात्रो महातपाः॥ मानेन संमितो यस्मात्तस्मान्मान्य इहोच्यते। यद्वा कुम्भादृषिजातः कुम्भेनापि हि मीयते॥ कुम्भ इत्यभिधानं च[4] परिमाणस्य लक्ष्यते[4]। ततोऽप्सु गृह्यमाणासु वसिष्ठः पुष्करे स्थितः॥ सर्वतः पुष्करे तं हि विश्वे देवा अधारयन्।' (बृहद्दे. ५. १४९–१५५) इति॥

स प्रकेत उभयस्य प्रविद्वान्त्सहस्रदान उत वा सदानः ।
यमेन ततं परिधिं वयिष्यन्नप्सरसः परि जज्ञे वसिष्ठः ॥ १२ ॥

सः । प्रऽकेतः । उभयस्य । प्रऽविद्वान् । सहस्रऽदानः । उत । वा । सऽदानः ।
यमेन । ततम् । परिऽधिम् । वयिष्यन् । अप्सरसः । परि । जज्ञे । वसिष्ठः ॥ १२ ॥

Vसः वसिष्ठः Vप्रकेतः प्रकृष्टज्ञानः Vउभयस्य उभयं दिवं च पृथिवीं च Vप्रविद्वान् प्रकर्षेण जानन् Vसहस्रदानः अभवत्। किमनेन सहस्रदान इति विशेषणेन Vउत Vवा अपि वा Vसदानः सर्वदानसहित एवाभवत् किंच Vवसिष्ठः Vयमेन कारणात्मना सर्वनियन्त्रा Vततं विस्तृतं Vपरिधिं वस्त्रम्। परिधिरित्यनेन संसारप्रवाहो विवक्षितः। तं Vवयिष्यन् Vअप्सरसः उर्वश्याः। Vपरि इति पञ्चम्यर्थानुवादः। Vजज्ञे जातः॥

सत्रे ह जाताविषिता नमोभिः कुम्भे रेतः सिषिचतुः समानम् ।
ततो ह मान उदियाय मध्यात्ततो जातमृषिमाहुर्वसिष्ठम् ॥ १३ ॥

सत्रे । ह । जातौ । इषिता । नमःऽभिः । कुम्भे । रेतः । सिसिचतुः । समानम् ।
ततः । ह । मानः । उत् । इयाय । मध्यात् । ततः । जातम् । ऋषिम् । आहुः । वसिष्ठम् ॥ १३

१. ख-झ-त-न-भ-श–' मनसः ' नास्ति; घ–नमसः। २. ख-झ-त-न-भ-श–' अधि ' नास्ति ३. ख-घ-भ–अहंभुवा मुक्तं; झ-त४-श२–अहभुवा युक्तं; त३-न–अहभुवा मुक्तं। ४. झ-त१-परिमाणं च लक्ष्यते; त२–तत् परिमाणं च लक्ष्यते।

ᐯसत्रे बहुकर्तृके यागे। ᐯह इति पूरणः। ᐯजातौ दीक्षितौ मित्रावरुणौ ᐯइषिता अध्येषितौ स्वयमन्यैर्जनैः ᐯनमोभिः स्तुतिभिः ᐯकुम्भे वासतीवरे[1] कलशे ᐯसमानम् एकदैव ᐯरेतः ᐯसिसिचतुः[2] असिञ्चताम्। ᐯततः वासतीवरात्कुम्भात् ᐯमध्यात् अगस्त्यः ᐯमानः शमीप्रमाणः ᐯउदियाय प्रादुर्बभूव। ᐯततः एव कुम्भात् ᐯवसिष्ठम् अपि ᐯऋषिं ᐯजातमाहुः॥

उक्थभृतं सामभृतं बिभर्ति ग्रावाणं बिभ्रत्प्र वदात्यग्रे।
उपैनमाध्वं सुमनस्यमाना आ वो गच्छाति प्रतृदो वसिष्ठः॥ १४॥

उक्थऽभृतम्। सामऽभृतम्। बिभर्ति। ग्रावाणम्। बिभ्रत्। प्र। वदाति। अग्रे। उप। एनम्। आध्वम्। सुऽमनस्यमानाः। आ। वः। गच्छाति। प्रऽतृदः। वसिष्ठः॥ १४॥

हे ᐯप्रतृदः। प्रतृद इति तृत्सव एवाभिधीयन्ते नामान्तरेण। ᐯवः युष्मान् ᐯवसिष्ठः ᐯआ ᐯगच्छाति आगच्छति। ᐯएनं वसिष्ठं ᐯसुमनस्यमानाः सुमनसः सन्तः ᐯउप ᐯआध्वं उपतिष्ठत। आगतश्चासौ वसिष्ठः यज्ञे ᐯअग्रे पुरोहितो ब्रह्मा सन् ᐯउक्थभृतं शस्त्राणां संभर्तारं ᐯबिभर्ति। ᐯसामभृतम् उद्गातारं बिभर्ति। ᐯग्रावाणम् अभिषवणं[3] ᐯबिभ्रत् बिभ्रतम्[4] अध्वर्युं च बिभर्ति। ᐯप्र ᐯवदाति यज्ञे यत्प्रवदितव्यं प्रैषादिनिमित्ते कर्तव्यमस्ति[5] तदपि वदतीति तृत्सून् प्रतीन्द्रो ब्रवीति॥ ॥ २४॥ ॥ २॥

तृतीयेऽनुवाके द्वाविंशतिसूक्तानि। तत्र 'प्र शुक्रा' इति पञ्चविंशत्यृचं प्रथमं सूक्तम्। अत्रेयमनुक्रमणिका—'प्र शुक्रा पञ्चाधिका वैश्वदेवं हाद्या एकविंशतिर्द्विपदा अब्जामहेरर्धर्चं उत्तरोऽहिर्बुध्न्याय' इति। वसिष्ठ ऋषिः। आद्या एकविंशतिर्द्विपदा विंशत्यक्षरा विराजो द्वाविंशाद्याश्चतस्त्रस्त्रिष्टुभः। विश्वे देवा देवता। व्यूळ्हे दशरात्रे चतुर्थेऽहनि वैश्वदेवशस्त्र इदं सूक्तं वैश्वदेवनिविद्धानम्। सूत्रितं च—'प्र शुक्रैत्विति वैश्वदेवम्' (आश्व. श्रौ. ८. ८) इति। षोडशिनि 'आ धूर्ष्वस्मा इति द्विपदा' (आश्व. श्रौ. ६. २) इति। महाव्रतेऽप्येषा द्विपदा। तथैव पञ्चमारण्यके सूत्रितं—'आ धूर्ष्वस्मा इत्येका सूददोहाः' (ऐ. आ. ५. २. २) इति॥

प्र शुक्रैतु देवी मनीषा अस्मत्सुतष्टो रथो न वाजी॥ १॥

प्र। शुक्रा। एतु। देवी। मनीषा। अस्मत्। सुऽतष्टः। रथः। न। वाजी॥ १॥

ᐯशुक्रा दीप्ता ᐯदेवी सर्वेषां कामानां प्रदात्री ᐯमनीषा स्तुतिः ᐯअस्मत् अस्मत्तः अस्मिन् सूक्ते स्तोष्यमाणान् देवान् ᐯवाजी वेगवान् ᐯसुतष्टः सुसंस्कृतः ᐯरथो ᐯन रथ इव ᐯप्र ᐯएतु प्रगच्छतु[6]॥

विदुः पृथिव्या दिवो जनित्रं शृण्वन्त्यापो अध क्षरन्तीः॥ २॥

विदुः। पृथिव्याः। दिवः। जनित्रम्। शृण्वन्ति। आपः। अध। क्षरन्तीः॥ २॥

अस्यामृच्यापः स्तूयन्ते। ᐯक्षरन्तीः क्षरन्त्यः ᐯआपः ᐯदिवः ᐯपृथिव्याः च। उभयोरपि लोकयोरित्यर्थः। ᐯजनित्रम् उत्पत्तिं ᐯविदुः जानन्ति। ᐯअध अपि च ᐯशृण्वन्ति स्तोत्राणीति शेषः॥

---

१. झ—वासतीवरी°। २. झ—सिषिचतुः। ३. झ—अभिषवपाषाणं। ४. ख-घ-झ-त२-न-भ-श—बिभ्रतं। ५. ख—कर्तव्ये सति; न-भ—कर्तव्यमस्ति। ६. त—गच्छतु; श—आगच्छतु।

आपश्चिदस्मै पिन्वन्त पृथ्वीर्वृत्रेषु शूरा मंसन्त उग्राः ॥ ३ ॥

आपः । चित् । अस्मै । पिन्वन्त । पृथ्वीः । वृत्रेषु । शूराः । मंसन्ते । उग्राः ॥ ३ ॥

इन्द्रोऽस्मिन् तृचे स्तूयते । पृथ्वीः पृथ्व्यः प्रथमानाः आपश्चित् आपोऽपि अस्मै इन्द्राय पिन्वन्त प्यायन्ते[1] । वृत्रेषु उपद्रवेषु सत्सु उग्राः उद्गूर्णास्तेजस्विनो वा शूराः योद्धारोऽपि मंसन्ते इममेवेन्द्रं स्तुवन्ति ॥

आ धूर्ष्वस्मै दधाताश्वानिन्द्रो न वज्री हिरण्यबाहुः ॥ ४ ॥

आ । धूःऽसु । अस्मै । दधात । अश्वान् । इन्द्रः । न । वज्री । हिरण्यऽबाहुः ॥ ४ ॥

अस्मै । षष्ठ्यर्थे चतुर्थी । अस्येन्द्रस्यागमनाय अश्वान् धूर्षु रथस्य आ दधात । इन्द्रो न । नेति चार्थे । इन्द्रः वज्री वज्रवान् हिरण्यबाहुः हिरण्यहस्तश्च भवति ॥ षोडशिनि शस्यमानत्वादस्या ऐन्द्रत्वं गम्यते । 'आ धूर्ष्वस्मै' इत्यत्र 'अस्मै' इत्यस्य पदस्यानुदात्तत्वं पूर्वस्यामिन्द्रस्य प्रकृतत्वात् । अत एव पूर्वाप्यैन्द्रीति विज्ञायते । पूर्वस्यामप्यृचि 'अस्मै' इत्यत्रानुदात्तत्वमल्पीयोऽर्थतरमनुदात्तमिति । तथा च यास्कः—'अस्येति चोदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे तीव्रार्थतरमुदात्तमल्पीयोऽर्थतरमनुदात्तम्' (निरु. ४. २५) इति । अल्पीयस्त्वं चेदंशब्दप्रवृत्तिनिमित्तस्य संनिधानस्य दूरस्थत्वेनेत्यवगन्तव्यम् ॥

अभि प्र स्थाताहेव यज्ञं यातेव पत्मन्त्मना हिनोत ॥ ५ ॥

अभि । प्र । स्थात । अहऽइव । यज्ञम् । याताऽइव । पत्मन् । त्मना । हिनोत ॥ ५ ॥

यज्ञस्तुतिरियम् । हे जनाः यज्ञम् अभि प्र स्थात अभिक्रमत । अहेव इति पूरणौ । अपि च पत्मन् पत्मनि यज्ञमार्गे त्मना स्वयमेव यातेव गन्तेव हिनोत गच्छत । 'हि गतौ' इति धातुः ॥

त्मना समत्सु हिनोत यज्ञं दधात केतुं जनाय वीरम् ॥ ६ ॥

त्मना । समत्ऽसु । हिनोत । यज्ञम् । दधात । केतुम् । जनाय । वीरम् ॥ ६ ॥

उक्तस्यैव विवरणमत्र । हे मदीया जनाः समत्सु संग्रामेषु त्मना स्वयमेव हिनोत गच्छत । अपि च केतुं प्रज्ञापकं वीरं पापानां वारयितारम् । नाशकमित्यर्थः । यज्ञं जनाय लोकाय । तद्रक्षार्थमित्यर्थः । दधात विधत्त ॥

उदस्य शुष्माद्भानुर्नार्त बिभर्ति भारं पृथिवी न भूम ॥ ७ ॥

उत् । अस्य । शुष्मात् । भानुः । न । आर्त । बिभर्ति । भारम् । पृथिवी । न । भूम ॥ ७ ॥

अस्य यज्ञस्य शुष्मात् बलात् भानुः सूर्यः उत् आर्त उद्गच्छति । भूम भूतानि पृथिवीव[2] भारं लोकस्यायं यज्ञो बिभर्ति च[3] ॥

ह्वयामि देवाँ अयातुरग्ने साधन्नृतेन धियं दधामि ॥ ८ ॥

ह्वयामि । देवान् । अयातुः । अग्ने । साधन् । ऋतेन । धियम् । दधामि ॥ ८ ॥

---

१. श—आप्यायंते । २. ज्ञ-त१-२—पृथिवी न पृथिवीव । ३. घ-ज्ञ-त१-२—च न पूरणः ।

अस्मिन्नृचे देवाः स्तूयन्ते। हे अग्ने अयातुः अहिंसादिनियमयुक्तेन ऋतेन यज्ञेन साधन् कामान् साधयन् देवान् ह्वयामि। अपि च धियं देवानां परिचरणात्मकं कर्म दधामि। करोमीत्यर्थः॥

अभि वो देवीं धियं दधिध्वं प्र वो देवत्रा वाचं कृणुध्वम् ॥ ९ ॥

अभि। वः। देवीम्। धियम्। दधिध्वम्। प्र। वः। देवऽत्रा। वाचम्। कृणुध्वम् ॥ ९ ॥

हे जनाः वः यूयम् अभि देवानुद्दिश्य देवीं दीप्तां धियं कर्म दधिध्वं विधत्त। अपि च वः यूयं देवत्रा देवेषु वाचं स्तुतिरूपां प्र कृणुध्वं प्रकर्षेण कुरुध्वम्॥

आ चष्ट आसां पाथो नदीनां वरुण उग्रः सहस्रचक्षाः ॥ १० ॥

आ। चष्टे। आसाम्। पाथः। नदीनाम्। वरुणः। उग्रः। सहस्रऽचक्षाः ॥ १० ॥

सहस्रचक्षाः बहुचक्षुः वरुणः आसां नदीनां पाथः जलम् आ चष्टे अभिपश्यति। कीदृशो वरुणः। उग्रः उद्गूर्णं ओजस्वी वा॥ ॥ २५ ॥

राजा राष्ट्रानां पेशो नदीनामनुत्तमस्मै क्षत्रं विश्वायु ॥ ११ ॥

राजा। राष्ट्रानाम्। पेशः। नदीनाम्। अनुत्तम्। अस्मै। क्षत्रम्। विश्वऽआयु ॥ ११ ॥

राष्ट्रानां राष्ट्राणाम्॥ णत्वाभावश्छान्दसः॥ ईश्वराणामपि वरुणः राजा ईश्वरः भवति। नदीनां पेशः रूपं रूपकृदपि भवतीत्यर्थः। अस्मै। षष्ठ्यर्थे चतुर्थी। अस्य वरुणस्य क्षत्रं बलम् अनुत्तम् अन्यैरबाधितं विश्वायु सर्वतो गन्तृ भवतीति॥

अविष्टो अस्मान्विश्वासु विक्ष्वद्युं कृणोत शंसं निनित्सोः ॥ १२ ॥

अविष्टो इति। अस्मान्। विश्वासु। विक्षु। अद्युम्। कृणोत। शंसम्। निनित्सोः ॥ १२ ॥

अयं तृचो दैवः। हे देवाः अस्मान् विश्वासु सर्वासु विक्षु प्रजासु। अविष्ट उ इति समुदितम् अविष्टो इति। अविष्ट रक्षत। शंसं[1] निनित्सोः निन्दितुमिच्छतः शत्रोः अद्युम् अदीप्तिं कृणोत कुरुत च॥

व्येतु दिद्युद्द्विषामशेवा युयोत विष्वग्रपस्तनूनाम् ॥ १३ ॥

वि। एतु। दिद्युत्। द्विषाम्। अशेवा। युयोत। विष्वक्। रपः। तनूनाम् ॥ १३ ॥

द्विषां शत्रूणां दिद्युत् आयुधम् अशेवा असुखकरी[2] विष्वक् सर्वतः व्येतु अपगच्छतु। तनूनाम् अङ्गानां रपः पापं देवाः युयोत अस्मत्तः पृथक्कुरुत॥

अवीन्नो अग्निर्हव्यान्नमोभिः प्रेष्ठो अस्मा अधायि स्तोमः ॥ १४ ॥

अवीत्। नः। अग्निः। हव्यऽअत्। नमःऽभिः। प्रेष्ठः। अस्मै। अधायि। स्तोमः ॥ १४ ॥

हव्यात् हव्यानामत्ता अग्निः नमोभिः अस्मदीयैर्नमस्कारैः प्रेष्ठः प्रियतमः सन् नः अस्मान् अवीत् रक्षतु। अस्मै अग्नये स्तोत्रम् अधायि अस्माभिर्व्यधायि॥

---

१. ङ–शंसं स्तुतिं। २. ख-ङ–असुखकरा।

सजूर्देवेभिरपां नपातं सखायं कृध्वं शिवो नो अस्तु ॥ १५ ॥

सऽजूः । देवेभिः । अपाम् । नपातम् । सखायम् । कृध्वम् । शिवः । नः । अस्तु ॥१५॥

हे स्तोतारः ^vअपाम् उदकानां ^vनपातं पुत्रमग्निम्। 'सूनुः नपात्' इत्यपत्यनामसु पाठात्। ^vदेवेभिः देवैः ^vसजूः सह ^vसखायं मित्रं स्तुतिभिः ^vकृध्वं कुरुध्वम्। स चापां नपात् ^vनः अस्मभ्यं ^vशिवः सुखकरः ^vअस्तु भवतु ॥

अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु षीदन् ॥ १६ ॥

अप्ऽजाम् । उक्थैः । अहिम् । गृणीषे । बुध्ने । नदीनाम् । रजःऽसु । सीदन् ॥ १६ ॥

^vअहिं मेघानामाहन्तारं ^vनदीनाम् उदकानां ^vबुध्ने स्थाने। बुध्नमन्तरिक्षं बद्धा अस्मिन् धृता आप इति व्युत्पत्तेः। तस्मिन् ^vरजःसु उदकेषु ^vसीदन् सीदन्तम् ^vअब्जाम् अप्सु जातमिममग्निम् ^vउक्थैः स्तोत्रैः ^vगृणीषे[1]। 'बुध्ने नदीनां रजःसूदकेषु सीदन् बुध्नमन्तरिक्षं बद्धा अस्मिन् धृता आप इति' (निरु. १०. ४४) इति[2] ॥

मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो अस्य स्रिधदृतायोः ॥ १७ ॥

मा । नः । अहिः । बुध्न्यः । रिषे । धात् । मा । यज्ञः । अस्य । स्रिधत् । ऋतऽयोः ॥१७॥

^vअहिर्बुध्न्यः। बुध्नेऽन्तरिक्षे भवो बुध्न्यः। अहिश्चासौ बुध्न्यश्चेत्यहिर्बुध्न्योऽग्निः ^vनः अस्मान् ^vरिषे हिंसकाय ^vमा ^vधात् मा ददातु। ^vअस्य ^vऋतायोः यज्ञकामस्य यजमानस्य ^vयज्ञः ^vमा च ^vस्रिधत् न क्षीयेत। यद्वा। अस्याहिर्बुध्न्यस्य इममहिर्बुध्न्यमुद्दिश्य ऋतायोः यज्ञकामस्य यो यज्ञः स न क्षीयेतेत्यर्थः ॥

उत न एषु नृषु श्रवो धुः प्र राये यन्तु शर्धन्तो अर्यः ॥ १८ ॥

उत । नः । एषु । नृषु । श्रवः । धुः । प्र । राये । यन्तु । शर्धन्तः । अर्यः ॥ १८ ॥

अयं तृचो दैवो मारुतो वा। ^vउत अपि च ^vनः अस्मदीयेषु ^vएषु ^vनृषु पुरुषेषु ^vश्रवः अन्नं ^vधुः देवा मरुतो वा धारयन्तु। ^vराये धनार्थं ^vशर्धन्तः उत्सहमानाः प्रीयमाणा वा ^vअर्यः अरयः ^vप्र ^vयन्तु प्रगच्छन्तु। म्रियन्तामित्यर्थः ॥

तपन्ति शत्रुं स्व१र्ण भूमा महासेनासो अमेभिरेषाम् ॥ १९ ॥

तपन्ति । शत्रुम् । स्वः । न । भूम । महाऽसेनासः । अमेभिः । एषाम् ॥ १९ ॥

^vमहासेनासः महासेना राजानः ^vएषां मरुतां देवानां वा ^vअमेभिः बलैः ^vभूमा भुवनानि ^vस्वर्ण आदित्य इव ^vशत्रुं स्वकीयं ^vतपन्ति बाधन्ते। महान्तोऽपि राजानः अमैः[3] बलैः शत्रून् बाधन्ते। तानि बलानि देवानामेवेत्यर्थः ॥

आ यन्नः पत्नीर्गमन्त्यच्छा त्वष्टा सुपाणिर्दधातु वीरान् ॥ २० ॥

आ । यत् । नः । पत्नीः । गमन्ति । अच्छ । त्वष्टा । सुऽपाणिः । दधातु । वीरान् ॥२०॥

---

१. ज्ञ—गृणीषे स्तौमि। २. ज्ञ—यास्कः। ३. ख-ज्ञ-श—मैः।

अस्यां[1] देवपत्न्यस्त्वष्टा च देवता। ᵛयत् यदा ᵛपत्नीः देवानां पत्न्यः ᵛनः अस्मान् ᵛअच्छ अभि ᵛआ ᵛगमन्ति आगच्छन्ति तदा ᵛसुपाणिः शोभनहस्तः ᵛत्वष्टा देवः ᵛवीरान् पुत्रान् ᵛदधातु अस्मभ्यं ददातु ॥ ॥ २६ ॥

प्रति नः स्तोमं त्वष्टा जुषेत स्यादस्मे अरमतिर्वसूयुः ॥ २१ ॥

प्रति । नः । स्तोमम् । त्वष्टा । जुषेत । स्यात् । अस्मे इति । अरमतिः । वसुऽयुः ॥ २१ ॥

ᵛनः अस्माकं ᵛस्तोमं स्तोत्रं ᵛत्वष्टा ᵛप्रति ᵛजुषेत प्रतिसेवेत। अपि च ᵛअरमतिः पर्याप्तबुद्धिः सर्वविषयव्यापिबुद्धिर्वा त्वष्टा[2] ᵛअस्मे अस्मदर्थं ᵛवसूयुः धनकामः ᵛस्यात् भूयात् ॥

ता नो रासन्रातिषाचो वसून्या रोदसी वरुणानी शृणोतु।
वरूत्रीभिः सुशरणो नो अस्तु त्वष्टा सुदत्रो वि दधातु रायः ॥ २२ ॥

ता । नः । रासन् । रातिऽसाचः । वसूनि । आ । रोदसी इति । वरुणानी । शृणोतु ।
वरूत्रीभिः । सुऽशरणः । नः । अस्तु । त्वष्टा । सुऽदत्रः । वि । दधातु । रायः ॥ २२ ॥

ᵛता[3] यानि[3] अस्माकमभीष्टानि तानि[4] ᵛवसूनि धनानि ᵛरातिषाचः दानसमवेताः[5] देवपत्न्यः ᵛनः अस्मभ्यं ᵛरासन् प्रयच्छन्तु। अपि च ᵛवरुणानी वरुणस्य पत्नी ᵛआ ᵛशृणोतु अस्मदीयं स्तोत्रम् अभिशृणोतु[6]। ᵛरोदसी द्यावापृथिव्यौ चाभिशृणुताम्। ᵛसुदत्रः कल्याणदानः ᵛत्वष्टा च ᵛवरूत्रीभिः उपद्रवाणां वारयित्रीभिर्देवपत्नीभिः सह ᵛनः अस्मभ्यं ᵛसुशरणः सुशरणप्रदः ᵛअस्तु। ᵛरायः धनानि च ᵛवि ᵛदधातु ॥

तन्नो रायः पर्वतास्तन्न आपस्तद्रातिषाच ओषधीरुत द्यौः।
वनस्पतिभिः पृथिवी सजोषा उभे रोदसी परि पासतो नः ॥ २३ ॥

तत् । नः । रायः । पर्वताः । तत् । नः । आपः । तत् । रातिऽसाचः । ओषधीः । उत । द्यौः ।
वनस्पतिऽभिः । पृथिवी । सऽजोषाः । उभे इति । रोदसी इति । परि । पासतः । नः ॥ २३ ॥

ᵛनः अस्माकम्। ᵛतत् इत्यव्ययम्। ताः ᵛरायः धनानि ᵛपर्वताः परिपान्तु। ᵛनः अस्माकं ᵛतत् ताः रायः ᵛआपः च परिपान्तु। ᵛतद्रातिषाचः दानसहिता देवपत्न्यश्च परिपान्तु। ᵛओषधीः ओषधयश्च तत् परिपान्तु। ᵛउत अपि च ᵛद्यौः तत् परिपातु। ᵛवनस्पतिभिः ᵛसजोषाः सहिता ᵛपृथिवी अन्तरिक्षं च तत् परिपातु। 'आपः पृथिवी' इत्यन्तरिक्षनामसु पाठात्। ᵛनः अस्माकं तत् ᵛउभे ᵛरोदसी द्यावापृथिव्यावपि ᵛपरि ᵛपासतः परिरक्षताम् ॥

अनु तदुर्वी रोदसी जिहातामनु द्युक्षो वरुण इन्द्रसखा।
अनु विश्वे मरुतो ये सहासो रायः स्याम धरुणं धियध्यै ॥ २४ ॥

---

१. ज्ञ-त१-२—अस्याः। २. ज्ञ-श—अनुपरतिर्वा त्वष्टा। ३. ज्ञ—ता तानि; य—तानि। ४. ज्ञ-त१-४-य—'तानि' नास्ति। ५. ज्ञ-य—दानेन समवेताः; त१—दानिन समवेताः; त२-४—दानिनः समवेताः। ६. ख-न-भ—अभिशृणोति।

अनु । तत् । उर्वी इति । रोदसी इति । जिहाताम् । अनु । द्युक्षः । वरुणः । इन्द्रऽसखा ।
अनु । विश्वे । मरुतः । ये । सहासः । रायः । स्याम । धरुणम् । धियध्यै ॥ २४ ॥

ᵛतत् वक्ष्यमाणम् ᵛउर्वी विस्तीर्णे ᵛरोदसी द्यावापृथिव्यौ ᵛअनु ᵛजिहाताम् अनुगच्छताम्। अनुमन्येतामित्यर्थः। ᵛद्युक्षः दीप्तेर्निवासभूतः ᵛइन्द्रसखा इन्द्रसखः। इन्द्रः सखा यस्येति बहुव्रीहिः। ᵛवरुणः च तत् ᵛअनु जिहीताम्। द्विवचनान्तस्यैकवचनान्ततया विपरिणामः। ᵛये ᵛसहासः शत्रूणामभिभवितारः ते ᵛमरुतः अपि तत् ᵛअनु जिहताम्। अत्र बहुवचनान्ततया विपरिणामः। यदनुमन्तव्यं तदाह। ᵛधियध्यै भरणीयं[1] धारयितुं ᵛरायः धनस्य ᵛधरुणं धाम स्थानं वयं ᵛस्याम भवेमेति ॥

तन्न इन्द्रो वरुणो मित्रो अग्निराप ओषधीर्वनिनो जुषन्त ।
शर्मन्त्स्याम मरुतामुपस्थे यूयं पात स्वस्तिभिः सदा नः ॥ २५ ॥

तत् । नः । इन्द्रः । वरुणः । मित्रः । अग्निः । आपः । ओषधीः । वनिनः । जुषन्त ।
शर्मन् । स्याम । मरुताम् । उपऽस्थे । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥२५॥

ᵛनः अस्मदीयं ᵛतत् इदं स्तोत्रम् ᵛइन्द्रः ᵛवरुणः च ᵛमित्रः च ᵛअग्निः च ᵛआपः च ᵛओषधीः ओषधयश्च ᵛवनिनः वृक्षाश्च ᵛजुषन्त जुषन्तां सेवन्ताम्। वयं च ᵛमरुतामुपस्थे उपस्थाने वर्तमानाः ᵛशर्मन् शर्मणि सुखे गृहे वा ᵛस्याम भवेम। सिद्धमन्यत् ॥ ॥ २७ ॥

'शं न इन्द्राग्नी' इति पञ्चदशर्चं द्वितीयं सूक्तम्। अत्रेयमनुक्रमणिका–'शं नः पञ्चोना शान्तिः' इति। वसिष्ठ ऋषिः। त्रिष्टुप् छन्दः। 'वैश्वदेवं ह' इत्युक्तत्वादिदमपि वैश्वदेवम्। महानाम्नीव्रत एतत् सूक्तं जप्यम्। तथा च सूत्रितं–'भद्रं कर्णेभिः शृणुयाम देवाः शं न इन्द्राग्नी भवतामवोभिः' (आश्व. श्रौ. ८. १४) इति। एव‥सु ॥

शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या ।
शमिन्द्रासोमा सुविताय शं योः शं न इन्द्रापूषणा वाजसातौ ॥ १ ॥

शम् । नः । इन्द्राग्नी इति । भवताम् । अवःऽभिः । शम् । नः । इन्द्रावरुणा । रातऽहव्या ।
शम् । इन्द्रासोमा । सुविताय । शम् । योः । शम् । नः । इन्द्रापूषणा । वाजऽसातौ ॥ १ ॥

ᵛनः अस्माकमस्मभ्यं वा ᵛइन्द्राग्नी ᵛअवोभिः रक्षणैः ᵛशं शान्त्यै ᵛभवताम्। ᵛरातहव्या रातहव्यौ यजमानैर्दत्तहविष्कौ ᵛइन्द्रावरुणा इन्द्रावरुणावपि ᵛनः अस्मभ्यं ᵛशं शान्त्यै भवताम्। ᵛइन्द्रासोमा इन्द्रासोमावपि नः ᵛशं शान्त्यै ᵛसुविताय कल्याणाय च भवताम्। ᵛशं शान्त्यै सुखाय[2] च। पुनरुक्तिरादरार्था। अथवा शं शमनहेतुकं सुखं ᵛयोः विषययोगनिमित्तं सुखमित्यपुनरुक्तिः। ᵛइन्द्रापूषणा इन्द्रापूषणावपि ᵛवाजसातौ युद्धे अन्नलाभे निमित्ते वा ᵛनः ᵛशं शान्त्यै भवतामित्यर्थः ॥

शं नो भगः शमु नः शंसो अस्तु शं नः पुरंधिः शमु सन्तु रायः ।
शं नः सत्यस्य सुयमस्य शंसः शं नो अर्यमा पुरुजातो अस्तु ॥ २ ॥

---

१. क्ष–तरणियां; त-न-शा–भरणीयां। २. ख-भ–सुविताय; झ–योः सुखाय।

शम् । नः । भर्गः । शम् । ॐ इति । नः । शंसः । अस्तु ।
शम् । नः । पुरम्ऽधिः । शम् । ॐ इति । सन्तु । रायः ।
शम् । नः । सत्यस्य । सुऽयमस्य । शंसः । शम् । नः । अर्यमा । पुरुऽजातः । अस्तु ॥ २ ॥

vनः अस्माकं vशं शान्त्यै vभगः देवः vअस्तु भवतु । vनः अस्माकं vशमु शान्त्या एव vशंसः नराशंसोऽस्तु भवतु । vनः अस्माकं vशं शान्त्यै vपुरंधिः बहुधीरप्यस्तु । vरायः धनान्यपि vशमु शान्त्या एव vसन्तु । vनः अस्माकं vसुयमस्य शोभनयमयुक्तस्य vसत्यस्य vशंसः वचनमपि vशम् अस्तु । vनः अस्माकं vशं शान्त्यै vपुरुजातः बहुप्रादुर्भावः vअर्यमा देवोऽपि vअस्तु ॥

**शं नो धाता शमु धर्ता नो अस्तु शं न उरूची भवतु स्वधाभिः ।**
**शं रोदसी बृहती शं नो अद्रिः शं नो देवानां सुहवानि सन्तु ॥ ३ ॥**

शम् । नः । धाता । शम् । ॐ इति । धर्ता । नः । अस्तु । शम् । नः । उरूची । भवतु । स्वधाभिः ।
शम् । रोदसी इति । बृहती इति । शम् । नः । अद्रिः । शम् । नः । देवानाम् । सुऽहवानि । सन्तु ॥ ३ ॥

vनः अस्माकं vशं शान्त्यै vधाता देवः vअस्तु । vनः अस्माकं vशमु शान्त्या एव vधर्ता[1] पुण्यपापानां विधारयिता वरुणो देवोऽप्यस्तु । vनः अस्माकं vशं शान्त्यै vउरूची विवर्तगमना पृथिव्यपि vस्वधाभिः अन्नैः सहास्तु । vबृहती महत्यौ vरोदसी द्यावापृथिव्यावपि vशं भवताम् । vअद्रिः पर्वतोऽपि vनः अस्माकं vशं शान्त्यै भवतु । vशं शान्त्यै vनः अस्माकं vदेवानां vसुहवानि सुष्टुतयः vसन्तु भवन्तु ॥

**शं नो अग्निर्ज्योतिरनीको अस्तु शं नो मित्रावरुणावश्विना शम् ।**
**शं नः सुकृतां सुकृतानि सन्तु शं न इषिरो अभि वातु वातः ॥ ४ ॥**

शम् । नः । अग्निः । ज्योतिःऽअनीकः । अस्तु । शम् । नः । मित्रावरुणौ । अश्विना । शम् ।
शम् । नः । सुऽकृताम् । सुऽकृतानि । सन्तु । शम् । नः । इषिरः । अभि । वातु । वातः ॥ ४ ॥

vज्योतिरनीकः ज्योतिर्मुखः vअग्निः vनः अस्माकं vशं शान्त्यै vअस्तु भवतु । मित्रावरुणा मित्रावरुणावपि vनः अस्माकं vशं शान्त्यै भवताम् । vअश्विना अश्विनावपि vशं भवताम् । vसुकृतां पुण्यकर्मणां पुरुषाणां vसुकृतानि पुण्यकर्माण्यपि vनः अस्माकं vशं शान्त्यै vसन्तु भवन्तु । vइषिरः गमनशीलोऽपि[2] vवातः वायुरपि vनः अस्माकं vशं शान्त्यै vअभि vवातु ॥

**शं नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु ।**
**शं न ओषधीर्वनिनो भवन्तु शं नो रजसस्पतिरस्तु जिष्णुः ॥ ५ ॥**

शम् । नः । द्यावापृथिवी इति । पूर्वऽहूतौ । शम् । अन्तरिक्षम् । दृशये । नः । अस्तु ।
शम् । नः । ओषधीः । वनिनः । भवन्तु । शम् । नः । रजसः । पतिः । अस्तु । जिष्णुः ॥ ५ ॥

vनः अस्माकं vशं शान्त्यै vद्यावापृथिवी द्यावापृथिव्यौ vपूर्वहूती प्रथमाह्वाने[3] भवताम् । vअन्तरिक्षम् अपि vनः अस्माकं vदृशये दर्शनाय vशम् vअस्तु । vनः अस्माकं vशं शान्त्यै

१. ख-त-श–विधर्ता । २. ख–गमनशीलः । ३. ख-ग-त-३-४–न-भ-म-श२–'प्रथमाह्वाने' नास्ति; ख-त१-२–प्रथममाहूतौ; य–पूर्वे प्रार्थितौ; श१– शं शान्त्यै ।

^v^ओषधीः ओषधयोऽपि ^v^भवन्तु। ^v^वनिनः वृक्षाश्च शं भवन्तु। ^v^जिष्णुः जयशीलः ^v^रजसः लोकस्य ^v^पतिः इन्द्रोऽपि ^v^नः अस्माकं ^v^शं शान्त्यै ^v^अस्तु॥ ॥ २८ ॥

**शं न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः।**
**शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टा ग्नाभिरिह शृणोतु ॥ ६ ॥**

शम्। नः। इन्द्रः। वसुऽभिः। देवः। अस्तु। शम्। आदित्येभिः। वरुणः। सुऽशंसः।
शम्। नः। रुद्रः। रुद्रेभिः। जलाषः। शम्। नः। त्वष्टा। ग्नाभिः। इह। शृणोतु॥ ६ ॥

^v^देवः द्योतनादिगुणयुक्तः[1] ^v^इन्द्रः ^v^वसुभिः देवैः सार्धं ^v^नः अस्माकं ^v^शं शान्त्यै भवतु। ^v^सुशंसः शोभनस्तुतिः ^v^वरुणः देवः ^v^आदित्येभिः आदित्यैर्देवैः सार्धं ^v^शं शान्त्यै ^v^अस्तु भवतु। ^v^जलाषः[2] ^v^रुद्रः दुःखद्रावको देवः ^v^रुद्रेभिः रुद्रैः सार्धं ^v^शं शान्त्यै ^v^नः अस्माकं भवतु। ^v^इह यज्ञे ^v^त्वष्टा देवः ^v^ग्नाभिः देवपत्नीभिः सार्धं ^v^नः ^v^शं शान्त्यै भवतु। इह यज्ञे नः स्तोत्रं ^v^शृणोतु च॥

**शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाणः शमु सन्तु यज्ञाः।**
**शं नः स्वरूणां मितयो भवन्तु शं नः प्रस्व१ः शम्वस्तु वेदिः ॥ ७ ॥**

शम्। नः। सोमः। भवतु। ब्रह्म। शम्। नः। शम्। नः। ग्रावाणः। शम्। ऊँ इति।
सन्तु। यज्ञाः॥ शम्। नः। स्वरूणाम्। मितयः। भवन्तु।
शम्। नः। प्रऽस्वः। शम्। ऊँ इति। अस्तु। वेदिः॥ ७ ॥

^v^नः अस्माकं ^v^शं शान्त्यै ^v^सोमः ^v^भवतु। ^v^ब्रह्म स्तोत्रमपि ^v^नः अस्माकं ^v^शं शान्त्यै भवतु। ^v^ग्रावाणः अभिषवसाधनभूताः पाषाणा अपि ^v^नः अस्माकं ^v^शं शान्त्यै भवन्तु। ^v^यज्ञाः च नः ^v^शमु शान्त्या एव ^v^सन्तु। ^v^स्वरूणां यूपानां ^v^मितयः उन्मानान्यपि ^v^नः अस्माकं ^v^शं शान्त्यै ^v^भवन्तु। ^v^प्रस्वः ओषधयोऽपि ^v^नः अस्माकं ^v^शं शान्त्यै भवन्तु। ^v^वेदिः अपि नः ^v^शमु शान्त्या एव ^v^अस्तु॥

**शं नः सूर्य उरुचक्षा उदेतु शं नश्चतस्रः प्रदिशो भवन्तु।**
**शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः ॥ ८ ॥**

शम्। नः। सूर्यः। उरुऽचक्षाः। उत्। एतु। शम्। नः। चतस्रः। प्रऽदिशः। भवन्तु।
शम्। नः। पर्वताः। ध्रुवयः। भवन्तु। शम्। नः। सिन्धवः। शम्। ऊँ इति। सन्तु। आपः॥८॥

^v^नः अस्माकं ^v^शं शान्त्यै ^v^सूर्यः ^v^उरुचक्षाः विस्तीर्णतेजाः सन् ^v^उदेतु उदयं प्राप्नोतु। ^v^चतस्रः ^v^प्रदिशः महादिशोऽपि ^v^नः अस्माकं ^v^शं शान्त्यै ^v^भवन्तु। ^v^नः अस्माकं ^v^शं शान्त्यै ^v^पर्वताः ^v^ध्रुवयः ध्रुवाः ^v^भवन्तु। ^v^नः अस्माकं ^v^शं शान्त्यै ^v^सिन्धवः नद्योऽपि भवन्तु। ^v^आपः च नः ^v^शमु शान्त्या एव ^v^सन्तु॥

---

१. ख-म्र-त२-४-न-भ-श-द्योतमानादि°। २. घ—जलाषः गंगाधरः; ज्ञ-त१-२—जलाषः सुखरूपः; श—जलाषः जलाभिलाषी।

शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्काः ।
शं नो विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं शम्वस्तु वायुः ॥ ९ ॥

शम् । नः । अदितिः । भवतु । व्रतेभिः । शम् । नः । भवन्तु । मरुतः । सुऽअर्काः ।
शम् । नः । विष्णुः । शम् । ऊँ इति । पूषा । नः । अस्तु ।
शम् । नः । भवित्रम् । शम् । ऊँ इति । अस्तु । वायुः ॥ ९ ॥

vअदितिः देवी vव्रतेभिः व्रतैः कर्मभिः सार्धं vनः अस्माकं vशं शान्त्यै vभवतु । vस्वर्काः शोभनस्तुतयः vमरुतः अपि vनः अस्माकं vशं शान्त्यै सन्तु । vविष्णुः व्यापकः vनः अस्माकं vशं शान्त्या अस्तु । vपूषा देवोऽपि vनः अस्माकं vशमु शान्त्या एव vअस्तु । vभवित्रं भुवनमन्तरिक्षमुदकं वा vनः अस्माकं vशं शान्त्या अस्तु । vवायुः अपि नः vशमु शान्त्या एव vअस्तु ॥

शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः ।
शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शंभुः ॥ १० ॥

शम् । नः । देवः । सविता । त्रायमाणः । शम् । नः । भवन्तु । उषसः । विऽभातीः ।
शम् । नः । पर्जन्यः । भवतु । प्रऽजाभ्यः । शम् । नः । क्षेत्रस्य । पतिः । अस्तु । शम्ऽभुः ॥ १० ॥

vदेवः क्रीडनादिगुणयुक्तः vसविता vत्रायमाणः रक्षन् vनः अस्माकं vशं शान्त्यै भवतु । vविभातीः व्युच्छन्त्यः vउषसः अपि vनः अस्माकं vशं शान्त्यै vभवन्तु । vनः अस्माकं vप्रजाभ्यः vपर्जन्यः अपि vशं vभवतु । vशंभुः सुखस्य भावयिता vक्षेत्रस्य vपतिः vनः अस्माकं vशं शान्त्यै vअस्तु ॥　　॥ २९ ॥

शं नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु ।
शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवाः शं नो अप्याः ॥ ११ ॥

शम् । नः । देवाः । विश्वऽदेवाः । भवन्तु । शम् । सरस्वती । सह । धीभिः । अस्तु ।
शम् । अभिऽसाचः । शम् । ऊँ इति । रातिऽसाचः ।
शम् । नः । दिव्याः । पार्थिवाः । शम् । नः । अप्याः ॥ ११ ॥

vविश्वदेवाः बहुस्तोत्रकाः vदेवाः vनः अस्माकं vशं शान्त्यै vभवन्तु । vसरस्वती च vधीभिः स्तुतिभिः कर्मभिर्वा vसह नोऽस्माकं vशं शान्त्यै vअस्तु । vअभिषाचः यज्ञमभितः सेवमानाश्च नः vशं शान्त्यै भवन्तु । vरातिषाचः दानं सेवमाना अपि vशमु शान्त्या एव भवन्तु । vदिव्याः दिवि भवाश्च vनः अस्माकं vशं शान्त्यै भवन्तु । vपार्थिवाः पृथिव्यां संभूताश्च नः शं भवन्तु । vअप्याः अप्स्वन्तरिक्षे भवाश्च । ‘आकाशमापः’ इत्यन्तरिक्षनामसु पाठात् । vनः अस्माकं vशं शान्त्यै भवन्तु ॥

शं नः सत्यस्य पतयो भवन्तु शं नो अर्वन्तः शमु सन्तु गावः ।
शं न ऋभवः सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु ॥ १२ ॥

शम् । नः । सत्यस्य । पतयः । भवन्तु । शम् । नः । अर्वन्तः । शम् । ऊँ इति । सन्तु । गावः ।
शम् । नः । ऋभवः । सुऽकृतः । सुऽहस्ताः । शम् । नः । भवन्तु । पितरः । हवेषु ॥ १२ ॥

सत्यस्य पतयः पालकाः सत्यशीला देवाः नः अस्माकं शं शान्त्यै भवन्तु। अर्वन्तः अश्वाश्च नः अस्माकं शं शान्त्यै भवन्तु। गावः अपि नः शं शान्त्यै भवन्तु। सुकृतः सुकर्माणः सुहस्ताः शोभनहस्ताः ऋभवः अपि नः अस्माकं शं शान्त्यै सन्तु। हवेषु स्तोत्रेषु सत्सु पितरः अपि नः अस्माकं शं शान्त्यै भवन्तु॥

शं नो अज एकपाद्देवो अस्तु शं नोऽहिर्बुध्न्यः शं समुद्रः।
शं नो अपां नपात्पेरुरस्तु शं नः पृश्निर्भवतु देवगोपा॥ १३॥

शम्। नः। अजः। एकऽपात्। देवः। अस्तु। शम्। नः। अहिः। बुध्न्यः। शम्। समुद्रः।
शम्। नः। अपाम्। नपात्। पेरुः। अस्तु। शम्। नः। पृश्निः। भवतु। देवऽगोपा॥ १३॥

अज एकपात् अज एकपान्नामधेयः देवः नः अस्माकं शं शान्त्यै अस्तु। अहिर्बुध्न्यः च नः अस्माकं शं शान्त्या अस्तु। समुद्रः अपि नः शं शान्त्या अस्तु। पेरुः उपद्रवेभ्यः पारयिता अपां नपात् अपांनपान्नामधेयोऽपि देवः नः अस्माकं शं शान्त्यै अस्तु। देवगोपा देवा गोपायितारो यस्यां सा पृश्निः मरुतां माता नः अस्माकं शं शान्त्यै भवतु॥

आदित्या रुद्रा वसवो जुषन्तेदं ब्रह्म क्रियमाणं नवीयः।
शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः॥ १४॥

आदित्याः। रुद्राः। वसवः। जुषन्त। इदम्। ब्रह्म। क्रियमाणम्। नवीयः।
शृण्वन्तु। नः। दिव्याः। पार्थिवासः। गोऽजाताः। उत। ये। यज्ञियासः॥ १४॥

नवीयः नवतरमस्माभिः क्रियमाणम् इदं ब्रह्म स्तोत्रम् आदित्याः दिव्याः। 'अदितिर्द्यौः' (ऋ. सं. १. ८९. १०) इति श्रुतेः। रुद्राः आन्तरिक्षाः वसवः पार्थिवाश्च जुषन्त जुषन्तां सेवन्ताम्। अन्ये[1] दिव्याः दिवि भवाः पार्थिवासः पार्थिवाः गोजाताः गोः पृश्नेर्जाताः। 'माको गौः' इति साधारणनामसु पाठात्। उत अपि च ये यज्ञियासः यज्ञार्हास्ते सर्वेऽपि नः अस्माकं हवं शृण्वन्तु॥

ये देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा अमृता ऋतज्ञाः।
ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः॥ १५॥

ये। देवानाम्। यज्ञियाः। यज्ञियानाम्। मनोः। यजत्राः। अमृताः। ऋतऽज्ञाः।
ते। नः। रासन्ताम्। उरुऽगायम्। अद्य। यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥ १५॥

यज्ञियानां यजनीयानां देवानाम् अपि यज्ञियाः यजनीयाः मनोः प्रजापतेश्च यजत्राः यजनीयाः अमृताः मरणरहिताः ऋतज्ञाः सत्यज्ञाः ये देवाः सन्ति ते सर्वे उरुगायं बहुकीर्तिं पुत्रम् अद्य नः अस्मभ्यं रासन्तां प्रयच्छन्तु। सिद्ध एवोत्तमः पादः॥ ॥ ३०॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण[2] विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पञ्चमाष्टके तृतीयोऽध्यायः समाप्तः॥

---

१. त्र-त-श—अन्ये च। २. त३-श२—सायणार्येण।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ पञ्चमाष्टके चतुर्थोऽध्याय आरभ्यते। तत्र षडनुवाकात्मकस्य वासिष्ठस्य सप्तमस्य मण्डलस्य तृतीयेऽनुवाके द्वाविंशतिसूक्तानि। तत्र 'प्र ब्रह्म' इति नवर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं पूर्ववद्वैश्वदेवम्। अनुक्रान्तं च—'प्र ब्रह्म नव' इति। विनियोगो लैङ्गिकः ॥

प्र ब्रह्मैतु सदनादृतस्य वि रश्मिभिः ससृजे सूर्यो गाः।
वि सानुना पृथिवी सस्र उर्वी पृथु प्रतीकमध्येधे अग्निः ॥ १ ॥

प्र। ब्रह्म। एतु। सदनात्। ऋतस्य। वि। रश्मिऽभिः। ससृजे। सूर्यः। गाः।
वि। सानुना। पृथिवी। सस्रे। उर्वी। पृथु। प्रतीकम्। अधि। आ। ईधे। अग्निः ॥ १ ॥

ऋतस्य यज्ञस्य सदनात् स्थानाद्देवयजनदेशात् ब्रह्म स्तोत्रं स्तुत्यान् सूर्यादीन् प्र एतु प्रकर्षेण गच्छतु। किं तद्ब्रह्मेति तदाह। सूर्यः सर्वस्य प्रेरकः शोभनवीर्यो वा देवः रश्मिभिः आत्मीयैः किरणैः गाः अपो वृष्ट्युदकानि वि ससृजे विसृजति विमुञ्चति। प्रवर्षति। श्रूयते हि—'याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति' (तै. आ. १०. ६३) इति। स्मृतिश्च भवति—'आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति। अत ईदृशं माहात्म्यं सूर्यस्यैव विद्यते नान्यस्य कस्यचिदित्यनेन पादेन सूर्यः स्तूयते। अपि च पृथिवी प्रथिता भूमिः सानुना समुच्छ्रितेन पर्वतादिना उर्वी विस्तीर्णा सती वि सस्रे विसरति व्याप्नोति। तथा अग्निः पृथु विस्तीर्णं प्रतीकं पृथिव्या अवयवं देवयजनलक्षणं स्थानम् अधि। 'अधिपरी अनर्थकौ' इत्यधेः कर्मप्रवचनीयसंज्ञायां 'कर्मप्रवचनीययुक्ते' इति सप्तम्यर्थे द्वितीया। ईदृशे स्थाने पृधे आदीप्यते ॥

इमां वां मित्रावरुणा सुवृक्तिमिषं न कृण्वे असुरा नवीयः।
इनो वामन्यः पदवीरदब्धो जनं च मित्रो यतति ब्रुवाणः ॥ २ ॥

इमाम्। वाम्। मित्रावरुणा। सुऽवृक्तिम्। इषम्। न। कृण्वे। असुरा। नवीयः।
इनः। वाम्। अन्यः। पदऽवीः। अदब्धः। जनम्। च। मित्रः। यतति। ब्रुवाणः ॥ २ ॥

हे असुरा असुरौ बलवन्तौ हे मित्रावरुणा मित्रावरुणौ वां युवाभ्याम् इषं न हवीरूपमन्नमिव नवीयः नवीयसीम् इमाम् अस्मदीयां पुरोवर्तिनीं सुवृक्तिं स्तुतिं कृण्वे अहं स्तोता करोमि। वां युवयोः अन्यः अन्यतरः इनः प्रभुः अदब्धः शत्रुभिरहिंसितो वरुणः पदवीः पदस्य स्थानस्य प्रजनयिता। वरुणो हि धर्माधर्मयोर्धारयितेति पदवीरित्युच्यते। ब्रुवाणः अस्माभिः स्तूयमानः मित्रः च जनं सर्वं प्राणिजातं यतति यातयति प्रवर्तयति। तथा च श्रूयते—'मित्रो जनान्यातयति ब्रुवाणः' (ऋ. सं. ३. ५९. १) इति ॥

आ वातस्य ध्रजतो रन्त इत्या अपीपयन्त धेनवो न सूदाः।
महो दिवः सदने जायमानोऽचिक्रदद्वृषभः सस्मिन्नूधन् ॥ ३ ॥

आ । वार्तस्य । ध्रजतः । रन्ते । इत्याः । अपीपयन्त । धेनवः । न । सूदाः ।
महः । दिवः । सदने । जायमानः । अचिक्रदत् । वृषभः । सस्मिन् । ऊधन् ॥ ३ ॥

ध्रजतः गच्छतः वातस्य वायोः इत्याः गतयः आ रन्ते अभितो रमन्ते। तथा सूदाः। 'सूद प्रेरणे' इति धातुः। क्षीरस्य प्रेरयित्र्यः धेनवो न। नेति चार्थे। गावश्च अपीपयन्त प्यायन्ते[1] एधन्ते। अपि च महः महतः दिवः द्योतमानस्यादित्यस्य सदने स्थानेऽन्तरिक्षे जायमानः उत्पद्यमानः वृषभः वर्षणशीलः पर्जन्यः सस्मिन्नूधन् तस्मिन्[2] अन्तरिक्षे अचिक्रदत्[3] ॥

गिरा य एता युनजद्धरी त इन्द्र प्रिया सुरथा शूर धायू ।
प्र यो मन्युं रिरिक्षतो मिनात्या सुक्रतुमर्यमणं ववृत्याम् ॥ ४ ॥

गिरा । यः । एता । युनजत् । हरी इति । ते । इन्द्र । प्रिया । सुऽरथा । शूर । धायू इति ।
प्र । यः । मन्युम् । रिरिक्षतः । मिनाति । आ । सुऽक्रतुम् । अर्यमणम् । ववृत्याम् ॥ ४ ॥

अस्याः पूर्वोऽर्धर्चं इन्द्रस्तुतिरपरोऽर्यम्णः स्तुतिः। हे शूर विक्रान्त इन्द्र ते तव प्रिया प्रियौ सुरथा सुष्ठुरंहणौ धायू धारकौ एता एतौ हरी त्वदीयावश्वौ यः जनः गिरा स्तुतिरूपया वाचा युनजत् रथे युञ्ज्यात् हे इन्द्र त्वम् अस्य[4] यागमायाहीति शेषः। यः अर्यमा रिरिक्षतः हिंसितुमिच्छतः शत्रोः संबन्धिनं मन्युं कोपं प्र मिनाति प्रकर्षेण हिनस्ति[5] सुक्रतुं शोभनकर्माणम् अर्यमणम् आ ववृत्यां स्तुत्यावर्तयामि ॥

यजन्ते अस्य सख्यं वयश्च नमस्विनः स्व ऋतस्य धामन् ।
वि पृक्षो बाबधे नृभिः स्तवान इदं नमो रुद्राय प्रेष्ठम् ॥ ५ ॥

यजन्ते । अस्य । सख्यम् । वयः । च । नमस्विनः । स्वे । ऋतस्य । धामन् ।
वि । पृक्षः । बाबधे । नृऽभिः । स्तवानः । इदम् । नमः । रुद्राय । प्रेष्ठम् ॥ ५ ॥

अनया रुद्रः स्तूयते। नमस्विनः हविर्लक्षणान्नवन्तः स्वे स्वकीये ऋतस्य यज्ञस्य धामन् धामनि स्थाने। स्वकीये यज्ञगृहे स्थिता इत्यर्थः। वयश्च गन्तारः कर्माणि कुर्वाणा यजमानाः अस्य रुद्रस्य सख्यं सखित्वमुद्दिश्य यजन्ते पूजयन्ति। नृभिः नेतृभिः स्तवानः स्तूयमानो रुद्रः पृक्षः अन्नं स्तोतृषु वि बाबधे विबध्नाति। ददातीत्यर्थः। प्रेष्ठं रुद्रस्य प्रियतमम् इदं नमः तस्मै रुद्राय मया क्रियते ॥ ॥ १ ॥

आ यत्साकं यशसो वावशानाः सरस्वती सप्तथी सिन्धुमाता ।
याः सुष्वयन्त सुदुघाः सुधारा अभि स्वेन पयसा पीप्यानाः ॥ ६ ॥

आ । यत् । साकम् । यशसः । वावशानाः । सरस्वती । सप्तथी । सिन्धुऽमाता ।
याः । सुस्वयन्त । सुऽदुघाः । सुऽधाराः । अभि । स्वेन । पयसा । पीप्यानाः ॥ ६ ॥

---

१. श–आप्यायते। २. ज्ञ-य–सर्वस्मिन्; त१-४–सस्मिन्; त२–सिस्मिन्। ३. ज्ञ–अचिक्रदत् शब्दायते। ४. ख–क्ष-त३-४-न-भ-श–यस्य; ज्ञ–तस्य। ५. ज्ञ–हिनस्ति तं।

ᵛयत् यासां गङ्गादीनां नदीनां मध्ये ᵛसिन्धुमाता अपां मातृभूता ᵛसरस्वती एतदाख्या नदी ᵛसप्तथी सप्तमी भवति ᵛसुदुघाः कामान् दोग्धुं सुशक्याः ᵛसुधाराः शोभनधारोपेताश्च नद्यः ᵛसुष्वयन्त सुष्वयन्ते। गतिकर्मैतत्। प्रवहन्ति। ᵛस्वेन स्वकीयेन ᵛपयसा उदकेन ᵛअभि ᵛपीप्यानाः ᵛयाः च अभिवर्धयन्त्यः ᵛयशसः अन्नवत्यः ᵛवावशानाः कामयमाना नद्यः ᵛसाकं युगपदेव ᵛआ गच्छन्तु। आ इत्युपसर्गस्य योग्यक्रियाध्याहारः॥

उ॒त त्ये नो॑ म॒रुतो॑ मन्दसा॒ना धियं॑ तो॒कं च॑ वा॒जिनो॑ऽवन्तु।
मा नः॒ परि॑ ख्य॒दक्ष॑रा॒ चर॒न्त्यवी॑वृध॒न्युज्यं॒ ते र॒यिं नः॑॥ ७॥

उ॒त। त्ये। नः॒। म॒रुतः॑। म॒न्द॒सा॒नाः। धिय॑म्। तो॒कम्। च॒। वा॒जिनः॑। अ॒व॒न्तु॒।
मा। नः॒। परि॑। ख्य॒त्। अक्ष॑रा। चर॑न्ती। अवी॑वृधन्। युज्य॑म्। ते। र॒यिम्। नः॒॥ ७॥

ᵛउत अपि च ᵛमन्दसानाः मोदमानाः ᵛवाजिनः वेगवन्तः ᵛत्ये ते ᵛमरुतः ᵛनः अस्मदीयं ᵛधियं यज्ञाख्यं कर्म ᵛतोकं ᵛच अस्मदीयं पुत्रं च ᵛअवन्तु रक्षन्तु। ᵛअक्षरा व्याप्ता ᵛचरन्ती वाग्देवता च ᵛनः अस्मान् ᵛपरि त्यक्त्वा अस्मद्व्यतिरिक्तानन्यान् ᵛमा ᵛख्यत् मा द्राक्षीत्। ᵛते पूर्वोक्ता मरुतो वाक्च ᵛयुज्यं युक्तमपि ᵛनः अस्मदीयं ᵛरयिं धनम् ᵛअवीवृधन् वर्धयन्तु॥

प्र वो॑ म॒हीम॒रम॑तिं कृणुध्वं॒ प्र पू॒षणं॑ वि॒द॒थ्यं१॒ न वी॒रम्।
भगं॑ धि॒योऽवि॒तारं॑ नो अ॒स्याः सा॒तौ वाजं॑ राति॒षाचं॒ पुरं॑धिम्॥ ८॥

प्र। वः॒। म॒हीम्। अ॒रम॑तिम्। कृ॒णु॒ध्व॒म्। प्र। पू॒षण॑म्। वि॒द॒थ्य॑म्। न। वी॒रम्।
भग॑म्। धि॒यः। अ॒वि॒तार॑म्। नः॒। अ॒स्याः। सा॒तौ। वाज॑म्। रा॒ति॒ऽसाच॑म्। पुर॑म्ऽधिम्॥ ८॥

हे स्तोतारः ᵛवः यूयम् ᵛअरमतिम् उपरतिरहितां ᵛमहीं महतीं भूमिं ᵛप्र ᵛकृणुध्वम् आह्वयत। तथा ᵛविदथ्यं यज्ञार्हं ᵛवीरं ᵛन सर्वेषां प्रेरकं च ᵛपूषणम् एतन्नामकं देवं ᵛप्र कृणुध्वम्। तथा ᵛअस्याः ᵛधियः ᵛनः अस्मदीयस्यास्य कर्मणः ᵛअवितारं रक्षितारं ᵛभगं देवं चाह्वयत। अपि च ᵛसातौ अस्मदीये यज्ञे युद्धे वा ᵛवाजम् ऋभूणामन्यतमं देवमाह्वयत। कीदृशं वाजम्। ᵛरातिषाचं दानसेवकं ᵛपुरंधिं पुराणां धारयितारम्॥

यज्ञपुच्छे 'अच्छायं वः' इति चमसिनः स्वं स्वं चमसमभिमृशेयुः। सूत्रितं च—'अच्छायं वो मरुतः श्लोक एत्वित्येतयाभिमृशन्ति' (आश्व. श्रौ. ६. १२) इति॥

अच्छा॒यं वो॑ मरुतः॒ श्लोक॑ ए॒त्वच्छा॒ विष्णुं॑ निषिक्त॒पामवो॑भिः।
उ॒त प्र॒जायै॑ गृण॒ते वयो॑ धुर्यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः॥ ९॥

अच्छ॑। अ॒यम्। वः॒। म॒रु॒तः॒। श्लोकः॑। ए॒तु॒। अच्छ॑। विष्णु॑म्। नि॒सि॒क्त॒ऽपाम्। अवः॑ऽभिः।
उ॒त। प्र॒ऽजायै॑। गृ॒ण॒ते। वयः॑। धुः॒। यू॒यम्। पा॒त। स्व॒स्तिऽभिः॑। सदा॑। नः॒॥ ९॥

हे ᵛमरुतः ᵛवः युष्मान् ᵛअयं ᵛश्लोकः अस्मदीयमिदं स्तोत्रम् ᵛअच्छ ᵛएतु अभिगच्छतु। ᵛनिषिक्तपां निषिक्तस्य गर्भस्य रक्षितारम्। यद्वा। चमसे निषिक्तानां सोमानां पातारम्। ᵛअवोभिः अस्मद्विषयरक्षणैर्युक्तं ᵛविष्णुं चास्मदीयं स्तोत्रम् ᵛअच्छ एतु। ᵛउत अपि च मरुतो

विष्णुश्च ᵛगृणते स्तुवते मह्यं ᵛप्रजायै पुत्ररूपां प्रजां ᵛवयः अन्नं च ᵛधुः अधुः दधतु। हे मरुतो हे विष्णो ᵛयूयं ᵛस्वस्तिभिः अविनाशैः ᵛनः अस्मान् ᵛसदा सर्वदा ᵛपात रक्षत ॥ ॥ २ ॥

'आ वो वाहिष्ठः' इत्यष्टर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवम्। अनुक्रम्यते च— 'आ वोऽष्टौ' इति। विनियोगो लैङ्गिकः ॥

आ वो वाहिष्ठो वहतु स्तवध्यै रथो वाजा ऋभुक्षणो अमृक्तः।
अभि त्रिपृष्ठैः सवनेषु सोमैर्मदे सुशिप्रा महभिः पृणध्वम् ॥ १ ॥

आ। वः। वाहिष्ठः। वहतु। स्तवध्यै। रथः। वाजाः। ऋभुक्षणः। अमृक्तः।
अभि। त्रिऽपृष्ठैः। सवनेषु। सोमैः। मदे। सुऽशिप्राः। महऽभिः। पृणध्वम् ॥ १ ॥

अनेन तृचेन ऋभवः स्तूयन्ते। ᵛऋभुक्षणः विस्तीर्णस्य तेजसो निवासभूता हे ᵛवाजाः ऋभवः ᵛवाहिष्ठः वोढृतमः ᵛस्तवध्यै स्तोतुमर्हः ᵛअमृक्तः केनाप्यहिंसितो युष्मदीयः ᵛरथः ᵛवः युष्मान् ᵛआ ᵛवहतु आ समन्तादस्मदीयं यज्ञं प्रापयतु। हे ᵛसुशिप्राः शोभनहनवः यूयं तेन रथेनागत्य ᵛसवनेषु अस्मदीययज्ञेषु ᵛमदे मदनिमित्ते ᵛत्रिपृष्ठैः क्षीरदधिसक्तुमिश्रैः ᵛमहभिः महद्भिः ᵛसोमैः ᵛअभि ᵛपृणध्वं युष्मदीयं जठरमभिपूरयत। स रथो युष्मानावहत्विति पूर्वेणान्वयः ॥

यूयं ह रत्नं मघवत्सु धत्थ स्वर्दृश ऋभुक्षणो अमृक्तम्।
सं यज्ञेषु स्वधावन्तः पिबध्वं वि नो राधांसि मतिभिर्दयध्वम् ॥ २ ॥

यूयम्। ह। रत्नम्। मघवत्ऽसु। धत्थ। स्वःऽदृशः। ऋभुक्षणः। अमृक्तम्।
सम्। यज्ञेषु। स्वधाऽवन्तः। पिबध्वम्। वि। नः। राधांसि। मतिऽभिः। दयध्वम् ॥ २ ॥

हे ᵛऋभुक्षणः हे ऋभवः ᵛस्वर्दृशः स्वर्गं पश्यन्तः ᵛयूयं ᵛह यूयमेव ᵛमघवत्सु हविर्लक्षणान्नवत्स्वस्मासु निमित्तेषु ᵛअमृक्तम् अहिंसितम्। चोरादिभिर्नापहृतमित्यर्थः। ᵛरत्नं रमणीयं ᵛधत्थ धारयथ। तदनन्तरं ᵛस्वधावन्तः बलवन्तस्ते यूयं ᵛयज्ञेषु अस्मदीययज्ञेषु ᵛसं ᵛपिबध्वं सम्यक् सोमं[1] पिबत[1]। अपि च यूयं ᵛमतिभिः धनहेतुभिः[2] ᵛनः अस्मभ्यं ᵛराधांसि धनानि ᵛवि ᵛदयध्वं विशेषेण दत्त ॥

उवोचिथ हि मघवन्देष्णं महो अर्भस्य वसुनो विभागे।
उभा ते पूर्णा वसुना गभस्ती न सूनृता नि यमते वसव्या ॥ ३ ॥

उवोचिथ। हि। मघऽवन्। देष्णम्। महः। अर्भस्य। वसुनः। विऽभागे।
उभा। ते। पूर्णा। वसुना। गभस्ती इति। न। सूनृता। नि। यमते। वसव्या ॥ ३ ॥

'उवोचिथ' इत्याद्याः पञ्चर्च इन्द्रदेवताकाः। हे ᵛमघवन् धनवन्निन्द्र त्वं ᵛमहः महतः ᵛअर्भस्य अल्पस्य च ᵛवसुनः धनस्य ᵛविभागे परिचरणानुकूले दाननिमित्ते ᵛदेष्णं धनम् ᵛउवोचिथ ᵛहि सेवसे खलु। उचतिः सेवाकर्मा। तथा ᵛते त्वदीयौ ᵛउभा उभौ ᵛगभस्ती बाहू ᵛवसुना धनेन ᵛपूर्णा संपूर्णौ भवतः। ते त्वदीया ᵛसूनृता वाक् ᵛवसव्या वसूनि धनानि

---

१. झ-ञ-त१-४—संपिबत। २. झ-त१-२—धनहेतुभिः मननीयैः स्तोत्रैः।

vन vमि vयमते न नियच्छति। यद्वा। वसव्या वसुषु धनेषु साधुः सूनृता बाहू धनेन संपूर्णौ त्वदीयौ बाहू न नियच्छति। नाल्पं प्रदापयतीत्यर्थः ॥

त्वमिन्द्र स्वयशा ऋभुक्षा वाजो न साधुरस्तमेष्यृक्वा ।
वयं नु ते दाश्वांसः स्याम ब्रह्म कृण्वन्तो हरिवो वसिष्ठाः ॥ ४ ॥

त्वम् । इन्द्र । स्वऽयशाः । ऋभुक्षाः । वाजः । न । साधुः । अस्तम् । एषि । ऋक्वा ।
वयम् । नु । ते । दाश्वांसः । स्याम । ब्रह्म । कृण्वन्तः । हरिऽवः । वसिष्ठाः ॥ ४ ॥

हे vइन्द्र vस्वयशाः असाधारणकीर्तिः vऋभुक्षाः ऋभुनिवासकः ऋभूणामीश्वरो वा vत्वं vसाधुः साधकः vवाजः vन अन्नमिव vऋक्वाः ऋक्वणः स्तोतुर्मम vअस्तं गृहम् vएषि प्राप्नुहि। vनु अद्य vवसिष्ठाः एतत्संज्ञका ऋषयः vवयं हे vहरिवः स्वकीयाश्वोपेतेन्द्र vते त्वदर्थं vदाश्वांसः हविर्लक्षणान्नं दत्तवन्तः vब्रह्म स्तोत्रं vकृण्वन्तः कुर्वन्तः सन्तः vस्याम भवेम ॥

सनितासि प्रवतो दाशुषे चिद्याभिर्विवेषो हर्यश्व धीभिः ।
ववन्मा नु ते युज्याभिरूती कदा न इन्द्र राय आ दशस्येः ॥ ५ ॥

सनिता । असि । प्रऽवतः । दाशुषे । चित् । याभिः । विवेषः । हरिऽअश्व । धीभिः ।
ववन्म । नु । ते । युज्याभिः । ऊती । कदा । नः । इन्द्र । रायः । आ । दशस्येः ॥ ५ ॥

हे vहर्यश्व हरिनामकाश्वेन्द्र त्वं vयाभिः vधीभिः अस्मदीयाभिः स्तुतिभिः vविवेषः व्याप्नोषि स त्वं vदाशुषे vचित् हविर्दत्तवते यजमानायापि vप्रवतः प्रवणस्य धनस्य vसनिता vअसि दाता भवसि। अपि च हे vइन्द्र त्वं vनः अस्मभ्यं vकदा कस्मिन् काले vरायः धनानि vआ vदशस्येः प्रयच्छेः। vनु अद्य vते तव vयुज्याभिः योग्याभिः vऊती ऊतिभी रक्षाभिः vववन्म त्वां संभजेम ॥ ॥ ३ ॥

वासयसीव वेधसस्त्वं नः कदा न इन्द्र वचसो बुबोधः ।
अस्तं तात्या धिया रयिं सुवीरं पृक्षो नो अर्वा न्युहीत वाजी ॥ ६ ॥

वासयसिऽइव । वेधसः । त्वम् । नः । कदा । नः । इन्द्र । वचसः । बुबोधः ।
अस्तम् । तात्या । धिया । रयिम् । सुऽवीरम् । पृक्षः । नः । अर्वा । नि । उहीत । वाजी ॥ ६ ॥

हे vइन्द्र vत्वं vकदा कस्मिन् काले vनः अस्मदीयं vवचसः वचोरूपं स्तोत्रं vबुबोधः अवगच्छेः[1]। तथा स त्वं vवेधसः स्तोतॄनस्मान् vवासयसीव। इवेदानीमर्थे। इदानीं स्वकीये स्थानेऽवस्थापयसि। किंच vवाजी बलवान् vअर्वा वेगवांस्त्वदीयोऽश्वः। vतात्या। तनोतेरिदं रूपम्। संततया vधिया अस्मत्प्रेरितया स्तुत्या हेतुभूतया vसुवीरं शोभनपुत्रोपेतं vरयिं त्वदीयं धनं vपृक्षः अन्नं च vनः अस्मदीयम् vअस्तं गृहं vनि vउहीत निवहेत् ॥

अभि यं देवी निर्ऋतिश्चिदीशे नक्षन्त इन्द्रं शरदः सुपृक्षः ।
उप त्रिबन्धुर्जरदष्टिमेत्यस्ववेशं यं कृणवन्त मर्ताः ॥ ७ ॥

---

१. ग—अवगच्छसि।

अभि । यम् । देवी । निःऽऋतिः । चित् । ईशे । नक्षन्ते । इन्द्रम् । शरदः । सुऽपृक्षः ।
उप । त्रिऽबन्धुः । जरत्ऽअष्टिम् । एति । अस्वऽवेशम् । यम् । कृणवन्त । मर्ताः ॥ ७ ॥

देवी द्योतमाना निर्ऋतिश्चित् भूमिरपि ईशे ॥ कृत्यार्थे केन्प्रत्ययः ॥ ईशितव्यां स्वभूता सती यम् इन्द्रम् अभि नक्षते व्याप्नोति । सुपृक्षः शोभनान्नैरुपेताः शरदः संवत्सराश्च यमिन्द्रं नक्षन्ते व्याप्नुवन्ति । मर्ताः मरणधर्माणः स्तोतारो वयं यम् इन्द्रम् अस्ववेशं स्वकीये स्थानेऽनुपविशन्तं कृणवन्त कुर्वन्ति । त्रिबन्धुः त्रयाणां लोकानां बन्धको विधारकः स इन्द्रः जरदष्टिं जरज्जीर्णमष्टिरशनं यस्य बलस्य हेतुभूतं तद्बलम् उप एति उपगच्छति ॥

**आ नो राधांसि सवितः स्तवध्या आ रायो यन्तु पर्वतस्य रातौ ।**
**सदा नो दिव्यः पायुः सिषक्तु यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥**

आ । नः । राधांसि । सवितरिति । स्तवध्यै । आ । रायः । यन्तु । पर्वतस्य । रातौ ।
सदा । नः । दिव्यः । पायुः । सिसक्तु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ८ ॥

हे सवितः सर्वस्य प्रेरक देव त्वत्सकाशात् स्तवध्यै स्तोतुं योग्यानि राधांसि धनानि नः अस्मान् आ यन्तु आगच्छन्तु । पर्वतस्य । पर्वत इति कश्चिदिन्द्रस्य सखा । एतत्संज्ञकस्य देवस्य रातौ दाने सति रायः धनान्यस्मान् आ यन्तु । पायुः सर्वस्य पालकः दिव्यः दिवि भवः स इन्द्रः सदा सर्वदा नः अस्मान् सिषक्तु रक्षकत्वेन सेवताम् । अस्मिन् सूक्ते ये प्रतिपादिता[1] देवास्ते सर्वे यूयं नः अस्मान् स्वस्तिभिः कल्याणैः सदा पात पालयत[2] ॥ ॥ ४ ॥

'उदु ष्य देवः' इत्यष्टर्चं पञ्चमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं सवितृदेवताकम् । सप्तम्यष्टम्यौ वाजिदेवताके । 'भगमुग्रोऽवसे' इत्यर्धर्चो भगदेवत्यः सावित्रो वा । तथा चानुक्रमणिका—'उदु ष्य सावित्रमन्त्ये वाजिन्यौ भगमिति भागो वार्धर्चः' इति । गतः सूक्तविनियोगः ॥

**उदु ष्य देवः सविता ययाम हिरण्ययीममतिं यामशिश्रेत् ।**
**नूनं भगो हव्यो मानुषेभिर्वि यो रत्ना पुरूवसुर्दधाति ॥ १ ॥**

उत् । ऊँ इति । स्यः । देवः । सविता । ययाम । हिरण्ययीम् । अमतिम् । याम् । अशिश्रेत् ।
नूनम् । भगः । हव्यः । मानुषेभिः । वि । यः । रत्ना । पुरुऽवसुः । दधाति ॥ १ ॥

सविता सर्वस्य प्रेरकः स्यः सः देवः हिरण्ययीं सुवर्णमयीं याम् अमतिम् । रूपनामैतत् । रूपं प्रभामित्यर्थः । अशिश्रेत् आश्रयतिताममतिम् उत् ययाम उद्यच्छति उद्गमयति । उ इति पादपूरणः । नूनम् अद्य भगः भजनीयो यः सविता मानुषेभिः मनुष्यैः स्तोतृभिः हव्यः हवनीयः स्तोतव्यो भवति । पुरूवसुः बहुधनः यः देवः स्तोतृभ्यः रत्ना रत्नानि रमणीयानि धनानि वि दधाति करोति । स सविता देवः ताममतिमुद्ययामेति पूर्वेण संबन्धः ॥

**उदु तिष्ठ सवितः श्रुध्य१स्य हिरण्यपाणे प्रभृतावृतस्य ।**
**व्यु१र्वीं पृथ्वीममतिं सृजान आ नृभ्यो मर्तभोजनं सुवानः ॥ २ ॥**

१. ख-क्ष-त-न-भ-श—प्रतिपादकाः । २. श—रक्षत ।

उत् । ॐ इति । तिष्ठ । सवितरिति । श्रुधि । अस्य । हिरण्यऽपाणे । प्रऽभृतौ । ऋतस्य ।
वि । उर्वीम् । पृथ्वीम् । अमतिम् । सृजानः । आ । नृऽभ्यः । मर्तऽभोजनम् । सुवानः ॥२॥

हे सवितः सर्वस्य प्रेरयितर्देव त्वम् उत् तिष्ठ ऊर्ध्वं गच्छ। ततो हे हिरण्यपाणे हे सुवर्णहस्त त्वमस्मदभीप्सितप्रदानाय ऋतस्य यज्ञस्य प्रभृतौ प्रणयने अस्य अस्मदीयमिदं स्तोत्रं श्रुधि शृणु। उ इति पूरणः। कीदृशस्त्वम्। उर्वीं विस्तीर्णां पृथ्वीं प्रथिताम् अमतिं रूपं प्रभां वि सृजानः विसृजन् नृभ्यः नेतृभ्यः स्तोतृभ्यः मर्तभोजनं मनुष्याणां भोगयोग्यं धनम् आ सुवानः प्रेरयन्। एवंभूतस्त्वमिदं स्तोत्रं शृण्विति संबन्धः ॥

अपि ष्टुतः सविता देवो अस्तु यमा चिद्विश्वे वसवो गृणन्ति ।
स नः स्तोमान्नमस्य१श्चनो धाद्विश्वेभिः पातु पायुभिर्नि सूरीन् ॥ ३ ॥

अपि । स्तुतः । सविता । देवः । अस्तु । यम् । आ । चित् । विश्वे । वसवः । गृणन्ति ।
सः । नः । स्तोमान् । नमस्यः । चनः । धात् । विश्वेभिः । पातु । पायुऽभिः । नि । सूरीन् ॥३॥

अपि च सविता देवः अस्माभिः स्तुतः अस्तु। अस्मदीयाः स्तुतीः शृणोत्वित्यर्थः। विश्वे वसवः चित् सर्वे देवा अपि यं सवितारम् आ गृणन्ति अभिष्टुवन्ति नमस्यः सर्वैर्नमस्करणीयः सः देवः स्तोमान् नः अस्मदीयानि स्तोत्राणि चनः अन्नं धात् दधातु। अन्नफलानि करोतु। विश्वेभिः विश्वैः सर्वैः पायुभिः पालनैः सूरीन् स्तोतॄनस्मान् नि पातु नितरां पालयतु ॥

अभि यं देव्यदितिर्गृणाति सवं देवस्य सवितुर्जुषाणा ।
अभि सम्राजो वरुणो गृणन्त्यभि मित्रासो अर्यमा सजोषाः ॥ ४ ॥

अभि । यम् । देवी । अदितिः । गृणाति । सवम् । देवस्य । सवितुः । जुषाणा ।
अभि । सम्ऽराजः । वरुणः । गृणन्ति । अभि । मित्रासः । अर्यमा । सऽजोषाः ॥ ४ ॥

देवी द्योतमाना अदितिः अदीना देवमाता यं सवितारम् अभि गृणाति अभिष्टौति। कीदृशी। सवितुः देवस्य एव सवं प्रसवमनुज्ञां जुषाणा सेवमाना। सम्राजः सम्यग्राजमानाः वरुणः। उपलक्षणमेतत्। वरुणादयो देवाः यं सवितारम् अभि गृणन्ति अभिष्टुवन्ति। मित्रासः मित्रादयश्च सजोषाः समानप्रीतिः अर्यमा एतत्संज्ञको देवश्च यम् अभि गृणन्ति। स नः स्तोमांश्चनो धादिति पूर्वयर्चा संबन्धः ॥

अभि ये मिथो वनुषः सपन्ते रातिं दिवो रातिषाचः पृथिव्याः ।
अहिर्बुध्न्य उत नः शृणोतु वरूत्र्येकधेनुभिर्नि पातु ॥ ५ ॥

अभि । ये । मिथः । वनुषः । सपन्ते । रातिम् । दिवः । रातिऽसाचः । पृथिव्याः ।
अहिः । बुध्न्यः । उत । नः । शृणोतु । वरूत्री । एकधेनुऽभिः । नि । पातु ॥ ५ ॥

रातिषाचः दानसेविनः वनुषः संभक्तारः ये यजमानाः मिथः परस्परं संहता भूत्वा सवितारमभिलक्ष्य सपन्ते परिचरन्ति। कीदृशम्। दिवः द्युलोकस्य पृथिव्याः भूमेश्च रातिं

मित्रभूतम्। ᵛउत अपि च ᵛअहिर्बुध्न्यः। बुध्नेऽन्तरिक्षे भवो बुध्न्यः। एतीत्यहिः। एतत्पद-द्वयाभिधो मध्यमस्थानोऽग्निरहिर्बुध्न्य इत्युच्यते। सवितुर्मित्रभूतः सोऽपि तेषां ᵛनः अस्माकं सवितृविषयं स्तोत्रं ᵛशृणोतु। तथा ᵛवरूत्री वाग्देवी च सवितृसहिता[1] सती ᵛएकधेनुभिः मुख्याभिर्गोभिः ᵛनि ᵛपातु नितरामस्मान् पालयतु ॥

अनु तन्नो जास्पतिर्मंसीष्ट रत्नं देवस्य सवितुरियानः।
भगमुग्रोऽवसे जोहवीति भगमनुग्रो अध याति रत्नम् ॥ ६ ॥

अनु। तत्। नः। जाःपतिः। मंसीष्ट। रत्नम्। देवस्य। सवितुः। इयानः।
भगम्। उग्रः। अवसे। जोहवीति। भगम्। अनुग्रः। अध। याति। रत्नम् ॥ ६ ॥

ᵛइयानः अस्माभिर्याच्यमानः ᵛजास्पतिः प्रजानां पालकः सविता देवः ᵛसवितुः ᵛदेवस्य स्वस्य संबन्धि ᵛरत्नं रमणीयं ᵛतत् प्रसिद्धं धनं ᵛनः अस्माकम् ᵛअनु ᵛमंसीष्ट अनुमन्यताम्। ᵛउग्रः ओजस्वी स्तोता ᵛभगं भजनीयं सवितारं भगसंज्ञकं देवं वा ᵛअवसे नोऽस्माकं रक्षणाय ᵛजोहवीति भृशं ह्वयति। ᵛअध अपि च ᵛअनुग्रः असमर्थः स्तोता ᵛभगम् एतत्संज्ञकं सवितारं वा ᵛरत्नं रमणीयं तत्प्रसिद्धं धनं ᵛयाति याचते ॥

वैश्वदेवे पर्वणि वाजिनस्य हविषः 'शं नो भवन्तु' इत्यादिके द्वे याज्यानुवाक्ये। सूत्रितं च– 'शं नो भवन्तु वाजिनो हवेषु वाजेवाजेऽवत वाजिनो न इत्यूर्ध्वज्ञुरनवानं याज्याम्' (आश्व. श्रौ. २. १६) इति ॥

शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः।
जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवाः ॥ ७ ॥

शम्। नः। भवन्तु। वाजिनः। हवेषु। देवऽताता। मितऽद्रवः। सुऽअर्काः।
जम्भयन्तः। अहिम्। वृकम्। रक्षांसि। सनेमि। अस्मत्। युयवन्। अमीवाः ॥ ७ ॥

ᵛदेवताता देवतातौ यज्ञे ᵛहवेषु अस्मदीयेषु स्तोत्रेषु ᵛमितद्रवः मितद्रवणा मितमार्गाः ᵛस्वर्काः शोभनाग्नाः[2] ᵛवाजिनः एतदभिधायका देवाः ᵛनः अस्माकं ᵛशं सुखाय ᵛभवन्तु। अपि च ᵛअहिम् आगत्य हन्तारं ᵛवृकं वसूनामादातारम्। चोरमिति शेषः। ᵛरक्षांसि च ᵛजम्भयन्तः हिंसन्तो वाजिनो देवाः ᵛसनेमि। पुराणनामैतत्। पुरातनाः ᵛअमीवाः रोगान् ᵛअस्मत् अस्मत्तः ᵛयुयवन् पृथक्कुर्वन्तु[3] ॥

वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥ ८ ॥

वाजेऽवाजे। अवत। वाजिनः। नः। धनेषु। विप्राः। अमृताः। ऋतऽज्ञाः।
अस्य। मध्वः। पिबत। मादयध्वम्। तृप्ताः। यात। पथिऽभिः। देवऽयानैः ॥ ८ ॥

---

१. ख-भ-सवित्रे प्रहिता; घ-न-ञ्च-श-सवितृप्रहिता। २. ख-न-भ-शोभनान्ताः; घ-शोभनागाः; श-शोभमानाः। ३. ख-ञ्च-ञ्च-त१-२-४-भ-पृथक्कुर्वंति।

हे वाजिनः एतन्नामका देवाः विप्राः मेधाविनः अमृताः अमरणधर्माणः ऋतज्ञाः सत्यं जानन्त एवंभूताः सन्तो यूयं वाजेवाजे सर्वेषु युद्धेषु नः अस्मान् धनेषु धननिमित्तेषु अवत पालयत। ततो यूयम् अस्य मध्वः मधुरोपेतमिमं[1] सोमं पिबत। सोमपानानन्तरं मादयध्वं यूयं तृप्ता भवत। ततः तृप्ताः यूयं देवयानैः देवगमनसाधनैः पथिभिः मार्गैः यात गच्छत ॥ ॥५॥

'ऊर्ध्वो अग्निः' इति सप्तर्चं षष्ठं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवम्। 'ऊर्ध्वः सप्त वैश्वदेवं तु' इत्यनुक्रमणिका। सूक्तविनियोगो लैङ्गिकः। द्वितीये छन्दोमे प्रउगशस्त्रे 'ऊर्ध्वो अग्निः' इति वैश्वदेवस्तृचः। सूत्रितं च–'ऊर्ध्वो अग्निः सुमतिं वस्वो अश्रेदुत स्या नः सरस्वती जुषाणेति प्रउगम्' (आश्व. श्रौ. ८. १०) इति ॥

ऊर्ध्वो अग्निः सुमतिं वस्वो अश्रेत्प्रतीची जूर्णिर्देवतातिमेति ।
भेजाते अद्री रथ्येव पन्थामृतं होता न इषितो यजाति ॥ १ ॥

ऊर्ध्वः । अग्निः । सुऽमतिम् । वस्वः । अश्रेत् । प्रतीची । जूर्णिः । देवऽतातिम् । एति ।
भेजाते इति । अद्री इति । रथ्याऽइव । पन्थाम् । ऋतम् । होता । नः । इषितः । यजाति ॥१॥

अग्निः अङ्गनादिगुणविशिष्टः ऊर्ध्वः उद्गमनः सन् वस्वः वासकस्य स्तोतुः सुमतिम् अस्मदीयां शोभनां स्तुतिम् अश्रेत् श्रयतु सेवताम्। प्रतीची अभिमुखी जूर्णिः सर्वासां प्रजानां जरयित्र्युषोदेवता देवतातिं यज्ञम् एति गच्छति। अद्री आद्रियन्तौ श्रद्धावन्तौ पत्नीयजमानौ पन्थां पन्थानं यज्ञमार्गं रथ्येव रथिनाविव भेजाते सेवेते। तथा इषितः संप्रेषितः[2] नः अस्मदीयः होता ऋतं यज्ञं यजाति यजतु। करोत्वित्यर्थः ॥

प्र वावृजे सुप्रया बर्हिरेषामा विश्पतीव बीरिट इयाते ।
विशामक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान् ॥ २ ॥

प्र । ववृजे । सुऽप्रयाः । बर्हिः । एषाम् । आ । विश्पती इवेति विश्पतीऽइव । बीरिटे । इयाते इति ।
विशाम् । अक्तोः । उषसः । पूर्वऽहूतौ । वायुः । पूषा । स्वस्तये । नियुत्वान् ॥ २ ॥

एषां यजमानानां संबन्धि सुप्रयाः शोभनान्नेन युक्तं बर्हिः कुशमयं प्र ववृजे प्रवृज्यते। आसाद्यत इत्यर्थः। विश्पतीव। इवेतीदानीमर्थे। इदानीमस्मदीयानां प्रजानां पालकौ नियुत्वान्। नियुच्छब्देन वडवा उच्यन्ते। तद्वान् वायुः पूषा च विशां प्रजानां स्वस्तये क्षेमाय अक्तोः रात्रेः संबन्धिन्याः उषसः सकाशात् पूर्वहूतौ पूर्वस्मिन्नाह्वाने सति बीरिटे[3] अन्तरिक्षे[3] आ इयाते आगच्छताम्। यद्वा। विश्पतीवेत्युपमा। विशां मनुष्याणां बीरिटे गणे विश्पतीव राजानौ यथागच्छतां तद्वत्। अस्मिन् पक्षे विशामित्युभयत्र संबध्यते ॥

ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त शुभ्राः ।
अर्वाक्पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य ॥ ३ ॥

ज्मयाः । अत्र । वसवः । रन्त । देवाः । उरौ । अन्तरिक्षे । मर्जयन्त । शुभ्राः ।
अर्वाक् । पथः । उरुऽज्रयः । कृणुध्वम् । श्रोत । दूतस्य । जग्मुषः । नः । अस्य ॥ ३ ॥

---

१. श–मधुररसोपेत॰। २. श–प्रेषितः। ३. श–बीरिटमंतरिक्षं तस्मिन्।

वसवः वसुसंज्ञकाः देवाः अत्र अस्मिन् यज्ञे ज्मयाः पृथिव्यां भवाः रन्त रमयन्ताम्। उरौ विस्तीर्णे अन्तरिक्षे स्थिताः शुभ्राः दीप्यमाना मरुतश्च मर्जयन्त परिचर्यन्ते। हे उरुज्रयः प्रभूतगमना वसवो मरुतश्च यूयं पथः युष्मदीयान् मार्गान् अर्वाक् अस्मदभिमुखं यथा भवति तथा कृणुध्वं कुरुत। अपि च यूयं जग्मुषः युष्मान् प्रति गतवतः[1] नः अस्मदीयस्य अस्य दूतस्य अग्नेराह्वानं श्रोत शृणुत। अग्निर्हि यजमानानां दूतः सन् देवानाह्वयतीत्यर्थः ॥

ते हि यज्ञेषु यज्ञियास ऊमाः सधस्थं विश्वे अभि सन्ति देवाः ।
ताँ अध्वर उशतो यक्ष्यग्ने श्रुष्टी भगं नासत्या पुरंधिम् ॥ ४ ॥

ते । हि । यज्ञेषु । यज्ञियासः । ऊमाः । सधऽस्थम् । विश्वे । अभि । सन्ति । देवाः ।
तान् । अध्वरे । उशतः । यक्षि । अग्ने । श्रुष्टी । भगम् । नासत्या । पुरम्ऽधिम् ॥ ४ ॥

यज्ञेषु यागेषु ते हि ते[2] खलु प्रसिद्धाः यज्ञियासः यज्ञार्हाः ऊमाः रक्षकाः विश्वे सर्वे देवाः सधस्थं सहस्थानम् अभि सन्ति अभिभवन्ति आक्रामन्ति। हे अग्ने अध्वरे अस्मदीये यज्ञे उशतः कामयमानान् तान् देवान् यक्षि यज। तथा श्रुष्टी। क्षिप्रनामैतत्। क्षिप्रं भगम् एतत्संज्ञकं देवं नासत्या नासत्यावश्विनौ च पुरंधिं पुरूणां ध्यातारमिन्द्रं च यज ॥

आग्ने गिरो दिव आ पृथिव्या मित्रं वह वरुणमिन्द्रमग्निम् ।
आर्यमणमदितिं विष्णुमेषां सरस्वती मरुतो मादयन्ताम् ॥ ५ ॥

आ । अग्ने । गिरः । दिवः । आ । पृथिव्याः । मित्रम् । वह । वरुणम् । इन्द्रम् । अग्निम् ।
आ । अर्यमणम् । अदितिम् । विष्णुम् । एषाम् । सरस्वती । मरुतः । मादयन्ताम् ॥ ५ ॥

हे अग्ने त्वं दिवः द्युलोकात् सकाशात् गिरः गरणीयान् स्तुत्यान् देवानस्मदीयं यज्ञं प्रति आ वह आह्वानं कुरु। पृथिव्याः अन्तरिक्षाच्च आ वह। कान् देवानिति तदुच्यते। मित्रम् एतत्संज्ञकं वरुणं च इन्द्रं च देवेषु देवतास्वरूपेणावस्थितं च अग्निम् अर्यमणम् एतत्संज्ञकम् अदितिम् अदीनां पृथिवीं[3] च विष्णुं च। एवंभूतान् देवान् एषाम् अस्माकं यजमानानामर्थाय आ वह। सरस्वती वाग्देवता च मरुतः च मादयन्ताम्। अस्मदीयैः स्तोत्रैर्हविर्भिश्च माद्यन्तु ॥

ररे हव्यं मतिभिर्यज्ञियानां नक्षत्कामं मर्त्यानामसिन्वन् ।
धाता रयिमविदस्यं सदासां सक्षीमहि युज्येभिर्नु देवैः ॥ ६ ॥

ररे । हव्यम् । मतिऽभिः । यज्ञियानाम् । नक्षत् । कामम् । मर्त्यानाम् । असिन्वन् ।
धात । रयिम् । अविऽदस्यम् । सदाऽसाम् । सक्षीमहि । युज्येभिः । नु । देवैः ॥ ६ ॥

यज्ञियानाम्। चतुर्थ्यर्थे षष्ठी। यज्ञार्हेभ्यो देवेभ्यः मतिभिः अस्मदीयाभिः स्तुतिभिः सह हव्यं हविः ररे अस्माभिर्दीयते। मर्त्यानां मनुष्याणामस्माकं कामम् अभिलाषम् असिन्वन् अप्रतिबध्नन्नग्निः नक्षत् अस्मदीयं यज्ञं व्याप्नोतु[4]। हे देवा यूयम् अविदस्यम् अनुपक्षपणीयं

१. ज्ञ—गंतुमिच्छतो। २. ज्ञ-त१-२-४—'ते' नास्ति। ३. त-मु—पृथ्वीं। ४ न—व्याप्नोति।

vसदासां सर्वदा संभजनीयं vरयिं धनं vधात अस्मभ्यं दत्त । vनु अद्य वयं vयुज्येभिः सहायभूतैरिह यज्ञे समागतैः vदेवैः vसक्षीमहि । यद्वा । न्वित्युपमार्थे । युज्येभिर्नु बन्धुभिरिव देवैः सक्षीमहि[1] ॥

नू रोदसी अभिष्टुते वसिष्ठैर्ऋतावानो वरुणो मित्रो अग्निः ।
यच्छन्तु चन्द्रा उपमं नो अर्कं यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

नु । रोदसी इति । अभिस्तुते इत्यभिऽस्तुते । वसिष्ठैः । ऋतऽवानः । वरुणः । मित्रः । अग्निः ।
यच्छन्तु । चन्द्राः । उपऽमम् । नः । अर्कम् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥७॥

vनु अद्य vरोदसी द्यावापृथिव्यौ vवसिष्ठैः अस्माभिः । पूजार्थं बहुवचनम् । vअभिष्टुते अभितः सर्वतः स्तुते अभूताम् । तथा vऋतावानः अस्माभिः क्रियमाणैर्यज्ञैरुपेताः vवरुणः vमित्रः vअग्निः च एवंभूता देवा अस्माभिरभिष्टुता आसन् । vचन्द्राः आह्लादकाः सर्वे देवाः vनः अस्मभ्यम् vउपमम् उपमानभूतमुत्कृष्टम् vअर्कम् अन्नं vयच्छन्तु ददतु । अस्मिन् सूक्ते प्रतिपादिता ये देवास्ते सर्वे vयूयं vनः अस्मान् vस्वस्तिभिः अविनाशैः vसदा सर्वदा vपात पालयत ॥  ॥ ६ ॥

'ओ श्रुष्टिः' इति सप्तर्चं सप्तमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवम् । 'ओ श्रुष्टिः' इत्यनुक्रान्तम् । विनियोगो लैङ्गिकः ॥

ओ श्रुष्टिर्विदथ्या३ समेतु प्रति स्तोमं दधीमहि तुराणाम् ।
यदद्य देवः सविता सुवाति स्यामास्य रत्निनो विभागे ॥ १ ॥

ओ इति । श्रुष्टिः । विदथ्या । सम् । एतु । प्रति । स्तोमम् । दधीमहि । तुराणाम् ।
यत् । अद्य । देवः । सविता । सुवाति । स्याम । अस्य । रत्निनः । विऽभागे ॥ १ ॥

हे देवाः vविदथ्या विदथेन त्वदीयेन चित्तेन संपाद्या vश्रुष्टिः सुखमस्मान् vओ आ vसमेतु आगच्छतु । अथवा श्रुष्टिर्वेगवती विदथ्या विदथे यज्ञे क्रियमाणास्मदीया स्तुतिर्युष्मानागच्छतु । वयं vतुराणां वेगवतां देवानां vस्तोमं स्तोत्रं vप्रति vदधीमहि कुर्वीमहि । vअद्य इदानीं vसविता vदेवः vयत् धनं vसुवाति अस्मभ्यं प्रेरयेत् vरत्निनः रमणीयधनवतः vअस्य सवितुस्तस्य धनस्य vविभागे दाने vस्याम वयं भवेम ॥

मित्रस्तन्नो वरुणो रोदसी च द्युभक्तमिन्द्रो अर्यमा ददातु ।
दिदेष्टु देव्यदिती रेक्णो वायुश्च यन्नियुवैते भगश्च ॥ २ ॥

मित्रः । तत् । नः । वरुणः । रोदसी इति । च । द्युऽभक्तम् । इन्द्रः । अर्यमा । ददातु ।
दिदेष्टु । देवी । अदितिः । रेक्णः । वायुः । च । यत् । नियुवैते इति निऽयुवैते । भगः । च ॥२॥

vमित्रः देवः vनः अस्मभ्यं vतत् प्रसिद्धं धनं vददातु प्रयच्छतु । तथा vवरुणः ददातु । vरोदसी vच द्यावापृथिव्यौ च दत्ताम् । तथा vइन्द्रः vद्युभक्तं द्युभिर्द्योतमानैः स्तोतृभिः सेवितं तद्धनं ददातु । vअर्यमा च ददातु । तथा vअदितिः vदेवी vरेक्णः धनं vदिदेष्टु तद्धनमस्मभ्यं दिशतु । vवायुश्च vभगश्च उभौ देवौ vयत् धनं vनियुवैते अस्मान्नितरां योजयेतां तद्धनमिति पूर्वेण संबन्धः ॥

1. श—सक्षीमहि संगता भवेम ।

सेदुग्रो अस्तु मरुतः स शुष्मी यं मर्त्यं पृषदश्वा अवाथ ।
उतेमग्निः सरस्वती जुनन्ति न तस्य रायः पर्येतास्ति ॥ ३ ॥

सः । इत् । उग्रः । अस्तु । मरुतः । सः । शुष्मी । यम् । मर्त्यम् । पृषत्ऽअश्वाः । अवाथ ।
उत । ईम् । अग्निः । सरस्वती । जुनन्ति । न । तस्य । रायः । परिऽएता । अस्ति ॥ ३ ॥

हे पृषदश्वाः । पृषच्छब्देन केचिन्मृगविशेषा उच्यन्ते । त एवाश्वा वाहा येषां ते । एवंभूता हे मरुतः रुद्रपुत्रा देवा यूयं मर्त्यं मरणधर्माणं यं यजमानम् अवाथ पालयेत[1] सेत् स एव यजमानः उग्रः अस्तु ओजस्वी भवतु । तथा सः शुष्मी बलवान् भवतु । तथा[2] उत अपि च अग्निः अङ्गनादिगुणयुक्तो देवः सरस्वती वाग्देवता चेत्याद्याः सर्वे देवाः ईम् एनं यजमानं जुनन्ति प्रवर्तयन्ति । तस्य यजमानस्य संबन्धिनः रायः धनस्य कश्चिदपि पर्येता परिगन्ता न अस्ति नाशको न भवतीत्यर्थः ॥

अयं हि नेता वरुण ऋतस्य मित्रो राजानो अर्यमापो धुः ।
सुहवा देव्यदितिरनर्वा ते नो अंहो अति पर्षन्नरिष्टान् ॥ ४ ॥

अयम् । हि । नेता । वरुणः । ऋतस्य । मित्रः । राजानः । अर्यमा । अपः । धुरिति धुः ।
सुऽहवा । देवी । अदितिः । अनर्वा । ते । नः । अंहः । अति । पर्षन् । अरिष्टान् ॥ ४ ॥

ऋतस्य यज्ञस्य सत्यस्य वा नेता प्रापयिता अयं हि अयं खलु वरुणः च मित्रः च अर्यमा चैते राजानः समर्था देवाः अपः अस्मदीयं यज्ञादिलक्षणं कर्म धुः अधुः दधति । अनर्वा केनाप्यप्रतिगता देवी द्योतमाना अदितिः अदीना देवमाता सुहवा शोभनाह्वाना भवति । ते वरुणादयो देवाः अरिष्टान् अबाधितान् सतः नः अस्मान् अंहः दुरितम् अति पर्षन् अतिपारयन्तु ॥

अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः ।
विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत् ॥ ५ ॥

अस्य । देवस्य । मीळ्हुषः । वयाः । विष्णोः । एषस्य । प्रऽभृथे । हविःऽभिः ।
विदे । हि । रुद्रः । रुद्रियम् । महिऽत्वम् । यासिष्टम् । वर्तिः । अश्विनौ । इराऽवत् ॥ ५ ॥

प्रभृथे हविर्भिः हवीरूपैरन्नैः एषस्य प्रापणीयस्य मीळ्हुषः कामानां सेक्तुः विष्णोः सर्वदेवात्मकस्य अस्य देवस्य । 'विष्णुः सर्वा देवताः' (ऐ. ब्रा. १. १) इति श्रुतेः । अन्ये देवाः वयाः शाखा इव भवन्ति । रुद्रः देवः रुद्रियं रुद्रसंबन्धि सुखं महित्वं महत्त्वं च विदे हि अस्मान् प्रापयति खलु । अपि च हे अश्विनौ देवौ युवाम् इरावत् हविर्लक्षणान्नयुक्तं वर्तिः अस्मदीयं गृहं यासिष्टम् अयासिष्टमागच्छतम् ॥

मात्र पूषन्नाघृण इरस्यो वरूत्री यद्रातिषाचश्च रासन् ।
मयोभुवो नो अर्वन्तो नि पान्तु वृष्टिं परिज्मा वातो ददातु ॥ ६ ॥

---

१. ज्ञ–पालयथ । २. ज्ञ–'तथा' नास्ति ।

मा । अत्रे । पूषन् । आघृणे । इरस्यः । वरूत्री । यत् । रातिऽसाचः । च । रासन् ।
मयःऽभुवः । नः । अर्वन्तः । नि । पान्तु । वृष्टिम् । परिऽज्मा । वातः । ददातु ॥ ६ ॥

हे ᵛआघृणे प्राप्तदीप्ते एवंभूत हे ᵛपूषन् देव ᵛअत्र अस्मिन् दाने ᵛमा ᵛइरस्यः विघातं मा कृथाः। ᵛवरूत्री सर्वैर्वरणीया सरस्वती ᵛरातिषाचश्च। रातिर्दानम्। तस्य संभक्त्यो देवपत्न्यश्च ᵛयत् धनं ᵛरासन् अस्मभ्यं प्रयच्छेयुः। अत्र मा कृथा इति पूर्वेण संबन्धः। किंच ᵛमयोभुवः सुखस्य भावकाः ᵛअर्वन्तः गच्छन्तो देवाः[1] ᵛनः अस्मान् ᵛनि ᵛपान्तु नितरां पालयन्तु। ᵛपरिज्मा परितो गन्ता ᵛवातः वायुः ᵛवृष्टिं वृष्टिलक्षणमुदकं ᵛददातु प्रयच्छत्वस्मभ्यम्॥

नू रोदसी अभिष्टुते वसिष्ठैर्ऋतावानो वरुणो मित्रो अग्निः ।
यच्छन्तु चन्द्रा उपमं नो अर्कं यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

नु । रोदसी इति । अभिस्तुते इत्यभिऽस्तुते । वसिष्ठैः । ऋतऽवानः । वरुणः । मित्रः । अग्निः ।
यच्छन्तु । चन्द्राः । उपऽमम् । नः । अर्कम् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः॥७॥

पूर्वं व्याख्यातेयम्। अक्षरार्थस्तु। द्यावापृथिव्यौ वरुणादयो देवाश्च वसिष्ठैरस्माभिरभिष्टुता भवन्ति। एवंभूता आह्लादका देवाः सर्वोत्कृष्टमन्नमस्मभ्यं ददतु। अस्मिन् सूक्ते प्रतिपादिताः सर्वे देवा यूयं कल्याणैरस्मान् सर्वदा पालयत॥　　॥ ७ ॥

‘प्रातरग्निम्’ इति सप्तर्चमष्टमं सूक्तम्। अत्रानुक्रमणिका—‘प्रातर्भागं जगत्याद्या लिङ्गोक्तदेवतान्त्योषस्या’ इति। वसिष्ठ ऋषिः। आद्या जगती शिष्टास्त्रिष्टुभः। आद्याग्नीन्द्रादिदेवत्या द्वितीयाद्याः पञ्च भगदेवत्याः सप्तम्युषोदेवत्या। अत्र केचिदाहुः ‘निवेष्टुकामो रोगार्तो भगसूक्तं जपेत्सदा। निवेशं विन्दति क्षिप्रं रोगैश्च परिमुच्यते’ (ऋग्वि. २. २५) इति॥

प्रातरग्निं प्रातरिन्द्रं हवामहे प्रातर्मित्रावरुणा प्रातरश्विना ।
प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रं हुवेम ॥ १ ॥

प्रातः । अग्निम् । प्रातः । इन्द्रम् । हवामहे । प्रातः । मित्रावरुणा । प्रातः । अश्विना ।
प्रातः । भगम् । पूषणम् । ब्रह्मणः । पतिम् । प्रातरिति । सोमम् । उत । रुद्रम् । हुवेम॥१॥

ᵛप्रातः उषःकाले ᵛअग्निं देवं ᵛहवामहे वयं स्तोतार आह्वयामः। तथा प्रातःकाले ᵛइन्द्रं हवामहे। तथा ᵛमित्रावरुणा मित्रावरुणावहोरात्राभिमानिनौ देवौ ᵛप्रातः वयं हवामहे। तथाश्विनौ देवानां भिषजौ ᵛप्रातः वयं हवामहे। तथा ᵛप्रातः ᵛभगं देवं ᵛपूषणं देवं ᵛब्रह्मणस्पतिं मन्त्राभिमानिनमेतत्संज्ञकं चाह्वयामः। तथा ᵛप्रातः ᵛसोमम् एतत्संज्ञकं देवम् ᵛउत अपि च ᵛरुद्रं देवं च ᵛहुवेम आह्वयामः॥

प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधर्ता ।
आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ॥ २ ॥

---

१. ख-ग-त-न-भ-श-‘देवाः’ नास्ति।

प्रातःऽजितम् । भगम् । उग्रम् । हुवेम । वयम् । पुत्रम् । अदितेः । यः । विऽधर्ता ।
आध्रः । चित् । यम् । मन्यमानः । तुरः । चित् ।
राजा । चित् । यम् । भगम् । भक्षि । इति । आह ॥ २ ॥

यः भगो देवः विधर्ता विश्वस्य जगतो धारकः जितं जयशीलम् उग्रम् उद्गूर्णम् अदितेः पुत्रं भगं देवं प्रातःकाल एव वयं हुवेम आह्वयामः । आध्रश्चित् दरिद्रोऽपि स्तोता यं भगं देवं मन्यमानः स्तुवन् भगं भजनीयं धनं भक्षि[1] भज विभज मह्यं देहि[1] इति आह ब्रवीति । तुरश्चित् । तुरतिर्गतिकर्मा । प्राप्तधनोऽपि राजा चित् समर्थोऽपि जनः यं भगं देवं भजनीयं धनं मह्यं भक्षि देहीत्याह । तं भगं प्रातरेव वयं हुवेमेति संबन्धः ॥

भग प्रणेतर्भग सत्यराधो भगेमां धियमुदवा ददन्नः ।
भग प्र णो जनय गोभिरश्वैर्भग प्र नृभिर्नृवन्तः स्याम ॥ ३ ॥

भग । प्रनेतरिति प्रऽनेतः । भग । सत्यऽराधः । भग । इमाम् । धियम् । उत् । अव । ददत् । नः ।
भग । प्र । नः । जनय । गोभिः । अश्वैः । भग । प्र । नृऽभिः । नृऽवन्तः । स्याम ॥ ३ ॥

हे भग देव त्वं प्रणेता प्रकर्षेण नेतासि । तादृश प्रणेतः हे भग त्वं सत्यराधः सत्यधनोऽसि । तादृश सत्यराधो हे भग त्वं नः अस्मभ्यं ददत् कामान् प्रयच्छन् इमाम् अस्मदीयां धियं स्तुतिम् उदव उद्रक्ष फलयुक्तां कुरु । हे भग त्वं गोभिरश्वैः च नः अस्मान् प्र जनय प्रोद्भूतान् कुरु । हे भग त्वत्प्रसादाद्वयं नृभिः नेतृभिः पुत्रादिभिः नृवन्तः मनुष्यवन्तः प्र स्याम प्रभवेम ॥

उतेदानीं भगवन्तः स्यामोत प्रपित्व उत मध्ये अह्नाम् ।
उतोदिता मघवन्त्सूर्यस्य वयं देवानां सुमतौ स्याम ॥ ४ ॥

उत । इदानीम् । भगऽवन्तः । स्याम । उत । प्रऽपित्वे । उत । मध्ये । अह्नाम् ।
उत । उत्ऽइता । मघऽवन् । सूर्यस्य । वयम् । देवानाम् । सुऽमतौ । स्याम ॥ ४ ॥

उत अपि च इदानीं वयं भगवन्तः स्याम । हे भग भगेन त्वया स्वामिना युक्ता भवेम । यद्वा । भगवन्तो धनवन्तः स्याम । उत अपि च प्रपित्वे अह्नां प्राप्ते पूर्वाह्णे भगवन्तः स्याम । उत अपि च अह्नां दिवसानां मध्ये मध्याह्ने भगवन्तः स्याम । उत अपि च हे मघवन् धनवन् भग देव सूर्यस्य सर्वस्य प्रेरकस्य देवस्य उदिता उदितौ उदये सति वयं त्वदनुग्रहात् देवानाम् इन्द्रादीनां सुमतौ अनुग्रहबुद्धौ स्याम भवेम ॥

भग एव भगवाँ अस्तु देवास्तेन वयं भगवन्तः स्याम ।
तं त्वा भग सर्व इज्जोहवीति स नो भग पुरएता भवेह ॥ ५ ॥

भगः । एव । भगऽवान् । अस्तु । देवाः । तेन । वयम् । भगऽवन्तः । स्याम ।
तम् । त्वा । भग । सर्वः । इत् । जोहवीति । सः । नः । भग । पुरःऽएता । भव । इह ॥५॥

---

१. ख-भक्षि भज मह्यं देहि; श-मह्यं भक्षि देहि ।

हे ˇदेवाः ˇभगः देवः ˇएव ˇभगवान् धनवान् ˇअस्तु । ˇतेन भगेन देवेन धनेन वा ˇवयं ˇभगवन्तः ˇस्याम धनवन्तो भवेम । हे ˇभग ˇतं प्रसिद्धं ˇत्वा त्वां ˇसर्वं ˇइत् सर्व एव जनः ˇजोहवीति भृशं पुनःपुनर्वाह्वयति । हे ˇभग देव ˇसः त्वम् ˇइह अस्मिन् यज्ञे ˇनः अस्माकं ˇपुरएता पुरोगन्ता ˇभव ॥

समध्वरायोषसो नमन्त दधिक्रावेव शुचये पदाय ।
अर्वाचीनं वसुविदं भगं नो रथमिवाश्वा वाजिन आ वहन्तु ॥ ६ ॥

सम् । अध्वराय । उषसः । नमन्त । दधिक्रावाऽइव । शुचये । पदाय ।
अर्वाचीनम् । वसुऽविदम् । भगम् । नः । रथम्ऽइव । अश्वाः । वाजिनः । आ । वहन्तु ॥६॥

ˇशुचये शुद्धाय गमनयोग्याय ˇपदाय स्थानाय ˇदधिक्रावेव अश्वो[1] यथा[1] तथा ˇउषसः उषोदेवताः ˇअध्वराय अस्मदीयाय यागाय ˇसं ˇनमन्त संगच्छन्तु । ˇवाजिनः वेगवन्तः ˇअश्वाः ˇरथमिव रथं यथा तथोषसः ˇअर्वाचीनम् अस्मदभिमुखं ˇवसुविदं धनस्य प्रापकं ˇभगं देवं ˇनः अस्मान् प्रति ˇआ ˇवहन्तु आनयन्तु ॥

अश्वावतीर्गोमतीर्न उषासो वीरवतीः सदमुच्छन्तु भद्राः ।
घृतं दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

अश्वऽवतीः । गोऽमतीः । नः । उषसः । वीरऽवतीः । सदम् । उच्छन्तु । भद्राः ।
घृतम् । दुहानाः । विश्वतः । प्रऽपीताः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥७॥

ˇभद्राः भजनीयाः ˇउषसः उषोदेवताः ˇअश्वावतीः अश्ववत्योऽश्वसहिताः सत्यः ˇगोमतीः गोमत्यश्च ˇवीरवतीः वीरवत्यः पुत्रादिजनोपेताश्च भवन्त्यः ˇनः अस्मभ्यं ˇसदं सर्वदा ˇउच्छन्तु व्युच्छन्तु नैशं तमो विवासयन्तु । कीदृश्यः । ˇघृतम् उदकं ˇदुहानाः सिञ्चन्त्यः ˇविश्वतः सर्वैर्गुणैः ˇप्रपीताः प्रवृद्धाः । एवंभूता उषसस्तम उच्छन्तु । अस्मिन् सूक्ते प्रतिपादिता हे सर्वे देवाः ˇयूयं ˇनः अस्मान् ˇसदा सर्वदा ˇस्वस्तिभिः कल्याणैः ˇपात पालयत ॥ ॥ ८ ॥

'प्र ब्रह्माणः' इति षडृचं नवमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवम् । अत्रानुक्रान्तं—'प्र ब्रह्माणः षड्वैश्वदेवं तु' इति । सूक्तविनियोगो लैङ्गिकः । तृतीये छन्दोमे प्रउगशस्त्रे 'प्र ब्रह्माणः' इति वैश्वदेवस्तृचः । सूत्रितं च—'प्र ब्रह्माणो अङ्गिरसो नक्षन्त सरस्वतीं देवयन्तो हवन्ते' ( आश्व. श्रौ. ८. ११ ) इति ॥

प्र ब्रह्माणो अङ्गिरसो नक्षन्त प्र क्रन्दनुर्नभन्यस्य वेतु ।
प्र धेनव उदप्रुतो नवन्त युज्यातामद्री अध्वरस्य पेशः ॥ १ ॥

प्र । ब्रह्माणः । अङ्गिरसः । नक्षन्त । प्र । क्रन्दनुः । नभन्यस्य । वेतु ।
प्र । धेनवः । उदऽप्रुतः । नवन्त । युज्याताम् । अद्री इति । अध्वरस्य । पेशः ॥ १ ॥

ˇब्रह्माणः ˇअङ्गिरसः एतन्नामका ऋषयः ˇप्र ˇनक्षन्त सर्वत्र व्याप्नुवन्तु । ˇक्रन्दनुः पर्जन्यः ˇनभन्यस्य स्तोत्रस्यास्मदीयं स्तोत्रं ˇप्र ˇवेतु प्रकर्षेणेच्छतु । ˇधेनवः प्रीणयित्र्यो नद्यः ˇउदप्रुतः

१. त–यथा अश्वः ।

उदकानि सिञ्चन्त्यः प्र भवन्त सर्पन्तु[1] । अग्नी आग्नियन्तौ पत्नीयजमानौ अध्वरस्य यज्ञस्य पेशः रूपं युञ्ज्यातां योजयेताम् ॥

सुगस्ते अग्ने सनवित्तो अध्वा युक्ष्वा सुते हरितो रोहितश्च ।
ये वा सद्मन्नरुषा वीरवाहो हुवे देवानां जनिमानि सत्तः ॥ २ ॥

सुऽगः । ते । अग्ने । सनऽवित्तः । अध्वा । युक्ष्व । सुते । हरितः । रोहितः । च ।
ये । वा । सद्मन् । अरुषाः । वीरऽवाहः । हुवे । देवानाम् । जनिमानि । सत्तः ॥ २ ॥

हे अग्ने सनवित्तः सनाच्चिरकालादारभ्य लब्धः ते त्वदीयः अध्वा मार्गः सुगः सुष्ठु गन्तव्यो भवतु । किंच हरितः श्यामवर्णाः रोहितश्च लोहितवर्णाश्चेत्युभयविधाः ये वा ये च ते त्वदीया अश्वाः सद्मन् सद्मनि यज्ञगृहे वीरवाहः वीरं शूरं त्वां वहन्तः अरुषाः आरोचमाना भवन्ति तांश्च[2] त्वं सु[2] युक्ष्व त्वदीये रथे सुष्ठु संयोजय । निसत्तो यज्ञगृहे निषण्णोऽहं होता सन् देवानाम् इन्द्रादीनां जनिमा[3] जनान् संघान् हुवे आह्वयामि ॥

समु वो यज्ञं महयन्नमोभिः प्र होता मन्द्रो रिरिच उपाके ।
यजस्व सु पुर्वणीक देवाना यज्ञियामरमतिं ववृत्याः ॥ ३ ॥

सम् । ऊँ इति । वः । यज्ञम् । महयन् । नमःऽभिः । प्र । होता । मन्द्रः । रिरिचे । उपाके ।
यजस्व । सु । पुरुऽअनीक । देवान् । आ । यज्ञियाम् । अरमतिम् । ववृत्याः ॥ ३ ॥

हे देवाः वः युष्माकं यज्ञं नमोभिः नमस्कारैर्युक्ता इमे स्तोतारो वा यजमाना वा सं महयन् सम्यक् पूजयन्ति । उ इति पूरकः । मन्द्रः स्तुतिशीलः उपाके अस्माकं समीपे स्थितोऽस्मदीयः होता प्र रिरिचे अन्येभ्यो होतृभ्योऽतिरिच्यते । हे यजमान त्वं देवान् सु सुष्ठु यजस्व । हे पुर्वणीक बहुतेजस्विन्नग्ने त्वं यज्ञियां यज्ञार्हाम् अरमतिं भूमिम् आ ववृत्याः आवर्तय । तथा च निगमान्तरे—'आ नो महीमरमतिं सजोषाः' (ऋ. सं. ५. ४३. ६) इति ॥

यदा वीरस्य रेवतो दुरोणे स्योनशीरतिथिराचिकेतत् ।
सुप्रीतो अग्निः सुधितो दम आ स विशे दाति वार्यमियत्यै ॥ ४ ॥

यदा । वीरस्य । रेवतः । दुरोणे । स्योनऽशीः । अतिथिः । आऽचिकेतत् ।
सुऽप्रीतः । अग्निः । सुऽधितः । दमे । आ । सः । विशे । दाति । वार्यम् । इयत्यै ॥ ४ ॥

अतिथिः सर्वेषामतिथिभूतोऽग्निः यदा वीरस्य वीरकस्य स्तोत्राणां प्रेरयितुः रेवतः हविष्मतो यजमानस्य दुरोणे गृहे स्योनशीः सुखेन शयनीयः आचिकेतत् प्रज्ञायते अग्निः दमे यज्ञगृहे सुधितः । आकारश्चार्थे । सुनिहितश्च सुष्ठु निहितः सन् यदा सुप्रीतः भवति तदा सः अग्निः इयत्यै उपगच्छन्त्यै विशे प्रजायै वार्यं वरणीयं धनं दाति ददाति प्रयच्छति ॥

---

१. ख–उपसर्पन्तु; ज्ञ–न सर्पन्तु; त३-भ–तु सर्पन्तु; न–नु सर्पन्तु । २. ख–तां अश्वा युक्ष्व; घ–तान् सु; ज्ञ-भ–तानश्वान् त्वं; ज्ञ-त२-४–तांश्च त्वं; त१–तानश्वान्; त३-न– तां अश्वत्वं; श१– तेश्वाः त्वं; श२–तंश्च त्वं । ३. ख-ज्ञ-त१-२-भ–जनिमानि ।

इमं नो अग्ने अध्वरं जुषस्व मरुत्स्विन्द्रे यशसं कृधी नः ।
आ नक्ता बर्हिः सदतामुषासोशन्ता मित्रावरुणा यजेह ॥ ५ ॥

इमम् । नः । अग्ने । अध्वरम् । जुषस्व । मरुत्ऽसु । इन्द्रे । यशसम् । कृधि । नः ।
आ । नक्ता । बर्हिः । सदताम् । उषसा । उशन्ता । मित्रावरुणा । यज । इह ॥ ५ ॥

हे अग्ने त्वं नः अस्मदीयम् इमम् अध्वरं यज्ञं जुषस्व सेवस्व । किंच मरुत्सु इन्द्रस्य सखिभूतेषु देवेषु इन्द्रे च यशसं यशोयुक्तं हविर्लक्षणान्नवन्तं नः अस्मदीयं यज्ञं हे अग्ने त्वं कृधि कुरु । स्थापयेत्यर्थः । तथा नक्ता रात्रिश्च उषसा दिवसश्च । अहर्निशे इत्यर्थः । बर्हिः बर्हिषि कुशमये आ सदताम् उपविशताम् । अपि च हे अग्ने उशन्ता उशन्तौ यज्ञमिच्छन्तौ मित्रावरुणा मित्रावरुणौ देवौ इह अस्मिन् यज्ञे यज पूजय ॥

एवाग्निं सहस्यं१ वसिष्ठो रायस्कामो विश्वप्स्न्यस्य स्तौत् ।
इषं रयिं पप्रथद्वाजमस्मे यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

एव । अग्निम् । सहस्यम् । वसिष्ठः । रायःऽकामः । विश्वऽप्स्न्यस्य । स्तौत् ।
इषम् । रयिम् । पप्रथत् । वाजम् । अस्मे इति । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥६॥

वसिष्ठः एतदाख्य ऋषिः रायस्कामः पश्वादिधनानीच्छन् एव एवमुक्तप्रकारेण सहस्यम् । सहो बलम् । तस्य पुत्रम् । तद्वन्तमिति वा । अग्निं देवं विश्वप्स्न्यस्य पुरुरूपस्य धनस्य लाभाय स्तौत् । एवंभूतोऽग्निः अस्मे अस्मभ्यम् इषम् अन्नं रयिं धनं वाजं बलं च पप्रथत् प्रथयतु विस्तारयतु । ददात्वित्यर्थः । अस्मिन् सूक्ते प्रतिपादिताः सर्वे देवाः यूयम् अस्मान् कल्याणैः सर्वदा पालयत ॥　　॥ ९ ॥

'प्र वो यज्ञेषु' इति पञ्चर्चं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवम् । 'प्र वः पञ्च' इत्यनुक्रान्तम् । सूक्तविनियोगो लैङ्गिकः । प्रथमे छन्दोमे प्रउगशस्त्रे 'प्र वो यज्ञेषु' इति वैश्वदेवस्तृचः । सूत्रितं च—'प्र वो यज्ञेषु देवयन्तो अर्चन् प्र क्षोदसा धायसा सस्र एषेति प्रउगम्' ( आश्व. श्रौ. ८. ९ ) इति ॥

प्र वो यज्ञेषु देवयन्तो अर्चन्द्यावा नमोभिः पृथिवी इषध्यै ।
येषां ब्रह्माण्यसमानि विप्रा विष्वग्वियन्ति वनिनो न शाखाः ॥ १ ॥

प्र । वः । यज्ञेषु । देवऽयन्तः । अर्चन् । द्यावा । नमःऽभिः । पृथिवी इति । इषध्यै ।
येषाम् । ब्रह्माणि । असमानि । विप्राः । विष्वक् । विऽयन्ति । वनिनः । न । शाखाः ॥१॥

देवयन्तः देवान् कामयमानाः विप्राः यज्ञेषु नमोभिः स्तुतिभिर्हविर्भिर्वा वः युष्मान् इषध्यै अभिप्राप्तुं प्र अर्चन् प्रार्चयन्ति प्रकर्षेण स्तुवन्ति । द्यावा दिवं च पृथिवी भूमिं च प्रस्तुवन्ति । येषां विप्राणां मेधाविनां ब्रह्माणि स्तोत्राणि वनिनो न शाखाः वृक्षस्य शाखा इव विष्वक् विश्वतः वियन्ति विशेषेण गच्छन्ति । ते विप्राः प्रार्चन्निति पूर्वेण संबन्धः ॥

प्र यज्ञ एतु हेत्वो न सप्तिरुद्यच्छध्वं समनसो घृताचीः ।
स्तृणीत बर्हिरध्वराय साधूर्ध्वा शोचींषि देवयून्यस्थुः ॥ २ ॥

प्र । यज्ञः । एतु । हेत्वः । न । सप्तिः । उत् । यच्छध्वम् । सऽमनसः । घृताचीः ।
स्तृणीत । बर्हिः । अध्वराय । साधु । ऊर्ध्वा । शोचींषि । देवऽयूनि । अस्थुः ॥ २ ॥

अयमस्मदीयः Vयज्ञः Vप्र Vएतु देवान् प्रति गच्छतु । तत्र दृष्टान्तः । Vहेत्वो Vन Vसप्तिः शीघ्रगाम्यश्वो यथा तद्वत् । हे ऋत्विजः सर्वे यूयं Vसमनसः सदृशमनस्काः सन्तः Vघृताचीः स्रुचः Vउद्यच्छध्वं हस्त उद्यम्य धारयत । तथा Vअध्वराय यागं कर्तुं Vसाधु साधकं Vबर्हिः कुशमयं Vस्तृणीत वेद्यां छादयत । हे अग्ने Vदेवयूनि देवान् कामयमानानि त्वदीयानि Vशोचींषि अर्चींषि Vऊर्ध्वा ऊर्ध्वमुखानि Vअस्थुः तिष्ठन्तु ॥

आ पुत्रासो न मातरं विभृत्राः सानौ देवासो बर्हिषः सदन्तु ।
आ विश्वाची विदथ्यामनक्त्वग्ने मा नो देवताता मृधस्कः ॥ ३ ॥

आ । पुत्रासः । न । मातरम् । विऽभृत्राः । सानौ । देवासः । बर्हिषः । सदन्तु ।
आ । विश्वाची । विदथ्याम् । अनक्तु । अग्ने । मा । नः । देवऽताता । मृधः । करिति कः ॥ ३ ॥

Vमातरं जननीं Vविभृत्राः विशेषेण भर्तव्याः Vपुत्रासो Vन पुत्रा इव तद्वदस्माकं भरणीयाः Vदेवासः देवाः Vबर्हिषः कुशमयस्य वेद्यामास्तीर्णस्य Vसानौ उन्नते देशे Vआ Vसदन्तु उपविशन्तु । हे Vअग्ने Vविदथ्यां यज्ञयोग्यां त्वदीयां ज्वालां Vविश्वाची । विश्वं सर्वं हविरञ्चति गच्छतीति विश्वाची जुहूः । Vआ Vअनक्तु आ समन्तात् सिञ्चतु । Vदेवताता देवतातौ युद्धे Vनः अस्माकं Vमृधः हिंसकान् हे अग्ने त्वं Vमा Vकः मा कार्षीः । यज्ञवाचको देवतातिशब्दोऽत्र संग्रामे वर्तते ॥

ते सीषपन्त जोषमा यजत्रा ऋतस्य धाराः सुदुघा दुहानाः ।
ज्येष्ठं वो अद्य मह आ वसूनामा गन्तन समनसो यति ष्ठ ॥ ४ ॥

ते । सीसपन्त । जोषम् । आ । यजत्राः । ऋतस्य । धाराः । सुऽदुघाः । दुहानाः ।
ज्येष्ठम् । वः । अद्य । महः । आ । वसूनाम् । आ । गन्तन । सऽमनसः । यति । स्थ ॥ ४ ॥

Vयजत्राः यजनीयाः Vते इन्द्रादयो देवाः Vऋतस्य उदकस्य Vसुदुघाः सुखेन दोग्धुं शक्याः Vधाराः Vदुहानाः वर्षन्तः Vजोषं पर्याप्तं यथा भवति तथा Vआ Vसीषपन्त । सपतिः परिचरणार्थः । स्तुतिभिः आ समन्तात् पर्यचीचरन् । अस्मान् परिचरणं कुर्वन्तु । स्वीकुर्वन्त्वित्ति यावत् । Vअद्य[1] अस्मिन् दिने हे देवाः Vवसूनां धनानां मध्ये Vज्येष्ठं श्रेष्ठं Vवः युष्मदीयं Vमहः मंहनीयं धनम् Vआ गच्छतु । यूयमपि Vसमनसः तुल्यमतयः सन्तः Vआ Vगन्तन आगच्छत । हे देवाः यूयं --- आगन्तनेति संबन्धः ॥

एवा नो अग्ने विक्ष्वा दशस्य त्वया वयं सहसावन्नास्क्राः ।
राया युजा सधमादो अरिष्टा यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

एव । नः । अग्ने । विक्षु । आ । दशस्य । त्वया । वयम् । सहसाऽवन् । आस्क्राः ।
राया । युजा । सधऽमादः । अरिष्टाः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

---

१. स्व-न-भ—तथा; घ—तथा अद्य; ञ-त-श—अथ ।

हे ᵛअग्ने ᵛएव एवं स्तुतस्त्वं ᵛविक्षु प्रजासु मध्ये ᵛनः अस्मभ्यम् ᵛआ ᵛदशस्य अन्नमभिप्रयच्छ। हे ᵛसहसावन् बलवन्नग्ने ᵛत्वया ᵛआस्क्राः अस्कन्नाः ᵛवयं ᵛयुजा मित्रयुक्तेन ᵛराया धनेन ᵛसधमादः सह माद्यन्तः ᵛअरिष्टाः अहिंसिता भवेम। अस्मिन् सूक्ते प्रतिपादिताः सर्वे देवाः ᵛयूयं ᵛनः अस्मान् कल्याणैः सर्वदा पालयत ॥ ॥ १० ॥

'दधिक्रां वः' इति पञ्चर्चमेकादशं सूक्तं वसिष्ठस्यार्षं दधिक्राख्यदेवताकम्। आद्या जगती सा तु दधिक्रादिलिङ्गोक्तदेवताका शिष्टाश्चतस्रस्त्रिष्टुभः। अनुक्रम्यते हि—'दधिक्रां दाधिक्रं जगत्याद्या लिङ्गोक्तदेवता' इति। गतो विनियोगः ॥

**दधिक्रां वः प्रथममश्विनोषसमग्निं समिद्धं भगमूतये हुवे।**
**इन्द्रं विष्णुं पूषणं ब्रह्मणस्पतिमादित्यान्द्यावापृथिवी अपः स्वः ॥ १ ॥**

दधिऽक्राम्। वः। प्रथमम्। अश्विना। उषसम्। अग्निम्। सम्ऽइद्धम्। भगम्। ऊतये। हुवे।
इन्द्रम्। विष्णुम्। पूषणम्। ब्रह्मणः। पतिम्।
आदित्यान्। द्यावापृथिवी इति। अपः। स्वरिति स्वः ॥ १ ॥

हे स्तोतारः ᵛवः युष्माकम् ᵛऊतये रक्षणाय ᵛप्रथमं ᵛदधिक्राम् अश्वाभिमानिनीं देवतां ᵛहुवे आह्वयामि। ततः ᵛअश्विना अश्विनौ देवौ ᵛउषसम् उषोदेवतां च ᵛसमिद्धं सम्यग्दीप्तम् ᵛअग्निं च ᵛभगम् एतदाख्यं देवं च आह्वयामि। ᵛइन्द्रं ᵛविष्णुं ᵛपूषणं च ᵛब्रह्मणस्पतिमादित्यान् ᵛद्यावापृथिवी ᵛअपः उदकदेवताः[1] ᵛस्वः सूर्यमित्येतान् देवानाह्वयामि ॥

**दधिक्रामु नमसा बोधयन्त उदीराणा यज्ञमुपप्रयन्तः।**
**इळां देवीं बर्हिषि सादयन्तोऽश्विना विप्रा सुहवा हुवेम ॥ २ ॥**

दधिऽक्राम्। ऊँ इति। नमसा। बोधयन्तः। उत्ऽईराणाः। यज्ञम्। उपऽप्रयन्तः।
इळाम्। देवीम्। बर्हिषि। सादयन्तः। अश्विना। विप्रा। सुऽहवा। हुवेम ॥ २ ॥

ᵛदधिक्राम् एतन्नामकमश्वविशेषं देवं ᵛनमसा स्तोत्रेण ᵛबोधयन्तः प्रज्ञापयन्तः ᵛउदीराणाः प्रेरयन्तः ᵛयज्ञं यागम् ᵛउपप्रयन्तः उपक्रममाणाः[2] वयं ᵛबर्हिषि ᵛइळां हवीरूपां[3] ᵛदेवीं ᵛसादयन्तः आस्थापयन्तः ᵛसुहवा शोभनाह्वानौ ᵛविप्रा विप्रौ मेधाविनौ ᵛअश्विना अश्विनौ देवौ ᵛहुवेम आह्वयाम। ᵛउ इति पूरणः ॥

**दधिक्रावाणं बुबुधानो अग्निमुप ब्रुव उषसं सूर्यं गाम्।**
**ब्रध्नं मँश्चतोर्वरुणस्य बभ्रुं ते विश्वास्मद्दुरिता यावयन्तु ॥ ३ ॥**

दधिऽक्रावाणम्। बुबुधानः। अग्निम्। उप। ब्रुवे। उषसम्। सूर्यम्। गाम्।
ब्रध्नम्। मँश्चतोः। वरुणस्य। बभ्रुम्। ते। विश्वा। अस्मत्। दुःऽइता। यवयन्तु ॥ ३ ॥

---

१. ख-घ-क्ष-त-न-भ-श—उदकं देवताः। २. ख-न-भ—उपक्रममाणाः; ज्ञ-क्ष-त१-४—उपक्रमणाः
३. श—देवीं भूरूपां।

दधिक्रावाणम् अश्वविशेषं बुबुधानः स्तोत्रेण बोधयन्नहम् अग्निं देवम् उप ब्रुवे उपस्तौमि। तथा च उषसम् उषोदेवतां सूर्यं सर्वस्य प्रेरकं देवं गां भूमिम्। वाग्देवतां वा। एवंभूतान् देवानहमुपस्तौमि। मंश्चतोः। मन्यमानान् स्तुवतो जनांश्चेतयते जानातीति यद्वाभिमन्यमानांश्चातयते नाशयतीति मंश्चतुः। तस्य वरुणस्य ब्रध्नं महान्तं बभ्रुं पिङ्गलवर्णमश्वं तस्यानयनार्थमहमुप ब्रुवे। ते देवाः अस्मत् अस्मत्तः विश्वा विश्वानि सर्वाणि दुरिता दुरितानि पापानि यवयन्तु[1] पृथक्कुर्वन्तु ॥

दधिक्रावा प्रथमो वाज्यर्वाग्रे रथानां भवति प्रजानन् ।
संविदान उषसा सूर्येणादित्येभिर्वसुभिरङ्गिरोभिः ॥ ४ ॥

दधिऽक्रावा । प्रथमः । वाजी । अर्वा । अग्रे । रथानाम् । भवति । प्रऽजानन् ।
सम्ऽविदानः । उषसा । सूर्येण । आदित्येभिः । वसुऽभिः । अङ्गिरःऽभिः ॥ ४ ॥

प्रथमः सर्वेषामश्वानां मुख्यः वाजी शीघ्रगामी अर्वा गमनशीलः दधिक्रावा अश्वरूपो देवः प्रजानन् रथसंयोजनीयांस्तांस्तानश्वानधिष्ठाय ज्ञातव्यानि सम्यग्जानन् रथानाम् अग्रे प्रमुखः भवति। कीदृशोऽश्वः। उषसा उषोदेवतया सूर्येण सर्वस्य प्रेरकेण देवेन आदित्येभिः आदित्यैश्च वसुभिः च अङ्गिरोभिः देवैः सह स्तोतव्यैर्ऋषिभिश्च संविदानः सम्यग्जानन्। ऐकमत्यं[2] प्राप्त इत्यर्थः ॥

आ नो दधिक्राः पथ्यामनक्त्वृतस्य पन्थामन्वेतवा उ ।
शृणोतु नो दैव्यं शर्धो अग्निः शृण्वन्तु विश्वे महिषा अमूराः ॥ ५ ॥

आ । नः । दधिऽक्राः । पथ्याम् । अनक्तु । ऋतस्य । पन्थाम् । अनुऽएतवै । ऊँ इति ।
शृणोतु । नः । दैव्यम् । शर्धः । अग्निः । शृण्वन्तु । विश्वे । महिषाः । अमूराः ॥ ५ ॥

दधिक्राः अश्वरूपो देवः ऋतस्य यज्ञस्य पन्थां पन्थानं मार्गम् अन्वेतवै अनुगन्तुं प्रवृत्तानां नः अस्माकं पथ्यां पदवीम् आ अनक्तु उदकेनासिञ्चतु। उ इति पूरणः। दैव्यं शर्धः देवसंबन्धि बलमीदृग्रूपः अग्निः नः अस्मदीयं हवं शृणोतु। अमूराः अमूढाः महिषाः महान्तः विश्वे सर्वे देवा अस्मदीयं हवं शृण्वन्तु ॥ ॥ ११ ॥

'आ देवो यातु' इति चतुर्ऋचं द्वादशं सूक्तं वसिष्ठस्यार्षं सवितृदेवताकं त्रैष्टुभम्। 'आ देवश्चतुष्कं सावित्रम्' इत्यनुक्रान्तम्। व्यूळ्हे दशरात्रे चतुर्थेऽहनि वैश्वदेवशस्त्र इदं सावित्रनिविद्धानम्। सूत्र्यते हि–'चतुर्थेऽहन्या देवो यातु---' (आश्व. श्रौ. ८. ८)।-- इत्येषा यापानुवाक्या। सूत्रितं च—'आ देवो यातु सविता सुरत्नः स घा नो देवः सविता सहावा' (आश्व. श्रौ. ३. ७) इति। अश्वमेधेऽनुसवनं तिस्रः सावित्र्य इष्टयः। तत्र द्वितीयस्यामिष्टौ याज्येयम्। सूत्रितं च—'य इमा विश्वा जातान्या देवो यातु' (आश्व. श्रौ. १०. ६) इति ॥

आ देवो यातु सविता सुरत्नोऽन्तरिक्षप्रा वहमानो अश्वैः ।
हस्ते दधानो नर्या पुरूणि निवेशयञ्च प्रसुवञ्च भूम ॥ १ ॥

---

१. घ–यावयंतु। २. ख-क्ष-त-न-श–एकमत्यं।

आ । देवः । यातु । सविता । सुऽरत्नः । अन्तरिक्षऽप्राः । वहमानः । अश्वैः ।
हस्ते । दधानः । नर्या । पुरूणि । निऽवेशयन् । च । प्रऽसुवन् । च । भूम ॥ १ ॥

सुरत्नः शोभनरत्नोपेतः अन्तरिक्षप्राः स्वकीयेन तेजसान्तरिक्षस्य पूरयिता अश्वैः स्वकीयैरश्वैः वहमानः उह्यमानः सविता सर्वस्य प्रेरकः देवः आ यातु आगच्छतु । कीदृशः । नर्या नर्याणि मनुष्यहितानि[1] पुरूणि बहूनि धनानि हस्ते पाणौ दधानः दातुं धारयन् भूम भूतानि निवेशयंश्च रात्रिषु स्वे[2] स्थाने[2] स्थापयंश्च प्रसुवंश्च अहःसु प्रेरयंश्च । एवंभूतः सविता देव आ यातु ॥

**उदस्य बाहू शिथिरा बृहन्ता हिरण्यया दिवो अन्ताँ अनष्टाम् ।**
**नूनं सो अस्य महिमा पनिष्ट सूरश्चिदस्मा अनु दादपस्याम् ॥ २ ॥**

उत् । अस्य । बाहू इति । शिथिरा । बृहन्ता । हिरण्यया । दिवः । अन्तान् । अनष्टाम् ।
नूनम् । सः । अस्य । महिमा । पनिष्ट । सूरः । चित् । अस्मै । अनु । दात् । अपस्याम् ॥२॥

शिथिरा शिथिलौ दानार्थं प्रसारितौ बृहन्ता बृहन्तौ महान्तौ हिरण्यया हिरण्ययौ सुवर्णमयौ अस्य सवितुः संबन्धिनौ बाहू हस्तौ दिवः अन्तरिक्षस्य अन्तान् पर्यन्तान् उत् अनष्टाम् ऊर्ध्वौ सन्तौ व्याप्नुवताम् । नूनम् अद्य अस्य ईदृग्भूतस्य सवितुः सः तादृशः महिमा महत्त्वं पनिष्ट अस्माभिः स्तूयते । सूरश्चित् सूर्योऽपि अस्मै सवित्रे अपस्यां कर्मेच्छाम् अनु दात् अनुददातु ॥

सावित्रे पशौ पुरोडाशस्य हविषोः 'स घा नः' इति द्वे अनुवाक्ये । सूत्रं पूर्वमुदाहृतम् । आश्वमेधिकीषु सावित्रेष्टिषु तृतीयस्यामिष्टाविमे एव याज्यानुवाक्ये । सूत्रितं च–'स घा नो देवः सविता सहावेति द्वे' (आश्व. श्रौ. १०. ६) इति ॥

**स घा नो देवः सविता सहावा साविषद्वसुपतिर्वसूनि ।**
**विश्रयमाणो अमतिमुरूचीं मर्तभोजनमध रासते नः ॥ ३ ॥**

सः । घ । नः । देवः । सविता । सहऽवा । आ । साविषत् । वसुऽपतिः । वसूनि ।
विऽश्रयमाणः । अमतिम् । उरूचीम् । मर्तऽभोजनम् । अध । रासते । नः ॥ ३ ॥

सहावा । तेजोऽन्तराण्यभिभावुकं[3] तेजो यस्य सः । वसुपतिः धनानां पालकः सः सविता देवः नः अस्मभ्यं वसूनि धनानि आ साविषत् आ समन्तात् प्रेरयति । घ इति पूरणः । स सविता देवः उरूचीं विस्तीर्णगमनाम् अमतिं रूपम् । दीप्तिमित्यर्थः । विश्रयमाणः निषेवमाणः सन् अध अधुना नः अस्मभ्यं मर्तभोजनं मनुष्याणां भोगयोग्यं धनं रासते ददातु ॥

**इमा गिरः सवितारं सुजिह्वं पूर्णगभस्तिमीळते सुपाणिम् ।**
**चित्रं वयो बृहदस्मे दधातु यूयं पात स्वस्तिभिः सदा नः ॥ ४ ॥**

इमाः । गिरः । सवितारम् । सुऽजिह्वम् । पूर्णऽगभस्तिम् । ईळते । सुऽपाणिम् ।
चित्रम् । वयः । बृहत् । अस्मे इति । दधातु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥४॥

---

१. ख-न-भ–मनुष्याणां हितानि । २. ख-त–स्वस्थाने । ३. ख-भ–'न्तरस्याभिभावुकं ।

इमाः ईदृग्भूताः गिरः। गृणन्ति स्तुवन्तीति गिरः स्तोत्र्यः प्रजाः। यद्वा। इमाः स्तुतिरूपा वाचः। सुजिह्वं शोभनजिह्वम्। शोभनवाचमित्यर्थः। पूर्णगभस्तिं संपूर्णधनहस्तं सवितारं देवम् ईळते स्तुवन्ति। स च सविता चित्रं चायनीयं बृहत् महत् वयः अन्नम् अस्मे अस्मासु दधातु। यद्वा अस्मे अस्मभ्यं प्रयच्छतु। हे सवितृप्रमुखा देवाः यूयं नः अस्मान् स्वस्तिभिः कल्याणैः सदा सर्वदा पात पालयत। ॥ १२ ॥

‘ इमा रुद्राय ’ इति चतुर्ऋचं त्रयोदशं सूक्तं वसिष्ठस्यार्षं रुद्रदेवताकम्। अन्त्या त्रिष्टुप् शिष्टा जगत्यः। तथा चानुक्रमणिका—‘ इमा रौद्रं त्रिष्टुबन्तम् ’ इति। शूलगवादिषु रौद्रयज्ञेष्वनेन सूक्तेनोदीची दिगुपस्थेया। सूत्र्यते हि—‘ इमा रुद्राय स्थिरधन्वन इति सर्वरुद्रयज्ञेषु दिशामुपस्थानम् ’ ( आश्व. गृ. ४. ९. २१ ) इति ॥

इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने ।
अषाळ्हाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः ॥ १ ॥

इमाः । रुद्राय । स्थिरऽधन्वने । गिरः । क्षिप्रऽइषवे । देवाय । स्वधाऽव्ने ।
अषाळ्हाय । सहमानाय । वेधसे । तिग्मऽआयुधाय । भरत । शृणोतु । नः ॥ १ ॥

हे अस्मदीयाः स्तोतारः यूयम् इमाः गिरः स्तुतीः रुद्राय एतन्नामकाय देवाय[1] भरत धारयत। कीदृशाय। स्थिरधन्वने दृढधनुष्काय क्षिप्रेषवे शीघ्रगामिबाणाय स्वधाव्ने अन्नवते अषाळ्हाय केनाप्यनभिभूताय सहमानाय शत्रूणामभिभवित्रे वेधसे विधात्रे तिग्मायुधाय तीक्ष्णास्त्राय। एवंभूताय रुद्राय स्तुतीः भरत। स च रुद्रः नः अस्मदीयाः स्तुतीः शृणोतु ॥

स हि क्षयेण क्षम्यस्य जन्मनः साम्राज्येन दिव्यस्य चेतति ।
अवन्नवन्तीरुप नो दुरश्चरानमीवो रुद्र जासु नो भव ॥ २ ॥

सः । हि । क्षयेण । क्षम्यस्य । जन्मनः । साम्ऽराज्येन । दिव्यस्य । चेतति ।
अवन् । अवन्तीः । उप । नः । दुरः । चर । अनमीवः । रुद्र । जासु । नः । भव ॥ २ ॥

स हि स खलु रुद्रो देवः क्षम्यस्य। क्षमायां पृथिव्यां भवः। तस्य जन्मनः जनस्य क्षयेण ऐश्वर्येण चेतति प्रज्ञायते। दिव्यस्य जनस्य च साम्राज्येन ऐश्वर्येण प्रज्ञायते। शेषः प्रत्यक्षकृतः। हे रुद्र देव त्वं च अवन्तीः त्वां स्तोत्रैस्तर्पयन्तीः नः अस्मदीयाः प्रजाः अवन् पालयन् दुरः दुर्याणि अस्मदीयानि गृहाणि उप चर उपगच्छ। किंच त्वं नः अस्मदीयासु प्रजासु अनमीवः। अमीवा रोगः। तामकुर्वन् भव ॥

या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः ।
सहस्रं ते स्वपिवात भेषजा मा नस्तोकेषु तनयेषु रीरिषः ॥ ३ ॥

या । ते । दिद्युत् । अवऽसृष्टा । दिवः । परि । क्ष्मया । चरति । परि । सा । वृणक्तु । नः ।
सहस्रम् । ते । सुऽअपिवात । भेषजा । मा । नः । तोकेषु । तनयेषु । रिरिषः ॥ ३ ॥

१. ख-क्ष-त-न-भ-श—रुद्राय।

हे रुद्र ᵛते वैद्युतात्मनस्तव संबन्धिनी ᵛदिवस्परि अन्तरिक्षसकाशात्[1] ᵛअवसृष्टा विमुक्ता ᵛदिद्युत् अशनिरूपा हेतिः ᵛक्ष्मया क्षित्या क्षितौ वा ᵛचरति वर्तते ᵛसा दिद्युत् ᵛनः अस्मान् रे ᵛवृणक्तु परित्यजतु। अपि च हे ᵛस्वपिवात ᵛते तव ᵛसहस्रं बहूनि ᵛभेषजा भेषजानि यौषधानि सन्ति तान्यस्मभ्यं प्रयच्छेति शेषः। ᵛनः अस्माकं ᵛतोकेषु पुत्रेषु ᵛतनयेषु च ᵛमा रिषः हिंसां मा कृथाः॥

मा नो॑ वधी रुद्र मा परा॑ दा मा ते॑ भूम प्रसि॑तौ हीळि॒तस्य॑ ।
आ नो॑ भज ब॒र्हिषि॑ जीवशं॒से यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ४ ॥

। नः । व॒धीः॒ । रु॒द्र । मा । परा॑ । दाः॒ । मा । ते॒ । भू॒म । प्रऽसि॑तौ । ही॒ळि॒तस्य॑ ।
। नः॒ । भ॒ज । ब॒र्हिषि॑ । जी॒व॒ऽशं॒से । यू॒यम् । पा॒त । स्व॒स्तिऽभिः॑ । सदा॑ । नः॒ ॥ ४ ॥

हे ᵛरुद्र त्वं ᵛनः अस्मान् ᵛमा ᵛवधीः मा हिंसीः। तथा ᵛमा ᵛपरा ᵛदाः मा च त्याक्षीः। च ᵛहीळितस्य क्रुद्धस्य ᵛते तव ᵛप्रसितौ प्रकर्षेण बन्धने वयं च ᵛमा ᵛभूम। किंच ᵛजीवशंसे राशंसनीये ᵛबर्हिषि यज्ञे ᵛनः अस्मान् ᵛआ ᵛभज भागिनः कुरु। हे रुद्रप्रमुखाः[2] देवाः ᵛयूयं अस्मान् कल्याणैः[3] सर्वदा[4] पालयत॥ ॥ १३ ॥

'आपो यं वः' इति चतुर्ऋचं चतुर्दशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमब्देवताकम्। 'आपो यम्' इत्यनुक्रान्तं च। गतो विनियोगः॥

आपो॒ यं वः॑ प्रथ॒मं दे॑व॒यन्त॑ इन्द्र॒पान॑मू॒र्मिमकृ॑ण्वते॒ळः ।
तं वो॑ व॒यं शुचि॑मरि॒प्रम॒द्य घृ॑त॒प्रुषं॒ मधु॑मन्तं वनेम ॥ १ ॥

पः । यम् । वः॒ । प्र॒थ॒मम् । दे॒व॒ऽयन्तः॑ । इ॒न्द्र॒ऽपान॑म् । ऊ॒र्मिम् । अकृ॑ण्वत । इ॒ळः ।
। वः॒ । व॒यम् । शुचि॑म् । अ॒रि॒प्रम् । अ॒द्य । घृ॒त॒ऽप्रुष॑म् । मधु॑ऽमन्तम् । व॒ने॒म ॥ १ ॥

ᵛदेवयन्तः देवानिच्छन्तोऽध्वर्यवः हे ᵛआपः हे अब्देवताः ᵛवः युष्माकं कार्यभूतम् ᵛइन्द्रपानम् ण पातव्यम् ᵛइळः इळायाः भूम्याः संभूतं ᵛयम् ᵛऊर्मिं सोमाख्यं[5] यं रसं ᵛप्रथमं पुरा कृण्वत अभिषवणपवनादिभिः समस्कुर्वत ᵛअद्य इदानीं ᵛवयम् अपि ᵛवः युष्मदीयं ᵛतम् [5] ᵛवनेम संभजेमहि। कीदृशम्। ᵛशुचिं शुद्धम् ᵛअरिप्रं पापरहितं ᵛघृतप्रुषं वृष्टिलक्षणमुदकं न्तं ᵛमधुमन्तं मधुररसोपेतम्। एवंभूतं तं वनेमेति संबन्धः॥

तमू॒र्मिमा॑पो॒ मधु॑मत्तमं वो॒ऽपां नपा॑दवत्वाशु॒हेमा॑ ।
यस्मि॒न्निन्द्रो॒ वसु॑भि॒र्मा॒दया॑ते॒ तम॑श्याम देव॒यन्तो॑ वो अ॒द्य ॥ २ ॥

। ऊ॒र्मिम् । आपः॑ । मधु॑मत्ऽतमम् । वः॒ । अ॒पाम् । नपा॑त् । अ॒व॒तु॒ । आ॒शु॒ऽहेमा॑ ।
स्मिन् । इन्द्रः॑ । वसु॑ऽभिः । मा॒दया॑ते । तम् । अ॒श्याम । दे॒व॒ऽयन्तः॑ । वः॒ । अ॒द्य ॥ २ ॥

हे ᵛआपः एतत्संज्ञका देवाः ᵛवः युष्मदीयं ᵛमधुमत्तमं रसवत्तमं ᵛतमूर्मिं प्रसिद्धं सोमाख्यं म् ᵛआशुहेमा शीघ्रगतिः ᵛअपां ᵛनपात् एतदाख्यो देवः ᵛअवतु पालयतु। ᵛइन्द्रः ᵛयस्मिन्

---

१. ख-क्ष-त-न-श–अंतरिक्षात् सकाशात्। २. ख-न-भ–रुद्रप्रमुखाः। ३. ख-घ-श–स्वस्तिभिः याणैः। ४. घ-श– सदा सर्वदा पात। ५. ख-त३-न-भ–'सोमाख्यं...तमूर्मिं' नास्ति।

ऊर्मी ᵛवसुभिः वासकैर्देवैः सह ᵛमादयाते मादयेत् ᵛअद्य अस्मिन् दिने ᵛदेवयन्तः देवकामा वयं ᵛवः युष्मदीयं ᵛतम् ऊर्मिम् ᵛअश्याम प्राप्नुयाम ॥

शतपवित्राः स्वधया मदन्तीर्देवीर्देवानामपि यन्ति पाथः ।
ता इन्द्रस्य न मिनन्ति व्रतानि सिन्धुभ्यो हव्यं घृतवज्जुहोत ॥ ३ ॥

शतऽपवित्राः । स्वधया । मदन्तीः । देवीः । देवानाम् । अपि । यन्ति । पाथः ।
ताः । इन्द्रस्य । न । मिनन्ति । व्रतानि । सिन्धुऽभ्यः । हव्यम् । घृतऽवत् । जुहोत ॥३॥

ᵛशतपवित्राः शतं बहूनि पवित्राणि पावनानि रूपाणि यासां ताः ᵛस्वधया स्वकार्यभूतेनान्नेन ᵛमदन्तीः जनान् मादयन्त्यः ᵛदेवीः देव्यो द्योतमाना आपः ᵛदेवानाम् इन्द्रादीनां ᵛपाथः स्थानम् ᵛअपि ᵛयन्ति प्रविशन्ति । ᵛताः तादृश्य आपः ᵛइन्द्रस्य प्रीणनानि ᵛव्रतानि यज्ञादीनि कर्माणि ᵛन ᵛमिनन्ति न हिंसन्ति । उत्पादयन्तीत्यर्थः । हे अध्वर्यवः यूयं ᵛसिन्धुभ्यः ताभ्योऽद्भ्यः ᵛघृतवत् उपस्तरणाभिघारणलक्षणाज्ययुक्तं ᵛहव्यं पुरोडाशादिकं हविः ᵛजुहोत जुहुत ॥

याः सूर्यो रश्मिभिराततान याभ्य इन्द्रो अरदद्गातुमूर्मिम् ।
ते सिन्धवो वरिवो धातना नो यूयं पात स्वस्तिभिः सदा नः ॥ ४ ॥

याः । सूर्यः । रश्मिऽभिः । आऽततान । याभ्यः । इन्द्रः । अरदत् । गातुम् । ऊर्मिम् ।
ते । सिन्धवः । वरिवः । धातन । नः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ४ ॥

ᵛसूर्यः देवः ᵛयाः अपः ᵛरश्मिभिः स्वकीयैः किरणैः ᵛआततान विस्तारयति । सूर्यो हि रश्मिभिरुदकसारमादाय वर्षतीत्यर्थः । ᵛयाभ्यः अद्भ्यश्च ᵛऊर्मिम् । अतैरिदं रूपम् गमनयोग्यं ᵛगातुं मेघेभ्यो निर्गमनसाधनं मार्गम् ᵛइन्द्रः अपि ᵛअरदत् वज्रेण मेघांस्ताडयन् प्रयच्छति हे ᵛसिन्धवः आपः ᵛते यूयं ᵛनः अस्मभ्यं ᵛवरिवः धनं ᵛधातन धत्त प्रयच्छत । ते इति सिन्धुशब्देन समानाधिकरणत्वात् पुंलिङ्गत्वम् । हे अब्देवताः ᵛयूयं सर्वदा ᵛनः अस्मान् कल्याणैः पालयत ॥१४॥

'ऋभुक्षणः' इति चतुरृचं पञ्चदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमृभुदेवताकम् । अन्त्याया विकल्पेन विश्वे देवा देवता । तथा चानुक्रान्तम्—'ऋभुक्षण आर्भवमन्त्या वैश्वदेवी वा' इति । दशमेऽहनि वैश्वदेवशस्त्र आर्भवनिविद्धानम् । सूत्र्यते हि—'ऋभुक्षण इत्यार्भवम्' (आश्व. श्रौ. ८. १२) इति ॥

ऋभुक्षणो वाजा मादयध्वमस्मे नरो मघवानः सुतस्य ।
आ वोऽर्वाचः क्रतवो न यातां विभ्वो रथं नर्यं वर्तयन्तु ॥ १ ॥

ऋभुक्षणः । वाजाः । मादयध्वम् । अस्मे इति । नरः । मघऽवानः । सुतस्य ।
आ । वः । अर्वाचः । क्रतवः । न । याताम् । विऽभ्वः । रथम् । नर्यम् । वर्तयन्तु ॥ १ ॥

ऋभुक्षेत्यृभूणां ज्येष्ठस्याख्या वाज इति तु कनिष्ठस्य । अत्र 'ऋभुक्षणो वाजाः' इति बहुवचनेन ऋभवस्त्रयो गृह्यन्ते । हे ᵛऋभुक्षणो ᵛवाजाः ᵛनरः नेतारः ᵛमघवानः धनवन्तः एवंभूता हे ऋभवः यूयम् ᵛअस्मे अस्मासु स्थितेन ᵛसुतस्य अभिषुतेन सोमेन ᵛमादयध्वं तृप्ता भवत । ᵛन इति

संप्रत्यर्थे । इदानीं <sup>v</sup>यातां गच्छतां <sup>v</sup>वः युष्मदीयाः <sup>v</sup>क्रतवः कर्मणां कर्तारः <sup>v</sup>विभ्वः विभवः समर्था अश्वाः <sup>v</sup>अर्वाचः अर्वाञ्चोऽस्मदभिमुखाः सन्तः <sup>v</sup>नर्यं मनुष्यहितं <sup>v</sup>रथं युष्मदीयम् <sup>v</sup>आ <sup>v</sup>वर्तयन्तु आगमयन्तु ॥

ऋभुर्ऋभुभिरभि वः स्याम विभ्वो विभुभिः शवसा शवांसि ।
वाजो अस्माँ अवतु वाजसाताविन्द्रेण युजा तरुषेम वृत्रम् ॥ २ ॥

ऋभुः । ऋभुऽभिः । अभि । वः । स्याम । विऽभ्वः । विभुऽभिः । शवसा । शवांसि ।
वाजः । अस्मान् । अवतु । वाजऽसातौ । इन्द्रेण । युजा । तरुषेम । वृत्रम् ॥ २ ॥

हे ऋभवः <sup>v</sup>ऋभुभिः युष्माभिर्वयम् <sup>v</sup>ऋभुः । उरु भवन्तीत्यृभवः । सन्तः <sup>v</sup>विभुभिः युष्माभिः <sup>v</sup>विभ्वः विभवश्च सन्तः <sup>v</sup>शवांसि शत्रूणां बलानि <sup>v</sup>शवसा युष्मदीयेन बलेन <sup>v</sup>अभि <sup>v</sup>स्याम अभिभवेम । तथा <sup>v</sup>वाजसातौ संग्रामे <sup>v</sup>वाजः एतत्संज्ञक ऋभुः <sup>v</sup>अस्मानवतु पालयतु । अपि च <sup>v</sup>युजा सहायभूतेन <sup>v</sup>इन्द्रेण <sup>v</sup>वृत्रं शत्रुं वयं <sup>v</sup>तरुषेम हनाम । प्रायेणर्भवोऽपीन्द्रेण सह स्तूयन्त इति ॥

ते चिद्धि पूर्वीरभि सन्ति शासा विश्वाँ अर्य उपरताति वन्वन् ।
इन्द्रो विभ्वाँ ऋभुक्षा वाजो अर्यः शत्रोर्मिथत्या कृणवन्वि नृम्णम् ॥ ३ ॥

ते । चित् । हि । पूर्वीः । अभि । सन्ति । शासा । विश्वान् । अर्यः । उपरऽताति । वन्वन् ।
इन्द्रः । विऽभ्वा । ऋभुक्षाः । वाजः । अर्यः । शत्रोः । मिथत्या । कृणवन् । वि । नृम्णम् ॥३॥

<sup>v</sup>ते तादृशाः इन्द्रः ऋभवश्च <sup>v</sup>पूर्वीः बह्वीरस्मच्छत्रुसेनाः <sup>v</sup>शासा शासनेन स्वकीययाज्ञया । यद्वा । विशस्यते हिंस्यतेऽनेनेति शासशब्द आयुधवाची । तेन <sup>v</sup>अभि <sup>v</sup>सन्ति अभिभवन्ति । <sup>v</sup>चिद्धि इतीमौ पूरणौ । किंच <sup>v</sup>उपरताति ॥ सप्तम्या लुक् ॥ उपरैः उपलैः पाषाणसदृशैरायुधैस्तायते विस्तार्यत इत्युपरताति युद्धम् । तस्मिन् <sup>v</sup>विश्वान् समस्तान् <sup>v</sup>अर्यः अरीञ्छत्रून् <sup>v</sup>वन्वन् हिंसन्ति । <sup>v</sup>विभ्वा <sup>v</sup>ऋभुक्षाः <sup>v</sup>वाजः एतत्संज्ञका ऋभवश्च <sup>v</sup>इन्द्रः च <sup>v</sup>अर्यः शत्रूणामभिगन्तारः सन्तः <sup>v</sup>शत्रोः संबन्धि <sup>v</sup>नृम्णं बलं <sup>v</sup>मिथत्या । मेथतेरिदं रूपम् । मिथतिर्हिंसा । तथा <sup>v</sup>वि <sup>v</sup>कृणवन् विकुर्वन्तु । विनाशयन्त्वित्यर्थः ॥

नू देवासो वरिवः कर्तना नो भूत नो विश्वेऽवसे सजोषाः ।
समस्मे इषं वसवो ददीरन्यूयं पात स्वस्तिभिः सदा नः ॥ ४ ॥

नु । देवासः । वरिवः । कर्तन । नः । भूत । नः । विश्वे । अवसे । सऽजोषाः ।
सम् । अस्मे इति । इषम् । वसवः । ददीरन् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥४॥

हे <sup>v</sup>देवासः देवाः द्योतमाना ऋभवः यूयं <sup>v</sup>नु अद्य <sup>v</sup>नः अस्मभ्यं <sup>v</sup>वरिवः धनं <sup>v</sup>कर्तन कुरुत प्रयच्छत । तथा <sup>v</sup>विश्वे सर्वे ऋभवो यूयं <sup>v</sup>सजोषाः सह प्रीयमाणाः सन्तः <sup>v</sup>नः अस्माकम् <sup>v</sup>अवसे रक्षणाय <sup>v</sup>भूत भवत । अपि च <sup>v</sup>वसवः प्रशस्या ऋभवः <sup>v</sup>इषम् अन्नम् <sup>v</sup>अस्मे अस्मभ्यं <sup>v</sup>सं <sup>v</sup>ददीरन् संप्रयच्छेयुः । हे ऋभवः यूयम् अस्मान् सर्वदा कल्याणैः रक्षत ॥　　॥ १५ ॥

'समुद्रज्येष्ठाः' इति चतुर्ऋचं षोडशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमब्देवताकम्। तथा चानुक्रान्तं—'समुद्रज्येष्ठा आपम्' इति। गतो विनियोगः॥

समुद्रज्येष्ठाः सलिलस्य मध्यात्पुनाना यन्त्यनिविशमानाः।
इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवन्तु॥ १॥

समुद्रऽज्येष्ठाः। सलिलस्य। मध्यात्। पुनानाः। यन्ति। अनिऽविशमानाः।
इन्द्रः। याः। वज्री। वृषभः। रराद। ताः। आपः। देवीः। इह। माम्। अवन्तु॥१॥

समुद्रज्येष्ठाः। समुद्रोऽर्णवो ज्येष्ठः प्रशस्यतमो यासामपां ताः। सलिलस्य। अन्तरिक्षनामैतत्। अन्तरिक्षस्य मध्यात् माध्यमिकात्[1] स्थानात्[1] यन्ति गच्छन्ति। कीदृश्यः। पुनानाः विश्वं शोधयन्त्यः अनिविशमानाः सर्वदा गच्छन्त्यः। वज्री वज्रभृत् वृषभः कामानां वर्षिता इन्द्रः याः निरुद्धा अपः रराद लिखति[2] देवीः देव्यः ताः आपः इह अस्मिन् प्रदेशे स्थितं मामवन्तु रक्षन्तु अभिगच्छन्तु वा॥

या आपो दिव्या उत वा स्रवन्ति खनित्रिमा उत वा याः स्वयंजाः।
समुद्रार्था याः शुचयः पावकास्ता आपो देवीरिह मामवन्तु॥ २॥

याः। आपः। दिव्याः। उत। वा। स्रवन्ति। खनित्रिमाः। उत। वा। याः। स्वयम्ऽजाः।
समुद्रऽअर्थाः। याः। शुचयः। पावकाः। ताः। आपः। देवीः। इह। माम्। अवन्तु॥२॥

या आपो दिव्याः अन्तरिक्षभवाः सन्ति। उत वा अपि च याः आपः नद्यादिगताः सत्यः स्रवन्ति गच्छन्ति। याश्च खनित्रिमाः खननेन निर्वृत्ताः। उत वा अपि च याः स्वयंजाः स्वयमेव प्रादुर्भवन्त्यः समुद्रार्थाः[3]। समुद्र एवार्थो गन्तव्यो यासां ताः समुद्रार्थाः। शुचयः दीप्तियुक्ताः पावकाः शोधयित्र्यश्च भवन्ति। ता आपः मामवन्तु इति॥

यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम्।
मधुश्चुतः शुचयो याः पावकास्ता आपो देवीरिह मामवन्तु॥ ३॥

यासाम्। राजा। वरुणः। याति। मध्ये। सत्यानृते इति। अवऽपश्यन्। जनानाम्।
मधुऽश्चुतः। शुचयः। याः। पावकाः। ताः। आपः। देवीः। इह। माम्। अवन्तु॥ ३॥

वरुणः यासाम् अपां राजा स्वामी मध्ये मध्यमलोके याति गच्छति। किं कुर्वन्। जनानां प्रजानां सत्यानृते सत्यं चानृतं च अवपश्यन्। जानन्नित्यर्थः। याः आपः मधुश्चुतः रसं क्षरन्त्यः शुचयः दीप्तियुक्ताः पावकाः शोधयित्र्यः। ता आपः देव्यः मां रक्षन्त्विति॥

यासु राजा वरुणो यासु सोमो विश्वे देवा यासूर्जं मदन्ति।
वैश्वानरो यास्वग्निः प्रविष्टस्ता आपो देवीरिह मामवन्तु॥ ४॥

---

१. ख-न-भ- माध्यमिकस्थानात्। २. ख-भ-विलिखति। ३. ख-ग-त-न-भ-श-'समुद्रार्थाः' नास्ति।

यासु । राजा । वरुणः । यासु । सोमः । विश्वे । देवाः । यासु । ऊर्जम् । मदन्ति ।
वैश्वानरः । यासु । अग्निः । प्रऽविष्टः । ताः । आपः । देवीः । इह । माम् । अवन्तु ॥ ४ ॥

अपां $^{v}$राजा $^{v}$वरुणः $^{v}$यासु अप्सु वर्तते । $^{v}$सोमः[1] $^{v}$यासु अप्सु वर्तते । $^{v}$यासु अप्सु स्थिताः $^{v}$विश्वे सर्वे $^{v}$देवाः $^{v}$ऊर्जम् अन्नं $^{v}$मदन्ति । $^{v}$वैश्वानरः $^{v}$अग्निः $^{v}$यासु $^{v}$प्रविष्टः । $^{v}$ताः $^{v}$आपः देव्यः $^{v}$इह स्थितं $^{v}$मामवन्तु ॥ ॥ १६ ॥

'आ मां मित्रावरुणा[2]' इति[2] चतुर्ऋचं सप्तदशं सूक्तं वसिष्ठस्यार्षम् । चतुर्थ्यतिजगती व्यूहेन शक्करी वादितस्तिस्रो जगत्यः । प्रथमा मैत्रावरुणी द्वितीयाग्नेयी तृतीया वैश्वदेवी चतुर्थी गङ्गादिनदीदेवताका । तथा चानुक्रमणिका—'आ मां मैत्रावरुण्याग्नेयी वैश्वदेवी नदीस्तुतिर्जागतमन्त्यातिजगती शक्करी वा' इति । अस्य सूक्तस्य प्रत्यृचं विषादिहरणे विनियोगो लिङ्गादवगन्तव्यः ॥

आ मां मित्रावरुणेह रक्षतं कुलाययद्विश्वयन्मा न आ गन् ।
अजकावं दुर्दशीकं तिरो दधे मा मां पद्येन रपसा विदुत्त्सरुः ॥ १ ॥

आ । माम् । मित्रावरुणा । इह । रक्षतम् । कुलाययत् । विऽश्वयत् । मा । नः । आ । गन् ।
अजकाऽवम् । दुःऽदृशीकम् । तिरः । दधे । मा । माम् । पद्येन । रपसा । विदत् । त्सरुः ॥१॥

हे $^{v}$मित्रावरुणा हे मित्रावरुणौ युवाम् $^{v}$इह अस्मिँल्लोके $^{v}$माम् $^{v}$आ $^{v}$रक्षतम् आभिमुख्येन पालयतम् । $^{v}$कुलाययत् । कुलायं स्थानम् । तत्कुर्वत् $^{v}$विश्वयत् विशेषेण वर्धमानं विषं $^{v}$नः अस्मान् $^{v}$आ आभिमुख्येन $^{v}$मा $^{v}$गन् मा गमत् मा गच्छतु । तथा $^{v}$अजकावम् । अजका नाम रोगविशेषः । तद्वत् $^{v}$दुर्दशीकं दुर्दर्शनं विषं $^{v}$तिरो $^{v}$दधे तिरो धत्ताम् । नश्यत्वित्यर्थः । तथा $^{v}$त्सरुः छद्मगामी[3] । जिह्मगः सर्प इत्यर्थः । $^{v}$मां $^{v}$पद्येन पादभवेन $^{v}$रपसा । रपिः शब्दकर्मा । शब्देन $^{v}$मा $^{v}$विदत् न[4] जानातु ॥

यद्विजामन्परुषि वन्दनं भुवदष्ठीवन्तौ परि कुल्फौ च देहत् ।
अग्निष्टच्छोचन्नप बाधतामितो मा मां पद्येन रपसा विदुत्त्सरुः ॥ २ ॥

यत् । विऽजामन् । परुषि । वन्दनम् । भुवत् । अष्ठीवन्तौ । परि । कुल्फौ । च । देहत् ।
अग्निः । तत् । शोचन् । अप । बाधताम् । इतः । मा । माम् । पद्येन । रपसा । विदत् । त्सरुः ॥२॥

$^{v}$वन्दनम् एतत्संज्ञकं $^{v}$यत् विषं $^{v}$विजामन् विविधजन्मनि $^{v}$परुषि वृक्षादीनां पर्वणि $^{v}$भुवत् उद्भवेत् । यच्च विषम् $^{v}$अष्ठीवन्तौ जानुनी $^{v}$कुल्फौ[5] गुल्फौ[5] $^{v}$च $^{v}$परि $^{v}$देहत् । 'दिह उपचये' । उपचितं कुर्यात् । $^{v}$अग्निः देवः $^{v}$शोचन् दीप्यमानः सन् $^{v}$इतः अस्माज्जनात् $^{v}$तत् विषम् $^{v}$अप $^{v}$बाधताम् अपहन्तु । शिष्टं व्याख्यातम् ॥

---

१. ज्ञ-त१-२-श१—सकः सोमः; ज्ञ-त३-४-श२—साकः सोमः । २. ख-घ-ज्ञ-त३-न-भ-श—मित्रेति । ३. ज्ञ-त-न-भ— छद्मागामी; श—आगामी । ४. त—मा । ५. ख—कुल्फौ गु; ज्ञ—गुल्फौ कुल्फौ; ज्ञ-त३-४-न-भ-श—गुल्फौ गुत्तौ; त२—कुल्फौ गुल्फे ।

यच्छल्मलौ भवति यन्नदीषु यदोषधीभ्यः परि जायते विषम् ।
विश्वे देवा निरितस्तत्सुवन्तु मा मां पद्येन रपसा विदत्त्सरुः ॥ ३ ॥

यत् । शल्मलौ । भवति । यत् । नदीषु । यत् । ओषधीभ्यः । परि । जायते । विषम् ।
विश्वे । देवाः । निः । इतः । तत् । सुवन्तु । मा । माम् । पद्येन । रपसा । विदत् । त्सरुः ॥३॥

यत् विषं शाल्मलौ एतत्संज्ञके वृक्षे भवति । यत् विषं नदीषु तत्रस्थास्वप्सु प्रादुर्भवति । परि इति पञ्चम्यर्थानुवादी । ओषधीभ्यः सकाशात् यत् विषं जायते उत्पद्यते । विश्वे सर्वे देवाः तत् विषम् इतः अस्माज्जनाद्देशाद्वा निः सुवन्तु निःशेषेण प्रेरयन्तु । मा मामिति शिष्टं व्याख्यातम् ॥

याः प्रवतो निवत उद्वत उदन्वतीरनुदकाश्च याः ।
ता अस्मभ्यं पयसा पिन्वमानाः शिवा देवीरशिपदा भवन्तु
सर्वा नद्यो अशिमिदा भवन्तु ॥ ४ ॥

याः । प्रऽवतः । निऽवतः । उत्ऽवतः । उदन्ऽवतीः । अनुदकाः । च । याः ।
ताः । अस्मभ्यम् । पयसा । पिन्वमानाः । शिवाः । देवीः । अशिपदाः । भवन्तु ।
सर्वाः । नद्यः । अशिमिदाः । भवन्तु ॥ ४ ॥

याः नद्यः प्रवतः[१] प्रवणदेशे गच्छन्त्यः । याः[२] निवतः निम्नदेशे गच्छन्त्यः । याः उद्वतः उन्नतदेशे गच्छन्त्यः[२] । याः उदन्वतीः उदन्वत्य उदकयुक्ताः । अनुदकाश्च उदकरहिताश्च याः नद्यो यान्ति । पयसा उदकेन पिन्वमानाः विश्वमाप्याययन्त्यः देवीः देव्यो द्योतमानाः ताः तादृश्यो नद्यः अस्मभ्यम् अशिपदाः । शिपदं नाम रोगविशेषः । तदकुर्वत्यः सत्यः शिवाः कल्याण्यः भवन्तु । अपि च सर्वाः ताः नद्यः अशिमिदाः । शिमिर्वधकर्मा । अहिंसाप्रदाः भवन्तु ॥ ॥ १७ ॥

'आदित्यानाम्' इति तृचमष्टादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमादित्यदेवताकम् । अनुक्रम्यते च–'आदित्यानां तृचमादित्यं तु' इति । गतः सूक्तविनियोगः । आदित्यदेवताके पशौ 'आदित्यानामवसा' इति वपाया अनुवाक्या । सूत्रितं च–'आदित्यानामवसा नूतनेनेमा गिर आदित्येभ्यः' ( आश्व. श्रौ. ३. ८ ) इति । आदित्यग्रहस्यैषानुवाक्या । सूत्रितं च–'आदित्यानामवसा नूतनेन होता यक्षदादित्यान्' ( आश्व. श्रौ. ५. १७ ) इति ॥

आदित्यानामवसा नूतनेन सक्षीमहि शर्मणा शंतमेन ।
अनागास्त्वे अदितित्वे तुरास इमं यज्ञं दधतु श्रोषमाणाः ॥ १ ॥

आदित्यानाम् । अवसा । नूतनेन । सक्षीमहि । शर्मणा । शम्ऽतमेन ।
अनागाःऽत्वे । अदितिऽत्वे । तुरासः । इमम् । यज्ञम् । दधतु । श्रोषमाणाः ॥ १ ॥

---

१. श–प्रवतः प्रकर्षेण वहंत्यः निवतः । २. ख-झ-त-न-भ-श–'या निवतो......उन्नतदेशे गच्छन्त्यः' नास्ति; घ–या निवतः नीचैर्गच्छंत्यः उद्वतः या ऊर्ध्वं गच्छंत्यः ।

vआदित्यानाम् अदितेः पुत्राणामेतत्संज्ञकानां देवानाम्[1] vअवसा रक्षणेन। तद्धेतुभूतेनेत्यर्थः। vनूतनेन अद्यतनेन vशंतमेन। शं सुखम्। अतिशयेन तत्करणेन vशर्मणा। शर्मेति गृहनामैतत्। गृहेण vसक्षीमहि वयं संगच्छेमहि। vतुरासः तुरास्त्वरिता आदित्याः vश्रोषमाणाः अस्मदीयानि स्तोत्राणि शृण्वन्तः vयज्ञं यष्टारम् vइमं जनम् vअनागास्त्वे अनपराधत्वे vच[2] vअदितित्वे अदीनत्वे[3] vच[3] vदधतु स्थापयन्तु ॥

'आदित्यासो अदितिः' इत्यादित्यग्रहस्य याज्या। सूत्रितं च—'आदित्यासो अदितिर्मादयन्तामिति नैतं ग्रहमीक्षेत हूयमानम्' (आश्व. श्रौ. ५. १७) इति ॥

आदित्यासो अदितिर्मादयन्तां मित्रो अर्यमा वरुणो रजिष्ठाः।
अस्माकं सन्तु भुवनस्य गोपाः पिबन्तु सोममवसे नो अद्य ॥ २ ॥

आदित्यासः। अदितिः। मादयन्ताम्। मित्रः। अर्यमा। वरुणः। रजिष्ठाः।
अस्माकम्। सन्तु। भुवनस्य। गोपाः। पिबन्तु। सोमम्। अवसे। नः। अद्य ॥ २ ॥

vआदित्यासः आदित्या देवाः vअदितिः तेषां माता च। यद्वा अदितिरिति देवविशेषणम्। अदितिरदितयोऽदीनाः। vरजिष्ठाः अतिशयेनर्जवः vमित्रो vअर्यमा vवरुणः चैतत्संज्ञकाः vमादयन्तां तृप्ताः सन्तु। vभुवनस्य सर्वस्य जगतः vगोपाः रक्षका एवंभूता देवाः vअस्माकं vसन्तु। अस्माकमेव रक्षका भवन्त्वित्यर्थः। vअद्य अस्मिन् दिने vनः अस्माकम् vअवसे रक्षणाय vसोमम् अस्माभिरभिषुतं vपिबन्तु ॥

आदित्या विश्वे मरुतश्च विश्वे देवाश्च विश्व ऋभवश्च विश्वे।
इन्द्रो अग्निरश्विना तुष्टुवाना यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥

आदित्याः। विश्वे। मरुतः। च। विश्वे। देवाः। च। विश्वे। ऋभवः। च। विश्वे।
इन्द्रः। अग्निः। अश्विना। तुस्तुवानाः। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ३ ॥

vआदित्याः अदितेः पुत्राः vविश्वे सर्वे द्वादशसंख्याका अर्काः vविश्वे vमरुतश्च सर्वे एकोनपञ्चाशत्संख्योपेताश्च vविश्वे vदेवाश्च vविश्वे vऋभवश्च vइन्द्रः vअग्निः vअश्विना अश्विनावेतत्संज्ञका एवंभूता ये देवाः vतुष्टुवानाः अस्माभिः स्तुता बभूवुः सर्वे ते देवाः vयूयं vसदा सर्वदा vनः अस्मान् vस्वस्तिभिः कल्याणैः vपात रक्षत ॥ ॥ १८ ॥

'आदित्यासो अदितयः' इति तृचात्मकमेकोनविंशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमादित्यदेवताकम्। आदित्यासः' इत्यनुक्रमणिका। गतो विनियोगः ॥

आदित्यासो अदितयः स्याम पूर्देवत्रा वसवो मर्त्यत्रा।
सनेम मित्रावरुणा सनन्तो भवेम द्यावापृथिवी भवन्तः ॥ १ ॥

आदित्यासः। अदितयः। स्याम। पूः। देवऽत्रा। वसवः। मर्त्यऽत्रा।
सनेम। मित्रावरुणा। सनन्तः। भवेम। द्यावापृथिवी इति। भवन्तः ॥ १ ॥

---

१. ख-घ-न-भ-'देवानां' नास्ति। २. ख-भ-'च' नास्ति; घ-त-न-श- वा। ३. घ-त-न-
३. भ—अदीनत्वेन; श—अदितित्वेन च।

हे आदित्यासः आदित्या देवाः ॥ व्यत्ययेनाद्युदात्तत्वाभावः ॥ यद्वा । आदित्यानामिम आदित्याः ॥ 'तस्येदम्' इत्यर्थे प्राग्दीव्यतीयो ण्यप्रत्ययः ॥ आदित्यानां शेषभूता वयम् अदितयः अखण्डनीयाः स्याम भवेम । देवत्रा देवेषु वसवः वासका देवा युष्मदीयं पूः पालनं मर्त्यत्रा मनुष्येष्वस्मासु भवतु । हे मित्रावरुणा मित्रावरुणौ सनन्तः युवां संभजन्तो वयं सनेम युवाभ्यां दत्तं धनं संभजेमहि । हे द्यावापृथिवी द्यावापृथिव्यौ युवयोः प्रसादात् वयं भवन्तः भवेम भूतिमन्तः स्याम ॥

मित्रस्तन्नो वरुणो मामहन्त शर्म तोकाय तनयाय गोपाः ।
मा वो भुजेमान्यजातमेनो मा तत्कर्म वसवो यच्चयध्वे ॥ २ ॥

मित्रः । तत् । नः । वरुणः । ममहन्त । शर्म । तोकाय । तनयाय । गोपाः ।
मा । वः । भुजेम । अन्यऽजातम् । एनः । मा । तत् । कर्म । वसवः । यत् । चयध्वे ॥ २ ॥

मित्रः वरुणः अहर्निशाभिमानिनौ देवावेतदाद्याः सर्वे आदित्याः नः अस्मभ्यं तत् प्रसिद्धं शर्म सुखं ममहन्त । मंहतिर्दानकर्मा । ददतु । गोपाः विश्वस्य रक्षकास्ते देवाः तोकाय अस्मदीयाय पुत्राय तनयाय तत्पुत्राय च शर्म प्रयच्छन्तु । अथ प्रत्यक्षस्तुतिः । हे देवाः वः युष्मदीया वयम् अन्यजातम् अन्येनोत्पादितम् एनः पापं मा भुजेम मा भुक्तवन्तः स्याम । हे वसवः वासका देवाः यत् येन युष्मदप्रियेण कर्मणा चयध्वे यूयमस्मान्नाशयत तत् तादृशं कर्म वयं मा कर्म मा कार्ष्म ॥ लुङि करोतेरुत्तमस्य बहुवचनम् । 'मन्त्रे घसह्वर°' इत्यादिना च्लेर्लोपः ॥

तुरण्यवोऽङ्गिरसो नक्षन्त रत्नं देवस्य सवितुरियानाः ।
पिता च तन्नो महान्यजत्रो विश्वे देवाः समनसो जुषन्त ॥ ३ ॥

तुरण्यवः । अङ्गिरसः । नक्षन्त । रत्नम् । देवस्य । सवितुः । इयानाः ।
पिता । च । तत् । नः । महान् । यजत्रः । विश्वे । देवाः । सऽमनसः । जुषन्त ॥ ३ ॥

तुरण्यवः यज्ञादिकर्मसु त्वरिताः अङ्गिरसः एतन्नामका ऋषयः इयानाः सवितारं याचमानाः सन्तः सवितुः प्रेरकस्य देवस्य संबन्धि रत्नं रमणीयं यद्धनं नक्षन्त आश्नुवन्त । उत्तरार्धगततच्छब्दापेक्षया यच्छब्दोऽत्राध्याह्रियते । यजत्रः यजनशीलः महान् प्रभूतः पिता च वसिष्ठस्य पितृभूतो वरुणश्च । यद्वा । सर्वेषां पिता प्रजापतिः । विश्वे सर्वे देवाः समनसः समानमनस्काः तत् तादृशं रत्नं नः अस्मान् जुषन्त सेवयन्तु[1] । यद्वा नोऽस्मभ्यं ददतु ॥ ॥१९॥

'प्र द्यावा यज्ञैः' इति तृचात्मकं विंशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं द्यावापृथिव्यम् । अनुक्रम्यते च—'प्र द्यावा द्यावापृथिव्यम्' इति । चतुर्थेऽहनि वैश्वदेवशस्त्र इदं द्यावापृथिव्यनिविद्धानम् । सूत्रितं च—'आ देवो यातु प्र द्यावेति वासिष्ठम्' (आश्व. श्रौ. ८. ८) इति । द्यावापृथिव्ये पशौ वपापुरोडाशयोः 'प्र द्यावा' इति द्वे ऋचौ याज्ये । सूत्रितं च—'प्र द्यावा यज्ञैः पृथिवी नमोभिरिति द्वे' (आश्व. श्रौ. ३. ८) इति ॥

प्र द्यावा यज्ञैः पृथिवी नमोभिः सबाध ईळे बृहती यजत्रे ।
ते चिद्धि पूर्वे कवयो गृणन्तः पुरो मही दधिरे देवपुत्रे ॥ १ ॥

---

१. ख–सेवंते; घ-ङ-त-न-भ-श–सेवयंत ।

प्र । द्यावा । यज्ञैः । पृथिवी इति । नमःऽभिः । सऽबाधः । ईळे । बृहती इति । यजत्रे इति ।
ते इति । चित् । हि । पूर्वे । कवयः । गृणन्तः । पुरः । मही इति । दधिरे । देवपुत्रे इति देवऽपुत्रे ॥ १

यजत्रे यजनीये बृहती बृहत्यौ महत्यौ द्यावा पृथिवी द्यावापृथिव्यौ यज्ञैः यागैः नमोभिः स्तोत्रैश्चाहं स्तोता सबाधः बाधासहितः । ऋत्विजां संबाधयुक्त इत्यर्थः । प्र ईळे प्रकर्षेण स्तौमि । मही महत्यौ देवपुत्रे । देवाः पुत्रा ययोस्ते । ते चिद्धि तादृश्यौ खल्वपि द्यावापृथिव्यौ पूर्वे पुरातनाः कवयः गृणन्तः स्तुवन्तः पुरः दधिरे पुरस्तात् स्थापयामासुः ॥

आग्रयणे[1] द्यावापृथिव्यैककपालस्य 'प्र पूर्वजे' इति याज्या । सूत्रितं च—'मही द्यौः पृथिवी च नः प्र पूर्वजे पितरा नव्यसीभिः' ( आश्व. श्रौ. २. ९ ) इति ॥

**प्र पूर्वजे पितरा नव्यसीभिर्गीर्भिः कृणुध्वं सदने ऋतस्य ।**
**आ नो द्यावापृथिवी दैव्येन जनेन यातं महि वां वरूथम् ॥ २ ॥**

प्र । पूर्वजे इति पूर्वऽजे । पितरा । नव्यसीभिः । गीःऽभिः । कृणुध्वम् । सदने इति । ऋतस्य ।
आ । नः । द्यावापृथिवी इति । दैव्येन । जनेन । यातम् । महि । वाम् । वरूथम् ॥ २ ॥

हे अस्मदीयाः स्तोतारो यूयं नव्यसीभिः नवतराभिः गीर्भिः स्तुतिरूपाभिर्वाग्भिः ऋतस्य यज्ञस्य सदने स्थानभूते पूर्वजे पूर्वं प्रजाते पितरा पितरौ विश्वस्य मातापितृभूते द्यावापृथिव्यौ प्र कृणुध्वं पुरस्कुरुत । अथ प्रत्यक्षस्तुतिः । हे द्यावापृथिवी द्यावापृथिव्यौ युवां दैव्येन देवसंबन्धिना जनेन सह नः अस्मानभि आ यातम् आगच्छतम् । किमर्थम् आयातमित्युच्यते । वां युवयोः वरूथम् अस्माभिर्वरणीयं महि महत् । यद्धनमस्तीति शेषः । तद्धनमस्मभ्यं दीयतामित्यर्थः ॥

**उतो हि वां रत्नधेयानि सन्ति पुरूणि द्यावापृथिवी सुदासे ।**
**अस्मे धत्तं यदसदस्कृधोयु यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥**

उतो इति । हि । वाम् । रत्नऽधेयानि । सन्ति । पुरूणि । द्यावापृथिवी इति । सुऽदासे ।
अस्मे इति । धत्तम् । यत् । असत् । अस्कृधोयु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥३

उतो हि अपि च खलु हे द्यावापृथिवी द्यावापृथिव्यौ वां युवयोः सुदासे शोभनहविर्दानाय यजमानाय देयानि पुरूणि बहूनि रत्नधेयानि रमणीयानि धनानि सन्ति भवन्ति । तेषां मध्ये यत् धनम् अस्कृधोयु । कृधुको ह्रस्वः । अह्रस्वमनल्पम् असत् भवेत्तद्धनम् अस्मे अस्मभ्यं धत्तं प्रयच्छतम् । हे द्यावापृथिव्यौ यूयं युवां नः अस्मान् सर्वदा कल्याणैः पात पालयतम् ॥  ॥२०॥

'वास्तोष्पते' इति तृचात्मकमेकविंशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वास्तोष्पत्यम् । तथा चानुक्रम्यते—'वास्तोष्पते वास्तोष्पत्यम्' इति । स्मार्ते गृहनिर्माणे 'वास्तोष्पते' इति चतसृभिः प्रत्यृचं जुहुयात् । सूत्रितं च—'वास्तोष्पते प्रति जानीह्यस्मानिति चतसृभिः प्रत्यृचं हुत्वा' ( आश्व. गृ. २. ९. ९ ) इति ॥

---

१. त१-४—आग्रायणे ।

वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः ।
यत्त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥ १ ॥

वास्तोः । पते । प्रति । जानीहि । अस्मान् । सुऽआवेशः । अनमीवः । भव । नः ।
यत् । त्वा । ईमहे । प्रति । तत् । नः । जुषस्व । शम् । नः । भव । द्विऽपदे । शम् । चतुःऽपदे ॥ १ ॥

हे ᵛवास्तोष्पते गृहस्य पालयितर्देव त्वम् ᵛअस्मान् त्वदीयान् स्तोतॄनिति ᵛप्रति ᵛजानीहि प्रबुध्यस्व । तदनन्तरं ᵛनः अस्माकं ᵛस्वावेशः शोभननिवेशः ᵛअनमीवः अरोगकृच्च ᵛभव । किंच वयं ᵛत्वा त्वां ᵛयत् धनम् ᵛईमहे याचामहे त्वमपि ᵛतत् धनं ᵛनः अस्मभ्यं ᵛप्रति ᵛजुषस्व प्रयच्छ । अपि च ᵛनः अस्माकं ᵛद्विपदे पुत्रपौत्रादिजनाय ᵛशं सुखकरः ᵛभव । ᵛचतुष्पदे अस्मदीयाय गवाश्वादिवर्गाय च ᵛशं सुखकरो भव ॥

वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो ।
अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व ॥ २ ॥

वास्तोः । पते । प्रऽतरणः । नः । एधि । गयऽस्फानः । गोभिः । अश्वेभिः । इन्दो इति ।
अजरासः । ते । सख्ये । स्याम । पिताऽइव । पुत्रान् । प्रति । नः । जुषस्व ॥ २ ॥

हे ᵛवास्तोष्पते गृहस्य पालयितर्देव त्वं ᵛनः अस्माकं ᵛप्रतरणः प्रवर्धकः ᵛगयस्फानः गयस्य अस्मदीयस्य धनस्य स्फाययिता प्रवर्धकः ᵛएधि भव । हे ᵛइन्दो सोमवदाह्लादक ᵛते त्वया सह ᵛसख्ये सति वयं ᵛगोभिः पशुभिः ᵛअश्वेभिः अश्वैश्च सहिताः ᵛअजरासः जरारहिताः ᵛस्याम भवेम । विनाशरहिता इत्यर्थः । ᵛपितेव ᵛपुत्रान् यथा पिता पुत्रान् रक्षकत्वेन सेवते तथा त्वमपि ᵛनः अस्मान् ᵛप्रति ᵛजुषस्व सेवस्व ॥

वास्तोष्पते शग्मया संसदा ते सक्षीमहि रण्वया गातुमत्या ।
पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥

वास्तोः । पते । शग्मया । सम्ऽसदा । ते । सक्षीमहि । रण्वया । गातुऽमत्या ।
पाहि । क्षेमे । उत । योगे । वरम् । नः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ३ ॥

हे ᵛवास्तोष्पते देव ᵛशग्मया सुखकर्या ᵛरण्वया रमणीयया ᵛगातुमत्या धनवत्या ᵛते त्वया देयया ᵛसंसदा स्थानेन ᵛसक्षीमहि वयं संगच्छेमहि । त्वमपि ᵛक्षेमे प्राप्तस्य रक्षणे ᵛउत अपि च ᵛयोगे अप्राप्तस्य प्रापणे ᵛवरं वरणीयं ᵛनः अस्मदीयं धनं ᵛपाहि रक्ष । हे वास्तोष्पते ᵛयूयं त्वं ᵛनः अस्मान् सर्वदा कल्याणैः ᵛपात पाहि ॥ ॥ २१ ॥

'अमीवहा' इत्यष्टर्चं द्वाविंशं सूक्तम् । आद्या गायत्री पञ्चम्याद्याश्चतस्रोऽनुष्टुभो द्वितीयाद्यास्तिस्र उपरिष्टाद्बृहत्यः । 'त्र्यष्टका चतुर्थद्वादशकौ बृहती' इति तल्लक्षणयोगात् । आद्या वास्तोष्पतिदेवताका शिष्टा ऐन्द्र्यः । तथा चानुक्रान्तम्—'अमीवहाष्टौ वास्तोष्पत्याद्या गायत्री शेषास्त्युपरिष्टाद्बृहत्यादयोऽनुष्टुभः प्रस्वापिन्य[1] उपनिषत्' इति । गतो विनियोगः । बृहद्देवतायां यदुक्तं तदिह लिख्यते—'वरुणस्य गृहान् रात्रौ वसिष्ठः स्वप्नमाचरन् । प्रविवेशाथ तं तत्र श्वा नदन्नभ्य-

---

१. ख-ग्र-त-श—इति प्रस्वापिन्य ।

वर्तत । क्रन्दन्तं सारमेयं स धावन्तं दष्टुमुद्यतम् ॥ यदर्जुनेति च द्वाभ्यां सान्त्वयित्वा ह्यसूषुपत् । एवं प्रस्वापयामास जनमन्यं च वारुणम्' (बृहद्दे. ६. ११-१३) इति। अत्र केचित् पुनरेवमाहुः—'आसां प्रस्वापिनित्वं[1] तु कथासु परिकल्प्यते । वसिष्ठस्तृषितोऽन्नार्थी त्रिरात्रालब्धभोजनः । चतुर्थरात्रौ चौर्यार्थं वारुणं गृहमेत्य तु ॥ कोष्ठागारे[2] प्रवेशाय पालकश्वादिसुप्तये । यदर्जुनेति सहर्चं ददर्श च जजाप च' (अनु. भा. ७. ५५) इति ॥

अ॒मी॒व॒हा वा॑स्तोष्पते॒ विश्वा॑ रू॒पाण्या॑वि॒शन् । सखा॑ सु॒शेव॑ एधि नः ॥ १ ॥

अ॒मी॒व॒ऽहा । वा॒स्तोः॒ । प॒ते॒ । विश्वा॑ । रू॒पाणि॑ । आ॒ऽवि॒शन् । सखा॑ । सु॒ऽशेवः॑ । ए॒धि॒ । नः॒ ॥ १ ॥

हे ᵛवास्तोष्पते गृहस्य पालकैतत्संज्ञक देव ᵛअमीवहा अमीवानां रोगाणां नाशकस्त्वं[3] ᵛविश्वा विश्वानि बहूनि ᵛरूपाण्याविशन् प्रविशन् । 'यद्यद्रूपं कामयते तत्तद्देवता विशति' (निरु. १०. १७) इति यास्कः । ᵛनः अस्माकं ᵛसखा मित्रभूतः ᵛसुशेवः सुष्ठु सुखकरः ᵛएधि भव ॥

यदर्जुन सारमेय द॒तः पि॑शङ्ग॒ यच्छ॑से ।
वी॑व भ्राजन्त ऋ॒ष्टय॒ उप॒ स्रक्के॑षु॒ बप्स॑तो॒ नि षु स्व॑प ॥ २ ॥

यत् । अ॒र्जु॒न॒ । सा॒र॒मे॒य॒ । द॒तः । पि॒श॒ङ्ग॒ । यच्छ॑से ।
विऽइ॑व । भ्रा॒ज॒न्ते॒ । ऋ॒ष्टयः॑ । उप॑ । स्रक्के॑षु । बप्स॑तः । नि । सु । स्व॒प॒ ॥ २ ॥

हे ᵛअर्जुन श्वेत हे ᵛसारमेय । सरमा नाम देवशुनी । तस्याः कुलोद्भव हे ᵛपिशङ्ग केषुचिदङ्गेषु पिङ्गलवर्णैवंभूत हे शुनक त्वं ᵛदतः दन्तान् ᵛयत् यदा ᵛयच्छसे विवृणोषि । अस्मान् दष्टुमित्यर्थः । तदानीं ᵛवीव ᵛभ्राजन्त ᵛऋष्टयः यथायुधानि विशेषेण भासन्ते तथा ᵛउप अस्मत्समीपे ᵛबप्सतः भक्षयतस्तव दन्ताः ᵛस्रक्केषु स्रक्कासु भासन्ते । स्रक्काशब्द ओष्ठप्रदेशविशेषवाचीत्यर्थः[4] । तथाभूतस्त्वमिदानीं ᵛसु सुष्ठु ᵛनि ᵛस्वप नितरां निद्रां कुरु ॥

स्ते॒नं रा॑य सारमेय॒ तस्क॑रं वा पुनःसर ।
स्तो॒तॄनिन्द्र॑स्य रायसि॒ किम॒स्मान्दु॑च्छुनायसे॒ नि षु स्व॑प ॥ ३ ॥

स्ते॒नम् । रा॒य॒ । सा॒र॒मे॒य॒ । तस्क॑रम् । वा॒ । पु॒नः॒ऽस॒र॒ ।
स्तो॒तॄन् । इन्द्र॑स्य । रा॒य॒सि॒ । किम् । अ॒स्मान् । दु॒च्छु॒न॒ऽय॒से॒ । नि । सु । स्व॒प॒ ॥ ३ ॥

हे ᵛपुनःसर । गतमेव देशं पुनः सरतीति पुनःसरः । तादृग्भूत हे ᵛसारमेय त्वं ᵛस्तेनम् । प्रच्छन्नधनापहारी स्तेनः । तं ᵛतस्करम् । प्रत्यक्षधनापहारी तस्करः । तं ᵛवा ᵛराय गच्छ । ᵛइन्द्रस्य ᵛस्तोतॄन् अस्मान् ᵛकिं ᵛरायसि गच्छसि । ᵛअस्मान् ᵛदुच्छुनायसे किं बाधसे । ᵛनि ᵛषु ᵛस्वप अत्यन्तं निद्रां कुरु ॥

त्वं सू॑क॒रस्य॑ दर्दृहि॒ तव॑ दर्दर्तु सूक॒रः ।
स्तो॒तॄनिन्द्र॑स्य रायसि॒ किम॒स्मान्दु॑च्छुनायसे॒ नि षु स्व॑प ॥ ४ ॥

---

१. अनु. भा. ७. ५५—प्रस्वापिनीत्वं । २. ख—कोशागारे; श—गोष्ठागारे; अनु. भा. ७. ५५—कोष्ठागार॰ । ३. ख-भ—हारक॰ । ४. श— दंष्ट्रप्रदेशवाची॰ ।

त्वम् । सूकरस्य । दर्दृहि । तव । दर्दर्तु । सूकरः ।

स्तोतॄन् । इन्द्रस्य । रायसि । किम् । अस्मान् । दुच्छुनऽयसे । नि । सु । स्वप ॥ ४ ॥

हे सारमेय ᵛत्वं ᵛसूकरस्य वराहस्य । द्वितीयार्थे षष्ठी । ᵛदर्दृहि विदारय । ᵛसूकरः अपि ᵛतव ᵛदर्दर्तु विदारयतु । युवयोर्नित्यवैरित्वात्[1] । अस्मान् मा दशेत्यर्थः । स्तोतॄन् इत्यर्धर्चः पूर्वस्यामृचि व्याख्यातः ॥

सस्तु माता सस्तु पिता सस्तु श्वा सस्तु विश्पतिः ।

ससन्तु सर्वे ज्ञातयः सस्त्वयमभितो जनः ॥ ५ ॥

सस्तु । माता । सस्तु । पिता । सस्तु । श्वा । सस्तु । विश्पतिः ।

ससन्तु । सर्वे । ज्ञातयः । सस्तु । अयम् । अभितः । जनः ॥ ५ ॥

हे सारमेय ᵛमाता त्वदीया जननी ᵛसस्तु स्वपतु । ᵛपिता च ᵛसस्तु । ᵛश्वा सारमेयो भवान् ᵛसस्तु । ᵛविश्पतिः जामाता यद्वा विशां जनानां पालको गृही ᵛसस्तु । ᵛसर्वे ᵛज्ञातयः बन्धवोऽपि ᵛससन्तु स्वपन्तु । ᵛअभितः परितः स्थितः ᵛअयम् अपि सर्वः ᵛजनः ᵛसस्तु स्वपतु ॥

य आस्ते यश्च चरति यश्च पश्यति नो जनः ।

तेषां सं हन्मो अक्षाणि यथेदं हर्म्यं तथा ॥ ६ ॥

यः । आस्ते । यः । च । चरति । यः । च । पश्यति । नः । जनः ।

तेषाम् । सम् । हन्मः । अक्षाणि । यथा । इदम् । हर्म्यम् । तथा ॥ ६ ॥

ᵛयः जनः ᵛआस्ते अस्मिन् प्रदेशे तिष्ठति ᵛयश्च ᵛचरति गच्छति ᵛयश्च ᵛजनः ᵛनः अस्मान् ᵛपश्यति एवंभूतानां ᵛतेषां जनानाम् ᵛअक्षाणि इन्द्रियाणि ᵛसं ᵛहन्मः संहनाम । संहतिर्निमीलनम् । निमीलयामेत्यर्थः । ᵛइदं प्रत्यक्षेणोपलभ्यमानं ᵛहर्म्यं प्रासादादिस्थावरात्मकं वस्तुजातं ᵛयथा निश्चलं भवति ᵛतथा इमे सर्वे जना निश्चला भवन्त्वित्यर्थः ॥

सहस्रशृङ्गो वृषभो यः समुद्रादुदाचरत् ।

तेना सहस्येना वयं नि जनान्त्स्वापयामसि ॥ ७ ॥

सहस्रऽशृङ्गः । वृषभः । यः । समुद्रात् । उत्ऽआचरत् ।

तेन । सहस्येन । वयम् । नि । जनान् । स्वापयामसि ॥ ७ ॥

ᵛसहस्रशृङ्गः सहस्रकिरणः ᵛवृषभः कामानां वर्षिता ᵛयः सूर्यः ᵛसमुद्रात् अम्बुधेः सकाशात् ᵛउदाचरत् उदागच्छति ᵛसहस्येन अभिभवित्रा ᵛतेन सूर्येण ᵛवयं स्तोतारः ᵛजनान् सर्वान् ᵛनि ᵛस्वापयामसि नितरां स्वापयामः ॥

प्रोष्ठेशया वह्येशया नारीर्यास्तल्पशीवरीः ।

स्त्रियो याः पुण्यगन्धास्ताः सर्वाः स्वापयामसि ॥ ८ ॥

---

1. ख-घ-ञ-त२-३-न-भ-श-'वैरत्वात् ।

प्रोष्ठेऽशयाः । वह्येऽशयाः । नारीः । याः । तल्पऽशीवरीः ।
स्त्रियः । याः । पुण्यऽगन्धाः । ताः । सर्वाः । स्वापयामसि ॥ ८ ॥

ᵛयाः यादृश्यः ᵛनारीः नार्यः स्त्रियः ᵛप्रोष्ठेशयाः प्राङ्गणे[1] शयानाः । याः ᵛवह्येशयाः । वह्यं वाहनम् । तस्मिन् शयानाः । याः ᵛतल्पशीवरीः तल्पशयाः[2] । ᵛयाः ᵛस्त्रियः ᵛपुण्यगन्धाः मङ्गल्यगन्धाः[3] । ᵛताः तादृशीः ᵛसर्वाः स्त्रीः ᵛस्वापयामसि वयं निद्रां कारयामः ॥ ॥ २२ ॥ ॥ ३ ॥

अथ चतुर्थेऽनुवाके पञ्चदश सूक्तानि । तत्र ' क ईं व्यक्ताः ' इति पञ्चविंशत्यृचं प्रथमं सूक्तं वसिष्ठस्यार्षं मरुद्देवताकम् । आद्या एकादश द्विपदा विंशत्यक्षरा विराजः शिष्टाश्चतुर्दश त्रिष्टुभः । तथा चानुक्रान्तं—' क ईं पञ्चाधिका मारुतं ह्याद्या एकादश द्विपदा ' इति । दशरात्रे चतुर्थेऽहन्याग्निमारुते शस्त्र इदं मारुतनिविद्धानम् । सूत्र्यते हि—' वैश्वानरस्य सुमतौ क ईं व्यक्ता नरः ' ( आश्व. श्रौ. ८. ८ ) इति ॥

**क ईं व्यक्ता नरः सनीळा रुद्रस्य मर्या अधा स्वश्वाः ॥ १ ॥**

के । ईम् । विऽअक्ताः । नरः । सऽनीळाः । रुद्रस्य । मर्याः । अध । सुऽअश्वाः ॥ १ ॥

ᵛव्यक्ताः कान्तियुक्ताः ᵛनरः नेतारः ᵛसनीळाः समानौकसः ᵛरुद्रस्य महादेवस्य पुत्राः ᵛमर्याः मर्येभ्यो नृभ्यो हिताः ᵛअध अपि च ᵛस्वश्वाः शोभनवाहाः ᵛईम् इमे एवंभूताः ᵛके भवन्तीति रूपातिशयादृषिराश्चर्येणाह ॥

**नकिर्ह्येषां जनूंषि वेद ते अङ्ग विद्रे मिथो जनित्रम् ॥ २ ॥**

नकिः । हि । एषाम् । जनूंषि । वेद । ते । अङ्ग । विद्रे । मिथः । जनित्रम् ॥ २ ॥

ᵛएषां मरुतां ᵛजनूंषि जन्मानि ᵛनकिर्हि ᵛवेद कश्चिदपि न खलु जानाति । ᵛते तादृशा मरुतः ᵛमिथः परस्परं ᵛजनित्रं रुद्रपृश्निभ्यां सकाशात् प्रादुर्भूतं स्वकीयं जन्म ᵛअङ्ग ᵛविद्रे स्वयमेव विदन्ति ॥

**अभि स्वपूभिर्मिथो वपन्त वातस्वनसः श्येना अस्पृध्रन् ॥ ३ ॥**

अभि । स्वऽपूभिः । मिथः । वपन्त । वातऽस्वनसः । श्येनाः । अस्पृध्रन् ॥ ३ ॥

मरुतः ᵛस्वपूभिः स्वकीयैः पवनैः संचरणैः स्वयमेव संचरन्तः ᵛमिथः परस्परम् ᵛअभि ᵛवपन्त संगच्छन्ते । अपि च ᵛवातस्वनसः वायुवत् स्वनन्तः शब्दायमानाः ᵛश्येनाः । ' श्यैङ् गतौ ' इति धातो रूपम् । गमनशीलाः । यद्वा श्येना इति लुप्तोपममेतत् । श्येनाः पक्षिणः । तद्वद्गच्छन्तः । ᵛअस्पृध्रन् । परस्परं रूपसौन्दर्यादिभिः स्पर्धन्ते ॥

**एतानि धीरो निण्या चिकेत पृश्निर्यदूधो मही जभार ॥ ४ ॥**

एतानि । धीरः । निण्या । चिकेत । पृश्निः । यत् । ऊधः । मही । जभार ॥ ४ ॥

ᵛधीरः धीमान् शास्त्रज्ञो जनः ᵛनिण्या निण्यानि श्वेतवर्णानि ᵛएतानि मरुदात्मकानि भूतानि ᵛचिकेत जानीयात् । किंतु न सर्वे जना जानन्तीत्यर्थः । ᵛमही महती ᵛपृश्निः मरुतां जननी ᵛयत् यानि मरुदात्मकानि भूतानि ᵛऊधः ऊधस्यन्तरिक्षे स्वकीये जठरे वा ᵛजभार बभार । एतानि चिकेतेति पूर्वेण संबन्धः ॥

---

१. ख-श—प्रांगणे; ङ-त१-२-४—प्राकणे । २. ख-श—तल्पे शयानाः । ३. ख-ङ—मांगल्यगंधाः ।

सा विट् सुवीरा मरुद्भिरस्तु सनात्सहन्ती पुष्यन्ती नृम्णम् ॥ ५ ॥

सा । विट् । सुऽवीरा । मरुत्ऽभिः । अस्तु । सनात् । सहन्ती । पुष्यन्ती । नृम्णम् ॥ ५ ॥

सा विट् सा प्रजा मरुतः परिचरति । सा प्रजा मरुद्भिः हेतुभिः सनात् चिरात् सहन्ती शत्रूनभिभवन्ती नृम्णं धनं बलं वा पुष्यन्ती लभन्ती सुवीरा शोभनपुत्रयुक्ता अस्तु भवतु ॥

यामं येष्ठाः शुभा शोभिष्ठाः श्रिया संमिश्ला ओजोभिरुग्राः ॥ ६ ॥

यामम् । येष्ठाः । शुभा । शोभिष्ठाः । श्रिया । सम्ऽमिश्लाः । ओजःऽभिः । उग्राः ॥ ६ ॥

मरुतः यामं यातव्यं गन्तव्यं प्रदेशं येष्ठाः यातृतमा अतिशयेन गन्तारः शुभा अलंकारेण शोभिष्ठाः अतिशयेन शोभायुक्ताः श्रिया कान्त्या संमिश्लाः संगच्छमानाः ओजोभिः बलैः उग्राः उद्गूर्णाः । एवंभूता भवन्तीति शेषः ॥

उग्रं व ओजः स्थिरा शवांस्यधा मरुद्भिर्गणस्तुविष्मान् ॥ ७ ॥

उग्रम् । वः । ओजः । स्थिरा । शवांसि । अध । मरुत्ऽभिः । गणः । तुविष्मान् ॥ ७ ॥

हे मरुतः वः युष्माकम् ओजः तेजः उग्रम्[1] उद्गूर्णं[1] भवतु । शवांसि युष्मदीयानि बलानि स्थिरा स्थिराणि कैश्चिदनपहर्तव्यानि भवन्तु । अध अपि च मरुद्भिर्गणः मरुतां संघः तुविष्मान् वृद्धिमान् भवतु ॥

शुभ्रो वः शुष्मः क्रुध्मी मनांसि धुनिर्मुनिरिव शर्धस्य धृष्णोः ॥ ८ ॥

शुभ्रः । वः । शुष्मः । क्रुध्मी । मनांसि । धुनिः । मुनिःऽइव । शर्धस्य । धृष्णोः ॥ ८ ॥

हे मरुतः वः युष्माकं शुष्मः बलं शुभ्रः सर्वतः शोभमानम् । किंच वः [ मनांसि क्रुध्मी संग्रामेषु शत्रुहननार्थं क्रोधनशीलानि । धृष्णोः धर्षणशीलस्य शर्धस्य बलवतो युष्मदीयस्य गणस्य धुनिः वृक्षादीनां कम्पयितु( ? तृ )वेगः[2] मुनिरिव । मननात्[3] मुनिः स्तोता । स यथा बहुविधं शब्दमुत्पादयति एवं बहुविधशब्दस्योत्पादक इत्यर्थः ॥

सनेम्यस्मद्युयोत दिद्युं मा वो दुर्मतिरिह प्रणङ्नः ॥ ९ ॥

सनेमि । अस्मत् । युयोत । दिद्युम् । मा । वः । दुःऽमतिः । इह । प्रणक् । नः ॥ ९ ॥

[ हे मरुतः सनेमि पुराणं दिद्युम् आयुधम् अस्मत् अस्मत्तः युयोत पृथक्कुरुत । वः युष्मदीया दुर्मतिः क्रूरमतिः इह अस्मिन् कर्मणि नः अस्मान् मा प्रणक् मा व्याप्नोतु ॥ ]

प्रिया वो नाम हुवे तुराणामा यत्तृपन्मरुतो वावशानाः ॥ १० ॥

प्रिया । वः । नाम । हुवे । तुराणाम् । आ । यत् । तृपत् । मरुतः । वावशानाः ॥ १० ॥

[ हे मरुतः तुराणां शत्रूणां हिंसकानां त्वरावतां वा वः युष्माकं प्रिया प्रियेण नाम नाम्ना आ हुवे आह्वयामि । यत् येनानेन वावशानाः कामयमानाः सन्तः तृपत् तृप्तिं गच्छन्ति ॥ ] ॥२३॥

---

१. ख-भ—समुद्गूर्णं; घ—उग्रं समुद्गूर्णं । २. ख-घ-क्ष—कम्पयितुं वेगः; क्ष-त१-३-४-न-भ—कंपयितुवेगः; त२—कंपयितुर्वेगः; श—कंपयतुं वेगः । ३. ख—मनशत्; क्ष-त-न—मनसान्; श—मनसा ।

स्वायुधासं इष्मिणः सुनिष्का उत स्वयं तन्वः शुम्भमानाः ॥ ११ ॥

सुऽआयुधासः । इष्मिणः । सुऽनिष्काः । उत । स्वयम् । तन्वः । शुम्भमानाः ॥ ११ ॥

स्वायुधासः स्वायुधाः शोभनास्त्राः इष्मिणः गन्तारः सुनिष्काः शोभनालंकाराः उत अपि च तन्वः स्वकीयानि शरीराणि शुम्भमानाः स्वयमेव शोभयन्तो मरुत एवंभूता भवन्तीत्यर्थः ॥

मारुते पशौ 'शुची वो हव्या' इति वपाया अनुवाक्या । सूत्रितं च—'शुची वो हव्या मरुतः शुचीनां नू ष्ठिरं मरुतः' ( आश्व. श्रौ. ३. ७ ) इति ॥

शुची वो हव्या मरुतः शुचीनां शुचिं हिनोम्यध्वरं शुचिभ्यः ।

ऋतेन सत्यमृतसाप आयुञ्छुचिजन्मानः शुचयः पावकाः ॥ १२ ॥

शुची । वः । हव्या । मरुतः । शुचीनाम् । शुचिम् । हिनोमि । अध्वरम् । शुचिऽभ्यः ।

ऋतेन । सत्यम् । ऋतऽसापः । आयन् । शुचिऽजन्मानः । शुचयः । पावकाः ॥ १२ ॥

हे मरुतः शुचीनां शुद्धानां वः युष्माकं शुची शुचीनि हव्या हव्यानि हवींषि भवन्तु । शुचिभ्यः प्रकाशमानेभ्यो युष्मभ्यं शुचिं शुद्धम् अध्वरं यागं हिनोमि अहं प्रेरयामि । ऋतसापः ऋतमुदकं स्पृशन्तो मरुतः ऋतेन सत्येनैव सत्यम् आयन् गच्छन्ति । कीदृशाः । शुचिजन्मानः शोभनजननाः शुचयः दीप्यमानाः पावकाः शोधकाः । एवंभूता गच्छन्तीत्यर्थः ॥

अंसेष्वा मरुतः खादयो वो वक्षःसु रुक्मा उपशिश्रियाणाः ।

वि विद्युतो न वृष्टिभी रुचाना अनु स्वधामायुधैर्यच्छमानाः ॥ १३ ॥

अंसेषु । आ । मरुतः । खादयः । वः । वक्षःऽसु । रुक्माः । उपऽशिश्रियाणाः ।

वि । विऽद्युतः । न । वृष्टिऽभिः । रुचानाः । अनु । स्वधाम् । आयुधैः । यच्छमानाः ॥ १३ ॥

हे मरुतः अंसेषु युष्मदीयेषु स्कन्धप्रदेशेषु खादयः अलंकारविशेषाः आ मुक्ता भवन्तीति शेषः । सुरुक्माः सुष्ठु रोचमाना हाराः वः युष्मदीयं वक्ष उरःप्रदेशम् उपशिश्रियाणाः आश्रिता भवन्ति । किंच हे मरुतः वृष्टिभिः वर्षैः सार्धं विद्युतो न तडितो यथा रुचानाः रोचमानाः तादृग्भूता यूयम् आयुधैः मेघताडनैः स्वधाम् उदकम् अनु यच्छमानाः प्रयच्छन्तः वि चरथेति शेषः ॥

गृहमेधीये 'प्र बुध्न्या वः' इति प्रधानस्य याज्या । सूत्रितं च—'प्र बुध्न्या व ईरते महांसीति पुष्टिमन्तौ विराजौ संयाज्ये' ( आश्व. श्रौ. २. १८ ) इति ॥

प्र बुध्न्या व ईरते महांसि प्र नामानि प्रयज्यवस्तिरध्वम् ।

सहस्रियं दम्यं भागमेतं गृहमेधीयं मरुतो जुषध्वम् ॥ १४ ॥

प्र । बुध्न्याः । वः । ईरते । महांसि । प्र । नामानि । प्रऽयज्यवः । तिरध्वम् ।

सहस्रियम् । दम्यम् । भागम् । एतम् । गृहऽमेधीयम् । मरुतः । जुषध्वम् ॥ १४ ॥

हे मरुतः वः युष्मदीयानि बुध्न्या बुध्न्यान्यन्तरिक्षे भवानि महांसि तेजांसि प्र ईरते प्रकर्षेण गच्छन्ति । किंच हे प्रयज्यवः प्रकर्षेण यष्टव्या मरुतः यूयं नामानि । पांसून्

नमयन्तीति नामान्युदकानि। ᵛप्र ᵛतिरध्वं वर्धयत। हे ᵛमरुतः यूयं ᵛसहस्रियं सहस्रसंख्याकं ᵛदम्यं दमे गृहे भवं ᵛगृहमेधीयं गृहमेधिगुणेभ्यो युष्मभ्यं देयम् ᵛएतम् एतादृशं ᵛभागं ᵛजुषध्वं सेवध्वम्। एकं भागं सहस्रियमिति कथमाह। तथा च श्रूयते—'यावदेका देवता कामयते यावदेका तावदाहुतिः प्रथते न हि तदस्ति यत्तावदेव स्याद्यावज्जुहोति' (तै. ब्रा. ३.२.६.४) इति॥

यदि॑ स्तु॒तस्य॑ मरुतो अधी॒थेत्था विप्र॑स्य वा॒जिनो॒ हवी॑मन्।
म॒क्षू रा॒यः सु॒वीर्य॑स्य दात॒ नू चि॒द्यम॒न्य आ॒दभ॒दरा॑वा॥ १५॥

यदि॑। स्तु॒तस्य॑। म॒रु॒तः॒। अ॒धि॒ऽइ॒थ। इ॒त्था। विप्र॑स्य। वा॒जिनः॑। हवी॑मन्।
म॒क्षु। रा॒यः। सु॒ऽवीर्य॑स्य। दा॒त॒। नु। चि॒त्। यम्। अ॒न्यः। आ॒ऽदभ॑त्। अरा॑वा॥१५॥

ᵛवाजिनः हविर्लक्षणान्नवतः ᵛविप्रस्य मेधाविनो मम संबन्धिनि ᵛहवीमन् हविष्मति हविषा युक्ते स्तोत्रे क्रियमाणे सति हे ᵛमरुतः यूयं ᵛयदि यस्मात् कारणात् ᵛस्तुतस्य स्तुतं मदीयं स्तोत्रम् ᵛइत्था इत्थमनेन प्रकारेण ᵛअधीथ अवगच्छथ तस्मात् कारणात् हे मरुतः यूयं ᵛसुवीर्यस्य शोभनपुत्रोपेतस्य ᵛरायः रायं धनम्। द्वितीयार्थे षष्ठी। ᵛमक्षु शीघ्रं ᵛदात दत्त। ᵛअरावा अरातिः शत्रुभूतः ᵛअन्यः जनः ᵛयं रायं ᵛनू ᵛचित् ᵛआदभत् नैवाभिहन्यात्। तद्धनमस्मभ्यं दत्तेति संबन्धः॥ ॥ २४ ॥

'मरुद्भ्यः क्रीळिभ्यः सप्तकपालम्' (तै. सं. १.८.४.२) इत्यस्य 'अत्यासः' इति याज्या। सूत्रितं च—'अत्यासो न ये मरुतः स्वञ्चो जुष्टो दमूनाः' (आश्व. श्रौ. २.१८) इति॥

अत्या॑सो॒ न ये म॒रुतः॒ स्वञ्चो॑ यक्ष॒दृशो॒ न शु॒भय॑न्त॒ मर्याः॑।
ते ह॑र्म्ये॒ष्ठाः शिश॑वो॒ न शु॒भ्रा व॒त्सासो॒ न प्र॑क्री॒ळिनः॑ पयो॒धाः॥ १६॥

अत्या॑सः। न। ये। म॒रुतः॑। सु॒ऽअञ्चः॑। य॒क्ष॒ऽदृशः॑। न। शु॒भय॑न्त। मर्याः॑।
ते। ह॒र्म्ये॒ऽस्थाः। शिश॑वः। न। शु॒भ्राः। व॒त्सासः॑। न। प्र॒ऽक्री॒ळिनः॑। प॒यः॒ऽधाः॥१६॥

ᵛअत्यासो ᵛन अत्याः सततगामिनोऽश्वा इव ᵛस्वञ्चः सुष्ठु गच्छन्तः ᵛये ᵛमरुतः ᵛयक्षदृशो ᵛन ᵛमर्याः यक्षस्योत्सवस्य द्रष्टारो मनुष्या इव ᵛशुभयन्त शोभन्ते ᵛहर्म्येष्ठाः हर्म्ये स्थिताः ᵛशिशवो ᵛन कुमारा इव ᵛशुभ्राः शोभमानाः ᵛवत्सासो ᵛन वत्सा इव ᵛप्रक्रीळिनः[1] प्रकर्षेण क्रीडमानाः ᵛते मरुतः ᵛपयोधाः पयस उदकस्य धारयितारो दातारो वा भवन्ति॥

द॒श॒स्यन्तो॑ नो म॒रुतो॑ मृळन्तु वरिव॒स्यन्तो॒ रोद॑सी सु॒मेके॑।
आ॒रे गो॒हा नृ॒हा व॒धो वो॑ अस्तु सु॒म्नेभि॑र॒स्मे व॑सवो नमध्वम्॥ १७॥

द॒श॒स्यन्तः॑। न॒ः। म॒रुतः॑। मृ॒ळन्तु॑। व॒रि॒व॒स्यन्तः॑। रोद॑सी॒ इति॑। सु॒मेके॒ इति॑ सु॒ऽमेके॑।
आ॒रे। गो॒ऽहा। नृ॒ऽहा। व॒धः। वः॒। अ॒स्तु॒। सु॒म्नेभिः॑। अ॒स्मे इति॑। व॒स॒वः॒। न॒म॒ध्व॒म्॥१७॥

ᵛमरुतः ᵛनः अस्मभ्यं ᵛदशस्यन्तः धनानि प्रयच्छन्तः ᵛसुमेके सुरूपे ᵛरोदसी द्यावापृथिव्यौ ᵛवरिवस्यन्तः स्वमहिम्ना पूरयन्तः ᵛमृळन्तु मृळयन्तु। अस्मान् सुखयुक्तान् कुर्वन्तु।

---

१. ख-त-प्रक्रीळिनः प्रक्रीडिनः।

अपि च हे वसवः वासका मरुतः गोहा गवां मेघस्थानामुदकानां भेदकः नृहा नृणां शत्रूणां हन्ता वः युष्मदीयं वधः आयुधम् आरे अस्तु अस्मत्तो दूरे भवतु। यूयमपि सुम्नेभिः सुम्नैः सुखैः सह अस्मे अस्मासु नमध्वं स्वयमेवाभिमुखा भवत ॥

मारुते पशौ 'आ वो होता' इत्येषानुवाक्या। सूत्रितं च—'आ वो होता जोहवीति सत्तः प्र चित्रमर्कं गृणते तुराय' (आश्व. श्रौ. ३. ७) इति ॥

आ वो होता जोहवीति सत्तः सत्राचीं रातिं मरुतो गृणानः ।
य ईवतो वृषणो अस्ति गोपाः सो अद्वयावी हवते व उक्थैः ॥ १८ ॥

आ । वः । होता । जोहवीति । सत्तः । सत्राचीम् । रातिम् । मरुतः । गृणानः ।
यः । ईवतः । वृषणः । अस्ति । गोपाः । सः । अद्वयावी । हवते । वः । उक्थैः ॥ १८ ॥

हे मरुतः सत्तः होतृषदने निषण्णोऽस्मदीयः होता सत्राचीं सर्वतो गमनशीलं[1] रातिं त्वदीयं दानं गृणानः स्तुवन् वः युष्मान् आ जोहवीति भृशमाह्वयति। हे वृषणः कामानां वर्षितारो मरुतः यः होता ईवतः गच्छतः व्यापारवतो यजमानस्य गोपाः अस्ति युष्मदाह्वाननिमित्तेन रक्षको भवति सः होता अद्वयावी मायारहितः सन् वः युष्मान् उक्थैः स्तोत्रैः हवते स्तौति ॥

इमे तुरं मरुतो रामयन्तीमे सहः सहस आ नमन्ति ।
इमे शंसं वनुष्यतो नि पान्ति गुरु द्वेषो अररुषे दधन्ति ॥ १९ ॥

इमे । तुरम् । मरुतः । रमयन्ति । इमे । सहः । सहसः । आ । नमन्ति ।
इमे । शंसम् । वनुष्यतः । नि । पान्ति । गुरु । द्वेषः । अररुषे । दधन्ति ॥ १९ ॥

इमे ईदृशाः मरुतः तुरं कर्मसु क्षिप्रवन्तं यजमानं रमयन्ति क्रीडयन्ति। इमे मरुतः सहः सहसा बलेन सहसः बलवतो जनान् आ नमन्ति। इमे मरुतः वनुष्यतः हिंसकात् पुरुषात् शंसं शंसकं स्तोतारं नि पान्ति नितरां पालयन्ति। अररुषे हविरप्रयच्छते जनाय गुरु महत् द्वेषः अप्रियं दधन्ति कुर्वन्ति ॥

इमे रध्रं चिन्मरुतो जुनन्ति भृमिं चिद्यथा वसवो जुषन्त ।
अप बाधध्वं वृषणस्तमांसि धत्त विश्वं तनयं तोकमस्मे ॥ २० ॥

इमे । रध्रम् । चित् । मरुतः । जुनन्ति । भृमिम् । चित् । यथा । वसवः । जुषन्त ।
अप । बाधध्वम् । वृषणः । तमांसि । धत्त । विश्वम् । तनयम् । तोकम् । अस्मे इति ॥ २० ॥

इमे मरुतः रध्रं चित् समृद्धमपि जनं जुनन्ति प्रेरयन्ति। भृमिं चित् भ्रमणशीलमपि दरिद्रं जुनन्ति प्रेरयन्ति। वसवः वासका देवा युष्मान् यथा जुषन्त कामयेरन् हे वृषणः कामानां वर्षितारः ते यूयं तमांसि अप बाधध्वं नाशयत। अपि च अस्मे अस्मभ्यं विश्वं बहुलं तोकं पुत्रं तनयं पौत्रं च धत्त प्रयच्छत ॥    ॥ २५ ॥

---

१. ख—गमनशीला; भ-श—गमनशीलां।

मा वो दात्रान्मरुतो निररा॑म मा प॒श्चाद्द॑घ्म रथ्यो विभा॒गे ।
आ नः स्पार्हे भजतना वसव्ये॒३॒ यदीं सुजा॒तं वृषणो वो अस्ति ॥ २१ ॥

मा । वः । दात्रात् । मरुतः । निः । अराम । मा । पश्चात् । दघ्म । रथ्यः । विऽभागे ।
आ । नः । स्पार्हे । भजतन । वसव्ये । यत् । ईम् । सुऽजातम् । वृषणः । वः । अस्ति ॥ २१ ॥

हे मरुतः वः युष्माकं दात्रात् दानात् मा निरराम वयं मा निर्गमाम। यूयमस्मान् परित्यक्त्वान्येभ्यो धनं मा दत्तेत्यर्थः। हे रथ्यः रथवन्तो मरुतः विभागे युष्मदीयस्य धनस्य दाने पश्चात् मा दघ्म। दघ्यतिर्गतिकर्मा। वयं पश्चाद्भागिनो मा भूम। यूयं प्रथममस्मभ्यमेव दत्तेति यावत्। स्पार्हे स्पृहणीये वसव्ये धनसमूहे यूयं नः अस्मान् आ भजतन भागिनः कुरुत। हे वृषणः वर्षितारो[1] मरुतः वः युष्माकं सुजातं शोभनजनं यत् वसव्यम् अस्ति तस्मिन् भागिनः कुरुतेति संबन्धः। ईम् इति पूरणः ॥

सं यद्धनन्त मन्युभिर्जनासः शूरा यह्वीष्वोषधीषु विक्षु ।
अध स्मा नो मरुतो रुद्रियासस्त्रातारो भूत पृतनास्वर्यः ॥ २२ ॥

सम् । यत् । हनन्त । मन्युऽभिः । जनासः । शूराः । यह्वीषु । ओषधीषु । विक्षु ।
अध । स्म । नः । मरुतः । रुद्रियासः । त्रातारः । भुत । पृतनासु । अर्यः ॥ २२ ॥

यत् यदा शूराः विक्रान्ताः जनासः जनाः यह्वीषु महतीषु ओषधीषु विक्षु प्रजासु च जेतव्यासु मन्युभिः कोपैरभिमानैर्वा सं हनन्त संगच्छन्ते अध तदानीं हे रुद्रियासः रुद्रपुत्रा हे मरुतः यूयं पृतनासु युद्धेषु अर्यः अरेः शत्रोः सकाशात् नः अस्माकं त्रातारः भूत रक्षका भवत ॥

भूरि चक्र मरुतः पित्र्याण्युक्थानि या वः शस्यन्ते पुरा चित् ।
मरुद्भिरुग्रः पृतनासु साळ्हा मरुद्भिरित्सनिता वाजमर्वा ॥ २३ ॥

भूरि । चक्र । मरुतः । पित्र्याणि । उक्थानि । या । वः । शस्यन्ते । पुरा । चित् ।
मरुत्ऽभिः । उग्रः । पृतनासु । साळ्हा । मरुत्ऽभिः । इत् । सनिता । वाजम् । अर्वा ॥ २३ ॥

हे मरुतः यूयं भूरि भूरीणि बहूनि पित्र्याणि अस्मत्पितृसंबन्धीनि धनदानादीनि कर्माणि चक्र कृतवन्तो भवत। पुरा चित् पूर्वकालेऽपि वः युष्माकम् उक्थानि प्रशस्यानि यानि कर्माणि प्रशस्यन्ते प्रख्यायन्ते तानि चक्रेति संबन्धः। उग्रः ओजस्वी पृतनासु युद्धेषु मरुद्भिः युष्माभिर्हेतुभिः साळ्हा शत्रूणामभिभविता भवति। मरुद्भिरित् मरुद्भिर्युष्माभिरेव हेतुभिः अर्वा स्तोत्रैरभिगन्ता वाजम् अन्नं सनिता संभक्ता भवति। यद्वा अर्वाश्वो वाजं युद्धं सनिता भवति ॥

अस्मे वीरो मरुतः शुष्म्यस्तु जनानां यो असुरो विधर्ता ।
अपो येन सुक्षितये तरेमाध स्वमोको अभि वः स्याम ॥ २४ ॥

---

1. घ—कामानां वर्षितारो।

अस्मे इति॑ । वी॒रः । म॒रु॒तः॒ । शु॒ष्मी । अ॒स्तु॒ । जना॑नाम् । यः । असु॑रः । वि॒ऽध॒र्ता ।
अ॒पः । येन॑ । सु॒ऽक्षि॒तये॑ । तरे॑म । अध॑ । स्वम् । ओकः॑ । अ॒भि । वः॒ । स्या॒म ॥ २४ ॥

हे ᵛमरुतः ᵛअस्मे अस्माकं ᵛवीरः पुत्रः ᵛशुष्मी ᵛअस्तु बलवान् भवतु । ᵛअसुरः प्रज्ञावान्[1] ᵛयः ᵛजनानां शत्रूणां ᵛविधर्ता विधारकः । ᵛयेन पुत्रेण वयं ᵛसुक्षितये सुष्ठु निवासाय ᵛअपः आप्नुवतः शत्रून् ᵛतरेम हिंसेम । स पुत्रो बलवानस्त्विति पूर्वेणान्वयः । ᵛअध अपि च ᵛवः युष्मदीया वयं ᵛस्वमोकः आत्मीयं स्थानम् ᵛअभि ᵛस्याम आतिष्ठेम ॥

तन्न॒ इन्द्रो॒ वरु॑णो मि॒त्रो अ॒ग्निराप॒ ओष॑धीर्व॒निनो॑ जुषन्त ।
शर्म॑न्त्स्याम म॒रुता॑मु॒पस्थे॑ यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ २५ ॥

तत् । नः॒ । इन्द्रः॑ । वरु॑णः । मि॒त्रः । अ॒ग्निः । आपः॑ । ओष॑धीः । व॒निनः॑ । जु॒ष॒न्त॒ ।
शर्म॑न् । स्या॒म॒ । म॒रुता॑म् । उ॒पऽस्थे॑ । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । नः॒ ॥ २५ ॥

पूर्वं व्याख्यातेयम् । अक्षरार्थस्तु । इन्द्रादयो देवा अस्मदीयं स्तोत्रं सेवन्ताम् । मरुतामुपस्थाने वर्तमाना वयं सुखे स्याम । हे मरुतः यूयं सर्वदास्मानविनाशैः पालयत ॥   ॥ २६ ॥

'मध्वो वः' इति सप्तर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं मरुद्देवताकम् । 'मध्वः सप्त' इत्यनुक्रान्तम् । दशरात्रे षष्ठेऽहन्याग्निमारुत इदं मारुतनिविद्धानम् । सूत्रितं च– 'मध्वो वो नाम स प्रत्नथेत्याग्निमारुतम्' ( आश्व. श्रौ. ८. ८ ) इति ॥

मध्वो॑ वो॒ नाम॒ मारु॑तं यजत्राः॒ प्र य॒ज्ञेषु॒ शव॑सा मदन्ति ।
ये रे॒जय॑न्ति॒ रोद॑सी चिदु॒र्वी पिन्व॒न्त्युत्सं॒ यदया॑सुरु॒ग्राः ॥ १ ॥

मध्वः॑ । वः॒ । नाम॑ । मारु॑तम् । य॒ज॒त्राः॒ । प्र । य॒ज्ञेषु॑ । शव॑सा । म॒द॒न्ति॒ ।
ये । रे॒जय॑न्ति । रोद॑सी॒ इति॑ । चि॒त् । उ॒र्वी इति॑ । पिन्व॑न्ति । उत्स॑म् । यत् । अया॑सुः । उ॒ग्राः ॥ १ ॥

हे ᵛयजत्राः यजनीया मरुतः ᵛवः युष्मदीयं ᵛमारुतं मरुत्संबन्धि ᵛनाम नामधेयं ᵛमध्वः मधवो मादयितारः स्तोतारः ᵛयज्ञेषु यागेषु ᵛशवसा बलेन ᵛप्र ᵛमदन्ति प्रकर्षेण स्तुवन्ति । उच्चैः स्तुवन्तीत्यर्थः । ᵛये मरुतः ᵛउर्वी विस्तीर्णे ᵛरोदसी ᵛचित् द्यावापृथिव्यावपि ᵛरेजयन्ति कम्पयन्ति किंच ᵛउत्सं मेघं ᵛपिन्वन्ति वर्षयन्ति ᵛउग्राः उद्गूर्णाः[2] ᵛयत् ये मरुतः ᵛअयासुः यान्ति सर्वत्र गच्छन्ति । तेषां मरुतां युष्माकं नाम प्र मदन्तीति पूर्वेणान्वयः ॥

नि॒चे॒तारो॒ हि म॒रुतो॑ गृ॒णन्तं॑ प्रणे॒तारो॒ यज॑मानस्य॒ मन्म॑ ।
अ॒स्माक॑म॒द्य वि॒दथे॑षु ब॒र्हिरा वी॒तये॑ सदत पिप्रिया॒णाः ॥ २ ॥

नि॒ऽचे॒तारः॑ । हि । म॒रुतः॑ । गृ॒णन्त॑म् । प्र॒ऽने॒तारः॑ । यज॑मानस्य । मन्म॑ ।
अ॒स्माक॑म् । अ॒द्य । वि॒दथे॑षु । ब॒र्हिः । आ । वी॒तये॑ । स॒द॒त॒ । पि॒प्रि॒या॒णाः ॥ २ ॥

ये ᵛमरुतः ᵛगृणन्तं स्तुवन्तं जनं ᵛनिचेतारो ᵛहि मृगयमाणा भवन्ति खलु अपि च ᵛयजमानस्य ᵛमन्म अभिमतं कामं ᵛप्रणेतारः च भवन्ति । अपरोऽर्धर्चः प्रत्यक्षकृतः । हे मरुतः

---

१. ख-घ-ङ-न-भ-प्रजावान् ।   २. ख–उद्गूर्णबलाः ।

यूयं ᵛपिप्रियाणाः प्रीयमाणाः सन्तः ᵛअद्य अस्मिन् दिवसे ᵛअस्माकं ᵛविदथेषु यज्ञेषु ᵛवीतये सोमस्य भक्षणाय ᵛबर्हिः[1] बर्हिषि कुशमये ᵛआ ᵛसदत आसीदत उपविशत ॥

नैतावदुन्ये मुरुतो यथेमे भ्राजन्ते रुक्मैरायुधैस्तनूभिः ।
आ रोदसी विश्वपिशः पिशानाः समानमञ्ज्यञ्जते शुभे कम् ॥ ३ ॥

न । एतावत् । अन्ये । मरुतः । यथा । इमे । भ्राजन्ते । रुक्मैः । आयुधैः । तनूभिः ।
आ । रोदसी इति । विश्वऽपिशः । पिशानाः । समानम् । अञ्जि । अञ्जते । शुभे । कम् ॥ ३ ॥

ᵛइमे ईदृशाः ᵛमरुतः ᵛयथा यत्परिमाणं धनादिकं ददति ᵛअन्ये मरुद्व्यतिरिक्ता देवाः ᵛएतावत् धनादिकं ᵛन दद्युरित्यर्थः। ते च ᵛरुक्मैः रोचमानैराभरणैः ᵛआयुधैः स्वकीयास्त्रैः ᵛतनूभिः आत्मीयैः केवलैरङ्गैश्च ᵛभ्राजन्ते सर्वदा भासन्ते। कश्चिदेकवाक्यतामाह। यथेमे मरुतो रुक्मादिभिर्भ्राजन्ते नैतावदेतद्व्यतिरिक्ता भ्राजन्त इति। अपि च ᵛरोदसी द्यावापृथिव्यौ ᵛपिशानाः प्रकाशयन्तः ᵛविश्वपिशः व्याप्तदीप्तय एवंभूताः मरुतः ᵛशुभे शोभायै[2] ᵛसमानं सदृशरूपम् ᵛअञ्जि आभरणम् ᵛआ ᵛअञ्जते स्वकीयावयवेष्वभिव्यक्तीकुर्वन्ति। ᵛकम् इति पूरणः ॥

ऋधक्सा वो मरुतो दिद्युदस्तु यद्व आगः पुरुषता कराम ।
मा वस्तस्यामपि भूमा यजत्रा अस्मे वो अस्तु सुमतिश्चनिष्ठा ॥ ४ ॥

ऋधक् । सा । वः । मरुतः । दिद्युत् । अस्तु । यत् । वः । आगः । पुरुषता । कराम ।
मा । वः । तस्याम् । अपि । भूम । यजत्राः । अस्मे इति । वः । अस्तु । सुऽमतिः । चनिष्ठा ॥ ४ ॥

हे ᵛमरुतः ᵛवः युष्मदीया ᵛसा प्रसिद्धा ᵛदिद्युत् हेतिः ᵛऋधक् ᵛअस्तु अस्मत्तः पृथग्भवतु। ᵛयत् यद्यपि वयं ᵛवः युष्माकम् ᵛआगः अपराधं ᵛपुरुषता पुरुषतया मनुष्यत्वेन ᵛकराम करवाम। मनुष्याणां हि प्रमादः सुलभ इत्यर्थः। हे ᵛयजत्राः यजनीया मरुतः ᵛवः युष्मदीयायां ᵛतस्यां दिद्युति ᵛअपि[3] ईषदपि ᵛमा ᵛभूम। ᵛचनिष्ठा अन्नवत्तमा। अतिशयेनान्नप्रदेत्यर्थः। ᵛवः युष्मदीया ᵛसुमतिः अनुग्रहबुद्धिः ᵛअस्मे अस्मासु ᵛअस्तु ॥

कृते चिदत्र मुरुतो रणन्तानवद्यासः शुचयः पावकाः ।
प्र णोऽवत सुमतिभिर्यजत्राः प्र वाजेभिस्तिरत पुष्यसे नः ॥ ५ ॥

कृते । चित् । अत्र । मरुतः । रणन्त । अनवद्यासः । शुचयः । पावकाः ।
प्र । नः । अवत । सुमतिऽभिः । यजत्राः । प्र । वाजेभिः । तिरत । पुष्यसे । नः ॥ ५ ॥

ᵛअत्र अस्मिन् ᵛकृते ᵛचित् अस्मदीये यज्ञकर्मण्येव ᵛमरुतो ᵛरणन्त रमन्ताम्। कीदृशा मरुतः। ᵛअनवद्यासः अनिन्दिताः ᵛशुचयः दीप्तियुक्ताः ᵛपावकाः शोधका एवंभूता इति। किंच हे मरुतः ᵛयजत्राः यजनीया यूयं ᵛनः अस्मान् ᵛसुमतिभिः अनुग्रहबुद्धिभिः सुष्टुतिभिर्हेतुभिर्वा ᵛप्र ᵛअवत प्रकर्षेण पालयत। तथा ᵛनः अस्मान् ᵛवाजेभिः वाजैरन्नैः ᵛपुष्यसे पोषार्थं ᵛप्र ᵛतिरत प्रवर्धयत ॥

---

१. ख-क्ष-त-न-भ-श–'बर्हिः' नास्ति। २. ख-श–शोभनायै। ३. त–'अपि' नास्ति।

उत स्तुतासो मरुतो व्यन्तु विश्वेभिर्नामभिर्नरो हवींषि ॥
ददात नो अमृतस्य प्रजायै जिगृत रायः सूनृता मघानि ॥ ६ ॥

उत । स्तुतासः । मरुतः । व्यन्तु । विश्वेभिः । नामऽभिः । नरः । हवींषि ।
ददात । नः । अमृतस्य । प्रऽजायै । जिगृत । रायः । सूनृता । मघानि ॥ ६ ॥

ᵛउत अपि च ᵛस्तुतासः एवमस्माभिः स्तुताः ᵛमरुतः ᵛहवींषि ᵛव्यन्तु भक्षयन्तु । कीदृशाः । ᵛविश्वेभिः विश्वैः ᵛनामभिः उदकैः सहिताः ᵛनरः नेतारः । शेषः प्रत्यक्षस्तुतः[1] । हे मरुतः ᵛनः अस्मदीयायै ᵛप्रजायै संततये ᵛअमृतस्य अमृतमुदकं ᵛददात दत्त । तथा हविषो दातुर्यजमानस्य ᵛसूनृता सूनृतानि सुष्ठु नृत्यन्ति शोभनयोग्यानि[2] ᵛमघानि धनानि ᵛजिगृत उद्गिरत प्रयच्छतेत्यर्थः ॥

आ स्तुतासो मरुतो विश्व ऊती अच्छा सूरीन्त्सर्वताता जिगात ।
ये नस्त्मना शतिनो वर्धयन्ति यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

आ । स्तुतासः । मरुतः । विश्वे । ऊती । अच्छ । सूरीन् । सर्वऽताता । जिगात ।
ये । नः । त्मना । शतिनः । वर्धयन्ति । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

हे ᵛमरुतः ᵛस्तुतासः एवमस्माभिः स्तुताः ᵛविश्वे सर्वे यूयम् ᵛऊती ऊत्या रक्षया सहिताः ᵛसूरीन् स्तोतॄन् ᵛअच्छ अभिलक्ष्य ᵛसर्वताता सर्वतातौ यज्ञे ᵛआ ᵛजिगात आगच्छत । ᵛये मरुतः ᵛत्मना आत्मनैव ᵛनः अस्मान् ᵛशतिनः शतसंख्याकान् ᵛवर्धयन्ति । यथा वयं पुत्रपौत्रादिभिः शतिनो भवेम तथा वर्धयन्तीत्यर्थः । ते यूयमा जिगातेति पूर्वेण संबन्धः । एवंभूता मरुतः यूयं सर्वदा अस्मान् पालयत ॥ ॥ २७ ॥

‘ प्र साकमुक्षे ’ इति षडृचं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं मरुद्देवताकम् । अनुक्रान्तं च—‘ प्र साकमुक्षे षट् ’ इति । गतो विनियोगः ॥

प्र साकमुक्षे अर्चता गणाय यो दैव्यस्य धाम्नस्तुविष्मान् ।
उत क्षोदन्ति रोदसी महित्वा नक्षन्ते नाकं निर्ऋतेरवंशात् ॥ १ ॥

प्र । साकम्ऽउक्षे । अर्चत । गणाय । यः । दैव्यस्य । धाम्नः । तुविष्मान् ।
उत । क्षोदन्ति । रोदसी इति । महिऽत्वा । नक्षन्ते । नाकम् । निःऽऋतेः । अवंशात् ॥ १ ॥

हे स्तोतारो यूयं ᵛसाकमुक्षे संततं वर्षित्रे ᵛगणाय मरुत्समूहाय ᵛप्र ᵛअर्चत स्तोत्रं प्रोच्चारयत । ᵛयः मरुद्गणः ᵛदैव्यस्य देवसंबन्धिनः ᵛधाम्नः स्वर्गाख्यस्य स्थानस्य ᵛतुविष्मान् वृद्धिमान् भवति । सर्वेभ्यो देवेभ्यः प्रवृद्ध इत्यर्थः । तस्मै[3] गणायेति पूर्वेण संबन्धः । ᵛउत अपि च मरुतः ᵛमहित्वा स्वकीयेन महत्त्वेन सहिताः ᵛरोदसी द्यावापृथिव्यौ ᵛक्षोदन्ति भञ्जन्ति । तथा ᵛनिर्ऋतेः भूमेः ᵛअवंशात् अन्तरिक्षाच्च ᵛनाकं स्वर्गं ᵛनक्षन्ते व्याप्नुवन्ति ॥

---

१. घ–प्रत्यक्षः; ङ–प्रत्यक्षकृतः; झ–प्रत्यक्षस्तुतिः; भ– प्रत्यक्षः स्तुतः । २. त–शोभनयोगानि । ३. त–अस्मै ।

जनूश्चिद्वो मरुतस्त्वेष्येण भीमासस्तुविमन्यवोऽयासः ।
प्र ये महोभिरोजसोत सन्ति विश्वो वो यामन्भयते स्वर्दृक् ॥ २ ॥

जनूः । चित् । वः । मरुतः । त्वेष्येण । भीमासः । तुविऽमन्यवः । अयासः ।
प्र । ये । महःऽभिः । ओजसा । उत । सन्ति । विश्वः । वः । यामन् । भयते । स्वःऽदृक् ॥२॥

हे ᵛभीमासः भीमाः ᵛतुविमन्यवः प्रवृद्धमतयः ᵛअयासः गन्तार इति त्रीणि संबोधनानि। एवंभूता हे ᵛमरुतः ᵛवः युष्माकं ᵛजनूः जन्म ᵛत्वेष्येण दीप्तेन रुद्रेण बभूवेति शेषः। ᵛउत अपि च ᵛये मरुतः ᵛमहोभिः तेजोभिः ᵛओजसा बलेन च ᵛप्र ᵛसन्ति प्रभवन्ति तेषां ᵛवः युष्माकं ᵛयामन् यामनि गमने ᵛविश्वः ᵛस्वर्दृक् सूर्यस्य द्रष्टा सर्वो जीवसमूहः। यद्वा। स्वरन्तरिक्षम्। तत् पश्यतीति वृक्षः स्वर्दृक्। सर्वदोत्तिष्ठन्नित्यर्थः। ᵛभयते बिभेति ॥

बृहद्वयो मघवद्भ्यो दधात जुजोषन्निन्मरुतः सुष्टुतिं नः ।
गतो नाध्वा वि तिराति जन्तुं प्र णः स्पार्हाभिरूतिभिस्तिरेत ॥ ३ ॥

बृहत् । वयः । मघवत्ऽभ्यः । दधात । जुजोषन् । इत् । मरुतः । सुऽस्तुतिम् । नः ।
गतः । न । अध्वा । वि । तिराति । जन्तुम् । प्र । नः । स्पार्हाभिः । ऊतिऽभिः । तिरेत ॥३॥

हे ᵛमरुतः यूयं ᵛमघवद्भ्यः हविर्लक्षणान्नवद्भ्योऽस्मभ्यं ᵛबृहत् महत् ᵛवयः अन्नं ᵛदधात प्रयच्छत। ᵛनः अस्मदीयां ᵛसुष्टुतिं शोभनं स्तोत्रं ᵛजुजोषन्नित् सेवन्तामेव। ᵛगतः मरुद्भिः प्राप्तः ᵛअध्वा मार्गः ᵛजन्तुं प्राणिनं ᵛन ᵛवि ᵛतिराति नाहन्ति। उदकेनाप्याययत्येव। यद्वा। वितिरतिर्वर्धनार्थः। नेति चार्थे। मरुद्भिर्गतो मार्गश्च जन्तुं वर्धयति। तथा ᵛनः अस्मान् ᵛस्पार्हाभिः स्पृहणीयाभिः ᵛऊतिभिः रक्षाभिः ᵛप्र ᵛतिरेत प्रवर्धयते ॥

युष्मोतो विप्रो मरुतः शतस्वी युष्मोतो अर्वा सहुरिः सहस्री ।
युष्मोतः सम्राळुत हन्ति वृत्रं प्र तद्वो अस्तु धूतयो देष्णम् ॥ ४ ॥

युष्माऽऊतः । विप्रः । मरुतः । शतस्वी । युष्माऽऊतः । अर्वा । सहुरिः । सहस्री ।
युष्माऽऊतः । सम्ऽराट् । उत । हन्ति । वृत्रम् । प्र । तत् । वः । अस्तु । धूतयः । देष्णम् ॥४॥

हे ᵛमरुतः ᵛयुष्मोतः युष्माभी रक्षितः ᵛविप्रः स्तोता ᵛशतस्वी शतसंख्योपेतधनवान् भवति। ᵛयुष्मोतः युष्माभी रक्षितः ᵛअर्वा अभिगन्ता ᵛसहुरिः शत्रूणामभिभविता स्तोता ᵛसहस्री सहस्रधनवान् भवति। ᵛयुष्मोतः युष्माभी रक्षितः ᵛसम्राट् साम्राज्ययुक्तो भवति। ᵛउत अपि च ᵛवृत्रं शत्रुं ᵛहन्ति। युष्मद्रक्षको हिनस्ति। हे ᵛधूतयः कम्पयितारो मरुतः ᵛवः युष्माभिर्दत्तं ᵛतत् प्रसिद्धं ᵛदेष्णं धनं ᵛप्र ᵛअस्तु प्रभूतं भवतु ॥

ताँ आ रुद्रस्य मीळ्हुषो विवासे कुविन्नंसन्ते मरुतः पुनर्नः ।
यत्सस्वर्ता जिहीळिरे यदाविरव तदेन ईमहे तुराणाम् ॥ ५ ॥

तान् । आ । रुद्रस्य । मीळ्हुषः । विवासे । कुवित् । नंसन्ते । मरुतः । पुनः । नः ।
यत् । सस्वर्ता । जिहीळिरे । यत् । आविः । अव । तत् । एनः । ईमहे । तुराणाम् ॥ ५ ॥

मीळ्हुषः कामानां वर्षितुः रुद्रस्य ईश्वरस्य पुत्रान् तान् मरुतः आ विवासे अहं होता[1] परिचरामि। ते मरुतः नः अस्मभ्यं कुवित् बहुकृत्वः पुनः भूयः नंसन्ते नमन्ताम्। अभिमुखीभवन्तु। कुविच्छब्देनैव पुनःशब्दार्थस्य लब्धत्वात् पुनःशब्दग्रहणं किमर्थम्। आदरार्थम्। सस्वर्ता अन्तर्हितेनाप्रकाशेन यत् येन एनसा जिहीळिरे मरुतः क्रुध्येयुः आविः प्रकाशेन यत् येनैनसा च जिहीळिरे तुराणां क्षिप्राणां मरुतां संबन्धि तत् उभयम् एनः अपराधम् अव ईमहे स्तोत्रेण वयमपनयामः॥

प्र सा वाचि सुष्टुतिर्मघोनामिदं सूक्तं मरुतो जुषन्त।
आराच्चिद्द्वेषो वृषणो युयोत यूयं पात स्वस्तिभिः सदा नः॥ ६॥

प्र। सा। वाचि। सुऽस्तुतिः। मघोनाम्। इदम्। सुऽउक्तम्। मरुतः। जुषन्त।
आरात्। चित्। द्वेषः। वृषणः। युयोत। यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥ ६॥

मघोनां धनवतां मरुतां संबन्धिनी सुष्टुतिः या शोभना स्तुतिरस्मिन् सूक्ते कृता सा स्तुतिरस्माभिः प्र वाचि प्रोक्तासीत्। मरुतः इदम् इदंभूतं सूक्तं जुषन्त सेवन्ताम्। हे वृषणः कामानां वर्षितारः यूयं द्वेषः द्वेषांसि शत्रून् आराच्चित् दूरादेव युयोत अस्मत्तः पृथक्कुरुत। यूयं नः अस्मान् स्वस्तिभिः सर्वदा रक्षत॥ ॥ २८॥

'य त्रायध्वे' इति द्वादशर्चं चतुर्थं सूक्तम्। अत्रेयमनुक्रमणिका—'यं त्रायध्वे द्वादश त्रिप्रगाथादि नवम्याद्यास्तिस्रो गायत्र्योऽन्त्यानुष्टुब्रौद्री मृत्युविमोचनी' इति। आद्यातृतीयापञ्चम्यो बृहत्यो द्वितीयाचतुर्थीषष्ठ्यः सतोबृहत्यः सप्तम्यष्टम्यावनुक्तत्वात् त्रिष्टुभौ नवमीदशम्येकादश्यो गायत्र्यः। द्वादश्यनुष्टुप् सा च रुद्रदेवताका। शिष्टा मारुत्यः। सूक्तविनियोगो लैङ्गिकः॥

यं त्रायध्व इदमिदं देवासो यं च नयथ।
तस्मा अग्ने वरुण मित्रार्यमन्मरुतः शर्म यच्छत॥ १॥

यम्। त्रायध्वे। इदम्ऽइदम्। देवासः। यम्। च। नयथ।
तस्मै। अग्ने। वरुण। मित्र। अर्यमन्। मरुतः। शर्म। यच्छत॥ १॥

हे देवासः देवाः इदमिदम् इतो भयहेतोः यं स्तोतारं त्रायध्वे पालयध्वे। यं च स्तोतारं नयथ सन्मार्गं प्रापयथ। हे अग्ने वरुण मित्र अर्यमन् हे मरुतः एवंभूता हे देवाः तस्मै स्तोत्रे शर्म सुखं यच्छत दत्त॥

युष्माकं देवा अवसाहनि प्रिय ईजानस्तरति द्विषः।
प्र स क्षयं तिरते वि महीरिषो यो वो वराय दाशति॥ २॥

युष्माकम्। देवाः। अवसा। अहनि। प्रिये। ईजानः। तरति। द्विषः।
प्र। सः। क्षयम्। तिरते। वि। महीः। इषः। यः। वः। वराय। दाशति॥ २॥

हे देवाः युष्माकं युष्मदीयेन अवसा रक्षणेन प्रिये अहनि सर्वेषां देवानां प्रियभूते सुत्याभिधाने दिवसे ईजानः इष्टवान् जनः द्विषः शत्रून् तरति आक्रामति। सः यजमानः क्षयं स्वकीयं निवासं प्र तिरते प्रवर्धयति। यः यजमानः वः युष्मभ्यं महीः

1. य—स्तोता।

महाग्नि वृषः हविर्लक्षणान्यन्नानि वराय निवारणाय[1] यूयं नान्यत्र गच्छत अस्मदीयान्येव हवींषि स्वीकुरुतेति निरोधनं कर्तुं वि दाशति विशेषेण ददाति। अत एव स स्वकीयं निवासं वर्धयतीत्यर्थः ॥

नहि वश्चरमं चन वसिष्ठः परिमंसते ।
अस्माकमद्य मरुतः सुते सचा विश्वे पिबत कामिनः ॥ ३ ॥

नहि । वः । चरमम् । चन । वसिष्ठः । परिऽमंसते ।
अस्माकम् । अद्य । मरुतः । सुते । सचा । विश्वे । पिबत । कामिनः ॥ ३ ॥

वसिष्ठः ऋषिः वः युष्माकं मध्ये चरमं चन अवरमपि नहि परिमंसते वर्जयित्वा न स्तौति। किंतु सर्वानेव युष्मान् स्तौतीत्यर्थः। अद्य अस्मिन् दिने अस्माकम् अस्मदीये सुते सोमेऽभिषुते सति हे मरुतः कामिनः सोमं कामयमानाः विश्वे यूयं सचा संगत्य पिबत पानं कुरुत ॥

नहि व ऊतिः पृतनासु मर्धति यस्मा अराध्वं नरः ।
अभि व आवर्त्सुमतिर्नवीयसी तूयं यात पिपीषवः ॥ ४ ॥

नहि । वः । ऊतिः । पृतनासु । मर्धति । यस्मै । अराध्वम् । नरः ।
अभि । वः । आ । अवर्त् । सुऽमतिः । नवीयसी । तूयम् । यात । पिपीषवः ॥ ४ ॥

हे मरुतः वः युष्मदीया ऊतिः रक्षा पृतनासु युद्धेषु नहि मर्धति न खलु हिनस्ति। शत्रुभिः कृतां हिंसां न सहत इत्यर्थः। हे नरः नेतारः यूयं यस्मै[2] जनाय अराध्वं कामानदध्वं तं जनं न हिनस्तीति संबन्धः। नवीयसी नवतरा वः युष्मदीया सुमतिः अनुग्रहबुद्धिः अभि आवर्त् अस्मानभ्यावर्तताम्। तथा हे पिपीषवः सोमपानकामाः यूयमपि तूयं क्षिप्रं यात आगच्छत ॥

ओ षु घृष्विराधसो यातनान्धांसि पीतये ।
इमा वो हव्या मरुतो ररे हि कं मो ष्वन्यत्र गन्तन ॥ ५ ॥

ओ इति । सु । घृष्विऽराधसः । यातन । अन्धांसि । पीतये ।
इमा । वः । हव्या । मरुतः । ररे । हि । कम् । मो इति । सु । अन्यत्र । गन्तन ॥ ५ ॥

हे घृष्विराधसः परस्परघृष्टानि सुसंहतानि[3] राधांसि येषां ते हे मरुतः यूयम् अन्धांसि सोमलक्षणानि हवींषि पीतये भक्षणार्थं सु सुष्ठु ओ यातन आयात। हि यस्मात् कारणात् हे मरुतः वः युष्मभ्यम् इमा इमानि हव्या हव्यानि हवींषि ररे अहं ददामि अतः कारणात् यूयम् अन्यत्र मो सु गन्तन मा गच्छत ॥

आ च नो बर्हिः सदताविता च नः स्पार्हाणि दातवे वसु ।
अस्रेधन्तो मरुतः सोम्ये मधौ स्वाहेह मादयाध्वै ॥ ६ ॥

---

१. ख–वरणाय। २. ख-ग्र-त-न-भ-श–अस्मै। ३. त४-य–सुसंहितानि।

आ । च । नः । बर्हिः । सदत । अवित । च । नः । स्पार्हाणि । दातवे । वसु ।
अस्रेधन्तः । मरुतः । सोम्ये । मधौ । स्वाहा । इह । मादयाध्वै ॥ ६ ॥

हे मरुतः यूयं ^v^नः अस्मदीये ^v^बर्हिः कुशमये बर्हिषि ^v^आ ^v^सदत ^v^च उपविशत । ^v^स्पार्हाणि स्पृहणीयानि ^v^वसु वसूनि धनानि ^v^दातवे अस्मभ्यं दातुं ^v^नः अस्मान् ^v^अवित ^v^च आगच्छत च । हे ^v^मरुतः ^v^अस्रेधन्तः अहिंसन्तो यूयम् ^v^इह अस्मिन् यज्ञे ^v^मधौ मदकरे ^v^सोम्ये सोमात्मके हविषि ^v^स्वाहा स्वाहाकारेण ^v^मादयाध्वै मादयध्वं माद्यत ॥ ॥ २९ ॥

सस्वश्चिद्धि तन्वः शुम्भमाना आ हंसासो नीलपृष्ठा अपप्तन् ।
विश्वं शर्धो अभितो मा नि षेद नरो न रण्वाः सवने मदन्तः ॥ ७ ॥

सस्वरिति । चित् । हि । तन्वः । शुम्भमानाः । आ । हंसासः । नीलऽपृष्ठाः । अपप्तन् ।
विश्वम् । शर्धः । अभितः । मा । नि । सेद । नरः । न । रण्वाः । सवने । मदन्तः ॥ ७ ॥

^v^सस्वः अन्तर्हिता मरुतः ^v^तन्वः स्वकीयान्यङ्गानि ^v^शुम्भमानाः अलंकरणैः शोभयन्तो मरुतः ^v^नीलपृष्ठाः असितवर्णाः ^v^हंसासः हंसा इव ^v^अपप्तन् आपतन्तु आगच्छन्तु । ^v^विश्वं ^v^शर्धः व्यासो मरुद्गणः ^v^मा माम् ^v^अभितः समन्तात् ^v^नि ^v^षेद निषीदतु । तत्र दृष्टान्तः । ^v^सवने अस्मदीये यज्ञे ^v^मदन्तः हृष्यन्तः ^v^रण्वाः रमणीयाः ^v^नरो ^v^न मनुष्या इव तद्वत् ॥

साकमेधेषु ' मरुद्भ्यः सांतपनेभ्यः ' इत्यस्य ' यो नो मरुतः ' इति पूर्वानुवाक्या ' सांतपना इदम् ' इति याज्या । तथा च सूत्रितं—' सांतपना इदं हविर्यो नो मरुतो अभि दुर्हृणायुः ' ( आश्व. श्रौ. २. १८ ) इति ॥

यो नो मरुतो अभि दुर्हृणायुस्तिरश्चित्तानि वसवो जिघांसति ।
द्रुहः पाशान्प्रति स मुचीष्ट तपिष्ठेन हन्मना हन्तना तम् ॥ ८ ॥

यः । नः । मरुतः । अभि । दुःऽहृणायुः । तिरः । चित्तानि । वसवः । जिघांसति ।
द्रुहः । पाशान् । प्रति । सः । मुचीष्ट । तपिष्ठेन । हन्मना । हन्तन । तम् ॥ ८ ॥

हे ^v^वसवः प्रशस्या हे ^v^मरुतः ^v^नः अस्मदीयानि ^v^चित्तानि ^v^दुर्हृणायुः अशोभनं क्रुध्यन् ^v^तिरः सर्वैस्तिरस्कृतः ^v^यः जनः ^v^अभि ^v^जिघांसति आभिमुख्येन हन्तुमिच्छति ^v^सः जनः ^v^द्रुहः पापानां द्रोग्धुर्वरुणस्य ^v^पाशान् अस्मासु ^v^प्रति ^v^स ^v^मुचीष्ट बध्नीयात् । यूयं ^v^तं जनं ^v^तपिष्ठेन तप्तृतमेन[1] ^v^हन्मना हननसाधनेनायुधेन ^v^हन्तन हत हिंस्त ॥

सांतपना इदं हविर्मरुतस्तज्जुजुष्टन । युष्माकोती रिशादसः ॥ ९ ॥

साम्ऽतपनाः । इदम् । हविः । मरुतः । तत् । जुजुष्टन । युष्माक । ऊती । रिशादसः ॥ ९ ॥

^v^सांतपनाः शत्रूणां संतापका हे ^v^मरुतः ^v^इदं प्रत्यक्षेणोपलभ्यमानं ^v^हविः युष्मभ्यं कल्पितमिति शेषः । हे ^v^रिशादसः रिशतां हिंसतामसितारो रिशानामत्तारो वा यूयं ^v^युष्माक युष्माकम् ^v^ऊती ऊत्या रक्षया ^v^तत् तादृशं हविः ^v^जुजुष्टन सेवध्वम् ॥

---

१. ख-ङ-त२-श—तप्ततमेन ।

'गृहमेधासः' इति गृहमेधीयस्य हविषोऽनुवाक्या। सूत्रितं च—'गृहमेधास आगत प्र बुध्न्या व ईरते महांसि' (आश्व. श्रौ. २. १८) इति॥

गृह॑मेधास॒ आ ग॑त॒ मरु॑तो॒ माप॑ भूतन। युष्मा॒कोती सु॑दानवः॥ १०॥

गृह॑ऽमेधासः। आ। ग॒त॒। मरु॑तः। मा। अप॑। भू॒त॒न॒। यु॒ष्माक॑। ऊ॒ती। सु॒ऽदा॒न॒वः॥ १०॥

^v^गृहमेधासः गृहे क्रियमाणो यज्ञो येषां ते ^v^सुदानवः शोभनदाना हे ^v^मरुतः यूयं ^v^युष्माक युष्माकम् ^v^ऊती ऊत्या रक्षया युक्ताः ^v^आ ^v^गत अस्मदीयं यज्ञं प्रत्यागच्छत। हे मरुतः ^v^माप ^v^भूतन अपगता मा भवत। 'भू प्राप्तौ' इति धातुः॥

वैश्वदेवे पर्वणि मारुतस्यानुवाक्या 'इहेह वः' इत्येषा। सूत्रितं च—इहेह वः स्वतवसः प्र चित्रमर्कं गृणते तुराय' (आश्व. श्रौ. २. १६) इति॥

इ॒हेह॑ वः स्वतवसः॒ कव॑यः॒ सूर्य॑त्वचः। य॒ज्ञं म॑रुत॒ आ वृ॑णे॥ ११॥

इ॒ह॒ऽइ॑ह। व॒ः। स्व॒ऽत॒व॒सः॒। कव॑यः। सूर्य॑ऽत्वचः। य॒ज्ञम्। म॒रु॒तः॒। आ। वृ॒णे॥ ११॥

हे ^v^स्वतवसः स्वायत्तबलाः स्वयं प्रवृद्धा वा हे ^v^कवयः क्रान्तदर्शिनः ^v^सूर्यत्वचः सूर्यवर्णा एवंभूता हे ^v^मरुतः यूयम् ^v^इहेह इहैवास्मदीयं ^v^यज्ञम् ^v^आ ^v^वृणे आभजामि कल्पयामि॥

त्र्य॑म्बकं यजामहे सु॒गन्धिं॑ पुष्टि॒वर्ध॑नम्।
उ॒र्वा॒रु॒कमि॑व॒ बन्ध॑नान्मृ॒त्योर्मु॑क्षीय॒ माऽमृता॑त्॥ १२॥

त्र्य॑म्बकं यजामहे सु॒गन्धिं॑ पुष्टि॒वर्ध॑नम्। उ॒र्वा॒रु॒कमि॑व॒ बन्ध॑नान्मृ॒त्योर्मु॑क्षीय॒ मामृता॑त्॥ १२॥

अत्र शौनकः—'त्रिरात्रं नियतोऽपोष्य श्रपयेत्पायसं चरुम्। तेनाहुतिशतं पूर्णं जुहुयाच्छंसितव्रतः॥ समुद्दिश्य महादेवं त्र्यम्बकं त्र्यम्बकेत्यृचा। एतत्पर्वशतं कृत्वा जीवेद्वर्षशतं सुखी' (ऋग्वि. २. ३१४–१५)॥ [त्रयाणां ब्रह्मविष्णुरुद्राणामम्बकं पितरं ^v^यजामहे इति शिष्यसमाहितो वसिष्ठो ब्रवीति। किंविशिष्टमित्यत आह। ^v^सुगन्धिं प्रसारितपुण्यकीर्तिम्। पुनः किंविशिष्टम्। ^v^पुष्टिवर्धनं जगद्बीजम्। उरुशक्तिमित्यर्थः। उपासकस्य वर्धनम्। अणिमादिशक्तिवर्धनम्। अतस्त्वत्प्रसादादेव ^v^मृत्योः मरणात् संसाराद्वा ^v^मुक्षीय मोचय। यथा बन्धनादुर्वारुकं कर्कटीफलं मुच्यते तद्वन्मरणात् संसाराद्वा मोचय। किं मर्यादीकृत्य। ^v^आमृतात्। सायुज्यतामोक्षपर्यन्तमित्यर्थः। अथ तैत्तिरीयभाष्ये (तै. सं. १.८.६.२)—"शोभनः शरीरगन्धः पुण्यगन्धो वा यस्यासौ सुगन्धिः। 'यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति' (तै. आ. १०. ९) इति श्रुतेः। पुष्टिं शरीरधनादिविषयां वर्धयतीति पुष्टिवर्धनः। तादृशं त्र्यम्बकं यजामहे पूजयामः। लोके यथोर्वारुकफलानि बन्धनाद्वृन्तात् स्वयमेव मुच्यन्ते तद्वदहं त्र्यम्बकप्रसादेन मृत्योर्मुक्षीय मोचनयुक्तो भूयासम्। अमृताच्चिरजीवितात् स्वर्गादेर्वा मा मुक्षीय। चतुर्थपादार्थे मन्त्रस्य तात्पर्यातिशयं दर्शयति–'त्र्यम्बकं यजामह इत्याह मृत्योर्मुक्षीय मामृतादिति वावैतदाह' (तै.आ. १.६.१०.५) इति"॥] ॥३०॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पञ्चमाष्टके चतुर्थोऽध्यायः समाप्तः॥

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
व्याख्याय निगमाभिज्ञः पञ्चमस्य चतुर्थकम्।
अध्यायं सायणाचार्यः पञ्चमं व्याकरोत्यथ ॥

तत्र 'यदद्य सूर्य' इति द्वादशर्चं पञ्चमं सूक्तम्। अत्रानुक्रमणिका—'यदद्य मैत्रावरुणं तु वै सौर्याद्या' इति। मण्डलद्रष्टा वसिष्ठ ऋषिः। अनुक्तत्वात्त्रिष्टुप् छन्दः। 'तु वै' इत्युक्तत्वादेतदादीनि सप्त सूक्तानि मित्रावरुणदेवत्यानि आद्या सूर्यदेवत्या। विनियोगो लैङ्गिकः ॥

यदद्य सूर्य ब्रवोऽनागा उद्यन्मित्राय वरुणाय सत्यम्।
वयं देवत्रादिते स्याम तव प्रियासो अर्यमन्गृणन्तः ॥ १ ॥

यत्। अद्य। सूर्य। ब्रवः। अनागाः। उत्ऽयन्। मित्राय। वरुणाय। सत्यम्।
वयम्। देवऽत्रा। अदिते। स्याम। तव। प्रियासः। अर्यमन्। गृणन्तः ॥ १ ॥

हे vसूर्य सर्वस्य प्रेरकैतन्नामक देव vउद्यन् उदयंस्त्वं vयत् यदि vअद्य अस्मिन्ननुष्ठानकाले अस्मान् vब्रवः ब्रूयाः। किमिति। vअनागाः अनागस इति। एतेऽपापा इति यदि देवेषु मध्ये ब्रूयाः तर्हि vवयं हे vअदिते अदीन देव vदेवत्रा देवेषु देवानां मध्ये vमित्राय vवरुणाय च vसत्यम् अवितथं vस्याम अनागसो भवेम। किंच हे vअर्यमन् दातः त्वां vगृणन्तः स्तुवन्तः vतव vप्रियासः प्रियाः स्याम त्वत्प्रेमविषया भवेम। यद्वा। उत्तरार्धं एकं वाक्यम्। हे अदिते हे अर्यमन् उक्तलक्षण देव वयं देवेषु मध्ये त्वां गृणन्तस्तवैव प्रियाः स्याम। यदि मां देवेष्वपापं ब्रूयास्तर्हि तैरयमनपराधीत्यनुगृहीतस्त्वां स्तुत्वा तव प्रियो भवेयमित्यर्थः ॥

एष स्य मित्रावरुणा नृचक्षा उभे उदेति सूर्यो अभि ज्मन्।
विश्वस्य स्थातुर्जगतश्च गोपा ऋजु मर्तेषु वृजिना च पश्यन् ॥ २ ॥

एषः। स्यः। मित्रावरुणा। नृऽचक्षाः। उभे इति। उत्। एति। सूर्यः। अभि। ज्मन्।
विश्वस्य। स्थातुः। जगतः। च। गोपाः। ऋजु। मर्तेषु। वृजिना। च। पश्यन् ॥ २ ॥

हे vमित्रावरुणा vएषः पुरतो दृश्यमानः vस्यः सः सर्वैः स्तुत्यत्वेन प्रसिद्धः vनृचक्षाः[1] नृणां मनुष्याणां द्रष्टा[1] vसूर्यः vउभे द्यावापृथिव्यौ vअभि अभिलक्ष्य vउदेति vज्मन् अन्तरिक्षे गच्छन्। स विशेष्यते। vविश्वस्य सर्वस्य vस्थातुः स्थावरस्य vजगतः जङ्गमस्य vच vगोपाः गोपायिता। किं कुर्वन्। vमर्तेषु मनुष्येषु स्थितानि[2] vऋजु ऋजूनि सुकृतानि vवृजिना वृजिनानि पापानि vच vपश्यन् ॥

अयुक्त सप्त हरितः सधस्थाद्या ईं वहन्ति सूर्यं घृताचीः।
धामानि मित्रावरुणा युवाकुः सं यो यूथेव जनिमानि चष्टे ॥ ३ ॥

अयुक्त। सप्त। हरितः। सधऽस्थात्। याः। ईम्। वहन्ति। सूर्यम्। घृताचीः।
धामानि। मित्रावरुणा। युवाकुः। सम्। यः। यूथाऽइव। जनिमानि। चष्टे ॥ ३ ॥

---

१. ख-क्ष-त-न-भ-श–'नृचक्षा......द्रष्टा' नास्ति। २. क्ष-त२-३-४-न-श–स्विधानि; त१–स्विधा।

हे ᵛमित्रावरुणा मित्रावरुणौ युवयोरागमनाय ᵛसधस्थात् सहस्थानादन्तरिक्षात् अन्तरिक्षे ᵛसप्त सर्पणस्वभावान् एतत्संख्याकान् वा ᵛहरितः हरिद्वर्णानश्वान् ᵛअयुक्त युक्तवान् रथे। ‘ हरित आदित्यस्य ’ इति हि निरुक्तम्। ᵛयाः हरितः ᵛईम् एनम् ᵛसूर्यं देवं ᵛघृताचीः घृताञ्चना उदकवत्यः। उदकप्रदा इत्यर्थः। तादृश्यः सत्यो ᵛवहन्ति ता अयुक्त। अथोदितः सन् ᵛधामानि स्थानानि लोकान् ᵛजनिमानि जन्मानि। जन्मभाजः प्राणिन इत्यर्थः। तांश्च ᵛयुवाकुः युवां कामयमानः ᵛयः देवः ᵛसं ᵛचष्टे सम्यक् पश्यति ᵛयूथेव गोयूथानीव यूथपाः। स यथा सर्वं यूथं तदवान्तरगोव्यक्तिं च सम्यक् पश्यति तद्वल्लोकान् प्राणिनश्च पश्यति ॥

उद्वां पृक्षासो मधुमन्तो अस्थुरा सूर्यो अरुहच्छुक्रमर्णः ।
यस्मा आदित्या अध्वनो रदन्ति मित्रो अर्यमा वरुणः सजोषाः ॥ ४ ॥

उत् । वाम् । पृक्षासः । मधुऽमन्तः । अस्थुः । आ । सूर्यः । अरुहत् । शुक्रम् । अर्णः ।
यस्मै । आदित्याः । अध्वनः । रदन्ति । मित्रः । अर्यमा । वरुणः । सऽजोषाः ॥ ४ ॥

हे मित्रावरुणौ ᵛवां युवयोरर्थाय ᵛपृक्षासः अन्नानि चरुपुरोडाशादीनि ᵛमधुमन्तः माधुर्योपेतानि तत्साधनान्योषध्यादीनि वा ᵛउत् ᵛअस्थुः संपादितान्यासन्। ᵛसूर्यः च ᵛशुक्रं दीप्तम् ᵛअर्णः अर्णवमन्तरिक्षम् ᵛआ ᵛअरुहत् आरोहति। ᵛयस्मै सूर्याय तद्गमनार्थम् ᵛआदित्याः अदितेः पुत्रा देवाः ᵛअध्वनः मार्गान् ᵛरदन्ति विलिखन्ति साधयन्ति। के ते। ᵛमित्रः ᵛअर्यमा ᵛवरुणः च एते त्रयोऽपि देवाः सजोषसः समानप्रीतयः सन्तः। स देव आरुहदिति ॥

इमे चेतारो अनृतस्य भूरेर्मित्रो अर्यमा वरुणो हि सन्ति ।
इम ऋतस्य वावृधुर्दुरोणे शग्मासः पुत्रा अदितेरदब्धाः ॥ ५ ॥

इमे । चेतारः । अनृतस्य । भूरेः । मित्रः । अर्यमा । वरुणः । हि । सन्ति ।
इमे । ऋतस्य । ववृधुः । दुरोणे । शग्मासः । पुत्राः । अदितेः । अदब्धाः ॥ ५ ॥

ᵛइमे ᵛमित्रः ᵛअर्यमा ᵛवरुणः च त्रयोऽपि ᵛअनृतस्य पापस्य ᵛभूरेः प्रभूतस्य ᵛचेतारः हन्तारः ᵛसन्ति भवन्ति ᵛहि। ᵛइमे मित्रादयः ᵛऋतस्य यज्ञस्य ᵛदुरोणे गृहे ᵛववृधुः वर्धन्ते हविषा स्तुत्या च। कीदृशास्ते। ᵛशग्मासः सुखकराः ᵛअदितेः ᵛपुत्राः ᵛअदब्धाः अहिंसिताः ॥

इमे मित्रो वरुणो दूळभासोऽचेतसं चिच्चितयन्ति दक्षैः ।
अपि क्रतुं सुचेतसं वतन्तस्तिरश्चिदंहः सुपथा नयन्ति ॥ ६ ॥

इमे । मित्रः । वरुणः । दुःऽदभासः । अचेतसम् । चित् । चितयन्ति । दक्षैः ।
अपि । क्रतुम् । सुऽचेतसम् । वतन्तः । तिरः । चित् । अंहः । सुऽपथा । नयन्ति ॥ ६ ॥

ᵛइमे आदित्याः ᵛमित्रः ᵛवरुणः च। एतद्द्वयमर्यम्णोऽप्युपलक्षणम्। एते ᵛदूळभासः दुर्दभाः अनभिभाव्याः ᵛअचेतसं ᵛचित् अप्रज्ञानमनुष्ठानविषयज्ञानरहितमपि ᵛदक्षैः सामर्थ्यैः[1] ᵛचितयन्ति। ᵛअपि[1] ᵛसुचेतसं प्रकृष्टज्ञानवन्तं[2] पुरुषं ᵛक्रतुं कर्तारं कर्मानुष्ठानवन्तं ᵛवतन्तः[3] गच्छन्तः ᵛअंहः

१. ख-ङ्ग-त-न-भ-श-अपि क्रतुं; घ-सामर्थ्यैश्चितयंति। २. ङ्ग-प्रज्ञानवंतं; श-प्रकृतज्ञानवंतं। ३. ख-ङ्ग-त-न-भ-श-‘ वतन्तः ’ नास्ति।

दुष्कृतं ᵛतिरश्चित् तिरो नयन्तोऽस्मान् ᵛसुपथा शोभनेन मार्गेण ᵛनयन्ति प्रापयन्त्यभिमतं पदं स्वर्गादिकं वा ॥ ॥ १ ॥

इमे दिवो अनिमिषा पृथिव्याश्चिकित्वांसो अचेतसं नयन्ति ।
प्रव्राजे चिन्नद्यो गाधमस्ति पारं नो अस्य विष्पितस्य पर्षन् ॥ ७ ॥

इमे । दिवः । अनिऽमिषा । पृथिव्याः । चिकित्वांसः । अचेतसम् । नयन्ति ।
प्रऽव्राजे । चित् । नद्यः । गाधम् । अस्ति । पारम् । नः । अस्य । विऽस्पितस्य । पर्षन् ॥७॥

ᵛइमे मित्रादयः ᵛदिवः द्युलोकस्य ᵛपृथिव्याः च संबन्धिनः ᵛअनिमिषा अनिमेषेण[1] सर्वदा ᵛचिकित्वांसः जानन्तः । कम् । ᵛअचेतसम् अज्ञानम् । ᵛनयन्ति प्रापयन्ति कर्माणि । ᵛप्रव्राजे ᵛचित् प्रवणेऽप्यत्यन्तनिम्नेऽपि देशे ᵛनद्यः नद्याः ᵛगाधमस्ति भवति युष्मत्सामर्थ्यात् । ते महान्तः ᵛनः अस्माकम् ᵛअस्य ᵛविष्पितस्य व्याप्तितस्य(?) कर्मणः ᵛपारं ᵛपर्षन् पारयन्तु नयन्तु ॥

यद्गोपावददितिः शर्म भद्रं मित्रो यच्छन्ति वरुणः सुदासे ।
तस्मिन्ना तोकं तनयं दधाना मा कर्म देवहेळनं तुरासः ॥ ८ ॥

यत् । गोपावत् । अदितिः । शर्म । भद्रम् । मित्रः । यच्छन्ति । वरुणः । सुऽदासे ।
तस्मिन् । आ । तोकम् । तनयम् । दधानाः । मा । कर्म । देवऽहेळनम् । तुरासः ॥ ८ ॥

ᵛयत् ᵛशर्म सुखं गृहं वा ᵛगोपावत् रक्षणोपेतं ᵛभद्रं स्तुत्यम् ᵛअदितिः अदीनोऽर्यमादितिर्वा ᵛमित्रः ᵛवरुणः च एते त्रयो देवाः ᵛसुदासे सुदानाय मह्यं ᵛयच्छन्ति प्रयच्छन्ति ᵛतस्मिन् शर्मणि ᵛतोकं पुत्रं ᵛतनयं तत्पुत्रादिकम् । अथवा तनयशब्दोऽपत्यसामान्यवचनः । तोकं बलवन्तं पुत्रम् ᵛआ सर्वतः ᵛदधानाः धारयन्तो वयं हे ᵛतुरासः गमनाय त्वरमाणाः ᵛदेवहेळनं देवानां मित्रादीनां कोपनं ᵛमा ᵛकर्म मा कार्ष्म ॥

अव वेदिं होत्राभिर्यजेत रिपः काश्चिद्वरुणध्रुतः सः ।
परि द्वेषोभिरर्यमा वृणक्तूरुं सुदासे वृषणा उ लोकम् ॥ ९ ॥

अव । वेदिम् । होत्राभिः । यजेत । रिपः । काः । चित् । वरुणऽध्रुतः । सः ।
परि । द्वेषःऽभिः । अर्यमा । वृणक्तु । उरुम् । सुऽदासे । वृषणौ । ऊँ इति । लोकम् ॥९॥

हे मित्रादयः ᵛसः अस्मद्द्वेषी ᵛवेदिं यागसाधनं ᵛहोत्राभिः । वाङ्नामैतत् । वाग्रूपाभिः स्तुतिभिः धर्मम् ᵛअव ᵛयजेत । वेद्यां कर्माणि कुर्वन् देवांश्च स्तुयादित्यर्थः । अवपूर्वो यजतिस्त्यागार्थः । स किं प्राप्नुयादिति तत्राह । ᵛवरुणध्रुतः वरुणेन त्वया हिंसितः सः ᵛकाश्चित् ᵛरिपः हिंसाः प्राप्नुयादिति शेषः । अस्मांस्तु ᵛअर्यमा देवः ᵛद्वेषोभिः द्वेष्टृभी रक्षःप्रभृतिभिः ᵛपरि ᵛवृणक्तु वर्जयतु । ᵛउरुं विस्तीर्णं ᵛलोकं स्थानं ᵛसुदासे शोभनदानाय मह्यं प्रयच्छतं हे ᵛवृषणा वर्षकौ कामानां मित्रावरुणौ ॥

---

१. त—अनिमिषेण ।

सस्वश्चिद्धि समृतिस्त्वेष्येषामपीच्येन सहसा सहन्ते ।
युष्मद्भिया वृषणो रेजमाना दक्षस्य चिन्महिना मृळता नः ॥ १० ॥

सस्वरिति । चित् । हि । सम्ऽऋतिः । त्वेषी । एषाम् । अपीच्येन । सहसा । सहन्ते ।
युष्मत् । भिया । वृषणः । रेजमानाः । दक्षस्य । चित् । महिना । मृळत । नः ॥ १० ॥

एषां मित्रादीनां समृतिः संगतिः संहतिर्वा सस्वः अन्तर्हिता निगूढा त्वेषी दीप्ता च भवति । तादृशा एते अपीच्येन । एतदप्यन्तर्हितनाम । निगूढेन सहसा बलेन सहन्ते अभिभवन्त्यस्मद्द्वेष्टॄन् । किंच हे वृषणः अभिमतवर्षका मित्रादयः युष्मत् युष्मत्तः भिया भीत्या रेजमानाः कम्पमाना भवन्ति विरोधिनः । यस्मादेवं तस्मात् दक्षस्य युष्माकं बलस्य महिना महिम्ना महत्त्वेन नः अस्मभ्यं मृळत उपदयां कुरुत ॥

यो ब्रह्मणे सुमतिमायजाते वाजस्य सातौ परमस्य रायः ।
सीक्षन्त मन्युं मघवानो अर्य उरु क्षयाय चक्रिरे सुधातु ॥ ११ ॥

यः । ब्रह्मणे । सुऽमतिम् । आऽयजाते । वाजस्य । सातौ । परमस्य । रायः ।
सीक्षन्त । मन्युम् । मघऽवानः । अर्यः । उरु । क्षयाय । चक्रिरे । सुऽधातु ॥ ११ ॥

यः यजमानः ब्रह्मणे परिवृढस्वकर्मणे युष्मत्स्तोत्ररूपाय सुमतिं शोभनां बुद्धिम् आयजाते आयजते । यजतिरत्र दाने । ददाति करोति । किमर्थम् । वाजस्य अन्नस्य सातौ दाने निमित्ते परमस्य उत्कृष्टस्य रायः धनस्य च सातौ । तस्य अर्यः । इरयति स्तुतीः प्रेरयतीत्यरिः स्तोता । मन्युं[1] स्तोत्रं मघवानः दानवन्तोऽर्यमादयः सीक्षन्त सचन्ते[2] । सेवित्वा च तस्य उरुक्षयाय विस्तीर्णनिवासाय सुधातु सुधाम शोभनस्थानं चक्रिरे कुर्वते ॥

इयं देव पुरोहितिर्युवभ्यां यज्ञेषु मित्रावरुणावकारि ।
विश्वानि दुर्गा पिपृतं तिरो नो यूयं पात स्वस्तिभिः सदा नः ॥ १२ ॥

इयम् । देवा । पुरःऽहितिः । युवऽभ्याम् । यज्ञेषु । मित्रावरुणौ । अकारि ।
विश्वानि । दुःऽगा । पिपृतम् । तिरः । नः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥१२॥

अनया स्तुतिमुपसंहरति । हे देवा देवौ मित्रावरुणौ युवभ्यां युवाभ्यां यज्ञेषु इयं पुरोहितिः पुरस्क्रिया पूजा स्तुतिलक्षणा अकारि कृताभूत् । तां सेवित्वा विश्वानि सर्वाणि दुर्गा दुःखेन गन्तव्यान्यापदः तिरः तिरस्कुरुतम् । तथा कृत्वा नः अस्मान् पिपृतं पारयतम् । शिष्टो गतः ॥ ॥ २ ॥

'उद्वां चक्षुः' इति सप्तर्चं षष्ठं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं मैत्रावरुणम् । 'उद्वां सप्त' इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ॥

उद्वां चक्षुर्वरुण सुप्रतीकं देवयोरेति सूर्यस्ततन्वान् ।
अभि यो विश्वा भुवनानि चष्टे स मन्युं मर्त्येष्वा चिकेत ॥ १ ॥

---

१. ख-क्ष-त-न-भ-श—तासां मन्युं । २. ख—सच्यंते; घ—सेवंते; क्ष—सेवंत ।

उत् । वाम् । चक्षुः । वरुणा । सुऽप्रतीकम् । देवयोः । एति । सूर्यः । ततन्वान् ।
अभि । यः । विश्वा । भुवनानि । चष्टे । सः । मन्युम् । मर्त्येषु । आ । चिकेत ॥ १ ॥

हे वरुणा मित्रावरुणौ देवयोः द्योतमानयोः वां युवयोः चक्षुः प्रकाशकं तेजः सुप्रतीकं शोभनरूपमेवंरूपः सूर्यः ततन्वान् तेजो विस्तारयन् उत् एति उद्गच्छति। अथोदितः यः देवः विश्वा सर्वाणि भुवनानि भूतजातानि अभि चष्टे अभिपश्यति सः देवः मर्त्येषु प्रवृत्तं मन्युं स्तोत्रं कर्म वा आ चिकेत आजानाति ॥

प्र वां स मित्रावरुणावृतावा विप्रो मन्मानि दीर्घश्रुदियर्ति ।
यस्य ब्रह्माणि सुक्रतू अवाथ आ यत्क्रत्वा न शरदः पृणैथे ॥ २ ॥

प्र । वाम् । सः । मित्रावरुणौ । ऋतऽवा । विप्रः । मन्मानि । दीर्घऽश्रुत् । इयर्ति ।
यस्य । ब्रह्माणि । सुक्रतू इति सुऽक्रतू । अवाथः । आ । यत् । क्रत्वा । न । शरदः । पृणैथे इति ॥२॥

हे मित्रावरुणौ वां युवयोः मन्मानि मननीयानि स्तोत्राणि सः प्रसिद्धः विप्रः मेधावी ऋतावा यज्ञवान् दीर्घश्रुत् चिरकालं श्रोता एवमुक्तलक्षणो वसिष्ठः इयर्ति प्रेरयति। यस्य ऋषेः ब्रह्माणि परिवृढानि स्तोत्राणि हे सुक्रतू शोभनकर्माणौ अवाथः रक्षथः। यत् कर्म शरदः बहून् संवत्सरान् आ पृणैथे आपूरयेथे स उदियर्ति ॥

प्रोरोर्मित्रावरुणा पृथिव्याः प्र दिव ऋष्वाद्बृहतः सुदानू ।
स्पशो दधाथे ओषधीषु विक्ष्वृधग्यतो अनिमिषं रक्षमाणा ॥ ३ ॥

प्र । उरोः । मित्रावरुणा । पृथिव्याः । प्र । दिवः । ऋष्वात् । बृहतः । सुदानू इति सुऽदानू ।
स्पशः । दधाथे इति । ओषधीषु । विक्षु । ऋधक् । यतः । अनिऽमिषम् । रक्षमाणा ॥ ३ ॥

हे मित्रावरुणा मित्रावरुणौ युवाम् उरोः विस्तीर्णायाः पृथिव्याः अपि प्र प्ररिरिचाथे। 'अस्येदेव प्र रिरिचे' (ऋ. सं. १. ६१. ९) इत्यादिषु प्रशब्दस्य रिरिच इत्यनेन सह संबन्धदर्शनादत्राप्युचितक्रियाध्याहारेण रिरिच इति योज्यम्। तथा ऋष्वात् गुणैर्महतः बृहतः स्वरूपतोऽतिमहतः दिवः द्युलोकादपि प्र रिरिचाथे हे सुदानू शोभनदानौ। किंच ओषधीषु विक्षु प्रजासु निमित्तभूतासु प्रजासु चेति वा स्पशः रूपं दधाथे धारयेथे। किं कुर्वन्तौ। ऋधग्यतः ऋधक्सत्येन यतो विवेकात् सत्येन गच्छतो जनान् अनिमिषम् अव्यवधानेन सर्वदा रक्षमाणा पालयन्तौ ॥

शंसा मित्रस्य वरुणस्य धाम शुष्मो रोदसी बद्बधे महित्वा ।
अयन्मासा अयज्वनामवीराः प्र यज्ञमन्मा वृजनं तिराते ॥ ४ ॥

शंस । मित्रस्य । वरुणस्य । धाम । शुष्मः । रोदसी इति । बद्बधे । महिऽत्वा ।
अयन् । मासाः । अयज्वनाम् । अवीराः । प्र । यज्ञऽमन्मा । वृजनम् । तिराते ॥ ४ ॥

हे ऋषे मित्रस्य वरुणस्य च धाम तेजःस्थानं शंस स्तुहि। ययोर्देवयोः शुष्मः बलं रोदसी द्यावापृथिव्यौ सह वर्तमाने महित्वा स्वमहत्त्वेन बद्बधे बध्नाति पृथक् स्थापयति इयं पृथिवीयं द्यौरिति पृथक्करोति। 'द्यावापृथिवी सहास्ताम्' (तै. ब्रा. १. १. ३. २) इति श्रुतेः। अयज्वनाम् अननुष्ठातृणां

ᵛमासाः कालावयवाः ᵛअवीराः अपुत्रा एव ᵛअयन् यन्तु गच्छन्तु। तद्विपरीतः ᵛयज्ञमन्मा यज्ञार्थं' मतिमान्' यज्वा ᵛवृजनं बलं ᵛप्र ᵛतिराते प्रवर्धयतु। प्रपूर्वस्तिरतिर्वर्धनार्थः॥

अमूरा विश्वा वृषणाविमा वां न यासु चित्रं ददृशे न यक्षम्।
द्रुहः सचन्ते अनृता जनानां न वां निण्यान्यचिते अभूवन्॥ ५॥

अमूरा। विश्वा। वृषणौ। इमाः। वाम्। न। यासु। चित्रम्। ददृशे। न। यक्षम्।
द्रुहः। सचन्ते। अनृता। जनानाम्। न। वाम्। निण्यानि। अचिते। अभुवन्॥५॥

हे ᵛअमूरा अमूढौ हे ᵛविश्वा व्याप्तौ हे ᵛवृषणौ वर्षितारौ ᵛवां युवाभ्याम् ᵛइमाः इमानि स्तुतिवचांसि क्रियन्ते। ᵛयासु स्तुतिषु ᵛचित्रम् आश्चर्यं ᵛन ᵛददृशे न दृश्यते ᵛन ᵛयक्षं न पूजा दृश्यते। युवाभ्यां महिम्नोऽपि महत्वात् प्रयत्नेन क्रियमाणमपि स्तोत्रं न चमत्करोतीत्यर्थः। ᵛजनानाम् ᵛअनृता अस्तुत्यविषयाणि स्तोत्राणि ᵛद्रुहः द्रोग्धारः ᵛसचन्ते सेवन्ते। न महान्तः। ᵛवां युवाभ्यां क्रियमाणानि ᵛनिण्यानि अन्तर्हितानि रहस्यान्यपि स्तोत्राणि ᵛअचिते अज्ञानाय ᵛन ᵛअभूवन् न भवन्ति॥

समु वां यज्ञं महयं नमोभिर्हुवे वां मित्रावरुणा सबाधः।
प्र वां मन्मान्यृचसे नवानि कृतानि ब्रह्म जुजुषन्निमानि॥ ६॥

सम्। ऊँ इति। वाम्। यज्ञम्। महयम्। नमःऽभिः। हुवे। वाम्। मित्रावरुणा। सऽबाधः।
प्र। वाम्। मन्मानि। ऋचसे। नवानि। कृतानि। ब्रह्म। जुजुषन्। इमानि॥ ६॥

हे मित्रावरुणौ ᵛवां युवयोः ᵛयज्ञं ᵛनमोभिः नमस्कारैः स्तुतिभिः ᵛसमु ᵛमहयं संपूजयाम्यहम्। तदर्थं हे ᵛमित्रावरुणा मित्रावरुणौ ᵛवां ᵛसबाधः बाधायुक्तोऽहं ᵛहुवे आह्वयामि बाधापरिहाराय। ᵛवां युवाम् ᵛऋचसे सेवितुं ᵛनवानि नूतनानि स्तुत्यानि वा ᵛमन्मानि स्तोत्राणि ᵛप्र भवन्त्वित्यध्याहारः। ᵛकृतानि मया समूहीकृतानि ᵛइमानि इदानीं क्रियमाणानि ᵛब्रह्म परिवृढानि स्तोत्राणि युवां ᵛजुजुषन् प्रीणयन्तु॥

इयं देव पुरोहितिर्युवभ्यां यज्ञेषु मित्रावरुणावकारि।
विश्वानि दुर्गा पिपृतं तिरो नो यूयं पात स्वस्तिभिः सदा नः॥ ७॥

इयम्। देवा। पुरःऽहितिः। युवऽभ्याम्। यज्ञेषु। मित्रावरुणौ। अकारि।
विश्वानि। दुःऽगा। पिपृतम्। तिरः। नः। युयम्। पात। स्वस्तिऽभिः। सदा। नः॥७॥

'इयं देव' इति सप्तमी गता॥ ॥ ३॥

'उत्सूर्यः' इति षडृचं सप्तमं सूक्तम्। अत्रानुक्रमणिका—'उत्सूर्यः षळाद्यास्तिस्रः सौर्यः' इति। वसिष्ठ ऋषिः। त्रिष्टुप् छन्दः। आद्यास्तिस्रः सूर्यदेवत्याः शिष्टा मित्रावरुणदेवत्याः। सूक्तविनियोगो लैङ्गिकः॥

---

१. ख-क्ष-त-न-भ-श—यज्ञार्थमतिमान्।

उत्सूर्यो बृहदर्चींष्यश्रेत्पुरु विश्वा जनिम मानुषाणाम् ।
समो दिवा ददृशे रोचमानः क्रत्वा कृतः सुकृतः कर्तृभिर्भूत् ॥ १ ॥

उत् । सूर्यः । बृहत् । अर्चींषि । अश्रेत् । पुरु । विश्वा । जनिम । मानुषाणाम् ।
समः । दिवा । ददृशे । रोचमानः । क्रत्वा । कृतः । सुऽकृतः । कर्तृऽभिः । भूत् ॥ १ ॥

ᵛसूर्यः सर्वस्य प्रेरको देवः ᵛबृहत् अत्यधिकं ᵛपुरु पुरूणि बहूनि ᵛअर्चींषि तेजांसि ᵛउत् ᵛअश्रेत् ऊर्ध्वं श्रयति । किं प्रति । ᵛमानुषाणां मनुष्याणां ᵛविश्वा सर्वाणि ᵛजनिम जनिमानि जनान्[1] । जनशब्दः संघवचनः । तान् प्रत्युदश्रेत् । स देवः ᵛदिवा अहनि ᵛरोचमानः सन् ᵛसमः ᵛददृशे । एकरूपः प्रतिनियतः सन् दृश्यते । 'तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति '(ऐ. आ. ३.२.३) इति हि श्रुतिः । स देवः ᵛक्रत्वा सर्वस्य कर्ता ᵛकृतः संपादितः प्रजापतिना ᵛकर्तृभिः स्तुतिकर्तृभिः ᵛसुकृतः स्तुत्या तीक्ष्णीकृतः ᵛभूत् भवति ॥

स सूर्य प्रति पुरो न उद्गा एभिः स्तोमेभिरेतशेभिरेवैः ।
प्र नो मित्राय वरुणाय वोचोऽनागसो अर्यम्णे अग्नये च ॥ २ ॥

सः । सूर्य । प्रति । पुरः । नः । उत् । गाः । एभिः । स्तोमेभिः । एतशेभिः । एवैः ।
प्र । नः । मित्राय । वरुणाय । वोचः । अनागसः । अर्यम्णे । अग्नये । च ॥ २ ॥

हे ᵛसूर्य ᵛसः प्रसिद्धस्त्वं ᵛनः अस्मान् ᵛप्रति ᵛपुरः पुरस्तात् ᵛउद्गाः उद्गच्छ । कैः साधनैः । ᵛएभिः ᵛस्तोमेभिः स्तोमैः स्तुत्यैः ᵛएतशेभिः एतवर्णैः । स्वार्थिकः शकारः 'या जरन्ता युवशा ता' (ऋ. सं. १. १६१. ७) 'पुरुषः कृष्णशवास्युत्तरतः' (ऐ. ब्रा. ५. १४) इत्यादिवत् । तादृशैः ᵛएवैः गमनशीलैरश्वैः उद्गाः । अथ तथा कृत्वास्माभिः स्तुतः सन् ᵛनः अस्मान् ᵛअनागसः अपापान् ᵛप्र ᵛवोचः । केभ्यः । ᵛमित्राय ᵛवरुणाय ᵛअर्यम्णे ᵛअग्नये ᵛच । अत्र सौर्ये इतरेषां मित्रादीनां संकीर्तनं तेषामपि निपातभाक्त्वादविरुद्धम् । एवं पूर्वत्रोत्तरत्र च मैत्रावरुणेऽर्यमादीनां संकीर्तनमपि न विरुध्यते ॥

वि नः सहस्रं शुरुधो रदन्त्वृतावानो वरुणो मित्रो अग्निः ।
यच्छन्तु चन्द्रा उपमं नो अर्कमा नः कामं पूपुरन्तु स्तवानाः ॥ ३ ॥

वि । नः । सहस्रम् । शुरुधः । रदन्तु । ऋतऽवानः । वरुणः । मित्रः । अग्निः ।
यच्छन्तु । चन्द्राः । उपऽमम् । नः । अर्कम् । आ । नः । कामम् । पूपुरन्तु । स्तवानाः ॥३॥

ᵛनः अस्मभ्यं ᵛशुरुधः शुचेर्दुःखस्य प्रतिरोद्धारः ᵛऋतावानः सत्यवन्तो वरुणादयः ᵛसहस्रं सहस्रसंख्याकं धनं ᵛवि ᵛरदन्तु वितरन्तु । अथवा शुरुध उक्तलक्षणाः सहस्रसंख्याका ओषधीः रदन्तु । किंच ते ᵛचन्द्राः आह्लादकारिणोऽस्मभ्यम् ᵛउपमं स्तुत्यम् ᵛअर्कम् अर्चनीयं ᵛयच्छन्तु । किंच ᵛस्तवानाः अस्माभिः स्तूयमानाः ᵛनः अस्माकं ᵛकामम् अपेक्षितं ᵛपूपुरन्तु पूरयन्तु । हे सूर्य त्वयानुज्ञाता इति सूर्यस्य स्तुतिः ॥

---

१. श–जनान् संघान् ।

द्यावाभूमी अदिते त्रासीथां नो ये वां जज्ञुः सुजनिमान ऋष्वे ।
मा हेळे भूम वरुणस्य वायोर्मा मित्रस्य प्रियतमस्य नृणाम् ॥ ४ ॥

द्यावाभूमी इति । अदिते । त्रासीथाम् । नः । ये । वाम् । जज्ञुः । सुऽजनिमानः । ऋष्वे इति ।
मा । हेळे । भूम । वरुणस्य । वायोः । मा । मित्रस्य । प्रियऽतमस्य । नृणाम् ॥ ४ ॥

हे द्यावाभूमी द्यावापृथिव्यौ हे अदिते अखण्डनीये । एतत् द्यावाभूम्योरेवैकवचनेन संबोधनम् । हे ऋष्वे । महन्नामैतत् । हे[1] महत्यौ नः अस्मान् त्रासीथां रक्षतम् । ये वयं सुजनिमानः शोभनजन्मानः वां युवां जज्ञुः ज्ञातवन्तः स्म । किंच वयं वरुणस्य हेळे क्रोधे मा भूम । तथा वायोः मा भूम । तथा नृणां स्तुतिनेतॄणां मनुष्याणां प्रियतमस्य मित्रस्य हेळे मा भूम ॥

‘ प्र बाहवा ’ इति पञ्चमी मैत्रावरुणे पशौ पशुपुरोडाशस्य याज्या । सूत्रितं च—‘ प्र बाहवा सिसृतं जीवसे नो यद्बंहिष्ठं नातिविधे सुदानू ’ ( आश्व. श्रौ. ३. ८ ) इति ॥

प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन ।
आ नो जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवेमा ॥ ५ ॥

प्र । बाहवा । सिसृतम् । जीवसे । नः । आ । नः । गव्यूतिम् । उक्षतम् । घृतेन ।
आ । नः । जने । श्रवयतम् । युवाना । श्रुतम् । मे । मित्रावरुणा । हवा । इमा ॥ ५ ॥

हे मित्रावरुणा मित्रावरुणौ देवौ बाहवा युवाभ्यां बाहू प्र सिसृतं प्रसारयतं हविःस्वीकाराय धनप्रदानाय वा । किमर्थमिति । नः जीवसे अस्माकं जीवनाय । किंच नः अस्माकं गव्यूतिम् । गावो यन्ति गच्छन्त्यत्रेति गव्यूतिर्गोमार्गभूमिः । तां तृणादिप्ररोहाय घृतेन उदकेन आ समन्तात् उक्षतं सिञ्चतम् । किंच नः अस्मान् जने अस्मत्समाने मनुष्यसमूहे वा नोऽस्मान् श्रवयतं विश्रुतं कुरुतम् । हे युवाना नित्ययौवनौ सर्वत्र व्याप्तौ वा युवां मे मम इमा इमानि हवा आह्वानानि श्रुतं शृणुतम् ॥

नू मित्रो वरुणो अर्यमा नस्त्मने तोकाय वरिवो दधन्तु ।
सुगा नो विश्वा सुपथानि सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

नु । मित्रः । वरुणः । अर्यमा । नः । त्मने । तोकाय । वरिवः । दधन्तु ।
सुऽगा । नः । विश्वा । सुऽपथानि । सन्तु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥

मित्रः वरुणः अर्यमा चैते त्रयो देवाः नु अद्य नः अस्माकं त्मने आत्मने आत्महिताय तोकाय पुत्राय च वरिवः धनं दधन्तु प्रयच्छन्तु । नः अस्माकं विश्वा सर्वाणि गन्तव्यानि सुगा सुगमनानि सुपथानि च सन्तु भवन्तु । शिष्टं गतम् ॥ ॥ ४ ॥

‘ उद्वेति ’ इति षडृचमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभम् । आद्याश्चतस्रः पञ्चम्याः पूर्वार्धश्च सूर्यदेवत्या अवशिष्टास्त्रयोऽर्धर्चा मित्रावरुणदेवत्याः । तथा चानुक्रान्तम्—‘ उद्वेतीति चार्धपञ्चमाः ’ इति । विनियोगो लैङ्गिकः ॥

---

१. ख-ङ्ग-त-श—महे ।

उद्वेति सुभगो विश्वचक्षाः साधारणः सूर्यो मानुषाणाम् ।
चक्षुर्मित्रस्य वरुणस्य देवश्चर्मेव यः समविव्यक्तमांसि ॥ १ ॥

उत् । ऊँ इति । एति । सुऽभगः । विश्वऽचक्षाः । साधारणः । सूर्यः । मानुषाणाम् ।
चक्षुः । मित्रस्य । वरुणस्य । देवः । चर्मऽइव । यः । सम्ऽअविव्यक् । तमांसि ॥ १ ॥

ᵛउद्वेति उद्गच्छत्ययं ᵛसूर्यः ᵛसुभगः शोभनभाग्यः सुष्ठु भजनीयो वा ᵛविश्वचक्षाः सर्वस्य द्रष्टा ᵛमानुषाणां सर्वेषां मनुष्याणां ᵛसाधारणः। साधारणत्वप्रतिपादकश्रुतिः पूर्वमुदाहृता। ᵛमित्रस्य ᵛवरुणस्य च ᵛचक्षुः प्रकाशकः ᵛदेवः द्योतमानः। ᵛयः देवः ᵛचर्मेव चर्माणीव ᵛतमांसि ᵛसमविव्यक् सह विचति संवेष्टयति[1] स महानुभावो देव उद्वेति ॥

उद्वेति प्रसवीता जनानां महान्केतुरर्णवः सूर्यस्य ।
समानं चक्रं पर्याविवृत्सन्यदेतशो वहति धूर्षु युक्तः ॥ २ ॥

उत् । ऊँ इति । एति । प्रऽसविता । जनानाम् । महान् । केतुः । अर्णवः । सूर्यस्य ।
समानम् । चक्रम् । परिऽआविवृत्सन् । यत् । एतशः । वहति । धूःऽसु । युक्तः ॥ २ ॥

अयं ᵛसूर्यस्य सूर्यः। विभक्तिव्यत्ययः। ᵛउद्वेति उद्गच्छति। कीदृशोऽयम्। ᵛजनानां सर्वेषां ᵛप्रसविता सर्वेषु कर्मस्वनुज्ञाता ᵛमहान् पूज्यः ᵛकेतुः सर्वस्य प्रज्ञापकः ᵛअर्णवः उदकप्रदः। किं कुर्वन्नुदेतीति उच्यते। ᵛसमानं सर्वेषामेकरूपमेकमेव ᵛचक्रं रथाङ्गं चरणशीलं रथं वा ᵛपर्याविवृत्सन् पर्यावर्तयितुमिच्छन्। ᵛयत् रथचक्रं ᵛधूर्षु रथस्य ᵛयुक्तः ᵛएतशः एतशवर्णो हरितवर्णोऽश्वः ᵛवहति। 'एको अश्वो वहति सप्तनामा' (ऋ. सं. १. १६४. २) इत्युक्तम् ॥

विभ्राजमान उषसामुपस्थाद्रेभैरुदेत्यनुमद्यमानः ।
एष मे देवः सविता चच्छन्द यः समानं न प्रमिनाति धाम ॥ ३ ॥

विऽभ्राजमानः । उषसाम् । उपऽस्थात् । रेभैः । उत् । एति । अनुऽमद्यमानः ।
एषः । मे । देवः । सविता । चच्छन्द । यः । समानम् । न । प्रऽमिनाति । धाम ॥३॥

अयं सूर्यः ᵛविभ्राजमानः विशेषेण दीप्यमानः ᵛउषसामुपस्थात् उपस्थे मध्ये ᵛरेभैः स्तोतृभिः ᵛअनुमद्यमानः सन् ᵛउदेति। किंच ᵛएषः ᵛदेवः द्योतमानः ᵛसविता ᵛमे मह्यं ᵛचच्छन्द उपच्छन्दयति कामान्। एष इत्युक्तं क इति। ᵛयः देवः ᵛसमानं सर्वेषां प्राणिनामेकरूपं ᵛधाम स्वीयं तेजःस्थानं ᵛन ᵛप्रमिनाति न हिनस्ति न संकोचयति स देव उदेतीति ॥

दिवो रुक्म उरुचक्षा उदेति दूरेअर्थस्तरणिर्भ्राजमानः ।
नूनं जनाः सूर्येण प्रसूता अयन्नर्थानि कृणवन्नपांसि ॥ ४ ॥

दिवः । रुक्मः । उरुऽचक्षाः । उत् । एति । दूरेऽअर्थः । तरणिः । भ्राजमानः ।
नूनम् । जनाः । सूर्येण । प्रऽसूताः । अयन् । अर्थानि । कृणवन् । अपांसि ॥ ४ ॥

---

१. ख-वेष्टयति ।

अयं सूर्यः ᵛरुक्मः रोचमानः ᵛउरुचक्षाः प्रभूततेजाश्च सन् ᵛदिवः अन्तरिक्षात् ᵛउदेति। यद्वा दिवोऽन्तरिक्षस्य रुक्म आभरणस्थानीयः। कीदृशोऽयम्। ᵛदूरेअर्थः दूरे गन्ता। अर्थोऽर्तेः। दूरे प्रार्थ्यमानो वा। ᵛतरणिः तारकः ᵛभ्राजमानः दीप्यमानः समुदेति। ᵛनूनं निश्चयं ᵛजनाः सर्वे प्राणिनः ᵛसूर्येण प्रेरकेण देवेन ᵛप्रसूताः अनुज्ञाताः प्रेरिताः सन्तः ᵛअर्थानि गन्तव्यानि अनुष्ठेयानि ᵛअपांसि कर्माणि ᵛकृणवन् कुर्वन्ति ॥

यत्रा चक्रुरमृता गातुमस्मै श्येनो न दीयन्नन्वेति पाथः ।
प्रति वां सूर उदिते विधेम नमोभिर्मित्रावरुणोत हव्यैः ॥ ५ ॥

यत्र । चक्रुः । अमृताः । गातुम् । अस्मै । श्येनः । न । दीयन् । अनु । एति । पाथः ।
प्रति । वाम् । सूरे । उत्ऽइते । विधेम । नमःऽभिः । मित्रावरुणा । उत । हव्यैः ॥ ५ ॥

ᵛयत्र यस्मिन्नन्तरिक्षे ᵛअमृताः अमरणधर्माणः पूर्वे देवाः ᵛअस्मै सूर्याय ᵛगातुं मार्गं ᵛचक्रुः अकुर्वन् तत् ᵛपाथः अन्तरिक्षम् ᵛअन्वेति अनुगच्छति। क इव। ᵛदीयन् गच्छन् ᵛश्येनो ᵛन शंसनीयगमनो गृध्र इव। अयमर्धर्चः सौर्य इत्युक्तम्। हे ᵛमित्रावरुणा मित्रावरुणौ ᵛवां युवां ᵛसूरे सूर्ये ᵛउदिते सति प्रातःसवने ᵛनमोभिः नमस्कारैः स्तुतिभिः ᵛउत अपि च ᵛहव्यैः हविर्भिश्च ᵛप्रति ᵛविधेम परिचरेम ॥

नू मित्रो वरुणो अर्यमा नस्त्मने तोकाय वरिवो दधन्तु ।
सुगा नो विश्वा सुपथानि सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

नु । मित्रः । वरुणः । अर्यमा । नः । त्मने । तोकाय । वरिवः । दधन्तु ।
सुऽगा । नः । विश्वा । सुऽपथानि । सन्तु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥६॥

' नू मित्रः ' इति षष्ठी गता ॥ ॥ ५ ॥

' दिवि क्षयन्ता ' इति पञ्चर्चं नवमं सूक्तं वसिष्ठस्यार्षं मैत्रावरुणम्। ' दिवि पञ्च ' इत्यनुक्रमणिका। तृतीये छन्दोमे प्रउगशस्त्र आद्यस्तृचो मैत्रावरुणस्य। सूत्रितं च—' दिवि क्षयन्ता रजसः पृथिव्यामा विश्ववाराश्विना गतं नः ' ( आश्व. श्रौ. ८. ११ ) इति ॥

दिवि क्षयन्ता रजसः पृथिव्यां प्र वां घृतस्य निर्णिजो ददीरन् ।
हव्यं नो मित्रो अर्यमा सुजातो राजा सुक्षत्रो वरुणो जुषन्त ॥ १ ॥

दिवि । क्षयन्ता । रजसः । पृथिव्याम् । प्र । वाम् । घृतस्य । निःऽनिजः । ददीरन् ।
हव्यम् । नः । मित्रः । अर्यमा । सुऽजातः । राजा । सुऽक्षत्रः । वरुणः । जुषन्त ॥१॥

ᵛदिवि द्युलोकेऽन्तरिक्षे ᵛपृथिव्यां च वर्तमानस्य ᵛरजसः उदकस्य ᵛक्षयन्ता। क्षयतिरैश्वर्यकर्मा। स्वामिनौ भवथः। हे मित्रावरुणौ ᵛवां युवाभ्यां प्रेरिता मेघाः ᵛघृतस्य[1] ᵛनिर्णिजः उदकस्य रूपाणि ᵛददीरन् ददते प्रयच्छन्ति। अथवा वां युवाभ्यां घृतस्य निर्णिजो रूपाणि। घृतानीत्यर्थः। तानि ददीरन् दीयन्ते। ᵛनः अस्माकं संबन्धि ᵛहव्यं ᵛमित्रः ᵛसुजातः सुष्ठु प्रादुर्भूतः ᵛअर्यमा ᵛराजा सर्वस्य स्वामी ᵛसुक्षत्रः शोभनबलः ᵛवरुणः चैते ᵛजुषन्त सेवन्ताम् ॥

१. झ-त-न-भ-श-घृतस्य च।

आ राजाना मह ऋतस्य गोपा सिन्धुपती क्षत्रिया यातमर्वाक् ।
इळां नो मित्रावरुणोत वृष्टिमव दिव इन्वतं जीरदानू ॥ २ ॥

आ । राजाना । महः । ऋतस्य । गोपा । सिन्धुपती इति सिन्धुऽपती । क्षत्रिया । यातम् । अर्वाक् ।
इळाम् । नः । मित्रावरुणा । उत । वृष्टिम् ।
अव । दिवः । इन्वतम् । जीरदानू इति जीरऽदानू ॥ २ ॥

हे ᵛराजाना सर्वस्य स्वामिनौ हे ᵛमहः महतः ᵛऋतस्य उदकस्य यज्ञस्य वा ᵛगोपा गोपायितारौ। सुबामन्त्रिते 'पराङ्गवत्स्वरे' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य निघातत्वम्। हे ᵛसिन्धुपती नद्याः पालयितारौ हे ᵛक्षत्रिया बलवन्तौ युवाम् ᵛअर्वाक् अस्मदभिमुखम् ᵛआ ᵛयातम् आगच्छतम्। किंच हे ᵛमित्रावरुणा मित्रावरुणौ हे ᵛजीरदानू क्षिप्रदानौ युवां ᵛनः अस्मभ्यम् ᵛइळाम् अन्नम् ᵛउत अपि च ᵛपुष्टिं तत्साधिकां वृष्टिं च ᵛदिवः अन्तरिक्षात् ᵛअव अवस्तात् ᵛइन्वतं प्रेरयतम् ॥

मित्रस्तन्नो वरुणो देवो अर्यः प्र साधिष्ठेभिः पथिभिर्नयन्तु ।
ब्रवद्यथा न आदरिः सुदास इषा मदेम सह देवगोपाः ॥ ३ ॥

मित्रः । तत् । नः । वरुणः । देवः । अर्यः । प्र । साधिष्ठेभिः । पथिऽभिः । नयन्तु ।
ब्रवत् । यथा । नः । आत् । अरिः । सुऽदासे । इषा । मदेम । सह । देवऽगोपाः ॥३॥

ᵛमित्रः ᵛवरुणः ᵛदेवः ᵛअर्यः अर्यमा चैते त्रयोऽपि ᵛनः अस्मान् ᵛतत् तदा यदास्माकमपेक्षितं तदा ᵛसाधिष्ठेभिः साधकतमैः ᵛपथिभिः मार्गैः ᵛनयन्तु प्रापयन्तु। किंच ᵛनः अस्मान् ᵛसुदासे शोभनदानाय जनाय ᵛअरिः अर्यमा ᵛयथा ᵛब्रवत् असावनुकम्प्य इति ब्रूयात्तथा कुर्वन्तु। अर्यम्णः पुनरभिधानमादरार्थम्। ᵛदेवगोपाः देवा यूयं गोपायितारो येषामस्माकं ते वयम् ᵛइषा युष्माभिर्दातव्येनान्नेन ᵛसह पुत्रादिसहिताः ᵛमदेम हृष्येम ॥

यो वां गर्तं मनसा तक्षदेतमूर्ध्वां धीतिं कृणवद्धारयच्च ।
उक्षेथां मित्रावरुणा घृतेन ता राजाना सुक्षितीस्तर्पयेथाम् ॥ ४ ॥

यः । वाम् । गर्तम् । मनसा । तक्षत् । एतम् । ऊर्ध्वाम् । धीतिम् । कृणवत् । धारयत् । च ॥
उक्षेथाम् । मित्रावरुणा । घृतेन । ता । राजाना । सुऽक्षितीः । तर्पयेथाम् ॥ ४ ॥

हे मित्रावरुणौ ᵛयः[1] ᵛवां युवयोः ᵛएतं ᵛगर्तं रथं ᵛमनसा ᵛतक्षत् स्तोमेन संकल्पयेत् तथा कृत्वा ᵛऊर्ध्वाम् उन्नतां ᵛधीतिं कर्म स्तुतिरूपं ᵛकृणवत् कुर्यात् उच्चैः स्तुयात् एवं कृत्वा ᵛधारयच्च यागे धारयेत् हे ᵛराजाना स्वामिनौ ᵛमित्रावरुणा मित्रावरुणौ ᵛता तौ युवां जनं ᵛघृतेन उदकेन ᵛउक्षेथां सिञ्चतम्। तस्मै ᵛसुक्षितीः शोभननिवासाः प्रजाः ᵛतर्पयेथाम्। यथा सुक्षितयो भवन्ति तथा तर्पयेथामिति ॥

---

१. ख-ञ-त-न-भ-श–'यः' नास्ति ।

एष स्तोमो वरुण मित्र तुभ्यं सोमः शुक्रो न वायवेऽयामि ।
अविष्टं धियो जिगृतं पुरंधीर्यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

एषः । स्तोमः । वरुण । मित्र । तुभ्यम् । सोमः । शुक्रः । न । वायवे । अयामि ।
अविष्टम् । धियः । जिगृतम् । पुरम्ऽधीः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥५॥

अनया स्तुतिमुपसंहरति । हे ᵛवरुण हे ᵛमित्र ᵛतुभ्यं युवयोः ᵛवायवे । वायुर्गन्तादित्यः । स एवार्यमा । तस्मै च ᵛएष ᵛस्तोमः स्तवः ᵛअयामि अकारि । किमिव । ᵛशुक्रः दीप्तः ᵛसोमः ᵛन युष्मभ्यं प्रीतिकरः सोमो यथा दीयते तद्वत् । ᵛधियः कर्माण्यस्मदीयानि ᵛअविष्टं रक्षतम्[1] । ᵛपुरंधीः स्तुतीः ᵛजिगृतं प्रबुध्यतम् । अन्यद्गतम् ॥ ॥ ६ ॥

'प्रति वां सूरे' इति पञ्चर्चं दशमं सूक्तं वसिष्ठस्यार्षं मैत्रावरुणम् । 'प्रति वाम्' इत्यनुक्रान्तम् । द्वितीये छन्दोमे प्रउगशस्त्रेऽप्येष तृचः । सूत्रितं च—'प्रति वां सूर उदिते सूक्तैर्धेनुः प्रत्नस्य' (आश्व. श्रौ. ८. १०) इति ॥

प्रति वां सूर उदिते सूक्तैर्मित्रं हुवे वरुणं पूतदक्षम् ।
ययोरसुर्य१मक्षितं ज्येष्ठं विश्वस्य यामन्नाचिता जिगत्नु ॥ १ ॥

प्रति । वाम् । सूरे । उत्ऽइते । सुऽउक्तैः । मित्रम् । हुवे । वरुणम् । पूतऽदक्षम् ।
ययोः । असुर्यम् । अक्षितम् । ज्येष्ठम् । विश्वस्य । यामन् । आऽचिता । जिगत्नु ॥ १ ॥

ᵛसूरे सूर्ये ᵛउदिते प्रातःसवने ᵛमित्रं ᵛपूतदक्षं शुद्धबलं ᵛवरुणं ᵛवां ᵛसूक्तैः ᵛहुवे आह्वये । ᵛययोः मित्रावरुणयोः ᵛअक्षितम् अक्षीणमत एव ᵛज्येष्ठम् ᵛअसुर्यं बलम् ᵛआचिता आचित उपचिते शूरसंघैरुपेते ᵛयामन् यामनि संग्रामे ᵛविश्वस्य[2] शत्रुसंघस्य ᵛजिगत्नु जेतृ भवति ॥

ता हि देवानामसुरा तावर्या ता नः क्षितीः करतमूर्जयन्तीः ।
अश्याम मित्रावरुणा वयं वां द्यावा च यत्र पीपयन्नहा च ॥ २ ॥

ता । हि । देवानाम् । असुरा । तौ । अर्या । ता । नः । क्षितीः । करतम् । ऊर्जयन्तीः ।
अश्याम । मित्रावरुणा । वयम् । वाम् । द्यावा । च । यत्र । पीपयन् । अहा । च ॥ २ ॥

ᵛता ᵛहि तौ खलु देवौ ᵛदेवानां मध्ये ᵛअसुरा बलवन्तौ । ᵛअर्या अर्यौ ᵛतौ सर्वस्येश्वरौ ᵛता तौ ᵛनः अस्माकं ᵛक्षितीः पुत्रादिरूपाः प्रजाः ᵛऊर्जयन्तीः प्रवृद्धाः ᵛकरतं कुरुतम् । हे ᵛमित्रावरुणा मित्रावरुणौ ᵛवयं ᵛवां युवाम् ᵛअश्याम व्याप्नुयाम । ᵛयत्र यस्यां युवयोर्व्याप्तौ ᵛद्यावा द्यावापृथिव्यौ । सर्वदा तयोः सहभावादयमर्थो लभ्यते । ᵛअहा ᵛच । एतद्रात्रेरुपलक्षणम् । अहोरात्राणि च ᵛपीपयन् अस्मान् प्याययेयुः ॥

ता भूरिपाशावनृतस्य सेतू दुरत्येतू रिपवे मर्त्याय ।
ऋतस्य मित्रावरुणा पथा वामपो न नावा दुरिता तरेम ॥ ३ ॥

---

१. ख-ञ-ञ्र-त३-४-न-भ-श-'रक्षतं' नास्ति । २. श-विश्वस्य सर्वस्य ।

ता । भूरिऽपाशौ । अनृतस्य । सेतू इति । दुरत्येतू इति दुःऽअत्येतू । रिपवे । मर्त्याय । ऋतस्य । मित्रावरुणा । पथा । वाम् । अपः । न । नावा । दुःऽइता । तरेम ॥ ३ ॥

ता तौ मित्रावरुणौ भूरिपाशौ प्रभूतबन्धनसाधनपाशोपेतौ अनृतस्य यागरहितस्य सेतू सेतुवद्बन्धकौ[1] रिपवे मर्त्याय वैरिजनाय दुरत्येतू दुरतिक्रमौ भवतः । हे मित्रावरुणा तादृशौ मित्रावरुणौ वां युवयोः ऋतस्य यज्ञस्य युवयोरर्थायानुष्ठीयमानस्य यागस्य पथा मार्गेण दुरिता दुःखानि तरेम नावा अपो न प्रभूतान्युदकानीव ॥

मैत्रावरुणे पशौ 'आ नो मित्रावरुणा' इत्येषा चतुर्थ्यनुवाक्या । सूत्रितं च—'आ नो मित्रावरुणा हव्यजुष्टिं युवं[2] वस्त्राणि पीवसा वसाथे[2]' (आश्व. श्रौ. ३. ८) इति ॥

आ नो मित्रावरुणा हव्यजुष्टिं घृतैर्गव्यूतिमुक्षतमिळाभिः ।
प्रति वामत्र वरमा जनाय पृणीतमुद्नो दिव्यस्य चारोः ॥ ४ ॥

आ । नः । मित्रावरुणा । हव्यऽजुष्टिम् । घृतैः । गव्यूतिम् । उक्षतम् । इळाभिः । प्रति । वाम् । अत्र । वरम् । आ । जनाय । पृणीतम् । उद्नः । दिव्यस्य । चारोः ॥४॥

हे मित्रावरुणा मित्रावरुणौ नः अस्माकं हव्यजुष्टिं हविःसेवनवन्तं यज्ञम् आ गच्छतमिति शेषः । आगत्य च इळाभिः अन्नैः सह घृतैः उदकैः गव्यूतिम् अस्मदीयां भूमिम् उक्षतं सिञ्चतम् । वां युवां प्रति अत्र अस्मिँल्लोके वरम्[3] उत्कृष्टं हविः स्तोत्रं वा क आ यच्छेदिति शेषः । अतः केवलं कृपयैव दिव्यस्य दिवि भवस्य चारोः चरणीयस्य उद्नः उदकस्य । कर्मणि षष्ठी । उक्तलक्षणमुदकं पृणीतं प्रयच्छतम् ॥

एष स्तोमो वरुण मित्र तुभ्यं सोमः शुक्रो न वायवेऽयामि ।
अविष्टं धियो जिगृतं पुरंधीर्यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

एषः । स्तोमः । वरुण । मित्र । तुभ्यम् । सोमः । शुक्रः । न । वायवे । अयामि । अविष्टम् । धियः । जिगृतम् । पुरम्ऽधीः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥५॥

'एष स्तोमः' इति पञ्चमी गता ॥　　॥ ७ ॥

'प्र मित्रयोः' इत्येकोनविंशत्यृचमेकादशं सूक्तं वसिष्ठस्यार्षम् । अत्रेयमनुक्रमणिका—'प्र मित्रयोरेकोना गायत्रं दशम्याद्यास्त्रयः प्रगाथाः पुरउष्णिक् चतुर्थ्याद्या दृशादित्यास्तिस्रः सौर्यः' इति । दशमी बृहत्येकादशी सतोबृहती द्वादशी बृहती त्रयोदशी सतोबृहती चतुर्दशी बृहती पञ्चदशी सतोबृहती षोडशी पुरउष्णिक् शिष्टा गायत्र्यः । चतुर्थ्याद्यास्त्रयोदश्यन्ता आदित्यदेवताः चतुर्दश्याद्यास्तिस्रः सूर्यदेवत्याः । आद्यन्त्यौ तृचौ पूर्ववन्मैत्रावरुणौ । अग्निष्टोमे माध्यंदिनसवने मैत्रावरुणशस्त्र आदितो नवर्चः शस्याः । 'प्र मित्रयोर्वरुणयोरिति नव' (आश्व. श्रौ. ५. १०) इति सूत्रितत्वात् । पृष्ठ्याभिप्लवषडहयोः स्तोमवृद्धिनिमित्तमावापार्था आद्याः षडृचः । सूत्रितं च— 'प्र मित्रयोर्वरुणयोरिति षट्' (आश्व. श्रौ. ७. ५) इति ॥

---

१. ख—सेतुबद्धधकौ; घ—सेतूबंधकौ; ङ-त२—सेतुबंधकौ; न—सेतुबंधकौ । २. ख-भ—युवां स्तोमेभिर्देवयंतो अश्विना । ३. ख-ङ-त-न-श—वां युवां प्रति वरं ।

प्र मि॒त्रयो॒र्वरु॑णयोः॒ स्तोमो॑ न एतु शू॒ष्यः॑ । नम॑स्वान्तुविजा॒तयोः॑ ॥ १ ॥

प्र । मि॒त्रयोः॑ । वरु॑णयोः । स्तोमः॑ । नः॒ । ए॒तु॒ । शू॒ष्यः॑ । नम॑स्वान् । तु॒वि॒ऽजा॒तयोः॑ ॥१॥

ᐯमित्रयोर्वरुणयोः । मित्रावरुणयोरित्यर्थः । उभयत्र प्रतियोगापेक्षया द्विवचनत्वम् । ᐯतुविजातयोः बहुप्रादुर्भावयोर्देवयोः ᐯनः अस्मदीयः ᐯशूष्यः सुखकरः ᐯनमस्वान् अन्नवान् हविर्भिर्युक्तः ᐯस्तोमः स्तोत्रं ᐯप्र ᐯएतु गच्छतु[1]। 'अहोरात्रे वै मित्रावरुणौ' (तै. सं. २. ४. १०. १) इति श्रुतिः। अनयोरहोरात्रापेक्षत्वात्तयोः पुनःपुनरागमनादनयोस्तुविजातत्वम्। अथवा बहूनामुपकारायानयोः प्रादुर्भावात्तुविजातत्वम् ॥

या धा॒रय॑न्त दे॒वाः सु॒दक्षा॒ दक्ष॑पितरा । अ॒सु॒र्या॑य॒ प्रम॑हसा ॥ २ ॥

या । धा॒रय॑न्त । दे॒वाः । सु॒ऽदक्षा॑ । दक्ष॑ऽपितरा । अ॒सु॒र्या॑य । प्रऽम॑हसा ॥ २ ॥

ᐯया यौ युवां ᐯधारयन्त । के । ᐯदेवाः आदिकर्तारः ᐯअसुर्याय बलकरणाय । कीदृशौ युवाम् । ᐯसुदक्षा शोभनबलौ ᐯदक्षपितरा बलस्य पालकौ स्वामिनौ वा । बलप्रदावित्यर्थः । ᐯप्रमहसा प्रकृष्टतेजस्कौ । तौ साधयतमित्युत्तरत्रान्वयः ॥

ता नः॑ स्ति॒पा त॑नू॒पा वरु॑ण जरितॄ॒णाम् । मित्र॒ सा॒धय॑तं॒ धियः॑ ॥ ३ ॥

ता । नः॒ । स्ति॒ऽपा । त॒नू॒ऽपा । वरु॑ण । ज॒रि॒तॄ॒णाम् । मित्र॑ । सा॒धय॑तम् । धियः॑ ॥ ३ ॥

ᐯता तौ ᐯस्तिपा । स्त्यायन्त इति स्तयो गृहाः । तान् पात इति स्तिपौ । ᐯतनूपा तन्वः पातारौ हे ᐯवरुण हे ᐯमित्र उक्तलक्षणौ युवां ᐯजरितॄणां ᐯनः अस्माकं ᐯधियः कर्माणि स्तुतिरूपाणि ᐯसाधयतं फलवन्ति कुरुतम् ॥

यद॒द्य सूर॒ उदि॒तेऽना॑गा मि॒त्रो अ॑र्य॒मा । सु॒वाति॑ सवि॒ता भगः॑ ॥ ४ ॥

यत् । अ॒द्य । सूरे॑ । उत्ऽई॑ते । अना॑गाः । मि॒त्रः । अ॒र्य॒मा । सु॒वाति॑ । स॒वि॒ता । भगः॑ ॥४॥

ᐯयत् धनमस्माकमपेक्षितं तत् ᐯअद्य अस्मिन् काले ᐯसूर ᐯउदिते सति प्रातःसवने ᐯअनागाः पापहन्ता ᐯमित्रोऽर्यमा ᐯसविता ᐯभगः चैते प्रत्येकं ᐯसुवाति प्रेरयेत् । अथवा । अनागा मित्रोऽर्यमा दाता भवतु । तदीप्सितं धनं भगो भजनीयः सविता सुवाति प्रेरयतु ॥

सु॒प्रा॒वीर॑स्तु॒ स क्षयः॒ प्र नु याम॑न्त्सुदानवः । ये नो॒ अंहो॑ऽति॒पिप्र॑ति ॥ ५ ॥

सु॒प्रऽअ॒वीः । अ॒स्तु॒ । सः । क्षयः॑ । प्र । नु । याम॑न् । सु॒ऽदा॒न॒वः॒ ।

ये । नः॒ । अंहः॑ । अ॒ति॒ऽपिप्र॑ति ॥ ५ ॥

ᐯसः ᐯक्षयः स निवासः ᐯसुप्रावीरस्तु सुष्ठु प्रकर्षेण रक्षितास्तु । प्रशब्द आदरार्थः । प्रकर्षेण ᐯनु क्षिप्रं भवत्विति शेषः । कदेति उच्यते । हे ᐯसुदानवः सुदानाः युष्माकं ᐯयामन् यामनि गमने सति । कीदृशानां गमने । ᐯये यूयमागत्य ᐯनः अस्माकम् ᐯअंहः पापम् ᐯअतिपिप्रति अतिपारयथ तेषां गमन इति ॥ ॥ ८ ॥

---

1. श–प्रगच्छतु ।

उत स्वराजो अदितिरदब्धस्य व्रतस्य ये । महो राजान ईशते ॥ ६ ॥

उत । स्वऽराजः । अदितिः । अदब्धस्य । व्रतस्य । ये । महः । राजानः । ईशते ॥ ६ ॥

उत अपि च ये मित्रादयस्त्रयः स्वराजः सर्वस्य स्वामिनः अदितिः तेषां माता च सन्ति अदब्धस्य अहिंसितस्य[1] महः महतः व्रतस्य अस्य कर्मणः राजानः स्वामिनः ते ईशते समर्था भवन्ति । अभिमतं दातुमिति शेषः । अथवैवं योज्यम् । ये[2] मित्रादयोऽदितिश्चादब्धस्य व्रतस्य स्वराज ईश्वराः ते महो महतोऽस्मदभिमतधनस्य राजानः स्वामिनः सन्त ईशतेऽस्मभ्यं तद्दातुम् ॥

'प्रति वाम्' इत्येष तृचश्चातुर्विंशिकेऽहनि प्रातःसवने मैत्रावरुणस्य पर्यासार्थः । सूत्रितं च—'प्रति वां सूर उदिते ब्यन्तरिक्षमतिरत्' ( आश्व. श्रौ. ७. २ ) इति ॥

प्रति वां सूर उदिते मित्रं गृणीषे वरुणम् । अर्यमणं रिशादसम् ॥ ७ ॥

प्रति । वाम् । सूरे । उत्ऽइते । मित्रम् । गृणीषे । वरुणम् । अर्यमणम् । रिशादसम् ॥७॥

हे मित्रावरुणौ मित्रं त्वां वरुणं च युवां रिशादसं शत्रूणामत्तारम् अर्यमणं च प्रति प्रत्येकं गृणीषे स्तुवे । कदेति उच्यते । सूरे सूर्ये देवे उदिते सति । प्रातरित्यर्थः ॥

राया हिरण्यया मतिरियमवृकाय शवसे । इयं विप्रा मेधसातये ॥ ८ ॥

राया । हिरण्यऽया । मतिः । इयम् । अवृकाय । शवसे । इयम् । विप्रा । मेधऽसातये ॥८॥

हिरण्यया हितरमणीयेन राया धनेन सहिताय अवृकाय अहिंस्याय शवसे अस्माकं बलाय इयम् इदानीं क्रियमाणा मतिः स्तुतिर्भवत्विति शेषः ॥ हिरण्ययेत्यत्र 'सुपां सुलुक्' इति तृतीयैकवचनस्य याजादेशः ॥ किंच हे विप्राः प्राज्ञाः इयम् एव स्तुतिः मेधसातये यज्ञलाभाय च भवतु ॥

ते स्याम देव वरुण ते मित्र सूरिभिः सह । इषं स्वश्च धीमहि ॥ ९ ॥

ते । स्याम । देव । वरुण । ते । मित्र । सूरिऽभिः । सह ।
इषम् । स्वरिति स्वः । च । धीमहि ॥ ९ ॥

हे देव वरुण ते वयं तव स्तोतारः स्याम समृद्धा भवेम । न केवलं वयमेव यजमानाः किंतु सूरिभिः स्तोतृभिर्ऋत्विग्भिः सह । तथा हे मित्र देव ते वयं सूरिभिः सह स्याम भवेम । किंच इषम् अन्नं स्वः उदकं च धीमहि धारयामहे ॥

आश्विनशस्त्रे 'बहवः सूरचक्षसः' इति प्रगाथः । सूत्रितं च—'बहवः सूरचक्षस इति प्रगाथाः' ( आश्व. श्रौ. ६. ५ ) इति । दशरात्रे पञ्चमेऽहनि प्रउगशस्त्रेऽप्ययं प्रगाथः । सूत्रितं च—'बहवः सूरचक्षस इमा उ वां दिविष्टयः' ( आश्व. श्रौ. ७. १२ ) इति ॥

बहवः सूरचक्षसोऽग्निजिह्वा ऋतावृधः ।
त्रीणि ये येमुर्विदथानि धीतिभिर्विश्वानि परिभूतिभिः ॥ १० ॥

---

१. ब्र-त-न-श—अहिंसितस्य रक्षक । २. ख-त-न-भ—ते ।

बहवः । सूरऽचक्षसः । अग्निऽजिह्वाः । ऋतऽवृधः ।

त्रीणि । ये । येमुः । विदथानि । धीतिऽभिः । विश्वानि । परिभूतिऽभिः ॥ १० ॥

ᵛबहवः महान्तः ᵛसूरचक्षसः सूर्यसदृशप्रकाशाः । सूरः प्रकाशको येषामिति वा । ᵛअग्निजिह्वाः । अग्निरेव जिह्वादनसाधनो येषां तादृशाः । ᵛऋतावृधः यज्ञस्य वर्धयितारो मित्रादयः । किंच ᵛये ᵛत्रीणि ᵛविश्वानि व्याप्तानि ᵛविदथानि क्षित्यादिस्थानानि क्षित्यादीनि ᵛपरिभूतिभिः परिभावुकैः ᵛधीतिभिः कर्मभिः ᵛयेमुः प्रयच्छन्ति ते क्षत्रमाशतेत्युत्तरत्र संबन्धनीयम् । अथवात्रैव ये त्रीणि स्थानानि प्रयच्छन्ति ते बहुत्वादिगुणोपेता आगच्छन्त्वित्यध्याहार्यम् ॥ ॥ ९ ॥

वि ये दधुः शरदं मासमादहर्यज्ञमक्तुं चादृचम् ।
अनाप्यं वरुणो मित्रो अर्यमा क्षत्रं राजान आशत ॥ ११ ॥

वि । ये । दधुः । शरदम् । मासम् । आत् । अहः । यज्ञम् । अक्तुम् । च । आत् । ऋचम् ।
अनाप्यम् । वरुणः । मित्रः । अर्यमा । क्षत्रम् । राजानः । आशत ॥ ११ ॥

ᵛये मित्रादयः ᵛशरदं संवत्सरं ᵛवि ᵛदधुः अकुर्वन् ᵛआत् अनन्तरमेव ᵛमासम् अनन्तरम् ᵛअहः अनन्तरमहःसाध्यं ᵛयज्ञम् ᵛआत् अनन्तरम् ᵛअक्तुं रात्रिं ᵛच ᵛऋचं मन्त्रांश्च । यद्वा सर्वत्र आत् इत्ययम् अपीत्यर्थे वर्तते । तथा सति क्रमोऽविवक्षितः[1] । ते ᵛवरुणः ᵛमित्रः ᵛअर्यमा च त्रयः ᵛअनाप्यम् अन्यैरप्राप्तं ᵛक्षत्रं बलं ᵛराजानः राजमानाः ᵛआशत व्याप्तवन्तः ॥

तद्वो अद्य मनामहे सूक्तैः सूर उदिते ।
यदोहते वरुणो मित्रो अर्यमा यूयमृतस्य रथ्यः ॥ १२ ॥

तत् । वः । अद्य । मनामहे । सुऽउक्तैः । सूरे । उत्ऽइते ।
यत् । ओहते । वरुणः । मित्रः । अर्यमा । यूयम् । ऋतस्य । रथ्यः ॥ १२ ॥

ᵛतत् प्रसिद्धम् ᵛअद्य अस्मिन् यागकाले ᵛवः युष्मान् ᵛमनामहे याचामहे । कैः साधनैः । ᵛसूक्तैः । कस्मिन् काले । ᵛसूर ᵛउदिते । प्रातःकाल इत्यर्थः । ᵛयत् धनं हे ᵛऋतस्य उदकस्य ᵛरथ्यः नेतारः ᵛयूयं वरुणादयः ᵛओहते । यूयमित्यनेन सामानाधिकरण्यात् ओहत इत्यत्र पुरुषव्यत्ययः । ओहध्व इत्यर्थः । तद्धनं मनामह इति ॥

ऋतावान ऋतजाता ऋतावृधो घोरासो अनृतद्विषः ।
तेषां वः सुम्ने सुच्छर्दिष्टमे नरः स्याम ये च सूरयः ॥ १३ ॥

ऋतऽवानः । ऋतऽजाताः । ऋतऽवृधः । घोरासः । अनृतऽद्विषः ।
तेषाम् । वः । सुम्ने । सुच्छर्दिःऽतमे । नरः । स्याम । ये । च । सूरयः ॥ १३ ॥

ये यूयम् ᵛऋतावानः ऋतवन्तो यज्ञवन्त उदकवन्तो वा ᵛऋतजाताः । उक्त ऋतशब्दार्थः । तदर्थमुत्पन्नाः । अथवा ऋतात् प्रजापतेः[2] सकाशादुत्पन्नाः । ᵛऋतावृधः उक्तार्थस्य ऋतस्य वर्धयितारः

---

१. ख-भ-अक्रमोत्रावि॰ । २. ख–प्रजातेः प; क्ष-त३-४-न–प्रजातेः; श–प्रजाजातेः ।

vघोरासः घोराः vअनृतद्विषः अयष्टृद्वेष्टारः vतेषां vवः युष्माकं vसुच्छर्दिष्टमे सुखतमे vसुम्ने धने अत्यन्तरमणीयगृहयुक्ते सुखे वा ये वयं vये vच अन्ये vसूरयः स्तोतारस्ते सर्वे vस्याम भवेम ॥

सोमातिरेके माध्यंदिनसवने नैमित्तिके शस्त्रे 'उदु त्यत्' इत्ययं प्रगाथोऽनुरूपः। सूत्रितं च—'बण्महाँ असि सूर्योदु त्यद्दर्शतं वपुरिति प्रगाथौ स्तोत्रियानुरूपौ' (आश्व. श्रौ. ६. ७) इति। चातुर्विंशिकेऽहनि माध्यंदिनसवनेऽयमेव वैकल्पिकः स्तोत्रियस्तृचः। सूत्रितं च—'उदु त्यद्दर्शतं वपुरुदु त्ये मधुमत्तमाः' (आश्व. श्रौ. ७. ४) इति ॥

**उदु त्यद्दर्शतं वपुर्दिव एति प्रतिह्वरे ।**
**यदीमाशुर्वहति देव एतशो विश्वस्मै चक्षसे अरम् ॥ १४ ॥**

उत् । ऊँ इति । त्यत् । दर्शतम् । वपुः । दिवः । एति । प्रतिऽह्वरे ।
यत् । ईम् । आशुः । वहति । देवः । एतशः । विश्वस्मै । चक्षसे । अरम् ॥ १४ ॥

vत्यत् तत् vदर्शतं दर्शनीयं vवपुः मण्डलं vदिवः अन्तरिक्षस्य vप्रतिह्वरे समीपे vउदु vएति उदेति। उ इति पूरणः। vयदीं यदेतन्मण्डलम् vआशुः शीघ्रगामी vएतशः एतवर्णोऽश्वो vवहति धारयति। किमर्थम्। vविश्वस्मै सर्वस्मै vअरं vचक्षसे सम्यक् सर्वलोकदर्शनाय ॥

**शीर्ष्णःशीर्ष्णो जगतस्तस्थुषस्पतिं समया विश्वमा रजः ।**
**सप्त स्वसारः सुविताय सूर्यं वहन्ति हरितो रथे ॥ १५ ॥**

शीर्ष्णःऽशीर्ष्णः । जगतः । तस्थुषः । पतिम् । समया । विश्वम् । आ । रजः ।
सप्त । स्वसारः । सुविताय । सूर्यम् । वहन्ति । हरितः । रथे ॥ १५ ॥

vशीर्ष्णःशीर्ष्णः सर्वस्यापि शिरसः। तृतीयार्थे पञ्चमी। स्वस्वशिरसेत्यर्थः[1]। सूर्यं वहन्तीत्यनेन संबध्यते। अथवा शिरःशब्देन तद्वान् पदार्थो लक्ष्यते। वीप्सया तस्य कात्स्न्यं-मुच्यते। सर्वस्य श्रेष्ठमित्यर्थः। vजगतः जङ्गमस्य vतस्थुषः स्थावरस्य vपतिं स्वामिनं vरथे वर्तमानं vसूर्यं vसुविताय[2] कल्याणाय[2] vविश्वं vरजः vसमया सर्वलोकस्य समीपे। 'अभितः-परितःसमया॰' (पा. म. २. ३. २. १) इत्यादिना समयाशब्दयोगात् द्वितीया। vसप्त सप्त-संख्याकाः vस्वसारः अन्यनिरपेक्षेण स्वयमेव सरन्त्यः vहरितः हरितवर्णा अश्वाः vवहन्ति ॥ ॥१०॥

**तच्चक्षुर्देवहितं शुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतम् ॥१६॥**

तत् । चक्षुः । देवऽहितम् । शुक्रम् । उत्ऽचरत् । पश्येम । शरदः । शतम् ।
जीवेम । शरदः । शतम् ॥ १६ ॥

vतत् प्रसिद्धं vचक्षुः सर्वस्य प्रकाशकं vदेवहितं देवानां हितम्। तेषां हविःस्वीकारस्यैत-दधीनत्वात्[3]। अथवा देवेन हितं vशुक्रं निर्मलं सूर्यमण्डलम् vउच्चरत् उद्गच्छति। तत् vशरदः vशतं शतसंवत्सरं vपश्येम। vजीवेम vशरदः vशतम्। पुनःश्रुतिरादरार्था ॥

---

१. ख–सर्वशिरसे॰। २. ख-क्ष-त-न-भ-श–'सुविताय कल्याणाय' नास्ति। ३. ख–हविः-स्वीकारस्यैतद्धधानत्वात्; क्ष-त१-२-४–हविःस्वीकारस्वैतदीर्याधीनत्वात्; त३–हविःस्वीकारस्वैतदीयाधीनत्वात्; न–हविःस्वीकारस्वेतदीर्याधीनत्वात्; श१–हविर्वहनादय तदीयाधीनत्वात्; श२–हविः-स्वीकारस्वैतदार्याधीनत्वात्।

पृष्ठ्याभिप्लवषडहयोः स्तोमनिमित्त आवापे 'काव्येभिरदाभ्या' इति तृचः। 'काव्येभिरदाभ्येति तिस्रः' (आश्व. श्रौ. ७. ५) इति हि सूत्रितम्॥

काव्येभिरदाभ्या यातं वरुण द्युमत्। मित्रश्च सोमपीतये॥ १७॥

काव्येभिः। अदाभ्या। आ। यातम्। वरुण। द्युऽमत्। मित्रः। च। सोमऽपीतये॥१७॥

हे अदाभ्या अदम्भनीयौ हे वरुण त्वं मित्रश्च द्युमत् द्युतिमन्तौ युवां काव्येभिः अस्मत्कृतैः स्तोत्रैः आ यातम्। किमर्थम्। सोमपीतये सोमपानाय॥

दिवो धामभिर्वरुण मित्रश्चा यातमद्रुहा। पिबतं सोममातुजी॥ १८॥

दिवः। धामऽभिः। वरुण। मित्रः। च। आ। यातम्। अद्रुहा।
पिबतम्। सोमम्। आतुजी इत्याऽतुजी॥ १८॥

हे वरुण त्वं मित्रश्च अद्रुहा अद्रोग्धारौ युवां दिवः द्युलोकसंबन्धिभ्यः धामभिः धामभ्यः स्थानेभ्यः। पञ्चम्यर्थे तृतीया। अथवा धामभिस्तेजोभिर्विभूतिभिः सार्धम् आ यातम् अस्मद्यज्ञमागच्छतम्। आगत्य च आतुजी शत्रूणां सर्वतो हिंसकावादातारौ वा धनानामेवंरूपौ सन्तौ सोमं पिबतम्। 'तुजि पिजि हिंसाबलादाननिकेतनेषु'। अत्र हिंसायामादाने वा वर्तते॥

आ यातं मित्रावरुणा जुषाणावाहुतिं नरा। पातं सोममृतावृधा॥ १९॥

आ। यातम्। मित्रावरुणा। जुषाणौ। आऽहुतिम्। नरा। पातम्। सोमम्। ऋतऽवृधा॥१९॥

हे मित्रावरुणा मित्रावरुणौ हे नरा यागनेतारौ आहुतिं सोमलक्षणां जुषाणौ प्रीयमाणौ सन्तौ आ यातम् आगच्छतं यज्ञम्। आगत्य च हे ऋतावृधा यज्ञस्य वर्धकौ युवां सोमं पातं पिबतम्॥ ॥ ११ ॥

'प्रति वां रथम्' इति दशर्चं द्वादशं सूक्तम्। 'प्रति वां दशाश्विनं तु तत्' इत्यनुक्रमणिका। ऋषिर्वसिष्ठः। छन्दस्त्रिष्टुप्। तुह्यादिपरिभाषयैतदादीनि अष्ट सूक्तान्यश्विदेवत्यानि। प्रातरनुवाक आश्विने क्रतौ त्रैष्टुभे छन्दस्येतदादिसूक्तसप्तकं द्वितीयवर्जं शंस्यम्। तथा च सूत्रं— 'प्रति वां रथमिति सप्तानां द्वितीयमुद्धरेत्' (आश्व. श्रौ. ४. १५) इति॥

प्रति वां रथं नृपती जरध्यै हविष्मता मनसा यज्ञियेन।
यो वां दूतो न धिष्ण्यावजीगरच्छा सूनुर्न पितरा विवक्मि॥ १॥

प्रति। वाम्। रथम्। नृपती इति नृऽपती। जरध्यै। हविष्मता। मनसा। यज्ञियेन।
यः। वाम्। दूतः। न। धिष्ण्यौ। अजीगः। अच्छ। सूनुः। न। पितरा। विवक्मि॥१॥

हे नृपती नृणामृत्विग्यजमानानां स्वामिनावश्विनौ वां युवयोः रथं जरध्यै। जरा स्तुतिः। स्तोतुं प्रति गच्छामीति शेषः। केन[1] साधनेनेति[1] तदुच्यते। हविष्मता हविर्युक्तेन यज्ञियेन यज्ञार्हेण मनसा स्तोत्रेण। यः रथो वां हे धिष्ण्यौ धिषणार्हौ। धिषणा स्तुतिः। वां युवां दूतो न दूत इव अजीगः जागरयति प्रबोधयति अस्मान् प्रति गन्तुं तं रथम् अच्छा

१. ख-त३-भ-श-केनेति; झ-न-वेनेति; त४-वनेति।

ᵛविवक्मि आवक्मि। प्रबोधने दृष्टान्तः। ᵛसूनुर्न ᵛपितरा पुत्रो मातापितराविव। अथवात्र यो रथो युवामजीगः तेन रथेन गन्तुं बुध्यमानौ युवामच्छा विवक्मीति वा योज्यम् ॥

अशो॑च्य॒ग्निः स॑मिधा॒नो अ॒स्मे उपो॑ अदृश्र॒न्तम॑सश्चि॒दन्ताः॑ ।
अचे॑ति के॒तुरु॒षसः॑ पु॒रस्ता॑च्छ्रि॒ये दि॒वो दु॑हि॒तुर्जाय॑मानः ॥ २ ॥

अशो॑चि । अ॒ग्निः । स॒म्ऽइ॒धा॒नः । अ॒स्मे इति॑ । उपो॒ इति॑ । अ॒दृ॒श्र॒न् । तम॑सः । चि॒त् । अन्ताः॑ ।
अचे॑ति । के॒तुः । उ॒षसः॑ । पु॒रस्ता॑त् । श्रि॒ये । दि॒वः । दु॒हि॒तुः । जाय॑मानः ॥ २ ॥

ᵛअस्मे अस्माभिः ᵛसमिधानः समिध्यमानः सन् ᵛअग्निः ᵛअशोचि दीप्यते। ᵛतमसश्चित् तमसोऽपि ᵛअन्ताः पर्यन्ताः प्रदेशाः ᵛउपो ᵛअदृश्रन् उपदृश्यन्ते सर्वैः। ᵛकेतुः सर्वस्य प्रज्ञापकः[1] सूर्यः ᵛदिवो ᵛदुहितुः ᵛउषसः ᵛपुरस्तात् पूर्वस्यां दिशि ᵛश्रिये शोभायै ᵛजायमानः सन् ᵛअचेति ज्ञायते। यस्मादेवं तस्माद्युवयोरागमनसमयः। अत आगच्छतमिति शेषः ॥

अ॒भि वां॑ नू॒नम॑श्विना॒ सुहो॑ता॒ स्तोमैः॑ सिषक्ति नासत्या विव॒क्वान् ।
पू॒र्वीभि॑र्यातं प॒थ्या॑भिर॒र्वाक्स्व॒र्विदा॒ वसु॑मता॒ रथे॑न ॥ ३ ॥

अ॒भि । वा॒म् । नू॒नम् । अ॒श्वि॒ना॒ । सु॒ऽहो॑ता । स्तोमैः॑ । सि॒स॒क्ति॒ । ना॒स॒त्या॒ । वि॒व॒क्वान् ।
पू॒र्वीभिः॑ । या॒त॒म् । प॒थ्या॑भिः । अ॒र्वाक् । स्वः॒ऽविदा॑ । वसु॑ऽमता । रथे॑न ॥ ३ ॥

हे ᵛअश्विना ᵛवां युवां ᵛसुहोता सुष्ठु देवानां स्तोता ᵛविवक्वान् स्तुतीनां वक्ताहं हे ᵛनासत्या सत्यभूतौ। इदमश्विनावित्यत्र योज्यम्। ᵛस्तोमैः ᵛसिषक्ति सेवते। अतः ᵛअर्वाक् अस्मदभिमुखं ᵛपूर्वीभिः ᵛपथ्याभिः पूर्वक्षुण्णैर्मार्गैः ᵛस्वर्विदा स्वर्गमुदकं वा जानता स्वरणवता वा ᵛवसुमता धनवता वा ᵛरथेन ᵛयातं गच्छतम् ॥

अ॒वोर्वां॑ नू॒नम॑श्विना यु॒वाकु॑र्हु॒वे यद्वां॑ सु॒ते मा॑ध्वी वसू॒युः ।
आ वां॑ वहन्तु॒ स्थवि॑रासो॒ अश्वाः॑ पिबा॑थो अ॒स्मे सु॒षु॑ता॒ मधू॑नि ॥ ४ ॥

अ॒वोः । वा॒म् । नू॒नम् । अ॒श्वि॒ना॒ । यु॒वाकुः॑ । हु॒वे । यत् । वा॒म् । सु॒ते । मा॒ध्वी॒ इति॑ । व॒सु॒ऽयुः ।
आ । वा॒म् । व॒ह॒न्तु॒ । स्थवि॑रासः । अश्वाः॑ । पिबा॑थः । अ॒स्मे इति॑ । सु॒ऽसु॑ता । मधू॑नि ॥ ४ ॥

हे ᵛअश्विना अश्विनौ ᵛअवोः रक्षित्रोर्युवाभ्यां ᵛयुवाकुः युवां कामयमानोऽहं ᵛनूनम् अद्य स्वभूतो भवामीति शेषः। ᵛयत् यस्मात् हे ᵛमाध्वी मधुरस्य सोमस्यार्हौ मधुविद्यासंबन्धिनौ वा ᵛवां युवां ᵛसुते अभिषुते सोमे ᵛवसूयुः वसुकामः ᵛहुवे स्तौमि अतो वां स्वभूतः। ᵛवां युवाम् ᵛआ ᵛवहन्तु। के। ᵛस्थविरासः स्थूलाः प्रवृद्धाः ᵛअश्वाः। एतयोरतिप्रवृद्धत्वाच्छीघ्रगतेरपेक्षितत्वाच्च स्थविरैरेव भाव्यम्। आगमनानन्तरम् ᵛअस्मे अस्माभिः ᵛसुषुता सुष्ठ्वभिषुतानि ᵛमधूनि मधुररसान् ᵛपिबाथः पिबतम् ॥

प्राची॑मु देवाश्विना॒ धियं॒ मेऽमृ॒ध्रां सा॒तये॑ कृतं वसू॒युम् ।
विश्वा॑ अविष्टं॒ वाज॒ आ पुरं॑धीस्ता नः शक्तं शचीपती॒ शची॑भिः ॥ ५ ॥

---

1. ख–प्रकाशकः।

प्राचीम् । ॐ इति । देवा । अश्विना । धियम् । मे । अमृध्राम् । सातये । कृतम् । वसुऽयुम् । विश्वाः । अविष्टम् । वाजे । आ । पुरम्ऽधीः ।
ता । नः । शक्तम् । शचीपती इति शचीऽपती । शचीभिः ॥ ५ ॥

हे अश्विना अश्विनौ देवा देवौ युवां प्राचीम् ऋज्वीम् अमृध्राम् अहिंसितां वसूयुं धनमिच्छन्तीं मे मम धियं बुद्धिं स्तुतिं कर्म वा सातये लाभायोचितां कृतं कुरुतम् । किंच वाजे आ संग्रामेऽपि विश्वाः पुरंधीः अस्मदीया बुद्धीः अविष्टं रक्षतम् । हे शचीपती । शचीति कर्मनाम । कर्मणां पालकौ ता तौ युवां शचीभिः अस्मदीयैः स्तुत्यादिरूपैः कर्मभिः नः अस्मान् शक्तं प्रयच्छतं धनमिति शेषः ॥ ॥ १२ ॥

अविष्टं धीष्वश्विना न आसु प्रजावद्रेतो अह्रयं नो अस्तु ।
आ वां तोके तनये तूतुजानाः सुरत्नासो देववीतिं गमेम ॥ ६ ॥

अविष्टम् । धीषु । अश्विना । नः । आसु । प्रजाऽवत् । रेतः । अह्रयम् । नः । अस्तु ।
आ । वाम् । तोके । तनये । तूतुजानाः । सुऽरत्नासः । देवऽवीतिम् । गमेम ॥ ६ ॥

हे अश्विना अश्विनौ नः अस्मान् आसु धीषु एषु कर्मसु अविष्टं रक्षतम् । नः अस्मभ्यम् अह्रयम् अक्षीणं प्रजावत् पुत्राद्युपेतं पुत्रोत्पादनसमर्थं रेतः अस्तु । वां युवयोरनुग्रहाल्लब्धे तोके पुत्रे तनये तत्पुत्रादौ च तूतुजानाः अभिमतं धनं प्रयच्छन्तः सुरत्नासः शोभनधनाश्च सन्तः देववीतिं देवानां वीतिः प्राप्तिर्यस्मिंस्तादृशं यज्ञम् आ गमेम आगच्छेम ॥

एष स्य वां पूर्वगत्वेव सख्ये निधिर्हितो माध्वी रातो अस्मे ।
अहेळता मनसा यातमर्वागश्नन्ता हव्यं मानुषीषु विक्षु ॥ ७ ॥

एषः । स्यः । वाम् । पूर्वगत्वाऽइव । सख्ये । निऽधिः । हितः । माध्वी इति । रातः । अस्मे इति ।
अहेळता । मनसा । आ । यातम् । अर्वाक् । अश्नन्ता । हव्यम् । मानुषीषु । विक्षु ॥ ७ ॥

एषः पुरतो दीयमानः स्यः सः युवयोः प्रियत्वेन प्रसिद्धः सोमो हे माध्वी मधुप्रियावश्विनौ वां युवयोः पुरतः निधिः निधिस्थानीयः हितः स्थापितः अस्मे अस्माभिः रातः दत्तः संकल्पितः संनिहितः । किमिव । सख्ये सख्यार्थं पूर्वगत्वेव पुरतो गन्ता दूत इव । स यथा प्रियं जनयन् स्वामिनः पुरतो वर्तते तद्वदित्यर्थः । यस्मादेवं तस्मात् अहेळता अक्रुध्यता मनसा अनुग्रहयुक्तेन चेतसा अर्वाक् अस्मदभिमुखम् आ यातम् आगच्छतम् । अश्नन्ता हव्यं हविः सोमादिकमश्नन्तावभ्यवहरन्तौ । कुत्र । मानुषीषु विक्षु मनुष्यरूपासु प्रजासु वर्तमानम् ॥

एकस्मिन्योगे भुरणा समाने परि वां सप्त स्रवतो रथो गात् ।
न वायन्ति सुभ्वो देवयुक्ता ये वां धूर्षु तरणयो वहन्ति ॥ ८ ॥

एकस्मिन् । योगे । भुरणा । समाने । परि । वाम् । सप्त । स्रवतः । रथः । गात् ।
न । वायन्ति । सुऽभ्वः । देवऽयुक्ताः । ये । वाम् । धूःऽसु । तरणयः । वहन्ति ॥८॥

हे vभुरणा सर्वस्य भर्तारौ युवयोः vएकस्मिन् vसमाने उभयसाधारणे vयोगे अस्मद्विषये सति vवां युवयोः vरथः vसप्त vस्रवतः सर्पणस्वभावाः सप्तसंख्याका वा गङ्गाद्याः vपरि vगात् परिगच्छति । शीघ्रमागच्छतीत्यर्थः[1] । तद्रथानुकूलाः vसुभ्वः सुभवनाः vदेवयुक्ताः देवाभ्यां युवाभ्यां युक्ता अश्वाः शीघ्रगमने[2] vन vवायन्ति न क्षुभ्यन्ति न श्राम्यन्ते । vये अश्वाः vवां vधूर्षु रथस्य vतरणयः तारकाः शीघ्रगन्तारः vवहन्ति युवां ते न वायन्तीति ॥

असश्चता मघवद्भ्यो हि भूतं ये राया मघदेयं जुनन्ति ।
प्र ये बन्धुं सूनृताभिस्तिरन्ते गव्या पृञ्चन्तो अश्व्या मघानि ॥ ९ ॥

असश्चता । मघवत्ऽभ्यः । हि । भूतम् । ये । राया । मघऽदेयम् । जुनन्ति ।
प्र । ये । बन्धुम् । सूनृताभिः । तिरन्ते । गव्या । पृञ्चन्तः । अश्व्या । मघानि ॥ ९ ॥

vअसश्चता कुत्राप्यसज्यमानौ युवां vमघवद्भ्यः धनवद्भ्यो हविष्मद्भ्यो यजमानेभ्यस्तेषामर्थाय vभूतं vहि भवतम् । तेभ्य एवानुरक्तौ भवतम् । अनुग्राह्या एव विशेष्यन्ते । vये vराया धनेन निमित्तेन राया युक्ता वा vमघदेयं दातव्यं मघं धनं हविर्लक्षणं वा vजुनन्ति प्रेरयन्ति यच्छन्ति । vये च vबन्धुम् । स्नेहेन बध्नातीति बन्धुः । तं स्वसंबन्धिनम् । अथवा फलेन बध्नातीति बन्धुरध्वर्य्वादिः । तं vसूनृताभिः प्रियसत्यात्मिकाभिर्वाग्भिः vप्र vतिरन्ते प्रवर्धयन्ति । प्रपूर्वस्तिरतिर्वर्धनार्थः । किं कुर्वन्तः । vगव्या गोरूपाणि vअश्व्या अश्वरूपाणि च vमघानि धनानि vपृञ्चन्तः अर्थिभ्यः[3] प्रयच्छन्तः[3] । तेभ्यो मघवद्भ्यो भूतमिति ॥

नू मे हवमा शृणुतं युवाना यासिष्टं वर्तिरश्विनाविरावत् ।
धत्तं रत्नानि जरतं च सूरीन्यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥

नु । मे । हवम् । आ । शृणुतम् । युवाना । यासिष्टम् । वर्तिः । अश्विनौ । इराऽवत् ।
धत्तम् । रत्नानि । जरतम् । च । सूरीन् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ १० ॥

हे vयुवाना नित्ययौवनौ vनु अद्य युवां vमे vहवम् अस्मदीयां स्तुतिम् vआ vशृणुतम् । श्रुत्वा च हे vअश्विनौ vइरावत् हविर्युक्तं vवर्तिः गृहं vयासिष्टम् आगच्छतम् । आगत्य च vरत्नानि रमणीयानि धनानि vधत्तं दत्तम् । vसूरीन् स्तोतॄन् vजरतं वर्धयतम् । धातूनामनेकार्थत्वात् । शिष्टं स्पष्टम् ॥ ॥ १३ ॥

'आ शुभ्रा यातम्' इति नवर्चं त्रयोदशं सूक्तं वसिष्ठस्यार्षमाश्विनम् । आदितः सप्त विराजोऽष्टमीनवम्यौ त्रिष्टुभौ । अनुक्रम्यते च—'आ शुभ्रा नव सप्ताद्या विराजः' इति । सूक्तविनियोगो लैङ्गिकः ॥

आ शुभ्रा यातमश्विना स्वश्वा गिरो दस्रा जुजुषाणा युवाकोः ।
हव्यानि च प्रतिभृता वीतं नः ॥ १ ॥

---

१. ख-भ—स्वतो गच्छती° । २. श—शीघ्रगमनेन । ३. ख—यच्छंतोर्थिभ्यः; झ-त१-२—यतोर्थिभ्यः प्रयच्छंतः; त३-४-न-श—यंतोर्थिभ्यः प्रयच्छंतः; भ—यंतोर्थिभ्यः ।

आ । शुभ्रा । यातम् । अश्विना । सुऽअश्वा । गिरः । दस्रा । जुजुषाणा । युवाकोः ।
हव्यानि । च । प्रतिऽभृता । वीतम् । नः ॥ १ ॥

हे शुभ्रा दीप्तौ स्वश्वा शोभनाश्वौ हे अश्विना अश्विनौ आ यातम् अस्मद्यज्ञमागच्छतम्। दस्रा शत्रूणामुपक्षपयितारौ युवां युवाकोः युवां कामयमानस्य मम गिरः स्तुतीः जुजुषाणा सेवमानौ भवतमिति शेषः। न केवलं स्तुतिं किंतु नः अस्मदीयानि प्रतिभृता संभृतानि हव्यानि हवींषि च वीतं भक्षयतम् ॥

'प्र वामन्धांसि' इत्येषाश्विनशस्त्रयाज्या। सूत्रितं च—'प्र वामन्धांसि मद्यान्यस्थुरुभा पिबतमश्विना' (आश्व. श्रौ. ६. ५) इति ॥

प्र वामन्धांसि मद्यान्यस्थुररं गन्तं हविषो वीतये मे ।
तिरो अर्यो हवनानि श्रुतं नः ॥ २ ॥

प्र । वाम् । अन्धांसि । मद्यानि । अस्थुः । अरम् । गन्तम् । हविषः । वीतये । मे ।
तिरः । अर्यः । हवनानि । श्रुतम् । नः ॥ २ ॥

हे अश्विनौ वां युवाभ्यां मद्यानि मदजनकानि अन्धांसि सोमलक्षणान्यन्नानि प्र अस्थुः प्रास्थिषत। गृहीतान्यासन्नित्यर्थः। अतो युवां मे मम हविषः वीतये पानाय अरम् अत्यर्थं शीघ्रं गन्तम् आगच्छतम्। अर्यः अरेरस्मद्विरोधिनः हवनानि[1] तिरः तिरस्कृत्य नः। अस्मदाह्वानमित्यर्थः। तत् श्रुतं शृणुतम्। श्रुतमित्यस्य वाक्यादित्वादनिघातः ॥

प्र वां रथो मनोजवा इयर्ति तिरो रजांस्यश्विना शतोतिः ।
अस्मभ्यं सूर्यावसू इयानः ॥ ३ ॥

प्र । वाम् । रथः । मनःऽजवाः । इयर्ति । तिरः । रजांसि । अश्विना । शतऽऊतिः ।
अस्मभ्यम् । सूर्यावसू इति । इयानः ॥ ३ ॥

हे सूर्यावसू सूर्यायाः सह रथे वसन्तौ वां युवयोः रथः अस्मभ्यम् अस्मदर्थम् इयानः याच्यमानः सन् इयर्ति। आगच्छत्यस्मद्यज्ञम्। अथवा वां प्रेरयति गमनाय। कीदृशो रथः। मनोजवाः मनोवेगः शतोतिः अपरिमितास्मद्विषयरक्षणः। किं कुर्वन्। रजांसि लोकान् तिरः तिरस्कृत्यातिक्रम्य इयर्तीति ॥

अयं ह यद्वां देवया उ अद्रिरूर्ध्वो विवक्ति सोमसुद्युवभ्याम् ।
आ वल्गू विप्रो ववृतीत हव्यैः ॥ ४ ॥

अयम् । ह । यत् । वाम् । देवऽयाः । ऊँ इति । अद्रिः । ऊर्ध्वः । विवक्ति । सोमऽसुत् । युवऽभ्याम् ।
आ । वल्गू इति । विप्रः । ववृतीत । हव्यैः ॥ ४ ॥

यत् यदा वां युवां प्रति देवयाः देवौ युवां कामयमानः। उ इति पूरणः। अयम् अद्रिः अभिषवग्रावा सोमसुत् सोममभिषुण्वन् युवभ्यां युवाभ्यामर्थायाभिषुण्वन्निति संबन्धः।

---

1. घ–हवनानि आह्वानानि।

एवं कुर्वन् ᐯऊर्ध्वः उन्नतः सन् ᐯविवक्ति उच्चैः शब्दयति तदानीं ᐯवल्गू सुन्दरौ युवां ᐯविप्रः मेधावी यजमानः ᐯहव्यैः हविर्भिः ᐯआ ᐯववृतीत आवर्तयति ॥

चित्रं ह यद्वां भोजनं न्वस्ति न्यत्रये महिष्वन्तं युयोतम् ।
यो वामोमानं दधते प्रियः सन् ॥ ५ ॥

चित्रम् । ह । यत् । वाम् । भोजनम् । नु । अस्ति । नि । अत्रये । महिष्वन्तम् । युयोतम् ।
यः । वाम् । ओमानम् । दधते । प्रियः । सन् ॥ ५ ॥

हे अश्विनौ ᐯवां युवयोः ᐯचित्रं चायनीयं ᐯयत् ᐯभोजनं धनम् ᐯअस्ति ᐯह अस्ति खलु । ᐯनु इति पूरणः । तदस्मभ्यं दत्तमित्यर्थः । अथ तयोः स्तुतिः । ᐯअत्रये एतन्नामकायर्षये । पञ्चम्यर्थे चतुर्थी । तस्मात् ᐯमहिष्वन्तम् ऋबीसं ᐯनि ᐯयुयोतं पृथक्कुरुतम् । ᐯयः अत्रिः ᐯप्रियः ᐯसन् स्तोतृत्वा-युवाभ्यां प्रियभूतः सन् युवाभ्यामेव कृतम् ᐯओमानं रक्षणं[1] सुखं[1] ᐯदधते धारयति[2] ॥    ॥१४॥

उत त्यद्वां जुरते अश्विना भूच्च्यवानाय प्रतीत्यं हविर्दे ।
अधि यद्वर्प इतऊति धत्थः ॥ ६ ॥

उत । त्यत् । वाम् । जुरते । अश्विना । भूत् । च्यवानाय । प्रतीत्यम् । हविःऽदे ।
अधि । यत् । वर्पः । इतःऽऊति । धत्थः ॥ ६ ॥

ᐯउत अपि च हे ᐯअश्विना अश्विनौ ᐯवां युवयोः कर्म कुर्वते ᐯजुरते जूर्णाय ᐯहविर्दे हविर्दात्रे ᐯच्यवानाय एतन्नामकाय महर्षये ᐯत्यत् तत् ᐯप्रतीत्यं प्रतिगमनं तस्य रूपस्य प्रत्याप्त्यै ᐯभूत् अभूत् । किं तदिति । ᐯयद्वर्पः रूपम् ᐯइतऊति इतोगमनाख्यं मृत्योः सकाशादितःप्राप्तिरूपम् ᐯअधि ᐯधत्थः अध्यधत्तम् । ' युवं च्यवानमश्विना जरन्तं पुनर्युवानं चक्रथुः शचीभिः ' ( ऋ. सं. १. ११७. १३ ) इत्यादिषु च्यवानस्य युवयोर्नवीकरणं प्रसिद्धम् ॥

उत त्यं भुज्युमश्विना सखायो मध्ये जहुर्दुरेवासः समुद्रे ।
निरीं पर्षदरावा यो युवाकुः ॥ ७ ॥

उत । त्यम् । भुज्युम् । अश्विना । सखायः । मध्ये । जहुः । दुःऽएवासः । समुद्रे ।
निः । ईम् । पर्षत् । अरावा । यः । युवाकुः ॥ ७ ॥

ᐯउत अपि च ᐯत्यं तं ᐯभुज्युम् एतन्नामानं ᐯसमुद्रे ᐯमध्ये समुद्रोदकस्य मध्ये ᐯसखायः भुज्युसखिभूताः ᐯदुरेवासः दुष्टगमनाः ᐯजहुः त्यक्तवन्तः । ᐯईम् एनं समुद्रमध्ये क्षिप्तं ᐯनिः ᐯपर्षत् निरपारयतम् । ᐯयः भुज्युः ᐯयुवाकुः युवां कामयिता ᐯअरावा अरणवानभिगन्ता च तमेनं निरपारयतम् ।अत्राश्विनेषु सूक्तेषु कथाः सूच्यन्ते । अत्रिभुज्य्वादीनामग्निजलादिभ्यो रक्षणरूपास्ताः सर्वा महता प्रपञ्चेनास्माभिः ' नासत्याभ्यां बर्हिरिव ' ( ऋ. सं. १. ११६. १ ) इत्यत्र प्रपञ्चिताः । तास्तत्र द्रष्टव्याः ॥

---

१. ख-ग्ल-त-न-भ-श– रक्षणसुखं । २. घ– धारयेत्; ग्ल– धारयतं; ग्ल– धारयतः; त३-न-श–धारयत ।

वृकाय चिज्जसमानाय शक्तमुत श्रुतं शयवे हूयमाना ।
यावघ्न्यामपिन्वतमपो न स्तर्यं चिच्छक्त्यश्विना शचीभिः ॥ ८ ॥

वृकाय । चित् । जसमानाय । शक्तम् । उत । श्रुतम् । शयवे । हूयमाना ।
यौ । अघ्न्याम् । अपिन्वतम् । अपः । न । स्तर्यम् । चित् । शक्ती । अश्विना । शचीभिः ॥८॥

वृकाय धनादात्रे । अभिलषत इत्यर्थः । चित् इति पूरणः । अथवा परेभ्यो धनानि प्रयच्छते । यद्वा । वृकाय वृकवद्धिंसकाय । एतन्नामकाय जसमानाय कर्मभिरुपक्षीयमाणायर्षये शक्तम् अभिमतं धनमदत्तम् । शकेर्दानार्थस्य लुङ्येतद्रूपम् । अडभावश्छान्दसः । उत अपि च शयवे एतन्नामकायर्षये हूयमाना आहूयमानौ युवां श्रुतम् अशृणुतम् । यौ युवाम् अघ्न्यां गाम् अपिन्वतम् अपूरयतं क्षीरेण अपो न अद्भिरिव नदीम् । तां यथोदकेन पूरयतस्तद्वत् । कीदृशी-मघ्न्याम् । स्तर्यं चित् स्तरीमपि निवृत्तप्रसवां वृद्धामपि शक्ती शक्त्या सामर्थ्येन दोहन-लक्षणेन युक्तां कृत्वा शचीभिः युष्मदीयैः कर्मभिर्हे अश्विनाविति । ‘शयवे चिन्नासत्या शचीभि-र्जसुरये स्तर्यं पिप्यथुर्गाम्’ (ऋ. सं. १. ११६. २२) इत्यादि ह्युक्तम् ॥

एष स्य कारुर्जरते सूक्तैरग्रे बुधान उषसां सुमन्मा ।
इषा तं वर्धदघ्न्या पयोभिर्यूयं पात स्वस्तिभिः सदा नः ॥ ९ ॥

एषः । स्यः । कारुः । जरते । सुऽउक्तैः । अग्रे । बुधानः । उषसाम् । सुऽमन्मा ।
इषा । तम् । वर्धत् । अघ्न्या । पयःऽभिः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥९॥

एषः स्तोता स्यः स प्रसिद्धो वसिष्ठः कारुः स्तोता उषसाम् अग्रे प्रातःसवने बुधानः बुध्यमानः सुमन्मा शोभनमतिः सुष्टुतिर्वा सूक्तैः जरते स्तौति । तम् इषा अन्नेन वर्धत् वर्धयतम् । वचनव्यत्ययः । अघ्न्या अहन्तव्या गौश्च वर्धत् वर्धयतु । अथवैकमेव वाक्यम् । अघ्न्या गौर्वसिष्ठस्य प्रतिनियताग्निहोत्रार्था गौरिषान्नेन । घृतादिनेत्यर्थः । पयोभिः च तं वसिष्ठं वर्धत् वर्धयतु । एवमात्मानं परोक्षेण निर्दिदेश । शिष्टं स्पष्टम् ॥ ॥ १५ ॥

‘आ वां रथः’ इत्यष्टर्चं चतुर्दशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाश्विनम् । अनुक्रम्यते च—‘आ वां रथोऽष्टौ’ इति । प्रातरनुवाकाश्विनशस्त्रयोर्विनियोग उक्तः ॥

आ वां रथो रोदसी बद्बधानो हिरण्ययो वृषभिर्यात्वश्वैः ।
घृतवर्तनिः पविभी रुचान इषां वोळ्हा नृपतिर्वाजिनीवान् ॥ १ ॥

आ । वाम् । रथः । रोदसी इति । बद्बधानः । हिरण्ययः । वृषऽभिः । यातु । अश्वैः ।
घृतऽवर्तनिः । पविऽभिः । रुचानः । इषाम् । वोळ्हा । नृऽपतिः । वाजिनीऽवान् ॥१॥

हे अश्विनौ वां रथः वृषभिः युवभिः अश्वैः युक्तः सन् आ यातु यज्ञमस्मदीयम् । कीदृशो रथः । रथो विशेष्यते । रोदसी द्यावापृथिव्यौ बद्बधानः बाधमानः हिरण्ययः हिरण्मयः[1] घृतवर्तनिः घृतमुदकं वर्तन्यां यस्य तादृशः पविभिः रथनेमिभिर्मधुपात्रैर्वा रुचानः दीप्यमानः इषां वोळ्हा यजमानैर्दत्तानां हविषां वाहको दातव्यानां वाज्ञानां[2] वोळ्हा नृपतिः नृणां यज-मानानां स्वामी वाजिनीवान् अन्नवान् ॥

१. ख– ‘हिरण्मयः’ नास्ति; ञ-ञ्च-त१-२-न-भ–हिरण्यमयः । २. ख-त-न-भ–चान्नानां ।

स पप्रथानो अभि पञ्च भूमा त्रिवन्धुरो मनसा यातु युक्तः ।
विशो येन गच्छथो देवयन्तीः कुत्रा चिद्याममश्विना दधाना ॥ २ ॥

सः । पप्रथानः । अभि । पञ्च । भूम । त्रिऽवन्धुरः । मनसा । आ । यातु । युक्तः ।
विशः । येन । गच्छथः । देवऽयन्तीः । कुत्र । चित् । यामम् । अश्विना । दधाना ॥२॥

सः रथः पञ्च भूम भूतानि सर्वप्राणिनः पप्रथानः प्रथमानः त्रिवन्धुरः । वन्धुरमुच्चावचं सारथ्यवस्थानं काष्ठमयम् । तादृशैस्त्रिभिर्युक्तः मनसा अस्मत्स्तुत्या युक्तः अभि आ यातु । येन रथेन देवयन्तीः विशः यजमानान् प्रति गच्छथः । हे अश्विना अश्विनौ कुत्र चित् यत्र क्वापि यामं गमनं दधाना धारयन्तौ येन विशो गच्छथः स यात्विति ॥

स्वश्वा यशसा यातमर्वाग्दस्रा निधिं मधुमन्तं पिबाथः ।
वि वां रथो वध्वा३ यादमानोऽन्तान्दिवो बाधते वर्तनिभ्याम् ॥ ३ ॥

सुऽअश्वा । यशसा । आ । यातम् । अर्वाक् । दस्रा । निऽधिम् । मधुऽमन्तम् । पिबाथः ।
वि । वाम् । रथः । वध्वा । यादमानः । अन्तान् । दिवः । बाधते । वर्तनिऽभ्याम् ॥ ३ ॥

हे देवौ स्वश्वा शोभनाश्वेन यशसा च अर्वाक् अस्मदभिमुखं यातम् आगच्छतम् । हे दस्रा शत्रूणामुपक्षपयितारौ मधुमन्तं मधुररसोपेतं निधिं निधिवन्निहितं सोमं पिबाथः पिबतम् । वां युवयोः रथः वध्वा सूर्यया सह यादमानः गन्तव्यान् प्रति गच्छन् । गमयन्नित्यर्थः । एवं कुर्वन् वर्तनिभ्यां स्वचक्राभ्यां दिवः अन्तान् पर्यन्तप्रदेशान् बाधते शीघ्रगमनेन पीडयति ॥

युवोः श्रियं परि योषावृणीत सूरो दुहिता परितक्म्यायाम् ।
यद्देवयन्तमवथः शचीभिः परि घ्रंसमोमना वां वयो गात् ॥ ४ ॥

युवोः । श्रियम् । परि । योषा । अवृणीत । सूरः । दुहिता । परिऽतक्म्यायाम् ।
यत् । देवऽयन्तम् । अवथः । शचीभिः । परि । घ्रंसम् । ओमना । वाम् । वयः । गात् ॥४॥

युवोः युवयोः श्रियम् । श्रयत इति श्री रथः । तं सेवामेव वा योषा सर्वदा मिश्रयन्ती योषित् सूरः सूर्यस्य दुहिता परि अवृणीत । कदा । परितक्म्यायां रात्रौ परितस्तक्नवति संग्रामे यज्ञे वा गन्तव्ये । किंच यत् यदा देवयन्तं देवकामं यजमानं यज्ञं वा शचीभिः युवयोर्गमनादिलक्षणैः कर्मभिः अवथः रक्षथः तदानीं घ्रंसं दीप्तं वयः अन्नं सोमादिलक्षणम् ओमना अवनेन रक्षणेन निमित्तेन वां परि गात् पर्यगात् ॥

यो ह स्य वां रथिरा वस्त उस्रा रथो युजानः परियाति वर्तिः ।
तेन नः शं योरुषसो व्युष्टौ न्यश्विना वहतं यज्ञे अस्मिन् ॥ ५ ॥

यः । ह । स्यः । वाम् । रथिरा । वस्ते । उस्राः । रथः । युजानः । परिऽयाति । वर्तिः ।
तेन । नः । शम् । योः । उषसः । विऽउष्टौ । नि । अश्विना । वहतम् । यज्ञे । अस्मिन् ॥५॥

ᵛयः रथः। ᵛह इति पूरणः। ᵛस्यः स प्रसिद्धो रथो हे ᵛरथिरा रथिनौ। मत्वर्थीयो रः। ᵛउस्राः तेजांसि ᵛवस्ते आच्छादयति। यश्च ᵛरथः ᵛयुजानः अश्वैर्युक्तः सन् ᵛवर्तिः मार्गं यजमानगृहं वा ᵛपरियाति परिगच्छति। ᵛतेन रथेन हे ᵛअश्विना अश्विनौ ᵛनः अस्माकम् ᵛअस्मिन् ᵛयज्ञे ᵛउषसो ᵛव्युष्टौ प्रातःकाले ᵛशं शमनाय पापानां ᵛयोः मिश्रणाय च सुखानां ᵛनि ᵛवहतं नितरां प्राप्नुतम्॥

नरा॑ गौ॒रेव॑ वि॒द्युतं॑ तृषा॒णास्माक॑म॒द्य सव॒नोप॑ यातम्।
पु॒रु॒त्रा हि वां॑ म॒तिभि॒र्हव॑न्ते॒ मा वा॑म॒न्ये नि य॑मन्देव॒यन्तः॑॥ ६॥

नरा॑। गौ॒राऽइ॑व। वि॒ऽद्युत॑म्। तृ॒षा॒णा। अ॒स्माक॑म्। अ॒द्य। सव॑ना। उप॑। या॒त॒म्।
पु॒रु॒ऽत्रा। हि। वा॒म्। म॒तिऽभिः॑। हव॑न्ते। मा। वा॒म्। अ॒न्ये। नि। य॒म॒न्। दे॒व॒ऽयन्तः॑॥६॥

हे ᵛनरा नेतारावश्विनौ ᵛगौरेव गौरा मृगीव ᵛविद्युतं विशेषेण दीप्यमानं सोमं प्रति ᵛतृषाणा तृष्णायुक्तौ ᵛअद्य ᵛअस्माकं ᵛसवना सवनानि ᵛउप ᵛयातम् उपागच्छतम्। ᵛपुरुत्रा बहुषु यज्ञेषु ᵛवां युवां यजमानाः ᵛमतिभिः स्तुतिभिः ᵛहवन्ते ᵛहि स्तुवन्ति। अतः ᵛवां युवाम् ᵛअन्ये यष्टारः ᵛदेवयन्तः देवौ कामयमाना वां युवां ᵛमा ᵛनि ᵛयमन् मा नियच्छन्तु॥

यु॒वं भु॒ज्युमव॑विद्धं समु॒द्र उदू॑हथु॒रर्ण॑सो॒ अस्रि॑धानैः।
प॒त॒त्रिभि॑रश्र॒मैर॑व्य॒थिभि॑र्दं॒सना॑भिरश्विना पा॒रय॑न्ता॥ ७॥

यु॒वम्। भु॒ज्युम्। अव॑ऽविद्धम्। स॒मु॒द्रे। उत्। ऊ॒ह॒थुः॒। अर्ण॑सः। अस्रि॑धानैः।
प॒त॒त्रिऽभिः॑। अ॒श्र॒मैः। अ॒व्य॒थिऽभिः॑। दं॒सना॑भिः। अ॒श्वि॒ना॒। पा॒रय॑न्ता॥ ७॥

हे ᵛअश्विना अश्विनौ ᵛयुवं ᵛभुज्युम् एतन्नामकम् ᵛअवविद्धं विक्षिप्तं सखिभिः ᵛसमुद्रे तन्मध्ये निमग्नम् ᵛअर्णसः उदकात् ᵛउदूहथुः। किं कुर्वन्ताविति तदुच्यते। ᵛअस्रिधानैः अक्षीयमाणैः ᵛअश्रमैः ᵛअव्यथिभिः च ᵛपतत्रिभिः पतनवद्भिर्गमनवद्भी रथे नियुक्तैरश्वैः ᵛदंसनाभिः शारीरैः कर्मभिश्च ᵛपारयन्ता पारयन्तौ समुद्रमर्णस उदूहथुरिति। 'नासत्या भुज्युमूहथुः पतङ्गैः' (ऋ. सं. १. ११६. ४) इति ह्युक्तम्॥

नू मे॒ हव॒मा शृ॑णुतं युवाना यासि॒ष्टं व॒र्तिर॑श्विना॒विरा॑वत्।
ध॒त्तं रत्ना॑नि॒ जर॑तं च सू॒रीन्यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः॥ ८॥

नु॒। मे॒। हव॑म्। आ। शृ॒णु॒त॒म्। यु॒वा॒ना॒। या॒सि॒ष्ट॒म्। व॒र्तिः। अ॒श्वि॒नौ॒। इरा॑ऽवत्।
ध॒त्त॒म्। रत्ना॑नि। जर॑तम्। च॒। सू॒रीन्। यू॒यम्। पा॒त॒। स्व॒स्तिऽभिः॑। सदा॑। नः॒॥८॥

'नू मे हवम्' इत्यष्टमी सिद्धा॥ ॥ १६॥

'आ विश्ववारा' इति सप्तर्चं पञ्चदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाश्विनम्। अनुक्रम्यते च— 'आ विश्ववारा सप्त' इति। प्रातरनुवाक आश्विनशस्त्रे च विनियोग उक्तः। आद्यस्तृचस्तृतीये छन्दोमे प्रउगशस्त्रे विनियुक्तः। 'आ विश्ववाराश्विना गतं नोऽयं सोम इन्द्र' (आश्व. श्रौ. ८. ११) इति सूत्रितत्वात्॥

आ विश्ववाराश्विना गतं नः प्र तत्स्थानमवाचि वां पृथिव्याम् ।
अश्वो न वाजी शुनपृष्ठो अस्थादा यत्सेदथुर्ध्रुवसे न योनिम् ॥ १ ॥

आ । विश्वऽवारा । अश्विना । गतम् । नः । प्र । तत् । स्थानम् । अवाचि । वाम् । पृथिव्याम् ।
अश्वः । न । वाजी । शुनऽपृष्ठः । अस्थात् । आ । यत् । सेदथुः । ध्रुवसे । न । योनिम् ॥१॥

हे vविश्ववारा सर्वैर्वरणीयौ vअश्विना अश्विनौ vनः अस्माकं यत् यं यागम् vआ vगतम् आगच्छतं vवां युवयोः vतत्स्थानं vपृथिव्यां वेद्यां vप्र vअवाचि प्रोच्यते । तदर्थं vशुनपृष्ठः सुखकरपृष्ठभागः । अत्यन्तविपुलत्वात् आरूढानां[1] सुखकरपृष्ठभाग इत्यर्थः । vवाजी वेगवान् vअश्वः[2] vअस्थात्[2] तिष्ठतु युवयोः समीपे । vयत् । यमित्यर्थः । यमश्वम् vआ vसेदथुः आसीदथः सोऽश्वः । यद्वा । यत्स्थानमासीदथः तत्स्थानमश्व आश्रयत्वितो गमनाय । स्थितौ दृष्टान्तः । vध्रुवसे ध्रुवाय निवासाय vयोनिं vन योनिं स्थानमिव ॥

सिषक्ति सा वां सुमतिश्चनिष्ठातापि घर्मो मनुषो दुरोणे ।
यो वां समुद्रान्त्सरितः पिपर्त्येतग्वा चिन्न सुयुजा युजानः ॥ २ ॥

सिसक्ति । सा । वाम् । सुऽमतिः । चनिष्ठा । अतापि । घर्मः । मनुषः । दुरोणे ।
यः । वाम् । समुद्रान् । सरितः । पिपर्ति । एतऽग्वा । चित् । न । सुऽयुजा । युजानः ॥२॥

vसा vसुमतिः अस्माभिः क्रियमाणा शोभना स्तुतिः vचनिष्ठा कमनीयतमातिशयेनान्नवती वा vवां युवां vसिषक्ति सेवते । किंच vघर्मः प्रवर्ग्यश्च vमनुषः मनुष्यस्य यजमानस्य vदुरोणे यागगृहे vअतापि तप्तोऽभूत् । ‘ यत्[3] घ्राँ इत्यपतत्तद्घर्मस्य[3] घर्मत्वम् ’ ( तै. आ. ५. १. ५ ) इति श्रुतिः । यज्ञस्य शिरःस्थानीयत्वादस्य । vयः घर्मः vवां युवां प्राप्नुवन्निति शेषः । vसमुद्रान् vसरितः च vपिपर्ति पूरयति वृष्टिद्वारा । vएतग्वा vचिन्न । चिदिति पूरणः । अश्वाविव यथा vसुयुजा सुष्ठु युक्तौ रथे भवतस्तथेत्यर्थः । नेत्युपमार्थे । तद्वद्युवां यज्ञे vयुजानः योजयन् यज्ञः । स एवं करोति ॥

यानि स्थानान्यश्विना दधाथे दिवो यह्वीष्वोषधीषु विक्षु ।
नि पर्वतस्य मूर्धनि सदन्तेषं जनाय दाशुषे वहन्ता ॥ ३ ॥

यानि । स्थानानि । अश्विना । दधाथे इति । दिवः । यह्वीषु । ओषधीषु । विक्षु ।
नि । पर्वतस्य । मूर्धनि । सदन्ता । इषम् । जनाय । दाशुषे । वहन्ता ॥ ३ ॥

हे vअश्विना युवां vदिवः द्युलोकादागत्य vयानि vस्थानानि vदधाथे कुरुथः । कुत्रेति उच्यते । vयह्वीषु महतीषु vओषधीषु vविक्षु यजमानेषु च । तौ युवां vपर्वतस्य मेघस्यान्तरिक्षस्य वा vमूर्धनि स्थाने vनि vसदन्ता निषीदन्तौ vइषम् अन्नं vदाशुषे हविर्दात्रे vजनाय यजमानाय vवहन्ता प्रापयन्तौ भवतमिति शेषः ॥

---

१. ख– तदारूढानां; ङ-त-३-न-भ– दारूढानां । २. घ-ङ-त१-२– अश्वो न अश्वोस्थात् ; ञ– अत्यो न अश्वो न स्थात् ; त३-४-श–अत्यो न अश्वोस्थात् ; भ– अश्वो न श्वोस्थात् । ३. ख–यद्घ्रां इत्यतपत°; ङ-ञ-त१-२-४– यद्धर्म इत्यतपत्त०; त३-न-भ-श२– यद्धर्ममतपत्त°; श१–यद्धर्म इत्यपतत्त° ।

चनिष्टं देवा ओषधीष्वप्सु यद्योग्या अश्नवैथे ऋषीणाम् ।
पुरूणि रत्ना दधतौ न्य१स्मे अनु पूर्वाणि चख्यथुर्युगानि ॥ ४ ॥

चनिष्टम् । देवौ । ओषधीषु । अप्ऽसु । यत् । योग्याः । अश्नवैथे इति । ऋषीणाम् ।
पुरूणि । रत्ना । दधतौ । नि । अस्मे इति । अनु । पूर्वाणि । चख्यथुः । युगानि ॥४॥

हे देवा देवौ युवाम् ओषधीषु ओषधिविकारांश्चरुपुरोडाशादिकान् अप्सु सोमरसान् चनिष्टम् । अत्यन्तकमनीयतमं कामयेथामित्यर्थः । यत् यस्मात् योग्याः युवयोरुचिता ओषधीरपश्च ऋषीणां संबन्धिनीः अश्नवैथे व्याप्नुथः तस्मादस्मदीया अपि कामयेथामित्यर्थः । यद्वा । ऋषीणामस्माकमिति पूजार्थं बहुवचनम् । यद्यस्मादोषधीष्वप्सु च चनिष्टं योग्याः स्तुतीश्चाश्नवैथे तस्मात् अस्मे अस्मासु पुरूणि बहूनि रत्ना रमणीयानि धनानि नि दधतौ पूर्वाणि युगानि मिथुनानि जायापतिरूपाणि अनु चख्यथुः ख्यातवन्तौ । अनुकृष्टवन्तावनुग्रहार्थम् ॥

शुश्रुवांसा चिदश्विना पुरूण्यभि ब्रह्माणि चक्षाथे ऋषीणाम् ।
प्रति प्र यातं वरमा जनायास्मे वामस्तु सुमतिश्चनिष्ठा ॥ ५ ॥

शुश्रुऽवांसा । चित् । अश्विना । पुरूणि । अभि । ब्रह्माणि । चक्षाथे इति । ऋषीणाम् ।
प्रति । प्र । यातम् । वरम् । आ । जनाय । अस्मे इति । वाम् । अस्तु । सुऽमतिः । चनिष्ठा ॥५॥

हे अश्विना अश्विनौ । चित् इति पूरणः । युवां शुश्रुवांसा श्रुतवन्तौ सन्तौ पुरूणि बहूनि ब्रह्माणि परिवृढानि कर्माणि स्तुतिलक्षणानि ऋषीणाम् अस्माकं संबन्धीनि अभि चक्षाथे अभिपश्यथो युवाम् । अतः जनाय[1] जनस्य यजमानस्य मम वरं यज्ञं प्रति प्र यातम् । वां युवयोः चनिष्ठा उक्तलक्षणा सुमतिः अनुग्रहमतिः अस्मे अस्मासु अस्तु भवतु[2] ॥

यो वां यज्ञो नासत्या हविष्मान्कृतब्रह्मा समर्यो३ भवाति ।
उप प्र यातं वरमा वसिष्ठमिमा ब्रह्माण्यृच्यन्ते युवभ्याम् ॥ ६ ॥

यः । वाम् । यज्ञः । नासत्या । हविष्मान् । कृतऽब्रह्मा । सऽमर्यः । भवाति ।
उप । प्र । यातम् । वरम् । आ । वसिष्ठम् । इमा । ब्रह्माणि । ऋच्यन्ते । युवऽभ्याम् ॥६॥

हे नासत्या अश्विनौ वां युवयोः यः यज्ञः यजमानः समर्यः ऋत्विग्रूपैर्मर्त्यैः सहितः सन् हविष्मान् हविषा युक्तः कृतब्रह्मा कृतस्तोत्ररूपकर्मा भवाति भवति तं वरं वरणीयं वसिष्ठम् आ उप प्र यातं प्रकर्षेणोपागच्छतम् । इमा इमानि ब्रह्माणि मन्त्रजातानि युवभ्यां युवाभ्यामर्थायागमनाय ऋच्यन्ते स्तूयन्ते । क्रियन्त इत्यर्थः ॥

इयं मनीषा इयमश्विना गीरिमां सुवृक्तिं वृषणा जुषेथाम् ।
इमा ब्रह्माणि युवयून्यग्मन्यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

इयम् । मनीषा । इयम् । अश्विना । गीः । इमाम् । सुऽवृक्तिम् । वृषणा । जुषेथाम् ।
इमा । ब्रह्माणि । युवऽयूनि । अग्मन् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

---

१. ख-झ-त-न-भ-श–' जनाय ' नास्ति । २. ख-झ-त-न-भ–भवति ।

अथ सप्तम्या स्तुतिमुपसंहरति। हे ᵛअश्विना अश्विनौ ᵛइयं ᵛमनीषा स्तुतिर्युवयोः कृतेति शेषः। तदेवादरार्थं पुनरुच्यते। ᵛइयं ᵛगीः स्तुतिः कृता। हे ᵛवृषणा कामानां वर्षकौ ᵛइमाम् अस्मत्कृतां ᵛसुवृक्तिं शोभनां स्तुतिं ᵛजुषेथां सेवेथाम्। ᵛइमा इमानि ᵛब्रह्माणि कर्माणि स्तुतिरूपाणि ᵛयुवयूनि युवां कामयमानानि सन्ति ᵛअग्मन् गच्छन्तु युवाम्। यूयं पातेति सिद्धम्॥ ॥ १७ ॥ ॥ ४ ॥

पञ्चमेऽनुवाके एकोनविंशतिसूक्तानि। तत्र 'अप स्वसुः' इति षडृचं प्रथमं सूक्तं[1] त्रैष्टुभमाश्विनम्। अनुक्रम्यते च—'अप स्वसुः षट्' इति। गतो विनियोगः॥

**अप॒ स्वसु॑रु॒षसो॒ नग्जि॑हीते रि॒णक्ति॑ कृ॒ष्णीर॑रु॒षाय॒ पन्था॑म्।**
**अश्वा॑मघा॒ गोम॑घा वां हुवेम॒ दिवा॒ नक्तं॒ शरु॑म॒स्मद्यु॑योतम्॥ १॥**

अप॑। स्वसुः॑। उ॒षसः॑। नक्। जि॒ही॒ते॒। रि॒णक्ति॑। कृ॒ष्णीः। अ॒रु॒षाय॑। पन्था॑म्।
अश्व॑ऽमघा। गोऽम॑घा। वा॒म्। हु॒वे॒म॒। दिवा॑। नक्त॑म्। शरु॑म्। अ॒स्मत्। यु॒यो॒त॒म्॥१॥

ᵛस्वसुः स्वसृस्थानीयायाः ᵛउषसः सकाशात् ᵛनक् नक्तं रात्रिः ᵛअप ᵛजिहीते अपगच्छति। तस्या अवकाशं दत्वा स्वयमपगतेत्यर्थः। 'स्वसा स्वस्रे ज्यायस्यै योनिमारैक्' (ऋ. सं. १. १२४. ८) इत्युक्तम्। ᵛकृष्णीः कृष्णवर्णा रात्रिः ᵛअरुषाय आरोचमानायाह्ने सूर्याय वा ᵛपन्थां पन्थानं मार्गं ᵛरिणक्ति रेचयति। यस्मादेवं तस्माद्युवयोरागमनसमयत्वात् हे ᵛअश्वामघा अश्वधनौ हे ᵛगोमघा गोधनौ। उभयोः प्रदाताराविस्यर्थः। ईदृशौ ᵛवां युवां ᵛहुवेम स्तुमः। आह्वयामः। ᵛदिवा ᵛनक्तं सर्वदा ᵛशरुं हिंसकम् ᵛअस्मत् अस्मत्तः ᵛयुयोतं पृथक्कुरुतम्॥

**उ॒पा॒या॒तं दा॒शुषे॒ मर्त्या॑य॒ रथे॑न वा॒मम॑श्विना॒ वह॑न्ता।**
**यु॒यु॒तम॒स्मदनि॑रा॒ममी॑वां॒ दिवा॒ नक्तं॑ माध्वी॒ त्रासी॑थां नः॥ २॥**

उ॒प॒ऽआया॑तम्। दा॒शुषे॑। मर्त्या॑य। रथे॑न। वा॒मम्। अ॒श्वि॒ना॒। वह॑न्ता।
यु॒यु॒तम्। अ॒स्मत्। अनि॑राम्। अमी॑वाम्। दिवा॑। नक्त॑म्। मा॒ध्वी॒ इति॑। त्रासी॑थाम्। नः॒॥२॥

हे अश्विनौ युवाम् ᵛउपायातम् उपागच्छतमस्मदाह्वानं प्रति। किमर्थम्। ᵛदाशुषे हविषां दात्रे यजमानाय तदर्थं ᵛरथेन ᵛवामं वननीयं धनं ᵛवहन्ता वहन्तौ। ᵛअस्मत् अस्मत्तः ᵛयुयुतं पृथक्कुरुतम्। किम्। ᵛअनिराम्। इरान्नम्। तदभावं दारिद्र्यमित्यर्थः। ᵛअमीवां रोगं च। हे ᵛमाध्वी मधुमन्तौ युवां ᵛनः अस्मान् ᵛदिवा ᵛनक्तं सर्वदा ᵛत्रासीथां रक्षतम्॥

**आ वां॒ रथ॑मव॒मस्यां॒ व्यु॑ष्टौ सुम्ना॒यवो॒ वृष॑णो वर्तयन्तु।**
**स्यूम॑गभस्तिमृत॒युग्भि॒रश्वै॒राश्वि॑ना॒ वसु॑मन्तं वहेथाम्॥ ३॥**

आ। वा॒म्। रथ॑म्। अ॒व॒मस्या॑म्। विऽउ॑ष्टौ। सु॒म्न॒ऽयव॑ः। वृष॑णः। व॒र्तय॑न्तु।
स्यूम॑ऽगभस्तिम्। ऋ॒त॒युक्ऽभिः॑। अश्वैः॑। आ। अ॒श्वि॒ना॒। वसु॑ऽमन्तम्। व॒हे॒था॒म्॥ ३॥

ᵛअवमस्याम् आसन्नायां ᵛव्युष्टौ व्युच्छन्त्यामुषसि ᵛवां युवयोः ᵛरथं ᵛसुम्नायवः सुखेन योजयन्तोऽश्वाः ᵛवृषणः वर्षका[2] युवाम् ᵛआ ᵛवर्तयन्तु। ᵛस्यूमगभस्तिं सुखरश्मिं स्यूतरश्मिं ᵛवसुमन्तं प्रदेयधनयुक्तं रथं हे ᵛअश्विना अश्विनौ ᵛऋतयुग्भिः उदकयुक्तैः ᵛअश्वैः उदकप्रदैरश्वैः ᵛआ ᵛवहेथाम्॥

---

१. ख–सूक्तं वसिष्ठस्यार्षं; घ– सूक्तं वसिष्ठ ऋषिः। २. ङ– वर्षकौ।

यो वां रथो नृपती अस्ति वोळ्हा त्रिवन्धुरो वसुमाँ उस्रयामा ।
आ न एना नासत्योप यातमभि यद्वां विश्वप्स्न्यो जिगाति ॥ ४ ॥

यः । वाम् । रथः । नृपती इति नृऽपती । अस्ति । वोळ्हा । त्रिऽवन्धुरः । वसुऽमान् । उस्रऽयामा ।
आ । नः । एना । नासत्या । उप । यातम् । अभि । यत् । वाम् । विश्वऽप्स्न्यः । जिगाति ॥४॥

हे नृपती नृणां यजमानानां पालकावश्विनौ वां युवयोः यः रथः वोळ्हा युवयोर्वाहकः अस्ति सर्वदा संनिहितो वर्तते । कीदृशोऽसौ । त्रिवन्धुरः सारथ्यधिष्ठानस्थानत्रयोपेतः वसुमान् धनवान् उस्रयामा उस्रं दिवसं प्रति गन्ता । एना एतेन रथेन हे नासत्या अश्विनौ नः अस्मान् उप आ यातम् । यत्[1] रथः[1] यश्च रथः वां विश्वप्स्न्यः व्याप्तरूपः अभि जिगाति अभिगच्छति । अन्य आह । यद्यस्माद्विश्वप्स्न्यो वसिष्ठो वां जिगाति स्तौति अत उपा यातम् ॥

युवं च्यवानं जरसोऽमुमुक्तं नि पेदव ऊहथुराशुमश्वम् ।
निरंहसस्तमसः स्पर्तमत्रिं नि जाहुषं शिथिरे धातमन्तः ॥ ५ ॥

युवम् । च्यवानम् । जरसः । अमुमुक्तम् । नि । पेदवे । ऊहथुः । आशुम् । अश्वम् ।
निः । अंहसः । तमसः । स्पर्तम् । अत्रिम् । नि । जाहुषम् । शिथिरे । धातम् । अन्तरिति ॥५॥

हे अश्विना युवं युवां च्यवानं जरसः जीर्णाद्रूपात् अमुमुक्तम् अमुञ्चतम् । 'युवं च्यवानमश्विना जरन्तं पुनर्युवानम्' ( ऋ. सं. १. ११७. १३ ) इति ह्यन्यत्र । तथा पेदवे एतन्नामकाय राज्ञे आशुं शीघ्रगामिनम् अश्वं निः ऊहथुः न्यवहतं युद्धे । 'युवं श्वेतं पेदवे' ( ऋ. सं. १. ११८. ९ ) इति निगमः । तथा अत्रिं महर्षिम् अंहसः ऋबीसादग्नेः सकाशात् तमसः च गुहान्तःस्थिताच्च सकाशात् निः स्पर्तं न्यपारयतम् । 'युवमृबीसमुत तप्तमत्रय ओमन्वन्तं चक्रथुः' ( ऋ. सं. १०. ३९. ९ ) इति निगमः । तथा जाहुषं शिथिरे शिथिले भ्रष्टे[2] स्वराष्ट्रे अन्तः मध्ये पुनः नि धातं न्यधातम् । 'परिविष्टं जाहुषं विश्वतः सीम्' (ऋ. सं. १. ११६. २०) इति ह्युक्तम् ॥

इयं मनीषा इयमश्विना गीरिमां सुवृक्तिं वृषणा जुषेथाम् ।
इमा ब्रह्माणि युवयून्यग्मन्यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

इयम् । मनीषा । इयम् । अश्विना । गीः । इमाम् । सुऽवृक्तिम् । वृषणा । जुषेथाम् ।
इमा । ब्रह्माणि । युवऽयूनि । अग्मन् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥

'इयं मनीषा' इति षष्ठी गता ॥ ॥ १८ ॥

'आ गोमता' इति पञ्चर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाश्विनम् । अनुक्रम्यते च— 'आ गोमता पञ्च' इति । विनियोगः प्रातरनुवाकाश्विनशस्त्रयोरुक्तः । आश्विने पशावाद्याश्चतस्रो याज्यानुवाक्याः । सूत्रितं च—'आ गोमता नासत्या रथेनेति चतस्रः' ( आश्व. श्रौ. ३. ८ ) इति ॥

आ गोमता नासत्या रथेनाश्वावता पुरुश्चन्द्रेण यातम् ।
अभि वां विश्वा नियुतः सचन्ते स्पार्हया श्रिया तन्वा शुभाना ॥ १॥

---

१. ख-त३-न-भ—तद्रथः; घ-यत्; श—यद्वां । २. ख-भ—नष्टे ।

आ । गोऽमता । नासत्या । रथेन । अश्वऽवता । पुरुऽचन्द्रेण । यातम् ।
अभि । वाम् । विश्वाः । निऽयुतः । सचन्ते । स्पार्हया । श्रिया । तन्वा । शुभाना ॥ १ ॥

हे ^v^नासत्या अश्विनौ ^v^गोमता गोयुक्तेन ^v^अश्वावता अश्वयुक्तेन । अश्वैर्वृषभैश्चोढेनेत्यर्थः । यद्वा । गोमता गोप्रदेन । ^v^पुरुश्चन्द्रेण बहुधनेन । धनप्रदेनेत्यर्थः । तादृशेन ^v^रथेन[1] ^v^आ[2] ^v^यातम् आगच्छतम् । ^v^वां ^v^विश्वाः बह्व्यः ^v^नियुतः स्तुतयः ^v^सचन्ते सेवन्तेऽस्मत्प्रेरिताः । हे ^v^स्पार्हया स्पृहणीयया ^v^श्रिया शोभया ^v^तन्वा शरीरेण च ^v^शुभाना दीप्यमानौ युवाम् ॥

आ नो देवेभिरुप यातमर्वाक्सजोषसा नासत्या रथेन ।
युवोर्हि नः सख्या पित्र्याणि समानो बन्धुरुत तस्य वित्तम् ॥ २ ॥

आ । नः । देवेभिः । उप । यातम् । अर्वाक् । सऽजोषसा । नासत्या । रथेन ।
युवोः । हि । नः । सख्या । पित्र्याणि । समानः । बन्धुः । उत । तस्य । वित्तम् ॥ २ ॥

हे ^v^नासत्या अश्विनौ युवां ^v^देवेभिः इतरैर्देवैः सह ^v^सजोषसा समानप्रीतौ परस्परं सन्तौ ^v^नः अस्माकम् ^v^अर्वाक् अभिमुखं ^v^रथेन ^v^आ ^v^यातम् आगच्छतम् । आगमने बन्धुत्वातिशयमाह । ^v^युवोः युवयोः ^v^नः अस्माकं च ^v^सख्या सख्यानि ^v^पित्र्याणि पितृतः प्राप्तानि । नेदानीं स्तुत्याद्युपाधिना प्राप्तानि भवन्तीत्यर्थः । तदेवाह । ^v^उत अपि च युवयोर्मम च ^v^बन्धुः बन्धकः पितामहः ^v^समानः एक एव । ^v^तस्य ^v^वित्तम् । तस्येति कर्मणि षष्ठी । तं बन्धुं तद्बन्धुत्वं वा वित्तं जानीतम् । विवस्वान् वरुणश्चोभावपि कश्यपाददितेर्जातौ विवस्वानश्विनोर्जनको वरुणो वसिष्ठस्येतीत्येवं समानबन्धुत्वम् । तथा च बृहद्देवतायामुक्तम्—'अभवन्मिथुनं त्वष्टुः सरण्यूस्त्रिशिराः सह । स वै सरण्यूं[3] प्रायच्छत्स्वयमेव विवस्वते ॥ ततः सरण्व्वां[4] जाते ते यमयम्यौ विवस्वतः । तावप्युभौ यमावेव ह्यास्तां यम्या च वै यमः ॥ सृष्ट्वा भर्तुः परोक्षं तु सरण्यूः[5] सदृशीं स्त्रियम् । निक्षिप्य मिथुनं तस्यामश्वा[6] भूत्वा प्रचक्रमे ॥ अविज्ञानाद्विवस्वांस्तु[7] तस्यामजनयन्मनुम् । राजर्षिरासीत्स मनुर्विवस्वानिव तेजसा ॥ स विज्ञाय अपक्रान्तां सरण्यूमात्मरूपिणीम् । त्वाष्ट्रीं प्रतिजगामाशु वाजी भूत्वा सलक्षणः ॥ सरण्यूस्तु विवस्वन्तं विज्ञाय[8] हयरूपिणम्[9] । मैथुनायोपचक्राम तां च तत्रारुरोह सः ॥ ततस्तयोस्तु वेगेन शुक्रं तदपतद्भुवि । उपाजिघ्रच्च सा त्वश्वा तच्छुक्रं गर्भकाम्यया ॥ आघ्राणमात्राच्छुक्रं तत्कुमारौ संबभूवतुः । नासत्यश्चैव दस्रश्च यौ स्तुतावश्विनावपि ' ( बृहद्दे. ६. १६२–७. ६ ) इति ॥

उदु स्तोमासो अश्विनोरबुध्रञ्जामि ब्रह्माण्युषसश्च देवीः ।
आविवासन्रोदसी धिष्ण्येमे अच्छा विप्रो नासत्या विवक्ति ॥ ३ ॥

उत् । ऊँ इति । स्तोमासः । अश्विनोः । अबुध्रन् । जामि । ब्रह्माणि । उषसः । च । देवीः ।
आऽविवासन् । रोदसी इति । धिष्ण्ये इति । इमे इति । अच्छ । विप्रः । नासत्या । विवक्ति ॥ ३ ॥

---

१. ख-झ-त३-न-भ-श- ' रथेन ' नास्ति । २. घ- अभ्या । ३. ख-झ-त-न-भ-श—सरण्यु । ४. झ—सण्वां; झ-त-न-श—सरण्यां । ५. ख-झ-त-न-भ-श—सरण्युः । ६. ख—°मश्वो । ७. ख-झ-त-न-भ-श—अविज्ञातान्वि° । ८. ख-झ-न-भ-श—जिज्ञाय । ९. ख-त३-न-भ-श—भयरूपिणं; झ-झ-त२-४—भसरूपिणं ।

^v^स्तोमासः स्तोमाः स्तवाः अश्विनाश्विनौ ^v^उदु ^v^अबुध्रन् उत्कृष्टं बोधयन्ति। उ इति पूरणः। ^v^जामि। बन्धुनामैतत्। बन्धुस्थानीयानि ^v^ब्रह्माणि परिवृढानि कर्माणि ^v^देवीः द्योतमानाः ^v^उषसः। चकारादश्विनौ च। अबुध्रन्। ^v^विप्रः मेधावी वसिष्ठः ^v^इमे ^v^रोदसी द्यावापृथिव्यौ ^v^धिष्ण्ये धिषणार्हे स्तुत्ये ^v^आविवासन्[1] परिचरन् ^v^नासत्या अश्विनौ ^v^अच्छ अभिमुखं ^v^विवक्ति स्तौति॥

वि चेदुच्छन्त्यश्विना उषासः प्र वां ब्रह्माणि कारवो भरन्ते।
ऊर्ध्वं भानुं सविता देवो अश्रेद्बृहदग्नयः समिधा जरन्ते॥ ४॥

वि। च। इत्। उच्छन्ति। अश्विनौ। उषसः। प्र। वाम्। ब्रह्माणि। कारवः। भरन्ते।
ऊर्ध्वम्। भानुम्। सविता। देवः। अश्रेत्। बृहत्। अग्नयः। सम्ऽइधा। जरन्ते॥ ४॥

हे ^v^अश्विनौ ^v^उषासः उषसः ^v^वि ^v^उच्छन्ति ^v^चेत् तमांसि विवासयन्ति। चेदिति पूरणार्थे वा। स च वक्ष्यमाणसूर्याद्यपेक्षकः। चेद्योगादनिघातः। अतो युवयोः स्तुतिसमर्थत्वात् ^v^ब्रह्माणि स्तोत्राणि ^v^कारवः स्तोतारः ^v^प्र ^v^भरन्ते प्रकर्षेण संपादयन्ति। ^v^ऊर्ध्वम् ^v^अश्रेत् आश्रयति ^v^भानुं तेजः ^v^सविता ^v^देवः। ^v^अग्नयः अपि ^v^समिधा समिन्धनेन ^v^बृहत् अतिमहत् ^v^जरन्ते स्तूयन्ते॥

'आ पश्चातात्' इति पञ्चम्याश्विने पशौ वपाया अनुवाक्या। सूत्रितं च—'आ पश्चातान्नासत्या पुरस्तादा गोमता नासत्या रथेन' (आश्व. श्रौ. ३. ८) इति॥

आ पश्चातान्नासत्या पुरस्तादाश्विना यातमधरादुदक्तात्।
आ विश्वतः पाञ्चजन्येन राया यूयं पात स्वस्तिभिः सदा नः॥ ५॥

आ। पश्चातात्। नासत्या। आ। पुरस्तात्। आ। अश्विना। यातम्। अधरात्। उदक्तात्।
आ। विश्वतः। पाञ्चऽजन्येन। राया। यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥ ५॥

हे ^v^नासत्या अश्विनौ ^v^पश्चातात् पश्चाद्देशात् ^v^आ ^v^यातम्। तथा ^v^पुरस्तात् पूर्वस्माद्देशात् तथा ^v^अधरात् अधस्तनाद्देशाद्दक्षिणतः ^v^उदक्तात् उदग्देशात्। सर्वत्र आ यातमिति संबन्धः। किं बहुना ^v^विश्वतः सर्वस्माद्देशात् ^v^पाञ्चजन्येन पञ्चजनहितेन ^v^राया धनेन सह ^v^आ यातम्। निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः॥ ॥ १९॥

'अतारिष्म' इति पञ्चर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाश्विनम्। 'अतारिष्म' इत्यनुक्रमणिका। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः॥

अतारिष्म तमसस्पारमस्य प्रति स्तोमं देवयन्तो दधानाः।
पुरुदंसा पुरुतमा पुराजामर्त्या हवते अश्विना गीः॥ १॥

अतारिष्म। तमसः। पारम्। अस्य। प्रति। स्तोमम्। देवऽयन्तः। दधानाः।
पुरुऽदंसा। पुरुऽतमा। पुराऽजा। अमर्त्या। हवते। अश्विना। गीः॥ १॥

^v^अस्य ^v^तमसः अज्ञानस्य तत्कार्यस्य जननमरणवतः संसारदुःखस्य अथवा प्रकृतत्वात्[2] योगविषयाज्ञानस्य ^v^पारम् ^v^अतारिष्म तीर्णाः स्म। किं कुर्वन्तः। ^v^देवयन्तः देवकामाः ^v^स्तोमं

१. ख-ग्ल-त-न-भ-श-'आविवासन्' नास्ति। २. त-प्रत्यक्षत्वात्।

स्तुतिं ᵛप्रति ᵛदधानाः देवेषु कुर्वाणाः। ᵛपुरुदंसा बहुकर्माणौ ᵛपुरुतमा प्रभूततमौ ᵛपुराजा पूर्वजातौ अत एव ᵛअमर्त्या अमरणधर्माणौ ᵛअश्विना अश्विनौ ᵛगीः गरिता स्तोता वसिष्ठः ᵛहुवते स्तौति आह्वयति वा ॥

न्यु॑ प्रि॒यो मनु॑षः सादि॒ होता॒ नास॑त्या॒ यो यज॑ते॒ वन्द॑ते च ।
अ॒श्नी॒तं मध्वो॑ अश्विना उपा॒क आ वां॑ वोचे वि॒दथे॑षु॒ प्रय॑स्वान् ॥ २ ॥

नि । ऊँ॒ इति॑ । प्रि॒यः । मनु॑षः । सा॒दि॒ । होता॑ । नास॑त्या । यः । यज॑ते । वन्द॑ते । च॒ ।
अ॒श्नी॒तम् । मध्वः॑ । अ॒श्वि॒नौ॒ । उ॒पा॒के । आ । वा॒म् । वो॒चे॒ । वि॒दथे॑षु । प्रय॑स्वान् ॥ २ ॥

ᵛप्रियः युवयोः प्रियभूतः ᵛमनुषः मानुषो[1] मनुषः सकाशाज्जातो[1] वा ᵛहोता देवानामाह्वाता स्तोतायं ᵛनि ᵛसादि न्यसादि निषण्णो भवति। युवयोः कर्मणि वर्तत इत्यर्थः। हे ᵛनासत्या अश्विनौ ᵛयः ᵛयजते यागं करोति ᵛवन्दते स्तौति ᵛच तस्य संबन्धिनं ᵛमध्वः मधुरं सोमरसं हे ᵛअश्विना अश्विनौ ᵛउपाके अन्तिक एव समीपे स्थित्वैव ᵛअश्नीतम्। पिबतमित्यर्थः। ᵛविदथेषु यज्ञेषु ᵛवां युवां ᵛप्रयस्वान् अन्नवान् सन् ᵛआ ᵛवोचे आह्वये ॥

अहे॑म य॒ज्ञं प॒थामु॑रा॒णा इ॒मां सु॑वृ॒क्तिं वृ॑षणा जुषेथाम् ।
श्रु॒ष्टी॒वेव॒ प्रेषि॑तो वामबो॒धि प्रति॒ स्तोमै॒र्जर॑माणो॒ वसि॑ष्ठः ॥ ३ ॥

अहे॑म । य॒ज्ञम् । प॒थाम् । उ॒रा॒णाः । इ॒माम् । सु॒ऽवृ॒क्तिम् । वृ॒षणा । जु॒षेथा॒म् ।
श्रु॒ष्टी॒वाऽइ॑व । प्रऽइ॑षितः । वा॒म् । अ॒बो॒धि॒ । प्रति॑ । स्तोमैः॑ । जर॑माणः । वसि॑ष्ठः ॥ ३ ॥

ᵛउराणाः उरु स्तोत्रं कुर्वाणाः स्तोतारो वयं ᵛपथां पततामागच्छतां देवानामर्थाय ᵛयज्ञं यागं तत्साधनं हविर्वा ᵛअहेम वर्धयेम। हे ᵛवृषणा वर्षकौ कामानाम् ᵛइमां ᵛसुवृक्तिं शोभनस्तुतिं ᵛजुषेथां सेवेथाम्। ᵛवां युवां ᵛश्रुष्टीवेव। श्रुष्टीति क्षिप्रनाम। क्षिप्रगन्ता[2] दूत इव ᵛप्रेषितः अहम् ᵛअबोधि। बोधयति शीघ्रं गन्तव्यमिति। किं कुर्वन्। ᵛस्तोमैः स्तोत्रैः ᵛप्रति ᵛजरमाणः प्रतिस्तुवन्। कः। ᵛवसिष्ठः अहमबोधीति ॥

उप॒ त्या वह्नी॑ गमतो॒ विशं॑ नो रक्षो॒हणा॒ संभृ॑ता वी॒ळुपा॑णी ।
सम॑न्धांस्यग्मत मत्स॒राणि॒ मा नो॑ मर्धिष्ट॒मा ग॑तं शि॒वेन॑ ॥ ४ ॥

उप॑ । त्या । वह्नी॒ इति॑ । ग॒म॒तः॒ । विश॑म् । नः॒ । र॒क्षः॒ऽहना॑ । सम्ऽभृ॑ता । वी॒ळुपा॑णी॒ इति॑ वी॒ळुऽपा॑णी ।
सम् । अन्धां॑सि । अ॒ग्म॒त॒ । म॒त्स॒राणि॑ । मा । नः॒ । म॒र्धि॒ष्ट॒म् । आ । ग॒त॒म् । शि॒वेन॑ ॥ ४ ॥

ᵛत्या त्यौ तौ ᵛवह्नी हविषां वोढारौ ᵛनः अस्माकं ᵛविशं प्रजामृत्विजम् ᵛउप ᵛगमतः उपगच्छताम्। कीदृशौ तौ। ᵛरक्षोहणा रक्षसां हन्तारौ ᵛसंभृता सम्यग्भृतौ पुष्टाङ्गौ ᵛवीळुपाणी दृढपाणी। यद्वा। अयमर्धर्चोऽश्वपरतया व्याख्येयः। तथा सति तौ रथस्य वोढारौ दृढपादावश्विनोरश्वावुपगच्छतामिति तस्यार्थः। ᵛअन्धांसि अन्नानि ᵛमत्सराणि मदकराणि सोमान् ᵛसम् ᵛअग्मत समगच्छतं युवाम्। ᵛनः अस्मान् ᵛमा ᵛमर्धिष्टं मा हिंस्तम्। किंतु ᵛशिवेन मङ्गलेन धनेन सार्धम् ᵛआ ᵛगतम् आगच्छतम् ॥

---

१. ख–मानुषसकाशा°; झ-न-श–मानुषो मनुषसकाशा°। २. झ–क्षिप्रं गंता।

आ पश्चातान्नासत्या पुरस्तादाश्विना यातमधरादुदक्तात् ।
आ विश्वतः पाञ्चजन्येन राया यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

आ । पश्चातात् । नासत्या । आ । पुरस्तात् । आ । अश्विना । यातम् । अधरात् । उदक्तात् ।
आ । विश्वतः । पाञ्चऽजन्येन । राया । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

'आ पश्चातात्' इति पञ्चम्या विनियोगो व्याख्या च गता ॥ ॥२०॥

'इमा उ वाम्' इति षडृचं चतुर्थं सूक्तमाश्विनं वसिष्ठस्यार्षम्। आद्यातृतीयापञ्चम्यो बृहत्यः शिष्टाः सतोबृहत्यः। तथा चानुक्रान्तम्—'इमा उ वां षट् प्रागाथम्' इति। प्रातरनुवाक आश्विने क्रतौ बार्हते छन्दस्याश्विनशस्त्रे च सूक्तम्। सूत्रितं च— इमा उ वामयं वाम्' (आश्व. श्रौ. ४. १५) इति। दशरात्रे पञ्चमेऽहनि प्रउगशस्त्रे 'इमा उ वाम्' इत्ययमाश्विनस्तृचः। सूत्रितं च—'इमा उ वां दिविष्टयः पिबा सुतस्य रसिनः' (आश्व. श्रौ. ७. १२) इति ॥

इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।
अयं वामह्वेऽवसे शचीवसू विशंविशं हि गच्छथः ॥ १ ॥

इमाः । ऊँ इति । वाम् । दिविष्टयः । उस्रा । हवन्ते । अश्विना ।
अयम् । वाम् । अह्वे । अवसे । शचीवसू इति शचीऽवसू । विशम्ऽविशम् । हि । गच्छथः ॥१॥

इमाः दिविष्टयः दिवमिच्छन्त्यः प्रजाः ऋत्विजोऽपि। उ इति चार्थे। हे अश्विना उस्रा वासकौ वां हवन्ते आह्वयन्ति। अयं वसिष्ठोऽपि हे शचीवसू कर्मधनौ वां युवाम् अवसे अस्मद्रक्षणाय युवयोस्तर्पणाय वा अह्वे आह्वयामि। किमर्थमेवं प्रजा अप्यहमपीत्यादरोक्तिरिति तत्राह। हि यस्मात्कारणाद्युवां विशंविशं प्रजां प्रजां प्रति गच्छथः ॥

युवं चित्रं ददथुर्भोजनं नरा चोदेथां सूनृतावते ।
अर्वाग्रथं समनसा नि यच्छतं पिबतं सोम्यं मधु ॥ २ ॥

युवम् । चित्रम् । ददथुः । भोजनम् । नरा । चोदेथाम् । सूनृताऽवते ।
अर्वाक् । रथम् । सऽमनसा । नि । यच्छतम् । पिबतम् । सोम्यम् । मधु ॥ २ ॥

हे अश्विनौ युवं युवां चित्रं चायनीयं भोजनं धनं ददथुः[1] धारयेथे। तद्धनं सूनृतावते स्तुतिवते स्तोत्रे चोदेथां प्रेरयतम्। तदर्थं समनसा समानमनस्कौ सन्तौ रथं युवयोः संबन्धिनम् अर्वाक् अस्मदभिमुखं नि यच्छतं नियमयतम्। तथा कृत्वा सोम्यं सोमसंबन्धिनं मधु मधुररसं[2] पिबतम् ॥

आ यातमुप भूषतं मध्वः पिबतमश्विना ।
दुग्धं पयो वृषणा जेन्यावसू मा नो मर्धिष्टमा गतम् ॥ ३ ॥

आ । यातम् । उप । भूषतम् । मध्वः । पिबतम् । अश्विना ।
दुग्धम् । पयः । वृषणा । जेन्यावसू इति । मा । नः । मर्धिष्टम् । आ । गतम् ॥ ३ ॥

---

१. झ-त२-३-दधतुः; न-श-दधथुः। २. ख-झ-त१-२-भ-मधुरं रसं; श-मधुरसं।

हे अश्विना युवाम् आ यातम् आगच्छतम्। आगत्य च उप समीपे भूषतं भवतम्। मध्वः मधुरं सोमरसं पिबतम्। पीत्वा च हे वृषणा वर्षकौ[1] हे जेन्यावसू जेतव्यधनौ। जितधनावित्यर्थः। युवां पयः वृष्ट्युदकमन्तरिक्षात् दुग्धम्। नः अस्मान् मा मर्धिष्टं मा हिंस्तम्। ईप्सितप्रार्थनाकरणमेव हिंसा[2]। आ गतम् आगच्छतं शीघ्रम्॥

अश्वासो ये वामुप दाशुषो गृहं युवां दीयन्ति बिभ्रतः।
मक्षूयुभिर्नरा हयेभिरश्विना देवा यातमस्मयू॥ ४॥

अश्वासः। ये। वाम्। उप। दाशुषः। गृहम्। युवाम्। दीयन्ति। बिभ्रतः।
मक्षुयुऽभिः। नरा। हयेभिः। अश्विना। आ। देवा। यातम्। अस्मयू इत्यस्मऽयू॥ ४॥

ये अश्वासः अश्वाः वां युवयोः स्वभूताः दाशुषः हविर्दातुः गृहं युवां बिभ्रतः धारयन्तः दीयन्ति। गमयन्तीत्यर्थः। मक्षूयुभिः शीघ्रगन्तृभिः हयेभिः हयैः अश्वैर्हे नरा नेतारौ अश्विना अश्विनौ देवा देवौ अस्मयू अस्मान् कामयमानौ आ यातम् अस्मद्यज्ञमागच्छतम्॥

अधा ह यन्तो अश्विना पृक्षः सचन्त सूरयः।
ता यंसतो मघवद्भ्यो ध्रुवं यशश्छर्दिरस्मभ्यं नासत्या॥ ५॥

अध। ह। यन्तः। अश्विना। पृक्षः। सचन्त। सूरयः।
ता। यंसतः। मघवत्ऽभ्यः। ध्रुवम्। यशः। छर्दिः। अस्मभ्यम्। नासत्या॥ ५॥

अधा ह अपि च अश्विना अश्विनौ यन्तः स्तुतिभिर्गच्छन्तो यजमानाः सूरयः मेधाविनः स्तोतारः पृक्षः अन्नं प्रभूतं सचन्त सेवन्ते संयन्ति वा। ता तौ युवां मघवद्भ्यः अन्नवद्भ्यः अस्मभ्यं ध्रुवम् अविचलितं यशः अन्नं यश एव वा छर्दिः गृहं यंसतः प्रयच्छतं हे नासत्या अश्विनौ॥

प्र ये ययुरवृकासो रथाइव नृपातारो जनानाम्।
उत स्वेन शवसा शूशुवुर्नर उत क्षियन्ति सुक्षितिम्॥ ६॥

प्र। ये। ययुः। अवृकासः। रथाःऽइव। नृऽपातारः। जनानाम्।
उत। स्वेन। शवसा। शूशुवुः। नरः। उत। क्षियन्ति। सुऽक्षितिम्॥ ६॥

ये यजमानाः अवृकासः परकीयधनस्यानादातारः जनानां मनुष्याणां मध्ये नृपातारः ऋत्विग्रूपाणां नृणां रक्षितारः सन्तः ययुः युवां प्राप्नुवन्ति हविर्भिः। प्राप्तौ दृष्टान्तः। रथाइव व्रीह्यादिपूर्णा[3] रथा यथा प्राप्नुवन्ति स्वामिगृहम्। उतेत्ययमुत्तरवाक्यापेक्षः। अपि च ते नरः यजमानाः स्वेन शवसा स्वीयेन बलेन शूशुवुः वर्धन्ते। उत अपि च सुक्षितिं सुनिवासं क्षियन्ति गच्छन्ति प्राप्नुवन्ति॥ ॥ २१ ॥

'व्युषा आवः' इत्यष्टर्चं पञ्चमं सूक्तं वसिष्ठस्यार्षम्। अत्रानुक्रमणिका—'व्युषा अष्टावुषस्यं[4] तु वै' इति। तु वै इत्युक्तत्वात्तुह्यादिपरिभाषया इदमादीनि सप्त सूक्तान्युषोदेवत्यानि। प्रातरनुवाक उषस्ये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चेदमादीनि षट् सूक्तानि। तथा च सूत्र्यते—'व्युषा

1. श-त१-२—वर्षकौ कामानां। 2. स—हिंसा; श—अहिंसा। 3. श—द्रव्यादि°। 4. स-त१-२-अनु.—अष्टा उषस्यं।

आवो दिविजा इति षळिति त्रैष्टुभम्' (आश्व. श्रौ. ४. १४) इति। ऋग्विधान आख्यातो विनियोगोऽत्र लिख्यते—'रात्र्या अपरकाले य उत्थाय प्रयतः शुचिः। व्युषा इत्युपतिष्ठेत षड्भिः सूक्तैः कृताञ्जलिः॥ प्राप्नुयात् स हिरण्यानि नानारूपं धनं बहु। गा अश्वान् पुरुषान् धान्यं स्त्रियो वासांस्यजाविकम्' (ऋग्वि. २. ३१७–१८) इति॥

व्यु१षा आवो दिविजा ऋतेनाविष्कृण्वाना महिमानमागात्।
अप द्रुहस्तम आवरजुष्टमङ्गिरस्तमा पथ्या अजीगः॥ १॥

वि। उषाः। आवः। दिविऽजाः। ऋतेन। आविःऽकृण्वाना। महिमानम्। आ। अगात्।
अप। द्रुहः। तमः। आवः। अजुष्टम्। अङ्गिरःऽतमा। पथ्याः। अजीगरिति॥ १॥

इयम् vउषाः vदिविजाः दिव्यन्तरिक्षे प्रादुर्भूता सती vवि vआवः व्यौच्छत्। विभानं[1] कृतवतीत्यर्थः। वसिर्निवासवाच्यत्र विपूर्वो व्युच्छने भवेत्। 'छन्दस्यपि दृश्यते' इत्यत्र दृशिग्रहणस्य विध्यन्तरोपसंग्रहणार्थत्वादनजादेरप्याडागमः। 'हल्ङ्याब्भ्यः' इति लोपः। सैवोषाः vऋतेन तेजसा vमहिमानं स्वमहत्त्वम् vआविष्कृण्वाना vआगात् आगतवती। आगत्य च vद्रुहः अस्मद्द्रोग्धॄन् vअजुष्टं सर्वेषामप्रियं vतमः च vअप vआवः अपवृणोति। किंच vअङ्गिरस्तमा। अङ्गेर्गत्यर्थादङ्गिराः। गन्तृतमा vपथ्याः पदवीः vअजीगः उद्गिरति। प्राणिनां व्यवहाराय प्रकाशयतीत्यर्थः॥

महे नो अद्य सुविताय बोध्युषो महे सौभगाय प्र यन्धि।
चित्रं रयिं यशसं धेह्यस्मे देवि मर्तेषु मानुषि श्रवस्युम्॥ २॥

महे। नः। अद्य। सुविताय। बोधि। उषः। महे। सौभगाय। प्र। यन्धि।
चित्रम्। रयिम्। यशसम्। धेहि। अस्मे इति। देवि। मर्तेषु। मानुषि। श्रवस्युम्॥ २॥

vअद्य vनः अस्माकं vमहे महते vसुविताय सुखप्राप्तये सुखगमनाय वा vबोधि भव। किंच हे vउषः vमहे महते vसौभगाय सौभाग्याय vप्र vयन्धि प्रयच्छास्मान्। किंच vचित्रं चायनीयं vयशसं यशोयुक्तं vरयिं धनं vधेहि धारय vअस्मे अस्मासु। हे vमानुषि मनुष्यहिते vदेवि vमर्तेषु[2] अस्मासु vश्रवस्युम् अन्नवन्तं पुत्रं धेहीत्यनुषङ्गः॥

एते त्ये भानवो दर्शतायाश्चित्रा उषसो अमृतास आगुः।
जनयन्तो दैव्यानि व्रतान्यापृणन्तो अन्तरिक्षा व्यस्थुः॥ ३॥

एते। त्ये। भानवः। दर्शतायाः। चित्राः। उषसः। अमृतासः। आ। अगुः।
जनयन्तः। दैव्यानि। व्रतानि। आऽपृणन्तः। अन्तरिक्षा। वि। अस्थुः॥ ३॥

vदर्शतायाः दर्शनीयायाः प्रकाशयुक्तायाः vउषसः vएते पुरो दृश्यमानाः vत्ये ते प्रसिद्धाः vचित्राः पूज्या आश्चर्यभूता वा vअमृतासः अमरणा अनश्वराः vभानवः रश्मयः vआगुः आगच्छन्ति। किं कुर्वन्तः। vदैव्यानि देवानां संबन्धीनि vव्रतानि कर्माणि vजनयन्तः उत्पादयन्तः। तदनुकूलप्रकाशप्रदानात्तदुत्पादकत्वमेषाम्। vअन्तरिक्षा अन्तरिक्षाणि vआपृणन्तः आपूरयन्तः। एकस्यैवान्तरिक्षस्य वायुमेघपक्षिणामालम्बनोपाधिना त्रिविधत्वम्[3]। अतो बहुवचनमुपपन्नम्। एवं कुर्वन्तो भानवः vव्यस्थुः विविधं तिष्ठन्ति। सरन्ति[4]॥

---

१. ख-भ–विभावनं। २. ख-ञ-त१-२-३-न-भ-श–मर्त्येषु। ३. श–विविधत्वं। ४. ञ-त-श–प्रसरंति।

एषा स्या युजाना पराकात्पञ्च क्षितीः परि सद्यो जिगाति ।
अभिपश्यन्ती वयुना जनानां दिवो दुहिता भुवनस्य पत्नी ॥ ४ ॥

एषा । स्या । युजाना । पराकात् । पञ्च । क्षितीः । परि । सद्यः । जिगाति ।
अभिऽपश्यन्ती । वयुना । जनानाम् । दिवः । दुहिता । भुवनस्य । पत्नी ॥ ४ ॥

vएषा vस्या सोषाः vपराकात् दूरदेशाद्दूरे स्थितापि vयुजाना उद्योगं कुर्वाणा प्रकाशाय vपञ्च vक्षितीः निषादपञ्चमाश्चत्वारो वर्णास्तान् vसद्यः vपरि vजिगाति परिगच्छति। किं कुर्वती। vजनानां प्राणिनां vवयुना[1] प्रज्ञानानि vअभिपश्यन्ती साक्षित्वेनावलोकयन्ती । कीदृशी सा। vदिवो vदुहिता दुहितृस्थानीया vभुवनस्य भूतजातस्य vपत्नी पालयित्री। परि जिगातीत्यन्वयः ॥

वाजिनीवती सूर्यस्य योषा चित्रामघा राय ईशे वसूनाम् ।
ऋषिष्टुता जरयन्ती मघोन्युषा उच्छति वह्निभिर्गृणाना ॥ ५ ॥

वाजिनीऽवती । सूर्यस्य । योषा । चित्रऽमघा । रायः । ईशे । वसूनाम् ।
ऋषिऽस्तुता । जरयन्ती । मघोनी । उषाः । उच्छति । वह्निऽभिः । गृणाना ॥ ५ ॥

vवाजिनीवती बह्वन्ना। यद्यप्युषोनामैतत् तथापि चित्रामघा इत्यस्याप्युषोनामकस्य पृथग्विद्यमानत्वादत्रैको योगरूढोऽवगन्तव्यः। vसूर्यस्य vयोषा योषित् vचित्रामघा विचित्रधना विचित्ररश्म्याख्यधना वा vरायः धनस्याविशिष्टस्य[2] तस्य vवसूनां देवमनुष्यादिसर्वाश्रयाणां धनानां च vईशे ईष्टे। अथवा वसवो वासका रश्मयः। तेषामपीष्टे। vऋषिष्टुता ऋषिभिः स्तुता vजरयन्ती प्राणिजातानि। उषाः खलु पुनःपुनरावर्तमाना प्राणिनामायुः क्षपयति। vमघोनी धनवती vउषाः vवह्निभिः कर्मवोढृभिर्यजमानैः vगृणाना स्तूयमाना vउच्छति विभानं करोति ॥

प्रति द्युतानामरुषासो अश्वाश्चित्रा अदृश्रन्नुषसं वहन्तः ।
याति शुभ्रा विश्वपिशा रथेन दधाति रत्नं विधते जनाय ॥ ६ ॥

प्रति । द्युतानाम् । अरुषासः । अश्वाः । चित्राः । अदृश्रन् । उषसम् । वहन्तः ।
याति । शुभ्रा । विश्वऽपिशा । रथेन । दधाति । रत्नम् । विधते । जनाय ॥ ६ ॥

vद्युतानां द्योतमानाम् vउषसं vवहन्तः धारयन्तः vअरुषासः आरोचमानाः vचित्राः चाय-नीयाः vअश्वाः vप्रति vअदृश्रन् प्रतिदृश्यन्ते। सा चोषाः vशुभ्रा दीप्यमाना vविश्वपिशा बहु-रूपेण vरथेन vयाति सर्वत्र गच्छति। vविधते परिचरते vजनाय vरत्नं रमणीयं धनं vदधाति ददाति च ॥

सत्या सत्येभिर्महती महद्भिर्देवी देवेभिर्यजता यजत्रैः ।
रुजद्दृळ्हानि दददुस्रियाणां प्रति गाव उषसं वावशन्त ॥ ७ ॥

सत्या । सत्येभिः । महती । महत्ऽभिः । देवी । देवेभिः । यजता । यजत्रैः ।
रुजत् । दृळ्हानि । ददत् । उस्रियाणाम् । प्रति । गावः । उषसम् । वावशन्त ॥ ७ ॥

---

१. ख–वयुना वयुनानि। २. ख१-श–धनस्यावशिष्टस्य; ज–धनस्य विशिष्टस्य।

ᵛसत्या अन्यैरबाध्या ᵛमहती पूजनीया प्रवृद्धा वा गुणैः ᵛदेवी द्योतमाना ᵛयजता यजनीयोषाः ᵛसत्येभिः सत्यैः ᵛमहद्भिः देवैः ᵛयजत्रैः उक्तलक्षणैः किरणैर्निपातभाग्भिरन्यैर्देवैर्वा सहिता सती ᵛदृळ्हानि अत्यन्तं स्थिराणि तमांसि ᵛरुजत् भिनत्ति। ᵛउस्रियाणाम्। गोनामैतत्। उस्राविण आसां भोगा इति तद्व्युत्पत्तिः। तासां संचाराय ᵛददत् ददाति। सामर्थ्यात् प्रकाशमित्यर्थः। अथवोस्रिया गा ददत् ददाति स्तोतृभ्यः। किंच ᵛगावः। उपलक्षणमेतत्। सर्वेऽपि तमोऽवरुद्धाः प्राणिनः ᵛउषसं ᵛवावशन्त उशन्ति कामयन्ते। विशेषेण गवां प्रभाते संचारार्थमुषसोऽपेक्षितत्वात्तासां प्राधान्येनोक्तिः॥

नू नो॒ गोम॑द्वी॒रव॑द्धेहि॒ रत्न॒मुषो॒ अश्वा॑वत्पुरु॒भोजो॑ अ॒स्मे ।
मा नो॑ ब॒र्हिः पु॑रु॒षता॑ नि॒दे क॑र्यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥ ८ ॥

नु । न॒ः । गोऽम॑त् । वी॒रऽव॑त् । धे॒हि॒ । रत्न॑म् । उष॑ः । अश्व॑ऽवत् । पु॒रु॒ऽभोज॑ः । अ॒स्मे इति॑ ।
मा । न॒ः । ब॒र्हिः । पु॒रु॒षता॑ । नि॒दे । क॒ः । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभि॑ः । सदा॑ । न॒ः ॥ ८ ॥

हे ᵛउषः ᵛनु ᵛनः अस्मभ्यं ᵛगोमत् बहुभिर्गोभिर्युक्तं ᵛवीरवत् वीरैः पुत्रैरुपेतं ᵛरत्नं रमणीयं धनं ᵛपुरुभोजः बहुलं च[1] ᵛअस्मे अस्मासु ᵛधेहि देहि। पादभेदादस्मे इति पुनरभिधानम्। ᵛनः अस्माकं ᵛबर्हिः यज्ञं ᵛपुरुषता पुरुषतायां पुरुषसमूहेषु। अस्मत्सदृशेष्वित्यर्थः। ᵛनिदे निन्दार्थं ᵛमा ᵛकः मा कार्षीः। यथा ते निन्दन्ति तथा मा कुर्वित्यर्थः॥ ॥ २२ ॥

'उदु ज्योतिः' इति सप्तर्चं षष्ठं सूक्तं त्रैष्टुभमुषस्यम्। तथा चानुक्रान्तम्—'उदु सप्त' इति। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः॥

उदु॒ ज्योति॑र॒मृतं॑ वि॒श्वज॑न्यं वि॒श्वान॑रः सवि॒ता दे॒वो अ॑श्रेत् ।
क्रत्वा॑ दे॒वाना॑मजनिष्ट॒ चक्षु॑रा॒विर॑क॒र्भुव॑नं॒ विश्व॑मु॒षाः ॥ १ ॥

उत् । ऊँ इति॑ । ज्योति॑ः । अ॒मृत॑म् । वि॒श्वऽज॑न्यम् । वि॒श्वान॑रः । स॒वि॒ता । दे॒वः । अ॒श्रे॒त् ।
क्रत्वा॑ । दे॒वाना॑म् । अ॒ज॒नि॒ष्ट॒ । चक्षु॑ः । आ॒विः । अ॒क॒रिति॑ । भुव॑नम् । विश्व॑म् । उ॒षाः ॥ १ ॥

ᵛअमृतम् अमृतत्वसाधकमविनाशि वा ᵛविश्वजन्यं विश्वेषां जनानां हितकरं ᵛज्योतिः ᵛविश्वानरः सर्वेषां नेता ᵛसविता ᵛदेवः ᵛउत् ᵛअश्रेत् ऊर्ध्वं श्रयति। ᵛदेवानां व्यवहर्तॄणां स्तोतॄणां वा यजमानानां ᵛक्रत्वा कर्मणा निमित्तेन। यागानुष्ठानार्थमित्यर्थः। तदर्थं यद्वा देवानां ᵛचक्षुः चक्षुःस्थानीयमौषसं तेजः क्रत्वा कर्मणा निमित्तेन ᵛअजनिष्ट प्रादुरभूत्। उत्पन्ना च ᵛउषाः ᵛविश्वं सर्वं ᵛभुवनं भूतजातम् ᵛआविरकः प्रादुरकः अकरोत्। समस्तं जगदाविष्कृतवती॥

प्र मे॒ पन्था॑ देव॒याना॑ अदृश्र॒न्नम॑र्धन्तो॒ वसु॑भि॒रिष्कृ॑तासः ।
अभू॑दु के॒तुरु॒षस॑ः पु॒रस्ता॑त्प्रती॒च्याग॒ादधि॑ ह॒र्म्येभ्य॑ः ॥ २ ॥

प्र । मे॒ । पन्था॑ः । दे॒वऽया॑नाः । अ॒दृ॒श्र॒न् । अम॑र्धन्तः । वसु॑ऽभिः । इष्कृ॑तासः ।
अभू॑त् । ऊँ इति॑ । के॒तुः । उ॒षस॑ः । पु॒रस्ता॑त् । प्र॒तीची॑ । आ । अ॒गा॒त् । अधि॑ । ह॒र्म्येभ्य॑ः ॥२॥

---

1 ख-म्रा-त-न-भ-श-वा।

ᵛमे मया ᵛदेवयानाः देवप्रापकाः ᵛपन्थाः पन्थानः ᵛप्र ᵛअदृश्रन् प्रदृश्यन्ते। कीदृशाः पन्थानः। ᵛअमर्धन्तः अहिंसन्तः ᵛवसुभिः तेजोभिः ᵛइष्कृतासः संस्कृताः। ᵛपुरस्तात् पूर्वस्यां दिशि ᵛउषसः ᵛकेतुः प्रज्ञापकं तेजः ᵛअभूत् अचेति ज्ञायते। सोषाश्च ᵛप्रतीची प्रत्यगञ्चनास्मदभिमुखी ᵛहर्म्येभ्यः ᵛअधि उच्छ्रितेभ्यः प्रदेशेभ्यः। हर्म्यशब्द उन्नतप्रदेशोपलक्षकः। ᵛआगात् आगच्छति ॥

तानीदहा॑नि बहु॒लान्या॑स॒न्या प्रा॒चीन॒मुदि॑ता॒ सूर्य॑स्य ।
यत॒ः परि॑ जा॒रइ॑वा॒चर॑न्त्युषो॑ ददृ॒क्षे न पुन॑र्य॒तीव॑ ॥ ३ ॥

तानि॑ । इत् । अहा॑नि । ब॒हु॒लानि॑ । आ॒स॒न् । या । प्रा॒चीन॑म् । उत्ऽइ॑ता । सूर्य॑स्य ।
यत॑ः । परि॑ । जा॒रःऽइ॑व । आ॒ऽचर॑न्ती । उष॑ः । द॒दृ॒क्षे । न । पुन॑ः । य॒तीऽइ॑व ॥ ३ ॥

हे उषः ᵛतानीत् तान्येव तव[1] तेजांसि ᵛबहुलानि ᵛअहानि ᵛआसन्। उषःप्रकाशयुक्तस्यैव कालस्याहःशब्दव्यवहारात्। तानीत्युक्तं कानीत्याह। ᵛया यानि ᵛसूर्यस्य ᵛउदिता उदितावुदये सति ᵛप्राचीनं तस्य प्राग्देशं प्रत्युदयन्ति। यद्वा सूर्यस्य प्राचीने देशे या यान्युदितोदितानि तानीत्यर्थः। हे ᵛउषः ᵛयतः यैश्च तेजोभिः ᵛपरि ᵛददृक्षे दृश्यसे त्वम्। ᵛजारइव पत्याविव ᵛआचरन्ती समीपे संचरन्ती साध्वी नारीव जारे रात्रेर्जरयितरि सूर्ये संचरन्ती त्वं[2] दृश्यसे। यथा लोके दुष्टं भ्रमणशीलमपि पतिमत्यज्यैव साध्वी संचरति तद्वत् तमविमुञ्चती[2] त्वमित्यर्थः। ᵛन ᵛपुनर्यतीव यती पतिं परित्यज्येतस्ततः संचरन्ती व्यभिचारिणीव सूर्यमपरित्यजन्ती[3] त्वम्। पुनरित्ययं वैलक्षण्यद्योतनार्थः। एवं यैस्तेजोभिर्युक्ता परिदृश्यसे तान्येवाहान्यासन्निति संबन्धः ॥

त इद्दे॒वानां॑ सध॒माद॑ आसन्नृ॒तावा॑नः क॒वय॑ः पू॒र्व्यास॑ः ।
गू॒ळ्हं ज्योति॑ः पि॒तरो॒ अन्व॑विन्दन्स॒त्यम॑न्त्रा अजनयन्नु॒षास॑म् ॥ ४ ॥

ते । इत् । दे॒वाना॑म् । स॒ध॒ऽमाद॑ः । आ॒स॒न् । ऋ॒तऽवा॑नः । क॒वय॑ः । पू॒र्व्यास॑ः ।
गू॒ळ्हम् । ज्योति॑ः । पि॒तर॑ः । अनु॑ । अ॒वि॒न्द॒न् । स॒त्यऽम॑न्त्राः । अ॒ज॒न॒य॒न् । उ॒षस॑म् ॥ ४ ॥

ᵛत ᵛइत् तेऽङ्गिरस एवर्षीणां मध्ये ᵛदेवानां ᵛसधमादः सह माद्यन्तः ᵛआसन् अभवन्। त इत्युक्तं क इत्याह। ये ᵛऋतावानः सत्यवन्तः ᵛकवयः अनूचानाः। 'ये वा अनूचानास्ते कवयः' (ऐ. ब्रा. २. ३८) इति श्रुतेः। ᵛपूर्व्यासः पूर्वकालीनाः ᵛपितरः पालयितारः सर्वस्याङ्गिरसः ᵛगूळ्हं तमसावृतं ᵛज्योतिः सौर्यं तेजः ᵛअन्वविन्दन् लब्धवन्तो मन्त्रसामर्थ्यात् ते[4] ᵛसत्यमन्त्राः सत्यस्तुतयः सन्तः ᵛउषासम् उषसम् ᵛअजनयन् प्रादुरकुर्वन्। 'तुरीयेण ब्रह्मणाविन्ददत्रिः' (ऋ. सं. ५. ४०. ६) 'अत्रयस्तमन्वविन्दन्' (ऋ. सं. ५. ४०. ९) इति निगमौ। अत्राङ्गिरसां स्तुत्योषस एव स्तुतिर्ज्ञातव्या ॥

स॒मा॒न ऊ॒र्वे अधि॒ संग॑तास॒ः सं जा॑नते॒ न य॑तन्ते मि॒थस्ते ।
ते दे॒वानां॒ न मि॑नन्ति व्र॒तान्यम॑र्धन्तो॒ वसु॑भि॒र्याद॑मानाः ॥ ५ ॥

स॒माने॑ । ऊ॒र्वे । अधि॑ । सम्ऽग॑तासः । सम् । जा॒न॒ते॒ । न । य॒त॒न्ते॒ । मि॒थः । ते ।
ते । दे॒वाना॑म् । न । मि॒न॒न्ति॒ । व्र॒तानि॑ । अम॑र्धन्तः । वसु॑ऽभिः । याद॑मानाः ॥ ५ ॥

ᵛसमाने सर्वेषां साधारणे ᵛऊर्वे गोसमूहे पणिभिरपहृते पुनर्लब्धव्ये सति। ᵛअधि इत्यनर्थकः। ᵛसंगतासः मिलिताः सन्तः ᵛते ᵛसं ᵛजानते एकबुद्धयो भवन्ति। ᵛन ᵛमिथः

१. ख-घ-श-' तव ' नास्ति। २, त-' त्वं ....'विमुञ्चती ' नास्ति। ३. ङ-त२-सूर्यमे परित्यजती; ङ-सूर्यमेव परित्यजती। ४. ख-ङ-त-श-' ते ' नास्ति।

परस्परं ᵛयतन्ते। सहैव साधनमनुतिष्ठन्तीत्यर्थः। ᵛते अङ्गिरसः ᵛदेवानां ᵛव्रतानि कर्माणि य लक्षणानि ᵛन ᵛमिनन्ति न हिंसन्ति। किंतु परिपालयन्तीत्यर्थः। किं कुर्वन्तः। ᵛअमर्ध अहिंसन्तः ᵛवसुभिः वासकैरुषसां तेजोभिः ᵛयादमानाः गच्छन्तः॥

प्रति॑ त्वा॒ स्तोमै॑रीळते॒ वसि॑ष्ठा उष॒र्बुधः॑ सुभगे तुष्टुवांसः॑ ।
गवां॑ ने॒त्री वाज॑पत्नी न उ॒च्छोषः॑ सुजाते प्र॒थमा जर॑स्व ॥ ६ ॥

प्रति॑ । त्वा॒ । स्तोमैः॑ । ई॒ळते॒ । वसि॑ष्ठाः । उ॒षः॒ऽबुधः॑ । सु॒ऽभ॒गे॒ । तु॒स्तु॒ऽवांसः॑ ।
गवा॑म् । ने॒त्री । वाज॑ऽपत्नी । न॒ः । उ॒च्छ॒ । उषः॑ । सु॒ऽजा॒ते॒ । प्र॒थ॒मा । ज॒र॒स्व॒ ॥ ६ ॥

हे ᵛसुभगे देव्युषः ᵛत्वा त्वाम् ᵛउषर्बुधः उषसि बुध्यन्तः ᵛतुष्टुवांसः स्तुवन्तः ᵛवसिष्ठ ᵛस्तोमैः[२] स्तोत्रैः ᵛईळते स्तुवन्ति। ᵛगवां ᵛनेत्री प्रापयित्री ᵛवाजपत्नी अन्नस्य पालयित्री। अ दात्रीत्यर्थः। ईदृशी त्वं ᵛनः अस्मदर्थम् ᵛउच्छ विभाहि। हे ᵛउषः ᵛसुजाते सुप्रादुर्भावे ᵛप्रथ इतरदेवेभ्यो मुख्यभूता ᵛजरस्व॥

ए॒षा ने॒त्री राध॑सः सू॒नृता॑नामु॒षा उ॒च्छन्ती॑ रिभ्यते॒ वसि॑ष्ठैः ।
दी॒र्घ॒श्रुतं॑ र॒यिम॒स्मे दधा॑ना यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ७ ॥

ए॒षा । ने॒त्री । राध॑सः । सू॒नृता॑नाम् । उ॒षाः । उ॒च्छन्ती॑ । रि॒भ्य॒ते॒ । वसि॑ष्ठैः ।
दी॒र्घ॒ऽश्रु॒त॑म् । र॒यिम् । अ॒स्मे इति॑ । दधा॑ना । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । न॒ः ।

ᵛएषा ᵛउषाः ᵛराधसः स्तोतुः ᵛसूनृतानां स्तुतीनां ᵛनेत्री सती ᵛउच्छन्ती तमो विवासय ᵛवसिष्ठैः वसिष्ठगोत्रोत्पन्नैः ᵛरिभ्यते स्तूयते। ᵛदीर्घश्रुतं दीर्घं श्रूयमाणं सर्वत्र प्रसिद्धं ᵛरयिं ध ᵛअस्मे अस्मासु ᵛदधाना धारयन्ती॥ ॥ २३ ॥

'उपो रुरुचे' इति षळृचं सप्तमं सूक्तं वसिष्ठस्यार्षमुषस्यम्। तथा चानुक्रान्तम्—'उ रुरुचे षट्' इति। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः॥

उपो॑ रुरुचे यु॒व॒तिर्न योषा॒ विश्वं॑ जी॒वं प्र॑सु॒वन्ती॑ च॒रायै॑ ।
अभू॑द॒ग्निः स॒मिधे॒ मानु॑षाणा॒मक॒र्ज्योति॒र्बाध॑माना॒ तमां॑सि ॥ १ ॥

उपो॒ इति॑ । रु॒रु॒चे॒ । यु॒व॒तिः । न । योषा॑ । विश्व॑म् । जी॒वम् । प्र॒ऽसु॒वन्ती॑ । च॒रायै॑ ।
अभू॑त् । अ॒ग्निः । स॒म्ऽइधे॑ । मानु॑षाणाम् । अकः॑ । ज्योतिः॑ । बाध॑माना । तमां॑सि ॥

इयमुषाः ᵛउपो समीप एव सूर्यस्य ᵛरुरुचे दीप्यते। ᵛयुवतिः यौवनोपेता ᵛयोषा ᵛन योषिदि सा यथा वस्त्राभरणादिना पत्युः समीपे प्रदीप्यते तद्वत्। किं कुर्वती। ᵛविश्वं सर्वं ᵛजीवं जीवसंघं ᵛच संचाराय ᵛप्रसुवन्ती प्रेरयन्ती। किंच ᵛअग्निः ᵛमानुषाणां मनुष्याणामर्थाय ᵛसमिधे ᵛअभूत् समिः नीयोऽभवत्। कृत्यार्थे केन्। समिद्धः सन् ᵛतमांसि अन्धकारान् ᵛबाधमाना बाधमानं बाधकं ᵛज्यो तेजःसंघम् ᵛअकः अकार्षीत्। अथवा। औषसं ज्योतिस्तमांसि बाधमाना बाध्यमानान्यकः अकरोत

विश्वं॑ प्र॒ती॒ची स॒प्रथा॒ उद॑स्था॒द्रुश॒द्वासो॒ बिभ्र॑ती शु॒क्रम॑श्वैत् ।
हिर॑ण्यवर्णा सु॒दृशी॑कसंदृ॒ग्गवां॑ मा॒ता ने॒त्र्यह्ना॑मरोचि ॥ २ ॥

१. ख-भ—स्तोतारः। २. ङ—स्तोमभिः; त-न-श—स्तोमेभिः।

विश्वम्। प्रतीची। सुऽप्रथाः। उत्। अस्थात्। रुशत्। वासः। बिभ्रती। शुक्रम्। अश्वैत्। हिरण्यऽवर्णा। सुदृशीकऽसंदृक्। गवाम्। माता। नेत्री। अह्नाम्। अरोचि ॥ २ ॥

ᵛविश्वं कृत्स्नं जगत् प्रति ᵛप्रतीची अभिमुखी ᵛसप्रथाः सर्वतः पृथुतरा ᵛउदस्थात् उदगच्छत्। उदिता च ᵛरुशत् दीप्तं ᵛशुक्रं तेजोमयं ᵛवासः वसनीयं तेजःसमूहं ᵛबिभ्रती धारयन्ती ᵛअश्वैत् वर्धते। ᵛहिरण्यवर्णा हितरमणीयवर्णोपेता ᵛसुदृशीकसंदृक्। संदर्शयतीति संदृक् तेजः। सुष्ठु दर्शनीयं संदृक् तेजो यस्याः सा तादृशी। ᵛगवां वाचां गवामेव वा ᵛमाता निर्मात्री। उषःकाले हि पक्षिमनुष्यादीनां वाचो निर्गच्छन्ति। गवामपि तस्मिन् काले संचारात्तन्निर्मातृत्वम्। अथवा रश्मीनां निर्मात्री। ᵛअरोचि रोचते ᵛअह्नां ᵛनेत्री दिवसानां प्रापयित्री ॥

देवानां चक्षुः सुभगा वहन्ती श्वेतं नयन्ती सुदृशीकमश्वम्।
उषा अदर्शि रश्मिभिर्व्यक्ता चित्रामघा विश्वमनु प्रभूता ॥ ३ ॥

देवानाम्। चक्षुः। सुऽभगा। वहन्ती। श्वेतम्। नयन्ती। सुऽदृशीकम्। अश्वम्। उषाः। अदर्शि। रश्मिऽभिः। विऽअक्ता। चित्रऽमघा। विश्वम्। अनु। प्रऽभूता ॥३॥

ᵛदेवानां ᵛचक्षुः चक्षुःस्थानीयं तेजः ᵛवहन्ती धारयन्ती ᵛसुभगा शोभनधना ᵛसुदृशीकं सुदर्शनम् ᵛअश्वं सर्वदा गन्तारमादित्यं ᵛनयन्ती प्रापयन्ती। किम्। ᵛश्वेतं श्वेतवर्णोपेतं सूर्यम्। प्रकाशयुक्तं कुर्वतीत्यर्थः[1]। कीदृश्युषाः। ᵛरश्मिभिः स्वकीयैः[2] ᵛव्यक्ता ᵛअदर्शि दृश्यते च। ᵛचित्रामघा विचित्रधना ᵛविश्वमनु सर्वं जगदनुलक्ष्य ᵛप्रभूता प्रवृद्धा। सर्वजगद्व्यवहारायेत्यर्थः ॥

अन्तिवामा दूरे अमित्रमुच्छोर्वीं गव्यूतिमभयं कृधी नः।
यावय द्वेष आ भरा वसूनि चोदय राधो गृणते मघोनि ॥ ४ ॥

अन्तिऽवामा। दूरे। अमित्रम्। उच्छ। उर्वीम्। गव्यूतिम्। अभयम्। कृधि। नः। यवय। द्वेषः। आ। भर। वसूनि। चोदय। राधः। गृणते। मघोनि ॥ ४ ॥

हे उषः ᵛअन्तिवामा। अन्ति अस्मदन्तिके वामं वननीयं धनं यस्याः सा अन्तिवामा। त्वम् ᵛअमित्रम् अस्मच्छत्रुं ᵛदूरे अस्मत्तो विप्रकृष्टदेशे वर्तमानं कृत्वा व्युच्छ विभाहि। यथामित्रो दूरे भवति तथा व्युच्छेत्यर्थः। तथा ᵛउर्वीं ᵛगव्यूतिं भूमिम् ᵛअभयं ᵛनः अस्माकं ᵛकृधि कुरु। किंच ᵛद्वेषः अस्मद्द्वेष्टॄन् ᵛयावय अस्मत्तः पृथक्कुरु। ᵛवसूनि[3] शत्रूणां धनानि ᵛआ ᵛभर आहर[3]। ᵛराधः धनं ᵛचोदय प्रेरय ᵛगृणते स्तुवते मह्यं हे ᵛमघोनि धनवति ॥

अस्मे श्रेष्ठेभिर्भानुभिर्वि भाह्युषो देवि प्रतिरन्ती न आयुः।
इषं च नो दधती विश्ववारे गोमदश्वावद्रथवच्च राधः ॥ ५ ॥

अस्मे इति। श्रेष्ठेभिः। भानुऽभिः। वि। भाहि। उषः। देवि। प्रऽतिरन्ती। नः। आयुः। इषम्। च। नः। दधती। विश्वऽवारे। गोऽमत्। अश्वऽवत्। रथऽवत्। च। राधः ॥५॥

हे ᵛउषो ᵛदेवि ᵛअस्मे अस्मभ्यं ᵛश्रेष्ठेभिः प्रशस्यैः ᵛभानुभिः रश्मिभिः प्रकाशैः ᵛवि ᵛभाहि प्रकाशय। किं कुर्वती। ᵛनः अस्माकम् ᵛआयुः आयुष्यं ᵛप्रतिरन्ती वर्धयन्ती। हे ᵛविश्व-

१. घ-ङ्ग-त-न-कुर्वती°; श-करोती°। २. श-स्वकीयैः किरणैः। ३. ख-ङ्ग-त-न-भ-श-‘ वसूनि ... आहर’ नास्ति।

वारे विश्वैः संभजनीये देवि ᵛनः अस्मभ्यम् ᵛवृषम् अन्नं ᵛच ᵛगोमत्[1] गोभिर्बहुभिरुपेतम् ᵛअश्वावत् अश्वैश्चोपेतं ᵛरथवत्[2] रथैरुपेतं[2] ᵛराधः धनं ᵛच ᵛदधती वि भाहीति ॥

यां त्वा दिवो दुहितर्वर्धयन्त्युषः सुजाते मतिभिर्वसिष्ठाः ।
सास्मासु धा रयिमृष्वं बृहन्तं यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

याम् । त्वा । दिवः । दुहितः । वर्धयन्ति । उषः । सुऽजाते । मतिऽभिः । वसिष्ठाः ।
सा । अस्मासु । धाः । रयिम् । ऋष्वम् । बृहन्तम् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥६॥

हे ᵛदिवो ᵛदुहितः ᵛउषः ᵛसुजाते शोभनजनने ᵛयां ᵛत्वा त्वां ᵛमतिभिः स्तोत्रैः ᵛवसिष्ठाः ᵛवर्धयन्ति ᵛसा त्वम् ᵛअस्मासु वसिष्ठेषु ᵛऋष्वं प्रदीप्तं ᵛबृहन्तं महान्तं ᵛरयिं धनं ᵛधाः धेहि ॥ ॥ २४ ॥

'प्रति केतवः' इति पञ्चर्चमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमुषस्यम्। 'प्रति पञ्च' इत्यनुक्रमणिका। उक्तो विनियोगः ॥

प्रति केतवः प्रथमा अदृश्रन्नूर्ध्वा अस्या अञ्जयो वि श्रयन्ते ।
उषो अर्वाचा बृहता रथेन ज्योतिष्मता वाममस्मभ्यं वक्षि ॥ १ ॥

प्रति । केतवः । प्रथमाः । अदृश्रन् । ऊर्ध्वाः । अस्याः । अञ्जयः । वि । श्रयन्ते ।
उषः । अर्वाचा । बृहता । रथेन । ज्योतिष्मता । वामम् । अस्मभ्यम् । वक्षि ॥ १ ॥

ᵛअस्याः ᵛप्रथमाः प्रथमोत्पन्नाः ᵛकेतवः प्रज्ञापका रश्मयः ᵛप्रति ᵛअदृश्रन् प्रतिदृश्यन्ते। अस्याः ᵛअञ्जयः व्यञ्जका रश्मयः ᵛऊर्ध्वाः ऊर्ध्वमुखाः ᵛवि ᵛश्रयन्ते विविधं सर्वत्र[3] श्रयन्ति[3]। हे ᵛउषः देवि ᵛअर्वाचा अस्मदभिमुखेनागच्छता ᵛबृहता महता ᵛज्योतिष्मता तेजोवता ᵛरथेन ᵛअस्मभ्यं ᵛवामं वननीयं धनं[4] ᵛवक्षि वहसि ॥

प्रति षीमग्निर्जरते समिद्धः प्रति विप्रासो मतिभिर्गृणन्तः ।
उषा याति ज्योतिषा बाधमाना विश्वा तमांसि दुरितापं देवी ॥ २ ॥

प्रति । सीम् । अग्निः । जरते । सम्ऽइद्धः । प्रति । विप्रासः । मतिऽभिः । गृणन्तः ।
उषाः । याति । ज्योतिषा । बाधमाना । विश्वा । तमांसि । दुःऽइता । अप । देवी ॥ २ ॥

ᵛअग्निः ᵛसमिद्धः सन् ᵛसीं सर्वतः ᵛप्रति ᵛजरते अभिवर्धते। ᵛविप्रासः विप्रा मेधाविन ऋत्विजश्च ᵛमतिभिः स्तुतिभिरुषसं ᵛगृणन्तः स्तुवन्तो जरन्ते। ᵛउषाः च ᵛदेवी ᵛज्योतिषा ᵛविश्वा सर्वाणि ᵛतमांसि ᵛदुरिता अस्मद्दुरितानि ᵛअप ᵛबाधमाना ᵛयाति ऊर्ध्वं गच्छति ॥

एता उ त्याः प्रत्यदृश्रन्पुरस्ताज्ज्योतिर्यच्छन्तीरुषसो विभातीः ।
अजीजनन्त्सूर्यं यज्ञमग्निमपाचीनं तमो अगादजुष्टम् ॥ ३ ॥

एताः । ऊँ इति । त्याः । प्रति । अदृश्रन् । पुरस्तात् । ज्योतिः । यच्छन्तीः । उषसः । विऽभातीः ।
अजीजनन् । सूर्यम् । यज्ञम् । अग्निम् । अपाचीनम् । तमः । अगात् । अजुष्टम् ॥ ३ ॥

---

१. ख-झ-त-न-भ-श- 'गोमत्' नास्ति। २. ख-झ-त३-४-न-भ-श- 'रथवत् रथैरुपेतं' नास्ति।
३. ख-झ-त-न-भ-श-सर्वत्राश्रयंति। ४. ख-झ-त-न-भ-श-धनमस्मभ्यं।

ᵛएता ᵛउ । उ इति पूरणः । ᵛत्याः ताः प्रसिद्धा एताः ᵛविभातीः विभात्यो विभानं कुर्वत्यः ᵛज्योतिः तेजः ᵛयच्छन्तीः प्रयच्छन्त्यः ᵛउषसः ᵛपुरस्तात् पूर्वस्यां दिशि ᵛअदृश्रन् प्रतिदृश्यन्ते । ता उषसः ᵛसूर्यं ᵛयज्ञमग्निं च ᵛअजीजनन् प्रादुरकुर्वन् । उषस उदयानन्तरं तेषां संभवात्तज्जनकत्वमुपचर्यते । किंच ᵛअपाचीनं नीचीनम् ᵛअजुष्टम् अप्रियम् । सर्वेषां दृष्टिनिरोधकत्वादप्रियत्वम् । तादृशं ᵛतमः ᵛअगात् अपगतमभूत् ॥

अचे॑ति दि॒वो दु॑हि॒ता म॒घोनी॒ विश्वे॑ पश्यन्त्यु॒षसं॑ वि॒भा॒तीम् ।
आस्था॒द्रथं॑ स्व॒धया॑ यु॒ज्यमा॑न॒मा यमश्वा॑सः सु॒युजो॒ वह॑न्ति ॥ ४ ॥

अचे॑ति । दि॒वः । दु॒हि॒ता । म॒घोनी॑ । विश्वे॑ । प॒श्यन्ति॒ । उ॒षस॑म् । वि॒ऽभा॒तीम् ।
आ । अ॒स्था॒त् । रथ॑म् । स्व॒धया॑ । यु॒ज्यमा॑नम् । आ । यम् । अश्वा॑सः । सु॒ऽयुजः॑ । वह॑न्ति ॥४॥

ᵛदिवो ᵛदुहिता ᵛमघोनी धनवत्युषाः ᵛअचेति सर्वैर्ज्ञायते । ᵛविश्वे सर्वेऽपि प्राणिनः ᵛविभातीम् उच्छन्तीम् ᵛउषसं ᵛपश्यन्ति । तादृशी देवी ᵛस्वधया अन्नेन ᵛयुज्यमानं ᵛरथम् ᵛआस्थात् आतिष्ठत् आरोहति । ᵛयं रथं ᵛसुयुजः शोभनयोजनाः ᵛअश्वासः अश्वाः ᵛआ ᵛवहन्ति अभिमतदेशं प्रापयन्ति तं रथमास्थादिति ॥

प्रति॑ त्वा॒द्य सु॒मन॑सो बुधन्ता॒स्माका॑सो म॒घवा॑नो व॒यं च॑ ।
ति॒ल्वि॒ला॒यध्व॑मुषसो वि॒भा॒तीर्यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ५ ॥

प्रति॑ । त्वा॒ । अ॒द्य । सु॒ऽमन॑सः । बु॒ध॒न्त॒ । अ॒स्माका॑सः । म॒घऽवा॑नः । व॒यम् । च॒ ।
ति॒ल्वि॒ला॒यध्व॑म् । उ॒ष॒सः॒ । वि॒ऽभा॒तीः । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । न॒ः ॥ ५ ॥

हे उषः ᵛत्वा त्वाम् ᵛअद्य अस्मिन् काले ᵛसुमनसः शोभनस्तुतिकाः ᵛमघवानः हविर्लक्षणान्नवन्तः ᵛअस्माकासः अस्माका अस्मदीयाः पुरुषा ऋत्विजः । यद्वा । मघवान इत्येतद्वयमित्येतस्य विशेषणम् । हविष्मन्तो वयम् । ᵛप्रति ᵛबुधन्त प्रत्यबोधयन् स्तुतिभिः । हे ᵛउषसः यूयं च ᵛविभातीः व्युच्छन्त्यः सत्यः ᵛतिल्विलायध्वं जगत् स्निग्धभूमिकं कुरुत । 'तिल स्नेहने' इत्यस्मात्तिलुः । तिलुरिला भूमिर्यस्य तत्तिल्विलम् । तत् कुरुत । शिष्टं स्पष्टम् ॥　　॥ २५ ॥

'व्युषा आवः' इति पञ्चर्चं नवमं सूक्तं वसिष्ठस्यार्षमुषस्यं त्रैष्टुभम् । 'व्युषाः' इत्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

व्यु१॒॑षा आ॑वः प॒थ्या॒३॒ जना॑नां॒ पञ्च॑ क्षि॒तीर्मानु॑षीर्बो॒धय॑न्ती ।
सु॒सं॒दृग्भि॑रु॒क्षभि॑र्भा॒नुम॑श्रे॒द्वि सूर्यो॒ रोद॑सी॒ चक्ष॑सावः ॥ १ ॥

वि । उ॒षाः । आ॒वः॒ । प॒थ्या॑ । जना॑नाम् । पञ्च॑ । क्षि॒तीः । मानु॑षीः । बो॒धय॑न्ती ।
सु॒सं॒दृक्ऽभिः॑ । उ॒क्षऽभिः॑ । भा॒नुम् । अ॒श्रे॒त् ।
वि । सूर्यः॑ । रोद॑सी॒ इति॑ । चक्ष॑सा । आ॒व॒रित्या॑वः ॥ १ ॥

ᵛजनानां सर्वप्राणिनां ᵛपथ्या पथि हिता ᵛउषाः ᵛवि ᵛआवः व्यौच्छत् । यद्वा । जनानां हिताय व्यौच्छदिति योज्यम् । किं कुर्वती । ᵛमानुषीः मनुष्यरूपाः ᵛपञ्च ᵛक्षितीः निषादपञ्चमांश्चतुरो वर्णान् ᵛबोधयन्ती । ईदृश्युषाः ᵛसुसंदृग्भिः । संदृश्यते संदर्शयतीति वा संदृक् तेजः ।

सुतेजोभिः ᵛउक्षभिः गोभिः ᵛभानुमश्रेत्। 'अरुणैरुषा आजिमधावत्' (ऐ. ब्रा. ४. ९) इति हि श्रुतिः। 'अरुण्यो गाव उषसाम्' (नि. १. १५. ७) इति निरुक्तम्। ᵛसूर्यः च ᵛरोदसी द्यावापृथिव्यौ तमोयुक्ते ᵛचक्षसा प्रकाशकेन तेजसा ᵛवि ᵛआवः विवृणोति॥

व्यञ्जते दिवो अन्तेष्वक्तून्विशो न युक्ता उषसो यतन्ते।
सं ते गावस्तम आ वर्तयन्ति ज्योतिर्यच्छन्ति सवितेव बाहू॥ २॥

वि। अञ्जते। दिवः। अन्तेषु। अक्तून्। विशः। न। युक्ताः। उषसः। यतन्ते।
सम्। ते। गावः। तमः। आ। वर्तयन्ति। ज्योतिः। यच्छन्ति। सविताऽइव। बाहू इति॥२॥

ᵛउषसः ᵛअक्तून् तेजांसि ᵛदिवः अन्तरिक्षस्य ᵛअन्तेषु पर्यन्तप्रदेशेषु ᵛव्यञ्जते व्यक्तीकुर्वन्तीत्यर्थः। ᵛयुक्ताः परस्परं संयुक्ताः ᵛविशो ᵛन प्रजा इव सेना इव ᵛयतन्ते प्रयतन्ते तमोनाशनाय अत्र गमनाय वा। अथ प्रत्यक्षवादः। हे उषः ᵛते तव ᵛगावः रश्मयः ᵛतमः अन्धकारं ᵛसम् ᵛआ ᵛवर्तयन्ति नाशयन्ति ᵛज्योतिः तेजो ᵛयच्छन्ति प्रयच्छन्ति। ᵛसविता सूर्यः ᵛबाहू ᵛइव॥

अभूदुषा इन्द्रतमा मघोन्यजीजनत्सुविताय श्रवांसि।
वि दिवो देवी दुहिता दधात्यङ्गिरस्तमा सुकृते वसूनि॥ ३॥

अभूत्। उषाः। इन्द्रऽतमा। मघोनी। अजीजनत्। सुविताय। श्रवांसि।
वि। दिवः। देवी। दुहिता। दधाति। आङ्गिरःऽतमा। सुऽकृते। वसूनि॥ ३॥

ᵛइन्द्रतमा सर्वस्येश्वरतमा ᵛमघोनी धनवती ᵛउषाः ᵛअभूत् प्रादुरभूत्। ᵛसुविताय कल्याणाय ᵛश्रवांसि अन्नानि ᵛअजीजनत् उदपादयत्। प्रकाशितवतीत्यर्थः। ᵛदिवः ᵛदुहिता ᵛअङ्गिरस्तमा गन्तृतमा। यद्वा। अङ्गिरोगोत्रैर्भारद्वाजैः सह रात्रेरप्युत्पत्ते रात्र्यवसानस्योषारूपत्वादङ्गिरस्तमेत्युच्यते। भारद्वाजै रात्रेः सहोत्पत्तिरनुक्रमण्यामुक्ता–'रात्री कुशिकः सौभरो रात्रिर्वा भारद्वाजी' (अनु. १०. १२७) इति। तादृश्युषाः ᵛसुकृते यजमानाय ᵛवसूनि धनानि ᵛवि ᵛदधाति करोति॥

तावदुषो राधो अस्मभ्यं रास्व यावत्स्तोतृभ्यो अरदो गृणाना।
यां त्वा जज्ञुर्वृषभस्या रवेण वि दृळ्हस्य दुरो अद्रेरौर्णोः॥ ४॥

तावत्। उषः। राधः। अस्मभ्यम्। रास्व। यावत्। स्तोतृऽभ्यः। अरदः। गृणाना।
याम्। त्वा। जज्ञुः। वृषभस्य। रवेण। वि। दृळ्हस्य। दुरः। अद्रेः। और्णोः॥ ४॥

हे ᵛउषः ᵛयावत् ᵛराधः धनं ᵛस्तोतृभ्यः पूर्वम् ᵛअरदः दत्तवत्यसि ᵛतावत् राधो धनं ᵛगृणाना स्तूयमाना ᵛअस्मभ्यम् अपि ᵛरास्व देहि। ᵛयां ᵛत्वा त्वां ᵛवृषभस्य ᵛरवेण। लुप्तोपमैषा। वृषभस्येति कर्मणि षष्ठी। वृषभं रवेणेव त्वां प्रकाशेन ᵛजज्ञुः जानन्ति प्राणिनः। अथवा वृषभस्य प्रवृद्धस्य स्तोत्रस्य रवेण शब्देन जज्ञुः ज्ञापयन्ति। ᵛदृळहस्य दृढस्य ᵛअद्रेः ᵛदुरः द्वाराणि पणिभिर्गाः प्रवेश्य पिहितानि ᵛवि ᵛऔर्णोः विवृतान्यकरोः॥

देवंदेवं राधसे चोदयन्त्यस्मद्र्यक्सूनृता ईरयन्ती।
व्युच्छन्ती नः सनये धियो धा यूयं पात स्वस्तिभिः सदा नः॥ ५॥

देवम्ऽदेवम्। राधसे। चोदयन्ती। अस्मद्र्यक्। सूनृताः। ईरयन्ती।
विऽउच्छन्ती। नः। सनये। धियः। धाः। यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥५॥

vदेवंदेवं सर्वमपि स्तोतारं vराधसे धनाय vचोदयन्ती प्रेरयन्ती vअस्मद्र्यक् अस्मदभिमुखं vसूनृताः वचांसि vईरयन्ती प्रेरयन्ती vव्युच्छन्ती व्युच्छनं कुर्वती vनः अस्माकं vसनये दानाय धनलाभाय vधियः बुद्धीः vधाः धेहि । शिष्टं स्पष्टम् ॥ ॥२६॥

'प्रति स्तोमेभिः' इति तृचात्मकं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमुषस्यम्। 'प्रति तृचम्' इत्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

प्रति स्तोमेभिरुषसं वसिष्ठा गीर्भिर्विप्रासः प्रथमा अबुध्रन् ।
विवर्तयन्तीं रजसी समन्ते आविष्कृण्वतीं भुवनानि विश्वा ॥ १ ॥

प्रति । स्तोमेभिः । उषसम् । वसिष्ठाः । गीःऽभिः । विप्रासः । प्रथमाः । अबुध्रन् ।
विऽवर्तयन्तीम् । रजसी इति । समन्ते इति समऽअन्ते । आविःऽकृण्वतीम् । भुवनानि । विश्वा ॥ १ ॥

vविप्रासः मेधाविनः vवसिष्ठाः वसिष्ठगोत्राः vस्तोमेभिः स्तोतृभिः प्रयुज्यमानाः[1] vगीर्भिः स्तुतिभिः vप्रथमाः इतरयजमानेभ्यः पूर्वभूताः सन्तः vउषसं vप्रति vअबुध्रन् प्रतिबोधयन्ति । कीदृशीमुषसं च । vरजसी द्यावापृथिव्यौ vसमन्ते समानपर्यन्ते एकीभूतप्रान्ते vविवर्तयन्तीं व्यावर्तयन्तीं vविश्वा सर्वाणि vभुवनानि भूतजातानि vआविष्कृण्वतीं प्रकटीकुर्वतीं स्वभासा ॥

एषा स्या नव्यमायुर्दधाना गूढ्वी तमो ज्योतिषोषा अबोधि ।
अग्र एति युवतिरह्रयाणा प्राचिकितत्सूर्यं यज्ञमग्निम् ॥ २ ॥

एषा । स्या । नव्यम् । आयुः । दधाना । गूढ्वी । तमः । ज्योतिषा । उषाः । अबोधि ।
अग्रे । एति । युवतिः । अह्रयाणा । प्र । अचिकितत् । सूर्यम् । यज्ञम् । अग्निम् ॥ २ ॥

vएषा vउषाः vस्या सा गतदिवसेषु प्रसिद्धा दृश्यमानैषा[2] vनव्यं नवतरम् vआयुः आयुष्यम् । यौवनमित्यर्थः । तादृशं vदधाना धारयन्ती vगूढ्वी गूढं vतमः अन्धकारं vज्योतिषा स्वतेजसा निवारयन्ती vअबोधि बुध्यते । vअग्रे पुरोदेशे सूर्यस्य पुरस्ताद्देवानामग्रे वा । इतरदेवेभ्यः पूर्वमित्यर्थः । vयुवतिः नित्यतरुणी सर्वत्र मिश्रयन्ती वा vअह्रयाणा । लुप्तोपमैषा । अलज्जा युवतिरिव । सा यथा पत्युरग्रे संचरति तद्वत् सूर्यस्य पुरस्तात् vएति । एवंभूता सती vसूर्यं vयज्ञमग्निं च vप्राचिकितत् प्रज्ञापयति ॥

अश्वावतीर्गोमतीर्न उषासो वीरवतीः सदमुच्छन्तु भद्राः ।
घृतं दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥

अश्वऽवतीः । गोऽमतीः । नः । उषसः । वीरऽवतीः । सदम् । उच्छन्तु । भद्राः ।
घृतम् । दुहानाः । विश्वतः । प्रऽपीताः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ३ ॥

vअश्वावतीः बहुभिरस्मभ्यं प्रदेयैरश्वैस्तद्वत्यः तथा vगोमतीः गोमत्यो गोप्रदाः vवीरवतीः वीरवत्यः पुत्रप्रदा अत एव vभद्राः स्तुत्याः vउषासः उषसः vसदं सर्वदा vउच्छन्तु । पुनः कीदृश्यः । vघृतम् उदकं vदुहानाः दोग्ध्र्यः vविश्वतः vप्रपीताः सर्वतः प्रवृद्धाः । यूयं पातेति गतम् ॥ ॥२७॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पञ्चमाष्टमे पञ्चमोऽध्यायः समाप्तः ॥

---

१. ख—प्रयुज्यमानाभिः । २. ख—दृश्यमाना; ज्ञ-त-श—अदृश्यमानैषा ।

॥ श्रीगणेशायनमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ षष्ठो व्याख्यायते । सप्तमे मण्डले पञ्चमेऽनुवाके दश सूक्तानि व्याकृतानि । 'प्रत्यु अदर्शि' इति षडृचमेकादशं सूक्तं वसिष्ठस्यार्षमुषस्यम् । प्रथमाद्या अयुजो बृहत्यो द्वितीयाद्या युजः सतोबृहत्यः । तथा चानुक्रान्तं—'प्रत्यु षट् प्रागाथम्' इति । प्रातरनुवाक उषस्ये क्रतौ बार्हते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च—'प्रत्यु अदर्शि सह वामेनेति बार्हतम्' (आश्व. श्रौ. ४. १४) इति ॥

प्रत्यु अदर्श्यायत्युऽच्छन्ती दुहिता दिवः ।
अपो महि व्ययति चक्षसे तमो ज्योतिष्कृणोति सूनरी ॥ १ ॥

प्रति । ऊँ इति । अदर्शि । आऽयती । उच्छन्ती । दुहिता । दिवः ।
अपो इति । महि । व्ययति । चक्षसे । तमः । ज्योतिः । कृणोति । सूनरी ॥ १ ॥

vआयती आगच्छन्ती व्युच्छन्ती तमांसि विवासयन्ती वर्जयन्ती vदिवः द्युलोकस्य सूर्यस्य वा vदुहिता पुत्री एवंभूतोषाः vप्रति vअदर्शि सर्वैः प्रतिदृश्यते । vउ इति पूरकः । सैषा[1] vमहि महत् vतमः नैशमन्धकारम् । अप उ इति निपातद्वयसमुदायोऽपेत्यस्यार्थे । vअपो vव्ययति अपवृणोति । किमर्थम् । vचक्षसे दर्शनार्थम् । एवं कृत्वा vसूनरी जनानां सुष्ठु नेत्र्युषाः vज्योतिः प्रकाशं vकृणोति करोति ॥

उदुस्रियाः सृजते सूर्यः सचाँ उद्यन्नक्षत्रमर्चिवत् ।
तवेदुषो व्युषि सूर्यस्य च सं भक्तेन गमेमहि ॥ २ ॥

उत् । उस्रियाः । सृजते । सूर्यः । सचा । उत्ऽयत् । नक्षत्रम् । अर्चिऽवत् ।
तव । इत् । उषः । विऽउषि । सूर्यस्य । च । सम् । भक्तेन । गमेमहि । ॥ २ ॥

vसूर्यः सर्वस्य प्रेरक आदित्यः vउस्रियाः रश्मीन् vसचा सह युगपदेव vउत् vसृजते उद्गमयति । तथा vउद्यत् उद्गच्छत् प्रादुर्भवत् vनक्षत्रं नभसि दृश्यमानं ग्रहनक्षत्रादिकम् vअर्चिवत् दीप्तिमत् करोति । सौरेण तेजसा हि नक्तं चन्द्रप्रभृतीनि नक्षत्राणि भासन्ते । 'सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः' (वा. सं. १८. ४०) इति हि निगमः । एवं च सति[2] हे vउषः उषोदेवते vतव vसूर्यस्य vच vव्युषि विवासने प्रकाशने सति vभक्तेन अन्नेन vसं vगमेमहि वयं संगच्छेमहि । इच्छब्दः पूरकः ॥

प्रति त्वा दुहितर्दिव उषो जीरा अभुत्स्महि ।
या वहसि पुरु स्पार्हं वनन्वति रत्नं न दाशुषे मयः ॥ ३ ॥

प्रति । त्वा । दुहितः । दिवः । उषः । जीराः । अभुत्स्महि ।
या । वहसि । पुरु । स्पार्हम् । वनन्ऽवति । रत्नम् । न । दाशुषे । मयः ॥ ३ ॥

हे vदिवः vदुहितः दिवोऽन्तरिक्षाज्जायमाने हे vउषः उषोदेवते vत्वा त्वां vजीराः क्षिप्रकारिणो वयं vप्रति vअभुत्स्महि प्रतिबोद्धारो भवेम । हे vवनन्वति । वननं संभजनं संभक्तव्यं धनं वा । तद्वति

---

१. ब्र-त१-२—सोषाः । २. ख-ब्र-त-न-भ-श—सति हि ।

ᵛया त्वं ᵛपुरु बहु ᵛस्पार्हं स्पृहणीयं धनं ᵛवहसि प्रापयसि ᵛदाशुषे हवींषि दत्तवते यजमानाय ᵛरत्नं न रमणीयं धनमिव ᵛमयः सुखं च या त्वं वहसि तां त्वां प्रत्यभुत्स्महीत्यन्वयः ॥

उच्छन्ती या कृणोषि मंहना महि प्रख्यै देवि स्वर्दृशे ।
तस्यास्ते रत्नभाज ईमहे वयं स्याम मातुर्न सूनवः ॥ ४ ॥

उच्छन्ती । या । कृणोषि । मंहना । महि । प्रऽख्यै । देवि । स्वः । दृशे ।
तस्याः । ते । रत्नऽभाजः । ईमहे । वयम् । स्याम । मातुः । न । सूनवः ॥ ४ ॥

हे ᵛमहि महति ᵛदेवि दानादिगुणयुक्त उषोदेवते व्युच्छन्ती तमांसि वर्जयन्ती ᵛमंहना महिम्ना युक्ता। यद्वा। मंहतिर्दानकर्मा। दानयुक्ता। ᵛया त्वं ᵛस्वः सर्वं जगत् ᵛप्रख्यै प्रबोधनार्थं ᵛदृशे दर्शनाय च ᵛकृणोषि करोषि ᵛतस्याः तादृश्याः ᵛरत्नभाजः रत्नानां रमणीयानां धनानां भाजयित्र्याः सेवयित्र्याः ᵛईमहे याचामहे। किम्। रत्नभाज इति समभिव्याहाराद्रत्नानीति गम्यते। अपि च ᵛवयं त प्रियतमाः ᵛस्याम भवेम। ᵛमातुर्न ᵛसूनवः। यथा मातुर्जनन्याः सूनवः पुत्राः प्रियतमा भवन्ति तद्वत्

तच्चित्रं राध आ भरोषो यद्दीर्घश्रुत्तमम् ।
यत्ते दिवो दुहितर्मर्तभोजनं तद्रास्व भुनजामहै ॥ ५ ॥

तत् । चित्रम् । राधः । आ । भर । उषः । यत् । दीर्घश्रुत्ऽतमम् ।
यत् । ते । दिवः । दुहितः । मर्तऽभोजनम् । तत् । रास्व । भुनजामहै ॥ ५ ॥

हे ᵛउषः ᵛतच्चित्रं चायनीयं ᵛराधः धनम् ᵛआ ᵛभर आहर। अस्मभ्यं प्रयच्छ। ᵛयत्[1] ध ᵛदीर्घश्रुत्तमं देशकालयोर्विप्रकर्षेऽप्यतिशयेन श्रोतव्यम्। अपि च हे ᵛदिवो ᵛदुहितः ᵛते तव स्व देयं ᵛमर्तभोजनं मर्तानां मनुष्याणां भोगयोग्यं ᵛयत् अन्नमस्ति ᵛतत् ᵛरास्व देह्यस्मभ्यम्। वयं त्वद्दत्तं धनमन्नं च ᵛभुनजामहै अभ्यवहरेम ॥

श्रवः सूरिभ्यो अमृतं वसुत्वनं वाजाँ अस्मभ्यं गोमतः ।
चोदयित्री मघोनः सूनृतावत्युषा उच्छदप स्त्रिधः ॥ ६ ॥

श्रवः । सूरिऽभ्यः । अमृतम् । वसुऽत्वनम् । वाजान् । अस्मभ्यम् । गोऽमतः ।
चोदयित्री । मघोनः । सूनृताऽवती । उषाः । उच्छत् । अप । स्त्रिधः ॥ ६ ॥

हे उषः ᵛसूरिभ्यः स्तोतृभ्योऽस्मभ्यम् ᵛअमृतं मरणरहितं नित्यं ᵛवसुत्वनं वासकं वसुत्वयु वा ᵛश्रवः श्रवणीयं यशो रास्वेत्यनुषङ्गः। तथा ᵛगोमतः बहुभिर्गोभिर्युक्तान् ᵛवाजान् अन्नानि ᵛअस्मभ्यं रास्व। शिष्टः परोक्षकृतः। ᵛमघोनः हविष्मतो यजमानस्य ᵛचोदयित्री प्रेरयित्री ᵛसूनृतावती प्रियसत्यात्मिका वाक्सूनृता। तद्वती ᵛउषाः ᵛस्त्रिधः शोषकाञ्छत्रून् ᵛअप ᵛउच्छत् अपगमयतु ॥ ॥१

'इन्द्रावरुणा' इति दशर्चं द्वादशं सूक्तं वसिष्ठस्यार्षं जागतम्। इदमादीनि चत्वा सूक्तानीन्द्रावरुणदेवतानि। तथा चानुक्रान्तम्—'इन्द्रावरुणा दशैन्द्रावरुणं ह जागतं तु इति। तृतीये सवन उक्थ्ये प्रशास्तुः शस्त्र एतत्सूक्तम्। सूत्रितं च—'इन्द्रावरुणा युवमा राजानौ' ( आश्व. श्रौ. ६. १ ) इति ॥

---

1. ञ-स१—तत्।

इन्द्रावरुणा युवमध्वराय नो विशे जनाय महि शर्म यच्छतम् ।
दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः ॥ १ ॥

इन्द्रावरुणा । युवम् । अध्वराय । नः । विशे । जनाय । महि । शर्म । यच्छतम् ।
दीर्घऽप्रयज्युम् । अति । यः । वनुष्यति । वयम् । जयेम । पृतनासु । दुःऽध्यः ॥ १ ॥

हे ᵛइन्द्रावरुणा इन्द्रावरुणौ ᵛयुवं युवां ᵛनः अस्माकं ᵛविशे निवेशयित्रे परिचारकाय ᵛजनाय पुत्रपौत्रादिलक्षणाय ᵛअध्वराय यज्ञानुष्ठानार्थं ᵛमहि महत् ᵛशर्म गृहं सुखं वा ᵛयच्छतं प्रयच्छतम् । अपि च ᵛदीर्घप्रयज्युं दीर्घप्रततयज्ञमस्मदीयं जनं ᵛयः शत्रुः ᵛअति ᵛवनुष्यति अतिजिघांसति ᵛपृतनासु संग्रामेषु ᵛदूढ्यः दुर्धियो दुष्टाभिसंधींस्ताञ्छत्रून् ᵛवयं ᵛजयेम अभिभवेम ॥

सम्राळन्यः स्वराळन्य उच्यते वां महान्ताविन्द्रावरुणा महावसू ।
विश्वे देवासः परमे व्योमनि सं वामोजो वृषणा सं बलं दधुः ॥ २ ॥

सम्ऽराट् । अन्यः । स्वऽराट् । अन्यः । उच्यते । वाम् ।
महान्तौ । इन्द्रावरुणा । महावसू इति महाऽवसू ।
विश्वे । देवासः । परमे । विऽओमनि । सम् । वाम् । ओजः । वृषणा । सम् । बलम् । दधुः ॥२॥

द्वितीयः पादः परोक्षकृतः शिष्टाः प्रत्यक्षकृताः । हे इन्द्रावरुणौ ᵛवां युवयोर्मध्ये ᵛअन्यः एको वरुणः ᵛसम्राट् सम्यग्राजमान इति ᵛउच्यते । 'ता सम्राजा घृतासुती' (ऋ. सं. २. ४१. ६) इत्यादिषु कीर्त्यते । ᵛअन्यः इन्द्रः ᵛस्वराट् स्वयमेवान्यनिरपेक्षयैव राजमान इत्युच्यते । 'स्वराळिन्द्रो दमे' (ऋ. सं. १. ६१. ९) इत्यादिषु कीर्त्यते । तथाविधौ ᵛइन्द्रावरुणा इन्द्रावरुणौ ᵛमहान्तौ गुणैरधिकौ ᵛमहावसू महाधनौ च भवतः । हे ᵛवृषणा कामानां वर्षिताराविन्द्रावरुणौ ᵛवां युवां ᵛपरमे ᵛव्योमनि उत्कृष्टे आकाशे ᵛविश्वे ᵛदेवासः सर्वे देवाः ᵛओजः ᵛसं ᵛदधुः समयोजयन् शरीरदार्ढ्याय । तद्धेतुभूतं तदोज इत्युच्यते । स्मर्यते च—'ओजो नामाष्टमी दशा' इति । तथा ᵛबलं वृत्रवधादेः कार्यस्य हेतुभूतं सामर्थ्यं च युवाभ्यां ᵛसं दधुः समयोजयन् ॥

अन्वपां खान्यतृन्तमोजसा सूर्यमैरयतं दिवि प्रभुम् ।
इन्द्रावरुणा मदे अस्य मायिनोऽपिन्वतमपितः पिन्वतं धियः ॥ ३ ॥

अनु । अपाम् । खानि । अतृन्तम् । ओजसा । आ । सूर्यम् । ऐरयतम् । दिवि । प्रऽभुम् ।
इन्द्रावरुणा । मदे । अस्य । मायिनः । अपिन्वतम् । अपितः । पिन्वतम् । धियः ॥ ३ ॥

हे इन्द्रावरुणौ ᵛअपाम् उदकानां ᵛखानि द्वाराणि वृत्रेण पिहितानि ᵛओजसा बलेन ᵛअनु ᵛअतृन्तम् अन्वविध्यतम् । आवरकस्य वृत्रस्य वधेन वृष्टिप्रतिबन्धं निराकृतवन्ताविंत्यर्थः । तथा ᵛसूर्यं सर्वस्य प्रेरकमादित्यं ᵛदिवि अन्तरिक्षे ᵛप्रभुं प्रभूतं सन्तम् ᵛआ ᵛऐरयतम् अभ्यगमयतम् । स्वर्भानुनावृतं सूर्यं तद्वधेन प्रकाशितवन्ताविंत्यर्थः । हे ᵛइन्द्रावरुणा इन्द्रावरुणौ ᵛमायिनः प्रज्ञाकरस्य ᵛअस्य सोमस्य पानेन ᵛमदे हर्षे सति ᵛअपितः जलरहिता नदीः ᵛअपिन्वतं जलेनापूरयतम् । तथा च निवित्पदमाम्नायते—'अस्य मदे जरितरिन्द्रोऽजिन्वदजुवोऽपिन्वदपितः' (शा. श्रौ. ८. २५. १) इति । अपि च ᵛधियः कर्माण्यस्माभिरनुष्ठितानि कर्माणि ᵛपिन्वतं सिञ्चतं फलेन पूरयतम् ॥

युवामिद्युत्सु पृतनासु वह्नयो युवां क्षेमस्य प्रसवे मितज्ञवः ।
ईशाना वस्व उभयस्य कारव इन्द्रावरुणा सुहवा हवामहे ॥ ४ ॥

युवाम् । इत् । युत्ऽसु । पृतनासु । वह्नयः । युवाम् । क्षेमस्य । प्रऽसवे । मितऽज्ञवः ।
ईशाना । वस्वः । उभयस्य । कारवः । इन्द्रावरुणा । सुऽहवा । हवामहे ॥ ४ ॥

हे इन्द्रावरुणौ वह्नयः हविषां स्तोत्राणां वा वोढार ऋत्विजः युत्सु युद्धेषु पृतनासु शत्रुसेनासु रक्षणार्थं युवामित् युवामेव हवन्ते आह्वयन्ति । मितज्ञवः संकुचितजानुका अङ्गिरसोऽपि क्षेमस्य रक्षणस्य प्रसवे उत्पादने निमित्तभूते सति युवाम् एव हवन्ते । अतः कारणात् हे इन्द्रावरुणौ कारवः स्तोतारो वयमपि उभयस्य दिव्यस्य पार्थिवस्य च वस्वः वसुनो धनस्य ईशाना ईश्वरौ सुहवा सुखेन ह्वातव्यौ युवामेव हवामहे आह्वयामहे ॥

इन्द्रावरुणा यदिमानि चक्रथुर्विश्वा जातानि भुवनस्य मज्मना ।
क्षेमेण मित्रो वरुणं दुवस्यति मरुद्भिरुग्रः शुभमन्य ईयते ॥ ५ ॥

इन्द्रावरुणा । यत् । इमानि । चक्रथुः । विश्वा । जातानि । भुवनस्य । मज्मना ।
क्षेमेण । मित्रः । वरुणम् । दुवस्यति । मरुत्ऽभिः । उग्रः । शुभम् । अन्यः । ईयते ॥ ५ ॥

हे इन्द्रावरुणौ यत् यौ युवां भुवनस्य लोकस्य संबन्धीनि इमानि परिदृश्यमानानि विश्वा सर्वाणि जातानि जनिमन्ति भूतजातानि मज्मना आत्मीयेन बलेन चक्रथुः कृतवन्तौ तयोर्युवयोर्मध्य एकं वरुणं क्षेमेण रक्षणहेतुना मित्रः देवः दुवस्यति परिचरति । मित्रावरुणौ हि परस्परं प्राप्तसख्यौ । अत एव सहचरौ दृश्येते । अन्यः एक इन्द्रः मरुद्भिः मरुद्गणैः उग्रः उद्गूर्णबलः सन् शुभं शोभनमलंकारम् ईयते प्राप्नोति । यद्वा । मरुद्भिर्मध्यस्थानैर्देवगणैः सार्धमुग्र ओजस्वीन्द्रः शुभमुदकमीयते प्रेरयति ॥　　॥ २ ॥

महे शुल्काय वरुणस्य नु त्विष ओजो मिमाते ध्रुवमस्य यत्स्वम् ।
अजामिमन्यः श्नथयन्तमातिरद्दभ्रेभिरन्यः प्र वृणोति भूयसः ॥ ६ ॥

महे । शुल्काय । वरुणस्य । नु । त्विषे । ओजः । मिमाते इति । ध्रुवम् । अस्य । यत् । स्वम् ।
अजामिम् । अन्यः । श्नथयन्तम् । आ । अतिरत् । दभ्रेभिः । अन्यः । प्र । वृणोति । भूयसः ॥ ६ ॥

वरुणस्य । उपलक्षणमेतत् । इन्द्रस्य वरुणस्य च त्विषे दीप्त्यर्थम् ओजः बलं नु क्षिप्रं मिमाते स्तोत्रेण निर्मिमाते यजमानपत्न्यौ । स्तोत्रेण हि बलं जायते । किमर्थम् । महे महते शुल्काय धनाय । ईदृशस्य धनस्य लाभार्थम् । अस्य इन्द्रस्य वरुणस्य च ध्रुवं नित्यं स्वं स्वकीयमसाधारणं यत् ओजः विद्यते तदोजो मिमात इत्यन्वयः । तयोरिन्द्रावरुणयोः अन्यः एको वरुणः अजामिम् अबन्धुमस्तुवन्तं श्नथयन्तं हिंसन्तं कर्माण्यकुर्वन्तमस्तोतारमयजमानं च आतिरत् अभिहन्ति । अन्यः एक इन्द्रः दभ्रेभिः अल्पैरेवोपायैः भूयसः बहुतराञ्छत्रून् प्र वृणोति प्रकर्षेणावृतान् बाधितान् करोति । यद्वा । भूयसो यजमानान् प्र वृणोति प्रवरानुत्कृष्टान् करोति ॥

न तमंहो न दुरितानि मर्त्यमिन्द्रावरुणा न तपः कुतश्चन ।
यस्य देवा गच्छथो वीथो अध्वरं न तं मर्तस्य नशते परिह्वृतिः ॥ ७ ॥

न । तम् । अंहः । न । दुःऽइतानि । मर्त्यम् । इन्द्रावरुणा । न । तपः । कुतः । चन ।
यस्य । देवा । गच्छथः । वीथः । अध्वरम् । न । तम् । मर्तस्य । नशते । परिऽह्वृतिः ॥ ७ ॥

हे इन्द्रावरुणा इन्द्रावरुणौ तं मर्त्यं मनुष्यम् अंहः पापं न नशते न व्याप्नोति । न च दुरितानि दुर्गमनानि पापफलानि च प्राप्नुवन्ति । कुतश्चन कस्मादपि निमित्तात् तपः संतापश्च तं न प्राप्नोति । हे देवा देवौ दानादिगुणयुक्ताविन्द्रावरुणौ यस्य मर्त्यस्य[1] मनुष्यस्य अध्वरं यज्ञं गच्छथः प्राप्नुथो युवां वीथः कामयेथे च यस्य हवींषि तं मनुष्यं परिह्वृतिः परिबाधा न नशते उक्तप्रकारेण न व्याप्नोति ॥

अर्वाङ्नरा दैव्येनावसा गतं शृणुतं हवं यदि मे जुजोषथः ।
युवोर्हि सख्यमुत वा यदाप्यं मार्डीकमिन्द्रावरुणा नि यच्छतम् ॥ ८ ॥

अर्वाक् । नरा । दैव्येन । अवसा । आ । गतम् । शृणुतम् । हवम् । यदि । मे । जुजोषथः ।
युवोः । हि । सख्यम् । उत । वा । यत् । आप्यम् । मार्डीकम् । इन्द्रावरुणा । नि । यच्छतम् ॥ ८ ॥

हे नरा नेताराविन्द्रावरुणौ दैव्येन देवसंबन्धिना अवसा रक्षणेन सह अर्वाक् अस्मदभिमुखम् आ गतम् आगच्छतम् । आगत्य च मदीयं हवं स्तोत्रं शृणुतम् । यदि मे मम जुजोषथः प्रीयेथे । मयि प्रीतिरस्ति चेत् युवाभ्यामागन्तव्यं मदीयं स्तोत्रं श्रोतव्यं च भवतीत्यर्थः । युवोर्हि युवयोः खलु यत् सख्यं सखित्वम् उत वा अपि च यत् आप्यम् आपित्वं बान्धवं मार्डीकं मृडीकस्य सुखस्य साधनं तदुभयं हे इन्द्रावरुणौ नि यच्छतम् अस्मभ्यं प्रयच्छतम् ॥

अस्माकमिन्द्रावरुणा भरेभरे पुरोयोधा भवतं कृष्टयोजसा ।
यद्वां हवन्त उभये अध स्पृधि नरस्तोकस्य तनयस्य सातिषु ॥ ९ ॥

अस्माकम् । इन्द्रावरुणा । भरेऽभरे । पुरःऽयोधा । भवतम् । कृष्टिऽओजसा ।
यत् । वाम् । हवन्ते । उभये । अध । स्पृधि । नरः । तोकस्य । तनयस्य । सातिषु ॥ ९ ॥

हे कृष्टयोजसा शत्रूणां कर्षकमोजो बलं ययोस्तादृशौ हे इन्द्रावरुणौ भरेभरे संग्रामे संग्रामे अस्माकं पुरोयोधा पुरस्ताद्योद्धारौ भवतम् । यत् यौ वाम् युवाम् उभये उभयविधाः पूर्वकालीना इदानींतनाश्च नरः नेतारः स्तोतारः स्पृधि युद्धे यौ युवां हवन्ते । अध अपि च तोकस्य पुत्रस्य तनयस्य पौत्रस्य सातिषु संभजनीयेषु निमित्तभूतेषु च यौ युवां हवन्ते । तावस्माकं पुरोयोधा भवतमित्यन्वयः ॥

अस्मे इन्द्रो वरुणो मित्रो अर्यमा द्युम्नं यच्छन्तु महि शर्म सप्रथः ।
अवध्रं ज्योतिरदितेर्ऋतावृधो देवस्य श्लोकं सवितुर्मनामहे ॥ १० ॥

अस्मे इति । इन्द्रः । वरुणः । मित्रः । अर्यमा । द्युम्नम् । यच्छन्तु । महि । शर्म । सऽप्रथः ।
अवध्रम् । ज्योतिः । अदितेः । ऋतऽवृधः । देवस्य । श्लोकम् । सवितुः । मनामहे ॥ १० ॥

अस्मे अस्मभ्यमिन्द्रादयः द्युम्नं द्योतमानं धनं यच्छन्तु प्रयच्छन्तु । तथा महि महत् सप्रथः सर्वतः पृथु विस्तीर्णं शर्म गृहं च प्रयच्छन्तु । अपि च ऋतावृधः ऋतस्य यज्ञस्य वर्धयित्र्याः

1. श२–मर्तस्य ।

अदितेः अदीनाया देवमातुः ज्योतिः तेजश्च नोऽस्माकम् अवध्रम् अहिंसकमस्तु। वयं च देवस्य दानादिगुणयुक्तस्य[1] सवितुः सर्वस्य प्रेरकस्य श्लोकं स्तोत्रं मनामहे जानीमः। कुर्म इत्यर्थः। यद्वा। देवेन सवित्रास्मभ्यं देयं श्लोकं यशो मनामहे याचामहे ॥ ॥ ३ ॥

'युवां नरा' इति दशर्चं त्र्योदशं सूक्तं वसिष्ठस्यार्षं जागतमैन्द्रावरुणम्। 'युवां नरा' इत्यनुक्रान्तम्। आभिप्लविकेषूक्थ्येषु स्तोमवृद्धौ प्रशास्तुरिदं सूक्तमावापार्थम्। सूत्रितं च—'युवां नरा पुनीषे वाम्' (आश्व. श्रौ. ७. ९) इति ॥

युवां नरा पश्यमानास आप्यं प्राचा गव्यन्तः पृथुपर्शवो ययुः।
दासा च वृत्रा हतमार्याणि च सुदासमिन्द्रावरुणावसावतम् ॥ १ ॥

युवाम्। नरा। पश्यमानासः। आप्यम्। प्राचा। गव्यन्तः। पृथुऽपर्शवः। ययुः।
दासा। च। वृत्रा। हतम्। आर्याणि। च। सुऽदासम्। इन्द्रावरुणा। अवसा। अवतम् ॥ १ ॥

हे नरा नेताराविन्द्रावरुणौ युवाम्। षष्ठ्यर्थे द्वितीया। युवयोः आप्यं बन्धुभावं पश्यमानासः पश्यन्तो युष्मद्बान्धवलाभार्थिनः[2] गव्यन्तः गा आत्मन इच्छन्तो यजमानाः पृथुपर्शवः। पृथुर्विस्तीर्णः पर्शुः पार्श्वास्थि येषां ते तथोक्ताः। विस्तीर्णाश्वपर्शुहस्ताः सन्तः प्राचा प्राचीनं ययुः बर्हिराहरणार्थं गच्छन्ति। पर्श्वा हि बर्हिराच्छिद्यते। तथा च तैत्तिरीयकम्—'अश्वपर्श्वा बर्हिरच्छैति' (तै. ब्रा. ३. २. २. १) इति। हे इन्द्रावरुणौ युवां दासा दासान्युपक्षपयितॄणि च वृत्राणि आवरकाणि शत्रुजातानि आर्याणि च कर्मानुष्ठानपराणि च शत्रुजातानि हतं हिंस्तम्। अपि च सुदासम् अस्मद्याज्यमेतत्संज्ञं राजानम् अवसा रक्षणेन सार्धम् अवतम् आगच्छतम् ॥

यत्रा नरः समयन्ते कृतध्वजो यस्मिन्नाजा भवति किं चन प्रियम्।
यत्रा भयन्ते भुवना स्वर्दृशस्तत्रा न इन्द्रावरुणाधि वोचतम् ॥ २ ॥

यत्र। नरः। सम्ऽअयन्ते। कृतऽध्वजः। यस्मिन्। आजा। भवति। किम्। चन। प्रियम्।
यत्र। भयन्ते। भुवना। स्वःऽदृशः। तत्र। नः। इन्द्रावरुणा। अधि। वोचतम् ॥ २ ॥

यत्र यस्मिन् संग्रामे नरः मनुष्याः[3] कृतध्वजः उच्छ्रितध्वजाः समयन्ते युद्धार्थं संगच्छन्ते। यस्मिन् च आजा आजौ युद्धे। चन इति निपातद्वयसमुदायो विभज्य योजनीयः। किंच किमपि प्रियम् अनुकूलं न भवति अपि तु सर्वं दुष्करं भवति। यत्र च युद्धे भुवना भुवनानि भूतजातानि स्वर्दृशः शरीरपातादूर्ध्वं स्वर्गस्य द्रष्टारो वीराश्च[4] भयन्ते बिभ्यति तत्र तादृशे संग्रामे हे इन्द्रावरुणौ नः अस्मान् अधि वोचतम्। अस्मत्पक्षपातवचनौ भवतम् ॥

सं भूम्या अन्ता ध्वसिरा अदृक्षतेन्द्रावरुणा दिवि घोष आरुहत्।
अस्थुर्जनानामुप मामरातयोऽर्वागवसा हवनश्रुता गतम् ॥ ३ ॥

सम्। भूम्याः। अन्ताः। ध्वसिराः। अदृक्षत। इन्द्रावरुणा। दिवि। घोषः। आ। अरुहत्।
अस्थुः। जनानाम्। उप। माम्। अरातयः। अर्वाक्। अवसा। हवनऽश्रुता। आ। गतम् ॥ ३ ॥

१. ख–दानादिग्रहणयुक्तस्य; न-भ–दानादिदेवगुणयुक्तस्य। २. ख-न-भ–युष्मद्बांधवा लाभार्थिनः; ज्ञ-क्ष-त२-४–युष्मद्बांधवः लाभार्थिनः; त३–युष्मद्बांधवलोभार्थिनः। ३. ख-भ–नेतारः। ४. क्ष-त-न-भ-श–वीताश्च।

हे इन्द्रावरुणौ vभूम्याः vअन्ताः पर्यन्ताः vध्वसिराः सैनिकैर्ध्वस्ताः vसम् vअदृक्षत संदृश्यन्ते। तथा vदिवि द्युलोके vघोषः सैनिकानां शब्दश्च vआरुहत् आरूढोऽभूत्। vजनानाम् अस्मदीयानां भटानाम् vअरातयः शत्रवः vमाम् vउप vअस्थुः उपस्थिताः। एवं प्रवर्तमानेऽस्मिन्[1] युद्धे हे vहवनश्रुता आह्वानशीलाविन्द्रावरुणौ vअर्वाक् अस्मदभिमुखम् vअवसा रक्षणेन सह vआ vगतम् आगच्छतम्॥

इन्द्रावरुणा वधनाभिरप्रति भेदं वन्वन्ता प्र सुदासमावतम्।
ब्रह्माण्येषां शृणुतं हवीमनि सत्या तृत्सूनामभवत्पुरोहितिः॥ ४॥

इन्द्रावरुणा। वधनाभिः। अप्रति। भेदम्। वन्वन्ता। प्र। सुऽदासम्। आवतम्।
ब्रह्माणि। एषाम्। शृणुतम्। हवीमनि। सत्या। तृत्सूनाम्। अभवत्। पुरःऽहितिः॥ ४॥

हे vइन्द्रावरुणा इन्द्रावरुणौ vवधनाभिः वधकैरायुधैरप्रतिगतमप्राप्तं[2] vभेदम् एतत्संज्ञं सुदासः शत्रुं vवन्वन्ता हिंसन्तौ युवां vसुदासम्। शोभनं ददातीति सुदाः। एतत्संज्ञं मम याज्यं राजानं vप्र vआवतं प्रकर्षेणारक्षतम्। vएषां तृत्सूनां मम याज्यानां vब्रह्माणि स्तोत्राणि vशृणुतम् अशृणुतम्। कदा। vहवीमनि। आहूयन्तेऽस्मिन् युद्धार्थं परस्परमिति हवीमा संग्रामः। तस्मिन्। यस्मादेवं तस्मात् vतृत्सूनाम् एतत्संज्ञानां मम याज्यानां vपुरोहितिः मम पुरोधानं vसत्या सत्यफलम् vअभवत्। तेषु यन्मम पौरोहित्यं तत् सफलं जातमित्यर्थः॥

इन्द्रावरुणावभ्या तपन्ति माघान्यर्यो वनुषामरातयः।
युवं हि वस्व उभयस्य राजथोऽध स्मा नोऽवतं पार्ये दिवि॥ ५॥

इन्द्रावरुणौ। अभि। आ। तपन्ति। मा। अघानि। अर्यः। वनुषाम्। अरातयः।
युवम्। हि। वस्वः। उभयस्य। राजथः। अध। स्म। नः। अवतम्। पार्ये। दिवि॥ ५॥

हे vइन्द्रावरुणौ vअर्यः अरेः शत्रोः संबन्धीनि vअघानि आहन्तॄण्यायुधानि vमा माम् vअभ्या vतपन्ति अभितो बाधन्ते। अपि च vवनुषां हिंसकानां मध्ये vअरातयः अभिगमनशीलाः शत्रवश्च मामभितपन्ति। vयुवं vहि युवां खलु vउभयस्य पार्थिवस्य दिव्यस्य vवस्वः वसुनो धनस्य vराजथः ईशाथे। राजतिरैश्वर्यकर्मा। vअध vस्म अतः कारणात् vपार्ये तरणीये vदिवि दिवसे युद्धदिने vनः अस्मान् vअवतं रक्षतम्॥ ॥ ४॥

युवां हवन्त उभयास आजिष्विन्द्रं च वस्वो वरुणं च सातये।
यत्र राजभिर्दशभिर्निबाधितं प्र सुदासमावतं तृत्सुभिः सह॥ ६॥

युवाम्। हवन्ते। उभयासः। आजिषु। इन्द्रम्। च। वस्वः। वरुणम्। च। सातये।
यत्र। राजऽभिः। दशऽभिः। निऽबाधितम्। प्र। सुऽदासम्। आवतम्। तृत्सुऽभिः। सह॥ ६॥

vउभयासः उभयविधाः सुदाःसंज्ञो राजा तत्सहायभूतास्तृत्सवश्चैवं द्विप्रकारा जनाः vआजिषु संग्रामेषु vइन्द्रं vच vवरुणं vच vयुवां vहवन्ते आह्वयन्ते। किमर्थम्। vवस्वः धनस्य vसातये संभजनार्थम्। vयत्र येष्वाजिषु vदशभिः दशसंख्याकैः vराजभिः शत्रुभूतैर्नृपैः vनिबाधितं नितरां हिंसितं vसुदासं vतृत्सुभिः vसह वर्तमानं vप्र vआवतं युवां प्रकर्षेणारक्षतम्। तेष्वाजिष्वित्यन्वयः॥

---

१. ख-न-भ-वर्तमाने॰। २. ख-॰मप्राप्ता; क्ष-त-न-भ-श२-॰मप्राप्त; श१-॰मप्राप्ति।

**दश राजानः समिता अयज्यवः सुदासमिन्द्रावरुणा न युयुधुः ।**
**सत्या नृणामद्मसदामुपस्तुतिर्देवा एषामभवन्देवहूतिषु ॥ ७ ॥**

दश । राजानः । सम्ऽइताः । अयज्यवः । सुऽदासम् । इन्द्रावरुणा । न । युयुधुः ।
सत्या । नृणाम् । अद्मऽसदाम् । उपऽस्तुतिः । देवाः । एषाम् । अभवन् । देवऽहूतिषु ॥ ७ ॥

हे इन्द्रावरुणौ दशसंख्याकाः ᵛराजानः सुदासः शत्रवः ᵛसमिताः संगताः परस्परं समवेताः ᵛअयज्यवः अयजमाना एवंभूतास्ते ᵛसुदासम् एतत्संज्ञमेकमपि राजानं ᵛन ᵛयुयुधुः न संप्रजह्रुः। युवाभ्यामनुगृहीतं तं प्रहर्तुं न शेकुः। तदानीम् ᵛअद्मसदाम्। अद्मन्यन्ने[1] हविषि सीदन्तीत्यद्मसद ऋत्विजः। हविर्भिर्युक्तानां ᵛनृणां यज्ञस्य नेतॄणामृत्विजाम् ᵛउपस्तुतिः स्तोत्रं ᵛसत्या सफलाभूत्। अपि च ᵛएषां ᵛदेवहूतिषु। देवा हूयन्त एष्विति देवहूतयो यज्ञाः। तेषु सर्वे च ᵛदेवाः ᵛअभवन् युष्मदनुग्रहात् प्रादुर्भवन्ति ॥

**दाशराज्ञे परियत्ताय विश्वतः सुदास इन्द्रावरुणावशिक्षतम् ।**
**श्वित्यञ्चो यत्र नमसा कपर्दिनो धिया धीवन्तो असपन्त तृत्सवः ॥ ८ ॥**

दाशऽराज्ञे । परिऽयत्ताय । विश्वतः । सुऽदासे । इन्द्रावरुणौ । अशिक्षतम् ।
श्वित्यञ्चः । यत्र । नमसा । कपर्दिनः । धिया । धीऽवन्तः । असपन्त । तृत्सवः ॥ ८ ॥

हे ᵛइन्द्रावरुणौ ᵛदाशराज्ञे दशशब्दस्य छान्दसो दीर्घः। विभक्तिव्यत्ययः। दशभी राजभिः शत्रुभूतैः ᵛविश्वतः सर्वतः ᵛपरियत्ताय परिवेष्टिताय ᵛसुदासे राज्ञे ᵛअशिक्षतं बलं प्रायच्छतम्[2]। ᵛयत्र यस्मिन् देशे ᵛश्वित्यञ्चः श्वितिं श्वैत्यं नैर्मल्यमञ्चन्तो गच्छन्तः ᵛकपर्दिनः जटिलाः ᵛधीवन्तः कर्मभिर्युक्ताः ᵛतृत्सवः वसिष्ठशिष्या एतत्संज्ञा ऋत्विजः ᵛनमसा हविर्लक्षणेनान्नेन ᵛधिया स्तुत्या च ᵛअसपन्त पर्यचरन्। तस्मिन् देशे युवां तस्मै राज्ञे बलं प्रायच्छतमित्यर्थः ॥

**वृत्राण्यन्यः समिथेषु जिघ्नते व्रतान्यन्यो अभि रक्षते सदा ।**
**हवामहे वां वृषणा सुवृक्तिभिरस्मे इन्द्रावरुणा शर्म यच्छतम् ॥ ९ ॥**

वृत्राणि । अन्यः । सम्ऽइथेषु । जिघ्नते । व्रतानि । अन्यः । अभि । रक्षते । सदा ।
हवामहे । वाम् । वृषणा । सुवृक्तिऽभिः । अस्मे इति । इन्द्रावरुणा । शर्म । यच्छतम् ॥ ९ ॥

हे इन्द्रावरुणौ युवयोः ᵛअन्यः एक इन्द्रः ᵛवृत्राणि शत्रून् ᵛसमिथेषु संग्रामेषु ᵛजिघ्नते हन्ति। ᵛअन्यः एको वरुणः ᵛसदा सर्वदा ᵛव्रतानि कर्माणि ᵛअभि ᵛरक्षते अभितः सर्वतो रक्षति। हे ᵛवृषणा कामानां वर्षिताराविन्द्रावरुणौ तथाविधौ ᵛवां युवां ᵛसुवृक्तिभिः सुप्रवृत्ताभिः स्तुतिभिः ᵛहवामहे आह्वयामहे। आहूतौ च युवाम् ᵛअस्मे अस्मभ्यं ᵛशर्म सुखं ᵛयच्छतं दत्तम् ॥

**अस्मे इन्द्रो वरुणो मित्रो अर्यमा द्युम्नं यच्छन्तु महि शर्म सप्रथः ।**
**अवध्रं ज्योतिरदितेर्ऋतावृधो देवस्य श्लोकं सवितुर्मनामहे ॥ १० ॥**

---

१. श-त२-४—अदन्यन्ने; ञ-भ-श—अद्मसदम्यन्ने; त३—अदासदन्यन्ने; न—अब्रह्मसहन्यन्ने।
२. ख-न-भ—प्रयच्छतं।

अस्मे इति॑ । इन्द्रः॑ । वरु॑णः । मि॒त्रः । अ॒र्य॒मा । द्यु॒म्नम् । य॒च्छ॒न्तु॒ । महि॑ । शर्म॑ । स॒ऽप्रथः॑ ।
अ॒व॒ध्रम् । ज्योतिः॑ । अदि॑तेः । ऋ॒त॒ऽवृधः॑ । दे॒वस्य॑ । श्लोक॑म् । स॒वि॒तुः । म॒ना॒म॒हे॒ ॥ १० ॥

व्याख्यातेयम् । अक्षरार्थस्तु । इन्द्रादयोऽस्मभ्यं द्योतमानं धनं[1] प्रयच्छन्तु सर्वतो विस्तीर्णं महद्गृहं च । यज्ञस्य वर्धयित्र्या अदीनाया देवमातुस्तेजश्चास्माकमबाधकं भवतु । वयं च प्रेरकस्य देवस्य स्तोत्रं मनामहे कुर्महे ॥ ॥ ५ ॥

'आ वाम्' इति पञ्चर्चं चतुर्दशं सूक्तं वासिष्ठं[2] त्रैष्टुभमैन्द्रावरुणम् । अनुक्रान्तं च— 'आ वां पञ्च' इति । उक्थ्ये तृतीयसवने मैत्रावरुणशस्त्र इदं सूक्तम् । सूत्रितं च—'आ वां राजानाविन्द्रावरुणा मधुमत्तमस्येति याज्या' (आश्व. श्रौ. ६. १) इति ॥

आ वां॑ राजानावध्व॒रे व॑वृत्यां ह॒व्येभि॑रिन्द्रावरुणा॒ नमो॑भिः ।
प्र वां॑ घृ॒ताची॑ बा॒ह्वोर्दधा॑ना॒ परि॒ त्मना॒ विषु॑रूपा जिगाति ॥ १ ॥

आ । वा॒म् । रा॒जा॒नौ॒ । अ॒ध्व॒रे । व॒वृ॒त्या॒म् । ह॒व्येभिः॑ । इ॒न्द्रा॒व॒रु॒णा॒ । नमः॑ऽभिः ।
प्र । वा॒म् । घृ॒ताची॑ । बा॒ह्वोः । दधा॑ना । परि॑ । त्मना॑ । विषु॑ऽरूपा । जि॒गा॒ति॒ ॥ १ ॥

हे राजानौ राजमानावीश्वरौ वेन्द्रावरुणौ अध्वरे हिंसारहितेऽस्मिन् यागे वां युवां हव्येभिः हविर्भिः नमोभिः स्तोत्रैश्च आ ववृत्याम् आवर्तयामि । अपि च बाह्वोः हस्तयोः दधाना धार्यमाणा विषुरूपा । रूप्यत इति रूपं हविः । विविधहविर्युक्ता घृताची घृतमञ्चन्ती जुहूः त्मना आत्मना स्वयमेव वां युवां परि प्र जिगाति अभिप्रगच्छति । यद्वा । विषुरूपा नानाविधरूपौ वामिति योज्यम् ॥

यु॒वो रा॒ष्ट्रं बृ॒हदि॑न्वति॒ द्यौर्यौ से॒तृभि॑रर॒ज्जुभिः॑ सिनी॒थः ।
परि॑ नो॒ हेळो॒ वरु॑णस्य वृज्या उ॒रुं न॒ इन्द्रः॑ कृणवदु लो॒कम् ॥ २ ॥

यु॒वोः । रा॒ष्ट्रम् । बृ॒हत् । इ॒न्व॒ति॒ । द्यौः । यौ । से॒तृऽभिः॑ । अ॒र॒ज्जुऽभिः॑ । सि॒नी॒थः ।
परि॑ । नः॒ । हेळः॑ । वरु॑णस्य । वृ॒ज्याः॒ । उ॒रुम् । नः॒ । इन्द्रः॑ । कृ॒ण॒व॒त् । ऊँ इति॑ । लो॒कम् ॥ २ ॥

हे इन्द्रावरुणौ युवोः युवयोः बृहत् महत् राष्ट्रं राज्यं द्यौः द्युलोकरूपम् इन्वति वृष्टया सर्वान् प्रीणयति । यौ युवां सेतृभिः बन्धकैः अरज्जुभिः रज्जुरहितैः रोगादिभिः सिनीथः पापकृतो बध्नीथः । 'षिञ् बन्धने' इति धातुः । तयोर्मध्ये वरुणस्य वारयितुर्देवस्य हेळः क्रोधः नः अस्मान् परि वृज्याः परिवृणक्तु । परित्यज्यान्यत्र गच्छतु । इन्द्रः उ इन्द्रश्च उरुं विस्तीर्णं लोकं स्थानं कृणवत् करोतु ॥

कृ॒तं नो॑ य॒ज्ञं वि॒दथे॑षु॒ चारुं॑ कृ॒तं ब्रह्मा॑णि सू॒रिषु॑ प्रश॒स्ता ।
उपो॑ र॒यिर्दे॒वजू॑तो न एतु॒ प्र णः॑ स्पा॒र्हाभि॑रू॒तिभि॑स्तिरेतम् ॥ ३ ॥

कृ॒तम् । नः॒ । य॒ज्ञम् । वि॒दथे॑षु । चारु॑म् । कृ॒तम् । ब्रह्मा॑णि । सू॒रिषु॑ । प्र॒ऽश॒स्ता ।
उपो॒ इति॑ । र॒यिः । दे॒वऽजू॑तः । नः॒ । ए॒तु॒ । प्र । नः॒ । स्पा॒र्हाभिः॑ । ऊ॒तिऽभिः॑ । ति॒रे॒त॒म् ॥ ३ ॥

१. त-न-भ-श-'धनं' नास्ति । २. ख-न-भ—वसिष्ठस्यार्षं ।

हे इन्द्रावरुणौ ᵛनः अस्माकं ᵛविदथेषु गृहेषु क्रियमाणं ᵛयज्ञं ᵛचारुं शोभनं' फलसहितं' ᵛकृतं कुरुतम्। तथा ᵛसूरिषु स्तोतृष्वस्मासु विद्यमानानि ᵛब्रह्माणि परिवृतानि स्तोत्राणि ᵛप्रशस्ता प्रशस्तान्युत्कृष्टानि फलभाञ्जि ᵛकृतं कुरुतम्। अपि च ᵛदेवजूतः देवाभ्यां युवाभ्यां प्रेरितः ᵛरयिः धनं ᵛनः अस्मान् ᵛउपैतु प्राप्नोतु। तथा ᵛस्पार्हाभिः स्पृहणीयाभिः ᵛऊतिभिः रक्षाभिः ᵛनः अस्मान् ᵛप्र ᵛतिरेतं युवां वर्धयेथाम्। प्रपूर्वस्तिरतिर्वर्धनार्थः ॥

अस्मे इन्द्रावरुणा विश्ववारं रयिं धत्तं वसुमन्तं पुरुक्षुम्।
प्र य आदित्यो अनृता मिनात्यमिता शूरो दयते वसूनि ॥ ४ ॥

अस्मे इति। इन्द्रावरुणा। विश्वऽवारम्। रयिम्। धत्तम्। वसुऽमन्तम्। पुरुऽक्षुम्।
प्र। यः। आदित्यः। अनृता। मिनाति। अमिता। शूरः। दयते। वसूनि ॥ ४ ॥

हे इन्द्रावरुणौ ᵛअस्मे अस्मभ्यं ᵛरयिं धनं ᵛधत्तं प्रयच्छतम्। कीदृशम्। ᵛविश्ववारं विश्वैः सर्वैर्वरणीयं संभजनीयं ᵛवसुमन्तं निवासयुक्तं ᵛपुरुक्षुं बह्वन्नं पुरुभिर्बहुभिः प्रशस्यं वा। ᵛआदित्यः अदितेः पुत्रः ᵛयः वरुणः ᵛअनृता अनृतानि सत्यरहितानि भूतानि ᵛप्र ᵛमिनाति प्रहिनस्ति। 'मीञ् हिंसायाम्' इति धातुः। ᵛशूरः शौर्यवान् स वरुणः ᵛअमिता अमितान्यपरिमितानि ᵛवसूनि धनानि ᵛदयते स्तोतृभ्यो ददाति ॥

इयमिन्द्रं वरुणमष्ट मे गीः प्रावत्तोके तनये तूतुजाना।
सुरत्नासो देववीतिं गमेम यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

इयम्। इन्द्रम्। वरुणम्। अष्ट। मे। गीः। प्र। आवत्। तोके। तनये। तूतुजाना।
सुऽरत्नासः। देवऽवीतिम्। गमेम। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ५ ॥

ᵛमे मदीया ᵛइयं ᵛगीः स्तुतिः ᵛइन्द्रं ᵛवरुणं च ᵛअष्ट अश्नुतां व्याप्नोतु। तथा ᵛतूतुजाना मया प्रेर्यमाणा सा ᵛतोके पुत्रे ᵛतनये पौत्रे च विषये ᵛप्रावत् प्ररक्षत्वस्मान्। वयं च ᵛसुरत्नासः शोभनधनाः सन्तः ᵛदेववीतिं देवैः कामयितव्यं यज्ञं ᵛगमेम प्राप्नुयाम। हे इन्द्रावरुणादयः सर्वे देवाः ᵛयूयं ᵛस्वस्तिभिः कल्याणैः ᵛनः अस्मान् ᵛसदा सर्वदा ᵛपात रक्षत ॥ ॥ ६ ॥

'पुनीषे वाम्' इति पञ्चर्चं पञ्चदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रावरुणम्। 'पुनीषे' इत्यनुक्रान्तम्। आभिप्लविकेषूक्थ्येषु तृतीयसवने स्तोमवृद्धौ प्रशास्तुरिदमावापार्थम्। सूत्रितं च— 'युवां नरा पुनीषे वाम्' ( आश्व. श्रौ. ७. ९ ) इति ॥

पुनीषे वामरक्षसं मनीषां सोममिन्द्राय वरुणाय जुह्वत्।
घृतप्रतीकामुषसं न देवीं ता नो यामन्नुरुष्यतामभीके ॥ १ ॥

पुनीषे। वाम्। अरक्षसम्। मनीषाम्। सोमम्। इन्द्राय। वरुणाय। जुह्वत्।
घृतऽप्रतीकाम्। उषसम्। न। देवीम्। ता। नः। यामन्। उरुष्यताम्। अभीके ॥ १ ॥

हे इन्द्रावरुणौ ᵛवां युवाभ्यां युवयोरर्थम् ᵛअरक्षसं रक्षोरहितां राक्षसैरसंस्पृष्टां ᵛमनीषां स्तुतिं ᵛपुनीषे शोधयामि। किं कुर्वन्। ᵛइन्द्राय ᵛवरुणाय च ᵛसोमं ᵛजुह्वत् इन्द्रं वरुणं चोद्दिश्य

१. ख-भ-श१—शोभनफलसहितं।

सोममग्नौ प्रक्षिपन्। कीदृशीं मनीषाम्। Vदेवीं द्योतमानाम् Vउषसं Vन उषसमिव Vघृतप्रतीकां दीप्तावयवाम्। शिष्टः[1] परोक्षकृतः। Vता ताविन्द्रावरुणौ Vअभीके अभिगते युद्धे Vयामन् यामनि युद्धार्थं गमने सति Vनः अस्मान् Vउरुष्यतां रक्षताम्॥

स्पर्धन्ते वा उ देवहूये अत्र येषु ध्वजेषु दिद्यवः पतन्ति।
युवं ताँ इन्द्रावरुणावमित्रान्हतं पराचः शर्वा विषूचः॥ २॥

स्पर्धन्ते। वै। ऊँ इति। देवऽहूये। अत्र। येषु। ध्वजेषु। दिद्यवः। पतन्ति।
युवम्। तान्। इन्द्रावरुणौ। अमित्रान्। हतम्। पराचः। शर्वा। विषूचः॥ २॥

Vदेवहूये। देवा विजिगीषवो योद्धारो हूयन्ते युद्धार्थं परस्परमाहूयन्त इति देवहूयः संग्रामः। Vअत्र अस्मिन् देवहूये संग्रामे Vस्पर्धन्ते Vवै[2] शत्रवोऽस्माभिः स्पर्धन्ते खलु। Vउ इति पूरकः। Vयेषु संग्रामेषु Vध्वजेषु पताकासु Vदिद्यवः शत्रुक्षिप्तान्यायुधानि Vपतन्ति Vतान् तेषु संग्रामेषु विद्यमानान् Vअमित्रान् शत्रून् हे Vइन्द्रावरुणौ Vयुवं युवां Vशर्वा शरुणा हिंसकेनायुधेन Vपराचः पराङ्मुखान् Vविषूचः विविधगतींश्च Vहतं हिंस्तम्। यथा ते शत्रवः पराङ्मुखा इतस्ततः पलायमानाश्च भवन्ति तथा तान् बाधेथामित्यर्थः॥

आपश्चिद्धि स्वयशसः सदःसु देवीरिन्द्रं वरुणं देवता धुः।
कृष्टीरन्यो धारयति प्रविक्ता वृत्राण्यन्यो अप्रतीनि हन्ति॥ ३॥

आपः। चित्। हि। स्वऽयशसः। सदःऽसु। देवीः। इन्द्रम्। वरुणम्। देवता। धुरिति धुः।
कृष्टीः। अन्यः। धारयति। प्रऽविक्ताः। वृत्राणि। अन्यः। अप्रतीनि। हन्ति॥ ३॥

Vआपश्चित् अब्विकाराः सोमाश्च Vस्वयशसः स्वायत्तयशस्काः Vदेवीः द्योतमानाः सन्तः Vसदःसु सदनेषु स्थानेषु Vइन्द्रं Vवरुणं च Vदेवता एते द्वे देवते Vधुः धारयन्ति अवस्थापयन्ति। सोमेनाप्यायिता हि देवताः स्वे स्वे स्थानेऽवतिष्ठन्ते। यद्वा। वसतीवर्याख्या आप एव सोमाभिषवद्वारा सदनेष्विन्द्रं वरुणं च धारयन्ति। तयोरिन्द्रावरुणयोः Vअन्यः एकः Vप्रविक्ताः पृथक्कृताः पुण्यापुण्यविवेकेन विचित्रफलभोक्त्रीः Vकृष्टीः प्रजा असांकर्येण[3] Vधारयति। Vअन्यः इन्द्रः Vवृत्राणि शत्रुजातानि Vअप्रतीनि अन्यैरप्रतिगतानि Vहन्ति हिनस्ति॥

स सुक्रतुर्ऋतचिदस्तु होता य आदित्य शवसा वां नमस्वान्।
आववर्तदवसे वां हविष्मानसदित्स सुवितायः प्रयस्वान्॥ ४॥

सः। सुऽक्रतुः। ऋतऽचित्। अस्तु। होता। यः। आदित्या। शवसा। वाम्। नमस्वान्।
आऽववर्तत्। अवसे। वाम्। हविष्मान्। असत्। इत्। सः। सुवितायं। प्रयस्वान्॥ ४॥

Vसुक्रतुः शोभनकर्मा शोभनप्रज्ञो वा Vसः Vहोता स्तोता Vऋतचित् ऋतस्योदकस्य यज्ञस्य वा चेता निचेता Vअस्तु भवतु। हे Vआदित्या अदितेः पुत्राविन्द्रावरुणौ। छान्दसः सांहितिको

---

१. ख-न-भ—अवशिष्टः। २. ख-भ्र-त-न-भ-श—'वै' नास्ति। ३. घ-ज्ञ-त२—आसांकार्येण; भ्र-न—असांकार्येण।

ह्रस्वः। यः नमस्वान् नमसा नमस्कारेण स्तोत्रेण वा युक्तः सन् शवसा बलेन युक्तौ वां युवां परिचरतीति शेषः। स सुक्रतुरित्यन्वयः। अपि च यः हविष्मान् हविर्भिर्युक्तः सन् अवसे तर्पणार्थं[1] वां युवाम् आववर्तत् आवर्तयेत् सः यजमानः प्रयस्वान् अन्नवान् भूत्वा सुविताय सुष्ठु प्राप्तव्याय फलाय असदित् भवेदेव॥

इयमिन्द्रं वरुणमष्ट मे गीः प्रावत्तोके तनये तूतुजाना।
सुरत्नासो देववीतिं गमेम यूयं पात स्वस्तिभिः सदा नः॥ ५॥

इयम्। इन्द्रम्। वरुणम्। अष्ट। मे। गीः। प्र। आवत्। तोके। तनये। तूतुजाना।
सुऽरत्नासः। देवऽवीतिम्। गमेम। यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥ ५॥

व्याख्यातेयम्। मदीया स्तुतिरिन्द्रं वरुणं चाश्नुताम्। मया प्रेर्यमाणा सा पुत्रे पौत्रे च विषयेऽस्मान् प्ररक्षतु। वयं शोभनधनाः सन्त उत्तरोत्तरं यागं प्राप्नुयाम। हे इन्द्रावरुणादयो देवाः अस्मान् सर्वदा कल्याणै रक्षत॥　　॥ ७॥

'धीरा त्वस्य' इत्यष्टर्चं षोडशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वरुणदेवत्यम्। तथा चानुक्रान्तं— 'धीराष्टौ वारुणं ह' इति। गतो विनियोगः॥

धीरा त्वस्य महिना जनूंषि वि यस्तस्तम्भ रोदसी चिदुर्वी।
प्र नाकमृष्वं नुनुदे बृहन्तं द्विता नक्षत्रं पप्रथच्च भूम॥ १॥

धीरा। तु। अस्य। महिना। जनूंषि। वि। यः। तस्तम्भ। रोदसी इति। चित्। उर्वी इति।
प्र। नाकम्। ऋष्वम्। नुनुदे। बृहन्तम्। द्विता। नक्षत्रम्। पप्रथत्। च। भूम॥ १॥

अस्य वरुणस्य जनूंषि जन्मानि महिना महिम्ना[2] तु क्षिप्रं धीरा धीराणि धैर्यवन्ति भवन्ति। यः वरुणः उर्वी विस्तीर्णे रोदसी चित् द्यावापृथिव्यावपि वि तस्तम्भ विविधं स्तब्धे स्वकीये स्थाने स्थिते अकरोत्। यश्च बृहन्तं महान्तं नाकम् आदित्यं नक्षत्रं च ऋष्वं दर्शनीयं द्विता द्वैधं प्र नुनुदे प्रेरयति स्म। अहनि सूर्यं दर्शनीयं प्रेरयति रात्रौ नक्षत्रं तथेति[3] द्विप्रकारः। भूम भूमिं च यः पप्रथत् अप्रथयत् विस्तारितवान्। तस्यास्य वरुणस्येत्यन्वयः॥

उत स्वया तन्वा३ सं वदे तत्कदा न्व१न्तर्वरुणे भुवानि।
किं मे हव्यमहृणानो जुषेत कदा मृळीकं सुमना अभि ख्यम्॥ २॥

उत। स्वया। तन्वा। सम्। वदे। तत्। कदा। नु। अन्तः। वरुणे। भुवानि।
किम्। मे। हव्यम्। अहृणानः। जुषेत। कदा। मृळीकम्। सुऽमनाः। अभि। ख्यम्॥ २॥

वरुणं शीघ्रं दिदृक्षमाण ऋषिरनया वितर्कयति। उतेति विचिकित्सायाम्। उत किं स्वया तन्वा स्वीयेनात्मीयेन शरीरेण सं वदे सहवदनं करोमि। आहो स्वित् तत् तेन वरुणेन सह संवदे। कदा नु कदा खलु वरुणे देवे अन्तः भुवानि अन्तर्भूतो भवानि। वरुणस्य चित्ते संलग्नो भवानीत्यर्थः। अपि च मे मदीयं हव्यं स्तोत्रं हविर्वा अहृणानः अक्रुध्यन् वरुणः किं

1. श—रक्षणार्थं। 2. ख-भ—महत्त्वेन। 3. ख-भ—प्रेरयति; श—प्रेरयति तथेति।

केन हेतुना ^v^जुषेत सेवेत। ^v^सुमनाः शोभनमनस्कः सन्नहं ^v^कदा कस्मिन् काले ^v^मृळीकं सुखयितारं वरुणम् ^v^अभि ^v^ख्यम् अभिपश्येयम् ॥

पृच्छे तदेनो वरुण दिदृक्षूपो एमि चिकितुषो विपृच्छम् ।
समानमिन्मे कवयश्चिदाहुरयं ह तुभ्यं वरुणो हृणीते ॥ ३ ॥

पृच्छे । तत् । एनः । वरुण । दिदृक्षु । उपो इति । एमि । चिकितुषः । विऽपृच्छम् ।
समानम् । इत् । मे । कवयः । चित् । आहुः । अयम् । ह । तुभ्यम् । वरुणः । हृणीते ॥३॥

हे ^v^वरुण ^v^तदेनः पापं ^v^पृच्छे त्वां पृच्छामि। ^v^दिदृक्षु। छान्दसः सुलोपः। द्रष्टुमिच्छन्नहम्। येन पापेन हेतुना त्वदीयैः पाशैर्बद्धोऽस्मि पृष्टः संस्तत् पापं कथय। अहं ^v^विपृच्छं विविधं प्रष्टुं ^v^चिकितुषः विदुषो जनान् ^v^उपो ^v^एमि उपागाम्। ते ^v^कवयश्चित् क्रान्तदर्शिनो जनाश्च ^v^मे मह्यं ^v^समानमित् समानमेवैकरूपमेव ^v^आहुः अकथयन्। यदाहुस्तदाह। हे स्तोतः ^v^तुभ्यम् ^v^अयं ^v^ह अयमेव ^v^वरुणः ^v^हृणीते क्रुध्यतीति। अतः क्रोधं परित्यज्यास्मान् पाशेभ्यो मोचय ॥

किमाग आस वरुण ज्येष्ठं यत्स्तोतारं जिघांससि सखायम् ।
प्र तन्मे वोचो दूळभ स्वधावोऽव त्वानेना नमसा तुर इयाम् ॥ ४ ॥

किम् । आगः । आस । वरुण । ज्येष्ठम् । यत् । स्तोतारम् । जिघांससि । सखायम् ।
प्र । तत् । मे । वोचः । दुःऽदभ । स्वधाऽवः । अव । त्वा । अनेनाः । नमसा । तुरः । इयाम् ॥ ४ ॥

हे ^v^वरुण ^v^ज्येष्ठम् अधिकं ^v^किमाग[1] ^v^आस कोऽपराधो मया कृतो बभूव। ^v^यत् येन आगसा ^v^सखायं मित्रभूतं सन्तं ^v^स्तोतारं ^v^जिघांससि हन्तुमिच्छसि। हे ^v^दूळभ दुर्दभान्यैर्बाधितुमशक्य ^v^स्वधावः तेजस्विन् हे वरुण ^v^तत् आगः ^v^मे मह्यं ^v^प्र ^v^वोचः प्रब्रूहि। एवं सति तस्य प्रायश्चित्तं कृत्वा ^v^अनेनाः अपापः सन्नहं ^v^तुरः त्वरमाणः शीघ्रः ^v^नमसा नमस्कारेण हविषा वा त्वाम् ^v^अव ^v^इयाम् उपगच्छेयम् ॥

अव द्रुग्धानि पित्र्या सृजा नोऽव या वयं चकृमा तनूभिः ।
अव राजन्पशुतृपं न तायुं सृजा वत्सं न दाम्नो वसिष्ठम् ॥ ५ ॥

अव । द्रुग्धानि । पित्र्या । सृज । नः । अव । या । वयम् । चकृम । तनूभिः ।
अव । राजन् । पशुऽतृपम् । न । तायुम् । सृज । वत्सम् । न । दाम्नः । वसिष्ठम् ॥ ५ ॥

हे वरुण ^v^पित्र्या[2] पितृतः प्राप्तानि ^v^नः अस्मदीयानि ^v^द्रुग्धानि द्रोहान् बन्धनहेतुभूतान्[3] ^v^अव ^v^सृज विमुञ्च। अस्मत्तो विश्लेषय[4]। ^v^वयं च ^v^या यानि द्रोहजातानि ^v^तनूभिः शरीरैः ^v^चकृम कृतवन्तः स्म तानि च ^v^अव सृज। हे ^v^राजन् राजमान वरुण ^v^पशुतृपं ^v^न ^v^तायुं स्तैन्यप्रायश्चित्तं कृत्वावसाने घासादिभिः पशूनां तर्पयितारं स्तेनमिव ^v^दाम्नः रज्जोः ^v^वत्सं ^v^न वत्समिव च ^v^वसिष्ठं मां बन्धकात् पापात् ^v^अव ^v^सृज विमुञ्च ॥

---

१. ख-क्ष-त-न-भ-श—आग। २. ख—पित्र्याणि; भ—पित्र्या पित्र्याणि। ३. ख—°हेतून्। ४. ख-क्ष-त-न-भ-श—विश्लेषय च।

न स स्वो दक्षो वरुण ध्रुतिः सा सुरा मन्युर्विभीदको अचित्तिः ।
अस्ति ज्यायान्कनीयस उपारे स्वप्नश्चनेदनृतस्य प्रयोता ॥ ६ ॥

न । सः । स्वः । दक्षः । वरुण । ध्रुतिः । सा । सुरा । मन्युः । विऽभीदकः । अचित्तिः ।
अस्ति । ज्यायान् । कनीयसः । उपऽअरे । स्वप्नः । चन । इत् । अनृतस्य । प्रऽयोता ॥ ६ ॥

हे वरुण सः स्वो दक्षः पुरुषस्य स्वभूतं तद्बलं पापप्रवृत्तौ कारणं न भवति । किं तर्हि ध्रुतिः स्थिरा उत्पत्तिसमय एव निर्मिता दैवगतिः[1] कारणम् । 'ध्रु गतिस्थैर्ययोः' इति धातुः । सा च ध्रुतिर्वक्ष्यमाणरूपा । सुरा प्रमादकारिणी[2] मन्युः क्रोधश्च गुर्वादिविषयः सन्ननर्थहेतुः । विभीदकः द्यूतसाधनोऽक्षः । स च द्यूतेषु पुरुषं प्रेरयन्ननर्थहेतुर्भवति । अचित्तिः अज्ञानमविवेककारणम् । अत ईदृशी दैववशसिरेव पुरुषस्य पापप्रवृत्तौ कारणम् । अपि च कनीयसः अल्पस्य हीनस्य पुरुषस्य पापप्रवृत्तौ उपारे उपागते समीपे नियन्तृत्वेन स्थितः ज्यायान् अधिक ईश्वरः अस्ति । स एव तं पापे प्रवर्तयति । तथा चाम्नातम्—'एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते' (कौ. उ. ३.८) इति । एवं च सति स्वप्नश्चन स्वप्नोऽपि अनृतस्य पापस्य प्रयोता प्रकर्षेण मिश्रयिता भवति । इत् इति पूरकः । स्वप्ने कृतैरपि कर्मभिर्बहूनि पापानि जायन्ते किमु वक्तव्यं जाग्रति कृतैः कर्मभिः पापान्युत्पद्यन्त इति । अतो ममापराधो दैवागत इति हे वरुण त्वया क्षन्तव्य[3] इति भावः ॥

अरं दासो न मीळ्हुषे कराण्यहं देवाय भूर्णयेऽनागाः ।
अचेतयदचितो देवो अर्यो गृत्सं राये कवितरो जुनाति ॥ ७ ॥

अरम् । दासः । न । मीळ्हुषे । कराणि । अहम् । देवाय । भूर्णये । अनागाः ।
अचेतयत् । अचितः । देवः । अर्यः । गृत्सम् । राये । कविऽतरः । जुनाति ॥ ७ ॥

मीळ्हुषे सेक्त्रे कामानां वर्षित्रे भूर्णये जगतो भर्त्रे देवाय दानादिगुणयुक्ताय वरुणाय अनागाः तत्प्रसादादपापः सन् अहम् अरम् अलं पर्याप्तं कराणि परिचरणं करवाणि । दासो न यथा भृत्यः स्वामिने सम्यक् परिचरति तद्वत् । अर्यः स्वामी स च देवः अचितः अजानतोऽस्मान् अचेतयत् चेतयतु प्रज्ञापयतु । गृत्सं स्तोतारं च कवितरः प्राज्ञतरो देवः राये धनाय धनप्राप्त्यर्थं जुनाति जुनातु प्रेरयतु ॥

एकादशिने वारुणे पशौ 'अयम्' इति पुरोडाशस्यानुवाक्या । सूत्रितं च—'अयं सु तुभ्यं वरुण स्वधाव एवा वन्दस्व वरुणं बृहन्तम्' (आश्व. श्रौ. ३. ७) इति ॥

अयं सु तुभ्यं वरुण स्वधावो हृदि स्तोम उपश्रितश्चिदस्तु ।
शं नः क्षेमे शमु योगे नो अस्तु यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥

अयम् । सु । तुभ्यम् । वरुण । स्वधाऽवः । हृदि । स्तोमः । उपऽश्रितः । चित् । अस्तु ।
शम् । नः । क्षेमे । शम् । ऊँ इति । योगे । नः । अस्तु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ८ ॥

हे स्वधावः अन्नवन् वरुण तुभ्यं त्वदर्थं क्रियमाणः अयम् एतत्सूक्तात्मकः[4] स्तोमः स्तोत्रं हृदि त्वदीये हृदये सु सुष्ठु उपश्रितः उपगतः समवेतः अस्तु । चित् इति पूरकः ।

---

१. ख-ग्र-त२-४—देवगतिः । २. ख-ग्र-त-न-भ-श—प्रमोदकारिणी । ३. घ-त३-श—क्षंतव्यं ।
४. ख-भ—°सूक्तात्मकः ।

अप्राप्तस्य प्रापणं योगः प्राप्तस्य रक्षणं क्षेमः। ᵛनः अस्मदीये ᵛक्षेमे रक्षणे ᵛशम् उपद्रवाणां शमनम् ᵛअस्तु। ᵛयोगे च ᵛनः अस्मदीये प्रापणे ᵛशमु शमनमेवास्तूपद्रवाणाम्। हे वरुणादयो देवाः ᵛयूयं अस्मान् सर्वदा ᵛस्वस्तिभिः अविनाशैः ᵛपात रक्षत॥ ॥ ८ ॥

'रदत्पथः' इति सप्तर्चं सप्तदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वारुणम्। अनुक्रान्तं च—'रदत्सप्त' इति। गतो विनियोगः॥

रदत्पथो वरुणः सूर्याय प्राणाँसि समुद्रिया नदीनाम्।
सर्गो न सृष्टो अर्वतीऋतायञ्चकार महीरवनीरहभ्यः॥ १॥

रदत्। पथः। वरुणः। सूर्याय। प्र। अर्णाँसि। समुद्रिया। नदीनाम्।
सर्गः। न। सृष्टः। अर्वतीः। ऋतऽयन्। चकार। महीः। अवनीः। अहऽभ्यः॥ १॥

अयं ᵛवरुणः देवः ᵛसूर्याय सर्वस्य प्रेरकायादित्याय ᵛपथः मार्गानन्तरिक्षप्रदेशान् ᵛप्र ᵛरदत् प्रायच्छत्। ᵛसमुद्रिया समुद्र उदधौ भवानि। यद्वा। समुद्द्रवन्त्यस्मादाप इति समुद्रमन्तरिक्षम्। तत्र भवानि। ᵛअर्णांसि उदकानि ᵛनदीनां प्रासृजत्। ᵛसर्गो ᵛन। सृज्यते युद्धभूमौ सादिना प्रेर्यत इति सर्गोऽश्वः। स यथा ᵛअर्वतीः वडवाः प्रति शीघ्रं गच्छति तद्वत् ᵛऋतायन् ऋतं शीघ्रं गमनमात्मन इच्छन् ᵛमहीः महतीः ᵛअवनीः रात्रीः ᵛअहभ्यः अहोभ्यः सकाशात् ᵛचकार भेदेन कृतवान्। अस्तं गच्छन् सूर्य एव वरुण इत्युच्यते। स हि स्वगमनेन रात्रीर्जनयति॥

आत्मा ते वातो रज आ नवीनोत्पशुर्न भूर्णिर्यवसे ससवान्।
अन्तर्मही बृहती रोदसीमे विश्वा ते धाम वरुण प्रियाणि॥ २॥

आत्मा। ते। वातः। रजः। आ। नवीनोत्। पशुः। न। भूर्णिः। यवसे। ससऽवान्।
अन्तः। मही इति। बृहती इति। रोदसी इति। इमे इति। विश्वा। ते। धाम। वरुण। प्रियाणि॥२॥

हे वरुण ᵛते त्वदीयस्त्वयान्तरिक्षे प्रेर्यमाणः ᵛवातः वायुः ᵛआत्मा सर्वस्य प्राणिजातस्य प्राणरूपेण धारयिता। स च ᵛरजः उदकम् ᵛआ ᵛनवीनोत् समन्तात् प्रेरयति। वातेन हि वृष्टिर्जायते। ᵛभूर्णिः जगतो भर्ता स वायुः ᵛयवसे घासे प्रक्षिप्ते सति यथा पशुरन्नवान् भवति तद्वत् ᵛससवान्। 'ससम्' इत्यन्ननाम। तद्वान् भवति। हविर्लक्षणमन्नमपि तस्मै प्रयच्छन्तीत्यर्थः[1]। यद्वा सनोतेः क्वसौ रूपम्। ततः ससवान् संभक्तवान् वातो घासे सति पशुर्यथा भारवाही भवति तद्वज्जगतो भर्ता। हे ᵛवरुण ᵛमही महत्यौ ᵛबृहती परिवृढे ᵛइमे ᵛरोदसी द्यावापृथिव्यौ ᵛअन्तः मध्ये। द्यावापृथिव्योर्मध्य इत्यर्थः। ᵛते तव ᵛविश्वा सर्वाणि ᵛधाम धामानि स्थानानि तेजांसि वा ᵛप्रियाणि सर्वेषां प्रीतिकराणि भवन्ति॥

परि स्पशो वरुणस्य स्मदिष्टा उभे पश्यन्ति रोदसी सुमेके।
ऋतावानः कवयो यज्ञधीराः प्रचेतसो य इषयन्त मन्म॥ ३॥

परि। स्पशः। वरुणस्य। स्मत्ऽइष्टाः। उभे इति। पश्यन्ति। रोदसी इति। सुमेके इति सुऽमेके।
ऋतऽवानः। कवयः। यज्ञऽधीराः। प्रऽचेतसः। ये। इषयन्त। मन्म॥ ३॥

१. ख-म्न-त४-न-भ—प्रयच्छतीत्यर्थः; श२—प्रयच्छंत इत्यर्थः।

स्पशन्ति स्पृशन्तीति स्पशश्चराः । वरुणस्य देवस्य स्पशः चराः स्मदिष्टाः । स्मदित्येतत् प्रशस्त्यार्थे सहार्थे च वर्तते । प्रशस्तगतयः । यद्वा । सह प्रेषिताः सन्तः । सुमेके शोभनमेहने सुरूपे वा उभे रोदसी द्यावापृथिव्यौ परि पश्यन्ति परित ईक्षन्ते । उभयोर्लोकयोर्वर्तमानान् पुण्यापुण्यकारिणो जनान् पश्यन्तीत्यर्थः । यस्मादेवं तस्मात् तद्भीत्या ऋतावानः कर्मवन्तः यज्ञधीराः यज्ञेषु कृतबुद्धयः प्रचेतसः प्राज्ञाः कवयः क्रान्तदर्शिनः ये जनाः मन्म मन्मानि स्तोत्राणि इषयन्त गमयन्ति वरुणं प्रापयन्ति । तानपि परिपश्यन्तीत्यर्थः । अतोऽस्मानपि स्तोतॄन् ज्ञात्वा पापात् मुञ्चन्त्वित्यृषिराशास्ते ॥

उवाच मे वरुणो मेधिराय त्रिः सप्त नामाघ्न्या बिभर्ति ।
विद्वान्पदस्य गुह्या न वोचद्युगाय विप्र उपराय शिक्षन् ॥ ४ ॥

उवाच । मे । वरुणः । मेधिराय । त्रिः । सप्त । नाम । अघ्न्या । बिभर्ति ।
विद्वान् । पदस्य । गुह्या । न । वोचत् । युगाय । विप्रः । उपराय । शिक्षन् ॥ ४ ॥

मेधिराय मेधाविने मे मह्यं वरुणः उवाच उक्तवान् । किमुक्तवान् तदाह । त्रिः सप्त एकविंशतिसंख्याकानि नामानि अघ्न्या गौः बिभर्ति धारयतीति । वागत्र गौरुच्यते । सा च उरसि कण्ठे शिरसि च बद्धानि गायत्र्यादीनि सप्त छन्दसां नामानि बिभर्ति । यद्वा । वेदात्मिका वागेकविंशतिसंस्थानां यज्ञानां नामानि बिभर्ति धारयति । अपर आह । गौः पृथिवी । तस्याश्च 'गौर्ग्मा ज्मा' इति पठितान्येकविंशतिनामानीति । अपि च विद्वान् जानन् विप्रः मेधावी स वरुणः युगाय युक्ताय उपराय उप समीपे रममाणायान्तेवासिने मह्यं शिक्षन् उपदिशन् पदस्य उत्कृष्टस्य स्थानस्य ब्रह्मलोकलक्षणस्य संबन्धीनि गुह्या गुह्यानि रहस्यान्युपदेशगम्यानि । नशब्दश्चार्थे । इमानि च वोचत् उक्तवान् । अतोऽहं वरुणस्य शिष्योऽस्मि । तस्मात् स वरुणः अस्मान्[1] पापात् मोचयत्वित्यर्थः[2] ॥

तिस्रो द्यावो निहिता अन्तरस्मिन्तिस्रो भूमीरुपराः षड्विधानाः ।
गृत्सो राजा वरुणश्चक्र एतं दिवि प्रेङ्खं हिरण्ययं शुभे कम् ॥ ५ ॥

तिस्रः । द्यावः । निऽहिताः । अन्तः । अस्मिन् । तिस्रः । भूमीः । उपराः । षट्ऽविधानाः ।
गृत्सः । राजा । वरुणः । चक्रे । एतम् । दिवि । प्रऽईङ्खम् । हिरण्ययम् । शुभे । कम् ॥ ५ ॥

तिस्रः त्रिप्रकारा उत्तममध्यमाधमभावेन त्रिविधाः द्यावः द्युलोकाः अस्मिन् वरुणे अन्तः मध्ये निहिताः । तिस्रः पूर्ववत्त्रिविधाः भूमीः भूम्यश्च षड्विधानाः । विधानं विधा । वसन्ताद्यृतुभेदेन षड्विधाः प्रकारा यासु तादृश्यः । उपराः अस्मिन्नेव वरुणे उप्ता अन्तर्भूताः । लोकानां त्रित्वं च 'त्रयो वा इमे त्रिवृतो लोकाः' ( ऐ. ब्रा. २.१७ ) इत्यादिना ब्राह्मणेनावगम्यते । 'तिस्रो भूमीर्धारयन्' ( ऋ. सं. २.२७.८ ) इति निगमश्च भवति । इमौ लोकावावृत्य वरुणस्तिष्ठतीत्यर्थः । अपि च गृत्सः स्तुत्यः राजा ईश्वरः सः वरुणः दिवि अन्तरिक्षे हिरण्ययं हिरण्मयं सुवर्णमयं हितरमणीयं वा प्रेङ्खं दोलावदिङ्खद्रूपसंस्पर्शिनम् एतं सूर्यं शुभे कं दीप्त्यर्थं चक्रे कृतवान् । 'दिवि सूर्यमदधात्सोममद्रौ' ( ऋ. सं. ५. ८५. २ ) इति हि श्रूयते ॥

---

१. घ-ङ-त-श-अस्मात् । २. ख-प्रमोचयत्वि॰ ।

वारुणे पशौ 'अव सिन्धुम्' इति वपाया अनुवाक्या । सूत्रितं च–'अव सिन्धुं वरुणो द्यौरिव स्थादयं सु तुभ्यं वरुण स्वधावः' (आश्व. श्रौ. ३.७) इति ॥

अव सिन्धुं वरुणो द्यौरिव स्थाद्द्रप्सो न श्वेतो मृगस्तुविष्मान् ।
गम्भीरशंसो रजसो विमानः सुपारक्षत्रः सतो अस्य राजा ॥ ६ ॥

अव । सिन्धुम् । वरुणः । द्यौःऽइव । स्थात् । द्रप्सः । न । श्वेतः । मृगः । तुविष्मान् ।
गम्भीरऽशंसः । रजसः । विऽमानः । सुपारऽक्षत्रः । सतः । अस्य । राजा ॥ ६ ॥

ᵛद्यौरिव सूर्य इव दीप्तः ᵛवरुणः ᵛसिन्धुं समुद्रम् ᵛअव ᵛस्थात् वेलायामवस्थापयति । यथा वेलां नातिक्रामति तथा करोतीत्यर्थः । कीदृशो वरुणः । ᵛद्रप्सो ᵛन द्रवणशील उदबिन्दुरिव ᵛश्वेतः शुभ्रवर्णः ᵛमृगः । लुप्तोपममेतत् । गौरमृग इव ᵛतुविष्मान् बलवान् प्रवृद्धो वा ᵛगम्भीरशंसः । गम्भीरो महान् शंसः स्तोत्रं यस्य स तथोक्तः । ᵛरजसः उदकस्य ᵛविमानः निर्माता ᵛसुपारक्षत्रः सुष्ठु दुःखात् पारकं क्षत्रं बलं धनं वा यस्य तादृशो वरुणः ᵛसतः विद्यमानस्य ᵛअस्य जगतः ᵛराजा ईश्वरो भवति ॥

यो मृळयाति चक्रुषे चिदागो वयं स्याम वरुणे अनागाः ।
अनु व्रतान्यदितेर्ऋधन्तो यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

यः । मृळयाति । चक्रुषे । चित् । आगः । वयम् । स्याम । वरुणे । अनागाः ।
अनु । व्रतानि । अदितेः । ऋधन्तः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

ᵛआगः अपराधं ᵛचक्रुषे ᵛचित् कृतवतेऽपि स्तोत्रे ᵛयः वरुणः ᵛमृळयाति उपदयां करोति तस्मिन् ᵛवरुणे ᵛअनागाः अनागसोऽनपराधाः सन्तः ᵛवयं ᵛस्याम वर्तमाना भवेम । किं कुर्वन्तः । ᵛअदितेः अदीनस्य वरुणस्य संबन्धीनि ᵛव्रतानि कर्माणि ᵛअनु आनुपूर्व्येण ᵛऋधन्तः समर्धयन्तः । हे वरुणादयो देवा यूयमस्मान् सर्वदा कल्याणैः पालयत ॥ ॥ ९ ॥

'प्र शुन्ध्युवम्' इति सप्तर्चमष्टादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वारुणम् । 'प्र शुन्ध्युवम्' इत्यनुक्रान्तम् । गतो विनियोगः ॥

प्र शुन्ध्युवं वरुणाय प्रेष्ठां मतिं वसिष्ठ मीळ्हुषे भरस्व ।
य ईमर्वाञ्चं करते यजत्रं सहस्रामघं वृषणं बृहन्तम् ॥ १ ॥

प्र । शुन्ध्युवम् । वरुणाय । प्रेष्ठाम् । मतिम् । वसिष्ठ । मीळ्हुषे । भरस्व ।
यः । ईम् । अर्वाञ्चम् । करते । यजत्रम् । सहस्रऽमघम् । वृषणम् । बृहन्तम् ॥ १ ॥

ऋषिरात्मानमेव प्रत्यक्षीकृत्य स्तुतौ नियुङ्क्ते । हे ᵛवसिष्ठ त्वं ᵛमीळ्हुषे सेक्त्रे ᵛवरुणाय ᵛशुन्ध्युवं शोधयित्रीं यद्वा स्वत एव शुद्धां ᵛप्रेष्ठां प्रियतमां ᵛमतिं मननीयामीदृशीं स्तुतिं ᵛप्र ᵛभरस्व प्रहर प्रापय । ᵛयः वरुणः ᵛईम् एनं सूर्यम् ᵛअर्वाञ्चम् अस्मदभिमुखं ᵛकरते अन्तरिक्षे करोति तस्मै वरुणायेत्यन्वयः । कीदृशं सूर्यम् । ᵛयजत्रं यष्टव्यं ᵛसहस्रामघं बहुधनं ᵛवृषणं कामानां वर्षकं ᵛबृहन्तं महान्तम् ॥

अधा न्वस्य संदृशं जगन्वानग्नेरनीकं वरुणस्य मंसि ।
स्व१र्यदश्मन्नधिपा उ अन्धोऽभि मा वपुर्दृशये निनीयात् ॥ २ ॥

अध । नु । अस्य । सम्ऽदृशम् । जगन्वान् । अग्नेः । अनीकम् । वरुणस्य । मंसि ।
स्वः । यत् । अश्मन् । अधिऽपाः । ऊँ इति । अन्धः । अभि । मा । वपुः । दृशये । निनीयात् ॥२॥

vअध अधुना vअस्य vवरुणस्य vसंदृशं संदर्शनं vनु क्षिप्रं vजगन्वान् गतवानहम् vअग्नेः vअनीकं ज्वालासंघं vमंसि स्तवानि । तं वरुणं यष्टुमिति शेषः । vयत् यदा वरुणः vस्वः सुखकरं vअश्मन् अश्मन्यभिषवार्थे पाषाणेऽवस्थितम्[1] । अभिषुतमित्यर्थः । ईदृशम् vअन्धः सोमलक्षणमन्नम् vअधिपाः अधिकं पाता भवेत् । छान्दसः षष्ठ्यभावः । vउ इति पूरकः । तदानीं vमा मां vवपुः शरीरं स्वकीयम् । वपुरिति रूपनाम । प्रशस्तं रूपं वा vदृशये दर्शनार्थम् vअभि vनिनीयात् अभिप्रापयेत् ॥

आ यद्रुहाव वरुणश्च नावं प्र यत्समुद्रमीरयाव मध्यम् ।
अधि यदपां स्नुभिश्चराव प्र प्रेङ्ख ईङ्खयावहै शुभे कम् ॥ ३ ॥

आ । यत् । रुहाव । वरुणः । च । नावम् । प्र । यत् । समुद्रम् । ईरयाव । मध्यम् ।
अधि । यत् । अपाम् । स्नुऽभिः । चराव । प्र । प्रऽईङ्खे । ईङ्खयावहै । शुभे । कम् ॥ ३ ॥

vयत् यदा वरुणे प्रसन्ने सति अहं vवरुणश्च उभौ vनावं द्रुममयीं तरणसाधनभूताम् vआ vरुहाव उभावारूढावभूव[2] । तां च नावं vयत् यदा vसमुद्रं vमध्यं समुद्रस्य मध्यं प्रति vप्र vईरयाव प्रकर्षेण गमयाव । vयत् यदा च vअपाम् उदकानाम् vअधि उपरि vस्नुभिः गन्त्रीभिरन्याभिरपि नौभिः vचराव वर्तावहै । तदानीं vशुभे शोभार्थं vप्रेङ्खे नौरूपायां दोलायामेव[3] vप्र vईङ्खयावहै । निम्नोन्नतैस्तरङ्गैरितश्चेतश्च प्रविचलन्तौ संक्रीडावहै । vकम् इति पूरकः । यद्वा क्रियाविशेषणम् । कं सुखं यथा भवति तथेत्यर्थः ॥

वसिष्ठं ह वरुणो नाव्याधादृषिं चकार स्वपा महोभिः ।
स्तोतारं विप्रः सुदिनत्वे अह्नां यान्नु द्यावस्ततनन्यादुषासः ॥ ४ ॥

वसिष्ठम् । ह । वरुणः । नावि । आ । अधात् । ऋषिम् । चकार । सुऽअपाः । महःऽभिः ।
स्तोतारम् । विप्रः । सुदिनऽत्वे । अह्नाम् । यात् । नु । द्यावः । ततनन् । यात् । उषसः ॥४॥

एवं वसिष्ठेनात्मनोक्ते यद्वरुणेन कृतं तद्दर्शयति । vवसिष्ठं vह वसिष्ठं खलु vवरुणः vनावि स्वकीयायाम् vआधात् आरोहयत् । तथा तम् vऋषिम् vअवोभिः रक्षणैः vस्वपा स्वपसं शोभनकर्माणं vचकार वरुणः कृतवान् । अपि च vविप्रः मेधावी वरुणः vअह्नां दिवसानां मध्ये vसुदिनत्वे सत्फलत्वेन शोभनदिनत्वं तत्र vस्तोतारम् अस्थापयदिति[4] शेषः । किं कुर्वन् । vयात् यातो गच्छतः vद्यावः दिवसान् vयात् यातीः vउषासः उषसोपलक्षिता रात्रीश्च vनु क्षिप्रं vततनन् सूर्यात्मना विस्तारयन् ॥

क्व१ त्यानि नौ सख्या बभूवुः सचावहे यदवृकं पुरा चित् ।
बृहन्तं मानं वरुण स्वधावः सहस्रद्वारं जगमा गृहं ते ॥ ५ ॥

---

१. त–पाषाणेभिस्थितं । २. ख-न-भ-श१–°रूढावभूतां; घ–°रूढौ भवावः । ३. ख-ञ-ञ-त४-न-भ–डोलाया° । ४. त१-२–आस्थापय° ।

क्व । त्यानि । नौ । सख्या । बभूवुः । सचावहे इति । यत् । अवृकम् । पुरा । चित् ।
बृहन्तम् । मानम् । वरुण । स्वधाऽवः । सहस्रऽद्वारम् । जगम । गृहम् । ते ॥ ५ ॥

हे वरुण त्यानि तानि पुरातनानि नौ आवयोः सख्या सख्यानि सखित्वानि क्व कुत्र बभूवुः । पुरा पूर्वस्मिन् काले अवृकम् अहिंस्यमात्यन्तिकं यत् सख्यमस्ति तत् सचावहे आवां सेवावहे । चित् इति पूरकः । अपि च हे स्वधावः अन्नवन् वरुण ते त्वदीयं गृहं जगम गच्छानि । लोडर्थे लिट् । कीदृशं गृहम् । बृहन्तं महान्तं मानम् । मान्त्यस्मिन् सर्वाणि भूतानीति मानम् । सर्वस्य भूतजातस्य परिच्छेदकमित्यर्थः । सहस्रद्वारं बहुद्वारम् ॥

य आपिर्नित्यो वरुण प्रियः सन्त्वामागांसि कृणवत्सखा ते ।
मा त एनस्वन्तो यक्षिन्भुजेम यन्धि ष्मा विप्रः स्तुवते वरूथम् ॥ ६ ॥

यः । आपिः । नित्यः । वरुण । प्रियः । सन् । त्वाम् । आगांसि । कृणवत् । सखा । ते ।
मा । ते । एनस्वन्तः । यक्षिन् । भुजेम । यन्धि । स्म । विप्रः । स्तुवते । वरूथम् ॥ ६ ॥

हे वरुण यः वसिष्ठः नित्यः ध्रुवः आपिः बन्धुः । औरसः पुत्र इत्यर्थः । यः पूर्वं प्रियः सन् त्वां प्रति आगांसि अपराधान् कृणवत् अकरोत् स इदानीं ते तव सखा[1] समानख्यानः प्रियोऽस्तु । हे यक्षिन् यजनीय वरुण ते तव स्वभूता वयम् एनस्वन्तः एनसा पापेन युक्ताः सन्तः मा भुजेम मा भुञ्ज्महि । त्वत्प्रसादात् पापरहिता एव सन्तो भोगान् भुनजामहै । विप्रः मेधावी त्वं च स्तुवते स्तोत्रं कुर्वते वसिष्ठाय वरूथम् अनिष्टनिवारकं वरणीयं[2] वा गृहं यन्धि यच्छ । स्म इति पूरकः ॥

अत्र ऋग्विधानं—'ध्रुवासु त्वासु क्षितिषु जपन् बन्धात्प्रमुच्यते । तिष्ठन्रात्रौ जपेदेतां पाशावस्तं[3] न गच्छति '( ऋग्वि. २. ३१९ ) इति ॥

ध्रुवासु त्वासु क्षितिषु क्षियन्तो व्य१स्मत्पाशं वरुणो मुमोचत् ।
अवो वन्वाना अदितेरुपस्थाद्यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

ध्रुवासु । त्वा । आसु । क्षितिषु । क्षियन्तः । वि । अस्मत् । पाशम् । वरुणः । मुमोचत् ।
अवः । वन्वानाः । अदितेः । उपऽस्थात् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

ध्रुवासु नित्यासु आसु दृश्यमानासु क्षितिषु भूमिषु क्षियन्तः निवसन्तो वयं हे वरुण त्वा त्वां स्तुम इति शेषः । स च वरुणः अस्मत् अस्मत्तः पाशं बन्धकं पापं वि मुमोचत् मोचयेत् । तथा अदितेः अखण्डनीयायाः पृथिव्याः उपस्थात् उपस्थानात् अवः रक्षणं वरुणेन दत्तं वन्वानाः संभजमाना वयं स्याम । अन्यद्गतम् ॥ ॥ १० ॥

'मो षु वरुण' इति पञ्चर्चमेकोनविंशं सूक्तं[4] वारुणम् । अन्त्या जगती शिष्टाश्चतस्रो गायत्र्यः । तथा चानुक्रान्तं—'मो षु पञ्च गायत्रं जगत्यन्तम्' इति । गतो विनियोगः ॥

मो षु वरुण मृन्मयं गृहं राजन्नहं गमम् । मृळा सुक्षत्र मृळय ॥ १ ॥

---

१. म-श-सखा ससखा; त-सखा सखा; न-सखा ससखा । २. श-वरणीयं संभजनीयं । ३. म-पाशावर्त । ४. ख-भ-सूक्तं वसिष्ठस्यार्षं ।

मो इति॑। सु। वरुण। मृत्ऽमयम्। गृहम्। राजन्। अहम्। गमम्। मृळ। सुऽक्षत्र। मृळय॑॥१॥

हे ᵛराजन् ईश्वर ᵛवरुण त्वदीयं ᵛमृन्मयं मृदादिभिर्निर्मितं[1] ᵛगृहं ᵛमो मा उ नैव ᵛअहं ᵛगमं गतोऽस्मि। अपि तु ᵛसु शोभनं सुवर्णमयमेव त्वदीयं गृहं प्राप्नवानि। स त्वं मां ᵛमृळ सुखय। हे ᵛसुक्षत्र शोभनधन वरुण ᵛमृळय उपदयां च कुरु॥

यदेमि॑ प्रस्फुरन्नि॑व दृति॒र्न ध्मा॒तो अ॑द्रिवः। मृळा सु॑क्षत्र मृ॒ळय॑॥ २॥

यत्। एमि॑। प्रस्फुरन्ऽइ॑व। दृतिः। न। ध्मातः। अद्रिऽवः। मृळ। सुऽक्षत्र। मृळय॑॥ २॥

हे ᵛअद्रिवः आयुधवन् वरुण ᵛयत् यदा ᵛप्रस्फुरन्निव शैत्येन प्रविचलन्निव त्वद्भयाद्वेपमानः ᵛदृतिर्न दृतिरिव ᵛध्मातः वायुना पूर्णः संस्त्वया बद्धोऽहम् ᵛएमि गच्छामि तदानीं ᵛमृळ[2] सुखय। हे ᵛसुक्षत्र सुधन ᵛमृळय उपदयां कुरु॥

क्रत्वः॑ समह दी॒नता॑ प्रती॒पं ज॑गमा शुचे। मृळा सु॑क्षत्र मृ॒ळय॑॥ ३॥

क्रत्वः॑। सुमह। दीनता॑। प्रतिऽई॑पम्। जगम। शुचे। मृळ। सुऽक्षत्र। मृळय॑॥ ३॥

हे ᵛसमह सधन ᵛशुचे स्वभावतो निर्मल वरुण ᵛदीनता दीनतयाशक्ततया ᵛक्रत्वः कर्मणः कर्तव्यत्वेन विहितस्य श्रौतस्मार्तादिलक्षणस्य ᵛप्रतीपं प्रतिकूलमननुष्ठानं ᵛजगम प्राप्तवानस्मि। अत एव त्वया बद्धः। तादृशं मां ᵛमृळ[3] सुखय। अन्यद्गतम्॥

अ॒पां मध्ये॑ तस्थि॒वांसं॒ तृष्णा॑विदज्जरि॒तार॑म्। मृळा सु॑क्षत्र मृ॒ळय॑॥ ४॥

अपाम्। मध्ये॑। तस्थिऽवांस॑म्। तृष्णा॑। अविदत्। जरितार॑म्। मृळ। सुऽक्षत्र। मृळय॑॥४॥

ᵛअपां समुद्राणामुदकानां ᵛमध्ये ᵛतस्थिवांसं स्थितवन्तमपि ᵛजरितारं तव स्तोतारं मां ᵛतृष्णा पिपासा ᵛअविदत् आप्तवती। लवणोत्कटस्य सामुद्रजलस्य[4] पानानर्हत्वात्। अतस्तादृशं मां ᵛमृळ[5] सुखय। अन्यद्गतम्॥

देवसुवां हविःषु वारुणस्य हविषः 'यत्किं चेदम्' इति याज्या। सूत्रितं च—'यत्किं चेदं वरुण दैव्ये जन उप ते स्तोमान्पशुपा इवाकरमिति द्वे' (आश्व. श्रौ. ४. ११) इति॥

यत्किं चे॒दं वरु॑ण॒ दैव्ये॒ जनेऽभिद्रो॒हं म॑नु॒ष्या॒३॒श्चरा॑मसि।
अचि॑त्ती॒ यत्तव॒ धर्मा॑ युयोपि॒म मा न॒स्तस्मा॒देन॑सो देव रीरिषः॥ ५॥

यत्। किम्। च। इ॒दम्। वरुण। दैव्ये॑। जने॑। अभिऽद्रोहम्। मनुष्याः॑। चरा॑मसि।

अचि॑त्ती। यत्। तव॑। धर्म॑। युयोपिम। मा। नः। तस्मा॑त्। एन॑सः। देव। रिरिषः॥५॥

हे ᵛवरुण ᵛदैव्ये देवसमूहरूपे ᵛजने ᵛयत् ᵛइदं किंचन ᵛअभिद्रोहम् अपकारजातं ᵛमनुष्याः वयं ᵛचरामसि चरामः निर्वर्तयामः। तथा ᵛअचित्ती अचित्याज्ञानेन ᵛतव त्वदीयं ᵛयत् ᵛधर्म धारकं कर्म ᵛयुयोपिम वयं विमोहितवन्तः। हे ᵛदेव ᵛतस्मादेनसः पापात् ᵛनः अस्मान् ᵛमा ᵛरीरिषः मा हिंसीः॥ ॥११॥ ॥५॥

---

१. घ-श—मृदादिनिर्मितं; ञ-त३—मृदादिविनिर्मितं; ञ—मृदादतिनिर्मितं; त२-४-न—मृदादिति-निर्मितं। २. ख-भ—मृळय। ३. ख-त३-भ—मृळय सुखय; घ—मृळ; श—मृळय। ४. त—समुद्रजलस्य। ५. ख—मृळय; घ—मृळ; ञ-त-श—मृळय सुखय।

षष्ठेऽनुवाके पञ्चदश सूक्तानि। तत्र 'प्र वीरया' इति सप्तर्चं प्रथमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वायव्यम्। यासु पञ्चम्याद्यासु द्विवचनमस्ति ता ऐन्द्रवायव्यः। तथा चानुक्रान्तं—'प्र वीरया सप्त वायव्यं ह्यैन्द्र्यश्च या द्विवदुक्ताः' इति। तृतीये छन्दोमे प्रउगशस्त्रे 'प्र वीरया' इति वायव्यस्तृचः। सूत्रितं च—'प्र वीरया शुचयो दद्रिरे वां ते सत्येन मनसा दीध्यानाः' (आश्व. श्रौ. ८. ११) इति॥

प्र वी॒रया॒ शुच॑यो दद्रि॒रे वा॑मध्व॒र्युभि॒र्मधु॑मन्तः सु॒तासः॑ ।
वह॑ वायो नि॒युतो॑ या॒ह्यच्छा॒ पिबा॑ सु॒तस्यान्ध॑सो॒ मदा॑य ॥ १ ॥

प्र। वी॒रऽया। शुच॑यः। द॒द्रि॒रे। वा॒म्। अ॒ध्व॒र्युऽभिः॑। मधु॑ऽमन्तः। सु॒तासः॑।
वह॑। वा॒यो॒ इति॑। नि॒ऽयुतः॑। या॒हि॒। अच्छ॑। पिब॑। सु॒तस्य॑। अन्ध॑सः। मदा॑य॥ १॥

हे वायो <sup>v</sup>वीरया वीराय विविधमीरयित्रे॥ 'सुपां सुलुक्०' इति चतुर्थ्या याजादेशः॥ <sup>v</sup>वां ते। व्यत्ययेन द्विवचनम्। तुभ्यं <sup>v</sup>शुचयः शुद्धाः <sup>v</sup>मधुमन्तः माधुर्योपेताः <sup>v</sup>सुतासः अभिषुताः सोमा ऐतरेयिभिर्नवमेऽहनि प्रउगे <sup>v</sup>अध्वर्युभिः अध्वरस्य नेतृभिर्ऋत्विग्भिः <sup>v</sup>प्र <sup>v</sup>दद्रिरे प्रदीयन्ते। 'दद दाने' इत्यस्यैतद्रूपम्। यत एवमतः कारणात् हे <sup>v</sup>वायो <sup>v</sup>नियुतः वडवाः <sup>v</sup>वह रथं प्रापय। तेन च रथेन <sup>v</sup>अच्छ <sup>v</sup>याहि। अस्मद्यज्ञमभिगच्छ। अभिगत्य च <sup>v</sup>सुतस्य अभिषुतस्य <sup>v</sup>अन्धसः अन्नस्य सोमलक्षणस्य स्वकीयं भागं <sup>v</sup>पिब। किमर्थम्। <sup>v</sup>मदाय मदोत्पत्त्यर्थम्॥

शुनासीरीये पर्वणि वायव्यस्य हविषः 'ईशानाय' इति याज्या। सूत्रितं च—'स त्वं नो देव मनसेशानाय प्रहुतिं यस्त आनट्' (आश्व. श्रौ. २. २०) इति। वायव्ये पशावेषैव पशुपुरोडाशस्य याज्या। सूत्रितं च—'ईशानाय प्रहुतिं यस्त आनट् प्र वो वायुं रथयुजं कृणुध्वम्' (आश्व. श्रौ. ३. ८) इति॥

ई॒शा॒नाय॒ प्रहु॑तिं॒ यस्त॒ आन॒ट् शुचिं॒ सोमं॑ शुचिपा॒स्तुभ्यं॑ वायो ।
कृ॒णोषि॒ तं मर्त्ये॑षु प्रश॒स्तं जा॒तोजा॑तो जायते वा॒ज्य॑स्य ॥ २ ॥

ई॒शा॒नाय॑। प्रऽहु॑तिम्। यः। ते॒। आन॑ट्। शुचि॑म्। सोम॑म्। शु॒चि॒ऽपाः॒। तुभ्य॑म्। वा॒यो॒ इति॑।
कृ॒णोषि॑। तम्। मर्त्ये॑षु। प्र॒ऽश॒स्तम्। जा॒तःऽजा॑तः। जा॒य॒ते॒। वा॒जी। अ॒स्य॒॥ २॥

हे <sup>v</sup>वायो <sup>v</sup>ईशानाय ईश्वराय <sup>v</sup>ते तुभ्यं त्वदर्थं <sup>v</sup>प्रहुतिं प्रकृष्टामाहुतिं चरुपुरोडाशादिसाध्यां <sup>v</sup>यः यजमानः <sup>v</sup>आनट् प्राप्नोत्। दद्यादित्यर्थः। तथा हे <sup>v</sup>शुचिपाः शुद्धस्य[1] सोमस्य पातर्वायो <sup>v</sup>तुभ्यं <sup>v</sup>शुचिं शुद्धं <sup>v</sup>सोमं च यः प्रयच्छति <sup>v</sup>मर्त्येषु मनुष्येषु मध्ये <sup>v</sup>तं यजमानं <sup>v</sup>प्रशस्तं मुख्यं <sup>v</sup>कृणोषि करोषि। स च <sup>v</sup>जातोजातः सर्वत्र प्रादुर्भूतः प्रख्यातः सन् <sup>v</sup>वाज्यस्य प्राप्तव्यस्य धनस्य प्राप्तये[2] <sup>v</sup>जायते अवकल्पते। सर्वं धनं लभत इत्यर्थः॥

नियुत्वद्गुणविशिष्टवायुदेवताके पशौ 'राये नु यम्' इति पुरोडाशस्य याज्या। सूत्रितं च—'राये नु यं जज्ञतू रोदसीमे प्र वायुमच्छा बृहती मनीषा' (आश्व. श्रौ. ३. ८) इति॥

रा॒ये नु यं ज॒ज्ञतू॒ रोद॑सी॒मे रा॒ये दे॒वी धि॒षणा॑ धाति दे॒वम् ।
अध॑ वा॒युं नि॒युतः॑ सश्चत॒ स्वा उ॒त श्वे॒तं वसु॑धितिं निरे॒के ॥ ३ ॥

---

१. ख-शुचेः शुद्धस्य; भ-शुद्धस्य शुचेः। २. ख-भ-प्राप्त्यै।

राये । नु । यम् । जज्ञतुः । रोदसी इति । इमे इति । राये । देवी । धिषणा । धाति । देवम् ।
अर्ध । वायुम् । नि॒ऽयुतः । सश्चत । स्वाः । उत । श्वेतम् । वसुऽधितिम् । निरेके ॥ ३ ॥

vइमे vरोदसी द्यावापृथिव्यौ vयं वायुं vराये धनार्थं vनु क्षिप्रं vजज्ञतुः जनयामासतुः तं vदेवं दानादिगुणयुक्तं वायुं vदेवी द्योतमाना vधिषणा स्तुतिः vराये धनार्थं vधाति धारयति। धनं यथा लभ्यते तथा प्रेरयतीत्यर्थः। vअध अधुनैवं स्तुतौ प्रवृत्तायां vस्वाः स्वकीयाः vनियुतः वडवा रथवाहाः vवायुं vसश्चत सचन्ते सेवन्ते। vउत अपि च vश्वेतं शुभ्रवर्णं vनिरेके। नितरां रेको रिक्तता निरेकः। दारिद्र्यमित्यर्थः। तस्मिन् सति vवसुधितिं वसूनां धातारं प्रदातारं तं वायुं नियुतोऽस्मद्यज्ञं प्रापयन्तीति शेषः॥

द्वितीये छन्दोमे प्रउगशस्त्रे वायव्यतृचस्य ‘उच्छन्नुषसः’ इति तृतीया। सूत्रितं च—‘उच्छन्नुषसः सुदिना अरिप्रा इत्येकपातिन्यः’ (आश्व. श्रौ. ८. १०) इति॥

उच्छन्नुषसः सुदिना अरिप्रा उरु ज्योतिर्विविदुर्दीध्यानाः।
गव्यं चिदूर्वमुशिजो वि वव्रुस्तेषामनु प्रदिवः सस्रुरापः॥ ४॥

उच्छन् । उषसः । सुऽदिनाः । अरिप्राः । उरु । ज्योतिः । विविदुः । दीध्यानाः ।
गव्यम् । चित् । ऊर्वम् । उशिजः । वि । वव्रुः । तेषाम् । अनु । प्रऽदिवः । सस्रुः । आपः॥४॥

येऽङ्गिरसो वायुमस्तोषत तेषाम् vअरिप्राः पापरहिताः vउषसः vसुदिनाः शोभनदिनस्य हेतुभूताः सत्यः vउच्छन् औच्छन् व्यवासयन्। ते च vदीध्यानाः दीप्यमानाः सन्तः vउरु विस्तीर्णं vज्योतिः सूर्याख्यं vविविदुः वायोः प्रसादादलभन्त। अपि च vउशिजः कामयमानास्तेऽङ्गिरसः vगव्यं vचित् गोसंघरूपमपि vऊर्वं धनं पणिभिरपहृतं vवि vवव्रुः व्यवृण्वन् अलभन्त। तथा vतेषाम् अङ्गिरसामर्थाय vप्रदिवः पुराण्यः vआपः vअनु vसस्रुः अन्वसरन् अन्वगच्छन्। हिताचरणपरा आसन्नित्यर्थः। आवरकस्यासुरस्य वायुना हननादसुरेणाहृतानुषःप्रभृतीन्[1] पुनर्लब्धवन्त इत्यर्थः॥

तृतीये छन्दोमे प्रउगशस्त्रे ‘ते सत्येन’ इत्यैन्द्रवायवस्तृचः। सूत्रितं च—‘ते सत्येन मनसा दीध्याना दिवि क्षयन्ता रजसः पृथिव्याम्’ (आश्व. श्रौ. ८. ११) इति॥

ते सत्येन मनसा दीध्यानाः स्वेन युक्तासः क्रतुना वहन्ति।
इन्द्रवायू वीरवाहं रथं वामीशानयोरभि पृक्षः सचन्ते॥ ५॥

ते । सत्येन । मनसा । दीध्यानाः । स्वेन । युक्तासः । क्रतुना । वहन्ति ।
इन्द्रवायू इति । वीरऽवाहम् । रथम् । वाम् । ईशानयोः । अभि । पृक्षः । सचन्ते ॥ ५ ॥

vते प्रसिद्धाः vसत्येन यथार्थेन vमनसा मननीयेन स्तोत्रेण युक्ताः vदीध्यानाः दीप्यमानाः vस्वेन स्वकीयेन विहितेन vक्रतुना कर्मणा नित्यनैमित्तिकात्मना vयुक्तासः युक्ता एवंभूता यजमाना हे vइन्द्रवायू vवीरवाहं वीरैर्विशेषेणेरयितृभिः स्तोतृभिर्वहनीयं प्रापणीयम्। यद्वा वीरैः अश्वैर्वहनीयम्। तम् vईशानयोः ईश्वरयोः vवां युवयोः स्वभूतं vरथं vवहन्ति स्वं स्वं यज्ञं प्रापयन्ति। तत्र च vपृक्षः अन्नानि हविर्लक्षणानि vअभि vसचन्ते युवामभिसेवन्ते॥

---

१. क्ष—°णाहृतानु°; श-°णापहृतानु°।

**ईशानासो ये दधते स्वर्णो गोभिरश्वेभिर्वसुभिर्हिरण्यैः ।**
**इन्द्रवायू सूरयो विश्वमायुरर्वद्भिर्वीरैः पृतनासु सह्युः ॥ ६ ॥**

ईशानासः । ये । दधते । स्वः । नः । गोभिः । अश्वेभिः । वसुऽभिः । हिरण्यैः ।
इन्द्रवायू इति । सूरयः । विश्वम् । आयुः । अर्वत्ऽभिः । वीरैः । पृतनासु । सह्युः ॥ ६ ॥

हे Vइन्द्रवायू Vईशानासः ईश्वराः प्रभवः Vये जनाः Vनः अस्मभ्यं Vगोभिः Vअश्वेभिः अश्वैः Vवसुभिः निवासकैः Vहिरण्यैः च सहितं Vस्वः सुष्ठ्वरणीयं सुखं Vदधते ददति प्रयच्छन्ति । यद्वा । हिरण्यव्यतिरिक्तानि धनानि वसूनि । तैर्हिरण्यैश्च सहेत्यर्थः । ते Vसूरयः दातारः Vविश्वं व्याप्तम् Vआयुः अन्नं जीवनं वा शत्रूणां स्वभूतं Vपृतनासु संग्रामेषु Vअर्वद्भिः अश्वैः Vवीरैः शूरभटैश्च साधनभूतैः Vसह्युः अभिभवेयुः । यद्वा सहार्थे तृतीया । अर्वद्भिर्वीरैः पुत्रैश्च सहितं शत्रूणामायुरभिभवेयुरित्यर्थः ॥

**अर्वन्तो न श्रवसो भिक्षमाणा इन्द्रवायू सुष्टुतिभिर्वसिष्ठाः ।**
**वाजयन्तः स्ववसे हुवेम यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥**

अर्वन्तः । न । श्रवसः । भिक्षमाणाः । इन्द्रवायू इति । सुस्तुतिऽभिः । वसिष्ठाः ।
वाजऽयन्तः । सु । अवसे । हुवेम । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

Vअर्वन्तो Vन अश्वा इव हविषां वोढारः Vश्रवसः अन्नस्य । द्वितीयार्थे षष्ठी । अन्नं Vभिक्षमाणाः याचमानाः Vवाजयन्तः वाजं बलमात्मन इच्छन्तः Vवसिष्ठाः वयं Vस्ववसे शोभनरक्षणाय सुष्ठु तर्पणाय वा Vसुष्टुतिभिः शोभनाभिः स्तुतिभिः Vइन्द्रवायू इन्द्रं वायुं च Vहुवेम आह्वयेमहि । अन्यद्गतम् ॥ ॥ १२ ॥

'कुविदङ्ग' इति सप्तर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वायव्यम् । 'कुविदङ्ग' इत्यनुक्रान्तम् । गतः सूक्तविनियोगः । वायव्ये पशौ 'कुविदङ्ग' इति वपाया याज्या । सूत्रितं च— 'कुविदङ्ग नमसा ये वृधास ईशानाय प्रहुतिं यस्त आनट्' ( आश्व. श्रौ. ३. ८ ) इति ॥

**कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन् ।**
**ते वायवे मनवे बाधितायावासयन्नुषसं सूर्येण ॥ १ ॥**

कुवित् । अङ्ग । नमसा । ये । वृधासः । पुरा । देवाः । अनवद्यासः । आसन् ।
ते । वायवे । मनवे । बाधिताय । अवासयन् । उषसम् । सूर्येण ॥ १ ॥

दीव्यन्ति स्तुवन्तीति देवाः स्तोतारः । Vपुरा पूर्वस्मिन् काले Vये Vवृधासः वृद्धाः Vदेवाः स्तोतारः । कुविदिति बहुनाम । अङ्गेति क्षिप्रनाम । Vकुवित् बहुशः Vअङ्ग क्षिप्रं कृतेन Vनमसा वायुविषयेण स्तोत्रेण नमस्कारेण वा Vअनवद्यासः अवद्यरहिताः Vआसन् Vते अद्यापि Vवायवे हवींषि दातुं Vसूर्येण सह Vउषसम् Vअवासयन् । उषसो व्युष्टिं सूर्योदयं च वायुयागार्थं कुर्वन्तीत्यर्थः । किमर्थम् । Vमनवे मनुष्याणां Vबाधिताय बाधितानां पुत्रादीनां रक्षणार्थमित्यर्थः । यद्वा मनवे बाधितायेति षष्ठ्यर्थे चतुर्थी[1] । बाधितस्य मनोः प्रजापतेर्यागे वायवे हवींषि दातुमित्यन्वयः ॥

---

१. त—चतुर्थी ।

द्वितीये छन्दोमे प्रउगशस्त्र ऐन्द्रवायवतृचस्य 'उशन्ता' इत्येषा प्रथमा। सूत्रितं च— 'उशन्ता दूता न दभाय गोपा यावत्तरस्तन्वो यावदोज इत्येका द्वे च' (आश्व. श्रौ. ८. १०) इति ॥

उशन्ता दूता न दभाय गोपा मासश्च पाथः शरदश्च पूर्वीः ।
इन्द्रवायू सुष्टुतिर्वामियाना मार्डीकमीट्टे सुवितं च नव्यम् ॥ २ ॥

उशन्ता । दूता । न । दभाय । गोपा । मासः । च । पाथः । शरदः । च । पूर्वीः ।
इन्द्रवायू इति । सुऽस्तुतिः । वाम् । इयाना । मार्डीकम् । ईट्टे । सुवितम् । च । नव्यम् ॥ २ ॥

हे इन्द्रवायू उशन्ता उशन्तौ कामयमानौ दूतौ । देवतेर्गतिकर्मणो दूतशब्दः । गन्तारौ गोपा गोपायितारावीदृशौ युवां दभाय हिंसायै न भवतम्। अपि तु मासः मासान् च पूर्वीः बह्वीः शरदः संवत्सरान् च चिरकालमस्मान् पाथः रक्षतम्। अपि च हे इन्द्रवायू सुष्टुतिः अस्मदीया शोभना स्तुतिः वां युवाम् इयाना गच्छन्ती प्राप्नुवन्ती मार्डीकं सुखम् ईट्टे याचते । यद्वा। सुखं यथा भवति तथा युवामीट्टे स्तौति। तथा नव्यं प्रशस्यं सुवितं सुष्ठु प्राप्यं धनं च ईट्टे ॥

नियुत्वद्वायुदेवताके पशौ 'पीवोअन्नान्' इति वपाया याज्या। सूत्रितं च—'पीवोअन्नाँ रयिवृधः सुमेधा राये नु यं जज्ञतू रोदसीमे' (आश्व. श्रौ. ३. ८) इति। तथा द्वितीये छन्दोमे प्रउगशस्त्रे वायव्यतृचस्यैषैव द्वितीया। सूत्रितं च—'पीवोअन्नाँ रयिवृधः सुमेधा उच्छन्नुषसः सुदिना अरिप्राः' (आश्व. श्रौ. ८. १०) इति ॥

पीवोअन्नाँ रयिवृधः सुमेधाः श्वेतः सिषक्ति नियुतामभिश्रीः ।
ते वायवे समनसो वि तस्थुर्विश्वेन्नरः स्वपत्यानि चक्रुः ॥ ३ ॥

पीवःऽअन्नान् । रयिऽवृधः । सुऽमेधाः । श्वेतः । सिसक्ति । निऽयुताम् । अभिऽश्रीः ।
ते । वायवे । सऽमनसः । वि । तस्थुः । विश्वा । इत् । नरः । सुऽअपत्यानि । चक्रुः ॥ ३ ॥

पीवोअन्नान् पीवांसि स्थूलानि प्रभूतान्यन्नानि येषां तान् रयिवृधः रय्या धनेन वृद्धानेवंभूतानाढ्यजनान् सुमेधाः शोभनप्रज्ञः नियुतां वडवानां स्ववाहानाम् अभिश्रीः अभिश्रयणीयः श्वेतः श्वेतवर्णो वायुः सिषक्ति सेवते। ते च जनाः समनसः समानमनस्काः सन्तः वायवे वायुमुद्दिश्य यष्टुं वि तस्थुः विविधमवतिष्ठन्ते। स्थित्वा च ते नरः कर्मणां नेतारो जनाः विश्वेत् विश्वानि सर्वाण्येव स्वपत्यानि शोभनापत्यहेतूनि यद्वा सुष्ठ्वपतनकारणानि वायुदेवत्यानि कर्माणि चक्रुः कुर्वन्ति ॥

द्वितीये छन्दोमे प्रउगशस्त्र ऐन्द्रवायवतृचस्य 'यावत्तरः' इत्यादिके द्वे ऋचौ। सूत्रं तु पूर्वमेवोदाहृतम् ॥

यावत्तरस्तन्वो यावदोजो यावन्नरश्चक्षसा दीध्यानाः ।
शुचिं सोमं शुचिपा पातमस्मे इन्द्रवायू सदतं बर्हिरेदम् ॥ ४ ॥

यावत् । तरः । तन्वः । यावत् । ओजः । यावत् । नरः । चक्षसा । दीध्यानाः ।
शुचिम् । सोमम् । शुचिऽपा । पातम् । अस्मे इति । इन्द्रवायू इति । सदतम् । बर्हिः । आ । इदम् ॥ ४ ॥

हे इन्द्रवायू युवयोः तन्वः शरीरस्य तरः वेगः यावत् अस्ति यावत् च ओजः बलं यावत् च नरः कर्मणां नेतार ऋत्विजः चक्षसा ज्ञानेन दीध्यानाः दीप्यमाना भवन्ति तस्य सर्वस्यानुरूपं शुचिपा शुचेः सोमस्य पाताराविन्द्रवायू शुचिं शुद्धं सोमम् अस्मे अस्मदीयं पातं पिबतम्। इदं वेद्यां स्तीर्णं बर्हिः च आ सदतं पानार्थमासीदतम्। बर्हिष्युपविशतमित्यर्थः॥

नियुवाना नियुतः स्पार्हवीरा इन्द्रवायू सरथं यातमर्वाक्।
इदं हि वां प्रभृतं मध्वो अग्रमध प्रीणाना वि मुमुक्तमस्मे ॥ ५ ॥

निऽयुवाना। निऽयुतः। स्पार्हऽवीराः। इन्द्रवायू इति। सऽरथम्। यातम्। अर्वाक्।
इदम्। हि। वाम्। प्रऽभृतम्। मध्वः। अग्रम्। अध। प्रीणाना। वि। मुमुक्तम्। अस्मे इति ॥५॥

हे इन्द्रवायू स्पार्हवीराः स्पृहणीयस्तोतृकान् नियुतः आत्मीयानश्वान् सरथम् उभयोः समानमेकं[1] रथं[1] नियुवाना निमिश्रयन्तौ[2] युवाम् अर्वाक् अस्मदभिमुखं यातं गच्छतम्। इदं हि इदं खलु मध्वः मधुरस्य सोमस्य अग्रं ग्रहेष्वाद्यमैन्द्रवायवाख्यं ग्रहं वां युवयोरर्थं प्रभृतं प्रकर्षेण हृतं होमार्थमुत्तरवेदिं प्रति नीतम्। अध अथ तादृशस्य सोमस्य पानानन्तरं प्रीणाना प्रीयमाणौ युवाम् अस्मे अस्मान् वि मुमुक्तं पापाद्विमोचयतम्॥

प्रथमे छन्दोमे प्रउगशस्त्र ऐन्द्रवायवतृचस्य 'या वां शतम्' इति तृतीया। सूत्रितं च— 'या वां शतं नियुतो याः सहस्रमित्येकपातिन्यः' (आश्व. श्रौ. ८. ९) इति॥

या वां शतं नियुतो याः सहस्रमिन्द्रवायू विश्ववाराः सचन्ते।
आभिर्यातं सुविदत्राभिरर्वाक्पातं नरा प्रतिभृतस्य मध्वः ॥ ६ ॥

याः। वाम्। शतम्। निऽयुतः। याः। सहस्रम्। इन्द्रवायू इति। विश्वऽवाराः। सचन्ते।
आ। आभिः। यातम्। सुऽविदत्राभिः। अर्वाक्। पातम्। नरा। प्रतिऽभृतस्य। मध्वः ॥६॥

हे इन्द्रवायू याः[3] नियुतः शतं शतसंख्याकाः सत्यः वां युवां सचन्ते सेवन्ते। याः च विश्ववाराः विश्वैर्वरणीया नियुतः सहस्रं सहस्रसंख्याकाः सत्यो युवां सचन्ते। सुविदत्राभिः शोभनधनप्रदाभिः आभिः नियुद्भिः अर्वाक् अस्मदभिमुखम् आ यातम् आगच्छतम्। हे नरा नेतारौ प्रतिभृतस्य उत्तरवेदिं प्रति नीतस्य मध्वः मधुरस्य सोमस्य। द्वितीयार्थे षष्ठी। ईदृशं सोमं पातं पिबतम्॥

अर्वन्तो न श्रवसो भिक्षमाणा इन्द्रवायू सुष्टुतिभिर्वसिष्ठाः।
वाजयन्तः स्ववसे हुवेम यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

अर्वन्तः। न। श्रवसः। भिक्षमाणाः। इन्द्रवायू इति। सुस्तुतिऽभिः। वसिष्ठाः।
वाजऽयन्तः। सु। अवसे। हुवेम। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ७ ॥

व्याख्यातेयम्। अक्षरार्थस्तु। अश्वा इव हविषां वोढारोऽन्नं याचमाना बलं कामयमाना वसिष्ठा वयं शोभनरक्षणाय शोभनैः स्तोत्रैरिन्द्रवायू आह्वयेमहीति॥ ॥ १३ ॥

---

१. घ-न-भ-'मेकरथं। २. ख-निमिश्रीतवंतौ; त१-निश्रयंतौ; न-निमितयंतौ; भ-निमिश्रितयंतौ; श-मिश्रयंतौ। ३. ख-क्ष-त-न-भ-श- 'याः' नास्ति।

'आ वायो' इति पञ्चर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वायव्यम्। अनुक्रान्तं च—'आ वायो पञ्च' इति। शुनासीरीये पर्वणि वायोर्नियुत्वतो यागस्य 'आ वायो' इत्यनुवाक्या। सूत्रितं च—'आ वायो भूष शुचिपा उप नः प्र याभिर्यासि दाश्वांसमच्छ' ( आश्व. श्रौ. २. २० ) इति। नियुत्वद्वायुदेवताके पशावेषैव वपाया अनुवाक्या ( आश्व. श्रौ. ३. ८ )। प्रथमे छन्दोमे प्रउगशस्त्रे वायव्यतृचस्यैषैवाद्या। सूत्रितं च—'समुद्रादूर्मिरित्याज्यमा वायो भूष शुचिपाः' (आश्व. श्रौ. ८. ९) इति॥

आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार।
उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम्॥ १॥

आ। वायो इति। भूष। शुचिऽपाः। उप। नः। सहस्रम्। ते। निऽयुतः। विश्वऽवार।
उपो इति। ते। अन्धः। मद्यम्। अयामि। यस्य। देव। दधिषे। पूर्वऽपेयम्॥ १॥

हे शुचिपाः शुचेः शुद्धस्य सोमस्य पातः वायो नः अस्माकम् उप[1] समीपे[1] आ भूष आगच्छ। 'भू प्राप्तौ' इत्यस्यैतद्रूपम्। हे विश्ववार विश्वैर्वरणीय ते तव वाहनभूताः नियुतः वडवाः सहस्रं सहस्रसंख्याका विद्यन्ते। यत एवमतः शीघ्रमागच्छ। ते तव मद्यं मदकरं सोमलक्षणम् अन्धः अन्नम् उपो उप उ उप अयामि। उपयतं पात्रे गृहीतमासीत्। हे देव वायो यस्य सोमस्य पूर्वपेयं प्रथमपानं दधिषे दधासि धारयसि। ऐन्द्रवायवग्रहे प्रथमे वषट्कारे केवलाय वायवे हूयते द्वितीये त्विन्द्रवायुभ्यामिति वायोः प्रथमपानम्। तादृशमन्ध उपायामीत्यन्वयः॥

प्रथमे छन्दोमे प्रउगशस्त्र ऐन्द्रवायवतृचस्य 'प्र सोता' इत्याद्या। सूत्रितं च—'प्र सोता जीरो अध्वरेष्वस्थाद्वे वायव इन्द्रमादनासः' ( आश्व. श्रौ. ८. ९ ) इति॥

प्र सोता जीरो अध्वरेष्वस्थात्सोममिन्द्राय वायवे पिबध्यै।
प्र यद्वां मध्वो अग्रियं भरन्त्यध्वर्यवो देवयन्तः शचीभिः॥ २॥

प्र। सोता। जीरः। अध्वरेषु। अस्थात्। सोमम्। इन्द्राय। वायवे। पिबध्यै।
प्र। यत्। वाम्। मध्वः। अग्रियम्। भरन्ति। अध्वर्यवः। देवऽयन्तः। शचीभिः॥ २॥

जीरः क्षिप्रकारी सोता अभिषोताध्वर्युः इन्द्राय वायवे च पिबध्यै पानार्थम् अध्वरेषु यागेषु सोमं प्र अस्थात् प्रातिष्ठिपत्[2]। पुरस्तादुत्तरवेदिं प्रापितवान्। हे इन्द्रवायू यत् येषु यज्ञेषु मध्वः सोमस्य अग्रियम् अग्रभवं प्रथमभागं देवयन्तः देवकामाः अध्वर्यवः शचीभिः कर्मभिरभिषवादिलक्षणैः वां युवयोरर्थं प्र भरन्ति प्रकर्षेण भरन्ति संपादयन्ति। तेष्वध्वरेष्वित्यन्वयः॥

शुनासीरीये पर्वणि नियुत्वद्वायोर्यागस्य 'प्र याभिः' इति याज्या। सूत्रितं च—'प्र याभिर्यासि दाश्वांसमच्छ स त्वं नो देव मनसा' ( आश्व. श्रौ. २. २० ) इति। तद्देवत्ये पशावेषैव पुरोडाशस्यानुवाक्या। सूत्रितं च—'प्र याभिर्यासि दाश्वांसमच्छा नो नियुद्भिः शतिनीभिः' ( आश्व. श्रौ. ३. ८ ) इति। प्रथमे छन्दोमे प्रउगशस्त्र एषैव वायव्यतृचस्य द्वितीया। सूत्रितं च—'आ वायो भूष शुचिपा उप नः प्र याभिर्यासि दाश्वांसमच्छ' ( आश्व. श्रौ. ८. ९ ) इति॥

प्र याभिर्यासि दाश्वांसमच्छा नियुद्भिर्वायविष्टये दुरोणे।
नि नो रयिं सुभोजसं युवस्व नि वीरं गव्यमश्व्यं च राधः॥ ३॥

१. ख-भ्र-त-न-भ-श्र—'उप समीपे' नास्ति। २. ख-भ—प्रातिष्ठत्; न—प्रतिष्ठत्।

प्र । याभिः । यासि । दाश्वांसम् । अच्छ । नियुत्ऽभिः । वायो इति । इष्टये । दुरोणे ।
नि । नः । रयिम् । सुऽभोजसम् । युवस्व । नि । वीरम् । गव्यम् । अश्व्यम् । च । राधः ॥३॥

हे वायो दुरोणे यज्ञगृहे स्थितं दाश्वांसं हविषां दातारं यजमानम् इष्टये यागाय याभिः नियुद्भिः वडवाभिः अच्छ यासि अभिगच्छसि ताभिरस्मान् प्रत्यागच्छेति शेषः । आगत्य च नः अस्मभ्यं सुभोजसं शोभनान्नयुक्तं रयिं धनं नि युवस्व नितरां मिश्रय प्रयच्छ । तथा वीरं पुत्रं गव्यं गोसंघम् अश्व्यम् अश्वसंघमेतदुभयात्मकं[1] राधः[2] धनं च नि युवस्व प्रयच्छ ॥

प्रथमे छन्दोमे प्रउगशस्त्र ऐन्द्रवायवतृचस्य ‘ ये वायव इन्द्र° ’ इति द्वितीया । सूत्रितं च— ‘ ये वायव इन्द्रमादनासो या वां शतं नियुतो याः सहस्रम् ’ ( आश्व. श्रौ. ८. ९ ) इति ॥

ये वायव इन्द्रमादनास आदेवासो नितोशनासो अर्यः ।
घ्नन्तो वृत्राणि सूरिभिः ष्याम सासह्वांसो युधा नृभिरमित्रान् ॥ ४ ॥

ये । वायवे । इन्द्रऽमादनासः । आऽदेवासः । निऽतोशनासः । अर्यः ।
घ्नन्तः । वृत्राणि । सूरिऽभिः । स्याम । ससह्वांसः । युधा । नृऽभिः । अमित्रान् ॥ ४ ॥

ये सूरयः स्तोतारः इन्द्रमादनासः स्तोत्रैरिन्द्रस्य तर्पयितारस्तथा वायवे वायोश्च मादनाः तर्पका[3] भवन्ति । ये च आदेवासः जागतैरुपेता अत एव अर्यः अरेः शत्रोः नितोशनासः निहन्तारः । तैरस्मदीयैः सूरिभिः स्तोतृभिः वृत्राणि शत्रून् घ्नन्तः हिंसन्तः स्याम भवेम । किं कुर्वन्तः । अमित्रान् शत्रुभटान् नृभिः अस्मदीयैः पुरुषैः युधा युद्धेभिः[4] ससह्वांसः अभिभवन्तः ॥

नियुत्वद्वायुदेवताके पशौ ‘ आ नो नियुद्भिः ’ इति हविषोऽनुवाक्या । सूत्रितं च—‘ आ नो नियुद्भिः शतिनीभिरध्वरं पीवोअन्नाँ रयिवृधः सुमेधाः ’ ( आश्व. श्रौ. ३. ८ ) इति । प्रथमे छन्दोमे प्रउगशस्त्रे वायव्यतृचस्यैषैव तृतीया । सूत्रितं च—‘ आ नो नियुद्भिः शतिनीभिरध्वरं प्र सोता जीरो अध्वरेष्वस्थात् ’ ( आश्व. श्रौ. ८. ९ ) इति ॥

आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरुप याहि यज्ञम् ।
वायो अस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

आ । नः । नियुत्ऽभिः । शतिनीभिः । अध्वरम् । सहस्रिणीभिः । उप । याहि । यज्ञम् ।
वायो इति । अस्मिन् । सवने । मादयस्व । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

हे वायो नः अस्माकम् अध्वरं हिंसारहितं यज्ञं शतिनीभिः शतसंख्यावतीभिः सहस्रिणीभिः सहस्रसंख्यावतीभिश्च नियुद्भिः वडवाभिः उप आ याहि उपागच्छ । तदनन्तरम् अस्मिन् सवने प्रातःसवने मादयस्व सोमेन तृप्यस्व । अन्यद्गतम् ॥ ॥ १४ ॥

‘ शुचिं नु ’ इत्यष्टर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्राग्नम् । अनुक्रम्यते हि—‘ शुचिं न्वष्टावैन्द्राग्नं तु ’ इति । गतः सूक्तविनियोगः । ऐन्द्राग्नस्य पशोर्वपायाः ‘ शुचिम् ’ इत्येषा याज्या । सूत्रितं च—‘ शुचिं नु स्तोमं नवजातमद्य गीर्भिर्विप्रः प्रमतिमिच्छमानः ’ ( आश्व. श्रौ. ३. ७ ) इति ॥

---

१. ख-भ–मेवमुभया° । २. त–रायो । ३. ख-भ–वर्षका । ४. ख-भ–युद्धैः ।

शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम् ।
उभा हि वां सुहवा जोहवीमि ता वाजं सद्य उशते धेष्ठा ॥ १ ॥

शुचिम् । नु । स्तोमम् । नवऽजातम् । अद्य । इन्द्राग्नी इति । वृत्रऽहना । जुषेथाम् ।
उभा । हि । वाम् । सुऽहवा । जोहवीमि । ता । वाजम् । सद्यः । उशते । धेष्ठा ॥ १ ॥

हे vवृत्रहणा वृत्राणां शत्रूणां हन्तारौ vइन्द्राग्नी vशुचिं शुद्धं निरवद्यं vनवजातम् इदानीमुत्पन्नं vस्तोमम् अस्मदीयं स्तोत्रम् vअद्य अस्मिन् काले vनु क्षिप्रं vजुषेथां सेवेथाम् । vहि यस्मात् vसुहवा सुखमाह्वातुं[1] शक्यौ vउभा उभौ vवां युवां vजोहवीमि पुनःपुनराह्वयामि । अत आगत्य सेवेथामित्यर्थः । किंच vता तौ तथाविधौ युवाम् vउशते कामयमानाय यजमानाय vवाजम् अन्नं बलं वा vसद्यः तदानीमेव शीघ्रं vधेष्ठा धातृतमौ भवतम् ॥

ता सानसी शवसाना हि भूतं साकंवृधा शवसा शूशुवांसा ।
क्षयन्तौ रायो यवसस्य भूरेः पृङ्क्तं वाजस्य स्थविरस्य घृष्वेः ॥ २ ॥

ता । सानसी इति । शवसाना । हि । भूतम् । साकम्ऽवृधा । शवसा । शूशुऽवांसा ।
क्षयन्तौ । रायः । यवसस्य । भूरेः । पृङ्क्तम् । वाजस्य । स्थविरस्य । घृष्वेः ॥ २ ॥

हे इन्द्राग्नी vता तौ तादृशौ vसानसी सर्वैः संभजनीयौ युवां vशवसाना । शवो बलम् । तद्वदाचरन्तौ[2] vहि खलु vभूतम् । बलमिव शत्रूणां भञ्जकावास्तामित्यर्थः । कीदृशौ सन्तौ । vसाकंवृधा सह प्रवृद्धौ vशवसा बलेन vशूशुवांसा वर्धमानौ तथा vरायः धनस्य vभूरेः बहुलस्य vयवसस्य अन्नस्य vक्षयन्तौ ईश्वरौ । एवंविधौ युवं युवां vस्थविरस्य स्थूलस्य vघृष्वेः शत्रूणां घर्षकस्य vवाजस्य अन्नस्य । 'क्रियाग्रहणमपि कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । ईदृशमन्नं vपृङ्क्तं संयोजयतम्[3] । अस्मभ्यं प्रयच्छतमित्यर्थः ॥

उपो ह यद्विदथं वाजिनो गुर्धीभिर्विप्राः प्रमतिमिच्छमानाः ।
अर्वन्तो न काष्ठां नक्षमाणा इन्द्राग्नी जोहुवतो नरस्ते ॥ ३ ॥

उपो इति । ह । यत् । विदथम् । वाजिनः । गुः । धीभिः । विप्राः । प्रऽमतिम् । इच्छमानाः ।
अर्वन्तः । न । काष्ठाम् । नक्षमाणाः । इन्द्राग्नी इति । जोहुवतः । नरः । ते ॥ ३ ॥

vवाजिनः हविष्मन्तः vविप्राः मेधाविनः vप्रमतिं प्रकृष्टां मतिमिन्द्राग्न्योरनुग्रहबुद्धिम् vइच्छमानाः आत्मन इच्छन्तः vयत् ये यजमानाः vविदथम् । विदन्ति जानन्ति देवानत्र यष्टव्यत्वेनेति विदथो यज्ञः । तं vधीभिः कर्मभिर्बुद्धिभिर्वा vउपो vगुः उपगच्छन्ति । उ इति पूरकः । vते vनरः कर्मणां नेतारो जनाः vअर्वन्तो vन vकाष्ठां यथाश्वाः शीघ्रं युद्धभूमिं[4] व्याप्नुवन्ति[4] तथा vनक्षमाणाः ऐन्द्राग्नानि कर्माणि व्याप्नुवन्तः vइन्द्राग्नी इन्द्रमग्निं च vजोहुवतः पुनःपुनराह्वयन्तो भवन्ति ॥

---

१. ख-भ—सुखेना°; घ—सुष्ठा°; श—सुष्ठुमा° । २. झ-न-भ-श१—तद्वत् तदाचरंतौ; श२—तत्र तदाचरंतौ । ३. घ—योजयतं; झ-त-न-श—स्वयोजयतं । ४. ख-त—युद्धभूम्या चाप्नुवंति; झ-न-भ—युद्धभूम्या वाप्नुवंति; श—युद्धे भूम्यां वाप्नुवंति ।

अमावास्यायामैन्द्राग्नस्य हविषः 'गीर्भिः' इत्येषा याज्या। सूत्रितं च—'इन्द्राग्नी अवसा गतं गीर्भिर्विप्रः प्रमतिमिच्छमानः' (आश्व. श्रौ. १. ६) इति। ऐन्द्राग्ने पशौ पुरोडाशस्यैषैव याज्या। सूत्रं तूदाहृतम्॥

गीर्भिर्विप्रः प्रमतिमिच्छमान ईट्टे रयिं यशसं पूर्वभाजम्।
इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो नव्येभिस्तिरतं देष्णैः॥ ४॥

गीःऽभिः। विप्रः। प्रऽमतिम्। इच्छमानः। ईट्टे। रयिम्। यशसम्। पूर्वऽभाजम्।
इन्द्राग्नी इति। वृत्रऽहना। सुऽवज्रा। प्र। नः। नव्येभिः। तिरतम्। देष्णैः॥ ४॥

हे इन्द्राग्नी प्रमतिं युवयोरनुग्रहबुद्धिम् इच्छमानः इच्छन् विप्रः मेधावी वसिष्ठः यशसं यशसा युक्तं पूर्वभाजं पूर्वमेव संभजनीयं रयिं धनमुद्दिश्य गीर्भिः स्तुतिभिः ईट्टे युवां स्तौति। हे वृत्रहणा वृत्रस्य हन्तारौ सुवज्रा शोभनायुधौ इन्द्राग्नी नव्येभिः नवतरैः प्रशस्तैः देष्णैः दातव्यैर्धनैः नः अस्मान् प्र तिरतं प्रवर्धयतम्॥

सं यन्मही मिथती स्पर्धमाने तनूरुचा शूरसाता यतैते।
अदेवयुं विदथे देवयुभिः सत्रा हतं सोमसुता जनेन॥ ५॥

सम्। यत्। मही इति। मिथती इति। स्पर्धमाने इति। तनूऽरुचा। शूरऽसाता। यतैते इति।
अदेवऽयुम्। विदथे। देवयुऽभिः। सत्रा। हतम्। सोमऽसुता। जनेन॥ ५॥

मही महत्यौ मिथती परस्परं हिंसन्त्यौ[1]। यद्वा। मेथतिराक्रोशकर्मा। परस्परमाक्रोशन्त्यौ। स्पर्धमाने स्पर्धां कुर्वन्त्यौ तनूरुचा --- हतं हिंस्तम्। तथा सोमसुता सोममभिषुण्वता जनेन यजमानसंघेनासोमसुतं जनं हिंस्तम्॥ ॥ १५॥

इमामु षु सोमसुतिमुप न एन्द्राग्नी सौमनसाय यातम्।
नू चिद्धि परिमम्नाथे अस्माना वां शश्वद्भिर्ववृतीय वाजैः॥ ६॥

इमाम्। ऊँ इति। सु। सोमऽसुतिम्। उप। नः। आ। इन्द्राग्नी इति। सौमनसाय। यातम्।
नु। चित्। हि। परिमम्नाथे इति परिऽमम्नाथे। अस्मान्।
आ। वाम्। शश्वत्ऽभिः। ववृतीय। वाजैः॥ ६॥

हे इन्द्राग्नी इमामु इमामेव नः अस्मदीयां सोमसुतिं सोमाभिषवक्रियां सौमनसाय सुमनसो भावाय सु सुष्ठु उप आ यातम् उपागच्छतम्। अपि च युवाम् अस्मान् परित्यज्य नू चित् नैव मम्नाथे अन्यान्न मन्येथे। अस्मानेव सर्वदा बुध्येथे। हि यस्मादेवं तस्मात् वां युवां शश्वद्भिः बहुभिः वाजैः अन्नैर्हविर्लक्षणैः आ ववृतीय आवर्तयामि॥

सो अग्न एना नमसा समिद्धोऽच्छा मित्रं वरुणमिन्द्रं वोचेः।
यत्सीमागश्चकृमा तत्सु मृळ तदर्यमादितिः शिश्रथन्तु॥ ७॥

---

१. घ-ङ-झ-न—हिंसत्यौ; त४—हिंसंतौ।

सः । अग्ने । एना । नमसा । सम्ऽइद्धः । अच्छ । मित्रम् । वरुणम् । इन्द्रम् । वोचेः ।
यत् । सीम् । आगः । चकृम । तत् । सु । मृळ । तत् । अर्यमा । अदितिः । शिश्रथन्तु ॥७॥

हे अग्ने सः त्वम् एना एनेन नमसा अन्नेनास्मदीयेन हविषा समिद्धः संदीप्तः सन् मित्रं वरुणमिन्द्रं च अच्छ वोचेः अभिब्रूयाः । अयमस्मदीयो रक्षणीय इति कथय । वयं यत् आगः अपराधम् । सीमिति परिग्रहार्थीयः । सीं सर्वतो वाङ्मनःकायैः चकृम कृतवन्तो वयं तत् तस्मादागसः सु मृळ अस्मान् सुष्ठु रक्ष । तत् चागः अर्यमा अदितिः मित्रादयश्च शिश्रथन्तु अस्मत्तो वियोजयन्तु[1] ॥

एता अग्न आशुषाणास इष्टीर्युवोः सचाभ्यश्याम वाजान् ।
मेन्द्रो नो विष्णुर्मरुतः परि ख्यन्यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥

एताः । अग्ने । आशुषाणासः । इष्टीः । युवोः । सचा । अभि । अश्याम । वाजान् ।
मा । इन्द्रः । नः । विष्णुः । मरुतः । परि । ख्यन् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥८॥

हे अग्ने । उपलक्षणमेतत् । हे इन्द्राग्नी एताः इष्टीः इमान् यज्ञान् आशुषाणासः आशु शीघ्रं संभजमाना वयं युवोः युवयोः स्वभूतान् वाजान् अन्नानि सचा सह युगपदेव अभ्यश्याम अभिप्राप्नुयाम । अपि च इन्द्रः विष्णुः मरुतः च नः अस्मान् मा परि ख्यन् अस्मान् परित्यज्यान्यान् मा द्राक्षुः । सर्वदास्मानेव पश्यन्तु । अन्यद्गतम् ॥ ॥ १६ ॥

'इयं वाम्' इति द्वादशर्चं पञ्चमं सूक्तं वसिष्ठस्यार्षमैन्द्राग्नम् । द्वादश्यनुष्टुप् शिष्टा गायत्र्यः । तथा चानुक्रान्तम्—'इयं वां द्वादश गायत्रमन्त्यानुष्टुप्' इति । ज्योतिष्टोमे प्रातःसवनेऽच्छावाकशस्त्र आदितो नवर्चः शस्यन्ते । सूत्र्यते हि—'इयं वामस्य मन्मन इति नव' (आश्व. श्रौ. ५.१०) इति । आभिप्लविकेषूक्थ्येषु स्तोमेषु वृद्धावच्छावाकस्य प्रातःसवन इदं सूक्तमावापार्थमुत्तमावर्जम् । सूत्रितं च— 'इयं वामस्य मन्मन इत्येकादश' (आश्व. श्रौ. ७. ५) इति । चातुर्विंशिकेऽहनि प्रातःसवने तस्यैवाद्यस्तृचः । सूत्रितं च—'इयं वामस्य मन्मन इन्द्राग्नी युवामिमे' (आश्व. श्रौ. ७. २) इति ॥

इयं वामस्य मन्मन इन्द्राग्नी पूर्व्यस्तुतिः । अभ्राद्वृष्टिरिवाजनि ॥ १ ॥

इयम् । वाम् । अस्य । मन्मनः । इन्द्राग्नी इति । पूर्व्यऽस्तुतिः । अभ्रात् । वृष्टिःऽइव । अजनि ॥१॥

हे इन्द्राग्नी इयं पूर्व्यस्तुतिः पूर्व्या मुख्या स्तुतिः अस्य मन्मनः स्तोतुरस्माद्वसिष्ठात् वां युवाभ्यां युवयोरर्थम् अभ्रात् मेघात् वृष्टिरिव बह्वी सती अजनि प्रादुर्भूता । तां शृणुतमित्युत्तरत्र संबन्धः ॥

शृणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः । ईशाना पिप्यतं धियः ॥ २ ॥

शृणुतम् । जरितुः । हवम् । इन्द्राग्नी इति । वनतम् । गिरः । ईशाना । पिप्यतम् । धियः ॥२॥

हे इन्द्राग्नी जरितुः स्तोतुः हवम् आह्वानं युवां शृणुतम् । श्रुत्वा च गिरः तदीयाः स्तुतीः वनतं संभजतम् । तथा ईशाना ईश्वरौ युवां धियः अनुष्ठितानि कर्माणि पिप्यतं तत्स्यैः फलैः पूरयतम् ॥

---

1. ख-ग्र-त-न-भ-श—विजयंतु ।

मा पापत्वार्य नो नरेन्द्राग्नी माभिशस्तये । मा नो रीरधतं निदे ॥ ३ ॥

मा । पापऽत्वार्य । नः । नरा । इन्द्राग्नी इति । मा । अभिऽशस्तये । मा । नः । रीरधतम् । निदे ॥३॥

हे ᵛनरा नेतारौ ᵛइन्द्राग्नी ᵛनः अस्मान् ᵛपापत्वाय[1] हीनभावाय ᵛमा ᵛरीरधतम् । तथा ᵛअभिशस्तये शत्रुभिः कृतायाभिशंसनाय ᵛमा रीरधतम्[2] । तथा ᵛनिदे निन्दकाय जनाय ᵛनः अस्मान् ᵛमा रीरधतं मा वशीकुरुतम् ॥

चातुर्विंशिकेऽहनि प्रातःसवनेऽच्छावाकस्य ' इन्द्रे अग्ना ' इत्ययं षडहस्तोत्रियसंज्ञकस्तृचः । सूत्रितं च—' इन्द्रे अग्ना नमो बृहत्ता हुवे ययोरिदम् ' ( आश्व. श्रौ. ७. २ ) इति ॥

इन्द्रे अग्ना नमो बृहत्सुवृक्तिमेरयामहे । धिया धेना अवस्यवः ॥ ४ ॥

इन्द्रे । अग्ना । नमः । बृहत् । सुऽवृक्तिम् । आ । ईरयामहे । धिया । धेनाः । अवस्यवः ॥ ४ ॥

ᵛअवस्यवः रक्षणकामा वयम् ᵛइन्द्रे देवे ᵛअग्ना अग्नौ च ᵛबृहत् बृंहणं वर्धकं ᵛनमः हविर्लक्षणमन्नं ᵛसुवृक्तिं सुप्रवृत्तां स्तुतिं च ᵛएरयामहे अभिप्रेरयामः । तथा ᵛधिया कर्मणा युक्ताः ᵛधेनाः । वाङ्नामैतत् । अप्रगीताः स्तुतिवाचश्चाभिप्रेरयामः ॥

ता हि शश्वन्त ईळत इत्था विप्रास ऊतये । सबाधो वाजसातये ॥ ५ ॥

ता । हि । शश्वन्तः । ईळते । इत्था । विप्रासः । ऊतये । सऽबाधः । वाजऽसातये ॥ ५ ॥

ᵛता ᵛहि तौ खल्विन्द्राग्नी ᵛशश्वन्तः बहवः ᵛविप्रासः मेधाविनो जनाः ᵛऊतये रक्षणाय ᵛइत्था इत्थमनेन प्रकारेण ᵛईळते स्तुवन्ति । तथा ᵛसबाधः समानं बाधमानाः परस्परं बाध्यमाना जनाः ᵛवाजसातये अन्नलाभाय तावेवेन्द्राग्नी ईळते स्तुवन्ति । यद्वा वाजसातिरिति[3] संग्रामनाम । संग्रामार्थम् ॥

ता वां गीर्भिर्विपन्यवः प्रयस्वन्तो हवामहे । मेधसाता सनिष्यवः ॥ ६ ॥

ता । वाम् । गीःऽभिः । विपन्यवः । प्रयस्वन्तः । हवामहे । मेधऽसाता । सनिष्यवः ॥ ६ ॥

ᵛविपन्यवः स्तोत्रमिच्छन्तः ᵛप्रयस्वन्तः हविर्लक्षणेनान्नेनोपेताः ᵛसनिष्यवः सनिं धनमात्मन इच्छन्तो वयं ᵛमेधसाता मेधानां यागानां सातौ संभजने निमित्तभूते सति हे इन्द्राग्नी ᵛता तौ ᵛवां युवां ᵛगीर्भिः स्तुतिभिः ᵛहवामहे आह्वयामहे ॥ ॥ १७ ॥

अमावास्यायामैन्द्राग्नस्य हविषः ' इन्द्राग्नी अवसा ' इत्यनुवाक्या । सूत्रितं च— ' इन्द्राग्नी अवसा गतं गीर्भिर्विप्रः प्रमतिमिच्छमानः ' ( आश्व. श्रौ. १. ६ ) इति ॥

इन्द्राग्नी अवसा गतमस्मभ्यं चर्षणीसहा । मा नो दुःशंस ईशत ॥ ७ ॥

इन्द्राग्नी इति । अवसा । आ । गतम् । अस्मभ्यम् । चर्षणिऽसहा । मा । नः । दुःऽशंसः । ईशत ॥७॥

हे ᵛचर्षणीसहा चर्षणीनां मनुष्याणां शत्रुभूतानामभिभवतारौ हे ᵛइन्द्राग्नी ᵛअस्मभ्यं स्तोतृभ्यो देयेन ᵛअवसा अन्नेन सह ᵛआ ᵛगतम् आगच्छतम् । ᵛदुःशंसः दुष्टाभिशंसनः पारुष्यवादी शत्रुश्च ᵛनः अस्मान् ᵛमा ᵛईशत ईशिष्ट[4] । अस्मान् बाधितुं मा शक्नोतु ॥

मा कस्य नो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । इन्द्राग्नी शर्म यच्छतम् ॥ ८ ॥

---

१. ख—पापत्वाय पापत्वाय; झ-त-न-भ-श—पापत्वाय पापवत्त्वाय । २. ख-झ-त-भ-श—रीरधतं वशीकुरुतं । ३. झ-त१-२—वाजसाताविति । ४. श—मा ईशिष्ट ।

मा । कस्य॑ । नः॒ । अर॑रुषः । धूर्तिः॑ । प्रण॑क् । मर्त्य॑स्य । इन्द्रा॑ग्नी । शर्म॑ । य॒च्छ॒त॒म् ॥ ८ ॥

हे इन्द्राग्नी कस्य कस्यचिदपि अररुषः अरेः मर्त्यस्य मनुष्यस्य संबन्धिनी धूर्तिः हिंसा नः अस्मान् मा प्रणक् मा प्राप्नोतु । शर्म सुखं चास्मभ्यं यच्छतं[1] दत्तम् ॥

गोम॑द्धिर॑ण्यव॒द्वसु॒ यद्वा॒मश्वा॑व॒दीम॑हे । इन्द्रा॑ग्नी॒ तद्व॑नेमहि ॥ ९ ॥

गोऽम॑त् । हिर॑ण्यऽवत् । वसु॑ । यत् । वा॒म् । अश्व॑ऽवत् । ईम॑हे । इन्द्रा॑ग्नी॒ इति॑ । तत् । व॒ने॒म॒हि॒ ॥ ९ ॥

हे इन्द्राग्नी गोमत् गोभिर्युक्तं हिरण्यवत् हिरण्यैः सुवर्णैर्युक्तम् अश्वावत् अश्वैश्चोपेतं यत् वसु वां युवाम् ईमहे याचामहे तत् वसु युवयोः प्रसादाद्वयं वनेमहि संभजेमहि ॥

चातुर्विंशिकेऽहनि प्रातःसवनेऽच्छावाकशस्त्रे 'यत्सोम आ सुते' इत्यारम्भणीया अहर्गणेषु च द्वितीयादिष्वहःस्वेषा प्रातःसवने तेनैव शंसनीया। सूत्रितं च—'यत्सोम आ सुते नर इत्यारम्भणीयाः शस्त्वा' ( आश्व. श्रौ. ७. २ ) इति ॥

यत्सोम॒ आ सु॒ते नर॑ इन्द्रा॒ग्नी अजो॑हवुः । सप्ती॑वन्ता सप॒र्यवः॑ ॥ १० ॥

यत् । सोमे॑ । आ । सु॒ते । नरः॑ । इ॒न्द्रा॒ग्नी इति॑ । अजो॑हवुः । सप्ति॑ऽवन्ता । स॒प॒र्यवः॑ ॥ १० ॥

सोमे सुते अभिषुते सति नरः कर्मणां नेतार ऋत्विजः सपर्यवः परिचरणकामाः सन्तः सप्तीवन्ता प्रशस्ताश्वौ इन्द्राग्नी इन्द्रमग्निं च यत् यदा आ अजोहवुः अभिह्वयन्ते तदा युवामागच्छतमिति शेषः ॥

उ॒क्थेभि॑र्वृत्र॒हन्त॑मा॒ या म॑न्दा॒ना चि॒दा गि॒रा । आ॒ङ्गूषै॑रा॒विवा॑सतः ॥ ११ ॥

उ॒क्थेभिः॑ । वृ॒त्र॒हन्ऽत॑मा । या । म॒न्दा॒ना । चि॒त् । आ । गि॒रा । आ॒ङ्गू॒षैः । आ॒ऽविवा॑सतः ॥ ११ ॥

वृत्रहन्तमा वृत्राणामावरकाणां हन्तृतमौ मन्दाना मोदमानौ या याविन्द्राग्नी उक्थेभिः शस्त्रैः गिरा चित् स्तुत्या च आविवासतः परिचर्येते । व्यत्ययेन कर्मणि कर्तृप्रत्ययः । आङ्गूषैः आघोषैरन्यैश्च स्तोत्रैर्यावाविवासतः परिचर्येते तौ युवामागच्छतमिति शेषः ॥

तावि॑द्दुः॒शंसं॒ मर्त्यं॒ दुर्वि॑द्वांसं र॒क्षस्विन॑म् ।
आ॒भो॒गं हन्म॑ना ह॒तमु॑द॒धिं हन्म॑ना ह॒तम् ॥ १२ ॥

तौ । इत् । दुः॒ऽशंस॑म् । मर्त्य॑म् । दुः॒ऽवि॑द्वांसम् । र॒क्षस्विन॑म् । आ॒ऽभो॒गम् । हन्म॑ना । ह॒तम् । उ॒द॒ऽधिम् । हन्म॑ना । ह॒तम् ॥ १२ ॥

हे[2] इन्द्राग्नी तौ युवां[2] दुःशंसं दुष्टाभिशंसनं दुर्विद्वांसं दुर्विज्ञानं रक्षस्विनं बलवन्तम् आभोगम् आहृत्यास्मत्तोऽपहृत्य भोक्तारं मर्त्यं मनुष्यं शत्रुं हन्मना हननसाधनेनायुधेन हतं हिंस्तम् । उक्तमेवार्थं दृष्टान्तेन द्रढयति । उदधिम् । लुप्तोपममेतत् । उदधानं कुम्भमिव । यथा कुम्भोऽनायासेन भिद्यत एवमनायासेनैव शत्रुमायुधेन युवां हिंस्तम् ॥ ॥ १८ ॥

'प्र क्षोदसा' इति षडृचं षष्ठं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं सरस्वतीदेवताकम् । तृतीया तु सरस्वद्देवताका । अनुक्रम्यते च—'प्र क्षोदसा षट् सारस्वतं तु तृतीया सरस्वते' इति । गतः सूक्त-

---

१. ख-त३-न-श—प्रयच्छतं । २. ख-भ—तावित् तावेव; घ—हे इंद्राग्नी तावित्तौ युवां ।

विनियोगः। प्रथमे छन्दोमे प्रउगशस्त्रे 'प्र क्षोदसा धायसा सस्र एषेति प्रउगम्' (आश्व. श्रौ. ८. ९) इति। सारस्वते पशौ 'प्र क्षोदसा' इति वपाया याज्या। सूत्रितं च—'प्र क्षोदसा धायसा सस्र एषा पावीरवी कन्या चित्रायुः' (आश्व. श्रौ. ३. ७) इति॥

प्र क्षोद॑सा॒ धाय॑सा सस्र ए॒षा सर॑स्वती ध॒रुण॒माय॑सी॒ पूः।
प्र॒बाब॑धाना र॒थ्ये॑व याति॒ विश्वा॑ अ॒पो म॑हि॒ना सिन्धु॑र॒न्याः॥ १॥

प्र। क्षोद॑सा। धाय॑सा। स॒स्रे। ए॒षा। सर॑स्वती। ध॒रुण॑म्। आय॑सी। पूः।
प्र॒ऽबाब॑धाना। र॒थ्या॑ऽइव। या॒ति॒। विश्वाः॑। अ॒पः। म॒हि॒ना। सिन्धुः॑। अ॒न्याः॥ १॥

सरस्वत्या[1] एषा नदीवन्निगमा। ᵛएषा दृश्यमाना नदीरूपा ᵛसरस्वती ᵛआयसी अयसा निर्मिता ᵛपूः पुरीव ᵛधरुणम्। लिङ्गव्यत्ययः। धरुणा धारयित्री ᵛधायसा धारकेण ᵛक्षोदसा उदकेन ᵛप्र ᵛसस्रे प्रधावति शीघ्रं गच्छति। ᵛसिन्धुः स्यन्दनशीला नदीरूपा सा ᵛअन्याः ᵛविश्वाः सर्वाः ᵛअपः आपगाः ᵛमहिना महिम्ना ᵛप्रबाबधाना भृशं बाधमाना ᵛरथ्येव प्रतोलीव विस्तीर्णा सती ᵛयाति गच्छति। यद्वा। रथ्येव रथिनेव यथा रथी रथेन मार्गस्थं तरुगुल्मादिकं चूर्णीकृत्य गच्छति तद्वत् स्वकीयेन वेगेन सर्वं संपिषती गच्छतीत्यर्थः॥

सारस्वत एव पशौ वपायाः 'एकाचेतत्' इत्यनुवाक्या। सूत्रितं च—'एका चेतत्सरस्वती नदीनामुत स्या नः सरस्वती जुषाणा' (आश्व. श्रौ. ३. ७) इति॥

एका॑चेत॒त्सर॑स्वती न॒दीनां॒ शुचि॑र्य॒ती गि॒रिभ्य॒ आ स॑मु॒द्रात्।
रा॒यश्चेत॑न्ती॒ भुव॑नस्य॒ भूरे॑र्घृ॒तं पयो॑ दुदुहे॒ नाहु॑षाय॥ २॥

एका॑। अ॒चे॒त॒त्। सर॑स्वती। न॒दीना॑म्। शुचिः॑। य॒ती। गि॒रिऽभ्यः॑। आ। स॒मु॒द्रात्।
रा॒यः। चेत॑न्ती। भुव॑नस्य। भूरेः॑। घृ॒तम्। पयः॑। दु॒दु॒हे॒। नाहु॑षाय॥ २॥

सहस्रवत्सरेण[2] क्रतुना यक्ष्यमाणो नाहुषो नाम राजा सरस्वतीं नदीं प्रार्थयामास। सा च तस्मै सहस्रसंवत्सरपर्याप्तं पयो घृतं च प्रददौ। अयमर्थोऽत्र प्रतिपाद्यते। ᵛनदीनाम् अन्यासां मध्ये ᵛशुचिः शुद्धा ᵛगिरिभ्यः सकाशात् ᵛआ ᵛसमुद्रात् समुद्रपर्यन्तं ᵛयती गच्छन्ती ᵛएका ᵛसरस्वती नदी ᵛअचेतत्। नाहुषस्य प्रार्थनामज्ञासीत्। तथा ᵛभुवनस्य भूतजातस्य ᵛभूरेः बहुलस्य ᵛरायः धनानि ᵛचेतन्ती प्रज्ञापयन्ती प्रयच्छन्ती ᵛनाहुषाय राज्ञे ᵛघृतं ᵛपयः च सहस्रसंवत्सरक्रतोः पर्याप्तं ᵛदुदुहे दुग्धवती दत्तवती॥

सरस्वद्देवताके पशौ 'स वावृधे' इति पुरोडाशस्य याज्या। सूत्रितं च—'स वावृधे नर्यो योषणासु यस्य व्रतं पशवो यन्ति सर्वे' (आश्व. श्रौ. ३. ८) इति॥

स वा॑वृधे॒ नर्यो॒ योष॑णासु॒ वृषा॒ शिशु॑र्वृष॒भो य॒ज्ञिया॑सु।
स वा॒जिनं॑ म॒घव॑द्भ्यो दधाति॒ वि सा॒तये॑ त॒न्वं॑ मामृजीत॥ ३॥

सः। व॒वृ॒धे॒। नर्यः॑। योष॑णासु। वृषा॑। शिशुः॑। वृ॒ष॒भः। य॒ज्ञिया॑सु।
सः। वा॒जिन॑म्। म॒घव॑त्ऽभ्यः। द॒धा॒ति॒। वि। सा॒तये॑। त॒न्व॑म्। म॒मृ॒जी॒त॒॥ ३॥

१. ञ-त-'सरस्वत्या' नास्ति। २. ख-ञ-भ—सहस्रसंवत्सरेण।

मध्यमस्थानो वायुः सरस्वान्। ^Vनर्यः नृभ्यो[1] हितः[1] ^Vवृषा सेचनसमर्थः ^Vशिशुः अल्पः प्रादुर्भावसमयेऽल्पतया दृश्यमानः ^Vवृषभः वर्षिता एवंभूतः ^Vसः[2] सरस्वान् ^Vयज्ञियासु यज्ञार्हासु ^Vयोषणासु योषित्स्वात्मनः कलत्रभूतासु मध्यमस्थानास्वप्सु मध्ये ^Vववृधे वर्धते। ^Vसः तादृशः सरस्वान् ^Vमघवद्भ्यः हविष्मद्भ्यो यजमानेभ्यः ^Vवाजिनं बलिनं पुत्रं ^Vदधाति ददाति। तथा ^Vसातये लाभार्थं ^Vतन्वं तेषां शरीरं ^Vवि ^Vमामृजीत विमार्ष्टि। लाभार्थं संस्करोतीत्यर्थः। यद्यप्येषा सरस्वतः स्तुतिस्तथापि सरस्वत्याः प्रीणनार्थं तत्स्तवनमिति छान्दोमिके सारस्वते[3] तृचेऽस्या उक्तो विनियोगो न विरुध्यते॥

दशरात्रेऽष्टमेऽहनि प्रउगे 'उत स्या नः' इति सारस्वतः सप्तमस्तृचः। सूत्रितं च—'उत स्या नः सरस्वती जुषाणेति प्रउगम्' (आश्व. श्रौ. ८. १०) इति। सारस्वते पशौ पुरोडाशस्य 'उत स्या नः' इत्यनुवाक्या। सूत्रितं च—'उत स्या नः सरस्वती जुषाणा सरस्वत्यभि नो नेषि वस्यः' (आश्व. श्रौ. ३. ७) इति॥

उत स्या नः सरस्वती जुषाणोप श्रवत्सुभगा यज्ञे अस्मिन्।
मितज्ञुभिर्नमस्यैरियाना राया युजा चिदुत्तरा सखिभ्यः॥ ४॥

उत। स्या। नः। सरस्वती। जुषाणा। उप। श्रवत्। सुऽभगा। यज्ञे। अस्मिन्।
मितज्ञुऽभिः। नमस्यैः। इयाना। राया। युजा। चित्। उत्ऽतरा। सखिऽभ्यः॥ ४॥

^Vउत अपि च ^Vजुषाणा प्रीयमाणा ^Vसुभगा शोभनधना ^Vस्या सा ^Vसरस्वती ^Vनः अस्माकम् ^Vअस्मिन् ^Vयज्ञे ^Vउप ^Vश्रवत्। अस्मदीयाः स्तुतीरुपशृणोतु। कीदृशी सा। ^Vमितज्ञुभिः प्रह्वीभूतजानुभिः ^Vनमस्यैः नमस्कारैर्देवैः[4] ^Vइयाना उपगम्यमाना। चिच्छब्दश्चार्थे। ^Vयुजा नित्ययुक्तेन ^Vराया धनेन च संगता ^Vसखिभ्यः ^Vउत्तरा उत्कृष्टतरा। ईदृश्यस्मदीयाः स्तुतीरुपशृणोत्वित्यन्वयः॥

पवित्रेष्ट्यां[5] सारस्वतस्य हविषः 'इमा जुह्वानाः' इति याज्या। सूत्रितं च—'इमा जुह्वाना युष्मदा नमोभिर्दधिक्राव्णो अकारिषम्' (आश्व. श्रौ. २. १२) इति॥

इमा जुह्वाना युष्मदा नमोभिः प्रति स्तोमं सरस्वति जुषस्व।
तव शर्मन्प्रियतमे दधाना उप स्थेयाम शरणं न वृक्षम्॥ ५॥

इमा। जुह्वानाः। युष्मत्। आ। नमःऽभिः। प्रति। स्तोमम्। सरस्वति। जुषस्व।
तव। शर्मन्। प्रियऽतमे। दधानाः। उप। स्थेयाम। शरणम्। न। वृक्षम्॥ ५॥

हे ^Vसरस्वति ^Vइमा इमान्यस्मदीयानि हवींषि ^Vजुह्वानाः तुभ्यं जुह्वतो वयं ^Vनमोभिः त्वद्विषयैः[6] नमस्कारैः ^Vयुष्मत् त्वत्सकाशात् ^Vआ। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। आददीमहि धनानीति शेषः। ^Vस्तोमं चास्मदीयं स्तोत्रं ^Vप्रति ^Vजुषस्व प्रतिसेवस्व। वयं च ^Vप्रियतमे अतिशयेन प्रिये ^Vतव त्वदीये ^Vशर्मन् शर्मणि सुखे ^Vदधानाः निधीयमानाः सन्तः ^Vशरणं ^Vन ^Vवृक्षम् आश्रयभूतं वृक्षमिव ^Vउप ^Vस्थेयाम त्वामुपतिष्ठेम संगच्छेमहि॥

अयमु ते सरस्वति वसिष्ठो द्वारावृतस्य सुभगे व्यावः।
वर्ध शुभ्रे स्तुवते रासि वाजान्यूयं पात स्वस्तिभिः सदा नः॥ ६॥

---

१. त—योषणासु यतः। २. ख-ज-म्र-न—'सः' नास्ति। ३. म्र-त-न-भ-श—सारस्वत°। ४. थ—नमस्कार्यै°। ५. म्र-त-न—परिवेष्ट्यां। ६. ख-म्र-त-भ—तृपद्वद्विषयैः।

अयम् । ऊँ इति । ते । सरस्वति । वसिष्ठः । द्वारौ । ऋतस्य । सुऽभगे । वि । आवरित्यावः ।
वर्ध । शुभ्रे । स्तुवते । रासि । वाजान् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥

हे सुभगे शोभनधने सरस्वति अयं वसिष्ठः ते त्वां यन्तुः ऋतस्य यज्ञस्य संबन्धिन्यौ द्वारौ पूर्वापरे व्यावः विवृणोति । उ इति पूरकः । हे शुभ्रे शुभ्रवर्णे देवि वर्ध वर्धस्व । तथा स्तुवते स्तोत्रं कुर्वते वसिष्ठाय वाजान् अन्नानि रासि प्रदेहि । अन्यद्गतम् ॥ ॥ १९ ॥

'बृहदु गायिषे' इति षडृचं सप्तमं सूक्तं वसिष्ठस्यार्षम् । आद्या बृहती द्वितीया सतोबृहती तृतीया प्रस्तारपङ्क्तिः शिष्टास्तिस्रो गायत्र्यः । आद्यस्तृचः सरस्वतीदेवताकोऽन्त्यश्च सरस्वद्देवताकः । तथा चानुक्रान्तं—'बृहदु प्रगाथः प्रस्तारपङ्क्तिः परास्तिस्रो गायत्र्यः सरस्वते' इति । पञ्चमेऽहनि प्रउगशस्त्र आद्यः प्रगाथः सारस्वतस्तृचः । सूत्रितं च—'बृहदु गायिष' इति बार्हतं प्रउगं प्रगाथानेके' ( आश्व. श्रौ. ७. १२ ) इति ॥

बृहदु गायिषे वचोऽसुर्या नदीनाम् ।
सरस्वतीमिन्महया सुवृक्तिभिः स्तोमैर्वसिष्ठ रोदसी ॥ १ ॥

बृहत् । ऊँ इति । गायिषे । वचः । असुर्या । नदीनाम् ।
सरस्वतीम् । इत् । महय । सुवृक्तिऽभिः । स्तोमैः । वसिष्ठ । रोदसी इति ॥ १ ॥

अनयर्षिरात्मानं संबोध्य सरस्वत्याः स्तुतौ प्रेरयति । हे वसिष्ठ त्वं बृहदु बृहदेव महदेव वचः स्तोत्रं गायिषे गायसि । किमर्थम् । नदीनां मध्ये असुर्या । असुराशब्दाच्चतुर्थ्येकवचनस्य य्यादेशः । असुरायै बलवत्यै नदीरूपायै सरस्वत्यै । अस्याः प्रीणनार्थमित्यर्थः । तथा रोदसी द्यावापृथिव्योः स्थितां दिवि देवतारूपेण भूम्यां वाग्रूपेण निवसन्तीं सरस्वतीमित् सरस्वतीमेव सुवृक्तिभिः सुष्ठु दोषवर्जितैः स्तोमैः स्तोत्रैः महय पूजय । सर्वदा सरस्वतीमेव स्तुहि नान्यां देवतामिति भावः ॥

उभे यत्ते महिना शुभ्रे अन्धसी अधिक्षियन्ति पूरवः ।
सा नो बोध्यवित्री मरुत्सखा चोद राधो मघोनाम् ॥ २ ॥

उभे इति । यत् । ते । महिना । शुभ्रे । अन्धसी इति । अधिऽक्षियन्ति । पूरवः ।
सा । नः । बोधि । अवित्री । मरुत्ऽसखा । चोद । राधः । मघोनाम् ॥ २ ॥

हे शुभ्रे शुभ्रवर्णे सरस्वति यत् यस्याः ते तव महिना महिम्ना उभे अन्धसी उभयविधं दिव्यं पार्थिवं चान्नं ग्राम्यमारण्यं वा पूरवः पूरयितव्या मनुष्याः अधिक्षियन्ति अधिगच्छन्ति सा त्वम् अवित्री रक्षित्री सती नः अस्मान् बोधि बुध्यस्व । अपि च मरुत्सखा । मरुतो माध्यमिका देवगणाः । ते सखायो यस्या माध्यमिकाया वाचस्तादृशी त्वं मघोनां हविर्लक्षणधनोपेतानामस्माकं राधः धनं चोद प्रेरय ॥

भद्रमिद्भद्रा कृणवत्सरस्वत्यकवारी चेतति वाजिनीवती ।
गृणाना जमदग्निवत्स्तुवाना च वसिष्ठवत् ॥ ३ ॥

---

१. त—गायिषे वच ।

भद्रम् । इत् । भद्रा । कृणवत् । सरस्वती । अकवऽअरी । चेतति । वाजिनीऽवती ।
गृणाना । जमदग्निऽवत् । स्तुवाना । च । वसिष्ठऽवत् ॥ ३ ॥

ᵛभद्रा कल्याणी भजनीया वा ᵛसरस्वती ᵛभद्रमित् भद्रमेव कल्याणमेव ᵛकृणवत् अस्माकं करोतु । तथा ᵛअकवारी अकुत्सितगमना ᵛवाजिनीवती अन्नवती ᵛचेतति चेतयतु अस्मान् प्रज्ञापयतु । यद्वा । मदीयं स्तोत्रं चेतति जानातु । तथा ᵛजमदग्निवत् जमदग्निनर्षिणेव मया ᵛगृणाना स्तूयमाना ᵛवसिष्ठवत् । अर्हार्थे वतिप्रत्ययः । वसिष्ठार्हं वसिष्ठस्यानुरूपं ᵛस्तुवाना स्तूयमाना ᵛच भव[1] ॥

सरस्वद्देवताके पशौ ' जनीयन्तः ' इति तिस्रः पशुपुरोडाशहविषां[2] क्रमेणानुवाक्याः । सूत्रितं च—' जनीयन्तो न्वग्रव इति तिस्रो दिव्यं सुपर्णं वायसं बृहन्तम् ' ( आश्व. श्रौ. ३. ८ ) इति ॥

जनीयन्तो न्वग्रवः पुत्रीयन्तः सुदानवः । सरस्वन्तं हवामहे ॥ ४ ॥

जनिऽयन्तः । नु । अग्रवः । पुत्रिऽयन्तः । सुऽदानवः । सरस्वन्तम् । हवामहे ॥ ४ ॥

ᵛजनीयन्तः । जायन्त आस्वपत्यानीति जनयो जायाः । ता इच्छन्तः ᵛपुत्रीयन्तः पुत्राम् कामयमानाः ᵛसुदानवः शोभनदानाः ᵛअग्रवः उपगन्तारो वयं ᵛनु अद्य ᵛसरस्वन्तं देवं ᵛहवामहे स्तुमहे आह्वयामहे वा ॥

ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेभिर्नोऽविता भव ॥ ५ ॥

ये । ते । सरस्वः । ऊर्मयः । मधुऽमन्तः । घृतऽश्चुतः । तेभिः । नः । अविता । भव ॥ ५ ॥

हे ᵛसरस्वः सरस्वन्[3] देव[3] ᵛते त्वदीयाः ᵛये ᵛऊर्मयः जलसंघाः ᵛमधुमन्तः रसवन्तः ᵛघृतश्चुतः घृतस्य वृष्ट्युदकस्य क्षारिणो भवन्ति ᵛतेभिः तैरूर्मिभिः ᵛनः अस्माकम् ᵛअविता रक्षिता ᵛभव ॥

अन्वारम्भणीयायां सरस्वतो यागस्य ' पीपिवांसम् ' इत्यनुवाक्या । सूत्रितं च—' पीपिवांसं सरस्वतो दिव्यं सुपर्णं वायसं बृहन्तम् ' ( आश्व. श्रौ. २. ८ ) इति ॥

पीपिवांसं सरस्वतः स्तनं यो विश्वदर्शतः । भक्षीमहि प्रजामिषम् ॥६॥

पीपिऽवांसम् । सरस्वतः । स्तनम् । यः । विश्वऽदर्शतः । भक्षीमहि । प्रऽजाम् । इषम् ॥६॥

ᵛपीपिवांसं प्रवृद्धं ᵛसरस्वतः देवस्य ᵛस्तनं शब्दायमानं स्तनवद्रसाधारं वा मेघं ᵛभक्षीमहि भजेमहि प्राप्नुयाम । ᵛयः ᵛविश्वदर्शतः विश्वैः सर्वैर्दर्शतो भवति दृश्यमानो भवति । तं स्तनं मेघमित्यर्थः । तथा ᵛप्रजां पुत्रादिरूपाम् ᵛइषम् अन्नं च सरस्वतः प्रसादात् भक्षीमहि[4] ॥ ॥२०॥

'यज्ञे दिवः' इति दशर्चमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभम् । प्रथमैन्द्री तृतीयानवम्योरिन्द्राब्रह्मणस्पती देवता दशम्या इन्द्राबृहस्पती शिष्टानां तु बृहस्पतिः । तथा चानुक्रान्तं—'यज्ञे दशैन्द्र्यादि बार्हस्पत्यमन्त्यैन्द्री च तृतीयानवम्यावैन्द्राब्राह्मणस्पत्ये ' इति । आभिप्लविकेषूक्थ्येषु तृतीयसवने स्तोमवृद्धौ ब्राह्मणाच्छंसिन इदमुत्तरं च सूक्तमावापार्थम् । सूत्रितं च—'यज्ञे दिवः' (आश्व. श्रौ. ७. ९) इति ॥

यज्ञे दिवो नृषदने पृथिव्या नरो यत्र देवयवो मदन्ति ।
इन्द्राय यत्र सवनानि सुन्वे गमन्मदाय प्रथमं वयश्च ॥ १ ॥

---

१. ङ्ग—भवति । २. ख-न-भ—पुरोडाशस्य हविषां । ३. ख-श—सरस्वद्देव; घ—देव । ४. ङ्ग—भक्षीमहि प्राप्नुयामः; न—भक्षीमहि खिलं—यस्य व्रतं पशवो यंति सर्वे यस्य व्रतमुपतिष्ठंत आपः । यस्य व्रते पुष्टिपतिर्निविष्टस्तं सरस्वंतमवसे हुवेम ॥ ( ऋ. खि. १५ )

यज्ञे । दिवः । नृऽसदने । पृथिव्याः । नरः । यत्र । देवऽयवः । मदन्ति ।
इन्द्राय । यत्र । सवनानि । सुन्वे । गमत् । मदाय । प्रथमम् । वयः । च ॥ १ ॥

^v^यत्र यस्मिन् यज्ञे ^v^देवयवः देवान् कामयमानाः ^v^नरः नेतार ऋत्विजः ^v^मदन्ति हृष्यन्ति ^v^यत्र यस्मिंश्च ^v^सवनानि अभिषोतव्याः सोमाः ^v^इन्द्राय इन्द्रार्थं ^v^सुन्वे अभिषूयन्ते ^v^पृथिव्याः संबन्धिनि ^v^नृषदने नृणां नेतृणां[1] सदनभूते तस्मिन् ^v^यज्ञे ^v^प्रथमं सर्वेभ्यो देवेभ्यः पूर्वं ^v^दिवः द्युलोकात् ^v^गमत् आगच्छतु । किमर्थम् । ^v^मदाय मदार्थम् । सोमं पातुमित्यर्थः । तथा ^v^वयश्च गन्तारस्तदीया अश्वाश्च गमत् आगच्छन्तु ॥

आ दैव्या वृणीमहेऽवांसि बृहस्पतिर्नो मह आ सखायः ।
यथा भवेम मीळ्हुषे अनागा यो नो दाता परावतः पितेव ॥ २ ॥

आ । दैव्या । वृणीमहे । अवांसि । बृहस्पतिः । नः । महे । आ । सखायः ।
यथा । भवेम । मीळ्हुषे । अनागाः । यः । नः । दाता । पराऽवतः । पिताऽइव ॥ २ ॥

हे ^v^सखायः समानख्यानाः स्तोतारो वयं ^v^दैव्या दैव्यानि देवसंबन्धीनि ^v^अवांसि रक्षणानि ^v^आ ^v^वृणीमहे अभिभजामहे[2] प्रार्थयामहे । ^v^नः अस्माकं हविः ^v^बृहस्पतिः बृहतां पालयिता देवः ^v^आ ^v^महे । महतिर्दानार्थः । आमहते आदत्ते । 'लोपस्त आत्मनेपदेषु' इति तलोपः । ^v^यः बृहस्पतिः ^v^परावतः दूरदेशाद्धनान्याहृत्य पुत्रेभ्यः ^v^पितेव ^v^नः अस्मभ्यं ^v^दाता भवति तस्मै ^v^मीळ्हुषे सेक्त्रे बृहस्पतये ^v^अनागाः अनागस अनपराधाः ^v^यथा वयं ^v^भवेम हे सखायस्तथा यूयं परिचरतेति शेषः ॥

तमु ज्येष्ठं नमसा हविर्भिः सुशेवं ब्रह्मणस्पतिं गृणीषे ।
इन्द्रं श्लोको महि दैव्यः सिषक्तु यो ब्रह्मणो देवकृतस्य राजा ॥ ३ ॥

तम् । ऊँ इति । ज्येष्ठम् । नमसा । हविःऽभिः । सुऽशेवम् । ब्रह्मणः । पतिम् । गृणीषे ।
इन्द्रम् । श्लोकः । महि । दैव्यः । सिसक्तु । यः । ब्रह्मणः । देवऽकृतस्य । राजा ॥ ३ ॥

^v^ज्येष्ठं प्रशस्यतमं ^v^सुशेवं सुसुखं ^v^ब्रह्मणः मन्त्रस्य ^v^पतिं पालयितारमेतत्संज्ञं ^v^तमु तमेव देवं ^v^नमसा नमस्कारेण ^v^हविर्भिः चरुपुरोडाशादिभिश्च सार्धं ^v^गृणीषे गृणे स्तुवे । अपि च ^v^महि महान्तम् ^v^इन्द्रं ^v^दैव्यः देवार्हः ^v^श्लोकः अस्मदीयः स्तावको मन्त्रः ^v^सिषक्तु सेवताम् । ^v^ब्रह्मणः अन्नस्य मन्त्रस्य वा ^v^देवकृतस्य देवैः स्तोतृभिः कृतस्य ^v^यः इन्द्रो ब्रह्मणस्पतिर्वा ^v^राजा ईश्वरः भवति । तमिन्द्रं तं ब्रह्मणस्पतिमिति संबन्धः ॥

स आ नो योनिं सदतु प्रेष्ठो बृहस्पतिर्विश्ववारो यो अस्ति ।
कामो रायः सुवीर्यस्य तं दात्पर्षन्नो अति सश्चतो अरिष्टान् ॥ ४ ॥

सः । आ । नः । योनिम् । सदतु । प्रेष्ठः । बृहस्पतिः । विश्वऽवारः । यः । अस्ति ।
कामः । रायः । सुऽवीर्यस्य । तम् । दात् । पर्षत् । नः । अति । सश्चतः । अरिष्टान् ॥ ४ ॥

---

१. ख-घ-श-'नेतृणां' नास्ति । २. श-अभिजानीमहे ।

Vप्रेष्ठः प्रियतमः Vसः Vबृहस्पतिः Vनः अस्माकं Vयोनिं स्थानं वेदिलक्षणम् Vआ Vसदतु आसीदतु आगत्योपविशतु । Vयः बृहस्पतिः Vविश्ववारः विश्वैर्वरणीयः Vअस्ति भवति । अपि च Vरायः धनस्य Vसुवीर्यस्य शोभनवीर्यस्य च यः Vकामः अस्माकमभिलाषोऽस्ति Vतं काममस्मभ्यं Vदात् ददातु । काम्यमानं प्रयच्छत्वित्यर्थः । तथा Vसश्चतः उपद्रवैः संसक्तान् Vनः अस्मान् Vअरिष्टान् अहिंसितान् कृत्वा Vअति Vपर्षत् अतिपारयति शत्रून् ॥

तमा नो अर्कमृताय जुष्टमिमे धासुरमृतासः पुराजाः ।
शुचिक्रन्दं यजतं पस्त्यानां बृहस्पतिमनर्वाणं हुवेम ॥ ५ ॥

तम् । आ । नः । अर्कम् । अमृताय । जुष्टम् । इमे । धासुः । अमृतासः । पुराऽजाः ।
शुचिऽक्रन्दम् । यजतम् । पस्त्यानाम् । बृहस्पतिम् । अनर्वाणम् । हुवेम ॥ ५ ॥

Vतं सर्वत्र भोक्तव्यतया प्रसिद्धम् Vअमृताय अमरणत्वाय जीवनाय Vजुष्टं पर्याप्तम् Vअर्कम् अर्चनसाधनमन्नं Vपुराजाः पुरा जाताः Vइमे Vअमृतासः अमरणा देवा बृहस्पतेराज्ञया Vनः अस्मभ्यम् Vआ Vधासुः प्रदधुः । वयं च Vशुचिक्रन्दं शुद्धस्तोत्रं Vपस्त्यानाम् । पस्त्यमिति गृहनाम । तेन तद्वन्तो लक्ष्यन्ते । गृहिणां Vयजतं यष्टव्यम् Vअनर्वाणम् अप्रत्यृतं केनाप्यप्रतिगतं Vबृहस्पतिं बृहतां पालकं देवं Vहुवेम आह्वयाम स्तुयेम[1] वा ॥ ॥ २१ ॥

तं शग्मासो अरुषासो अश्वा बृहस्पतिं सहवाहो वहन्ति ।
सहश्चिद्यस्य नीलवत्सधस्थं नभो न रूपमरुषं वसानाः ॥ ६ ॥

तम् । शग्मासः । अरुषासः । अश्वाः । बृहस्पतिम् । सहऽवाहः । वहन्ति ।
सहः । चित् । यस्य । नीलऽवत् । सधऽस्थम् । नभः । न । रूपम् । अरुषम् । वसानाः ॥६॥

Vशग्मासः शग्माः सुखकराः शक्ता वा Vअरुषासः आरोचमानाः Vसहवाहः संहत्य वाहकाः Vअश्वाः Vतं Vबृहस्पतिं Vवहन्ति वहन्तु । Vयस्य बृहस्पतेः Vसहश्चित् बलं च भवति । Vनीलवत् । नीलं[2] निलयो निवासः[2] । तद्युक्तं Vसधस्थं सहस्थानं च यस्य । तं बृहस्पतिमित्यन्वयः । कीदृशा अश्वाः । Vनभो Vन आदित्यमिव Vअरुषम् आरोचमानं Vरूपं Vवसानाः धारयन्तः ॥

स हि शुचिः शतपत्रः स शुन्ध्युर्हिरण्यवाशीरिषिरः स्वर्षाः ।
बृहस्पतिः स स्वावेश ऋष्वः पुरू सखिभ्य आसुतिं करिष्ठः ॥ ७ ॥

सः । हि । शुचिः । शतऽपत्रः । सः । शुन्ध्युः । हिरण्यऽवाशीः । इषिरः । स्वःऽसाः ।
बृहस्पतिः । सः । सुऽआवेशः । ऋष्वः । पुरु । सखिऽभ्यः । आऽसुतिम् । करिष्ठः ॥ ७ ॥

Vस Vहि स खलु बृहस्पतिः Vशुचिः शुद्धः Vशतपत्रः बहुविधवाहनः । Vसः एव Vशुन्ध्युः सर्वेषां शोधयिता Vहिरण्यवाशीः । 'वाशी' इति वाङ्नाम । हितरमणीयवाक्[3] । यद्वा । 'वाशीभिस्तक्षताश्मन्मयीभिः' (ऋ. सं. १०. १०१. १०) इति निगमाद्वाश्यायुधम् । स्वर्णमयायुधः । Vइषिरः गन्ताभ्येषणीयो वा Vस्वर्षाः स्वर्गस्य संभक्ता । यद्वा सरणशीलस्योदकस्य सनिता दाता ।

---

१. ख–स्तूयेम; झ-त३-श१–स्तुवेम; श२–चुसुयेम । २. ख-झ-न-भ–नीलं न्यल्यो निवासः; घ–नील निवासः; झ-त१-२-४–नीळन्यलयो निवासः; श–नीलान्याल्यो निवासवत् । ३. ख-झ-त-न-भ-श–हितरमणीया वाक् ।

vस एव vबृहस्पतिः vस्वावेशः सुनिवासः vऋण्वः दर्शनीयः । ईदृशो देवः vसखिभ्यः स्तोतृभ्यः vपुरु बहुलम् vआसुतिम् अन्नं vकरिष्ठः कर्तृतमो दातृतमो भवति ॥

देवी देवस्य रोदसी जनित्री बृहस्पतिं वावृधतुर्महित्वा ।
दक्षाय्याय दक्षता सखायः करद्ब्रह्मणे सुतरा सुगाधा ॥ ८ ॥

देवी इति । देवस्य । रोदसी इति । जनित्री इति । बृहस्पतिम् । ववृधतुः । महिऽत्वा ।
दक्षाय्याय । दक्षत । सखायः । करत् । ब्रह्मणे । सुऽतरा । सुऽगाधा ॥ ८ ॥

vदेवी देव्यौ दानादिगुणयुक्ते vदेवस्य बृहस्पतेः vजनित्री जनयित्र्यौ vरोदसी द्यावापृथिव्यौ vमहित्वा महत्त्वेन युक्तं vबृहस्पतिं vववृधतुः वर्धयामासतुः । हे vसखायः यूयमपि vदक्षाय्याय वर्धनीयाय । द्वितीयार्थे चतुर्थी । वर्धनीयं तं बृहस्पतिं vदक्षत वर्धयत । स च बृहस्पतिः vब्रह्मणे बृंहिताय प्रभूतायान्नाय तदर्थं vसुतरा[1] सुतरणानि[1] सुखेन तरणीयानि vसुगाधा सुखेनावगाहनीयान्युदकानि vकरत् करोतु ॥

इयं वां ब्रह्मणस्पते सुवृक्तिर्ब्रह्मेन्द्राय वज्रिणे अकारि ।
अविष्टं धियो जिगृतं पुरंधीर्जजस्तमर्यो वनुषामरातीः ॥ ९ ॥

इयम् । वाम् । ब्रह्मणः । पते । सुऽवृक्तिः । ब्रह्म । इन्द्राय । वज्रिणे । अकारि ।
अविष्टम् । धियः । जिगृतम् । पुरम्ऽधीः । जजस्तम् । अर्यः । वनुषाम् । अरातीः ॥ ९ ॥

हे vब्रह्मणस्पते तुभ्यं vवज्रिणे वज्रवते vइन्द्राय च vवां युवाभ्याम् । तादर्थ्ये चतुर्थी । vब्रह्म मन्त्ररूपा vइयं vसुवृक्तिः सुप्रवृत्ता स्तुतिः vअकारि मया कृताभूत् । तौ युवां vधियः अस्मदीयानि कर्माणि vअविष्टं रक्षतम् । तथा vपुरंधीः पुरुधीर्बह्वीः स्तुतीः vजिगृतं निगिरतम् । श्रृणुतमिति यावत् । vअर्यः अरीरभिगन्त्रीः vवनुषां संभक्तॄणामस्माकम् vअरातीः शत्रुसेनाः vजजस्तम् उपक्षपयतम्[2] ॥

तृतीयसवन उक्थ्ये ब्राह्मणाच्छंसिनः 'बृहस्पते युवम्' इति शस्त्रयाज्या । सूत्रितं च— 'बृहस्पते युवमिन्द्रश्च वस्व इति याज्या' (आश्व. श्रौ. ६. १) इति । वाजपेयेऽतिरिक्तोक्थस्यैषैव परिधानीया । सूत्रितं च—'बृहस्पते युवमिन्द्रश्च वस्व इति परिधानीया' (आश्व. श्रौ. ९. ९) इति ॥

बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य ।
धत्तं रयिं स्तुवते कीरये चिद्यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥

बृहस्पते । युवम् । इन्द्रः । च । वस्वः । दिव्यस्य । ईशाथे इति । उत । पार्थिवस्य ।
धत्तम् । रयिम् । स्तुवते । कीरये । चित् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ १० ॥

हे vबृहस्पते त्वं च vइन्द्रश्च vयुवं युवां vदिव्यस्य दिवि भवस्य vवस्वः वसुनो धनस्य vईशाथे । अतः कारणात् vस्तुवते स्तोत्रं कुर्वते vकीरये । स्तोतृनामैतत् । स्तोत्रे vरयिं धनं vधत्तं दत्तम् । vचित् इति पूरणः । अन्यद्गतम् ॥ ॥ २२ ॥

---

१. ख-भ्र-भ-श—सुतरा सुतराणि; घ—'सुतरा सुतरणानि' नास्ति; न—सुतराणि । २. ख-त—उपलक्षयतं; घ—उपलयतं; भ्र-श—उपक्षयतं; न-भ—उपलक्षणं यतं ।

'अध्वर्यवः' इति सप्तर्चं नवमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रं सप्तम्यैन्द्राबार्हस्पत्या । तथा चानुक्रान्तम्—'अध्वर्यवः सप्तोक्तदेवतान्त्या' इति । पूर्वसूक्तेन सहोक्तो विनियोगः ॥

अध्वर्यवोऽरुणं दुग्धमंशुं जुहोतन वृषभाय क्षितीनाम् ।
गौराद्वेदीयाँ अवपानमिन्द्रो विश्वाहेद्याति सुतसोममिच्छन् ॥ १ ॥

अध्वर्यवः । अरुणम् । दुग्धम् । अंशुम् । जुहोतन । वृषभाय । क्षितीनाम् ।
गौरात् । वेदीयान् । अवऽपानम् । इन्द्रः । विश्वाहा । इत् । याति । सुतऽसोमम् । इच्छन् ॥ १ ॥

हे अध्वर्यवः अध्वरस्य नेतार ऋत्विजः क्षितीनां जनानां मध्ये वृषभाय श्रेष्ठायेन्द्राय अरुणम् आरोचमानं दुग्धम् अभिषुतम् अंशुं सोमं जुहोतन जुहुत । अवपानम् अवक्रम्य स्थितं दूरस्थं पातव्यं सोमं गौरात् गौरमृगादपि वेदीयान् अतिशयेन विद्वान् इन्द्रः सुतसोमम् अभिषुतसोमं यजमानम् इच्छन् अन्विच्छन् विश्वाहा विश्वान्यहानि इत् एव सर्वदैव याति गच्छति । अतस्तस्मा इन्द्राय सोमं जुहुतेत्यन्वयः ॥

यद्दधिषे प्रदिवि चार्वन्नं दिवेदिवे पीतिमिदस्य वक्षि ।
उत हृदोत मनसा जुषाण उशन्निन्द्र प्रस्थितान्पाहि सोमान् ॥ २ ॥

यत् । दधिषे । प्रऽदिवि । चारु । अन्नम् । दिवेऽदिवे । पीतिम् । इत् । अस्य । वक्षि ।
उत । हृदा । उत । मनसा । जुषाणः । उशन् । इन्द्र । प्रऽस्थितान् । पाहि । सोमान् ॥ २ ॥

हे इन्द्र प्रदिवि प्रगतेषु दिवसेषु पूर्वस्मिन् काले चारु शोभनं यत् सोमलक्षणम् अन्नं दधिषे पानेनोदरे धारयसि अस्य सोमस्य पीतिमित् पानमेव दिवेदिवे प्रतिदिवसमिदानीमपि वक्षि कामयसे । 'वश कान्तौ' इत्यस्य सिपि शपो लुकि षत्वकत्वषत्वेष्वेतद्रूपम् । उत अपि च हे इन्द्र हृदा हृदयेन । उतशब्दश्चार्थे । मनसा च जुषाणः सेवमानः उशन् अस्मान् कामयमानस्त्वं प्रस्थितान् पुरस्तान्नीतानुत्तरवेदिस्थान् सोमान् पाहि पिब ॥

जज्ञानः सोमं सहसे पपाथ प्र ते माता महिमानमुवाच ।
एन्द्र पप्राथोर्वन्तरिक्षं युधा देवेभ्यो वरिवश्चकर्थ ॥ ३ ॥

जज्ञानः । सोमम् । सहसे । पपाथ । प्र । ते । माता । महिमानम् । उवाच ।
आ । इन्द्र । पप्राथ । उरु । अन्तरिक्षम् । युधा । देवेभ्यः । वरिवः । चकर्थ ॥ ३ ॥

हे इन्द्र त्वं जज्ञानः जायमान एव सहसे बलाय सोमं पपाथ पीतवानसि । ते तव महिमानं महत्त्वं माता त्वदीया जनन्यदितिः प्र उवाच प्रोक्तवती । संवादसूक्ते 'अयं पन्था' इत्यादिके 'नही न्वस्य' (ऋ. सं. ४. १८. ४) इत्यर्धर्चादारभ्य आदित्येन्द्रमहत्त्वस्योक्तत्वात् । अतः कारणात् हे इन्द्र त्वम् उरु विस्तीर्णम् अन्तरिक्षम् आ पप्राथ स्वतेजसापूरितवानसि । अपि च युधा युद्धेन देवेभ्यः स्तोतृभ्यो देवेभ्य एव वा वरिवः धनं चकर्थ कृतवानसि ॥

यद्योधया महतो मन्यमानान्त्साक्षाम तान्बाहुभिः शाशदानान् ।
यद्वा नृभिर्वृत इन्द्राभियुध्यास्तं त्वयाजिं सौश्रवसं जयेम ॥ ४ ॥

यत् । योधयाः । महतः । मन्यमानान् । साक्षाम । तान् । बाहुऽभिः । शाशदानान् ।
यत् । वा । नृऽभिः । वृतः । इन्द्र । अभिऽयुध्याः । तम् । त्वया । आजिम् । सौश्रवसम् । जयेम ॥४॥

हे इन्द्र महतः प्रभूतान् मन्यमानान् शत्रून् यत् यदा योधयाः अस्माभिर्योधयेः । तैः सह योद्धुं बलं प्रयच्छेरित्यर्थः । तदानीं शाशदानान् हिंसतः तान् शत्रून् बाहुभिः आयुधनिरपेक्षैर्हस्तैरेव[1] त्वत्प्रसादात् साक्षाम सहेम अभिभवेम । यद्वा यदि वा हे इन्द्र नृभिः नेतृभिर्मरुद्भिः वृतः परिवृतस्त्वमेव अभियुध्याः अस्मदीयाञ्छत्रूनभियुध्येश्च सौश्रवसम् । श्रवोऽन्नं यशो वा । शोभनस्य श्रवसो हेतुं तम् आजिं संग्रामं त्वया सहायेन वयं जयेम ॥

प्रेन्द्रस्य वोचं प्रथमा कृतानि प्र नूतना मघवा या चकार ।
यदेददेवीरसहिष्ट माया अथाभवत्केवलः सोमो अस्य ॥ ५ ॥

प्र । इन्द्रस्य । वोचम् । प्रथमा । कृतानि । प्र । नूतना । मघऽवा । या । चकार ।
यदा । इत् । अदेवीः । असहिष्ट । मायाः । अथ । अभवत् । केवलः । सोमः । अस्य ॥५॥

इन्द्रस्य कृतानि वीर्यकर्माणि प्रथमा प्रथमानि पुरातनानि प्र वोचं प्रब्रवीमि । मघवा धनवानिन्द्रः या यानि चकार कृतवान् नूतना नूतनान्यभिनवानि च तानि प्र वोचम् । यदेत् यदैव अदेवीः आसुरीः मायाः तैः कृतानि असहिष्ट अभ्यभूत् अथ अनन्तरमेव अस्य इन्द्रस्य सोमः केवलः असाधारणः अभवत् । तदाप्रभृत्येव सोमस्येन्द्रस्य चासाधारणः संबन्धो जात इत्यर्थः ॥

तवेदं विश्वमभितः पशव्यं१ यत्पश्यसि चक्षसा सूर्यस्य ।
गवामसि गोपतिरेक इन्द्र भक्षीमहि ते प्रयतस्य वस्वः ॥ ६ ॥

तव । इदम् । विश्वम् । अभितः । पशव्यम् । यत् । पश्यसि । चक्षसा । सूर्यस्य ।
गवाम् । असि । गोऽपतिः । एकः । इन्द्र । भक्षीमहि । ते । प्रऽयतस्य । वस्वः ॥ ६ ॥

हे इन्द्र पशव्यम् । पशवो द्विविधा द्विपादश्चतुष्पादश्च । तेभ्यो हितम् अभितः सर्वतो विद्यमानम् इदं विश्वं सर्वं जगत् तवेत् तवैव स्वभूतम् । सूर्यस्य प्रेरकस्यादित्यस्य चक्षसा तेजसा यत् विश्वं पश्यसि त्वं प्रकाशयसि । अपि च हे इन्द्र एकः एव त्वं गोपतिः असि । न केवलमेकस्या एव गोः पतिः अपि तु सर्वासामित्याह गवाम् इति । अतः कारणात् ते त्वया प्रयतस्य प्रत्तस्य । द्वितीयार्थे षष्ठी । प्रत्तं वस्वः धनं भक्षीमहि भजेमहि ॥

बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य ।
धत्तं रयिं स्तुवते कीरये चिद्यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

बृहस्पते । युवम् । इन्द्रः । च । वस्वः । दिव्यस्य । ईशाथे इति । उत । पार्थिवस्य ।
धत्तम् । रयिम् । स्तुवते । कीरये । चित् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

व्याख्यातेयम् । अक्षरार्थस्तु । हे बृहस्पते त्वं च इन्द्रश्च युवां दिव्यस्य पार्थिवस्य चोभयविधस्य धनस्येश्वरौ भवथः । तौ युवां स्तुवते स्तोत्रे धनं दत्तमिति ॥ ॥ २३ ॥

---

१. श–शस्त्रनिरपेक्षै° ।

'परो मात्रया' इति सप्तर्चं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभम्। 'उरुं यज्ञाय' इत्याद्यास्तिस्र ऐन्द्राविष्णव्यः शिष्टाः केवलविष्णुदेवताकाः। तथा चानुक्रान्तं–'परो वैष्णवं तूरुमित्यैन्द्र्यश्च तिस्रः' इति। गतः सूक्तविनियोगः। विष्णुदेवताके पशौ 'परो मात्रया' इति पुरोडाशस्य याज्या। सूत्रितं च–'परो मात्रया तन्वा वृधानेरावती धेनुमती हि भूतम्' (आश्व. श्रौ. ३. ८) इति॥

**परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति।**
**उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से॥ १॥**

परः। मात्रया। तन्वा। वधान। न। ते। महिऽत्वम्। अनु। अश्नुवन्ति।
उभे इति। ते। विद्म। रजसी इति। पृथिव्याः। विष्णो इति। देव। त्वम्। परमस्य। वित्से॥१॥

पर इति सकारान्तं परस्तादित्यस्यार्थे। परशब्दाच्छान्दसोऽसिप्रत्ययः 'परो दिवा पर एना पृथिव्या' (ऋ. सं. १०. ८२. ५) इति यथा। मात्रयेति व्यत्ययेन तृतीया। मात्रया परः परस्ताद्वर्तमानयापरिमितया तन्वा शरीरेण वृधान वर्धमान हे विष्णो ते तव महित्वं महत्त्वं न अन्वश्नुवन्ति नानुव्याप्नुवन्ति। त्रैविक्रमसमये यत्तव माहात्म्यं तत्सर्वैरपि जनैर्ज्ञातुं न शक्यत इत्यर्थः। ते तव उभे रजसी उभौ लोकौ पृथिव्याः आरभ्य पृथिवीमन्तरिक्षं च विद्म जानीमः। वयं चक्षुषोपलभामहे नान्यत्। हे देव द्योतमान विष्णो त्वम् एव परमस्य स्वर्गादेरुत्कृष्टलोकस्य[1]। द्वितीयार्थे षष्ठी। परमं लोकं वित्से जानासि। अतस्तव महत्त्वं[2] न केनापि व्याप्तुं शक्यमिति भावः॥

पूर्वोक्त एव पशौ 'न ते विष्णो' इति वपाया अनुवाक्या। सूत्रितं च–'न ते विष्णो जायमानो न जातस्त्वं विष्णो सुमतिं विश्वजन्याम्' (आश्व. श्रौ. ३. ८) इति॥

**न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप।**
**उदस्तभ्ना नाकमृष्वं बृहन्तं दाधर्थ प्राचीं ककुभं पृथिव्याः॥ २॥**

न। ते। विष्णो इति। जायमानः। न। जातः। देव। महिम्नः। परम्। अन्तम्। आप।
उत्। अस्तभ्नाः। नाकम्। ऋष्वम्। बृहन्तम्। दाधर्थ। प्राचीम्। ककुभम्। पृथिव्याः॥२॥

हे देव दानादिगुणयुक्त विष्णो ते तव महिम्नः महत्त्वस्य परं विप्रकृष्टम् अन्तम् अवसानं जायमानः प्रादुर्भवञ्जनः न आप न प्राप्नोति। तथा जातः प्रादुर्भूतोऽपि जनः न एव प्राप्नोति। तव महत्त्वस्यावसानं नास्ति। अत एव सर्वैर्न ज्ञायत इति भावः। कोऽसौ महिमा तमाह। ऋष्वं दर्शनीयं बृहन्तं महान्तं नाकं द्युलोकम् उदस्तभ्नाः त्वमूर्ध्वमधारयः। यथाधो न पतति तथा। पृथिव्याः भूमेः संबन्धिनीं प्राचीं ककुभं च दाधर्थ धारितवानसि। उपलक्षणमेतत् सर्वस्य भूतजातस्य। तथा च मन्त्रान्तरं—'य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा' (ऋ. सं. १. १५४. ४) इति॥

पूर्वोक्त एव पशौ 'इरावती' इति हविषो याज्या। सूत्रितं च–'इरावती धेनुमती हि भूतं विश्वकर्मन्हविषा वावृधान इति द्वे' (आश्व. श्रौ. ३. ८) इति॥

**इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्या।**
**व्यस्तभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः॥ ३॥**

---

१. ख-श-°रुत्कृष्टस्य लोकस्य। २. त३-श-माहात्म्यं।

इरावती इतीरांऽवती । धेनुमती इति धेनुऽमती । हि । भूतम् ।
सुयवसिनी इति सुऽयवसिनी । मनुषे । दशस्या ।
वि । अस्तभ्नाः । रोदसी इति । विष्णो इति । एते इति । दाधर्थ । पृथिवीम् । अभितः । मयूखैः ॥३॥

हे द्यावापृथिव्यौ ^v^मनुषे स्तुवते मनुष्याय ^v^दशस्या दित्सया युक्ते युवाम् ^v^इरावती अन्नवत्यौ ^v^धेनुमती गोमत्यौ ^v^सुयवसिनी शोभनयवसे च ^v^भूतम् अभूतम् । हिशब्दः प्रसिद्धौ । विष्णुना विक्रान्तत्वाद्युवाम् एवमेव[1] खलु पूर्वमभूतमित्यर्थः । हे ^v^विष्णो ^v^एते इमे ^v^रोदसी द्यावापृथिव्यौ ^v^व्यस्तभ्नाः विविधमधारयः । पृथिवीमूर्ध्वमुखत्वेन द्यामधोमुखत्वेनेति[2] विविधत्वम् । अपि च ^v^पृथिवीं प्रथितामिमां भूमिम् ^v^अभितः सर्वत्र स्थितैः ^v^मयूखैः पर्वतैः[3] ^v^दाधर्थ धारितवानसि । यथा न चलति तथा दृढीकृतवानित्यर्थः । पर्वता हि विष्णोः स्वभूताः । 'विष्णुः पर्वतानामधिपतिः' ( तै. सं. ३. ४. ५. १ ) इति श्रुतेः ॥

उरुं युज्ञार्य चक्रथुरु लोकं जनयन्ता सूर्यमुषासमग्निम् ।
दासस्य चिद्वृषशिप्रस्य माया जघ्नथुर्नरा पृतनाज्येषु ॥ ४ ॥

उरुम् । यज्ञार्य । चक्रथुः । ऊँ इति । लोकम् । जनयन्ता । सूर्यम् । उषसम् । अग्निम् ।
दासस्य । चित् । वृषऽशिप्रस्य । मायाः । जघ्नथुः । नरा । पृतनाज्येषु ॥ ४ ॥

हे इन्द्राविष्णू ^v^यज्ञाय यजमानाय ^v^उरु विस्तीर्णं ^v^लोकं स्वर्गाख्यं ^v^चक्रथुरु[4] कृतवन्तौ[5] खलु युवाम् । किं कुर्वन्तौ । ^v^सूर्यं सर्वस्य प्रेरकमादित्यम् ^v^उषसं तमोनिवारकमुषःकालम् ^v^अग्निं चासुरैरावृतं जनयन्तौ[6] पुनः प्रादुर्भावयन्तौ । हे ^v^नरा नेताराविन्द्राविष्णू ^v^वृषशिप्रस्य एतत्संज्ञस्य ^v^दासस्य ^v^चित् उपक्षपयितुरसुरस्य ^v^मायाः ^v^पृतनाज्येषु संग्रामेषु ^v^जघ्नथुः जिहिंसथुः । युवां सूर्यादिकं जनयन्तावित्युच्यते ॥

इन्द्राविष्णू दृंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम् ।
शतं वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य वीरान् ॥ ५ ॥

इन्द्राविष्णू इति । दृंहिताः । शम्बरस्य । नव । पुरः । नवतिम् । च । श्नथिष्टम् ।
शतम् । वर्चिनः । सहस्रम् । च । साकम् । हथः । अप्रति । असुरस्य । वीरान् ॥ ५ ॥

हे ^v^इन्द्राविष्णू ^v^दृंहिताः दृढीकृताः ^v^नव ^v^नवतिं ^v^च नवोत्तरनवतिसंख्याकाः ^v^पुरः पुराणि ^v^शम्बरस्य स्वभूतानि ^v^श्नथिष्टम् अहिंसिष्टम् । 'श्नथ हिंसायाम्'। अपि च ^v^शतं ^v^सहस्रं ^v^च ^v^वर्चिनः ^v^असुरस्य ^v^वीरान् ^v^अप्रति प्रतिद्वन्द्विनो यथा न भवन्ति तथा ^v^साकं सह संघश एव ^v^हथः अहिंसिष्टम् । 'यो वर्चिनः शतमिन्द्रः सहस्रम्' । ( ऋ. सं. २. १४. ६ ) इति हि निगमान्तरम् ॥

इयं मनीषा बृहती बृहन्तोरुक्रमा तवसा वर्धयन्ती ।
ररे वां स्तोमं विदथेषु विष्णो पिन्वतमिषो वृजनेष्विन्द्र ॥ ६ ॥

---

१. ख-घ-एव; झ-श१-एवमेवं; न-एमेवं; श२-एवं । २. ख-झ-त३-४-न-श-इति । ३. ख-झ-त-न-भ-श-'पर्वतैः' नास्ति । ४. ख-चक्रथुः; घ-झ-त-न-श-चक्रथुः उरु° । ५. घ-त-क्रमवंतौ । ६. झ-त१-२-य-जनयंता जनयंतौ ।

इयम् । मनीषा । बृहती । बृहन्ता । उरुऽक्रमा । तवसा । वर्धयन्ती ।

ररे । वाम् । स्तोमम् । विदथेषु । विष्णो इति । पिन्वतम् । इषः । वृजनेषु । इन्द्र ॥ ६ ॥

बृहती महती इयं मनीषा मननीया स्तुतिः बृहन्ता बृहन्तौ महान्तौ उरुक्रमा विस्तीर्णविक्रमौ । विष्णुना सहैकार्थीभावादिन्द्रस्याप्युरुक्रमत्वम् । तवसा । तव इति बलस्य वृद्धेर्वा नामधेयम् । तद्वन्तावेवंभूतौ युवां वर्धयन्ती प्रवृद्धौ कुर्वत्यस्माभिः कृता । हे विष्णो हे इन्द्र विदथेषु यज्ञेषु वां युवाभ्यां स्तोमम् उक्तलक्षणं स्तोत्रं ररे ददे । 'रा दाने' इति धातुः । तौ युवां वृजनेषु[1] इषः अन्नानि पिन्वतम् अस्मभ्यं वर्धयतम् ॥

अभ्युदयेष्टौ विष्णोः शिपिविष्टस्य 'वषट् ते' इत्येषानुवाक्या । सूत्रितं च—'भद्रा ते हस्ता सुकृतोत पाणी वषट् ते विष्णवास आ कृणोमि' ( आश्व. श्रौ. ३. १३ ) इति ॥

**वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।**
**वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥**

वषट् । ते । विष्णो इति । आसः । आ । कृणोमि । तत् । मे । जुषस्व । शिपिऽविष्ट । हव्यम् ।

वर्धन्तु । त्वा । सुऽस्तुतयः । गिरः । मे । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

हे विष्णो ते तुभ्यम् आसः आस्यात् आ अभिमुखं वषट् कृणोमि करोमि[2] । वषट्कारेण हविर्हावयामि । हे शिपिविष्ट । शिपयो रश्मयः । तैराविष्ट विष्णो तत् वषट्कृतं मे मदीयं हव्यं हविः जुषस्व सेवस्व । सुष्टुतयः शोभनस्तुत्यात्मिकाः गिरः वाचश्च त्वां वर्धन्तु वर्धयन्तु । अन्यद्गतम् ॥　　॥ २४ ॥

'नू मर्तः' इति सप्तर्चमेकादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैष्णवम् । 'नू मर्तः' इत्यनुक्रान्तम् । उक्थ्ये[3] अच्छावाकशस्त्र इदं[4] शंसनीयम् । सूत्रितं च—'ऋतुर्जनित्री नू मर्तो भवा मित्रः' ( आश्व. श्रौ. ६. १ ) इति ॥

**नू मर्तो दयते सनिष्यन्यो विष्णव उरुगायाय दाशत् ।**
**प्र यः सत्राचा मनसा यजात एतावन्तं नर्यमाविवासात् ॥ १ ॥**

नु । मर्तः । दयते । सनिष्यन् । यः । विष्णवे । उरुऽगायाय । दाशत् ।

प्र । यः । सत्राचा । मनसा । यजाते । एतावन्तम् । नर्यम् । आऽविवासात् ॥ १ ॥

सः मर्तः मनुष्यः सनिष्यन् धनमिच्छन् नु क्षिप्रं दयते धनमादत्ते । दयतिराङ्पूर्वार्थे द्रष्टव्यः । यः मनुष्यः उरुगायाय बहुभिः कीर्तनीयाय विष्णवे दाशत् हवींषि दद्यात् । यः च सत्राचा सहाञ्चता मनसा मननेन स्तोत्रेण प्र यजाते प्रकर्षेण पूजयेत् एतावन्तम् एतावत्परिमाणं महान्तं नर्यं नरेभ्यो हितं विष्णुम् आविवासात् नमस्कारादिभिः परिचरेत् । स मर्तो दयत इत्यन्वयः । यद्वा । सनिष्यन्निति सनतेर्लाभार्थस्य लटि[5] रूपम् । स मर्तः सनिष्यन् धनादीनि लप्स्यमानो भवन्नेव हविरादिकं नु क्षिप्रं दयते विष्णवे ददातीति योज्यम् ॥

---

१. घ—वृजनेषु आपत्सु; त१-२—वृजनेषु बलेषु निमित्तसप्तमी; श—वृजनेषु संग्रामेषु । २. झ-त-श—वषट् करोमि । ३. झ-त-न-भ-श—उक्थे । ४. झ—इदं सूक्तं । ५. ख-न-लिटि; झ-त-श—लटि ।

विष्णुदेवत्ये पशौ पुरोडाशस्य 'त्वं विष्णो' इत्यनुवाक्या। सूत्रितं च—'त्वं विष्णो सुमतिं विश्वजन्यां वि चक्रमे पृथिवीमेष एताम्' (आश्व. श्रौ. ३. ८) इति ॥

त्वं विष्णो सुमतिं विश्वजन्यामप्रयुतामेवयावो मतिं दाः ।
पर्चो यथा नः सुवितस्य भूरेरश्वावतः पुरुश्चन्द्रस्य रायः ॥ २ ॥

त्वम् । विष्णो इति । सुऽमतिम् । विश्वऽजन्याम् । अप्रऽयुताम् । एवऽयावः । मतिम् । दाः ।
पर्चः । यथा । नः । सुवितस्य । भूरेः । अश्वऽवतः । पुरुऽचन्द्रस्य । रायः ॥ २ ॥

हे एवयावः। एवाः प्राप्तव्याः कामाः। तान् यापयति प्रापयति स्तोतॄनित्येवयावा। हे एवयावन् विष्णो त्वं विश्वजन्यां सर्वजनहिताम् अप्रयुतां दोषैर्वियुक्तां सुमतिम् अनुग्रहबुद्धिं दाः अस्मभ्यं देहि। सुवितस्य सुष्ठु प्राप्तव्यस्य भूरेः बहुलस्य अश्वावतः अश्वयुक्तस्य पुरुश्चन्द्रस्य पुरूणां बहूनामाह्लादकस्य रायः धनस्य पर्चः संपर्कः नः अस्माकं यथा भवति तथा देहीत्यन्वयः॥

वैष्णवस्योपांशुयाजस्य 'त्रिर्देवः' इति याज्या। सूत्रितं च—'इदं विष्णुर्वि चक्रमे त्रिर्देवः पृथिवीमेष एताम्' (आश्व. श्रौ. १. ६) इति। वैष्णवे पशावप्येषैव वपाया याज्या। सूत्रितं च—'त्रिर्देवः पृथिवीमेष एतां परो मात्रया तन्वा वृधान' (आश्व. श्रौ. ३. ८) इति॥

त्रिर्देवः पृथिवीमेष एतां वि चक्रमे शतर्चसं महित्वा ।
प्र विष्णुरस्तु तवसस्तवीयान्त्वेषं ह्यस्य स्थविरस्य नाम ॥ ३ ॥

त्रिः । देवः । पृथिवीम् । एषः । एताम् । वि । चक्रमे । शतऽअर्चसम् । महिऽत्वा ।
प्र । विष्णुः । अस्तु । तवसः । तवीयान् । त्वेषम् । हि । अस्य । स्थविरस्य । नाम ॥ ३ ॥

एषः देवः दानादिगुणयुक्तो विष्णुः शतर्चसं शतसंख्यान्यर्चींषि यस्यास्तादृशीम् एतां पृथिवीम्। उपलक्षणमेतत्। पृथिव्यादींस्त्रीँल्लोकान् महित्वा महत्त्वेन त्रिः वि चक्रमे त्रिभिः पदैर्विक्रान्तवान्। तवसः तवस्विनो वृद्धादपि तवीयान् तवस्वितरः विष्णुः प्र अस्तु अस्माकं प्रभवतु स्वामी भवतु। अस्य स्थविरस्य वृद्धस्य विष्णोः नाम नामकं रूपं विष्णुरित्येतन्नामैव वा त्वेषं हि यस्माद्दीप्तं तस्मात्कारणात् स विष्णुः प्रभवत्वित्यर्थः॥

पूर्वोक्त एव पशौ 'वि चक्रमे' इति वपाया अनुवाक्या। सूत्रितं च—'वि चक्रमे पृथिवीमेष एतां त्रिर्देवः पृथिवीमेष एताम्' (आश्व. श्रौ. ३. ८) इति॥

वि चक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन् ।
ध्रुवासो अस्य कीरयो जनास उरुक्षितिं सुजनिमा चकार ॥ ४ ॥

वि । चक्रमे । पृथिवीम् । एषः । एताम् । क्षेत्राय । विष्णुः । मनुषे । दशस्यन् ।
ध्रुवासः । अस्य । कीरयः । जनासः । उरुऽक्षितिम् । सुऽजनिमा । चकार ॥ ४ ॥

एषः देवः विष्णुः एतां पृथिवीं पृथिव्यादीनिमांस्त्रीँल्लोकान् क्षेत्राय निवासार्थं मनुषे स्तुवते देवगणाय दशस्यन् असुरेभ्योऽपहृत्य प्रदास्यन् वि चक्रमे विक्रान्तवान्। अस्य च विष्णोः कीरयः स्तोतारः जनासः जनाः ध्रुवासः निश्चला भवन्ति। ऐहिकामुष्मिकयोर्लाभेन स्थिरा भवन्तीत्यर्थः। सुजनिमा शोभनानि जनिमानि कीर्तनस्मरणादिना सुखहेतुभूतानि यस्य तादृशो विष्णुः उरुक्षितिं विस्तीर्णनिवासं चकार स्तोतृभ्यः करोति॥

तृतीयसवनेऽतिरात्रादूर्ध्वं सोमातिरेके सति नैमित्तिके होतुः शस्त्रे 'प्र तत्ते अद्य' इति स्तोत्रियस्तृचः (आश्व. श्रौ. ६. ७)। अभ्युदयेष्टौ विष्णोः शिपिविष्टस्य 'प्र तत्ते अद्य' इति याज्या। सूत्रितं च—'वषट् ते विष्णवास आ कृणोमि प्र तत्ते अद्य शिपिविष्ट नाम' (आश्व. श्रौ. ३. १३) इति॥

**प्र तत्ते॑ अ॒द्य शि॑पिविष्ट॒ नामा॒र्यः शं॑सामि व॒युना॑नि वि॒द्वान्।**
**तं त्वा॑ गृणामि त॒वस॒मत॑व्या॒न्क्षय॑न्तम॒स्य रज॑सः परा॒के॥ ५॥**

प्र। तत्। ते॒। अ॒द्य। शि॒पि॒ऽवि॒ष्ट॒। नाम॑। अ॒र्यः। शं॒सा॒मि॒। व॒युना॑नि। वि॒द्वान्।
तम्। त्वा॒। गृ॒णा॒मि॒। त॒वस॑म्। अत॑व्यान्। क्षय॑न्तम्। अ॒स्य। रज॑सः। प॒रा॒के॥ ५॥

हे ˅शिपिविष्ट रश्मिभिराविष्ट विष्णो ˅ते तव ˅तत् प्रसिद्धं विष्णुरिति प्रख्यातं ˅नाम ˅अर्यः स्वामी स्तुतीनां हविषां वा तथा ˅वयुनानि ज्ञातव्यान्यर्थजातानि ˅विद्वान् जानन्नहम् ˅अद्य इदानीं ˅प्र ˅शंसामि प्रकर्षेण स्तौमि। ˅तवसं प्रवृद्धं ˅तं ˅त्वा त्वां विष्णुम् ˅अतव्यान् अतवीयानवृद्धतरोऽहं ˅गृणामि स्तौमि। कीदृशम्। ˅अस्य ˅रजसः लोकस्य ˅पराके दूरदेशे ˅क्षयन्तं निवसन्तम्॥

**किमित्ते॑ विष्णो परि॒चक्ष्यं॑ भूत्प्र यद्व॑व॒क्षे शि॑पिवि॒ष्टो अ॑स्मि।**
**मा वर्पो॑ अ॒स्मदप॑ गूह ए॒तद्यद॒न्यरू॑पः समि॒थे ब॒भूथ॑॥ ६॥**

किम्। इत्। ते॒। वि॒ष्णो॒ इति॑। प॒रि॒ऽचक्ष्य॑म्। भु॒त्। प्र। यत्। व॒व॒क्षे। शि॒पि॒ऽवि॒ष्टः। अ॒स्मि॒।
मा। वर्पः॑। अ॒स्मत्। अप॑। गू॒ह॒ः। ए॒तत्। यत्। अ॒न्यऽरू॑पः। स॒म्ऽइ॒थे। ब॒भूथ॑॥ ६॥

पुरा खलु विष्णुः स्वं रूपं परित्यज्य कृत्रिमं रूपान्तरं धारयन् संग्रामे वसिष्ठस्य साहाय्यं चकार। तं जानन्नृषिरनया प्रत्याचष्टे। अत्र निरुक्तं—'शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः। कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः। किं ते विष्णो प्रख्यातमेतद्भवत्यप्रख्यापनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्नरश्मिः। अपि वा प्रशंसानामैवाभिप्रेतं स्यात्। किं ते विष्णो प्रख्यातमेतद्भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः। शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवति। मा वर्पो अस्मदप गूह एतत्। वर्प इति रूपनाम वृणोतीति सतः। यदन्यरूपः समिथे संग्रामे भवसि संयतरश्मिः' (निरु. ५. ७-८) इति। तत्र। कुत्सितार्थपक्षे योजना। हे ˅विष्णो ˅ते तव तन्नाम ˅किं ˅परिचक्ष्यं प्रख्यापनीयं ˅भूत् भवति। किंशब्दः क्षेपे। अप्रख्यापनीयमेव[1] तद्भवति[1]। ˅यत् नामास्मभ्यं ˅प्र ˅ववक्षे प्रब्रूषे ˅शिपिविष्टोऽस्मि इति। अन्तर्णीतोपमानमेतत्। शेप इव निर्वेष्टितस्तेजसानाच्छादितो भवामीति[2]। तदश्लीलार्थत्वादिदं नाम न प्रशस्तमित्यर्थः। तन्नाम किं परिचक्ष्यं वर्जनीयं परित्याज्यम्। विरुद्धार्थप्रतिपादकत्वात् स्वत एव परित्यक्तं हि तत्। शिष्टं समानं पूर्वेण। अत उक्तरूपविलक्षणं यद्वैष्णवरूपमस्ति ˅एतत् ˅वर्पः रूपम् ˅अस्मत् अस्माकं ˅मा ˅अप ˅गूहः अपगूढं संवृतं मा कुरु। 'गुहू संवरणे'। अपि तु तदेव रूपं प्रकटय। वैष्णवस्य रूपस्य गूहने का प्रसक्तिरिति चेत्। ˅यत् यस्मात् ˅अन्यरूपः रूपान्तरमेव धारयन् ˅समिथे संग्रामे ˅बभूथ अस्माकं सहायो भवसि तस्मादिदं गूहनं न कार्यमिति। प्रशंसापक्षे तु। हे विष्णो ते तव तन्नाम किं परिचक्ष्यं भूत् किं प्रख्यापनीयं भवति। न प्रख्यापनीयम्। किं तन्नाम। शिपिविष्टो रश्मिभिराविष्टोऽस्मीति यन्नाम प्रब्रूषे। यत एवं प्रख्यातरूपस्त्वमतोऽस्माकमेतद्वैष्णवं रूपं संवृतं मा कार्षीः। इदानीं गूढरूपोऽपि यद्यस्मात्त्वं समिथे संग्रामेऽन्यरूपः कृत्रिमरूपं

---

१. ख-ञ्ज-न-भ-°नीयमेतद्भ°। २. ञ-त१-४-भवतीति; ञ्ज-श-भवानीति।

यदन्यद्वैष्णवं रूपं शौर्यादिलक्षणं तादृग्रूप एव बभूथ भवसि तस्मात्त्वं गूढोऽपि ज्ञायस एवेति व्यर्थमेव तस्य रूपस्य गूहनम्। अतो बहुतेजस्कं यद्वैष्णवं रूपं तदस्माकं प्रदर्शयेति तात्पर्यार्थः ॥

वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

वषट्। ते। विष्णो इति। आसः। आ। कृणोमि। तत्। मे। जुषस्व। शिपिऽविष्ट। हव्यम्।
वर्धन्तु। त्वा। सुऽस्तुतयः। गिरः। मे। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ७ ॥

व्याख्यातेयम्। अक्षरार्थस्तु। हे विष्णो तुभ्यमास्यादास्येन वषट्करोमि। वषट्कृतं तन्मदीयं[1] हविर्हे शिपिविष्ट सेवस्व। शोभनस्तुतिरूपा मदीया वाचश्च त्वां वर्धयन्त्विति। शिष्टः पादः सिद्धः ॥ ॥ २५ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
पञ्चमाष्टके षष्ठोऽध्यायः समाप्तः ॥

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ सप्तमो व्याख्यायते। सप्तममण्डलस्य षष्ठेऽनुवाक एकादश सूक्तानि व्याख्यातानि। ‘तिस्रो वाचः’ इति षडृचं द्वादशं सूक्तम्। अत्रानुक्रम्यते—‘तिस्रः षट् पार्जन्यं[2] तु[2]’ इति। ‘एते कुमार आग्नेयोऽपश्यद्वसिष्ठ एव वा[3]’ इति वक्ष्यमाणत्वादग्निपुत्रः कुमार ऋषिर्वसिष्ठो वा। अनुक्तत्वात् त्रिष्टुप्। इदमुत्तरं च पर्जन्यदेवत्यम्। अत्र शौनकः—‘आस्यदघ्नं विगाह्यापः प्राङ्मुखः प्रयतः शुचिः। सूक्ताभ्यां[4] तिस्र आदिभ्यामुपतिष्ठेत भास्करम्[4] ॥ अनभ्रतैतज्जप्तव्यं वृष्टिकामेन यत्नतः। पञ्चरात्रेऽप्यतिक्रान्ते महतीं वृष्टिमाप्नुयात् ॥’ (ऋग्वि. २. ३२६–२७) इति ॥

तिस्रो वाचः प्र वद ज्योतिरग्रा या एतद्दुह्रे मधुदोघमूधः।
स वत्सं कृण्वन्गर्भमोषधीनां सद्यो जातो वृषभो रोरवीति ॥ १ ॥

तिस्रः। वाचः। प्र। वद। ज्योतिःऽअग्राः। याः। एतत्। दुह्रे। मधुऽदोघम्। ऊधः।
सः। वत्सम्। कृण्वन्। गर्भम्। ओषधीनाम्। सद्यः। जातः। वृषभः। रोरवीति ॥ १ ॥

---

१. ख-भ-अस्मदीयं। २. झ-त१(प्रान्ते)-पर्जन्याय तृचं गायत्रं द्वितीया पादनिचृत्। ३. झ-त१ (प्रान्ते)-वा वृष्टिकामः संवत्सरं दश पर्जन्यस्तुतिः संहृष्टान् मण्डूकांस्तुष्टावाद्या त्रिष्टुप्; श-वा वृष्टिकामः। ४. ख-सूक्तानि तिस्रादादित्यमुपतिष्ठेत भास्करं; झ-सूक्तानि तिस्र एताभ्यामुपतिष्ठेत भास्करं; त१-सूक्तानि तिस्र आदिभ्यामुपतिष्ठेत भास्करं एताभ्यां; न-श-सूक्तानि तिस्र आदित्यामुपतिष्ठेत भास्करं; भ-सूक्तानि तिस्रादादित्यामुपतिष्ठेत भास्करं।

ऋषिरात्मानं स्तुतौ प्रेरयति। हे ऋषे ᵛतिस्रः त्रिविधा ऋग्यजुःसामात्मिकाः स्तुतिरूपाः ᵛवाचः ᵛप्र ᵛवद प्रब्रूहि[1]। कीदृश्यो वाचः। ᵛज्योतिरग्राः। ज्योतिर्द्योतमानः प्रणवोऽग्रे प्रमुखो यासां तादृशीः। ᵛयाः वाचः ᵛमधुदोघं मधुन उदकस्य दोहकं वृष्ट्युदकस्य कर्तारम् ᵛएतत् नभसि दृश्यमानम् ᵛऊधः उद्धतं[2] मेघम्। यद्वा। लुप्तोपममेतत्। ऊध इव पयस आश्रयभूतं मेघं ᵛदुह्रे दुहते। दुहेर्लटि 'लोपस्त आत्मनेपदेषु' (पा. सू. ७. १. ४१) इति तलोपः। बाहुलको रुट्। स्तोत्रैः प्रीतो हि पर्जन्यो मेघैर्वर्षयति। अतो वाच एव[3] दुहन्तीत्युपचर्यते। यद्वा। वदेति व्यत्ययेन मध्यमः। तिस्र इति द्रुतविलम्बितमध्यमभेदेन त्रिविधा ज्योतिरग्रा विद्युत्प्रमुखा वाचः प्रवदेतेति[4]। या गर्जितलक्षणा वाचो वृष्टिप्रदमेतं मेघं दुह्रे उदकानि दुहन्ति। एवंभूतः ᵛसः च पर्जन्यः ᵛवत्सं सह निवसन्तं वैद्युताग्निं ᵛकृण्वन् प्रादुष्कुर्वन् तमेव ᵛओषधीनां व्रीह्यादीनां च ᵛगर्भं कुर्वन् ᵛसद्यः शीघ्रं ᵛजातः प्रादुर्भूतः ᵛवृषभः वर्षिता सन् ᵛरोरवीति भृशं शब्दायते ॥

यो वर्धन ओषधीनां यो अपां यो विश्वस्य जगतो देव ईशे।
स त्रिधातु शरणं शर्म यंसत्त्रिवर्तु ज्योतिः स्वभिष्टय१स्मे ॥ २ ॥

यः। वर्धनः। ओषधीनाम्। यः। अपाम्। यः। विश्वस्य। जगतः। देवः। ईशे।
सः। त्रिऽधातु। शरणम्। शर्म। यंसत्। त्रिऽवर्तु। ज्योतिः। सुऽअभिष्टि। अस्मे इति ॥२॥

ᵛयः पर्जन्यः ᵛओषधीनां ᵛवर्धनः वर्धयिता। ᵛयः च ᵛअपाम् उदकानां वर्धकः। ᵛयः च ᵛदेवः द्योतमानः पर्जन्यः ᵛविश्वस्य सर्वस्य ᵛजगतः ᵛईशे ईष्टे। 'लोपस्त आत्मनेपदेषु' इति तलोपः। 'अधीगर्थ°' (पा. सू. २. ३. ५२) इति कर्मणि शेषत्वेन विवक्षिते षष्ठी। अनुदात्तेत्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः। 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः। ᵛसः पर्जन्यः ᵛत्रिधातु त्रिभूमिकं ᵛशरणं गृहं ᵛशर्म सुखं च ᵛयंसत् यच्छतु। अस्मभ्यं ददात्वित्यर्थः॥ यमेर्लेट्यडागमः। 'सिब्बहुलम्°' इति सिप्। 'इतश्च लोपः°' इतीकारलोपः। तथा ᵛत्रिवर्तु त्रिषु ऋतुषु अतिशयेन वर्तमानम्। श्रूयते हि—'त्रीणि वा आदित्यस्य तेजांसि वसन्ता[5] प्रातर्ग्रीष्मे मध्यंदिने शरद्यपराह्णे' (तै. सं. २. १. २. ५) इति। एवंविधं ᵛस्वभिष्टि स्वभ्येषणं ᵛज्योतिः तेजश्च ᵛअस्मे अस्मभ्यं प्रयच्छतु ॥

स्तरीरु त्वद्भवति सूत उ त्वद्यथावशं तन्वं चक्र एषः।
पितुः पयः प्रति गृभ्णाति माता तेन पिता वर्धते तेन पुत्रः ॥ ३ ॥

स्तरीः। ऊँ इति। त्वत्। भवति। सूते। ऊँ इति। त्वत्। यथाऽवशम्। तन्वम्। चक्रे। एषः।
पितुः। पयः। प्रति। गृभ्णाति। माता। तेन। पिता। वर्धते। तेन। पुत्रः ॥ ३ ॥

त्वदिति तकारान्तोऽन्यशब्दपर्यायोऽनुदात्तः सर्वनामसु पठितः। अस्य पर्जन्यस्य ᵛत्वत् अन्यद्रूपं ᵛस्तरीः निवृत्तप्रसवा गौः सा यथा न दोग्ध्री तद्वद्वर्षुकं न ᵛभवति। ᵛउ इति पूरकः। द्वितीय उशब्दश्चार्थे। ᵛत्वत् अन्यच्च रूपं ᵛसूते धेनुवत्प्रसूते। उदकानि प्रवर्षति। ᵛएषः पर्जन्यः ᵛतन्वं स्वकीयं शरीरं ᵛयथावशं यथाकामं स्तरीत्वेन धेनुत्वेन च ᵛचक्रे करोति। अपि च ᵛपितुः दिवः सकाशात् ᵛपयः वृष्ट्युदकं ᵛमाता पृथिवी ᵛप्रति ᵛगृभ्णाति प्रतिगृह्णाति। 'हृग्रहोर्भः'

---

१. ख–प्रकथय; न-भ–प्रकस्य। २. त३–उद्वृतं। ३. त–एवं। ४. ख-त३-न-भ–प्रवदतेति। ५. ख-त-न-भ–वसंते।

इति भस्वम्। प्रतिगृहीतेन ᵛतेन हविरात्मना परिणतेन ᵛपिता द्युलोकः ᵛवर्धते। ᵛतेन एवोदकेन ᵛपुत्रः पृथिव्यां भवः प्राणिसंघोऽपि वर्धते ॥

यस्मि॒न्विश्वा॑नि॒ भुव॑नानि त॒स्थुस्ति॒स्रो द्याव॒स्त्रेधा॑ स॒स्रुराप॑ः ।
त्रय॒ः कोशा॑स उप॒सेच॑नासो॒ मध्व॑ः श्चोतन्त्य॒भितो॑ विर॒प्शम् ॥ ४ ॥

यस्मि॑न्। विश्वा॑नि। भुव॑नानि। त॒स्थुः। ति॒स्रः। द्याव॑ः। त्रे॒धा। स॒स्रुः। आप॑ः।
त्रय॑ः। कोशा॑सः। उ॒प॒ऽसेच॑नासः। मध्व॑ः। श्चो॒त॒न्ति॒। अ॒भित॑ः। वि॒ऽर॒प्शम्॥ ४ ॥

ᵛयस्मिन् पर्जन्ये ᵛविश्वानि ᵛभुवनानि सर्वाणि भूतजातानि ᵛतस्थुः तिष्ठन्ति। यदधीनवृत्तीनि भवन्तीत्यर्थः। यस्मिंश्च ᵛद्यावः[1] द्युप्रभृतयो लोका अवतिष्ठन्ते। यस्माच्च ᵛआपः ᵛत्रेधा ᵛसस्रुः प्राच्यः प्रतीच्योऽवाच्यश्च सत्यो निर्गच्छन्ति। ᵛउपसेचनासः उपसेक्तारः ᵛत्रयः पौरस्त्यः प्रतीच्य उदीच्यश्चेति त्रिप्रकाराः ᵛकोशासः मेघाः ᵛविरप्शं महान्तं पर्जन्यम् ᵛअभितः परितः ᵛमध्वः। कर्मणि षष्ठी। मधूदकं ᵛश्चोतन्ति क्षारयन्ति वर्षन्ति ॥

इ॒दं वच॑ः प॒र्जन्या॑य स्व॒राजे॑ हृ॒दो अ॒स्त्वन्त॑रं॒ तज्जु॑जोषत् ।
म॒यो॒भुवो॑ वृ॒ष्टय॑ः सन्त्व॒स्मे सु॑पिप्प॒ला ओष॑धीर्दे॒वगो॑पाः ॥ ५ ॥

इ॒दम्। वच॑ः। प॒र्जन्या॑य। स्व॒ऽराजे॑। हृ॒दः। अ॒स्तु॒। अन्त॑रम्। तत्। जु॒जो॒ष॒त्।
म॒यः॒ऽभुव॑ः। वृ॒ष्टय॑ः। स॒न्तु॒। अ॒स्मे इति॑। सु॒ऽपि॒प्प॒लाः। ओष॑धीः। दे॒वऽगो॑पाः ॥ ५ ॥

ᵛइदं ᵛवचः वचनं स्तोत्रं ᵛस्वराजे स्वायत्तदीप्तये ᵛपर्जन्याय क्रियते। एतच्च ᵛहृदः तदीयस्य हृदयस्य ᵛअन्तरम् अन्तर्गतम् ᵛअस्तु। सच ᵛतत् स्तोत्रं ᵛजुजोषत् सेवताम्। 'जुषी प्रीतिसेवनयोः'। लेट्यडागमश्छान्दसः। शपः श्लुः। ᵛमयोभुवः सुखस्य भावयित्र्यः ᵛवृष्टयः ᵛअस्मे अस्माकं तत्प्रसादात् ᵛसन्तु भवन्तु। तथा ᵛदेवगोपाः देवः पर्जन्यो गोपायिता रक्षिता यासां तथाविधाः ᵛओषधीः ओषधयश्च ᵛसुपिप्पलाः सुफला अस्माकं भवन्तु ॥

स रे॑तो॒धा वृ॑ष॒भः शश्व॑तीनां॒ तस्मि॑न्ना॒त्मा जग॑तस्त॒स्थुष॑श्च ।
तन्म॑ ऋ॒तं पा॑तु श॒तशा॑रदाय यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥ ६ ॥

सः। रेत॒ःऽधाः। वृ॒ष॒भः। शश्व॑तीनाम्। तस्मि॑न्। आ॒त्मा। जग॑तः। त॒स्थुष॑ः। च॒ ॥
तत्। मा॒। ऋ॒तम्। पा॒तु॒। श॒त॒ऽशा॑रदाय। यू॒यम्। पा॒त॒। स्व॒स्तिऽभि॑ः। सदा॑। न॒ः ॥ ६ ॥

ᵛसः पर्जन्यः ᵛशश्वतीनां बह्वीनामोषधीनां ᵛरेतोधाः रेतस उदकस्य बीजभूतस्य धाता विनिधाता[2] भवति। ᵛवृषभः इत्युपमा। यथा कश्चिद्वृषभो बह्वीनां गवां गर्भस्याधाता भवति तद्वत्। अतः ᵛतस्मिन् पर्जन्ये ᵛजगतः जङ्गमस्य ᵛतस्थुषः स्थावरस्य ᵛच ᵛआत्मा देहो वर्तते। ᵛतत् पर्जन्येन दत्तम् ᵛऋतम् उदकं ᵛमा मां ᵛशतशारदाय शतसंवत्सरजीवनार्थं ᵛपातु रक्षतु ॥ माशब्दस्य 'ऋत्यकः' इति प्रकृतिभावो ह्रस्वत्वं च। अन्यद्गतम् ॥ ॥ १ ॥

---

१. घ–तिस्रो द्यावः। २. ख-न-भ-श–विधाता।

'पर्जन्याय' इति तृचं त्रयोदशं सूक्तं गायत्रम्[1]। पूर्ववदृषिदेवते। तथा चानुक्रान्तं—'पर्जन्याय तृचं गायत्रम्[2]' इति। वैश्वानरपार्जन्यायामन्वारम्भणीयायां पार्जन्यस्य चरोः 'पर्जन्याय' इत्यनुवाक्या। सूत्र्यते हि —'पर्जन्याय प्र गायत प्र वाता वान्ति पतयन्ति विद्युतः' (आश्व. श्रौ. २. १५) इति॥

पर्जन्याय प्र गायत दिवस्पुत्राय मीळ्हुषे। स नो यवसमिच्छतु॥ १॥

पर्जन्याय। प्र। गायत। दिवः। पुत्राय। मीळ्हुषे। सः। नः। यवसम्। इच्छतु॥ १॥

हे स्तोतारः पर्जन्याय देवाय प्र गायत प्रकर्षेण स्तोत्रमुच्चारयत। कीदृशाय। दिवः अन्तरिक्षस्य पुत्राय। तत्र हि पर्जन्यः प्रादुर्भवति। मीळ्हुषे सेक्त्रे। सः तादृशः पर्जन्यः नः अस्मभ्यं यवसम् ओषध्यादिलक्षणमन्नं दातुम् इच्छतु॥

यो गर्भमोषधीनां गवां कृणोत्यर्वताम्। पर्जन्यः पुरुषीणाम्॥ २॥

यः। गर्भम्। ओषधीनाम्। गवाम्। कृणोति। अर्वताम्। पर्जन्यः। पुरुषीणाम्॥ २॥

यः पर्जन्यः ओषधीनां व्रीह्यादीनां गवाम् अर्वताम् अवतीनां वडवानां पुरुषीणां नारीणां च यः पर्जन्यः गर्भं प्रसूतिहेतुं बीजमुदकरूपं कृणोति करोति तस्मै पर्जन्यायेत्युत्तरत्र संबन्धः॥

तस्मा इदास्ये हविर्जुहोता मधुमत्तमम्। इळां नः संयतं करत्॥ ३॥

तस्मै। इत्। आस्ये। हविः। जुहोत। मधुमत्ऽतमम्। इळाम्। नः। सम्ऽयतम्। करत्॥३॥

तस्मा इत् तस्मा एव पर्जन्याय आस्ये देवानामास्यभूतेऽग्नौ मधुमत्तमं रसवत्तमं हविः जुहोत जुहुत हे ऋत्विजः। स च पर्जन्यः नः अस्मभ्यम् इळाम् अन्नं संयतं सम्यग्नियतं यथा भवति तथा करत् करोतु। ददात्विति यावत्॥  ॥ २॥

'संवत्सरम्' इति दशर्चं चतुर्दशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभम्। आद्या त्वनुष्टुप्। मण्डूका देवता। तथा चानुक्रान्तं—'संवत्सरं दश पर्जन्यस्तुतिः संहृष्टान्मण्डूकांस्तुष्टावाद्यानुष्टुप्' इति। वृष्टिकामेनैतत्सूक्तं जप्यम्[3]॥

संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः।
वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः॥ १॥

संवत्सरम्। शशयानाः। ब्राह्मणाः। व्रतऽचारिणः।
वाचम्। पर्जन्यऽजिन्विताम्। प्र। मण्डूकाः। अवादिषुः॥ १॥

अत्र निरुक्तं—'वसिष्ठो वर्षकामः पर्जन्यं तुष्टाव तं मण्डूका अन्वमोदन्त स मण्डूकाननुमोदमानान् दृष्ट्वा तुष्टाव' (निरु. ९. ६) इति। 'मण्डूका मज्जूका मज्जनान्मदतेर्वा मोदतिकर्मणो मन्दतेर्वा तृप्तिकर्मणो मण्डयतेरिति वैयाकरणा मण्ड एषामोक इति वा मण्डो मदेर्वा मुदेर्वा तेषामेषा भवति' (निरु. ९. ५) इति। व्रतचारिणः व्रतं संवत्सरसत्रात्मकं कर्माचरन्तः ब्राह्मणाः। लुप्तोपममेतत्। एवंभूता ब्राह्मणा इव संवत्सरं शरत्प्रभृति आ वर्षर्तोरेकं संवत्सरं शशयानाः शिश्याना वर्षणार्थं

---

१. ख-भ–गायत्रं द्वितीया पादनिचृत्। २. ख-भ (प्रान्ते)–गायत्रं द्वितीया पादनिचृदेते कुमार आग्नेयोपश्यद्वसिष्ठ एव वा वृष्टिकामः। ३. ख-भ–जाप्यं।

तपश्चरन्त इव बिल एव सन्त[1] एते ᵛमण्डूकाः ᵛपर्जन्यजिन्वितां पर्जन्येन प्रीतां यया वाचा पर्जन्यः प्रीतो भवति तादृशीं ᵛवाचं ᵛप्र ᵛअवादिषुः प्रवदन्ति ॥

दि॒व्या आपो॑ अ॒भि यदे॑न॒माय॒न्दृतिं॒ न शुष्कं॑ सर॒सी शया॑नम् ।
गवा॒मह॒ न मा॒युर्व॒त्सिनी॑नां म॒ण्डूका॑नां व॒ग्नुरत्रा॒ समे॑ति ॥ २ ॥

दि॒व्याः । आपः॑ । अ॒भि । यत् । ए॒न॒म् । आय॑न् । दृति॑म् । न । शुष्क॑म् । स॒र॒सी इति॑ । शया॑नम् ।
गवा॑म् । अह॑ । न । मा॒युः । व॒त्सिनी॑नाम् । म॒ण्डूका॑नाम् । व॒ग्नुः । अत्र॑ । सम् । ए॒ति॒ ॥ २ ॥

ᵛदिव्याः दिवि भवाः ᵛआपः ᵛदृतिं ᵛन दृतिमिव ᵛशुष्कं नीरसं ᵛसरसी । महत्सरः सरसी । गौरादिलक्षणो ङीष् । सरस्याम् । 'सुपां सुलुक्' इति सप्तम्या लुक् । 'ईदूतौ च सप्तम्यर्थे' इति प्रगृह्यसंज्ञा । महति सरसि निर्जले घर्मकाले ᵛशयानं निवसन्तम् ᵛएनं मण्डूकगणं ᵛयत् यदा ᵛआयन् अभिगच्छन्ति तदा ᵛअत्र अस्मिन् वर्षणे पर्जन्ये वा सति ᵛवत्सिनीनां वत्सयुक्तानां ᵛगवां ᵛन ᵛमायुः गवां शब्द इव ᵛमण्डूकानां ᵛवग्नुः शब्दः ᵛसमेति संगच्छते । यथा वत्सैः संगतासु गोषु महान् घोषो जायते तद्वद्वृष्टे पर्जन्ये महान् कलकलशब्दो जायत इत्यर्थः । ᵛअह इति पूरकः ॥

यदी॑मेनाँ उ॒श॒तो अ॒भ्यव॑र्षीत्तृ॒ष्याव॑तः प्रा॒वृष्याग॑तायाम् ।
अ॒ख्ख॒ली॒कृत्या॑ पि॒तरं॒ न पु॒त्रो अ॒न्यो अ॒न्यमुप॒ वद॑न्तमेति ॥ ३ ॥

यत् । ई॒म् । ए॒ना॒न् । उ॒श॒तः । अ॒भि । अव॑र्षीत् । तृ॒ष्याऽव॑तः । प्रा॒वृषि॑ । आऽग॑तायाम् ।
अ॒ख्ख॒ली॒कृत्य॑ । पि॒तर॑म् । न । पु॒त्रः । अ॒न्यः । अ॒न्यम् । उप॑ । वद॑न्तम् । ए॒ति॒ ॥ ३ ॥

ᵛउशतः कामयमानान् ᵛतृष्यावतः तृष्णावतः ᵛएनान् मण्डूकान् ᵛप्रावृषि वर्षर्तौ ᵛआगतायाम् आगते सति ᵛयत् यदा ᵛअभ्यवर्षीत् पर्जन्यो जलैरभिषिञ्चति । ᵛईम् इति पूरणः । तदानीम् ᵛअख्खलीकृत्य । अख्खल इति शब्दानुकरणम् । अख्खलशब्दं कृत्वा ᵛपुत्रः ᵛपितरं ᵛन पितरमिव ᵛअन्यः मण्डूकः ᵛवदन्तं शब्दयन्तम् ᵛअन्यं मण्डूकम् ᵛउप ᵛएति प्राप्नोति ॥

अ॒न्यो अ॒न्यमनु॑ गृभ्णात्येनोर॒पां प्र॑स॒र्गे यदम॑न्दिषाताम् ।
म॒ण्डूको॒ यद॒भिवृ॑ष्टः॒ कनि॑ष्क॒न्पृश्नि॑ः संपृ॒ङ्क्ते हरि॑तेन॒ वाच॑म् ॥ ४ ॥

अ॒न्यः । अ॒न्यम् । अनु॑ । गृ॒भ्णा॒ति॒ । ए॒नोः॒ । अ॒पाम् । प्र॒ऽस॒र्गे । यत् । अम॑न्दिषाताम् ।
म॒ण्डूकः॑ । यत् । अ॒भिऽवृ॑ष्टः । कनि॑स्कन् । पृश्निः॑ । स॒म्ऽपृ॒ङ्क्ते । हरि॑तेन । वाच॑म् ॥ ४ ॥

ᵛएनोः एनयोर्द्वयोर्मण्डूकयोः ᵛअन्यः मण्डूकः ᵛअन्यं मण्डूकमनुगम्य ᵛगृभ्णाति गृह्णाति । ᵛअपाम् उदकानां ᵛप्रसर्गे प्रसर्जने वर्षणे सति ᵛयत् यदा ᵛअमन्दिषातां हृष्टावभूताम् । ᵛयत् यदा च ᵛअभिवृष्टः पर्जन्येनाभिषिक्तः ᵛकनिष्कन् । स्कन्दतेर्यङ्लुगन्तस्य रूपम् । भृशं स्कन्दन्नुत्प्लवं कुर्वन् ᵛपृश्निः पृश्निवर्णः ᵛमण्डूकः ᵛहरितेन हरितवर्णेनान्येन मण्डूकेन ᵛवाचं ᵛसंपृङ्क्ते संयोजयति । उभावप्येकविधं शब्दं कुर्वाते । तदानीमन्योऽन्यमनु गृभ्णातीत्यन्वयः ॥

यदे॑षाम॒न्यो अ॒न्यस्य॒ वाचं॑ शा॒क्तस्ये॑व॒ वद॑ति॒ शिक्ष॑माणः ।
सर्वं॒ तदे॑षां स॒मृधे॑व॒ पर्व॒ यत्सु॒वाचो॒ वद॑थ॒नाध्य॒प्सु ॥ ५ ॥

---

1. श—निवसंत ।

यत्। एषाम्। अन्यः। अन्यस्य। वाचम्। शाक्तस्यऽइव। वदति। शिक्षमाणः।
सर्वम्। तत्। एषाम्। समृधाऽइव। पर्व। यत्। सुऽवाचः। वदथन। अधि। अप्ऽसु ॥५॥

हे मण्डूकाः ᵛयत्[1] यदा ᵛएषां[1] युष्माकं मध्ये ᵛअन्यः मण्डूकः ᵛअन्यस्य मण्डूकस्य ᵛवाचं ᵛवदति अनुवदति अनुकरोति ᵛशिक्षमाणः शिक्ष्यमाणः शिष्यः ᵛशाक्तस्येव शक्तिमतः शिक्षकस्य वाचं यथानुवदति तद्वत्। ᵛयत् यदा च ᵛसुवाचः शोभनवाचो यूयं सर्वे ᵛअप्सु वृष्टेषूदकेषु ᵛअधि उपरि प्लवन्तः ᵛवदथन वदत शब्दं कुरुत। ᵛतत् तदा ᵛएषां युष्माकं ᵛसर्वं ᵛपर्व परुष्मच्छरीरं ᵛसमृधेव समृद्धमेवाविकलावयवमेव भवति। इवशब्दोऽवधारणे। घर्मकाले मृद्भावमापन्ना मण्डूकाः पुनर्वर्षणे सत्यविकलाङ्गाः प्रादुर्भवन्तीत्यर्थः॥ ॥ ३ ॥

गोमायुरेको अजमायुरेकः पृश्निरेको हरित एक एषाम्।
समानं नाम बिभ्रतो विरूपाः पुरुत्रा वाचं पिपिशुर्वदन्तः॥ ६ ॥

गोऽमायुः। एकः। अजऽमायुः। एकः। पृश्निः। एकः। हरितः। एकः। एषाम्।
समानम्। नाम। बिभ्रतः। विऽरूपाः। पुरुऽत्रा। वाचम्। पिपिशुः। वदन्तः॥ ६ ॥

ᵛएषां मण्डूकानां मध्ये ᵛएकः मण्डूकः ᵛगोमायुः[2] गोमायुरिव[2] मायुः शब्दो यस्य तादृशो भवति। ᵛएकः अन्यो मण्डूकः ᵛअजमायुः अजस्य मायुरिव मायुर्यस्य तादृशो भवति। ᵛएकः ᵛपृश्निः पृश्निवर्णः। ᵛएकः अपरः ᵛहरितः हरितवर्णः। एवं ᵛविरूपाः नानारूपा अपि ᵛसमानम् एकं मण्डूका इति ᵛनाम ᵛबिभ्रतः धारयन्तः ᵛपुरुत्रा बहुषु देशेषु ᵛवाचं ᵛवदन्तः शब्दं कुर्वन्तः ᵛपिपिशुः अवयवीभवन्ति प्रादुर्भवन्ति। 'पिश अवयवे'। पुरुशब्दात् 'देवमनुष्य°' इत्यादिना त्राप्रत्ययः॥

ब्राह्मणासो अतिरात्रे न सोमे सरो न पूर्णमभितो वदन्तः।
संवत्सरस्य तदहः परि ष्ठ यन्मण्डूकाः प्रावृषीणं बभूव॥ ७ ॥

ब्राह्मणासः। अतिऽरात्रे। न। सोमे। सरः। न। पूर्णम्। अभितः। वदन्तः।
संवत्सरस्य। तत्। अहरिति। परि। स्थ। यत्। मण्डूकाः। प्रावृषीणम्। बभूव॥ ७ ॥

रात्रिमतीत्य वर्तत इत्यतिरात्रः। ᵛअतिरात्रे ᵛन ᵛसोमे। यथातिरात्राख्ये सोमयागे ᵛब्राह्मणासः ब्राह्मणा रात्रौ स्तुतशस्त्राणि पर्यायेण शंसन्ति हे ᵛमण्डूकाः। द्वितीयो नशब्दः संप्रत्यर्थे। ᵛन संप्रति ᵛपूर्णं ᵛसरः ᵛअभितः सर्वतः ᵛवदन्तः रात्रौ शब्दं कुर्वाणा यूयं[3] ᵛतदहः तद्दिनं ᵛपरि ᵛष्ठ परितः सर्वतो भवथ। ᵛयत् अहः ᵛप्रावृषीणं प्रावृषेण्यं प्रावृषि भवं ᵛबभूव तस्मिन्नहनि सर्वतो वर्तमाना भवथेत्यर्थः॥

ब्राह्मणासः सोमिनो वाचमक्रत ब्रह्म कृण्वन्तः परिवत्सरीणम्।
अध्वर्यवो घर्मिणः सिष्विदाना आविर्भवन्ति गुह्या न के चित्॥ ८ ॥

ब्राह्मणासः। सोमिनः। वाचम्। अक्रत। ब्रह्म। कृण्वन्तः। परिऽवत्सरीणम्।
अध्वर्यवः। घर्मिणः। सिस्विदानाः। आविः। भवन्ति। गुह्याः। न। के। चित्॥ ८ ॥

---

१. क्ष-त-न-भ-श—येषां। २. ख-क्ष-त२-श—गोमायुरिव; घ-क्ष-त३-न—गोमायुः गोमायुरिव। ३. क्ष—यूयं संवत्सरस्य।

सोमिनः सोमयुक्ताः परिवत्सरीणं सांवत्सरिकं गवामयनिकं ब्रह्म स्तुतशस्त्रात्मकं कृण्वन्तः कुर्वन्तः ब्राह्मणासः । लुप्तोपममेतत् । ब्राह्मणा इव वाचं शब्दम् अक्रत अकृषतेमे मण्डूकाः । अपि च घर्मिणः घर्मेण प्रवर्ग्येण चरन्तः अध्वर्यवः अध्वरस्य नेतार ऋत्विज इव सिष्विदानाः स्विद्यद्गात्राः गुह्याः घर्मकाले बिलेऽभिगूढाः के चित् केचन मण्डूकाः न संप्रति वृष्टौ सत्याम् आविर्भवन्ति जायन्ते ॥

देवहितिं जुगुपुर्द्वादशस्य ऋतुं नरो न प्र मिनन्त्येते ।
संवत्सरे प्रावृष्यागतायां तप्ता घर्मा अश्नुवते विसर्गम् ॥ ९ ॥

देवऽहितिम् । जुगुपुः । द्वादशस्य । ऋतुम् । नरः । न । प्र । मिनन्ति । एते ।
संवत्सरे । प्रावृषि । आऽगतायाम् । तप्ताः । घर्माः । अश्नुवते । विऽसर्गम् ॥ ९ ॥

नरः नेतारः एते मण्डूकाः देवहितिं देवैः कृतं विधानम् अस्यर्तोरयं धर्म इत्येवंरूपं जुगुपुः गोपायन्ति । काले काले रक्षन्ति । अत एव द्वादशस्य द्वादशमासात्मकस्य संवत्सरस्य ऋतुं तं तं वसन्तादिकं न प्र मिनन्ति न हिंसन्ति । पर्जन्यस्तुतेरनुमोदनेन तत्तत्काले वृष्टिहेतवो भवन्तीत्यर्थः । संवत्सरे संपूर्णे[1] प्रावृषि वर्षर्तौ आगतायाम् आगते सति घर्माः पूर्वं घर्मकाले वर्तमानाः तप्ताः तापेन पीडिताः संप्रति विसर्गं विसर्जनं बिलान्मोचनम् अश्नुवते प्राप्नुवन्ति ॥

गोमायुरदादजमायुरदात्पृश्निरदाद्धरितो नो वसूनि ।
गवां मण्डूका ददतः शतानि सहस्रसावे प्र तिरन्त आयुः ॥ १० ॥

गोऽमायुः । अदात् । अजऽमायुः । अदात् । पृश्निः । अदात् । हरितः । नः । वसूनि ।
गवाम् । मण्डूकाः । ददतः । शतानि । सहस्रऽसावे । प्र । तिरन्ते । आयुः ॥ १० ॥

गोमायुः गोरिव मायुः शब्दो यस्य तादृशो मण्डूकः वसूनि धनानि नः अस्मभ्यम् अदात् ददातु । अजमायुः च अदात् ददातु । हरितः हरितवर्णश्च अदात् ददातु । पृश्निः पृश्निवर्णश्च अदात् ददातु । तथा सहस्रसावे सहस्रसंख्याका ओषधयः सूयन्त उत्पद्यन्त इति वर्षर्तुः सहस्रसावः । तस्मिन् सति सर्वे मण्डूकाः गवां शतानि अपरिमिता गाः ददतः अस्मभ्यं प्रयच्छन्तः आयुः जीवनं प्र तिरन्ते प्रवर्धयन्तु[2] ॥ ॥ ४ ॥

'इन्द्रासोमा' इति पञ्चविंशत्यृचं पञ्चदशं सूक्तं वसिष्ठस्यार्षम् । आद्याः षट् जगत्यः सप्तमी जगती त्रिष्टुब्वाष्टादश्येकविंशीत्रयोविंश्यौ जगत्योऽन्त्या 'प्रति चक्ष्व' इत्यनुष्टुप् शिष्टाश्चतुर्दश त्रिष्टुभः । नवमीद्वादशीत्रयोदश्यः सोमदेवत्या एकादशी देवदेवत्याष्टमीषोडश्याविन्द्रदेवताके सप्तदशी ग्रावदेवत्याष्टादशी मरुद्देवताका दशमीचतुर्दश्यावग्निदेवताके 'प्र वर्तय' इत्याद्याः पञ्चर्च इन्द्रदेवताकाः । 'मा नो रक्ष' इति त्रयोविंश्याः पूर्वोऽर्धर्चो वसिष्ठस्य प्रार्थनापरः । अतस्तद्देवताकः । उत्तरोऽर्धर्चः पृथिव्यन्तरिक्षदेवत्यः । शिष्टानां रक्षोहणाविन्द्रासोमौ देवता । तथा चानुक्रान्तम्— 'इन्द्रासोमा पञ्चाधिकैन्द्रासोमं राक्षोघ्नं शापाभिशापप्रायं षट् सप्त वाद्या जगत्य एकविंशीत्रयोविंश्यौ चाष्टादशी मारुती च दशमीचतुर्दश्यावाग्नेय्यौ दैव्येकादश्यन्त्यानुष्टुब्नवमी द्वादशी त्रयोदशी सौम्यः सप्तदशी ग्राव्ण्यष्टमीषोळश्यावैन्द्र्यौ प्र वर्तयेति पञ्चैन्द्र्यो[3] मा नो रक्ष इत्यृषेरात्मन आशी-

---

१. ख-न-भ—पूर्णे । २. न—प्रवर्धयंतु खिलः—उपप्लवद मंडूकि वर्ष मावद तादुरि । मध्ये ह्रदस्य प्लवस्व विगृह्य चतुरः पदः (ऋ. खै. १६) ॥ ३. ज्ञ-त४—चतस्र ऐंद्र्यः; ज्ञ—चतस्र ऐंद्र्यो वा; त३-भ-श—पंचैंद्र्यो वा ।

रुत्तरोऽर्धर्चः पृथिव्यन्तरिक्षदेवतः[1] ' इति । अत्र बृहद्देवतायामनुक्रम्यते—' संवत्सरं तु मण्डूकानैन्द्रासोमं परं तु यत् ॥ ऋषिर्ददर्श रक्षोघ्नं पुत्रशोकपरिप्लुतः । हते पुत्रशते क्रुद्धः सौदासैर्दुःखितस्तदा '॥ ( बृहद्दे. ६. २७–२८ ) इति । अतो रक्षोनिबर्हणार्थमेतत्सूक्तं जप्यम् ॥

इन्द्रा॑सोमा॒ तप॑तं॒ रक्ष॑ उ॒ब्जतं॒ न्य॑र्पयतं वृषणा तमो॒वृधः॑ ।
परा॑ शृणीतम॒चितो॒ न्यो॑षतं ह॒तं नु॒देथां॒ नि शि॑शीतम॒त्रिणः॑ ॥ १ ॥

इन्द्रा॑सोमा । तप॑तम् । रक्षः॑ । उ॒ब्जत॑म् । नि । अ॒र्प॒य॒त॒म् । वृ॒ष॒णा॒ । त॒मः॒ऽवृधः॑ ।
परा॑ । शृ॒णी॒त॒म् । अ॒चितः॑ । नि । ओ॒ष॒त॒म् । ह॒त॒म् । नु॒देथा॑म् । नि । शि॒शी॒त॒म् । अ॒त्रिणः॑ ॥ १ ॥

हे ᵛइन्द्रासोमा । इन्द्रश्च सोमश्चेन्द्रासोमौ । ' देवताद्वन्द्वे च ' इति पूर्वपदस्यानङ् । आमन्त्रिताद्युदात्तत्वम् । ᵛरक्षः रक्षांसि । जातावेकवचनम् । युवां ᵛतपतं संतापयतम् । ' आमन्त्रितं पूर्वमविद्यमानवत् ' इत्यविद्यमानवत्वात् तपतमिति तिङन्तस्य निघाताभावः । तथा ᵛउब्जतं हिंस्तम् । उब्जतिर्हिंसाकर्मा । तिङः परत्वान्निघाताभावः । हे ᵛवृषणा वृषणौ कामानां वर्षितारौ ᵛन्यर्पयतं रक्षांसि नीचैर्दुःखं प्रापयतम् । ᵛतमोवृधः तमसावरकेणान्धकारेण मायारूपेण वर्धमानान् तमसि रात्रौ वर्धमानान् वा ᵛअचितः ज्ञानरहितान् मूढान् राक्षसान् ᵛपरा ᵛशृणीतम् । पराङ्मुखा यथा भवन्ति तथा हिंस्तम् । तथा ᵛन्योषतं नितरां दहतम् । ' उष दाहे ' । ᵛहतं तान् मारयतम् । ᵛनुदेथाम् अस्मत्तो हतांस्तान् प्रेरयेथाम् । ᵛअत्रिणः अदनशीलांस्तान् राक्षसान् ᵛनि ᵛशिशीतं नितरां तनूकुरुतम् ॥

इन्द्रा॑सोमा॒ सम॒घशं॑सम॒भ्य१॒॑घं तपु॒र्य॑यस्तु च॒रुर॑ग्नि॒वाँ इ॑व ।
ब्र॒ह्म॒द्विषे॑ क्र॒व्यादे॑ घो॒रच॑क्षसे॒ द्वेषो॑ धत्तमनवा॒यं कि॑मी॒दिने॑ ॥ २ ॥

इन्द्रा॑सोमा । सम् । अ॒घऽशं॑सम् । अ॒भि । अ॒घम् । तपुः॑ । य॒य॒स्तु॒ । च॒रुः । अ॒ग्नि॒वान्ऽइ॑व ।
ब्र॒ह्म॒ऽद्विषे॑ । क्र॒व्यऽअदे॑ । घो॒रऽच॑क्षसे । द्वेषः॑ । ध॒त्त॒म् । अ॒न॒वा॒यम् । कि॒मी॒दिने॑ ॥ २ ॥

हे इन्द्रासोमौ ᵛअघशंसम् अघस्यानर्थस्य शंसितारम् ᵛअघम् आगत्य हन्तारं राक्षसं ᵛसं सहैव । ᵛअभि इति श्रुतेर्योग्यक्रियाध्याहारः । अभिभवतम् । स च ᵛतपुः युवयोस्तेजसा तप्यमानो राक्षसः ᵛअग्निवानिव अग्नियुक्तोऽग्नौ प्रक्षिप्तः ᵛचरुः इव ᵛययस्तु । ' यसु प्रयत्ने ' । केवलोऽप्ययमाङ्पूर्वार्थो द्रष्टव्यः । आयस्यतु आयासं प्राप्नोतु । उपक्षीयतामित्यर्थः । अपि च ᵛब्रह्मद्विषे ब्राह्मणेभ्योऽस्मभ्यं द्वेष्ट्रे ᵛक्रव्यादे क्रव्यं मांसं भक्षयित्रे ᵛघोरचक्षसे घोरदर्शनाय परुषभाषिणे वा ᵛकिमीदिने किमिदानीमिति चरते पिशुनाय ᵛद्वेषः द्वेष्यभावम् ᵛअनवायम् अव्यवायमनवयवं नैरन्तर्येण यथा भवति तथा ᵛधत्तं दत्तम् ॥

इन्द्रा॑सोमा दु॒ष्कृतो॑ व॒व्रे अ॒न्तर॑नारम्भ॒णे तम॑सि॒ प्र वि॑ध्यतम् ।
यथा॒ नातः॒ पुन॒रेक॑श्च॒नोदय॒त्तद्वा॑मस्तु॒ सह॑से मन्यु॒मच्छवः॑ ॥ ३ ॥

इन्द्रा॑सोमा । दुः॒ऽकृतः॑ । व॒व्रे । अ॒न्तः । अ॒ना॒र॒म्भ॒णे । तम॑सि । प्र । वि॒ध्य॒त॒म् ।
यथा॑ । न । अतः॑ । पुनः॑ । एकः॑ । च॒न । उ॒त्ऽअय॑त् ।
तत् । वा॒म् । अ॒स्तु॒ । सह॑से । म॒न्यु॒ऽमत् । शवः॑ ॥ ३ ॥

---

१. ज्ञ–°देवत्यः; ज्ञ-त२-अनु.–°दैवतः ।

हे इन्द्रासोमौ ᵛदुष्कृतः दुष्कर्मकारिणः राक्षसान् ᵛवव्रे वारके ᵛअन्तः मध्ये ᵛअनारम्भणे आलम्बनरहिते ᵛतमसि अन्धकारे ᵛप्र ᵛविध्यतं प्रवेश्य ताडयतम्। ᵛयथा येन प्रकारेणैषां मध्ये ᵛएकश्चन एकोऽपि राक्षसः ᵛअतः अस्मात्तमसः ᵛपुनः ᵛन ᵛउदयत् उद्गच्छेत्। तथा विध्यतमित्यर्थः। एतेर्लेङ्यडागमः। 'इतश्च लोपः' इतीकारलोपः। गुणायादेशौ। ᵛतत् प्रसिद्धं ᵛमन्युमत् क्रोधयुक्तं ᵛवां युवयोः ᵛशवः बलं ᵛसहसे रक्षसामभिभवनाय ᵛअस्तु भवतु॥

इन्द्रा॑सोमा व॒र्तय॑तं दि॒वो व॒धं सं पृ॑थि॒व्या अ॒घशं॑साय॒ तर्ह॑णम्।
उत्त॑क्षतं स्व॒र्यं१॒॑ पर्व॑तेभ्यो॒ येन॒ रक्षो॑ वावृधा॒नं नि॒जूर्व॑थः॥ ४॥

इन्द्रा॑सोमा। व॒र्तय॑तम्। दि॒वः। व॒धम्। सम्। पृ॒थि॒व्याः। अ॒घऽशं॑साय। तर्ह॑णम्।
उत्। त॒क्ष॒तम्। स्व॒र्य॑म्। पर्व॑तेभ्यः। येन॑। रक्षः॑। व॒वृ॒धा॒नम्। नि॒ऽजूर्व॑थः॥ ४॥

हे इन्द्रासोमौ ᵛदिवः अन्तरिक्षात् द्युलोकाद्वा ᵛवधं हननसाधनमायुधं ᵛसं ᵛवर्तयतम् उत्पादयतम्। ᵛपृथिव्याः अस्मादपि लोकात् ᵛतर्हणं हिंसकमायुधम् ᵛअघशंसाय अघशंसमनर्थस्याशंसकं राक्षसं हन्तुमुत्पादयतम्। तथा ᵛपर्वतेभ्यः पर्ववद्भ्यो मेघेभ्यः सकाशात् ᵛस्वर्यम्। 'स्वृ शब्दोपतापयोः'। उपतापकमशनिम् ᵛउत्तक्षतम् उद्धृतं कुरुतम्। ᵛयेन अशनिना ᵛवावृधानं वर्धमानं प्रवृद्धं वा ᵛरक्षः राक्षसं ᵛनिजूर्वथः निहथः। 'जुर्वी हिंसायाम्'। तमशनिमुत्तक्षतमित्यर्थः॥

इन्द्रा॑सोमा व॒र्तय॑तं दि॒वस्पर्य॑ग्नित॒प्तेभि॑र्यु॒वमश्म॑हन्मभिः।
तपु॑र्वधेभिर॒जरे॑भिर॒त्रिणो॒ नि पर्शा॑ने विध्यतं॒ यन्तु॑ निस्व॒रम्॥ ५॥

इन्द्रा॑सोमा। व॒र्तय॑तम्। दि॒वः। परि॑। अ॒ग्नि॒ऽत॒प्तेभिः॑। यु॒वम्। अश्म॑हन्मऽभिः।
तपुः॑ऽवधेभिः। अ॒जरे॑भिः। अ॒त्रिणः॑। नि। पर्शा॑ने। वि॒ध्य॒तम्। यन्तु॑। नि॒ऽस्व॒रम्॥ ५॥

हे इन्द्रासोमौ ᵛदिवः अन्तरिक्षात् परितः सर्वतः ᵛवर्तयतम् आयुधानि प्रेरयतम्। ᵛयुवं तौ युवाम् ᵛअग्नितप्तेभिः अग्निना संतप्तैः ᵛतपुर्वधेभिः तापकप्रहारैः ᵛअजरेभिः जरारहितैर्दृढैः ᵛअश्महन्मभिः अश्मसारभूतस्यायसो विकारैर्हननसाधनैस्तैरायुधैः ᵛअत्रिणः राक्षसस्य ᵛपर्शाने पार्श्वस्थाने ᵛनि ᵛविध्यतं निहतम्। ते च राक्षसाः ᵛनिःस्वरं निःशब्दं ᵛयन्तु अपयन्तु निर्गच्छन्तु[1]॥ ॥५॥

इन्द्रा॑सोमा॒ परि॑ वां भूतु वि॒श्वत॑ इ॒यं म॒तिः क॒क्ष्याश्वे॑व वा॒जिना॑।
यां वां॒ होत्रां॑ परिहि॒नोमि॑ मे॒धये॒मा ब्रह्मा॑णि नृ॒पती॑व जिन्वतम्॥ ६॥

इन्द्रा॑सोमा। परि॑। वा॒म्। भू॒तु॒। वि॒श्वतः॑। इ॒यम्। म॒तिः। क॒क्ष्या॑। अश्वा॑ऽइव। वा॒जिना॑।
याम्। वा॒म्। होत्रा॑म्। प॒रि॒ऽहि॒नोमि॑। मे॒धया॑।
इ॒मा। ब्रह्मा॑णि। नृ॒पती॑ इ॒वेति॑ नृ॒पती॑ऽइव। जि॒न्व॒त॒म्॥ ६॥

हे इन्द्रासोमौ ᵛइयम् अस्माभिः क्रियमाणा ᵛमतिः मननीया स्तुतिः ᵛवाजिना वाजिनौ बलवन्तौ ᵛवां युवां ᵛविश्वतः सर्वतः ᵛपरि ᵛभूतु परिगृह्णातु व्याप्नोतु वा। तत्र दृष्टान्तः। ᵛकक्ष्या कक्षबन्धनी[2] रज्जुः ᵛअश्वेव यथाश्वं परिगृह्णाति तद्वत्। ᵛयां ᵛहोत्रां वाचं ᵛवां युवाभ्यां ᵛमेधया

1. झ-क्ष-त१-२-४-श-निर्गच्छंतु अपगच्छंतु। 2. झ-कक्षसंबंधनी।

vपरिहिनोमि प्रेरयामि । सेयं मतिरिति संबन्धः । अपि च vइमा इमान्यस्माभिः कृतानि vब्रह्माणि स्तोत्राणि --- यथा धनैः पूरयन्ति तथा vजिन्वतं फलैः पूरयतम्[1] ॥

प्रति स्मरेथां तुजयद्भिरेवैर्हतं द्रुहो रक्षसो भङ्गुरावतः ।
इन्द्रासोमा दुष्कृते मा सुगं भूद्यो नः कदा चिदभिदासति द्रुहा ॥ ७ ॥

प्रति । स्मरेथाम् । तुजयत्ऽभिः । एवैः । हतम् । द्रुहः । रक्षसः । भङ्गुरऽवतः ।
इन्द्रासोमा । दुःऽकृते । मा । सुऽगम् । भूत् ।
यः । नः । कदा । चित् । अभिऽदासति । द्रुहा ॥ ७ ॥

हे इन्द्रासोमौ vतुजयद्भिः त्वरमाणैः vएवैः गन्तृभिरश्वैः vप्रति vस्मरेथाम् अभिगच्छतम् । उपसर्गवशेन स्मरतिरत्रार्थान्तरे वर्तते । यथा प्रस्मरणं प्रस्थानमिति । अभिगत्य च vद्रुहः द्रोग्धॄन्[2] vभङ्गुरावतः भञ्जनकर्मवतः vरक्षसः राक्षसान् vहतं हिंस्तम् । हे इन्द्रासोमौ vदुष्कृते पापकारिणे राक्षसाय vसुगं सुखं vमा vभूत् मा भवतु । vद्रुहा द्रोहेण युक्तः vयः vनः अस्मान् vकदा vचित् अपि vअभिदासति अभिहन्ति तस्मै दुष्कृत इत्यन्वयः ॥

यो मा पाकेन मनसा चरन्तमभिचष्टे अनृतेभिर्वचोभिः ।
आपइव काशिना संगृभीता असन्नस्त्वासत इन्द्र वक्ता ॥ ८ ॥

यः । मा । पाकेन । मनसा । चरन्तम् । अभिऽचष्टे । अनृतेभिः । वचःऽभिः ।
आपःऽइव । काशिना । सम्ऽगृभीताः । असन् । अस्तु । असतः । इन्द्र । वक्ता ॥ ८ ॥

vपाकेन पक्वेन शुद्धेन vमनसा vचरन्तं वर्तमानं सत्यवादिनं vयः मां राक्षसः vअनृतेभिः अनृतैरसत्यैः vवचोभिः वचनैः vअभिचष्टे अभिशंसति मय्यसत्यवचनमारोपयति हे vइन्द्र vकाशिना मुष्टिना vसंगृभीताः सम्यग्गृहीताः vआपइव यथापो विशीर्णा भवन्ति तथा vअसतः असत्यस्य[3] vवक्ता[3] स राक्षसः vअसन्नस्तु अविद्यमानो भवतु । नश्यत्वित्यर्थः ॥

ये पाकशंसं विहरन्त एवैर्ये वा भद्रं दूषयन्ति स्वधाभिः ।
अहये वा तान्प्रददातु सोम आ वा दधातु निर्ऋतेरुपस्थे ॥ ९ ॥

ये । पाकऽशंसम् । विऽहरन्ते । एवैः । ये । वा । भद्रम् । दूषयन्ति । स्वधाभिः ।
अहये । वा । तान् । प्रऽददातु । सोमः । आ । वा । दधातु । निःऽऋतेः । उपऽस्थे ॥ ९ ॥

vये राक्षसाः vपाकशंसं परिपक्ववचनं सत्यभाषिणं माम् vएवैः एतव्यैः प्राप्तव्यैरात्मीयैः कामैर्हेतुभूतैः vविहरन्ते विशेषेण हरन्ति उपक्षपयन्ति । यथाकामं परिवदन्तीत्यर्थः[4] । vये vवा vस्वधाभिः बलैर्युक्ताः vभद्रं कल्याणवर्तनं[5] मां vदूषयन्ति दुष्टं कुर्वन्ति vतान् सर्वान् vसोमः vअहये vवा सर्पाय वा vप्रददातु । vनिर्ऋतेः पापदेवतायाः vउपस्थे उत्सङ्गे vवा vआ vदधातु प्रक्षिपतु ॥

---

१. घ–पूरयतं । दृष्टांतः नृपतीव राजानौ इव तौ यथा पूरयतः तद्वत् । २. ज–त३–द्वेष्टॄन् । ३. झ-ञ-त१-२-४-न–असत्यवक्ता । ४. त३–परिभवंतीत्यर्थः । ५. ख-न-म-श–कल्याणं वर्तमानं ।

**यो नो रसं दिप्सति पित्वो अग्ने यो अश्वानां यो गवां यस्तनूनाम् ।**
**रिपुः स्तेनः स्तेयकृद्दभ्रमेतु नि ष हीयतां तन्वा३ तना च ॥ १० ॥**

यः । नः । रसम् । दिप्सति । पित्वः । अग्ने । यः । अश्वानाम् । यः । गवाम् । यः । तनूनाम् ।
रिपुः । स्तेनः । स्तेयऽकृत् । दभ्रम् । एतु । नि । सः । हीयताम् । तन्वा । तना । च ॥१०॥

हे अग्ने यः राक्षसः नः अस्माकं पित्वः अन्नस्य रसं सारं दिप्सति जिघांसति । यः च अश्वानाम् अस्मदीयानां रसं दिप्सति । यः च गवां रसं दिप्सति । यः च तनूनाम् अस्मदीयानां शरीराणां रसं दिप्सति । रिपुः बाधकः स्तेनः चौरः स्तेयकृत् धनस्यापहर्ता सः सर्वो जनः दभ्रं हिंसाम् एतु प्राप्नोतु । अपि च सः बाधकः तन्वा स्वकीयेन शरीरेण तना च तनयेन च नि हीयतां निहीनो भवतु ॥ ॥ ६ ॥

**पुरः सो अस्तु तन्वा३ तना च तिस्रः पृथिवीरधो अस्तु विश्वाः ।**
**प्रति शुष्यतु यशो अस्य देवा यो नो दिवा दिप्सति यश्च नक्तम् ॥ ११ ॥**

परः । सः । अस्तु । तन्वा । तना । च । तिस्रः । पृथिवीः । अधः । अस्तु । विश्वाः ।
प्रति । शुष्यतु । यशः । अस्य । देवाः । यः । नः । दिवा । दिप्सति । यः । च । नक्तम् ॥११॥

सः राक्षसः तन्वा तना च । व्यत्ययेन तृतीया । तन्वाः शरीरस्य तनयस्य च परः परस्तात् अस्तु वर्तमानो भवतु । उभाभ्यां वियुक्तो भवत्वित्यर्थः । विश्वाः व्याप्ताः तिस्रः पृथिवीः त्रींल्लोकान् अधो[1] अस्तु अधस्ताद्भवतु । लोकत्रयादपि प्रच्युतो भवत्वित्यर्थः । हे देवाः अस्य शत्रोः यशः अन्नं कीर्तिर्वा प्रति शुष्यतु । यः राक्षसः नः अस्मान् दिवा अहनि दिप्सति जिघांसति यश्च नक्तं रात्रौ जिघांसति अस्योभयविधस्य यशः प्रति शुष्यत्विति संबन्धः ॥

**सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते ।**
**तयोर्यत्सत्यं यतरदृजीयस्तादित्सोमोऽवति हन्त्यासत् ॥ १२ ॥**

सुऽविज्ञानम् । चिकितुषे । जनाय । सत् । च । असत् । च । वचसी इति । पस्पृधाते इति ।
तयोः । यत् । सत्यम् । यतरत् । ऋजीयः । तत् । इत् । सोमः । अवति । हन्ति । असत् ॥१२॥

प्रायेणेदमादिभिर्ऋग्भी राक्षसेन सहर्षिणा शपथः क्रियते । अत्र केचिदाहुः—'हत्वा पुत्रशतं पूर्वं वसिष्ठस्य महात्मनः । वसिष्ठं राक्षसोऽसि त्वं वासिष्ठं रूपमास्थितः ॥ अहं वसिष्ठ इत्येवं जिघांसू राक्षसोऽब्रवीत् । अत्रोत्तरा ऋचो दृष्टा वसिष्ठेनेति नः श्रुतम्' ॥ इति । चिकितुषे विदुषे जनाय इदं सुविज्ञानं विज्ञातुं सुशकं भवति । किं तत् । सच्च सत्यं च असच्च असत्यं च । वचसी सत्यासत्यरूपे वचने पस्पृधाते मिथः स्पर्धेते । तयोः सदसतोर्मध्ये यत्सत्यं यथार्थं वचनं यतरत् यच्च ऋजीयः ऋजुतममकुटिलं तदित् तदेवाकुटिलं सत्यभाषणं सोमः अवति रक्षति । असत् उक्तविलक्षणमसत्यं हन्ति हिनस्ति । एवं सत्यावयोर्मध्ये कतरोऽनृतभाषीति विद्वद्भिः सुविज्ञानमित्यर्थः ॥

**न वा उ सोमो वृजिनं हिनोति न क्षत्रियं मिथुया धारयन्तम् ।**
**हन्ति रक्षो हन्त्यासद्वदन्तमुभाविन्द्रस्य प्रसितौ शयाते ॥ १३ ॥**

---

१. ख-क्ष-त-न-भ-श—अधोधो ।

न । वै । ॐ इति॑ । सोमः॑ । वृ॒जि॒नम् । हि॒नो॒ति॒ । न । क्ष॒त्रिय॑म् । मि॒थु॒या । धा॒रय॑न्तम् ।
हन्ति॑ । रक्षः॑ । हन्ति॑ । अस॑त् । वद॑न्तम् । उ॒भौ । इन्द्र॑स्य । प्रऽसि॑तौ । श॒या॒ते॒ इति॑ ॥१३॥

ᵛवृजिनं पापकारिणं राक्षसं ᵛसोमः देवः ᵛन ᵛवा ᵛउ न खलु ᵛहिनोति प्रेरयति । गच्छ त्वमिति न मुञ्चति । तथा ᵛक्षत्रियम् । क्षत्रं बलम् । तद्वन्तं ᵛमिथुया मिथ्याभूतं वचनं ᵛधारयन्तं बिभ्रतमसत्यवादिनं पुरुषं ᵛन च हिनोति न विसृजति । अपि तु ᵛरक्षः राक्षसं ᵛहन्ति । ᵛअसत् असत्यं ᵛवदन्तं च ᵛहन्ति हिनस्ति । ᵛउभौ राक्षसानृतवादिनौ तौ सोमेन हतौ ᵛइन्द्रस्य संबन्धिनि ᵛप्रसितौ बन्धने ᵛशयाते निवसतः । यद्वा । इन्द्रस्येति तृतीयार्थे षष्ठी । इन्द्रेणेश्वरेण सोमेन प्रसितौ बद्धौ । 'षिञ् बन्धने' । अस्मात् कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥

यदि॑ वा॒हमनृ॑तदेव॒ आस॒ मोघं॑ वा दे॒वाँ अ॑प्यू॒हे अ॑ग्ने ।
किम॒स्मभ्यं॑ जातवेदो हृणीषे द्रोघ॒वाच॑स्ते निर्ऋ॒थं स॑चन्ताम् ॥ १४ ॥

यदि॑ । वा॒ । अ॒हम् । अनृ॑तऽदेवः । आस॑ । मोघ॑म् । वा॒ । दे॒वान् । अ॒पि॒ऽऊ॒हे । अ॒ग्ने॒ ।
किम् । अ॒स्मभ्य॑म् । जा॒त॒ऽवे॒दः॒ । हृ॒णी॒षे॒ । द्रो॒घ॒ऽवाचः॑ । ते॒ । निः॒ऽऋ॒थम् । स॒च॒न्ता॒म् ॥१४॥

ᵛयदि ᵛवा ᵛअहमनृतदेवः अनृता असत्यभूता देवा यस्य तादृशो यद्यहम् ᵛआस अस्मि । अथवा ᵛमोघं ᵛवा निष्फलं वा ᵛदेवान् ᵛअप्यूहे उपगच्छामि । अहं यद्युक्तरूपोऽस्मि हे ᵛअग्ने तर्हि मां बाधस्व । न ह्यहं तथाविधोऽस्मि । एवं सति हे ᵛजातवेदः जातानां वेदितरग्ने ᵛअस्मभ्यं किं कारणं ᵛहृणीषे क्रुध्यसि । तव क्रोधोऽस्मासु न जायतामित्यर्थः[1] । ᵛद्रोघवाचः अनृतवाचो राक्षसाः ᵛते तव ᵛनिर्ऋथम् । निष्पूर्वोऽर्तिर्हिंसायां वर्तते । निर्ऋथं निःशेषेणार्तिं हिंसां ᵛसचन्तां सेवन्ताम् ॥

अ॒द्या मु॑रीय॒ यदि॑ यातु॒धानो॒ अस्मि॒ यदि॒ वायु॑स्त॒तप॒ पूरु॑षस्य ।
अधा॒ स वी॒रैर्द॒शभि॒र्वि यू॑या॒ यो मा॒ मोघं॒ यातु॑धा॒नेत्याह॑ ॥ १५ ॥

अ॒द्य । मु॒री॒य॒ । यदि॑ । या॒तु॒ऽधानः॑ । अस्मि॑ । यदि॑ । वा॒ । आयुः॑ । त॒तप॑ । पुरु॑षस्य ।
अध॑ । सः । वी॒रैः॑ । द॒शऽभिः॑ । वि । यू॒याः॒ । यः । मा॒ । मोघ॑म् । यातु॑ऽधान । इति॑ । आह॑ ॥१५॥

इयमपि शपथरूपैव । ᵛयदि अहं वसिष्ठः ᵛयातुधानः राक्षसः ᵛअस्मि ᵛअद्य अस्मिन्नेव दिने ᵛमुरीय म्रियेय । अपि ᵛवा ᵛपुरुषस्य मनुष्यस्य ᵛआयुः जीवितं ᵛयदि अहं राक्षसो भूत्वा ᵛततप हिंसितवानस्मि तर्ह्यप्यहमद्य म्रियेयेत्यन्वयः । ᵛअध अथैवं स्यात् अहं वसिष्ठस्त्वं राक्षस इति तर्हि ᵛसः त्वं ᵛदशभिः ᵛवीरैः पुत्रैः । उपलक्षणमेतत् । सर्वैर्बन्धुजनैः ᵛवि ᵛयूयाः वियुक्तो भवेः । ᵛयः राक्षसः ᵛमा मां ᵛमोघं मृषैव हे ᵛयातुधान हे राक्षस ᵛइति संबोध्य ᵛआह ॥ ॥ ७ ॥

यो मायां॑तुं यातु॑धा॒नेत्याह॒ यो वा॑ र॒क्षाः शुचि॑र॒स्मीत्याह॑ ।
इन्द्र॒स्तं ह॑न्तु मह॒ता व॒धेन॒ विश्व॑स्य ज॒न्तोर॑ध॒मस्प॑दीष्ट ॥ १६ ॥

यः । मा॒ । अया॑तुम् । यातु॑ऽधान । इति॑ । आह॑ । यः । वा॒ । र॒क्षाः । शुचिः॑ । अ॒स्मि॒ । इति॑ । आह॑ ।
इन्द्रः॑ । तम् । ह॒न्तु॒ । म॒ह॒ता । व॒धेन॑ । विश्व॑स्य । ज॒न्तोः । अ॒ध॒मः । प॒दी॒ष्ट ॥ १६ ॥

---

1. घ-ङ-त-न-श—जायत्वि°।

ᵛयः राक्षसो माम्[1] ᵛअयातुम् अराक्षसं सन्तं हे ᵛयातुधान हे राक्षस ᵛइति संबोध्य ᵛआह ब्रूते ᵛयो ᵛवा यश्च ᵛरक्षाः राक्षसः ᵛशुचिरस्मि शुद्धो भवामि न राक्षसोऽस्मि ᵛइत्याह ब्रूते ᵛतम् उभयविधं राक्षसम् ᵛइन्द्रः ᵛमहता प्रौढेन ᵛवधेन आयुधेन वज्रेण ᵛहन्तु हिनस्तु। स च ᵛविश्वस्य सर्वस्य ᵛजन्तोः जनस्य ᵛअधमः निकृष्टः सन् ᵛपदीष्ट पततु ॥

प्र या जिगाति खर्गलेव नक्तमप द्रुहा तन्वं१ गूहमाना।
वव्राँ अनन्ताँ अव सा पदीष्ट ग्रावाणो घ्नन्तु रक्षस उपब्दैः ॥ १७ ॥

प्र। या। जिगाति। खर्गलाऽइव। नक्तम्। अप। द्रुहा। तन्वम्। गूहमाना।
वव्रान्। अनन्तान्। अव। सा। पदीष्ट। ग्रावाणः। घ्नन्तु। रक्षसः। उपब्दैः ॥ १७ ॥

ᵛया राक्षसी ᵛनक्तं रात्रौ ᵛद्रुहा द्रोहेण युक्ता ᵛखर्गलेव उलूकीव ᵛप्र ᵛजिगाति प्रगच्छति। किं कुर्वती। ᵛतन्वं स्वकीयं शरीरम् ᵛअप ᵛगूहमाना अपवृण्वती प्रकाशयन्ती। ᵛसा राक्षसी ᵛअनन्तान् अपर्यन्तान् ᵛवव्रान् गर्तान् ᵛअव ᵛपदीष्ट अवाङ्मुखी पततु। ᵛग्रावाणः सोमाभिषवार्थाः पाषाणाश्च ᵛउपब्दैः अभिषवशब्दैः ᵛरक्षसः राक्षसान् ᵛघ्नन्तु हिंसन्तु ॥

वि तिष्ठध्वं मरुतो विक्ष्वि१च्छत गृभायत रक्षसः सं पिनष्टन।
वयो ये भूत्वी पतयन्ति नक्तभिर्ये वा रिपो दधिरे देवे अध्वरे ॥ १८ ॥

वि। तिष्ठध्वम्। मरुतः। विक्षु। इच्छत। गृभायत। रक्षसः। सम्। पिनष्टन।
वयः। ये। भूत्वी। पतयन्ति। नक्तऽभिः। ये। वा। रिपः। दधिरे। देवे। अध्वरे ॥ १८॥

हे ᵛमरुतः यूयं ᵛविक्षु प्रजासु ᵛवि ᵛतिष्ठध्वं विविधं तिष्ठत। तत्र गूढान् राक्षसान् हन्तुम् ᵛइच्छत अन्विच्छत। तदनन्तरं ᵛरक्षसः तान् राक्षसान् ᵛगृभायत गृभ्णीत गृह्णीत। गृहीत्वा च ᵛसं ᵛपिनष्टन चूर्णयत। ᵛये राक्षसाः ᵛवयः पक्षिणः ᵛभूत्वी भूत्वा ᵛनक्तभिः रात्रिभी रात्रिषु ᵛपतयन्ति आगच्छन्ति। ᵛये ᵛवा ये च ᵛदेवे दीप्ते ᵛअध्वरे यागे ᵛरिपः हिंसाः ᵛदधिरे विदधिरे। तान् राक्षसान् सं पिनष्टनेत्यन्वयः ॥

प्र वर्तय दिवो अश्मानमिन्द्र सोमशितं मघवन्त्सं शिशाधि।
प्राक्तादपाक्तादधरादुदक्तादभि जहि रक्षसः पर्वतेन ॥ १९ ॥

प्र। वर्तय। दिवः। अश्मानम्। इन्द्र। सोमऽशितम्। मघऽवन्। सम्। शिशाधि।
प्राक्तात्। अपाक्तात्। अधरात्। उदक्तात्। अभि। जहि। रक्षसः। पर्वतेन ॥ १९ ॥

हे ᵛइन्द्र ᵛदिवः अन्तरिक्षात् ᵛअश्मानम् अशनिं[2] ᵛप्र ᵛवर्तय प्रेरय राक्षसान् हन्तुम्। तथा ᵛसोमशितं सोमेन तीक्ष्णीभूतं यजमानं हे ᵛमघवन् धनवन्निन्द्र ᵛसं ᵛशिशाधि संस्कुरु। अपि च ᵛप्राक्तात् प्राच्याः ᵛअपाक्तात् प्रतीच्याः ᵛअधरात् अवाच्याः ᵛउदक्तात् उत्तरतः सर्वस्मादपि दिग्भागात् ᵛरक्षसः राक्षसान् ᵛपर्वतेन पर्ववता वज्रेण ᵛअभि ᵛजहि मारय ॥

---

१. ख-घ-भ—मा मां। २. झ-त१-२-४—अशनं; न—ग्रावाणं।

एत उ त्ये पतयन्ति श्वयातव इन्द्रं दिप्सन्ति दिप्सवोऽदाभ्यम् ।
शिशीते शक्रः पिशुनेभ्यो वधं नूनं सृजदशनिं यातुमद्भ्यः ॥ २० ॥

एते । ऊँ इति । त्ये । पतयन्ति । श्वऽयातवः । इन्द्रम् । दिप्सन्ति । दिप्सवः । अदाभ्यम् ।
शिशीते । शक्रः । पिशुनेभ्यः । वधम् । नूनम् । सृजत् । अशनिम् । यातुमत्ऽभ्यः ॥ २० ॥

ᵛत्ये ते ᵛएते राक्षसाः ᵛश्वयातवः श्वभिः परिकरभूतैर्हिंसन्तः श्वभिः सह यान्तो वा ᵛपतयन्ति पतन्ति । ये ᵛदिप्सवः जिघांसवः सन्तः ᵛअदाभ्यम् अहिंस्यम् ᵛइन्द्रं ᵛदिप्सन्ति जिघांसन्ति तेभ्यः ᵛपिशुनेभ्यः पिशुनान् कपटान् हन्तुं ᵛशक्रः शक्त इन्द्रः ᵛवधम् आयुधमशनिरूपं ᵛशिशीते तीक्ष्णीकरोति । ᵛयातुमद्भ्यः[1] राक्षसेभ्यः ᵛनूनं क्षिप्रम् ᵛअशनिं ᵛसृजत् विसृजतु हननार्थम् ॥　॥ ८ ॥

इन्द्रो यातूनामभवत्पराशरो हविर्मथीनामभ्या३विवासताम् ।
अभीदु शक्रः परशुर्यथा वनं पात्रेव भिन्दन्त्सत एति रक्षसः ॥ २१ ॥

इन्द्रः । यातुनाम् । अभवत् । पराऽशरः । हविःऽमथीनाम् । अभि । आऽविवासताम् ।
अभि । इत् । ऊँ इति । शक्रः । परशुः । यथा । वनम् ।
पात्राऽइव । भिन्दन् । सतः । एति । रक्षसः ॥ २१ ॥

ᵛयातूनां हिंसकानां रक्षसामयम् ᵛइन्द्रः ᵛपराशरः पराशातयिता हिंसिता ᵛअभवत् । कीदृशानाम्[2] । ᵛहविर्मथीनां हवींषि मथ्नतामभिमुखम्[3] ᵛआविवासताम् आगच्छताम् । अपि चायं ᵛशक्रः इन्द्रः ᵛवनं वृक्षजातं ᵛपरशुर्यथा छिन्दन् कुठार इव ᵛपात्रेव मृन्मयानि पात्राणि ᵛभिन्दन् मुद्गर इव च ᵛसतः । प्रासनामैतत् । यदाह यास्कः—' तिरः सत इति प्राप्तस्य ' ( निरु. ३. २० ) इति । प्रासान् ᵛरक्षसः राक्षसान् भिन्दन् हिंसन् ᵛअभि ᵛएति अभिगच्छति । इदु पूरणौ ॥

उलूकयातुं शुशुलूकयातुं जहि श्वयातुमुत कोकयातुम् ।
सुपर्णयातुमुत गृध्रयातुं दृषदेव प्र मृण रक्ष इन्द्र ॥ २२ ॥

उलूकऽयातुम् । शुशुलूकऽयातुम् । जहि । श्वऽयातुम् । उत । कोकऽयातुम् ।
सुपर्णऽयातुम् । उत । गृध्रऽयातुम् । दृषदाऽइव । प्र । मृण । रक्षः । इन्द्र ॥ २२ ॥

ᵛउलूकयातुम् । उलूकैः परिकरभूतैः सह यातयति हिनस्तीति याति गच्छतीति वोलूकयातुः । यद्वा उलूकरूपी यातीत्युलूकयातुः । हे इन्द्र तादृशं राक्षसं ᵛजहि विनाशय । तथा च बृहद्देवतायामुक्तम्—' उलूकयातुं जह्येतान्नानारूपान्निशाचरान् ॥ स्त्रीपुंरूपांश्च तिर्यञ्चो जिघांसूनिन्द्र मे जहि ' ( बृहद्दे. ६. ३२ ) इति । एवमुत्तरत्रापि योज्यम् । ᵛशुशुलूकयातुम् । उलूका द्विविधा बृहदुलूका अल्पोलूकाश्चेति । तत्रोलूकयातुमिति बृहदुलूकाभिप्रायेणोक्तम् । शिशुरल्प उलूकः शुशुलूकः । तद्रूपेण वर्तमानं राक्षसं ᵛश्वयातुं श्वरूपेण वर्तमानं राक्षसम् ᵛउत अपि च ᵛकोकयातुम् । कोकश्चक्रवाकः । तद्रूपेण वर्तमानं राक्षसं ᵛसुपर्णयातुम् । सुपर्णः श्येनः । तदाकारं यातुधानम् ᵛउत अपि च ᵛगृध्रयातुं गृध्ररूपं च यातुधानम् । एतान् सर्वान्नानाकारान् हे ᵛइन्द्र जहि । किं बहुना ᵛदृषदेव पाषाणेनेव वज्रेण ᵛरक्षः राक्षसमात्रं ᵛप्र ᵛमृण मारय ॥

---

१. म्न-श—यातुमद्भ्यो हिंसावद्भ्यः ।　२. ख-घ-म्न-त-भ-श—कीदृशीनां ।　३. श—मथ्नतामभ्याविवासतामभि° ।

मा नो रक्षो अभि नंड्यातुमावतामपोच्छतु मिथुना या किमीदिना ।
पृथिवी नः पार्थिवात्पात्वंहसोऽन्तरिक्षं दिव्यात्पात्वस्मान् ॥ २३ ॥

मा । नः । रक्षः । अभि । नट् । यातुऽमावताम् । अप । उच्छतु । मिथुना । या । किमीदिना ।
पृथिवी । नः । पार्थिवात् । पातु । अंहसः । अन्तरिक्षम् । दिव्यात् । पातु । अस्मान् ॥२३॥

ᵛरक्षः राक्षसजातिः ᵛनः अस्मान् ᵛमा ᵛअभि ᵛनट् माभिव्याप्नोतु । नशतेर्व्याप्तिकर्मणो लुङि 'मन्त्रे घस' इति च्लेर्लुक् । 'न माङ्योगे' इत्यडभावः । तथा ᵛयातुमावतां यातनावतां राक्षसानां ᵛमिथुना मिथुनानि स्त्रीपुंसरूपाणि युगलानि ᵛअपोच्छतु । उषा अपि विवासयतु अपवर्जयतु । ᵛया यानि मिथुनानि ᵛकिमीदिना किमीदिनानि किमिदं किमिदमिति जिघांसया वर्तमानानि भवन्ति । अपि च ᵛपृथिवी प्रथितेयं भूमिश्च ᵛनः अस्मान् ᵛपार्थिवात् पृथिव्या अन्तरिक्षस्य संबन्धिनः ᵛअंहसः पापात् ᵛपातु रक्षतु । ᵛअन्तरिक्षं च ᵛदिव्यात् दिविभवात् पापात् ᵛअस्मान् ᵛपातु रक्षतु ॥

इन्द्र जहि पुमांसं यातुधानमुत स्त्रियं मायया शाशदानाम् ।
विग्रीवासो मूरदेवा ऋदन्तु मा ते दृशन्त्सूर्यमुच्चरन्तम् ॥ २४ ॥

इन्द्र । जहि । पुमांसम् । यातुऽधानम् । उत । स्त्रियम् । मायया । शाशदानाम् ।
विऽग्रीवासः । मूरऽदेवाः । ऋदन्तु । मा । ते । दृशन् । सूर्यम् । उत्ऽचरन्तम् ॥ २४ ॥

हे ᵛइन्द्र ᵛपुमांसं पुंरूपधारिणं ᵛयातुधानं राक्षसं ᵛजहि मारय । ᵛउत अपि च ᵛमायया वञ्चनया ᵛशाशदानां हिंसन्तीं ᵛस्त्रियं राक्षसीं च जहि । अपि च ᵛमूरदेवाः मारणक्रीडा राक्षसाः ᵛविग्रीवासः विच्छिन्नग्रीवाः सन्तः ᵛऋदन्तु नश्यन्तु । ᵛते तथाविधा राक्षसाः ᵛउच्चरन्तम् उद्यन्तं ᵛसूर्यम् आदित्यं ᵛमा ᵛदृशन् मा द्राक्षुः ॥

उपाकरणोत्सर्जनयोर्मण्डलाद्यन्तहोमे 'प्रति चक्ष्व' इत्येषा । सूत्रितं च—'यो नः स्वो अरणः प्रति चक्ष्व' ( आश्व. गृ. ३. ५. ७ ) इति ॥

प्रति चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम् ।
रक्षोभ्यो वधमस्यतमशनिं यातुमद्भ्यः ॥ २५ ॥

प्रति । चक्ष्व । वि । चक्ष्व । इन्द्रः । च । सोम । जागृतम् ।
रक्षःऽभ्यः । वधम् । अस्यतम् । अशनिम् । यातुमत्ऽभ्यः ॥ २५ ॥

हे ᵛसोम त्वम् ᵛइन्द्रश्च ᵛप्रति ᵛचक्ष्व प्रत्येकं पश्य राक्षसान् । तथा ᵛवि ᵛचक्ष्व विविधं पश्य । यथास्मान्न बाधेरन् तथा पश्येत्यर्थः । युवां च संहतौ ᵛजागृतम् । जागरूकौ रक्षोवधोद्युक्तौ भवतम् । ᵛयातुमद्भ्यः हिंसावद्भ्यः ᵛरक्षोभ्यः राक्षसेभ्यः ᵛअशनिम् अशनिरूपं ᵛवधम् आयुधम् ᵛअस्यतं क्षिपतम् ॥ ॥ ९ ॥

॥ इति सप्तमे मण्डले षष्ठोऽनुवाकः । सप्तमं मण्डलं समाप्तम् ॥

---

ॐ

# ॥ अथाष्टमं मण्डलम् ॥

अष्टमे मण्डले दशानुवाकाः । तत्र प्रथमेऽनुवाके पञ्च सूक्तानि । तेषु ‘मा चिदन्यत्’ इति चतुस्त्रिंशदृचं प्रथमं सूक्तम् । अत्रानुक्रम्यते—‘मा चित्चतुस्त्रिंशन्मेधातिथिमेध्यातिथी ऐन्द्रं बार्हतं द्विप्रगाथादि द्वित्रिष्टुबन्तमाद्यं द्व्यृचं प्रगाथोऽपश्यत्स घोरः सन्भ्रातुः कण्वस्य पुत्रतामगात् प्लायोगिश्चासङ्गो यः स्त्री भूत्वा पुमानभूत्स मेध्यातिथये दानं दत्त्वा स्तुहि स्तुहीति चतसृभिरात्मानं तुष्टाव पत्नी चास्याङ्गिरसी शश्वती पुंस्त्वमुपलभ्यैनं प्रीतान्त्यया तुष्टाव’ इति । अस्यायमर्थः । अस्य सूक्तस्य मेधातिथिमेध्यातिथिनामानौ द्वावृषी तौ च कण्वगोत्रौ । ऋषिश्चानुक्तगोत्रः ‘प्रागुत्तमस्यात् काण्वः’ इति परिभाषितत्वात् । आद्यस्य द्व्यृचस्य तु घोरस्य पुत्रः स्वकीयभ्रातुः कण्वस्य पुत्रतां प्राप्तत्वात् काण्वः प्रगाथाख्य ऋषिः । प्लयोगनाम्नो राज्ञः पुत्र आसङ्गाभिधानो राजा देवशापात् स्त्रीत्वमनुभूय पश्चात्तपोबलेन मेधातिथेः प्रसादात् पुमान् भूत्वा तस्मै बहु धनं दत्त्वा स्वकीयमन्तरात्मानं दत्तदानं स्तुहि स्तुहीत्यादिभिश्चतसृभिर्ऋग्भिरस्तौत् । अतस्तासामासङ्गाख्यो राजा ऋषिः । अस्यासङ्गस्य भार्याङ्गिरसः सुता शश्वत्याख्या भर्तुः पुंस्त्वमुपलभ्य प्रीता सती स्वभर्तारम् ‘अन्वस्य स्थूरम्’ इत्यनया स्तुतवती । अतस्तस्या ऋचः शश्वत्यृषिका । अन्त्ये द्वे त्रिष्टुभौ द्वितीयाचतुर्थ्यौ सतोबृहत्यौ शिष्टा बृहत्यः । कृत्स्नस्य सूक्तस्येन्द्रो देवता । ‘स्तुहि स्तुहि’ इत्याद्याश्चतस्र आत्मकृतस्य दानस्य स्तूयमानत्वात्तद्देवताकाः । ‘अन्वस्य’ इत्यस्या आसङ्गाख्यो राजा देवता । ‘या तेनोच्यते सा देवता’ इति न्यायात् । महाव्रते निष्केवल्ये बार्हततृचाशीतावादित एकोनत्रिंशद्विनियुक्ताः । तथैव पञ्चमारण्यके सूत्रितं— ‘मा चिदन्यद्वि शंसतेत्येकया न त्रिंशत्’ ( ऐ. आ. ५. २. ४ ) इति । चातुर्विंशिकेऽहनि माध्यंदिनसवने मैत्रावरुणस्य ‘मा चिदन्यत्’ इति वैकल्पिकः स्तोत्रियः प्रगाथः । सूत्रितं च—‘मा चिदन्यद्वि शंसत यच्चिद्धि त्वा जना इम इति स्तोत्रियानुरूपौ’ ( आश्व. श्रौ. ७.४ ) इति । ग्रावस्तोत्रेऽप्याद्या विनियुक्ता । सूत्रितं च—‘आ तू न इन्द्र क्षुमन्तं मा चिदन्यद्वि शंसत’ ( आश्व. श्रौ. ५. १२ ) इति । उपाकरणोत्सर्जनयोः[1] मण्डलादिहोमेऽप्येषा । सूत्र्यते हि—‘मा चिदन्यदग्ने याहि स्वादिष्ठया’ इति ॥

मा चि॒द॒न्यद्वि शं॑सत॒ सखा॑यो॒ मा रि॑षण्यत ।
इन्द्र॒मित्स्तो॑ता॒ वृष॑णं॒ सचा॑ सु॒ते मुहु॑रु॒क्था च॑ शंसत ॥ १ ॥

मा । चि॒त् । अ॒न्यत् । वि । शं॒स॒त॒ । सखा॑यः । मा । रि॒ष॒ण्य॒त॒ ।
इन्द्र॑म् । इत् । स्तो॒त॒ । वृष॑णम् । सचा॑ । सु॒ते । मुहुः॑ । उ॒क्था । च॒ । शं॒स॒त॒ ॥ १ ॥

हे ᵛसखायः समानख्यानाः स्तोतारः इन्द्रस्तोत्रात् ᵛअन्यत् स्तोत्रं ᵛमा ᵛचित् ᵛवि ᵛशंसत मैवोच्चारयत । ᵛमा ᵛरिषण्यत मा हिंसितारो भवत । अन्यदीयस्तोत्रोच्चारणेन वृथोपक्षीणा मा भवत । ᵛसुते अभिषुते सोमे ᵛवृषणं कामानां वर्षितारम् ᵛइन्द्रमित् इन्द्रमेव हे प्रस्तोत्रादयः ᵛसचा सह संघीभूय ᵛस्तोत स्तुत । हे प्रशास्त्रादयः ᵛउक्था ᵛच उक्थानि शस्त्राणि चेन्द्रविषयाणि यूयं ᵛमुहुः पुनःपुनः ᵛशंसत ॥

अ॒व॒क्र॒क्षिणं॑ वृष॒भं य॑था॒जुरं॒ गां न च॑र्षणी॒सह॑म् ।
वि॒द्वेष॑णं सं॒वन॑नोभयंक॒रं मंहि॑ष्ठमुभया॒विन॑म् ॥ २ ॥

---

१. ख-क्ष-त-श—उपाकर्मोत्सर्जनयोः ।

अवऽक्रक्षिणम् । वृषभम् । यथा । अजुरम् । गाम् । न । चर्षणिऽसहम् ।
विऽद्वेषणम् । सम्ऽवनना । उभयम्ऽकरम् । मंहिष्ठम् । उभयाविनम् ॥ २ ॥

वृषभं यथा वृषभमिव अवक्रक्षिणम् अवकर्षणशीलं शत्रूणां हिंसितारम् अजुरं जरारहितमहिंसितं वा गां न गामिव वृषमिव[1] चर्षणीसहं चर्षणीनां मनुष्याणां शत्रुभूतानामभिभवितारं विद्वेषणं विद्वेष्टारं शत्रूणां संवनना संवननं सम्यक्संभजनीयं स्तोतृभिः उभयंकरं निग्रहानुग्रहयोरुभयोः कर्तारं मंहिष्ठं दातृतमम् उभयाविनं दिव्यपार्थिवलक्षणेनोभयविधधनेनोपेतम् । यद्वा । स्थावरजङ्गमरूपेण द्विप्रकारेण रक्षितव्येनोपेतम् । अथवोभयविधैः स्तोतृभिर्यष्टृभिश्चोपेतम् । एवंविधमिन्द्रमित् स्तोतेत्यन्वयः ॥

चातुर्विंशिकेऽहनि माध्यंदिनसवने 'यच्चिद्धि त्वा' इति प्रशास्तुर्वैकल्पिकोऽनुरूपः प्रगाथः । सूत्रं तूदाहृतम् ॥

यच्चिद्धि त्वा जना इमे नाना हवन्त ऊतये ।
अस्माकं ब्रह्मेदमिन्द्र भूतु तेऽहा विश्वा च वर्धनम् ॥ ३ ॥

यत् । चित् । हि । त्वा । जनाः । इमे । नाना । हवन्ते । ऊतये ।
अस्माकम् । ब्रह्म । इदम् । इन्द्र । भूतु । ते । अहा । विश्वा । च । वर्धनम् ॥ ३ ॥

इमे दृश्यमानाः सर्वे जनाः हे इन्द्र त्वाम् ऊतये रक्षणाय तर्पणाय वा नाना पृथक्पृथक् यच्चित् यद्यपि हवन्ते स्तुवन्ति । हि इति पूरणः । तथापि अस्माकम् इदं ब्रह्म स्तोत्रमेव हे इन्द्र ते तव वर्धनं वर्धकं भूतु भवतु । न केवलमिदानीमेव अपि तु विश्वा अहा सर्वाण्यहानि सर्वेष्वहःसु च इदमेव स्तोत्रं त्वां वर्धयत्वित्यर्थः ॥

वि तर्तूर्यन्ते मघवन्विपश्चितोऽर्यो विपो जनानाम् ।
उप क्रमस्व पुरुरूपमा भर वाजं नेदिष्ठमूतये ॥ ४ ॥

वि । तर्तूर्यन्ते । मघऽवन् । विपःऽचितः । अर्यः । विपः । जनानाम् ।
उप । क्रमस्व । पुरुऽरूपम् । आ । भर । वाजम् । नेदिष्ठम् । ऊतये ॥ ४ ॥

हे मघवन् धनवन्निन्द्र विपश्चितः विद्वांसस्त्वदीयाः स्तोतारः अर्यः अभिगन्तारः जनानां शत्रूणां विपः वेपयितारः सन्तः वि तर्तूर्यन्ते भृशमापदो वितरन्ति अतिक्रामन्ति । तादृशस्त्वम् उप क्रमस्व उपगच्छास्मान् । पुरुरूपं बहुरूपम् नेदिष्ठम् अन्तिकतमं वाजम् अन्नम् ऊतये तर्पणाय आ भर अस्मभ्यम् ॥

महे चन त्वामद्रिवः परा शुल्काय देयाम् ।
न सहस्राय नायुताय वज्रिवो न शताय शतामघ ॥ ५ ॥

महे । चन । त्वाम् । अद्रिऽवः । परा । शुल्काय । देयाम् ।
न । सहस्राय । न । अयुताय । वज्रिऽवः । न । शताय । शतऽमघ ॥ ५ ॥

---

१. त४—वृषभमिव ।

हे अद्रिवः वज्रवन्निन्द्र त्वाम् । चन इति निपातद्वयसमुदायो विभज्य योजनीयः । महे च महतेऽपि शुल्काय मूल्याय न परा देयां न विक्रीणानि । हे वज्रिवः वज्रहस्तेन्द्र सहस्राय सहस्रसंख्याय च धनाय न परा देयाम् । अयुताय दशसहस्राय च शुल्काय न परा देयाम् । हे शतामघ बहुधनेन्द्र शताय । बहुनामैतत् । अपरिमिताय च धनाय न परा देयां न विक्रीणानि । उक्तसंख्याद्धनादपि त्वं मम प्रियतमोऽसीत्यर्थः ॥　　॥ १० ॥

वस्याँ इन्द्रासि मे पितुरुत भ्रातुरभुञ्जतः ।
माता च मे छदयथः समा वसो वसुत्वनाय राधसे ॥ ६ ॥

वस्यान् । इन्द्र । असि । मे । पितुः । उत । भ्रातुः । अभुञ्जतः ।
माता । च । मे । छदयथः । समा । वसो इति । वसुऽत्वनाय । राधसे ॥ ६ ॥

हे इन्द्र त्वं मे मदीयात् पितुः जनकादपि वस्यान् वसीयान् वसुमत्तरः असि । उत अपि च अभुञ्जतः अपालयतो मम भ्रातुः अपि वसीयांस्त्वमधिकोऽसि । हे वसो वासकेन्द्र मे मदीया माता च त्वं च समा समौ समानौ सन्तौ । 'पुमान् स्त्रिया' (पा. सू. १. २. ६७) इति पुंसः शेषः । छदयथः । अर्चतिकर्मायम् । मां पूजितं कुरुथः । किमर्थम् । वसुत्वनाय व्यापनाय राधसे धनाय च । उभयोर्लाभायेत्यर्थः ॥

क्वेयथ क्वेदसि पुरुत्रा चिद्धि ते मनः ।
अलर्षि युध्म खजकृत्पुरंदर प्र गायत्रा अगासिषुः ॥ ७ ॥

क्व । इयथ । क्व । इत् । असि । पुरुऽत्रा । चित् । हि । ते । मनः ।
अलर्षि । युध्म । खजऽकृत् । पुरम्ऽदर । प्र । गायत्राः । अगासिषुः ॥ ७ ॥

हे इन्द्र क्व कुत्र देशे इयथ गतवानसि पुरा । क्वेत् कुत्र च असि भवसि । इदानीं वर्तसे । पुरुत्रा चिद्धि बहुषु हि यजमानेषु ते त्वदीयं मनः संचरति । हे युध्म युद्धकुशल खजकृत् युद्धस्य कर्तहे पुरंदर आसुरीणां पुरां दारयितर्हे इन्द्र अलर्षि आगच्छ । गायत्राः गानकुशला अस्मदीयाः स्तोतारः प्र अगासिषुः प्रगायन्ति स्तुवन्ति । 'अलर्षि' इत्येतत् दाधर्त्यादौ (पा. सू. ७. ४. ६५) इत्यत्रैर्निपात्यते ॥

प्रास्मै गायत्रमर्चत वावातुर्यः पुरंदरः ।
याभिः काण्वस्योप बर्हिरासदं यासद्वज्री भिनत्पुरः ॥ ८ ॥

प्र । अस्मै । गायत्रम् । अर्चत । ववातुः । यः । पुरम्ऽदरः ।
याभिः । काण्वस्य । उप । बर्हिः । आऽसदम् । यासत् । वज्री । भिनत् । पुरः ॥ ८ ॥

अस्मै[1] इन्द्राय गायत्रं गातव्यं साम गायत्रसंज्ञं वा प्र अर्चत प्रगायत । पुरंदरः पुरां दारयिता यः इन्द्रः वावातुः[2] वननीयः संभजनीयः । यद्वा वावातुः संभक्तुः स्तोतुः य इन्द्रः पुरंदरः शत्रुपुराणां दारयिता । याभिः ऋग्भिः काण्वस्य कण्वपुत्रस्य मेधातिथेर्मेध्यातिथेश्च बर्हिः यज्ञम् उप आसदम् उपासत्तुमुपगन्तुं यासत् गच्छेत् वज्री वज्रयुक्तः सन् । याभिश्च ऋग्भिः स्तूयमानः सन् पुरः शात्रवीः भिनत् भिन्द्यात् । तास्वृक्षु गायत्रं साम गायतेत्यर्थः ॥

---

१. ख-म्ना-त-श—यस्मै ।　२. ख-म्ना-त-न-भ-श—ववातुः ।

ये ते सन्ति दशग्विनः शतिनो ये सहस्रिणः ।
अश्वासो ये ते वृषणो रघुद्रुवस्तेभिर्नस्तूयमा गहि ॥ ९ ॥

ये । ते । सन्ति । दशऽग्विनः । शतिनः । ये । सहस्रिणः ।
अश्वासः । ये । ते । वृषणः । रघुऽद्रुवः । तेभिः । नः । तूयम् । आ । गहि ॥ ९ ॥

हे इन्द्र vदशग्विनः दशयोजनगामिनः vये अश्वाः vते तव vसन्ति विद्यन्ते । vये चान्ये vशतिनः शतसंख्याकाः vसहस्रिणः सहस्रसंख्याकाः सन्ति । vये vते त्वदीयाः vअश्वासः अश्वाः vवृषणः सेचनसमर्थां युवानः vरघुद्रुवः शीघ्रगामिनश्च । vतेभिः तैः सर्वैरश्वैः vनः अस्मान् vतूयं क्षिप्रम् vआ vगहि आगच्छ ॥

आ त्व१द्य सबर्दुघां हुवे गायत्रवेपसम् ।
इन्द्रं धेनुं सुदुघामन्यामिषमुरुधारामरंकृतम् ॥ १० ॥

आ । तु । अद्य । सबःऽदुघाम् । हुवे । गायत्रऽवेपसम् ।
इन्द्रम् । धेनुम् । सुऽदुघाम् । अन्याम् । इषम् । उरुऽधाराम् । अरम्ऽकृतम् ॥ १० ॥

अनयेन्द्रं धेनुरूपेण वृष्टिरूपेण च निरूपयन् स्तौति । vअद्य इदानीं vधेनुं धेनुरूपम् vइन्द्रं vतु क्षिप्रम् vआ vहुवे आह्वये । कीदृशीं धेनुम् । vसबर्दुघां पयसो दोग्ध्रीं vगायत्रवेपसं प्रशस्यवेगां vसुदुघां सुखेन दोग्धुं शक्याम् । vअन्याम् उक्तविलक्षणाम् vउरुधारां बहूदकधाराम् vइषम् एषणीयां वृष्टिम् । एतद्रूपेण वर्तमानम् vअरंकृतम् अलंकर्तारं पर्याप्तकारिणं वेन्द्रं चाह्वये[1] ॥ ॥ ११ ॥

यत्तुदत्सूर एतशं वङ्कू वातस्य पर्णिना ।
वहत्कुत्समार्जुनेयं शतक्रतुः त्सरद्गन्धर्वमस्तृतम् ॥ ११ ॥

यत् । तुदत् । सूरः । एतशम् । वङ्कू इति । वातस्य । पर्णिना ।
वहत् । कुत्सम् । आर्जुनेयम् । शतऽक्रतुः । त्सरत् । गन्धर्वम् । अस्तृतम् ॥ ११ ॥

vसूरः सूर्यः vएतशम् एतत्संज्ञं राजर्षिं vयत् यदा vतुदत् अव्यथयत् तदानीमेतशं रक्षितुं vवङ्कू वक्रगामिनौ vवातस्य वायोः सदृशौ vपर्णिना पर्णिनौ पतनवन्तावीदृशावश्वौ vशतक्रतुः बहुविधकर्मेन्द्रः vआर्जुनेयम् अर्जुन्याः पुत्रं vकुत्सम् ऋषिं vवहत् अवहत् अनयत् । कुत्सेन सार्धं समानं रथमारुह्यैतशरक्षणायागच्छदित्यर्थः । तथा च निगमान्तरं—'प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रः' ( ऋ. सं. १. ६१. १५ ) इति । vगन्धर्वं गवां रश्मीनां धर्तारं सूर्यम् vअस्तृतं केनाप्यहिंसितं vत्सरत् अत्सरत् । छद्मगत्यागच्छत् । सूर्येण योद्धुं गतवानित्यर्थः ॥

य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।
संधाता संधिं मघवा पुरूवसुरिष्कर्ता विह्रुतं पुनः ॥ १२ ॥

यः । ऋते । चित् । अभिऽश्रिषः । पुरा । जत्रुऽभ्यः । आऽतृदः ।
सम्ऽधाता । सम्ऽधिम् । मघऽवा । पुरुऽवसुः । इष्कर्ता । विऽह्रुतम् । पुनरिति ॥ १२ ॥

---

१. ख-भ—चाह्वयामहे; क्ष—चाह्वयेम ।

ᵛयः इन्द्रः ᵛअभिश्रिषः अभिश्लिषोऽभिश्लेषणात् संधानद्रव्यात् ᵛऋते ᵛचित् विनापि ᵛजत्रुभ्यः ग्रीवाभ्यः सकाशात् ᵛआतृदः आतर्दनात् आ रुधिरनिःस्रवणात् ᵛपुरा पूर्वमेव ᵛसंधिं संधातव्यं तं ᵛसंधाता संयोजयिता भवति ᵛमघवा धनवान् ᵛपुरूवसुः[1] बहुधनः स इन्द्रः ᵛविहुतं विच्छिन्नं तं ᵛपुनः ᵛइष्कर्ता संस्कर्ता भवति ॥

मा भूम निष्ट्याइवेन्द्र त्वदरणाइव ।
वनानि न प्रजहितान्यद्रिवो दुरोषासो अमन्महि ॥ १३ ॥

मा । भूम । निष्ट्याःऽइव । इन्द्र । त्वत् । अरणाःऽइव ।
वनानि । न । प्रऽजहितानि । अद्रिऽवः । दुरोषासः । अमन्महि ॥ १३ ॥

हे ᵛइन्द्र ᵛत्वत् त्वत्तः त्वत्प्रसादात् ᵛनिष्ट्याइव । नीचैर्भूता हीना निष्ट्याः । त इव वयं ᵛमा ᵛभूम । तथा ᵛअरणाइव अरमणा दुःखिन इव वयं मा भूम । अपि च ᵛप्रजहितानि प्रक्षीणानि शाखादिभिर्वियुक्तानि ᵛवनानि ᵛन वृक्षजातानीव वयं पुत्रादिभिर्वियुक्ता मा भूम । हे ᵛअद्रिवः वज्रवन्निन्द्र ᵛदुरोषासः ओषितुमन्यैर्दग्धुमशक्या दुर्येषु गृहेषु निवसन्तो वा वयम् ᵛअमन्महि त्वां स्तुमः ॥

अमन्महीदनाशवोऽनुग्रासश्च वृत्रहन् ।
सकृत्सु ते महता शूर राधसानु स्तोमं मुदीमहि ॥ १४ ॥

अमन्महि । इत् । अनाशवः । अनुग्रासः । च । वृत्रऽहन् ।
सकृत् । सु । ते । महता । शूर । राधसा । अनु । स्तोमम् । मुदीमहि ॥ १४ ॥

हे ᵛवृत्रहन् वृत्रस्यासुरस्य हन्तरिन्द्र ᵛअनाशवः अशीघ्रा अत्वरमाणाः ᵛअनुग्रासः अनुग्रा अनुद्गूर्णाः ᵛच सन्तो वयं भक्तिश्रद्धापुरःसरं शनैस्त्वाम् ᵛअमन्महीत् स्तुम एव । हे ᵛशूर वीर्यवन्निन्द्र ᵛते त्वदर्थं ᵛसकृत् एकवारमपि ᵛमहता प्रभूतेन ᵛराधसा धनेन हविर्लक्षणेन सह ᵛसु शोभनं ᵛस्तोमं स्तोत्रम् ᵛअनु ᵛमुदीमहि अनुमोदेमहि । अनुब्रवामेत्यर्थः ॥

यदि स्तोमं मम श्रवदस्माकमिन्द्रमिन्दवः ।
तिरः पवित्रं ससृवांस आशवो मन्दन्तु तुग्र्यावृधः ॥ १५ ॥

यदि । स्तोमम् । मम । श्रवत् । अस्माकम् । इन्द्रम् । इन्दवः ।
तिरः । पवित्रम् । ससृऽवांसः । आशवः । मन्दन्तु । तुग्र्यऽवृधः ॥ १५ ॥

अयमिन्द्रः ᵛमम मदीयं स्तोत्रं[2] ᵛयदि ᵛश्रवत् शृणुयात् तदानीं तम् ᵛइन्द्रम् ᵛअस्माकम् अस्मदीयाः ᵛइन्दवः सोमाः ᵛमदन्तु मादयन्तु हर्षयन्तु । कीदृशाः सोमाः । ᵛतिरः तिर्यगवस्थितं ᵛपवित्रं पवनसाधनं दशापवित्रं ᵛससृवांसः प्रासवन्तः । दशापवित्रेण पूता इत्यर्थः । ᵛआशवः शीघ्रं मदजनकाः ᵛतुग्र्यावृधः तुग्र्याभिर्वसतीवर्यैकधनाख्याभिरद्भिर्वर्धमानाः ॥ ॥ १२ ॥

आ त्वद्य सधस्तुतिं वावातुः सख्युरा गहि ।
उपस्तुतिर्मघोनां प्र त्वावत्वधा ते वश्मि सुष्टुतिम् ॥ १६ ॥

---

१. त१-२-४–पुरुवसुः । २. घ-श–स्तोमं स्तोत्रं ।

आ । तु । अद्य । सधऽस्तुतिम् । ववातुः । सख्युः । आ । गहि ।

उपऽस्तुतिः । मघोनाम् । प्र । त्वा । अवतु । अध । ते । वश्मि । सुऽस्तुतिम् ॥ १६ ॥

हे इन्द्र ववातुः संभक्तुस्त्वां सेवमानस्य सख्युः स्तोतुः सधस्तुतिम् अन्यैर्ऋत्विग्भिः सह क्रियमाणां स्तुतिम् अद्य इदानीं तु क्षिप्रम् आ गहि आगच्छ । मघोनां हविष्मतामन्येषामपि यजमानानाम् उपस्तुतिः स्तोत्रं त्वा त्वां प्र अवतु प्रगच्छतु प्रतर्पयतु वा । अध अधुना सुष्टुतिं त्वद्विषयां शोभनां स्तुतिमहमपि वश्मि कामये ॥

सोता हि सोममद्रिभिरेमेनमप्सु धावत ।

गव्या वस्त्रेव वासयन्त इन्नरो निर्धुक्षन्वक्षणाभ्यः ॥ १७ ॥

सोत । हि । सोमम् । अद्रिऽभिः । आ । ईम् । एनम् । अप्ऽसु । धावत ।

गव्या । वस्त्राऽइव । वासयन्तः । इत् । नरः । निः । धुक्षन् । वक्षणाभ्यः ॥ १७ ॥

हे अध्वर्यवः अद्रिभिः ग्रावभिः सोमं सोत । हिरवधारणे । अभिषुणुतैव[1] । एनम् इमम् अप्सु वसतीवरीषु आ धावत । अस्य सोमस्य धवनं कुरुत । अदाभ्यग्रहे हिमादासुत इत्यादिभिर्मन्त्रैर्वसतीवरीष्वाधवनं सोमस्य क्रियते । तत् कुरुतेत्यर्थः । गव्या गवि भवानि वस्त्रेव वस्त्राण्याच्छादकानि चर्माणीव मेघान् वासयन्त इत् आच्छादयन्त एव नरः नेतार इन्द्रस्यानुचरा मरुतः वक्षणाभ्यः नदीभ्यो नदीनामर्थाय निर्धुक्षन् उदकानि निर्दुहन्ति क्षारयन्ति । यत एवमतः कारणादिन्द्रयागाय सोममद्रिभिरभिषुणुतैव । मोदासिषतेत्यर्थः ॥

अध ज्मो अध वा दिवो बृहतो रोचनादधि ।

अया वर्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण ॥ १८ ॥

अध । ज्मः । अध । वा । दिवः । बृहतः । रोचनात् । अधि ।

अया । वर्धस्व । तन्वा । गिरा । मम । आ । जाता । सुक्रतो इति सुऽक्रतो । पृण ॥ १८ ॥

हे इन्द्र अध अधुना ज्मः । जमन्ति गच्छन्त्यस्यामिति ज्मा पृथिवी । तस्याः सकाशात् अध वा अपि वा दिवः अन्तरिक्षात् बृहतः महतः रोचनात्[2] नक्षत्रैर्दीप्यमानात् स्वर्गाद्वा आगत्य । अधिः पञ्चम्यर्थानुवादी । अया अनया तन्वा ततया विस्तृतया मम मदीयया गिरा स्तुत्या वर्धस्व वृद्धो भव । हे सुक्रतो शोभनकर्मवन्निन्द्र जाता जातानस्मदीयान् जनान् आ पृण अभिलषितैः फलैरापूरय ॥

इन्द्राय सु मदिन्तमं सोमं सोता वरेण्यम् ।

शक्र एणं पीपयद्विश्वया धिया हिन्वानं न वाजयुम् ॥ १९ ॥

इन्द्राय । सु । मदिन्ऽतमम् । सोमम् । सोत । वरेण्यम् ।

शक्रः । एनम् । पीपयत् । विश्वया । धिया । हिन्वानम् । न । वाजऽयुम् ॥ १९ ॥

---

१. ख-श–अभिषुतैव । २. ख-भ-श–रोचमानात् ।

हे अध्वर्यवः इन्द्राय इन्द्रार्थं मदिन्तमं मादयितृतमं वरेण्यं वरणीयं संभजनीयं सोमं सु सोत अभिषुणुत[1]। कुत इत्यत आह। शक्रः इन्द्रः विश्वया धिया सर्वया क्रिययाग्निष्टोमादिलक्षणया हिन्वानं प्रीणयन्तं वाजयुम् अन्नमात्मन इच्छन्तम् एनं यजमानम्। न इति संप्रत्यर्थीयः। संप्रति पीपयत् वर्धयति। अतः कारणात्तस्मा इन्द्राय सोमं सुनुतेत्यर्थः ॥

**मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा ।**
**भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥ २० ॥**

मा । त्वा । सोमस्य । गल्दया । सदा । याचन् । अहम् । गिरा ।
भूर्णिम् । मृगम् । न । सवनेषु । चुक्रुधम् । कः । ईशानम् । न । याचिषत् ॥ २० ॥

हे इन्द्र त्वां सवनेषु यज्ञेषु सोमस्य गल्दया गालनेनास्त्रावणेन[2] गिरा स्तुत्या च युक्तः अहं सदा सर्वदा याचन् याचमानः सन् मा चुक्रुधं मा क्रोधयानि। बहुशो याच्यमाने त्वयि क्रोधो जायते तं सोमस्य गालनेन स्तुत्या चापनयामीत्यर्थः। कीदृशं त्वाम्। भूर्णिं भर्तारं मृगं न सिंहमिव भीमम्। स्वामिन इन्द्रस्य याचने लौकिकन्यायं दर्शयति। लोके कः वा पुरुषः ईशानम् ईश्वरं स्वामिनं न याचिषत् न याचेत। सर्वं एव हि याचते। अतोऽहमपि त्वां स्वामिनं याच इति भावः ॥		॥ १३ ॥

**मदेनेषितं मदमुग्रमुग्रेण शवसा ।**
**विश्वेषां तरुतारं मदच्युतं मदे हि ष्मा ददाति नः ॥ २१ ॥**

मदेन । इषितम् । मदम् । उग्रम् । उग्रेण । शवसा ।
विश्वेषाम् । तरुतारम् । मदऽच्युतम् । मदे । हि । स्म । ददाति । नः ॥ २१ ॥

मदेन मादयित्रा स्तोत्रा इषितं प्रेषितं मदं मदकरं सोमम् उग्रम् उद्गूर्णं रसम् उग्रेण उद्गूर्णेनाधिकेन शवसा बलेन युक्त इन्द्रः पिबत्विति शेषः। पीत्वा च विश्वेषां सर्वेषां शत्रूणां तरुतारं तरीतारं जेतारं मदच्युतं मदस्य शत्रूणां गर्वस्य च्यावयितारं पुत्रं मदे सोमपानेन जनिते हर्षे सति नः अस्मभ्यं ददाति हि ष्म ददाति खलु। अतः सोमं पिबत्वित्यर्थः ॥

**शेवारे वार्या पुरु देवो मर्ताय दाशुषे ।**
**स सुन्वते च स्तुवते च रासते विश्वगूर्तो अरिष्टुतः ॥ २२ ॥**

शेवारे । वार्या । पुरु । देवः । मर्ताय । दाशुषे ।
सः । सुन्वते । च । स्तुवते । च । रासते । विश्वऽगूर्तः । अरिऽस्तुतः ॥ २२ ॥

शेवारे। शेवं सुखम्। तस्य गमके यज्ञे दाशुषे चरुपुरोडाशादीनि दत्तवते यजमानाय पुरु पुरूणि बहूनि वार्याणि वरणीयानि धनानि देवः दानादिगुणयुक्त इन्द्रः रासते ददाति। सः एव सुन्वते च सोमाभिषवं कुर्वते च स्तुवते च स्तोत्रं कुर्वते च धनानि रासते। कीदृशः सः। विश्वगूर्तः विश्वेषु सर्वेषु कार्येषूद्यतः स्वतः प्रवृत्तः अरिष्टुतः अरिभिः प्रेरयितृभिः प्रशस्तः ॥

---

१. त१-२—सुष्ठु अभिषुणुत।   २. ख-न-भ—°नाभ्रवणेन; त३—°नाश्रावणेन।

एन्द्र याहि मत्स्व चित्रेण देव राधसा।
सरो न प्रास्युदरं सपीतिभिरा सोमेभिरुरु स्फिरम् ॥ २३ ॥

आ। इन्द्र। याहि। मत्स्व। चित्रेण। देव। राधसा।
सरः। न। प्रासि। उदरम्। सपीतिऽभिः। आ। सोमेभिः। उरु। स्फिरम् ॥ २३ ॥

हे इन्द्र आ याहि आगच्छ। हे देव द्योतमान चित्रेण दर्शनीयेन राधसा धनेन सोमलक्षणेन मत्स्व माद्य। सपीतिभिः मरुद्भिः सह पीयमानैः सोमेभिः सोमैः उरु विस्तीर्णं स्फिरं वृद्धम् उदरम् आत्मीयं जठरं सरो न सर इव आ प्रासि आपूरय। 'प्रा पूरणे'। आदादिकः ॥

चातुर्विंशिकेऽहनि माध्यंदिने ब्रह्मशस्त्रे[1] 'आ त्वा' इति वैकल्पिकः स्तोत्रियस्तृचः। सूत्र्यते हि—'आ त्वा सहस्रमा शतं मम त्वा सूर उदित इति ब्राह्मणाच्छंसिनः' (आश्व. श्रौ. ७.४) इति ॥

आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये।
ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ॥ २४ ॥

आ। त्वा। सहस्रम्। आ। शतम्। युक्ताः। रथे। हिरण्यये।
ब्रह्मऽयुजः। हरयः। इन्द्र। केशिनः। वहन्तु। सोमऽपीतये ॥ २४ ॥

हे इन्द्र त्वा त्वां सहस्रं सहस्रसंख्याकाः हरयः त्वदीया अश्वाः आ वहन्तु आनयन्त्वस्मद्यज्ञम्। तथा शतं शतसंख्याकाश्च भवदीया[2] अश्वास्त्वाम् आ वहन्तु। यद्यपि द्वावेवास्य[3] हरी तथापि तद्विभूतयोऽन्येऽपि बहवोऽश्वाः सन्ति। ननु युगपदनेकैरश्वैः कथं यातुं शक्यत इति अत आह युक्ताः इति। हिरण्यये हिरण्मये स्वर्णविकारे। हिरण्यशब्दाद्विकारार्थे विहितस्य मयटः 'ऋत्व्यवास्त्व' इत्यादौ मलोपो निपात्यते। तादृशे रथे युक्ताः संबद्धाः। बहूनामश्वानां शीघ्रगमनाय रथे नियुक्तत्वाद्युगपदेव सर्वैरश्वैर्गन्तुं शक्यत इति भावः। कीदृशा हरयः। ब्रह्मयुजः ब्रह्मणा परिवृढेनेन्द्रेण युक्ताः। यद्वा ब्रह्मणास्मदीयेन स्तोत्रेणास्माभिर्दत्तेन हविषा वा युक्ताः। केशिनः। केशाः केसराः। तैर्युक्ताः। किमर्थमिन्द्रस्य वहनं तत्राह। सोमपीतये सोमस्य पानाय। यथास्मदीयं सोमं पिबेत् अत आवहन्त्वित्यर्थः ॥

आ त्वा रथे हिरण्यये हरी मयूरशेप्या।
शितिपृष्ठा वहतां मध्वो अन्धसो विवक्षणस्य पीतये ॥ २५ ॥

आ। त्वा। रथे। हिरण्यये। हरी इति। मयूरऽशेप्या।
शितिऽपृष्ठा। वहताम्। मध्वः। अन्धसः। विवक्षणस्य। पीतये ॥ २५ ॥

पूर्वं हर्योर्विभूतिरूपा अश्वा इन्द्रमावहन्त्विति प्रार्थितम्। अधुना तावेवेन्द्रमावहतामिति प्रार्थ्यते। हिरण्यये हिरण्मये रथे युक्तौ मयूरशेप्या मयूरशेपौ मयूरवर्णशेपौ ययोस्तौ। 'सुपां सुलुक्' इति विभक्तेर्ड्यादेशः। शितिपृष्ठा श्वेतपृष्ठौ एवंभूतावश्वौ[4] हे इन्द्र त्वाम् आ वहताम्।

---

१. श–ब्राह्मणाच्छंसिशस्त्रे। २. ख-भ–त्वदीया। ३. ख–द्वावेवाश्वौ; भ–द्वावेवास्याश्वौ।
४. ब-श–एवंभूतौ हरी अश्वौ।

किमर्थम्। मध्वः मधुररसस्य विवक्षणस्य वक्तुमिष्टस्य स्तुत्यस्य यद्वा वोढव्यस्य प्राप्तव्यस्य अन्धसः अन्नस्य सोमरूपस्य पीतये पानार्थम् ॥　　॥ १४ ॥

पिबा त्व१स्य गिर्वणः सुतस्य पूर्वपाइव ।
परिष्कृतस्य रसिन इयमासुतिश्चारुर्मदाय पत्यते ॥ २६ ॥

पिब । तु । अस्य । गिर्वणः । सुतस्य । पूर्वपाःऽइव ।
परिऽकृतस्य । रसिनः । इयम् । आऽसुतिः । चारुः । मदाय । पत्यते ॥ २६ ॥

हे गिर्वणः गीर्भिर्वननीय स्तुतिभिः संभजनीयेन्द्र सुतस्य अभिषुतस्य अस्य सोमस्य ॥ 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी ॥ इममभिषुतं सोमं तु क्षिप्रं पिब। तत्र दृष्टान्तः। पूर्वपाइव। पूर्वः सर्वेभ्यो देवेभ्यः प्रथमभावी सन् पिबतीति पूर्वपा वायुः। स इवैन्द्रवायवे मुख्ये ग्रहे सर्वेभ्यो देवेभ्यः पूर्वं पिबेत्यर्थः। कीदृशस्य सोमस्य। परिष्कृतस्य अभिषवादिभिः संस्कृतस्य ॥ 'संपर्युपेभ्यः°' (पा. सू. ६. १. १३७) इति करोतेर्भूषणे सुट्। 'परिनिविभ्यः°' (पा. सू. ८. ३. ७०) इति सुटः षत्वम् ॥ रसिनः रसवतः। अपि च इयमासुतिः अयमासवो मदकरः चारुः शोभनः सोमरसः मदाय हर्षाय हर्षजननाय पत्यते संपद्यते। 'पत्लृ गतौ'। यद्वा। पत्यतिरैश्वर्यकर्मा। मदाय मदस्य पत्यते ईष्टे। मदोत्पादने शक्त इत्यर्थः ॥

य एको अस्ति दंसना महाँ उग्रो अभि व्रतैः ।
गमत्स शिप्री न स योषदा गमद्धवं न परि वर्जति ॥ २७ ॥

यः । एकः । अस्ति । दंसना । महान् । उग्रः । अभि । व्रतैः ।
गमत् । सः । शिप्री । न । सः । योषत् । आ । गमत् । हवम् । न । परि । वर्जति ॥ २७ ॥

यः इन्द्रः एकः केवलोऽसहाय एव व्रतैः आत्मीयैः कर्मभिः अभि अस्ति शत्रूनभिभवति। यश्च दंसना कर्मणा महान् अधिकः अत एव उग्रः उद्गूर्णबलः शिप्री। शिप्रं शिरस्त्राणम्। प्रशंसायामिनिः। शोभनशिरस्त्राणः। यद्वा। शिप्रे हनू नासिके वा। तद्वान्। सः इन्द्रः गमत् गच्छतु प्राप्नोतु सर्वदा। सः तादृशः न योषत् न पृथग्भवतु। न वियुक्तो भवतु ॥ गमेर्यौतेश्च लेट्यडागमः। 'इतश्च लोपः°' इतीकारलोपः। गमेः 'बहुलं छन्दसि' इति शपो लुक्। यौतेः 'सिब्बहुलम्°' इति सिप्। हवम् अस्मदीयं स्तोत्रं च आ गमत् अभिगच्छतु प्राप्नोतु। न परि वर्जति न परिवर्जयतु न परित्यजतु। सर्वदास्मानस्मदीयं स्तोत्रं चेन्द्रः प्राप्नोत्विति यावत् ॥

त्वं पुरं चरिष्णवं वधैः शुष्णस्य सं पिणक् ।
त्वं भा अनु चरो अध द्विता यदिन्द्र हव्यो भुवः ॥ २८ ॥

त्वम् । पुरम् । चरिष्णवम् । वधैः । शुष्णस्य । सम् । पिणक् ।
त्वम् । भाः । अनु । चरः । अध । द्विता । यत् । इन्द्र । हव्यः । भुवः ॥ २८ ॥

हे इन्द्र त्वं शुष्णस्य शोषकस्यासुरस्य चरिष्णवं चरणशीलम् ॥ 'वा छन्दसि' इत्यमि पूर्वत्वस्य विकल्पितत्वाद्यणादेशः ॥ पुरं निवासस्थानं वधैः वज्रादिभिरायुधैः सं पिणक् समचूर्णयः। अभाङ्क्षीरित्यर्थः। पिनष्टेर्लङि मध्यमैकवचने रूपमेतत्। अध अपि च भाः

भासमानः ᵛत्वम् ᵛअनु ᵛचरः तं शुष्णं हन्तुमन्वगच्छः । यद्वा । अध शुष्णस्य पुरभेदनानन्तरं भा दीप्तीस्त्वमनु चरः अन्वगच्छः । प्राप्तवानित्यर्थः । हे ᵛइन्द्र त्वं ᵛयत् यदा ᵛद्विता द्विधा द्विविधैः स्तोतृभिर्यष्टृभिश्च ᵛहव्यः ह्वातव्यः ᵛभुवः भवेः । तदानीं त्वं शुष्णस्य पुरं सं पिणगित्यन्वयः । भवतेर्लेटि सिप्यडागमः । छान्दसः शपो लुक् । 'भूसुवोस्तिङि' इति गुणप्रतिषेधादुवङ् ॥

चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्रह्मशस्त्रे 'मम त्वा' इति वैकल्पिकोऽनुरूपस्तृचः । सूत्रं तु पूर्वमुदाहृतम् ॥

मम॑ त्वा॒ सूर॒ उदि॑ते॒ मम॑ म॒ध्यंदि॑ने दि॒वः ।
मम॑ प्रपि॒त्वे अ॑पिशर्व॒रे व॑स॒वा स्तोमा॑सो अवृत्सत ॥ २९ ॥

मम॑ । त्वा॒ । सूरे॑ । उत्ऽइ॑ते । मम॑ । म॒ध्यंदि॑ने । दि॒वः ।
मम॑ । प्र॒ऽपि॒त्वे । अ॒पि॒ऽश॒र्व॒रे । व॒सो॒ इति॑ । आ । स्तोमा॑सः । अ॒वृ॒त्स॒त ॥ २९ ॥

ᵛसूरे सूर्ये ᵛउदिते उदयं प्राप्ते पूर्वाह्णसमये ᵛमम ᵛस्तोमासः स्तोत्राणि हे ᵛवसो वासकेन्द्र त्वाम् ᵛआ ᵛअवृत्सत आवर्तयन्तु । अस्मदभिमुखं गमयन्तु । तथा ᵛदिवः दिवसस्य ᵛमध्यंदिने मध्याह्नेऽपि मदीयाः स्तोमास्त्वामावर्तयन्तु । तथा ᵛप्रपित्वे प्राप्ते दिवसस्यावसाने सायाह्नेऽपि मदीयाः स्तोमास्त्वामावर्तयन्तु । ᵛअपिशर्वरे । शर्वरीं रात्रिमपिगतः कालः अपिशर्वरः । शार्वरे कालेऽपि मदीयाः स्तोमास्त्वामावर्तयन्तु ॥

स्तु॒हि स्तु॒हीदे॒ते घा॑ ते॒ मंहि॑ष्ठासो म॒घोना॑म् ।
नि॒न्दि॒ताश्वः॑ प्रप॒थी प॑रम॒ज्या म॒घस्य॑ मेध्यातिथे ॥ ३० ॥

स्तु॒हि । स्तु॒हि । इत् । ए॒ते । घ॒ । ते॒ । मंहि॑ष्ठासः । म॒घोना॑म् ।
नि॒न्दि॒तऽअ॑श्वः । प्र॒ऽप॒थी । प॒र॒म॒ऽज्याः । म॒घस्य॑ । मेध्य॒ऽअ॒ति॒थे॒ ॥ ३० ॥

आसङ्गो राजर्षिर्मेध्यातिथये बहु धनं दत्त्वा तमृषिं दत्तदानस्य स्वस्य स्तुतौ प्रेरयति । हे ᵛमेध्यातिथे यज्ञार्हातिथ एतत्संज्ञर्षे ᵛस्तुहि ᵛस्तुहीत् । पुनःपुनरस्मान् प्रशंसैव । मोदास्व औदासीन्यं मा कार्षीः । ᵛएते ᵛघ एते खलु वयं ᵛमघोनां धनवतां मध्ये ᵛते तुभ्यं ᵛमघस्य धनस्य ᵛमंहिष्ठासः दातृतमाः । अतोऽस्मान् स्तुहीत्यर्थः । कासौ स्तुतिस्तामाह । ᵛनिन्दिताश्वः । यस्य वीर्येण परेषामश्वा निन्दिताः कुत्सिता भवन्ति तादृशः । ᵛप्रपथी । प्रकृष्टः पन्थाः प्रपथः । तद्वान् । सन्मार्गवर्तीत्यर्थः । ᵛपरमज्याः उत्कृष्टज्यः । अनेन धनुरादिकं लक्ष्यते । उत्कृष्टायुध इत्यर्थः । यद्वा । परमानुत्कृष्टाञ्छत्रून् जिनाति हिनस्तीति परमज्याः । 'ज्या वयोहानौ' । अस्मात् 'आतो मनिन्' इति विच् । एवंभूतोऽहमासङ्ग इति स्तुहीत्यर्थः ॥ ॥ १५ ॥

आ यदश्वा॒न्वन॑न्वतः श्र॒द्धया॒हं रथे॑ रु॒हम् ।
उ॒त वा॒मस्य॒ वसु॑नश्चिकेतति॒ यो अस्ति॒ याद्वः॑ प॒शुः ॥ ३१ ॥

आ । यत् । अश्वा॑न् । वन॑न्ऽवतः । श्र॒द्धया॑ । अ॒हम् । रथे॑ । रु॒हम् ।
उ॒त । वा॒मस्य॑ । वसु॑नः । चि॒के॒त॒ति॒ । यः । अस्ति॑ । याद्वः॑ । प॒शुः ॥ ३१ ॥

vवनन्वतः वननवतः संभक्तवतः vअश्वान् तुरगान् vअहं प्रायोगिः vश्रद्धया आदरातिशयेन युक्तः सन् vयत् यदा हे मेध्यातिथे त्वदीये vरथे vआ vरुहं आरोहयम्[1]। रुहेरन्तर्भावितण्यर्थाल्लुङि 'कृमृदृरुहिभ्यः°' इति च्लेरङादेशः। तदानीं मामेवं स्तुहि। vउत अपि च। प्रकृतस्तुत्यपेक्ष एष समुच्चयः। vवामस्य वननीयस्य vवसुनः धनस्य। पूर्ववत् कर्मणि षष्ठी। ईदृशं धनं vचिकेतति। एष आसङ्गो दातुं जानाति। vयादुः यदुवंशोद्भवः। यद्वा। यदवो मनुष्याः। तेषु प्रसिद्धः। vपशुः। लुप्तमत्वर्थमेतत्। पशुमान्। यद्वा। पशुः पश्यतेः। सूक्ष्मस्य द्रष्टा। vयः आसङ्गः vअस्ति विद्यते एष चिकेततीत्यन्वयः॥

य ऋज्रा मह्यं मामहे सह त्वचा हिरण्यया।
एष विश्वान्यभ्यस्तु सौभगासङ्गस्य स्वनद्रथः॥ ३२॥

यः। ऋज्रा। मह्यम्। ममहे। सह। त्वचा। हिरण्यया।
एषः। विश्वानि। अभि। अस्तु। सौभगा। आऽसङ्गस्य। स्वनत्ऽरथः॥ ३२॥

एवमेवं मां स्तुहीत्यासङ्गो मेध्यातिथिं ब्रूते। vयः आसङ्गस्यात्मा vऋज्रा गमनशीलानि धनानि vहिरण्यया हिरण्मय्या vत्वचा चर्मणास्तरणेन vसह सहितानि vमह्यं मेध्यातिथये vममहे ददौ। मंहतिर्दानकर्मा। vएषः आसङ्गस्यात्मा vस्वनद्रथः शब्दायमानरथः सन् vविश्वानि व्याप्तानि सौभगानि धनानि शत्रूणां स्वभूतानि vअभ्यस्तु अभिभवतु॥

अध प्लायोगिरति दासदन्यानासङ्गो अग्ने दशभिः सहस्रैः।
अधोक्षणो दश मह्यं रुशन्तो नळाइव सरसो निरतिष्ठन्॥ ३३॥

अध। प्लायोगिः। अति। दासत्। अन्यान्। आऽसङ्गः। अग्ने। दशऽभिः। सहस्रैः।
अध। उक्षणः। दश। मह्यम्। रुशन्तः। नळाःऽइव। सरसः। निः। अतिष्ठन्॥ ३३॥

vअध अपि च vप्लायोगिः[2] प्रयोगनाम्नः पुत्रः vआसङ्गः नाम राजा vदशभिः दशगुणितः vसहस्रैः सहस्रसंख्याकैर्गवादिभिः vअन्यान् दातॄन् vअति vदासत् अतिक्रम्य ददाति। vअध अनन्तरम् vउक्षणः सेचनसमर्थाः vमह्यम् आसङ्गेन दत्ताः vरुशन्तः दीप्यमानाः vदश दशगुणितसहस्रसंख्याकास्ते गवादयः vनळाइव। नळास्तटाकोद्भवास्तृणविशेषाः। ते यथा vसरसः तटाकात् संघशो निर्गच्छन्ति तथैव मह्यं दत्ता गवादयोऽस्मादासङ्गात् vनिरतिष्ठन् निर्गत्यावास्थिषत। एवमेवंप्रकारेण मां स्तुहीति मेध्यातिथिं प्रत्युक्तत्वादेतासां चतसृणामृचां प्रायोगिरासङ्ग ऋषिः स एव देवतेत्येतदुपपन्नं भवति॥

अन्वस्य स्थूरं ददृशे पुरस्तादनस्थ ऊरुरवरम्बमाणः।
शश्वती नार्यभिचक्ष्याह सुभद्रमर्य भोजनं बिभर्षि॥ ३४॥

अनु। अस्य। स्थूरम्। ददृशे। पुरस्तात्। अनस्थः। ऊरुः। अवऽरम्बमाणः।
शश्वती। नारी। अभिऽचक्ष्य। आह। सुऽभद्रम्। अर्य। भोजनम्। बिभर्षि॥ ३४॥

अथमासङ्गो राजा कदाचिद्देवशापेन नपुंसको बभूव। तस्य पत्नी शश्वती भर्तुर्नपुंसकत्वेन खिन्ना सती महत्तपस्तेपे। तेन च तपसा स च पुंस्त्वं प्राप। प्राप्तपुंस्यञ्जनं तं रात्रावुपलभ्य प्रीता शश्वत्य-

---

१. ख–आयोरोहत्वं; झ-त-न-भ-श–आरोहयंत। २. त१–प्रायोगिः।

नया तमस्तौत् । ^v^अस्य आसङ्गस्य ^v^पुरस्तात् पूर्वभागे गुह्यदेशे ^v^स्थूरं स्थूलं वृद्धं सत् पुंव्यञ्जनम् ^v^अनु ^v^दृदृशे अनुदृश्यते । ^v^अनस्थः अस्थिरहितः स चावयवः ^v^ऊरुः उरुर्विस्तीर्णः ^v^अवरम्बमाणः अतिदीर्घत्वेनावाङ्मुखं लम्बमानः । यद्वा । ऊरुः । ' सुपां सुलुक्° ' इति द्विवचनस्य सुः । ऊरू प्रत्यवलम्बमानो भवति । ^v^शश्वती नामाङ्गिरसः सुता ^v^नारी तस्यासङ्गस्य भार्या ^v^अभिचक्ष्य एवंभूतमवयवं निशि दृष्ट्वा हे ^v^अर्य स्वामिन् भर्तः ^v^सुभद्रम् अतिशयेन कल्याणं ^v^भोजनं भोगसाधनं ^v^बिभर्षि धारयसीति ^v^आह ब्रूते ॥ ॥ १६ ॥

' इदं वसो ' इति द्विचत्वारिंशदृचं द्वितीयं सूक्तं काण्वस्य मेधातिथेराङ्गिरसस्य च प्रियमेधस्यार्षम् । ' शिक्षा विभिन्दो ' इत्यादिके द्वे मेधातिथेरेव । ' स्वादवः सोमाः ' इत्येषानुष्टुप् शिष्टा गायत्र्यः । इन्द्रो देवता । अन्त्ये द्वे ऋचौ विभिन्दोर्दानस्तुतिरूपत्वात्तद्देवताके । तथा चानुक्रान्तम्— ' इदं वसो द्विचत्वारिंशन्मेधातिथिराङ्गिरसश्च प्रियमेधः स्वादवोऽनुष्टुबन्त्याभ्यां मेधातिथिर्विभिन्दोर्दानं तुष्टाव ' इति । गतः सूक्तविनियोगः । ज्योतिष्टोमे मरुत्वतीय आद्यस्तृचोऽनुचरः । सूत्र्यते हि—' इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ ' ( आश्व. श्रौ. ५. १४ ) इति । द्वितीये रात्रिपर्याये ब्रह्मशस्त्रेऽयमेव स्तोत्रियस्तृचः । सूत्रितं च—' इदं वसो सुतमन्ध इन्द्रेहि मत्स्यन्धसः ' ( आश्व. श्रौ. ६. ४ ) इति । अयमेव चतुर्थेऽहन्यपि मरुत्वतीयस्यानुचरस्तृचः । सूत्रितं च—' तं त्वा यज्ञेभिरीमह इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ ' (आश्व. श्रौ. ७. ११) इति ॥

**इ॒दं व॑सो सु॒तमन्धः॒ पिबा॒ सुपू॑र्णमु॒दर॑म् । अना॑भयिन्ररि॒मा ते॑ ॥ १ ॥**

इ॒दम् । व॒सो॒ इति॑ । सु॒तम् । अन्धः॑ । पिब॑ । सु॒ऽपू॑र्णम् । उ॒दर॑म् । अना॑भयिन् । र॒रि॒म । ते॒ ॥ १ ॥

हे ^v^वसो वासयितरिन्द्र ^v^इदं पुरोवर्तमानं ^v^सुतम् अभिषुतम् ^v^अन्धः अन्नं सोमलक्षणं ^v^पिब । यथा ^v^उदरं त्वदीयं जठरं ^v^सुपूर्णम् अतिशयेन संपूर्णं भवति तथेत्यर्थः । हे ^v^अनाभयिन् । आ समन्ताद्बिभेतीत्याभयी । बिभेतेरौणादिक इनिः । नाभयत्यनाभयी । तादृश हे इन्द्र ^v^ते तुभ्यं त्वदर्थं ^v^ररिम उक्तलक्षणं सोमं दद्मः । ' रा दाने ' । छान्दसो लिट् ॥

**नृभि॑र्धू॒तः सु॒तो अश्नै॒रव्यो॒ वारैः॒ परि॑पूतः । अश्वो॒ न नि॒क्तो न॒दीषु॑ ॥ २ ॥**

नृऽभिः॑ । धू॒तः । सु॒तः । अश्नैः॑ । अव्यः॑ । वारैः॑ । परि॑ऽपूतः । अश्वः॑ । न । नि॒क्तः । न॒दीषु॑ ॥ २ ॥

^v^नृभिः अध्वरस्य नेतृभिर्ऋत्विग्भिः ^v^धूतः आधूतोऽदाभ्यग्रहे[1] आधवनेन संस्कृतः ^v^अश्नैः अश्मभिर्ग्रावभिः करणभूतैः ^v^सुतः अध्वर्युभिरभिषुतः ^v^अव्यः अवेर्मेषस्य ^v^वारैः वालैः ^v^परिपूतः । दशापवित्रस्य नाभिभूतया ऊर्णास्तुकया हि सोमः परिपूयते । तदुक्तं भगवता आपस्तम्बेन— ' शुक्लामूर्णास्तुकां यजमानाय प्रयच्छति तां शकटे दशापवित्रस्य नाभिं कुरुते शुक्लं वलक्ष्याः पवित्रममोतं भवति ' इति । ^v^नदीषु नदनास्वप्सु ^v^अश्वो ^v^न अश्व इव ^v^निक्तः निर्णिक्तः शोधितः । यथाप्सु स्नातोऽश्वोऽपगतमलः सन् दीप्तो भवति एवं वसतीवर्याख्याभिरद्भिरभिषुतः सोमो दीप्तो भवतीत्यर्थः । ईदृशो यः सोमः ' तं ते यवम् ' इत्युत्तरया संबन्धः ॥

**तं ते॒ यवं॒ यथा॒ गोभिः॑ स्वा॒दुम॑कर्म श्री॒णन्तः॑ । इन्द्र॑ त्वा॒स्मिन्त्स॑ध॒मादे॑ ॥ ३ ॥**

तम् । ते॒ । यव॑म् । यथा॑ । गोभिः॑ । स्वा॒दुम् । अ॒क॒र्म॒ । श्री॒णन्तः॑ ।

इन्द्र॑ । त्वा॒ । अ॒स्मिन् । स॒ध॒ऽमादे॑ ॥ ३ ॥

---

१. ञ-य–अवधूतो°; त१-२-४–अधूतो° ।

ᐯतं पूर्वोक्तगुणं सोमं हे इन्द्र ᐯते त्वदर्थं ᐯयवं ᐯयथा यवमयं सवनीयपुरोडाशमिव ᐯगोभिः गवि भवैः क्षीरादिभिः श्रयणद्रव्यैः ᐯश्रीणन्तः मिश्रीकुर्वन्तः ᐯस्वादुं रसत्वेन स्वादनीयम् ᐯअकर्म अकार्ष्म। करोतेर्लुङि ' मन्त्रे घस° ' इति च्लेर्लुक्। यस्मादेवं तस्मात् हे ᐯइन्द्र ᐯत्वा त्वां तादृशं सोमं पातुम् ᐯअस्मिन् वर्तमाने ᐯसधमादे सहमदने यज्ञे आह्वयामीति शेषः॥

महाव्रते निष्केवल्ये गायत्रतृचाशीतौ ' इन्द्र इत्सोमपाः ' इत्येतदादिसूक्तशेषः शंसनीयः। अन्त्यास्तिस्रो वर्जयित्वा तत्रापि ' स्वादवः ' इत्येतां परित्यज्य तत्र स्थाने ' न ह्यन्यं बळाकरम् ' इत्येतामावपेत्। तथैव पञ्चमारण्यके सूत्रितम्—' इन्द्र इत्सोमपा एक इत्येतत्प्रभृतीनां तिस्र उत्तमा उद्धरति। तासां स्वादवः सोमा आ याहीत्येतामुद्धृत्य न ह्यन्यं बळाकरमित्येतां प्रत्यवदधाति ' ( ऐ. आ. ५. २. ३ ) इति। पञ्चमेऽहनि मरुत्वतीये ' इन्द्र इत् ' इत्यनुचरस्तृचः। सूत्र्यते हि— ' इन्द्र इत्सोमपा एक इति मरुत्वतीयस्य प्रतिपदनुचरौ ' ( आश्व. श्रौ. ७. १२ ) इति॥

**इन्द्र इत्सोमपा एक इन्द्रः सुतपा विश्वायुः। अन्तर्देवान्मर्त्यांश्च॥ ४॥**

इन्द्रः। इत्। सोमऽपाः। एकः। इन्द्रः। सुतऽपाः। विश्वऽआयुः।
अन्तः। देवान्। मर्त्यान्। च॥ ४॥

ᐯइन्द्र ᐯइत् इन्द्रः ᐯएकः एव ᐯदेवान् ᐯमर्त्यान् मनुष्यान् ᐯच ᐯअन्तः मध्ये देवेषु च मध्ये ᐯसोमपाः कृत्स्नस्य सोमस्य पाता। नान्ये। ते ह्येकदेशभाजः। अत एव ᐯसुतपाः सुतस्याभिषुतस्यास्मदीयस्य सोमस्य कार्त्स्न्येन पाता। ᐯइन्द्रः एक एव ᐯविश्वायुः। स चेन्द्रः सर्वाङ्गो भवति। धानाकरम्भादिहवींषि सवनेष्विन्द्रायैव हूयन्ते तदभिप्रायेणेदमुच्यते। अत एवंविध इन्द्रोऽस्मदीयं हविः स्वीकरोत्वित्यर्थः॥

**न यं शुक्रो न दुराशीर्न तृप्रा उरुव्यचसम्। अपस्पृण्वते सुहार्दम्॥ ५॥**

न। यम्। शुक्रः। न। दुःऽआशीः। न। तृप्राः। उरुऽव्यचसम्।
अपऽस्पृण्वते। सुऽहार्दम्॥ ५॥

ᐯउरुव्यचसं विस्तीर्णव्यापनं ᐯसुहार्दं सुहृदयं ᐯयम् इन्द्रं ᐯशुक्रः रसाधिक्येन दीप्तः सोमः ᐯन अपस्पृणुते[1]। ' स्पृ प्रीतिबलयोः '। अत्रोपसर्गवशात् प्रीत्यभावे वर्तते। नञा च प्रीत्यभावो निवार्यते। न प्रीणयतीति न अपि तु प्रीणयत्येव। तथा ᐯदुराशीः दुःखेन निष्पाद्याशीराश्रयणद्रव्यं यस्य तार्तीयसवनिकस्य सोमस्य सोऽपि यमिन्द्रं ᐯन अपस्पृणुते प्रीणयत्येव। ᐯतृप्राः तर्पका अन्ये चरुपुरोडाशादयश्च यमिन्द्रं ᐯन ᐯअपस्पृण्वते न न प्रीणयन्ति अपि तु प्रीणयन्त्येव तमिन्द्रं स्तुम इति शेषः। यद्वा। अप इत्युपसर्गो धात्वर्थानुवादकः। यमिन्द्रं शुक्रादयो नापस्पृण्वते न प्रीणयन्ति। उरुव्यचसमिति हेतुगर्भविशेषणम्। यतोऽयमिन्द्र उरुव्यचा विस्तीर्णव्याप्तिकः अतः कारणादपर्याप्ताः सन्तः शुक्रादयः प्रीणयितुं न शक्नुवन्तीति भावः॥ ॥ १७॥

**गोभिर्यदीमन्ये अस्मन्मृगं न व्रा मृगयन्ते। अभित्सरन्ति धेनुभिः॥ ६॥**

गोभिः। यत्। ईम्। अन्ये। अस्मत्। मृगम्। न। व्राः। मृगयन्ते। अभिऽत्सरन्ति। धेनुऽभिः॥ ६॥

ᐯयत् ये ᐯअस्मत् अस्मत्तः ᐯअन्ये ऋत्विग्यजमानाः ᐯईम् एनमिन्द्रं ᐯगोभिः गवि भवैः क्षीरादिभिः संस्कृतैः सोमैः सहिताः सन्तः ᐯमृगयन्ते अन्विष्यन्ते। तत्र दृष्टान्तः। ᐯव्राः वरीतारो

1. ख-घ-भ-अपस्पृण्वते।

जालादिभिरुपायैर्निरुन्धाना व्याधाः <sup>v</sup>मृगं <sup>v</sup>न यथा मृगमन्विष्यन्ति तद्वदनधिकारिण एव बलादिन्द्रस्यान्वेषणे वर्तन्त इत्यर्थः । 'मृग अन्वेषणे' इति धातुः । ये च जनाः <sup>v</sup>धेनुभिः । धेनुरिति वाङ्नाम । वाग्भिः स्तुतिभिश्च <sup>v</sup>अभिह्वरन्ति अभिमुखं कुत्सितं गच्छन्ति । सम्यक् स्तोतुं न शक्नुवन्तीत्यर्थः । 'ह्वर च्छद्मगतौ' । तथाविधा जना इन्द्रं नोपलभन्त इत्यर्थः ॥

दशरात्रे तृतीयेऽहनि मरुत्वतीयस्य 'त्रय इन्द्रस्य' इति तृचोऽनुचरः । सूत्र्यते हि—'तं तमिद्राधसे महे त्रय इन्द्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ' (आश्व. श्रौ. ७. १०) इति ॥

त्रय इन्द्रस्य सोमाः सुतासः सन्तु देवस्य । स्वे क्षये सुतपाव्नः ॥ ७ ॥

त्रयः । इन्द्रस्य । सोमाः । सुतासः । सन्तु । देवस्य । स्वे । क्षये । सुतऽपाव्नः ॥ ७ ॥

<sup>v</sup>देवस्य दानादिगुणयुक्तस्य <sup>v</sup>इन्द्रस्य पानार्थं <sup>v</sup>त्रयः सवनत्रयरूपेण त्रिधा वर्तमानाः <sup>v</sup>स्वे <sup>v</sup>क्षये स्वकीये यज्ञगृहे <sup>v</sup>सुतासः अभिषुताः <sup>v</sup>सन्तु भवन्तु । <sup>v</sup>सुतपाव्नः । हेतुगर्भविशेषणमेतत् । यस्मादयमिन्द्रोऽभिषुतस्यैव सोमस्य पाता तस्मादभिषुताः सन्त्वित्यर्थः ॥

त्रयः कोशासः श्चोतन्ति तिस्रश्चम्वः सुपूर्णाः । समाने अधि भार्मन् ॥ ८ ॥

त्रयः । कोशासः । श्चोतन्ति । तिस्रः । चम्वः । सुऽपूर्णाः । समाने । अधि । भार्मन् ॥ ८ ॥

<sup>v</sup>त्रयः त्रिसंख्याकाः <sup>v</sup>कोशासः कोशाः सोमस्याश्रयभूता द्रोणकलशपूतभृदाधवनीयाख्याः <sup>v</sup>श्चोतन्ति क्षरन्ति । इन्द्रार्थं सोमं स्रावयन्ति । <sup>v</sup>तिस्रः त्रिविधाः सवनत्रये वर्तमानाः <sup>v</sup>चम्वः चमसाश्च <sup>v</sup>सुपूर्णाः इन्द्रयागाय सोमैः सुपूरिता आसन् । एतत्सर्वं कुत्रेति चेदुच्यते । <sup>v</sup>समाने एकस्मिन्नेव <sup>v</sup>भार्मन् भर्मणि भरे ऋत्विग्भिर्भ्रियमाणे यज्ञे । <sup>v</sup>अधि[1] सप्तम्यर्थानुवादी ॥

शुचिरसि पुरुनिःष्ठाः क्षीरैर्मध्यत आशीर्तः । दध्ना मन्दिष्ठः शूरस्य ॥ ९ ॥

शुचिः । असि । पुरुनिःऽस्थाः । क्षीरैः । मध्यतः । आऽशीर्तः । दध्ना । मन्दिष्ठः । शूरस्य ॥९॥

हे सोम त्वं <sup>v</sup>शुचिरसि । दशापवित्रेण शोधितो भवसि । स त्वं <sup>v</sup>पुरुनिष्ठाः पुरुषु बहुषु पात्रेषु ग्रहचमसादिषु निःशेषेण स्थाता[2] <sup>v</sup>मध्यतः मध्ये मैत्रावरुणग्रहादौ <sup>v</sup>क्षीरैः पयःप्रभृतिभिः श्रयणद्रव्यैः[3] <sup>v</sup>आशीर्तः मिश्रणेन संस्कृतः । तृतीये सवने <sup>v</sup>दध्ना चाशीर्तः । एवंभूतस्त्वं <sup>v</sup>शूरस्य विक्रान्तस्येन्द्रस्य <sup>v</sup>मन्दिष्ठः मादयितृतमो भव ॥

इमे त इन्द्र सोमास्तीव्रा अस्मे सुतासः । शुक्रा आशिरं याचन्ते ॥ १० ॥

इमे । ते । इन्द्र । सोमाः । तीव्राः । अस्मे इति । सुतासः । शुक्राः । आऽशिरम् । याचन्ते ॥ १० ॥

हे <sup>v</sup>इन्द्र <sup>v</sup>ते त्वदीयाः <sup>v</sup>इमे <sup>v</sup>सोमाः <sup>v</sup>तीव्राः तीव्रमदाः <sup>v</sup>अस्मे अस्माभिरध्वर्युभिः <sup>v</sup>सुतासः अभिषुताः <sup>v</sup>शुक्राः शुद्धाः सन्तः <sup>v</sup>आशिरं क्षीरादिकं श्रयणद्रव्यं[4] त्वां <sup>v</sup>याचन्ते । ताञ्छ्रीणीहीत्युत्तरत्रान्वयः ॥ ॥ १८ ॥

ताँ आशिरं पुरोळाशमिन्द्रेमं सोमं श्रीणीहि । रेवन्तं हि त्वा शृणोमि ॥ ११ ॥

तान् । आऽशिरम् । पुरोळाशम् । इन्द्र । इमम् । सोमम् । श्रीणीहि ।
रेवन्तम् । हि । त्वा । शृणोमि ॥ ११ ॥

---

१. ज्ञ-त१-२-४–अधिः । २. ख–स्था; भ–स्थाः; श–स्थापितः । ३. ख-श–श्रपणद्रव्यैः । ४. श–श्रपणद्रव्यं ।

हे <sup>v</sup>इन्द्र <sup>v</sup>तान् पूर्वोक्तान् सोमान् <sup>v</sup>आशिरं श्रयणद्रव्यं च क्षीरादिकं <sup>v</sup>श्रीणीहि मिश्रय यागार्थम्। तदनन्तरं <sup>v</sup>पुरोळाशं धानाकरम्भादिलक्षणं सवनीयपुरोडाशम् <sup>v</sup>इमम् अस्मदीयं <sup>v</sup>सोमं च श्रीणीहि मिश्रय। प्रथमं भक्षितं पुरोळाशं पश्चात्पीतेन सोमेन संयोजयेत्यर्थः। तव प्रार्थने को हेतुरिति चेत्। <sup>v</sup>हि यस्मात् <sup>v</sup>रेवन्तं रयिमन्तम्। 'रयेर्मतौ बहुलम्' इति संप्रसारणम्। बहुलधनं त्वां <sup>v</sup>शृणोमि त्वं बहुधन इति सर्वत्र श्रूयते अतः कारणात् त्वामेव प्रार्थयामहे ॥

हृत्सु पीतासो युध्यन्ते दुर्मदासो न सुरायाम्। ऊधर्न नग्ना जरन्ते ॥ १२ ॥

हृत्ऽसु। पीतासः। युध्यन्ते। दुःऽमदासः। न। सुरायाम्। ऊधः। न। नग्नाः। जरन्ते ॥१२॥

हे इन्द्र <sup>v</sup>पीतासः त्वया पीताः सोमाः <sup>v</sup>हृत्सु हृदयेषु त्वदीयेषु <sup>v</sup>युध्यन्ते। परस्परं संप्रहारं कुर्वते। तत्र दृष्टान्तः। <sup>v</sup>सुरायां पीतायां जायमानाः <sup>v</sup>दुर्मदासो <sup>v</sup>न। दुष्टमदा यथा पातारं मादयन्ति तद्वत्त्वां मादयितुं परस्परं युध्यन्त इत्यर्थः। अपि च। नग्नाश्छन्दांसि। तानि न जहतीति <sup>v</sup>नग्नाः स्तोतारः। ते च <sup>v</sup>ऊधर्न पयसा पूर्णं गवादेरूध इव सोमपूर्णं त्वां <sup>v</sup>जरन्ते स्तुवन्ति। जरतिः स्तुतिकर्मा ॥

षष्ठेऽहनि यदि रैवतसामसाध्यं पृष्ठस्तोत्रं तदा निष्केवल्ये 'रेवाँ इत्' इत्यनुरूपस्तृचः। सूत्र्यते हि—'रेवतीर्नः सधमादे रेवाँ इद्रेवतः स्तोतेति स्तोत्रियानुरूपौ' (आश्व. श्रौ. ८. १) इति ॥

रेवाँ इद्रेवतः स्तोता स्यात्त्वावतो मघोनः। प्रेदु हरिवः श्रुतस्य ॥ १३ ॥

रेवान्। इत्। रेवतः। स्तोता। स्यात्। त्वाऽवतः। मघोनः।

प्र। इत्। ऊँ इति। हरिऽवः। श्रुतस्य ॥ १३ ॥

हे <sup>v</sup>हरिवः हरिवन्। 'मतुवसो रुः' इति नकारस्य रुत्वम्। हरी अश्वौ। तद्वन्निन्द्र <sup>v</sup>रेवतः रयिमतो बहुधनोपेतस्य तव[1] <sup>v</sup>स्तोता <sup>v</sup>रेवान् <sup>v</sup>स्यात् रयिमान् भवेत्। इच्छब्दोऽवधारणे। धनवान् भवेदेव न तु दारिद्र्यं प्राप्नोति। उक्तमेवार्थं कैमुतिकन्यायेन द्रढयति। <sup>v</sup>त्वावतः त्वत्सदृशस्य। 'युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्' इति वतुप्। <sup>v</sup>मघोनः मघवतो धनाढ्यस्य <sup>v</sup>श्रुतस्य विश्रुतस्य सर्वत्र प्रख्यातस्यान्यस्यापि स्तोता <sup>v</sup>प्रेदु। स्यात् इत्यनुषज्यते। प्रस्यात्। प्रभवेदेव न तु निहीयते। किमु वक्तव्यं तव स्तोता धनवान् भवेदेवेति ॥

उक्थं चन शस्यमानमगोररिरा चिकेत। न गायत्रं गीयमानम् ॥ १४ ॥

उक्थम्। चन। शस्यमानम्। अगोः। अरिः। आ। चिकेत। न। गायत्रम्। गीयमानम् ॥ १४ ॥

गायतेर्गौः[2]। <sup>v</sup>अगोः अस्तोतुः <sup>v</sup>अरिः शत्रुरिन्द्रः <sup>v</sup>शस्यमानं होत्रा पठ्यमानम् <sup>v</sup>उक्थं <sup>v</sup>चन शस्त्रमपि <sup>v</sup>आ <sup>v</sup>चिकेत अभिजानाति। 'कित ज्ञाने'। छान्दसो लिट्। नेति संप्रत्यर्थे। <sup>v</sup>न संप्रति प्रस्तोत्रादिभिः[3] <sup>v</sup>गीयमानं <sup>v</sup>गायत्रं गातव्यं साम यद्वा गायत्राख्यमपि चिकेतेत्येव। अतः कारणात् वयमपि तमिन्द्रं स्तुम इत्यर्थः ॥

मा न इन्द्र पीयत्नवे मा शर्धते परा दाः। शिक्षा शचीवः शचीभिः ॥ १५ ॥

मा। नः। इन्द्र। पीयत्नवे। मा। शर्धते। परा। दाः। शिक्ष। शचीऽवः। शचीभिः ॥ १५ ॥

---

१. ख-झ-त-न-भ-श—अत एव। २. ख-झ-त३-न-भ-श—°र्गोः; ज्ञ-त१-२-४—°र्गाः। ३. ख-झ-त—स्तोत्रादिभिः।

हे इन्द्र त्वं पीयत्नवे। पीयतिर्वधकर्मा। वधशीलाय हिंसाकारिणे शत्रवे नः अस्मान् मा परा दाः मा परित्याक्षीः। मा च शर्धते अभिभवित्रे अस्मान् मा परा दाः। 'शृधु प्रसहने' इति धातुः। अपि तु हे शचीवः शक्तिमन्निन्द्र शचीभिः आत्मीयैः कर्मभिः शिक्ष अस्माननुशाधि। यद्वा। शिक्षतिर्दानकर्मा। अभीष्टं धनमस्मभ्यं देहि। यद्वा। शत्रून् जेतुं शिक्ष शक्तान् कर्तुमिच्छ। शकेः सनन्तस्य 'सनि मीमा॰' इति इसादेशेऽभ्यासलोपे च कृते लोटि रूपमेतत्॥ ॥ १९ ॥

प्रथमे रात्रिपर्याये ब्राह्मणाच्छंसिशस्त्रे 'वयमु त्वा' इति स्तोत्रियस्तृचः। सूत्रितं च—'वयमु त्वा तदिदर्था वयमिन्द्र त्वायवोऽभि' ( आश्व. श्रौ. ६. ४ ) इति॥

वयमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः। कण्वा उक्थेभिर्जरन्ते॥ १६॥

वयम्। ऊँ इति। त्वा। तदित्ऽअर्थाः। इन्द्र। त्वाऽयन्तः। सखायः।
कण्वाः। उक्थेभिः। जरन्ते॥ १६॥

हे इन्द्र त्वायन्तः त्वामात्मन इच्छन्तः सखायः समानख्यानाः वयं तदिदर्थाः यत्त्वद्विषयं स्तोत्रं तदित्तदेवार्थः प्रयोजनं येषां तादृशाः सन्तः त्वा त्वां जरामहे स्तुमहे। उ इति पूरणः। कण्वाः कण्वगोत्रोत्पन्ना अस्मदीयाः पुत्रादयश्च उक्थेभिः उक्थैः शस्त्रैः जरन्ते त्वां स्तुवन्ति॥

न घेमन्यदा पपन वज्रिन्नपसो नविष्टौ। तवेदु स्तोमं चिकेत॥ १७॥

न। घ। ईम्। अन्यत्। आ। पपन। वज्रिन्। अपसः। नविष्टौ।
तव। इत्। ऊँ इति। स्तोमम्। चिकेत॥ १७॥

हे वज्रिन् वज्रवन्निन्द्र अपसः अपस्विनः कर्मवतः तव संबन्धिनि नविष्टौ अभिनवे यागे वर्तमानोऽहम् अन्यत् त्वद्विषयादन्यत् स्तोत्रं न घ नैव आ पपन अभिष्टौमि। पनतेः स्तुतिकर्मण उत्तमे णलि लिटि रूपम्। अपि तु तवेदु तवैव स्तोमं स्तोत्रं चिकेत अभिजानामि। त्वामेव सर्वदा स्तौमीत्यर्थः॥

इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति। यन्ति प्रमादमतन्द्राः॥१८॥

इच्छन्ति। देवाः। सुन्वन्तम्। न। स्वप्नाय। स्पृहयन्ति। यन्ति। प्रऽमादम्। अतन्द्राः॥१८॥

सुन्वन्तं सोमाभिषवं कुर्वन्तं यजमानं देवाः इन्द्रादयः सर्वे इच्छन्ति रक्षितुम्। स्वप्नाय न स्पृहयन्ति। स्वप्नावस्थां तस्य सुन्वतो नेप्सन्ति। सर्वदा प्रबुद्धमेव कुर्वन्तीत्यर्थः। 'स्पृहेरीप्सितः' ( पा. सू. १. ४. ३६ ) इति कर्मणि चतुर्थी। 'स्पृह ईप्सायाम्'। चुरादिरदन्तः। यत एवमतः कारणात् अतन्द्राः अनलसा देवाः प्रमादं प्रकर्षेण मदकरं तदीयं सोमं यन्ति प्राप्नुवन्ति॥

ओ षु प्र याहि वाजेभिर्मा हृणीथा अभ्य१स्मान्। महाँइव युवजानिः॥१९॥

ओ इति। सु। प्र। याहि। वाजेभिः। मा। हृणीथाः। अभि। अस्मान्।
महान्ऽइव। युवऽजानिः॥ १९॥

हे इन्द्र वाजेभिः वाजैरस्मभ्यं दातव्यैरन्नैः सार्धम् अस्मान् अभि आभिमुख्येन सु सुष्ठु प्र प्रकर्षेण ओ आ उ याहि शीघ्रमायाह्येव आगच्छैव। मा हृणीथाः मा क्रुध्यस्व। हृणीयतिः क्रुध्यतिकर्मा। यद्वा मा लज्जां प्राप्नुहि। 'हृणीङ् लज्जायाम्' इति कण्ड्वादौ पठ्यते। तत्र दृष्टान्तः।

ᵛमहानिव ᵛयुवजानिः। युवतिर्जाया यस्य स तथोक्तः। 'जायाया निङ्' इति समासान्तो निङादेशः। ईदृशो महान् गुणैरधिकोऽपि यथा स्वभार्यां प्रति निर्लज्जः सन् शीघ्रं गच्छति तद्वत् ॥

मो ष्व१द्य दुर्हणावान्त्सायं करदारे अस्मत्। अश्रीरइव जामाता ॥ २० ॥

मो इति। सु। अद्य। दुःऽहनावान्। सायम्। करत्। आरे। अस्मत्।
अश्रीरःऽइव। जामाता ॥ २० ॥

ᵛदुर्हणावान्। परैर्दुःसहहननं दुर्हणम्। तद्वानिन्द्रः ᵛअद्य इदानीम् ᵛअस्मत् ᵛआरे अस्माकं समीपं आगच्छतु। ᵛसु सुष्ठु अतिशयेन ᵛसायं दिवसस्यावसानं सायंकालं ᵛमो ᵛकरत् मा कार्षीत्। करोतेर्माङि लुङि 'कृमृदृरुहिभ्यः' इति च्लेरङादेशः। ᵛजामाता। जायत इति जा अपत्यम्। तस्य निर्माता दुहितुः पतिः। ᵛअश्रीरइव। न श्रीरश्रीः। तदस्यास्तीत्यश्रीरः। मत्वर्थीयो रः। गुणैर्विहीनः कुत्सितो जामातासकृदाहूयमानोऽप्यासायंकालं विलम्बते। तद्वत्त्वं कालविलम्बं मा कृथा इत्यर्थः ॥ ॥ २० ॥

विद्मा ह्यस्य वीरस्य भूरिदावरीं सुमतिम्। त्रिषु जातस्य मनांसि ॥ २१ ॥

विद्म। हि। अस्य। वीरस्य। भूरिऽदावरीम्। सुऽमतिम्। त्रिषु। जातस्य। मनांसि ॥२१॥

ᵛअस्य इन्द्रस्य ᵛवीरस्य विक्रान्तस्य ᵛभूरिदावरीं बहुधनस्य दात्रीं ᵛसुमतिं कल्याणीं मतिमनुग्रहबुद्धिं ᵛविद्मा ᵛहि जानीमः खलु। तथा ᵛत्रिषु भूम्यादिषु त्रिषु लोकेषु ᵛजातस्य तत्कार्यार्थं प्रादुर्भूतस्य ᵛमनांसि हृदयानि च जानीमः। अतस्तस्येन्द्रस्य यथा प्रीतिर्जनिष्यते तथा स्तोत्रं कुर्म इत्यर्थः ॥

आ तू षिञ्च कण्वमन्तं न घा विद्म शवसानात्। यशस्तरं शतमूतेः ॥२२॥

आ। तु। सिञ्च। कण्वऽमन्तम्। न। घ। विद्म। शवसानात्। यशःऽतरम्। शतम्ऽऊतेः॥२२॥

हे अध्वर्यो ᵛकण्वमन्तम्। कणतिः शब्दकर्मा। कण्वाः स्तोतारः। यद्वा। कण्वगोत्रा ऋषयः। तैर्युक्तमिन्द्रमुद्दिश्य ᵛतु क्षिप्रम् ᵛआ ᵛसिञ्च सोमं जुहुधि। ᵛशवसानात्। शवो बलम्। तदिवाचरतोऽतिबलात् ᵛशतमूतेः। शतं बहुनामैतत्। बह्वय ऊतयो रक्षा यस्मिन् स शतमूतिः। तादृशादस्मादिन्द्रात् ᵛयशस्तरं यशस्वितरं पुरुषं ᵛन ᵛघ नैव ᵛविद्म जानीमः। अतस्तमेवोद्दिश्य सोमं जुहुधीत्यर्थः ॥

ज्येष्ठेन सोतरिन्द्राय सोमं वीराय शक्राय। भरा पिबन्नर्याय ॥ २३ ॥

ज्येष्ठेन। सोतः। इन्द्राय। सोमम्। वीराय। शक्राय। भर। पिबत्। नर्याय ॥ २३ ॥

हे ᵛसोतः अभिषोतरध्वर्यो ᵛवीराय विक्रान्ताय ᵛशक्राय शक्तियुक्ताय ᵛनर्याय नृभ्यो हिताय ᵛइन्द्राय ᵛज्येष्ठेन मुख्येनैन्द्रवायवग्रहेण। स हि धाराग्रहाणां मध्ये ज्येष्ठः। तेन ᵛसोमं ᵛभर हर आहर। वीर्यं प्रापय। स चेन्द्रः ᵛपिबत् तं सोमं पिबतु ॥

यो वेदिष्ठो अव्यथिष्वश्वावन्तं जरितृभ्यः। वाजं स्तोतृभ्यो गोमन्तम् ॥२४॥

यः। वेदिष्ठः। अव्यथिषु। अश्वऽवन्तम्। जरितृऽभ्यः। वाजम्। स्तोतृऽभ्यः। गोऽमन्तम् ॥२४॥

ᐯयः[1] इन्द्रः ᐯअध्यथिषु अध्यथयितृषु सुखकरेषु स्तोतृषु ᐯवेदिष्ठः अतिशयेन वेदिता कृतस्य स्तोत्रस्य ज्ञाता स इन्द्रः ᐯजरितृभ्यः शंसितृभ्यो होत्रादिभ्यः ᐯस्तोतृभ्यः प्रस्तोत्रादिभ्यश्च ᐯअश्वावन्तं बहुभिरश्वैरुपेतं ᐯगोमन्तं बहुभिर्गोभिरुपेतं सन्तं ᐯवाजम् अन्नं बलं वा ददातीति शेषः ॥

अहीनान्तर्गतेऽतिरात्रे प्रथमे पर्याये होतुः शस्त्रे 'पन्यंपन्यम्' इति स्तोत्रियस्तृचः छन्दोगैरस्य तृचस्य स्तूयमानत्वात्। 'छन्दोगप्रत्ययं स्तोमः[2] स्तोत्रियः' (आश्व. श्रौ. ८. १३) इति हि स्मर्यते ॥

पन्यंपन्यमित्सोतार आ धावत मद्याय । सोमं वीराय शूराय ॥ २५ ॥

पन्यम्ऽपन्यम् । इत् । सोतारः । आ । धावत । मद्याय । सोमम् । वीराय । शूराय ॥ २५ ॥

हे ᐯसोतारः अभिषोतारोऽध्वर्यवः ᐯमद्याय मादयितव्याय ᐯवीराय विक्रान्ताय ᐯशूराय शौर्यवत इन्द्राय ᐯपन्यंपन्यमित् सर्वत्र स्तुत्यमेव ᐯसोमम् ᐯआ ᐯधावत अभिगमयत। प्रयच्छतेत्यर्थः ॥ ॥ २१ ॥

पाता वृत्रहा सुतमा घा गमन्नारे अस्मत् । नि यमते शतमूतिः ॥ २६ ॥

पाता । वृत्रऽहा । सुतम् । आ । घ । गमत् । न । आरे । अस्मत् । नि । यमते । शतम्ऽऊतिः ॥ २६ ॥

ᐯसुतम् अभिषुतं सोमं ᐯपाता पानशीलः। ताच्छीलिकस्तृन्। 'न लोकाव्यय॰' इति कर्मणि षष्ठ्याः प्रतिषेधः। ᐯवृत्रहा वृत्रस्यासुरस्य हन्तेन्द्रः ᐯआ ᐯगमत्। ᐯघ इत्यवधारणे। आगच्छत्वेव। ᐯअस्मत् अस्मत्तः ᐯआरे दूरदेशे मा भवतु। आगत्य च ᐯशतमूतिः बहुविधरक्षण इन्द्रः ᐯनि ᐯयमते अस्मदीयाञ्छत्रून्नियच्छतु तिरस्करोतु। यद्वा धनान्यस्मभ्यं नियच्छतु ददातु ॥

एह हरी ब्रह्मयुजा शग्मा वक्षतः सखायम् । गीर्भिः श्रुतं गिर्वणसम् ॥२७॥

आ । इह । हरी इति । ब्रह्मऽयुजा । शग्मा । वक्षतः । सखायम् ।
गीःऽभिः । श्रुतम् । गिर्वणसम् ॥ २७ ॥

( ᐯब्रह्मयुजा ब्रह्मणा मन्त्रेण स्तोत्रेण हविषा वा युज्यमानौ ᐯशग्मा शग्मौ सुखकरौ शक्तौ वा ईदृशौ ᐯहरी अश्वौ ᐯइह अस्मिन् यज्ञे ᐯसखायं समानख्यानं मित्रभूतमिन्द्रम् ᐯआ ᐯवक्षतः आवहताम्। कीदृशमिन्द्रम्। ᐯगीर्भिः स्तुतिभिः ᐯश्रुतं प्रख्यापितमाहात्म्यं ᐯगिर्वणसं गिरां संभक्तारं स्तुतिभिः संभजनीयं वा ॥ )

स्वादवः सोमा आ याहि श्रीताः सोमा आ याहि ।
शिप्रिन्नृषीवः शचीवो नायमच्छा सधमादम् ॥ २८ ॥

स्वादवः । सोमाः । आ । याहि । श्रीताः । सोमाः । आ । याहि ।
शिप्रिन् । ऋषिऽवः । शचीऽवः । न । अयम् । अच्छ । सधऽमादम् ॥ २८ ॥

हे ᐯशिप्रिन्। शिप्रं शिरस्त्राणम्। यद्वा। शिप्रे हनू नासिके वा। तद्वन् हे ᐯऋषीवः ऋषिभिः स्तोतृभिर्युक्त ᐯशचीवः शक्तिमन् एवंभूत हे इन्द्र अस्मदीया इमे ᐯसोमाः ᐯस्वादवः। अभिषवादिभिः संस्कृतत्वेनास्वादनार्हा जाताः। अतस्त्वम् ᐯआ ᐯयाहि आगच्छ। तथा ते ᐯसोमाः ᐯश्रीताः पयआदिभिः श्रयणद्रव्यैर्मिश्रिताः[3] संस्कृताः। अतोऽपि ᐯआ ᐯयाहि आगच्छ। नेति संप्रत्यर्थे।

---

१. त—सः। २. ज्ञ-त४—स्तोम; त१-२—स्तोमं। ३. ख-ज्ञ-भ—श्रवणद्रव्यै॰; ज्ञ—श्रपणद्रव्यै॰।

ᵛन संप्रति ᵛअयं स्तोता ᵛसधमादं सह मादयितव्यं त्वाम् ᵛअच्छ अभिमुखं स्तौतीति शेषः। अतोऽप्यायाहीत्यर्थः ॥

स्तुतश्च यास्त्वा वर्धन्ति महे राधसे नृम्णाय । इन्द्र कारिणं वृधन्तः ॥२९॥
स्तुतः । च । याः । त्वा । वर्धन्ति । महे । राधसे । नृम्णाय । इन्द्र । कारिणम् । वृधन्तः ॥२९॥

हे ᵛइन्द्र ᵛकारिणं कर्मणां कर्तारं ᵛवृधन्तः वर्धयन्तो ये ᵛस्तुतः स्तोतारः ᵛयाः ᵛच तदीयाः स्तुतयः ᵛत्वा त्वां ᵛवर्धन्ति वर्धयन्ति। किमर्थम्। ᵛमहे महते ᵛराधसे धनाय ᵛनृम्णाय बलाय च। उभयोर्लाभार्थम्। ते तदुभयं लभन्त इत्यध्याहारः। यद्वा। उत्तरत्र ते सत्रा दधिरे शवांसि इति संबन्धः ॥

गिरश्च यास्ते गिर्वाह उक्था च तुभ्यं तानि । सत्रा दधिरे शवांसि ॥ ३० ॥
गिरः । च । याः । ते । गिर्वाहः । उक्था । च । तुभ्यम् । तानि । सत्रा । दधिरे । शवांसि ॥३०॥

हे ᵛगिर्वाहः गीर्भिः स्तुतिभिः वहनीयेन्द्र[1] ᵛते तुभ्यं क्रियमाणाः ᵛगिरश्च स्तुतिरूपाश्च वाचः ᵛयाः सन्ति। ᵛउक्था ᵛच उक्थानि च शस्त्ररूपाणि च वचांसि ᵛतुभ्यं त्वदर्थं क्रियमाणानि यानि सन्ति। ᵛतानि सर्वाणि ᵛसत्रा सहैव ᵛशवांसि बलानि ᵛदधिरे तव विदधिरे ॥ ॥ २२ ॥

एवेदेष तुविकूर्मिर्वाजाँ एको वज्रहस्तः । सनादमृक्तो दयते ॥ ३१ ॥
एव । इत् । एषः । तुविऽकूर्मिः । वाजान् । एकः । वज्रऽहस्तः । सनात् । अमृक्तः । दयते ॥३१॥

ᵛएषः ᵛएव इन्द्रः ᵛतुविकूर्मिः बहुकर्मा। ᵛइत् इति पूरकः। ᵛएकः[2] सर्वेषु देवेषु मुख्यः ᵛवज्रहस्तः वज्रबाहुः ᵛसनात् चिरकालादारभ्य ᵛअमृक्तः शत्रुभिरबाधित एवंभूतः स इन्द्रः ᵛवाजान् अन्नानि बलानि वा ᵛदयते स्तोतृभ्यो ददाति ॥

हन्ता वृत्रं दक्षिणेनेन्द्रः पुरू पुरुहूतः । महान्महीभिः शचीभिः ॥ ३२ ॥
हन्ता । वृत्रम् । दक्षिणेन । इन्द्रः । पुरु । पुरुऽहूतः । महान् । महीभिः । शचीभिः ॥३२॥

अयम् ᵛइन्द्रः ᵛदक्षिणेन हस्तेनैकेनैव ᵛवृत्रम् आवरकमसुरं ᵛहन्ता साधु हतवान्। हन्तेः साधुकारिणि तृन्। 'न लोकाव्यय॰' इति षष्ठीप्रतिषेधः। ᵛपुरु पुरुषु। 'सुपां सुलुक्॰' इति विभक्तेर्लुक्। बहुषु देशेषु ᵛपुरुहूतः ᵛमहीभिः महतीभिः ᵛशचीभिः क्रियाभिः शक्तिभिर्वा ᵛमहान् सर्वेभ्य उत्कृष्टः। एवंभूत इन्द्रोऽस्मान् रक्षत्वित्यर्थः ॥

यस्मिन्विश्वाश्चर्षणय उत च्यौत्ना ज्रयांसि च । अनु घेन्मन्दी मघोनः ॥ ३३ ॥
यस्मिन् । विश्वाः । चर्षणयः । उत । च्यौत्ना । ज्रयांसि । च ।
अनु । घ । इत् । मन्दी । मघोनः ॥ ३३ ॥

ᵛविश्वाः सर्वाः ᵛचर्षणयः प्रजाः ᵛयस्मिन् इन्द्रे वर्तन्ते यदधीना भवन्ति। ᵛउत अपि च ᵛच्यौत्ना च्यौत्नानि। बलनामैतत्। प्रच्युतिसाधनानि बलानि ᵛच ᵛज्रयांसि शत्रुविषयाण्यभिभवनानि यस्मिन्निन्द्रे वर्तन्ते। 'जि ज्रि अभिभवने' इति धातुः। स इन्द्रः ᵛमघोनः। मघं हविर्लक्षणं धनम्। तद्वतो यजमानान् ᵛअनु ᵛमन्दी अनुमोदको भवति। ᵛघेत् इति पूरकौ।

१. श–हवनीयेंद्र। २. त–एषः।

यद्वा। मन्दी स्तुत्यः स इन्द्रस्तानानु गृह्णातीति शेषः। अथवा। यस्य मघोनो धनवत इन्द्रस्य मन्दी स्तोतानुकूलो भवति एष एतानि इत्युत्तरत्रैकवाक्यता ॥

एष एतानि चकारेन्द्रो विश्वा योऽति शृण्वे। वाजदावा मघोनाम् ॥ ३४ ॥

एषः। एतानि। चकार। इन्द्रः। विश्वा। यः। अति। शृण्वे। वाजऽदावा। मघोनाम्॥३४॥

ᵛएषः ᵛइन्द्रः ᵛविश्वा विश्वानि व्याप्तानि ᵛएतानि वृत्रवधादीनि वीर्याणि। यद्वा। पृथिव्यादीनि भूतजातानि। तानि ᵛचकार कृतवान्। ᵛयः इन्द्रः बलैरतिशयितः ᵛशृण्वे[1] श्रूयते सर्वत्र स्तूयते। अपि च स इन्द्रः ᵛमघोनां हविष्मतां यजमानानां ᵛवाजदावा वाजस्यान्नस्य दाता भवति ॥

प्रभर्ता रथं गव्यन्तमपाकाच्चिद्यमवति। इनो वसु स हि वोळ्हा ॥ ३५ ॥

प्रऽभर्ता। रथम्। गव्यन्तम्। अपाकात्। चित्। यम्। अवति।

इनः। वसु। सः। हि। वोळ्हा ॥ ३५ ॥

ᵛप्रभर्ता प्रहर्ता प्रहरणशील इन्द्रः ᵛरथं रंहणं ᵛगव्यन्तं गा इच्छन्तं ᵛयं स्तोतारम् ᵛअपाकात् अविपक्वप्रज्ञाच्छत्रोः। चिच्छब्दोऽनुक्तसमुच्चयार्थः। विपक्वप्रज्ञादपि ᵛअवति रक्षति ᵛस ᵛहि स खलु स्तोता ᵛइनः ईश्वरः सन् ᵛवसु धनं ᵛवोळ्हा साधुवाही भवति। वहेः साधुकारिणि तृन्। अतो 'न लोकाव्यय°' इति कर्मणि षष्ठ्याः प्रतिषेधः ॥ ॥ २३ ॥

सनिता विप्रो अर्वद्भिर्हन्ता वृत्रं नृभिः शूरः। सत्योऽविता विधन्तम् ॥३६॥

सनिता। विप्रः। अर्वत्ऽभिः। हन्ता। वृत्रम्। नृऽभिः। शूरः। सत्यः। अविता। विधन्तम्॥३६॥

ᵛविप्रः मेधावी स इन्द्रः ᵛअर्वद्भिः अश्वैर्वाहनभूतैः ᵛसनिता गन्तव्यं संभक्ता। तथा ᵛशूरः शौर्योपेतः सन् ᵛनृभिः नेतृभिर्मरुद्भिः सार्धं ᵛवृत्रम् आवरकमसुरं ᵛहन्ता साधुघाती। अपि च ᵛविधन्तं परिचरन्तं यजमानं[2] ᵛसत्यः[2] साधुरवितथस्वभावो वा स इन्द्रः ᵛअविता परिचरतो यजमानस्य रक्षिता भवति। सर्वविधीनां छन्दसि विकल्पितत्वादत्र कर्मणि षष्ठी न प्रवर्तते ॥

यजध्वैनं प्रियमेधा इन्द्रं सत्राचा मनसा। यो भूत्सोमैः सत्यमद्वा ॥ ३७ ॥

यजध्व। एनम्। प्रियऽमेधाः। इन्द्रम्। सत्राचा। मनसा। यः। भूत्। सोमैः। सत्यऽमद्वा॥३७॥

हे ᵛप्रियमेधाः। प्रियोऽनुकूलो मेधो यज्ञो येषां ते तथोक्ताः। आत्मनि पूजार्थं बहुवचनम्। प्रियमेधाख्य ऋषिरात्मानं संबोध्य ब्रूते। हे प्रियमेधाः ᵛसत्राचा सहाञ्चता स्तोतव्येनेन्द्रेण सह वर्तमानेन ᵛमनसा चित्तेन ᵛएनम् ᵛइन्द्रं ᵛयजध्व यजध्वम्। बुद्धिपूर्वकं यजेत्यर्थः। 'यजध्वैनम्°' (पा. सू. ७. १. ४३) इति निपातनाद्वर्णलोपः। ᵛयः इन्द्रः ᵛसोमैः करणभूतैः[3] ᵛसत्यमद्वा ᵛभूत् सत्यमदोऽवितथमदो भवति ॥

गाथश्रवसं सत्पतिं श्रवस्कामं पुरुत्मानम्। कण्वासो गात वाजिनम् ॥३८॥

गाथऽश्रवसम्। सत्ऽपतिम्। श्रवःऽकामम्। पुरुऽत्मानम्। कण्वासः। गात। वाजिनम् ॥३८॥

---

१. ख-क्ष-त३-इ भृण्वे; घ-न-श-इति भृण्वे। २. क्ष-त-न-श-यजमानः सत्सु। ३. ख-त२-भ-कारणभूतैः।

हे ᵛकण्वासः कण्वपुत्रा मेधातिथयः। पूर्ववद्बहुवचनमात्मनः संबोधनं च। हे कण्वस्य पुत्रा मेधातिथयः यूयं ᵛगाथश्रवसं गातव्ययशसं ᵛसत्पतिं सतां पालयितारं ᵛश्रवस्कामम्। श्रवःस्वन्नेषु हविःषु कामोऽभिलाषो यस्य तादृशम्। ᵛपुरुत्मानं[1] बह्वात्मानं[1] यद्वा पुरुषु बहुषु प्रदेशेष्वतन्तं सततं गच्छन्तं ᵛवाजिनं वेगवन्तमेवंगुणकमिन्द्रं ᵛगात गायत स्तुध्वम् ॥

य ऋते चिद्गास्पदेभ्यो दात्सखा नृभ्यः शचीवान्।
ये अस्मिन्काममश्रियन् ॥ ३९ ॥

यः। ऋते। चित्। गाः। पदेभ्यः। दात्। सखा। नृऽभ्यः। शचीऽवान्।
ये। अस्मिन्। कामम्। अश्रियन् ॥ ३९ ॥

पणिभिर्देवगवीष्वपहृतासु ᵛपदेभ्यः गतानां गवां मार्गे संलग्नेभ्योऽन्वेषणसाधनभूतेभ्यः ᵛऋते ᵛचित् ऋतेऽपि विनापि ᵛसखा मित्रभूतः ᵛशचीवान् कर्मवान् प्रशस्तकर्मा ᵛयः इन्द्रः ᵛनृभ्यः नेतृभ्यः देवेभ्यः ᵛगाः पणिभिरपहृता ᵛदात् पुनर्दत्तवान्। ᵛये देवाः ᵛअस्मिन् इन्द्रे ᵛकामम् अभिलाषम् ᵛअश्रियन् असेवन्त प्राप्नुवन्। तेभ्यो नृभ्य इत्यन्वयः। तमिन्द्रं गातेति पूर्वेण सहैकवाक्यता ॥

इत्था धीवन्तमद्रिवः काण्वं मेध्यातिथिम्। मेषो भूतो३ऽभि यन्नयः ॥ ४० ॥

इत्था। धीऽवन्तम्। अद्रिऽवः। काण्वम्। मेध्यऽअतिथिम्।
मेषः। भूतः। अभि। यन्। अयः ॥ ४० ॥

ᵛइत्था इत्थमनेनोक्तेन प्रकारेण ᵛधीवन्तं स्तुतिमन्तं ᵛकाण्वं कण्वपुत्रं ᵛमेध्यातिथिं यज्ञार्हातिथिमेतत्संज्ञमृषिं हे ᵛअद्रिवः वज्रवन्निन्द्र ᵛमेषो ᵛभूतः मेषरूपतां प्राप्तः ᵛअभि ᵛयन् अभिगच्छन्। य इत्यनुवर्तते। तद्योगाच्च तिङो निघाताभावः। यस्त्वम् ᵛअयः अगमयः तं त्वां स्तुम इत्यर्थः। 'मेधातिथेर्मेष' (तै. आ. १. १२. ३) इति सुब्रह्मण्यामन्त्रैकदेशस्य व्याख्यानरूपं ब्राह्मणं छन्दोगैरेवमाम्नायते— 'मेधातिथिं हि[2] काण्वायनिं मेषो भूत्वाजहार' (ष. ब्रा. १. १) इति। तदभिप्रायेणेयं स्तुतिः कृता ॥

शिक्षा विभिन्दो अस्मै चत्वार्ययुता ददत्। अष्टा परः सहस्रा ॥ ४१ ॥

शिक्ष। विभिन्दो इति विऽभिन्दो। अस्मै। चत्वारि। अयुता। ददत्।
अष्ट। परः। सहस्रा ॥ ४१ ॥

विभिन्दुनाम्नो राज्ञः सकाशाद्बहु धनं लब्ध्वा तदीयं दानमिदमादिकेन तृचेन प्रशंसति। हे ᵛविभिन्दो राजन् ᵛददत् दाता त्वम् ᵛअस्मै मह्यमृषये ᵛचत्वारि ᵛअयुता अयुतानि दशसहस्राणि चत्वारिंशत्सहस्राणि ᵛशिक्ष अशिक्षः दत्तवानसि। ᵛपरः परस्तात् ऊर्ध्वमपि अष्टसंख्याकानि ᵛसहस्रा सहस्राणि च दत्तवानसि ॥

उत सु त्ये पयोवृधा माकी रणस्य नप्त्या। जनित्वनाय मामहे ॥ ४२ ॥

उत। सु। त्ये इति। पयःऽवृधा। माकी इति। रणस्य। नप्त्या। जनिऽत्वनाय। ममहे ॥४२॥

---

१. ख-भ-पुरुत्मानं पुरुषात्मानं; ज-झ-त२-४-पुरुषात्मानं बह्वात्मानं; त३-न-पुरुषात्मानं। २. ख-न-भ-श-'हि' नास्ति; त३-ष.ब्रा.- इ।

^v^उत अपि च ^v^सु सुष्ठु ^v^त्ये ते सर्वत्र प्रसिद्धे ^v^पयोवृधा पयस उदकस्य वर्धयित्र्यौ ^v^माकी निर्मात्र्यौ भूतजातस्य ^v^ऋणस्य। स्तोतॄनामैतत्। स्तोतुः ^v^नप्त्या नप्त्यौ न पातयित्र्यौ सर्वदानुग्रहशीले द्यावापृथिव्यौ ^v^जनित्वनाय पूर्वोक्तधनस्य जननाय प्रादुर्भावाय लाभाय ^v^ममहे स्तुतवानस्मि। द्यावापृथिव्योः प्रसन्नयोरेवेदं दानं लभ्यते नान्यदेति दानमाहात्म्यप्रशंसाधिगन्तव्या ॥ ॥ २४ ॥

'पिबा सुतस्य' इति चतुर्विंशत्यृचं तृतीयं सूक्तं काण्वस्य मेध्यातिथेरार्षम्[1]। अयुजो बृहत्यो युजः सतोबृहत्यः एकविंश्यनुष्टुब्द्वाविंशीत्रयोविंश्यौ गायत्र्यौ चतुर्विंशी बृहती। एताश्चतस्रः कुरयाणस्य[2] पुत्रस्य पाकस्थामनाम्नो राज्ञो[3] दानस्तुतिप्रतिपादिकाः। अतस्तद्देवताकाः। शिष्टा ऐन्द्र्यः। तथा चानुक्रान्तं—'पिब चतुर्विंशतिर्मेध्यातिथिः प्रागाथं त्वनुष्टुब्गायत्र्यौ बृहती चान्त्याः कौरयाणस्य पाकस्थाम्नो दानस्तुतिः' इति। महाव्रते निष्केवल्ये बार्हततृचाशीतौ दानस्तुतीर्विनेदं सूक्तं सप्तम्यष्टम्योश्चोद्धारः। तथैव पञ्चमारण्यके सूत्रितं—'पिबा सुतस्य रसिन इति विंशतेः सप्तमीं चाष्टमीं चोद्धरति' (ऐ. आ. ५. २. ४) इति। ज्योतिष्टोमे निष्केवल्ये आद्यो रथन्तरसामप्रगाथः शंसनीयः। सूत्र्यते हि—'पिबा सुतस्य रसिन इति सामप्रगाथः' (आश्व. श्रौ. ५. १५) इति। चातुर्विंशिकेऽहनि निष्केवल्येऽप्ययं प्रगाथः। सूत्र्यते हि—'उक्तो रथन्तरस्योभयं शृणवच्च न इति बृहतः' (आश्व. श्रौ. ७. ३) इति। एवमन्यत्रापि यदि रथन्तरं पृष्ठं भवति तत्र सर्वत्रायं प्रगाथो द्रष्टव्यः। पञ्चमेऽहनि प्रउगशस्त्रे 'पिबा सुतस्य' इत्ययमैन्द्रः प्रगाथः। सूत्रितं च—'पिबा सुतस्य रसिनो देवंदेवं वोऽवसे' (आश्व. श्रौ. ७. १२) इति ॥

**पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः ।**
**आपिर्नो बोधि सधमाद्यो वृधे३ऽस्माँ अवन्तु ते धियः ॥ १ ॥**

पिब । सुतस्य । रसिनः । मत्स्व । नः । इन्द्र । गोऽमतः ।
आपिः । नः । बोधि । सधऽमाद्यः । वृधे । अस्मान् । अवन्तु । ते । धियः ॥ १ ॥

हे ^v^इन्द्र ^v^रसिनः रसवतः ^v^गोमतः गोविकारैः पयःप्रभृतिभिः श्रयणद्रव्यैर्युक्तस्य ^v^नः अस्मदीयस्य ^v^सुतस्य अभिषुतस्य। 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। ईदृशं सोमं ^v^पिब। पीत्वा च ^v^मत्स्व तृप्तो भव। अपि च ^v^सधमाद्यः सह मादयितव्यः सहितैरस्माभिस्तर्पयितव्यस्त्वम् ^v^आपिः आपयिता बन्धुः सन् ^v^नः अस्माकं ^v^वृधे वर्धनाय ^v^बोधि बुध्यस्व। ^v^ते त्वदीयाः ^v^धियः बुद्धयोऽनुग्रहात्मिकाः ^v^अस्मान् स्तोतॄन् ^v^अवन्तु रक्षन्तु ॥

**भूयाम ते सुमतौ वाजिनो वयं मा नः स्तरभिमातये ।**
**अस्माञ्चित्राभिरवतादभिष्टिभिरा नः सुम्नेषु यामय ॥ २ ॥**

भूयाम । ते । सुऽमतौ । वाजिनः । वयम् । मा । नः । स्तः । अभिऽमातये ।
अस्मान् । चित्राभिः । अवतात् । अभिष्टिऽभिः । आ । नः । सुम्नेषु । यमय ॥ २ ॥

हे इन्द्र ^v^ते तव ^v^सुमतौ शोभनायां मतावनुग्रहबुद्धौ ^v^वाजिनः हविष्मन्तः ^v^वयं ^v^भूयाम वर्तमाना भवाम[4]। ^v^अभिमातये। अभिमन्यत इत्यभिमातिः शत्रुः। तस्मै तदर्थं ^v^नः अस्मान् ^v^मा ^v^स्तः मा हिंसीः। 'स्तृञ् हिंसायाम्'। माङि लुङि छान्दसश्च्लेर्लुक्। अपि तु ^v^अभिष्टिभिः अभ्येषणी-

१. त-श—मेधातिथे॰। २. ज्ञ-त१-२-४—कुरुयाणस्य। ३. ख-भ—यज्ञे। ४. ज्ञ-त१-२—भवेम।

याभिः प्रार्थनीयाभिः ᵛचित्राभिः चायनीयाभिर्बहुविधाभिर्वा त्वदीयाभिरूतिभिः ᵛअस्मान् ᵛअवतात् अव रक्ष। तथा ᵛनः अस्मान् ᵛसुम्नेषु सुखेषु ᵛआ ᵛयामय आयतान् कुरु। सर्वदा सुखिन एव कुरु॥

इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम।
पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत॥ ३॥

इमाः। ऊँ इति। त्वा। पुरुवसो इति पुरुऽवसो। गिरः। वर्धन्तु। याः। मम।
पावकऽवर्णाः। शुचयः। विपःऽचितः। अभि। स्तोमैः। अनूषत॥ ३॥

हे ᵛपुरूवसो बहुधनेन्द्र ᵛमम मदीयाः ᵛइमाः ᵛगिरः शस्त्ररूपा वाचः ᵛत्वा[1] त्वां ᵛवर्धन्तु वर्धयन्तु। तथा ᵛपावकवर्णाः अग्निसमानतेजस्काः अत एव ᵛशुचयः शुद्धाः ᵛविपश्चितः विद्वांस उद्गातारश्च ᵛस्तोमैः स्तोत्रैर्बहिष्पवमानादिभिः ᵛअभि ᵛअनूषत त्वामभिष्टुवन्ति। 'नू[2] स्तुतौ'। कुटादिः॥

अयं सहस्रमृषिभिः सहस्कृतः समुद्रइव पप्रथे।
सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये॥ ४॥

अयम्। सहस्रम्। ऋषिऽभिः। सहःऽकृतः। समुद्रःऽइव। पप्रथे।
सत्यः। सः। अस्य। महिमा। गृणे। शवः। यज्ञेषु। विप्रऽराज्ये॥ ४॥

ᵛअयम् इन्द्रः ᵛसहस्रं सहस्रसंख्याकैः ᵛऋषिभिः अतीन्द्रियार्थदर्शिभिः स्तोतृभिः ᵛसहस्कृतः सहसा बलेन युक्तः कृतः। स्तुत्या हि देवताया बलं वर्धते। स चैवंभूतः सन् ᵛसमुद्रइव उदधिरिव ᵛपप्रथे प्रथितो विस्तीर्णो बभूव। ᵛअस्य चेन्द्रस्य ᵛसत्यः अवितथः ᵛसः प्रसिद्धः ᵛमहिमा महत्वं ᵛशवः बलं च ᵛयज्ञेषु यागेषु ᵛविप्रराज्ये। राज्ञः कर्म राज्यम्। विप्राणां स्तोतृणां राज्ये स्तुतशस्त्रसंघे ᵛगृणे स्तूयते॥

चातुर्विंशिकेऽहनि निष्केवल्ये ' इन्द्रमिद्देवतातये ' इति रैवतसामप्रगाथः शंसनीयः पृष्ठ्येऽहनि निष्केवल्ये त्वयं प्रगाथः। सूत्र्यते हि—'इन्द्रमिद्देवतातय इतीतरेषां पृष्ठ्य एवैकैकमन्वहम्' (आश्व. श्रौ. ७. ३) इति॥

इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे।
इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये॥ ५॥

इन्द्रम्। इत्। देवऽतातये। इन्द्रम्। प्रऽयति। अध्वरे।
इन्द्रम्। सम्ऽईके। वनिनः। हवामहे। इन्द्रम्। धनस्य। सातये॥ ५॥

ᵛदेवतातये। देवैः स्तोतृभिस्तायते विस्तार्यत इति देवतातिर्यज्ञः। तदर्थम् ᵛइन्द्रमित् देवेषु मध्य इन्द्रमेव आह्वयामहे। ᵛअध्वरे यज्ञे ᵛप्रयति प्रगच्छत्युपक्रान्ते सति ᵛइन्द्रं ᵛहवामहे। तथा ᵛसमीके सम्यग्गते संपूर्णे च यागे ᵛवनिनः संभजमाना वयम् ᵛइन्द्रम् एवाह्वयामहे। यद्वा। समीकमिति संग्रामनाम। समीके संग्राम इन्द्रमाह्वयामहे। ᵛधनस्य ᵛसातये लाभाय ᵛइन्द्रम् एवाह्वयामहे। अतः शीघ्रमिन्द्र आगच्छत्वित्यर्थः॥   ॥ २५॥

---

१. ख-ब्र-त-न-भ-श-' त्वा ' नास्ति। २. ब्र-त१-२-नु।

इन्द्रो मह्ना रोदसी पप्रथच्छव इन्द्रः सूर्यमरोचयत् ।
इन्द्रे ह विश्वा भुवनानि येमिर इन्द्रे सुवानास इन्दवः ॥ ६ ॥

इन्द्रः । मह्ना । रोदसी इति । पप्रथत् । शवः । इन्द्रः । सूर्यम् । अरोचयत् ।
इन्द्रे । ह । विश्वा । भुवनानि । येमिरे । इन्द्रे । सुवानासः । इन्दवः ॥ ६ ॥

अयम् <sup>v</sup>इन्द्रः <sup>v</sup>शवः शवस आत्मीयस्य बलस्य <sup>v</sup>मह्ना महिम्ना महत्त्वेन <sup>v</sup>रोदसी द्यावापृथिव्यौ <sup>v</sup>पप्रथत् अप्रथयत् विस्तारितवान् । तथा स्वर्भानुनावृतं <sup>v</sup>सूर्यम् अयमेव <sup>v</sup>इन्द्रः <sup>v</sup>अरोचयत् अदीपयत् । तस्यासुरस्य वधेन प्रकाशितवान् । अपि च <sup>v</sup>इन्द्रे <sup>v</sup>ह अस्मिन्नेवेन्द्रे <sup>v</sup>विश्वा विश्वानि व्याप्तानि <sup>v</sup>भुवनानि भूतजातानि <sup>v</sup>येमिरे उपरमन्ते । इन्द्रेण नियम्यन्त इत्यर्थः । तथा <sup>v</sup>सुवानासः सूयमाना अभिपूयमाणाः <sup>v</sup>इन्दवः सोमाश्च अस्मिन्नेव <sup>v</sup>इन्द्रे नियम्यन्ते अन्तर्भवन्तीत्यर्थः ॥

ज्योतिष्टोमो यदि रथन्तरपृष्ठस्तदा निष्केवल्ये 'अभि त्वा पूर्वपीतये' इति प्रगाथोऽनुरूपः । सूत्र्यते हि–'अभि त्वा पूर्वपीतय इति प्रगाथौ स्तोत्रियानुरूपौ' (आश्व. श्रौ. ५. १५) इति । महाव्रतेऽपि[1] निष्केवल्ये दक्षिणपक्षेऽप्ययं प्रगाथः । सूत्रितं च–'अभि त्वा पूर्वपीतय इति रथन्तरस्य स्तोत्रियानुरूपौ प्रगाथौ' (ऐ. आ. ५. २. २) इति ॥

अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः ।
समीचीनास ऋभवः समस्वरन्रुद्रा गृणन्त पूर्व्यम् ॥ ७ ॥

अभि । त्वा । पूर्वऽपीतये । इन्द्र । स्तोमेभिः । आयवः ।
सम्ऽईचीनासः । ऋभवः । सम् । अस्वरन् । रुद्राः । गृणन्त । पूर्व्यम् ॥ ७ ॥

हे <sup>v</sup>इन्द्र <sup>v</sup>आयवः मनुष्याः स्तोतारः <sup>v</sup>स्तोमेभिः स्तोत्रैस्त्वामभिष्टुवन्ति । किमर्थम् । <sup>v</sup>पूर्वपीतये सर्वेभ्यो देवेभ्यः पूर्वं प्रथमत एव सोमस्य पानाय । सवनमुखे हि चमसगणैरिन्द्रस्यैव सोमो हूयते । तथा <sup>v</sup>समीचीनासः संगताः <sup>v</sup>ऋभवः । प्रथमवाचकेन शब्देन त्रयोऽप्युपलक्ष्यन्ते । ऋभुर्विभ्वा वाज इत्येते च <sup>v</sup>समस्वरन् त्वामेव सम्यगस्तुवन् । 'स्वृ शब्दोपतापयोः' । <sup>v</sup>रुद्राः रुद्रापुत्रा मरुतश्च <sup>v</sup>पूर्व्यं पुरातनं वृद्धं त्वामेव <sup>v</sup>गृणन्त अभ्यस्तुवन् । वृत्रवधसमये 'प्रहर भगवो जहि वीरयस्व' इत्येवंरूपया वाचा त्वां स्तुतवन्त इत्यर्थः ॥

अस्येदिन्द्रो वावृधे वृष्ण्यं शवो मदे सुतस्य विष्णवि ।
अद्या तमस्य महिमानमायवोऽनु ष्टुवन्ति पूर्वथा ॥ ८ ॥

अस्य । इत् । इन्द्रः । ववृधे । वृष्ण्यम् । शवः । मदे । सुतस्य । विष्णवि ।
अद्य । तम् । अस्य । महिमानम् । आयवः । अनु । स्तुवन्ति । पूर्वऽथा ॥ ८ ॥

<sup>v</sup>अस्येत् अस्यैव यजमानस्य <sup>v</sup>वृष्ण्यं वृषत्वं वीर्यं <sup>v</sup>शवः बलं च <sup>v</sup>इन्द्रः <sup>v</sup>वावृधे वर्धयति । <sup>v</sup>सुतस्य अभिषुतस्य सोमस्य पानेन <sup>v</sup>विष्णवि कृत्स्नदेहस्य व्यापके <sup>v</sup>मदे हर्षे सति तस्यैव यजमानस्य बलं वर्धयतीत्यर्थः । <sup>v</sup>अद्य अस्मिन् काले <sup>v</sup>अस्य इन्द्रस्य <sup>v</sup>तम् उक्तगुणं <sup>v</sup>महिमानं महत्त्वम् <sup>v</sup>आयवः

---

१. ज्ञ-ज्ञ-त१-२-४–महाव्रते ।

मनुष्याः अनु ष्टुवन्ति। आनुपूर्व्येण स्तुवन्ति। पूर्वथा। पूर्वशब्दादिवार्थे 'प्रत्नपूर्व०' इत्यादिना थाल्प्रत्ययः। यथा पूर्वस्मिन् कालेऽस्तुवन् एवमिदानीमपि तेनैव क्रमेण स्तुवन्तीत्यर्थः ॥

ज्योतिष्टोमे माध्यंदिनसवने ब्रह्मशस्त्रे 'तत्त्वा यामि' इति प्रगाथोऽनुरूपः। सूत्रितं च—'तत्त्वा यामि सुवीर्यमिति प्रगाथौ स्तोत्रियानुरूपौ' (आश्व. श्रौ. ५. १६) इति। चातुर्विंशिकेऽहनि माध्यंदिनसवनेऽप्ययं प्रगाथस्तस्यैवानुरूपः। सूत्रितं च—'तत्त्वा यामि सुवीर्यमभि प्र वः सुराधसम्' (आश्व. श्रौ. ७. ४) इति ॥

तत्त्वा यामि सुवीर्यं तद्ब्रह्म पूर्वचित्तये।
येना यतिभ्यो भृगवे धने हिते येन प्रस्कण्वमाविथ ॥ ९ ॥

तत्। त्वा। यामि। सुऽवीर्यम्। तत्। ब्रह्म। पूर्वऽचित्तये।
येन। यतिऽभ्यः। भृगवे। धने। हिते। येन। प्रस्कण्वम्। आविथ ॥ ९ ॥

हे इन्द्र तत् सुवीर्यं शोभनवीर्यं त्वा त्वां यामि याचामि। छान्दसो वर्णलोपः। तथा तत् ब्रह्म परिवृढमन्नं पूर्वचित्तये पूर्वप्रज्ञानायान्येभ्यः पूर्वमेव लाभाय त्वां याचामि। धने हिते अभीष्टे सति येन सुवीर्येण यतिभ्यः कर्मसूपरतेभ्योऽयष्टृभ्यो जनेभ्यः सकाशाद्धनमाहृत्य भृगवे महर्षये प्रयच्छसि। यद्वा। कर्मसु नियता अङ्गिरसो यतयः। तेषामर्थं धनं प्रयच्छसि। तादर्थ्ये चतुर्थी। येन च ब्रह्मणा प्रस्कण्वं कण्वप्रभवं कण्वस्य पुत्रमृषिम् आविथ ररक्षिथ। तदुभयं याचामीत्यन्वयः ॥

येना समुद्रमसृजो महीरपस्तदिन्द्र वृष्णि ते शवः।
सद्यः सो अस्य महिमा न संनशे यं क्षोणीरनुचक्रदे ॥ १० ॥

येन। समुद्रम्। असृजः। महीः। अपः। तत्। इन्द्र। वृष्णि। ते। शवः।
सद्यः। सः। अस्य। महिमा। न। सम्ऽनशे। यम्। क्षोणीः। अनुऽचक्रदे ॥ १० ॥

हे इन्द्र येन आत्मीयेन[1] बलेन समुद्रम् अब्धिं प्रति महीः महतीः अपः उदकानि असृजः व्यसृजः। महान् समुद्रो यावद्भिर्जलैः पूर्यते तावन्ति जलानि पुरा त्वं सृष्टवानित्यर्थः। ते त्वदीयं तत् शवः बलं वृष्णि वर्षकम्। अभीष्टफलदमित्यर्थः। अस्य इन्द्रस्य सः महिमा न संनशे न सम्यगापनीयः[2]। परैरप्रधृष्य इत्यर्थः। नशेः कृत्यार्थे केन्प्रत्ययः। यं महिमानं क्षोणीः क्षोणी पृथिवी अनुचक्रदे अनुगच्छति। क्रदिरत्र गत्यर्थः। यदधीना वर्तत इत्यर्थः ॥ ॥२६॥

शग्धी न इन्द्र यत्त्वा रयिं यामि सुवीर्यम्।
शग्धि वाजाय प्रथमं सिषासते शग्धि स्तोमाय पूर्व्य ॥ ११ ॥

शग्धि। नः। इन्द्र। यत्। त्वा। रयिम्। यामि। सुऽवीर्यम्।
शग्धि। वाजाय। प्रथमम्। सिसासते। शग्धि। स्तोमाय। पूर्व्य ॥ ११ ॥

---

१. ख-त३-न-भ-अस्मदीयेन। २. ख-सम्यमासनीयः; ज्ञ-त१-२-४-न-भ-सम्यग्वापनीयः; त३-श-सम्यग्व्यापनीयः।

हे ᵛइन्द्र ᵛसुवीर्यं शोभनवीर्योपेतम्। बहुव्रीहौ 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम्। ᵛयत् ᵛरयिं धनं त्वां[1] ᵛयामि याचामि। छान्दसो वर्णलोपः। ᵛनः अस्मभ्यं तद्धनं ᵛशग्धि देहि। शकिरत्र दानार्थः। तस्मात् लोटि हौ छान्दसो विकरणस्य लुक्। 'हुझल्भ्यः°' इति हेर्धित्वम्। तथा ᵛसिषासते संभक्तुमिच्छते। सनतेः सनि 'सनीवन्तर्ध°' इति विकल्पनादिडभावे 'जनसनखनाम्°' इत्यात्वम्। ᵛवाजाय। वाज इत्यन्ननाम। तेन च तद्वाल्लँक्ष्यते। हविष्मते यजमानाय ᵛप्रथमं सर्वेभ्यः पूर्वमेव ᵛशग्धि धनं प्रयच्छ। यद्वा वाजायेति द्वितीयार्थे चतुर्थी। कर्मभिस्त्वां संभक्तुमिच्छते जनाय प्रथमं वाजाय वाजमन्नं शग्धि देहि। पश्चात् ᵛस्तोमाय स्तोत्रे हे ᵛपूर्व्य पूर्वस्मिन् काले भव चिरंतनेन्द्र ᵛशग्धि देहि। स्तौतेः कर्तरि 'अर्तिस्तुसु°' इत्यादिना मन्प्रत्ययः॥

**शग्धी नो॑ अ॒स्य यद्ध॑ पौ॒रमावि॑थ॒ धिय॑ इन्द्र॒ सिषा॑सतः।**
**शग्धि॒ यथा॒ रुश॑मं॒ श्याव॑कं॒ कृप॒मिन्द्र॒ प्राव॒: स्व॑र्णरम्॥ १२॥**

श॒ग्धि। न॒:। अ॒स्य। यत्। ह॒। पौ॒रम्। आवि॑थ। धिय॑:। इ॒न्द्र॒। सिसा॑सतः।
श॒ग्धि। यथा॑। रुश॑मम्। श्याव॑कम्। कृप॑म्। इन्द्र॑। प्र। आव॑:। स्वः॑ऽनरम्॥ १२॥

हे ᵛइन्द्र ᵛधियः कर्माणि स्तोत्राणि वा ᵛसिषासतः संभक्तवतः ᵛनः अस्माकं संबन्धिनः ᵛअस्य यजमानस्य तद्धनं ᵛशग्धि प्रदेहि ᵛयद्ध येन खलु धनेन ᵛपौरम्। पुरुर्नाम राजा। तस्य पुत्रम् ᵛआविथ ररक्षिथ। अपि च हे ᵛइन्द्र ᵛरुशमं ᵛश्यावकं ᵛकृपं चैतन्नामकांस्त्रीन् राजर्षीन् ᵛयथा येन प्रकारेण ᵛप्रावः प्रारक्षः तथा ᵛस्वर्णरं सर्वस्य हविषो नेतारं प्रापयितारम्। यद्वा। स्वः स्वर्गं प्रति नेतव्यमिमं यजमानं ᵛशग्धि शक्तं कुरु। धनादिसंपत्त्या यागानुष्ठानाय यथा शक्तो भवति तथा कुर्वित्यर्थः। इन्द्र इत्यामन्त्रितस्य पादादित्वेनाष्टमिकनिघाताभावे षाष्ठिकमामन्त्रिताद्युदात्तत्वम्॥

चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्रह्मशस्त्रे 'कन्नव्यः' इति कद्वत्प्रगाथः। सूत्रितं च— 'कन्नव्यो अतसीनां कदू न्वस्याकृतमिति कद्वन्तः प्रगाथाः' ( आश्व. श्रौ. ७. ४ ) इति। अहर्गणेषु द्वितीयादिष्वहःसु तस्मिञ्छस्त्रे तस्यैवायं प्रगाथः। सूत्र्यते हि—'आरम्भणीयाः पर्यासान् कद्वतोऽहरहःशस्यानीति होत्रका द्वितीयादिष्वेव' ( आश्व. श्रौ. ७. १ ) इति॥

**कन्नव्यो॑ अ॒तसी॑नां तु॒रो गृ॑णीत॒ मर्त्य॑:।**
**न॒ही न्व॑स्य महि॒मान॑मिन्द्रि॒यं स्व॑र्गृ॒णन्त॑ आन॒शुः॥ १३॥**

कत्। नव्य॑:। अ॒तसी॑नाम्। तु॒रः। गृ॒णी॒त॒। मर्त्य॑:।
न॒हि। नु। अ॒स्य। म॒हि॒मान॑म्। इ॒न्द्रि॒यम्। स्व॑:। गृ॒णन्त॑:। आ॒न॒शुः॥ १३॥

ᵛअतसीनाम् अतन्तीनां सततगामिनीनां स्तुतीनां ᵛतुरः प्रेरयिता ᵛमर्त्यः मरणधर्मा ᵛनव्यः अभिनव इदानींतनः ᵛकत् को नाम स्तोता ᵛगृणीत इन्द्रं स्तुयात्। अल्पप्रज्ञैरिदानींतनैरिन्द्रः स्तोतुं न शक्यत[2] इत्यर्थः। 'गॄ शब्दे'। क्रैयादिकः। 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम्। ᵛनु पुरा पूर्वस्मिन्नपि काले विद्यमानाः ᵛस्वः सर्वे ᵛगृणन्तः स्तोतारः। यद्वा। स्वः सुष्ठ्वरणीयं प्राप्तव्यमिन्द्रं गृणन्तः स्तुवन्तो जनाः। ᵛइन्द्रियम्। इन्द्रियमिन्द्रस्य लिङ्गमिन्द्रस्यैवासाधारणम्। ᵛअस्य इन्द्रस्य ᵛमहिमानं महत्त्वं ᵛनहि ᵛआनशुः न खलु प्राप्नुवन्। अश्नोतेर्लिटि व्यत्ययेन परस्मैपदम्। 'अत आदेः' इत्यभ्यासस्यात्वम्। 'अश्नोतेश्च' इति नुट्। 'हि च' इति निघातप्रतिषेधः॥

---

१. ज्ञ-त१-२-त्वा त्वां। २. ज्ञ-त१-२-४-शक्य।

**कदु॑ स्तु॒वन्त॑ ऋतयन्त दे॒वत॒ ऋषि॒ः को विप्र॑ ओहते ।**
**क॒दा हवं॑ मघवन्निन्द्र सुन्व॒तः कदु॑ स्तुव॒त आ ग॑मः ॥ १४ ॥**

कत् । ऊँ इति॑ । स्तु॒वन्त॑ः । ऋ॒त॒ऽय॒न्त॒ । दे॒वता॑ । ऋषि॑ः । कः । विप्र॑ः । ओ॒ह॒ते॒ ।
क॒दा । हव॑म् । म॒घ॒ऽव॒न् । इ॒न्द्र॒ । सु॒न्व॒तः । कत् । ऊँ इति॑ । स्तु॒व॒तः । आ । ग॒मः ॥ १४ ॥

हे इन्द्र स्तुवन्तः स्तोत्रं कुर्वन्तः कदु के खलु जनाः देवता । 'देवात्तल्' इति स्वार्थिकस्तल्प्रत्ययः । व्यत्ययेन प्रथमा । देवं[1] त्वामुद्दिश्य[1] ऋतयन्त ऋतं यज्ञमैच्छन् । त्वदीययागेच्छापि दुर्लभा दूरे त्वद्यागकथा । ऋषिः द्रष्टा विप्रः मेधावी कः स्तोता ओहते वहति । त्वां स्तुतीः प्रापयति । न कश्चिदपि त्वां स्तोतुं शक्नोतीत्यर्थः । यत एवमतः कारणात् हे मघवन् धनवन् इन्द्र अनुग्रहीत्रा त्वयैवागन्तव्यम् । स त्वं कदा कस्मिन् काले सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य हवम् आह्वानं प्रति आ गमः आगच्छः । कदु कदा च कस्मिंश्च काले स्तुवतः केवलं स्तोत्रं कुर्वतो यजमानस्य हवमाह्वानमा[2] गमः अभ्यगच्छः[3] । सुन्वतः स्तुवतः इत्युभयत्र 'शतुरनुमः°' इति विभक्तेरुदात्तत्वम् । गमेर्लुङि लृदित्वात् च्लेरङादेशः ॥

ज्योतिष्टोमे माध्यंदिनसवने ब्रह्मशस्त्रे 'उदु त्ये' इति प्रगाथोऽनुरूपानन्तरं[4] शंसनीयः । सूत्रितं च—'उदु त्ये मधुमत्तमा इन्द्रः पूर्भित्' ( आश्व. श्रौ. ५. १६ ) इति । चातुर्विंशिके माध्यंदिनसवने तस्मिन्नेव शस्त्रेऽयं प्रगाथो वैकल्पिकोऽनुरूपः । सूत्रितं च—'उदु त्ये मधुमत्तमास्त्वमिन्द्र प्रतूर्तिषु' ( आश्व श्रौ. ७. ४ ) इति ॥

**उदु॒ त्ये मधु॑मत्तमा॒ गिर॒ः स्तोमा॑स ईरते ।**
**स॒त्रा॒जितो॑ धन॒सा अक्षि॑तोतयो वाज॒यन्तो॒ रथा॑इव ॥ १५ ॥**

उत् । ऊँ इति॑ । त्ये । मधु॑मत्ऽतमाः । गिर॑ः । स्तोमा॑सः । ई॒र॒ते॒ ।
स॒त्रा॒ऽजित॑ः । ध॒न॒ऽसाः । अक्षि॑तऽऊतयः । वा॒ज॒ऽयन्त॑ः । रथा॑ःऽइव ॥ १५ ॥

त्ये ते प्रसिद्धाः मधुमत्तमाः अतिशयेन मधुराः गिरः अप्रगीताः शस्त्ररूपा वाचः स्तोमासः प्रगीतानि बहिष्पवमानादीनि स्तोत्राणि च उत् ईरते । हे इन्द्र त्वामुद्दिश्य उद्गच्छन्ति । ऊर्ध्वं प्रसरन्ति । 'ईर गतौ' । आदादिकः[5] । तत्र दृष्टान्तः । सत्राजितः सहैव[6] शत्रून् जयन्तः अत एव धनसाः धनानि संभजन्तः । 'वन षण संभक्तौ' । 'जनसनखनक्रमगमो विट्' । 'विड्वनोरनुनासिकस्यात्' इत्यात्वम् । अक्षितोतयः । अक्षिताः क्षयरहिता ऊतयो रक्षा येषां ते तथोक्ताः । क्षियो भावे निष्ठा । 'निष्ठायामण्यदर्थे' इति पर्युदासाद्दीर्घाभावः । अत एव 'क्षियो दीर्घात्' इति निष्ठानत्वाभावश्च । वाजयन्तः वाजमन्नमिच्छन्तः । क्यचि 'न च्छन्दस्यपुत्रस्य' इतीत्वदीर्घयोः प्रतिषेधः । एवंगुणविशिष्टाः रथाइव । ते यथा विविधमितस्ततः उत्तिष्ठन्ति तद्वदुदीरत इत्यर्थः॥ ॥२७॥

**कण्वा॑इव॒ भृग॑व॒ः सूर्या॑इव॒ विश्व॒मिद्धी॒तमा॑नशुः ।**
**इन्द्रं॒ स्तोमे॑भिर्म॒हय॑न्त आ॒यव॑ः प्रि॒यमे॑धासो अस्वरन् ॥ १६ ॥**

---

१. ख-न-भ-देवतामु° । २. झ-°माह्वानं प्रत्या । ३. ज-प्रत्यागच्छः; श-अत्यगच्छः ।
४. ख-प्रगाथो वैकल्पिकोनुरूपानंतरं । ५. ख-झ-न-भ-श-अदादिकः । ६. ख-त३-न-भ-सदैव ।

कण्वाःऽइव । भृगवः । सूर्याःऽइव । विश्वम् । इत् । धीतम् । आनशुः ।
इन्द्रम् । स्तोमेभिः । महयन्तः । आयवः । प्रियऽमेधासः । अस्वरन् ॥ १६ ॥

कण्वाइव कण्वगोत्रोत्पन्ना ऋषय इव स्तुवन्तः भृगवः भृगुगोत्रोत्पन्ना ऋषयः धीतम् आध्यातं विश्वमित् व्याप्तं तमेवेन्द्रम् आनशुः व्यापुः । सूर्याइव । यथा सूर्यरश्मयः सर्वं जगद्व्याप्नुवन्ति तद्वत् । अपि च प्रियमेधासः प्रियप्रज्ञा एतत्संज्ञा वा आयवः मनुष्यास्तमेव इन्द्रं महयन्तः पूजयन्तः स्तोमेभिः स्तोत्रैः अस्वरन् अस्तुवन् । 'स्वृ शब्दोपतापयोः' । भौवादिकः ॥

युक्ष्वा हि वृत्रहन्तम हरी इन्द्र परावतः ।
अर्वाचीनो मघवन्त्सोमपीतय उग्र ऋष्वेभिरा गहि ॥ १७ ॥

युक्ष्व । हि । वृत्रहन्ऽतम । हरी इति । इन्द्र । पराऽवतः ।
अर्वाचीनः । मघऽवन् । सोमऽपीतये । उग्रः । ऋष्वेभिः । आ । गहि ॥ १७ ॥

हे वृत्रहन्तम । वृत्रं हतवान् वृत्रहा । अतिशयेन हतवान् वृत्रहन्तमः । यथा पुनर्नोत्तिष्ठति तथा हतवानित्यर्थः । 'अनो नुट्' इति तमपो नुट् । हे तादृश इन्द्र हरी त्वदीयावश्वौ युक्ष्व । हिरवधारणे । आत्मीये रथे योजयैव । हे मघवन् धनवन् उग्रः उद्गूर्णस्त्वं सोमपीतये सोमपानार्थम् । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । अर्वाचीनः अस्मदभिमुखः ऋष्वेभिः ऋष्वैः दर्शनीयैर्मरुद्भिः सार्धं परावतः । दूरनामैतत् । दूरे वर्तमानाद्द्युलोकात् आ गहि आगच्छ । गमेर्लोटः सेर्हिः । छान्दसः शपो लुक् । 'अनुदात्तोपदेश°' इत्यनुनासिकलोपः । तस्य 'असिद्धवदत्रा भात्' इत्यसिद्धत्वात् हेर्लुगभावः ॥

इमे हि ते कारवो वावशुर्धिया विप्रासो मेधसातये ।
स त्वं नो मघवन्निन्द्र गिर्वणो वेनो न शृणुधी हवम् ॥ १८ ॥

इमे । हि । ते । कारवः । वावशुः । धिया । विप्रासः । मेधऽसातये ।
सः । त्वम् । नः । मघऽवन् । इन्द्र । गिर्वणः । वेनः । न । शृणुधि । हवम् ॥ १८ ॥

कारवः कर्मणां कर्तारः विप्रासः मेधाविनः इमे हि इमे खलु यजमानाः धिया स्तुत्या हे इन्द्र ते त्वां वावशुः पुनरस्तुवन् । 'वाशृ शब्दे' इत्यस्माद्यङ्लुगन्ताद्रूपमेतत् । यद्वा वावशुः पुनःपुनरकामयन्त । 'वश कान्तौ' । अस्माद्यङ्लुगन्ताल्लङि 'सिजभ्यस्त°' इति झेर्जुस् । बाहुलकोऽडभावः । लिटि वा तुजादित्वादभ्यासदीर्घत्वम् । 'हि च' इति निघातप्रतिषेधः । किमर्थम् । मेधसातये मेधस्य यागस्य संभजनार्थम् । सनतेः क्तिनि 'जनसनखनाम्°' इत्यात्वम् । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । हे मघवन् धनवन् गिर्वणः गीर्भिर्वननीय नः अस्माकं हवं स्तोत्रं सर्वपूर्वोक्तगुणस्त्वं शृणुधि शृणु । बुध्यस्व । वेनो न । वेनतिः कान्तिकर्मा । यथा कान्तो जाताभिलाषः पुरुषः कामयितव्यमैकाग्र्येण शृणोति तद्वत् । 'श्रुशृणुपृकृवृभ्यः°' इति हेर्धित्वम् । 'अन्येषामपि°' इति सांहितिको दीर्घः ॥

निरिन्द्र बृहतीभ्यो वृत्रं धनुभ्यो अस्फुरः ।
निरर्बुदस्य मृगयस्य मायिनो निः पर्वतस्य गा आजः ॥ १९ ॥

निः । इन्द्र । बृहतीभ्यः । वृत्रम् । धनुऽभ्यः । अस्फुरः ।

निः । अर्बुदस्य । मृगयस्य । मायिनः । निः । पर्वतस्य । गाः । आजः ॥ १९ ॥

हे इन्द्र वृत्रम् आवरकमसुरं बृहतीभ्यः महद्भ्यः । लिङ्गव्यत्ययः । धनुभ्यः धनुर्भ्यः कोदण्डेभ्यः । छान्दसो रेफलोपः । हेतौ पञ्चमी । महद्भिर्धनुर्भिर्हेतुभिः निः अस्फुरः । स्फुरतिर्वधकर्मा । निरवधीः । निःशेषेण हतवानसि । यद्वा । वृत्रमावरकं मेघं धनुभ्यः । धन्वन्ति गच्छन्तीति धनव आपः । महतीभ्योऽद्भ्यः । तादर्थ्ये चतुर्थी । ईदृशीनामपां लाभार्थं निरवधीः । अपि च मायिनः मायाविनः अर्बुदस्य एतत्संज्ञकस्यासुरस्य मृगयस्य एतत्संज्ञकस्य च । उभयत्र कर्मणि षष्ठी। इमावप्यसुरौ निः अस्फुरः निःशेषेणावधीः । मायाशब्दस्य व्रीह्यादिषु पाठात् 'व्रीह्यादिभ्यश्च' इति मत्वर्थीयो विनिः । तथा पर्वतस्य वलनाम्नासुरेण[1] गवामदर्शनाय निहितस्य गिरेः संबन्धिनीः गाः वलेनापहृताः निः आजः निरगमयः । 'अज गतिक्षेपणयोः' ॥

निरग्नयो रुरुचुर्निरु सूर्यो निः सोम इन्द्रियो रसः ।

निरन्तरिक्षादधमो महामहिं कृषे तदिन्द्र पौंस्यम् ॥ २० ॥

निः । अग्नयः । रुरुचुः । निः । ऊँ इति । सूर्यः । निः । सोमः । इन्द्रियः । रसः ।

निः । अन्तरिक्षात् । अधमः । महाम् । अहिम् । कृषे । तत् । इन्द्र । पौंस्यम् ॥ २० ॥

हे इन्द्र महां महान्तं कृत्स्नस्य जगतो व्यापकम् अहिम् आहननशीलं वृत्रं यदा त्वम् अन्तरिक्षात् आकाशात् निः अधमः निरगमयः । धमतिर्गतिकर्मा । तत् तदानीं पौंस्यं वृत्रहननहेतुभूतं[2] बलं कृषे कुरुषे पुरस्कुरुषे । करोतेश्छान्दसो विकरणस्य लुक् । अग्नयः च त्रिस्थानगताः निः रुरुचुः निःशेषेण दिदीपिरे । सूर्यः प्रेरक आदित्योऽपि निःशेषेण दिदीपे । इन्द्रियः इन्द्रेण सेव्यः रसः रसात्मकोऽमृतमयः सोमः च निःशेषेण दिदीपे । अग्न्यादयः सर्वे पूर्वं वृत्रेणावृतत्वान्निष्प्रभाः सन्त इदानीं तस्मिन्नावरके हते सम्यक् प्राकाशिषतेत्यर्थः ॥ ॥ २८ ॥

यं मे दुरिन्द्रो मरुतः पाकस्थामा कौरयाणः ।

विश्वेषां त्मना शोभिष्ठमुपेव दिवि धावमानम् ॥ २१ ॥

यम् । मे । दुः । इन्द्रः । मरुतः । पाकऽस्थामा । कौरयाणः ।

विश्वेषाम् । त्मना । शोभिष्ठम् । उपऽइव । दिवि । धावमानम् ॥ २१ ॥

इदमादिकेन चतुर्ऋचेन कुरयाणपुत्रात् पाकस्थामनाम्नो राज्ञो दानं लब्ध्वा[3] मेध्यातिथिस्तदीयं दानं स्तौति । यं यादृशं धनसंघं मे मह्यम् इन्द्रः मरुतः च दुः दत्तवन्तः तादृशमेव धनसमूहं कौरयाणः । शत्रून् प्रति युद्धाभिमुख्येन कृतं यानं हस्त्यश्वादिकं येनासौ कुरयाणः । तस्य पुत्रः कौरयाणः । पाकस्थामा । तिष्ठत्यनेनेति स्थाम बलम् । परिपक्वबलः । एतत्संज्ञो राजा मह्यं प्रादात् । ददातेर्लुङि 'गातिस्थ°' इति सिचो लुक् । अडभावश्छान्दसः । कीदृशं धनसंघम् । विश्वेषां सर्वेषां धनानां मध्ये त्मना आत्मना स्वत एव शोभिष्ठम् अतिशयेन शोभावन्तम् । 'मन्त्रेष्वाङ्यादेः°' इत्यात्मन आकारलोपः । शोभावच्छब्दादातिशायनिक इष्ठन् । 'विन्मतोर्लुक्' । 'यस्य°' इति लोपः ।

१. ख-घ-ज्ञ-त२-न-भ-श-बलनाम्ना° । २. ज-त३-वृत्रहननाय हेतुभूतं । ३. ख-ज्ञ-न-भ-श-लब्धा ।

अतिशयेन शोभावत्त्वे दृष्टान्तः। ᵛदिवि आकाशे ᵛउपेव ᵛधावमानं प्रभाभिरुपेतं शीघ्रगामिनं सूर्यमिव। शोभावत्तममित्यर्थः॥

रोहि॑तं मे॒ पाक॑स्थामा सु॒धुरं॑ कक्ष्य॒प्राम्। अदा॑द्रा॒यो वि॒बोध॑नम्॥ २२॥

रोहि॑तम्। मे॒। पाक॑ऽस्थामा। सु॒ऽधुर॑म्। क॒क्ष्य॒ऽप्राम्। अदा॑त्। रा॒यः। वि॒ऽबोध॑नम्॥२२॥

ᵛपाकस्थामा राजा ᵛरोहितं लोहितवर्णं वृषभमश्वं वा ᵛमे मह्यम् ᵛअदात् दत्तवान्। कीदृशम्। ᵛसुधुरं शोभनधुरं शोभनवहनप्रदेशम्। 'ऋक्पूरब्धूः°' (पा. सू. ५. ४. ७४) इत्यकारः समासान्तः। 'ऋत्वादयश्च' इति बहुव्रीहावुत्तरपदाद्युदात्तत्वम्। ᵛकक्ष्यप्राम्। कक्ष्या कक्षयोः बाहुमूलयोः[1] बध्यमाना रज्जुः। तस्याः प्रातारं पूरयितारम्। पीवरमित्यर्थः। 'प्रा पूरणे'। ᵛरायः धनस्य ᵛविबोधनं विशेषेण बोधकम्[2]। बहुधनप्राप्तिहेतुमित्यर्थः। 'ऊडिदम्°' इत्यादिना रायो विभक्तिरुदात्ता॥

यस्मा॑ अ॒न्ये दश॒ प्रति॒ धुरं॒ वह॑न्ति॒ वह्न॑यः। अस्तं॒ वयो॒ न तुग्र्य॑म्॥ २३॥

यस्मै॑। अ॒न्ये। दश॑। प्रति॑। धुर॑म्। वह॑न्ति। वह्न॑यः। अस्त॑म्। वयः॑। न। तुग्र्य॑म्॥२३॥

पूर्वोक्त एवाश्वो विशेष्यते। ᵛयस्मै। षष्ठ्यर्थे चतुर्थी। यस्याश्वस्य वृषभस्य वा ᵛधुरं वोढव्यं युगधुरम् ᵛअन्ये प्रकृतादस्माद्विलक्षणा दशसंख्याकाः ᵛवह्नयः वोढारोऽश्वा बलीवर्दा वा प्रतिनिधयः सन्तो मां वोढुं ᵛवहन्ति बिभ्रति। बहूनामेकत्रवहने दृष्टान्तः। ᵛअस्तम्। अस्यते क्षिप्यते तस्मिन् पदार्थजातमित्यस्तं गृहम्। प्रति ᵛवयो ᵛन गन्तारोऽश्वा यथा ᵛतुग्र्यं तुग्रपुत्रं भुज्युं समुद्रतीराद् वहन् तद्वत्। तादृशमश्वं मह्यं प्रादादिति पूर्वस्यामृच्यन्वयः। भुज्योर्वहनं च 'नासत्या भुज्युमूहथुः' (ऋ. सं. १. ११६. ४) इत्यादाववगन्तव्यम्। यद्वा यस्मा इति कर्मणि चतुर्थी। यं रथमन्ये दशसंख्याका वह्नयो वोढारोऽश्वा धुरं वहनप्रदेशं प्रति गताः सन्तो वहन्ति तादृशं रथमपि मह्यं दत्तवानित्यर्थः॥

आ॒त्मा पि॒तुस्त॒नूर्वास॑ ओजो॒दा अ॒भ्यञ्ज॑नम्।
तु॒रीय॒मिद्रोहि॑तस्य॒ पाक॑स्थामानं भो॒जं दा॒तार॑मब्रवम्॥ २४॥

आ॒त्मा। पि॒तुः। त॒नूः। वास॑ः। ओज॑ःऽदाः। अ॒भिऽअञ्ज॑नम्।
तु॒रीय॑म्। इत्। रोहि॑तस्य। पाक॑ऽस्थामानम्। भो॒जम्। दा॒तार॑म्। अ॒ब्र॒वम्॥ २४॥

अयं पाकस्थामा ᵛआत्मा स्वयं ᵛपितुः जनकस्य ᵛतनूः तनयः। पिता यथा सन्मार्गवर्तितया प्रशस्त एवमयमपीत्यर्थः। तथा ᵛवासः वासयिता निवासयिता। वासयतेरौणादिकोऽसुन्। ᵛअभ्यञ्जनम् अभिव्यक्तं यथा भवति तथा ᵛओजोदाः ओजसो बलस्य दाता धारयिता वा। यद्वा। आत्मा सततगामी। पितुरित्यन्ननाम। व्याप्तमन्नं येन दत्तम्। तनूर्विस्तृतं वासो वस्त्रमभ्यञ्जनमभ्यञ्जनसाधनं घृततैलादिकं च येन दत्तम्। यश्चौजोदा बलस्य दाता। तं ᵛपाकस्थामानं ᵛतुरीयं स्वकीयप्रपितामहापेक्षया चतुर्थं यद्वा तुरीयं शत्रूणां तूर्वकं हिंसितारं ᵛभोजं शत्रूणां भोजयितारं ᵛरोहितस्य लोहितवर्णस्य पूर्वोक्तस्याश्वस्य ᵛदातारम् एवंगुणकं पाकस्थामानम् ᵛअब्रवम्। उक्तेन प्रकारेणास्तौषम्। ᵛइत् इति पूरकः॥ ॥ ३०॥

'यदिन्द्र' इत्येकविंशत्यृचं चतुर्थं सूक्तं काण्वगोत्रस्य देवातिथेरार्षम्। 'वृक्षाश्चिन्मे' इत्येषा पुरउष्णिक् शिष्टास्त्वयुजो बृहत्यो युजः सतोबृहत्यः। 'स्थूरं राधः' इत्यादिभिस्तिसृभिः कुरुङ्गदानस्य स्तूयमानत्वात्तास्तद्देवताकाः। तत्पूर्वाः पञ्चदश्याद्याश्चतस्रः पूषदेवताका इन्द्रदेवताका वा

---

१. ख–पार्श्वयोः। २. त३–अवबोधकं; श–बाधकं।

शिष्टा ऐन्द्यः । तथा चानुक्रान्तं—' यदिन्द्र सैका देवातिथिस्तृचोऽन्यः पुरउष्णिगन्तः कुरुङ्गस्य दानस्तुतिस्तत्पूर्वाश्चतस्रः पौष्ण्यो वा ' इति । महाव्रते निष्केवल्ये बार्हततृचाशीतावाद्याश्चतुर्दशर्चः शंसनीयाः । तथैव पञ्चमारण्यके—' यदिन्द्र प्रागपागुदगिति चतुर्दश ' ( ऐ. आ. ५. २. ४ ) इति । चातुर्विंशिकेऽहनि माध्यंदिने सवनेऽच्छावाकशस्त्र आद्यः प्रगाथो वैकल्पिकः स्तोत्रियः । सूत्र्यते हि—' यदिन्द्र प्रागपागुदग्यथा गौरो अपा कृतम् ' ( आश्व. श्रौ. ७. ४ ) इति ॥

यदिन्द्र प्रागपागुदङ् न्यग्वा हूयसे नृभिः ।
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥ १ ॥

यत् । इन्द्र । प्राक् । अपाक् । उदक् । न्यक् । वा । हूयसे । नृऽभिः ।
सिम । पुरु । नृऽसूतः । असि । आनवे । असि । प्रऽशर्ध । तुर्वशे ॥ १ ॥

हे ᵛइन्द्र ᵛयत् यदि ᵛप्राक् प्राच्यां दिशि वर्तमानैः । सप्तम्यन्ताद्दिक्छब्दाद्विहितस्यास्तातेः ' अञ्चेर्लुक् ' ( पा. सू. ५. ३. ३० ) इति लुक् । ᵛअपाक् प्रतीच्यां दिशि वर्तमानैः । यदि वा ᵛउदक् उदीच्यां दिशि वर्तमानैः । यत् ᵛवा ᵛन्यक् नीच्यां दिशि अधस्ताद्वर्तमानैः । ' न्यधी च ' इति नेः प्रकृतिस्वरत्वम् । ' उदात्तस्वरितयोर्यणः° ' इति परस्यानुदात्तस्य स्वरितत्वम् । एवंभूतैः ᵛनृभिः स्तोतृभिस्त्वं ᵛहूयसे स्वस्वकार्याय आहूयसे हे ᵛसिम श्रेष्ठेन्द्र । ' सिम इति वै श्रेष्ठमाचक्षते ' इति वाजसनेयकम् । यद्यप्येवं बहुभिराहूयसे तथापि ᵛआनवे । अनुर्नाम राजा । तस्य पुत्रे[1] राजर्षौ[1] ᵛपुरु बहुलं ᵛनृषूतः नृभिस्तदीयैः स्तोतृभिः प्रेरितः ᵛअसि भवसि । राज्ञो हितकरणे त्वां स्तोतारः प्रेरयन्तीत्यर्थः । ' षू प्रेरणे ' । अस्मात् कर्मणि निष्ठा । ' तृतीया कर्मणि ' इति पूर्वपदप्रकृतिस्वरत्वम् । अपि च हे ᵛप्रशर्ध प्रकर्षेण शर्धयितरभिभवितरिन्द्र ᵛतुर्वशे एतत्संज्ञे च राजनि नृषूतः ᵛअसि नृभिः प्रेरितो भवसि ॥

यद्वा रुमे रुशमे श्यावके कृप इन्द्र मादयसे सचा ।
कण्वासस्त्वा ब्रह्मभिः स्तोमवाहस इन्द्रा यच्छन्त्या गहि ॥ २ ॥

यत् । वा । रुमे । रुशमे । श्यावके । कृपे । इन्द्र । मादयसे । सचा ।
कण्वासः । त्वा । ब्रह्मऽभिः । स्तोमऽवाहसः । इन्द्र । आ । यच्छन्ति । आ । गहि ॥ २ ॥

ᵛयद्वा यद्यपि रुमादिषु चतुर्षु राजसु हे ᵛइन्द्र त्वं ᵛसचा सह ᵛमादयसे माद्यसि तथापि ᵛस्तोमवाहसः स्तोमानां स्तोत्राणां वोढारः ᵛकण्वासः कण्वगोत्रा ऋषयः ᵛब्रह्मभिः परिवृढैर्मन्त्रैर्हविर्भिर्वा हे ᵛइन्द्र त्वाम् ᵛआ ᵛयच्छन्ति आगमयन्ति । यद्वा । द्वितीयार्थे तृतीया । ब्रह्मभिर्ब्रह्माणि हवींष्याभिमुख्येन प्रयच्छन्ति ददति । ' दाण् दाने ' । ' पाघ्रा° ' इत्यादिना यच्छादेशः । अतस्त्वम् ᵛआ ᵛगहि शीघ्रमागच्छ । गमेर्लोटि छान्दसः शपो लुक् ॥

चातुर्विंशिकेऽहनि माध्यंदिनसवनेऽच्छावाकशस्त्रे ' यथा ' इति प्रगाथोऽनुरूपः । सूत्रितं च—' यथा गौरो अपा कृतमित्यच्छावाकस्य ' ( आश्व. श्रौ. ७. ४ ) इति ॥

यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् ।
आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ॥ ३ ॥

---

१. ख१–पुत्रे राजर्षिभिः ।

यथा। गौरः। अपा। कृतम्। तृष्यन्। एति। अव। इरिणम्।
आऽपित्वे। नः। प्रऽपित्वे। तूयम्। आ। गहि। कण्वेषु। सु। सचा। पिब॥ ३ ॥

ᵛगौरः गौरमृगः ᵛतृष्यन् पिपासन् ᵛअपा अद्भिरुदकैः। व्यत्ययेनैकवचनम्। 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम्। ᵛकृतं संपूर्णं कृतम् ᵛइरिणं निस्तृणं तटाकदेशं ᵛयथा येन प्रकारेण ᵛअव ᵛएति अवगच्छति। अवशब्दोऽभिशब्दस्यार्थे। अभिमुखः सन् शीघ्रं गच्छति तथा ᵛआपित्वे बन्धुत्वे ᵛप्रपित्वे[1] प्राप्ते सति हे इन्द्र त्वं ᵛनः अस्मान् ᵛतूयम्। क्षिप्रनामैतत्। शीघ्रम् ᵛआ ᵛगहि आगच्छ। आगत्य च ᵛकण्वेषु कण्वपुत्रेष्वस्मासु ᵛसचा सहैकयत्नेनैव विद्यमानं सर्वं सोमं ᵛसु सुष्ठु ᵛपिब ॥

मन्दन्तु त्वा मघवन्निन्द्रेन्दवो राधोदेयाय सुन्वते।
आमुष्या सोममपिबश्चमू सुतं ज्येष्ठं तद्दधिषे सहः ॥ ४ ॥

मन्दन्तु। त्वा। मघऽवन्। इन्द्र। इन्दवः। राधःऽदेयाय। सुन्वते।
आऽमुष्य। सोमम्। अपिबः। चमू इति। सुतम्। ज्येष्ठम्। तत्। दधिषे। सहः ॥ ४ ॥

हे ᵛमघवन् धनवन् ᵛइन्द्र ᵛइन्दवः क्लेदनाः सोमास्त्वां ᵛमन्दन्तु मादयन्तु हर्षयन्तु। मदेर्व्यत्ययेन[2] परस्मैपदम्। किमर्थम्। ᵛसुन्वते सोमाभिषवं कुर्वते यजमानाय ᵛराधोदेयाय राधसो धनस्य दानार्थम्। ददातेः 'अचो यत्' इति भावे यत्। 'ईद्यति' इतीकारः। 'यतोऽनावः' इत्याद्युदात्तत्वे[3] कृदुत्तरपदप्रकृतिस्वरत्वम्। 'शतुरनुमः॰' इति सुन्वच्छब्दात् परा विभक्तिरुदात्ता। अपि च त्वं ᵛसोमम् ᵛआमुष्य आमोषणं कृत्वा अदत्तमपि बलादपहृत्य ᵛअपिबः पीतवानसि। 'स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्' (तै. सं. २. ४. १२. १) इति श्रुतेः। कीदृशं सोमम्। ᵛचमू चम्वोरधिषवणफलकयोः ᵛसुतम् अभिषुतम्। यद्वा चमूभ्यां चमसाभ्यां होतुर्मैत्रावरुणस्य च संबन्धिभ्यां संस्कृताभिर्वसतीवरीभिः सुतमभिषुतम्। यस्मादेवं ᵛतत् तस्मात् कारणात् ᵛज्येष्ठं प्रशस्यतमं वृद्धतमं वा ᵛसहः बलं ᵛदधिषे हे इन्द्र त्वं धारयसि। अतो मदीया अपि सोमास्त्वां मादयन्त्विति प्रार्थ्यते ॥

प्र चक्रे सहसा सहो बभञ्ज मन्युमोजसा।
विश्वे त इन्द्र पृतनायवो यहो नि वृक्षाइव येमिरे ॥ ५ ॥

प्र। चक्रे। सहसा। सहः। बभञ्ज। मन्युम्। ओजसा।
विश्वे। ते। इन्द्र। पृतनाऽयवः। यहो इति। नि। वृक्षाःऽइव। येमिरे ॥ ५ ॥

स इन्द्रः ᵛसहसा आत्मीयेनाभिभवेन वीर्यकर्मणा ᵛसहः शत्रूणामभिभवनं ᵛप्र ᵛचक्रे प्रकर्षेण कृतवान्। तथा ᵛओजसा बलेन ᵛमन्युं परकीयं क्रोधं ᵛबभञ्ज भग्नवान्। उत्तरोऽर्धर्चः प्रत्यक्षकृतः। हे ᵛयहो। महन्नामैतत्। हे महन् ᵛइन्द्र ᵛविश्वे सर्वे ᵛपृतनायवः युद्धकामाः शत्रवः ᵛते त्वया ᵛवृक्षाइव महीरुहा इव ᵛनि ᵛयेमिरे नियता आसन्। यथा वृक्षा निश्चलास्तिष्ठन्ति तद्वन्निर्व्यापारा अभूवन्नित्यर्थः ॥ ॥ ३० ॥

सहस्रेणेव सचते यवीयुधा यस्त आनळुपस्तुतिम्।
पुत्रं प्रावर्गं कृणुते सुवीर्ये दाश्नोति नमउक्तिभिः ॥ ६ ॥

---

१. ख-ङ-न-भ-'प्रपित्वे' नास्ति। २. ख-ङ-त३-न-भ-'मदेर्व्य॰'। ३. त-इत्याद्युदात्तत्वात्।

सहस्रेणऽइव । सचते । यविऽयुधा । यः । ते । आनट् । उपऽस्तुतिम् ।
पुत्रम् । प्राऽवर्गम् । कृणुते । सुऽवीर्ये । दाश्नोति । नमःउक्तिऽभिः ॥ ६ ॥

हे इन्द्र ते तव उपस्तुतिं स्तोत्रं यः पुरुषः आनट् प्राप्नोति त्वां प्रापयति । अश्नोतेर्लङि व्यत्ययेन परस्मैपदम्[1] । --- सचते समवैति । 'षच समवाये' । सहस्रेणेव यथा सहस्रसंख्येन बलेन तथेत्यर्थः । यश्च यजमानः नमउक्तिभिः नमस्कारवचनैः स्तोत्रैः सार्धं दाश्नोति हवींषि तुभ्यं ददाति । 'दाश्ट दाने' । स यजमानः सुवीर्ये शोभनवीर्ययुक्ते संग्रामे प्रावर्गं प्रकर्षेण शत्रूणां वर्जयितारं पुत्रं कृणुते करोति उत्पादयति । त्वत्प्रसादाल्लभत इत्यर्थः । प्रपूर्वाद्वृजेः 'कृत्यल्युटो बहुलम्' इति कर्तरि घञ् । 'उपसर्गस्य घञ्यमनुष्ये°' (पा. सू. ६. ३. १२२) इति दीर्घः । थाथादिनोत्तरपदान्तोदात्तत्वम् । यद्वा । सुवीर्य इत्येतत् पुत्रस्य विशेषणम् । द्वितीयार्थे सप्तमी । शोभनवीर्यं पुत्रम् । बहुव्रीहौ 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् ॥

**मा भेम मा श्रमिष्मोग्रस्य सख्ये तव ।**
**महत्ते वृष्णो अभिचक्ष्यं कृतं पश्येम तुर्वशं यदुम् ॥ ७ ॥**

मा । भेम । मा । श्रमिष्म । उग्रस्य । सख्ये । तव ।
महत् । ते । वृष्णः । अभिऽचक्ष्यम् । कृतम् । पश्येम । तुर्वशम् । यदुम् ॥ ७ ॥

हे इन्द्र उग्रस्य उद्गूर्णबलस्य तव सख्ये सखित्वे सति वयं मा भेम मा भैष्म । कुतश्चिदपि शत्रोर्भीता मा भूम । मा श्रमिष्म श्रान्ताः पीडिताश्च मा भूम । वृष्णः कामानां वर्षितुः ते तव संबन्धि महत् प्रभूतं कृतं वृत्रवधादिलक्षणं कर्म अभिचक्ष्यम् अभितः ख्यापनीयं स्तोतव्यम् । अतो महानुभावस्य तव सख्यं प्राप्तानां भीतिश्रमौ न जायेते इत्यर्थः । तत् कथमवगम्यत इति चेदुच्यते । तुर्वशम् एतत्संज्ञं राजर्षिं यदुम् एतत्संज्ञं च त्वत्प्रसादात् सुखेन जीवन्तौ पश्येम दृष्टवन्तः खलु वयम् । अतः कारणात् त्वत्सख्यं प्राप्तस्य भयादिकं न जायत इत्येतदुपपन्नमित्यर्थः ॥

**सव्यामनु स्फिग्यं वावसे वृषा न दानो अस्य रोषति ।**
**मध्वा संपृक्ताः सारघेण धेनवस्तूयमेहि द्रवा पिब ॥ ८ ॥**

सव्याम् । अनु । स्फिग्यम् । ववसे । वृषा । न । दानः । अस्य । रोषति ।
मध्वा । सम्ऽपृक्ताः । सारघेण । धेनवः । तूयम् । आ । इहि । द्रव । पिब ॥ ८ ॥

वृषा कामानां वर्षितेन्द्रः सव्यां दक्षिणेतरां स्फिग्यं कटिप्रदेशम् अनु । तृतीयार्थेऽनोः कर्मप्रवचनीयत्वम् । सव्यया स्फिग्या शरीरैकदेशेनैव ववसे वस्ते । सर्वभूतजातमाच्छादयति । स्वयं कृत्स्नं जगदतीत्य वर्तत इत्यर्थः । निगमान्तरं च भवति—'यदन्यया स्फिग्या क्षामवस्थाः' (ऋ. सं. ३. ३२. ११) इति । अपि च दानः अवखण्डयिता । 'दाप्[2] अवखण्डने' । पचाद्यच् । स च अस्य इममिन्द्रं न रोषति न हिनस्ति । 'रिष[3] रुष[3] हिंसायाम्' । इन्द्रं हिंसितुं शक्तः कश्चिदपि नास्तीत्यर्थः । यद्वा । दानो हविषां दाता यजमानश्चास्येन्द्रस्य न रोषति रोषं न जनयति । सर्वदा हविर्भिः परिचरतीत्यर्थः । उत्तरोऽर्धर्चः प्रत्यक्षकृतः । सारघेण । सरघा मधुमक्षिका ।

---

१. ख-ञ्च-त३-४-न-भ—'परस्मैपदं' नास्ति । २ ख-ञ्च—दो; भ-दा । ३. ख—रुष रिष ।

तत्संबन्धिना ᵛमध्वा मधुना । लुप्तोपममेतत् । मधुनेव रसवता क्षीरादिना श्रयणद्रव्येण ᵛसंपृक्ताः संसृष्टाः संस्कृताः ᵛधेनवः धेनुवत् प्रीतिजनका अस्मदीयाः सोमाः । यद्वा । धिवेः प्रीणनार्थाद्धेनवः । प्रीणयितार इत्यर्थः । अथवा । ' धेट् पाने ' । ' धेट इच्च ' इत्यौणादिको नुप्रत्ययः । तत्संनियोगेन इकारान्तादेशश्च । पातव्याः सोमा इत्यर्थः । यत एवमतः कारणात् हे इन्द्र ᵛतूयं क्षिप्रम् ᵛएहि अस्मत्समीपमागच्छ । आगत्य च ᵛद्रव । सोमा यस्मिन्नुत्तरवेदिलक्षणे स्थाने हूयन्ते¹ तं देशं शीघ्रं गच्छ । ' द्रु गतौ ' इति धातुः । ' द्व्यचोऽतस्तिङः ' इति सांहितिको दीर्घः । तदनन्तरमध्वर्युणा दत्तं सोमं ᵛपिब । तेन सोमेन सम्यक् स्वोदरं पूरयेत्यर्थः ॥

अश्वी रथी सुरूप इद्गोमाँ इदिन्द्र ते सखा ।
श्वात्रभाजा वयसा सचते सदा चन्द्रो याति सभामुप ॥ ९ ॥

अश्वी । रथी । सुऽरूपः । इत् । गोऽमान् । इत् । इन्द्र । ते । सखा ।
श्वात्रऽभाजा । वयसा । सचते । सदा । चन्द्रः । याति । सभाम् । उप ॥ ९ ॥

हे ᵛइन्द्र ᵛते तव ᵛसखा मित्रभूतः पुरुषोऽश्व्यादिगुणविशिष्ट एव भवति । इच्छब्दः प्रत्येकमभिसंबध्यते । ᵛअश्वी इत् बहुभिरश्वैरुपेत एव भवति । न कदाचिदश्वैर्वियुज्यते । ᵛरथी रथवानेव स भवति । ᵛसुरूप ᵛइत् शोभनरूपः शोभनावयव एव स भवति । ᵛगोमाँ ᵛइत् बह्वीभिर्गोभिर्युक्त एव स भवति । न कदाचिदेतैर्वियुज्यत इत्यर्थः । अपि च ᵛश्वात्रभाजा । ' श्वात्रम् ' इति धननाम । आशु अतनीयं शीघ्रं प्राप्तव्यं शोभनं धनं संभजता ईदृग्धनसंयुक्तेन ᵛवयसा । अन्ननामैतत् । अन्नेन स सर्वदा ᵛसचते समवैति । संगच्छते । ' षच समवाये ' । अत एव ᵛचन्द्रः सर्वेषामाह्लादकः सन् ᵛसभां जनसंसदम् ᵛउप ᵛयाति उपगच्छति ॥

ऋश्यो न तृष्यन्नवपानमा गहि पिबा सोमं वशाँ अनु ।
निमेघमानो मघवन्दिवेदिव ओजिष्ठं दधिषे सहः ॥ १० ॥

ऋश्यः । न । तृष्यन् । अवऽपानम् । आ । गहि । पिब । सोमम् । वशान् । अनु ।
निऽमेघमानः । मघऽवन् । दिवेऽदिवे । ओजिष्ठम् । दधिषे । सहः ॥ १० ॥

हे इन्द्र ᵛऋश्यो ᵛन ऋश्याख्यो मृग इव ᵛतृष्यन् पिपासंस्त्वम् ᵛअवपानम् अवनीतं ग्रहचमसादिषु पात्रेष्वानीतं पातव्यं सोमम् ᵛआ ᵛगहि अभिगच्छ । गत्वा च तमस्मदीयं ᵛसोमं ᵛवशाँ ᵛअनु अनुकामं यथाकामं ᵛपिब । यावता पीतेन पर्याप्तिर्जायते तावता सोमेन स्वोदरं पूरयेत्यर्थः । अत एव सोमपानात् प्राप्तबलस्त्वं ᵛदिवेदिवे प्रतिदिवसं ᵛनिमेघमानः न्यञ्च्यवाङ्मुखानि वृष्ट्युदकानि सिञ्चन् हे ᵛमघवन् इन्द्र ᵛओजिष्ठम् ओजस्वितममुद्गूर्णतमं ᵛसहः बलं ᵛदधिषे धारयसि । ओजस्विशब्दादिष्ठनि ' विन्मतो र्लुक् ' इति विनो लुक् । ' टेः ' इति टिलोपः ॥ ॥ ३१ ॥

अध्वर्यो द्रावया त्वं सोममिन्द्रः पिपासति ।
उप नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा ॥ ११ ॥

अध्वर्यो इति । द्रवय । त्वम् । सोमम् । इन्द्रः । पिपासति ।
उप । नूनम् । युयुजे । वृषणा । हरी इति । आ । च । जगाम । वृत्रऽहा ॥ ११ ॥

---

१. त–वर्यंते ।

हे ^v^अध्वर्यो अध्वरस्य नेतः ^v^त्वं ^v^सोमं ^v^द्रावय। उत्तरवेदिलक्षणं स्थानं प्रापय। यद्वा। रसात्मना द्रवणशीलं कुरु। अभिषुणिवत्यर्थः। किं कारणमिति चेत्। ^v^इन्द्रः ^v^पिपासति इमं सोमं पातुमिच्छति। त्वयैतत् कथमवगतमिति चेत् तत्राह। ^v^वृषणा वर्षितारौ युवानौ वा ^v^हरी अश्वौ ^v^नूनम् अद्य ^v^युयुजे। उपगम्य सारथिर्योजितवान् रथे। ^v^वृत्रहा वृत्रस्य हन्तेन्द्रः ^v^च ^v^आ ^v^जगाम आगतवान्॥

स्वयं चित्स मन्यते दाशुरिर्जनो यत्रा सोमस्य तृम्पसि।
इदं ते अन्नं युज्यं समुक्षितं तस्येहि प्र द्रवा पिब॥ १२॥

स्वयम्। चित्। सः। मन्यते। दाशुरिः। जनः। यत्र। सोमस्य। तृम्पसि।
इदम्। ते। अन्नम्। युज्यम्। सम्ऽउक्षितम्। तस्य। आ। इहि। प्र। द्रव। पिब॥१२॥

^v^दाशुरिः दाश्वान्। दाशतेरौणादिक उरिन्। हविषां दाता ^v^सः यजमानलक्षणो ^v^जनः ^v^स्वयं ^v^चित् स्वयमेव आत्मनैव ^v^मन्यते सर्वं जानाति। परायत्तप्रज्ञो न भवतीत्यर्थः। ^v^यत्र यस्मिन् जने ^v^सोमस्य पानेन हे इन्द्र त्वं ^v^तृम्पसि तृप्यसि। 'तृप तृम्प तृप्तौ'। तौदादिकः। 'शे तृम्फादीनाम्' (पा. सू. ७. १. ५९.१) इति नुम्। ^v^ते त्वदीयं ^v^युज्यं योग्यम् ^v^इदम् अस्मदीयं सोमलक्षणम् ^v^अन्नं ^v^समुक्षितं सम्यक् पात्रेष्वासिक्तम्। 'उक्ष सेचने'। कर्मणि निष्ठा। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्। अतस्तं तादृशं सोमम् ^v^एहि अभिगच्छ। ^v^प्र ^v^द्रव शीघ्रं प्राप्नुहि। तदनन्तरं ^v^पिब पानं कुरु॥

रथेष्ठायाध्वर्यवः सोममिन्द्राय सोतन।
अधि ब्रध्नस्याद्रयो वि चक्षते सुन्वन्तो दाश्वध्वरम्॥ १३॥

रथेऽस्थाय। अध्वर्यवः। सोमम्। इन्द्राय। सोतन।
अधि। ब्रध्नस्य। अद्रयः। वि। चक्षते। सुन्वन्तः। दाशुऽअध्वरम्॥ १३॥

^v^रथेष्ठाय। रथे तिष्ठतीति रथेष्ठः। 'सुपि स्थः' इति कप्रत्ययः। 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्। एवंलक्षणाय ^v^इन्द्राय हे ^v^अध्वर्यवः ^v^सोमं ^v^सोतन अभिषुणुत। 'षुञ् अभिषवे'। 'तप्तनप्तनथनाश्च' इति तनबादेशः। ^v^ब्रध्नस्य बुध्नस्य मूलस्याभिषवार्थं चर्मणि स्थापितस्योपराख्यस्य विस्तृतस्याश्मनः ^v^अधि उपरि ^v^अद्रयः अन्ये ग्रावाणश्चतसृषु दिक्षु वर्तमानाः ^v^दाश्वध्वरं दाशोर्दातुर्यजमानस्य अध्वरो यागो येन[1] निष्पद्यते तादृशं सोमं ^v^सुन्वन्तः ऋत्विग्भिरपेक्षं स्वयमेवाभिषुण्वन्तः ^v^वि ^v^चक्षते विशेषेण प्रकाशन्ते। सोमाभिषवेऽतिशयेनानुकूला वर्तन्त इत्यर्थः। अथवाद्रयस्तैरद्रिभिर्हे अध्वर्यवः सोममभिषुणुतेति योज्यम्॥

उप ब्रध्नं वावाता वृषणा हरी इन्द्रमपसु वक्षतः।
अर्वाञ्चं त्वा सप्तयोऽध्वरश्रियो वहन्तु सवनेदुप॥ १४॥

उप। ब्रध्नम्। ववाता। वृषणा। हरी इति। इन्द्रम्। अपऽसु। वक्षतः।
अर्वाञ्चम्। त्वा। सप्तयः। अध्वरऽश्रियः। वहन्तु। सवना। इत्। उप॥ १४॥

---

१. ख—योना; श—तथा।

ब्रध्नम् अन्तरिक्षं वावाता[1] संभक्तवन्तौ । वनतेर्निष्ठायां छान्दसं द्विर्वचनमिडभाव आत्वं धातुस्वरश्च । 'अन्येषामपि दृश्यते' इति सांहितिकोऽभ्यासदीर्घः । यद्वा । वावाता पुनः पुनर्गच्छन्तौ । 'वा गतिगन्धनयोः' । अस्माद्यङ्लुगन्तात् कर्तरि निष्ठा । वृषणा वृषणौ सेक्तारौ हरी हरणशीलावश्वौ उक्तगुणौ[2] सन्तौ अपसु अस्मदीयेषु कर्मसु । अपस्शब्दः सकारान्तः कर्मवचनः । 'पीवोपवसनानां छन्दसि लोपो वक्तव्यः' (पा. म. ६. ३. १०९.६) इतीह सकारो लुप्यते । तत्रेमम् इन्द्रम् उप वक्षतः उपवहतामुपानयताम् । वहतेर्लेट्यडागमः । 'सिब्बहुलम्०' इति सिप् । अपि च अध्वरश्रियः अध्वरं सेवमानाः सप्तयः सर्पणशीला अन्येऽपि त्वदीया अश्वाः सवना सवनानि प्रातःसवनादीन्यस्मद्यागसंबन्धीनि प्रति हे इन्द्र त्वाम् अर्वाञ्चम् अभिमुखम् उप वहन्तु उपगमयन्तु । इत् इति पूरकः ॥

प्र पूषणं वृणीमहे युज्याय पुरूवसुम् ।
स शक्र शिक्ष पुरुहूत नो धिया तुजे राये विमोचन ॥ १५ ॥

प्र । पूषणम् । वृणीमहे । युज्याय । पुरुऽवसुम् ।
सः । शक्र । शिक्ष । पुरुऽहूत । नः । धिया । तुजे । राये । विऽमोचन ॥ १५ ॥

इदमाद्यासु चतसृषु पूष्ण इन्द्रस्य च लिङ्गसद्भावादेता उभयथा व्याख्यायन्ते । पुरूवसुं बहुधनं पूषणं पोषकमिन्द्रं यद्वैतत्संज्ञं देवं प्र वृणीमहे प्रकर्षेण संभजामहे । किमर्थम् । युज्याय । युङ्क्त इति युङ् सखा । तस्य भावाय । सखित्वायेत्यर्थः । हे शक्र शक्त पुरुहूत बहुभिराहूत हे विमोचन पापाद्विमोचयितरिन्द्र पूषन् वा सः त्वं नः अस्मान् धिया आत्मीयया बुद्ध्या शिक्ष शक्तान् कर्तुमिच्छ । किमर्थम् । राये धनाय धनप्राप्त्यर्थं तुजे शत्रूंस्तोजयितुं हिंसितुम् । 'तुज हिंसायाम्' । अस्मात् कृत्यार्थे केन्प्रत्ययः । यद्वा । राये इति 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी । जातावेकवचनम् । रायो धनानि धिया स्तुत्या प्रीतः सन्नोऽस्मभ्यं शिक्ष देहि । शिक्षतिर्दानकर्मा । 'ऊडिदम्०' इति रायो विभक्तिरुदात्ता ॥ ॥ ३२ ॥

सं नः शिशीहि भुरिजोरिव क्षुरं रास्व रायो विमोचन ।
त्वे तन्नः सुवेदमुस्रियं वसु यं त्वं हिनोषि मर्त्यम् ॥ १६ ॥

सम् । नः । शिशीहि । भुरिजोःऽइव । क्षुरम् । रास्व । रायः । विऽमोचन ।
त्वे इति । तत् । नः । सुऽवेदम् । उस्रियम् । वसु । यम् । त्वम् । हिनोषि । मर्त्यम् ॥ १६ ॥

हे इन्द्र पूषन् वा नः अस्मान् सं शिशीहि सम्यक् निश्य[3] तीक्ष्णबुद्धीन् कुरु । भुरिजोरिव । बाहुनामैतत् । नापितस्य बाह्वोरिव[4] स्थितं क्षुरम् इव । अपि च हे विमोचन पापाद्विमोचन पापाद्विमोचयितः रायः धनानि रास्व अस्मभ्यं देहि । 'रा दाने' । तत् कस्य हेतोः । त्वे त्वयि खलु उस्रियम् । उस्रा गावः । तत्संबद्धं तत् वसु निवासकं धनं नः अस्माकं सुवेदं सुलभं नान्येषु देवेषु । यं धनसमूहं मर्त्यं मनुष्यं स्तोतारं प्रति त्वं हिनोषि प्रेरयसि तद्वसु त्वयीत्यन्वयः । यत एवं तस्मात् रास्व इति योज्यम् ॥

वेमि त्वा पूषन्नृञ्जसे वेमि स्तोतव आघृणे ।
न तस्य वेम्यरणं हि तद्वसो स्तुषे पज्राय साम्ने ॥ १७ ॥

---

१. ख-भ—ववाता । २. न-श—उक्तलक्षणौ । ३. ख-भ—शिश्य; श—तिश्य । ४. म—बाह्वोः ।

वेमि । त्वा । पूषन् । ऋञ्जसे । वेमि । स्तोतवे । आघृणे ।

न । तस्य । वेमि । अरणम् । हि । तत् । वसो इति । स्तुषे । पज्राय । साम्ने ॥ १७ ॥

हे ᵛपूषन् पोषकेन्द्र एतत्संज्ञ[1] वा[1] देव ᵛत्वा त्वाम् ᵛऋञ्जसे प्रसाधयितुं ᵛवेमि कामये। ᵛआघृणे आगतदीप्ते ᵛस्तोतवे त्वां स्तोतुं ᵛवेमि कामये। यत्त्वद्व्यतिरिक्तं देवतान्तरं ᵛतस्य स्तोत्रं ᵛन ᵛवेमि न कामये। तत् कुत इति चेत्। ᵛहि यस्मात् ᵛअरणम् अरमणमसुखकरम्। अतस्त्वामेव स्तोतुं कामय इत्यर्थः। हे ᵛवसो वासक ᵛस्तुषे स्तुवते ᵛपज्राय प्रार्जकाय[2] स्तोत्राणां ᵛसाम्ने। साम स्तोत्रम्। सामर्थ्यादत्र तद्वाँल्लक्ष्यते। तद्वते। यद्वा। पज्र इति कक्षीवत आख्या। आम्नातं हि— 'यद्वां पज्रासो अश्विना हवन्ते' (ऋ. सं. १. ११७. १०) इति। तस्मै कक्षीवत इव मह्यम्। सामर्थ्यादुपमार्थो लभ्यते। अपेक्षितं धनं देहीति शेषः॥

परा गावो यवसं कच्चिदाघृणे नित्यं रेक्णो अमर्त्य ।

अस्माकं पूषन्नविता शिवो भव मंहिष्ठो वाजसातये ॥ १८ ॥

परा । गावः । यवसम् । कत् । चित् । आघृणे । नित्यम् । रेक्णः । अमर्त्य ।

अस्माकम् । पूषन् । अविता । शिवः । भव । मंहिष्ठः । वाजऽसातये ॥ १८ ॥

हे ᵛआघृणे आगतदीप्ते पूषन्निन्द्र वा ᵛकच्चित् कस्मिंश्चित् काले अस्मदीयाः ᵛगावो ᵛयवसं तृणं भक्षितुं ᵛपरा गच्छन्ति। हे ᵛअमर्त्य अमरण देव तदानीं ᵛरेक्णः तद्रूपं धनं ᵛनित्यम् अस्माकं ध्रुवमस्तु। चोरव्याघ्रादिभिर्हिंसितं मा भूत्। अपि च हे ᵛपूषन् पोषयितः ᵛअस्माकम् ᵛअविता रक्षिता भूत्वा ᵛशिवः सुखकरः ᵛभव। तथा ᵛवाजसातये वाजस्यान्नस्य बलस्य वा संभजनार्थं ᵛमंहिष्ठः दातृतमो भव॥

स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु ।

राज्ञस्त्वेषस्य सुभगस्य रातिषु तुर्वशेष्वमन्महि ॥ १९ ॥

स्थूरम् । राधः । शतऽअश्वम् । कुरुङ्गस्य । दिविष्टिषु ।

राज्ञः । त्वेषस्य । सुऽभगस्य । रातिषु । तुर्वशेषु । अमन्महि ॥ १९ ॥

इदमादिकेन तृचेन देवातिथिः कुरुङ्गनाम्नो राज्ञो दानं स्तौति। ᵛकुरुङ्गस्य। कुरूञ्जेतुं गच्छति कुलं गच्छतीति वा कुरुङ्गः। 'डोऽन्यत्रापि दृश्यते' इति गमेर्डः। पृषोदरादिः। एतत्संज्ञस्य ᵛत्वेषस्य दीप्तस्य ᵛसुभगस्य शोभनधनस्य एवंभूतस्य ᵛराज्ञः संबन्धिनीषु ᵛदिविष्टिषु दिवः स्वर्गस्यैषणेषु प्राप्तिहेतुभूतासु यागक्रियासु ᵛरातिषु दानेषु दक्षिणारूपेषु सत्सु ᵛतुर्वशेषु। मनुष्यनामैतत्। निर्धारणे सप्तमी। मनुष्येषु मध्ये वयं ᵛस्थूरं स्थूलं प्रभूतं ᵛशताश्वम् अश्वानां शतेन युक्तं ᵛराधः धनम् ᵛअमन्महि अज्ञासिष्म। अलभामहीत्यर्थः॥

धीभिः सातानि काण्वस्य वाजिनः प्रियमेधैरभिद्युभिः ।

षष्टिं सहस्रानु निर्मजामजे निर्यूथानि गवामृषिः ॥ २० ॥

---

१. ख-भ—एतत्संज्ञक। २. त—पार्जकाय।

धीभिः । सातानि । काण्वस्य । वाजिनः । प्रियऽमेधैः । अभिद्युऽभिः ।
षष्टिम् । सहस्रा । अनु । निःऽमजाम् । अजे । निः । यूथानि । गवाम् । ऋषिः ॥ २० ॥

ᵛकाण्वस्य कण्वपुत्रस्य ᵛवाजिनः हविष्मतो मेधातिथेः संबन्धिभिः ᵛधीभिः ध्यातृभिः स्तोतृभिः ᵛसातानि संभक्तानि ᵛअभिद्युभिः अभिगतदीप्तिभिः ᵛप्रियमेधैः एतत्संज्ञैश्चर्षिभिः सेवितानि ᵛनिर्मजां निःशेषेण शुद्धानां ᵛगवां ᵛषष्टिं ᵛसहस्रा षष्टिसंख्याकानि सहस्राणि ᵛयूथानि ᵛऋषिः देवातिथिरहम् ᵛअनु पश्चात् ᵛनिः ᵛअजे निःशेषेणागच्छम् । साकल्येन प्राप्तवानस्मि । 'अज गतिक्षेपणयोः'। यथा प्रियमेधानां काण्वानां च गवां यूथानि राज्ञा दत्तानि तैः प्रतिगृहीतानि एवं तेन दत्तानि मया प्रतिगृह्यन्त इत्यर्थः ॥

**वृक्षाश्चिन्मे अभिपित्वे अराऱणुः । गां भजन्त मेहनाश्वं भजन्त मेहना ॥२१॥**

वृक्षाः । चित् । मे । अभिऽपित्वे । अरारणुः ।
गाम् । भजन्त । मेहना । अश्वम् । भजन्त । मेहना ॥ २१ ॥

ᵛमे मया ᵛअभिपित्वे पूर्वोक्ते धने अभिप्राप्ते सति ᵛवृक्षाश्चित् वृक्षा अपि ᵛअरारणुः अशब्दयन् । कथमिति तदाह । इमे ऋषयः ᵛमेहना मंहनीयां प्रशस्यां ᵛगां ᵛभजन्त असेवन्त अलभन्त । ᵛमेहना मंहनीयम् ᵛअश्वं च ᵛभजन्त अलभन्तेति । गामश्वमिति जात्यभिप्रायमेकवचनम् । यद्वा । मेहनेति म इह नेति पदत्रयात्मकमेकं पदम् । यदाह यास्कः—'यदिन्द्र चित्र[1] चायनीयं मंहनीयं धनमस्ति । यन्म इह नास्तीति वा त्रीणि मध्यमानि पदानि' ( निरु. ४. ४ ) । तदेवं व्याख्येयम् । इम ऋषयो गामश्वं चालभन्त । इहास्मिन् राजनि प्रशस्तस्य धनस्य तद्दानं मम नासीन्मम नासीदिति वृक्षप्रमुखाः सर्वेऽपि जनाः प्रोचुरित्यर्थः ॥ ॥ ३३ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
पञ्चमाष्टके सप्तमोऽध्यायः ॥

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथाष्टमो[2] व्याख्यातुमारभ्यते । अष्टमे मण्डले प्रथमेऽनुवाके चत्वारि सूक्तानि व्याकृतानि । 'दूरात्' इत्येकोनचत्वारिंशदृचं पञ्चमं सूक्तं कण्वगोत्रस्य ब्रह्मातिथेरार्षम् । आदितः षट्त्रिंशद्गायत्र्यः । ततो द्वे बृहत्यौ । अन्तिमानुष्टुप् । अन्त्येषु पञ्चस्वर्धर्चेषु चेदिपुत्रस्य कशुनाम्नो राज्ञो दानं स्तूयते । अतस्तद्देवताकाः । शिष्टा आश्विन्यः । तथा चानुक्रान्तं—'दूरादेकान्नचत्वारिंशद्ब्रह्मातिथिराश्विनं द्विबृहत्यनुष्टुबन्तमन्त्याः पञ्चार्धर्चाश्चैद्यस्य कशोर्दानस्तुतिः' इति । प्रातरनुवाकाश्विनशस्त्रयोराश्विने क्रतौ गायत्रे छन्दसि अन्त्यतृचवर्जमिदं सूक्तम् । सूत्र्यते हि—'दूरादिहेवेति तिस्र उत्तमा उद्धरेत्' ( आश्व. श्रौ. ४. १५ ) इति ॥

---

१. ख—चित्र । २. श—अथ पंचमस्या° ।

**दूरादिहेव यत्सत्यरुणप्सुरशिश्वितत् । वि भानुं विश्वधातनत् ॥ १ ॥**

दूरात् । इहऽईव । यत् । सती । अरुणऽप्सुः । अशिश्वितत् । वि । भानुम् । विश्वधा । अतनत् ॥ १ ॥

दूरात् दूरत एव विप्रकृष्ट एव नभसः प्राक्प्रदेशे वर्तमाना इहेव सती इह समीपे विद्यमानेव । अस्तेः शतरि श्नसोरल्लोपे 'उगितश्च' इति ङीप् । 'शतुरनुमः॰' इति नद्या उदात्तत्वम् । अरुणप्सुः आरोचमानरूपा ईदृशी उषाः यत् यदा अशिश्वितत् अश्वेतयत् । 'श्विता वर्णे' । अस्माण्ण्यन्तात् लुङि चङि रूपम् । 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः । तदा भानुं दीप्तिं विश्वधा[1] बहुविधं वि अतनत् विस्तारितवती । तनोतेर्व्यत्ययेन शप् । ईदृशीमुषसं हे अश्विनौ सचेथे इत्युत्तरयैकवाक्यता । यद्वा । प्रातरनुवाक्य[2] उषस्येन[3] काण्डेन उषाः स्तुता सती प्रादुर्बभूव । हे अश्विनौ शंसिष्यमाणमाश्विनं क्रतुं श्रोतुं युवामपि प्रादुर्भवतमित्यध्याहारेण वाक्यं पूरणीयम् ॥

**नृवद्दस्रा मनोयुजा रथेन पृथुपाजसा । सचेथे अश्विनोषसम् ॥ २ ॥**

नृऽवत् । दस्रा । मनःऽयुजा । रथेन । पृथुऽपाजसा । सचेथे इति । अश्विना । उषसम् ॥ २ ॥

हे दस्रा दस्रौ दर्शनीयौ शत्रूणामुपक्षपयितारौ वा । 'सुपां सुलुक्॰' इत्याकारः । ईदृशौ हे अश्विना अश्विनौ नृवत् नृभिः नेतृभिस्तुल्यं वर्तमानौ युवाम् । 'तेन तुल्यम्॰' इति प्रथमार्थे वतिः । यद्वा । नृवतीम्[4] । नृशब्दान्मतुपश्छान्दसत्वम् । रश्रुतिसामान्याद्वा[5] 'छन्दसीरः' इति वत्वम् । ङीपश्छान्दसो लुक् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । ईदृशीम् उषसं रथेन आत्मीयेन वाहनेन सचेथे सम्यगागच्छथः[6] । 'षच समवाये' । यद्वा । सचतिः सेवनार्थः । सचेथे सेवेथे । तदाह यास्कः—'सचस्वा नः स्वस्तये सेवस्व नः स्वस्तये' (निरु. ३. २१) इति । कीदृशेन रथेन । मनोयुजा मनसैव व्यापारान्तरनिरपेक्षेण स्मरणमात्रेणाश्वैर्युज्यमानेन पृथुपाजसा विस्तीर्णबलेन बह्वन्नेन वा । उषसोऽनन्तरमश्विनोः स्तूयमानत्वात्तामश्विनौ गच्छत इत्युच्यते ॥

**युवाभ्यां वाजिनीवसू प्रति स्तोमा अदृक्षत । वाचं दूतो यथोहिषे ॥ ३ ॥**

युवाभ्याम् । वाजिनीवसू इति वाजिनीऽवसू । प्रति । स्तोमाः । अदृक्षत ।
वाचम् । दूतः । यथा । ओहिषे ॥ ३ ॥

हे वाजिनीवसू । वाजो हविर्लक्षणमन्नम् । तद्युक्ता यागक्रिया वाजिनी । तस्यां वसु धनं ययोरस्ति तौ तथोक्तौ । यद्वा । अन्नयुक्तं स्तोतृभ्यो देयं वसु धनं ययोरस्ति तादृशौ । हे अश्विनौ युवाभ्यां स्तोमाः अस्माभिः कृतानि स्तोत्राणि प्रति अदृक्षत प्रतिदृश्यन्ताम् । दृशेश्छान्दसः कर्मणि लुङ् । 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वात् 'सृजिदृशोः॰' इत्यमभावः । षत्वकत्वषत्वानि । अहं च यथा येन प्रकारेण दूतः प्रेष्यः वाचं स्वामिनो वाक्यं याचते तथा युवयोः प्रीतिपूर्विकां वाचम् ओहिषे । पुरुषव्यत्ययः । याचे । 'उहिरर्दने' । याचन इत्यर्थः । व्यत्ययेनात्मनेपदम् । यद्वा । दूतो यथा स्वामिनोक्तां वाचं विदेशस्थमन्यं प्रापयति एवमहमपि स्तुतिरूपां वाचमोहिषे वहे युवां प्रापयामि ॥ वहेर्व्यत्ययेन[7] मध्यमः । छान्दसं संप्रसारणम् । 'छन्दस्युभयथा' इत्यार्धधातुकत्वात् इडागमः । शबभावो लघूपधगुणश्च । 'एङि पररूपम्' इति पररूपत्वम् ॥

---

१. ख-भ—विश्वधातनत् । २. ज्ञ—प्रातरनुवाक । ३. ख-भ—ता उषस्येन; ञ्च—उषसे उषस्येन; श—उषसेन । ४. ञ्च-त-श—नेतृमतीं । ५. ख-भ—रथश्रुतिसामान्याद्वा; त३—श्रुतिसामान्याद्वा । ६. ख-ञ्च-त४-न-य—सम्यगाच्छथः; ज्ञ-त२-३-भ-श—सम्यग्गच्छथः । ७. ख-ज्ञ-ञ्च-त२-श—ऊहे॰ ।

पुरुप्रिया ण ऊतये पुरुमन्द्रा पुरूवसू । स्तुषे कण्वासो अश्विना ॥ ४ ॥

पुरुऽप्रिया । नः । ऊतये । पुरुऽमन्द्रा । पुरुवसू इति पुरुऽवसू ।
स्तुषे । कण्वासः । अश्विना ॥ ४ ॥

ᵛपुरुप्रिया बहूनां प्रियौ ᵛपुरुमन्द्रा बहुमदौ बहूनां मादयितारौ वा । यद्वा । पुरु बहुलं माद्यन्तौ । ᵛपुरुवसू बहुधनौ ईदृशौ ᵛअश्विना अश्विनौ ᵛनः अस्माकम् ᵛऊतये रक्षणाय ᵛकण्वासः कण्वगोत्रा वयं ᵛस्तुषे स्तुमहे । पुरुषवचनयोर्व्यत्ययः । यद्वा । कण्वास इति पूजार्थं बहुवचनम् । ऋषिरात्मानं संबोध्य ब्रूते । हे अन्तरात्मन् कण्वासः कण्वगोत्रस्त्वं स्तुषे अश्विनौ स्तुहि ॥

मंहिष्ठा वाजसातमेषयन्ता शुभस्पती । गन्तारा दाशुषो गृहम् ॥ ५ ॥

मंहिष्ठा । वाजऽसातमा । इषयन्ता । शुभः । पती इति । गन्तारा । दाशुषः । गृहम् ॥ ५ ॥

ᵛमंहिष्ठा मंहिष्ठौ मंहनीयौ पूजनीयौ यद्वा दातृतमौ ᵛवाजसातमा । वाजोऽन्नं बलं वा । तस्य अतिशयेन दातारौ । यद्वा वाजो हविर्लक्षणमन्नम् । तस्य संभक्तृतमौ । सनोतेः सनतेर्वा 'जनसन॰' इति विट् । विड्वनोरनुनासिकस्यात्वम्[1] । ᵛइषयन्ता स्तोतृभ्य इषमन्नं कुर्वन्तौ । इट्शब्दात् 'तत्करोति॰' इति णिच् । णेरिष्ठवद्भावेन टिलोपे प्राप्ते 'प्रकृत्यैकाच्' इति प्रकृतिभावः । यद्वा । इषयन्ता एषयन्तौ श्रेयांसि प्रापयन्तौ । 'इष गतौ' । अस्माद्धेतुमण्णिच्[2] । संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः । ᵛशुभः शोभनस्य धनस्योदकस्य वा ᵛपती स्वामिनौ । 'षष्ठ्याः पतिपुत्र॰' इति विसर्जनीयस्य सत्वम् । ᵛदाशुषः चरुपुरोडाशादीनि दत्तवतो यजमानस्य ᵛगृहं ᵛगन्तारा गमनशीलौ । गमेस्ताच्छीलिकस्तृन् । अतः 'न लोकाव्यय॰' इति कर्मणि षष्ठ्याः प्रतिषेधः । ईदृशावश्विनौ स्तुम इति शेषः ॥ ॥ १ ॥

ता सुदेवाय दाशुषे सुमेधामवितारिणीम् । घृतैर्गव्यूतिमुक्षतम् ॥ ६ ॥

ता । सुऽदेवाय । दाशुषे । सुऽमेधाम् । अविऽतारिणीम् । घृतैः । गव्यूतिम् । उक्षतम् ॥ ६ ॥

हे अश्विनौ ᵛता तौ तादृशौ युवां ᵛसुदेवाय । शोभना देवा येन यष्टव्याः स तथोक्तः । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । तस्मै ᵛदाशुषे हविर्दत्तवते यजमानाय । तादर्थ्ये चतुर्थी । ईदृग्यजमानार्थं ᵛसुमेधां शोभनयज्ञाम् ᵛअवितारिणीम् । वितरणं विगमनमपायः । अनपायिनीम् । नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् । ईदृशीं ᵛगव्यूतिम् । गावो यूयन्ते संयुज्यन्तेऽत्रेति गव्यूतिर्गोसंचारभूमिः । 'गोर्यूतौ छन्दसि' (पा॰ सू॰ ६. १. ७९. २) इत्यवादेशः । तां ᵛघृतैः क्षरणशीलैरुदकैः ᵛउक्षतं सिञ्चतम् । 'उक्ष सेचने' ॥

आ नः स्तोममुप द्रवत्तूयं श्येनेभिराशुभिः । यातमश्वेभिरश्विना ॥ ७ ॥

आ । नः । स्तोमम् । उप । द्रवत् । तूयम् । श्येनेभिः । आशुऽभिः । यातम् । अश्वेभिः । अश्विना ॥ ७ ॥

हे ᵛअश्विना अश्विनौ ᵛनः अस्माकं ᵛस्तोमं स्तोत्रम् ᵛअश्वेभिः अश्वैः । 'द्रवत् तूयम्' इत्युभे क्षिप्रनामनी । एकः पूरकः । ᵛतूयं क्षिप्रम् ᵛउप ᵛआ ᵛयातम् उपागच्छतम् । यद्वा । द्रवदिति स्तोमविशेषणम् । ᵛद्रवत् शीघ्रं प्रवर्तमानं स्तोममित्यर्थः । कीदृशैरश्वैः । ᵛश्येनेभिः शंसनीयगतिभिः प्रशस्यगमनैः ᵛआशुभिः शीघ्रगैः ॥

---

१. ख-भ-श-'॰स्यादित्यात्वं । २. ङ-त-श-'॰द्धेतुमति णिच् ।

येभिस्तिस्रः परावतो दिवो विश्वानि रोचना। त्रीँरक्तून्परिदीयथः ॥८॥

येभिः। तिस्रः। पराऽवतः। दिवः। विश्वानि। रोचना। त्रीन्। अक्तून्। परिऽदीयथः ॥८॥

हे अश्विनौ ᵛतिस्रः ᵛदिवः त्रीन् दिवसान् ᵛत्रीन् ᵛअक्तून् तिस्रो रात्रीश्च। अत्यन्तसंयोगे द्वितीया। एतावन्तं कालं ᵛविश्वानि सर्वाणि व्याप्तानि वा ᵛरोचना रोचमानानि नक्षत्ररूपाणि देवगृहाणि ᵛपरावतः दूरदेशात् ᵛयेभिः यैरश्वैः ᵛपरिदीयथः परिगच्छथः। दीयतिर्गतिकर्मा। तैरस्माकं स्तोत्रमुपयातमिति पूर्वत्रान्वयः ॥

उत नो गोमतीरिष उत सातीरहर्विदा। वि पथः सातये सितम् ॥ ९ ॥

उत। नः। गोऽमतीः। इषः। उत। सातीः। अहःऽविदा। वि। पथः। सातये। सितम् ॥९॥

ᵛउत अपि च हे ᵛअहर्विदा अह्नो लम्भयितारौ। यद्वा। अह्नि प्रभातसमये वेदितव्यौ स्तोतव्यौ। ᵛनः अस्मभ्यं ᵛगोमतीः बहुभिर्गोभिर्युक्ताः ᵛइषः अन्नानि दत्तमिति शेषः। ᵛउत अपि च ᵛसातीः संभजनीया दातव्या वा रायश्चास्मभ्यं दत्तम्। सनतेः सनोतेर्वा कर्मणि क्तिन्। 'जनसनखनाम्°' इत्यात्वम्। 'ऊतियूति°' इत्यादिना क्तिन उदात्तत्वं निपात्यते। अपि चास्माकं ᵛसातये उक्तानां गवादीनां लाभाय संभजनाय वा ᵛपथः तदुपायरूपान् मार्गान् ᵛवि ᵛसितं विशेषेण बध्नीतम्। यथान्ये न प्रविशन्ति तथा कुरुतमित्यर्थः। 'षिञ् बन्धने'। छान्दसो विकरणस्य लुक्। यद्वा। उपसर्गवशादयं धातुः स्वार्थविपरीते बन्धनाभावे वर्तते। प्रस्मरणं प्रस्थानमिति यथा। पथो मार्गान् वि सितं विमुञ्चतम्। प्रदर्शयतमित्यर्थः। पथिन्छब्दोऽन्तोदात्तः। तस्य शसि टिलोप उदात्तनिवृत्तिस्वरेण शस उदात्तत्वम् ॥

आ नो गोमन्तमश्विना सुवीरं सुरथं रयिम्। वोळ्हमश्वावतीरिषः ॥१०॥

आ। नः। गोऽमन्तम्। अश्विना। सुऽवीरम्। सुऽरथम्। रयिम्। वोळ्हम्। अश्वऽवतीः। इषः॥ १०॥

हे ᵛअश्विना अश्विनौ ᵛनः अस्मभ्यं ᵛरयिं धनम् ᵛआ ᵛवोळ्हम् आवहतम् आहरतम्। वहेर्लोटि छान्दसः शपो लुक्। ढत्वधत्वष्टुत्वढलोपेषु कृतेषु 'सहिवहोरोदवर्णस्य' इत्योत्वम्। कीदृशं रयिम्। ᵛगोमन्तं बह्वीभिर्गोभिर्युक्तं ᵛसुवीरम्। वीर्याज्जायन्त इति वीराः पुत्राः। शोभनैस्तैरुपेतम्। विविधमीरयन्ति शत्रूनिति वा वीराः शूराः। तैरुपेतम्। ᵛसुरथं शोभनरथेन युक्तम्। अपि च ᵛअश्वावतीः अश्वयुक्ताः। 'मन्त्रे सोमाश्व°' इति मतौ दीर्घः। ᵛइषः इष्यमाणान्यन्नानि चास्मभ्यमावहतम् ॥ ॥ २ ॥

द्विदेवत्यस्याश्विनग्रहस्य 'वावृधाना' इत्येषा याज्या। सूत्र्यते हि—'होता यक्षदश्विना नासत्या वावृधाना शुभस्पती[1]' (आश्व. श्रौ. ५. ५) इति ॥

वावृधाना शुभस्पती दस्रा हिरण्यवर्तनी। पिबतं सोम्यं मधु ॥ ११ ॥

ववृधाना। शुभः। पती इति। दस्रा। हिरण्यवर्तनी इति हिरण्यऽवर्तनी।

पिबतम्। सोम्यम्। मधु ॥ ११ ॥

हे ᵛशुभस्पती शुभः शोभनस्यालंकारस्योदकस्य वा पती स्वामिनौ हे अश्विनौ॥ 'सुबामन्त्रिते°' इति षष्ठ्यन्तस्य पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्याष्टमिकं सर्वानुदात्तत्वम् ॥

---

१. त–शुभस्पतीति।

"दस्रा दर्शनीयौ शत्रूणामुपक्षपयितारौ वा "हिरण्यवर्तनी हिरण्मयमार्गौ। यद्वा। वर्ततेऽस्मिन्निति वर्तनी रथः। हिरण्मयो रथो ययोस्तौ। यद्वा। वर्तनि वर्तनमाचरणम्। हितरमणीयाचरणौ। "वव्रृधाना[1] प्रवृद्धौ। वृधेर्लिटः कानच्। ईदृशौ युवां "सोम्यं सोममयं "मधु माधुर्योपेतं मदकरं वा रसं "पिबतम्॥

**अस्मभ्यं वाजिनीवसू मघवद्भ्यश्च सप्रथः। छर्दिर्यन्तमदाभ्यम्॥ १२॥**

अस्मभ्यम्। वाजिनीवसू इति वाजिनीऽवसू। मघवत्ऽभ्यः। च। सऽप्रथः।

छर्दिः। यन्तम्। अदाभ्यम्॥ १२॥

हे "वाजिनीवसू। वाजिनी हविर्युक्ता यागक्रिया। तस्यां वसु धनं हविर्भागलक्षणं ययोस्तथाविधौ हे अश्विनौ "अस्मभ्यं स्तोतृभ्यः "मघवद्भ्यः। मघं धनं हविर्लक्षणम्। तद्वद्भ्यो यजमानेभ्यः "च "सप्रथः सर्वतः पृथु विस्तीर्णम् "अदाभ्यं केनाप्यहिंस्यं "छर्दिः। गृहनामैतत्। गृहं "यन्तं नियच्छतं दत्तमिति यावत्॥ यमेश्छान्दसः शपो लुक्। 'छन्दस्युभयथा' इत्यार्धधातुकत्वेन ङित्वाभावादनुनासिकलोपाभावः॥

**नि षु ब्रह्म जनानां याविष्टं तूयमा गतम्। मो ष्व१न्याँ उपारतम्॥१३॥**

नि। सु। ब्रह्म। जनानाम्। या। अविष्टम्। तूयम्। आ। गतम्।

मो इति। सु। अन्यान्। उप। अरतम्॥ १३॥

हे अश्विनौ "या यौ युवां "जनानां प्राणिनां मध्ये "ब्रह्म ब्राह्मणजातिं "सु सुष्ठु "नि नितराम् "अविष्टम् अरक्षिष्टम्। यद्वा। जनानां यजमानानां ब्रह्म परिवृढं स्तोत्रं हविर्लक्षणमन्नं वा यौ युवां न्यविष्टं न्यगच्छतम्। अवतिर्गत्यर्थः। तौ युवां "तूयं क्षिप्रम् "आ "गतम् अस्मानप्यागच्छतम्। "अन्यान् अस्मद्व्यतिरिक्तान् यजमानान् "मो मैव "सु "उपारतम् उपगमतम्। कदाचिदपि मैव प्राप्नुतमित्यर्थः॥ अर्तेर्माङि लुङि 'सर्तिशास्त्यर्तिभ्यश्च' इति च्लेरङादेशः॥

आपराह्णिके प्रवर्ग्ये घर्मस्य हविषः 'अस्य पिबतम्' इति द्वितीया याज्या। सूत्रितं च— 'अस्य पिबतमश्विनेति चाप्रेषितो होता' (आश्व. श्रौ. ४. ७) इति॥

**अस्य पिबतमश्विना युवं मदस्य चारुणः। मध्वो रातस्य धिष्ण्या॥१४॥**

अस्य। पिबतम्। अश्विना। युवम्। मदस्य। चारुणः। मध्वः। रातस्य। धिष्ण्या॥ १४॥

हे "अश्विना अश्विनौ हे "धिष्ण्या। धिषणा स्तुतिः। तदर्हौ "युवं युवां "मदस्य मदकरस्य "चारुणः शोभनस्य "रातस्य अस्माभिर्दत्तस्य "अस्य "मध्वः मधुरस्य सोमस्य स्वांशलक्षणं भागं "पिबतम्। यद्वा। द्वितीयार्थे षष्ठी। इमं सोमं पिबतम्॥

**अस्मे आ वहतं रयिं शतवन्तं सहस्रिणम्। पुरुक्षुं विश्वधायसम्॥१५॥**

अस्मे इति। आ। वहतम्। रयिम्। शतऽवन्तम्। सहस्रिणम्। पुरुऽक्षुम्। विश्वऽधायसम्॥१५॥

हे अश्विनौ "अस्मे अस्मभ्यं "रयिं धनं "आ "वहतम् आनयतम्। कथंभूतम्। "शतवन्तं शतसंख्योपेतं "सहस्रिणं सहस्रसंख्योपेतं च "पुरुक्षुं बहुनिवासं यद्वा पुरुभिर्बहुभिः स्तुत्यं "विश्वधायसं विश्वेषां सर्वेषामस्मदीयानां धारकम्। 'वहिहाधाञ्भ्यश्छन्दसि' इति दधातेरसुन्। 'णित्' इत्यनुवृत्तेर्णिद्वद्भावेन युगागमः॥ ॥ ३॥

---

१. ञ-त३-वावृधाना।

पुरुत्रा चिद्धि वां नरा विह्वयन्ते मनीषिणः । वाघद्भिरश्विना गतम् ॥१६॥

पुरुऽत्रा । चित् । हि । वाम् । नरा । विऽह्वयन्ते । मनीषिणः ।

वाघत्ऽभिः । अश्विना । आ । गतम् ॥ १६ ॥

हे नरा नरौ स्तोतॄणां धनस्य नेतारावश्विनौ मनीषिणः मनस ईशितारः स्तोतारः वां युवां पुरुत्रा चिद्धि बहुषु हि देशेषु विह्वयन्ते विविधमाह्वयन्ति। तथा सति हे अश्विनौ वाघद्भिः वाहकैरश्वैः आ गतम् अस्मानेवागच्छतम् ॥

जनासो वृक्तबर्हिषो हविष्मन्तो अरंकृतः । युवां हवन्ते अश्विना ॥१७॥

जनासः । वृक्तऽबर्हिषः । हविष्मन्तः । अरम्ऽकृतः । युवाम् । हवन्ते । अश्विना ॥ १७ ॥

वृक्तबर्हिषः । वृक्तं छिन्नं बर्हिर्यैस्ते तथोक्ताः । हविष्मन्तः हविर्भिर्युक्ताः अरंकृतः पर्याप्तकारिणः यद्वा हविरादीनामलंकर्तारः जनासः ऋत्विग्लक्षणा जना हे अश्विना अश्विनौ युवां हवन्ते आह्वयन्ति । अत आगच्छतमिति शेषः ॥

अस्माकमद्य वामयं स्तोमो वाहिष्ठो अन्तमः । युवाभ्यां भूत्वश्विना ॥१८॥

अस्माकम् । अद्य । वाम् । अयम् । स्तोमः । वाहिष्ठः । अन्तमः । युवाभ्याम् । भूतु । अश्विना ॥१८॥

अद्य इदानीम् अस्माकम् अयं स्तोमः अस्मदीयं स्तोत्रं हे अश्विनौ वां युवयोः वाहिष्ठः वाहयितृतमः प्रापयितृतमः सन् युवाभ्याम्[1] अन्तमः अन्तिकतमः अतिशयेन समीपवर्ती भूतु भवतु। 'तमे तादेश्च' (पा. सू. ६. ४. १४९. ९) इत्यन्तिकशब्दस्य तादिर्लुप्यते। भवतेश्छान्दसः शपो लुक् ॥

यो ह वां मधुनो दृतिराहितो रथचर्षणे । ततः पिबतमश्विना ॥ १९ ॥

यः । ह । वाम् । मधुनः । दृतिः । आऽहितः । रथऽचर्षणे । ततः । पिबतम् । अश्विना ॥१९॥

हे अश्विना अश्विनौ रथचर्षणे रथस्य चर्षणे द्रष्टव्ये मध्ये देशे यः दृतिः मधुनः मधुरस्यास्माभिर्दत्तस्य सोमस्य संबन्धी तेन मधुना पूर्णः आहितः स्थापितो वर्तते ततः दृतेः सकाशात् सोमं पिबतम् ॥

तेन नो वाजिनीवसू पश्वे तोकाय शं गवे । वहतं पीवरीरिषः ॥ २० ॥

तेन । नः । वाजिनीवसू इति वाजिनीऽवसू । पश्वे । तोकाय । शम् । गवे ।

वहतम् । पीवरीः । इषः ॥ २० ॥

हे वाजिनीवसू । वाजोऽन्नं बलं वा । तद्युक्तधनौ नः अस्माकं पश्वे पशवे अश्वादिलक्षणाय ॥ 'जसादिषु छन्दसि वावचनम्' इति 'घेर्ङिति' इति गुणस्य विकल्पितत्वाद्यण् ॥ तोकाय पुत्राय गवे च । जात्यभिप्रायं सर्वत्रैकवचनम् । पशुप्रभृतिभ्यः शं सुखं यथा भवति तथा पीवरीः प्रवृद्धान् इषः अन्नानि तेन भवदीयेन रथेन वहतम् आवहतं प्रापयतम् । दत्तमित्यर्थः ॥ ॥ ४ ॥

उत नो दिव्या इष उत सिन्धूँरहर्विदा । अप द्वारेव वर्षथः ॥ २१ ॥

---

१. ख-भ—युवाभ्यां युवयोः ।

उत । नः । दिव्याः । इषः । उत । सिन्धून् । अहःऽविदा । अप । द्वाराऽइव । वर्षथः ॥२१

उत अपि च हे अहर्विदा अह्नो लम्भयितारौ । यद्वा । अह्नि प्रभातसमये वेदितव्यौ स्तोतव्यावश्विनौ । दिव्याः दिविभवाः इषः इष्यमाणा अपः नः अस्मदर्थं द्वारेव द्वारेणेव छिद्रेणेव अप वर्षथः मेघादपकृष्य युवां सिञ्चथः । उत अपि च सिन्धून् स्यन्दनशीला नदीः वृष्टैस्तैरुदकैः अस्माकं स्नानपानादिकार्याय कृतवन्तावित्यर्थः ॥

कदा वां तौग्र्यो विधत्समुद्रे जहितो नरा । यद्वां रथो विभिष्पतात् ॥२२॥

कदा । वाम् । तौग्र्यः । विधत् । समुद्रे । जहितः । नरा । यत् । वाम् । रथः । विऽभिः । पतात् ॥२२

हे नरा नरौ नेतारावश्विनौ तौग्र्यः तुग्रपुत्रो भुज्युः समुद्रे जलधौ जहितः असुरैः प्रक्षिप्तः सन् कदा कस्मिन् काले वां युवां विधत् अविधत् स्तुतिभिः पर्यचरत् । यत्[1] यदा[1] वां युवयोः विभिः गन्तृभिरश्वैरुपेतः रथः पतात् तं भुज्युमानेतुं पतेत् गच्छेत् तदानीं भुज्युरस्तौदिति पूर्वेणार्धेन पृष्टस्य प्रतिवचनम् ॥

युवं कण्वाय नासत्यापिरिप्ताय हर्म्ये । शश्वदूतीर्दशस्यथः ॥ २३ ॥

युवम् । कण्वाय । नासत्या । अपिऽरिप्ताय । हर्म्ये । शश्वत् । ऊतीः । दशस्यथः ॥ २३ ॥

हे नासत्या । सत्सु साधू सत्यौ । न सत्यावसत्यौ । न असत्यौ नासत्यौ । 'नभ्राण्नपात्°' इति नञः प्रकृतिभावः । यद्वा । सत्यस्य नेतारौ नासिकाप्रभवौ वा । उक्तं च भगवता यास्केन— 'सत्यावेव नासत्यावित्यौर्णवाभः । सत्यस्य प्रणेतारावित्याग्रायणः । नासिकाप्रभवौ बभूवतुरिति[2] वा' ( निरु. ६.१३ ) इति । तौ युवां कण्वाय एतत्संज्ञायर्षये हर्म्ये हर्म्यतले अपिरिप्ताय असुरैर्बाधिताय शश्वत् शश्वतीः बह्वीः ऊतीः रक्षाः दशस्यथः दत्तवन्तौ । 'युवं कण्वायापिरिप्ताय चक्षुः प्रत्यधत्तम्' ( ऋ. सं. १. ११८. ७ ) इत्यत्रेतिहास उक्तः । सोऽत्र द्रष्टव्यः ॥

ताभिरा यातमूतिभिर्नव्यसीभिः सुशस्तिभिः । यद्वां वृषण्वसू हुवे ॥ २४ ॥

ताभिः । आ । यातम् । ऊतिऽभिः । नव्यसीभिः । सुशस्तिऽभिः ।

यत् । वाम् । वृषण्वसू इति वृषण्ऽवसू । हुवे ॥ २४ ॥

हे वृषण्वसू वर्षणधनौ । 'वृषण्वस्वश्वयोरुपसंख्यानम्' ( पा. सू. १. ४. १८. ४ ) इति वृषण्भावो निपात्यते । तदानीं ताभिः पूर्वोक्ताभिः नव्यसीभिः नवतराभिः सुशस्तिभिः सुप्रशस्याभिः ऊतिभिः रक्षाभिः सार्धम् आ यातम् आगच्छतम् । यत् यदा वां हुवे स्तुतिभिराह्वयामि ॥

यथा चित्कण्वमावतं प्रियमेधमुपस्तुतम् । अत्रिं शिञ्जारमश्विना ॥ २५ ॥

यथा । चित् । कण्वम् । आवतम् । प्रियऽमेधम् । उपऽस्तुतम् । अत्रिम् । शिञ्जारम् । अश्विना ॥२५

हे अश्विना अश्विनौ यथा चित् येन खलु प्रकारेण कण्वम् एतत्संज्ञमृषिम् आवतम् अरक्षतं प्रियमेधं प्रिययज्ञमेतत्संज्ञं च उपस्तुतम् एतदाख्यं च शिञ्जारं शब्दयन्तं स्तुवन्तम् अत्रिम् एतानृषींश्च येन प्रकारेणारक्षतं तथास्मानपि रक्षतमिति शेषः । यद्वा । 'एतावद्वां वृषण्वसू' इत्यनयैकवाक्यता ॥ ॥ ५ ॥

---

१. ख-झ-त-न-भ-श–'यद्यदा' नास्ति । २. झ-त-न-श–'बभूवतुरिति' नास्ति ।

यथोत कृत्व्ये धनेंऽशुं गोष्वगस्त्यम् । यथा वाजेषु सोभरिम् ॥ २६ ॥

यथा । उत । कृत्व्ये । धने । अंशुम् । गोषु । अगस्त्यम् । यथा । वाजेषु । सोभरिम् ॥ २६ ॥

उत अपि च यथा येन प्रकारेण धने कृत्व्ये कर्तव्ये प्राप्तव्ये सति अंशुम् एतत्संज्ञं स्तोतारमावतमरक्षतम् । गोषु च लब्धव्यासु यथा अगस्त्यम् ऋषिमरक्षतम् । वाजेषु अन्नेषु लब्धव्येषु यथा येन प्रकारेण सोभरिम् एतत्संज्ञमृषिं चारक्षतम् । अत्रापि पूर्ववद्वाक्यशेष उत्तरयैकवाक्यता वा ॥

एतावद्वां वृषण्वसू अतो वा भूयो अश्विना । गृणन्तः सुम्नमीमहे ॥ २७ ॥

एतावत् । वाम् । वृषण्वसू इति वृषण्ऽवसू । अतः । वा । भूयः । अश्विना ।
गृणन्तः । सुम्नम् । ईमहे ॥ २७ ॥

हे वृषण्वसू वर्षणधनौ अश्विना अश्विनौ गृणन्तः स्तुवन्तो वयम् एतावत् 'यथा चित् कण्वम्' इत्यादिना यावदनुक्रान्तमेतत्परिमाणं सुम्नं सुखम् अतो वा अस्माद्वा भूयः बहुतरमधिकं सुम्नं वां युवाम् ईमहे याचामहे ॥

रथं हिरण्यवन्धुरं हिरण्याभीशुमश्विना । आ हि स्थाथो दिविस्पृशम् ॥२८॥

रथम् । हिरण्यऽवन्धुरम् । हिरण्यऽअभीशुम् । अश्विना । आ । हि । स्थाथः । दिविऽस्पृशम् ॥२८॥

हे अश्विना अश्विनौ हिरण्यवन्धुरम् । सारथिस्थानं वन्धुरम् । हिरण्मयसारथिस्थानं हिरण्याभीशुं हिरण्मयप्रग्रहं दिविस्पृशम् अत्युन्नतत्वाद्दिवं स्पृशन्तम् । स्पृशेः क्विन् । दिव्शब्दाद्द्वितीयार्थे सप्तमी । 'हृद्द्युभ्यां ङेरुपसंख्यानम्' इत्यलुक् । ईदृशं रथम् आ हि स्थाथः युवामातिष्ठथ एव । हिरवधारणे । अस्मदीयां स्तुतिं श्रोतुं शीघ्रं रथमास्थायागतमिति भावः । 'ष्ठा गतिनिवृत्तौ' । लटि छान्दसः शपो लुक् ॥

हिरण्ययी वां रभिरीषा अक्षो हिरण्ययः । उभा चक्रा हिरण्यया ॥२९॥

हिरण्ययी । वाम् । रभिः । ईषा । अक्षः । हिरण्ययः । उभा । चक्रा । हिरण्यया ॥ २९ ॥

हे अश्विनौ वां युवयोः रभिः आरम्भणीयालम्भनभूता रथस्य ईषा हिरण्ययी हिरण्मयी हिरण्यविकारा । अक्षः च हिरण्ययः हिरण्मयो हिरण्यनिर्मितः । 'ईषा अक्षादिषु छन्दसि' (पा. सू. ६. १. १२७. २) इति प्रकृतिभावः । अपि च उभा उभे द्वे अपि चक्रा चक्रे रथचरणे हिरण्यया हिरण्मये सुवर्णनिर्मिते । 'सुपां सुलुक्' इति द्विवचनस्याकारः । 'ऋत्व्यवास्त्व्यवास्त्व' इत्यादिना हिरण्यशब्दान्मयटो मलोपो निपात्यते ॥

तेन नो वाजिनीवसू परावतश्चिदा गतम् । उपेमां सुष्टुतिं मम ॥ ३० ॥

तेन । नः । वाजिनीवसू इति वाजिनीऽवसू । पराऽवतः । चित् । आ । गतम् ।
उप । इमाम् । सुऽस्तुतिम् । मम ॥ ३० ॥

हे वाजिनीवसू अन्नवद्धनावश्विनौ य उक्तो हिरण्मयसर्वावयवो रथः तेन रथेन नः अस्मान् परावतश्चित् दूरदेशादपि आ गतम् आगच्छतम् । गमेश्छान्दसः शपो लुक् । 'अनुदात्तोपदेश' इत्यनुनासिकलोपः । इदानीमृषिरेकवदाह । मम मदीयाम् इमाम् इदानीं क्रियमाणां सुष्टुतिं शोभनां स्तुतिं चोपगच्छतम् ॥ ॥ ६ ॥

आ वहेथे पराकात्पूर्वीरश्नन्तावश्विना । इषो दासीरमर्त्या ॥ ३१ ॥

आ । वहेथे इति । पराकात् । पूर्वीः । अश्नन्तौ । अश्विना । इषः । दासीः । अमर्त्या ॥३

हे ᵛअमर्त्या अमरणौ ᵛअश्विना अश्विनौ ᵛदासीः । दासा उपक्षपयितारोऽसुराः । तत्संबन्धिः ᵛपूर्वीः पुरीः ᵛअश्नन्तौ भक्षयन्तौ भञ्जन्तौ युवाम् ᵛइषः अन्नानि ᵛपराकात् परागताद्दूरदेशात् ᵛ ᵛवहेथे अस्मान्प्रापयथः । यद्वा । अश्नन्तौ व्याप्नुवन्तौ । 'अशू व्याप्तौ'। अस्माद्व्यत्ययेन परस्मैपदं च । पूर्वीः बह्वीः ᵛदासीः दासस्योपक्षपयितुः शत्रोः संबन्धिनीः इषः अन्न शत्रुभ्योऽपहृत्य अस्मान् प्रापयथः ॥

आ नो द्युम्नैरा श्रवोभिरा राया यातमश्विना । पुरुश्चन्द्रा नासत्या ॥ ३२ ॥

आ । नः । द्युम्नैः । आ । श्रवःऽभिः । आ । राया । यातम् । अश्विना । पुरुऽचन्द्रा । नासत्या ॥३

हे ᵛपुरुश्चन्द्रा बहुहिरण्यौ यद्वा पुरूणां बहूनामाह्लादकौ ॥ 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इ सुट् । पादादित्वात् षाष्ठिकमामन्त्रितायुदात्तत्वम् ॥ हे ᵛनासत्या सत्यस्वभावौ सत्यस्य नेत नासिकाप्रभवौ वा ॥ 'आमन्त्रितं पूर्वमविद्यमानवत्' इति पूर्वस्यामन्त्रितस्याविद्यमानवद्भाव इदमपि आमन्त्रितमाद्युदात्तम्[१]। न च 'नामन्त्रिते समानाधिकरणे' इत्यविद्यमानवत्त्वनिषे पुरुश्चन्द्रेत्यस्य विशेषवचनत्वात् ॥ ईदृशौ हे ᵛअश्विना अश्विनौ ᵛद्युम्नैः द्योतमानैरन्नैर्दातव्यैः स ᵛनः अस्मान् ᵛआ ᵛयातम् आगच्छतम् । तथा ᵛश्रवोभिः श्रवणीयैर्यशोभिश्च अस्मानागच्छत तथा ᵛराया धनेन चास्मानागच्छतम् ॥

एह वां प्रुषितप्सवो वयो वहन्तु पर्णिनः । अच्छा स्वध्वरं जनम् ॥ ३३ ॥

आ । इह । वाम् । प्रुषितऽप्सवः । वयः । वहन्तु । पर्णिनः । अच्छ । सुऽअध्वरम् । जनम् ॥३

हे अश्विनौ ᵛइह अस्मिन् यागे ᵛवां युवां ᵛप्रुषितप्सवः । प्रुषिः स्नेहनकर्मा । स्निग्धरू ᵛपर्णिनः पक्षोपेताः । यद्वा । लुप्तोपममेतत् । पक्षिण इव शीघ्रगामिनः ᵛवयः गन्तारोऽ ᵛस्वध्वरं शोभनयज्ञं यजमानलक्षणं ᵛजनम्[२] ᵛअच्छ अभिमुखम् ᵛआ ᵛवहन्तु आनयन्तु ॥

रथं वामनुगायसं य इषा वर्तते सह । न चक्रमभि बाधते ॥ ३४ ॥

रथम् । वाम् । अनुऽगायसम् । यः । इषा । वर्तते । सह । न । चक्रम् । अभि । बाधते ॥३

हे अश्विनौ ᵛयः रथोऽस्मभ्यं देयेनान्नेन[३] ᵛसह ᵛवर्तते ᵛवां युवयोः स्वभूतम् ᵛअनुगा स्तोतृभिरनुगातव्यं तं ᵛरथं ᵛचक्रं परसैन्यं ᵛन ᵛअभि ᵛबाधते नाभिहन्ति । यद्वा । चक्रं व कर्मसाधनम् । 'घञर्थे कविधानम्' इति कः । 'कृञादीनां के' (का. ६. १. १२. १) इ द्विर्वचनम् । अस्मिन्[४] पक्षे अन्यः शत्रुरिति कर्तृपदमध्याहर्तव्यम् ॥

हिरण्ययेन रथेन द्रवत्पाणिभिरश्वैः । धीजवना नासत्या ॥ ३५ ॥

हिरण्ययेन । रथेन । द्रवत्पाणिऽभिः । अश्वैः । धीऽजवना । नासत्या ॥ ३५ ॥

हे ᵛधीजवना मनोवद्वेगवन्तौ[५] । आमन्त्रितायुदात्तत्वम् । हे ᵛनासत्या सत्यस्वभावौ सत्य नेतारौ वा । 'आमन्त्रितं पूर्वमविद्यमानवत्' इति पूर्वस्याविद्यमानत्वेन[६] पदादपरत्वादाष्टमि

१. झ-त-न-भ-श-°माद्युदात्तत्वं । २. ख-झ-त-न-भ-श-'जनं' नास्ति । ३. घ-देयेन इषा श-इषान्नेन । ४. झ-त-न-श-यस्मिन् । ५. ख-भ-धीवद्वेग° । ६. झ-त२-श-°विद्यमानवत्त्वेन ।

निघाताभावः । न च नामन्त्रितविद्यमानवत्त्वनिषेधो धीजवनेत्यस्य विशेषणत्वेन सामान्यवचनत्वाभावात् । व्यावर्तकं हि विशेषणम् । ईदृशौ युवां ᵛद्रवत्पाणिभिः शीघ्रगमनपदैः[1] ᵛअश्वैः युक्तेन ᵛहिरण्ययेन हिरण्मयेन स्वर्णमयेन ᵛरथेन आगतमिति शेषः । यद्वा । धीजवना नासत्या इत्येतद्द्वयमपि प्रथमान्तमेव नामन्त्रितम् । धियो जव इव जवो ययोस्तौ । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । ईदृशेन रथेन शीघ्रगमनौ नासत्यावश्विनौ आगच्छतमिति शेषः ॥ ॥ ७ ॥

युवं मृगं जागृवांसं स्वदथो वा वृषण्वसू । ता नः पृङ्क्तमिषा रयिम् ॥ ३६ ॥

युवम् । मृगम् । जागृऽवांसम् । स्वदथः । वा । वृषण्वसू इति वृषण्ऽवसू ।
ता । नः । पृङ्क्तम् । इषा । रयिम् ॥ ३६ ॥

वाशब्दः समुच्चये । अपि च हे ᵛवृषण्वसू वर्षणधनावश्विनौ ᵛयुवं युवां ᵛजागृवांसं जागरणशीलं स्वकार्ये मदजनने व्यग्रं ᵛमृगं मृग्यमन्वेषणीयं सोमं ᵛस्वदथः आस्वादयथः । यद्वा । जागृवांसं जाग्रतं मृगं मृगनामानमसुरं[2] स्वदथः स्वादयथः हिंस्थ इत्यर्थः । ᵛता तौ युवां ᵛनः अस्मदर्थम् ᵛइषा अन्नेन ᵛरयिं धनं ᵛपृङ्क्तं संपृङ्क्तं[3] कुरुतम् । ईदृशं धनमस्मभ्यं प्रयच्छतमित्यर्थः ॥

ता मे अश्विना सनीनां विद्यातं नवानाम् ।
यथा चिच्चैद्यः कशुः शतमुष्ट्रानां ददत्सहस्रा दश गोनाम् ॥ ३७ ॥

ता । मे । अश्विना । सनीनाम् । विद्यातम् । नवानाम् ।
यथा । चित् । चैद्यः । कशुः । शतम् । उष्ट्रानाम् । ददत् । सहस्रा । दश । गोनाम् ॥ ३७ ॥

हे ᵛअश्विना अश्विनौ ᵛता तादृशौ युवां ᵛनवानाम् अभिनवानां श्रेष्ठानां ᵛसनीनां संभजनीयानां धनानाम् । कर्मणि षष्ठी । ईदृशानि धनानि ᵛमे मह्यं दापयितुं ᵛविद्यातं जानीतम् । ᵛयथा ᵛचित् येन खलु प्रकारेण ᵛचैद्यः चेदिपुत्रः ᵛकशुः एतत्संज्ञो राजा ᵛउष्ट्रानां ᵛशतं तथा ᵛगोनां गवां ᵛदश ᵛसहस्रा दशसंख्यानि सहस्राणि ᵛददत् दद्यात् तथा विद्यातमिति पूर्वत्रान्वयः ॥

यो मे हिरण्यसंदृशो दश राज्ञो अमंहत ।
अधस्पदा इच्चैद्यस्य कृष्टयश्चर्मम्ना अभितो जनाः ॥ ३८ ॥

यः । मे । हिरण्यऽसंदृशः । दश । राज्ञः । अमंहत ।
अधःऽपदाः । इत् । चैद्यस्य । कृष्टयः । चर्मऽम्नाः । अभितः । जनाः ॥ ३८ ॥

ᵛयः कशुसंज्ञो राजा ᵛमे मह्यं ᵛहिरण्यसंदृशः हिरण्यसंदर्शनान् हिरण्यसमानतेजस्कान् ᵛदश ᵛराज्ञः ᵛअमंहत परिचरणार्थं दत्तवान् । दशसंख्याकान् राज्ञो युद्धे पराजितान् गृहीत्वा दासत्वेनास्मै दत्तवानित्यर्थः । नन्वीदृशानां बहुविधानां राज्ञां दान एकः कथं शक्नुयादिति तत्राह । ᵛकृष्टयः सर्वाः प्रजास्तस्य ᵛचैद्यस्य चेदिपुत्रस्य कशोः ᵛअधस्पदा ᵛइत् पादयोरधस्तादेव वर्तन्ते । न कश्चिदपि तत्समानस्तदधिको वा विद्यते । ᵛअभितः सर्वतो वर्तमानाः ᵛजनाः ᵛचर्मम्नाः चर्ममयस्य कवचादेर्धारणे कृताभ्यासाः । यद्वा । चर्माणि चरणसाधनान्यश्वादीनि वाहनानि । तेषु मनन्त्यभ्यस्यन्तीति चर्मम्नाः । 'म्ना अभ्यासे' । 'आतो मनिन्°' इति विच् । सर्वे मनुष्यास्तस्य भटा इत्यर्थः ॥

१. ख-ज्ञ-त१-२-४-भ-श–°गमनपादैः । २. ख-भ–मृगयमानं तम°; ज्ञ-त३-श–मृगयनामानम°; न–मृगयमामानानम° । ३. ख-ज्ञ-त३-भ-श–संपृक्तं; घ-ज्ञ-त१-२-४-न–'संपृङ्क्तं' नास्ति ।

माकिरेना पथा गाद्येनेमे यन्ति चेदयः ।
अन्यो नेत्सूरिरोहते भूरिदावत्तरो जनः ॥ ३९ ॥

माकिः । एना । पथा । गात् । येन । इमे । यन्ति । चेदयः ।
अन्यः । न । इत् । सूरिः । ओहते । भूरिदावत्ऽतरः । जनः ॥ ३९ ॥

ᐯयेन मार्गेण ᐯइमे ᐯचेदयः अस्य राज्ञः पितृपितामहादयः ᐯयन्ति गच्छन्ति ᐯएना अनेन ᐯपथा मार्गेण ᐯमाकिः ᐯगात् अन्यो न गन्तुं शक्नोति । अपि च अस्माद्राज्ञः ᐯअन्यः ᐯभूरिदावत्तरः बहुदातृतमः ᐯसूरिः विद्वान् सन् ᐯजनः ᐯनेत् नैव ᐯओहते वहति स्तोतृभ्यो धनं प्रापयति । यद्वा । बहुदातृतमो यो जनः कश्चुर्नाम अस्मादन्यः । व्यत्ययेन प्रथमा । अन्यं ᐯसूरिः स्तोता नेदोहते नैव याचते । ओहिर्याच्ञाकर्मा । यथान्यं न याचते तथा बहु धनं प्रयच्छतीत्यर्थः ॥ ॥ ८ ॥ ॥ १ ॥

द्वितीयेऽनुवाके सप्त सूक्तानि । तत्र ' महाँ इन्द्रः ' इत्यष्टाचत्वारिंशदृचं प्रथमं सूक्तं काण्वस्य[1] वत्सस्यार्षं गायत्रम् । अन्त्यतृचवर्जमैन्द्रम् । तस्मिन्[2] परशुनाम्नो राज्ञः पुत्रस्य तिरिन्दिरस्य दानं स्तूयते । अतः स तृचस्तद्देवताकः । तथा चानुक्रान्तं—' महाँ इन्द्रोऽष्टाचत्वारिंशद्वत्सस्तृचोऽन्त्यस्ति-रिन्दिरस्य पारशव्यस्य दानस्तुतिः ' इति । महाव्रते गायत्रतृचाशीतौ अन्त्यतृचवर्जमिदं सूक्तम् । तथैव पञ्चमारण्यके सूत्र्यते—' महाँ इन्द्रो य ओजसेति तिस्र उत्तमा उद्धरति ' ( ऐ. आ. ५. २. ३ ) इति । प्रातःसवने सोमातिरेके ' महान् ' इत्यादिकाः स्तोमातिशंसनार्थाः । सूत्रितं च—' महाँ इन्द्रो य ओजसातो देवा अवन्तु न इत्यैन्द्रीभिर्वैष्णवीभिश्च स्तोममतिशस्य ' ( आश्व. श्रौ. ६. ७ ) इति । तृतीये पर्याये होतुः शस्त्रे ' महाँ इन्द्रः ' इति तृचोऽनुरूपः । सूत्रितं च—' महाँ इन्द्रो य ओजसा समस्य मन्यवे विश इति ' ( आश्व. श्रौ. ६. ४ ) इति । अप्तोर्यामे ब्रह्मणोऽतिरिक्तोक्थे अयमेव तृचोऽनुरूपः । सूत्र्यते हि—' महाँ इन्द्रो य ओजसा नूनमश्विना ' ( आश्व. श्रौ. ९. ११ ) इति । दर्शयागे महेन्द्रयाजिनः सांनाय्यस्य ' महान् ' इत्येषानुवाक्या । सूत्र्यते हि—' महाँ इन्द्रो य ओजसा भुवस्त्वमिन्द्र ब्रह्मणा महान् ' ( आश्व. श्रौ. १. ६ ) इति ॥

महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँइव । स्तोमैर्वत्सस्य वावृधे ॥ १ ॥

महान् । इन्द्रः । यः । ओजसा । पर्जन्यः । वृष्टिमान्ऽइव । स्तोमैः । वत्सस्य । ववृधे ॥ १ ॥

ᐯयः ᐯइन्द्रः ᐯओजसा बलेन ᐯमहान् सर्वेभ्योऽधिकः । क इव । ᐯवृष्टिमानिव[3] । यथा[4] वृष्ट्या युक्तः ᐯपर्जन्यः रसानां प्रार्जयिता देवो महान् स इवेत्यर्थः । स इन्द्रः ᐯवत्सस्य[5] पुत्रस्थानीयस्य स्तोतुर्वत्सनाम्न एवर्षेः स्तोत्रैः ᐯववृधे प्रवर्धते ॥

प्रजामृतस्य पिप्रतः प्र यद्भरन्त वह्नयः । विप्रा ऋतस्य वाहसा ॥ २ ॥

प्रऽजाम् । ऋतस्य । पिप्रतः । प्र । यत् । भरन्त । वह्नयः । विप्राः । ऋतस्य । वाहसा ॥ २ ॥

ᐯऋतस्य यज्ञस्य सत्यस्य वा ᐯप्रजां प्रकर्षेण जातमिन्द्रं ᐯपिप्रतः नभसः प्रदेशान् पूरयन्तः ᐯवह्नयः वाहका अश्वाः ᐯयत् यदा ᐯप्र ᐯभरन्त प्रकर्षेण भरन्ति वहन्ति तदा ᐯविप्राः मेधाविनः[6] ᐯऋतस्य यज्ञस्य ᐯवाहसा प्रापकेण स्तोत्रेण तमिन्द्रं स्तुवन्तीति शेषः ॥

---

१. ख-न-भ-श-कण्वस्य । २. ख-न-भ-तस्य । ३. भ-वृष्टिमान् पर्जन्य इव । ४. क्ष-यथा वृष्टिमान् । ५. त१-वत्सस्य पुत्रस्य । ६. श-मेधाविनः स्तोतारः ।

कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम् । जामि ब्रुवत आयुधम् ॥ ३ ॥

कण्वाः । इन्द्रम् । यत् । अक्रत । स्तोमैः । यज्ञस्य । साधनम् । जामि । ब्रुवते । आयुधम् ॥३॥

<sup>v</sup>कण्वाः । स्तोतृनामैतत् । स्तोतारः कण्वगोत्रा वा <sup>v</sup>इन्द्रं <sup>v</sup>स्तोमैः स्तोत्रैः <sup>v</sup>यज्ञस्य यागस्य <sup>v</sup>साधनं साधयितारं निष्पादकं <sup>v</sup>यत् यदा <sup>v</sup>अक्रत अकृषत । करोतेर्लुङि 'मन्त्रे घस॰' इति च्लेर्लुक् । तदानीम् <sup>v</sup>आयुधं शत्रूणां हिंसकं बाणादिकं <sup>v</sup>जामि । अतिरेकनामैतत् । अतिरिक्तमहितं प्रयोजनरहितं <sup>v</sup>ब्रुवते कथयन्ति । आयुधसाध्यस्य सर्वकार्यस्येन्द्रेण कृतत्वादायुधं निष्प्रयोजनमित्यर्थः। यद्वा । आयुधमायोधनशीलमिन्द्रं जामि जामिं भ्रातरं ब्रुवते वदन्ति । सर्वकार्येषु भ्रातृवद्वर्तत इत्यर्थः॥

तृतीये पर्याये होतुः शस्त्रे 'समस्य मन्यवे' इत्याद्या द्विचत्वारिंशदृचः । सूत्र्यते हि— 'समस्य मन्यवे विश इति द्विचत्वारिंशद्विश्वजिते' (आश्व. श्रौ. ६. ४) इति ॥

समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः । समुद्रायेव सिन्धवः ॥ ४ ॥

सम् । अस्य । मन्यवे । विशः । विश्वाः । नमन्त । कृष्टयः । समुद्रायऽइव । सिन्धवः ॥ ४ ॥

<sup>v</sup>विशः विशन्त्यः <sup>v</sup>विश्वाः सर्वाः <sup>v</sup>कृष्टयः प्रजाः <sup>v</sup>अस्य इन्द्रस्य <sup>v</sup>मन्यवे क्रोधाय । यद्वा । मन्युः[1] मननसाधनं स्तोत्रम् । तदर्थं <sup>v</sup>सं <sup>v</sup>नमन्त सम्यक् स्वत एव नमन्ति । नमतेः कर्मकर्तरि छान्दसो लङ् । 'न दुहस्नुनमाम्॰' इति यक्चिणोः प्रतिषेधः । प्रह्वीभवन्ति । तत्र दृष्टान्तः । <sup>v</sup>समुद्रायेव यथा समुद्रमब्धिं प्रति <sup>v</sup>सिन्धवः स्यन्दनशीला नद्यः स्वयमेव नमन्ते तद्वत् ॥

ओजस्तदस्य तित्विष उभे यत्समवर्तयत् । इन्द्रश्चर्मेव रोदसी ॥ ५ ॥

ओजः । तत् । अस्य । तित्विषे । उभे इति । यत् । सम्ऽअवर्तयत् ।
इन्द्रः । चर्मऽइव । रोदसी इति ॥ ५ ॥

<sup>v</sup>अस्य इन्द्रस्य <sup>v</sup>तत् <sup>v</sup>ओजः बलं <sup>v</sup>तित्विषे दिदीपे । 'त्विष दीप्तौ' । <sup>v</sup>यत् येन ओजसा अयम् <sup>v</sup>इन्द्रः <sup>v</sup>उभे <sup>v</sup>रोदसी द्यावापृथिव्यौ <sup>v</sup>चर्मेव <sup>v</sup>समवर्तयत् सम्यग्वर्तयति । यथा कश्चित् किंचिच्चर्म कदाचिद्विस्तारयति कदाचित् संकोचयति एवं तदधीने अभूतामित्यर्थः ॥ ॥ ९ ॥

वि चिद्वृत्रस्य दोधतो वज्रेण शतपर्वणा । शिरो बिभेद वृष्णिना ॥ ६ ॥

वि । चित् । वृत्रस्य । दोधतः । वज्रेण । शतऽपर्वणा । शिरः । बिभेद । वृष्णिना ॥ ६ ॥

चिच्छब्दोऽप्यर्थे । स च भिन्नक्रमः । <sup>v</sup>वृत्रस्य <sup>v</sup>चित् आवरकस्यापि <sup>v</sup>दोधतः अत्यर्थं जगत्कम्पयतोऽसुरस्य <sup>v</sup>शिरः मूर्धानं <sup>v</sup>शतपर्वणा शतसंख्याकपर्वाणि धारा यस्य तादृशेन <sup>v</sup>वृष्णिना वीर्यवता <sup>v</sup>वज्रेण इन्द्रः <sup>v</sup>वि <sup>v</sup>बिभेद विचिच्छेद ॥

आभिप्लविकेषूक्थ्येषु तृतीयसवने प्रशास्तुः शस्त्रे 'इमा अभि' इति तृचो वैकल्पिकोऽनुरूपः । सूत्रितं च—'इमा अभि प्र णोनुम इत्यथ ब्राह्मणाच्छंसिनः' (आश्व. श्रौ. ७. ८) इति ॥

इमा अभि प्र णोनुमो विपामग्रेषु धीतयः । अग्नेः शोचिर्न दिद्युतः ॥७॥

इमाः । अभि । प्र । नोनुमः । विपाम् । अग्रेषु । धीतयः । अग्नेः । शोचिः । न । दिद्युतः ॥७॥

---

१. झ-त१-२-४—मन्यु ।

ᵛविपां स्तोतॄणाम् ᵛअग्रेषु पुरस्तात् ᵛइमाः अस्मदीयाः ᵛधीतयः धियः स्तोत्राणि ᵛअभि ᵛप्र ᵛणोनुमः आभिमुख्येन पुनःपुनः प्रवदामः । 'णु शब्दे'। कीदृशीः स्तुतीः । ᵛअग्नेः ᵛशोचिर्न दीप्तिरिव ᵛदिद्युतः दीप्यमाना वेदरूपाः ॥

गुहा सतीरुप त्मना प्र यच्छोचन्त धीतयः । कण्वा ऋतस्य धारया ॥८॥

गुहा । सतीः । उप । त्मना । प्र । यत् । शोचन्त । धीतयः । कण्वाः । ऋतस्य । धारया ॥८॥

ᵛगुहा गुहायां ᵛसतीः सत्यो भवन्त्यः ᵛयत् याः ᵛधीतयः स्तुतयः कर्माणि वा ᵛत्मना आत्मना स्वेनेन्द्रेणोपगम्यमानाः ᵛप्र ᵛशोचन्त प्रादीप्यन्त । यद्वा । आत्मना स्वत एवेन्द्रमुपगच्छन्त्यः प्रदीप्यन्ते । ताः स्तुतीः ᵛकण्वाः कण्वगोत्रा ऋषयः ᵛऋतस्य उदकस्य सोमात्मकस्य ᵛधारया सहिताः कुर्वन्तीति शेषः ॥

प्र तमिन्द्र नशीमहि रयिं गोमन्तमश्विनम् । प्र ब्रह्म पूर्वचित्तये ॥ ९ ॥

प्र । तम् । इन्द्र । नशीमहि । रयिम् । गोऽमन्तम् । अश्विनम् । प्र । ब्रह्म । पूर्वऽचित्तये ॥९॥

हे ᵛइन्द्र ᵛगोमन्तं गोभिर्युक्तम् ᵛअश्विनम् अश्वैरुपेतं ᵛतं प्रसिद्धं ᵛरयिं त्वदीयं धनं ᵛप्र ᵛनशीमहि प्राप्नुयाम । तथा ᵛब्रह्म परिवृढमन्नं च ᵛपूर्वचित्तये अन्येभ्यः पूर्वमेव ज्ञानाय प्राप्नवाम[1] ॥

अहमिद्धि पितुष्परि मेधामृतस्य जग्रभ । अहं सूर्यइवाजनि ॥ १० ॥

अहम् । इत् । हि । पितुः । परि । मेधाम् । ऋतस्य । जग्रभ । अहम् । सूर्यःऽइव । अजनि ॥१०॥

ᵛपितुः पालकस्य ᵛऋतस्य सत्यस्य अवितथस्येन्द्रस्य ᵛमेधाम् अनुग्रहात्मिकां बुद्धिम् ᵛअहमित् अहमेव ᵛपरि ᵛजग्रभ परिगृहीतवानस्मि नान्ये । ᵛहि यस्मादेवं तस्मात् ᵛअहं ᵛसूर्यइवाजनि सूर्यो यथा प्रकाशमानः सन् प्रादुर्भवति तथाजनिषं प्रादुरभूवम् ॥ ॥ १० ॥

अहं प्रत्नेन मन्मना गिरः शुम्भामि कण्ववत् । येनेन्द्रः शुष्ममिद्दधे ॥११॥

अहम् । प्रत्नेन । मन्मना । गिरः । शुम्भामि । कण्वऽवत् ।
येन । इन्द्रः । शुष्मम् । इत् । दधे ॥ ११ ॥

ᵛकण्ववत् मम जनकः कण्व इव ᵛअहं ᵛप्रत्नेन नित्येन वेदरूपेण ᵛमन्मना मननसाधनेनेन्द्रविषयेण स्तोत्रेण ᵛगिरः वाचः ᵛशुम्भामि अलंकरोमि । यदा हीन्द्रविषये प्रयुज्यन्ते तदानीं यथार्थत्वाद्वाचोऽलंकृता भवन्ति । ᵛयेन खलु स्तोत्रेण ᵛइन्द्रः ᵛशुष्मं शत्रूणां शोषकं बलं ᵛदधे ᵛइत् धत्त एव धारयत्येव । यत्स्तोत्रमिन्द्रे ईदृशं बलमवश्यं जनयति तेन मन्मनेत्यर्थः ॥

ये त्वामिन्द्र न तुष्टुवुरृषयो ये च तुष्टुवुः । ममेद्वर्धस्व सुष्टुतः ॥१२॥

ये । त्वाम् । इन्द्र । न । तुस्तुवुः । ऋषयः । ये । च । तुस्तुवुः ।
मम । इत् । वर्धस्व । सुऽस्तुतः ॥ १२ ॥

हे ᵛइन्द्र ᵛये जनाः ᵛत्वां ᵛन ᵛतुष्टुवुः न स्तुवन्ति ᵛये ᵛच ᵛऋषयः मन्त्राणां द्रष्टारो जनाः ᵛतुष्टुवुः त्वां स्तुवन्ति उभयेषां मध्ये ᵛममेत् ममैव स्तोत्रेण ᵛसुष्टुतः शोभनं स्तुतः सन् ᵛवर्धस्व वृद्धो भव ॥

१. ज्ञ-त२-य-प्राप्नुयाम ।

**यदस्य मन्युरध्वनीद्वि वृत्रं पर्वशो रुजन् । अपः समुद्रमैरयत् ॥ १३ ॥**

यत् । अस्य । मन्युः । अध्वनीत् । वि । वृत्रम् । पर्वऽशः । रुजन् । अपः । समुद्रम् । ऐरयत् ॥ १३ ॥

अस्य[1] इन्द्रस्य मन्युः क्रोधः वृत्रम् आवृत्य तिष्ठन्तमसुरं मेघं वा पर्वशः पर्वणि पर्वणि परुषि परुषि वि रुजन् विभञ्जन् यत् यदा अध्वनीत् स्तनयित्नुलक्षणं शब्दमकरोत् तदानीं समुद्रं समुन्दनीयमुदधिं प्रति अपः वृष्ट्युदकानि ऐरयत् स इन्द्रः प्रेरितवान् ॥

**नि शुष्ण इन्द्र धर्णसिं वज्रं जघन्थ दस्यवि । वृषा ह्युग्र शृण्विषे ॥ १४ ॥**

नि । शुष्णे । इन्द्र । धर्णसिम् । वज्रम् । जघन्थ । दस्यवि । वृषा । हि । उग्र । शृण्विषे ॥ १४ ॥

हे इन्द्र शुष्णे शोषक एतत्संज्ञे दस्यवि उपक्षपयितर्यसुरे धर्णसिं धारयितव्यं वज्रं कुलिशं त्वं नि जघन्थ निहतवानसि[2] । वज्रेण तमसुरं न्यवधीरित्यर्थः । हे उग्र उद्गूर्णबलेन्द्र वृषा कामानां वर्षितेति हि शृण्विषे श्रूयसे । अतोऽस्मदपेक्षितं धनं देहीति शेषः ॥

**न द्याव इन्द्रमोजसा नान्तरिक्षाणि वज्रिणम् । न विव्यचन्त भूमयः ॥ १५ ॥**

न । द्यावः । इन्द्रम् । ओजसा । न । अन्तरिक्षाणि । वज्रिणम् । न । विव्यचन्त । भूमयः ॥ १५ ॥

द्यावः द्युलोका इमम् इन्द्रम् ओजसा बलेन न विव्यचन्त न व्याप्नुवन्ति । द्युलोकेभ्योऽप्यस्य बलमधिकमित्यर्थः । तथा अन्तरिक्षाणि अन्तरा क्षान्तानि द्यावापृथिव्योर्मध्ये वर्तमाना लोकाः वज्रिणं वज्रवन्तमिन्द्रं न व्याप्नुवन्ति । तथा भूमयः भूलोकाश्च तमिन्द्रं न व्याप्नुवन्ति । 'त्रयो वा इमे त्रिवृतो लोकाः' ( ऐ. आ. १. १. २ ) इति ब्राह्मणादेकैकस्य लोकस्य त्रित्वम् । 'तिस्रो भूमीः' ( ऋ. सं. २. २७. ८ ) इत्यादिनिगमाच्च ॥ ॥ ११ ॥

**यस्त इन्द्र महीरपः स्तभूयमान आशयत् । नि तं पद्यासु शिश्नथः ॥ १६ ॥**

यः । ते । इन्द्र । महीः । अपः । स्तभुऽयमानः । आ । अशयत् । नि । तम् । पद्यासु । शिश्नथः ॥ १६ ॥

हे इन्द्र ते तव संबन्धिनीः महीः महतीः अपः आन्तरिक्ष्याण्युदकानि यः वृत्रः स्तभूयमानः स्तम्भयन् यथाधो न पतन्ति तथा कुर्वन् आशयत् आवृत्याशेत तम् असुरं पद्यासु गमनशीलास्वप्सु मध्ये नि शिश्नथः न्यहिंसीः । श्नथिर्हिंसार्थः । वज्रेण तमसुरं हत्वा नदीषु पातितवानित्यर्थः ॥

**य इमे रोदसी मही समीची समजग्रभीत् । तमोभिरिन्द्र तं गुहः ॥ १७ ॥**

यः । इमे इति । रोदसी इति । मही इति । समीची इति सम्ऽईची । सम्ऽअजग्रभीत् ।
तमःऽभिः । इन्द्र । तम् । गुहः ॥ १७ ॥

यः वृत्रः मही महत्यौ विस्तीर्णे समीची संगते इमे प्रत्यक्षत उपलभ्यमाने रोदसी द्यावापृथिव्यौ समजग्रभीत् सम्यगग्रहीत् । आवृणोदित्यर्थः । तम् असुरं हे इन्द्र त्वं तमोभिः अन्धकारैः गुहः संवृतमकरोः । अनाद्यनन्तं मरणलक्षणं तमः प्रावेशय इत्यर्थः ॥

**य इन्द्र यतयस्त्वा भृगवो ये च तुष्टुवुः । ममेदुग्र श्रुधी हवम् ॥ १८ ॥**

---

१. ख-ञ-त-न-भ-श—यस्य । २. ख-भ—नितरां हतवानसि; त४—निवानसि; न-श—निहितवानसि ।

ये । इन्द्र । यतयः । त्वा । भृगवः । ये । च । तुस्तुवुः ।
मम । इत् । उग्र । श्रुधि । हवम् ॥ १८ ॥

हे ᵛइन्द्र ᵛये ᵛयतयः नियता अङ्गिरसस्त्वां ᵛतुष्टुवुः ᵛये ᵛच ᵛभृगवः भृगुगोत्रास्त्वां[1] तुष्टुवुः स्तुवन्ति तेषु मध्ये ᵛममेत् ममैव ᵛहवं स्तोत्रं हे ᵛउग्र ओजस्विन्निन्द्र ᵛश्रुधि शृणु ॥

**इमास्त इन्द्र पृश्नयो घृतं दुहत आशिरम् । एनामृतस्य पिप्युषीः ॥ १९ ॥**

इमाः । ते । इन्द्र । पृश्नयः । घृतम् । दुहते । आऽशिरम् । एनाम् । ऋतस्य । पिप्युषीः ॥१९॥

हे ᵛइन्द्र ᵛते त्वदीयाः ᵛइमाः ᵛपृश्नयः प्राष्टवर्णाः[2] गावः ᵛघृतं क्षरणशीलम् ᵛएनाम्[3] ᵛआशिरम् आश्रयणद्रव्यं पयः ᵛदुहते दुहन्ति क्षारयन्ति । कीदृश्यः पृश्नयः । ᵛऋतस्य सत्यस्यावितथस्येन्द्रस्य यज्ञस्य वा ᵛपिप्युषीः वर्धयित्र्यः ॥

**या इन्द्र प्रस्वस्त्वासा गर्भमचक्रिरन् । परि धर्मेव सूर्यम् ॥ २० ॥**

याः । इन्द्र । प्रऽस्वः । त्वा । आसा । गर्भम् । अचक्रिरन् । परि । धर्मऽइव । सूर्यम् ॥२०॥

हे ᵛइन्द्र ᵛप्रस्वः । प्रसुवते गर्भं विमुञ्चन्तीति प्रस्वः । सूतेः 'सत्सूद्विष°' इति क्विप् । ईदृश्यः ᵛयाः गावः ᵛआसा आस्येन ᵛत्वा त्वदीयं वीर्यं वृत्रवधानन्तरमोषध्यादिरूपेण परिणतं भक्षयित्वा ᵛगर्भमचक्रिरन् अकुर्वन् त्वदीयं वीर्यमन्तरधारयन् । तत्र दृष्टान्तः । ᵛसूर्यं परितः सूर्यमण्डलस्योपरि ᵛधर्मेव धारकं पोषकमुदकं यथा रश्मयो गर्भरूपेण बिभ्रति तद्वत् । यद्वा । परि धर्मेव परितो धारयितारं सूर्यमिव । यथा सूर्यः परितः सर्वं जगद्धत्ते तद्वत् । कृत्स्नस्य जगतो धारकमिन्द्रस्य वीर्यमित्यर्थः । ओषध्यादिरूपेण परिणतस्येन्द्रवीर्यस्य गोभिरात्मनि धारणम् 'इन्द्रस्य वृत्रं जघ्नुषः' इत्यारभ्य तैत्तिरीयके विस्पष्टमाम्नातं—'तत्पशव ओषधीभ्योऽध्यात्मन्त्समनयन् तत्प्रत्यदुहन्' ( तै. सं. २. ५. ३. ३ ) इति । पयोरूपेण परिणतं तद्वीर्यमिमा गाव आशिरार्थं दुहत इति पूर्वस्यामृच्यन्वयः ॥ ॥ १२ ॥

वाजपेयेऽतिरिक्तोक्थे 'त्वामिच्छवसस्पते' इत्येषा । सूत्रितं च—'त्वामिच्छवसस्पते तं प्रत्नथा' ( आश्व. श्रौ. ९. ९ ) इति ॥

**त्वामिच्छवसस्पते कण्वा उक्थेन वावृधुः । त्वां सुतास इन्दवः ॥ २१ ॥**

त्वाम् । इत् । शवसः । पते । कण्वाः । उक्थेन । ववृधुः । त्वाम् । सुतासः । इन्दवः ॥ २१ ॥

हे ᵛशवसस्पते बलस्य स्वामिन्निन्द्र ᵛत्वाम्[4] एव[4] ᵛकण्वाः स्तोतारः कण्वगोत्रा वा ऋषयः ᵛउक्थेन शस्त्रेण ᵛववृधुः वर्धयन्ति । ᵛसुतासः अध्वर्युभिरभिषुताः ᵛइन्दवः सोमाश्च ᵛत्वाम् एव वर्धयन्ति ॥

**तवेदिन्द्र प्रणीतिषूत प्रशस्तिरद्रिवः । यज्ञो वितन्तसाय्यः ॥ २२ ॥**

तव । इत् । इन्द्र । प्रऽनीतिषु । उत । प्रऽशस्तिः । अद्रिऽवः । यज्ञः । वितन्तसाय्यः ॥२२॥

ᵛउत अपि च हे ᵛअद्रिवः । आदृणात्यनेनेत्यद्रिर्वज्रः । तद्वन् ᵛइन्द्र ᵛतवेत् तवैव ᵛप्रणीतिषु प्रकृष्टेषु नयनेषु धनप्रदानेषु सत्सु ᵛप्रशस्तिः प्रकृष्टा स्तुतिः क्रियते । तथा ᵛवितन्तसाय्यः विस्तृत-

---

१. ञ-त१-२-४-भृगुगोत्रास्त्वा त्वां; श-भृगुगोत्रोत्पन्नास्त्वां । २. श-पृश्निवर्णाः । ३. ञ-त४-श-एनं । ४. घ-श-त्वामित्त्वामेव ।

तमः । तनोतेश्छान्दसमेतद्रूपम् । यद्वा । तन्तसिः कण्ड्वादिर्वृद्ध्यर्थः । तस्मादौणादिक आय्यप्रत्ययः । प्रवृद्धो ᵛयज्ञः च तवैव क्रियते ॥

आ न इन्द्र महीमिषं पुरं न दर्षि गोमतीम् । उत प्रजां सुवीर्यम् ॥ २३ ॥

आ । नः । इन्द्र । महीम् । इषम् । पुरम् । न । दर्षि । गोऽमतीम् । उत । प्रऽजाम् । सुऽवीर्यम् ॥ २३ ॥

हे ᵛइन्द्र ᵛनः अस्मभ्यम् अस्मदर्थं ᵛमहीं महतीं ᵛगोमतीं गोभिर्युक्ताम् ᵛइषम् अन्नम् ᵛआ ᵛदर्षि आद्रियस्व दातुं कामयस्व । न शब्दश्चार्थे । ᵛपुरं ᵛन । पालनं पूः । पालनं रक्षणं चास्मभ्यं कर्तुमाद्रियस्व ॥

उत त्यदाश्वश्व्यं यदिन्द्र नाहुषीष्वा । अग्रे विक्षु प्रदीदयत् ॥ २४ ॥

उत । त्यत् । आशुऽअश्व्यम् । यत् । इन्द्र । नाहुषीषु । आ । अग्रे । विक्षु । प्रऽदीदयत् ॥ २४ ॥

हे ᵛइन्द्र ᵛनाहुषीषु । नहुषा इति मनुष्यनाम । तत्संबन्धिनीषु । यद्वा । नाहुषो नाम कश्चिद्राजा । तदीयासु ᵛविक्षु प्रजासु ᵛअग्रे पुरस्तात् ᵛयत् ᵛआश्वश्व्यं शीघ्रगाम्यश्वसंघात्मकं बलं ᵛप्रदीदयत् प्रादीप्यत ᵛउत अपि च ᵛत्यत् तदपि अस्मभ्यं देहीति शेषः । आकारः पूरकः ॥

अभि व्रजं न तत्निषे सूर उपाकचक्षसम् । यदिन्द्र मृळयासि नः ॥ २५ ॥

अभि । व्रजम् । न । तत्निषे । सूरः । उपाकऽचक्षसम् । यत् । इन्द्र । मृळयासि । नः ॥ २५ ॥

न संप्रत्यर्थे । ᵛन संप्रतीदानीं हे इन्द्र ᵛसूरः प्राज्ञस्त्वं ᵛव्रजं गोष्ठम् ᵛउपाकचक्षसम् । उपाक इत्यन्तिकनाम । अन्तिके द्रष्टव्यम् ᵛअभि ᵛतत्निषे अभितनोषि अभिविस्तारयसि । गोभिः पूर्णं करोषीत्यर्थः । तनोतेश्छान्दसे लिटि 'तनिपत्योश्छन्दसि' इत्युपधालोपः । ᵛयत् यदा हे ᵛइन्द्र त्वं ᵛनः अस्मान् ᵛमृळयासि मृळयसि सुखयसि ॥ ॥ १३ ॥

यदङ्ग तविषीयस इन्द्र प्रराजसि क्षितीः । महाँ अपार ओजसा ॥ २६ ॥

यत् । अङ्ग । तविषीऽयसे । इन्द्र । प्रऽराजसि । क्षितीः । महान् । अपारः । ओजसा ॥ २६ ॥

ᵛअङ्ग इत्यभिमुखीकरणे । हे ᵛइन्द्र ᵛयत् यस्त्वं ᵛतविषीयसे । तविषीति बलनाम । बलमिवाचरसि । हस्त्यश्वरथादिकं बलं यथा सर्वं शत्रुजातं भनक्ति[1] तद्वत्त्वमसहाय एव सन् सर्वमेव शत्रुजातं मारयसीत्यर्थः । यश्च त्वं ᵛक्षितीः । मनुष्यनामैतत् । मनुष्यान् ᵛप्रराजसि प्रकर्षेणेशिषे । राजतिरैश्वर्यकर्मा । अस्यापि यद्वृत्तयोगान्न निघातः । स इन्द्रः ᵛओजसा बलेन ᵛमहान् सर्वेभ्योऽधिकः अत एव ᵛअपारः पाररहितः । केनाप्यवसानं प्रापयितुमशक्य इत्यर्थः ॥

तं त्वा हविष्मतीर्विश उप ब्रुवत ऊतये । उरुज्रयसमिन्दुभिः ॥ २७ ॥

तम् । त्वा । हविष्मतीः । विशः । उप । ब्रुवते । ऊतये । उरुऽज्रयसम् । इन्दुऽभिः ॥ २७ ॥

हे इन्द्र[2] ᵛतं पूर्वोक्तगुणम् ᵛउरुज्रयसं विस्तीर्णव्यापिनं त्वां ᵛहविष्मतीः हविर्भिश्चरुपुरोडाशादिभिर्युक्ताः ᵛविशः प्रजाः ᵛउप ᵛब्रुवते उपेत्य स्तुवन्ति । किमर्थम् । ᵛइन्दुभिः सोमैः ᵛऊतये तर्पणाय[3] । यद्वा । इन्दुभिः सोमैः उरुज्रयसं विस्तीर्णजवमूतये रक्षणाय स्तुवन्ति ॥

---

१. ख-भ—भिनत्ति । २. ख-भ—इंद्र त्वं । ३. श-रक्षणाय ।

उपह्वरे गिरीणां संगथे च नदीनाम् । धिया विप्रो अजायत ॥ २८ ॥

उपऽह्वरे । गिरीणाम् । सम्ऽगथे । च । नदीनाम् । धिया । विप्रः । अजायत ॥ २८ ॥

गिरीणां पर्वतानाम् उपह्वरे उपह्वर्तव्ये प्रान्ते नदीनां सरितां संगथे संगमने च ईदृग्विधे देशे क्रियमाणया धिया यागक्रियया स्तुत्या वा विप्रः[1] मेधावीन्द्रः अजायत प्रादुर्भवति। अतो वयमपि तादृशे देशे यजामः स्तुमो वेति भावः। गिरीणामित्यत्र 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् ॥

अतः समुद्रमुद्वतश्चिकित्वाँ अव पश्यति । यतो विपान एजति ॥ २९ ॥

अतः । समुद्रम् । उत्ऽवतः । चिकित्वान् । अव । पश्यति । यतः । विपानः । एजति ॥२९॥

यतः यस्मिन् द्युलोके[2] विपानः व्याप्नुवन् विशिष्टपानयुक्तो वा इन्द्रः एजति चेष्टते उद्वतः उद्गतात्। 'उपसर्गाच्छन्दसि धात्वर्थे' (पा. सू. ५. १. ११८) इति वतिः। अतः अस्मात् द्युलोकात् चिकित्वान् जानन् स इन्द्रः समुद्रं समुन्दनशीलं यजमानैर्दीयमानं सोमम् अव पश्यति अवाङ्मुखः सम्वीक्षते। यद्वा। सूर्यात्मनेन्द्रः स्तूयते। यस्मिन्नभसि विपानः व्याप्नुवन् सूर्यात्मेन्द्र एजति वर्तते चिकित्वाञ्जानन् विद्वान्वा स इन्द्र उद्वत उद्गतादतोऽस्मादन्तरिक्षात् समुद्रम्। उपलक्षणमेतत्। समुद्रोपलक्षितं सर्वं जगदव पश्यति। अवाङ्मुखं प्रसृतैः किरणैः प्रकाशयति॥

आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवा ॥३०॥

आत् । इत् । प्रत्नस्य । रेतसः । ज्योतिः । पश्यन्ति । वासरम् । परः । यत् । इध्यते । दिवा ॥३०॥

परः दिवा दिवः परस्तात् द्युलोकस्योपरि यत् यदा अयमिन्द्रः सूर्यात्मना इध्यते दीप्यते आदित् अनन्तरमेव प्रत्नस्य चिरंतनस्य रेतसः गन्तुः ॥ 'री गतिरेषणयोः'। अस्मात् 'स्रुरीभ्यां तुट् च' (उ. सू. ४. ६४१) इत्यसुन् तुडागमश्च ॥ यद्वा। रेत इत्युदकनाम। रेतस्विन उदकवतः। सामर्थ्यात् मत्वर्थो लक्ष्यते। ईदृशस्येन्द्रस्य सूर्यात्मनः वासरं निवासकं वासरस्य निवासस्य हेतुभूतं वा ज्योतिः द्योतमानं तेजः पश्यन्ति सर्वे जनाः। यद्वा। वासरमिति अत्यन्तसंयोगे द्वितीया। कृत्स्नमहरुदयप्रभृत्यास्तमनं यावज्ज्योतिष्पश्यन्तीत्यर्थः। 'इसुसोः सामर्थ्ये' इति विसर्जनीयस्य षत्वम् ॥ ॥ १४ ॥

कण्वास इन्द्र ते मतिं विश्वे वर्धन्ति पौंस्यम् । उतो शविष्ठ वृष्ण्यम् ॥३१॥

कण्वासः । इन्द्र । ते । मतिम् । विश्वे । वर्धन्ति । पौंस्यम् । उतो इति । शविष्ठ । वृष्ण्यम् ॥३१॥

हे इन्द्र ते त्वदीयां मतिं बुद्धिं पौंस्यम्। बलनामैतत्। बलं च विश्वे सर्वे कण्वासः कण्वाः स्तोतारः कण्वगोत्रा वा ऋषयः वर्धन्ति वर्धयन्ति। 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः। उतो अपि च हे शविष्ठ शवस्वितम बलवत्तम। 'विन्मतोर्लुक्'। 'टेः' इति टिलोपः। ईदृशेन्द्र वृष्ण्यं त्वदीयं वीर्यं बलकर्म[3] च कण्वासो वर्धयन्त्येव[4] ॥

इमां म इन्द्र सुष्टुतिं जुषस्व प्र सु मामव । उत प्र वर्धया मतिम् ॥ ३२ ॥

इमाम् । मे । इन्द्र । सुऽस्तुतिम् । जुषस्व । प्र । सु । माम् । अव । उत । प्र । वर्धय । मतिम् ॥३२॥

---

१. श-एवंविधो विप्रः। २. ख-भ-लोके। ३. ख-झ-श-बलं कर्म। ४. झ-त१-२-४-वर्धयंतीत्येव।

हे ᵛइन्द्र ᵛइमां पुरोवर्तिनीं ᵛमे मदीयां ᵛसुष्टुतिं शोभनां स्तुतिं ᵛजुषस्व सेवस्व। सेवित्वा च स्तोतारं ᵛमां ᵛसु शोभनं ᵛप्र ᵛअव प्रकर्षेण रक्ष। ᵛउत अपि च ᵛमतिं अस्मदीयां बुद्धिं ᵛप्र ᵛवर्धय प्रवृद्धां कुरु। यथा बह्वर्थदर्शिनी भवति तथा कुर्वित्यर्थः॥

उत ब्रह्मण्या वयं तुभ्यं प्रवृद्ध वज्रिवः। विप्रा अतक्ष्म जीवसे॥ ३३॥

उत। ब्रह्मण्या। वयम्। तुभ्यम्। प्रऽवृद्ध। वज्रिऽवः। विप्राः। अतक्ष्म। जीवसे॥ ३३॥

ᵛउत अपि च हे ᵛप्रवृद्ध स्तुतिभिः प्रकृष्टां वृद्धिं प्राप्त हे ᵛवज्रिवः वज्रवन्निन्द्र। एको मत्वर्थीयोऽनुवादः। यद्वा। वज्रोऽस्यास्तीति वज्री हस्तः। तद्वान्। 'छन्दसीरः' इति मतुपो वत्वम्। 'मतुवसो रुः°' इति मकारस्य रुत्वम्। ईदृशेन्द्र ᵛतुभ्यं त्वदर्थं ᵛविप्राः मेधाविनः ᵛवयं ᵛब्रह्मण्या ब्रह्माणि स्तोत्राणि हविर्लक्षणान्यन्नानि वा। 'सुपां सुलुक्°' इति सुपो याजादेशः। ᵛजीवसे जीवनार्थम् ᵛअतक्ष्म अकार्ष्म। 'तक्षू त्वक्षू तनूकरणे'। लङि छान्दसः शपो लुक्॥

अभि कण्वा अनूषतापो न प्रवता यतीः। इन्द्रं वनन्वती मतिः॥ ३४॥

अभि। कण्वाः। अनूषत। आपः। न। प्रऽवता। यतीः। इन्द्रम्। वनन्ऽवती। मतिः॥३४॥

ᵛकण्वाः कण्वगोत्रा ऋषयः ᵛअभि ᵛअनूषत इन्द्रमभिष्टुवन्ति। 'नू स्तुतौ'। कुटादिः। ᵛप्रवता प्रवणेन मार्गेण ᵛयतीः गच्छन्त्यः ᵛआपो ᵛन आप इव ᵛमतिः मननीया कण्वैः क्रियमाणा स्तुतिः स्तुत्यम् ᵛइन्द्रं ᵛवनन्वती स्वयमेव संभजनवती भवति॥

इन्द्रमुक्थानि वावृधुः समुद्रमिव सिन्धवः। अनुत्तमन्युमजरम्॥ ३५॥

इन्द्रम्। उक्थानि। ववृधुः। समुद्रम्ऽइव। सिन्धवः। अनुत्तऽमन्युम्। अजरम्॥ ३५॥

ᵛउक्थानि शस्त्राण्यस्माभिः शस्यमानानि ᵛइन्द्रं[1] ᵛववृधुः वर्धयन्ति। ᵛसिन्धवः स्यन्दनशीला नद्यः ᵛसमुद्रमिव समुद्रं जलधिं यथा वर्धयन्ति तद्वत्। कीदृशमिन्द्रम्। ᵛअनुत्तमन्युम्। अनुत्तोऽप्रेरितः परैरनभिभूतो मन्युः क्रोधो यस्य तादृशम्। 'नुदविदोन्दत्रा°' (पा. सू. ८. २. ५६) इत्यादिना विकल्पितत्वान्निष्ठानत्वाभावः। ᵛअजरं जरारहितम्। बहुव्रीहौ 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम्॥　　॥ १५॥

आ नो याहि परावतो हरिभ्यां हर्यताभ्याम्। इममिन्द्र सुतं पिब॥३६॥

आ। नः। याहि। पराऽवतः। हरिऽभ्याम्। हर्यताभ्याम्। इमम्। इन्द्र। सुतम्। पिब॥३६॥

हे ᵛइन्द्र ᵛपरावतः परागताद्दूरे वर्तमानात् द्युलोकात् ᵛहर्यताभ्यां कान्ताभ्यां ᵛहरिभ्याम् अश्वाभ्यां ᵛनः अस्मान् ᵛआ ᵛयाहि आगच्छ। आगत्य च ᵛइमम् अस्मदीयं ᵛसुतम् अभिषुतं सोमं ᵛपिब॥

त्वामिद्वृत्रहन्तम जनासो वृक्तबर्हिषः। हवन्ते वाजसातये॥ ३७॥

त्वाम्। इत्। वृत्रहन्ऽतम। जनासः। वृक्तऽबर्हिषः। हवन्ते। वाजऽसातये॥ ३७॥

हे ᵛवृत्रहन्तम अतिशयेन वृत्राणामावृण्वतां शत्रूणां हन्तः ᵛत्वामित् त्वामेव ᵛवृक्तबर्हिषः वृक्तं यागार्थं छिन्नं बर्हिर्येषां तथाविधोक्ताः प्रवृत्तयज्ञाः ᵛजनासः जना ऋत्विग्लक्षणाः ᵛह्वयन्ते आह्वयन्ति। ह्वेञः शपि 'बहुलं छन्दसि' इति संप्रसारणम्। किमर्थम्। ᵛवाजसातये वाजस्य

---

१. ख-म-त-न-भ-श-'इन्द्रं' नास्ति।

अन्नस्य बलस्य वा सातये लाभाय। यद्वा। संग्रामनामैतत्। वाजस्य सातिर्यस्मिन् संग्रामे तत्र साहाय्याय त्वामाह्वयन्तीत्यर्थः ॥

अनु॑ त्वा॒ रोद॑सी उ॒भे च॒क्रं न व॒र्त्येत॑शम् । अनु॑ सुवा॒नास॒ इन्द॑वः ॥ ३८ ॥

अनु॑ । त्वा॒ । रोद॑सी॒ इति॑ । उ॒भे इति॑ । च॒क्रम् । न । व॒र्ति॑ । एत॑शम् ।

अनु॑ । सु॒वा॒नासः॑ । इन्द॑वः ॥ ३८ ॥

हे इन्द्र त्वा त्वाम् उभे रोदसी द्यावापृथिव्यौ अनुवर्तेते। त्वदधीने भवत इत्यर्थः। तत्र दृष्टान्तः। चक्रं न यथा रथचक्रम् एतशम्। अश्वनामैतत्। पुरो गच्छन्तमश्वम् अनु वर्ति अनुवर्तते तद्वत्। अपि च सुवानासः ऋत्विग्भिरभिषूयमाणाः इन्दवः सोमाश्च त्वाम् अनु वर्तन्ते ॥

मन्द॑स्वा॒ सु स्व॑र्णर उ॒तेन्द्र॑ श॒र्य॒णाव॑ति । मत्स्वा॒ विव॑स्वतो म॒ती ॥ ३९ ॥

मन्द॑स्व । सु । स्वः॑ऽनरे । उ॒त । इ॒न्द्र॒ । श॒र्य॒णाऽव॑ति । मत्स्व॑ । विव॑स्वतः । म॒ती ॥ ३९ ॥

उत अपि च हे इन्द्र शर्यणावति। शर्यणा नाम कुरुक्षेत्रवर्तिनो देशाः। तेषामदूरभवं सरः शर्यणावत्। 'मध्वादिभ्यश्च' इति स्वार्थिको मतुप्। 'मतौ बह्वचः°' इति दीर्घः। 'संज्ञायाम्' इति वत्वम्। तस्मिन् सरसि विद्यमाने[1] स्वर्णरे सर्वैर्ऋत्विग्भिर्नेतव्ये यज्ञे सु सुष्ठु मन्दस्व माद्य तृप्तो भव। अपि च विवस्वतः परिचरणवतो यजमानस्य मती मत्या च मत्स्व मदं प्राप्नुहि। मतिशब्दात्तृतीयायाः 'सुपां सुलुक्°' इति पूर्वसवर्णदीर्घः ॥

वा॒वृ॒धा॒न उप॒ द्यवि॒ वृषा॑ व॒ज्र्य॑रोरवीत् । वृ॒त्र॒हा सो॑म॒पात॑मः ॥ ४० ॥

व॒वृ॒धा॒नः । उप॑ । द्यवि॑ । वृषा॑ । व॒ज्री । अ॒रो॒र॒वी॒त् । वृ॒त्र॒ऽहा । सो॒म॒ऽपात॑मः ॥ ४० ॥

वावृधानः वृद्धः[2] वज्री वज्रवानत एव वृत्रहा वृत्रस्य मेघस्यासुरस्य वा हन्ता सोमपातमः अतिशयेन सोमस्य पाता इन्द्रः वृषा उदकानां वर्षिता द्यवि द्युलोकेऽन्तरिक्षे उप समीपे यथास्माभिः श्रूयते तथा अरोरवीत् भृशं स्तनयित्नुलक्षणं शब्दमकरोत्। मेघेन वज्रहतेनेदृशं शब्दमचीकरदित्यर्थः ॥ ॥ १६ ॥

ऋषि॒र्हि पू॑र्व॒जा अस्येक॒ ईशा॑न॒ ओज॑सा । इन्द्र॑ चोष्कू॒यसे॒ वसु॑ ॥ ४१ ॥

ऋषिः॑ । हि । पू॒र्व॒ऽजाः । असि॑ । एकः॑ । ईशा॑नः । ओज॑सा । इन्द्र॑ । चो॒ष्कू॒यसे॑ । वसु॑ ॥ ४१ ॥

हे इन्द्र पूर्वजाः सर्वेभ्यो देवेभ्यः पूर्वं जात उत्पन्नः। यद्वा। यज्ञेषु प्रथममेव प्रादुर्भूतः। त्वम् ऋषिर्हि द्रष्टा सर्वज्ञः खलु असि भवसि। अपि च सर्वेषु देवेषु मध्ये एकः मुख्यः ओजसा बलेन ईशानः ईश्वरो भवसि। यद्वा। एकोऽसहाय एव सन्नोजसा आत्मीयेनैव बलेन ईशानः सर्वस्य जगत ईश्वरो भवसि। स त्वं वसु धनं चोष्कूयसे पुनःपुनः स्तोतृभ्यो ददासि। 'स्कुञ् आप्रवणे' इह दानार्थः। तथा चोक्तं—'चोष्कूयमाण इन्द्र भूरि वामं ददिन्द्र बहु वननीयम्' (निरु. ६. २२) इति ॥

अ॒स्माकं॑ त्वा सु॒ताँ उप॑ वी॒तपृ॑ष्ठा अ॒भि प्रयः॑ । श॒तं व॑हन्तु॒ हर॑यः ॥ ४२ ॥

अ॒स्माक॑म् । त्वा॒ । सु॒तान् । उप॑ । वी॒तऽपृ॑ष्ठाः । अ॒भि । प्रयः॑ । श॒तम् । व॒ह॒न्तु॒ । हर॑यः ॥ ४२ ॥

---

१. ख-ज्ञ-त-न-भ-श—विद्यमानेन। २. ख-भ—वर्धमानः।

हे इन्द्र ᵛअस्माकम् अस्मदीयान्[1] सोमानुपलक्ष्य ᵛप्रयः। अन्ननामैतत्। धानाकरम्भादिहविर्लक्षणमन्नं चाभिलक्ष्य ᵛवीतपृष्ठाः प्रशस्तोपरिभागाः ᵛशतं शतसंख्याकाः ᵛहरयः अश्वाः त्वां ᵛवहन्तु प्रापयन्तु ॥

इमां सु पूर्व्यां धियं मधोर्घृतस्य पिप्युषीम् । कण्वा उक्थेन वावृधुः ॥४३॥

इमाम् । सु । पूर्व्याम् । धियम् । मधोः । घृतस्य । पिप्युषीम् । कण्वाः । उक्थेन । ववृधुः ॥४३॥

ᵛइमाम् इदानीं क्रियमाणां ᵛसु सुष्ठु ᵛपूर्व्यां पूर्वैः पित्रादिभिः कृतां ᵛमधोः मधुरस्य ᵛघृतस्य क्षरणशीलस्योदकस्य ᵛपिप्युषीं वर्धयित्रीं यद्वा मधुरेण घृतेनाज्येन प्रवृद्धां ᵛधियं यागक्रियां ᵛकण्वाः कण्वगोत्रा ऋषयः ᵛउक्थेन शस्त्रेण ᵛवावृधुः इन्द्रार्थं वर्धयन्ति। उक्थैर्हि यागो वर्धते। अत्यग्निष्टोमादिषूत्तरासु संस्थासु शस्त्रवृद्धेर्दृष्टत्वात्। यद्वा। पूर्व्यां चिरंतनीमिमामिन्द्रस्य धियमनुग्रहबुद्धिं क्षरणशीलेन मधुरेण सोमेन पिप्युषीं वर्धनीयामुक्थेन स्तोत्रेण वावृधुः वर्धयन्ति ॥

इन्द्रमिद्विमहीनां मेधे वृणीत मर्त्यः । इन्द्रं सनिष्युरूतये ॥ ४४ ॥

इन्द्रम् । इत् । विऽमहीनाम् । मेधे । वृणीत । मर्त्यः । इन्द्रम् । सनिष्युः । ऊतये ॥ ४४ ॥

ᵛविमहीनां विशेषेण महतां देवानां मध्ये ᵛइन्द्रमित् इन्द्रमेव ᵛमेधे यज्ञे ᵛमर्त्यः मनुष्यो होता ᵛवृणीत स्तुतिभिः संभजते। तथा ᵛसनिष्युः धनकामश्च स्तोता ᵛऊतये रक्षणाय ᵛइन्द्रम् एव वृणीते स्तुत्या संभजते ॥

अर्वाञ्चं त्वा पुरुष्टुत प्रियमेधस्तुता हरी । सोमपेयाय वक्षतः ॥ ४५ ॥

अर्वाञ्चम् । त्वा । पुरुऽस्तुत । प्रियमेधऽस्तुता । हरी इति । सोमऽपेयाय । वक्षतः ॥ ४५ ॥

हे ᵛपुरुष्टुत बहुभिः स्तुतेन्द्र ᵛप्रियमेधस्तुता प्रियमेधैः प्रिययज्ञैर्ऋषिभिः स्तुतौ। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम्। 'सुपां सुलुक्॰' इत्याकारः। ईदृशौ ᵛहरी अश्वौ ᵛसोमपेयाय सोमपानार्थं त्वाम् ᵛअर्वाञ्चम् अस्मदभिमुखं ᵛवक्षतः वहताम् ॥

शतमहं तिरिन्दिरे सहस्रं पर्शावा ददे । राधांसि याद्वानाम् ॥ ४६ ॥

शतम् । अहम् । तिरिन्दिरे । सहस्रम् । पर्शौ । आ । ददे । राधांसि । याद्वानाम् ॥ ४६ ॥

इदमादिकेन तृचेन तिरिन्दिरस्य राज्ञो दानं स्तूयते। ᵛपर्शौ परशुनाम्नः पुत्रे। उपचाराज्जन्ये जनकशब्दः। ᵛतिरिन्दिरे एतत्संज्ञे राजनि ᵛयाद्वानाम्। यदुरिति मनुष्यनाम। यदव एव याद्वाः। स्वार्थिकस्तद्धितः। तेषां मध्ये ᵛअहं ᵛशतं शतसंख्याकानि ᵛसहस्रं सहस्रसंख्याकानि च ᵛराधांसि धनानि ᵛआ ᵛददे स्वीकरोमि। यद्वा। याद्वानां यदुकुलजानामन्येषां[2] राज्ञां स्वभूतानि राधांसि बलादपहृतानि तिरिन्दिरे वर्तमानान्यहं प्राप्नोमि ॥

त्रीणि शतान्यर्वतां सहस्रा दश गोनाम् । ददुष्पज्राय साम्ने ॥ ४७ ॥

त्रीणि । शतानि । अर्वताम् । सहस्रा । दश । गोनाम् । ददुः । पज्राय । साम्ने ॥ ४७ ॥

पूर्वस्यामृचि स्वसंप्रदानकं दानमुक्तम्। अधुनान्येभ्योऽप्यृषिभ्यस्तिरिन्दिरो बहु धनं दत्तवानित्याह। ᵛअर्वतां गन्तॄणामश्वानां ᵛत्रीणि ᵛशतानि ᵛगोनां गवां ᵛदश दशगुणितानि ᵛसहस्रा

---

१. घ—अस्मदीयान् सुतानभिषुतान्।   २. ज्ञ-त२-श—यदुकुलजातानाम॰; भ—यदुकुलजाम॰।

सहस्राणि च ᵛपज्राय स्तुतीनां प्रार्जकाय ᵛसाम्ने एतत्संज्ञायर्षये। यद्वा। साम्ने। साम स्तोत्रम्। तद्वते पज्राय पज्रकुलजाताय कक्षीवते। ᵛददुः तिरिन्दिराख्या राजानो दत्तवन्तः॥

उदा॑नट् क॒कुहो॒ दिव॒मुष्ट्रा॑ञ्चतु॒र्युजो॒ दद॑त्। श्रव॑सा॒ याद्वं॒ जन॑म्॥ ४८॥

उत्। आ॒न॒ट्। क॒कु॒हः। दिव॑म्। उष्ट्रा॑न्। च॒तुः॒ऽयुजः॑। दद॑त्। श्रव॑सा। याद्व॑म्। जन॑म्॥४८॥

अयं राजा ᵛककुहः उच्छ्रितः सन् ᵛश्रवसा कीर्त्या ᵛदिवं स्वर्गम् ᵛउदानट् उत्कृष्टतरं व्याप्नोत्। किं कुर्वन्। ᵛचतुर्युजः चतुर्भिः स्वर्णभारैर्युक्तान् ᵛउष्ट्रान् ᵛददत् प्रयच्छन्। तथा ᵛयाद्वं ᵛजनं च दासत्वेन प्रयच्छन्॥ ॥ १७॥

'प्र यद्वः' इति षट्त्रिंशदृचं द्वितीयं सूक्तं कण्वगोत्रस्य पुनर्वत्सस्यार्षं मारुतं गायत्रम्। तथा चानुक्रान्तं—'प्र यद्वः षट्त्रिंशत्पुनर्वत्सो मारुतम्' इति। व्यूळ्हे दशरात्रे प्रथमे छन्दोम आग्निमारुतशस्त्र इदं सूक्तं मारुतनिविद्धानम्। सूत्रितं च—'प्र यद्वस्त्रिष्टुभं दूतं व इत्याग्निमारुतम्' (आश्व. श्रौ. ८. ९) इति॥

प्र यद्व॑स्त्रि॒ष्टुभ॒मिषं॒ मरु॑तो॒ विप्रो॒ अक्ष॑रत्। वि पर्व॑तेषु राजथ॥ १॥

प्र। यत्। वः॒। त्रि॒ऽस्तुभ॑म्। इष॑म्। मरु॑तः। विप्रः॑। अक्ष॑रत्। वि। पर्व॑तेषु। रा॒ज॒थ॥१॥

हे ᵛमरुतः[1] मितराविणो[2] मितरोचिनो वा[3] एतत्संज्ञा माध्यमका देवगणाः। पादादित्वात् '*अपादादौ' इति पर्युदासादाष्टमिकनिघाताभावे षाष्ठिकमामन्त्रितायुदात्तत्वम्। ᵛवः युष्मभ्यं ᵛविप्रः मेधावी स्तोता ᵛत्रिष्टुभं त्रिषु सवनेषु प्रशस्यां त्रिभिर्देवैः स्तुतां वा यद्वा त्रिष्टुप्छन्दसा संबद्धां माध्यंदिनसवनिकीम् ᵛइषं सोमलक्षणमन्नं ᵛयत् यदा ᵛप्र ᵛअक्षरत् प्रासिञ्चत् अग्नौ प्राक्षिपत्। यद्वा। त्रिष्टुभं त्रिष्टुप्छन्दस्कं स्तोत्रमिषं सोमं चेति योज्यम्। तदानीं यूयं ᵛपर्वतेषु पर्ववत्सु शिलोच्चयेषु ᵛवि ᵛराजथ। तेन सोमेन लब्धबलाः सन्तो विशेषेण दीप्ता भवथ॥

यद॒ङ्ग त॑विषीयवो॒ याम॑ं शुभ्रा॒ अचि॑ध्वम्। नि पर्व॑ता अहासत॥ २॥

यत्। अ॒ङ्ग। त॒वि॒षी॒ऽय॒वः॒। याम॑म्। शु॒भ्राः॒। अचि॑ध्वम्। नि। पर्व॑ताः। अ॒हा॒स॒त॥ २॥

हे ᵛतविषीयवः। तविषीति बलनाम। तां कामयमानाः। यद्वा। बलयुक्ताः। हे ᵛशुभ्राः शोभमानाः ᵛअङ्ग हे मरुतः ᵛयामम्। याति गच्छतीति यामो रथः। तं ᵛयत् यदा ᵛअचिध्वं समचिनुध्वं अश्वादिभिः साधनैः संचितं संश्लिष्टं कुरुथ गमनार्थं तदानीं ᵛपर्वताः गिरयोऽपि ᵛनि ᵛअहासत नितरां गच्छन्ति युष्मद्रथवेगाद्भीताः सन्तः स्वस्थानात् प्रचलन्ति। 'ओहाङ् गतौ'। छान्दसो लुङ्॥

उदी॑रयन्त वा॒युभि॑र्वा॒श्रासः॒ पृश्नि॑मातरः। धु॒क्षन्त॑ पि॒प्युषी॒मिष॑म्॥ ३॥

उत्। ई॒र॒य॒न्त॒। वा॒युऽभिः॑। वा॒श्रासः॑। पृश्नि॑ऽमातरः। धु॒क्षन्त॑। पि॒प्युषी॑म्। इष॑म्॥ ३॥

ᵛवाश्रासः वाशनशीलाः शब्दकारिणः ᵛपृश्निमातरः। पृश्निर्माध्यमिका वाक्। सा माता जननी येषां ते तथोक्ताः। 'ऋतश्छन्दसि' (पा. सू. ५. ४. १५८) इति कपः प्रतिषेधः। ईदृशा मरुतः ᵛवायुभिः। वान्ति गच्छन्तीति वायवः पृषत्यः। पृषतीभिर्वाहनभूताभिः स्वावयवभूतैर्वायुभिरेव वा ᵛउदीरयन्त उद्गमयन्ति मेघादिकम्। तथा ᵛपिप्युषीं वर्धयित्रीम् ᵛइषम् अन्नं च स्तोतृभ्यः ᵛधुक्षन्त दुहन्ति॥

---

१. ञ-त१-२-मरुतो मरुतो। २. ञ-त१-२-मितराविणो वा। ३. ञ-वा महद्द्रवंतीति वेति निरुक्तं; त१ (प्रान्ते)—वा महद्रवंतीति वा।

वर्षन्ति मरुतो मिहं प्र वेपयन्ति पर्वतान् । यद्यामं यान्ति वायुभिः ॥४॥

वर्षन्ति । मरुतः । मिहम् । प्र । वेपयन्ति । पर्वतान् । यत् । यामम् । यान्ति । वायुऽभिः ॥४॥

ᵛमरुतः एतत्संज्ञा देवाः ᵛमिहं वृष्टिं ᵛवर्षन्ति विकिरन्ति विक्षिपन्ति । तथा ᵛपर्वतान् गिरीन् ᵛप्र ᵛवेपयन्ति प्रकम्पयन्ति । अयमर्थः कदेति चेत् । ᵛयत् यदा ᵛवायुभिः सार्धं ᵛयामं रथं गमनं वा ᵛयान्ति प्राप्नुवन्ति तदानीमित्यर्थः ॥

नि यद्यामाय वो गिरिर्नि सिन्धवो विधर्मणे । महे शुष्माय येमिरे ॥५॥

नि । यत् । यामाय । वः । गिरिः । नि । सिन्धवः । विऽधर्मणे । महे । शुष्माय । येमिरे ॥५॥

हे मरुतः ᵛवः युष्माकं ᵛयामाय रथाय गमनाय वा ᵛगिरिः । 'सुपां सुलुक्°' इति जसः सुः । गिरयः पर्वताः ᵛयत् यदा ᵛनि ᵛयेमिरे स्वयमेव नियम्यन्ते । तथा ᵛसिन्धवः स्यन्दनशीलाः समुद्रा नद्यो वा ᵛविधर्मणे विधरणाय ᵛमहे महते ᵛशुष्माय शोषकाय युष्मदीयाय बलाय ᵛनि येमिरे स्वयमेव नियम्यन्ते । गिरयो नद्यश्च युष्मद्यामाद्बलाच्च भीत्या एकत्रैव स्थाने नियता वर्तन्त इत्यर्थः । तदानीं वर्षन्ति मरुतो मिहमिति शेषः ॥ यमेः कर्मकर्तरि लिट् । 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः ॥ ॥ १८ ॥

युष्माँ उ नक्तमूतये युष्मान्दिवा हवामहे । युष्मान्प्रयत्यध्वरे ॥ ६ ॥

युष्मान् । ऊँ इति । नक्तम् । ऊतये । युष्मान् । दिवा । हवामहे ।

युष्मान् । प्रऽयति । अध्वरे ॥ ६ ॥

हे मरुतः ᵛयुष्माँ ᵛउ युष्मानेव ᵛनक्तं रात्रौ ᵛऊतये रक्षणार्थं ᵛहवामहे । ᵛदिवा अह्नि च ᵛयुष्मान् एव आह्वयामहे । ᵛअध्वरे । ध्वरो नास्त्यस्मिन्नित्यध्वरो यागः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । यागे ᵛप्रयति प्रगच्छति प्रवर्तमाने सति रक्षणार्थं ᵛयुष्मान् एवाह्वयामहे ॥

उदु त्ये अरुणप्सवश्चित्रा यामेभिरीरते । वाश्रा अधि ष्णुना दिवः ॥ ७ ॥

उत् । ऊँ इति । त्ये । अरुणऽप्सवः । चित्राः । यामेभिः । ईरते ।

वाश्राः । अधि । स्नुना । दिवः ॥ ७ ॥

ᵛत्ये ते पूर्वोक्तगुणाः ᵛअरुणप्सवः अरुणवर्णरूपाः ᵛचित्राः चायनीयाः आश्चर्यभूता वा ᵛवाश्राः शब्दकारिणः एवंभूता मरुतः ᵛयामेभिः यामैर्यानैः ᵛदिवः ᵛअधि द्युलोकस्योपरि ᵛस्नुना सानुना समुच्छ्रितप्रदेशेन ᵛउत् ᵛईरते उद्गच्छन्ति । ᵛउ इति पूरणः ॥ 'पदादिषु मांस्पृत्स्नूनामुपसंख्यानम्' इति सानुशब्दस्य स्नुभावः ॥

कारीर्यां सौर्यस्य हविषः 'सृजन्ति रश्मिम्' इत्येषानुवाक्या । सूत्र्यते हि—'सृजन्ति रश्मिमोजसा वहिष्ठेभिर्विहरन्यासि तन्तुम्' (आश्व. श्रौ. २. १३) इति ॥

सृजन्ति रश्मिमोजसा पन्थां सूर्याय यातवे । ते भानुभिर्वि तस्थिरे ॥८॥

सृजन्ति । रश्मिम् । ओजसा । पन्थाम् । सूर्याय । यातवे । ते । भानुऽभिः । वि । तस्थिरे ॥८॥

तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । ये मरुतः ᵛसूर्याय सूर्यस्य । 'षष्ठ्यर्थे चतुर्थी वक्तव्या' इति चतुर्थी । ᵛयातवे[1] गन्तुं ᵛरश्मिं व्याप्तम् । 'अशे रश च' इत्यश्नोतेरौणादिको मिप्रत्ययो रशादेशश्च । यद्वा । रश्मिभिस्तेजोभिर्युक्तम् । ᵛपन्थां पन्थानम् ᵛओजसा बलेन ᵛसृजन्ति उत्पादयन्ति । वृत्रादिभिरावृतं सूर्यपथमावरकस्य वृत्रादेरपनयनेन जनयन्तीत्यर्थः । ᵛते मरुतः ᵛभानुभिः तेजोभिः ᵛवि ᵛतस्थिरे कृत्स्नं जगत् व्याप्य अवतिष्ठन्ते ॥

इमां मे मरुतो गिरमिमं स्तोममृभुक्षणः । इमं मे वनता हवम् ॥ ९ ॥

इमाम् । मे । मरुतः । गिरम् । इमम् । स्तोमम् । ऋभुक्षणः । इमम् । मे । वनत । हवम् ॥९॥

हे ᵛमरुतः ᵛइमां पुरोवर्तिनीं ᵛमे मम ᵛगिरं शस्त्ररूपां वाचं ᵛवनत संभजत । हे ᵛऋभुक्षणः । महन्नामैतत् । महान्तः । जसि 'इतोऽत्सर्वनामस्थाने' इत्यकारः । 'वा षपूर्वस्य निगमे' इति दीर्घाभावः । ते यूयम् ᵛइमं ᵛस्तोमं स्तोत्रं प्रगीतमन्त्रसाध्यं ᵛमे मम ᵛइमं पुरोवर्तिनं ᵛहवम् आह्वानरूपं च याजुषं मन्त्रं वनत संभजत सेवध्वम् ॥

त्रीणि सरांसि पृश्नयो दुदुह्रे वज्रिणे मधु । उत्सं कवन्धमुद्रिणम् ॥ १० ॥

त्रीणि । सरांसि । पृश्नयः । दुदुह्रे । वज्रिणे । मधु । उत्सम् । कवन्धम् । उद्रिणम् ॥ १० ॥

ᵛपृश्नयः मरुन्मातृभूता गावः ᵛवज्रिणे वज्रवत इन्द्राय । तादर्थ्ये चतुर्थी । इन्द्रार्थं ᵛमधु मधुरं क्षीरादिकमाश्रयणद्रव्यं ᵛत्रीणि ᵛसरांसि सर इव सोमैः पूरितानि त्रीणि सवनानि त्रिष्वपि सवनेषु श्रयणार्थं ᵛदुदुह्रे दुदुहिरे । यद्वा । मधु मधुरं सोमं वज्रिणे वज्रयुक्ताय मरुद्गणाय त्रीणि सरांसि द्रोणकलशाधवनीयपूतभृल्लक्षणानि प्रति पृश्नयो माध्यमिका वाचो दुदुह्रे वृष्टिद्वारा दुहन्ति । यद्वा पृश्नय इति मातृवाचिना शब्देन पुत्रा उच्यन्ते । पृश्निमातरो मरुत इद्रार्थं त्रीणि सरांसि द्रोणकलशादीनि मधु मधुना सोमेन पूरयितुम् ᵛउत्सम् उत्स्रवणशीलं ᵛकवन्धम् उदकम् ᵛउद्रिणम् उदकवन्तं मेघं दुदुह्रे दुहते ॥ दुहेश्छान्दसो लिट् । 'इरयो रे' इति रेभावः । पादादित्वादनिघातः ॥ ॥ १९ ॥

मरुतो यद्ध वो दिवः सुम्नायन्तो हवामहे । आ तू न उप गन्तन ॥ ११ ॥

मरुतः । यत् । ह । वः । दिवः । सुम्नऽयन्तः । हवामहे । आ । तु । नः । उप । गन्तन ॥११॥

हे ᵛमरुतः ᵛयद्ध यदा खलु ᵛवः युष्मान् ᵛसुम्नायन्तः सुम्नं सुखमात्मन इच्छन्तो वयं ᵛदिवः द्युलोकात् ᵛहवामहे स्तुतिभिराह्वयामहे । ᵛआ ᵛतु अनन्तरमेव शीघ्रं ᵛनः अस्मान् ᵛउप ᵛगन्तन उपगच्छत । गमेर्लोटि 'तप्तनप्तनथनाश्च' इति तनबादेशः ॥

यूयं हि ष्ठा सुदानवो रुद्रा ऋभुक्षणो दमे । उत प्रचेतसो मदे ॥ १२ ॥

यूयम् । हि । स्थ । सुऽदानवः । रुद्राः । ऋभुक्षणः । दमे । उत । प्रऽचेतसः । मदे ॥ १२ ॥

ᵛउत अपि च हे ᵛसुदानवः शोभनदाना हे ᵛरुद्राः रुद्रपुत्राः । पादादित्वादामन्त्रितनिघाताभावः । हे ᵛऋभुक्षणः महान्तः उरुतेजस्का वा ईदृशा हे मरुतः ᵛयूयं ᵛहि[2] खलु ᵛदमे यज्ञगृहे ᵛमदे मदकरे सोमे पीते सति ᵛप्रचेतसः ᵛस्थ प्रकृष्टज्ञाना भवथ ॥

आ नो रयिं मदच्युतं पुरुक्षुं विश्वधायसम् । इयर्ता मरुतो दिवः ॥१३॥

---

१. ख-झ-त-न-भ-श—गंतवे । २. ख-भ्र-त-न-भ-श—'हि' नास्ति ।

आ । नः । रयिम् । मदऽच्युतम् । पुरुऽक्षुम् । विश्वऽधायसम् । इयर्त । मरुतः । दिवः ॥१३॥

हे ᵛमरुतः ᵛनः अस्माकं ᵛरयिं धनं ᵛदिवः द्युलोकात् ᵛआ ᵛइयर्त आगमयत। 'ऋ गतौ' इत्यस्मादन्तर्भावितण्यर्थात् जौहोत्यादिकाल्लोटि तस्य 'तप्तनप्तन॰' इति तबादेशः। 'अनुदात्ते च' इत्यभ्यस्ताद्युदात्तत्वम्। कीदृशं रयिम्। ᵛमदच्युतं मदं स्रवन्तं यद्वा शात्रवस्य मदस्य च्यावयितारं ᵛपुरुक्षुं बहुनिवासं बहुभिः स्तूयमानं वा ᵛविश्वधायसं विश्वेषां सर्वेषामस्मदीयानां धारणाय पोषणाय पर्याप्तम् ॥

अधीव यद्गिरीणां यामं शुभ्रा अचिध्वम् । सुवानैर्मन्दध्व इन्दुभिः ॥१४॥

अधिऽइव । यत् । गिरीणाम् । यामम् । शुभ्राः । अचिध्वम् । सुवानैः । मन्दध्वे । इन्दुऽभिः ॥१४॥

हे ᵛशुभ्राः शोभमाना मरुतः ᵛगिरीणां पर्वतानाम् ᵛअधीव उपरीव ᵛयत् यदा ᵛयामं युष्मदीयं रथम् ᵛअचिध्वं गमनसाधनैरश्वादिभिः उपचितं[1] कुरुथ तदानीं ᵛसुवानैः अभिषूयमाणैः ᵛइन्दुभिः सोमैः ᵛमन्दध्वे मादयध्वे ॥

एतावतश्चिदेषां सुम्नं भिक्षेत मर्त्यः । अदाभ्यस्य मन्मभिः ॥ १५ ॥

एतावतः । चित् । एषाम् । सुम्नम् । भिक्षेत । मर्त्यः । अदाभ्यस्य । मन्मऽभिः ॥ १५ ॥

ᵛमर्त्यः मनुष्यः स्तोता ᵛमन्मभिः स्तोत्रैः ᵛसुम्नं सुखं धनं वा ᵛएषां मरुतां स्वभूतं ᵛभिक्षेत याचेत। इदानीं गणाभिप्रायेणैकवदाह। ᵛएतावतश्चित् यत्परिमाणस्य च ᵛअदाभ्यस्य केनापि हिंसितुमशक्यस्य मरुद्गणस्य सुम्नं भिक्षेत ॥ एतच्छब्दात् 'यत्तदेतेभ्यः॰' इति परिमाणेऽर्थे वतुप्। 'आ सर्वनाम्नः' इत्यात्वम् ॥ ॥ २० ॥

ये द्रप्सा इव रोदसी धमन्त्यनु वृष्टिभिः । उत्सं दुहन्तो अक्षितम् ॥ १६ ॥

ये । द्रप्साःऽइव । रोदसी इति । धमन्ति । अनु । वृष्टिऽभिः । उत्सम् । दुहन्तः । अक्षितम् ॥१६॥

ᵛये मरुतः ᵛद्रप्साइव उदबिन्दव इव ᵛरोदसी द्यावापृथिव्यौ ᵛवृष्टिभिः वर्षणैः ᵛअनु ᵛधमन्ति अनुगच्छन्ति साकल्येन व्याप्नुवन्ति। यद्वा। अनुध्माते उच्छ्वसितावयवे कुर्वन्ति। किं कुर्वन्तः। अक्षितम् अक्षीणमुदकम् ᵛउत्सं मेघं ᵛदुहन्तः पूरयन्तो मेघादवाङ्मुखं पातयन्तः। दुहेः 'लक्षणहेत्वोः॰' (पा. सू. ३. २. १२६) इति हेतौ शतृप्रत्ययः। यत एवं दुहन्ति ततो रोदसी अनुधमन्तीत्यर्थः॥

उदु स्वानेभिरीरत उद्रथैरुदु वायुभिः । उत्स्तोमैः पृश्निमातरः ॥ १७ ॥

उत् । ऊँ इति । स्वानेभिः । ईरते । उत् । रथैः । उत् । ऊँ इति । वायुऽभिः ।
उत् । स्तोमैः । पृश्निऽमातरः ॥ १७ ॥

ᵛस्वानेभिः स्वानैः शब्दैर्मरुतः ᵛउत् ᵛइरते उद्गच्छन्ति। 'स्वन शब्दे'। 'स्वनहसोर्वा' (पा. सू. ३. ३. ६२) इत्यपो विकल्पितत्वात् पक्षे घञ्। 'कर्षात्वतः॰' इत्यन्तोदात्तत्वम्। 'बहुलं छन्दसि' इति भिस ऐसभावः। ᵛउ इति पूरणः। तथा ᵛरथैः रथप्रमुखैः[2] वाहनैश्चोदीरते[3]। ᵛपृश्निमातरः[4] --- ॥

१. ख१-भ-संचितं। २ ज्ञ-त१-२-रथप्रमुखैर्वायुभिः। ३. ज-॰दीरते स्तोमैः स्तोत्रैः। ४. घ-ज्ञ-त१-२-मु- पृश्निमातरः मरुतस्तथा स्तोमैः स्तोत्रैः उदीरते; श- पृश्निमातरः पृश्नेः पुत्रा मरुतः स्तोमैरस्माभिः कृतैः स्तोत्रैः एव एवं बहुधा उदीरते उद्गच्छंति।

येनाव तुर्वशं यदुं येन कण्वं धनस्पृतम् । राये सु तस्य धीमहि ॥ १८ ॥

येन । आव । तुर्वशम् । यदुम् । येन । कण्वम् । धनऽस्पृतम् । राये । सु । तस्य । धीमहि ॥ १८ ॥

येन[1] आत्मीयेन रक्षणेन तुर्वशम् एतत्संज्ञं यदुम् एतत्संज्ञं च राजर्षिम् आव यूयं रक्षितवन्तः स्थ । अवतेर्लिटि मध्यमबहुवचने रूपमेतत् । येन च धनस्पृतं धनकामं कण्वम् ऋषिं रक्षितवन्तः स्थ तस्य युष्मदीयं रक्षणं राये धनार्थं सु धीमहि शोभनं ध्यायाम ॥

इमा उ वः सुदानवो घृतं न पिप्युषीरिषः । वर्धान्काण्वस्य मन्मभिः ॥ १९ ॥

इमाः । ऊँ इति । वः । सुऽदानवः । घृतम् । न । पिप्युषीः । इषः ।
वर्धान् । काण्वस्य । मन्मऽभिः ॥ १९ ॥

हे सुदानवः शोभनदाना मरुतः घृतं न घृतमिव पिप्युषीः वर्धयित्र्यः शरीरपुष्टिहेतुभूताः इमाः इदानीं[2] प्रदीयमानाः इषः अन्नानि सोमलक्षणानि काण्वस्य कण्वगोत्रस्य मम संबन्धिभिः मन्मभिः स्तोत्रैः सार्धं वः युष्मान् वर्धान् वर्धयन्तु ॥ वृधेर्ण्यन्तात् लेटि रूपमेतत् । उ इति पूरणः ॥

क्व नूनं सुदानवो मदथा वृक्तबर्हिषः । ब्रह्मा को वः सपर्यति ॥ २० ॥

क्व । नूनम् । सुऽदानवः । मदथ । वृक्तऽबर्हिषः । ब्रह्मा । कः । वः । सपर्यति ॥ २० ॥

मरुदागमनस्य विलम्बमसहमान ऋषिरनया वितर्कयति । सुदानवः शोभनदाना हे वृक्तबर्हिषः । वृक्तं वृक्णं छिन्नं बर्हिर्येषां यागाय । यद्वा । बर्हिरिति यज्ञनाम । वृक्तः प्रवृक्तो यज्ञो येषां ते तथोक्ताः । हे ईदृशा मरुतः क्व कुत्र देशे नूनम् इदानीं मदथ माद्यथ । ‘मदी हर्षे’ । व्यत्ययेन शप् । कः च ब्रह्मा ब्राह्मणः स्तोता वः युष्मान् सपर्यति परिचरति । किंकारणं बहुशः स्तुतैरपि भवद्भिरिदानीं नागम्यत इति न जानीमः ॥ ॥ २१ ॥

नहि ष्म यद्ध वः पुरा स्तोमेभिर्वृक्तबर्हिषः । शर्धाँ ऋतस्य जिन्वथ ॥ २१ ॥

नहि । स्म । यत् । ह । वः । पुरा । स्तोमेभिः । वृक्तऽबर्हिषः । शर्धान् । ऋतस्य । जिन्वथ ॥ २१ ॥

पूर्वया वितर्क्य इदानीं निश्चिनोति । हे वृक्तबर्हिषः प्रवृक्तयज्ञका मरुतः नहि ष्म तन्न खलु संभवति । वः यूयं पुरा अस्मत्तः पूर्वमेव कृतैः स्तोमैरन्यदीयैः स्तोत्रैः ऋतस्य उदकस्य सत्यस्य यज्ञस्य वा संबन्धिनः शर्धान् आत्मीयानि बलानि जिन्वथ प्रीणयथ इति यद्ध यत्खलु तन्न संभवत्येव । अतः शीघ्रमागच्छतेत्यर्थः । यद्वा । वृक्तबर्हिष इत्यृत्विङ्नाम । हे ऋत्विजः वः युष्माकं संबन्धिभिः स्तोमेभिः स्तोत्रैर्ऋतस्य यज्ञस्य संबन्धिनो यागार्हाञ्छर्धान् मारुतानि बलानि पुरा अन्येभ्यः स्तोतृभ्यः पूर्वं यद्यस्मात्कारणाज्जिन्वथ यूयं प्रीणयथ । जिविः प्रीणनार्थः । तस्मादन्यदीयैः स्तोत्रैः नहि ष्म न खलु ते मरुतो वशीभवन्तीत्यर्थः ॥

प्रवर्ग्ये महावीरे पयसोरासिक्तयोः सतोः ‘समु त्ये महतीरपः’ इत्येषानुवक्तव्या[3] । सूत्र्यते हि—‘आसिक्तयोः समु त्ये महतीरप इति महावीरमादायोत्तिष्ठत्सु’ ( आश्व. श्रौ. ४. ७ ) इति ॥

समु त्ये महतीरपः सं क्षोणी समु सूर्यम् । सं वज्रं पर्वशो दधुः ॥ २२ ॥

---

१. श—हे मरुतः येन । २. ज्ञ-त१-२-इमानि । ३. ख-ज्ञ-भ-’नुवाक्या ।

सम् । ऊँ इति । त्ये । महतीः । अपः । सम् । क्षोणी इति । सम् । ऊँ इति । सूर्यम् । सम् । वज्रम् । पर्वऽशः । दधुः ॥ २२ ॥

ᵛत्ये ते पूर्वोक्तगुणा मरुतः ᵛमहतीः बह्वीः ᵛअपः वृष्ट्युदकानि ᵛसमु ᵛदधुः संदधति । ओषध्यादिभिः संयोजयन्ति । यद्वा । घर्मकाले सूर्यरश्मिभिराहृता उपरि सम्यग्धारयन्ति ॥ 'बृहन्महतोरुपसंख्यानम्' इति महतः परस्य ङीप उदात्तत्वम् । 'ऊडिदम्' इत्यादिना अप्शब्दात्परः शस् उदात्तः ॥ तथा ᵛक्षोणी क्षोण्यौ द्यावापृथिव्यौ च ते मरुतः ᵛसं दधुः । यथा स्वे स्वे स्थानेऽवतिष्ठेते तथा धारयन्ति । सूत्रात्मना वायुना सर्वं जगद्धार्यते । तथा च श्रूयते—'वायुर्वै गोतम तत्सूत्रं वायुना वै गोतम सूत्रेणायं च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति' (बृ. उ. ३. ७. २) इति । तथा ᵛसूर्यं सर्वस्य प्रेरकमादित्यं चान्तरिक्षे ᵛसं दधुः सम्यग्धारयन्ति । उशब्दः समुच्चये । ईदृशास्ते मरुतः ᵛवज्रम् आत्मीयमायुधं ᵛपर्वशः पर्वणि पर्वणि वृत्रस्य सर्वेष्ववयवसंबन्धिषु हननार्थं ᵛसं दधुः समयूयुजन्[1] ॥

**वि वृत्रं पर्वशो ययुर्वि पर्वताँ अराजिनः । चक्राणा वृष्णि पौंस्यम् ॥ २३ ॥**

वि । वृत्रम् । पर्वऽशः । ययुः । वि । पर्वतान् । अराजिनः । चक्राणाः । वृष्णि । पौंस्यम् ॥ २३ ॥

ᵛअराजिनः राज्ञा केनचित्स्वामिनानधिष्ठिताः । यद्वा । राजा स्वामी अस्य न विद्यत इत्यराजेन्द्रः । तद्युक्तः । ᵛवृष्णि वीर्यवत् ᵛपौंस्यं बलं ᵛचक्राणाः कुर्वाणा मरुतः ᵛवृत्रम् आवरकमसुरं मेघं वा ᵛपर्वशः पर्वणि पर्वणि भेदेन ᵛवि ᵛययुः विशिष्टं वधमगमयन् । तथा ᵛपर्वतान् गिरींश्च विशिष्टं वधं प्रापयन् ॥

**अनु त्रितस्य युध्यतः शुष्ममावन्नुत क्रतुम् । अन्विन्द्रं वृत्रतूर्ये ॥ २४ ॥**

अनु । त्रितस्य । युध्यतः । शुष्मम् । आवन् । उत । क्रतुम् । अनु । इन्द्रम् । वृत्रऽतूर्ये ॥ २४ ॥

ᵛत्रितस्य आप्त्यस्यैतत्संज्ञस्य ᵛयुध्यतः शत्रून् संप्रहरतो राजर्षेः ᵛशुष्मं परेषां शोषकं बलं मरुतः ᵛअनु ᵛआवन् साहाय्यार्थमन्वगच्छन् । यद्वा । अनुगुणमरक्षन् । ᵛउत अपि च ᵛक्रतुं तदीयं कर्म चारक्षन् । अपि च ᵛवृत्रतूर्ये वृत्रवधार्थे संग्रामे ᵛइन्द्रं च ᵛअनु आवन् अरक्षन् ॥

**विद्युद्धस्ता अभिद्यवः शिप्राः शीर्षन्हिरण्ययीः । शुभ्रा व्यञ्जत श्रिये ॥२५॥**

विद्युत्ऽहस्ताः । अभिऽद्यवः । शिप्राः । शीर्षन् । हिरण्ययीः । शुभ्राः । वि । अञ्जत । श्रिये ॥२५॥

ᵛविद्युद्धस्ताः विद्योतमानायुधबाहवः ᵛअभिद्यवः अभिगतदीप्तयः ᵛशुभ्राः शोभमाना मरुतः ᵛशीर्षन् शीर्ष्णि शिरस्यात्मीयेषु शिरःसु ᵛहिरण्ययीः हिरण्मयीः स्वर्णमयानि ᵛशिप्राः शिरस्त्राणानि ᵛश्रिये शोभार्थं ᵛव्यञ्जत व्यञ्जयन्ति । व्यक्तीकुर्वन्ति । धारयन्तीत्यर्थः ॥ ॥ २२ ॥

**उशना यत्परावत उक्ष्णो रन्ध्रमयातन । द्यौर्न चक्रदद्भिया ॥ २६ ॥**

उशनाः । यत् । पराऽवतः । उक्ष्णः । रन्ध्रम् । अयातन । द्यौः । न । चक्रदत् । भिया ॥ २६ ॥

हे मरुतः ᵛउशनाः । व्यत्ययेन प्रथमा । उशनसा काव्येनर्षिणा स्तूयमाना यूयम् । यद्वा । उशनःशब्दात् 'सुपां सुलुक्' इति जसः सुः ॥ उशनसः स्तोतॄन् कामयमाना यूयम् ᵛउक्ष्णः सेक्तुः

---

[1] श–समयोजयन् ।

कामानां वर्षितुरात्मीयस्य रथस्य वृष्टिहेतोरन्तरिक्षस्य वा ᵛरन्ध्रं मध्यं ᵛपरावतः दूरदेशात् ᵛयत् यदा ᵛअयातन अगच्छत ॥ यातेर्लङि मध्यमबहुवचनस्य 'तप्तनप्तनथनाश्च' इति तनादेशः ॥ तदानीं ᵛद्यौर्न । अत्र द्युशब्देन तत्रत्यो जनसंघो लक्ष्यते । द्युलोके वर्तमानो जनसंघ इव पार्थिवमपि सर्वं भूतजातं ᵛभिया युष्मद्वेगजनितया भीत्या ᵛचक्रदत् अशब्दयत् अकम्पत वा ॥

आ नो॑ म॒खस्य॑ दा॒वने॒ऽश्वै॒र्हिर॑ण्यपाणिभिः । देवा॑स॒ उप॑ गन्तन ॥२७॥

आ । न॒ः । म॒खस्य॑ । दा॒वने॑ । अश्वै॑ः । हिर॑ण्यपाणिऽभिः । देवा॑सः । उप॑ । ग॒न्त॒न ॥ २७ ॥

हे ᵛदेवासः दानादिगुणयुक्ता मरुतः ᵛनः अस्माकं ᵛमखस्य यज्ञस्य ᵛदावने दानाय । ददातेरौणादिको भावे वनिः । ᵛहिरण्यपाणिभिः स्वर्णमयपादैः स्वर्णालंकृतैर्हितरमणीयपादैर्वा ᵛअश्वैः ᵛआ ᵛउप ᵛगन्तन उपागच्छत प्राप्नुत ॥ गमेर्लोटि छान्दसः शपो लुक् । 'तप्तनप्तनथनाश्च' इति तनबादेशः । अत एव ङित्वाभावादनुनासिकलोपो न क्रियते ॥

यदे॑षां॒ पृष॑ती॒ रथे॒ प्रष्टि॒र्वह॑ति॒ रोहि॑तः । यान्ति॑ शु॒भ्रा रि॒णन्न॒पः ॥ २८ ॥

यत् । ए॒षाम् । पृष॑तीः । रथे॑ । प्रष्टिः॑ । वह॑ति । रोहि॑तः । यान्ति॑ । शु॒भ्राः । रि॒णन् । अ॒पः ॥२८॥

ᵛएषां मरुतां ᵛरथे ᵛपृषतीः पृषद्भिः श्वेतबिन्दुभिर्युक्ता मृग्यः ᵛयत् यदा वहन्ति यदा च ᵛप्रष्टिः प्राशुः शीघ्रगामी । यद्वा । प्रमुखे युज्यमानः सन् । ᵛरोहितः पृषतः पृषद्भिर्युक्तो मृगः ᵛवहति तदानीं ᵛशुभ्राः शोभमाना मरुतः ᵛयान्ति गच्छन्ति । तेषां गमने च सति ᵛअपः उदकानि वृष्टिलक्षणानि ᵛरिणन् अरिणन् अगच्छन् । सर्वत्र प्रवहन्ति ॥ 'री गतिरेषणयोः' । क्रैयादिकः । 'प्वादीनां ह्रस्वः' । छान्दसोऽडभावः । 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' (पा. सू. ८. १. १८. ५) इति वचनादत्र पूर्वपदस्य वाक्यान्तरगतत्वात् 'तिङ्ङतिङः' इति निघाताभावः ॥

सु॒षोमे॑ शर्य॒णाव॑त्यार्जी॒के प॒स्त्याव॑ति । य॒युर्निच॑क्रया॒ नरः॑ ॥ २९ ॥

सु॒ऽसोमे॑ । श॒र्य॒णाऽव॑ति । आ॒र्जी॒के । प॒स्त्य॑ऽवति । य॒युः । निऽच॑क्रया । नरः॑ ॥ २९ ॥

ᵛसुषोमे शोभनसोमयुक्ते ᵛआर्जीके । ऋजीका नाम देशाः । तत्संबन्धिनि ᵛशर्यणावति कुरुक्षेत्रस्य जघनार्धे शर्यणावत्संज्ञे सरसि ᵛपस्त्यावति । पस्त्यम् इति गृहनाम । यज्ञगृहोपेते सोमपानाय ᵛनरः नेतारो मरुतः ᵛनिचक्रया नीचीनचक्रया अवाङ्मुखं प्रवर्तमानया रथकक्ष्यया ᵛययुः यान्ति गच्छन्ति । यातेश्छान्दसो लिट् । यद्वा । नरो नेतार ऋत्विज उक्तगुणविशिष्टे शर्यणावति मरुद्यागाय सोममाहर्तुं निचक्रया नीचीनचक्रया शकट्या ययुः गच्छन्ति ॥

क॒दा ग॑च्छाथ मरुत इ॒त्था विप्रं॒ हव॑मानम् । मा॒र्डीके॑भि॒र्नाध॑मानम् ॥३०॥

क॒दा । ग॒च्छा॒थ॒ । म॒रु॒तः॒ । इ॒त्था । विप्र॑म् । हव॑मानम् । मा॒र्डीके॑भिः । नाध॑मानम् ॥ ३० ॥

हे ᵛमरुतः ᵛइत्था इत्थम् अनेन प्रकारेण ᵛहवमानम् आह्वयन्तं स्तुवन्तं ᵛनाधमानं याचमानं ᵛविप्रं मेधाविनं स्तोतारं मां ᵛकदा कस्मिन् काले ᵛमार्डीकेभिः सुखहेतुभिर्धनैः सार्धं ᵛगच्छाथ गच्छथ । विलम्बं मा कुरुत शीघ्रमागच्छतेति भावः ॥ ॥ २३ ॥

कद्ध॑ नू॒नं क॑धप्रियो॒ यदिन्द्र॒मज॑हातन । को वः॑ सखि॒त्व ओ॑हते ॥ ३१ ॥

कत् । ह॒ । नू॒नम् । क॒ध॒ऽप्रि॒यः॒ । यत् । इन्द्र॑म् । अज॑हातन । कः । व॒ः । स॒खि॒ऽत्वे । ओ॒ह॒ते ॥३१॥

हे ^vकधप्रियः कथया स्तुत्या प्रीयमाणाः । 'कथ वाक्यप्रबन्धने'। अस्माद्भावे 'चिन्तिपूजि°' (पा. सू. ३. ३. १०५) इत्यादिना अङ्। ततष्टाप्। उत्तरपदे 'ङ्यापोः संज्ञाच्छन्दसोः°' (पा. सू. ६. ३. ६३) इति ह्रस्वत्वम्। धत्वं छान्दसम्। ईदृशा हे मरुतः वृत्रेण सह युध्यमानम् ^vइन्द्रं ^vनूनं सत्यम् ^vअजहातन पर्यत्यजतेति ^vयत् एतत् तत् ^vकद्ध कदा खलु कस्मिन् काले जातम्। न कदाचिदपीत्यर्थः। तथा च ब्राह्मणं—'मरुतो हैनं नाजहुः प्रहर भगवो जहि वीरयस्व' (ऐ. ब्रा. ३. २०) इति। 'वृत्रस्य त्वा श्वसथादीषमाणाः' (ऋ. सं. ८. ९६. ७) इत्यादि च निगमान्तरम्। यत एवमतः कारणात् ^vवः युष्माकं ^vसखित्वे। व्यत्ययेन सप्तमी। सखिभावं ^vकः स्तोता ^vओहते याचते। यद्वा। वहते प्राप्नोति। ईदृशमनपायं युष्मत्सखित्वं दुर्लभमित्यर्थः॥

**स॒हो षु णो॒ वज्र॑हस्तैः॒ कण्वा॑सो अ॒ग्निं म॒रुद्भिः॑। स्तु॒षे हिर॑ण्यवाशीभिः ॥३२॥**

स॒हो इति॑। सु। न॒ः। वज्र॑ऽहस्तैः। कण्वा॑सः। अ॒ग्निम्। म॒रुत्ऽभिः॑। स्तु॒षे। हिर॑ण्यऽवाशीभिः ॥ ३२ ॥

^vवज्रहस्तैः वज्रबाहुभिः ^vहिरण्यवाशीभिः। हिरण्मयी वाशी तक्षणसाधनमायुधं येषामस्ति तादृशैः। ^vमरुद्भिः ^vसहो सहैव वर्तमानम् ^vअग्निं ^vनः अस्मदीया हे ^vकण्वासः कण्वाः स्तोतारः कण्वगोत्रा वा ऋषयः यूयं ^vस्तुषे स्तुध्वम्। यद्वा। न इति प्रथमार्थे द्वितीया। नः वयं कण्वगोत्राः॥ 'अस्मदो द्वयोश्च' (पा. सू. १. २. ५९) इत्येकस्मिन् बहुवचनम्। 'सविशेषणस्य प्रतिषेधः' (का. १. २. ५९. १) इति तु व्यत्ययेन प्रवर्तते। स्तुषे स्तुवे॥ स्तौतेरुत्तमैकवचने 'सिब्बहुलम्°' इति सिप्॥

**ओ षु वृष्ण॒ः प्रय॑ज्यू॒ना नव्य॑से सुवि॒ताय॑। व॒वृ॒त्यां चि॒त्रवा॑जान् ॥ ३३ ॥**

ओ इति॑। सु। वृष्णः॑। प्रऽय॑ज्यून्। आ। नव्य॑से। सु॒वि॒ताय॑। व॒वृ॒त्याम्। चि॒त्रऽवा॑जान्॥३३॥

^vवृष्णः वर्षितॄन् अभीष्टफलदान् ^vप्रयज्यून् प्रकर्षेण यष्टव्यान् ^vचित्रवाजान् विचित्रगमनान् विचित्रबलान् विचित्रधनान् वा एवंभूतान् मरुतः ^vसु सुष्ठु ^vओ आ उ ^vववृत्यां आवर्तयामि[1]। अस्मदभिमुखं यथा गच्छन्ति तथा करोमि। अपि च ^vनव्यसे नवीयसे नवतराय अत्यन्तं प्रशस्ताय ^vसुविताय सुष्ठु प्राप्तव्याय धनाय च तान् ^vआ ववृत्याम् आवर्तयामि॥

**गि॒रय॑श्चि॒न्नि जि॑हते॒ पर्शा॑नासो॒ मन्य॑मानाः। पर्व॑ताश्चि॒न्नि ये॑मिरे ॥३४॥**

गि॒रय॑ः। चि॒त्। नि। जि॒ह॒ते॒। पर्शा॑नासः। मन्य॑मानाः। पर्व॑ताः। चि॒त्। नि। ये॒मि॒रे॒॥३४॥

मरुत्सु आगच्छत्सु ^vगिरयश्चित् गिरयोऽपि शिलोच्चया अपि ^vपर्शानासः पीड्यमानाः। यद्वा। मरुद्भिः स्पृश्यमानाः। अत एव ^vमन्यमानाः अभिमन्यमाना बाध्यमानाः सन्तः ^vनि ^vजिहते नितरां गच्छन्ति। मरुद्वेगेन स्थानात् प्रच्यवन्ते। तथा ^vपर्वताश्चित् पर्ववन्तो मेघा अपि तदीयेन गमनेन ^vनि ^vयेमिरे नियम्यन्ते। यद्वा। गिरयः क्षुद्राः शिलोच्चया महान्तः पर्वताः॥

**आक्ष्ण॒यावा॑नो वहन्त्य॒न्तरि॑क्षेण॒ पत॑तः। धाता॑रः स्तुव॒ते वय॑ः ॥ ३५ ॥**

आ। अ॒क्ष्ण॒ऽयावा॑नः। व॒ह॒न्ति॒। अ॒न्तरि॑क्षेण। पत॑तः। धाता॑रः। स्तु॒व॒ते। वय॑ः॥ ३५ ॥

---

१. ख-झ-त-न-भ-श—आवर्तयानि।

ᵛअक्षणयावानः अक्षणं व्याप्तं गच्छन्तः । यद्वा । अक्षणश्चक्षुषोऽपि शीघ्रं यान्तीत्यक्षणयावानः । यातेः 'आतो मनिन्' इति वनिप् । ईदृशा अश्वाः ᵛअन्तरिक्षेण आकाशमार्गेण ᵛपततः गच्छतो मरुतः ᵛआ ᵛवहन्ति आनयन्ति । यद्वा । पतत इत्यश्वानां विशेषणम् । अन्तरिक्षे नभसि पततो गच्छन्तः । छान्दसो नुमभावः । किं कुर्वन्तः । ᵛस्तुवते स्तोत्रं कुर्वते जनाय ᵛवयः अन्नं ᵛधातारः विधातारः कुर्वाणाः ॥

अग्निर्हि जानि पूर्व्यश्छन्दो न सूरो अर्चिषा । ते भानुभिर्वि तस्थिरे ॥३६॥

अग्निः । हि । जानि । पूर्व्यः । छन्दः । न । सूरः । अर्चिषा । ते । भानुऽभिः । वि । तस्थिरे ॥३६॥

ᵛअग्निर्हि अग्निः खलु ᵛअर्चिषा तेजसा ᵛपूर्व्यः सर्वेषु देवेषु मुख्यः ᵛजानि अजायत । 'दीपजन०' (पा. सू. ३. १. ६१) इत्यादिना कर्तरि लुङि च्लेश्चिणादेशः । तत्र दृष्टान्तः । ᵛछन्दः उपच्छन्दनीयः ᵛसूरः ᵛन सूर्य इव । तदनन्तरं ᵛते पूर्वोक्तगुणा मरुतः ᵛभानुभिः दीप्तिभिः ᵛवि ᵛतस्थिरे विविधमवतिष्ठन्ते । आग्निमारुते ह्यग्निः पूर्वं स्तूयते पश्चान्मरुतः । तदपेक्षया च पूर्वोत्तरयोरर्धर्चयोः क्रमेणाग्निर्मरुतश्च स्तूयन्ते ॥ ॥ २४ ॥

'आ नो विश्वाभिः' इति त्रयोविंशत्यृचं तृतीयं सूक्तं सध्वंसाख्यस्य काण्वस्यार्षमानुष्टुभम् । एतदादीनि त्रीणि सूक्तान्यश्विदेवत्यानि । तथा चानुक्रान्तम्—'आ नस्त्र्यधिका सध्वंस आश्विनं ह्यानुष्टुभं तु' इति । प्रातरनुवाक आश्विने क्रतावानुष्टुभे छन्दस्याश्विनशस्त्रे चैतत्सूक्तम् । सूत्र्यते हि—'आ नो विश्वाभिस्त्यं चिदत्रिमित्यानुष्टुभम्' (आश्व. श्रौ. ४. १५) इति । अप्तोर्यामे प्रशास्तुरतिरिक्तोक्थेऽप्येतत् । सूत्रितं च—'आ नो विश्वाभिः प्रातर्यावाणा' (आश्व. श्रौ. ९. ११) इति । चतुर्थेऽहनि प्रउगशस्त्रे 'आ नो विश्वाभिः' इत्याश्विनस्तृचः । सूत्रितं च—'आ नो विश्वाभिरूतिभिस्त्यमु वो अप्रहणम्' (आश्व. श्रौ. ७. ११) इति ॥

आ नो विश्वाभिरूतिभिरश्विना गच्छतं युवम् ।
दस्रा हिरण्यवर्तनी पिबतं सोम्यं मधु ॥ १ ॥

आ । नः । विश्वाभिः । ऊतिऽभिः । अश्विना । गच्छतम् । युवम् ।
दस्रा । हिरण्यवर्तनी इति हिरण्यऽवर्तनी । पिबतम् । सोम्यम् । मधु ॥ १ ॥

हे ᵛअश्विना अश्विनौ अश्ववन्तौ सर्वं जगद्व्याप्नुवन्तौ यद्वा अश्वैर्युक्तौ ᵛयुवं युवां ᵛविश्वाभिः सर्वाभिर्व्याप्ताभिर्वा ᵛऊतिभिः रक्षाभिः दातव्याभिः सार्धं ᵛनः अस्मान् ᵛआ ᵛगच्छतम् । आगत्य च हे ᵛदस्रा दस्रौ दर्शनीयौ शत्रूणामुपक्षपयितारौ वा हे ᵛहिरण्यवर्तनी हिरण्मयरथौ हितरमणीयाचरणौ वा ईदृशौ हे अश्विनौ ᵛसोम्यं सोममयं ᵛमधु ᵛपिबतम् ॥

आ नूनं यातमश्विना रथेन सूर्यत्वचा ।
भुजी हिरण्यपेशसा कवी गम्भीरचेतसा ॥ २ ॥

आ । नूनम् । यातम् । अश्विना । रथेन । सूर्यऽत्वचा ।
भुजी इति । हिरण्यऽपेशसा । कवी इति । गम्भीरऽचेतसा ॥ २ ॥

हे ᵛभुजी हविषां भोक्तारौ यद्वा स्तोतृभिरन्नानां भोजयितारौ सर्वस्य जगतः पालकौ वा हे ᵛहिरण्यपेशसा हिरण्मयालंकारौ हिरण्मयावयवौ वा हे ᵛकवी क्रान्तदर्शिनौ स्तोतव्यौ वा हे

^v^गम्भीरचेतसा प्रशस्तज्ञानौ ईदृशौ हे ^v^अश्विना अश्विनौ ^v^सूर्यत्वचा सूर्यवद्भासमानेन ^v^रथेन ^v^नूनम् अवश्यमस्मान् ^v^आ ^v^यातम् आगच्छतम् ॥

**आ यातं नहुषस्पर्यान्तरिक्षात्सुवृक्तिभिः ।**
**पिबाथो अश्विना मधु कण्वानां सवने सुतम् ॥ ३ ॥**

आ । यातम् । नहुषः । परि । आ । अन्तरिक्षात् । सुवृक्तिऽभिः ।
पिबाथः । अश्विना । मधु । कण्वानाम् । सवने । सुतम् ॥ ३ ॥

हे अश्विनौ ^v^नहुषस्परि । नहुष इति मनुष्यनाम । सामर्थ्याच्चात्र तत्संबद्धो लोको लक्ष्यते । मानुषात्तस्माल्लोकात् । परि पञ्चम्यर्थानुवादी । ^v^सुवृक्तिभिः सुष्ठु दोषवर्जिताभिः सुप्रवृत्ताभिर्वा स्तुतिभिर्हेतुभूताभिः ^v^आ ^v^यातम् आगच्छतम् । तथा ^v^अन्तरिक्षात् अन्तरा क्षान्तान्मध्यमाल्लोकादप्यागच्छतम् । आगत्य च ^v^कण्वानां कण्वगोत्राणामस्माकं ^v^सवने यज्ञे प्रातःसवनादौ ^v^सुतम् अभिषुतं ^v^मधु मधुरं सोमं हे अश्विनौ ^v^पिबाथः पिबतम् ॥

**आ नो यातं दिवस्पर्यान्तरिक्षादधप्रिया ।**
**पुत्रः कण्वस्य वामिह सुषाव सोम्यं मधु ॥ ४ ॥**

आ । नः । यातम् । दिवः । परि । आ । अन्तरिक्षात् । अधऽप्रिया ।
पुत्रः । कण्वस्य । वाम् । इह । सुसाव । सोम्यम् । मधु ॥ ४ ॥

हे अश्विनौ ^v^दिवस्परि दिवोऽधि द्युलोकात् ^v^नः अस्मान् ^v^आ ^v^यातम् आगच्छतम् । 'पञ्चम्याः परावध्यर्थे' इति विसर्जनीयस्य सत्वम् । हे ^v^अधप्रिया अधोऽधस्तादस्मिँल्लोके विद्यमानेन सोमेन प्रीयमाणौ । यद्वा । कधप्रिया । छान्दसो वर्णलोपः । कथया स्तुत्या प्रीयमाणौ । हे ईदृशावश्विनौ ^v^अन्तरिक्षात् अप्यागच्छतम् । ^v^इह अस्मिन्यज्ञे ^v^कण्वस्य ऋषेः ^v^पुत्रः ^v^सोम्यं सोममयं ^v^मधु ^v^वां युवाभ्यां युवयोरर्थं ^v^सुषाव अभिषुणोति । अत आ यातमित्यन्वयः ॥

**आ नो यातमुपश्रुत्यश्विना सोमपीतये ।**
**स्वाहा स्तोमस्य वर्धना प्र कवी धीतिभिर्नरा ॥ ५ ॥**

आ । नः । यातम् । उपऽश्रुति । अश्विना । सोमऽपीतये ।
स्वाहा । स्तोमस्य । वर्धना । प्र । कवी इति । धीतिऽभिः । नरा ॥ ५ ॥

हे ^v^अश्विना अश्विनौ ^v^नः अस्माकम् ^v^उपश्रुति । श्रूयत इति श्रुत् स्तुतिः । उपगता श्रुद्यस्मिन् तस्मिन् यज्ञे ^v^सोमपीतये सोमपानाय ^v^आ ^v^यातम् आगच्छतम् । हे ^v^वर्धना वर्धनौ[1] ^v^कवी क्रान्तदर्शिनावश्विनौ ^v^स्वाहा स्वाहाकृतौ स्वाहाकारेण सम्यगिष्टौ सन्तौ । यद्वा । स्वाहेति वाङ्नाम । स्तुतिरूपया वाचा स्तुतौ वाचा ^v^स्तोमस्य स्तोतुः प्रवर्धकौ भवतम् । तथा हे ^v^नरा नेतारावश्विनौ ^v^धीतिभिः कर्मभिः यष्टुश्च[2] प्रवर्धकौ[1] भवतम् । यद्वा । स्वाहेत्यादीन्यामन्त्रितानि । हे स्वाहा स्वाहाकृतौ स्तोमस्य स्तोत्रस्य स्तोतुर्वा हे प्रवर्धना प्रवर्धयितारौ हे कवी क्रान्तदर्शिनौ धीतिभिर्बुद्धिभिरात्मीयैः

१. श–वर्धकौ । २. न–यष्टुयज्ञप्रवर्धकौ; भ–यष्टुः प्रवर्धकौ; श–यष्टु प्रवर्धकौ ।

कर्मभिर्वा हे नरा सर्वेषां नेतारावश्विनौ सोमपानाय आ यातमित्येकमेव वाक्यम्। अस्मिन् पक्षे धीतिभिरित्यपराङ्गत्वाभावश्छान्दसः[1]। यद्वा। धीतिभिर्ध्यातव्याभिर्युष्मदीयाभिरूतिभिः सार्धम् आ यातमिति क्रियया संबन्धः॥ ॥ २५ ॥

यच्चिद्धि वां पुर ऋषयो जुहूरेऽवसे नरा।
आ यातमश्विना गतमुपेमां सुष्टुतिं मम॥ ६ ॥

यत्। चित्। हि। वाम्। पुरा। ऋषयः। जुहूरे। अवसे। नरा।
आ। यातम्। अश्विना। आ। गतम्। उप। इमाम्। सुऽस्तुतिम्। मम॥ ६ ॥

हे नरा नेतारावश्विनौ यच्चिद्धि यदा खलु वां युवां पुरा पूर्वस्मिन् काले ऋषयः अतीन्द्रियार्थदर्शिनः स्तोतारः अवसे रक्षणाय जुहूरे जुहुविरे स्तुतिभिराह्वयन्। ह्वयतेर्लिटि 'अभ्यस्तस्य च' इति संप्रसारणम्। 'हलः' इति दीर्घः। 'इरयो रे' इति रेभावः। तदानीं हे अश्विनौ आ यातम् आगच्छतम् आगतवन्तौ[2] स्थः। अतः मम मदीयाम् इमां सुष्टुतिं शोभनां स्तुतिमपि उप आ गतम् उपागच्छतम्॥

दिवश्चिद्रोचनादध्या नो गन्तं स्वर्विदा।
धीभिर्वत्सप्रचेतसा स्तोमेभिर्हवनश्रुता॥ ७ ॥

दिवः। चित्। रोचनात्। अधि। आ। नः। गन्तम्। स्वःऽविदा।
धीभिः। वत्सऽप्रचेतसा। स्तोमेभिः। हवनऽश्रुता॥ ७ ॥

हे स्वर्विदा स्वः सूर्यस्य द्युलोकस्य वा लम्भयितारावश्विनौ दिवश्चित् द्युलोकाच्च रोचनादधि रोचमानादन्तरिक्षाच्च नः अस्मान् आ गन्तम् आगच्छतम्। पूर्ववदधिः पञ्चम्यर्थानुवादकः। हे वत्सप्रचेतसा वत्से स्तोतरि प्रकृष्टज्ञानौ। यद्वा। वत्सं निवासकं वेदितव्यं वा प्रकृष्टं चेतो ज्ञानं ययोस्तौ तथोक्तौ। तौ युवां धीभिः आत्मीयाभिर्बुद्धिभिः सहागच्छतम्। हे हवनश्रुता हवनस्यास्मदीयस्याह्वानस्य स्तोत्रस्य श्रोतारौ स्तोमेभिः स्तोत्रैरस्मत्कृतैर्युज्यमानौ सन्तावागच्छतम्॥

किमन्ये पर्यासतेऽस्मत्स्तोमेभिरश्विना।
पुत्रः कण्वस्य वामृषिर्गीर्भिर्वत्सो अवीवृधत्॥ ८ ॥

किम्। अन्ये। परि। आसते। अस्मत्। स्तोमेभिः। अश्विना।
पुत्रः। कण्वस्य। वाम्। ऋषिः। गीःऽभिः। वत्सः। अवीवृधत्॥ ८ ॥

अस्मत् अस्मत्तः अन्ये व्यतिरिक्ताः स्तोतारः स्तोमेभिः स्तोत्रैः अश्विना अश्विनौ देवौ किं पर्यासते। अस्मद्व्यतिरिक्ताः केऽप्यश्विनौ स्तोतुं न शक्नुवन्तीत्यर्थः। कण्वस्य ऋषेः[3] पुत्रः ऋषिः मन्त्रद्रष्टा वत्सः गीर्भिः स्तुतिभिर्हे अश्विनौ वां युवाम् अवीवृधत् अवर्धयत्॥

आ वां विप्र इहावसेऽह्वत्स्तोमेभिरश्विना।
अरिप्रा वृत्रहन्तमा ता नो भूतं मयोभुवा॥ ९ ॥

---

१. ख-ज्ञ-न-भ-'त्यपरांगत्वाभाव'। २. ख-भ-आगतौ; ज्ञ-त२-४-आगच्छवंतौ; झ-न-आगच्छतवंतौ। ३. ज्ञ-त१-२-४-य- ऋषिः।

आ । वाम् । विप्रः । इह । अवसे । अह्वत् । स्तोमेभिः । अश्विना ।

अरिप्रा । वृत्रहन्ऽतमा । ता । नः । भूतम् । मयःऽभुवा ॥ ९ ॥

हे ᵛअश्विना अश्विनौ ᵛविप्रः मेधावी स्तोता ᵛइह अस्मिन् यागे ᵛअवसे रक्षणार्थं ᵛस्तोमेभिः स्तोत्रैः ᵛवां युवाम् ᵛआ ᵛअह्वत् आहूतवान् । ह्वयतेर्लुङि 'लिपिसिचिह्वश्च' इति च्लेरङादेशः। हे ᵛअरिप्रा । रिप्रमिति पापनाम । अपापौ हे ᵛवृत्रहन्तमा वृत्राणां शत्रूणां हन्तृतमौ ᵛता तौ तादृशौ युवां ᵛनः अस्माकं ᵛमयोभुवा सुखस्य भावयितारौ ᵛभूतं भवतम् ॥

आ यद्वां योषणा रथमतिष्ठद्वाजिनीवसू ।

विश्वान्यश्विना युवं प्र धीतान्यगच्छतम् ॥ १० ॥

आ । यत् । वाम् । योषणा । रथम् । अतिष्ठत् । वाजिनीवसू इति वाजिनीऽवसू ।

विश्वानि । अश्विना । युवम् । प्र । धीतानि । अगच्छतम् ॥ १० ॥

हे ᵛवाजिनीवसू । वाजिनी हविष्मती यागक्रिया । तस्यां विद्यमानस्वांशलक्षणधनावश्विनौ ᵛयोषणा योषित् सूर्या आजिधावनेन व्रियमाणा सती ᵛवां युवयोः ᵛरथं ᵛयत् यदा ᵛआ ᵛअतिष्ठत् आस्थितवती आरूढवती तदा हे ᵛअश्विना अश्विनौ ᵛयुवं युवां ᵛधीतानि ध्यातान्यभिलषितानि ᵛविश्वानि सर्वाणि प्रकर्षेण ᵛअगच्छतं प्रापतम्[1] ॥　　॥ २६ ॥

अतः सहस्रनिर्णिजा रथेना यातमश्विना ।

वत्सो वां मधुमद्वचोऽशंसीत्काव्यः कविः ॥ ११ ॥

अतः । सहस्रऽनिर्निजा । रथेन । आ । यातम् । अश्विना ।

वत्सः । वाम् । मधुऽमत् । वचः । अशंसीत् । काव्यः । कविः ॥ ११ ॥

हे ᵛअश्विना अश्विनौ येषु लोकेषु यत्र वर्तेथे ᵛअतः अस्मात्स्थानात् ᵛसहस्रनिर्णिजा । निर्णिगिति रूपनाम । स्वर्णमयतया बहुविधरूपयुक्तेन ᵛरथेन ᵛआ ᵛयातम् आगच्छतम् । ᵛकाव्यः कवेः पुत्रः ᵛकविः मेधावी ᵛवत्सः ऋषिः ᵛवां युवाभ्यां युवयोरर्थं ᵛमधुमत् माधुर्योपेतं ᵛवचः वचनमुक्थम् ᵛअशंसीत् शंसितवान् । यत एवमत आगच्छतमित्यर्थः ॥

पुरुमन्द्रा पुरूवसू मनोतरा रयीणाम् ।

स्तोमं मे अश्विनाविममभि वह्नी अनूषाताम् ॥ १२ ॥

पुरुऽमन्द्रा । पुरुवसू इति पुरुऽवसू । मनोतरा । रयीणाम् ।

स्तोमम् । मे । अश्विनौ । इमम् । अभि । वह्नी इति । अनूषाताम् । ॥ १२ ॥

ᵛपुरुमन्द्रा बहुमदौ बहुभिः सोमैर्मादयितव्यौ वा ᵛपुरूवसू बहुधनौ बहूनां निवासकौ वा ᵛरयीणां धनानां ᵛमनोतरा मन्तारौ दातारौ । मन्यतेस्तृचि पृषोदरादित्वाद्रूपसिद्धिः । 'नामन्यतरस्याम्' इति रैशब्दान्नाम उदात्तत्वम् । ᵛवह्नी कृत्स्नस्य जगतो वोढारौ ईदृशौ ᵛअश्विनौ ᵛमे मम

---

१. ख-भ–प्रापयतं ।

ᵛइमं ᵛस्तोमं स्तोत्रम् ᵛअभि ᵛअनूषातां सम्यक् स्तुतमिति प्राशंसिषाताम् ॥ ' णु स्तुतौ '। यद्वा। नुवतिरत्र श्रवणार्थे वर्तते। अभिप्राप्तावश्रौष्टाम् ॥

आ नो विश्वान्याश्विना धत्तं राधांस्यह्रया ।
कृतं न ऋत्वियावतो मा नो रीरधतं निदे ॥ १३ ॥

आ । नः । विश्वानि । अश्विना । धत्तम् । राधांसि । अह्रया ।
कृतम् । नः । ऋत्वियऽवतः । मा । नः । रीरधतम् । निदे ॥ १३ ॥

हे ᵛअश्विना अश्विनौ ᵛअह्रया अह्रयाणि अह्रीतिकरणान्यलज्जाहेतूनि प्रशस्तानि ᵛविश्वानि सर्वाणि ᵛराधांसि धनानि ᵛनः अस्मभ्यम् ᵛआ ᵛधत्तं प्रयच्छतम्। अपि च ᵛनः अस्मान् ᵛऋत्वियावतः। ऋतौ काले भवं प्रजोत्पादनरूपं कर्म ऋत्वियम्। तद्वतः कुरुतम्। तथा ᵛनिदे निन्दायै निन्दकाय वा ᵛनः अस्मान् ᵛमा ᵛरीरधतं मा वशं नैष्टम् ॥

यन्नासत्या परावति यद्वा स्थो अध्यम्बरे ।
अतः सहस्रनिर्णिजा रथेना यातमश्विना ॥ १४ ॥

यत् । नासत्या । पराऽवति । यत् । वा । स्थः । अधि । अम्बरे ।
अतः । सहस्रऽनिर्निजा । रथेन । आ । यातम् । अश्विना ॥ १४ ॥

हे ᵛनासत्या सत्यस्वभावौ सत्यस्य नेतारौ नासिकाप्रभवौ वाश्विनौ ᵛयत् यदि ᵛपरावति दूरदेशे ᵛस्थः। ᵛयद्वा यदि च ᵛअम्बरे। अन्तिकनामैतत्। समीपे स्थः भवथः। अधिः सप्तम्यर्थानुवादी। ᵛअतः अस्मात्सर्वस्मात् स्थानात् ᵛसहस्रनिर्णिजा बहुविधरूपेण ᵛरथेन हे अश्विनौ आगच्छतम् ॥

यो वां नासत्यावृषिर्गीर्भिर्वत्सो अवीवृधत् ।
तस्मै सहस्रनिर्णिजमिषं धत्तं घृतश्चुतम् ॥ १५ ॥

यः । वाम् । नासत्यौ । ऋषिः । गीःऽभिः । वत्सः । अवीवृधत् ।
तस्मै । सहस्रऽनिर्निजम् । इषम् । धत्तम् । घृतऽश्चुतम् ॥ १५ ॥

हे ᵛनासत्यौ ᵛयः वत्साख्यः ᵛऋषिः ᵛवां युवां ᵛगीर्भिः स्तुतिभिः ᵛअवीवृधत् अवर्धयत् ᵛतस्मै ऋषये ᵛसहस्रनिर्णिजं बहुविधरूपं ᵛघृतश्चुतं घृतं क्षरन्तीम्[1] ᵛइषम् अन्नं ᵛधत्तं प्रयच्छतम् ॥ ॥ २७ ॥

प्रास्मा ऊर्जं घृतश्चुतमश्विना यच्छतं युवम् ।
यो वां सुम्नाय तुष्टवद्वसूयाद्दानुनस्पती ॥ १६ ॥

प्र । अस्मै । ऊर्जम् । घृतऽश्चुतम् । अश्विना । यच्छतम् । युवम् ।
यः । वाम् । सुम्नाय । तुस्तवत् । वसुऽयात् । दानुनः । पती इति ॥ १६ ॥

---

१. ख-भ्र-न-क्षरंती; श-क्षरंतं।

हे ᵛअश्विना अश्विनौ ᵛअस्मै स्तोत्रे ᵛघृतश्चुतं घृतधारया युक्ताम्[1] ᵛऊर्जं बलकरमन्नरसं ᵛयुवं युवां ᵛप्र ᵛयच्छतं दत्तम्। हे ᵛदानुनस्पती दानस्याधिपती ᵛवां युवां ᵛसुम्नाय सुखार्थं ᵛयः ᵛतुष्टवत् स्तुयात्। यश्च ᵛवसूयात् वसु धनमात्मन इच्छेत्। अस्मा इत्यन्वयः ॥

आ नो गन्तं रिशादसेमं स्तोमं पुरुभुजा ।
कृतं नः सुश्रियो नरेमा दातमभिष्टये ॥ १७ ॥

आ। नः। गन्तम्। रिशादसा। इमम्। स्तोमम्। पुरुऽभुजा।
कृतम्। नः। सुऽश्रियः। नरा। इमा। दातम्। अभिष्टये ॥ १७ ॥

हे ᵛरिशादसा रिशतां हिंसतां निरसितारौ यद्वा रिशानां हिंसकानामत्तारौ भक्षयितारौ हे ᵛपुरुभुजा बहुलस्य[2] हविषो भोक्तारौ बहूनां पालकौ वा हे अश्विनौ ᵛनः अस्माकम् ᵛइमं ᵛस्तोमं स्तोत्रम् ᵛआ ᵛगन्तम् अभिगच्छतम्। आगत्य च हे ᵛनरा नेतारौ ᵛनः अस्मान् ᵛसुश्रियः सुश्रीकान् शोभनया संपदा युक्तान् ᵛकृतं कुरुतम्। तदर्थम् ᵛइमा इमानि पुरो वर्तमानानि पार्थिवानि[3] ᵛअभिष्टये अभिप्राप्तये ᵛदातं दत्तम्। ददातेर्लोटि छान्दसः शपो लुक् ॥

आ वां विश्वाभिरूतिभिः प्रियमेधा अहूषत ।
राजन्तावध्वराणामश्विना यामहूतिषु ॥ १८ ॥

आ। वाम्। विश्वाभिः। ऊतिऽभिः। प्रियऽमेधाः। अहूषत।
राजन्तौ। अध्वराणाम्। अश्विना। यामऽहूतिषु ॥ १८ ॥

हे ᵛअश्विना अश्विनौ ᵛयामहूतिषु यामानां यातॄणां देवानां हूतिराह्वानं येषु यागेषु तेषु ᵛप्रियमेधाः प्रिययज्ञा एतत्संज्ञा ऋषयः ᵛअध्वराणां यज्ञानां ᵛराजन्तौ ईश्वरौ। राजतिरैश्वर्यकर्मा। 'अश्विनौ हि देवानामध्वर्यू आस्ताम्' (तै. ब्रा. ३. २. २. १) इति हि ब्राह्मणम्। ईदृशौ ᵛविश्वाभिः सर्वाभिः ᵛऊतिभिः रक्षाभिः सहितौ ᵛवां युवाम् ᵛआ ᵛअहूषत आह्वयन् अस्तुवन्नित्यर्थः ॥

आ नो गन्तं मयोभुवाश्विना शंभुवा युवम् ।
यो वां विपन्यू धीतिभिर्गीर्भिर्वत्सो अवीवृधत् ॥ १९ ॥

आ। नः। गन्तम्। मयःऽभुवा। अश्विना। शम्ऽभुवा। युवम्।
यः। वाम्। विपन्यू इति। धीतिऽभिः। गीःऽभिः। वत्सः। अवीवृधत् ॥ १९ ॥

हे ᵛअश्विना अश्विनौ ᵛमयोभुवा मयसः सुखस्य भावयितारौ ᵛशंभुवा रोगाणां शमस्य भावयितारौ ᵛयुवं युवां ᵛनः अस्मान् ᵛआ ᵛगन्तम् आगच्छतम्। हे ᵛविपन्यू स्तुत्यावश्विनौ ᵛयः ᵛवत्सः स्तोता ᵛवां युवां ᵛधीतिभिः कर्मभिः परिचरणैः ᵛगीर्भिः स्तुतिभिश्च ᵛअवीवृधत् अवर्धयत् तानस्मानिति पूर्वत्रान्वयः ॥

याभिः कण्वं मेधातिथिं याभिर्वशं दशव्रजम् ।
याभिर्गोशर्यमावतं ताभिर्नोऽवतं नरा ॥ २० ॥

---

१. घ-ज्ञ-त१-२-श-युक्तं। २. ख-भ—बहुधनस्य। ३. श—पार्थिवानि धनानि।

याभिः। कण्वम्। मेधऽअतिथिम्। याभिः। वशम्। दशऽव्रजम्।
याभिः। गोऽशर्यम्। आवतम्। ताभिः। नः। अवतम्। नरा॥ २०॥

हे अश्विनौ ᵛयाभिः ऊतिभिः ᵛकण्वम् ऋषिं ᵛमेधातिथिं च ᵛआवतम् अरक्षतम्। ᵛयाभिः च ᵛवशम् एतत्संज्ञं[1] चावतम्। ᵛयाभिः च ᵛगोशर्यम्। शीर्णा गौर्यस्य स गोशर्यः शयुः। तथा चाम्नातं—'शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम्' (ऋ. सं. १. ११६. २२) इति। ईदृशं[2] गोशर्यं शयुमावतमरक्षतम्। हे ᵛनरा नेतारौ ᵛताभिः ऊतिभिः ᵛनः अस्मान् ᵛअवतं रक्षतम्॥ ॥ २८॥

याभिर्नरा त्रसदस्युमावतं कृत्व्ये धने।
ताभिः ष्व१स्माँ अश्विना प्रावतं वाजसातये॥ २१॥

याभिः। नरा। त्रसदस्युम्। आवतम्। कृत्व्ये। धने।
ताभिः। सु। अस्मान्। अश्विना। प्र। अवतम्। वाजऽसातये॥ २१॥

हे ᵛनरा नेतारावश्विनौ ᵛधने ᵛकृत्व्ये कर्तव्ये प्राप्तव्ये सति ᵛत्रसदस्युम् एतत्संज्ञं पुरुकुत्सपुत्रमृषिं ᵛयाभिः ऊतिभिः ᵛआवतम् अरक्षतं हे अश्विनौ ᵛताभिः ऊतिभिः ᵛसु सुष्ठु ᵛअस्मान् ᵛप्रावतं प्ररक्षतम्। किमर्थम्। ᵛवाजसातये वाजस्यान्नस्य बलस्य वा सातये संभजनार्थम्॥

प्र वां स्तोमाः सुवृक्तयो गिरो वर्धन्त्वश्विना।
पुरुत्रा वृत्रहन्तमा ता नो भूतं पुरुस्पृहा॥ २२॥

प्र। वाम्। स्तोमाः। सुऽवृक्तयः। गिरः। वर्धन्तु। अश्विना।
पुरुऽत्रा। वृत्रहन्ऽतमा। ता। नः। भूतम्। पुरुऽस्पृहा॥ २२॥

हे अश्विनौ ᵛस्तोमाः प्रगीतमन्त्ररूपाः स्तुतयः ᵛसुवृक्तयः सुप्रवृत्ताः सुष्ठु दोषवर्जिता वा ᵛगिरः शस्त्ररूपा वाचश्च ᵛवां युवां ᵛप्र ᵛवर्धन्तु प्रवर्धयन्तु। अपि च हे ᵛपुरुत्रा बहूनां त्रातारौ हे ᵛवृत्रहन्तमा वृत्राणां शत्रूणां हन्तृतमौ ईदृशौ हे अश्विनौ ᵛता तौ युवां ᵛनः अस्माकं ᵛपुरुस्पृहा पुरु बहुलं स्पृहणीयावीप्सितव्यौ ᵛभूतं भवतम्॥

त्रीणि पदान्यश्विनोराविः सान्ति गुहा परः।
कवी ऋतस्य पत्मभिरर्वाग्जीवेभ्यस्परि॥ २३॥

त्रीणि। पदानि। अश्विनोः। आविः। सन्ति। गुहा। परः।
कवी इति। ऋतस्य। पत्मऽभिः। अर्वाक्। जीवेभ्यः। परि॥ २३॥

ᵛत्रीणि त्रिसंख्याकानि अनयोः ᵛअश्विनोः देवयो रथस्य संबन्धीनि ᵛपदानि चक्राणि ᵛगुहा गुहायां वर्तमानान्येतावन्तं कालमदृश्यमानानि ᵛपरः गुहायाः परस्ताद्दृष्टिगोचरे देशे ᵛआविः ᵛसन्ति आविर्भवन्ति॥ सांहितिकश्छान्दसो दीर्घः। व्यत्ययेन निघाताभावः। यद्वा। सन्तीत्येतत् अस्तेः शतरि जसि रूपम्॥ आविर्भूतानि दृश्यन्ते। आश्विनस्य रथस्य चक्रत्रयोपेतत्वं च 'रथस्त्रिचक्रः

१. ञ-त१-२-एतत्संज्ञं दशव्रजं। २. ख-भ-तादृशं।

परि वर्तते ' ( ऋ. सं. ४. ३६. १ ) इत्यादिनिगमान्तरे प्रसिद्धम् । ᵛकवी क्रान्तदर्शिनावश्विनौ ᵛऋतस्य सत्यस्योदकस्य यज्ञस्य वा हेतुभूतैः ᵛपत्मभिः यैः पदैः ᵛजीवेभ्यस्परि । परिरुपर्यर्थः 'पञ्चम्याः परावध्यर्थे ' इति सत्वम् । जीवानामुपरि जीवेष्वस्मासु ᵛअर्वाक् अभिमुखम् । आगच्छत मिति शेषः । तानि पदानीदानीमुपलभ्यन्त इत्यन्वयः ॥ ॥ २९ ॥

'आ नूनम् ' इत्येकविंशत्यृचं चतुर्थं सूक्तं शशकर्णस्यार्षमश्विदेवत्यम् । विंश्येकविंश्यौ द्वितीया तृतीये चेति चतस्रो गायत्र्यः प्रथमा चतुर्थी षष्ठी चतुर्दशी पञ्चदशी चेति पञ्च बृहत्यः पञ्चमी ककु 'मध्यमश्चेत्ककुप् ' ( अनु. ५. ३ ) इत्युक्तलक्षणसद्भावात् । दशमी त्रिष्टुबेकादशी विराड्द्वादशी जगती शिष्टा अनुष्टुभः । तथा चानुक्रान्तम्—'आ नूनं सैका शशकर्णोऽन्त्ये गायत्र्यावुपाद्ये चाद्य चतुर्थी षष्ठी चतुर्दश्याद्ये च बृहत्यः पञ्चमी ककुब्दशम्याद्यास्त्रिष्टुब्विराड्जगत्यः ' इति । अप्तोर्यामे ब्राह्मणाच्छंसिनोऽतिरिक्तोक्थ इदं सूक्तम् । सूत्र्यते हि—'आ नूनमश्विना तं वां रथम् ' ( आश्व श्रौ. ९. ११ ) इति ॥

आ नूनम॑श्विना यु॒वं व॒त्सस्य॑ गन्त॒मव॑से ।
प्रास्मै॑ यच्छतमवृ॒कं पृ॒थु च्छ॒र्दिर्यु॑यु॒तं या अरा॑तयः ॥ १ ॥

आ । नू॒नम् । अ॒श्विना । यु॒वम् । व॒त्सस्य॑ । ग॒न्त॒म् । अव॑से ।
प्र । अ॒स्मै॒ । य॒च्छ॒त॒म् । अ॒वृ॒कम् । पृ॒थु । छ॒र्दिः । यु॒यु॒तम् । याः । अरा॑तयः ॥ १ ॥

हे ᵛअश्विना अश्विनौ ᵛयुवं युवां ᵛवत्सस्य स्तोतुर्मम ᵛअवसे रक्षणार्थं ᵛनूनम् अवश्यम् ᵛआ ᵛगन्तम् आगच्छतम् । आगत्य च ᵛअस्मै ऋषये ᵛअवृकं बाधकरहितं ᵛपृथु विस्तीर्णं ᵛछर्दि गृहं ᵛप्र ᵛयच्छतं प्रदत्तम् । तथा ᵛयाः ᵛअरातयः अदानशीलाः शत्रुभूताः प्रजास्ताः ᵛयुयु स्तोतृभ्यः पृथक्कुरुतम् ॥

यद॒न्तरि॑क्षे॒ यद्दि॒वि यत्पञ्च॒ मानु॑षाँ॒ अनु॑ । नृ॒म्णं तद्ध॑त्तमश्विना ॥ २ ॥

यत् । अ॒न्तरि॑क्षे । यत् । दि॒वि । यत् । पञ्च॑ । मानु॑षान् । अनु॑ ।
नृ॒म्णम् । तत् । ध॒त्त॒म् । अ॒श्विना ॥ २ ॥

ᵛअन्तरिक्षे गन्धर्वादिभिः सेविते मध्यमे लोके ᵛयत् ᵛनृम्णं धनमस्ति । ᵛदिवि द्युलोके ᵛयत् अस्ति । ᵛपञ्च पञ्चसंख्याकान् ᵛमानुषान् मनुष्यान् ᵛअनु । लक्षणेऽनोः कर्मप्रवचनीयत्वम् 'कर्मप्रवचनीययुक्ते° ' इति द्वितीया । पञ्चविधा मनुष्या निषादपञ्चमाश्चत्वारो वर्णा यत्र वर्तन्ते त चेह लोके ᵛयत् नृम्णं धनमस्ति । हे अश्विनौ ᵛतत् त्रिविधं नृम्णं धनं ᵛधत्तम् अस्मभ्यं प्रयच्छतम्

ये वां॒ दंसां॑स्यश्विना॒ विप्रा॑सः परिमामृ॒शुः । ए॒वेत्का॒ण्वस्य॑ बोधतम् ॥ ३ ॥

ये । वा॒म् । दंसां॑सि । अ॒श्विना॒ । विप्रा॑सः । प॒रि॒ऽम॒मृ॒शुः । ए॒व । इत् । का॒ण्वस्य॑ । बो॒ध॒त॒म् ॥ ३

हे अश्विनौ ᵛवां युवयोः संबन्धीनि ᵛदंसांसि कर्माणि परिचरणात्मकानि ᵛये ᵛविप्रासः विप्र मेधाविनो यजमानाः ᵛपरिमामृशुः परिमृशन्ति पुनःपुनः स्पृशन्ति । अनुतिष्ठन्तीत्यर्थः । यथ तदीयानि[1] परिचरणानि युवां जानीथः ᵛएवेत् एवमेव ᵛकाण्वस्य कण्वपुत्रस्य मम परिचरणं ᵛबोधत अवगच्छतम् ॥

---

१. ख-भ– तदानींतनानि; झ– तदादीनानि; त– तदीनानि; न– तदानानि ।

अयं वां घर्मो अश्विना स्तोमेन परि षिच्यते ।
अयं सोमो मधुमान्वाजिनीवसू येन वृत्रं चिकेतथः ॥ ४ ॥

अयम् । वाम् । घर्मः । अश्विना । स्तोमेन । परि । सिच्यते ।
अयम् । सोमः । मधुऽमान् । वाजिनीवसू इति वाजिनीऽवसू । येन । वृत्रम् । चिकेतथः ॥४॥

हे अश्विनौ ᵛवां युवयोः संबन्धी ᵛअयं ᵛघर्मः प्रवर्ग्यं ᵛस्तोमेन स्तोत्रेण ऋक्सामरूपेण ᵛपरि ᵛषिच्यते आर्द्रीक्रियते । यथा युवयोस्तृप्तिकरो भवति तथा क्रियत इत्यर्थः । यद्वा । घर्मस्य हविष आधारभूतो महावीरो घर्मः । स स्तोमेन स्तोतव्येन पयसा परि षिच्यते आसिच्यते वां युवयोरर्थम् । अपि च हे ᵛवाजिनीवसू अन्नवद्धनौ[1] ᵛअयं ᵛसोमः तार्तीयसवनिको ᵛमधुमान् माधुर्यवान् युवाभ्यां दीयते । ᵛयेन युवां ᵛवृत्रम् आवरकं शत्रुं ᵛचिकेतथः हन्तव्यतया जानीथः । अयं घर्मः सोमश्चेत्युभयत्रान्वयः[2] ॥

यदप्सु यद्वनस्पतौ यदोषधीषु पुरुदंससा कृतम् । तेन माविष्टमश्विना ॥५॥

यत् । अप्ऽसु । यत् । वनस्पतौ । यत् । ओषधीषु । पुरुऽदंससा । कृतम् ।
तेन । मा । अविष्टम् । अश्विना ॥ ५ ॥

हे ᵛपुरुदंससा बहुकर्माणावश्विनौ ᵛअप्सु उदकेषु ᵛयत् भेषजं ᵛकृतं युवामकार्ष्टम् । करोतेर्लुङि 'मन्त्रे घस॰' इत्यादिना च्लेर्लुक् । तथा ᵛवनस्पतौ । वनानां पतिर्वनस्पतिः । पारस्करादित्वात् सुट् । 'उभे वनस्पत्यादिषु॰' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । जातौ चेदमेकवचनम् । वनस्पतिषु वृक्षेषु ᵛयत् च भेषजं युवामकुरुतम् । ᵛओषधीषु । ओषः पाक आसु धीयते इत्योषधयो व्रीह्यादयः ॥ 'कर्मण्यधिकरणे च' इति दधातेरधिकरणे किप्रत्ययः । दासीभारादिषु पठितत्वात् पूर्वपदप्रकृतिस्वरत्वम् । 'ओषधेश्च विभक्तावप्रथमायाम्' (पा. सू. ६. ३. १३२) इति दीर्घः ॥ व्रीह्यादिष्वोषधीषु च ᵛयत् भेषजं कृतं युवामकार्ष्टम् । हे ᵛअश्विना अश्विनौ ᵛतेन सर्वेण भेषजेन ᵛमा माम् ᵛअविष्टं रक्षतम् । अवतेर्लोटि 'सिब्बहुलम्॰' इति बहुलग्रहणात् सिप् । तत इट् ॥ ॥३०॥

यन्नासत्या भुरण्यथो यद्वा देव भिषज्यथः ।
अयं वां वत्सो मतिभिर्न विन्धते हविष्मन्तं हि गच्छथः ॥ ६ ॥

यत् । नासत्या । भुरण्यथः । यत् । वा । देवा । भिषज्यथः ।
अयम् । वाम् । वत्सः । मतिऽभिः । न । विन्धते । हविष्मन्तम् । हि । गच्छथः ॥ ६ ॥

हे ᵛनासत्या सत्यस्वभावावश्विनौ ᵛयत् यौ युवां ᵛभुरण्यथः सर्वं जगत्पोषयथः । 'भुरण् धारणपोषणयोः' । कण्ड्वादिः । हे ᵛदेवा दानादिगुणयुक्तावश्विनौ । छान्दसः सांहितिको ह्रस्वः । ᵛयद्वा यौ च युवां ᵛभिषज्यथः सर्वस्य प्राणिजातस्य भैषज्यं रोगोपशमनं कुरुथः । 'भिषज् चिकित्सायाम्' । अयमपि कण्ड्वादिः । तौ ᵛवां युवाम् ᵛअयं ᵛवत्सः स्तोता ᵛमतिभिः मननीयैः केवलैः स्तोत्रैः ᵛन ᵛविन्धते न विन्दते न लभते । वर्णविकारश्छान्दसः । कुत इति चेत् उच्यते । ᵛहविष्मन्तं हविर्भिर्युक्तं स्तोतारं ᵛहि युवां ᵛगच्छथः । तस्माद्युवां हविर्भिर्युक्तैः स्तोत्रैः प्रसीदथ इति भावः ॥

---

१. श–अन्नधनौ । २. श-त-१-२-४-श–स्तोमश्चे॰ ।

प्रवर्ग्ये महावीरे गोपयस्यासिच्यमाने 'आ नूनम्' इत्येषानुवक्तव्या। सूत्र्यते हि—'आ नूनमश्विनोर्ऋषिरिति गव्य आ सुते सिञ्चत श्रियमित्याजे' (आश्व. श्रौ. ४. ७) इति ॥

आ नूनमश्विनोर्ऋषिः स्तोमं चिकेत वामया ।
आ सोमं मधुमत्तमं घर्मं सिञ्चादथर्वणि ॥ ७ ॥

आ । नूनम् । अश्विनोः । ऋषिः । स्तोमम् । चिकेत । वामया ।
आ । सोमम् । मधुमत्ऽतमम् । घर्मम् । सिञ्चात् । अथर्वणि ॥ ७ ॥

हे अश्विनौ यदा युवामागच्छेयाथां तदानीं युवयोः अश्विनोः स्तोमं स्तोत्रम् ऋषिः मन्त्रद्रष्टा वामया वननीययोत्कृष्टया[1] बुद्ध्या नूनम् अवश्यम् आ चिकेत अभिजानीयात्। 'कित ज्ञाने'। छान्दसो लिट्। तथा मधुमत्तमम् अतिशयेन मधुरं सोमं घर्मं प्रवर्ग्यसंबन्धि घर्माख्यं हविश्च अथर्वणि अहिंसके अग्नौ। यद्वा। अथर्वा ऋषिः। तेन निर्मथितोऽग्निः उपचारादथर्वेत्युच्यते। अथर्वणा निर्मथनं च 'त्वामग्ने पुष्करादधि' (ऋ. सं. ६. १६. १३) इत्यादिनिगमान्तरेऽवगम्यते। तस्मिन्नग्नौ आ सिञ्चात् आसिञ्चेत् प्रक्षिपेत्। अतः शीघ्रमागच्छतमित्यर्थः ॥

आ नूनं रघुवर्तनिं रथं तिष्ठाथो अश्विना ।
आ वां स्तोमा इमे मम नभो न चुच्यवीरत ॥ ८ ॥

आ । नूनम् । रघुऽवर्तनिम् । रथम् । तिष्ठाथः । अश्विना ।
आ । वाम् । स्तोमाः । इमे । मम । नभः । न । चुच्यवीरत ॥ ८ ॥

हे अश्विनौ रघुवर्तनिं लघुवर्तनं शीघ्रगमनं रथं नूनम् अवश्यमिदानीमेव आ तिष्ठाथः आतिष्ठतम् अधिरोहतम्। 'वालमूललघ्वलम्' इति लघोर्लकारस्य रेफः। मम मदीयाः इमे स्तोमाः स्तोत्राणि नभो न सूर्यमिव तेजस्विनौ वां युवाम् आ चुच्यवीरत आच्यवन्ते अभिगच्छन्ति। यद्वा। च्यवतिरत्र अन्तर्भावितण्यर्थः। आच्यावयन्ति[2] युवामभिप्रापयन्ति ॥

यदद्य वां नासत्योक्थैराचुच्युवीमहि ।
यद्वा वाणीभिरश्विनेवेत्काण्वस्य बोधतम् ॥ ९ ॥

यत् । अद्य । वाम् । नासत्या । उक्थैः । आऽचुच्युवीमहि ।
यत् । वा । वाणीभिः । अश्विना । एव । इत् । काण्वस्य । बोधतम् ॥ ९ ॥

हे नासत्यौ अद्य इदानीम् उक्थैः शस्त्रैः यत् यथा[3] येन प्रकारेण वां युवाम् आचुच्युवीमहि आगमयेम हे अश्विनौ यद्वा यथा वाणीभिः उक्थव्यतिरिक्ताभिरपि वाग्भिः स्तुतिभिः युवामागमयेम एवेत् एवमेव तथैव काण्वस्य मम तदुक्थादिकं बोधतम् अवगच्छतम् ॥

यद्वां कक्षीवाँ उत यद्व्यश्व ऋषिर्यद्वां दीर्घतमा जुहाव ।
पृथी यद्वां वैन्यः सादनेष्वेवेदतो अश्विना चेतयेथाम् ॥ १० ॥

---

१. ज्ञ-त-१-२-४-श—मननीय°। २. ज्ञ-त-१-२-४-श—आच्यवयंति। ३. श—यदा।

यत् । वाम् । कक्षीवान् । उत । यत् । विऽअश्वः । ऋषिः । यत् । वाम् । दीर्घऽतमाः । जुहाव । पृथी । यत् । वाम् । वैन्यः । सदनेषु । एव । इत् । अतः । अश्विना । चेतयेथाम् ॥ १० ॥

हे अश्विनौ ^v^वां युवां ^v^कक्षीवान् ^v^ऋषिः ^v^यत् यथा[1] ^v^जुहाव तुष्टाव । ^v^उत अपि च ^v^व्यश्वः एतत्संज्ञः ऋषिश्च ^v^यत् यथा जुहाव । ^v^यत् यथा च ^v^वां युवां ^v^दीर्घतमाः ऋषिर्जुहाव । ^v^सदनेषु यज्ञगृहे[2] ^v^वैन्यः वेनस्य पुत्रः ^v^पृथी एतत्संज्ञो राजर्षिः ^v^वां युवां ^v^यत् यथा जुहाव तुष्टाव । ^v^एवेत् एवमेव स्तुवतो मम ^v^अतः इदं स्तोत्रम् । इदंशब्दात् द्वितीयार्थे तसिः । हे अश्विनौ ^v^चेतयेथां जानीतम् ॥ ॥ ३१ ॥

यातं छर्दिष्पा उत नः परस्पा भूतं जगत्पा उत नस्तनूपा ।
वर्तिस्तोकाय तनयाय यातम् ॥ ११ ॥

यातम् । छर्दिःऽपौ । उत । नः । परःऽपा । भूतम् । जगत्ऽपौ । उत । नः । तनूऽपा । वर्तिः । तोकाय । तनयाय । यातम् ॥ ११ ॥

हे अश्विनौ ^v^छर्दिष्पौ । छर्दिरिति गृहनाम । तस्यास्मदीयस्य पालकौ सन्तौ युवां ^v^यातम्[3] आगच्छतम् । ^v^उत अपि च ^v^नः अस्माकं ^v^परस्पा परमतिशयेन पालकौ ^v^भूतं भवतम् । पारस्करादित्वात्सुट् । तथा ^v^जगत्पौ सर्वस्य जगतो जङ्गमस्य प्राणिजातस्यास्मदीयस्य पालकौ भवतम् । ^v^उत अपि च ^v^नः अस्माकं ^v^तनूपा तनूनां शरीराणां तनयानां वा पालकौ भवतम् । एतत्सर्वार्थं ^v^तोकाय तोकस्य पुत्रस्य ^v^तनयाय तनयस्य पौत्रस्य चास्मदीयस्य ^v^वर्तिः गृहं ^v^यातं गच्छतम् ॥

यदिन्द्रेण सरथं याथो अश्विना यद्वा वायुना भवथः समोकसा ।
यदादित्येभिर्ऋभुभिः सजोषसा यद्वा विष्णोर्विक्रमणेषु तिष्ठथः ॥ १२ ॥

यत् । इन्द्रेण । सऽरथम् । याथः । अश्विना । यत् । वा । वायुना । भवथः । सम्ऽओकसा । यत् । आदित्येभिः । ऋभुऽभिः । सऽजोषसा । यत् । वा । विष्णोः । विऽक्रमणेषु । तिष्ठथः ॥ १२ ॥

हे अश्विनौ ^v^इन्द्रेण सह ^v^सरथं समानमेकं रथमास्थाय ^v^यत् यदि ^v^याथः गच्छथः । ^v^यद्वा यदि वा ^v^वायुना सह ^v^समोकसा समाननिवासौ ^v^भवथः । ^v^यत् यदि वा ^v^आदित्येभिः अदितिपुत्रैर्मित्रादिभिः[4] ^v^ऋभुभिः च ^v^सजोषसा सह प्रीयमाणौ वर्तेथे । ^v^यद्वा यदि वा ^v^विष्णोर्विक्रमणेषु विष्णुना देवेन विक्रान्तेषु त्रिषु लोकेषु ^v^तिष्ठथः । अतः सर्वस्मादपि स्थानादागच्छतमिति शेषः ॥

यदद्याश्विनावहं हुवेय वाजसातये ।
यत्पृत्सु तुर्वणे सहस्तच्छ्रेष्ठमश्विनोरवः ॥ १३ ॥

यत् । अद्य । अश्विनौ । अहम् । हुवेय । वाजऽसातये । यत् । पृत्ऽसु । तुर्वणे । सहः । तत् । श्रेष्ठम् । अश्विनोः । अवः ॥ १३ ॥

---

१. ख-१–यद्वार्षि; ज-ञ-त-श–यदा; भ–यद्वावी । २. ञ-त-१-२-श– यज्ञगृहेषु । ३. श–आयातं । ४. ञ-त१-२-४-श–अदितेः पुत्रै° ।

ᵛयत् यदा ᵛअहम् ᵛअश्विनौ ᵛवाजसातये संग्रामार्थं ᵛहुवेय आह्वयेय[1] ᵛअद्य इदानीं तावागच्छतमिति शेषः । ᵛपृत्सु पृतनासु संग्रामेषु ᵛतुर्वणे शत्रूणां हिंसने ᵛयत् ᵛसहः शत्रूणामभिभवितृ रक्षणम् ᵛअश्विनोः ᵛतत् ᵛअवः रक्षणं ᵛश्रेष्ठं प्रशस्यतमम् । अतस्तावाह्वयामीति भावः ॥

आ नूनं यातमश्विनेमा हव्यानि वां हिता ।
इमे सोमासो अधि तुर्वशे यदाविमे कण्वेषु वामथ ॥ १४ ॥

आ । नूनम् । यातम् । अश्विना । इमा । हव्यानि । वाम् । हिता ।
इमे । सोमासः । अधि । तुर्वशे । यदौ । इमे । कण्वेषु । वाम् । अथ ॥ १४ ॥

हे अश्विनौ ᵛनूनम् अवश्यम् ᵛआ ᵛयातम् आगच्छतम् । ᵛइमा इमानि पुरोवर्तीनि ᵛहव्यानि हवींषि ᵛवां[2] युवाभ्यां[2] ᵛहिता हितानि । यद्वा । युवयोरर्थे विहितानि कृतानि । ᵛइमे च ᵛसोमासः सोमाः ᵛतुर्वशे ᵛयदौ च वर्तमानाः । वां युवाभ्यां युवयोरर्थे संस्कृता वा । अधिः सप्तम्यर्थानुवादकः । ᵛअथ अपि च ᵛकण्वेषु कण्वपुत्रेष्वस्मासु[3] च ᵛइमे सोमाः ᵛवां युवाभ्यां दत्ताः । अत आयातमित्यर्थः ॥

यन्नासत्या पराके अर्वाके अस्ति भेषजम् ।
तेन नूनं विमदाय प्रचेतसा छर्दिर्वत्साय यच्छतम् ॥ १५ ॥

यत् । नासत्या । पराके । अर्वाके । अस्ति । भेषजम् ।
तेन । नूनम् । विऽमदाय । प्रऽचेतसा । छर्दिः । वत्साय । यच्छतम् ॥ १५ ॥

हे नासत्यावश्विनौ ᵛपराके दूरदेशे ᵛअर्वाके समीपे च ᵛयत् युवयोः संबन्धि ᵛभेषजं रोगोपशमनकारणम्[4] ᵛअस्ति ᵛतेन भेषजेन सहितं ᵛछर्दिः गृहं हे ᵛप्रचेतसा प्रकृष्टज्ञानावश्विनौ ᵛविमदाय । लुप्तोपममेतत् । एतत्संज्ञायेवर्षये ᵛवत्साय ᵛनूनम् अवश्यं प्रयच्छतम् ॥ ॥ ३२ ॥

अभुत्स्यु प्र देव्या साकं वाचाहमश्विनोः ।
व्यावर्देव्या मतिं वि रातिं मर्त्येभ्यः ॥ १६ ॥

अभुत्सि । ऊँ इति । प्र । देव्या । साकम् । वाचा । अहम् । अश्विनोः ।
वि । आवः । देवि । आ । मतिम् । वि । रातिम् । मर्त्येभ्यः ॥ १६ ॥

ᵛअश्विनोः संबन्धिन्या ᵛदेव्या द्योतमानया ᵛवाचा स्तुतिरूपया ᵛसाकं सह ᵛअहं ᵛप्र ᵛअभुत्सि प्रबुद्धोऽस्मि । ᵛउ इति पूरणः । हे ᵛदेवि द्योतमान उषः त्वं च ᵛमतिं मया कृतां स्तुतिम् ᵛआ अभिलक्ष्य ᵛव्यावः तमांसि विवृणु अपगमय । प्रकाशयेत्यर्थः । वृणोतेश्छान्दसे लुङि ' मन्त्रे घस० ' इत्यादिना च्लेर्लुक् । ' छन्दस्यपि दृश्यते ' इत्याडागमः । अपि च ᵛमर्त्येभ्यः मनुष्येभ्यः स्तोतृभ्योऽस्मभ्यं ᵛरातिं धनं ᵛवि आवः प्रकाशय ॥

प्र बोधयोषो अश्विना प्र देवि सूनृते महि ।
प्र यज्ञहोतरानुषक्प्र मदाय श्रवो बृहत् ॥ १७ ॥

---

१. झ-त१-२-४-श-आह्वये । २. झ-त१-२-४-युवाभ्यां; श-वां । ३. श-कण्वगोत्रेष्व० । ४. घ-ज-झ-रोगोपशमनकरणं; झ-श-रोगापशमनकारणं; त३-रोगाय शमनकरणं ।

प्र । बोधय । उषः । अश्विना । प्र । देवि । सूनृते । महि ।

प्र । यज्ञऽहोतः । आनुषक् । प्र । मदाय । श्रवः । बृहत् ॥ १७ ॥

हे उषः अश्विनौ देवौ प्र बोधय अस्मत्स्तोत्रस्य श्रवणार्थम्। हे देवि दानादिगुणयुक्ते हे सूनृते सुष्ठु नेत्रि हे महि महति इत्थंमहाभागा त्वमश्विनौ प्र बोधय। हे यज्ञहोतः यज्ञानां यष्टव्यानां देवानामाह्वातर्होतर्वा आनुषक् अनुषक्तं संततं यथा भवति तथाश्विनौ स्तुतिभिः प्र बोधय। तथा मदाय अश्विनोर्मदोत्पादनार्थं बृहत् महत् श्रवः श्रवणीयं सोमलक्षणमन्नमस्माभिः कल्पितम् ॥

यदुषो यासि भानुना सं सूर्येण रोचसे ।

आ हायमश्विनो रथो वर्तिर्याति नृपाय्यम् ॥ १८ ॥

यत् । उषः । यासि । भानुना । सम् । सूर्येण । रोचसे ।

आ । ह । अयम् । अश्विनोः । रथः । वर्तिः । याति । नृऽपाय्यम् ॥ १८ ॥

हे उषः भानुना दीप्त्या सह यत् यदा यासि गच्छसि तदानीं सूर्येण सं रोचसे सम्यग्दीप्यसे। अपि च तस्मिन् समये अश्विनोः अयं रथः नृपाय्यं यत् नृभिर्नेतृभिर्ऋत्विग्भिः पालनीयं वर्तिः यज्ञगृहम् आ याति ह आगच्छति खलु ॥

यदापीतासो अंशवो गावो न दुह्र ऊधभिः ।

यद्वा वाणीरनूषत प्र देवयन्तो अश्विना ॥ १९ ॥

यत् । आऽपीतासः । अंशवः । गावः । न । दुह्रे । ऊधऽभिः ।

यत् । वा । वाणीः । अनूषत । प्र । देवऽयन्तः । अश्विना ॥ १९ ॥

यत् यदा आपीतासः आ समन्तात् पीतवर्णाः अंशवः सोमलताः ऊधभिः गावो न गाव इव दुह्रे रसं[1] दुहते[1]। 'लोपस्त आत्मनेपदेषु' इति तलोपः[2]। 'बहुलं छन्दसि' इति रुडागमः। यद्वा यदा च देवयन्तः देवान् कामयमाना ऋत्विजः वाणीः वाचः स्तुतीः अनूषत अस्तुवन्। अकुर्वन्नित्यर्थः। तदाश्विनौ देवौ प्रावतं प्ररक्षतम् ॥

प्र द्युम्नाय प्र शवसे प्र नृषाह्याय शर्मणे । प्र दक्षाय प्रचेतसा ॥ २० ॥

प्र । द्युम्नाय । प्र । शवसे । प्र । नृऽसह्याय । शर्मणे । प्र । दक्षाय । प्रऽचेतसा ॥ २० ॥

प्रचेतसा प्रकृष्टज्ञानावश्विनौ द्युम्नाय द्योतमानायान्नाय यशसे वा। तादर्थ्ये चतुर्थी। द्युम्नार्थमस्मान् प्ररक्षतम्। शवसे बलाय च प्ररक्षतम्। नृषह्याय[3] नृभिः सोढव्याय शर्मणे सुखाय च प्ररक्षतम्। दक्षाय वृद्ध्यर्थं प्ररक्षतम्। यद्वा। द्युम्नायेत्यादौ 'क्रियाग्रहणमपि कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी। द्युम्नादीन्यस्मभ्यं प्रयच्छतमित्यर्थः ॥

यन्नूनं धीभिरश्विना पितुर्योना निषीदथः । यद्वा सुम्नेभिरुक्थ्या ॥ २१ ॥

---

१. ख-भ- संदुहते; घ-दुहते; ज्ञ-त२-४-असंदुहते; न-सं संदुहते। २. ख-झ-त२-श-लोपः; त४- ललोपः। ३. ख-नृषाह्याय; श-नृषह्ये।

यत् । नूनम् । धीभिः । अश्विना । पितुः । योना । निऽसीदथः ।
यत् । वा । सुम्नेभिः । उक्थ्या ॥ २१ ॥

हे अश्विनौ vपितुः पालयितुर्द्युलोकस्य संबन्धिनि vयोना योनौ स्थाने vयत्[1] यदि[1] vधीभिः कर्मभिः सह vनिषीदथः निवसथः । vयद्वा यदि वा हे vउक्थ्या उक्थ्यौ प्रशस्यौ vसुम्नेभिः सुम्नैः सुखैः सह निवसथः । तदास्माभिः स्तुतौ सन्तावागच्छतमिति शेषः । अथवा । पितुः पालयितुर्यजमानस्य संबन्धिनि योनौ यज्ञगृहे धीभिः स्तुतिभिः सार्धं यदि निवसथः यदि च सुम्नैः सुखकरैर्हविर्भिश्च सह निवसथः तर्ह्यागच्छतम् । vनूनम् इति पदपूरणः । उक्तं च यास्केन—'अथापि पदपूरणः । नूनं सा ते प्रति वरं जरित्रे' ( निरु. १. ७ ) इति ॥ ॥ ३३ ॥

'यत्स्थः' इति षडृचं पञ्चमं सूक्तं कण्वपुत्रस्य प्रगाथस्यार्षमाश्विनम् । आद्या बृहती । द्वितीया मध्येज्योतिस्त्रिष्टुप् 'यतोऽष्टकस्ततो ज्योतिः' ( अनु. ९. ८ ) इत्युक्तलक्षणसद्भावात् । तृतीयानुष्टुप् चतुर्थी आस्तारपङ्क्तिः । 'अन्त्यौ चेदास्तारपङ्क्तिः' ( अनु. ८. ७ ) इति हि तल्लक्षणम् । पञ्चमी बृहती षष्ठी सतोबृहती । तथा चानुक्रान्तं—'यत्स्थः षट् प्रगाथोऽपश्यद्बृहती मध्येज्योतिरनुष्टुबास्तारपङ्क्तिः प्रगाथः' इति । प्रातरनुवाकाश्विने क्रतौ बार्हते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्र्यते हि—'द्युम्नी वां यत्स्थ इति बार्हतम्' ( आश्व. श्रौ. ४. १५ ) इति ॥

यत्स्थो दीर्घप्रसद्मनि यद्वादो रोचने दिवः ।
यद्वा समुद्रे अध्याकृते गृहेऽत आ यातमश्विना ॥ १ ॥

यत् । स्थः । दीर्घऽप्रसद्मनि । यत् । वा । अदः । रोचने । दिवः ।
यत् । वा । समुद्रे । अधि । आऽकृते । गृहे । अतः । आ । यातम् । अश्विना ॥ १ ॥

हे अश्विनौ vदीर्घप्रसद्मनि । प्रसीदन्ति एषु देवा इति प्रसद्मानो यज्ञगृहाः । दीर्घा आयताः प्रसद्मानो यस्मिन्[2] तस्मिँल्लोके[2] vयत् यदि vस्थः भवथः वर्तेथे । vयद्वा यदि वा vअदः अमुष्मिन् vदिवः द्युलोकस्य संबन्धिनि vरोचने रोचमाने स्थाने भवथः । vयद्वा यदि वा vसमुद्रे अन्तरिक्षे । समुद्द्रवन्त्यस्मादाप इति समुद्रमन्तरिक्षम् । तस्मिन् । vआकृते निर्मिते vगृहे अधिवसथः । vअतः त्रितयादपि स्थानात् हे अश्विनौ vआ vयातम् आगच्छतम् ॥

यद्वा यज्ञं मनवे संमिमिक्षथुरेवेत्काण्वस्य बोधतम् ।
बृहस्पतिं विश्वान्देवाँ अहं हुव इन्द्राविष्णू अश्विनावाशुहेषसा ॥ २ ॥

यत् । वा । यज्ञम् । मनवे । सम्ऽमिमिक्षथुः । एव । इत् । काण्वस्य । बोधतम् ।
बृहस्पतिम् । विश्वान् । देवान् । अहम् । हुवे । इन्द्राविष्णू इति । अश्विनौ । आशुऽहेषसा ॥२॥

हे अश्विनौ vयद्वा यथा वा येन वा[3] प्रकारेण vमनवे प्रजापतये यजमानाय vयज्ञं vसंमिमिक्षथुः संसिक्तवन्तौ युवां कृतवन्तौ vएवेत् एवमेव vकाण्वस्य कण्वगोत्रस्य मम यज्ञं कर्तुं vबोधतम् अवगच्छतम् । अपि च vबृहस्पतिं बृहतां देवानां पतिं देवपुरोहितं vविश्वान् सर्वान्[4] मित्रादीन् vदेवान् च vइन्द्राविष्णू च vआशुहेषसा शीघ्राश्वौ । यद्वा । 'हेषृ शब्दे' । शीघ्रं सर्वत्र शब्द्यमानौ[5] स्तूयमानौ vअश्विनौ च vअहं vहुवे आह्वये ॥

---

१. ख-भ—यद्यदा; घ—यदि । २. ख-श—अस्मिन् तस्मि°; घ—यस्मि° । ३. ज्ञ-त१-२-श—'वा' नास्ति । ४. ज्ञ-त१-२-४-य-श—देवान् । ५. ख-भ—शब्दमानौ; श—शिष्यमाणौ ।

त्या न्व१श्विना हुवे सुदंससा गृभे कृता ।
ययोरस्ति प्र णः सख्यं देवेष्वध्याप्यम् ॥ ३ ॥

त्या । नु । अश्विना । हुवे । सुऽदंससा । गृभे । कृता ।
ययोः । अस्ति । प्र । नः । सख्यम् । देवेषु । अधि । आप्यम् ॥ ३ ॥

त्या त्यौ पूर्वोक्तगुणावश्विनौ नु क्षिप्रम् अहम् हुवे आह्वयामि । कीदृशौ । सुदंससा शोभनकर्माणौ गृभे ग्रहे[1] ग्रहणायास्माभिर्दत्तानां हविषां स्वीकरणायास्मभ्यं धनदानाय वा कृता कृतौ प्रादुर्भूतौ देवेषु मध्ये । अधिः सप्तम्यर्थानुवादी । ययोः अश्विनोः आप्यम् आप्तव्यं नः अस्माकं सख्यं सखित्वं प्र अस्ति प्रभवति उत्कर्षेण वर्तते तौ हुव इत्यन्वयः ॥

ययोरधि प्र यज्ञा असूरे सन्ति सूरयः ।
ता यज्ञस्याध्वरस्य प्रचेतसा स्वधाभिर्या पिबतः सोम्यं मधु ॥ ४ ॥

ययोः । अधि । प्र । यज्ञाः । असूरे । सन्ति । सूरयः ।
ता । यज्ञस्य । अध्वरस्य । प्रऽचेतसा । स्वधाभिः । या । पिबतः । सोम्यम् । मधु ॥ ४ ॥

ययोः अश्विनोः अधि उपरि यज्ञाः ज्योतिष्टोमादयः सर्वे यागाः प्र सन्ति प्रभवन्ति[2] । छिन्नस्य यज्ञशिरसोऽश्विभ्यां संधानात् । तथा च 'यज्ञस्य शिरोऽच्छिद्यत' इत्युपक्रम्य तैत्तिरीयकं– 'तावेतद्यज्ञशिरः प्रत्यधत्तां यदाश्विनो गृह्यते यज्ञस्य निष्कृत्यै' (तै. सं. ६. ४. ९. १) इति । असूरे स्तोतृरहितेऽपि देशे ययोश्च सूरयः स्तोतारः सन्ति तावश्विनौ अध्वरस्य हिंसाप्रत्यवायरहितस्य यज्ञस्य ज्योतिष्टोमादेः प्रचेतसा प्रकृष्टं ज्ञातारौ स्वधाभिः बलहेतुभिः स्तुतिभिराह्वयामीति शेषः । या यावश्विनौ सोम्यं सोममयं मधु मधुरं सोमरसं पिबतः ॥

यदद्याश्विनावपाग्यत्प्राक्स्थो वाजिनीवसू ।
यद्द्रुह्यव्यनवि तुर्वशे यदौ हुवे वामथ मा गतम् ॥ ५ ॥

यत् । अद्य । अश्विनौ । अपाक् । यत् । प्राक् । स्थः । वाजिनीवसू इति वाजिनीऽवसू ।
यत् । द्रुह्यवि । अनवि । तुर्वशे । यदौ । हुवे । वाम् । अथ । मा । आ । गतम् ॥ ५ ॥

हे अश्विनौ अद्य इदानीं यत् यदि अपाक् प्रतीच्यां दिशि स्थः भवथः वर्तेथे । हे वाजिनीवसू अन्नवद्धनौ यत् यदि प्राक् प्राच्यां दिशि स्थः भवथः । यत् यदि वा द्रुह्युप्रभृतिषु[3] चतुर्षु स्तोतृषु[3] संनिहितौ भवथः । एवं सर्वत्र संनिहितौ वां युवां हुवे अहमाह्वयामि । अथ अनन्तरमेव मा माम् आ गतम् आगच्छतम् ॥

यदन्तरिक्षे पतथः पुरुभुजा यद्वेमे रोदसी अनु ।
यद्वा स्वधाभिरधितिष्ठथो रथमत आ यातमश्विना ॥ ६ ॥

यत् । अन्तरिक्षे । पतथः । पुरुऽभुजा । यत् । वा । इमे इति । रोदसी इति । अनु ।
यत् । वा । स्वधाभिः । अधिऽतिष्ठथः । रथम् । अतः । आ । यातम् । अश्विना ॥ ६ ॥

---

१. ख-ज्ञ-क्ष-त२-३-न-भ–गृहे । २. ख-भ–भवंति । ३. ज्ञ–द्रुह्यवि अनवि तुर्वशे यदौ ।

हे पुरुभुजा बहूनां पालयितारौ बहुलहविषो भोक्तारौ वा यत् यदि अन्तरिक्षे पतथः गच्छथः । यद्वा यदि वा इमे रोदसी द्यावापृथिव्यौ अनुलक्ष्य गच्छथः । यद्वा यदि वा स्वधाभिः आत्मीयैस्तेजोभिर्बलैर्वा सार्धं रथम् अधितिष्ठथः रथे उपविशथः । 'अधिशीङ्स्थासाम्' इत्याधारस्य कर्मसंज्ञा । अतः सर्वस्मात् स्थानात् हे अश्विनौ आ यातम् आगच्छतम् ॥ ॥३४॥

'त्वमग्ने' इति दशर्चं षष्ठं सूक्तं कण्वगोत्रस्य वत्सस्यार्षमाग्नेयम् । आद्या प्रतिष्ठागायत्री अष्टकसप्तकषट्कोपेतत्वात् । द्वितीया वर्धमाना षट्सप्तकाष्टकोपेतत्वात् । तथा चोक्तं—'षट्सप्तकाष्टकैर्वर्धमाना विपरीता प्रतिष्ठा' ( पि. सू. ३. १४-१५ ) इति । दशमी त्रिष्टुप् शिष्टा गायत्र्यः । तथा चानुक्रान्तं—'त्वमग्ने दश वत्स आग्नेये गायत्रेऽन्त्या त्रिष्टुबाद्या प्रतिष्ठोपाद्या वर्धमाना' इति । प्रातरनुवाकस्याग्नेये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चोत्तमावर्जमेतत्सूक्तम् । सूत्र्यते हि—'त्वमग्ने व्रतपा इत्युत्तमामुद्धरेत्' ( आश्व. श्रौ. ४. १३ ) इति । व्रातपत्यामाद्यानुवाक्या । सूत्रितं च—'त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रतानि' ( आश्व. श्रौ. ३. १३ ) इति ॥

त्वम॑ग्ने व्रत॒पा अ॑सि दे॒व आ मर्त्ये॒ष्वा । त्वं य॒ज्ञेष्वीड्यः॑ ॥ १ ॥

त्वम् । अ॒ग्ने॒ । व्र॒त॒ऽपाः । अ॒सि॒ । दे॒वः । आ । मर्त्ये॑षु । आ । त्वम् । य॒ज्ञेषु॑ । ईड्यः॑ ॥ १ ॥

हे अग्ने देवः द्योतमानः त्वं मर्त्येष्वा मनुष्येषु च देवेषु च मध्ये व्रतपाः असि । व्रतानां कर्मणां रक्षिता भवसि । अतः कारणात् यज्ञेषु त्वम् ईड्यः स्तुत्योऽसि ॥

त्वम॑सि प्र॒शस्यो॑ वि॒दथे॑षु सहन्त्य । अग्ने॑ र॒थीर॑ध्व॒राणा॑म् ॥ २ ॥

त्वम् । अ॒सि॒ । प्र॒ऽश॒स्यः॑ । वि॒दथे॑षु । स॒ह॒न्त्य॒ । अग्ने॑ । र॒थीः । अ॒ध्व॒राणा॑म् ॥ २ ॥

हे सहन्त्य शत्रूणामभिभवितः अग्ने विदथेषु यज्ञेषु त्वं प्रशस्यः स्तुत्यः असि । अध्वराणां यागानां रथीः नेता च भवसि ॥

स त्वम॒स्मदप॒ द्विषो॑ युयो॒धि जा॑तवेदः । अदे॑वीरग्ने॒ अरा॑तीः ॥ ३ ॥

सः । त्वम् । अ॒स्मत् । अप॑ । द्विषः॑ । यु॒यो॒धि । जा॒त॒ऽवे॒दः॒ । अदे॑वीः । अ॒ग्ने॒ । अरा॑तीः ॥३॥

हे जातवेदः जातानां वेदितः अग्ने सः पूर्वोक्तगुणः त्वम् अस्मत् अस्मत्तः द्विषः द्वेष्टॄञ्छत्रून् अप युयोधि पृथक्कुरु । अदेवीः आसुरीः अरातीः शत्रुसेनाश्च पृथक्कुरु ॥

अन्ति॑ चि॒त्सन्त॒मह॑ य॒ज्ञं मर्त॑स्य रि॒पोः । नोप॑ वेषि जातवेदः ॥ ४ ॥

अन्ति॑ । चि॒त् । सन्त॑म् । अह॑ । य॒ज्ञम् । मर्त॑स्य । रि॒पोः । न । उप॑ । वे॒षि॒ । जा॒त॒ऽवे॒दः॒ ॥४॥

हे जातवेदः अन्ति चित् अन्तिकेऽपि सन्तं भवन्तं समीपे विद्यमानमपि रिपोः अस्मच्छत्रोः मर्तस्य मनुष्यस्य यज्ञं नोप वेषि । अहशब्दोऽवधारणे[1] । नैव कामयसे[1] ॥

मर्ता॒ अम॑र्त्यस्य ते॒ भूरि॒ नाम॑ मनामहे । विप्रा॑सो जा॒तवे॑दसः ॥ ५ ॥

मर्ताः॑ । अम॑र्त्यस्य । ते॒ । भूरि॑ । नाम॑ । म॒ना॒म॒हे॒ । विप्रा॑सः । जा॒तऽवे॑दसः ॥ ५ ॥

मर्ताः मनुष्याः विप्रासः मेधाविनो वयं हे अग्ने जातवेदसः जातानां वेदितुः अमर्त्यस्य मरणरहितस्य देवस्य भूरि विस्तृतं नाम स्तोत्रं मनामहे जानीमः । कुर्म इति यावत् ॥ ॥ ३५ ॥

विप्रं॒ विप्रा॑सोऽवसे दे॒वं मर्ता॑स ऊ॒तये॑ । अ॒ग्निं गी॒र्भिर्ह॑वामहे ॥ ६ ॥

---

१. श—नेच्छसि ।

विप्रम् । विप्रासः । अवसे । देवम् । मर्तासः । ऊतये । अग्निम् । गीःऽभिः । हवामहे ॥ ६ ॥

^विप्रासः मेधाविनः ^मर्तासः मर्ता मनुष्या वयं ^विप्रं मेधाविनं ^देवं दानादिगुणयुक्तम् ^अग्निम् ^अवसे हविर्भिस्तर्पयितुम् ^ऊतये अस्माकं रक्षणार्थं च ^गीर्भिः स्तुतिभिः ^हवामहे आह्वयामहे ॥

आभिप्लविकेषूक्थ्येषु तृतीयसवने 'आ ते वत्सः' इति वैकल्पिकः स्तोत्रियस्तृचः । सूत्रितं च— 'आ ते वत्सो मनो यमदाग्ने स्थूरं रयिं भर' (आश्व. श्रौ. ७. ८) इति ॥

**आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् । अग्ने त्वांकामया गिरा ॥ ७ ॥**

आ । ते । वत्सः । मनः । यमत् । परमात् । चित् । सधऽस्थात् । अग्ने । त्वाम्ऽकामया । गिरा ॥ ७ ॥

हे ^अग्ने ^वत्सः ऋषिः ^ते तव ^मनः ^परमाच्चित् उत्कृष्टादपि ^सधस्थात् सहस्थानात् द्युलोकात् ^आ ^यमत् आयमयति । केन साधनेन । ^त्वांकामया त्वामभिलषन्त्या ^गिरा स्तुत्या ॥

**पुरुत्रा हि सदृङ्ङसि विशो विश्वा अनु प्रभुः । समत्सु त्वा हवामहे ॥ ८ ॥**

पुरुऽत्रा । हि । सऽदृङ् । असि । विशः । विश्वाः । अनु । प्रऽभुः । समत्ऽसु । त्वा । हवामहे ॥ ८ ॥

हे अग्ने ^पुरुत्रा ^हि बहुषु देशेषु त्वं ^सदृङ्ङसि समानं द्रष्टा भवसि । अत एव ^विश्वाः सर्वाः ^विशः प्रजा अनुलक्ष्य ^प्रभुः ईश्वरो भवसि । ईदृशं त्वां ^समत्सु संग्रामेषु रक्षणार्थं ^हवामहे आह्वयामहे ॥

**समत्स्वग्निमवसे वाजयन्तो हवामहे । वाजेषु चित्रराधसम् ॥ ९ ॥**

समत्ऽसु । अग्निम् । अवसे । वाजऽयन्तः । हवामहे । वाजेषु । चित्रऽराधसम् ॥ ९ ॥

^समत्सु सहमदनेषु संग्रामेषु ^वाजयन्तः बलमिच्छन्तो वयम् ^अवसे रक्षणार्थम् ^अग्निं ^हवामहे । कीदृशम् । ^वाजेषु संग्रामेषु ^चित्रराधसं चायनीयधनम् ॥

**प्रत्नो हि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि ।**
**स्वां चाग्ने तन्वं पिप्रयस्वास्मभ्यं च सौभगमा यजस्व ॥ १० ॥**

प्रत्नः । हि । कम् । ईड्यः । अध्वरेषु । सनात् । च । होता । नव्यः । च । सत्सि ।
स्वाम् । च । अग्ने । तन्वम् । पिप्रयस्व । अस्मभ्यम् । च । सौभगम् । आ । यजस्व ॥ १० ॥

हे अग्ने ^अध्वरेषु यज्ञेषु[1] ^ईड्यः स्तुत्यस्त्वं ^प्रत्नो ^हि चिरंतनः खलु भवसि । ^कम् इति पूरकः । तथा ^सनात् चिरकालादारभ्य ^होता देवानामाह्वाता ^च सन् ^नव्यः स्तुत्यः ^च सन् ^सत्सि यज्ञेषु निषीदसि । हे ^अग्ने देवानां हविर्वहंस्त्वं ^स्वां ^च ^तन्वम् आत्मीयं च शरीरं ^पिप्रयस्व त्वदीयेन हविर्भागेन तर्पय । ^अस्मभ्यं स्तोतृभ्यश्च ^सौभगं सुभगत्वं ^च ^आ ^यजस्व प्रदेहि । सुभगशब्दाद्भावार्थे 'सुभगान्मन्त्रे[2]' इति उद्गात्रादिषु पाठात् अञ्प्रत्ययः ॥ ॥ ३६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पञ्चमाष्टकेऽष्टमोऽध्यायः समाप्तः ॥

---

१. ख-ञ्ञ-न-भ-'यज्ञेषु' नास्ति । २. ख-ञ्ञ-त-न-भ-सुभगमंत्रे ।

ॐ

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः[1] सुमनसः सर्वार्थानामुपक्रमे।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम्[1] ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

इत्थं पञ्चमाष्टकं व्याख्यायेदानीमृषिच्छन्दोदेवताविनियोगप्रदर्शनपुरःसरं षष्ठस्य प्रथमोऽध्यायो व्याख्यातुमारभ्यते। अष्टममण्डलस्य द्वितीयेऽनुवाके षट् सूक्तानि जातानि[2]। 'य इन्द्र' इति त्रयस्त्रिंशदृचं सप्तमं सूक्तं कण्वगोत्रस्य पर्वताख्यस्यार्षमौष्णिहमैन्द्रम्। तथा चानुक्रान्तं—'य इन्द्र त्रयस्त्रिंशत्पर्वत औष्णिहं तु' इति। महाव्रते निष्केवल्य औष्णिहतृचाशीताविदमादिके द्वे सूक्ते। तथैव पञ्चमारण्यके सूत्र्यते—'औष्णिही तृचाशीतिर्य इन्द्र सोमपातम इति सूक्ते' (ऐ. आ. ५. २. ५) इति। दशमेऽहनि निष्केवल्य आदितः षडृचः शंसनीयाः। सूत्र्यते हि—'य इन्द्र सोमपातम इति षळुष्णिहः' (आश्व. श्रौ. ८. १२) इति। आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्रह्मशस्त्र आद्यस्तृचो वैकल्पिकोऽनुरूपः। सूत्रितं च—'य इन्द्र सोमपातम एन्द्र नो गधि' (आश्व. श्रौ. ७. ८) इति। तृतीये पर्यायेऽच्छावाकशस्त्रेऽप्ययमेव तृचोऽनुरूपः। सूत्रितं च—'इन्द्रः सुतेषु सोमेषु य इन्द्र सोमपातमः' (आश्व. श्रौ. ६. ४) इति ॥

**य इन्द्र सोमपातमो मदः शविष्ठ चेतति। येना हंसि न्यत्रिणं तमीमहे ॥१॥**

यः। इन्द्र। सोमऽपातमः। मदः। शविष्ठ। चेतति। येन। हंसि। नि। अत्रिणम्। तम्। ईमहे ॥१॥

हे इन्द्र यः त्वं सोमपातमः अतिशयेन सोमस्य पाता। हे शविष्ठ बलवत्तम। शव इति बलनाम। तस्माद्विनन्तादातिशायनिक इष्ठन्। 'विन्मतोर्लुक्'। टिलोपः। हे ईदृशेन्द्र तस्य तव सोमपानजनितो यः मदः चेतति सम्यग्जानाति वृत्रवधादीनि कार्याणि[3] कर्तुम्। य इत्यस्य चेततीत्यनेनापि संबन्धात् 'यद्वृत्तान्नित्यम्' इति तिङ् न निहन्यते। अथवैतदेवं[4] वाक्यम्। हे बलवत्तमेन्द्र[5] सोमपातमः सोमस्य पातृतमो यस्त्वं मदः सोमैर्मादयितव्यस्तर्पणीयः[6] संश्चेतति। पुरुषव्यत्ययः। चेतसि सम्यग्जानासि। 'मदोऽनुपसर्गे' इति मदेः कर्मण्यप्। येन सोमपानजनितेन[7] मदेन अत्रिणम् अत्तारं राक्षसादिकं नि हंसि निहिनस्सि निकृष्टां हिंसां प्रापयसि तं मदं तादृङ्मदोपेतं त्वां वा ईमहे। याच्ञाकर्मायम्। याचामहे। यद्वा। 'ईङ्[8] गतौ'। दैवादिकः। छान्दसो विकरणस्य लुक्। ईयामहे[9] उपगच्छामः। स्तुतिभिः संभजामह[10] इत्यर्थः ॥

**येना दशग्वमध्रिगुं वेपयन्तं स्वर्णरम्। येना समुद्रमाविथा तमीमहे ॥ २ ॥**

येन। दशऽग्वम्। अध्रिऽगुम्। वेपयन्तम्। स्वःऽनरम्। येन। समुद्रम्। आविथ। तम्। ईमहे ॥२॥

हे इन्द्र येन सोमपानजनितेन मदेन दशग्वम्। ये दशभिर्मासैः सत्त्रासनं परिसमाप्य निरगमन् ते दशग्वा अङ्गिरसः। तेषामन्यतमम् अध्रिगुम् अधृतगमनमनिवारितगतिमेतत्संज्ञं[11] चर्षिं[11]

---

१. ख-ग-घ-त२-४-न-भ-श—'वागीशाद्याः... गजाननं' नास्ति। २. ग-न-भ-श—गतानि; त४—तानि। ३. ग—कर्माणि। ४. ग-न—अथवैतदेव; भ—अथवैतदेक। ५. ग—बलवन् त्वमिन्द्र। ६. ग—°स्तर्पयितव्यः। ७. ख-त-न-भ२-श—सोमपानाय जनितेन; ग—सोमपानेन जनितेन। ८. श—ईङ्। ९. भ२-श—ईमहे। १०. ग—संभजाम। ११. ग—°मेतत्संज्ञकं वा ऋषिं।

ᵛवेपयन्तं तमांसि वर्जयन्तं ᵛस्वर्णरं सर्वस्य नेतारं सूर्यं च ᵛआविथ वृत्रादेर्दस्योरपनयनेन[1] ररक्षिथ । ᵛयेन च मदेन ᵛसमुद्रम् उदधिमन्तरिक्षं वा आविथ ररक्षिथ । ᵛतं त्वदीयं मदं तद्वन्तं त्वां वा ᵛईमहे याचामहे । मदे हि सति हृष्टः[2] सन्निन्द्रो बहु धनं प्रयच्छति । अतस्तत्कारणस्य मदस्य याच्ञोपपन्ना ॥

येन सिन्धुं महीरपो रथाँइव प्रचोदयः । पन्थामृतस्य यातवे तमीमहे ॥३॥

येन॑ । सिन्धु॑म् । म॒हीः । अ॒पः । रथा॑न्ऽइव । प्र॒ऽचो॒दय॑ः ।
पन्था॑म् । ऋ॒तस्य॑ । या॒त॑वे । तम् । ई॒म॒हे॒ ॥ ३ ॥

हे इन्द्र ᵛमहीः महतीः ᵛअपः वृष्ट्युदकानि ᵛसिन्धुं स्यन्दनशीलां नदीं समुद्रं वा प्रति ᵛयेन सोमपानजन्येन मदेन ᵛप्रचोदयः प्रेरयसि । तत्र दृष्टान्तः । ᵛरथानिव । यथा रथिनो रथान् स्वाभिलषितदेशगमनाय प्रेरयन्ति तद्वत् । ᵛऋतस्य यज्ञस्य ᵛपन्थां पन्थानं मार्गं ᵛयातवे यातुं प्राप्तुं ᵛतं मदम् ᵛईमहे याचामहे ॥

इमं स्तोममभिष्टये घृतं न पूतमद्रिवः । येना नु सद्य ओजसा ववक्षिथ ॥४॥

इ॒मम् । स्तोम॑म् । अ॒भिष्ट॑ये । घृ॒तम् । न । पू॒तम् । अ॒द्रि॒ऽव॒ः ।
येन॑ । नु । स॒द्यः । ओज॑सा । व॒वक्षि॑थ ॥ ४ ॥

हे ᵛअद्रिवः वज्रवन्निन्द्र ᵛघृतं ᵛन घृतमिव मन्त्रपूतमाज्यमिव ᵛपूतं शुद्धम् ᵛइमम् अस्मदीयं ᵛस्तोमं स्तोत्रं बुध्यस्वेति शेषः । किमर्थम् । ᵛअभिष्टये अभिप्राप्त्यै । इष्टस्य धनादेरस्माकं लाभायेत्यर्थः । ᵛयेन स्तोत्रेण स्तूयमानः सन् ᵛओजसा आत्मीयेन बलेन ᵛसद्यः तदानीमेव स्तुतिसमय[3] एव[3] ᵛनु क्षिप्रं ᵛववक्षिथ अस्मान् वहसि अभिलषितं प्रापयसि इमं स्तोममित्यन्वयः ॥

इमं जुषस्व गिर्वणः समुद्रइव पिन्वते । इन्द्र विश्वाभिरूतिभिर्ववक्षिथ ॥५॥

इ॒मम् । जु॒षस्व॒ । गि॒र्व॒णः॒ । स॒मु॒द्रःऽइ॑व । पि॒न्व॒ते॒ । इन्द्र॑ । विश्वा॑भिः । ऊ॒तिऽभि॑ः । व॒वक्षि॑थ ॥५॥

हे ᵛगिर्वणः गिरां स्तुतीनां संभक्तः यद्वा स्तुतिभिः संभजनीयेन्द्र ᵛइमं स्तोमं मया क्रियमाणं ᵛजुषस्व सेवस्व । स च स्तोमः ᵛसमुद्रइव समुद्रो यथा चन्द्रोदयं प्राप्य ᵛपिन्वते[4] वर्धते । अभिधेयस्येन्द्रगुणगणस्याधिक्येन तत्प्रतिपादिका स्तुतिरपि विस्तृता भवतीत्यर्थः ॥ पूर्वस्यामृचि ववक्षिथेत्यनेन युक्तो येनेति शब्दोऽत्रापि सामर्थ्यात्तेन संबध्यते । अत एवास्य 'तिङ्ङतिङः' इति निघाताभावः ॥ हे ᵛइन्द्र येन स्तोमेन हेतुना ᵛविश्वाभिः व्याप्ताभिः ᵛऊतिभिः रक्षाभिः ᵛववक्षिथ वहसि श्रेयांस्यस्मान् प्रापयसि ॥ वहेः सनन्ताल्लिटि '॰अमन्त्रे॰' इति निषेधादामभावे थलि लिटि रूपमेतत् ॥ ॥ १ ॥

यो नो देवः परावतः सखित्वनाय मामहे । दिवो न वृष्टिं प्रथयन्ववक्षिथ ॥६॥

यः । नः॒ । दे॒वः । प॒रा॒ऽवत॑ः । स॒खि॒ऽत्व॒नाय॑ । म॒म॒हे ।
दि॒वः । न । वृ॒ष्टिम् । प्र॒थय॑न् । व॒वक्षि॑थ ॥ ६ ॥

---

१. ख-घ१-ञ-त-२-४-भ२–॰र्दस्योरपनयने; न–॰र्दस्योरपनयनैनं; भ१–॰र्दढस्यापनयनेन; श–॰र्दस्योरपनयेन । २. ग–तृप्तः । ३. ख-ञ-त२–॰समयामेव; ग-न-भ–॰समयमेव; त४–॰समयामवं । ४. ख-ग-त-भ-श–' पिन्वते ' नास्ति ।

ᵛयः ᵛदेवः दानादिगुणयुक्त इन्द्रः ᵛपरावतः परावताद्दूरात् द्युलोकादागत्य ᵛनः अस्माकं ᵛसखित्वनाय सखित्वाय ᵛमामहे धनानि[1] प्रददौ। मंहतेर्दानकर्मण एतद्रूपम्। यद्वा। अस्माभिः पूज्यते। 'मह पूजायाम्'। अस्माच्छान्दसः कर्मणि लिट्। उत्तरार्धर्चः प्रत्यक्षकृतः। हे इन्द्र ᵛदिवो ᵛन ᵛवृष्टिं दिवः सकाशाद्वृष्टिमिव ᵛप्रथयन् अस्मदीयानि धनानि विस्तारयन् यस्त्वं ᵛववक्षिथ अस्मान् वोढुमिच्छसि तादृशं त्वां स्तौमीति शेषः॥

**व॒व॒क्षुर॑स्य के॒तव॑ उ॒त वज्रो॒ गभ॑स्त्योः। यत्सूर्यो॒ न रोद॑सी॒ अव॑र्धयत्॥ ७॥**

व॒व॒क्षुः। अ॒स्य॒। के॒तवः॑। उ॒त। वज्रः॑। गभ॑स्त्योः। यत्। सूर्यः॑। न। रोद॑सी॒ इति॑। अव॑र्धयत्॥७॥

ᵛअस्य इन्द्रस्य ᵛकेतवः प्रज्ञानान्यस्मत्स्तुतिविषयाणि। यद्वा। रथे उत्क्षिप्ताः पताकाः केतवः। ᵛववक्षुः अवहन्। अस्माञ्छ्रेयांसि प्रापयन्। ᵛउत अपि च ᵛगभस्त्योः। बाहुनामैतत्। इन्द्रस्य हस्तयोरवस्थितः ᵛवज्रः च अवहत्। ᵛयत् यदायमिन्द्रः ᵛसूर्यो ᵛन सर्वस्य प्रेरक आदित्य इव ᵛरोदसी द्यावापृथिव्यौ वृष्ट्यादिप्रदानेन ᵛअवर्धयत् तदानीमित्यर्थः॥

**यदि॑ प्रवृद्ध सत्पते स॒हस्रं॑ महि॒षाँ अघः॑। आदित्त॑ इन्द्रि॒यं महि॒ प्र वा॑वृधे॥८॥**

यदि॑। प्र॒ऽवृ॒द्ध॒। स॒त्ऽप॒ते॒। स॒हस्र॑म्। म॒हि॒षान्। अघः॑।
आत्। इत्। ते॒। इ॒न्द्रि॒यम्। महि॑। प्र। व॒वृ॒धे॒॥ ८॥

हे ᵛप्रवृद्ध प्रकर्षेण महन् हे ᵛसत्पते सतामनुष्ठातॄणां[2] पालयितरिन्द्र ᵛसहस्रं सहस्रसंख्याकान् ᵛमहिषान्। महन्नामैतत्। महतोऽसुरान् वृत्रादीन् ᵛयदि यदा ᵛअघः अवधीः। हन्तेश्छान्दसमेतद्रूपम्। यद्वा। 'घस्लृ अदने'। लुङि सिपि 'मन्त्रे घस॰' इति च्लेर्लुक्। ᵛआदित् अनन्तरमेव हे इन्द्र ᵛते तव ᵛइन्द्रियं वीर्यं ᵛमहि महद्बहुलं[3] सत् ᵛप्र ᵛवावृधे प्रकर्षेण वर्धते॥

**इन्द्रः॒ सूर्य॑स्य र॒श्मिभि॒र्न्य॑र्शसा॒नमो॑षति। अ॒ग्निर्वने॑व सास॒हिः प्र वा॑वृधे॥९॥**

इन्द्रः॑। सूर्य॑स्य। र॒श्मिऽभिः॑। नि। अ॒र्श॒सा॒नम्। ओ॒ष॒ति॒।
अ॒ग्निः। वना॑ऽइव। स॒स॒हिः। प्र। व॒वृ॒धे॒॥ ९॥

अयम् ᵛइन्द्रः ᵛसूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य ᵛरश्मिभिः किरणैः करणभूतैः ᵛअर्शसानम्॥ 'अर्तेर्गुणः शुट् च' (उ. सू. २. २४५) इति 'ऋ गतौ' इत्यस्मादसानच्प्रत्ययः शुडागमश्च। अत्र केवलोऽप्यर्तिराङ्पूर्वार्थो द्रष्टव्यः। आङ्पूर्वश्च बाधने वर्तते। यथा 'आर्तिमार्तोः' (श. ब्रा. १३. १. २. ४) इति॥ अर्शसानं बाधमानं मन्देहादिकमसुरं[4] ᵛनि ᵛओषति नितरां दहति। 'उष दाहे'। तत्र दृष्टान्तः। ᵛअग्निर्वनेव। यथा वनारण्यानि[5] दावानलो भस्मसात् करोति तद्वत्। एवं ᵛसासहिः शत्रूणामभिभवनशील इन्द्रः ᵛप्र ᵛवावृधे प्रकर्षेण वर्धते॥

**इ॒यं त॑ ऋ॒त्विया॑वती धी॒तिरे॑ति॒ नवी॑यसी। स॒प॒र्यन्ती॑ पुरुप्रि॒या मिमी॑त॒ इत्॥१०॥**

इ॒यम्। ते॒। ऋ॒त्विय॑ऽवती। धी॒तिः। ए॒ति॒। नवी॑यसी। स॒प॒र्यन्ती॑। पु॒रु॒ऽप्रि॒या। मिमी॑ते। इत्॥१०॥

हे इन्द्र ᵛते त्वाम् ᵛइयं पुरोवर्तिनी मया क्रियमाणा ᵛधीतिः स्तुतिः ᵛएति गच्छति। कीदृशी। ᵛऋत्वियावती। ऋतौ वसन्तादिकालेऽनुष्ठेयं यज्ञकर्म ऋत्वियम्। तद्वती ᵛनवीयसी अति-

१. ग–धनादीनि। २. ग–सतामुत्तमानां। ३. ग–महः प्रबलं; घ–महिमत् सत्। ४. ग–मन्देहनामकम॰ ५. ख-ग-घ-न–वनान्यरण्यानि; त–वनाचरण्यानि।

शयेनाभिनवा स्तुतिः। ᵛसपर्यन्ती पूजयन्ती ᵛपुरुप्रिया पुरु बहुलं प्रीणयित्री सती ᵛमिमीत ᵛइत् इन्द्रगतान् गुणान् परिच्छिनत्त्येव[1]। माहात्म्यं प्रख्यापयत्येव सेयमित्यन्वयः। अनुमीयमानेन[2] यच्छब्देन च योगान्मिमीत इत्यस्य निघाताभावः। यद्वा। सपर्यन्ती पुरुप्रियेतीदमप्येतीत्यनेन[3] संबन्धनीयम्। अतः पूर्वपदस्य भिन्नवाक्यस्थत्वात् 'समानवाक्ये युष्मदस्मदादेशा वक्तव्याः' इति वचनात्तदपेक्षया निघाताभावे सति 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्॥ ॥ २ ॥

गर्भो॑ य॒ज्ञस्य॑ देव॒युः क्रतुं॑ पुनीत आनु॒षक्।
स्तोमै॑रिन्द्र॑स्य वावृधे मिमीत॒ इत्॥ ११॥

गर्भः॑। य॒ज्ञस्य॑। दे॒व॒ऽयुः। क्रतु॑म्। पु॒नी॒ते। आ॒नु॒षक्। स्तोमैः॑। इन्द्र॑स्य। व॒वृ॒धे। मिमी॑ते। इत्॥ ११॥

ᵛयज्ञस्य यष्टव्यस्येन्द्रस्य ᵛगर्भः गरिता स्तोता। 'गॄ शब्दे'। 'अर्तिगृभ्यां भन्'। यद्वा। यजेर्भाव एव नङ्प्रत्ययः। यागस्य गर्भो ग्रहीतानुष्ठाता ᵛदेवयुः देवं दानादिगुणयुक्तमिन्द्रमात्मन इच्छन् ᵛआनुषक् अनुषक्तमानुपूर्व्येण संततं यथा भवति तथा ᵛक्रतुं प्रज्ञापकं सोमं ᵛपुनीते दशापवित्रेण शोधयति। इन्द्रपानार्थमिति शेषः। यद्वा। यज्ञस्य गर्भो दीक्षितः। 'पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति' (ऐ. ब्रा. १. ३) इत्यादि ब्राह्मणम्। स देवकामः क्रतुं ज्योतिष्टोमादिकमानुषक्। आनुपूर्व्यनामैतत्। यदाह यास्कः—'आनुषगिति नामानुपूर्व्यस्य' (निरु. ६. १४) इति[4]। स स्तोता ᵛइन्द्रस्य। कर्मणि षष्ठी। इन्द्रविषयैः ᵛस्तोमैः स्तोत्रैः ᵛववृधे[5] वर्धते। यद्वा। वृधिना प्रयोज्यव्यापारवाचिना प्रयोजकव्यापारो लक्ष्यते। स्तोमैः स्तोत्रैस्तमिन्द्रं वर्धयति। स च स्तोमैः ᵛमिमीत ᵛइत् इन्द्रस्य गुणजातं परिच्छिनत्त्येव। अनुगतार्थो भवतीत्यर्थः॥

स॒निर्मि॒त्रस्य॑ पप्रथ॒ इन्द्रः॒ सोम॑स्य पी॒तये॑।
प्रा॒ची वाशी॑व सुन्व॒ते मिमी॑त॒ इत्॥ १२॥

स॒निः। मि॒त्रस्य॑। प॒प्र॒थे॒। इन्द्रः॑। सोम॑स्य। पी॒तये॑।
प्रा॒ची। वाशी॑ऽइव। सु॒न्व॒ते। मिमी॑ते। इत्॥ १२॥

ᵛमित्रस्य मित्रभूतस्य स्तोतुः ᵛसनिः धनस्य दाता ᵛइन्द्रः ᵛसोमस्य ᵛपीतये पानाय ᵛपप्रथे प्रथितो विस्तीर्णशरीरो बभूव। यथा पीतो बहुलः सोमः उदरेऽन्तर्भवति तथा प्रवृद्धशरीरो बभूवेत्यर्थः। तत्र प्रथमे दृष्टान्तः। ᵛप्राची प्राञ्चन्ती प्रकर्षेण स्तुत्यगुणगणं प्राप्नुवती ᵛवाशीव। वाङ्नामैतत्। स्तुतिरूपा वाक् ᵛसुन्वते। 'षष्ठ्यर्थे चतुर्थी वक्तव्या' इति चतुर्थी। सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य संबन्धिनी यथा स्तुत्यगुणबाहुल्येन विस्तीर्णा भवति तथेन्द्रः पप्रथ इत्यर्थः। प्रथिता च सा ᵛमिमीत ᵛइत् इन्द्रमाहात्म्यं यथावत् परिच्छिनत्त्येव॥

यं विप्रा॑ उ॒क्थवा॑हसोऽभिप्र॒मन्दु॑रा॒यवः॑। घृ॒तं न पि॑प्य आ॒सन्यृ॒तस्य॒ यत्॥ १३॥

यम्। विप्राः॑। उ॒क्थऽवा॑हसः। अ॒भि॒ऽप्र॒मन्दुः॑। आ॒यवः॑।
घृ॒तम्। न। पि॒प्ये॒। आ॒सनि॑। ऋ॒तस्य॑। यत्॥ १३॥

१. ख-त-श—आपरि॰। २. ग-न-य-श—अनुशब्दमानेन; भ१-२—अनुषज्यमानेन। ३. ग—पुरुप्रियेण-त्यममपि एतीत्यनेन; श—पुरुप्रिया मिमीत इतीत्यनेन। ४. ग-भ—इति दर्शपूर्णमासाभ्यामिष्ट्वे ('मासा-विष्ट्वे'-ग-भ२-य)ष्टिपशुचातुर्मास्यैरथ सोमेनेत्येवमानुपूर्व्येण पुनीते शोधयति( साधयति—ग ) सम्यगनुतिष्ठति। ५. ग—वावृधे।

ᵛविप्राः मेधाविनः ᵛउक्थवाहसः उक्थानां शस्त्राणां वोढारः प्रापयितारः ᵛआयवः मनुष्याः ᵛयम् इन्द्रम् ᵛअभिप्रमन्दुः अभि प्रकर्षेण मादयन्ति ॥ मदेर्ण्यन्तस्यायेन परस्मैपदम्। ' द्विर्वचनप्रकरणे छन्दसि वा° ' ( का. ६. १. ८. १ ) इति वचनात् द्विर्वचनाभावः ॥ तस्येन्द्रस्य ᵛआसनि आस्ये। ' पद्न्° ' इत्यादिना आस्यशब्दस्य आसन्नादेशः। ᵛघृतं ᵛन घृतमिव शुद्धं ᵛपिप्ये सेचनेन वर्धये। प्यायतेश्छान्दसो लिट्। ' लिड्यङोश्च ' इति पीभावः। किं तत्। हविः। ᵛऋतस्य यज्ञस्य संबन्धि ᵛयत् सोमलक्षणं हविरस्ति तदित्यर्थः ॥

उत स्वराजे अदितिः स्तोममिन्द्राय जीजनत्।
पुरुप्रशस्तमूतय ऋतस्य यत् ॥ १४ ॥

उत। स्वऽराजे। अदितिः। स्तोमम्। इन्द्राय। जीजनत्।
पुरुऽप्रशस्तम्। ऊतये। ऋतस्य। यत् ॥ १४ ॥

ᵛउत अपि च ᵛअदितिः अदीना देवमाता अखण्डनीयस्तोता वा ᵛस्वराजे स्वयमेव राजमानाय ᵛइन्द्राय ᵛपुरुप्रशस्तं बहुलमुत्कृष्टं यद्वा पुरुभिर्बहुभिः प्रशंसितव्यं ᵛस्तोमं स्तोत्रं ᵛजीजनत् अजीजनत् अजनयत्। किमर्थम्। ᵛऊतये रक्षणार्थम्। ᵛयत् स्तोत्रम् ᵛऋतस्य यज्ञस्य सत्यस्य वा संबन्धि भवति तं स्तोममित्यन्वयः ॥

अभि वह्नय ऊतयेऽनूषत प्रशस्तये। न देव विव्रता हरी ऋतस्य यत् ॥१५॥

अभि। वह्नयः। ऊतये। अनूषत। प्रऽशस्तये। न। देव। विऽव्रता। हरी इति। ऋतस्य। यत्॥ १५॥

ᵛवह्नयः वोढार ऋत्विजः ᵛऊतये रक्षणार्थं ᵛप्रशस्तये प्रशस्त्यर्थं[1] च ᵛअभि ᵛअनूषत इन्द्रमभ्यष्टुवन्। ' नू स्तुतौ '। कुटादिः। हे ᵛदेव दानादिगुणयुक्तेन्द्र। ᵛन इति संप्रत्यर्थे। संप्रति ᵛविव्रता विविधकर्माणौ ᵛहरी त्वदीयावश्वौ ᵛऋतस्य यज्ञस्य सत्यस्य वा संबन्धि ᵛयत् स्तोत्रं हविर्वा विद्यते तदभिलक्ष्य त्वां वहत इति शेषः ॥ ॥ ३ ॥

यत्सोममिन्द्र विष्णवि यद्वा घ त्रित आप्त्ये।
यद्वा मरुत्सु मन्दसे समिन्दुभिः ॥ १६ ॥

यत्। सोमम्। इन्द्र। विष्णवि। यत्। वा। घ। त्रिते। आप्त्ये।
यत्। वा। मरुत्ऽसु। मन्दसे। सम्। इन्दुऽभिः ॥ १६ ॥

हे ᵛइन्द्र ᵛविष्णवि विष्णौ पानार्थमागते[2] सत्यन्यदीये यागे ᵛसोमं ᵛयत् यदि तेन विष्णुना सार्धं पिबसि। ᵛयद्वा यदि च ᵛआप्त्ये अपां पुत्रे ᵛत्रिते एतत्संज्ञे राजर्षौ यजमाने सोमं पिबसि। ᵛघ इति पूरणः। ᵛयद्वा यदि च ᵛमरुत्सु च सोमपानायागतेष्वन्यदीये यज्ञे ᵛमन्दसे माद्यसि। तथाप्यस्मदीयैरेव ᵛइन्दुभिः सोमैः ᵛसं सम्यक् माद्य ॥

यद्वा शक्र परावति समुद्रे अधि मन्दसे।
अस्माकमित्सुते रणा समिन्दुभिः ॥ १७ ॥

---

१. ख-ञ-त३-४-प्रशस्त्यार्थं; ग१-भ-प्राशस्त्यार्थं; ग२-त२-न-प्राशस्त्यार्थं। २. ग१-सोमपानार्थ°; ग२-घपानार्थ°।

यत् । वा । शक्र । पराऽवति । समुद्रे । अधि । मन्दसे ।

अस्माकम् । इत् । सुते । रण । सम् । इन्दुऽभिः ॥ १७ ॥

हे शक्र शक्रेन्द्र[1] परावति परागते दूरदेशे समुद्रे समुन्दनशीले सोमे । अधि[2] सप्तम्यर्थानुवादी । यद्वा यदि वा मन्दसे माद्यसि तथापि अस्माकमित् अस्माकमेव सोमे अभिषुते सति इन्दुभिः सोमरसैः सं रण सम्यग्रमस्व ॥

यद्वासि सुन्वतो वृधो यजमानस्य सत्पते ।
उक्थे वा यस्य रण्यसि समिन्दुभिः ॥ १८ ॥

यत् । वा । असि । सुन्वतः । वृधः । यजमानस्य । सत्ऽपते ।

उक्थे । वा । यस्य । रण्यसि । सम् । इन्दुऽभिः ॥ १८ ॥

हे सत्पते सतां पालयितरिन्द्र सुन्वतः सोमाभिषवं कुर्वतः यजमानस्य यद्वा यदि वा वृधः असि वर्धयिता भवसि । वृधेरन्तर्णीतण्यर्थादिगुपधलक्षणः कः । यस्य च यजमानस्य उक्थे शस्त्रे वा शंसिते सति रण्यसि रमसे । एवमपि इन्दुभिः अस्मदीयैरेव सोमैः सम्यग्रमस्व॥

देवंदेवं वोऽवस इन्द्रमिन्द्रं गृणीषणि । अधा यज्ञाय तुर्वणे व्यानशुः ॥१९॥

देवम्ऽदेवम् । वः । अवसे । इन्द्रम्ऽइन्द्रम् । गृणीषणि । अध । यज्ञाय । तुर्वणे । वि । आनशुः ॥१९॥

हे ऋत्विग्यजमानाः वः युष्माकम् अवसे रक्षणाय देवंदेवम् इन्द्रमिन्द्रं दानादिगुणयुक्तम् । इन्द्रो बहुषु देशेषु युगपत्प्रवृत्तेषु यागेषु तत्र तत्र हविःस्वीकरणाय बहूनि शरीराण्याददानः स्वयमेकोऽप्यनेकः संस्तत्र तत्र संनिधत्ते । तथा च निगमान्तरम्—'इन्द्रो मायाभिः पुरुरूप ईयते' ( ऋ. सं. ६. ४७. १८ ) इति । तदपेक्षयेयं वीप्सा । बहु विभज्य वर्तमानं सर्वं तमिन्द्रं गृणीषणि अहं स्तौमि । गृणातेर्लिङि छान्दसमेतद्रूपम् । यद्वा । कारकमेवैतत् । गृणीषणि स्तवनेच्छायां सत्याम् । अध अनन्तरं सर्वमिन्द्रं मदीयाः स्तुतयः व्यानशुः व्याप्नुवन्ति । किमर्थम् । तुर्वणे तूर्णं संभजनाय यज्ञाय यागार्थम् । यद्वा । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी । यज्ञं यष्टव्यं तुर्वणे शत्रूणां हिंसितारं तूर्णसंभजनं वा ॥

यज्ञेभिर्यज्ञवाहसं सोमेभिः सोमपातमम् । होत्राभिरिन्द्रं वावृधुर्व्यानशुः ॥२०॥

यज्ञेभिः । यज्ञऽवाहसम् । सोमेभिः । सोमऽपातमम् ।

होत्राभिः । इन्द्रम् । ववृधुः । वि । आनशुः ॥ २० ॥

यज्ञेभिः यज्ञैर्यजनसाधनैर्हविर्भिः यज्ञवाहसं यज्ञे[3] वोढव्यं[3] प्रापणीयं यज्ञैर्यागैर्यज्ञानां यजमानानां फलस्य प्रापयितारं वा । अथवा यज्ञवाहसं यज्ञेन प्राप्यम् । न केवलमेकेन यज्ञेन अपि तु सर्वैरित्याह यज्ञेभिरिति । एवं सोमेभिः सोमपातमं सर्वेषां सोमानां पातृतमम् इन्द्रं होत्राभिः स्तुतिभिः वावृधुः स्तोतारो वर्धयन्ति । ताश्च क्रियमाणाः स्तुतयः व्यानशुः तमिन्द्रं व्याप्नुवन्ति च । अश्नोतेर्व्यत्ययेन परस्मैपदम् ॥ ॥ ४ ॥

---

१. ख-त२-४-म३—शक्रेंद्र ; घ-ज्ञ-त३-श—इंद्र । २. ग—अधिः । ३. ग-त१-२—यज्ञवोढव्यं ।

**महीरस्य प्रणीतयः पूर्वीरुत प्रशस्तयः । विश्वा वसूनि दाशुषे व्यानशुः ॥२१॥**

मही:। अस्य। प्रऽनीतयः। पूर्वीः। उत। प्रऽशस्तयः। विश्वा। वसूनि। दाशुषे। वि। आनशुः॥२१॥

अस्य इन्द्रस्य प्रणीतयः प्रणयनानि धनानां प्रकृष्टप्रापणानि महीः महत्यो महान्ति भवन्ति। उत अपि च अस्य प्रशस्तयः प्रशंसनीयाः कीर्तयः पूर्वीः बह्व्यः विस्तृततमा भवन्ति। ता उभयविधाः दाशुषे चरुपुरोडाशादीनि दत्तवते यजमानाय दातुं विश्वा विश्वानि सर्वाणि वसूनि धनानि व्यानशुः व्याप्नुवन्ति ॥

**इन्द्रं वृत्राय हन्तवे देवासो दधिरे पुरः । इन्द्रं वाणीरनूषता समोजसे ॥ २२ ॥**

इन्द्रम्। वृत्राय। हन्तवे। देवासः। दधिरे। पुरः।
इन्द्रम्। वाणीः। अनूषत। सम्। ओजसे॥ २२ ॥

देवासः देवाः वृत्राय हन्तवे वृत्रमावरकमसुरं हन्तुम्। हन्तेस्तुमर्थे तवेन्प्रत्ययः। इमम् इन्द्रं पुरः दधिरे पुरस्तात् स्वामित्वेनाधारयन्। वाणीः वाण्यः स्तुतिरूपा वाचश्चेममेव[1] इन्द्रम् अनूषत स्तुवन्ति। किमर्थम्। सं समीचीनाय ओजसे बलार्थम्। यथा वृत्रवधानुगुणमुत्कृष्टं बलमस्य[2] जायते[2] तथा स्तुवन्तीत्यर्थः ॥

**महान्तं महिना वयं स्तोमेभिर्हवनश्रुतम् । अर्कैरभि प्र णोनुमः समोजसे ॥२३॥**

महान्तम्। महिना। वयम्। स्तोमेभिः। हवनऽश्रुतम्।
अर्कैः। अभि। प्र। नोनुमः। सम्। ओजसे॥ २३ ॥

महिना महिम्ना महान्तं सर्वेभ्योऽधिकं हवनश्रुतं हवनस्याह्वानस्य श्रोतारमिन्द्रं[3] वयं स्तोमेभिः स्तोमैस्त्रिवृत्पञ्चदशादिभिः अर्कैः अर्चनसाधनैः शस्त्रैश्च अभि प्र णोनुमः आभिमुख्येन प्रकर्षेण पुनःपुनः स्तुमः ॥

**न यं विविक्तो रोदसी नान्तरिक्षाणि वज्रिणम् ।**
**अमादिदस्य तित्विषे समोजसः ॥ २४ ॥**

न। यम्। विविक्तः। रोदसी इति। न। अन्तरिक्षाणि। वज्रिणम्।
अमात्। इत्। अस्य। तित्विषे। सम्। ओजसः॥ २४ ॥

यं वज्रिणं वज्रवन्तमिन्द्रं रोदसी द्यावापृथिव्यौ न विविक्तः न पृथक्कुरुतः स्वसमीपात् पृथक्कर्तुं न शक्नुतः। द्यावापृथिव्यौ व्याप्य य इन्द्रो वर्तत इत्यर्थः। 'विचिर् पृथग्भावे'। अन्तरिक्षाणि अन्तरा क्षान्तानि द्यावापृथिव्योर्वर्तमानानि[4] गन्धर्वादीनां स्थानानि च यं न पृथक्कुर्वन्ति। अस्य इन्द्रस्य अमादित्। अमति रुजति शत्रूननेनेत्यमो बलम्। बलादेव तित्विषे सर्वं जगद्दीप्यते। किमर्थम्। ओजसः[5] बलस्य संगमाय। यद्वा। ओजःशब्दाद्विहितस्य विनो 'बहुलं छन्दसि' इति लुक्। ओजस्विनो बलवतोऽस्येन्द्रस्येति योज्यम्। समित्युपसर्गः तित्विष इत्यनेन संबध्यते ॥

---

१. ख-ञ-त२-३-४–वाचश्चरममेव; श–वाचपरमेश्वरमेव। २. ग–फलमस्य ख्याप्यते। ३. ख-घ-त२-३-४-भ२-य-श–स्तोतारमिंद्रं। ४. ग–°व्योरधिवर्तमानानि। ५. ख-त-न-भ२-श–ओजसे।

षोडशिशस्त्रे 'यदिन्द्र पृतनाज्ये' इति तृचः । सूत्र्यते हि—'यदिन्द्र पृतनाज्येऽयं ते अस्तु हर्यत इत्यौष्णिहबार्हतौ तृचौ' (आश्व. श्रौ. ६. २) इति ॥

यदिन्द्र पृतनाज्ये देवास्त्वा दधिरे पुरः । आदित्ते हर्यता हरी ववक्षतुः ॥२५॥

यत् । इन्द्र । पृतनाज्ये । देवाः । त्वा । दधिरे । पुरः ।
आत् । इत् । ते । हर्यता । हरी इति । ववक्षतुः ॥ २५ ॥

हे इन्द्र पृतनाज्ये । संग्रामनामैतत् । पृतनाः सेना अजन्ति गच्छन्त्यस्मिन्निति वा पृतना जीयतेऽत्रेति वा पृतनाज्यं संग्रामः । तत्र त्वा त्वां यत् यदा देवाः पुरः दधिरे वृत्रहननाय पुरतोऽधारयन् आदित् अनन्तरमेव हर्यता हर्यतौ कान्तौ । 'हर्य गतिकान्त्योः' । 'भृमृदृशि॰' इत्यादिनौणादिकोऽतच्प्रत्ययः । ईदृशौ हरी अश्वौ ते त्वां ववक्षतुः अवहताम् ॥ ॥ ५ ॥

यदा वृत्रं नदीवृतं शवसा वज्रिन्नवधीः । आदित्ते हर्यता हरी ववक्षतुः ॥२६॥

यदा । वृत्रम् । नदीऽवृतम् । शवसा । वज्रिन् । अवधीः ।
आत् । इत् । ते । हर्यता । हरी इति । ववक्षतुः ॥ २६ ॥

हे वज्रिन् वज्रवन्निन्द्र नदीवृतम् । नदनान्नद्य आपः । श्रूयते हि—'अहावनदता हते तस्मादा नद्यो नाम स्थ' (तै. सं. ५. ६. १. २) इति । ता आवृण्वन्तं वृत्रम् अवर्षणशीलं मेघमसुरं वा यदा यस्मिन् काले शवसा बलेन अवधीः अहिंसीः । शिष्टं समानम् ॥

यदा ते विष्णुरोजसा त्रीणि पदा विचक्रमे । आदित्ते हर्यता हरी ववक्षतुः ॥२७॥

यदा । ते । विष्णुः । ओजसा । त्रीणि । पदा । विऽचक्रमे ।
आत् । इत् । ते । हर्यता । हरी इति । ववक्षतुः ॥ २७ ॥

हे इन्द्र ते तवानुजः विष्णुः व्यापनशीलो देवः ओजसा बलेन यदा यस्मिन् काले त्रीणि पदानि पदत्रयरूपेण त्रीँल्लोकान् विचक्रमे विक्रान्तवान् परिच्छिन्नवान् । गतमन्यत् ॥

यदा ते हर्यता हरी वावृधाते दिवेदिवे । आदित्ते विश्वा भुवनानि येमिरे ॥२८॥

यदा । ते । हर्यता । हरी इति । ववृधाते इति । दिवेऽदिवे ।
आत् । इत् । ते । विश्वा । भुवनानि । येमिरे ॥ २८ ॥

हे इन्द्र त्वदीयौ[1] हर्यता हर्यतौ कान्तौ हरी हरणशीलावश्वौ दिवेदिवे प्रतिदिवसं यदा यस्मिन् काले वावृधाते[2] प्रवृद्धौ बभूवतुः आदित् अनन्तरमेव त्वया विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि येमिरे नियम्यन्ते स्म ॥

यदा ते मारुतीर्विशस्तुभ्यमिन्द्र नियेमिरे । आदित्ते विश्वा भुवनानि येमिरे ॥२९॥

यदा । ते । मारुतीः । विशः । तुभ्यम् । इन्द्र । निऽयेमिरे ।
आत् । इत् । ते । विश्वा । भुवनानि । येमिरे ॥ २९ ॥

---

१. घ–ते त्वदीयौ । २. ख-ज्ञ-त१-भ–ववृधाते; त३-४-न–विवृधाते; श–विवृते ।

हे ˇइन्द्र ˇतुभ्यं त्वदर्थं ˇमारुतीः मारुत्यो[1] मरुद्रूपाः ˇते त्वदीयाः ˇविशः प्रजाः ˇयदा यस्मिन् काले ˇनियेमिरे नियच्छन्ति भूतजातानि । अन्यद्गतम् ॥

**यदा सूर्यममुं दिवि शुक्रं ज्योतिरधारयः ।**
**आदित्ते विश्वा भुवनानि येमिरे ॥ ३० ॥**

यदा । सूर्यम् । अमुम् । दिवि । शुक्रम् । ज्योतिः । अधारयः ।
आत् । इत् । ते । विश्वा । भुवनानि । येमिरे ॥ ३० ॥

हे इन्द्र ˇअमुं विप्रकृष्टं ˇशुक्रं निर्मलं ˇज्योतिः द्योतमानं ˇसूर्यं सर्वस्य प्रेरकं शोभनवीर्यं वादित्यं ˇदिवि द्युलोके जगतः प्रकाशनाय[2] ˇयदा यस्मिन् काले ˇअधारयः धारितवानसि । समानमन्यत् ॥

**इमां त इन्द्र सुष्टुतिं विप्र इयर्ति धीतिभिः । जामिं पदेव पिप्रतीं प्राध्वरे ॥३१॥**

इमाम् । ते । इन्द्र । सुऽस्तुतिम् । विप्रः । इयर्ति । धीतिऽभिः ।
जामिम् । पदाऽइव । पिप्रतीम् । प्र । अध्वरे ॥ ३१ ॥

हे ˇइन्द्र ˇविप्रः मेधावी स्तोता ˇअध्वरे यज्ञे ˇइमां पुरोवर्तिनीं ˇपिप्रतीं पूजयन्तीं प्रीणयन्तीं वा ˇसुष्टुतिं शोभनां स्तुतिं ˇधीतिभिः कर्मभिः परिचरणैः सार्धं ˇते त्वां ˇप्र ˇइयर्ति प्रेरयति प्रगमयति । ˇजामिं ˇपदेव यथा बन्धुभूतं पुरुषमुत्कृष्टानि पदानि स्थानानि प्रापयति तद्वत् ॥

**यदस्य धामनि प्रिये समीचीनासो अस्वरन् ।**
**नाभा यज्ञस्य दोहना प्राध्वरे ॥ ३२ ॥**

यत् । अस्य । धामनि । प्रिये । सम्ऽईचीनासः । अस्वरन् ।
नाभा । यज्ञस्य । दोहना । प्र । अध्वरे ॥ ३२ ॥

ˇअध्वरे यज्ञे ˇअस्य इन्द्रस्य ˇधामनि स्थाने तेजसि वा ˇप्रिये प्रीणयितव्ये सति ˇसमीचीनासः संगताः स्तोतारः ˇयत् यदा ˇप्र ˇअस्वरन् प्रकर्षेणास्तुवन् । 'स्वृ शब्दोपतापयोः' । 'अयालिन्द्रस्य प्रिया धामानि' (तै. ब्रा. ३. ५. ७. ६) इति हि निगमः । कस्मिन् देशे । ˇनाभा नाभौ पृथिव्या नाभिस्थानीये मध्ये ˇयज्ञस्य यजनसाधनस्य[3] सोमस्य ˇदोहना दोहने दोहनाधिकरणेऽभिषवस्थाने । वेद्यामित्यर्थः । तदानीं धनं प्रदेहीत्युत्तरत्र संबन्धः ॥

**सुवीर्यं स्वश्व्यं सुगव्यमिन्द्र दद्धि नः । होतेव पूर्वचित्तये प्राध्वरे ॥३३॥**

सुऽवीर्यम् । सुऽअश्व्यम् । सुऽगव्यम् । इन्द्र । दद्धि । नः ।
होताऽइव । पूर्वऽचित्तये । प्र । अध्वरे ॥ ३३ ॥

ˇसुवीर्यं शोभनवीर्योपेतं ˇस्वश्व्यं शोभनेनाश्वसंघेन च युक्तं ˇसुगव्यं शोभनगोसंघयुक्तं च धनं हे ˇइन्द्र ˇनः अस्मभ्यं ˇदद्धि ददस्व । 'दद[4] दाने' । अनुदात्तेत् । व्यत्ययेन परस्मैपदम् ।

---

१. ख-त-न-भ-श—मरुत्यो । २. ख-त-न-भ-श—प्रकाशमानाय । ३. घ—यजमानसाधनस्य । ४. श—दा ।

छान्दसः शपो लुक्। अहं च अध्वरे यागे होतेव यथा मानुषी[1] होतर्त्विक् स्तौति एवमेव पूर्वचित्तये पूर्वप्रज्ञानायान्येभ्यः स्तोतृभ्यः पूर्वमेवास्मत्स्तोत्रपरिज्ञानाय प्राशंसिषमिति शेषः॥ ॥ ६ ॥ ॥ २ ॥

तृतीयेऽनुवाकेऽष्ट सूक्तानि। तत्र 'इन्द्रः सुतेषु' इति त्रयस्त्रिंशदृचं प्रथमं सूक्तं काण्वस्य नारदस्यार्षमौष्णिहमैन्द्रम्। तथा चानुक्रान्तम्—'इन्द्रः सुतेषु नारदः' इति। महाव्रते निष्केवल्ये औष्णिहतृचाशीतौ पूर्वसूक्तेन सहोक्तो विनियोगः। तृतीये पर्यायेऽच्छावाकशस्त्रे 'इन्द्रः सुतेषु' इति तृचः स्तोत्रियः। सूत्र्यते हि—'इन्द्रः सुतेषु सोमेषु य इन्द्र सोमपातमः' (आश्व. श्रौ. ६. ४) इति॥

इन्द्रः सुतेषु सोमेषु क्रतुं पुनीत उक्थ्यम्। विदे वृधस्य दक्षसो महान्हि षः ॥१॥

इन्द्रः। सुतेषु। सोमेषु। क्रतुम्। पुनीते। उक्थ्यम्। विदे। वृधस्य। दक्षसः। महान्। हि। सः ॥१॥

सोमेषु सुतेषु अभिषुतेषु सत्सु इन्द्रः तान् पीत्वा क्रतुं कर्मणां कर्तारम् उक्थ्यं स्तोतारं च पुनीते शोधयति। यद्वा। सोमेष्वभिषुतेषूक्थ्याख्यं क्रतुं यागं तैः सोमैः पुनीते यजमानैः पूतं कारयति। किमर्थम्। वृधस्य वर्धकस्य दक्षसः बलस्य विदे लाभाय। सः तादृश इन्द्रः महान् हि महान् खलु। अत एवं कर्तुं शक्नोतीति भावः॥

स प्रथमे व्योमनि देवानां सदने वृधः। सुपारः सुश्रवस्तमः समप्सुजित् ॥२॥

सः। प्रथमे। विऽओमनि। देवानाम्। सदने। वृधः।
सुऽपारः। सुश्रवःऽतमः। सम्। अप्सुऽजित् ॥ २ ॥

सः इन्द्रः प्रथमे प्रथिते विस्तीर्णे मुख्ये वा व्योमनि विशेषेण रक्षके देवानां सदने। सीदन्त्यस्मिन्निति सदनं स्थानं स्वर्गाख्यम्। तत्र स्थितः सन् वृधः यजमानानां वर्धयिता भवति। तथा सुपारः सुष्ठु पारयिता प्रारब्धस्य सम्यक्परिसमापयिता सुश्रवस्तमः। अतिशयेन शोभनं श्रवोऽन्नं यशो वा यस्य स तथोक्तः। सं सम्यक् अप्सुजित् अप्सूदकेषु प्राप्येषु सत्सु तद्विघातिनो वृत्रादेर्जेता। यद्वा। आप इत्यन्तरिक्षनाम। अन्तरिक्षे वर्तमानानामसुराणां जेता। तमह्व इत्युत्तरत्र संबन्धः॥

तमह्वे वाजसातय इन्द्रं भराय शुष्मिणम्। भवा नः सुम्ने अन्तमः सखा वृधे ॥३॥

तम्। अह्वे। वाजऽसातये। इन्द्रम्। भराय। शुष्मिणम्।
भव। नः। सुम्ने। अन्तमः। सखा। वृधे ॥ ३ ॥

तं पूर्वोक्तगुणं शुष्मिणं बलवन्तम् इन्द्रं वाजसातये बलानामन्नानां वा सातिर्लाभो यस्मिन् तादृशाय भराय संग्रामाय। यद्वा। भ्रियन्ते तस्मिन्[2] हवींषीति भरो यज्ञः। प्रायेण संग्रामनामानि यज्ञनामत्वेन च दृश्यन्ते। भराय यज्ञार्थम् अह्वे आह्वये[3]। 'लिपिसिचिह्वश्च' 'आत्मनेपदेष्वन्यतरस्याम्' इति ह्वयतेश्छान्दसे लुङि च्लेरङादेशः। हे इन्द्र त्वं सुम्ने सुखे धने वा लिप्सिते सति नः अस्माकम् अन्तमः अन्तिकतमः संनिकृष्टतमः भव। 'तमे तादेश्च' इत्यन्तिकशब्दस्य तादिलोपः। तथा वृधे वर्धनार्थं च सखा समानख्यानो मित्रभूतो भव॥

इयं त इन्द्र गिर्वणो रातिः क्षरति सुन्वतः। मन्दानो अस्य बर्हिषो वि राजसि ॥४॥

इयम्। ते। इन्द्र। गिर्वणः। रातिः। क्षरति। सुन्वतः।
मन्दानः। अस्य। बर्हिषः। वि। राजसि ॥ ४ ॥

---

१. ग१—मन्त्रेण; ग२—मात्रेण। २. ग१—अस्मिन्। ३. ग—ह्वेञो।

हे गिर्वणः गीर्भिः स्तुतिभिर्वननीय संभजनीय इन्द्र ते तुभ्यं त्वदर्थम् इयं पुरोवर्तिनी सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य संबन्धिनी रातिः ऋत्विग्भिर्दीयमाना सोमाहुतिः क्षरति आहवनीयं प्रति गच्छति । त्वं च तया मन्दानः मन्दमानो मोदमानस्तृप्यन् अस्य बर्हिषः[1] यज्ञस्य वि राजसि विशेषेणेशिषे । राजतिरैश्वर्यकर्मा ॥

नूनं तदिन्द्र दद्धि नो यत्त्वा सुन्वन्त ईमहे । रयिं नश्चित्रमा भरा स्वर्विदम् ॥५॥

नूनम् । तत् । इन्द्र । दद्धि । नः । यत् । त्वा । सुन्वन्तः । ईमहे ।
रयिम् । नः । चित्रम् । आ । भर । स्वःऽविदम् ॥ ५ ॥

हे इन्द्र नूनम् अवश्यं तत् धनं नः अस्मभ्यं दद्धि ददस्व । 'दद दाने'। व्यत्ययेन परस्मैपदम् । छान्दसः शपो लुक् । यत् धनं त्वा त्वां सुन्वन्तः सोममभिषुण्वन्तो[2] वयम् ईमहे याचामहे । अपि च चित्रं चायनीयं स्वर्विदं सर्वस्य लम्भकं यद्वा स्वर्गस्य वेदितारमास्तिकं रयिं पुत्रं नः अस्मभ्यम् आ भर आहर[3] ॥  ॥ ७ ॥

स्तोता यत्ते विचर्षणिरतिप्रशर्धयद्गिरः । वया इवानु रोहते जुषन्त यत् ॥६॥

स्तोता । यत् । ते । विऽचर्षणिः । अतिऽप्रशर्धयत् । गिरः ।
वयाःऽइव । अनु । रोहते । जुषन्त । यत् ॥ ६ ॥

हे इन्द्र विचर्षणिः विशेषेण द्रष्टा स्तोता ते तुभ्यं त्वदर्थं गिरः स्तुतीः यत् यदा अतिप्रशर्धयत् अतिशयेन प्रशर्धयित्रीरकरोत् । शत्रूणां प्रसहनसमर्थाः । 'शृधु प्रसहने'। यत् यदा च ता गिरः जुषन्त त्वामसेवन्त अप्रीणयन् वा तदा वया इव शाखा इव यथैकस्मिन् वृक्षे बह्व्यः शाखा उपरि प्ररोहन्ति तथा अनु रोहते स्तुत्या सर्वे गुणास्त्वयि प्ररोहन्ति ॥

प्रत्नवज्जनया गिरः शृणुधी जरितुर्हवम् । मदेमदे ववक्षिथा सुकृत्वने ॥७॥

प्रत्नऽवत् । जनय । गिरः । शृणुधि । जरितुः । हवम् । मदेऽमदे । ववक्षिथ । सुऽकृत्वने ॥७॥

हे इन्द्र प्रत्नवत् पुरा यथा स्तोतृभ्योऽपेक्षितफलप्रदानेन स्तुतीर्जनयसि एवमिदानीमपि गिरः स्तुतीः जनय उत्पादय । जरितुः स्तोतुः हवम् आह्वानं च शृणुधि शृणु । जानीहि । तादृशस्त्वं मदेमदे सोमेन तर्पणे तर्पणे सति सुकृत्वने शोभनकर्त्रे यजमानाय ववक्षिथ अपेक्षितं फलं वहसि ददासीत्यर्थः ॥

क्रीळन्त्यस्य सूनृता आपो न प्रवता यतीः । अया धिया य उच्यते पतिर्दिवः ॥८॥

क्रीळन्ति । अस्य । सूनृताः । आपः । न । प्रऽवता । यतीः ।
अया । धिया । यः । उच्यते । पतिः । दिवः ॥ ८ ॥

अस्य इन्द्रस्य सूनृताः प्रियसत्यात्मिका वाचः क्रीळन्ति विहरन्ति । तत्र दृष्टान्तः । प्रवता प्रवणेन मार्गेण यतीः गच्छन्त्यः आपो न आप इव । यथा निम्नोन्नतेन पथा गच्छन्त्य आप

---

१. ग-बर्हिषि । २. ख-घ-त-न-सोमाभिषुण्वंतः; ग-भ-सोमानभिषुण्वंतः; श-सोमाभिषवं कुर्वतः ।
३. ग-त-न-भ-श-आहरेति ।

उत्पतननिपतनेन विहरन्ति तद्वत्। ᵛदिवः स्वर्गस्य ᵛपतिः पालयिता ᵛयः इन्द्रः ᵛअया अमया ᵛधिया स्तुत्या ᵛउच्यते प्रतिपाद्यते अस्येन्द्रस्येत्यन्वयः॥

उतो पतिर्य उच्यते कृष्टीनामेक इद्वशी। नमोवृधैरवस्युभिः सुते रण॥ ९॥

उतो इति। पतिः। यः। उच्यते। कृष्टीनाम्। एकः। इत्। वशी।
नमःऽवृधैः। अवस्युऽभिः। सुते। रण॥ ९॥

ᵛउतो अपि च ᵛवशी वशयिता ᵛएक ᵛइत् एक एव ᵛकृष्टीनां मनुष्याणां ᵛपतिः पालयितेति ᵛयः इन्द्रः ᵛउच्यते। कैः। ᵛनमोवृधैः नमसा स्तोत्रेण हविषा वा वर्धयितृभिः ᵛअवस्युभिः रक्षणेच्छुभिः। स त्वं पूर्वोक्ते ᵛसुते अभिषुते सोमे ᵛरण रमस्व। यद्वा। हे स्तोतः तमिन्द्रं सुते सोमे स्तुहि[1]। रणतिः शब्दार्थः॥

स्तुहि श्रुतं विपश्चितं हरी यस्य प्रसक्षिणा। गन्तारा दाशुषो गृहं नमस्विनः॥१०॥

स्तुहि। श्रुतम्। विपःऽचितम्। हरी इति। यस्य। प्रऽसक्षिणा।
गन्तारा। दाशुषः। गृहम्। नमस्विनः॥ १०॥

हे स्तोतः ᵛविपश्चितं विशिष्टज्ञानं ᵛश्रुतं विश्रुतं प्रख्यातं तमिन्द्रं ᵛस्तुहि प्रशंस। ᵛयस्य इन्द्रस्य ᵛहरी अश्वौ ᵛप्रसक्षिणा शत्रूणां प्रसहनशीलौ ᵛनमस्विनः हविष्मतः ᵛदाशुषः दत्तवतो यजमानस्य ᵛगृहं ᵛगन्तारा गमनशीलौ च तमिन्द्रं स्तुहीति संबन्धः। गमेस्ताच्छीलिकस्तृन्॥ ॥ ८॥

तूतुजानो महेमतेऽश्वेभिः प्रुषितप्सुभिः। आ याहि यज्ञमाशुभिः शमिद्धि ते॥११॥

तूतुजानः। महेऽमते। अश्वेभिः। प्रुषितप्सुऽभिः।
आ। याहि। यज्ञम्। आशुऽभिः। शम्। इत्। हि। ते॥ ११॥

हे ᵛमहेमते। महते फलाय मतिर्बुद्धिर्यस्यासौ महेमतिः। अलुक् छान्दसः। स तादृश हे इन्द्र ᵛतूतुजानः त्वरमाणः सन् ᵛप्रुषितप्सुभिः स्निग्धरूपैः ᵛआशुभिः शीघ्रगामिभिः ᵛअश्वेभिः अश्वैः ᵛयज्ञम् अस्मदीयम् ᵛआ ᵛयाहि आगच्छ। ᵛहि यस्मात् ᵛते तव तस्मिन् यज्ञे ᵛशमित् सुखं विद्यत एव। अत आगच्छेत्यर्थः॥

इन्द्र शविष्ठ सत्पते रयिं गृणत्सु धारय। श्रवः सूरिभ्यो अमृतं वसुत्वनम्॥१२॥

इन्द्र। शविष्ठ। सत्ऽपते। रयिम्। गृणत्ऽसु। धारय।
श्रवः। सूरिऽभ्यः। अमृतम्। वसुऽत्वनम्॥ १२॥

हे ᵛशविष्ठ बलवत्तम ᵛसत्पते सतां पालयितः ᵛइन्द्र ᵛगृणत्सु अस्मासु ᵛरयिं धनं ᵛधारय अवस्थापय। अपि च ᵛसूरिभ्यः स्तोतृभ्यः ᵛअमृतम् अनश्वरं ᵛवसुत्वनं व्याप्तिमत् ᵛश्रवः अन्नं यशो वा देहीति शेषः॥

हवे त्वा सूर उदिते हवे मध्यंदिने दिवः। जुषाण इन्द्र सप्तिभिर्न आ गहि॥१३॥

---

१. भ१-३–रण स्तुहि।

ह्वे । त्वा । सूरे । उत्ऽइते । ह्वे । मध्यंदिने । दिवः ।

जुषाणः । इन्द्र । सप्तिऽभिः । नः । आ । गहि ॥ १३ ॥

हे इन्द्र सूरे सूर्ये उदिते उदयं प्राप्ते सति प्रातःसवने त्वां[1] ह्वे आह्वये । तथा दिवः दिवसस्य मध्यंदिने मध्यभागे माध्यंदिनसवने त्वां ह्वे आह्वये । हे इन्द्र स त्वं जुषाणः प्रीयमाणः सन् सप्तिभिः सर्पणशीलैरश्वैः नः अस्मान् आ गहि आगच्छ ॥

आ तू गहि प्र तु द्रव मत्स्वा सुतस्य गोमतः ।
तन्तुं तनुष्व पूर्व्यं यथा विदे ॥ १४ ॥

आ । तु । गहि । प्र । तु । द्रव । मत्स्व । सुतस्य । गोऽमतः ।

तन्तुम् । तनुष्व । पूर्व्यम् । यथा । विदे ॥ १४ ॥

हे इन्द्र तु क्षिप्रम् आ गहि आगच्छ । आगत्य च तु क्षिप्रं प्र द्रव । सोमो यत्र निवसति तं देशं प्रति शीघ्रं गच्छ । गत्वा च गोमतः गोविकारैः पयःप्रभृतिभिः श्रयणद्रव्यैर्युक्तस्य सुतस्य अभिषुतस्य सोमस्य पानेन मत्स्व माद्य हृष्टो भव । तदनन्तरं यथा अहं विदे उपलभे तथा पूर्व्यं पूर्वैः कृतं तन्तुं विस्तृतं यज्ञं तनुष्व सम्यङ्निष्पादय । फलोत्पादनसमर्थं कुर्वित्यर्थः ॥

यच्छक्रासि परावति यदर्वावति वृत्रहन् । यद्वा समुद्रे अन्धसोऽवितेदसि ॥१५॥

यत् । शक्र । असि । पराऽवति । यत् । अर्वाऽवति । वृत्रऽहन् ।

यत् । वा । समुद्रे । अन्धसः । अविता । इत् । असि ॥ १५ ॥

हे शक्र शक्तेन्द्र परावति दूरदेशे यत् यदि असि भवसि । हे वृत्रहन् यत् यदि वा अर्वावति समीपे भवसि वर्तसे । यद्वा यदि वा समुद्रे जलधावन्तरिक्षे वा वर्तसे । तस्मात् सर्वस्मात् स्थानादागत्य अन्धसः अन्नस्य सोमलक्षणस्य पानेन अवितेदसि रक्षितैव भवसि ॥ ॥९॥

इन्द्रं वर्धन्तु नो गिर इन्द्रं सुतास इन्दवः । इन्द्रे हविष्मतीर्विशो अराणिषुः ॥१६॥

इन्द्रम् । वर्धन्तु । नः । गिरः । इन्द्रम् । सुतासः । इन्दवः ।

इन्द्रे । हविष्मतीः । विशः । अराणिषुः ॥ १६ ॥

नः अस्माकं गिरः स्तुतिरूपा वाचः इन्द्रं वर्धन्तु वर्धयन्तु । सुतासः अभिषुताः इन्दवः सोमाश्चास्मदीयाः तम् इन्द्रं वर्धयन्तु । हविष्मतीः हविष्मत्यो हविर्भिश्चरुपुरोडाशादिभिर्युक्ताः विशः प्रजास्तस्मिन् इन्द्रे अराणिषुः अरंसिषुः ॥

तमिद्विप्रा अवस्यवः प्रवत्वतीभिरूतिभिः । इन्द्रं क्षोणीरवर्धयन्वयाइव ॥१७॥

तम् । इत् । विप्राः । अवस्यवः । प्रवत्वतीभिः । ऊतिऽभिः ।

इन्द्रम् । क्षोणीः । अवर्धयन् । वयाःऽइव ॥ १७ ॥

---

१. घ–त्वा त्वां ।

ᐯविप्राः मेधाविनः ᐯअवस्यवः रक्षणकामाः स्तोतारः ᐯतमित् तमेव ᐯइन्द्रं ᐯप्रवत्वतीभिः प्रकर्षेणाभिगन्त्रीभिः ᐯऊतिभिः तृप्तिकरीभिराहुतिभिः स्तुतिभिर्वा वर्धयन्ति। तथा ᐯक्षोणीः क्षोण्यः। क्षोणीति पृथिवीनाम। तदुपलक्षिताः सर्वे लोकाः ᐯवयाइव वृक्षस्य शाखा इव तदधीनाः सन्तः ᐯअवर्धयन् वर्धयन्ति ॥

त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत। तमिद्वर्धन्तु नो गिरः सदावृधम् ॥१८॥

त्रिऽकद्रुकेषु। चेतनम्। देवासः। यज्ञम्। अत्नत।

तम्। इत्। वर्धन्तु। नः। गिरः। सदाऽवृधम्॥ १८॥

ᐯत्रिकद्रुकेषु। त्रिकद्रुका नाम ज्योतिर्गौरायुरिति त्रीण्याभिप्लविकान्यहानि। तेषु ᐯदेवासः देवाः ᐯचेतनं चेतयितारमिन्द्रं ᐯयज्ञं यष्टव्यम् ᐯअत्नत अतन्वत अकृषत। तनोतेर्लङि छान्दसो विकरणस्य लुक्। ‘तनिपत्योश्छन्दसि’ इत्युपधालोपः। ᐯतमित् तमेवेन्द्रं ᐯनः अस्माकं ᐯगिरः स्तुतयश्च वर्धयन्तु। कीदृशम्। ᐯसदावृधं सर्वदा स्तोतॄणां वर्धयितारम्॥

स्तोता यत्ते अनुव्रत उक्थान्यृतुथा दधे। शुचिः पावक उच्यते सो अद्भुतः ॥१९॥

स्तोता। यत्। ते। अनुऽव्रतः। उक्थानि। ऋतुऽथा। दधे।

शुचिः। पावकः। उच्यते। सः। अद्भुतः॥ १९॥

हे इन्द्र ᐯयत् यस्य ᐯते तव ᐯस्तोता ᐯअनुव्रतः अनुकूलकर्मा सन् ᐯऋतुथा ऋतुषु काले काले ᐯउक्थानि शस्त्रादि[1] ᐯदधे विधत्ते करोति। ‘लोपस्त आत्मनेपदेषु’ इति तलोपः। परोऽर्धर्चः परोक्षकृतः। ᐯसः इन्द्रः ᐯअद्भुतः आश्चर्यभूतः ᐯशुचिः शुद्धः ᐯपावकः अन्येषामपि शोधकः ᐯउच्यते स्तोतृभिः स्तूयते॥

तदिद्रुद्रस्य चेतति यह्वं प्रत्नेषु धामसु। मनो यत्रा वि तद्दधुर्विचेतसः ॥२०॥

तत्। इत्। रुद्रस्य। चेतति। यह्वम्। प्रत्नेषु। धामऽसु।

मनः। यत्र। वि। तत्। दधुः। विऽचेतसः॥ २०॥

ᐯतदित् तदेव ᐯरुद्रस्य। रुत् दुःखम्। तस्य द्रावयितुरीश्वरस्य ᐯयह्वम् अपत्यं मरुत्संघात्मकम्। यद्वा। रुद्रशब्देन लक्षणया मरुद्गण उच्यते। रुद्रस्य रुद्रपुत्रस्य मरुद्गणस्य यह्वम्। महन्नामैतत्। महत् तदेव बलं ᐯप्रत्नेषु चिरंतनेषु ᐯधामसु पृथिव्यादिस्थानेषु ᐯचेतति ज्ञायते वर्तते। ᐯयत्र यस्मिन् बलविषये ᐯविचेतसः विशिष्टज्ञानाः स्तोतारः ᐯतत् प्रसिद्धं ᐯमनः मननसाधनं स्तोत्रं ᐯवि ᐯदधुः कुर्वन्ति तदित्यन्वयः॥ ॥ १० ॥

यदि मे सख्यमावर इमस्य पाह्यन्धसः। येन विश्वा अति द्विषो अतारिम ॥२१॥

यदि। मे। सख्यम्। आऽवरः। इमस्य। पाहि। अन्धसः।

येन। विश्वाः। अति। द्विषः। अतारिम॥ २१॥

हे इन्द्र मम[2] ᐯसख्यं सखित्वं ᐯयदि ᐯआवरः यथाभिमुख्येन वृणुयास्तर्हि ᐯइमस्य अस्य। हलि लोपाभावश्छान्दसः। पुरोवर्तिनः ᐯअन्धसः अन्नस्य सोमलक्षणस्य स्वांशं[3] ᐯपाहि पिब।

---

१. ग–शस्त्राणि। २. घ-ज्ञ-त१-२–मे मम। ३. ग–त्वं।

अन्धस इति कर्मणि वा षष्ठी ।. पिबतेश्छान्दसः शपो लुक् । ᵛयेन स्वस्पीतेन सोमेन हेतुना वयं ᵛविश्वाः सर्वाः ᵛद्विषः द्वेष्ट्रीः शत्रुसेनाः ᵛअति ᵛअतारिम अतितरेम अतिक्रामेम ॥

कदा त इन्द्र गिर्वणः स्तोता भवाति शंतमः ।
कदा नो गव्ये अश्व्ये वसौ दधः ॥ २२ ॥

कदा । ते । इन्द्र । गिर्वणः । स्तोता । भवाति । शम्ऽतमः ।
कदा । नः । गव्ये । अश्व्ये । वसौ । दधः ॥ २२ ॥

हे ᵛगिर्वणः गिरां स्तुतीनां संभक्तः ᵛइन्द्र ᵛते तव ᵛस्तोता ᵛशंतमः सुखतमोऽतिशयेन सुखवान् ᵛकदा कस्मिन् काले ᵛभवाति भवेत् । ᵛकदा कस्मिंश्च काले ᵛनः अस्मान् ᵛगव्ये गोसमूहे ᵛअश्व्ये अश्वसंघे ᵛवसौ निवासभूतेऽन्यस्मिन्नपि धने ᵛदधः धारयेः ॥

उत ते सुष्टुता हरी वृषणा वहतो रथम् । अजुर्यस्य मदिन्तमं यमीमहे ॥ २३ ॥

उत । ते । सुऽस्तुता । हरी इति । वृषणा । वहतः । रथम् ।
अजुर्यस्य । मदिन्ऽतमम् । यम् । ईमहे ॥ २३ ॥

ᵛउत अपि च हे इन्द्र ᵛसुष्टुता शोभनं[1] स्तुतौ[1] वृषणौ[2] कामानां वर्षितारौ ᵛहरी अश्वौ ᵛअजुर्यस्य जरारहितस्य ᵛते तव ᵛरथम् इदानीं ᵛवहतः अस्मन्निकटं प्रापयतः । ᵛमदिन्तमम् अतिशयेन मदवन्तं ᵛयं त्वां धनम् ᵛईमहे याचामहे तस्य त इत्यन्वयः ॥

तमीमहे पुरुष्टुतं यह्वं प्रत्नाभिरूतिभिः । नि बर्हिषि प्रिये सददध द्विता ॥२४॥

तम् । ईमहे । पुरुऽस्तुतम् । यह्वम् । प्रत्नाभिः । ऊतिऽभिः ।
नि । बर्हिषि । प्रिये । सदत् । अध । द्विता ॥ २४ ॥

ᵛयह्वं महान्तं ᵛपुरुस्तुतं[3] बहुभिः स्तुतं ᵛतम् इन्द्रं ᵛप्रत्नाभिः पुराणीभिः[4] ᵛऊतिभिः तृप्तिकरीभिः सोमाहुतिभिर्हेतुभिः ᵛईमहे याचामहे । स चेन्द्रः ᵛप्रिये प्रीतिकरे ᵛबर्हिषि आस्तीर्णे दर्भे ᵛनि ᵛषदत् निषीदतु हविःस्वीकरणायोपविशतु । ᵛअध अनन्तरं ᵛद्विता द्वैधं[5] वर्तमानानि चरुपुरोडाशादीनि सोमलक्षणानि च हवींषि स्वीकरोत्विति शेषः ॥

वर्धस्वा सु पुरुष्टुत ऋषिष्टुताभिरूतिभिः । धुक्षस्व पिप्युषीमिषमवा च नः ॥२५॥

वर्धस्व । सु । पुरुऽस्तुत । ऋषिऽस्तुताभिः । ऊतिऽभिः ।
धुक्षस्व । पिप्युषीम् । इषम् । अव । च । नः ॥ २५ ॥

हे ᵛपुरुष्टुत बहुभिः स्तुतेन्द्र ᵛऋषिष्टुताभिः[6] ऋषिभिः मन्त्रदर्शिभिः पुरा स्तुताभिः ᵛऊतिभिः रक्षाभिः ᵛसु सुष्ठु ᵛवर्धस्व अस्मान् वर्धय । यद्वा । ऋषिभिरुत्पादिताभिरूतिभिः स्तुतिभिस्त्वं वर्धस्व वृद्धिं प्राप्नुहि । ᵛनः अस्मभ्यं ᵛच ᵛपिप्युषीं प्रवृद्धाम् ᵛइषम् इष्यमाणमन्नम् ᵛअव ᵛधुक्षस्व अवाङ्मुखमस्मदभिमुखं धुक्षस्व[7] क्षारय । देहीत्यर्थः ॥ ॥ ११ ॥

---

१. ख-घ-ञ-त१-२-३-भ१-३-श-शोभनस्तुती; ग-शोभनश्रुतौ । २. भ-वृषणा वृषणौ । ३. ग१-त२-पुरुष्टुतं । ४. ग-पुराणाभिः । ५. ग-द्विधा । ६. त१-२-भ३-ऋषिस्तुताभिः; भ२-ऋषिभिः स्तुताभिः । ७. ग-न-भ१-धुक्ष्व ।

**इन्द्र त्वमवितेदसीत्था स्तुवतो अद्रिवः । ऋतादियर्मि ते धियं मनोयुजम् ॥ २६ ॥**

इन्द्र । त्वम् । अविता । इत् । असि । इत्था । स्तुवतः । अद्रिऽवः ।
ऋतात् । इयर्मि । ते । धियम् । मनःऽयुजम् ॥ २६ ॥

हे ᵛअद्रिवः वज्रवन् ᵛइन्द्र ᵛत्वम् ᵛइत्था इत्थमनेन प्रकारेण ᵛस्तुवतः स्तोत्रं कुर्वतो यजमानस्य ᵛअवितेदसि रक्षितैव भवसि । यत एवमतः कारणादहमपि ᵛऋतात् यज्ञाद्धेतोः[1] ᵛमनोयुजं मनसा मननीयेन स्तोत्रेण प्राप्यां ᵛते त्वदीयां ᵛधियम् अनुग्रहबुद्धिम् ᵛइयर्मि प्राप्नोमि । यद्वा । ऋतात् सत्यभूतात्त्वत्तः स्तोत्रेण युक्तं त्वत्प्रीतिकरं कर्माहं प्राप्नोमि ॥

**इह त्या सधमाद्या युजानः सोमपीतये । हरी इन्द्र प्रतद्वसू अभि स्वर ॥२७॥**

इह । त्या । सधऽमाद्या । युजानः । सोमऽपीतये ।
हरी इति । इन्द्र । प्रतद्वसू इति प्रतत्ऽवसू । अभि । स्वर ॥ २७ ॥

हे ᵛइन्द्र ᵛइह अस्मिन् यागे ᵛसोमपीतये सोमपानाय ᵛअभि ᵛस्वर अभिगच्छ । किं कुर्वन् । ᵛत्या त्यौ तौ प्रसिद्धौ ᵛसधमाद्या त्वया सह हविर्भिर्मादयितव्यौ तर्पयितव्यौ ᵛप्रतद्वसू प्रततवसू विस्तीर्णधनौ ईदृशौ ᵛहरी त्वदीयावश्वौ ᵛयुजानः रथेन संयोजयन् ॥

**अभि स्वरन्तु ये तव रुद्रासः सक्षत श्रियम् । उतो मरुत्वतीर्विशो अभि प्रयः ॥२८॥**

अभि । स्वरन्तु । ये । तव । रुद्रासः । सक्षत । श्रियम् ।
उतो इति । मरुत्वतीः । विशः । अभि । प्रयः ॥ २८ ॥

ᵛअभि ᵛस्वरन्तु अभिगच्छन्तु ते हे इन्द्र ᵛतव अनुचराः ᵛरुद्रासः रुद्रपुत्राः ᵛये मरुतः सन्ति । अपि च ते ᵛश्रियं श्रयणीयमिमं यज्ञं ᵛसक्षत सचन्तु प्राप्नुवन्तु । ᵛउतो अपि च ᵛमरुत्वतीः मरुद्भिर्युक्ताः ᵛविशः अन्या अपि दैवीः प्रजाः ᵛप्रयः । अन्ननामैतत् । अस्मदीयं हविर्लक्षणमन्नमभिगच्छन्तु ॥

**इमा अस्य प्रतूर्तयः पदं जुषन्त यद्दिवि । नाभा यज्ञस्य सं दधुर्यथा विदे ॥ २९ ॥**

इमाः । अस्य । प्रऽतूर्तयः । पदम् । जुषन्त । यत् । दिवि ।
नाभा । यज्ञस्य । सम् । दधुः । यथा । विदे ॥ २९ ॥

ᵛअस्य इन्द्रस्य संबन्धिन्यः ᵛइमाः पूर्वोक्ता मरुदादिरूपाः प्रजाः ᵛप्रतूर्तयः प्रकर्षेण शत्रूणां हिंसित्र्यः सत्यः ᵛपदं स्थानं ᵛजुषन्त असेवन्त । ᵛदिवि द्युलोके ᵛयत् स्थानमन्यैर्दुष्प्रापमस्ति तत्पदमित्यर्थः । अपि च ताः ᵛयज्ञस्य ज्योतिष्टोमादेः ᵛनाभा नाभौ नाभिस्थानीये हविर्धाने उत्तरवेद्यां वा ᵛसं ᵛदधुः संनिदधते । ᵛयथा येन प्रकारेण ᵛविदे विन्दे अपेक्षितं धनं लभे तथेत्यर्थः । यद्वा । विदे ज्ञानाय यथास्माकं दक्षावरं[2] ज्ञानं भवति तथेत्यर्थः ॥

**अयं दीर्घाय चक्षसे प्राचि प्रयत्यध्वरे । मिमीते यज्ञमानुषग्विचक्ष्य ॥ ३० ॥**

अयम् । दीर्घाय । चक्षसे । प्राचि । प्रऽयति । अध्वरे ।
मिमीते । यज्ञम् । आनुषक् । विऽचक्ष्य ॥ ३० ॥

---

१. ख-त-न-भ-श-यज्ञाद्धोतुः । २. ख-त-न-भ-दक्षोवरं; ग-पक्षेवरं; श-दीक्षावरं ।

Vप्राचि प्राचीने प्रागायते यज्ञगृहे Vअध्वरे हिंसारहिते यज्ञे Vप्रयति गच्छति प्रवर्तमाने सति Vअयम् इन्द्रः प्रवर्तमानं तं Vयज्ञमानुषक् अनुषक्तमानुपूर्व्येण Vविचक्ष्य विशेषेण दृष्ट्वा Vमिमीते निष्पादयति। किमर्थम्। Vदीर्घाय आयताय Vचक्षसे[1] दर्शनाय। यद्वा। द्रष्टव्याय फलाय॥ ॥१२॥

**वृषायमिन्द्र ते रथ उतो ते वृषणा हरी। वृषा त्वं शतक्रतो वृषा हवः॥ ३१॥**

वृषा। अयम्। इन्द्र। ते। रथः। उतो इति। ते। वृषणा। हरी इति।
वृषा। त्वम्। शतक्रतो इति शतऽक्रतो। वृषा। हवः॥ ३१॥

हे Vइन्द्र Vते त्वदीयः Vअयं Vरथः Vवृषा कामानां वर्षिता। Vउतो अपि च Vते तव Vहरी अश्वौ Vवृषणा वृषणौ वर्षितारौ। हे Vशतक्रतो बहुकर्मन् बहुप्रज्ञ वेन्द्र Vत्वं च Vवृषा वर्षिता कामानाम्। तथा Vहवः त्वद्विषयमाह्वानं च Vवृषा वर्षिता। त्वद्विषयमाह्वानमपि कामान् वर्षति। किमु वक्तव्यं त्वदीया रथादयो वर्षन्तीति भावः॥

**वृषा ग्रावा वृषा मदो वृषा सोमो अयं सुतः। वृषा यज्ञो यमिन्वसि वृषा हवः॥३२॥**

वृषा। ग्रावा। वृषा। मदः। वृषा। सोमः। अयम्। सुतः।
वृषा। यज्ञः। यम्। इन्वसि। वृषा। हवः॥ ३२॥

Vग्रावा अभिषवसाधनपाषाणः Vवृषा वर्षिता कामानाम्। हे इन्द्र त्वदीयः सोमपानजन्यः Vमदः च Vवृषा वर्षिता। Vसुतः त्वदर्थमभिषुतः Vअयं Vसोमः च Vवृषा वर्षिता। Vयं यज्ञम् Vइन्वसि त्वं प्राप्नोषि स च Vयज्ञः Vवृषा अभीष्टस्य फलस्य वर्षिता। त्वदीयः Vहवः च Vवृषा॥

**वृषा त्वा वृषणं हुवे वज्रिञ्चित्राभिरूतिभिः। वावन्थ हि प्रतिष्टुतिं वृषा हवः॥३३॥**

वृषा। त्वा। वृषणम्। हुवे। वज्रिन्। चित्राभिः। ऊतिऽभिः।
ववन्थ। हि। प्रतिऽस्तुतिम्। वृषा। हवः॥ ३३॥

हे Vवज्रिन् वज्रवन्निन्द्र Vवृषणं वृषाणं वर्षितारं त्वां[2] Vवृषा वर्षिता हविषामासेक्ताहं Vचित्राभिः चायनीयाभिर्नानाविधाभिर्वा Vऊतिभिः तृप्तिकरीभिः स्तुतिभिः Vहुवे आह्वये। Vहि यस्मात्त्वं Vप्रतिष्टुतिं त्वामभिलक्ष्य कृतं स्तोत्रं Vववन्थ[3] वनसि संभजसि अतस्त्वदीयः Vहवः आह्वानं Vवृषा वर्षिता। यद्वा। हवो ह्वातव्यो वृषा वर्षिता त्वं यस्मात् स्तुतिं वनसि तस्मात्त्वां हुव इत्यर्थः॥ ॥१३॥

'यदिन्द्राहम्' इति पञ्चदशर्चं द्वितीयं सूक्तं गोषूक्त्यश्वसूक्तिनोः काण्वगोत्रयोरार्षं गायत्रमैन्द्रम्। तथा चानुक्रान्तं—'यदिन्द्र पञ्चोना गोषूक्त्यश्वसूक्तिनौ काण्वायनौ' इति। महाव्रते निष्केवल्य एतत्सूक्तम्। तथैव पञ्चमारण्यके सूत्र्यते—'यदिन्द्राहं यथा त्वं प्र सम्राजं चर्षणीनामिति सूक्ते' (ऐ. आ. ५. २. ५) इति। तृतीये पर्याये ब्रह्मशस्त्रेऽपीदं सूक्तम्। सूत्रितं च—'यदिन्द्राहं प्र ते महे' (आश्व. श्रौ. ६. ४) इति॥

**यदिन्द्राहं यथा त्वमीशीय वस्व एक इत्। स्तोता मे गोषखा स्यात्॥ १॥**

यत्। इन्द्र। अहम्। यथा। त्वम्। ईशीय। वस्वः। एकः। इत्।
स्तोता। मे। गोऽसखा। स्यात्॥ १॥

---

१. घ-त-न-चक्षसे च। २. घ-त्वा त्वां। ३. श-वावंथ।

हे ^v^इन्द्र ^v^यथा ^v^त्वम् ^v^एक ^v^इत् एक एव केवलं ^v^वस्वः वसुनः धनस्य ईशिषे[1] एवम् अहम् अपि ^v^यत् यदि ^v^ईशीय ऐश्वर्ययुक्तः स्यां तदानीं ^v^मे मम ^v^स्तोता ^v^गोसखा ^v^स्यात् गोभिः हितो भवेत्। ईश्वरस्य तव स्तोता कुतो हेतोर्गोसहितो न भवेत् अपि तु भवेदित्यभिप्रायः[2] ॥

शिक्षेयमस्मै दित्सेयं शचीपते मनीषिणे। यदहं गोपतिः स्याम् ॥ २ ॥

क्षेयम्। अस्मै। दित्सेयम्। शचीऽपते। मनीषिणे। यत्। अहम्। गोऽपतिः। स्याम् ॥२॥

हे ^v^शचीपते शक्तिमन्निन्द्र ^v^अस्मै ^v^मनीषिणे मनस ईशित्रे स्तोत्रे ^v^दित्सेयं दातुमिच्छेयम्। दनन्तरं ^v^शिक्षेयं प्रार्थितं धनं दद्यां च। ^v^यत् यदि ^v^अहं ^v^गोपतिः गवामधिपतिः ^v^स्यां भवेयं त्प्रसादादिति शेषः ॥

धेनुष्ट इन्द्र सूनृता यजमानाय सुन्वते। गामश्वं पिप्युषी दुहे ॥ ३ ॥

नुः। ते। इन्द्र। सूनृता। यजमानाय। सुन्वते। गाम्। अश्वम्। पिप्युषी। दुहे ॥ ३ ॥

हे ^v^इन्द्र ^v^ते तव ^v^सूनृता स्तुतिरूपा वाक् ^v^धेनुः दोग्ध्री गौर्भूत्वा ^v^सुन्वते सोमाभिषवं वंते ^v^यजमानाय ^v^गामश्वं च। उपलक्षणमेतत्। गवाश्वादिकं सर्वमभिलषितं ^v^दुहे दुग्धे। किं वंती। ^v^पिप्युषी तमेव[3] प्रवर्धयित्री ॥

न ते वर्तास्ति राधस इन्द्र देवो न मर्त्यः। यद्दित्ससि स्तुतो मघम् ॥ ४ ॥

ते। वर्ता। अस्ति। राधसः। इन्द्र। देवः। न। मर्त्यः। यत्। दित्ससि। स्तुतः। मघम् ॥४॥

हे ^v^इन्द्र ^v^ते तव ^v^राधसः धनस्य स्तोतृभ्यो दातव्यस्य ^v^वर्ता निवारकः ^v^देवः ^v^न ^v^अस्ति विद्यते। ^v^न ^v^मर्त्यः मनुष्योऽपि निवारको नास्ति[4]। ^v^स्तुतः स्तोतृभिः प्रख्यापितगुणः सन् ^v^यत् यं ^v^मघं मंहनीयं धनं ^v^दित्ससि त्वं दातुमिच्छसि ॥

यज्ञ इन्द्रमवर्धयद्यद्भूमिं व्यवर्तयत्। चक्राण ओपशं दिवि ॥ ५ ॥

ः। इन्द्रम्। अवर्धयत्। यत्। भूमिम्। वि। अवर्तयत्। चक्राणः। ओपशम्। दिवि ॥५॥

^v^यज्ञः यजमानैरनुष्ठीयमानो यागः ^v^इन्द्रं देवम् ^v^अवर्धयत्। श्रूयते हि—'इन्द्र इदं वेरजुषतावीवृधत महो ज्यायोऽकृत' (तै. ब्रा. ३. ५. १०. ३) इति। स इन्द्रः ^v^यत् यस्मात् भूमिं पृथिवीं ^v^व्यवर्तयत् वृष्ट्यादिप्रदानेन विशेषेण वर्तमानामकरोत्। किं कुर्वन्। ^v^दिवि अन्तरिक्षे म् ^v^ओपशम् उपेत्य शयानं ^v^चक्राणः कुर्वन्। यद्वा। आत्मनि समवेतो वीर्यविशेष ओपशः। न्तरिक्षे कुर्वन् ॥ ॥ १४ ॥

वावृधानस्य ते वयं विश्वा धनानि जिग्युषः। ऊतिमिन्द्रा वृणीमहे ॥ ६ ॥

धानस्य। ते। वयम्। विश्वा। धनानि। जिग्युषः। ऊतिम्। इन्द्र। आ। वृणीमहे ॥६॥

हे ^v^इन्द्र ^v^वावृधानस्य[5] वर्धमानस्य ^v^विश्वा विश्वानि सर्वाणि ^v^धनानि शत्रुसंबन्धीनि जेग्युषः जितवतः ^v^ते तव ^v^ऊतिं रक्षां ^v^वयम् ^v^आ ^v^वृणीमहे आभिमुख्येन संभजामहे ॥

---

१. भ१-३–ईशिषे मह एव ईश्वरो भवसि मपि; य–ईशिषे ईश्वरो भवसि। २. ग-भ१-३-य–देवेत्य°; न–भवेदेत्य°। ३. भ–तमेव यजमानं। ४. त-न-भ–अस्ति। ५. ग-भ–वत्रृधानस्य

चातुर्विंशिकेऽहनि प्रातःसवने ब्राह्मणाच्छंसिशस्त्रे 'व्यन्तरिक्षमतिरत्' इत्ययं पर्यासस्तृचः। सूत्र्यते हि—'व्यन्तरिक्षमतिरच्छ्रायावाश्वस्य सुन्वत इति तृचाः पर्यासाः' (आश्व. श्रौ. ७.२) इति। अहर्गणेषु द्वितीयादिष्वहःस्वपि तस्यैव तस्मिन्नेव शस्त्रेऽयं पर्यासस्तृचः। सूत्रितं च—'पर्यासान्क-द्वतोऽहरहःशस्यानीति[1] होत्रका द्वितीयादिष्वेव' (आश्व. श्रौ. ७. १) इति ॥

व्य१॒न्तरि॑क्षमतिर॒न्मदे॒ सोम॑स्य रोच॒ना। इन्द्रो॒ यदभि॑नद्व॒लम् ॥ ७ ॥

वि। अ॒न्तरि॑क्षम्। अ॒ति॒र॒त्। मदे॑। सोम॑स्य। रो॒च॒ना। इन्द्रः॑। यत्। अभि॑नत्। व॒लम् ॥७॥

सोमस्य पानेन मदे हर्षे सति रोचना रोचमानम् अन्तरिक्षम् अयम् इन्द्रः वि अतिरत् व्यवर्धयत्। यत् यस्मात्कारणात् वलम् आवृत्य स्थितमसुरं मेघं वा अभिनत् व्यदारयत् ॥

उद्गा आ॑ज॒दङ्गि॑रोभ्य आ॒विष्कृ॒ण्वन्गुहा॑ स॒तीः। अ॒र्वाञ्चं॑ नुनुदे व॒लम् ॥ ८ ॥

उत्। गाः। आ॒ज॒त्। अङ्गि॑रःऽभ्यः। आ॒विः। कृ॒ण्वन्। गुहा॑। स॒तीः।

अ॒र्वाञ्च॑म्। नु॒नु॒दे॒। व॒लम् ॥ ८ ॥

अङ्गिरोभ्यः ऋषिभ्यो वलानुचरैः पणिभिरपहृताः गाः उत् आजत् उदगमयत्। किं कुर्वन्। गुहा गुहायां बिले सतीः विद्यमानाः यथा न दृश्यन्ते तथा पणिभिर्गूढास्ता गाः आविष्कृण्वन् प्रकाशयन्। अपि च पणीनामधिपतिं वलम् असुरमपि अर्वाञ्चम् अधोमुखं नुनुदे प्रेरितवान् ॥

इन्द्रे॑ण रोच॒ना दि॒वो दृ॒ळ्हानि॑ दृंहि॒तानि॑ च। स्थि॒राणि॒ न प॑रा॒णुदे॑ ॥ ९ ॥

इन्द्रे॑ण। रो॒च॒ना। दि॒वः। दृ॒ळ्हानि॑। दृं॒हि॒तानि॑। च॒। स्थि॒राणि॑। न। प॒रा॒ऽनु॒दे॑ ॥ ९ ॥

दिवः द्युलोकस्य संबन्धीनि रोचना रोचमानानि देवगृहात्मकानि नक्षत्राणि इन्द्रेण दृळ्हानि दृढावयवानि बलवन्ति कृतानि दृंहितानि च दृढीकृतानि। यथैकत्र नैश्चल्येनावतिष्ठन्ते तथा कृतानीत्यर्थः। यद्वा। 'दृह दृहि वृहि वृद्धौ'। दृंहितानि वर्धितानि चेत्यर्थः। अपि च स्थिराणि स्थास्नूनि[2] दृढानि तानि न पराणुदे परानोदनीयानि न भवन्ति। न केनापि स्थानात् प्रच्यावयितुं शक्यानीत्यर्थः। 'णुद प्रेरणे'। अस्मात् 'कृत्यार्थे॰' इति केन्प्रत्ययः[3] ॥

अ॒पामू॒र्मिर्मद॑न्निव॒ स्तोम॑ इन्द्राजिरायते। वि ते॒ मदा॑ अराजिषुः ॥ १० ॥

अ॒पाम्। ऊ॒र्मिः। मद॑न्ऽइव। स्तोम॑ः। इ॒न्द्र॒। अ॒जि॒र॒ऽय॒ते। वि। ते॒। मदा॑ः। अ॒रा॒जि॒षुः ॥ १० ॥

अपां समुद्राणाम् ऊर्मिः तरङ्गः मदन्निव यथा माद्यन्नुपर्युपरि जायते। हे इन्द्र स्तोमः त्वदीयं स्तोत्रं तथा अजिरायते। अजिरः क्षिप्रगामी। स इवाचरति। अपि च ते त्वदीयाः मदाः स्तोत्रजन्याः सोमपानजन्याश्च वि अराजिषुः विशेषेण राजन्ते दीप्यन्ते ॥ ॥ १५ ॥

त्वं हि स्तो॑म॒वर्ध॑न॒ इन्द्रास्यु॑क्थ॒वर्ध॑नः। स्तो॒तॄ॒णामु॒त भ॑द्र॒कृत् ॥ ११ ॥

त्वम्। हि। स्तो॒म॒ऽवर्ध॑नः। इन्द्र॑। असि॑। उ॒क्थ॒ऽवर्ध॑नः। स्तो॒तॄ॒णाम्। उ॒त। भ॒द्र॒ऽकृत् ॥ ११ ॥

---

१. ख-त-न-भ२-श—पर्यासान्युद्वतो॰। २. ख-ज्ञ-त३-श—स्थाणूनि; ग—स्थस्तूनि; त४-न-भ१—स्थाण्णूनि। ३. त१-२—केन्यप्रत्ययः।

हे ˇइन्द्र ˇत्वं ˇहि त्वं खलु ˇस्तोमवर्धनः स्तोमेन त्रिवृत्पञ्चदशादिना वर्धनीयः ˇअसि। तथा क्थवर्धनः उक्थैः शस्त्रैर्वर्धनीयश्च त्वमेवासि। ˇउत अपि च ˇस्तोतृणाम् अस्माकं ˇभद्रकृत् स्य कल्याणस्य फलस्य कर्तापि त्वमेवासि ॥

इन्द्रमित्केशिना हरी सोमपेयाय वक्षतः। उप यज्ञं सुराधसम् ॥ १२ ॥

्। इत्। केशिना। हरी इति। सोमऽपेयाय। वक्षतः। उप। यज्ञम्। सुऽराधसम् ॥१२॥

ˇकेशिना केशिनौ। मूर्धजानि लोमानि केशाः। तद्वन्तौ ˇहरी अश्वौ ˇसुराधसं शोभनधनम् न्द्रमित् इन्द्रमेव ˇयज्ञम् ˇउप अस्मद्यज्ञं प्रति ˇसोमपेयाय सोमपानार्थं ˇवक्षतः वहताम्। यद्वा। । यष्टव्यमिन्द्रमुपवहताम् ॥

अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः। विश्वा यदजयः स्पृधः ॥ १३ ॥

म्। फेनेन। नमुचेः। शिरः। इन्द्र। उत्। अवर्तयः। विश्वाः। यत्। अजयः। स्पृधः ॥१३॥

पुरा किलेन्द्रोऽसुराञ्जित्वा नमुचिमसुरं ग्रहीतुं न शशाक। स च युध्यमानस्तेनासुरेण जगृहे। च गृहीतमिन्द्रमेवमवोचत्। त्वां विसृजामि रात्रावह्नि च शुष्केणार्द्रेण चायुधेन यदि मां मा ीरिति। स इन्द्रस्तेन विसृष्टः सन्नहोरात्रयोः संधौ शुष्कार्द्रविलक्षणेन फेनेन तस्य शिरश्चिच्छेद। मर्थोऽस्यां प्रतिपाद्यते। हे ˇइन्द्र ˇअपां ˇफेनेन वज्रीभूतेन ˇनमुचेः असुरस्य ˇशिरः ˇउदवर्तयः ोरादुद्गतमवर्तयः। अच्छैत्सीरित्यर्थः। कदेति चेत्। ˇयत् यदा ˇविश्वाः सर्वाः ˇस्पृधः स्पर्धमाना पुरीः सेनाः ˇअजयः जितवानसि। इन्द्रो वृत्रं हत्वासुरान् --- ॥

मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः। अव दस्यूँरधूनुथाः ॥ १४ ॥

याभिः। उत्ऽसिसृप्सतः। इन्द्र। द्याम्। आऽरुरुक्षतः। अव। दस्यून्। अधूनुथाः ॥१४॥

--- हे ˇइन्द्र त्वम् ˇअव ˇअधूनुथाः अवाङ्मुखं प्रेरितवानसि ॥

असुन्वामिन्द्र संसदं विषूचीं व्यनाशयः। सोमपा उत्तरो भवन् ॥ १५ ॥

ुन्वाम्। इन्द्र। सम्ऽसदम्। विषूचीम्। वि। अनाशयः। सोमऽपाः। उत्ऽतरः। भवन् ॥१५॥

हे ˇइन्द्र त्वं ˇसोमपाः सोमस्य पाता भूत्वा ˇउत्तरः उत्कृष्टतरः ˇभवन् ˇअसुन्वां ाभिषवहीनां ˇसंसदं जनसंहतिं ˇविषूचीं परस्परविरोधेन विषु नाना गन्त्रीं ˇव्यनाशयः ोषेण नाशयसि ॥ ॥ १६ ॥

'तम्वभि' इति त्रयोदशर्चं तृतीयं सूक्तमौष्णिहमैन्द्रम्। पूर्वोक्तावेवर्षी। तथा चानुक्रम्यते— म्वभि सप्तोनौष्णिहम्' इति। महाव्रते निष्केवल्य औष्णिहतृचाशीतावुत्तमावर्जमेतत्सूक्तम्। यते हि—'तम्वभि प्र गायतेत्युत्तमामुद्धरति' (ऐ. आ. ५. २. ५) इति। आभिप्लविकेषूक्थ्येषु ीयसवने ब्रह्मशस्त्र आद्यस्तृचो वैकल्पिकोऽनुरूपः। सूत्रितं च—'तम्वभि प्र गायत वयमु मपूर्व्यं' (आश्व. श्रौ. ७. ८) इति ॥

तम्वभि प्र गायत पुरुहूतं पुरुष्टुतं। इन्द्रं गीर्भिस्तविषमा विवासत ॥ १ ॥

्। ॐ इति। अभि। प्र। गायत। पुरुऽहूतम्। पुरुऽस्तुतम्।
ंम्। गीःऽभिः। तविषम्। आ। विवासत ॥ १ ॥

ᵛपुरुहूतं बहुभिराहूतं ᵛपुरुष्टुतं बहुभिः स्तुतं ᵛतमु तमेवेन्द्रं हे स्तोतारः ᵛअभि ᵛप्र ᵛगायत अभिमुखं प्रकर्षेण स्तुध्वम्। एतदेव स्पष्टयति। ᵛतविषं महान्तम् ᵛइन्द्रं ᵛगीर्भिः वाग्भिः ᵛआ ᵛविवासत परिचरत ॥

यस्य॑ द्वि॒बर्ह॑सो बृ॒हत्सहो॑ दा॒धार॒ रोद॑सी। गि॒रीँरज्राँ॑ अ॒पः स्व॑र्वृषत्व॒ना ॥ २ ॥

यस्य॑। द्वि॒ऽबर्ह॑सः। बृ॒हत्। सहः॑। दा॒धार॑। रोद॑सी॒ इति॑।

गि॒रीन्। अज्रा॑न्। अ॒पः। स्व॑रिति॑ स्वः॑। वृ॒ष॒ऽत्व॒ना ॥ २ ॥

ᵛद्विबर्हसः द्वयोः स्थानयोः परिवृढस्य ᵛयस्य इन्द्रस्य ᵛबृहत् महत् ᵛसहः बलं ᵛरोदसी द्यावापृथिव्यौ ᵛदाधार धारयति। छान्दसो लिट्। तुजादित्वादभ्यासदीर्घः। तथा ᵛअज्रान् क्षिप्रगमनान् ᵛगिरीन् पर्वतान् मेघान् वा ᵛस्वः सरणशीलाः ᵛअपः उदकानि च ᵛवृषत्वना वृषत्वेन वीर्येण यस्येन्द्रस्य बलं धारयति तत्रावस्थापयति। तम्वभीति पूर्वया संबन्धः स त्वमित्युत्तरया वा[1] ॥

स रा॑जसि पुरुष्टुतँ॒ एको॑ वृ॒त्राणि॑ जिघ्नसे। इन्द्र॒ जैत्रा॑ श्रव॒स्या॑ च॒ यन्त॑वे ॥ ३ ॥

सः। रा॒ज॒सि॒। पु॒रु॒ऽस्तु॒त॒। एकः॑। वृ॒त्राणि॑। जि॒घ्न॒से॒।

इन्द्र॑। जैत्रा॑। श्र॒व॒स्या॑। च॒। यन्त॑वे ॥ ३ ॥

हे ᵛपुरुष्टुत बहुभिः स्तुत ᵛइन्द्र ᵛसः पूर्वोक्तगुणस्त्वं ᵛराजसि दीप्यसे ईशिषे वा। अपि च त्वम् ᵛएकः सहायरहितः[2] केवल एव सन् ᵛवृत्राणि आवरकाणि शत्रुजातानि ᵛजिघ्नसे हतवानसि। किमर्थम्। जैत्राणि[3] जेतव्यानि धनानि ᵛश्रवस्या श्रवस्यानि श्रवणीयान्यन्नानि यद्वा श्रवणार्हाणि यशांसि ᵛच ᵛयन्तवे यन्तुं नियन्तुं स्वाधीनं कर्तुम् ॥

आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिशस्त्रे 'तं ते मदम्' इति तृचो वैकल्पिकः स्तोत्रियः। सूत्र्यते हि—'तं ते मदं गृणीमसि तम्वभि प्र गायत' (आश्व. श्रौ. ७. ८) इति ॥

तं ते॒ मदं॑ गृणीमसि॒ वृष॑णं पृ॒त्सु सा॑स॒हिम्। उ॒ लो॒क॒कृ॒त्नुम॑द्रिवो हरि॒श्रिय॑म् ॥ ४ ॥

तम्। ते॒। मद॑म्। गृ॒णी॒म॒सि॒। वृष॑णम्। पृ॒त्ऽसु। स॒स॒हिम्।

ऊँ इति॑। लो॒क॒ऽकृ॒त्नुम्। अ॒द्रि॒ऽवः॒। ह॒रि॒ऽश्रिय॑म् ॥ ४ ॥

हे ᵛअद्रिवः वज्रवन्निन्द्र ᵛते त्वदीयं ᵛतं ᵛमदं सोमपानजनितं हर्षं ᵛगृणीमसि गृणीमः प्रशंसामः। 'गॄ शब्दे'। क्र्यादिः। 'प्वादीनां ह्रस्वः'। 'इदन्तो मसि' इति मस इकारागमः। कीदृशम्। ᵛवृषणं वर्षितारं कामानां ᵛपृत्सु संग्रामेषु ᵛसासहिं शत्रूणामभिभवितारं ᵛलोककृत्नुं लोकस्य स्थानस्य कर्तारं ᵛहरिश्रियं हरिभ्यामश्वाभ्यां श्रयणीयं सेव्यम्। उशब्दः समुच्चये[4] पदपूरणे वा ॥

येन॒ ज्योतीं॑ष्या॒यवे॒ मन॑वे च वि॒वेदि॑थ। म॒न्दा॒नो अ॒स्य ब॒र्हिषो॒ वि रा॑जसि ॥ ५ ॥

येन॑। ज्योतीं॑षि। आ॒यवे॑। मन॑वे। च॒। वि॒वेदि॑थ। म॒न्दा॒नः। अ॒स्य। ब॒र्हिषः॑। वि। रा॒ज॒सि॒ ॥५॥

हे इन्द्र ᵛयेन आत्मीयेन मदेन ᵛआयवे और्वशेयाय ᵛमनवे विवस्वतः पुत्राय ᵛच ᵛज्योतींषि सूर्यादीनि वृत्रादिभिरावृतानि तद्वधेन ᵛविवेदिथ अलम्भयः। प्रज्ञापितवान् प्रकाशितवानसीत्यर्थः।

---

१. ख-घ-त-भ२—च। २. घ—असहायः। ३. घ—जैत्रा। ४. ग—एषां समुच्चये; त-न-भ२—येषां समुच्चये; भ१-३—सर्वेषां समुच्चये।

तेन मदेन ᵛमन्दानः मोदमानस्त्वम् ᵛअस्य ᵛबर्हिषः वृद्धस्य यज्ञस्य ᵛवि ᵛराजसि विशेषेणेशिषे । यद्वा । अस्येति तृतीयार्थे षष्ठी । अनेन बर्हिषा वृद्धेन[1] हृष्यन् वि राजसि विशेषेण दीप्यसे ॥ ॥१७॥

**तदुद्या चित्त उक्थिनोऽनु ष्टुवन्ति पूर्वथा । वृषपत्नीरपो जया दिवेदिवे ॥ ६ ॥**

तत् । अद्य । चित् । ते । उक्थिनः । अनु । स्तुवन्ति । पूर्वऽथा ।

वृषऽपत्नीः । अपः । जय । दिवेऽदिवे ॥ ६ ॥

हे इन्द्र ᵛते त्वदीयं ᵛतत् प्रसिद्धं बलम् ᵛअद्य ᵛचित् अद्यापि ᵛपूर्वथा पूर्वस्मिन्काल इव ᵛउक्थिनः शस्त्रिणः स्तोतारः ᵛअनु ᵛष्टुवन्ति क्रमेण प्रशंसन्ति । स त्वं ᵛवृषपत्नीः वृषा वर्षिता पर्जन्यः पतिर्यासां तादृशीः ᵛअपः ᵛदिवेदिवे प्रतिदिवसं ᵛजय स्वायत्तं कुरु ॥

**तव त्यदिन्द्रियं बृहत्तव शुष्ममुत क्रतुम् । वज्रं शिशाति धिषणा वरेण्यम् ॥७॥**

तव । त्यत् । इन्द्रियम् । बृहत् । तव । शुष्मम् । उत । क्रतुम् ।

वज्रम् । शिशाति । धिषणा । वरेण्यम् ॥ ७ ॥

हे इन्द्र ᵛत्यत्[2] तत् प्रसिद्धम् ᵛइन्द्रियम् इन्द्रस्य लिङ्गं ᵛबृहत् प्रभूतं वीर्यं ᵛधिषणा स्तुतिः ᵛशिशाति निःश्यति तीक्ष्णीकरोति । तथा ᵛतव त्वदीयं ᵛशुष्मं शोषकं बलम् ᵛउत अपि च ᵛक्रतुं प्रज्ञानं बलं कर्म वा ᵛवरेण्यं वरणीयं ᵛवज्रम् आयुधं च स्तुतिस्तीक्ष्णीकरोति ॥

**तव द्यौरिन्द्र पौंस्यं पृथिवी वर्धति श्रवः । त्वामापः पर्वतासश्च हिन्विरे ॥८॥**

तव । द्यौः । इन्द्र । पौंस्यम् । पृथिवी । वर्धति । श्रवः । त्वाम् । आपः । पर्वतासः । च । हिन्विरे ॥८॥

हे ᵛइन्द्र ᵛतव त्वदीयं ᵛपौंस्यं बलं ᵛद्यौः ᵛवर्धति वर्धयति । त्वदीयं ᵛश्रवः यशः ᵛपृथिवी वर्धयति । वृधेर्ण्यन्ताल्लटि[3] शपि 'छन्दस्युभयथा' इत्यार्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । तं ᵛत्वाम् ᵛआपः उदकानि अन्तरिक्षाणि ᵛपर्वतासः पर्वताः पर्ववन्तो मेघाः ᵛच गिरयश्च वा ᵛहिन्विरे प्रीणयन्ति स्वामित्वेन प्राप्नुवन्ति वा ॥

**त्वां विष्णुर्बृहन्क्षयो मित्रो गृणाति वरुणः । त्वां शर्धो मदत्यनु मारुतम् ॥ ९ ॥**

त्वाम् । विष्णुः । बृहन् । क्षयः । मित्रः । गृणाति । वरुणः ।

त्वाम् । शर्धः । मदति । अनु । मारुतम् ॥ ९ ॥

हे इन्द्र ᵛबृहन् महान् ᵛक्षयः निवासहेतुः ᵛविष्णुः ᵛमित्रः ᵛवरुणः च ᵛत्वां ᵛगृणाति स्तौति । तथा ᵛमारुतं मरुत्संबन्धि ᵛशर्धः बलं ᵛत्वाम् ᵛअनु ᵛमदति तव मदमनुलक्ष्य पश्चान्माद्यति । त्वामनुमादयति वा ॥

**त्वं वृषा जनानां मंहिष्ठ इन्द्र जज्ञिषे । सत्रा विश्वा स्वपत्यानि दधिषे ॥ १० ॥**

त्वम् । वृषा । जनानाम् । मंहिष्ठः । इन्द्र । जज्ञिषे । सत्रा । विश्वा । सुऽअपत्यानि । दधिषे ॥१०॥

---

१. न-भ-वृद्धेन मदेन । २. ज्ञ-भ-तव त्यत् । ३. ख-त-न-श-°ल्लटि ।

हे ᵛइन्द्र ᵛवृषा वर्षिता ᵛत्वं ᵛजनानां देवजनानां मध्ये ᵛमंहिष्ठः दातृतमः ᵛजज्ञिषे प्रादुर्भवसि। अत एव ᵛविश्वा सर्वाणि[1] ᵛस्वपत्यानि शोभनैः पुत्रादिभिः सहितानि ᵛसत्रा सह ᵛदधिषे[2] दातुं धारयसि। ददासि वा ॥ ॥ १८ ॥

सत्रा त्वं पुरुष्टुतँ एको वृत्राणि तोशसे। नान्य इन्द्रात्करणं भूर्य इन्वति ॥११॥

सत्रा। त्वम्। पुरुऽस्तुत। एकः। वृत्राणि। तोशसे।
न। अन्यः। इन्द्रात्। करणम्। भूर्यः। इन्वति ॥ ११ ॥

हे ᵛपुरुष्टुत बहुभिः स्तुतेन्द्र ᵛत्वम् ᵛएकः असहाय एव सन् ᵛसत्रा। महन्नामैतत्। महान्ति ᵛवृत्राणि शत्रुजातानि। यद्वा। सत्रेति सहार्थे। सहैव युगपदेवैकयत्नेनैव ᵛतोशसे हिनस्सि। तोशतिर्वधकर्मा। अकर्तुं शक्तानीति भावः। अपि चास्मात् ᵛइन्द्रात् ᵛअन्यः कश्चित् ᵛभूयः बहुतरं ᵛकरणं कर्म वृत्रवधादिकं ᵛन ᵛइन्वति न प्राप्नोति। इन्द्र[3] एव कर्तुं शक्नोतीति भावः ॥

यदिन्द्र मन्मशस्त्वा नाना हवन्त ऊतये। अस्माकेभिर्नृभिरत्रा स्वर्जय ॥ १२ ॥

यत्। इन्द्र। मन्मऽशः। त्वा। नाना। हवन्ते। ऊतये।
अस्माकेभिः। नृऽभिः। अत्र। स्वः। जय ॥ १२ ॥

हे ᵛइन्द्र ᵛयत् यस्मिन् संग्रामे त्वां[4] ᵛमन्मशः मन्मना[5] स्तोत्रेण ᵛनाना बहुप्रकारं ᵛहवन्ते आह्वयन्ति। किमर्थम्। ᵛऊतये रक्षायै। ᵛअत्र अस्मिन् संग्रामे ᵛअस्माकेभिः अस्माकैरस्मदीयैरेव ᵛनृभिः नेतृभिः स्तोतृभिराहूतः सन् ᵛस्वः शत्रुबलं[6] ᵛजय अभिभव ॥

अरं क्षयाय नो महे विश्वा रूपाण्याविशन्। इन्द्रं जैत्राय हर्षया शचीपतिम् ॥१३॥

अरम्। क्षयाय। नः। महे। विश्वा। रूपाणि। आऽविशन्।
इन्द्रम्। जैत्राय। हर्षय। शचीऽपतिम् ॥ १३ ॥

हे स्तोतः ᵛमहे महते ᵛनः अस्माकं ᵛक्षयाय। गृहनामैतत्। गृहाय। तादर्थ्ये चतुर्थी। गृहार्थम् ᵛअरम् अलं पर्याप्तं ᵛविश्वा विश्वानि व्याप्तानि[7] ᵛरूपाणि इन्द्रगतानि गुणजातानि ᵛआविशन् स्तुत्या व्याप्नुवन् ᵛशचीपतिम्। शचीति कर्मनाम। कर्मणां पालकम्। यद्वा। शच्या इन्द्राण्या भर्तारम्। तमेव ᵛइन्द्रं ᵛजैत्राय जेतव्यधनार्थं ᵛहर्षय तोषय। स्तुत्या परिचरणेन वेति शेषः ॥ ॥ १९ ॥

'प्र सम्राजम्' इति द्वादशर्चं चतुर्थं सूक्तमिरिम्बिठिनाम्नः काण्वस्यार्षं गायत्रमैन्द्रम्। अनुक्रम्यते हि—'प्र सम्राजं द्वादशेरिम्बिठिः' इति। अतिरात्रे द्वितीये पर्यायेऽच्छावाकशस्त्र एतत्सूक्तम्। सूत्रितं च—'प्र सम्राजमुप क्रमस्वा भर' (आश्व. श्रौ. ६. ४) इति। महाव्रतेऽपि निष्केवल्य एतदादिके द्वे सूक्ते उपरितनस्यान्त्यं तृचं वर्जयित्वा। तथैव पञ्चमारण्यके सूत्रितं—'प्र सम्राजं चर्षणीनामिति सूक्ते उत्तरस्योत्तमे उद्धरति' (ऐ. आ. ५. २. ५) इति ॥

प्र सम्राजं चर्षणीनामिन्द्रं स्तोता नव्यं गीर्भिः। नरं नृषाहं मंहिष्ठम् ॥ १ ॥

---

१. भ–सर्वाणि धनानि। २. ख–दधिषे स्तोतृतमो जज्ञिषे प्रादुर्भवसि; ग–दधिषे सर्वेभ्यो; त-न-श– दधिषे स्तोतृतमो जज्ञिषे प्रादुर्भवसि अत एव विश्वा सर्वाभ्यो; भ–दधिषे स्तोतृभ्यो। ३. ग-न-भ– अपि तु इंद्र। ४. घ–त्वा त्वां। ५. ग–मन्मना मन्मना; त-भ–मन्मना मज्मना; न–मन्मना मत्मना। ६. ग-भ२–सर्वं शत्रुबलं; घ-न-भ१-३– सर्वशत्रुबलं। ७. ग–समस्तानि।

प्र । सम्ऽराजम् । चर्षणीनाम् । इन्द्रम् । स्तोत । नव्यम् । गीःऽभिः ।
नरम् । नृऽसहम् । मंहिष्ठम् ॥ १ ॥

ᵛचर्षणीनां मनुष्याणां मध्ये ᵛसम्राजं सम्यग्राजमानं यद्वा मनुष्याणामधीश्वरम् ᵛइन्द्रं हे स्तोतारः ᵛप्र ᵛस्तोत प्रकर्षेण स्तुत । कीदृशम् । ᵛगीर्भिः स्तुतिभिः ᵛनव्यं स्तुत्यं ᵛनरं नेतारं ᵛनृषाहं नृणां शत्रुमनुष्याणामभिभवितारं ᵛमंहिष्ठं दातृतमम् ॥

**यस्मिन्नुक्थानि रण्यन्ति विश्वानि च श्रवस्या । अपामवो न समुद्रे ॥ २ ॥**

यस्मिन् । उक्थानि । रण्यन्ति । विश्वानि । च । श्रवस्या । अपाम् । अवः । न । समुद्रे ॥ २ ॥

ᵛयस्मिन् इन्द्रे ᵛउक्थानि शस्त्राणि ᵛरण्यन्ति रमन्ते ᵛविश्वानि सर्वाणि ᵛश्रवस्या श्रवस्यानि श्रवणीयानि हविर्लक्षणान्यन्नानि ᵛच रमन्ते । तत्र दृष्टान्तः । ᵛसमुद्रे उदधौ ᵛअपाम् उदकानाम् ᵛअवो ᵛन । अवति गच्छतीत्यवस्तरङ्गजालम् । तद्यथा समुद्रेऽन्तर्भवति तथा रण्यन्तीत्यर्थः ॥

**तं सुष्टुत्या विवासे ज्येष्ठराजं भरे कृत्नुम् । महो वाजिनं सनिभ्यः ॥ ३ ॥**

तम् । सुऽस्तुत्या । आ । विवासे । ज्येष्ठऽराजम् । भरे । कृत्नुम् । महः । वाजिनम् । सनिऽभ्यः ॥३॥

ᵛतम् इन्द्रं ᵛसुष्टुत्या शोभनया स्तुत्या ᵛआ ᵛविवासे परिचरामि । कीदृशम् । ᵛज्येष्ठराजं ज्येष्ठेषु प्रशस्यतमेषु देवेषु मध्ये राजमानम् । राजतेः ' सत्सूद्विष° ' इति क्विप् । ᵛभरे संग्रामे ᵛमहः महतो वृत्रवधादेः ᵛकृत्नुं कर्तारं ᵛवाजिनम् अन्नवन्तं बलवन्तं वा । किमर्थम् । ᵛसनिभ्यः धनेभ्यः । धनलाभायेत्यर्थः ॥

**यस्यानूना गभीरा मदा उरवस्तरुत्राः । हर्षुमन्तः शूरसातौ ॥ ४ ॥**

यस्य । अनूनाः । गभीराः । मदाः । उरवः । तरुत्राः । हर्षुऽमन्तः । शूरऽसातौ ॥ ४ ॥

ᵛयस्य इन्द्रस्य ᵛमदाः सोमपानजनिताः ᵛअनूनाः अन्यूनाः ᵛगभीराः गाम्भीर्योपेताः ᵛउरवः विस्तीर्णाः ᵛतरुत्राः शत्रूणां तारकाः ᵛशूरसातौ शूरसंभजनीये संग्रामे ᵛहर्षुमन्तः हर्षयुक्ताः संग्रामोत्सुका भवन्ति । तमिन्द्रमिति पूर्वयोत्तरया वा संबन्धः ॥

**तमिद्धनेषु हितेष्वधिवाकाय हवन्ते । येषामिन्द्रस्ते जयन्ति ॥ ५ ॥**

तम् । इत् । धनेषु । हितेषु । अधिऽवाकाय । हवन्ते । येषाम् । इन्द्रः । ते । जयन्ति ॥ ५ ॥

ᵛधनेषु ᵛहितेषु शत्रुषु निहितेषु प्राप्तव्येषु सत्सु ᵛतमित् तं पूर्वोक्तगुणमेवेन्द्रम् ᵛअधिवाकाय अधिवचनाय पक्षपातवचनाय ᵛहवन्ते स्तोतार आह्वयन्ति । तत्र च ᵛयेषां पक्षे ᵛइन्द्रः वर्तते ᵛते एव ᵛजयन्ति । जयेन तानि धनानि लभन्ते नान्ये ॥

**तमिच्च्यौत्नैरार्यन्ति तं कृतेभिश्चर्षणयः । एष इन्द्रो वरिवस्कृत् ॥ ६ ॥**

तम् । इत् । च्यौत्नैः । आर्यन्ति । तम् । कृतेभिः । चर्षणयः । एषः । इन्द्रः । वरिवःऽकृत् ॥ ६ ॥

ᵛतमित् तमेवेन्द्रं ᵛच्यौत्नैः बलकरैः स्तोत्रैः ᵛआर्यन्ति आर्यमभिज्ञमीश्वरं कुर्वन्ति । ᵛचर्षणयः मनुष्याः कृतैः[1] कर्मभिश्चार्यन्ति । ᵛएषः एवंगुणकः ᵛइन्द्रः ᵛवरिवस्कृत् धनस्य कर्ता भवति स्तोतॄणाम् ॥ ॥ २० ॥

---

१. ग-म१-३—कृतेभिः कृतैः; घ—कृतेभिः ।

इन्द्रो॑ ब्र॒ह्मेन्द्र॒ ऋषि॒रिन्द्रः॑ पु॒रू पु॑रुहू॒तः । म॒हान्म॒हीभि॒: शची॑भिः ॥ ७ ॥
इन्द्रः॑ । ब्र॒ह्मा । इन्द्रः॑ । ऋषिः॑ । इन्द्रः॑ । पु॒रु । पु॒रु॒ऽहू॒तः । म॒हान् । म॒हीभिः॑ । शची॑भिः ॥ ७ ॥

अयम् <sup>v</sup>इन्द्रः <sup>v</sup>ब्रह्मा परिवृढः सर्वेभ्योऽधिकः । स एव <sup>v</sup>इन्द्रः <sup>v</sup>ऋषिः द्रष्टा सर्वस्यार्थजातस्य[1] । सः <sup>v</sup>इन्द्रः <sup>v</sup>पुरु बहुलं <sup>v</sup>पुरुहूतः बहुभिराहूतश्च <sup>v</sup>महीभिः महतीभिः <sup>v</sup>शचीभिः क्रियाभिर्वृत्रवधादि-रूपाभिः <sup>v</sup>महान् प्रभूतो भवति ॥

स स्तोम्य॒: स हव्य॑: स॒त्यः सत्वा॑ तुविकू॒र्मिः । एक॑श्चि॒त्सन्न॒भिभू॑तिः ॥ ८ ॥
सः । स्तोम्यः॑ । सः । हव्यः॑ । स॒त्यः । सत्वा॑ । तु॒वि॒ऽकू॒र्मिः ।
एकः॑ । चि॒त् । सन् । अ॒भिऽभू॑तिः ॥ ८ ॥

<sup>v</sup>सः पूर्वोक्त इन्द्रः <sup>v</sup>स्तोम्यः स्तोमार्हः स्तुत्यर्हः । <sup>v</sup>सः एव <sup>v</sup>हव्यः ह्वातव्यश्च <sup>v</sup>सत्यः सत्सु साधुरवितथस्वभावो वा <sup>v</sup>सत्वा शत्रूणामवसादयिता <sup>v</sup>तुविकूर्मिः बहुकर्मा । यत एवमतः कारणात् <sup>v</sup>एकश्चित्सन् असहायोऽपि भवन् <sup>v</sup>अभिभूतिः शत्रूणामभिभविता तिरस्कर्ता भवति ॥

तम॒र्केभि॒स्तं साम॑भि॒स्तं गा॑य॒त्रैश्च॑र्ष॒णय॑: । इन्द्रं॑ वर्धन्ति क्षि॒तय॑: ॥ ९ ॥
तम् । अ॒र्केभिः॑ । तम् । साम॑ऽभिः । तम् । गा॒य॒त्रैः । च॒र्ष॒णयः॑ । इन्द्र॑म् । व॒र्ध॒न्ति॒ । क्षि॒तयः॑ ॥ ९ ॥

<sup>v</sup>चर्षणयः द्रष्टारो मन्त्राणां <sup>v</sup>क्षितयः मनुष्याः <sup>v</sup>तं इन्द्रम् <sup>v</sup>अर्केभिः अर्चनसाधनैर्यजूरूपैर्मन्त्रैः <sup>v</sup>वर्धन्ति वर्धयन्ति । तथोद्गातारः <sup>v</sup>सामभिः गानविशिष्टैर्मन्त्रैः <sup>v</sup>तं वर्धयन्ति । तथा <sup>v</sup>गायत्रैः गायत्र्यादिच्छन्दोयुक्तैः शस्त्ररूपैरप्रगीतैर्मन्त्रैः <sup>v</sup>तम् एव <sup>v</sup>इन्द्रं होतारो वर्धयन्ति ॥

प्र॒णे॒तारं॒ वस्यो॒ अच्छा॒ कर्ता॑रं॒ ज्योति॑: स॒मत्सु॑ । सा॒स॒ह्वांसं॑ यु॒धामित्रा॑न् ॥ १० ॥
प्र॒ऽने॒तार॑म् । वस्यः॑ । अच्छ॑ । कर्ता॑रम् । ज्योतिः॑ । स॒मत्ऽसु॑ । स॒स॒ह्वांस॑म् । यु॒धा । अ॒मित्रा॑न् ॥ १० ॥

<sup>v</sup>वस्यः वसीयः प्रशस्तं वसु धनम् <sup>v</sup>अच्छ आभिमुख्येन <sup>v</sup>प्रणेतारं प्रापयितारं <sup>v</sup>समत्सु संग्रामेषु शत्रुनिरसनेन <sup>v</sup>ज्योतिः प्रकाशं जयलक्षणं <sup>v</sup>कर्तारं करणशीलम् । करोतेस्ताच्छीलिकस्तृन् । कुत इत्यत आह । <sup>v</sup>युधा युद्धेन <sup>v</sup>अमित्रान् शत्रून् <sup>v</sup>ससह्वांसम् अभिभूतवन्तम् । एवंगुणकमिन्द्रं वर्धयन्तीति शेषः ॥

स न॒: पप्रि॑: पारयाति स्व॒स्ति ना॒वा पु॑रुहू॒तः । इन्द्रो॒ विश्वा॒ अति॒ द्विष॑: ॥ ११ ॥
सः । नः॒ । पप्रिः॑ । पा॒र॒या॒ति॒ । स्व॒स्ति । ना॒वा । पु॒रु॒ऽहू॒तः । इन्द्रः॑ । विश्वाः॑ । अति॑ । द्विषः॑ ॥ ११ ॥

<sup>v</sup>पप्रिः प्राता पूरयिता <sup>v</sup>पुरुहूतः बहुभिराहूतः <sup>v</sup>सः <sup>v</sup>इन्द्रः <sup>v</sup>विश्वाः सर्वाः <sup>v</sup>द्विषः द्वेष्ट्रीः प्रजाः <sup>v</sup>नः अस्मान् <sup>v</sup>नावा तरणसाधनेन <sup>v</sup>स्वस्ति क्षेमेण <sup>v</sup>अति <sup>v</sup>पारयाति अतिपारयतु[2] ॥

स त्वं न॑ इन्द्र॒ वाजे॑भिर्दश॒स्या च॑ गातु॒या च॑ । अच्छा॑ च नः सु॒म्नं ने॑षि ॥ १२ ॥
सः । त्वम् । नः॒ । इ॒न्द्र॒ । वाजे॑भिः । द॒श॒स्य । च॒ । गा॒तु॒ऽय । च॒ ।
अच्छ॑ । च॒ । नः॒ । सु॒म्नम् । ने॒षि॒ ॥ १२ ॥

---

१. ग-न-भ-सर्वस्यार्थ॰ । २. ग-त-न-भ-अतिपारयतु अतिपालयतु ।

हे इन्द्र सः तादृशः त्वम् नः अस्मभ्यं वाजेभिः बलैः दशस्य च धनं प्रयच्छ च। दशस्यतिर्दानकर्मा। गातुय च गातुं मार्गमस्मभ्यमिच्छ च। गातुशब्दात् ‘छन्दसि परेच्छायाम्०’ इति क्यच्। ‘न च्छन्दस्यपुत्रस्य’ इति दीर्घनिषेधः। तथा नः अस्मान् सुम्नं सुखं च अच्छ नेषि अभिप्रापय[1]॥ ॥ २१ ॥

‘आ याहि’ इति पञ्चदशर्चं पञ्चमं सूक्तमिरिम्बिठेरार्षमैन्द्रम्। चतुर्दशी बृहती पञ्चदशी सतोबृहत्यादितस्त्रयोदश गायत्र्यः। अनुक्रम्यते हि—‘आ याहि पञ्चोना प्रगाथान्तम्’ इति। अन्त्यं प्रगाथं वर्जयित्वा शिष्टस्य महाव्रत उक्तो विनियोगः। ज्योतिष्टोमे प्रातःसवने ब्रह्मशस्त्र आद्याः षडृचः स्तोत्रियानुरूपार्थाः। तथानन्तराः सप्तर्चश्च शंसनीयाः। सूत्र्यते हि—‘आ याहि सुषुमा हि त इति षट् स्तोत्रियानुरूपावनन्तराः सप्त’ (आश्व. श्रौ. ५. १० ) इति। चातुर्विंशिकेऽहनि प्रातःसवन आद्यस्तृचोऽस्मिन्नेव शस्त्रे षळहस्तोत्रियसंज्ञक आवापार्थः। सूत्रितं च—‘आ याहि सुषुमा हि त इन्द्रमिद्गाथिनो बृहत्’ (आश्व. श्रौ. ७. २ ) इति॥

**आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम्। एदं बर्हिः सदो मम॥ १॥**

आ। याहि। सुसुम। हि। ते। इन्द्र। सोमम्। पिब। इमम्। आ। इदम्। बर्हिः। सदः। मम॥१॥

हे इन्द्र त्वम् आ याहि आगच्छ। ते त्वदर्थं सुषुम[2] हि अभिषुतवन्तः खलु सोमं वयम्। तम् इमम् अभिषुतं सोमं पिब। तदर्थं मम मदीयम् इदं बर्हिः वेद्यामास्तीर्णम् आ सदः आसीद अभिनिषीद॥

**आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना। उप ब्रह्माणि नः शृणु॥ २॥**

आ। त्वा। ब्रह्मऽयुजा। हरी इति। वहताम्। इन्द्र। केशिना। उप। ब्रह्माणि। नः। शृणु॥२॥

हे इन्द्र ब्रह्मयुजा ब्रह्मणा मन्त्रेण युज्यमानौ केशिना केशिनौ केशवन्तौ हरी हरणशीलावश्वौ त्वा त्वाम् आ वहताम् अभिप्रापयताम्। त्वं चास्मद्यज्ञमुपेत्य नः अस्माकं ब्रह्माणि स्तोत्राणि शृणु स्तोत्राणि गृहाण। सम्यक् चित्ते धारय॥

**ब्रह्माणस्त्वा वयं युजा सोमपामिन्द्र सोमिनः। सुतावन्तो हवामहे॥ ३॥**

ब्रह्माणः। त्वा। वयम्। युजा। सोमऽपाम्। इन्द्र। सोमिनः। सुतऽवन्तः। हवामहे॥ ३॥

हे इन्द्र ब्रह्माणः ब्राह्मणाः वयं त्वा त्वां युजा योग्येन स्तोत्रेण हवामहे आह्वयामहे। कथंभूतम्। सोमपां सोमस्य पातारम्। कीदृशा वयम्। सोमिनः सोमयुक्ताः सुतवन्तः अभिषुतैश्च सोमैरुपेताः॥

**आ नो याहि सुतावतोऽस्माकं सुष्टुतीरुप। पिबा सु शिप्रिन्नन्धसः॥ ४॥**

आ। नः। याहि। सुतऽवतः। अस्माकम्। सुऽस्तुतीः। उप। पिब। सु। शिप्रिन्। अन्धसः॥४॥

हे इन्द्र सुतवतः अभिषुतसोमयुक्तानस्मान् आ याहि अभिगच्छ। ततः अस्माकं संबन्धीनि सुष्टुतीः शोभनानि स्तोत्राण्युपगच्छ जानीहि। हे सुशिप्रिन् शोभनशिरस्त्राण शोभनहनुक वेन्द्र अन्धसः अन्नस्य सोमलक्षणस्य स्वांशलक्षणं भागं पिब। यद्वा कर्मणि षष्ठी। अन्धोऽस्मदीयं सोमं पिब॥

---

१. ग१–अभिप्रापयसि; ग२–अभिप्रायः। २. ग-त-भ–सुषुमा।

**आ ते सिञ्चामि कुक्ष्योरनु गात्रा वि धावतु । गृभाय जिह्वया मधु ॥ ५ ॥**

आ । ते । सिञ्चामि । कुक्ष्योः । अनु । गात्रा । वि । धावतु । गृभाय । जिह्वया । मधु ॥ ५ ॥

हे इन्द्र ते तव कुक्ष्योः उदरयोः आ सिञ्चामि सोमानवनयामि । कुक्षी सोमेन पूरयामीत्यर्थः । इन्द्रस्य हि द्वे उदरे । तथा च श्रूयते—'ओभा कुक्षी पृणता वार्त्रघ्नं च माघोनं च' इति[1] । यद्वा । एकस्यैवोदरस्य सव्यदक्षिणभेदेनोर्ध्वाधोभागभेदेन वा द्वित्वम् । स[2] चासिक्तः[2] सोमो गात्राणि[3] शरीरावयवानि हस्तपादादीनि सर्वाण्यनुक्रमेण[4] वि धावतु व्याप्नोतु । त्वं च मधु मधुरं मया सिच्यमानं सोमं जिह्वया रसनेन्द्रियेण गृभाय गृहाण । 'छन्दसि शायजपि' इति ग्रह[5] उत्तरस्य श्नः शायजादेशः । 'हृग्रहोर्भः°' इति भत्वम् ॥　　॥ २२ ॥

**स्वादुष्टे अस्तु संसुदे मधुमान्तन्वे३ तव । सोमः शमस्तु ते हृदे ॥ ६ ॥**

स्वादुः । ते । अस्तु । सम्ऽसुदे । मधुऽमान् । तन्वे । तव । सोमः । शम् । अस्तु । ते । हृदे ॥६॥

संसुदे सम्यक् सुष्ठु दात्रे हे इन्द्र ते तुभ्यं मधुमान् माधुर्यवानयं सोमः स्वादुः अस्तु रुचिकरो भवतु । तव तन्वे शरीराय च स्वादुरस्तु । तव हृदे हृदयाय च सः सोमः शमस्तु सुखजनकं भवतु ॥

**अयमु त्वा विचर्षणे जनीरिवाभि संवृतः । प्र सोम इन्द्र सर्पतु ॥ ७ ॥**

अयम् । ऊँ इति । त्वा । विऽचर्षणे । जनीःऽइव । अभि । सम्ऽवृतः । प्र । सोमः । इन्द्र । सर्पतु ॥७॥

हे विचर्षणे विद्रष्टः इन्द्र जनीरिव जनयो जाया इव ता यथा शुक्लैः वस्त्रैः संवृता भवन्ति एवं संवृतः पयःप्रभृतिभिः श्रयणद्रव्यैरावृतः अयं सोमः[6] अभि प्र सर्पतु अभिगच्छतु । उ इति पूरकः ॥

**तुविग्रीवो वपोदरः सुबाहुरन्धसो मदे । इन्द्रो वृत्राणि जिघ्नते ॥ ८ ॥**

तुविऽग्रीवः । वपाऽउदरः । सुऽबाहुः । अन्धसः । मदे । इन्द्रः । वृत्राणि । जिघ्नते ॥ ८ ॥

तुविग्रीवः विस्तीर्णकन्धरः वपोदरः पीवरोदरः[7] यथा बहवः सोमाः पीता अन्तर्भवन्ति तथा विस्तृतजठर इत्यर्थः । सुबाहुः शोभनबाहुरेवंगुणकः इन्द्रः अन्धसः अन्नस्य सोमात्मकस्य मदे हर्षे सति वृत्राणि शत्रुजातानि जिघ्नते हिनस्ति ॥

**इन्द्र प्रेहि पुरस्त्वं विश्वस्येशान ओजसा । वृत्राणि वृत्रहञ्जहि ॥ ९ ॥**

इन्द्र । प्र । इहि । पुरः । त्वम् । विश्वस्य । ईशानः । ओजसा । वृत्राणि । वृत्रऽहन् । जहि ॥९॥

हे इन्द्र ओजसा बलेन विश्वस्य सर्वस्य जगतः ईशानः स्वामी भवन् त्वं पुरः अस्माकं पुरस्तात् प्रेहि प्रगच्छ प्राप्नुहि । हे वृत्रहन् वृत्राणामावरकाणां शत्रूणां हन्तः वृत्राणि अस्मदीयानि शत्रुजातानि जहि विनाशय ॥

अभ्युदयेष्टाविन्द्रस्य प्रदातुः 'दीर्घस्ते अस्त्वङ्कुशः' इत्यनुवाक्या । सूत्र्यते हि—'दीर्घस्ते अस्त्वङ्कुशो भद्रा ते हस्ता सुकृतोत पाणी' (आश्व. श्रौ. ३. १३) इति ॥

---

१. ग-त-भ-इति स चासिक्तः । २. ग-त-भ-'स चासिक्तः' नास्ति । ३. भ-गात्रा गात्राणि । ४. य-सर्वाण्यनु अनुक्रमेग । ५. ग-ग्रहेः । ६. ग-भ-सोमस्त्वां । ७. ग-वपावदुदरः ।

दीर्घस्ते अस्त्वङ्कुशो येना वसु प्रयच्छसि । यजमानाय सुन्वते ॥ १० ॥

दीर्घः । ते । अस्तु । अङ्कुशः । येन । वसु । प्रऽयच्छसि । यजमानाय । सुन्वते ॥ १० ॥

हे इन्द्र ^v^ते तव ^v^अङ्कुशः सृणिराकर्षणसाधनमायुधं ^v^दीर्घः ^v^अस्तु आयतो भवतु । यथा दूरस्थमपि वस्तु व्याप्नोति तथायामवान् भवत्वित्यर्थः । ^v^येन अङ्कुशेन ^v^सुन्वते सोमाभिषवं कुर्वते ^v^यजमानाय ^v^वसु धनमाहृत्य ^v^प्रयच्छसि ददासि ॥ ॥ २३ ॥

द्वितीये पर्याये होतुः शस्त्रे 'अयं त इन्द्र' इति स्तोत्रियस्तृचः । सूत्रितं च—'अयं त इन्द्र सोमोऽयं ते मानुषे जने' (आश्व. श्रौ. ६. ४) इति ॥

अयं त इन्द्र सोमो निपूतो अधि बर्हिषि । एहीमस्य द्रवा पिब ॥ ११ ॥

अयम् । ते । इन्द्र । सोमः । निऽपूतः । अधि । बर्हिषि ।
आ । इहि । ईम् । अस्य । द्रव । पिब ॥ ११ ॥

हे ^v^इन्द्र ^v^ते तुभ्यं त्वदर्थम् ^v^अयं ^v^सोमः ^v^बर्हिषि ^v^अधि वेद्यामास्तीर्णे दर्भे ^v^निपूतः नितरां दशापवित्रेण शोधितः । अभिषवादिसंस्कारैः संस्कृत इत्यर्थः । ^v^ईम् इदानीम् ^v^अस्य इमं सोमं प्रति ^v^एहि आगच्छ । आगत्य यत्र रसात्मकः सोमो हूयते[1] तं देशं प्रति ^v^द्रव शीघ्रं गच्छ । तदनन्तरं तं सोमं ^v^पिब ॥

शाचिगो शाचिपूजनायं रणाय ते सुतः । आखण्डल प्र हूयसे ॥ १२ ॥

शाचिगो इति शाचिऽगो । शाचिऽपूजन । अयम् । रणाय । ते । सुतः ।
आखण्डल । प्र । हूयसे ॥ १२ ॥

हे ^v^शाचिगो । शाचयः शक्ता गावो यस्यासौ शाचिगुः । यद्वा । 'शच व्यक्तायां वाचि'। अस्मादौणादिक इङ्प्रत्ययः[2] । शाचयो व्यक्ताः प्रख्याता गावो रश्मयो गाव एव वा यस्य तादृश । हे ^v^शाचिपूजन । पूज्यतेऽनेनेति पूजनं स्तोत्रादि । प्रख्यातपूजन ^v^ते तव ^v^रणाय रमणाय सुखजननाय ^v^अयं सोमः ^v^सुतः अभिषुतः । यतः कारणात् हे ^v^आखण्डल शत्रूणामाखण्डयितः[3] ^v^प्र ^v^हूयसे प्रकृष्टाभिः स्तुतिभिराहूयसे । अत आगत्येमं सोमं पिबेति भावः ॥

यस्ते शृङ्गवृषो नपात्प्रणपात्कुण्डपाय्यः । न्यस्मिन्दध्र आ मनः ॥ १३ ॥

यः । ते । शृङ्गऽवृषः । नपात् । प्रणपादिति प्रऽनपात् । कुण्डऽपाय्यः ।
नि । अस्मिन् । दध्रे । आ । मनः ॥ १३ ॥

हे ^v^शृङ्गवृषो ^v^नपात् । शृङ्गवृषा नाम कश्चिदृषिः । तस्य चेन्द्रः स्वयमेव पुत्रतया जज्ञ इत्याख्यायिका । नपादित्यपत्यनाम । शृङ्गवृषः पुत्र । यद्वा । शृणन्ति हिंसन्तीति शृङ्गाणि रश्मयः । तैर्वर्षतीति शृङ्गवृडादित्यः । तस्य नपातयितः स्वकीये स्थानेऽवस्थापयितः । 'सुबामन्त्रिते°' इति षष्ठ्यन्तस्य पराङ्गवद्भावेनामन्त्रितानुप्रवेशात् समुदायस्याष्टमिकं सर्वानुदात्तत्वम् । ईदृश हे इन्द्र ^v^ते तव संबन्धी ^v^प्रणपात् प्रकर्षेण न पातयिता रक्षिता ^v^कुण्डपाय्यः । कुण्डैः पीयतेऽस्मिन् सोम इति कुण्डपाय्यः क्रतुविशेषः । 'क्रतौ कुण्डपाय्यसंचाय्यौ' (पा. सू. ३. १. १३०) इति पिबतेरधिकरणे ण्यत्प्रत्ययो

१. ग-त-ह्रियते । २. ग-इण्प्रत्ययः । ३. य-°माखंडयितरिंद्र ।

युगागमश्च निपात्यते। एतत्संज्ञो ^v^यः क्रतुरस्ति ^v^अस्मिन् कुण्डपाय्ये क्रतौ ^v^मनः स्वान्तम् ^v^आ ^v^नि ^v^दध्रे। अभितो वर्तमानाः कुण्डपायिनामान ऋषयः पुरा नि दधिरे। सम्यक् त्वद्देवत्यं क्रतुमनुष्ठितवन्त इत्यर्थः। दधातेर्लिटि 'इरयो रे' इति रेभावः॥

वास्तोष्पते ध्रुवा स्थूणांसत्रं सोम्यानाम्।
द्रप्सो भेत्ता पुरां शश्वतीनामिन्द्रो मुनीनां सखा॥ १४॥

वास्तोः। पते। ध्रुवा। स्थूणा। अंसत्रम्। सोम्यानाम्।
द्रप्सः। भेत्ता। पुराम्। शश्वतीनाम्। इन्द्रः। मुनीनाम्। सखा॥ १४॥

हे ^v^वास्तोष्पते गृहपते ^v^स्थूणा गृहाधारभूतः स्तम्भः ^v^ध्रुवा स्थिरा भवतु। ^v^सोम्यानां सोमार्हाणां सोमसंपादिनां[1] वास्माकं ^v^अंसत्रम् अंसत्राणमंसोपलक्षितस्य[2] कृत्स्नशरीरस्य[2] त्रायकं रक्षकं बलं भवतु। अपि च ^v^द्रप्सः द्रवणशीलः सोमः तद्वान्। अर्शआदित्वादच्प्रत्ययः। ^v^शश्वतीनां बह्वीनां ^v^पुराम् असुरपुरीणां ^v^भेत्ता विदारयिता एवंभूतः ^v^इन्द्रः ^v^मुनीनाम् ऋषीणामस्माकं ^v^सखा मित्रभूतो भवतु॥

पृदाकुसानुर्यजतो गवेषण एकः सन्नभि भूयसः।
भूर्णिमश्वं नयत्तुजा पुरो गृभेन्द्रं सोमस्य पीतये॥ १५॥

पृदाकुऽसानुः। यजतः। गोऽएषणः। एकः। सन्। अभि। भूयसः।
भूर्णिम्। अश्वम्। नयत्। तुजा। पुरः। गृभा। इन्द्रम्। सोमस्य। पीतये॥ १५॥

^v^पृदाकुसानुः। पृदाकुः सर्पः। स इव सानुः समुच्छ्रितः। तद्वदुन्नतशिरस्क इत्यर्थः। यद्वा। पृदाकुवत् सानुः संभजनीयः। स यथा बहुभिर्मणिमन्त्रौषधादिभिः संसेव्यो नाल्पैः एवमिन्द्रोऽपि बहुभिः स्तोत्रादिभिर्यत्नैः सेव्य इत्यर्थः। ^v^यजतः यष्टव्यः ^v^गवेषणः गवामेषयिता प्रापयिता एवंगुणको य इन्द्रः ^v^एकः ^v^सन् असहायः केवल एव सन् ^v^भूयसः बहुतराञ्छत्रूनभिभवति ^v^भूर्णिं भरणशीलम् ^v^अश्वं व्याप्नुवन्तं तम् ^v^इन्द्रं ^v^सोमस्य ^v^पीतये पानार्थं ^v^पुरः अस्माकं पुरस्तात् ^v^नयत् नयति प्रापयति। सामर्थ्यात् स्तोतेति लभ्यते। केन साधनेन। ^v^तुजा क्षिप्रगामिना ^v^गृभा ग्रहणसाधनेन स्तोत्रेण। यद्वा। अश्वमिति लुप्तोपममेतत्। यथा वोढारमश्वं दुर्ग्रहं पाशेनानयन्ति एवमुक्तेन प्रकारेण महानुभावमिन्द्रं स्तुत्या स्तोतानयतीत्यर्थः॥ ॥ २४॥

'इदं ह' इति द्वाविंशत्यृचं षष्ठं सूक्तमिरिम्बिठेरार्षमुष्णिक्छन्दस्कम्। 'उत त्या' इत्येषा अश्विदेवताका। 'शमग्निः' इत्येषा अग्निसूर्यवायुदेवताका। शिष्टा आदित्यदेवताकाः। तथा चानुक्रम्यते—'इदं ह द्व्यधिकादित्यमौष्णिहमष्टम्यश्विभ्यां पराग्निसूर्यानिलानाम्' इति। गतो विनियोगः॥

इदं ह नूनमेषां सुम्नं भिक्षेत मर्त्यः। आदित्यानामपूर्व्यं सवीमनि॥ १॥

इदम्। ह। नूनम्। एषाम्। सुम्नम्। भिक्षेत। मर्त्यः। आदित्यानाम्। अपूर्व्यम्। सवीमनि॥ १॥

^v^इदं ^v^ह इदानीं खलु ^v^नूनम् अवश्यम् ^v^आदित्यानाम् अदितेः पुत्राणाम् ^v^एषां देवानां मित्रादीनां ^v^सवीमनि प्रसवे प्रेरणे सति ^v^मर्त्यः मनुष्यः स्तोता ^v^अपूर्व्यम् अभिनवं ^v^सुम्नं सुखकरं धनं ^v^भिक्षेत याचेत। न कालान्तरे॥

१. त३-न—सोमसंपादितानां। २. घ-भ—°मंसोपलक्षितकृत्स्न°।

अनर्वाणो ह्येषां पन्था आदित्यानाम् । अदब्धाः सन्ति पायवः सुगेवृधः ॥२॥

अनर्वाणः । हि । एषाम् । पन्थाः । आदित्यानाम् । अदब्धाः । सन्ति । पायवः । सुगेऽवृधः ॥२॥

^v^एषाम् ^v^आदित्यानां ^v^पन्थाः पन्थानो मार्गाः । 'सुपां सुलुक्' इति जसः सुः । ^v^अनर्वाणः अप्रत्यृताः परैरप्रतिगताः अत एव ^v^अदब्धाः अहिंसिताश्च ^v^सन्ति भवन्ति । ^v^हि यस्मादेवं तस्मात् ^v^पायवः पालयितारस्ते मार्गाः ^v^सुगेवृधः सुगमे सुखे विषये वर्धका भवन्तु ॥

तत्सु नः सविता भगो वरुणो मित्रो अर्यमा । शर्म यच्छन्तु सप्रथो यदीमहे ॥३॥

तत् । सु । नः । सविता । भगः । वरुणः । मित्रः । अर्यमा ।

शर्म । यच्छन्तु । सऽप्रथः । यत् । ईमहे ॥ ३ ॥

सवित्रादयश्चत्वारो देवाः ^v^सप्रथः सर्वतः पृथु विस्तीर्णं ^v^तत् ^v^शर्म सुखं गृहं वा ^v^नः अस्मभ्यं ^v^सु सुष्ठु ^v^यच्छन्तु ददतु । ^v^यत् शर्म ^v^ईमहे वयं याचामहे ॥

देवेभिर्देव्यदितेऽरिष्टभर्मन्ना गहि । स्मत्सूरिभिः पुरुप्रिये सुशर्मभिः ॥ ४ ॥

देवेभिः । देवि । अदिते । अरिष्टऽभर्मन् । आ । गहि ।

स्मत् । सूरिऽभिः । पुरुऽप्रिये । सुशर्मऽभिः ॥ ४ ॥

हे ^v^देवि दानादिगुणयुक्ते हे ^v^अरिष्टभर्मन् अहिंसितभरणे हे ^v^पुरुप्रिये बहुभिः प्रीयमाणे हे एवंगुणविशिष्टे ^v^अदिते ^v^सूरिभिः प्राज्ञैः ^v^सुशर्मभिः सुसुखैः ^v^देवेभिः देवैरात्मीयैः पुत्रैः सार्धम् । स्मदिति निपातः शोभनार्थः । ^v^स्मत् शोभनं यथा भवति तथा ^v^आ ^v^गहि आगच्छ ॥

ते हि पुत्रासो अदितेर्विदुर्द्वेषांसि योतवे । अंहोश्चिदुरुचक्रयोऽनेहसः ॥ ५ ॥

ते । हि । पुत्रासः । अदितेः । विदुः । द्वेषांसि । योतवे ।

अंहोः । चित् । उरुऽचक्रयः । अनेहसः ॥ ५ ॥

^v^अदितेः ^v^पुत्रासः पुत्राः ^v^ते ^v^हि ते खलु मित्रादयो देवाः ^v^द्वेषांसि द्वेष्टॄणि राक्षसादीनि ^v^योतवे पृथक्कर्तुं ^v^विदुः जानन्ति । 'विदो लटो वा' इति विद उत्तरस्य झेरुसादेशः । तथा ^v^उरुचक्रयः विस्तीर्णस्य कर्मणः कर्तारः ^v^अनेहसः अनाहन्तारो रक्षकास्ते ^v^अंहोश्चित् आहननशीलात् पापादपि योतवे पृथक्कर्तुमस्मान् जानन्ति ॥ ॥ २५ ॥

अदितिर्नो दिवा पशुमदितिर्नक्तमद्वयाः । अदितिः पात्वंहसः सदावृधा ॥६॥

अदितिः । नः । दिवा । पशुम् । अदितिः । नक्तम् । अद्वयाः ।

अदितिः । पातु । अंहसः । सदाऽवृधा ॥ ६ ॥

^v^नः अस्माकं ^v^पशुम् ^v^अदितिः अदीना अखण्डनीया वा देवमाता ^v^दिवा अहनि ^v^पातु रक्षतु । तथा ^v^अद्वयाः बाह्याभ्यन्तरभेदेन प्रकारद्वयरहिता सर्वदैकप्रकारा कपटरहिता सा ^v^अदितिः ^v^नक्तं रात्रौ चास्मदीयं गवादिपशुजातं रक्षतु । तथास्मानपि ^v^अंहसः पापात् पातु रक्षतु । केन साधनेन । ^v^सदावृधा सर्वदा वृद्धिमतात्मीयेन रक्षणेन ॥

**उत स्या नो दिवा मतिरदितिरूत्या गमत् । सा शंताति मयस्करदप स्रिधः ॥७॥**

उत । स्या । नः । दिवा । मतिः । अदितिः । ऊत्या । आ । गमत् ।

सा । शम्ऽताति । मयः । करत् । अप । स्रिधः ॥ ७ ॥

उत अपि च स्या सा पूर्वोक्ता मतिः मन्त्री मन्तव्या स्तोतव्या वा अदितिः ऊत्या रक्षया सार्धं दिवा अहनि नः अस्मान् आ गमत् आगच्छतु । आगत्य च शंताति शान्तिकरं मयः सुखं सा अदितिः करत् करोतु । स्रिधः बाधकाञ्छत्रूंश्चापगमयतु । स्रिधिर्बाधनार्थः । 'शिवशमरिष्टस्य करे' (पा. सू. ४. ४. १४३) इति शंशब्दात्करणेऽर्थे तातिल्प्रत्ययः ॥

**उत त्या दैव्या भिषजा शं नः करतो अश्विना । युयुयातामितो रपो अप स्रिधः ॥८॥**

उत । त्या । दैव्या । भिषजा । शम् । नः । करतः । अश्विना ।

युयुयाताम् । इतः । रपः । अप । स्रिधः ॥ ८ ॥

उत अपि च त्या तौ प्रसिद्धौ दैव्या देवेषु भवौ भिषजा चिकित्सकौ ईदृशौ अश्विना अश्विनौ नः अस्माकं शं सुखं रोगाणां शमनं वा करतः कुरुताम् । इतः अस्मत्तः रपः पापं युयुयातां पृथक्कुर्याताम् । स्रिधः शत्रूंश्चापगमयताम् ॥

**शमग्निरग्निभिः करच्छं नस्तपतु सूर्यः । शं वातो वात्वरपा अप स्रिधः ॥ ९ ॥**

शम् । अग्निः । अग्निऽभिः । करत् । शम् । नः । तपतु । सूर्यः ।

शम् । वातः । वातु । अरपाः । अप । स्रिधः ॥ ९ ॥

अग्निभिः स्वविभूत्या विभिन्नैर्गार्हपत्यादिभिः अग्निः देवः शं करत् अस्माकं रोगशान्तिं सुखं वा करोतु । सूर्यः सर्वस्य प्रेरक आदित्यश्च नः अस्माकं शं सुखं यथा भवति तथा तपतु प्रदीप्यताम् । वातः वायुश्च अरपाः अपापः सन् शं यथा भवति तथा च[1] वातु अनुवर्तताम्[2] । स्रिधः शत्रूंश्चैतेऽग्न्यादयोऽपगमयन्तु ॥

**अपामीवामप स्रिधमप सेधत दुर्मतिम् । आदित्यासो युयोतना नो अंहसः ॥१०॥**

अप । अमीवाम् । अप । स्रिधम् । अप । सेधत । दुःऽमतिम् ।

आदित्यासः । युयोतन । नः । अंहसः ॥ १० ॥

हे आदित्याः अमीवां रोगम् अप सेधत अस्मत्तोऽपगमयत । स्रिधं चापसेधकं शत्रुं च अप सेधत । दुर्मतिम् अस्माकं दुःखस्य मन्तारं च अप सेधत । अपि च हे आदित्यासः आदित्याः नः अस्मान् अंहसः पापात् युयोतन पृथक्कुरुत । यौतेर्लोटि छान्दसः शपः श्लुः । 'तप्तनप्तनथनाश्च' इति तस्य तनबादेशः । पित्वादनुदात्तत्वे धातुस्वरः शिष्यते । 'आमन्त्रितं पूर्वमविद्यमानवत्' इति पूर्वस्यामन्त्रितस्याविद्यमानत्वेन पदादपरत्वान्निघातो न भवति ॥ ॥ २६ ॥

**युयोता शरुमस्मदाँ आदित्यास उतामतिम् । ऋधग्द्वेषः कृणुत विश्ववेदसः ॥ ११ ॥**

---

१. ग–'च' नास्ति । २. ग–वर्धतां; न-भ–वर्ततां ।

युयोत॑ । शरु॑म् । अ॒स्मत् । आ । आदि॑त्यासः । उ॒त । अम॑तिम् ।
ऋध॑क् । द्वेषः॑ । कृ॒णु॒त॒ । वि॒श्व॒ऽवे॒द॒सः॒ ॥ ११ ॥

हे आदित्याः ᵛशरुं हिंसकम् ᵛअस्मदा अस्मत्तश्च ᵛयुयोत पृथक्कुरुत । ᵛउत अपि च ᵛअमतिं दुर्बुद्धिं च पृथक्कुरुत । हे ᵛविश्ववेदसः सर्वधनाः सर्वज्ञा वा ᵛद्वेषः द्वेष्टॄञ्छत्रून् ᵛऋधक् पृथक् ᵛकृणुत कुरुत । अस्मत्तो वियोजयत ॥

**तत्सु नः॒ शर्म॑ यच्छ॒तादि॑त्या॒ यन्मुमो॑चति । एन॑स्वन्तं चि॒देन॑सः सुदानवः ॥१२॥**

तत् । सु । नः॒ । शर्म॑ । य॒च्छ॒त॒ । आदि॑त्याः । यत् । मुमो॑चति ।
एन॑स्वन्तम् । चि॒त् । एन॑सः । सु॒ऽदा॒न॒वः॒ ॥ १२ ॥

हे ᵛआदित्याः ᵛतत् ᵛशर्म सुखं ᵛनः अस्मभ्यं ᵛसु सुष्ठु ᵛयच्छत दत्त । हे ᵛसुदानवः शोभनदानाः युष्मदीयं ᵛयत् शर्म ᵛएनस्वन्तं ᵛचित् पापिनमपि स्तोतारम् ᵛएनसः पापात् ᵛमुमोचति मोचयति तद्यच्छतेत्यन्वयः ॥

**यो नः॒ कश्चि॒द्रिरि॑क्षति रक्ष॒स्त्वेन॒ मर्त्यः॑ । स्वैः ष एवै॑ रिरिषीष्ट॒ युर्जनः॑ ॥१३॥**

यः । नः॒ । कः । चि॒त् । रिरि॑क्षति । र॒क्षः॒ऽत्वेन॑ । मर्त्यः॑ ।
स्वैः । सः । एवैः॑ । रि॒रि॒षी॒ष्ट॒ । युः । जनः॑ ॥ १३ ॥

ᵛयः ᵛकश्चित् ᵛमर्त्यः मनुष्यः ᵛनः अस्मान् ᵛरक्षस्त्वेन रक्षोभावेन पिशाचाद्यात्मना ᵛरिरिक्षति जिहिंसिषति । ‘रिष हिंसायाम्’ इति धातुः । ᵛसः मनुष्यः ᵛस्वैः ᵛएवैः आत्मीयैरेव चेष्टितैः ᵛरिरिषीष्ट हिंसितो भूयात् । सः ᵛजनः ᵛयुः यातापगमनशीलश्च भवतु । यद्वा । स जनः स्वैरेव गमनैर्दुःखं गच्छन् हिंसितो भवतु ॥

**समित्तम॒घम॑श्नवद्दु॒ःशंसं॒ मर्त्यं॑ रि॒पुम् । यो अ॑स्म॒त्रा दु॒र्हणा॑वाँ॒ उप॑ द्व॒युः ॥१४॥**

सम् । इत् । तम् । अ॒घम् । अ॒श्न॒व॒त् । दुः॒ऽशंस॑म् । मर्त्य॑म् । रि॒पुम् ।
यः । अ॒स्म॒ऽत्रा । दुः॒ऽहना॑वान् । उप॑ । द्व॒युः ॥ १४ ॥

ᵛदुःशंसं दुष्कीर्तिं ᵛरिपुं शत्रुं ᵛतं ᵛमर्त्यम्[1] ᵛइत् मनुष्यमेव[1] ᵛअघं पापं ᵛसम् ᵛअश्नवत् सम्यग्व्याप्नोतु । ᵛयः मर्त्यः ᵛअस्मत्रा अस्मासु अस्मद्विषये ᵛदुर्हणावान् दुष्टहननवान् उपजायते ᵛद्वयुः द्वाभ्यां प्रकाराभ्यां युक्तश्च भवति । अयमर्थः । प्रत्यक्षकृतो[2] हितं वदति परोक्षकृतस्त्वहितम् । तादृशः कपटो द्वयुरित्युच्यते । यश्चास्मद्विषये कपटो भवति तमपि पापं व्याप्नोत्विति[2] ॥

**पा॒क॒त्रा स्थ॑न देवा हृ॒त्सु जा॑नीथ॒ मर्त्य॑म् । उप॑ द्व॒युं चाद्व॑युं च वसवः ॥१५॥**

पा॒क॒ऽत्रा । स्थ॒न॒ । दे॒वाः॒ । हृ॒त्ऽसु । जा॒नी॒थ॒ । मर्त्य॑म् ।
उप॑ । द्व॒युम् । च॒ । अद्व॑युम् । च॒ । व॒स॒वः॒ ॥ १५ ॥

१. ग-त-न-भ-श–मर्त्यं मनुष्यं इदेव । २. ग–प्रत्यक्षीकृतो हितं वदति परोक्षे अहितं वदति तं रिपुमिति पूर्वत्रान्वयः ।

हे ᵛदेवाः दानादिगुणयुक्ता आदित्या यूयं ᵛपाकत्रा पाकेषु विपक्वप्रज्ञेषु स्तोतृषु ᵛस्थन भवथ। यद्वा। प्रथमार्थे त्राप्रत्ययः। पाकत्रा[1] पाकाः परिपक्वज्ञाना भवथ। यत एवमतः कारणात् ᵛहृत्सु आत्मीयेषु हृदयेषु ᵛद्वयुं द्विप्रकारयुक्तं कपटिनं ᵛच ᵛअद्वयुं ᵛच तद्विलक्षणं कापट्यरहितं च ᵛमर्त्यं मनुष्यमुपेत्य हे ᵛवसवः वासकाः ᵛजानीथ अवगच्छथ॥ ॥ २७ ॥

आ शर्म पर्वतानामोतापां वृणीमहे। द्यावाक्षामारे अस्मद्रपस्कृतम् ॥१६॥

आ। शर्म। पर्वतानाम्। आ। उत। अपाम्। वृणीमहे।
द्यावाक्षामा। आरे। अस्मत्। रपः। कृतम्॥ १६॥

ᵛपर्वतानां मेघानां गिरीणां वा संबन्धि ᵛशर्म सुखं वयम् ᵛआ ᵛवृणीमहे आभिमुख्येन संभजामहे। ᵛउत अपि च ᵛअपाम् उदकानां च। हे ᵛद्यावाक्षामा द्यावापृथिव्यौ ᵛअस्मत् ᵛआरे अस्मत्तो विप्रकृष्टे देशे ᵛरपः पापं ᵛकृतं कुरुतम्। अस्मत्तो वियोजयतमित्यर्थः॥

ते नो भद्रेण शर्मणा युष्माकं नावा वसवः। अति विश्वानि दुरिता पिपर्तन ॥१७॥

ते। नः। भद्रेण। शर्मणा। युष्माकम्। नावा। वसवः।
अति। विश्वानि। दुःऽइता। पिपर्तन॥ १७॥

हे ᵛवसवः वासयितारः आदित्याः ᵛते पूर्वोक्तगुणा यूयं ᵛभद्रेण शोभनेन ᵛशर्मणा सुखेन ᵛयुष्माकं ᵛनावा ᵛनः अस्मान् ᵛविश्वानि सर्वाणि ᵛदुरिता दुर्गमनानि ᵛअति ᵛपिपर्तन पिपृत अतिपारयत॥

तुचे तनाय तत्सु नो द्राघीय आयुर्जीवसे। आदित्यासः सुमहसः कृणोतन ॥ १८ ॥

तुचे। तनाय। तत्। सु। नः। द्राघीयः। आयुः। जीवसे।
आदित्यासः। सुऽमहसः। कृणोतन॥ १८॥

हे ᵛआदित्यासः अदितेः पुत्राः ᵛसुमहसः शोभनतेजस्काः ᵛनः अस्माकं ᵛतुचे पुत्राय ᵛतनाय तत्तनयाय पौत्राय च ᵛजीवसे जीवनाय ᵛद्राघीयः दीर्घतमं ᵛतत् प्रसिद्धम् ᵛआयुः जीवितं ᵛसु सुष्ठु ᵛकृणोतन कुरुत॥

यज्ञो हीळो वो अन्तर आदित्या अस्ति मृळत।
युष्मे इद्वो अपि ष्मसि सजात्ये॥ १९ ॥

यज्ञः। हीळः। वः। अन्तरः। आदित्याः। अस्ति। मृळत।
युष्मे इति। इत्। वः। अपि। स्मसि। सऽजात्ये॥ १९॥

हे ᵛआदित्याः ᵛहीळः। हीडिर्गत्यर्थः। गन्तव्यः प्राप्तव्योऽस्माभिरनुष्ठितः ᵛयज्ञः ᵛवः युष्माकम् ᵛअन्तरः ᵛअस्ति अन्तिके वर्तमानो भवति। अतोऽस्मान् ᵛमृळत सुखयत। ᵛवः युष्माकं ᵛसजात्ये सजातत्वे ज्ञातित्वे बान्धवे वर्तमाना वयं ᵛयुष्मे ᵛइत् युष्मास्वेव ᵛअपि ᵛस्मसि सर्वदा भवामोऽपि। इदन्तो मसिः॥

बृहद्वरूथं मरुतां देवं त्रातारमश्विना। मित्रमीमहे वरुणं स्वस्तये॥ २० ॥

१. ख-ग-त-न—पाकत्राः।

बृहत् । वरूथम् । मरुताम् । देवम् । त्रातारम् । अश्विना ।
मित्रम् । ईमहे । वरुणम् । स्वस्तये ॥ २० ॥

ᵛमरुतां देवानां स्वामिनां ᵛत्रातारं पालयितारं ᵛदेवम् इन्द्रम् ᵛअश्विना अश्विनौ च ᵛमित्रं ᵛवरुणं च ᵛबृहत् प्रौढं ᵛवरूथं शीतातपादिनिवारकं गृहं ᵛस्वस्तये अविनाशाय ᵛईमहे याचामहे ॥

अनेहो मित्रार्यमन्नृवद्वरुण शंस्यम् । त्रिवरूथं मरुतो यन्त नश्छर्दिः ॥ २१ ॥

अनेहः । मित्र । अर्यमन् । नृऽवत् । वरुण । शंस्यम् ।
त्रिऽवरूथम् । मरुतः । यन्त । नः । छर्दिः ॥ २१ ॥

हे ᵛमित्र हे ᵛअर्यमन् हे ᵛवरुण हे ᵛमरुतः ते सर्वे यूयम् ᵛअनेहः अहिंसितं ᵛनृवत् नृभिः पुत्रादिभिरुपेतं ᵛशंस्यं स्तुत्यं ᵛत्रिवरूथं त्रयाणां शीतातपवर्षाणां निवारकं यद्वा त्रिभूमिकं ᵛछर्दिः गृहं ᵛनः अस्मभ्यं ᵛयन्त यच्छत दत्तेत्यर्थः ॥

ये चिद्धि मृत्युबन्धव आदित्या मनवः स्मसि ।
प्र सू न आयुर्जीवसे तिरेतन ॥ २२ ॥

ये । चित् । हि । मृत्युऽबन्धवः । आदित्याः । मनवः । स्मसि ।
प्र । सु । नः । आयुः । जीवसे । तिरेतन ॥ २२ ॥

हे ᵛआदित्याः ᵛये ᵛचित् ये च वयं ᵛमनवः मनुष्याः ᵛहि यस्मात् ᵛमृत्युबन्धवः ᵛस्मसि मृत्योर्यमस्य बन्धुभूताः प्रत्यासन्नमरणा भवामः अतो हेतोस्तेषां ᵛनः अस्माकं ᵛजीवसे जीवनाय चिरकालावस्थानाय ᵛआयुः जीवितं ᵛसु ᵛप्र ᵛतिरेतन शोभनं प्रवर्धयत ॥ ॥ २८ ॥

'तं गूर्धय' इति सप्तत्रिंशदृचं सप्तमं सूक्तं काण्वस्य सोभरेरार्षम् । प्रथमातृतीयाद्ययुजः ककुभो द्वितीयाचतुर्थ्यादियुजः सतोबृहत्यः । 'पितुर्न पुत्रः' एषा सप्तविंशी द्विपदा विंशत्यक्षरा विराट् । 'यमादित्यासः' इत्येषा चतुस्त्रिंश्युष्णिक् । 'यूयं राजानः' एषा पञ्चत्रिंशी सतोबृहती । 'अदान्मे' इत्येषा ककुप् । 'उत मे' इत्येषा सप्तत्रिंशी पङ्क्तिः । षट्त्रिंशी सप्तत्रिंशी च त्रसदस्युनाम्नो राज्ञो दानस्तुतिरूपत्वात्तद्देवताके । चतुस्त्रिंशीपञ्चत्रिंश्यावादित्यदेवताके । शिष्टा आग्नेय्यः । तथा चानुक्रान्तं—'तं गूर्धय सप्तत्रिंशत् सोभरिराग्नेयं काकुभं प्रागाथ ह पितुर्न द्विपदान्त्ये ककुप्पङ्क्ती त्रसदस्योर्दानस्तुतिस्तत्पूर्वे उष्णिक्सतोबृहत्यावादित्येभ्यः' इति । गतः सूक्तविनियोगः ॥

तं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे । देवत्रा हव्यमोहिरे ॥ १ ॥

तम् । गूर्धय । स्वःऽनरम् । देवासः । देवम् । अरतिम् । दधन्विरे ।
देवऽत्रा । हव्यम् । आ । ऊहिरे ॥ १ ॥

हे स्तोतः ᵛतं प्रसिद्धमग्निं ᵛगूर्धय स्तुहि । गूर्धयतिः स्तुतिकर्मा । कीदृशम् । ᵛस्वर्णरं सर्वस्य नेतारं सर्वैर्यजमानैः कर्मादौ नीतं[1] वा[1] । अथवा स्वर्गं प्रति हविषां नेतारम् । ᵛदेवासः । दीव्यन्ति स्तुवन्तीति देवा ऋत्विजः । ᵛदेवं दानादिगुणयुक्तम् ᵛअरतिम् अर्यं स्वामिनं यद्वाभिप्राप्तद्रव्यं ᵛदध-

---

१. ख-ग-न-भ-श—नेतव्यं वा; झ-त१-२—नेतव्यं ।

न्विरे धन्वन्ति गच्छन्ति स्तुत्यादिभिः प्राप्नुवन्ति। धविर्गत्यर्थः। प्राप्य च तेनाग्निना देवत्रा देवान्। 'देवमनुष्य' इत्यादिना द्वितीयार्थे त्राप्रत्ययः। हव्यं चरुपुरोडाशादिलक्षणं हविः ओहिरे अभिप्रापयन्ति। वहेर्लिटि यजादित्वात् संप्रसारणम्॥

विभूतरातिं विप्र चित्रशोचिषमग्निमीळिष्व यन्तुरम्।
अस्य मेधस्य सोम्यस्य सोभरे प्रेमध्वराय पूर्व्यम्॥ २॥

विभूतऽरातिम्। विप्र। चित्रऽशोचिषम्। अग्निम्। ईळिष्व। यन्तुरम्।
अस्य। मेधस्य। सोम्यस्य। सोभरे। प्र। ईम्। अध्वराय। पूर्व्यम्॥ २॥

ऋषिरात्मानं संबोध्य स्तुतौ प्रेरयति। हे विप्र मेधाविन् सोभरे एतत्संज्ञ ऋषे अध्वराय यागाय ईम् इमम् अग्निं प्र ईळिष्व प्रस्तुहि। कीदृशम्। विभूतरातिं व्याप्तधनं प्रभूतदानं वा चित्रशोचिषं चायनीयतेजस्कं विचित्रदीप्तिकं वा सोम्यस्य सोमसाध्यस्य अस्य मेधस्य यज्ञस्य यन्तुरं नियन्तारं पूर्व्यं चिरंतनम्॥

आभिप्लविकेषूक्थ्येषु तृतीयसवने प्रशास्तुः शस्त्रे 'यजिष्ठं त्वा' इत्यादिकौ प्रगाथौ वैकल्पिकौ स्तोत्रियानुरूपौ। सूत्रितं च—'यजिष्ठं त्वा ववृमहे यः समिधा य आहुती' (आश्व. श्रौ. ७. ८) इति॥

यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम्। अस्य यज्ञस्य सुक्रतुम्॥ ३॥

यजिष्ठम्। त्वा। ववृमहे। देवम्। देवऽत्रा। होतारम्। अमर्त्यम्। अस्य। यज्ञस्य। सुऽक्रतुम्॥ ३॥

हे अग्ने यजिष्ठं यष्टृतमं त्वा[1] ववृमहे वृणीमहे संभजामहे। कीदृशं त्वाम्। देवत्रा देवेषु मध्ये देवम् अतिशयेन दानादिगुणयुक्तं होतारं देवानामाह्वातारम् अमर्त्यम् अविनाशम्[2] अस्य यज्ञस्य यागस्य सुक्रतुं सुष्ठु कर्तारम्॥

ऊर्जो नपातं सुभगं सुदीदितिमग्निं श्रेष्ठशोचिषम्।
स नो मित्रस्य वरुणस्य सो अपामा सुम्नं यक्षते दिवि॥ ४॥

ऊर्जः। नपातम्। सुऽभगम्। सुऽदीदितिम्। अग्निम्। श्रेष्ठऽशोचिषम्।
सः। नः। मित्रस्य। वरुणस्य। सः। अपाम्। आ। सुम्नम्। यक्षते। दिवि॥ ४॥

ऊर्जः अन्नस्य नपातं न पातयितारम्। यद्वा। नप्तारं चतुर्थम्। हविर्लक्षणेनान्नेनापो जायन्ते अद्भिश्चौषधिवनस्पतयस्तेभ्य एष जात[3] इति चतुर्थत्वम्। 'नभ्राण्नपात्' इति नञः प्रकृतिभावः। सुभगं शोभनधनं सुदीदितिं सुष्ठु दीपयितारं[4] श्रेष्ठशोचिषं प्रशस्यतमतेजस्कम् अग्निं स्तौमीति शेषः। सः तादृशोऽग्निः नः अस्मदर्थं दिवि द्योतमाने देवयजने द्युलोके वा मित्रस्य देवस्य वरुणस्य च सुम्नं सुखम् आ अभिलक्ष्य यक्षते यजतु। तथा सः अग्निः अपाम् अब्देवतानां सुम्नमभियजतु॥

यः समिधा य आहुती यो वेदेन ददाश मर्तो अग्नये। यो नमसा स्वध्वरः॥ ५॥

यः। सम्ऽइधा। यः। आऽहुती। यः। वेदेन। ददाश। मर्तः। अग्नये।
यः। नमसा। सुऽअध्वरः॥ ५॥

१. ग-न-भ—त्वां; घ—त्वा त्वां। २. घ-न-भ—अविनाशिनं। ३. भ—जायत। ४. ग-घ-न-भ—दीपयंतं।

इयं पाकयज्ञप्रशंसापरेति भगवताश्वलायनेन ब्राह्मणान्तरप्रदर्शनेन व्याख्याता (आश्व. गृ. १. १.४-५)। ᵛयः ᵛमर्तः मनुष्यः ᵛसमिधा पालाशादिनेध्मेन ᵛअग्नये अग्न्यर्थं ᵛददाश परिचरति। ᵛयः च ᵛआहुती आहुत्या आज्यादिसाध्यया परिचरति। ᵛयः च ᵛवेदेन वेदाध्ययनेन ब्रह्मयज्ञेन परिचरति। ᵛयः च ᵛस्वध्वरः शोभनेनाध्वरेण ज्योतिष्टोमादिना युक्तः सन् ᵛनमसा अन्नेन चरुपुरोडाशादिनाग्नये ददाश अग्न्यर्थं परिचरति। तस्येदर्वन्त इत्युत्तरत्र संबन्धः॥ ॥ २९ ॥

तस्येदर्वन्तो रंहयन्त आशवस्तस्य द्युम्नितमं यशः।
न तमंहो देवकृतं कुतश्चन न मर्त्यकृतं नशत् ॥ ६ ॥

तस्य। इत्। अर्वन्तः। रंहयन्ते। आशवः। तस्य। द्युम्निऽतमम्। यशः।
न। तम्। अंहः। देवऽकृतम्। कुतः। चन। न। मर्त्यऽकृतम्। नशत् ॥ ६ ॥

यः पूर्वोक्तः ᵛतस्येत् तस्यैव ᵛआशवः व्यापनशीलाः ᵛअर्वन्तः अश्वाः ᵛरंहयन्ते वेगं कुर्वन्ति। शत्रून् प्रसहन्त इत्यर्थः। ᵛद्युम्नितमं दीप्तिमत्तमं[1] ᵛयशः कीर्तिश्च ᵛतस्य एव भवति। यद्वा। द्युम्नमिति धननाम। धनवत्तमं यशोऽन्नं च तस्य भवति। अपि च ᵛदेवकृतम् देवैः कृतम् ᵛअंहः पापं ᵛकुतश्चन कस्मादपि हेतोः ᵛतं ᵛन ᵛनशत् न प्राप्नोति। ᵛन[2] ᵛमर्त्यकृतं मनुष्यैः कृतम्॥

स्वग्नयो वो अग्निभिः स्याम सूनो सहस ऊर्जां पते। सुवीरस्त्वमस्मयुः ॥ ७ ॥

सुऽअग्नयः। वः। अग्निऽभिः। स्याम। सूनो इति। सहसः। ऊर्जाम्। पते।
सुऽवीरः। त्वम्। अस्मऽयुः ॥ ७ ॥

हे ᵛसहसः ᵛसूनो बलस्य पुत्र। अग्निर्हि बलेन मथ्यमानो जायते। हे ᵛऊर्जां ᵛपते अन्नानां हविर्लक्षणानां स्वामिन्नग्ने ᵛवः। वचनव्यत्ययः। तवावयवभूतैः ᵛअग्निभिः गार्हपत्यादिभिर्वयं ᵛस्वग्नयः शोभनाग्निकाः ᵛस्याम भवेम। ᵛसुवीरः शोभनैर्वीरैरुपेतः ᵛत्वं च ᵛअस्मयुः अस्मान् कामयमानो भव॥

प्रशंसमानो अतिथिर्न मित्रियोऽग्नी रथो न वेद्यः।
त्वे क्षेमासो अपि सन्ति साधवस्त्वं राजा रयीणाम् ॥ ८ ॥

प्रऽशंसमानः। अतिथिः। न। मित्रियः। अग्निः। रथः। न। वेद्यः।
त्वे इति। क्षेमासः। अपि। सन्ति। साधवः। त्वम्। राजा। रयीणाम् ॥ ८ ॥

ᵛप्रशंसमानः स्तुवन् ᵛअतिथिर्न अतिथिरिव। यद्वा। व्यत्ययेन कर्मणि कर्तृप्रत्ययः। प्रशस्यमानः सः ᵛअग्निः ᵛमित्रियः मित्राणां स्तोतॄणां हितो भवति। तथा ᵛरथो ᵛन रथ इव ᵛवेद्यः लम्भनीयोऽभीष्टफलसाधनत्वेन ज्ञातव्यो वा। उत्तरोऽर्धर्चः प्रत्यक्षकृतः। हे अग्ने ᵛत्वे त्वयि ᵛसाधवः साधकाः समीचीनाः ᵛक्षेमासः धारणानि ᵛअपि ᵛसन्ति भवन्ति। तथा ᵛरयीणां धनानां ᵛत्वम् एव ᵛराजा ईश्वरो भवसि।

सो अद्धा दाश्वध्वरोऽग्ने मर्तः सुभग स प्रशंस्यः। स धीभिरस्तु सनिता ॥ ९ ॥

सः। अद्धा। दाशुऽअध्वरः। अग्ने। मर्तः। सुऽभग। सः। प्रऽशंस्यः।
सः। धीभिः। अस्तु। सनिता ॥ ९ ॥

---

१. ग १–दीप्ततमं; ग२-घ-त-न-भ-श–दीप्तितमं। २. घ-न-भ– न च।

हे ᵛअग्ने यः ᵛमर्तः[1] मनुष्यः ᵛदाश्वध्वरः दत्तयज्ञो भवति ᵛसः ᵛअद्धा । सत्यनामैतत् । सत्यफलो भवतु । हे ᵛसुभग शोभनधन अग्ने[2] ᵛसः एव ᵛप्रशंस्यः प्रशंसनीयः श्लाघनीयश्च भवतु । तथा ᵛसः ᵛधीभिः कर्मभिः स्तोत्रैर्वा ᵛसनिता ᵛअस्तु संभजनशीलो भवतु[3] ॥

यस्य॒ त्वमू॒र्ध्वो अ॑ध्व॒राय॒ तिष्ठ॑सि क्ष॒यद्वी॑रः॒ स सा॑धते ।
सो अर्व॑द्भिः॒ सनि॑ता॒ सः वि॑प॒न्यु॒भिः॒ स शूरैः॒ सनि॑ता कृ॒तम् ॥१०॥

यस्य॑ । त्वम् । ऊ॒र्ध्वः । अ॒ध्व॒राय॑ । तिष्ठ॑सि । क्ष॒यत्ऽवी॑रः । सः । सा॒ध॒ते ।
सः । अर्व॑त्ऽभिः । सनि॑ता । सः । वि॒प॒न्युऽभिः॑ । सः । शूरैः॑ । सनि॑ता । कृ॒तम् ॥१०॥

हे अग्ने ᵛयस्य यजमानस्य ᵛअध्वराय यागनिष्पादनाय[4] ᵛत्वम् ᵛऊर्ध्वः उद्युक्तः सन् ᵛतिष्ठसि अवतिष्ठसे ᵛसः यजमानः ᵛक्षयद्वीरः निवसद्भिरित्वरैर्वा[5] वीरैः पुत्रादिभिरुपेतः सन् ᵛसाधते सर्वं कर्तव्यं साधयति । तदेव[6] विवृणोति । ᵛसः तादृशो जनः ᵛअर्वद्भिः अश्वैः ᵛकृतं निष्पादितं जयादिकं ᵛसनिता संभजनशीलो भवति । ᵛसः[7] तादृशो जनः ᵛविपन्युभिः मेधाविभिः ᵛसः ᵛशूरैः च ᵛसनिता भवति[7] ॥　　॥ ३० ॥

यस्या॒ग्निर्वपु॑र्गृ॒हे स्तोमं॒ चनो॒ दधी॑त वि॒श्ववा॑र्यः । ह॒व्या वा॒ वेवि॑ष॒द्विषः॑ ॥११॥

यस्य॑ । अ॒ग्निः । वपुः॑ । गृ॒हे । स्तोम॑म् । चनः॑ । दधी॑त । वि॒श्वऽवा॑र्यः ।
ह॒व्या । वा॒ । वेवि॑षत् । विषः॑ ॥ ११ ॥

ᵛयस्य यजमानस्य ᵛगृहे ᵛविश्ववार्यः विश्वैर्वरणीयः ᵛवपुः । रूपनामैतत् । रूपवान् दीप्तिमान् ᵛअग्निः ᵛस्तोमं स्तोत्रं ᵛचनः अन्नं च हविर्लक्षणं ᵛदधीत धारयेत् । यस्य च ᵛहव्या । वाशब्दः समुच्चये । हव्यानि हवींषि च ᵛविषः व्याप्तान् देवान् ᵛवेविषत् प्रापयेत् । 'विष्लृ व्याप्तौ' । अस्माल्लेटि रूपमेतत् । स यजमान इति पूर्वत्र संबन्धः ॥

विप्र॑स्य वा स्तुव॒तः स॑हसो यहो म॒क्षूत॑मस्य रा॒तिषु॑ ।
अ॒वोदे॑वमु॒परि॑मर्त्यं कृधि॒ वसो॑ विवि॒दुषो॒ वचः॑ ॥ १२ ॥

विप्र॑स्य । वा॒ । स्तु॒व॒तः । स॒ह॒सः॒ । य॒हो॒ इति॑ । म॒क्षुऽत॑मस्य । रा॒तिषु॑ ।
अ॒वः॒ऽदे॑वम् । उ॒परि॑ऽमर्त्यम् । कृ॒धि॒ । व॒सो॒ इति॑ । वि॒वि॒दुषः॑ । वचः॑ ॥ १२ ॥

हे ᵛसहसो ᵛयहो बलस्य पुत्राग्ने ᵛविप्रस्य मेधाविनः ᵛस्तुवतः स्तोतुः ᵛवा ᵛरातिषु हविर्दानेषु ᵛमक्षुतमस्य[8] शीघ्रतमस्य यष्टुर्वा ᵛविविदुषः ज्ञातवतोऽभिज्ञस्य ᵛवचः वचनं हे ᵛवसो वासकाग्ने ᵛअवोदेवं देवानामवस्तात् ᵛउपरिमर्त्यं मर्त्यानामुपरिष्टाच्च ᵛकृधि कुरु । सर्वं नभःप्रदेशं व्यापयेति यावत् ॥

यो अ॒ग्निं ह॒व्यदा॑तिभि॒र्नमो॑भिर्वा सु॒दक्ष॑मा॒विवा॑सति । गि॒रा वा॑जि॒रशो॑चिषम् ॥१३॥

---

१. ग–मर्त्यः । २. ख-ग-त-न-भ-श–'अग्ने' नास्ति । ३. ख-त-श–भवति । ४. ग-घ-न-भ–यागनिष्पादनार्थं । ५. ग-त-भ–निवसद्भिरीश्वरैर्वा । ६. ख-ग-ज्ञ-त१-२-न-भ-श–एतदेव । ७. ख-त-न-भ-श–विपन्युभिः स्तोतृभिः कृतं च स ('स' नास्ति–ख-त-श) सनिता भवति । शूरैः शौर्योपेतैः भृत्यैः कृतं च स सनिता संभजनशीलो भवति (भवतु-श) । ८. ग-ज्ञ-श–मक्षूतमस्य ।

यः । अग्निम् । हव्यदातिऽभिः । नमःऽभिः । वा । सुऽदक्षम् । आऽविवासति ।
गिरा । वा । अजिरऽशोचिषम् ॥ १३ ॥

ᵛयः यजमानः ᵛहव्यदातिभिः हविषां दानैः ᵛनमोभिः नमस्कारैः ᵛवा ᵛसुदक्षं शोभनबलम् ᵛअग्निम् ᵛआविवासति परिचरति ᵛगिरा ᵛवा स्तुत्या वा ᵛअजिरशोचिषं क्षिप्रगामितेजस्कं तमग्निं परिचरति स समृद्धो भवतीति शेषः ॥

**समिधा यो निशिती दाशददितिं धामभिरस्य मर्त्यः ।**
**विश्वेत्स धीभिः सुभगो जनाँ अति द्युम्नैरुद्नइव तारिषत् ॥ १४ ॥**

सम्ऽइधा । यः । निऽशिती । दाशत् । अदितिम् । धामऽभिः । अस्य । मर्त्यः ।
विश्वा । इत् । सः । धीभिः । सुऽभगः । जनान् । अति । द्युम्नैः । उद्नःऽइव । तारिषत् ॥१४॥

ᵛयः ᵛमर्त्यः मनुष्यः ᵛअस्य अग्नेः ᵛधामभिः शरीरैः गार्हपत्यादिरूपेण विभज्य वर्तमानैः सार्धम् ᵛअदितिम् अखण्डनीयं तमेवाग्निं ᵛनिशिती निशित्या निशानसाधनया प्रज्वलनहेतुभूतया ᵛसमिधा ᵛदाशत् परिचरेत् ᵛधीभिः[1] कर्मभिः बुद्धिविशेषैर्वा ᵛसः ᵛसुभगः[2] सन् ᵛविश्वेत् सर्वानेव ᵛजनान् ᵛद्युम्नैः द्योतमानैरन्नैर्यशोभिर्वा ᵛउद्नइव उदकानीव ᵛअति ᵛतारिषत् अतितरेत् अतिक्रामेत् ॥

**तदग्ने द्युम्नमा भर यत्सासहत्सदने कं चिदत्रिणम् । मन्युं जनस्य दूढ्यः ॥ १५ ॥**

तत् । अग्ने । द्युम्नम् । आ । भर । यत् । ससहत् । सदने । कम् । चित् । अत्रिणम् ।
मन्युम् । जनस्य । दुःऽध्यः ॥ १५ ॥

हे ᵛअग्ने ᵛतत् ᵛद्युम्नम्[3] ᵛआ ᵛभर अस्मभ्यमाहर । ᵛयत् ᵛसदने गृहे वर्तमानं ᵛकं ᵛचित् कमपि ᵛअत्रिणम् अत्तारं राक्षसादिकं ᵛसासहत् अत्यर्थमभिभवेत् । तथा ᵛदूढ्यः दुर्धियः पापबुद्धेः शत्रुजनस्य ᵛमन्युं क्रोधं यच्च द्युम्नमभिभवेत् तदाहरेत्यन्वयः । 'ध्यै च' इति पृषोदरादिपाठात् दुरो रेफस्योत्वं उत्तरपदादेष्टुत्वं च ॥ ॥ ३१ ॥

**येन चष्टे वरुणो मित्रो अर्यमा येन नासत्या भगः ।**
**वयं तत्ते शवसा गातुवित्तमा इन्द्रत्वोता विधेमहि ॥ १६ ॥**

येन । चष्टे । वरुणः । मित्रः । अर्यमा । येन । नासत्या । भगः ।
वयम् । तत् । ते । शवसा । गातुवित्ऽतमाः । इन्द्रत्वाऽऊताः । विधेमहि ॥ १६ ॥

ᵛयेन आग्नेयेन तेजसा ᵛवरुणः देवः ᵛचष्टे प्रकाशयति । येन च ᵛमित्रः ᵛअर्यमा च चष्टे । ᵛयेन च ᵛनासत्या अश्विनौ च चक्षाते । ᵛभगः भजनीय एतत्संज्ञो देवश्च चष्टे । ᵛशवसा बलेन ᵛगातुवित्तमाः गातोर्गातव्यस्य स्तोत्रस्य ज्ञातृतमाः । यद्वा । गन्तव्यस्य प्राप्तव्यस्य लब्धृतमाः । ᵛइन्द्रत्वोताः इन्द्रेणेश्वरेण त्वयोता रक्षिताः सन्तः ᵛवयं हे अग्ने ᵛते त्वदीयं ᵛतत् तेजः ᵛविधेमहि परिचरेमहि ॥

**घेदग्ने स्वाध्यो३ ये त्वा विप्र निदधिरे नृचक्षसम् । विप्रासो देव सुक्रतुम् ॥ १७ ॥**

---

१. त-न-भ-धीतिभिः । २. ग-न-भ-श-सुभगः शोभनधनः । ३. घ-द्युम्नं सामर्थ्यं ।

ते । घ । इत् । अग्ने । सुऽआध्यः । ये । त्वा । विप्र । निऽदधिरे । नृऽचक्षसम् ।
विप्रासः । देव । सुऽक्रतुम् ॥ १७ ॥

हे ᵛअग्ने ᵛते ᵛघेत् त एव खलु ᵛस्वाध्यः शोभनाध्याना भवन्ति । हे ᵛविप्र मेधाविन् ᵛदेव द्योतमानाग्ने ᵛये ᵛविप्रासः विप्रा मेधाविन ऋत्विजः ᵛनृचक्षसं नृणां चष्टारं[1] ᵛसुक्रतुं सुकर्माणं शोभनप्रज्ञं वा ᵛत्वा त्वां ᵛनिदधिरे निदधति यागार्थं गार्हपत्यादिस्थानेष्वाधानसंस्कारेण स्थापयन्ति ते घेदित्यन्वयः ॥

त इद्वेदिं सुभग त आहुतिं ते सोतुं चक्रिरे दिवि ।
त इद्वाजेभिर्जिग्युर्महद्धनं ये त्वे कामं न्येरिरे ॥ १८ ॥

ते । इत् । वेदिम् । सुऽभग । ते । आऽहुतिम् । ते । सोतुम् । चक्रिरे । दिवि ।
ते । इत् । वाजेभिः । जिग्युः । महत् । धनम् । ये । त्वे इति । कामम् । निऽएरिरे ॥ १८ ॥

हे ᵛसुभग शोभनधनाग्ने ᵛत ᵛइत् त एव यजमानास्त्वद्यागाय ᵛवेदिं ᵛचक्रिरे कुर्वन्ति । तदनन्तरं ᵛते यजमानाः ᵛआहुतिं चरुपुरोडाशादिसाध्यां दीक्षणीयादिषु कुर्वन्ति । ततः ᵛदिवि द्योतमाने सौत्येऽहनि ᵛसोतुं सोममभिषोतुं चक्रिरे उद्योगं कुर्वन्ति । अनुष्ठितयज्ञाः ᵛत ᵛइत् त एव ᵛवाजेभिः वाजैर्बलैः ᵛमहत् प्रभूतं ᵛधनं ᵛजिग्युः जयन्ति । शत्रुभ्यो लभन्ते । कुत इत्यत आह । ᵛये यजमाना हे अग्ने ᵛत्वे त्वयि ᵛकामम् अभिलाषं ᵛन्येरिरे नितरां गच्छन्ति[2] । त्वामादरातिशयेन स्तुवन्तीत्यर्थः ॥

आभिप्लविकेषूक्थ्येषु तृतीयसवने प्रशास्तुः शस्त्रे ' भद्रो नः ' इति प्रगाथो वैकल्पिकः स्तोत्रियः । सूत्र्यते हि—' भद्रो नो अग्निराहुतो यदी घृतेभिराहुतः ' ( आश्व. श्रौ. ७. ८ ) इति ॥

भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः ।
भद्रा उत प्रशस्तयः ॥ १९ ॥

भद्रः । नः । अग्निः । आऽहुतः । भद्रा । रातिः । सुऽभग । भद्रः । अध्वरः ।
भद्राः । उत । प्रऽशस्तयः ॥ १९ ॥

ᵛआहुतः हविर्भिस्तर्पितः ᵛअग्निः ᵛनः अस्माकं ᵛभद्रः कल्याणो भवतु । हे ᵛसुभग शोभनधनाग्ने ᵛभद्रा कल्याणी ᵛरातिः दानं चास्माकं भवतु । ᵛभद्रः कल्याणः ᵛअध्वरः यागश्च भवतु । ᵛउत अपि च ᵛभद्राः कल्याण्यः ᵛप्रशस्तयः प्रशंसाः स्तुतयश्च भवन्तु ॥

भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहः ।
अव स्थिरा तनुहि भूरि शर्धतां वनेमा ते अभिष्टिभिः ॥ २० ॥

भद्रम् । मनः । कृणुष्व । वृत्रऽतूर्ये । येन । समत्ऽसु । ससहः ।
अव । स्थिरा । तनुहि । भूरि । शर्धताम् । वनेम । ते । अभिष्टिऽभिः ॥ २० ॥

---

१. ख-घ-त-न-भ-श—चेष्टारं । २. ग—प्रेरयन्ति ।

हे अग्ने वृत्रतूर्ये संग्रामे भद्रं शोभनं मनः कृणुष्व अस्माकं कुरु। येन मनसा त्वं समत्सु संग्रामेषु सासहः भृशं शत्रूनभिभवसि। अपि च शर्धताम् अभिभवतां शत्रूणां भूरि भूरीणि बहूनि स्थिराणि[1] दृढान्यपि अव तनुहि अवाञ्चि कुरु। पराजितानि कुर्वित्यर्थः। वयं च अभिष्टिभिः अभ्येषणसाधनैर्हविर्भिः स्तोत्रैश्च ते त्वां वनेम संभजेमहि। यद्वा। ते तव प्रसादात् अभिष्टिभिः अभीष्टैः फलैर्वनेम संगच्छेमहि॥ ॥ ३२ ॥

**ईळे गिरा मनुर्हितं यं देवा दूतमरतिं न्येरिरे। यजिष्ठं हव्यवाहनम् ॥ २१ ॥**

ईळे। गिरा। मनुःऽहितम्। यम्। देवाः। दूतम्। अरतिम्। निऽएरिरे।

यजिष्ठम्। हव्यऽवाहनम् ॥ २१ ॥

गिरा वाचा स्तुतिरूपया मनुर्हितं मनुना प्रजापतिना यजमानेनाहितं तमग्निम् ईळे स्तौमि। कीदृशम्। यजिष्ठं यष्टृतमं हव्यवाहनं हविषां वोढारं अरतिम् अर्यमीश्वरं वा दूतं देवानां दूत्ये वर्तमानम्। यम् अग्निं देवाः न्येरिरे नितरां प्रेरयन्ति ॥

**तिग्मजम्भाय तरुणाय राजते प्रयो गायस्यग्नये।**
**यः पिंशते सूनृताभिः सुवीर्यमग्निर्घृतेभिराहुतः ॥ २२ ॥**

तिग्मऽजम्भाय। तरुणाय। राजते। प्रयः। गायसि। अग्नये।

यः। पिंशते। सूनृताभिः। सुऽवीर्यम्। अग्निः। घृतेभिः। आऽहुतः ॥ २२ ॥

तिग्मजम्भाय तीक्ष्णज्वालाय तरुणाय नित्ययूने जरामरणरहिताय राजते राजमानाय अग्नये प्रयः हविर्लक्षणमन्नं गायसि हे स्तोतः। प्रवृद्धिं प्रयच्छेत्यर्थः। यः अग्निः सूनृताभिः प्रियसत्यात्मिकाभिर्वाग्भिः स्तुतः घृतेभिः घृतैराज्यैः आहुतः अभिहुतश्च सन् सुवीर्यं शोभनवीर्यं पिंशते आश्लेषयति स्तोतृभिः संयोजयति। 'पिश अवयवे'। तस्मा अग्नय इत्यन्वयः॥

आभिप्लविकेषूक्थ्येषु प्रशास्तुः शस्त्रे यदा 'भद्रो नः' (ऋ. सं. ८. १९. १९) इति प्रगाथः स्तोत्रियः तदानीं 'यदी घृतेभिः' इति प्रगाथोऽनुरूपः। सूत्रं तु पूर्वमेवोदाहृतम्॥

**यदी घृतेभिराहुतो वाशीमग्निर्भरत उच्चाव च। असुर इव निर्णिजम् ॥ २३ ॥**

यदि। घृतेभिः। आऽहुतः। वाशीम्। अग्निः। भरते। उत्। च। अव। च।

असुरःऽइव। निःऽनिजम् ॥ २३ ॥

घृतेभिः घृतैः आहुतः अभिहुतोऽयम् अग्निः यदि यदा यस्मिन्काले वाशीम्। वाङ्नामैतत्। वाचं शब्दम् उच्च ऊर्ध्वं च अव च अवाक्च भरते संपादयति। यद्वा। वाशीं वाशनशीलां शब्दकारिणीं ज्वालामुद्भरते उद्धरति उद्गमयत्यूर्ध्वमुखम् अव च भरते अवाङ्मुखं च हरति उपसंहरति। असुरइव रश्मीनां क्षेप्ता सूर्यो यथा निर्णिजम् आत्मीयं रूपमुपरितनेषु लोकेषु प्रकाशतयोद्गमयति अधस्तनेषु चावाङ्मुखं गमयति तद्वदुच्चनीचभावनयाग्निस्तेज उद्गमयति। तं स्तुम इति शेषः॥

---

१. घन–स्थिरा स्थिराणि।

**यो हव्यान्यैरयता मनुर्हितो देव आसा सुगन्धिना ।**
**विवासते वार्याणि स्वध्वरो होता देवो अमर्त्यः ॥ २४ ॥**

यः । हव्यानि । ऐरयत । मनुःऽहितः । देवः । आसा । सुऽगन्धिना ।
विवासते । वार्याणि । सुऽअध्वरः । होता । देवः । अमर्त्यः ॥ २४ ॥

ᵛयः ᵛमनुर्हितः मनुना प्रजापतिनाहितः ᵛदेवः द्योतमानोऽग्निः ᵛसुगन्धिना शोभनगन्धयुक्तेन ᵛआसा आस्येन ᵛहव्यानि अस्मदीयानि हवींषि ᵛऐरयत देवान्प्रति प्रेरयति ᵛस्वध्वरः शोभनयज्ञः ᵛहोता देवानामाह्वाता ᵛदेवः दीप्यमानः ᵛअमर्त्यः मरणरहितः सोऽग्निः ᵛवार्याणि वरणीयानि धनानि ᵛविवासते परिचरते । यजमानाय प्रयच्छतीति शेषः ॥

**यदग्ने मर्त्यस्त्वं स्यामहं मित्रमहो अमर्त्यः । सहसः सूनवाहुत ॥ २५ ॥**

यत् । अग्ने । मर्त्यः । त्वम् । स्याम् । अहम् । मित्रऽमहः । अमर्त्यः ।
सहसः । सूनो इति । आऽहुत ॥ २५ ॥

हे ᵛसहसः ᵛसूनो बलस्य पुत्र ᵛआहुत घृतैरभिहुत हे ᵛमित्रमहः अनुकूलदीप्तिमन् ᵛअग्ने ᵛमर्त्यः मरणधर्मा ᵛअहं ᵛयत् यदि ᵛत्वं ᵛस्यां त्वदुपासनया त्वद्रूपमापन्नो भवेयम् । 'ये[१] यथा-यथोपासते ते[२] तदेव भवन्ति' इति श्रुतेः । तर्ह्यहम् ᵛअमर्त्यः मरणरहितो[३] देव एव भवेयमिति ॥ ॥३३॥

**न त्वा रासीयाभिशस्तये वसो न पापत्वाय सन्त्य ।**
**न मे स्तोतामतीवा न दुर्हितः स्यादग्ने न पापया ॥ २६ ॥**

न । त्वा । रासीय । अभिऽशस्तये । वसो इति । न । पापऽत्वाय । सन्त्य ।
न । मे । स्तोता । अमतिऽवा । न । दुःऽहितः । स्यात् । अग्ने । न । पापया ॥ २६ ॥

हे ᵛवसो वासकाग्ने ᵛत्वा त्वाम् ᵛअभिशस्तये अभिशंसनाय मिथ्यापवादाय हिंसायै वा ᵛन ᵛरासीय नाक्रोशयेयम् । 'रासृ शब्दे' । हे ᵛसन्त्य संभजनीयाग्ने ᵛपापत्वाय त्वां ᵛन रासीय । ᵛमे मदीयः ᵛस्तोता चानभिमतवचनेन त्वां न आक्रोशयतु । अत[४] एव[४] ᵛअमतीवा । अमतिरशोभना बुद्धिः । तद्वान् अपि च ᵛदुर्हितः शत्रुर्हे ᵛअग्ने अस्माकं ᵛन ᵛस्यात् न भवतु । अत एव ᵛपापया अशोभनया बुद्ध्या सः ᵛन बाधताम् ॥

**पितुर्न पुत्रः सुभृतो दुरोण आ देवाँ एतु प्र णो हविः ॥ २७ ॥**

पितुः । न । पुत्रः । सुऽभृतः । दुरोणे । आ । देवान् । एतु । प्र । नः । हविः ॥ २७ ॥

ᵛपितुर्न ᵛपुत्रः पितुः पुत्र इवास्माकं ᵛसुभृतः सुष्ठु भर्ता । यद्वा । पित्रा पुत्र इवास्माभिः सम्यग्भृतो हविर्भिः पोषितः । अयमग्निः पुत्र इवास्माकं सुभृतः ᵛदुरोणे यज्ञगृहे ᵛदेवान् ᵛआ अभिलक्ष्य ᵛनः अस्माकं ᵛहविः ᵛप्र ᵛएतु प्र गमयतु । यद्वा अग्निरैतु आगच्छतु । अस्मदीयं हविश्च देवान् प्राप्नोतु ॥

---

१. भ–यं । २. त-भ–'ते' नास्ति । ३. ज्ञ-त१-२–मरणधर्मरहितो । ४. ख-घ-त-न-श–अत एव पापया; भ–कीदृशः स्तोता ।

**तवाहमग्न ऊतिभिर्नेदिष्ठाभिः सचेय जोषमा वसो । सदा देवस्य मर्त्यः ॥२८॥**

तव । अहम् । अग्ने । ऊतिऽभिः । नेदिष्ठाभिः । सचेय । जोषम् । आ । वसो इति ।
सदा । देवस्य । मर्त्यः ॥ २८ ॥

हे वसो वासक अग्ने नेदिष्ठाभिः अन्तिकतमाभिः ऋजुगामिनीभिर्वा देवस्य तव ऊतिभिः रक्षाभिः मर्त्यः मनुष्यः अहं स्तोता सदा सर्वदा जोषम् आ सचेय प्रीतिमभिसेवेय ॥

**तव क्रत्वा सनेयं तव रातिभिरग्ने तव प्रशस्तिभिः ।**
**त्वामिदाहुः प्रमतिं वसो ममाग्ने हर्षस्व दातवे ॥ २९ ॥**

तव । क्रत्वा । सनेयम् । तव । रातिऽभिः । अग्ने । तव । प्रशस्तिऽभिः ।
त्वाम् । इत् । आहुः । प्रऽमतिम् । वसो इति । मम । अग्ने । हर्षस्व । दातवे ॥ २९ ॥

हे अग्ने तव क्रत्वा त्वदीयेन परिचरणरूपेण कर्मणा सनेयं त्वां संभजेयम् । एतदेव विशदयति । तव रातिभिः त्वदीयैर्हविर्दानैश्च सनेयम् । तथा तव प्रशस्तिभिः प्रशंसनैः स्तोत्रैश्च त्वां संभजेयम् । अस्यैव संभजने किं कारणं तदाह । हे वसो वासकाग्ने मम स्तोतुः प्रमतिं प्रकृष्टबुद्धिं रक्षकं त्वामित् त्वामेव आहुः ब्रह्मवादिनः कथयन्ति । अतो हे अग्ने दातवे दातुं हर्षस्व हृष्टो भव । हर्षयुक्तः सन् बहु धनं प्रयच्छेत्यर्थः ॥

पूर्वोक्त एव प्रशास्तुः शस्त्रे 'प्र सः' इति प्रगाथो वैकल्पिकोऽनुरूपः । सूत्र्यते हि—'प्र सो अग्ने तवोतिभिरग्निं वो वृधन्तम्' (आश्व. श्रौ. ७. ८) इति ॥

**प्र सो अग्ने तवोतिभिः सुवीराभिस्तिरते वाजभर्मभिः ।**
**यस्य त्वं सख्यमावरः ॥ ३० ॥**

प्र । सः । अग्ने । तव । ऊतिऽभिः । सुऽवीराभिः । तिरते । वाजभर्मऽभिः ।
यस्य । त्वम् । सख्यम् । आऽवरः ॥ ३० ॥

हे अग्ने तवोतिभिः रक्षाभिः सः यजमानः प्र तिरते प्रवर्धते । ऊतयो विशेष्यन्ते । सुवीराभिः । शोभना वीराः पुत्रादयो यासु तास्तथोक्ताः । वाजभर्मभिः । वाजानामन्नानां बलानां वा भर्म भरणं यासु तादृशीभिः । हे अग्ने त्वं यस्य यजमानस्य सख्यं सखित्वं मित्रत्वम् आवरः अभिवृणोषि स तिरत इत्यन्वयः ॥ ॥ ३४ ॥

**तव द्रप्सो नीलवान्वाश ऋत्विय इन्धानः सिष्णवा ददे ।**
**त्वं महीनामुषसामसि प्रियः क्षपो वस्तुषु राजसि ॥ ३१ ॥**

तव । द्रप्सः । नीलऽवान् । वाशः । ऋत्वियः । इन्धानः । सिष्णो इति । आ । ददे ।
त्वम् । महीनाम् । उषसाम् । असि । प्रियः । क्षपः । वस्तुषु । राजसि ॥ ३१ ॥

हे सिष्णो । सिषिः सेचनार्थः । सोमेनासिच्यमानाग्ने द्रप्सः द्रवणशीलः नीलवान् शकटनीडेऽवस्थानात्[1] तद्वान् वाशः कान्तः शब्दायमानो वा ऋत्वियः ऋतौ वसन्तादिकालविशेषे भवः

१. ग–शकटानेयत्वात् ।

ᵛइन्धानः संदीपयन् एवंभूतः ᵛतव सोमः ᵛआ ᵛददे तुभ्यं होमायाध्वर्युणादीयते । अपि च ᵛत्वं ᵛमहीनां महतीनाम् ᵛउषसां ᵛप्रियः मित्रभूतः ᵛअसि । उषसि ह्यग्नयो होमाय प्रज्वाल्यन्ते । तथा ᵛक्षपः क्षपाया रात्रेः संबन्धिषु ᵛवस्तुषु[1] ᵛराजसि प्रकाशसे । यद्वा । रात्रिसंबन्धीनि वस्तूनि पदार्थजातानि त्वं प्रकाशयसि ॥

तमागन्म सोभरयः सहस्रमुष्कं स्वभिष्टिमवसे । सम्राजं त्रासदस्यवम् ॥ ३२ ॥

तम् । आ । अगन्म । सोभरयः । सहस्रऽमुष्कम् । सुऽअभिष्टिम् । अवसे ।
सम्ऽराजम् । त्रासदस्यवम् ॥ ३२ ॥

ᵛसोभरयः ऋषयो वयम् ᵛअवसे रक्षणाय ᵛतम् अग्निम् ᵛआगन्म हविर्भिः स्तुतिभिश्च प्राप्ता अभूम । कीदृशम् । ᵛसहस्रमुष्कम् । मुष्णन्ति तमांस्यपहरन्तीति मुष्काणि तेजांसि । बहुतेजस्कं ᵛस्वभिष्टिं शोभनाभ्येषणं ᵛसम्राजं सम्यग्राजमानं ᵛत्रासदस्यवम् । त्रसदस्युर्नाम राजर्षिः । तस्य स्तोतव्यत्वेन संबन्धिनम् ॥

यस्य ते अग्ने अन्ये अग्नय उपक्षितो वयाइव ।
विपो न द्युम्ना नि युवे जनानां तव क्षत्राणि वर्धयन् ॥ ३३ ॥

यस्य । ते । अग्ने । अन्ये । अग्नयः । उपऽक्षितः । वयाःऽइव ।
विपः । न । द्युम्ना । नि । युवे । जनानाम् । तव । क्षत्राणि । वर्धयन् ॥ ३३ ॥

हे ᵛअग्ने ᵛयस्य ᵛते तव ᵛअन्ये ᵛअग्नयः ᵛवयाइव वृक्षस्य शाखा इव ᵛउपक्षितः समीपे निवसन्तो भवन्ति ᵛजनानां जनिमतां मनुष्याणां मध्येऽहं तस्य ᵛतव ᵛक्षत्राणि बलानि स्तुत्या ᵛवर्धयन् ᵛविपो ᵛन । स्तोतृनामैतत् । अन्ये स्तोतार इव ᵛद्युम्ना द्योतमानान्यन्नानि यशांसि वा ᵛनि ᵛयुवे नितरां प्राप्नोमि । त्वत्प्रसादाल्लभेयेत्यर्थः ॥

यमादित्यासो अद्रुहः पारं नयथ मर्त्यम् । मघोनां विश्वेषां सुदानवः ॥ ३४ ॥

यम् । आदित्यासः । अद्रुहः । पारम् । नयथ । मर्त्यम् । मघोनाम् । विश्वेषाम् । सुऽदानवः ॥ ३४ ॥

हे ᵛअद्रुहः अद्रोग्धारः हे ᵛसुदानवः[2] हे ᵛआदित्यासः अदितेः पुत्रा मित्रादयः ᵛमघोनां हविष्मतां ᵛविश्वेषां सर्वेषां मध्ये ᵛयं ᵛमर्त्यं मनुष्यं यजमानं ᵛपारं ᵛनयथ आरब्धस्य कर्मणः समाप्तिं प्रापयथ । स तत्फलं लभत इत्यर्थः ॥

यूयं राजानः कं चिच्चर्षणीसहः क्षयन्तं मानुषाँ अनु ।
वयं ते वो वरुण मित्रार्यमन्त्स्यामेदृतस्य रथ्यः ॥ ३५ ॥

यूयम् । राजानः । कम् । चित् । चर्षणिऽसहः । क्षयन्तम् । मानुषान् । अनु ।
वयम् । ते । वः । वरुण । मित्र । अर्यमन् । स्याम । इत् । ऋतस्य । रथ्यः ॥ ३५ ॥

हे ᵛराजानः राजमाना हे ᵛचर्षणीसहः शत्रुभूतानामभिभवितार आदित्याः ᵛयूयं ᵛमानुषाननु मनुष्यान् यजमानाननुलक्ष्य ᵛक्षयन्तं क्षपयन्तं ᵛकं ᵛचित् कमपि शत्रुं सर्वमपि शत्रुवर्गमभिभवथेति

---

१. ख-त-न-सत्सु; भ-वस्तुषु आच्छादकेषु तमःसु सत्सु त्वं; श-महत्सु। २. घ-सुदानवः शोभनदानाः।

शेषः। यद्वा। मनुष्येषु[1] यजमानेषु क्षयन्तं स्तुतीनामीश्वरं कं चित् कमपि स्तोतारं मा यूयं गच्छत। हे ᵛवरुण हे ᵛमित्र हे ᵛअर्यमन् ᵛते तादृशाः ᵛवयं ᵛवः युष्माकं संबन्धिनः ᵛऋतस्य यज्ञस्य ᵛरथ्यः ᵛस्याम नेतारो भवेम ॥

**अदा॑न्मे पौरुकु॒त्स्यः प॑ञ्चा॒शतं॑ त्र॒सद॑स्युर्व॒धूना॑म् । मंहि॑ष्ठो अ॒र्यः सत्प॑तिः ॥३६॥**

अदा॑त् । मे॒ । पौ॒रु॒ऽकु॒त्स्यः । प॒ञ्चा॒शत॑म् । त्र॒सद॑स्युः । व॒धूना॑म् ।

मंहि॑ष्ठः । अ॒र्यः । सत्ऽप॑तिः ॥ ३६ ॥

इदमादिकेन प्रगाथेन त्रसदस्योर्दानमृषिः प्रशंसति। ᵛपौरुकुत्स्यः पुरुकुत्सपुत्रः ᵛत्रसदस्युः ᵛमे मह्यं ᵛवधूनां ᵛपञ्चाशतम् ᵛअदात् दत्तवान्। कीदृशः। ᵛमंहिष्ठः दातृतमः ᵛअर्यः अभिगन्तव्यः स्वामी वा ᵛसत्पतिः सतां श्रेष्ठानां स्तोतॄणां पालयिता ॥

**उ॒त मे॑ प्र॒यियो॑र्व॒यियो॑: सु॒वास्त्वा॒ अधि॒ तुग्व॑नि ।**
**ति॒सॄ॒णां स॑प्त॒ती॒नां श्या॒वः प्र॑णे॒ता भु॑व॒द्वसु॒र्दिया॑नां॒ पति॑: ॥ ३७ ॥**

उ॒त । मे॒ । प्र॒यियो॑: । व॒यियो॑: । सु॒ऽवास्त्वा॑: । अधि॑ । तुग्व॑नि ।

ति॒सृ॒णाम् । स॒प्त॒तीना॑म् । श्या॒वः । प्र॒ऽने॒ता । भु॒व॒त् । वसु॑: । दिया॑नाम् । पति॑: ॥ ३७ ॥

— — — — — — — ॥ ३५ ॥

'आ गन्त' इति षड्विंशत्यृचमष्टमं सूक्तं काण्वस्य सोभरेरार्षं मारुतम्। प्रथमाद्ययुजः ककुभो द्वितीयादियुजः सतोबृहत्यः। अनुक्रम्यते हि—'आ गन्त षड्विंशतिर्मारुतम्' इति। गतो विनियोगः ॥

**आ ग॑न्ता॒ मा रि॑षण्यत॒ प्रस्था॑वानो॒ माप॑ स्थाता समन्यवः ।**
**स्थि॒रा चि॑न्नमयिष्णवः ॥ १ ॥**

आ । ग॒न्त॒ । मा । रि॒ष॒ण्य॒त॒ । प्र॒ऽस्था॑वानः । मा । अप॑ । स्था॒त॒ । स॒ऽम॒न्य॒वः॒ ।

स्थि॒रा । चि॒त् । न॒म॒यि॒ष्ण॒वः॒ ॥ १ ॥

हे ᵛप्रस्थावानः प्रस्थातारः प्रगन्तारो मरुतः ᵛआ ᵛगन्त अस्मानागच्छत। ᵛमा ᵛरिषण्यत अनागमनेनास्मान्[2] मा हिंस्त। हे ᵛसमन्यवः समानतेजस्काः समानक्रोधा वा ᵛस्थिरा ᵛचित् स्थिराणि दृढान्यपि पर्वतादीनि हे ᵛनमयिष्णवः नमनशीलाः कम्पयितारः ᵛमाप ᵛस्थात अस्मत्तोऽपेत्यान्यत्र मा तिष्ठत। अस्मास्वेव तिष्ठतेत्यर्थः ॥

**वी॒ळु॒प॒विभि॑र्मरुत ऋभुक्षण॒ आ रु॑द्रासः सु॒दी॒तिभि॑: ।**
**इ॒षा नो॑ अ॒द्या ग॑ता पुरुस्पृहो य॒ज्ञमा सो॑भरी॒यव॑: ॥ २ ॥**

वी॒ळु॒प॒विऽभि॑: । म॒रु॒तः॒ । ऋ॒भु॒क्ष॒णः॒ । आ । रु॒द्रा॒सः॒ । सु॒दी॒ति॒ऽभि॑: ।

इ॒षा । नः॒ । अ॒द्य । आ । ग॒त॒ । पु॒रु॒ऽस्पृ॒हः॒ । य॒ज्ञम् । आ । सो॒भ॒री॒ऽयव॑: ॥ २ ॥

१. ग-त-भ—मानुषेषु। २. ग—अन्यगम॰।

हे ᐯऋभुक्षणः महान्त उरुभासमाननिवासा वा हे ᐯरुद्रासः रुद्रा रुद्रपुत्राः ईदृशा हे ᐯमरुतः ᐯसुदीतिभिः शोभनदीप्तिकैः ᐯवीळुपविभिः। रथनेमयः पवयः। वीळु दृढाः पवयो येषु तादृशै रथैः ᐯआ[1] ᐯगत[1] आगच्छत। एतदेव विवृणोति। हे ᐯपुरुस्पृहः बहुभिः स्पृहणीया ईप्सितव्याः ᐯसोभरी-यवः सोभरिमृषिं मां कामयमानाः ᐯनः[2] अस्माकं ᐯयज्ञं प्रति ᐯअद्य इदानीम् ᐯइषा अन्नेन सहागच्छत। आ पूरणः[2] ॥

**वि॒द्मा हि रु॒द्रिया॑णां॒ शुष्म॑मु॒ग्रं म॒रुतां॒ शिमी॑वताम्। विष्णो॑रे॒षस्य॑ मी॒ळ्हुषा॑म् ॥ ३ ॥**

वि॒द्म। हि। रु॒द्रिया॑णाम्। शुष्म॑म्। उ॒ग्रम्। म॒रुता॑म्। शिमी॑ऽवताम्।
विष्णोः॑। ए॒षस्य॑। मी॒ळ्हुषा॑म् ॥ ३ ॥

ᐯरुद्रियाणां[3] रुद्रपुत्राणां ᐯशिमीवतां कर्मवतां ᐯविष्णोः व्याप्तस्य ᐯएषस्य एषणीयस्य वृष्ट्युद-कस्य ᐯमीळ्हुषां सेक्तॄणां ᐯमरुताम् ᐯउग्रम् उद्गूर्णं ᐯशुष्मं बलं ᐯविद्म ᐯहि जानीमः खलु[3] ॥

**वि द्वी॒पानि॒ पाप॑त॒न्तिष्ठ॑द्दु॒च्छुनो॒भे यु॑जन्त॒ रोद॑सी।**
**प्र धन्वा॑न्यैरत शुभ्रखादयो॒ यदेज॑थ स्वभानवः ॥ ४ ॥**

वि। द्वी॒पानि॑। पाप॑तन्। तिष्ठ॑त्। दु॒च्छुना॑। उ॒भे इति॑। यु॒ज॒न्त॒। रोद॑सी॒ इति॑।
प्र। धन्वा॑नि। ऐ॒र॒त। शु॒भ्र॒ऽखा॒द॒यः॒। यत्। एज॑थ। स्व॒ऽभा॒न॒वः॒ ॥ ४ ॥

ᐯद्वीपानि द्वयोः पार्श्वयोरापो येषु तान्युदमध्यस्थलानि[4]। 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (पा. सू. ६. ३. ९७) इतीत्वम्। 'ऋक्पूः' इत्यादिनाकारः समासान्तः। तानि च ᐯवि ᐯपापतन् अत्यर्थं मरुद्वेगेन विपतन्ति। ᐯतिष्ठत् स्थावरं चान्यद्वृक्षजातं[5] ᐯदुच्छुना दुःखेन युज्यते। ᐯउभे ᐯरोदसी द्यावापृथिव्यावपि ᐯयुजन्त। ते मरुतः स्वागमनजनितेन कम्पनेन योजयन्ति। परोऽर्धर्चः परोक्षकृतः। ᐯधन्वानि गमनशीलान्युदकानि च ᐯप्र ᐯऐरत प्रगच्छन्ति। हे ᐯशुभ्रखादयः शोभनायुधाः[6] शोभनहविष्का वा हे ᐯस्वभानवः स्वायत्तदीप्तयः यूयं ᐯयत् यदा ᐯएजथ कम्पयथ। तदैतत्पूर्वोक्तं सर्वं निष्पद्यत इत्यर्थः ॥

**अ॒च्यु॑ता चिद्वो॒ अज्म॒न्ना नान॑दति॒ पर्व॑तासो॒ वन॒स्पति॑ः। भूमि॒र्यामे॑षु रेजते ॥५॥**

अ॒च्यु॑ता। चि॒त्। व॒ः। अज्म॑न्। आ। नान॑दति। पर्व॑तासः। व॒न॒स्पति॑ः। भूमि॑ः। यामे॑षु। रे॒ज॒ते॒ ॥५॥

हे मरुतः ᐯवः युष्माकम् ᐯअज्मन् अज्मनि गमने सति ᐯअच्युता ᐯचित् च्यावयितुमशक्या अपि ᐯपर्वतासः पर्वता मेघा गिरयो वा ᐯवनस्पतिः। जातावेकवचनम्। वनस्पतयो वृक्षाश्च ᐯआ ᐯनानदति अभितो भृशं शब्दायन्ते। अपि च ᐯयामेषु युष्मदीयेषु गमनेषु निमित्तेषु ᐯभूमिः पृथिवी च ᐯरेजते कम्पते ॥    ॥ ३६ ॥

---

१. ग-त-भ-श—' आ गत ' नास्ति। २. ख-ञ-त१-२-भ-मु—संतः अद्येदानीं यज्ञमस्मदीयं यागं इषा अस्मभ्यं दातव्येनान्नेन सह आगत आगच्छत शीघ्रं कालविलम्बं मा कुरुत; ग-त३-४-श—' नः अस्माकं... आ पूरणः ' नास्ति। ३. ख-ञ-त१-२-भ—एषां मरुतां शुष्मं बलं वयं स्तोतार सोभरयः उग्रमुद्गूर्णं विद्म जानीमः। कीदृशानां मरुतां। रुद्रियाणां रुद्रपुत्राणां शिमीवतां कर्मवतां विष्णोर्व्याप्तस्य एषस्य एषणीयस्य वृष्ट्युदकस्य मीळ्हुषां सेक्तृणां; ग-त३-४—' मरुतां ...खलु ' नास्ति। ४. ग-भ-श—तान्यु-दकमध्यस्थलानि। ५. ग—°द्वस्तुजातं। ६. न-भ—शोभमानायुधाः।

अमाय वो मरुतो यातवे द्यौर्जिहीत उत्तरा बृहत् ।
यत्रा नरो देदिशते तनूष्वा त्वक्षांसि बाह्वोजसः ॥ ६ ॥

अमाय । वः । मरुतः । यातवे । द्यौः । जिहीते । उत्ऽतरा । बृहत् ।
यत्र । नरः । देदिशते । तनूषु । आ । त्वक्षांसि । बाहुऽओजसः ॥ ६ ॥

हे मरुतः वः युष्माकम् अमाय बलाय यातवे यातुं द्यौः द्युलोकः बृहत् अन्तरिक्षं विसृज्य उत्तरा उद्गततरा जिहीते गच्छति । युष्मदागमनाद्भीता सती युष्मदीयमान्तरिक्षं स्थानं परित्यज्योर्ध्वं पलायत इत्यर्थः । यत्र यस्मिन्नन्तरिक्षे बाह्वोजसः बाह्वोरोजो बलं येषां तादृशाः नरः नेतारो मरुतः त्वक्षांसि दीप्तान्याभरणानि तनूषु आत्मीयेषु शरीरेषु आ देदिशते आदिष्टानि धृतानि कुर्वन्ति । यद्वा । तनूषु विस्तृतासु मेघस्थास्वप्सु त्वक्षांसि तनूकृतानि तीक्ष्णीकृतान्यायुधानि मेघोद्भेदनाय आ देदिशते पुनःपुनरादिशन्ति । तद्बृहदन्तरिक्षं जिहीत इत्यन्वयः ॥

स्वधामनु श्रियं नरो महि त्वेषा अमवन्तो वृषप्सवः । वहन्ते अह्रुतप्सवः ॥७॥

स्वधाम् । अनु । श्रियम् । नरः । महि । त्वेषाः । अमऽवन्तः । वृषऽप्सवः ।
वहन्ते । अह्रुतऽप्सवः ॥ ७ ॥

नरः नेतारो मरुतः स्वधामनु । स्वधेत्यन्ननाम । हविर्लक्षणमन्नमनुलक्ष्य श्रियं शोभां महि महत्प्रौढं वहन्ते धारयन्ति । कीदृशाः । त्वेषाः दीप्ताः अमवन्तः बलवन्तः वृषप्सवः वर्षणरूपाः अह्रुतप्सवः अकुटिलरूपाश्च ॥

गोभिर्वाणो अज्यते सोभरीणां रथे कोशे हिरण्यये ।
गोबन्धवः सुजातास इषे भुजे महान्तो नः स्परसे नु ॥ ८ ॥

गोभिः । वाणः । अज्यते । सोभरीणाम् । रथे । कोशे । हिरण्यये ।
गोऽबन्धवः । सुऽजातासः । इषे । भुजे । महान्तः । नः । स्परसे । नु ॥ ८ ॥

सोभरीणाम् ऋषीणां गोभिः शब्दैः स्तुतिलक्षणैः वाणः मरुद्वीणा अज्यते व्यज्यते प्रकटीक्रियते । कुत्र । हिरण्यये रथे कोशे कोशवद्वेष्टिते मध्यदेशे । यद्वा । गोभिर्गन्तृभिर्गोमातृकैर्वा मरुद्भिर्वाणोऽज्यते व्यज्यते । सोभरीणां ज्ञानायैतदेशे रथे वाद्यत इत्यर्थः । अपि च गोबन्धवः गोमातृकाः सुजातासः शोभनजन्मानः महान्तः महानुभावास्ते मरुतः नः अस्माकम् इषे अन्नाय भुजे भोगाय स्परसे प्रीत्यै च बलनाय वा नु क्षिप्रं भवन्त्विति शेषः ॥

प्रति वो वृषदञ्जयो वृष्णे शर्धाय मारुताय भरध्वम् । हव्या वृषप्रयाव्णे ॥ ९ ॥

प्रति । वः । वृषत्ऽअञ्जयः । वृष्णे । शर्धाय । मारुताय । भरध्वम् । हव्या । वृषऽप्रयाव्ने ॥९॥

हे वृषदञ्जयः वृषता वर्षकेण सोमेनाञ्जन्तः सिञ्चन्तोऽध्वर्यवः वः यूयं वृष्णे वर्षित्रे मारुताय मरुत्संघरूपाय शर्धाय बलाय हव्यानि हवींषि प्रति भरध्वम् । आहवनीयं प्रति हरत । शर्धं विशेष्यते । वृषप्रयाव्णे । वृषाणः सेक्तारः प्रयावानः प्रकृष्टं गन्तारो मरुतो यस्मिन् तत्तथोक्तम् । तस्मै ॥

वृषणश्वेन मरुतो वृषप्सुना रथेन वृषनाभिना ।
आ श्येनासो न पक्षिणो वृथा नरो हव्या नो वीतये गत ॥ १० ॥

वृषणश्वेन । मरुतः । वृषऽप्सुना । रथेन । वृषऽनाभिना ।
आ । श्येनासः । न । पक्षिणः । वृथा । नरः । हव्या । नः । वीतये । गत ॥ १० ॥

हे vनरः नेतारः vमरुतः vवृषणश्वेन वृषभिः सेचनसमर्थैरश्वैरुपेतेन vवृषप्सुना वर्षकरूपयुक्तेन vवृषनाभिना । नाभिश्चक्रच्छिद्रम् । वर्षकनाभियुक्तेन vरथेन vनः अस्माकं हव्यानि[1] हवींषि vआ vगत आगच्छत । vवृथा अनायासेनैव vवीतये भक्षणार्थम् । तत्र दृष्टान्तः । vश्येनासो vन vपक्षिणः श्येनाः शंसनीयगतयः पक्षिणो यथा शीघ्रमागच्छन्ति तद्वदनायासेन शीघ्रमागच्छतेत्यर्थः ॥ ॥३७॥

समानमञ्ज्येषां वि भ्राजन्ते रुक्मासो अधि बाहुषु । दविद्युतत्यृष्टयः ॥ ११ ॥

समानम् । अञ्जि । एषाम् । वि । भ्राजन्ते । रुक्मासः । अधि । बाहुषु ।
दविद्युतति । ऋष्टयः ॥ ११ ॥

vएषां मरुताम् vअञ्जि रूपाभिव्यञ्जकमाभरणं vसमानम् एकविधमेव । एतदेवाह । vरुक्मासः रुक्मा दीप्यमानाः सुवर्णमया हाराः vवि vभ्राजन्ते । वक्षःस्थलेषु विशेषेण दीप्यन्ते । तथा vबाहुषु vअधि अंसेषु vऋष्टयः शक्त्यादीन्यायुधानि vदविद्युतति अत्यर्थं द्योतन्ते ॥

त उग्रासो वृषण उग्रबाहवो नकिष्टनूषु येतिरे ।
स्थिरा धन्वान्यायुधा रथेषु वोऽनीकेष्वधि श्रियः ॥ १२ ॥

ते । उग्रासः । वृषणः । उग्रऽबाहवः । नकिः । तनूषु । येतिरे ।
स्थिरा । धन्वानि । आयुधा । रथेषु । वः । अनीकेषु । अधि । श्रियः ॥ १२ ॥

vउग्रासः उद्गूर्णाः सर्वकार्येषूद्यताः vवृषणः वर्षितारः vउग्रबाहवः उद्गूर्णबाहुकाः vते मरुतः vतनूषु आत्मीयेषु शरीरेषु vनकिः vयेतिरे रक्षणाय न प्रयतन्ते । न हि कश्चित्तेषां शरीराणि बाधितुं शक्नोति येन यत्नः क्रियेत । परोऽर्धर्चः प्रत्यक्षकृतः । हे मरुतः vवः युष्माकं vरथेषु vधन्वानि धनूंष्यायुधानि आयोधनानि बाणादीनि च vस्थिरा स्थिराणि दृढतराणि सन्ति । अत[2] एव[2] कारणात् vअनीकेष्वधि सेनामुखेषु vश्रियः जयसंपदः युष्माकं भवन्ति ॥

येषामर्णो न सप्रथो नाम त्वेषं शश्वतामेकमिद्भुजे । वयो न पित्र्यं सहः ॥१३॥

येषाम् । अर्णः । न । सऽप्रथः । नाम । त्वेषम् । शश्वताम् । एकम् । इत् । भुजे ।
वयः । न । पित्र्यम् । सहः ॥ १३ ॥

vअर्णो vन उदकमिव vसप्रथः सर्वतः पृथु विस्तीर्णं vत्वेषं दीप्तं vशश्वतां बहूनां vयेषां[3] मरुतामीदृशं vनाम मरुत इति नामधेयम् vएकमित् एकमेवासहायमेव सत् vभुजे स्तोतॄणां भोगाय भवति । तत्र दृष्टान्तः । vसहः प्रसहनशीलं vपित्र्यं पितुरागतं vवयो vन अन्नमिव । यथा तद्विस्रम्भेण भोगाय भवति तथेत्यर्थः । तानित्युत्तरत्रैकवाक्यता ॥

---

१. घ-श–हव्या । २. ग–यन्तः अतः । ३. ख-ग-त-भ२-श–एषां; न–' येषा ' नास्ति ।

तान्वन्दस्व मरुतस्ताँ उप स्तुहि तेषां हि धुनीनाम् ।
अराणां न चरमस्तदेषां दाना मह्ना तदेषाम् ॥ १४ ॥

तान् । वन्दस्व । मरुतः । तान् । उप । स्तुहि । तेषाम् । हि । धुनीनाम् ।
अराणाम् । न । चरमः । तत् । एषाम् । दाना । मह्ना । तत् । एषाम् ॥ १४ ॥

हे अन्तरात्मन् तान् पूर्वोक्तगुणान् मरुतः वन्दस्व प्रणम । तान् एवोपेत्य स्तुहि । हि यस्मात् धुनीनां कम्पयितॄणां तेषां मरुतां वयं शेषभूताः स्मः । अराणाम्[1] अर्याणां[2] स्वामिनां यथा चरमः[3] हीनः सेवकः शेषभूतस्तद्वत् । तत् तस्मात् एषां मरुतां दाना दानानि मह्ना महत्त्वेन युक्तान्यस्माकं भवन्ति । तदेषाम् इति द्विरुक्तिरादरार्था पदपूरणार्था वा ॥

सुभगः स वं ऊतिष्वास पूर्वासु मरुतो व्युष्टिषु । यो वा नूनमुतासति ॥ १५ ॥

सुऽभगः । सः । वः । ऊतिषु । आस । पूर्वासु । मरुतः । विऽउष्टिषु ।
यः । वा । नूनम् । उत । असति ॥ १५ ॥

हे मरुतः वः युष्माकम् ऊतिषु रक्षासु सतीषु सः स्तोता सुभगः आस शोभनधनो भवति । अस्तेश्छान्दसो भूभावाभावः । यद्वा । सुभग आस[4] दीप्यते । 'अस गतिदीप्त्यादानेषु' । कदेति चेत् उच्यते । पूर्वासु व्युष्टिषु पूर्वेष्वतीतेषु विवासितेषु दिवसेषु । यद्वा । पूर्वास्वागामिनीषु व्युष्टिपूषःसु । उषःकालोपलक्षितेषु दिवसेषु । उत अपि च यः[5] मनुष्यः स्तोता यष्टा वा नूनम् अवश्यम् असति युष्माकं भवति । अस्तेः छान्दसः शपो लुगभावः । स सुभग इत्यन्वयः ॥ ॥३८॥

यस्य वा यूयं प्रति वाजिनो नर आ हव्या वीतये गथ ।
अभि ष द्युम्नैरुत वाजसातिभिः सुम्ना वो धूतयो नशत् ॥ १६ ॥

यस्य । वा । यूयम् । प्रति । वाजिनः । नरः । आ । हव्या । वीतये । गथ ।
अभि । सः । द्युम्नैः । उत । वाजसातिऽभिः । सुम्ना । वः । धूतयः । नशत् ॥ १६ ॥

हे नरः नेतारो मरुतः यूयं यस्य वा यस्य च वाजिनः हविष्मतो यजमानस्य हव्या हव्यानि हवींषि प्रति वीतये भक्षणाय आ गथ आगच्छथ सः यजमानः हे धूतयः कम्पयितारो मरुतः द्युम्नैः द्योतमानैरन्नैर्यशोभिर्वा उत अपि च वाजसातिभिः वाजानां[6] संभजनैश्च वः युष्माकं संबन्धीनि सुम्ना सुम्नानि सुखानि अभि नशत् अभितो व्याप्नोति ॥

यथा रुद्रस्य सूनवो दिवो वशन्त्यसुरस्य वेधसः । युवानस्तथेदसत् ॥१७॥

यथा । रुद्रस्य । सूनवः । दिवः । वशन्ति । असुरस्य । वेधसः ।
युवानः । तथा । इत् । असत् ॥ १७ ॥

रुद्रस्य दुःखद्रावयितुरीश्वरस्य सूनवः पुत्राः असुरस्य उदकानां क्षेप्तुर्मेघस्य वेधसः विधातारः । यद्वा । असवः प्राणाः । तान् राति ददातीत्यसुरं वृष्टिजलम् । तस्य कर्तारः । युवानः

१. घ–अराणां न । २. झ-त१-२-भ१–आर्याणां । ३. ख-त-न-भ१-श–चरमो न । ४. त-भ–सन् । ५. घ–यो वा यश्च । ६. घ–अन्नानां ।

नित्यतरुणा ईदृशा मरुतः ᐯदिवः अन्तरिक्षादागत्य ᐯयथा येन प्रकारेण ᐯवशन्ति अस्मान् कामयन्ते ᐯतथेत् तेनैव प्रकारेण ᐯअसत् इदं स्तोत्रं भवतु । वष्टेः छान्दसः शपो लुगभावः ॥

ये चार्हन्ति मरुतः सुदानवः स्मन्मीळ्हुषश्चरन्ति ये ।
अतश्चिदा न उप वस्यसा हृदा युवान आ ववृध्वम् ॥ १८ ॥

ये । च । अर्हन्ति । मरुतः । सुऽदानवः । स्मत् । मीळ्हुषः । चरन्ति । ये ।
अतः । चित् । आ । नः । उप । वस्यसा । हृदा । युवानः । आ । ववृध्वम् ॥ १८ ॥

ᐯसुदानवः शोभनदानाः ᐯये ᐯच[1] यजमानाः ᐯमरुतः देवान् ᐯअर्हन्ति पूजयन्ति । ᐯये च ᐯमीळ्हुषः सेक्तॄन् मरुतः ᐯस्मत् प्रशस्तं ᐯचरन्ति हविर्भिः प्रचरन्ति यजन्ति । यत एवम् ᐯअतः[2] अपि[2] कारणात् तानुभयविधान् ᐯनः अस्मान् ᐯआ अभिलक्ष्य ᐯवस्यसा वसीयसा वसुमत्तमेन ᐯहृदा हृदयेन हे ᐯयुवानः मरुतः ᐯउप ᐯआ ᐯववृध्वम् उपेत्याभिसंभजत ॥

यूनं ऊ षु नविष्ठया वृष्णः पावकाँ अभि सोभरे गिरा ।
गाय गाइव चर्कृषत् ॥ १९ ॥

यूनः । ऊँ इति । सु । नविष्ठया । वृष्णः । पावकान् । अभि । सोभरे । गिरा ।
गाय । गाःऽइव । चर्कृषत् ॥ १९ ॥

हे ᐯसोभरे ᐯयूनः नित्यतरुणान् ᐯवृष्णः वर्षितॄन् ᐯपावकान् तान् मरुतः ᐯनविष्ठया अतिशयेनाभिनवया ᐯगिरा वाचा स्तुतिरूपया ᐯसु शोभनम् ᐯअभि ᐯगाय अभिष्टुहि । ᐯचर्कृषत् पुनःपुनः कृषन् कृषीवलः ᐯगाइव । स यथा यूनः शक्ताननडुहः स्तौति तद्वत् ॥

साहा ये सन्ति मुष्टिहेव हव्यो विश्वासु पृत्सु होतृषु ।
वृष्णश्चन्द्रान्न सुश्रवस्तमान् गिरा वन्दस्व मरुतो अह ॥ २० ॥

सहाः । ये । सन्ति । मुष्टिहाऽइव । हव्यः । विश्वासु । पृत्ऽसु । होतृषु ।
वृष्णः । चन्द्रान् । न । सुश्रवःऽतमान् । गिरा । वन्दस्व । मरुतः । अह ॥ २० ॥

ᐯविश्वासु सर्वासु ᐯपृत्सु पृतनासु युद्धेषु ᐯहोतृषु आह्वानशीलेषु योद्धृषु च ᐯये मरुतः ᐯसहाः ᐯसन्ति अभिभवितारो भवन्ति ᐯहव्यः ह्वातव्यः ᐯमुष्टिहेव । मुष्टिभिरेव हन्तीति मुष्टिहा मल्लः । स इव । नेति संप्रत्यर्थे । ᐯन संप्रति ᐯवृष्णः वर्षितॄन् ᐯचन्द्रान् आह्लादकान् ᐯसुश्रवस्तमान् अतिशयेन शोभनयशस्कांस्तान् ᐯमरुतः ᐯअह मरुत एव ᐯगिरा वाचा ᐯवन्दस्व स्तुहि ॥　　॥ ३९ ॥

गावश्चिद्घा समन्यवः सजात्येन मरुतः सबन्धवः ।
रिहते ककुभो मिथः ॥ २१ ॥

गावः । चित् । घ । सऽमन्यवः । सऽजात्येन । मरुतः । सऽबन्धवः ।
रिहते । ककुभः । मिथः ॥ २१ ॥

---

१. ग–'च' नास्ति ।　२. घ–अतश्चिदतोपि ।

हे ᵛसमन्यवः समानतेजस्काः समानक्रोधा वा हे ᵛमरुतः ᵛगावश्चित् गावश्च युष्मन्मातृभूताः ᵛसजात्येन समानजातित्वेन[1] ᵛसबन्धवः समानबन्धुकाः सत्यः ᵛककुभः दिशः प्राच्यादिदिग्भागान् प्राप्य ᵛमिथः परस्परं ᵛरिहते लिहन्ति । ᵛघ इति पूरकः ॥

**मर्तश्चिद्वो नृतवो रुक्मवक्षस उप भ्रातृत्वमायति ।**
**अधि नो गात मरुतः सदा हि व आपित्वमस्ति निध्रुवि ॥ २२ ॥**

मर्तः । चित् । वः । नृतवः । रुक्मऽवक्षसः । उप । भ्रातृऽत्वम् । आ । अयति ।
अधि । नः । गात । मरुतः । सदा । हि । वः । आपिऽत्वम् । अस्ति । निऽध्रुवि ॥२२॥

हे ᵛनृतवः नृत्यन्तो हे ᵛरुक्मवक्षसः । रोचमानमाभरणं रुक्मं वक्षसि येषां ते तथोक्ताः । ईदृशा हे ᵛमरुतः ᵛमर्तश्चित् मनुष्योऽपि स्तोता ᵛवः युष्माकं ᵛभ्रातृत्वं सखित्वम् ᵛआ आभिमुख्येन ᵛउप ᵛअयति उपगच्छति । अतः ᵛनः अस्मान् मनुष्यान् स्तोतृन् ᵛअधि ᵛगात अधिब्रूत अस्मत्पक्षपातवचना भवत । ᵛहि यस्मात् ᵛवः युष्माकम् ᵛआपित्वं बन्धुत्वं ᵛनिध्रुवि नितरां धारयितव्ये स्तोत्रे यज्ञे वा ᵛसदा सर्वदा ᵛअस्ति विद्यते तस्मादित्यर्थः ॥

**मरुतो मारुतस्य न आ भेषजस्य वहता सुदानवः । यूयं सखायः सप्तयः ॥२३॥**

मरुतः । मारुतस्य । नः । आ । भेषजस्य । वहत । सुऽदानवः । यूयम् । सखायः । सप्तयः ॥२३॥

हे ᵛसुदानवः शोभनदाना हे ᵛसखायः समानख्याना हे ᵛसप्तयः सर्पणशीलाः ᵛमरुतः ᵛनः अस्माकं ᵛमारुतस्य ᵛभेषजस्य मरुत्संबन्धि भेषजमौषधं ᵛयूयम् ᵛआ ᵛवहत आनयत ॥

**याभिः सिन्धुमवथ याभिस्तूर्वथ याभिर्दशस्यथा क्रिविम् ।**
**मयो नो भूतोतिभिर्मयोभुवः शिवाभिरसचद्विषः ॥ २४ ॥**

याभिः । सिन्धुम् । अवथ । याभिः । तूर्वथ । याभिः । दशस्यथ । क्रिविम् ।
मयः । नः । भूत । ऊतिऽभिः । मयःऽभुवः । शिवाभिः । असचऽद्विषः ॥ २४ ॥

हे मरुतः ᵛयाभिः ऊतिभिः ᵛसिन्धुं समुद्रम् ᵛअवथ रक्षथ । ᵛयाभिः च ᵛतूर्वथ स्तोतृणां शत्रून् हिंस्थ । तुर्वी हिंसार्थः । ᵛयाभिः च ᵛक्रिविं कूपं तृष्णजे गोतमाय ᵛदशस्यथ प्रयच्छथ । हे ᵛमयोभुवः मयसः सुखस्य भावयितारो हे ᵛअसचद्विषः असक्तशत्रवः शत्रुरहिताः ᵛशिवाभिः कल्याणीभिस्ताभिः सर्वाभिः ᵛऊतिभिः रक्षाभिः ᵛनः अस्माकं ᵛमयः सुखं ᵛभूत भावयत उत्पादयत । यद्वा । 'भू प्राप्तौ' । प्रापयत ॥

**यत्सिन्धौ यदसिक्न्यां यत्समुद्रेषु मरुतः सुबर्हिषः । यत्पर्वतेषु भेषजम् ॥ २५ ॥**

यत् । सिन्धौ । यत् । असिक्न्याम् । यत् । समुद्रेषु । मरुतः । सुऽबर्हिषः ।
यत् । पर्वतेषु । भेषजम् ॥ २५ ॥

हे ᵛसुबर्हिषः शोभनयज्ञाः ᵛमरुतः ᵛसिन्धौ एतत्संज्ञे स्यन्दनशीले नदे ᵛयत् ᵛभेषजम् अस्ति ᵛयत् च ᵛअसिक्न्यां ᵛयत् च ᵛसमुद्रेषु जलधिषु ᵛयत् च ᵛपर्वतेषु भेषजं विद्यते तत्सर्वं भेषजं पश्यन्त इत्युत्तरयैकवाक्यता ॥

---

१. भ—समानजातित्वेन एकस्माद्रुद्राज्जाता इत्येवं ।

विश्वं पश्यन्तो बिभृथा तनूष्वा तेना नो अधि वोचत ।
क्षमा रपो मरुत आतुरस्य न इष्कर्ता विह्रुतं पुनः ॥ २६ ॥

विश्वम् । पश्यन्तः । बिभृथ । तनूषु । आ । तेन । नः । अधि । वोचत ।
क्षमा । रपः । मरुतः । आतुरस्य । नः । इष्कर्त । विऽह्रुतम् । पुनरिति ॥ २६ ॥

Vविश्वं सर्वं पूर्वोक्तं भेषजं Vपश्यन्तः जानन्तो यूयं Vतनूषु अस्मदीयेषु विषयेषु Vआ Vबिभृथ आहरथ । आहृतेन च Vतेन Vनः अस्मान् Vअधि Vवोचत अधिब्रूत । चिकित्सतेत्यर्थः । अपि च हे Vमरुतः Vनः अस्माकं मध्ये Vआतुरस्य रोगिणः Vरपः । पापनामैतत् । रपसः पापफलस्य रोगस्य Vक्षमा क्षान्तिर्यथा भवति तथा Vविह्रुतं विबाधितमङ्गं Vपुनः Vइष्कर्त निःशेषेण संपूर्णं कुरुत । निसो नलोपश्छान्दसः । करोतेर्लोटि छान्दसो विकरणस्य लुक् । 'तप्तनप्तनथनाश्च' इति तशब्दस्य तबादेशः । अत एवोपसर्गसमुदायो नावगृह्यते ॥ ॥ ४० ॥ ॥ ३ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः[1] ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
षष्ठाष्टके प्रथमोऽध्यायः समाप्तः ॥

---

॥ श्रीगणेशाय नमः ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्[2] ॥

चतुर्थेऽनुवाके[3] दश सूक्तानि । तत्र 'वयमु त्वाम्' इत्यष्टादशर्चं प्रथमं सूक्तम् । अत्रानुक्रमणिका—'वयमु द्व्यूनान्त्ये द्वृचे चित्रस्य दानस्तुतिः' इति । 'ऋषिश्चान्यस्मात्' इति परिभाषया काण्वः सोभरिर्ऋषिः । 'काकुभं प्रागाथं ह' इत्युक्तत्वादस्यापि सूक्तस्यायुजः ककुभो युजः सतोबृहत्यः । अन्त्ये द्वृचे चित्रस्य दानं देवता । शिष्टा ऐन्द्र्यः । सूक्तविनियोगो लैङ्गिकः । उक्थ्ये ब्राह्मणाच्छंसिशस्त्रे 'वयमु त्वाम्' इति प्रगाथः स्तोत्रियः । सूत्रितं च—'वयमु त्वामपूर्व्य यो न इदमिदं पुरेति प्रगाथौ' ( आश्व. श्रौ. ६. १ ) इति । आभिप्लविकेषूक्थ्येष्वपि तृतीयसवने ब्राह्मणाच्छंसिनो वैकल्पिकोऽयं स्तोत्रियः प्रगाथः । सूत्रमुक्तम् । अस्मिन्नेव शस्त्रे 'त्वं न इन्द्रा भर' इति प्रगाथो यदा स्तोत्रियः तदा 'वयमु त्वा' इत्यनुरूपतृचस्याद्या । सूत्रितं च—'वयमु त्वामपूर्व्य यो न इदमिदं पुरा याहीम इन्दव इति समाहार्योऽनुरूपः' ( आश्व. श्रौ. ७. ८ ) इति ॥

वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः । वाजे चित्रं हवामहे ॥ १ ॥

वयम् । ऊँ इति । त्वाम् । अपूर्व्य । स्थूरम् । न । कत् । चित् । भरन्तः । अवस्यवः ।
वाजे । चित्रम् । हवामहे ॥ १ ॥

---

१. ज्ञ-°महेश्वरः ॥ इत्थं श्रीबुक्कभूपालसाम्राज्यैकधुरंधरः । विद्यातीर्थगुरोर्दृष्ट्या प्राप्तसार्वज्ञवैभवः । श्रीमत्सायणमंत्रीशो दाशतय्याश्च षष्ठके । अष्टके प्रथमाध्यायं पश्यतैतद्विमत्सराः ॥ २. ज्ञ-°महेश्वरं ॥ इत्थं षष्ठाष्टकगः प्रथमाध्याय आदरात् । व्याख्यातः सायणार्येण द्वितीयो व्याकरिष्यति( ? ते ) ॥ ३. श-अथ षष्ठाष्टके द्वितीयोध्याय आरभ्यते । चतुर्थेनुवाके ।

हे ᵛअपूर्व्य त्रिषु सवनेषु प्रादुर्भूतत्वादभिनवेन्द्र ᵛभरन्तः सोमलक्षणैरन्नैस्त्वां पोषयन्तः ᵛवयं ᵛवाजे। वाजयन्ति गच्छन्ति योद्धारोऽत्रेति वाजयन्त्यायुधान्यत्रेति वा वाजः संग्रामः। तस्मिन् ᵛचित्रं चायनीयं विविधरूपं वा ᵛत्वाम् ᵛउ त्वामेव ᵛअवस्यवः रक्षणमात्मन इच्छन्तः सन्तः ᵛहवामहे त्वामाह्वयामः। तत्र दृष्टान्तः। ᵛस्थूरं ᵛन यथा भरन्तो व्रीह्यादिभिर्गृहं पूरयन्तो जनाः वाजे अन्नविषये स्थूरं स्थूलं गुणाधिकं ᵛकच्चित् कंचिन्मानवं यथाह्वयन्ति तद्वत्॥

उप॑ त्वा॒ कर्म॑न्नू॒तये॒ स नो॒ युवो॒ग्रश्च॑क्राम॒ यो धृ॒षत्।
त्वामिद्ध्य॑वि॒तारं॑ ववृ॒महे॒ सखा॑य इन्द्र सान॒सिम्॥ २॥

उप॑। त्वा॒। कर्म॑न्। ऊ॒तये॑। सः। नः॒। युवा॑। उ॒ग्रः। च॒क्रा॒म॒। यः। धृ॒षत्।
त्वाम्। इत्। हि। अ॒वि॒तार॑म्। व॒वृ॒महे॑। सखा॑यः। इ॒न्द्र॒। सा॒न॒सिम्॥ २॥

प्रथमपादः प्रत्यक्षकृतः। हे इन्द्र ᵛकर्मन् अग्निष्टोमादिकर्मणि ᵛऊतये रक्षणाय ᵛत्वा त्वामुपगच्छामः। द्वितीयः पादः परोक्षकृतः। ᵛयः इन्द्रः ᵛधृषत् धृष्णोति शत्रूनभिभवति। 'ञिधृषा प्रागल्भ्ये'। 'बहुलं छन्दसि' इति शप्रत्ययः। ᵛयुवा तरुणः ᵛउग्रः उद्गूर्णः ᵛसः इन्द्रः ᵛनः अस्मान् प्रति ᵛचक्राम आगच्छतु। यद्वा। चक्राम अस्मानुत्साहयुक्तान् करोतु। क्रमतेः सर्गार्थे व्यत्ययेन परस्मैपदम् (पा. सू. १. ३. ३८)। परोऽर्धर्चः प्रत्यक्षकृतः। ᵛसखायः समानख्याना बन्धुभूता वा वयं ᵛसानसिम्। 'वन षण संभक्तौ'। संभजनीयम् ᵛअवितारं सर्वस्य रक्षितारं ᵛत्वामित् त्वामेव ᵛववृमहे वृणीमहे संभजामहे। हिः प्रसिद्धौ। हियोगादनिघातः॥

आ या॑ही॒म इन्द॒वोऽश्व॑पते॒ गोप॑त॒ उर्व॑रापते। सोमं॑ सोमपते पिब॥ ३॥

आ। या॒हि॒। इ॒मे। इन्द॑वः। अश्व॑ऽपते। गोऽप॑ते। उर्व॑राऽपते। सोम॑म्। सो॒म॒ऽप॒ते॒। पि॒ब॥३॥

ᵛअश्वपते अश्वानां स्वामिन् ᵛगोपते गवां पालयितः ᵛउर्वरापते। सर्वसस्याढ्या भूमिरुर्वरा। तस्याः पते हे इन्द्र ᵛइन्दवः सोमाः ᵛइमे भवदीयाः। त्वदर्थमभिषुता इत्यर्थः। तस्मात् ᵛआ ᵛयाहि आगच्छ। आगत्य ᵛसोमपते हे इन्द्र ᵛसोमं ᵛपिब॥

व॒यं हि त्वा॒ बन्धु॑मन्तमब॒न्धवो॒ विप्रा॑स इन्द्र येमि॒म।
या ते॒ धामा॑नि वृषभ॒ तेभि॒रा ग॑हि॒ विश्वे॑भिः॒ सोम॑पीतये॥ ४॥

व॒यम्। हि। त्वा॒। बन्धु॑ऽमन्तम्। अ॒बन्धव॑ः। विप्रा॑सः। इ॒न्द्र॒। ये॒मि॒म।
या। ते॒। धामा॑नि। वृ॒ष॒भ॒। तेभि॑ः। आ। ग॒हि॒। विश्वे॑भिः। सोम॑ऽपीतये॥ ४॥

हे ᵛइन्द्र ᵛअबन्धवः बन्धुरहिताः ᵛविप्रासः मेधाविनः ᵛवयं ᵛबन्धुमन्तं बन्धुभिर्देवैरङ्गिरोभिर्वा तद्वन्तं ᵛत्वा त्वाम्। हिरवधारणे। त्वामेव ᵛयेमिम बन्धुत्वेन नियच्छाम। यच्छतेर्लिटि[1] रूपम्। तथा सति हे ᵛवृषभ कामानां वर्षितरिन्द्र ᵛते तव ᵛया यानि ᵛधामानि शरीराणि तेजांसि वा विद्यन्ते ᵛतेभिः तैः ᵛविश्वेभिः सर्वैर्धामभिः सह ᵛसोमपीतये सोमपानार्थम् ᵛआ ᵛगहि आगच्छ॥

सीद॑न्तस्ते॒ वयो॑ यथा॒ गोश्री॑ते॒ मधौ॑ मदि॒रे वि॒वक्ष॑णे। अ॒भि त्वामि॑न्द्र नोनुमः॥५॥

---

१. झ–°र्लङि; त-न-म१-३–°र्लिङि; म२–°र्लुङि।

सीदन्तः । ते । वयः । यथा । गोऽश्रीते । मधौ । मदिरे । विवक्षणे ।
अभि । त्वाम् । इन्द्र । नोनुमः ॥ ५ ॥

हे इन्द्र गोश्रीते । 'श्रीञ् पाके'। गोविकारे दधिपयसी गोशब्देनोच्येते। दध्ना पयसा च श्रीते श्रयणद्रव्येण मिश्रिते मदिरे मदकरे विवक्षणे स्वर्गप्रापणशीले त्वदीये मधौ सोमे सीदन्तः निवसन्तः। सदने दृष्टान्तः। वयो यथा पक्षिणो यथैकत्र संघीभूय तिष्ठन्ति तद्वत् सीदन्तो वयं त्वाम् अभि आभिमुख्येन नोनुमः पुनःपुनर्भृशं वा स्तुमः॥ ॥ १ ॥

**अच्छा च त्वैना नमसा वदामसि किं मुहुश्चिद्वि दीधयः ।**
**सन्ति कामासो हरिवो ददिष्ट्वं स्मो वयं सन्ति नो धियः ॥ ६ ॥**

अच्छ । च । त्वा । एना । नमसा । वदामसि । किम् । मुहुः । चित् । वि । दीधयः ।
सन्ति । कामासः । हरिऽवः । ददिः । त्वम् । स्मः । वयम् । सन्ति । नः । धियः ॥ ६ ॥

हे इन्द्र अच्छ च अपि चा आभिमुख्येन व एना एनेन नमसा स्तोत्रेण हविर्लक्षणेनान्नेन वा सह त्वा त्वां वदामसि अभिवदामः। 'चवायोगे प्रथमा' इति न निघातः। त्वं तु मुहुश्चित् मुहुर्मुहुः किं कस्माद्धेतोः वि दीधयः। विपूर्वो दीधितिश्चिन्तने। विचिन्तयसि। 'दीधीङ् दीप्तिदेवनयोः'। व्यत्ययेन परस्मैपदं लुगभावश्च। किमर्थं यूयं वदथेति चेत्। हरिवः हरिताश्ववन् हे इन्द्र अस्माकं कामासः पुत्रपश्वादिविषयाः कामाः सन्ति कामाः सन्तु। अहं न प्रयच्छामीति चेत्। त्वं तु ददिः धनादिदाता खलु। तस्मात् वयं त्वत्संनिधौ स्मः भवामः। किंच नः अस्माकं धियः कर्माणि च तव समीपे सन्ति तिष्ठन्ति। ततो धनादिलाभार्थं त्वां वदाम इत्यर्थः॥

**नूत्ना इदिन्द्र ते वयमूती अभूम नहि नू ते अद्रिवः । विद्मा पुरा परीणसः ॥७॥**

नूत्नाः । इत् । इन्द्र । ते । वयम् । ऊती । अभूम । नहि । नु । ते । अद्रिऽवः ।
विद्म । पुरा । परीणसः ॥ ७ ॥

हे इन्द्र ते तव ऊती ऊत्यै[1] रक्षणे[2] वयं नूत्ना इत् नूतना एव अभूम भवामः। अद्रिवः वज्रिन् हे इन्द्र पुरा पूर्वं त्वां परीणसः। सुब्व्यत्ययः। परीणसं परितो व्याप्तं महान्तं वेति नहि विद्म न जानीमः। नु संप्रति तु ते त्वां महान्तमिति जानन्तो वयं भवता रक्ष्या इति॥

**विद्मा सखित्वमुत शूर भोज्य१मा ते ता वज्रिन्नीमहे ।**
**उतो समस्मिन्ना शिशीहि नो वसो वाजे सुशिप्र गोमति ॥ ८ ॥**

विद्म । सखिऽत्वम् । उत । शूर । भोज्यम् । आ । ते । ता । वज्रिन् । ईमहे ।
उतो इति । समस्मिन् । आ । शिशीहि । नः । वसो इति । वाजे । सुऽशिप्र । गोऽमति ॥ ८ ॥

शूर शत्रूणां शातयितर्बलवन् हे इन्द्र सखित्वं तव सखिभावं वयं विद्म जानीमः। उत अपि च भोज्यम् अभ्यवहार्यं धनं च विद्म। वज्रिन् हे इन्द्र ते त्वदीये ता ते सख्यधने आ आभिमुख्येन ईमहे वयं याचामहे। उतो अपि च वसो सर्वस्य वासयितः सुशिप्र शोभनहनो

१. ग–ऊत्या। २. ग–रक्षणेन; घ–रक्षायै।

यद्वा शोभनशिरस्त्राण हे इन्द्र ^गोमति गवादियुक्ते ^समस्मिन् सर्वस्मिन् ^वाजे अन्ने ^नः अस्मान् ^आ ^शिशीहि तीक्ष्णीकुरु। उपलक्षणम्। प्रदानेनास्मान् प्रसिद्धान् कुर्वित्यर्थः। 'शिञ् निशाने' इत्यस्य छान्दसः श्लुः॥

उक्थ्ये ब्राह्मणाच्छंसिशस्त्रे 'यो न इदमिदम्' इत्ययं प्रगाथोऽनुरूपः। 'यो न इदमिदं पुरेति प्रगाथौ सर्वाः ककुभः' (आश्व. श्रौ. ६. १) इति सूत्रितम्। आभिप्लविकेषूक्थ्येष्वपि ब्राह्मणाच्छंसिशस्त्रेऽयं वैकल्पिकोऽनुरूपः (आश्व. श्रौ. ७. ८)। आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिशस्त्रे 'त्वं न इन्द्रा भर' इति प्रगाथे स्तोत्रिये सत्यनुरूपतृचः समाहार्यः। तत्रेयं 'यो न इदमिदम्' इति द्वितीया। सूत्रितं च—'यो न इदमिदं पुरा याहीम इन्दव इति समाहार्योऽनुरूपः' (आश्व. श्रौ. ७. ८) इति॥

यो न इदमिदं पुरा प्र वस्य आनिनाय तमु वः स्तुषे। सखाय इन्द्रमूतये ॥९॥

यः। नः। इदम्ऽइदम्। पुरा। प्र। वस्यः। आऽनिनाय। तम्। ऊँ इति। वः। स्तुषे। सखायः। इन्द्रम्। ऊतये॥ ९॥

^सखायः समानख्याना हे ऋत्विग्यजमानाः ^यः इन्द्रः ^पुरा पूर्वमिदं दर्शनीयतया[1] विद्यमानं[1] ^वस्यः वसीयः। वसोरीयसुनि ईकारलोपश्छान्दसः। प्रशस्तं वसु ^नः अस्मान् ^प्राणिनाय प्रकर्षेणानीतवान् ^तमु तमेव धनानामानेतारम् ^इन्द्रं ^वः युष्माकं धनलाभार्थम् ^ऊतये रक्षणाय च ^स्तुषे सोभरिरहं स्तौमि॥

हर्यश्वं सत्पतिं चर्षणीसहं स हि ष्मा यो अमन्दत।
आ तु नः स वयति गव्यमश्व्यं स्तोतृभ्यो मघवा शतम्॥ १०॥

हरिऽअश्वम्। सत्ऽपतिम्। चर्षणिऽसहम्। सः। हि। स्म। यः। अमन्दत।
आ। तु। नः। सः। वयति। गव्यम्। अश्व्यम्। स्तोतृऽभ्यः। मघऽवा। शतम्॥१०॥

^हर्यश्वं हरितवर्णाश्वोपेतं ^सत्पतिं स्वप्रकाशाधिक्येन सतां नक्षत्राणां पतिं सतां श्रेष्ठानां पतिं वा ^चर्षणीसहं चर्षणीनां शत्रुभूतानां मनुष्याणामभिभवितारं ^स ^हि ^ष्म स खलु जनः स्तौति। ^यः जनः ^अमन्दत ततो लब्धधनः संस्तृप्तो भवति स एनं तुष्टूषति। एवं[2] सति ^मघवा धनवान् ^सः इन्द्रः ^शतं ^गव्यमश्व्यम् अनेकं गवाश्वसंघं ^स्तोतृभ्यः ^नः अस्मभ्यं ^तु क्षिप्रम् ^आ ^वयति आप्रापयतु। वी गत्यादिषु। अस्मात्लेट्यडागमः। ततो लब्धगवादिका वयं चैनं स्तुम इति॥ ॥२॥

त्वया ह स्विद्युजा वयं प्रति श्वसन्तं वृषभ ब्रुवीमहि। संस्थे जनस्य गोमतः ॥११॥

त्वया। ह। स्वित्। युजा। वयम्। प्रति। श्वसन्तम्। वृषभ। ब्रुवीमहि।
सम्ऽस्थे। जनस्य। गोऽमतः॥ ११॥

^वृषभ वर्षितर्हे इन्द्र ^गोमतः गवादियुक्तस्य ^जनस्य ^संस्थे स्थाने युद्धे ^श्वसन्तम् अस्मान् प्रति क्रोधातिशयेन श्वासकारिणं शत्रुं ^युजा सहायेन ^त्वया ^ह ^स्वित् त्वयैव खलु ^वयं ^प्रति ^ब्रुवीमहि प्रतिवचनं कुर्मः। निराकरिष्याम इत्यर्थः॥

---

१. ख-त-न-श-दर्शनीयं तवाविद्यमानं; घ-दर्शनीयं तव विद्यमानं। २. ख-त-न-भ-श—य एवं।

जयेम कारे पुरुहूत कारिणोऽभि तिष्ठेम दूढ्यः ।
नृभिर्वृत्रं हन्याम शूशुयाम चावेरिन्द्र प्र णो धियः ॥ १२ ॥

जयेम । कारे । पुरुऽहूत । कारिणः । अभि । तिष्ठेम । दुःऽध्यः ।
नृऽभिः । वृत्रम् । हन्याम । शूशुयाम । च । अवेः । इन्द्र । प्र । नः । धियः ॥ १२ ॥

ᵛपुरुहूत बहुभिराह्वातव्य[1] हे ᵛइन्द्र अस्माकं विविधाः शत्रव उपद्रवकारिणो बाधां मनसा स्मरन्तश्चेति । तत्र ᵛकारिणः हिंसां कुर्वतः शत्रून् ᵛकारे । कीर्यन्त आयुधान्यत्रेति कारो युद्धम् । तस्मिंस्तान् वयं ᵛजयेम । ᵛदूढ्यः दुर्धियः पापबुद्धीनपि ᵛअभि[2] ᵛतिष्ठेम[2] अभितः स्थास्यामः । किंच ᵛवृत्रं गवामावरकं शत्रुं ᵛनृभिः आयुधनेतृभिर्मरुद्भिः सह ᵛहन्याम हिंस्याम । हत्वा ᵛशूशुयाम ᵛच । शत्रुराहित्येन पुत्रपौत्रैरग्निष्टोमादिकर्मभिश्च वर्धयेमहि । यद्वा । श्वयतिरत्रान्तर्णीतण्यर्थः । शत्रुभ्यो बाधाभावात् सोमलक्षणैरन्नैस्त्वां वर्धयेम । ततस्त्वं ᵛनः अस्माकं ᵛधियः कर्माणि ᵛप्र ᵛअवेः प्रकर्षेण रक्ष ॥

आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिशस्त्रे 'अभ्रातृव्यः' इत्यादिकौ द्वौ प्रगाथौ वैकल्पिकौ स्तोत्रियानुरूपौ । सूत्रितं च—'अभ्रातृव्यो अना त्वं मा ते अमाजुरो यथा' ( आश्व. श्रौ. ७. ८ ) इति ॥

अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि । युधेदापित्वमिच्छसे ॥१३॥

अभ्रातृव्यः । अना । त्वम् । अनापिः । इन्द्र । जनुषा । सनात् । असि ।
युधा । इत् । आपिऽत्वम् । इच्छसे ॥ १३ ॥

हे ᵛइन्द्र ᵛत्वं ᵛजनुषा जन्मनैव ᵛअभ्रातृव्यः । 'व्यन् सपत्ने' ( पा. सू. ४. १. १४५ ) इति व्यन्प्रत्ययः । ᵛअना[3] अनेतृकः[3] । 'ऋतश्छन्दसि' इति कपः[4] प्रतिषेधः । अनियन्तृक इत्यर्थः । ᵛअनापिः बन्धुवर्जितश्च ᵛसनादसि चिरादेव भ्रातृव्यादिवर्जितोऽसि । यच्च त्वया ᵛआपित्वं बान्धवम् ᵛइच्छसे इच्छसि तत्र ᵛयुधेत् युद्धेनैव युद्धं कुर्वन्नेव स्तोतॄणां सखा भवसीति ॥

नकी रेवन्तं सख्याय विन्दसे पीयन्ति ते सुराश्वः ।
यदा कृणोषि नदनुं समूहस्यादित्पितेव हूयसे ॥ १४ ॥

नकिः । रेवन्तम् । सख्याय । विन्दसे । पीयन्ति । ते । सुराश्वः ।
यदा । कृणोषि । नदनुम् । सम् । ऊहसि । आत् । इत् । पिताऽइव । हूयसे ॥ १४ ॥

हे इन्द्र ᵛरेवन्तं धनवन्तं केवलधनवन्तं दानादिरहितमयष्टारमाढ्यं मानवं[5] ᵛसख्याय सखिभावाय ᵛनकिः ᵛविन्दसे न भजसे नाश्रयसीत्यर्थः । अयष्टारो जनाः किं सन्तीत्यत आह । ᵛसुराश्वः । 'टुओश्वि गतिवृद्ध्योः' । सुरया वृद्धास्तद्वत् प्रमत्ता नास्तिकाः ᵛते त्वां ᵛपीयन्ति । पीयतिर्हिंसाकर्मा । हिंसन्ति । तानाश्रयसीत्यर्थः ॥

---

१. घ–°राहूत । २. त-न-भ२–नाभितिष्ठेम; भ१-३–भितिष्ठेम । ३. ख-त-२-३-४-न–अना अनेतकः; घ–अना अनियंतृकः; ज्ञ–सपत्नरहितः अना अनेतृकः; भ१–अना सपत्नरहितः अना अनेतृकः; भ२-३–अना सपत्नरहितः अना अनेतकः ( अनेकः–भ३ ); श–अना त्वं अनेकः । ४. ख-त-न-श–शपः । ५. ख-ग-ज्ञ-त१-२-न-भ–अन्यं मानवं ।

मा ते अमाजुरो यथा मूरास इन्द्र सख्ये त्वावतः । नि षदाम सचा सुते ॥१५॥

मा । ते । अमाऽजुरः । यथा । मूरासः । इन्द्र । सख्ये । त्वाऽवतः ।

नि । सदाम । सचा । सुते ॥ १५ ॥

हे इन्द्र ते तव स्वभूता वयं तथा मा भूम मा भवाम यथा त्वावतः त्वादृशः त्वत्सदृशस्य देवस्य सख्ये मूरासः मूराः । सोमप्रदानादिन्द्रेण सह सख्यं कुर्म इत्येतदजानन्तो मूढा जनाः । अमाजुरः सोमाभिषवमकुर्वन्तस्ते गृहैः[1] पुत्रैः पौत्रैर्धनादिभिश्च सह जीर्णा भवन्ति । तथा वयममाजुरो न भवाम । कथम् । सचा ऋत्विग्भिः सह सुते अभिषुते सोमे वयं तु नि षदाम निवसाम[2] । तस्मात् सोमदानेन त्वया सह सखिभावं कुर्म इत्यर्थः ॥ ॥ ३ ॥

मा ते गोदत्र निरराम राधस इन्द्र मा ते गृहामहि ।

दृळ्हा चिदर्यः प्र मृशाभ्या भर न ते दामान आदभे ॥ १६ ॥

मा । ते । गोऽदत्र । निः । अराम । राधसः । इन्द्र । मा । ते । गृहामहि ।

दृळ्हा । चित् । अर्यः । प्र । मृश । अभि । आ । भर । न । ते । दामानः । आऽदभे ॥१६॥

हे गोदत्र स्तोतृणां गवादिदानशील हे इन्द्र ते तव स्वभूता वयं राधसः धनात् मा निरराम मा निर्गमाम । अर्तेर्लुङि ' सर्तिशास्त्यर्तिभ्यश्च ' इत्यङादेशः । ' ऋदृशोऽङि ' इति गुणः । सर्वदा त्वत्तो[3] धनाढ्या[3] भवाम । किंच ते तव स्वभूता वयं धनं प्रयच्छाम । कस्माच्चित् मा गृहामहि मा गृह्णीमः । अपि तु त्वत्त एव धनं गृह्णीम इत्यर्थः । ग्रहेर्लुङि ' बहुलं छन्दसि ' इति शः । ङित्वात्संप्रसारणम् । अर्यः स्वामी त्वं दृळ्हा चित् दृढान्यपि विनश्वराणि धनानि प्र मृश प्रकर्षेणास्मासु स्थापय । किंच अभि आभिमुख्येन आ भर धनादिभिः समन्तादस्मान् पोषय । ते तव दामानः तानि दानानि न आदभे न कैश्चिदपि आदम्भितुं शक्यन्ते । तस्मात् दानादियुक्तानस्मान् कुर्वित्यर्थः ॥

इन्द्रो वा घेदियन्मघं सरस्वती वा सुभगा ददिर्वसु । त्वं वा चित्र दाशुषे ॥१७॥

इन्द्रः । वा । घ । इत् । इयत् । मघम् । सरस्वती । वा । सुऽभगा । ददिः । वसु ।

त्वम् । वा । चित्र । दाशुषे ॥ १७ ॥

अत्र चित्रस्य दानं स्तौति । चित्रो नाम राजा सरस्वतीतीर इन्द्रार्थं यागमकृत । तत्र मन्त्रद्रष्टर्षिर्बहुधनलाभान्मह्यमेतावद्धनं को वा प्रायच्छदिति विकल्पयते[4] । दाशुषे इन्द्राय हवींषि दत्तवते मह्यम् इन्द्रो वा घेत् इन्द्र एव किं खल्वेतावत्[5] मघं मंहनीयं धनं ददिः प्रायच्छत् । यद्वा सुभगा शोभनधना सरस्वती नदी वसु धनं ददिः किं प्रायच्छत् । अथवा चित्र एतन्नामक हे राजन् त्वं वा एतावद्धनं[6] मह्यं प्रादा इति ॥

चित्र इद्राजा राजका इदन्यके यके सरस्वतीमनु ।

पर्जन्यइव ततनद्धि वृष्ट्या सहस्रमयुता ददत् ॥ १८ ॥

---

१. घ-भ-गृहे । २. ख-त-न-भ२-श-निवासामः; ग-घ-त१-भ१-३-निवसामः । ३. ग-त्वद्दत्तधना । ४. घ-विकल्पते । ५. भ-खल्वियदेतावत् । ६. घ-इयदेतावद्धनं ।

चित्रः । इत् । राजा । राजकाः । इत् । अन्यके । यके । सरस्वतीम् । अनु ।
पर्जन्यःऽइव । ततनत् । हि । वृष्ट्या । सहस्रम् । अयुता । ददत् ॥ १८ ॥

अनया चित्र एव प्रादादिति निश्चयमकार्षीत् । ᵛसहस्रं सहस्रसंख्याकं धनम् ᵛअयुता अयुतानि च धनानि च ᵛददत् प्रयच्छन् ᵛचित्र ᵛइत् चित्रनामैव ᵛराजा । ᵛअन्यके ᵛयके । अल्प इत्यर्थे कः । अल्पा येऽन्ये ᵛराजका ᵛइत् राजान एव ᵛसरस्वतीमनु सरस्वत्यास्तीरे वर्तन्ते । तान् सर्वान् याचमानानयमेव चित्रो राजा ᵛततनत् धनैस्तनोति । तनोतेर्लुङि चङि रूपम् । 'चङ्यन्यतरस्याम्' इति स्वरः । तत्र दृष्टान्तः । ᵛपर्जन्यइव । यथा पर्जन्यः पृथिवीं ᵛवृष्ट्या तनोति प्रीणयति तथायं चित्रः सर्वान् धनैः प्रीणयतीत्यर्थः ॥ ॥ ४ ॥

'ओ त्यमह्व' इत्यष्टादशर्चं द्वितीयं सूक्तं काण्वस्य सोभरेरार्षम् । आद्यातृतीयापञ्चम्यो बृहत्यो द्वितीयाचतुर्थीषष्ठ्यः सतोबृहत्यः सप्तमी बृहती अष्टम्यनुष्टुप् । 'काकुभं प्रागाथं ह' इत्युक्तस्यानुवृत्तेः शिष्टाश्चत्वारः काकुभाः प्रगाथाः । अश्विनौ देवता । तथा चानुक्रान्तम्—'ओ त्यमाश्विनं त्रिप्रगाथादि बृहत्यनुष्टुबेकादश्याद्ये ककुम्मध्येज्योतिषी' इति । प्रातरनुवाक आश्विने क्रतौ बार्हते छन्दस्याश्विनशस्त्रे चाद्याः सप्तर्चः । सूत्रितं च—'ओ त्यमह्व आ रथमिति सप्त' ( आश्व. श्रौ. ४. १५ ) इति ॥

ओ त्यमह्व आ रथमद्या दंसिष्ठमूतये ।
यमश्विना सुहवा रुद्रवर्तनी आ सूर्यायै तस्थथुः ॥ १ ॥

ओ इति । त्यम् । अह्वे । आ । रथम् । अद्य । दंसिष्ठम् । ऊतये ।
यम् । अश्विना । सुऽहवा । रुद्रवर्तनी इति रुद्रऽवर्तनी । आ । सूर्यायै । तस्थथुः ॥ १ ॥

हे अश्विनौ ᵛदंसिष्ठम् अत्यन्तदर्शनीयं यद्वातिशयेन शत्रूणामुपक्षपयितारं ᵛत्यं तं युवयोः[1] ᵛरथम्[1] ᵛऊतये रक्षणाय ᵛअद्य अस्मिन् यागदिने ᵛअह्वे सोभरिरहमाह्वयामि । ᵛसुहवा सुहवौ स्तोत्रशस्त्रादिभिः शोभनाह्वानौ ᵛरुद्रवर्तनी संग्रामे रोदनशीलमार्गौ यद्वा स्तूयमानमार्गौ हे अश्विनौ ᵛसूर्यायै सूर्यां स्वयंवरे वरयितुं ᵛयं रथं युवाम् ᵛआ ᵛतस्थथुः आश्रयथः तं रथमाह्वयामीति ॥

पूर्वापुषं सुहवं पुरुस्पृहं भुज्युं वाजेषु पूर्व्यम् ।
सचनावन्तं सुमतिभिः सोभरे विद्वेषसमनेहसम् ॥ २ ॥

पूर्वऽआपुषम् । सुऽहवम् । पुरुऽस्पृहम् । भुज्युम् । वाजेषु । पूर्व्यम् ।
सचनाऽवन्तम् । सुमतिऽभिः । सोभरे । विऽद्वेषसम् । अनेहसम् ॥ २ ॥

हे ᵛसोभरे ᵛसुमतिभिः कल्याणीभिः स्तुतिभिरश्विनो रथं स्तुहि । किंविशिष्टम् । ᵛपूर्वापुषं पूर्वेषां स्तोतॄणां धनादिदानेन पोषकं[2] ᵛसुहवं यज्ञेषु शोभनाह्वानं ᵛपुरुस्पृहं बहुभिः स्पृहणीयं ᵛभुज्युम् । 'भुज पालने' । सर्वस्य रक्षकं ᵛवाजेषु ᵛपूर्व्यं संग्रामेष्वग्रतो गन्तारं ᵛसचनावन्तं सर्वैर्भजनवन्तं ᵛविद्वेषसं शत्रूणां विशेषेण द्वेष्टारम् ᵛअनेहसं कैश्चिदप्यनुपद्रवं पापरहितं वा रथं स्तुहीत्यन्वयः ॥

इह त्या पुरुभूतमा देवा नमोभिरश्विना ।
अर्वाचीना स्ववसे करामहे गन्तारा दाशुषो गृहम् ॥ ३ ॥

१. ख-त-न-श–युवयोरर्थं । २. त१-२-भ२–आपोषकं ।

इह । त्या । पुरुऽभूतमा । देवा । नमःऽभिः । अश्विना ।
अर्वाचीना । सु । अवसे । करामहे । गन्तारा । दाशुषः । गृहम् ॥ ३ ॥

ᵛपुरुभूतमा अतिशयेन बहूनां शत्रूणां भावयितारौ ᵛदेवा देवौ द्योतनशीलौ स्तोतव्यौ वा ᵛदाशुषः हविर्दत्तवतो यजमानस्य ᵛगृहं प्रति गन्तारौ गमनशीलौ ᵛत्या तौ ᵛअश्विना अश्विनौ युवाम् ᵛइह अस्मिन् कर्मणि ᵛअवसे रक्षणाय ᵛनमोभिः हविर्भिः स्तोत्रैर्वा ᵛअर्वाचीना अर्वाचीनौ अभिमुखमागच्छन्तौ ᵛसु ᵛकरामहे वयं सुष्ठु कुर्मः ॥

युवो रथस्य परि चक्रमीयत ईर्मान्यद्वामिषण्यति ।
अस्माँ अच्छा सुमतिर्वां शुभस्पती आ धेनुरिव धावतु ॥ ४ ॥

युवोः । रथस्य । परि । चक्रम् । ईयते । ईर्मा । अन्यत् । वाम् । इषण्यति ।
अस्मान् । अच्छ । सुऽमतिः । वाम् । शुभः । पती इति । आ । धेनुःऽइव । धावतु ॥ ४ ॥

हे अश्विनौ ᵛयुवोः युवयोः ᵛरथस्य एकं ᵛचक्रं ᵛपरि ᵛईयते परितो द्यां गच्छति । ᵛअन्यत् अवस्थितं रथस्य चक्रम् ᵛईर्मा ईर्मौ सर्वस्यान्तर्यामितया प्रेरकौ यद्वोदकस्य प्रेरयितारौ ᵛवां युवाम् ᵛइषण्यति गच्छति । उक्तार्थे मन्त्रान्तरं—'न्यघ्न्यस्य मूर्धनि' (ऋ. सं. १. ३०. १९) इति । हे ᵛशुभस्पती उदकस्य पालयितारौ हे अश्विनौ ᵛवां युवयोः ᵛसुमतिः कल्याणी मतिः ᵛअच्छ आभिमुख्येन ᵛअस्मान् ᵛआ ᵛधावतु आगच्छतु । तत्र दृष्टान्तः । ᵛधेनुरिव । यथा नवप्रसूता गौर्वत्सं प्रति पयोदानार्थमागच्छति तद्वद्युवयोः सुमतिरस्मान् प्रति धनादिप्रदानार्थमागच्छतु ॥

रथो यो वां त्रिवन्धुरो हिरण्याभीशुरश्विना ।
परि द्यावापृथिवी भूषति श्रुतस्तेन नासत्या गतम् ॥ ५ ॥

रथः । यः । वाम् । त्रिऽवन्धुरः । हिरण्यऽअभीशुः । अश्विना ।
परि । द्यावापृथिवी इति । भूषति । श्रुतः । तेन । नासत्या । आ । गतम् ॥ ५ ॥

हे ᵛअश्विना अश्विनौ ᵛत्रिवन्धुरः । वन्धुरं सारथिस्थानम् । त्रिप्रकारवन्धुरोपेतः । यद्वा । द्वे ईषे तन्मध्ये रज्जुसज्जनार्थको दण्डः एते त्रयो वन्धुरशब्देनोच्यन्ते । त्रिवन्धुरयुक्तः ᵛहिरण्याभीशुः हिरण्मयाश्वादिरज्जुः ᵛवां युवयोः ᵛयः ᵛरथः ᵛश्रुतः सर्वत्र प्रसिद्धः सन् ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛपरि ᵛभूषति स्वबलेन परिभवति । भवतेर्लेटि सिप्यडागमः । यद्वा परितः स्वप्रकाशेनालंकरोति । हे ᵛनासत्या नासत्यौ ᵛतेन पूर्वोक्तेन रथेन ᵛआ ᵛगतम् आगच्छतम् ॥ ॥ ५ ॥

दशस्यन्ता मनवे पूर्व्यं दिवि यवं वृकेण कर्षथः ।
ता वामद्य सुमतिभिः शुभस्पती अश्विना प्र स्तुवीमहि ॥ ६ ॥

दशस्यन्ता । मनवे । पूर्व्यम् । दिवि । यवम् । वृकेण । कर्षथः ।
ता । वाम् । अद्य । सुमतिऽभिः । शुभः । पती इति । अश्विना । प्र । स्तुवीमहि ॥ ६ ॥

हे अश्विनौ ᵛपूर्व्यं पुरातनं ᵛदिवि द्युलोके स्थितमुदकं ᵛमनवे एतन्नामकाय राज्ञे ᵛदशस्यन्ता दशस्यन्तौ प्रयच्छन्तौ युवां ᵛवृकेण । 'वृको लाङ्गलं भवति विकर्तनात्' (निरु. ६. २६) इति यास्कः ।

तेन लाङ्गलेन ᵛयवं यवनामकं धान्यं ᵛकर्षथः । पुनश्च तस्मै विलेखनं कुरुथः । ᵛशुभस्पती उदकस्य पालयितारौ हे ᵛअश्विना अश्विनौ ᵛता तौ पूर्वोक्तलक्षणयुक्तौ ᵛवां युवाम् ᵛअद्य अस्मिन् यज्ञदिने ᵛसुमतिभिः शोभनाभिः स्तुतिभिः प्रकर्षेण ᵛस्तुवीमहि वयं स्तुमः ॥

उप॑ नो वाजिनीवसू या॒तमृ॒तस्य॑ प॒थिभिः॑ ।
येभि॑स्तृ॒क्षिं वृ॑षणा त्रासदस्य॒वं म॒हे क्ष॒त्राय॒ जिन्व॑थः ॥ ७ ॥

उप॑ । न॒ः । वा॒जि॒नी॒व॒सू॒ इति॑ वाजिनीऽवसू । या॒तम् । ऋ॒तस्य॑ । प॒थिऽभिः॑ ।
येभिः॑ । तृ॒क्षिम् । वृ॒ष॒णा॒ । त्रा॒स॒द॒स्य॒वम् । म॒हे । क्ष॒त्राय॑ । जिन्व॑थः ॥ ७ ॥

हे ᵛवाजिनीवसू अन्नधनवन्तौ । अन्नमेव धनं ययोस्तौ । अश्विनौ ᵛऋतस्य सत्यभूतस्य यज्ञस्य ᵛपथिभिः मार्गैः ᵛनः अस्मान् ᵛउप ᵛयातम् आगच्छतम् । ᵛवृषणा वृषणौ धनानां सेक्तारौ हे अश्विनौ ᵛत्रासदस्यवं त्रसदस्योः पुत्रं ᵛतृक्षिम् एतन्नामकं ᵛयेभिः यैर्यज्ञमार्गैः ᵛमहे महते ᵛक्षत्राय धनाय ᵛजिन्वथः प्रीणयथ । एवं तैर्मार्गैरस्मान् धनादिभिः प्रीणयितुमागच्छतमित्यर्थः ॥

अ॒यं वा॒मद्रि॑भिः सु॒तः सोमो॑ नरा वृषण्वसू ।
आ या॑तं॒ सोम॑पीतये॒ पिब॑तं दा॒शुषो॑ गृ॒हे ॥ ८ ॥

अ॒यम् । वा॒म् । अद्रि॑ऽभिः । सु॒तः । सोमः॑ । न॒रा॒ । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू ।
आ । या॒तम् । सोम॑ऽपीतये । पिब॑तम् । दा॒शुषः॑ । गृ॒हे ॥ ८ ॥

ᵛनरा सर्वस्य नेतारौ यद्वा स्तोतॄणां धनस्य नेतारौ ᵛवृषण्वसू वर्षणशीलधनवन्तौ हे अश्विनौ ᵛवां युष्मदर्थम् ᵛअद्रिभिः ग्रावभिः ᵛअयं ᵛसोमः ᵛसुतः अभिषुतः । तस्मात् ᵛसोमपीतये सोमपानार्थं युवाम् ᵛआ ᵛयातम् । आगत्य च ᵛदाशुषः हविर्दत्तवतो यजमानस्य ᵛगृहे यज्ञस्थाने सोमं युवां ᵛपिबतम् ॥

आ हि रु॒हत॑मश्विना॒ रथे॒ कोशे॑ हिर॒ण्यये॑ वृषण्वसू । यु॒ञ्जाथां॒ पीव॑री॒रिषः॑ ॥९॥

आ । हि । रु॒हत॑म् । अ॒श्वि॒ना॒ । रथे॑ । कोशे॑ । हि॒र॒ण्यये॑ । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू ।
यु॒ञ्जाथा॑म् । पीव॑रीः । इषः॑ ॥ ९ ॥

ᵛवृषण्वसू वर्षणशीलधनौ हे ᵛअश्विना अश्विनौ ᵛहिरण्यये हिरण्मयरज्ज्वादियुक्ते ᵛकोशे आयुधादीनां कोशस्थाने रमणशीले ᵛरथे । हिरवधारणे । युवामेव ᵛआ ᵛरुहतम् आरोहणं कुरुतम् । ततः ᵛपीवरीः पाययितॄणि स्थूलानि वा ᵛइषः अन्नानि ᵛयुञ्जाथाम् अस्मासु योजयतम् ॥

याभिः॑ प॒क्थमव॑थो॒ याभि॒रध्रि॑गुं॒ याभि॑र्ब॒भ्रुं विजो॑षसम् ।
ताभि॑र्नो म॒क्षू तूय॑मश्वि॒ना ग॑तं भिष॒ज्यतं॒ यदातु॑रम् ॥ १० ॥

याभिः॑ । प॒क्थम् । अव॑थः । याभिः॑ । अध्रि॑ऽगुम् । याभिः॑ । ब॒भ्रुम् । विऽजो॑षसम् ।
ताभिः॑ । न॒ः । म॒क्षु । तूय॑म् । अ॒श्वि॒ना॒ । आ । ग॒त॒म् । भि॒ष॒ज्यत॑म् । यत् । आतु॑रम् ॥१०॥

हे अश्विनौ ᵛयाभिः ऊतिभिः ᵛपक्थम् एतन्नामकं राजानम् ᵛअवथः रक्षथः । ᵛयाभिः ऊतिभिश्च ᵛअध्रिगुम् अधृतगमनं राजानमवथः । ᵛयाभिः ऊतिभिश्च ᵛबभ्रुं राजानं च ᵛविजोषसं विशेषेण सोमैः प्रीणयन्तम् । एतान् सर्वान् यैः पालनैरवथः ᵛताभिः तै रक्षणैः ᵛमक्षु क्षिप्रं ᵛतूयं तूर्णं ᵛनः

अस्मान् ᵛआ ᵛगतं रक्षणार्थमागच्छतम्। किंच ᵛयत् ᵛआतुरं रोगादिसहितमस्माकं पुत्रादिकं प्रति ᵛभिषज्यतं भैषज्यं कुरुतम्। भिषक्कण्ड्वादिः ॥ ॥ ६ ॥

यदध्रिगावो अध्रिगू इदा चिदह्नो अश्विना हवामहे। वयं गीर्भिर्विपन्यवः ॥११॥

यत्। अध्रिऽगावः। अध्रिगू इत्यध्रिऽगू। इदा। चित्। अह्नः। अश्विना। हवामहे। वयम्। गीःऽभिः। विपन्यवः ॥ ११ ॥

ᵛअध्रिगावः अधृतगमनाः कर्मसु त्वरमाणाः ᵛविपन्यवः मेधाविनः ᵛवयम् ᵛअध्रिगू अधृतगमनौ संग्रामे शत्रुवधार्थं त्वरया गच्छन्तौ ᵛअश्विना अश्विनौ युवाम् ᵛअह्नः दिवसस्य ᵛइदा ᵛचित् इदानीमेव प्रातःकाले ᵛगीर्भिः स्तुतिलक्षणाभिर्वाग्भिः ᵛयत् यदा ᵛहवामहे युवामाह्वयामस्तदा ताभिरूतिभिरस्मानागच्छतमित्युत्तरत्र संबन्धः ॥

ताभिरा यातं वृषणोप मे हवं विश्वप्सुं विश्ववार्यम्।
इषा मंहिष्ठा पुरुभूतमा नरा याभिः क्रिविं वावृधुस्ताभिरा गतम् ॥ १२ ॥

ताभिः। आ। यातम्। वृषणा। उप। मे। हवम्। विश्वऽप्सुम्। विश्वऽवार्यम्। इषा। मंहिष्ठा। पुरुऽभूतमा। नरा। याभिः। क्रिविम्। ववृधुः। ताभिः। आ। गतम् ॥ १२ ॥

ᵛवृषणा वृषणौ वर्षणशीलौ हे अश्विनौ ᵛविश्वप्सुम्। प्सुरिति रूपनाम। स्तोत्रशस्त्रात्मकत्वेन नानारूपं ᵛविश्ववार्यं सर्वैर्देवैर्वरणीयं ᵛमे मदीयं ᵛहवं युष्मद्विषयमाह्वानम् ᵛआ अभिमुखीकृत्य ᵛताभिः ऊतिभिः ᵛउप ᵛयातं युवामागच्छतम्। याभिः ᵛनरा नरौ सर्वस्य नेतारावश्विनौ ᵛइषा। 'इष इच्छायाम्'। हवींषीच्छन्तौ ᵛमंहिष्ठा मंहिष्ठावतिशयेन धनानां दातारौ ᵛपुरुभूतमा पुरुभूतमौ युद्धेष्वत्यन्तं पुरुधा भवन्तौ यद्वातिशयेन बहूनां शत्रूणामभिभवितारौ भवन्तौ ᵛक्रिविं कूपं प्रति ᵛयाभिः ऊतिभिरुदकानि ᵛवावृधुः अवर्धयतः। द्वयोर्बहुवचनं पूजार्थम्। कूपपतितो वन्दनो मायाभिः कूपं पूरयित्वा युवाभ्यामुत्थापितः खलु। तथा मन्त्रः—'उद्वन्दनमैरयतं स्वर्दृशे' (ऋ. सं. १. ११२. ५) इति। ᵛताभिः तैः पालनैः ᵛआ ᵛगतम् अस्मद्रक्षणार्थमागच्छतम् ॥

ताविदा चिदहानां तावश्विना वन्दमान उप ब्रुवे। ता ऊ नमोभिरीमहे ॥१३॥

तौ। इदा। चित्। अहानाम्। तौ। अश्विना। वन्दमानः। उप। ब्रुवे। तौ। ऊँ इति। नमःऽभिः। ईमहे ॥ १३ ॥

ᵛतौ संग्रामे आयुधानि स्तोतृभ्यो धनानि वा विस्तारयन्तौ पूर्वोक्तौ ᵛअश्विना अश्विनौ ᵛअहानाम् अह्नाम् ᵛइदा ᵛचित् इदानीमेव प्रातःकाले ᵛवन्दमानः अभिवादनं कुर्वन् सन् ᵛउप ᵛब्रुवे तयोः समीपे स्तौमि। ततः ᵛता ᵛउ तावेव ᵛनमोभिः हविर्भिः स्तोत्रैर्वा ᵛईमहे वयं धनादिकं याचामहे ॥

ताविद्दोषा ता उषसि शुभस्पती ता यामन्रुद्रवर्तनी।
मा नो मर्ताय रिपवे वाजिनीवसू परो रुद्रावति ख्यतम् ॥ १४ ॥

तौ। इत्। दोषा। तौ। उषसि। शुभः। पती इति। ता। यामन्। रुद्रवर्तनी इति रुद्रऽवर्तनी ॥ मा। नः। मर्ताय। रिपवे। वाजिनीवसू इति वाजिनीऽवसू। परः। रुद्रौ। अति। ख्यतम् ॥ १४ ॥

vशुभस्पती उदकस्य पालयितारौ vरुद्रवर्तनी युद्धे रोदनशीलमार्गौ स्तूयमानमार्गौ वा vतावित् तावेवाश्विनौ vदोषा दोषायां रात्रौ vतौ एव vउषसि उषःकाले तावश्विनौ vयामन् यामन्यहनि च सर्वेषु कालेषु वयमश्विनावाह्वयामः। एवं सति vवाजिनीवसू अन्नधनौ vरुद्रौ हे अश्विनौ vमर्ताय मनुष्याय vरिपवे शत्रवे vनः अस्मान् vपरः परस्तात् vमा vअति vख्यतं मा ब्रूतम्। शत्रवे अस्मान्मा कुरुतमित्यर्थः॥

आ सुग्म्याय सुग्म्यं प्राता रथेनाश्विना वा सक्षणी। हुवे पितेव सोभरी ॥१५॥

आ। सुग्म्याय। सुग्म्यम्। प्रातरिति। रथेन। अश्विना। वा। सक्षणी इति।
हुवे। पिताऽइव। सोभरी॥ १५॥

vवा अपि च vसक्षणी सेवनीयशीलौ vअश्विना अश्विनौ युवां vसुग्म्याय सुखार्हाय मह्यं vसुग्म्यं सुखं प्रातःकाले vरथेन आवहतम्। ततः vसोभरी सोभरिरहं vहुवे युवामाह्वयामि। तत्र दृष्टान्तः। vपितेव यथा मम पिता आजुहाव[1] तद्वदहमाह्वयामि॥ ॥ ७॥

मनोजवसा वृषणा मदच्युता मक्षुंगमाभिरूतिभिः।
आरात्ताच्चिद्भूतमस्मे अवसे पूर्वीभिः पुरुभोजसा॥ १६॥

मनःऽजवसा। वृषणा। मदऽच्युता। मक्षुम्ऽगमाभिः। ऊतिऽभिः।
आरात्तात्। चित्। भूतम्। अस्मे इति। अवसे। पूर्वीभिः। पुरुऽभोजसा॥ १६॥

हे vमनोजवसा मनोवच्छीघ्रं गच्छन्तौ vवृषणा वृषणौ धनानां वर्षितारौ vमदच्युता। माद्यन्तीति मदाः शत्रवः। तेषां च्यावयितारौ vपुरुभोजसा बहूनां भोक्तारौ रक्षकौ यद्वा बहून् स्तोतॄन् धनादिभिर्भोजयन्तौ हे अश्विनौ vमक्षुंगमाभिः शीघ्रं गच्छन्तीभिः vऊतिभिः[2] रक्षाभिः vपूर्वीभिः बहुभिः[2] vअस्मे अस्माकम् vअवसे रक्षणाय vआरात्ताच्चित् अन्तिक एव vभूतं भवतम्॥

आ नो अश्वावदश्विना वर्तिर्यासिष्टं मधुपातमा नरा। गोमद्दस्रा हिरण्यवत् ॥१७॥

आ। नः। अश्वऽवत्। अश्विना। वर्तिः। यासिष्टम्। मधुऽपातमा। नरा।
गोऽमत्। दस्रा। हिरण्यऽवत्॥ १७॥

vमधुपातमा अतिशयेन मधोः सोमस्य पातारौ vनरा नेतारौ vदस्रा सर्वैर्दर्शनीयौ हे अश्विनौ vनः अस्माकं vवर्तिः। वर्तन्तेऽत्रेति वर्तिर्गृहम्। तत् vअश्वावत् अश्वयुक्तं vगोमत् गवादियुक्तं vहिरण्यवत् सुवर्णकनकादियुक्तं कृत्वा vआ vयासिष्टम् आगच्छतम्। यद्वा। अस्मान् प्रति वर्तिर्यज्ञमार्गम् अश्वादियुक्तं कृत्वागच्छतम्। यातेर्लुङि रूपम्॥

सुप्रावर्गं सुवीर्यं सुष्ठु वार्यमनाधृष्टं रक्षस्विना।
अस्मिन्ना वामायाने वाजिनीवसू विश्वा वामानि धीमहि॥ १८॥

सुऽप्रावर्गम्। सुऽवीर्यम्। सुष्ठु। वार्यम्। अनाधृष्टम्। रक्षस्विना।
अस्मिन्। आ। वाम्। आऽयाने। वाजिनीवसू इति वाजिनीऽवसू।
विश्वा। वामानि। धीमहि॥ १८॥

---

१. ख-त-यज्जुहाव; ग-अश्विनावाजुहाव; न-वजुहाव; भ२-श-तावजुहाव। २. ख-ग-त-भ२-श-पूर्वीभिर्बहुभिः; भ१-३-पूर्वीभिर्बहुभिरूतिभी रक्षाभिः।

सुप्रावर्गं शोभनं प्रवर्जनं यस्य तत्। स्तोतृभ्यः स्वयमेव प्रयच्छतीत्यर्थः। तथाविधं सुवीर्यं शोभनवीर्यं सुष्ठु शोभनं यथा भवति तथा वार्यं सर्वैर्वरणीयं रक्षस्विना बलवतापि अनाधृष्टम् अनभिभवनीयं धनम् आ धीमहि त्वत्तो वयं धारयामः। तदेवाह। वाजिनीवसू बलयुक्तधनौ अन्नधनौ वाश्विनौ वां युवयोः अस्मिन् आयाने अस्मद्गृहं प्रत्यागमने[1] विश्वा विश्वानि दिव्यभौमादीनि वामानि धनानि आ धीमहि वयं लभामहे। 'धीङ् आधारे' इत्यस्य लिङि छान्दसो विकरणस्य लुक्॥ ॥ ८॥

'ईळिष्व' इति त्रिंशदृचं तृतीयं सूक्तम्। व्यश्वपुत्रो विश्वमना ऋषिः। उष्णिक् छन्दः। अग्निर्देवता। तथा चानुक्रान्तम्—'ईळिष्व त्रिंशद्विश्वमना वैयश्व आग्नेयमौष्णिहं ह' इति। प्रातरनुवाक आग्नेये क्रतावौष्णिहे छन्दस्याश्विनशस्त्रे चेदं सूक्तम्। सूत्रितं च—'ईळिष्वा हीत्यौष्णिहम्' (आश्व. श्रौ. ४. १३) इति॥

**ईळिष्वा हि प्रतीव्यं यजस्व जातवेदसम्। चरिष्णुधूममगृभीतशोचिषम्॥ १॥**

ईळिष्व। हि। प्रतीव्यम्। यजस्व। जातऽवेदसम्। चरिष्णुऽधूमम्। अगृभीतऽशोचिषम्॥ १॥

प्रतीव्यं शत्रुषु प्रतिगमनशीलमग्निम्। हिरवधारणे। अग्निमेव ईळिष्व स्तुतिभिः स्तोत्रं कुरु। किंच चरिष्णुधूमं सर्वतश्चरणशीलधूमजालम् अगृभीतशोचिषं रक्षोभिरगृह्यमाणदीप्तिं जातवेदसं जातप्रज्ञम्। यद्वा। जातानि भूतानि वेत्तीति जातवेदाः। तमग्निं यजस्व हविर्भिः पूजय॥

**दामानं विश्वचर्षणेऽग्निं विश्वमनो गिरा। उत स्तुषे विष्पर्धसो रथानाम्॥ २॥**

दामानम्। विश्वऽचर्षणे। अग्निम्। विश्वऽमनः। गिरा।
उत। स्तुषे। विऽस्पर्धसः। रथानाम्॥ २॥

उत अपि च हे विश्वचर्षणे विश्वस्य सर्वस्यार्थस्य ज्ञानेन द्रष्टः विश्वमनः। सर्वेषु स्थावरजङ्गमात्मकेष्वेकं मनो यस्य सः। एतन्नामक हे ऋषे विस्पर्धसः विगतमात्सर्यस्य यजमानस्य रथानां रथादीनां दामानं दातारमेवंविधम् अग्निं गिरा स्तुतिलक्षणया वाचा स्तुषे स्तोत्रं कुरु॥

**येषामाबाध ऋग्मिय इषः पृक्षश्च निग्रभे। उपविदा वह्निर्विन्दते वसु॥ ३॥**

येषाम्। आऽबाधः। ऋग्मियः। इषः। पृक्षः। च। निऽग्रभे।
उपऽविदा। वह्निः। विन्दते। वसु॥ ३॥

आबाधः शत्रूणामाभिमुख्येन बाधकः ऋग्मियः ऋग्भिरर्चनीयोऽग्निः येषाम् अयजमानानाम् इषः अन्नानि पृक्षः अन्नादिरसांश्च निग्रभे निगृह्णीते। ग्रहेर्लटि छान्दसो विकरणस्य लुक्। 'लोपस्त आत्मनेपदेषु' इति तलोपः। 'हृग्रहोर्भश्छन्दसि' इति भकारः। निगृह्य च वह्निः हविषां वोढा स एवाग्निः उपविदा उपवेदनेन एते हवींषि देवार्थं न प्रयच्छन्तीत्येतज्ज्ञानेन तेषामेव वसु धनं विन्दते लभते॥

**उदस्य शोचिरस्थाद्दीदियुषो व्यजरम्। तपुर्जम्भस्य सुद्युतो गणश्रियः॥ ४॥**

उत्। अस्य। शोचिः। अस्थात्। दीदियुषः। वि। अजरम्।
तपुःऽजम्भस्य। सुऽद्युतः। गणऽश्रियः॥ ४॥

---

१. ख-त-न-भ–प्रत्येतन्नागमने; ग–प्रत्यत्रागमने।

ᵛदीदियुषः। दीदितिर्दीप्तिकर्मा। संदीप्यमानस्य ᵛतपुर्जम्भस्य तापयितृदंष्ट्रस्य ᵛसुद्युतः शोभनदीप्तेः ᵛगणश्रियः। हविरादानार्थं यजमानगणं श्रयति तस्य। ᵛअस्य एतादृशोऽग्नेः[1] ᵛअजरं जरारहितं पुनःपुनर्मथ्यमानत्वान्नूतनं हविर्भिर्वर्धमानत्वादभिनवं वा ᵛशोचिः तेजः ᵛउत् ᵛअस्थात् उद्गततमभूत्॥

उदु॑ तिष्ठ स्वध्वर॒ स्तवा॑नो दे॒व्या कृ॒पा। अ॒भि॒ख्या भा॒सा बृ॒ह॒ता शु॑शु॒क्वनिः॑ ॥५॥

उत्। ऊँ इति॑। ति॒ष्ठ॒। सु॒ऽअ॒ध्व॒र॒। स्तवा॑नः। दे॒व्या। कृ॒पा।

अ॒भि॒ऽख्या। भा॒सा। बृ॒ह॒ता। शु॒शु॒क्वनिः॑ ॥ ५ ॥

ᵛस्वध्वर शोभनयज्ञ हे अग्ने ᵛअभिख्या अभिमुखं गच्छन्त्याभितः प्रसिद्धया वा ᵛबृहता बृहत्या ᵛभासा दीप्त्या ᵛशुशुक्वनिः। 'शुच दीप्तौ'। दीपनशीलस्त्वं ᵛस्तवानः स्तोतृभिः स्तूयमानः सन् ᵛदेव्या द्योतमानया ᵛकृपा ज्वालया ᵛउत्तिष्ठ तमःपरिहारार्थमुद्गच्छ। ᵛउ प्रसिद्धौ॥ ॥ ९ ॥

अग्ने॑ या॒हि सु॑श॒स्तिभि॑र्ह॒व्या जुह्वा॑न आनु॒षक्। यथा॑ दू॒तो ब॒भूथ॑ हव्य॒वाह॑नः ॥६॥

अग्ने॑। या॒हि॒। सु॒श॒स्तिऽभिः॑। ह॒व्या। जुह्वा॑नः। आ॒नु॒षक्।

यथा॑। दू॒तः। ब॒भूथ॑। ह॒व्य॒ऽवाह॑नः ॥ ६ ॥

हे ᵛअग्ने ᵛआनुषक् अनुषक्तं यथा भवति तथा ᵛहव्या हव्यानि हवनयोग्यान्यन्नानि ᵛजुह्वानः जुह्वन् देवेभ्यः प्रयच्छंस्त्वं ᵛसुशस्तिभिः शोभनैः स्तोत्रैः सह ᵛयाहि देवानां हविष्प्रदानार्थं गच्छ। अस्य हविष्प्रदातृत्वं कथमित्याशङ्क्याह। ᵛयथा त्वं ᵛहव्यवाहनः हविषां वोढा देवानां ᵛदूतो ᵛबभूथ भवसि तथा जुह्वान इत्यन्वयः॥

अ॒ग्निं वः॑ पू॒र्व्यं हु॑वे॒ होता॑रं चर्षणी॒नाम्। तम॒या वा॒चा गृ॑णे॒ तमु॑ वः स्तुषे ॥७॥

अ॒ग्निम्। व॒ः। पू॒र्व्यम्। हु॒वे॒। होता॑रम्। च॒र्ष॒णी॒नाम्।

तम्। अ॒या। वा॒चा। गृ॒णे॒। तम्। ऊँ इति॑। व॒ः। स्तु॒षे॒ ॥ ७ ॥

ᵛचर्षणीनां[2] मनुष्याणां ᵛहोतारं होमनिष्पादकं ᵛपूर्व्यं पुरातनं ᵛवः यष्टृत्वेन युष्मत्संबन्धिनम् ᵛअग्निं ᵛहुवे आह्वयामि। आहूय च ᵛतम् अग्निम् ᵛअया अनया सूक्तरूपया ᵛवाचा गिरा ᵛगृणे शंसामि। किंच ᵛवः युष्मदर्थं ᵛतमु तमेवाग्निं ᵛस्तुषे स्तौमि॥

य॒ज्ञेभि॒रद्भु॑तक्रतुं॒ यं कृ॒पा सू॒दय॑न्त॒ इत्। मि॒त्रं न जने॒ सुधि॑तमृ॒ताव॑नि ॥ ८ ॥

य॒ज्ञेभिः॑। अद्भु॑तऽक्रतुम्। यम्। कृ॒पा। सू॒दय॑न्ते। इत्।

मि॒त्रम्। न। जने॑। सुऽधि॑तम्। ऋ॒तऽव॑नि ॥ ८ ॥

ᵛअद्भुतक्रतुं बहुविधप्रज्ञं यद्वा चित्रकर्माणं ᵛमित्रं ᵛन यजमानानां मित्रमिव स्थितं ᵛसुधितं हविर्भिः संतर्पितं ᵛयम् अग्निम् ᵛऋतावनि[3] यज्ञवति ᵛजने यजमाने ᵛकृपा स्वसामर्थ्येन ᵛयज्ञेभिः यज्ञैः ᵛसूदयन्ते। सूदिः क्षरणकर्मा। अध्वर्य्वादयः कामान् क्षारयन्त्येव। यजमानस्य कामान् प्रापयन्तीत्यर्थः। तमग्निमुपासेवध्वमित्युत्तरत्र संबन्धः॥

---

१. ग–एतादृशस्याग्नेः; त–एतादृशाग्निः; भ–एतादृशाग्नेः। २. घ–हे देवाः चर्षणीनां। ३. त-न-भ–ऋतवनि।

ऋतावानमृतायवो यज्ञस्य साधनं गिरा । उपो एनं जुजुषुर्नमसस्पदे ॥ ९ ॥

ऋतऽवानम् । ऋतऽयवः । यज्ञस्य । साधनम् । गिरा ।
उपो इति । एनम् । जुजुषुः । नमसः । पदे ॥ ९ ॥

ऋतायवः यज्ञकामा हे यजमानाः ऋतावानं यज्ञवन्तं यज्ञस्य साधनं साधनभूतम् एनम् अग्निं[1] नमसः हविषः पदे स्थाने यज्ञाङ्गे वा गिरा स्तुतिलक्षणया वाचा उपो जुजुषुः उपासेवध्वम् ॥ 'तिङां तिङो भवन्ति' इति मध्यमपुरुषस्य प्रथमपुरुषादेशः ॥

अच्छा नो अङ्गिरस्तमं यज्ञासो यन्तु संयतः । होता यो अस्ति विक्ष्वा यशस्तमः ॥ १० ॥

अच्छ । नः । अङ्गिरःऽतमम् । यज्ञासः । यन्तु । सम्ऽयतः ।
होता । यः । अस्ति । विक्षु । आ । यशःऽतमः ॥ १० ॥

संयतः स्रुगादिभिर्नियमिताः नः अस्माकं यज्ञासः यज्ञाः अङ्गिरस्तमम् अङ्गिरसां विशिष्टमग्निम् अच्छ आभिमुख्येन च[2] यन्तु गच्छन्तु । यः अग्निः विक्षु मनुष्येषु होता होमनिष्पादकः सन् आ सर्वतः यशस्तमः । लुप्तमत्वर्थीयः । यशस्वितमः अस्ति भवति तमग्निं यन्त्वित्यन्वयः ॥ ॥१०॥

अग्ने तव त्ये अजरेन्धानासो बृहद्भाः । अश्वाइव वृषणस्तविषीयवः ॥ ११ ॥

अग्ने । तव । त्ये । अजर । इन्धानासः । बृहत् । भाः ।
अश्वाःऽइव । वृषणः । तविषीऽयवः ॥ ११ ॥

अजर जरारहित हे अग्ने इन्धानासः इन्धाना दीप्यमानाः बृहत् बृहन्तो महान्तः त्ये[3] ते सर्वगताः तव[3] त्वदीयाः भाः भासो रश्मयः वृषणः कामानां वर्षितारः सन्तः तविषीयवः बलमाचरन्तो भवन्ति । तत्र दृष्टान्तः । अश्वाइव । यथा वृषणो रेतसः सेक्तारोऽश्वा बलमाचरन्तो भवन्ति तद्वत् ॥

स त्वं न ऊर्जां पते रयिं रास्व सुवीर्यम् । प्राव नस्तोके तनये समत्स्वा ॥ १२ ॥

सः । त्वम् । नः । ऊर्जाम् । पते । रयिम् । रास्व । सुऽवीर्यम् ।
प्र । अव । नः । तोके । तनये । समत्ऽसु । आ ॥ १२ ॥

ऊर्जाम् अन्नानां पते स्वामिन् हे अग्ने सः तथाविधः त्वं नः अस्मभ्यं सुवीर्यं शोभनवीर्योपेतं रयिं धनं रास्व देहि । नः अस्माकं तोके पुत्रे तनये । तनोति विस्तारयति पुत्रमिति[4] तनयः पौत्रः । तस्मिन्वर्तमानं धनं समत्सु संग्रामेषु च यत् रक्षितव्यं[5] धनं तच्च प्राव प्रकर्षेण रक्ष । अनेन पुत्रपौत्रप्रार्थनं करोति ॥

यद्वा उ विश्पतिः शितः सुप्रीतो मनुषो विशि । विश्वेदग्निः प्रति रक्षांसि सेधति ॥ १३ ॥

यत् । वै । ऊँ इति । विश्पतिः । शितः । सुऽप्रीतः । मनुषः । विशि ।
विश्वा । इत् । अग्निः । प्रति । रक्षांसि । सेधति ॥ १३ ॥

---

१. ख-घ१-त-न-भ१-२-श–एवमग्निं । २. ग–'च' नास्ति । ३. ग-त-भ–त्ये सर्वगतास्ते तव । ४. ख-त-न-भ१-२–पुमिति; ग-श–कुलमिति । ५. ग–भटैर्विजेतव्यं ।

विश्पतिः विशां पालयिता शितः हविर्भिस्तीक्ष्णीकृतः सोऽग्निः सुप्रीतः सुष्ठु प्रीतः सन् मनुषः मनुष्यस्य विशि निवेशने गृहे यद्ध यदा खलु वर्तते तदानीम् अग्निः विश्वेत् विश्वान्येव तस्य बाधकानि रक्षांसि प्रति षेधति हिनस्ति ॥ 'षिधु गत्याम्'। भौवादिकः। उ प्रसिद्धौ ॥

**श्रुष्ट्यग्ने नवस्य मे स्तोमस्य वीर विश्पते। नि मायिनस्तपुषा रक्षसो दह ॥१४॥**

श्रुष्टी। अग्ने। नवस्य। मे। स्तोमस्य। वीर। विश्पते।
नि। मायिनः। तपुषा। रक्षसः। दह ॥ १४ ॥

वीर शत्रूणां विनाशयितर्वीर्यवन् विश्पते विशां पालयितर्हे अग्ने नवस्य इदानीं क्रियमाणत्वान्नूतनं मे मदीयं स्तोमस्य स्तोत्रशस्त्रादिकं श्रुष्टी श्रुत्वा मायिनः मायाविनः रक्षसः कर्मविघ्नकारिणो राक्षसान् तपुषा तापकेन तेजसा नि दह नितरां भस्मीकुरु ॥ श्रुष्टी। 'स्नात्व्यादयश्च' इति निपातितः। वकारलोपश्छान्दसः ॥

**न तस्य मायया चन रिपुरीशीत मर्त्यः। यो अग्नये ददाश हव्यदातिभिः॥१५॥**

न। तस्य। मायया। चन। रिपुः। ईशीत। मर्त्यः।
यः। अग्नये। ददाश। हव्यदातिऽभिः ॥ १५ ॥

मर्त्यः मनुष्यः रिपुः शत्रुः। चनेति निपातसमुदायोऽप्यर्थे। मायया चन माययापि तस्य जनस्य न ईशीत ईश्वरो न भवति। यः जनः हव्यदातिभिः हविषां दातृभिर्ऋत्विग्भिः अग्नये ददाश हवींषि प्रयच्छति। तस्य रिपुर्नास्तीत्यर्थः ॥ ॥ ११ ॥

**व्यश्वस्त्वा वसुविदमुक्षण्युरप्रीणादृषिः। महो राये तमु त्वा समिधीमहि ॥१६॥**

विऽअश्वः। त्वा। वसुऽविदम्। उक्षण्युः। अप्रीणात्। ऋषिः।
महः। राये। तम्। ऊँ इति। त्वा। सम्। इधीमहि ॥ १६ ॥

उक्षण्युः धनानां सेक्कारमात्मन इच्छन् यद्वा वृष्टिसेक्कारमिच्छन् व्यश्वः ऋषिः एतन्नामको मम पिता वसुविदं वसूनां धनानां लम्भकं त्वा त्वाम् अप्रीणात् धनादिप्राप्त्यर्थं हविर्भिरतोषयत्। तथा वयमपि महः महते राये धनाय तमु तथाविधमेव त्वा त्वां समिधीमहि सम्यगाज्यादिहविर्भिर्दीपयेम ॥

**उशना काव्यस्त्वा नि होतारमसादयत्। आयजिं त्वा मनवे जातवेदसम् ॥१७॥**

उशना। काव्यः। त्वा। नि। होतारम्। असादयत्।
आऽयजिम्। त्वा। मनवे। जातऽवेदसम् ॥ १७ ॥

हे अग्ने काव्यः कविपुत्रः उशना एतन्नामक ऋषिः मनवे राज्ञे। तस्य गृह इत्यर्थः। आयजिम् आभिमुख्येन यष्टारं जातवेदसं जातप्रज्ञं त्वा त्वाम्। पुनस्त्वाशब्द आदरार्थः। त्वामेव होतारं होमनिष्पादकं नि असादयत् नितरामुपावेशयत् ॥

**विश्वे हि त्वा सजोषसो देवासो दूतमक्रत। श्रुष्टी देव प्रथमो यज्ञियो भुवः॥१८॥**

विश्वे । हि । त्वा । सऽजोषसः । देवासः । दूतम् । अक्रत ।
श्रुष्टी । देव । प्रथमः । यज्ञियः । भुवः ॥ १८ ॥

हे अग्ने ᵛविश्वे सर्वे ᵛदेवासः देवाः ᵛसजोषसः संगताः सन्तः अस्माकं हवींष्यानयतीति विचार्य ᵛत्वा। हिरवधारणे। त्वामेव ᵛदूतं हविषां वोढारं दूतम् ᵛअक्रत अकार्षुः। ततः ᵛदेव द्योतमान हे अग्ने ᵛप्रथमः देवानां मुख्यभूतस्त्वं ᵛश्रुष्टी। श्रुष्टीति क्षिप्रनाम। क्षिप्रं ᵛयज्ञियः देवानां हविर्दातृत्वेन यज्ञार्हः ᵛभुवः भूयाः ॥

इमं घा वीरो अमृतं दूतं कृण्वीत मर्त्यः । पावकं कृष्णवर्तनिं विहायसम् ॥१९॥

इमम् । घ । वीरः । अमृतम् । दूतम् । कृण्वीत । मर्त्यः ।
पावकम् । कृष्णऽवर्तनिम् । विऽहायसम् ॥ १९ ॥

अनया यजमानश्चाग्निं देवानां दूतमकार्षीदित्याह। ᵛवीरः कर्मणि समर्थः ᵛमर्त्यः मनुष्यो यजमानः ᵛअमृतं मरणधर्मरहितं ᵛपावकं पापानां शोधकं ᵛकृष्णवर्तनिम्। वर्तनिर्मार्गः। कृष्णमार्गं ᵛविहायसम्। विहाया इति महन्नाम। गुणैस्तेजोऽधिकत्वेन वा महान्तम् ᵛइमं ᵛघ इममेवाग्निं ᵛदूतं देवानां वोढृत्वेन दूतं ᵛकृण्वीत अकार्षीत् ॥

तं हुवेम यतस्रुचः सुभासं शुक्रशोचिषम् । विशामग्निमजरं प्रत्नमीड्यम् ॥२०॥

तम् । हुवेम । यतऽस्रुचः । सुऽभासम् । शुक्रऽशोचिषम् ।
विशाम् । अग्निम् । अजरम् । प्रत्नम् । ईड्यम् ॥ २० ॥

ᵛयतस्रुचः गृहीतस्रुचो यद्वा तत्तत्स्थानेषु नियमितस्रुचो वयं ᵛसुभासं शोभनदीप्तिं ᵛशुक्रशोचिषं दीपनशीलतेजस्कं ᵛविशां स्वामिनम्। यद्वा। विशाम् ᵛईड्यम् इत्यन्वयः। मनुष्याणां स्तोतव्यम् ᵛअजरं जरारहितं ᵛप्रत्नं पुरातनं ᵛतं तथाविधम् ᵛअग्निं ᵛहुवेम स्तोत्रशस्त्रादिभिराह्वयामः ॥ ॥ १२ ॥

यो अस्मै हव्यदातिभिराहुतिं मर्तोऽविधत् । भूरि पोषं स धत्ते वीरवद्यशः ॥२१॥

यः । अस्मै । हव्यदातिऽभिः । आऽहुतिम् । मर्तः । अविधत् ।
भूरि । पोषम् । सः । धत्ते । वीरऽवत् । यशः ॥ २१ ॥

ᵛयः ᵛमर्तः मनुष्यः ᵛहव्यदातिभिः हविर्दातृभिर्ऋत्विग्भिः ᵛअस्मै अग्नये ᵛआहुतिम् ᵛअविधत् विदधाति ᵛसः मनुष्यः ᵛभूरि बहु ᵛपोषं धनादिभिः पोषणम् ᵛवीरवत् पुत्रपौत्रादियुक्तं ᵛयशः कीर्तिं च ᵛधत्ते धारयति। तस्मै धनादीनि प्रयच्छतीत्यर्थः ॥

प्रथमं जातवेदसमग्निं यज्ञेषु पूर्व्यम् । प्रति स्रुगेति नमसा हविष्मती ॥ २२ ॥

प्रथमम् । जातऽवेदसम् । अग्निम् । यज्ञेषु । पूर्व्यम् ।
प्रति । स्रुक् । एति । नमसा । हविष्मती ॥ २२ ॥

ᵛप्रथमं देवानां प्रधानभूतं ᵛजातवेदसं जातप्रज्ञं ᵛपूर्व्यं पुरातनमेतादृशम् ᵛअग्निं ᵛयज्ञेषु अग्निष्टोमादियज्ञेषु ᵛहविष्मती सोमादिहविर्युक्ता ᵛस्रुक् ᵛनमसा स्तोत्रेण नमस्कारेण वा सह ᵛप्रति ᵛएति अग्निं प्रति गच्छति ॥

आभिर्विधेमाग्नये ज्येष्ठाभिर्व्यश्ववत् । मंहिष्ठाभिर्मतिभिः शुक्रशोचिषे ॥ २३ ॥

आभिः । विधेम । अग्नये । ज्येष्ठाभिः । व्यश्वऽवत् ।

मंहिष्ठाभिः । मतिऽभिः । शुक्रऽशोचिषे ॥ २३ ॥

विश्वमनोनामका वयं ज्येष्ठाभिः प्रशस्यतमाभिः मंहिष्ठाभिः पूज्यतमाभिः आभिः सूक्त रूपाभिः स्तुतिभिः शुक्रशोचिषे ज्वलत्तेजसे अग्नये विधेम परिचरेम । कथमिव । व्यश्ववत् यथा व्यश्वोऽस्माकं पिता अग्निं स्तुतिभिः पर्यचरत् तद्वद्वयमपि परिचरेम ॥

नूनमर्च विहायसे स्तोमेभिः स्थूरयूपवत् । ऋषे वैयश्व दम्यायाग्नये ॥ २४

नूनम् । अर्च । विऽहायसे । स्तोमेभिः । स्थूरयूपऽवत् । ऋषे । वैयश्व । दम्याय । अग्नये ॥ २४

वैयश्व व्यश्वस्य पुत्र हे विश्वमनोनामक ऋषे विहायसे महते दम्याय दमे गृहेऽरणीभि मथ्यमानत्वेन भवाय । यद्वा । यजमानगृहाणां बाधपरिहारेण हिताय । अग्नये नूनं संप्र स्तोमेभिः त्रिवृत्पञ्चदशादिलक्षणैः स्तोमैः अर्च स्तुहि । तत्र दृष्टान्तः । स्थूरयूपवत् । यथा स्थूरयू नामर्षिरेनमग्निमानर्च तद्वदर्चेत्यर्थः ॥

अतिथिं मानुषाणां सूनुं वनस्पतीनाम् । विप्रा अग्निमवसे प्रत्नमीळते ॥ २५ ॥

अतिथिम् । मानुषाणाम् । सूनुम् । वनस्पतीनाम् ।

विप्राः । अग्निम् । अवसे । प्रत्नम् । ईळते ॥ २५ ॥

विप्राः मेधाविनो यजमानाः मानुषाणां मनुष्याणाम् अतिथिम् अतिथिवत्पूज्यं वनस्पती सूनुं वनस्पतिरूपाभिररणीभिर्जायमानत्वेन[1] तेषां सूनुं प्रत्नं पुरातनमेवंविधम् अग्निमव कर्मरक्षणाय ईळते स्तुतिभिः स्तुवन्ति ॥ ॥ १३ ॥

महो विश्वाँ अभि षतोऽभि हव्यानि मानुषा । अग्ने नि षत्सि नमसाधि बर्हिषि ॥२६

महः । विश्वान् । अभि । सतः । अभि । हव्यानि । मानुषा ।

अग्ने । नि । सत्सि । नमसा । अधि । बर्हिषि ॥ २६ ॥

हे अग्ने महः कर्मकर्तृत्वेन महतः विश्वान् सर्वान् सतः स्तोत्रकरणार्थं वर्तमानान् स्तोतॄ अभि अभितस्त्वं नमसा स्तुत्यतया बर्हिषि अधि नि षत्सि निषीद । तथा मानुष मनुष्यसंबन्धीनि हव्यानि हवींषि अभि अभितस्तानि स्वीकर्तुं निषीद[2] ॥

वंस्वा नो वार्या पुरु वंस्व रायः पुरुस्पृहः । सुवीर्यस्य प्रजावतो यशस्वतः ॥२७

वंस्व । नः । वार्या । पुरु । वंस्व । रायः । पुरुऽस्पृहः ।

सुऽवीर्यस्य । प्रजाऽवतः । यशस्वतः ॥ २७ ॥

---

१. घ–°र्जायमानत्वात् । २. ख–मानुषाणां; ग-त-भ-श–मानुषा मानुषाणां; न–मानुष मानुषाणि । ३. ख-ग-ज्ञ-त१-२-भ–निषीद । किंच अधि बर्हिषि यज्ञे नमसा स्तोत्रेण हविषा च स ( सह वा त्वमिह–ग ) निषत्सि नितरां सीद ।

हे अग्ने वार्या वार्याणि वरणीयानि पुरु पुरूणि बहूनि गवादीनि नः अस्मभ्यं वंस्व प्रयच्छ। तथा पुरुस्पृहः पुरुभिर्बहुभिः स्पृहणीयं रायः धनम्। किंविशिष्टम्। सुवीर्यस्य शोभनवीर्योपेतं प्रजावतः पुत्रपौत्रादिसहितं यशस्वतः कीर्तिमच्च धनं नोऽस्मभ्यं वंस्व प्रयच्छ ॥

**त्वं वरो सुषाम्णेऽग्ने जनाय चोदय। सदा वसो रातिं यविष्ठ शश्वते ॥ २८ ॥**

त्वम्। वरो इति। सुऽसाम्ने। अग्ने। जनाय। चोदय।
सदा। वसो इति। रातिम्। यविष्ठ। शश्वते ॥ २८ ॥

वरो सर्वैर्वरणीय वसो शत्रूणां वासयितः यविष्ठ पुनःपुनर्जायमानत्वेन युवतम हे अग्ने त्वं सुषाम्णे सुसाम्ने। सुषामादित्वात् षत्वम्। त्वत्प्रसादाच्छोभनसामवते शश्वते बहवे जनाय प्रादुर्भूताय स्तोतॄणां सदा सर्वदा रातिं धनादिकं चोदय प्रेरय ॥

**त्वं हि सुप्रतूरसि त्वं नो गोमतीरिषः। महो रायः सातिमग्ने अपा वृधि ॥ २९ ॥**

त्वम्। हि। सुऽप्रतूः। असि। त्वम्। नः। गोऽमतीः। इषः।
महः। रायः। सातिम्। अग्ने। अप। वृधि ॥ २९ ॥

हे अग्ने त्वम्। हिरवधारणे। त्वमेव सुप्रतूः स्तोतॄणां धनादिकं सुष्ठु प्रदाता असि प्रयच्छसीत्यर्थः। अत एव गोमतीः पश्वादियुक्तानि इषः अन्नानि महः महतः रायः धनस्य मध्ये सातिं देयं धनं च नः स्तोतॄणामस्माकम् अपा वृधि अपावृणु। प्रयच्छेत्यर्थः ॥

**अग्ने त्वं यशा अस्या मित्रावरुणा वह। ऋतावाना सम्राजा पूतदक्षसा ॥ ३० ॥**

अग्ने। त्वम्। यशाः। असि। आ। मित्रावरुणा। वह।
ऋतऽवाना। सम्ऽराजा। पूतऽदक्षसा ॥ ३० ॥

हे अग्ने त्वं यशाः। लुप्तमत्वर्थीयः। देवानां मध्ये यशस्वी असि भवसि। अत एव त्वम् ऋतावाना ऋतावानौ सत्यवन्तौ यज्ञवन्तौ वा सम्राजा सम्राजौ सम्यग्राजमानौ पूतदक्षसा पूतदक्षसौ। दक्ष इति बलनाम। शुद्धबलौ मित्रावरुणावस्मिन् कर्मणि आ वह आह्वय। प्रायेण कर्मणि अग्नेर्मित्रावरुणसहितत्वमस्तीति[1] सूचयति ॥ ॥ १४ ॥

'सखाय आ शिषामहि' इति त्रिंशदृचं चतुर्थं सूक्तम्। अत्रेयमनुक्रमणिका—'सखायस्तृचोऽन्त्यः सौषाम्णस्य वरोर्दानस्तुतिरन्त्यानुष्टुप्' इति। व्यश्वपुत्रो विश्वमना ऋषिः। 'औष्णिहं तु' इत्युक्तत्वादेतदादीनि त्रीणि सूक्तानि उष्णिक्छन्दस्कानि। अनुक्तत्वादिन्द्रो देवता। अन्त्यासु तिसृषु सुषामाख्यस्य राज्ञः पुत्रस्य वरुनाम्नो राज्ञो दानं स्तूयते। अतस्तास्तद्देवताकाः। महाव्रते निष्केवल्ये औष्णिहतृचाशीतावेतत्सूक्तम्। तथैव पञ्चमारण्यके शौनकेन सूत्र्यते—'सखाय आ शिषामहि य एक इद्विदयते' (ऐ. आ. ५. २. ५) इति। दशमेऽहनि मरुत्वतीयशस्त्रे 'सखायः' इति तिस्र ऋचः। सूत्र्यते च—'सखाय आ शिषामहीति तिस्र उष्णिहः' (आश्व.श्रौ. ८.१२) इति ॥

**सखाय आ शिषामहि ब्रह्मेन्द्राय वज्रिणे। स्तुष ऊ षु वो नृतमाय धृष्णवे ॥ १ ॥**

---

१. ग—अग्निर्मित्रावरुणसहितश्चमसभागिति।

सखायः । आ । शिषामहि । ब्रह्म । इन्द्राय । वज्रिणे ।
स्तुषे । ऊँ इति । सु । वः । नृऽतमाय । धृष्णवे ॥ १ ॥

vसखायः मित्रभूता हे ऋत्विजः vवज्रिणे वज्रहस्ताय vइन्द्राय vब्रह्म कर्तव्यमेतत्सूक्तरूपं स्तोत्रम् vआ vशिषामहि वयम् आशास्मः[1] । 'शासु अनुशिष्टौ' । लुङि च्लेरङादेशः । इत्वषत्वे । व्यत्ययेनात्मनेपदम् । तत्र vवः सर्वेषामेव युष्माकमर्थाय vनृतमाय सर्वेषां नेतृतमाय यद्वा संग्रामेष्वायुधादीनां नेतृतमाय vधृष्णवे शत्रूणां धर्षणशीलाय तस्मा इन्द्रायाहमेव vसु सुष्ठु vस्तुषे स्तौमि ॥

**शवसा ह्यसि श्रुतो वृत्रहत्येन वृत्रहा । मघैर्मघोनो अति शूर दाशसि ॥ २ ॥**

शवसा । हि । असि । श्रुतः । वृत्रऽहत्येन । वृत्रऽहा ।
मघैः । मघोनः । अति । शूर । दाशसि ॥ २ ॥

हे इन्द्र त्वं vशवसा बलेन vश्रुतः प्रसिद्धः vअसि भवसि । vहि प्रसिद्धौ । तदेवाह । vवृत्रहत्येन वृत्रासुरहननेन vवृत्रहा वृत्रहेति प्रसिद्धो भवसि । vशूर शौर्यवन् हे इन्द्र vमघोनः मघवतो धनवतः पुरुषात् vमघैः त्वदीयैर्धनैः vअति अतिक्रम्य vदाशसि स्तोतृभ्योऽस्मभ्यं प्रयच्छसि ॥

**स नः स्तवान आ भर रयिं चित्रश्रवस्तमम् । निरेके चिद्यो हरिवो वसुर्ददिः ॥३॥**

सः । नः । स्तवानः । आ । भर । रयिम् । चित्रश्रवःऽतमम् ।
निरेके । चित् । यः । हरिऽवः । वसुः । ददिः ॥ ३ ॥

हे इन्द्र vसः तथाविधस्त्वं vस्तवानः अस्माभिः स्तूयमानः सन् vचित्रश्रवस्तमम् अतिशयेन नानाविधान्नोपेतं vरयिं पुत्रं धनं वा vनः अस्मभ्यम् vआ vभर संपादय[2] । देहीत्यर्थः । vहरिवः । हरी अश्वौ । तद्वन् हे इन्द्र vयः त्वं vनिरेके vचित् निर्गमन एव vवसुः शत्रूणां वासयिता भवसि । तवायुधनिर्गमनादेव शत्रवः पलायन्ते खलु । किंच त्वं vददिः धनानां दाता भवसि ॥

**आ निरेकमुत प्रियमिन्द्र दर्षि जनानाम् । धृषता धृष्णो स्तवमान आ भर ॥४॥**

आ । निरेकम् । उत । प्रियम् । इन्द्र । दर्षि । जनानाम् ।
धृषता । धृष्णो इति । स्तवमानः । आ । भर ॥ ४ ॥

हे vइन्द्र vउत अपि च vप्रियं प्रीणनात् प्रियतमं vनिरेकम् । निरेकं धनं भवति विरेचनान्निर्गमनाद्वेति । तद्धनं vजनानां स्तोतृणामस्माकम् vआ vदर्षि आविदारय विवृतं कुरु । 'दृ विदारणे' । छान्दसो विकरणस्य लुक् । विवृत्य च vधृष्णो धर्षणशील[3] हे इन्द्र vस्तवमानः स्तोतृभिरस्माभिः स्तूयमानः सन् vधृषता धृष्टेन मनसा सह vआ vभर तद्धनमस्मभ्यं देहि ॥

**न ते सव्यं न दक्षिणं हस्तं वरन्त आमुरः । न परिबाधो हरिवो गविष्टिषु ॥५॥**

न । ते । सव्यम् । न । दक्षिणम् । हस्तम् । वरन्ते । आऽमुरः ।
न । परिऽबाधः । हरिऽवः । गोऽइष्टिषु ॥ ५ ॥

---

१. ख-ज-त१-२-भ—आशास्महे यद्वा ब्रह्म अस्माभिर्दीयमानं हविरूपमन्नमाशास्मः । २. ख-त-न-भ-श—आसंपादय । ३. ख-ग-त-न-भ२—शत्रूणां धर्षणशील; भ१-३—मनसा शत्रूणां धर्षणशील ।

हे ऋत्विजः इन्दुं स्यन्दनशीलं सोममिन्द्रार्थम्[1] आ सिञ्चत आश्रयणद्रव्येण सेचनं कुरुत। अभिषुणुतेत्यर्थः। ततः सोम्यं सोममयं मधु मदकरं सोमरसं पिबाति पिबतु। पीत्वा च स इन्द्रः महित्वना स्वमहत्त्वेनैव राधसा अन्नेन सह धनादिकं स्तोतृभ्यः प्र चोदयाते प्रकर्षेण चोदयति। यद्वा। यजमानो महित्वना। इन्द्राय प्रदीयमानत्वादस्य महत्त्वम्। महत्त्वयुक्तेन राधसा अन्नेन सह स्तोतॄन् प्रचोदयति। इन्द्राय हविर्दत्तेति स्तोतॄन् प्रेरयतीत्यर्थः॥

**उपो हरीणां पतिं दक्षं पृञ्चन्तमब्रवम्। नूनं श्रुधि स्तुवतो अश्व्यस्य॥ १४॥**

उपो इति। हरीणाम्। पतिम्। दक्षम्। पृञ्चन्तम्। अब्रवम्।
नूनम्। श्रुधि। स्तुवतः। अश्व्यस्य॥ १४॥

हरीणां हरितवर्णानामश्वानां पतिं पालयितारं दक्षं वर्धकं स्वबलं पृञ्चन्तम्। 'पृची संपर्के'। मरुत्सु योजयन्तम्। यद्वा। शत्रुषु स्वबलमायुधादिभिः संपर्चयन्तम्। एतादृशमिन्द्रं त्वाम् उपो अब्रवम्। विश्वमना अहं स्तोत्रं करवाणि। अश्व्यस्य। व्यश्वो नामर्षिरश्वशब्देनोच्यते। तस्य पुत्रस्य स्तुवतः स्तोत्रं कुर्वतो मम संबन्धिनीं[2] त्वद्विषयां स्तुतिं नूनं संप्रति श्रुधि शृणु॥

**नह्यं१ङ्ग पुरा चन जज्ञे वीरतरस्त्वत्। नकी राया नैवथा न भन्दना॥ १५॥**

नहि। अङ्ग। पुरा। चन। जज्ञे। वीरऽतरः। त्वत्।
नकिः। राया। न। एवऽथा। न। भन्दना॥ १५॥

हे इन्द्र त्वत् त्वत्तः पुरा पूर्वं वीरतरः सामर्थ्यवान् कश्चित् नहि जज्ञे जातः[3] खलु। अङ्ग प्रसिद्धौ। त्वमेव सामर्थ्यवान् जात इत्यर्थः। किंच त्वत्तोऽपि राया धनेन समर्थः नकिः न कश्चिदस्ति। तथा एवथा[4] शत्रुपुराणि संग्रामं वा प्रति गमनेन त्वत्तोऽधिकः न जातः। यद्वा। एवथा। अव रक्षणादिषु। अकारस्यैकारश्छान्दसः। औणादिकोऽथप्रत्ययः। शरणागतानां स्तोतृणां चावनेन त्वत्तोऽधिको नास्ति। किंच भन्दना। भन्दतिः स्तुतिकर्मा। स्तुत्या च त्वदधिकः न जातः। धनवान् रक्षकः स्तुत्यश्च त्वत्तोऽन्यो न जज्ञ इति॥ ॥ १७॥

'एदु मध्वः' इति तृचः पूर्वोक्ते ब्राह्मणाच्छंसिशस्त्रे वैकल्पिकोऽनुरूपः। सूत्रितं च— 'एदु मध्वो मदिन्तरमेतो न्विन्द्रं स्तवाम सखायः' (आश्व. श्रौ. ७. ८) इति॥

**एदु मध्वो मदिन्तरं सिञ्च वाध्वर्यो अन्धसः। एवा हि वीरः स्तवते सदावृधः॥ १६॥**

आ। इत्। ऊँ इति। मध्वः। मदिन्ऽतरम्। सिञ्च। वा। अध्वर्यो इति। अन्धसः।
एव। हि। वीरः। स्तवते। सदाऽवृधः॥ १६॥

हे अध्वर्यो अध्वरस्य नेतर्ऋत्विक् मध्वः मदकरस्य अन्धसः सोमलक्षणस्यान्नस्य मदिन्तरम् अत्यर्थं मादयितृतमं सोमरसमेव आ सिञ्च इन्द्रार्थमभिषुणु। इदु इत्यवधारणे। वीरः समर्थः सदावृधः सर्वदा हविर्भिर्वर्धनीयः। यद्वा सर्वदा स्वबलस्य वर्धकोऽयम् एव इन्द्रः स्तवते हि स्तोत्रशस्त्रादिभिः स्तूयते खलु। स्तुतायेन्द्राय सोमो दातव्यः। तस्मादा सिञ्चेति समन्वयः॥

---

१. घ-भ२—°मिंद्रायेंद्रार्थं। २. भ—संबन्धिनीं हे इंद्र। ३. घ-भ—न जातः। ४. ङ-त१-४-य—एव यथा; ग२—एव तथा।

इन्द्र॑ । यथा॑ । हि । अस्ति॑ । ते॒ । अप॑रिऽइतम् । नृतो॒ इति॑ । शवः॑ ।
अमृ॑क्ता । रा॒तिः । पु॒रु॒ऽहू॒त॒ । दा॒शुषे॑ ॥ ९ ॥

हे ^v^नृतो सर्वस्यान्तर्यामितया नर्तयितः ^v^इन्द्र ^v^ते त्वदीयं ^v^शवः बलं ^v^यथा ^v^अपरीतम् ^v^अस्ति शत्रुभिरपरिगतमव्याप्तं भवति । ^v^हि प्रसिद्धौ । तथा हे ^v^पुरुहूत पुरुभिर्बहुभिराहूतेन्द्र ^v^दाशुषे हविर्दत्तवते यजमानाय ^v^रातिः धनादिदानम् ^v^अमृक्ता शत्रुभिरहिंसितं भवति । त्वत्तो लब्धं यजमानस्य धनं शत्रवो न हिंसन्ति । यथा त्वदीयबलस्य रक्षक एवं तस्य धनस्यापि रक्षक इत्यर्थः ॥

**आ वृ॑षस्व महामह म॒हे नृ॑तम॒ राध॑से । दृ॒ळ्हश्चि॑द्दृह्य मघवन्म॒घत्त॑ये ॥ १० ॥**

आ । वृ॒षस्व॒ । म॒हा॒ऽम॒ह॒ । म॒हे । नृ॒ऽत॒म॒ । राध॑से ।
दृ॒ळ्हः । चि॒त् । दृ॒ह्य॒ । म॒घ॒ऽव॒न् । म॒घत्त॑ये ॥ १० ॥

हे ^v^महामह अतिशयेन सर्वैः पूजनीय ^v^नृतम नेतृतमेन्द्र ^v^महे महते ^v^राधसे शत्रुधनानां संसाधकाय बलाय बलार्थम् ^v^आ ^v^वृषस्व स्वोदरमासिञ्च । सोमं पिबेत्यर्थः । हे ^v^मघवन् धनवन्निन्द्र सोमपानेन मत्तः सन् ^v^दळ्हश्चित् दृढानि परैरबाधितान्यपि शत्रुपुराणि ^v^मघत्तये मघानां धनानां लाभाय ^v^दृह्य जिघांस । विदारयेत्यर्थः ॥ ॥ १६ ॥

**नू अ॒न्यत्रा॑ चिदद्रिव॒स्त्वन्नो॑ जग्मुरा॒शसः॑ । मघ॑वञ्छ॒ग्धि तव॒ तन्न॑ ऊ॒तिभिः॑ ॥ ११ ॥**

नु । अ॒न्यत्र॑ । चि॒त् । अ॒द्रि॒ऽव॒ः । त्वत् । न॒ः । ज॒ग्मुः॒ । आ॒ऽशस॑ः ।
मघ॑ऽवन् । श॒ग्धि । तव॑ । तत् । न॒ः । ऊ॒तिऽभि॑ः ॥ ११ ॥

हे ^v^अद्रिवः वज्रवन्निन्द्र त्वं धनवान् दाता चेत्यपरिज्ञाय ^v^नः अस्मदीयानि ^v^आशसः आशंसनानि अभिलाषाः ^v^त्वत् त्वत्तः ^v^अन्यत्र देवादौ ^v^नू ^v^चित् पुरा ^v^जग्मुः अगच्छन् । तत्र फलं नालभन्त । इदानीं त्वं धनवान् दानशील इत्यस्माभिर्ज्ञातम् । अत एव हे ^v^मघवन् धनवन्निन्द्र ^v^तव त्वदीयं ^v^तत् शत्रुपुरविदारणलब्धं धनम् ^v^ऊतिभिः त्वद्रक्षणैः ^v^नः अस्मभ्यं ^v^शग्धि देहि । शग्धीति दानकर्मा । शक्नोतेर्लोटि छान्दसो विकरणस्य लुक् ॥

**न॒ह्य१॒ङ्ग नृ॑तो॒ त्वद॒न्यं वि॒न्दामि॒ राध॑से । रा॒ये द्यु॒म्नाय॒ शव॑से च गिर्वणः ॥ १२ ॥**

न॒हि । अ॒ङ्ग । नृ॒तो॒ इति॑ । त्वत् । अ॒न्यम् । वि॒न्दामि॑ । राध॑से ।
रा॒ये । द्यु॒म्नाय॑ । शव॑से । च॒ । गि॒र्व॒णः॒ ॥ १२ ॥

हे ^v^नृतो नर्तयितः ^v^गिर्वणः गीर्भिः स्तुतिभिर्वननीय संभजनीयेन्द्र ^v^राधसे बलसंसाधकायान्नाय ^v^राये धनाय ^v^द्युम्नाय द्योतमानाय यशसे ^v^शवसे वर्धकाय बलाय ^v^च ^v^त्वत् त्वत्तः ^v^अन्यं ^v^नहि ^v^विन्दामि न लभे । ^v^अङ्ग प्रसिद्धौ ॥

**एन्दु॒मिन्द्रा॑य सिञ्चत॒ पिबा॑ति सो॒म्यं मधु॑ । प्र राध॑सा चोदयाते महित्व॒ना ॥ १३ ॥**

आ । इन्दु॑म् । इन्द्रा॑य । सि॒ञ्च॒त॒ । पिबा॑ति । सो॒म्यम् । मधु॑ ।
प्र । राध॑सा । चो॒द॒या॒ते॒ । म॒हि॒ऽत्व॒ना ॥ १३ ॥

हे ऋत्विजः ᵛइन्दुं स्यन्दनशीलं सोममिन्द्रार्थम्[1] ᵛआ ᵛसिञ्चत आश्रयणद्रव्येण सेचनं कुरुत। अभिषुणुतेत्यर्थः। ततः ᵛसोम्यं सोममयं ᵛमधु मदकरं सोमरसं ᵛपिबाति पिबतु। पीत्वा च स इन्द्रः ᵛमहित्वना स्वमहत्त्वेनैव ᵛराधसा अन्नेन सह धनादिकं स्तोतृभ्यः ᵛप्र ᵛचोदयाते प्रकर्षेण चोदयति। यद्वा। यजमानो महित्वना। इन्द्राय प्रदीयमानत्वादस्य महत्त्वम्। महत्त्वयुक्तेन राधसा अन्नेन सह स्तोतॄन् प्रचोदयति। इन्द्राय हविर्देहीति स्तोतॄन् प्रेरयतीत्यर्थः॥

**उपो॒ हरी॑णां॒ पतिं॒ दक्षं॑ पृ॒ञ्चन्त॑मब्रवम्। नू॒नं श्रु॑धि स्तुव॒तो अ॒श्व्यस्य॑॥ १४॥**

उपो॒ इति॑। हरी॑णाम्। पति॑म्। दक्ष॑म्। पृ॒ञ्चन्त॑म्। अ॒ब्र॒व॒म्।
नू॒नम्। श्रु॒धि॒। स्तु॒व॒तः। अ॒श्व्यस्य॑॥ १४॥

ᵛहरीणां हरितवर्णानामश्वानां ᵛपतिं पालयितारं ᵛदक्षं वर्धकं स्वबलं ᵛपृञ्चन्तम्। 'पृची संपर्के'। मरुत्सु योजयन्तम्। यद्वा। शत्रुषु स्वबलमायुधादिभिः संपर्चयन्तम्। एतादृशमिन्द्रं त्वाम् ᵛउपो ᵛअब्रवम्। विश्वमना अहं स्तोत्रं करवाणि। ᵛअश्व्यस्य। व्यश्वो नामर्षिरश्वशब्देनोच्यते। तस्य पुत्रस्य ᵛस्तुवतः स्तोत्रं कुर्वतो मम संबन्धिनीं[2] त्वद्विषयां स्तुतिं ᵛनूनं संप्रति ᵛश्रुधि शृणु॥

**न॒ह्य१॒॑ङ्ग पु॒रा च॒न ज॒ज्ञे वी॒रत॑र॒स्त्वत्। नकी॑ रा॒या नैवथा॑ न भ॒न्दना॑॥ १५॥**

न॒हि। अ॒ङ्ग। पु॒रा। च॒न। ज॒ज्ञे। वी॒रऽत॑रः। त्वत्।
नकि॑ः। रा॒या। न। ए॒वऽथा॑। न। भ॒न्दना॑॥ १५॥

हे इन्द्र ᵛत्वत् त्वत्तः ᵛपुरा पूर्वं ᵛवीरतरः सामर्थ्यवान् कश्चित् ᵛनहि ᵛजज्ञे जातः[3] खलु। ᵛअङ्ग प्रसिद्धौ। त्वमेव सामर्थ्यवान् जात इत्यर्थः। किंच त्वत्तोऽपि ᵛराया धनेन समर्थः ᵛनकिः न कश्चिदस्ति। तथा ᵛएवथा[4] शत्रुपुराणि संग्रामं वा प्रति गमनेन त्वत्तोऽधिकः ᵛन जातः। यद्वा। एवथा। अव रक्षणादिषु। अकारस्यैकारश्छान्दसः। औणादिकोऽथप्रत्ययः। शरणागतानां स्तोतॄणां चावनेन त्वत्तोऽधिको नास्ति। किंच ᵛभन्दना। भन्दतिः स्तुतिकर्मा। स्तुत्या च त्वदधिकः ᵛन जातः। धनवान् रक्षकः स्तुत्यश्च त्वत्तोऽन्यो न जज्ञ इति॥ ॥ १७॥

'एदु मध्वः' इति तृचः पूर्वोक्ते ब्राह्मणाच्छंसिशस्त्रे वैकल्पिकोऽनुरूपः। सूत्रितं च— 'एदु मध्वो मदिन्तरमेतो न्विन्द्रं स्तवाम सखायः' (आश्व. श्रौ. ७. ८) इति॥

**एदु॒ मध्वो॑ म॒दिन्त॑रं सि॒ञ्च वा॑ध्वर्यो॒ अन्ध॑सः। ए॒वा हि वी॒रः स्तव॑ते स॒दावृ॑धः॥ १६॥**

आ। इत्। ऊँ इति॑। मध्व॑ः। म॒दिन्ऽत॑रम्। सि॒ञ्च। वा॒। अध्व॒र्यो॒ इति॑। अन्ध॑सः।
ए॒व। हि। वी॒रः। स्तव॑ते। स॒दाऽवृ॑धः॥ १६॥

हे ᵛअध्वर्यो अध्वरस्य नेतर्ऋत्विक् ᵛमध्वः मदकरस्य ᵛअन्धसः सोमलक्षणस्यान्नस्य ᵛमदिन्तरम् अत्यर्थं मादयितृतमं सोमरसमेव ᵛआ ᵛसिञ्च इन्द्रार्थमभिषुणु। ᵛइदु इत्यवधारणे। ᵛवीरः समर्थः ᵛसदावृधः सर्वदा हविर्भिर्वर्धनीयः। यद्वा सर्वदा स्वबलस्य वर्धकोऽयम् ᵛएव इन्द्रः ᵛस्तवते ᵛहि स्तोत्रशस्त्रादिभिः स्तूयते खलु। स्तुतायेन्द्राय सोमो दातव्यः। तस्मादा सिञ्चेति समन्वयः॥

---

१. घ-भ२—'मिंद्रायेंद्रार्थं। २. भ—संबन्धिनीं हे इंद्र। ३. घ-भ—न जातः। ४. ज्ञ-त१-४-य—एव यथा; ग२—एव तथा।

**इन्द्रं स्थातर्हरीणां नकिष्टे पूर्व्यस्तुतिम् । उदानंश शवसा न भन्दना ॥ १७ ॥**

इन्द्र । स्थातः । हरीणाम् । नकिः । ते । पूर्व्यऽस्तुतिम् ।

उत् । आनंश । शवसा । न । भन्दना ॥ १७ ॥

हे ^v^हरीणां ^v^स्थातः अश्वानामधिष्ठातः ^v^इन्द्र ^v^ते त्वदीयां ^v^पूर्व्यस्तुतिं पूर्वैर्ऋषिभिः कृतां स्तुतिम्। उपलक्षणमेतत्। इदानींतनैः क्रियमाणामपि स्तुतिं ^v^नकिः न कश्चित् ^v^शवसा बलेन ^v^उदानंश व्याप्नोति । 'अशू व्याप्तौ' । लिटि 'अश्नोतेश्च' इति नुट्। छान्दसो नुम्। कश्चिन्नातिक्रामतीत्यर्थः । किंच ^v^भन्दना सर्वैः प्रार्थनीयत्वात् पूजनीयेन धनेन स्तुत्या वा त्वदीयां स्तुतिं ^v^न कश्चिदतिक्रामति । त्वत्तो बलवान् धनी स्तुत्यो वान्यो नास्तीत्यर्थः ॥

**तं वो वाजानां पतिमहूमहि श्रवस्यवः । अप्रायुभिर्यज्ञेभिर्वावृधेन्यम् ॥ १८ ॥**

तम् । वः । वाजानाम् । पतिम् । अहूमहि । श्रवस्यवः ।

अप्रायुऽभिः । यज्ञेभिः । ववृधेन्यम् ॥ १८ ॥

^v^अप्रायुभिः कर्मसु अप्रमाद्यन्मनुष्ययुक्तैः । अथवा । अप्रमत्ता एकत्र स्थित्वैव कर्म कुर्वन्ति । कर्म प्रारभ्य नान्यं देशं गच्छन्तीत्यर्थः । एवंविधमनुष्ययुक्तैः ^v^यज्ञेभिः यज्ञैः एतादृशमनुष्यैर्यज्ञैर्वा ^v^वावृधेन्यं वर्धनीयं ^v^वाजानाम् अन्नानां ^v^पतिं स्वामिनं ^v^वः षष्ठ्यर्थे चतुर्थी संबन्धेन युष्मदीयं ^v^तं तादृशमिन्द्रं ^v^श्रवस्यवः वयमन्नकामाः सन्तः ^v^अहूमहि आह्वयामः । ह्वयतेर्लुङि 'बहुलं छन्दसि' इति संप्रसारणम् ॥

पूर्वोक्त एव शस्त्रे 'एतो न्विन्द्रम्' इत्येतौ तृचौ वैकल्पिकौ स्तोत्रियानुरूपौ । सूत्रितं च— 'एतो न्विन्द्रं स्तवाम सखायः स्तुहीन्द्रं व्यश्ववत्' (आश्व. श्रौ. ७. ८) इति ॥

**एतो न्विन्द्रं स्तवाम सखायः स्तोम्यं नरम् । कृष्टीर्यो विश्वा अभ्यस्त्येक इत् ॥ १९ ॥**

एतो इति । नु । इन्द्रम् । स्तवाम । सखायः । स्तोम्यम् । नरम् ।

कृष्टीः । यः । विश्वाः । अभि । अस्ति । एकः । इत् ॥ १९ ॥

हे ^v^सखायः समानख्याना मित्रभूता वा हे ऋत्विजः ^v^नु क्षिप्रम् ^v^एतो आगच्छतैव । किमर्थं तदाह । ^v^स्तोम्यं स्तोमार्हं ^v^नरं सर्वस्य नेतारं तम् ^v^इन्द्रं ^v^स्तवाम स्तोत्रं करवाम । ^v^यः इन्द्रः ^v^एक ^v^इत् एकोऽसहाय[1] एव सन् ^v^विश्वाः सर्वाः ^v^कृष्टीः शत्रुसेनाः ^v^अभ्यस्ति अभिभवति । तं स्तवामेति शेषः ॥

**अगोरुधाय गविषे द्युक्षाय दस्म्यं वचः । घृतात्स्वादीयो मधुनश्च वोचत ॥ २० ॥**

अगोऽरुधाय । गोऽइषे । द्युक्षाय । दस्म्यम् । वचः ।

घृतात् । स्वादीयः । मधुनः । च । वोचत ॥ २० ॥

हे ऋत्विजः ^v^अगोरुधाय । गाः स्तुतीः रुणद्धीति गोरुधः । न गोरुधोऽगोरुधः । ता न विनाशयत्यादरेण शृणोतीत्यर्थः । तादृशाय अत एव ^v^गविषे स्तोत्राणीच्छते ^v^द्युक्षाय दीप्यमानायेन्द्राय ^v^दस्म्यं दर्शनीयं[2] ^v^घृतात् स्वादुतरादाज्यात् ^v^मधुनश्च ^v^स्वादीयः अतिशयेन स्वादुभूतं[3] ^v^वचः स्तोत्ररूपं वाक्यं ^v^वोचत ब्रूत । ऋत्विग्भिः कृतं कर्म यजमानोऽपि कृतवान् भवतीति मदीयमिन्द्रविषयं वचो

---

१. न-भ—एकाकी असहाय । २. ख-ज्ञ-त१-२-न-भ—अत्यंतदर्शनीयं । ३. घ—स्वादुतरं ।

घृतान्मधुनश्च स्वादुतरं भवत्वित्याशास्ते । तदाह[1] भगवानाश्वलायनः—'वच एव म इदं घृताच्च मधुनश्च स्वादीयोऽस्ति प्रीतिः स्वादीयोऽस्त्वित्येव तदाह' (आश्व. गृ. १. १. ५) इति ॥ ॥ १८ ॥

यस्यामितानि वीर्या३ न राधः पर्येतवे । ज्योतिर्न विश्वमभ्यस्ति दक्षिणा ॥२१॥

यस्य । अमितानि । वीर्या । न । राधः । परिऽएतवे ।
ज्योतिः । न । विश्वम् । अभि । अस्ति । दक्षिणा ॥ २१ ॥

यस्य इन्द्रस्य वीर्या वीर्याणि वृत्रहननादिलक्षणानि[2] सामर्थ्यानि अमितानि अस्य इयन्ति सामर्थ्यानि[3] नान्यानीति परिमितानि न भवन्ति । यद्वा । 'मीङ् हिंसायाम्' । छान्दसो ह्रस्वः । शत्रुभिरहिंसितानि भवन्ति । तथा यस्येन्द्रस्य राधः धनं पर्येतवे[4] शत्रुभिः परिगन्तुं प्राप्तुं शक्यं न भवति । अत एव यस्य[5] दक्षिणा धनदानं विश्वमभ्यस्ति सर्वं स्तोतृजनमभिभवति । तत्र दृष्टान्तः । ज्योतिर्न । ज्योतिषामयनत्वाज्ज्योतिरन्तरिक्षम् । यथान्तरिक्षं सर्वलोकं पिधाय तिष्ठति तद्वत् स्तोतृजनं धनदानेन पिधत्त इत्यर्थः[6] ॥

स्तुहीन्द्रं व्यश्ववदनूर्मिं वाजिनं यमम् । अर्यो गयं मंहमानं वि दाशुषे ॥२२॥

स्तुहि । इन्द्रम् । व्यश्वऽवत् । अनूर्मिम् । वाजिनम् । यमम् ।
अर्यः । गयम् । मंहमानम् । वि । दाशुषे ॥ २२ ॥

हे विश्वमनः अनूर्मिम् । ऊर्मिर्हिंसाकर्मा । कैश्चिदप्यहिंस्यम् । अथवा शत्रुभिरगन्तव्यम्[7] । अत एव वाजिनं बलवन्तं यमं स्तोतृभिः[8] सुनियतमेतादृशम् इन्द्रं स्तुहि । स्तोत्रे दृष्टान्तः । व्यश्ववत् । यथा व्यश्वो[9] विश्वमनसः पिता इन्द्रमस्तौत् तद्वत् स्तुहीत्यर्थः । स्तुतश्चेत् अर्यः स्वामी इन्द्रः दाशुषे हविर्दत्तवते यजमानाय मंहमानं पूज्यमानं गयं धनम् । यद्वा । देवानां पूजायै गयं गृहम् । गृहमस्ति चेत् देवा हविर्भिः पूज्यन्ते । तादृशं गृहं वितरति । तस्मात् त्वं धनगृहलाभाय स्तुहीत्यर्थः ॥

एवा नूनमुप स्तुहि वैयश्व दशमं नवम् । सुविद्वांसं चर्कृत्यं चरणीनाम् ॥२३॥

एव । नूनम् । उप । स्तुहि । वैयश्व । दशमम् । नवम् ।
सुऽविद्वांसम् । चर्कृत्यम् । चरणीनाम् ॥ २३ ॥

हे वैयश्व व्यश्वस्य पुत्र विश्वमनः चरणीनां[10] मनुष्याणां देहे स्थितानां नवानां प्राणानां दशमं दशसंख्यापूरकम् । तत्र मन्त्रः—'नव वै पुरुषे प्राणा मनुष्येषु वर्तमाना इन्द्रस्तेषां दशधा भवतीन्द्रस्यात्मानं दशधा चरन्तम्' इति । एतादृशमत एव नवं स्तुत्यं सुविद्वांसम्[11] अन्तर्यामित्वात्

---

१. ग-भ-तथाह । २. घ-°रूपाणि । ३. न-भ-बलानि । ४. त१-२-य-न पर्येतवे; भ२-न पद्यर्थतवे । ५. ज्ञ-त१-२-अस्य । ६. ख-ग-त-न-भ-श-इत्यर्थः । यद्वा येन दत्तं धनं सर्वं शत्रुजनमभिभवति येन (एतत्-ग) दत्तं ('दत्तं' नास्ति-ग-न-भ) धनमादाय असतः (मद्दतः-ग-भ; सतः-त३; सर्वतः-भ३) शत्रूनभिभवतीत्यर्थः (°भवतीत्यर्थः-ख-त-भ३-श)। ७. ग-°रनभिगन्तव्यं । ८. ख-स्तुतिभिः सुनियंतव्य°; ग-न-भ-अर्थिभिः स्तोतृभिश्च नियंतव्य°; घ-त१-२-स्तुतिभिः स्तोतृभिः सुनियंतव्य°; श-अर्थिभिः स्तोतृभिः सुनियंतव्य° । ९. ग-व्यश्वर्षिस्तव; घ-व्यश्वो नाम तव; न-भ१-२-व्यश्वो वामिति व; भ३-व्यश्वो वाग्मी तव । १०. त-न-भ-चर्षणीनां । ११. ख-शुचिइंद्रशसं; त-न-शुचिइंद्रप्रशसं; भ-शुचिप्रशंस्यं; श-सुविद्वांसं प्रशंसंतं ।

सुष्टु सर्वं जानन्तं ᵛचर्कृत्यं भूयो भूयः कार्येषु सर्वैर्नमस्कर्तव्यमेवंविधमिन्द्रम् ᵛएव ᵛनूनम् इदानीम् ᵛउप ᵛस्तुहि समीपे स्तुहि ॥

**वेत्था हि निर्ऋतीनां वज्रहस्त परिवृजम् । अहरहः शुन्ध्युः परिपदामिव ॥२४॥**

वेत्थ । हि । निःऽऋतीनाम् । वज्रऽहस्त । परिऽवृजम् ।

अहःऽअहः । शुन्ध्युः । परिपदाम्ऽइव ॥ २४ ॥

इदानीमृषिरिन्द्रं संबोध्याह । हे ᵛवज्रहस्त वज्रयुक्तहस्तेन्द्र ᵛनिर्ऋतीनाम् उपद्रवकारिणां रक्षसां[1] ᵛपरिवृजं परिवर्जनम् । हिरवधारणे । त्वमेव ᵛवेत्थ जानीषे । तत्र दृष्टान्तः । ᵛअहरहः ᵛशुन्ध्युः । अस्मिन्नुदिते सति ब्राह्मणा आत्मीयं कर्म कृत्वा शुद्धा भवन्तीति शोधनहेतुत्वात् शुन्ध्युरादित्यः । ᵛपरिपदामिव परितो यजमानानामिव । यद्वा । परिपदां समानाधिकरणः । परितः पततां पक्षिणां वर्जनं स्वस्थानत्यागमहरहः प्रतिदिवसं यथा वेत्ति । उदिते सूर्ये पक्षिणः स्वस्थानं परित्यज्य सर्वतो गच्छन्ति खलु । एवं त्वयीन्द्रे स्वबलेन प्रकाशमाने सति शत्रवः स्वपुरादि त्यक्त्वा पलायन्त इत्यर्थः ॥

**तदिन्द्राव आ भर येना दंसिष्ठ कृत्वने । द्विता कुत्साय शिश्नथो नि चोदय॥२५॥**

तत् । इन्द्र । अवः । आ । भर । येन । दंसिष्ठ । कृत्वने ।

द्विता । कुत्साय । शिश्नथः । नि । चोदय ॥ २५ ॥

हे ᵛइन्द्र ᵛतत् ᵛअवः तद्रक्षणमस्मभ्यम् ᵛआ ᵛभर । हे ᵛदंसिष्ठ अत्यन्तं दर्शनीय यद्वा शत्रूणामुपक्षपयितरिन्द्र ᵛकृत्वने कर्म कुर्वते यजमानाय तदर्थं ᵛयेन पालनमकृथाः तद्रक्षणम् आभरेति समन्वयः । किंच ᵛकुत्साय कुत्सनामकाय राजर्षये ᵛद्विता द्विधा द्विप्रकारेण ᵛशिश्नथः त्वं शत्रूनवधीः । तस्मै द्वैधं[2] पालनमकार्षीरित्यर्थः । तद्रक्षणमस्मभ्यं[3] ᵛनि ᵛचोदय नितरामत्यर्थं प्रेरय । यद्वा कृत्वन इति सामान्येनोक्त्वा विशेषेण तदेवाह कुत्सायेत्यादि । शेषं पूर्ववत् ॥ ॥ १९ ॥

**तमु त्वा नूनमीमहे नव्यं दंसिष्ठ सन्यसे ।**
**स त्वं नो विश्वा अभिमातीः सक्षणिः ॥ २६ ॥**

तम् । ऊँ इति । त्वा । नूनम् । ईमहे । नव्यम् । दंसिष्ठ । सन्यसे ।

सः । त्वम् । नः । विश्वाः । अभिऽमातीः । सक्षणिः ॥ २६ ॥

हे ᵛदंसिष्ठ अतिशयेन दर्शनीयेन्द्र ᵛनव्यं स्तोतृभिः स्तोतव्यं ᵛतमु तादृशमेव ᵛत्वा त्वां ᵛनूनम् इदानीम् ᵛईमहे वयं याचामहे । किमर्थम् । ᵛसंन्यसे । 'असु क्षेपणे'। भावे क्विप् । संन्यासार्थं याचामह इति शेषः । ᵛसः तादृशः ᵛत्वं ᵛनः अस्माकं ᵛविश्वाः सर्वाः ᵛअभिमातीः शत्रुसेनाः ᵛसक्षणिः । सहेः सनिप्रत्ययः । सहनशीलोऽभिभवनशीलो भवसि ॥

**य ऋक्षादंहसो मुचद्यो वार्यात्सप्त सिन्धुषु । वधर्दासस्य तुविनृम्ण नीनमः ॥२७॥**

यः । ऋक्षात् । अंहसः । मुचत् । यः । वा । आर्यात् । सप्त । सिन्धुषु ।

वधः । दासस्य । तुविऽनृम्ण । नीनमः ॥ २७ ॥

---

१. ज्ञ-भ-राक्षसादीनां । २. ग-न-भ-श-द्विविधं । ३. ग-त-य-°मप्यस्मभ्यं । 

पूर्वोऽर्धर्चः परोक्षकृतः । यः इन्द्रः ऋक्षात् । ऋन् मनुष्यान् क्षणोति । क्षणोतेरौणादिको डप्रत्ययः । तस्मात् रक्षसो जातात् अंहसः पापरूपादुपद्रवात् मुचत् मुञ्चति । राक्षस एनं न बाधते किं पुनस्तं हन्तीत्यर्थः । अपि[1] च[1] यः इन्द्रः सप्त सिन्धुषु गङ्गाद्यासु नदीषु । यद्वा । सप्त सर्पणशीलासु सिन्धुषु । तत्कूलेष्वित्यर्थः । गङ्गायां घोष इतिवत् । तेषु वर्तमानानां स्तोतॄणाम् आर्यात् धनादिकं प्रेरयेत् । 'ऋ गतिप्रापणयोः' । आशीर्लिङि 'गुणोऽर्तिसंयोगाद्योः' (पा. सू. ७. ४. २९) इति गुणः । 'बहुलं छन्दसि' इति लिङ्यप्याडागमः । अथ प्रत्यक्षः । हे तुविनृम्ण बहुधनेन्द्र दासस्य उपक्षपयितुरसुरस्य वधः हननसाधनमायुधं नीनमः नमय ॥

**यथा वरो सुषाम्णे सनिभ्य आवहो रयिम् । व्यश्वेभ्यः सुभगे वाजिनीवति ॥२८॥**

यथा । वरो इति । सुऽसाम्ने । सनिऽभ्यः । आ । अवहः । रयिम् ।
विऽअश्वेभ्यः । सुऽभगे । वाजिनीऽवति ॥ २८ ॥

अनेन तृचेन वरोर्दानं स्तूयते । हे वरो वरुनामक राजन् सुषाम्णे सुसाम्ने सुषामाख्यं राजानं स्वपितरमुद्दिश्य तस्योत्तमलोकप्राप्त्यर्थं सनिभ्यः भिक्षमाणेभ्यः आ कोशादाहृत्य रयिं धनं यथा पुरा अवहः प्रापितवानसि अत एवमिदानीं व्यश्वेभ्यः व्यश्वपुत्रेभ्यः[2] अस्मभ्यं धनमावह । वाजिनीवतीति पदलिङ्गादियमुषस्या । अयं तृचोऽप्युषस्य इति शौनकेनोक्तं—'यथा वरो सुषाम्ण इत्युत्तमस्त्वौषसस्तृचः' इति । हे सुभगे शोभनधनयुक्ते वाजिनीवति अन्नवति । मतुबनुवादार्थः । यद्वा । वाजो वाजनं गमनमस्यास्तीति वाजिन्यन्नम् । तद्वति हे उषः त्वं चास्मभ्यं धनं प्रयच्छ । वरोर्बहुधनदानात्तस्य दानस्तुतिः । यद्वा । विश्वमना ऋषिर्वरुं संबोध्याह । हे सुभगे शोभनधने वाजिनीवति अन्नवति हे उषः यथा त्वं सुषाम्णे सुषामनाम्ने मम पित्रे धनं दत्त्वा तेनैव सुषाम्णा सनिभ्यो याचमानेभ्यो धनं यथा प्रापितवत्यसि तेन यथा दानमकारयः एवं मह्यमपि धनं दत्त्वा व्यश्वेभ्यः । पूजायां बहुवचनम् । व्यश्वपुत्राय विश्वमनसे धनं प्रापयेति मयापि दानं करोषि । हे वरो उषसमेवं वदेत्यृषिराह ॥

**आ नार्यस्य दक्षिणा व्यश्वाँ एतु सोमिनः । स्थूरं च राधः शतवत्सहस्रवत् ॥२९॥**

आ । नार्यस्य । दक्षिणा । विऽअश्वान् । एतु । सोमिनः ।
स्थूरम् । च । राधः । शतऽवत् । सहस्रऽवत् ॥ २९ ॥

अनया धनमृषिरादत्तवानित्याह । नार्यस्य । नरहितो नर्यः । तस्यापत्यं नार्यः । तस्मात् संबन्धमात्रे 'तस्येदम्' इत्यण् । तस्य सोमिनः सोमवतो यजमानस्य । यद्वा । व्यश्वानां विशेषणम् । तादृशस्य वरोः दक्षिणा दानं सोमवतः व्यश्वान् व्यश्वपुत्रानस्मान् आ एतु आगच्छतु[3] । किंच स्थूरं स्थूलं शतवत्सहस्रवत् शतसहस्रधनयुक्तं राधः अन्नं च अस्मानागच्छतु ॥

**यत्त्वा पृच्छादीजानः कुहया कुहयाकृते । एषो अपश्रितो वलो गोमतीमव तिष्ठति ॥३०॥**

यत् । त्वा । पृच्छात् । ईजानः । कुहया । कुहयाऽकृते ।
एषः । अपऽश्रितः । वलः । गोऽमतीम् । अव । तिष्ठति ॥ ३० ॥

इदानीमुषसं संबोध्याभिधीयते । हे कुहयाकृते स वरुः कुह कुत्र तिष्ठतीत्येतदिच्छया[4] अभिलक्षणप्रवृत्तैर्जिज्ञासुभिः पुरस्कृते । कुहशब्दात् क्यच् । एतादृशे हे उषः त्वा त्वां यत् यदा

---

१. ग–योपि वा; घ–वा अपि च; न-भ१-३–व्येपि च; भ३–योपि च । २. ग-भ३–व्यश्वस्य°; त-न-भ१–स्वव्यश्व°; य–सुव्यश्व° । ३. ख-घ-त-न-भ२-य-श–आगच्छति; भ१–अगच्छती । ४. भ–°त्येतयेच्छया ।

कश्चित् ᵛपृच्छात् पृच्छति ᵛईजानः इष्टवान् वरुः ᵛकुहया क तिष्ठतीति यदा पृच्छति तदानीम् ᵛअपश्रितः सर्वैराश्रितः। यद्वा। विवृतद्वारः। यदा याचमाना आगच्छन्ति तदा दौवारिका न प्रतिबध्नन्तीत्यर्थः। तादृशः ᵛवलः वरः स्वबलेनावारकः शत्रूणाम्। यद्वा। भिक्षूणां धनादिप्रदानेनावरिता। ᵛएषो एष वरुः ᵛगोमतीम् एतन्नामिकां नदीम्। 'कालाध्वनोः' इति द्वितीया। तस्यास्तीरे ᵛअव ᵛतिष्ठति इति तदानीं त्वं कथयसि ॥ ॥ २० ॥

'ता वाम्' इति चतुर्विंशत्यृचं पञ्चमं सूक्तम्। अत्रेयमनुक्रमणिका—'ता वां चतुर्विंशतिर्मैत्रावरुणं दशम्याद्यास्तिस्रो वैश्वदेव्य उपान्त्योष्णिग्गर्भा' इति। व्यश्वपुत्रो विश्वमना ऋषिः। उष्णिक्[1] छन्दः। उपान्त्या[2] उष्णिग्गर्भा 'षड्‌सतैकादशा उष्णिग्गर्भा' (अनु. ४. ३) इति तल्लक्षणोपेतत्वात्। दशम्येकादशीद्वादश्यो वैश्वदेव्योऽवशिष्टानां मित्रावरुणौ देवता। सूक्तविनियोगो लैङ्गिकः ॥

**ता वां विश्वस्य गोपा देवा देवेषु यज्ञिया। ऋतावाना यजसे पूतदक्षसा ॥ १ ॥**

ता। वाम्। विश्वस्य। गोपा। देवा। देवेषु। यज्ञिया। ऋतऽवाना। यजसे। पूतऽदक्षसा ॥ १ ॥

हे मित्रावरुणौ ᵛविश्वस्य सर्वस्य लोकस्य ᵛगोपा गोपायितारौ ᵛदेवा देवौ द्योतनशीलौ[3] ᵛदेवेषु[4] मध्ये ᵛयज्ञिया यज्ञार्हौ ᵛता तौ तादृशौ ᵛवां युवां हविष्प्रदानार्थं यजमानं भजथः। अत एव हे विश्वमनः ᵛऋतावाना ऋतावानौ सत्यवन्तौ यज्ञवन्तौ वा पूतदक्षसौ शुद्धबलौ। आवां बलवन्ताविति वचनमात्रेण बलवन्तौ न भवतः किंतु यथार्थत्वेन सामर्थ्यवन्तौ[4]। मित्रावरुणौ ᵛयजसे हविर्भिः पूजयसि ॥

**मित्रा तना न रथ्या॒ वरुणो यश्च सुक्रतुः। सनात्सुजाता तनया धृतव्रता ॥ २ ॥**

मित्रा। तना। न। रथ्या। वरुणः। यः। च। सुऽक्रतुः।
सनात्। सुऽजाता। तनया। धृतऽव्रता ॥ २ ॥

ᵛसुक्रतुः शोभनकर्मा ᵛयः ᵛवरुणः सुकर्मा ᵛमित्रा ᵛच मित्रावरुणौ। कीदृशौ। ᵛतना। तन्वन्ति मुकुटकटकादिनेति तनानि धनानि। नश्चार्थे। धनानि च ᵛरथ्या रथ्यौ नेतारौ। यद्वा। धनानि कर्मणः कर्त्रपेक्षत्वात् प्रयच्छन्ताविति संबध्यते। तादृशौ रथ्यौ रथवन्तौ ᵛसनात् चिरादेव ᵛसुजाता सुजातौ शोभनजन्मानौ। तदेवाह। ᵛतनया तनयौ अदितेः पुत्रौ ᵛधृतव्रता धृतव्रतौ धृतकर्माणौ ता यजस इति पूर्वेण समन्वयः ॥

**ता माता विश्ववेदसासुर्याय प्रमहसा। मही जजानादितिर्ऋतावरी ॥ ३ ॥**

ता। माता। विश्वऽवेदसा। असुर्याय। प्रऽमहसा। मही। जजान। अदितिः। ऋतऽवरी ॥ ३ ॥

अदितेस्तनयत्वमेव स्फुटयति। ᵛविश्ववेदसा विश्ववेदसौ सर्वधनौ। यद्वा। विश्वानि स्थावरजङ्गमात्मकानि सर्वाणि विदतुर्जानीत इति विश्ववेदसौ। ᵛप्रमहसा प्रमहसौ प्रकृष्टतेजस्कौ ᵛता तौ तादृशौ मित्रावरुणौ ᵛमही महती ᵛऋतावरी सत्यवती ᵛमाता देवमाता ᵛअदितिः ᵛजजान जनयामास। किमर्थम्। ᵛअसुर्याय असुराणां हन्त्रे बलाय। असुरान् हन्तुमुत्पादितवतीत्यर्थः ॥

**महान्ता मित्रावरुणा सम्राजा देवावसुरा। ऋतावानावृतमा घोषतो बृहत् ॥ ४ ॥**

---

१. ख-ङ-त१-२-भ—पूर्ववदुष्णिक्। २. त१-२-भ—त्रयोविंशी। ३. त-न-भ—द्योतमानशीलौ। ४. ग—युवां बलवन्ताविति वचनमात्रेण बलवन्तौ न भवतः। किंतु यज्ञार्थत्वेन सामर्थ्यवन्तौ यज्ञवन्तौ वा पूतदक्षसौ शुद्धबलौ युवां बलवन्तौ इति वचनमात्रेण.।

म॒हान्ता॑ । मि॒त्रावरु॑णा । स॒म्ऽराजा॑ । दे॒वौ । असु॑रा ।
ऋ॒तऽवा॑नौ । ऋ॒तम् । आ । घो॒ष॒तः॒ । बृ॒हत् ॥ ४ ॥

ᵛमहान्ता गुणाधिक्येन महान्तौ ᵛसम्राजा सम्राजौ सम्यग्दीप्यमानौ[1] ᵛअसुरा असुरौ बलवन्तौ । यद्वा । सर्वान्तर्यामितया प्रेरकौ । ऋतावाना सत्यवन्तौ मित्रावरुणौ[2] ᵛदेवौ ᵛबृहत् स्तोत्रशस्त्रादिना महान्तम् ᵛऋतं यज्ञम् ᵛआ ᵛघोषतः स्वदीप्त्या प्रकाशयतः । घुषेर्लेटि रूपम् ॥

**नपा॑ता॒ शव॑सो म॒हः सू॒नू दक्ष॑स्य सु॒क्रतू॑ । सृ॒प्रदा॑नू इ॒षो वास्त्वधि॑ क्षितः ॥ ५ ॥**

नपा॑ता । शव॑सः । म॒हः । सू॒नू इति॑ । दक्ष॑स्य । सु॒क्रतू॒ इति॑ सु॒ऽक्रतू॑ ।
सृ॒प्रदा॑नू॒ इति॑ सृ॒प्रऽदा॑नू । इ॒षः । वास्तु॑ । अधि॑ । क्षि॒तः॒ ॥ ५ ॥

ᵛमहः महतः ᵛशवसः बलस्य ᵛनपाता नपातौ पौत्रौ । बलत[3] उत्पादिताविति[3] बलस्य पौत्रौ । तादृशौ ᵛदक्षस्य । 'दक्ष वृद्धौ शीघ्रार्थे च' इति दक्षो वेगः । तस्य ᵛसूनू पुत्रौ । बलाद्वेग इति तयोः पुत्रत्वम् । तौ ᵛसुक्रतू शोभनकर्माणौ ᵛसृप्रदानू प्रसृतधनादिदानौ मित्रावरुणौ ᵛइषः अन्नस्य ᵛवास्तु[4] निवासस्थाने ᵛअधि ᵛक्षितः अधिवसतः । 'अधिशीङ्॰' इति वास्तुनः कर्मसंज्ञा । क्षयतेः[5] लटि छान्दसो विकरणस्य लुक् ॥ ॥ २१ ॥

**सं या दानू॑नि ये॒मथु॑र्दि॒व्याः पार्थि॑वी॒रिषः॑ । नभ॑स्वती॒रा वां॑ चरन्तु वृ॒ष्टयः॑ ॥ ६ ॥**

सम् । या । दानू॑नि । ये॒मथुः॑ । दि॒व्याः । पार्थि॑वीः । इषः॑ ।
नभ॑स्वतीः । आ । वा॒म् । च॒र॒न्तु॒ । वृ॒ष्टयः॑ ॥ ६ ॥

हे[6] मित्रावरुणौ यौ युवां ᵛदानूनि देयानि धनानि ᵛसं ᵛयेमथुः अस्मासु संयच्छतं तथा ᵛदिव्याः दिव्यानि दिवि भवानि ᵛपार्थिवीः पृथिव्यामुत्पन्नानि ᵛइषः अन्नानि संयच्छतम् । वृष्ट्यभावे कथमन्नं लभ्यत इति चेत् तदुच्यते । ᵛनभस्वतीः उदकवत्यः ᵛवृष्टयः तादृशौ ᵛवां युवाम् ᵛआ ᵛचरन्तु उपतिष्ठन्तु । यदा वृष्ट्यवेला तदा वर्षतमित्यर्थः[6] ॥

**अधि॒ या बृ॑ह॒तो दि॒वो॒३॑ऽभि यू॒थेव॒ पश्य॑तः । ऋ॒तावा॑ना स॒म्राजा॒ नम॑से हि॒ता ॥ ७ ॥**

अधि॑ । या । बृ॒ह॒तः । दि॒वः । अ॒भि । यू॒थाऽइ॑व । पश्य॑तः ।
ऋ॒तऽवा॑ना । स॒म्ऽराजा॑ । नम॑से । हि॒ता ॥ ७ ॥

ᵛया यौ मित्रावरुणौ ᵛबृहतो ᵛदिवः द्योतमानान् देवान् ᵛअधि ᵛपश्यतः । तत्र दृष्टान्तः । ᵛयूथेव । यथा वृषभो गोयूथानि रन्तुम् ᵛअभि अभिमुखं पश्यति तद्वदेतौ स्ववीर्येणासुरान् हत्वा देवान् मोदयितुं पश्यत इत्यर्थः । कीदृशौ । ᵛऋतावाना सत्यवन्तौ ᵛसम्राजा सम्राजौ सम्यग्दीप्यमानौ ᵛनमसे हविषे ᵛहिता हितौ प्रियौ पश्यत इति ॥

**ऋ॒तावा॑ना॒ नि षे॑दतुः॒ साम्रा॑ज्याय सु॒क्रतू॑ । धृ॒तव्र॑ता क्ष॒त्रिया॑ क्ष॒त्रमा॑शतुः ॥ ८ ॥**

---

१. ग–सम्यग्भ्राजमानौ । २. घ–मित्रावरुणा मित्रावरुणौ । ३. ग–बलेनोत्पा॰; त२–बलतोत्पा॰; भ-श–बलवतोत्पा॰ । ४. भ२-३–वास्तु वास्तुनि । ५. भ–क्षी(? क्षि)यतेः । ६. ग–यौ युवां दानूनि देयानि धनानि सं येमथुः सम्यक् प्रयच्छथः दिव्याः पार्थिवीरिषः दिव्यानि पार्थिवानि चान्नानि तव युवां नभस्वतीरुदकवत्यः वृष्टयः आचरन्तूपतिष्ठन्तु ।

ऋतऽवाना । नि । सेदतुः । साम्ऽराज्याय । सुक्रतू इति सुऽक्रतू ।

धृतऽव्रता । क्षत्रिया । क्षत्रम् । आशतुः ॥ ८ ॥

ᵛऋतावाना ऋतावानौ सत्यवन्तौ ᵛसुक्रतू शोभनकर्माणौ सुप्रज्ञौ वा मित्रावरुणौ ᵛसाम्राज्याय साम्राज्यार्थं ᵛनि ᵛषेदतुः न्यसीदताम् । तथा मन्त्रः —'नि षसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतुः' (ऋ. सं. १. २५. १०) इति । ᵛधृतव्रता धृतव्रतौ धृतकर्माणौ ᵛक्षत्रिया क्षत्रियौ बलवन्तौ ᵛक्षत्रं बलम् ᵛआशतुः आनशाते व्याप्नुत इत्यर्थः ॥

अक्ष्णश्चिद्गातुवित्तरानुल्बणेन चक्षसा । नि चिन्मिषन्ता निचिरा नि चिक्यतुः ॥९॥

अक्ष्णः । चित् । गातुवित्ऽतरा । अनुल्बणेन । चक्षसा ।

नि । चित् । मिषन्ता । निऽचिरा । नि । चिक्यतुः ॥ ९ ॥

ᵛअक्ष्णश्चित् चक्षुषोऽपि पूर्वं ᵛगातुवित्तरा गातुवित्तरावतिशयेन मार्गवेत्तारौ । यद्वा । गातुवित्तरौ गातु गमनशीलं प्राणिजातं चक्षुषोऽपि पूर्वं वेत्तारौ मित्रावरुणौ । कीदृशौ । ᵛनि ᵛमिषन्ता निमिषन्तौ सर्वमुन्मेषयन्तौ स्वस्वकर्मणि ᵛनिचिरा नितरां चिरंतनौ तौ ᵛअनुल्बणेन । उल्बणमिति[1] दुःसहमभेस्तेजः[1] । तद्वददुःसहेन ᵛचक्षसा अहोरात्रयोर्व्यासेन तेजसैव ᵛनि ᵛचिक्यतुः पूजितौ बभूवतुः । ᵛचित् अवधारणे ॥

उत नो देव्यदितिरुरुष्यतां नासत्या । उरुष्यन्तु मरुतो वृद्धशवसः ॥ १० ॥

उत । नः । देवी । अदितिः । उरुष्यताम् । नासत्या । उरुष्यन्तु । मरुतः । वृद्धऽशवसः ॥१०॥

ᵛउत अपि च ᵛदेवी[2] द्योतनशीला ᵛअदितिः मित्रावरुणयोर्माता ᵛनः अस्मान् रक्षतु । ᵛनासत्या नासत्यौ । असत्यमनयोर्नास्तीति नासत्यौ । अश्विनौ च ᵛउरुष्यतां रक्षताम् । उरुष्यतिः कण्ड्वादिः । ᵛवृद्धशवसः वृद्धवेगाः । अतिशयेन वेगवन्त इत्यर्थः । यद्वा वर्धनशीलहविर्लक्षणान्नोपेताः । ᵛमरुतः ᵛउरुष्यन्तु अस्मान् पालयन्तु ॥ ॥ २२ ॥

ते नो नावमुरुष्यत दिवा नक्तं सुदानवः । अरिष्यन्तो नि पायुभिः सचेमहि ॥११॥

ते । नः । नावम् । उरुष्यत । दिवा । नक्तम् । सुऽदानवः ।

अरिष्यन्तः । नि । पायुऽभिः । सचेमहि ॥ ११ ॥

हे ᵛसुदानवः शोभनदाना मरुतः ᵛअरिष्यन्तः केनाप्यहिंसिताः ᵛते तादृशा यूयं ᵛनः अस्मदीयां ᵛनावं यज्ञियां नावं ᵛदिवा ᵛनक्तं च ᵛउरुष्यत पालयत । ततो वयं ᵛपायुभिः युष्मदीयैः पालनैः ᵛनि ᵛसचेमहि नितरां समवेता भवेम ॥

अघ्नते विष्णवे वयमरिष्यन्तः सुदानवे । श्रुधि स्वयावन्त्सिन्धो पूर्वचित्तये ॥१२॥

अघ्नते । विष्णवे । वयम् । अरिष्यन्तः । सुऽदानवे ।

श्रुधि । स्वऽयावन् । सिन्धो इति । पूर्वऽचित्तये ॥ १२ ॥

---

१. न-भ१-श–'मतिदुःसह' । २. त-न-भ–अदितिः देवी ।

पूर्वोऽर्धर्चः परोक्षकृतः । ᵛअरिष्यन्तः[1] पालनवत्त्वात् केनाप्यबाधिताः ᵛवयम् ᵛअघ्नते स्तोतॄणां यष्टॄणां चाहिंसकाय ᵛसुदानवे शोभनदानाय ᵛविष्णवे स्वमहत्त्वेन सर्वव्यापकायैतन्नामकाय देवाय स्तुतिं कुर्मः । अथ प्रत्यक्षः । हे ᵛस्वयावन् । स्वयमेवासहायः सन् दिवि संग्रामे वा यातीति स्वयावान् । ᵛसिन्धो स्तोतॄन् प्रति धनानां स्यन्दनशील विष्णो ᵛपूर्वचित्तये । चित्तिः कर्म । मन्त्रान्तरेऽपि तथा श्रवणात्—'सा चित्तिभिर्नि हि चकार मर्त्यम्' (ऋ. सं. १. १६४. २९) इति । पूर्वं प्रारब्धकर्मणे यजमानाय तदर्थं ᵛश्रुधि अस्माभिः क्रियमाणां स्तुतिं त्वं शृणु ॥

**तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम् । मित्रो यत्पान्ति वरुणो यदर्यमा ॥ १३ ॥**

तत् । वार्यम् । वृणीमहे । वरिष्ठम् । गोपयत्यम् ।
मित्रः । यत् । पान्ति । वरुणः । यत् । अर्यमा ॥ १३ ॥

ᵛवरिष्ठम् उरुतरं ᵛगोपयत्यं सर्वेषां रक्षकं यतैः[2] पालनीयं वा ᵛवार्यं सर्वैर्वननीयं ᵛतत् धनं ᵛवृणीमहे वयं संभजामहे । ᵛयत् धनं ᵛमित्रः सर्वेषां मित्रभूतः ᵛवरुणः शत्रूणां वारयिता ᵛअर्यमा सर्वदा गच्छन् एतन्नामकास्त्रयो देवाः ᵛपान्ति पालयन्ति । तद्धनं वृणीमहे । अस्मदीयस्य धनस्य रक्षका भवन्तीत्यर्थः ॥

**उत नः सिन्धुरपां तन्मरुतस्तदश्विना । इन्द्रो विष्णुर्मीढ्वांसः सजोषसः ॥१४॥**

उत । नः । सिन्धुः । अपाम् । तत् । मरुतः । तत् । अश्विना ।
इन्द्रः । विष्णुः । मीढ्वांसः । सऽजोषसः ॥ १४ ॥

पुनरपि धनरक्षणमेवाशास्ते । ᵛउत अपि च ᵛअपाम् उदकानां ᵛसिन्धुः स्यन्दनशीलः पर्जन्यः ᵛनः अस्मदीयं ᵛतत् धनं रक्षतु । ᵛतत् एव ᵛमरुतः च पालयन्तु । ᵛअश्विना अश्विनौ देवौ तद्धनं पालयताम् । तथा ᵛइन्द्रः ᵛविष्णुः च ᵛमीढ्वांसः कामानां सेक्तार एते सर्वे देवाः ᵛसजोषसः संगताः सन्तोऽस्मदीयं धनं रक्षन्तु । एते देवा अस्मभ्यं धनं दत्वा पालयन्त्वित्यर्थः ॥

**ते हि ष्मा वनुषो नरोऽभिमातिं कयस्य चित् । तिग्मं न क्षोदः प्रतिघ्नन्ति भूर्णयः ॥१५॥**

ते । हि । स्म । वनुषः । नरः । अभिऽमातिम् । कयस्य । चित् ।
तिग्मम् । न । क्षोदः । प्रतिऽघ्नन्ति । भूर्णयः ॥ १५ ॥

ᵛवनुषः वननीयाः संभजनीयाः ᵛनरः नेतारः ᵛते ᵛहि ᵛष्मा ते खलु देवाः ᵛभूर्णयः क्षिप्रगमनाः सन्तः ᵛकयस्य ᵛचित् कस्यचिच्छत्रोः ᵛअभिमातिम् अभिमानं ᵛप्रतिघ्नन्ति प्रतिकूलं यथा भवति तथा हिंसन्ति । तत्र दृष्टान्तः । ᵛतिग्मं ᵛन यथा तिग्मं तीक्ष्णं जवेन गच्छत् ᵛक्षोदः उदकमग्रतः स्थितं वृक्षमुन्मूलयति तद्वत्तस्याभिमानं घ्नन्तीत्यर्थः ॥ ॥ २३ ॥

**अयमेक इत्था पुरूरु चष्टे वि विश्पतिः । तस्य व्रतान्यनु वश्चरामसि ॥ १६ ॥**

अयम् । एकः । इत्था । पुरु । उरु । चष्टे । वि । विश्पतिः ।
तस्य । व्रतानि । अनु । वः । चरामसि ॥ १६ ॥

---

१. न-श—अरिष्यंतो मारुतः; भ१-२—अरिष्यंतो मरुतः । २. ञ-य—सर्वैः; भ२—स्तवैः ।

मित्रस्य कर्माण्याह । <sup>v</sup>विश्पतिः विशां पालयिता अनयोर्मित्रावरुणयोः <sup>v</sup>एकः <sup>v</sup>अयं मित्रः <sup>v</sup>पुरु पुरूणि बहूनि च <sup>v</sup>उरु उरूणि च द्रव्याणि <sup>v</sup>इत्था इत्थं <sup>v</sup>वि <sup>v</sup>चष्टे स्वतेजसा पश्यति । <sup>v</sup>तस्य मित्रस्य <sup>v</sup>व्रतानि कर्माणि[1] <sup>v</sup>वः युष्मदर्थम् <sup>v</sup>अनु <sup>v</sup>चरामसि अनुचरामः । कुर्म इत्यर्थः ॥

अनु पूर्वाण्योक्या साम्राज्यस्य सश्चिम । मित्रस्य व्रता वरुणस्य दीर्घश्रुत् ॥१७॥

अनु । पूर्वाणि । ओक्या । साम्ऽराज्यस्य । सश्चिम ।
मित्रस्य । व्रता । वरुणस्य । दीर्घऽश्रुत् ॥ १७ ॥

<sup>v</sup>साम्राज्यस्य । सम्राजो भावः साम्राज्यम् । साम्राज्यमस्यास्तीति साम्राज्यः । 'अर्श-आदिभ्यः' इत्यच्प्रत्ययः । साम्राज्यवतो वरुणस्य <sup>v</sup>पूर्वाणि[2] पुरातनानि <sup>v</sup>ओक्या । ओको गृहम् । तस्मै हितानि कर्माणि वयं <sup>v</sup>सश्चिम । सश्चतिर्गतिकर्मा । लिटि रूपम् । द्विर्वचनस्य छन्दसि विकल्पितत्वादत्र द्विर्वचनाभावः । तदेवाह । <sup>v</sup>मित्रस्य <sup>v</sup>व्रता व्रतानि कर्माणि च <sup>v</sup>दीर्घश्रुत् । 'सुपां सुलुक्' इति षष्ठ्या लुक् । दीर्घश्रुतोऽतिशयेन प्रसिद्धस्य <sup>v</sup>वरुणस्य व्रतानि च सश्चिमेति ॥

परि यो रश्मिना दिवोऽन्तान्ममे पृथिव्याः । उभे आ पप्रौ रोदसी महित्वा॥१८॥

परि । यः । रश्मिना । दिवः । अन्तान् । ममे । पृथिव्याः ।
उभे इति । आ । पप्रौ । रोदसी इति । महिऽत्वा ॥ १८ ॥

<sup>v</sup>यः मित्रः <sup>v</sup>दिवः <sup>v</sup>पृथिव्याः द्यावापृथिव्योः <sup>v</sup>अन्तान्[3] <sup>v</sup>रश्मिना स्वतेजसा <sup>v</sup>परि <sup>v</sup>ममे परिमिनोति । तयोः पर्यन्तान् स्वरश्मिना भासयतीत्यर्थः । स एव <sup>v</sup>उभे <sup>v</sup>रोदसी द्यावापृथिव्यौ <sup>v</sup>महित्वा स्वमहिम्ना <sup>v</sup>आ <sup>v</sup>पप्रौ आ समन्तात् पूरयति ॥

उदु ष्य शरणे दिवो ज्योतिरयंस्त सूर्यः । अग्निर्न शुक्रः समिधान आहुतः॥१९॥

उत् । ऊँ इति । स्यः । शरणे । दिवः । ज्योतिः । अयंस्त । सूर्यः ।
अग्निः । न । शुक्रः । सम्ऽइधानः । आऽहुतः ॥ १९ ॥

<sup>v</sup>सूर्यः सुवीर्यः सुष्ठु सर्वस्य प्रेरकः <sup>v</sup>स्यः स मित्रो वरुणश्च <sup>v</sup>दिवः द्योतमानस्यादित्यस्य <sup>v</sup>शरणे स्थाने नभसि <sup>v</sup>ज्योतिः आत्मीयं तेजः <sup>v</sup>उत् <sup>v</sup>अयंस्त उद्यच्छति । ऊर्ध्वं गमयति । सर्वत्र विस्तारयतीत्यर्थः । यमेर्लुङि रूपम् । ततः सः <sup>v</sup>अग्निर्न <sup>v</sup>शुक्रः अग्निरिव दीप्यमानः <sup>v</sup>समिधानः हविर्भिः समिध्यमानः <sup>v</sup>आहुतः सर्वैराहूतस्तिष्ठति ॥

वचो दीर्घप्रसद्मनीशे वाजस्य गोमतः । ईशे हि पित्वोऽविषस्य दावने ॥ २० ॥

वचः । दीर्घऽप्रसद्मनि । ईशे । वाजस्य । गोऽमतः । ईशे । हि । पित्वः । अविषस्य । दावने ॥२०॥

हे स्तोतः <sup>v</sup>दीर्घप्रसद्मनि दीर्घे प्रततं विस्तृतं सद्म सदनं यस्मिन् यज्ञे <sup>v</sup>वचः मित्रं वरुणं च स्तुहि । वक्तेर्लेट्यडागमः । स वरुणः <sup>v</sup>गोमतः पशुमतः <sup>v</sup>वाजस्य अन्नस्य <sup>v</sup>ईशे ईष्टे स्वामी भवति । केवलं स्वामी न भवति किंतु <sup>v</sup>अविषस्य महतः प्रीतिकारिणः <sup>v</sup>पित्वः अन्नस्य <sup>v</sup>दावने दानाय च <sup>v</sup>ईशे समर्थो भवति । ये स्तोत्रं कुर्वन्ति तेभ्योऽन्नं ददातीत्यर्थः ॥ ॥ २४ ॥

---

१. घ-कर्माणि हे देवाः । २. त-भ-पूर्व्याणि । ३. ख-तर-३-न-अंतरान्; घ-श-अंतान् अंतरान् ।

तत्सूर्यं रोदसी उभे दोषा वस्तोरुप ब्रुवे । भोजेष्वस्माँ अभ्युच्चरा सदा ॥ २१ ॥

तत् । सूर्यम् । रोदसी इति । उभे इति । दोषा । वस्तोः । उप । ब्रुवे ।
भोजेषु । अस्मान् । अभि । उत् । चर । सदा ॥ २१ ॥

सूर्यं सुवीर्यं तत् वारुणं मैत्रं च तेजः उभे रोदसी उभे द्यावापृथिव्यौ च दोषा[1]। 'सुपां सुलुक्' इति द्वितीयाया लुक्। 'कालाध्वनोः॰' इति द्वितीया। रात्रौ वस्तोः[2] अहनि चाहम् उप ब्रुवे उपस्तौमि। त्वं स्तूयमानो वरुणः भोजेषु दातृषु अस्मान् सदा अभ्युच्चर सर्वदाभिमुखं प्रेरय। दातृष्वेतेषां दानेष्वस्मान् पुरोभाविनः कुर्वित्यर्थः॥

ऋज्रमुक्षण्यायने रजतं हरयाणे। रथं युक्तमसनाम सुषामणि ॥ २२ ॥

ऋज्रम् । उक्षण्यायने । रजतम् । हरयाणे । रथम् । युक्तम् । असनाम । सुऽसामनि ॥ २२ ॥

सुषाम्णः पुत्रो वरुर्नाम राजा। स यद्दानं प्रादात् विश्वमनसे तदसौ विश्वमना ऋषिरनया आचष्टे। उक्षण्यायने। उक्षनामा कश्चिद्वरोः पूर्वजः। तस्य गोत्रापत्य उक्षण्शब्दाण्ण्यः। तदन्तात् फक्प्रत्ययः। एतौ छान्दसौ। वृद्धिभावोऽपि 'संज्ञापूर्वको विधिरनित्यः' इति न भवति। तस्य गोत्रापत्ये हरयाणे शत्रुजीवितैश्वर्यादिहरणशीलयाने एतादृशे सुषामणि। बहुवत्पितृशब्देन पुत्रोऽभिधीयते। सुषाम्णः पुत्रे वरौ राजनि ददति सति किमभूत्। ऋज्रम् ऋजुगामिनं रजतं रजतमयं रजतसदृशं वा युक्तम् अश्वाभ्यां युक्तं रथम् असनाम। एतेषां मित्रादीनां[3] प्रसादात् वयं संभक्तवन्तो लब्धवन्तोऽभूम॥

ता मे अश्व्यानां हरीणां नितोशना। उतो नु कृत्व्यानां नृवाहसा ॥ २३ ॥

ता । मे । अश्व्यानाम् । हरीणाम् । निऽतोशना । उतो इति । नु । कृत्व्यानाम् । नृऽवाहसा ॥२३॥

ऋषिः प्रतिगृहीतावश्वावाह[4]। हरीणां हरितवर्णानाम् अश्व्यानाम् अश्वसंघानां मध्ये नितोशना नितोशनौ। तोशतिर्हिंसाकर्मा। शत्रूणामत्यन्तं बाधकृतौ उतो अपि च कृत्व्यानां युद्धकर्मणि कुशलानां च स्वकुशलमिति बाधकौ नृवाहसा नृवाहसौ आयुधनेतॄणां मनुष्याणां वोढारौ ता तावश्वौ मे मह्यं नु क्षिप्रं सौषाम्णेन वरुणा दत्तौ भवेताम्॥

स्मदभीशू कशावन्ता विप्रा नविष्ठया मती। महो वाजिनावर्वन्ता सचासनम् ॥२४॥

स्मदभीशू इति स्मत्ऽअभीशू। कशाऽवन्ता। विप्रा। नविष्ठया।
मती। महः। वाजिनौ। अर्वन्ता। सचा। असनम् ॥ २४ ॥

ऋषिरिदानीं तावश्वावग्रहीषमित्याह। स्मदभीशू। स्मत्सुमत्। उकारलोपश्छान्दसः। शोभनरज्जुयुक्तौ यद्वा शोभनशरीरकान्ती[5] कशावन्ता कशावन्तौ कशायुक्तौ विप्रा विप्रौ मेधाविनामुचितौ। मेधावी स्तोता यथा स्तुत्यं देवं स्तुतिभिः प्रीणयति तद्वत् संतोषकौ। महः महतः सौषाम्णस्य वरोः संबन्धिनौ वाजिनौ शीघ्रगमनवन्तौ अर्वन्ता अर्वन्तौ द्वावश्वौ सचा सह

---

१. ख-त२-३-४-न-भ१-२–दोषां; घ-श–दोषावस्तोः। २. ख-घ-त-न-भ-श–'वस्तोः' नास्ति। ३. न-भ–मित्रादीनां देवानां। ४. भ१–प्रगृहीता॰। ५. ख-त-न-भ–शोभनस्वशरीरकांती; श–शोभनकांती।

युगपदेव ᵛनविष्ठया नवतरया ᵛमती मत्या स्तुत्या मित्रादीन् स्तुवन् ᵛअसनम्। विश्वमना अहं समभजम्। प्रत्यग्रहीषमित्यर्थः ॥ ॥ २५ ॥

'युवोरु षू' इति पञ्चविंशत्यृचं षष्ठं सूक्तम्। अत्रानुक्रमणिका—'युवोः पञ्चाधिका व्यश्वो वाङ्गिरस आश्विनं विंश्याद्या वायव्यास्तत्पूर्वाश्चतस्रो गायत्र्योऽन्त्यैकविंश्यौ च विंश्यनुष्टुप्' इति। आङ्गिरसो व्यश्वो वैयश्वो विश्वमना वा ऋषिः। षोडश्याद्याश्चतस्रो गायत्र्यो विंश्यनुष्टुबेकविंशी पञ्चविंशी च गायत्र्यौ शिष्टाः पूर्ववदुष्णिहः। अश्विनौ देवता। विंश्याद्याः पञ्चर्चो वायुदेवताकाः। प्रातरनुवाक आश्विने क्रतौ औष्णिहे छन्दस्याश्विनशस्त्रे चादितः पञ्चदशर्चः। सूत्रितं च—'युवोरु षू रथं हुव इति पञ्चदशेत्यौष्णिहम्' (आश्व. श्रौ. ४. १५) इति ॥

युवोरु षू रथं हुवे सधस्तुत्याय सूरिषु। अतूर्तदक्षा वृषणा वृषण्वसू ॥ १ ॥

युवोः। ऊँ इति। सु। रथम्। हुवे। सधऽस्तुत्याय। सूरिषु।
अतूर्तऽदक्षा। वृषणा। वृषण्वसू इति वृषण्ऽवसू ॥ १ ॥

हे ᵛअतूर्तदक्षा। 'तॄ प्लवनतरणयोः' इत्यस्य निष्ठायां 'नसत्त॰' इति सूत्रेण निपातितः[1]। परैरहिंसितबलौ ᵛवृषणा वृषणौ कामानां सेक्तारौ अत एव ᵛवृषण्वसू वर्षणशीलधनवन्तावश्विनौ ᵛयुवोः युवयो रथं ᵛसु ᵛहुवे सुष्ठु स्तोत्रादिभिराह्वयामि। किमर्थम्। ᵛसूरिषु प्राज्ञेषु स्तोतृषु मध्ये ᵛसधस्तुत्याय। स्तौतेर्भावे क्यप्। सह भवन्तौ स्तोतुम्। तस्माद्युवयोः शीघ्रगत्यै युष्मद्गमनसाधनरथमेवाह्वयामि ॥

युवं वरो सुषाम्णे महे तने नासत्या। अवोभिर्याथो वृषणा वृषण्वसू ॥ २ ॥

युवम्। वरो इति। सुऽसाम्ने। महे। तने। नासत्या।
अवःऽभिः। याथः। वृषणा। वृषण्वसू इति वृषण्ऽवसू ॥ २ ॥

ऋषिर्वरुं राजानं संबोध्याह। हे ᵛनासत्या नासत्यौ। न विद्यतेऽसत्यमनयोरिति नासत्यौ। ᵛवृषणा कामानां वर्षितारौ ᵛवृषण्वसू वर्षणशीलवसुमन्तावश्विनौ[2] ᵛयुवं युवां ᵛसुषाम्णे सुषामाख्यराज्ञे मम पित्रेऽस्मै ᵛमहे महते ᵛतने। तनोतीति तनं धनम्। धनाय। 'क्रियार्थोपपदस्य॰' इति चतुर्थी। तस्मै धनं दातुं पुरा यथागच्छतं तद्वत् मह्यमपि धनं दातुम् ᵛअवोभिः पालनैः सह ᵛयाथः[3] युवामायातमिति हे ᵛवरो वरुनामक राजन्नेवं ब्रूहीति ऋषिर्वदति ॥

ता वामद्य हवामहे हव्येभिर्वाजिनीवसू। पूर्वीरिष इषयन्तावति क्षपः ॥ ३ ॥

ता। वाम्। अद्य। हवामहे। हव्येभिः। वाजिनीवसू इति वाजिनीऽवसू।
पूर्वीः। इषः। इषयन्तौ। अति। क्षपः ॥ ३ ॥

हे ᵛवाजिनीवसू अन्नयुक्तधनवन्तावश्विनौ ᵛपूर्वीः बहूनि ᵛइषः अन्नानि ᵛइषयन्तौ। 'इषु इच्छायाम्'। इच्छन्तौ ᵛता तौ प्रसिद्धौ ᵛवां युवाम् ᵛअद्य अस्मिन् यागदिने ᵛअति ᵛक्षपः क्षपाया अतिक्रमे। उषःकाल इत्यर्थः। तस्मिन्नुषःकाले ᵛहव्येभिः हविर्लक्षणैरन्नैः सह वयं ᵛहवामहे आह्वयामः। आश्विनशस्त्रस्य तत्र शस्यमानत्वादुषःकाल एवाह्व[4]। याग[4] इत्यर्थः ॥

आ वां वाहिष्ठो अश्विना रथो यातु श्रुतो नरा। उप स्तोमान्तुरस्य दर्शथः श्रिये ॥ ४ ॥

१. भ–निपातः। २. घ–वर्षणशीलधनावश्विनौ। ३. त-भ–आयाथः। ४. भ३–एवाह्वयाम।

आ । वाम् । वाहिष्ठः । अश्विना । रथः । यातु । श्रुतः । नरा ।
उप । स्तोमान् । तुरस्य । दर्शथः । श्रिये ॥ ४ ॥

हे नरा सर्वस्य नेतारौ अश्विना अश्विनौ वां युवयोः वाहिष्ठः वोढृतमः श्रुतः विश्रुतः सर्वत्र प्रसिद्धः रथः आ यातु अस्मदीयं यज्ञं प्रत्यागच्छतु । तेन रथेन युवामागत्य तुरस्य क्षिप्रं स्तोत्रं कुर्वतस्तस्य स्तोमान् त्रिवृत्पञ्चदशादिस्तोमान् श्रिये तस्यैश्वर्यप्रदानाय उप दर्शथः । पश्यतिर्दर्शनकर्मा । जानीतम् । दृशेर्लेटि व्यत्ययेनाङादेशः ॥

**जुहुराणा चिदश्विना मन्येथां वृषण्वसू । युवं हि रुद्रा पर्षथो अति द्विषः ॥ ५ ॥**

जुहुराणा । चित् । अश्विना । आ । मन्येथाम् । वृषण्वसू इति वृषण्ऽवसू ।
युवम् । हि । रुद्रा । पर्षथः । अति । द्विषः ॥ ५ ॥

हे वृषण्वसू वर्षणशीलधनवन्तौ अश्विना अश्विनौ जुहुराणा चित् । 'हुर्छा कौटिल्ये'। 'हुर्छेः सनो लुक् छलोपश्च' (उ. सू. २. २४८) इत्यानच्प्रत्ययः । कुटिलान् कर्मविघ्नकारिणो मायाविनोऽपि शत्रून् आ आभिमुख्येन मन्येथां जानीतम् । ततो हे रुद्रा संग्रामे रोदनशीलौ रुवन्तौ वा अश्विनौ युवम् । हिरवधारणे । युवामेव द्विषः द्वेषकारिणः तान् शत्रून् अति पर्षथः अतीत्य संक्लेशयतम् । हतमित्यर्थः । 'पृषु हिंसासंक्लेशनयोः' इति भौवादिकः ॥ ॥ २६ ॥

**दस्रा हि विश्वमानुषङ्मक्षूभिः परिदीयथः । धियंजिन्वा मधुवर्णा शुभस्पती ॥ ६ ॥**

दस्रा । हि । विश्वम् । आनुषक् । मक्षुऽभिः । परिऽदीयथः ।
धियम्ऽजिन्वा । मधुऽवर्णा । शुभः । पती इति ॥ ६ ॥

दस्रा दस्रौ सर्वैर्दर्शनीयौ । यद्वा । 'दसु उपक्षये'। शत्रूणामुपक्षपयितारावश्विनौ । कीदृशौ । धियंजिन्वा धियंजिन्वौ । जिविः प्रीणनार्थः । कर्माणि प्रीणयन्तौ मधुवर्णा मधुवर्णौ सर्वेषां मादनशीलशरीरकान्ती । ये युवयो रूपं पश्यन्ति ते तत्रैव हृष्टा भवन्तीत्यर्थः । तादृशौ शुभस्पती उदकस्य पालयितारौ तादृशौ युवां मक्षुभिः शीघ्रगमनैरश्वैः आनुषक् अनुषक्तं यथा भवति तथा विश्वम् ऋत्विग्भिर्हविर्भिश्च व्याप्तम् । हिरवधारणे । अस्मदीयं यज्ञमेव प्रति परिदीयथः । दीयतिर्गतिकर्मा । परित आगच्छतम् ॥

**उप नो यातमश्विना राया विश्वपुषा सह । मघवाना सुवीरावनपच्युता ॥ ७ ॥**

उप । नः । यातम् । अश्विना । राया । विश्वऽपुषा । सह ।
मघऽवाना । सुऽवीरौ । अनपऽच्युता ॥ ७ ॥

हे अश्विना अश्विनौ विश्वपुषा विश्वस्य सर्वस्य पोषकेण राया धनेन सह नः अस्मदीयं यज्ञम् उप यातम् उपागच्छतम् । यज्ञमागत्य धनमस्मभ्यं प्रयच्छतमिति भावः । किमनयोर्धनमस्तीत्यत आह । मघवाना मघवानौ मंहनीयधनवन्तौ सुवीरौ शोभनसामर्थ्योपेतौ । यद्वा । वीराः समर्थाः शत्रवः । तद्वन्तौ । तथापि अनपच्युता तैरपच्यावनीयौ न भवतः । तौ यज्ञं प्रत्यागच्छतम् ॥

**आ मे अस्य प्रतीव्यमिन्द्रनासत्या गतम् । देवा देवेभिरद्य सचनस्तमा ॥ ८ ॥**

आ। मे। अस्य। प्रतीव्यम्। इन्द्रनासत्या। गतम्। देवा। देवेभिः। अद्य। सचनःऽतमा॥ ८॥

हे इन्द्रनासत्या इन्द्राश्विनौ सचनस्तमा। 'षच समवाये'। 'कृत्यल्युटः॰' इति कर्मणि ल्युट्। अतिशयेन सर्वैः समवेतव्यौ सेव्यमानौ युवां प्रतीव्यम्। वी गत्यादिषु। अधिकरणे औणादिकः क्विप्। प्रतिशब्दस्य वीप्सार्थोऽस्ति। पुनःपुनर्वियन्ति भक्षयन्ति हवींषि देवा अत्रेति प्रतीवीर्यज्ञः। तम् अस्य पुरोवर्तिनः[1] मे मम संबन्धिनं यज्ञम् अद्य अस्मिन् दिने देवेभिः देवैः सार्धम् आ गतम् आगच्छतम्। यद्वा। मे मम अस्य क्रियमाणस्य स्तोत्रस्य प्रतीव्यं प्रतिगतं यथा भवति तथाभिमुख्येनायातम्॥

**वयं हि वां हवामह उक्षण्यन्तो व्यश्ववत्। सुमतिभिरुप विप्राविहा गतम्॥ ९॥**

वयम्। हि। वाम्। हवामहे। उक्षण्यन्तः। व्यश्वऽवत्।
सुमतिऽभिः। उप। विप्रौ। इह। आ। गतम्॥ ९॥

उक्षण्यन्तः धनादिसेक्तारावात्मन इच्छन्तः वयं वां हि धनादीनां प्रत्तारौ युवामेव हवामहे तल्लाभार्थमाह्वयामः। तत्र दृष्टान्तः। व्यश्ववत्। यथास्माकं पिता युवामेव स्तुत्वा धनमलभत तद्वत्। हे विप्रौ मेधाविनावश्विनौ सुमतिभिः अस्माभिः क्रियमाणैः कल्याणैः स्तोत्रैः सह। यद्वा। सुमतिभिः शोभनाभिरनुग्रहबुद्धिभिः सह। इह अस्मिन् यागदिने उप आ गतम् उपागच्छतम्॥

**अश्विना स्वृषे स्तुहि कुवित्ते श्रवतो हवम्। नेदीयसः कूळयातः पणीँरुत॥ १०॥**

अश्विना। सु। ऋषे। स्तुहि। कुवित्। ते। श्रवतः। हवम्।
नेदीयसः। कूळयातः। पणीन्। उत॥ १०॥

हे ऋषे विश्वमनः अश्विना अश्विनौ देवौ सु स्तुहि शोभनं स्तुहि। ततस्तावश्विनौ ते स्तोतुस्तव हवम् आह्वानं कुवित्। कुविदिति बहुनाम। बहुवारं श्रवतः शृणुताम्। 'श्रु श्रवणे'। लेट्यडागमः। एवं त्वया स्तुतावश्विनौ नेदीयसः अन्तिकतमान् शत्रून् कूळयातः हिंस्ताम्। उत अपि च पणीन् एतन्नामकान् अङ्गिरोगवामपनेतॄन् असुरानपि हिंस्ताम्॥ 'कुडि दाहे'। ण्यन्तस्य लेट्याडागमः॥ ॥ २७॥

**वैयश्वस्य श्रुतं नरोतो मे अस्य वेदथः। सजोषसा वरुणो मित्रो अर्यमा॥ ११॥**

वैयश्वस्य। श्रुतम्। नरा। उतो इति। मे। अस्य। वेदथः।
सऽजोषसा। वरुणः। मित्रः। अर्यमा॥ ११॥

हे नरा नेतारावश्विनौ वैयश्वस्य व्यश्वपुत्रस्य विश्वमनसो ममाह्वानं श्रुतं शृणुतम्। उत अपि च मे मदीयम् अस्य तदाह्वानं वेदथः आत्मीयतया जानीथः। अथ वरुणः मित्रः मित्रावरुणौ च सजोषसा संगतौ सन्तौ अर्यमा एतन्नामको देवश्च मदीयमाह्वानं श्रुत्वा मह्यं धनादिकं प्रयच्छन्तु॥

**युवादत्तस्य धिष्ण्या युवानीतस्य सूरिभिः। अहरहर्वृषणा मह्यं शिक्षतम्॥ १२॥**

युवाऽदत्तस्य। धिष्ण्या। युवाऽनीतस्य। सूरिऽभिः।
अहःऽअहः। वृषणा। मह्यम्। शिक्षतम्॥ १२॥

---

१. घ-त३-न-भ२-३—पुरोवर्तिनं; ङ-त१-२—यागपुरोवर्तिनं; त४-भ१—गपुरोवर्तिनं।

हे vधिष्ण्या धिष्ण्यौ धिषणार्हौ स्तुत्यौ वृषणौ कामानां सेक्तारावश्विनौ[1] vसूरिभिः। 'सुपां सुपो भवन्ति' इति चतुर्थ्यास्तृतीया। सूरिभ्यः स्तोतृभ्यः vयुवादत्तस्य युवाभ्यां यत्स्तोतृभ्यो दीयते तत् तथा vयुवानीतस्य युवाभ्यां यत्स्तोतृभ्यो नीयते तच्च धनादिकम् vअहरहः अहन्यहनि vमह्यं विश्वमनसे स्तोत्रं कुर्वाणाय युवां vशिक्षतं प्रयच्छतम् ॥

**यो वां यज्ञेभिरावृतोऽधिवस्त्रा वधूरिव। सपर्यन्ता शुभे चक्राते अश्विना ॥१३॥**

यः। वाम्। यज्ञेभिः। आऽवृतः। अधिऽवस्त्रा। वधूःऽइव।
सपर्यन्ता। शुभे। चक्राते इति। अश्विना॥ १३॥

अथ पूर्वोऽर्धर्चः परोक्षकृतः। vयः मनुष्यः vवां युवयोः vयज्ञेभिः यजनैः पूजनैः यद्वा युष्मद्विषयैर्यागैः vआवृतः परिवृतो भवति। तत्र दृष्टान्तः। vअधिवस्त्रा उपरिनिहितवस्त्रा vवधूः[2] अन्येन[3] वस्त्रेण[3] यथाच्छादिता भवति तथावृतो यदा भवति तदा vसपर्यन्ता अभीष्टप्रदानेन तं परिचरन्तौ vअश्विना अश्विनौ भवन्तौ तं मनुष्यं vशुभे vचक्राते मङ्गले धने कृतवन्तौ। तं धनादियुक्तमकार्ष्टामित्यर्थः। यो युवाभ्यां हवींषि प्रयच्छति तं धनादियुक्तं कुरुतमित्यर्थः॥

**यो वामुरुव्यचस्तमं चिकेतति नृपाय्यम्। वर्तिरश्विना परि यातमस्मयू ॥१४॥**

यः। वाम्। उरुव्यचःऽतमम्। चिकेतति। नृऽपाय्यम्।
वर्तिः। अश्विना। परि। यातम्। अस्मऽयू इत्यस्मऽयू॥ १४॥

हे अश्विनौ vउरुव्यचस्तमम् अतिशयेन ग्रहेषु भूतं व्याप्तं vनृपाय्यं नेतृभ्यां युवाभ्यां पातव्यं सोमं vयः मनुष्यः vवां युवाभ्यां तं सोमं दातुं vचिकेतति भृशं जानाति तस्य vवर्तिः। वर्ततेऽत्रेति वर्तिर्गृहम्। vअस्मयू अस्मान्। पूजार्थं बहुवचनम्। विश्वमनसं मां कामयमानौ युवां vपरि vयातं सोमपानार्थं तस्य गृहं प्रत्यायातम्॥ चिकेतति। 'कित ज्ञाने' इत्यस्य यङ्लुगन्तस्य लेट्यडागमः॥

**अस्मभ्यं सु वृषण्वसू यातं वर्तिर्नृपाय्यम्। विषुद्रुहेव यज्ञमूहथुर्गिरा ॥ १५ ॥**

अस्मभ्यम्। सु। वृषण्वसू इति वृषण्ऽवसू। यातम्। वर्तिः। नृऽपाय्यम्।
विषुद्रुहाऽइव। यज्ञम्। ऊहथुः। गिरा॥ १५॥

हे vवृषण्वसू वर्षणशीलधनवन्तावश्विनौ vअस्मभ्यम् अस्मदर्थं vनृपाय्यं नेतृभ्यां पातव्यं सोमं प्रति vवर्तिः अस्मदीयं गृहं प्रति vसु vयातं युवां सुष्ठु आयातम्। vगिरा स्तुतिलक्षणया वाचा युवां vयज्ञमूहथुः मनुष्येषु यज्ञसमाप्तिं[4] प्रापयथः। तत्र दृष्टान्तः। vविषुद्रुहेव। 'द्रुह जिघांसायाम्'। विश्वान् हिनस्ति शत्रूनिति विषुद्रुहः शरः। तेन यथा व्याधो मृगमभिलषितं देशं प्रापयति तद्वत् स्तुत्या यज्ञमवैकल्येन समाप्तिं प्रापयथ इत्यर्थः॥ ॥ २८ ॥

प्रातरनुवाक आश्विने क्रतौ गायत्रे छन्दसि 'वाहिष्ठो वां हवानाम्' इति चतस्रः। सूत्रितं च— 'वाहिष्ठो वां हवानामिति चतस्र उदीराथामा मे हवमिति गायत्रम्' (आश्व. श्रौ. ४.१५) इति॥

**वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा। युवाभ्यां भूत्वश्विना ॥ १६ ॥**

वाहिष्ठः। वाम्। हवानाम्। स्तोमः। दूतः। हुवत्। नरा। युवाभ्याम्। भूतु। अश्विना॥१६॥

---

१. घ-वर्षितारौ। २. घ-वधूरिव। ३. भ-नववस्त्रेण। ४. त-भ-यज्ञं समाप्तिं।

हे vनरा नरौ सर्वस्य नेतारावश्विनौ[1] vहवानां स्तोतॄणां स्तोत्राणां मध्ये vस्तोमः vवाहिष्ठः[2] युवामतिशयेन व्याप्नुवन् मदीयः स्तोमः vदूतः दूतभूतः सन् vहुवत् आह्वयतु । सोऽयं मदीयः स्तोमः vयुवाभ्यां प्रियकरः vभूतु भवतु ॥

यददो दिवो अर्णव इषो वा मदथो गृहे । श्रुतमिन्मे अमर्त्या ॥ १७ ॥

यत् । अदः । दिवः । अर्णवे । इषः । वा । मदथः । गृहे । श्रुतम् । इत् । मे । अमर्त्या ॥ १७ ॥

हे अश्विनौ vदिवः द्युलोकस्य vअदः । 'सुपां सुलुक्°' इति सप्तम्याः सुः । अमुष्मिन् vअर्णवे अपां स्थाने vयत् यदि vमदथः माद्यथः । vवा अपि च vइषः युवामिच्छतो यजमानस्य vगृहे यदि माद्यथः । एवं चेत् हे vअमर्त्या मरणधर्मरहितावमनुष्यौ वाश्विनौ vमे मदीयं स्तोत्रं vश्रुतमित् युवां शृणुतमेव । ममैव स्तोत्रं श्रुत्वा युवां माद्यतमित्यर्थः । यद्वा । अदः स्तोत्रमिति संबध्यते ॥

उत स्या श्वेतयावरी वाहिष्ठा वां नदीनाम् । सिन्धुर्हिरण्यवर्तनिः ॥ १८ ॥

उत । स्या । श्वेतऽयावरी । वाहिष्ठा । वाम् । नदीनाम् । सिन्धुः । हिरण्यऽवर्तनिः ॥ १८ ॥

विश्वमना ऋषिः श्वेतयावरीनाम्न्या नद्यास्तीरेऽश्विनावस्तौत् । अनया नद्यपि स्तुतवतीत्याह । vउत अपि च vश्वेतयावरी । श्वेतजला यातीति श्वेतयावरी । कीदृशी । vसिन्धुः स्यन्दमाना vहिरण्यवर्तनिः हिरण्मयस्वीयमार्गा हिरण्मयोभयकूला । vस्या एषा श्वेतयावरीनामिका vनदीनाम्[3] अन्यासां नदीनां मध्ये vवां युवां vवाहिष्ठा स्तुत्यातिशयेनागन्त्री भवति । एषापि[4] युवां स्तौतीत्यर्थः । यद्वा । एषा नदी युवयो रथस्य वाहिष्ठा वोढृतमा सती प्रियकरी भवति । यस्मादहमस्यास्तीरे युवामस्तुवमिति ॥

स्मदेतया सुकीर्त्याश्विना श्वेतया धिया । वहेथे शुभ्रयावाना ॥ १९ ॥

स्मत् । एतया । सुऽकीर्त्या । अश्विना । श्वेतया । धिया । वहेथे इति । शुभ्रऽयावाना ॥ १९ ॥

हे vशुभ्रयावाना शोभनशीलगमनवन्तौ हे vअश्विना अश्विनौ vसुकीर्त्या शोभनस्तुत्या vश्वेतया श्वेतजलया vधिया धारयित्र्या हिरण्मयकूलवत्त्वादुभयकूलस्थितानां प्राणिनां धनदानेन पोषयित्र्या vएतया नद्या vस्मत् सुमत् शोभनं vवहेथे युवां स्तुतिं प्राप्नुथः । एषा युवामस्तौदित्यर्थः ॥

युक्ष्वा हि त्वं रथासहा युवस्व पोष्या वसो ।
आन्नो वायो मधु पिबास्माकं सवना गहि ॥ २० ॥

युक्ष्व । हि । त्वम् । रथऽसहा । युवस्व । पोष्या । वसो इति ।
आत् । नः । वायो इति । मधु । पिब । अस्माकम् । सवना । आ । गहि ॥ २० ॥

एतदाद्या वायव्यः । हे वायो vरथसहा रथसहौ रथवहनसमर्थावश्वौ । हिरवधारणे । vत्वम्[5] एव[5] vयुक्ष्व संयोजय । हे vवसो वासयितः शत्रूणां[6] vपोष्या पोष्यौ कण्ठेषु करतलास्फालनैराश्वास्य पोषणीयौ तावश्वौ vयुवस्व संग्रामेषु शत्रुवधार्थं मिश्रय । यद्वा । अस्मद्यज्ञेषु संमिश्रय । ताभ्यां युक्तः सन् यज्ञं प्रत्यागच्छेत्यर्थः । हे vवायो vआत् अनन्तरं vनः अस्मदीयं vमधु मदकरं सोमं त्वं vपिब । अत एव vअस्माकं यज्ञेषु vसवना त्रिषु सवनेषु vआ vगहि सोमपानार्थमागच्छ ॥ ॥ २९ ॥

१. घ–नेतारावश्विनाश्विनौ । २. घ–वां वाहिष्ठः । ३. भ१-३–नदी । ४. घ–स्या एषापि । ५. घ–त्वं हि त्वमेव । ६. घ–स्तोत्राणां ।

वायव्ये पशौ वपायाः 'तव वायो' इत्येषा वानुवाक्या। सूत्रितं च–'प्र वायुमच्छा बृहती मनीषा तव वायवृतस्पते' ( आश्व. श्रौ. ३. ८ ) इति ॥

तव॑ वायवृतस्पते॒ त्वष्टु॒र्जामातरद्भुत। अवां॒स्या वृ॑णीमहे ॥ २१ ॥

तव॑। वायो॒ इति॑। ऋत॒ऽप॒ते॒। त्वष्टुः॑। जामा॒तः॒। अ॒द्भु॒त॒। अवां॑सि। आ। वृ॒णी॒म॒हे॒ ॥२१॥

हे ऋतस्पते ऋतपते यज्ञानां पते। 'सर्वप्रातिपदिकेभ्यो लालसायां सुक्' ( का. ७.१.५१.४ ) इति सुगागमः। त्वष्टुर्जामातः ब्रह्मणो जामातः। एषा कथेतिहासादिभिरवगन्तव्या। तादृश अद्भुत महन् विचित्रकर्मन् हे वायो तव त्वदीयानि अवांसि पालनानि आ वृणीमहे वयमस्मिन् पशुयागे संभजामहे ॥

त्वष्टु॒र्जामा॑तरं व॒यमीशा॑नं रा॒य ई॑महे। सु॒तावन्तो वा॒युं द्यु॒म्ना जना॑सः ॥ २२ ॥

त्वष्टुः॑। जामा॑तरम्। व॒यम्। ईशा॑नम्। रा॒यः। ई॒म॒हे॒।
सु॒तऽव॑न्तः। वा॒युम्। द्यु॒म्ना। जना॑सः ॥ २२ ॥

इमे जनासः जनाः वयं त्वष्टुः ब्रह्मणः जामातरम् ईशानं सर्वस्येश्वरमेतादृशं वायुं सुतवन्तः अभिषुतसोमाः रायः धनम् ईमहे याचामहे। तेन दत्तेन वयं द्युम्ना धनवन्तः स्यामेति शेषः॥

वायव्यतृचे 'वायो याहि शिवा दिवः' इत्यादिके द्वे ऋचौ द्वितीयातृतीये। सूत्रितं च—'वायो याहि शिवा दिव इति द्वे' ( आश्व. श्रौ. ७. १० ) इति ॥

वायो॒ या॒हि॒ शि॒वा दि॒वो वह॑स्वा॒ सु स्वश्व्य॑म्। वह॑स्व म॒हः पृ॑थु॒पक्ष॑सा॒ रथे॑ ॥२३॥

वायो॒ इति॑। या॒हि॒। शि॒व॒। आ। दि॒वः। वह॑स्व। सु। सु॒ऽअ॒श्व्य॑म्।
वह॑स्व। म॒हः। पृ॒थु॒ऽपक्ष॑सा। रथे॑ ॥ २३ ॥

हे वायो दिवः द्युलोकस्य शिव। 'सुपां सुलुक्' इति द्वितीयाया लुक्। शिवं कल्याणम् आ याहि आप्रापय। सर्वज्योतिषां त्वदाधारत्वात् तेषामाधारो भूत्वा द्युलोके तानि स्थापयेति प्रार्थयते। ततस्त्वं स्वश्व्यम्। अश्वानां संघोऽश्व्यः। शोभनाश्वसंघं रथं सु सुष्ठु वहस्व सर्वतो दिक्षु प्रापय। इदानीं तेभ्योऽपि समर्थावश्वावावह। महः महांस्त्वं पृथुपक्षसा पृथुपार्श्वद्वययुक्तावश्वौ रथे स्वकीये वहस्व शत्रुहननार्थं संयोजय॥

वायव्ये पशौ पुरोडाशहविषः 'त्वां हि सुप्सरस्तमम्' इति द्वे अनुवाक्ये। सूत्रितं च—'त्वां हि सुप्सरस्तममिति द्वे कुविदङ्ग नमसा ये वृधासः' ( आश्व. श्रौ. ३. ८ ) इति ॥

त्वां हि सु॒प्सर॑स्तमं नृ॒षद॑नेषु हू॒महे॑। ग्रावा॑णं॒ नाश्व॑पृष्ठं मं॒हना॑ ॥ २४ ॥

त्वाम्। हि। सु॒प्सरः॑ऽतमम्। नृ॒ऽसद॑नेषु। हू॒महे॑। ग्रावा॑णम्। न। अश्व॑ऽपृष्ठम्। मं॒हना॑ ॥२४॥

हे वायो सुप्सरस्तमम्। सुप्स इति रूपनाम। रो मत्वर्थीयः। अतिशयेन शोभनरूपवन्तं मंहना स्वकीयेन महत्त्वेन अश्वपृष्ठं सर्वतो व्याप्तपृष्ठम्। पृष्ठशब्दः सर्वाङ्गं लक्षयति। व्याप्तकृत्स्नाङ्गमित्यर्थः[1]। त्वाम्। हिरवधारणे। त्वामेव नृषदनेषु नृसदनेषु। नरोऽध्वरस्य नेतार ऋत्विजोऽत्र सीदन्तीति नृषदना यज्ञाः। तेषु हूमहे वयमाह्वयामः। कथमिव। ग्रावाणं न[2]। यथा सोमाभिषवार्थं ग्रावाणं[2] स्तुतिभिराह्वयन्ति तद्वत्त्वां स्तुतिभिराह्वयामः॥

---

१. ख-घ-श—व्याप्तसर्वांग°। २. त-भ—सोमाभिषवार्थं।

शुनासीरीये 'स त्वं नो देव' इत्येषा वायोरनुवाक्या। सूत्रितं च—'स त्वं नो देव मनसेशानाय प्रहुतिं यस्त आनट्' (आश्व. श्रौ. २. २०) इति ॥

स त्वं नो॑ देव॒ मन॑सा॒ वायो॑ मन्दा॒नो अ॑ग्रि॒यः। कृ॒धि वाजाँ॑ अ॒पो धियः॑ ॥२५॥

सः। त्वम्। नः॒। दे॒व॒। मन॑सा। वायो॒ इति॑। म॒न्दा॒नः। अ॒ग्रि॒यः।
कृ॒धि। वाजा॑न्। अ॒पः। धियः॑ ॥ २५ ॥

हे ᵛदेव द्योतमान यद्वा स्तोतव्य ᵛवायो ᵛअग्रियः देवानां मध्ये मुख्योऽग्रतो गन्तासि। तादृशः ᵛत्वं ᵛमनसा ᵛमन्दानः मन्दमानः स्वयमेव मोदमानः सन् ᵛनः अस्माकं ᵛवाजान् अन्नानि ᵛअपः मेघभेदनेनोदकानि च उभयस्मिंस्त्वया प्रदत्ते सति ᵛधियः अग्निहोत्रादिकर्माणि च ᵛकृधि कुरु। कारयेत्यर्थः॥ ॥ ३०॥

'अग्निरुक्थे' इति द्वाविंशत्यृचं सप्तमं सूक्तम्। अत्रानुक्रमणिका—'अग्निरुक्थे द्व्यधिका मनुर्वैवस्वतो वैश्वदेवं ह प्रागाथम्' इति। विवस्वतः पुत्रो मनुर्ऋषिः। प्रथमातृतीयाद्ययुजो बृहत्यो द्वितीयाचतुर्थ्यादियुजः सतोबृहत्यः। इदमादीनां चतुर्णां सूक्तानां विश्वे देवा देवता। सूक्तविनियोगो लैङ्गिकः॥

अ॒ग्निरु॒क्थे पु॒रोहि॑तो॒ ग्रावा॑णो ब॒र्हिर॑ध्व॒रे।
ऋ॒चा या॑मि म॒रुतो॒ ब्रह्म॑ण॒स्पतिं॑ दे॒वाँ अवो॒ वरे॑ण्यम् ॥ १ ॥

अ॒ग्निः। उ॒क्थे। पु॒रःऽहि॑तः। ग्रावा॑णः। ब॒र्हिः। अ॒ध्व॒रे।
ऋ॒चा। या॒मि॒। म॒रुतः॑। ब्रह्म॑णः। पति॑म्। दे॒वान्। अवः॑। वरे॑ण्यम् ॥ १ ॥

मनुः प्रार्थयते। ᵛउक्थे स्तोत्रशस्त्रात्मके ᵛअध्वरे हिंसारहितेऽस्मिन् यज्ञे ᵛअग्निः ᵛपुरोहितः यज्ञार्थं पुरत उत्तरवेद्यामृत्विग्भिर्निहितोऽभूत्। तथा ᵛग्रावाणः च सोमाभिषवार्थं पुरतो निहिताः। ᵛबर्हिः च पुरतो निहितमासादितम्। एवं सामग्र्यां सत्यां ᵛमरुतः एकोनपञ्चाशन्मरुद्गणान् ᵛब्रह्मणस्पतिं स्तोत्रस्य पालयितारमेतन्नामकं देवं ᵛदेवान् इन्द्रादींश्च एतान् सर्वान् देवान् ᵛवरेण्यं वरणीयं भजनीयम्[1] ᵛअवः रक्षणम् ᵛऋचा सूक्तरूपया स्तुत्या ᵛयामि मनुरहं याचामि। याचतेर्लेटि रूपम्। वर्णलोपश्छान्दसः॥

आ प॒शुं गा॑सि पृथि॒वीं वन॒स्पती॑नु॒षासा॒ नक्त॒मोष॑धीः।
विश्वे॑ च नो वसवो विश्ववेदसो धी॒नां भू॑त प्रावि॒तारः॑ ॥ २ ॥

आ। प॒शुम्। गा॒सि॒। पृ॒थि॒वीम्। व॒न॒स्पती॑न्। उ॒षसा॑। नक्त॑म्। ओष॑धीः।
विश्वे॑। च॒। नः॒। व॒स॒वः॒। वि॒श्व॒ऽवे॒द॒सः॒। धी॒नाम्। भू॒त॒। प्र॒ऽअ॒वि॒तारः॑ ॥ २ ॥

पूर्वार्धर्चेऽग्निः संबोध्यते पश्वादिशब्दसद्भावात्। हे अग्ने नोऽस्मदीये यज्ञे ᵛपशुम् अग्नीषोमीयं पशुं प्रति ᵛआ ᵛगासि आगच्छसि। 'गाङ्[2] गतौ'। व्यत्ययेन परस्मैपदम्। तथा ᵛपृथिवीम् इदं देवसदनं प्रति किंच ᵛवनस्पतीन् मथनसाधनानरणिरूपान् वनस्पतीन् प्रति तथा ᵛउषासा[3] होतव्यत्वेन उषःकाले तथा ᵛनक्तं यष्टव्यतया रात्रिं च प्रति किंच ᵛओषधीः। 'उष दाहे' अत्र मादनकर्मा। ओषन्ति माद्यन्त्यनेनेत्योषः सोमः। स धीयते निधीयते येष्वित्योषधयो ग्रावाणः। तान् प्रत्यागच्छसि। यद्वा। ओषध्यः फलपाकान्ता लताः। ताः प्रत्यायाहि। अथवा हे स्तोतः पश्वादीन्

१. भ—संभजनीयं। २. ख-त-न—तौ च; श—गम्लृ। ३. त-भ—उषसा।

आ गासि समन्तात् स्तुहि। 'कै गै शब्दे' इति धातुः। ततो हे ᵛवसवः वासयितारः ᵛविश्ववेदसः सर्वधनाः सर्वज्ञाना वा हे ᵛविश्वे सर्वेऽपि देवाः ᵛनः[1] अस्मदीयानां कर्मणां[2] ᵛप्राविताशः ᵛभूत। अनेनाग्निना सह यूयं प्रकर्षेण रक्षका भवत ॥

प्र सू न एत्वध्वरो३ऽग्ना देवेषु पूर्व्यः।
आदित्येषु प्र वरुणे धृतव्रते मरुत्सु विश्वभानुषु ॥ ३ ॥

प्र। सु। नः। एतु। अध्वरः। अग्ना। देवेषु। पूर्व्यः।
आदित्येषु। प्र। वरुणे। धृतऽव्रते। मरुत्ऽसु। विश्वऽभानुषु ॥ ३ ॥

ᵛपूर्व्यः पुरातनः। पूर्व्यान् पुरातनानिन्द्रादीन् देवान् प्रति क्रियमाणत्वात् यज्ञोऽपि पूर्व्य इत्युच्यते। तादृशो मुख्यः ᵛनः अस्मदीयः ᵛअध्वरः यज्ञः ᵛअग्ना। 'सुपां सुलुक्॰' इति सप्तम्या डादेशः। अग्नौ। अग्निर्देवानां मुख्यत्वात् प्रथममभिहितः। तस्मिन्नग्नौ सर्वेष्वन्येषु ᵛदेवेषु च ᵛसु सुष्ठु ᵛप्र ᵛएतु प्रकर्षेण गच्छतु। देवान् विशिनष्टि। ᵛआदित्येषु अदितेः पुत्रेष्विन्द्रादिषु ᵛधृतव्रते धृतकर्मणि ᵛवरुणे च ᵛविश्वभानुषु सर्वतो व्याप्ततेजस्केषु ᵛमरुत्सु च ᵛप्र एतु ॥

विश्वे हि ष्मा मनवे विश्ववेदसो भुवन्वृधे रिशादसः।
अरिष्टेभिः पायुभिर्विश्ववेदसो यन्ता नोऽवृकं छर्दिः ॥ ४ ॥

विश्वे। हि। स्म। मनवे। विश्वऽवेदसः। भुवन्। वृधे। रिशादसः।
अरिष्टेभिः। पायुऽभिः। विश्वऽवेदसः। यन्त। नः। अवृकम्। छर्दिः ॥ ४ ॥

ᵛविश्ववेदसः सर्वतो व्याप्तधनाः। बहुधना इत्यर्थः। तादृशाः ᵛरिशादसः रिशतां हिंसतां शत्रूणामसितार उपक्षपयितारो वा ᵛविश्वे ᵛहि ᵛष्म सर्वे खलु देवाः ᵛमनवे। षष्ठ्यर्थे चतुर्थी। मनोः ᵛवृधे वर्धनाय ᵛभुवन् भवन्तु। स्तोत्रे मनुष्याय धनं दत्त्वा तं वर्धयन्तु इत्याशास्ते। ततो हे ᵛविश्ववेदसः सर्वधनाः सर्वज्ञा वा देवाः ᵛअरिष्टेभिः परैरहिंसितैः ᵛपायुभिः पालनैः सह ᵛअवृकम्। वृकः स्तेनः। तद्रहितम्। बाधारहितमित्यर्थः। तादृशं ᵛछर्दिः गृहं ᵛनः अस्मभ्यं ᵛयन्त प्रयच्छत। शत्रून् हत्वा गृहेष्वस्माभिः कर्माणि कारयतेत्यर्थः। यन्तेति यमेर्लोटि छान्दसो विकरणस्य लुक्। तस्य तबादेशः। तेनानुनासिकलोपाभावः ॥

आ नो अद्य समनसो गन्ता विश्वे सजोषसः।
ऋचा गिरा मरुतो देव्यदिते सदने पस्त्ये महि ॥ ५ ॥

आ। नः। अद्य। सऽमनसः। गन्त। विश्वे। सऽजोषसः।
ऋचा। गिरा। मरुतः। देवि। अदिते। सदने। पस्त्ये। महि ॥ ५ ॥

ᵛसमनसः सर्वेषु स्तोतृषु समानमनस्काः ᵛविश्वे सर्वे देवा यूयं ᵛसजोषसः परस्परं संगताः सन्तः ᵛगिरा। शुश्रूषुतया प्राप्तव्ययेत्यर्थः। तथा ᵛऋचा सह ᵛअद्य अस्मिन् यागदिने ᵛनः यष्टॄन् अस्मान् ᵛआ ᵛगन्त आगच्छत। अनन्तरं हे ᵛमरुतः ᵛदेवि द्योतमाने ᵛमहि महति देवानां

१. भ—धीनां नः। २. घ—धीनां कर्मणां।

मातृत्वान्महत्त्वयुक्ते हे अदिते अदीने एतन्नामिके देवि सदने स्थाने[1] पस्त्ये अस्मदीये गृहे स्तोतव्यतयोपविशत ॥ मरुत इत्यादेर्वाक्यभेदादनिघातः । उत्तरत्र पूर्वस्यामन्त्रितस्याविद्यमानवत्त्वेन वाक्यादित्वादनिघातः ॥ ॥ ३१ ॥

अभि प्रिया मरुतो या वो अश्व्या हव्या मित्र प्रयाथन ।
आ बर्हिरिन्द्रो वरुणस्तुरा नर आदित्यासः सदन्तु नः ॥ ६ ॥

अभि । प्रिया । मरुतः । या । वः । अश्व्या । हव्या । मित्र । प्रऽयाथन ।
आ । बर्हिः । इन्द्रः । वरुणः । तुराः । नरः । आदित्यासः । सदन्तु । नः ॥ ६ ॥

हे मरुतः प्रिया प्रियाणि या यानि वः युष्माकम् अश्व्या अश्व्यानि प्रियानश्वसंघान् अभि प्रयाथन अस्मद्यज्ञं प्रति प्रापयत । यूयमश्वैर्युक्ताः सन्त आगच्छतेत्यर्थः । अथ हे मित्र । मित्रशब्देनान्ये वरुणादयोऽप्युच्यन्ते । हे मित्रादयो देवाः हव्या हव्यानि हवनयोग्यानि हवींषि स्वीकर्तुमागच्छतेत्यर्थः । स्तूयमाना आगच्छत । प्रपूर्वाद्यातेर्लोटि 'तप्तनप्तनथनाश्च' इति थनादेशः । आगत्य च इन्द्रो वरुणः इन्द्रावरुणौ[2] तुराः संग्रामे शत्रुवधार्थं त्वरमाणाः नरः नेतारः आदित्यासः अदितेः पुत्रा मरुदादयो देवाश्च नः अस्मदीये यज्ञे बर्हिः बर्हिषि आसादिते आ सदन्तु आसीदन्तु प्रविशन्तु । सदेः सीदादेशाभावश्छान्दसः ॥

वयं वो वृक्तबर्हिषो हितप्रयस आनुषक् ।
सुतसोमासो वरुण हवामहे मनुष्वदिद्धाग्नयः ॥ ७ ॥

वयम् । वः । वृक्तऽबर्हिषः । हितऽप्रयसः । आनुषक् ।
सुतऽसोमासः । वरुण । हवामहे । मनुष्वत् । इद्धऽअग्नयः ॥ ७ ॥

हे वरुण वरुणादयो हे देवाः वृक्तबर्हिषः ऋत्विजः वयम् आनुषक् स्रुगादिष्वनुषक्तं यथा भवति तथा हितप्रयसः । प्रीणातीति प्रयोऽन्नम् । तेषु निहितहविष्काः सन्तः वः युष्मान् हवामहे एतानि[3] हवींष्यादातुमाह्वयामः । कीदृशाः । सुतसोमासः अभिषुतसोमाः इद्धाग्नयः आहुतिभिः समिद्धाग्नयो वयमाह्वयामः । तत्र दृष्टान्तः । मनुष्वत् । मनुर्यथा यज्ञे युष्माना-जुहाव तद्वत् ॥

आ प्र यात मरुतो विष्णो अश्विना पूषन्माकीनया धिया ।
इन्द्र आ यातु प्रथमः सनिष्युभिर्वृषा यो वृत्रहा गृणे ॥ ८ ॥

आ । प्र । यात । मरुतः । विष्णो इति । अश्विना । पूषन् । माकीनया । धिया ।
इन्द्रः । आ । यातु । प्रथमः । सनिष्युऽभिः । वृषा । यः । वृत्रऽहा । गृणे ॥ ८ ॥

हे विश्वे देवाः प्र यात प्रकर्षेणास्मदीयकर्मण्यागच्छत । हे मरुतः हे विष्णो स्वबलेन सर्वतो व्याप्तैतन्नामक देव हे अश्विना अश्विनौ पूषन् । स्तोतॄन् धनादिना पोषयतीति पूषा । एत-न्नामक देव मरुदादयो हे देवाः माकीनया[4] । अस्मच्छब्दात् 'युष्मदस्मदोः°' (पा. सू. ४. ३. १)

---

१. ख-ज्ञ-श–सदनस्थाने; त२-३-४–षदनस्थाने; न-भ–निषदनस्थाने । २. घ–इंद्रावरुणौ मित्रश्च । ३. श–दत्तानि । ४. भ-श–माकीनया मामकीनया ।

ऋ. ३–४४

इति खञ् शैषिकः । एकवचने ' तवकममकौ° ' इति ममकादेशः । वर्णलोपश्छान्दसः । मया क्रियमाणया धिया स्तुत्या सहास्मद्यज्ञं प्रत्यागच्छत । मरुदादेरामन्त्रितस्य वाक्यभेदादनिघातः । किंच प्रथमः देवानां मुख्यः सः इन्द्रः च आ यातु । वृषा कामानां सेक्ता यः इन्द्रः सनिभ्युभिः । सनिः संभजनम् । तदात्मन इच्छद्भिः स्तोतृभिः वृत्रहा अपामावरकस्य वृत्रासुरस्य हन्तेति गृणे स्तूयते । ' गॄ शब्दे ' इत्यस्य कर्मणि लिटि छान्दसो विकरणः ॥

वि नो॑ देवासो अद्रुहोऽच्छिद्रं॒ शर्म॑ यच्छत ।
न यद्दूराद्व॑सवो नू चि॒दन्ति॑तो वरू॑थमाद॒धर्ष॑ति ॥ ९ ॥

वि । नः । देवासः । अद्रुहः । अच्छिद्रम् । शर्म॑ । यच्छत ।
न । यत् । दूरात् । वसवः । नु । चित् । अन्तितः । वरू॑थम् । आऽद॒धर्ष॑ति ॥ ९ ॥

हे अद्रुहः स्तोतृणामद्रोग्धारः । यद्वा । द्रुहेरौणादिकः कर्मणि क्विप् । शत्रुभिरहिंस्याः । हे देवासः मरुदादयो देवाः अच्छिद्रं बाधकरहितं साधीयो वा शर्म । शृणाति दुःखादिकमिति शर्म गृहम् । तत् नः अस्मभ्यं वि यच्छत । हे वसवः शत्रूणां वासयितारो मरुदादयः दूरात् दूरदेशात् अन्तितः अन्तिकदेशाद्वा कश्चिदागत्य नू चित् कदाचिदपि वरूथं वरणीयं संभजनीयं यत् गृहं न आदधर्षति आधर्षणं हिंसनं न करोति तद्गृहं प्रयच्छतेति समन्वयः । ' धृष प्रसहने ' इत्यस्य विभाषितणिच्त्वात् यदा णिच् नास्ति तदा रूपम् ॥

अस्ति॒ हि वः॑ सजा॒त्यं॑ रिशादसो॒ देवा॑सो॒ अस्त्याप्य॑म् ।
प्र णः॑ पूर्व॑स्मै सुवि॒ताय॑ वोचत म॒क्षू सु॒म्नाय॒ नव्य॑से ॥ १० ॥

अस्ति॑ । हि । वः । सऽजा॒त्य॑म् । रि॒शादसः । देवा॑सः । अस्ति॑ । आप्य॑म् ।
प्र । नः । पूर्व॑स्मै । सुवि॒ताय॑ । वोचत । म॒क्षु । सु॒म्नाय॑ । नव्य॑से ॥ १० ॥

हे रिशादसः रिशतां हिंसतामसितारः देवासः देवा द्योतमाना मरुदादयः वः युष्माकं सजात्यम् अस्ति परस्परं समानजातिभावोऽस्ति खलु । किंच आप्यम् । आपिर्बन्धुः । तस्य भाव आप्यम् । स्तोतृषु[1] स्तुत्यलक्षणेन संबन्धात्[1] वैवस्वतेन मनुना मया स्तोत्रा सह युष्माकं बन्धुभावः अस्ति खलु । ततः पूर्वस्मै प्रथमभाविने सुविताय । सुष्ठु इयते सर्वैरागम्यत इति सुवितोऽभ्युदयः । तस्मै नव्यसे नवीयसे नवतराय सुम्नाय च उभयं मक्षु शीघ्रं नः अस्माकं प्र वोचत प्रकर्षेण ब्रूत । अभ्युदयधनानि प्रयच्छतेत्यर्थः ॥ ॥ ३२ ॥

इ॒दा हि व॒ उप॑स्तुतिमि॒दा वा॒मस्य॑ भ॒क्तये॑ ।
उप॑ वो विश्ववेदसो नम॒स्युराँ अस॒क्ष्यन्या॑मिव ॥ ११ ॥

इ॒दा । हि । व॒ः । उप॑ऽस्तुतिम् । इ॒दा । वा॒मस्य॑ । भ॒क्तये॑ ।
उप॑ । व॒ः । विश्व॒ऽवेद॒सः । न॒मस्युः । आ । अस॑क्षि । अन्या॑म्ऽइव ॥ ११ ॥

हे विश्ववेदसः सर्वधना हे देवाः नमस्युः अन्नमिच्छन् मनुरहं वः युष्मद्विषयाम् उपस्तुतिम् अन्यामिव अदृष्टपूर्वामिव स्थिताम् । कैश्चिदप्यकृतामित्यर्थः । तादृशीमुपस्तुतिम् इदा हि ।

---

१. त–स्तोतृषु स्तुत्यलक्षणे संबंधात्; भ–स्तोतृस्तुत्यलक्षणसंबंधात् ।

हिरवधारणे । इदानीमेव ᵛउप ᵛआ ᵛअसृक्षि उपासृजामि करोमीत्यर्थः । किमर्थम् । ᵛवः युष्मत्संबन्धिनः ᵛवामस्य वननीयस्य ᵛइदा इदानीमेव ᵛभक्तये संभजनाय । लाभायेत्यर्थः । असृक्षीति सृजेर्लुङि रूपम् । पादादित्वादनिघातः ॥

उदु ष्य वः सविता सुप्रणीतयोऽस्थादूर्ध्वो वरेण्यः ।
नि द्विपादश्चतुष्पादो अर्थिनोऽविश्रन्पतयिष्णवः ॥ १२ ॥

उत् । ऊँ इति । स्यः । वः । सविता । सुऽप्रनीतयः । अस्थात् । ऊर्ध्वः । वरेण्यः ।
नि । द्विऽपादः । चतुःऽपादः । अर्थिनः । अविश्रन् । पतयिष्णवः ॥ १२ ॥

हे ᵛसुप्रणीतयः । शोभनप्रणीतिः स्तुतिः । शोभनप्रणयनाः शोभनस्तुतयो मरुतः ᵛवः युष्माकं मध्ये ᵛऊर्ध्वः ऊर्ध्वं गन्ता ᵛवरेण्यः सर्वैर्वरणीयः संभजनीयः सः[1] ᵛसविता सर्वस्य स्वकर्मणि प्रेरक एतन्नामकः स देवो यदा ᵛउत् ᵛअस्थात् स्वतेजसोद्गतोऽभूत् तदा ᵛअर्थिनः ᵛद्विपादः पादद्वययुक्ताः पुरुषाः ᵛचतुष्पादः पादचतुष्टययुक्ता अश्वादयः ᵛपतयिष्णवः पतनशीलाः पक्षिणश्च ᵛनि ᵛअविश्रन् स्वस्वकार्येषु निविशन्ते । सूर्ये उदिते[2] केचन पुरुषा अग्निहोत्रादिकं कुर्वन्ति केचन देवताविषयं स्तोत्रं कुर्वते । पश्चादयस्तृणादिभक्षणार्थं सर्वत्र संचरन्ति ॥ न्यविश्रन् । निपूर्वाद्विशतेर्लङि व्यत्ययेन परस्मैपदम् । ‘ बहुलं छन्दसि ’ इति रुडागमः ॥

पञ्चमेऽहनि प्रउगशस्त्रे ‘ देवंदेवम् ’ इति वैश्वदेवस्तृचः । सूत्रितं च—‘ देवंदेवं बृहदु गायिषे वचः ’ ( आश्व. श्रौ. ७. १२ ) इति ॥

देवंदेवं वोऽवसे देवंदेवमभिष्टये ।
देवंदेवं हुवेम वाजसातये गृणन्तो देव्या धिया ॥ १३ ॥

देवम्ऽदेवम् । वः । अवसे । देवम्ऽदेवम् । अभिष्टये ।
देवम्ऽदेवम् । हुवेम । वाजऽसातये । गृणन्तः । देव्या । धिया ॥ १३ ॥

वयं ᵛदेव्या द्योतमानया ᵛधिया स्तुत्या ᵛगृणन्तः स्तुवन्तः सन्तः ᵛवः युष्माकं मध्ये ᵛदेवंदेवं दीप्यमानं देवम् ᵛअवसे कर्मरक्षणाय आह्वयाम । अनुक्रमेणाह । ᵛअभिष्टये अभिलषितप्राप्त्यर्थं च ᵛदेवंदेवं वयमाह्वयाम[3] । ततः ᵛवाजसातये अन्नलाभाय ᵛहुवेम ह्वयाम ॥

देवासो हि ष्मा मनवे समन्यवो विश्वे साकं सरातयः ।
ते नो अद्य ते अपरं तुचे तु नो भवन्तु वरिवोविदः ॥ १४ ॥

देवासः । हि । स्म । मनवे । सऽमन्यवः । विश्वे । साकम् । सऽरातयः ।
ते । नः । अद्य । ते । अपरम् । तुचे । तु । नः । भवन्तु । वरिवःऽविदः ॥ १४ ॥

ᵛसमन्यवः समानमनसः यद्वा संग्रामेषु शत्रुहननार्थं समानक्रोधयुक्ताः ᵛविश्वे सर्वे एव ᵛदेवासो ᵛहि ᵛष्म मरुदादयो देवाः खलु ᵛमनवे एतन्नामकाय ऋषये मह्यं ᵛसाकं सह युगपदेव ᵛसरातयः धनादिदानेन सहिताः भवन्तु । पुनरपि प्रार्थयते । ᵛते देवाः ᵛनः अस्माकम् ᵛअद्य अस्मिन् दिने ᵛअपरं च किं बहुना सर्वेषु दिवसेषु धनदातारो भवन्तु । न केवलमस्माकमेव किंतु

---

१. घ—स्यः सः । २. न-भ—उदिते सति । ३. त-भ१—°माह्वयामः ।

तुचे । तुगित्यपत्यनाम । 'तुजि पिजि हिंसादाननिकेतनेषु' । तोजयति हिनस्ति पितुर्दुःखादिकमिति तुक् पुत्रः । तस्मै नः अस्माकं पुत्राय वरिवोविदः वरणीयस्य धनस्य लम्भयितारः भवन्तु ॥

प्र वः॑ शंसाम्यद्रुहः सं॒स्थ उप॑स्तुतीनाम् ।
न तं धू॒र्तिर्व॑रुण मित्र॒ मर्त्यं॒ यो वो॒ धाम॒भ्योऽवि॑धत् ॥ १५ ॥

प्र । वः॒ । शं॒सा॒मि॒ । अ॒द्रु॒हः॒ । स॒म्ऽस्थे । उप॑ऽस्तुतीनाम् ।
न । तम् । धू॒र्तिः । व॒रु॒ण॒ । मि॒त्र॒ । मर्त्य॑म् । यः । वः॒ । धाम॑ऽभ्यः । अवि॑धत् ॥ १५ ॥

हे अद्रुहः अद्रोग्धारोऽहिंस्या वा मरुदादयः उपस्तुतीनाम् उपस्तोत्राणां संस्थे तासां यज्ञे क्रियमाणत्वादस्मत्संस्थानभूतेऽस्मिन् यज्ञे वः युष्मान् प्र शंसामि प्रकर्षेण स्तौमि। हे वरुण मित्र मित्रावरुणौ तं मर्त्यं मनुष्यं धूर्तिः । धुर्वी हिंसार्थः । शत्रुभ्यो हिंसा तं न बाधते यः मनुष्यः वः युष्माकं धामभ्यः तेजोभ्यः । धीयतेऽस्मिन्निति धाम शरीरं वा। तेभ्यः अविधत्। 'विध विधाने'। हवींषि विदधाति प्रयच्छति । एतेन तेजसामपि हविर्भाक्त्वमस्तीति ज्ञायते ॥

प्र स क्षयं॑ तिरते॒ वि म॒हीरिषो॒ यो वो॒ वरा॑य॒ दाश॑ति ।
प्र प्र॒जाभि॑र्जायते॒ धर्म॑ण॒स्पर्यरि॑ष्टः॒ सर्व॑ एधते ॥ १६ ॥

प्र । सः । क्षय॑म् । ति॒र॒ते॒ । वि । म॒हीः । इषः॑ । यः । वः॒ । वरा॑य । दाश॑ति ।
प्र । प्र॒ऽजाभिः॑ । जा॒य॒ते॒ । धर्म॑णः । परि॑ । अरि॑ष्टः । सर्वः॑ । ए॒ध॒ते॒ ॥ १६ ॥

हे मरुदादयः सः मनुष्यः क्षयम् । क्षियन्ति निवसन्त्यत्रेति क्षयो गृहम् । तत् स मनुष्यः प्र तिरते प्रकर्षेण वर्धयति । तिरतिर्वृद्धिकर्मा । स एव महीः महान्ति इषः अन्नानि च वि वर्धयति यः मनुष्यः वराय वरणीयाय धनाय तदर्थं वः युष्मभ्यं दाशति हवींषि प्रयच्छति । धनादिभिर्वर्धयतीत्यन्वयः । किंच धर्मणः । ध्रियते ऋत्विग्भिरिति धर्म कर्म । युष्मद्विषयात् कर्मणः सकाशात् स मनुष्यः प्रजाभिः पुत्रपौत्रादिभिः परि परितः सर्वतः प्र जायते प्रकर्षेणाविर्भवति । 'आत्मा वै पुत्रनामासि' ( श. ब्रा. १४. ९. ४. २६ ) इति श्रुतेः । ततः अरिष्टः अन्यैरहिंसितः सर्वः युष्माकं हविष्प्रदानात्[2] सकलो जनः एधते धनादिभिर्वर्धते ॥ ॥ ३३ ॥

ऋ॒ते स वि॑न्दते यु॒धः सु॒गेभि॑र्या॒त्यध्व॑नः ।
अ॒र्य॒मा मि॒त्रो वरु॑णः॒ सरा॑तयो॒ यं त्राय॑न्ते स॒जोष॑सः ॥ १७ ॥

ऋ॒ते । सः । वि॒न्द॒ते॒ । यु॒धः । सु॒ऽगेभिः॑ । या॒ति॒ । अध्व॑नः ।
अ॒र्य॒मा । मि॒त्रः । वरु॑णः । स॒ऽरा॑तयः । यम् । त्राय॑न्ते । स॒ऽजोष॑सः ॥ १७ ॥

सः अर्यमादीनां हविर्दाता मनुष्यः युधः । 'युध संप्रहारे'। भावे क्विप् । युद्धात् ऋते विनापि विन्दते धनानि लभते । किंच सुगेभिः शोभनगमनैः सुष्ठु गन्तृभिर्वाश्वैः सह अध्वनः मार्गान् । गन्तव्यान् देशानित्यर्थः । तान् याति गच्छति । यं जनम् अर्यमा सततं[3] गच्छन्[3] मित्रः स्तोतॄणां यष्टॄणां च धनप्रदानेन मित्रभूतः वरुणः निवारयिता शत्रूणां यद्वा वरणीयः संभजनीय

१. त२-३-न-भ-'मिति वा । २. भ१-हविष्प्रदाता । ३. ख-त-अतनन् वांच्छन्; न-य-अततत्वांच्छन्; श-अतस्तत्वांच्छन् ।

एतन्नामकाः ᵛसरातयः समानदानास्त्रयो देवाः ᵛसजोषसः परस्परं संगताः सन्तः यं हव्यप्रदातारं ᵛत्रायन्ते स्वरक्षणैः पालयन्ति स धनादीनि विन्दतीत्यन्वयः ॥

अज्रे चिदस्मै कृणुथा न्यञ्चनं दुर्गे चिदा सुसरणम् ।
एषा चिदस्मादशनिः परो नु सास्रेधन्ती वि नश्यतु ॥ १८ ॥

अज्रे । चित् । अस्मै । कृणुथ । निऽअञ्चनम् । दुःऽगे । चित् । आ । सुऽसरणम् ।
एषा । चित् । अस्मात् । अशनिः । परः । नु । सा । अस्रेधन्ती । वि । नश्यतु ॥ १८ ॥

हे देवाः ᵛअज्रे ᵛचित् । 'ज्रि अभिभवे' । परैरनभिभवनीयेऽपि परपुरे ᵛन्यञ्चनं नितरां गमनम् ᵛअस्मै मनवे ᵛकृणुथ यूयं कुरुत । यद्वा । अज्रे ऋजुगमने प्रस्थे गमनं कुरुत । तथा ᵛदुर्गे ᵛचित् अगन्तव्येऽपि स्थले ᵛसुसरणम् । 'सृ गतौ' । शोभनगमनम् ᵛआ समन्तात् कुरुत । एवं सति सा ᵛएषा ᵛअशनिः शत्रूणां तदेतदायुधम् ᵛअस्मात् सर्वतो गन्तुर्मनोः ᵛनु क्षिप्रं ᵛपरः परस्ताद्भवेत्[1] । पश्चात् ᵛसा अशनिः ᵛअस्रेधन्ती कांश्चिदप्यहिंसती ᵛवि ᵛनश्यतु विनष्टा[2] भवेत् ॥

यदद्य सूर्य उद्यति प्रियक्षत्रा ऋतं दध ।
यन्निम्रुचि प्रबुधि विश्ववेदसो यद्वा मध्यंदिने दिवः ॥ १९ ॥

यत् । अद्य । सूर्ये । उत्ऽयति । प्रियऽक्षत्राः । ऋतम् । दध ।
यत् । निऽम्रुचि । प्रऽबुधि । विश्वऽवेदसः । यत् । वा । मध्यंदिने । दिवः ॥ १९ ॥

हे ᵛप्रियक्षत्राः प्रीणयितृबला देवाः ᵛसूर्ये सर्वस्य स्वस्वकर्मणि प्रेरके सवितरि ᵛउद्यति उद्गच्छति सति ᵛअद्य अस्मिन् दिने ᵛयत् यदा ᵛऋतं कल्याणभूतं गृहं ᵛदध धारयत । दधातेर्लिटि मध्यमबहुवचने रूपम् । ᵛयत् यदा हे ᵛविश्ववेदसः सर्वधना देवाः ᵛनिम्रुचि । म्रुचिर्गत्यर्थः । सूर्यस्य निम्रोचने नितरां गमने । सायमित्यर्थः । तस्मिन् धारयथ । यद्वा ᵛप्रबुधि तस्य प्रबोधने प्रातःकाले । ᵛयद्वा ᵛदिवः सूर्यतेजसा दीप्यमानस्याह्नः ᵛमध्यंदिने मध्ये धनं मनवे धत्तेत्युत्तरत्र संबन्धः ॥

यद्वाभिपित्वे असुरा ऋतं यते छर्दिर्येम वि दाशुषे ।
वयं तद्वो वसवो विश्ववेदस उप स्थेयाम मध्य आ ॥ २० ॥

यत् । वा । अभिऽपित्वे । असुराः । ऋतम् । यते । छर्दिः । येम । वि । दाशुषे ।
वयम् । तत् । वः । वसवः । विश्वऽवेदसः । उप । स्थेयाम । मध्ये । आ ॥ २० ॥

हे ᵛअसुराः प्राज्ञाः संग्राम आयुधानां क्षेप्तारो वा देवाः ᵛयद्वा ᵛअभिपित्वे अस्मद्यज्ञं प्रति युष्माकमभिप्राप्तौ ᵛऋतं सत्यभूतं यज्ञं ᵛयते । इणः शतरि रूपम् । गच्छते ᵛदाशुषे हवींषि दत्तवते यजमानाय ᵛछर्दिः । 'छर्दिर्दीप्तिदेवनयोः' । दीप्यतेऽनेनेति छर्दिस्तेजः । यद्वा । छर्दन्ति[3] दीव्यन्ते[3] अत्रेति छर्दिर्गृहम् । तद्गृहं तेजो वा ᵛवि ᵛयेम प्रयच्छथ । यद्येवं यूयं कुरुथ तर्हि ᵛवयं हे ᵛवसवः स्तोतॄणां धनादिभिराच्छादयितारः यद्वा शत्रूणां विवासयितारः ᵛविश्ववेदसः सर्वधनाः सर्वज्ञाना वा

---

१. ख-त-न-श–परस्ताद्भवत्; ग–परस्ताद्भवन्ती; घ-भ२-३-परस्ताद्भवतु; भ१–परस्ताद्भवतु ।
२. झ-त२-न-भ-श–स्वयमेव विनष्टा । ३. ग–छर्द्यते दीप्यते ।

हे देवाः ᵛवः युष्मत्संबन्धि ᵛतत् कल्याणं गृहम्। षष्ठयर्थे द्वितीया। भवद्भिः प्रत्तस्य[1] गृहस्य ᵛमध्ये ᵛउप ᵛस्थेयाम उपतिष्ठेम। युष्मान् हविर्भिः पूजयेम॥ तिष्ठतेराशीर्लिङि 'लिङ्याशिष्यङ्' इत्यङ्प्रत्ययः॥

यदद्य सूर उदिते यन्मध्यंदिन आतुचि।
वामं धत्थ मनवे विश्ववेदसो जुह्वानाय प्रचेतसे॥ २१॥

यत्। अद्य। सूरे। उत्ऽइते। यत्। मध्यंदिने। आऽतुचि।
वामम्। धत्थ। मनवे। विश्वऽवेदसः। जुह्वानाय। प्रऽचेतसे॥ २१॥

हे ᵛविश्ववेदसः सर्वतो[2] व्याप्तधना हे देवाः ᵛयत्[3] यदा[3] ᵛअद्य इदानीम्। यद्वा सूर्ये ᵛउदिते सति। ᵛयत् यदा ᵛमध्यंदिने दिवसस्य मध्ये। यद्वा ᵛआतुचि। आतुचिर्गमनार्थः। सूर्यस्य निम्रोचने। सायमित्यर्थः। ᵛजुह्वानाय अग्नौ हवींषि जुह्वते अत एव ᵛप्रचेतसे प्रकृष्टज्ञानाय ᵛमनवे एतन्नामकायर्षये मह्यं ᵛवामं वननीयं धनं ᵛधत्थ दत्थ तद्वृणीमह इत्युत्तरत्र संबन्धः॥

वयं तद्वः सम्राज आ वृणीमहे पुत्रो न बहुपाय्यम्।
अश्याम तदादित्या जुह्वतो हविर्येन वस्योऽनशामहै॥ २२॥

वयम्। तत्। वः। सम्ऽराजः। आ। वृणीमहे। पुत्रः। न। बहुऽपाय्यम्।
अश्याम। तत्। आदित्याः। जुह्वतः। हविः। येन। वस्यः। अनशामहै॥ २२॥

हे ᵛसम्राजः सम्यग्दीप्यमाना देवाः ᵛपुत्रो ᵛन। एकवचनं छान्दसम्। युष्माकं पुत्रा इव स्थिताः पुत्रा यथा पितृभिः पोष्यास्तद्वद्युष्माभिः पोष्याः ᵛवयम्। ᵛबहुपाय्यं बहुभिर्भोज्यं ᵛवः युष्मत्संबन्धि ᵛतत् धनम् ᵛअश्याम प्राप्नुयाम। ᵛयेन[4] धनेन ᵛवस्यः वसीयोऽतिशयेन वसुमत्त्वम् ᵛअनशामहै अश्नवामहै प्राप्नुमः॥ अश्नोतेर्लोटि व्यत्ययेन श्नम्प्रत्ययः॥ ॥ ३४॥

'ये त्रिंशति' इति पञ्चर्चमष्टमं सूक्तम्। अत्रानुक्रान्तं—'ये त्रिंशति पञ्चोपान्त्या पुरउष्णिक्' इति। मनुर्ऋषिः। प्रागुत्सप्रीयपरिभाषया गायत्री छन्दः। उपान्त्या पुरउष्णिक्। पूर्ववत् विश्वे देवा देवता। तृतीये छन्दोमे वैश्वदेवशस्त्रे 'ये त्रिंशति' इत्येतत्सूक्तं वैश्वदेवनिविद्धानम्। सूत्रितं च—'ये त्रिंशतीति वैश्वदेवम्' (आश्व. श्रौ. ८. ११) इति॥

ये त्रिंशति त्रयस्परो देवासो बर्हिरासदन्। विदन्नह द्वितासनन्॥ १॥

ये। त्रिंशति। त्रयः। परः। देवासः। बर्हिः। आ। असदन्। विदन्। अह। द्विता। असनन्॥ १॥

मनुराह। ᵛत्रिंशति त्रिंशत्संख्यायाः ᵛपरः परस्तात् ᵛत्रयः। त्रयस्त्रिंशद्देवता इत्यर्थः। ᵛये ᵛदेवासः देवाः ᵛबर्हिः अस्मदीययज्ञसंबन्धिनि बर्हिषि हविःस्वीकरणार्थम् ᵛआसदन् आसीदन्तु अथानन्तरं[5] ᵛविदन् ते देवा अस्मान् हविषां प्रदातॄनिति जानन्तु। ततः ᵛद्विता द्विधा द्विप्रकारम् ᵛअसनन् अस्मभ्यं धनं पश्वादिकं च प्रयच्छन्तु। यद्वा। द्विता द्वैधम्। अनेन पौनःपुन्यं लक्ष्यते। पुनःपुनरस्मभ्यं धनादिकं ददत्वित्यर्थः॥

वरुणो मित्रो अर्यमा स्मद्रातिषाचो अग्नयः। पत्नीवन्तो वषट्कृताः॥ २॥

---

१. ग–तस्य; घ–दत्तस्य; भ–प्रदत्तस्य। २. श–सर्वत्र। ३. ग-भ–यद्यद्वा; घ-त-न–यद्वा। ४. ख-त-न-भ२-य-श–एतेन। ५. ग-घ-न-श–अह अथा°।

वरुणः । मित्रः । अर्यमा । स्मद्रातिऽसाचः । अग्नयः । पत्नीऽवन्तः । वषट्ऽकृताः ॥ २ ॥

वरुणः वरणीयः संभजनीयः मित्रः स्तोतॄणां यष्टॄणां च धनादिदानेन मित्रभूतः अर्यमा स्तोत्रकारिणे धनं प्रापयन् यद्वा सततं गच्छन् एतन्नामकास्त्रयो देवाः स्मद्रातिषाचः । स्मत् सुमच्छोभना रातिः हविष्प्रदानं येषामस्तीति स्मद्रातयो यजमानाः । तान् सचन्ते धनादिप्रदानेन सेवन्त इति तथोक्ताः । यद्वा । कल्याणं यथा भवति तथा हविषां दातॄन् सचन्त इति । ते तादृशाः पत्नीवन्तः देवपत्नीसहिताः अग्नयः अङ्गनशीला नानाविधा अग्नयः वषट्कृताः । मया 'सोमस्याग्ने वीहि वौषट्' (आश्व. श्रौ. ५. ५) इत्यादिना स्वाहाकृताः । सुहुता इत्यर्थः ॥

**ते नो गोपा अपाच्यास्त उदक्त इत्था न्यक् । पुरस्तात्सर्वया विशा ॥ ३ ॥**

ते । नः । गोपाः । अपाच्याः । ते । उदक् । ते । इत्था । न्यक् । पुरस्तात् । सर्वया । विशा ॥ ३ ॥

ते वरुणादयो देवाः सर्वया सर्वेण विशा अनुचरवर्गेण सह अपाच्याः । अपाची प्रतीची । ततः नः अस्माकं गोपाः गोपायितारो भवन्तु । ते एव उदक् उदीच्याः । 'अञ्चेर्लुक्' इति पञ्चम्यर्थे विहितस्यास्तातेर्लुक् । ततोऽपि अस्माकं रक्षका भवन्तु । इत्था इति शब्देनोर्ध्वां दिशं दक्षिणां च निर्दिशति । इत्थमनेन पूर्वोक्तेन प्रकारेणोर्ध्वाया दक्षिणस्याश्च दिशः ते देवा अस्माकं पालयितारो भवन्तु । तथा न्यक् नीच्या दिशः । अत्रापि पूर्ववदस्तातेर्लुक् । अधस्तादेवाप्यस्माकं[1] त्रातारो भवन्तु । किंच पुरस्तात् प्राच्या दिशश्च ते देवा अस्माकं गोपायितारो भवन्तु ॥

**यथा वशन्ति देवास्तथेदसत्तदेषां नकिरा मिनत् । अरावा चन मर्त्यः ॥ ४ ॥**

यथा । वशन्ति । देवाः । तथा । इत् । असत् । तत् । एषाम् । नकिः । आ । मिनत् । अरावा । चन । मर्त्यः ॥ ४ ॥

देवाः द्योतमानाः सर्वे देवाः यथा वशन्ति यथा कामयन्ते । 'वश कान्तौ' । 'संप्रसारणाच्च' इति पूर्वरूपस्य छन्दसि विकल्पितत्वाद्यणादेशः । तथेत् यथोशन्ति तथैव असत् तद्भवत्येव । तदेवाह । एषां देवानां तत् कामनं नकिः न कश्चिदपि मिनत्[2] हिनस्ति । 'मीङ् हिंसायाम्' । लेटि रूपम् । 'मीनातेर्निगमे' इति ह्रस्वत्वम् । कथं देवानामभिलषितं तथा भवतीति चेत् तदाह । अरावा । यदि देवाः कस्यचिदप्यदातारं मनुष्यं कामयेरन् तदा अरावा अदाता । चन इत्यप्यर्थे । अदातापि मर्त्यः मनुष्य उशद्भयो देवेभ्यो हवींषि प्रयच्छति । तस्मात्तेषां यत्कामनं तत्तथा भवत्येवेत्यर्थः ॥

**सप्तानां सप्त ऋष्टयः सप्त द्युम्नान्येषाम् । सप्तो अधि श्रियो धिरे ॥ ५ ॥**

सप्तानाम् । सप्त । ऋष्टयः । सप्त । द्युम्नानि । एषाम् । सप्तो इति । अधि । श्रियः । धिरे ॥ ५ ॥

अत्र पुरातनी कथा । इन्द्रसमानं पुत्रमिच्छन्त्या अदितेः (?) गर्भस्य केनचित्कारणेनेन्द्रेण सप्तधा भिन्नत्वात् स गर्भः सप्तगणात्मकोऽभवत् । ततो मरुतः संपन्नाः । 'सप्तगणा वै मरुतः' (तै. सं. २. २. ११. १) इति श्रुतेः । एषा[3] कथा[3] 'इदं पित्रे मरुतामुच्यते वचः' (ऋ. सं. १. ११४. ६) इत्यस्मिन् वर्गे सप्रपञ्चेनाभ्यधायि । तथा चास्या ऋचोऽयमर्थः । सप्तानां मरुतां गणानां सप्त सप्तसंख्याकाः ऋष्टयः आयुधविशेषा विभिन्नाः सन्ति । तथा सप्त सप्तसंख्याकानि द्युम्नानि द्योतमानानि कुण्डलादीन्याभरणानि । द्युम्नान्यन्नानि वा । एषां गणानां विभिन्नानि सन्ति ।

१. ग१–अधस्तादप्य°; ग२–अतस्थादेप्य°; त-भ–अधस्तादेरप्य° । २. घ–आमिनत् । ३. ग–एषोर्थः ।

ततः सप्त मरुतां गणाः ᵛसप्तो सप्तैव सप्तविधाः ᵛश्रियः सकला दीप्तीः ᵛअधि ᵛधिरे[1] परस्परमधिकं दधिरे ॥ ॥ ३५ ॥

'बभ्रुरेकः' इति दशर्चं नवमं सूक्तम्। मरीचिपुत्रः कश्यपो वैवस्वतो मनुर्वा ऋषिः। तथा चानुक्रम्यते—'बभ्रुर्दश कश्यपो वा मारीचो द्वैपदम्' इति। दशापि द्विपदा विंशत्यक्षरा विराजः। पूर्ववद्विश्वे देवा देवता। तृतीये छन्दोमे वैश्वदेवशस्त्रे[2] वैश्वदेवसूक्तात् पूर्वमेव द्वैपदं सूक्तं शंसनीयम्। सूत्र्यते हि—'बभ्रुरेक इति द्विपदासूक्तानि पुरस्ताद्वैश्वदेवसूक्तानाम्' (आश्व. श्रौ. ८. ७) इति[2] ॥

बभ्रुरेको विषुणः सूनरो युवाञ्ज्यङ्क्ते हिरण्ययम् ॥ १ ॥

बभ्रुः। एकः। विषुणः। सूनरः। युवा। अञ्जि। अङ्क्ते। हिरण्ययम् ॥ १ ॥

अत्र दशानामृचां किंचित्पदलिङ्गात् पृथग्देवताः। अत्र प्रथमायां बभ्रुरित्यनेन सोमोऽभिधीयते। 'सौम्यं बभ्रुमा लभेत' (तै. सं. २. १. ३. ३) इत्यादिषु दृष्टत्वात्। ᵛबभ्रुः बभ्रुवर्णः शबलतादिषु परिपक्वः। यद्वा। 'डुभृञ् धारणपोषणयोः'। 'कुर्भ्रश्च' (उ. सू. १. २२) इति कुप्रत्ययः। सर्वस्य सुधामयैः किरणैस्तावदुद्गते चन्द्रमसि दुःखोपशमनानि पुष्टानि खलु। तादृशः ᵛविषुणः विश्वगञ्चनः ᵛसूनरः सुष्ठु रात्रीणां नेता। रात्रयश्चन्द्रनेतृकाः खलु। एतादृशः ᵛयुवा प्रतिदिवसमाविर्भूतत्वात्तरुणः ᵛएकः देवः सोमः ᵛहिरण्ययं हिरण्मयम् ᵛअञ्जि। अभिव्यज्यते प्रकाश्यते अनेन इत्यञ्जि आभरणम्। अभिव्यक्तिसाधनं कुण्डलमुकुटादिकं[3] स्वशरीरम् ᵛअङ्क्ते अभिव्यञ्जयति।

योनिमेक आ ससाद द्योतनोऽन्तर्देवेषु मेधिरः ॥ २ ॥

योनिम्। एकः। आ। ससाद। द्योतनः। अन्तः। देवेषु। मेधिरः ॥ २ ॥

अत्र योनिमिति लिङ्गादग्निरुच्यते। 'अग्नये गृहपतये' इत्यादिषु दृष्टत्वात्। ᵛदेवेषु देवानाम् ᵛअन्तः मध्ये ᵛद्योतनः[4] स्वतेजसा दीप्यमानः ᵛमेधिरः मेधावी। अथवा मेधाकाङ्क्षिणां स्तोतॄणां मेधादातृत्वेन मेधायुक्तः। एवंविधः ᵛएकः अग्निः ᵛयोनिं[5] स्थानभूतमाहवनीयादिकम् ᵛआ ᵛससाद हविःस्वीकरणार्थमासीदति ॥

वाशीमेको बिभर्ति हस्त आयसीमन्तर्देवेषु निध्रुविः ॥ ३ ॥

वाशीम्। एकः। बिभर्ति। हस्ते। आयसीम्। अन्तः। देवेषु। निऽध्रुविः ॥ ३ ॥

ᵛदेवेषु ᵛअन्तः देवानां मध्ये द्योतमानः ᵛनिध्रुविः निश्चले स्थाने वर्तमानः। यद्वा। नितरां गमनमस्यास्तीति निध्रुविः सर्वदा गच्छन्। अथवा संग्रामेषु शत्रूणां पुरतोऽतिशयेन स्थैर्यवान्। एतादृशः ᵛएकः त्वष्टृनामको देवः ᵛआयसीम् अयोमयधारां ᵛवाशीम्। 'वाशृ शब्दे'। शब्दयत्याक्रन्दयति शत्रूननयेति वाशी तक्षणसाधनं कुठारः। तं स्वकीये ᵛहस्ते ᵛबिभर्ति धारयति ॥

वज्रमेको बिभर्ति हस्त आहितं तेन वृत्राणि जिघ्नते ॥ ४ ॥

वज्रम्। एकः। बिभर्ति। हस्ते। आऽहितम्। तेन। वृत्राणि। जिघ्नते ॥ ४ ॥

अत्र वज्रलिङ्गादिन्द्रो देवता। ᵛएकः इन्द्रः ᵛआहितं स्वकीयहस्ते निहितं ᵛवज्रम् एतन्नामकमायुधं ᵛबिभर्ति धत्ते। स एवेन्द्रः ᵛतेन निहितेन वज्रेण ᵛवृत्राणि आवरकाणि रक्षांसि पापानि वा ᵛजिघ्नते भृशं हन्ति ॥

---

१. घ-त-न-भ-दधिरे। २. ग-वैश्वदेवशस्त्रे एतत्। सूत्रितं च। इमा नु कं बभ्रुरेक इति द्विपदासूक्तानीति। ३. श-अलंकारणकटकमुकुटादिकं। ४. त-भ-द्योतमानः। ५. ख-त-न-भ१-२-एवं।

तिग्ममेको बिभर्ति हस्त आयुधं शुचिरुग्रो जलाषभेषजः ॥ ५ ॥

तिग्मम् । एकः । बिभर्ति । हस्ते । आयुधम् । शुचिः । उग्रः । जलाषऽभेषजः ॥ ५ ॥

अत्र जलाषभेषज इत्यनेन रुद्रोऽभिधीयते । <sup>v</sup>शुचिः । 'शुच दीप्तौ' । सर्वतः स्वतेजसा दीप्यमानः । यद्वा । 'शुच शोके' । शत्रूणां शोचयिता दुःखयिता । अत एव <sup>v</sup>उग्रः उद्गूर्णबलः <sup>v</sup>जलाषभेषजः रोगापनयनेन सुखकरभैषज्यवान् । यद्वा । स्तोतॄणां दुःखरूपसंसारोच्छेदेन सुखकारिभिषग्रूपः । 'प्रथमो दैव्यो भिषक्' इत्यादिश्रुतिभिरस्य भिषक्त्वं श्रूयते । तादृशः <sup>v</sup>एकः रुद्रः <sup>v</sup>तिग्मं तीक्ष्णधारम् <sup>v</sup>आयुधम् । आयुध्यति संप्रहरति शत्रूननेनेत्यायुधं पिनाकः । तं स्वकीये <sup>v</sup>हस्ते <sup>v</sup>बिभर्ति ॥

पथ एकः पीपाय तस्करो यथाँ एष वेद निधीनाम् ॥ ६ ॥

पथः । एकः । पीपाय । तस्करः । यथा । एषः । वेद । निऽधीनाम् ॥ ६ ॥

पथ इति लिङ्गेन पूषा निगद्यते । 'सं पूषन्नध्वनस्तिर' ( ऋ. सं. १. ४२. १ ) इत्यादिषु दृष्टत्वात् । <sup>v</sup>एकः पूषनामको देवः <sup>v</sup>पथः मार्गान् <sup>v</sup>पीपाय । प्यायतिर्वर्धनकर्माप्यत्र रक्षणार्थः । ये अग्निहोत्रादि कर्म कुर्वन्ति तेषां स्वर्गमार्गं ये दुष्कृतं कर्म कुर्वन्ति तेषां यातनामार्गं च रक्षति । उभयेषां मार्गविपर्ययो यथा न भवति तथा पालयतीत्यर्थः । <sup>v</sup>एषः सोऽयं पूषा <sup>v</sup>निधीनां पृथिव्यां निहितानि धनानि <sup>v</sup>वेद वेत्ति । ज्ञात्वा स्तोतॄणां तानि ददातीत्यर्थः । तत्र दृष्टान्तः । <sup>v</sup>तस्करो <sup>v</sup>यथा । यथा चोरः पथि गच्छतां पुरुषाणां धनहरणार्थं मार्गं रक्षति तथा च स चोरो गृहे निहितानि ज्ञात्वा तदाहृत्य स्वसहायेभ्यो यथा तानि ददाति तद्वत् ॥

त्रीण्येक उरुगायो वि चक्रमे यत्र देवासो मदन्ति ॥ ७ ॥

त्रीणि । एकः । उरुऽगायः । वि । चक्रमे । यत्र । देवासः । मदन्ति ॥ ७ ॥

उरुगायो वि चक्रमे इति पदलिङ्गाद्विष्णुरुच्यते । <sup>v</sup>उरुगायः उरुभिर्बहुभिर्गातव्यः । यद्वा । बहुषु देशेषु गन्ता बहुकीर्तिर्वा । सर्वान् शत्रून् स्वसामर्थ्येन शब्दयत्याक्रन्दयतीति वा उरुगायः । एतादृशः <sup>v</sup>एकः असहायो विष्णुः <sup>v</sup>त्रीणि पदानि भुवनानि <sup>v</sup>वि <sup>v</sup>चक्रमे साधु पादेन विक्रान्तवान् । 'वेः पादविहरणे' ( पा. सू. १. ३. ४१ ) इति क्रमतेरात्मनेपदम् । <sup>v</sup>यत्र येषु लोकेषु <sup>v</sup>देवासः इन्द्रादयो देवाः <sup>v</sup>मदन्ति यजमानदत्तैर्हविर्भिर्माद्यन्ति तानि वि चक्रम इत्यन्वयः ॥

विभिर्द्वा चरत एकया सह प्र प्रवासेव वसतः ॥ ८ ॥

विऽभिः । द्वा । चरतः । एकया । सह । प्र । प्रवासाऽइव । वसतः ॥ ८ ॥

एकया सह इति लिङ्गादश्विनावभिधीयेते । <sup>v</sup>द्वा द्वौ द्वित्वसंख्योपेतावश्विनौ <sup>v</sup>विभिः । वी गत्यादिषु । क्विप् । छान्दसो ह्रस्वः । गमनसाधनैरश्वैः <sup>v</sup>चरतः संचरेते । किंच इमावश्विनौ <sup>v</sup>एकया सूर्याख्यया ताभ्यां स्वयंवृतया स्त्रिया <sup>v</sup>सह <sup>v</sup>प्र <sup>v</sup>वसतः प्रवासं सर्वत्र गमनं कुरुतः । प्रवासे दृष्टान्तः । <sup>v</sup>प्रवासेव । यथा प्रवासिनौ द्वौ पुरुषौ एकया स्त्रिया सह प्रवसतस्तद्वत् ॥

सदो द्वा चक्राते उपमा दिवि सम्राजा सर्पिरासुती ॥ ९ ॥

सदः । द्वा । चक्राते इति । उपऽमा । दिवि । सम्ऽराजा । सर्पिरासुती इति सर्पिःऽआसुती ॥ ९ ॥

सम्राजाविति लिङ्गेन मित्रावरुणावभिधीयेते । <sup>v</sup>उपमा उपमौ परस्परं स्वकान्त्योपमानभूतौ । यद्वा । उपमीयत आभ्यां सर्वमित्युपमौ सर्वस्य । एतावेव <sup>v</sup>सम्राजा सम्राजौ सम्यग्दीप्यमानौ <sup>v</sup>सर्पि-

रासुती। सर्पिर्घृतमाभ्यामासूयत इति[1] सर्पिरासुती। घृतहविष्कौ द्वा द्वौ मित्रावरुणौ दिवि द्युलोके सदः। सीदन्त्यत्रेति सदः स्थानम्। तत् चक्राते अकार्ष्टाम्॥

**अर्चन्त एके महि साम मन्वत तेन सूर्यमरोचयन्॥ १०॥**

अर्चन्तः। एके। महि। साम। मन्वत। तेन। सूर्यम्। अरोचयन्॥ १०॥

एके[2] अत्रयः महि महत् साम त्रिवृत्पञ्चदशादि मन्वत अमन्वत। तदेव अर्चन्तः पूजयन्त एतादृशा[2] अत्रयः तेन उक्तेन साम्ना सूर्यमरोचयन् अदीपयन्। त एवात्र देवता॥ ॥३६॥

'नहि वः' इति चतुर्ऋचं दशमं सूक्तम्। आद्या गायत्री द्वितीया पुरउष्णिक् तृतीया बृहती चतुर्थ्यनुष्टुप्। मनुर्वैवस्वत ऋषिः। पूर्ववद्विश्वे देवा देवता। तथा चानुक्रान्तं—'नहि वश्चतुष्कं पुरउष्णिग्बृहत्यनुष्टुबन्तम्' इति। विनियोगस्तु[3] लिङ्गादवगन्तव्यः[3]॥

**नहि वो अस्त्यर्भको देवासो न कुमारकः। विश्वे सतोमहान्त इत्॥ १॥**

नहि। वः। अस्ति। अर्भकः। देवासः। न। कुमारकः। विश्वे। सतःऽमहान्तः। इत्॥ १॥

हे देवासः देवाः वः युष्माकं मध्ये अर्भकः नहि अस्ति शिशुर्नास्ति खलु[4]। तथा न कुमारकः युष्माकं मध्ये कुमारोऽपि नास्ति। किंतु सर्वे यूयं सवयसो नित्यतरुणा भवथ। एतदेव प्रतिपादयति। विश्वे सर्वे देवा यूयं सतोमहान्त इत्। सर्वस्माद्विद्यमानात् पृथिव्यामपि ये महान्तस्ते सतोमहान्त इत्युच्यन्ते। तस्माद्युष्माकमभर्कोऽपि कुमारोऽपि नास्तीत्यर्थः॥

**इति स्तुतासो असथा रिशादसो ये स्थ त्रयश्च त्रिंशच्च। मनोर्देवा यज्ञियासः॥ २॥**

इति। स्तुतासः। असथ। रिशादसः। ये। स्थ। त्रयः। च। त्रिंशत्। च।

मनोः। देवाः। यज्ञियासः॥ २॥

हे रिशादसः रिशतां हिंसतामसितारो[5] हे मनोः यज्ञियासः मनुनामकस्य मम यज्ञार्हा हे देवाः ये यूयं त्रयश्च त्रिसंख्याकाः त्रिंशच्च त्रिंशत्संख्याकास्त्रयस्त्रिंशद्देवताः स्थ भवथ अभूत ते यूयम् इति इत्थमनेन प्रकारेण स्तुतासः असथ। मया मनुना स्तुता भवथ। अस्तेर्लेटि छान्दसो लुगभावः। यद्वा। असतिः कान्त्यर्थः। इत्थं स्तुता यूयं हवींषि कामयध्वम्॥

**ते नस्त्राध्वं तेऽवत त उ नो अधि वोचत।**
**मा नः पथः पित्र्यान्मानवादधि दूरं नैष्ट परावतः॥ ३॥**

ते। नः। त्राध्वम्। ते। अवत। ते। ऊँ इति। नः। अधि। वोचत।

मा। नः। पथः। पित्र्यात्। मानवात्। अधि। दूरम्। नैष्ट। पराऽवतः॥ ३॥

हे देवाः ते यूयं नः अस्मान् त्राध्वं बाधकेभ्यो रक्षोभ्यस्त्रायध्वम्। ते यूयम् अवत धनादिप्रदानैरस्मान् रक्षत। ते[6] एव देवाः नः अस्मान् अधि वोचत अधिकं भवन्तः कर्मकारिणो

---

१. ख-श—हूतं; ग-भ—हूयते; त-न—हूत। २. ख-ज्ञ-त१-२-भ-मु—अर्चंतः देवान् पूजयन्तः एके केचनात्रयः महि महत् साम मन्वत (मन्वत मन्यंते—भ) उच्चारयंतीत्यर्थः तादृशा; ग—एकेत्रयो महि महत् साम सांत्वनं गानं वा अमन्वत तादृशा; त३-४-न-श—तादृशा। ३. ख-ग-त-न-भ—स्तल्लिंगाद॰। ४. ख-ग-त-न-भ-श—कल्पनया नास्तीत्यर्थः। ५. ग—॰मत्तारो। ६. घ—त उ ते।

धनादिमन्तश्च भवन्त्वित्ति यूयं ब्रूत । किंच हे देवाः ᵛमानवात् । मनुः सर्वेषां पिता । तत आगतात् ᵛपित्र्यात्[1] पिता मनुर्यं मार्गं चक्रे तस्मात् ᵛपथः मार्गात् ᵛनः अस्मान् ᵛमा ᵛनैष्ट मा नयत । अपनयनं मा कुरुतेत्यर्थः । सर्वदा ब्रह्मचर्याग्निहोत्रादिकर्माणि येन मार्गेण भवन्ति तमेवास्मान्नयत । किंतु ᵛदूरं य एतद्व्यतिरिक्तो विप्रकृष्टमार्गोऽस्ति तस्मात् ᵛअधि । अधिकमित्यर्थः । अस्मानपनयत ॥

ये दे॑वास इ॒ह स्थन॒ विश्वे॑ वैश्वान॒रा उ॒त ।
अ॒स्मभ्यं॒ शर्म॑ स॒प्रथो॒ गवेऽश्वा॑य यच्छत ॥ ४ ॥

ये । दे॒वासः॑ । इ॒ह । स्थन॑ । विश्वे॑ । वै॒श्वा॒न॒राः । उ॒त ।
अ॒स्मभ्य॑म् । शर्म॑ । स॒ऽप्रथः॑ । गवे॑ । अश्वा॑य । य॒च्छ॒त ॥ ४ ॥

हे ᵛदेवासः देवाः ᵛउत अपि च ᵛवैश्वानराः । विश्वे सर्वे नरः कर्मनेतारोऽध्वर्य्वादयो यस्य स विश्वानरो यज्ञः । तस्मिन् सोमादिहवींषि स्वीकर्तुं भवाः प्रादुर्भूताः । भवार्थेऽण्प्रत्ययः । यद्वा । विश्वानरोऽग्निः । देवानां तन्मुखत्वात् तस्य संबन्धिनः । ᵛविश्वे सर्वे ᵛये देवा यूयम् ᵛइह अस्मिन्नस्मदीये यज्ञे ᵛस्थन हवींष्यादातुं भवथ ततः ᵛसप्रथः । 'प्रथ प्रख्याने' । सर्वतः प्रसिद्धं सर्वत्र पृथुतमं वा ᵛशर्म । सर्वं[2] शृणाति हिनस्ति दुःखमिति शर्म सुखम् । तत् ᵛअस्मभ्यं प्रयच्छत । तथा ᵛगवे अस्मदीयेभ्यो यज्ञसाधनभूतेभ्यो गोभ्यः ᵛअश्वाय शर्म सुखं प्रदत्त ॥ ॥ ३७ ॥ ॥ ४ ॥

पञ्चमेऽनुवाके द्वादश सूक्तानि । तत्र 'यो यजाति' इत्यष्टादशर्चं प्रथमं सूक्तम् । वैवस्वतो मनुर्ऋषिः । नवमीचतुर्दश्यावनुष्टुभौ शिष्टाः पञ्चदश्याद्याश्चतस्रः पङ्क्तयः । दशमी पादनिचृत् । 'त्रयः सप्तकाः पादनिचृत्' (अनु. ४. ४) इति तल्लक्षणात्[3] । शिष्टा एकादश प्राग्वत्सप्रपरिभाषया गायत्र्यः । आद्यासु चतसृषु यज्ञस्ततो यजमानप्रशंसा च श्रूयते[4] । अतस्तद्देवताकाः । 'या दंपती' इत्याद्यासु पञ्चम्यादिषु दंपती प्रशस्येते अतस्तद्देवताकाः । अवशिष्टासु नवसु दंपत्योराशिषः प्रतिपाद्यन्ते । अतस्ता एव देवताः । तथा चानुक्रम्यते—'यो यजाति द्व्यूनात्रेज्यास्तवो यजमानप्रशंसा च येत्यादिपञ्च दंपत्योः शिष्टास्तदाशिषोऽनुष्टुप्[5] चतुष्पङ्क्त्यन्तं नवम्यनुष्टुब्दशमी पादनिचृत्' इति ॥

यो यजा॑ति॒ यजा॑त॒ इत्सु॒नव॑च्च॒ पचा॑ति च । ब्र॒ह्मेदिन्द्र॑स्य चाकनत् ॥ १ ॥

यः । यजा॑ति । यजा॑ते । इत् । सु॒नव॑त् । च॒ । पचा॑ति । च॒ । ब्र॒ह्मा । इत् । इन्द्र॑स्य । चा॒क॒न॒त् ॥ १ ॥

ᵛयः यजमानः सकृत् ᵛयजाति यागं करोति हविर्भिर्देवान् पूजयति स देवेभ्यो लब्धधनादिकः सन् ᵛयजात ᵛइत् पुनरभीष्टप्राप्तये देवेभ्यो हवींषि प्रयच्छत्येव । तथा स एव यजमानः ᵛसुनवच्च सोमाभिषवं करोति च । स एव ᵛपचाति ᵛच पशुपुरोडाशादिकं पचति च । सर्वत्र यजादिषु लेटयडागमाः । स यजमानः ᵛइन्द्रस्य ᵛब्रह्म ब्रह्माणि । ᵛइत् अवधारणे । इन्द्रसंबन्धीनि स्तोत्राण्येव ᵛचाकनत् पुनःपुनः कामयते । कनतेः कान्त्यर्थात् यङ्लुकि अभ्यासत्वं छान्दसम् । ततो लेटयडागमः । अत्र यागे यजमानो धनादि[6] लभत इति यज्ञप्रशंसा । स एव दृष्टफलः सन् सोमाभिषवादीन् करोतीति यजमानप्रशंसा ॥

---

१. ग—परावतः पित्र्य; घ—परावतः दूरात्; त-न-भ—परावतः । २. भ—'सर्वं' नास्ति । ३. ख-त-न—तल्लक्षण; भ-श—तल्लक्षणं । ४. ग-त-न—स्तूयते । ५. ग-त-न-भ-श—शिष्टा अंत्यास्त° । ६. ख-त-न-भ-श—धनादीन् ।

पुरोळाशं यो अस्मै सोमं ररत आशिरम्। पादित्तं शक्रो अंहसः ॥ २ ॥

पुरोळाशम्। यः। अस्मै। सोमम्। ररते। आऽशिरम्। पात्। इत्। तम्। शक्रः। अंहसः ॥२॥

यः यजमानः अस्मै इन्द्राय पशुपुरोळाशं तथा आशिरं तृतीयसवने गोक्षीरेणामिश्रितं[1] सोमं[2] ररते प्रयच्छति। रातेर्लटि[3] शपः श्लुः। अडागमः। शक्रः समर्थः स इन्द्रः तं यष्टारम् अंहसः पापात् तद्रूपाद्रक्षसो वा पात्। इत् अवधारणे। अपादेव। रक्षत्येव। पातेर्लुङि रूपम् ॥

तस्य द्युमाँ असद्रथो देवजूतः स शूशुवत्। विश्वा वन्वन्नमित्रिया ॥ ३ ॥

तस्य। द्युऽमान्। असत्। रथः। देवऽजूतः। सः। शूशुवत्। विश्वा। वन्वन्। अमित्रिया ॥३॥

तस्य देवान् पूजयतो यजमानस्य देवजूतः देवैरिन्द्रादिभिः प्रेरितः द्युमान् दीप्तिमान् रथः रंहणशीलः स्यन्दनो देवानां हविष्प्रदानरूपेण यज्ञेन असत् भवति आगच्छति। ततस्तेन रथेन अमित्रिया अमित्रियान् शत्रुभिः कृतान् विश्वा सर्वान् बाधान् वन्वन्। 'वनोतिर्हिंसाकर्मा' इति यास्कः। हिंसन् सः एव शूशुवत् पुत्रादिभिर्धनैश्च वर्धते। अत्र येन मे रथो बाधाभावश्चाभूदिति यागप्रशंसा येन सम्यगिष्टदेवा रथं दत्तवन्त इति यजमानप्रशंसा ॥

अस्य प्रजावती गृहेऽसश्चन्ती दिवेदिवे। इळा धेनुमती दुहे ॥ ४ ॥

अस्य। प्रजाऽवती। गृहे। असश्चन्ती। दिवेऽदिवे। इळा। धेनुऽमती। दुहे ॥ ४ ॥

प्रजावती पुत्रादियुक्तम्[4] असश्चन्ती। सश्चतिर्गतिकर्मा। अगमनशीलं[5] तादृशं[6] धेनुमती। पयसा सर्वान् धिनोति प्रीणयतीति धेनुर्गौः। तत्सहितम्[7] इळा अन्नम् अस्य यष्टुः गृहे दिवेदिवे अहरहः दुहे देवैः दुह्यते। यद्वा। इळेति गवां देवता। सा स्थिरा धेनुमती। गवां पतित्वात् धेनुभिर्धेनुमती। इळा गोदेवता। देवैः प्रेरिता सती अस्य यजमानस्य गृहे दोग्धा। पुत्रादिकमस्मै ददातीत्यर्थः। दुहेर्लटि 'लोपस्त आत्मनेपदेषु' इति तलोपः। अत्र इज्यास्तवः ॥

या दंपती समनसा सुनुत आ च धावतः। देवासो नित्ययाशिरा ॥ ५ ॥

या। दंपती इति दम्ऽपती। सऽमनसा। सुनुतः। आ। च। धावतः।
देवासः। नित्यया। आऽशिरा ॥ ५ ॥

अत्र यजने[8] दंपत्योः[8] स्तुतिः। हे देवासः देवाः समनसा समनसौ कर्मणि समानमनस्कौ या यौ दंपती यज्ञकारिणौ जायापती[9] सुनुतः सोमाभिषवं कुरुतः। यौ दंपती ततस्तमभिषुतं सोमम् आ धावतः च दशापवित्रेण शोधयतः। 'धावु गतिशुद्ध्योः'। तथा नित्यया। यत्र तृतीयसवने सोमोऽस्ति तत्राश्रयणद्रव्यं गोक्षीरमस्त्येव। तस्मात् नित्यसंबन्धेन आशिरा आश्रयणेन गोक्षीरेण संयुतं सोमं यौ प्रयच्छतः तावन्नादीन् प्राप्नुत इत्युत्तरत्र संबन्धः ॥ ॥ ३८ ॥

प्रति प्राशव्याँ इतः सम्यञ्चा बर्हिराशाते। न ता वाजेषु वायतः ॥ ६ ॥

प्रति। प्राशव्यान्। इतः। सम्यञ्चा। बर्हिः। आशाते इति। न। ता। वाजेषु। वायतः ॥६॥

१. घ-श-गोक्षीरेण मिश्रितं। २. ख-त-न-भ-श-सोममस्मै। ३. ग-°र्लेटि; त-न-भ-°र्लोटि। ४. ग-पुत्रादियुक्ता। ५. ग-अगमनशीलां स्थिरेत्यर्थ; त-अगमनशीलयतीत्यर्थः; न-भ-अगमनशीलं यतीत्यर्थः। ६. ग-तादृशी। ७. ग-तत्सहिता। ८. ग-श-यजमानदम्पत्योः। ९. ख-ग-त-न-भ-श-यौ जायापती।

तौ देवेभ्यो हविषां दातारौ दंपती ᵛप्राशव्यान् । ' अश भोजने ' । प्रपूर्वस्यास्यौणादिको भाव उणप्रत्ययः । प्राशुर्भक्षणम् । तस्मै साधून् हितान् वा अन्नादीन् ᵛप्रति ᵛइतः प्रतिगच्छतः । यद्वा । प्राशितव्यान् । अत्र वर्णलोपः । तावेव ᵛसम्यञ्चा सम्यञ्चौ समीचीनौ संगतौ ᵛबर्हिः यज्ञम् ᵛआशाते आनशाते । तत्र द्रव्यैर्व्याप्नुतः । तस्मात् तौ यष्टारौ भार्यापती ᵛवाजेषु देवैर्दत्तेष्वन्नेषु ᵛन ᵛवायतः । वयतिर्गत्यर्थः । न गच्छतः[1] । सर्वदान्नसहितौ तिष्ठेतामित्यर्थः ॥

**न देवानामपि ह्नुतः सुमतिं न जुगुक्षतः । श्रवो बृहद्विवासतः ॥ ७ ॥**

न । देवानाम् । अपि । ह्नुतः । सुऽमतिम् । न । जुघुक्षतः । श्रवः । बृहत् । विवासतः ॥ ७ ॥

एतौ दंपती ᵛदेवानाम् इन्द्रादीनां ᵛन ᵛअपि ᵛह्नुतः अपलापं न कुरुतः । अपिह्नवोऽपलापः[2] । देवेभ्यो हविः प्रदास्याम इति प्रतिज्ञाय पुनरदानमपलापः । ' ह्नुङ् अपनये ' । कथं नापलपन्तीत्यवसीयते । तदाह । ᵛसुमतिं युष्मदीयां शोभनां मतिं ᵛन ᵛजुगुक्षतः जुघुक्षतः न संवरीतुमिच्छतः । संवारणमाच्छादनम् । न छादयत इत्यर्थः । किंतु स्तुतिं कुरुतः । ' गुहू संवरणे ' । ' सनिग्रहगुहोश्च ' ( पा. सू. ७. २. १२ ) इति इट्प्रतिषेधः । ढत्वषत्वभावौ । संहिताकाले भष्भावो नास्ति छान्दसत्वात् । किंच ᵛबृहत् देवेभ्यो दीयमानत्वात् महत् ᵛश्रवः । श्रव इत्यन्ननाम । महदन्नं ᵛविवासतः युष्मभ्यं प्रयच्छतः । विवासतिः परिचरणकर्मा । दानमपि च[3] परिचरणमेव । देवैर्दत्तमन्नं घृतादिभिर्मिश्रीकृत्य पुनःपुनर्यजत इत्यर्थः[4] ॥

**पुत्रिणा ता कुमारिणा विश्वमायुर्व्यश्नुतः । उभा हिरण्यपेशसा ॥ ८ ॥**

पुत्रिणा । ता । कुमारिणा । विश्वम् । आयुः । वि । अश्नुतः । उभा । हिरण्यऽपेशसा ॥८॥

ᵛपुत्रिणा पुत्रवन्तौ तत्रापि ᵛकुमारिणा षोडशवर्षदेशीयपुत्रवन्तौ ᵛहिरण्यपेशसा हिरण्मयैराभरणैरलंकृतरूपौ ᵛउभा उभौ ᵛता तौ दंपती ᵛविश्वं सर्वम् ᵛआयुः आयुष्यं ᵛव्यश्नुतः व्याप्नुतः । यज्ञेन तयोः पुत्रादिकं[5] धनमायुश्च संभवतीत्यर्थः ॥

**वीतिहोत्रा कृतद्वसू दशस्यन्तामृताय कम् । समूधो रोमशं हतो देवेषु कृणुतो दुवः ॥ ९ ॥**

वीतिऽहोत्रा । कृतद्वसू इति कृतत्ऽवसू । दशस्यन्ता । अमृताय । कम् ।
सम् । ऊधः । रोमशम् । हतः । देवेषु । कृणुतः । दुवः ॥ ९ ॥

ᵛवीतिहोत्रा वीतिहोत्रौ । वीतिः प्रियकरो होत्रा यज्ञो ययोस्तौ । अनेन यज्ञेन तयोः सुखादिकं संभवति । तादृशौ । यद्वा । वीतिः कान्त्यर्थः । होत्रेति वाङ्नाम । अस्मद्विषयां स्तुतिं कुरुतमिति पृथक्पृथग्देवैः काम्यमानस्तुती । अत एव ᵛकं सुखप्रदं हवीरूपमन्नं ᵛदशस्यन्ता देवेभ्यः प्रयच्छन्तौ ᵛकृतद्वसू । तकारोपजनश्छान्दसः । याचमानकृतधनौ । पात्रेषूपयुक्तधनावित्यर्थः । एवंविधौ दंपती ᵛअमृताय अमरणाय संतानाभिवृद्धये ᵛरोमशं रोमवन्तं वृषणम् ᵛऊधः योनिं च ᵛसं ᵛहतः संयोजयत इति मैथुनमनूद्यते । ततः सपुत्रादिकौ तौ ᵛदेवेषु ᵛदुवः स्तुत्यन्नदानरूपां परिचर्यां ᵛकृणुतः कुरुतः । पञ्चभिर्दंपती अस्तूयेताम् ॥

**आ शर्म पर्वतानां वृणीमहे नदीनाम् । आ विष्णोः सचाभुवः ॥ १० ॥**

---

१. ख-त-न-भ-श—गच्छतः सुप्यत इत्यर्थः; ग—गच्छतः क्षिप्यत इत्यर्थः । २. ख-ग-ज्ञ-त२—अपह्नवो°; त१—अपह्नुवो° । ३. ख-ग-त-न-भ-श— स्व° । ४. श—अन्नं देवेभ्यः प्रयच्छंतौ कुरुत इत्यर्थः । ५. श—पुत्रपौत्रादिकं ।

आ । शर्म॑ । पर्व॑तानाम् । वृ॒णी॒म॒हे॑ । न॒दीना॑म् । आ । विष्णोः॑ । स॒चा॒ऽभुवः॑ ॥ १० ॥

एतदादिषु दंपत्योराशिषः । यष्टारो वयं ᵛपर्वतानां फलपुष्पसहितलताभिर्युक्तानां[१] यत् ᵛशर्म सुखं तत्तेषां स्थैर्यलक्षणं सुखं वा ᵛनदीनां चोभयकूलवासिभिर्मुनिभिर्मनुष्यैर्वा जपाद्यनुष्ठाने कृते यत्सुखं तासां भवति तत्सुखमेकत्र स्थित्वा सकलपदार्थभोक्तृत्वलक्षणमनुष्ठानलक्षणं सुखम् ᵛआ ᵛवृणीमहे संभजामहे । ᵛसचाभुवः देवैः सह भवतो देवसहितस्य ᵛविष्णोः अपि शत्रुहननलक्षणं यत्सुखं तदपि वयम् ᵛआ वृणीमहे । बाधाभावाद्धविष्प्रदानेन देवैः सह वर्तामह इत्यर्थः ॥ ॥ ३९ ॥

**ऐतु॑ पू॒षा र॒यिर्भगः॑ स्व॒स्ति स॑र्व॒धात॑मः । उ॒रुरध्वा॑ स्व॒स्तये॑ ॥ ११ ॥**

आ । ए॒तु॒ । पू॒षा । र॒यिः । भगः॑ । स्व॒स्ति । स॒र्व॒ऽधात॑मः । उ॒रुः । अध्वा॑ । स्व॒स्तये॑ ॥ ११ ॥

ᵛरयिः धनानां दाता ᵛभगः भजनीयः सर्वैः ᵛसर्वधातमः सर्वेषां धारयितृतमः सर्वेषां धनादिभिः पोषयितृतमः ᵛपूषा एतन्नामको देवः ᵛस्वस्ति क्षेमेण ᵛआ ᵛएतु अस्मान् प्रत्यागच्छतु । ततो मार्गरक्षके पूषण्यागते सति ᵛउरुः विस्तीर्णः ᵛअध्वा मार्गः ᵛस्वस्तये अस्माकमविनाशाय भवतु ॥

**अ॒रम॑तिरन॒र्वणो॒ विश्वो॑ दे॒वस्य॒ मन॑सा । आ॒दि॒त्याना॑मने॒ह इत् ॥ १२ ॥**

अ॒रम॑तिः । अ॒न॒र्वणः॑ । विश्वः॑ । दे॒वस्य॑ । मन॑सा । आ॒दि॒त्याना॑म् । अ॒ने॒हः । इत् ॥ १२ ॥

देवानां मध्ये पूषणमाह । ᵛअनर्वणः । अर्वा गन्तव्यः । शत्रुभिरगन्तव्यस्य अप्रत्यृतस्य[२] ᵛदेवस्य द्योतमानस्य पूष्णः ᵛविश्वः सर्वः स्तोतृजनः ᵛमनसा श्रद्धया भक्त्यैव ᵛअरमतिः अलंमतिः पर्याप्तस्तुतिर्भवति । तथा हि ᵛआदित्यानाम् अदितेः पुत्राणां देवानां दानम् ᵛअनेह ᵛइत् अपापमेव खलु । तस्मादन्नादिप्राप्तये स्तोतृजनः पूषणं स्तौतीत्यर्थः ॥

**यथा॑ नो मि॒त्रो अ॑र्य॒मा वरु॑णः॒ सन्ति॑ गो॒पाः । सु॒गा ऋ॒तस्य॒ पन्थाः॑ ॥ १३ ॥**

यथा॑ । नः॒ । मि॒त्रः । अ॒र्य॒मा । वरु॑णः । सन्ति॑ । गो॒पाः । सु॒ऽगाः । ऋ॒तस्य॑ । पन्थाः॑ ॥ १३ ॥

ᵛमित्रोऽर्यमा ᵛवरुणः एते त्रयो देवाः ᵛनः अस्माकं ᵛगोपाः गोपायितारः ᵛयथा ᵛसन्ति भवन्ति यैर्मार्गैर्वयमेतैः पालयितव्या भवाम ते ᵛऋतस्य सत्यभूतस्य यज्ञस्य ᵛपन्थाः पन्थानः ᵛसुगाः एषां सुगमना भवन्तु । तैरागत्य अस्मान् यज्ञमार्गे स्थापयन्त्वित्यर्थः ॥

**अ॒ग्निं वः॑ पू॒र्व्यं गि॒रा दे॒वमी॑ळे॒ वसू॑नाम् ।**
**स॒प॒र्यन्तः॑ पुरुप्रि॒यं मि॒त्रं न क्षे॑त्र॒साध॑सम् ॥ १४ ॥**

अ॒ग्निम् । वः॒ । पू॒र्व्यम् । गि॒रा । दे॒वम् । ई॒ळे॒ । वसू॑नाम् ।
स॒प॒र्यन्तः॑ । पु॒रु॒ऽप्रि॒यम् । मि॒त्रम् । न । क्षे॒त्र॒ऽसाध॑सम् ॥ १४ ॥

हे देवाः ᵛवः युष्माकं ᵛपूर्व्यं मुख्यं पुरतो गन्तारं वा ᵛदेवं स्वभासा दीप्यमानम् ᵛअग्निं ᵛवसूनां प्राप्तये ᵛगिरा स्तुतिलक्षणया वाचा ᵛईळे अहं स्तौमि । किंच ᵛसपर्यन्तः युष्मान् परिचरन्तो मनुष्याः ᵛपुरुप्रियं बहुविधप्रियं बहूनामभिमतदानेन प्रीणयितारं वा ᵛक्षेत्रसाधसम् । क्षियन्ति निवसन्ति कर्मकरणार्थमत्रेति क्षेत्रो यज्ञः । तस्य साधकम् । साधने दृष्टान्तः । ᵛमित्रं ᵛन । यथा मित्रं सुहृदन्यस्य क्षेत्रं केदारादिकं साधयति तद्वद्यज्ञसाधकमग्निं वसुप्राप्तये स्तुवन्ति ॥

---

१. ख-ग-त-न-भ-श—स्वर्गफलपुष्प॰ । २. ख-त-भ-श—अप्रत्यृतव्यस्य; ग—आप्तस्य अप्रतृदेवस्य ।

मक्षू देववतो रथः शूरो वा पृत्सु कासु चित् ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥१५॥

मक्षु । देवऽवतः । रथः । शूरः । वा । पृत्ऽसु । कासु । चित् ।
देवानाम् । यः । इत् । मनः । यजमानः । इयक्षति । अभि । इत् । अयज्वनः । भुवत् ॥१५॥

देववतः । देवा यष्टव्यतया यस्य सन्ति स देववान् । तस्य रथः देवैर्दत्तः[1] मक्षु शीघ्रं दुर्गमं मार्गमपि प्रविशति । सर्वत्राप्रतिहतगतिरित्यर्थः । तत्र दृष्टान्तः । वा इतिशब्दोऽत्र उपमानवाची । यथा शूरः योद्धा कासु चित् पृत्सु पृतनासु[2] तद्वत् । यः देवानाम् । इत् अवधारणे[2] । मनः एव इयक्षति स्तुतिभिः पूजयितुमिच्छति । यद्वा । देवानां मन इयक्षति हविर्भिर्यष्टुमिच्छति । सः यजमानः अयज्वनः यागमकुर्वतो जनान् अभि भुवत् स्वसामर्थ्येनाभिभवत्येव ॥ इयक्षति । 'यक्ष पूजायाम्' । यज देवपूजादिषु । उभयोरभ्यासस्य संप्रसारणं छान्दसम् । पूर्वस्य 'स्कोः संयोगाद्योः' इति ककारलोपः ॥

न यजमान रिष्यसि न सुन्वान न देवयो ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥ १६ ॥

न । यजमान । रिष्यसि । न । सुन्वान । न । देवयो इति देवऽयो ।
देवानाम् । यः । इत् । मनः । यजमानः । इयक्षति । अभि । इत् । अयज्वनः । भुवत् ॥१६॥

हे यजमान यः[3] भवान्[3] देवानां मनः इयक्षति स त्वं न रिष्यसि विनष्टो न भवसि । किंतु पुत्रपौत्रादिभिर्वर्धसे । हे सुन्वान सोमाभिषवं कुर्वन् यः सुन्वंस्तेषां मन इयक्षति स त्वमपि न रिष्यसि । हे देवयो देवान् कामयमान यो देवानियक्षति तादृशस्त्वमपि न रिष्यसि किंतु धनादिभिर्वर्धसे । देवानां मनो यो यजमानो यष्टुमिच्छति स[4] यागमकुर्वतो जनानभिभवति ॥

नकिष्टं कर्मणा नशन्न प्र योषन्न योषति ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥ १७ ॥

नकिः । तम् । कर्मणा । नशत् । न । प्र । योषत् । न । योषति ।
देवानाम् । यः । इत् । मनः । यजमानः । इयक्षति । अभि । इत् । अयज्वनः । भुवत् ॥१७॥

यः यजमानः देवानां मनः यष्टुमिच्छति[5] तं नकिः न कश्चिदपि नशत् स्वकीयेन कर्मणा न व्याप्नोति । नशतिर्व्याप्तिकर्मा । किंच स यष्टा न प्र योषत् स्वस्मात् स्थानात्न विभक्तः पृथक्कृतो न भवति । किंच न योषति पुत्रादिभिर्धनादिभिश्च न विभक्तो भवति । 'यु मिश्रणामिश्रणयोः' इत्यस्य उभयत्र लेट्यडागमः । शिष्टं व्याख्यातम् ॥

---

१. ग–°देवैरधिष्ठितः । २. ख-ङ-त१-२-भ–पृतनासु संग्रामेषु अप्रतिबद्धगमनः सन् शत्रुहननार्थं प्रविशति तद्वत् । किंच यो यजमानः देवानामिंद्रादीनां मन इदवधारणे; ग–पृतनासु देवानां मन इत् इत्यवधारणे; त३-४-न–पृतना इदवधारणे । ३. घ–हविर्भिः; त-न-भ–सः भवान् । ४. घ-सः अयज्वनः । ५. घ–इयक्षति यष्टुमिच्छति ।

असदत्र सुवीर्यमुत त्यदाश्वश्व्यम् ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥ १८ ॥

असत् । अत्र । सुऽवीर्यम् । उत । त्यत् । आशुऽअश्व्यम् ।
देवानाम् । यः । इत् । मनः । यजमानः । इयक्षति । अभि । इत् । अयज्वनः । भुवत् ॥१८॥

यः यजमानः देवानां मनः यष्टुमिच्छति अत्र अस्मिन् यजमाने सुवीर्यं शोभनवीर्योपेतं पुत्रादिकम् असत् भवत्येव । उत अपि च आश्वश्व्यम् आशुगमनाश्वसंघयुक्तं त्यत् तद्धनादिकं तस्मिन् यजमाने भवति । देवानां मनो यो जनो हविर्भिर्यष्टुमिच्छति यद्वा पूजयितुमिच्छति स जनः अयज्वनः सर्वानभिभवत्येव ॥ ॥ ४० ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये षष्ठाष्टके द्वितीयोऽध्यायः समाप्तः ॥

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ षष्ठस्य तृतीयोऽध्याय आरभ्यते । 'प्र कृतानि' इति त्रिंशदृचं द्वितीयं सूक्तम् । तत्रेयमनुक्रमणिका— 'प्र कृतानि त्रिंशन्मेधातिथिः' इति । काण्वो मेधातिथिर्ऋषिः । 'परं गायत्रं प्राग्वत्सप्रेः' इति परिभाषया गायत्री छन्दः । अनादेशपरिभाषयेन्द्रो देवता । महाव्रते निष्केवल्ये गायत्रतृचाशीतावेतत्सूक्तम् । तथैव पञ्चमारण्यके शौनकेन सूत्रितं—'प्र कृतान्यृजीषिण आ घा ये अग्निमिन्धते' ( ऐ. आ. ५. २. ३ ) इति । अतिरात्रे प्रथमे पर्याये मैत्रावरुणशस्त्रे 'प्र कृतानि' इति तृचोऽनुरूपः । सूत्रितं च—'प्र व इन्द्राय मादनं' प्र कृतान्यृजीषिणः' ( आश्व. श्रौ. ६. ४ ) इति । तस्मिन्नेव शस्त्रे 'प्रति श्रुताय' इत्याद्याः पञ्चदशर्चः । सूत्र्यते हि—'प्रति श्रुताय वो धृषदिति पञ्चदश' ( आश्व श्रौ. ६. ४ ) इति । दशमेऽहनि प्रातःसवनेऽच्छावाकवादे पत्नीयजमानस्थाने 'प्रति श्रुताय' इति तृचः । सूत्रितं च—'प्रति श्रुताय वो धृषदिति तृचौ' ( आश्व. श्रौ. ८. १२ ) इति । अहीनान्तर्गतस्यातिरात्रस्य प्रथमे पर्याये होतुः 'पन्य इदुप गायत' इत्यनुरूपः ॥

प्र कृतान्यृजीषिणः कण्वा इन्द्रस्य गाथया । मदे सोमस्य वोचत ॥ १ ॥

प्र । कृतानि । ऋजीषिणः । कण्वाः । इन्द्रस्य । गाथया । मदे । सोमस्य । वोचत ॥ १ ॥

हे कण्वाः[2] ऋजीषिणः ऋजीषवतः सोमस्य कृतानि कर्माणि इन्द्रस्य गाथया इन्द्रस्य वाचा मदे अस्य मदे संजाते सति प्र वोचत प्रब्रूत ॥

यः सृबिन्दुमनर्शनिं पिप्रुं दासमहीशुवम् । वधीदुग्रो रिणन्नपः ॥ २ ॥

---

१. त-न-भ-मादनं प्रति श्रुतायेति तृचः । सूत्रितं च । प्रति श्रुताय वो धृषदिति तृचाविति ।
२. त१-३-४-न-काण्वाः ।

यः । सृबिन्दम् । अनर्शनिम् । पिप्रुम् । दासम् । अहीशुवम् । वधीत् । उग्रः । रिणन् । अपः ॥२॥

यः इन्द्रः उग्रः उद्गूर्णस्तेजस्वी वा सः अपः उदकानि रिणन् प्रेरयन् सृबिन्दं सृबिन्दनामकं शत्रुम् अनर्शनिम् अनर्शनिनामकं पिप्रुं पिप्रुनामकं च दासं च अहीशुवं च शत्रुं वधीत् अवधीत् जघान ॥

न्यर्बुदस्य विष्टपं वर्ष्माणं बृहतस्तिर । कृषे तदिन्द्र पौंस्यम् ॥ ३ ॥

नि । अर्बुदस्य । विष्टपम् । वर्ष्माणम् । बृहतः । तिर । कृषे । तत् । इन्द्र । पौंस्यम् ॥ ३ ॥

हे इन्द्र बृहतः महतः अर्बुदस्य मेघस्य वर्ष्माणम् उदकस्य वारकं विष्टपं स्थानं नि तिर विध्य । तत् प्रसिद्धं पौंस्यं व्रतं च कृषे कुरु ॥

प्रति श्रुताय वो धृषत्तूर्णाशं न गिरेरधि । हुवे सुशिप्रमूतये ॥ ४ ॥

प्रति । श्रुताय । वः । धृषत् । तूर्णाशम् । न । गिरेः । अधि । हुवे । सुऽशिप्रम् । ऊतये ॥४॥

हे स्तोतारः वः युष्माकं श्रुताय स्तुतीनां श्रवणाय रक्षणाय च धृषत् शत्रून् धृषन्तं सुशिप्रं सुहनुमिन्द्रं प्रति हुवे ह्वयामि । तूर्णाशं न । यथा घर्मेऽभितप्तः[1] पुमांस्तूर्णाशमुदकम् । तथा च यास्कः—‘ तूर्णाशमुदकं भवति तूर्णमश्नुते ’ ( निरु. ५. १६ ) इति । गिरेरधि मेघं प्रति ह्वयति । ‘ पर्वतो गिरिः ’ इति मेघनामसु पाठात् । तद्वदित्यर्थः ॥

स गोरश्वस्य वि व्रजं मन्दानः सोम्येभ्यः । पुरं न शूर दर्षसि ॥ ५ ॥

सः । गोः । अश्वस्य । वि । व्रजम् । मन्दानः । सोम्येभ्यः । पुरम् । न । शूर । दर्षसि ॥ ५ ॥

हे शूर इन्द्र सः प्रसिद्धस्त्वं मन्दानः मोदमानः गोः अश्वस्य च व्रजं निवासस्थानं सोम्येभ्यः सोमार्हेभ्यः पुरं न शत्रूणां नगरीमिव वि दर्षसि विवृतद्वारं करोषि ॥ ॥ १ ॥

यदि मे रारणः सुत उक्थे वा दधसे चनः । आरादुप स्वधा गहि ॥ ६ ॥

यदि । मे । ररणः । सुते । उक्थे । वा । दधसे । चनः । आरात् । उप । स्वधा । आ । गहि ॥६॥

हे इन्द्र मे मम सुते अभिषुते सोमे उक्थे स्तोत्रे वा यदि रारणः रमसे चनः अन्नं यदि च दधसे मह्यं प्रयच्छसि तर्हि आरात् दूरात् स्वधा अन्नेन उप आ गहि उपागच्छ ॥

वयं घा ते अपि ष्मसि स्तोतार इन्द्र गिर्वणः । त्वं नो जिन्व सोमपाः ॥७॥

वयम् । घ । ते । अपि । स्मसि । स्तोतारः । इन्द्र । गिर्वणः । त्वम् । नः । जिन्व । सोमऽपाः ॥७॥

हे गिर्वणः गीर्भिर्वननीय इन्द्र ते तव अपि वयं घ वयं खलु स्तोतारः स्मसि भवामः । हे सोमपाः सोमस्य पातरिन्द्र त्वं नः अस्मान् जिन्व प्रीणयसि ॥

उत नः पितुमा भर संरराणो अविक्षितम् । मघवन्भूरि ते वसु ॥ ८ ॥

उत । नः । पितुम् । आ । भर । सम्ऽरराणः । अविऽक्षितम् । मघऽवन् । भूरि । ते । वसु ॥८॥

---

१. ख–घर्मेमभितप्तः; ग-भ-श–घर्माभितप्तः; त-न–घर्मेभितप्तः ।

उत अपि च हे मघवन् संरराणः संरममाणस्त्वम् अविक्षितम् अविक्षीणं पितुम् अन्नम्। 'पृक्षः पितुः' इत्यन्ननामसु पाठात्। नः अस्मभ्यम् आ भर आहर। ते तव वसु धनं भूरि अधिकं हि॥

उत नो गोमतस्कृधि हिरण्यवतो अश्विनः। इळाभिः सं रभेमहि॥ ९॥

उत। नः। गोऽमतः। कृधि। हिरण्यऽवतः। अश्विनः। इळाभिः। सम्। रभेमहि॥ ९।

उत अपि च हे इन्द्र नः अस्मान् गोमतः गोमिनः कृधि कुरु। अश्विनः[1] अश्वयुक्तान् कृधि[1]। हिरण्यवतः धनवतश्च[2] कृधि। इळाभिः अन्नैश्च सं रभेमहि वयं संरब्धा भवेम॥

बृबदुक्थं हवामहे सृप्रकरस्नमूतये। साधु कृण्वन्तमवसे॥ १०॥

बृबत्ऽउक्थम्। हवामहे। सृप्रऽकरस्नम्। ऊतये। साधु। कृण्वन्तम्। अवसे॥ १०॥

ऊतये लोकस्य रक्षणाय सृप्रकरस्नं प्रसृतबाहुम्। 'करस्नौ बाहू कर्मणां प्रस्नातारौ' (निरु. ६. १७) इति यास्कवचनात्। अवसे लोकस्य पालनाय साधु कृण्वन्तं साधु कुर्वन्तं बृबदुक्थं महदुक्थमिन्द्रं हवामहे ह्वयामः। तथा च यास्कः —'बृबदुक्थो महदुक्थो वक्तव्यमस्मा उक्थम्' (निरु. ६. ४) इति॥ ॥ २॥

यः संस्थे चिच्छतक्रतुरादीं कृणोति वृत्रहा। जरितृभ्यः पुरूवसुः॥ ११॥

यः। सम्ऽस्थे। चित्। शतऽक्रतुः। आत्। ईम्। कृणोति। वृत्रऽहा।
जरितृऽभ्यः। पुरुऽवसुः॥ ११॥

यः प्रसिद्ध इन्द्रः संस्थे संग्रामे शतक्रतुः बहुकर्मा भवति अपि च आत् अनन्तरम् ईम् इदं शत्रुवधादिकं कृणोति करोति चित् एव अयमिन्द्रः वृत्रहा शत्रूणां हन्ता भवति। किंच जरितृभ्यः स्तोतॄणामर्थे पुरूवसुः[3] बहुधनो भवति। न स्वार्थमित्यर्थः॥

स नः शक्रश्चिदा शकद्दानवाँ अन्तराभरः। इन्द्रो विश्वाभिरूतिभिः॥ १२॥

सः। नः। शक्रः। चित्। आ। शकत्। दानऽवान्। अन्तरऽआभरः।
इन्द्रः। विश्वाभिः। ऊतिऽभिः॥ १२॥

शक्रः शक्तः सः इन्द्रः नः चित् अस्मानपि आ शकत् शक्तान् करोतु। अपि च इन्द्रः दानवान् विश्वाभिः सर्वैः ऊतिभिः पालनैः अन्तराभरः अन्तराहरश्छिद्राणामापूरकः। छिद्रापिधायीत्यर्थः॥

यो रायो३वनिर्महान्त्सुपारः सुन्वतः सखा। तमिन्द्रमभि गायत॥ १३॥

यः। रायः। अवनिः। महान्। सुऽपारः। सुन्वतः। सखा। तम्। इन्द्रम्। अभि। गायत॥ १३।

यः इन्द्रः रायः धनस्य अवनिः पालकः महान् सर्वोत्तमः सुपारः शोभनपारणश्च भवति। यश्च सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य सखा प्रियो भवति। तमिन्द्रमभि गायत अभिष्टुत[4]॥

१. ख-ग-त-न-भ-श—'अश्विनः... कृधि' नास्ति। २. ख-त-न-भ-श—मेघवतश्च; ग—मघवतश्च; घ—धनिनश्च। ३. ग—पुरुवसुः। ४. ख-त-भ—अभिष्टुवत हे स्तोतार इति शेषः।

आयन्तारं महिं स्थिरं पृतनासु श्रवोजितम् । भूरेरीशानमोजसा ॥ १४ ॥

आऽयन्तारम् । महि । स्थिरम् । पृतनासु । श्रवःऽजितम् । भूरेः । ईशानम् । ओजसा ॥ १४ ॥

ᵛआयन्तारम् आगन्तारं[1] ᵛमहि महान्तं ᵛपृतनासु संग्रामेषु ᵛस्थिरम् अचलं ᵛश्रवोजितं श्रवसो जेतारम् ᵛओजसा बलेन ᵛभूरेः बहोर्धनस्य ᵛईशानम् ईश्वरमभिगायत ॥

नकिरस्य शचीनां नियन्ता सूनृतानाम् । नकिर्वक्ता न दादिति ॥ १५ ॥

नकिः । अस्य । शचीनाम् । निऽयन्ता । सूनृतानाम् । नकिः । वक्ता । न । दात् । इति ॥ १५ ॥

ᵛअस्य इन्द्रस्य ᵛसूनृतानां शोभनानां ᵛशचीनां कर्मणाम् । 'धीः शची' इति कर्मनामसु पाठात् । ᵛनकिः न कश्चित् ᵛनियन्ता नियामकः । अयमिन्द्रः ᵛन ᵛदादिति न प्रयच्छतीति ᵛनकिर्वक्ता न कश्चिद्वदति । किंतु सर्वोऽपि जनोऽयं प्रदातेत्येव ब्रवीतीत्यर्थः ॥ ॥ ३ ॥

न नूनं ब्रह्मणामृणं प्राशूनामस्ति सुन्वताम् । न सोमो अप्रता पपे ॥ १६ ॥

न । नूनम् । ब्रह्मणाम् । ऋणम् । प्राशूनाम् । अस्ति । सुन्वताम् । न । सोमः । अप्रता । पपे ॥ १६ ॥

ᵛप्राशूनाम् । ये सोमं प्राश्नुवन्ति ते प्राशवः । तेषां सोमं ᵛसुन्वतां ᵛब्रह्मणां ब्राह्मणानाम् ᵛऋणं देवर्णं ᵛन ᵛनूनम् ᵛअस्ति न खलु विद्यते । तथा च श्रूयते—'एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी' ( तै. सं. ६. ३. १०. ५ ) इति । किंच ᵛअप्रता अविस्तीर्णधनेन ᵛसोमः ᵛन ᵛपपे न पीयते । प्रभूतधनेनैव सोमः पीयत इत्यर्थः ॥

पन्य इदुप गायत पन्यं उक्थानि शंसत । ब्रह्मा कृणोत पन्य इत् ॥ १७ ॥

पन्यं । इत् । उप । गायत । पन्यं । उक्थानि । शंसत । ब्रह्म । कृणोत । पन्यं । इत् ॥ १७ ॥

हे उपगातारः ᵛपन्य ᵛइत् स्तुत्य एवेन्द्रे[2] ᵛउप ᵛगायत उपगानं कुरुत । किंच ᵛपन्ये[2] एवेन्द्रे ᵛउक्थानि स्तोत्राणि ᵛशंसत । हे स्तोतार इति शेषः । ᵛपन्ये ᵛइत् स्तुत्य एवेन्द्रे ब्रह्माण्यन्यानि स्तोत्राणि ᵛकृणोत कुरुत[4] ॥

पन्य आ दर्दिरच्छता सहस्रा वाज्यवृतः । इन्द्रो यो यज्वनो वृधः ॥ १८ ॥

पन्यः । आ । दर्दिरत् । शता । सहस्रा । वाजी । अवृतः । इन्द्रः । यः । यज्वनः । वृधः ॥ १८ ॥

ᵛयः ᵛवाजी बलवान् ᵛशता वीराणां शतानि ᵛसहस्रा सहस्राणि च ᵛआ ᵛदर्दिरत् आभिमुख्येन दारयति सोऽयम् ᵛइन्द्रः शत्रुभिः ᵛअवृतः[5] ᵛपन्यः स्तुत्यो भवति । ᵛयज्वनः विधिनेष्टवतो यजमानस्य ᵛवृधः वर्धयिता च भवति ॥

वि षू चर स्वधा अनु कृष्टीनामन्वाहुवः । इन्द्र पिब सुतानाम् ॥ १९ ॥

वि । सु । चर । स्वधाः । अनु । कृष्टीनाम् । अनु । आऽहुवः । इन्द्र । पिब । सुतानाम् ॥ १९ ॥

---

१. ख-त-भ—आभिमुख्येत नेतारं । यच्छंतमित्यर्थः; ग—आयामवन्तं; घ—सर्वतो नियामकं । २. ङ-त१-२—एवेंद्रे तस्मिन् सामानि । ३. ख-त-भ—पन्ये स्तुत्ये । ४. घ—पुस्तकेऽस्य मन्त्रस्य भाष्यमेवं विद्यते—हे उपगातारः पन्य इत् स्तुत्य एव इंद्रस्तस्मिन् सामानि उपगायत । हे होतारः पन्ये तस्मिन्निंद्रे उक्थानि स्तोत्राणि शंसत । हे अध्वर्यवः पन्ये इत् तस्मिन्नेवेंद्रे ब्रह्मा अन्नानि कृणोत कुरुत जुहुत । ५. ग-त-न-भ—आवृतः ।

हे इन्द्र आहुवः आह्वातव्यस्त्वं कृष्टीनां मनुष्याणां स्वधाः हवींषि अनु सु सुष्ठु वि चर। द्वितीयः अनु पूरणः। सुतानाम् अभिषुतान् सोमांश्च पिब॥

**पिब स्वधैनवानामुत यस्तुग्र्ये सचा। उतायमिन्द्र यस्तव॥ २०॥**

पिब। स्वऽधैनवानाम्। उत। यः। तुग्र्ये। सचा। उत। अयम्। इन्द्र। यः। तव॥२०॥

हे इन्द्र स्वधैनवानां स्वधैनवान् स्वभूतपयसो धेनोः संबन्धिनः सोमान्। धेन्वा क्रीतानित्यर्थः। तथा च श्रूयते—'धेन्वा क्रीणाति' (तै. सं. ६. १. १०. २) इति। उत अपि च य सोमः तुग्र्ये उदके। 'बुसं तुग्र्यम्' इत्युदकनामसु पाठात्। सचा संसृष्टः तमपि सोमं पिब। उत अपि च यः सोमः तव त्वदीयः त्वामुद्दिश्य गृहीतः सः अयं त्वया पातव्य इति शेषः॥ ॥ ४॥

**अतीहि मन्युषाविणं सुषुवांसमुपारणे। इमं रातं सुतं पिब॥ २१॥**

अति। इहि। मन्युऽसाविनम्। सुसुऽवांसम्। उपऽअरणे। इमम्। रातम्। सुतम्। पिब॥२१॥

हे इन्द्र मन्युषाविणं क्रोधेन सोमं सुन्वन्तम् अतीहि अतिगच्छ। तथा उपारणे। ब्राह्मणा उपेत्य यस्मिन् देशे न रमन्ते स उपारणः। तस्मिन् देशे सुषुवांसं सुन्वन्तम् अतीहि। इमं रातं ब्राह्मणोपद्रवरहिते देशे अस्माभिर्दत्तमिमं सुतं सोमं पिब॥

**इहि तिस्रः परावत इहि पञ्च जनाँ अति। धेना इन्द्रावचाकशत्॥ २२॥**

इहि। तिस्रः। पराऽवतः। इहि। पञ्च। जनान्। अति। धेनाः। इन्द्र। अवऽचाकशत्॥२२॥

हे इन्द्र धेनाः अस्मदीयाः स्तुतीः अवचाकशत् योऽपश्यत् स त्वं परावतः दूरात्। 'आरे परावतः' इति दूरनामसु पाठात्। तिस्रः अग्रपृष्ठपार्श्वदिशः इहि गच्छ। अनेन अग्रतः पृष्ठतः पार्श्वतश्च इन्द्रस्यागमनमाशास्ते। अपि च पञ्च[1] जनान् मनुष्यान् अति इहि अतिगच्छ। यद्वा। गन्धर्वाः पितरो देवा असुरा रक्षांसि च पञ्चजनाः। तानतीहीत्यर्थः। तथा च यास्कः—'गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः' (निरु. ३. ८) इति॥

**सूर्यो रश्मिं यथा सृजा त्वा यच्छन्तु मे गिरः। निम्नमापो न सध्र्यक्॥२३॥**

सूर्यः। रश्मिम्। यथा। सृज। आ। त्वा। यच्छन्तु। मे। गिरः।
निम्नम्। आपः। न। सध्र्यक्॥ २३॥

हे इन्द्र सूर्यः यथा रश्मिं रश्मीन् किरणानश्वप्रग्रहान् वा विसृजति तथा मह्यं धनं विसृज। अपि च मे मदीयाः गिरः स्तुतयः सध्र्यक् सह त्वाम् आ यच्छन्तु। निम्नमापो न। यथा निम्नं देशमापः सह परिगृह्णन्ति तद्वदित्यर्थः॥

**अध्वर्यवा तु हि षिञ्च सोमं वीराय शिप्रिणे। भरा सुतस्य पीतये॥ २४॥**

अध्वर्यो इति। आ। तु। हि। सिञ्च। सोमम्। वीराय। शिप्रिणे। भर। सुतस्य। पीतये॥२४॥

हे अध्वर्यो शिप्रिणे हनूमते वीराय शूरायेन्द्राय सोमं तु हि क्षिप्रमेव आ सिञ्च। सुतस्य सुतं सोमं पीतये पानाय च[2] भर आहर च॥

---

१. ग२-त-न-भ-'पञ्च' नास्ति। २. ग-'च' नास्ति।

**य उद्रः फलिगं भिनन्न्य१क्सिन्धूँरवासृजत् । यो गोषु पक्वं धारयत् ॥२५॥**

यः । उद्रः । फलिऽगम् । भिनत् । न्यक् । सिन्धून् । अवऽअसृजत् ।
यः । गोषु । पक्वम् । धारयत् ॥ २५ ॥

यः उद्रः उदकार्थं फलिगं मेघम् । ‘रैवतः फलिगः’ इति मेघनामसु पाठात् । भिनत् अभिनत् । सिन्धून् अपश्च अन्तरिक्षात् न्यक् अर्वाक् अवासृजत् । यः च गोषु पक्वं पयः धारयत् अधारयत् । स इन्द्र इत्यर्थः ॥ ॥ ५ ॥

**अहन्वृत्रमृचीषम और्णवाभमहीशुवम् । हिमेनाविध्यदर्बुदम् ॥ २६ ॥**

अहन् । वृत्रम् । ऋचीषमः । और्णऽवाभम् । अहीशुवम् । हिमेन । अविध्यत् । अर्बुदम् ॥२६॥

ऋचीषमः ऋचा दीप्त्या सम इन्द्रः वृत्रं वृत्रनामकं शत्रुम् अहन् जघान । तथा और्णवाभम् और्णवाभनामकम् अहीशुवम् अहीशुवनामकं च शत्रुमहन् । तथा हिमेन तुषारेणोदकेन वा अर्बुदं मेघम् अविध्यत् ॥

**प्र व उग्राय निष्टुरेऽषाळ्हाय प्रसक्षिणे । देवत्तं ब्रह्म गायत ॥ २७ ॥**

प्र । वः । उग्राय । निःऽतुरे । अषाळ्हाय । प्रऽसक्षिणे । देवऽत्तम् । ब्रह्म । गायत ॥ २७ ॥

हे उद्गातारः वः यूयम् उग्राय उद्गूर्णाय निष्टुरे शत्रून्निस्तरते अषाळ्हाय शत्रूणामभिभवित्रे प्रसक्षिणे प्रसहनशीलायेन्द्राय देवत्तं देवप्रसादलब्धं ब्रह्म स्तोत्रं प्र गायत ॥

**यो विश्वान्यभि व्रता सोमस्य मदे अन्धसः । इन्द्रो देवेषु चेतति ॥ २८ ॥**

यः । विश्वानि । अभि । व्रता । सोमस्य । मदे । अन्धसः । इन्द्रः । देवेषु । चेतति ॥ २८ ॥

अन्धसः अद्यमानस्य सोमस्य मदे संजाते विश्वानि सर्वाणि व्रता व्रतानि कर्माणि यः इन्द्रः देवेषु अभि चेतति ज्ञापयति तस्मा इन्द्राय देवत्तं ब्रह्म गायतेत्यर्थः ॥

**इह त्या सधमाद्या हरी हिरण्यकेश्या । वोळ्हामभि प्रयो हितम् ॥ २९ ॥**

इह । त्या । सधऽमाद्या । हरी इति । हिरण्यऽकेश्या । वोळ्हाम् । अभि । प्रयः । हितम् ॥२९॥

इह यज्ञे त्या तौ प्रसिद्धौ सधमाद्या सह माद्यन्तौ हिरण्यकेश्या हिरण्यकेश्यौ हरी अश्वौ[1] हितं हितकरं प्रयः सोमरूपमन्नम्[2] अभि अभिलक्ष्य वोळ्हाम् इन्द्रं वहताम् । प्रापयतामिति ॥

**अर्वाञ्चं त्वा पुरुष्टुत प्रियमेधस्तुता हरी । सोमपेयाय वक्षतः ॥ ३० ॥**

अर्वाञ्चम् । त्वा । पुरुऽस्तुत । प्रियमेधऽस्तुता । हरी इति । सोमऽपेयाय । वक्षतः ॥ ३० ॥

हे पुरुष्टुत[3] इन्द्र त्वा त्वां प्रियमेधस्तुता हरी[4] अश्वौ सोमपेयाय सोमपानाय अर्वाञ्चम् अस्मदभिमुखं वक्षतः वहतः ॥ ॥ ६ ॥

---

१. ख-घ-ज्ञ-त१-२-भ२-३—एतन्नामकावश्वौ । २. घ-त-भ-हविरूपमन्नं । ३. श—पुरुष्टुत बहुभिः स्तुत । ४. श—प्रियमेधैः प्रिययज्ञैः ऋषिभिः स्तुतौ । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं । सुपां सुलुगित्याकारः । ईदृशौ हरी ।

'वयं घ त्वा' इत्येकोनविंशत्यृचं तृतीयं सूक्तं काण्वस्य मेध्यातिथेरार्षं[1] बृहतीच्छन्दस्कम्। षोडश्याद्यास्तिस्रो गायत्र्य एकोनविंश्यनुष्टुप्। इन्द्रो देवता। तथा चानुक्रान्तं—'वयं घैकोना मेध्यातिथिर्बार्हतं त्रिगायत्र्यनुष्टुबन्तम्' इति। महाव्रते निष्केवल्ये बार्हततृचाशीतावादितः पञ्चदशर्चः। तथैव पञ्चमारण्यके शौनकेन सूत्र्यते—'वयं घ त्वा सुतावन्त इति पञ्चदश मो षु त्वा वाघतश्चनेत्येतस्य द्विपदां चोद्धरति' (ऐ. आ. ५. २. ४) इति। चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रे 'वयं घ त्वा' इति तृचो वैकल्पिकः स्तोत्रियः। तथा च सूत्रं—'वयं घ त्वा सुतावन्तः क ईं वेद सुते सचा' (आश्व. श्रौ. ७. ४) इति। स्वरसाङ्कयमेव तृचोऽनुरूपः। सूत्रितं च—'वयं घ त्वा सुतावन्त इति तिस्रो बृहत्यः' (आश्व. श्रौ. ८. ५) इति। तस्मिन्नेव शस्त्रे 'क ईं वेद' इति वैकल्पिकोऽनुरूपः। सूत्रमुक्तमेव॥

वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः।
पवित्रस्य प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते॥ १॥

वयम्। घ। त्वा। सुतऽवन्तः। आपः। न। वृक्तऽबर्हिषः।
पवित्रस्य। प्रऽस्रवणेषु। वृत्रऽहन्। परि। स्तोतारः। आसते॥ १॥

हे वृत्रहन् इन्द्र[2] त्वा त्वां वयं घ वयं खलु सुतवन्तः सोममभिषुतवन्तः आपो न आप इव प्रवणमभिगच्छामः। पवित्रस्य सोमानां प्रस्रवणेषु वृक्तबर्हिषः स्तीर्णबर्हिषः स्तोतारः च त्वां पर्युपासते[3]॥

स्वरन्ति त्वा सुते नरो वसो निरेक उक्थिनः।
कदा सुतं तृषाण ओक आ गम इन्द्र स्वब्दीव वंसगः॥ २॥

स्वरन्ति। त्वा। सुते। नरः। वसो इति। निरेके। उक्थिनः।
कदा। सुतम्। तृषाणः। ओकः। आ। गमः। इन्द्र। स्वब्दीऽइव। वंसगः॥ २॥

हे वसो वासयितरिन्द्र त्वा त्वां सुते अभिषुते सोमे निरेके निर्गमने उक्थिनः[4] नरः नेतारः स्वरन्ति शब्दायन्ते। अपि चेन्द्रः सुतं सोमं प्रति तृषाणः तृष्यन् स्वब्दीव स्वभूतशब्द इव वंसगः वननीयगमनो वृषभः शब्दं कुर्वन् कदा ओकः स्थानम् आ गमत्॥

कण्वेभिर्धृष्णवा धृषद्वाजं दर्षि सहस्रिणम्।
पिशङ्गरूपं मघवन्विचर्षणे मक्षू गोमन्तमीमहे॥ ३॥

कण्वेभिः। धृष्णो इति। आ। धृषत्। वाजम्। दर्षि। सहस्रिणम्।
पिशङ्गऽरूपम्। मघऽवन्। विऽचर्षणे। मक्षु। गोऽमन्तम्। ईमहे॥ ३॥

हे धृष्णो धर्षकेन्द्र कण्वेभिः कण्वानुद्दिश्य। विभक्तिव्यत्ययः। सहस्रिणं सहस्रसंख्याकं वाजम् आ दर्षि देहि[5]। हे मघवन् धनवन् विचर्षणे विद्रष्टरिन्द्र धृषत् धृष्टं पिशङ्गरूपं गोमन्तं च वाजं मक्षु शीघ्रम् ईमहे याचामहे। त्वामिति शेषः॥

---

१. ग-घ-त-न-भ–मेधातिथे°। २. ग-त-न-भ–'इन्द्र' नास्ति। ३. घ–पर्यासते उपासते। ४. ग-घ-त-न–'उक्थिनः' नास्ति। ५. ग-त-न-भ–'देहि' नास्ति।

पाहि गायान्धसो मद इन्द्राय मेध्यातिथे ।
यः संमिश्लो हर्योर्यः सुते सचा वज्री रथो हिरण्ययः ॥ ४ ॥

पाहि । गाय । अन्धसः । मदे । इन्द्राय । मेध्यऽअतिथे ।
यः । सम्ऽमिश्लः । हर्योः । यः । सुते । सचा । वज्री । रथः । हिरण्ययः ॥ ४ ॥

हे ᵛमेध्यातिथे ᵛपाहि सोमं पिब । ᵛअन्धसः पीतस्य सोमस्य ᵛमदे तस्मै ᵛइन्द्राय ᵛगाय स्तोत्रं पठ[1] च[1] । ᵛयः इन्द्रः ᵛहर्योः अश्वयोः ᵛसंमिश्लः स्वरथे संमिश्लयिता । ᵛयः च ᵛसुते सोमे ᵛसचा सहायः । य इन्द्रः ᵛवज्री । यस्य ᵛरथः ᵛहिरण्ययः हिरण्मयः ॥

यः सुषव्यः सुदक्षिण इनो यः सुक्रतुर्गृणे ।
य आकरः सहस्रा यः शतामघ इन्द्रो यः पूर्भिदारितः ॥ ५ ॥

यः । सुऽसव्यः । सुऽदक्षिणः । इनः । यः । सुऽक्रतुः । गृणे ।
यः । आऽकरः । सहस्रा । यः । शतऽमघः । इन्द्रः । यः । पूःऽभित् । आरितः ॥ ५ ॥

ᵛयः ᵛसुषव्यः शोभनसव्यहस्तः यश्च ᵛसुदक्षिणः यश्च ᵛइनः ईश्वरः । 'नियुत्वान् इनः' इतीश्वरनामसु पाठात् । ᵛयः चापि ᵛसुक्रतुः सुप्रज्ञः । ᵛसहस्रा सहस्राणां बहूनां ᵛयः च ᵛआकरः कर्ता । ᵛयः चापि ᵛशतमघः[2] बहुधनः । ᵛयः च ᵛपूर्भित् पुरां भेत्ता । यश्च ᵛआरितः प्रत्यृतः स्तोमान् । तथा च यास्कः—'य आरितः कर्मणि कर्मणि स्थिरः प्रत्यृतः स्तोमान्' ( निरु. ५. १५ ) इति । सः ᵛइन्द्रः ᵛगृणे अस्माभिः स्तूयते च ॥ ॥ ७ ॥

यो धृषितो योऽवृतो यो अस्ति श्मश्रुषु श्रितः ।
विभूतद्युम्नश्च्यवनः पुरुष्टुतः क्रत्वा गौरिव शाकिनः ॥ ६ ॥

यः । धृषितः । यः । अवृतः । यः । अस्ति । श्मश्रुषु । श्रितः ।
विभूतऽद्युम्नः । च्यवनः । पुरुऽस्तुतः । क्रत्वा । गौःऽइव । शाकिनः ॥ ६ ॥

ᵛयो ᵛधृषितः शत्रूणां धर्षयिता ᵛयः च ᵛअवृतः शत्रुभिरपरिवृतः ᵛयः चापि ᵛश्मश्रुषु युद्धेषु । श्रवः श्रयन्त्यस्मिन्निति व्युत्पत्तेः श्मश्रु युद्धमिति वृद्धा वदन्ति । ᵛश्रितः ᵛअस्ति भवति । यश्चापि ᵛविभूतद्युम्नः प्रभूतधनः । यश्च ᵛच्यवनः सोमानां च्यावयिता । यश्चापि ᵛपुरुष्टुतः बहुस्तुतः । स इन्द्रः ᵛक्रत्वा कर्मणा ᵛशाकिनः शक्तस्य यजमानस्य ᵛगौरिव यथा गौः पयसो दोग्ध्री तथा कामानां दोग्धा भवति ॥

क ईं वेद सुते सचा पिबन्तं कद्वयो दधे ।
अयं यः पुरो विभिनत्त्योजसा मन्दानः शिप्र्यन्धसः ॥ ७ ॥

कः । ईम् । वेद । सुते । सचा । पिबन्तम् । कत् । वयः । दधे ।
अयम् । यः । पुरः । विऽभिनत्ति । ओजसा । मन्दानः । शिप्री । अन्धसः ॥ ७ ॥

१. घ-त-न-भ–च पठ । २. ग–शतामघः ।

<sup>v</sup>सुते अभिषुते सोमे <sup>v</sup>सचा ऋत्विजा सह सोमं <sup>v</sup>पिबन्तम् <sup>v</sup>ईम् एनमिन्द्रं <sup>v</sup>कः <sup>v</sup>वेद वेत्ति । न कोऽपि वेत्तीत्यर्थः । <sup>v</sup>कत् किं वा <sup>v</sup>वयः अन्नं <sup>v</sup>दधे धारयति । <sup>v</sup>यः <sup>v</sup>अयम् इन्द्रः <sup>v</sup>शिप्री हनूमान् <sup>v</sup>अन्धसः सोमेन <sup>v</sup>मन्दानः मन्दमानः <sup>v</sup>ओजसा बलेन <sup>v</sup>पुरः <sup>v</sup>विभिनत्ति ॥

दाना मृगो न वारणः पुरुत्रा चरथं दधे ।
नकिष्ट्वा नि यमदा सुते गमो महाँश्चरस्योजसा ॥ ८ ॥

दाना । मृगः । न । वारणः । पुरुऽत्रा । चरथम् । दधे ।
नकिः । त्वा । नि । यमत् । आ । सुते । गमः । महान् । चरसि । ओजसा ॥ ८ ॥

<sup>v</sup>मृगः शत्रूणामन्वेषकः <sup>v</sup>वारणः गजः <sup>v</sup>दाना मदजलानीव <sup>v</sup>पुरुत्रा बहुषु यज्ञेषु <sup>v</sup>चरथं चरणशीलं मदं <sup>v</sup>दधे इन्द्रो धारयति । अथ प्रत्यक्षस्तुतिः । हे इन्द्र <sup>v</sup>त्वा त्वां <sup>v</sup>नकिः <sup>v</sup>नि <sup>v</sup>यमत् न कश्चिन्नियच्छति । <sup>v</sup>सुते सोमे <sup>v</sup>आ <sup>v</sup>गमः आगच्छ । <sup>v</sup>महान् हि त्वम् <sup>v</sup>ओजसा बलेन सर्वतः <sup>v</sup>चरसि ॥

य उग्रः सन्ननिष्टृतः स्थिरो रणाय संस्कृतः ।
यदि स्तोतुर्मघवा शृणवद्धवं नेन्द्रो योषत्या गमत् ॥ ९ ॥

यः । उग्रः । सन् । अनिःऽस्तृतः । स्थिरः । रणाय । संस्कृतः ।
यदि । स्तोतुः । मघऽवा । शृणवत् । हवम् । न । इन्द्रः । योषति । आ । गमत् ॥ ९ ॥

<sup>v</sup>यः <sup>v</sup>उग्रः उद्गूर्णः ओजस्वी वा <sup>v</sup>सन् भवन् <sup>v</sup>अनिष्टृतः शत्रुभिरनिस्तीर्णः <sup>v</sup>स्थिरः अचलः <sup>v</sup>रणाय युद्धाय <sup>v</sup>संस्कृतः शस्त्रैरलंकृतः सोमैर्वा संस्कृतः सः <sup>v</sup>इन्द्रः <sup>v</sup>मघवा धनवान् <sup>v</sup>यदि <sup>v</sup>स्तोतुः <sup>v</sup>हवम् आह्वानं <sup>v</sup>शृणवत् शृणोति तर्ह्यन्यत्र <sup>v</sup>न <sup>v</sup>योषति न गच्छति । किंतु <sup>v</sup>आ <sup>v</sup>गमत् तत्रैवागच्छति ॥

सत्यमित्था वृषेदसि वृषजूतिर्नोऽवृतः ।
वृषा ह्युग्र शृण्विषे परावति वृषो अर्वावति श्रुतः ॥ १० ॥

सत्यम् । इत्था । वृषा । इत् । असि । वृषऽजूतिः । नः । अवृतः ।
वृषा । हि । उग्र । शृण्विषे । पराऽवति । वृषो इति । अर्वाऽवति । श्रुतः ॥ १० ॥

हे <sup>v</sup>उग्र उद्गूर्णेन्द्र त्वं <sup>v</sup>सत्यम् <sup>v</sup>इत्था इत्थं <sup>v</sup>वृषेत् कामानां वर्षक एव <sup>v</sup>असि । <sup>v</sup>वृषजूतिः वृषभिश्चाकृष्टः <sup>v</sup>नः अस्माकम् <sup>v</sup>अवृतः शत्रुभिरपरिवृतश्चासि । <sup>v</sup>वृषा <sup>v</sup>हि सेचक एव <sup>v</sup>शृण्विषे श्रूयसे । <sup>v</sup>परावति दूरेऽपि वृषैव <sup>v</sup>अर्वावति समीपेऽपि वृषा सेचक एव <sup>v</sup>श्रुतः वृषैवाश्रूयथाः ॥ ॥८॥

वृषणस्ते अभीशवो वृषा कशा हिरण्ययी ।
वृषा रथो मघवन्वृषणा हरी वृषा त्वं शतक्रतो ॥ ११ ॥

वृषणः । ते । अभीशवः । वृषा । कशा । हिरण्ययी ।
वृषा । रथः । मघऽवन् । वृषणा । हरी इति । वृषा । त्वम् । शतक्रतो इति शतऽक्रतो ॥ ११ ॥

हे ᐯमघवन् ᐯते तव ᐯअभीशवः रश्मयोऽश्वरशनाः ᐯवृषणः वर्षितारः । ᐯहिरण्ययी हिरण्मयी ᐯकशा अपि ᐯवृषा । ᐯरथः अपि ᐯवृषा वर्षिता । ᐯहरी अश्वावपि ᐯवृषणा वृषणौ वर्षितारौ । हे ᐯशतक्रतो बहुप्रज्ञेन्द्र ᐯत्वं च ᐯवृषा वर्षिता ॥

वृषा सोता सुनोतु ते वृषन्नृजीपिन्ना भर ।
वृषा दधन्वे वृषणं नदीष्वा तुभ्यं स्थातर्हरीणाम् ॥ १२ ॥

वृषा । सोता । सुनोतु । ते । वृषन् । ऋजीपिन् । आ । भर ।
वृषा । दधन्वे । वृषणम् । नदीषु । आ । तुभ्यम् । स्थातः । हरीणाम् ॥ १२ ॥

हे ᐯवृषन् वर्षितरिन्द्र ᐯते तव ᐯसोता अभिषवकर्ता ᐯवृषा वर्षिता सन् ᐯसुनोतु सोममभिषुणोतु । हे ᐯऋजीपिन्[1] ऋजुगमनेन्द्र ᐯआ ᐯभर धनमस्मभ्यमाहर । ᐯहरीणाम् अश्वानाम् ᐯआ आभिमुख्येन हे ᐯस्थातः इन्द्र ᐯतुभ्यं ᐯनदीषु उदकेषु ᐯवृषणं वर्षितारं सोमं ᐯवृषा वर्षिता ᐯदधन्वे धारितवानभिषवार्थम् ॥

एन्द्र याहि पीतये मधु शविष्ठ सोम्यम् ।
नायमच्छा मघवा शृणवद्गिरो ब्रह्मोक्था च सुक्रतुः ॥ १३ ॥

आ । इन्द्र । याहि । पीतये । मधु । शविष्ठ । सोम्यम् ।
न । अयम् । अच्छ । मघऽवा । शृणवत् । गिरः । ब्रह्म । उक्था । च । सुऽक्रतुः ॥ १३ ॥

हे ᐯशविष्ठ बलवत्तम ᐯइन्द्र ᐯसोम्यं सोमात्मकं ᐯमधु अमृतं ᐯपीतये पानाय ᐯआ ᐯयाहि आगच्छ । किमर्थमागमनमित्यत आह । यत आगमनमन्तरेण ᐯमघवा धनवान् ᐯसुक्रतुः सुकर्मा शोभनप्रज्ञो वा ᐯअयम् इन्द्रः ᐯगिरः स्तुतीः ᐯब्रह्म स्तोत्राण्युक्थानि ᐯच[2] ᐯन ᐯअच्छ[3] ᐯशृणवत् नाभिशृणोति । अत आगमनमित्यर्थः ॥

वहन्तु त्वा रथेष्ठामा हरयो रथयुजः ।
तिरश्चिदर्यं सवनानि वृत्रहन्नन्येषां या शतक्रतो ॥ १४ ॥

वहन्तु । त्वा । रथेऽस्थाम् । आ । हरयः । रथऽयुजः ।
तिरः । चित् । अर्यम् । सवनानि । वृत्रऽहन् । अन्येषाम् । या । शतक्रतो इति शतऽक्रतो ॥ १४ ॥

हे ᐯवृत्रहन् ᐯशतक्रतो बहुप्रज्ञ ᐯरथेष्ठां रथस्थम् ᐯअर्यम् ईश्वरं ᐯत्वा त्वां ᐯरथयुजः रथे युक्ताः ᐯहरयः अश्वाः ᐯअन्येषां ᐯया यानि सवनानि सन्ति तानि ᐯतिरः[4] तिरस्कुर्वन्तः ᐯसवनानि अस्मदीयानि सवनानि ᐯआ ᐯवहन्तु ॥

अस्माकमद्यान्तमं स्तोमं धिष्व महामह ।
अस्माकं ते सवना सन्तु शंतमा मदाय द्युक्ष सोमपाः ॥ १५ ॥

---

१. ख-त-न-भ-श-ऋजीषिन् । २. घ-शस्त्राणि च । ३. ग-घ-त-न-भ-अच्छा । ४. घ-ज्ञ-त१-२-तिरश्चित् ।

अस्माकम् । अद्य । अन्तमम् । स्तोमम् । धिष्व । महाऽमह ।
अस्माकम् । ते । सवना । सन्तु । शम्ऽतमा । मदाय । द्युक्ष । सोमऽपाः ॥ १५ ॥

हे ^v^महामह महतामपि महन् महापूज वा ^v^अद्य ^v^अन्तमम् अन्तिकतमम् ^v^अस्माकं मेध्यातिथीनां ^v^स्तोमं ^v^धिष्व धारय । हे ^v^द्युक्ष दीप्त ^v^सोमपाः सोमस्य पातरिन्द्र ^v^ते तव ^v^मदाय मदार्थं ^v^सवना सवनानि ^v^अस्माकं ^v^शंतमा शंतमानि सुखतमानि ^v^सन्तु भवन्तु ॥ ॥ ९ ॥

**नहि षस्तव नो मम शास्त्रे अन्यस्य रण्यति । यो अस्मान्वीर आनयत् ॥१६॥**

नहि । सः । तव । नो इति । मम । शास्त्रे । अन्यस्य । रण्यति ।
यः । अस्मान् । वीरः । आ । अनयत् ॥ १६ ॥

^v^यः ^v^वीरः शूरः ^v^अस्मान् ^v^आनयत् ^v^सः इन्द्रः ^v^तव ^v^शास्त्रे शासने ^v^नहि ^v^रण्यति न रमते । ^v^मम अपि शास्त्रे शासने ^v^नो रण्यति । ^v^अन्यस्य अपि शासने न रण्यति । किंतु रक्षण एव रमत इत्यर्थः ॥

**इन्द्रश्चिद्घा तदब्रवीत्स्त्रिया अशास्यं मनः । उतो अह क्रतुं रघुम् ॥ १७ ॥**

इन्द्रः । चित् । घ । तत् । अब्रवीत् । स्त्रियाः । अशास्यम् । मनः ।
उतो इति । अह । क्रतुम् । रघुम् ॥ १७ ॥

यो मेध्यातिथेर्धनप्रदाता प्लायोगिरासङ्गः स पुमान् भूत्वा स्त्र्यभवत् । तदा यदिन्द्र उवाच तदिदमाह । तथा चाहुः—'प्लायोगिश्चासङ्गो[1] यः स्त्री भूत्वा पुमानभूत् स मेध्यातिथये दानं दत्वा' इति । ^v^इन्द्रश्चिद्घ इन्द्रः खलु ^v^तदब्रवीत् । ^v^स्त्रियाः ^v^मनः चित्तम् ^v^अशास्यं पुरुषेणाशिष्यं शासितुमशक्यं प्रबलत्वादिति । ^v^उतो अपि च स्त्रियाः ^v^क्रतुं प्रज्ञां ^v^रघुं लघुमाह ॥

**सप्ती चिद्घा मदच्युता मिथुना वहतो रथम् । एवेद्धूर्वृष्ण उत्तरा ॥ १८ ॥**

सप्ती इति । चित् । घ । मदऽच्युता । मिथुना । वहतः । रथम् ।
एव । इत् । धूः । वृष्णः । उत्ऽतरा ॥ १८ ॥

^v^सप्ती ^v^चिद्घ इन्द्रस्याश्वावपि खलु ^v^मदच्युता सोमं प्रति गन्तारावपीन्द्रस्यैव ^v^रथं मिथुनौ[2] ^v^वहतः । ^v^एवेत् एवमेव ^v^वृष्णः इन्द्रस्य रथस्य ^v^धूः ^v^उत्तरा अश्वयोरुत्तरा भवति ॥

**अधः पश्यस्व मोपरि संतरां पादकौ हर ।**
**मा ते कशप्लकौ दृशन्स्त्री हि ब्रह्मा बभूविथ ॥ १९ ॥**

अधः । पश्यस्व । मा । उपरि । सम्ऽतराम् । पादकौ । हर ।
मा । ते । कशऽप्लकौ । दृशन् । स्त्री । हि । ब्रह्मा । बभूविथ ॥ १९ ॥

एवमन्तरिक्षादागच्छन् रथस्थ इन्द्रः स्त्रियं सन्तं स्वस्मात् पुंस्त्वमिच्छन्तं प्लायोगिं यदुवाच तदाह । हे प्लायोगे[3] त्वं स्त्री सती ^v^अधः ^v^पश्यस्व । एष स्त्रीणां धर्मः । ^v^उपरि ^v^मा पश्यस्व[4] ।

---

१. ग-त-न-भ-प्रायोगि° । २. घ-मिथुना मिथुनौ । ३. घ-प्रयोगे; त३-प्रावयोगे; त४-न-भ१-२-प्लावयोगे । ४. ग-पश्य ।

उपरिदर्शनं स्त्रीणां धर्मो न भवति हि । पादकौ पादावपि संतरां संश्लिष्टौ यथा भवतस्तथा हर । यथा पुरुषो विश्लिष्टपादनिधानो भवति तथा त्वया स्त्रिया न कर्तव्यमित्यर्थः । अपि च ते कशप्लकौ । कशश्च प्लकश्च कशप्लकौ । कशतिराहननकर्मा । कशप्लकावुभे अङ्गे मा दृशन् पुरुषा न पश्यन्तु । तयोरदर्शनं वाससः सुष्ठु परिधानेन भवति । अतः सुष्ठु वाससा परिधानं कुरु । स्त्रियो हि आ गुल्फादभिसंवीता भवन्तीत्यर्थः । हि यस्मात् कारणात् ब्रह्मा सन् स्त्री बभूविथ ॥ ॥ १० ॥

'एन्द्र याहि' इत्यष्टादशर्चं चतुर्थं सूक्तं काण्वस्य नीपातिथेरार्षमानुष्टुभम् । षोडश्याद्यास्तिस्रो गायत्र्यः । वसुरोचिषोऽङ्गिरोगोत्राः[1] सहस्रसंख्याकाः 'आ यदिन्द्रश्च' इत्यादीनां तासां तिसृणामृषयः । इन्द्रो देवता । तथा चानुक्रमणम्—'एन्द्र याहि द्व्यूना नीपातिथिरानुष्टुभं तृचोऽन्त्यो गायत्रस्तं सहस्रं वसुरोचिषोऽङ्गिरसोऽपश्यन्' इति । विनियोगो लैङ्गिकः ॥

एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १ ॥

आ । इन्द्र । याहि । हरिऽभिः । उप । कण्वस्य । सुऽस्तुतिम् ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ १ ॥

हे इन्द्र कण्वस्य[2] सुष्टुतिं शोभनां स्तुतिं हरिभिः अश्वैः उप आ याहि[3] । दिवः द्युलोकम् । द्वितीयार्थे षष्ठी । अमुष्य अमुष्मिन्निन्द्रे शासतः शासति[4] । विभक्तिव्यत्ययः । तत्र वयं सुखमास्महे । हे दिवावसो दीप्तहविष्केन्द्र दिवं[5] स्वर्गं यय यूयं गच्छत । बहुवचनं पूजार्थम् । यद्वा । हे दिवावसो दिवो द्युनामकम् अमुष्य अमुं लोकं[6] शासनं कुर्वन्तो यूयं दिवं स्वर्गं यय गच्छत । अत्र बहुवचनं पूजार्थमित्यर्थः ॥

आ त्वा ग्रावा वदन्निह सोमी घोषेण यच्छतु ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ २ ॥

आ । त्वा । ग्रावा । वदन् । इह । सोमी । घोषेण । यच्छतु ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ २ ॥

हे इन्द्र त्वा त्वाम् इह यज्ञे ग्रावा सोमाभिषवपाषाणः सोमी सोमवान् वदन् शब्दं कुर्वन् घोषेण ध्वनिना सह आ यच्छतु । सिद्धमन्यत् ॥

अत्रा वि नेमिरेषामुरां न धूनुते वृकः ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ३ ॥

अत्र । वि । नेमिः । एषाम् । उराम् । न । धूनुते । वृकः ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ ३ ॥

---

१. त३-न-भ—वसुमत्तोच्चिनोंगिरोगोत्राः । २. ख-ज्ञ-त१-२-भ२-३—कण्वस्य एतन्नामकस्यर्षेः । ३. भ—याहि आगच्छ । ४. भ—शासति सति । ५. त-न—दिवं कुर्व । ६. ख-त-न-भ२—लोकं शासतः ।

ᵛअत्र अस्मिन् यज्ञे ᵛएषाम् अभिषवग्राव्णां ᵛनेमिः सोमलता ᵛवि ᵛधूनुते विशेषेण कम्पयति । ᵛउरां मेषीं ᵛवृको ᵛन वृक इव । सिद्धमन्यत् ॥

**आ त्वा॒ कण्वा॑ इ॒हाव॑से॒ हव॑न्ते॒ वाज॑सातये ।**

**दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दि॑वावसो ॥ ४ ॥**

आ । त्वा॒ । कण्वाः॑ । इ॒ह । अव॑से । हव॑न्ते । वाज॑ऽसातये ।

दि॒वः । अ॒मुष्य॑ । शास॑तः । दिव॑म् । य॒य । दि॒वा॒व॒सो॒ इति॑ दिवाऽवसो ॥ ४ ॥

हे इन्द्र ᵛत्वा त्वाम् ᵛइह यज्ञे ᵛकण्वाः ᵛअवसे रक्षणाय ᵛवाजसातये अन्नस्य प्राप्त्यर्थं च ᵛआ ᵛहवन्ते आभिमुख्येन ह्वयन्ति । सिद्धमन्यत् ॥

**दधा॑मि ते सु॒ताना॒ं वृष्णे॒ न पू॒र्व॒पाय्य॑म् ।**

**दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दि॑वावसो ॥ ५ ॥**

दधा॑मि । ते॒ । सु॒ताना॑म् । वृष्णे॑ । न । पू॒र्व॒ऽपाय्य॑म् ।

दि॒वः । अ॒मुष्य॑ । शास॑तः । दिव॑म् । य॒य । दि॒वा॒व॒सो॒ इति॑ दिवाऽवसो ॥ ५ ॥

हे इन्द्र ᵛते तुभ्यं ᵛसुतानाम् । द्वितीयार्थे षष्ठी । सुतान् सोमान् ᵛदधामि प्रयच्छामि । ᵛवृष्णे ᵛन यथा वायवे ᵛपूर्वपाय्यं यज्ञमुखे पेयं प्रयच्छन्ति[1] तद्वदहं प्रयच्छामीत्यर्थः । सिद्धमन्यत् ॥ ॥११॥

**स्म॒त्पुरं॑धिर्न॒ आ ग॑हि वि॒श्वतो॑धीर्न ऊ॒तये॑ ।**

**दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दि॑वावसो ॥ ६ ॥**

स्म॒त्ऽपुरं॑धिः । न॒ः । आ । ग॒हि॒ । वि॒श्वत॑ःऽधीः । न॒ः । ऊ॒तये॑ ।

दि॒वः । अ॒मुष्य॑ । शास॑तः । दिव॑म् । य॒य । दि॒वा॒व॒सो॒ इति॑ दिवाऽवसो ॥ ६ ॥

हे[2] इन्द्र ᵛस्मत्पुरंधिः स्वर्गकुटुम्बी ᵛनः अस्मान् ᵛआ ᵛगहि । तथा ᵛविश्वतोधीः सर्वजगतो धारकस्त्वं ᵛनः अस्माकम् ᵛऊतये रक्षणाय आ गहि आगच्छ[2] ॥

**आ नो॑ याहि महेमते॒ सह॑स्रोते॒ शता॑मघ ।**

**दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दि॑वावसो ॥ ७ ॥**

आ । न॒ः । या॒हि॒ । म॒हे॒ऽम॒ते॒ । सह॑स्रऽऊते । शत॑ऽमघ ।

दि॒वः । अ॒मुष्य॑ । शास॑तः । दिव॑म् । य॒य । दि॒वा॒व॒सो॒ इति॑ दिवाऽवसो ॥ ७ ॥

हे ᵛमहेमते महाबुद्धे ᵛसहस्रोते सहस्ररक्षण ᵛशतामघ बहुधनेन्द्र त्वं ᵛनः अस्मान् ᵛआ ᵛयाहि आगच्छ । सिद्धमन्यत् ॥

**आ त्वा॒ होता॒ मनु॑र्हितो देव॒त्रा व॑क्ष॒दीड्यः॑ ।**

**दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दि॑वावसो ॥ ८ ॥**

---

१. ख-ग-घ-त-न-भ-श—प्रयच्छति । २. त३-४-भ१-य-श—पुस्तकेषु षष्ठमन्त्रभाष्यं नास्ति ।

आ । त्वा । होता॑ । मनुः॑ऽहितः । दे॒व॒ऽत्रा । व॒क्षत् । ईड्यः॑ ।
दि॒वः । अ॒मुष्य॑ । शास॑तः । दिव॑म् । य॒य । दि॒वा॒व॒सो॒ इति॑ दिवाऽवसो ॥ ८ ॥

हे इन्द्र ˅त्वा त्वां ˅देवत्रा देवानां मध्ये ˅ईड्यः स्तुत्यः ˅होता देवानामाह्वाताग्निः ˅मनुर्हितः मनुष्यैर्गृहेषु निहितः ˅आ ˅वक्षत् वहतु[1] । सिद्धमन्यत् ॥

आ त्वा॑ मद॒च्युता॒ हरी॑ श्ये॒नं प॒क्षेव॑ वक्षतः ।
दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दि॑वावसो ॥ ९ ॥

आ । त्वा॒ । म॒द॒ऽच्युता॑ । हरी॒ इति॑ । श्ये॒नम् । प॒क्षाऽइ॑व । व॒क्ष॒तः॒ ।
दि॒वः । अ॒मुष्य॑ । शास॑तः । दिव॑म् । य॒य । दि॒वा॒व॒सो॒ इति॑ दिवाऽवसो ॥ ९ ॥

हे इन्द्र ˅त्वा त्वां ˅मदच्युता मदच्युतौ शत्रूणां मदस्य च्यावयितारौ ˅हरी अश्वौ ˅श्येनं श्येनाख्यं पक्षिणं ˅पक्षेव आत्मीयपक्षाविव ˅आ ˅वक्षतः आवहताम् । सिद्धमन्यत् ॥

आ या॑ह्यर्य आ परि॒ स्वाहा॒ सोम॑स्य पी॒तये॑ ।
दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दि॑वावसो ॥ १० ॥

आ । या॒हि॒ । अ॒र्यः॑ । आ । परि॑ । स्वाहा॑ । सोम॑स्य । पी॒तये॑ ।
दि॒वः । अ॒मुष्य॑ । शास॑तः । दिव॑म् । य॒य । दि॒वा॒व॒सो॒ इति॑ दिवाऽवसो ॥ १० ॥

हे ˅अर्य ईश्वर त्वम् ˅आ ˅परि सर्वतः ˅आ ˅याहि आगच्छ । ˅पीतये तव पानार्थं ˅सोमस्य सोमं ˅स्वाहा स्वाहा करोमि । सिद्धमन्यत् ॥ ॥ १२ ॥

आ नो॑ या॒ह्युप॑श्रुत्यु॒क्थेषु॑ रणया इ॒ह ।
दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दि॑वावसो ॥ ११ ॥

आ । नः॒ । या॒हि॒ । उप॑ऽश्रुति । उ॒क्थेषु॑ । र॒ण॒य॒ । इ॒ह ।
दि॒वः । अ॒मुष्य॑ । शास॑तः । दिव॑म् । य॒य । दि॒वा॒व॒सो॒ इति॑ दिवाऽवसो ॥ ११ ॥

हे इन्द्र त्वं ˅नः अस्माकम् ˅इह यज्ञे ˅उक्थेषु शस्त्रेषु पठ्यमानेषु[2] ˅उपश्रुति उपश्रुतौ समीपम् ˅आ ˅याहि आगच्छ । अस्मान् ˅रणय च । सिद्धमन्यत् ॥

सरू॑पै॒रा सु नो॑ गहि॒ संभृ॑तैः॒ संभृ॑ताश्वः ।
दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दि॑वावसो ॥ १२ ॥

सऽरू॑पैः । आ । सु । नः॒ । ग॒हि॒ । सम्ऽभृ॑तैः । संभृ॑तऽअश्वः ।
दि॒वः । अ॒मुष्य॑ । शास॑तः । दिव॑म् । य॒य । दि॒वा॒व॒सो॒ इति॑ दिवाऽवसो ॥ १२ ॥

हे इन्द्र ˅संभृताश्वः पुष्टाश्वस्त्वं ˅सु ˅संभृतैः ˅सरूपैः समानरूपैरश्वैः ˅नः अस्मान् ˅आ ˅गहि आगच्छ । सिद्धमन्यत् ॥

---

१. ग—आवहतु । २. ग—शस्यमानेषु ।

आ यांहि पर्वतेभ्यः समुद्रस्याधि विष्टपः ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १३ ॥

आ । याहि । पर्वतेभ्यः । समुद्रस्य । अधि । विष्टपः ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ १३ ॥

हे इन्द्र त्वं ᵛपर्वतेभ्यः ᵛआ ᵛयाहि आगच्छ । ᵛसमुद्रस्य अन्तरिक्षस्य ᵛविष्टपः विष्टपाच्च ᵛअधि आयाहीत्यर्थः । सिद्धमन्यत् ॥

आ नो गव्यान्यश्व्या सहस्रा शूर दर्दृहि ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १४ ॥

आ । नः । गव्यानि । अश्व्या । सहस्रा । शूर । दर्दृहि ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ १४ ॥

हे ᵛशूर इन्द्र त्वं ᵛनः अस्मभ्यं ᵛसहस्रा सहस्राणि सहस्रसंख्यानि ᵛगव्यानि गोहितानि गोरूपाणि वा अश्व्यानि[1] अश्वहितान्यश्वात्मकानि[2] वा ᵛआ ᵛदर्दृहि आविवृणु । सिद्धमन्यत् ॥

आ नः सहस्रशो भरायुतानि शतानि च ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १५ ॥

आ । नः । सहस्रऽशः । भर । अयुतानि । शतानि । च ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ १५ ॥

हे इन्द्र ᵛनः अस्मभ्यं ᵛसहस्रशः सहस्रधा ᵛअयुतानि ᵛशतानि ᵛच अभीष्टानि वस्तूनि[3] ᵛआ ᵛभर आहर । सिद्धमन्यत् ॥

आ यदिन्द्रश्च दद्वहे सहस्रं वसुरोचिषः । ओजिष्ठमश्व्यं पशुम् ॥ १६ ॥

आ । यत् । इन्द्रः । च । दद्वहे इति । सहस्रम् । वसुऽरोचिषः । ओजिष्ठम् । अश्व्यम् । पशुम् ॥ १६ ॥

ᵛवसुरोचिषः वसुदीप्तयो वयं ᵛसहस्रम् अस्माकं नेता ᵛइन्द्रश्च ᵛओजिष्ठं बलवत्तरम् ᵛअश्व्यम् अश्वात्मकं ᵛपशुं च ᵛयत् यदा ᵛआ ᵛदद्वहे पारावतादादद्महे । उत्तरत्र संबन्धः ॥

य ऋज्रा वातरंहसोऽरुषासो रघुष्यदः । भ्राजन्ते सूर्याइव ॥ १७ ॥

ये । ऋज्राः । वातऽरंहसः । अरुषासः । रघुऽस्यदः । भ्राजन्ते । सूर्याःऽइव ॥ १७ ॥

तदा ᵛये ᵛऋज्राः ऋजुगामिनः ᵛवातरंहसः वायुसदृशवेगाः ᵛअरुषासः आरोचमानाः ᵛरघुष्यदः लघु स्यन्दमाना अश्वाः ᵛसूर्याइव यथा सूर्यस्तथा ᵛभ्राजन्ते ॥

पारावतस्य रातिषु द्रवच्चक्रेष्वाशुषु । तिष्ठं वनस्य मध्य आ ॥ १८ ॥

पारावतस्य । रातिषु । द्रवत्ऽचक्रेषु । आशुषु । तिष्ठम् । वनस्य । मध्ये । आ ॥ १८ ॥

---

१. ङ–अश्व्या । २. ग–अश्वसिहितान्य°; त-न-भ–अश्वसहितान्य° । ३. घ-ङ-श–वसूनि ।

तेषु ^vपारावतस्य ^vरातिषु देयेषु ^vप्रवद्रथेषु प्रवद्रथचक्रेषु ^vआशुषु अश्वेषु । ' तार्क्ष्यः आशुः ' इत्यश्वनामसु पाठात् । प्रतिगृहीतेषु सत्सु[1] ^vवनस्य[2] ^vमध्ये ^vआ ^vतिष्ठम् इति त्रसदस्योरिषां सहस्रं वदति ॥　　॥ १३ ॥

' अग्निनेन्द्रेण ' इति चतुर्विंशत्यृचं पञ्चमं सूक्तं श्यावाश्वस्यात्रेयस्यार्षम् । अत्रानुक्रमणिका– ' अग्निना चतुर्विंशतिः श्यावाश्व आश्विनमौपरिष्टाज्ज्योतिषं पङ्क्तिमहाबृहतीपङ्क्त्यन्तम् ' इति । उपरिष्टाज्ज्योतिश्छन्दः । चतुर्थपादस्याष्टाक्षरत्वात् । ' यतोऽष्टकस्ततो ज्योतिः ' ( अनु. ९. ८ ) इति तल्लक्षणम् । द्वाविंशी पङ्क्तिः । त्रयोविंशी महाबृहती ' चत्वारोऽष्टका जागतश्च महाबृहती ' ( अनु. ९. ९ ) इत्युक्तलक्षणोपेतत्वात् । चतुर्विंशी पङ्क्तिः । अश्विनौ देवता । अप्तोर्यामे होतुरतिरिक्तोक्थे ' अग्निनेन्द्रेण ' इत्येतत्सूक्तम् । सूत्रितं च—' अग्निनेन्द्रेणा भात्यग्निः ' ( आश्व. श्रौ. ९. ११ ) इति ॥

अ॒ग्निनेन्द्रे॑ण॒ वरु॑णेन॒ विष्णु॑नादि॒त्यै रु॒द्रैर्वसु॑भिः सचा॒भुवा॑ ।
स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण च॒ सोमं॑ पिबतमश्विना ॥ १ ॥

अ॒ग्निना॑ । इन्द्रे॑ण । वरु॑णेन । विष्णु॑ना । आ॒दि॒त्यैः । रु॒द्रैः । वसु॑ऽभिः । स॒चा॒ऽभुवा॑ ।
स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्ये॑ण । च॒ । सोम॑म् । पि॒बत॒म् । अ॒श्वि॒ना ॥ १ ॥

हे ^vअश्विना अश्विनौ ^vअग्निनेन्द्रेण ^vवरुणेन ^vविष्णुनादित्यैः ^vरुद्रैः ^vवसुभिः च ^vसचाभुवा सहभूतौ ^vउपसा ^vसूर्येण ^vच ^vसजोषसा संगतौ युवां ^vसोमं ^vपिबतम् ॥

विश्वा॑भिर्धी॒भिर्भुव॑नेन वा॒जिना॑ दि॒वा पृ॑थि॒व्याद्रि॑भिः सचा॒भुवा॑ ।
स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण च॒ सोमं॑ पिबतमश्विना ॥ २ ॥

विश्वा॑भिः । धी॒भिः । भुव॑नेन । वा॒जि॒ना॒ । दि॒वा । पृ॒थि॒व्या । अद्रि॑ऽभिः । स॒चा॒ऽभुवा॑ ।
स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्ये॑ण । च॒ । सोम॑म् । पि॒बत॒म् । अ॒श्वि॒ना ॥ २ ॥

हे ^vवाजिना बलिनावश्विनौ ^vविश्वाभिः सर्वाभिः ^vधीभिः प्रज्ञाभिः ^vभुवनेन अखिलेन भूतजातेन च ^vदिवा द्युलोकेन च ^vपृथिव्या च ^vअद्रिभिः च ^vसचाभुवा सहभूतौ ^vउपसा ^vसूर्येण ^vच[3] संगतौ युवां ^vसोमं ^vपिबतम् ॥

विश्वै॑र्दे॒वैस्त्रि॒भिरे॑काद॒शैरि॒हाद्भिर्म॒रुद्भि॒र्भृगु॑भिः सचा॒भुवा॑ ।
स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण च॒ सोमं॑ पिबतमश्विना ॥ ३ ॥

विश्वैः॑ । दे॒वैः । त्रि॒ऽभिः । ए॒का॒द॒शैः । इ॒ह । अ॒त्ऽभिः । म॒रुत्ऽभिः॑ । भृगु॑ऽभिः । स॒चा॒ऽभुवा॑ ।
स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्यै॑ण । च॒ । सोम॑म् । पि॒बत॒म् । अ॒श्वि॒ना ॥ ३ ॥

हे अश्विनौ ^vविश्वैर्देवैस्त्रिभिरेकादशैः त्रयस्त्रिंशैः ^vइह यज्ञे ^vअद्भिः ^vमरुद्भिः ^vभृगुभिः च ^vसचाभुवा सहभूतौ[4] ^vउषसा ^vसूर्येण ^vच संगतौ[5] युवां[5] ^vसोमं ^vपिबतम् ॥

---

१. ख-त-न-भ१-२-श–सत्सु वनस्पतयः ।　२. ग-ञ-त४–तपोवनस्य ।　३. भ३– च सजोषसौ ।
४. ख-घ-त-न-भ–सहभूतौ युवां सजोषसा ।　५. ख-घ-त-न-भ–' संगतौ युवां ' नास्ति ।

जुषेथां यज्ञं बोधतं हवस्य मे विश्वेह देवौ सवनाव गच्छतम् ।
सजोषसा उषसा सूर्येण चेषं नो वोळ्हमश्विना ॥ ४ ॥

जुषेथाम् । यज्ञम् । बोधतम् । हवस्य । मे । विश्वा । इह । देवौ । सवना । अव । गच्छतम् ।
सऽजोषसौ । उषसा । सूर्येण । च । आ । इषम् । नः । वोळ्हम् । अश्विना ॥ ४ ॥

हे अश्विनौ ᵛयज्ञं ᵛजुषेथां सेवेथाम् । ᵛमे मम ᵛहवस्य हवं ᵛबोधतं जानीतम् । ᵛइह यज्ञे ᵛविश्वा ᵛसवना सर्वाणि सवनानि ᵛअव ᵛगच्छतं प्राप्नुतम् । ᵛइषम् अन्नं ᵛनः ᵛआ ᵛवोळ्हं प्रापयतम् ॥

स्तोमं जुषेथां युवशेव कन्यनां विश्वेह देवौ सवनाव गच्छतम् ।
सजोषसा उषसा सूर्येण चेषं नो वोळ्हमश्विना ॥ ५ ॥

स्तोमम् । जुषेथाम् । युवशाऽइव । कन्यनाम् । विश्वा । इह । देवौ । सवना । अव । गच्छतम् ।
सऽजोषसौ । उषसा । सूर्येण । च । आ । इषम् । नः । वोळ्हम् । अश्विना ॥ ५ ॥

हे अश्विनौ ᵛदेवौ युवामिहास्मिन् यज्ञे ᵛस्तोमं ᵛजुषेथां सेवेथाम् । ᵛयुवशेव यथा युवानौ ᵛकन्यनां कन्यानामाह्वानं सेवेते । तद्वदित्यर्थः । ᵛइह[1] यज्ञे ᵛविश्वा[1] विश्वानि सवनानि ᵛअव[2] ᵛगच्छतं प्राप्नुतम्[2] । सिद्धमन्यत् ॥

गिरो जुषेथामध्वरं जुषेथां विश्वेह देवौ सवनाव गच्छतम् ।
सजोषसा उषसा सूर्येण चेषं नो वोळ्हमश्विना ॥ ६ ॥

गिरः । जुषेथाम् । अध्वरम् । जुषेथाम् । विश्वा । इह । देवौ । सवना । अव । गच्छतम् ।
सऽजोषसौ । उषसा । सूर्येण । च । आ । इषम् । नः । वोळ्हम् । अश्विना ॥ ६ ॥

हे ᵛदेवौ अश्विनौ नोऽस्माकं ᵛगिरः स्तुतीः ᵛजुषेथां सेवेथाम् । तथा ᵛअध्वरं यज्ञं च ᵛजुषेथाम् । ᵛइह यज्ञे विश्वानि[3] सवनानि ᵛअव ᵛगच्छतं प्राप्नुतम् ॥ ॥ १४ ॥

हारिद्रवेव पतथो वनेदुप सोमं सुतं महिषेवाव गच्छथः ।
सजोषसा उषसा सूर्येण च त्रिर्वर्तिर्यातमश्विना ॥ ७ ॥

हारिद्रवाऽइव । पतथः । वना । इत् । उप । सोमम् । सुतम् । महिषाऽइव । अव । गच्छथः ।
सऽजोषसौ । उषसा । सूर्येण । च । त्रिः । वर्तिः । यातम् । अश्विना ॥ ७ ॥

हे अश्विनौ युवां ᵛसुतम् अभिषुतं ᵛसोमम् ᵛउप ᵛपतथः ᵛहारिद्रवाविव[4] यथा हारिद्रवौ पक्षिणौ ᵛवना वनान्युदकानि[5] । 'वाः वनम्' इत्युदकनामसु पाठात् । उपपततः । तद्वदित्यर्थः । ᵛमहिषाविव[6] यथा पिपासितौ महिषावुदकान्युपगच्छतः ᵛतथा ᵛसुतं ᵛसोमम् ᵛअव ᵛगच्छथः । ᵛउषसा ᵛसूर्येण ᵛच संगतौ ᵛत्रिर्वर्तिः त्रिर्मार्गं[7] ᵛयातं च ॥

---

१. ग-त-न-भ१-२–'इह यज्ञे विश्वा' नास्ति । २. ज्ञ–चागच्छंतु; त१-२-४-न-भ१-२–चागच्छंति; त३–ह्यागच्छंति; भ३–चागच्छतं । ३. ज्ञ-त१-२-न-भ२–विश्वा विश्वानि । ४. घ–हारिद्रवेव । ५. घ–॰न्युदकादि । ६. घ–महिषेव । ७. त-भ१-२–त्रिमार्ग ।

हंसाविव पतथो अध्वगाविव सोमं सुतं महिषेवाव गच्छथः ।
सजोषसा उषसा सूर्येण च त्रिर्वर्तिर्यातमश्विना ॥ ८ ॥

हंसौऽइव । पतथः । अध्वगौऽइव । सोमम् । सुतम् । महिषाऽइव । अव । गच्छथः ।
सऽजोषसौ । उषसा । सूर्येण । च । त्रिः । वर्तिः । यातम् । अश्विना ॥ ८ ॥

हे अश्विनौ युवां ᐯहंसाविव यथा हंसौ ᐯअध्वगाविव यथा च पथिकावुदकं[1] गच्छतः तथा वेगेन ᐯसुतं ᐯसोमं ᐯपतथः । सिद्धमन्यत् ॥

श्येनाविव पतथो हव्यदातये सोमं सुतं महिषेवाव गच्छथः ।
सजोषसा उषसा सूर्येण च त्रिर्वर्तिर्यातमश्विना ॥ ९ ॥

श्येनौऽइव । पतथः । हव्यऽदातये । सोमम् । सुतम् । महिषाऽइव । अव । गच्छथः ।
सऽजोषसौ । उषसा । सूर्येण । च । त्रिः । वर्तिः । यातम् । अश्विना ॥ ९ ॥

हे अश्विनौ युवां ᐯश्येनाविव यथा श्येनौ गगनं गच्छतः तथा वेगेन ᐯसुतं ᐯसोमं ᐯहव्यदातये यजमानार्थं ᐯपतथः गच्छथः । सिद्धमन्यत् ॥

पिबतं च तृप्णुतं चा च गच्छतं प्रजां च धत्तं द्रविणं च धत्तम् ।
सजोषसा उषसा सूर्येण चोर्जं नो धत्तमश्विना ॥ १० ॥

पिबतम् । च । तृप्णुतम् । च । आ । च । गच्छतम् । प्रऽजाम् । च । धत्तम् । द्रविणम् । च । धत्तम् ।
सऽजोषसौ । उषसा । सूर्येण । च । ऊर्जम् । नः । धत्तम् । अश्विना ॥ १० ॥

हे अश्विनौ युवां सोमं ᐯपिबतं ᐯच ᐯतृप्णुतं ᐯच तृप्यतं च । पानार्थं तृप्त्यर्थं ᐯच ᐯआ ᐯगच्छतम्[2] । सोमं पीत्वा तृप्तौ सन्तौ युवामस्मभ्यं ᐯप्रजां ᐯच ᐯधत्तं धारयतम् । ᐯद्रविणं धनं ᐯच ᐯधत्तम् । ᐯउषसा ᐯसूर्येण ᐯच संगतौ ᐯनः अस्मभ्यम् ᐯऊर्जं बलं च ᐯधत्तम् ॥

जयतं च प्र स्तुतं च प्र चावतं प्रजां च धत्तं द्रविणं च धत्तम् ।
सजोषसा उषसा सूर्येण चोर्जं नो धत्तमश्विना ॥ ११ ॥

जयतम् । च । प्र । स्तुतम् । च । प्र । च । अवतम् । प्रऽजाम् । च । धत्तम् । द्रविणम् । च ।
धत्तम् । सऽजोषसौ । उषसा । सूर्येण । च । ऊर्जम् । नः । धत्तम् । अश्विना ॥ ११ ॥

हे अश्विनौ युवां ᐯजयतं शत्रून् ᐯच जयतम् । ᐯप्र ᐯस्तुतं स्तोतॄन् ᐯच ᐯप्र ᐯचावतम् अस्मांश्च प्ररक्षतम् । अन्यत् सिद्धम् ॥

हतं च शत्रून्यततं च मित्रिणः प्रजां च धत्तं द्रविणं च धत्तम् ।
सजोषसा उषसा सूर्येण चोर्जं नो धत्तमश्विना ॥ १२ ॥

---

१. ख-घ-त-श—पथिगावु° । २. ग-घ-त-न-भ—गच्छतं°च ।

हतम् । च । शत्रून् । यतंतम् । च । मित्रिणः । प्रऽजाम् । च । धत्तम् । द्रविणम् । च । धत्तम् ।
सऽजोषसौ । उषसा । सूर्येण । च । ऊर्जम् । नः । धत्तम् । अश्विना ॥ १२ ॥

हे अश्विनौ युवां ᵛशत्रून् ᵛच ᵛहतम् । उतापि च ᵛयततं ᵛमित्रिणः मैत्रीयुक्तान् ᵛच गच्छतम् । सिद्धमन्यत् ॥ ॥ १५ ॥

मित्रावरुणवन्ता उत धर्मवन्ता मरुत्वन्ता जरितुर्गच्छथो हवम् ।
सजोषसा उषसा सूर्येण चादित्यैर्यातमश्विना ॥ १३ ॥

मित्रावरुणऽवन्तौ । उत । धर्मऽवन्ता । मरुत्वन्ता । जरितुः । गच्छथः । हवम् ।
सऽजोषसौ । उषसा । सूर्येण । च । आदित्यैः । यातम् । अश्विना ॥ १३ ॥

ᵛउत अपि च हे अश्विनौ युवां ᵛमित्रावरुणवन्ता मित्रावरुणयुक्तौ ᵛधर्मवन्ता धर्मयुक्तौ च ᵛमरुत्वन्ता मरुद्भिर्युक्तौ च ᵛजरितुः स्तोतुः ᵛहवम् आह्वानं ᵛगच्छथः आगच्छतम् । ᵛउषसा ᵛसूर्येण ᵛच ᵛआदित्यैः च[1] ᵛयातं गच्छतम् ॥

अङ्गिरस्वन्ता उत विष्णुवन्ता मरुत्वन्ता जरितुर्गच्छथो हवम् ।
सजोषसा उषसा सूर्येण चादित्यैर्यातमश्विना ॥ १४ ॥

अङ्गिरस्वन्तौ । उत । विष्णुऽवन्ता । मरुत्वन्ता । जरितुः । गच्छथः । हवम् ।
सऽजोषसौ । उषसा । सूर्येण । च । आदित्यैः । यातम् । अश्विना ॥ १४ ॥

ᵛउत अपि च हे अश्विनौ युवाम् ᵛअङ्गिरस्वन्तौ अङ्गिरोभियुक्तौ ᵛविष्णुवन्ता विष्णुना च सहितौ मरुद्भिश्च[2] सहितौ स्तोतुराह्वानं[3] गच्छतम् । सिद्धमन्यत् ॥

ऋभुमन्ता वृषणा वाजवन्ता मरुत्वन्ता जरितुर्गच्छथो हवम् ।
सजोषसा उषसा सूर्येण चादित्यैर्यातमश्विना ॥ १५ ॥

ऋभुऽमन्ता । वृषणा । वाजऽवन्ता । मरुत्वन्ता । जरितुः । गच्छथः । हवम् ।
सऽजोषसौ । उषसा । सूर्येण । च । आदित्यैः । यातम् । अश्विना ॥ १५ ॥

हे अश्विनौ ᵛऋभुमन्ता ऋभुसहितौ ᵛवृषणा कामानां वर्षितारौ वाजवन्तौ[4] वाजयुक्तौ[4] मरुत्वन्तौ च स्तोतुराह्वानं गच्छतम् । ऋभुमन्ता वाजवन्ता इति ज्येष्ठकनिष्ठाभ्यां व्यपदेशः । सिद्धमन्यत् ॥

ब्रह्म जिन्वतमुत जिन्वतं धियो हतं रक्षांसि सेधतममीवाः ।
सजोषसा उषसा सूर्येण च सोमं सुन्वतो अश्विना ॥ १६ ॥

ब्रह्म । जिन्वतम् । उत । जिन्वतम् । धियः । हतम् । रक्षांसि । सेधतम् । अमीवाः ।
सऽजोषसौ । उषसा । सूर्येण । च । सोमम् । सुन्वतः । अश्विना ॥ १६ ॥

---

१. ख-घ-ज्ञ-त१-२—च सजोषसा संगतौ । २. ख-घ-ज्ञ-त१-२—मरुत्वंता मरुद्भिश्च । ३. ख-घ-ज्ञ-त१-२—मे जरितुः मम स्तोतुराह्वानं । ४. घ-भ३—वाजवंता अन्नयुक्तौ ।

हे अश्विनौ युवां ^v^ब्रह्म ब्राह्मणं[1] ^v^जिन्वतं प्रीणयतम्। ^v^उत अपि च ^v^धियः कर्माणि ^v^जिन्वतम्। ^v^हतं च ^v^रक्षांसि। ^v^अमीवाः राक्षसांश्च[2] ^v^सेधतम्। ^v^उषसा ^v^सूर्येण ^v^च संगतौ ^v^सुन्वतः यजमानस्य ^v^सोमं पिबतमित्यर्थः ॥

क्षत्रं जिन्वतमुत जिन्वतं नॄन्हतं रक्षांसि सेधतममीवाः।
सजोषसा उषसा सूर्येण च सोमं सुन्वतो अश्विना ॥ १७ ॥

क्षत्रम्। जिन्वतम्। उत। जिन्वतम्। नॄन्। हतम्। रक्षांसि। सेधतम्। अमीवाः।
सऽजोषसौ। उषसा। सूर्येण। च। सोमम्। सुन्वतः। अश्विना ॥ १७ ॥

हे अश्विनौ युवां ^v^क्षत्रं क्षत्रियं ^v^जिन्वतम्। ^v^उत अपि च ^v^नॄन् योद्धॄन् ^v^जिन्वतम्। सिद्धमन्यत् ॥

धेनूर्जिन्वतमुत जिन्वतं विशो हतं रक्षांसि सेधतममीवाः।
सजोषसा उषसा सूर्येण च सोमं सुन्वतो अश्विना ॥ १८ ॥

धेनूः। जिन्वतम्। उत। जिन्वतम्। विशः। हतम्। रक्षांसि। सेधतम्। अमीवाः।
सऽजोषसौ। उषसा। सूर्येण। च। सोमम्। सुन्वतः। अश्विना ॥ १८ ॥

हे अश्विनौ ^v^धेनूर्जिन्वतम्। ^v^उत अपि च ^v^विशः वैश्यांश्च ^v^जिन्वतम्। सिद्धमन्यत् ॥ ॥ १६ ॥

अत्रेरिव शृणुतं पूर्व्यस्तुतिं श्यावाश्वस्य सुन्वतो मदच्युता।
सजोषसा उषसा सूर्येण चाश्विना तिरोअह्न्यम् ॥ १९ ॥

अत्रेःऽइव। शृणुतम्। पूर्व्यऽस्तुतिम्। श्यावऽअश्वस्य। सुन्वतः। मदऽच्युता।
सऽजोषसौ। उषसा। सूर्येण। च। अश्विना। तिरःऽअह्न्यम् ॥ १९ ॥

हे अश्विनौ ^v^मदच्युता शत्रूणां मदस्य च्यावयितारौ युवां ^v^सुन्वतः सोमाभिषवं कुर्वतः ^v^श्यावाश्वस्य मम पितामहस्य ^v^अत्रेरिव ^v^पूर्व्यस्तुतिं मुख्यां स्तुतिं ^v^शृणुतम्। ^v^उषसा ^v^सूर्येण ^v^च संगतौ ^v^तिरोअह्न्यं सोमं पिबतम्। तिरोहिते पूर्वस्मिन्नहनि अपरेद्युः प्रातरश्विनोर्याग इति ॥

सर्गाँइव सृजतं सुष्टुतीरुप श्यावाश्वस्य सुन्वतो मदच्युता।
सजोषसा उषसा सूर्येण चाश्विना तिरोअह्न्यम् ॥ २० ॥

सर्गान्ऽइव। सृजतम्। सुऽस्तुतीः। उप। श्यावऽअश्वस्य। सुन्वतः। मदऽच्युता।
सऽजोषसौ। उषसा। सूर्येण। च। अश्विना। तिरःऽअह्न्यम् ॥ २० ॥

हे अश्विनौ ^v^श्यावाश्वस्य मम ^v^सुष्टुतीः शोभनाः स्तुतीः ^v^सर्गानिव[3]। आभरणानि वा हवींषि वा सर्गाः। तान् यथा तथा आत्मनि ^v^उप ^v^सृजतम्। सिद्धमन्यत् ॥

---

१. ख-त—ब्रह्मणो; ग-न—ब्रह्मणं; श—ब्रह्मार्णं। २. ग—रोगांश्च। ३. ग-त२-३-४—सर्गाणि; झ-न-भ-श—सर्गाणि वस्त्राणि; त१—सर्गाणिव।

रश्मीँरिव यच्छतमध्वराँ उप श्यावाश्वस्य सुन्वतो मदच्युता ।
सजोषसा उषसा सूर्येण चाश्विना तिरोअह्न्यम् ॥ २१ ॥

रश्मीन्ऽइव । यच्छतम् । अध्वरान् । उप । श्यावऽअश्वस्य । सुन्वतः । मदऽच्युता ।
सऽजोषसौ । उषसा । सूर्येण । च । अश्विना । तिरःऽअह्न्यम् ॥ २१ ॥

हे अश्विनौ[1] श्यावाश्वस्य मम अध्वरान्[2] रश्मीनिव यथाश्वप्रग्रहांस्तद्वत् उप यच्छतम् उपगच्छतम् । सिद्धमन्यत् ॥

अर्वाग्रथं नि यच्छतं पिबतं सोम्यं मधु ।
आ यातमश्विना गतमवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे ॥ २२ ॥

अर्वाक् । रथम् । नि । यच्छतम् । पिबतम् । सोम्यम् । मधु । आ । यातम् । अश्विना ।
आ । गतम् । अवस्युः । वाम् । अहम् । हुवे । धत्तम् । रत्नानि । दाशुषे ॥ २२ ॥

हे अश्विनौ वां स्वीयं रथम् अर्वाक् अस्मदभिमुखं नि यच्छतम् । सोम्यं सोममयं मधु अमृतं च पिबतम् । यज्ञम् आ यातं च । सोमं प्रति आ गतम् आगच्छतं च । अवस्युः रक्षणकामः अहं श्यावाश्वः वां हुवे ह्वयामि । दाशुषे हवींषि प्रयच्छते मह्यं रत्नानि धत्तं धारयतम् ॥

नमोवाके प्रस्थिते अध्वरे नरा विवक्षणस्य पीतये ।
आ यातमश्विना गतमवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे ॥ २३ ॥

नमःऽवाके । प्रऽस्थिते । अध्वरे । नरा । विवक्षणस्य । पीतये । आ । यातम् । अश्विना ।
आ । गतम् । अवस्युः । वाम् । अहम् । हुवे । धत्तम् । रत्नानि । दाशुषे ॥ २३ ॥

हे अश्विनौ नरा नेतारौ युवां विवक्षणस्य हवनशीलस्य[3] मम प्रस्थिते नमोवाके । नमस्काराय प्रोच्यते स नमोवाकः । तस्मिन् अध्वरे यज्ञे । तथा च ब्राह्मणम्—'उभयं सह वा एतद्यज्ञ एव यत्सूक्तवाकश्च नमोवाकश्च' ( श. ब्रा. १. ९. १. ४ ) इति । पीतये सोमपानाय आ यातम् । सिद्धमन्यत् ॥

स्वाहाकृतस्य तृम्पतं सुतस्य देवावन्धसः ।
आ यातमश्विना गतमवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे ॥ २४ ॥

स्वाहाऽकृतस्य । तृम्पतम् । सुतस्य । देवौ । अन्धसः । आ । यातम् । अश्विना ।
आ । गतम् । अवस्युः । वाम् । अहम् । हुवे । धत्तम् । रत्नानि । दाशुषे ॥ २४ ॥

हे अश्विनौ देवौ युवां सुतस्य अभिषुतस्य स्वाहाकृतस्य हुतस्य अन्धसः सोमस्य तृम्पतं तृप्यतम् । सिद्धमन्यत् ॥ ॥ १७ ॥

---

१. घ–अश्विनौ मदच्युता शत्रूणां मदस्य च्यावयितारौ युवां सुन्वतः । २. भ–अध्वरान् यज्ञान् । ३. ग-भ३–वहनशीलस्य; श–दर्शनशीलस्य ।

'अवितासि' इति सप्तर्चं षष्ठं सूक्तमात्रेयस्य श्यावाश्वस्यार्षम्। अत्रेयमनुक्रमणिका— 'अविता सप्त शाकरं महापङ्क्त्यन्तम्' इति। षट्पञ्चाशदक्षरा शक्वरी छन्दः। 'श्यावाश्वस्य' इति सप्तमी महापङ्क्तिः 'षळष्टका वा महापङ्क्तिः' (अनु. १०. ३) इति लक्षणसद्भावात्। दशरात्रे पञ्चमेऽहनि मरुत्वतीय इदं सूक्तम्। सूत्रितं च–'अवितासीत्था हि' (आश्व. श्रौ. ७. १२) इति॥

**अवितासि सुन्वतो वृक्तबर्हिषः पिबा सोमं मदाय कं शतक्रतो।**
**यं ते भागमधारयन्विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इन्द्र सत्पते॥१॥**

अविता। असि। सुन्वतः। वृक्तऽबर्हिषः। पिब। सोमम्। मदाय। कम्। शतक्रतो इति शतऽक्रतो। यम्। ते। भागम्। अधारयन्। विश्वाः। सेहानः। पृतनाः। उरु। ज्रयः। सम्। अप्सुऽजित्। मरुत्वान्। इन्द्र। सत्ऽपते॥ १॥

हे शतक्रतो बहुकर्मन्निन्द्र सुन्वतः सोमाभिषवं कुर्वतः वृक्तबर्हिषः स्तीर्णबर्हिषो यजमानस्य अविता रक्षिता असि भवसि। मदाय मदार्थं सोमं पिब। हे सत्पते सतां पते इन्द्र ते तुभ्यं यं सोमस्य भागमधारयन् सर्वे देवा अकल्पयन्। तथा च यजुर्ब्राह्मणं—'स एतं माहेन्द्रमुद्धारमुदहरत वृत्रं हत्वान्यासु देवतास्वधि' (तै. सं. ६. ५. ५. ३) इति। तं भागं विश्वाः पृतनाः शत्रूणां सर्वाः सेनाः उरु बहु ज्रयः वेगं च सं सेहानः सम्यगभिभवन् अप्सुजित् अप्सु जेता च सन् पिब॥

**प्राव स्तोतारं मघवन्नव त्वां पिबा सोमं मदाय कं शतक्रतो।**
**यं ते भागमधारयन्विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इन्द्र सत्पते॥२॥**

प्र। अव। स्तोतारम्। मघऽवन्। अव। त्वाम्।
पिब। सोमम्। मदाय। कम्। शतक्रतो इति शतऽक्रतो।
यम्। ते। भागम्। अधारयन्। विश्वाः। सेहानः। पृतनाः। उरु। ज्रयः।
सम्। अप्सुऽजित्। मरुत्वान्। इन्द्र। सत्ऽपते॥ २॥

हे मघवन् स्तोतारं प्राव प्ररक्ष। त्वां च अव सोमपानेन रक्ष। सिद्धमन्यत्॥

**ऊर्जा देवाँ अवस्योजसा त्वां पिबा सोमं मदाय कं शतक्रतो।**
**यं ते भागमधारयन्विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इन्द्र सत्पते॥३॥**

ऊर्जा। देवान्। अवसि। ओजसा। त्वाम्।
पिब। सोमम्। मदाय। कम्। शतक्रतो इति शतऽक्रतो।
यम्। ते। भागम्। अधारयन्। विश्वाः। सेहानः। पृतनाः। उरु। ज्रयः।
सम्। अप्सुऽजित्। मरुत्वान्। इन्द्र। सत्ऽपते॥ ३॥

हे इन्द्र त्वं देवान् ऊर्जा अन्नेन हविषा अवसि रक्षसि। त्वाम् अपि ओजसा बलेन अवसि। सिद्धमन्यत्॥

**जनिता दिवो जनिता पृथिव्याः पिबा सोमं मदाय कं शतक्रतो ।**
**यं ते भागमधारयन्विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इन्द्र सत्पते ॥४॥**

जनिता । दिवः । जनिता । पृथिव्याः । पिब । सोमम् । मदाय । कम् । शतक्रतो इति शतऽक्रतो ।
यम् । ते । भागम् । अधारयन् । विश्वाः । सेहानः । पृतनाः । उरु । ज्रयः ।
सम् । अप्सुऽजित् । मरुत्वान् । इन्द्र । सत्ऽपते ॥ ४ ॥

हे इन्द्र त्वं ᵛदिवः द्युलोकस्य ᵛजनिता जनकोऽसि । ᵛपृथिव्याः च ᵛजनिता असि । सिद्धमन्यत् ॥

**जनिताश्वानां जनिता गवामसि पिबा सोमं मदाय कं शतक्रतो ।**
**यं ते भागमधारयन्विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इन्द्र सत्पते ॥५॥**

जनिता । अश्वानाम् । जनिता । गवाम् । असि ।
पिब । सोमम् । मदाय । कम् । शतक्रतो इति शतऽक्रतो ।
यम् । ते । भागम् । अधारयन् । विश्वाः । सेहानः । पृतनाः । उरु । ज्रयः ।
सम् । अप्सुऽजित् । मरुत्वान् । इन्द्र । सत्ऽपते ॥ ५ ॥

हे इन्द्र त्वम् ᵛअश्वानां ᵛजनिता जनकः ᵛअसि । ᵛगवां च ᵛजनिता असि । सिद्धमन्यत् ॥

**अत्रीणां स्तोममद्रिवो महस्कृधि पिबा सोमं मदाय कं शतक्रतो ।**
**यं ते भागमधारयन्विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इन्द्र सत्पते ॥६॥**

अत्रीणाम् । स्तोमम् । अद्रिऽवः । महः । कृधि ।
पिब । सोमम् । मदाय । कम् । शतक्रतो इति शतऽक्रतो ।
यम् । ते । भागम् । अधारयन् । विश्वाः । सेहानः । पृतनाः । उरु । ज्रयः ।
सम् । अप्सुऽजित् । मरुत्वान् । इन्द्र । सत्ऽपते ॥ ६ ॥

हे ᵛअद्रिवः अद्रिमन् ᵛअत्रीणां ᵛस्तोमं ᵛमहस्कृधि पूजितं कुरु । सिद्धमन्यत् ॥

**श्यावाश्वस्य सुन्वतस्तथा शृणु यथाशृणोरत्रेः कर्माणि कृण्वतः ।**
**प्र त्रसदस्युमाविथ त्वमेक इन्नृषाह्य इन्द्र ब्रह्माणि वर्धयन् ॥ ७ ॥**

श्यावऽअश्वस्य । सुन्वतः । तथा । शृणु । यथा । अशृणोः । अत्रेः । कर्माणि । कृण्वतः ।
प्र । त्रसदस्युम् । आविथ । त्वम् । एकः । इत् । नृऽसह्ये । इन्द्र । ब्रह्माणि । वर्धयन् ॥ ७ ॥

हे ᵛइन्द्र त्वं ᵛसुन्वतः सोमाभिषवं कुर्वतः ᵛश्यावाश्वस्य मम स्तुतिं ᵛकर्माणि ᵛकृण्वतः कुर्वतः ᵛअत्रेः ᵛयथाशृणोः अश्रौषीः ᵛतथा ᵛशृणु । अपि च ᵛत्वमेक ᵛइत् एक एव ᵛनृषाह्ये युद्धे ᵛब्रह्माणि स्तोत्राणि कामैः ᵛवर्धयन् ᵛत्रसदस्युं ᵛप्र ᵛआविथ ॥ ॥ १८ ॥

'प्रेदं ब्रह्म' इति सप्तर्चं सप्तमं सूक्तमात्रेयस्य श्यावाश्वस्यार्षम् । आद्या द्वापञ्चाशदक्षरातिजगती । शिष्टाः षडृचः षडष्टका महापङ्क्तयः । इन्द्रो देवता । तथा चानुक्रान्तं–' प्रेदं महापाङ्क्तमा-

**द्यातिजगती ' इति । महाव्रते निष्केवल्य एतत्सूक्तम्[1] । तथा च सूत्रं—' प्रेदं ब्रह्मेन्द्रो मदाय ' ( आश्व. श्रौ. ७. १२ ) इति ॥**

## प्रेदं ब्रह्म वृत्रतूर्येष्वाविथ प्र सुन्वतः शचीपत इन्द्र विश्वाभिरूतिभिः।
## माध्यंदिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥ १ ॥

प्र । इदम् । ब्रह्म । वृत्रऽतूर्येषु । आविथ । प्र । सुन्वतः । शचीऽपते । इन्द्र । विश्वाभिः । ऊतिऽभिः ।
माध्यंदिनस्य । सवनस्य । वृत्रऽहन् । अनेद्य । पिब । सोमस्य । वज्रिऽवः ॥ १ ॥

**हे vशचीपते vइन्द्र त्वं vवृत्रतूर्येषु संग्रामेषु vइदं vब्रह्म इमान् ब्राह्मणान् vविश्वाभिः सर्वाभिः vऊतिभिः[2] रक्षाभिः vप्र vआविथ प्ररक्ष । vसुन्वतः सोमाभिषवं कुर्वतो यजमानांश्च vप्र आविथ । अपि च हे vअनेद्य अनिन्द्य vवज्रिवः वज्रिन् vवृत्रहन् vइन्द्र vमाध्यंदिनस्य vसवनस्य संबन्धिनं vसोमस्य सोमं vपिब ॥**

## सेहान उग्र पृतना अभि द्रुहः शचीपत इन्द्र विश्वाभिरूतिभिः ।
## माध्यंदिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥ २ ॥

सेहानः । उग्र । पृतनाः । अभि । द्रुहः । शचीऽपते । इन्द्र । विश्वाभिः । ऊतिऽभिः ।
माध्यंदिनस्य । सवनस्य । वृत्रऽहन् । अनेद्य । पिब । सोमस्य । वज्रिऽवः ॥ २ ॥

**हे vशचीपते कर्मपते vउग्र उद्गूर्ण vइन्द्र vअभि vद्रुहः द्रोग्ध्रीः vपृतनाः सेनाः vसेहानः अभिभवन् सर्वैः पालनैर्ब्राह्मणान् प्राविथेत्यर्थः । सिद्धमन्यत् ॥**

## एकराळस्य भुवनस्य राजसि शचीपत इन्द्र विश्वाभिरूतिभिः ।
## माध्यंदिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥ ३ ॥

एकऽराट् । अस्य । भुवनस्य । राजसि । शचीऽपते । इन्द्र । विश्वाभिः । ऊतिऽभिः ।
माध्यंदिनस्य । सवनस्य । वृत्रऽहन् । अनेद्य । पिब । सोमस्य । वज्रिऽवः ॥ ३ ॥

**हे vशचीपते vइन्द्र vअस्य vभुवनस्य vएकराट् एक एव राजा सन् vराजसि भ्राजसे । सिद्धमन्यत् ॥**

## सस्थावाना यवयसि त्वमेक इच्छचीपत इन्द्र विश्वाभिरूतिभिः ।
## माध्यंदिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥ ४ ॥

सऽस्थावाना । यवयसि । त्वम् । एकः । इत् । शचीऽपते । इन्द्र । विश्वाभिः । ऊतिऽभिः ।
माध्यंदिनस्य । सवनस्य । वृत्रऽहन् । अनेद्य । पिब । सोमस्य । वज्रिऽवः ॥ ४ ॥

**हे vशचीपते vइन्द्र vत्वमेकः एव vसस्थावाना समानं तिष्ठन्ताविमौ लोकौ vयवयसि पृथक्करोषि । सिद्धमन्यत् ॥**

---

१. त–एव सूक्तं । २. ख-त-न-भ-श–' ऊतिभिः ' नास्ति ।

क्षेमस्य च प्रयुजश्च त्वमीशिषे शचीपत इन्द्र विश्वाभिरूतिभिः ।
माध्यंदिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥ ५ ॥

क्षेमस्य । च । प्रऽयुजः । च । त्वम् । ईशिषे । शचीऽपते । इन्द्र । विश्वाभिः । ऊतिऽभिः ।
माध्यंदिनस्य । सवनस्य । वृत्रऽहन् । अनेद्य । पिब । सोमस्य । वज्रिऽवः ॥ ५ ॥

अपि च हे शचीपते इन्द्र सर्वस्य जगतः क्षेमस्य प्रयुजश्च प्रयोगस्य च । योगक्षेमयोरित्यर्थः । ईशिषे ईश्वरो भवसि । सिद्धमन्यत् ॥

क्षत्राय त्वमवसि न त्वमाविथ शचीपत इन्द्र विश्वाभिरूतिभिः ।
माध्यंदिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥ ६ ॥

क्षत्राय । त्वम् । अवसि । न । त्वम् । आविथ । शचीऽपते । इन्द्र । विश्वाभिः । ऊतिऽभिः ।
माध्यंदिनस्य । सवनस्य । वृत्रऽहन् । अनेद्य । पिब । सोमस्य । वज्रिऽवः ॥ ६ ॥

हे शचीपते इन्द्र त्वं क्षत्राय जगतो बलाय भवसि । अवसि आश्रितान् रक्षसि । त्वं न आविथ केनापि न रक्ष्यसे । सिद्धमन्यत् ॥

श्यावाश्वस्य रेभतस्तथा शृणु यथाशृणोरत्रेः कर्माणि कृण्वतः ।
प्र त्रसदस्युमाविथ त्वमेक इन्नृषाह्य इन्द्र क्षत्राणि वर्धयन् ॥ ७ ॥

श्यावऽअश्वस्य । रेभतः । तथा । शृणु । यथा । अशृणोः । अत्रेः । कर्माणि । कृण्वतः ।
प्र । त्रसदस्युम् । आविथ । त्वम् । एकः । इत् । नृऽसह्ये । इन्द्र । क्षत्राणि । वर्धयन् ॥७॥

हे इन्द्र रेभतः स्तुवतः श्यावाश्वस्य मम स्तुतिं कर्माणि कृण्वतः अत्रेः यथा अशृणोः तथा शृणु । अपि च क्षत्राणि[1] बलानि कामैः वर्धयन्[1] युद्धे त्वमेकः एव त्रसदस्युं प्र आविथ ॥ ॥ १९ ॥

'यज्ञस्य हि' इति दशर्चमष्टमं सूक्तं श्यावाश्वस्यार्षं प्रागवत्सप्रपरिभाषया गायत्रमिन्द्राग्निदेवताकम् । तथा चानुक्रान्तं—'यज्ञस्य दशैन्द्राग्नम्' इति । पृष्ठ्याभिप्लवषडहयोः प्रातःसवनेऽच्छावाकशस्त्र आवापार्थमेतत्सूक्तम् । सूत्रितं च—'यज्ञस्य हि स्थ इत्यच्छावाकस्य' (आश्व. श्रौ. ७. ५) इति । चातुर्विंशिकेऽहनि प्रातःसवने 'यज्ञस्य हि स्थः' इति षळहस्तोत्रियसंज्ञकस्तृचः । सूत्रितं च—'इन्द्राग्नी युवामिमे यज्ञस्य हि स्थ ऋत्विजेत्यच्छावाकस्य' (आश्व. श्रौ. ७. २) इति । अग्निष्टोमे प्रातःसवनेऽच्छावाकस्य 'प्रातर्यावभिः' इति प्रातःसवनीयस्य प्रस्थितयाज्या । सूत्रितं च—'प्रातर्यावभिरिति यजति' (आश्व. श्रौ. ५. ७) इति । चातुर्विंशिके प्रातःसवनेऽच्छावाकशस्त्रे 'श्यावाश्वस्य' इत्ययं पर्यासस्तृचः । अन्यत्राप्यहर्गणेषु द्वितीयादिष्वहःसु । सूत्र्यते हि—'श्यावाश्वस्य सुन्वत इति तृचाः पर्यासाः' (आश्व. श्रौ. ७. २) इति ॥

यज्ञस्य हि स्थ ऋत्विजा सस्नी वाजेषु कर्मसु । इन्द्राग्नी तस्य बोधतम् ॥ १ ॥

यज्ञस्य । हि । स्थः । ऋत्विजा । सस्नी इति । वाजेषु । कर्मऽसु । इन्द्राग्नी इति । तस्य । बोधतम् ॥ १ ॥

---

१. ग-त-न-भ–'क्षत्राणि...वर्धयन्' नास्ति ।

हे इन्द्राग्नी सत्नी शुद्धौ युवां यज्ञस्य ऋत्विजा ऋत्विजौ स्थः भवथः हि । वाजेषु युद्धेषु कर्मसु चोपतिष्ठन्ताविन्द्राग्नी तस्य तं मां तस्य मम स्तुतिं वा बोधतं जानीतम् ॥

तोशासा रथयावाना वृत्रहणापराजिता । इन्द्राग्नी तस्य बोधतम् ॥ २ ॥

तोशासा । रथऽयावाना । वृत्रऽहना । अपराऽजिता । इन्द्राग्नी इति । तस्य । बोधतम् ॥ २ ॥

हे इन्द्राग्नी तोशासा शत्रून् हिंसन्तौ रथयावाना रथेन गच्छन्तौ वृत्रहणा वृत्रस्य हन्तारौ अपराजिता केनाप्यपराजितौ तस्य तं मां बोधतम् ॥

इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः । इन्द्राग्नी तस्य बोधतम् ॥ ३ ॥

इदम् । वाम् । मदिरम् । मधु । अधुक्षन् । अद्रिऽभिः । नरः । इन्द्राग्नी इति । तस्य । बोधतम् ॥ ३ ॥

हे इन्द्राग्नी वां युवामुद्दिश्य नरः यज्ञस्य नेतारः अद्रिभिः ग्रावभिः मदिरं मदकरं मधु सोमात्मकममृतम् अधुक्षन् अपूरयन् । सिद्धमन्यत् ॥

जुषेथां यज्ञमिष्टये सुतं सोमं सधस्तुती । इन्द्राग्नी आ गतं नरा ॥ ४ ॥

जुषेथाम् । यज्ञम् । इष्टये । सुतम् । सोमम् । सधस्तुती इति सधऽस्तुती ।
इन्द्राग्नी इति । आ । गतम् । नरा ॥ ४ ॥

हे सधस्तुती सहभूतस्तुती नरा नेतारौ इन्द्राग्नी यज्ञं जुषेथां सेवेथाम् । इष्टये यागाय सुतम् अभिषुतं सोमं च आ गतम् आगच्छतम् ॥

इमा जुषेथां सवना येभिर्हव्यान्यूहथुः । इन्द्राग्नी आ गतं नरा ॥ ५ ॥

इमा । जुषेथाम् । सवना । येभिः । हव्यानि । ऊहथुः । इन्द्राग्नी इति । आ । गतम् । नरा ॥ ५ ॥

हे इन्द्राग्नी नरा नेतारौ युवां येभिः[1] यैः सवनैः हव्यानि ऊहथुः वहथः तानि इमा इमानि सवना सवनानि जुषेथां सेवेथाम् । आ गतं च ॥

इमां गायत्रवर्तनिं जुषेथां सुष्टुतिं मम । इन्द्राग्नी आ गतं नरा ॥ ६ ॥

इमाम् । गायत्रऽवर्तनिम् । जुषेथाम् । सुऽस्तुतिम् । मम । इन्द्राग्नी इति । आ । गतम् । नरा ॥६॥

हे इन्द्राग्नी नरौ युवां मम गायत्रवर्तनिं गायत्रमार्गाम् इमां सुष्टुतिं शोभनां स्तुतिं जुषेथां सेवेथाम् । आ गतं च ॥ ॥ २० ॥

प्रातर्यावभिरा गतं देवेभिर्जेन्यावसू । इन्द्राग्नी सोमपीतये ॥ ७ ॥

प्रातर्यावऽभिः । आ । गतम् । देवेभिः । जेन्यावसू इति । इन्द्राग्नी इति । सोमऽपीतये ॥ ७ ॥

हे जेन्यावसू जेतव्यशत्रुधनौ इन्द्राग्नी प्रातर्यावभिः देवैः सह सोमपीतये सोमस्य पानाय आ गतम् आगच्छतम् ॥

श्यावाश्वस्य सुन्वतोऽत्रीणां शृणुतं हवम् । इन्द्राग्नी सोमपीतये ॥ ८ ॥

---

१. ग-त-न-भ-‘ येभिः ’ नास्ति ।

श्यावऽअश्वस्य । सुन्वतः । अत्रीणाम् । शृणुतम् । हवम् । इन्द्राग्नी इति । सोमऽपीतये ॥ ८ ॥

हे इन्द्राग्नी युवां सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य श्यावाश्वस्य मम अत्रीणाम् ऋत्विजां हवम् आह्वानं सोमस्य पानाय शृणुतम् ॥

एवा वामह्व ऊतये यथाहुवन्त मेधिराः । इन्द्राग्नी सोमपीतये ॥ ९ ॥

एव । वाम् । अह्वे । ऊतये । यथा । अहुवन्त । मेधिराः । इन्द्राग्नी इति । सोमऽपीतये ॥ ९ ॥

हे इन्द्राग्नी वां युवां यथा मेधिराः प्राज्ञाः अहुवन्त आहूतवन्तः एवमहम् ऊतये रक्षणाय सोमस्य पीतये च अह्वे[1] ह्वयामि ॥

आहं सरस्वतीवतोरिन्द्राग्न्योरवो वृणे । याभ्यां गायत्रमृच्यते ॥ १० ॥

आ । अहम् । सरस्वतीऽवतोः । इन्द्राग्न्योः । अवः । वृणे । याभ्याम् । गायत्रम् । ऋच्यते ॥ १० ॥

याभ्यां ययोरिन्द्राग्न्योरर्थं गायत्रं साम ऋच्यते[2] स्तूयते तयोः सरस्वतीवतोः स्तुतिमतोः इन्द्राग्न्योः संबन्धि अवः रक्षणम् अहम् आ वृणे ॥ ॥ २१ ॥

'अग्निमस्तोषि' इति दशर्चं नवमं सूक्तं काण्वस्य नाभाकस्यार्षम्। षडष्टका महापङ्क्तिश्छन्दः । अग्निर्देवता । अनुक्रान्तं च—'अग्निमस्तोषि नाभाक आग्नेयं महापाङ्क्तं हि' इति । विनियोगो लैङ्गिकः ॥

अग्निमस्तोष्यृग्मियमग्निमीळा यजध्यै ।
अग्निर्देवाँ अनक्तु न उभे हि विदथे कविरन्तश्चरति दूत्यं१ नभन्तामन्यके समे ॥१॥

अग्निम् । अस्तोषि । ऋग्मियम् । अग्निम् । ईळा । यजध्यै ।
अग्निः । देवान् । अनक्तु । नः । उभे इति । हि । विदथे इति । कविः ।
अन्तरिति । चरति । दूत्यम् । नभन्ताम् । अन्यके । समे ॥ १ ॥

ऋग्मियम् ऋगर्हम् अग्निम् अस्तोषि स्तौमि । अपि च अग्निं यजध्यै यष्टुम् ईळा स्तुत्या स्तौमीत्यर्थः । अपि च अग्निः नः अस्माकं विदथे यज्ञे देवान् हविर्भिः अनक्तु । कविः क्रान्तदर्श्यग्निः उभे द्यावापृथिव्यौ अन्तः दूत्यं हविर्वहनादिलक्षणं दूतकर्म चरति । अन्यके शत्रवोऽपि समे सर्वे नभन्ताम् । नभतिर्हिंसाकर्मा । अग्निना हिंस्यन्ताम् ॥

न्यग्ने नव्यसा वचस्तनूषु शंसमेषाम् ।
न्यराती रराव्णां विश्वा अर्यो अरातीरितो युच्छन्त्वामुरो नभन्तामन्यके समे ॥२॥

नि । अग्ने । नव्यसा । वचः । तनूषु । शंसम् । एषाम् । नि । अरातीः । रराव्णाम् ।
विश्वाः । अर्यः । अरातीः । इतः । युच्छन्तु । आऽमुरः । नभन्ताम् । अन्यके । समे ॥ २ ॥

हे अग्ने तनूषु अस्माकमङ्गेषु नव्यसा नवतरेण वचः[3] वचसा स्तोत्रेण एषां शत्रूणां शंसं शंसनं नि दहेत्यर्थः । रराव्णां हविः प्रयच्छताम् अरातीः शत्रूंश्च नि दह । अपि च विश्वाः सर्वे अर्यः अभिगच्छन्तः आमुरः आमूढाः अरातीः शत्रवः इतः युच्छन्तु गच्छन्तु । सिद्धमन्यत् ॥

---

१. त-न-भ—अहं । २. त-न-भ१-२—उच्यते । ३. ग-त-न-भ—'वचः' नास्ति ।

अग्ने मन्मानि तुभ्यं कं घृतं न जुह्व आसनि ।
स देवेषु प्र चिकिद्धि त्वं ह्यसि पूर्व्यः शिवो दूतो विवस्वतो नभन्तामन्यके समे ॥३॥
अग्ने । मन्मानि । तुभ्यम् । कम् । घृतम् । न । जुह्वे । आसनि ।
सः । देवेषु । प्र । चिकिद्धि । त्वम् । हि । असि । पूर्व्यः । शिवः । दूतः । विवस्वतः ।
नभन्ताम् । अन्यके । समे ॥ ३ ॥

हे ᵛअग्ने ᵛतुभ्यं त्वदर्थम् ᵛआसनि आस्ये ᵛकं ᵛघृतं ᵛन यथा सुखकरं घृतं जुह्वत्यग्ने तद्वदह-मपि तवास्ये ᵛमन्मानि मननीयानि स्तोत्राणि ᵛजुह्वे जुहोमि । ᵛसः त्वं ᵛदेवेषु देवानां मध्ये ᵛप्र ᵛचिकिद्धि अस्मदीयाः स्तुतीर्जानीहि । अपि च ᵛत्वं ᵛपूर्व्यः प्रत्नः ᵛअसि । ᵛशिवः सुखकरश्चासि । ᵛविवस्वतः ᵛदूतः चासि । सिद्धमन्यत् ॥

तत्तदग्निर्वयो दधे यथायथा कृपण्यति ।
ऊर्जाहुतिर्वसूनां शं च योश्च मयो दधे विश्वस्यै देवहूत्यै नभन्तामन्यके समे ॥ ४ ॥
तत्ऽतत् । अग्निः । वयः । दधे । यथाऽयथा । कृपण्यति ।
ऊर्जाऽआहुतिः । वसूनाम् । शम् । च । योः । च । मयः । दधे । विश्वस्यै । देवऽहूत्यै ।
नभन्ताम् । अन्यके । समे ॥ ४ ॥

ᵛयथायथा यद्यदन्नं ᵛकृपण्यति स्तोतृभिर्याच्यते ᵛतत्तत् ᵛवयः ᵛअग्निः ᵛदधे स्तोतृभ्यः प्रय-च्छति । अपि च ᵛऊर्जाहुतिः अन्नेनाहूयमानोऽग्निः ᵛवसूनां हविषां वासकानां यजमानानां ᵛशं शान्तिनिमित्तं ᵛयोः विषययोगजनितं ᵛच ᵛमयः सुखं ᵛदधे करोति । ᵛविश्वस्यै ᵛदेवहूत्यै सर्वस्मै देवानां ह्वानाय च भवति । यः कश्चनापि देवो यदि हूयते अग्निरेव सर्वं करोतीत्यर्थः । सिद्धमन्यत् ॥

स चिकेत सहीयसाग्निश्चित्रेण कर्मणा ।
स होता शश्वतीनां दक्षिणाभिरभीवृत इनोति च प्रतीव्यं नभन्तामन्यके समे ॥५॥
सः । चिकेत । सहीयसा । अग्निः । चित्रेण । कर्मणा ।
सः । होता । शश्वतीनाम् । दक्षिणाभिः । अभिऽवृतः । इनोति । च । प्रतीव्यम् ।
नभन्ताम् । अन्यके । समे ॥ ५ ॥

ᵛसः ᵛअग्निः ᵛसहीयसा अभिभावुकेन ᵛचित्रेण नानाविधेन ᵛकर्मणा व्यापारेण ᵛचिकेत ज्ञायते । ᵛसः अग्निः ᵛशश्वतीनां बह्वीनां देवतानां ᵛहोता ह्वाता ᵛदक्षिणाभिः पशुभिश्च ᵛअभीवृतः परिवृतः ᵛप्रतीव्यं प्रत्येतव्यं शत्रुम् ᵛइनोति ᵛच गच्छति च । सिद्धमन्यत् ॥ ॥ २२ ॥

अग्निर्जाता देवानामग्निर्वेद मर्तानामपीच्यम् ।
अग्निः स द्रविणोदा अग्निर्द्वारा व्यूर्णुते स्वाहुतो नवीयसा नभन्तामन्यके समे ॥६॥
अग्निः । जाता । देवानाम् । अग्निः । वेद । मर्तानाम् । अपीच्यम् ।
अग्निः । सः । द्रविणःऽदाः । अग्निः । द्वारा । वि । ऊर्णुते । सुऽआहुतः । नवीयसा ।
नभन्ताम् । अन्यके । समे ॥ ६ ॥

<sup>v</sup>देवानां <sup>v</sup>जाता जातानि जन्मानि <sup>v</sup>अग्निः वेत्ति[1]। <sup>v</sup>मर्तानां मनुष्याणां च <sup>v</sup>अपीच्यम् गुह्यम् <sup>v</sup>अग्निः <sup>v</sup>वेद वेत्ति। <sup>v</sup>सः <sup>v</sup>अग्निः <sup>v</sup>द्रविणोदाः धनस्य दाता। <sup>v</sup>नवीयसा नवतरेण हविषा <sup>v</sup>स्वाहुतः सम्यग्घुतः <sup>v</sup>अग्निः <sup>v</sup>द्वारा धनस्य द्वाराणि <sup>v</sup>व्यूर्णुते च। सिद्धमन्यत्॥

अग्निर्देवेषु संवसुः स विक्षु यज्ञियास्वा।
स मुदा काव्या पुरु विश्वं भूमेव पुष्यति देवो देवेषु यज्ञियो नभन्तामन्यके समे॥७॥

अग्निः। देवेषु। सम्ऽवसुः। सः। विक्षु। यज्ञियासु। आ।
सः। मुदा। काव्या। पुरु। विश्वम्। भूमऽइव। पुष्यति। देवः। देवेषु। यज्ञियः।
नभन्ताम्। अन्यके। समे॥ ७॥

<sup>v</sup>देवेषु[2] मध्ये <sup>v</sup>अग्निः <sup>v</sup>संवसुः संवसति। <sup>v</sup>सः अग्निः <sup>v</sup>यज्ञियासु यज्ञार्हासु <sup>v</sup>विक्षु प्रजास्वपि संवसुः[3]। किंच <sup>v</sup>सः अग्निः <sup>v</sup>पुरु बहूनि <sup>v</sup>काव्या कर्माणि <sup>v</sup>भूमेव यथा भूमिः <sup>v</sup>विश्वं तथा <sup>v</sup>मुदा मोदेन <sup>v</sup>पुष्यति। <sup>v</sup>देवेषु मध्ये <sup>v</sup>देवः अग्निः <sup>v</sup>यज्ञियः यज्ञार्हश्च भवति। सिद्धमन्यत्॥

यो अग्निः सप्तमानुषः श्रितो विश्वेषु सिन्धुषु।
तमागन्म त्रिपस्त्यं मन्धातुर्दस्युहन्तममग्निं यज्ञेषु पूर्व्यं नभन्तामन्यके समे॥ ८॥

यः। अग्निः। सप्तऽमानुषः। श्रितः। विश्वेषु। सिन्धुषु।
तम्। आ। अगन्म। त्रिऽपस्त्यम्। मन्धातुः। दस्युहन्ऽतमम्। अग्निम्। यज्ञेषु। पूर्व्यम्।
नभन्ताम्। अन्यके। समे॥ ८॥

<sup>v</sup>योऽग्निः <sup>v</sup>सप्तमानुषः[4] <sup>v</sup>विश्वेषु सर्वेषु <sup>v</sup>सिन्धुषु नदीषु <sup>v</sup>श्रितः <sup>v</sup>त्रिपस्त्यं त्रिस्थानं <sup>v</sup>मन्धातुः यौवनाश्वस्य मान्धातुः <sup>v</sup>दस्युहन्तमं दस्यूनां हन्तारं <sup>v</sup>यज्ञेषु <sup>v</sup>पूर्व्यं मुख्यं[5] <sup>v</sup>तम् <sup>v</sup>अग्निं वयम् <sup>v</sup>आगन्म। सिद्धमन्यत्॥

अग्निस्त्रीणि त्रिधातून्या क्षेति विदथा कविः।
स त्रीँरेकादशाँ इह यक्षच्च पिप्रयच्च नो विप्रो दूतः परिष्कृतो नभन्तामन्यके समे॥९॥

अग्निः। त्रीणि। त्रिऽधातूनि। आ। क्षेति। विदथा। कविः।
सः। त्रीन्। एकादशान्। इह। यक्षत्। च। पिप्रयत्। च। नः।
विप्रः। दूतः। परिऽकृतः। नभन्ताम्। अन्यके। समे॥ ९॥

<sup>v</sup>कविः क्रान्तदर्शी <sup>v</sup>अग्निः <sup>v</sup>त्रीणि <sup>v</sup>त्रिधातूनि त्रिबन्धनादीनि पृथिव्यादीनि <sup>v</sup>विदथा वेदनीयानि स्थानानि <sup>v</sup>आ <sup>v</sup>क्षेति आवसति। अपि च <sup>v</sup>सः अग्निः <sup>v</sup>दूतः देवानां <sup>v</sup>विप्रः प्राज्ञः <sup>v</sup>परिष्कृतः अलंकृतश्च सन् <sup>v</sup>इह यज्ञे <sup>v</sup>त्रीनेकादशान् त्रयस्त्रिंशद्देवान् <sup>v</sup>यक्षत् यजतु। <sup>v</sup>नः अस्मान् <sup>v</sup>पिप्रयच्च कामैः पूरयतु च। सिद्धमन्यत्॥

---

१. ख-घ-ञ-त१-२–वेद वेत्ति। २. ख-त-न–हे देवेषु; ग-श–यः देवेषु। ३. ख-ग-त-न-भ-श–आ संवसुः। ४. घ–सप्तमानुषः सप्तहोता। ५. त-न–मुखं।

त्वं नो अग्न आयुषु त्वं देवेषु पूर्व्य वस्व एक इरज्यसि ।
त्वामापः परिस्रुतः परि यन्ति स्वसेतवो नभन्तामन्यके समे ॥ १० ॥
त्वम् । नः । अग्ने । आयुषु । त्वम् । देवेषु । पूर्व्य । वस्वः । एकः । इरज्यसि ।
त्वाम् । आपः । परिऽस्रुतः । परि । यन्ति । स्वऽसेतवः । नभन्ताम् । अन्यके । समे ॥ १० ॥

हे ᵛपूर्व्य ᵛअग्ने ᵛत्वम् ᵛएकः एव ᵛआयुषु मनुष्येषु । 'द्रुह्यवः आयवः' इति मनुष्यनामसु पाठात् । ᵛनः अस्माकं ᵛवस्वः धनस्य ᵛइरज्यसि ईशिषे । ᵛदेवेषु अपि ᵛत्वम् एक एव वस्व इरज्यसि । अपि च ᵛत्वां ᵛस्वसेतवः[1] स्वभूतसेतवः ᵛपरिस्रुतः परिस्रवन्त्यः ᵛआपः ᵛपरि ᵛयन्ति परिगच्छन्ति । सिद्धमन्यत् ॥ ॥ २३ ॥

'इन्द्राग्नी युवम्' इति द्वादशर्चं दशमं सूक्तं नाभाकस्यार्षम् । द्वितीया षट्पञ्चाशदक्षरा शक्करी द्वादशी त्रिष्टुप् शिष्टा महापङ्क्तयः । इन्द्राग्नी देवता । तथा चानुक्रान्तम्—'इन्द्राग्नी द्वादशैन्द्राग्नं त्रिष्टुबन्तं द्वितीया शक्करी' इति । महाव्रते निष्केवल्ये ऊरुभाग एतत्सूक्तम् । तथा च पञ्चमारण्यके सूत्रितम्—'ऊरू इन्द्राग्नी युवं सु नः' (ऐ. आ. ५. ३. १) इति । चातुर्विंशिकेऽहनि तृतीयसवने मैत्रावरुणो यदि महावालभिदं शंसेत्तदानीं माध्यंदिनसवने होत्रकाः स्वशस्त्र आरम्भणीयाभ्य ऊर्ध्वं नाभाकतृचावावपेरन् । तत्र 'ता हि मध्यम्' इत्यच्छावाकस्य नाभाकतृचः । सूत्रितं च—'ता हि मध्यं भराणामित्यच्छावाकः' (आश्व. श्रौ. ७. २) इति । चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिनः 'पूर्वीष्ट इन्द्र' इति नाभाकतृचः । सूत्रितं च—'पूर्वीष्ट इन्द्रोपमातय इति ब्राह्मणाच्छंसी' (आश्व. श्रौ. ७. २) इति ॥

इन्द्राग्नी युवं सु नः सहन्ता दासथो रयिम् ।
येन दृळ्हा समत्स्वा वीळु चित्साहिषीमह्यग्निर्वनेव वात इन्नभन्तामन्यके समे ॥१॥
इन्द्राग्नी इति । युवम् । सु । नः । सहन्ता । दासथः । रयिम् ।
येन । दृळ्हा । समत्ऽसु । आ । वीळु । चित् । सहिषीमहि ।
अग्निः । वनाऽइव । वाते । इत् । नभन्ताम् । अन्यके । समे ॥ १ ॥

हे ᵛइन्द्राग्नी ᵛसहन्ता शत्रूनभिभवन्तौ ᵛयुवं युवां ᵛनः अस्मभ्यं ᵛरयिं धनं सुष्ठु[2] ᵛदासथः दत्तम्[3] । तं रयिं विशिनष्टि । ᵛयेन रयिणा ᵛसमत्सु ᵛचित् संग्रामे[4] ᵛदृळ्हा ᵛचित् दृळ्हानि स्थिराण्यपि ᵛवीळु शत्रुबलानि ᵛअग्निर्वनेव यथाग्निर्वनानि ᵛवात ᵛइत् वातेनैवाभिभवति तथा ᵛसहिषीमहि अभिभवाम । सिद्धमन्यत् ॥

नहि वां वव्रयामहेऽथेन्द्रमिद्यजामहे शविष्ठं नृणां नरम् ।
स नः कदा चिदर्वता गमदा वाजसातये गमदा मेधसातये नभन्तामन्यके समे ॥२॥
नहि । वाम् । वव्रयामहे । अथ । इन्द्रम् । इत् । यजामहे । शविष्ठम् । नृणाम् । नरम् ।
सः । नः । कदा । चित् । अर्वता । गमत् । आ । वाजऽसातये । गमत् । आ । मेधऽसातये ।
नभन्ताम् । अन्यके । समे ॥ २ ॥

१. त१-२–स्वसेतवस्तव । २. ज्ञ-त४–सु सुष्ठु । ३. ग-त-न-भ–'दत्तं' नास्ति । ४. भ३–संग्रामेषु ।

हे इन्द्राग्नी ᵛवां युवां ᵛन ᵛवन्नयामहे वयं धनं न याचामहे । ᵛअथ ᵛहि अपि तर्हि ᵛशविष्ठम् अतिशयेन बलवन्तं ᵛनृणां ᵛनरं नेतृणामपि नेतारम् ᵛइन्द्रमित् इन्द्रमेव ᵛयजामहे । ᵛसः इन्द्रः ᵛनः अस्मान् ᵛअर्वता अश्वेन ᵛकदा ᵛचित् ᵛवाजसातये अन्नलाभाय ᵛआ ᵛगमत् आगच्छति । कदाचित् ᵛमेधसातये यज्ञभजनाय ᵛआ ᵛगमत् । सिद्धमन्यत् ॥

**ता हि मध्यं भराणामिन्द्राग्नी अधिक्षितः ।**
**ता उ कवित्वना कवी पृच्छ्यमाना सखीयते सं धीतमश्नुतं नरा**
**नभन्तामन्यके समे ॥ ३ ॥**

ता । हि । मध्यम् । भराणाम् । इन्द्राग्नी इति । अधिऽक्षितः ।
तौ । ऊँ इति । कविऽत्वना । कवी इति । पृच्छ्यमाना । सखिऽयते ।
सम् । धीतम् । अश्नुतम् । नरा । नभन्ताम् । अन्यके । समे ॥ ३ ॥

ᵛता तौ प्रसिद्धौ ᵛइन्द्राग्नी ᵛभराणां संग्रामाणां ᵛमध्यम् ᵛअधिक्षितः अधिनिवसतः ᵛहि । अथ प्रत्यक्षस्तुतिः । हे ᵛनरा नेतारौ ᵛकवित्वना कवित्वेन ᵛकवी क्रान्तकर्माणौ ᵛपृच्छ्यमाना कविजनैः पृच्छ्यमानौ[1] ᵛता ᵛउ तावेव युवां ᵛसखीयते सखित्वमिच्छते यजमानाय ᵛधीतं तत्कृतं कर्म ᵛसम् ᵛअश्नुतम् । सिद्धमन्यत् ॥

**अभ्यर्च नभाकवदिन्द्राग्नी यजसा गिरा ।**
**ययोर्विश्वमिदं जगदियं द्यौः पृथिवी मह्यु१पस्थे बिभृतो वसु नभन्तामन्यके समे ॥४॥**

अभि । अर्च । नभाकऽवत् । इन्द्राग्नी इति । यजसा । गिरा ।
ययोः । विश्वम् । इदम् । जगत् । इयम् । द्यौः । पृथिवी । मही ।
उपऽस्थे । बिभृतः । वसु । नभन्ताम् । अन्यके । समे ॥ ४ ॥

हे नाभाक ᵛनभाकवदिन्द्राग्नी ᵛयजसा यागेन ᵛगिरा स्तुत्या च ᵛअभ्यर्च अभिपूजय । ᵛययोः इन्द्राग्न्योः ᵛविश्वं सर्वम् ᵛइदं ᵛजगत् तिष्ठति । ययोश्च ᵛउपस्थे ᵛइयं ᵛद्यौः ᵛमही महती ᵛपृथिवी च द्यावापृथिव्यावुभे ᵛवसु धनं ᵛबिभृतः धारयतः । सिद्धमन्यत् ॥

**प्र ब्रह्माणि नभाकवदिन्द्राग्निभ्यामिरज्यत ।**
**या सप्तबुध्नमर्णवं जिह्मबारमपोर्णुत इन्द्र ईशान ओजसा नभन्तामन्यके समे ॥५॥**

प्र । ब्रह्माणि । नभाकऽवत् । इन्द्राग्निऽभ्याम् । इरज्यत ।
या । सप्तऽबुध्नम् । अर्णवम् । जिह्मऽबारम् । अपऽऊर्णुतः ।
इन्द्रः । ईशानः । ओजसा । नभन्ताम् । अन्यके । समे ॥ ५ ॥

ᵛब्रह्माणि स्तोत्राणि ᵛइन्द्राग्निभ्यां ᵛनभाकवत् ᵛप्र ᵛइरज्यत नाभाकः प्रेरयते । ᵛया[2] याविन्द्राग्नी ᵛसप्तबुध्नं सप्तमूलं ᵛजिह्मबारं पिहितद्वारम् ᵛअर्णवम् ᵛअपोर्णुतः तेजोभिराच्छादयतः तयोर्मध्ये ᵛओजसा बलेन ᵛइन्द्रः ᵛईशानः ईश्वरो भवति । सिद्धमन्यत् ॥

---

१. घ-त-न-भ—पृच्छमानौ । २. त-न-भ—' या ' नास्ति ।

अपि वृश्च पुराणवद्व्रततेरिव गुष्पितमोजो दासस्य दम्भय ।
वयं तदस्य संभृतं वस्विन्द्रेण वि भजेमहि नभन्तामन्यके समे ॥ ६ ॥

अपि । वृश्च । पुराणऽवत् । व्रततेःऽइव । गुष्पितम् । ओजः । दासस्य । दम्भय ।
वयम् । तत् । अस्य । सम्ऽभृतम् । वसु । इन्द्रेण । वि । भजेमहि । नभन्ताम् । अन्यके । समे ॥६॥

अपि च हे इन्द्र ᵛपुराणवत् प्रत्नो यथा ᵛव्रततेरिव यथा वल्ल्याः ᵛगुष्पितं निर्गतां शाखां वृश्चति तथा शत्रूणां ᵛवृश्च छेदय । तदेवाह । ᵛदासस्य दासनामकस्य शत्रोः ᵛओजः बलं ᵛदम्भय नाशय । अथ परोक्षस्तुतिः । ᵛवयं नाभाकाः ᵛअस्य दासस्य ᵛसंभृतं ᵛवसु[1] ᵛइन्द्रेण हेतुना ᵛवि ᵛभजेमहि । सिद्धमन्यत् ॥　　॥ २४ ॥

यदिन्द्राग्नी जना इमे विह्वयन्ते तना गिरा ।
अस्माकेभिर्नृभिर्वयं सासह्याम पृतन्यतो वनुयाम वनुष्यतो नभन्तामन्यके समे ॥७॥

यत् । इन्द्राग्नी इति । जनाः । इमे । विऽह्वयन्ते । तना । गिरा ।
अस्माकेभिः । नृऽभिः । वयम् । ससह्याम । पृतन्यतः । वनुयाम । वनुष्यतः ।
नभन्ताम् । अन्यके । समे ॥ ७ ॥

ᵛयत् ये ᵛइमे ᵛजनाः ᵛतना धनेन ᵛगिरा स्तुत्या च ᵛइन्द्राग्नी ᵛविह्वयन्ते विशेषेण ह्वयन्ति तेषु मध्ये ᵛवयं नाभाकाः ᵛपृतन्यतः पृतनामिच्छन्तः ᵛअस्माकेभिः अस्माकीनैः ᵛनृभिः मनुष्यैः ᵛससह्याम शत्रूनभिभवेम । ᵛवनुष्यतः स्तुतिमिच्छन्तः शत्रून् ᵛवनुयाम च[2] । सिद्धमन्यत् ॥

या नु श्वेताववो दिव उच्चरात उप द्युभिः ।
इन्द्राग्न्योरनु व्रतमुहाना यन्ति सिन्धवो यान्त्सीं बन्धादमुञ्चतां नभन्तामन्यके समे॥८॥

या । नु । श्वेतौ । अवः । दिवः । उत्ऽचरातः । उप । द्युऽभिः ।
इन्द्राग्न्योः । अनु । व्रतम् । उहानाः । यन्ति । सिन्धवः । यान् । सीम् । बन्धात् । अमुञ्चताम् ।
नभन्ताम् । अन्यके । समे ॥ ८ ॥

ᵛया ᵛनु यावेवेन्द्राग्नी ᵛश्वेतौ श्वेतवर्णौ । सत्वगुणोपेतावित्यर्थः । ᵛअवः अधस्तात् ᵛद्युभिः दीप्तिभिः ᵛदिवः ᵛउप ᵛउच्चरातः उच्चरतः तयोरेव ᵛइन्द्राग्न्योः ᵛउहानाः हविर्वहन्तो यजमानाः ᵛव्रतं कर्म ᵛअनु ᵛयन्ति । अपि ᵛसीम् इमाविन्द्राग्नी ᵛयान् प्रसिद्धान् ᵛसिन्धवः सिन्धून् ᵛबन्धात् बन्धनात् ᵛअमुञ्चताम् । सिद्धमन्यत् ॥

पूर्वीष्ट इन्द्रोपमातयः पूर्वीरुत प्रशस्तयः सूनो हिन्वस्य हरिवः ।
वस्वो वीरस्यापृचो या नु साधन्त नो धियो नभन्तामन्यके समे ॥ ९ ॥

पूर्वीः । ते । इन्द्र । उपऽमातयः । पूर्वीः । उत । प्रऽशस्तयः । सूनो इति । हिन्वस्य । हरिऽवः ।
वस्वः । वीरस्य । आऽपृचः । याः । नु । साधन्त । नः । धियः । नभन्ताम् । अन्यके । समे ॥९॥

---

१. घ–तद्वसु ।　२. घ–च स्तुमः ।

हे ᐯहरिवः वज्रिन् ᐯसूनो[1] प्रेरयितः ᐯइन्द्र ᐯहिन्वस्य प्रीणयितुः ᐯवस्वः[2] दीपकस्य ᐯवीरस्य ᐯआपृचः धनान्युपयच्छतः ᐯते तव ताः ᐯउपमातयः उपमानानि ᐯपूर्वीः बहूनि । ᐯउत अपि च ᐯप्रशस्तयः ᐯपूर्वीः । ᐯयाः ᐯनः ᐯधियः प्रज्ञां ᐯसाधन्त असाधयन् । सिद्धमन्यत् ॥

तं शिशीता सुवृक्तिभिस्त्वेषं सत्वानमृग्मियम् ।
उतो नु चिद्य ओजसा शुष्णस्याण्डानि भेदति जेषत्स्वर्वतीरपो नभन्तामन्यके समे ॥ १० ॥

तम् । शिशीत । सुवृक्तिऽभिः । त्वेषम् । सत्वानम् । ऋग्मियम् ।
उतो इति । नु । चित् । यः । ओजसा । शुष्णस्य । आण्डानि । भेदति ।
जेषत् । स्वः॑ऽवतीः । अपः । नभन्ताम् । अन्यके । समे ॥ १० ॥

हे स्तोतारः ᐯत्वेषं दीप्तं ᐯसत्वानं संभक्तारं धनानाम् ᐯऋग्मियं ऋगर्हमृग्भिः स्तोतव्यं ᐯतम् इन्द्रं ᐯसुवृक्तिभिः स्तुतिभिः ᐯशिशीत संस्कुरुत । ᐯउतो ᐯनु ᐯचित् अपि च ᐯयः इन्द्रः ᐯओजसा बलेन ᐯशुष्णस्य शुष्णनामकस्यासुरस्य ᐯआण्डानि अण्डजातान्यपत्यानि ᐯभेदति अभिनत् सः ᐯस्वर्वतीः दिव्यानि ᐯअपः सलिलानि ᐯजेषत् जयतु । सिद्धमन्यत् ॥

तं शिशीता स्वध्वरं सत्यं सत्वानमृत्वियम् ।
उतो नु चिद्य ओहत आण्डा शुष्णस्य भेदत्यजैः स्वर्वतीरपो नभन्तामन्यके समे ॥ ११ ॥

तम् । शिशीत । सुऽअध्वरम् । सत्यम् । सत्वानम् । ऋत्वियम् ।
उतो इति । नु । चित् । यः । ओहते । आण्डा । शुष्णस्य । भेदति ।
अजैः । स्वः॑ऽवतीः । अपः । नभन्ताम् । अन्यके । समे ॥ ११ ॥

हे स्तोतारः ᐯस्वध्वरं सुयज्ञं ᐯसत्यम् अविनाशं ᐯसत्वानं संभक्तारम् ᐯऋत्वियम् ऋतौ यष्टव्यं ᐯतम् इन्द्रं ᐯशिशीत स्तुतिभिः संस्कुरुत । अथ प्रत्यक्षस्तुतिः । ᐯउतो ᐯनु ᐯचित् अपि च ᐯयः इन्द्रः ᐯओहते यज्ञं प्रति गच्छति ᐯशुष्णस्य ᐯआण्डा आण्डान्यण्डजातानि च ᐯभेदति[3] भिनत्ति[3] स त्वं ᐯस्वर्वतीः दिव्यानि ᐯअपः सलिलानि ᐯअजैः अजैषीः । सिद्धमन्यत् ॥

एवेन्द्राग्निभ्यां पितृवन्नवीयो मन्धातृवदङ्गिरस्वदवाचि ।
त्रिधातुना शर्मणा पातमस्मान्वयं स्याम पतयो रयीणाम् ॥ १२ ॥

एव । इन्द्राग्निऽभ्याम् । पितृऽवत् । नवीयः । मन्धातृऽवत् । अङ्गिरस्वत् । अवाचि ।
त्रिऽधातुना । शर्मणा । पातम् । अस्मान् । वयम् । स्याम । पतयः । रयीणाम् ॥ १२ ॥

ᐯएव एवं याभ्याम् ᐯइन्द्राग्निभ्यां ᐯपितृवत् नभाकवत् ᐯमन्धातृवत् यौवनाश्वमान्धातृवच्च ᐯअङ्गिरस्वत् अङ्गिरोवच्च ᐯनवीयः नवतरम् ᐯअवाचि नाभाकेन मया पाठिताविन्द्राग्नी ᐯत्रिधातुना त्रिपर्वणा ᐯशर्मणा गृहेण[4] नः ᐯअस्मान् नाभाकान्[4] ᐯपातं रक्षतम् । ᐯवयं ᐯरयीणां धनानां ᐯपतयः स्वामिनः ᐯस्याम भवेम ॥ ॥ २५ ॥

१. ग-त-न-भ-'सूनो' नास्ति । २. त-न-भ२-वस्वो वा । ३. ख-ग-त-न-भ-श-'भेदति भिनत्ति' नास्ति; घ-भेदति अभिनत् । ४. ग-गृहे तु नास्माका°; त-न-भ-गृहे नास्माका° ।

'अस्मा ऊ षु' इति दशर्चमेकादशं सूक्तम्। अत्रेयमनुक्रमणिका—'अस्मा ऊ षु दश वारुणं तु' इति। नाभाक ऋषिरनुवृत्तत्वात्। 'महापाङ्क्तं हि' इत्युक्तत्वादिदमपि महापाङ्क्तम्। इदमादिके द्वे सूक्ते वरुणदेवत्ये। विनियोगो लैङ्गिकः। चातुर्विंशिकेऽहनि माध्यंदिनसवने मैत्रावरुणशस्त्र आरम्भणीयाया ऊर्ध्वं 'स क्षपः' इत्ययं नाभाकतृचः। सूत्रितं च—'स क्षपः परि षस्वज इति मैत्रावरुणः' (आश्व. श्रौ. ७. २) इति। 'यः ककुभः' इत्येतत्प्रभृतिको वा नाभाकतृचः। सूत्रितं च—'यः ककुभो निधारय इति[1] वा' (आश्व. श्रौ. ७. २) इति[1]॥

अस्मा ऊ षु प्रभूतये वरुणाय मरुद्भ्योऽर्चा विदुष्टरेभ्यः।
यो धीता मानुषाणां पश्वो गाइव रक्षति नभन्तामन्यके समे॥ १॥

अस्मै। ऊँ इति। सु। प्रऽभूतये। वरुणाय। मरुत्ऽभ्यः। अर्च। विदुःऽतरेभ्यः।
यः। धीता। मानुषाणाम्। पश्वः। गाःऽइव। रक्षति। नभन्ताम्। अन्यके। समे॥ १॥

हे स्तोतः ˅सु ˅प्रभूतये प्रकृष्टधनाय ˅अस्मै ˅वरुणाय ˅विदुष्टरेभ्यः विद्वत्तरेभ्यः ˅मरुद्भ्यः च ˅अर्च स्तुहि। ˅यः वरुणः ˅धीता कर्मणा ˅मानुषाणां मनुष्याणां ˅पश्वः पशून् ˅गाइव ˅रक्षति[2]। सिद्धमन्यत्।

तमू षु समना गिरा पितॄणां च मन्मभिः।
नाभाकस्य प्रशस्तिभिर्यः सिन्धूनामुपोदये सप्तस्वसा स मध्यमो
नभन्तामन्यके समे॥ २॥

तम्। ऊँ इति। सु। समना। गिरा। पितॄणाम्। च। मन्मऽभिः।
नाभाकस्य। प्रशस्तिऽभिः। यः। सिन्धूनाम्। उप। उत्ऽअये।
सप्तऽस्वसा। सः। मध्यमः। नभन्ताम्। अन्यके। समे॥ २॥

˅तमु तमेव वरुणं ˅समना समानया ˅गिरा स्तुत्या ˅सु अभिष्टौमि। ˅पितॄणां ˅मन्मभिः स्तोमैः ˅च अभिष्टौमि। ˅नाभाकस्य ऋषेः ˅प्रशस्तिभिः स्तोत्रैश्चाभिष्टौमि। ˅सिन्धूनां स्यन्दमानानां नदीनाम् ˅उप समीपे ˅यः ˅उदये उद्गच्छति यश्च ˅सप्तस्वसा ˅स ˅मध्यमः इति वाग्भिर्निरुच्यते। ˅अन्यके दुर्धियः शत्रवः ˅समे सर्वे ˅नभन्तां मा भूवन्। तथा च यास्कः—'तं स्वभिष्टौमि समानया गिरा गीत्या स्तुत्या पितॄणां च मननीयैः स्तोमैर्नाभाकस्य प्रशस्तिभिः। ऋषिर्नाभाको बभूव। यः स्यन्दमानानामासामपामुपोदये सप्तस्वसारमेनमाह वाग्भिः स मध्यम इति निरुच्यतेऽथैष एव भवति। नभन्तामन्यके समे मा भूवन्नन्यके सर्वे ये नो द्विषन्ति दुर्धियः पापधियः पापसंकल्पाः' (निरु. १०. ५) इति॥

स क्षपः परि षस्वजे न्यु१स्रो मायया दधे स विश्वं परि दर्शतः।
तस्य वेनीरनु व्रतमुषस्तिस्रो अवर्धयन्नभन्तामन्यके समे॥ ३॥

सः। क्षपः। परि। सस्वजे। नि। उस्रः। मायया। दधे। सः। विश्वम्। परि। दर्शतः।
तस्य। वेनीः। अनु। व्रतम्। उषः। तिस्रः। अवर्धयन्। नभन्ताम्। अन्यके। समे॥३

१. ख-त—इति च; ग—इति चेति; न-भ—इवेति; श—इति। २. ग-त-न-भ२—गच्छति इव रक्षति घ—रक्षति यथा गोपालो गा रक्षति तद्वत्; भ१—गच्छति।

ᵛसः वरुणः ᵛक्षपः रात्रीः ᵛपरि ᵛषस्वजे परिष्वजते । अपि च ᵛदर्शतः दर्शनीयः ᵛसः वरुणः ᵛउस्रः उत्सरणशीलः सन् ᵛविश्वं ᵛमायया कर्मणा ᵛपरि परितः ᵛनि ᵛदधे निदधाति । किंच ᵛतस्य वरुणस्य ᵛव्रतं कर्म ᵛवेनीः कामयमानाः प्रजाः ᵛतिस्रः ᵛउषः त्रिषु प्रातर्माध्यंदिनं सायं च ᵛअनु ᵛअवर्धयन् अनुवर्धयन्ति । सिद्धमन्यत् ॥

यः क॒कुभो॑ निधार॒यः पृ॑थि॒व्यामधि॑ द॒र्शतः ।
स माता॑ पू॒र्व्यं प॒दं तद्वरु॑णस्य॒ सप्त्यं॒ स हि गो॒पाइ॒वेर्यो॒ नभ॑न्तामन्य॒के स॑मे ॥४॥

यः । क॒कुभः॑ । नि॒ऽधा॒र॒यः । पृ॒थि॒व्याम् । अधि॑ । द॒र्शतः ।
सः । माता॑ । पू॒र्व्य॑म् । प॒दम् । तत् । वरु॑णस्य । सप्त्य॑म् । सः । हि । गो॒पाःऽइ॑व । इर्यः॑ ।
नभ॑न्ताम् । अ॒न्य॒के । स॒मे ॥ ४ ॥

ᵛयः वरुणः ᵛपृथिव्यामधि पृथिव्या उपरि ᵛदर्शतः दर्शनीयः सन् ᵛककुभः दिशः ᵛनिधारयः निधारयति ᵛसः वरुणः ᵛमाता निर्माता । ᵛपूर्व्यं प्रत्नं ᵛपदं स्वर्गाख्यं स्थानं ᵛसप्त्यम् अस्माभिश्च सर्पणीयं ᵛतत् ᵛवरुणस्य स्वकृतम्[1] । अपि च ᵛस ᵛहि स एव ᵛइर्यः[2] ईश्वरः सन् ᵛगोपाइव गोपाल इव पशूनामस्माकं रक्षिता । सिद्धमन्यत् ॥

यो ध॒र्ता भुव॑नानां॒ य उ॒स्राणा॑मपी॒च्या३ वेद॒ नामा॑नि॒ गुह्या॑ ।
स क॒विः काव्या॑ पु॒रु रू॒पं द्यौरि॑व पुष्यति॒ नभ॑न्तामन्य॒के स॑मे ॥ ५ ॥

यः । ध॒र्ता । भुव॑नानाम् । यः । उ॒स्राणा॑म् । अ॒पी॒च्या॑ । वेद॑ । नामा॑नि । गुह्या॑ ।
सः । क॒विः । काव्या॑ । पु॒रु । रू॒पम् । द्यौःऽइ॑व । पु॒ष्य॒ति॒ । नभ॑न्ताम् । अ॒न्य॒के । स॒मे ॥५

ᵛयः वरुणः ᵛभुवनानां ᵛधर्ता धारयिता ᵛयः च ᵛउस्राणां देवाधिष्ठानभूतानां रश्मीनाम ᵛअपीच्या अपीच्यान्यन्तर्हितानि ᵛगुह्या गुह्यानि गुहायां निहितानि ᵛनामानि ᵛवेद जानाति ᵛसः वरुणः ᵛकविः प्राज्ञः सन् ᵛकाव्या काव्यानि कविकर्माणि ᵛपुरु बहूनि ᵛरूपं ᵛद्यौरिव ᵛपुष्यति सिद्धमन्यत् ॥ ॥ २६ ॥

यस्मि॒न्विश्वा॑नि॒ काव्या॑ च॒क्रे नाभि॑रिव श्रि॒ता ।
त्रि॒तं जू॒ती स॑पर्यत व्र॒जे गावो॒ न सं॒युजे॑ यु॒जे अश्वाँ॑ अयुक्षत॒ नभ॑न्तामन्य॒के स॑मे॥६

यस्मि॑न् । विश्वा॑नि । काव्या॑ । च॒क्रे । नाभिः॑ऽइव । श्रि॒ता ।
त्रि॒तम् । जू॒ती । स॒प॒र्य॒त॒ । व्र॒जे । गावः॑ । न । स॒म्ऽयुजे॑ ।
यु॒जे । अश्वा॑न् । अ॒यु॒क्ष॒त॒ । नभ॑न्ताम् । अ॒न्य॒के । स॒मे ॥ ६ ॥

ᵛयस्मिन् वरुणे ᵛविश्वानि सर्वाणि ᵛकाव्या काव्यानि कविकर्माणि ᵛचक्रे ᵛनाभिरिव यथा रथस्य चक्रे नाभिस्तथा ᵛश्रिता श्रितानि तं ᵛत्रितं[3] त्रिस्थानं वरुणं ᵛजूती जूत्या क्षिप्रं ᵛसपर्यत हे मदीया जनाः परिचरत । किमर्थमित्यत आह । ᵛव्रजे गोष्ठे ᵛगावो ᵛन यथा गाः ᵛसंयुजे संयोगार्थं

---

१. ख-त-भ१-२–स्वनुतं; ग–स्वदतं; न–तुतं; भ३-श–स्वभूतं । २. त-न-भ–अर्यः । ३. घ–त्रितं भूर्भुवःस्वः ।

सह स्थापयितुं ᵛयुजे युञ्जन्ति तथास्माकमभियोगाय ᵛअश्वानयुक्षत सपत्ना युञ्जन्ति। अतस्तदुपद्रव-परिहाराय वरुणं परिचरतेत्यर्थः ॥

य आ॒स्वत्क॑ आ॒श॒ये॑ विश्वा॑ जा॒तान्ये॑षाम्।
परि॒ धामा॑नि॒ मर्मृ॑शद्वरु॑णस्य पु॒रो ग॒ये विश्वे॑ दे॒वा अनु॑ व्र॒तं नभ॑न्तामन्य॒के स॑मे ॥७॥

यः। आ॒सु॒। अ॒त्कः॑। आ॒ऽश॒ये॑। विश्वा॑। जा॒तानि॑। ए॒षा॒म्।
परि॑। धामा॑नि। मर्मृ॑शत्। वरु॑णस्य। पु॒रः। ग॒ये॑। विश्वे॑। दे॒वाः। अनु॑। व्र॒तम्।
नभ॑न्ताम्। अ॒न्य॒के। स॒मे॒ ॥ ७ ॥

--- त्परिमृशतः ᵛवरुणस्य ᵛपुरो ᵛगये रथस्य पुरताद्भवति तस्य वरुणस्य पुरस्तात् ᵛविश्वे सर्वे ᵛदेवाः ᵛव्रतं कर्म ᵛअनु गच्छन्तीत्यर्थः। सिद्धमन्यत् ॥

स स॑मु॒द्रो अ॑पी॒च्य॑स्तु॒रो द्यामि॑व रोह॒ति॒ नि यदा॑सु॒ यजु॑र्द॒धे।
स मा॒या अ॒र्चिना॑ प॒दास्तृ॑णा॒न्नाक॒मारु॑ह॒न्नभ॑न्तामन्य॒के स॑मे ॥ ८ ॥

सः। स॒मु॒द्रः। अ॒पी॒च्यः॑। तु॒रः। द्याम्ऽइ॑व। रोह॒ति॒। नि। यत्। आ॒सु॒। यजुः॑। द॒धे।
सः। मा॒याः। अ॒र्चिना॑। प॒दा। अस्तृ॑णात्। नाक॑म्। आ। अ॒रु॒ह॒त्।
नभ॑न्ताम्। अ॒न्य॒के। स॒मे॒ ॥ ८ ॥

यस्मादापः समुद्द्रवन्ति ᵛसः वरुणः ᵛसमुद्रः ᵛअपीच्यः अन्तर्हितः ᵛतुरः क्षिप्रः ᵛद्यामिव यथादित्यो द्यां रोहति तथा नाकं ᵛरोहति। अपि च ᵛयत् यः वरुणः ᵛआसु दिक्षु ᵛयजुः प्रजाभ्यो दानं ᵛनि ᵛदधे निदधाति ᵛसः वरुणः ᵛमायाः असुराणां मायाः ᵛअर्चिना अर्चिष्मता ᵛपदा स्थानेन। तेजसेत्यर्थः। ᵛआ ᵛअस्तृणात् समन्ताद्धिनस्ति। ᵛनाकं स्वर्गम् ᵛआरुहत् आरोहति। सिद्धमन्यत् ॥

यस्य॑ श्वे॒ता वि॑चक्ष॒णा ति॒स्रो भूमी॑रधिक्षि॒तः।
त्रिरुत्त॑राणि प॒प्रतु॒र्वरु॑णस्य ध्रु॒वं स॒दः स स॑प्ता॒नामि॑रज्यति॒ नभ॑न्तामन्य॒के स॑मे॥९॥

यस्य॑। श्वे॒ता। वि॒ऽच॒क्ष॒णा। ति॒स्रः। भूमीः॑। अ॒धि॒ऽक्षि॒तः।
त्रिः। उत्ऽत॑राणि। प॒प्रतुः॑। वरु॑णस्य। ध्रु॒वम्। सदः॑।
सः। स॒प्ता॒नाम्। इ॒र॒ज्य॒ति॒। नभ॑न्ताम्। अ॒न्य॒के। स॒मे॒ ॥ ९ ॥

ᵛयस्य वरुणस्य ᵛअधिक्षितः अन्तरिक्षेऽधिवसतः ᵛश्वेता श्वेतानि ᵛविचक्षणा तेजांसि ᵛतिस्रो ᵛभूमीः ᵛत्रिरुत्तराणि तिसृणामधिस्थितानि भुवनानि ᵛपप्रतुः प्रथयन्ति। तथा च मन्त्रवर्णः— 'तिस्रो भूमीर्धारयन् त्रीँरुत द्यून्' (ऋ. सं. २. २७. ८) इति। तस्य ᵛवरुणस्य ᵛसदः स्थानं ᵛध्रुवम् अचलमिति। किंच ᵛसः वरुणः ᵛसप्तानां सिन्धूनाम् ᵛइरज्यति ईश्वरो भवति। सिद्धमन्यत् ॥

यः श्वे॒ताँ अधि॑निर्णिजश्च॒क्रे कृ॒ष्णाँ अनु॑ व्र॒ता।
स धाम॑ पू॒र्व्यं म॑मे॒ यः स्क॒म्भेन॒ वि रोद॑सी
अ॒जो न द्यामधा॑रय॒न्नभ॑न्तामन्य॒के स॑मे ॥ १० ॥

यः । श्वेतान् । अधिऽनिर्निजः । चक्रे । कृष्णान् । अनु । व्रता ।
सः । धाम । पूर्व्यम् । ममे । यः । स्कम्भेन । वि । रोदसी इति ।
अजः । न । द्याम् । अधारयत् । नभन्ताम् । अन्यके । समे ॥ १० ॥

^v^यः वरुणः ^v^निर्णिजः आत्मीयान् रश्मीन् दिवा ^v^श्वेतान् ^v^अधि ^v^चक्रे अधिकरोति तथा रात्रौ ^v^कृष्णान् चक्रे ^v^सः वरुणः ^v^अनु ^v^व्रता कर्माणि लक्षीकृत्योभयविधकर्मानुगुणं ^v^पूर्व्यं ^v^धाम अन्तरिक्षं दिवं वा ^v^ममे निर्ममे । अपि च ^v^यः ^v^स्कम्भेन अन्तरिक्षेण ^v^अजो ^v^न यथा आदित्यः ^v^द्यां धारयति तथा ^v^रोदसी द्यावापृथिव्यौ ^v^वि ^v^अधारयत् विधारयति स वरुण इत्यर्थः । सिद्धमन्यत् ॥ ॥ २७ ॥

'अस्तभ्नात्' इति षडृचं द्वादशं सूक्तम् । अर्चनाना ऋषिः काण्वो नाभाको वा ऋषिः । उत्तरे त्वर्चनानाः । आद्यस्तृचस्त्रैष्टुभो वरुणदेवत्यो द्वितीयस्तृच आनुष्टुभोऽश्विदेवताकः[1] । तथा चानुक्रान्तम्—'अस्तभ्नात् षळर्चनाना वा त्रैष्टुभमन्त्यं वा तृचमाश्विनमानुष्टुभमपश्यत्' इति । सूक्तविनियोगो लैङ्गिकः । वारुणे पशौ हविषो याज्या 'अस्तभ्नात्' इति । सूत्रितं च—'अस्तभ्नाद्द्यामसुरो विश्ववेदा इत्यैकादशिनाः' ( आश्व. श्रौ. ३. ७ ) इति । अग्नीषोमप्रणयनेऽप्येषोत्तरा परिधानीया । तथा सूत्रितम्—'अस्तभ्नाद्द्यामसुरो विश्ववेदा इति परिदध्यादुत्तरया वा' ( आश्व. श्रौ. ४. १० ) इति । 'एवा वन्दस्व' इत्येषा वारुणे पशौ हविषोऽनुवाक्या । सूत्रितं च—'एवा वन्दस्व वरुणं बृहन्तं तत्त्वा यामि ब्रह्मणा वन्दमान इति द्वे' ( आश्व. श्रौ. ३. ७ ) । सोमप्रवहणे 'इमां धियम्' इत्येषा परिधानीया । सूत्रितं च—'इमां धियं शिक्षमाणस्य देवेति निहिते परिदध्यात्' ( आश्व. श्रौ. ४. ४ ) इति ॥

**अस्तभ्नाद् द्यामसुरो विश्ववेदा अमिमीत वरिमाणं पृथिव्याः ।**
**आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि ॥ १ ॥**

अस्तभ्नात् । द्याम् । असुरः । विश्वऽवेदाः । अमिमीत । वरिमाणम् । पृथिव्याः ।
आ । असीदत् । विश्वा । भुवनानि । सम्ऽराट् । विश्वा । इत् । तानि । वरुणस्य । व्रतानि ॥ १

^v^विश्ववेदाः विश्वधनः ^v^असुरः बलवान् वरुणः ^v^द्याम् ^v^अस्तभ्नात् । तथा ^v^पृथिव्याः च ^v^वरिमाणं परिमाणम् ^v^अमिमीत चक्रे । एवं निर्मितानि ^v^विश्वा सर्वाणि ^v^भुवनानि ^v^सम्राट् भूत्वा ^v^आसीदत् च अध्यतिष्ठच्च । ^v^वरुणस्य[2] ^v^तानि एतानि ^v^व्रतानि[3] कर्माणि ^v^विश्वेत् विश्वान्येव[4] । अतो वर्णयितुमशक्यानीत्यर्थः[4] ॥

**एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम् ।**
**स नः शर्म त्रिवरूथं वि यंसत्पातं नो द्यावापृथिवी उपस्थे ॥ २ ॥**

एव । वन्दस्व । वरुणम् । बृहन्तम् । नमस्य । धीरम् । अमृतस्य । गोपाम् ।
सः । नः । शर्म । त्रिऽवरूथम् । वि । यंसत् । पातम् । नः । द्यावापृथिवी इति । उपऽस्थे ॥२

हे स्तोतः ^v^बृहन्तं महान्तं ^v^वरुणम् ^v^एव एवं ^v^वन्दस्व स्तुहि । ^v^अमृतस्य ^v^गोपां गोपायितारं ^v^धीरं प्राज्ञं वरुणं ^v^नमस्य नमस्कुरु च । ^v^सः वरुणः ^v^नः अस्मभ्यं ^v^त्रिवरूथं त्रिस्थानं

---

१. ख-घ-त-न-श-°ष्टुभो विश्वेदेवताकः । २. घ-एतादृशस्य वरुणस्य । ३. त-न-भ-'व्रतानि' नास्ति । ४. घ-बहूनि संति ।

ᵛशर्म गृहं ᵛवि ᵛयंसत् प्रयच्छतु । ᵛउपस्थे उपस्थाने वर्तमानान् ᵛनः अस्मान् ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛपातं रक्षतम् ॥

इमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण सं शिशाधि ।
ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेम ॥ ३ ॥

इमाम् । धियम् । शिक्षमाणस्य । देव । क्रतुम् । दक्षम् । वरुण । सम् । शिशाधि ।
यया । अति । विश्वा । दुःऽइता । तरेम । सुऽतर्माणम् । अधि । नावम् । रुहेम ॥ ३ ॥

हे ᵛदेव द्योतमान ᵛवरुण ᵛइमां ᵛधियम् इदं कर्म ᵛशिक्षमाणस्य अनुतिष्ठतो मम ᵛक्रतुं प्रज्ञानं ᵛदक्षं बलं च ᵛसं ᵛशिशाधि तीक्ष्णीकुरु । ᵛयया नावा यज्ञरूपया ᵛविश्वा सर्वाणि ᵛदुरिता दुरितानि ᵛअति ᵛतरेम तां ᵛसुतर्माणं सुष्ठु तारयित्रीं यज्ञरूपां ᵛनावम् ᵛअधि ᵛरुहेम वयमारुहेम । दुःखसागरतरणे हेतुत्वाद्यज्ञो नौरित्यत्र व्यपदिश्यते ॥

आ वां ग्रावाणो अश्विना धीभिर्विप्रा अचुच्यवुः ।
नासत्या सोमपीतये नभन्तामन्यके समे ॥ ४ ॥

आ । वाम् । ग्रावाणः । अश्विना । धीभिः । विप्राः । अचुच्यवुः ।
नासत्या । सोमऽपीतये । नभन्ताम् । अन्यके । समे ॥ ४ ॥

हे ᵛनासत्या सत्यौ[1] सत्यप्रणेतारौ वा । तथा च यास्कः—'सत्यावेव नासत्याविस्यौर्णवाभः सत्यस्य प्रणेतारौ' ( निरु. ६. १३ ) इति । ᵛअश्विना अश्विनौ ᵛवां युवां ᵛसोमपीतये सोमस्य पानाय ᵛविप्राः प्राज्ञा ऋत्विजः ᵛग्रावाणः सोमाभिषवपाषाणाश्च ᵛधीभिः कर्मभिः स्वस्वव्यापारैः ᵛअचुच्यवुः अभिगच्छन्ति । सिद्धमन्यत् ॥

यथा वामत्रिरश्विना गीर्भिर्विप्रो अजोहवीत् ।
नासत्या सोमपीतये नभन्तामन्यके समे ॥ ५ ॥

यथा । वाम् । अत्रिः । अश्विना । गीःऽभिः । विप्रः । अजोहवीत् ।
नासत्या । सोमऽपीतये । नभन्ताम् । अन्यके । समे ॥ ५ ॥

हे नासत्यावश्विनौ ᵛवां युवां ᵛविप्रः प्राज्ञः ᵛअत्रिः ᵛयथा ᵛगीर्भिः स्तुतिभिः ᵛसोमपीतये ᵛअजोहवीत् तथाहमपि जोहवीमि ॥

एवा वामह्व ऊतये यथाहुवन्त मेधिराः ।
नासत्या सोमपीतये नभन्तामन्यके समे ॥ ६ ॥

एव । वाम् । अह्वे । ऊतये । यथा । अहुवन्त । मेधिराः ।
नासत्या । सोमऽपीतये । नभन्ताम् । अन्यके । समे ॥ ६ ॥

इयं व्याख्यातचरा ॥ ॥ २८ ॥ ॥ ५ ॥

---

१. ज्ञ-भ—नासत्यौ ।

षष्ठेऽनुवाके षट् सूक्तानि । तत्र 'इमे विप्रस्य' इति त्रयस्त्रिंशदृचं प्रथमं सूक्तमाङ्गिरसस्य विरूपस्यार्षं गायत्रमग्निदेवताकम् । तथा चानुक्रान्तम्—'इमे त्रयस्त्रिंशद्विरूप आङ्गिरस आग्नेयं तु' इति । प्रातरनुवाक आग्नेये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चैतदादिके द्वे सूक्ते । सूत्रितं च—'इमे विप्रस्येति सूक्ते' (आश्व. श्रौ. ४. १३) इति । कारीर्यवभृथेष्ट्योः प्रथमाज्यभागस्य 'अप्स्वग्ने' इत्यनुवाक्या । तथा च सूत्रितम्—'अप्सुमन्तावाज्यभागावप्स्वग्ने सधिष्टव' (आश्व. श्रौ. २. १३) इति । आग्नीध्रस्य प्रातःसवने प्रस्थितयाज्या । श्रूयते च—'उक्षान्नाय वशान्नायेत्याग्नीध्रो यजति' (ऐ. ब्रा. ६. १०) इति । अग्निवतीष्टौ 'त्वं ह्यग्ने' इत्येषा याज्या । सूत्रितं च—'त्वं ह्यग्ने अग्निनाग्ने त्वमस्मद्युयोध्यमीवाः' (आश्व. श्रौ. ३. १३) इति । अग्निमन्थनेऽप्येषा । सूत्रितं च—'त्वं ह्यग्ने अग्निना तं मर्जयन्त सुक्रतुम्' (आश्व. श्रौ. २. १६) इति । अग्नये कामायाष्टाकपालेष्टौ 'तुभ्यं ता अङ्गिरस्तम' इत्येषानुवाक्या । सूत्रितं च—'तुभ्यं ता अङ्गिरस्तमाश्याम तं काममग्ने तवोतीति कामाय' (आश्व. श्रौ. २. १०) इति । अन्वाहिताग्नेः प्रयाणे समारोपणपक्षेऽनयैकाहुतिः कर्तव्या । तथा च सूत्रितं—'तुभ्यं ता अङ्गिरस्तमेति वाज्याहुतिं हुत्वा समारोपयेत्' (आश्व. श्रौ. ३. १०) इति । वैद्युताग्निनाग्नीनां संसर्गेऽग्नयेऽप्सुमतीष्टिः । तत्र 'यदग्ने दिविजाः' इति याज्या । 'यदग्ने दिविजा अस्यग्निर्होता न्यसीदद्यजीयान्' (आश्व. श्रौ. ३. १३) इति ॥

**इमे विप्रस्य वेधसोऽग्नेरस्तृतयज्वनः । गिरः स्तोमास ईरते ॥ १ ॥**

इमे । विप्रस्य । वेधसः । अग्नेः । अस्तृतऽयज्वनः । गिरः । स्तोमासः । ईरते ॥ १ ॥

Vइमे अस्मदीयाः Vस्तोमासः स्तोतारः Vविप्रस्य मेधाविनः Vवेधसः विधातुः Vअस्तृतयज्वनः अहिंसितयजमानस्य Vअग्नेः Vगिरः स्तुतीः Vईरते प्रेरयन्ति ॥

**अस्मै ते प्रतिहर्यते जातवेदो विचर्षणे । अग्ने जनामि सुष्टुतिम् ॥ २ ॥**

अस्मै । ते । प्रतिऽहर्यते । जातऽवेदः । विऽचर्षणे । अग्ने । जनामि । सुऽस्तुतिम् ॥ २ ॥

हे Vजातवेदः जातधन Vविचर्षणे विद्रष्टः Vअग्ने Vअस्मै Vप्रतिहर्यते प्रयच्छते Vते तुभ्यं Vसुष्टुतिं शोभनां स्तुतिं Vजनामि आङ्गिरसोऽहं जनयामि ॥

**आरोकाइव घेदह तिग्मा अग्ने तव त्विषः । दद्भिर्वनानि बप्सति ॥ ३ ॥**

आरोकाःऽइव । घ । इत् । अह । तिग्माः । अग्ने । तव । त्विषः । दत्ऽभिः । वनानि । बप्सति ॥ ३ ॥

हे Vअग्ने Vतव Vतिग्माः तीक्ष्णाः Vत्विषः दीप्तयः Vआरोकाइव आरोचमानाः पशव इव Vदद्भिः दन्तैः Vवनानि अरण्यानि Vबप्सति भक्षयन्ति । Vघेदह इति त्रयं पूरकम् ॥

**हरयो धूमकेतवो वातजूता उप द्यवि । यतन्ते वृथगग्नयः ॥ ४ ॥**

हरयः । धूमऽकेतवः । वातऽजूताः । उप । द्यवि । यतन्ते । वृथक् । अग्नयः ॥ ४ ॥

Vहरयः हरणशीलाः Vवातजूताः वातप्रेरिताः Vधूमकेतवः धूमध्वजाः Vअग्नयः Vउप Vद्यवि अन्तरिक्षे Vवृथक्[1] पृथक् Vयतन्ते गच्छन्ति । पृथगित्यनेन सममव्ययं वृथगिति । पृथगित्येव वाजसनेयिनः पठन्ति (वा. सं. ३३. २) ॥

**एते त्ये वृथगग्नय इद्धासः समदृक्षत । उषसामिव केतवः ॥ ५ ॥**

---

१. ग-ञ-त४-'वृथक्' नास्ति; त२-३-म-पृथक् ।

एते । त्ये । वृथक् । अग्नयः । इद्धासः । सम् । अदृक्षत । उषसाम्ऽइव । केतवः ॥ ५ ॥

ᵛएते ᵛत्ये एते ᵛअग्नयः ᵛवृथक्[1] पृथक् ᵛइद्धासः अग्निहोत्रिभिः समिद्धाः सन्तः ᵛउषसामिव ᵛकेतवः उषसां प्रज्ञापका इव ᵛसमदृक्षत सम्यग्दृश्यन्ते ॥ ॥ २९ ॥

**कृष्णा रजांसि पत्सुतः प्रयाणे जातवेदसः । अग्निर्यद्रोधति क्षमि ॥ ६ ॥**

कृष्णा । रजांसि । पत्सुतः । प्रऽयाने । जातऽवेदसः । अग्निः । यत् । रोधति । क्षमि ॥६॥

ᵛजातवेदसः अग्नेः ᵛप्रयाणे ᵛपत्सुतः पत्तः ᵛरजांसि पांसवः कृष्णानि[2] भवन्ति । कदेत्यत आह । ᵛक्षमि क्षमायां ᵛयत् यदा ᵛअग्निः ᵛरोधति शुष्कान् वनस्पतीन् निरुणद्धि ॥

**धासिं कृण्वान ओषधीर्बप्सदग्निर्न वायति । पुनर्यन्तरुणीरपि ॥ ७ ॥**

धासिम् । कृण्वानः । ओषधीः । बप्सत् । अग्निः । न । वायति । पुनः । यन् । तरुणीः । अपि ॥ ७ ॥

ᵛअग्निः ᵛओषधीः ᵛधासिम् अन्नम् । 'क्षुत् धासि' इत्यन्ननामसु पाठात् । ᵛकृण्वानः कुर्वन् ᵛबप्सत् भक्षयन् ᵛन ᵛवायति न शाम्यति । ᵛपुनः च ᵛतरुणीः ओषधीः ᵛअपि ᵛयन् गच्छन् भवति । भक्षयितुमिति शेषः ॥

**जिह्वाभिरह नन्नमदर्चिषा जञ्जणाभवन् । अग्निर्वनेषु रोचते ॥ ८ ॥**

जिह्वाभिः । अह । नन्नमत् । अर्चिषा । जञ्जणाऽभवन् । अग्निः । वनेषु । रोचते ॥ ८ ॥

ᵛअग्निः ᵛजिह्वाभिरह ज्वालाभिरेव ᵛनन्नमत् वनस्पतीनत्यन्तं नमयन् ᵛअर्चिषा तेजसा ᵛजञ्जणाभवन् ज्वलन् । 'जञ्जणाभवन् मल्मलाभवन्[3]' इति ज्वलतिकर्मसु पाठात् । ᵛवनेषु अरण्येषु ᵛरोचते प्रकाशते ॥

**अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे । गर्भे सञ्जायसे पुनः ॥ ९ ॥**

अप्ऽसु । अग्ने । सधिः । तव । सः । ओषधीः । अनु । रुध्यसे । गर्भे । सन् । जायसे । पुनरिति ॥९॥

हे ᵛअग्ने यस्य ᵛतव ᵛअप्सु ᵛसधिः प्रवेशस्थानं ᵛसः त्वम् ᵛओषधीः ᵛअनु ᵛरुध्यसे अनुरुणत्सि । ᵛपुनः च तासां भूमिष्ठानां ᵛगर्भे ᵛसन् भवन् ᵛजायसे प्रादुर्भवसि ॥

**उदग्ने तव तद्घृतादर्ची रोचत आहुतम् । निंसानं जुह्वो३ मुखे ॥ १० ॥**

उत् । अग्ने । तव । तत् । घृतात् । अर्चिः । रोचते । आऽहुतम् । निंसानम् । जुह्वः । मुखे ॥ १० ॥

हे ᵛअग्ने ᵛतव ᵛघृतात् ᵛआहुतं ᵛजुह्वः होमसाधनभूतायाः स्रुचः ᵛमुखे ᵛनिंसानं[4] लिहानं[5] ᵛतत् ᵛअर्चिः ᵛउत् ᵛरोचते प्रकाशते ॥ ॥ ३० ॥

**उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे । स्तोमैर्विधेमाग्नये ॥ ११ ॥**

उक्षऽअन्नाय । वशाऽअन्नाय । सोमऽपृष्ठाय । वेधसे । स्तोमैः । विधेम । अग्नये ॥ ११ ॥

---

१. ग-घ-त-न-भ—पृथक् । २. ख-घ-ज्ञ-त२—कृष्णा कृष्णानि । ३. ग-त२-३-४—मस्मनाभवन्; ज्ञ—भस्मनाभवन्; न—मनानाभवन् । ४. ग-त३-४-न 'निंसानं' नास्ति । ५. ख-ग-घ-त-न-श—निलिहानं ।

ᵛउक्षान्नाय। उक्षान्नमदनीयं हविर्यस्यासावुक्षान्नः। तस्मै ᵛवशान्नाय। वशान्नं यस्यासौ वशान्नः। तस्मै ᵛसोमपृष्ठाय सोमघृतपृष्ठाय ᵛवेधसे विधात्रे कामानाम् ᵛअग्नये ᵛस्तोमैः ᵛविधेम परिचरेम ॥

उत त्वा नमसा वयं होतर्वरेण्यक्रतो। अग्ने समिद्भिरीमहे ॥ १२ ॥

उत। त्वा। नमसा। वयम्। होतः। वरेण्यक्रतो इति वरेण्यऽक्रतो। अग्ने। समित्ऽभिः। ईमहे ॥ १२ ॥

ᵛउत अपि च हे ᵛहोतः देवानां ह्वातः ᵛवरेण्यक्रतो वरणीयप्रज्ञ ᵛअग्ने ᵛत्वा त्वां ᵛवयम् आङ्गिरसाः ᵛनमसा अन्नेन हविषा ᵛसमिद्भिः च ᵛईमहे याचामहे ॥

उत त्वा भृगुवच्छुचे मनुष्वदग्न आहुत। अङ्गिरस्वद्धवामहे ॥ १३ ॥

उत। त्वा। भृगुऽवत्। शुचे। मनुष्वत्। अग्ने। आऽहुत। अङ्गिरस्वत्। हवामहे ॥ १३ ॥

हे[1] ᵛशुचे स्वभावतः शुद्ध ᵛआहुत ᵛअग्ने ᵛत्वा त्वां ᵛभृगुवत् यथा भृगुस्तथा ᵛमनुष्वत् यथा च मनुस्तथा ᵛअङ्गिरस्वत् अङ्गिरोवच्च ᵛहवामहे ॥

त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता। सखा सख्या समिध्यसे ॥ १४ ॥

त्वम्। हि। अग्ने। अग्निना। विप्रः। विप्रेण। सन्। सता। सखा। सख्या। सम्ऽइध्यसे ॥ १४ ॥

हे ᵛअग्ने ᵛविप्रः मेधावी ᵛसन् विद्यमानः ᵛसखा च ᵛत्वं ᵛविप्रेण ᵛसता[2] ᵛसख्या ᵛअग्निना ᵛसमिध्यसे। तथा च ब्राह्मणं–' त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सतेति विप्र इतरो विप्र इतरः सन्नितरः सन्नितरः सखा सख्या समिध्यस इत्येष ह वा अस्य स्वः सखा ' ( ऐ. ब्रा. १. १६ ) इति ॥

स त्वं विप्राय दाशुषे रयिं देहि सहस्रिणम्। अग्ने वीरवतीमिषम् ॥ १५ ॥

सः। त्वम्। विप्राय। दाशुषे। रयिम्। देहि। सहस्रिणम्। अग्ने। वीरऽवतीम्। इषम् ॥ १५ ॥

हे ᵛअग्ने ᵛसः प्रसिद्धः ᵛत्वं ᵛविप्राय मेधाविने ᵛदाशुषे हविषां प्रदात्रे यजमानाय ᵛसहस्रिणं सहस्रसंख्याकमपरिमितं ᵛरयिं धनं ᵛवीरवतीं पुत्रपौत्रादिसहितम्[3] ᵛइषम् अन्नं च ᵛदेहि ॥ ॥३१॥

अग्ने भ्रातः सहस्कृत रोहिदश्व शुचिव्रत। इमं स्तोमं जुषस्व मे ॥ १६ ॥

अग्ने। भ्रातरिति। सहःऽकृत। रोहित्ऽअश्व। शुचिऽव्रत। इमम्। स्तोमम्। जुषस्व। मे ॥ १६ ॥

हे ᵛअग्ने ᵛभ्रातः भ्रातृवद्यजमानानां मित्रभूत ᵛसहस्कृत सहसा बलेन कृत ᵛरोहिदश्व लोहितवर्णाश्व ᵛशुचिव्रत शुद्धकर्मन्नग्ने ᵛमे आङ्गिरसस्य मम[4] ᵛइमं[4] ᵛस्तोमं ᵛजुषस्व सेवस्व ॥

उत त्वाग्ने मम स्तुतो वाश्राय प्रतिहर्यते। गोष्ठं गावइवाशत ॥ १७ ॥

उत। त्वा। अग्ने। मम। स्तुतः। वाश्राय। प्रतिऽहर्यते। गोऽस्थम्। गावःऽइव। आशत ॥ १७ ॥

ᵛउत अपि च हे ᵛअग्ने ᵛत्वा त्वां ᵛमम आङ्गिरसस्य ᵛस्तुतः स्तुतयः ᵛवाश्राय वाशनशीलाय वत्साय ᵛप्रतिहर्यते पयः कामयमानाय दोग्धुं ᵛगोष्ठं ᵛगावइव यथा गावः प्रविशन्ति तथा ᵛआशत प्राप्नुवन्ति ॥

---

१. घ–उतापि च हे। २. घ–सता साधुना। ३. ख-ग-त-न-भ-श–°सहितां। ४. झ-त१-२-३–मे मम।

तुभ्यं ता अंङ्गिरस्तम विश्वाः सुक्षितयः पृथक् । अग्ने कामाय येमिरे ॥ १८ ॥

तुभ्यम् । ताः । अङ्गिरःऽतम । विश्वाः । सुऽक्षितयः । पृथक् । अग्ने । कामाय । येमिरे ॥१८॥

हे अङ्गिरस्तम अङ्गिरसां श्रेष्ठ अग्ने तुभ्यं विश्वाः सर्वाः ताः प्रसिद्धाः सुक्षितयः प्रजाः[1] कामाय आत्मनः कामसिद्ध्यर्थं पृथक् येमिरे नियच्छन्ति ॥

अग्निं धीभिर्मनीषिणो मेधिरासो विपश्चितः । अद्मसद्याय हिन्विरे ॥ १९ ॥

अग्निम् । धीभिः । मनीषिणः । मेधिरासः । विपःऽचितः । अद्मऽसद्याय । हिन्विरे ॥ १९ ॥

मनीषिणः मनस ईश्वराः मेधिरासः मेधाविनः विपश्चितः प्राज्ञा यजमानाः धीभिः कर्मभिः अद्मसद्याय अन्नस्य भजनाय अग्निं हिन्विरे प्रीणयन्ति ॥

तं त्वामज्मेषु वाजिनं तन्वाना अंग्ने अध्वरम् । वह्निं होतारमीळते ॥ २० ॥

तम् । त्वाम् । अज्मेषु । वाजिनम् । तन्वानाः । अग्ने । अध्वरम् । वह्निम् । होतारम् । ईळते ॥२०॥

हे अग्ने वाजिनं बलिनं वह्निं हविषां वोढारं होतारं[2] देवानामाह्वातारं तं प्रसिद्धं त्वाम् अज्मेषु गृहेषु अध्वरं यज्ञं तन्वानाः विस्तारयन्तो यजमानाः ईळते स्तुवन्ति ॥ ॥ ३२ ॥

पुरुत्रा हि सदृङ्ङसि विशो विश्वा अनु प्रभुः । समत्सु त्वा हवामहे ॥ २१ ॥

पुरुऽत्रा । हि । सऽदृङ् । असि । विशः । विश्वाः । अनु । प्रऽभुः । समत्ऽसु । त्वा । हवामहे ॥२१॥

हे अग्ने त्वं हि यतः प्रभु प्रभुः । सुलोपश्छान्दसः । पुरुत्रा बहुषु प्रदेशेषु विश्वाः सर्वाः विशः प्रजाः अनु सदृङ् समानदर्शी असि अतः त्वा त्वां समत्सु संग्रामेषु हवामहे ह्वयामः॥

तमींळिष्व य आहुतोऽग्निर्विभ्राजते घृतैः । इमं नः शृणवद्धवम् ॥ २२ ॥

तम् । ईळिष्व । यः । आऽहुतः । अग्निः । विऽभ्राजते । घृतैः । इमम् । नः । शृणवत् । हवम् ॥२२॥

यः अग्निः घृतैः सह आहुतः विभ्राजते यश्च नः अस्माकम् इमं हवम् आह्वानं शृणवत् शृणोति तम् अग्निम् ईळिष्व स्तुहि ॥

तं त्वा वयं हवामहे शृण्वन्तं जातवेदसम् । अग्ने घ्नन्तमप द्विषः ॥ २३ ॥

तम् । त्वा । वयम् । हवामहे । शृण्वन्तम् । जातऽवेदसम् । अग्ने । घ्नन्तम् । अप । द्विषः ॥२३॥

हे अग्ने जातवेदसं जातधनं जातप्रज्ञं वा द्विषः शत्रून् अप घ्नन्तं हिंसन्तं शृण्वन्तम् अस्मदीयमाह्वानं शृण्वन्तं च त्वां वयम् आङ्गिरसाः हवामहे ॥

विशां राजानमद्भुतमध्यक्षं धर्मणामिमम् । अग्निमीळे स उ श्रवत् ॥ २४ ॥

विशाम् । राजानम् । अद्भुतम् । अधिऽअक्षम् । धर्मणाम् । इमम् ।
अग्निम् । ईळे । सः । ऊँ इति । श्रवत् ॥ २४ ॥

---

१. घ-त-न-भ२-य-प्रज्ञाः । २. त-न-भ-‘ होतारं ’ नास्ति ।

ᵛविशां प्रजानां ᵛराजानम् ईश्वरम् ᵛअद्भुतं महान्तं ᵛधर्मणां कर्मणाम् ᵛअध्यक्षम् अनुसंधातारं यं ᵛइममग्निमीळे[1] स्तौमि ᵛस ᵛउ स एवाग्निः ᵛश्रवत् अस्मदीयां स्तुतिं शृणोतु ॥

अग्निं विश्वायुवेपसं मर्यं न वाजिनं हितम् । सप्तिं न वाजयामसि ॥ २५ ॥

अग्निम् । विश्वायुऽवेपसम् । मर्यम् । न । वाजिनम् । हितम् । सप्तिम् । न । वाजयामसि ॥२५॥

ᵛविश्वायुवेपसं सर्वगतबलम् ᵛअग्निं ᵛवाजिनं बलिनं ᵛमर्यं ᵛन मनुष्यमिव ᵛहितं ᵛसप्तिं ᵛन अश्वमिव ᵛवाजयामसि स्तुतिभिर्हविर्भिश्च बलिनं कुर्मः ॥ ॥ ३३ ॥

घ्नन्मृध्राण्यप द्विषो दहन्रक्षांसि विश्वहा । अग्ने तिग्मेन दीदिहि ॥ २६ ॥

घ्नन् । मृध्राणि । अप । द्विषः । दहन् । रक्षांसि । विश्वहा । अग्ने । तिग्मेन । दीदिहि ॥२६॥

हे ᵛअग्ने त्वं ᵛमृध्राणि हिंसकान् ᵛद्विषः द्वेष्टॄन् ᵛअप ᵛघ्नन् हिंसन् ᵛविश्वहा सर्वदा ᵛरक्षांसि च ᵛदहन् ᵛतिग्मेन तीक्ष्णेन तेजसा ᵛदीदिहि दीप्यस्व[2] ॥

यं त्वा जनास इन्धते मनुष्वदङ्गिरस्तम । अग्ने स बोधि मे वचः ॥ २७ ॥

यम् । त्वा । जनासः । इन्धते । मनुष्वत् । अङ्गिरःऽतम । अग्ने । सः । बोधि । मे । वचः ॥२७॥

हे ᵛअङ्गिरस्तमाग्ने ᵛयं ᵛत्वा त्वां ᵛजनासः जनाः ᵛमनुष्वत् यथा मनुस्तथा ᵛइन्धते दीपयन्ति ᵛसः त्वं ᵛमे मदीयं ᵛवचः स्तुतिं ᵛबोधि बुध्यस्व ॥

यदग्ने दिविजा अस्यप्सुजा वा सहस्कृत । तं त्वा गीर्भिर्हवामहे ॥ २८ ॥

यत् । अग्ने । दिविऽजाः । असि । अप्सुऽजाः । वा । सहःऽकृत ।
तम् । त्वा । गीःऽभिः । हवामहे ॥ २८ ॥

हे ᵛअग्ने ᵛयत् यस्त्वं ᵛदिविजाः दिवि भवः ᵛअसि भवसि ᵛअप्सुजा ᵛवा अन्तरिक्षजातश्च भवसि ᵛसहस्कृतः सहसा बलेन कृतश्चासि ᵛतं ᵛत्वा त्वामग्निं ᵛगीर्भिः स्तुतिभिः ᵛहवामहे ह्वयामः[3] ॥

तुभ्यं घेत्ते जना इमे विश्वाः सुक्षितयः पृथक् । धासिं हिन्वन्त्यत्तवे ॥ २९ ॥

तुभ्यम् । घ । इत् । ते । जनाः । इमे । विश्वाः । सुऽक्षितयः । पृथक् ।
धासिम् । हिन्वन्ति । अत्तवे ॥ २९ ॥

हे अग्ने ᵛतुभ्यं ᵛघ[4] त्वदर्थमेव ᵛते ᵛइमे मया दृश्यमानाः ᵛजनाः ᵛविश्वाः सर्वाः ᵛसुक्षितयः प्रजाश्च ᵛधासिम् अन्नं हविः ᵛअत्तवे अदनाय ᵛपृथक् ᵛहिन्वन्ति प्रेरयन्ति ॥

ते घेदग्ने स्वाध्योऽहा विश्वा नृचक्षसः । तरन्तः स्याम दुर्गहा ॥ ३० ॥

ते । घ । इत् । अग्ने । सुऽआध्यः । अहा । विश्वा । नृऽचक्षसः । तरन्तः । स्याम । दुःऽगहा ॥३०॥

हे ᵛअग्ने ᵛते ᵛघेत् त्वदर्थमेव खलु वयं ᵛस्वाध्यः सुकर्माणः सन्तः ᵛविश्वा विश्वानि ᵛअहा अहानि ᵛनृचक्षसः द्रष्टारश्च ᵛदुर्गहा दुःखेन गाहयितव्यानि ᵛतरन्तः ᵛस्याम भवेम ॥ ॥ ३४ ॥

---

१. ग-त-न-भ-श–अग्निमीळे । २. ग-त-न-भ-श–'दीप्यस्व' नास्ति । ३. घ-त-न-भ–ह्वयाम ।
४. ख-घ-त१-२–घेत् ।

अग्निं मन्द्रं पुरुप्रियं शीरं पावकशोचिषम् । हृद्भिर्मन्द्रेभिरीमहे ॥ ३१ ॥

अग्निम् । मन्द्रम् । पुरुऽप्रियम् । शीरम् । पावकऽशोचिषम् । हृत्ऽभिः । मन्द्रेभिः । ईमहे ॥३१॥

ᵛमन्द्रं मादनं ᵛपुरुप्रियं बहुप्रियं ᵛशीरं यज्ञेषु शयनशीलं ᵛपावकशोचिषं पावकदीप्तिम् ᵛअग्निं ᵛहृद्भिः मनोहरैर्मन्द्रैः[1] मादनैः स्तोत्रैः ᵛईमहे याचामहे ॥

स त्वमग्ने विभावसुः सृजन्त्सूर्यो न रश्मिभिः । शर्धन्तमांसि जिघ्नसे ॥३२॥

सः । त्वम् । अग्ने । विभाऽवसुः । सृजन् । सूर्यः । न । रश्मिऽभिः ।
शर्धन् । तमांसि । जिघ्नसे ॥ ३२ ॥

हे ᵛअग्ने ᵛविभावसुः दीप्तिधनः ᵛसः प्रसिद्धः ᵛत्वं ᵛसृजन् उद्यन् ᵛसूर्यो ᵛन यथा सूर्यस्तथा ᵛरश्मिभिः ᵛशर्धन् बलं कुर्वन् ᵛतमांसि ᵛजिघ्नसे नाशयसि ॥

तत्ते सहस्व ईमहे दात्रं यन्नोपदस्यति । त्वदग्ने वार्यं वसु ॥ ३३ ॥

तत् । ते । सहस्वः । ईमहे । दात्रम् । यत् । न । उपऽदस्यति । त्वत् । अग्ने । वार्यम् । वसु ॥३३॥

हे ᵛसहस्वः बलवन् ᵛअग्ने ᵛते तव ᵛयत् वसु ᵛनोपदस्यति नोपक्षीयते ᵛतत् ᵛदात्रं दातव्यं ᵛवार्यं वरणीयं च ᵛवसु धनं ᵛत्वत् त्वत्तः ᵛईमहे याचामहे ॥　　॥ ३५ ॥

'समिधाग्निम्' इति त्रिंशदृचं द्वितीयं सूक्तमाङ्गिरसस्य विरूपस्यार्षं प्राग्वत्सप्रपरिभाषया गायत्रमाग्नेयम् । तथा चानुक्रम्यते—'समिधाग्निं त्रिंशत्' इति । प्रातरनुवाके गायत्रे छन्दस्याश्विनशस्त्रे चेदं विनियुक्तम् । महाव्रते 'समिधाग्निम्' इत्याद्याश्चतस्रः सामिधेन्यः । तथा च पञ्चमारण्यके सूत्रितं—'समिधाग्निमिति चतस्रो वैश्वकर्मण ऋषभः' ( ऐ. आ. ५. १. १ ) इति । आतिथ्यायां 'समिधाग्निम्' इत्येषा प्रथमाज्यभागस्यानुवाक्या । सूत्रितं च—'समिधाग्निं दुवस्यता प्यायस्व समेतु ते' (आश्व. श्रौ. ४. ५) इति[2] । अमावास्यायां प्रथमाज्यभागस्यानुवाक्या । सूत्रितं च—'वृधन्वन्तावमावास्यायामग्निः प्रत्नेन मन्मना' (आश्व. श्रौ. १. ५) इति । दर्शपूर्णमासयोराग्नेयस्यानुवाक्या 'अग्निर्मूर्धा' इत्येषा । सूत्रितं च—'अग्निर्मूर्धा भुवो यज्ञस्य' ( आश्व. श्रौ. १. ६ ) इति । मूर्धन्वद्गुणस्याग्नेरप्येषैवानुवाक्या । सूत्रितं च—'नित्ये मूर्धन्व' इति । पवमानेष्टिषु द्वितीयस्यामिष्टावग्नेः शुचेरनुवाक्या 'अग्निः शुचिव्रततमः' इत्येषा । सूत्रितं च—'अग्निः शुचिव्रततम उदग्ने शुचयस्तव' ( आश्व. श्रौ. २. १ ) इति ॥

समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन्हव्या जुहोतन ॥ १ ॥

सम्ऽइधा । अग्निम् । दुवस्यत । घृतैः । बोधयत । अतिथिम् ।
आ । अस्मिन् । हव्या । जुहोतन ॥ १ ॥

हे ऋत्विजः ᵛअतिथिम् अतिथिवत् प्रियम् ᵛअग्निं ᵛसमिधा ᵛदुवस्यत परिचरत । ᵛघृतैः दीप्तिसाधनैराज्यैः ᵛबोधयत च । ᵛअस्मिन् समिद्धेऽग्नौ ᵛहव्या हवींषि ᵛआ ᵛजुहोतन[3] आजुहुत[3] च ।

अग्ने स्तोमं जुषस्व मे वर्धस्वानेन मन्मना । प्रति सूक्तानि हर्य नः ॥ २ ॥

१. घ–र्मद्रेभिः; त-न-भ–र्मंत्रैः । २. ग–इतीति । अग्निः प्रत्नेनेति । ३. ग–आजुहोत आजुहत; ज्ञ-त१-२-भ३–जुहोतन जुहुत; भ१–जुहोत तां जुहुते ।

अग्ने। स्तोमम्। जुषस्व। मे। वर्धस्व। अनेन। मन्मना। प्रति। सुऽउक्तानि। हर्य। नः॥२॥

हे ᵛअग्ने ᵛमे आङ्गिरसस्य मम ᵛस्तोमं स्तोत्रं ᵛजुषस्व सेवस्व। ᵛअनेन ᵛमन्मना मननीयेन स्तोत्रेण ᵛवर्धस्व च। ᵛनः अस्माकं ᵛसूक्तानि ᵛप्रति ᵛहर्य कामय च॥

**अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे। देवाँ आ सादयादिह॥ ३॥**

अग्निम्। दूतम्। पुरः। दधे। हव्यऽवाहम्। उप। ब्रुवे। देवान्। आ। सादयात्। इह॥३॥

ᵛदूतं देवानां ᵛहव्यवाहं हविषां वोढारं च ᵛअग्निं ᵛपुरो ᵛदधे पुरस्करोमि। ᵛउप ᵛब्रुवे उपस्तौमि च। सोऽग्निः ᵛइह यज्ञे ᵛदेवान् ᵛआ ᵛसादयत्[1] आसादयतु॥

**उत्ते बृहन्तो अर्चयः समिधानस्य दीदिवः। अग्ने शुक्रास ईरते॥ ४॥**

उत्। ते। बृहन्तः। अर्चयः। सम्ऽइधानस्य। दीदिऽवः। अग्ने। शुक्रासः। ईरते॥ ४॥

हे ᵛदीदिवः दीप्त ᵛअग्ने ᵛसमिधानस्य समिध्यमानस्य ᵛते तव ᵛबृहन्तः महान्तः ᵛशुक्रासः ज्वलन्तः ᵛअर्चयः दीप्तयः ᵛउत्[2] ᵛईरते[2]॥

**उप त्वा जुह्वो३ मम घृताचीर्यन्तु हर्यत। अग्ने हव्या जुषस्व नः॥ ५॥**

उप। त्वा। जुह्वः। मम। घृताचीः। यन्तु। हर्यत। अग्ने। हव्या। जुषस्व। नः॥ ५॥

हे ᵛहर्यत कामयमान ᵛअग्ने ᵛमम मदीयाः ᵛघृताचीः घृतमञ्चन्त्यः ᵛजुह्वः स्रुचः ᵛत्वा त्वाम् ᵛउप ᵛयन्तु। ᵛनः अस्माकं ᵛहव्या हव्यानि ᵛजुषस्व सेवस्व च॥ ॥ ३६॥

**मन्द्रं होतारमृत्विजं चित्रभानुं विभावसुम्। अग्निमीळे स उ श्रवत्॥ ६॥**

मन्द्रम्। होतारम्। ऋत्विजम्। चित्रऽभानुम्। विभाऽवसुम्।
अग्निम्। ईळे। सः। ऊँ इति। श्रवत्॥ ६॥

ᵛमन्द्रं मादनं[3] ᵛहोतारं देवानामाह्वातारम् ᵛऋत्विजम् ऋतौ यष्टव्यं ᵛचित्रभानुं चित्रदीप्तिं ᵛविभावसुं दीप्तिधनम् ᵛअग्निम् ᵛईळे स्तौमि। ᵛसः अग्निः ᵛश्रवत्[4] अस्मदीयां स्तुतिं शृणोत्वेव॥

**प्रत्नं होतारमीड्यं जुष्टमग्निं कविक्रतुम्। अध्वराणामभिश्रियम्॥ ७॥**

प्रत्नम्। होतारम्। ईड्यम्। जुष्टम्। अग्निम्। कविऽक्रतुम्। अध्वराणाम्। अभिऽश्रियम्॥ ७॥

ᵛप्रत्नं पुराणं ᵛहोतारं देवानामाह्वातारम् ᵛईड्यं स्तुत्यं ᵛजुष्टं प्रीतं सेवितं वा ᵛकविक्रतुं क्रान्तकर्माणम् ᵛअध्वराणां यज्ञानाम् ᵛअभिश्रियम् अभिश्रयितारमीड्यम्[5] ᵛअग्निम् ईळे स्तौमि॥

**जुषाणो अङ्गिरस्तमेमा हव्यान्यानुषक्। अग्ने यज्ञं नय ऋतुथा॥ ८॥**

जुषाणः। अङ्गिरःऽतम। इमा। हव्यानि। आनुषक्। अग्ने। यज्ञम्। नय। ऋतुऽथा॥८॥

हे ᵛअङ्गिरस्तम अङ्गिरसां श्रेष्ठ ᵛअग्ने ᵛइमा इमान्यस्मदीयानि ᵛहव्यानि हवींषि ᵛआनुषक् अनुषक्तं यथा भवति तथा ᵛजुषाणः सेवमानो भव। ᵛऋतुथा काले काले ᵛयज्ञं च ᵛनय॥

---

१. त१-२—सादयात्। २. ख—उद्गच्छति उदीरयते; ग-त३-४-न—उदीरयते; ज्ञ-त१-२—उदीरयते उद्गच्छति; य—उदीरते उद्गच्छति। ३. भ—मोदनं। ४. घ—उ श्रवत्। ५. त१-न-भ—अभिश्रयितारं।

समिधान उं सन्त्य शुक्रशोच इहा वह । चिकित्वान्दैव्यं जनम् ॥ ९ ॥

सम्ऽइधानः । ऊँ इति । सन्त्य । शुक्रऽशोचे । इह । आ । वह । चिकित्वान् । दैव्यम् । जनम् ॥ ९ ॥

हे ᵛसन्त्य भजनशील ᵛशुक्रशोचे ज्वलद्दीप्ते त्वं ᵛसमिधान ᵛउ समिध्यमान एव ᵛदैव्यं देवसंबन्धिनं ᵛजनं ᵛचिकित्वान् जानन् ᵛइह यज्ञे ᵛआ ᵛवह ॥

विप्रं होतारमद्रुहं धूमकेतुं विभावसुम् । यज्ञानां केतुमीमहे ॥ १० ॥

विप्रम् । होतारम् । अद्रुहम् । धूमऽकेतुम् । विभाऽवसुम् । यज्ञानाम् । केतुम् । ईमहे ॥ १० ॥

ᵛविप्रं मेधाविनं ᵛहोतारं देवानामाह्वातारम्[1] ᵛअद्रुहम् अद्रोग्धारं ᵛधूमकेतुं धूमध्वजं[2] ᵛविभावसुं दीप्तिधनं ᵛयज्ञानां ᵛकेतुं पताकास्थानीयमग्निम् ᵛईमहे अभीष्टं याचामहे ॥ ॥ ३७ ॥

अग्ने नि पाहि नस्त्वं प्रति ष्म देव रीषतः । भिन्धि द्वेषः सहस्कृत ॥ ११ ॥

अग्ने । नि । पाहि । नः । त्वम् । प्रति । स्म । देव । रिषतः । भिन्धि । द्वेषः । सहःऽकृत ॥ ११ ॥

हे ᵛसहस्कृत बलेन कृत ᵛदेव दीप्त ᵛअग्ने ᵛरिषतः हिंसकान् ᵛनः अस्मान् ᵛप्रति ᵛनि ᵛपाहि प्रतिरक्ष । ᵛस्म इति पूरणः । ᵛद्वेषः द्विषः शत्रूंश्च ᵛभिन्धि विदारय ॥

अग्निः प्रत्नेन मन्मना शुम्भानस्तन्वं१ स्वाम् । कविर्विप्रेण वावृधे ॥ १२ ॥

अग्निः । प्रत्नेन । मन्मना । शुम्भानः । तन्वम् । स्वाम् । कविः । विप्रेण । ववृधे ॥ १२ ॥

ᵛकविः क्रान्तकर्मा ᵛअग्निः ᵛप्रत्नेन पुराणेन ᵛमन्मना मननीयेन स्तोत्रेण ᵛस्वां स्वकीयां ᵛतन्वं तनुमङ्गं ᵛशुम्भानः शोभयन् ᵛविप्रेण मेधाविना स्तोत्रा ᵛववृधे प्रवृद्धो भवति ॥

ऊर्जो नपातमा हुवेऽग्निं पावकशोचिषम् । अस्मिन्यज्ञे स्वध्वरे ॥ १३ ॥

ऊर्जः । नपातम् । आ । हुवे । अग्निम् । पावकऽशोचिषम् । अस्मिन् । यज्ञे । सुऽअध्वरे ॥ १३ ॥

ᵛऊर्जः अन्नस्य ᵛनपातं पुत्रं ᵛपावकशोचिषं शोधकदीप्तिम् ᵛअग्निं ᵛस्वध्वरे असुरैरत्यन्तमहिंस्ये ᵛअस्मिन् ᵛयज्ञे ᵛआ ᵛहुवे आह्वयामि ॥

स नो मित्रमहस्त्वमग्ने शुक्रेण शोचिषा । देवैरा सत्सि बर्हिषि ॥ १४ ॥

सः । नः । मित्रऽमहः । त्वम् । अग्ने । शुक्रेण । शोचिषा । देवैः । आ । सत्सि । बर्हिषि ॥ १४ ॥

हे ᵛमित्रमहः मित्राणां पूजनीय ᵛअग्ने ᵛसः ᵛत्वं ᵛशुक्रेण ज्वलता ᵛशोचिषा तेजसा ᵛदेवैः सह ᵛबर्हिषि यज्ञे ᵛआ ᵛसत्सि आसीद ॥

यो अग्निं तन्वो३ दमे देवं मर्तः सपर्यति । तस्मा इद्दीदयद्वसु ॥ १५ ॥

यः । अग्निम् । तन्वः । दमे । देवम् । मर्तः । सपर्यति । तस्मै । इत् । दीदयत् । वसु ॥ १५ ॥

ᵛयः ᵛमर्तः मनुष्यः ᵛदमे गृहे ᵛअग्निं ᵛदेवं ᵛतन्वः धनस्य प्राप्त्यर्थमिति शेषः । 'भोजनं तना' इति धननामसु पाठात् । ᵛसपर्यति परिचरति ᵛतस्मा ᵛइत् तस्मा एव ᵛवसु धनं ᵛदीदयत् । सोऽग्निः प्रयच्छति ॥ ॥ ३८ ॥

---

१. त-न-भ२-ह्वातारं; भ१-३-माह्वातारं । २. त-धूमकं ध्वजं ।

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति ॥ १६ ॥

अग्निः । मूर्धा । दिवः । ककुत् । पतिः । पृथिव्याः । अयम् । अपाम् । रेतांसि । जिन्वति ॥१६॥

मूर्धा देवानां श्रेष्ठः दिवः द्युलोकस्य ककुत्[1] उच्छ्रितः पृथिव्याः च पतिः अयम् अग्निः अपां रेतांसि स्थावरजङ्गमात्मकानि भूतानि जिन्वति प्रीणयति ॥

उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतींष्यर्चयः ॥ १७ ॥

उत् । अग्ने । शुचयः । तव । शुक्राः । भ्राजन्तः । ईरते । तव । ज्योतींषि । अर्चयः ॥ १७ ॥

हे अग्ने ते तव शुचयः निर्मलाः शुक्राः शुक्लवर्णाः[2] भ्राजन्तः दीप्यमानाः अर्चयः प्रभाः तव ज्योतींषि तेजांसि उत् ईरते प्रेरयन्ति ॥

ईशिषे वार्यस्य हि दात्रस्याग्ने स्वर्पतिः । स्तोता स्यां तव शर्मणि ॥ १८ ॥

ईशिषे । वार्यस्य । हि । दात्रस्य । अग्ने । स्वःऽपतिः । स्तोता । स्याम् । तव । शर्मणि ॥१८॥

हे अग्ने स्वर्पतिः स्वर्गस्य स्वामी त्वं वार्यस्य वरणीयस्य दात्रस्य दातव्यस्य धनस्य ईशिषे ईश्वरोऽसि । शर्मणि सुखे निमित्ते तव स्तोता स्यां भवेयम् ॥

त्वामग्ने मनीषिणस्त्वां हिन्वन्ति चित्तिभिः । त्वां वर्धन्तु नो गिरः ॥ १९ ॥

त्वाम् । अग्ने । मनीषिणः । त्वाम् । हिन्वन्ति । चित्तिऽभिः । त्वाम् । वर्धन्तु । नः । गिरः ॥१९॥

हे अग्ने त्वां मनीषिणः मनस ईश्वराः स्तोतारः स्तुतिभिः स्तुवन्तीति शेषः । किंच त्वाम् एव चित्तिभिः कर्मभिः हिन्वन्ति प्रीणयन्ति । नः अस्माकं गिरः स्तुतयः त्वाम् एव वर्धन्तु वर्धयन्तु ॥

अदब्धस्य स्वधावतो दूतस्य रेभतः सदा । अग्नेः सख्यं वृणीमहे ॥ २० ॥

अदब्धस्य । स्वधाऽवतः । दूतस्य । रेभतः । सदा । अग्नेः । सख्यम् । वृणीमहे ॥ २० ॥

हे अग्ने अदब्धस्य केनाप्यहिंसितस्य स्वधावतः बलवतः दूतस्य देवानां रेभतः देवान् स्तुवतस्तव सख्यं सदा वयं वृणीमहे ॥ ॥ ३९ ॥

अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः ॥२१॥

अग्निः । शुचिव्रतऽतमः । शुचिः । विप्रः । शुचिः । कविः । शुचिः । रोचते । आऽहुतः ॥२१॥

शुचिव्रततमः अतिशयेन शुद्धकर्मा शुचिः शुद्ध एव विप्रः मेधावी शुचिः शुद्धः सन्नेव कविः क्रान्तकर्मा शुचिः एव आहुतः अग्निः रोचते प्रकाशते ॥

उत त्वा धीतयो मम गिरो वर्धन्तु विश्वहा । अग्ने सख्यस्य बोधि, नः ॥२२॥

उत । त्वा । धीतयः । मम । गिरः । वर्धन्तु । विश्वहा । अग्ने । सख्यस्य । बोधि । नः ॥२२॥

उत अपि च हे अग्ने त्वा त्वां मम धीतयः कर्माणि गिरः स्तुतयश्च विश्वहा सर्वदा वर्धन्तु वर्धयन्तु । नः अस्माकं सख्यस्य सख्यं सखिकर्म स्तुत्यादिकं बोधि बुध्यस्व ॥

---

१. त-न-ककुप् । २. ग-त-न-शुक्रवर्णाः ।

**यदग्ने स्यामहं त्वं त्वं वा घा स्या अहम् । स्युष्टे सत्या इहाशिषः ॥ २३ ॥**

यत् । अग्ने । स्याम् । अहम् । त्वम् । त्वम् । वा । घ । स्याः । अहम् ।
स्युः । ते । सत्याः । इह । आऽशिषः ॥ २३ ॥

हे ᵛअग्ने ᵛयत् यदि ᵛअहं ᵛत्वं बहुधनः ᵛस्यां भवेयं ᵛत्वं ᵛवा ᵛघ त्वं वा खलु ᵛअहं दरिद्रः स्तोता ᵛस्याः भवेः ततस्तव[1] ᵛआशिषः आशासनानि ᵛइह अस्मद्विषये ᵛसत्याः सत्यानि ᵛस्युः भवेयुः ॥

**वसुर्वसुपतिर्हि कमस्यग्ने विभावसुः । स्याम ते सुमतावपि ॥ २४ ॥**

वसुः । वसुऽपतिः । हि । कम् । असि । अग्ने । विभाऽवसुः । स्याम । ते । सुऽमतौ । अपि ॥२४॥

हे ᵛअग्ने त्वं ᵛविभावसुः दीप्तिधनः ᵛवसुपतिः धनपतिः ᵛवसुः वासयिता च[2] ᵛअसि[2] भवसि ᵛहि यस्मादतो वयम् ᵛअपि ᵛते तव ᵛसुमतौ अनुग्रहबुद्धौ ᵛस्याम भवेम ॥

**अग्ने धृतव्रताय ते समुद्रायेव सिन्धवः । गिरो वाश्रास ईरते ॥ २५ ॥**

अग्ने । धृतऽव्रताय । ते । समुद्रायऽइव । सिन्धवः । गिरः । वाश्रासः । ईरते ॥ २५ ॥

हे ᵛअग्ने ᵛधृतव्रताय धृतकर्मणे ᵛते तुभ्यं ᵛवाश्रासः वाशनशीलाः ᵛगिरः मम स्तुतयः ᵛसिन्धवः नद्यः ᵛसमुद्रायेव यथा समुद्राय तथा ᵛईरते प्रवर्तन्ते ॥ ॥ ४० ॥

**युवानं विश्पतिं कविं विश्वादं पुरुवेपसम् । अग्निं शुम्भामि मन्मभिः ॥२६॥**

युवानम् । विश्पतिम् । कविम् । विश्वऽअदम् । पुरुऽवेपसम् । अग्निम् । शुम्भामि । मन्मऽभिः ॥२६॥

ᵛयुवानं नित्यतरुणं ᵛविश्पतिं विशां पतिं ᵛकविं क्रान्तकर्माणं ᵛविश्वादं सर्वस्य हविषोऽत्तारं ᵛपुरुवेपसं बहुकर्माणम् । 'वेशः वेपः' इति कर्मनामसु पाठात् । ᵛअग्निं ᵛमन्मभिः मननीयैः[3] स्तोत्रैः[3] ᵛशुम्भामि शोभयामि ॥

**यज्ञानां रथ्ये वयं तिग्मजम्भाय वीळवे । स्तोमैरिषेमाग्नये ॥ २७ ॥**

यज्ञानाम् । रथ्ये । वयम् । तिग्मऽजम्भाय । वीळवे । स्तोमैः । इषेम । अग्नये ॥ २७ ॥

ᵛयज्ञानां ᵛरथ्ये नेत्रे ᵛतिग्मजम्भाय तीक्ष्णज्वालाय ᵛवीळवे बलवते ᵛअग्नये ᵛस्तोमैः स्तोत्रैः ᵛवयम् आङ्गिरसाः ᵛइषेम स्तुतिं कर्तुमिच्छेम ॥

**अयमग्ने त्वे अपि जरिता भूतु सन्त्य । तस्मै पावक मृळय ॥ २८ ॥**

अयम् । अग्ने । त्वे इति । अपि । जरिता । भूतु । सन्त्य । तस्मै । पावक । मृळय ॥ २८ ॥

हे ᵛपावक शोधक ᵛसन्त्य भजनीय ᵛअग्ने ᵛत्वे ᵛअपि त्वय्यपि ᵛअयम् अस्मदीयो जनः ᵛजरिता स्तोता ᵛभूतु भवतु । ᵛतस्मै जरित्रे ᵛमृळय सुखमुत्पादय । तं सुखय वा ॥

**धीरो ह्यस्यद्मसद्विप्रो न जागृविः सदा । अग्ने दीदयसि द्यवि ॥ २९ ॥**

धीरः । हि । असि । अद्मऽसत् । विप्रः । न । जागृविः । सदा । अग्ने । दीदयसि । द्यवि ॥२९॥

---

१. घ–ते तव। २. ग-घ–असि; त-न–वासि। ३. त-न-भ१-२–मननीयस्तोत्रैः।

हे ^v^अग्ने त्वं ^v^धीरः ^v^असि[1] ^v^हि भवसि खलु[1]। ^v^अग्रसत् हविषि सीदन् ^v^विप्रो ^v^न मेधावीव ^v^जागृविः प्रजानां हितकरणे जागरणशीलोऽसि। ^v^सदा ^v^द्यवि अन्तरिक्षे ^v^दीदयसि दीप्यसि च ॥

पुराग्ने दुरितेभ्यः पुरा मृध्रेभ्यः कवे। प्र ण आयुर्वसो तिर ॥ ३० ॥

पुरा। अग्ने। दुःऽइतेभ्यः। पुरा। मृध्रेभ्यः। कवे। प्र। नः। आयुः। वसो इति। तिर ॥३०॥

हे ^v^वसो वासक ^v^कवे क्रान्तकर्मन् ^v^अग्ने ^v^दुरितेभ्यः पापेभ्यः ^v^पुरा ^v^मृध्रेभ्यः हिंसकेभ्यश्च ^v^पुरा। यदा दुरितानि शत्रवश्चास्मान् हिंसितुमुद्युञ्जते ततः प्रागेवेत्यर्थः। ^v^नः अस्माकम् ^v^आयुः ^v^प्र ^v^तिर वर्धय ॥ ॥ ४१ ॥

'आ घा ये' इति द्विचत्वारिंशदृचं तृतीयं सूक्तम्। अत्रेयमनुक्रमणिका—'आ घ द्विचत्वारिंशत्त्रिशोक आद्याग्नेन्द्री'। अनुक्तगोत्रत्वात् काण्वस्त्रिशोक[2] ऋषिः। 'परं गायत्रं प्राग्वत्सप्रेः' इति परिभाषया गायत्री छन्दः। अनुक्तत्वादिन्द्रो देवता। आद्यायास्त्वग्निश्चेन्द्रश्च। महाव्रते निष्केवल्ये गायत्रतृचाशीतावेतत्सूक्तम्। तथैव पञ्चमारण्यके सूत्रितम्—'आ घा ये अग्निमिन्धत आ तू न इन्द्र क्षुमन्तमिति सूक्ते' (ऐ. आ. ५. २. ३) इति। तृतीये पर्यायेऽच्छावाकशस्त्र आदितः सप्तदशर्चः। तथैव 'अतिरात्रे' इति खण्डे सूत्र्यते—'आ घा ये अग्निमिन्धत इति सप्तदश' (आश्व. श्रौ. ६. ४) इति। आग्रयण आग्नेन्द्रस्य हविषः 'आ घा ये' इत्येषानुवाक्या। सूत्रितं च—'आ घा ये अग्निमिन्धते सुकर्माणः सुरुचो देवयन्त इति स्तोत्रम्' (आश्व. श्रौ. २. ९) इति। मैत्रावरुणातिरिक्तोक्थे 'स्तोत्रमिन्द्राय' इत्याद्याः षडृचो विकल्पेन स्तोत्रियानुरूपाः। सूत्रितं च—'तद्वो गाय सुते सचा स्तोत्रमिन्द्राय गायत' (आश्व. श्रौ. ९. ११) इति। द्वितीये पर्याये ब्राह्मणाच्छंसिनः 'अभि त्वा वृषभ' इति स्तोत्रियस्तृचः। सूत्रितं च—'अभि त्वा वृषभा सुतेऽभि प्र गोपतिं गिरा' (आश्व. श्रौ. ६. ४) इति। चातुर्विंशिकेऽहनि प्रातःसवने 'भिन्धि विश्वाः' इति ब्राह्मणाच्छंसिनः षळहस्तोत्रियः। तथा च सूत्रितं—'भिन्धि विश्वा अप द्विष इति ब्राह्मणाच्छंसिनः' (आश्व. श्रौ. ७. २) इति ॥

आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्। येषामिन्द्रो युवा सखा ॥१॥

आ। घ। ये। अग्निम्। इन्धते। स्तृणन्ति। बर्हिः। आनुषक्। येषाम्। इन्द्रः। युवा। सखा ॥१॥

^v^ये ऋषयः ^v^आ ^v^घ आभिमुख्येन खलु ^v^अग्निमिन्धते दीपयन्ति ^v^येषां च ^v^युवा नित्यतरुणः ^v^इन्द्रः ^v^सखा भवति ते ^v^आनुषक् आनुपूर्व्येण ^v^बर्हिः[3] ^v^स्तृणन्ति ॥

बृहन्निदिध्म एषां भूरि शस्तं पृथुः स्वरुः। येषामिन्द्रो युवा सखा ॥ २ ॥

बृहन्। इत्। इध्मः। एषाम्। भूरि। शस्तम्। पृथुः। स्वरुः। येषाम्। इन्द्रः। युवा। सखा ॥२॥

^v^एषाम् ऋषीणाम् ^v^इध्मः ^v^बृहन्नित् महान् खलु ^v^भूरि बहु च ^v^शस्तं स्तोत्रं ^v^स्वरुः च ^v^पृथुः महान्। सिद्धमन्यत् ॥

अयुद्ध इद्युधा वृतं शूर आजति सत्वभिः। येषामिन्द्रो युवा सखा ॥ ३ ॥

अयुद्धः। इत्। युधा। वृतम्। शूरः। आ। अजति। सत्वऽभिः। येषाम्। इन्द्रः। युवा। सखा ॥३॥

तेष्वन्तर्भूतः कश्चित् ^v^अयुद्ध ^v^इत् प्रागयोद्धैव सन् ^v^युधा ^v^वृतं योद्धृभिर्भटैरावृतं शत्रुं ^v^सत्वभिः आत्मीयैर्बलैः ^v^शूरः सन् ^v^आजति नमयति ॥

---

१. ख-त-भ-श—असि भवसि हि। २. घ-त३-४-न-मे१-२—काण्वो विशोधक। ३. त-न-भ—बर्हिषः।

**आ बुन्दं वृत्रहा ददे जातः पृच्छद्वि मातरम् । क उग्राः के ह शृण्विरे ॥ ४ ॥**

आ । बुन्दम् । वृत्रऽहा । ददे । जातः । पृच्छत् । वि । मातरम् । के । उग्राः । के । ह । शृण्विरे ॥४॥

जातः उत्पन्नः वृत्रहा इन्द्रः बुन्दम् इषुम् । तथा च यास्कः—‘बुन्द इषुर्भवति’ ( निरु. ६. ३२ ) इति । आ ददे । आदाय च इषुम् उग्राः उद्गूर्णबलाः के के च शृण्विरे वीर्येण विश्रुता इति स्वमातरं वि पृच्छत् अप्राक्षीत् ॥

**प्रति त्वा शवसी वदद्गिरावप्सो न योधिषत् । यस्ते शत्रुत्वमाचके ॥ ५ ॥**

प्रति । त्वा । शवसी । वदत् । गिरौ । अप्सः । न । योधिषत् ।
यः । ते । शत्रुऽत्वम् । आऽचके ॥ ५ ॥

हे इन्द्र त्वा त्वां शवसी बलवती माता प्रति वदत् प्रत्यवोचत् । यस्ते[1] शत्रुत्वमाचके कामयते सः गिरौ पर्वते अप्सो न दर्शनीयो गज इव योधिषत् योधयति ॥ ॥ ४२ ॥

**उत त्वं मघवञ्छृणु यस्ते वष्टि ववक्षि तत् । यद्वीळयासि वीळु तत् ॥ ६ ॥**

उत । त्वम् । मघऽवन् । शृणु । यः । ते । वष्टि । ववक्षि । तत् । यत् । वीळयासि । वीळु । तत् ॥६॥

उत अपि च हे मघवन् त्वं शृणु अस्मदीयां स्तुतिम् । ते त्वत्तो यत् वष्टि कामयते स्तोता तत् ववक्षि तस्मै तत् वहसि । किंच त्वं यत् वीळयासि दृढीकरोषि तत् वीळु तत् दृढमेव सर्वत्र भवति ॥

**यदाजिं यात्याजिकृदिन्द्रः स्वश्वयुरुप । रथीतमो रथीनाम् ॥ ७ ॥**

यत् । आजिम् । याति । आजिऽकृत् । इन्द्रः । स्वश्वऽयुः । उप । रथिऽतमः । रथिनाम् ॥ ७ ॥

यत् यदा आजिकृत् युद्धकृत् इन्द्रः स्वश्वयुः कल्याणमश्वमिच्छन् आजिं युद्धम् उप याति तदा रथीतमः अतिशयेन रथी भवति । रथीनां सर्वान् रथिनश्च जयतीति शेषः ॥

**वि षु विश्वा अभियुजो वज्रिन्विष्वग्यथा वृह । भवा नः सुश्रवस्तमः ॥ ८ ॥**

वि । सु । विश्वाः । अभिऽयुजः । वज्रिन् । विष्वक् । यथा । वृह । भव । नः । सुश्रवःऽतमः ॥८॥

हे वज्रिन् त्वं विश्वाः सर्वाः अभियुजः अभियोक्त्रीः प्रजाः यथा विष्वक् भवन्ति तथा सु सुष्ठु वि वृह[2] । नः अस्माकं सुश्रवस्तमः शोभनान्नवत्तमश्च[3] भव ॥

**अस्माकं सु रथं पुर इन्द्रः कृणोतु सातये । न यं धूर्वन्ति धूर्तयः ॥ ९ ॥**

अस्माकम् । सु । रथम् । पुरः । इन्द्रः । कृणोतु । सातये । न । यम् । धूर्वन्ति । धूर्तयः ॥ ९ ॥

यम् इन्द्रं धूर्तयः हिंसकाः न धूर्वन्ति न हिंसन्ति सः इन्द्रः अस्माकं सातये अभीष्टलाभाय सु रथं कल्याणं रथं पुरः कृणोतु पुरस्करोतु ॥

**वृज्याम ते परि द्विषोऽरं ते शक्र दावने । गमेमेदिन्द्र गोमतः ॥ १० ॥**

वृज्याम । ते । परि । द्विषः । अरम् । ते । शक्र । दावने । गमेम । इत् । इन्द्र । गोऽमतः ॥१०॥

---

१. ग-घ-त—ते यः; न—मे य । २. घ—वृह कुरु । ३. घ—सुष्ठु अतिशयेन अन्नवान् ।

हे <sup>v</sup>शक्र <sup>v</sup>इन्द्र याचमाना वयं <sup>v</sup>ते तव <sup>v</sup>द्विषः द्वेष्टॄन् <sup>v</sup>परि <sup>v</sup>वृज्याम नोपगच्छेम । किंतु <sup>v</sup>ते तव <sup>v</sup>गोमतः पशुमतः <sup>v</sup>दावने अभीष्टदानाय <sup>v</sup>अरं पर्याप्तं <sup>v</sup>गमेमेत् गच्छेमैव ॥ ॥४३॥

**शनैश्चिद्यन्तो अद्रिवोऽश्वावन्तः शतग्विनः । विवक्षणा अनेहसः ॥ ११ ॥**

शनैः । चित् । यन्तः । अद्रिऽवः । अश्वऽवन्तः । शतऽग्विनः । विवक्षणाः । अनेहसः ॥११॥

हे <sup>v</sup>अद्रिवः वज्रिन् वयं <sup>v</sup>शनैः मन्दं मन्दं <sup>v</sup>यन्तः गच्छन्तः <sup>v</sup>अश्वावन्तः अश्ववन्तः <sup>v</sup>शतग्विनः बहुधनाः <sup>v</sup>विवक्षणाः वोढव्यं वहन्तः <sup>v</sup>अनेहसः उपद्रवरहिताश्च सन्तो गमेमेदिति संबन्धः ॥

**ऊर्ध्वा हि ते दिवेदिवे सहस्रा सूनृता शता । जरितृभ्यो विमंहते ॥ १२ ॥**

ऊर्ध्वा । हि । ते । दिवेऽदिवे । सहस्रा । सूनृता । शता । जरितृऽभ्यः । विऽमंहते ॥ १२ ॥

हे इन्द्र <sup>v</sup>ते तव <sup>v</sup>जरितृभ्यः स्तोतृभ्यः <sup>v</sup>सहस्रा सहस्राणि <sup>v</sup>शता शतानि च <sup>v</sup>ऊर्ध्वा ऊर्ध्वानि मुख्यानि <sup>v</sup>सूनृता सूनृतानि साधनानि <sup>v</sup>दिवेदिवे अन्वहं <sup>v</sup>विमंहते यजमानः प्रयच्छति । मंहतिर्दानकर्मा ॥

**विद्मा हि त्वा धनंजयमिन्द्र दृळ्हा चिदारुजम् । आदारिणं यथा गयम् ॥१३॥**

विद्म । हि । त्वा । धनम्ऽजयम् । इन्द्र । दृळ्हा । चित् । आऽरुजम् ।
आऽदारिणम् । यथा । गयम् ॥ १३ ॥

हे <sup>v</sup>इन्द्र <sup>v</sup>त्वा त्वां <sup>v</sup>धनंजयं धनानां जेतारं <sup>v</sup>दृढा <sup>v</sup>चित् दृढानामपि शत्रूणाम् <sup>v</sup>आरुजम् आभिमुख्येन भङ्क्तारम् <sup>v</sup>आदारिणम् आदर्तारं च <sup>v</sup>यथा <sup>v</sup>गयं गृहमिवोपद्रवेभ्यो रक्षकं च <sup>v</sup>विद्म जानीम ॥

**ककुहं चित्त्वा कवे मन्दन्तु धृष्णविन्दवः । आ त्वा पणिं यदीमहे ॥ १४ ॥**

ककुहम् । चित् । त्वा । कवे । मन्दन्तु । धृष्णो इति । इन्दवः ।
आ । त्वा । पणिम् । यत् । ईमहे ॥ १४ ॥

हे <sup>v</sup>कवे क्रान्तकर्मन् <sup>v</sup>धृष्णो धर्षकेन्द्र <sup>v</sup>यत् यदा <sup>v</sup>पणिं पणमानं[1] <sup>v</sup>त्वा त्वाम् <sup>v</sup>आ आभिमुख्येन <sup>v</sup>ईमहे अभीष्टं याचामहे तदा <sup>v</sup>ककुहम्[2] उच्छ्रितं[2] <sup>v</sup>त्वा त्वाम् <sup>v</sup>इन्दवः <sup>v</sup>चित् सोमा अपि <sup>v</sup>मन्दन्तु मादयन्तु ॥

**यस्ते रेवाँ अदाशुरिः प्रममर्ष मघत्तये । तस्य नो वेद आ भर ॥ १५ ॥**

यः । ते । रेवान् । अदाशुरिः । प्रऽममर्ष । मघत्तये । तस्य । नः । वेदः । आ । भर ॥१५॥

हे इन्द्र <sup>v</sup>मघत्तये धनदानाय <sup>v</sup>ते तुभ्यं <sup>v</sup>यः पुमान् <sup>v</sup>रेवान् धनवान् सन् <sup>v</sup>अदाशुरिः अदानशीलः <sup>v</sup>प्रममर्ष अभ्यसूयति <sup>v</sup>तस्य पुंसः <sup>v</sup>वेदः धनं <sup>v</sup>नः अस्मभ्यम् <sup>v</sup>आ <sup>v</sup>भर आहर ॥ ॥ ४४ ॥

**इम उ त्वा वि चक्षते सखाय इन्द्र सोमिनः । पुष्टावन्तो यथा पशुम् ॥ १६ ॥**

इमे । ऊँ इति । त्वा । वि । चक्षते । सखायः । इन्द्र । सोमिनः । पुष्टऽवन्तः । यथा । पशुम् ॥१६॥

---

१. घ–पणिनामानं । २. ग-त-भ२–ककुहं चित्; न-भ१–ककुहं; भ३–ककुह उच्छ्रितं ।

हे vइन्द्र vत्वा त्वां vसोमिनः अभिषुतसोमाः vसखायः vइम vउ इम एव खल्वस्मदीया जनाः vपुष्टावन्तः संभृतघासाः vयथा vपशुं पशुमिव vवि vचक्षते विपश्यन्ति ॥

**उत त्वाबधिरं वयं श्रुत्कर्णं सन्तमूतये । दूरादिह हवामहे ॥ १७ ॥**

उत । त्वा । अबधिरम् । वयम् । श्रुत्ऽकर्णम् । सन्तम् । ऊतये । दूरात् । इह । हवामहे ॥१७॥

vउत अपि च हे इन्द्र vअबधिरम् अनुपहतश्रोत्रेन्द्रियमत एव vश्रुत्कर्णं श्रवणपरकर्णं vसन्तं vत्वा त्वां vवयं त्रिशोकाः vइह यज्ञे vऊतये रक्षणाय vदूरात् vहवामहे ह्वयामः ॥

**यच्छुश्रूया इमं हवं दुर्मर्षं चक्रिया उत । भवेरापिर्नो अन्तमः ॥ १८ ॥**

यत् । शुश्रूयाः । इमम् । हवम् । दुःऽमर्षम् । चक्रियाः । उत । भवेः । आपिः । नः । अन्तमः ॥१८॥

हे इन्द्र vयत् यदि vइमम् अस्मदीयं vहवम् आह्वानं vशुश्रुयाः शृणुयाः तर्हि vदुर्मर्षं शत्रूणां दुःसहं बलं vचक्रियाः कुर्याः । vउत अपि च vनः अस्माकम् vअन्तमः अन्तिकतमः vआपिः बन्धुः vभवेः ॥

**यच्चिद्धि ते अपि व्यथिर्जगन्वांसो अमन्महि । गोदा इदिन्द्र बोधि नः ॥१९॥**

यत् । चित् । हि । ते । अपि । व्यथिः । जगन्वांसः । अमन्महि ।
गोऽदाः । इत् । इन्द्र । बोधि । नः ॥ १९ ॥

vअपि vचित् अपि च हे vइन्द्र vते तुभ्यं vयत् यदा vहि vव्यथिः दारिद्र्येण व्यथिताः vजगन्वांसः गन्तारो वयम् vअमन्महि विष्टुमः तदा vनः अस्माकं vगोदा vइत् गवां दातैव[1] भवामीति vबोधि बुध्यस्व ॥

**आ त्वा रम्भं न जिव्रयो ररभ्मा शवसस्पते । उश्मसि त्वा सधस्थ आ ॥२०॥**

आ । त्वा । रम्भम् । न । जिव्रयः । ररभ्म । शवसः । पते । उश्मसि । त्वा । सधऽस्थे । आ ॥२०॥

हे vशवसस्पते बलस्य पते[2] vत्वा त्वां वयं vजिव्रयः क्षीणा वृद्धाः vरम्भं vन दण्डमिव vररभ्म[3] रभामहे । तथा च यास्कः—'आरभामहे त्वा जीर्णा इव दण्डम्' ( निरु. ३. २१ ) इति । अपि च vत्वा त्वां vसधस्थे यज्ञे vउश्मसि कामयामहे ॥ ॥ ४५ ॥

**स्तोत्रमिन्द्राय गायत पुरुनृम्णाय सत्वने । नकिर्यं वृण्वते युधि ॥ २१ ॥**

स्तोत्रम् । इन्द्राय । गायत । पुरुऽनृम्णाय । सत्वने । नकिः । यम् । वृण्वते । युधि ॥ २१ ॥

vयम् इन्द्रं vयुधि युद्धे vनकिः vवृण्वते केऽपि न वारयन्ति तस्मै vसत्वने दानशीलाय vपुरुनृम्णाय बहुधनाय vइन्द्राय vस्तोत्रं vगायत पठत ॥

**अभि त्वा वृषभा सुते सुतं सृजामि पीतये । तृम्पा व्यश्नुही मदम् ॥ २२ ॥**

अभि । त्वा । वृषभ । सुते । सुतम् । सृजामि । पीतये । तृम्प । वि । अश्नुहि । मदम् ॥ २२ ॥

हे vवृषभ इन्द्र vत्वा त्वां vसुते सोमेऽभिषुते सति vसुतम् अभिषुतं सोमं vपीतये पानाय vअभि vसृजामि । vतृम्प तृप्य vमदं मदकरं[4] vव्यश्नुहि च ॥

---

१. ञ-त१-२-३—दातेव । २. घ—पते इंद्र । ३. ग-त-भ—ररभ्मा । ४. ख-ञ-त१-भ—मदकरं सोमं ।

**मा त्वा मूरा अविष्यवो मोपहस्वान आ दभन् । माकीं ब्रह्मद्विषो वनः ॥२३॥**

मा । त्वा । मूराः । अविष्यर्वः । मा । उपऽहस्वानः । आ । दभन् ।
माकीम् । ब्रह्मऽद्विषः । वनः ॥ २३ ॥

हे इन्द्र ^v^त्वा त्वां ^v^मूराः मूरका मूढा मनुष्याः[1] ^v^अविष्यवः[1] पालनकामाः[2] ^v^मा ^v^आ ^v^दभन्[2] मा हिंसन्तु । ^v^उपहस्वानः उपहसनपराश्च ^v^मा[3] भवन्तु । ^v^ब्रह्मद्विषः ब्राह्मणानां द्वेष्टॄन् ^v^माकीं ^v^वनः मा भजेथाः ॥

**इह त्वा गोपरीणसा महे मन्दन्तु राधसे । सरो गौरो यथा पिब ॥ २४ ॥**

इह । त्वा । गोऽपरीणसा । महे । मन्दन्तु । राधसे । सरः । गौरः । यथा । पिब ॥ २४ ॥

हे इन्द्र ^v^त्वा त्वाम् ^v^इह यज्ञे ^v^गोपरीणसा गव्येन पयसा संमिश्रितेन सोमेन ^v^महे महते ^v^राधसे धनाय ^v^मन्दन्तु मनुष्या मादयन्तु । त्वं च तं सोमं ^v^यथा ^v^गौरः मृगः ^v^सरः पिबति तथा ^v^पिब ॥

**या वृत्रहा परावति सना नवा च चुच्युवे । ता संसत्सु प्र वोचत ॥ २५ ॥**

या । वृत्रऽहा । पराऽवति । सना । नवा । च । चुच्युवे । ता । संसत्ऽसु । प्र । वोचत ॥२५॥

^v^वृत्रहा इन्द्रः ^v^परावति दूरे ^v^या यानि ^v^सना सनातनानि ^v^नवा नवानि नूतनानि ^v^च धनानि ^v^चुच्युवे प्रेरितवान् तानि[4] धनानि ^v^संसत्सु यज्ञेषु सभासु वा ^v^प्र ^v^वोचत प्रब्रूते विद्वज्जनः ॥ ॥ ४६ ॥

**अपिबत्कद्रुवः सुतमिन्द्रः सहस्रबाह्वे । अत्रादेदिष्ट पौंस्यम् ॥ २६ ॥**

अपिबत् । कद्रुवः । सुतम् । इन्द्रः । सहस्रऽबाह्वे । अत्र । अदेदिष्ट । पौंस्यम् ॥ २६ ॥

^v^इन्द्रः ^v^कद्रुवः कद्रुनामकस्यर्षेः संबन्धिनं ^v^सुतम् अभिषुतं सोमम् ^v^अपिबत् पीतवान् । ^v^सहस्रबाह्वे सहस्रबाहोः शत्रूंश्चाहन्निति शेषः । ^v^अत्र अस्मिन्नवसरे ^v^पौंस्यम् इन्द्रस्य वीर्यम् ^v^अदेदिष्ट अदीप्यत ॥

**सत्यं तत्तुर्वशे यदौ विदानो अह्नवाय्यम् । व्यानट् तुर्वणे शमि ॥ २७ ॥**

सत्यम् । तत् । तुर्वशे । यदौ । विदानः । अह्नवाय्यम् । वि । आनट् । तुर्वणे । शमि ॥२७॥

^v^तुर्वशे राज्ञि ^v^यदौ च यदुनामके च राज्ञि ^v^तत् प्रसिद्धं यागादिलक्षणं ^v^शमि कर्म । 'शची शमी' इति कर्मनामसु पाठात् । ^v^सत्यं परमार्थं ^v^विदानः जानंस्तयोः प्रीत्यर्थम् ^v^अह्नवाय्यम् अह्नवाय्यनामकं तयोः शत्रुं ^v^तुर्वणे संग्रामे ^v^व्यानट् व्याप्तवान् ॥

**तरणिं वो जनानां त्रदं वाजस्य गोमतः । समानमु प्र शंसिषम् ॥ २८ ॥**

तरणिम् । वः । जनानाम् । त्रदम् । वाजस्य । गोऽमतः । समानम् । ॐ इति । प्र । शंसिषम् ॥२८॥

---

१. ग-ज्ञ-त४-न-मनुष्याणामविष्यवः; घ-मनुष्याणा अविष्यवः; त१-२-३-मनुष्याणां मविष्यवः । २. ग-पालकामादभन्; ज्ञ-त१-२-पालकामा आदभन्; त३-४-न-पालकामा मादभन्; भ१-पालनकामादभन् । ३. त-न-'मा' नास्ति । ४. घ-ता तानि ।

हे अस्मदीयाः पुरुषाः ᵛवः युष्माकं ᵛजनानां पुत्रपौत्रादीनां ᵛतरणिं तारकं ᵛत्रदं शत्रूणां तर्दयितारं ᵛगोमतः पशुमतोऽन्नस्य दातारं चेन्द्रं ᵛसमानमु साधारणमेव ᵛप्र ᵛशंसिषं स्तौमि ॥

**ऋभुक्षणं न वर्तव उक्थेषु तुग्र्यावृधम् । इन्द्रं सोमे सचा सुते ॥ २९ ॥**

ऋभुक्षणम् । न । वर्तवे । उक्थेषु । तुग्र्यऽवृधम् । इन्द्रम् । सोमे । सचा । सुते ॥ २९ ॥

ᵛऋभुक्षणं महान्तं ᵛतुग्र्यावृधम् उदकस्य वर्धयितारम् । 'तुग्र्या बुर्बुरम्' इत्युदकनामसु पाठात् । ᵛइन्द्रं ᵛसोमे ᵛसचा स्तोत्रेण सह ᵛसुते अभिषुते सति ᵛउक्थेषु शस्त्रेषु ᵛवर्तवे धनं वरितुं प्रशंसामीति शेषः । ᵛन इति संप्रत्यर्थे ॥

**यः कृन्तदिद्वि योन्यं त्रिशोकाय गिरिं पृथुम् । गोभ्यो गातुं निरेतवे ॥३०॥**

यः । कृन्तत् । इत् । वि । योन्यम् । त्रिऽशोकाय । गिरिम् । पृथुम् ।

गोभ्यः । गातुम् । निःऽएतवे ॥ ३० ॥

ᵛयः ᵛइत् य एवेन्द्रः ᵛयोन्यम् उदकनिर्गमनद्वारं ᵛपृथुं विस्तीर्णं ᵛगिरिं मेघम् । 'गिरिः व्रजः' इति मेघनामसु पाठात् । ᵛत्रिशोकाय त्रिशोकनामऋष्यर्थं ᵛवि ᵛकृन्तत् व्यच्छिनत् सः ᵛगोभ्यः गमनवद्भ्य उदकेभ्यः ᵛनिरेतवे निर्गमनाय ᵛगातुं भूमिम् । 'भूमिः गातुः' इति तन्नामसु पाठात् । मार्गमित्यर्थः । करोतीति शेषः ॥ ॥ ४७ ॥

**यद्दधिषे मनस्यसि मन्दानः प्रेदियक्षसि । मा तत्करिन्द्र मृळय ॥३१॥**

यत् । दधिषे । मनस्यसि । मन्दानः । प्र । इत् । इयक्षसि । मा । तत् । कः । इन्द्र । मृळय ॥३१॥

हे ᵛइन्द्र ᵛमन्दानः मोदमानस्त्वं ᵛयत् शुभं वस्तु ᵛदधिषे धारयसि यच्च ᵛमनस्यसि पूजयसि यदपि च ᵛप्रेदियक्षसि प्रयच्छस्येव ᵛतत् सर्वं ᵛमा ᵛकः किं नाकार्षीः । अस्माकं कृतवानेव । किंचास्मान् ᵛमृळय सुखय ॥

**दभ्रं चिद्धि त्वावतः कृतं शृण्वे अधि क्षमि । जिगात्विन्द्र ते मनः ॥३२॥**

दभ्रम् । चित् । हि । त्वाऽवतः । कृतम् । शृण्वे । अधि । क्षमि । जिगातु । इन्द्र । ते । मनः ॥३२॥

हे ᵛइन्द्र ᵛत्वावतः त्वत्सदृशस्य ᵛदभ्रं ᵛचित् अल्पमपि ᵛकृतं कर्म ᵛअधि ᵛक्षमि क्षमायाम् । अधीति सप्तम्यर्थानुवादः । ᵛशृण्वे विश्रुतं भवति हि । तथा सति ᵛते तव ᵛमनः ᵛजिगातु मयि गच्छतु ॥

**तवेदु ताः सुकीर्तयोऽसन्नुत प्रशस्तयः । यदिन्द्र मृळयासि नः ॥ ३३ ॥**

तव । इत् । ऊँ इति । ताः । सुऽकीर्तयः । असन् । उत । प्रऽशस्तयः ।

यत् । इन्द्र । मृळयासि । नः ॥ ३३ ॥

हे ᵛइन्द्र त्वं ᵛनः अस्मान् ᵛयत् याभिः ᵛमृळयासि[1] सुखयसि ᵛताः ᵛसुकीर्तयः शोभनाख्यातयः[2] ᵛतवेत्[3] तवैव ᵛअसन् भवेयुः । ᵛउत अपि च ताः ᵛप्रशस्तयः स्तुतयश्च तवैव भवेयुः ॥

**मा न एकस्मिन्नागसि मा द्वयोरुत त्रिषु । वधीर्मा शूर भूरिषु ॥ ३४ ॥**

---

१. ख-ग-त-न-भ-श—मृळयसि । २. ग-भ—शोभनाः ख्यातयः । ३. ग-घ—तवेदु ।

मा। नः। एकस्मिन्। आगसि। मा। द्वयोः। उत। त्रिषु। वधीः। मा। शूर। भूरिषु ॥३४॥

हे ᵛशूर इन्द्र ᵛनः अस्मान् ᵛएकस्मिन्नागसि अपराधे ᵛमा ᵛवधीः मा हिंसीः। ᵛद्वयोः आगसोरपि ᵛमा वधीः। ᵛउत अपि च ᵛत्रिषु आगःस्वपि ᵛमा हिंसीः। ᵛभूरिषु असंख्यातेष्वप्यागःसु मा च वधीः॥

**बिभया हि त्वावत उग्रादभिप्रभङ्गिणः। दस्मादहमृतीषहः ॥ ३५ ॥**

बिभय। हि। त्वाऽवतः। उग्रात्। अभिऽप्रभङ्गिनः। दस्मात्। अहम्। ऋतिऽसहः ॥३५॥

हे इन्द्र ᵛत्वावतः त्वत्सदृशात् ᵛउग्रात् उद्गूर्णात् ᵛअभिप्रभङ्गिणः शत्रूणामभिप्रहर्तुः ᵛदस्मात् पापानामुपक्षपयितुः ᵛऋतीषहः शत्रुकृतां हिंसां सहतः ᵛअहं[1] ᵛबिभय ᵛहि[1] ॥ ॥ ४८ ॥

**मा सख्युः शूनमा विदे मा पुत्रस्य प्रभूवसो। आवृत्वद्भूतु ते मनः ॥३६॥**

मा। सख्युः। शूनम्। आ। विदे। मा। पुत्रस्य। प्रभुवसो इति प्रभुऽवसो।

आऽवृत्वत्। भूतु। ते। मनः ॥ ३६ ॥

हे ᵛप्रभूवसो प्रभूतधनेन्द्र ᵛते तव ᵛसख्युः ᵛशूनं वृद्धं ᵛमा ᵛआ ᵛविदे मावेदयामि। ᵛपुत्रस्य अपि शूनं ᵛमा विदे। तव ᵛमनः अस्मासु ᵛआवृत्वत् आवर्तनवत् ᵛभूतु भवतु। पुनःपुनः सुखं करोत्वित्यर्थः॥

**को नु मर्या अमिथितः सखा सखायमब्रवीत्। जहा को अस्मदीषते ॥३७॥**

कः। नु। मर्याः। अमिथितः। सखा। सखायम्। अब्रवीत्। जहा। कः। अस्मत्। ईषते ॥३७॥

ᵛको ᵛनु कः खलु हे ᵛमर्याः मनुष्याः ᵛअमिथितः। मेथतिराक्रोशकर्मा। अनाक्रुष्ट[2] इन्द्रादन्यः ᵛसखा ᵛसखायं प्रति ᵛजहा अहं कं जघान ᵛकः को वा ᵛअस्मत् अस्मत्तो भीतः ᵛईषते पलायत[3] इति ᵛअब्रवीत् वदति। इन्द्र एवैतादृशस्य वचनस्य वक्तेत्यभिप्रायः। तथा च यास्कः—'मेथतिराक्रोशकर्मा। अपापकं जघान कमहं जातु कोऽस्मद्भीतः पलायते' ( निरु. ४. २ ) इति। 'मा न एकस्मिन्नागसि' इत्यादिकया श्रुत्या नूनमृषिमिन्द्र आजहारेत्यत्रर्षिर्विस्मयत इति॥

**एवारे वृषभा सुतेऽसिन्वन्भूर्यावयः। श्वघ्नीव निवता चरन् ॥ ३८ ॥**

एवारे। वृषभ। सुते। असिन्वन्। भूरि। आवयः। श्वघ्नीऽइव। निऽवता। चरन् ॥ ३८ ॥

हे ᵛवृषभ कामानां वर्षकेन्द्र ᵛएवारे। एवारो नाम कश्चित्। तस्मिन् ᵛसुते[4] अभिषुते[4] सोमे सति ᵛभूरि बहूनि धनानि ᵛअसिन्वन् न[5] बध्नन् ᵛश्वघ्नी। श्वघ्नी कितवः। तथा च यास्कः—'श्वघ्नी कितवो भवति स्वं* हन्ति*---' ( निरु. ५. २२ )---[5] ॥

**आ त एता वचोयुजा हरी गृभ्णे सुमद्रथा। यदीं ब्रह्मभ्य इद्ददः ॥३९॥**

आ। ते। एता। वचःऽयुजा। हरी इति। गृभ्णे। सुमत्ऽरथा।

यत्। ईम्। ब्रह्मऽभ्यः। इत्। ददः ॥ ३९ ॥

---

१. ग-त-न-भ–' अहं...हि ' नास्ति। २. ग-घ-त-न–अनाक्रुष्ट। ३. न-भ–पालयत। ४. ग-त१-४-न-भ–अभिषुते; ज्ञ-त-२-३ अभिसुते। ५. घ–अबध्नन् श्वघ्नीव कितव इव स सोमः त्वामेव प्राप्तः आवयः दृश्यमानाः सर्वे देवा निवता अधोमुखाः संतः आचरन्निर्गताः। *ख–संहते; ग–सहन्ते; त-न–संहंते; भ१-३–स्वं हं; भ२–स्वं हंतीति; श–संहंतेति।

ᵛते¹ तव ᵛसुमद्रथा कल्याणरथौ ᵛवचोयुजा मन्त्रेण युज्यमानौ ᵛएता एतौ ᵛहरी अश्वौ ᵛआ ᵛगृभ्णे। अस्मदभिमुखं² यातुं हस्ताभ्यामाकर्षामीत्यर्थः। ᵛयत् यस्मात् त्वं ᵛब्रह्मभ्य ᵛइत् ब्राह्मणेभ्य एव ᵛईम् इदं धनं ᵛददः ददासि ॥

**भिन्धि विश्वा अप द्विषः परि बाधो जही मृधः। वसु स्पार्हं तदा भर ॥४०॥**

भिन्धि। विश्वाः। अप। द्विषः। परि। बाधः। जहि। मृधः। वसु। स्पार्हम्। तत्। आ। भर ॥४०॥

हे इन्द्र त्वं ᵛविश्वाः सर्वाः ᵛद्विषः द्वेष्ट्रीः शत्रुसेनाः ᵛअप ᵛभिन्धि विदारय। ᵛबाधः हिंसित्रीः ᵛमृधः संग्रामान्। 'स्पृधः मृधः' इति संग्रामनामसु पाठात्। ᵛपरि ᵛजहि हिन्धि। अतस्तासां ᵛस्पार्हं स्पृहणीयं ᵛतत् प्रसिद्धं ᵛवसु ᵛआ ᵛभर अस्मभ्यमाहर ॥

**यद्वीळाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम्। वसु स्पार्हं तदा भर ॥४१॥**

यत्। वीळौ। इन्द्र। यत्। स्थिरे। यत्। पर्शाने। पराऽभृतम्।
वसु। स्पार्हम्। तत्। आ। भर ॥ ४१ ॥

हे ᵛइन्द्र त्वया च ᵛवीळौ दृढे परैः कम्पयितुमशक्ये ᵛयत् धनं ᵛपराभृतं विन्यस्तं ᵛयत् च ᵛस्थिरे स्वयमचले पराभृतं ᵛयत् चापि ᵛपर्शाने विमर्शनक्षमे पराभृतं³ ᵛतत् ᵛस्पार्हं ᵛवसु ᵛआ ᵛभर ॥

**यस्य ते विश्वमानुषो भूरेर्दत्तस्य वेदति। वसु स्पार्हं तदा भर ॥ ४२ ॥**

यस्य। ते। विश्वऽमानुषः। भूरेः। दत्तस्य। वेदति। वसु। स्पार्हम्। तत्। आ। भर ॥४२॥

हे इन्द्र ᵛते त्वया⁴। विभक्तिव्यत्ययः। ᵛदत्तस्य दत्तं ᵛभूरेः बहु ᵛयस्य यद्धनम्। कर्मणि षष्ठी। ᵛविश्वमानुषः सर्वो मनुष्यः ᵛवेदति जानाति ᵛतत् ᵛस्पार्हं स्पृहणीयं ᵛवसु ᵛआ ᵛभर ॥ ॥ ४९ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
ऋक्संहिताभाष्ये षष्ठाष्टके तृतीयोऽध्यायः ॥

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
षष्ठे तृतीयमध्यायं व्याख्याय श्रीमतीसुतः।
श्रीसायणार्यः संगृह्य चतुर्थं व्याकरोत्यथ ॥

तत्र 'त्वावतः' इति त्रयस्त्रिंशदृचं चतुर्थं सूक्तमश्वपुत्रस्य वशाख्यस्यार्षम्। प्रागवत्सप्रपरिभाषयाद्याश्चतस्रो गायत्र्यः। तत्राद्या पादनिचृत् 'त्रयः सप्तकाः पादनिचृत्' (अनु. ४. ४) इत्युक्तलक्षणोपेतत्वात्। 'दधानो गोमदश्ववत्' इत्येषा पञ्चमी ककुप् अष्टकद्वादशाष्टकैः पादैरुपेतत्वात्। 'मध्यमश्चेत् ककुप्' (अनु. ५. ३) इति हि तल्लक्षणम्। 'तमिन्द्रम्' इति षष्ठी

---

१. ग-त-न-'ते' नास्ति। २. ख-त-न-भ-श-°दभिमुखे; घ-°दभिमुखो। ३. त१-२-३-न-प्रातराभृतं। ४. ग-त्वं; ञ-त-१-३-त्वां; त-४-न-भ-१-२-त्वा।

गायत्री। 'तस्मिन् हि सन्ति' इति सप्तमी बृहती। 'यस्ते मदः' इत्यष्टम्यनुष्टुप्। 'यो दुष्टरः' इति नवमी सतोबृहती। 'अयुजौ जागतौ सतोबृहती' (अनु. ८. ४) इति ह्युक्तम्। 'गव्यो षु णः' इति दशमी गायत्री। 'नहि ते शूर' इत्येकादशी बृहती। 'य ऋष्वः' इति द्वादशी विपरीता सतोबृहती[1] प्रथमतृतीययोरष्टाक्षरा द्वितीयचतुर्थयोर्द्वादशाक्षरा च। 'युजौ चेद्विपरीता' (अनु. ८. ५) इत्युक्तत्वात्। 'स नो वाजेषु' इति त्रयोदशी चतुर्विंशत्यक्षरा द्विपदा। 'अभि वो वीरम्' इति चतुर्दशी पिपीलिकमध्या बृहती। त्रयोदशिनोर्मध्येऽष्टकः पिपीलिकमध्या' (अनु. ७. ७) इत्युक्तत्वात्। 'ददी रेक्णः' इति पञ्चदशी ककुम्न्यङ्कुशिरा 'त्रैष्टुभजागतचतुष्काः ककुम्न्यङ्कुशिरा' (अनु. ५. ४) इत्युक्तत्वात्। 'विश्वेषाम्' इति षोडशी विराट्। 'महः सु वः' इति सप्तदशी जगती। 'ये पातयन्ते' इत्यष्टादश्युपरिष्टाद्बृहती चतुर्थपादस्य द्वादशाक्षरत्वात्। 'प्रभङ्गम्' इत्येकोनविंशी बृहती। 'सनितः सुसनितः' इति विंशी विषमपदा बृहती 'नवकाष्टयेकादश्यष्टिनो विषमपदा' (अनु. ७. ८) इत्युक्तत्वात्। 'आ स एतु' 'षष्टिं सहस्रा' इत्येकविंशीद्वाविंश्यौ पङ्क्ती। 'दश श्यावाः' इति त्रयोविंशी गायत्री। 'दानासः' इति चतुर्विंशी पङ्क्तिः। पञ्चविंशीसप्तविंश्यौ बृहत्यौ। षड्विंश्यष्टाविंश्यौ सतोबृहत्यौ। एकोनत्रिंशी गायत्री। 'गावो न यूथम्' इति त्रिंशी विंशत्यक्षरा द्विपदा विराट्। एकत्रिंश्युष्णिक्[2]। द्वात्रिंशी पङ्क्तिः। त्रयस्त्रिंशी गायत्री। 'आ स एतु' इत्यादिभिश्चतसृभिः कनीतपुत्रस्य[3] पृथुश्रवसो दानं स्तूयते। अतस्तद्देवताकाः। 'आ नो वायो' इत्यादीनां चतसृणां द्वात्रिंश्याश्च वायुर्देवता। शिष्टा अनादेशपरिभाषयेन्द्रदेवताकाः। एतत्सर्वमनुक्रमण्यामुक्तं– 'त्वावतस्त्रयस्त्रिंशद्वशोऽश्व्य आ स आदि कानीतस्य पृथुश्रवसो दानस्तुतिराद्या पादनिचृत् पञ्चम्यादि ककुब्गायत्री बृहत्यनुष्टुप् सतोबृहती गायत्री विपरीतोत्तरः प्रगाथो द्विपदा चतुर्विंशिका बृहती पिपीलिकमध्या ककुन्न्यङ्कुशिरा विराड्जगत्युपरिष्टाद्बृहतीबृहत्यौ विषमपदोत्तरे पङ्क्ती गायत्री पङ्क्तिः प्रगाथौ च वायव्यौ गायत्री द्विपदोष्णिक् पङ्क्तिर्वायव्या गायत्री' इति। महाव्रते निष्केवल्ये 'सनितः सुसनितः' इत्यन्तमेव[4] सूक्तम्। तथा च पञ्चमारण्यके शौनकेन सूत्रितं—'त्वावतः पुरूवसविति वशः सनितः सुसनितरित्येतदन्तः' (ऐ. आ. ५. २. ५) इति॥

**त्वावतः पुरूवसो वयमिन्द्र प्रणेतः। स्मसि स्थातर्हरीणाम्॥ १॥**

त्वाऽवतः। पुरुवसो इति पुरुऽवसो। वयम्। इन्द्र। प्रनेतरिति प्रऽनेतः।
स्मसि। स्थातः। हरीणाम्॥ १॥

हे पुरूवसो बहुधनेन्द्र प्रणेतः[5] कर्मणां पारं प्रकर्षेण प्रापयितः इन्द्र त्वावतः त्वत्सदृशस्य। इन्द्रसमानस्यान्यस्याभावात्तवेत्यर्थः। तव स्वभूताः वयं स्मसि स्मः। हे हरीणाम् एतत्संज्ञकानामश्वानां स्थातः अधिष्ठातः॥

**त्वां हि सत्यमद्रिवो विद्म दातारमिषाम्। विद्म दातारं रयीणाम्॥ २॥**

त्वाम्। हि। सत्यम्। अद्रिऽवः। विद्म। दातारम्। इषाम्। विद्म। दातारम्। रयीणाम्॥ २॥

हे अद्रिवः। अत्ति शत्रुमित्यद्रिर्वज्रः। तद्वन्निन्द्र त्वां सत्यं निश्चयम् इषाम् अन्नानां दातारं विद्म जानीमः[6]। तथा रयीणां धनानां दातारं विद्म॥

**आ यस्य ते महिमानं शतमूते शतक्रतो। गीर्भिर्गृणन्ति कारवः॥ ३॥**

---

१. ग-त-भ-श–बृहती। २. ख-ग-त-भ–उष्णिक्। ३. ख-घ-त-न-भ-श–कनीन°। ४. ग–इत्यन्तमेतत्। ५. ख-घ-ज्ञ-त-२-४-भ-श–प्रनेतः; ग–प्राणेतः। ६. न–जानीम।

आ । यस्य॑ । ते॒ । म॒हि॒मान॑म् । शत॑म्ऽऊते । शत॑क्रतो॒ इति॒ शत॑ऽक्रतो ।
गीः॒ऽभिः । गृ॒णन्ति॑ । का॒रवः॑ ॥ ३ ॥

हे शतमूते अपरिमितरक्षण हे शतक्रतो बहुकर्मयुक्तेन्द्र यस्य ते महिमानं माहात्म्यं कारवः स्तोतारः गीर्भिः स्तुतिभिः गृणन्ति स्तुवन्ति स्वाभीष्टाय ॥

सु॒नी॒थो घा॒ स मर्त्यो॒ यं म॒रुतो॒ यम॑र्य॒मा । मि॒त्रः पान्त्य॒द्रुहः॑ ॥ ४ ॥

सु॒ऽनी॒थः । घ॒ । सः । मर्त्यः॑ । यम् । म॒रुतः॑ । यम् । अ॒र्य॒मा । मि॒त्रः । पान्ति॑ । अ॒द्रुहः॑ ॥४॥

स मर्त्यः मनुष्यो यजमानः सुनीथः सुयज्ञः सुनयनो वा भवति । घ इति प्रसिद्धौ । स इत्युक्तं कमित्याह । यं यजमानं मरुतः देवाः पान्ति रक्षन्ति अद्रुहः अद्रोहकर्तारः । तथा यमर्यमा पाति । यं च मित्रः पाति । स एवं भवतीति ॥

दधा॑नो॒ गोम॒दश्व॑वत्सु॒वीर्य॑मादि॒त्यजू॑त एधते । सदा॑ रा॒या पु॑रु॒स्पृहा॑ ॥ ५ ॥

दधा॑नः । गोऽम॑त् । अश्व॑ऽवत् । सु॒ऽवीर्य॑म् । आ॒दि॒त्यऽजू॑तः । ए॒ध॒ते॒ ।
सदा॑ । रा॒या । पु॒रु॒ऽस्पृहा॑ ॥ ५ ॥

आदित्यजूतः आदित्यप्रेरित आदित्यानुगृहीतो[1] यजमानः गोमत् गोभिरुपेतम् अश्ववत् अश्वैरुपेतं सुवीर्यं शोभनवीर्योपेतं पुत्रं दधानः धारयन् एधते वर्धते सदा सर्वदा । किंच पुरुस्पृहा बहुभिः स्पृहणीयेन राया धनेन सदैधते ॥　　॥ १ ॥

तमिन्द्रं॒ दान॑मीमहे शवसा॒नमभी॑र्वम् । ईशा॑नं रा॒य ईम॑हे ॥ ६ ॥

तम् । इन्द्र॑म् । दान॑म् । ई॒म॒हे॒ । श॒व॒सा॒नम् । अभी॑र्वम् । ईशा॑नम् । रा॒यः । ई॒म॒हे॒ ॥ ६ ॥

तं प्रसिद्धम् इन्द्रं दानं देयं रायः[2] धनम् ईमहे याचामहे । कीदृशमिन्द्रम् । शवसानं बलमाचरन्तम् अभीर्वम् अभीरुम् ईशानं सर्वस्य स्वामिनम् ॥

तस्मि॒न्हि सन्त्यू॒तयो॒ विश्वा॒ अभी॑रवः॒ सचा॑ ।
तमा व॑हन्तु॒ सप्त॑यः पुरू॒वसुं॒ मदा॑य॒ हर॑यः सु॒तम् ॥ ७ ॥

तस्मि॑न् । हि । सन्ति॑ । ऊ॒तयः॑ । विश्वाः॑ । अभी॑रवः । सचा॑ ।
तम् । आ । व॒ह॒न्तु॒ । सप्त॑यः । पु॒रु॒ऽवसु॑म् । मदा॑य । हर॑यः । सु॒तम् ॥ ७ ॥

तस्मिन् इन्द्रे ऊतयः गन्त्र्यः विश्वाः सर्वाः अभीरवः अकातराः सचा सहायभूता मरुद्रूपाः सेनाः सन्ति भवन्ति । अथवा तस्मिन् सर्वा रक्षणाः सह संभवन्ति । तम् इन्द्रं सप्तयः सर्पणशीलाः हरयः अश्वाः पुरूवसुं बहुधनम् । बहुधनप्रदमित्यर्थः । तं मदाय सुतम् अभिषुतं सोमं प्रति आ वहन्तु आगमयन्तु ॥

यस्ते॒ मदो॒ वरे॑ण्यो॒ य इ॑न्द्र वृत्र॒हन्त॑मः ।
य आ॒द॒दिः स्व१॒॑र्नृभि॒र्यः पृत॑नासु दु॒ष्टरः॑ ॥ ८ ॥

---

१. ख-ग-त—आदित्यानुगतो; न—आदितानुगृतो।　२. ख-ग-त-न-भ-श—' रायः ' नास्ति।

यः । ते । मदः । वरेण्यः । यः । इन्द्र । वृत्रहन्ऽतमः ।
यः । आऽददिः । स्वः । नृऽभिः । यः । पृतनासु । दुस्तरः ॥ ८ ॥

पूर्वमन्त्रे मदाय हरय इत्युक्तं स मदः स्तूयते । हे इन्द्र ते तव[1] यः मदः वरेण्यः वरणीयः । यः च मदः संग्रामे वृत्रहन्तमः शत्रूणामतिशयेन हन्ता । यः च आददिः आदाता स्वः स्वरणं धनं नृभिः नृभ्यः शत्रुभ्यः । यः च पृतनासु संग्रामेषु दुष्टरः अनभिभाव्यः । तस्मै मदाय हरयो वहन्त्विति ॥

**यो दुष्टरो विश्ववार श्रवाय्यो वाजेष्वस्ति तरुता ।**
**स नः शविष्ठ सवना वसो गहि गमेम गोमति व्रजे ॥ ९ ॥**

यः । दुस्तरः । विश्वऽवार । श्रवाय्यः । वाजेषु । अस्ति । तरुता ।
सः । नः । शविष्ठ । सवना । आ । वसो इति । गहि । गमेम । गोऽमति । व्रजे ॥ ९ ॥

हे विश्ववार विश्वैर्वरणीयेन्द्र वाजेषु युद्धेषु यः तव दुष्टरः दुःखेन तरीतुं शक्यः तरुता शत्रूणां तारकः[2] अस्ति भवति हे वसो वासक हे शविष्ठ अतिशयेन बलवन्निन्द्र सः त्वं नः सवना अस्माकं सवनानि आ गहि आगच्छ । वयं च गोमति व्रजे गोमन्तं व्रजं गमेम गच्छेम ॥

**गव्यो षु णो यथा पुराश्वयोत रथया । वरिवस्य महामह ॥ १० ॥**

गव्यो इति । सु । नः । यथा । पुरा । अश्वऽया । उत । रथऽया । वरिवस्य । महाऽमह ॥ १० ॥

हे महामह महाधनेन्द्र गव्या । गव्या उ इति निपातानिपातद्वयसमुदायस्यादिवद्भावेन निपातवद्भावात् प्रकृतिभावः । अस्माकं गवामिच्छया अस्माकं[3] गा दातुं यथा पुरा पूर्वं यथास्माकं[4] गवादिदानाय वरिवस्यसि तद्वदद्यापि सु सुष्ठु वरिवस्य परिचर । आगच्छेत्यर्थः । न केवलं गवेच्छया किंतु अश्वया अश्वप्रदानेच्छया । उत अपि च रथया रथेच्छया च वरिवस्येति ॥ ॥ २ ॥

**नहि ते शूर राधसोऽन्तं विन्दामि सत्रा ।**
**दशस्या नो मघवन्नू चिदद्रिवो धियो वाजेभिराविथ ॥ ११ ॥**

नहि । ते । शूर । राधसः । अन्तम् । विन्दामि । सत्रा ।
दशस्य । नः । मघऽवन् । नु । चित् । अद्रिऽवः । धियः । वाजेभिः । आविथ ॥ ११ ॥

हे शूर विक्रान्तेन्द्र ते तव राधसः धनस्य अन्तम् इयत्तां सत्रा सत्यं नहि विन्दामि न लभे[5] । यस्मादेवं तस्मात् हे मघवन् धनवन् हे अद्रिवः वज्रवन्निन्द्र नः अस्माकं नू चित् क्षिप्रमेव दशस्य देहि तद्धनम् । किंच वाजेभिः वाजैरन्नैः धियः अस्मदीयानि कर्माणि आविथ रक्ष[6] ॥

**य ऋष्वः श्रावयत्सखा विश्वेत्स वेद जनिमा पुरुष्टुतः ।**
**तं विश्वे मानुषा युगेन्द्रं हवन्ते तविषं यतस्रुचः ॥ १२ ॥**

---

१. ख-ग-त-न-भ-श-' तव ' नास्ति । २. घ-तारकः श्रवाय्यः श्रवणीयः दयः । ३. घ-नः अस्माकं । ४. ख-घ-त-न-भ-श-यथास्माकं यागं । ५. घ-लभे खलु । ६. ग-ररक्षिथ ।

यः । ऋष्वः । श्रवयत्ऽसखा । विश्वा । इत् । सः । वेद । जनिम । पुरुऽस्तुतः ।
तम् । विश्वे । मानुषा । युगा । इन्द्रम् । हवन्ते । तविषम् । यतऽस्रुचः ॥ १२ ॥

यः इन्द्रः ऋष्वः दर्शनीयः श्रावयत्सखा[1] । श्रावयन्तः सखाय ऋत्विजो यस्य स तादृशः श्रावयत्सखा । पुरुष्टुतः बहुभिर्यजमानैः स्तुतो य इन्द्रः सः विश्वेत् सर्वाण्यपि जनिमा[2] जन्मानि प्राणिनां वेद जानाति । तं तविषं बलवन्तम् इन्द्रं विश्वे सर्वेऽप्यध्वर्य्वादयः यतस्रुचः स्वीकृतहविष्काः सन्तः मानुषा मनुष्यसंबन्धिनः युगा युगानि कालान् सर्वेषु कालेषु हवन्ते आह्वयन्ति स्तुवन्ति ॥

**स नो वाजेष्वविता पुरूवसुः पुरःस्थाता मघवा वृत्रहा भुवत् ॥१३॥**

सः । नः । वाजेषु । अविता । पुरुऽवसुः । पुरःऽस्थाता । मघऽवा । वृत्रऽहा । भुवत् ॥१३

एषा द्विपदा जगती । सः पुरूवसुः बहुधनः मघवा धनवान् वृत्रहा शत्रूणां हन्तेन्द्रः न अस्माकं वाजेषु संग्रामेषु अविता रक्षिता पुरःस्थाता तदर्थं पुरतो वर्तमानः भुवत् भवतु ॥

**अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम् ।**
**इन्द्रं नाम श्रुत्यं शाकिनं वचो यथा ॥ १४ ॥**

अभि । वः । वीरम् । अन्धसः । मदेषु । गाय । गिरा । महा । विऽचेतसम् ।
इन्द्रम् । नाम । श्रुत्यम् । शाकिनम् । वचः । यथा ॥ १४ ॥

हे उद्गात्रादयः वः । यूयमित्यर्थः । अथवा हे यजमानाः वो युष्माकं हिताय अन्धसः सोमस्य मदेषु उत्पाद्यमानेषु सत्सु वीरं शत्रूणामीरयितारं नाम शत्रूणां नामकं विचेतसं विशिष्टप्रज्ञं श्रुत्यं सर्वत्र श्रोतव्यं[3] शाकिनं शक्तमीदृशम् इन्द्रं महा महत्या गिरा स्तुत्या वचः वाग्युष्मदीया यथा येन प्रकारेण प्रवर्तते गायत्र्या त्रिष्टुभा वा तथा गाय गायत । स्तुतिं कुरुत ॥

**ददी रेक्णस्तन्वे ददिर्वसु ददिर्वाजेषु पुरुहूत वाजिनम् । नूनमथ ॥१५॥**

ददिः । रेक्णः । तन्वे । ददिः । वसु । ददिः । वाजेषु । पुरुऽहूत । वाजिनम् । नूनम् । अथ ॥ १५

हे पुरुहूत बहुभिराहूतेन्द्र त्वं तन्वे मह्यं शरीराय रेक्णः धनं ददिः दाता भव । कदेति उच्यते । नूनं क्षिप्रम् अद्येदानीमेव[4] । एवं प्रतिवाक्यं योज्यम् । तथा वसु धनं पुत्रादिभ्यः ददिः दाता भव । तथा वाजेषु संग्रामेषु वाजिनम् अन्नवन्तं रयिं ददिः दाता भवेति । अत्र सर्वेष्वपि वाक्येषु ददिः इत्यस्य लिङ्भावात् 'न लोकाव्यय॰' इति षष्ठीप्रतिषेधः ॥  ॥ ३ ॥

**विश्वेषामिरज्यन्तं वसूनां सासह्वांसं चिदस्य वर्पसः । कृपयतो नूनमत्यथ ॥१६॥**

विश्वेषाम् । इरज्यन्तम् । वसूनाम् । ससह्वांसम् । चित् । अस्य । वर्पसः ।
कृपऽयतः । नूनम् । अति । अथ ॥ १६ ॥

---

१. ग–श्रवयत्सखा । २. ग-त-न-भ-श–जनिमानि । ३. न-भ–श्रोतव्यं स्तुत्यं । ४. ग-भ-मु-अथेदानीमेव ।

हे इन्द्र त्वां विश्वेषां सर्वेषां वसूनां धनानाम् इरज्यन्तम् ईशानम् अस्य वर्पसः वारकस्य कृपयतः युद्धं कल्पयतः शत्रोः सासह्वांसम् अभिभवितारं स्तुवत इति शेषः। स त्वं नूनं क्षिप्रमद्यापीदानीमपि[1] धनं प्रयच्छेत्यर्थः ॥

महः सु वो अरमिषे स्तवामहे मीळ्हुषे अरंगमाय जग्मये ।
यज्ञेभिर्गीर्भिर्विश्वमनुषां मरुतामियक्षसि गाये त्वा नमसा गिरा ॥१७॥

महः । सु । वः । अरम् । इषे । स्तवामहे । मीळ्हुषे । अरम्ऽगमाय । जग्मये ।
यज्ञेभिः । गीःऽभिः । विश्वऽमनुषाम् । मरुताम् । इयक्षसि । गाये । त्वा । नमसा । गिरा ॥१७॥

हे इन्द्र महः महतः वः। तवेत्यर्थः। व्यत्ययेन बहुवचनम्। अरं[2] गमनमस्मद्विषयमिच्छामि। अर्तेररमिति रूपम्। तदर्थं मीळ्हुषे सेक्त्रे अरंगमाय[3] संपूर्णगमनाय जग्मये गमनशीलाय यज्ञं प्रति एवंभूताय[4] देवाय स्तवामहे। त्वां स्तुम इत्यर्थः। केन साधनेनेति तदुच्यते। यज्ञेभिः यजनसाधनैर्हविर्भिर्यज्ञैरेव[5] वा गीर्भिः स्तुतिभिः। हे देव विश्वमनुषां विश्वेषां मनुष्याणां यष्टृणाम् इयक्षसि एतैरिज्यसे। मरुतां संबन्धी त्वम्। किंच त्वा त्वां नमसा नमस्कारेण गिरा स्तुत्या च गाये स्तुवे ॥

ये पातयन्ते अज्मभिर्गिरीणां स्नुभिरेषाम् ।
यज्ञं महिष्वणीनां सुम्नं तुविष्वणीनां प्राध्वरे ॥ १८ ॥

ये । पातयन्ते । अज्मऽभिः । गिरीणाम् । स्नुऽभिः । एषाम् ।
यज्ञम् । महिऽस्वनीनाम् । सुम्नम् । तुविऽस्वनीनाम् । प्र । अध्वरे ॥ १८ ॥

ये मरुतः गिरीणां मेघानां स्नुभिः प्रस्नवद्भिः अज्मभिः[6] बलैः बलकरैरुदकैः सह पातयन्ते पतन्ति गच्छन्ति एषां मरुतां महिष्वणीनां प्रभूतध्वनीनां यज्ञं कुर्म इति शेषः। कृत्वा च तुविष्वणीनां बहुध्वनीनां[7] सुम्नं सुखं तैः कृतम् अध्वरे यज्ञे प्र प्राप्नुयाम। अथवा चतुर्थ्यर्थे षष्ठी। प्रभूतस्वनेभ्यः सुम्नमुक्तलक्षणं हविः प्र प्राप्नुयामाध्वरे यज्ञे ॥

प्रभङ्गं दुर्मतीनामिन्द्र शविष्ठा भर ।
रयिमस्मभ्यं युज्यं चोदयन्मते ज्येष्ठं चोदयन्मते ॥ १९ ॥

प्रऽभङ्गम् । दुःऽमतीनाम् । इन्द्र । शविष्ठ । आ । भर ।
रयिम् । अस्मभ्यम् । युज्यम् । चोदयत्ऽमते । ज्येष्ठम् । चोदयत्ऽमते ॥ १९ ॥

दुर्मतीनां दुष्टमनस्कानां वृत्रादीनां प्रभङ्गं प्रकर्षेण भञ्जकं त्वां याचामह इति शेषः। हे इन्द्र शविष्ठ अतिशयेन बलवन्[8] स्तुतस्त्वम् अस्मभ्यं रयिं धनं युज्यं योग्यमस्माकमुचितं

१. ग-भ—क्षिप्रमथापी°; घ—क्षिप्रमिदानीं अथाचित् अनंतरमपि। २. ख-ज्ञ-त-१-२—अरंगमाय अरं। ३. ज्ञ-त३-४-न-भ२-श—अरंगमनाय। ४. ख-ग-त-न-श—स एवंभूताय। ५. ग-घ-त-न—यजमानसाधनै°; श—यज्ञसाधनै°। ६. ग-त३-४-न-श—'अज्मभिः' नास्ति। ७. त-श—बहुधनीनां। ८. ख-ग-त-न-भ-श—बलवन्निंद्र।

धनम् ᵛआ ᵛभर आहर। हे ᵛचोदयन्मते। चोदयन्ती धनं प्रेरयन्ती मतिर्यस्य स तथोक्तः। हे तादृश देव। किंच हे ᵛचोदयन्मते उक्तार्थं ᵛज्येष्ठं धनमा भर ॥

सनितः सुसनितरुग्र चित्र चेतिष्ठ सूनृत ।
प्रासहा सम्राट् सहुरिं सहन्तं भुज्युं वाजेषु पूर्व्यम् ॥ २० ॥

सनितरिति । सुऽसनितः । उग्र । चित्र । चेतिष्ठ । । सूनृत ।
प्रऽसहा । सम्ऽराट् । सहुरिम् । सहन्तम् । भुज्युम् । वाजेषु । पूर्व्यम् ॥ २० ॥

हे ᵛसनितः संभक्तर्दातर्वा[1] ᵛउग्र उद्गूर्णबल ᵛचित्र चायनीय ᵛचेतिष्ठ अत्यन्तं चेतयितः ᵛसूनृत सुसत्य ᵛप्रासहा प्रसह्य हे ᵛसम्राट् सर्वस्य स्वामिन् सम्यग्राजमान वा त्वं ᵛसहुरिं सहनशीलं[2] ᵛभुज्युं भोजयितारं ᵛपूर्व्यं प्रवृद्धम्। मुख्यमित्यर्थः। ईदृशं धनं ᵛवाजेषु संग्रामेष्वाभरेति शेषः ॥ ॥ ४ ॥

आ स एतु य ईवदाँ अदेवः पूर्तमाददे ।
यथा चिद्वशो अश्व्यः पृथुश्रवसि कानीते३ऽस्या व्युष्याददे ॥ २१ ॥

आ । सः । एतु । यः । ईवत् । आ । अदेवः । पूर्तम् । आऽददे ।
यथा । चित् । वशः । अश्व्यः । पृथुऽश्रवसि । कानीते । अस्याः । विऽउषि । आऽददे ॥२१॥

अत्र शौनकः—'वशायाश्व्याय यत्प्रादात्कानीतस्तु पृथुश्रवाः। तदत्र स्तूयते[3] दानमा स एत्वेवमादिभिः' (बृहद्दे ६.७९–८०)। ᵛएतु आगच्छतु ᵛसः ᵛयः ᵛअदेवः देवादन्यो मनुष्यो वशः ᵛईवत् गमनवत् गवादिलक्षणं ᵛपूर्तं पूर्णम् ᵛआददे आदत्ते। स्वीकृतवानित्यर्थः। देवश्चेन्मायया प्याऽऽगन्तुमर्हति। अतः प्रकाशेनैवागच्छत्वित्यर्थः। कथमस्य धनावाप्तिप्रसङ्ग आगमनप्रसङ्गश्चेति तदुच्यते। ᵛयथा ᵛचित्। चिदिति पूरणः। येन कारणेन[4] यस्माद्वा ᵛवशः एतत्संज्ञकः ᵛअश्व्यः अश्वपुत्रः ᵛपृथुश्रवसि एतन्नामके राज्ञि ᵛकानीते कनीतपुत्रे कन्यायाः पुत्रे ᵛअस्याः उषसः ᵛव्युषि व्युष्टौ ᵛआददे आदत्ते तेन कारणेन[5] तस्माद्वा कारणादायात्विति। एवमश्वो बन्धुवर्गो वा ब्रूते ॥

षष्टिं सहस्राश्व्यस्यायुतासनमुष्ट्रानां विंशतिं शता ।
दश श्यावीनां शता दश त्र्यरुषीणां दश गवां सहस्रा ॥ २२ ॥

षष्टिम् । सहस्रा । अश्व्यस्य । अयुता । असनम् । उष्ट्रानाम् । विंशतिम् । शता ।
दश । श्यावीनाम् । शता । दश । त्रिऽअरुषीणाम् । दश । गवाम् । सहस्रा ॥ २२ ॥

स वश आगत्य ब्रूते। ᵛअश्व्यस्य अश्वसंबन्धिनः ᵛषष्टिं ᵛसहस्रा सहस्राणि ᵛअयुता अयुतानि च ᵛअसनम् अभजम्। ᵛउष्ट्राणां ᵛविंशतिं ᵛशता शतानि चासनम्। ᵛश्यावीनां श्याववर्णानां वडवानां ᵛदश ᵛशता शतानि चासनम्। ᵛत्र्यरुषीणां त्रीण्यारोचमानानि शुभ्राणि ककुत्पृष्ठपार्श्वादिस्थानानि यासां तादृशीनां ᵛगवां ᵛदश ᵛसहस्रा सहस्राण्यभजम् ॥

---

१. घ–संभक्तः सुसनितः सुष्ठु संभक्तर्दातर्वा। २. घ–सहनशीलं सहंतं पुत्रादियुक्तं। ३. भ१-३-श–श्रूयते। ४. घ-त३-भ-श–प्रकारेण। ५. ख-ग-घ-त-न-भ-श–प्रकारेण।

**दश श्यावा ऋधद्रयो वीतवारास आशवः । मथ्रा नेमिं नि वावृतुः ॥ २३ ॥**

दश । श्यावाः । ऋधत्ऽरयः । वीतऽवारासः । आशवः । मथ्राः । नेमिम् । नि । ववृतुः ॥२३॥

ᵛदश दशसंख्याकाः ᵛश्यावाः श्याववर्णाः ᵛआशवः अश्वाः ᵛनेमिं रथनेमिं ᵛनि ᵛवावृतुः निवर्तयन्ति । रथं वहन्तीत्यर्थः । ईदृशास्ते ᵛऋधद्रयः प्रवृद्धवेगाः ᵛवीतवारासः क्रान्तबलाः प्राप्तबला वा आशवः ᵛमथ्राः[1] मथनशीलाः ॥

**दानासः पृथुश्रवसः कानीतस्य सुराधसः ।**
**रथं हिरण्ययं ददन्मंहिष्ठः सूरिरभूद्वर्षिष्ठमकृत श्रवः ॥ २४ ॥**

दानासः । पृथुऽश्रवसः । कानीतस्य । सुऽराधसः ।
रथम् । हिरण्ययम् । ददत् । मंहिष्ठः । सूरिः । अभूत् । वर्षिष्ठम् । अकृत । श्रवः ॥ २४ ॥

पूर्वमन्त्रैः प्रतिपादितानि धनानि[2] बन्धूनां पितुर्वा पुरस्तान्निर्दिशन्नाशास्ते । ᵛपृथुश्रवसः ᵛकानीतस्य[3] ᵛसुराधसः शोभनधनस्य । यतस्तस्य धनं दानाय कल्पितमतः स सुराधाः । तस्य ᵛदानासः दाना दत्तानि धनानीमानि । स च पृथुश्रवाः पूर्वमुक्तानि ᵛहिरण्ययं हिरण्मयं ᵛरथं च ᵛददत् प्रयच्छन् ᵛमंहिष्ठः अतिशयेन दाता ᵛसूरिः सर्वस्य प्रेरकः प्राज्ञो वा ᵛअभूत् भवति भवतु वा । ᵛवर्षिष्ठम् अतिशयेन प्रवृद्धां[4] ᵛश्रवः कीर्तिम् ᵛअकृत करोति करोतु वा ॥

'आ नो वायो' इत्येषा पञ्चमेऽहनि प्रउगशस्त्रे वायव्यतृचे तृतीया । 'आ नो वायो महे तन इत्येका रथेन पृथुपाजसा' (आश्व. श्रौ. ७. १२) इति हि सूत्रितम् ॥

**आ नो वायो महे तने याहि मखाय पाजसे ।**
**वयं हि ते चकृमा भूरि दावने सद्यश्चिन्महि दावने ॥ २५ ॥**

आ । नः । वायो इति । महे । तने । याहि । मखाय । पाजसे ।
वयम् । हि । ते । चकृम । भूरि । दावने । सद्यः । चित् । महि । दावने ॥ २५ ॥

हे ᵛवायो त्वं ᵛनः अस्मान् प्रति ᵛआ ᵛयाहि आगच्छ । किमर्थम् । ᵛमहे महते ᵛतने धनाय ᵛमखाय महनीयाय[5] ᵛपाजसे बलाय च । उभयं प्रदातुमित्यर्थः । किमत्रास्तीति तदुच्यते । ᵛवयं ᵛहि वयं[6] खलु ᵛते ᵛभूरि ᵛदावने प्रभूतधनदात्रे ᵛचकृम स्तुतिं हविर्वा । ᵛसद्यश्चित् तदानीमेव तवागमनानन्तरमेव चकृम ᵛमहि महतो धनस्य ᵛदावने दात्रे ॥ ॥ ५ ॥

**यो अश्वेभिर्वहते वस्त उस्रास्त्रिः सप्त सप्ततीनाम् ।**
**एभिः सोमेभिः सोमसुद्भिः सोमपा दानाय शुक्रपूतपाः ॥ २६ ॥**

यः । अश्वेभिः । वहते । वस्ते । उस्राः । त्रिः । सप्त । सप्ततीनाम् ।
एभिः । सोमेभिः । सोमसुत्ऽभिः । सोमऽपाः । दानाय । शुक्रपूतऽपाः ॥ २६ ॥

---

१. ख-घ-त३-४-न-भ–मथ्नाः । २. ङ-त२-४–धनानि य; त३-न–धनानीय; श–धनान्यानीय । ३. ख-भ१–कानीनस्य । ४. ख-ग-ङ-त१-२-भ–प्रवृद्धं । ५. घ-ङ-त१-२–मंहनीयाय । ६. ग-त३-४-श–'वयं' नास्ति ।

ᵛयः[1] पृथुश्रवाः ᵛअश्वेभिः अश्वैः ᵛवहते गृहं ᵛवस्ते[2] च ᵛउस्राः गाः । ताभिश्च गच्छतीत्यर्थः । त्रिः सप्तेति तासां गवां संख्योक्ता[3] । सा[4] संख्या विशेष्यते । ᵛसप्ततीनां ᵛत्रिः[5] ᵛसप्त । उक्तसंख्याकाभिर्गोभिरश्वैश्च यो गच्छति स पृथुश्रवाः ᵛएभिः ᵛसोमेभिः सोमैः ᵛसोमसुद्भिः सोममभिषुण्वद्भिश्च[5] हे[6] ᵛसोमपाः । सोमस्य पातरिति वायोः संबोधनम् । हे ᵛशुक्रपूतपाः दीप्तपूतस्य च सोमस्य पातर्वायो ᵛदानाय तुभ्यं सोमं दातुं सोमैर्युक्तो भवतीति शेषः ॥

योे म इमं चिदु त्मनामन्दच्चित्रं दावने ।
अरट्वे अक्षे नहुषे सुकृत्वनि सुकृत्तराय सुक्रतुः ॥ २७ ॥

यः । मे । इमम् । चित् । ॐ इति । त्मना । अमन्दत् । चित्रम् । दावने ।
अरट्वे । अक्षे । नहुषे । सुऽकृत्वनि । सुकृत्ऽतराय । सुऽक्रतुः ॥ २७ ॥

ᵛयः पृथुश्रवाः ᵛमे मह्यम् ᵛइमं पुरतो वर्तमानं ᵛचित्रं चायनीयं गवाश्वादिकं ᵛदावने दानाय ᵛत्मना आत्मना स्वबुद्ध्यैव ᵛअमन्दत् अमन्दत अमाद्यत । स च ᵛसुक्रतुः शोभनकर्मा राजा ᵛसुकृत्तराय सुकृतकर्तृत्वाय ᵛअरट्वे ᵛअक्षे ᵛनहुषे ᵛसुकृत्वनि च । एते तस्य राज्ञोऽध्यक्षाः । तेष्वन्वशात् अस्मै गवादिकान् संयोजयतेति । यद्वा । अरट्वादयोऽन्ये राजानः । तेषु मध्ये सुकृत्तरायामन्ददिति ॥

उचथ्ये॒ वपुषि यः स्वराळुत वायो घृतस्नाः ।
अश्वेषितं रजेषितं शुनेषितं प्राज्म तदिदं नु तत् ॥ २८ ॥

उचथ्ये । वपुषि । यः । स्वऽराट् । उत । वायो इति । घृतऽस्नाः ।
अश्वऽइषितम् । रजःऽइषितम् । शुनाऽइषितम् । प्र । अज्म । तत् । इदम् । नु । तत् ॥ २८ ॥

ᵛउचथ्ये[7] वक्तव्ये स्तुत्ये ᵛवपुषि शरीरे ᵛयः ᵛस्वराट् स्वयं राजते । यद्वा । उचथ्यो वपुश्चोभौ राजानौ । तयोरपि यः स्वराट् स्वाराज्यं करोति अतिशयेन वर्तते । हे ᵛवायो यश्च ᵛघृतस्नाः घृतवच्छुद्धः स राजा ᵛअश्वेषितम् अश्वैः प्रापितं ᵛरजेषितम् । रजःशब्देनोष्ट्रो गर्दभो वोच्यते । तेनाप्यानीतं ᵛशुनेषितं च ᵛअज्म अन्नं ᵛप्र अदात् । ᵛतत् अन्नमश्वाद्यानीतम् ᵛइदं पुरतो दृश्यते । ᵛतत् तवैवानुग्रहादित्यर्थः । अथवैकस्तच्छब्दः पूरणः । अश्वाद्यानीतं यदस्ति तदिदं खल्विति ॥

अध प्रियमिषिराय षष्टिं सहस्रासनम् । अश्वानामिन्न वृष्णाम् ॥ २९ ॥

अध । प्रियम् । इषिराय । षष्टिम् । सहस्रा । असनम् । अश्वानाम् । इत् । न । वृष्णाम् ॥ २९ ॥

ᵛअध अधुना ᵛइषिराय धनादिप्रेरयित्रे राज्ञे ᵛप्रियं श्रद्धेयमश्वानामिव[8] ᵛवृष्णां सेक्तॄणां गवां ᵛसहस्रा सहस्राणां ᵛषष्टिं षष्टिसहस्रसंख्याकं प्रियभूतम् ᵛअसनम् अभजम् ॥

गावो न यूथमुप यन्ति वध्रय उप मा यन्ति वध्रयः ॥ ३० ॥

गावः । न । यूथम् । उप । यन्ति । वध्रयः । उप । मा । आ । यन्ति । वध्रयः ॥ ३० ॥

१. ख-त३-४-न-श–'यः' नास्ति । २. ख-घ-ज्ञ-त१-२–वस्ते वसति । ३. ग-त३-४-श–संख्योक्ता च । ४. ख-ग-घ-ज्ञ-न-भ–सा च । ५. ख-त३-न-श–अभिषुण्वद्भिश्च । ६. न-भ–प्रावभिर्हे । ७. घ–उतापि च उचथ्ये । ८. ख-ज्ञ–°मश्वानामित् अश्वानामिव; घ-त१-२–°मश्वानामित् अश्वानामेव ।

गाव्यो न गाव इव ता यथा संगवे यूथमुप यन्ति उपगच्छन्ति तद्वत् वध्रयः छिन्नमुष्का वृषभाः पृथुश्रवसा दत्ताः मा[1] माम् उप यन्ति समीपं प्राप्नुवन्ति । मा मां वध्रयः उपायन्तीति पुनरुक्तिरादरार्था ॥

अध यच्चारथे गणे शतमुष्ट्राँ अचिक्रदत् । अध श्वित्नेषु विंशतिं शता ॥ ३१ ॥

अध । यत् । चारथे । गणे । शतम् । उष्ट्रान् । अचिक्रदत् । अध । श्वित्नेषु । विंशतिम् । शता ॥३१॥

अध अथ यत् यदा चारथे । चरथं चरणं गमनम् । तत्संबन्धिनि चार्यमाणे । वनाय प्रेर्यमाण इत्यर्थः । तादृशे गणे उष्ट्रसंघे उष्ट्रान् शतम् उष्ट्राणां शतम् अचिक्रदत् अस्मभ्यं प्रदानायाजुहाव । अध अपि चास्मदर्थमेव श्वित्नेषु श्वेतवर्णेषु गोयूथेषु विंशतिं च शता[2] शतानि च अथवा शतानां विंशतिमचिक्रदत् ॥

शतं दासे बल्बूथे विप्रस्तरुक्ष आ ददे ।
ते ते वायविमे जना मदन्तीन्द्रगोपा मदन्ति देवगोपाः ॥ ३२ ॥

शतम् । दासे । बल्बूथे । विप्रः । तरुक्षे । आ । ददे ।
ते । ते । वायो इति । इमे । जनाः । मदन्ति । इन्द्रऽगोपाः । मदन्ति । देवऽगोपाः ॥ ३२ ॥

अयं विप्रः मेधावी वशो जनोऽहं बल्बूथे एतन्नामके दासे तरुक्षे गवाश्वादीनां तारके गवाद्यधिकृते राज्ञास्माकं प्रदिष्टधनदातरि आ ददे । किं दानम् । गवाश्वादीनां शतम् । शतशब्दोऽपरिमितवचनः । हे वायो ते तव स्वभूताः ते स्तोतारः इमे जनाः । वयमित्यर्थः । आत्मन एव परोक्षत्वेन वादः । त्वयानुगृहीतत्वात् इन्द्रगोपाः । इन्द्रो गोपायिता येषां ते तथोक्ताः । इन्द्रेण रक्षिताः मदन्ति । तथा देवगोपाः मदन्ति । इन्द्रं देवांश्च[3] राज्ञो[4] लब्धेन धनेन यजन्तो मदन्तीत्यर्थः ॥

अध स्या योषणा मही प्रतीची वशमश्व्यम् । अधिरुक्मा वि नीयते ॥३३॥

अध । स्या । योषणा । मही । प्रतीची । वशम् । अश्व्यम् । अधिऽरुक्मा । वि । नीयते ॥३३॥

अध अधुना स्या सा योषणा योषा राज्ञा प्रदत्ता मही महती पूज्या प्रतीची अस्मदभिमुखी अश्व्यम् अश्वपुत्रं वशं मां प्रति साधिरुक्माभरणा[5] सती वि नीयते । तां कन्यां मां प्रत्यानयन्तीत्यर्थः । अत्र वायव्यास्वृक्षु यत्र वायुर्न स्तूयते परं दानप्रशंसैव तासु सर्वासु हे वायो त्वदनुग्रहादेवमिति योज्यं वायुपरत्वमवगन्तव्यम् ॥ ॥ ६ ॥

'महि वः' इत्यष्टादशर्चं पञ्चमं सूक्तमाप्त्यस्य त्रितस्यार्षम् । षडष्टका महापङ्क्तिश्छन्दः । आद्यास्त्रयोदशर्च आदित्यदेवताकाः । 'यच्च गोषु' इत्याद्याः पञ्चर्च उषोदेवताका आदित्यदेवताकाश्च । तथा चानुक्रमणिका—'महि वो ह्यूना त्रित आप्त्य आदित्येभ्योऽन्त्याः पञ्चोषसेऽपि महापाङ्क्तम्' इति । सूक्तविनियोगो लैङ्गिकः ॥

महि वो महतामवो वरुण मित्र दाशुषे ।
यमादित्या अभि द्रुहो रक्षथा नेमघं नशदनेहसो व ऊतयः सुऊतयो व ऊतयः ॥१॥

---

१. ख-ग-त-न-भ-श–'मा' नास्ति । २. ख-ग-त-न-भ-श–'शता' नास्ति । ३. ख-ग-त-न-भ-श–देवान् । ४. ख-ग-त-न-श–राज्ञा । ५. ग–साधिरुक्मा साभरणा; न-भ–अधिरुक्मा अधिष्ठितरुक्माभरणा ।

महि । वः । महताम् । अवः । वरुण । मित्र । दाशुषे ।
यम् । आदित्याः । अभि । द्रुहः । रक्षथ । न । ईम् । अघम् । नशत् ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १ ॥

हे वरुण हे मित्र । एतद्द्वयमर्यम्णोऽप्युपलक्षणम् । हे वरुणादयः महतां वः युष्माकम् अवः रक्षणं महि महत् । कस्मै । दाशुषे हविर्दात्रे यजमानाय क्रियमाणम् । किंच हे आदित्याः यं यजमानं द्रुहः द्रोग्धुः सकाशात् अभि रक्षथ ईम् एनं यजमानम् अघं पापं न नशत् न प्राप्नोति । कुत एवमिति तत्रोच्यते । वः युष्माकम् ऊतयः रक्षणानि अनेहसः अपापान्यनुपद्रवाणि च । ऊतयः युष्माकं रक्षणानि सुऊतयः शोभनरक्षणानि । पुनरुक्तिरादरार्था ॥

**विदा देवा अघानामादित्यासो अपाकृतिम् ।**
**पक्षा वयो यथोपरि व्य१स्मे शर्म यच्छतानेहसो व ऊतयः सुऊतयो व ऊतयः ॥२॥**

विद । देवाः । अघानाम् । आदित्यासः । अपऽआकृतिम् ।
पक्षा । वयः । यथा । उपरि । वि । अस्मे इति । शर्म । यच्छत ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ २ ॥

हे देवाः आदित्यासः आदित्याः यूयम् अघानां दुःखानाम् अपाकृतिम् अपाकरणं परिहारप्रकारं विद जानीथ । यस्मादेवं तस्मात् वयः पक्षिणः यथा[1] पक्षा पक्षौ[2] उपरि स्वशिशुकानामुपरि कुर्वन्ति सुखाय तद्वत् अस्मे अधि अस्मासु शर्म सुखं यच्छत कुरुत । अधीति सप्तम्यर्थानुवादी । अस्मे अस्माकमुपरीति वा ॥

**व्य१स्मे अधि शर्म तत्पक्षा वयो न यन्तन ।**
**विश्वानि विश्ववेदसो वरूथ्या मनामहेऽनेहसो व ऊतयः सुऊतयो व ऊतयः ॥३॥**

वि । अस्मे इति । अधि । शर्म । तत् । पक्षा । वयः । न । यन्तन ।
विश्वानि । विश्वऽवेदसः । वरूथ्या । मनामहे ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ३ ॥

हे आदित्याः यूयम् अस्मे अधि अस्मासु तत् । युष्मास्वेवासाधारणं यत् शर्म अस्ति तदित्यर्थः । तत्[3] वि यन्तन[3] विशेषेण प्रापयत । हे विश्ववेदसः सर्वधनाः युष्मान् विश्वानि[4] सर्वाणि वरूथ्या । वरूथं गृहम् । तदुचितानि धनानि मनामहे याचामहे ॥

**यस्मा अरासत क्षयं जीवातुं च प्रचेतसः ।**
**मनोर्विश्वस्य घेदिम आदित्या राय ईशतेऽनेहसो व ऊतयः सुऊतयो व ऊतयः ॥४॥**

१. ख-ग-त-न-भ-'यथा' नास्ति । २. ख-त-भ-स्वपक्षौ; न-‐पक्षौ । ३. ख-घ-ज्ञ-त१-२ –तद्वयो न पक्षा पक्षिणः शिशुकानां स्वपक्षो परि ( पक्षोपरि–ज्ञ-त२ ) यथा तथा वि यंतन । ४. ख-त-न-भ१-२-श – विश्वा ।

यस्मै । अरासत । क्षयम् । जीवातुम् । च । प्रऽचैतसः ।
मनोः । विश्वस्य । घ । इत् । इमे । आदित्याः । रायः । ईशते ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ४ ॥

यस्मै मनुष्याय क्षयं निवासं जीवातुं जीवनसाधनमन्नं च प्रचेतसः प्रकृष्टमतयः अरासत प्रयच्छन्ति तस्मै यजमानाय तदर्थम् इमे आदित्याः विश्वस्य घेत् सर्वस्याप्ययष्टुः मनोः[1] मनुष्यस्य धनिकस्य रायः धनस्य ईशते स्वामिनो भवन्त्यपहृत्य यजमानाय प्रदातुम् ॥

**परि णो वृणजन्नघा दुर्गाणि रथ्यो यथा ।**
**स्यामेदिन्द्रस्य शर्मण्यादित्यानामुतावस्यनेहसो व ऊतयः सुऊतयो व ऊतयः॥५॥**

परि । नः । वृणजन् । अघा । दुःऽगानि । रथ्यः । यथा ।
स्याम । इत् । इन्द्रस्य । शर्मणि । आदित्यानाम् । उत । अवसि ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ५ ॥

परि वृणजन् परिवर्जयन्तु नः अस्माकम् अघा अघानि पापानि । तत्र दृष्टान्तः । दुर्गाणि दुर्गमनान् प्रदेशानवटधिष्ण्यादिकान् यथा परिवर्जयन्ति तद्वत् । इन्द्रस्य शर्मणि स्याम भवेम वयम् । उत अपि च आदित्यानाम् अवसि रक्षणे च स्याम ॥ ॥ ७ ॥

**परिह्वृतेदुना जनो युष्मादत्तस्य वायति ।**
**देवा अदभ्रमाश वो यमादित्या अहेतनानेहसो व ऊतयः सुऊतयो व ऊतयः॥६॥**

परिऽह्वृता । इत् । अना । जनः । युष्माऽदत्तस्य । वायति । देवाः । अदभ्रम् । आश । वः ।
यम् । आदित्याः । अहेतन । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ६ ॥

परिह्वृतेत्[2] परिपीडितेनैव तपोनियमादिना अना प्राणयुक्तः जनः युष्मादत्तस्य युष्माभिर्दत्तं धनम् । कर्मणि षष्ठी । वायति गच्छति । हे देवाः हे आशवः शीघ्रगमनाः[3] यूयं यं यजमानम् अहेतन प्राप्नुथः स[4] जनः[5] अदभ्रम् अनल्पं धनं वायति प्राप्नोतीति संबन्धः ॥

**न तं तिग्मं चन त्यजो न द्रासदभि तं गुरु ।**
**यस्मा उ शर्म सप्रथ आदित्यासो अराध्वमनेहसो व ऊतयः सुऊतयो व ऊतयः॥७॥**

न । तम् । तिग्मम् । चन । त्यजः । न । द्रासत् । अभि । तम् । गुरु । यस्मै । ऊँ इति । शर्म ।
सऽप्रथः । आदित्यासः । अराध्वम् । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥७॥

तं मनुष्यं तिग्मं चन तीक्ष्णमेव सन्तं त्यजः । क्रोधनामैतत् । अत्र क्रोधात् प्रयुज्यमानमायुधमुच्यते । न द्रासत् । 'द्रा कुत्सायां गतौ' । कुत्सितं नागच्छति[1] । न हिनस्तीत्यर्थः । तथा तं जनं गुरु प्रवृद्धमपरिहारार्हं दुःखं न द्रासत् न गच्छति । हे आदित्यासः आदित्याः सप्रथः

१. ग-त-न-भ-श-' मनोः ' नास्ति । २. त-न-भ-श-परिह्वृतादित् । ३. घ-शीघ्रगमना आदित्या; ४. ख-त-न- स धनः; श-यजमानः । ५. न-श- गच्छति ।

समानप्रथनाः सर्वतः पृथुभूता वा यूयं ᵛयस्मा ᵛउ यस्मै यजमानाय । उशब्दः पूरणः । ᵛशर्म सुखम् ᵛअराध्वम् अदत्त तं[१] न[१] द्रासदिति ॥

युष्मे देवा अपि ष्मसि युध्यन्तइव वर्मसु ।
यूयं महो न एनसो यूयमर्भादुरुष्यतानेहसो व ऊतयः सुऊतयो व ऊतयः ॥८॥

युष्मे इति । देवाः । अपि । स्मसि । युध्यन्तःऽइव । वर्मऽसु ।
यूयम् । महः । नः । एनसः । यूयम् । अर्भात् । उरुष्यत ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ८ ॥

हे ᵛदेवाः आदित्याः ᵛयुष्मे युष्मासु वयम् ᵛअपि ᵛस्मसि अपि भवेम । युष्माभिरपिहिताः स्मेत्यर्थः । तत्र दृष्टान्तः । ᵛयुध्यन्तः शूराः ᵛवर्मसु कवचेषु यथा भवन्ति तद्वत् । ᵛयूयं ᵛनः अस्मान् ᵛमहः महतः ᵛएनसः पापात्[२] ᵛउरुष्यत रक्षत । तथा ᵛयूयम् अस्मान् ᵛअर्भात् अल्पादप्येनसः उरुष्यत ॥

अदितिर्न उरुष्यत्वदितिः शर्म यच्छतु ।
माता मित्रस्य रेवतोऽर्यम्णो वरुणस्य चानेहसो व ऊतयः सुऊतयो व ऊतयः ॥९॥

अदितिः । नः । उरुष्यतु । अदितिः । शर्म । यच्छतु ।
माता । मित्रस्य । रेवतः । अर्यम्णः । वरुणस्य । च ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ९ ॥

ᵛनः अस्मान् ᵛअदितिः अखण्डनीया देवमाता ᵛउरुष्यतु रक्षतु । तथा ᵛअदितिः ᵛशर्म सुखं ᵛयच्छतु । अदितिर्विशेष्यते । या ᵛमाता निर्मात्री । कस्य । ᵛमित्रस्य ᵛरेवतः धनवतः ᵛअर्यम्णः ᵛवरुणस्य ᵛच । सा न उरुष्यत्विति ॥

यद्देवाः शर्म शरणं यद्भद्रं यदनातुरम् ।
त्रिधातु यद्वरूथ्यं[१] तदस्मासु वि यन्तनानेहसो व ऊतयः सुऊतयो व ऊतयः ॥१०॥

यत् । देवाः । शर्म । शरणम् । यत् । भद्रम् । यत् । अनातुरम् ।
त्रिऽधातु । यत् । वरूथ्यम् । तत् । अस्मासु । वि । यन्तन ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १० ॥

हे ᵛदेवाः आदित्याः ᵛयत् ᵛशर्म सुखं ᵛशरणं शरणीयम् । ᵛयत् ᵛभद्रं सर्वैर्भजनीयम् । ᵛयत् ᵛअनातुरं रोगरहितम् । यत् ᵛत्रिधातु त्रिगुणम् । ᵛयद्वरूथ्यम् । वरूथं गृहम् । तदर्हम् । ᵛतत् उक्तगुणकं शर्म ᵛअस्मासु ᵛवि ᵛयन्तन वियच्छत ॥　　॥ ८ ॥

आदित्या अव हि ख्यताधि कूलादिव स्पशः ।
सुतीर्थमर्वतो यथानु नो नेषथा सुगमनेहसो व ऊतयः सुऊतयो व ऊतयः ॥११॥

---

१. त-न—तन; भ—नत; श—तेन । २. त-श—पापं; न-भ१-२— पाप ।

आदित्याः । अव । हि । ख्यत । अधि । कूलात्ऽइव । स्पशः ।
सुऽतीर्थम् । अर्वतः । यथा । अनु । नः । नेषथ । सुऽगम् ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ११ ॥

हे ᵛआदित्याः यूयम् ᵛअव ᵛहि ᵛख्यत अव हि पश्यताधस्तात्स्थितानस्मान् । तत्र दृष्टान्तः । ᵛकूलात् ᵛअधि कूले ᵛस्पशः स्पष्टाः । स्थिता इत्यर्थः । यथा कूलस्थः पुरुषोऽधोगतमुदकं जिज्ञासुस्तत्रस्थं मनुष्यं वा विलोकयितुमवाक्पश्यति तद्वत् । तथा कृत्वा ᵛसुतीर्थं शोभनावतारप्रदेशम्[1] ᵛअर्वतः अश्वान् ᵛयथा प्रापयन्त्यश्वरक्षकास्तद्वत् ᵛनः अस्मान् ᵛसुगं सुपन्थानम् ᵛअनु ᵛनेषथ अनुनयथ[2] ॥

**नेह भद्रं रक्षस्विने नावयै नोपया उत ।**
**गवे च भद्रं धेनवे वीराय च श्रवस्यतेऽनेहसो व ऊतयः सुऊतयो व ऊतयः ॥ १२ ॥**

न । इह । भद्रम् । रक्षस्विने । न । अवऽयै । न । उपऽयै । उत ।
गवे । च । भद्रम् । धेनवे । वीराय । च । श्रवस्यते ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १२ ॥

हे आदित्याः ᵛइह भूमौ ᵛभद्रं कल्याणं सुखं ᵛरक्षस्विने । रक्षो बलम् । बलवतेऽस्मद्द्वेष्ट्रे ᵛन भवत्विति शेषः । ᵛअवयै अस्मान् हिंसितुमवगच्छते ᵛन भवतु भद्रम् । तथा ᵛउपयै उपगच्छते ᵛन भवतु । तर्हि कस्य भवत्वित्युच्यते । ᵛगवे ᵛच ᵛभद्रं युष्मदीयं[3] भवतु । चशब्दो वक्ष्यमाणधेन्वाद्यपेक्षः । किंच ᵛधेनवे नवप्रसूतिकायै भद्रं भवतु । ᵛवीराय अस्मत्पुत्रादिकाय भद्रं भवतु । कीदृशाय वीराय । ᵛश्रवस्यते अन्नमिच्छते । अथवोत्तरार्धेऽपि नेत्यनुवर्तते । अस्मद्विरोधिनो गवादिकाय भद्रं न भवत्विति तस्यार्थः ॥

**यदाविर्यदपीच्यं देवासो अस्ति दुष्कृतम् ।**
**त्रिते तद्विश्वमाप्त्य आरे अस्मद्दधातनानेहसो व ऊतयः सुऊतयो व ऊतयः ॥ १३ ॥**

यत् । आविः । यत् । अपीच्यम् । देवासः । अस्ति । दुःऽकृतम् ।
त्रिते । तत् । विश्वम् । आप्त्ये । आरे । अस्मत् । दधातन ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १३ ॥

हे ᵛदेवासः देवा आदित्याः ᵛयदाविः यत् पापमाविर्भूतम् ᵛअस्ति । ᵛदुष्कृतं ᵛयत् च ᵛअपीच्यम् अन्तर्हितमस्ति । 'अपीच्यम्' इत्यन्तर्हितनाम । ᵛतद्विश्वं तदुभयम् ᵛआप्त्ये ᵛत्रिते मयि मा भूत् । किंतु ᵛअस्मत् ᵛआरे दूरे ᵛदधातन स्थापयत ॥

'यश्च गोषु' इत्यादिसूक्तशेषेण दुःस्वप्नं दृष्ट्वादित्यमुपतिष्ठेत । तथा च 'स्वप्नममनोज्ञं दृष्ट्वा' इत्युपक्रम्य 'यश्च गोषु दुष्ष्वप्न्यमिति पञ्चभिरादित्यमुपतिष्ठेत' (आश्व. गृ. ३. ६. ६) इति सूत्रितम् ॥

---

१. ख-त-भ-श-शोभनावतर°; घ-शोभन° । २. ख-त-भ-अनुनयथ आनुकूल्येन प्रापयथ । ३. घ-अस्मदीयं ।

**यच्च गोषु दुष्ष्वप्न्यं यच्चास्मे दुहितर्दिवः।**
**त्रिताय तद्विभावर्याप्त्याय परा वहानेहसो व ऊतयः सुऊतयो व ऊतयः ॥१४॥**

यत्। च। गोषु। दुःऽस्वप्न्यम्। यत्। च। अस्मे इति। दुहितः। दिवः।
त्रिताय। तत्। विभाऽवरि। आप्त्याय। परा। वह।
अनेहसः। वः। ऊतयः। सुऽऊतयः। वः। ऊतयः। ॥ १४ ॥

हे ^v^दिवः ^v^दुहितः उषः उषोदेवते ^v^यच्च ^v^गोषु अस्मदीयासु ^v^दुष्ष्वप्न्यम् अनर्थसूचकं दृष्टम्। स्वार्थिको यत्। किंच ^v^यच्च दुष्ष्वप्न्यम् ^v^अस्मे अस्मासु दृष्टम्। गोपीडानिमित्तकमस्माकं पीडानिमित्तकं च यद्दुःस्वप्नं[1] पश्याम इत्यर्थः। ^v^तत् सर्वं हे ^v^विभावरि। उषोनामैतत्। हे व्युच्छनवति देवि ^v^आप्त्याय ^v^त्रिताय ^v^परा ^v^वह दूरे परिहर ॥

**निष्कं वा घा कृणवते स्रजं वा दुहितर्दिवः।**
**त्रिते दुष्ष्वप्न्यं सर्वमाप्त्ये परि दद्मस्यनेहसो व ऊतयः सुऊतयो व ऊतयः॥१५॥**

निष्कम्। वा। घ। कृणवते। स्रजम्। वा। दुहितः। दिवः।
त्रिते। दुःऽस्वप्न्यम्। सर्वम्। आप्त्ये। परि। दद्मसि।
अनेहसः। वः। ऊतयः। सुऽऊतयः। वः। ऊतयः ॥ १५ ॥

हे ^v^दिवः ^v^दुहितः उषः ^v^निष्कं ^v^वा ^v^घ आभरणविशेषं वा ^v^कृणवते कुर्वते स्वर्णकाराय यत् ^v^दुष्ष्वप्न्यं दृष्टम्। स्वर्णकारेण निर्माणसमये दृष्टमित्यर्थः। घेति पूरणः। वाशब्दश्चार्थे। ^v^वा अथवा ^v^स्रजं माल्यं कृणवते। कुर्वाण इत्यर्थः। तस्मिन्नपि मालाकारे मालानिर्माणसमये यद्दुष्ष्वप्न्यं दृष्टं तदुभयविषयं दुःस्वप्नम् ^v^आप्त्ये अपां पुत्रे ^v^त्रिते वर्तमानं ^v^परि[2] ^v^दद्मसि उपरि[2] दद्मः। वयं त्रिताः परित्यजामेत्यर्थः। अथवा। त्रिते मयि यत् दुष्ष्वप्न्यं दृष्टं तत् स्वर्णकाराय मालाकाराय वा परि दद्मसि। अस्मत्तोऽपि निष्कृष्य[3] तयोरुपरि[3] स्थापयामः॥ ॥ ९ ॥

**तदन्नाय तदपसे तं भागमुपसेदुषे।**
**त्रिताय च द्विताय चोषो दुष्ष्वप्न्यं वहानेहसो व ऊतयः सुऊतयो व ऊतयः॥१६॥**

तत्ऽअन्नाय। तत्ऽअपसे। तम्। भागम्। उपऽसेदुषे।
त्रिताय। च। द्विताय। च। उषः। दुःऽस्वप्न्यम्। वह।
अनेहसः। वः। ऊतयः। सुऽऊतयः। वः। ऊतयः ॥ १६ ॥

^v^तदन्नाय। यदेव जागरावस्थायां भोज्यत्वेन प्रसिद्धं मधुपायसादि स्वप्नेऽपि तदेवान्नं यस्य सः। तादृशाय। प्रत्यक्षभोजनवत् स्वप्नेऽपि भोक्त्र इत्यर्थः। तथा ^v^तदपसे। यदेवापः कर्म निन्दितं जाग्रदवस्थायां क्रियते तदेव कर्म स्वप्ने यस्य स तत्कर्मा। तादृशाय देवाय[4] ^v^तं ^v^भागं दुःस्वप्न-

१. ख-ग-भ१-३—दुःस्वप्नं; त-न-भ२—दुःष्वप्नं; श—दुःष्वप्न्यं। २. ख-त-भ—परिदद्मसुपरि; घ-न-श—परिदद्मसि परि। ३. ग—निष्कृष्यो°; त२-३-श—निष्कृष्टतयो°; न—निष्कृष्यंदतयो°। ४. ख-घ-त-भ—देवाह; न—तदेवाह।

स्यांशम् ᵛउपसेदुषे प्राप्नुवते ᵛत्रिताय ᵛद्विताय ᵛच हे ᵛउषः देवि ᵛदुष्ष्वप्न्यम् अन्नकर्मविषयं ᵛवह अन्यत्र प्रापय । स्वप्ने दृष्टं मधुभोजनादिकं जाग्रदवस्थानुभूतवत् सुखकरं भवत्वित्यर्थः ॥

यथा॑ क॒लां यथा॑ श॒फं यथ॑ ऋ॒णं सं॒नया॑मसि ।
ए॒वा दु॒ष्ष्वप्न्यं॒ सर्व॑मा॒प्त्ये सं न॑यामस्यने॒हसो॑ व ऊ॒तयः॑ सु॒ऊ॒तयो॑ व ऊ॒तयः॑॥१७॥

यथा॑ । क॒लाम् । यथा॑ । श॒फम् । यथा॑ । ऋ॒णम् । स॒म्ऽनया॑मसि ।
ए॒व । दुः॒ऽस्वप्न्य॑म् । सर्व॑म् । आ॒प्त्ये । सम् । न॒या॒म॒सि ।
अ॒ने॒हसः॑ । वः॒ । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । वः॒ । ऊ॒तयः॑ ॥ १७ ॥

संज्ञपितं पशुं दानार्थं संस्कुर्वन्तः[1] ᵛयथा येन प्रकारेण ᵛकलां ᵛशफम् इति संदायान्यत्र संनयन्ति । अथापरो यथाशब्दः पूरणः । अथवा । यथा कलां हृदयाद्यवयवमवदानार्हं संनयन्ति यथा च शफं शफोपलक्षितमनवदानार्हं शफास्थ्यादिकं संनयन्ति । ᵛयथा वा ᵛऋणं शनैः संनयन्ति ᵛएव एवं ᵛदुष्ष्वप्न्यं ᵛसर्वमाप्त्ये वर्तमानं ᵛसं ᵛनयामसि संनयामः अपसारयामः ॥

अजै॑ष्मा॒द्यास॑नाम॒ चाभू॒माना॑गसो व॒यम् ।
उषो॒ यस्मा॑द्दु॒ष्ष्वप्न्या॒दभै॒ष्माप॒ तदु॒च्छत्वने॒हसो॑ व ऊ॒तयः॑ सु॒ऊ॒तयो॑ व ऊ॒तयः॑॥१८॥

अजै॑ष्म । अ॒द्य । अस॑नाम । च॒ । अभू॑म । अना॑गसः । व॒यम् ।
उष॑: । यस्मा॑त् । दुः॒ऽस्वप्न्या॑त् । अभै॑ष्म । अप॑ । तत् । उ॒च्छ॒तु॒ ।
अ॒ने॒हसः॑ । वः॒ । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । वः॒ । ऊ॒तयः॑ ॥ १८ ॥

ᵛवयं त्रिताः ᵛअद्य ᵛअजैष्म जयेम । ᵛअसनाम ᵛच[2] संभजेम च सुस्वप्नं सुखं वा । ᵛअनागसः अपापाः ᵛअभूम भवेम । हे ᵛउषः ᵛयस्मात् ᵛदुष्ष्वप्न्यात् ᵛअभैष्म भीताः स्म ᵛतत् पापम् ᵛअप ᵛउच्छतु अपगच्छतु[3] ॥ ॥ १० ॥

'स्वादोरभक्षि' इति पञ्चदशर्चं षष्ठं सूक्तं काण्वस्य प्रगाथस्यार्षं सोमदेवताकं त्रैष्टुभम् । पञ्चमी जगती । सोमो देवता । तथा चानुक्रान्तं—'स्वादोः पञ्चोना प्रगाथः सौम्यं त्रैष्टुभं पञ्चमी जगती' इति । सूक्तविनियोगो लैङ्गिकः ॥

स्वा॒दोर॑भक्षि॒ वय॑सः सुमे॒धाः स्वा॒ध्यो॑ वरिवो॒वित्त॑रस्य ।
विश्वे॒ यं दे॒वा उ॒त मर्त्या॑सो॒ मधु॑ ब्रु॒वन्तो॑ अ॒भि सं॒चर॑न्ति ॥ १ ॥

स्वा॒दोः । अ॒भ॒क्षि॒ । वय॑सः । सु॒ऽमे॒धाः । सु॒ऽआ॒ध्यः॑ । व॒रि॒वो॒वि॒त्ऽत॑रस्य ।
विश्वे॑ । यम् । दे॒वाः । उ॒त । मर्त्या॑सः । मधु॑ । ब्रु॒वन्तः॑ । अ॒भि । स॒म्ऽचर॑न्ति ॥ १ ॥

अहं प्रगाथः ᵛसुमेधाः शोभनप्रज्ञः ᵛस्वाध्यः स्वाध्ययनः सुकर्मा ᵛवरिवोवित्तरस्य अतिशयेन पूजां लभमानस्य ᵛस्वादोः सुष्ठ्वदनीयस्य स्वादुभूतस्य ᵛवयसः अन्नस्य । एताः कर्मणि षष्ठ्यः ।

---

१. ख-त—संस्तुवंतो; ग—स्तुवंतो; न—संस्तुर्वतो । २. ख-ग-त-न-श—'च' नास्ति । ३. ख-ग-त-न-भ-श—अपागच्छतु ।

उक्तलक्षणं वयोऽन्नं सोमाख्यम् ᵛअभक्षि भक्षयेय। ᵛयं यदन्नं ᵛविश्वे ᵛदेवाः सर्वेऽपीन्द्रादयः ᵛउत अपि च ᵛमर्त्यासः मर्त्या मनुष्याः ᵛमधु ᵛब्रुवन्तः मनोहरमेतदिति शब्दायन्तः[1] ᵛअभि ᵛसंचरन्ति अभिसंगच्छन्ते प्राप्नुवन्ति तदन्नमभक्षीति ॥

अग्नीषोमप्रणयने 'अन्तश्च' इत्येषा। तथा च सूत्रितम्—'अन्तश्च प्रागा अदितिर्भवासि श्येनो न योनिं सदनं धिया कृतम्' (आश्व. श्रौ. ४. १०) इति ॥

**अन्तश्च प्रागा अदितिर्भवास्यवयाता हरसो दैव्यस्य।**
**इन्दविन्द्रस्य सख्यं जुषाणः श्रौष्टीव धुरमनु राय ऋध्याः ॥ २ ॥**

अन्तरिति। च। प्र। अगाः। अदितिः। भवासि। अवऽयाता। हरसः। दैव्यस्य।
इन्दो इति। इन्द्रस्य। सख्यम्। जुषाणः। श्रौष्टीऽइव। धुरम्। अनु। राये। ऋध्याः ॥२॥

हे सोम त्वम् ᵛअन्तश्च ᵛप्रागाः। हृदयस्य यागागारस्य वान्तर्गच्छसि। गत्वा च ᵛअदितिः अदीनस्त्वं[2] ᵛदैव्यस्य ᵛहरसः क्रोधस्य ᵛअवयाता पृथक्कर्ता ᵛभवासि भवसि। हर इति क्रोधनाम। हे ᵛइन्दो सोम त्वम् ᵛइन्द्रस्य ᵛसख्यं ᵛजुषाणः सेवमानः ᵛश्रौष्टी। श्रुष्टीति क्षिप्रनाम। तत्संबन्धी श्रौष्टी। क्षिप्रगाम्यश्वः ᵛधुरम् ᵛइव ᵛराये अस्माकं धनलाभाय ᵛअनु ᵛऋध्याः अनुगच्छसि। अथवाश्वो यथा धुरं वृत्वाभिमतदेशं[3] प्रापयति तद्वदस्मान् प्रापय[4]। अनुपूर्व ऋधिर्गत्यर्थः ॥

'अपाम सोमम्' इत्यादिके द्वे सोमपानोत्तरकालीनास्याभिमर्शने हृदयाभिमर्शने च क्रमेण विनियुक्ते। तथा च सूत्रितम्—'अपाम सोमममृता अभूम शं नो भव हृद आ पीत इन्दविति मुखहृदये अभिमृशेरन्' (आश्व. श्रौ ५. ६) इति ॥

**अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान्।**
**किं नूनमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य ॥ ३ ॥**

अपाम। सोमम्। अमृताः। अभूम। अगन्म। ज्योतिः। अविदाम। देवान्।
किम्। नूनम्। अस्मान्। कृणवत्। अरातिः। किम्। ऊँ इति। धूर्तिः। अमृत। मर्त्यस्य ॥ ३॥

हे ᵛअमृत[5] अमरण सोम त्वाम् ᵛअपाम पानं करवाम। कुर्मः। ततः ᵛअमृताः ᵛअभूम भवेम। यस्मात्त्वममृतः अतस्तव पानाद्वयमप्यमृताः स्याम। पश्चात् ᵛज्योतिः द्योतमानं स्वर्गम् ᵛअगन्म। ᵛअविदाम ज्ञातवन्तः ᵛदेवान्। तथाभूतान्[6] ᵛअस्मान् ᵛनूनम् इदानीम् ᵛअरातिः शत्रुः ᵛकिं ᵛकृणवत् कुर्यात्। ᵛकिमु किं वा[7] ᵛमर्त्यस्य इदानीं मनुष्यभूतस्य मम ᵛधूर्तिः हिंसकः किं कृणवत् कुर्यात् ॥

**शं नो भव हृद आ पीत इन्दो पितेव सोम सूनवे सुशेवः।**
**सखेव सख्य उरुशंस धीरः प्र ण आयुर्जीवसे सोम तारीः ॥ ४ ॥**

शम्। नः। भव। हृदे। आ। पीतः। इन्दो इति। पिताऽइव। सोम। सूनवे। सुऽशेवः।
सखाऽइव। सख्ये। उरुऽशंस। धीरः। प्र। नः। आयुः। जीवसे। सोम। तारीः ॥ ४ ॥

१. ग–शब्दयन्तः। २. ख-ग-त-न-भ-श–त्वं। ३. ग-भ–धृत्वा°। ४. ख–त–न–भ१-२–प्रय; ग–नय; श–राय। ५. ख–त१-२–अमृत अविद। ६. ख-ग-त-न-भ-श–अयं तथाभूतान्। ७. त३–न भ२–चा; श–च।

हे इन्दो सोम अस्माभिः[1] पीतः त्वं[1] नः अस्माकं हृदे हृदयाय शं सुखम् आ भव। सुखभवने दृष्टान्तद्वयम्। पिता[2] सूनवे स्वात्मजाय यथा सुखाय भवति यथा वा सखा अहिताग्निवर्त्यं हिते स्थापयिता सखा स स्वसख्ये यथा सुशेवः सुसुखो भवति। शेवमिति सुखनाम। तद्वत्त्वमपि भव। किंच हे उरुशंस बहुभिर्बहुधा वा शंसनीय बहुकीर्ते सोम धीरः धीमांस्त्वं नः अस्माकं जीवसे जीवनाय आयुः आयुष्यं प्र तारीः प्रवर्धय[3] ॥

इमे मा पीता यशस उरुष्यवो रथं न गावः समनाह पर्वसु।
ते मा रक्षन्तु विस्रसश्चरित्रादुत मा स्रामाद्यवयन्त्विन्दवः ॥ ५ ॥

इमे। मा। पीताः। यशसः। उरुष्यवः। रथम्। न। गावः। सम्। अनाह। पर्वऽसु।
ते। मा। रक्षन्तु। विऽस्रसः। चरित्रात्। उत। मा। स्रामात्। यवयन्तु। इन्दवः ॥ ५ ॥

इमे पीताः यशसः यशस्कराः उरुष्यवः अस्माकं रक्षाकामाः सोमाः गावः गोविकारभूता वध्र्यः रथं न रथमिव ता[4] यथा रथं विस्रस्तं पर्वसु समनाह[5] संदधते तद्वत् मां पीताः सोमाः पर्वसु संनह्यन्तु। किंच ते सोमाः मा मां विस्रसः विस्रस्तात् चरित्रात् चरणादनुष्ठानात् रक्षन्तु। सोमः पीतश्चेत् कर्म ह्यविस्रस्तं भवति। उत अपि च मा मां स्रामात् व्याधेः सकाशात् इन्दवः पीताः यवयन्तु पृथक्कुर्वन्तु ॥ ॥ ११ ॥

अग्निं न मा मथितं सं दिदीपः प्र चक्षय कृणुहि वस्यसो नः।
अथा हि ते मद आ सोम मन्ये रेवाँइव प्र चरा पुष्टिमच्छ ॥ ६ ॥

अग्निम्। न। मा। मथितम्। सम्। दिदीपः। प्र। चक्षय। कृणुहि। वस्यसः। नः।
अथ। हि। ते। मदे। आ। सोम। मन्ये। रेवान्ऽइव। प्र। चर। पुष्टिम्। अच्छ ॥ ६ ॥

हे सोम पीतस्त्वं मा मां मथितम् अग्निं न अग्निमिव सं दिदीपः संदीपय। प्र चक्षय च चक्षुषः संधुक्षणेन। नः अस्मान् वस्यसः अतिशयेन वसुमतः कृणुहि कुरु। अथ अधुना हि खलु ते त्वां हे सोम मदे[6] मदाय[6] मन्ये स्तौमि। तथा सति रेवानिव धनवानिह। इवेति संप्रत्यर्थे। पुष्टिम् अस्मत्पोषम् अच्छ प्र चर अभिगच्छ ॥

इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः।
सोम राजन्प्र ण आयूंषि तारीरहानीव सूर्यो वासराणि ॥ ७ ॥

इषिरेण। ते। मनसा। सुतस्य। भक्षीमहि। पित्र्यस्यऽइव। रायः।
सोम। राजन्। प्र। नः। आयूंषि। तारीः। अहानिऽइव। सूर्यः। वासराणि ॥ ७ ॥

इषिरेण इच्छावता मनसा सुतस्य ते सुतमभिषुतं त्वां भक्षीमहि। पित्र्यस्य पितृसंबन्धिनो[7] धनस्येव धनमिव। पित्र्यं धनं यथैषणेन मनसोपभुञ्जते तद्वत्। भक्षित हे सोम राजन् स्वामिन् नः अस्माकम् आयूंषि प्र तारीः प्रवर्धय। वासराणि जगद्वासकानि

१. ख-ग-त-न-भ-श-'अस्माभिः...त्वं' नास्ति। २. घ-पितेव। ३. ग-प्रावर्धयः; घ-ज्ञ-त१-२-न-श-प्रवर्धयः। ४. ख-ग-त-न-भ-श-ते। ५. ख-ग-त-न-भ-श-'समनाह' नास्ति। ६. ख-ग-त-न-भ-श-'मदे मदाय' नास्ति। ७. घ-°संबंधिनो रायः।

ᵛअहानि ᵛसूर्यः ᵛइव[1]। अत्र 'ईषणेन[2] वैषणेन वार्षणेन वा' (निरु. ४.७) इत्यादि निरुक्तं ज्ञातव्यम् ॥

सोम राजन्मृळया नः स्वस्ति तव स्मसि व्रत्या३स्तस्य विद्धि ।
अलर्ति दक्ष उत मन्युरिन्दो मा नो अर्यो अनुकामं परा दाः ॥ ८ ॥

सोम । राजन् । मृळय । नः । स्वस्ति । तव । स्मसि । व्रत्याः । तस्य । विद्धि ।
अलर्ति । दक्षः । उत । मन्युः । इन्दो इति । मा । नः । अर्यः । अनुऽकामम् । परा । दाः ॥८॥

हे ᵛसोम ᵛराजन् ᵛनः अस्मान् ᵛस्वस्ति अविनाशाय ᵛमृळय सुखय च । ᵛव्रत्याः व्रतिनो वयं ᵛतव ᵛस्मसि स्वभूताः स्मः । ᵛतस्य तं स्वकीयं तव ᵛविद्धि जानीहि । अथवा तव त्वमित्यर्थः । त्वं जानीहि । किंच हे ᵛइन्दो ᵛदक्षः प्रवृद्धोऽस्मच्छत्रुः ᵛअलर्ति गच्छति । ᵛउत अपि च ᵛमन्युः क्रोधः क्रुद्धो वा अलर्ति । तादृशस्योभयविधस्य ᵛअर्यः अरेः ᵛअनुकामं यथाकामं ᵛनः अस्मान् ᵛमा ᵛपरा ᵛदाः परादेहि ॥

त्वं हि नस्तन्वः सोम गोपा गात्रेगात्रे निषसत्था नृचक्षाः ।
यत्ते वयं प्रमिनाम व्रतानि स नो मृळ सुषखा देव वस्यः ॥ ९ ॥

त्वम् । हि । नः । तन्वः । सोम । गोपाः । गात्रेऽगात्रे । निऽससत्थ । नृऽचक्षाः ।
यत् । ते । वयम् । प्रऽमिनाम । व्रतानि । सः । नः । मृळ । सुऽसखा । देव । वस्यः ॥ ९ ॥

हे ᵛसोम देव ᵛत्वं ᵛनः अस्माकं ᵛतन्वः तनोरङ्गस्य ᵛगोपाः ᵛहि रक्षिता खलु । अतः ᵛगात्रेगात्रे सर्वेष्वङ्गेषु ᵛनृचक्षाः नृणां कर्मनेतॄणां द्रष्टा त्वं ᵛनिषसत्थ निषीदसि । ᵛयत् यद्यपि ᵛते तव ᵛव्रतानि कर्माणि ᵛवयं ᵛप्रमिनाम हिंस्मः तथापि हे ᵛदेव ᵛसः त्वं ᵛवस्यः श्रेष्ठान् ᵛनः अस्मान् ᵛसुषखा शोभनसखा सन् ᵛमृळ सुखय ॥

ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः ।
अयं यः सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यायुः ॥ १० ॥

ऋदूदरेण । सख्या । सचेय । यः । मा । न । रिष्येत् । हरिऽअश्व । पीतः ।
अयम् । यः । सोमः । नि । अधायि । अस्मे इति । तस्मै । इन्द्रम् । प्रऽतिरम् । एमि । आयुः ॥१०॥

अर्हं प्रगाथः ᵛऋदूदरेण उदराबाधकेन सोमेन ᵛसख्या ᵛसचेय संगच्छेय । संगतो भवामि । 'ऋदूदरः सोमो मृदूदरः' (निरु. ६.४) इति यास्कः । ᵛयः सोमः ᵛपीतः सन् ᵛमा मां ᵛन ᵛरिष्येत् न हिंस्येत्[3] हे ᵛहर्यश्व इन्द्र । सौम्ये सूक्त इन्द्रस्य कीर्तनं सोमस्येन्द्रस्वामिकत्वान्न विरुद्धम् । ᵛयः ᵛअयं ᵛसोमः ᵛअस्मे अस्मासु ᵛन्यधायि निहितोऽभूत् ᵛतस्मै सोमाय ᵛप्रतिरम् ᵛआयुः जठरे चिरकालावस्थानम् ᵛइन्द्रम् ᵛएमि याचे ॥ ॥ १२ ॥

अप त्या अस्थुरनिरा अमीवा निरत्रसन्तमिषीचीरभैषुः ।
आ सोमो अस्माँ अरुहद्विहाया अगन्म यत्र प्रतिरन्त आयुः ॥ ११ ॥

---

१. घ–इव स यथा वर्षणेन प्रवर्धयति तद्वत् । २. ख–त–न–भ–श–एषणेन । ३. भ२–हिंसेत्; भ३–हिंसत् ।

अप॑ । त्याः । अस्थुः । अनि॑राः । अमी॑वाः । निः । अत्रसन् । तमि॑षीचीः । अभै॑षुः ।
आ । सोम॑ः । अस्मान् । अरुहत् । विऽहा॑याः । अग॑न्म । यत्र॑ । प्रऽति॒रन्ते॑ । आयुः॑ ॥ ११ ॥

ᐯत्याः ताः ᐯअनिराः प्रेरयितुमशक्याः ᐯअमीवाः बलवत्यः पीडाः[1] ᐯअप ᐯअस्थुः अपगच्छन्तु । याः ᐯतमिषीचीः बलवत्योऽस्मान् ᐯनिः नितराम् ᐯअत्रसन् प्राप्नुवन् कम्पयन्ति तथा ᐯअभैषुः । अपगमे[2] कारणमाह । यस्मात् ᐯसोमः ᐯविहायाः महान् सन् ᐯअस्मान् ᐯआ ᐯअरुहत् आगमत् प्राप्तवान् अतोऽपास्थुरिति भावः । ᐯयत्र यस्मिन् सोमे पीते ᐯआयुः आयुष्यं ᐯप्रतिरन्ते वर्धयन्ति मनुष्यास्तं सोमम् ᐯअगन्म इति ॥

यो न॒ इन्दुः॑ पितरो हृ॒त्सु पी॒तोऽम॑र्त्यो॒ मर्त्याँ॑ आवि॒वेश॑ ।
तस्मै॒ सोमा॑य ह॒विषा॑ विधेम मृळी॒के अ॑स्य सुम॒तौ स्या॑म ॥ १२ ॥

यः । नः॒ । इन्दुः॑ । पि॒तरः॑ । हृ॒त्ऽसु । पी॒तः । अम॑र्त्यः । मर्त्या॑न् । आ॒ऽवि॒वेश॑ ।
तस्मै॑ । सोमा॑य । ह॒विषा॑ । वि॒धेम॒ । मृ॒ळी॒के । अ॒स्य॒ । सु॒ऽम॒तौ । स्या॒म॒ ॥ १२ ॥

हे ᐯपितरः ᐯयः ᐯइन्दुः ᐯहृत्सु ᐯपीतः सन् ᐯअमर्त्यः मृतिरहितः सन् ᐯआविवेश ᐯमर्त्यान्[3] ᐯनः अस्मान् ᐯतस्मै ᐯसोमाय ᐯहविषा ᐯविधेम परिचरेम । ᐯअस्य सोमस्य ᐯमृळीके सुखे ᐯसुमतौ चानुग्रहबुद्धौ च ᐯस्याम भवेम ॥

महापितृयज्ञे ' सोमाय पितृमते पुरोडाशम् ' इत्यत्र ' त्वं सोम ' इति याज्या । सूत्रितं च— ' त्वं सोम पितृभिः संविदानो बर्हिषदः पितर ऊत्यर्वाक् ' ( आश्व. श्रौ. २. १९ ) इति । तृतीयसवने सौम्यस्य चरोरपीयं[4] याज्या । ' त्वं सोम पितृभिः संविदान इति सौम्यस्य ' ( आश्व. श्रौ. ५. १९ ) इति हि सूत्रितम् ॥

त्वं सो॑म पि॒तृभिः॑ संवि॒दा॒नोऽनु॒ द्यावा॑पृथि॒वी आ त॑तन्थ ।
तस्मै॑ त इन्दो ह॒विषा॑ विधेम व॒यं स्या॑म॒ पत॑यो र॒यी॒णाम् ॥ १३ ॥

त्वम् । सो॒म॒ । पि॒तृऽभिः॑ । स॒म्ऽवि॒दा॒नः । अनु॑ । द्यावा॑पृथि॒वी इति॑ । आ । त॒त॒न्थ॒ ।
तस्मै॑ । ते॒ । इ॒न्दो॒ इति॑ । ह॒विषा॑ । वि॒धे॒म॒ । व॒यम् । स्या॒म॒ । पत॑यः । र॒यी॒णाम् ॥ १३ ॥

हे ᐯसोम ᐯत्वं ᐯपितृभिः सह ᐯसंविदानः संगच्छमानः ᐯद्यावापृथिवी द्यावापृथिव्यौ ᐯअनु ᐯआ ᐯततन्थ क्रमेण विस्तारयसि । ᐯतस्मै सोमाय ᐯहविषा ᐯविधेम परिचरेम । ᐯवयं ᐯरयीणां धनानां ᐯपतयः ᐯस्याम भवेम ॥

त्राता॑रो देवा॒ अधि॑ वोचता नो॒ मा नो॑ नि॒द्रा ई॑शत॒ मोत जल्पिः॑ ।
व॒यं सोम॑स्य वि॒श्वह॑ प्रि॒यासः॑ सु॒वीरा॑सो वि॒दथ॒मा व॑देम ॥ १४ ॥

त्राता॑रः । दे॒वाः॒ । अधि॑ । वो॒च॒त॒ । नः॒ । मा । नः॒ । नि॒ऽद्रा । ई॒श॒त॒ । मा । उ॒त । जल्पि॑ः ।
व॒यम् । सोम॑स्य । वि॒श्वह॑ । प्रि॒यासः॑ । सु॒ऽवीरा॑सः । वि॒दथ॑म् । आ । व॒दे॒म॒ ॥ १४ ॥

हे ᐯत्रातारः रक्षितारो हे ᐯदेवाः ᐯनः अस्मान् ᐯअधि ᐯवोचत अधिवचनं कुरुत । किंच ᐯनः अस्मान् ᐯनिद्राः स्वप्नाः ᐯमा ᐯईशत ईश्वरा मा भूवन् बाधितुम् । ᐯउत अपि च ᐯजल्पिः

१. ख-त-न-भ-श—' पीडाः ' नास्ति । २. ख-त-न-भ१-२-श—अपरामे; घ—त्यजंतु अपराधे । ३. त-न-भ-श—मर्तान् । ४. ख-त-भ—°पीयमेव ।

निन्दकः अस्मान् मा निन्दतु । वयं सोमस्य प्रियासः प्रियाः स्याम विश्वह सर्वेष्वप्यहःसु । सर्वदेत्यर्थः । सुवीरासः शोभनपुत्राः सन्तः विदथं स्तोत्रम् आ वदेम आभिमुख्येन वदेम । अथवा सुपुत्रा विदथं गृहमा वदेम । आवदनं पुत्रपौत्राणां धनेनोपच्छन्दनम् ॥

'त्वं नः सोम विश्वतः' इति सौम्ये पशौ हविषोऽनुवाक्या । सूत्रितं च—'त्वं नः सोम विश्वतो वयोधा या ते धामानि दिवि या पृथिव्याम्' (आश्व. श्रौ. ३. ७) इति ॥

त्वं नः सोम विश्वतो वयोधास्त्वं स्वर्विदा विशा नृचक्षाः ।
त्वं न इन्द ऊतिभिः सजोषाः पाहि पश्चातादुत वा पुरस्तात् ॥ १५ ॥

त्वम् । नः । सोम । विश्वतः । वयःऽधाः । त्वम् । स्वःऽवित् । आ । विश । नृऽचक्षाः ।
त्वम् । नः । इन्दो इति । ऊतिऽभिः । सऽजोषाः । पाहि । पश्चातात् । उत । वा । पुरस्तात् ॥ १५ ॥

हे सोम त्वं नः अस्माकं विश्वतः सर्वाभ्यो दिग्भ्यः वयोधाः अन्नदाता । तथा त्वं स्वर्वित् स्वर्गलम्भकः नृचक्षाः सर्वमनुष्यद्रष्टा त्वम् आ विश । हे इन्दो त्वं सजोषाः[1] सह प्रीयमाणः सन् ऊतिभिः सह । अथवोतयो गन्तारो मरुतः । तैः सहितः सन् पश्चातात् पश्चात् उत वा पुरस्तात् च पाहि[2] ॥ ॥ १३ ॥ ॥ ६ ॥

## ॥ अथ वालखिल्यम् ॥

॥ प्रथमं सूक्तम् ॥

अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥ १ ॥

१. ख-ग-घ-त-न-भ-श—ऊतिभिः । २. घ—पाहि रक्ष ।

## वालखिल्यसूक्तभाष्यम्*

श्रीगणेशाय नमः । श्रुतिकञ्जार्थलक्ष्मीं यो विकासयति हृद्गतम् (? °ताम्) । स पायात्सच्चिदानन्दः सूर्यमण्डलगो हरिः ॥ 'अभि प्र वः' इति दशर्चं प्रथमं सूक्तं प्रस्कण्वस्यार्षमैन्द्रम् । अनुक्रान्तं च—'अभि प्र दश प्रस्कण्वः प्रागाथं तत्' इति । अयुजां बृहती छन्दः । युजां सतोबृहती छन्दः । विनियोगः सूत्रादवगन्तव्यः ॥

( १ ) ऋषिरात्मानं ब्रूते । हे प्रस्कण्व वः युष्माकम् । बहुवचनं पुत्रपौत्राभिप्रायेण । युष्मत्स्वामिभूतमिन्द्रमभिलक्ष्य प्रार्च प्रकर्षेण पूजय । तत्र दृष्टान्तः । यथा विदे विद्वांसं स्वगुरुं पूजयसि तद्वत् । कीदृशम् । सुराधसम् । शोभनं राधो धनं यस्य तम् । कोऽसाविन्द्र इत्युच्यते । य इन्द्रः मघवा धन-

*वाराणसीस्थराजकीयसंस्कृतपाठशालायाः प्राप्ते ज्ञ-संज्ञकलिखितपुस्तके वालखिल्यसूक्तानां भाष्यं लिखितमुपलभ्यते । परं त्वितरेषु सर्वेष्वपि पुस्तकेष्वनुपलम्भात् व्याख्याशैल्या विभिन्नत्वाच्च नैतत्सायणाचार्यकृतमिति व्यक्तं प्रतीयते । तथाप्येतद्विदुषामुपयोगाय स्यादिति मत्वात्र दीयते ।

एतस्मिन् विषयेऽस्माभिः पृष्टा एतत्पाठशालाधिकारिणः एवं लिखन्ति—'एतद्धस्तलिखितं पाठशालायाः कृते रेवानगरे क्रीतमासीत् । तस्य लेखनं पुण्यपत्तन एवाभूदिति श्रूयते । एतल्लिखितपुस्तकगतवालखिल्यसूक्तभाष्यं केन विरचितमिति निश्चितं वक्तुमशक्यम । न केनापि वाराणसीस्थेन पण्डितैर्नैतद्विरचितमिति निश्चितमेव'।

अभि । प्र । वः । सुऽराधसम् । इन्द्रम् । अर्च । यथा । विदे ।
यः । जरितृऽभ्यः । मघऽवा । पुरुऽवसुः । सहस्रेणऽइव । शिक्षति ॥ १ ॥

**शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे ।**
**गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः ॥ २ ॥**

शतानीकाऽइव । प्र । जिगाति । धृष्णुऽया । हन्ति । वृत्राणि । दाशुषे ।
गिरेःऽईव । प्र । रसाः । अस्य । पिन्विरे । दत्राणि । पुरुऽभोजसः ॥ २ ॥

**आ त्वा सुतास इन्दवो मदा य इन्द्र गिर्वणः ।**
**आपो न वज्रिन्नन्वोक्यं१ सरः पृणन्ति शूर राधसे ॥ ३ ॥**

आ । त्वा । सुतासः । इन्दवः । मदाः । ये । इन्द्र । गिर्वणः ।
आपः । न । वज्रिन् । अनु । ओक्यम् । सरः । पृणन्ति । शूर । राधसे ॥ ३ ॥

**अनेहसं प्रतरणं विवक्षणं मध्वः स्वादिष्ठमीं पिब ।**
**आ यथा मन्दसानः किरासि नः प्र क्षुद्रेव त्मना धृषत् ॥ ४ ॥**

अनेहसम् । प्रऽतरणम् । विवक्षणम् । मध्वः । स्वादिष्ठम् । ईम् । पिब ।
आ । यथा । मन्दसानः । किरासि । नः । प्र । क्षुद्राऽईव । त्मना । धृषत् ॥ ४ ॥

---

वान् पुरुवसुः बहूनां वासयिता जरितृभ्यः स्तोतृभ्यः सहस्रेणेव अपरिमितमेव शिक्षति ददाति । धनादिकमिति शेषः । अत्र योशब्दोऽवधारणार्थः । सहस्रेणेव (१ इवशब्दोऽवधारणार्थः । सहस्रेणैव ) ॥

( २ ) धृष्णुया शत्रुधर्षणशील इन्द्रः शतानीकेव अपरिमितान्येव रिपुसैन्यानि प्र जिगाति प्रकर्षेण गच्छति । स्ववशीकरोति । किंच य इन्द्रः दाशुषे हविर्दत्तवतो यजमानस्य वृत्राणि पापानि शत्रून् वा हन्ति नाशयति । तस्यास्य पुरुभोजसः बहुपालकस्येन्द्रस्य दत्राणि हिरण्यादीनि धनानि । दत्रमत्र हिरण्यं 'मरुत् दत्रम्' इति हिरण्यनामसु पाटात् । प्र पिन्विरे प्रकर्षेण प्रीणयन्ति तर्पयन्ति जगत् । अत्र दृष्टान्तः । गिरेरिव पर्वतस्य मेघस्य वा संबन्धिनो यथा रसाः जलानि जगत् प्रीणयन्ति तद्वत् ॥

( ३ ) हे गिर्वणः गीर्भिर्वननीयेन्द्र मदाः हर्षकराः ये इन्दवः सोमाः सुतासः अभिषुताः सन्ति ते हे वज्रिन् वज्रोपेत हे शूर शौर्ययुक्तेन्द्र ओक्यं समवयितुमर्हं ( १ समवेतुमर्हं) त्वा त्वामापृणन्ति सर्वतः पूरयन्ति । स्वरसप्रदानेन त्वां तर्पयन्तीत्यर्थः । कथम् । आपो न सरः । ता यथा महाजलाशयं पूरयन्ति तद्वत् । किमर्थम् । राधसे यजमानस्य धनलाभाय ॥

( ४ ) हे इन्द्र अनेहसं यथाकालम् ईम् एनं सोमं पिब । कीदृशम् । प्रतरणं प्रवर्धनम् । प्रपूर्वस्तिरतिर्वर्धनार्थः । विवक्षणम् अतिशयेन स्तुत्यं मध्वः मधुनः सकाशादपि स्वादिष्ठं स्वादुतमम् । कमेतम् । यस्य पानेन मन्दसानः हवींषि संभजमानस्त्वं नोऽस्मभ्यं यजमानेभ्यः यथा यथावत् फलमाकिरासि कार्त्स्न्येन विक्षिपसि । ददासीत्यर्थः । केभ्य इव । धृषत् शत्रुधर्षकस्त्वं त्मना आत्मना स्वयमेव क्षुद्रेव दीनेभ्य इव तेभ्यो यथा प्र ददासि तद्वत् । उपसर्गवशाद्योग्यक्रियाध्याहारः ॥

**आ नः स्तोममुप द्रवद्धियानो अश्वो न सोतृभिः ।**
**यं ते स्वधावन्त्स्वदयन्ति धेनव इन्द्र कण्वेषु रातयः ॥ ५ ॥**

आ । नः । स्तोमम् । उप । द्रवत् । हियानः । अश्वः । न । सोतृऽभिः ।
यम् । ते । स्वधाऽवन् । स्वदयन्ति । धेनवः । इन्द्र । कण्वेषु । रातयः ॥ ५ ॥ ॥ १४ ॥

**उग्रं न वीरं नमसोप सेदिम विभूतिमक्षितावसुम् ।**
**उद्रीव वज्रिन्नवतो न सिञ्चते क्षरन्तीन्द्र धीतयः ॥ ६ ॥**

उग्रम् । न । वीरम् । नमसा । उप । सेदिम । विऽभूतिम् । अक्षितऽवसुम् ।
उद्रीऽइव । वज्रिन् । अवतः । न । सिञ्चते । क्षरन्ति । इन्द्र । धीतयः ॥ ६ ॥

**यद्ध नूनं यद्वा यज्ञे यद्वा पृथिव्यामधि ।**
**अतो नो यज्ञमाशुभिर्महेमत उग्र उग्रेभिरा गहि ॥ ७ ॥**

यत् । ह । नूनम् । यत् । वा । यज्ञे । यत् । वा । पृथिव्याम् । अधि ।
अतः । नः । यज्ञम् । आशुऽभिः । महेऽमते । उग्रः । उग्रेभिः । आ । गहि ॥ ७ ॥

---

( ५ ) हे इन्द्र स भवान् नोऽस्मदीयैः सोतृभिः सोमाभिषवकर्तृभिरध्वर्य्वादिभिर्ऋत्विग्भिः कृतं स्तोत्रविशेषम् आ आभिमुख्येन उप द्रवत् उपगच्छतु समीपं प्राप्नोतु । क इव । हियानः प्रेर्यमाणः अश्वो न अश्व इव । स यथा अभिलषितं देशं प्राप्नोति तद्वत् । हे स्वधावन् अन्नवन्निन्द्र ते तव स्वभूतानि धेनवः तर्पकाणि कण्वेषु अस्मासु वर्तमानानि रातयः हविर्दानानि यं त्वां स्वदयन्ति स्वादयन्ति । त्वदुदरे प्रविश्य त्वां तर्पयन्तीत्यर्थः । स भवान् उप द्रवत् इति पूर्वेण संबन्धः ॥ ॥ १४ ॥

( ६ ) हे इन्द्र वीरं विशेषेण शत्रुभटान् प्रेरयन्तं त्वां नमसा हविर्लक्षणेनान्नेन सह । यद्वा नमसा प्रह्वीभावेन सह उप सेदिम शरणं प्राप्नुमो वयम् । कमिव । उग्रं न उद्गूर्णबलमिव । तं यथा केचन दीनाः शरणं प्राप्नुवन्ति तद्वत् । कीदृशं त्वाम् । विभूतिं विविधैश्वर्योपेतम् । अथवा विविधभवनस्वभावम् । 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतेः । 'रूपंरूपं प्रतिरूपो बभूव' इति श्रुत्यन्तरात् । अक्षितवसुम् अक्षीणधनम् । किंच हे वज्रिन् वज्रवन्निन्द्र सिञ्चते स्वर्गादिफलसेक्त्रे तुभ्यं त्वदर्थं धीतयः अस्मदङ्गुलयः क्षरन्ति स्रवन्ति सोमरसम् । क इव । उद्रीव । उदकान् ( ? उदकवान्[१] ) अवतो न कूप इव । स यथा सस्यादिसेक्त्रे जलं क्षरति तद्वत् । अत्र इवशब्दोऽनर्थकः ।

( ७ ) हे महेमते पूजासक्तबुद्धे इन्द्र यद्ध यत्र कचित् स्थानविशेषे नूनं निश्चितं वर्तसे । यत् यत्र वा यज्ञे अध्वरे वर्तसे । यत् यत्र वा पृथिव्याम् अधि अधिकं वर्तसे । अतः अस्मात्स्थानविशेषात् उग्रः उद्गूर्णबलस्त्वम् उग्रेभिः उद्गूर्णबलैः आशुभिः शीघ्रगामिभिरश्वैः नोऽस्माकं यज्ञम् आ गहि आगच्छ ॥

---

१. ऋ. सं. ८. ५०. ६ द्रष्टव्यम् ।

**अजिरासो हरयो ये त आशवो वाताइव प्रसक्षिणः ।**
**येभिरपत्यं मनुषः परीयसे येभिर्विश्वं स्वर्दृशे ॥ ८ ॥**

अजिरासः । हरयः । ये । ते । आशवः । वाताःऽइव । प्रऽसक्षिणः ।
येभिः । अपत्यम् । मनुषः । परिऽईयसे । येभिः । विश्वम् । स्वः । दृशे ॥ ८ ॥

**एतावतस्त ईमह इन्द्र सुम्नस्य गोमतः**
**यथा प्रावो मघवन्मेध्यातिथिं यथा नीपातिथिं धने ॥ ९ ॥**

एतावतः । ते । ईमहे । इन्द्र । सुम्नस्य । गोऽमतः ।
यथा । प्र । आवः । मघऽवन् । मेध्यऽअतिथिम् । यथा । नीपऽअतिथिम् । धने ॥ ९ ॥

**यथा कण्वे मघवन्त्रसदस्यवि यथा पक्थे दशव्रजे ।**
**यथा गोशर्ये असनोर्ऋजिश्वनीन्द्र गोमद्धिरण्यवत् ॥ १० ॥**

यथा । कण्वे । मघऽवन् । त्रसदस्यवि । यथा । पक्थे । दशऽव्रजे ।
यथा । गोऽशर्ये । असनोः । ऋजिश्वनि । इन्द्र । गोऽमत् । हिरण्यऽवत् ॥ १० ॥ ॥१५॥

---

( ८ ) हे इन्द्र ते तव स्वभूताः ये हरयः अश्वाः वाताइव वायव इव प्रसक्षिणः प्रकर्षेण संगच्छमानाः सन्ति । कीदृशास्ते पुनः । आजिरासः शत्रून् क्षिपन्तः आशवः शीघ्रगामिनश्च । येभिः यैरश्वैः मनुषः मनोः अपत्यम् अपतनहेतुं यजमानं परीयसे सर्वत आगच्छसि येभिः यैश्चाश्वैः विश्वं स्वः सर्वं स्वर्लोकं दृशे द्रष्टुमिच्छसि तैरा गहि इति पूर्वेणान्वयः ॥

( ९ ) हे मघवन् धनवन्निन्द्र धने निमित्तभूते सति यथा येन प्रकारेण मेध्यातिथिम् एतन्नामकमृषिं प्रावः प्रकर्षेण रक्षितवानसि यथा येन च प्रकारेण नीपातिथिम् एतन्नामानमृषिं प्रावः एतावतः इयदेव ते तव स्वभूतं गोमतः गवाश्वाद्युपेतं सुम्नस्य सुखम् ईमहे याचामहे वयं कण्वाः । सर्वत्र कर्मणि षष्ठ्यः ॥

( १० ) हे मघवन् धनवन्निन्द्र यथा येन प्रकारेण कण्वे एतन्नाम्नि मत्पितरि गोमत् गवोपेतं हिरण्यवत् काञ्चनोपेतं च सुम्नम् असनोः दत्तवानसि । यथा च त्रसदस्यवि एतन्नामके राज्ञि यथा च पक्थे एतत्संज्ञे राज्ञि यथा च दशव्रजे एतत्संज्ञके नृपे यथा च गोशर्ये एतन्नाम्नि क्षत्रिये यथा च ऋजिश्वनि एतत्संज्ञके राजनि गवाद्युपेतं सुम्नमसनोः एतावदीमहे इति पूर्वेण संबन्धः ॥ ॥ १५ ॥

'प्र सु श्रुतम्' इति दशर्चं द्वितीयं सूक्तं काण्वस्य पुष्टिगोरार्षमैन्द्रम् । अनुक्रम्यते च—'प्र सु श्रुतं पुष्टिगुः' इति । कण्वस्य पुत्रः पुष्टिगुः ऋषिः । इन्द्रो देवता । अयुजां बृहती छन्दः । युजां सतोबृहती छन्दः । विनियोगः सूत्रादवगन्तव्यः ॥

॥ अथ द्वितीयं सूक्तम् ॥

प्र सु श्रुतं सुराधसमर्चा शक्रमभिष्टये ।
यः सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहते ॥ १ ॥

प्र । सु । श्रुतम् । सुऽराधसम् । अर्च । शक्रम् । अभिष्टये ।
यः । सुन्वते । स्तुवते । काम्यम् । वसु । सहस्रेणऽइव । मंहते ॥ १ ॥

शतानीका हेतयो अस्य दुष्टरा इन्द्रस्य समिषो महीः ।
गिरिर्न भुज्मा मघवत्सु पिन्वते यदीं सुता अमन्दिषुः ॥ २ ॥

शतऽअनीकाः । हेतयः । अस्य । दुस्तराः । इन्द्रस्य । सम्ऽइषः । महीः ।
गिरिः । न । भुज्मा । मघवत्ऽसु । पिन्वते । यत् । ईम् । सुताः । अमन्दिषुः ॥ २ ॥

यदीं सुतास इन्दवोऽभि प्रियममन्दिषुः ।
आपो न धायि सवनं म आ वसो दुघाइवोप दाशुषे ॥ ३ ॥

यत् । ईम् । सुतासः । इन्दवः । अभि । प्रियम् । अमन्दिषुः ।
आपः । न । धायि । सवनम् । मे । आ । वसो इति । दुघाःऽइव । उप । दाशुषे ॥ ३ ॥

---

(१) ऋषिरात्मानं ब्रूते । हे पुष्टिगो त्वम् अभिष्टये अभिलषितसिद्धये तं शक्रं सर्वकर्मसु शक्तमिन्द्रं सु सुष्ठु यथा तथा प्र अर्च प्रकर्षेण पूजय। कीदृशम् । श्रुतं विख्यातं सुराधसं शोभनधनोपेतम् । तं कम् । य इन्द्रः सुन्वते सोमाभिषवं कुर्वते स्तुवते स्तुतिं कुर्वते यजमानाय काम्यं कामिनं( ? कमनीयं ) वसु धनं सहस्रेणेव असंख्यातमेव मंहते ददाति तम् । मंहतिर्दानार्थः । दानकर्मसु तत्पाठात् ॥

(२) सुता अभिषुताः सोमाः यद्यदा ईमेनमिन्द्रम् अमन्दिषुः अमादयन् तदा अस्येन्द्रस्य हेतयः हननसाधनान्यायुधानि मघवत्सु हविर्लक्षणधनवत्सु यजमानेषु पिन्वते। तदीयशत्रुधनानि तेषु समर्प्य तान् प्रीणयन्तीत्यर्थः । क इव । भुज्मा गिरिर्न पालको मेघ इव। स यथा भुवि जलानि समर्प्य तां प्रीणयति तद्वत् । शत्रुधनाहरणं तु ‘ शत्रूयतामा भरा भोजनानि ’ ( ऋ. सं. ५. ४. ५ ) इत्यादिश्रुतिप्रसिद्धम् । कीदृश्यो हेतयः । शतानीकाः । शतमपरिमितानि अनीकानि मुखानि यासां ताः । सर्वतोमुखा इत्यर्थः । अत एव दुस्तरा दुर्निवार्याः । समिषः सम्यक् इट् अन्नं याभ्यस्ताः । महीः महत्यः ॥

(३) हे इन्द्र यद्यदा सुतासः अभिषुताः इन्दवः सोमाः यं( ? प्रियं )वल्लभम् ईम् एन त्वाम् अभि अभिलक्ष्य अमन्दिषुः अमादयन् । तदा हे वसो वासयितरिन्द्र त्वया दाशुषे हविर्दत्तवते मे मह्यं मदर्थं सवनं यज्ञः उपगम्य आ धायि कार्त्स्न्येन सफलीकृतः । तत्र दृष्टान्तः । आपो न । ता यथा स्नानपानादिना सफलीक्रियन्ते तद्वत् । अपरो दृष्टान्तः । दुघाइव । हविर्दुघा धेनवो यथा सांनाय्यसेवनादिना सफलीक्रियन्ते तद्वत् सोमपानादिना यज्ञः सफलीकृत इत्यर्थः ॥

**अनेहसं वो हवमानमूतये मध्वः क्षरन्ति धीतयः ।**
**आ त्वा वसो हवमानास इन्दव उप स्तोत्रेषु दधिरे ॥ ४ ॥**

अनेहसम् । वः । हवमानम् । ऊतये । मध्वः । क्षरन्ति । धीतयः ।
आ । त्वा । वसो इति । हवमानासः । इन्दवः । उप । स्तोत्रेषु । दधिरे ॥ ४ ॥

**आ नः सोमे स्वध्वर इयानो अत्यो न तोशते ।**
**यं ते स्वदावन्त्स्वदन्ति गूर्तयः पौरे छन्दयसे हवम् ॥ ५ ॥**

आ । नः । सोमे । सुऽअध्वरे । इयानः । अत्यः । न । तोशते ।
यम् । ते । स्वदाऽवन् । स्वदन्ति । गूर्तयः । पौरे । छन्दयसे । हवम् ॥ ५ ॥ ॥१६॥

**प्र वीरमुग्रं विविचिं धनस्पृतं विभूतिं राधसो महः ।**
**उद्रीव वज्रिन्नवतो वसुत्वना सदा पीपेथ दाशुषे ॥ ६ ॥**

प्र । वीरम् । उग्रम् । विविचिम् । धनऽस्पृतम् । विऽभूतिम् । राधसः । महः ।
उद्रीऽइव । वज्रिन् । अवतः । वसुऽत्वना । सदा । पीपेथ । दाशुषे ॥ ६ ॥

---

( ४ ) हे ऋत्विजः वः युष्मत्संबन्धिन्यः धीतयोऽङ्गुलयः ऊतये रक्षार्थं हवमानं स्तूयमानमिन्द्रमुद्दिश्य मध्वः मधुररसं सोमं क्षरन्ति । कीदृशम् । अनेहसम् । न आहन्यत इत्यनेहः तम् । शत्रुभिरनभिभाव्यमित्यर्थः । हे वसो वासयितरिन्द्र हवमानासः स्तूयमानाः इन्दवः सोमाः स्तोत्रेषु निमित्तेषु त्वा त्वाम् उप समीपे आ दधिरे आभिमुख्येन स्थापितवन्तः ॥

( ५ ) नोऽस्माकं यजमानानां संबन्धिनि स्वध्वरे शोभनयज्ञे सोमे सोमपाने निमित्तभूते सति अत्यो न सततगमनशीलोऽश्व इव इयानः गच्छन्निन्द्रः आ तोशते अस्मच्छत्रून् हिनस्ति । तोशतिर्वधकर्मा । ‘ नितोशते निबर्हयति ’ इति वधकर्मसु पाठात् । इन्द्रं प्रत्यक्षीकृत्य ब्रूते । हे स्वदावन् आस्वादनकुशलेन्द्र ते तव स्वभूताः गूर्तयः उद्यताः स्तुतयः यं त्वां स्वदन्ति आत्मानमास्वादयन्ति स त्वं पौरे पुरजनसमूहे हवमात्मनः स्तुतिं छन्दयसे कामयसे । ऋत्विग्भिः स्वस्तुतिः कर्तव्येत्यभिलषसीत्यर्थः ॥ ॥१६॥

( ६ ) हे इन्द्र वीरं विशेषेण शत्रूणां प्रेरयितारं महः महत् राधसः राधो धनम् । कर्मणि षष्ठ्यौ । प्र प्रार्थये याचामि । उपसर्गवशाद्योग्यक्रियाध्याहारः । कीदृशं त्वाम् । उग्रमुद्गूर्णबलं विविचिं पुण्यापुण्ययोर्विवेक्तारं धनस्पृतं धनदातारं विभूतिं विविधैश्वर्योपेतान् ( ? °पेतं ) यतः हे वज्रिन् वज्रवन्निन्द्र त्वं दाशुषे हविषां दातारम् । कर्मणि चतुर्थी । सदा सर्वदा वसुत्वना धनदानेन पीपेथ आप्याययसि । वर्धयसीत्यर्थः । क इव । उद्रीव अवतः उदकवान् कूप इव । स यथा उदकदानेन जगदाप्याययति तद्वत् ॥

यद्ध नूनं परावति यद्वा पृथिव्यां दिवि ।
युजान इन्द्र हरिभिर्महेमत ऋष्व ऋष्वेभिरा गहि ॥ ७ ॥
यत् । ह । नूनम् । पराऽवति । यत् । वा । पृथिव्याम् । दिवि ।
युजानः । इन्द्र । हरिऽभिः । महेऽमते । ऋष्वः । ऋष्वेभिः । आ । गहि ॥ ७ ॥

रथिरासो हरयो ये ते अस्रिध ओजो वातस्य पिप्रति ।
येभिर्नि दस्युं मनुषो निघोषयो येभिः स्वः परीयसे ॥ ८ ॥
रथिरासः । हरयः । ये । ते । अस्रिधः । ओजः । वातस्य । पिप्रति ।
येभिः । नि । दस्युम् । मनुषः । निऽघोषयः । येभिः । स्वरिति स्वः । परिऽईयसे ॥८॥

एतावतस्ते वसो विद्याम शूर नव्यसः ।
यथा प्राव एतशं कृत्व्ये धने यथा वशं दशव्रजे ॥ ९ ॥
एतावतः । ते । वसो इति । विद्याम । शूर । नव्यसः ।
यथा । प्र । आवः । एतशम् । कृत्व्ये । धने । यथा । वशम् । दशऽव्रजे ॥ ९ ॥

यथा कण्वे मघवन्मेधे अध्वरे दीर्घनीथे दमूनसि ।
यथा गोशर्ये असिषासो अद्रिवो मयि गोत्रं हरिश्रियम् ॥ १० ॥

---

( ७ ) हे महेमते पूजासक्तबुद्धे इन्द्र यद्ध यत्र क्वचित् परावति दूरदेशे नूनं निश्चितं वर्तसे। यद्वा यत्र वा पृथिव्यां भुवि दिवि द्युलोके वा वर्तसे। अस्मात् स्थानविशेषात् ऋष्वैः महद्भिः हरिभिः एतत्संज्ञकैरश्वैः रथं युजानः युक्तं कुर्वाणः ऋष्वः महांस्त्वमा गहि आगच्छास्मद्यज्ञम् ॥

( ८ ) ये हरयोऽश्वाः ते तव स्वभूताः रथिरासः रथार्हाः अस्रिधः। स्रिधो हिंसकाः शत्रवः। तद्रहिताः सन्ति। येभिर्यैरश्वैः मनुषः मनुष्यस्य यजमानस्य संबन्धिनं दस्युमुपक्षपयितारं शत्रुं निः निरन्तरं निघोषयः नितरामाक्रोशयसि। अश्वशफप्रहारैस्तं चूर्णयन् विशब्दितं करोषीत्यर्थः। किंच येभिः यैरश्वैः स्वः स्वर्लोकं परीयसे परितो गच्छसि। ते हरयो वातस्य वायोः ओजः बलं पिप्रति पूरयन्ति। वायोः सामर्थ्यमात्मनि संपादयन्तीत्यर्थः ॥

( ९ ) हे वसो वासयितः हे शूर विक्रान्तेन्द्र यथा येन प्रकारेण कृत्व्ये कर्तव्ये धने निमित्ते सति एतशम् एतन्नामानमृषिं प्रावः प्रकर्षेण रक्षितवानसि। किंच यथा येन प्रकारेण दशव्रजे दशसंख्याकशत्रुसमूहे वशम् एतत्संज्ञकमृषिं प्रावः प्रकर्षेण रक्षितवानसि। एतावतः एतावत्पराक्रमोपेतं ते त्वां नव्यसः स्तुत्यं विद्याम जानीमो वयम्। सर्वत्र कर्मणि षष्ठी ॥

( १० ) हे अद्रिवः वज्रिवन् (?) इन्द्र मेधे यज्ञे यथा येन प्रकारेण कण्वे एतन्नामके ऋषौ निमित्ते हरिश्रियम्। हरिः जगत्तापहर्त्री हरितवर्णा वा श्रीः जललक्ष्मीर्यस्य तादृशम्। गोत्रं मेघम् असिषासः दत्तवानसि। ईदृशे कण्वे अध्वरे। ध्वरतिर्हिंसाकर्मा। तद्रहिते दीर्घनीथे दीर्घं स्वर्लोकपर्यन्तं नीथं हविः-

यथा । कण्वे । मघऽवन् । मेधे । अध्वरे । दीर्घऽनीथे । दमूनसि ।
यथा । गोऽशर्ये । असिसासः । अद्रिऽवः । मयि । गोत्रम् । हरिऽश्रियम् ॥१०॥ ॥१७॥

॥ अथ तृतीयं सूक्तम् ॥

**यथा मनौ सांवरणौ सोममिन्द्रापिबः सुतम् ।**
**नीपातिथौ मघवन्मेध्यातिथौ पुष्टिगौ श्रुष्टिगौ सचा ॥ १ ॥**

यथा । मनौ । साम्ऽवरणौ । सोमम् । इन्द्र । अपिबः । सुतम् ।
नीपऽअतिथौ । मघऽवन् । मेध्यऽअतिथौ । पुष्टिऽगौ । श्रुष्टिऽगौ । सचा ॥ १ ॥

**पार्षद्वाणः प्रस्कण्वं समसादयच्छयानं जिव्रिमुद्धितम् ।**
**सहस्राण्यसिषासद्गवामृषिस्त्वोतो दस्यवे वृकः ॥ २ ॥**

पार्षद्वाणः । प्रस्कण्वम् । सम् । असादयत् । शयानम् । जिव्रिम् । उद्धितम् ।
सहस्राणि । असिसासत् । गवाम् । ऋषिः । त्वाऽऊतः । दस्यवे । वृकः ॥ २ ॥

**य उक्थेभिर्न विन्धते चिकिद्य ऋषिचोदनः ।**
**इन्द्रं तमच्छा वद नव्यस्या मत्यरिष्यन्तं न भोजसे ॥ ३ ॥**

---

प्रापणं यस्य तथाभूते । पुनः कीदृशे । दमूनसि दानमनसि उदारे । यथा च गोशर्ये एतन्नामके ऋषौ मेघं दत्तवानसि तथा मयि पुष्टिगौ हरिश्रियं गोत्रं देहि । यथा तयोरनुग्रहदृष्ट्या मेघवृष्टिं कृतवानसि तथा मय्यपि कृपादृष्ट्या अभिलषितवृष्टिं कुर्वित्यभिप्रायः ॥ ॥ १७ ॥

'यथा मनौ सांवरणौ' इति दशर्चं तृतीयं सूक्तं काण्वस्य श्रुष्टिगोरार्षमैन्द्रम् । अनुक्रान्तं च— 'यथा मनौ श्रुष्टिगुः' इति । अयुजां बृहती छन्दः युजां सतोबृहती छन्दः । विनियोगः सूत्रादवगन्तव्यः ॥

( १ ) हे इन्द्र यथा येन प्रकारेण सांवरणौ संवरणस्य पुत्रे मनौ वर्तमानं सुतमभिषुतं सोममपिबः पीतवानसि । तथा हे मघवन् धनवन्निन्द्र नीपातिथौ । नयति हविर्देवान् पाति रक्षति यजमानं चेति नीपः । तादृशोऽतिथिर्यस्य तस्मिन् । एतत्संज्ञके ऋषौ मेध्यातिथौ । मेध्यः यज्ञार्हः अतिथिर्यस्य तादृशे एतन्नामके ऋषौ पुष्टिगौ । पुष्टिः कुटुम्बपोषिका गौर्यस्य तादृशे ऋषौ । 'क्तिच्क्तौ च संज्ञायाम्' इति पुषिधातोः कर्तरि क्तिच् । श्रुष्टिगौ । श्रुष्टिः शीघ्रव्यापिनी गौर्यस्य तादृशे मयि च । 'श्रुष्टीति क्षिप्रनाम आशु अष्टि' इति निरुक्तमत्रानुसंधेयम् । एतेष्वस्मासु वर्तमानभिषुतं सोमं सचा सहैव पिबेति शेषः । इह सचापदेन युगपदनेकरूपधारणशक्तिः सूच्यते । संभवति च सा । 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिश्रुतेः ॥

( २ ) हे इन्द्र पार्षद्वाणः परुषवाक् श्विछत्तुः( ? कश्चिच्छत्रुः ) । वाण इति वाङ्नाम 'वाणीची वाणः' इति तन्नामसु पाठात् । शयानं स्वपन्तं प्रस्कण्वं कण्वस्य पुत्रं यदा समसादयत् सम्यगपीडयत् । कीदृशम् । जिव्रिं जराजीर्णम् उद्धितम् ऊर्ध्वदेशे स्थापितम् । तदा त्वोतः त्वया इन्द्रेण रक्षितः स ऋषिः प्रस्कण्वः दस्यवे उपक्षपयितुः शत्रोः वृकः विकर्तनः सन् तदीयानि गवां सहस्राणि असिसासत् संभजते स्म । इत्थंप्रभावस्त्वमसि तस्मात्त्वां स्तुम इत्यर्थः ॥

यः । उक्थेभिः । न । विन्धते । चिकित् । यः । ऋषिऽचोदनः ।
इन्द्रम् । तम् । अच्छ । वद । नव्यस्या । मती । अरिष्यन्तम् । न । भोजसे ॥ ३ ॥

**यस्मा अर्कं सप्तशीर्षाणमानृचुस्त्रिधातुमुत्तमे पदे ।**
**स त्वि१मा विश्वा भुवनानि चिक्रददादिज्जनिष्ट पौंस्यम् ॥ ४ ॥**

यस्मै । अर्कम् । सप्तऽशीर्षाणम् । आनृचुः । त्रिऽधातुम् । उत्ऽतमे । पदे ।
सः । तु । इमा । विश्वा । भुवनानि । चिक्रदत् । आत् । इत् । जनिष्ट । पौंस्यम् ॥ ४ ॥

**यो नो दाता वसूनामिन्द्रं तं हूमहे वयम् ।**
**विद्मा ह्यस्य सुमतिं नवीयसीं गमेम गोमति व्रजे ॥ ५ ॥**

यः । नः । दाता । वसूनाम् । इन्द्रम् । तम् । हूमहे । वयम् ।
विद्म । हि । अस्य । सुऽमतिम् । नवीयसीम् । गमेम । गोऽमति । व्रजे ॥ ५ ॥ ॥१८॥

---

( ३ ) ऋषिरात्मानं ब्रूते । हे श्रुष्टिगो य इन्द्रः न संप्रति उक्थेभिः उक्थैः स्तोत्रैः स्तुतः सन् चिकित् स्तोतुः ज्ञानं विन्धते परिचरति । विधतिः परिचरणकर्मा । मत्स्तवने तव सम्यक् ज्ञानमस्तीत्या-(?त्य)भिनन्दति । यश्चेन्द्रः ऋषिचोदनः ऋषीणां मन्त्राणां तद्द्रष्टॄणां वा चोदनः प्रवर्तकोऽस्ति तमिन्द्रं परमेश्वरम् अच्छाभिलक्ष्य नव्यस्या नवतना(? नवतरां) मती मतिं स्तुतिं वद ब्रूहि । तत्र दृष्टान्तः । अरिष्यन्तं न भोजसे । यथा कश्चिदरिष्यन्तम् अहिंसन्तं स्वामिनं भोजसे स्वपालनाय नवतरां स्तुतिं ब्रूते तद्वत् ॥

( ४ ) यस्मै इन्द्राय परमेश्वराय तदर्थम् उत्तमे पदे उत्कृष्टतमे स्थाने द्युलोकाख्ये स्थितम् अर्कम् अर्चनीयमादित्यमानृचुः अर्चन्ति सर्वे । 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (छा. उ. १. ६. ६) इत्यादिश्रुत्युक्तं यदीयं स्वरूपमुपलब्धम् । सर्वे सूर्यमाराधयन्तीत्यर्थः । कीदृशमर्कम् । सप्तशीर्षाणम् । सप्तसंख्याकाः शीर्षवत् प्रधानभूता रश्मयो यस्य तादृशम् । त्रिधातुं त्रयाणां भूरादिलोकानां पोषकम् । सूर्यस्य त्रिलोकीपोषकत्वं तु वृष्ट्यादिव्यापारेण प्रसिद्धम् । यत्स्वरूपलाभाय अर्कमर्चन्ति स तु परमेश्वरः इमा इमानि दृश्यमानानि विश्वा सर्वाणि भुवनानि भूतजातानि देवासुरमनुष्यरूपाणि उद्दिश्य अचिक्रदत् आक्रन्दति । माध्यमिक्या वाचा दददशब्दैर्गम(?र्दम )दयादानवाचकैः । आदित् अनन्तरमेव पौंस्यं बलं शिक्षालक्षणं जनिष्ट जनयति आविर्भावयति । अयं भावः । परमेश्वर आदौ मेघस्तनितलक्षणया स्ववाण्या भूक्षेभ्यो (? भूस्थेभ्यो ) हितमुपदिशति । अनाकर्णिते च तस्मिन् पश्चाद्दारिद्र्यादिलक्षणां शिक्षामाविष्करोतीति । अत्राभिहितोऽर्थो बृहदारण्यके खिलकाण्डे 'त्रया ह वै प्राजापत्याः' इत्यादिना ग्रन्थेन प्रपञ्चितः ( बृ. उ. ५. २ ) ॥

( ५ ) य इन्द्रः नोऽस्माकं वसूनां वासहेतूनां धनानां दाता भवति तमिन्द्रं परमेश्वरं हूमहे आह्वयामो वयं स्तोतारः । हि यस्मादस्येन्द्रस्य नवीयसीं नवतरामकृतपूर्वां सुमतिं कल्याणीं मतिमनुग्रहबुद्धिं विद्म जानीमः । अतस्तमाह्वयामेति पूर्वेण संबन्धः । यया सुमत्या वयं गोमति गवोपेते व्रजे गजाश्वादिपशुसमूहे गमेम स्वामित्वेन प्राप्नुयाम ॥ ॥ १८ ॥

यस्मै त्वं वसो दानाय शिक्षसि स रायस्पोषमश्नुते ।
तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहे ॥ ६ ॥

यस्मै । त्वम् । वसो इति । दानाय । शिक्षसि । सः । रायः । पोषम् । अश्नुते ।
तम् । त्वा । वयम् । मघऽवन् । इन्द्र । गिर्वणः । सुतऽवन्तः । हवामहे ॥ ६ ॥

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते ॥ ७ ॥

कदा । चन । स्तरीः । असि । न । इन्द्र । सश्चसि । दाशुषे ।
उपऽउप । इत् । नु । मघऽवन् । भूयः । इत् । नु । ते । दानम् । देवस्य । पृच्यते ॥७॥

प्र यो ननक्षे अभ्योजसा क्रिविं वधैः शुष्णं निघोषयन् ।
यदेदस्तम्भीत्प्रथयन्नमूं दिवमादिज्जनिष्ट पार्थिवः ॥ ८ ॥

प्र । यः । ननक्षे । अभि । ओजसा । क्रिविम् । वधैः । शुष्णम् । निऽघोषयन् ।
यदा । इत् । अस्तम्भीत् । प्रथयन् । अमूम् । दिवम् । आत् । इत् । जनिष्ट । पार्थिवः ॥८॥

यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो अज्यते रयिः ॥ ९ ॥

---

(६) हे वसो वासयितरिन्द्र त्वं यस्मै यजमानाय दानाय धनदानार्थं शिक्षसि आज्ञापयसि स यजमानः रायः धनस्य पोषं पुष्टिमश्नुते व्याप्नोति । यं यजमानं धनं दातुं प्रवर्तयसि स त्वदाज्ञया धनत्यागेन वसुसमृद्धो भवतीत्याश्चर्यम् । अतो हे गिर्वणः गीर्भिर्वननीय मघवन् धनवन्निन्द्र तं तादृशं त्वा त्वां सुतावन्तः अभिषुतसोमा वयं हवामहे आह्वयामः ॥

(७) हे मघवन् धनवन्निन्द्र नु क्षिप्रं दानं हविःसमर्पणं नु निश्चितं भूय इत् प्रचुरं सदेव ते तव देवस्य द्योतमानस्य परमेश्वरस्य उपोपेत् समीपमेव पृच्यते त्वया संपृक्तं भवति । स्वल्पमपि शीघ्रं सत्पात्रे समर्पितं बहुलीभूय ईश्वरे संगतं भवतीत्यभिप्रायः । अतः हे इन्द्र परमेश्वर दाशुषे हविर्दत्तवतो यजमानस्य स्तरीः हिंसकः कदाचन कदापि नासि न भवसि । अपि तु सश्चसि तेन संगच्छसे । तदीयं सख्यं संपादयसीत्यर्थः । 'प्रसमुपोदः पादपूरणे' (पा. सू. ८. १. ६) इत्यनेन उप इत्यस्य द्विवचनं (द्विर्वचनं) पादपूरणार्थम् ॥

(८) य इन्द्रः वधैः आयुधप्रहारैः क्रिविं विकृत्तं शुष्णमेतन्नामानमसुरम् ओजसा बलेन निघोषयन् नितरां शब्दयन् सन् अभि अभितः प्र प्रकर्षेण ननक्षे व्याप्नोति स्म । असुरं हत्वा स्वसामर्थ्यं सर्वतः प्रकाशितवानित्यर्थः । कदेत्यपेक्षायामाह । यदेत् यदैव सोऽसुरः प्रथयन् आत्मानं पृथुं कुर्वन् अमुं दूरे दृश्यमानं दिवं द्युलोकम् अस्तम्भीत् स्तब्धं कृतवान् । आदित् अनन्तरमेव पार्थिवोऽग्निः जनिष्ट प्रादुरभूत् । लोकानां प्राणनिरोधेन अग्निः समजनि यदा तदेत्यर्थः ॥

(९) विश्वः सर्वः अयं दृश्यमानः आर्यः असुरस्वामिको गणः यस्येन्द्रस्य अरिः शत्रुर्भवति । कीदृशः सः । दासः धनादेरुपक्षयिता शेवधिपाः । शेवधिर्निधिस्तं पाति रक्षतीति । तथा असुरादि-

यस्य । अयम् । विश्वः । आर्यः । दासः । शेवधिऽपाः । अरिः ।
तिरः । चित् । अर्ये । रुशमे । पवीरवि । तुभ्य । इत् । सः । अज्यते । रयिः ॥ ९ ॥

**तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः ।**
**अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे सुवानास इन्दवः ॥ १० ॥**

तुरण्यवः । मधुऽमन्तम् । घृतऽश्चुतम् । विप्रासः । अर्कम् । आनृचुः ।
अस्मे इति । रयिः । पप्रथे । वृष्ण्यम् । शवः । अस्मे इति । सुवानासः । इन्दवः ॥ १० ॥ ॥ १९ ॥

॥ अथ चतुर्थं सूक्तम् ॥

**यथा मनौ विवस्वति सोमं शक्रापिबः सुतम् ।**
**यथा त्रिते छन्द इन्द्र जुजोषस्यायौ मादयसे सचा ॥ १ ॥**

यथा । मनौ । विवस्वति । सोमम् । शक्र । अपिबः । सुतम् ।
यथा । त्रिते । छन्दः । इन्द्र । जुजोषसि । आयौ । मादयसे । सचा ॥ १ ॥

---

धनस्यापहर्ता स्वधनस्य च रक्षितेत्यर्थः । तेनेन्द्रेण रुशमे अकल्याणे अर्ये अरिगणे तस्मिन् तिरश्चित् अन्तर्हितमेव पवीरवि । पवी रथनेमिस्तद्वन्तोऽराः पवीराः । तदुपेतं चक्रं पवीरवि । अत्र 'पवी रथनेमिर्भवति' ( निरु. ५. ५ ) इत्यादि निरुक्तं द्रष्टव्यम् । तादृशं चक्रमज्यते प्रक्षिप्यते । चतुर्थपादे प्रत्यक्षीकृत्य उच्यते । हे इन्द्र तुभ्यमेव त्वदर्थमेव सः असुरगणे विद्यमानः रयिः निखिलक्षणो धनराशिः अज्यते प्रक्षिप्यतेऽरिगणेन । असुरगणे गुप्तं चक्रदानमपि इन्द्राय निधिप्रदमभवत् तदा सत्पात्रे गुप्तं धनदानं महाफलदं स्यादिति किमु वक्तव्यमित्याशयः ॥

( १० ) तुरण्यवः त्वरमाणाः विप्रासो मेधाविनो यजमानाः अर्कमर्चनीयमिन्द्रम् आनृचुः अर्चन्ति । कीदृशम् । मधुमन्तं मधुरामृतरसोपेतं घृतश्चुतं जलस्राविणं मेघभेदनेन वृष्टिं कुर्वन्तमित्यर्थः । केनाभिप्रायेणार्चन्तीत्युच्यते । अस्मे अस्मासु रयिः धनराशिः पप्रथे प्रथितो भवतु । तथा वृष्ण्यम् अपत्योत्पादकं शवः बलमस्तु । किंचास्मे अस्मासु सुवानासः अभिषुता इन्दवः सोमाः सन्तु । इन्द्रानुग्रहेणैव तत्सर्वमस्मासु संपद्यतामित्याशयेनेत्यर्थः ॥ ॥ १९ ॥

'यथा मनौ विवस्वति' इति दशर्चं चतुर्थं सूक्तम् आयवमैन्द्रम् । अनुक्रान्तं च—'यथा मनावायुः' इति । काण्व आयुर्ऋषिः इन्द्रो देवता । अयुजां बृहती छन्दः युजां सतोबृहती छन्दः । विनियोगः सूत्रादवगन्तव्यः ॥

( १ ) हे शक्र समर्थेन्द्र यथा येन प्रकारेण विवस्वति विवस्वतः पुत्रे वैवस्वते मनौ वर्तमानं सुतमभिषुतं सोमम् अपिबः पीतवानसि । हे इन्द्र परमेश्वर यथा च त्रिते एतन्नामके ऋषौ वर्तमानं छन्दः वेदजातं जुजोषसि भृशं सेवसे । तथा आयौ एतन्नामके मयि सचा सह वर्तमानं सोमं छन्दोलक्षणं तदुभयं संसेव्य मादयसे आनन्दयसि मामात्मानं च ॥

पृषध्रे मेध्ये मातरिश्वनीन्द्र सुवाने अमन्दथाः ।
यथा सोमं दशशिप्रे दशोण्ये स्यूमरश्मावृजूनसि ॥ २ ॥
पृषध्रे । मेध्ये । मातरिश्वनि । इन्द्र । सुवाने । अमन्दथाः ।
यथा । सोमम् । दशऽशिप्रे । दशऽओण्ये । स्यूमऽरश्मौ । ऋजूनसि ॥ २ ॥

य उक्था केवला दधे यः सोमं धृषितापिबत् ।
यस्मै विष्णुस्त्रीणि पदा विचक्रम उप मित्रस्य धर्मभिः ॥ ३ ॥
यः । उक्था । केवला । दधे । यः । सोमम् । धृषिता । अपिबत् ।
यस्मै । विष्णुः । त्रीणि । पदा । विऽचक्रमे । उप । मित्रस्य । धर्मऽभिः ॥ ३ ॥

यस्य त्वमिन्द्र स्तोमेषु चाकनो वाजे वाजिञ्छतक्रतो ।
तं त्वा वयं सुदुघामिव गोदुहो जुहूमसि श्रवस्यवः ॥ ४ ॥
यस्य । त्वम् । इन्द्र । स्तोमेषु । चाकनः । वाजे । वाजिन् । शतक्रतो इति शतऽक्रतो ।
तम् । त्वा । वयम् । सुदुघाम्ऽइव । गोऽदुहः । जुहूमसि । श्रवस्यवः ॥ ४ ॥

यो नो दाता स नः पिता महाँ उग्र ईशानकृत् ।
अयामन्नुग्रो मघवा पुरूवसुर्गोरश्वस्य प्र दातु नः ॥ ५ ॥

( २ ) हे इन्द्र सुवाने सोमाभिषवं कुर्वाणे पृषध्रे एतन्नामके ऋषौ वर्तमानं सोमं पीत्वा यथा अमन्दथाः हृष्टवानसि । यथा च मेध्ये मातरिश्वनि दशशिप्रे दशोण्ये स्यूमरश्मौ ऋजूनसि च एतेषु सर्वेष्वृषिषु वर्तमानं सोमं पीत्वा अमन्दथाः । तथा मां मादयसे इति पूर्वेण संबन्धः ॥

( ३ ) य इन्द्रः केवला केवलानि आत्मस्वामिकानि उक्था उक्थानि शस्त्राणि दधे अवधारयति । शृण्वतीत्यर्थः ( शृणोती° ) । यश्चेन्द्रः धृषितः[1] शत्रूणां धर्षकः अभिभविता सन् सोममपिबत् पीतवान् । यस्मै इन्द्राय तदर्थं विष्णुर्व्यापक उपेन्द्रः मित्रस्य । मित्रोऽहरभिमानी देवः । 'अहर्वै मित्रो रात्रिर्वरुणः' ( ऐ. ब्रा. ४. १० ) इति श्रुतेः । तस्य धर्मभिः धर्मैः उदयास्तमयैर्व्यापारैरुपलक्षितः सन् त्रीणि पदा त्रिभिः पादैः विचक्रमे विशेषेण आक्रान्तवान् त्रिलोकीम् । स इन्द्रोऽस्मान् मादयत्विति आशीः ॥

( ४ ) हे वाजिन् अन्नवन् हे शतक्रतो बहुकर्मवन्निन्द्र त्वं यस्य यजमानस्य स्तोमेषु स्तोत्रेषु निमित्तेषु वाजे हविर्लक्षणे अन्ने च निमित्तभूते सति चाकनः तृप्यसि तं तादृशं त्वा त्वामिन्द्रं श्रवस्यवः । श्रव इत्यन्ननाम । अन्नकामा वयं यजमानाः जुहूमः हविर्दद्मः । तत्र दृष्टान्तः । सुदुघामिव गोदुहः । गोदोग्धारः सुदोग्ध्रीं गां प्रति यथा हरिततृणादिकं ददति तद्वत् ॥

( ५ ) य इन्द्रः नोऽस्मभ्यं दाता धनादेर्ददति( ?°र्ददाति ) स इन्द्रः नोऽस्माकं पिता पालको भवतु । कीदृशः सः । महान् प्रौढः उग्रः उद्गूर्णबलः ईशानकृत् । दीनमीशानं प्रभुं करो-

१. 'धृषिता' इति पदपाठः ।

यः । नः । दाता । सः । नः । पिता । महान् । उग्रः । ईशानऽकृत् ।
अयामन् । उग्रः । मघऽवा । पुरुऽवसुः । गोः । अश्वस्य । प्र । दातु । नः ॥५॥ ॥२०॥

**यस्मै त्वं वसो दानाय मंहसे स रायस्पोषमिन्वति ।**
**वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं हवामहे ॥ ६ ॥**

यस्मै । त्वम् । वसो इति । दानाय । मंहसे । सः । रायः । पोषम् । इन्वति ।
वसुऽयवः । वसुऽपतिम् । शतऽक्रतुम् । स्तोमैः । इन्द्रम् । हवामहे ॥ ६ ॥

**कदा चन प्र युच्छस्युभे नि पासि जन्मनी ।**
**तुरीयादित्य हवनं त इन्द्रियमा तस्थावमृतं दिवि ॥ ७ ॥**

कदा । चन । प्र । युच्छसि । उभे इति । नि । पासि । जन्मनी इति ।
तुरीय । आदित्य । हवनम् । ते । इन्द्रियम् । आ । तस्थौ । अमृतम् । दिवि ॥ ७ ॥

**यस्मै त्वं मघवन्निन्द्र गिर्वणः शिक्षो शिक्षसि दाशुषे ।**
**अस्माकं गिर उत सुष्टुतिं वसो कण्ववच्छृणुधी हवम् ॥ ८ ॥**

---

तीति तथा । दीनदयालुरित्यर्थः । तादृशः स मघवा धनवानिन्द्रः नोऽस्मभ्यं गोः गामश्वस्य अश्वं च । उभयत्र कर्मणि षष्ठी । प्रदातु प्रकर्षेण ददातु । कीदृशो मघवा । अयामन् । यान्त्यनेनेति यामा मार्गः। स न विद्यते यस्यासावयामा । तस्मिन्नयामनि । 'सुपां सुलुक्°' इति सप्तम्या लुक् । मार्गरहिते पापिनि पुंसि उग्रः उद्गूर्णबलः तस्मिन् आविष्कृतप्रभुशक्तिरित्यर्थः । पुरुवसुश्च प्रभूतगवाश्वादिधनोपेतः॥ ॥२०॥

(६) हे वसो वासयितरिन्द्र त्वं यस्मै यजमानाय दातव्यं धनादिकं मंहसे ददासि स तादृशो यजमानः रायः धनस्य पोषं पुष्टिम् इन्वति व्याप्नोति । धनसमृद्धिं प्राप्नोतीत्यर्थः । अतो हे इन्द्र वसूयवः धनकामा वयं यजमानाः वसुपतिं धनपालकं शतक्रतुं बहुकर्माणम् इन्द्र परमेश्वर ( इन्द्रं परमेश्वरं ) त्वां स्तोत्रैः हवामहे आह्वयामः ॥

(७) इदानीमृषिः सूर्यरूपेणेन्द्रं स्तौति । हे इन्द्र कदाचन कदापि त्वं प्र युच्छसि प्रमत्तो भवसि । नैव भवसीति कटाक्षः । अहोरात्रं जागरूक एवासीत्यर्थः । यतस्त्वमुभे जन्मनी । एकमदितेरिन्द्ररूपेण जन्म । द्वितीयं ब्रह्मविद्यातः जगदात्मरूपेणेति द्वे जनुषी । नि पासि नितरां पालयसि । न ह्यसावधानः प्रपञ्चं परमार्थं च उभयं कर्तुं शक्नुयात् कश्चिदिति भावः । हे तुरीय प्रत्यगात्मरूपेण अवस्थात्रयातीत हे आदित्य अदितिपुत्र इन्द्र ते तव स्वभूतमिन्द्रियमिन्द्रस्य तव लिङ्गं द्योतकं हवनम् । हूयतेऽस्मिन्निति हवनमादित्यमण्डलम् । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' इति स्मृतेरादित्यमण्डलस्य होमाधिष्ठानत्वं प्रसिद्धम् । तादृशं मण्डलम् अमृतं मरणधर्मरहितं सत् दिवि द्युलोके आ तस्थौ आभिमुख्येनातिष्ठत् । यस्मात्त्वं जगदात्मासीत्यतस्त्वां हवामह इति पूर्वेणान्वयः ॥

(८) हे मघवन् धनवन् हे गिर्वणः गीर्भिर्वननीय हे शिक्षो शिक्षकेन्द्र दाशुषे हविर्दत्तवते यस्मै यजमानाय शिक्षसि अपेक्षितं धनादि ददासि तत्संबन्धिनामस्माकं गिरः प्रार्थनावाचः शृणुधि

यस्मै । त्वम् । मघऽवन् । इन्द्र । गिर्वणः । शिक्षो इति । शिक्षसि । दाशुषे ।
अस्माकम् । गिरः । उत । सुऽस्तुतिम् । वसो इति । कण्वऽवत् । शृणुधि । हवम् ॥ ८ ॥

**अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।**
**पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षत ॥ ९ ॥**

अस्तावि । मन्म । पूर्व्यम् । ब्रह्म । इन्द्राय । वोचत ।
पूर्वीः । ऋतस्य । बृहतीः । अनूषत । स्तोतुः । मेधाः । असृक्षत ॥ ९ ॥

**समिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम् ।**
**सं शुक्रासः शुचयः सं गवाशिरः सोमा इन्द्रममन्दिषुः ॥ १० ॥**

सम् । इन्द्रः । रायः । बृहतीः । अधूनुत । सम् । क्षोणी इति । सम् । ऊँ इति । सूर्यम् ।
सम् । शुक्रासः । शुचयः । सम् । गोऽआशिरः । सोमाः । इन्द्रम् । अमन्दिषुः ॥ १० ॥ ॥ २१ ॥

॥ अथ पञ्चमं सूक्तम् ॥

**उपमं त्वा मघोनां ज्येष्ठं च वृषभाणाम् ।**
**पूर्भित्तमं मघवन्निन्द्र गोविदमीशानं राय ईमहे ॥ १ ॥**

---

शृणु । उतापि च हे वसो वासयितरिन्द्र सुष्टुतिं शोभनां स्तुतिं शृणुधि । किंच कण्ववत् यथा कण्वस्य हवमाह्वानमशृणोः एवमस्माकं हवं शृणु ॥

( ९ ) हे ऋत्विजः मन्म मननीयं पूर्व्यं पुरातनं यत् ब्रह्म स्तोत्रम् असावि(?अस्तावि) स्तुतिविषयीकृतं भवद्भिस्तत् ब्रह्म स्तोत्रम् इन्द्राय परमेश्वराय तदर्थं वोचत ब्रूत । यतो भवन्तः ऋतस्य सत्यस्येन्द्रस्य संबन्धिनीः पूर्वीः बह्वीः बृहतीः महतीः । सामर्थ्यात् मूर्तीः इन्द्रस्य प्रचुरान् महतो गुणावतारानित्यर्थः । अनूषत स्तुतिविषयीकृतवन्तः । किंच स्तोतुर्मम आयोः मेधाः धारणावतीः बुद्धीः असृक्षत सृष्टवन्तः । अतः प्रार्थये ब्रह्मेन्द्राय वोचतेति ॥

( १० ) य इन्द्रः बृहतीः महान्ति रायः हिरण्यादिधनानि समधूनुत सम्यगकरोत् । यश्चेन्द्रः क्षोणी द्यावापृथिव्यौ समधूनुत सम्यक् रचयांचक्रे । क्षोणी इति द्यावापृथिव्योर्नामधेयम् । ‘ रोदसी क्षोणी अन्धसी ’ इति तन्नामसु पाठात् । किंच य इन्द्रः सूर्यं मङ्गलात्मानं समधूनुत समजनयत् । तमिन्द्रं शुक्रासः शुक्राः दीप्ताः शुचयः पूताः आपः वसतीवर्यैकधनालक्षणाः सममन्दिषुः सम्यगमादयन् । किंच गवाशिरः गोदुग्धं सोमाः तद्रसाश्च तमिन्द्रं सममन्दिषुः । इत्थं महानुभाव इन्द्रोऽसीति त्वदर्थं ब्रह्म वोचत इति पूर्वेण संबन्धः ॥ ॥ २१ ॥

‘ उपमं त्वा ’ इत्यष्टर्चं पञ्चमं सूक्तं काण्वस्य मेध्यस्यार्षम् । अनुक्रान्तं च—‘ उपमं त्वाष्टौ मेध्यः ’ इति । अयुजां बृहती छन्दः । युजां सतोबृहती छन्दः । विनियोगः सूत्रादवगन्तव्यः ॥

( १ ) हे मघवन् धनवन्निन्द्र मघोनां धनवतां मध्ये उपमं उपमाभूतं वृषभाणां कामवर्षितॄणां मध्ये ज्येष्ठमतिशयेन प्रशस्यं च त्वा त्वां रायः गवाश्वादिधनानि ईमहे याचामहे वयम् । कीदृशं त्वाम् ।

उपऽमम् । त्वा । मघोनाम् । ज्येष्ठम् । च । वृषभाणाम् ।
पुर्भित्ऽतमम् । मघऽवन् । इन्द्र । गोऽविदम् । ईशानम् । रायः । ईमहे ॥ १ ॥

**य आयुं कुत्समतिथिग्वमर्दयो वावृधानो दिवेदिवे ।**
**तं त्वा वयं हर्यश्वं शतक्रतुं वाजयन्तो हवामहे ॥ २ ॥**

यः । आयुम् । कुत्सम् । अतिथिऽग्वम् । अर्दयः । ववृधानः । दिवेऽदिवे ।
तम् । त्वा । वयम् । हरिऽअश्वम् । शतऽक्रतुम् । वाजऽयन्तः । हवामहे ॥ २ ॥

**आ नो विश्वेषां रसं मध्वः सिञ्चन्त्वद्रयः ।**
**ये परावति सुन्विरे जनेष्वा ये अर्वावतीन्दवः ॥ ३ ॥**

आ । नः । विश्वेषाम् । रसम् । मध्वः । सिञ्चन्तु । अद्रयः ।
ये । पराऽवति । सुन्विरे । जनेषु । आ । ये । अर्वाऽवति । इन्दवः ॥ ३ ॥

**विश्वा द्वेषांसि जहि चाव चा कृधि विश्वे सन्वन्त्वा वसु ।**
**शीष्टेषु चित्ते मदिरासो अंशवो यत्रा सोमस्य तृम्पसि ॥ ४ ॥**

विश्वा । द्वेषांसि । जहि । च । अव । च । आ । कृधि । विश्वे । सन्वन्तु । आ । वसु ।
शीष्टेषु । चित् । ते । मदिरासः । अंशवः । यत्र । सोमस्य । तृम्पसि ॥ ४ ॥ ॥ २२ ॥

---

पूर्भित्तमम् अतिशयेन शत्रुपुरां भेत्तारमत एव गोविदं गवां लम्भयितारम् ईशानं सर्वविद्यानां नियन्तारम् । 'ईशानः सर्वविद्यानाम्' (तै. आ. १०.४७) इति श्रुतेः ॥

(२) हे इन्द्र यस्त्वं दिवेदिवे प्रतिदिनं वावृधानः स्तुत्यः अतिशयेन वर्धमानः सन् आयुम् एतन्नामानमृषिम् उत्सम् एतत्संज्ञमृषिम् अतिथिग्वम् एतत्संज्ञमृषिं च अर्दयः वरप्रदाने (१°प्रदानेन) पीडयसि । ते आत्मानम् अलं मन्यमानाः वारयन्ति । त्वं तु हठात् अभीष्टवरं याचते(याचत) इत्युक्त्वा तान् क्लेशयसीत्यर्थः । तं तादृशं हर्यश्वं हरिसंज्ञौ अश्वौ यस्य तादृशं शतक्रतुं बहुकर्माणं त्वा त्वाम् वाजवन्तः(१°यन्तः)अन्नकामा वयं यजमानाः हवामहे आह्वयामः ॥

(३) विश्वेषां सर्वेषां नोऽस्माकं संबन्धिनः अद्रयः । तात्स्थ्यात्ताच्छब्द्यम् । अद्रिप्रभवास्ते सोमाः मध्वः मधुरम् । कर्मणि षष्ठी । रसमात्मीयं द्रवमासिञ्चन्तु कात्स्न्येन क्षरन्तु । इन्द्रार्थमिति शेषः । ते के । ये इन्दवः सोमाः परावति दूरदेशे वर्तमानाः । जनेषु यजमानलक्षणेषु निमित्तेषु आ सुन्विरे आभिमुख्येन अभिषुता ऋत्विग्भिः । ये च इन्दवः अर्वावति समीपदेशे वर्तमानाः सुन्विरे अभिषुतास्ते सर्वेऽपि मिलित्वा इन्द्रार्थं स्वरसं सिञ्चन्त्वित्यर्थः ॥

(४) हे इन्द्र विश्वा विश्वानि सर्वाणि द्वेषांसि अस्माकममित्राणि जहि नाशय । किंचास्मान् अव रक्ष । आ च कृधि आ समन्तात् प्रशस्तान् कुरु च । किंच विश्वे सर्वे जनाः वसु धनम् आ सन्वन्तु आभिमुख्येन ददतु । अस्मभ्यमिति शेषः । अथ च यत्र येष्वस्मासु स्थितस्य सोमस्य तृम्पसि पानेन तृप्तो भवसि तेषु शीष्टेषु विशिष्टेष्वस्मासु वर्तमानाः अंशवः सोमाः ते चित् तवैव मदिरासः मादकाः सन्तु । नेतरस्य कस्यचित् ॥ ॥ २२ ॥

इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।
आ शंतम शंतमाभिरभिष्टिभिरा स्वापे स्वापिभिः ॥ ५ ॥
इन्द्र । नेदीयः । आ । इत् । इहि । मितऽमेधाभिः । ऊतिऽभिः ।
आ । शम्ऽतम । शम्ऽतमाभिः । अभिष्टिऽभिः । आ । सुऽआपे । स्वापिऽभिः ॥ ५ ॥

आजितुरं सत्पतिं विश्वचर्षणिं कृधि प्रजास्वाभगम् ।
प्र सू तिरा शचीभिर्ये त उक्थिनः क्रतुं पुनत आनुषक् ॥ ६ ॥
आजिऽतुरम् । सत्ऽपतिम् । विश्वऽचर्षणिम् । कृधि । प्रऽजासु । आऽभगम् ।
प्र । सु । तिर । शचीभिः । ये । ते । उक्थिनः । क्रतुम् । पुनते । आनुषक् ॥ ६ ॥

यस्ते साधिष्ठोऽवसे ते स्याम भरेषु ते ।
वयं होत्राभिरुत देवहूतिभिः ससवांसो मनामहे ॥ ७ ॥
यः । ते । साधिष्ठः । अवसे । ते । स्याम । भरेषु । ते ।
वयम् । होत्राभिः । उत । देवहूतिऽभिः । ससऽवांसः । मनामहे ॥ ७ ॥

अहं हि ते हरिवो ब्रह्म वाजयुराजिं यामि सदोतिभिः ।
त्वामिदेव तममे समश्वयुर्गव्युरग्रे मथीनाम् ॥ ८ ॥

---

( ५ ) हे इन्द्र परमेश्वर त्वं मितमेधाभिः मिताः परिच्छिन्नाः मेधाः अनुग्रहबुद्धयो याभिस्ताभिरनुग्रहसहिताभिः ऊतिभिः रक्षाभिः सह नेदीय इत् अन्तिकतममेव एहि आगच्छ । किंच हे शंतम सुखतमेन्द्र शंतमाभिरभिष्टिभिः अभितः प्रियाभिश्च ऊतिभिः एहि । अथ च हे स्वापे सुतरामाप्तेन्द्र स्वापिभिः शोभना आपयः आप्ता बन्धवः यासु ताभिरूतिभिरेहि । उपसर्गवशाद्योग्यक्रियाध्याहारः ॥

( ६ ) हे इन्द्र त्वं प्रजासु अस्मत्पुत्रपौत्रादिषु आभगम् आभिमुख्येन भगं भजनीयं धनं कृधि कुरु । कीदृशम् । आजितुरं संग्रामे त्वरमाणम् । जित्वरमित्यर्थः । सत्पतिं सतां पालकं विश्वचर्षणिम् । विश्वाः सर्वाश्चर्षणयो मनुष्या दासदासीलक्षणा यस्मिन् तम् । किंच ये यजमानाः उक्थिनः स्तुतिमतस्ते तव आनुषक् अनुषक्तम् । त्वया संगतमित्यर्थः । क्रतुं कर्मविशेषं पुनते कुर्वते तानस्मान् शचीभिः धनप्रदानादिकर्मभिः सु सुतरां प्र तिर प्रवर्धय । प्रपूर्वस्तिरतिर्वर्धनार्थः ॥

( ७ ) हे इन्द्र यः अस्मद्गणः अवसे रक्षणाय ते तव साधिष्ठः अतिशयेन योऽस्ति ( ? ) तद्गणगतास्ते वयं भरेषु संग्रामेषु ते तव संबन्धिनः स्याम भवेम । संगते त्वत्पालनीया भवेमेत्यर्थः । उतापि च हे इन्द्र ससवांसः हविर्लक्षणान्नवन्तः । ससमित्यन्ननाम ‘ नेमः ससम् ’ इत्यन्ननामसु पाठात् । तादृशा वयं यजमानाः देवहूतिभिः । देवानिन्द्रादीन् ह्वयन्ति ता देवहूतयः । ताभिः होत्राभिः वाग्भिः स्तुतिलक्षणाभिः त्वां मनामहे स्तुमः । होत्रेति वाङ्नाम ‘ ऋक् होत्रा गीः ’ इति वाङ्नामसु पाठात् ॥

( ८ ) हे हरिवः हरिसंज्ञकाश्वोपेतेन्द्र ते त्वदीयः योऽहं मेध्य ऋषिः वाजयुः अन्नकामः सन् ब्रह्म अन्नमुद्दिश्य सदा सर्वदा ऊतिभिः त्वत्कृताभिः रक्षाभिः सह आजिं संग्रामं यामि प्राप्नोमि । हीति

अहम् । हि । ते । हरिऽवः । ब्रह्म । वाजऽयुः । आजिम् । यामि । सदा । ऊतिऽभिः ।
त्वाम् । इत् । एव । तम् । अमे । सम् । अश्वऽयुः । गव्युः । अग्रे । मथीनाम् ॥८॥ ॥२३॥

॥ अथ षष्ठं सूक्तम् ॥

**एतत्त इन्द्र वीर्यं गीर्भिर्गृणन्ति कारवः ।**
**ते स्तोभन्त ऊर्जमावन्घृतश्चुतं पौरासो नक्षन्धीतिभिः ॥ १ ॥**

एतत् । ते । इन्द्र । वीर्यम् । गीःऽभिः । गृणन्ति । कारवः ।
ते । स्तोभन्तः । ऊर्जम् । आवन् । घृतऽश्चुतम् । पौरासः । नक्षन् । धीतिऽभिः ॥ १ ॥

**नक्षन्त इन्द्रमवसे सुकृत्यया येषां सुतेषु मन्दसे ।**
**यथा संवर्ते अमदो यथा कृश एवास्मे इन्द्र मत्स्व ॥ २ ॥**

नक्षन्ते । इन्द्रम् । अवसे । सुऽकृत्यया । येषाम् । सुतेषु । मन्दसे ।
यथा । सम्ऽवर्ते । अमदः । यथा । कृशे । एव । अस्मे इति । इन्द्र । मत्स्व ॥ २ ॥

**आ नो विश्वे सजोषसो देवासो गन्तनोप नः ।**
**वसवो रुद्रा अवसे न आ गमञ्छृण्वन्तु मरुतो हवम् ॥ ३ ॥**

---

प्रसिद्धम् । त्वामेव सम् अमे संगतो भवामि । संग्रामे त्वामेवाश्रयामि । नेतरं कंचनेत्यर्थः । एवेत्यनर्थको निपातः ॥ ॥ २३ ॥

'एतत्ते' इति अष्टर्चं षष्ठं सूक्तं काण्वस्य मातरिश्वानस्यार्षमैन्द्रम् (मातरिश्वन आर्षमैन्द्रम्)। अनुक्रम्यते च–'एतत्ते मातरिश्वा नो विश्व इति वैश्वदेवः प्रगाथः' इति। तृतीयाचतुर्थ्यौ विश्वेदेवदेवताके। अन्यासां षण्णामिन्द्रो देवता। अयुजां बृहती छन्दः युजां सतोबृहती छन्दः। विनियोगः सूत्रादवगन्तव्यः ॥

(१) हे इन्द्र ये कारवः स्तोतारः ते तव संबन्धि एतत् दृश्यमानं वृष्ट्यादिलक्षणसामर्थ्यं गीर्भिः स्तुतिरूपाभिर्वाग्भिः गृणन्ति स्तुवन्ति ते स्तोभन्तः स्तोतारः ऊर्जम् अन्नम् आवन् प्राप्नुवन्ति। किंच ते पौरासः पुरे भवाः स्तोतारः धीतिभिरङ्गुलीभिः घृतश्चुतं घृतस्राविणं गवादिगणं नक्षन् व्याप्नुवन्ति। त्वदनुग्रहात् गवादिपशून् अङ्गुलीभिः सर्वदा दुहन्तीत्यर्थः ॥

(२) हे इन्द्र येषां यजमानानां संबन्धिषु सुतेष्वभिषुतेषु सोमेषु निभातेषु (? निपीतेषु) त्वं मन्दसे हृष्यसि ते यजमानाः अवसे अन्नाय रक्षणाय वा सुकृत्यया शोभनेन सोमाभिषवकर्मणा इन्द्रं परमेश्वरं त्वां नक्षन्ते व्याप्नुवन्ति। नक्षतिर्व्याप्तिकर्मा 'इन्वति नक्षति' इति व्याप्तिकर्मसु पाठात्। अन्नाद्यर्थं त्वामाश्रयन्त इत्यर्थः। अतो हे इन्द्र यथा येन प्रकारेण संवर्ते एतन्नामके ऋषौ यजमाने सति अमदः हृष्टवानसि यथा च कृशे एतन्नाम्नि यजमाने अमदः एव एवमनेन प्रकारेण अस्मे अस्मासु काण्वेषु मत्स्व हृष्टो भव सोमपानादिनेति शेषः ॥

(३) सजोषसः सह जुषमाणाः विश्वे देवासः सर्वे देवाः नोऽस्माकं यज्ञमुद्दिश्येति शेषः।

आ । नः । विश्वे । सऽजोषसः । देवासः । गन्तन । उप । नः ।
वसवः । रुद्राः । अवसे । नः । आ । गमन् । शृण्वन्तु । मरुतः । हवम् ॥ ३ ॥

**पूषा विष्णुर्हवनं मे सरस्वत्यवन्तु सप्त सिन्धवः ।**
**आपो वातः पर्वतासो वनस्पतिः शृणोतु पृथिवी हवम् ॥ ४ ॥**

पूषा । विष्णुः । हवनम् । मे । सरस्वती । अवन्तु । सप्त । सिन्धवः ।
आपः । वातः । पर्वतासः । वनस्पतिः । शृणोतु । पृथिवी । हवम् ॥ ४ ॥ ॥ २४ ॥

**यदिन्द्र राधो अस्ति ते माघोनं मघवत्तम ।**
**तेन नो बोधि सधमाद्यो वृधे भगो दानाय वृत्रहन् ॥ ५ ॥**

यत् । इन्द्र । राधः । अस्ति । ते । माघोनम् । मघवत्ऽतम ।
तेन । नः । बोधि । सधऽमाद्यः । वृधे । भगः । दानाय । वृत्रऽहन् ॥ ५ ॥

**आजिपते नृपते त्वमिद्धि नो वाज आ वक्षि सुक्रतो ।**
**वीती होत्राभिरुत देववीतिभिः ससवांसो वि शृण्विरे ॥ ६ ॥**

---

नोऽस्माकमुप समीपे आ गन्तन आगच्छन्तु । किंच वसवोऽष्टौ रुद्रा एकादश च नोऽस्माकमवसे रक्षणाय आ गमन् आगच्छन्तु । मरुतः एकोनपञ्चाशत्संख्याका देवास्तु हवमस्मत्कृतं स्तोत्रं शृण्वन्तु ॥

(४) पूषा पोषको देवः विष्णुर्व्यापको देवः सरस्वती । सर इत्युदकनाम । तद्वती देवी च एते सर्वे मे मम मातरिश्वानस्य (मातरिश्वनः) ऋषेः हवनमाह्वानम् । स्तोत्रमिति यावत् । अवन्तु शृण्वन्तु । अवतिरत्र श्रवणकर्मा । 'अव रक्षणगति°' इत्यस्मिन् सूत्रे (?) तस्य श्रवणाभिधानात् । किंच सप्त सप्तसंख्याकाः सिन्धवो गङ्गाद्या नद्य आपः जलाभिमानिन्यो देवताः वातो वायुः पर्वतासः पर्ववतो मेर्वादीनामभिमानिनो देवाश्च मे हवनम् अवन्तु शृण्वन्तु । अथ च वनस्पतिः वनानां पातारः पालको (पालका) देवाः पृथिवी च देवी मे हवं स्तोत्रं शृणोतु ॥ ॥ २४ ॥

(५) हे मघवत्तम अतिशयेन धनवन्निन्द्र ते तव स्वभूतं माघोनं मघवत्स्वामिकं यत् प्रसिद्धं राधः धनमस्ति भवति तेन राधसा धनेन हे वृत्रहन् वृत्रहन्तरिन्द्र त्वं दानार्थं वृधे वर्धनार्थं च नोऽस्मान् पात्रभूतान् बोधि बुध्यस्व । तद्धनदानेन अस्मान् समृद्धान् कर्तुं जानीहीत्यर्थः । कीदृशस्त्वम् । सधमाद्यः सहमादनयोग्यः भगो भजनीयश्च ॥

(६) हे आजिपते संग्रामपालक हे नेतृपते (नृपते) नेतॄणां सैनिकानां पालक हे सुक्रतो शोभनकर्मवन्निन्द्र त्वमित् त्वमेव नोऽस्मान् वाजे संग्रामे आवक्षि आवहसि प्रापयसि । त्वत्साहाय्येन वयं धनार्थं संग्रामं गन्तुमुत्सहामह इत्यर्थः । कीदृशस्त्वम् । होत्राभिः स्तुतिलक्षणाभिः वाग्भिः सह । वीती अशनवान् स्तुतिभिः प्रोत्सहमानो हविरत्तेत्यर्थः । उतापि च ससवांसः हविर्लक्षणान्नवन्तो यजमानाः

आर्जिऽपते । नृऽपते । त्वम् । इत् । हि । नः । वाजे । आ । वक्षि । सुक्रतो इति सुऽक्रतो ।
वीती । होत्राभिः । उत । देववीतिऽभिः । ससऽवांसः । वि । शृण्विरे ॥ ६ ॥

**सन्ति ह्य१र्य आशिष इन्द्र आयुर्जनानाम् ।**
**अस्मान्नक्षस्व मघवन्नुपावसे धुक्षस्व पिप्युषीमिषम् ॥ ७ ॥**

सन्ति । हि । अर्ये । आऽशिषः । इन्द्रे । आयुः । जनानाम् ।
अस्मान् । नक्षस्व । मघऽवन् । उप । अवसे । धुक्षस्व । पिप्युषीम् । इषम् ॥ ७ ॥

**वयं ते इन्द्र स्तोमेभिर्विधेम त्वमस्माकं शतक्रतो ।**
**महि स्थूरं शशयं राधो अह्रयं प्रस्कण्वाय नि तोशय ॥ ८ ॥**

वयम् । ते । इन्द्र । स्तोमेभिः । विधेम । त्वम् । अस्माकम् । शतक्रतो इति शतऽक्रतो ।
महि । स्थूरम् । शशयम् । राधः । अह्रयम् । प्रस्कण्वाय । नि । तोशय ॥ ८ ॥ ॥२५॥

॥ अथ सप्तमं सूक्तम् ॥

**भूरीदिन्द्रस्य वीर्य१ं व्यख्यमभ्यायति । राधस्ते दस्यवे वृक ॥ १ ॥**

---

देववीतिभिः देवकर्तृकाशनैः वि शृण्विरे विशेषेण श्रूयन्ते । यदा हि त्वादृशा देवास्तेषां हविरश्नुवन्ति तदा ते विख्याता भवन्तीत्यर्थः ॥

( ७ ) हे परमेश्वर हि यस्मात् जनानां जायमानानां यजमानानामस्माकं स्वभूतमायुः चरुपुरोडाशाद्यन्नम् आशिषः गवाश्वाद्यैश्वर्याणि च अर्ये जगत्स्वामिनि इन्द्रे परमेश्वरे त्वयि सन्ति समर्पितानि भवन्ति । अतो हे मघवन् धनवन्निन्द्र अस्मान् यजमानान् उप नक्षस्व समीपे व्याप्नुहि । आत्मीयत्वेन स्वसमीपे कुर्वित्यर्थः । किंचास्माकमवसे रक्षणाय पिप्युषीम् अतिशयेन पालयित्रीम् इषमन्नं धुक्षस्व प्रपूरय देहीत्यर्थः ॥

( ८ ) हे इन्द्र वयं यजमानाः ते त्वदीयाः स्मः । त्वं चास्माकमसि । 'त्वमस्माकं तवस्मसि' ( ऋ. सं. ८. ९२. ३२ ) इति श्रुतेः । अतः हे शतक्रतो बहुकर्मवन्निन्द्र स्तोमेभिः स्तोत्रैः विधेम परिचरेम त्वाम् । यस्मात्त्वदीया वयं तस्मात्त्वं प्रस्कण्वाय कण्वपुत्राय मह्यं मातरिश्वानाय ( ? मातरिश्वने ) राधो धनं नि तोशय नियमेन देहि । तदेव राधो विशिनष्टि । महि महत् पूज्यं स्थूरं स्थूलम् । प्रौढमित्यर्थः । शशयं देवब्राह्मणादिशरीरे शयानं तैरुपभोग्यमित्यर्थः । अह्रयं लज्जारहितम् । पापवर्त्मना लब्धं धनं हि लज्जासहितं भवति । इदं तु न तथा । ईश्वरानुग्रहलब्धत्वात्तस्येत्यर्थः ॥ ॥ २५ ॥

'भूरीत्' इति पञ्चर्चं सप्तमं सूक्तं काण्वस्य कृशस्यार्षं प्रस्कण्वदानदेवताकं गायत्रम् । अनुक्रान्तं च—'भूरीत् पञ्च कृशः प्रस्कण्वस्य दानस्तुतिर्गायत्रं तु[1] तृतीयान्त्ये अनुष्टुभौ' ' इति । अन्त्यातृतीययोरनुष्टुप् छन्दः । अन्यासां गायत्री छन्दः । विनियोगः सूत्रादवगन्तव्यः ॥

( १ ) इन्द्रस्य समर्थस्य प्रस्कण्वस्य वीर्यं दानलक्षणसामर्थ्यं भूरीत् प्रचुरमेव सत् अभि अभितः आ अयति आभिमुख्येन प्राप्नोतीति व्यख्यं व्यज्ञासिषमहम् । ईश्वरेणाल्पमपि कृतं कर्म बहु भवत्

---

१. अनु.–' तृतीयापञ्चम्यावनुष्टुभौ । '

भूरि । इत् । इन्द्रस्य । वीर्यम् । वि । अख्यम् । अभि । आ । अयति ।
राधः । ते । दस्यवे । वृक ॥ १ ॥

**शतं श्वेतास उक्षणो दिवि तारो न रोचन्ते । मह्ना दिवं न तस्तभुः ॥२॥**

शतम् । श्वेतासः । उक्षणः । दिवि । तारः । न । रोचन्ते । मह्ना । दिवम् । न । तस्तभुः ॥२॥

**शतं वेणूञ्छतं शुनः शतं चर्माणि म्लातानि ।**
**शतं मे बल्बजस्तुका अरुषीणां चतुःशतम् ॥ ३ ॥**

शतम् । वेणून् । शतम् । शुनः । शतम् । चर्माणि । म्लातानि ।
शतम् । मे । बल्बजऽस्तुकाः । अरुषीणाम् । चतुःऽशतम् ॥ ३ ॥

**सुदेवाः स्थ काण्वायना वयोवयो विचरन्तः । अश्वासो न चङ्क्रमत ॥४॥**

सुऽदेवाः । स्थ । काण्वायनाः । वयःऽवयः । विऽचरन्तः । अश्वासः । न । चङ्क्रमत ॥ ४ ॥

**आदित्साप्तस्य चर्किरन्नानूनस्य महि श्रवः ।**
**श्यावीरतिध्वसन्पथश्चक्षुषा चन संनशे ॥ ५ ॥**

---

प्रसिद्ध्यतीत्यर्थः । इदानीमृषिः प्रत्यक्षीकृत्याह । हे वृक शत्रुविकर्तन प्रस्कण्व ते तव संबन्धि राधो धनं दस्यवे दस्युं हन्तुं समर्थं भवतीति शेषः ॥

( २ ) हे प्रस्कण्व त्वया दत्ताः शतसंख्याकाः श्वेतासः श्वेताः शुक्लवर्णाः उक्षणः उक्षाणः रेतः-सेचनसमर्था बलीवर्दा रोचन्ते दीप्यन्ते । क इव । दिवि द्युलोके तारो न तारा इव । ता यथा दिवि रोचन्ते तद्वदेते भुवीत्यर्थः । किंच मह्ना तेजसो महत्त्वे ( महत्त्वेन ) दिवं न तारा यथा द्युलोकं तस्तभुः व्याप्नुवन्ति तद्वदेते मह्ना यशसो महत्त्वेन भुवं व्याप्नुवन्ति ॥

( ३ ) प्रस्कण्वः शतमपरिमितान् वेणून् मस्करान् । प्रादादिति सर्वत्र शेषः । शतं शतसंख्या-कान् शुनः सारमेयान् प्रादात् । तथा शतं बहूनि म्लातानि मृदूकृतानि चर्माणि अजिनानि प्रादात् । किंच शतमपरिमिताः बल्बजस्तुकाः तृणपूलाः मे मह्यं कृशनाम्ने ऋषये प्रादात् । अथ च अरुषीणा-मारोचमानानां गवां चतुःशतं प्रादात् ॥

( ४ ) हे काण्वायनाः कण्वगोत्राः प्रस्कण्वाः वयोवयः अतिशयेन पक्षिण इव । लुप्तोपमेयम् । विचरन्तः विहायसि चरन्तः यूयं सुदेवाः स्थ कल्याणदेवाः भवथ । अतोऽस्मदाशिषा अश्वा इव चङ्क्रमत विहरत यूयम् ॥

( ५ ) आदित् दानानन्तरमेव अनूनस्य अन्यूनस्य । सर्वोत्कृष्टस्येति यावत् । साप्तस्य एवंनाम्नः कण्वपुत्रस्य संबन्धि महि महत् श्रवः यशः न चर्किरन् न कर्तुमिच्छन्ति । तद्यशः संपादयितुं केचित् नेशते इत्यर्थः । किंच पथः धर्ममार्गात् सकाशात् अतिध्वसन् अतिशयेनाधः पतन् कृपणः पुमान् श्यावीः

आत् । इत् । साप्तस्यं । चर्किरन् । न । अनूनस्य । महि । श्रवः ।
श्यावीः । अतिऽध्वसन् । पथः । चक्षुषा । चन । सम्ऽनशे ॥ ५ ॥ ॥ २६ ॥

॥ अथाष्टमं सूक्तम् ॥

**प्रति ते दस्यवे वृक राधो अदर्श्यह्रयम् । द्यौर्न प्रथिना शवः ॥ १ ॥**

प्रति । ते । दस्यवे । वृक । राधः । अदर्शि । अह्रयम् । द्यौः । न । प्रथिना । शवः ॥ १ ॥

**दश मह्यं पौतक्रतः सहस्रा दस्यवे वृकः । नित्याद्रायो अमंहत ॥ २ ॥**

दश । मह्यम् । पौतऽक्रतः । सहस्रा । दस्यवे । वृकः । नित्यात् । रायः । अमंहत ॥ २ ॥

**शतं मे गर्दभानां शतमूर्णावतीनाम् । शतं दासाँ अति स्रजः ॥ ३ ॥**

शतम् । मे । गर्दभानाम् । शतम् । ऊर्णाऽवतीनाम् । शतम् । दासान् । अति । स्रजः ॥३॥

---

कपिला गाः चक्षुषा चन नेत्रेणापि संनशे सम्यक् व्याप्तुं संद्रष्टुं नेष्टे। किमुत वक्तव्यं तद्यशःसंपादने नेष्टे इति ॥ ॥ २६ ॥

'प्रति ते' इति पञ्चर्चमष्टमं सूक्तं काण्वस्य पृषध्रस्यार्षं गायत्रम्। अनुक्रान्तं च—प्रति ते पृषध्रोऽन्त्या[1] अग्निसूर्यदेवत्या पङ्क्तिच्छन्दस्का। शेषा इन्द्रदेवत्या गायत्रीछन्दस्काः। विनियोगः सूत्रादवगन्तव्यः॥

( १ ) हे वृक शत्रुविकर्तनेन्द्र ते तव स्वभूतं राधो धनं दस्यवे उपक्षयित्रे शत्रवे प्रति प्रतिकूलम् अदर्शि दृष्टम्। शत्रुनापहृतं सन् ( शत्रुणापहृतं सत् ) न तस्य उपकाराय भवति प्रत्युतापकारायैव जायत इत्यर्थः। कीदृशं राधः। अह्रयं लज्जारहितम्। शत्रुहनने प्रगल्भमिति यावत्। किंच ते शवः बलं प्रथिना पृथुत्वेन द्यौर्न द्युलोक इवास्ति। अतः सर्वोत्कृष्टं त्वामहं स्तौमीत्यभिप्रायः॥

( २ ) हे पौतक्रतः पवित्रकर्मवन्निन्द्र मह्यं मदर्थं दश सहस्रा अयुतसंख्याकान् दस्यून्[2] उपक्षयितॄन् शत्रून् वृकः विवृत्तवान् छिन्नवानसि। अत एव नित्यात् शाश्वतात् त्वत्तः भीताः सन्तस्ते शत्रवः रायः धनानि अमंहत अदुः मह्यम्। मंहतिदानकर्मा तत्र तस्य पाठात्॥

( ३ ) किंच हे इन्द्र त्वत्तो भीतास्ते मे मह्यमृषये पृषध्रिनाम्ने ( पृषध्र° ) गर्दभानां रासभानां शतम्। अमंहत अदुः इति पूर्वमन्त्रगतेनान्वयः सर्वत्र। अथ च ऊर्णावतीनां मेषीनां शतमदुः। तथा शतान् शतसंख्याकान् दासान् भृत्यान् अति अतिशयिताः स्रजो मालाश्च अदुः। एवंप्रभावस्त्वां ( °प्रभावं त्वां ) स्तौमीत्यर्थः। यद्वा उभयोर्मन्त्रयोरयमर्थः। पौतक्रतः। पूते पवित्रे स्थाने क्रतः पादविक्षेपो यस्याः सा पूतक्रता अदितिः। पवित्रदेशे पादन्यासः अदितेरुचित एव। 'दृष्टिपूतं न्यसेत् पादम्' इति वचनात्। तस्या अपत्यं पौतक्रत इन्द्रः। दस्यवे। दस्युः कर्मोपक्षयिता तमःसंघः। तं हन्तुं वृकश्चन्द्रमाः सन ( सन् ) नित्यात् अनुपक्षीणात् स्वकोशात् सकाशात् दश सहस्रा अयुतसंख्याकानि रायः धनानि मह्यं पृषध्रनाम्ने अमंहत प्रादात्। किंच गर्दभमेषीदासमालाशतान्यपि मे मह्यं स एव प्रादात् इति। 'वृकश्चन्द्रमा भवति' ( निरु. ५. २० ) इति यास्कः॥

---

१. 'पृषध्रोऽन्त्याग्निसौरी पङ्क्तिः इति। अन्त्या' इति भाव्यम्। २. 'दस्यवे' इति मन्त्रपाठः।

तन्नो अपि प्राणीयत पूतक्रतायै व्यक्ता । अश्वानामिन्न यूथ्याम् ॥ ४ ॥

तन्नो इति । अपि । प्र । अनीयत । पूतऽक्रतायै । विऽअक्ता । अश्वानाम् । इत् । न । यूथ्याम् ॥४॥

अचेत्यग्निश्चिकितुर्हव्यवाट् स सुमद्रथः ।
अग्निः शुक्रेण शोचिषा बृहत्सूरो अरोचत दिवि सूर्यो अरोचत ॥ ५ ॥

अचेति । अग्निः । चिकितुः । हव्यऽवाट् । सः । सुमत्ऽरथः ।
अग्निः । शुक्रेण । शोचिषा । बृहत् । सूरः । अरोचत । दिवि । सूर्यः । अरोचत ॥५॥ ॥२७॥

॥ अथ नवमं सूक्तम् ॥

युवं देवा क्रतुना पूर्व्येण युक्ता रथेन तविषं यजत्रा ।
आगच्छतं नासत्या शचीभिरिदं तृतीयं सवनं पिबाथः ॥ १ ॥

युवम् । देवा । क्रतुना । पूर्व्येण । युक्ताः । रथेन । तविषम् । यजत्रा ।
आ । अगच्छतम् । नासत्या । शचीभिः । इदम् । तृतीयम् । सवनम् । पिबाथः ॥ १ ॥

---

(४) किंच व्यक्ता विविधं गन्ता नानादेशेषु प्रचलन् इन्द्रः तत्र स्वर्गे वर्तमानैः (? वर्तमानायै) पूतक्रतायै एतन्नामे (? °न्नाम्न्यै) समात्रेऽपि (स्वमात्रेऽपि) प्रानीयत प्रापितवान्। किमित्युच्यते। अश्वानां वडवानां यूथ्यां संहतिम्। न केवलं मह्यमेव प्रादादपि तु स्वजनन्या अपि वडवावृन्दं प्रापितवान् इतीयानिन्द्रः समर्थ इति भावः। इत् न इति निपातद्वयमनर्थकम् ॥

(५) अथानयाग्निसूर्यौ स्तूयेते। स प्रसिद्धोऽग्निः चिकितुः चेतनावतो यजमानस्य। कर्मणि षष्ठी। चेतनावन्तं यजमानम् अचेति जानाति। कीदृशः सः। हव्यवाट् हविषां वोढा सुमद्रथः स्वयमेव रंहणस्वभावः। 'सुमत् स्वयमित्यर्थः' (निरु. ६. २२) इति यास्कः। असहायगमनशील इत्यर्थः। किंच बृहत् महान् योऽग्निः शुक्रेण शुक्लेन शोचिषा तेजसा सूरः सुष्ठु ईरयिता प्रेरकः सन् रात्रौ भुवि अरोचत दीप्यते। अथ च दिवा दिवि (?) द्योतमाने स्वर्लोके सूर्यः सुष्ठु प्रेरयितादित्यः अरोचत दीप्यते। उभाभ्यामहोरात्रात्मकः सर्वः काल आक्रान्त इत्यभिप्रायः ॥ ॥ २७ ॥

'युवं देवा' इति चतुऋचं नवमं सूक्तं काण्वस्य मेध्यस्यार्षमाश्विनं त्रैष्टुभम्। अनुक्रम्यते— 'युवं देवा चतुष्कं मेध्य आश्विनं त्रैष्टुभम्' इति। विनियोगः सूत्रादवगन्तव्यः ॥

(१) हे यजत्रा यजनीयौ पूज्यौ देवौ द्योतमानावश्विनौ पूर्व्येण पुरा भवेन क्रतुना कर्मणा अनुग्रहबुद्ध्या वा उपेतौ युवं युवां प्रति रथेन रंहणस्वभावेन स्यन्दनेन युक्ताः संयुक्ता अश्वाः तविषं बलं यथा भवति तथा वहन्तीति शेषः। तस्मात् हे नासत्या नासत्यौ सत्यभूतौ युवां शचीभिः अनुग्रहलक्षणैः कर्मभिः सह इदं तृतीयं सवनमुद्दिश्य आगच्छतमागच्छतम्। आगत्य च पिबाथः पिबतं सोममिति शेषः ॥

युवां देवास्त्रय एकादशासः सत्याः सत्यस्य ददृशे पुरस्तात् ।
अस्माकं यज्ञं सवनं जुषाणा पातं सोममश्विना दीद्यग्नी ॥ २ ॥

युवाम् । देवाः । त्रयः । एकादशासः । सत्याः । सत्यस्य । ददृशे । पुरस्तात् ।
अस्माकम् । यज्ञम् । सवनम् । जुषाणा । पातम् । सोमम् । अश्विना । दीद्यग्नी इति दीदिऽअग्नी ॥२॥

पनाय्यं तदश्विना कृतं वां वृषभो दिवो रजसः पृथिव्याः ।
सहस्रं शंसा उत ये गविष्टौ सर्वाँ इत्ताँ उप याता पिबध्यै ॥ ३ ॥

पनाय्यम् । तत् । अश्विना । कृतम् । वाम् । वृषभः । दिवः । रजसः । पृथिव्याः ।
सहस्रम् । शंसाः । उत । ये । गोऽइष्टौ । सर्वान् । इत् । तान् । उप । यात । पिबध्यै ॥३॥

अयं वां भागो निहितो यजत्रेमा गिरो नासत्योप यातम् ।
पिबतं सोमं मधुमन्तमस्मे प्र दाश्वांसमवतं शचीभिः ॥ ४ ॥

अयम् । वाम् । भागः । निऽहितः । यजत्रा । इमाः । गिरः । नासत्या । उप । यातम् ।
पिबतम् । सोमम् । मधुऽमन्तम् । अस्मे इति । प्र । दाश्वांसम् । अवतम् । शचीभिः ॥४॥ ॥२८॥

( २ ) हे अश्विनाश्विनौ युवां द्वौ अपरे च त्रय एकादशासः त्रयस्त्रिंशद्देवाः । ते च ' अष्टौ वसवः एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च ' इति श्रुतिप्रसिद्धाः । सर्वे यूयं सत्याः यथार्थभूताः सन्तः सत्यस्यावितथस्य यज्ञस्य पुरस्तात् पुरोदेशे ददृशे दृश्यमाना भवथ । अतोऽस्माकं संबन्धिनं सवनम् । सूयतेऽभिषूयते सोमो यत्रेति सवनः । तं तादृशं यज्ञं यजनीयमध्वरं जुषाणा जुषमाणौ सेवमानौ युवां सोमम् अभिषुतसोमरसं पातं पिबतम् । कीदृशौ युवाम् । दीद्यग्नी । दीदिः अतिशयेन दीप्यमानः अग्निः जठरानलो ययोस्तौ तादृशौ । भिषजोः भवतोर्दीप्ताग्नित्वमप्युचितमिति भावः ॥

( ३ ) हे अश्विनाश्विनौ पृथिव्याः भूमेर्हेतोः दिवः द्युलोकात् सकाशात् रजसः उदकस्य वृषभः वर्षिता सूर्योऽस्तीति यत् तत्सर्वं वां युवयोः कृतं कर्म पनाय्यं स्तुत्यं भवति । भवदनुग्रहादेव युष्मत्पिता सूर्यः पृथिव्यां वर्षति । नो चेत् तेन तु स्वरश्मिनाडीभिः भूमेर्जलमाकृष्टमस्ति । स कथं वर्षेदाकर्षकः सन् । तस्मात् भवतोरेवैतत्कर्मेत्यभिप्रायः । यत एवमतः गविष्टौ गवामेषणे निमित्ते सति ते[1] प्रसिद्धाः सहस्रसंख्याकाः शंसाः । शस्यन्ते स्तूयन्त इति शंसा यज्ञाः । आरब्धाः सन्तीति शेषः । तान् सर्वानित् सर्वानपि यज्ञान् युवामुपयातं समीपे गच्छतम् । वचनव्यत्ययश्छान्दसः । किमर्थम् । पिबध्यै सोमं पातुम् । उत इत्यनर्थकः ॥

( ४ ) हे यजत्रा यजनीयावश्विनौ अयं पुरोवर्ती वां युवयोः भागः भजनीयोंऽशः सोमलक्षणः निहितः नियमेन स्थापितः । अतस्तं गृहीतुमागच्छतमिति (ग्रहीतु°) शेषः । किंच हे नासत्या नासत्यौ सत्यभूतावश्विनौ युवामिमाः संनिकृष्टाः गिरः स्तुतिलक्षणा वाचः उपयातं समीपे गच्छतं श्रोतुम् । अथ च मधुमन्तं माधुर्योपेतं सोमं पिबतम् । किंच अस्मे अस्माकं संबन्धिनं दाश्वांसं हविर्दत्तवन्तं यजमानं शचीभिः अभिमतफलप्रदानलक्षणैः कर्मभिः प्र अवतं प्रकर्षेण रक्षतम् ॥ ॥ २८ ॥

१. ' ये ' इति मन्त्रपाठः ।

॥ अथ दशमं सूक्तम् ॥

यमृ॒त्विजो॑ बहु॒धा क॒ल्पय॑न्तः॒ सचे॑तसो य॒ज्ञमि॒मं वह॑न्ति ।
यो अ॑नूचा॒नो ब्रा॑ह्म॒णो यु॒क्त आ॑सी॒त्का स्वि॒त्तत्र॒ यज॑मानस्य सं॒वित् ॥ १ ॥
यम् । ऋ॒त्विज॑ः । ब॒हु॒धा । क॒ल्पय॑न्तः । सऽचे॑तसः । य॒ज्ञम् । इ॒मम् । वह॑न्ति ।
यः । अ॒नू॒चा॒नः । ब्रा॒ह्म॒णः । यु॒क्तः । आ॒सी॒त् । का । स्वि॒त् । तत्र॑ । यज॑मानस्य । स॒म्ऽवित् ॥ १ ॥

एक॑ ए॒वाग्निर्ब॑हु॒धा समि॑द्ध॒ एकः॒ सूर्यो॒ विश्व॒मनु॒ प्रभू॑तः ।
एकै॒वोषाः सर्व॑मि॒दं वि भा॒त्येकं॒ वा इ॒दं वि ब॑भूव॒ सर्व॑म् ॥ २ ॥
एक॑ः । ए॒व । अ॒ग्निः । ब॒हु॒धा । सम्ऽइ॑द्धः । एक॑ः । सूर्य॑ः । विश्व॑म् । अनु॑ । प्रऽभू॑तः ।
एका॑ । ए॒व । उ॒षाः । सर्व॑म् । इ॒दम् । वि । भा॒ति॒ । एक॑म् । वै । इ॒दम् । वि । ब॒भू॒व॒ । सर्व॑म् ॥ २ ॥

ज्योति॑ष्मन्तं के॒तुम॑न्तं त्रिच॒क्रं सु॒खं रथं॑ सु॒षदं॒ भूरि॑वारम् ।
चि॒त्राम॑घा॒ यस्य॒ योगे॑ऽधिज॒ज्ञे तं वां॑ हु॒वे अति॑ रिक्तं॒ पिब॑ध्यै ॥ ३ ॥

'यमृत्विजः' इति तृचात्मकं दशमं सूक्तं काण्वस्य मेध्यस्यार्षं वैश्वदेवं त्रैष्टुभम् । अनुक्रान्तं च—'यमृत्विजस्तृचं[1] वैश्वदेवमाद्य ऋत्विक्स्तुतिर्वा[1]' इति । आद्या ऋत्विग्देवत्या वा इत्यर्थः । विनियोगः सूत्रादवगन्तव्यः ॥

( १ ) सचेतसः समानप्रज्ञाः ऋत्विजः यमिमं यज्ञं यजनीयकर्मविशेषं बहुधा अनेकप्रकारेण कल्पयन्तः रचयन्तः सन्तः वहन्ति देवान् प्रापयन्ति । तमिमं यज्ञं कुर्वन् ब्राह्मणः ऋत्विग्लक्षणो विप्रः यज्ञकर्मविशेषे युक्तः समाहितः आसीत् । तत्र कर्मणि का स्वित् । स्विदिति वितर्के । का वा यजमानस्य संवित् प्रज्ञा । न किंचित्करा इत्यर्थः । यत्र कर्मणि ऋत्विगेव सावधानोऽस्ति तत्र यजमानस्य प्रज्ञापाटवेन किं प्रयोजनमस्ति । न किंचिदपीति भावः । कीदृशो ब्राह्मणः । अनूचानः गुरोः सकाशादधीतवेदवेदाङ्गः ॥

( २ ) एकः केवल एवाग्निः दानादिगुणयुक्तो देवः बहुधा वाडववैद्युताद्यनेकप्रकारेण समिद्धः सम्यक् दीप्तो भवति । तथा एकः एकाकी सूर्यः प्राणिनां सुष्ठु कर्मस्वीरयिता देवः विश्वं सर्वं जगदनु अनुप्रविश्य । 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै. उ. २. ६) इति श्रुतेः । प्रभूतः अनेकात्मतया प्रादुर्भूतोऽस्ति । 'सूर्य आत्मा जगतस्तस्थुषश्च' (ऋ. सं. १. ११५. १) इति श्रुतेः । किंच एका एकाकिन्येव उषाः तमो विवासयन्ती देवी सर्वं समस्तमिदं दृश्यमानं जगत् वि भाति विशेषेण दीपयति । तस्मादेकं वै एकमेवाद्वितीयं ब्रह्म इदमाब्रह्मस्तम्बपर्यन्तं जगत् वि बभूव विशेषेणाभवदिति युक्तमिति शेषः । यदाग्न्यादयो देवा अप्येकाकिनः सन्तोऽनेकभवनसमर्थास्तदा परं ब्रह्म एकं सदनेकं भवेदिति किमु वक्तव्यमित्यभिप्रायः ॥

( ३ ) हे विश्वेदेवाः वाम् । वचनव्यत्ययश्छान्दसः । वो युष्माकं मध्ये अतिरिक्तं[2] निरतिशयं तं तच्छब्दवाच्यं परमात्मानं पिबध्यै सोमं पातुं हुवे आह्वयामि । तं कम् । यस्य परमात्मनः योगे सेव्यसेवकभावसंबन्धे सति चित्रमघा । चित्रं चायनीयं मघं गवाश्वादिलक्षणं धनं यस्याः सा चित्रमघा ।

१. अनुक्रमण्यामेतन्नोपलभ्यते । मॅक्.— पृ. ३१ द्रष्टव्यम् ॥ २. 'अति । रिक्तम्' इति पदपाठः ।

ज्योतिष्मन्तम् । केतुऽमन्तम् । त्रिऽचक्रम् । सुऽखम् । रथम् । सुऽसदम् । भूरिऽवारम् ।
चित्रऽमघा । यस्य । योगे । अधिऽजज्ञे । तम् । वाम् । हुवे । अति । रिक्तम् । पिबध्यै ॥३॥॥२९॥

॥ अथैकादशं सूक्तम् ॥

**इमानि वां भागधेयानि सिस्रत इन्द्रावरुणा प्र महे सुतेषु वाम् ।**
**यज्ञेयज्ञे ह सवना भुरण्यथो यत्सुन्वते यजमानाय शिक्षथः ॥ १ ॥**

इमानि । वाम् । भागऽधेयानि । सिस्रते । इन्द्रावरुणा । प्र । महे । सुतेषु । वाम् ।
यज्ञेऽयज्ञे । ह । सवना । भुरण्यथः । यत् । सुन्वते । यजमानाय । शिक्षथः ॥ १ ॥

**निष्षिध्वरीरोषधीराप आस्तामिन्द्रावरुणा महिमानमाशत ।**
**या सिस्रतू रजसः पारे अध्वनो ययोः शत्रुर्नकिरादेव ओहते ॥ २ ॥**

---

पूजनीयानेकधनोपेता लक्ष्मीः अधि जज्ञे अधिकं प्रादुरभूत् युधिष्ठिरादेस्तम् । कीदृशं तम् । ज्योतिष्मन्तं ज्योतींषि सूर्यादीनि प्रकाश्यत्वेन सन्ति यस्य तम् । 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः । केतुमन्तम् । केतवः प्रज्ञाः विषयाः सन्ति यस्य तम् । 'यः सर्वज्ञः सर्ववित्' ( मु. उ. १. १. ९ ) इति श्रुतेः । केतुरिति प्रज्ञानाम । 'केतुः केतः' इति तन्नामसु पाठात् । त्रिचक्रं त्रिषु भूरादिलोकेषु चक्रं चंक्रमणं त्रिविक्रमावतारे यस्य तम् । 'इदं विष्णुर्विचक्रमे' ( ऋ. सं. १. २३. १७ ) इत्यादिश्रुतेः । यद्वा त्रिषु लोकेषु अप्रतिहतं चक्रं सुदर्शनाख्यं यस्य तम् । सुखं निरतिशयानन्दात्मकम् । 'ओं कं ब्रह्म खम्' ( इति ) श्रुतेः । रथं रंहणस्वभावम् । गमनशीलमिति यावत् । 'अपाणिपादो जवनो ग्रहीता' (श्वे. उ. ३. १९) इति श्रुतेः । सुषदम् । शोभने आत्मस्वरूपे सीदति तिष्ठतीति सुषत् सुप्रतिष्ठः तम् । 'प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म' इति श्रुतेः । भूरिवारं भूरिभिर्बहुभिः प्राणिभिः वारो वरणीयस्तम् । सर्वात्मकत्वात् सर्वप्रियत्वमुचितमस्य । 'आत्मनः कामाय सर्वं प्रियं भवति' ( बृ. उ. २. ४. ५ ) इति श्रुतेः ॥　　॥ २९ ॥

'इमानि वाम्' इति सप्तर्चमेकादशं सूक्तं काण्वस्य सुपर्णस्यार्षमैन्द्रावरुणं जागतम् । 'इमानि वां सप्त सुपर्ण ऐन्द्रावरुणं जागतम्' इत्यनुक्रान्तत्वात् । विनियोगः सूत्रादवगन्तव्यः ॥

( १ ) हे इन्द्रावरुणा इन्द्रावरुणौ इमानि इदानीं कृतानि भागधेयानि भवदंशभूतानि चरुपुरोडाशादिहवींषि वां युवां प्रति सिस्रते प्राप्तुमिच्छन्ति । अतः सुतेषु अभिषुतेषु सोमेषु सत्सु महे महते पूजनाय वां युवां प्र प्रार्चये । उपसर्गवशाद्योग्यक्रियाध्याहारः । यत् यस्मात् यज्ञेयज्ञे प्रतियज्ञं सवना त्रिष्वपि सवनेषु भुरण्यथो ह गच्छथः खलु । किंच सुन्वते सोमाभिषवं कुर्वते यजमानाय शिक्षथः अभिमतं प्रयच्छथः । शिक्षतिर्दानकर्मा । 'पृणाति शिक्षति' इति दानकर्मसु पाठात् ॥

( २ ) हे इन्द्रावरुणा इन्द्रावरुणौ भवन्तौ यदा आस्ताम् ओषध्यादिकर्तृत्वेनाभूतां तदा निःषिध्वरीः नितरां मङ्गलस्वभावा ओषधीः व्रीह्याद्या ओषधयः आपः उदकानि च महिमानं भवतोर्माहात्म्यम् आशत व्याप्नुवन्ति । किंच या यौ भवन्तौ रजसोऽन्तरिक्षलोकस्य संबन्धिनः अध्वनो

निःऽसिध्वरीः । ओषधीः । आपः । आस्ताम् । इन्द्रावरुणा । महिमानम् । आशत ।
या । सिस्रतुः । रजसः । पारे । अध्वनः । ययोः । शत्रुः । नकिः । अदेवः । ओहते ॥२॥

**सत्यं तदिन्द्रावरुणा कृशस्य वां मध्व ऊर्मिं दुहते सप्त वाणीः ।**
**ताभिर्दाश्वांसमवतं शुभस्पती यो वामदब्धो अभि पाति चित्तिभिः ॥ ३ ॥**

सत्यम् । तत् । इन्द्रावरुणा । कृशस्य । वाम् । मध्वः । ऊर्मिम् । दुहते । सप्त । वाणीः ।
ताभिः । दाश्वांसम् । अवतम् । शुभः । पती इति ।
यः । वाम् । अदब्धः । अभि । पाति । चित्तिऽभिः ॥ ३ ॥

**घृतप्रुषः सौम्या जीरदानवः सप्त स्वसारः सदन ऋतस्य ।**
**या ह वामिन्द्रावरुणा घृतश्चुतस्ताभिर्धत्तं यजमानाय शिक्षतम् ॥ ४ ॥**

घृतऽप्रुषः । सौम्याः । जीरऽदानवः । सप्त । स्वसारः । सदने । ऋतस्य ।
याः । ह । वाम् । इन्द्रावरुणा । घृतऽश्चुतः । ताभिः । धत्तम् । यजमानाय । शिक्षतम् ॥४॥ ॥३०॥

**अवोचाम महते सौभगाय सत्यं त्वेषाभ्यां महिमानमिन्द्रियम् ।**
**अस्मान्त्स्विन्द्रावरुणा घृतश्चुतस्त्रिभिः साप्तेभिरवतं शुभस्पती ॥ ५ ॥**

---

मार्गस्य पारे परतीरे सिस्रतुः यथेच्छं सरणं कुरुतः । ययोर्भवतोः शत्रुः शातयिता अदेवः देवप्रतियोगी असुरादिः नकिः ओहते न कोऽपि तर्कगोचरो भवति । स्वेच्छया विहरतोर्भवतोः गतिप्रतिघातकः शत्रुः न कोऽप्यस्तीत्यर्थः ॥

( ३ ) हे इन्द्रावरुणा इन्द्रावरुणौ याः सप्तसंख्याकाः सर्पणस्वभावा वा वाणीः वाण्यः सप्तहोत्रकाणां स्तुतिरूपा वाचः कृशस्य एतन्नाम्नो यजमानस्य संबन्धिनः मध्वः मधुरस्य सोमस्य ऊर्मिं तदुपलक्षितं रसं प्रति वां युवां दुहते प्रपूरयन्तीति यत् तत्सत्यमवितथमेव । तस्मात्ताभिर्वाणीभिर्हेतुभूताभिः युवां दाश्वांसं हविर्दत्तवन्तं यजमानम् अवतं रक्षतम् । यजमानं विशिनष्टि । हे शुभस्पती उदकस्य पालयितारा विन्द्रावरुणौ यो यजमानः अदब्धः केनाप्यहिंसितः सन् चित्तिभिः प्रज्ञोपलक्षितैः कर्मभिः वां युवामभि पाति सर्वतो रक्षति । तमवतमिति पूर्वेणान्वयः ॥

( ४ ) ताः सत्यवाण्यः क्व सन्तीत्यपेक्षायामाह । ऋतस्य यज्ञस्य सदने स्थाने सप्त सप्तसंख्याकाः स्वसारः स्वयंसारिण्यो वाण्यः सन्ति । कीदृश्यस्ताः । घृतप्रुषः । घृतमित्युदकनाम । तेन सोमरसो लक्ष्यते । तथा च सोमरसस्राविण्य इत्यर्थः । सोम्याः सोमार्हाः जीरदानवः क्षिप्रदानाः । किंच हे इन्द्रावरुणा इन्द्रावरुणौ या वाण्यः वां युवामुद्दिश्य घृतश्चुतः सोमरसस्राविण्यो भवन्ति अथवा आज्यस्राविण्यो भवन्ति । हेति प्रसिद्धम् । ताभिर्हेतुभूताभिः धत्तं यजमानं पुष्णीतम् । तदर्थं च यजमानाय शिक्षतमभिमतं दत्तम् ॥ ॥ ३० ॥

**( ५ ) हे इन्द्रावरुणा इन्द्रावरुणौ त्वेषाभ्यां दीप्ताभ्यां भवद्भ्यां संपादितं महिमानं कीर्तिविशेषं वयं महते बृहते सौभगाय ऐश्वर्याय अवोचाम वर्णयेम । कीदृशं महिमानम् । सत्यमवितथम् । युष्मत्स्वरू-**

अवोचाम । महते । सौभगाय । सत्यम् । त्वेषाभ्याम् । महिमानम् । इन्द्रियम् ।
अस्मान् । सु । इन्द्रावरुणा । घृतऽश्चुतः । त्रिऽभिः । साप्तेभिः । अवतम् । शुभः । पती इति ॥५॥

इन्द्रावरुणा यदृषिभ्यो मनीषां वाचो मतिं श्रुतमदत्तमग्रे ।
यानि स्थानान्यसृजन्त धीरा यज्ञं तन्वानास्तपसाभ्यपश्यम् ॥ ६ ॥

इन्द्रावरुणा । यत् । ऋषिऽभ्यः । मनीषाम् । वाचः । मतिम् । श्रुतम् । अदत्तम् । अग्रे ।
यानि । स्थानानि । असृजन्त । धीराः । यज्ञम् । तन्वानाः । तपसा । अभि । अपश्यम् ॥६॥

इन्द्रावरुणा सौमनसमदृप्तं रायस्पोषं यजमानेषु धत्तम् ।
प्रजां पुष्टिं भूतिमस्मासु धत्तं दीर्घायुत्वाय प्र तिरतं न आयुः ॥ ७ ॥

इन्द्रावरुणा । सौमनसम् । अदृप्तम् । रायः । पोषम् । यजमानेषु । धत्तम् ।
प्रऽजाम् । पुष्टिम् । भूतिम् । अस्मासु । धत्तम् ।
दीर्घायुऽत्वाय । प्र । तिरतम् । नः । आयुः ॥ ७ ॥  ॥ ३१ ॥

॥ इति वालखिल्यं समाप्तम् ॥

---

पानुकूलमित्यर्थः । इन्द्रियम् इन्द्रयोः परमेश्वरयोर्भवतोर्ज्ञापकम् । तस्मात् हे शुभस्पती उदकस्य पालयिताराविन्द्रावरुणौ युवां घृतश्चुतः सोमरसस्राविणोऽस्मान् यजमानान् त्रिभिः साप्तेभिः । सप्तयोऽश्वाः तेषां समूहः । सप्तयूथैस्तैः त्रिसंख्याकैरश्वसमूहैः सोतं ( ? सु अवतं ) सुतरां पालयतम् । इन्द्रावरुणयोरैश्वर्ययोगात् अश्वैरस्मत्पालनं समञ्जसमिति भावः ॥

( ६ ) हे इन्द्रावरुणा इन्द्रावरुणौ यत् ये ऋषयः यज्ञं तन्वानाः कर्मविशेषं विस्तारयन्तः अत एव धीराः शुद्धान्तःकरणत्वेन धीमन्तः सन्तः अग्रे अन्तःकरणशुद्धेः प्राक् यानि स्थानानि गृहक्षेत्रादीनि स्थितानि तानि असृजन्त विसृष्टवन्तः । तत्यजिरिति ( ? तत्यजुरिति ) यावत् । तेभ्य ऋषिभ्यः मन्त्रदृग्भ्यः मनीषादिश्रुतान्तं सर्वं युवाम् अदत्तं दत्तवन्तौ इत्यहं तपसा आलोचनात्मकेन ज्ञानेन अभ्यपश्यं सर्वतो दृष्टवानस्मि । मनीषा अत्र चिज्जडविवेकवती बुद्धिः । वाचः उपनिषल्लक्षणा गिरः । मतिर्मननं तर्कसामर्थ्यम् । श्रुतं शास्त्रमीमांसालक्षणम् । एतत्सर्वं भवद्भ्यां तेभ्यो दत्तमिति श्रीमच्चरणप्रसादाल्लब्धज्ञानेन मया ज्ञातमित्यृषेर्वक्तुरभिप्रायः ॥

( ७ ) हे इन्द्रावरुणा इन्द्रावरुणौ युवां सौमनसं प्रसन्नमनस्कत्वं तथा अदृप्तम् अनुद्धतम् । मोहशून्यमिति यावत् । रायः धनस्य पोषं पुष्टिं च यजमानेषु धत्तं धारयतम् । किंचास्मासु स्तोतृषु प्रजां पुत्रपौत्रादिरूपां पुष्टिं धनादेः समृद्धिं भूतिं गवाश्वादिगजान्तसंपदं च धत्तं धारयतम् । अथ च दीर्घायुत्वाय चिरजीवनाय नोऽस्माकमायुः जीवितकालं प्र तिरतं प्रवर्धयतम् । प्रपूर्वस्तिरतिर्वर्धनार्थः ॥  ॥ ३१ ॥

सप्तमेऽनुवाके दश सूक्तानि । तत्र 'अग्न आ याहि' इति विंशत्यृचं प्रथमं सूक्तं प्रगाथपुत्रस्य भर्गस्यार्षमाग्नेयम्[1] । प्रथमातृतीयाद्ययुजो बृहत्यो द्वितीयाचतुर्थ्यादियुजः सतोबृहत्यः । तथा चानुक्रान्तम्—'अग्न आ विंशतिर्भर्गः प्रागाथ आग्नेयं प्रागाथं तु' इति । प्रातरनुवाक आग्नेये क्रतौ बार्हते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । तथा च सूत्रितम्—'अयमग्निरग्न आ याहि' (आश्व. श्रौ. ४. १३) इति ॥

अग्न आ याह्यग्निभिर्होतारं त्वा वृणीमहे ।
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥ १ ॥

अग्ने । आ । याहि । अग्निऽभिः । होतारम् । त्वा । वृणीमहे ।
आ । त्वाम् । अनक्तु । प्रऽयता । हविष्मती । यजिष्ठम् । बर्हिः । आऽसदे ॥ १ ॥

हे अग्ने अग्निभिः यष्टव्यैः सह आ याहि आगच्छ । तदर्थं होतारं देवानामाह्वातारं त्वा त्वां वृणीमहे । त्वा त्वामागतं प्रयता अध्वर्युहस्ताभ्यां नियता हविष्मती घृतवती[2] यजिष्ठं त्वां बर्हिः[3] बर्हिषि आसदे आसाद्य आ सर्वतः अनक्तु[4] ॥

अच्छा हि त्वा सहसः सूनो अङ्गिरः स्रुचश्चरन्त्यध्वरे ।
ऊर्जो नपातं घृतकेशमीमहेऽग्निं यज्ञेषु पूर्व्यम् ॥ २ ॥

अच्छ । हि । त्वा । सहसः । सूनो इति । अङ्गिरः । स्रुचः । चरन्ति । अध्वरे ।
ऊर्जः । नपातम् । घृतऽकेशम् । ईमहे । अग्निम् । यज्ञेषु । पूर्व्यम् ॥ २ ॥

हे सहसः सूनो बलस्य पुत्र । बलेन मथ्यमानत्वात् । हे अङ्गिरः अङ्गिरसां मध्ये एक । अथवाङ्गतिर्गतिकर्मा । सर्वत्र संगत । त्वा त्वाम् अध्वरे यागे अच्छ अभिप्राप्तुं स्रुचः चरन्ति गच्छन्ति । अतः ऊर्जः अन्नस्य नपातं न पातयितारं रक्षकं बलस्य नप्तारं वा घृतकेशं प्रदीप्तकेशस्थानीयज्वालं पूर्व्यं[5] पुरातनं पूरकं वा अग्निं यज्ञेषु अस्मदीयेषु ईमहे स्तौमि ॥

अग्ने कविर्वेधा असि होता पावक यक्ष्यः ।
मन्द्रो यजिष्ठो अध्वरेष्वीड्यो विप्रेभिः शुक्र मन्मभिः ॥ ३ ॥

अग्ने । कविः । वेधाः । असि । होता । पावक । यक्ष्यः ।
मन्द्रः । यजिष्ठः । अध्वरेषु । ईड्यः । विप्रेभिः । शुक्र । मन्मऽभिः ॥ ३ ॥

हे अग्ने कविः मेधावी त्वं वेधाः विधाता असि फलानाम् । हे पावक[6] होता देवानामाह्वाता होमनिष्पादको वा यक्ष्यः यष्टव्योऽसि । हे शुक्र दीप्त मन्द्रः मोदनीयः यजिष्ठः यष्टृतमस्त्वम् अध्वरेषु यज्ञेषु विप्रेभिः मेधाविभिर्ऋत्विग्भिः मन्मभिः मननीयैः स्तोत्रैः ईड्यः स्तुत्योऽसि ॥

अद्रोघमा वहोशतो यविष्ठ्य देवाँ अजस्र वीतये ।
अभि प्रयांसि सुधिता वसो गहि मन्दस्व धीतिभिर्हितः ॥ ४ ॥

१. ग-त-न-श—प्रगाथपुत्रभर्गस्या° । २. भ१-२—घृतवती स्रुक्; भ३—हविर्भिर्युक्ता स्रुक् । ३. ग-त-श—'बर्हिः' नास्ति । ४. य—अनक्तु भक्षयतु । ५. त३-४-न-श—सपूर्व्यं । ६. घ—पावक शोधक ।

अद्रोघम् । आ । वह । उशतः । यविष्ठ्य । देवान् । अजस्र । वीतये ।

अभि । प्रयांसि । सुऽधिता । आ । वसो इति । गहि । मन्दस्व । धीतिऽभिः । हितः ॥४॥

ᵛअद्रोघम् अद्रोग्धारं मां प्रति हे ᵛयविष्ठ्य युवतम ᵛअजस्र नित्य ᵛआ ᵛवह आनय । कान् । ᵛउशतः अस्मदर्थं कामयमानान् ᵛदेवान् । किमर्थम् । ᵛवीतये हविर्भक्षणाय । हे ᵛवसो वासकाग्ने ᵛसुधिता सुनिहितानि ᵛप्रयांसि अन्नानि ᵛअभि ᵛगहि अभिगच्छ । आगत्य च ᵛधीतिभिः[1] स्तुतिभिः ᵛहितः निहितः सन् ᵛमन्दस्व । यद्वा । धीतिभिर्मन्दस्वेति संबन्धः ॥

त्वमित्सप्रथा अस्यग्ने त्रातर्ऋतस्कविः ।
त्वां विप्रासः समिधान दीदिव आ विवासन्ति वेधसः ॥ ५ ॥

त्वम् । इत् । सऽप्रथाः । असि । अग्ने । त्रातः । ऋतः । कविः ।

त्वाम् । विप्रासः । सम्ऽइधान । दीदिऽवः । आ । विवासन्ति । वेधसः ॥ ५ ॥

हे ᵛअग्ने ᵛत्रातः रक्षक ᵛऋतः सत्यभूतः ᵛकविः क्रान्तप्रज्ञः ᵛत्वमित् त्वमेव ᵛसप्रथाः सर्वतः पृथुः ᵛअसि भवसि । हे ᵛसमिधान समिध्यमान हे ᵛदीदिवः दीप्त ᵛत्वां ᵛविप्रासः विप्रा मेधाविनः ᵛवेधसः विधातारः स्तोतारः ᵛविवासन्ति[2] परिचरन्ति ॥ ॥ ३२ ॥

शोचा शोचिष्ठ दीदिहि विशे मयो रास्व स्तोत्रे महाँ असि ।
देवानां शर्मन्मम सन्तु सूरयः शत्रूषाहः स्वग्नयः ॥ ६ ॥

शोच । शोचिष्ठ । दीदिहि । विशे । मयः । रास्व । स्तोत्रे । महान् । असि ।

देवानाम् । शर्मन् । मम । सन्तु । सूरयः । शत्रुऽसहः । सुऽअग्नयः ॥ ६ ॥

हे ᵛशोचिष्ठ अतिशयेन शोचयितरग्ने ᵛशोच दीप्यस्व । ᵛदीदिहि दीपयास्मान् । ᵛविशे प्रजायै ᵛस्तोत्रे ᵛमयः सुखं ᵛरास्व देहि । त्वं ᵛमहानसि । ᵛदेवानां[3] संबन्धिनि ᵛशर्मन् शर्मणि सुखे ᵛमम ᵛसूरयः स्तोतारो मेधाविनोऽस्माकं पुत्रादयो वा ᵛसन्तु भवन्तु। ᵛशत्रूषाहः शत्रूणामभिभवितारः ᵛस्वग्नयः शोभनाग्नयश्च सन्तु ॥

यथा चिद्वृद्धमतसमग्ने संजूर्वसि क्षमि ।
एवा दह मित्रमहो यो अस्मध्रुग्दुर्मन्मा कश्च वेनति ॥ ७ ॥

यथा । चित् । वृद्धम् । अतसम् । अग्ने । सम्ऽजूर्वसि । क्षमि ।

एव । दह । मित्रऽमहः । यः । अस्मऽध्रुक् । दुःऽमन्मा । कः । च । वेनति ॥ ७ ॥

हे ᵛअग्ने ᵛक्षमि क्षमायां वर्तमानं ᵛवृद्धमतसं शुष्कं काष्ठं ᵛयथा येन प्रकारेण ᵛसंजूर्वसि । जूर्वतिर्हिंसाकर्मा । सम्यग्दहसीत्यर्थः । ᵛएव एवं ᵛदह हे ᵛमित्रमहः मित्राणामस्माकं पूजक तेजो[4] वा । कम्[4] । ᵛयः ᵛअस्मध्रुक् अस्माकं द्रोग्धा ᵛकश्च कश्चित् ᵛदुर्मन्मा दुर्मतिः ᵛवेनति कामयते अस्मान् द्रोग्धुं तं दहेति[5] ॥

---

१. ङ-भ-धीतिभिः कर्मभिः । २. घ-आविवासंति । ३. ख-घ-त-न-भ-श-मु-त्वं देवानां । ४. ख-ङ-त१-२-तेजो वार्यक; ग-तेजो वा; त३-४-श-तेजोवाक । ५. त-न-भ१-२-श-दहतेति; भ३-दहति ।

मा नो मर्ताय रिपवे रक्षस्विने माघशंसाय रीरधः ।
अस्रेधद्भिस्तरणिभिर्यविष्ठ्य शिवेभिः पाहि पायुभिः ॥ ८ ॥

मा । नः । मर्ताय । रिपवे । रक्षस्विने । मा । अघऽशंसाय । रीरधः ।
अस्रेधत्ऽभिः । तरणिऽभिः । यविष्ठ्य । शिवेभिः । पाहि । पायुऽभिः ॥ ८ ॥

˅नः अस्मान् ˅मर्ताय[1] मरणधर्माय[1] ˅रिपवे शत्रवे हिंसित्रे ˅रक्षस्विने बलवते ˅मा ˅रीरधः वशमानय[2] । तथा ˅अघशंसाय पापशंसकाय ˅मा रीरधः । हे ˅यविष्ठ्य युवतम ˅अस्रेधद्भिः अहिंसकैः ˅तरणिभिः तारकैः ˅शिवेभिः सुखकरैः ˅पायुभिः पालनैः नोऽस्मान् ˅पाहि रक्ष ॥

पाहि नो अग्न एकया पाह्युत द्वितीयया ।
पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो ॥ ९ ॥

पाहि । नः । अग्ने । एकया । पाहि । उत । द्वितीयया ।
पाहि । गीःऽभिः । तिसृऽभिः । ऊर्जाम् । पते । पाहि । चतसृऽभिः । वसो इति ॥ ९ ॥

हे ˅अग्ने ˅नः अस्मान् ˅एकया ऋचा गिरा ˅पाहि रक्ष । ˅उत अपि च ˅द्वितीयया ऋचा ˅पाहि पालय । ˅पाहि ˅तिसृभिः ˅गीर्भिः ˅ऊर्जाम् अन्नानां बलानां वा ˅पते[3] स्वामिन् । तथा ˅पाहि ˅चतसृभिः गीर्भिर्हे ˅वसो वासकाग्ने ॥

पाहि विश्वस्माद्रक्षसो अराव्णः प्र स्म वाजेषु नोऽव ।
त्वामिद्धि नेदिष्ठं देवतातय आपिं नक्षामहे वृधे ॥ १० ॥

पाहि । विश्वस्मात् । रक्षसः । अराव्णः । प्र । स्म । वाजेषु । नः । अव ।
त्वाम् । इत् । हि । नेदिष्ठम् । देवऽतातये । आपिम् । नक्षामहे । वृधे ॥ १० ॥

हे अग्ने ˅विश्वस्मात् सर्वस्मात् ˅रक्षसः ˅अराव्णः अदातुः सकाशात् ˅पाहि रक्षास्मान् । ˅वाजेषु संग्रामेषु ˅नः अस्मान् ˅प्र ˅अव प्रकर्षेण रक्ष । ˅स्म इति पूरणः । ˅हि यस्मात् ˅नेदिष्ठम् आसन्नम् ˅आपिं बन्धुभूतं ˅त्वामित् त्वामेव ˅देवतातये यज्ञाय यज्ञसिद्ध्यर्थं ˅वृधे वर्धनाय ˅नक्षामहे व्याप्नुमः । नक्षतिर्व्याप्तिकर्मा ॥ ॥ ३३ ॥

आ नो अग्ने वयोवृधं रयिं पावक शंस्यम् ।
रास्वा च न उपमाते पुरुस्पृहं सुनीती स्वयशस्तरम् ॥ ११ ॥

आ । नः । अग्ने । वयःऽवृधम् । रयिम् । पावक । शंस्यम् ।
रास्व । च । नः । उपऽमाते । पुरुऽस्पृहम् । सुऽनीती । स्वयशःऽतरम् ॥ ११ ॥

हे ˅अग्ने ˅पावक शोधक ˅वयोवृधम् अन्नस्य वर्धकं ˅शंस्यं शंसनीयं[4] ˅रयिं धनं ˅नः अस्मभ्यम् ˅आ हरेति शेषः । आहृत्य च हे ˅उपमाते । उपास्मत्समीपे माति नो धनमित्युपमातिः । हे तादृशाग्ने

---

१. ख-ग-त-न-भ-श–' मर्ताय मरणधर्माय ' नास्ति । २. भ–वशं मानय । ३. ग-त-न-भ-श– ' पते ' नास्ति । ४. ख-ग-त-न-भ-श–' शंसनीयं ' नास्ति ।

Vनः अस्मभ्यं Vसुनीती सुनीत्या शोभननयनेन Vपुरुस्पृहं बहुभिः स्पृहणीयं Vस्वयशस्तरम् अत्यन्तं स्वभूतकीर्तिं धनं Vरास्व Vच देहि ॥

**येन॒ वंसा॑म॒ पृत॑नासु॒ शर्ध॑त॒स्तर॑न्तो अ॒र्य आ॒दिशः॑ ।**
**स त्वं नो॑ वर्ध॒ प्रय॑सा शचीवसो॒ जिन्वा॒ धियो॑ वसु॒विदः॑ ॥ १२ ॥**

येन॑ । वंसा॑म । पृत॑नासु । शर्ध॑तः । तर॑न्तः । अ॒र्यः । आ॒ऽदिशः॑ ।
सः । त्वम् । नः॒ । व॒र्ध॒ । प्रय॑सा । श॒ची॒व॒सो॒ इति॑ शचीऽवसो । जिन्व॑ । धिय॑ः । व॒सु॒ऽविदः॑ ॥ १२ ॥

Vयेन धनेन Vपृतनासु संग्रामेषु Vशर्धतः[१] वेगं कुर्वतः[१] Vअर्यः अरीञ्छत्रून् Vआदिशः आदेष्टृञ्छस्त्रप्रक्षेप्तृन् Vतरन्तः Vवंसाम हिंसाम तद्धनं देहि । हे Vशचीवसो प्रज्ञया वासयितः कर्मधन वा Vसः प्रसिद्धः Vत्वं Vनः अस्मान् Vवर्ध वर्धय प्रीणय । Vप्रयसा अन्नेन त्वं वा वर्ध । अस्मदीयेन प्रयसा हविषा Vवसुविदः वसूनां लम्भकानि Vधियः कर्माण्यस्मदीयानि Vजिन्व प्रीणय ॥

**शिशा॑नो वृष॒भो य॑था॒ग्निः शृङ्गे॒ दवि॑ध्वत् ।**
**ति॒ग्मा अ॑स्य॒ हन॑वो॒ न प्र॑ति॒धृषे॑ सु॒जम्भ॒ः सह॑सो य॒हुः ॥ १३ ॥**

शिशा॑नः । वृ॒ष॒भः । य॒था । अ॒ग्निः । शृङ्गे॒ इति॑ । दवि॑ध्वत् ।
ति॒ग्माः । अ॒स्य॒ । हन॑वः । न । प्र॒ति॒ऽधृषे॑ । सु॒ऽजम्भ॑ः । सह॑सः । य॒हुः ॥ १३ ॥

अयम् Vअग्निः Vशृङ्गे Vशिशानः तीक्ष्णीकुर्वन् Vवृषभो Vयथा Vदविध्वत् कम्पयति शिरः एवं शृङ्गस्थानीया[२] ज्वालाः शिशानस्तीक्ष्णीकुर्वन् दविध्वत् कम्पयति शिरः । Vअस्य अग्नेः Vहनवो Vन हनव इव हनुस्थानीया ज्वालाः Vतिग्माः[३] Vन Vप्रतिधृषे प्रतिधर्षितुमशक्याः । योऽग्निः Vसुजम्भः सुदंष्ट्रः Vसहसो Vयहुः सहसः पुत्रः अस्य हनव इत्यर्थः ॥

**न॒हि ते॑ अग्ने वृषभ प्रति॒धृषे॒ जम्भा॑सो॒ यद्वि॒तिष्ठ॑से ।**
**स त्वं नो॑ होत॒ः सुहु॑तं ह॒विष्कृ॑धि॒ वंस्वा॑ नो॒ वार्या॑ पु॒रु ॥ १४ ॥**

न॒हि । ते॒ । अ॒ग्ने॒ । वृ॒ष॒भ॒ । प्र॒ति॒ऽधृषे॑ । जम्भा॑सः । यत् । वि॒ऽतिष्ठ॑से ।
सः । त्वम् । नः॒ । हो॒त॒रिति॑ । सुऽहु॑तम् । ह॒विः । कृ॒धि॒ । वंस्व॑ । नः॒ । वार्या॑ । पु॒रु ॥ १४ ॥

हे Vवृषभ वर्षक Vते तव Vजम्भासः जम्भा दन्तस्थानीया ज्वालाः Vनहि Vप्रतिधृषे प्रतिधर्षितुं न शक्याः । Vयत् यस्मात् Vवितिष्ठसे विविधं गच्छसि । प्रवर्धस इत्यर्थः । हे Vहोतः होमनिष्पादक Vस Vत्वं Vहविः अस्मद्दत्तं Vसुहुतं Vकृधि कुरु । Vनः अस्मभ्यं Vवार्या वरणीयानि Vपुरु बहूनि Vवंस्व देहि ॥

**शेषे॒ वने॑षु मा॒त्रोः सं त्वा॒ मर्ता॑स इन्धते ।**
**अत॑न्द्रो ह॒व्या व॑हसि ह॒विष्कृ॑त॒ आदिद्दे॒वेषु॑ राजसि ॥ १५ ॥**

---

१. ग—शर्धतीं वेगं कुर्वतः; घ-ज्ञ-त१-२-श—शर्धतः वेगं कुरुतः; त३-४—शर्धत वेगं कुरुत; न—वर्धत वेगं कुरुत । २. ज्ञ-त२-४-न-भ१-३-श—शृंगे स्थानीया । ३. ख-ग-त-न-भ-श—' तिग्माः ' नास्ति ।

शेषे । वनेषु । मात्रोः । सम् । त्वा । मर्तासः । इन्धते ।

अतन्द्रः । हव्या । वहसि । हविःऽकृतः । आत् । इत् । देवेषु । राजसि ॥ १५ ॥

हे अग्ने ᵛवनेषु वर्तमानयोः ᵛमात्रोः अरण्योः ᵛशेषे स्वपिषि वर्तसे। ᵛत्वा त्वां तथाभूतं ᵛमर्तासः मनुष्या अध्वर्य्वादयो मथनेनोत्पाद्य ᵛसम् ᵛइन्धते। पश्चात् प्रवृद्धस्त्वम् ᵛअतन्द्रः अनलसः सन् ᵛहविष्कृतः यजमानस्य ᵛहव्या हवींषि ᵛवहसि देवान् प्रति। ᵛआदित् अनन्तरमेव ᵛदेवेषु मध्ये ᵛराजसि दीप्यसे ॥ ॥ ३४ ॥

सप्त होतारस्तमिदीळते त्वाग्ने सुत्यजमह्रयम् ।
भिनत्स्यद्रिं तपसा वि शोचिषा प्राग्ने तिष्ठ जनाँ अति ॥ १६ ॥

सप्त । होतारः । तम् । इत् । ईळते । त्वा । अग्ने । सुऽत्यजम् । अह्रयम् ।

भिनत्सि । अद्रिम् । तपसा । वि । शोचिषा । प्र । अग्ने । तिष्ठ । जनान् । अति ॥ १६ ॥

हे ᵛअग्ने ᵛतमित् तमेव ᵛत्वा त्वां ᵛसप्त ᵛहोतारः होत्रकाः ᵛईळते स्तुवन्ति। कीदृशं त्वाम्। ᵛसुत्यजं सुत्यागम्। अभिमतप्रदमित्यर्थः। ᵛअह्रयम् अक्षीणं प्रवृद्धम्। किंच ᵛअद्रिं मेघं ᵛतपसा तापकेन ᵛशोचिषा तेजसा। तपसा शोचिषा चेति वा योज्यम्। ᵛवि ᵛभिनत्सि। हे ᵛअग्ने ᵛजनान् अस्मान् ᵛअति अतीत्य ᵛप्र ᵛतिष्ठ प्रगच्छ हविरादाय देवान् प्रति। अथवास्मद्विरोधिजनानतिक्रम्य प्र तिष्ठ ॥

अग्निमग्निं वो अध्रिगुं हुवेम वृक्तबर्हिषः ।
अग्निं हितप्रयसः शश्वतीष्वा होतारं चर्षणीनाम् ॥ १७ ॥

अग्निम्ऽअग्निम् । वः । अध्रिऽगुम् । हुवेम । वृक्तऽबर्हिषः ।

अग्निम् । हितऽप्रयसः । शश्वतीषु । आ । होतारम् । चर्षणीनाम् ॥ १७ ॥

ᵛअग्निमग्निम्। वीप्सादरार्था। अग्निमेव हे यजमानाः ᵛवः युष्मदर्थं ᵛहुवेम आह्वयाम। अथवा। हे देवाः[1] वो[1] युष्मदर्थमिति वा व्याख्येयम्। कीदृशा वयम्। ᵛवृक्तबर्हिषः छिन्नदर्भाः। कीदृशमग्निम्। ᵛअध्रिगुम् अधृतगमनं[2] सर्वदा गृहे वर्तमानम् ᵛअग्निम्। ᵛहितप्रयसः निहितहविष्का वयम् ᵛआ हुवेमेति शेषः। कीदृशमग्निम्। ᵛशश्वतीषु बह्वीषु भूमिषु वर्तमानं ᵛहोतारं होमनिष्पादकम्। किमर्थम्। ᵛचर्षणीनां मनुष्याणामर्थाय। अग्नौ तृप्ते सति वृष्टिलाभात् प्राण्युपकारसिद्धं[3] प्राण्यर्थत्वम्। अथवा मनुष्याणां यजमानानां होतारं होमसाधकम् ॥

केतेन शर्मन्त्सचते सुषामण्यग्ने तुभ्यं चिकित्वना ।
इषण्यया नः पुरुरूपमा भर वाजं नेदिष्ठमूतये ॥ १८ ॥

केतेन । शर्मन् । सचते । सुऽसामनि । अग्ने । तुभ्यम् । चिकित्वना ।

इषण्यया । नः । पुरुऽरूपम् । आ । भर । वाजम् । नेदिष्ठम् । ऊतये ॥ १८ ॥

---

१. ख-त-श—वा यो; न—वा वो। २. ख-ग-त—अधृतकर्माणं; न-भ—अधृतगमनकर्माणं। ३. ख-त-न-भ२-३-श—प्राण्युपकारं सिद्धं।

हे ᵛअग्ने ᵛतुभ्यं ᵛचिकित्वना चिकितुषा जनेन होत्रादिना सह यजमानः ᵛकेतेन प्रज्ञापकेन स्तोत्रेण यजत इति शेषः। कुत्रेति तदुच्यते। ᵛसुषामणि शोभनरथन्तरादिसामोपेते ᵛशर्मन् शर्मणि सुखसाधने यज्ञे। अतो हे अग्ने ᵛइषण्यया इच्छया स्वीयया ᵛनः अस्मभ्यं ᵛपुरुरूपं नानारूपं ᵛनेदिष्ठम् अन्तिके सर्वदा वर्तमानं ᵛवाजम् अन्नम् ᵛऊतये रक्षणाय ᵛआ ᵛभर आहर ॥

अग्ने॑ जरितर्वि॒श्पति॑स्तेपा॒नो दे॑व र॒क्षसः॑ ।
अप्रो॑षिवान्गृ॒हप॑तिर्म॒हाँ अ॑सि दि॒वस्पा॒युर्दु॑रोण॒युः ॥ १९ ॥

अग्ने॑ । जरि॑तः । वि॒श्पतिः॑ । ते॒पा॒नः । दे॒व॒ । र॒क्षसः॑ ।
अप्रो॑षिऽवान् । गृ॒हऽप॑तिः । म॒हान् । अ॒सि॒ । दि॒वः । पा॒युः । दु॒रो॒ण॒ऽयुः ॥ १९ ॥

हे ᵛअग्ने ᵛदेव ᵛजरितः स्तोतः। स्तुत्येत्यर्थः। ᵛविश्पतिः प्रजानां पालकः ᵛरक्षसः राक्षसानां ᵛतेपानः संतापकोऽसि। ᵛअप्रोषिवान् यजमानगृहमत्यजन्। तदेवाह। ᵛगृहपतिः यजमानगृहस्य पालकश्च त्वं ᵛमहान् अतिशयेन पूज्यः ᵛअसि। ᵛदिवः द्युलोकस्य ᵛपायुः पाता ᵛदुरोणयुः यजमानगृहस्य मिश्रयिता। सर्वदा वर्तमान इत्यर्थः। तादृशस्त्वं महानसीत्यन्वयः ॥

मा नो॒ रक्ष॒ आ वे॑शीदाघृणीवसो॒ मा या॒तुर्या॑तु॒माव॑ताम् ।
प॒रो॒ग॒व्यू॒त्यनि॑रा॒मप॒ क्षुध॑मग्ने॒ सेध॒ र॒क्ष॒स्विनः॑ ॥ २० ॥

मा । न॒ः । रक्षः॑ । आ । वे॒शी॒त् । आ॒घृ॒णि॒व॒सो॒ इत्या॑घृणिऽवसो । मा । या॒तुः । या॒तु॒ऽमाव॑ताम् ।
प॒रः॒ऽग॒व्यु॒ति । अनि॑राम् । अप॑ । क्षुध॑म् । अग्ने॑ । सेध॑ । र॒क्ष॒स्विनः॑ ॥ २० ॥

हे ᵛआघृणीवसो दीप्तधनाग्ने ᵛनः अस्मान् ᵛरक्षः राक्षसादिः। 'रक्षो रक्षितव्यमस्मात्' (निरु. ४. १८) इति यास्कः। ᵛमा ᵛआ ᵛवेशीत् सर्वतो न प्रविशतु। तथा ᵛयातुमावताम्। यातुर्यातना पीडा। तद्वतां यातुधानानां ᵛयातुः पीडा ᵛमा वेशीत्। हे ᵛअग्ने ᵛअनिराम्। इरान्नम्। अन्नाभावं दारिद्र्यं ᵛक्षुधं क्षपयितारं ᵛरक्षस्विनः बलवन्ति रक्षांसि च ᵛपरोगव्यूति क्रोशद्वयाद्देशात् परस्तात्। एतदुपलक्षणम्। अत्यन्तं दूरदेशे ᵛअप ᵛसेध परिहर। अनिरा क्षुत् बाह्यानि रक्षांसि च न पीडयन्त्विति ॥　　॥ ३५ ॥

'उभयं शृणवत्' इत्यष्टादशर्चं द्वितीयं सूक्तं प्रागाथस्य भर्गस्यार्षम्। अत्रानुक्रमणिका- 'उभयं द्यूना' इति। पूर्वसूक्ते 'प्रागाथं[1] तु' इत्युक्तत्वादिदमपि प्रागाथम्[2]। अत्रायुजो बृहत्यो युजः सतोबृहत्यः। अनुक्तत्वादिन्द्रो देवता। महाव्रते निष्केवल्ये बार्हततृचाशीतावेतत्सूक्तं सप्तम्यष्टमीवर्जम्। तथैव पञ्चमारण्यके सूत्रितं शौनकेन-'उभयं शृणवच्च न इति सप्तमीं चाष्टमीं चोद्धरति' (ऐ. आ. ५. २. ४) इति। चातुर्विंशिकेऽहनि निष्केवल्ये 'उभयम्' इति बृहत्सामप्रगाथः। सूत्रितं च-'उभयं शृणवच्च नः' (आश्व. श्रौ. ७. ३) इति। चातुर्विंशिकेऽहनि माध्यंदिनसवनेऽच्छावाकस्यायमेव स्तोत्रियः प्रगाथः। तथा च सूत्रितम्-'उभयं शृणवच्च न आ वृषस्व पुरूवसो' (आश्व. श्रौ. ७. ४) इति। एवमन्यत्रापि यस्मिन्नहनि पृष्ठस्तोत्रे बृहत्साम क्रियते तस्मिन्नहनि निष्केवल्येऽयं प्रगाथः ॥

१. ख-ग-त-भ२-श-प्रगाथं; न-प्रगाथा। २. ख-ग-प्रगाथं।

उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः ।
सत्राच्या मघवा सोमपीतये धिया शविष्ठ आ गमत् ॥ १ ॥

उभयम् । शृणवत् । च । नः । इन्द्रः । अर्वाक् । इदम् । वचः ।
सत्राच्या । मघऽवा । सोमऽपीतये । धिया । शविष्ठः । आ । गमत् ॥ १ ॥

उभयं स्तोत्रात्मकं शस्त्रात्मकं चोभयविधम् इदं वचः अर्वाक् अस्मदभिमुखम् इन्द्रः शृणवत् शृणोतु । श्रुत्वा च सत्राच्या अस्माकं सहाञ्चन्त्या धिया युक्तः सन् मघवा शविष्ठः अतिशयेन बलवान् आ गमत् आगच्छतु सोमपीतये सोमपानाय ॥

तं हि स्वराजं वृषभं तमोजसे धिषणे निष्टतक्षतुः ।
उतोपमानां प्रथमो नि षीदसि सोमकामं हि ते मनः ॥ २ ॥

तम् । हि । स्वऽराजम् । वृषभम् । तम् । ओजसे । धिषणे इति । निःऽततक्षतुः ।
उत । उपऽमानाम् । प्रथमः । नि । सीदसि । सोमऽकामम् । हि । ते । मनः ॥ २ ॥

तं हि तं खल्विन्द्रं स्वराजं स्वयमेव राजमानं धिषणे द्यावापृथिव्यौ वृषभं जगदुपकारिकाया वृष्टेर्वर्षकं निष्टतक्षतुः संचस्करतुः । तं तमेवेन्द्रम् ओजसे बलाय निष्टतक्षतुः । उत यस्मादेवं तस्मात् हे इन्द्र उपमानाम् उपमानभूतानामन्येषां देवानां मध्ये प्रथमः मुख्यः सन् नि षीदसि वेद्याम् । सोमकामं हि खलु ते मनः ॥

पूर्वोक्तेऽच्छावाकशस्त्रे ' आ वृषस्व ' इति प्रगाथो वैकल्पिकोऽनुरूपः । सूत्रमुक्तम् ॥

आ वृषस्व पुरूवसो सुतस्येन्द्रान्धसः ।
विद्मा हि त्वा हरिवः पृत्सु सासहिमधृष्टं चिद्दधृष्वणिम् ॥ ३ ॥

आ । वृषस्व । पुरुवसो इति पुरुऽवसो । सुतस्य । इन्द्र । अन्धसः ।
विद्म । हि । त्वा । हरिऽवः । पृत्ऽसु । ससहिम् । अधृष्टम् । चित् । दधृष्वणिम् ॥ ३ ॥

हे पुरूवसो बहुधन इन्द्र त्वम् आ वृषस्व आसिञ्चस्व । किम्[1] । सुतस्य अन्धसः सुतमन्धः सोमं जठरे । हे हरिवः हरिभ्यां तद्वन्निन्द्र त्वा त्वां विद्म[2] हि[2] जानीमः खलु । कीदृशम् । पृत्सु संग्रामेषु सासहिम् अभिभवितारं शत्रूणाम् अधृष्टं चित् कैरप्यधर्षणीयं दधृष्वणिम् अन्येषां धर्षकम् ॥

अप्रामिसत्य मघवन्तथेदसदिन्द्र क्रत्वा यथा वशः ।
सनेम वाजं तव शिप्रिन्नवसा मक्षू चिद्यन्तो अद्रिवः ॥ ४ ॥

अप्रामिऽसत्य । मघऽवन् । तथा । इत् । असत् । इन्द्र । क्रत्वा । यथा । वशः ।
सनेम । वाजम् । तव । शिप्रिन् । अवसा । मक्षु । चित् । यन्तः । अद्रिऽवः ॥ ४ ॥

---

१. ख-त-न-भ-श-किंच; ग-किं तत् । २. ग-विद्यामही; ज्ञ-त२-विद्ममहि; त३-४-न-श-विद्यामहि; भ१-विद्माहि ।

हे ᵛअप्रामिसत्य अहिंसितसत्य हे ᵛमघवन् इन्द्र ᵛतथेदसत् तथैव भवति । हे ᵛइन्द्र ᵛक्रत्वा कर्मणा प्रज्ञानेन ᵛयथा[1] येन[1] प्रकारेण ᵛवशः कामयेः । हे ᵛशिप्रिन् ᵛअवसा रक्षणेन निमित्तेन ᵛवाजम् अन्नं ᵛसनेम संभजेम वयं ᵛतव त्वदनुग्रहात् । कीदृशा वयम् । ᵛमक्षु ᵛचित् शीघ्रमेव ᵛयन्तः शत्रून् गच्छन्तोऽभिभवन्तः । हे ᵛअद्रिवः । अद्रिर्वज्रः । तद्वन्निन्द्रेति ॥

**शग्ध्यू३ षु शचीपत इन्द्र विश्वाभिरूतिभिः ।**
**भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥ ५ ॥**

शग्धि । ऊँ इति । सु । शचीऽपते । इन्द्र । विश्वाभिः । ऊतिऽभिः ।
भगम् । न । हि । त्वा । यशसम् । वसुऽविदम् । अनु । शूर । चरामसि ॥ ५ ॥

हे ᵛशचीपते ᵛइन्द्र ᵛशग्धि देह्यभिमतम् । ᵛविश्वाभिः सर्वाभिः ᵛऊतिभिः[2] मरुद्भिः सह । हे ᵛशूर ᵛभगं ᵛन भाग्यमिव ᵛयशसं यशस्विनं ᵛवसुविदं धनस्य लम्भकं ᵛत्वा त्वाम् ᵛअनु ᵛचरामसि अनुचरामः । परिचरामेत्यर्थः ॥　　॥ ३६ ॥

**पौरो अश्वस्य पुरुकृद्गवामस्युत्सो देव हिरण्ययः ।**
**नकिर्हि दानं परिमर्धिषत्त्वे यद्यद्यामि तदा भर ॥ ६ ॥**

पौरः । अश्वस्य । पुरुऽकृत् । गवाम् । असि । उत्सः । देव । हिरण्ययः ।
नकिः । हि । दानम् । परिऽमर्धिषत् । त्वे इति । यत्ऽयत् । यामि । तत् । आ । भर ॥ ६ ॥

हे इन्द्र त्वम् ᵛअश्वस्य ᵛपौरः पूरयिता ᵛअसि भवसि । तथा ᵛगवां[3] ᵛपुरुकृत् बहुकर्तासि । हे ᵛदेव ᵛहिरण्ययः हिरण्मयशरीरस्त्वम् ᵛउत्सः[4] उत्ससदृशोऽसि । हे इन्द्र ᵛत्वे त्वयि वर्तमानं ᵛदानम् अस्मद्विषयं देयं धनं वा ᵛनकिः[5] ᵛपरिमर्धिषत् न कश्चिद्धिनस्ति । अतः ᵛयद्यद्यामि याचे ᵛतदा ᵛभर आहर मह्यम् ॥

यद्यग्निष्टोमे[6] बृहत्साम[6] तदानीं निष्केवल्ये प्रगाथोऽनुरूपः । सूत्रितं च—' त्वं ह्येहि चेरव इति प्रगाथा एते भवन्ति ' ( आश्व. श्रौ. ५. १५ ) इति । महाव्रते निष्केवल्य उत्तरपक्षेऽयं प्रगाथः । तथैव पञ्चमारण्यके सूत्रितं—' त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति बृहतः स्तोत्रियानुरूपौ प्रगाथौ ' ( ऐ. आ. ५. २. २ ) इति ॥

**त्वं ह्येहि चेरवे विदा भगं वसुत्तये । उद्वावृषस्व मघवन्गविष्टय उदिन्द्राश्वमिष्टये ॥ ७ ॥**

त्वम् । हि । आ । इहि । चेरवे । विदाः । भगम् । वसुत्तये ।
उत् । ववृषस्व । मघऽवन् । गोऽइष्टये । उत् । इन्द्र । अश्वम्ऽइष्टये ॥ ७ ॥

हे इन्द्र ᵛत्वं ᵛहि त्वं खलु । सामर्थ्याद्दातेति गम्यते । अतः ᵛएहि आगच्छ । आगत्य चास्मभ्यं ᵛभगं भजनीयं धनं ᵛविदाः लभस्व दत्स्व । किमर्थम् । ᵛवसुत्तये अस्माकं वसुदानाय । हे ᵛमघवन् ᵛगविष्टये गा इच्छते मह्यं ᵛउद्ववृषस्व उत्सिञ्चस्व गामिति शेषः । तथा हे ᵛइन्द्र ᵛअश्वमिष्टये अश्वैषणवते मह्यमश्वान् ᵛउत् ववृषस्व उत्सिञ्चस्व देहि ॥

---

१. ख-झ-त१-२—वा यद्यथानेन; घ-त३-४-भ३—यद्यथानेन; भ२—वा यद्यथा येन; न-श—यथानेन । २. ख-झ-त१-२-मु—ऊतिभी रक्षकैः; घ—रक्षकैः । ३. ख-घ-झ-त१-२—गवां पौरः । ४. ख-ग-त-श—' उत्सः ' नास्ति । ५. ख-ग-त-न-भ१-२-श—नकिर्दानं; भ३—नकिर्हि । ६. ख-ग-त-न-श—'ष्टोमबृहत्साम ।

त्वं पुरू सहस्राणि शतानि च यूथा दानाय मंहसे ।
आ पुरंदरं चकृम विप्रवचस इन्द्रं गायन्तोऽवसे ॥ ८ ॥

त्वम् । पुरु । सहस्राणि । शतानि । च । यूथा । दानाय । मंहसे ।
आ । पुरम्ऽदरम् । चकृम । विप्रऽवचसः । इन्द्रम् । गायन्तः । अवसे ॥ ८ ॥

हे इन्द्र ᵛत्वं ᵛपुरु पुरूणि बहूनि ᵛसहस्राणि ᵛशतानि ᵛच ᵛयूथा गवादियूथानि ᵛदानाय यजमानविषयाय ᵛमंहसे अनुमन्यसे। यद्वा। दानाय दात्रे यजमानाय मंहसे प्रयच्छसि। मंहतिर्दानकर्मा। अथ परोक्षेण ब्रवीति। ᵛपुरंदरं शत्रुपुराणां दारयितारम् ᵛइन्द्रम् ᵛअवसे रक्षणाय प्रीतये वा ᵛगायन्तः स्तुवन्तः ᵛविप्रवचसः विविधप्रकृष्टवचना वयम् ᵛआ आगन्तारमभिमुखं वा ᵛचकृम कुर्मः॥

अविप्रो वा यदविधद्विप्रो वेन्द्र ते वचः ।
स प्र ममन्दत्त्वाया शतक्रतो प्राचामन्यो अहंसन ॥ ९ ॥

अविप्रः । वा । यत् । अविधत् । विप्रः । वा । इन्द्र । ते । वचः ।
सः । प्र । ममन्दत् । त्वाऽया । शतक्रतो इति शतऽक्रतो ।
प्राचामन्यो इति प्राचाऽमन्यो । अहम्ऽसन ॥ ९ ॥

हे ᵛइन्द्र ᵛते तव ᵛवचः स्तोत्रं ᵛयत् यः ᵛअविप्रो ᵛवा अमेधाव्यस्तुतिकुशलो वा ᵛविप्रः मेधावी स्तुतिकुशलः ᵛवा ᵛअविधत् कुर्यात्। त्वां स्तौतीत्यर्थः। ᵛसः स्तोता ᵛत्वाया त्वयीच्छया साधनेन ᵛप्र ᵛममन्दत् प्रकर्षेण मोदते। हे ᵛशतक्रतो बहुकर्मन् हे ᵛप्राचामन्यो प्राचीनक्रोध। अप्रतिहतक्रोधेत्यर्थः। न हीन्द्रक्रोधं प्रतिहन्ति कश्चित्। हे ᵛअहंसन। संग्रामेऽहमित्यात्मनो महत्त्वं प्रकाशयन् यः शत्रुं संभजते स तथोक्तः। तादृशेन्द्र ॥

उग्रबाहुर्म्रक्षकृत्वा पुरंदरो यदि मे शृणवद्धवम् ।
वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं हवामहे ॥ १० ॥

उग्रऽबाहुः । म्रक्षऽकृत्वा । पुरम्ऽदरः । यदि । मे । शृणवत् । हवम् ।
वसुऽयवः । वसुऽपतिम् । शतऽक्रतुम् । स्तोमैः । इन्द्रम् । हवामहे ॥ १० ॥

ᵛउग्रबाहुः उद्गूर्णभुजः ᵛम्रक्षकृत्वा वधकर्ता शत्रूणां ᵛपुरंदरः पुराणां दारयितेन्द्रः ᵛयदि ᵛमे ᵛहवं ᵛशृणवत् शृणुयात् तर्हि ᵛवसूयवः वसुकामा वयं ᵛवसुपतिं[1] बहुधनस्वामिनं ᵛशतक्रतुम् अपरिमितप्रज्ञम् ᵛइन्द्रं ᵛस्तोमैः स्तोत्रैः ᵛहवामहे आह्वयामः ॥ ॥ ३७ ॥

न पापासो मनामहे नारायासो न जल्हवः ।
यदिन्न्विन्द्रं वृषणं सचा सुते सखायं कृणवामहै ॥ ११ ॥

न । पापासः । मनामहे । न । अरायासः । न । जल्हवः ।
यत् । इत् । नु । इन्द्रम् । वृषणम् । सचा । सुते । सखायम् । कृणवामहै ॥ ११ ॥

---

१. त-न-पशुपतिं ।

वयमिन्द्रं ᵛपापासः पापा अकृतपुण्या ब्रह्मचर्यव्रतादिरहिताः[1] ᵛन ᵛमनामहे न मन्यामहे। तथा ᵛअरायासः अराया अधना वा अहविष्का वा ᵛन मनामहे। ᵛन ᵛजल्हवः अज्वलनाः अनग्नयो न मनामहे। कृतव्रतनियमादिपुण्या दानवन्तोऽग्निसहितास्त्वं स्तुम इत्यृषिरात्मानमाह। ᵛयचित् यस्मादेव कारणात् ᵛनु इदानीं ᵛवृषणं वर्षकम् ᵛइन्द्रं ᵛसुते सोमेऽभिषुते ᵛसचा सहिताः[2] ᵛसखायं ᵛकृणवामहै कुर्मः तस्मात् पापादिरहिता मनामहे। पापादिविशिष्टानामिन्द्रसाहाय्यकरणासंभवात्। अत्र 'न पापा मन्यामहे' (निरु. ६. २५) इत्यादि निरुक्तं द्रष्टव्यम् ॥

उग्रं युयुज्म पृतनासु सासहिमृणकातिमदाभ्यम्।
वेदा भृमं चित्सनिता रथीतमो वाजिनं यमिदू नशत् ॥ १२ ॥

उग्रम्। युयुज्म। पृतनासु। ससहिम्। ऋणऽकातिम्। अदाभ्यम्।
वेद। भृमम्। चित्। सनिता। रथिऽतमः। वाजिनम्। यम्। इत्। ऊँ इति। नशत् ॥ १२ ॥

ᵛउग्रम् उद्गूर्णबलमिन्द्रं ᵛयुयुज्म योजयामः। कीदृशमिन्द्रम्। ᵛपृतनासु संग्रामेषु ᵛसासहिं शत्रूणामभिभवितारम् ᵛऋणकातिम् ऋणभूतस्तुतिम्। यस्मै स्तुतिर्ऋणवदवश्यं क्रियते तं[3] तादृशम्। अथवा ऋणवदवश्यफलप्रदस्तुतिकम्। ᵛअदाभ्यं केनाप्यहिंस्यम्। य इन्द्रः ᵛभृमं ᵛचित् बहुष्वश्वेषु भ्रमणशीलमेव ᵛवाजिनं बलवन्तमश्वं ᵛरथीतमः रथस्वामी ᵛवेद वेत्ति गृह्णाति तद्वत् ᵛसनिता इन्द्रो वाजिनं हविष्मन्तं ᵛयमित् यमेव जनं बहूनां यजमानानां मध्ये ᵛनशत् व्याप्नोति तमिन्द्रमिति। ते वयमिति वा योज्यम्। वयं युयुज्मेति पक्षे व्यत्ययेन बहुवचनम् ॥

चातुर्विंशिकेऽहनि माध्यंदिनसवनेऽच्छावाकस्य 'यत इन्द्र' इति वैकल्पिकः स्तोत्रियस्तृचः। सूत्रितं च—'यत इन्द्र भयामहे यथा गौरो अपा कृतम्' (आश्व. श्रौ. ७. ४) इति। दुःस्वप्नदर्शनेऽप्येतदादिसूक्तशेषो जप्यः[4] (आश्व. गृ. ३. ११. २) ॥

यत इन्द्र भयामहे ततो नो अभयं कृधि।
मघवञ्छग्धि तव तन्न ऊतिभिर्वि द्विषो वि मृधो जहि ॥ १३ ॥

यतः। इन्द्र। भयामहे। ततः। नः। अभयम्। कृधि।
मघऽवन्। शग्धि। तव। तत्। नः। ऊतिऽभिः। वि। द्विषः। वि। मृधः। जहि ॥ १३ ॥

हे ᵛइन्द्र ᵛयतः हिंसकात् ᵛभयामहे वयं ᵛततः ᵛनः[5] अस्मभ्यम् ᵛअभयं ᵛकृधि कुरु। हे ᵛमघवन् ᵛशग्धि शक्तो भवसि ᵛनः अस्मभ्यमभयं कर्तुं ᵛतव ᵛतत् तैः ᵛऊतिभिः रक्षणैः रक्षकैः पुरुषैः। किंच ᵛवि ᵛजहि ᵛद्विषः अस्मद्द्वेष्टॄन्। ᵛवि जहि ᵛमृधः अस्मद्धिंसकान् ॥

त्वं हि राधस्पते राधसो महः क्षयस्यासि विधतः।
तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहे ॥ १४ ॥

त्वम्। हि। राधःऽपते। राधसः। महः। क्षयस्य। असि। विधतः।
तम्। त्वा। वयम्। मघऽवन्। इन्द्र। गिर्वणः। सुतऽवन्तः। हवामहे ॥ १४ ॥

---

१. ख-ज्ञ-त१-२-न-भ-°रहिताः संतः। २. ख-सयसहिताः; ज्ञ-त१-२-भ१-२-सहायसहिताः; त३-४-सहसेहिताः; न-सहासहिताः श-सेहिताः। ३. ख-त-न-भ-तत्। ४. ख-ज्ञ-त१-२-जप्यः सूत्रितं च यत इंद्र भयामह इति च सूक्तशेषं। ५. ख-ग-त-न-भ-श-'नः' नास्ति।

हे राधस्पते धनस्वामिन् त्वं हि त्वं खलु महः महतः राधसः धनस्य क्षयस्य च गृहस्य[1] च[1] वर्धयिता असि[2] हि खलु। सामर्थ्यादेवं लभ्यते। कस्य राधसो गृहस्य च[3] वर्धक इत्युच्यते। विधतः परिचरतो यजमानस्य। तं तादृशं त्वा त्वां वयं हे मघवन्निन्द्र गिर्वणः गीर्भिर्वननीय सुतावन्तः अभिषुतसोमाः हवामहे आह्वयामः ॥

इन्द्रः स्पळुत वृत्रहा परस्पा नो वरेण्यः ।
स नो रक्षिषच्चरमं स मध्यमं स पश्चात्पातु नः पुरः ॥ १५ ॥

इन्द्रः । स्पट् । उत । वृत्रऽहा । परःऽपाः । नः । वरेण्यः ।
सः । नः । रक्षिषत् । चरमम् । सः । मध्यमम् । सः । पश्चात् । पातु । नः । पुरः ॥१५॥

अयम् इन्द्रः स्पट् सर्वस्य ज्ञाता। स्पशतिर्ज्ञानकर्मा[4]। उत अयं वृत्रहा वृत्रहन्ता परस्पाः परपालयिता नः अस्माकं वरेण्यः वरणीयः। सः इन्द्रः नः अस्माकम्। पुत्रमिति शेषः। रक्षिषत् रक्षतु। चरमं पुत्रं तथा स रक्षिषत्। सः मध्यमं पुत्रं[5] रक्षिषत्। सः नः अस्मान् पश्चात् रक्षिषत्। नः पुरः पुरस्तात् रक्षिषत् ॥ ॥ ३८ ॥

त्वं नः पश्चादधरादुत्तरात्पुर इन्द्र नि पाहि विश्वतः ।
आरे अस्मत्कृणुहि दैव्यं भयमारे हेतीरदेवीः ॥ १६ ॥

त्वम् । नः । पश्चात् । अधरात् । उत्तरात् । पुरः । इन्द्र । नि । पाहि । विश्वतः ।
आरे । अस्मत् । कृणुहि । दैव्यम् । भयम् । आरे । हेतीः । अदेवीः ॥ १६ ॥

हे इन्द्र त्वं नः अस्मान् पश्चात् पश्चाद्भागात् पुरः पूर्वभागात् अधरात् अधोभागात्। एतदुपरिभागस्योपलक्षणम्। उत्तरात् उत्तरभागात्। एतद्दक्षिणस्याप्युपलक्षणम्। किं बहुना विश्वतः सर्वस्मात् प्रदेशात् नि पाहि। हे इन्द्र दैव्यं भयम् अस्मत् अस्मत्तः आरे दूरे कृणुहि कुरु। तथा अदेवीः आसुराणि हेतीः आयुधानि आरे कृणुहि ॥

अद्याद्या श्वःश्व इन्द्र त्रास्व परे च नः ।
विश्वा च नो जरितॄन्त्सत्पते अहा दिवा नक्तं च रक्षिषः ॥ १७ ॥

अद्यऽअद्य । श्वःऽश्वः । इन्द्र । त्रास्व । परे । च । नः ।
विश्वा । च । नः । जरितॄन् । सत्ऽपते । अहा । दिवा । नक्तम् । च । रक्षिषः ॥ १७ ॥

अद्याद्य यदद्यशब्दवाच्यमहरस्ति तत्र सर्वत्र एवं श्वःश्वः त्रास्व रक्ष। तथा परे च परस्मिंस्तृतीयेऽहनि च त्रास्व। हे सत्पते सतां पालक विश्वा सर्वाण्यपि अहा अहानि सर्वेष्वप्यहःसु नः अस्मान् जरितॄन् रक्षिषः रक्षसि। तथा दिवा नक्तं च रक्षिषः रक्षसि रक्ष वा ॥

प्रभङ्गी शूरो मघवा तुवीमघः संमिश्लो वीर्याय कम् ।
उभा ते बाहू वृषणा शतक्रतो नि या वज्रं मिमिक्षतुः ॥ १८ ॥

---

१. ग-त-श-'गृहस्य च' नास्ति। २. ख-ग-त-न-भ१-२-श-'असि' नास्ति। ३. ख-ग-त-श-'च' नास्ति। ४. ख-ग-त-न-श-स्पर्शति'। ५. ख-त-पुत्रं स।

प्रऽभ॒ङ्गी । शूरः॑ । म॒घऽवा॑ । तु॒विऽम॑घः । सम्ऽमि॑श्लः । वी॒र्या॑य । कम् ।
उ॒भा । ते॒ । बा॒हू इति॑ । वृष॑णा । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । नि । या । वज्र॑म् । मि॒मि॒क्षतुः॑ ॥१८॥

अयं ᵛमघवा इन्द्रः ᵛप्रभङ्गी प्रभञ्जनशीलः ᵛशूरः ᵛतुवीमघः प्रभूतधनः ᵛसंमिश्लः सम्यक् मिश्रयिता । किमर्थम् । ᵛवीर्याय शत्रूणां वीर्यकरणाय । ᵛकम् इति पादपूरणः । एवंमहानुभावो भवति । अथ प्रत्यक्षवादः । हे इन्द्र ᵛते ᵛउभा उभावपि ᵛबाहू ᵛवृषणा वर्षकौ कामानां हे ᵛशतक्रतो बहुप्रज्ञ ᵛया यौ ᵛवज्रम् आयुधं ᵛनि ᵛमिमिक्षतुः परिगृह्णीतः ॥ ॥ ३९ ॥

'प्रो अस्मै' इति द्वादशर्चं तृतीयं सूक्तं काण्वस्य प्रगाथस्यार्षम् । पञ्चपदा पङ्क्तिः । सप्तम्याद्यास्तिस्रो बृहत्यः । इन्द्रो देवता । अत्रानुक्रमणिका—'प्रो अस्मै द्वादश प्रगाथः पाङ्क्तं सप्तम्याद्याश्च[1] तिस्रो बृहत्यः' इति । विनियोगो लैङ्गिकः ॥

**प्रो अ॒स्मा॒ उप॑स्तुतिं॒ भर॑ता॒ यज्जुजो॑षति ।**
**उ॒क्थैरिन्द्र॑स्य॒ माहि॑नं॒ वयो॑ वर्धन्ति सो॒मिनो॑ भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥ १ ॥**

प्रो इति॑ । अ॒स्मै॒ । उप॑ऽस्तुतिम् । भर॑त । यत् । जुजो॑षति ।
उ॒क्थैः । इन्द्र॑स्य । माहि॑नम् । वयः॑ । व॒र्ध॒न्ति॒ । सो॒मिनः॑ । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥१॥

ᵛअस्मै इन्द्राय ᵛउपस्तुतिम् उपेत्य क्रियमाणां स्तुतिं ᵛप्रो ᵛभरत प्रकर्षेण संपादयत हे ऋत्विजः । ᵛयत्[2] यदि[2] अयमिन्द्रः ᵛजुजोषति सेवते तर्हि भरतेति । ᵛसोमिनः सोमप्रियस्य ᵛइन्द्रस्य स्वभूतं ᵛमाहिनं महत् ᵛवयः अन्नं सोमलक्षणम् ᵛउक्थैः[3] शस्त्रैः[3]. ᵛवर्धन्ति वर्धयन्ति । ᵛभद्राः स्तुत्यानि खलु ᵛइन्द्रस्य ᵛरातयः दानानि ॥

**अ॒यु॒जो अस॑मो॒ नृभि॒रेकः॑ कृ॒ष्टीर॒यास्यः॑ ।**
**पू॒र्वीरति॒ प्र वा॑वृधे॒ विश्वा॑ जा॒तान्योज॑सा भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥ २ ॥**

अ॒यु॒जः । अस॑मः । नृऽभिः॑ । एकः॑ । कृ॒ष्टीः । अ॒यास्यः॑ ।
पू॒र्वीः । अति॑ । प्र । व॒वृ॒धे॒ । विश्वा॑ । जा॒तानि॑ । ओज॑सा । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥२॥

ᵛअयुजः असहायः ᵛअसमः असदृशोऽन्यैः ᵛनृभिः[4] देवैः ᵛएकः मुख्यः ᵛअयास्यः उपक्षपयितुमशक्यः ᵛपूर्वीः ᵛकृष्टीः पूर्वतन्यः प्रजाः ᵛअति ᵛप्र ᵛववृधे अतिप्रवर्धते । किंच ᵛविश्वा सर्वाणि ᵛजातानि इदानीमुत्पन्नानि ᵛओजसा बलेनाति प्र वावृधे । ᵛभद्राः हि ᵛइन्द्रस्य ᵛरातयः । अथवा । अयमृषिरयुजोऽसहायोऽन्यैरसदृश एक एव सन् पूर्वीः प्रजा जातानि सर्वाण्यप्यतिक्रम्य वर्धते । शिष्टं समानम् ॥

**अहि॑तेन चि॒दर्व॑ता जी॒रदा॑नुः सिषासति ।**
**प्र॒वाच्य॑मिन्द्र॒ तत्तव॑ वी॒र्या॑णि करि॒ष्य॒तो भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥ ३ ॥**

अहि॑तेन । चि॒त् । अर्व॑ता । जी॒रऽदा॑नुः । सि॒सा॒स॒ति॒ ।
प्र॒ऽवाच्य॑म् । इ॒न्द्र॒ । तत् । तव॑ । वी॒र्या॑णि । क॒रि॒ष्य॒तः । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥ ३ ॥

१. ग-भ२-श-अनु.—सप्तम्याद्यास्तिस्रो । २. ख-घ-त—यद्यपि; ग—यद्यदा; श—पद्यवि । ३. ग-ज्ञ-त३-४-न-श—'उक्थैः शस्त्रैः' नास्ति । ४. न-भ—नृभिर्नेतृभिः ।

अयं <sup>v</sup>जीरदानुः क्षिप्रप्रदान इन्द्रः <sup>v</sup>अह्रितेन अयोजितेनाप्रेरितेन[1] <sup>v</sup>चित् <sup>v</sup>अर्वता अरणवताश्वेन <sup>v</sup>सिषासति संभक्तुमिच्छति । तस्माद्धे[2] <sup>v</sup>इन्द्र <sup>v</sup>वीर्याणि सामर्थ्यानि <sup>v</sup>करिष्यतः <sup>v</sup>तव महत्वं <sup>v</sup>प्रवाच्यम् । स्तुत्यमित्यर्थः ॥

**आ याहि कृणवाम त इन्द्र ब्रह्माणि वर्धना ।**
**येभिः शविष्ठ चाकनो भद्रमिह श्रवस्यते भद्रा इन्द्रस्य रातयः ॥ ४ ॥**

आ । याहि । कृणवाम । ते । इन्द्र । ब्रह्माणि । वर्धना ।
येभिः । शविष्ठ । चाकनः । भद्रम् । इह । श्रवस्यते । भद्राः । इन्द्रस्य । रातयः ॥ ४ ॥

हे <sup>v</sup>इन्द्र <sup>v</sup>आ <sup>v</sup>याहि आगच्छ[3] । <sup>v</sup>ते[4] <sup>v</sup>कृणवाम । किम् । <sup>v</sup>ब्रह्माणि परिवृढानि स्तुतिलक्षणानि कर्माणि । कीदृशानि । <sup>v</sup>वर्धना उत्साहवर्धकानि । <sup>v</sup>येभिः यैः कर्मभिः हे <sup>v</sup>शविष्ठ अतिशयेन बलवन्निन्द्र <sup>v</sup>चाकनः कामयसे । किम् । <sup>v</sup>भद्रं कर्तुम् । कस्मै । <sup>v</sup>श्रवस्यते अन्नमिच्छते स्तोत्रे ॥

**धृषतश्चिद्धृषन्मनः कृणोषीन्द्र यत्त्वम् ।**
**तीव्रैः सोमैः सपर्यतो नमोभिः प्रतिभूषतो भद्रा इन्द्रस्य रातयः ॥ ५ ॥**

धृषतः । चित् । धृषत् । मनः । कृणोषि । इन्द्र । यत् । त्वम् ।
तीव्रैः । सोमैः । सपर्यतः । नमःऽभिः । प्रतिऽभूषतः । भद्राः । इन्द्रस्य । रातयः ॥ ५ ॥

हे <sup>v</sup>इन्द्र <sup>v</sup>धृषतश्चित् धृष्टादपि <sup>v</sup>धृषत् धृष्टं <sup>v</sup>मनः <sup>v</sup>कृणोषि । अत्यन्तं धृष्टं करोषि । <sup>v</sup>यत् यस्मात् <sup>v</sup>त्वं <sup>v</sup>तीव्रैः मदजनकैः <sup>v</sup>सोमैः <sup>v</sup>सपर्यतः पूजयतः[5] <sup>v</sup>नमोभिः नमस्कारैश्च <sup>v</sup>प्रतिभूषतः अलंकुर्वतो यजमानस्याभिमतं दित्ससीति[6] शेषः ॥

**अव चष्ट ऋचीषमोऽवताँइव मानुषः ।**
**जुष्ट्वी दक्षस्य सोमिनः सखायं कृणुते युजं भद्रा इन्द्रस्य रातयः ॥ ६ ॥**

अव । चष्टे । ऋचीषमः । अवतान्ऽइव । मानुषः ।
जुष्ट्वी । दक्षस्य । सोमिनः । सखायम् । कृणुते । युजम् । भद्राः । इन्द्रस्य । रातयः ॥ ६ ॥

अयमिन्द्रः <sup>v</sup>ऋचीषमः ऋचा स्तुत्या[7] समस्तथा परिच्छिन्नः सन् <sup>v</sup>अव <sup>v</sup>चष्टे पश्यत्यनुग्रहेणास्मान् । तत्र दृष्टान्तः । <sup>v</sup>मानुषः मनुष्यः <sup>v</sup>अवतान् अवटान् कूपादिप्रदेशान् <sup>v</sup>इव । दृष्ट्वा च <sup>v</sup>जुष्ट्वी प्रीतोऽयं <sup>v</sup>दक्षस्य प्रवृद्धस्य <sup>v</sup>सोमिनः यजमानस्य <sup>v</sup>युजं युज्यमात्मानं <sup>v</sup>सखायं <sup>v</sup>कृणुते करोति । तस्याभिमतं साधयतीत्यर्थः । अथवा । तृषितो मनुष्यो जलपूर्णानवटानिव स्तुतः सन् पश्यति सोमं पातुम् । पश्चादवेक्षितं तं युज्यमानं सोमं जुष्ट्वी सेवित्वा दक्षस्य सोमिनः सखायं कुरुते[8] ॥ ॥ ४० ॥

**विश्वे त इन्द्र वीर्यं देवा अनु क्रतुं ददुः ।**
**भुवो विश्वस्य गोपतिः पुरुष्टुत भद्रा इन्द्रस्य रातयः ॥ ७ ॥**

---

१. ख-ञ-त१-२-३-भ२–अयोजितेन प्रेरितेन । २. घ–तत्तस्माद्धे । ३. घ–आगच्छ इहास्मिन् यज्ञे । ४. घ–ते तव । ५. त-न–पूजतः । ६. ख-घ-त१-२–दिशसीति । ७. ख-घ-त-श–स्तुत्यः । ८. ख-ञ-त१-२–कृणुते कुरुते ।

विश्वे । ते । इन्द्र । वीर्यम् । देवाः । अनु । । क्रतुम् । ददुः ।
भुवः । विश्वस्य । गोऽपतिः । पुरुऽस्तुत । भद्राः । इन्द्रस्य । रातयः ॥ ७ ॥

हे इन्द्र ते तव वीर्यं सामर्थ्यं क्रतुं प्रज्ञां च अनु अनुसृत्य विश्वे सर्वे देवाः ददुः[1] दधुः । धारयन्ति वीर्यं प्रज्ञां च । तव बलेन प्रज्ञया च तेऽपि बलिनः प्रज्ञावन्तश्च भवन्तीत्यर्थः । तादृशस्त्वं गोपतिः प्रसिद्धानां गवामुदकानां स्तुतिवचसो वा पतिः भुवः भवसि । विश्वस्य इत्येतत् पदान्तर्गतस्यापि गोशब्दस्य विशेषः । हे पुरुष्टुत बहुभिः स्तुतेन्द्र[2] भवसीति समन्वयः ॥

गृणे तदिन्द्र ते शव उपमं देवतातये ।
यद्धंसि वृत्रमोजसा शचीपते भद्रा इन्द्रस्य रातयः ॥ ८ ॥

गृणे । तत् । इन्द्र । ते । शवः । उपऽमम् । देवऽतातये ।
यत् । हंसि । वृत्रम् । ओजसा । शचीऽपते । भद्राः । इन्द्रस्य । रातयः ॥ ८ ॥

हे इन्द्र ते तव तत् शवः बलम् उपमम् अन्तिकं देवतातये यजमानाय यज्ञार्थं वा गृणे स्तुवे । यत् यस्माद्धे शचीपते वृत्रम् ओजसा बलेन हंसि तस्मात्ते शवो गृणे ॥

समनेव वपुष्यतः कृणवन्मानुषा युगा ।
विदे तदिन्द्रश्चेतनमध श्रुतो भद्रा इन्द्रस्य रातयः ॥ ९ ॥

समनाऽइव । वपुष्यतः । कृणवत् । मानुषा । युगा ।
विदे । तत् । इन्द्रः । चेतनम् । अध । श्रुतः । भद्राः । इन्द्रस्य । रातयः ॥ ९ ॥

समनेव समानमनस्का योषिदिव सा यथा वपुष्यतः वपुरिच्छतः पुरुषान् कृणवत् करोति स्ववशान् एवमयमिन्द्रः मानुषा मनुष्यान् युगा युगानि कालान् संवत्सरायनर्तुमासादीन् विदे लम्भयति । तत् युगनिर्माणात्मकं कर्म इन्द्रः चेतनं सर्वस्य प्रज्ञापकं कृतवानिति शेषः । अध अथैवं कृत्वा श्रुतः सर्वत्र ख्यातोऽभूत् ॥

उज्जातमिन्द्र ते शव उत्त्वामुत्तव क्रतुम् ।
भूरिगो भूरि वावृधुर्मघवन्तव शर्मणि भद्रा इन्द्रस्य रातयः ॥ १० ॥

त् । जातम् । इन्द्र । ते । शवः । उत् । त्वाम् । उत् । तव । क्रतुम् ।
रिगो इति भूरिऽगो । भूरि । ववृधुः । मघऽवन् । तव । शर्मणि । भद्राः । इन्द्रस्य । रातयः ॥ १० ॥

हे इन्द्र उत् । अयं व्यवहितेनापि वावृधुः[3] इत्यनेन संबध्यते । उद्वर्धयन्ति सोमेन । किम् । ते शवः बलम् । न केवलं बलं किंतु त्वाम् उत् वर्धयन्ति स्तुत्यादिना । पश्चात् तव क्रतुं प्रज्ञां स्वानुकूलाम् उत् वर्धयन्ति । भूरि इत्येतत् प्रत्याख्यातं संबध्यते । अतिप्रभूतमुद्वर्धयन्तीत्यर्थः । क एवं कुर्वन्तीति उच्यते । हे भूरिगो बहुपशो हे मघवन् धनवन्निन्द्र तव शर्मणि त्वदीये सुखे ये वर्तन्ते ते च कुर्वन्तीति ॥

---

१. ख-ग-त-न-भ-' ददुः ' नास्ति । २. घ-स्तुतेंद्र त्वं विश्वस्य पतिः । ३. ङ-न-भ-ववृधुः ।

अहं च त्वं च वृत्रहन्त्सं युज्याव सनिभ्य आ।
अरातीवा चिदद्रिवोऽनु नौ शूर मंसते भद्रा इन्द्रस्य रातयः ॥ ११ ॥

अहम्। च। त्वम्। च। वृत्रऽहन्। सम्। युज्याव। सनिऽभ्यः। आ।
अरातिऽवा। चित्। अद्रिऽवः। अनु। नौ। शूर। मंसते। भद्राः। इन्द्रस्य। रातयः ॥ ११॥

हे वृत्रहन् इन्द्र त्वं च अहं च सं युज्याव संगतौ भवाव। कियदवधीति उच्यते। सनिभ्य आ यावता कालेन धनानि लभ्यन्ते तावत्कालम्। नौ संगतयोश्चावयोर्हे अद्रिवः वज्रवन् इन्द्र[1] अरातीवा अदानोऽपि जनस्त्वद्दत्तधनस्य अनु मंसते अनुमतिं करोति ॥

सत्यमिद्वा उ तं वयमिन्द्रं स्तवाम नानृतम्।
महाँ असुन्वतो वधो भूरि ज्योतींषि सुन्वतो भद्रा इन्द्रस्य रातयः ॥१२॥

सत्यम्। इत्। वै। ऊँ इति। तम्। वयम्। इन्द्रम्। स्तवाम। न। अनृतम्।
महान्। असुन्वतः। वधः। भूरि। ज्योतींषि। सुन्वतः। भद्राः। इन्द्रस्य। रातयः ॥१२॥

वयं प्रगाथाः तम् इन्द्रं सत्यमित् सत्यमेव स्तवाम। नानृतम् असत्यं न स्तवाम। अस्माभिरुक्ता गुणाः सत्या एव सन्तु नानृता इत्यर्थः। स्तुत्यस्येन्द्रस्य संबन्धि असुन्वतः अयष्टुः वधः महान् प्रभूतो भवति। भूरि ज्योतींषि बहून् सोमान् सुन्वतः अभिषवं कुर्वतो यजमानस्येन्द्रकृतोऽनुग्रहो महान् भवतीत्यर्थः ॥ ॥ ४१ ॥

'स पूर्व्यः' इति द्वादशर्चं चतुर्थं सूक्तम्। अत्रानुक्रमणिका— 'स पूर्व्यो गायत्रमाद्या चतुर्थ्यादिद्वे सप्तमी चानुष्टुभो गायत्रेऽन्त्या दैवी त्रिष्टुप्' इति। प्रथमाचतुर्थीपञ्चमीसप्तम्यश्चतस्रोऽनुष्टुभः 'अस्मे रुद्राः' इत्यन्त्या त्रिष्टुबवशिष्टा गायत्र्यः। अन्त्याया देवा देवता शिष्टा ऐन्द्र्यः। षष्ठेऽहनि मरुत्वतीयस्याद्यस्तृचः प्रतिपत्। सूत्रितं च—'स पूर्व्यो महानां त्रय इन्द्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ' (आश्व. श्रौ. ८. १) इति ॥

स पूर्व्यो महानां वेनः क्रतुभिरानजे। यस्य द्वारा मनुष्पिता देवेषु धिय आनजे॥१॥

सः। पूर्व्यः। महानाम्। वेनः। क्रतुऽभिः। आनजे।
यस्य। द्वारा। मनुः। पिता। देवेषु। धियः। आनजे ॥ १ ॥

सः[2] पूर्व्यः मुख्यः[3] महानां पूज्यानां यजमानानां क्रतुभिः कर्मभिर्निमित्तभूतैः वेनः कान्तस्तेषां हविः कामयमानः आनजे आगच्छति। यस्य इन्द्रस्य द्वारा द्वाराणि प्राप्त्युपायानि धियः कर्माणि देवेषु एतेषु मध्ये पिता सर्वेषां पालकः मनुः आनजे प्राप। आनजिः प्राप्तिकर्मा॥

दिवो मानं नोत्सदन्त्सोमपृष्ठासो अद्रयः। उक्था ब्रह्म च शंस्या ॥ २ ॥

दिवः। मानम्। न। उत्। सदन्। सोमऽपृष्ठासः। अद्रयः। उक्था। ब्रह्म। च। शंस्या ॥ २ ॥

दिवः द्युलोकस्य मानं निर्मातारमिन्द्रं नोत्सदन् नोत्सृजन्तु। के। सोमपृष्ठासः सोमस्रष्टारः सोमाभिषवकर्तारः अद्रयः ग्रावाणः। किंच उक्था उक्थानि शस्त्राणि ब्रह्म च ब्रह्माणि स्तोत्राणि

१. घ–शूरेंद्र। २. ख-झ-त१-२-न-भ-स इंद्रः। ३. घ–मुख्य इंद्रः।

ᵛशंस्या शंसनीयानि भवन्तीति शेषः । यद्वा । यानि स्तोत्राणि शस्त्राणि च सन्ति तानीन्द्रं नोऽसृजन्त्विति समन्वयः ॥

स विद्वाँ अङ्गिरोभ्य इन्द्रो गा अवृणोदप । स्तुषे तदस्य पौंस्यम् ॥ ३ ॥

सः । विद्वान् । अङ्गिरःऽभ्यः । इन्द्रः । गाः । अवृणोत् । अप । स्तुषे । तत् । अस्य । पौंस्यम् ॥३॥

ᵛसः ᵛविद्वान् उपायज्ञः ᵛइन्द्रः ᵛअङ्गिरोभ्यः तेषामर्थाय ᵛगाः पणिभिरपहृताः पिहिताः ᵛअप ᵛअवृणोत् अपवारितवान् । ᵛतत् तादृशम् ᵛअस्य ᵛपौंस्यं पुंस्त्वं सामर्थ्यं ᵛस्तुषे स्तौमि ॥

स प्रत्नथा कविवृध इन्द्रो वाकस्य वक्षणिः । शिवो अर्कस्य होमन्यस्मत्रा गन्त्ववसे ॥४॥

सः । प्रत्नऽथा । कविऽवृधः । इन्द्रः । वाकस्य । वक्षणिः ।
शिवः । अर्कस्य । होमनि । अस्मऽत्रा । गन्तु । अवसे ॥ ४ ॥

ᵛसः ᵛइन्द्रः ᵛप्रत्नथा प्रत्नवत् पूर्वस्मिन् काले यथा तद्वदिदानीमपि ᵛकविवृधः मेधाविनां स्तोतॄणां वर्धयिता ᵛवाकस्य स्तोतुः ᵛवक्षणिः वोढा ᵛशिवः सुखकरः ᵛअर्कस्य । अर्कमन्नमर्चनीयत्वादर्चनसाधनत्वाद्वा । तादृशस्य सोमस्य ᵛहोमनि होमे सः ᵛअस्मत्रा अस्मासु निमित्तभूतेषु ᵛअवसे रक्षणाय ᵛगन्तु गच्छतु ॥

आदू नु ते अनु क्रतुं स्वाहा वरस्य यज्यवः । श्वात्रमर्का अनूषतेन्द्र गोत्रस्य दावने ॥५॥

आत् । ऊँ इति । नु । ते । अनु । क्रतुम् । स्वाहा । वरस्य । यज्यवः ।
श्वात्रम् । अर्काः । अनूषत । इन्द्र । गोत्रस्य । दावने ॥ ५ ॥

ᵛआदु अनन्तरमेव ᵛनु अद्य हे ᵛइन्द्र ᵛते तव ᵛक्रतुं कर्म ᵛअनु क्रमेण ᵛअनूषत इति संबन्धः । अनुक्रमेण स्तुवन्ति । के । ᵛस्वाहावरस्य स्वाहादेव्याः पतेरग्नेः ᵛयज्यवः यष्टारः । त्वदर्थमग्नौ यागं कुर्वन्त इत्यर्थः । तादृशाः ᵛअर्काः अर्चयितारः स्तोतारः । ᵛश्वात्रम् इति क्षिप्रनाम । अन्यदेवतास्तुतिरूपविलम्बमकृत्वातिशीघ्रमतिदीर्घं स्तुवन्तीत्यभिप्रायः । किमर्थं स्तुवन्तीति उच्यते । ᵛगोत्रस्य ᵛदावने धनस्य दानाय ॥

इन्द्रे विश्वानि वीर्या कृतानि कर्त्वानि च । यमर्का अध्वरं विदुः ॥ ६ ॥

इन्द्रे । विश्वानि । वीर्या । कृतानि । कर्त्वानि । च । यम् । अर्काः । अध्वरम् । विदुः ॥ ६ ॥

अस्मिन् ᵛइन्द्रे ᵛविश्वानि सर्वाणि ᵛवीर्या वीर्याणि सामर्थ्यानि ᵛकृतानि ᵛकर्त्वानि ᵛच[1] कर्तव्यानि च वर्तन्त इति शेषः । ᵛयम् इन्द्रम् ᵛअर्काः स्तोतारः ᵛअध्वरम् अहिंसकं ᵛविदुः जानन्ति तस्मिन्निन्द्र इति ॥ ॥ ४२ ॥

पञ्चमेऽहनि मरुत्वतीये 'यत्पाञ्चजन्यया' इति तृचः प्रतिपत् । सूत्रितं च—'यत्पाञ्चजन्यया विशेन्द्र इत्सोमपा एक इति मरुत्वतीयस्य प्रतिपदनुचरौ' (आश्व. श्रौ. ७. १२) इति ॥

यत्पाञ्चजन्यया विशेन्द्रे घोषा असृक्षत । अस्तृणाद्बर्हणा विपो३ऽर्यो मानस्य स क्षयः ॥७॥

यत् । पाञ्चऽजन्यया । विशा । इन्द्रे । घोषाः । असृक्षत ।
अस्तृणात् । बर्हणा । विपः । अर्यः । मानस्य । सः । क्षयः ॥ ७ ॥

---

१. ख-ग-घ-त-भ२-श–'च' नास्ति ।

ᵛयत् यदा ᵛपाञ्चजन्यया । निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः । तत्र भवया ᵛविशा प्रजया ᵛइन्द्रे ᵛघोषाः स्तुतयः ᵛअसृक्षत सृज्यन्ते तदानीमयमिन्द्रः ᵛअस्तृणात् हिनस्ति शत्रून् ᵛबर्हणा स्वमहत्त्वेन । अनन्यसहायेनेत्यर्थः[१] । तादृशः ᵛसः ᵛअर्यः[२] इन्द्रः ᵛविपः मेधाविनः स्तोतुर्मम ᵛमानस्य[३] पूजायाः सत्कारस्य ᵛक्षयः निवासो भवति ॥

इयमु ते अनुष्टुतिश्चकृषे तानि पौंस्या । प्रावश्चक्रस्य वर्तनिम् ॥ ८ ॥

इयम् । ऊँ इति । ते । अनुऽस्तुतिः । चकृषे । तानि । पौंस्या । प्र । आवः । चक्रस्य । वर्तनिम् ॥ ८ ॥

ᵛइयम् इदानीं क्रियमाणा ᵛअनुष्टुतिः अनुकूला स्तुतिः ᵛते तव स्वभूता । कुतस्त[४] इति उच्यते । ᵛतानि प्रसिद्धानि वृत्रवधादीनि ᵛपौंस्या पुंस्त्वानि यतः ᵛचकृषे । अतस्त इत्यर्थः । हे इन्द्र ᵛचक्रस्य रथाधारस्य ᵛवर्तनिं मार्गं ᵛप्रावः प्रारक्षः । अथास्मद्यज्ञगमनाय रक्षःकृता चक्रमार्गबाधा यथा न भवति तथा रक्षसीत्यर्थः ॥

अस्य वृष्णो व्योदन उरु क्रमिष्ट जीवसे । यवं न पश्व आ ददे ॥ ९ ॥

अस्य । वृष्णः । विऽओदने । उरु । क्रमिष्ट । जीवसे । यवम् । न । पश्वः । आ । ददे ॥ ९ ॥

ᵛअस्य ᵛवृष्णः वर्षितुरिन्द्रस्य ᵛव्योदने विविधेऽन्ने लब्धे सति ᵛजीवसे जीवनाय ᵛउरु विस्तीर्णं ᵛक्रमिष्ट पदनिधानं करोति सर्वो लोकः । अथवेन्द्रस्य स्वभूतेऽन्ने लब्धे लब्धव्ये वा सति पदन्यासं करोति । तथा कृत्वा ᵛयवं ᵛन ᵛपश्वः यवं पशव इव सर्वो जनः ᵛआ ᵛददे आदत्ते स्तुतादस्मात् ॥

तद्दधाना अवस्यवो युष्माभिर्दक्षपितरः । स्याम मरुत्वतो वृधे ॥ १० ॥

तत् । दधानाः । अवस्यवः । युष्माभिः । दक्षऽपितरः । स्याम । मरुत्वतः । वृधे ॥ १० ॥

ᵛतत् स्तोत्रं ᵛदधानाः धारयन्तः ᵛअवस्यवः रक्षाकामा वयं हे ऋत्विजः ᵛयुष्माभिः । सहिता इति वा योज्यम्[५] । तादृशाः ᵛदक्षपितरः । दक्षोऽन्नम् । तस्य पितरः पालकाः स्वामिनः ᵛस्याम । किमर्थम् । ᵛमरुत्वतः मरुद्भिस्तद्वत इन्द्रस्य ᵛवृधे वर्धनाय यागाय ॥

बळृत्वियाय धाम्न ऋक्वभिः शूर नोनुमः । जेषामेन्द्र त्वया युजा ॥ ११ ॥

बट् । ऋत्वियाय । धाम्ने । ऋक्वऽभिः । शूर । नोनुमः । जेषाम । इन्द्र । त्वया । युजा ॥ ११ ॥

ᵛबट् सत्यम् ᵛऋत्वियाय ऋतौ भवाय । ऋतुशब्दो यागकालोपलक्षकः । यागकाले[६] प्रादुर्भूताय ᵛधाम्ने कल्याणतेजसे तुभ्यं हे ᵛशूर इन्द्र ᵛऋक्वभिः मन्त्रैः ᵛनोनुमः अतिशयेन[७] स्तुमः[७] । हे ᵛइन्द्र स्तुतेन ᵛत्वया ᵛयुजा सहायभूतेन ᵛजेषाम जयेम शत्रून् ॥

अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः ।
यः शंसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ अवन्तु देवाः ॥ १२ ॥

---

१. ख-ग-त-न-श-अन्य° । २. घ-ज्ञ-अर्यः स्वामी । ३. ख-ज्ञ-त१-२-३-यजमानस्य । ४. ख-ग-त-न-भ-श-कुतस्तव । ५. त-न-श-योज्ये । ६. ख-ग-त-न-भ-श-काले । ७. ख-ग-त-न-भ-श-‘ अतिशयेन स्तुमः ’ नास्ति ।

अस्मे इति । रुद्राः । मेहना । पर्वतासः । वृत्रऽहत्ये । भरऽहूतौ । सऽजोषाः ।
यः । शंसते । स्तुवते । धायि । पज्रः । इन्द्रऽज्येष्ठाः । अस्मान् । अवन्तु । देवाः ॥ १२ ॥

Vअस्मे अस्मान् Vरुद्राः Vमेहना उदकसेचनयुक्ताः Vपर्वतासः मेघाश्च Vवृत्रहत्ये वृत्रहननसाधने Vभरहूतौ संग्रामाह्वाने Vसजोषाः अस्मत्समानप्रीतिश्च Vयः इन्द्रः Vशंसते शस्त्रं पठते Vस्तुवते स्तोत्रं कुर्वते च यजमानाय Vपज्रः बलवान् वेगवान् वा Vधायि गच्छति स इन्द्रश्चेमे Vइन्द्रज्येष्ठाः Vदेवाः Vअस्मानवन्तु रक्षन्तु । अस्मानिति पूरणः । अथवैवं योज्यम् । रुद्रा रुद्रपुत्रा मेहना सेचनेन युक्ताः पर्वताः पर्वतसदृशाः पूरणवन्तः प्रीणनवन्तो वा । 'पर्व पुनः पृणातेः प्रीणातेर्वा' ( निरु. १. २० ) इति निरुक्तम् । वृत्रहत्ये भरहूतौ सजोषाः सजोषसः सहायभूता मरुतो देवा इन्द्रज्येष्ठा उक्तलक्षण इन्द्रश्चास्मानवन्त्विति ॥ ॥ ४३ ॥

'उत्त्वा मन्दन्तु' इति द्वादशर्चं पञ्चमं सूक्तं प्रगाथस्यार्षम् । प्राग्वत्सप्रपरिभाषया गायत्रमैन्द्रम् । 'उत्त्वा' इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ॥

**उत्त्वा मन्दन्तु स्तोमाः कृणुष्व राधो अद्रिवः । अव ब्रह्मद्विषो जहि ॥ १ ॥**

उत् । त्वा । मन्दन्तु । स्तोमाः । कृणुष्व । राधः । अद्रिऽवः । अव । ब्रह्मऽद्विषः । जहि ॥ १ ॥

हे इन्द्र Vत्वा त्वां Vस्तोमाः स्तुतयः Vउत् उत्कृष्टं Vमन्दन्तु मादयन्तु । Vकृणुष्व कुरु Vराधः अन्नं हे Vअद्रिवः वज्रवन्निन्द्र अस्मभ्यम् । किंच Vब्रह्मद्विषः ब्राह्मणद्वेष्टॄन् Vअव Vजहि ॥

**पदा पणीँरराधसो नि बाधस्व महाँ असि । नहि त्वा कश्चन प्रति ॥ २ ॥**

पदा । पणीन् । अराधसः । नि । बाधस्व । महान् । असि । नहि । त्वा । कः । चन । प्रति ॥ २ ॥

Vपणीन् लुब्धान् Vअराधसः यष्टव्यधनरहितान् केवलधनान् Vपदा पादेन अतिक्रम्य[1] Vनि[1] नितरां Vबाधस्व । Vत्वा त्वां तव Vकश्चन कश्चिदपि देवोऽसुरो मनुष्यो वा Vप्रति प्रतिनिधिः सदृशो Vनहि अस्ति खलु[2] ॥

**त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम् । त्वं राजा जनानाम् ॥ ३ ॥**

त्वम् । ईशिषे । सुतानाम् । इन्द्र । त्वम् । असुतानाम् । त्वम् । राजा । जनानाम् ॥ ३ ॥

हे Vइन्द्र Vत्वं Vसुतानाम् अभिषुतानां सोमानाम् Vईशिषे ईश्वरो भवसि । तथा Vत्वम् Vअसुतानां वल्ल्याकारे वर्तमानानां चेशिषे । Vत्वं Vजनानां सर्वेषां Vराजा भवसि ॥

**एहि प्रेहि क्षयो दिव्या३घोषञ्चर्षणीनाम् । ओभे पृणासि रोदसी ॥ ४ ॥**

आ । इहि । प्र । इहि । क्षयः । दिवि । आऽघोषन् । चर्षणीनाम् ।
आ । उभे इति । पृणासि । रोदसी इति ॥ ४ ॥

हे इन्द्र Vएहि आगच्छ । तथा Vप्रेहि प्रगच्छ[3] । Vदिवि द्युलोकात् । किम् । Vक्षयः निवासम् । किं कुर्वन् । Vआघोषन् शब्दं कुर्वन् । किमर्थम् । Vचर्षणीनां मनुष्याणामर्थाय । अथवा । हविः स्वीकृत्य प्रेहि सुखेन गच्छ । दिवमाघोषन् यजमानं स्तुवन् । Vउभे Vरोदसी द्यावापृथिव्यौ Vआ Vपृणासि आपूरयसि तेजसा वृष्ट्या वा ॥

---

१. ख-त-न-श—नातिक्रम्य । २. घ—खलु अतस्त्वं महानसि । ३. ख-घ-त-न-भ—प्रागच्छ; श—आगच्छ ।

त्यं चित्पर्वतं गिरिं शतवन्तं सहस्रिणम् । वि स्तोतृभ्यो रुरोजिथ ॥ ५ ॥

त्यम् । चित् । पर्वतम् । गिरिम् । शतऽवन्तम् । सहस्रिणम् । वि । स्तोतृऽभ्यः । रुरोजिथ ॥५॥

हे इन्द्र त्वं त्यं चित् तम् । चिदिति पूरणः । पर्वतं पर्ववन्तं गिरिं मेघम् । उभयोर्मेघनामत्वादेको योगरूढो द्रष्टव्यः । शतवन्तं शतोदकवन्तं तथा सहस्रिणम् अपरिमितवृष्टिं मेघं स्तोतृभ्यः अर्थाय वि रुरोजिथ विरुज वज्रेण ॥

वयमु त्वा दिवा सुते वयं नक्तं हवामहे । अस्माकं काममा पृण ॥ ६ ॥

वयम् । ऊँ इति । त्वा । दिवा । सुते । वयम् । नक्तम् । हवामहे । अस्माकम् । कामम् । आ । पृण ॥६॥

हे इन्द्र वयं त्वा त्वां दिवा अहनि सुते सोमेऽभिषुते हवामहे आह्वयामः । तथा वयं नक्तं हवामहे । आहूत[1] आगत्य अस्माकं काममा पृण आपूरय ॥ ॥ ४४ ॥

क्व[1] स्य वृषभो युवा तुविग्रीवो अनानतः । ब्रह्मा कस्तं सपर्यति ॥ ७ ॥

क्व । स्यः । वृषभः । युवा । तुविऽग्रीवः । अनानतः । ब्रह्मा । कः । तम् । सपर्यति ॥ ७ ॥

स्यः सः वृषभः वर्षिता युवा नित्यतरुणः तुविग्रीवः विस्तीर्णकन्धरः[2] अनानतः कदाचिदप्यनवनत इन्द्रः क्व कुत्र वर्तत इति को जानातीत्यर्थः । कः ब्रह्मा स्तोता[3] त्वा त्वां[3] सपर्यति पूजयति ॥

कस्य स्वित्सवनं वृषा जुजुष्वाँ अव गच्छति । इन्द्रं क उ स्विदा चके ॥८॥

कस्य । स्वित् । सवनम् । वृषा । जुजुष्वान् । अव । गच्छति ।

इन्द्रम् । कः । ऊँ इति । स्वित् । आ । चके ॥ ८ ॥

कस्य स्वित् सवनम् । स्विदिति विचिकित्सायाम् । वृषा वर्षितेन्द्रः जुजुष्वान् प्रीयमाणः अव गच्छति । क उ को वा यजमानः इन्द्रम् आ चके जानाति स्तोतुम् । स्वित् इति पूरणः ॥

कं ते दाना असक्षत वृत्रहन्कं सुवीर्या । उक्थे क उ स्विदन्तमः ॥ ९ ॥

कम् । ते । दानाः । असक्षत । वृत्रऽहन् । कम् । सुऽवीर्या ।

उक्थे । कः । ऊँ इति । स्वित् । अन्तमः ॥ ९ ॥

ते त्वां दानाः यजमानैर्दत्ताः असक्षत सेवन्ते[4] । हे वृत्रहन् वृत्रस्य हन्तरिन्द्र कं कीदृशं त्वाम् उक्थे शस्त्रे सुवीर्या शोभनवीर्याणि स्तोत्राण्यसक्षत । क उ स्विदन्तमः वान्तिकतमो भवति युद्धे[5] ॥

द्वितीये पर्याये होतुः शस्त्रे ' अयं ते मानुषे ' इति तृचोऽनुरूपः । सूत्रितं च—' अयं ते मानुषे जन उद्वेदभि ' ( आश्व. श्रौ. ६. ४ ) इति ॥

---

१. ख-त-न—आभूत । २. ग-त३-४-न-श—' विस्तीर्णकन्धरः ' नास्ति । ३. घ१—स्तोतारं वा; च—स्तोता तं त्वां; य—स्तोता तं । ४. ग—असेवन्त । ५. ख-त-श—युद्धे द्वितीये युद्धे ।

**अयं ते मानुषे जने सोमः पूरुषु सूयते । तस्येहि प्र द्रवा पिब ॥ १० ॥**

अयम् । ते । मानुषे । जने । सोमः । पुरुषु । सूयते । तस्य । आ । इहि । प्र । द्रव । पिब ॥१०॥

अयं सोमः ते त्वदर्थं तव स्वभूतो वा पूरुषु मनुष्येषु मध्ये मानुषे जने मयि सूयते[1] । अथवा पूरुनामसु राजसु सूयते । तस्य । तमित्यर्थः । तम् एहि आगच्छ । आगत्य च प्र द्रव गृहसमीपम् । तथा कृत्वा पिब तं सोमम् ॥

**अयं ते शर्यणावति सुषोमायामधि प्रियः । आर्जीकीये मदिन्तमः ॥ ११ ॥**

अयम् । ते । शर्यणाऽवति । सुऽसोमायाम् । अधि । प्रियः । आर्जीकीये । मदिन्ऽतमः ॥११॥

अयम् अस्माभिरभिषुतः सोमः ते त्वां मदिन्तमः मादयितृतमः । अयम् अधि श्रितः आश्रितः । कुत्रेति तदुच्यते । शर्यणावति कुरुक्षेत्रस्य जघनार्धभवे शरतृणोपेते सरसि । तत्सरः कुत्र वर्तत इति उच्यते । सुषोमायाम् एतन्नामिकायां नद्याम् । सा च कुत्र वर्तत इति तदुच्यते । आर्जीकीये एतन्नामके देशे । एवमुक्तप्रकारेणात्यन्तदूरदेशे वर्तते यः सोमः स एवायमभिषुतः । तं पिबेत्युत्तरत्रान्वयः ॥

**तमद्य राधसे महे चारुं मदाय घृष्वये । एहीमिन्द्र द्रवा पिब ॥ १२ ॥**

तम् । अद्य । राधसे । महे । चारुम् । मदाय । घृष्वये । आ । इहि । ईम् । इन्द्र । द्रव । पिब ॥१२॥

तं पूर्वमन्त्र उपवर्णितं चारुं चरणशीलं सोमं महे महते राधसे अस्माकं धनाय तव घृष्वये शत्रूणां धर्षणशीलाय मदाय पिब । हे इन्द्र तदर्थं द्रव गच्छ शीघ्रं सोमपात्रं प्रति । तदर्थम् ईम् इदानीम् एहि आगच्छ ॥ ॥ ४५ ॥

'यदिन्द्र प्राक्' इति द्वादशर्चं षष्ठं सूक्तं प्रगाथस्यार्षं गायत्रमैन्द्रम् । 'यदिन्द्र' इत्यनुक्रान्तम् । विनियोगो लैङ्गिकः ॥

**यदिन्द्र प्रागपागुदङ्न्यग्वा हूयसे नृभिः । आ याहि तूयमाशुभिः ॥ १ ॥**

यत् । इन्द्र । प्राक् । अपाक् । उदक् । न्यक् । वा । हूयसे । नृऽभिः ।
आ । याहि । तूयम् । आशुऽभिः ॥ १ ॥

हे इन्द्र त्वं नृभिः कर्मनेतृभिरस्मदीयैरध्वर्य्वादिभिः प्राक् वा अपागुदक् वा न्यग्वा यतः[2] कुतश्चित् हूयसे अतः तूयं तूर्णम् आशुभिः आशुगामिभिरश्वैः आ याहि आगच्छ ॥

**यद्वा प्रस्रवणे दिवो मादयासे स्वर्णरे । यद्वा समुद्रे अन्धसः ॥ २ ॥**

यत् । वा । प्रऽस्रवणे । दिवः । मादयासे । स्वःऽनरे । यत् । वा । समुद्रे । अन्धसः ॥ २ ॥

यद्वा अथवा दिवः द्युलोकस्य प्रस्रवणे अमृतनिष्यन्दनस्थाने मादयासे माद्यसि । यद्वा स्वर्णरे स्वर्गनयने वा भूलोकेऽन्यस्य यागदेशे माद्यसि । यद्वा अन्धसः । अन्धोऽन्नम् । तेन तत्कारणमुदकं लक्ष्यते । तस्य समुद्रे समुन्दनापादानभूतेऽन्तरिक्षे माद्यसि । तत्र तत्र वर्तमानमपि हुव इत्युत्तरत्र संबन्धः ॥

---

१. त-न—स्तूयते; श—श्रूयते । २. घ—यत् यतः ।

आ त्वा गीर्भिर्महामुरुं हुवे गामिव भोजसे । इन्द्र सोमस्य पीतये ॥ ३ ॥

आ । त्वा । गीःऽभिः । महाम् । उरुम् । हुवे । गाम्ऽइव । भोजसे । इन्द्र । सोमस्य । पीतये ॥३॥

हे ᵛइन्द्र ᵛत्वा त्वां ᵛगीर्भिः स्तुतिभिः ᵛहुवे आह्वयामि। कीदृशं त्वाम्। ᵛमहां महान्तम् ᵛउरुं प्रभूतम्। किमर्थम्। ᵛसोमस्य ᵛपीतये पानाय। ह्वाने दृष्टान्तः। ᵛभोजसे भोगाय ᵛगामिव ॥

आ त इन्द्र महिमानं हरयो देव ते महः । रथे वहन्तु बिभ्रतः ॥ ४ ॥

आ । ते । इन्द्र । महिमानम् । हरयः । देव । ते । महः । रथे । वहन्तु । बिभ्रतः ॥ ४ ॥

हे ᵛइन्द्र ᵛते तव ᵛमहिमानं माहात्म्यं ᵛरथे ᵛबिभ्रतः धारयन्तः ᵛहरयः अश्वाः ᵛआ ᵛवहन्तु। तथा हे ᵛदेव ᵛते ᵛमहः तेजः रथे बिभ्रतोऽश्वा[1] आ वहन्तु। अत्र महिम्नो महसश्च पृथगावहनासंभवात्ताभ्यां विशिष्टं वहन्त्वित्यर्थः। अथवा महिमानं बिभ्रतस्ते त्वां रथे वहन्तु महो बिभ्रतश्च त्वां वहन्त्विति योज्यम् ॥

इन्द्र गृणीष उ स्तुषे महाँ उग्र ईशानकृत् । एहि नः सुतं पिब ॥ ५ ॥

इन्द्र । गृणीषे । ऊँ इति । स्तुषे । महान् । उग्रः । ईशानऽकृत् । आ । इहि । नः । सुतम् । पिब ॥५॥

हे ᵛइन्द्र त्वं ᵛगृणीषे उच्यसे। इदं देहीदं कुर्विति। तथा ᵛस्तुषे ᵛउ स्तूयसे च। उ इति चार्थे। कीदृशस्त्वम्। ᵛमहान् गुणैः प्रवृद्धः ᵛउग्रः उद्गूर्णबलः ᵛईशानकृत् ऐश्वर्यकर्ता। तादृशस्त्वम् ᵛएहि आगच्छ। आगत्य च ᵛनः ᵛसुतं सोमं ᵛपिब ॥

सुतावन्तस्त्वा वयं प्रयस्वन्तो हवामहे । इदं नो बर्हिरासदे ॥ ६ ॥

सुतऽवन्तः । त्वा । वयम् । प्रयस्वन्तः । हवामहे । इदम् । नः । बर्हिः । आऽसदे ॥ ६ ॥

ᵛसुतावन्तः अभिषुतसोमवन्तः ᵛप्रयस्वन्तः चरुपुरोडाशाद्यन्नवन्तश्च ᵛवयं ᵛत्वा त्वां ᵛहवामहे आह्वयामः। किमर्थम्। ᵛइदं ᵛनः अस्मदीयं ᵛबर्हिः बर्हिषि यज्ञे बर्हिषि वा ᵛआसदे आसादनाय[2] ॥ ॥ ४६ ॥

यच्चिद्धि शश्वतामसीन्द्र साधारणस्त्वम् । तं त्वा वयं हवामहे ॥ ७ ॥

यत् । चित् । हि । शश्वताम् । असि । इन्द्र । साधारणः । त्वम् । तम् । त्वा । वयम् । हवामहे ॥७॥

हे ᵛइन्द्र ᵛत्वं ᵛयच्चिद्धि यस्मात् खलु ᵛशश्वतां बहूनां यजमानानां ᵛसाधारणः ᵛअसि। चिदिति पूरणः। हीति प्रसिद्धौ। ᵛतं तादृशं साधारणं ᵛत्वा त्वां ᵛवयं ᵛहवामहे आह्वयामः। इतरेभ्यः पूर्वमिति भावः ॥

प्रातःसवने ' इदं ते सोम्यम् ' इति होतुः प्रस्थितयाज्या। सूत्रितं च–' इदं ते सोम्यं मधु मित्रं वयं हवामहे ' ( आश्व. श्रौ. ५. ५ ) इति ॥

इदं ते सोम्यं मध्वधुक्षन्नद्रिभिर्नरः । जुषाण इन्द्र तत्पिब ॥ ८ ॥

इदम् । ते । सोम्यम् । मधु । अधुक्षन् । अद्रिऽभिः । नरः । जुषाणः । इन्द्र । तत् । पिब ॥८॥

---

१. ख-ग-त-न-श–बिभ्रतः। २. ख-ङ-त१-२-भ१-२–आसदनाय।

हे इन्द्र [v]ते त्वदर्थम् [v]इदं [v]सोम्यं सोमसंबन्धि [v]मधु [v]असुक्षन् [v]अद्रिभिः ग्रावभिरभिषवसाधनैः[1] [v]नरः अस्मदीया अध्वर्य्वादयः। हे [v]इन्द्र [v]तत् मधु [v]जुषाणः प्रीयमाणः [v]पिब ॥

विश्वाँ अर्यो विपश्चितोऽति ख्यस्तूयमा गहि। अस्मे धेहि श्रवो बृहत् ॥ ९ ॥

विश्वान्। अर्यः। विपःऽचितः। अति। ख्यः। तूयम्। आ। गहि।

अस्मे इति। धेहि। श्रवः। बृहत् ॥ ९ ॥

हे इन्द्र [v]अर्यः स्वामी त्वं [v]विश्वान् [v]विपश्चितः स्तोतॄन्[2] [v]अति [v]ख्यः अतिक्रम्य पश्य। तदर्थं [v]तूयं क्षिप्रम् [v]आ [v]गहि। आगत्य च [v]अस्मे अस्मासु [v]बृहत् [v]श्रवः अन्नं यशो वा [v]धेहि ॥

दाता मे पृषतीनां राजा हिरण्यवीनाम्। मा देवा मघवा रिषत् ॥ १० ॥

दाता। मे। पृषतीनाम्। राजा। हिरण्यऽवीनाम्। मा। देवाः। मघऽवा। रिषत् ॥ १० ॥

[v]हिरण्यवीनां हिरण्यवीतानां [v]पृषतीनां[3] [v]राजा इन्द्रः [v]मे [v]दाता भवतु। हे [v]देवाः [v]मघवा इन्द्रः [v]मा [v]रिषत् रिष्टो मा भवतु ॥

सहस्रे पृषतीनामधि श्चन्द्रं बृहत्पृथु। शुक्रं हिरण्यमा ददे ॥ ११ ॥

सहस्रे। पृषतीनाम्। अधि। चन्द्रम्। बृहत्। पृथु। शुक्रम्। हिरण्यम्। आ। ददे ॥ ११ ॥

अहं [v]पृषतीनां गवां [v]सहस्रे [v]अधि उपरि धारितं [v]बृहत् महत्[4] [v]पृथु विस्तृतं [v]चन्द्रम्[5] आह्लादकं[6] [v]शुक्रं निर्मलं [v]हिरण्यमा [v]ददे स्वीकरोमीन्द्रेणानीतम् ॥

नपातो दुर्गहस्य मे सहस्रेण सुराधसः। श्रवो देवेष्वक्रत ॥ १२ ॥

नपातः। दुःऽगहस्य। मे। सहस्रेण। सुऽराधसः। श्रवः। देवेषु। अक्रत ॥ १२ ॥

[v]नपातः अरक्षितस्य [v]दुर्गहस्य दुःखं गाहमानस्य [v]मे[7] संबन्धिनो जनाः [v]सहस्रेण अपरिमितेनेन्द्रदत्तेन गवादिधनेन [v]सुराधसः सुधनाः सन्तः [v]देवेषु प्रीतेषु। इन्द्रे प्रीत इत्यर्थः। [v]श्रवः अन्नं यशो वा [v]अक्रत। अलभन्तेत्यर्थः ॥　　॥ ४७ ॥

'तरोभिर्वः' इति पञ्चदशर्चं सप्तमं सूक्तं प्रगाथपुत्रस्य[8] कलेरार्षम्। प्रथमातृतीयाद्ययुजो बृहत्यो द्वितीयाचतुर्थ्यादियुजः सतोबृहत्यः पञ्चदशी त्वनुष्टुप्। तथा चानुक्रमणिका—'तरोभिः पञ्चोना कलिः प्रागाथः[9] प्रागाथमन्त्यानुष्टुप्[10]' इति। महाव्रते निष्केवल्ये बार्हततृचाशीतावेतत्सूक्तम्। तथा च पञ्चमारण्यके सूत्रितं—'तरोभिर्वो विदद्वसुमित्युत्तमामुद्धरति' (ऐ. आ. ५. २. ४) इति। अग्निष्टोमेऽच्छावाकशस्त्रेऽयं प्रगाथः स्तोत्रियः। तथा च सूत्रितं—'तरोभिर्वो विदद्वसुं तरणिरित्सिषासतीति प्रगाथौ स्तोत्रियानुरूपौ' (आश्व. श्रौ. ५. १६) इति। चातुर्विंशिकेऽहन्ययमेव प्रगाथः स्तोत्रियः। सूत्रितं च—'तरोभिर्वो विदद्वसुं तरणिरित्सिषासति' (आश्व. श्रौ. ७. ४) इति ॥

---

१. घ–°साधनैरभिषुतवंतः के। २. घ–सर्वान् स्तोतॄन्। ३. घ–पृषतीनामश्वानां। ४. ख-ग-घ-त-न-श–'महत्' नास्ति। ५. ख-त-न-भ-श–चंद्रं हि। ६. ख-घ-त-न-भ–आह्लादकं हि। ७. ख-घ-ङ-त१–मे मम। ८. ग-त-न-श–प्रगाथपुत्र°। ९. ख-ग-त१-३-न–प्रगाथः। १०. ख-ग-भ–प्रगाथ°।

तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये ।
बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥ १ ॥

तरःऽभिः । वः । विदत्ऽवसुम् । इन्द्रम् । सऽबाधः । ऊतये ।
बृहत् । गायन्तः । सुतऽसोमे । अध्वरे । हुवे । भरम् । न । कारिणम् ॥ १ ॥

हे ऋत्विजः वः यूयं तरोभिः वेगैरश्वैरुपेतं वेगैरेव वा विदद्वसुं वेदयद्वसुं धनावेदकम् इन्द्रं सबाधः बाधासहिताः ऊतये रक्षणाय बृहत् साम एतत्संज्ञं गायन्तः सन्तः परिचरतेति शेषः । कुत्रेति तदुच्यते । सुतसोमे सुतसोमके[1] अध्वरे यज्ञे सोमयागे । अहं च तमिन्द्रं[2] हुवे आह्वयामि । कमिव । भरं भर्तारं कुटुम्बपोषकं कारिणं हितकरणशीलं[3] यथा स्वहितकरणायाह्वयन्ति पुत्रादयस्तद्वत्तथाभूतमिन्द्रं हुव इति ॥

न यं दुध्रा वरन्ते न स्थिरा मुरो मदे सुशिप्रमन्धसः ।
य आदृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यम् ॥ २ ॥

न । यम् । दुध्राः । वरन्ते । न । स्थिराः । मुरः । मदे । सुऽशिप्रम् । अन्धसः ।
यः । आऽदृत्य । शशमानाय । सुन्वते । दाता । जरित्रे । उक्थ्यम् ॥ २ ॥

यं सुशिप्रम् इन्द्रं दुध्राः दुर्धरा असुरादयो न वरन्ते न वारयन्ति संग्रामे । तथा स्थिराः देवाः न वरन्ते । किंच मुरः मरणस्वभावा मनुष्या न वरन्ते । अन्धसः अन्नस्य[4] सोमस्य[4] मदे मदाय सोमपानजनिताय आदृत्य यः शशमानाय शंसमानाय सुन्वते अभिषवं कुर्वते जरित्रे स्तोत्रे च दाता भवति । किम् । उक्थ्यं स्तुत्यं धनम् । स रेजयतीत्युत्तरत्र संबन्धः ॥

यः शक्रो मृक्षो अश्व्यो यो वा कीजो हिरण्ययः ।
स ऊर्वस्य रेजयत्यपावृतिमिन्द्रो गव्यस्य वृत्रहा ॥ ३ ॥

यः । शक्रः । मृक्षः । अश्व्यः । यः । वा । कीजः । हिरण्ययः ।
सः । ऊर्वस्य । रेजयति । अपऽवृतिम् । इन्द्रः । गव्यस्य । वृत्रऽहा ॥ ३ ॥

यः शक्रः इन्द्रः स्तोतॄणां मृक्षः शोधकः परिचरणीयो वा । यश्च अश्व्यः । अश्वकुशलोऽश्व्यः । अथवाश्व्य इति स्वार्थिको यत् । मृक्षोऽश्वः प्रक्षालितोऽश्व इव वर्तते । यो वा कीजः । कीज इत्यद्भुतमाह । किमस्य कथं जात इति व - - - । यश्च हिरण्ययः हिरण्मयशरीरः सः एवमाश्चर्यभूतः इन्द्रः वृत्रहा गव्यस्य गोसमूहस्य । कीदृशस्य । ऊर्वस्य बहुलस्य अपावृतिम्[5] अपवरणीयं रेजयति । कम्पयतीत्यर्थः ॥

निखातं चिद्यः पुरुसंभृतं वसूदिद्वपति दाशुषे ।
वज्री सुशिप्रो हर्यश्व इत्करदिन्द्रः क्रत्वा यथा वशत् ॥ ४ ॥

---

१. घ-न—अभिषुतसोमके । २. ख-ग-त-न-भ-श—त्वदर्थं । ३. ख-त-न-श—सहितकरण°; भ—स्वहितकरण° । ४. ख-ग-त-भ-श—'अन्नस्य सोमस्य' नास्ति । ५. ख-त-न-भ१-२—मावृतिं; ।

निऽखातम् । चित् । यः । पुरुऽसंभृतम् । वसु । उत् । इत् । वपति । दाशुषे ।
वज्री । सुऽशिप्रः । हरिऽअश्वः । इत् । करत् । इन्द्रः । क्रत्वा । यथा । वशत् ॥ ४ ॥

ᵛनिखातं ᵛचित् भूमौ खात्वा स्थापितमपि ᵛसंभृतं संगृहीतं यागदानादिकं कुर्वेद्यः ᵛपुरु बहु ᵛवसु धनम् ᵛउदिद्वपति उद्वपत्येव[1] ᵛदाशुषे यजमानाय। एवं यो देवः करोति सः ᵛवज्री ᵛसुशिप्रः सुहनुः ᵛहर्यश्व ᵛइत् हरितवर्णाश्वयुक्तः ᵛइन्द्रः एव करोति[२]। केनोपाधिना। ᵛक्रत्वा कर्मणा यागेनोपाधिना। ᵛयथा ᵛवशत् येन प्रकारेण प्रकामयते तथा स एव करोति ॥

यद्वावन्थ पुरुष्टुत पुरा चिच्छूर नृणाम् ।
वयं तत्त इन्द्र सं भरामसि यज्ञमुक्थं तुरं वचः ॥ ५ ॥

यत् । ववन्थ । पुरुऽस्तुत । पुरा । चित् । शूर । नृणाम् ।
वयम् । तत् । ते । इन्द्र । सम् । भरामसि । यज्ञम् । उक्थम् । तुरम् । वचः ॥ ५ ॥

हे ᵛपुरुष्टुत बहुभिः स्तुतेन्द्र ᵛशूर विक्रान्त ᵛनृणां नेतॄणां[३] स्तोतॄणां[३] सकाशात् ᵛपुरा। ᵛचित् इत्युपमार्थे। तथेदानीमपि ᵛयद्ववन्थ अचीकमथाः ᵛतत् एव ᵛवयं ᵛतुरं तूर्णं ᵛते तुभ्यम् ᵛइन्द्र ᵛसं ᵛभरामसि संभरामः। किं तदिति उच्यते। ᵛयज्ञं यागयोग्यं हविः ᵛउक्थं शस्त्रं ᵛवचः वाच्यम्। तव प्रियतमं हविः स्तोत्रं च संभराम इत्यर्थः ॥　　॥ ४८ ॥

सचा सोमेषु पुरुहूत वज्रिवो मदाय द्युक्ष सोमपाः ।
त्वमिद्धि ब्रह्मकृते काम्यं वसु देष्ठः सुन्वते भुवः ॥ ६ ॥

सचा । सोमेषु । पुरुऽहूत । वज्रिऽवः । मदाय । द्युक्ष । सोमऽपाः ।
त्वम् । इत् । हि । ब्रह्मऽकृते । काम्यम् । वसु । देष्ठः । सुन्वते । भुवः ॥ ६ ॥

हे ᵛपुरुहूत बहुभिराहूत हे ᵛवज्रिवः वज्रवन् ᵛद्युक्ष द्युमन् ᵛसोमपाः सोमस्य पातः त्वं ᵛसोमेषु अभिषुतेषु ᵛमदाय ᵛसचा सह भवेति शेषः। ᵛत्वमित् त्वमेव ᵛब्रह्मकृते स्तोत्रकर्त्रे ᵛसुन्वते च ᵛकाम्यं कमनीयं ᵛवसु धनं ᵛदेष्ठः दातृतमः ᵛभुवः भवसि ॥

चातुर्विंशिकेऽहनि माध्यंदिनसवनेऽच्छावाकशस्त्रे 'वयमेनम्' इति वैकल्पिकोऽनुरूपः। तथा च सूत्रितं—'वयमेनमिदा ह्यो यो राजा चर्षणीनाम्' ( आश्व. श्रौ. ७. ४ ) इति ॥

वयमेनमिदा ह्योऽपीपेमेह वज्रिणम् ।
तस्मा उ अद्य समना सुतं भरा नूनं भूषत श्रुते ॥ ७ ॥

वयम् । एनम् । इदा । ह्यः । अपीपेम । इह । वज्रिणम् ।
तस्मै । ऊँ इति । अद्य । समना । सुतम् । भर । आ । नूनम् । भूषत । श्रुते ॥ ७ ॥

ᵛवयं यजमानाः ᵛएनम् इन्द्रं ᵛवज्रिणम् ᵛइदा इदानीं ᵛह्यः च ᵛइह अत्र ᵛअपीपेम आप्याययाम सोमेन। ᵛतस्मा[४] ᵛउ[४] तस्मा एव ᵛअद्य अत्र ᵛसमना संग्रामार्थं ᵛसुतम् अभिषुतं सोमं ᵛभर हरत हे अध्वर्य्वादयः। ᵛनूनम् इदानीं ᵛश्रुते स्तोत्रे श्रुते सति ᵛआ ᵛभूषत आभवतु आगच्छतु ॥

१. ग—उपेत्यैव; ज्ञ-त३-४-श—उपति उपेत्येव; त२-न—उपेत्येव। २. ख-घ-ज्ञ-त१-२-न-भ२—करत् करोति; त३-४-श—क करोति। ३. ख-भ१-३-श—नेतॄणां; घ—स्तोतॄणां। ४. ग-त-न-भ-श—'तस्मा उ' नास्ति।

वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति ।
सेमं नः स्तोमं जुजुषाण आ गहीन्द्र प्र चित्रया धिया ॥ ८ ॥

वृकः । चित् । अस्य । वारणः । उराऽमथिः । आ । वयुनेषु । भूषति ।
सः । इमम् । नः । स्तोमम् । जुजुषाणः । आ । गहि । इन्द्र । प्र । चित्रया । धिया ॥८॥

वृकश्चित् स्तेनोऽपि वारणः वारयिता सर्वस्य सन्नपि उरामथिः शत्रूणां मार्गे गच्छतां मथिता सन्नपि अस्य इन्द्रस्य वयुनेषु मार्गेषु प्रज्ञानेषु वा आ भूषति आनुकूल्यमेव भजते । अतीव हिंस्रोऽपीन्द्रस्यानुकूलो भवतीत्यर्थः । यद्वा । अस्येति कर्मणि षष्ठी । अमुमिन्द्रमुक्तरूपो वृकोऽपि वयुनेषु स्तोत्रेष्वा भूषति । सः त्वम् इमं नः स्तोमं जुजुषाणः प्रीयमाणः आ गहि आगच्छ । हे इन्द्र चित्रया धिया कर्मणा स्तुतिलक्षणेन निमित्तेन प्र प्रकर्षेण आ गहि शीघ्रमागच्छ ॥

चातुर्विंशिकेऽहनि माध्यंदिनसवनेऽच्छावाकशस्त्र एव 'कदू नु' इति कद्वत्प्रगाथः । 'कदू न्वस्याकृतमिति कद्वन्तः प्रगाथाः' (आश्व. श्रौ. ७. ४) इति हि सूत्रितम् ॥

कदू न्व१स्याकृतमिन्द्रस्यास्ति पौंस्यम् ।
केनो नु कं श्रोमतेन न शुश्रुवे जनुषः परि वृत्रहा ॥ ९ ॥

कत् । ऊँ इति । नु । अस्य । अकृतम् । इन्द्रस्य । अस्ति । पौंस्यम् ।
केनो इति । नु । कम् । श्रोमतेन । न । शुश्रुवे । जनुषः । परि । वृत्रऽहा ॥ ९ ॥

अस्य इन्द्रस्य कदू नु किं नु खलु पौंस्यं पौरुषम् अकृतम् अनाचरितम् अस्ति । सर्वमपि वृत्रवधादिकमनेन कृतमेव इतः परं न किंचि पौंस्यं कृत्यमस्तीत्यर्थः । लोके स्वल्पमपि यः[1] पुंस्त्वं[1] कुर्यात् स तेन स्तूयतेऽयं तु[2] न स्तुत एतदुच्यते । केनो नु कं केन खलु श्रोमतेन श्रवणीयेन[3] पुंस्त्वेन न शुश्रुवे न श्रूयते । किं कतिपयैरेवाहोभिः कृतेन नेत्याह । अयं वृत्रहा वृत्रस्यातिप्रबलस्य हन्तायं जनुषः परि जन्मप्रभृति क्रियमाणैः सामर्थ्यैः श्रूयते । वृत्रहेत्येतत्पुंस्त्वप्रदर्शनद्योतनाय । यथा वृत्रहननं सर्वैः श्रूयते तद्वदन्यान्यपीति भावः ॥

कदू महीरधृष्टा अस्य तविषीः कदु वृत्रघ्नो अस्तृतम् ।
इन्द्रो विश्वान्बेकनाटाँ अहर्दृश उत क्रत्वा पणीँरभि ॥ १० ॥

कत् । ऊँ इति । महीः । अधृष्टाः । अस्य । तविषीः । कत् । ऊँ इति । वृत्रऽघ्नः । अस्तृतम् ।
इन्द्रः । विश्वान् । बेकऽनाटान् । अहःऽदृशः । उत । क्रत्वा । पणीन् । अभि ॥ १० ॥

कदू[4] कदा[5] खलु अस्य इन्द्रस्य तविषीः बलानि महीः महान्ति अधृष्टाः अधृष्टान्यधर्षकाणि आसन् । कदु कदा नु खलु वृत्रघ्नः वृत्रहन्तुरिन्द्रस्य हन्तव्यम् अस्तृतम् अहिंसितमभवत् । न कदाचिदित्य------थ्यहं अभवदित्यर्थः । अथवास्य महान्ति बलानि सेनालक्षणानि कदाप्यधृष्टान्यन्यबलैरहिंसितानि तथा वृत्रघ्नः[6] शारीरं[6] बलमस्तृतमन्यैरहिंस्यम् । ईदृशेन द्विविधेन

१. ख-त-भ२-श-पुंस्त्वं; न-भ१-३-य-पुंस्त्वं यः । २. ख-त-न-भ-श-यंतु । ३. ख-त-न-भ-श-श्रपणीयेन; घ-श्रयणीयेन । ४. ख-त-न-श-कदू नु । ५. ख-ग-घ१-त-न-भ-श-कदा नु । ६. ख-त-न-श-वृत्रघ्नशारीरं; भ१-२-वृत्रघ्ना शारीरं ।

बलेन ᵛइन्द्रः ᵛविश्वान् सर्वान् ᵛबेकनाटान्। अनेन कुसीदिनो वृद्धिजीविनो वार्धुषिका उच्यन्ते। कथं तद्व्युत्पत्तिः। वे इत्यपभ्रंशो द्विशब्दार्थे। एकं कार्षापणमृणिकाय प्रयच्छन् द्वौ मह्यं दातव्य--- नयेन दर्शयन्ति[1] ततो द्विशब्देनैकशब्देन च नाटयन्तीति बेकनाटाः। तान्[2] ᵛअहर्दृशः[2]। अहःशब्देन तदुत्पादक आदित्योऽभिधेयो भवति। तं पश्यन्तीत्यहर्दृशः। ननु सर्वे सूर्यं पश्यन्ति कोऽत्रातिशय इति उच्यते। इहैव जन्मनि सूर्यं पश्यन्ति न जन्मान्तरे। लुब्धका अयष्टारोऽन्धे तमसि मज्जन्ति। अथवा लौकिकान्येवाहानि पश्यन्ति न पारलौकिकान्यदृष्टानि। दृष्टप्रधाना हि नास्तिकाः। ईदृशान् ᵛपणीन् पणिसदृशान् शूद्रकल्पान्। उतशब्द एवार्थे। ᵛक्रत्वा ᵛउत कर्मणैव ताडनादिव्यापारेणैव ᵛअभि भवतीति शेषः। यद्वा। पणीनुत पणीनेवाभिभवति न यष्टारम्। पणीनां निन्दा स्मर्यते—‘ गोरक्षकानापणिकांस्तथा कारुकुशीलवान्। प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ’ ( मनु. ८. १०२ ) इति॥ ॥ ४९ ॥

वयं घा ते अपूर्व्येन्द्र ब्रह्माणि वृत्रहन्।
पुरूतमासः पुरुहूत वज्रिवो भृतिं न प्र भरामसि ॥ ११ ॥

वयम्। घ। ते। अपूर्व्या। इन्द्र। ब्रह्माणि। वृत्रऽहन्।
पुरुऽतमासः। पुरुऽहूत। वज्रिऽवः। भृतिम्। न। प्र। भरामसि ॥ ११ ॥

हे ᵛइन्द्र ᵛवयं ᵛघ खलु ᵛते तव ᵛअपूर्व्या नूतनानि ᵛब्रह्माणि परिवृढानि स्तोत्राणि ᵛप्र ᵛभरामसि संभरामः ᵛपुरूतमासः बहुतमा वयमृत्विग्यजमानरूपेण ᵛवृत्रहन् वृत्रस्य हन्तः ᵛपुरुहूत बहुभिराहूत हे ᵛवज्रिवः वज्रयुक्तेन्द्र। किमिव। ᵛभृतिं ᵛन भृतिमिव। तां यथा नियमेन प्रयच्छन्ति तद्वत्। नियमेन प्रदानतात्पर्यात् भृतिदृष्टान्तत्वमविरुद्धम्॥

पूर्वीश्चिद्धि त्वे तुविकूर्मिन्नाशसो हवन्त इन्द्रोतयः।
तिरश्चिदर्यः सवना वसो गहि शविष्ठ श्रुधि मे हवम् ॥ १२ ॥

पूर्वीः। चित्। हि। त्वे इति। तुविऽकूर्मिन्। आऽशसः। हवन्ते। इन्द्र। ऊतयः।
तिरः। चित्। अर्यः। सवना। आ। वसो इति। गहि। शविष्ठ। श्रुधि। मे। हवम् ॥ १२ ॥

हे ᵛतुविकूर्मिन् बहुकर्मन् ᵛइन्द्र ᵛत्वे त्वयि ᵛपूर्वीः बहूनि ᵛआशसः आशंसनानि स्थितानि तथा ᵛऊतयः रक्षाश्च त्वय्यवस्थिता[3] लब्धुं ᵛहवन्ते आह्वयन्ति स्तोतारोऽन्ये। अतः ᵛअर्यः अरेः ᵛसवना सवनानि ᵛतिरश्चित् तिरस्कृत्य अरीन् वा तिरस्कृत्य अस्मत्सवनान्यभिलक्ष्य हे ᵛवसो वासकेन्द्र ᵛआ ᵛगहि आगच्छ। अतो हे ᵛशविष्ठ अतिशयेन बलवन् ᵛमे ᵛहवं ᵛश्रुधि शृणु॥

वयं घा ते त्वे इद्विन्द्र विप्रा अपि ष्मसि।
नहि त्वदन्यः पुरुहूत कश्चन मघवन्नस्ति मर्डिता ॥ १३ ॥

वयम्। घ। ते। त्वे इति। इत्। ऊँ इति। इन्द्र। विप्राः। अपि। स्मसि।
नहि। त्वत्। अन्यः। पुरुऽहूत। कः। चन। मघऽवन्। अस्ति। मर्डिता ॥ १३ ॥

---

१. ख-ज्ञ-त१-२-३-मु—दर्शयति। २. ख-ग-त१-२-न-भ-श—ते चाहर्दृशः; ज्ञ-त३-४—ते वाहर्दृशः।
३. ख-घ-त-श—°वस्थितानि; ग-भ—°वस्थितास्तानि; न—°वस्थितानि तानि।

हे ᵛइन्द्र ᵛवयं ᵛघ वयं खलु ᵛते तव स्वभूताः । अतः ᵛत्वे ᵛइत् त्वय्येव ᵛविप्राः मेधाविनः स्तोतारः ᵛअपि ᵛस्मसि । अपिः संभावनायाम् । त्वदधीनाः स्मेत्यर्थः । अन्यान् विहायेन्द्र एव वर्तामहे । तस्मिन् कोऽतिशय इत्याह । हे ᵛपुरुहूत ᵛत्वदन्यः ᵛकश्चन हे ᵛमघवन् ᵛमर्डिता सुखयिता न ᵛअस्ति ॥

त्वं नो॑ अ॒स्या अम॑तेरु॒त क्षु॒धो॒३॑ऽभिश॑स्तेरव॑ स्पृधि ।
त्वं न॑ ऊ॒ती तव॑ चि॒त्रया॑ धि॒या शिक्षा॑ शचिष्ठ गातु॒वित् ॥ १४ ॥

त्वम् । नः॒ । अ॒स्याः । अम॑तेः । उ॒त । क्षु॒धः । अ॒भिऽश॑स्तेः । अव॑ । स्पृ॒धि ।
त्वम् । नः॒ । ऊ॒ती । तव॑ । चि॒त्रया॑ । धि॒या । शिक्ष॑ । श॒चि॒ष्ठ॒ । गा॒तु॒ऽवि॒त् ॥ १४ ॥

हे इन्द्र ᵛत्वं ᵛनः अस्मान् ᵛअस्या ᵛअमतेः दारिद्र्यात्मिकायाः ᵛउत अपि च ᵛक्षुधः ᵛअभिशस्तेः निन्दायाश्च सकाशात् ᵛअव ᵛस्पृधि अवमोचय । किंच ᵛत्वं ᵛनः अस्मभ्यं ᵛतव ᵛऊती ऊत्या ᵛचित्रया ᵛधिया विचित्रेण कर्मणा ᵛशिक्ष देह्यभिमतम् । हे ᵛशविष्ठ[1] ᵛगातुवित् मार्गज्ञ उपायज्ञस्त्वम् ॥

सोम॑ इ॒द्वः सु॒तो अ॑स्तु॒ कल॑यो॒ मा बि॑भीतन ।
अपेदे॒ष ध्व॒स्माय॑ति स्व॒यं घै॒षो अपा॑यति ॥ १५ ॥

सोम॑ः । इत् । व॒ः । सु॒तः । अ॒स्तु॒ । कल॑यः । मा । बि॒भी॒त॒न॒ ।
अप॑ । इत् । ए॒षः । ध्व॒स्मा । अ॒य॒ति॒ । स्व॒यम् । घ॒ । ए॒षः । अप॑ । अ॒य॒ति॒ ॥ १५ ॥

ᵛसोमः ᵛसुतः अभिषुतः ᵛवः युष्माकं संबन्धी ᵛअस्तु ᵛइत् भवत्वेवेन्द्राय । हे ᵛकलयः । कलिमहर्षेर्ज्ञातयः[2] पुत्राश्चात्र संबोध्यन्ते । यूयं ᵛमा ᵛबिभीतन भीता मा भवत । भीत्यभावे कारणमाह । ᵛएष ᵛध्वस्मा ध्वंसको राक्षसादिः ᵛअप ᵛअयति अपगच्छत्येवेन्द्रसामर्थ्यात् । ᵛस्वयं ᵛघ स्वयमेव[3] ᵛएषः ᵛअपायति । ᵛउ इति पूरणः । पुनरुक्तिर्दार्ढ्यार्था ॥ ॥ ५० ॥

'त्यान्नु' इत्येकविंशत्यृचमष्टमं सूक्तम् । अत्रानुक्रमणिका—'त्यान्नु सैका मत्स्यः सांमदो मैत्रावरुणिर्मान्यो वा बहवो वा मत्स्या जालनद्धा आदित्यानस्तुवन्' । संमदाख्यस्य महामीनस्य पुत्रो मत्स्यो[4] यद्वा मित्रावरुणयोः पुत्रो मान्योऽथवा बहवो वा मत्स्या जालनद्धाः[5] सन्तो बन्धनमोक्षायादित्यानस्तुवन् । अतस्त एवर्षयः । 'परं गायत्रं प्राग्वत्सप्रेः' इति परिभाषया गायत्री छन्दः । आदित्या देवता । सूक्तविनियोगो लैङ्गिकः ॥

त्यान्नु क्ष॒त्रियाँ॒ अव॑ आदि॒त्यान्या॑चिषामहे । सु॒मृ॒ळी॒काँ अ॒भिष्ट॑ये ॥ १ ॥

त्यान् । नु । क्ष॒त्रिया॑न् । अव॑ः । आ॒दि॒त्यान् । या॒चि॒षा॒म॒हे॒ । सु॒ऽमृ॒ळी॒कान् । अ॒भिष्ट॑ये ॥ १ ॥

ᵛत्यान् तान् ᵛआदित्यान् ᵛक्षत्रियान् जात्या क्षत्रियान् ᵛअवः ᵛरक्षणं ᵛयाचिषामहे याचामहे । कीदृशान् । ᵛसुमृळीकान् सुष्ठु सुखयितॄन् । किमर्थम् । ᵛअभिष्टये अभिगमनायाभिमताय वा । मत्स्यपक्षे जालनिर्गमनं प्रार्थितमितरपक्षेऽभिमतमिति विवेकः ॥

---

१. ख-घ-ङ-त१-२-शविष्ठ बलवन् । २. ख-त-न-श-कलितहर्षे°; घ-कलितहर्षा° । ३. ख-ग-त-न-श-अहमेव । ४. ख-ग-त१-२-३-मात्स्यः; श-मान्यः । ५. न-जाले नद्धाः; भ-जालेन नद्धाः ।

**मित्रो नो अत्यंहतिं वरुणः पर्षदर्यमा । आदित्यासो यथा विदुः ॥ २ ॥**

मित्रः । नः । अति । अंहतिम् । वरुणः । पर्षत् । अर्यमा । आदित्यासः । यथा । विदुः ॥२॥

मित्रः[1] वरुणः अर्यमा आदित्यासः आदित्याः[1] नः अस्मान् अंहतिम् अति पर्षत् अतिनयन्तु । ते यथा विदुः येन[2] प्रकारेण दुःसहं जानन्ति तथाति पर्षदिति । इतरपक्षे अंहतिं पापमति पर्षदिति ॥

**तेषां हि चित्रमुक्थ्यं१ वरूथमस्ति दाशुषे । आदित्यानामरंकृते ॥ ३ ॥**

तेषाम् । हि । चित्रम् । उक्थ्यम् । वरूथम् । अस्ति । दाशुषे । आदित्यानाम् । अरम्ऽकृते ॥३॥

तेषाम् आदित्यानां हि खलु चित्रं चायनीयम् उक्थ्यं स्तुत्यं वरूथं धनम् अस्ति दाशुषे हविर्दात्रे अरंकृते अलंकर्त्रे पर्याप्तकारिणे यजमानाय दातव्यं धनमस्तीति ॥

**महि वो महतामवो वरुण मित्रार्यमन् । अवांस्या वृणीमहे ॥ ४ ॥**

महि । वः । महताम् । अवः । वरुण । मित्र । अर्यमन् । अवांसि । आ । वृणीमहे ॥४॥

हे वरुणादयः महतां वः[3] अवः[3] रक्षणं महि महत् दाशुषे हविर्दात्रे करणीयमस्ति । अतः अवांसि रक्षणानि आ वृणीमहे ॥

**जीवान्नो अभि धेतनादित्यासः पुरा हथात् । कद्ध स्थ हवनश्रुतः ॥ ५ ॥**

जीवान् । नः । अभि । धेतन । आदित्यासः । पुरा । हथात् । कत् । ह । स्थ । हवनऽश्रुतः ॥५॥

हे आदित्यासः आदित्याः नः अस्मान् जीवान् इदानीं जीवतः सतः अभि धेतन अभिधावत । अभिधावनं कुरुत । पुरा हथात् हननात् पुरा मृतेः पूर्वम् । कत् क स्थ भवथ । हे हवनश्रुतः आह्वानश्रोतारः । आह्वानं श्रुत्वा शीघ्रमागच्छतेति ॥ ॥ ५१ ॥

**यद्वः श्रान्ताय सुन्वते वरूथमस्ति यच्छर्दिः । तेना नो अधि वोचत ॥ ६ ॥**

यत् । वः । श्रान्ताय । सुन्वते । वरूथम् । अस्ति । यत् । छर्दिः । तेन । नः । अधि । वोचत ॥६॥

श्रान्ताय कर्मणः[4] सुन्वते अभिषुण्वते यजमानाय दातव्यं यत् वरूथं वरणीयं धनं वः युष्माकम् अस्ति यत् च छर्दिः सुखवासयोग्यं गृहमस्ति तेन द्वयेनास्मान् प्रीणयित्वा नः अस्मान् अधि वोचत अधिवचनं कुरुत ॥

**अस्ति देवा अंहोरुर्वस्ति रत्नमनागसः । आदित्या अद्भुतैनसः ॥ ७ ॥**

अस्ति । देवाः । अंहोः । उरु । अस्ति । रत्नम् । अनागसः । आदित्याः । अद्भुतऽएनसः ॥७॥

हे देवाः अंहोः हन्तुः पापशीलस्य उरु अस्ति महत् पापमस्ति । अनागसः अपापस्य रत्नं रमणीयं सुकृतं श्रेयः अस्ति । ततो[5] हे आदित्याः अद्भुतैनसः अभूतपापाः । अतोऽस्मदभिमतं कुरुतेति भावः ॥

---

१. ख-त-न-भ-श–मित्रवरुणार्यमादित्याः । २. ख-ग-त-न-भ-श–तेन । ३. ख-घ-त१-३-श–यो अव । ४. भ२–कर्मणी; भ३–कर्मणा । ५. ख-न-भ–अतो ।

मा नः सेतुः सिषेदयं महे वृणक्तु नस्परि । इन्द्र इद्धि श्रुतो वशी ॥ ८ ॥

मा । नः । सेतुः । सिसेत् । अयम् । महे । वृणक्तु । नः । परि । इन्द्रः । इत् । हि । श्रुतः । वशी ॥८॥

ᐯनः अस्मान् ᐯसेतुः बन्धको जालः ᐯमा ᐯसिषेत् मा बध्नातु । ᐯनः अस्मान् ᐯमहे महते कर्मणे ᐯपरि ᐯवृणक्तु परिवर्जयतु जालात् । कः । ᐯइन्द्र ᐯइत् इन्द्र एव ᐯश्रुतः विश्रुतः ᐯवशी सर्वस्य वशीकर्ता । स परि वृणक्तु ॥

मा नो मृचा रिपूणां वृजिनानामविष्यवः । देवा अभि प्र मृक्षत ॥ ९ ॥

मा । नः । मृचा । रिपूणाम् । वृजिनानाम् । अविष्यवः । देवाः । अभि । प्र । मृक्षत ॥९॥

हे ᐯअविष्यवः रक्षितुमिच्छन्तः ᐯदेवाः ᐯनः अस्मान् ᐯवृजिनानां हिंसकानां ᐯरिपूणां ᐯमृचा । मृचिर्हिंसाकर्मा । 'यत्क्षुरेण मर्चयता सुपेशसा' ( आश्व. गृ. १. १७. १५) इत्यादिषु तथा दृष्टत्वात् । हिंसकेन जालेन ᐯमा ᐯअभि ᐯप्र ᐯमृक्षत । अभिमर्शनमुपरि जालस्य प्रेरणं मा कुरुत । यद्वा । मृचा जालेन प्राप्ता बाधा नोऽस्माकं मा भवतु । हे देवाः यूयं च परिमार्जयत परिहरत ॥

आधाने पवमानेष्टिषु 'उत त्वामदिते' इत्यनुवाक्या । सूत्रितं च—'उत त्वामदिते महि महीमू षु मातरम्' (आश्व. श्रौ. २. १ ) इति । आदित्ये पशौ वपाया अनुवाक्येयमेव । सूत्रितं च—'उत त्वामदिते मह्यनेहो न उरुव्रजे' ( आश्व. श्रौ. ३. ८ ) इति ॥

उत त्वामदिते मह्यहं देव्युप ब्रुवे । सुमृळीकामभिष्टये ॥ १० ॥

उत । त्वाम् । अदिते । महि । अहम् । देवि । उप । ब्रुवे । सुऽमृळीकाम् । अभिष्टये ॥ १०॥

हे[1] ᐯमहि महति ᐯअदिते देवमातः ᐯदेवि ᐯत्वाम् ᐯअहं मत्स्यपक्षे मत्स्यप्रमुखोऽहम् ᐯउप ᐯब्रुवे उपेत्य स्तौमि । कीदृशीम् । ᐯसुमृळीकां सुष्ठु सुखयित्रीम् । किमर्थम् । ᐯअभिष्टये अभिमताय ॥ ॥५२॥

पर्षि दीने गभीर आँ उग्रपुत्रे जिघांसतः । माकिस्तोकस्य नो रिषत् ॥११॥

पर्षि । दीने । गभीरे । आ । उग्रऽपुत्रे । जिघांसतः । माकिः । तोकस्य । नः । रिषत् ॥११॥

हे अदिते ᐯआ ᐯपर्षि सर्वतः पालयसि । ᐯदीने क्षीणे ᐯगभीरे उदके । उदकनामैतत् 'गभीरं गहनम्' इति तन्नामसु पाठात् । ᐯउग्रपुत्रे । उद्गूर्णाः पुत्रा यस्मिन् तत्[2] । तस्मिन्नुदके ᐯजिघांसतः हिंसतो जालं ᐯतोकस्य अस्माकं तनयस्य तनयं ᐯमाकिः ᐯरिषत् मैव हिंसां करोतु[3] ॥

आदित्यस्य पशौ 'अनेहो नः' इति पुरोडाशस्यानुवाक्या । सूत्रितं च—'अनेहो न उरुव्रजेऽदितिर्ह्यजनिष्ट' ( आश्व. श्रौ. ३. ८ ) इति ॥

अनेहो न उरुव्रज उरूचि वि प्रसर्तवे । कृधि तोकाय जीवसे ॥ १२ ॥

अनेहः । नः । उरुऽव्रजे । उरूचि । वि । प्रऽसर्तवे । कृधि । तोकाय । जीवसे ॥ १२ ॥

ᐯअनेहः अपापान् ᐯनः अस्मान् हे ᐯउरुव्रजे विस्तीर्णगमने । दूरमियमदितिर्भूमिरूपा[4] गता भवत्यतिविस्तृतत्वात् । अथवोरुगमने धीरे हे ᐯउरूचि उरुत्वं ᐯवि ᐯप्रसर्तवे अभिसरणाय ᐯकृधि

१. ख-घ-ज्ञ-त१-२—उतापि च हे । २. घ-त२-३-श—'तत्' नास्ति । ३. ख-त-न-भ-श—करोति । ४. ग—दूरं हि इयमदिति°; न—दूरं यंमदिति°; त३-भ१-श—दूरं यमदति°; भ२—दूरं यमदिति°; भ३—दूरं यथा व्रजति° ।

कुरु । कस्मै । ᵛतोकाय पुत्राय मत्स्याय ᵛजीवसे तस्य जीवनाय । यथा जीवेम पुत्राश्चक्षितुं तथोरुत्वं कुर्विति ॥

ये मूर्धानः क्षितीनामदब्धासः स्वयशसः । व्रता रक्षन्ते अद्रुहः ॥ १३ ॥

ये । मूर्धानः । क्षितीनाम् । अदब्धासः । स्वऽयशसः । व्रता । रक्षन्ते । अद्रुहः ॥ १३ ॥

ᵛये ᵛमूर्धानः सर्वेषां मूर्धस्थानीया उच्छ्रिताः ᵛक्षितीनां मनुष्याणाम् ᵛअदब्धासः अहिंसकाः ᵛस्वयशसः स्वायत्तकीर्तयः ᵛव्रता व्रतान्यस्मदीयानि कर्माणि ᵛरक्षन्ते पालयन्ते ᵛअद्रुहः अद्रोग्धारः सन्तः ॥

ते न आस्नो वृकाणामादित्यासो मुमोचत । स्तेनं बद्धमिवादिते ॥ १४ ॥

ते । नः । आस्नः । वृकाणाम् । आदित्यासः । मुमोचत । स्तेनम् । बद्धम्ऽइव । अदिते ॥ १४ ॥

हे ᵛआदित्यासः आदित्याः ᵛते यूयं ᵛनः अस्मान्[1] ᵛवृकाणां हिंसकानामादातॄणां वा ᵛआस्नः आस्यात् सकाशात् ᵛमुमोचत विमोचनं कुरुत ᵛस्तेनं ᵛबद्धमिव । हे ᵛअदिते त्वं च मोचयास्मानिति ॥

अपो षु ण इयं शरुरादित्या अप दुर्मतिः । अस्मदेत्वजघ्नुषी ॥ १५ ॥

अपो इति । सु । नः । इयम् । शरुः । आदित्याः । अप । दुःऽमतिः ।

अस्मत् । एतु । अजघ्नुषी ॥ १५ ॥

हे ᵛआदित्याः ᵛइयं ᵛशरुः हिंसिका प्रमितिः जालिकप्रेरिता ᵛअजघ्नुषी अहिंसन्ती सती ᵛअस्मत् अस्मत्तः ᵛसु सुष्ठु ᵛअपो ᵛएतु अपगच्छत्वेव । तथा ᵛदुर्मतिः दुष्टा मतिरप्यजघ्नुषी अस्मत्तः ᵛअप गच्छतु ॥ ॥ ५३ ॥

शश्वद्धि वः सुदानव आदित्या ऊतिभिर्वयम् । पुरा नूनं बुभुज्महे ॥ १६ ॥

शश्वत् । हि । वः । सुऽदानवः । आदित्याः । ऊतिऽभिः । वयम् । पुरा । नूनम् । बुभुज्महे ॥ १६ ॥

हे ᵛसुदानवः सुदाना हे ᵛआदित्याः ᵛवः युष्माकम् ᵛऊतिभिः रक्षाभिः ᵛवयं ᵛपुरा ᵛनूनम् इदानीमपि ᵛशश्वत् सर्वदा ᵛबुभुज्महे । यद्वा । शश्वत् बहून् भोगान् भुञ्ज्महे ॥

शश्वन्तं हि प्रचेतसः प्रतियन्तं चिदेनसः । देवाः कृणुथ जीवसे ॥ १७ ॥

शश्वन्तम् । हि । प्रऽचेतसः । प्रतिऽयन्तम् । चित् । एनसः । देवाः । कृणुथ । जीवसे ॥ १७ ॥

हे ᵛप्रचेतसः प्रकृष्टमतयो हे ᵛदेवाः ᵛशश्वन्तं बहुमपि ᵛप्रतियन्तं ᵛचित् प्रतिगच्छन्तमपि शत्रुम् ᵛएनसः पापस्य कर्तारम् । अथवैनसः पापकृतः । व्यत्ययेन बहुवचनम् । पापकर्तारं ᵛजीवसे जीवनायास्माकं ᵛकृणुथ कुरुत । अस्मत्तो वियुक्तमिति शेषः ॥

तत्सु नो नव्यं सन्यस आदित्या यन्मुमोचति । बन्धाद्बद्धमिवादिते ॥ १८ ॥

---

१. ख—अस्मान् कारणान् क्राणान्; घ-ज्ञ-त१-३-४-न-भ१-श—अस्मान् क्राणान्; त२—अस्मान् प्राणान्; भ३—अस्मान् ऋषीन् ॥ अत्र 'वृकाणाम्' इत्यस्य पुनरुक्तिः स्यादथवा 'नोऽस्माकं प्राणान्' इत्यभिप्रेतं स्यादिति मॅक्समुल्लरमहाशयः संभावयति ।

तत् । सु । नः । नव्यम् । सन्यसे । आदित्याः । यत् । मुमोचति ।
बन्धात् । बद्धम्ऽइव । अदिते ॥ १८ ॥

तत् बन्धकं नः अस्माकं सु सुष्ठु नव्यं स्तुत्यं सन्यसे संभजनाय भवतु । अस्माकं मोचनेन स्तुत्यं भवत्वित्यर्थः । हे आदित्याः अदितेः पुत्रा हे अदिते त्वदनुग्रहात् यत् मुमोचति मुञ्चत्यस्मान् बन्धनसाधनं[1] पूर्वं यत् प्रतिबन्धकत्वादासीत्[2] तदेव युष्मदनुग्रहादस्मान् मुञ्चतु[3] । यद्वा । युष्माकं यद्रक्षणमस्मान् मुञ्चति तत् सुष्ठु स्तुत्यं संभजनाय भवत्विति योज्यम् ॥

**नास्माकमस्ति तत्तर आदित्यासो अतिष्कदे । यूयमस्मभ्यं मृळत ॥ १९ ॥**

न । अस्माकम् । अस्ति । तत् । तरः । आदित्यासः । अतिऽस्कदे ।
यूयम् । अस्मभ्यम् । मृळत ॥ १९ ॥

हे आदित्यासः आदित्या युष्मत्कर्तृकः तत् तरः वेगः अस्माकं न अस्ति यो वेगो बन्धकाज्जालात् अतिष्कदे अस्माकमतिस्कन्दनाय प्रभवति । अतः यूयमस्मभ्यं मृळत । तत्तादृशं तरः कुरुतेत्यर्थः ॥

**मा नो हेतिर्विवस्वत आदित्याः कृत्रिमा शरुः । पुरा नु जरसो वधीत् ॥२०॥**

मा । नः । हेतिः । विवस्वतः । आदित्याः । कृत्रिमा । शरुः । पुरा । नु । जरसः । वधीत् ॥२०॥

हे आदित्याः नः अस्मान् विवस्वतः विवस्वत्पुत्रस्य यमस्य । पुत्रे पितृशब्दः । तस्य हेतिः आयुधभूता कृत्रिमा[4] क्रियया[4] निष्पन्ना शरुः हिंसिका प्रसितिः पुरा पूर्वं नु इदानीम् । सर्वदेत्यर्थः । जरसः इदानीं जीर्णान् मा वधीत् मा हिंस्यात् ॥

**वि षु द्वेषो व्यंहतिमादित्यासो वि संहितम् । विष्वग्वि वृहता रपः ॥२१॥**

वि । सु । द्वेषः । वि । अंहतिम् । आदित्यासः । वि । सम्ऽहितम् ।
विष्वक् । वि । वृहत । रपः ॥ २१ ॥

हे आदित्यासः आदित्याः द्वेषः द्वेष्टॄन् सु सुष्ठु वि वृहत उन्मूलयत[5] । नाशयतेत्यर्थः । तथा अंहतिं पातकं पापं वि वृहत । 'हन्तेरंह च' ( उ. सू. ४. ५०२ ) इत्यतिप्रत्ययः । तथा संहितं[6] जालं वि वृहत । तथा रपः पापं सर्वं विष्वक् विषूचीनं वि वृहत । 'रपो रिप्रमिति पापनामनी भवतः' ( निरु. ४. २१ ) इति यास्कः ॥ ॥ ५४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥
इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
ऋक्संहिताभाष्ये षष्ठाष्टके चतुर्थोऽध्यायः ॥

---

१. ख-ज्ञ-त१-३-४-न-भ२-बंधकं न साधनं; घ-बंधकसाधनं; त२-बंधकं बंधनसाधनं; श-बंधकसाधने । २. ख-त-न-भ२-श-प्रतिबंधकत्वाद्यमासीत् । ३. ख-ग-त-न-भ-श-मुंचतु स्तुत्यं भवत्वित्यर्थः; घ-मुंचतु दृष्टांतः बंधात् बद्धमिव बद्धं पुरुषं बंधात् यथा विमुंचति तद्वत् । ४. ख-ज्ञ-त३-४-भ२-श-कृत्रिमक्रियया; घ-कृत्रिमा कृत्रिमक्रियया; न-कृत्रिमक्रिया; भ१-क्षत्रिमक्रियया । ५. ग-त-न-भ२-श-विवृहमन्मलयतः भ१-विभधमन्मलयत । ६. त३-न-श-हितं ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
षष्ठे चतुर्थमध्यायं श्रीमायणसुतः सुधीः ।
व्याख्याय सायणाचार्यः पञ्चमं व्याकरोत्यथ ॥

तत्र 'आ त्वा रथम्' इत्येकोनविंशत्यृचं नवमं सूक्तम् । अत्रेयमनुक्रमणिका–'आ त्वैकोना प्रियमेध आदावनुष्टुम्मुखास्तृचाश्चत्वारोऽन्त्याः षळृक्षाश्वमेधयोर्दानस्तुतिः' इति । आङ्गिरसः प्रियमेध ऋषिः । प्रथमाचतुर्थीसप्तमीदशम्योऽनुष्टुभः शिष्टाः 'परं गायत्रम्' इति परिभाषया गायत्र्यः । अन्ततः षट्स्वृक्षु ऋक्षाश्वमेधयोर्दानं स्तूयते । अतस्तास्तद्देवताकाः । शिष्टा अनुक्तपरिभाषयैन्द्र्यः । सूक्तविनियोगो लैङ्गिकः । आद्यस्तृचो मरुत्वतीयस्य प्रतिपत् । तथा च सूत्रितम्—'आ त्वा रथं यथोतय इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ' (आश्व. श्रौ. ५. १४) इति । महाव्रतादिष्वपि यत्र तृचान्तरं न विधीयते तत्र सर्वत्रायमेव[1] प्रतिपद्भवति ॥

आ त्वा रथं यथोतये सुम्नाय वर्तयामसि । तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पते ॥१॥

आ । त्वा । रथम् । यथा । ऊतये । सुम्नाय । वर्तयामसि ।
तुविऽकूर्मिम् । ऋतिऽसहम् । इन्द्र । शविष्ठ । सत्ऽपते ॥ १ ॥

हे इन्द्र त्वा त्वाम् आ वर्तयामसि आवर्तयामः । किमर्थम् । ऊतये अस्माकं रक्षणाय सुम्नाय सुखाय च । किमिव । रथं यथा । रथं यथोतये सुखाय चावर्तयन्ति तद्वत् । कीदृशं त्वाम् । तुविकूर्मिं बहुकर्माणम् ऋतीषहं हिंसकानामभिभवितारम् । हे इन्द्र शविष्ठ अतिशयेन बलवन् हे सत्पते सतां पालक त्वामिति समन्वयः ॥

तुविशुष्म तुविक्रतो शचीवो विश्वया मते । आ पप्राथ महित्वना ॥ २ ॥

तुविऽशुष्म । तुविक्रतो इति तुविऽक्रतो । शचीऽवः । विश्वया । मते । आ । पप्राथ । महिऽत्वना ॥२॥

हे तुविशुष्म प्रभूतबल हे तुविक्रतो बहुकर्मन् । अथवा बहुप्रज्ञ कर्मणः पृथगभिधानात् । हे शचीवः बहुकर्मोपेत मते पूजनीयेन्द्र विश्वया विश्वव्यापेन महित्वना महत्त्वेन आ पप्राथ आपूरितवानसि । अविशेषाद्विश्वमित्यर्थः ॥

यस्य ते महिना महः परि ज्मायन्तमीयतुः । हस्ता वज्रं हिरण्ययम् ॥ ३ ॥

यस्य । ते । महिना । महः । परि । ज्मायन्तम् । ईयतुः । हस्ता । वज्रम् । हिरण्ययम् ॥ ३ ॥

महः महतः यस्य ते तव । यच्छब्दः प्रकृतपरामर्शकः । प्रकृतं तूक्तमृग्द्वयम् । तत्रत्यतुविकूर्मिमृतीषहमित्याद्युक्तलक्षणस्य तवेत्यर्थः[2] । महिना महत्त्वेन हस्ता तव हस्ता हस्तौ ज्मायन्तं पृथिव्यां सर्वतो व्याप्नुवन्तं हिरण्ययं हिरण्मयं वज्रम्[3] ईयतुः परिगृह्णीतः । सर्वदास्माकं भयनिवारणायेति भावः ॥

---

१. ख-त१-२-भ–°यमेव तृचः । २. ख-त–त इत्यर्थः; ग–इत्यर्थः; न–भद्र इत्यर्थः; भ१–व इत्यर्थः; श–स इत्यर्थः । ३. ख-त-न-श–वज्रहस्तं; भ–वज्रं हस्तौ ।

पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहनि ‘ विश्वानरस्य ’ इति प्रतिपत्तृचः । सूत्रितं च—‘ विश्वानरस्य वस्पतिमिन्द्र इत्सोमपा एक इति मरुत्वतीयस्य प्रतिपदनुचरौ ’ ( आश्व. श्रौ. ७. ६ ) इति ॥

**विश्वानरस्य वस्पतिमनानतस्य शवसः । एवैश्च चर्षणीनामूती हुवे रथानाम् ॥४॥**

विश्वानरस्य । वः । पतिम् । अनानतस्य । शवसः ।

एवैः । च । चर्षणीनाम् । ऊती । हुवे । रथानाम् ॥ ४ ॥

ᐯविश्वानरस्य विश्वान् शत्रून् प्रत्यृतस्य ᐯअनानतस्य शत्रूणामप्रह्वस्य ᐯशवसः बलस्य ᐯपतिं स्वामिनमिन्द्रं वा । अत्रेन्द्रसंबन्धिनो[1] मरुतोऽपि संकीर्त्यन्ते । हे मरुतः ᐯवः । युष्माकमित्यर्थः । यद्यपि मरुत्संशब्दनं नास्ति तथापि व[2] इति[2] सामर्थ्याल्लभ्यते । युष्माकं ᐯचर्षणीनां सैनिकानाम् ᐯएवैः गमनैः सह । यद्वा चर्षणीनाम् इन्द्रस्य सेनारूपाणां वो युष्माकं गमनैरिति सामानाधिकरण्यम् । युष्माकं ᐯरथानां च ᐯऊती ऊतिभिर्गमनैश्च सह ᐯहुवे आह्वयामि । गन्तृभी रथैर्गन्तृभिर्मरुद्भिश्च सहेन्द्रं हुव इत्यर्थः । यद्वा । हे यजमानाः युष्मदीयाः सैनिकाः सरथा यदा प्रविशन्ति युद्धाय संग्रामं तदानीं तेषां साहाय्यायेन्द्रं हुव इत्यर्थः ॥

**अभिष्टये सदावृधं स्वर्मीळ्हेषु यं नरः । नाना हवन्त ऊतये ॥ ५ ॥**

अभिष्टये । सदाऽवृधम् । स्वःऽमीळ्हेषु । यम् । नरः । नाना । हवन्ते । ऊतये ॥ ५ ॥

हे यजमानाः युष्माकम् ᐯअभिष्टये साहाय्यार्थमभिगमनायाभिष्टये वा ᐯसदावृधं सर्वदा वर्धयन्तं सेवकान् स्वयं सर्वदा वर्धमानं वा हुव इति शेषः । ᐯयं ᐯस्वर्मीळ्हेषु संग्रामेषु ᐯनरः नेतारो मनुष्याः ᐯनाना बहुप्रकारं ᐯहवन्ते आह्वयन्ति ᐯऊतये रक्षार्थं तं हुव इति शेषः ॥ ॥ १ ॥

**परोमात्रमृचीषममिन्द्रमुग्रं सुराधसम् । ईशानं चिद्वसूनाम् ॥ ६ ॥**

परःऽमात्रम् । ऋचीषमम् । इन्द्रम् । उग्रम् । सुऽराधसम् । ईशानम् । चित् । वसूनाम् ॥६॥

ᐯपरोमात्रम् । परा मात्रा यस्य तादृशम् । अथवा मीयत इति मात्रं दूरदेशः । ततः परस्ताद्वर्तमानमपरिमितस्वरूपम् । तथापि ᐯऋचीषमम् ऋचा स्तुत्या समम् । यद्यप्यपरिच्छिन्नः तथापि स्तुतिर्यावन्मात्रं विषयीकरोति तत्सम इत्यर्थः । तदेवाह । ᐯइन्द्रं परमैश्वर्ययोगादिच्छानुकूलस्वरूपम् ᐯउग्रम् उद्गूर्णबलं ᐯसुराधसम् । राध इति धननाम । शोभनधनं शोभनान्नं वा ᐯईशानं ᐯचित् ईश्वरं च । केषाम् । ᐯवसूनाम् अस्मभ्यं प्रदेयानां गवादिधनानाम् । एवंमहानुभावमिन्द्रं हुव इति शेषः ॥

तृतीयेऽहनि मरुत्वतीये ‘ तंतमित् ’ इति प्रतिपत्तृचः । सूत्रितं च—‘ तंतमिद्राधसे महे त्रय इन्द्रस्य सोमाः ’ ( आश्व. श्रौ. ७. १० ) इति ॥

**तंतमिद्राधसे मह इन्द्रं चोदामि पीतये । यः पूर्व्यामनुष्टुतिमीशे कृष्टीनां नृतुः ॥७॥**

तम्ऽतम् । इत् । राधसे । महे । इन्द्रम् । चोदामि । पीतये ।

यः । पूर्व्याम् । अनुऽस्तुतिम् । ईशे । कृष्टीनाम् । नृतुः ॥ ७ ॥

ᐯतंतमित् तमेव इन्द्रम् । सर्वेष्वपि यागकालेषु तमेवेन्द्रमित्यर्थः । तं प्रति ᐯचोदामि प्रेरयामि स्तुतिं ᐯपीतये सोमपानाय । ततः को लाभ इति उच्यते । ᐯमहे महते ᐯराधसे धनाय प्रभूतधन-

लाभार्थम्। ᵛयः ᵛनृतुः फलस्य नेता देवः ᵛपूर्व्यां पूर्वे भवां यज्ञमुखस्थाम् ᵛअनुष्टुतिम् अनुक्रमेण क्रियमाणां स्तुतिं ᵛकृष्टीनां मनुष्याणामृत्विजां संबन्धिनीम् ᵛईशे ईष्टे श्रोतुं तं चोदामीति संबन्धः॥

न यस्य॑ ते शवसान स॒ख्यमा॒नंश॑ मर्त्यः । नकिः॒ शवा॑ंसि ते नशत् ॥ ८ ॥

न । यस्य॑ । ते॒ । श॒व॒सा॒न॒ । स॒ख्यम् । आ॒नंश॑ । मर्त्यः॑ । नकिः॑ । शवा॑ंसि । ते॒ । न॒श॒त् ॥ ८ ॥

हे ᵛशवसान बलवन्निन्द्र[1] ᵛयस्य[1] ᵛते तव ᵛसख्यं ᵛमर्त्यः मरणधर्मा मनुष्यः ᵛन ᵛआनंश न व्याप्नोति ᵛते ᵛशवांसि बलान्यपि ᵛनकिः नैव ᵛनशत् व्याप्नोति॥

त्वोता॑स॒स्त्वा यु॒जाप्सु सूर्ये॑ म॒हद्धनम् । जये॑म पृ॒त्सु व॑ज्रिवः ॥ ९ ॥

त्वाऽऊ॑तासः । त्वा । यु॒जा । अ॒प्ऽसु । सूर्ये॑ । म॒हत् । धन॑म् । जये॑म । पृ॒त्ऽसु । व॒ज्रि॒ऽवः॒ ॥९॥

हे इन्द्र ᵛत्वोतासः त्वया रक्षिताः ᵛत्वा त्वया ᵛयुजा सहायेन ᵛअप्सु स्नातुं सूर्यं द्रष्टुं च। स्नानादिव्यवहारं कर्तुं ᵛसूर्ये उदिते सति गमनादिव्यवहारं कर्तुमित्यर्थः। तदर्थं ᵛपृत्सु संग्रामेषु हे ᵛवज्रिवः वज्रवन्निन्द्र ᵛमहद्धनं ᵛजयेम। शत्रून् संग्रामे जित्वा तेषां धनं लभेमेत्यर्थः॥

चतुर्थेऽहनि मरुत्वतीये 'तं त्वा यज्ञेभिः' इति तृचः प्रतिपत्। सूत्रितं च—'तं त्वा यज्ञेभिरीमह इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ' (आश्व. श्रौ. ७. ११) इति॥

तं त्वा॑ य॒ज्ञेभि॑रीमहे॒ तं गी॒र्भिर्गि॑र्वणस्तम ।

इन्द्र॒ यथा॑ चि॒दावि॑थ॒ वाजे॑षु पुरु॒माय्य॑म् ॥ १० ॥

तम् । त्वा॒ । य॒ज्ञेभिः॑ । ई॒म॒हे॒ । तम् । गी॒ःऽभिः । गि॒र्व॒णः॒ऽत॒म॒ ।

इन्द्र॑ । यथा॑ । चि॒त् । आवि॑थ । वाजे॑षु । पु॒रु॒ऽमाय्य॑म् ॥ १० ॥

ᵛतं स्तुत्यत्वेन प्रसिद्धं ᵛत्वा त्वां ᵛयज्ञेभिः यागसाधनैः सोमादिभिः ᵛईमहे याचामहे। ᵛतम् एवेन्द्रं ᵛगीर्भिः स्तुतिभिरीमहे। हे ᵛगिर्वणस्तम गीर्भिः स्तुतिभिर्वननीयतम इन्द्र तं त्वामिति समन्वयः। हे ᵛइन्द्र त्वं ᵛयथा ᵛचिदाविथ येन प्रकारेण ररक्षिथ माम्। चिदिति पूरणः। कुत्रेति उच्यते। ᵛवाजेषु संग्रामेषु। कीदृशं माम्। ᵛपुरुमाय्यं बहुप्रज्ञम्। बहुस्तुतिमित्यर्थः[2]॥ ॥ २ ॥

यस्य॑ ते स्वा॒दु स॒ख्यं स्वा॒द्वी प्रणी॑तिरद्रिवः । य॒ज्ञो वि॑तन्त॒साय्य॑ः ॥ ११ ॥

यस्य॑ । ते॒ । स्वा॒दु । स॒ख्यम् । स्वा॒द्वी । प्रऽनी॑तिः । अ॒द्रि॒ऽवः॒ । य॒ज्ञः । वि॒त॒न्त॒साय्य॑ः ॥११॥

हे ᵛअद्रिवः वज्रवन्निन्द्र ᵛयस्य स्तुत्यत्वेन प्रसिद्धस्य ᵛते तव ᵛसख्यं ᵛस्वादु अतीवानुभवार्हम्। किंच ते ᵛप्रणीतिः प्रणयनं धनादीनां ᵛस्वाद्वी स्वादु सुहर्षकम्। तथोभे त्वद्विषयो ᵛयज्ञः च ᵛवितन्तसाय्यः विशेषेण तननीयः॥

उ॒रु ण॑स्त॒न्वे॒३॒॑ तने॑ उ॒रु क्षया॑य नस्कृधि । उ॒रु णो॑ यन्धि जी॒वसे॑ ॥ १२ ॥

उ॒रु । न॒ः । त॒न्वे॑ । तने॑ । उ॒रु । क्षया॑य । न॒ः । कृ॒धि॒ । उ॒रु । न॒ः । य॒न्धि॒ । जी॒वसे॑ ॥ १२ ॥

---

१. ख-ञ-त१-२-न—बलवन्निंद्र न यस्य; त३-४-भ२—बल ---- नि यस्य; श—बलानि यस्य। २. न—बहुस्तुतिकमिति समन्वयः हे इन्द्र त्वत्यर्थः; भ—बहुस्तुतिकमित्यर्थः।

हे इन्द्र त्वं नः अस्माकं तन्वे आत्मजाय उरु प्रभूतं कृधि कुरु । सामर्थ्याद्धनं सुखं वेति गम्यते । तथा तने तत्पुत्राय उरु कृधि । तथा क्षयाय निवासाय उरु कृधि । नः अस्माकं जीवसे जीवनाय यन्धि प्रयच्छाभिमतम् ॥

**उरुं नृभ्य उरुं गव उरुं रथाय पन्थाम् । देववीतिं मनामहे ॥ १३ ॥**

उरुम् । नृऽभ्यः । उरुम् । गवे । उरुम् । रथाय । पन्थाम् । देवऽवीतिम् । मनामहे ॥ १३ ॥

हे इन्द्र नृभ्यः अस्मदीयेभ्यो भृत्येभ्यः उरुं हितं मनामहे याचामहे । तथा गवे । एतदुपलक्षणम् । गवाश्वादिकाय तथा रथाय पन्थां पन्थानं मार्गम् । अथवा नृप्रभृतीनां संचाराय शोभनं मार्गं मनामहे । तथा देववीतिं यज्ञं मनामहे ॥

**उप मा षड् द्वाद्वा नरः सोमस्य हर्ष्या । तिष्ठन्ति स्वादुरातयः ॥ १४ ॥**

उप । मा । षट् । द्वाऽद्वा । नरः । सोमस्य । हर्ष्या । तिष्ठन्ति । स्वादुऽरातयः ॥ १४ ॥

एतदाद्याः षडृच ऋक्षाश्वमेधयोर्दानस्तुतिरूपाः । यद्यपि बृहद्देवतानुक्रमण्याम् ‘ ऋक्षाश्वमेधयोरत्र पञ्च दानप्रशंसकाः ’ ( बृहद्दे. ६. ९२ ) इत्युक्तं तथापि ‘ उप मा षट् ’ इत्यस्या राजदानस्तुतिशेषत्वाद-विरोधः । अनेनैवाशयेनानुक्रमण्याम् ‘ अन्त्याः षळृच ऋक्षाश्वमेधयोर्दानस्तुतिः ’ इत्युक्तम् । मा मां प्रियमेधं यज्ञे[1] प्रसर्पन्तः[1] षट् एतत्संख्याकाः नरः नेतारो राजानः सोमस्य पीतस्य हर्ष्या हर्षेण स्वादुरातयः सुष्ठूपभोगार्हदानाः सन्तः द्वाद्वा द्वौ द्वौ पितृपुत्ररूपेण युग्मौ भूत्वा माम् उप तिष्ठन्ति । तेषां युग्मानां नाम तूत्तरत्र स्पष्टीक्रियते ॥

**ऋज्राविन्द्रोत आ ददे हरी ऋक्षस्य सूनवि । आश्वमेधस्य रोहिता ॥ १५ ॥**

ऋज्रौ । इन्द्रोते । आ । ददे । हरी इति । ऋक्षस्य । सूनवि । आश्वऽमेधस्य । रोहिता ॥ १५ ॥

इन्द्रोते[2] एतन्नामक आतिथिग्वेऽतिथिग्वनाम्नो राज्ञः पुत्रे । ‘ अतिथिग्वाय शम्बरम् ’ ( ऋ. सं. १. ५१. ६ ) ‘ अतिथिग्वाय शंस्यम् ’ ( ऋ. सं. ६. २६. ३ ) इत्यादिष्वतिथिग्वः प्रसिद्धः । तत्पुत्र इन्द्रोते ऋज्रौ ऋजुगामिनावश्वौ आ ददे स्वीकृतवानस्मि[3] । तथा ऋक्षस्य सूनवि ऋक्षनाम्नः[4] पुत्रेऽन्यस्मिन् राजनि हरी हरितवर्णावश्वौ आ ददे । तथा आश्वमेधस्य अश्वमेधपुत्रे राजनि रोहिता रोहितवर्णावश्वौ आ ददे । नन्वनुक्रमण्यामुभयोरेव दानप्रशंसारूपत्वमुक्तम् अत्र कथं त्रयाणां दानकीर्तनमिति । नैष दोषः । ऋक्षाश्वमेधपुत्रयोरेव यागेऽस्यर्षेः प्रवृत्तेस्तयोरेव दानं प्रस्तुतम् । इन्द्रोतस्तु स्वपित्रा सह तयोर्यज्ञदिदृक्षयागत्य तयोर्दानं दृष्ट्वा स्वपित्रा प्रेरितो दत्तवानश्वौ । अतस्तद्दानं प्रासङ्गिकमिति । एवमृक्षाश्वमेधयोर्दानस्तुतित्वं न[5] व्याहन्यते[5] । पितृपुत्रयोरभेदात्तयोः[6] पक्षकर्तृत्वाच्च[7] । इन्द्रोतदानस्य प्रासङ्गिकत्वं ‘ षळश्वान् ’ इत्यत्र विस्पष्टयिष्यते ॥　　॥ ३ ॥

**सुरथाँ आतिथिग्वे स्वभीशूँरार्क्षे । आश्वमेधे सुपेशसः ॥ १६ ॥**

सुऽरथान् । आतिथिऽग्वे । सुऽअभीशून् । आर्क्षे । आश्वऽमेधे । सुऽपेशसः ॥ १६ ॥

---

१. ख-त-यज्ञं प्रसर्पतं; ग-यज्ञे प्रसर्प्य; घ-यज्ञे प्रसर्पतः; भ-यज्ञे प्रसर्पतं; श-यज्ञे प्रसर्पत । २. ख-त-न-भ-श-हे इन्द्रोत । ३. ख-भ-स्वकृितवानसि । ४. ख-त-श-°नाम्ना । ५. ख-त३-४-मव्याहन्यते; झ-श-अव्याहन्यते । ६. भ१-२-°त्तयोः प्राद्योः; घ-°त्तयोः प्राद्याः । ७. ख-त-न-भ-श-प्रक्षककर्तृत्वा°; ग-प्रयोजककर्तृत्वा° ।

ᵛआतिथिग्वे इन्द्रोते ᵛसुरथान् शोभनरथोपेतानश्वानाददे। ᵛआर्क्षे ऋक्षपुत्रे ᵛस्वभीशून् अश्वानाददे। ᵛआश्वमेधे अश्वमेधपुत्रे ᵛसुपेशसः सुरूपानश्वान्[1] शोभनालंकारानाददे ॥

**षळश्वाँ आतिथिग्व इन्द्रोते वधूमतः। सचा पूतक्रतौ सनम् ॥ १७ ॥**

षट्। अश्वान्। आतिथिऽग्वे। इन्द्रोते। वधूऽमतः। सचा। पूतऽक्रतौ। सनम् ॥ १७॥

ᵛआतिथिग्व ᵛइन्द्रोते ᵛपूतक्रतौ शुद्धप्रज्ञे शुद्धकर्मोपेते वा तस्मिन् ᵛवधूमतः वधूभिर्वडवाभिस्तद्वतः ᵛषडश्वान् ᵛसचा ऋक्षाश्वमेधयोः पुत्राभ्यां दत्तेनाश्वादिधनेन सचा सह ᵛसनं लब्धवानस्मि। एतत्साहित्यवचनमिन्द्रोतदानस्य प्रासङ्गिकत्वे लिङ्गम् ॥

**ऐषु चेतद्वृषण्वत्यन्तर्ऋज्रेष्वरुषी। स्वभीशुः कशावती ॥ १८ ॥**

आ। एषु। चेतत्। वृषण्ऽवती। अन्तः। ऋज्रेषु। अरुषी। सुऽअभीशुः। कशाऽवती ॥ १८ ॥

ᵛएषु ᵛऋज्रेषु ऋजुगामिष्वश्वेषु ᵛअन्तः मध्ये ᵛआ ᵛचेतत् आज्ञायते। का। ᵛवृषण्वती वर्षकैः पुमश्वैस्तद्वती ᵛअरुषी आरोचमाना ᵛस्वभीशुः शोभनप्रग्रहा ᵛकशावती दृसा वडवा ज्ञायते ॥

**न युष्मे वाजबन्धवो निनित्सुश्चन मर्त्यः। अवद्यमधि दीधरत् ॥ १९ ॥**

न। युष्मे इति। वाजऽबन्धवः। निनित्सुः। चन। मर्त्यः। अवद्यम्। अधि। दीधरत् ॥ १९ ॥

हे ᵛवाजबन्धवः अन्नबन्धवोऽन्नप्रदाः। एवं पुत्राणां पितृपुत्ररूपाणां षण्णां वा संबोधनम्। हे राजानः ᵛयुष्मे युष्मासु ᵛनिनित्सुश्चन निन्दकोऽपि ᵛमर्त्यः मनुष्यः ᵛअवद्यं निन्दां ᵛन ᵛअधि ᵛदीधरत् नान्वधारयत्। नारोपयति युष्मासु। अतोऽनिन्द्या यूयमिति दातॄणां स्तुतिः ॥ ॥ ४ ॥

'प्रप्र वः' इत्यष्टादशर्चं दशमं सूक्तं प्रियमेधस्याङ्गिरसस्यार्षम्। द्वितीया 'नदं वः' इत्येषा चतुःसप्तकोष्णिक् चतुर्थ्याद्यास्तिस्रो गायत्र्य एकादशीषोडश्यौ पङ्क्ती[2] शिष्टा दशानुष्टुभः। 'अपादिन्द्रः' इत्यर्धर्चो वैश्वदेवो 'वरुण इदिह' इत्याद्यास्त्रयोऽर्धर्चा वरुणदेवताकाः शिष्टा ऐन्द्र्यः। तथा चानुक्रान्तं—'प्रप्र द्व्यूनानुष्टुभं द्विबृहत्यन्तं द्वितीयोष्णिक् चतुर्थ्याद्यास्तिस्रो गायत्र्यः षोळश्येकादश्यौ पङ्क्ती अपाद्वैश्वदेवोऽर्धर्चस्त्रयो वारुणाः' इति। आद्यस्तृचः षोडशिशस्त्र आनुष्टुभः। सूत्रितं च—'प्रप्र वस्त्रिष्टुभमिषमर्चत प्रार्चत' (आश्व. श्रौ. ६. २) इति ॥

**प्रप्र वस्त्रिष्टुभमिषं मन्दद्वीरायेन्दवे। धिया वो मेधसातये पुरंध्या विवासति ॥ १ ॥**

प्रऽप्र। वः। त्रिऽस्तुभम्। इषम्। मन्दत्ऽवीराय। इन्दवे।
धिया। वः। मेधऽसातये। पुरम्ऽध्या। आ। विवासति ॥ १ ॥

हे अध्वर्य्वादयः ᵛवः यूयम्। प्रथमार्थे द्वितीया। ᵛत्रिष्टुभं स्तोभत्रयोपेतम् ᵛइषम् अन्नं ᵛप्रप्र। अपरः प्रशब्दः पूरणः। प्रभरतेति शेषः। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। कस्मै। ᵛमन्दद्वीराय। यो वीरान् हर्षयति स मन्दद्वीरः। तस्मै ᵛइन्दवे इन्द्राय। इन्दतेरैश्वर्यकर्मणः[3] इदं रूपम्। अथवा फलैर्वृष्टिभिर्वोनत्तीतीन्दुरिन्द्रः। तस्मै। स चेन्द्रः ᵛवः युष्मान् ᵛमेधसातये यज्ञसंभजनाय ᵛपुरंध्या बहुप्रज्ञया ᵛधिया कर्मणा ᵛआ ᵛविवासति[4]। अभिमतफलयोजनेन सत्करोतीत्यर्थः ॥

---

१. ख-त-न-सुरूपान् तान्; भ-सुरूपाननान्। २. ख-ग-त-भ-श-पंक्त्यौ; न-पङ्क्तौ। ३. ख-त-न-भ-श-इंधते°। ४. न-भ-विवासति परिचरति।

महाव्रते निष्केवल्ये ' नदं वः ' इत्येषा विहरणीया । तथैव पञ्चमारण्यके सूत्रितं च—' नदं व ओदतीनामित्येतयैतानि व्यतिषजति ' ( ऐ. आ. ५. १. ६ ) इति ॥

नदं व ओदतीनां नदं योयुवतीनाम् । पतिं वो अघ्न्यानां धेनूनामिषुध्यसि ॥ २ ॥

नदम् । वः । ओदतीनाम् । नदम् । योयुवतीनाम् ।
पतिम् । वः । अघ्न्यानाम् । धेनूनाम् । इषुध्यसि ॥ २ ॥

ᵛओदतीनाम् । ओदत्य उषसः ' ओदती भास्वती ' इति तन्नामसु पाठात् । तासां[1] ᵛनदम् । उत्पादकमित्यर्थः । इन्द्रेण ह्युषस उत्पद्यन्त इन्द्रस्यैव सूर्यत्वात् । ' विवस्वदिन्द्र सुग्म्य ' इति द्वादशादित्यमध्य इन्द्रः पठितः । तादृशमिन्द्रं हे यजमानाः ᵛवः युष्मदर्थम् । आह्वयतेत्यर्थः । तथा ᵛयोयुवतीनां सर्वत्र मिश्रयन्तीनां नदीनां ᵛनदं[2] शब्दयितारं ᵛवः युष्मदर्थमाह्वयामि । ᵛअघ्न्यानाम् अहन्तव्यानां गवां[3] ᵛपतिम् आह्वये । अथ प्रत्यक्षकृता । हे यजमान त्वं ᵛधेनूनां क्षीरादिना प्रीणयित्रीणां गवाम् ᵛइषुध्यसि अन्नमिच्छसि ॥

अग्निहोत्रे पूर्वाहुतौ हुतायां ' ता अस्य ' इत्यनयोत्तरामाहुतिं काङ्क्षमाणस्तिष्ठेत् । तथा च सूत्रितं—' ता अस्य सूददोहस इति पूर्वामाहुतिमुपोत्थायोत्तरां काङ्क्षेत ' ( आश्व. श्रौ. २. ३ ) इति । महाव्रते निष्केवल्येऽप्येषा । तथैव पञ्चमारण्यके सूत्रितं—' ता अस्य सूददोहस इत्येतदादिः सूददोहाः सूददोहाः ' ( ऐ. आ. ५. १. ६ ) इति ॥

ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः ।
जन्मन्देवानां विशस्त्रिष्वा रोचने दिवः ॥ ३ ॥

ताः । अस्य । सूदऽदोहसः । सोमम् । श्रीणन्ति । पृश्नयः ।
जन्मन् । देवानाम् । विशः । त्रिषु । आ । रोचने । दिवः ॥ ३ ॥

ᵛताः प्रसिद्धाः ᵛसूददोहसः । सूद इति कूपनाम । तत्सदृशदोहनाः ᵛपृश्नयः पृश्निवर्णा गावः ᵛअस्य इन्द्रस्य ᵛसोमं ᵛश्रीणन्ति मिश्रयन्त्याशिरेण । कदा । ᵛत्रिषु त्रिष्वपि सवनेषु । गावो विशेष्यन्ते । ᵛदेवानां ᵛजन्मन्[4] जन्मस्थाने । दिवीत्यर्थः । ᵛदिवः आदित्यस्य ᵛआ ᵛरोचने आरोचमाने । अनेन द्यौर्विशेष्यते । तस्मिन् स्थाने ᵛविशः निविशन्त्यः । यज्ञार्थोपयुक्तानां गवां द्युप्राप्तिः प्रसिद्धा ॥

द्वितीये पर्याये मैत्रावरुणशस्त्रे ' अभि प्र गोपतिम् ' इति तृचोऽनुरूपः । सूत्रितं च—' अभि त्वा वृषभा सुतेऽभि प्र गोपतिं गिरा ' ( आश्व. श्रौ. ६. ४ ) इति ॥

अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे । सूनुं सत्यस्य सत्पतिम् ॥ ४ ॥

अभि । प्र । गोऽपतिम् । गिरा । इन्द्रम् । अर्च । यथा । विदे । सूनुम् । सत्यस्य । सत्ऽपतिम् ॥ ४ ॥

ᵛगोपतिं[5] गवां स्वामिनम् ᵛइन्द्रम् ᵛअभि ᵛप्र ᵛअर्च । प्रकर्षेण पूजय स्तुत्या । ᵛयथा ᵛविदे स यथा स्वात्मानं स्तुतप्रकारं जानाति यथा वा यागं प्रति गन्तव्यमिति जानाति तथार्चेति ।

---

१. ख-त-भ-श—भासां । २. ख-ग-त-न-भ-श—' नदं ' नास्ति । ३. ख-ग-घ-ज्ञ-त१-२—वः; त३-४-न-भ-श—वां । ४. ख-त-न-भ-श—जन्मनि । ५. ख-ग-त१-३-न-भ-श—अभि प्र गोपतिं ।

कीदृशमिन्द्रम्। ^v^सत्यस्य यज्ञस्य सत्यस्य[1] वा ^v^सूनुं पुत्रम्। तत्रानुरक्तत्वात् सूनुरित्युपचर्यते। ^v^सत्पतिं सतां यजमानानां पालकम् ॥

आ हर॑यः ससृज्रि॒रेऽरु॑षी॒रधि॑ ब॒र्हिषि॑। यत्रा॒भि सं॒नवा॑महे ॥ ५ ॥

आ। हर॑यः। स॒सृ॒ज्रि॒रे। अरु॑षीः। अधि॑। ब॒र्हिषि॑। यत्र॑। अ॒भि। स॒म्ऽनवा॑महे ॥ ५ ॥

^v^हरयः हरितवर्णा अश्वाः ^v^अरुषीः आरोचमानाः ^v^अधि ^v^बर्हिषि। अधीति सप्तम्यर्थानुवादी। बर्हिष्यास्तृते ^v^आ ^v^ससृज्रिरे आसृजन्तु। ^v^यत्र यस्मिन् बर्हिषि स्थितमिन्द्रम् ^v^अभि ^v^संनवामहे अभिसंस्तुमः ॥ ॥ ५ ॥

इन्द्रा॑य॒ गाव॑ आ॒शिरं॑ दुदु॒ह्रे व॒ज्रिणे॒ मधु॑। यत्सी॑मुपह्व॒रे वि॒दत् ॥ ६ ॥

इन्द्रा॑य। गाव॑ः। आ॒ऽशिर॑म्। दु॒दु॒ह्रे। व॒ज्रिणे॑। मधु॑। यत्। सी॒म्। उ॒प॒ऽह्व॒रे। वि॒दत् ॥६॥

^v^इन्द्राय ^v^गावः ^v^आशिरम् आश्रयणसाधनं पयआदिकं ^v^मधु मदकरं ^v^दुदुह्रे दुहते। कीदृशाय। ^v^वज्रिणे वज्रयुक्तायेन्द्राय। ^v^यत् यदा ^v^उपह्वरे समीपे वर्तमानं मधु सोमरसं ^v^सीं सर्वतः ^v^विदत् लभते तदा ॥

षोडशिशस्त्रस्य 'उद्यद्ब्रध्नस्य' इत्येषान्त्या। सूत्रितं च—'उद्यद्ब्रध्नस्य विष्टपमित्येषा परिधानीया' (आश्व. श्रौ. ६. २) इति ॥

उद्यद्ब्र॒ध्नस्य॑ वि॒ष्टपं॑ गृ॒हमिन्द्र॑श्च॒ गन्व॑हि।
मध्व॑ः पी॒त्वा स॑चेवहि॒ त्रिः स॒प्त सख्यु॑ः प॒दे ॥ ७ ॥

उत्। यत्। ब्र॒ध्नस्य॑। वि॒ष्टप॑म्। गृ॒हम्। इन्द्र॑ः। च॒। गन्व॑हि।
मध्व॑ः। पी॒त्वा। स॒चे॒व॒हि॒। त्रिः। स॒प्त। सख्यु॑ः। प॒दे ॥ ७ ॥

^v^यत्[2] यदा ^v^ब्रध्नस्य ^v^विष्टपं सूर्यस्य स्थानं[2] ^v^गृहमिन्द्रश्च अहं चोभौ ^v^उत् ^v^गन्वहि उद्गच्छावः तदानीं ^v^मध्वः मधुरं सोमरसं ^v^पीत्वा ^v^सचेवहि संसृष्टौ भवेव। कुत्र। ^v^सख्युः[3] सर्वेषां सखिभूतस्यादित्यस्य। ^v^त्रिः ^v^सप्त इत्यनेन देवलोकानामुत्तममेकविंशं स्थानमुच्यते आदित्यस्यैकविंशत्वात्। तथा च ब्राह्मणं—'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' (ऐ. ब्रा. १. ३०) इति। तादृश एकविंशस्थाने सचेवहीति ॥

पूर्वोक्त एव शस्त्रे 'अर्चत' इति द्वितीय आनुष्टुभस्तृचः। सूत्रितं च—'प्रप्र वस्त्रिष्टुभमिषमर्चत प्रार्चत' (आश्व. श्रौ. ६. २) इति ॥

अर्च॑त॒ प्रार्च॑त॒ प्रिय॑मेधासो॒ अर्च॑त। अर्च॑न्तु पु॒त्र॒का उ॒त पुरं॒ न धृ॒ष्ण्व॑र्चत ॥८॥

अर्च॑त। प्र। अ॒र्च॒त॒। प्रिय॑ऽमेधासः। अर्च॑त।
अर्च॑न्तु। पु॒त्र॒काः। उ॒त। पुर॑म्। न। धृ॒ष्णु। अ॒र्च॒त॒ ॥ ८ ॥

---

१. ग-न-भ-२-'सत्यस्य' नास्ति। २. ख-ज्ञ-त१-२-न-भ-यद्यदा ब्रध्नस्य। महन्नाम ब्रध्न इति। महतः आदित्यस्य विष्टपं स्थानं; ग-ब्रध्नस्यादित्यस्य विष्टपं स्थानं; त३-श-ब्रध्नस्य विष्टपं स्थानं। ३. ख-घ-ज्ञ-त१-२-सख्युः पदे।

हे अध्वर्य्वादयः यूयमिन्द्रम् ᵛअर्चत पूजयत स्तुत्या। ᵛप्रार्चत प्रकर्षेणार्चतेन्द्रमेव। हे ᵛप्रियमेधासः प्रियमेधसंबन्धिनस्तद्गोत्रा यूयम् ᵛअर्चत इन्द्रम्। ᵛपुत्रकाः पुत्रा अपि ᵛअर्चन्तु इन्द्रम्। ᵛउत अपि च ᵛपुरं ᵛन ᵛधृष्णु यथा पुरं धर्षणशीलमर्चन्ति तादृशमिन्द्रम् ᵛअर्चत ॥

अव॑ स्वराति॒ गर्ग॑रो गो॒धा परि॑ सनिष्वणत् ।
पिङ्गा॒ परि॑ चनिष्कद॒दिन्द्रा॑य॒ ब्रह्मोद्य॑तम् ॥ ९ ॥

अव॑ । स्व॒रा॒ति॒ । गर्ग॑रः । गो॒धा । परि॑ । स॒नि॒स्व॒न॒त् ।
पिङ्गा॑ । परि॑ । च॒नि॒स्क॒द॒त् । इन्द्रा॑य । ब्रह्म॑ । उत्ऽय॑तम् ॥ ९ ॥

ᵛगर्गरः गर्गरध्वनियुक्तो वाद्यविशेषो युद्धे ᵛअव ᵛस्वराति भयं शब्दयति। ᵛगोधा हस्तघ्नः ᵛपरि परितः ᵛसनिष्वणत् स्वनति भृशम्। ᵛपिङ्गा पिङ्गवर्णा ज्यापि ᵛपरि ᵛचनिष्कदत् परिस्कन्दते। यस्मादेवं युद्धः संनद्धोऽत ᵛइन्द्राय ᵛब्रह्म परिवृढं कर्म स्तुतिलक्षणम् ᵛउद्यतं भवत्विति शेषः ॥

आ यत्पत॑न्त्ये॒न्य॑ः सु॒दुघा॒ अन॑पस्फुरः । अ॒प॒स्फुरं॑ गृभायत॒ सोम॒मिन्द्रा॑य॒ पात॑वे ॥ १० ॥

आ । यत् । पत॑न्ति । ए॒न्य॑ः । सु॒ऽदुघा॑ः । अन॑पऽस्फुरः ।
अ॒प॒ऽस्फुर॑म् । गृ॒भा॒य॒त॒ । सोम॑म् । इन्द्रा॑य । पात॑वे ॥ १० ॥

ᵛयत् यदा ᵛएन्यः एतवर्णाः शुभ्रवर्णा नद्यः ᵛआ[1] ᵛपतन्ति[1] आगच्छन्ति सर्वतः प्रवहन्ति। कीदृश्यः। ᵛसुदुघाः सुदोहाः ᵛअनपस्फुरः। अपस्फुरोऽपस्फुरा अप्रवृद्धाः। अतादृश्योऽनपस्फुरः। अत्यन्तं प्रवृद्धा इत्यर्थः। यद्वा। सुदुघाः प्रवृद्धा एतवर्णा गावो यदा पयआद्यर्थाय आ पतन्ति तदा ᵛअपस्फुरम्। अत्रापशब्दो धात्वर्थानुवादी। अत्यन्तप्रवृद्धं ᵛसोममिन्द्राय ᵛपातवे पातुं ᵛगृभायत ग्रहणं कुरुत। अथवानपस्फुर इत्यत्राप्यपशब्दोऽनुवादी धात्वर्थस्य। तथा सत्ययमर्थः। यदा एन्यो नद्योऽनपस्फुरोऽप्रवृद्धोदका आ पतन्ति वृष्टिरल्पा यदा भवति तदा सोममिन्द्रार्थं संपादयतेति ॥ ॥६॥

अपा॒दिन्द्रो॒ अपा॑द॒ग्निर्विश्वे॑ दे॒वा अ॑मत्सत ।
वरु॑ण॒ इदि॒ह क्ष॑य॒त्तमापो॑ अ॒भ्य॑नूषत व॒त्सं सं॒शिश्व॑रीरिव ॥ ११ ॥

अपा॑त् । इन्द्र॑ः । अपा॑त् । अ॒ग्निः । विश्वे॑ । दे॒वाः । अ॒म॒त्स॒त॒ ।
वरु॑णः । इत् । इ॒ह । क्ष॒य॒त् । तम् । आप॑ः । अ॒भि । अ॒नू॒ष॒त॒ । व॒त्सम् । सं॒शिश्व॑रीःऽइव ॥ ११ ॥

ᵛइन्द्रः ᵛअपात् अपिबत् सोमम्। ᵛअग्निः अप्यपिबत्। ᵛविश्वे ᵛदेवाः अपि ᵛअमत्सत तृप्ता अभवन् सोमपानेन। ᵛवरुण ᵛइत् वरुणोऽपि ᵛइह अस्मिन् यागगृहे ᵛक्षयत् निवसतु सोमपानार्थम्। निवसन्तं ᵛतम् ᵛआपः अपि ᵛअभ्यनूषत। उदकान्यापनशीला स्तुतयो वाभ्यष्टुवन्। किमिव। ᵛवत्सं[2] स्वीयं ᵛसंशिश्वरीः संशिश्वर्यः संगच्छमाना गावः ᵛइव। ता यथा धावन्त्यो हम्भारवं कुर्वन्ति तद्वत् ॥

सु॒देवो॑ असि वरुण॒ यस्य॑ ते स॒प्त सिन्ध॑वः । अ॒नु॒क्षर॑न्ति का॒कुदं॑ सू॒र्म्यं॑ सुषि॒रामि॑व ॥ १२ ॥

सु॒ऽदे॒वः । अ॒सि॒ । व॒रु॒ण॒ । यस्य॑ । ते॒ । स॒प्त । सिन्ध॑वः ।
अ॒नु॒ऽक्षर॑न्ति । का॒कुद॑म् । सू॒र्म्य॑म् । सु॒षि॒राम्ऽइ॑व ॥ १२ ॥

---

१. ग-त३-४-श–' आ पतन्ति ' नास्ति। २. ख-त–वत्सना; श–वत्संना।

हे ᵛवरुण जलाभिमानिन् देव त्वं ᵛसुदेवोऽसि ᵛयस्य सुदेवस्य ᵛते तव ᵛकाकुदं तालुं समुद्राख्यं ᵛसप्त ᵛसिन्धवः गङ्गाद्याः सप्त नद्यः ᵛअनुक्षरन्ति जिह्वायां सर्वदा स्रवन्ति[1] ॥

षोडशिशस्त्रे 'यो व्यतीन्' इति तृतीय आनुष्टुभस्तृचः। सूत्रितं च—'यो व्यतीँरफाणयदिति तृचा आनुष्टुभाः' (आश्व. श्रौ. ६. २) इति ॥

**यो व्यतीँरफाणयत्सुयुक्ताँ उप दाशुषे। तक्वो नेता तदिद्वपुरुपमा यो अमुच्यत ॥ १३॥**

यः। व्यतीन्। अफाणयत्। सुऽयुक्तान्। उप। दाशुषे।
तक्वः। नेता। तत्। इत्। वपुः। उपऽमा। यः। अमुच्यत ॥ १३ ॥

ᵛयः इन्द्रः ᵛव्यतीन् विविधगमनान् ᵛसुयुक्तान् सुष्ठु रथे संबद्धानश्वान् ᵛदाशुषे हविर्दात्रे यजमानाय गन्तुं प्राप्तुम् ᵛउप ᵛअफाणयत् उपगमयति। फणतिर्गतिकर्मा। यदैवं करोति ᵛतदित् तदानीमेव ᵛतक्वः। तकतिर्गतिकर्मा। यज्ञगमनशीलः ᵛनेता उदकस्य फलस्य वा नायक इन्द्रः ᵛवपुः उदकमुत्पादयतीति शेषः। ᵛयः इन्द्रः ᵛउपमा उपमानभूतः ᵛअमुच्यत अन्यैर्वृष्टिनिवारकैरसुरादिभिर्मुक्तो भवति ॥

**अतीदु शक्र ओहत इन्द्रो विश्वा अति द्विषः।**
**भिनत्कनीन ओदनं पच्यमानं परो गिरा ॥ १४ ॥**

अति। इत्। ऊँ इति। शक्रः। ओहते। इन्द्रः। विश्वाः। अति। द्विषः।
भिनत्। कनीनः। ओदनम्। पच्यमानम्। परः। गिरा ॥ १४ ॥

अयमिन्द्रः ᵛशक्रः शक्तः सन् ᵛअतीत् ᵛओहते। अतिक्रम्य गच्छत्येव संग्रामे निरोधकान् शत्रून्। तदेवाह। अयम् ᵛइन्द्रः ᵛविश्वाः ᵛद्विषः द्वेष्टॄन् शत्रून् ᵛअति अतिक्रम्य गच्छति। ᵛकनीनः कमनीयः ᵛपरः मेघानां परस्ताद्वर्तमान इन्द्रः ᵛओदनम्। मेघनामैतत्। मेघं ᵛभिनत् अभिनत् भिनत्ति वृष्ट्यर्थम्। कीदृशम्। ᵛगिरा माध्यमिकया वाचा स्तनितलक्षणया ᵛपच्यमानम्। वज्रनिर्घोषेण ताड्यमानमित्यर्थः ॥

**अर्भको न कुमारकोऽधि तिष्ठन्नवं रथम्। स पक्षन्महिषं मृगं पित्रे मात्रे विभुक्रतुम् ॥ १५॥**

अर्भकः। न। कुमारकः। अधि। तिष्ठत्। नवम्। रथम्।
सः। पक्षत्। महिषम्। मृगम्। पित्रे। मात्रे। विभुऽक्रतुम् ॥ १५ ॥

अयमिन्द्रः[2] ᵛअर्भको ᵛन अल्पशरीरः ᵛकुमारकः[3] कुमारक इव ᵛनवं स्तुत्यं ᵛरथम् ᵛअधि ᵛतिष्ठत् अधितिष्ठति। ᵛसः इन्द्रः ᵛमहिषं महान्तं ᵛमृगं मृगवदितस्ततो धावन्तं सर्वैर्मृग्यं वा ᵛविभुक्रतुं बहुकर्माणं मेघं ᵛपक्षत् पचति। वृष्ट्यभिमुखं करोतीत्यर्थः ॥

**आ तू सुशिप्र दंपते रथं तिष्ठा हिरण्ययम्।**
**अध द्युक्षं सचेवहि सहस्रपादमरुषं स्वस्तिगामनेहसम् ॥ १६ ॥**

---

१. ग–स्रवन्ति तत्र दृष्टान्तः। सूर्म्यं लोहप्रतिमां सुषिरामिव सा यथा जलपूर्णा स्रवति तद्वदित्यर्थः; घ-त-मु–दृष्टांतः सूर्म्यं सुषिरामिव यथा सूर्यं प्रति रश्मिजालं तद्वत्। २. ख-घ-त१-२–अयमिंद्रः पित्रे मात्रे स यथाधितिष्ठति तद्वत्। ३. न-भ–कुमारको न।

आ । तु । सुऽशिप्र । दम्ऽपते । रथम् । तिष्ठ । हिरण्ययम् ।

अध । द्युक्षम् । सचेवहि । सहस्रऽपादम् । अरुषम् । स्वस्तिऽगाम् । अनेहसम् ॥ १६ ॥

हे ᵛसुशिप्र सुहनो हे ᵛदंपते गृहस्वामिन् । अत्र गृहो रथः । तस्य स्वामिन् । ᵛतु[1] त्वं[1] तावत् ᵛरथम् ᵛआ ᵛतिष्ठ । हविःस्वीकरणान्तरं पश्चादहमारोहामीति भावः । कीदृशम् । ᵛहिरण्ययं हिरण्मयम् । ᵛअध तवारोहणानन्तरमहमप्यारुह्योभौ ᵛसचेवहि संगच्छेवहि । संगतौ भवेव । पुनः[2] कीदृशम्[2] । ᵛद्युक्षं दीप्तं रथं[3] ᵛसहस्रपादं बहुपादम् ᵛअरुषम् आरोचमानं[4] ᵛस्वस्तिगां कुशलगमनम् ᵛअनेहसम् अपापम् ॥

पूर्वाह्णे प्रवर्ग्ये ‘ तं घेमित्था ’ इत्येषा । सूत्रितं च—‘ तं घेमित्था नमस्विन इति प्रागाथीं पूर्वाह्णे ’ ( आश्व. श्रौ. ४. ७ ) इति ॥

तं घेमित्था नमस्विन उप स्वराजमासते ।
अर्थं चिदस्य सुधितं यदेतव आवर्तयन्ति दावने ॥ १७ ॥

तम् । घ । ईम् । इत्था । नमस्विनः । उप । स्वऽराजम् । आसते ।

अर्थम् । चित् । अस्य । सुऽधितम् । यत् । एतवे । आऽवर्तयन्ति । दावने ॥ १७ ॥

ᵛतं ᵛघ तं खलु ᵛईम् एनमिन्द्रम् ᵛइत्था इत्थमनेन प्रकारेण ᵛनमस्विनः अन्नवन्तः स्तुतिवन्तो वाध्वर्य्वादयः ᵛस्वराजं स्वयं राजमानं वा ᵛउप ᵛआसते सेवन्ते । तथा कृत्वा ᵛअर्थं ᵛचित् अरणीयं धनं ᵛसुधितं सुष्ठु स्थापितम् ᵛअस्य इन्द्रस्य संबन्धिनं प्राप्नुवन्तीति शेषः । कदेति आह । ᵛयत् यदा ᵛएतवे अस्येन्द्रस्य गमनाय स्वयं प्राप्तुं वा ᵛदावने हविर्दानाय ᵛआवर्तयन्ति स्तुतयः तदेत्यर्थः । अथवाश्वा वावर्तयन्ति तदेत्यर्थः ॥

अनु प्रत्नस्यौकसः प्रियमेधास एषाम् ।
पूर्वामनु प्रयतिं वृक्तबर्हिषो हितप्रयस आशत ॥ १८ ॥

अनु । प्रत्नस्य । ओकसः । प्रियऽमेधासः । एषाम् ।

पूर्वाम् । अनु । प्रऽयतिम् । वृक्तऽबर्हिषः । हितऽप्रयसः । आशत ॥ १८ ॥

अनया स्तुतिमुपसंहरति । ᵛएषां देवानामिन्द्रादीनां ᵛप्रत्नस्य पुराणस्य ᵛओकसः स्थानस्य पुराणं स्थानं ᵛप्रियमेधासः प्रियमेधाः ᵛअनु ᵛआशत अनुप्राप्ताः । कीदृशाः प्रियमेधाः । ᵛपूर्वां मुख्यं[5] ᵛप्रयतिं प्रदानम् ᵛअनु लक्षीकृत्य ᵛवृक्तबर्हिषः स्तीर्णदर्भाः ᵛहितप्रयसः आसादितसोमादिहविष्काः ॥ ॥ ७ ॥ ॥ ७ ॥

अष्टमेऽनुवाक एकादश सूक्तानि । तत्र ‘ यो राजा ’ इति पञ्चदशर्चं प्रथमं सूक्तम् । अत्रानुक्रमणिका—‘ यो राजा पञ्चोना पुरुहन्मा बार्हतं त्रिप्रगाथाद्युष्णिगनुष्टुप्पुरउष्णिगन्तम् ’ इति । पुरुहन्मा ऋषिः । स च ‘ क्वचित् कथंचिदविशेषितम् ’ ( अनु. २. ३ ) इति परिभाषयाङ्गिरसः । आद्यातृतीयापञ्चम्यो बृहत्यः । द्वितीयाचतुर्थीषष्ठ्यः सतोबृहत्यः । सप्तम्याद्याः षट् बृहत्यः । त्रयोदश्युष्णिक् चतुर्दश्यनुष्टुप् पञ्चदशी पुरउष्णिगाद्यद्वादशिका द्व्यष्टका । ‘ आद्यश्चेत्पुरउष्णिक् ’ ( अनु. ५.

१. ख-त-भ-उ त्वं; ग-त्वं । २. ख-त-भ-श-त किं; ग-किं तत् । ३. ग-त-भ-श-रथं कीदृशं । ४. ख-ग-त-श-आरोचनं । ५. ख-ग-घ-त-श-मुख्यां ।

२ ) इति हि तल्लक्षणम्। इन्द्रो देवता। महाव्रते निष्केवल्ये बार्हततृचाशीतावादित एकादशर्चः। तथा च पञ्चमारण्यके सूत्रितं—' यो राजा चर्षणीनामित्येकादश ' ( ऐ. आ. ५. २. ४ ) इति ॥

यो राजा चर्षणीनां याता रथेभिरध्रिगुः ।
विश्वासां तरुता पृतनानां ज्येष्ठो यो वृत्रहा गृणे ॥ १ ॥

यः । राजा । चर्षणीनाम् । याता । रथेभिः । अध्रिऽगुः ।
विश्वासाम् । तरुता । पृतनानाम् । ज्येष्ठः । यः । वृत्रऽहा । गृणे ॥ १ ॥

ᵛयः इन्द्रः ᵛचर्षणीनां मनुष्याणां ᵛराजा स्वामी रथैः[1] ᵛयाता गन्ता च ᵛअध्रिगुः अधृतगमनोऽन्यैः ᵛविश्वासां ᵛपृतनानां सेनानां[2] ᵛतरुता तारकः। ᵛयः च ᵛज्येष्ठः गुणैर्ज्यायान्। यश्च ᵛवृत्रहा वृत्रं हतवान्। तं महाभागमिन्द्रं ᵛगृणे स्तौमि ॥

इन्द्रं तं शुम्भ पुरुहन्मन्नवसे यस्य द्विता विधर्तरि ।
हस्ताय वज्रः प्रति धायि दर्शतो महो दिवे न सूर्यः ॥ २ ॥

इन्द्रम् । तम् । शुम्भ । पुरुऽहन्मन् । अवसे । यस्य । द्विता । विऽधर्तरि ।
हस्ताय । वज्रः । प्रति । धायि । दर्शतः । महः । दिवे । न । सूर्यः ॥ २ ॥

हे ᵛपुरुहन्मन् ऋषे त्वं ᵛतम् ᵛइन्द्रं ᵛशुम्भ हविष्प्रदानादिनालंकुरु। किमर्थम्। ᵛअवसे रक्षणाय। एवमात्मानं संबोध्य ब्रवीति। ᵛयस्य तव ᵛविधर्तरि विधारक इन्द्रे ᵛद्विता द्वित्वमस्त्यौग्र्यमनौग्र्यम्। तव शत्रून् हन्तुमुग्रत्वं त्वदनुग्रहायानौग्र्यं चेति द्वैतमस्ति। तत्रौग्र्यचिह्नं[3] दर्शयति। ᵛहस्ताय कराय हननाय शत्रूणां ᵛदर्शतः दर्शनीयः ᵛमहः महान् ᵛवज्रः ᵛप्रति ᵛधायि प्रतिनिहितो भवति ᵛदिवे प्रकाशाय दिवसाय वा अथवा[4] दिवि दृश्यमानः ᵛसूर्यः इव ॥

तस्मिन्नेव शस्त्रे ' नकिष्टम् ' इति प्रगाथो वैकल्पिकः स्तोत्रियः। सूत्रितं च—' नकिष्टं कर्मणा नशन्न त्वा वृहन्तो अद्रयः ' ( आश्व. श्रौ. ७. ४ ) इति ॥

नकिष्टं कर्मणा नशद्यश्चकार सदावृधम् ।
इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णवोजसम् ॥ ३ ॥

नकिः । तम् । कर्मणा । नशत् । यः । चकार । सदाऽवृधम् ।
इन्द्रम् । न । यज्ञैः । विश्वऽगूर्तम् । ऋभ्वसम् । अधृष्टम् । धृष्णुऽओजसम् ॥ ३ ॥

ᵛतं जनमन्यो मर्षको[5] जनः ᵛकर्मणा हननादिव्यापारेण ᵛनकिः ᵛनशत् नैव व्याप्नोति। ᵛयः ᵛइन्द्रं ᵛचकार इन्द्रमेवानुकूलं ᵛयज्ञैः साधनैः। कीदृशमिन्द्रम्। ᵛसदावृधं सदा[6] वर्धकं ᵛविश्वगूर्तं सर्वैः स्तुत्यम् ᵛऋभ्वसं महान्तम् ᵛअधृष्टम् अन्यैः ᵛधृष्णवोजसं धर्षकबलम् ॥

अषाळ्हमुग्रं पृतनासु सासहिं यस्मिन्महीरुरुज्रयः ।
सं धेनवो जायमाने अनोनवुर्द्यावः क्षामो अनोनवुः ॥ ४ ॥

---

१. घ-भ-मु-रथेभी रथैः। २. ख-घ-ञ-त१-२-सर्वेषां संग्रामाणां; ग-त३-४-श-' सेनानां ' नास्ति। ३. ख-त-श-तत्रौग्र्यं चिह्नं। ४. ख-त१-' अथवा ' नास्ति। ५. ग-धर्षको। ६. घ-भ-सर्वदा।

अषाळ्हम् । उग्रम् । पृतनासु । ससहिम् । यस्मिन् । महीः । उरुऽज्रयः ।
सम् । धेनवः । जायमाने । अनोनवुः । द्यावः । क्षामः । अनोनवुः ॥ ४ ॥

ᵛअषाळ्हम् असोढम् ᵛउग्रम् उद्गूर्णबलं ᵛपृतनासु शत्रुसेनासु ᵛसासहिम् अभिभवितारं स्तौमीत्यर्थः । ᵛयस्मिन् इन्द्रे ᵛजायमाने ᵛमहीः महत्यः ᵛउरुज्रयः बहुवेगाः ᵛधेनवः हविरादिना प्रीणयित्र्यः प्रजा गाव एव वा ᵛसम् ᵛअनोनवुः समस्तुवन्[1] । न केवलं धेनव एव अपि तु ᵛद्यावः द्युलोकाः ᵛक्षामः पृथिव्यश्च सम् ᵛअनोनवुः । तत्रत्याः सर्वे प्राणिनो नमन्त इत्यर्थः । 'त्रिवृतो लोकाः' (ऐ. ब्रा. २. १७) इति श्रुतेर्बहुवचनम् ॥

तृतीयेऽहनि निष्केवल्ये वैरूपसामपक्षे 'यद्द्यावः' इति प्रगाथः स्तोत्रियः । सूत्रितं च— 'यद्द्याव इन्द्र ते शतं यदिन्द्र यावतस्त्वमिति प्रगाथौ स्तोत्रियानुरूपौ' (आश्व. श्रौ. ७. १०) इति ॥

**यद्द्याव॑ इन्द्र ते श॒तं श॒तं भूमी॑रु॒त स्युः ।**
**न त्वा॑ वज्रिन्त्स॒हस्रं॒ सूर्या॒ अनु॒ न जा॒तम॑ष्ट॒ रोद॑सी ॥ ५ ॥**

यत् । द्यावः । इ॒न्द्र । ते॒ । शतम् । शतम् । भूमीः । उ॒त । स्युरिति॒ स्युः ।
न । त्वा॒ । व॒ज्रि॒न् । स॒हस्र॑म् । सूर्याः । अनु॑ । न । जा॒तम् । अ॒ष्ट॒ । रोद॑सी॒ इति॑ ॥ ५ ॥

हे ᵛइन्द्र ᵛते तव प्रतिमानार्थं ᵛयत् यदि ᵛद्यावः[2] द्युलोकाः ᵛस्युः तथापि नाश्नुवन्ति । ᵛउत अपि च ᵛभूमीः भूम्यस्ते तव मूर्तिप्रतिबिम्बाय ᵛशतं स्युः तथापि नाश्नुवन्ति । हे ᵛवज्रिन् ᵛत्वा त्वां ᵛसहस्रं ᵛसूर्याः अगणिता अपि सूर्याः[3] ᵛन ᵛअनु भवन्ति । न प्रकाशयन्तीत्यर्थः । 'न तत्र सूर्यो भाति' (क. उ. ५. १५) इति श्रुतेः । किं बहुना । ᵛजातं पूर्वमुत्पन्नं किंचन ᵛन ᵛअष्ट नाश्नुते । तथा ᵛरोदसी द्यावापृथिव्यौ नाश्नुवाते । सर्वेभ्योऽतिरिच्यस इत्यर्थः । 'ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः' (छा. उ. ३. १४. ३) इति श्रुतेः ॥ ॥ ८ ॥

**आ प॑प्राथ महि॒ना वृष्ण्या॑ वृषन्वि॒श्वा॑ शविष्ठ॒ शव॑सा ।**
**अ॒स्माँ अ॑व मघव॒न्गोम॑ति व्र॒जे वज्रि॑ञ्चि॒त्राभि॑रू॒तिभिः॑ ॥ ६ ॥**

आ । प॒प्राथ॒ । म॒हिना । वृष्ण्या॑ । वृ॒षन् । विश्वा॑ । श॒विष्ठ॒ । शव॑सा ।
अ॒स्मान् । अ॒व । म॒घ॒ऽव॒न् । गोऽम॑ति । व्र॒जे । वज्रि॑न् । चि॒त्राभिः॑ । ऊ॒तिऽभिः॑ ॥ ६ ॥

हे ᵛवृषन्[4] अभिमतवर्षकेन्द्र त्वम्[5] ᵛआ ᵛपप्राथ आपूरयसि व्याप्नोषि । कानि । ᵛविश्वा[6] सर्वाणि ᵛवृष्ण्या वर्षकाणि बलानि शत्रुसंबन्धीनि । केन साधनेन । ᵛमहिना महता ᵛशवसा बलेन स्वीयेन । अथवा वृष्ण्येत्येतच्छवोविशेषणम् । तथा सति अभिमतवर्षकेण महता बलेनास्मदीयानि बलानि पूरयसीत्यर्थः । अथ तथा कृत्वा ᵛअस्मान् ᵛगोमति बहुभिर्गोभिर्युक्ते ᵛव्रजे[7] शत्रुसंबन्धिनि निमित्ते सत्यस्मान् ᵛअव हे ᵛवज्रिन् वज्रयुक्तेन्द्र । कैः साधनैः । ᵛचित्राभिः नानाविधैः ᵛऊतिभिः रक्षणैरिति ॥

**न सी॒मदे॑व आप॒दिषं॑ दीर्घायो॒ मर्त्यः॑ ।**
**एत॑ग्वा चि॒द्य एत॑शा यु॒योज॑ते॒ हरी॒ इन्द्रो॑ यु॒योज॑ते ॥ ७ ॥**

---

१. ग–सम्यगस्तुवन् । २. ख-तर२–वा द्यावो; त१–या द्यावो । ३. घ–सूर्याः अनु न जातं । ४. ख-घ-ज्ञ-त१-२–शविष्ठ बलवन् मघवन् धनवन् हे वृषन् । ५. ख-ग-त-न-भ-श–त्वं वृषा । ६. ख-त– विश्वानि । ७. ख-घ-त-भ१-२-श–वज्रे ।

न । सीम् । अदेवः । आपत् । इषम् । दीर्घायो इति दीर्घऽआयो । मर्त्यः ।
एतऽग्वा । चित् । यः । एतशा । युयोजते । हरी इति । इन्द्रः । युयोजते ॥ ७ ॥

हे ^vदीर्घायो नित्येन्द्र सः[1] ^vअदेवः इन्द्राख्यदेवरहितः ^vमर्त्यः मरणधर्मा मनुष्यः ^vसीं सर्वम् ^vइषम् अन्नं ^vन ^vआपत् न प्राप्नोति । ^vयः मर्त्योऽस्येन्द्रस्य ^vएतग्वा ^vचित् । एतवर्णावेवाश्वौ भवतोऽभिमतदेशगमनाय । ^vएतशा[2] एतशावश्वौ ^vयुयोजते योजयति[3] रथे यज्ञं गन्तुम् । यश्च ^vइन्द्रः ^vहरी ^vयुयोजते तं न यः स्तौति । स न प्राप्नोतीति समन्वयः ॥

**तं वो महो महाय्यमिन्द्रं दानाय सक्षणिम् ।**
**यो गाधेषु य आरणेषु हव्यो वाजेष्वस्ति हव्यः ॥ ८ ॥**

तम् । वः । महः । महाय्यम् । इन्द्रम् । दानाय । सक्षणिम् ।
यः । गाधेषु । यः । आऽअरणेषु । हव्यः । वाजेषु । अस्ति । हव्यः ॥ ८ ॥

हे ऋत्विजः ^vमहः महान्तः ^vवः यूयं ^vतं ^vमहाय्यं पूज्यम् ^vइन्द्रं ^vदानाय ^vसक्षणिं सचमानं परिचरतेति शेषः । ^vयः इन्द्रः ^vगाधेषु उदकेषु ^vहव्यः ^vअस्ति आह्वातव्यो भवति । ^vयः च ^vआरणेषु गन्तव्येषु निम्नेषूदकेषु स्थलेषु वा हव्योऽस्ति । तथा ^vवाजेषु संग्रामेषु जयाय ^vहव्यः ह्वातव्योऽस्ति भवति ॥

**उदू षु णो वसो महे मृशस्व शूर राधसे ।**
**उदू षु मह्यै मघवन्मघत्तय उदिन्द्र श्रवसे महे ॥ ९ ॥**

उत् । ऊँ इति । सु । नः । वसो इति । महे । मृशस्व । शूर । राधसे ।
उत् । ऊँ इति । सु । मह्यै । मघऽवन् । मघत्तये । उत् । इन्द्र । श्रवसे । महे ॥ ९ ॥

हे ^vवसो वासयितः ^vशूर इन्द्र त्वं ^vनः अस्मान् ^vसु सुष्ठु ^vउदु ^vमृशस्व उन्मृशस्वैव । उत्थापय । किमर्थम् । ^vमहे महते ^vराधसे अन्नाय । तथा हे शूर ^vमघवन् इन्द्र ^vउत् मृशस्व ^vमह्यै महते ^vमघत्तये धनदानाय । तथा ^vउत् मृशस्व ^vइन्द्र ^vमहे महत्यै ^vश्रवसे कीर्त्यै ॥

**त्वं न इन्द्र ऋतयुस्त्वानिदो नि तृम्पसि ।**
**मध्ये वसिष्व तुविनृम्णोर्वोर्नि दासं शिश्नथो हथैः ॥ १० ॥**

त्वम् । नः । इन्द्र । ऋतऽयुः । त्वाऽनिदः । नि । तृम्पसि ।
मध्ये । वसिष्व । तुविऽनृम्ण । ऊर्वोः । नि । दासम् । शिश्नथः । हथैः ॥ १० ॥

हे ^vइन्द्र ^vऋतयुः यज्ञकामः ^vत्वं ^vनः अस्मान् ^vत्वानिदः । त्वां यो निन्दति सः । अयजनमेव निन्दा तव । तस्मादयष्टुः सकाशात् ^vनि नितरां ^vतृम्पसि प्रीणयसि । तस्य धनमपहृत्येति भावः । एवं संतर्प्य हे ^vतुविनृम्ण प्रभूतधन स त्वं तव ^vऊर्वोः ^vमध्ये अस्मान् ^vवसिष्व । ऊरुभ्यामाच्छादय रक्षार्थम् । ^vदासम् उपक्षपयितारमस्मद्द्वेषिणं पापं वा ^vहथैः हननैः ^vनि ^vशिश्नथः मारयसि । अथवा त्वद्विरोधिनं दासमसुरं नि शिश्नथो हननैः ॥ ॥ ९ ॥

---

१. घ–यः । २. ख-त-श–वैतशा; न-भ–चैतशा । ३. ख-त३-श–योजयंति ।

अन्यव्रतममानुषमयज्वानमदेवयुम् ।
अव स्वः सखा दुधुवीत पर्वतः सुघ्नाय दस्युं पर्वतः ॥ ११ ॥

अन्यऽव्रतम् । अमानुषम् । अयज्वानम् । अदेवऽयुम् ।
अव । स्वः । सखा । दुधुवीत । पर्वतः । सुऽघ्नाय । दस्युम् । पर्वतः ॥ ११ ॥

हे इन्द्र ᵛअन्यव्रतं[1] व्यतिरिक्तकर्माणम्[1] अत एव ᵛअमानुषं मानुषाणामिन्द्रयाजिनामप्रियम् ᵛअयज्वानम् अयष्टारम् ᵛअदेवयुम् अदेवकर्मिणं पापिनं ᵛस्वः स्वर्गात् ᵛअव ᵛदुधुवीत । अवचालयेदित्यर्थः । कः । ᵛसखा[3] ᵛपर्वतः तव सखिभूतः पर्वत ऋषिः । यद्यप्यन्यं देवमिष्ट्वा स्वर्गं प्राप्नोति सः तथापि[4] पातयति[4] ऋषिः । न केवलं धूननमात्रमपि तु ᵛसुघ्नाय सुष्ठु हन्त्रे मृत्यवे ᵛदस्युम् उक्तलक्षणं ᵛपर्वतः प्रेरयतीति शेषः । अत इन्द्रमेवावश्यं यजध्वमिति शेषः ॥

त्वं न इन्द्रासां हस्ते शविष्ठ दावने ।
धानानां न सं गृभायास्मयुर्द्विः सं गृभायास्मयुः ॥ १२ ॥

त्वम् । नः । इन्द्र । आसाम् । हस्ते । शविष्ठ । दावने ।
धानानाम् । न । सम् । गृभाय । अस्मऽयुः । द्विः । सम् । गृभाय । अस्मऽयुः ॥ १२ ॥

हे ᵛशविष्ठ बलवन् ᵛइन्द्र ᵛत्वं ᵛनः अस्मभ्यं ᵛदावने प्रदानाय ᵛआसां गवाम् । कर्मणि षष्ठी । एता गाः ᵛहस्ते ᵛगृभाय गृहाण । ग्रहणे दृष्टान्तः । ᵛधानानां ᵛन । धाना भृष्टयवाः । अत्रापि कर्मणि षष्ठी । धाना यथा संगृह्णाति तद्वद्गृहाण । कीदृशस्त्वम् । ᵛअस्मयुः अस्मान् कामयमानः । गृहीत्वा च ᵛअस्मयुः सन् ᵛद्विः ᵛसं ᵛगृभाय । पुनर्द्विवारं संगृहाण ॥

सखायः क्रतुमिच्छत कथा राधाम शरस्य । उपस्तुतिं भोजः सूरिर्यो अह्रयः ॥ १३ ॥

सखायः । क्रतुम् । इच्छत । कथा । राधाम । शरस्य ।
उपऽस्तुतिम् । भोजः । सूरिः । यः । अह्रयः ॥ १३ ॥

हे ᵛसखायः ऋत्विजोऽध्वर्य्वादयः ᵛक्रतुं कर्म इन्द्रसंबन्धिनम् ᵛइच्छत कर्तुम् । हे सखायः ᵛशरस्य । 'शॄ हिंसायाम्' । हिंसकस्येन्द्रस्य ᵛकथा कथं ᵛराधाम साधयाम । किम् । ᵛउपस्तुतिं स्तोत्रम् । ᵛयः इन्द्रः ᵛभोजः शत्रूणां भोजयिता ᵛसूरिः प्रेरकः ᵛअह्रयः अनवनतः शत्रूणामिति ॥

भूरिभिः समह ऋषिभिर्बर्हिष्मद्भिः स्तविष्यसे ।
यदित्थमेकमेकमिच्छर वत्सान्पराददः ॥ १४ ॥

भूरिऽभिः । समह । ऋषिऽभिः । बर्हिष्मत्ऽभिः । स्तविष्यसे ।
यत् । इत्थम् । एकम्ऽएकम् । इत् । शर । वत्सान् । पराऽददः ॥ १४ ॥

---

१. ख-ग-त-श-'अन्यव्रतं' नास्ति । २. न-भ-इंद्रव्यतिरिक्तकर्माणं । ३. ख-ग-त-भ-श-सखा यः । ४. ख-त१-२-३-४-तथा तथापि तयति; ग-तथा तथापि त इति; ज्ञ-तथा तथापि पातयति; न-तथापि तथा तपति; भ-तथापि त पातयति; श-तथा तथापि तपति ।

हे इन्द्र ᐯसमह समानपूज । सर्वैः पूज्येत्यर्थः । ᐯभूरिभिः बहुभिः ᐯऋषिभिः अतीन्द्रियज्ञैर्ऋत्विग्भिः ᐯबर्हिष्मद्भिः यागवद्भिः ᐯस्तविष्यसे स्तूयसे । ᐯयत् य इन्द्रः ᐯइत्थमेकमेकमित् एकमेकमेव वत्समित्येवं बहून् ᐯवत्सान् स्तोतृभ्यः ᐯपराददः प्रयच्छसि[1] । हे ᐯशूर हिंसक शत्रोः । अत्र वत्सशब्दो वत्समातॄणां गवामुपलक्षकः । गाः प्रयच्छसीति ॥

कर्णगृह्या मघवा शौरदेव्यो वत्सं नस्त्रिभ्य आनयत् । अजां सूरिर्न धातवे ॥ १५ ॥

कर्णऽगृह्य । मघऽवा । शौरऽदेव्यः । वत्सम् । नः । त्रिऽभ्यः । आ । अनयत् ।
अजाम् । सूरिः । न । धातवे ॥ १५ ॥

अयं ᐯमघवा इन्द्रः ᐯत्रिभ्यः हिंसकेभ्यः सकाशात् ᐯशौरदेव्यः । दीव्यन्ति क्रीडन्त इति देवा योद्धारः । शूराश्च ते देवाश्च शूरदेवाः । तेषां हितं शौरदेवं युद्धम् । तत्संबन्धिन्यो गाः । युद्धे शत्रून् हत्वा तत्संबन्धिन्य इत्यर्थः । ताः ᐯवत्सं ᐯन । नेति चार्थे । वत्ससहिता अस्मभ्यं ᐯकर्णगृह्य कर्णे गृहीत्वा ᐯआनयत् आनयतु । ᐯसूरिर्न प्रेरकः स्वामीव ᐯधातवे पानाय ᐯअजां यथा स आनयति कर्णे गृहीत्वा तद्वदिति ॥ ॥ १० ॥

'त्वं नो अग्ने' इति पञ्चदशर्चं द्वितीयं सूक्तम् । सुदीतिपुरुमीळ्हावृषी तयोरन्यतरो वा । आदौ नव गायत्र्यो दशमीद्वादशीचतुर्दश्यो बृहत्य एकादशीत्रयोदशीपञ्चदश्यः सतोबृहत्यः । अग्निर्देवता । तथा चानुक्रान्तं—'त्वं नः सुदीतिपुरुमीळ्हौ तयोर्वान्यतर आग्नेयं तु त्रिप्रगाथान्तम्' इति । प्रातरनुवाक आग्नेये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चादितो नवर्चः । तथा च सूत्रितं—'त्वं नो अग्ने महोभिरिति नव' ( आश्व. श्रौ. ४. १३ ) इति ॥

त्वं नो अग्ने महोभिः पाहि विश्वस्या अरातेः । उत द्विषो मर्त्यस्य ॥ १ ॥

त्वम् । नः । अग्ने । महःऽभिः । पाहि । विश्वस्याः । अरातेः । उत । द्विषः । मर्त्यस्य ॥ १ ॥

हे ᐯअग्ने ᐯत्वं ᐯनः अस्मान् ᐯमहोभिः पूजाभिर्महद्भिर्धनैर्वा ᐯपाहि रक्ष । ᐯविश्वस्याः बहुविधात् ᐯअरातेः अदातुः सकाशात् अदानाद्वा पाहि । त्वमेव महद्धनं दत्त्वादातुरदानाद्वा सकाशाद्रक्षेत्यर्थः । यद्वा । महोभिर्युक्तस्त्वमिति योज्यम् । ᐯउत अपि च ᐯद्विषः द्वेष्टुः ᐯमर्त्यस्य मर्त्यात् सकाशात् पाहि । अस्मभ्यं बलं दत्त्वेति भावः । अथवा मर्त्यस्य द्विषो द्वेषाद्रक्षेति संबन्धः । अरातेरित्यस्यादानादिति पक्षे तत्रापि मर्त्यस्यादानादिति संबन्धनीयम् ॥

नहि मन्युः पौरुषेय ईशे हि वः प्रियजात । त्वमिदसि क्षपावान् ॥ २ ॥

नहि । मन्युः । पौरुषेयः । ईशे । हि । वः । प्रियऽजात । त्वम् । इत् । असि । क्षपाऽवान् ॥ २ ॥

हे ᐯप्रियजात[2] अग्ने ᐯवः तव ᐯपौरुषेयः पुरुषसंबन्धी ᐯमन्युः क्रोधः ᐯन ᐯईशे नेष्टे बाधितुम्[3] । अस्मदादिभी रक्षितत्वादिति भावः । दिवाचराः खलु पुरुषाः अतो दिवा तव हानिर्नास्तीति भावः । अथ रात्रिंचरा रक्षःप्रभृतयः । तेभ्योऽपि पीडा नास्तीत्युच्यते । ᐯत्वमित्[4] त्वमेव खलु ᐯक्षपावान् रात्रिमान् ᐯअसि । रात्रौ ह्यग्निर्विशेषेण तेजस्वी भवति ॥

स नो विश्वेभिर्देवेभिरूर्जो नपाद्भद्रशोचे । रयिं देहि विश्ववारम् ॥ ३ ॥

१. ख-ग-त-भ-श-प्रायच्छसि । २. ख-ग-त-न-भ-श-'प्रियजात' नास्ति । ३. ग-अस्मान् बाधितुं । ४. घ-त्वमिद्धि ।

सः । नः । विश्वेभिः । देवेभिः । ऊर्जः । नपात् । भद्रऽशोचे । रयिम् । देहि । विश्वऽवारम् ॥३॥

हे अग्ने सः स्तुत्यस्त्वं नः अस्मभ्यं[1] वस्वो वसु धनमुप मासि प्रयच्छसि । हे ऊर्जो नपात् बलस्य नप्तर्न पातयितर्वा हे भद्रशोचे स्तुत्यप्रकाश । तदेवादरार्थं पुनराह । रयिं धनं विश्ववारं सर्वैर्वरणीयं धनं देहि । अथवा यद्वसूप मासि अस्मभ्यं दातुं तद्धनं गृहादिलक्षणं तच्च रयिं दानार्हं गोहिरण्यादिकं च देहीत्यपुनरुक्तिः ॥

न तमग्ने अरातयो मर्तं युवन्त रायः । यं त्रायसे दाश्वांसम् ॥ ४ ॥

न । तम् । अग्ने । अरातयः । मर्तम् । युवन्त । रायः । यम् । त्रायसे । दाश्वांसम् ॥ ४ ॥

हे अग्ने तं स्तोतारम् अरातयः अदानशीला द्वेषिणः रायः रयिमन्तः[2] न युवन्त न पृथक्कुर्वन्ति । रायो धनाद्वा न युवन्त । यं दाश्वांसं हविर्दातारं[3] त्रायसे पालयसे ॥

यं त्वं विप्र मेधसातावग्ने हिनोषि धनाय । स तवोती गोषु गन्ता ॥ ५ ॥

यम् । त्वम् । विप्र । मेधऽसातौ । अग्ने । हिनोषि । धनाय । सः । तव । ऊती । गोषु । गन्ता ॥५॥

हे अग्ने विप्र[4] त्वं यं मर्त्यं मेधसातौ यज्ञस्य संभजने हिनोषि प्रेरयसि धनाय गवादिधनलाभाय सः यजमानः तव ऊती ऊत्या रक्षणेन गोषु गन्ता भवति । गोमान् भवतीत्यर्थः ॥ ॥ ११ ॥

त्वं रयिं पुरुवीरमग्ने दाशुषे मर्ताय । प्र णो नय वस्यो अच्छ ॥ ६ ॥

त्वम् । रयिम् । पुरुऽवीरम् । अग्ने । दाशुषे । मर्ताय । प्र । नः । नय । वस्यः । अच्छ ॥ ६ ॥

हे अग्ने त्वं दाशुषे हविर्दत्तवते मर्त्याय यजमानाय रयिं धनं पुरुवीरं बहुभिर्वीरैर्युक्तं प्रयच्छसि । अतः नः अस्मानपि वस्यः वसीयो धनम् अच्छ अभिप्राप्तुं प्र णय प्रापय ॥

उरुष्या णो मा परा दा अघायते जातवेदः । दुराध्ये मर्ताय ॥ ७ ॥

उरुष्य । नः । मा । परा । दाः । अघऽयते । जातऽवेदः । दुःऽआध्ये । मर्ताय ॥ ७ ॥

हे जातवेदः जातविद्य जातधन वाग्ने नः अस्मान् उरुष्य रक्ष । 'उरुष्यती रक्षाकर्मा' (निरु. ५. २३) इति यास्कः । मा परा दाः मा परादेह्यस्मान् । कस्मा इति स उच्यते । अघायते अघं पापमिच्छते दुराध्ये दुराध्यानाय दुर्विचिन्तकाय हिंसाबुद्धये मर्ताय मनुष्याय ॥

अग्ने माकिष्टे देवस्य रातिमदेवो युयोत । त्वमीशिषे वसूनाम् ॥८॥

अग्ने । माकिः । ते । देवस्य । रातिम् । अदेवः । युयोत । त्वम् । ईशिषे । वसूनाम् ॥ ८ ॥

हे अग्ने देवस्य द्योतमानस्य ते[5] तव रातिं[5] दानं दत्तं धनं वा कश्चित् अदेवः मर्त्यादिः माकिः युयोत मैव पृथक्करोतु । त्वम् एव ईशिषे । कस्य । वसूनां धनानामीश्वरो भवसि दातुम् । अनेनाभिश्रणीयाया रातेः सद्भाव उक्तो भवति ॥

स नो वस्व उप मास्यूर्जो नपान्माहिनस्य । सखे वसो जरितृभ्यः ॥ ९ ॥

---

१. घ-ञ-अस्मभ्यं विश्वेभिर्देवेभिः । २. ख-ग-घ-त-न-भ-श-रयिवंतः । ३. घ-°र्दातारं मर्तं यजमानं । ४. घ-विप्र प्राज्ञ । ५. ख-त-न-भ-श-देवरातिं; घ-तव रातिं ।

सः । नः । वस्वः । उप । मासि । ऊर्जः । नपात् । माहिनस्य । सखे । वसो इति । जरितृऽभ्यः ॥९॥

हे ᵛऊर्जो ᵛनपात् बलस्यास्य पुत्र । बलेन मथ्यमानत्वादाज्यलक्षणेनान्नेन प्रवर्धनादूर्जोनपात्त्वम् । हे ᵛसखे सखिवद्धितकारिन्[1] ᵛवसो वासकाग्ने ᵛसः स्तुत्यत्वेनैव प्रसिद्धस्त्वं ᵛजरितृभ्यः गरितृभ्यः स्तोतृभ्यः ᵛनः अस्मभ्यं ᵛमाहिनस्य ᵛवस्वः । माहिन इति महन्नाम । महद्धनम् ᵛउप ᵛमासि समीपे मासि निर्मासि । प्रयच्छसीत्यर्थः ॥

प्रातरनुवाके बार्हते छन्दसि ' अच्छा नः ' इत्याद्याः षडृचः । तथा च सूत्रितम्—' अच्छा नः शीरशोचिषमिति षट् ' ( आश्व. श्रौ. ४.१३ ) इति । दशमेऽहनि प्रातःसवने ' अच्छा वो अग्निम् ' इति तृचस्य स्थाने ' अच्छा नः ' इति तृचोऽच्छावाकवादः । सूत्रितं च—' अच्छा नः शीरशोचिषं प्रति श्रुताय वो धृषदिति तृचौ ' ( आश्व. श्रौ. ८.१२ ) इति ॥

अच्छा नः शीरशोचिषं गिरो यन्तु दर्शतम् ।
अच्छा यज्ञासो नमसा पुरूवसुं पुरुप्रशस्तमूतये ॥ १० ॥

अच्छ । नः । शीरऽशोचिषम् । गिरः । यन्तु । दर्शतम् ।
अच्छ । यज्ञासः । नमसा । पुरुऽवसुम् । पुरुऽप्रशस्तम् । ऊतये ॥ १० ॥

ᵛअच्छ अभिमुखं ᵛयन्तु गच्छन्तु ᵛनः अस्माकं ᵛगिरः स्तुतयः । कम् । ᵛशीरशोचिषम् अशनशीलज्वालं[2] ᵛदर्शतं सर्वैर्दर्शनीयमग्निम् । तथा ᵛयज्ञासः यज्ञाश्चास्मदीयाः ᵛनमसा हविषाज्यादिलक्षणेन ᵛअच्छ अभिमुखं यन्तु गच्छन्तु । कीदृशम् । ᵛपुरुवसुं प्रभूतधनं ᵛपुरुप्रशस्तं बहुस्तुतम्[3] । किमर्थम् । ᵛऊतये अस्माकं रक्षणाय ॥ ॥ १२ ॥

अग्निं सूनुं सहसो जातवेदसं दानाय वार्याणाम् ।
द्विता यो भूदमृतो मर्त्येष्वा होता मन्द्रतमो विशि ॥ ११ ॥

अग्निम् । सूनुम् । सहसः । जातऽवेदसम् । दानाय । वार्याणाम् ।
द्विता । यः । भूत् । अमृतः । मर्त्येषु । आ । होता । मन्द्रऽतमः । विशि ॥ ११ ॥

ᵛअग्निं ᵛसहसः ᵛसूनुं बलस्य पुत्रं ᵛजातवेदसं जातधनं ᵛवार्याणां वरणीयानां गवादिधनानां ᵛदानाय गिरः अच्छ यन्त्वित्यनुवर्तते । ᵛयः अग्निः ᵛअमृतः अमरणधर्मा देवेषु भवति सः ᵛमर्त्येष्वा । आकारश्चार्थे । मनुष्येषु चाभूत् अभवदित्येवं ᵛद्विता द्वैधं भवति । देवेष्वमृतत्वमस्य प्रसिद्धं मनुष्येषु कीदृशोऽभूदिति उच्यते । ᵛविशि विक्षु यजमानरूपासु प्रजासु ᵛहोता होमनिष्पादकः ᵛमन्द्रतमः मादयितृतमश्च भवति । अच्छ यन्त्विति समन्वयः । अथवा योऽमृतो द्विता द्वित्वं द्वैधं द्विप्रकारोऽभूत् । कथम् । मर्त्येषु सामान्येन दाहपाकादिसाधनोऽभवदित्येतत् प्रसिद्धं विशि यजमानरूपायां तु होता मन्द्रतमः[4] अभवदित्येवं द्वित्वम् ॥

अग्निं वो देवयज्ययाग्निं प्रयत्यध्वरे ।
अग्निं धीषु प्रथममग्निमर्वत्यग्निं क्षैत्राय साधसे ॥ १२ ॥

---

१. ख-त-भ-श-°द्धितकारी । २. ख-त-भ-श-°शीलज्वालं वाग्निं । ३. न-भ-बहुभिः स्तुतं ।
४. ख-ग-त-न-श-मंद्रतमो वा ।

अ॒ग्निम् । वः॒ । दे॒व॒ऽय॒ज्यया॑ । अ॒ग्निम् । प्र॒ऽय॒ति । अ॒ध्व॒रे ।
अ॒ग्निम् । धी॒षु । प्र॒थ॒मम् । अ॒ग्निम् । अर्व॑ति । अ॒ग्निम् । क्षैत्रा॑य । साध॑से ॥ १२ ॥

हे यजमानाः युष्माकं[1] ᵛदेवयज्यया देवयागेन निमित्तेन देवयागार्थम् ᵛअग्निं स्तौमीति शेषः । तथा ᵛअग्निम् ᵛअध्वरे यागे ᵛप्रयति प्रकर्षेण गच्छति प्रवृत्ते सति स्तौमि[2] ᵛप्रथमम् इतरदेवेभ्यः । तथा ᵛअग्निम् ᵛअर्वति आगते भ्रातृव्ये स्तौमि यज्ञविघ्नपरिहारार्थम्[3] । तथा[4] ᵛक्षैत्राय[5] क्षेत्राय[6] क्षेत्रसंबन्धिने ᵛसाधसे साधनाय क्षेत्रलाभाय स्तौमि । यज्ञान्ते क्षेत्रलाभरूपाय फलाय च स्तौमि । एवमादौ मध्येऽन्ते च सर्वदा स्तौमीत्यर्थः ॥

अ॒ग्निरि॒षां स॒ख्ये द॑दातु न॒ ईशे॒ यो वार्या॑णाम् ।
अ॒ग्निं तो॒के तन॑ये॒ शश्व॑दीमहे॒ वसुं॒ सन्तं॑ तनू॒पाम् ॥ १३ ॥

अ॒ग्निः । इ॒षाम् । स॒ख्ये । द॒दा॒तु॒ । न॒ः । ईशे॑ । यः । वार्या॑णाम् ।
अ॒ग्निम् । तो॒के । तन॑ये । शश्व॑त् । ई॒म॒हे॒ । वसु॑म् । सन्त॑म् । त॒नू॒ऽपाम् ॥ १३ ॥

ᵛअग्निः देवः ᵛसख्ये समानख्यानाय ᵛनः मह्यम् । सख्युः कर्म सख्यम् । तस्मिन् वा । नोऽस्मभ्यम् ᵛइषाम् इषोऽन्नानि ᵛददातु । ᵛयः अग्निः ᵛवार्याणां धनानाम् ᵛईशे ईष्टे स ददात्विति । तमेव ᵛअग्निं ᵛतोके पुत्रार्थं ᵛतनये तत्पुत्रार्थं च ᵛशश्वत् बहु धनमन्नं वा ᵛईमहे याचामहे । वार्याणामीश इत्युक्तत्वादेवं लभ्यते । कीदृशमग्निम् । ᵛवसुं वासकं ᵛसन्तं सर्वदा वर्तमानं ᵛतनूपाम् अङ्गानां पालयितारम् ॥

अ॒ग्निमी॑ळि॒ष्वाव॑से॒ गाथा॑भिः शी॒रशो॑चिषम् ।
अ॒ग्निं रा॒ये पु॑रुमीळ्ह श्रु॒तं नरो॒ऽग्निं सु॑दी॒तये॑ छ॒र्दिः ॥ १४ ॥

अ॒ग्निम् । ई॒ळि॒ष्व॒ । अव॑से । गाथा॑भिः । शी॒रऽशो॑चिषम् ।
अ॒ग्निम् । रा॒ये । पु॒रु॒ऽमी॒ळ्ह॒ । श्रु॒तम् । नरः॑ । अ॒ग्निम् । सु॒ऽदी॒तये॑ । छ॒र्दिः ॥ १४ ॥

हे ᵛपुरुमीळ्ह[7] त्वम् ᵛअग्निम् ᵛअवसे आवयो रक्षणाय ᵛईळिष्व स्तुहि ᵛगाथाभिः । गाथेति वाङ्नाम । मन्त्ररूपाभिर्वाग्भिः । कीदृशम् । ᵛशीरशोचिषं शयनस्वभावरोचिष्कम् । तथा[8] ᵛराये धनाय ईळिष्व । ᵛश्रुतम् एनं ᵛनरः अन्येऽपि यजमानाः स्तुवन्ति स्वार्थम् । तस्मात् ᵛसुदीतये मह्यम् ᵛअग्निं[9] ᵛछर्दिः गृहं याचस्वेत्येवं सुदीतिः पुरुमीळ्हं[10] ब्रूते ॥

अ॒ग्निं द्वेषो॒ योत॒वै नो॑ गृणीमस्य॒ग्निं शं योश्च॒ दात॑वे ।
विश्वा॑सु वि॒क्ष्व॑वि॒तेव॒ हव्यो॒ भुव॒द्वस्तु॑र्ऋषू॒णाम् ॥ १५ ॥

अ॒ग्निम् । द्वेषः॑ । योत॒वै । न॒ः । गृ॒णी॒म॒सि॒ । अ॒ग्निम् । शम् । योः । च॒ । दात॑वे ।
विश्वा॑सु । वि॒क्षु । अ॒वि॒ताऽइ॑व । ह॒व्यः॑ । भुव॑त् । वस्तुः॑ । ऋ॒षू॒णाम् ॥ १५ ॥

---

१. ग-वो युष्माकं । २. घ-स्तौमि तथाग्निं धीषु सुबुद्धिषु प्रथममितरदेवेभ्यः मुख्यं स्तौमि । ३. ग-घ-त-न-भ-यज्ञे विघ्न°; ख-यज्ञैर्विघ्र° । ४. घ-तथाग्निं । ५. ख-ग-घ-त-न-श-' क्षैत्राय ' नास्ति । ६. भ-' क्षेत्राय ' नास्ति । ७. घ-पुरुमीळ्ह बहुसेक्तः । ८. घ-तथाग्निं । ९. ख-घ-त-न-भ-अग्निः । १०. त-श-पुरुमीळ्हे ।

ᵛअग्निं ᵛनः अस्माकं ᵛद्वेषः द्वेष्टॄन् ᵛयोतवै पृथक्कर्तुं ᵛगृणीमसि गृणीमः स्तुमः। तथा ᵛअग्निं ᵛशं सुखं ᵛयोश्च भयानाममिश्रणं च ᵛदातवे दातुम्। अथवा शं सुखस्य योर्मिश्रणाय च गृणीमसि। अस्मिन् पक्षे द्वेषो योतवा इत्यनेन सह समुच्चयार्थश्चशब्दः। सोऽग्निः ᵛविश्वासु सर्वासु ᵛविक्षु[1] प्रजासु ᵛअवितेव रक्षिता राजेव ᵛऋषूणाम् ऋषीणामस्माकं ᵛवस्तुः वासको देवः ᵛहव्यो[2] ᵛभुवत् भवतु। अथवा सर्वासु विक्षु यजमानरूपासु प्रजासु मध्य ऋषूणामृषीणां सूक्तद्रष्टॄणामस्माकमेव हव्यो भवतु वस्तुः सर्वस्य वासको देवः॥ ॥ १३ ॥

'हविष्कृणुध्वम्' इत्यष्टादशर्चं तृतीयं सूक्तम्। अत्रानुक्रमणिका—'हविर्द्व्यूना हर्यतः प्रागाथो हविषां स्तुतिर्वा' इति। प्रगाथपुत्रो हर्यत ऋषिः। 'परं गायत्रं प्राग्वत्सप्रेः' इति परिभाषया गायत्री छन्दः। 'आग्नेयं तु' इत्युक्तत्वादग्निर्देवता यद्वा हविषां स्तूयमानत्वात्तद्देवताकं वा। सूक्तविनियोगो लैङ्गिकः॥

**ह॒विष्कृ॑णुध्व॒मा ग॑मदध्व॒र्युर्व॑नते॒ पुन॑ः। वि॒द्वाँ अ॑स्य प्र॒शास॑नम्॥ १॥**

ह॒विः। कृ॒णु॒ध्व॒म्। आ। ग॒म॒त्। अ॒ध्व॒र्युः। व॒न॒ते॒। पुन॒रिति॑। वि॒द्वान्। अ॒स्य॒। प्र॒ऽशास॑नम्॥१॥

हे अध्वर्युसंबन्धिनो हविष्कर्तारः यूयं ᵛहविः ᵛकृणुध्वं कुरुध्वं शीघ्रम्। यतः ᵛआ ᵛगमत् आजगामायमग्निः अतः कृणुध्वम्। ᵛअध्वर्युः ᵛपुनः ᵛवनते संभजते। किम्। सामर्थ्यादध्वरमिति गम्यते। कीदृशोऽध्वर्युः। ᵛअस्य हविषः ᵛप्रशासनं प्रदानं ᵛविद्वान्॥

**नि ति॒ग्मम॒भ्यं१॒॑शुं सीद॒द्धोता॑ म॒नावधि॑। जु॒षा॒णो अ॑स्य स॒ख्यम्॥ २॥**

नि। ति॒ग्मम्। अ॒भि। अं॒शुम्। सीद॑त्। होता॑। मनौ॑। अधि॑। जु॒षा॒णः। अ॒स्य॒। स॒ख्यम्॥२॥

ᵛहोता ऋत्विक्[3] ᵛतिग्मं तीक्ष्णम् ᵛअंशुं तमग्निं ᵛनि ᵛषीदत् निषीदति। कीदृशो होता। ᵛअस्य अग्नेः ᵛसख्यं ᵛमनावधि यजमाने ᵛजुषाणः[4]। अधीति सप्तम्यर्थानुवादी॥

**अ॒न्तरि॑च्छन्ति॒ तं जने॑ रु॒द्रं प॒रो म॑नी॒षया॑। गृ॒भ्णन्ति॑ जि॒ह्वया॑ स॒सम्॥ ३॥**

अ॒न्तः। इ॒च्छ॒न्ति॒। तम्। जने॑। रु॒द्रम्। प॒रः। म॒नी॒षया॑। गृ॒भ्णन्ति॑। जि॒ह्वया॑। स॒सम्॥३॥

ᵛतं ᵛरुद्रम्। रुत् दुःखम्। तस्य द्रावयितारम्। अथवा रुत् स्तुतिः। तया गन्तव्यम्। स्तुत्यमित्यर्थः। तादृशमग्निं ᵛजने यजमानार्थं ᵛमनीषया स्वप्रज्ञानेन ᵛपरः परस्तात् पुरोदेशे[5] ᵛइच्छन्ति स्थापयितुम्। त एव पश्चात् ᵛससं स्वपन्तमग्निं ᵛजिह्वया। जन्ये जनकशब्दः। जिह्वाप्रभवया स्तुत्या ᵛगृभ्णन्ति गृह्णन्त्यङ्गुलिभिः। अत्र यास्कः—'स्वप्नमेतन्मध्यमं[6] ज्योतिरनित्यदर्शनम्' (निरु. ५. ३) इति॥

**जा॒म्य॑तीतपे॒ धनु॒र्व॑यो॒धा अ॑रुहद्व॒न॑म्। दृ॒षदं॑ जि॒ह्वयाव॑धीत्॥ ४॥**

जा॒मि। अ॒ती॒त॒पे॒। धनुः॑। व॒यः॒ऽधाः। अ॒रु॒ह॒त्। वन॑म्। दृ॒षद॑म्। जि॒ह्वया॑। आ। अ॒व॒धी॒त्॥४॥

ᵛवयोधाः अन्नस्य दाताग्निर्मध्यमस्थानः ᵛजामि प्रवृद्धं सर्वमतिरिच्य वर्तमानम्। 'जाम्यतिरेकनाम' (निरु. ४. २०) इति यास्कः। ᵛधनुः धन्वान्तरिक्षम् ᵛअतीतपे अतितपति। अथवा-

१. ख-ग-त-श—'विक्षु' नास्ति। २. घ—हव्यः आह्वातव्यः ३. घ—ऋत्विक् अभि सर्वतः। ४. न-जुषाणः प्रीयमाणः; भ१—जुषाणः यमाणः। ५. घ—पुरोदेशे अंतः आयतनमध्ये। ६. ख-त२-निरु.—स्वपनमेतन्माध्यमिकं; ञ-त१-स्वपमेतन्माध्यमिकं; न-भ—स्वपनमेतन्मध्यमं।

भेजांमि गमनशीलं धनुरतितपते स्वविरोधिनम्। स च वयोधा अन्नस्य दाताग्निः ᵛवनम् उदकम् ᵛअरुहत् आरोहति विमोकाय। तदर्थं ᵛजिह्वया ज्वालया ᵛदृषदं मेघम् ᵛअवधीत् हन्ति। दावाग्निपक्षे वनं तरुसमूहं हन्ति। जिह्वया दृषदं कठिनमपि पाषाणं भिनत्तीति ॥

चरन्वत्सो रुशन्निह निदातारं न विन्दते। वेति स्तोतव अम्ब्यम् ॥ ५ ॥

चरन्। वत्सः। रुशन्। इह। निऽदातारम्। न। विन्दते। वेति। स्तोतवे। अम्ब्यम् ॥५॥

ᵛवत्सः। वत्सवच्चापलेन धावनाद्वत्स इत्युपचर्यते। अथवा वत्स इव संचरन्। इवशब्दो लुप्यते। ᵛरुशन् श्वेतो भवन् ᵛइह अस्मिँल्लोके ᵛनिदातारं निरोधकं ᵛन ᵛविन्दते न लभते। किंतु ᵛस्तोतवे स्तोतुम् ᵛअम्ब्यं स्तोतारं स्वयं ᵛवेति कामयते। अथवात्र वैद्युतोऽग्निरुच्यते। वैद्युतोऽयं रुशंश्चरंश्चेहान्तरिक्षे वत्सः सर्वदा वसन् वत्सस्थानीयो वा सन्निदातारं निरोधकं न विन्दते। किंतु स्तोतुमम्ब्यं माध्यमिकां वाचं वेति[1] ॥ ॥ १४ ॥

उतो न्वस्य यन्महदश्वावद्योजनं बृहत्। दामा रथस्य ददृशे ॥ ६ ॥

उतो इति। नु। अस्य। यत्। महत्। अश्वऽवत्। योजनम्। बृहत्। दामा। रथस्य। ददृशे ॥६॥

ᵛउतो अपि च ᵛनु क्षिप्रमद्य ᵛअस्य आदित्यस्य ᵛयन्महत् माहात्म्ययुक्तम् ᵛअश्वावत् संवृद्धाश्ववत् ᵛबृहत्[2] महत् स्थूलं ᵛयोजनं दृश्यते। तदेवाह। ᵛरथस्य ᵛदामा ᵛददृशे दृश्यते[3]। अन्तरिक्षे रथेऽश्वान्नियोजयतीत्यर्थः। तदा दुहन्तीत्युत्तरत्र संबन्धः ॥

अभिष्टवे घर्मदाहे ‘दुहन्ति सप्त’ इत्येषा। सूत्रितं च—‘दुहन्ति सप्तैकां समिद्धो अग्निरश्विना’ (आश्व. श्रौ. ४. ७) इति। ग्रावस्तोत्रेऽप्येषा। सूत्रितं च—‘दुहन्ति सप्तैकामधुक्षत्पिप्युषीमिषम्’ (आश्व. श्रौ. ५. १२) इति ॥

दुहन्ति सप्तैकामुप द्वा पञ्च सृजतः। तीर्थे सिन्धोरधि स्वरे ॥ ७ ॥

दुहन्ति। सप्त। एकाम्। उप। द्वा। पञ्च। सृजतः। तीर्थे। सिन्धोः। अधि। स्वरे ॥ ७ ॥

ᵛसप्त ऋत्विजः ᵛएकां घर्मं[4] ᵛदुहन्ति। तेषां[5] मध्ये ᵛद्वा द्वौ प्रतिप्रस्थातारावध्वर्यू[6] ᵛपञ्च[7] अन्यान्[7] ᵛउप ᵛसृजतः प्रयोजयतः। के ते पञ्च त उच्यन्ते। यजमानं ब्रह्माणं होतारमाग्नीध्रं प्रस्तोतारमिति। कुत्रेति उच्यते। ᵛसिन्धोः कस्याश्चित् सरस्वत्यादिप्रख्याताया नद्याः ᵛतीर्थे। यत्रायमृषिर्यजति तत्र। ᵛस्वरे ᵛअधि। स्वरतिः शब्दकर्मा। अधीति सप्तम्यर्थानुवादी। स्वरोपेते शब्दवति। यत्तीर्थमृत्विजाम् ओ श्रावय इत्यादिशब्दैः शब्दवद्भवति तस्मिन्नित्यर्थः ॥

प्रवर्ग्येऽभिष्टवे ग्राव्णोऽभिष्टवे च ‘आ दशभिः’ इत्येषा। सूत्रितं च—‘आ दशभिर्विवस्वतो दुहन्ति सप्तैकाम्’ (आश्व. श्रौ. ४. ७; ५. १२) इति ॥

आ दशभिर्विवस्वत इन्द्रः कोशमचुच्यवीत्। खेदया त्रिवृता दिवः ॥ ८ ॥

आ। दशऽभिः। विवस्वतः। इन्द्रः। कोशम्। अचुच्यवीत्। खेदया। त्रिऽवृता। दिवः ॥८॥

---

१. ख-ञ-त१-२-न-भ१-चेति। २. ख-त-श-‘बृहत्’ नास्ति। ३. ख-त-न-भ-श- स दृश्यते। ४. ख-ग-घ-त-भ-श-घर्मं। ५. ख-ग-त-न-भ-श-तयोः। ६. ख-त-श-प्रस्थातारा॰; ग-अध्वर्युप्रस्थातारौ। ७. ख-त-भ-पंचोनान्यान्; श-पंचमोन्यान्।

ᵛविवस्वतः परिचरतो यजमानस्य ᵛदशभिः अङ्गुलीभिर्याचितः सन् ᵛइन्द्रः ᵛकोशम्। मेघनामैतत्। उदकसेचकं मेघं ᵛदिवः अन्तरिक्षसंबन्धिनं तत्सकाशाद्वा ᵛआ ᵛअचुच्यवीत्। व्यदारयदित्यर्थः। केन साधनेनेति तदुच्यते। ᵛत्रिवृता त्रिप्रकारवर्तनवता ᵛखेदया रश्मिना। यद्वा। अत्रेन्द्रशब्देनाग्निरादित्यो वा गृह्यते। खेदया त्रिवृतेति लिङ्गात्॥

**परिं त्रिधातुरध्वरं जूर्णिरेति नवीयसी। मध्वा होतारो अञ्जते॥ ९॥**

परिं। त्रिऽधातुः। अध्वरम्। जूर्णिः। एति। नवीयसी। मध्वा। होतारः। अञ्जते॥९॥

अयमग्निः ᵛत्रिधातुः लोहितशुक्लकृष्णभेदेन त्रिवर्णः ᵛजूर्णिः जवो वेगवान् ᵛनवीयसी नवीयस्या ज्वालया ᵛअध्वरं प्रवर्ग्यम् ᵛएति गच्छति। ᵛहोतारः होमनिष्पादका अध्वर्य्वादयः ᵛमध्वा आज्यादिना ᵛपरि ᵛअञ्जते। अथवाग्नेस्त्रिस्त्रिप्रकारा क्षिप्रा जवतरा[1] ज्वाला पर्येति महावीरम्। तं मध्वाञ्जत इति॥

**सिञ्चन्ति नमसावतमुच्चाचक्रं परिज्मानम्। नीचीनबारमक्षितम्॥ १०॥**

सिञ्चन्ति। नमसा। अवतम्। उच्चाऽचक्रम्। परिऽज्मानम्। नीचीनऽबारम्। अक्षितम्॥१०॥

ᵛनमसा नमनेन ᵛअवतं महावीरम् ᵛउच्चाचक्रम् उपरिस्थितचक्रं ᵛपरिज्मानं परितो व्याप्तं ᵛनीचीनबारं नीचीनद्वारम् ᵛअक्षितम् अक्षीणमीदृशं क्षीराद्यवशेषयुक्तमाहवनीयस्योपरि नमनेन ᵛसिञ्चन्ति जुह्वति। महावीरेण ह्याहवनीये हूयते॥　॥ १५॥

**अभ्यारमिदद्रयो निषिक्तं पुष्करे मधु। अवतस्य विसर्जने॥ ११॥**

अभिऽआरम्। इत्। अद्रयः। निऽसिक्तम्। पुष्करे। मधु। अवतस्य। विऽसर्जने॥ ११॥

ᵛअद्रयः आद्रियमाणा अध्वर्य्वादयः ᵛअभ्यारमित् अभिगम्यैव ᵛनिषिक्तम् अतिरिक्तं ᵛमधु ᵛपुष्करे वपुष्करे प्रवृद्ध उपयमनीपात्रे सिञ्चन्ति अग्निहोत्रार्थम् ᵛअवतस्य महावीरस्य ᵛविसर्जने विसर्जनसमये। होमानन्तरं खलु महावीरमासन्द्यामासादयन्ति॥

**गाव उपावतावतं मही यज्ञस्य रप्सुदा। उभा कर्णा हिरण्यया॥ १२॥**

गावः। उप। अवत। अवतम्। मही इति। यज्ञस्य। रप्सुदा। उभा। कर्णा। हिरण्यया॥१२॥

हे ᵛगावः घर्मदुघा यूयम् ᵛअवतं महावीरं प्रति ᵛउपावत उपागच्छत। यस्मात् ᵛयज्ञस्य घर्मयागस्य साधनभूते ᵛरप्सुदा। रप्सुदारप्सुदे[2] आरिप्सोः फलप्रदे। लिप्स्वोरश्विनोर्दातव्ये वा। यद्वा रपणं शब्दनम्। रप् मन्त्रः। तेन सुष्ठु दातव्ये। अथवा 'पूद क्षरणे'। रपा मन्त्रेण क्षारणीये[3] दोहनीये। ईदृशे गवाजयोः पयसी ᵛमही महती बहुले अपेक्षिते अत उपावतम्। गौरजाया अप्युपलक्षकः अजापयसोऽपि महावीरे सेचनीयत्वात्। अपि चास्य महावीरस्य ᵛउभा उभौ ᵛकर्णा कर्णस्थानीयौ द्वौ रुक्मौ ᵛहिरण्यया हिरण्मयौ सुवर्णरजतमयावित्यर्थः॥

प्रवर्ग्येऽजापयसि महावीर आनीयमाने 'आ सुते' इत्येषा। सूत्रितं च—'आ सुते सिञ्चत श्रियमित्याजे' (आश्व. श्रौ. ४. ७) इति॥

**आ सुते सिञ्चत श्रियं रोदस्योरभिश्रियम्। रसा दधीत वृषभम्॥ १३॥**

---

१. ग—नवतरा; त-न-श—भवतरा। २. ख-ग-ज्ञ-त१-२-न-भ-श-मु—रप्सुदे। ३. ग-श—क्षरणीये।

आ । सुते । सिञ्चत । श्रियम् । रोदस्योः । अभिऽश्रियम् । रसा । दधीत । वृषभम् ॥ १३ ॥

ᵛसुते दुग्धे गोपयसि ᵛश्रियं श्रयणमाजं पयः ᵛआ ᵛसिञ्चत । सिञ्चत हे अध्वर्यवः । कीदृशमाजम् । ᵛरोदस्योः । कर्मणि षष्ठ्येषा । द्यावापृथिव्यौ ᵛअभिश्रियम् अभिश्रयन्तम् । अग्निसंयोगात्तावत्पर्यन्तं प्रवृद्धमित्यर्थः । अथवा 'तत्कावश्विनौ द्यावापृथिव्यावित्येके' (निरु. १२. १) इति निरुक्तत्वादश्विनोरभिश्रियमित्यर्थः । सेचनानन्तरं ᵛरसा रस आजे पयसि ᵛवृषभं वर्षकमग्निं ᵛदधीत स्थापयत । अजाया आग्नेयीत्वात् क्षीरस्याप्यग्निसंयोजनमुचितम् । 'आग्नेयी वा एषा यदजा' (तै. ब्रा. ३. ७. ३. १) इति[1] ब्राह्मणम् ॥

**ते जानत स्वमोक्यं१ सं वत्सासो न मातृभिः । मिथो नसन्त जामिभिः ॥ १४ ॥**

ते । जानत । स्वम् । ओक्यम् । सम् । वत्सासः । न । मातृऽभिः ।
मिथः । नसन्त । जामिऽभिः ॥ १४ ॥

ᵛते ता गावः ᵛजानत ज्ञातवत्यः । अथवा सामान्याकारेण त इति पुंनिर्देशः । किम् । ᵛस्वं स्वकीयम् ᵛओक्यं निवासं महावीरम् । तत्र दोग्धुमगमन्नित्यर्थः । तदेवाह । ᵛवत्सासः वत्साः ᵛमातृभिः ᵛन जननीभिः सह यथा संगच्छन्ति तद्वत् ᵛजामिभिः बन्धुभिः सहिता गावः ᵛमिथः प्रत्येकं ᵛसं ᵛनसन्त संगच्छन्ते[2] महावीरम् ॥

**उप स्रक्वेषु बप्सतः कृण्वते धरुणं दिवि । इन्द्रे अग्ना नमः स्वः ॥ १५ ॥**

उप । स्रक्वेषु । बप्सतः । कृण्वते । धरुणम् । दिवि । इन्द्रे । अग्ना । नमः । स्वरिति स्वः ॥ १५ ॥

महावीरस्य ᵛस्रक्वेषु ᵛबप्सतः ज्वालया भक्षयतोऽग्नेरन्नं[3] ᵛधरुणम् इन्द्रे अग्ना इति वक्ष्यमाणत्वादिन्द्राग्न्योर्धारकं ᵛदिवि अन्तरिक्षे ᵛउप ᵛकृण्वते उपकुर्वते । यदाग्निर्महावीरं दहति तदा तस्योपर्युभयविधं क्षीरमासेचयन्तीत्यर्थः । एवं[4] महावीर आसिच्य ᵛइन्द्रे ᵛअग्ना अग्नौ च ᵛस्वः सर्वं गव्यमाजं[5] च ᵛनमः अन्नम् । अथवा स्वरन्तरिक्षे । योजयन्तीति शेषः ॥ ॥ १६ ॥

प्रवर्ग्ये घर्मदुहि दुग्धायाम् 'अधुक्षत्' इत्येषा । सूत्रितं च—'दुग्धायामधुक्षत्पिप्युषीम्' (आश्व. श्रौ. ४. ७) इति । ग्रावस्तोत्रेऽप्येषा 'अधुक्षत्पिप्युषीमिषमा कलशेषु धावति' (आश्व. श्रौ. ५. १२) इति सूत्रितत्वात् ॥

**अधुक्षत्पिप्युषीमिषमूर्जं सप्तपदीमरिः । सूर्यस्य सप्त रश्मिभिः ॥ १६ ॥**

अधुक्षत् । पिप्युषीम् । इषम् । ऊर्जम् । सप्तऽपदीम् । अरिः । सूर्यस्य । सप्त । रश्मिऽभिः ॥ १६ ॥

ᵛअरिः अरणशीलो वायुः ᵛसूर्यस्य ᵛसप्त ᵛरश्मिभिः साधनैः ᵛपिप्युषीम् आप्याययत् ᵛइषम् अन्नम् ᵛऊर्जं रसं च ᵛसप्तपदीं सर्पणस्वभावपादां माध्यमिकां वाचं घर्मधुग्रूपेणावस्थिताम् ᵛअधुक्षत् दुग्धवान् । यद्यप्यध्वर्युः पात्रेण गां दुग्धे तथाप्येवंभावनया साङ्गं भवति । माध्यमिकाया वाचो मधुधुक्त्वं 'हिङ्कृण्वती, गौरमीमेत्' (ऋ. सं. १. १६४. २७, २८) इत्यादिषु प्रसिद्धम् ॥

**सोमस्य मित्रावरुणोदिता सूर आ ददे । तदातुरस्य भेषजम् ॥ १७ ॥**

सोमस्य । मित्रावरुणा । उत्ऽइता । सूरे । आ । ददे । तत् । आतुरस्य । भेषजम् ॥ १७ ॥

---

१. न-भ-इति हि । २. ख-ग-त-न-भ-संगच्छंते ते । ३. ख-°ग्नेरग्ने; घ-°ग्नेः; ज्ञ-त१-२-३-श-°ग्नेरन्ने । ४. ख-त-श-अत एवं; ग-अत एनं । ५. ख-घ-ज्ञ-त१-२-३-°माज्यं ।

हे[1] मित्रावरुणौ ᵛसूरे सूर्ये ᵛउदिता उदिते ᵛसोमस्य सोमम् ᵛआ ᵛददे स्वीकरोति। तत्र हेतुमाह। ᵛतत् स्वीकाररूपं कर्म ᵛआतुरस्य अस्मदादेः ᵛभेषजम् औषधम्। हितकरमित्यर्थः॥

**उतो न्वस्य यत्पदं हर्यतस्य निधान्यम्। परि द्यां जिह्वयातनत् ॥१८॥**

उतो इति। नु। अस्य। यत्। पदम्। हर्यतस्य। निऽधान्यम्।
परि। द्याम्। जिह्वया। अतनत्॥ १८॥

पवमाने सोमे ᵛउतो अपि च ᵛअस्य सोमदातुः ᵛहर्यतस्य प्रदानं कामयमानस्य मम ᵛयत्पदं ᵛनिधान्यं हविषां निधानार्हमुत्तरवेदिलक्षणं तत्र स्थितवाग्निः ᵛद्यां ᵛपरि परितः ᵛजिह्वया ज्वालया ᵛअतनत् व्याप्नोत्[2]॥ ॥ १७॥

'उदीराथाम्' इत्यष्टादशर्चं चतुर्थं सूक्तमात्रेयस्य गोपवनस्य सप्तवध्रेर्वार्षं गायत्रमाश्विनम्। तथा चानुक्रमणिका—'उदीराथां गोपवन आत्रेयः सप्तवध्रिर्वाश्विनम्' इति। प्रातरनुवाक आश्विने क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चेदं सूक्तम्। 'उदीराथामा मे हवमिति गायत्रम्' (आश्व. श्रौ. ४. १५.) इति सूत्रितत्वात्॥

**उदीराथामृतायते युञ्जाथामश्विना रथम्। अन्ति षद्भूतु वामवः॥ १॥**

उत्। ईराथाम्। ऋतऽयते। युञ्जाथाम्। अश्विना। रथम्।
अन्ति। सत्। भूतु। वाम्। अवः॥ १॥

हे ᵛअश्विना अश्विनौ ᵛऋतायते यज्ञमिच्छते मह्यं मदर्थम् ᵛउदीराथाम् उद्गच्छतम्। तदर्थं हवमाह्वानं यज्ञं ना[3] प्राप्तुं ᵛयुञ्जाथां योजयतमश्वैः ᵛरथम्। ᵛवां युवयोः ᵛअवः रक्षणम् ᵛअन्ति अस्मदन्तिके ᵛसत् वर्तमानं ᵛभूतु भवतु॥

**निमिषश्चिज्जवीयसा रथेना यातमश्विना। अन्ति षद्भूतु वामवः॥ २॥**

निऽमिषः। चित्। जवीयसा। रथेन। आ। यातम्। अश्विना।
अन्ति। सत्। भूतु। वाम्। अवः॥ २॥

ᵛनिमिषश्चित् निमेषादपि ᵛजवीयसा अतिशयवेगेन ᵛरथेन ᵛआ ᵛयातम् आगच्छतमस्मद्यज्ञं हे ᵛअश्विना। शिष्टमुक्तम्॥

**उप स्तृणीतमत्रये हिमेन घर्ममश्विना। अन्ति षद्भूतु वामवः॥ ३॥**

उप। स्तृणीतम्। अत्रये। हिमेन। घर्मम्। अश्विना। अन्ति। सत्। भूतु। वाम्। अवः॥३॥

ᵛअत्रये महर्षयेऽसुरैरग्नौ प्रक्षिप्ताय तस्य हितार्थं ᵛघर्मम् अग्निदाहकं ᵛहिमेन उदकेन[4] ᵛउप ᵛस्तृणीतम् उपस्तीर्णवन्तौ। 'हिमेनाग्निं घ्रंसमवारयेथाम्' (ऋ. सं. १. ११६. ८) इति निगमः॥

**कुह स्थः कुह जग्मथुः कुह श्येनेव पेतथुः। अन्ति षद्भूतु वामवः॥ ४॥**

---

१. घ-न-भ-हे मित्रावरुणा। २. घ१-व्याप्नोतु नु शीघ्रं; य-व्याप्नोति। ३. ज्ञ-त१-२-भ-'वा' नास्ति। ४. त-भ१-२-श-उदक; भ३-उदके।

कुह॑ । स्थः॒ । कुह॑ । ज॒ग्म॒थुः॒ । कुह॑ । श्ये॒नाऽइ॑व । पेत॒थुः॒ ।
अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥ ४ ॥

हे अश्विनौ युवां कुह क्व स्थः भवथः । इदानीं कुह क्व कुत्र जग्मथुः गच्छथः स्वेच्छया । कुह क्व वा श्येनेव श्येनाविव शीघ्रपतनौ सन्तौ पेतथुः पतथः । एवमचिन्त्यस्वभावौ कृपया संनिहितौ भवतमिति शेषः । तादृशयोः अवः अन्तिके भवतु ॥

यद॒द्य कर्हि॒ कर्हि॑ चिच्छुश्रू॒यात॑मि॒मं हव॑म् । अन्ति॒ षद्भू॑तु वा॒मवः॑ ॥ ५ ॥

यत् । अ॒द्य । कर्हि॑ । कर्हि॑ । चि॒त् । शु॒श्रू॒यात॑म् । इ॒मम् । हव॑म् ।
अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥ ५ ॥

यत् यस्मान्न निर्धार्यतेऽतः अद्य अस्मिन् काले कर्हि कस्मिन्नपि देशे कर्हि कस्मिन्नपि काले इमं हवम् अस्मदीयमाह्वानं शुश्रूयातं शृणुयातम् ॥ ॥ १८ ॥

अ॒श्विना॑ याम॒हूत॑मा॒ नेदि॑ष्ठं याम्याप्य॑म् । अन्ति॒ षद्भू॑तु वा॒मवः॑ ॥ ६ ॥

अ॒श्विना॑ । या॒म॒ऽहूत॑मा । नेदि॑ष्ठम् । या॒मि॒ । आप्य॑म् । अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥६॥

यामहूतमा अतिशयेन काले ह्वातव्यौ अश्विना अश्विनौ यामि । नेदिष्ठम् अन्तिकतमम् आप्यं[1] बान्धवं च यामि तयोः ॥

अव॑न्त॒मत्र॑ये गृ॒हं कृ॑णु॒तं यु॒वम॑श्विना । अन्ति॒ षद्भू॑तु वा॒मवः॑ ॥ ७ ॥

अव॑न्तम् । अत्र॑ये । गृ॒हम् । कृ॒णु॒तम् । यु॒वम् । अ॒श्वि॒ना॒ । अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥७॥

हे अश्विना[2] युवं युवाम् अत्रये अग्न्यागारे दह्यमानाय अवन्तं रक्षन्तं[3] गृहं कृणुतं कृतवन्तौ । तादृशयोः वामवः भवतु । अवन्तमिति व्यत्ययेन पुंलिङ्गता ॥

वरे॑थे अ॒ग्निमा॒तपो॒ वद॑ते व॒ल्ग्वत्र॑ये । अन्ति॒ षद्भू॑तु वा॒मवः॑ ॥ ८ ॥

वरे॑थे॒ इति॑ । अ॒ग्निम् । आ॒ऽतपः॑ । वद॑ते । व॒ल्गु । अत्र॑ये । अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥८॥

हे अश्विनौ वल्गु मनोहरं वदते स्तुवते अत्रये आतपः आतपादौष्ण्यात् अग्निं वरेथे आवारयतम् ॥

प्र स॒प्तव॑ध्रिरा॒शसा॒ धारा॑म॒ग्नेर॑शायत । अन्ति॒ षद्भू॑तु वा॒मवः॑ ॥ ९ ॥

प्र । स॒प्तऽव॑ध्रिः । आ॒ऽश॒सा॑ । धारा॑म् । अ॒ग्नेः । अ॒शा॒य॒त॒ । अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥९॥

सप्तवध्रिः महर्षिर्हे अश्विनौ युवयोः आशसा आशंसनेन स्तुत्या मञ्जूषाया निर्गत्य अग्नेः धारां तस्यां मञ्जूषायां प्र[4] अशायत[4] आशाययत् । स्वनिरोधिकां[5] तां दग्धवानित्यर्थः । सप्तवध्रेः पेटिकान्तःप्रवेशोऽश्विनोरनुग्रहान्निर्गमश्च 'वि जिहीष्व वनस्पते' (ऋ. सं. ५. ७८. ५) इत्यत्र स्पष्टमुक्तम् ॥

---

१. ख-घ-ञ-त१-२—आप्यं प्राप्तव्यं । २. घ—आश्विनाश्विनौ । ३. ख-घ-त-न—रक्षतं; ग—रक्षितं । ४. ग—अशायत; ञ—अशायत्; त३-४-भ—आशायत । ५. ख—स्वस्वमिरोधिकं; ग-त-न-भ-श—स्वस्वनिरोधिकां ।

इहा गतं वृषण्वसू शृणुतं म इमं हवम् । अन्ति षद्भूतु वामवः ॥ १० ॥

इह । आ । गतम् । वृषण्वसू इति वृषण्ऽवसू । शृणुतम् । मे । इमम् । हवम् ।
अन्ति । सत् । भूतु । वाम् । अवः ॥ १० ॥

हे वृषण्वसू वर्षणधनावश्विनौ[1] इह अस्मिन् यज्ञे आ गतम् आगच्छतम् । तदर्थं मे मम इमं हवं शृणुतम् ॥　　॥ १९ ॥

किमिदं वां पुराणवज्जरतोरिव शस्यते । अन्ति षद्भूतु वामवः ॥ ११ ॥

किम् । इदम् । वाम् । पुराणऽवत् । जरतोःऽइव । शस्यते । अन्ति । सत् । भूतु । वाम् । अवः ॥ ११ ॥

हे अश्विनौ वां युवयोरर्थमागमनाय पुराणवत् पुराणयोरतिवृद्धयोरिव । तदेवाह । जरतोरिव शस्यते । पुनःपुनरागच्छतमिति शस्यते । किमिदम् । यथा लोके वृद्धो जीर्णो बहुवारमाहूतोऽपि नागच्छति तद्वद्युवामपीत्यर्थः । एवमनागमाद्ब्रवीति ॥

समानं वां सजात्यं समानो बन्धुरश्विना । अन्ति षद्भूतु वामवः ॥ १२ ॥

समानम् । वाम् । सऽजात्यम् । समानः । बन्धुः । अश्विना ।
अन्ति । सत् । भूतु । वाम् । अवः ॥ १२ ॥

हे अश्विना अश्विनौ वां युवयोः परस्परं सजात्यं समानजातित्वं समानम्[2] एकमेव । उभयोरप्यश्वरूपायाः सूर्यपत्न्या उत्पत्तेः सजात्यम् । तथा युवयोः बन्धुः बन्धकः स्तुवः समानः एक एव । अथवर्षिरहं समान एक एव बन्धुः ॥

यो वां रजांस्यश्विना रथो वियाति रोदसी । अन्ति षद्भूतु वामवः ॥ १३ ॥

यः । वाम् । रजांसि । अश्विना । रथः । विऽयाति । रोदसी इति ।
अन्ति । सत् । भूतु । वाम् । अवः ॥ १३ ॥

वां युवयोः यः रथः अस्ति स रथः रजांसि लोकान् रोदसी द्यावापृथिव्यौ च वियाति विशेषेण गच्छति । अतस्तेन रथेन शीघ्रमागच्छतमिति शेषः ॥

आ नो गव्येभिरश्व्यैः सहस्रैरुप गच्छतम् । अन्ति षद्भूतु वामवः ॥ १४ ॥

आ । नः । गव्येभिः । अश्व्यैः । सहस्रैः । उप । गच्छतम् ।
अन्ति । सत् । भूतु । वाम् । अवः ॥ १४ ॥

हे अश्विनौ नः अस्मान् सहस्रैः अपरिमितैः गव्येभिः[3] गोसमूहैः अश्व्यैः अश्वसमूहैश्च उप गच्छतम् ॥

मा नो गव्येभिरश्व्यैः सहस्रेभिरति ख्यतम् । अन्ति षद्भूतु वामवः ॥ १५ ॥

---

१. ख-त-श—वर्षणधर्मा°; ग—वृषणधना° । २. ख-ग-त-न-भ-श—समं । ३. ग-त-न-भ-श—'गव्येभिः' नास्ति ।

मा । नः । गव्येभिः । अश्व्यैः । सहस्रेभिः । अति । ख्यतम् ।
अन्ति । सत् । भूतु । वाम् । अवः ॥ १५ ॥

हे अश्विनौ ᵛगव्येभिः गोसमूहैः ᵛअश्व्यैः अश्वसमूहैः ᵛसहस्रेभिः सहस्रसंख्याकैः ᵛमा अस्मान् ᵛअति ᵛख्यतम्। अतीति प्रतीत्यस्मिन्नर्थे । मा निवारयतमित्यर्थः ॥

**अरुणप्सुरुषा अभूदकर्ज्योतिर्ऋतावरी । अन्ति षद्भूतु वामवः ॥ १६ ॥**

अरुणऽप्सुः । उषाः । अभूत् । अकः । ज्योतिः । ऋतऽवरी ।
अन्ति । सत् । भूतु । वाम् । अवः ॥ १६ ॥

हे अश्विनौ ᵛउषाः ᵛअरुणप्सुः शुभ्रवर्णा ᵛअभूत् भवति। न केवलं स्वयम्। ᵛज्योतिः तेजः[1] ᵛअकः[1] करोति ᵛअन्ति सर्वतः ᵛऋतावरी ऋतवत्युषाः[2] ॥

**अश्विना सु विचाकशद्वृक्षं परशुमाँइव । अन्ति षद्भूतु वामवः ॥ १७ ॥**

अश्विना । सु । विऽचाकशत् । वृक्षम् । परशुमान्ऽइव ।
अन्ति । सत् । भूतु । वाम् । अवः ॥ १७ ॥

ᵛसु ᵛविचाकशत् अत्यन्तं दीप्यमानः सूर्योऽग्निर्वा ᵛवृक्षं ᵛपरशुमानिव स यथा शकलयति तद्वत्तमो निशारयतीति शेषः । दृष्टान्तसामर्थ्यादेवं लभ्यते । यस्मादेवं तस्मात् ᵛअश्विना अश्विनावाह्वय इति शेषः ॥

**पुरं न धृष्णवा रुज कृष्णया बाधितो विशा । अन्ति षद्भूतु वामवः ॥१८॥**

पुरम् । न । धृष्णो इति । आ । रुज । कृष्णया । बाधितः । विशा ।
अन्ति । सत् । भूतु । वाम् । अवः ॥ १८ ॥

हे ᵛधृष्णो धर्षक सप्तवध्रे त्वं[3] ᵛकृष्णया आकर्षया ᵛविशा प्रवेशयन्त्या पेटिकया ᵛबाधितः त्वं ततो निर्गत्य तामेव ᵛआ ᵛरुज पीडय[4] अश्विनोरनुग्रहात्। एवं स्वयं स्वात्मानं प्रेष्यति। अथवा गोपवनः सप्तवध्रिमेवं ब्रवीति । ᵛवां युवयोः ᵛअवः रक्षणं गमनं वा समीपे । तत्र त्रिषु वर्गेषु ‘ अन्ति षत् ’ इत्युत्तरोऽर्धर्चोऽन्वितपदाध्याहारेण योज्यः ॥ ॥ २० ॥

‘ विशोविशो वः ’ इति पञ्चदशर्चं पञ्चमं सूक्तम् । अत्रेयमनुक्रमणिका—‘ विशोविशो वः पञ्चोनाग्नेयं त्वनुष्टुम्मुखास्तृचाश्चत्वारोऽन्त्यास्तिस्रोऽनुष्टुभ आर्क्षस्य श्रुतर्वणो दानस्तुतिः ’ इति। अनुवृत्तेर्गोपवन ऋषिः । आदितस्त्रिषु तृचेषु सर्वाः प्रथमा अनुष्टुभो द्वितीयातृतीये प्रागवत्सप्रपरिभाषया गायत्र्यौ त्रयोदश्याद्यास्तिस्रोऽनुष्टुभः । अस्योत्तरस्य चाग्निर्देवता। अन्त्यास्तिस्रः श्रुतर्वनाम्नो राज्ञो दानस्तुतिः। व्योमविश्वदेवस्तुतपञ्चशारदीयेष्विदं सूक्तमाज्यशस्त्रम्। सूत्रितं च—‘ विशोविशो वो अतिथिमित्याज्यम् ’ ( आश्व. श्रौ. ९. ८ ) इति ॥

**विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम् ।**
**अग्निं वो दुर्यं वचः स्तुषे शूषस्य मन्मभिः ॥ १ ॥**

---

१. ख-त-भ-श—तेजस्काकः। २. घ-सत्यवत्युषाः। ३. ग—‘ त्वं ’ नास्ति। ४. घ—पीडय दृष्टांतः पुरं न यथा पुरं शत्रुः पीडयति तद्वत्।

विशःऽविशः । वः । अतिथिम् । वाजऽयन्तः । पुरुऽप्रियम् ।
अग्निम् । वः । दुर्यम् । वचः । स्तुषे । शूषस्य । मन्मऽभिः ॥ १ ॥

हे अन्य ऋत्विजो यजमानाश्च ᵛवः यूयं ᵛवाजयन्तः अन्नमिच्छन्तः ᵛविशोविशः सर्वस्याः प्रजायाः ᵛअतिथिं पूज्यं ᵛपुरुप्रियं बहुप्रियम् ᵛअग्निं स्तुत्या परिचरतेति शेषः । अहं च ᵛवः युष्मदर्थं ᵛदुर्यं[1] गुहा हितं ᵛवचः ᵛस्तुषे ᵛशूषस्य[2] सुखस्य लाभाय । कैः साधनैः । ᵛमन्मभिः मननीयैः स्तोत्रैः ॥

यं जनासो हविष्मन्तो मित्रं न सर्पिरासुतिम् । प्रशंसन्ति प्रशस्तिभिः ॥२॥

यम् । जनासः । हविष्मन्तः । मित्रम् । न । सर्पिःऽआसुतिम् । प्रऽशंसन्ति । प्रशस्तिऽभिः ॥२॥

ᵛयम् अग्निं ᵛजनासः जना यजमानाः ᵛहविष्मन्तः सन्तः ᵛमित्रं ᵛन मित्रमिवादित्यमिव सखायमिव वा ᵛसर्पिरासुतिं सर्पिरासूयते हूयते यस्मिंस्तादृशं ᵛप्रशंसन्ति स्तुवन्ति ᵛप्रशस्तिभिः स्तुतिभिः स्तुव इति शेषः ॥

पन्यांसं जातवेदसं यो देवतात्युद्यता । हव्यान्यैरयद्दिवि ॥ ३ ॥

पन्यांसम् । जातऽवेदसम् । यः । देवऽताति । उत्ऽयता । हव्यानि । ऐरयत् । दिवि ॥३॥

ᵛपन्यांसम् अतिशयेन स्तोतारं साधु कृतमिति यजमानं स्तुवन्तं ᵛजातवेदसं जातधनं जातविद्यं वा स्तुव इति शेषः । ᵛयः अग्निः ᵛदेवताति देवतातौ यज्ञे ᵛउद्यता[3] उद्यतानि ᵛहव्यानि हवींषि ᵛदिवि ᵛऐरयत् प्रेरयति दिवि देवेभ्यः ॥

आगन्म वृत्रहन्तमं ज्येष्ठमग्निमानवम् ।
यस्य श्रुतर्वा बृहन्नार्क्षो अनीक एधते ॥ ४ ॥

आ । अगन्म । वृत्रहन्ऽतमम् । ज्येष्ठम् । अग्निम् । आनवम् ।
यस्य । श्रुतर्वा । बृहन् । आर्क्षः । अनीके । एधते ॥ ४ ॥

ᵛवृत्रहन्तमं पापानामतिशयेन हन्तारं ᵛज्येष्ठं प्रशस्यम्[4] ᵛआनवं[4] मनुष्यसंबन्धिनं तेषां हितकारिणम् ᵛअग्निम् ᵛआगन्म आगता वयम् । पूजार्थं बहुवचनम् । ᵛयस्य[5] अग्नेः ᵛअनीके ज्वालासंघे ᵛबृहन् महान् ᵛआर्क्षः ऋक्षपुत्रः ᵛश्रुतर्वा नाम राजा ᵛएधते वर्धते । कर्म करोतीत्यर्थः । तमग्निमागन्मेति समन्वयः । एवं श्रुतर्वाणं भिक्षयागतो गोपवनोऽग्निं स्तौति[6] ॥

अमृतं जातवेदसं तिरस्तमांसि दर्शतम् । घृताहवनमीड्यम् ॥ ५ ॥

अमृतम् । जातऽवेदसम् । तिरः । तमांसि । दर्शतम् । घृतऽआहवनम् । ईड्यम् ॥ ५ ॥

स एवागत्य स्तौति । ᵛअमृतम् अमरणं ᵛजातवेदसं जाततेजआद्युपलक्षणधनं ᵛतमांसि ᵛतिरः ᵛदर्शतं नाशयन्तमित्यर्थः । ᵛघृताहवनम् । घृतमाहूयते यत्र तम् । ᵛईड्यं स्तुत्यम् । ईदृशमागन्मेति संबन्धः ॥　　॥ २१ ॥

---

१. ख-त-न-भ१-दुर्गं । २. ग-शिष्यस्य; त-३-४-भ१-सूयस्य; श-सूर्यस्य । ३. ग-त३-४-भ-श-‘ उद्यता ’ नास्ति । ४. ख-ग-त-न-भ-श-प्रशस्यं मानवं । ५. भ-अस्य । ६. ख-त-भ१-श-स्तौमि ।

सबाधो यं जना इमे३ऽग्निं हव्येभिरीळते । जुह्वानासो यतस्रुचः ॥ ६ ॥

सुऽबाधः । यम् । जनाः । इमे । अग्निम् । हव्येभिः । ईळते । जुह्वानासः । यतऽस्रुचः ॥ ६ ॥

इमे सबाधः बाधसहिता अध्वर्य्वादयः यम् अग्निं हव्येभिः हविर्भिः ईळते स्तुवन्ति । कीदृशा जनाः । जुह्वानासः यागं कुर्वाणाः यतस्रुचः तदर्थं धृतस्रुग्दण्डाः । तमागन्मेति समन्वयः ॥

इयं ते नव्यसी मतिरग्ने अधाय्यस्मदा ।
मन्द्र सुजात सुक्रतोऽमूर दस्मातिथे ॥ ७ ॥

इयम् । ते । नव्यसी । मतिः । अग्ने । अधायि । अस्मत् । आ ।
मन्द्र । सुऽजात । सुक्रतो इति सुऽक्रतो । अमूर । दस्म । अतिथे ॥ ७ ॥

हे अग्ने इयम् इदानीं क्रियमाणा नव्यसी नवतरा स्तुतिः ते तव स्वभूता अस्मत् अस्मासु अधायि[1] धृताभूत् । वयं तव स्तुतिं कुर्म इत्यर्थः । हे मन्द्र मोदमान सुजात शोभनजनन सुक्रतो शोभनकर्मन् अमूर अमूढ दस्म दर्शनीय अतिथे अतिथिवत् पूज्य इत्यग्नेर्विशेषणानि ॥

सा ते अग्ने शंतमा चनिष्ठा भवतु प्रिया । तया वर्धस्व सुष्टुतः ॥ ८ ॥

सा । ते । अग्ने । शम्ऽतमा । चनिष्ठा । भवतु । प्रिया । तया । वर्धस्व । सुऽस्तुतः ॥ ८ ॥

हे अग्ने सा अस्माभिः क्रियमाणा स्तुतिः[2] शंतमा अत्यन्तं सुखकरा[3] चनिष्ठा अतिशयेनान्नवती ते तव प्रिया भवतु । तया स्तुत्या सुष्टुतः सुष्ठु स्तुतः सन् वर्धस्व प्रवृद्धो भव ॥

सा द्युम्नैर्द्युम्निनी बृहदुपोप श्रवसि श्रवः । दधीत वृत्रतूर्ये ॥ ९ ॥

सा । द्युम्नैः । द्युम्निनी । बृहत् । उपऽउप । श्रवसि । श्रवः । दधीत । वृत्रऽतूर्ये ॥ ९ ॥

सा अस्माभिः क्रियमाणा स्तुतिः द्युम्नैः द्योतमानैरन्नैः अस्मभ्यं[4] प्रदेयैः द्युम्निनी अन्नवती श्रवसि[5] पूर्वस्मिन् विद्यमानेऽन्ने[6] पुनरपि बृहत् महत् श्रवः अन्नम् उपोप[7] दधीत पुनरुपरि[8] धारयतु । कुत्रेति उच्यते । वृत्रतूर्ये संग्रामे । शत्रोः संबन्धीति यावत् ॥

अश्वमिद्गां रथप्रां त्वेषमिन्द्रं न सत्पतिम् ।
यस्य श्रवांसि तूर्वथ पन्यंपन्यं च कृष्टयः ॥ १० ॥

अश्वम् । इत् । गाम् । रथऽप्राम् । त्वेषम् । इन्द्रम् । न । सत्ऽपतिम् ।
यस्य । श्रवांसि । तूर्वथ । पन्यम्ऽपन्यम् । च । कृष्टयः ॥ १० ॥

गां गन्तारम् अश्वमित् । इच्छब्द इवार्थे । अश्वमिव । तं यथा स्तुवते तथेत्यर्थः । रथप्रां रथानामस्मदीयानां पूरयितारं धनैः तथा त्वेषं दीप्तमग्निं सत्पतिं सतां पालकम् इन्द्रं न इन्द्रमिवेमं

---

१. घ–आ अधायि । २. ख-ग-त-न-भ-श–‘स्तुतिः’ नास्ति । ३. ग–सुखकरी भ–सुखकरो । ४. त-भ-श–द्युरस्मभ्यं । ५. ख-त-न-भ-श–अस्यभ्यं सुश्रवसि; घ–सुश्रवसि । ६. ङ-त१-२–विद्यमानोन्नैः; त३-४–विद्यमानोन्न; श–अविद्यमानोत्र । ७. त-भ-श–उप । ८. ग-भ–पुनरपि ।

vकृष्टयः मनुष्याः परिचरतेति[1] शेषः। vयस्य अग्नेर्बलेन vश्रवांसि अन्नानि शत्रुसंबन्धीनि vतूर्वथ तथा vपन्यंपन्यं vच यद्यत् स्तुत्यं धनमस्ति तदपि तूर्वथ हिंस्थ ॥　　॥ २२ ॥

**यं त्वा गोपवनो गिरा चनिष्ठदग्ने अङ्गिरः। स पावक श्रुधी हवम् ॥ ११ ॥**

यम्। त्वा। गोपवनः। गिरा। चनिष्ठत्। अग्ने। अङ्गिरः। सः। पावक। श्रुधि। हवम् ॥ ११ ॥

हे vअग्ने vयं vत्वा त्वां vगोपवनः ऋषिः vगिरा स्तुत्या vचनिष्ठत् अतिशयेनान्नप्रदातारमकरोत् vसः तादृशाग्ने vअङ्गिरः सर्वत्र गन्तरङ्गिरसां मध्य एक वा vपावक शोधक vहवं गोपवनस्य vश्रुधि श्रृणु ॥

**यं त्वा जनास ईळते सबाधो वाजसातये। स बोधि वृत्रतूर्ये ॥ १२ ॥**

यम्। त्वा। जनासः। ईळते। सऽबाधः। वाजऽसातये। सः। बोधि। वृत्रऽतूर्ये ॥ १२ ॥

हे अग्ने vयं vत्वा त्वां vजनासः जनाः स्तोतारो वा vवाजसातये अन्नस्य लाभाय vसबाधः निर्बन्धरूपबाधोपेताः[2] सन्तः vईळते स्तुवन्ति vसः त्वं vवृत्रतूर्ये वैरिनाशनाय पापक्षयाय वा vबोधि बुध्यस्व। अथवा वृत्रतूर्ये संग्रामे बोधि ॥

**अहं हुवान आर्क्षे श्रुतर्वणि मदच्युति।**
**शर्धांसीव स्तुकाविनां मृक्षा शीर्षा चतुर्णाम् ॥ १३ ॥**

अहम्। हुवानः। आर्क्षे। श्रुतर्वणि। मदऽच्युति।
शर्धांसिऽइव। स्तुकाऽविनाम्। मृक्षा। शीर्षा। चतुर्णाम् ॥ १३ ॥

vअहम् ऋषिः vहुवानः हूयमानो यज्ञादिदक्षार्थं vश्रुतर्वणि एतन्नाम्नि राजनि vमदच्युति शत्रूणां मदस्य च्यावयितरि vस्तुकाविनाम्। स्तुकाविन ऊर्णायवः। स्तुकः केशसंघातः। तद्वतां vशर्धांसीव उच्छ्रितानि लोमानीव तानि यथा स्पृशन्ति तद्वत् vमृक्षा मृक्षाणि। मृक्ष्यन्त इति मृक्षाः केशाः। तद्वन्ति मृक्षाणि vशीर्षा[3] शीर्षाणि शिरांसि। केषाम्। vचतुर्णां श्रुतर्वणा प्रदत्तानामश्वानां शिरांस्युन्मृजामीति शेषः। अथवा मृक्षा मृक्षेण। म्रक्षनसाधनत्वाद्वृक्षो हस्तः। तेनोन्मृजामि[4] ॥

**मां चत्वार आशवः शविष्ठस्य द्रवित्नवः।**
**सुरथासो अभि प्रयो वक्षन्वयो न तुग्र्यम् ॥ १४ ॥**

माम्। चत्वारः। आशवः। शविष्ठस्य। द्रवित्नवः।
सुऽरथासः। अभि। प्रयः। वक्षन्। वयः। न। तुग्र्यम् ॥ १४ ॥

vमां vशविष्ठस्य अतिशयेनान्नवतः श्रुतर्वणो राज्ञः संबन्धिनः vचत्वारः vआशवः अश्वाः vद्रवित्नवः गमनशीलाः vसुरथासः शोभनरथा अश्वाः vप्रयः अन्नं शत्रूणां प्रति vअभि vवक्षन् अभिवहन्ति। vवयो[5] vन vतुग्र्यम्[5]। भुज्युं यथाश्विभ्यां प्रेरिताश्चतस्रो नावः स्वगृहं प्रापयन् तद्वदिति ॥

---

१. ख–परिचरंति; घ-त-न-भ–परिचरंतेति। २. ख-ग-घ१-ज्ञ-त१-४-भ-श–°वधोपेताः; च–°बंधोपेताः; त२-३–°बधोपेताः। ३. ग-त-भ-श–' शीर्षा ' नास्ति। ४. ख-त-न-भ-श–तेनोन्मृजानि। ५. ख-त१-२-न–तुग्रं; ग–तु उग्र्यं; घ–तुग्र्यं न; त३-४–तुग्र; भ–उग्र; ज्ञ-श–तुग्र्यं।

सत्यमित्त्वा महेनदि परुष्ण्यव देदिशम् ।
नेमापो अश्वदातरः शविष्ठादस्ति मर्त्यः ॥ १५ ॥

सत्यम् । इत् । त्वा । महेऽनदि । परुष्णि । अव । देदिशम् ।
न । ईम् । आपः । अश्वऽदातरः । शविष्ठात् । अस्ति । मर्त्यः ॥ १५ ॥

हे ^v^महेनदि[1] ^v^परुष्णि एतन्नामिके ^v^त्वा त्वां ^v^सत्यमित् सत्यमेव ^v^अव ^v^देदिशम् आदिशामि वदामि । नद्याकारेण संबोध्यापः संबोधयति । हे ^v^आपः ^v^ईम् अस्मात् ^v^शविष्ठात् बलवत्तमाच्छ्रुतर्वणोऽधिकः[2] कश्चित् ^v^अश्वदातरः अश्वानां दातृतमः ^v^मर्त्यः ^v^न ^v^अस्ति । परुष्ण्यास्तीरे राज्ञोऽश्वमेधप्रतिग्रहात्तां संबोध्य ब्रूते ॥ ॥ २३ ॥

'युक्ष्वा हि' इति षोडशर्चं षष्ठं सूक्तमाङ्गिरसस्य विरूपस्यार्षं गायत्रमाग्नेयम् । तथा चानुक्रमणिका—'युक्ष्वा हि षोळश विरूपः' इति । दशरात्रे तृतीयेऽहनीदं सूक्तमाज्यशस्त्रम् । सूत्रितं च—'तृतीये युक्ष्वा हीत्याज्यम्' ( आश्व. श्रौ. ७. १० ) इति । प्रातरनुवाकेऽप्याग्नेये गायत्रे छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च—'युक्ष्वा हि प्रेष्ठं वः' ( आश्व. श्रौ. ४. १३ ) इति ॥

युक्ष्वा हि देवहूतमाँ अश्वाँ अग्ने रथीरिव । नि होता पूर्व्यः सदः ॥ १ ॥

युक्ष्व । हि । देवऽहूतमान् । अश्वान् । अग्ने । रथीःऽइव । नि । होता । पूर्व्यः । सदः ॥१॥

हे ^v^अग्ने ^v^देवहूतमान् देवानामाह्वातृतमान् ^v^अश्वान् ^v^युक्ष्व योजय रथे । ^v^रथीरिव यथा रथी स्वाश्वानिष्टदेशगमनाय योजयति तद्वत् । तथा कृत्वा ^v^होता त्वं ^v^पूर्व्यः मुख्यः सन् ^v^नि ^v^षदः[3] उपविश[4] च ॥

उत नो देव देवाँ अच्छा वोचो विदुष्टरः । श्रद्विश्वा वार्या कृधि ॥ २ ॥

उत । नः । देव । देवान् । अच्छ । वोचः । विदुःऽतरः । श्रत् । विश्वा । वार्या । कृधि ॥२॥

हे ^v^देव अग्ने ^v^उत अपि च ^v^नः अस्मान् ^v^देवान् ^v^अच्छा ^v^वोचः अभिब्रूयाः । सम्यगनुष्ठितवन्त इति । तथा ^v^विदुष्टरः विद्वत्तमान् वोचः । तथा कृत्वा ^v^विश्वा सर्वाणि ^v^वार्या वरणीयानि धनानि देवसंबन्धीनि ^v^श्रत् सत्यानि ^v^कृधि कुर्वस्माकम् । अथवास्मदीयानि सर्वाणि वरणीयानि हवींषि श्रत् सत्यानि कुरु । देवान् प्रापयेत्यर्थः ॥

त्वं ह यद्यविष्ठ्य सहसः सूनवाहुत । ऋतावा यज्ञियो भुवः ॥ ३ ॥

त्वम् । ह । यत् । यविष्ठ्य । सहसः । सूनो इति । आऽहुत । ऋतऽवा । यज्ञियः । भुवः ॥३॥

हे अग्ने ^v^यविष्ठ्य युवतम ^v^सहसः ^v^सूनो बलस्य पुत्र ^v^आहुत सर्वतो हुत आहूत वा ^v^त्वं ^v^यत् यदा ^v^ह खलु ^v^ऋतावा सत्यवान् ^v^यज्ञियः यज्ञार्हश्च ^v^भुवः भवसि तदा वार्याणि श्रत्कुर्विति[5] संबन्धः ॥

दर्शपूर्णमासयोराग्नेयस्य 'अयमग्निः' इति वैकल्पिकी याज्या । सूत्रितं च—'अयमग्निः सहस्रिण इति वेदं विष्णुर्वि चक्रमे' ( आश्व. श्रौ. १. ६ ) इति ॥

---

१. ख-ग-श-महे महे नदि; घ-महे महते नदि । २. ख-ग-ज्ञ-त२-३-४-न-भ-श-°तर्वणो नाधि; घ१-°तर्वणः; च-°तर्वणादधिकः; त१-°तर्वणो नाधिकः । ३. त३-४-भ-श-षद । ४. ख-ग-त-भ-श-'उपविश' नास्ति । ५. ग-त-श्रुत्कुर्विति; भ-श्रुतकुर्विति; श-श्रु कुर्विति ।

अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः । मूर्धा कवी रयीणाम् ॥ ४ ॥

अयम् । अग्निः । सहस्रिणः । वाजस्य । शतिनः । पतिः । मूर्धा । कविः । रयीणाम् ॥४॥

ᵛअयमग्निः ᵛशतिनः ᵛसहस्रिणः चोक्तसंख्योपेतस्य ᵛवाजस्य अन्नस्य ᵛपतिः स्वामी ᵛमूर्धा शिरोवदुन्नतः श्रेष्ठः ᵛकविः मेधावी ᵛरयीणां धनानामपि पतिरिति शेषः । तदुभयं प्रयच्छत्वित्यर्थः ॥

तं नेमिमृभवो यथा नमस्व सहूतिभिः । नेदीयो यज्ञमङ्गिरः ॥ ५ ॥

तम् । नेमिम् । ऋभवः । यथा । आ । नमस्व । सहूतिऽभिः । नेदीयः । यज्ञम् । अङ्गिरः ॥५॥

हे ᵛअङ्गिरः त्वं ᵛसहूतिभिः समानाह्वानैरन्यैर्देवैः सह ᵛनेदीयः अन्तिकतमं ᵛयज्ञम्[1] ᵛआ ᵛनमस्व[1] आनमय । ᵛऋभवः ᵛनेमिं रथमिव[2] ॥ ॥ २४ ॥

तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम् ॥ ६ ॥

तस्मै । नूनम् । अभिऽद्यवे । वाचा । विऽरूप । नित्यया । वृष्णे । चोदस्व । सुऽस्तुतिम् ॥६॥

हे ᵛविरूप नानारूपैतन्नामक महर्षे त्वं ᵛतस्मै प्रसिद्धाय ᵛअभिद्यवे अभिगतदीप्तये ᵛवृष्णे वर्षकायाग्नये ᵛनित्यया उत्पत्तिरहितया ᵛवाचा मन्त्ररूपया ᵛसुष्टुतिं ᵛनूनम् इदानीं ᵛचोदस्व स्तुहीत्येवमृषिः स्वात्मानं ब्रवीति यजमानो वा होतारं विरूपम् ॥

कमु ष्विदस्य सेनयाग्नेरपाकचक्षसः । पणिं गोषु स्तरामहे ॥ ७ ॥

कम् । ऊँ इति । स्वित् । अस्य । सेनया । अग्नेः । अपाकऽचक्षसः ।

पणिम् । गोषु । स्तरामहे ॥ ७ ॥

ᵛअस्य ᵛअग्नेः ᵛअपाकचक्षसः अनल्पचक्षसोऽग्नेः ᵛसेनया ज्वालारूपया ᵛगोषु निमित्तेषु ᵛकमु ᵛष्वित् कं[3] खलु ᵛपणिं ᵛस्तरामहे । स्तरणं[4] हिंसनम्[4] । इदानीं बलिनमभिभवेमेत्यर्थः[5] ॥

मा नो देवानां विशः प्रस्नातीरिवोस्राः । कृशं न हासुरघ्न्याः ॥ ८ ॥

मा । नः । देवानाम् । विशः । प्रस्नातीःऽइव । उस्राः । कृशम् । न । हासुः । अघ्न्याः ॥८॥

ᵛदेवानां सर्वेषां ᵛविशः प्रजाभूतान् परिचारकान् ᵛनः अस्मान् ᵛमा हासीत् अग्निर्मा परित्यजतु । ᵛप्रस्नातीः[6] ᵛउस्राः[7] ᵛइव पयः क्षरन्तीर्गाव इव । ता यथा न मुञ्चन्ति । उभयमपि न परित्यजत्वित्यर्थः । किमिव । ᵛकृशम् अल्पं स्ववत्सम् ᵛअघ्न्याः गावो यथा ᵛन ᵛहासुः न परित्यजन्ति तद्वत् ॥

मा नः समस्य दूढ्यः परिद्वेषसो अंहतिः । ऊर्मिर्न नावमा वधीत् ॥ ९ ॥

मा । नः । समस्य । दुःऽध्यः । परिऽद्वेषसः । अंहतिः । ऊर्मिः । न । नावम् । आ । वधीत् ॥९॥

---

१. ख-घ-त–आनमस्व यज्ञं; ग-न-भ–आनमस्व । २. ग–अरमिव । ३. ख-त-भ-श–कः; ग–कमु; न–कुः । ४. ख–स्तरणिंसक; ग–स्तरणीं हिंसनं; ज्ञ-त३–स्तरणीं हिंसक; त४-न-भ-श–स्तरणं हिंसकं । ५. ख-ग-त-न-भ-श–°मभिभवामे° । ६. ख-भ१–प्रस्नवतीः; ग-भ२–प्रस्रवंतीः; त-भ३-श–प्रस्रवतीः । ७. ज्ञ-त३-श–उषा ।

ᵛसमस्य सर्वस्य ᵛपरिद्वेषसः परितो द्विषतः ᵛदूढ्यः[1] पापबुद्धेः ᵛअंहतिः हननं ᵛमा[2] ᵛआ ᵛवधीत् मा हिंस्यात्[2]। ᵛनावम् ᵛऊर्मिः समुद्रतरङ्ग इव। स यथा तां पीडयति तद्वन्मा वधीदित्यर्थः[3]। अत्र 'मा नः सर्वस्य दुर्धियः' (निरु. ५. २३) इत्यादि निरुक्तं द्रष्टव्यम्॥

**नम॑स्ते अग्न॒ ओज॑से गृ॒णन्ति॑ देव कृ॒ष्टयः॑। अमै॑र॒मित्र॑मर्दय॥ १०॥**

नमः॑। ते॒। अ॒ग्ने॒। ओज॑से। गृ॒णन्ति॑। दे॒व॒। कृ॒ष्टयः॑। अमैः॑। अ॒मित्र॑म्। अ॒र्द॒य॒॥ १०॥

हे ᵛअग्ने ᵛदेव ᵛते तुभ्यं ᵛनमः ᵛगृणन्ति नमस्कारशब्दमुच्चारयन्ति। किमर्थम्। ᵛओजसे बलाय। के। ᵛकृष्टयः मनुष्या यजमानाः। अतोऽहमपि गृणामीत्यर्थः। तथा ᵛअमैः बलैः ᵛअमित्रं शत्रुम् ᵛअर्दय नाशय॥ ॥ २५॥

ग्राम्येणाग्निना वैतानिकस्य संसर्गेऽग्नये संवर्गायेष्टिः कार्या। तत्र 'कुवित्सु नः' इत्यनुवाक्या 'मा नो अस्मिन्' इति याज्या। सूत्रितं च—'कुवित्सु नो गविष्टये मा नो अस्मिन्महाधने' (आश्व. श्रौ. ३. १३) इति॥

**कु॒वित्सु नो॒ गवि॑ष्टये॒ऽग्ने॑ सं॒वेषि॑षो र॒यिम्। उरु॑कृदु॒रु ण॑स्कृधि॥ ११॥**

कु॒वित्। सु। नः॒। गोऽइ॑ष्टये। अग्ने॑। स॒म्ऽवेषि॑षः। र॒यिम्। उरु॑ऽकृत्। उ॒रु। नः॒। कृ॒धि॒॥ ११॥

हे ᵛअग्ने त्वं ᵛनः अस्माकं ᵛगविष्टये गवामेषणाय ᵛकुवित् बहु ᵛरयिं धनं ᵛसंवेषिषः संप्रापय। ᵛउरुकृत् त्वं ᵛनः अस्मान्[4] ᵛउरु ᵛकृधि कुरु॥

**मा नो॑ अ॒स्मिन्म॑हाध॒ने परा॑ वर्ग्भार॒भृद्य॑था। सं॒व॒र्गं सं र॒यिं ज॑य॥ १२॥**

मा। न॒ः। अ॒स्मिन्। म॒हा॒ऽध॒ने। परा॑। व॒र्क्। भा॒र॒ऽभृत्। य॒था॒।
स॒म्ऽवर्ग॑म्। सम्। र॒यिम्। ज॒य॒॥ १२॥

ᵛनः अस्मान् ᵛअस्मिन् ᵛमहाधने संग्रामे ᵛमा ᵛपरा ᵛवर्क् मा परित्याक्षीः। ᵛभारभृद्यथा। भारवाही यथा भारमन्ते परित्यजति तद्वत्। ᵛसंवर्गं शत्रुभ्यः सहाच्छिद्यमानं ᵛरयिं धनं ᵛसं ᵛजय अस्मदर्थम्॥

**अ॒न्यम॒स्मद्भि॒या इ॒यमग्ने॒ सिष॑क्तु दु॒च्छुना॑। वर्धा॑ नो॒ अम॑व॒च्छवः॑॥ १३॥**

अ॒न्यम्। अ॒स्मत्। भि॒यै। इ॒यम्। अग्ने॑। सिस॑क्तु। दु॒च्छुना॑। वर्ध॑। नः॒। अम॑ऽवत्। शवः॑॥ १३॥

हे ᵛअग्ने त्वदीया ᵛइयं ᵛदुच्छुना बाधकसंहतिः ᵛअस्मत् ᵛअन्यम् अस्तोतारं ᵛभियै भयाय ᵛसिषक्तु सेवताम्। त्वं च ᵛनः अस्माकम् ᵛअमवत् बलोपेतं ᵛशवः वेगं ᵛवर्ध वर्धय संग्रामे॥

**यस्याजु॑षन्नम॒स्विनः॒ शमी॒मदु॑र्मखस्य वा। तं घेद॒ग्निर्वृ॒धाव॑ति॥ १४॥**

यस्य॑। अजु॑षत्। न॒म॒स्विनः॑। शमी॑म्। अदुः॑ऽमखस्य। वा॒।
तम्। घ॒। इत्। अ॒ग्निः। वृ॒धा। अ॒व॒ति॒॥ १४॥

ᵛयस्य ᵛनमस्विनः नमस्कारवतः ᵛअदुर्मखस्य ᵛवा अदुष्टयागस्य वा ᵛशमीं कर्म ᵛअजुषत् असेवत ᵛतं ᵛघेत् तमेव यजमानं संग्रामे ᵛअग्निर्विधावति विशेषेण गच्छति। अतो नमोयुक्ता अदुर्मखाश्च भवामेति भावः॥

---

१. ख-ग-घ-त-भ—दूर्ध्यः। २. ख-ज्ञ-त१-२—अस्मानावधीत् मा हिंस्यात्; घ—नोस्मान् मा वधीत् मा हिंस्यात्; त३-४-न-भ—आवधीत् मा हिंस्यात्। ३. ख-ग-त-न-भ-श—वधीरित्यर्थः। ४. घ—अस्मान् सु सुष्ठु।

परस्या अधि संवतोऽवराँ अभ्या तर। यत्राहमस्मि ताँ अव ॥ १५ ॥

परस्याः। अधि। सम्ऽवतः। अवरान्। अभि। आ। तर।

यत्र। अहम्। अस्मि। तान्। अव ॥ १५ ॥

हे अग्ने परस्याः अन्यस्याः संवतः सेनायाः अवरान् अन्यानस्मदीयान् अभि अभिमुखम् आ सर्वतः तर तारय। वैरिसेना अस्मद्भटैः पराभावयेत्यर्थः। यत्र येष्वस्मदीयपरिजनमध्ये अहमस्मि स्वामी[1] तानव रक्ष ॥

विद्मा हि ते पुरा वयमग्ने पितुर्यथावसः। अधा ते सुम्नमीमहे ॥ १६ ॥

विद्म। हि। ते। पुरा। वयम्। अग्ने। पितुः। यथा। अवसः।

अध। ते। सुम्नम्। ईमहे ॥ १६ ॥

हे अग्ने पितुः पालकस्य ते तव अवसः अवो रक्षणं पुरा यथा तथेदानीमपीति विद्म[2]। अध[3] तत् ते[3] तव सुम्नं सुखम् ईमहे याचामहे। अथवा पितुर्यथेति दृष्टान्तः। पितुः पालनं पुत्रो यथा वेत्ति तथेत्यर्थः ॥　　॥ २६ ॥

'इमं नु मायिनम्' इति द्वादशर्चं सप्तमं सूक्तम्। कुरुसुतिर्नाम काण्व ऋषिः। गायत्री छन्दः। इन्द्रो देवता। तथा चानुक्रान्तम्—'इमं नु द्वादश कुरुसुतिः काण्वः' इति। व्यूढे दशरात्रे चतुर्थेऽहनि मरुत्वतीय आद्यस्तृचः। सूत्रितं च—'इमं नु मायिनं हुवे त्यमु वः सत्रासाहम्' (आश्व. श्रौ. ८. ८) इति ॥

इमं नु मायिनं हुव इन्द्रमीशानमोजसा। मरुत्वन्तं न वृञ्जसे ॥ १ ॥

इमम्। नु। मायिनम्। हुवे। इन्द्रम्। ईशानम्। ओजसा। मरुत्वन्तम्। न। वृञ्जसे ॥ १ ॥

इमं मायिनं प्रज्ञावन्तम् ओजसा स्वबलेन ईशानं सर्वस्य स्वामिनं मरुत्वन्तं न। नेति संप्रत्यर्थे। मरुद्भिस्तद्वन्तमिदानीम् इन्द्रं वृञ्जसे शत्रूणां छेदनाय हुवे आह्वयामि ॥

अयमिन्द्रो मरुत्सखा वि वृत्रस्याभिनच्छिरः। वज्रेण शतपर्वणा ॥ २ ॥

अयम्। इन्द्रः। मरुत्ऽसखा। वि। वृत्रस्य। अभिनत्। शिरः। वज्रेण। शतऽपर्वणा ॥२॥

अयमिन्द्रो[4] मरुत्सखा मरुद्युक्तः वृत्रस्य वि अभिनत् व्यच्छिनत् शिरः वज्रेण शतपर्वणा शतसंधिना[4] ॥

वावृधानो मरुत्सखेन्द्रो वि वृत्रमैरयत्। सृजन्त्समुद्रिया अपः ॥ ३ ॥

ववृधानः। मरुत्ऽसखा। इन्द्रः। वि। वृत्रम्। ऐरयत्। सृजन्। समुद्रियाः। अपः ॥ ३ ॥

अयम् इन्द्रः वावृधानः वर्धमानः मरुत्सखा मरुत्सहायः वृत्रं मेघं वि ऐरयत् विदारितवान्। किं कुर्वन्। समुद्रियाः। समुद्रमन्तरिक्षम्। तत्संबन्धिन्यः अपः सृजन् ॥

---

१. ग–भवामि। २. ख-घ-ङ-त१-२–विद्म नर्व। ३. ख-त२-४-न–अधी तत्ते; ग–अधमः ते; घ–अतस्ते; ङ–अधित् ते; भ१–अधितस्ते; भ३–अधीतितस्ते; श-अधीते। ४. ख-ग-त-न-भ-श–अयमिंद्रो मरुद्युक्तो वृत्रस्य व्यच्छिनच्छिरो वज्रेण शतसंधिना ( ख-ङ-त३-४-भ१-२-श–शतशत° )।

षष्ठेऽहनि मरुत्वतीये 'अयं ह येन' इति मरुत्वन्निविद्धानीयः। सूत्रितं च—'अयं ह येन वा इदमुप नो हरिभिः सुतम्' (आश्व. श्रौ. ८. ८) इति ॥

**अयं ह येन वा इदं स्वर्मरुत्वता जितम्। इन्द्रेण सोमपीतये ॥ ४ ॥**

अयम्। ह। येन। वै। इदम्। स्वः। मरुत्वता। जितम्। इन्द्रेण। सोमऽपीतये ॥ ४ ॥

अयं ह[1] खल्विन्द्रः येन वै येन खलु मरुत्वता मरुद्भिर्युक्तेन इन्द्रेण इदं स्वः स्वर्गाख्यं स्थानमिदं स्वः सर्वं[2] कर्म[2] वा यद्वेदं सर्वं जगत् जितम्। किमर्थम्। सोमपीतये सोमपानाय ॥

**मरुत्वन्तमृजीषिणमोजस्वन्तं विरप्शिनम्। इन्द्रं गीर्भिर्हवामहे ॥ ५ ॥**

मरुत्वन्तम्। ऋजीषिणम्। ओजस्वन्तम्। विऽरप्शिनम्। इन्द्रम्। गीःऽभिः। हवामहे ॥५॥

मरुत्वन्तं मरुद्भिस्तद्वन्तम् ऋजीषिणम्। अभिषुतशेष ऋजीषः। स च तृतीयसवने पुनः सूयते। तद्वन्तम् ओजस्वन्तम्। ओजो नामाष्टमी दशा। शरीरवृद्ध्युपेतमित्यर्थः। विरप्शिनम्। महन्नामैतत्। महान्तमेवंमहानुभावम् इन्द्रं गीर्भिः स्तुतिभिः हवामहे आह्वयामः ॥

**इन्द्रं प्रत्नेन मन्मना मरुत्वन्तं हवामहे। अस्य सोमस्य पीतये ॥ ६ ॥**

इन्द्रम्। प्रत्नेन। मन्मना। मरुत्वन्तम्। हवामहे। अस्य। सोमस्य। पीतये ॥ ६ ॥

मरुत्वन्तम् इन्द्रं प्रत्नेन पुराणेन मन्मना मननीयेन स्तोत्रेण हवामहे अस्य सोमस्य पीतये पानाय ॥ ॥ २७ ॥

पञ्चमेऽहनि मरुत्वतीये 'मरुत्वाँ इन्द्र मीढ्वः' इति तृचो निविद्धानीयः। सूत्रितं च—'मरुत्वाँ इन्द्र मीढ्वस्तमिन्द्रं वाजयामसि' (आश्व. श्रौ. ८. ८) इति ॥

**मरुत्वाँ इन्द्र मीढ्वः पिबा सोमं शतक्रतो। अस्मिन्यज्ञे पुरुष्टुत ॥ ७ ॥**

मरुत्वान्। इन्द्र। मीढ्वः। पिब। सोमम्। शतक्रतो इति शतऽक्रतो।
अस्मिन्। यज्ञे। पुरुऽस्तुत ॥ ७ ॥

हे मीढ्वः फलस्य वृष्टेर्वा सेक्तः शतक्रतो बहुकर्मन् इन्द्र त्वं मरुत्वान्[3] सोमं पिब अस्मिन् यज्ञे हे पुरुष्टुत बहुभिराहूत ॥

**तुभ्येदिन्द्र मरुत्वते सुताः सोमासो अद्रिवः। हृदा हूयन्त उक्थिनः ॥ ८ ॥**

तुभ्य। इत्। इन्द्र। मरुत्वते। सुताः। सोमासः। अद्रिऽवः। हृदा। हूयन्ते। उक्थिनः ॥८॥

हे अद्रिवः वज्रवन् इन्द्र मरुत्वते तुभ्येत् तुभ्यमेव सोमासः सुताः अभिषुताः। ते च उक्थिनः शस्त्रवन्तः हृदा[4] मनसा भक्त्या[4] हूयन्ते त्वदर्थम् ॥

**पिबेदिन्द्र मरुत्सखा सुतं सोमं दिविष्टिषु। वज्रं शिशान ओजसा ॥ ९ ॥**

---

१. न-भ—ह अयं। २. ख-ग-त-न-भ-श—सर्वकर्म। ३. न-भ—मरुत्वान् सन्। ४. त३-४-न-भ श—'हृदा...भक्त्या' नास्ति।

पिब॑ । इत् । इ॒न्द्र॒ । म॒रु॒त्ऽस॑खा । सु॒तम् । सोम॑म् । दिवि॑ष्टिषु । वज्र॑म् । शिशा॑नः । ओज॑सा ॥९॥

हे ᵛइन्द्र ᵛमरुत्सखा त्वं ᵛसुतम् अभिषुतं ᵛसोमं ᵛपिब । किमर्थम् । ᵛदिविष्टिषु अस्माकमह्नामभिगमनेषु ᵛदिवः स्वर्गस्य वैषणेषु निमित्तेषु । पीत्वा च ᵛओजसा बलेन सोमपानजनितेन ᵛवज्रं ᵛशिशानः तीक्ष्णीकुर्वन् । शत्रूञ्जहीति भावः ॥

चतुर्विंशेऽहनि प्रातःसवने ब्राह्मणाच्छंसिशस्त्रे 'उत्तिष्ठन्' इति तृचः षळहस्तोत्रियः । सूत्रितं च—'उत्तिष्ठन्नोजसा सह भिन्धि विश्वा अप द्विष इति ब्राह्मणाच्छंसिनः' (आश्व. श्रौ. ७. २) इति ॥

**उ॒त्तिष्ठ॒न्नोज॑सा स॒ह पी॒त्वी शिप्रे॑ अवेपयः । सोम॑मिन्द्र च॒मू सु॒तम् ॥१०॥**

उ॒त्ऽतिष्ठ॑न् । ओज॑सा । स॒ह । पी॒त्वी । शिप्रे॒ इति॑ । अ॒वे॒प॒यः॒ ।
सोम॑म् । इ॒न्द्र॒ । च॒मू इति॑ । सु॒तम् ॥ १० ॥

हे ᵛइन्द्र त्वं ᵛपीत्वी पीत्वा ᵛओजसा बलेन ᵛसह ᵛउत्तिष्ठन् ᵛशिप्रे हनू ᵛअवेपयः अकम्पयः । मदावेशादिति भावः । किं पीत्वा । ᵛचमू चम्वोरधिषवणफलकयोः ᵛसुतं ᵛसोमम् ॥

**अनु॑ त्वा॒ रोद॑सी उ॒भे क्रक्ष॑माणमकृपेताम् । इन्द्र॒ यद्द॑स्यु॒हाभ॑वः ॥ ११ ॥**

अनु॑ । त्वा॒ । रोद॑सी॒ इति॑ । उ॒भे इति॑ । क्रक्ष॑माणम् । अ॒कृ॒पे॒ता॒म् ।
इन्द्र॑ । यत् । द॒स्यु॒ऽहा । अभ॑वः ॥ ११ ॥

हे ᵛइन्द्र ᵛक्रक्षमाणं शत्रून् विलिखन्तं ᵛत्वा त्वाम् ᵛउभे ᵛरोदसी उभे अपि द्यावापृथिव्यौ ᵛअनु ᵛअकृपेताम् अनुकल्पयेताम् । ᵛयत् यदा ᵛदस्युहा ᵛअभवः भवसि तदा ॥

**वाच॑म॒ष्टाप॑दीम॒हं नव॑स्रक्तिमृत॒स्पृश॑म् । इन्द्रा॒त्परि॑ त॒न्वं॑ ममे ॥ १२ ॥**

वाच॑म् । अ॒ष्टाऽप॑दीम् । अ॒हम् । नव॑ऽस्रक्तिम् । ऋ॒त॒ऽस्पृश॑म् ।
इन्द्रा॑त् । परि॑ । त॒न्व॑म् । म॒मे॒ ॥ १२ ॥

ᵛअष्टापदीम् । अष्टाभिर्दिग्भिर्विदिग्भिः साष्टापदी । ᵛनवस्रक्तिम् उपरि स्थितेनादित्येन नवस्रक्तिम् । आसु दिक्षु व्याप्तामित्यर्थः । ᵛऋतस्पृशं यज्ञस्पृशं ᵛवाचं स्तुतिम्[1] ᵛअहं[1] परिपूर्णात् ᵛइन्द्रात् ᵛतन्वं तनुं न्यूनां सतीं ᵛपरि ᵛममे । अन्यूनेयत्तां करोमीत्यर्थः । कार्त्स्न्येन स्वरूपं स्तुत्या विषयीकर्तुमशक्यत्वादिति भावः ॥ ॥ २८ ॥

'जज्ञानः' इत्येकादशर्चमष्टमं सूक्तं काण्वस्य कुरुसुतेरार्षम् । आद्या नव गायत्र्यो दशमी बृहत्येकादशी सतोबृहती । इन्द्रो देवता । तथा चानुक्रान्तं—'जज्ञान एकादश प्रगाथान्तम्' इति । महाव्रते निष्केवल्ये 'जज्ञानो नु शतक्रतुः' इत्येषा । तथैव पञ्चमारण्यके सूत्रितं—'जज्ञानो नु शतक्रतुरित्येका' (ऐ. आ. ५. २. ३) इति ॥

**ज॒ज्ञा॒नो नु श॒तक्र॑तु॒र्वि पृ॑च्छ॒दिति॑ मा॒तर॑म् । क उ॒ग्राः के ह॑ शृण्वि॒रे ॥ १ ॥**

ज॒ज्ञा॒नः । नु । श॒त॒ऽक्र॑तुः । वि । पृ॒च्छ॒त् । इति॑ । मा॒तर॑म् । के । उ॒ग्राः । के । ह॒ । शृ॒ण्वि॒रे॒ ॥१॥

---

१. ख–स्तुतिम; त-न-भ१-२-श–स्तुतिमयां; भ३–स्तुतिमयीं ।

अयमिन्द्रः जज्ञानो नु जायमान एव शतक्रतुः बहुकर्मा इति इत्थं मातरं स्वजननीं विपृच्छति । किमिति । क उग्राः उद्गूर्णबला लोके । के ह शृण्विरे श्रूयन्ते गुणैः । के विश्रुता इत्यर्थः ॥

आदीं शवस्यब्रवीदौर्णवाभमहीशुवम् । ते पुत्र सन्तु निष्टुरः ॥ २ ॥

आत् । ईम् । शवसी । अब्रवीत् । और्णऽवाभम् । अहीशुवम् । ते । पुत्र । सन्तु । निःऽतुरः ॥२॥

इन्द्रेण पृष्टा शवसी माता अनन्तरमेव[1] एनमिन्द्रम् अब्रवीत् । किमिति उच्यते । और्णवाभमहीशुवम्[2] एतन्नामानावसुरौ तिष्ठतः । तावुक्तावन्ये च तादृशा हे पुत्र तव निष्टुरः निस्तारणीयाः सन्तु इति ॥

समित्तान्वृत्रहाखिदत्खे अराँइव खेदया । प्रवृद्धो दस्युहाभवत् ॥ ३ ॥

सम् । इत् । तान् । वृत्रऽहा । अखिदत् । खे । अरान्ऽइव । खेदया ।
प्रऽवृद्धः । दस्युऽहा । अभवत् ॥ ३ ॥

तान् जनन्योक्तान् वृत्रहा इन्द्रः समित्[3] सहैव अखिदत्[3] । खेदनं नाम आकर्षणम् । खे रथचक्रस्य नाभौ[4] अरान् चक्राङ्गभूताञ्छङ्कून् खेदया रज्ज्वा इव । तया तान् यथा संखिदन्ति तद्वत् । तथा कृत्वा दस्युहा शत्रुघातीन्द्रः प्रवृद्धः अभवत् ॥

एकया प्रतिधापिबत्साकं सरांसि त्रिंशतम् । इन्द्रः सोमस्य काणुका ॥ ४ ॥

एकया । प्रतिऽधा । अपिबत् । साकम् । सरांसि । त्रिंशतम् । इन्द्रः । सोमस्य । काणुका ॥४॥

अयम् इन्द्रः एकया एकेन प्रतिधा प्रतिधानेन साकम्[5] एकधैव त्रिंशतम् अपि । उक्थपात्राणीत्यर्थः । कीदृशानि । सरांसि सोमस्य पूर्णानि सोमरसेन पूर्णानि काणुका कान्तानि क्रान्तानि वा सोमेन कृतानि वा सोमपूर्णानि अपिबत् पीतवान् माध्यंदिनसवने । याज्ञिकप्रसिद्ध्यैवम् । नैरुक्तप्रसिद्ध्या तु कालाभिमानीन्द्रः । त्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत् पूर्वपक्षस्य च सन्ति । तानेकरूपमनुभवतीति । एतत्सर्वम् ' एकेन प्रतिधानेनापिबत् ' ( निरु. ५. ११) इत्यादिनिरुक्ते तद्व्याख्याने च स्पष्टमुक्तम् । तदत्र द्रष्टव्यम् ॥

अभि गन्धर्वमतृणदबुध्नेषु रजःस्वा । इन्द्रो ब्रह्मभ्य इद्वृधे ॥ ५ ॥

अभि । गन्धर्वम् । अतृणत् । अबुध्नेषु । रजःऽसु । आ । इन्द्रः । ब्रह्मऽभ्यः । इत् । वृधे ॥५॥

अयम् इन्द्रः गन्धर्वम् । गामुदकं धारयतीति गन्धर्वो मेघः । तम् अभि आ अतृणत् सर्वतो हिंसितवान् । कुत्र । अबुध्नेषु पदनिधानयोग्यस्थानरहितेषु[6] रजःसु लोकेषु । अन्तरिक्षप्रदेशेष्वित्यर्थः । किमर्थम् । ब्रह्मभ्य इत् ब्राह्मणेभ्य एव वृधे वर्धनाय ॥ ॥ २९ ॥

निराविध्यद्गिरिभ्य आ धारयत्पक्वमोदनम् । इन्द्रो बुन्दं स्वाततम् ॥ ६ ॥

निः । अविध्यत् । गिरिऽभ्यः । आ । धारयत् । पक्वम् । ओदनम् ।
इन्द्रः । बुन्दम् । सुऽआततम् ॥ ६ ॥

---

१. घ–आदनंतरमेव; न-भ-आनंतरमेव । २. ख-त–°महीशुवं न; न-भ–°महीशुवं च । ३. त३-भ१-श–सह वै सह खिदत् । ४. घ–नाभौ अरानिव । ५. ख-त-श–सह; न-भ–सार्क सह । ६. ख-त-श–पदनिध्यान° ।

अयम् ᵛइन्द्रः ᵛगिरिभ्यः मेघेभ्यः सकाशादुदकं निर्गमयितुं ᵛनिराविध्यत् संप्राहरत्[1] तानेव मेघान्। किं कुर्वन्। ᵛपक्वं परिपक्वम् ᵛओदनं कुर्वन् मनुष्याणामर्थाय। केन साधनेनेति तदुच्यते। ᵛबुन्दम् इषुं ᵛस्वाततं सुष्ठु सर्वतो विस्तृतमादायेति शेषः॥

शतब्रध्न इषुस्तव सहस्रपर्ण एक इत्। यमिन्द्र चकृषे युजम्॥ ७॥

शतऽब्रध्नः। इषुः। तव। सहस्रऽपर्णः। एकः। इत्। यम्। इन्द्र। चकृषे। युजम्॥ ७॥

हे ᵛइन्द्र ᵛतव ᵛइषुः ᵛशतब्रध्नः शताग्रः ᵛसहस्रपर्णः सहस्रसंख्याकैः पत्रैः संवृतः शीघ्रगमनाय। अपरिमितगमनो वा। स च ᵛएक ᵛइत् एक एव। ᵛयं च इषुं ᵛयुजं सहायं ᵛचकृषे करोषि युद्धाय॥

तेन स्तोतृभ्य आ भर नृभ्यो नारिभ्यो अत्तवे। सद्यो जात ऋभुष्ठिर॥ ८॥

तेन। स्तोतृऽभ्यः। आ। भर। नृऽभ्यः। नारिऽभ्यः। अत्तवे। सद्यः। जातः। ऋभुऽस्थिर॥ ८॥

ᵛतेन इषुणा ᵛस्तोतृभ्यः अस्मभ्यं ᵛनृभ्यः मनुष्येभ्यः। पुत्रेभ्य इत्यर्थः। तथा ᵛनारिभ्यः स्त्रीभ्यश्च ᵛअत्तवे अदनाय पर्याप्तं धनम् ᵛआ ᵛभर आहर। ᵛसद्यः तदानीमेव ᵛजातः अस्माभिर्दत्तेन सोमेन प्रवृद्धः सन् हे ᵛऋभुष्ठिर। उरुः प्रभूतः स्थिरश्च संग्रामे स तथोक्तः। हे तादृशेन्द्र त्वमा भरेति समन्वयः॥

एता च्यौत्नानि ते कृता वर्षिष्ठानि परीणसा। हृदा वीड्वधारयः॥ ९॥

एता। च्यौत्नानि। ते। कृता। वर्षिष्ठानि। परीणसा। हृदा। वीळु। अधारयः॥ ९॥

हे इन्द्र ᵛते त्वया ᵛएता एतानि पुरतः सर्वैर्दृश्यमानानि ᵛवर्षिष्ठानि अतिशयेन प्रवृद्धानि ᵛपरीणसा परितो नतानि अत एव ᵛच्यौत्नानि[2] इति भावः[2]। भूमेः कीलवद्धारणाय ᵛकृता कृतानि। पर्वतास्त्वया कृता इत्यर्थः। या यानि ᵛहृदा बुद्ध्या ᵛवीळु स्थिराणि ᵛअधारयः। बुद्ध्या कर्तव्यानीति यान्यधारयः तानीमानीति॥

विश्वेत्ता विष्णुराभरदुरुक्रमस्त्वेषितः।
शतं महिषान्क्षीरपाकमोदनं वराहमिन्द्र एमुषम्॥ १०॥

विश्वा। इत्। ता। विष्णुः। आ। अभरत्। उरुऽक्रमः। त्वाऽइषितः।
शतम्। महिषान्। क्षीरऽपाकम्। ओदनम्। वराहम्। इन्द्रः। एमुषम्॥ १०॥

अस्या ऋचो नैरुक्तैतिहासिकमतभेदेन द्विधा योजना। नैरुक्तपक्षे तावत्। हे इन्द्र ᵛता तानि यानि त्वया स्रष्टव्यान्युदकानि सन्ति तानि ᵛविष्णुः व्यापनशील आदित्यः ᵛआभरत् आभरति। लोकाय प्रयच्छतीत्यर्थः। कीदृशो विष्णुः। ᵛउरुक्रमः बहुगतिः। किं स्वविरोधेन नेत्याह। ᵛत्वेषितः त्वया प्रेरितः। न केवलमुदकान्येव अपि च ᵛशतं ᵛमहिषान् शतसंख्याकान् पशून्। महिषशब्दो गवादेरप्युपलक्षकः। अथवा शतशब्दोऽपरिमितवचनो महिष इति महन्नाम। असंख्यातान् महतो यज्ञान् यजमानेभ्य आभरत् ददातीत्यर्थः। किंच ᵛक्षीरपाकं क्षीरपक्वम् ᵛओदनं पायसम्। एतच्चरुपुरोडाशादेरुपलक्षकम्। तद्यजमानेभ्य आभरत्। अथवा सवार्थं वृष्टिप्रदानद्वारौदनं प्राहरत्। किंच ᵛइन्द्रः[3]

१. घ–संप्रहरत्; त-श–संप्रहारन्; भ–संप्रहारत्। २. घ–च्यौलानि अत्युत्कृष्टानि तव बलानि। ३. ख-ग-त-न-श–नवानपींद्रो।

Vवराहं जलपूर्णं[1] मेघं[1] हन्तीति शेषः। कीदृशं तम्। Vएमुषम्। आ इत्यस्य स्थाने छान्दस एकारः। आमुषमुदकस्य मोषकमित्यर्थः। निरुक्तपक्ष एवम्। ऐतिहासिकपक्षे चरकब्राह्मण इतिहास आम्नायते। विष्णुर्यज्ञः। स देवेभ्य आत्मानमन्तरधात्। तमन्यदेवता नाविदन्निन्द्रस्त्ववेत्। स इन्द्रमब्रवीत्को भवानिति। तमिन्द्रः प्रत्यब्रवीदहं दुर्गाणामसुराणां च हन्ता भवांस्तु क इति। सोऽब्रवीदहं दुर्गादाहर्ता त्वं तु यदि दुर्गाणामसुराणां हन्ता ततोऽयं वराहो वाममुष[2] एकविंशत्याः[3] पुरां[3] पारेऽश्ममयीनां वसति तस्मिन्नसुराणां वसु वाममस्ति तमिमं जहीति। तस्येन्द्रस्ताः पुरो भित्त्वा हृदयमविध्यत्[4]। अधि तत्र यदासीत्तद्विष्णुराहरदिति। सोऽयमितिहासः 'अस्येदु मातुः सवनेषु' (ऋ. सं. १. ६१. ७) 'विश्वेत्ता विष्णुः' इत्याभ्यां प्रतिपादितः। तयोर्मध्ये 'अस्येदु मातुः' इत्यत्र विष्णुना हे इन्द्र त्वं दुर्गाणां हन्तेत्यात्मानं कथयसि तर्हि वाममुषं वराहमसुरं जहीत्युक्तार्थो 'विध्यद्वराहम्' इति पादेन प्रतिपादितः। इन्द्रेण च विष्णो त्वं दुर्गादाहर्तेति ब्रूषे मया पुराणि जितान्यसुरश्च घातितस्तस्य वामं वस्वानयेत्युक्तो विष्णुमूर्तिस्तस्य वराहासुरस्य धनं मुमोष। सोऽर्थः 'मुषायद्विष्णुः पचतम्' इति पादेन सूचितः। स किं पुनर्मुषितवानिति तदत्रोच्यते 'विश्वेत्ता' इति। हे इन्द्र त्वेषितस्त्वया प्रेरितो विष्णुर्यज्ञरूपी त्वेषितस्त्वं दुर्गादाहर्ता किल तर्हि त्वं तस्य धनान्याहरेति त्वया प्रेरितः सन्नुरुक्रमो भूत्वा विश्वेत्ता यानि त्वयाहर्तव्यानीत्युक्तानि यानि च तत्र स्थितानि तानि सर्वाण्याभरत् आभरतु। कानि तानीति। शतं महिषानपरिमितान् प्रशस्तान् पदार्थान् तेषां वाहनरूपान्[5] महिषान् वा क्षीरपाकमोदनं च पक्कमात्रमेवौदनं चाभरत्। 'विध्यद्वराहम्' इत्यत्रोक्तोऽर्थश्च चरमपादेनोच्यते। इन्द्रस्तु वराहं वराहारं स्वीकृतासुरसर्वस्वं वराहरूपिणं वैमुषमेमुषनामानमथवैमुषं धनानामामोषकं[6] वराहमसुरं हृदयेऽविध्यदिति शेषः ॥

तुवि॒क्षं ते॒ सुकृ॑तं सू॒मयं॒ धनु॑ः सा॒धुर्बु॒न्दो हि॑र॒ण्ययः॑ ।
उ॒भा ते॑ बा॒हू रण्या॒ सुसं॑स्कृत ऋदू॒पे चि॑दृदू॒वृधा॑ ॥ ११ ॥

तु॒वि॒ऽक्षम् । ते॒ । सु॒ऽकृ॑तम् । सु॒ऽमय॑म् । धनु॑ः । सा॒धुः । बु॒न्दः । हि॒र॒ण्ययः॑ ।
उ॒भा । ते॒ । बा॒हू इति॑ । रण्या॑ । सु॒ऽसं॑स्कृता । ऋ॒दु॒ऽपे । चि॒त् । ऋ॒दु॒ऽवृधा॑ ॥ ११ ॥

*एषा निरुक्त एकमपि पदं (अ)विहाय यास्केन व्याख्याता। तदेव लिख्यते—'तुविक्षं बहुविक्षेपं महाविक्षेपं वा ते सुकृतं सूमयं सुसुखं धनुः साधयिता ते बुन्दो हिरण्मयः। उभौ ते बाहू रण्यौ रमणीयौ सांग्राम्यौ[7] वर्दूपे अर्दनपातिनौ गमनपातिनौ[8] मर्मण्यर्दनवेधिनौ गमनवेधिनौ[8] वा' (निरु. ६. ३३) इति ॥ ॥ ३० ॥

'पुरोळाशं नः' इति दशर्चं नवमं सूक्तं काण्वस्य कुरुसुतेरार्षम्। आद्या नव गायत्र्यो दशमी बृहती। इन्द्रो देवता। तथा चानुक्रान्तं—'पुरोळाशं दश बृहत्यन्तम्' इति। सूक्तविनियोगो

---

१. ख-त१–जलपूर्ण एवं ब; ग-न-भ-श–जलपूर्ण एवं; ज्ञ-त३-४–जलपूर्णा एवं; त२–जलपूर्णागं। २. ख-त-श–वामसुषः; ग–वाममोष; भ१–वामनुषः। ३. ख-ग-त-भ१-श–एकविंशत्या पुरा। ४. ख-त–हृदम°; ग–हृदम°; श–हृदम°। ५. ग–आहाररूपान्।। ६. ख-त–धनानामोषकं; ग–इन्धनानां मोषकं। ७. ज्ञ-त१-न-भ१–संग्राम्यौ। ८. ख-ज्ञ-त१-२–गमनपातिनौ शब्दपातिनौ दूरपातिनौ वा मर्मण्यर्दनवेधिनौ गमनवेधिनौ शब्दवेधिनौ दूरवेधिनौ। *घ-मु-पुस्तकयोरस्य मन्त्रस्य भाष्यमेवं विद्यते–हे इंद्र ते तव धनुः तुविक्षं महाक्षेपं सुकृतं सूमयं सुसुखं च। ते बुंदः इषुः साधुः हिरण्ययः हिरण्मयः। ते उभा उभौ बाहू रण्या रमणीयौ सुसस्कृता सुष्ठुलंकृतौ ऋदूपे चित् संग्रामे अर्दनपातिनौ ऋदूवृधा हनवर्धनौ।

लैङ्गिकः । महाव्रते निष्केवल्ये गायत्रतृचाशीतावाद्यास्तिस्र ऋचः । तथा च सूत्रितं—'पुरोळाश नो अन्धस इति तिस्रः' ( ऐ. आ. ५. २. ३ ) इति ॥

पुरोळाशं नो अन्धस इन्द्र सहस्रमा भर । शता च शूर गोनाम् ॥ १ ॥

पुरोळाशम् । नः । अन्धसः । इन्द्र । सहस्रम् । आ । भर । शता । च । शूर । गोनाम् ॥ १

हे ᵛशूर[1] ᵛइन्द्र ᵛपुरोळाशं पुरो दीयमानमेतत्संज्ञकम् ᵛअन्धसः अन्नं[2] स्वीकृत्य ᵛगोनां गवां ᵛसहस्रं ᵛशता शतानि ᵛच ᵛनः[3] अस्मभ्यम् ᵛआ ᵛभर आहर। अथवा[3] नोऽस्मभ्यं पुरतो दीयमानमन्धसोऽन्धो व्यञ्जनं सहस्रं सहस्रसंख्याकं गोसहस्रं चाहरेति योज्यम् ॥

आ नो भर व्यञ्जनं गामश्वमभ्यञ्जनम् । सचा मना हिरण्यया ॥ २ ॥

आ । नः । भर । विऽअञ्जनम् । गाम् । अश्वम् । अभिऽअञ्जनम् । सचा । मना । हिरण्यया ॥ २

हे इन्द्र त्वं ᵛनः अस्मभ्यं ᵛव्यञ्जनं ᵛगामश्वमभ्यञ्जनं तैलं च ᵛआ[4] ᵛभर । ᵛमना मननीयानि ᵛहिरण्यया हिरण्मयान्युपकरणानि[5] ᵛसचा सहाभरेति ॥

उत नः कर्णशोभना पुरूणि धृष्णवा भर । त्वं हि शृण्विषे वसो ॥ ३ ॥

उत । नः । कर्णऽशोभना । पुरूणि । धृष्णो इति । आ । भर ।

त्वम् । हि । शृण्विषे । वसो इति ॥ ३ ॥

ᵛउत अपि च ᵛनः अस्मभ्यं ᵛकर्णशोभना कर्णाभरणानि ᵛपुरूणि बहूनि ᵛआ ᵛभर । हे ᵛधृष्णो धर्षकेन्द्र ᵛवसो वासयितरिन्द्र ᵛत्वं ᵛहि[6] खलु ᵛशृण्विषे श्रूयसे । किमिति । उदारोऽयमिन्द्र इति

नकीं वृधीक इन्द्र ते न सुषा न सुदा उत । नान्यस्त्वच्छूर वाघतः ॥ ४ ॥

नकीम् । वृधीकः । इन्द्र । ते । न । सुऽसाः । न । सुऽदाः । उत ।

न । अन्यः । त्वत् । शूर । वाघतः ॥ ४ ॥

हे ᵛइन्द्र ᵛते त्वत्तोऽन्यः कश्चित् ᵛवृधीकः वर्धयिता ᵛनकीं नैव । तथा ᵛसुषाः सुष्ठु संभक्ता संग्रामादौ त्वत्तोऽन्यः ᵛन । ᵛउत अपि च ᵛसुदाः सुदाता ᵛन । तथा हे ᵛशूर ᵛत्वत् त्वत्तोऽन्यः ᵛवाघतः । ऋत्विङ्नामैतत् । ऋत्विजो यजमानस्य नेता ᵛनान्यः अस्ति त्वामृते ॥

नकीमिन्द्रो निकर्तवे न शक्रः परिशक्तवे । विश्वं शृणोति पश्यति ॥ ५ ॥

नकीम् । इन्द्रः । निऽकर्तवे । न । शक्रः । परिऽशक्तवे । विश्वम् । शृणोति । पश्यति ॥ ५

अयम् ᵛइन्द्रः ᵛनिकर्तवे निकर्तुं ᵛनकीं नैव शक्यः । तथा ᵛशक्रः शक्तोऽयं ᵛपरिशक्तवे परिभावाय ᵛन शक्यत इति । स तु ᵛविश्वं ᵛशृणोति ᵛपश्यति च ॥ ॥ ३१ ॥

स मन्युं मर्त्यानामदब्धो नि चिकीषते । पुरा निदश्चिकीषते ॥ ६ ॥

---

१. ख-ग-त-न-भ-श-'शूर' नास्ति। २. घ-सोमं। ३. ख-ग-त-श-'नः ... अथवा' नास्ति ४. ख-त-न-भ-श-'आ' नास्ति। ५. ख-त-न-भ१-श-हिरण्यमयान्यु°। ६. ख-ग-त-न-भ-श-'हि' नास्ति। ७. ख-ग-त-न-भ-परिकर्तवे।

सः । मन्युम् । मर्त्यानाम् । अदब्धः । नि । चिकीषते । पुरा । निदः । चिकीषते ॥ ६ ॥

ᵛसः इन्द्रः ᵛमन्युं क्रोधम् । केषाम् । ᵛमर्त्यानाम् । ᵛअदब्धः केनाप्यहिंसितः सन् ᵛनि ᵛचिकीषते निकरोति । किं मन्युं प्राप्यैव नेत्याह । ᵛनिदः निन्दायाः ᵛपुरा पूर्वमेव ᵛचिकीषते । यदा तं निन्दितुमिच्छति कश्चित्ततः पूर्वमेव तं निकरोतीत्यर्थः ॥

क्रत्व इत्पूर्णमुदरं तुरस्यास्ति विधतः । वृत्रघ्नः सोमपाव्नः ॥ ७ ॥

क्रत्वः । इत् । पूर्णम् । उदरम् । तुरस्य । अस्ति । विधतः । वृत्रऽघ्नः । सोमऽपाव्नः ॥ ७ ॥

ᵛतुरस्य त्वरमाणस्य ᵛवृत्रघ्नः वृत्रं हतवतः ᵛसोमपाव्नः सोमपातुः ᵛउदरं[1] ᵛक्रत्व ᵛइत् कर्मणैव ᵛपूर्णम् ᵛअस्ति भवति । कस्य कर्मणेति उच्यते । ᵛविधतः परिचरतो यजमानस्य । यतः परिचरणाभावे तस्य कुक्षिपूर्त्यभावोऽतस्तत्पूर्तये परिचरतेति शेषः ॥

त्वे वसूनि संगता विश्वा च सोम सौभगा । सुदात्वपरिह्वृता ॥ ८ ॥

त्वे इति । वसूनि । समऽगता । विश्वा । च । सोम । सौभगा । सुऽदातु । अपरिऽह्वृता ॥८॥

हे इन्द्र ᵛत्वे त्वयि ᵛवसूनि धनान्यस्मदिष्टानि ᵛसंगता संगतानि । तथा हे ᵛसोम सोमवन्निन्द्र त्वयि ᵛविश्वा सर्वाणि ᵛसौभगा सौभाग्यानि संगतानि । तथा ᵛसुदातु सुदानानि ᵛअपरिह्वृता अकुटिलानि । अतस्तानि कुर्विति भावः । यद्वा । इन्द्रः सोमं पीत्वा सोम इत्यभिहितः सोमश्रुतेः ॥

त्वामिद्यवयुर्मम कामो गव्युर्हिरण्ययुः । त्वामश्वयुरेषते ॥ ९ ॥

त्वाम् । इत् । यवऽयुः । मम । कामः । गव्युः । हिरण्यऽयुः ।
त्वाम् । अश्वऽयुः । आ । ईषते ॥ ९ ॥

ᵛत्वामित् त्वामेव ᵛएषते । किम् । ᵛमम ᵛकामः । स कीदृशः । ᵛयवयुः यवेच्छुः सन्नेषते । तथा ᵛगव्युः सन्नेषते[2] । तथा ᵛहिरण्ययुः च सन्नेषते । तथा ᵛअश्वयुः च सन्नेषते । तं काममासेच्छं कुर्विति भावः ॥

तवेदिन्द्राहमाशसा हस्ते दात्रं चना ददे ।
दिनस्य वा मघवन्त्संभृतस्य वा पूर्धि यवस्य काशिना ॥ १० ॥

तव । इत् । इन्द्र । अहम् । आऽशसा । हस्ते । दात्रम् । चन । आ । ददे ।
दिनस्य । वा । मघऽवन् । समऽभृतस्य । वा । पूर्धि । यवस्य । काशिना ॥ १० ॥

हे ᵛइन्द्र[3] ᵛतवेत् तवैव ᵛआशसा आशंसनेन त्वमस्मदीयं क्षेत्रं यवसमृद्धं करोषीत्याशंसनेन ᵛहस्ते ᵛदात्रं ᵛचन लवनसाधनं दात्रमपि[4] ᵛआ ᵛददे स्वीकरोमि । किमनेन प्रयासेन । ᵛदिनस्य ᵛवा पूर्वमेव छिन्नस्य वा यवस्य ᵛसंभृतस्य[5] ᵛवा पूर्वमेव छित्वा निष्कृतस्य राशीकृतस्य वा ᵛयवस्य ᵛकाशिना मुष्टिना ᵛपूर्धि पूरय । आशंसनं देहि च[6] ॥ ॥ ३२ ॥

---

१. ख-त-न-भ१-२-श–उदकं । २. त-भ१-श–सत्वेषु ते । ३. घ–मघवन्निंद्र । ४. ख-घ-त-भ-श–दात्रमथ । ५. ख-ग-त-न-भ-श–'संभृतस्य' नास्ति । ६. ख–व; ग-त-न-भ-श– वा ।

'अयं कृत्नुः' इति नवर्चं दशमं सूक्तम्। अत्रेयमनुक्रमणिका—'अयं कृत्नुर्नव कृत्नुर्भार्गवः सौम्यमन्त्यानुष्टुप्' इति। भार्गवः कृत्नुर्ऋषिः। नवम्यनुष्टुप्। अष्टौ गायत्र्यः। सोमो देवता। विनियोगो लैङ्गिकः॥

अयं कृत्नुरगृभीतो विश्वजिदुद्भिदित्सोमः। ऋषिर्विप्रः काव्येन॥ १॥

अयम्। कृत्नुः। अगृभीतः। विश्वऽजित्। उत्ऽभित्। इत्। सोमः।
ऋषिः। विप्रः। काव्येन॥ १॥

अयं सोमः कृत्नुः कर्ता सर्वस्य अगृभीतः अन्यैरगृहीतः विश्वजित् सर्वस्य जेता उद्भित् फलस्योद्भेदकः। अथवा विश्वजिदुद्भिदौ सोमयागौ। तयोर्निष्पादकत्वात्तद्रूपः। ऋषिः ज्ञानवान् विप्रः मेधावी विप्रवत् पूज्यो विशेषेण पूरको वा। एवंमहानुभावः सोमः काव्येन स्तोत्रेण स्तुत्यो भवतीति शेषः॥

अभ्यूर्णोति यन्नग्नं भिषक्ति विश्वं यत्तुरम्। प्रेमन्धः ख्यन्निः श्रोणो भूत्॥२॥

अभि। ऊर्णोति। यत्। नग्नम्। भिषक्ति। विश्वम्। यत्। तुरम्।
प्र। ईम्। अन्धः। ख्यत्। निः। श्रोणः। भूत्॥ २॥

अयं सोमः यन्नग्नम् अस्ति तत् अभ्यूर्णोति आच्छादयति। यन्नग्नमिव विफलं वर्तते तदाच्छादयति[1] फलेन। अथवा वस्त्रं जनयन्नाच्छादयति। तथा यत् तुरम् आतुरं रुग्णं विश्वं तत् भिषक्ति भिषज्यति। यज्ञद्वारा स्वर्गसाधनेनौषधरूपेण[2] च शरीरसिद्धिसाधनश्च। अन्धः सन् अन्धोऽपि प्र ख्यत् पश्यति। श्रोणः[3] अपि[3] पङ्गुरपि[4] निः भूत् निर्भवति निर्गच्छति॥

त्वं सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्यः। उरु यन्तासि वरूथम्॥ ३॥

त्वम्। सोम। तनूकृत्ऽभ्यः। द्वेषःऽभ्यः। अन्यऽकृतेभ्यः। उरु। यन्ता। असि। वरूथम्॥३॥

हे सोम त्वं तनूकृद्भ्यः कृशीकुर्वद्भ्यः। अथवाङ्गानां विच्छेदकेभ्यः अन्यकृतेभ्यः द्वेषोभ्यः शत्रुकृतेभ्योऽप्रियेभ्यः। कृत्याभ्य इत्यर्थः। वरूथं वरकं[5] रक्षणम् उरु यन्तासि[6] भवसि स्तोतॄणाम्। 'अन्यकृतानि हि रक्षांसि' इति ब्राह्मणम्॥

त्वं चित्ती तव दक्षैर्दिव आ पृथिव्या ऋजीषिन्। यावीरघस्य चिद्द्वेषः॥४॥

त्वम्। चित्ती। तव। दक्षैः। दिवः। आ। पृथिव्याः। ऋजीषिन्।
यावीः। अघस्य। चित्। द्वेषः॥ ४॥

हे ऋजीषिन् तृतीयसवनगतेनर्जीषेण तद्वन् सोम त्वं तव चित्ती चित्त्या प्रज्ञया दक्षैः बलैश्च दिव आ दिवश्च। आ इति चार्थे। पृथिव्याः आ पृथिव्याश्च सकाशात् अघस्य चित् अस्माकमाहन्तुरपि द्वेषः शत्रोः कृत्यां यावीः पृथक्कुरु॥

---

१. ख-ग-त-न-श—तत्तदा°। २. ख—°साधनानीमौषध°; ग—°साधनानां नाम्नौषध°; घ-ज्ञ-त२—°साधनान ईमौषध°; त१—°साधनानिमौषध°; त३-४-न-भ—°साधनाननौषध°; श—°साधनानुनौषध°। ३. ख-घ-ज्ञ-त१-२—श्रोणः श्रोणोपि। ४. ग-त३-४-श—'पंगुरपि' नास्ति। ५. ग—वारकं। ६. ख-घ-ज्ञ-त१-२—यंतासि बहुकृत्।

अर्थिनो यन्ति चेदर्थं गच्छानिद्ददुषो रातिम् । ववृज्युस्तृष्यतः कामम् ॥ ५ ॥

अर्थिनः । यन्ति । च । इत् । अर्थम् । गच्छान् । इत् । ददुषः । रातिम् ।
ववृज्युः । तृष्यतः । कामम् ॥ ५ ॥

vअर्थिनः धनानि कामयमानाः vयन्ति vचेत् यन्ति च vअर्थं प्रति । गत्वा च vददुषः दातुः vरातिं दानं vगच्छानित् गच्छन्ति च । गतेषु मध्ये यं हे सोम त्वमनुगृह्णासि तस्य vतृष्यतः भिक्षमाणस्य vकामं vववृज्युः । पुनः कामानावर्जयन्ति[1] । तावत्पर्यन्तं पूरयन्तीत्यर्थः ॥ ॥ ३३ ॥

विदद्यत्पूर्व्यं नष्टमुदीमृतायुमीरयत् । प्रेमायुस्तारीदतीर्णम् ॥ ६ ॥

विदत् । यत् । पूर्व्यम् । नष्टम् । उत् । ईम् । ऋतऽयुम् । ईरयत् ।
प्र । ईम् । आयुः । तारीत् । अतीर्णम् ॥ ६ ॥

vयत् यदा vपूर्व्यं पुराणं vनष्टं स्वकीयं धनं vविदत् लभते नष्टधनः vईम् एनम् vऋतायुं नष्टधनलाभार्थं यज्ञकामम् vउत् vईरयत् प्रेरयति । धनं साधयतीत्यर्थः[2] ॥

सुशेवो नो मृळयाकुरदृप्तक्रतुरवातः । भवा नः सोम शं हृदे ॥ ७ ॥

सुऽशेवः । नः । मृळयाकुः । अदृप्तऽक्रतुः । अवातः । भव । नः । सोम । शम् । हृदे ॥७॥

हे vसोम पीतस्त्वं vनः अस्माकं vहृदे हृदये वर्तमानः vसुशेवः सुसुखः vमृळयाकुः सुखयिता vअदृप्तक्रतुः अप्रमत्तप्रज्ञः vअवातः अगमनश्च [ तव हृदये पीताय हृदय ? ] सं ( ?vशं ) भव । अपरो नः पूरणः ॥

मा नः सोम सं वीविजो मा वि बीभिषथा राजन् । मा नो हार्दि त्विषा वधीः ॥८॥

मा । नः । सोम । सम् । वीविजः । मा । वि । बीभिषथाः । राजन् ।
मा । नः । हार्दि । त्विषा । वधीः ॥ ८ ॥

हे vसोम पीतस्त्वं vनः अस्मान् vमा vसं vवीविजः । चलिताङ्गान् मा कार्षीः । हे vराजन् सोम अस्मान् vमा vवि vबीभिषथाः भीतान् मा कुरु । vनः अस्माकं vहार्दि हृदयं[3] vत्विषा दीप्त्या vमा vवधीः ॥

अव यत्स्वे सधस्थे देवानां दुर्मतीरीक्षे ।
राजन्नप द्विषः सेध मीढ्वो अप स्रिधः सेध ॥ ९ ॥

अव । यत् । स्वे । सधऽस्थे । देवानाम् । दुःऽमतीः । ईक्षे ।
राजन् । अप । द्विषः । सेध । मीढ्वः । अप । स्रिधः । सेध ॥ ९ ॥

---

१. ख-त-न—कामानां वर्जयंति; घ—कामानावर्जयति; भ—कामानां वर्जयंती; श—कामानां वर्जयेति । २. ख-ञ-त१-२—साधयतीत्यर्थः । तदा ईं अतीर्णमेनं यज्ञारंभिणं आयुः जीवनं प्र तारीत् प्रकर्षेण वर्धयेत् । ३. ख-ग-त-न-भ-श—हृदये ।

vस्वे vसधस्थे स्वकीये सहस्थाने गृहे vदेवानां vदुर्मतीः दुर्मतयो न प्रविशन्त्विति। vयत् यदा vअव vईक्षे अहं त्वं वेक्षसे तदा हे vराजन् vद्विषः अस्मद्द्वेष्टॄन् vअप vसेध। हे vमीढ्वः सोमरसस्य सेक्तः vस्रिधः हिंसकान् vअप vसेध। हिन्धीत्यर्थः ॥　॥ ३४ ॥

'नह्यन्यम्' इति दशर्चमेकादशं सूक्तम्। अत्रेयमनुक्रमणिका—'न ह्यन्यं दशैकद्यूनौंधसो गायत्रेऽन्त्या दैवी त्रिष्टुप्' इति। एकद्यूर्नाम नोधसः पुत्र ऋषिः। अन्त्या त्रिष्टुप्। सा च देवदेवत्या' शिष्टा गायत्र्य ऐन्द्र्यः। द्वितीये पर्याये मैत्रावरुणशस्त्र आदितोऽष्टर्चः। सूत्रितं च—'नह्यन्यं बळाकरमित्यष्टौ' (आश्व. श्रौ. ६. ४) इति। महाव्रते निष्केवल्ये गायत्रतृचाशीतावाद्या विनियुक्ता। तथा च पञ्चमारण्यके शौनकः—'नह्यन्यं बळाकरमित्येतां प्रत्यवदधाति' (ऐ. आ. ५. २. ३) इति ॥

नह्य१॒॑न्यं ब॒ळाक॑रं मर्डि॒तारं॑ शतक्रतो। त्वं न॑ इन्द्र मृळय ॥ १ ॥

न॒हि। अ॒न्यम्। ब॒ळा। अक॑रम्। म॒र्डि॒तार॑म्। श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो।

त्वम्। न॒ः। इ॒न्द्र॒। मृ॒ळ॒य॒ ॥ १ ॥

हे vशतक्रतो त्वत्तः vअन्यं vमर्डितारं सुखयितारं vबळा बट् सत्यं vन vअकरं न करोमि। तस्माद्धे vइन्द्र vत्वं vनः अस्मान् vमृळय ॥

यो न॒ः शश्व॑त्पु॒राविथामृ॑ध्रो॒ वाज॑सातये। स त्वं न॑ इन्द्र मृळय ॥ २ ॥

यः। न॒ः। शश्व॑त्। पु॒रा। आवि॑थ। अमृ॑ध्रः। वाज॑ऽसातये।

सः। त्वम्। न॒ः। इ॒न्द्र॒। मृ॒ळ॒य॒ ॥ २ ॥

vयः[2] vअमृध्रः अहिंसकः vनः अस्मान् vवाजसातये अन्नलाभाय vपुरा पूर्वम् vआविथ रक्षितवान्। हे vइन्द्र vस vत्वं vनः अस्मान् vशश्वत् सदा vमृळय सुखय[2] ॥

किम॒ङ्ग र॑ध्र॒चोद॑नः सुन्वा॒नस्या॑वि॒तेद॑सि। कु॒वित्स्वि॑न्द्र ण॒ः शक॑ः ॥ ३ ॥

किम्। अ॒ङ्ग। र॒ध्र॒ऽचोद॑नः। सु॒न्वा॒नस्य॑। अ॒वि॒ता। इत्। अ॒सि॒।

कु॒वित्। सु। इ॒न्द्र॒। न॒ः। शक॑ः ॥ ३ ॥

हे vइन्द्र त्वं vरध्रचोदनः। रध्रं राधकं चोदयतीति रध्रचोदनः। तादृशस्त्वं vसुन्वानस्य vअवितेदसि रक्षक एव भवसि। अतः vनः अस्माकं vकुवित् बहु vसु सुष्ठु vशकः अशकः शक्तो भव[3]। बहु धनं कुर्वित्यर्थः। अस्मान् वा बहु कुर्विति ॥

इन्द्र॒ प्र णो॒ रथ॑मव प॒श्चाच्चि॒त्सन्त॑मद्रिवः। पु॒रस्ता॑देनं मे कृधि ॥ ४ ॥

---

१. ख-त-श-देवत्या। २. ख-त-न-भ१-२-पुस्तकेष्वस्य मन्त्रस्य भाष्यं न विद्यते; ग-यस्त्वं नोस्मान् शश्वत् सर्वदा पुरा रक्षिथ अन्नलाभाय स त्वं नोस्मान् मृळय। त्वं च कीदृशः अमृध्रः अहिंसितः; श-य इंद्रः नोस्मान् पूर्वं शश्वद्बहुवारं वाजसातये अन्नलाभाय मृधः संग्रामात् आविथ रक्षितवानसि स तादृशस्त्वं इन्द्रं नः अस्मान् मृळय सुखय; ज्ञ-मु-हे इन्द्र यस्त्वममृध्रः शत्रुभिरहिंसितः सन् पुरा पूर्वस्मिन् काले शश्वत् बहुवारं नोस्मानाविथ रक्षितवानसि स त्वं नोस्मान् वाजसातयेऽन्नदानार्थं यद्वा अन्नसंभजनार्थं मृळय सुखय। ३. ख-त१-२-भ-अभवः।

इन्द्र॑ । प्र । नः॒ । रथ॑म् । अ॒व॒ । प॒श्चात् । चि॒त् । सन्त॑म् । अ॒द्रि॒ऽवः॒ ।
पु॒रस्ता॑त् । ए॒न॒म् । मे॒ । कृ॒धि॒ ॥ ४ ॥

हे इन्द्र नः रथं प्र अव प्ररक्ष । कीदृशं रथम् । पश्चाच्चित्सन्तम् । चिदप्यर्थे । अस्मत्समानरथानां पश्चाद्भूतमपि एनं मे रथं हे अद्रिवः वज्रवन्निन्द्र पुरस्तात् वर्तमानं कृधि कुरु ॥

**हन्तो॒ नु किमा॑ससे प्रथ॒मं नो॒ रथं॑ कृधि । उ॒प॒मं वा॑जयु श्रवः॑ ॥ ५ ॥**

हन्तो॒ इति॑ । नु । किम् । आ॒स॒से॒ । प्र॒थ॒मम् । नः॒ । रथ॑म् । कृ॒धि॒ । उ॒प॒ऽमम् । वा॒ज॒ऽयु । श्रवः॑ ॥ ५ ॥

हन्तेत्येतदादि मुख्यकृदामन्त्रितेन समानम् । हन्त[1] इन्द्र[1] नु इदानीं किं त्वं तूष्णीम् आससे । तत्र किं करोमीति चेदुच्यते[2] । नः रथं प्रथमं सर्वेषां मुख्यं कृधि कुरु । वाजयु[3] अस्माकमन्नमिच्छत्[3] श्रवः अन्नं हविर्लक्षणम् उपमम् । अन्तिकनामैतत् । तवान्तिकभूतं वर्तत इति शेषः । यस्मादेवं तस्माद्रथमस्मदीयं प्रथमं कृधीति ॥ ॥ ३५ ॥

**अवा॑ नो वाज॒युं रथं॑ सु॒करं॑ ते॒ किमित्परि॑ । अ॒स्मान्त्सु जि॒ग्युष॑स्कृधि ॥ ६ ॥**

अव॑ । नः॒ । वा॒ज॒ऽयुम् । रथ॑म् । सु॒ऽकर॑म् । ते॒ । किम् । इत् । परि॑ ।
अ॒स्मान् । सु । जि॒ग्युषः॑ । कृ॒धि॒ ॥ ६ ॥

हे इन्द्र नः वाजयुम् अन्नेच्छुं रथम् अव रक्ष संग्रामे । ते तव किमित् किमपि सर्वकर्तव्यजातं परि परितः सुकरं सुखेन कर्तव्यम् । तव कर्तुमशक्यं न किंचिदस्ति । यस्मादेवं तस्मात्[4] सु जिग्युषः सुष्ठु जेतॄन्[5] कुरु संग्रामे ॥

**इन्द्र॒ दृह्य॑स्व॒ पूर॑सि भ॒द्रा त॑ एति निष्कृतम् । इ॒यं धीर्ऋ॒त्विया॑वती ॥ ७ ॥**

इन्द्र॑ । दृह्य॑स्व । पूः । अ॒सि॒ । भ॒द्रा । ते॒ । ए॒ति॒ । निः॒ऽकृ॒तम् । इ॒यम् । धीः । ऋ॒त्विय॑ऽवती ॥ ७ ॥

हे इन्द्र त्वं दृह्यस्व दृढो भव संग्रामे । त्वं पूरसि पुरमसि । यथा पुरमविचलितं तद्वत्त्वमसि । अथवा । अस्मदीये यज्ञे दृढो भव । त्वं पुनरन्ययज्ञजिगमिषुर्मा भूः । त्वं पूः पूरकः कामानामसि । किमत्र विद्यत इति चेदुच्यते । निष्कृतं निष्कर्तारं ते त्वां भद्रा कल्याणी इयं धीः स्तुतिः क्रिया वा ऋत्वियावती । ऋतुशब्दः कालोपलक्षकः । स्वकालोपेता सती एति गच्छति । यद्वा । ते निष्कृतं स्थानमेति ॥

**मा सी॑मव॒द्य आ भा॑गु॒र्वी काष्ठा॑ हि॒तं धन॑म् । अ॒पावृ॑क्ता अर॒त्नयः॑ ॥ ८ ॥**

मा । सी॒म् । अ॒व॒द्ये । आ । भा॒क् । उ॒र्वी । काष्ठा॑ । हि॒तम् । धन॑म् । अ॒प॒ऽआवृ॑क्ताः । अ॒र॒त्नयः॑ ॥ ८ ॥

मा[6] अस्मान्[6] सीं सर्वतः अवद्यः निन्दा आ भाक् माभजतु । प्राप्नोतु न कुतश्चित् । पापरहितान् कुर्वित्यर्थः । किंच उर्वी काष्ठा बह्वन्तरालमाज्यन्तः । 'आज्यन्तोऽपि काष्ठोच्यते क्रान्त्वा स्थिता भवति[7]' (निरु. २. १५) इति यास्कः । तत्र हितं निहितं शत्रुसंबन्धि धनम् अस्माकं भवत्वित्यर्थः । अरत्नयः अरममाणाः शत्रवः अपावृक्ताः[8] सन्त्विति शेषः ॥

---

१. ग–हे इन्द्र; घ–हंतो हे इंद्र । २. ख-ग-त-श–चेत् । ३ घ–वाजयुः ···· °मिच्छन् । ४. न-भ–तस्मादस्मान् । ५. घ–जेतॄनस्मान् कृधि । ६. ख-त–तस्मात् । ७. ख-त-भ-श–भवंति । ८. ख–अपावृताः; ङ-त३-४-भ–अपावृत्ताः ।

तुरीयं नाम यज्ञियं यदा करस्तदुश्मसि । आदित्पतिर्न ओहसे ॥ ९ ॥

तुरीयम् । नाम । यज्ञियम् । यदा । करः । तत् । उश्मसि । आत् । इत् । पतिः । नः । ओहसे ॥९॥

हे इन्द्र त्वं ᵛयज्ञियं यज्ञसंबन्धि[1] ᵛतुरीयं चतुर्थं ᵛनाम ᵛयदा ᵛकरः करोषि ᵛतदुश्मसि कामयामहे । ᵛआदित् अनन्तरमेव नामकामानन्तरमेव ᵛपतिः पालकस्त्वं ᵛनः अस्मान् ᵛओहसे वहसि प्रापयसि । नक्षत्रनाम गुह्यं नाम प्रकाशं नामेति त्रीणि नामानि सोमयाजीति तुरीयं नाम तच्च यज्ञियम् ॥

अवीवृधद्वो अमृता अमन्दीदेकद्यूर्देवा उत याश्च देवीः ।
तस्मा उ राधः कृणुत प्रशस्तं प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १० ॥

अवीवृधत् । वः । अमृताः । अमन्दीत् । एकऽद्यूः । देवाः । उत । याः । च । देवीः ।
तस्मै । ऊँ इति । राधः । कृणुत । प्रऽशस्तम् । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥१०॥

इयं वैश्वदेवी । हे ᵛदेवाः हे ᵛअमृताः अमरणाः ᵛवः युष्मानयम् ᵛअवीवृधत् वर्धयति स्तुत्या ᵛअमन्दीत् तर्पयति सोमेन[2] ᵛएकद्यूः ऋषिरहम् । ᵛउत अपि च हे ᵛदेवीः देव्यो देवपत्न्यः ᵛयाश्च यूयं स्थ युष्मानप्यवीवृधदमन्दीच्च । ᵛतस्मै ᵛराधः धनं ᵛप्रशस्तं प्रवृद्धं ᵛकृणुत कुरुत । ᵛउ इति पूरण एवकारार्थो वा । ᵛप्रातः प्रातरेव ᵛमक्षु क्षिप्रं ᵛधियावसुः कर्मधन इन्द्रः ᵛजगम्यात् आगच्छतु । इन्द्रस्य देवस्वामित्वादाधिक्यद्योतनाय पुनरभिधानम् ॥ ॥ ३६ ॥ ॥ ८ ॥

नवमेऽनुवाके त्रयोदश सूक्तानि । तत्र 'आ तू न इन्द्र' इति नवर्चं प्रथमं सूक्तं कण्वपुत्रस्य कुसीदिन आर्षं गायत्रमैन्द्रम् । तथा चानुक्रम्यते—'आ तू नो नव कुसीदी काण्वः' इति । महाव्रते निष्केवल्ये गायत्रतृचाशीतावेतदादिके द्वे सूक्ते । तथैव पञ्चमारण्यके सूत्रितं च शौनकेन—'आ तू न इन्द्र क्षुमन्तमिति सूक्ते सूददोहाः' ( ऐ. आ. ५. २. ३ ) इति । द्वितीये पर्याये मैत्रावरुणशस्त्र आद्यस्तृचः स्तोत्रियः । सूत्रितं च—'आ तू न इन्द्र क्षुमन्तमा प्र द्रव परावतः' ( आश्व. श्रौ. ६. ४ ) इति ॥

आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय । महाहस्ती दक्षिणेन ॥ १ ॥

आ । तु । नः । इन्द्र । क्षुऽमन्तम् । चित्रम् । ग्राभम् । सम् । गृभाय । महाऽहस्ती । दक्षिणेन ॥१॥

हे ᵛइन्द्र ᵛमहाहस्ती महाहस्तवान् त्वं[3] ᵛतु[3] तदानीमेव ᵛनः अस्मभ्यं दातुं ᵛक्षुमन्तं शब्दवन्तम् । स्तुत्यमित्यर्थः[4] । ᵛचित्रं चायनीयं ᵛग्राभं ग्राहकं ग्रहणार्हं वा धनं ᵛदक्षिणेन हस्तेन ᵛआ ᵛसं ᵛगृभाय आभिमुख्येन संगृहाण ॥

विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघम् । तुविमात्रमवोभिः ॥ २ ॥

विद्म । हि । त्वा । तुविऽकूर्मिम् । तुविऽदेष्णम् । तुविऽमघम् । तुविऽमात्रम् । अवःऽभिः ॥२॥

हे इन्द्र ᵛत्वा त्वां ᵛविद्म ᵛहि जानीमः खलु । कीदृशमिति । ᵛतुविकूर्मिं बहुकर्माणं ᵛतुविदेष्णं बहुप्रदेयं ᵛतुविमघं[5] बहुधनं ᵛतुविमात्रं बहुप्रमाणम् ᵛअवोभिः युक्तम् ॥

नहि त्वा शूर देवा न मर्तासो दित्सन्तम् । भीमं न गां वारयन्ते ॥ ३ ॥

---

१. ख-घ-त-न-भ-श—यज्ञसंबंधिनं । २. त-न-श—सोमेनैकः; भ—मासेनैकः । ३. ख-त-न-भ-श—'त्वं तु' नास्ति । ४. भ—स्तुतमि° । ५. ख-न—तुवीमघं ।

नहि । त्वा । शूर । देवाः । न । मर्तासः । दित्संन्तम् । भीमम् । न । गाम् । वारयन्ते ॥३॥

हे ^v^शूर इन्द्र ^v^त्वा त्वां ^v^दित्सन्तं दातुमिच्छन्तं ^v^देवाः[1] ^v^नहि ^v^वारयन्ते न निवारयन्ति। तथा ^v^मर्तासः मर्त्या अपि ^v^न वारयन्ते। ^v^भीमं ^v^न ^v^गां भयजनकं[2] वृषभं[2] यवसे प्रवृत्तमिव। तं यथा वारयितुं न शक्नुवन्ति तद्वत् ॥

प्रथमे पर्यायेऽच्छावाकशस्त्रे 'एतो न्विन्द्रम्' इति तृचः। तथा च सूत्रितम्—'एतो न्विन्द्रं स्तवामेशानं मा नो अस्मिन्मघवन्' (आश्व. श्रौ. ६. ४) इति ॥

एतो न्विन्द्रं स्तवामेशानं वस्वः स्वराजम्। न राधसा मर्धिषन्नः ॥ ४ ॥

एतो इति । नु । इन्द्रम् । स्तवाम । ईशानम् । वस्वः । स्वऽराजम् ।
न । राधसा । मर्धिषत् । नः ॥ ४ ॥

हे अस्मदीया जनाः ^v^एतो आगच्छतैव ^v^नु क्षिप्रम्। किं कर्तुम्। ^v^स्तवाम ^v^इन्द्रम्। कीदृशं तम्। ^v^वस्वः वसुनः धनस्य ^v^ईशानं स्वामिनं ^v^स्वराजं स्वयमेव राजमानं[3] स्वर्गे[4] राजमानं[4] वा। ^v^नः अस्मान् इन्द्रेणानुगृहीतान् ^v^राधसा धनेनान्यो धनी ^v^न ^v^मर्धिषत् न बाधताम्। आढ्यानामस्मत्समानानामप्याढ्यत्वाय स्तवामेत्यर्थः ॥

प्र स्तोषदुप गासिषच्छ्रवत्साम गीयमानम्। अभि राधसा जुगुरत् ॥५॥

प्र । स्तोषत् । उप । गासिषत् । श्रवत् । साम । गीयमानम् । अभि । राधसा । जुगुरत् ॥५॥

*पूर्वमन्त्रे स्तवामेत्युक्तम्। तदेव स्तोत्रमिन्द्रः ^v^प्र ^v^स्तोषत्। प्रस्तुत्वा च ^v^गासिषत्[5] उपगानं च करोतु। तदर्थं ^v^गीयमानं ^v^साम स्तोत्रं ^v^श्रवत् शृणोतु। ^v^राधसा धनेन च[6] युक्तोऽस्मान्[6] ^v^अभि ^v^जुगुरत् अभिगृणातु स्वीकुर्विति ॥ ॥ ३७ ॥

आ नो भर दक्षिणेनाभि सव्येन प्र मृश। इन्द्र मा नो वसोर्निर्भाक् ॥६॥

आ । नः । भर । दक्षिणेन । अभि । सव्येन । प्र । मृश । इन्द्र । मा । नः । वसोः । निः । भाक् ॥६॥

हे ^v^इन्द्र ^v^नः अस्मभ्यम् ^v^आ ^v^भर। आहृत्य ^v^दक्षिणेन ^v^सव्येन च हस्तेनोभाभ्यां हस्ताभ्याम् ^v^अभि ^v^प्र ^v^मृश। प्रयच्छेत्यर्थः। ^v^नः अस्मान् ^v^वसोः धनात् ^v^मा ^v^निर्भाक् मा निर्भाक्षीः ॥

द्वितीये पर्यायेऽच्छावाकशस्त्रे 'उप क्रमस्व' इति तृचः। सूत्रितं च—'उप क्रमस्वा भर धृषता तदस्मै नव्यम्' (आश्व. श्रौ. ६. ४) इति ॥

उप क्रमस्वा भर धृषता धृष्णो जनानाम्। अदाशूष्टरस्य वेदः ॥ ७ ॥

उप । क्रमस्व । आ । भर । धृषता । धृष्णो इति । जनानाम् । अदाशूःऽतरस्य । वेदः ॥ ७ ॥

---

१. ख-त-न-भ-श–'देवाः' नास्ति। २. ख-त-श–भयजनकं वृष्णं; भ–जनभयजनकं वृष्णं। ३. ख-ज्ञ-त१-२–'राजमानं' नास्ति। ४. त३-४-श–'स्वर्गे राजमानं' नास्ति। * ग–पुस्तकेऽस्य मन्त्रस्य भाष्यमेवं विद्यते–सोता इन्द्रं प्रस्तोतु। उपगासिषदुपगानं च करोतु। गीयमानं साम श्रवत् शृणोतु। राधसा धनेन प्रसाधनेन वा युक्तोऽस्मानभिजुगुरदभिगृणातु स्वीकुर्विति। ५. भ३–उपगासिषत्। ६. त-भ१–चायुक्तो°; ग-श–वायुक्तो°।

हे इन्द्र त्वम् <sup>v</sup>उप <sup>v</sup>क्रमस्व धनं प्रत्युपगच्छ। प्रवृत्तो भव वा दातुम्। हे <sup>v</sup>धृष्णो धर्षक शत्रूणां <sup>v</sup>धृषता धृष्टेन चेतसा युक्तः सन् <sup>v</sup>आ <sup>v</sup>भर आहर च। कस्य धनमाहरेति उच्यते। <sup>v</sup>जनानां मध्ये <sup>v</sup>अदाशूष्टरस्य अत्यन्तमदातृतमस्य <sup>v</sup>वेदः धनम्॥

**इन्द्र य उ नु ते अस्ति वाजो विप्रेभिः सनित्वः। अस्माभिः सु तं सनुहि॥८॥**

इन्द्र। यः। ऊँ इति। नु। ते। अस्ति। वाजः। विप्रेभिः। सनित्वः।
अस्माभिः। सु। तम्। सनुहि॥८॥

हे <sup>v</sup>इन्द्र <sup>v</sup>यः <sup>v</sup>वाजः अन्नं <sup>v</sup>विप्रेभिः मेधाविभिः <sup>v</sup>सनित्वः संभजनीयः <sup>v</sup>ते तव <sup>v</sup>अस्ति <sup>v</sup>तं[1] वाजम् <sup>v</sup>अस्माभिः याचितः सन् अस्मभ्यं वा <sup>v</sup>सु सुष्ठु <sup>v</sup>सनुहि देहि॥

**सद्योजुवस्ते वाजा अस्मभ्यं विश्वश्चन्द्राः। वशैश्च मक्षू जरन्ते॥९॥**

सद्यःऽजुवः। ते। वाजाः। अस्मभ्यम्। विश्वऽचन्द्राः। वशैः। च। मक्षु। जरन्ते॥९॥

हे इन्द्र <sup>v</sup>ते तव <sup>v</sup>वाजाः <sup>v</sup>अस्मभ्यं <sup>v</sup>सद्योजुवः शीघ्रं गन्तारो भवन्तु। कीदृशास्ते। <sup>v</sup>विश्वचन्द्राः[2] सर्वहिरण्योपेता बहूनामाह्लादका वा। अस्मदीयाश्च जनाः <sup>v</sup>वशैः कामैरनेकैर्युक्ताः <sup>v</sup>मक्षु शीघ्रं <sup>v</sup>जरन्ते स्तुवन्ति॥ ॥ ३८ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश ऋक्संहिताभाष्ये
षष्ठाष्टके पञ्चमोऽध्यायः॥

---

॥ श्रीगणेशाय नमः॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥

'आ प्र द्रव' इति नवर्चं द्वितीयं सूक्तम्। तथा चानुक्रम्यते—'आ प्र द्रव' इति। 'ऋषिश्चान्यस्मात्' इति परिभाषया काण्वः[3] कुसीदृषिः। प्रागवत्सप्रीयपरिभाषया गायत्री छन्दः। अनादेशपरिभाषयेन्द्रो देवता। महाव्रते निष्केवल्ये सूक्तविनियोग उक्तः। द्वितीये रात्रिपर्याये मैत्रावरुणशस्त्रे 'आ प्र द्रव' इति तृचोऽनुरूपः। सूत्रितं च—'आ प्र द्रव परावतो नह्यन्यं बळाकरमित्यष्टौ' ( आश्व. श्रौ. ६. ४ ) इति॥

**आ प्र द्रव परावतोऽर्वावतश्च वृत्रहन्। मध्वः प्रति प्रभर्मणि॥१॥**

आ। प्र। द्रव। पराऽवतः। अर्वाऽवतः। च। वृत्रऽहन्। मध्वः। प्रति। प्रऽभर्मणि॥१॥

हे <sup>v</sup>वृत्रहन् अपामावरकस्य वृत्रासुरस्य हन्तर्हे इन्द्र <sup>v</sup>प्रभर्मणि। प्रकृष्टानि भर्माणि भरणानि पशुग्रहादिसंपादनानि यस्मिन् स प्रभर्मा यज्ञः। यद्वा। प्रकृष्टाः कर्मणि कुशला भर्माणो देवानां हविष्प्रदानेन पोषका ऋत्विजो यस्मिन्निति स तथोक्तः। एतादृशे यज्ञे <sup>v</sup>मध्वः मदकरान् सोमान् <sup>v</sup>प्रति <sup>v</sup>परावतः विप्रकृष्टात् दूरस्थाद्देशादपि <sup>v</sup>अर्वावतश्च समीपस्थाद्देशादपि आभिमुख्येन <sup>v</sup>प्र <sup>v</sup>द्रव त्वं त्वरयागच्छ। मध्व इति 'वा छन्दसि' इति पूर्वसवर्णदीर्घाभावः॥

---

१. ख-त-न-भ१-२-श—तथा; ग—तथा तं। २. ख-ग-भ३-श—विश्वश्चंद्राः। ३. ख-घ-त-न-भ—कण्वः।

तीव्राः सोमास आ गहि सुतासो मादयिष्णवः । पिबा दधृग्यथोचिषे ॥ २ ॥

तीव्राः । सोमासः । आ । गहि । सुतासः । मादयिष्णवः । पिब । दधृक् । यथा । ओचिषे ॥२॥

हे इन्द्र ^तीव्राः तीव्रमदाः । क्षिप्रं मदकारिण इत्यर्थः । ^मादयिष्णवः मादनशीला मादनकारिणो वेमे ^सोमासः सोमाः ^सुतासः त्वदर्थमभिषुताः । तस्मात् ^आ ^गहि अस्मदीयं यज्ञं प्रत्यागच्छ । आगत्य च तान् ^पिब । सोमपाने कारणमाह । त्वं ^यथा ^दधृक् धृष्टस्तत्प्रीतौ प्रगल्भः संस्तान् ^ऊचिषे[1] समवैषि सेवसे । ततस्तान् यथाकामं पिबेत्यर्थः । दधृगिति 'ञिधृषा प्रागल्भ्ये' इत्यस्मात् 'ऋत्विग्दधृक्' इत्यादिना क्विन्प्रत्ययान्तो निपात्यते । ऊचिषे । 'उच समवाये' । छान्दसे लिटि रूपम् ॥

इषा मन्दस्वादु तेऽरं वराय मन्यवे । भुवत्त इन्द्र शं हृदे ॥ ३ ॥

इषा । मन्दस्व । आत् । ऊँ इति । ते । अरम् । वराय । मन्यवे ।

भुवत् । ते । इन्द्र । शम् । हृदे ॥ ३ ॥

हे ^इन्द्र ^इषा सोमलक्षणेनान्नेन ^मन्दस्व मोदस्व हृष्टो भव । ^उ इत्यवधारणे । ^आत् अनन्तरमेव ^ते तव ^वराय शत्रुनिवारकाय ^मन्यवे क्रोधाय स सोमः ^अरम् अलं पर्याप्तो भवतु । क्रोधशमने समर्थो भवतु । यदा सोमं पिबति तदा मन्युं त्यजतीत्यर्थः । किंच ^ते तव ^हृदे हृदये स सोमः ^शं शंकरः सुखकरः ^भुवत् भवतु ॥

तृतीये पर्याये 'आ त्वशत्रो' इत्यनुरूपस्तृचः । सूत्रितं च—'आ त्वेता नि षीदता त्वशत्रवा गहि' ( आश्व. श्रौ. ६. ४ ) इति ॥

आ त्वशत्रवा गहि न्युक्थानि च हूयसे । उपमे रोचने दिवः ॥ ४ ॥

आ । तु । अशत्रो इति । आ । गहि । नि । उक्थानि । च । हूयसे । उपऽमे । रोचने । दिवः ॥४॥

हे ^अशत्रो सपत्नरहित । अस्य बहुविधबलत्वाद्रणाभिमुखं गन्तारः शत्रवो न सन्तीत्यर्थः । तादृशेन्द्र ^तु क्षिप्रम् ^आ[2] ^गहि[2] आयाहि अस्मद्यज्ञं प्रत्यागच्छ । यतः ^दिवः स्वतेजसा दीप्यमानात् द्युलोकात् । तत्रस्थैर्देवैरित्यर्थः । ^रोचने अग्निभिर्दीप्यमाने लोके च ^उपमे समीपे । स्तोतारः स्तोत्रशस्त्रात्मकं शब्दं कुर्वन्त्यत्रेत्युपमो यज्ञः । तस्मिन्नस्मदीये यज्ञे ^च ^उक्थानि त्रिवृत्पञ्चदशादिलक्षणानि स्तोत्राणि प्रति ^नि ^हूयसे त्वं स्तोतव्यतया नितरामाहूयसे । यस्मादेवं तस्मादागच्छेति समन्वयः ॥

तुभ्यायमद्रिभिः सुतो गोभिः श्रीतो मदाय कम् । प्र सोम इन्द्र हूयते ॥५॥

तुभ्य । अयम् । अद्रिऽभिः । सुतः । गोभिः । श्रीतः । मदाय । कम् ।

प्र । सोमः । इन्द्र । हूयते ॥ ५ ॥

हे ^इन्द्र ^अद्रिभिः अभिषवसाधनैर्ग्रावभिः ^अयं ^सोमः तुभ्यं त्वदर्थं ^सुतः अभिषुतः । ततो दशापवित्रेण पूत्वा ^गोभिः गोविकारैः क्षीरादिभिः ^श्रीतः सोऽस्माभिः परावत[3] एव[3] संस्कृतः सोमस्तव ^मदाय मदार्थं ^कं सुखेन ^प्र ^हूयते अग्नौ स्वाहा क्रियते । तस्मादागत्य सोमं पिब ॥ ॥१॥

---

१. घ–ऊचिषे ओचिषे । २. ख-ग-त-न-भ-श–'आ गहि' नास्ति । ३. घ–'परावत एव' नास्ति ।

**इन्द्र॑ श्रु॒धि सु मे॒ हव॑म॒स्मे सु॒तस्य॒ गोम॑तः । वि पी॒तिं तृ॒प्तिम॑श्नुहि ॥ ६ ॥**

इन्द्र॑ । श्रु॒धि । सु । मे॒ । हव॑म् । अ॒स्मे इति॑ । सु॒तस्य॑ । गोऽम॑तः ।
वि । पी॒तिम् । तृ॒प्तिम् । अ॒श्नु॒हि॒ ॥ ६ ॥

हे ᵛइन्द्र ᵛमे[1] मदीयं ᵛहवं त्वद्विषयमाह्वानं ᵛसु सुष्ठु ᵛश्रुधि शृणु । तथा ᵛअस्मे अस्माभिः ᵛसुतस्य अभिषुतस्य ᵛगोमतः गव्यक्षीरवतः । क्षीरेण मिश्रितस्येत्यर्थः । तादृशस्य सोमस्य ᵛपीतिं पानं ᵛवि ᵛअश्नुहि विविधं प्राप्नुहि[2] । तत्पानेन विविधां ᵛतृप्तिं च गच्छ । ‘ अशू व्याप्तौ ’ । व्यत्ययेन परस्मैपदम् ॥

तृतीये पर्याय एवाच्छावाकशस्त्रे ‘ य इन्द्र चमसेषु ’ इति तृचः । सूत्रितं च—‘ य इन्द्र चमसेष्वा सोमः प्र वः सताम् ’ ( आश्व. श्रौ. ६. ४ ) इति ॥

**य इ॑न्द्र चम॒सेष्वा सोम॑श्च॒मूषु॑ ते सु॒तः । पिबेद॑स्य॒ त्वमी॑शिषे ॥ ७ ॥**

यः । इ॒न्द्र॒ । च॒म॒सेषु॑ । आ । सोमः॑ । च॒मूषु॑ । ते॒ । सु॒तः ।
पिब॑ । इत् । अ॒स्य॒ । त्वम् । ई॒शि॒षे॒ ॥ ७ ॥

हे ᵛइन्द्र ᵛते त्वदर्थं ᵛसुतः अभिषुतः ᵛयः ᵛसोमः ᵛचमसेषु एतन्नामकेषु पात्रेषु तथा ᵛचमूषु । चमन्ति यजन्त्यत्रेति[3] चम्वो ग्रहाः । तेषु च ᵛआ सर्वतः अस्ति ᵛअस्य तमेतं सोमं ᵛपिबेत् । इदवधारणे । पिबैव । कथमस्य सोमपानयोग्यता तत्राह । हे इन्द्र ᵛत्वमीशिषे तस्य त्वमेवेश्वरो भवसि खलु । यत एवं ततः पिबेति समन्वयः । ‘ ईश ऐश्वर्ये ’ । लटि ‘ ईशः से ’ ( पा. सू. ७. २. ७७ ) इतीडागमः ॥

**यो अ॒प्सु च॒न्द्रमा॑इव॒ सोम॑श्च॒मूषु॒ ददृ॑शे । पिबेद॑स्य॒ त्वमी॑शिषे ॥ ८ ॥**

यः । अ॒प्ऽसु । च॒न्द्रमाः॑ऽइव । सोमः॑ । च॒मूषु॑ । ददृ॑शे । पिब॑ । इत् । अ॒स्य॒ । त्वम् । ई॒शि॒षे॒ ॥८॥

हे इन्द्र ᵛयः गृहीतः ᵛसोमः ᵛचमूषु ग्रहेषु ᵛददृशे अन्तर्दृश्यते । तत्र दृष्टान्तः । ᵛचन्द्रमाइव यथा चन्द्रमाः ᵛअप्सु अन्तरिक्षे निर्मलतया दृश्यते तद्वत् । यद्वा । अप्सूदकेषु चन्द्रमाः प्रतिबिम्बतया नानाविधो दृश्यते तथाष्टग्रहेष्वनेकरूपः सन् दृश्यते तमेतं सोमं पिबैव यतस्त्वमेवेशिषे खलु ॥

**यं ते॑ श्ये॒नः प॒दाभ॑रत्ति॒रो रजां॒स्यस्पृ॑तम् । पिबेद॑स्य॒ त्वमी॑शिषे ॥ ९ ॥**

यम् । ते॒ । श्ये॒नः । प॒दा । आ । अभ॑रत् । ति॒रः । रजां॑सि । अस्पृ॑तम् ।
पिब॑ । इत् । अ॒स्य॒ । त्वम् । ई॒शि॒षे॒ ॥ ९ ॥

हे इन्द्र ᵛश्येनः शंसनीयः पक्षी । पक्षिरूपधारिणी गायत्रीत्यर्थः । स पक्षी ᵛरजांसि अन्तरिक्षादिलोकस्थितान् सोमपालान् गन्धर्वान् ᵛतिरः तिरः[4] कुर्वन्[4] ᵛअस्पृतं शत्रुभिरस्पृष्टं सन्तं ᵛयं सोमं ᵛते त्वदर्थं ᵛपदा पद्भ्याम् ᵛआभरत् । पदेति सवनद्वयाभिप्रायम् । सवनद्वय आहृतं सोमं त्वं पिब । गायत्री पक्षिरूपं धारयित्वा पद्भ्यां सोममाहरदित्यत्रार्थे यजुर्ब्राह्मणं—‘ पद्भ्यां द्वे सवने समगृह्णान्मुखेनैकं[5] तस्माद्द्वे सवने शुक्रवती प्रातःसवनं च माध्यंदिनं च ’ ( तै. सं. ६. १. ६. ४ ) इति । तं पिबैव । त्वमेव तस्येश्वरो भवसि ॥　　॥ २ ॥

---

१. ख-त-श-‘ मे ’ नास्ति । २. ख-प्राश्नुहि । ३. ख-त४-न-जयंत्यत्रेति; ग-भक्षयंत्यत्रेति; झ-त१-२-३-जयंतीत्यत्रेति । ४. घ-झ-तिरस्कुर्वन् । ५. श-तै. सं.-°मुखेनैकं यन्मुखेन समगृह्णात्तदधयत् ।

'देवानाम्' इति नवर्चं तृतीयं सूक्तं काण्वस्य कुसीदिन आर्षं गायत्रं वैश्वदेवम्। तथा चानुक्रम्यते–'देवानां वैश्वदेवम्' इति। दशरात्रेऽष्टमेऽहनि वैश्वदेवशस्त्र इदं सूक्तं वैश्वदेवनिविद्धानम्। सूत्रितं च—'देवानामिदव इति वैश्वदेवम्' (आश्व. श्रौ. ८. १०) इति॥

देवानामिदवो महत्तदा वृणीमहे वयम्। वृष्णामस्मभ्यमूतये॥ १॥

देवानाम्। इत्। अवः। महत्। तत्। आ। वृणीमहे। वयम्। वृष्णाम्। अस्मभ्यम्। ऊतये॥१॥

हे देवाः ᵛदेवानां स्वतेजसा सर्वतो दीप्यमानानाम्। ᵛइत् एवार्थे। युष्माकमेव ᵛमहत् व्यासं महनीयं वा ᵛअवः पालनं यद्विद्यते तत् ᵛवृष्णां कामानां वर्षितॄणां युष्माकं स्वभूतं ᵛतत् रक्षणं यजमानाः ᵛवयम् ᵛआ ᵛवृणीमहे समन्तात्संभजामहे। किमर्थम्। ᵛअस्मभ्यमूतये। पूर्वमस्मभ्यमस्मदर्थमिति साधारण्येनोक्त्वा तद्विशिनष्टि ऊतय इति। अस्माकं पालनायेति॥

ते नः सन्तु युजः सदा वरुणो मित्रो अर्यमा। वृधासश्च प्रचेतसः॥२॥

ते। नः। सन्तु। युजः। सदा। वरुणः। मित्रः। अर्यऽमा। वृधासः। च। प्रऽचेतसः॥ २॥

ᵛते देवाः ᵛवरुणः शत्रूणां निवारकः ᵛमित्रः सर्वेषां मित्रभूतः ᵛअर्यमा सततं गच्छन् एतन्नामकास्ते त्रयो देवाः ᵛसदा सर्वदा सर्वेषु कालेषु ᵛनः अस्माकं ᵛयुजः सहायाः ᵛसन्तु भवन्तु। अग्निहोत्रादिकर्मणि इन्द्रादिदेवाः सहागमनादियज्ञपरिसमापनान्तेषु साहाय्यं कुर्वन्त्वित्यर्थः। ततः ᵛप्रचेतसः प्रकृष्टज्ञानाः। यद्वा। चेतः स्तोत्रम्। शोभनस्तुतयः[1]। ते देवाः ᵛवृधासः वर्धकाः ᵛच अस्माकं धनादिदानेन वर्धयितारश्च सन्तु॥

अति नो विष्पिता पुरु नौभिरपो न पर्षथ। यूयमृतस्य रथ्यः॥ ३॥

अति। नः। विष्पिता। पुरु। नौभिः। अपः। न। पर्षथ। यूयम्। ऋतस्य। रथ्यः॥३॥

ᵛऋतस्य सत्यस्य यज्ञस्य वा हे ᵛरथ्यः नेतारो देवाः। यद्वा। ऋतस्येति संबन्धित्वात्कर्ताक्षिप्यते। यज्ञस्य साधका हे रथ्यो रथवन्तो देवाः ᵛविष्पिता विष्पितानि विप्राप्तानि विततानि ᵛपुरु। सुपो लुक्। पुरूणि बहूनि शत्रुबलानि कर्माणि वा ᵛनः[2] अस्मान् ᵛअति ᵛपर्षथ[2] पारं[2] समाप्तिं रक्षणैर्गमयत[3]। तत्र दृष्टान्तः[4]। ᵛनौभिरपो ᵛन। यथा नाविकोऽप उदकानि नौभिर्जनांस्तीरं प्रति प्रापयति तद्वत्॥

वामं नो अस्त्वर्यमन्वामं वरुण शंस्यम्। वामं ह्यावृणीमहे॥ ४॥

वामम्। नः। अस्तु। अर्यमन्। वामम्। वरुण। शंस्यम्। वामम्। हि। आऽवृणीमहे॥४॥

हे ᵛअर्यमन् देव ᵛवामं वननीयं संभजनीयं धनं ᵛनः अस्माकम् ᵛअस्तु भवतु। हे ᵛवरुण ᵛशंस्यं सर्वं शंसनीयं स्तुत्यं ᵛवामं धनमस्माकमस्तु। कुतः। हिशब्दो हेतौ। यस्मात्कारणाद्वयं ᵛवामं धनं युष्मान् ᵛआवृणीमहे याचामह इत्यर्थः। तस्मान्नोऽस्त्वित्याशास्ते॥

वामस्य हि प्रचेतस ईशानासो रिशादसः। नेमादित्या अघस्य यत्॥ ५॥

१. ख-त-भ-श-शोभनास्तुतयः। २. ग-त३-४-श–'नः ...पर्षथ' नास्ति। ख-ज्ञ-त१-२-भ२-य–नोऽस्मान् यूयं अतिपर्षथ। ३. ख-ज्ञ-त१-२-भ-य–बलानि चेत् तेषां ('बलानि .. तेषां' नास्ति–भ१) वधेन अतीत्य गमयत (गमेयत–ज्ञ-त१-२-भ) कर्माणि चेत् नोऽस्मदीयानि कर्माणि पारं समाप्तिं रक्षणैर्गमयत। ४. ख-त-भ-श–दृष्टांतः नः।

वामस्य । हि । प्रऽचेतसः । ईशानासः । रिशादसः । न । ईम् । आदित्याः । अघस्य । यत् ॥५॥

हे ^v^प्रचेतसः प्रकृष्टज्ञानाः शोभनस्तुतयो वा हे ^v^रिशादसः रिशतां हिंसतां शत्रूणामसितारः क्षेप्तारो देवा यूयं ^v^वामस्य वननीयस्य धनस्य ^v^ईशानासः ईशानाः । हिरवधारणे । ईशाना एव स्वामिन एव भवथ । तस्माद्युष्मान् याचामह इत्यर्थः । ईशानाः । 'ईश ऐश्वर्ये'। अनुदात्तेत् । 'तास्यनुदात्तेत्°' इति स्वरेणाद्युदात्तता भवति । न संबुद्धिः । ततो हे ^v^आदित्याः अदितेः पुत्रा देवाः ^v^ईम् एनं याचमानं मां तद्धनं ^v^न प्राप्नोतु ^v^यत् धनम् ^v^अघस्य पापस्य संबन्धि विद्यते ॥ ॥३॥

वयमिद्वः सुदानवः क्षियन्तो यान्तो अध्वन्ना । देवा वृधाय हूमहे ॥ ६ ॥

वयम् । इत् । वः । सुऽदानवः । क्षियन्तः । यान्तः । अध्वन् । आ । देवाः । वृधाय । हूमहे ॥६॥

हे ^v^सुदानवः शोभनदाना हे ^v^देवाः ^v^क्षियन्तः गृहेष्वग्निहोत्रार्थं निवसन्तः ^v^अध्वन् । सुपो लुक् । अध्वनि समिदाहरणार्थं ^v^यान्तः गच्छन्तोऽपि ^v^वयं ^v^वः ^v^इत् युष्मानेव ^v^वृधाय हविर्भिर्वर्धनाय ^v^हूमहे आह्वयामः । यद्वा । वयं गृहेषु गृहान्निर्गमनकाले मार्गेषु च वृधायास्माकं धनादिभिर्वर्धनायाह्वयामः ॥

अधि न इन्द्रैषां विष्णो सजात्यानाम् । इता मरुतो अश्विना ॥ ७ ॥

अधि । नः । इन्द्र । एषाम् । विष्णो इति । सऽजात्यानाम् । इत । मरुतः । अश्विना ॥ ७ ॥

हे ^v^इन्द्र ^v^विष्णो ^v^मरुतः हे ^v^अश्विना अश्विनौ हे इन्द्रादयो देवाः ^v^सजात्यानाम् । समानायां जातौ भवाः सजात्या भ्रातृमित्रादयः । तेषाम् ^v^एषां मध्ये ^v^नः अस्मान् ^v^अधि[1] ^v^इत[1] यूयं स्तुत्यतयाधिगच्छत ॥

प्र भ्रातृत्वं सुदानवोऽध द्विता समान्या । मातुर्गर्भे भरामहे ॥ ८ ॥

प्र । भ्रातृऽत्वम् । सुऽदानवः । अध । द्विता । समान्या । मातुः । गर्भे । भरामहे ॥ ८ ॥

हे ^v^सुदानवः शोभनदाना आदित्याः ^v^अध अथ अस्मत्प्रत्यागमनानन्तरं वयं ^v^समान्या सामान्येन । सुपो ड्यादेशः । पूर्वं सर्वेषां देवानां सांहत्येन ततः ^v^द्विता द्विधा द्विप्रकारेण च ^v^मातुः अदितेः ^v^गर्भे संजातं यद्युष्माकं ^v^भ्रातृत्वं विद्यते तदिदानीं वयं ^v^प्र ^v^भरामहे । प्रभरणमुच्चारणं प्रकाशनं वा । उच्चारयामः प्रकाशयामो वा । सर्वेषां देवानां द्वंद्वशो जननं तैत्तिरीयके स्पष्टमभिहितम्— 'अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्' (तै. सं. ६. ५. ६) इत्युपक्रम्य 'तस्यै पूषा चार्यमा चाजायेताम्' इत्यादिना ॥

यूयं हि ष्ठा सुदानव इन्द्रज्येष्ठा अभिद्यवः । अधा चिद्व उत ब्रुवे ॥ ९ ॥

यूयम् । हि । स्थ । सुऽदानवः । इन्द्रऽज्येष्ठाः । अभिऽद्यवः । अध । चित् । वः । उत । ब्रुवे ॥९॥

पूर्वोऽर्धर्चः सिद्धः । हे ^v^सुदानवः शोभनदाना देवाः ^v^इन्द्रज्येष्ठाः । इन्द्रो ज्येष्ठो मुख्यो येषां ते तथोक्ताः । सर्वे देवा इन्द्रनेतृका इत्यर्थः । तादृशाः ^v^अभिद्यवः अभिगतदीप्तयः ^v^यूयं ^v^हि ^v^स्थ अस्मद्यज्ञे भवथ खलु । हि प्रसिद्धौ । ^v^अध ^v^चित् अथानन्तरमेव ^v^वः युष्मान् अहं ^v^ब्रुवे स्तौमि । ^v^उत अपि च पुनःपुनः स्तौमीत्यर्थः ॥ ॥ ४ ॥

---

१. ख-त-न-श–अव अधीत; भ१-२–अवधीत ।

'प्रेष्ठं वः' इति नवर्चं चतुर्थं सूक्तं कवेः पुत्रस्योशनस आर्षं गायत्रमाग्नेयम्। तथानुक्रम्यते– 'प्रेष्ठमुशना काव्य आग्नेयम्' इति। प्रातरनुवाक आग्नेये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चेदं सूक्तम्। सूत्रितं च—'युक्ष्वा हि प्रेष्ठं वः' (आश्व. श्रौ. ४. १३) इति। आभिप्लविकेषूक्थ्येषु मैत्रावरुणे 'प्रेष्ठं वः' इति तृचो वैकल्पिकः स्तोत्रियः। सूत्रितं च—'प्रेष्ठं वो अतिथिं श्रेष्ठं यविष्ठ भारत' (आश्व. श्रौ. ७. ८) इति॥

**प्रेष्ठं॑ वो॒ अति॑थिं स्तु॒षे मि॒त्रमि॑व प्रि॒यम्। अ॒ग्निं रथं॒ न वेद्य॑म्॥ १॥**

प्रेष्ठ॑म्। व॒ः। अति॑थिम्। स्तु॒षे। मि॒त्रम्ऽइ॑व। प्रि॒यम्। अ॒ग्निम्। रथ॑म्। न। वेद्य॑म्॥१॥

हे यजमानाः ᵛप्रेष्ठं युष्माकं धनदानेन प्रियतमम् ᵛअतिथिं युष्माभिरतिथिवत्पूज्यम्। यद्वा। 'अत सातत्यगमने'। 'ऋतन्यञ्जि॰' इत्यादिना अतेरिथिन्। सततं देवानां हविः प्रदातुं गच्छन्तम्। ᵛमित्रमिव सखायमिव ᵛप्रियं स्तोतुः प्रीणनकरं ᵛरथं ᵛन रथमिव ᵛवेद्यम्। वेदो धनम्। धनहितं लाभहेतुम्। यथा रथी[1] रथेन[1] धनं[2] लभते तद्वत्स्तोतारोऽनेन धनं लभन्ते। तादृशं धनलाभकारणम् ᵛअग्निं ᵛवः युष्मत्कर्मसिद्ध्यर्थं ᵛस्तुषे काव्य उशनाः स्तौमि॥

**क॒विमि॑व॒ प्रचे॑तसं॒ यं दे॒वासो॒ अध॑ द्वि॒ता। नि मर्त्ये॑ष्वाद॒धुः॥ २॥**

क॒विम्ऽइ॑व। प्रऽचे॑तसम्। यम्। दे॒वासः॑। अध॑। द्वि॒ता। नि। मर्त्ये॑षु। आ॒ऽद॒धुः॥ २॥

ᵛअध अपि च ᵛदेवासः देवा इन्द्रादयः ᵛयम् अग्निं ᵛमर्त्येषु मनुष्येषु ᵛद्विता द्विधा ᵛनि ᵛआदधुः गार्हपत्याहवनीयात्मकत्वेन द्विधा निहितवन्तः। तत्र दृष्टान्तः। ᵛकविमिव ᵛप्रचेतसम्। प्रकृष्टज्ञानं कविं क्रान्तकर्माणं पुरुषं यथा द्विधा कार्यद्वयेऽन्यो नियोजयति तद्वत्। यद्वा। दिवि पृथिव्यां च निहितवन्तः। भूमौ तु हविराहरणार्थं दिवि तु हविष्प्रदानार्थमिति द्वैधं विधानं कृतवन्त इत्यर्थः॥

**त्वं य॑विष्ठ दा॒शुषो॒ नॄँः पा॑हि शृणु॒धी गिरः॑। रक्षा॑ तो॒कमु॒त त्मना॑॥ ३॥**

त्वम्। य॒वि॒ष्ठ॒। दा॒शुषः॑। नॄन्। पा॒हि॒। शृ॒णु॒धि। गिरः॑। रक्ष॑। तो॒कम्। उ॒त। त्मना॑॥३॥

हे ᵛयविष्ठ युवतम। यद्वा। यौतेस्तृजन्तस्येष्ठनि रूपम्। देवानां हविषां मिश्रयितृतमाग्ने ᵛत्वं ᵛदाशुषः हविर्दत्तवतः ᵛनॄन् कर्मणां नेतॄन् यजमानान् ᵛपाहि धनादिदानेन रक्ष। नॄँः पाहीत्यत्र संहितायां 'नॄन्पे' (पा. सू. ८. ३. १०) इति नकारस्य रुत्वम्। 'अत्रानुनासिकः॰' (पा. सू. ८. ३. २) इति पूर्वस्यानुनासिकः। किंच ᵛगिरः त्वद्विषयाः स्तुतीः ᵛशृणुधि अवहितः सञ्छृणु। 'श्रु श्रवणे'। 'श्रुशृणुपॄ॰' इत्यादिना हेर्ध्यादेशः। ᵛउत अपि च ᵛत्मना आत्मनैव स्वयमेव ᵛतोकम् अस्मदीयं तनयं पुत्रं ᵛरक्ष पालय। त्मनेति सर्वत्र संबध्यते। आत्मना स्वयमेव रक्ष। त्वदन्यं पालयितारं न विन्दामः। त्वमेवास्मदीयं[3] स्तोत्रं[3] शृणु॥

**कया॑ ते अग्ने अङ्गिर॒ ऊर्जो॑ नपा॒दुप॑स्तुतिम्। वरा॑य देव म॒न्यवे॑॥ ४॥**

कया॑। ते॒। अ॒ग्ने॒। अ॒ङ्गि॒रः॒। ऊर्जः॑। न॒पा॒त्। उप॑ऽस्तुतिम्। वरा॑य। दे॒व॒। म॒न्यवे॑॥ ४॥

हे ᵛअङ्गिरः अङ्गिरसां वरिष्ठ। यद्वा। अङ्गति सर्वत्र गच्छतीत्यङ्गिराः। तादृश हे ᵛऊर्जो ᵛनपात्। नपादित्यपत्यनाम। अन्नस्य पुत्र। हविर्भिर्वर्धमानत्वात्। यद्वा। नपादिति नप्ता।

---

१. ख-ञ-त१-२–रथ्येधनक; त३-४-भ–रथ्येधक; श–रथ्यको। २. ख-ञ-त१-२–धनेन। ३. ख-ञ-त१-२-४-श–॰स्मदीयस्तोत्रं।

हविर्लक्षणस्यान्नस्य नप्ता। 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः' इति। वृष्टेरोषधय ओषधीभ्योऽग्निरित्यन्नस्य नप्ता। हे ^देव द्योतमान ^अग्ने ^वराय सर्वैर्वरणीयाय ^मन्यवे शत्रूनतिमन्यमानाय ^ते तुभ्यं ^कया कीदृश्या वाचा ^उपस्तुतिम् उपस्तोत्रमहं भरेयम्। त्वं महान् खल्वहमल्पः। तदर्थं स्तुतिं कुर्यामित्यृषिरग्निं प्रति वदति ॥

दाशेम कस्य मनसा यज्ञस्य सहसो यहो। कदु वोच इदं नमः ॥ ५ ॥

दाशेम। कस्य। मनसा। यज्ञस्य। सहसः। यहो इति।

कत्। ऊँ इति। वोचे। इदम्। नमः ॥ ५ ॥

ऋषिरग्निं प्रति ब्रूते। हे ^सहसो ^यहो। यहुरित्यपत्यनाम। बलेन निष्पाद्यमानत्वाद्बलस्य पुत्र हे अग्ने ^कस्य कीदृशस्य ^यज्ञस्य यज्ञवतो यजनीयदेववतो यजमानस्य ^मनसा युक्ताः सन्तो हवींषि तुभ्यं वयं ^दाशेम प्रयच्छेम। पूजायां बहुवचनम्। किंच तुभ्यम्[1] ^इदं ^नमः हविर्नमस्कारं वा ^कत् कदा[2] ^वोचे अहं वदामि। ^उ इति प्रश्ने। ऋषिः कदा यक्ष्यामि कदा स्तोष्यामीत्यग्निं पृच्छति। वोचे। वच्यादेशस्य लुङ्यात्मनेपद उत्तमैकवचने रूपम् ॥　　॥ ५ ॥

अधा त्वं हि नस्करो विश्वा अस्मभ्यं सुक्षितीः। वाजद्रविणसो गिरः ॥६॥

अध। त्वम्। हि। नः। करः। विश्वाः। अस्मभ्यम्। सुऽक्षितीः। वाजऽद्रविणसः। गिरः ॥६॥

हे अग्ने ^अध अनन्तरं ^त्वम्। हिरवधारणे। त्वमेव ^अस्मभ्यं ^करः कुरु। देहीत्यर्थः। करोतेः लेट्यडागमः। किमित्यपेक्षायामाह। ^नः अस्मदीयाः ^गिरः त्वद्विषयाः ^विश्वाः सर्वाः स्तुतीरेवं कुरु यथा ^सुक्षितीः। क्षियन्ति निवसन्त्यत्रेति[3] क्षितयो गृहाः। शोभननिवासाः। यद्वा। क्षितयो मनुष्याः। कल्याणपुत्रपौत्रादियुक्ताः। तथा ^वाजद्रविणसः अन्नयुक्तधनवतीः। अथवा वाजो दीप्तिः[4]। सर्वतो दीप्तधनाश्च कुरु। त्वमस्माभिः स्तुतः सन् गृहपुत्रान्नधनादीनि देहीत्यर्थः ॥

कस्य नूनं परीणसो धियो जिन्वसि दंपते। गोषाता यस्य ते गिरः ॥ ७ ॥

कस्य। नूनम्। परीणसः। धियः। जिन्वसि। दम्ऽपते। गोऽसाता। यस्य। ते। गिरः ॥७॥

हे ^दंपते[5] यदा गार्हपत्ये वर्तसे तदा जायापतिस्वरूपोऽसि। तस्माद्दंपतिशब्देनाग्निरभिधीयते। तथाविध हे अग्ने ^नूनम् इदानीं ^कस्य कीदृशस्य जनस्य ^परीणसः बहूनि ^धियः कर्माणि ^जिन्वसि प्रीणयसि। ^यस्य ^ते तव संबन्धिन्यः ^गिरः स्तुतयः ^गोसाता गोसातौ गवां लाभे भवन्ति खलु। तस्मात्त्वं कुत्र तिष्ठसि। अस्माकमिदानीं गवेच्छा प्रवर्तते। यद्वा। हे अग्ने त्वमिदानीं कस्य कर्माणि प्रीणयसि। न कस्यापीत्यर्थः। अस्माकमेव कर्माणि प्रीणयेति भावः ॥

अग्निमन्थने 'तं मर्जयन्त सुक्रतुम्' इत्येषा। सूत्रितं च—'तं मर्जयन्त सुक्रतुं यज्ञेन यज्ञमयजन्त देवाः[6]' (आश्व. श्रौ. २. १६) इति ॥

तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु। स्वेषु क्षयेषु वाजिनम् ॥ ८ ॥

तम्। मर्जयन्त। सुऽक्रतुम्। पुरःऽयावानम्। आजिषु। स्वेषु। क्षयेषु। वाजिनम् ॥ ८ ॥

---

१. ख-ग-त-न-भ-श—वस्तुभ्यं। २. ख-त-न-भ—कदा वा। ३. ख-त—निवसंतीत्यत्रेति। ४. ख-ग-त-३-भ—दीप्तः। ५. ख-त१-२-न-भ-श—दंपते गृहपते। ६. श—देवा इति परिदध्यात्।

<sup>v</sup>सुक्रतुं शोभनप्रज्ञं सुकर्माणं वा <sup>v</sup>आजिषु संग्रामेषु <sup>v</sup>पुरोयावानं शत्रुहननार्थं[1] पुरत एव गन्तारं <sup>v</sup>वाजिनं बलवन्तं तादृशमग्निं[2] यजमानाः <sup>v</sup>स्वेषु आत्मीयेषु <sup>v</sup>क्षयेषु गृहेषु <sup>v</sup>मर्जयन्त निर्मथितमग्निमलंकुर्वन्ति । परिचरन्तीति यावत् ॥

**क्षेति क्षेमेभिः साधुभिर्नकिर्यं घ्नन्ति हन्ति यः । अग्ने सुवीर एधते ॥ ९ ॥**

क्षेति । क्षेमेभिः । साधुऽभिः । नकिः । यम् । घ्नन्ति । हन्ति । यः । अग्ने । सुऽवीरः । एधते ॥९॥

हे <sup>v</sup>अग्ने यो मनुष्यः <sup>v</sup>साधुभिः साधयद्भिः <sup>v</sup>क्षेमेभिः पालनैः सह <sup>v</sup>क्षेति स्वगृहे निवसति । तथा <sup>v</sup>यं जनं <sup>v</sup>नकिः न केचन <sup>v</sup>घ्नन्ति न हिंसन्ति । <sup>v</sup>यः[3] एव <sup>v</sup>हन्ति शत्रून् स्वयमेव हन्ति । स मनुष्यस्तव स्तोता खलु । अन्यथा तस्यैतावन्न घटते । ततः स स्तोता <sup>v</sup>सुवीरः शोभनपुत्रादियुक्तः सन् <sup>v</sup>एधते आत्मीयगृहेषु धनादिभिर्वर्धते ॥ ॥ ६ ॥

' आ मे हवम् ' इति नवर्चं पञ्चमं सूक्तम् । कृष्णो नामाङ्गिरस ऋषिः । गायत्री छन्दः । एतदादीनि त्रीणि सूक्तान्यश्विदेवत्यानि । तथा चानुक्रान्तम्—' आ मे कृष्ण आश्विनं हि ' इति । प्रातरनुवाक आश्विने क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च—' उदीराथामा मे हवम् ' ( आश्व. श्रौ. ४. १५ ) इति ॥

**आ मे हवं नासत्याश्विना गच्छतं युवम् । मध्वः सोमस्य पीतये ॥ १ ॥**

आ । मे । हवम् । नासत्या । अश्विना । गच्छतम् । युवम् । मध्वः । सोमस्य । पीतये ॥ १ ॥

हे <sup>v</sup>नासत्या । असत्यमनयोर्नास्तीति नासत्यौ । तादृशौ हे <sup>v</sup>अश्विना अश्विनौ <sup>v</sup>युवं युवां <sup>v</sup>मे मदीयं <sup>v</sup>हवम् आह्वानं श्रुत्वा । यद्वा । हवम् । हूयतेऽत्रेति हवो यज्ञः । केवलस्याधिकरणेऽप् छान्दसः । मदीयं यज्ञं प्रति <sup>v</sup>मध्वः मदकरस्य <sup>v</sup>सोमस्य <sup>v</sup>पीतये पानाय तदर्थम् <sup>v</sup>आ <sup>v</sup>गच्छतम् ॥

**इमं मे स्तोममश्विनेमं मे शृणुतं हवम् । मध्वः सोमस्य पीतये ॥ २ ॥**

इमम् । मे । स्तोमम् । अश्विना । इमम् । मे । शृणुतम् । हवम् । मध्वः । सोमस्य । पीतये ॥२॥

हे <sup>v</sup>अश्विना अश्विनौ <sup>v</sup>मे मदीयम् <sup>v</sup>इमं <sup>v</sup>स्तोमं स्तोत्रं[4] किंच <sup>v</sup>मे मदीयम् <sup>v</sup>इमम् इदमागमनविषयं <sup>v</sup>हवम् आह्वानं च <sup>v</sup>शृणुतम् ॥

**अयं वां कृष्णो अश्विना हवते वाजिनीवसू । मध्वः सोमस्य पीतये ॥ ३ ॥**

अयम् । वाम् । कृष्णः । अश्विना । हवते । वाजिनीवसू इति वाजिनीऽवसू ।
मध्वः । सोमस्य । पीतये ॥ ३ ॥

हे <sup>v</sup>वाजिनीवसू अन्नयुक्तधनौ । अन्नेनिरनुवादार्थः । यद्वा । वाजो वजनं क्रिया । तद्वती वाजिनी । तद्युक्तधनवन्तौ हे <sup>v</sup>अश्विना अश्विनौ <sup>v</sup>अयं <sup>v</sup>कृष्णः नाम मन्त्रद्रष्टा ऋषिः <sup>v</sup>वां युवां <sup>v</sup>हवते स्तुतिभिराह्वयति । किमर्थम् । <sup>v</sup>मध्वः <sup>v</sup>सोमस्य <sup>v</sup>पीतये इति ॥

**शृणुतं जरितुर्हवं कृष्णस्य स्तुवतो नरा । मध्वः सोमस्य पीतये ॥ ४ ॥**

शृणुतम् । जरितुः । हवम् । कृष्णस्य । स्तुवतः । नरा । मध्वः । सोमस्य । पीतये ॥ ४ ॥

---

१. त-°हननार्थं वा । २. भ-तं तादृश° । ३. ख-त-श-' यः ' नास्ति । ४. ख-ग-त-न-भ-श-स्तोत्रं वा ।

हे ^v^नरा नरौ सर्वस्य नेतारावश्विनौ ^v^जरितुः। तच्छीलार्थे तृन्। व्यत्ययेनान्तोदात्तत्वम्। जरितुः स्तवनशीलस्य संप्रति ^v^स्तुवतः स्तोत्रं कुर्वतः ^v^कृष्णस्य एतन्नामकस्यर्षेः संबन्धि ^v^हवं युष्मद्विषयमाह्वानं ^v^श्रृणुतम्। यद्वा। जरितुरन्यदेवानां स्तोतुः स्तुवत इदानीं युवयोः स्तोत्रकारिणस्तस्य हवं श्रृणुतम्। शिष्टं गतम्॥

छर्दिर्यन्तमदाभ्यं विप्राय स्तुवते नरा। मध्वः सोमस्य पीतये॥ ५॥

छर्दिः। यन्तम्। अदाभ्यम्। विप्राय। स्तुवते। नरा। मध्वः। सोमस्य। पीतये॥ ५॥

हे ^v^नरा नेतारावश्विनौ ^v^विप्राय मेधाविने अत एव ^v^स्तुवते स्तोत्रं कुर्वते कृष्णायर्षये ^v^अदाभ्यम्। 'दभेश्च' इति ण्यत्प्रत्ययः। परैरहिंस्यं ^v^छर्दिः गृहं ^v^यन्तं प्रयच्छतम्। किमर्थम्। सोमपानाय। स्तोत्रे गृहे दीयमाने सति तदा स सोमं युवाभ्यां प्रयच्छति॥ ॥ ७॥

गच्छतं दाशुषो गृहमित्था स्तुवतो अश्विना। मध्वः सोमस्य पीतये॥६॥

गच्छतम्। दाशुषः। गृहम्। इत्था। स्तुवतः। अश्विना। मध्वः। सोमस्य। पीतये॥ ६॥

हे ^v^अश्विना अश्विनौ ^v^इत्था इत्थमनेन प्रकारेण ^v^स्तुवतः युवयोः स्तोत्रं कुर्वतः ^v^दाशुषः हवींषि दत्तवतो यजमानस्य ^v^गृहं प्रति ^v^गच्छतं युवामागच्छतम्। किमर्थम्। ^v^मध्वः ^v^सोमस्य ^v^पीतये इति॥

युञ्जाथां रासभं रथे वीड्वङ्गे वृषण्वसू। मध्वः सोमस्य पीतये॥ ७॥

युञ्जाथाम्। रासभम्। रथे। वीळुऽअङ्गे। वृषण्वसू इति वृषण्ऽवसू। मध्वः। सोमस्य। पीतये॥७॥

हे ^v^वृषण्वसू वर्षणशीलधनवन्तावश्विनौ युवां ^v^वीड्वङ्गे। वीळुर्दृढः। दृढाङ्गोपेते[1] स्वरथे ^v^रासभं शब्दायमानमेतन्नामकमश्वं ^v^युञ्जाथां संयोजयतम्। किमर्थम्। ^v^मध्वः ^v^सोमस्य ^v^पीतये इति। 'रासभावश्विनोः' इति रासभावेवाश्विनो रथस्य वाहनौ॥

त्रिवन्धुरेण त्रिवृता रथेना यातमश्विना। मध्वः सोमस्य पीतये॥ ८॥

त्रिऽवन्धुरेण। त्रिऽवृता। रथेन। आ। यातम्। अश्विना। मध्वः। सोमस्य। पीतये॥ ८॥

हे ^v^अश्विना अश्विनौ ^v^त्रिवन्धुरेण त्रिफलकासंघटितेन ^v^त्रिवृता त्रिकोणेन। यद्वा। त्रिवृता। त्रीणि कवचादिभिरावरणानि यस्य स तथोक्तः। तेन ^v^रथेन अस्मद्यज्ञं प्रति ^v^आ ^v^यातं युवामागच्छतं च[2]। शिष्टं गतम्॥

नू मे गिरो नासत्याश्विना प्रावतं युवम्। मध्वः सोमस्य पीतये॥ ९॥

नु। मे। गिरः। नासत्या। अश्विना। प्र। अवतम्। युवम्। मध्वः। सोमस्य। पीतये॥९॥

हे ^v^नासत्या असत्यरहितौ हे ^v^अश्विना अश्विनौ ^v^मे मदीयाः ^v^गिरः स्तुतिलक्षणा वाचः प्रति ^v^युवं युवां ^v^नु क्षिप्रं ^v^प्रावतं प्रकर्षेणागच्छतम्। यद्वा। मे गिरः प्रावतं आत्मीयतया प्ररक्षतम्। किमर्थम्। ^v^मध्वः मदकरस्य ^v^सोमस्य ^v^पीतये पानाय तदर्थम्। सर्वे देवाः स्तुतिभिराहूताः सन्तो यज्ञं प्रत्यागच्छन्तीति[3] गच्छतं रक्षतं चेति युक्तं भवति॥ ॥ ८॥

---

१. ख-भ१-दृढ आद्यंगोपेते; ग-त-भ२-दृढा आद्यंगोपेते; श-दृढाद्यंगोपेते। २. ग-'च' नास्ति। ३. ख-ग-त-न-भ-श-प्रत्यागच्छंति स्तुतिभिर्विना नागच्छंतीति।

'उभा हि दस्रा' इति पञ्चर्चं षष्ठं सूक्तम्। विश्वको नाम कृष्णस्य पुत्रः कृष्ण एव वर्षिः। जगती छन्दः। अश्विनौ देवता। तथानुक्रम्यते—'उभा हि पञ्च विश्वको वा कार्ष्णिर्जागतम्' इति। विनियोगो लिङ्गादवगन्तव्यः॥

**उभा हि दस्रा भिषजा मयोभुवोभा दक्षस्य वचसो बभूवथुः।**
**ता वां विश्वको हवते तनूकृथे मा नो वि यौष्टं सख्या मुमोचतम्॥१॥**

उभा। हि। दस्रा। भिषजा। मयःऽभुवा। उभा। दक्षस्य। वचसः। बभूवथुः।
ता। वाम्। विश्वकः। हवते। तनूऽकृथे। मा। नः। वि। यौष्टम्। सख्या। मुमोचतम्॥१॥

हे अश्विनौ ᵛदस्रा दर्शनीयौ। यद्वा। 'दसु उपक्षये'। सर्वेषां शत्रूणामुपक्षपयितारौ। ᵛभिषजा देवानां वैद्यौ। यद्वा भीतीनां त्रासयितारौ। यदा नरा अश्विनौ स्तुवन्ति तदा तौ तेषां भीतिमपनयत इत्यर्थः। पृषोदरादित्वाद्रूपसिद्धिः। तादृशौ अत एव ᵛमयोभुवा मयसः सुखस्य भावयितारौ ᵛउभा परस्परं द्वित्वसंख्यापूरकौ ᵛउभा उभौ द्वौ युवां ᵛदक्षस्य एतन्नामस्य प्रजापतेः ᵛवचसः स्तुतेः संबन्धिनौ ᵛबभूवथुः। ᵛहि प्रसिद्धौ। पुरा युवां दक्षेणास्ताविषाथां खलु। ᵛता[1] तादृशौ प्रशस्तौ[2] ᵛवां युवां ᵛविश्वकः एतन्नामक ऋषिः ᵛतनूकृथे। तनोति कुलमिति तनूः पुत्रः। तस्य विष्णाप्वो निमित्तं ᵛहवते स्तुतिभिराह्वयति। तस्मात् ᵛनः अस्माकं ᵛसख्या सख्यानि यष्टृयष्टव्यतया जातानि सखित्वानि ᵛमा ᵛवि ᵛयौष्टं मा पृथक्कुरुतम्। यौतेर्लुङि सिचि रूपम्। किंच युवां ᵛमुमोचतम् अस्मानागन्तुं रथे स्थित्वाश्वप्रग्रहान्मुञ्चतम्। मुञ्चतेर्लोटि 'बहुलं छन्दसि' इति शपः श्लुः। अडागमः। अत्र विष्णापूनामानं पुत्रमुद्दिश्य तस्य पिता विश्वको युवामाह्वयतीत्यात्मानमाह। यद्वा। विश्वकस्य पिता कृष्णो नामर्षिर्मम पुत्रो विश्वकः पुत्रार्थं युवामधिह्वयतीति वदति॥

**कथा नूनं वां विमना उप स्तवद्युवं धियं ददथुर्वस्यइष्टये।**
**ता वां विश्वको हवते तनूकृथे मा नो वि यौष्टं सख्या मुमोचतम्॥ २॥**

कथा। नूनम्। वाम्। विऽमनाः। उप। स्तवत्। युवम्। धियम्। ददथुः। वस्यःऽइष्टये।
ता। वाम्। विश्वकः। हवते। तनूऽकृथे। मा। नः। वि। यौष्टम्। सख्या। मुमोचतम्॥२॥

हे अश्विनौ ᵛविमनाः एतन्नामक ऋषिः ᵛनूनं पुरा ᵛकथा कथं ᵛवां युवाम् ᵛउप ᵛस्तवत् कथमुपास्तौत्। तेन स्तुतौ ᵛयुवं युवां ᵛवस्यइष्टये। वस्यो वसीयः प्रशस्तं धनम्। तस्याभिलषितस्येष्टयेऽभिगमनाय यद्वा[3] वसिष्ठधनस्येष्टये[3] प्राप्तये ᵛधियं बुद्धिं विमनसे ᵛददथुः अददाथां खलु। वस्य इति वसुमच्छब्दादीयसुनि 'विन्मतोर्लुक्' इति लुक्। ईयसुन ईकारलोपश्छान्दसः। तादृशौ युवां ᵛविश्वको ᵛहवते इति गतम्॥

**युवं हि ष्मा पुरुभुजेममेधतुं विष्णाप्वे ददथुर्वस्यइष्टये।**
**ता वां विश्वको हवते तनूकृथे मा नो वि यौष्टं सख्या मुमोचतम्॥ ३॥**

युवम्। हि। स्म। पुरुऽभुजा। इमम्। एधतुम्। विष्णाप्वे। ददथुः। वस्यःऽइष्टये।
ता। वाम्। विश्वकः। हवते। तनूऽकृथे। मा। नः। वि। यौष्टम्। सख्या। मुमोचतम्॥३॥

---

१. ख-ग-ज्ञ-त१-२-३-न-भ-श—तौ। २. ख-त-न-श—प्रयस्तौ। ३. ख—यद्वावसिष्ट°; ग-भ३—यद्वा विशिष्ट°; त-न-भ२-मु—यद्वावशिष्ट°; श—यद्वा अवशिष्ट°।

हे <sup>v</sup>पुरुभुजा पुरुभुजौ पुरूणां बहूनां धनादिदानेन भोजयितारौ । यद्वा । बहूनां स्तोतृणां पालयितारावश्विनौ । <sup>v</sup>युवम् । <sup>v</sup>हि <sup>v</sup>स्म इत्यवधारणे । युवामेव <sup>v</sup>इममेधतुम् । एधतेः ' एधिवह्योश्चतुः[1] ' ( उ. सू. १. ७८ ) इति चतुप्रत्ययः । चित्वादन्तोदात्तः । इमां धनादिवृद्धिं <sup>v</sup>विष्णाप्वे । विष्णोः सर्वेषां देवानां मुख्यत्वात् तद्ग्रहणे[2] सर्वे देवा गृहीता भवन्ति । विष्ण्वादीन् कर्मणा व्याप्नोतीति विष्णापूः । पृषोदरादिः । यद्वा । विष्णुं सर्वग्रहेषु व्याप्तं सोमं दशापवित्रेणापुनातीति । तस्य चतुर्थी विष्णाप्व इति । एतन्नामके मम पुत्रे पौत्रे वा । पुत्राय पौत्राय वा । इमां धनादिवृद्धिं <sup>v</sup>ददथुः अदत्तम् । किमर्थम् । <sup>v</sup>वस्यइष्टये वसीयसः प्रशस्तधनस्येष्टय इच्छां पूरयितुम् । ' क्रियार्थोपपदस्य० ' ( पा. सू. २. ३. १४ ) इति चतुर्थी । <sup>v</sup>ता <sup>v</sup>वाम् इति पूर्ववद्व्याख्येयम् ॥

उत त्यं वीरं धनसामृजीषिणं दूरे चित्सन्तमवसे हवामहे ।
यस्य स्वादिष्ठा सुमतिः पितुर्यथा मा नो वि यौष्टं सख्या मुमोचतम् ॥४॥

उत । त्यम् । वीरम् । धनऽसाम् । ऋजीषिणम् । दूरे । चित् । सन्तम् । अवसे । हवामहे ।
यस्य । स्वादिष्ठा । सुऽमतिः । पितुः । यथा । मा । नः । वि । यौष्टम् । सख्या । मुमोचतम् ॥४॥

हे अश्विनौ <sup>v</sup>उत अपि च <sup>v</sup>वीरं कर्मणि समर्थं <sup>v</sup>धनसां धनानां संभक्तारम् <sup>v</sup>ऋजीषिणम् । ऋजीषोऽपार्जितोऽभिषुतः[3] सोमः[3] । तद्वन्तं <sup>v</sup>दूरे <sup>v</sup>चित् दूर एव <sup>v</sup>सन्तं भवन्तं विनष्टमिव <sup>v</sup>त्यं तं विष्णाप्वम् <sup>v</sup>अवसे अस्माकं रक्षणाय <sup>v</sup>हवामहे आह्वयामः । पुत्रो हि पितरं रक्षति । किंच <sup>v</sup>यस्य पुत्रस्य पौत्रस्य वा <sup>v</sup>सुमतिः शोभना स्तुतिः <sup>v</sup>स्वादिष्ठा स्वादुतमा । अतिशयेन देवानां स्वादुकारिणीत्यर्थः । तत्र दृष्टान्तः । <sup>v</sup>पितुर्यथा । पितुर्विश्वकस्य स्तुतिर्यथा देवानां प्रीतिकरी[4] तद्वत् । तस्मात्तमाह्वयाम इति शेषः । <sup>v</sup>मा <sup>v</sup>नो इति गतार्थः ॥

ऋतेन देवः सविता शमायत ऋतस्य शृङ्गमुर्विया वि पप्रथे ।
ऋतं सासाह महि चित्पृतन्यतो मा नो वि यौष्टं सख्या मुमोचतम् ॥५॥

ऋतेन । देवः । सविता । शम्ऽआयते । ऋतस्य । शृङ्गम् । उर्विया । वि । पप्रथे ।
ऋतम् । ससाह । महि । चित् । पृतन्यतः । मा । नः । वि । यौष्टम् । सख्या । मुमोचतम् ॥५॥

ऋषिः सत्यप्रशंसां करोति । हे अश्विनौ <sup>v</sup>देवः[5] द्योतमानः <sup>v</sup>सविता सर्वस्य स्वस्वकर्मणि प्रेरक एतन्नामको देवः <sup>v</sup>ऋतेन सत्येन <sup>v</sup>शमायते सायंकाले स्वकिरणसमूहं शमयति । ततोऽनन्तरं स एव सविता <sup>v</sup>ऋतस्य सत्यस्य <sup>v</sup>शृङ्गम् अग्रम् <sup>v</sup>उर्विया उरु विस्तीर्णं यथा भवति तथा प्रातःकाले <sup>v</sup>वि <sup>v</sup>पप्रथे विशेषेण प्रथयति । सर्वतो विस्तारयति । किंच <sup>v</sup>पृतन्यतः पृतनामिच्छतः संयुयुत्सोः शत्रोः <sup>v</sup>महि <sup>v</sup>चित् महदपि बलम् <sup>v</sup>ऋतं सत्यं[6] स्वयमेवाभिभवति । इत्थमृतं प्रशस्तमभूत् । तस्माद्युवामपि तेनर्तेन <sup>v</sup>नः अस्माकं सख्यानि <sup>v</sup>मा <sup>v</sup>वि <sup>v</sup>यौष्टम् । अत्रागन्तुमश्वरश्मीन् मुञ्चतमिति ॥ ॥ ९ ॥

' द्युम्नी वाम् ' इति षडृचं सप्तमं सूक्तम् । तथा चानुक्रम्यते—' द्युम्नी षड्वासिष्ठो वा द्युम्नीकः प्रियमेधो वा प्रागाथं ह ' इति । वसिष्ठपुत्रो द्युम्नीक ऋषिराङ्गिरसः प्रियमेधो वा । उभयत्र

---

१. ग-उ-सू-°वह्योश्चतुः । २. श-तद्ग्रहणेन । ३. घ-उपार्जितः अभिषुतसोमः; ञ-त४-भ-श-ऋजीषोपार्जितोभिषुतसोमः । ४. ग-प्रीतिकारिणी । ५. ख-त-भ-श-देवौ । ६. घ-सत्यं ससाह ।

वाशब्दाद्यदोभावपि न स्यातां तदा प्रकृत आङ्गिरसः कृष्ण एव ऋषिः । अयुजो बृहत्यो युजः सतोबृहत्यः । अश्विनौ देवता । प्रातरनुवाक आश्विने क्रतौ बार्हते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च—'द्युम्नी वां यस्य इति बार्हतम्' (आश्व. श्रौ. ४. १५) इति ॥

**द्युम्नी वां स्तोमो अश्विना क्रिविर्न सेक आ गतम् ।**
**मध्वः सुतस्य स दिवि प्रियो नरा पातं गौराविवेरिणे ॥ १ ॥**

द्युम्नी । वाम् । स्तोमः । अश्विना । क्रिविः । न । सेके । आ । गतम् ।
मध्वः । सुतस्य । सः । दिवि । प्रियः । नरा । पातम् । गौरौऽइव । इरिणे ॥ १ ॥

हे अश्विना अश्विनौ अयमनुपक्षीणस्तोत्रो द्युम्नीक एतन्नामक ऋषिः वां युवयोः स्तोमः स्तोता भवति । युष्मत्स्तुतौ कृतायां स्तोत्राणि नाल्पीभवन्ति[1] किंतु पुनर्वर्धन्त इत्यर्थः । तत्र दृष्टान्तः । क्रिविर्न । क्रिविरिति कूपनाम । कूपो यथा सेके उदकसेचने वृष्टौ[2] भवन्त्यां नाल्पोदको[3] भवति[3] तद्वत् । यद्वा । वां युवयोः स्तोमो युष्मद्विषया स्तुतिर्द्युम्नवती खलु । स्तोत्रे कृते तस्मा अन्नादिकं प्रयच्छत इत्यर्थः । तस्माद्युवामस्मदीयं यज्ञं प्रति आ गतम् । स्तोत्राणि श्रोतुमागच्छतम् । हे नरा नरौ नेतारावश्विनौ सः अयं स्तोता दिवि द्योतमाने अस्मिन्[4] यज्ञे सुतस्य अभिषुतस्य मध्वः मदकरस्य सोमस्य प्रियः स्तोत्रकारित्वेन प्रियतमो भवति । ततस्तेन सुतं सोमं पातं युवां शीघ्रमागत्य पिबतम् । तत्र दृष्टान्तः । गौराविव यथा तृषितौ गौरावेतन्नामकौ मृगौ इरिणे तटाकादिषूदकपानार्थं शीघ्रमागच्छतस्तद्वत् ॥

**पिबतं घर्मं मधुमन्तमश्विना बर्हिः सीदतं नरा ।**
**ता मन्दसाना मनुषो दुरोण आ नि पातं वेदसा वयः ॥ २ ॥**

पिबतम् । घर्मम् । मधुऽमन्तम् । अश्विना । आ । बर्हिः । सीदतम् । नरा ।
ता । मन्दसाना । मनुषः । दुरोणे । आ । नि । पातम् । वेदसा । वयः ॥ २ ॥

*हे अश्विना अश्विनौ मधुमन्तं मदवन्तम् । मदकारिणमित्यर्थः । तादृशं रसवन्तं वा घर्मम् । 'घृ क्षरणदीप्त्योः' । पात्रेषु क्षरन्तं सोमं पिबतम् । यद्वा । मधुमन्तम् । मधुर्मदकरः सोमः तद्वन्तं घर्मं महावीरपात्रगतं क्षीरं पिबतं सोमं चेति । न तु साहचर्येण तदसंभवात् । हे नरा नरौ नेतारौ सर्वस्य हे अश्विनौ बर्हिः बर्हिषि यज्ञे आ सीदतम् उपविशतम् । यद्वा । पूर्वं द्वितीयं पादं व्याख्याय प्रथमपादो व्याख्येयः । उपसदनानन्तरं सोमपानं युक्तमिति । किंच मनुषः मनुष्यस्य दुरोणे गृहभूतेऽस्मिन् देवयजने मन्दसाना[5] सोमपानेन मोदमानौ ता तौ पूर्वोक्तलक्षणौ युवां वेदसा पुरोडाशादिलक्षणेन हविषा सह वयः सोमरूपमन्नम्[6] आ आगत्य नि पातं निपिबतम् । यद्वा । वेदसा धनेन सह वयोऽस्माकमायुर्नि पातं नितरां रक्षतम् ॥

**आ वां विश्वाभिरूतिभिः प्रियमेधा अहूषत ।**
**ता वर्तिर्यातमुप वृक्तबर्हिषो जुष्टं यज्ञं दिविष्टिषु ॥ ३ ॥**

---

१. ख-त-भ१-२—वाल्पीभवंति; श—वा नाल्पीभवंति । २. त-श—दृष्टो । ३. ख-ज्ञ-त२-भ१-२—अल्पोदका भवति; ग-त१-३-४—अल्पोदका भवंति; श—अस्त्योदका भवंति । ४. ख-त-श—देवतेस्मिन्; ग—देवताभिरस्मिन्; भ—देवातस्मिन् । * ग-त३-४-श—पुस्तकेषु द्वितीयतृतीयचतुर्थमन्त्राणां भाष्यं न विद्यते । ५. भ—मंदसाना मंदसानौ । ६. घ—सोमलक्षणमन्नं ।

आ । वाम् । विश्वाभिः । ऊतिऽभिः । प्रियऽमेधाः । अहूषत ।
ता । वर्तिः । यातम् । उप । वृक्तऽबर्हिषः । जुष्टम् । यज्ञम् । दिविष्टिषु ॥ ३ ॥

हे अश्विनौ ᵛप्रियमेधाः । मेधो यज्ञः । प्रियतमयज्ञा यजमानाः । यद्वा । प्रियमेधा एतन्नामक ऋषिः । पूजायां बहुवचनम् । यष्टार ऋषिर्वा ᵛविश्वाभिरूतिभिः सर्वैः पालनैः सह । अथवा अवतिः याच्ञाकर्मा । सर्वैरभिलषितयाचनैः सहिताः ᵛअहूषत आह्वासिषुः आह्वासीत् । आत्मनः पालन-हेतुकत्वेन । यद्वाभिलषितदानाय वामाह्वयन्ति । ᵛता तौ युवां ᵛवृक्तबर्हिषः आस्तरणार्थं छिन्नबर्हिषो यष्टुः संबन्धि ᵛजुष्टं सर्वैर्देवैः सेवितं पर्याप्तं वा ᵛयज्ञं यजनीयं हविः प्रति ᵛदिविष्टिषु दिवसानाम-ह्नामागमनेषु प्रातःकालेषु यज्ञेषु वा ᵛवर्तिः । वर्तन्तेऽत्रेति वर्तिर्गृहम् । तत् ᵛउप ᵛआ ᵛयातं हविःस्वीकरणार्थं युवामागच्छतम् ॥

**पिबतं सोमं मधुमन्तमश्विना बर्हिः सीदतं सुमत् ।**
**ता वावृधाना उप सुष्टुतिं दिवो गन्तं गौराविवेरिणम् ॥ ४ ॥**

पिबतम् । सोमम् । मधुऽमन्तम् । अश्विना । आ । बर्हिः । सीदतम् । सुऽमत् ।
ता । ववृधानौ । उप । सुऽस्तुतिम् । दिवः । गन्तम् । गौरौऽइव । इरिणम् ॥ ४ ॥

हे ᵛअश्विना अश्विनौ ᵛमधुमन्तं रसवन्तं मदवन्तं वा ᵛसोमं युवां ᵛपिबतम् । ततः ᵛबर्हिः बर्हिषि यज्ञे ᵛसुमत् शोभनम् ᵛआ ᵛसीदतम् । पश्चात् ᵛववृधानौ सोमपानेन वृद्धौ ᵛता तौ युवां ᵛदिवः द्युलोकात् ᵛसुष्टुतिम् अस्माभिः क्रियमाणां शोभनां स्तुतिम् ᵛउप ᵛगन्तं उपगच्छतम् । तत्र दृष्टान्तः । ᵛगौराविव यथा गौरमृगावन्यस्माद्देशात् ᵛइरिणं तटाकादिकं प्रति जलपानार्थमागच्छतस्तद्वत् ॥

**आ नूनं यातमश्विनाश्वेभिः प्रुषितप्सुभिः ।**
**दस्रा हिरण्यवर्तनी शुभस्पती पातं सोममृतावृधा ॥ ५ ॥**

आ । नूनम् । यातम् । अश्विना । अश्वेभिः । प्रुषितप्सुऽभिः ।
दस्रा । हिरण्यवर्तनी इति हिरण्यऽवर्तनी । शुभः । पती इति । पातम् । सोमम् । ऋतऽवृधा ॥ ५ ॥

हे ᵛअश्विना अश्विनौ युवां ᵛप्रुषितप्सुभिः । प्सु[1] इति रूपनाम । 'प्रुष[2] स्नेहनसेचनपूरणेषु' । स्निग्धरूपैः दीप्तरूपैरित्यर्थः । तादृशैः शीघ्रगामिभिरश्वैः सह ᵛनूनम् इदानीम् ᵛआ ᵛयातम् अस्मदीयं यज्ञं प्रत्यागच्छतम् । हे ᵛदस्रा दस्रौ दर्शनीयावुपक्षपयितारौ वा हे ᵛहिरण्यवर्तनी । वर्ततेऽत्रेति वर्तनी रथः । हिरण्मयरथौ हे ᵛशुभस्पती उदकस्य कल्याणस्य वा पालयितारौ हे ᵛऋतावृधा सत्यस्य[3] यज्ञस्य वा वर्धयितारौ हे अश्विनौ युवां शीघ्रमागत्य ᵛसोमं ᵛपातं पिबतम् ॥

**वयं हि वां हवामहे विपन्यवो विप्रासो वाजसातये ।**
**ता वल्गू दस्रा पुरुदंससा धियाश्विना श्रुष्ट्या गतम् ॥ ६ ॥**

वयम् । हि । वाम् । हवामहे । विपन्यवः । विप्रासः । वाजऽसातये ।
ता । वल्गू इति । दस्रा । पुरुऽदंससा । धिया । अश्विना । श्रुष्टी । आ । गतम् ॥ ६ ॥

---

१. ख-ञ-त१-२-३-भ२-३—प्स; ञ४-भ१-स; श—अप्स । २. ख-ञ-त१-भ३—प्रुष प्लुष । ३. ख-ञ-त१-२—ऋतस्य सत्यस्य ।

हे अश्विनौ[1] विपन्यवः स्तोतारः अत एव विप्रासः विप्रा[2] मेधाविनः वयं वाजसातये अन्नलाभाय वाम्। हिरवधारणे। युवामेव हवामहे स्तुतिभिराह्वयामः। ततः[3] वल्गू। वल्गनं कुशलगमनम्। कुशलगमनशीलौ पुरुदंससा बहुकर्माणौ तौ युवां धिया अस्मदीयया स्तुत्याहूतौ सन्तौ श्रुष्टी। श्रुष्टीति क्षिप्रनाम। क्षिप्रमस्मभ्यं धनादिदानाय आ गतम् आगच्छतम्॥ ॥१०॥

'तं वो दस्मम्' इति षड्ऋचमष्टमं सूक्तं गौतमस्य[4] नोधस आर्षम्। तथा चानुक्रम्यते—'तं वो दस्मं नोधाः' इति। 'प्रागाथं ह' इत्युक्तत्वादेतदादिसूक्तत्रयं प्रागाथम्। इन्द्रो देवता। महाव्रते निष्केवल्ये बार्हततृचाशीतावेतत्सूक्तम्। तथा च पञ्चमारण्यके सूत्रितं—'तं वो दस्ममृतीषहमा नो विश्वासु हव्यः' (ऐ. आ. ५. २. ४) इति। अग्निष्टोमे माध्यंदिनसवनेऽच्छावाकशस्त्रे 'तं वो दस्मम्' इति प्रगाथः स्तोत्रियः[5]। सूत्रितं च—'तं वो दस्ममृतीषहं तत्वा यामि सुवीर्यमिति प्रगाथौ स्तोत्रियानुरूपौ' (आश्व. श्रौ. ५. १६) इति। चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिनो वैकल्पिकः स्तोत्रियोऽयमेव प्रगाथः (आश्व. श्रौ. ७. ४)। विषुवत्यपि माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रे 'तं वो दस्ममृतीषहम्' इति नौधसस्य योनिः शंसनीया। 'तं वो दस्ममृतीषहमभि प्र वः सुराधसम्' (आश्व. श्रौ. ८. ६) इति॥

**तं वो॑ द॒स्मम॑ृती॒षहं॒ वसो॑र्मन्दा॒नमन्ध॑सः।**
**अ॒भि व॒त्सं न स्वस॑रेषु धे॒नव॒ इन्द्रं॑ गी॒र्भिर्न॑वामहे॥ १॥**

तम्। व॒ः। द॒स्मम्। ऋ॒ति॒ऽसह॑म्। वसोः॑। म॒न्दा॒नम्। अन्ध॑सः।
अ॒भि। व॒त्सम्। न। स्वस॑रेषु। धे॒नव॑ः। इन्द्र॑म्। गी॒ःऽभिः॑। न॒वा॒म॒हे॒॥ १॥

नोधा इन्द्रं स्तौति। हे ऋत्विग्यजमानाः दस्मं दर्शनीयम् ऋतीषहम्। ऋतयो बाधकाः शत्रवः। तेषामभिभवितारम्। पुनः कीदृशम्। वसोः वासयितुर्दुःखस्य निवासयितुः। यद्वा। वसोः पात्रे निवसतः। तादृशस्य अन्धसः सोमलक्षणस्यान्नस्य पानेन मन्दानं मन्दमानं मोदमानं वः यष्टृयष्टव्यत्वेन युष्मत्संबन्धिनं तं तादृशम् इन्द्रं गीर्भिः स्तुतिलक्षणाभिर्वाग्भिः अभि नवामहे। 'नू स्तवने' 'नु शब्दे'। अभिष्टुमः। कुत्रेति। स्वसरेषु। अत्र यास्कः—'स्वसराण्यहानि[6] स्वयंसारीण्यपि वा स्वरादित्यो भवति स एनानि सारयति' (निरु. ५. ४) इति। सूर्यनेतृकेषु दिवसेषु वयमभिष्टुमः। तत्र दृष्टान्तः। वत्सं न यथा धेनवः नवप्रसूतिका धेनवः स्वसरेषु। सुष्ठ्वस्यन्ते प्रेर्यन्ते गावोऽत्रेति स्वसराणि गोष्ठानि। तेषु वत्समभिलक्ष्य शब्दयन्ति तद्वत्॥

**द्यु॒क्षं सु॒दानुं॒ तवि॑षीभि॒रावृ॑तं गि॒रिं न पु॑रु॒भोज॑सम्।**
**क्षु॒मन्तं॒ वाजं॑ श॒तिनं॑ सह॒स्रिणं॑ म॒क्षू गोम॑न्तमीमहे॥ २॥**

द्यु॒क्षम्। सु॒ऽदानु॑म्। तवि॑षीभिः। आऽवृ॑तम्। गि॒रिम्। न। पु॒रु॒ऽभोज॑सम्।
क्षु॒ऽमन्त॑म्। वाज॑म्। श॒तिन॑म्। स॒ह॒स्रिण॑म्। म॒क्षु। गोऽम॑न्तम्। ई॒म॒हे॒॥ २॥

द्युक्षं दीप्तीनां निवासस्थानम्। अतिशयितदीप्तिमित्यर्थः। यद्वा। द्युक्षं दिवि द्युलोके[7] क्षियन्तं निवसन्तम्। सुदानुं शोभनदानं तविषीभिः बलैः आवृतम् आच्छादितम्। आवरणे दृष्टान्तः।

---

१. घ–अश्विना अश्विनौ। २. ख-घ-ज्ञ-त१-२-भ१-३–'विप्रा' नास्ति। ३. ख-ग-ज्ञ-त१-२-भ३–ता तौ; भ१–ता तो। ४. त-भ–गोतमस्य। ५. ख-त-श–'स्तोत्रियः' नास्ति। ६. ज्ञ-निरु.–°ण्यहानि भवंति। ७. ख-ज्ञ-त१-२–लोके।

ᵛगिरिं ᵛन तविषीभिर्बलयुक्तैर्मेघैरावृतं शिलोच्चयमिव स्थितम्। पुनः कीदृशम्। ᵛपुरुभोजसं सोमादिहविष्प्रदानेन बहुभिर्यजमानैर्भोजयितव्यं यद्वा बहूनां पालयितारमिन्द्रं ᵛक्षुमन्तम्। 'टुक्षु शब्दे'। शब्दवन्तम्। अनेन पुत्रादिकं लक्ष्यते। स्तोत्रादीनि कुर्वाणं ᵛशतिनं ᵛसहस्रिणं शतसहस्रसंख्याकधनयुक्तं ᵛगोमन्तं गवादियुक्तं ᵛवाजम् अन्नं ᵛमक्षु शीघ्रम् ᵛईमहे याचामहे। यद्वा। पूर्वार्धो वाजविशेषणत्वेन वा योजनीयः। प्रदीप्तं शोभनदानयोग्यं बलादियुक्तं बहुभिः पुत्रमित्रादिभिर्भोक्तव्यं शब्दादियुक्तमन्नमिन्द्रं याचामह इति ॥

चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिनः 'न त्वा बृहन्तः' इति वैकल्पिकोऽनुरूपः। सूत्रितं च—'न त्वा बृहन्तो अद्रय उभयं शृणवच्च नः' (आश्व. श्रौ. ७. ४) इति ॥

**न त्वा॑ बृ॒हन्तो॒ अद्र॑यो॒ वर॑न्त इन्द्र वी॒ळवः॑ ।**

**यद्दित्स॑सि स्तुव॒ते माव॑ते॒ वसु॒ नकि॒ष्टदा मि॑नाति ते ॥ ३ ॥**

न । त्वा॒ । बृ॒हन्तः॑ । अद्र॑यः । वर॑न्ते । इन्द्र॒ । वी॒ळवः॑ ।

यत् । दित्स॑सि । स्तु॒वते । माऽव॑ते । वसु॑ । नकि॑ः । तत् । आ । मि॒ना॒ति॒ । ते॒ ॥ ३ ॥

हे ᵛइन्द्र ᵛबृहन्तः बलेन महान्तः अत एव ᵛवीळवः सर्वतो दृढा अपि ᵛअद्रयः पर्वताः ᵛत्वा त्वां ᵛन ᵛवरन्ते बलेन न निवारयन्ति। अनिवारणमेवोत्तरार्धेन विवृणोति। ᵛस्तुवते त्वद्विषयं स्तोत्रं कुर्वते ᵛमावते मत्सदृशाय मादृशाय[1] स्तोत्रे ᵛयत् ᵛवसु[2] यद्धनं ᵛदित्ससि त्वं दातुमिच्छसि तव देयं ᵛतत् धनं ᵛनकिः न कश्चित् ᵛआ ᵛमिनाति आभिमुख्येन हिनस्ति ॥ 'मीञ् हिंसायाम्'। 'मीनातेर्निगमे' इति ह्रस्वः। मावते। 'युष्मदस्मद्भ्यां सादृश्य उपसंख्यानम्' इति वतुप् ॥

**योद्धा॑सि॒ क्रत्वा॒ शव॑सो॒त दं॒सना॒ विश्वा॑ जा॒ताभि म॒ज्मना॑ ।**

**आ त्वा॒यम॒र्क ऊ॒तये॑ ववर्तति॒ यं गोत॑मा॒ अजी॑जनन् ॥ ४ ॥**

योद्धा॑ । अ॒सि॒ । क्रत्वा॑ । शव॑सा । उ॒त । दं॒सना॑ । विश्वा॑ । जा॒ता । अ॒भि । म॒ज्मना॑ ।

आ । त्वा॒ । अ॒यम् । अ॒र्कः । ऊ॒तये॑ । व॒वर्त॑ति॒ । यम् । गोत॑माः । अजी॑जनन् ॥ ४ ॥

हे इन्द्र ᵛक्रत्वा वृत्रहननादिकर्मणा अपि वा प्रज्ञानेन ᵛशवसा आत्मीयेन बलेन ᵛयोद्धा शत्रूणां संप्रहारकः[3] ᵛअसि। ᵛउत अपि च त्वं ᵛदंसना स्वकीयेन कर्मणा ᵛमज्मना। 'मज मुजि शब्दार्थाः'। मजमुजी चेति मजतिः शब्दार्थः। शत्रूणामाक्रोशनसमर्थेन बलेन ᵛविश्वा ᵛजाता सर्वाणि भूतजातान्यभिभवसि। उक्तार्थस्य[4] 'विश्वा जातान्यभ्यस्मि मह्ना' (ऋ. सं. ८. १००. ४) इत्यादिष्विन्द्रेणैवोक्तत्वात्। एतादृशं ᵛत्वा त्वाम् ᵛअर्कः। 'अर्च पूजायाम्'। अर्चनीयः ᵛअयं मन्त्रः यद्वार्को देवानामर्चकः पूजकोऽयं स्तोता ᵛऊतये स्वरक्षणाय ᵛआ ᵛववर्तति आवर्तयति। आत्माभिमुख्ये[5] करोतीत्यर्थः। वर्ततेर्लेटि बहुलं श्लुरडागमश्च। ᵛयं त्वां ᵛगोतमाः गोतमपुत्रा[6] नोधःप्रभृतयः ᵛअजीजनन् स्वयज्ञे प्रादुरबीभवन्। तं[7] त्वामयं[7] ᵛमन्त्रः स्तोता वावर्तयति ॥

---

१. ख-ग-न-'मादृशाय' नास्ति। २. त-भ१-२-वस्तु। ३. ग-संहारकः। ४. ख-त-न-भ-उक्तार्थेस्य; श-उक्तार्थोस्य। ५. ग-आत्माभिमुखं। ६. ख-त-भ-गौतम°। ७. ख-त-भ-श-तं त्वां वयं; न-तं त्वा वयं।

प्र हि रिरिक्ष ओजसा दिवो अन्तेभ्यस्परि ।
न त्वा विव्याच रज इन्द्र पार्थिवमनु स्वधां ववक्षिथ ॥ ५ ॥

प्र । हि । रिरिक्षे । ओजसा । दिवः । अन्तेभ्यः । परि ।
न । त्वा । विव्याच । रजः । इन्द्र । पार्थिवम् । अनु । स्वधाम् । ववक्षिथ ॥ ५ ॥

हे इन्द्र दिवः द्युलोकस्य पर्यन्तेभ्यः ओजसा । हिरवधारणे । स्वबलेनैव प्र रिरिक्षे प्रकर्षेणातिरिक्तो भवसि । रिचेर्लटि ' बहुलं छन्दसि ' इति श्लुः । प्रत्ययस्वरः । किंच हे इन्द्र पार्थिवं पृथिव्यां भवः रजः लोकः त्वा त्वां महता स्वशरीरेण न विव्याच न व्याप्नोति । द्यावापृथिवीभ्यामपि स्वतः स त्वं बलेन समर्थो भवसीत्यर्थः । एवंभूतः सन्नस्माकं स्वधाम् अन्नमुदकं वा अनु ववक्षिथ अनुवोढुमिच्छ । वहेः सनन्तस्य छान्दसे लिटि रूपम् । मन्त्रत्वादामभावः ॥

नकिः परिष्टिर्मघवन्मघस्य ते यद्दाशुषे दशस्यसि ।
अस्माकं बोध्युचथस्य चोदिता मंहिष्ठो वाजसातये ॥ ६ ॥

नकिः । परिष्टिः । मघऽवन् । मघस्य । ते । यत् । दाशुषे । दशस्यसि ।
अस्माकम् । बोधि । उचथस्य । चोदिता । मंहिष्ठः । वाजऽसातये ॥ ६ ॥

हे मघवन् धनवन्निन्द्र ते तव मघस्य मंहनीयस्य धनस्य परिष्टिः परिबाधको निरोद्धा नकिः न कश्चिदस्ति । यत् यदा दाशुषे हविर्दत्तवते यजमानाय दशस्यसि धनं प्रयच्छसि तदा तस्य निरोधको नास्तीत्यर्थः । तथा सति चोदिता धनानां चोदयिता स्तोतृभ्यः प्रेरयिता अत एव मंहिष्ठः दातृतमो मंहनीयो वा स त्वम् अस्माकं संबन्धि उचथस्य स्तोत्रं वाजसातये अन्नलाभाय तदर्थं क्रियमाणमिति बोधि बुध्यस्व । स्तोत्रेण स्तुतः सन्नस्मभ्यमन्नादिकं प्रयच्छेति शेषः । बोधि । ' बुध अवबोधने[1] ' । भौवादिकः । लोटि छान्दसः शपो लुक् । ध्यादेशः ॥ ॥ ११ ॥

' बृहदिन्द्राय ' इति सप्तर्चं नवमं सूक्तम् । नृमेधपुरुमेधावृषी । तौ चानुक्तत्वादाङ्गिरसौ । आदितो द्वौ प्रगाथौ पञ्चमीषष्ठ्यावनुष्टुभौ सप्तमी बृहती । इन्द्रो देवता । तथा चानुक्रम्यते—' बृहदिन्द्राय सप्त नृमेधपुरुमेधौ द्व्यनुष्टुब्बृहत्यन्तम् ' इति । चातुर्विंशिकेऽहनि मरुत्वतीये प्राकृतान्मरुत्वतीयात्प्रगाथादूर्ध्वं द्वौ मरुत्वतीयौ प्रगाथौ शंसनीयौ । ' बृहदिन्द्राय गायत ' इत्ययमाद्यः प्रगाथः । पृष्ठ्याभिप्लवषडहयोः द्वितीयेऽहन्ययं[2] प्रगाथः । सूत्रितं च—' बृहदिन्द्राय गायत नकिः सुदासो रथमिति मरुत्वतीया ऊर्ध्वं निरयात् ' ( आश्व. श्रौ. ७. ३ ) इति ॥

बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् ।
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥ १ ॥

बृहत् । इन्द्राय । गायत । मरुतः । वृत्रहन्ऽतमम् ।
येन । ज्योतिः । अजनयन् । ऋतऽवृधः । देवम् । देवाय । जागृवि ॥ १ ॥

हे मरुतः । ' रु शब्दे ' । मितं रुवन्तीति मरुतः । हे मितभाषिणः स्तोतारः वृत्रहंतमम् अतिशयेन पापविनाशनं बृहत् साम इन्द्राय इन्द्रार्थं[3] गायत अस्मदीययज्ञे गानं कुरुत । ऋता-

१. ख-ज्ञ-त१-२-३—बोधने । २. ख-ग-त-श—द्वितीयेहनि । ३. ख-त१-२—इंद्रार्थं देवां यः अजनयन् उत्पादयन् ।

वृधः सत्यस्य यज्ञस्य वा वर्धका विश्वे देवाः देवाय द्योतमानायेन्द्राय देवं देवनशीलं --- जागृवि सर्वेषां जागरणशीलं ज्योतिः सूर्यं येन साम्ना अजनयन् इन्द्रार्थमुदपादयन् तत्साम गायतेति ॥

अपाधमदभिशस्तीरशस्तिहाथेन्द्रो द्युम्न्याभवत् ।
देवास्त इन्द्र सख्याय येमिरे बृहद्भानो मरुद्गण ॥ २ ॥

अप । अधमत् । अभिऽशस्तीः । अशस्तिऽहा । अथ । इन्द्रः । द्युम्नी । आ । अभवत् ।
देवाः । ते । इन्द्र । सख्याय । येमिरे । बृहद्भानो इति बृहत्ऽभानो । मरुत्ऽगण ॥ २ ॥

अशस्तिहा स्तोत्रशंसनरहितानां शत्रूणां हन्ता इन्द्रः अभिशस्तीः । 'शसु हिंसायाम्' । अभितो हिंसा येषां ते । तादृशान् । यद्वा । अभिशस्तीः शत्रुकृता हिंसाः । अपाधमत् अपागमयत् । अथ शत्रुहननानन्तरम् इन्द्रः द्युम्नी सर्वत्र द्योतमानयशोयुक्तः । यद्वा । तेषां धनापहरणेन धनादिमान् । आभवत् सर्वतः प्रसिद्धोऽभवत् । अथोत्तरार्धः प्रत्यक्षकृतः । हे बृहद्भानो बृंहणशीलतेजस्क महादीप्ते वा मरुद्गण । मरुतां सप्त गणा यस्य सन्ति स तथोक्तः । तादृश हे इन्द्र[1] देवाः द्योतमानाः सर्वे देवाः सख्याय आत्मनः सखिभावाय ते[2] त्वां येमिरे नियच्छन्ति ॥

अग्निष्टोमे मरुत्वतीये 'प्र व इन्द्राय' इत्ययं मरुत्वतीयः प्रगाथः । सूत्रितं च—'प्र व इन्द्राय बृहत इति मरुत्वतीयः प्रगाथः' ( आश्व. श्रौ. ५. १४ ) इति ॥

प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत ।
वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥ ३ ॥

प्र । वः । इन्द्राय । बृहते । मरुतः । ब्रह्म । अर्चत ।
वृत्रम् । हनति । वृत्रऽहा । शतऽक्रतुः । वज्रेण । शतऽपर्वणा ॥ ३ ॥

हे मरुतः मितराविणः स्तोतारः बृहते महते वः स्तुत्यस्तोतृत्वलक्षणेन संबन्धेन युष्मदीयाय इन्द्राय ब्रह्म सामलक्षणं स्तोत्रं प्र अर्चत प्रोच्चारयत । ततः वृत्रहा वृत्रस्य पापस्य वा हन्ता शतक्रतुः शतविधकर्मा बहुविधप्रज्ञो वेन्द्रः शतपर्वणा शतसंख्याकधारेण वज्रेण एतन्नामकेनायुधेन वृत्रम् अपामावरकं वृत्राख्यमसुरं हनति युष्माभिरभिष्टुतः सन् हन्तु । हन्तेर्लेट्यडागमः ॥

अभि प्र भर धृषता धृषन्मनः श्रवश्चित्ते असद्बृहत् ।
अर्षन्त्वापो जवसा वि मातरो हनो वृत्रं जया स्वः ॥ ४ ॥

अभि । प्र । भर । धृषता । धृषत्ऽमनः । श्रवः । चित् । ते । असत् । बृहत् ।
अर्षन्तु । आपः । जवसा । वि । मातरः । हनः । वृत्रम् । जय । स्वरिति स्वः ॥ ४ ॥

हे धृषन्मनः शत्रूणां धर्षणशीलमनस्केन्द्र ते तवैव बृहत् महत् अतिप्रभूतम् श्रवः अन्नम् असत् अस्ति । तदन्नं धृषता धृष्टेन मनसा[3] युक्तः सन् अस्मभ्यम् अभि प्र भर आभिमुख्येन[4]

१. ग–इन्द्र ते । २. ग–'ते' नास्ति । ३. ख-त१-४–नमसा । ४. ख-ग-त२-३-भ-श– अभि आभि° ।

प्रकर्षेण संपादय। देहीत्यर्थः। हे इन्द्र ^v^मातरः अस्माकमुत्पादनहेतुत्वान्मातृभूताः। कथमपां मातृत्वम्। ' अद्भ्यः पृथिवी पृथिव्या ओषधयः ' (तै. उ. २. १) इत्यादिश्रुतेः। तादृश्यः ^v^आपः ^v^जवसा वेगेन ^v^वि ^v^अर्षन्तु विविधं भूमिं प्रति गच्छन्तु। कथमापो गच्छन्तीति चेत्तदाह। ^v^वृत्रम् अपामावरितारं शत्रुं मेघं ^v^हनः जहि ताडय। ततो मेघभेदनेनोदकानि विगच्छन्तु। पुनरपि ^v^स्वः सर्वं भूतजातं ^v^जय॥

प्रथमे स्वरसाम्नि निष्केवल्ये ' यज्जायथा अपूर्व्य ' इति स्तोत्रियः। तथा च सूत्र्यते—' तेषां स्तोत्रिया यज्जायथा अपूर्व्य ' ( आश्व. श्रौ. ८. ५ ) इति॥

यज्जाय॑था अपूर्व्य॒ मघ॑वन्वृत्र॒हत्या॑य। तत्पृ॑थि॒वीम॑प्रथय॒स्तद॑स्तभ्ना उ॒त द्याम्॥५॥

यत्। जाय॑थाः। अ॒पू॒र्व्य॒। मघ॑ऽवन्। वृ॒त्र॒ऽहत्या॑य।

तत्। पृ॒थि॒वीम्। अ॒प्र॒थ॒यः॒। तत्। अ॒स्त॒भ्नाः॒। उ॒त। द्याम्॥ ५॥

हे ^v^अपूर्व्य त्वत्तो व्यतिरिक्तेन पूर्व्येण वर्जित हे ^v^मघवन् मंहनीयधनवन्निन्द्र ^v^वृत्रहत्याय वृत्रासुरहननाय ^v^यत् यदा त्वं ^v^जायथाः उत्पन्नः प्रादुर्भूतोऽसि ^v^तत् तदानीमेव ^v^पृथिवीं प्रथमानाम् ^v^अप्रथयः प्रसिद्धां दृढामकरोः। ^v^उत अपि च ^v^तत् तदानीमेव ^v^द्यां द्युलोकमन्तरिक्षेण ^v^अस्तभ्नाः निरुद्धामकार्षीः। एतादृशं वीर्यं त्वदन्यस्य न संभवतीत्यर्थं द्योतयितुमपूर्व्येति पदम्॥

तत्ते॑ य॒ज्ञो अ॑जायत॒ तद॒र्क उ॒त हस्कृ॑तिः।
तद्विश्व॑मभि॒भूर॑सि॒ यज्जा॒तं यच्च॒ जन्त्व॑म्॥ ६॥

तत्। ते॒। य॒ज्ञः। अ॒जा॒य॒त॒। तत्। अ॒र्कः। उ॒त। हस्कृ॑तिः।

तत्। विश्व॑म्। अ॒भि॒ऽभूः। अ॒सि॒। यत्। जा॒तम्। यत्। च॒। जन्त्व॑म्॥ ६॥

हे इन्द्र यद्यदा त्वमजायथाः ^v^तत् तदानीं ^v^ते त्वदर्थं ^v^यज्ञः अग्निष्टोमादिः ^v^अजायत सोमपानार्थमभूत्। ^v^उत अपि च तदानीं ^v^हस्कृतिः। ' हसे हसने '। हासकारी प्रीत्यर्थं क्रियमाणो हर्षस्य सूचकः ^v^अर्कः अर्चनीयो मन्त्रोऽप्यजायत। किंच तदा ^v^यज्जातं भूतजातं ^v^यच्च ^v^जन्त्वम्। कृत्यार्थे त्वन्प्रत्ययः। जनितव्यं यत्[1] ^v^विश्वम् अस्ति ^v^तत् सर्वम् ^v^अभिभूरसि स्वमहिम्नाभिभूतवानसि॥

आ॒मासु॑ प॒क्वमैर॑य॒ आ सूर्यं॑ रोहयो दि॒वि।
घ॒र्मं न साम॑न्तपता सुवृ॒क्तिभि॒र्जुष्टं॒ गिर्व॑णसे बृ॒हत्॥ ७॥

आ॒मासु॑। प॒क्वम्। ऐर॑यः। आ। सूर्य॑म्। रो॒ह॒यः॒। दि॒वि।

घ॒र्मम्। न। साम॑न्। त॒प॒त॒। सु॒वृ॒क्तिऽभिः॑। जुष्ट॑म्। गिर्व॑णसे। बृ॒हत्॥ ७॥

हे इन्द्र ^v^आमासु अपक्वासु गोषु ^v^पक्वं पयः ^v^ऐरयः प्रैरयश्च। तथा मन्त्रः–' आमासु चिद्दधिषे पक्वमन्तः ' ( ऋ. सं. १. ६२. ९ ) इति। किंच ^v^दिवि द्युलोके ^v^सूर्यम् ^v^आ ^v^रोहयः च। पूर्वं पणयो नामासुरा अङ्गिरसां गा अपहृत्यान्धकारावृते कस्मिंश्चित्पर्वते ताः स्थापितवन्तः। ततोऽङ्गिरस इन्द्रं स्तुत्वा गाः पुनरस्मभ्यमाहरेति तैरुक्त इन्द्रो गवां स्थानं तमसावृतं दृष्ट्वा तत्र गोदर्शनाय द्युलोके सर्वप्रकाशकं सूर्यमारोहितवान्। स्थापितवानसि। ' चादिलोपे विभाषा ' इति पूर्वस्यैरय इत्यस्य

१. ख-घ-ज्ञ-त१-२-३-न-श–' यत् ' नास्ति।

न निघातः। अथ परोक्षकृतोऽर्धर्चः। हे स्तोतारः ᵛसुवृक्तिभिः शोभनाभिः स्तुतिभिः ᵛतपत इन्द्रं तीक्ष्णीकुरुत। इन्द्रं स्तुतिभिः प्रवर्धयतेत्यर्थः। तत्र दृष्टान्तः। ᵛघर्मं ᵛन। यथा घर्मं दीपनशीलं प्रवर्ग्यं ᵛसामन्। 'सुपां सुलुक्°' इति तृतीयाया लुक्। सामभिर्यथा तपन्ति तद्वत्। ततः ᵛगिर्वणसे गीर्भिर्वननीयायेन्द्राय ᵛजुष्टं प्रीतिकरं पर्याप्तं वा ᵛबृहत्[1] साम गायत॥　　॥ १२ ॥

'आ नो विश्वासु' इति षडृचं दशमं सूक्तम्। नृमेधपुरुमेधावृषी। विषमसंख्याका बृहत्यः समसंख्याकाः[2] सतोबृहत्यः[2]। इन्द्रो देवता। तथा चानुक्रान्तम्–'आ नो विश्वासु षट्' इति। महाव्रते निष्केवल्ये बार्हततृचाशीतावेतत्सूक्तम्। सूत्र्यते हि पञ्चमारण्यके–'आ नो विश्वासु हव्यो या इन्द्र भुज आभरः[3]' (ऐ. आ. ५. २. ४) इति[3]॥

आ नो॒ विश्वा॑सु॒ हव्य॒ इन्द्रः॑ स॒मत्सु॑ भूषतु।
उप॒ ब्रह्मा॑णि॒ सव॑नानि वृत्र॒हा प॑रम॒ज्या ऋची॑षमः॥ १॥

आ। नः॒। विश्वा॑सु। हव्यः॑। इन्द्रः॑। स॒मत्ऽसु॑। भू॒ष॒तु॒।
उप॑। ब्रह्मा॑णि। सव॑नानि। वृ॒त्र॒ऽहा। प॒र॒म॒ऽज्याः। ऋची॑षमः॥ १॥

ऋषिरनयेन्द्र एवं करोत्वित्याशास्ते। ᵛविश्वासु सर्वासु ᵛसमत्सु असुरयुद्धेषु ᵛहव्यः सर्वैर्देवैरात्मरक्षणार्थमाह्वातव्य एतादृशः ᵛइन्द्रः ᵛनः अस्माकं ᵛब्रह्माणि स्तोत्राणि हवीरूपाण्यन्नानि वा ᵛउप ᵛआ ᵛभूषतु अनुभवतु। सेवतामित्यर्थः। यद्वा। एतान्यलंकरोतु। तदागमनेन स्तोत्राणि हवींषि वालंकृतानि भवन्ति। तथा ᵛसवनानि प्रातःसवनादीनि त्रीणि सवनानि च भूषतु। कीदृश इन्द्रः। ᵛवृत्रहा वृत्रस्यासुरस्य पापस्य वा हन्ता ᵛपरमज्याः। युद्धेषु शत्रुहननार्थं परमाविनश्वरी ज्या मौर्वी यस्य स तथोक्तः। यद्वा। परमान् बलेन प्रकृष्टाञ्शत्रूञ्जिनाति हिनस्तीति परमज्याः। ᵛऋचीषमः स्तुत्या समः स्तुतिभिरभिमुखीकरणीयः। एतादृगिन्द्रः स्तोत्राणि भूषत्विति॥

त्वं दा॒ता प्र॑थ॒मो राध॑साम॒स्यसि॑ स॒त्य ई॑शान॒कृत्।
तु॒वि॒द्यु॒म्नस्य॒ युज्या वृ॑णीमहे पु॒त्रस्य॒ शव॑सो म॒हः॥ २॥

त्वम्। दा॒ता। प्र॒थ॒मः। राध॑साम्। अ॒सि॒। असि॑। स॒त्यः। ई॒शा॒न॒ऽकृत्।
तु॒वि॒ऽद्यु॒म्नस्य॑। युज्या॑। आ। वृ॒णी॒म॒हे॒। पु॒त्रस्य॑। शव॑सः। म॒हः॥ २॥

हे इन्द्र ᵛप्रथमः सर्वेषां मुख्यः ᵛत्वं ᵛराधसां धनानां ᵛदाता ᵛअसि। यद्वा। धनदातॄणां मध्ये त्वं प्रथम आदिमो भवसि। तथा ᵛईशानकृत् तव स्तोतॄन् ईशानान्[4] ऐश्वर्ययुक्तान् कुर्वंस्त्वं ᵛसत्यः सत्यकर्मा ᵛअसि। यथार्थकर्मा भवसीत्यर्थः। यस्मादेवं तस्माद्वयं ᵛतुविद्युम्नस्य बहुधनवतो बह्वन्नस्य वा ᵛशवसः बलस्य ᵛपुत्रस्य शत्रुवधार्थं बलकारणत्वेनोत्पन्नत्वात्तत्पुत्रस्य अत एव ᵛमहः महतस्तव ᵛयुज्या योग्यानि धनानि ᵛआ ᵛवृणीमहे संभजामहे॥

ब्रह्मा॑ त इन्द्र गिर्वणः क्रि॒यन्ते॒ अन॑तिद्भुता।
इ॒मा जु॑षस्व हर्यश्व॒ योज॒नेन्द्र॒ या ते॒ अम॑न्महि॥ ३॥

---

१. भ–बृहत् महत्। २. ख-त–'सम°.... °बृहत्यः' नास्ति। ३. ख-त-न-भ-श–आभरेति। ४. ख-ग-त-न-भ-श–ईशान्।

ब्रह्म । ते । इन्द्र । गिर्वणः । क्रियन्ते । अनतिऽअद्भुता ।
इमा । जुषस्व । हरिऽअश्व । योजना । इन्द्र । या । ते । अमन्महि ॥ ३ ॥

हे ^v^गिर्वणः गीर्भिर्वननीय ^v^इन्द्र ^v^अनतिद्भुता त्वद्गुणान् सर्वानतिक्रम्य न भवन्ति। इन्द्रगुणव्यापकानि । यथार्थभूतानीत्यर्थः । तादृशानि यानि ^v^ब्रह्म ब्रह्माणि स्तोत्राणि ^v^ते त्वदर्थमस्माभिः ^v^क्रियन्ते हे ^v^हर्यश्व हरिताश्ववन् हे इन्द्र योजनानि तव सम्यग्योजनशीलानि[1] तानि ^v^इमा इमानि स्तोत्राणि ^v^जुषस्व सेवस्व । किंच हे ^v^इन्द्र ^v^ते त्वदर्थं ^v^या यानि स्तोत्राणि ^v^अमन्महि वयमुच्चरामः[2] तानि सर्वाणि सेवस्व ॥

त्वं हि सत्यो मघवन्ननानतो वृत्रा भूरि न्यृञ्जसे ।
स त्वं शविष्ठ वज्रहस्त दाशुषेऽर्वाञ्चं रयिमा कृधि ॥ ४ ॥

त्वम् । हि । सत्यः । मघऽवन् । अनानतः । वृत्रा । भूरि । निऽऋञ्जसे ।
सः । त्वम् । शविष्ठ । वज्रऽहस्त । दाशुषे । अर्वाञ्चम् । रयिम् । आ । कृधि ॥ ४ ॥

हे ^v^मघवन् धनवन्निन्द्र ^v^सत्यः सत्यकर्मा ^v^त्वम् एव ^v^अनानतः केषामप्यप्रह्वः सन् ^v^भूरि भूरीणि वृत्राणि[3] रक्षांसि ^v^न्यृञ्जसे तानि प्रह्वीभावयसि । न्यक्करोषीत्यर्थः । हिरवधारणे । हे ^v^शविष्ठ बलेन वृद्धतम[4] हे ^v^वज्रहस्त । वज्रो हस्ते यस्य स तथोक्तः । हे इन्द्र ^v^सः तादृशः ^v^त्वं ^v^दाशुषे तुभ्यं हविर्दत्तवते यजमानाय ^v^रयिं धनादिकम् ^v^अर्वाञ्चम् अवाचीनमभिमुखं यथा गच्छति[5] तथा तम् ^v^आ ^v^कृधि समन्तात्कुरु ॥

चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रे ‘त्वमिन्द्र यशा असि’ इति प्रगाथो वैकल्पिकोऽनुरूपः । सूत्र्यते च— ‘त्वमिन्द्र यशा असीन्द्र क्रतुं न आ भर’ (आश्व. श्रौ. ७. ४) इति ॥

त्वमिन्द्र यशा अस्यृजीषी शवसस्पते ।
त्वं वृत्राणि हंस्यप्रतीन्येक इदनुत्ता चर्षणीधृता ॥ ५ ॥

त्वम् । इन्द्र । यशाः । असि । ऋजीषी । शवसः । पते ।
त्वम् । वृत्राणि । हंसि । अप्रतीनि । एकः । इत् । अनुत्ता । चर्षणिऽधृता ॥ ५ ॥

हे ^v^शवसस्पते बलस्य पालयितर्हे ^v^इन्द्र ^v^ऋजीषी । ऋजीषोऽपार्जितोऽभिषुतः सोमः । तद्वान् ^v^त्वं ^v^यशाः यशस्वी ^v^असि[6] । कथमस्य यशस्वित्वं तदाह । ^v^अप्रतीनि बलिभिरप्यप्रतिगतानि अत एव अनुत्तानि अन्यैर्नोत्तुमशक्यानि ^v^वृत्राणि रक्षांसि ^v^त्वम् ^v^एक ^v^इत् असहाय एव ^v^चर्षणीधृता असुरादिहननद्वारेण मनुष्याणां धारकेण वज्रेण ^v^हंसि संप्रहरसि । अत एवास्य यशस्वित्वम् ॥

तमु त्वा नूनमसुर प्रचेतसं राधो भागमिवेमहे ।
महीव कृत्तिः शरणा त इन्द्र प्र ते सुम्ना नो अश्नवन् ॥ ६ ॥

---

१. ख—सप्तस्य योजन°; ङ—सम्यक् तस्य योजन°; त१-२-३-४-सत्ययोजन°; श—सत्यस्य योजन° । २. ख-घ-त-भ—वयमुच्चराम; ग—वयमुच्चारयामः; श—वयमुच्चारोम । ३. घ—वृत्रा वृत्राणि । ४. घ—प्रवृद्धतम । ५. ख-त-भ-श—गच्छंति । ६. ख-ङ-त१-२-भ—असि भवसि ।

तम् । ऊँ इति॑ । त्वा॒ । नू॒नम् । अ॒सु॒र॒ । प्रऽचे॑तसम् । राधः॑ । भा॒गम्ऽइ॑व । ई॒म॒हे॒ ।
म॒हीऽइ॑व । कृत्तिः॑ । श॒र॒णा । ते॒ । इ॒न्द्र॒ । प्र । ते॒ । सु॒म्ना । नः॒ । अ॒श्न॒व॒न् ॥ ६ ॥

हे "असुर बलवन् प्राणवन् हे इन्द्र य उक्तगुणोऽस्ति[1] "तं "प्रचेतसं[2] प्रकृष्टज्ञानं "त्वा । "उ इत्यवधारणे । पितृवत्पोषकं त्वामेव "राधः धर्मादिसाधनं धनं[3] "नूनम् इदानीम् "ईमहे वयं याचामहे । तत्र दृष्टान्तः । "भागमिव । यथा कश्चित्पितृभागभूतं धनं याचते तद्वदिन्द्रो यजमानेभ्यः स्तोतृभ्यश्च धनं प्रयच्छत्येव । तस्माद्भागभूतं धनं यष्टारो वयं याचामहे । हे "इन्द्र "महीव "कृत्तिः । कृत्तिर्यशो वान्नं वा । 'कृती छेदने' । करणे क्तिन् । कृन्तत्यनेनेति[4] । ईदृशी कृत्तिरिव "ते तव "शरणा शरणं गृहमन्तरिक्षे द्युलोके महद्वर्तते । अत्र यास्कः—'कृत्तिः कृन्ततेर्यशो वान्नं वा महीव कृत्तिः शरणा त इन्द्र सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिव[5]' ( निरु. ५. २२ ) इति । किंच "ते तव स्वभूतानि "सुम्ना सुम्नानि पुत्रादिविषयसुखानि च "नः अस्मान् "प्र "अश्नवन् प्रकर्षेणाश्नुवतां व्याप्नुवन्तु । अश्नोतेर्लेट्यडागमः ॥ ॥ १३ ॥

'कन्या वाः' इति सप्तर्चमेकादशं सूक्तम् । अत्रेः पुत्र्यपालाख्या त्वग्दोषपरिहारायानेन सूक्तेनेन्द्रं स्तुतवती । अतः सैवर्षिः । प्रथमाद्वितीये पङ्क्ती शिष्टाः पञ्चानुष्टुभः । इन्द्रो देवता । तथा चानुक्रान्तं—'कन्या वाः सप्तात्रेय्यपालेतिहास ऐन्द्र आनुष्टुभं द्विपङ्क्त्यादि' इति । विनियोगो लैङ्गिकः । अत्रेतिहासमाचक्षते । पुरा किलात्रिसुतापाला ब्रह्मवादिनी केनचित्कारणेन त्वग्दोषदुष्टा सत्यत एव दुर्भगेति भर्त्रा परित्यक्ता पितुराश्रमे त्वग्दोषपरिहाराय चिरकालमिन्द्रमधिकृत्य तपस्तेपे । सा कदाचिदिन्द्रस्य सोमः प्रियकरो भवति तमिन्द्राय दास्यामीति बुद्ध्या नदीतीरं प्रत्यागमत्[6] । सा तत्र स्नात्वा पथि सोममप्युलभत । तमादाय गृहं प्रत्यागच्छन्ती मार्ग एव तं चखाद । तद्भक्षणकाले दन्तघर्षणजातं शब्दं ग्राव्णां सोमाभिषवध्वनिमिति[7] मत्वा तदानीमेवेन्द्रः समागमत् । आगत्य तामुवाच । किमत्र ग्रावाणोऽभिषुण्वन्तीति । सा प्रत्यूचे । अत्र कन्या स्नानार्थमागत्य सोमं दृष्ट्वा तं भक्षयति तद्भक्षणजो ध्वनिरेव न तु ग्राव्णां सोमाभिषवध्वनिरिति । तथा प्रत्युक्त इन्द्रः पराङावर्तत । गच्छन्तमिन्द्रं सा पुनरब्रवीत् । किमर्थं निवर्तसे त्वं तु सोमपानाय गृहं गृहं प्रति गच्छसि । इदानीमत्रापि मम दंष्ट्राभ्यामभिषुतं सोमं पिब धानादींश्च भक्षयेति । सैवेन्द्रमनाद्रियमाणा सती पुनरप्याह । अत्रागतं त्वामिन्द्रं[8] इति[8] न जानामि त्वयि गृहमागते बहुमानं करिष्यामीतीन्द्रमुक्त्वात्र समागत इन्द्र एव नान्य इति निश्चित्य स्वास्ये निहितं सोममाह । हे सोम त्वमागतायेन्द्राय पूर्वं शनैस्ततः शनकैः क्षिप्रं परिस्रवेति । तत इन्द्रस्तां[9] कामयित्वा तस्या आस्य एव दंष्ट्राभिषुतं सोममपात् । तत इन्द्रेण सोमे पीते सति त्वग्दोषादहं भर्त्रा परित्यक्ता सतीदानीमिन्द्रेण संगतेत्यपालायामुक्तायामिन्द्रस्तां व्याजहार । किं कामयसे तदहं करिष्यामीत्युक्ते सा वरमचीकमत । मम पितुः शिरो रोमवर्जितं तस्योषरं क्षेत्रं फलादिरहितं मम गुह्यस्थानमप्यरोमशमेतानि रोमफलादियुक्तं कुर्वित्युक्तायां तत्पितृशिरःस्थितं[10] खलतिमपहाय क्षेत्रं च फलादियुक्तं कृत्वैतस्यास्त्वग्दोषपरिहाराय स्वकीयरथच्छिद्रे शकटस्य युगस्य च छिद्र एतां त्रिवारं निश्चकर्ष । तस्याः पूर्वापहता या त्वक् शल्यको द्वितीया गोधा तृतीया कृकलासोऽभूत् । तत इन्द्रस्तामप्यपालां सूर्यसदृशत्वचमकरोदित्यैतिहासिकी कथा । एतच्च शाट्यायनब्राह्मणे स्पष्टमुक्तम् । तद्ब्राह्मणं तत्तदृग्व्याख्यानसमये दर्शयिष्यते । एषोऽर्थः[11] 'कन्या वाः' इत्यादिष्वृक्षु प्रतिपाद्यते ॥

१. ग–उक्तगुणोसि । २. त-भ१-२–सप्रचेतसं; श–प्रचेतसं । ३. ख-त१-२-३-४-भ२-३-श–दानं; ज्ञ-भ१–धनं दानं । ४. ख-ग-त–कृतं कृत्यनेनेति; श–कृते कृंतत्यनेनेति । ५. ज्ञ–कृत्तिरिवेति । ६. ख-त-श–प्रत्यागमयत्; भ१-२–प्रत्यगमयत् । ७. ज्ञ–°ध्वनिरिति । ८. ग-त-भ-श–त्वामिंद्रमिति । ९. ग–इंद्रः सोमं । १०. ग-त–°शिरःस्थितां । ११. भ१-२-य–एषोर्थः क्रमेण ।

कन्या३ वारवायती सोममपि स्रुताविदत् ।
अस्तं भरन्त्यब्रवीदिन्द्राय सुनवै त्वा शक्राय सुनवै त्वा ॥ १ ॥

कन्या । वाः । अवऽयती । सोमम् । अपि । स्रुता । अविदत् ।
अस्तम् । भरन्ती । अब्रवीत् । इन्द्राय । सुनवै । त्वा । शक्राय । सुनवै । त्वा ॥ १ ॥

vवाः उदकं प्रति vअवायती स्नानार्थमभ्यवगच्छन्ती vकन्या अपाला नाम स्त्री vस्रुता स्रुतौ मार्गे vसोममपि vअविदत् अलभत । 'विद्लृ लाभे'। लतारूपं तं सोमम् vअस्तं गृहं प्रति vभरन्ती आहरन्ती सा[1] सोमम् vअब्रवीत् । हे सोम vत्वा त्वाम् vइन्द्राय vसुनवै मम दन्तैरेवाभिषुणवै । पुनर्हे सोम vत्वा त्वां vशक्राय समर्थायेन्द्राय vसुनवै इदानीमेवाभिषवं करवै । सोमभक्षणकाले दन्तध्वनिं[2] ग्रावध्वनिमिति[3] मत्वेन्द्रस्तामगमत् । एषोऽर्थः शाट्यायनब्राह्मणे स्पष्टमभिहितः– 'सा तीर्थमभ्यवयन्ती सोमांशुमविन्दत्तं समखादत्तस्यै ह[4] ग्रावाण इव दन्ता ऊदुः[5] । स इन्द्र आद्रवत् ग्रावाणो वै वदन्तीति । सा तमभिव्याजहार कन्या वारवायती सोममपि स्रुताविददित्यस्यै[6] त इदं ग्रावाण इव दन्ता वदन्तीति विदित्वेन्द्रः पराङावर्तत । तमब्रवीदसौ य एषि वीरक इत्यादिना' इति ॥

असौ य एषि वीरको गृहंगृहं विचाकशत् ।
इमं जम्भसुतं पिब धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् ॥ २ ॥

असौ । यः । एषि । वीरकः । गृहम्ऽगृहम् । विऽचाकशत् ।
इमम् । जम्भऽसुतम् । पिब । धानाऽवन्तम् । करम्भिणम् । अपूपऽवन्तम् । उक्थिनम् ॥२॥

सा शक्रमब्रवीत् । हे इन्द्र vवीरकः वीरः समर्थस्त्वं vयः vअसौ त्वं vविचाकशत् । 'काशृ दीप्तौ'। यङ्लुकि शतरि रूपम् । धातोर्ह्रस्वश्छान्दसः । अत्यर्थं दीप्यमानः सन् vगृहंगृहं यजमानगृहं प्रति सोमपानाय त्वम् vएषि गच्छसि । अतस्त्वमत्रापि vजम्भसुतं मम दन्तैरभिषुतम् vइमं सोमं vपिब । कीदृशम् । vधानावन्तम् । धाना भृष्टयवाः । तद्वन्तं vकरम्भिणं सक्तुमन्तम् vअपूपवन्तं पुरोडाशादिसहितम् vउक्थिनं स्तोत्रादियुक्तमेतादृशं सोममत्रैव पिबेति । सा सोमेन सह धानादीनावेदयत् स्तोत्रं चाकार्षीदित्यर्थः ॥

आ चन त्वा चिकित्सामोऽधि चन त्वा नेमसि ।
शनैरिव शनकैरिवेन्द्रायेन्दो परि स्रव ॥ ३ ॥

आ । चन । त्वा । चिकित्सामः । अधि । चन । त्वा । न । इमसि ।
शनैःऽइव । शनकैःऽइव । इन्द्राय । इन्दो इति । परि । स्रव ॥ ३ ॥

पुनरपि सा तमनादृत्याह । हे इन्द्र । vचन इति निपातसमुदायोऽवधारणार्थे । vत्वा त्वाम् vआ vचिकित्सामः ज्ञातुमिच्छाम एव । इह मार्ग एवागतं vत्वा त्वां vन vअधि vइमसि नाधिगच्छामः । अत्रापि vचन इत्यवधारणे । मम गृहमागच्छन्तं त्वामिन्द्र इति न जानीम एवेत्य-

१. ख-त-श–'सा' नास्ति । २. त-भ१-२–दंते वाजं धनं; भ३–दंतैर्जातं; श–दंतवाद्यमाने । ३. ग–ग्रावध्वानिरिति । ४. भ–ह वा । ५. ख-त-भ१–ऊधुः; भ२–ऊधः; भ३–ऊर्ध्वः; श–ऊचुः । ६. ख-त-भ१-२–श्रुताविद॰ ।

पाला तमिन्द्रमुक्त्वा स्वास्ये स्थितं सोमं प्रत्याह। हे ᵛइन्दो क्षरणशील सोम अस्मा आगताय ᵛइन्द्राय तदर्थं पूर्वं ᵛशनैः मन्दं मन्दं ततः ᵛशनकैरिव। कुत्सितार्थेऽकच्। कुत्सितं शनैः शनकैः। क्षिप्रमित्यर्थः। क्षिप्रमेव त्वं ᵛपरि ᵛस्रव मदीयदंष्ट्राभिरभिपूयमाणः सन् परितः क्षरेति। तथा यज्ञेष्वपि ग्रावभिरभिषूयमाणः सोमः प्रथमं शनैः परिस्रवति ततः शनकैः क्षिप्रमिति तदभिप्रायेणोक्तम्। तत इन्द्र एतद्वाक्यं श्रुत्वा तदानीमेवमभिषुतं[1] सोमं यज्ञस्थानीयादपालामुखादेवाधासीत्। उक्तार्थः शाट्यायनकब्राह्मणे स्पष्टमभ्यधायि—'अनाद्रियमाणैव[2] तमब्रवीदा चन त्वा चिकित्सामोऽधि चन त्वा नेमसीति। पुरा मां सर्वयर्चापाला स्तौतीत्युपपर्यावर्तत शनैरिव शनकैरिवेन्द्रायेन्दो परि स्रवेति ह वा अस्यै मुखात्सोमं निरधयत्सोमपीथ इह वा अस्य भवति य एवं विद्वान् स्त्रीमुपजिघ्रति' इति॥

**कुविच्छकत्कुवित्करत्कुविन्नो वस्यसस्करत्।**
**कुवित्पतिद्विषो यतीरिन्द्रेण संगमामहै॥ ४॥**

कुवित्। शकत्। कुवित्। करत्। कुवित्। नः। वस्यसः। करत्।
कुवित्। पतिऽद्विषः। यतीः। इन्द्रेण। सम्ऽगमामहै॥ ४॥

सोमं पीतवानिन्द्रोऽस्मानेवं करोत्वित्याह। स इन्द्रः ᵛकुवित् बहुवारमस्मान् ᵛशकत् शक्तान् समर्थान् करोतु। किंच ᵛकुवित् बहु चास्मभ्यं ᵛकरत् करोतु[3]। किंच स[3] एवेन्द्रः ᵛनः अस्मान् ᵛकुवित् बहुकृत्वः ᵛवस्यसः वसीयसोऽतिशयेन वसुमतः करोतु। करोतेः शक्नोतेश्च लेट्यडागमः। इदानीमात्रेय्यहमेवं करिष्यामीति वदति। पूर्वं ᵛकुवित् बहु ᵛपतिद्विषः त्वग्दोषात्पतिभिर्भर्तृभिर्बहुवारं द्विष्टा अत एव ᵛयतीः पतिभ्यः सकाशादितो गच्छन्त्यो वयं कैश्चिदप्यनूह्यमानाः सत्यः संप्रति ᵛइन्द्रेण सह ᵛसंगमामहै संगच्छामहै। सर्वत्र पूजार्थे बहुवचनम्। संगमशब्देनेन्द्रोऽपालामचकमतेति॥

**इमानि त्रीणि विष्टपा तानीन्द्र वि रोहय।**
**शिरस्ततस्योर्वरामादिदं म उपोदरे॥ ५॥**

इमानि। त्रीणि। विष्टपा। तानि। इन्द्र। वि। रोहय।
शिरः। ततस्य। उर्वराम्। आत्। इदम्। मे। उप। उदरे॥ ५॥

इन्द्रेण किं कामयसे तद्दास्यामीत्युक्ता सा वरमनया प्रार्थयते। हे ᵛइन्द्र ᵛइमानि ᵛत्रीणि विष्टपानि स्थानानि सन्ति। ᵛतानि त्रीणि स्थानानि ᵛवि ᵛरोहय उत्पादय। कानि तानि। ᵛततस्य मम पितुः रोमवर्जितं ᵛशिरः। खलतिमित्यर्थः। तच्चापगमय। रोमशं कुर्वित्यर्थः। ᵛउर्वरां तस्योषरं क्षेत्रं सर्वसस्याढ्यं कुरु। ᵛआत् अनन्तरं ᵛमे मम ᵛउपोदरे[4] उपोदरस्य समीपे यत् ᵛइदं स्थानम्। गुह्यमित्यर्थः। तच्च त्वग्दोषे सत्यसंजातरोमकम्। तदपि त्वग्दोषपरिहारेण रोमयुक्तं कुरु। एतानि त्रीणि स्थानानि। एषोऽर्थः शाट्यायनके प्रपञ्चेनोक्तः—'तामब्रवीदपाले किं कामयसीति। साब्रवीदिमानि त्रीणि विष्टपेति खलतिर्हास्यै पिता स तं हाखलतिं चकारोर्वरा हास्य न जज्ञे सो ह जज्ञ उपस्थे हास्यै रोमाणि नासुस्तान्यु ह जज्ञिर इत्यस्योत्तरा भूयसे निर्वचनायासौ च या नः' इति॥

---

१. भ-°मेवाभि°। २. ख-त-अनाद्रियमाणेव; ग-अनाद्रियमाणे च; श-अनाद्रियमाणे। ३. ख-त२-करोतु त्वदाहम; ज्ञ-भ२-श-करोतु तदाह स; त१-त्वदाहम। ४. भ-उपोदरे उदरे।

असौ च या न उर्वरादिमां तन्वं१ मम ।
अथो ततस्य यच्छिरः सर्वा ता रोमशा कृधि ॥ ६ ॥

असौ । च । या । नः । उर्वरा । आत् । इमाम् । तन्वम् । मम ।
अथो इति । ततस्य । यत् । शिरः । सर्वा । ता । रोमशा । कृधि ॥ ६ ॥

उक्तमेवार्थमनया विवृणोति । ᵛनः अस्माकं पितुः ᵛया[1] ᵛअसौ[1] ᵛउर्वरा यदिदमूषरं क्षेत्रमस्ति । ᵛआत् अनन्तरं ᵛमम ᵛइमां ᵛतन्वम् इदं त्वग्दोषदुष्टं गुह्यस्थानम् । ᵛअथो अथापि च ᵛततस्य तातस्य ᵛयच्छिरः रोमवर्जितमस्ति एतानि ᵛसर्वा सर्वाणि तानीमानि[2] त्रीणि स्थानानि ᵛरोमशा रोमशानि ᵛकृधि कुरु ॥

खे रथस्य खेऽनसः खे युगस्य शतक्रतो ।
अपालामिन्द्र त्रिष्पूत्व्यकृणोः सूर्यत्वचम् ॥ ७ ॥

खे । रथस्य । खे । अनसः । खे । युगस्य । शतक्रतो इति शतऽक्रतो ॥
अपालाम् । इन्द्र । त्रिः । पूत्वी । अकृणोः । सूर्यऽत्वचम् ॥ ७ ॥

अनयापालां सूर्यसदृशप्रभामकरोदित्याह । हे ᵛशतक्रतो हे शतसंख्याकयज्ञ बहुविधप्रज्ञ वा हे ᵛइन्द्र ᵛरथस्य स्वकीयस्य ᵛखे पृथुतरे छिद्रे तथा ᵛअनसः शकटस्य ᵛखे तदपेक्षयाल्पे छिद्रे ᵛयुगस्य ᵛखे चाल्पतरे सूक्ष्मे छिद्रे रथशकटयुगानां छिद्रेषु त्वग्दोषपरिहाराय ᵛत्रिः त्रिवारं निष्कर्षणेन ᵛपूत्वी शोधयित्वा ततः ᵛअपालाम् एतन्नामिकामत्रिसुतां ब्रह्मवादिनीं ᵛसूर्यत्वचं सूर्यसमानत्वचम् ᵛअकृणोः अकरोः । कल्याणतमरूपभाजमकरोरित्यर्थः शाट्यायनकब्राह्मणे स्पष्टमभिहितः[3]—' तां खे रथस्यात्यबृहत्सा गोधाभवत्तां खेऽनसोऽत्यबृहत्सा संश्लिष्टकाभवत्तदेषाभ्यनूच्यते खे रथस्य खेऽनस इति । तस्यै ह यत्कल्याणतमं रूपाणां तद्रूपमास ' इति । त्वग्दोषापनयनाय अक्षादिद्वारेष्वतिकर्षणमिति[4] । यस्त्वग्दोषदूषितः सन्नेतत्सूक्तं पठति तस्य[5] त्वग्दोषमपगमय्य सूर्यसदृशकान्तिमिन्द्रः[6] करोतीति सूक्तं प्रशस्यते ॥ ॥ १४ ॥

' पान्तमा वः ' इति त्रयस्त्रिंशदृचं द्वादशं सूक्तमाङ्गिरसस्य श्रुतकक्षस्य सुकक्षस्य वार्षमैन्द्रम् । आद्यानुष्टुप् शिष्टा गायत्र्यः । तथानुक्रम्यते—' पान्तं त्रयस्त्रिंशच्छ्रुतकक्षः सुकक्षो वाद्यानुष्टुप् ' इति । महाव्रते गायत्रतृचाशीतौ प्रथमावर्जमिदं सूक्तमुत्तरं च । पञ्चमारण्यके सूत्रितं च–' पुरुहूतं पुरुष्टुतमिति शेषः ' ( ऐ. आ. ५. २. ३ ) इति । प्रथमे रात्रिपर्याये होतुः शस्त्र आद्यौ तृचौ स्तोत्रियानुरूपौ । सूत्रितं च—' पान्तमा वो अन्धसोऽपादु शिप्र्यन्धसः ' ( आश्व. श्रौ. ६. ४ ) इति ॥

पान्तमा वो अन्धस इन्द्रमभि प्र गायत । विश्वासाहं शतक्रतुं मंहिष्ठं चर्षणीनाम् ॥ १ ॥

पान्तम् । आ । वः । अन्धसः । इन्द्रम् । अभि । प्र । गायत ।
विश्वऽसहम् । शतऽक्रतुम् । मंहिष्ठम् । चर्षणीनाम् ॥ १ ॥

हे ऋत्विजः ᵛवः युष्मदीयम् ᵛअन्धसः सोमलक्षणमन्नम् ᵛआ ᵛपान्तम् आभिमुख्येन पिबन्तम् । ' पा पाने ' । छान्दसः शपो लुक् । ' सर्वे विधयश्छन्दसि विकल्पन्ते[7] ' इति ' न

१. घ–असौ च यासा । २. घ–ता तानीमानि । ३. ख-त–°मभिहितं; भ१–°मभिहिता । ४. ग–युगादि° । ५. ग-त-श–' तस्य ' नास्ति । ६. ग-त१-२-४-भ–°सदक्ष°; न–°सदृशक्ष° । ७. त-भ१-२–विकल्प्यंते ।

लोकाव्यय° ' इति षष्ठीप्रतिषेधाभावः । ततोऽन्धसः इत्यस्य ' कर्तृकर्मणोः° ' इति षष्ठी[1] । सोममाभिमुख्येन पिबन्तमेतादृशम् ᵛइन्द्रं ᵛप्र ᵛगायत प्रकर्षेणाभिष्टुत । कीदृशम् । ᵛविश्वसहं सर्वेषां शत्रूणामभिभवितारं सर्वेषां भूतजातानां वा अत एव ᵛशतक्रतुं बहुविधप्रज्ञानं बहुविधकर्माणं वा ᵛचर्षणीनां मनुष्याणां ᵛमंहिष्ठं धनस्य दातृतमम् । यद्वा । यजमानानां यष्टव्यत्वेन पूजनीयमिन्द्रं गायतेति समन्वयः ॥

पुरुहूतं पुरुष्टुतं गाथान्यं सनश्रुतम् । इन्द्र इति ब्रवीतन ॥ २ ॥

पुरुऽहूतम् । पुरुऽस्तुतम् । गाथान्यम् । सनऽश्रुतम् । इन्द्रः । इति । ब्रवीतन ॥ २ ॥

हे ऋत्विग्यजमानाः ᵛपुरुहूतं यज्ञेषु बहुभिराहूतं ᵛपुरुष्टुतं बहुभिः स्तोत्रशस्त्रादिभिः स्तुतम् अत एव ᵛगाथान्यं गानयोग्यं गातव्यं ᵛसनश्रुतं सनातनतया प्रसिद्धमेवंविधं देवम् ᵛइन्द्र ᵛइति यूयं ᵛब्रवीतन ब्रूयात । ' ब्रूञ् व्यक्तायां वाचि ' इत्यस्य लोटि व्यत्ययेन ध्वमस्तनबादेशः । अत एव गुणः ॥

इन्द्र इन्नो महानां दाता वाजानां नृतुः । महाँ अभिज्ञ्वा यमत् ॥ ३ ॥

इन्द्रः । इत् । नः । महानाम् । दाता । वाजानाम् । नृतुः । महान् । अभिऽज्ञु । आ । यमत् ॥ ३ ॥

ᵛइन्द्र ᵛइत् पूर्वोक्तलक्षण इन्द्र एव ᵛनः अस्मभ्यं ᵛमहानां महतां ᵛवाजानाम्[2] अन्नानाम् । यद्वा । महानाम् । वर्णव्यत्ययः । मघानां धनानां वाजानामन्नानां च ᵛदाता भवतु । कीदृशः । ᵛनृतुः । ' नृतिशृध्योः कूः ' ( उ. सू. १. ९१ ) इति कूप्रत्ययः । ह्रस्वश्छान्दसः । सर्वस्य नर्तयिता । यद्वा । ' नॄ[3] नये[3] ' । औणादिकस्तुप्रत्ययः । धातोर्ह्रस्वश्छान्दसः । स्तोतृभ्यो गवादिनेता । अत एव ᵛमहान् स इन्द्रः ᵛअभिज्ञु अभिगतजानुकमस्मभ्यम् ᵛआ ᵛयमत् आयच्छतु ददातु । यद्वा स इन्द्रोऽभिज्ञ्वस्मदभिमुखमागच्छन्धनं स्वहस्तयोः परिगृह्यास्मासयतु । धनं यत्वास्मभ्यं ददात्वित्यर्थः ॥

अपादु शिप्र्यन्धसः सुदक्षस्य प्रहोषिणः । इन्दोरिन्द्रो यवाशिरः ॥ ४ ॥

अपात् । ऊँ इति । शिप्री । अन्धसः । सुऽदक्षस्य । प्रऽहोषिणः ।
इन्दोः । इन्द्रः । यवऽआशिरः ॥ ४ ॥

ᵛशिप्री । शिप्रे हनू नासिके वा । शोभनहनुः । यद्वा । शिप्राः शीर्षण्याः । सुशिरस्त्राणः । सः ᵛइन्द्रः एव ᵛप्रहोषिणः प्रकर्षेण देवान् हविर्भिर्जुह्वतः ᵛसुदक्षस्य एतन्नामकस्य ऋषेः संबन्धि ᵛयवाशिरः । ' श्रीञ् पाके ' । आङ्पूर्वस्य ' अपस्पृधेथामानृचुः° ' इत्यादिना धातोः शिरादेशः । यवैरामिश्रितं यवैः सह पक्वम् ᵛइन्दोः सर्वतः पात्रेषु क्षरत् ᵛअन्धसः सोमलक्षणमन्नम् ᵛअपात् अपिबत् । यद्वा । अस्य सोमस्य भागमिन्द्रार्थे परिकल्पितं सोमांशमपिबत्[4] । ᵛउ इत्यवधारणे ॥

तम्वभि प्रार्चतेन्द्रं सोमस्य पीतये । तदिद्ध्यस्य वर्धनम् ॥ ५ ॥

तम् । ऊँ इति । अभि । प्र । अर्चत । इन्द्रम् । सोमस्य । पीतये ।
तत् । इत् । हि । अस्य । वर्धनम् ॥ ५ ॥

---

१. ख-त-न-भ२-३-श—षष्ठ्याः; भ१—षष्ठ्या । २. ख-ग-त-भ-श—' वाजानां ' नास्ति । ३. ग—नृणातेः । ४. ख-त२-३-४भ१-२-श—सोमांसमपिबतु; ग—सोमांशपिबत्; ज्ञ-त१—सोमं साम पिबतु; भ३—सोमं संपिबतु ।

हे ऋत्विजः ᵛतमु तमेव ᵛइन्द्रम् ᵛअभि आभिमुख्येन ᵛप्रार्चत प्रकर्षेण स्तुत। किमर्थम्। ᵛसोमस्य ᵛपीतये अत्रागत्य सोमपानाय। किमर्थं सोमपानायेति विशेष्यते तदाह। ᵛतदित् तत्सोमपानमेव ᵛअस्य इन्द्रस्य ᵛवर्धनं[1] वर्धकं भवति खलु। तस्मात्सोमपानजहर्षाय प्रार्चत॥ ॥ १५ ॥

अस्य पीत्वा मदानां देवो देवस्यौजसा। विश्वाभि भुवना भुवत्॥ ६ ॥

अस्य। पीत्वा। मदानाम्। देवः। देवस्य। ओजसा। विश्वा। अभि। भुवना। भुवत्॥ ६ ॥

ᵛदेवः द्योतमान इन्द्रः ᵛअस्य अस्माभिर्दीयमानस्य सोमस्य ᵛमदानां मदकरान् रसान् ᵛपीत्वा पानं कृत्वा। यद्वा। अस्यैतं सोमं पीत्वा तथा मदानां मदसाधनादीनि भक्षयित्वा। ᵛदेवस्य ग्रहेषु शोभमानस्य[2] यद्वा देवनशीलस्य देवैः काम्यमानस्य सोमस्य पानजातेन ᵛओजसा बलेन ᵛविश्वा ᵛभुवना सर्वाणि भुवनानि भूतजातानि ᵛअभि ᵛभुवत् अभिभवति। 'सोमस्य ता मद इन्द्रश्चकार' (ऋ. सं. २. १५. २) इत्यादिषु सोमपानमदे सर्वाणि वृत्रहननादिकर्माणि चकारेत्येवमत्रापि सर्वाणि भूताभिभवनादीनि कर्माण्यकार्षीदिति॥

प्रथमे पर्याये होतुः शस्त्रे 'त्यमु वः सत्रासाहम्' इत्यादिसूक्तशेषः। सूत्रितं च—'त्यमु वः सत्रासाहमिति सूक्तशेषोऽभि त्यं मेषम्' (आश्व. श्रौ. ६. ४) इति। अप्तोर्यामेऽच्छावाकातिरिक्तोक्थे 'त्यमु वः सत्रासाहम्' इति तृचो वैकल्पिकः स्तोत्रियः। सूत्रितं च—'त्यमु वः सत्रासाहं सत्रा ते अनु कृष्टय इति वा स्तोत्रियानुरूपौ' (आश्व. श्रौ. ९. ११) इति। व्यूळहस्य दशरात्रस्य चतुर्थेऽहनि निष्केवल्य एष एव तृचो निविद्धानीयः। सूत्रितं च—'इमं नु मायिनं हुवे त्यमु वः सत्रासाहम्' (आश्व. श्रौ. ८. ८) इति॥

त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम्। आ च्यावयस्यूतये॥ ७ ॥

त्यम्। ऊँ इति। वः। सत्राऽसहम्। विश्वासु। गीर्षु। आऽयतम्। आ। च्यवयसि। ऊतये॥ ७ ॥

यजमानः स्तोतारं संबोध्याह। हे स्तोतः ᵛसत्रासाहम्। सत्राशब्दो बहुवाची। बहूनामभिभवितारम्। यद्वा। शत्रून् स्वबलेन संगत्य जेतारम्। ᵛवः युष्मदीयेषु ᵛविश्वासु ᵛगीर्षु सर्वेषु स्तोत्रेषु ᵛआयतं विस्तृतम्। सर्वत्रेन्द्र एव स्तूयते। तस्मात्तेषु विततं ᵛत्यम्। ᵛउ इत्यवधारणे। तमेवेन्द्रम् ᵛऊतये अस्मद्रक्षणाय ᵛआ ᵛच्यावयसि। 'च्युङ् प्लुङ् गतौ'। त्वदीयैः स्तोत्रैर्यज्ञं प्रत्याभिमुख्येनागमय॥

युध्मं सन्तमनर्वाणं सोमपामनपच्युतम्। नरमवार्यक्रतुम्॥ ८ ॥

युध्मम्। सन्तम्। अनर्वाणम्। सोमऽपाम्। अनपऽच्युतम्। नरम्। अवार्यऽक्रतुम्॥ ८ ॥

एवंगुणोपेतमिन्द्रमागमयेत्याह। ᵛयुध्मं शत्रूणां संप्रहारकं[3] ᵛसन्तम् अत एव ᵛअनर्वाणम् अन्यैरप्रत्यृतमनभिगतं तस्मात् ᵛअनपच्युतं संग्रामेषु शत्रुभिरहिंसितं ᵛसोमपां सोमस्य पातारमस्य सोमस्य मदे सति ᵛअवार्यक्रतुं भटैरनिवारणीयकर्माणं[4] ᵛनरं सर्वस्य नेतारम्। एतादृग्गुणोपेतमिन्द्रमागमयेति पूर्वेण सह संबन्धः॥

शिक्षा ण इन्द्र राय आ पुरु विद्वाँ ऋचीषम। अवा नः पार्ये धने॥ ९ ॥

---

१. घ–वर्धनं हि। २. न–शोभनस्य। ३. ख-त-न-भ१-२-श–संप्रसारकं; घ–संप्रतारकं।
४. ङ-त१-२-३-श–°रभिवारणीय°।

शिक्षं । नः । इन्द्र । रायः । आ । पुरु । विद्वान् । ऋचीषम । अर्व । नः । पार्ये । धने ॥ ९ ॥

हे ऋचीषम स्तुत्या सम । यद्वा । 'ईष गतिहिंसादर्शनेषु'। अस्मादमप्रत्ययः । सर्वैर्गन्तव्य दर्शनीय वा । उक्तगुणोपेत हे इन्द्र विद्वान् सर्वविषयज्ञानवांस्त्वं शत्रुभ्य[1] आहृत्य[2] रायः धनानि नः अस्मभ्यं पुरु[3] बहुवारं शिक्ष प्रयच्छ । यद्वा । पुर्विति रायो विशेषणम् । बहूनि धनानि प्रयच्छ । किंच पार्ये । पाराः[4] शत्रवः । तत्र भवे धने आजिहीर्षिते शत्रुधने नः अस्मान् अव रक्ष । शत्रून् हत्वा तद्धनेनास्मान् पालयेत्यर्थः ॥

## अतश्चिदिन्द्र ण उपा याहि शतवाजया । इषा सहस्रवाजया ॥१०॥

अतः । चित् । इन्द्र । नः । उप । आ । याहि । शतऽवाजया । इषा । सहस्रऽवाजया ॥१०॥

हे इन्द्र अतश्चित् अस्मात् द्युलोकादेव यद्वास्मात् शत्रुस्थानात् शतवाजया शतसंख्याकबलयुक्तेन तथा सहस्रवाजया । वाजोऽन्नम् । सहस्रसंख्यान्नवता बहुबलान्नेन इषा अन्नरसेन युक्तः सन् नः अस्मान् उपा याहि अधिकमाभिमुख्येनागच्छ ॥ ॥ १६ ॥

## अयाम धीवतो धियोऽर्वद्भिः शक्र गोदरे । जयेम पृत्सु वज्रिवः ॥११॥

अयाम । धीऽवतः । धियः । अर्वत्ऽभिः । शक्र । गोऽदरे । जयेम । पृत्ऽसु । वज्रिऽवः ॥११॥

हे शक्र समर्थेन्द्र धीवतः । 'छन्दसीरः' इति मतुपो वत्वम् । कर्मकरणात्कर्मवन्तो वयं धियः युद्धजयार्थं कर्माणि अयाम गच्छाम । ततः गोदरे । 'दृ विदारणे'। 'अच इः' इति इप्रत्ययः । गवां पर्वतानां[5] दारयितर्हे[6] वज्रिवः वज्रवन् । यद्वा । वजनं गमनं वज्रः । तद्वान् कुलिशः । तद्वन्निन्द्र पृत्सु संग्रामेषु अर्वद्भिः सर्वतो गन्तृभिः त्वया दत्तैरश्वैः जयेम वयं तवादातॄञ्जेष्यामः ॥

## वयमु त्वा शतक्रतो गावो न यवसेष्वा । उक्थेषु रणयामसि ॥१२॥

वयम् । ऊँ इति । त्वा । शतक्रतो इति शतऽक्रतो । गावः । न । यवसेषु । आ ।
उक्थेषु । रणयामसि ॥ १२ ॥

हे शतक्रतो बहुप्रज्ञान बहुकर्मन् वेन्द्र त्वा सर्वतः । उ इत्यवधारणे । त्वामेव उक्थेषु स्तोत्रशस्त्रादिकेषु वयं रणयामसि । 'इदन्तो मसिः'। आरणयामः शब्दयामः । रमयाम इत्यर्थः । तत्र दृष्टान्तः। गावो न। यथा गोपालः यवसेषु तृणविशेषेषु गावो गाः पशून् आ समन्ताद्रमयति तद्वत्। गाव इति सर्वविधीनां छन्दसि विकल्पितत्वात् 'औतोऽम्°' (पा. सू. ६. १. ९३) इत्यात्वाभावः ॥

## विश्वा हि मर्त्यत्वनानुकामा शतक्रतो । अगन्म वज्रिन्नाशसः ॥१३॥

विश्वा । हि । मर्त्यऽत्वना । अनुऽकामा । शतक्रतो इति शतऽक्रतो ।
अगन्म । वज्रिन् । आऽशसः ॥ १३ ॥

---

१. ग-त-न-भ-आनृभ्य; श-आतृभ्य । २. ख-ज्ञ-त२-३-न-भ१-आहृभ्य; त४-श-अहृभ्य । ३. ख-ग-त-श-'पुरु' नास्ति; घ-आपुरु । ४. ग-पराः । ५. ख-ज्ञ-त१-२-न-भ-पर्वतानां मेघानां । ६. ख-त२-३-भ१-श-चरयितर्हे; ज्ञ-त४-य-वरयितर्हे; न-चरयितर्हे; भ२-दरयितर्हे ।

हे ᵛशतक्रतो बहुप्रज्ञेन्द्र ᵛमर्त्यत्वना मर्त्यत्वानि । 'सुपां सुलुक्°' इति विभक्तेराजादेशः । संज्ञापूर्वकस्य विधेरनित्यत्वाद्दीर्घाभावः । ᵛविश्वा ᵛहि विश्वान्येव मर्त्यत्वानि ᵛअनुकामा कामानभिलाषाननुगतानि । कामोपेतानीत्यर्थः । मनुष्याश्चैतानि[1] कामयन्त इत्यर्थः । तथा सति हे ᵛवज्रिन् वज्रवन्निन्द्र[2] वयमपि ᵛआशसः आशंसनानि धनादिकामान् ᵛअगन्म अवगच्छाम । गमेर्लेटि 'बहुलं छन्दसि' इति शपो लुक् । 'म्वोश्च' इति मकारस्य नकारः ॥

त्वे सु पुत्र शवसोऽवृत्रन्कामकातयः । न त्वामिन्द्राति रिच्यते ॥१४॥

त्वे इति । सु । पुत्र । शवसः । अवृत्रन् । कामऽकातयः ।

न । त्वाम् । इन्द्र । अति । रिच्यते ॥ १४ ॥

हे ᵛशवसः[3] ᵛपुत्र[3] बलनिमित्तमुत्पन्नत्वाद्बलस्य पुत्रेन्द्र ᵛकामकातयः । 'कै गै रै शब्दे' । कामपराः कातयः शब्दाः येषां भवन्ति ते तथोक्ताः । तादृशा मनुष्याः ᵛत्वे त्वयि ᵛसु ᵛअवृत्रन् स्वस्वकामाभिपूरणार्थं सुष्ठु[4] वर्तन्ते । तस्मान्मर्त्यत्वानि कामोपेतानि इत्युत्पन्नम् । 'वृतु वर्तने' । लङि[5] छान्दसो विकरणस्य लुक् । 'बहुलं छन्दसि' इति रुडागमः । यत एवं ततो हे ᵛइन्द्र ᵛत्वां कश्चिदपि देवः ᵛन ᵛअति ᵛरिच्यते । बलेन धनेन वातिरिक्तः समर्थो नास्ति ॥

स नो वृषन्त्सनिष्ठया सं घोरया द्रवित्न्वा । धियाविड्ढि पुरंध्या ॥१५॥

सः । नः । वृषन् । सनिष्ठया । सम् । घोरया । द्रवित्न्वा । धिया । अविड्ढि । पुरम्ऽध्या ॥१५॥

हे ᵛवृषन् कामानां वर्षितरिन्द्र ᵛसः पूर्वोक्तलक्षणस्त्वं ᵛसनिष्ठया । 'षणु दाने' । धनादेर्दातृतमया ᵛघोरया सपत्नानां[6] भयकारिण्या अत एव ᵛद्रवित्न्वा द्रावयित्र्या शत्रूणां पलायित्र्या[7] । द्रवतेरित्नुच्प्रत्ययः । ᵛपुरंध्या बहूनां धारयित्र्या पोषयित्र्या ᵛधिया तादृशेन[8] कर्मणा ᵛनः अस्मान् ᵛसम् ᵛअविड्ढि समन्तात्पालय । अवतेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । बहुलवचनात्सिप इडागमः । अस्मान् धनदानादिना रक्षेत्यर्थः ॥ ॥ १७ ॥

यस्ते नूनं शतक्रतविन्द्र द्युम्नितमो मदः । तेन नूनं मदे मदेः ॥१६॥

यः । ते । नूनम् । शतक्रतो इति शतऽक्रतो । इन्द्र । द्युम्निऽतमः । मदः ।

तेन । नूनम् । मदे । मदेरिति मदेः ॥ १६ ॥

अत्र सोमः स्तूयते । हे ᵛशतक्रतो शतविधप्रज्ञान हे ᵛइन्द्र ᵛद्युम्नितमः यशस्वितमः ᵛयः ᵛमदः । माद्यन्त्यनेनेति[9] मदः सोमः । यः सोमः ᵛनूनं पुरा ᵛते त्वदर्थमस्माभिरभिषुतोऽस्ति ᵛतेन अस्माभिः प्रदीयमानेन सोमेन ᵛनूनम् इदानीं ᵛमदे तत्पानेन मदे तव संजाते सत्यस्मानपि ᵛमदेः धनादिदानेन त्वं मादय । 'मदी हर्षे' । अत्रान्तर्णीतण्यर्थः । 'बहुलम्°' इति शप् ॥

यस्ते चित्रश्रवस्तमो य इन्द्र वृत्रहन्तमः । य ओजोदातमो मदः ॥१७॥

---

१. ख-ग-त२-३-भ-श-°श्चैतानि तानि । २. ग-त४-न-श-°न्निंद्र सृष्टाके; ञ-त१-२-भ-°न्निंद्र सृष्टके । ३. ख-ग-त-भ२-श-सहसस्पुत्र; भ१-३-सहस्पुत्र । ४. घ-भ-सु सुष्ठु । ५. ख-त१-२-३-४-न-भ१-२-श-लटि; ञ-लिटि; भ३-लेटि । ६. ख-त-न-भ-श-संपन्नानां । ७. ख-त-न-भ-श-पालयित्र्या । ८. न-भ-एतादृशेन । ९. ख-त-न-भ-माद्यत्य°; श-मादयत्य° ।

यः । ते । चित्रश्र॑वःऽतमः । यः । इन्द्र । वृत्रहन्ऽत॑मः । यः । ओजःऽदात॑मः । मद॑ः ॥१७॥

हे इन्द्र चित्रश्रवस्तमः अतिशयेन नानाविधकीर्तिः यः मदः सोमः ते त्वदर्थमस्माभिरभिषुतः । यः सोमः वृत्रहन्तमः अतिशयेन पापानां हन्ता । किंच यः सोमः ओजोदातमः अतिशयेन बलस्य दाता । तेनास्माभिर्दीयमानेन सोमेन त्वं माद्येरिति पूर्वेण संबन्धः ॥

**वि॒द्मा हि यस्ते॑ अद्रिव॒स्त्वाद॑त्तः सत्य सोमपाः । विश्वा॑सु दस्म कृ॒ष्टिषु॑ ॥१८॥**

वि॒द्म । हि । यः । ते॒ । अ॒द्रि॒ऽव॒ः । त्वाऽद॑त्तः । स॒त्य॒ । सो॒म॒ऽपाः॒ ।
विश्वा॑सु । द॒स्म॒ । कृ॒ष्टिषु॑ ॥ १८ ॥

हे अद्रिवः । अद्रिर्वज्रः । तद्वन् हे सत्य यथार्थकर्मन् सोमपाः सोमस्य पातः दस्म दर्शनीय यद्वा शत्रूणामुपक्षपयितरिन्द्र विश्वासु कृष्टिषु सर्वेषु सोमस्य दातृषु यजमानेषु त्वादत्तः त्वया दत्तः ते त्वदीयः यः रयिरस्ति तं विद्म हि । यष्टारो वयमपि जानीम एव । यद्वा । हे इन्द्र सर्वेषु यष्टृषु मध्ये वयं ते त्वदीयमेव नान्यदीयमिति तं सोमं जानीम एव यः सोमस्त्वादत्तोऽस्माभिस्त्वदर्थं दीयते । अत्र त्वादेशश्छान्दसः ॥

प्रथमे पर्यायेऽच्छावाकस्य 'इन्द्राय मद्वने सुतम्' इति स्तोत्रियः । सूत्रितं च—'इन्द्राय मद्वने सुतमिन्द्रमिद्गाथिनो बृहत्' ( आश्व. श्रौ. ६. ४ ) इति ॥

**इन्द्रा॑य॒ मद्व॑ने सु॒तं परि॑ ष्टोभन्तु नो॒ गिर॑ः । अ॒र्कम॑र्चन्तु का॒रव॑ः ॥ १९ ॥**

इन्द्रा॑य । मद्व॑ने । सु॒तम् । परि॑ । स्तो॒भ॒न्तु॒ । न॒ः । गिर॑ः । अ॒र्कम् । अ॒र्च॒न्तु॒ । का॒रव॑ः ॥ १९ ॥

मद्वने । माद्यतेः क्वनिप् । मदनशीलाय इन्द्राय तदर्थं सुतम् अभिषुतं सोमं नः अस्मदीयाः गिरः स्तुतिलक्षणा वाचः परि ष्टोभन्तु । स्तोभतिः स्तुतिकर्मा । परितः सोमं स्तुवन्तु । ततः कारवः स्तुतिकारिणः स्तोतारश्च अर्कं सर्वैरर्चनीयं सोमम् अर्चन्तु पूजयन्तु ॥

**यस्मि॒न्विश्वा॒ अधि॒ श्रियो॒ रण॑न्ति स॒प्त सं॒सद॑ः । इन्द्रं॑ सु॒ते ह॑वामहे ॥ २० ॥**

यस्मि॑न् । विश्वा॑ः । अधि॑ । श्रिय॑ः । रण॑न्ति । स॒प्त । स॒म्ऽसद॑ः । इन्द्र॑म् । सु॒ते । ह॒वा॒म॒हे॒ ॥२०॥

यस्मिन् इन्द्रे विश्वाः सर्वाः श्रियः कान्तयः अधि अधिकं भवन्ति । अतिशयेन तेजस्वीत्यर्थः । किंच सप्त सप्तसंख्याकाः संसदः । सम्यक् यज्ञेषु कर्मकरणार्थं सीदन्तीति संसदः होत्रकाः । यस्मिन् रणन्ति सोमप्रदानार्थं रमन्ते । यद्वा । यं शब्दयन्ति स्तुवन्ति । तं पूर्वोक्तलक्षणम् इन्द्रं सुते सोमेऽभिषुते सति हवामहे वयं सोमपानायाह्वयामः ॥　　॥ १८ ॥

**त्रिक॑द्रुकेषु॒ चेत॑नं दे॒वासो॑ य॒ज्ञम॑त्नत । तमिद्व॑र्धन्तु नो॒ गिर॑ः ॥ २१ ॥**

त्रिऽक॑द्रुकेषु । चेत॑नम् । दे॒वास॑ः । य॒ज्ञम् । अ॒त्न॒त॒ । तम् । इत् । व॒र्ध॒न्तु॒ । न॒ः । गिर॑ः ॥ २१ ॥

हे देवासः देवा इन्द्रादयः त्रिकद्रुकेषु आभिप्लविकेष्वहःसु । ज्योतिर्गौरायुरिति त्रिकद्रुकाः । तेषु चेतनम् । 'चिती संज्ञाने' । चेतन्ति जानन्त्यनेन स्वर्गादिकमिति चेतनः । ज्ञानसाधनं यज्ञम् अत्नत अतन्वत स्वैः स्वैः कर्मभिः पालनैश्च विस्तारितवन्तः । 'तनु विस्तारे' । लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'तनिपत्योश्छन्दसि' इत्युपधालोपः । तमित् तमेवास्मदीयं यज्ञं नः अस्माकं गिरः स्तुतिलक्षणा वाचः वर्धन्तु वर्धयन्तु ॥

आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः । न त्वामिन्द्राति रिच्यते ॥२२॥
आ । त्वा । विशन्तु । इन्दवः । समुद्रम्ऽइव । सिन्धवः । न । त्वाम् । इन्द्र । अति । रिच्यते ॥२२॥

हे इन्द्र ᵛइन्दवः स्रवन्तोऽस्माभिर्दीयमानाः सोमाः ᵛत्वा त्वाम् ᵛआ ᵛविशन्तु । सर्वतः प्रविशन्तु । तत्र दृष्टान्तः । ᵛसमुद्रमिव ᵛसिन्धवः । स्यन्दमाना नद्यः यथा समुद्रं जलाशयं सर्वतः प्रविशन्ति तद्वत् । यत एवं तस्मात् हे ᵛइन्द्र ᵛत्वां कश्चिदपि देवो बलेन धनेन वा ᵛन ᵛअति ᵛरिच्यते नातिरिक्तोऽस्ति । सामर्थ्यवांस्त्वत्तोऽधिको नास्तीत्यर्थः ॥

विव्यक्थ महिना वृषन्भक्षं सोमस्य जागृवे । य इन्द्र जठरेषु ते ॥ २३ ॥
विव्यक्थ । महिना । वृषन् । भक्षम् । सोमस्य । जागृवे । यः । इन्द्र । जठरेषु । ते ॥ २३ ॥

हे ᵛवृषन् कामानां वर्षितर्हे ᵛजागृवे जागरणशीलेन्द्र त्वं तस्य ᵛसोमस्य ᵛभक्षं पानं प्रति ᵛमहिना स्वमहिम्ना ᵛविव्यक्थ सर्वतो व्याप्तवानसि । व्यचेर्लिटि थलि ' 'अभ्यासस्योभयेषाम्' (पा. सू. ६. १. १७) इति संप्रसारणम् । हे ᵛइन्द्र ᵛयः सोमः ᵛते ᵛजठरेषु उदरेषु प्रविशति तस्य पानं व्याप्तवानसीति शेषः ॥

अरं त इन्द्र कुक्षये सोमो भवतु वृत्रहन् । अरं धामभ्य इन्दवः ॥ २४ ॥
अरम् । ते । इन्द्र । कुक्षये । सोमः । भवतु । वृत्रऽहन् । अरम् । धामऽभ्यः । इन्दवः ॥२४॥

हे ᵛवृत्रहन् वृत्रस्यापामावरकस्यासुरस्य पापस्य वा हन्तर्हे ᵛइन्द्र ᵛसोमः अस्माभिर्दीयमानः ᵛते तव ᵛकुक्षये ᵛअरम् अलं पर्याप्तः ᵛभवतु । किंच ᵛइन्दवः सर्वतः क्षरणशीलाः सोमास्तव ᵛधामभ्यः नानाविधेभ्यः शरीरेभ्यस्तव तेजोभ्यो वा ᵛअरम् अलं पर्याप्ता भवन्तु । अनेन तेजसां हविर्भाक्त्वमस्तीति सूचितम् । अस्मदीयाः सोमा एव तव कुक्षये देहेभ्योऽपि पर्याप्ता भवन्तु नान्यदीया इति भावः ॥

अरमश्वाय गायति श्रुतकक्षो अरं गवे । अरमिन्द्रस्य धाम्ने ॥ २५ ॥
अरम् । अश्वाय । गायति । श्रुतऽकक्षः । अरम् । गवे । अरम् । इन्द्रस्य । धाम्ने ॥ २५ ॥

श्रुतकक्षो नामर्षिः गवाश्वादिन्द्रं[1] स्तौति । अयं ᵛश्रुतकक्षः एतन्नामक ऋषिः ᵛअश्वाय इन्द्रेण दीयमानायाश्वायैतदर्थम् ᵛअरम् अलं ᵛगायति इन्द्रविषयं स्तोत्रं करोति । तथा ᵛगवे ᵛअरम्[2] अलं[2] गायति । ᵛइन्द्रस्य इन्द्रकर्तृकाय ᵛधाम्ने गृहाय तदर्थं च ᵛअरं पर्याप्तं स्तौति । यदश्वादिकमिन्द्रः प्रयच्छति तस्मै गायतीति । यद्वा । इन्द्रस्येति कर्मणि षष्ठी । गवादिलाभार्थमिन्द्रं[3] स्तौति ॥

अरं हि ष्मा सुतेषु णः सोमेष्विन्द्र भूषसि । अरं ते शक्र दावने ॥ २६ ॥
अरम् । हि । स्म । सुतेषु । नः । सोमेषु । इन्द्र । भूषसि । अरम् । ते । शक्र । दावने ॥२६॥

हे ᵛइन्द्र ᵛसुतेषु अभिषुतेषु ᵛनः अस्मदीयेषु ᵛसोमेषु । ᵛहि ᵛष्म इत्यवधारणे । त्वमेव तेषां पाने अलं[4] पर्याप्तः ᵛभूषसि भवसि । यद्वा । सोमेष्वभिषुतेषु सत्सु नोऽस्माकं पर्याप्तं धनं भूषसि । 'भू प्राप्तौ' । त्वं प्रापय । तथा भवति हे ᵛशक्र समर्थेन्द्र ᵛदावने धनादिकस्य दात्रे ᵛते तुभ्यमस्माभिर्दीयमानाः सोमाः ᵛअरम् अलं पर्याप्ता भवन्तु ॥ ॥ १९ ॥

---

१. ख-ज्ञ-त१-२-भ१-२—गावोश्वादिंद्रं; त३-४-न—गावाश्वादिंद्रं; भ३—गवेश्वायेंद्रं; श—गावीश्वदिंद्रं । मु—गवाश्वादिलाभार्थमिन्द्रं । २. ख-ज्ञ-त२-भ१—श्वलं; ग-भ३—अलं; घ—अरं; भ२—स्वलं । ३. ख-त-श—नावादि° । ४ग—अरं; घ—अरमलं ।

परा॒काश॑च्चिदद्रि॒वस्त्वां न॑क्षन्त नो॒ गिर॑ः। अरं॑ गमाम ते व॒यम् ॥ २७ ॥

प॒रा॒का॒त्ता॒त्। चि॒त्। अ॒द्रि॒ऽवः॒। त्वाम्। न॒क्ष॒न्त॒। नः॒। गिर॑ः। अर॑म्। ग॒मा॒म॒। ते॒। व॒यम् ॥२७॥

हे अद्रिवः वज्रवन्निन्द्र नः अस्मदीयाः गिरः इतो निर्गताः स्तुतयः पराकात्तात्। चित् अप्यर्थः। अतिदूरादपि त्वां नक्षन्त व्याप्नुवन्तु। किमुत समीपस्थामश्नुवतामिति। नक्षते-र्व्याप्तिकर्मणो नशतेर्वा[1] लेटि सिपि रूपम्। एवं सति स्तोतारः वयं ते त्वदीयं धनम् अरम् अलं पर्याप्तं गमाम त्वत्तो गच्छाम ॥

आभिप्लविकेषूक्थ्येषु[2] तृतीयसवने ब्राह्मणाच्छंसिनः 'एवा ह्यसि वीरयुः' इति वैकल्पिकः स्तोत्रियः। सूत्रितं च—'एवा ह्यसि वीरयुरेवा ह्यस्य सूनृता' (आश्व. श्रौ. ७. ८) इति ॥

ए॒वा ह्यसि॑ वीर॒युरे॒वा शूर॑ उ॒त स्थि॒रः। ए॒वा ते॒ राध्यं॒ मन॑ः ॥ २८ ॥

ए॒व। हि। असि॑। वी॒र॒ऽयुः। ए॒व। शूर॑ः। उ॒त। स्थि॒रः। ए॒व। ते॒। राध्य॑म्। मन॑ः ॥२८॥

हे इन्द्र त्वं वीरयुः वीरान् युद्धकर्मणि समर्थान्[3] हन्तुं कामयमानः एव असि भवसि खलु। हि प्रसिद्धौ। अत एव त्वं शूरः सामर्थ्यवानेव भवसि। उत अपि च स्थिरः संग्रामे धैर्यवान् भवसि। एकत्र स्थित्वैव शत्रून् संप्रहरसीत्यर्थः। एवं सति ते तव मनः राध्यं स्तुति-भिराराधनीयम् एव यतोऽनेन मनसा त्वं शत्रुवधं संग्रामे धैर्यादिकं च[4] करोषीति। तव मन एव सर्वैः स्तुत्यमित्यर्थः ॥

ए॒वा रा॒तिस्तु॑वीमघ॒ विश्वे॑भिर्धायि धा॒तृभि॑ः। अधा॑ चिदिन्द्र मे॒ सचा॑ ॥ २९ ॥

ए॒व। रा॒तिः। तु॒वि॒ऽम॒घ॒। विश्वे॑भिः। धा॒यि॒। धा॒तृऽभि॑ः। अध॑। चि॒त्। इ॒न्द्र॒। मे॒। सचा॑ ॥२९॥

हे तुविमघ। तुविरिति बहुनाम। बहुधनवन्निन्द्र विश्वेभिः विश्वैः धातृभिः कर्मधारकैः[5]। यद्वा। देवानां हविर्दानेन पोषयितृभिः। सर्वैर्यजमानैस्तव रातिः गवाश्वधनादिदानं धायि तैर्धा-र्यते एव। दधातेर्लुङि कर्मणि रूपम्। चिदेवार्थे। अध अत एव हे इन्द्र एवंविध त्वं मे यष्टुर्म-मापि सचा धनादिदानेन कर्मसहायो भव ॥

मो षु ब्र॒ह्मेव॑ तन्द्र॒युर्भुवो॑ वाजानां पते। मत्स्वा॑ सु॒तस्य॒ गोम॑तः ॥ ३० ॥

मो इति॑। सु। ब्र॒ह्माऽइ॑व। त॒न्द्र॒युः। भुव॑ः। वा॒जा॒ना॒म्। प॒ते॒। मत्स्व॑। सु॒तस्य॑। गोऽम॑तः ॥३०॥

हे वाजानां पते अन्नानां पते बलानां वा हे इन्द्र तन्द्रयुः निष्कारणं निवृत्तकर्मत्वादालस्य-युक्तः ब्रह्मेव ब्राह्मण इव। 'अथापि तद्धदर्थे भाष्यते' (निरु. ६. ३१) इति यास्कोक्तमनुसृत्य तन्द्रयुक्त इत्युक्तम्। अथवा यागादिकर्मपरित्यागेनालस्यमिच्छन्नास्तिको ब्राह्मण इव त्वं मो षु भुवः सुष्ठु मा भवः। सर्वदास्मत्कर्मान्वितो भवेत्याशासनम्। तदेवाह। सुतस्य अभिषुतस्य ततः गोमतः गव्येन क्षीरेण दध्ना वा मिश्रणवतः सोमस्य पानेन मत्स्व माद्य हृष्टो भव ॥

मा न॑ इन्द्रा॒भ्या॒३॒॑दिश॒ः सूरो॑ अ॒क्तुष्वा य॑मन्। त्वा यु॒जा व॑नेम॒ तत् ॥ ३१ ॥

मा। नः॒। इ॒न्द्र॒। अ॒भि। आ॒ऽदिश॑ः। सूर॑ः। अ॒क्तुषु॑। आ। य॒मन्।
त्वा। यु॒जा। व॒नेम॒। तत् ॥ ३१ ॥

१. ख-त-न-भ-श—नसतेर्वा। २. झ-त२-३-भ१-३—°षूक्थेषु। ३. ख-झ-त१-२-न-भ—समर्थान् शत्रून्। ४. ख-ग-घ-त-न-भ-श—'च' नास्ति। ५. ख-ग-घ-भ३—कर्मधारकैः।

हे ᵛइन्द्र ᵛआदिशः आदेष्टारः समन्तादायुधान्यतिविसृजन्तः[1] ᵛसूरः । 'सृ गतौ'। सर्वत्र सरणशीला राक्षसाः ᵛअक्तुषु रात्रिषु दिवापि ᵛनः अस्माकं ᵛमा ᵛअभि ᵛआ ᵛयमन् आभिमुख्येन मा नियन्तारो[2] भवन्तु। यद्यागताश्चेत्तदा ᵛतत् रक्षःकुलं ᵛत्वा त्वया ᵛयुजा सहायेन[3] वयं ᵛवनेम हिंसाम । 'श्रथ क्नथ क्रथ क्लथ हिंसार्था वन च' इत्यत्र पठितत्वाद्धिंसार्थः ॥

त्वयेदिन्द्र युजा वयं प्रति ब्रुवीमहि स्पृधः । त्वमस्माकं तव स्मसि ॥ ३२ ॥

त्वया । इत् । इन्द्र । युजा । वयम् । प्रति । ब्रुवीमहि । स्पृधः ।
त्वम् । अस्माकम् । तव । स्मसि ॥ ३२ ॥

हे ᵛइन्द्र ᵛत्वयेत् । इदवधारणे। त्वयैव ᵛयुजा सहायेन ᵛस्पृधः स्पर्धमानाञ्छत्रून् ᵛवयं ᵛप्रति ᵛब्रुवीमहि निराकुर्वीमहि । प्रतिवचनं निराकरणम् । उत्तरार्धेनेन्द्रसाहाय्यमेव प्रतिपादयति । हे इन्द्र ᵛत्वमस्माकं भवसि स्तुत्यस्तोतृयष्टृयष्टव्यतया त्वमस्माकं भवसि वयं ᵛतव ᵛस्मसि भवामः। तथारण्यकं—'त्वमिदं सर्वं भवसि तव वयं स्मः त्वमस्माकमसि' इति । तस्मात्त्वया सहायेन शत्रून् हन्यामेति[4] ॥

त्वामिद्धि त्वायवोऽनुनोनुवतश्चरान् । सखाय इन्द्र कारवः ॥ ३३ ॥

त्वाम् । इत् । हि । त्वाऽयवः । अनुऽनोनुवतः । चरान् । सखायः । इन्द्र । कारवः ॥३३॥

हे ᵛइन्द्र कर्मोपद्रवपरिहारादनन्तरं ᵛत्वायवः त्वां धनादिदानार्थं कामयमानाः अत एव ᵛअनुनोनुवतः। नौतेर्यङ्लुगन्तस्य शतरि रूपम्। अनुक्रमेण पुनःपुनः स्तुतिं कुर्वन्तः[5] तस्मात्तव ᵛसखायः सखिभूताः ᵛकारवः स्तोतारः ᵛत्वामित् । इदवधारणे। त्वामेव ᵛचरान् स्तुतिभिः परिचरन्तु खलु । ᵛहि इति प्रसिद्ध्यर्थः। चरतेर्लेट्याडागमः। हियोगादनिघातः ॥ ॥ २० ॥

'उद्घ' इति चतुस्त्रिंशदृचं त्रयोदशं सूक्तं सुकक्षस्यार्षं गायत्रमैन्द्रम्। अन्त्या त्विन्द्रभुंदेवताका । तथा चानुक्रान्तम्—'उद्घ चतुस्त्रिंशत्सुकक्षोऽन्त्यैन्द्रार्भवी' इति । द्वितीये पर्याये होतुः शस्त्र उत्तमावर्जमेतत्सूक्तम्। सूत्रितं च—'उद्घेदभीत्युत्तमामुद्धरेत्' (आश्व. श्रौ. ६. ४) इति। महाव्रतेऽप्यस्य विनियोगः पूर्वसूक्तेन सहोक्तः। ज्योतिष्टोमे ब्राह्मणाच्छंसिशस्त्र आद्यस्तृचः। सूत्रितं च—'उद्घेदभीति तिस्र इन्द्र क्रतुविदं सुतमिति याज्या' (आश्व. श्रौ. ५. १०) इति। तथाप्तोर्यामे मैत्रावरुणातिरिक्तोक्थेऽयं तृचोऽनुरूपः । सूत्रितं च—'यदद्य कच्च वृत्रहन्नुद्घेदभि श्रुतामघमा नो विश्वाभिः' (आश्व. श्रौ. ९. ११) इति ॥

उद्घेदभि श्रुतामघं वृषभं नर्यापसम् । अस्तारमेषि सूर्य ॥ १ ॥

उत् । घ । इत् । अभि । श्रुतऽमघम् । वृषभम् । नर्यऽअपसम् । अस्तारम् । एषि । सूर्य ॥१॥

सुकक्ष इन्द्रगुणानाह । हे ᵛसूर्य । द्वादशसु भानुष्विन्द्रोऽपि सूर्यात्मना पठितः। तस्मात्सूर्यात्मक सुवीर्य हे इन्द्र ᵛश्रुतमघं सर्वदा देयत्वेन विख्यातधनमत एव ᵛवृषभं याचमानानां[6] धनस्य वर्षितारं ᵛनर्यापसम्। नरहितं नर्यम्। नरहितकर्माणम् ᵛअस्तारं दानशौण्डमौदार्यवन्तमेतादृशानुभावमभितः ᵛउत् ᵛएषि। ᵛइत् अवधारणे। त्वमेव तस्य यज्ञे सूर्यात्मना उद्गतोऽसि[7]। ᵛघ इति प्रसिद्धौ ॥

---

१. ग–°न्यतिसृजन्तः। २. न-भ–नियंतारो गंतारो । ३. घ–त्वत्सहायेन । ४. त–हन्यातमेति; श–हन्यातेमेति । ५. ख-ग-घ-त-न-भ२-श–कुर्वति; भ१–कुर्वती; भ३–कुर्वतः। ६. ख–यावानानां; ग–याचकानां त१-न–पावमानानां; त२-३-४-श–पावनानां। ७. ख-ङ-त१-२-३-न–उद्गातासि; त४-भ१-२-श–उद्गातोसि ।

नव॒ यो न॑व॒तिं पुरो॑ बि॒भेद॑ बा॒ह्वो॑जसा । अहिं॑ च वृत्र॒हाव॑धीत् ॥ २ ॥

नव॑ । यः । न॒व॒तिम् । पुरः॑ । बि॒भेद॑ । बा॒हुऽओ॑जसा । अहि॑म् । च॒ । वृ॒त्र॒ऽहा । अव॑धीत् ॥२॥

ᵛयः इन्द्रः ᵛनव ᵛनवतिं नवनवतिसंख्याका एकोनशतसंख्याकाः शम्बरस्य ᵛपुरः पुरीः ᵛबाह्वोजसा स्वबाहुबलेनैव ᵛबिभेद दिवोदासाय भिनत्ति स्म । तथा च मन्त्रः—'दिवोदासाय नवतिं च नवेन्द्रः पुरो व्यैरच्छम्बरस्य' (ऋ. सं. २. १९. ६) इति । सः ᵛवृत्रहा वृत्रासुरस्य हन्ता स इन्द्रः ᵛअहिं ᵛच केनाप्यहन्तव्यं मेघमपामावरकं वृत्रं वा ᵛअवधीत् । स इन्द्रोऽस्माकं धनं ददात्वित्युत्तरेण संबन्धः ॥

स न॒ इन्द्रः॑ शि॒वः सखाश्वा॑व॒द्गोम॒द्यव॑मत् । उ॒रुधा॑रेव दोहते ॥ ३ ॥

सः । नः॒ । इन्द्रः॑ । शि॒वः । सखा॑ । अश्व॑ऽवत् । गोऽम॑त् । यव॑ऽमत् । उ॒रुधा॑राऽइव । दो॒ह॒ते ॥३॥

ᵛसः पूर्वोक्तलक्षणः ᵛशिवः कल्याणतमः ᵛसखा यष्टृयष्टव्यस्तोतृस्तुत्यलक्षणेन[1] संबन्धेनास्माकं मित्रभूतः एतादृशः ᵛइन्द्रः ᵛअश्ववत् अश्वयुक्तं ᵛगोमत् पश्वादिसहितं ᵛयवमत् । '॰अयवादिभ्यः' (पा. सू. ८. २. ९) इति प्रतिषेधान्मतुपो वत्वाभावः । यव इति धान्यविशेषः । धान्ययुक्तं धनं ᵛनः अस्मभ्यं ᵛदोहते दोग्धु ददातु । तत्र दृष्टान्तः । ᵛउरुधारेव । दोहनकाले प्रभूतपयोधारा यद्वा बहूनां पोषयित्री गौर्यथा वत्सस्य पयो दोग्धि तथा प्रभूतं धनमस्माकं दोग्धु ददातु । दुहेर्लेट्यडागमः ॥

अप्तोर्यामे मैत्रावरुणातिरिक्तोक्थे 'यदद्य' इति तृचः स्तोत्रियः । सूत्रं तु पूर्वेण तृचेन सहोदाहृतम् ॥

यद॒द्य कच्च॑ वृत्रहन्नु॒दगा॑ अ॒भि सू॑र्य । सर्वं॒ तदि॑न्द्र ते॒ वशे॑ ॥ ४ ॥

यत् । अ॒द्य । कत् । च॒ । वृ॒त्र॒ऽह॒न् । उ॒त्ऽअगाः॑ । अ॒भि । सू॒र्य॒ ।

सर्व॑म् । तत् । इ॒न्द्र॒ । ते॒ । वशे॑ ॥ ४ ॥

हे ᵛवृत्रहन् वृत्रस्यापामावरकस्य मेघस्य हन्तः हे ᵛसूर्य सूर्यात्मक ᵛइन्द्र ᵛअद्य अस्मिन् दिने ᵛयत् ᵛकच्च यत्किंचित्पदार्थजातम् ᵛअभि अभिमुखीकृत्य ᵛउदगाः । 'इण् गतौ' । उत्पूर्वः । तस्य लुङि गादेशः । स्वतेजसोद्गतः प्रादुर्भूतोऽसि तदा ᵛतत् ᵛसर्वं स्थावरजङ्गमात्मकं जगत् ᵛते[2] तव[2] ᵛवशे भवति । त्वदधीनं भवति । उदिते सूर्ये त्वदर्थं[3] प्राक्कर्म कुर्वन्ति जुह्वति च ॥

यद्वा॑ प्रवृद्ध सत्पते॒ न म॑रा॒ इति॒ मन्य॑से । उ॒तो तत्स॒त्यमित्तव॑ ॥ ५ ॥

यत् । वा॒ । प्र॒ऽवृ॒द्ध॒ । स॒त्ऽप॒ते॒ । न । म॒रै॒ । इति॑ । मन्य॑से ।

उ॒तो इति॑ । तत् । स॒त्यम् । इत् । तव॑ ॥ ५ ॥

वाशब्दः समुच्चये । अपि च हे ᵛप्रवृद्ध स्वबलेन प्रवर्धमान ᵛसत्पते सतां पते स्वप्रकाशाधिक्येन सतां नक्षत्राणां पते हे इन्द्र ᵛन ᵛमरै ᵛइति मनुष्यवद्वार्धक्येनाहं न म्रिय इति ᵛयत् यदि ᵛमन्यसे बुध्यसे । 'मृङ् प्राणत्यागे' । लेट्यडागमः । 'वैतोऽन्यत्र' इत्यैकारः । ᵛउतो[4] अपि च ᵛतव

१. ख—सख्या यष्टव्यस्तोतृस्तुत्यक्षणेन; त-न-भ२-श—यष्टव्यस्तोतृस्तुत्यलक्षणेन; भ१—यष्टव्यानातृस्तुत्यलक्षणेन; भ३—यष्टव्येन स्तुतिलक्षणेन । २. ख-घ-त१-२-न—तत्ते तव; ग—तव; त३-४श—तत्तव; भ१-२-तत् । ३. ख-त-न-भ—तदर्थां; श—तदधी । ४. ख-त—उत ।

ᵛतत् न म्रिय इति मननं ᵛसत्यमित् यथार्थमेव। इन्द्रो न म्रियत इत्यर्थे मन्त्रान्तरं—'न ह्यस्या अपरं चन जरसा मरते पतिः' (ऋ. सं. १०. ८६. ११) इति॥ ॥ २१ ॥

**ये सोमा॑सः परा॒वति॒ ये अ॑र्वा॒वति॑ सुन्वि॒रे । सर्वा॑ँस्ताँ इ॑न्द्र गच्छसि ॥ ६ ॥**

ये। सोमा॑सः। प॒रा॒ऽवति॑। ये। अ॒र्वा॒ऽवति॑। सु॒न्वि॒रे। सर्वा॑न्। तान्। इ॒न्द्र॒। ग॒च्छ॒सि॒ ॥६॥

हे ᵛइन्द्र ᵛये ᵛसोमासः सोमाः ᵛपरावति विप्रकृष्टेऽतिदूरदेशे[1] ᵛये सोमाः ᵛअर्वावति अन्तिकतमे देशे च ᵛसुन्विरे। छन्दसि द्विर्वचनस्य विकल्पितत्वादत्र द्विर्वचनाभावः। ये सोमा ऋत्विग्भिरभिषूयन्ते ᵛसर्वान् दूरे समीपे चाभिषूयमाणान् ᵛतान् सोमान् ᵛगच्छसि तत्पानार्थं युगपत्प्राप्नोषि। अनेनेन्द्रस्य सर्वगतत्वं सूचितम्॥

अप्तोर्यामे ब्राह्मणाच्छंसिनोऽतिरिक्तोक्थे 'तमिन्द्रं वाजयामसि' इति स्तोत्रियस्तृचः। सूत्रितं च—'तमिन्द्रं वाजयामसि महाँ इन्द्रो य ओजसा' (आश्व. श्रौ. ९. ११) इति। व्यूळ्हस्य दशरात्रस्य पञ्चमेऽहनि निष्केवल्येऽयमेव तृचो निविद्धानीयः। सूत्रितं च व्यूळ्हश्चेदिति खण्डे—'मरुत्वाँ इन्द्र मीढ्वस्तमिन्द्रं वाजयामसि' (आश्व. श्रौ. ८. ८) इति॥

**तमिन्द्रं॑ वाजयामसि म॒हे वृ॒त्राय॒ हन्त॑वे । स वृषा॑ वृष॒भो भु॑वत् ॥ ७ ॥**

तम्। इन्द्र॑म्। वा॒ज॒या॒म॒सि॒। म॒हे। वृ॒त्राय॑। हन्त॑वे। सः। वृषा॑। वृ॒ष॒भः। भु॒व॒त् ॥ ७ ॥

यजमाना आहुः। ᵛतं पूर्वोक्तलक्षणम् ᵛइन्द्रं ᵛवाजयामसि वाजयामः। सोमेन स्तुतिभिर्वा वाजवन्तं बलवन्तं कुर्मः। किमर्थम्। ᵛमहे महते[2] ᵛवृत्राय अपामावरकं वृत्रासुरं ᵛहन्तवे हन्तुम्। सोमपानेन मत्तः स्तुतिभिर्वा स्तुतः सन् ᵛवृषा धनानां सेक्ता दाता ᵛसः इन्द्रः ᵛवृषभः अस्माकं[3] स्तोतॄणां सोमस्य दातॄणां धनादिसेचको[3] दाता[4] ᵛभुवत् भवतु॥

**इन्द्रः॒ स दाम॑ने कृ॒त ओजि॑ष्ठः॒ स मदे॑ हि॒तः । द्यु॒म्नी श्लो॒की स सो॒म्यः ॥८॥**

इन्द्रः॑। सः। दाम॑ने। कृ॒तः। ओजि॑ष्ठः। सः। मदे॑। हि॒तः। द्यु॒म्नी। श्लो॒की। सः। सो॒म्यः ॥८॥

ᵛसः ᵛइन्द्रः ᵛदामने स्तोतृभ्यो धनादिदानायैव ᵛकृतः प्रजापतिना सृष्टः। किंच ᵛओजिष्ठः ओजस्वितमः ᵛसः एवेन्द्रः ᵛमदे। माद्यन्त्यनेनेति[5] मदः सोमः। तस्मिंश्च प्रजापतिना सृष्टिकाले ᵛहितः। सोमपानार्थं च निहित इत्यर्थः। ᵛद्युम्नी। 'द्युम्नं द्योततेर्यशो वान्नं वा' इति। यशस्व्यन्नवान् वा अत एव ᵛश्लोकी। श्लोकः स्तुतिः। तद्वान् ᵛसः इन्द्रः ᵛसोम्यः सोमार्हो भवति॥

**गि॒रा वज्रो॒ न संभृ॑तः॒ सब॑लो॒ अन॑पच्युतः । व॒वक्ष ऋ॒ष्वो अस्तृ॑तः ॥ ९ ॥**

गि॒रा। वज्रः॑। न। सम्ऽभृ॑तः। सऽब॑लः। अन॑पऽच्युतः। व॒वक्षे। ऋ॒ष्वः। अस्तृ॑तः ॥९॥

ᵛगिरा स्तुतिलक्षणया वाचा स्तोतृभिः ᵛसंभृतः उत्पादितस्तीक्ष्णीकृतः। तत्र दृष्टान्तः। ᵛवज्रो ᵛन। वज्र आयुधम्। तत्कर्तृभिर्निशितधारो[6] यथा भवति तीक्ष्णीक्रियते तद्वत् स्तोतृभिः स्तुत्या संभृतोऽत एव ᵛसबलः बलसहितस्तस्मात् ᵛअनपच्युतः परैरप्रच्युतः[7]। अनभिगत इत्यर्थः। तादृशः ᵛऋष्वः महान् दीप्यमानो वा ᵛअस्तृतः युद्धे शत्रुभिरहिंसित इन्द्रः ᵛववक्षे स्तोतृभ्यो धनादिकं वोढुमिच्छति॥

---

१. न-भ-°तिदूरे देशे। २. ख-ग-त-न-भ-श—महांतं। ३. कामानां सेचको। ४. ख-ग-त-श—होता। ५. ख-ग-त-श—माद्यत्य°; न—मात्य°; भ—माद्य°। ६. ख-त—यत्कर्तृभि°। ७. ख-त४-भ१-२—'परैरप्रच्यतः' नास्ति।

**दुर्गे चिन्नः सुगं कृधि गृणान इन्द्र गिर्वणः । त्वं च मघवन्वशः ॥१०॥**

दुःऽगे । चित् । नः । सुऽगम् । कृधि । गृणानः । इन्द्र । गिर्वणः ।
त्वम् । च । मघऽवन् । वशः ॥ १० ॥

हे ᵛगिर्वणः गीर्भिर्वननीय ᵛइन्द्र ᵛगृणानः स्तोतृभिः स्तूयमानस्त्वं ᵛनः अस्माकं ᵛदुर्गे ᵛचित् दुर्गमेऽपि[1] मार्गे[1] ᵛसुगं सुगमं पन्थानं ᵛकृधि तथा कुरु । हे ᵛमघवन् धनवन्निन्द्र ᵛत्वम् । चशब्दश्चेदर्थे । यदि ᵛवशः सोमपानार्थं तत्प्रदातॄनस्मान् कामयेथाः तदा पन्थानं शोभनगमनं कुरुष्व । वष्टेर्लेट्यडागमः । चशब्दयोगादनिघातः ॥  ॥ २२ ॥

**यस्य ते नू चिदादिशं न मिनन्ति स्वराज्यम् । न देवो नाध्रिगुर्जनः ॥११॥**

यस्य । ते । नु । चित् । आऽदिशम् । न । मिनन्ति । स्वऽराज्यम् ।
न । देवः । न । अध्रिऽगुः । जनः ॥ ११ ॥

हे इन्द्र ᵛयस्य ᵛते तव ᵛआदिशम् । आदिशति नयति सर्वत्रानयेत्यादिग्बलम् । औणादिकः करणे प्रत्ययः । यद्वा । आदेश एवादिगाज्ञा । भावे क्विप् । त्वदीयामाज्ञां ᵛनू ᵛचित् इदानीं पुरा च ᵛन ᵛमिनन्ति केचिदपि न हिंसन्ति । किंच । ᵛस्वराज्यं तव स्वभूतं राज्यं च । यद्वा । स्वशब्देन स्वर्गोऽभिधीयते । स्वर्गस्वामित्वं च न हिंसन्ति । हिंसकानाह । ᵛन ᵛदेवः त्वदन्यो देवोऽपि च तथापि ᵛअध्रिगुः अधृतगमनः संग्रामे त्वरमाणो वीरोऽपि ᵛन च ᵛजनः प्रादुर्भूतो मनुष्योऽपि । एते न मिनन्तीत्यर्थः ॥

**अधा ते अप्रतिष्कुतं देवी शुष्मं सपर्यतः । उभे सुशिप्र रोदसी ॥१२॥**

अध । ते । अप्रतिऽस्कुतम् । देवी इति । शुष्मम् । सपर्यतः ।
उभे इति । सुऽशिप्र । रोदसी इति ॥ १२ ॥

हे ᵛसुशिप्र सुहनो शोभनशिरस्त्राणेन्द्र ᵛअध अपि च ᵛदेवी देव्यौ[2] स्वतेजसा दीप्यमाने ᵛउभे ᵛरोदसी द्यावापृथिव्यौ ᵛअप्रतिष्कुतम् । स्कु इति सौत्रो धातुः स्तम्भने वर्तते । शत्रुभिरप्रतिरोधनीयं ᵛते त्वदीयं ᵛशुष्मं परबलशोषकं बलं ᵛसपर्यतः पूजयतः । त्वदधीने एव भवतः ॥

**त्वमेतदधारयः कृष्णासु रोहिणीषु च । परुष्णीषु रुशत्पयः ॥ १३ ॥**

त्वम् । एतत् । अधारयः । कृष्णासु । रोहिणीषु । च । परुष्णीषु । रुशत् । पयः ॥ १३ ॥

अस्य सामर्थ्यमेवोपपादयति । हे इन्द्र ᵛकृष्णासु कृष्णवर्णासु गोषु तथा ᵛरोहिणीषु । 'वर्णादनुदात्तात्तोपधात्तो नः' ( पा. सू. ४. १. ३९ ) इति ङीप् । रोहितवर्णासु[3] ᵛच गोषु ᵛरुशत् । रोचतेर्दीप्तिकर्मणः । दीप्यमानं श्वेतम् ᵛएतत् परिदृश्यमानं ᵛपयः क्षीरं ᵛत्वम् ᵛअधारयः धारयसि । तस्मात्त्वद्बलं पूजयत इति समन्वयः ॥

**वि यदहेरध त्विषो विश्वे देवासो अक्रमुः । विदन्मृगस्य ताँ अमः ॥१४॥**

---

१. ख-ज्ञ-त१-२-३–दुर्गमपि मार्गं । २. ख-त-न-भ-श–सदेव्यौ । ३. घ–रोहितवर्णासु परुष्णिषु ।

वि । यत् । अहेः । अध॑ । त्विषः । विश्वे॑ । दे॒वासः॑ । अक्र॑मुः ।
वि॒दत् । मृ॒गस्य॑ । तान् । अम॑ः ॥ १४ ॥

ᐯअध अपि च ᐯअहेः अहन्तव्यस्य[1] वृत्रासुरस्य ᐯत्विषः तेजोरूपादुच्छ्वासाद्भीताः यद्वा तस्य प्रभावेन परिगमिताः ᐯविश्वे सर्वे ᐯदेवासः देवाः ᐯयत् यदा ᐯवि ᐯअक्रमुः विविधं पादविहरणमकुर्वन् । स्वस्थानं परित्यज्यान्यं देशमगच्छन्नित्यर्थः । तदानीं ᐯमृगस्य । एवं तान् भीषयितुं वृत्रो मृगरूपोऽभवत् । तद्रूपस्य[2] संबन्धि ᐯअमः सर्वतो गमनशीलं बलं तज्जातं भयं वा ᐯतान् सर्वान् देवान् ᐯविदत् अविन्दत् । प्राप्नोदित्यर्थः । तस्यासुरस्येन्द्रो निवारको हन्ताभवदित्युत्तरेण संबन्धः ॥

**आदु मे नि॒व॒रो भु॑वद्वृत्र॒हादि॑ष्ट॒ पौंस्य॑म् । अजा॑तशत्रु॒रस्तृ॑तः ॥१५॥**

आत् । ऊँ इति॑ । मे॒ । नि॒ऽव॒रः । भु॒वत् । वृ॒त्र॒ऽहा । अ॒दि॒ष्ट॒ । पौंस्य॑म् ।
अजा॑तऽशत्रुः । अस्तृ॑तः ॥ १५ ॥

ᐯआदु इत्यवधारणे । देवानां भीत्या सर्वतो गमनानन्तरमेव ᐯमे स्तोतृस्तुत्यलक्षणेन संबन्धेन मम संबन्ध्ययमिन्द्रः ᐯनिवरः वृत्रासुरस्य निवारयिता हन्ता ᐯभुवत् अभवत् । ततः ᐯवृत्रहा वृत्रस्य हन्तेन्द्रः ᐯपौंस्यम् । पुंसः कर्म पौंस्यम् । यद्वा । ‘ स्त्रीपुंसाभ्याम्° ’ ( पा. सू. ४. १. ८७ ) इति भवार्थे स्नञ् । नकारस्य यकारो वर्णव्यत्ययेन । पुंसीन्द्रे भवम् । यद्वा । बलनामैतत् । स्वबलम् । ᐯअदिष्ट तस्य राज्ये दिशति निदधाति[3] । तद्राज्यं स्ववशमकरोदित्यर्थः । ततः प्रभृतीन्द्रः ᐯअजातशत्रुः अनुत्पन्नशत्रुः ᐯअस्तृतः संग्रामे परैरहिंसितश्चाभवत् ॥ ॥ २३ ॥

**श्रु॒तं वो॑ वृत्र॒हन्त॑मं॒ प्र शर्धं॑ चर्षणी॒नाम् । आ शु॑षे॒ राध॑से म॒हे ॥१६॥**

श्रु॒तम् । व॒ः । वृ॒त्रहन्ऽत॑मम् । प्र । शर्ध॑म् । च॒र्ष॒णी॒नाम् । आ । शु॒षे॒ । राध॑से । म॒हे ॥ १६ ॥

हे ऋत्विग्यष्टारः ᐯश्रुतं बलवत्तया प्रसिद्धमत एव ᐯवृत्रहन्तमम् अतिशयेन वृत्रहन्तारं ᐯशर्धं बलभूतं वेगवन्तं वा एतादृशमिन्द्रं ᐯचर्षणीनां मनुष्याणां ᐯवः युष्माकम् ᐯआशुषे । अश्नोतेर्लेट्युत्तम इटि[4] सिप् । व्यत्ययेनोप्रत्ययः । ‘ बहुलं छन्दसि ’ इत्यडागमः । तमिन्द्रं स्तुतिभिः प्रीणयित्वा युष्मभ्यं प्रकर्षेणाश्नवै[5] । प्रयच्छामीत्यर्थः । किमर्थम् । ᐯमहे महते ᐯराधसे धनाय धनं युष्मभ्यं दातुम् ॥

**अ॒या धि॒या च॑ ग॒व्य॒या पुरु॑णाम॒न्पुरु॑ष्टुत । यत्सोमे॑सोम॒ आभ॑वः ॥१७॥**

अ॒या । धि॒या । च॒ । ग॒व्य॒ऽया । पुरु॑ऽनामन् । पुरु॑ऽस्तुत । यत् । सोमे॑ऽसोमे । आ । अभ॑वः ॥ १७ ॥

हे ᐯपुरुनामन् बहुविधशक्रवृत्रहादिनामोपेत । यद्वा । बहुस्तुतिमन् । नामयन्ति स्तुत्यं देवं वशं नयन्तीति नाम स्तोत्रम् । अत एव ᐯपुरुष्टुत बहुभिरभिष्टुतेन्द्र ᐯसोमेसोमे अस्मदीयेषु सोमेषु त्वं यदा ᐯआभवः तेषां पानार्थं समन्तादभवः तदा वयम् ᐯअया अनया । कीदृश्या । ᐯगव्यया गा आत्मन इच्छन्त्या ᐯधिया अनया बुद्ध्या युक्ता भवेम । सोमं पीतवति त्वयि वयं गवादियुक्ता भवेमेत्यर्थः ॥

**बोधि॒न्म॑ना इ॒दस्तु नो वृत्र॒हा भूर्या॑सुतिः । शृ॒णोतु॑ श॒क्र आ॒शिष॑म् ॥ १८ ॥**

---

१. ग–आहन्तव्यस्य । २. न-भ–तद्रूपस्य वृत्रस्य । ३. ग-न-भ–निदधाति स्म । ४. ख-त-भ–इति । ५. ग–प्रकर्षेणाशुषे ।

बोधित्ऽमनाः । इत् । अस्तु । नः । वृत्रऽहा । भूरिऽआसुतिः ।
शृणोतु । शक्रः । आऽशिषम् ॥ १८ ॥

अयं[1] परोक्षकृतः । ᵛवृत्रहा वृत्रहन्ता ᵛभूर्यासुतिः । बहुषु देशेष्विन्द्रार्थं सोम आसूयतेऽभिषूयत इति तादृशः । यद्वा । बहूनि सोमादिहवींषीन्द्रार्थमासूयन्ते हूयन्त इति तादृशः । ᵛबोधिन्मनाः । 'बुध अवगमने'। औणादिक इतिप्रत्ययः । यस्य मनः स्तोतॄणामभिमतं[2] बुध्यते जानातीति तथोक्तः । ᵛइत् अवधारणे । ᵛनः अस्माकं बोधिन्मना एव ᵛअस्तु । सर्वदास्मदभीप्सितानि जानात्वेवेत्यर्थः । यद्वा । एतादृश इन्द्रो नोऽस्माकं यज्ञे भवत्विति । ततः ᵛशक्रः संग्रामे शत्रुहननसमर्थं इन्द्रः ᵛआशिषम् अस्मदीयां स्तुतिमाशासनं वा ᵛशृणोतु ॥

ज्योतिष्टोमे चातुर्विंशिकेऽहनि माध्यंदिने मैत्रावरुणस्य 'कया त्वं न ऊत्या' इति तृचोऽनुरूपः। सूत्रितं च—'होत्रकाणां कया नश्चित्र आ भुवत् कया त्वं न ऊत्या' ( आश्व. श्रौ. ७. ४ ) इति ॥

**कया त्वं न ऊत्याभि प्र मन्दसे वृषन् । कया स्तोतृभ्य आ भर ॥ १९ ॥**

कया । त्वम् । नः । ऊत्या । अभि । प्र । मन्दसे । वृषन् । कया । स्तोतृऽभ्यः । आ । भर ॥ १९ ॥

हे ᵛवृषन् कामानां वर्षितरिन्द्र ᵛकया केन ᵛऊत्या । अव रक्षणादिषु गत्यर्थे । 'ऊतियूति॰' इत्यादिना निपातितः । केनाभिगमनेन ᵛनः अस्मान् ᵛअभि[3] अभितः ᵛप्र ᵛमन्दसे प्रकर्षेण मादयसि । अस्मदीयं यज्ञं प्रति सोमपानार्थमागमनेन वा त्वदीयस्तुतिश्रवणार्थमागमनेन वा कदास्मान् प्रमादयसीति । किंच ᵛकया केनाभिगमनेन ᵛस्तोतृभ्यः अस्मभ्यं धनम् ᵛआ ᵛभर आबिभर्षीतीन्द्रं स्तोता पृच्छति ॥

**कस्य वृषा सुते सचा नियुत्वान्वृषभो रणत् । वृत्रहा सोमपीतये ॥ २० ॥**

कस्य । वृषा । सुते । सचा । नियुत्वान् । वृषभः । रणत् । वृत्रऽहा । सोमऽपीतये ॥ २० ॥

ᵛवृषा इन्द्रः ᵛकस्य यजमानस्य ᵛसचा ᵛसुते ऋग्भिः[4] सहाभिषुते सोमे । अनेन तद्वान् यज्ञो लक्ष्यते । कस्य यज्ञे ᵛसोमपीतये सोमपानाय तदर्थं ᵛरणत् रमते । कीदृशः । ᵛनियुत्वान् । नितरां युवन्ति मिश्रयन्ति स्वबलेन शत्रूनिति नियुतो मरुतः । तद्वान् । यद्वा । नियुत इति वायोर्वाहनाश्वाः[5] । स वायुः कदाचित् संग्राम इन्द्राय स्वाश्वानदात् । तद्वान् । ᵛवृषभः धनानामपां वा वर्षकः ᵛवृत्रहा वृत्रस्य हन्तेन्द्रः कस्य यज्ञे रमते । इदानीं नोऽस्मदीयं[6] यागं[7] प्रत्यागच्छतु । यद्वा । कस्याध्वरे रमते । न कुत्रापि । किंत्वस्मद्यज्ञ एव सोमपानार्थं संक्रीडते ॥ ॥ २४ ॥

**अभी षु णस्त्वं रयिं मन्दसानः सहस्रिणम् । प्रयन्ता बोधि दाशुषे ॥ २१ ॥**

अभि । सु । नः । त्वम् । रयिम् । मन्दसानः । सहस्रिणम् । प्रऽयन्ता । बोधि । दाशुषे ॥ २१ ॥

हे इन्द्र ᵛत्वं ᵛमन्दसानः अस्माभिर्दत्तेन सोमेन मोदमानः सन् ᵛसहस्रिणं सहस्रसंख्याकं धनं[8] ᵛनः अस्मभ्यं ᵛसु सुष्ठु ᵛअभि आभर । तदेवाह । त्वं ᵛदाशुषे हविर्दत्तवते यजमानाय ᵛप्रयन्ता धनादेः प्रदाता कर्मणो नियन्ता वा भवानीति ᵛबोधि बुध्यस्व । 'बुध अवगमने'। भौवादिकः । लोटि छान्दसो विकरणस्य लुक् । हेर्धिः[9] । धित्वे[9] धकारलोपश्छान्दसः ॥

---

१. ख-त-श—अथ । २. ख-ञ-त१-२-३—स्तोत्रिणा॰ । ३. ख-ग-त-न-भ-श—'अभि' नास्ति । ४. ख-ग-घ-ञ-त२-न-भ—ऋत्विग्भिः । ५. ख-त-न-भ२-श—॰वाहनाश्वाः ते; भ१—॰वाहनाश्वाः से; भ३—॰वाहनाश्वास्तैः । ६. ख-त-न-भ—नास्मदीयं । ७. ख-त—यज्ञं । ८. घ—रयिं धनं । ९. ग—हेर्धित्वे ।

पत्नीवन्तः सुता इम उशन्तो यन्ति वीतये। अपां जग्मिर्निचुम्पुणः ॥ २२ ॥

पत्नीऽवन्तः। सुताः। इमे। उशन्तः। यन्ति। वीतये। अपाम्। जग्मिः। निऽचुम्पुणः ॥२२॥

पत्नीवन्तः। सोमसेकार्थे पत्न्यः पालयित्र्य आपो वसतीवर्य एकधनाश्च। तद्वन्तः सुताः अस्माभिरभिषुताः इमे ग्रहस्थाश्चमसस्थाश्च सोमाः उशन्तः आत्मनः पानं कामयमानाः सन्तः यन्ति इन्द्रं गच्छन्ति। किमर्थम्। वीतये आत्मनः पानाय। किंच निचुम्पुणः। 'निचान्तपृणः' (निरु. ५. १७) इति यास्कः। 'चमु अदने'। निचान्तो भक्षितः पृणः प्रीणयिता। यद्वा। 'निचमनेन प्रीणाति' इति भक्षणेन तर्पयतीति निचुम्पुणः। अभिषुतस्य सोमस्याप्सु प्रक्षेपासंभवात् सामर्थ्यादृजीषरूपः सोमो गृह्यते। तादृशः सोमः अपां जग्मिः। अपामिति 'न लोकाव्यय°' इति षष्ठीप्रतिषेधाभावश्छान्दसः। अप इत्यर्थः। यद्वा। अपां मध्यं वापः प्रति वा जग्मिर्गमनशीलः साधुगन्ता वा। सोमश्चेन्द्रं गच्छति। स ह्यवभृथकाले[1] ऋजीषमप्सु प्रास्यन्तीति वचनादप्स्वृजीषरूपः प्रक्षिप्यते। तदाह अपां जग्मिरिति ॥

इष्टा होत्रा असृक्षतेन्द्रं वृधासो अध्वरे। अच्छावभृथमोजसा ॥ २३ ॥

इष्टाः। होत्राः। असृक्षत। इन्द्रम्। वृधासः। अध्वरे। अच्छ। अवऽभृथम्। ओजसा ॥२३॥

अपां जग्मिरिति सामर्थ्यादवभृथदिन एव ‐ ‐ ‐ ‐ र ‐ वि ‐ जः कुर्वन्तीत्युक्तम्। तत्प्रसङ्गादाह। अध्वरे अस्मदीये यज्ञे वृधासः हविर्भिरिन्द्रं वर्धयन्तः इष्टाः इष्टवन्तो यागं कृतवन्तः सप्तसंख्याकाः होत्राः होत्रकाः अवभृथम् अन्त्यदिवसम् अच्छ प्रति[2] ओजसा स्वतेजसा[3] सहिताः इन्द्रम् असृक्षत विसृजन्ति। यावदवभृथं सप्तहोत्रका यजन्तीति ॥

इह त्या सधमाद्या हरी हिरण्यकेश्या। वोळ्हामभि प्रयो हितम् ॥ २४ ॥

इह। त्या। सधऽमाद्या। हरी इति। हिरण्यऽकेश्या। वोळ्हाम्। अभि। प्रयः। हितम् ॥२४॥

एषा व्याख्याता (ऋ. सं. ८. ३२. २९)। अत्रापि वाक्यार्थो विधीयते। सधमाद्या इन्द्रेण सह हविर्भिस्तर्पयितव्यौ यद्वा संग्रामे सह माद्यन्तौ हिरण्यकेश्या हिरण्मयस्कन्धगतकेशवन्तौ त्या तौ प्रसिद्धौ हरी हरितवर्णावेतन्नामकावश्वौ इह अस्मिन् यज्ञे हितं ‐ ‐ वादिषु निहितं हितकरं वा प्रयः हवीरूपमन्नमभिलक्ष्य[4] वोळ्हाम् इन्द्रं वहताम्। प्रापयतामिति ॥

तुभ्यं सोमाः सुता इमे स्तीर्णं बर्हिर्विभावसो। स्तोतृभ्य इन्द्रमा वह ॥२५॥

तुभ्यम्। सोमाः। सुताः। इमे। स्तीर्णम्। बर्हिः। विभावसो इति विभाऽवसो। स्तोतृऽभ्यः। इन्द्रम्। आ। वह ॥ २५ ॥

हे विभावसो विशेषेण भासमानवसुमन्। यद्वा। विशिष्टा भा विभाः प्रकृष्टदीप्तयः। ता निवसन्त्यत्रेति विभावसुरग्निः। हे तादृशाग्ने तुभ्यं त्वदर्थम् इमे सोमाः सुताः अभिषुताः। तथा बर्हिः स्तीर्णम्। तस्मात् स्तोतृभ्यः अस्मभ्यमस्मदर्थम् इन्द्रं सोमपानार्थम् आ वह आह्वय। यज्ञं प्रति प्रापयेत्यर्थः ॥ ॥ २५ ॥

---

१. ख-त-न-श–ह्यवभृथ°। २. ख-ग-त-न-भ-श–अभि प्रति। ३. ख-घ-भ१-३–'स्वतेजसा' नास्ति। ४. घ–°मन्नमभ्यभि°।

आ ते दक्षं वि रोचना दधद्रत्ना वि दाशुषे। स्तोतृभ्य इन्द्रमर्चत ॥ २६ ॥

आ। ते। दक्षम्। वि। रोचना। दधत्। रत्ना। वि। दाशुषे।

स्तोतृऽभ्यः। इन्द्रम्। अर्चत ॥ २६ ॥

ऋषिर्ऋत्विग्यजमानान् प्रत्याह। हे यष्टः ᵛदाशुषे इन्द्राय हविर्दत्तवते ᵛते तुभ्यं ᵛरोचना रोचनं दीप्यमानं ᵛदक्षं बलम् ᵛआ आभिमुख्येन ᵛवि ᵛदधत् इन्द्रो विदधातु। यद्वा। रोचनमिति स्वर्गः। देवतेजसा दीप्तं रोचननामानं लोकं विदधातु। तथा ᵛरत्ना रत्नानि च तुभ्यं करोतु। 'डुधाञ् धारणपोषणयोः'। लेटि 'घोर्लोपो लेटि वा' (पा. सू. ७. ३. ७०) इत्याकारलोपः। अडागमः। हे स्तोतारः ᵛस्तोतृभ्यः इन्द्रविषयस्तोत्रकारिभ्यो[1] युष्मभ्यं च बलरत्नादिकमिन्द्रः कुरुताम्। तस्मात तम् ᵛइन्द्रं यूयम् ᵛअर्चत हविर्भिः स्तुतिभिश्च पूजयत ॥

आ ते दधामीन्द्रियमुक्था विश्वा शतक्रतो। स्तोतृभ्य इन्द्र मृळय ॥२७॥

आ। ते। दधामि। इन्द्रियम्। उक्था। विश्वा। शतक्रतो इति शतऽक्रतो।

स्तोतृऽभ्यः। इन्द्र। मृळय ॥ २७ ॥

हे[2] ᵛशतक्रतो इन्द्र ᵛते तव ᵛइन्द्रियं वीर्यवन्तं सोमं ᵛविश्वा ᵛउक्था सर्वाणि स्तोत्राणि ᵛआ ᵛदधामि संपादयामि। हे ᵛइन्द्र त्वं ᵛस्तोतृभ्यः ᵛमृळय सुखय[2] ॥

भद्रंभद्रं न आ भरेषमूर्जं शतक्रतो। यदिन्द्र मृळयासि नः ॥ २८ ॥

भद्रम्ऽभद्रम्। नः। आ। भर। इषम्। ऊर्जम्। शतक्रतो इति शतऽक्रतो।

यत्। इन्द्र। मृळयासि। नः ॥ २८ ॥

हे ᵛशतक्रतो शतविधकर्मन् शतप्रज्ञ वा ᵛइन्द्र ᵛभद्रंभद्रं कल्याणतममथ सुखोत्पादकं वा धन ᵛनः अस्मभ्यम् ᵛआ ᵛभर आसंपादय देहि। तथा ᵛइषम् अन्नम् ᵛऊर्जम् अन्नरसं यद्वा बलवदन्नं च देहि। ᵛनः अस्मान् ᵛयत् यदि ᵛमृळयासि सुखयसि तर्हि तद्धनादिकं[3] देहीति। 'मृड सुखने' ण्यन्तस्य लेट्याडागमः ॥

स नो विश्वान्या भर सुवितानि शतक्रतो। यदिन्द्र मृळयासि नः ॥ २९ ॥

सः। नः। विश्वानि। आ। भर। सुवितानि। शतक्रतो इति शतऽक्रतो।

यत्। इन्द्र। मृळयासि। नः ॥ २९ ॥

हे ᵛशतक्रतो इन्द्र ᵛसः पूर्वोक्तलक्षणस्त्वं ᵛविश्वानि सर्वाणि ᵛसुवितानि। सुष्ठ्वीयते प्राप्यते येष्विति सुवितानि मङ्गलानि। सुपूर्वादेतेः क्ते[4] प्रत्यये[4] उवङादेशः। सर्वानभ्युदयान् ᵛनः अस्मभ्यमाहर। हे ᵛइन्द्र यदि ᵛनः अस्मान् सुखयसि तर्हि धनादिसहितानभ्युदयान् देहीति ॥

त्वामिद्वृत्रहन्तम सुतावन्तो हवामहे। यदिन्द्र मृळयासि नः ॥ ३० ॥

त्वाम्। इत्। वृत्रहन्ऽतम। सुतऽवन्तः। हवामहे। यत्। इन्द्र। मृळयासि। नः ॥ ३० ॥

---

१. ख–इंद्रविशेषण°; ज्ञ-त१-२-३–इंद्रविशेषण°; त४-न-भ१-श–इंद्रविषण°। २. त३-४-न-भ-श–पुस्तकेष्वस्य मन्त्रस्य भाष्यं नास्ति। ३. ख-त-न-भ-श–चेद्धनादिकं। ४. ग-भ–क्तप्रत्यये।

हे ᵛवृत्रहन्तम अतिशयेन वृत्रस्यापामावरकस्य हन्तरिन्द्र ᵛसुतवन्तः अभिषुतसोमवन्तो वयम्। इदवधारणे[1]। ᵛत्वामित् त्वामेव ᵛहवामहे। अस्मद्यज्ञमागत्य सोमपानायाह्वयामः। हे ᵛइन्द्र ᵛनः अस्मान् यदि सुखयसि[2] तर्ह्याह्वयाम इति ॥ ॥ २६ ॥

व्यूळहस्य[3] दशरात्रस्य षष्ठेऽहनि निष्केवल्ये 'उप नो हरिभिः' इति तृचो निविद्धानीयः। सूत्रितं च—'अयं ह येन वा इदमुप नो हरिभिः सुतम्' (आश्व. श्रौ. ८. ८) इति ॥

**उप॑ नो॒ हरि॑भिः सु॒तं या॒हि म॑दानां पते। उप॑ नो॒ हरि॑भिः सु॒तम् ॥ ३१ ॥**

उप॑। नः॒। हरि॑ऽभिः। सु॒तम्। या॒हि। म॒दा॒ना॒म्। प॒ते। उप॑। नः॒। हरि॑ऽभिः। सु॒तम् ॥ ३१ ॥

हे ᵛमदानां ᵛपते। माद्यन्तेऽनेनेति मदाः सोमाः। 'मदोऽनुपसर्गे' इति करणेऽप्प्रत्ययः। सोमानां स्वामिन्निन्द्र ᵛहरिभिः 'आ शतेन हरिभिः' (ऋ. सं. २.१८.६) इत्यादिषु बहूनामश्वानां श्रुतेरत्रापि शतसहस्रसंख्याकैरश्वैः[4] सह ᵛनः अस्माकं यज्ञे ᵛसुतम् अभिषुतं सोमम् ᵛउप ᵛयाहि। तत्पानार्थं शीघ्रमायाहि। पुनः ᵛउप ᵛनः इत्यादरार्थः ॥

**द्वि॒ता यो वृ॑त्रहन्त॑मो वि॒द इन्द्रः॑ श॒तक्र॑तुः। उप॑ नो॒ हरि॑भिः सु॒तम् ॥ ३२ ॥**

द्वि॒ता। यः। वृ॒त्र॒हन्ऽत॑मः। वि॒दे। इन्द्रः॑। श॒तऽक्र॑तुः। उप॑। नः॒। हरि॑ऽभिः। सु॒तम् ॥ ३२ ॥

ᵛवृत्रहन्तमः[5] अतिशयेन वृत्रस्य हन्ता ᵛशतक्रतुः नानाविधकर्मा ᵛयः ᵛइन्द्रः ᵛद्विता द्विधा ᵛविदे वृत्रवधादावुग्रकर्मा जगद्रक्षणकाले शान्तकर्मेति द्विप्रकारेण सर्वैर्ज्ञायते। 'विद ज्ञाने'। कर्मणि विहितस्य तप्रत्ययस्य 'लोपस्त आत्मनेपदेषु' इति तलोपः। स त्वं ᵛहरिभिः सह ᵛसुतं[6] सोममुपयाहि ॥

**त्वं हि वृ॑त्रहन्नेषां पा॒ता सोमा॑ना॒मसि॑। उप॑ नो॒ हरि॑भिः सु॒तम् ॥ ३३ ॥**

त्वम्। हि। वृ॒त्र॒ऽह॒न्। ए॒षा॒म्। पा॒ता। सोमा॑नाम्। असि॑। उप॑। नः॒। हरि॑ऽभिः। सु॒तम् ॥ ३३ ॥

हे ᵛवृत्रहन् वृत्रस्य पापस्य वा हन्तरिन्द्र। हिशब्दो हेत्वर्थे। यस्मात् ᵛत्वम् ᵛएषाम् अस्मदीयानां ᵛसोमानां ᵛपाता पानकर्ता ᵛअसि भवसि। एषाम् इति इदमोऽन्वादेशे अशादेशोऽनुदात्तश्च। अतस्त्वम् अश्वैः[7] सह सोमं पातुमुपयाहि आगच्छ ॥

व्यूळहस्य दशरात्रस्य नवमेऽहनि वैश्वदेवे अभिप्लवतृचस्य[8] 'इन्द्र इषे ददातु नस्ते नो रत्नानि धत्तन' इति द्वे ऋचावार्भव्यौ। सूत्रितं च—'इन्द्र इषे ददातु नस्ते नो रत्नानि धत्तनेत्येका द्वे च' (आश्व. श्रौ. ८. ११) इति ॥

**इन्द्र॑ इ॒षे द॑दातु न ऋभु॒क्षण॑मृ॒भुं र॒यिम्। वा॒जी द॑दातु वा॒जिन॑म् ॥ ३४ ॥**

इन्द्रः॑। इ॒षे। द॒दा॒तु॒। नः॒। ऋ॒भु॒क्षण॑म्। ऋ॒भुम्। र॒यिम्। वा॒जी। द॒दा॒तु॒। वा॒जिन॑म् ॥ ३४ ॥

ᵛइन्द्रः एवास्माभिः स्तुत इष्टः सन् ᵛऋभुक्षणम्। 'वा षपूर्वस्य' इति दीर्घाभावः। यागादिकर्मकरणेन महान्तं सर्वेषां भ्रातॄणां श्रेष्ठं वा। अथवा तृतीयसवने[9] प्रजापतिसविश्रोर्मध्ये सोमपातृत्वात् महान्तम्। ᵛरयिं दातारम् ᵛऋभुं सोमपानेनामर्त्यत्वं प्राप्तं तादृशमेतन्नामकं देवं ᵛनः अस्मभ्यम्

---

१. ख-ञ-त१-२-३-न-श-इहचयोरणे; त४-भ-इहवयोरणे। २. घ-मृळयासि सुखयसि। ३. ख-श-व्यूळहे; ग-त२-३-४-भ-व्यूळह°। ४. भ-सहस्र°। ५. घ-यः वृत्रहंतमः। ६. घ-नः सुतं। ७. घ-हरिभिः। ८. ग-आर्भव°। ९. त४-न-भ-°सवनेन।

ᵛइषे अन्नार्थं ᵛददातु प्रयच्छतु। तथा ᵛवाजी बलवानिन्द्रः ᵛवाजिनं बलवन्तमन्नवन्तं वा वाजनामानं[1] कनीयांसं[2] भ्रातरं च[3] अस्माकमन्नलाभाय ᵛददातु ॥ ॥ २७ ॥ ॥ ९ ॥

दशमेऽनुवाके दश सूक्तानि। तत्र 'गौर्धयति' इति द्वादशर्चमाद्यं सूक्तमाङ्गिरसस्य बिन्दुनाम्नः पूतदक्षनाम्नो वार्षं गायत्रं मरुद्देवताकम्। तथा चानुक्रम्यते—'गौर्धयति द्वादश बिन्दुः पूतदक्षो वा मारुतम्' इति। सूक्तविनियोगो लैङ्गिकः। प्रातःसवने सोमातिरिक्ते[4] एकं शस्त्रमुपजायते। तत्राद्यस्तृचोऽनुरूपः। सूत्रितं च—'अस्ति सोमो अयं सुतो गौर्धयति मरुतामिति स्तोत्रियानुरूपौ' (आश्व. श्रौ. ६. ७) इति ॥

**गौर्धयति मरुतां श्रवस्युर्माता मघोनाम्। युक्ता वह्नी रथानाम् ॥ १ ॥**

गौः। धयति। मरुताम्। श्रवस्युः। माता। मघोनाम्। युक्ता। वह्निः। रथानाम् ॥ १ ॥

ᵛमघोनां धनवतां ᵛमरुतां ᵛमाता निर्मात्री ᵛगौः पृश्निरूपा। 'पृश्नियै वै पयसो मरुतो जाताः' इति श्रुतेः। यद्वा। गौर्माध्यमिकी वाक्। तत्रैव मध्यमस्थाने मरुतामपि। वर्तनात्तेषां तत्पुत्रत्वमुपचर्यते। ᵛधयति सोमं पिबति पाययति वा स्वपुत्रान् मरुतः। किमिच्छन्ती। ᵛश्रवस्युः अन्नं कामयमाना। कीदृशी। ᵛरथानां मारुतानां ᵛवह्निः पृषतीभिर्वडवाभिर्वोढ्री संयोजयित्री सा ᵛयुक्ता सर्वत्र समन्तात् पूज्या भवति ॥

**यस्या देवा उपस्थे व्रता विश्वे धारयन्ते। सूर्यामासा दृशे कम् ॥ २ ॥**

यस्याः। देवाः। उपऽस्थे। व्रता। विश्वे। धारयन्ते। सूर्यामासा। दृशे। कम् ॥ २ ॥

गौः सर्वदेवमयीत्याह। ᵛयस्याः मरुतां मातुर्गोः ᵛउपस्थे वर्तमानाः ᵛविश्वे सर्वे ᵛदेवाः ᵛव्रता व्रतानि स्वस्वकर्माणि ᵛधारयन्ते बिभ्रति। इयमेवास्माकं स्वपयोमिश्रितस्य सोमस्य दात्रीति सर्वे तत्समीपे तिष्ठन्तीत्यर्थः। किंच ᵛसूर्यामासा। माति स्वकलाभिस्तिथीनिति माश्चन्द्रमाः। 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरत्वम्। सूर्याचन्द्रमसौ ᵛदृशे दर्शनाय सर्वलोकप्रकाशनाय च यस्या गोः समीपे ᵛकं सुखेन वर्तमानौ भवतः। सेयं गौः सोमं धयतीति पूर्वेण समन्वयः ॥

**तत्सु नो विश्वे अर्य आ सदा गृणन्ति कारवः। मरुतः सोमपीतये ॥ ३ ॥**

तत्। सु। नः। विश्वे। अर्यः। आ। सदा। गृणन्ति। कारवः। मरुतः। सोमऽपीतये ॥ ३ ॥

ᵛअर्यः स्तोत्रकरणार्थमितस्ततो गन्तारः ᵛनः अस्मदीयाः ᵛविश्वे सर्वे ᵛकारवः स्तोतारः ᵛतत् मरुतां बलं ᵛसदा सर्वदा ᵛआ ᵛगृणन्ति। आभिमुख्येन स्तुतिभिः स्तुवन्ति। किमर्थम्। ᵛसोमपीतये अस्माभिर्दीयमानं सोमं पातुम्। ᵛमरुतः एतन्नामका देवा अस्माभिराह्वातव्याः खलु। ततः पुरस्तात्तद्बलं स्तुवन्तीत्यर्थः ॥

पूर्वाभिहित एव शस्त्रे 'अस्ति सोमः' इति स्तोत्रियस्तृचः। सूत्रं तु पूर्वेण सहोदाहृतम् ॥

**अस्ति सोमो अयं सुतः पिबन्त्यस्य मरुतः। उत स्वराजो अश्विना ॥ ४ ॥**

अस्ति। सोमः। अयम्। सुतः। पिबन्ति। अस्य। मरुतः। उत। स्वऽराजः। अश्विना ॥ ४ ॥

---

१. ख-त-वाजां नामानं; ग-वाजीनामानं। २. ख-ग-घ-त-न-भ-श-कमीयांसं च। ३. घ-'च' नास्ति। ४. य-सोमातिरेक।

ᵛअयं पुरोवर्ती ᵛसोमः ᵛसुतः मरुदर्थमस्माभिरभिषुतः ᵛअस्ति विद्यते । तस्मात् ᵛअस्य । अन्वादेशे । एनं सुतं सोमं ᵛस्वराजः स्वयं दीप्यमानाः । स्वतेजसा नान्यदीयेनेत्यर्थः । तादृशाः ᵛमरुतः ᵛपिबन्ति । ᵛउत अपि च ᵛअश्विना अश्विनौ च सोमं पिबतः ॥

**पिबन्ति मित्रो अर्यमा तना पूतस्य वरुणः । त्रिषधस्थस्य जावतः ॥ ५ ॥**

पिबन्ति । मित्रः । अर्यमा । तना । पूतस्य । वरुणः । त्रिऽसधस्थस्य । जाऽवतः ॥ ५ ॥

न[1] केवलं मरुत एव सोमपातारः किंत्वेतेऽपीत्याह । ᵛमित्रः सर्वेषां स्वस्वकर्मणि प्रवर्तकत्वात् सखिभूतः ᵛअर्यमा च ᵛवरुणः दुःखादीनां शत्रूणां वा वरिता निवारकः । एतन्नामकास्त्रयो देवाः ᵛतना । ततमूर्णास्तुकेनेति तनं दशापवित्रम् । ' सुपां सुलुक्° ' इति तृतीयाया आलादेशः । तनाद्युदात्तः । तना ᵛपूतस्य शोधितं[2] ᵛत्रिसधस्थस्य[3] । सह तिष्ठन्त्यत्रेति[4] सधस्थं स्थानम् । द्रोणकलशाधवनीयपूतभृदात्मानि त्रीणि स्थानानि यस्य तं तथोक्तं तादृशं ᵛजावतः स्तुत्यजनवन्तमिमं सोमं ᵛपिबन्ति[5] । द्वितीयार्थे षष्ठ्यः ॥

**उतो न्वस्य जोषमाँ इन्द्रः सुतस्य गोमतः । प्रातर्होतेव मत्सति ॥ ६ ॥**

उतो इति । नु । अस्य । जोषम् । आ । इन्द्रः । सुतस्य । गोऽमतः ।
प्रातः । होताऽइव । मत्सति ॥ ६ ॥

ᵛउतो अपि च ᵛइन्द्रः ᵛसुतस्य अस्माभिरभिषुतस्य ᵛगोमतः गव्यैर्मिश्रणवतः ᵛअस्य[6] । अन्वादेशः । पूर्ववद्दशापवित्रेण पूतस्य सोमस्य ᵛजोषं पानरूपां सेवां ᵛप्रातः प्रातःसवने ᵛनु क्षिप्रम् ᵛआ ᵛमत्सति । मदि स्तुत्यादिषु । आभिमुख्येन स्तौति । यद्वा । सोमसेवां कामयते । तत्र दृष्टान्तः । ᵛहोतेव । यथा होता प्रातःसवने देवानभिष्टौति देवान् स्तोतुं वाभिवाञ्छति ॥ ॥ २८ ॥

**कदत्विषन्त सूरयस्तिर आपइव स्रिधः । अर्षन्ति पूतदक्षसः ॥ ७ ॥**

कत् । अत्विषन्त । सूरयः । तिरः । आपःऽइव । स्रिधः । अर्षन्ति । पूतऽदक्षसः ॥ ७ ॥

ऋषिर्मरुतो बहुवारं स्तुत्वेदानीमात्मानं वितर्कयति । ᵛसूरयः प्राज्ञाः ᵛआपइव उदकानीव ᵛतिरः यथोदकानि तिर्यग्गच्छन्ति तद्वत्तिरश्चीनगतयः सन्तः ᵛकत् कदा ᵛअत्विषन्त । ' त्विष दीप्तौ ' । अन्तरिक्षे कदा दीप्यन्ते । किंच ᵛस्रिधः शत्रूणां शोषका हन्तारस्त इमे मरुतः ᵛपूतदक्षसः शुद्धबलाः सन्तः कदा वा ᵛअर्षन्ति । अस्मदीयं यज्ञं प्रत्यागच्छन्ति ॥

**कद्वो अद्य महानां देवानामवो वृणे । त्मना च दस्मवर्चसाम् ॥ ८ ॥**

कत् । वः । अद्य । महानाम् । देवानाम् । अवः । वृणे । त्मना । च । दस्मऽवर्चसाम् ॥८॥

हे मरुतः ᵛमहानां मंहनीयानां[7] महतां वा ᵛत्मना ᵛच आत्मनैवालंकरणैर्विनापि ᵛदस्मवर्चसां दर्शनीयतेजस्कानामत एव ᵛदेवानां द्योतमानानां ᵛवः युष्माकम् ᵛअवः पालनं ᵛकत् कदाहं ᵛवृणे संभजे । ' वृङ् संभक्तौ ' । क्रैयादिकः ॥

---

१. ख-त-भ-श–' न ' नास्ति । २. ख–परंशोधितं; ङ-त१-२-न-भ२–परिशोधितं; घ–पूतं शोधितं; भ१–परिशोधनं । ३. घ१–त्रिषधस्थस्य । ४. ख-त-न-भ-श–तिष्ठत्यत्रेति । ५. ख-त-न-श–पिबति; भ२–पिबती । ६. ख-ग-त-न–' अस्य ' नास्ति । ७. ख-त-श–महनीयानां ।

आ ये विश्वा पार्थिवानि पुप्रथन्नोचना दिवः । मरुतः सोमपीतये ॥ ९ ॥

आ । ये । विश्वा । पार्थिवानि । पप्रथन् । रोचना । दिवः । मरुतः । सोमऽपीतये ॥ ९ ॥

"ये मरुतः "विश्वा विश्वानि "पार्थिवानि पृथिव्यां भवानि भूतजातानि "दिवः द्युलोकस्य "रोचना रोचमानानि ज्योतींषि च "आ "पप्रथन् सर्वत्र विस्तारितान्यकार्षुः । 'प्रथ प्रख्याने'। ण्यन्तस्य चङि 'अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्' (पा. सू. ७. ४. ९५) इत्यभ्यासस्यादादेशः । 'चङ्यन्यतरस्याम्' इति स्वरेण[1] मध्योदात्तः । तादृशान् "मरुतः देवान् "सोमपीतये सोमपानायाहमाह्वयामि ॥

त्यान्नु पूतदक्षसो दिवो वो मरुतो हुवे । अस्य सोमस्य पीतये ॥ १० ॥

त्यान् । नु । पूतऽदक्षसः । दिवः । वः । मरुतः । हुवे । अस्य । सोमस्य । पीतये ॥ १० ॥

हे "मरुतः मितराविण एतन्नामका देवाः "पूतदक्षसः परिशुद्धबलान् "दिवः स्वतेजसा दीप्यमानान् । यद्वा । दिवो द्युलोकस्थितान् । "त्यान् तान् प्रसिद्धान् "वः युष्मान् "नु क्षिप्रं "हुवे आह्वयामि । किमर्थम् । "अस्य अस्मदीयस्य "सोमस्य "पीतये पानाय ॥

त्यान्नु ये वि रोदसी तस्तभुर्मरुतो हुवे । अस्य सोमस्य पीतये ॥ ११ ॥

त्यान् । नु । ये । वि । रोदसी इति । तस्तभुः । मरुतः । हुवे । अस्य । सोमस्य । पीतये ॥ ११ ॥

"ये "मरुतः "रोदसी द्यावापृथिव्यौ "वि "तस्तभुः स्वबलेनैवात्यर्थं स्तब्धे चक्रुः । ते रोदसी स्वाधीने अकार्षुरित्यर्थः । "त्यान् तान् सर्वतः[2] प्रसिद्धान् "नु क्षिप्रमहं "हुवे आह्वयामि । किमर्थम् । "अस्य इत्यादि ॥

त्यं नु मारुतं गणं गिरिष्ठां वृषणं हुवे । अस्य सोमस्य पीतये ॥ १२ ॥

त्यम् । नु । मारुतम् । गणम् । गिरिऽस्थाम् । वृषणम् । हुवे । अस्य । सोमस्य । पीतये ॥ १२ ॥

"त्यं तं सर्वत्र विश्रुतं "गिरिष्ठां गिरिषु मेघेषु पर्वतेषु वा तिष्ठन्तं "वृषणम् उदकानां कामानां वा वर्षितारं "मारुतं मरुत्संबन्धिनं "गणं संघं "हुवे बिन्दुरहमाह्वयामि । किं प्रयोजनम् । "अस्य अस्मदीयस्य "सोमस्य "पीतये पानाय ॥ ॥ २९ ॥

'आ त्वा' इति नवर्चं द्वितीयं सूक्तमानुष्टुभमैन्द्रम् । तिरश्चीर्नामाङ्गिरस ऋषिः । तथा चानुक्रम्यते—'आ त्वा नव तिरश्चीरानुष्टुभम्[3]' इति । आभिप्लविकेषूक्थ्येषु[4] तृतीयसवनेऽच्छावाकस्य 'आ त्वा गिरः' इति तृचो वैकल्पिकोऽनुरूपः । सूत्र्यते हि—'गायन्ति त्वा गायत्रिण आ त्वा गिरो रथीरिव' (आश्व. श्रौ. ७. ८) इति ॥

आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः ।
अभि त्वा समनूषतेन्द्र वत्सं न मातरः ॥ १ ॥

आ । त्वा । गिरः । रथीःऽइव । अस्थुः । सुतेषु । गिर्वणः ।
अभि । त्वा । सम् । अनूषत । इन्द्र । वत्सम् । न । मातरः ॥ १ ॥

१. ख-झ-त२-३–ञित्स्वरेण; त१–निस्स्वरेण । २. ख-ग-घ-त-श–सर्वान्; भ१–सर्वान् सर्वतः । ३. झ-न-अनु.–तिरश्चीरांगिरस आनु° । ४. ख-भ–°षूक्थेषु ।

हे गिर्वणः गीर्भिर्वननीयेन्द्र सुतेषु सोमेष्वभिषुतेषु सत्सु गिरः अस्माकं स्तुतिलक्षणा वाचः त्वा त्वाम् आ अस्थुः आभिमुख्येन शीघ्रं तिष्ठन्ति। तत्र दृष्टान्तः। रथीरिव। यथा रथवान् रथेन गच्छन् वीरः प्राप्यं देशं क्षिप्रं गच्छति तद्वदस्माभिरभिगन्तव्यं त्वां स्तुतयोऽभिगच्छन्ति। किंच हे इन्द्र अस्मदीया गिरः त्वा त्वामभिलक्ष्य[1] समनूषत सम्यक् शब्दायन्ते। स्तुवन्तीत्यर्थः। 'नू स्तवने'। कुटादिः। तस्य लुङि रूपम्। तत्र दृष्टान्तः। वत्सं[2] न मातरः[2]। यथा मातरो गावो वत्समभिलक्ष्य हम्भारवादिशब्दं कुर्वन्ति तद्वत्॥

आ त्वा शुक्रा अचुच्यवुः सुतास इन्द्र गिर्वणः।
पिबा त्व१स्यान्धस इन्द्र विश्वासु ते हितम्॥ २॥

आ। त्वा। शुक्राः। अचुच्यवुः। सुतासः। इन्द्र। गिर्वणः।
पिब। तु। अस्य। अन्धसः। इन्द्र। विश्वासु। ते। हितम्॥ २॥

हे गिर्वणः गीर्भिर्वननीय हे इन्द्र शुक्राः ग्रहेषु पात्रेषु च दीप्यमानाः सुतासः अस्माभिः अभिषुताः सोमाः त्वा त्वाम् आ अचुच्यवुः आगच्छन्तु। 'च्युङ् प्लुङ् गतौ'। लङि 'बहुलं छन्दसि' इति शपः श्लुः। ततस्त्वमस्माभिर्दीयमानस्य अन्धसः सोमस्य भवदीयं भागं तु क्षिप्रं पिब[3]। तदेवोपपादयति। हे इन्द्र विश्वासु सर्वासु दिक्षु ते त्वदर्थं सोमपुरोडाशादिहविः हितं निहितं भवति॥

पिबा सोमं मदाय कमिन्द्र श्येनाभृतं सुतम्।
त्वं हि शश्वतीनां पती राजा विशामसि॥ ३॥

पिब। सोमम्। मदाय। कम्। इन्द्र। श्येनऽआभृतम्। सुतम्।
त्वम्। हि। शश्वतीनाम्। पतिः। राजा। विशाम्। असि॥ ३॥

हे इन्द्र त्वं श्येनाभृतम्। 'हृग्रहोर्भश्छन्दसि' इति हकारस्य भकारः। द्युलोकात् श्येनरूपया गायत्र्याहृतं सुतम् अभिषुतं सोमं मदाय हर्षाय पिब। कम् इति पूरणः सुखार्थो वा। सुखेन सोमं पिब। हिशब्दो हेतौ। हि यस्मात् त्वं शश्वतीनां बह्वीनां विशां मरुद्गणानां सर्वेषां देवगणानां च पतिः पालयिता स्वामी असि भवसि तथा राजा स्वतेजसा दीप्यमानश्चासि। अतस्त्वं पूर्वं सोमं पिबेति॥

आभिप्लविकेषूक्थ्येषु[4] तृतीयसवनेऽच्छावाकस्य 'श्रुधी हवं तिरश्च्या' इति वैकल्पिकः स्तोत्रियः। सूत्रितं च—'श्रुधी हवं तिरश्च्या आश्रुत्कर्ण श्रुधी हवम्' (आश्व. श्रौ. ७. ८) इति॥

श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति।
सुवीर्यस्य गोमतो रायस्पूर्धि महाँ असि॥ ४॥

श्रुधि। हवम्। तिरश्च्याः। इन्द्र। यः। त्वा। सपर्यति।
सुऽवीर्यस्य। गोऽमतः। रायः। पूर्धि। महान्। असि॥ ४॥

---

१. घ—त्वामभ्यभिलक्ष्य। २. ख-त—वत्सं न च; घ—वत्सं न; न-श—वत्सं नव; भ—वत्समिव। ३. ख-ज्ञ-त२-न-भ—पिब यद्वा क्रियाग्रहणमपि कर्तव्यमिति संप्रदानं। चतुर्थ्यर्थे बहुलं (ख-ज्ञ-त२—बहुलं छंदसि) षष्ठी। तदिदं सोमरूपमन्नं शीघ्रं पिब। ४. ख-भ१—°षूक्थेषु।

हे ᵛइन्द्र ᵛयस्त्वा त्वां ᵛसपर्यति। सपरशब्दः कण्ड्वादिः। हविर्भिः परिचरति तादृशस्य ᵛतिरश्च्याः एतन्नामकस्यर्षेः मम ᵛहवं स्तुतिभिस्त्वद्विषयमाह्वानं ᵛश्रुधि शृणु। श्रुत्वा च हे इन्द्र त्वं ᵛसुवीर्यस्य शोभनवीर्योपेतस्य। यद्वा। वीरे पुत्रे भवं वीर्यम्। सुपुत्रवतः। ᵛगोमतः गवादिपशुमतः ᵛरायः धनस्य दानेन ᵛपूर्धि अस्मान् पूरय। एतत्सामर्थ्यं कुत इत्यत आह। त्वं ᵛमहान् गुणाधिको देवानां श्रेष्ठश्च ᵛअसि भवसि खलु॥

इन्द्र॒ यस्ते॒ नवी॑यसीं॒ गिरं॑ म॒न्द्रामजी॑जनत्।
चि॒कि॒त्विन्म॑नसं॒ धियं॑ प्र॒त्नामृ॒तस्य॑ पि॒प्युषी॑म्॥ ५॥

इन्द्र॑। यः। ते॒। नवी॑यसीम्। गिर॑म्। म॒न्द्राम्। अजी॑जनत्।
चि॒कि॒त्वित्ऽम॑नसम्। धिय॑म्। प्र॒त्नाम्। ऋ॒तस्य॑। पि॒प्युषी॑म्॥ ५॥

हे ᵛइन्द्र ᵛयः यजमानः ᵛनवीयसीं नवतरां पुनःपुनः क्रियमाणतया ᵛमन्द्रां मदकरीं ᵛगिरं स्तुतिलक्षणां वाचं ᵛते त्वदर्थम् ᵛअजीजनत् उदपीपदत्। अकार्षीदित्यर्थः। तस्मै स्तोत्रे त्वं ᵛप्रत्नां पुरातनम् ᵛऋतस्य सत्यस्य संबन्धि। यद्वा। तृतीयार्थे षष्ठी। सत्येन ᵛपिप्युषीं प्रवृद्धम्[1]। 'लिड्यङोश्च' इति प्यायतेः पीभावः। तादृशं ᵛचिकित्विन्मनसम्। 'कित ज्ञाने'। क्वसौ रूपम्। अकारस्येकारश्छान्दसः। चिकित्वांसि ज्ञातानि सर्वेषां हृदयानि ययेति[2]। अमायया क्रियमाणं यत्तव रक्षणं सर्वेषां हृदयं प्रज्ञापयतीति तदतीन्द्रियार्थदर्शकं ᵛधियं त्वदीयं रक्षणाख्यं तस्मै कुरु॥ ॥ ३०॥

तमु॑ ष्टवाम॒ यं गिर॒ इन्द्र॑मु॒क्थानि॑ वावृ॒धुः।
पु॒रूण्य॑स्य॒ पौंस्या॑ सिषा॑सन्तो वनामहे॥ ६॥

तम्। ऊँ इति॑। स्त॒वाम॑। यम्। गिर॑ः। इन्द्र॑म्। उ॒क्थानि॑। व॒वृ॒धुः।
पु॒रूणि॑। अ॒स्य॒। पौंस्या॑। सिसा॑सन्तः। व॒ना॒म॒हे॒॥ ६॥

ऋषयः परस्परमाहुः। ᵛतं पूर्वोक्तलक्षणम्। ᵛउ इत्यवधारणे। तमेवेन्द्रं ᵛस्तवाम स्तुतिभिः स्तुमः। ᵛयम्[3] ᵛइन्द्रं[3] ᵛगिरः अस्माकं स्तुतयः ᵛउक्थानि शस्त्राणि च ᵛवावृधुः प्रावर्धयन् तं स्तुमः। ततो वयम् ᵛअस्य इन्द्रस्य ᵛपुरूणि बहूनि ᵛपौंस्या वीर्याणि ᵛसिषासन्तः। 'षण संभक्तौ'। सनीडभावपक्ष आत्वे कृते 'सनोतेरनः' इति सांहितिकं षत्वम्। तानि वीर्याणि संभक्तुमिच्छन्तः सन्तः ᵛवनामहे। तमिन्द्रं स्तुतिभिः संभजामहे॥

एतो॒ न्विन्द्रं॒ स्तवा॑म शु॒द्धं शु॒द्धेन॒ साम्ना॑।
शु॒द्धैरु॒क्थैर्वा॑वृ॒ध्वांसं॑ शु॒द्ध आ॒शीर्वा॑न्ममत्तु॥ ७॥

एतो॒ इति॑। नु। इन्द्र॑म्। स्तवा॑म। शु॒द्धम्। शु॒द्धेन॑। साम्ना॑।
शु॒द्धैः। उ॒क्थैः। व॒वृ॒ध्वांस॑म्। शु॒द्धः। आ॒शीःऽवा॑न्। म॒म॒त्तु॒॥ ७॥

अत्रेतिहासमाचक्षते। पुरा किलेन्द्रो वृत्रादिकानसुरान् हत्वा ब्रह्महत्यादिदोषेणात्मानमपरिशुद्धमित्यमन्यत। ततस्तद्दोषपरिहारायेन्द्र ऋषीनवोचत्। अपूतं मां युष्मदीयेन साम्ना शुद्धं कुरुतेति।

1. ख-ग-त-न-भ-श—प्रवृद्धां। 2. ख-त-न-भ-श—नयेति; ज—अनयेति। 3. ख-ग-त-भ—इंद्रं; घ—यं।

ततस्ते च शुद्ध्युत्पादकेन साम्ना शस्त्रैश्च परिशुद्धमकार्षुः । पश्चात्पूतायेन्द्राय[1] यागादिकर्माणि सोमादीनि हवींषि प्रादुरिति । एषोऽर्थः शाठ्यायनकब्राह्मणे प्रतिपादितः—‘ इन्द्रो वासुरान्हत्वापूत इवामेध्योऽमन्यत । सोऽकामयत शुद्धमेव मा सन्तं शुद्धेन साम्ना स्तुयुरिति[2] । स ऋषीनब्रवीत् स्तुत मेति । तत[3] ऋषयः सामापश्यन्[4] । तेनास्तुवन्नेतो न्विन्द्रमिति । ततो वा इन्द्रः पूतः शुद्धो मेध्योऽभवत् ’ इति । तथा चास्या ऋचोऽयमर्थः । ऋषयः परस्परं ब्रुवन्ति । ˅नु क्षिप्रम् ˅एतो आगच्छतैव । आगत्य च ˅शुद्धेन शुद्ध्युत्पादकेन ˅साम्ना तथा ˅शुद्धैः शुद्धिहेतुभिः ˅उक्थैः शस्त्रैश्च ˅इन्द्रं ˅शुद्धम् अपापिनं कृत्वा ˅स्तवाम स्तुयाम[5] । ततः सामशस्त्रैश्च ˅वावृध्वांसं पापराहित्येन वर्धमानं तमिममिन्द्रं ˅शुद्धः दशापवित्रेण ˅आशीर्वान् आश्रयणवान् गव्यादिभिः । ‘ छन्दसीरः ’ इति मतुपो वत्वम् । तादृशः सोमः ˅ममत्तु इन्द्रं मादयतु । माद्यतेश्छान्दसः श्लुः ॥

इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरूतिभिः ।
शुद्धो रयिं नि धारय शुद्धो ममद्धि सोम्यः ॥ ८ ॥

इन्द्र । शुद्धः । नः । आ । गहि । शुद्धः । शुद्धाभिः । ऊतिऽभिः ।
शुद्धः । रयिम् । नि । धारय । शुद्धः । ममद्धि । सोम्यः ॥ ८ ॥

हे ˅इन्द्र ˅शुद्धः अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं ˅नः अस्मान् ˅आ ˅गहि आगच्छ । ˅शुद्धाभिरूतिभिः । ऊतयो मरुतः । अवन्ति सर्वत्र गच्छन्तीति वा । तेऽपि सामभिः शस्त्रैः परिपूताः । तैर्मरुद्भिः सह ˅शुद्धः पापरहितस्त्वमा गहि । आगत्य च ˅शुद्धः त्वं ˅रयिं धनमस्मासु ˅नि ˅धारय नितरां स्थापय । किंच ˅शुद्धः त्वं ˅सोम्यः[6] सोमार्हो भूत्वा ˅ममद्धि सोमेन माद्य । ‘ मदी हर्षे ’ । लोटि ‘ बहुलं छन्दसि ’ इति शपः श्लुः ॥

इन्द्र शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे ।
शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषाससि ॥ ९ ॥

इन्द्र । शुद्धः । हि । नः । रयिम् । शुद्धः । रत्नानि । दाशुषे ।
शुद्धः । वृत्राणि । जिघ्नसे । शुद्धः । वाजम् । सिसाससि ॥ ९ ॥

हे ˅इन्द्र ˅शुद्धः । हिरवधारणे । शुद्ध एव त्वं ˅रयिं धनं ˅नः अस्मभ्यं प्रयच्छ । तथा ˅शुद्धः त्वं ˅दाशुषे हविर्दत्तवते यजमानाय ˅रत्नानि रमणीयानि धनादीनि[7] च देहि । ततः ˅शुद्धः पापरहितस्त्वं ˅वृत्राणि अपामावरकान् कर्मविघ्नकारिणः शत्रून् पापानि वा ˅जिघ्नसे हंसि । ततः ˅शुद्धः शत्रुहननदोषपरिहारायास्मदीयैः सामभिः शस्त्रैः परिशुद्धस्त्वं ˅वाजम् अन्नमस्मभ्यं ˅सिषाससि प्रदातुमिच्छसि । यदा यदा शत्रूनहं हन्यां तदा तदा शुद्ध्युत्पादकैः सामभिः शस्त्रैश्च यूयं मां परिशुद्धं कुरुतेत्यस्मभ्यमन्नं दातुमिच्छसीत्यर्थः ॥ ॥ ३१ ॥

‘ अस्मै ’ इत्येकविंशत्यृचं तृतीयं सूक्तम् । अत्रानुक्रम्यते—‘ अस्मै सैका द्युतानो वा मारुतस्त्रैष्टुभं[8] चतुर्थी विराळिष्यामीति मारुतः पादः परैन्द्राबार्हस्पत्या ’ इति । द्युतानाख्यो मरुतां पुत्र ऋषिस्तिरश्चीर्नामाङ्गिरसो वा । चतुर्थी विराट् । शिष्टास्त्रिष्टुभः । इन्द्रो देवता । ‘ इष्यामि वो मरुतः ’ इति पादो मरुद्देवत्यः । ‘ अध द्रप्सः’ इत्येषा त्विन्द्राबृहस्पतिदेवताका । सूक्तविनियोगो लिङ्गादवगन्तव्यः ॥

१. श–पश्चाच्छुद्धायेंद्राय । २. ख-ङ-त२-३-भ२-श–स्तुयुरिति स्तुयुः; त१–शस्त्रैः स्तुयुरिति स्तुयुः । ३. ख-त-भ–तव; ग–त एते । ४. ख-त-भ-श–सामापश्यं । ५. घ–स्तूयाम । ६. ख-ग-त-श–‘ सोम्यः ’ नास्ति । ७. ख-त–धनकवधनादीनि; ग-श–धनकनकादीनि; न–कनकवस्त्रधनादीनि; भ–कनकवधनादीनि । ८. ग-न-भ–मरुत° ।

अस्मा उषास आतिरन्त याममिन्द्राय नक्तमूर्म्याः सुवाचः ।
अस्मा आपो मातरः सप्त तस्थुर्नृभ्यस्तराय सिन्धवः सुपाराः ॥ १ ॥

अस्मै । उषसः । आ । अतिरन्त । यामम् । इन्द्राय । नक्तम् । ऊर्म्याः । सुऽवाचः ।
अस्मै । आपः । मातरः । सप्त । तस्थुः । नृऽभ्यः । तराय । सिन्धवः । सुऽपाराः ॥ १ ॥

इन्द्रसामर्थ्याद्भीताः ᵛउषसः उषःकालाः ᵛअस्मै पूर्वोक्तगुणोपेताय ᵛइन्द्राय ᵛयामं स्वस्वगमनम् ᵛआतिरन्त । तिरतिर्वर्धनकर्मा । समन्तादवर्धयन्त[1] । यथा पूर्वमुद्यन्ति तथेदानीमप्यस्मा उद्गता अभवन् । तथा ᵛऊर्म्याः । रात्रिनामैतत् । 'ऋ गतिप्रापणयोः' । 'अर्तेरूच' (उ. सू. ४. ४८४) इति मिप्रत्ययः । 'भवे छन्दसि' इति यत् । सर्वैरभिगन्तव्याः । रात्रौ हि सर्वे स्वनिवासं गच्छन्ति । स्वनिलयप्राप्तिहेतुभूता रात्रयः । ᵛनक्तम् अपररात्रिकाले ᵛसुवाचः शोभनवाचो भवन्ति । तस्मिन् काले हि सर्वे वेदाध्ययनादीनि[2] कुर्वन्ति । तस्मात् कल्याणवाचोऽभवन् । इन्द्रेऽनुशासति[3] वेदाद्यनुमाने[4] निरता[4] अभवन् । तथा ᵛआपः । 'आप्लृ व्याप्तौ' । सर्वतो व्याप्ताः ᵛमातरः जगतां निर्मात्र्यः ᵛसप्त सप्तसंख्याकाः ᵛसिन्धवः स्यन्दमाना गङ्गाद्या नद्यः । यद्वा । सप्त सर्पणशीलाः सिन्धवः सरितः । तासामावरकस्याहेर्हननोत्पादकत्वात् ᵛअस्मै इन्द्राय ᵛनृभ्यस्तराय मनुष्याणां सुखेन तरणार्थं ᵛसुपाराः शोभनपाराः सुखेन तर्तुं योग्या अभवन्नित्यर्थः ॥

अतिविद्धा विथुरेणा चिदस्त्रा त्रिः सप्त सानु संहिता गिरीणाम् ।
न तद्देवो न मर्त्यस्तुतुर्याद्यानि प्रवृद्धो वृषभश्चकार ॥ २ ॥

अतिऽविद्धा । विथुरेण । चित् । अस्त्रा । त्रिः । सप्त । सानु । सम्ऽहिता । गिरीणाम् ।
न । तत् । देवः । न । मर्त्यः । तुतुर्यात् । यानि । प्रऽवृद्धः । वृषभः । चकार ॥ २ ॥

ᵛविथुरेण । वर्णव्यत्ययः । ᵛचित् अप्यर्थे । विथुरेणासहायेनापि ᵛअस्त्रा । 'असु क्षेपणे' । ताच्छीलिकस्तृन् । शत्रुक्षेपणशीलेनेन्द्रेण । यद्वा । अस्त्रास्त्रेण वज्रेण । ᵛत्रिः ᵛसप्त[5] एकविंशतिसंख्यानि ᵛसंहिता संहितान्येकत्र संघीभूतानि ᵛगिरीणां सप्तानां पर्वतानां ᵛसानु[6] सानूनि ᵛअतिविद्धा अतिविद्धानि । अतीत्य ताडितानि । तेन मुक्तो वज्रपातस्तानि भित्त्वागमदित्यर्थः । अत्र तैत्तिरीयकं ब्राह्मणं—'दर्भपिञ्जूलमुद्धृत्य सप्त गिरीन् भित्त्वा तमहन्' (तै. सं. ६. २. ४. ३) इत्यादि । तस्येन्द्रस्य ᵛतत् तानि सानुभेदनादीनि कर्माणि ᵛदेवः इन्द्राद्व्यतिरिक्तो देवः ᵛमर्त्यः मनुष्यो वा ᵛन ᵛतुतुर्यात् न तरेत्[7] । तथा कर्तुं न शक्नोतीत्यर्थः ॥ 'तॄ प्लवनतरणयोः' । लिङि छान्दसः शपः श्लुः । 'बहुलं छन्दसि' इत्युत्वम् । यद्वा । 'तुर त्वरणे' । जौहोत्यादिकः । ᵛप्रवृद्धः सोमपानेन बलेन वा प्रवृद्धः ᵛवृषभः कामानामुदकानां वा वर्षक इन्द्रः ᵛयानि कर्माणि ᵛचकार कृतवान् तानि देवो मनुष्यो वा न तथा कर्तुं शक्नोतीत्यर्थः[7] ॥

---

१. ख-घ-त—समंताद्वर्धयंत; ग-न—समंताद्वर्धयंते; भ—समंताद्वर्धयंतो । २. ख-ग-त-न-भ-श—वेदाध्ययनानि शास्त्रश्रवण ( ख-त-१-२-३—°श्रवणः ) चिंतया( ग—°चिंतना° )दीनि । ३. ख-ग-त—इंद्रेनुशासनं । ४. त३-४-न-भ-श—वेदाद्यनुमाननिरताः । ५. ख-ग-घ-त२-३-भ२-श—सप्तकृत्वः । ६. घ—यानि सानु । ७. श— हन्यात् हंतुं शक्तो न भवेत् । अस्मिन् पक्षे तूरी गतिहिंसत्वरणयोरित्येतस्य रूपं । यथायोग्यं दीर्घाभावो ह्रस्वश्छांदसः । न तथा कर्तुं शक्नोतीत्यर्थः ।

इन्द्र॑स्य॒ वज्र॑ आय॒सो निमि॑श्ल॒ इन्द्र॑स्य बा॒ह्वोर्भूयि॑ष्ठ॒मोजः॑ ।
शी॒र्षन्निन्द्र॑स्य॒ क्रत॑वो नि॒रेक आ॒सन्नेष॑न्त॒ श्रुत्या॑ उपा॒के ॥ ३ ॥

इन्द्र॑स्य । वज्रः॑ । आ॒य॒सः । निऽमि॑श्लः । इन्द्र॑स्य । बा॒ह्वोः । भूयि॑ष्ठम् । ओजः॑ ।
शी॒र्षन् । इन्द्र॑स्य । क्रत॑वः । नि॒रे॒के । आ॒सन् । आ । ई॒ष॒न्त॒ । श्रु॒त्यै॑ । उ॒पा॒के ॥ ३ ॥

उक्तगुणस्य इन्द्रस्य वज्र आयसः अयसा निर्मितः। अयोमय इत्यर्थः। स[1] वज्रः इन्द्रेण स्वहस्ते निमिश्लः संमिश्रः अत्यन्तं[2] संबद्धः[2] कृतः। अत एव इन्द्रस्य बाह्वोः भुजयोः भूयिष्ठं बहुतमम् ओजः वीर्यमस्ति। तथा निरेके। निपूर्वाद्रिच्यतेर्वा[3] निस्पूर्वादेतेर्वेति संदेहादनवग्रहः। निर्गमने यदा युद्धार्थमिन्द्रो निर्गच्छति तदानीम् इन्द्रस्य शीर्षन् शिरसि क्रतवः कर्माणि शिरस्त्राणनिधानादीनि। यद्वा। शिर इति गलप्रभृत्यूर्ध्वमङ्गमुच्यते। तत्रत्याभ्यामक्षिभ्यां दर्शनप्रेरणादीनि कर्माणि भवन्ति। तथा आसन्। आस्यस्यासन्नादेशः। आस्ये च यानि कर्माणि युद्धार्थं वाजिनो गजान् संनाहयतेत्यादीनि भवन्ति। किंच श्रुत्यै संग्रामाय निर्गच्छतोऽनुशासत इन्द्रस्य वाक्यश्रवणार्थं सर्वं उपजीविनो भृत्याः उपाके अन्तिके एषन्त। अयमिन्द्रोऽस्मान् कुत्र कुत्र कार्ये नियोक्ष्यतीत्येतेन मनसा तदन्तिके समन्तादागच्छन्ति। 'ईष गतिहिंसादर्शनेषु'। भौवादिकः ॥

मन्ये॑ त्वा य॒ज्ञियं॑ य॒ज्ञिया॑नां॒ मन्ये॑ त्वा॒ च्यव॑न॒मच्यु॑तानाम् ।
मन्ये॑ त्वा॒ सत्व॑नामिन्द्र के॒तुं मन्ये॑ त्वा वृष॒भं च॑र्षणी॒नाम् ॥ ४ ॥

मन्ये॑ । त्वा॒ । य॒ज्ञिय॑म् । य॒ज्ञिया॑नाम् । मन्ये॑ । त्वा॒ । च्यव॑नम् । अच्यु॑तानाम् ।
मन्ये॑ । त्वा॒ । सत्व॑नाम् । इ॒न्द्र॒ । के॒तुम् । मन्ये॑ । त्वा॒ । वृ॒ष॒भम् । च॒र्ष॒णी॒नाम् ॥ ४ ॥

एतदादयः प्रत्यक्षाः। हे इन्द्र त्वा त्वां यज्ञियानां यज्ञार्हाणां देवानामपि यज्ञियं पुरस्तादेव यज्ञार्हमिति[4] मन्ये अवबुध्ये। तथा त्वा त्वाम् अच्युतानां च्युतिरहितानामपि पर्वतानां च्यवनं च्यावयितारं वज्रेण विभेदकमिति मन्ये जानामि। यद्वा। अच्युतानां बलेन च्यावयितुमशक्यानां बलिनां वीराणामपि स्वबलेन विद्रावयितारमिति[5] जाने। किंच हे इन्द्र[6] सत्वनाम्[7]। 'षण संभक्तौ'। क्वनिप्। संभजमानानां भटानां केतुम् उच्छ्रितमिति मन्ये। यद्वा। सत्वनां[8] स्तुतिभिः हविर्भिर्वा संभक्तॄणां यष्टॄणां केतुमात्मनः प्रज्ञापकं तेषां पूजनीयमिति वा मन्ये। तथा त्वा त्वां चर्षणीनां मनुष्याणां वृषभम् अभिमतफलवर्षकमिति मन्ये जानामि ॥

आ यद्वज्रं॑ बा॒ह्वोरि॑न्द्र॒ धत्से॑ म॒दच्यु॑त॒मह॑ये॒ हन्त॒वा उ॑ ।
प्र पर्व॑ता॒ अन॑वन्त॒ प्र गावः॒ प्र ब्र॒ह्माणो॑ अ॒भिन॑क्षन्त॒ इन्द्र॑म् ॥ ५ ॥

आ । यत् । वज्र॑म् । बा॒ह्वोः । इ॒न्द्र॒ । धत्से॑ । म॒द॒ऽच्युत॑म् । अह॑ये । हन्त॒वै । ऊँ इति॑ ।
प्र । पर्व॑ताः । अन॑वन्त । प्र । गावः॑ । प्र । ब्र॒ह्माणः॑ । अ॒भि॒ऽनक्ष॑न्तः । इन्द्र॑म् ॥ ५ ॥

---

१. ख-घ-ज्ञ-त१-२—स च। २. ख-ज्ञ-त१-२—अत्यंतसंबंधः; न-भ—अत्यंतं संबंधः। ३. ख-त—निपूर्वाद्विव्यतेर्वा। ४. ख-त—यज्ञियार्हमिति। ५. ग—च्यावयितारमिति। ६. घ-भ—इंद्र त्वा त्वां। ७. ख-त-श—सत्वनां सत्वानां; ग-घ—सत्वानां; भ—षत्वाणां। ८. ख-ग-त-भ-श—सत्वानां।

हे ᵛइन्द्र ᵛबाह्वोः ᵛवज्रम् आयुधम्। कीदृशम्। ᵛमदच्युतं शत्रूणां मदस्य च्यावयितारं ᵛयत् यदा ᵛआ ᵛधत्से आदधासि। किमर्थम्। ᵛअहये अहिनामानमसुरं मेघं वा ᵛहन्तवै। ᵛउ इत्यवधारणे। हन्तुमेव। किंच यदा वेन्द्रेणाहिनामकेऽसुरे हते सति ᵛपर्वताः जगदापूरका मेघाः ᵛप्र ᵛअनवन्त। 'नु शब्दे'। प्रकर्षेणाशब्दयन्। यदा वा ᵛगावः तत्स्थान्युदकानि च प्रकर्षेण ध्वनिमकुर्वन्। उदकान्यध्वनयन्नित्यत्र याजुषो निगमः—'यददः संप्रयतीरहावनदता हते तस्मादा नद्यो नाम स्थ' (तै. सं. ५. ६. १. २; अ. सं. ३. १३. १) इति। तुरीयः पादः परोक्षः। तदानीम् ᵛअभिनक्षन्तः अभित इन्द्रं स्तुतिभिर्हविर्भिर्गच्छन्तः ᵛब्रह्माणः ब्राह्मणाः ᵛइन्द्रं पर्यचरन्। यद्वा। ब्रह्माणः। 'बृह वृद्धौ'। प्रवृद्धाः पर्वतादय इन्द्रमस्तुवन्निति ॥ ॥ ३२ ॥

तमु॑ ष्टवाम॒ य इ॒मा ज॒जान॒ विश्वा॑ जा॒तान्यव॑राण्यस्मात्।
इन्द्रे॑ण मि॒त्रं दि॑धिषेम गी॒र्भिरुपो॒ नमो॑भिर्वृ॒ष॒भं वि॑शेम ॥ ६ ॥

तम्। ऊँ इति॑। स्त॒वा॒म॒। यः। इ॒मा। ज॒जान॑। विश्वा॑। जा॒तानि॑। अव॑राणि। अ॒स्मा॒त्।
इन्द्रे॑ण। मि॒त्रम्। दि॒धि॒षे॒म॒। गी॒ःऽभिः। उपो॒ इति॑। नम॑ःऽभिः। वृ॒ष॒भम्। वि॒शे॒म॒ ॥ ६ ॥

परस्परं स्तोतार आहुः। ᵛतमु तमेवेन्द्रं वयं संहत्य ᵛस्तवाम स्तोत्रं करवाम। ᵛयः इन्द्रः ᵛइमा इमानि भूतानि ᵛजजान जनयामास। तस्मात् ᵛअस्मात् इन्द्रादेव ᵛविश्वा विश्वानि सर्वाणि वस्तुजातानि सर्वाणि जगन्ति वा ᵛअवराणि अवरकालीनानि पश्चाद्भवानि भवन्ति। तेनानेन ᵛइन्द्रेण वयं ᵛगीर्भिः स्तुतिभिः ᵛमित्रम्। लुप्तभावप्रत्ययेन निर्देशः। मैत्रीं ᵛदिधिषेम धारयेम। 'धिष धारणे' इति धातुं केचिद्वदन्ति। यद्वा। मित्रम्। छान्दसमेकवचनम्। वयमिन्द्रेण सह मित्राणि सुहृदो भवामेति गीर्भिरिन्द्रं शब्दयेम। 'धिष शब्दे'। जौहोत्यादिकः। अत्र व्यत्ययेन द्विविकरणता श्लुश्च शश्च। ततः ᵛनमोभिः क्रियमाणैर्नमस्कारैर्दीयमानैर्हविर्भिर्वा ᵛवृषभं कामानां वर्षकमिन्द्रम् ᵛउपो ᵛविशेम अस्मदभिमुखमेव कुर्याम ॥

वृ॒त्रस्य॑ त्वा श्व॒सथा॒दीष॑माणा॒ विश्वे॑ दे॒वा अ॑जहु॒र्ये सखा॑यः।
म॒रुद्भि॑रिन्द्र स॒ख्यं ते॑ अ॒स्त्वथे॒मा विश्वा॒ः पृत॑ना जयासि ॥ ७ ॥

वृ॒त्रस्य॑। त्वा॒। श्व॒सथा॑त्। ईष॑माणाः। विश्वे॑। दे॒वाः। अ॒ज॒हुः॒। ये। सखा॑यः।
म॒रुत्ऽभिः। इ॒न्द्र॒। स॒ख्यम्। ते॒। अ॒स्तु॒। अथ॑। इ॒माः। विश्वा॑ः। पृत॑नाः। ज॒या॒सि॒ ॥ ७ ॥

हे इन्द्र तव ᵛये ᵛविश्वे ᵛदेवाः प्राक् ᵛसखायः संग्रामे सखित्वं कुर्यामेति[1] मित्राण्यभवन् ते सर्वे देवाः ᵛवृत्रस्य वृत्रासुरस्य ᵛश्वसथात्। श्वसेरौणादिकोऽथप्रत्ययः। सर्वानागच्छतो दृष्ट्वा तेषां भीत्युत्पादनाय वृत्रासुरः श्वासमकार्षीत्। श्वासाद्भीताः सन्तः अत एव ᵛईषमाणाः सर्वतः पलायमानाः ᵛत्वा त्वाम् ᵛअजहुः संग्रामे त्यक्तवन्तः। एवं सति हे ᵛइन्द्र ᵛमरुद्भिः सह ᵛसख्यं सखिभावः ᵛते तव ᵛअस्तु। ये मरुतस्त्वां न परित्यजन्ति तैः सहेति। ᵛअथ अनन्तरम् ᵛइमाः ᵛविश्वाः[2] ᵛपृतनाः शत्रुसेनाः ᵛजयासि स्वबलेनाभिभवसि। अनेन वृत्रं घ्नन्तमिन्द्रमाह। अत्र 'इन्द्रो वै वृत्रं हनिष्यन्' (ऐ. ब्रा. ३. २०) इत्यादि ब्राह्मणमनुसंधेयम् ॥

त्रिः ष॒ष्टिस्त्वा॑ म॒रुतो॑ वावृधा॒ना उ॒स्रा इ॑व रा॒शयो॑ य॒ज्ञिया॑सः।
उप॒ त्वेम॑ः कृ॒धि नो॑ भाग॒धेयं॒ शुष्मं॑ त ए॒ना ह॒विषा॑ विधेम ॥ ८ ॥

---

१. ख-त-श–कुर्यामिति। २. भ–विश्वाः सर्वाः।

त्रिः । षष्टिः । त्वा । मरुतः । वावृधानाः । उस्राःऽइव । राशयः । यज्ञियासः ।
उप । त्वा । आ । इमः । कृधि । नः । भागऽधेयम् । शुष्मम् । ते । एना । हविषा । विधेम ॥८॥

प्रसङ्गादेतावन्तो मरुतः सहाया अभवन्नित्याह । हे इन्द्र $^{v}$त्रिः त्रयः । जसः 'सुपां सुलुक्' इति सुः । षष्टिर्युत्तरसंख्याका मरुतः । ते च तैत्तिरीयके 'ईदृङ्चान्यादृङ्च' (तै. सं. ४. ६. ५. ५) इत्यादिना नवसु गणेषु सप्त सप्त प्रतिपादिताः । तत्रादितः पञ्च गणाः संहितायामाम्नायन्ते । 'स्वतवांश्च प्रघासी च सांतपनश्च गृहमेधी च क्रीडी च शाकी चोज्जेषी' (वा. सं. १७. ८५) इति खैलिकः षष्ठो गणः । ततो 'धुनिश्च ध्वान्तश्च' (तै. आ. ४. २४) इत्याद्यास्त्रयोऽरण्येऽनुवाक्याः । इत्थं त्रयः-षष्टिसंख्याकाः $^{v}$उस्राइव $^{v}$राशयः गाव इव संघीभूतास्ते त्वां $^{v}$वावृधानाः स्वबलेन वर्धितवन्तः । ते $^{v}$मरुतः $^{v}$यज्ञियासः यज्ञार्हा अभवन् । तं मरुत्सहायमिन्द्रं $^{v}$त्वा त्वां वयम् $^{v}$एमः उपगच्छामः । ततस्त्वं $^{v}$नः अस्मभ्यं $^{v}$भागधेयं भजनीयं धनं $^{v}$कृधि कुरु । पश्चाद्वयमपि $^{v}$एना एनेन सोमलक्षणेन $^{v}$हविषा $^{v}$ते तुभ्यं $^{v}$शुष्मं शत्रूणां शोषकं बलं $^{v}$विधेम । 'विध विधाने' । विदध्म । कुर्म इत्यर्थः[1] ॥

तिग्ममायुधं मरुतामनीकं कस्त इन्द्र प्रति वज्रं दधर्ष ।
अनायुधासो असुरा अदेवाश्चक्रेण ताँ अप वप ऋजीषिन् ॥ ९ ॥

तिग्मम् । आयुधम् । मरुताम् । अनीकम् । कः । ते । इन्द्र । प्रति । वज्रम् । दधर्ष ।
अनायुधासः । असुराः । अदेवाः । चक्रेण । तान् । अप । वप । ऋजीषिन् ॥ ९ ॥

हे $^{v}$इन्द्र $^{v}$ते तव स्वभूतं $^{v}$तिग्मं तीक्ष्णम् $^{v}$आयुधम् । आयुध्यतेऽनेनेत्यायुधं धनुः । तत्र $^{v}$मरुतां त्रयःषष्टिसंख्याकानां त्वत्सहायानाम् $^{v}$अनीकं संघं च त्वदीयं $^{v}$वज्रं च $^{v}$कः को वा देवो मनुष्यो वा $^{v}$प्रति $^{v}$दधर्ष प्रतिकूलमभिभवति । अभिभावुको नास्तीत्यर्थः । 'धृष प्रसहने' । 'आ धृषाद्वा' इति विभाषितणिच् । तदभावे लिटि रूपम् । अत एव $^{v}$अनायुधासः धनु-राद्यायुधवर्जिताः $^{v}$अदेवाः देववर्जिता देवद्विषो ये $^{v}$असुराः सन्ति हे $^{v}$ऋजीषिन् । अपार्जितोऽभिषुतः सोम ऋजीषः । तद्वन्निन्द्र $^{v}$तान् असुरान् $^{v}$चक्रेण चक्रसमानवीर्येण चक्ररूपेण वज्रेण वा $^{v}$अप $^{v}$वप अपगतान् कुरु । अपनुदेत्यर्थः ॥

मह उग्राय तवसे सुवृक्तिं प्रेरय शिवतमाय पश्वः ।
गिर्वाहसे गिर इन्द्राय पूर्वीर्धेहि तन्वे कुविदङ्ग वेदत् ॥ १० ॥

महे । उग्राय । तवसे । सुऽवृक्तिम् । प्र । ईरय । शिवऽतमाय । पश्वः ।
गिर्वाहसे । गिरः । इन्द्राय । पूर्वीः । धेहि । तन्वे । कुवित् । अङ्ग । वेदत् ॥ १० ॥

हे स्तोतः $^{v}$महे महते गुणैः $^{v}$उग्राय बलेनोद्गूर्णाय $^{v}$तवसे । तु इति धातुर्वृद्ध्यर्थः । प्रवृद्धाय $^{v}$शिवतमाय कल्याणतमायेन्द्राय $^{v}$सुवृक्तिं शोभनां स्तुतिं $^{v}$प्रेरय चोदय । कुरु । किमर्थम् । $^{v}$पश्वः पशोः । द्विपाच्चतुष्पाच्च[2] । पशोर्ममास्मदीयाय गवे वा । यद्वा पशोरतीन्द्रियार्थं[3] द्रष्टुर्मम धनादिकं दातुं गवे सुखादिकं प्रदातुमिन्द्राय स्तुतिं प्रेरय । एतदेवाह । हे स्तोतः $^{v}$गिर्वाहसे गीर्भिः स्तुतिभिरुह्यमा-नाय $^{v}$इन्द्राय $^{v}$पूर्वीः बह्वीः $^{v}$गिरः स्तुतीः $^{v}$धेहि कुरु । ततः स इन्द्रः $^{v}$तन्वे । तनोति कुलमिति

१. ख-त१-२-भ-इत्यर्थः । सोमपानेनास्य बलं भवतीत्यर्थः । २. ख-त१-२-द्विपाच्च चतुष्पाच्च । ३. ग-°रतींद्रियार्थं; त१-भ-°रतींद्रियार्थं ।

तनूस्तनयः । तस्मै पुत्राय स्वशरीरायात्मने वा ᐯकुवित् । बहुनामैतत् । बहु धनम् ᐯअङ्ग क्षिप्रं ᐯवेदत् लम्भयतु ददातु । 'विदॢ लाभे'। लेट्यडागमः । कुविच्छब्दयोगादनिघातः ॥　　॥ ३३ ॥

**उ॒क्थवा॑हसे वि॒भ्वे॑ मनी॒षां द्रु॒णा न पा॒रमी॑रया न॒दीना॑म् ।**
**नि स्पृ॑श धि॒या त॒न्वि॑ श्रु॒तस्य॒ जुष्ट॑तरस्य कु॒विद॒ङ्ग वेद॑त् ॥ ११ ॥**

उ॒क्थऽवा॑हसे । वि॒ऽभ्वे॑ । म॒नी॒षाम् । द्रु॒णा । न । पा॒रम् । ई॒र॒य॒ । न॒दीना॑म् ।
नि । स्पृ॒श॒ । धि॒या । त॒न्वि॑ । श्रु॒तस्य॑ । जुष्ट॑ऽतरस्य । कु॒वित् । अ॒ङ्ग । वेद॑त् ॥ ११ ॥

हे स्तोतः ᐯउक्थवाहसे उक्थैः स्तोत्रशस्त्रादिभिरुह्यमानाय अत एव ᐯविभ्वे महते यद्वा शत्रूणामभिभवित्र इन्द्रायेन्द्रार्थं[1] ᐯमनीषां मनस ईषां स्तुतिम् ᐯईरय प्रेरय । तत्र दृष्टान्तः । ᐯद्रुणा ᐯन यथा नाविकः ᐯनदीनां नदमानानां सरितां ᐯपारं तीरं प्रति पथिकं द्रुणा नावा प्रापयति तद्वदिन्द्रं प्रति स्तुतिं गमयेति[2] । किंच ᐯनि ᐯस्पृश नितरां धनं स्पर्शय गमय ᐯतन्वि आत्मनि पुत्रे वा । कीदृशम् । ᐯश्रुतस्य सर्वत्र विश्रुतस्य प्रसिद्धस्य ᐯजुष्टतरस्य अत्यर्थं प्रीणयितुरिन्द्रस्य स्वभूतम् । धनं ᐯधिया त्वदीयया स्तुत्या कर्मणा वात्मानं गमय । ततस्त्वयाभिष्टुत इन्द्रः ᐯकुवित् बहु धनं क्षिप्रं[3] ᐯवेदत् लम्भयतु ददातु ॥

**तद्वि॑विड्ढि॒ यत्त॒ इन्द्रो॒ जुजो॑षत्स्तु॒हि सु॑ष्टु॒तिं नम॒सा वि॑वास ।**
**उप॑ भूष जरित॒र्मा रु॑वण्यः श्रा॒वया॒ वाचं॑ कु॒विद॒ङ्ग वेद॑त् ॥ १२ ॥**

तत् । वि॒वि॒ड्ढि॒ । यत् । ते॒ । इन्द्रः॑ । जुजो॑षत् । स्तु॒हि । सु॒ऽस्तु॒तिम् । नम॑सा । आ । वि॒वा॒स॒ ।
उप॑ । भू॒ष॒ । ज॒रि॒त॒रिति॑ । मा । रु॒व॒ण्यः॒ । श्र॒वय॑ । वाच॑म् । कु॒वित् । अ॒ङ्ग । वेद॑त् ॥ १२ ॥

हे ऋत्विक् ᐯतत् सोमादिहविः स्तोत्रं वा ᐯविविड्ढि व्यापय । तानीन्द्रार्थं कुर्वित्यर्थः । ᐯते तव स्वभूतं ᐯयत् हविः स्तोत्रं वा ᐯइन्द्रः ᐯजुजोषत् स्वीकुर्यात् तत्कुरु । 'जुषी प्रीतिसेवनयोः'। लेटि शपः श्लुः । अडागमः । छान्दसत्वात् 'नाभ्यस्तस्य०' इति गुणप्रतिषेधाभावः । हे स्तोतः ᐯसुष्टुतिं सुस्तुतिम् । शोभना स्तुतिर्यस्य स तथोक्तः । तादृशमिन्द्रं ᐯस्तुहि । तथा ᐯनमसा स्तोत्रेण हविषा वा ᐯआ ᐯविवास इन्द्रमाभिमुख्येन परिचर । विवासतिः परिचरणकर्मा । लोटि रूपम् । हे ᐯजरितः स्तोतः ᐯउप ᐯभूष । 'भूष अलंकारे'। अलंकृतो भव । ᐯमा ᐯरुवण्यः धनाभावात् मा ध्वनयः । मा रोदीरित्यर्थः । धनागमने कारणमाह । हे स्तोतः ᐯवाचं स्तुतिमिन्द्रं ᐯश्रावय ज्ञापय । ततस्त्वया स्तुत इन्द्रस्तुभ्यं ᐯकुवित् बहु धनं क्षिप्रं[4] प्रयच्छतु ॥

पृष्ठ्यषडहगतेपूक्थ्येषु[5] तृतीयसवने ब्राह्मणाच्छंसिशस्त्रे 'अव द्रप्सः' इति तृचः । सूत्रितं च— 'अव द्रप्सो अंशुमतीमतिष्ठदिति तिस्रोऽच्छा म इन्द्रमिति नित्यमैकाहिकम्' ( आश्व. श्रौ. ८. ३ ) इति ॥

**अव॑ द्र॒प्सो अं॑शु॒मती॑मतिष्ठदिया॒नः कृ॒ष्णो द॒शभिः॑ स॒हस्रैः॑ ।**
**आव॒त्तमिन्द्रः॒ शच्या॒ धम॑न्त॒मप॒ स्नेहि॑तीर्नृ॒मणा॑ अधत्त ॥ १३ ॥**

---

१. ख–इंद्रार्थं । २. ख-घ-त-भ-श–गमयेदिति । ३. ख-घ-ज्ञ-त१-२–अंग क्षिप्रं । ४. घ–अंग क्षिप्रं वेदत् । ५. ख-त-श–°षूक्तेषु; भ१–°षूकथेषु ।

अवं । द्रप्सः । अंशुऽमतीम् । अतिष्ठत् । इयानः । कृष्णः । दशऽभिः । सहस्रैः ।
आवत् । तम् । इन्द्रः । शच्या । धमन्तम् । अप । स्नेहितीः । नृऽमनाः । अधत्त ॥ १३ ॥

अत्रेतिहासमाचक्षते किल । कृष्णो नामासुरो दशसहस्रसंख्यैरसुरैः परिवृतः सन्नंशुमतीनामधेयाया नद्यास्तीरेऽतिष्ठत् । तत्र तं कृष्णमुदकमध्ये स्थितमिन्द्रो बृहस्पतिना सहागच्छत् । आगत्य तं कृष्णं तस्यानुचरांश्च बृहस्पतिसहायो जघानेति । केचिदन्यथा वदन्ति । तेषां कथा हेतुः । द्रप्स इत्युदककणोऽभिधीयते[1] स तु सोमो 'द्रप्सश्चस्कन्द' (ऋ. सं. १०. १७. ११) इत्यादिषु सोमपरत्वेनोक्तत्वात् । एतत्पदमाश्रित्याहुः—'अपक्रम्य तु देवेभ्यः सोमो वृत्रभयार्दितः ॥ नदीमंशुमतीं नामाभ्यतिष्ठत्[2] कुरून् प्रति । तं बृहस्पतिनैकेन सोऽभ्ययाद्वृत्रहा सह ॥ योत्स्यमानः सुसंहृष्टैर्मरुद्भिर्विविधायुधैः । दृष्ट्वा तानायतः सोमः स्वबलेन व्यवस्थितः ॥ मन्वानो वृत्रमायान्तं जिघांसुमरिसेनया । व्यवस्थितं धनुष्मन्तं तमुवाच बृहस्पतिः ॥ मरुत्पतिरयं सोम प्रेहि देवान् पुनर्विभो । सोऽब्रवीन्नेति तं शक्रः स्वर्ग एव बलाद्बली । इयाय देवानादाय तं पपुर्विधिवत्सुराः ॥ जघ्नुः पीत्वा च दैत्यानां समरे नवतीर्नव । तदव द्रप्स इत्यस्मिन् तृचे सर्वं निगद्यते' (बृहद्दे. ६. १०९–११५) । एतदनार्षत्वेनानादरणीयं भवति । एषोऽर्थः क्रमेणर्क्षु वक्ष्यते । तथा चास्या ऋचोऽयमर्थः । ᵛद्रप्सः । द्रुतं सरति गच्छतीति द्रप्सः । पृषोदरादिः । द्रुतं गच्छन् ᵛदशभिः ᵛसहस्रैः दशसहस्रसंख्यैरसुरैः ᵛइयानः ᵛकृष्णः एतन्नामकोऽसुरः ᵛअंशुमतीं नाम नदीम्[3] ᵛअव ᵛअतिष्ठत् अवतिष्ठते । ततः ᵛशच्या कर्मणा प्रज्ञानेन वा ᵛधमन्तम् उदकस्यान्तरुच्छ्वसन्तं यद्वा जगद्भीतिकरं शब्दं कुर्वन्तं ᵛतं कृष्णमसुरम्[4] ᵛइन्द्रः मरुद्भिः सह ᵛआवत् प्राप्नोत् । पश्चात्तं कृष्णमसुरं[5] तस्यानुचरांश्च हतवानिति वदति । ᵛनृमणाः नृषु मनो यस्य सः । यद्वा । कर्मनेतृप्रवृत्तिविक्षेपकविधं मनो यस्य स तथोक्तः । तादृशः सन् ᵛस्नेहितीः । स्नेहतिर्वधकर्मसु पठितः । सर्वस्य हिंसित्रीस्तस्य सेनाः ᵛअप ᵛअधत्त । अपधानं[6] हननम् । अवधीदित्यर्थः । 'अप स्नीहितिं नृमणा अधद्राः' (सा. सं. १. ४. १. ४. १) इति छन्दोगाः पठन्ति । तस्यानुचरान् हत्वा तं द्रुतं गच्छन्तमसुरमपाधत्त[7] । हतवान् ॥

**द्रप्समपश्यं विषुणे चरन्तमुपह्वरे नद्यो अंशुमत्याः ।**
**नभो न कृष्णमवतस्थिवांसमिष्यामि वो वृषणो युध्यताजौ ॥ १४ ॥**

द्रप्सम् । अपश्यम् । विषुणे । चरन्तम् । उपऽह्वरे । नद्यः । अंशुऽमत्याः ।
नभः । न । कृष्णम् । अवतस्थिऽवांसम् । इष्यामि । वः । वृषणः । युध्यत । आजौ ॥ १४ ॥

तुरीयपादो[8] मारुतः । मरुतः प्रति यद्वाक्यमिन्द्र उवाच तदत्र कीर्त्यते । हे मरुतः ᵛद्रप्सं द्रुतगामिनं कृष्णमहम् ᵛअपश्यम् अदर्शम् । कुत्र वर्तमानम् । ᵛविषुणे विष्वगञ्चने सर्वतो विस्तृते देशे । यद्वा । विषुणो विषमः । विषमे परैरदृश्ये गुहारूपे देशे । ᵛचरन्तं परितो गच्छन्तम् । किंच ᵛअंशुमत्याः एतन्नामिकायाः ᵛनद्यः नद्याः ᵛउपह्वरे[9] अत्यन्तं गूढे स्थाने ᵛनभो ᵛन नभसि यथादित्यो दीप्यते । तद्वत्तत्र दीप्यमानम्[10] ᵛअवतस्थिवांसम् उदकस्यान्तरवस्थितं ᵛकृष्णम् एतन्नामकमसुरमपश्यम् । तस्मिन् दृष्टे सति हे ᵛवृषणः कामानामुदकानां वा सेक्तारो मरुतः ᵛवः युष्मान् युद्धार्थम् ᵛइष्यामि अहमिच्छामि । ततो यूयं तमिमं कृष्णम् ᵛआजौ । अजन्ति गच्छन्त्यत्र योद्धार आयुधानि प्रक्षेपय-

१. ख-ग-त-भ-श–°त्युदककर्णो° । २. ख-ग-त२-भ–°भ्यतिष्ठन् । ३. ख-ग-त-भ–नदीमनु । ४. ख-ग-त–कृष्णासुरं । ५. ख-ग-त–कृष्णासुरं । ६. ख-ग-त–अपाधानं । ७. ख-त-भ-श–गतमसुरमपधत्त । ८. ख-ग-त-भ-श–तृतीय° । ९. श–उपह्वरे उपस्थे । १०. ख-घ-त-श-दीप्यमाने ।

न्तीति वाजिः संग्रामः । तस्मिन् युध्यत संहरत[1] । वाक्यभेदादनिघातः । केचित् इष्यामि वो मरुतः इति पठन्ति । तत्र हे मरुतः वो युष्मानिच्छामीत्यर्थो भवति ॥

**अध द्रप्सो अंशुमत्या उपस्थेऽधारयत्तन्वं तित्विषाणः ।**
**विशो अदेवीरभ्या३चरन्तीर्बृहस्पतिना युजेन्द्रः ससाहे ॥ १५ ॥**

अध । द्रप्सः । अंशुऽमत्याः । उपऽस्थे । अधारयत् । तन्वम् । तित्विषाणः ।
विशः । अदेवीः । अभि । आऽचरन्तीः । बृहस्पतिना । युजा । इन्द्रः । ससहे ॥ १५ ॥

अध अथ द्रप्सः द्रुतगामी कृष्णः अंशुमत्याः नद्याः उपस्थे समीपे तित्विषाणः दीप्यमानः सन् तन्वम् आत्मीयं शरीरम् अधारयत् । परैरहिंस्यत्वेन बिभर्ति । यद्वा । बलप्राप्त्यर्थं स्वशरीरमाहारादिभिरपोषयत् । तत्र इन्द्रः गत्वा बृहस्पतिना एतन्नामकेन देवेन युजा सहायेन अदेवीः अद्योतमानाः । कृष्णरूपा इत्यर्थः । यद्वा । पापयुक्तत्वादस्तुत्याः । आचरन्तीः आगच्छन्तीः विशः असुरसेनाः अभि ससहे जघान । तमवधीदित्यर्थः प्रसङ्गादवगम्यते ॥ ॥ ३४ ॥

**त्वं ह त्यत्सप्तभ्यो जायमानोऽशत्रुभ्यो अभवः शत्रुरिन्द्र ।**
**गूळ्हे द्यावापृथिवी अन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रणं धाः ॥ १६ ॥**

त्वम् । ह । त्यत् । सप्तऽभ्यः । जायमानः । अशत्रुऽभ्यः । अभवः । शत्रुः । इन्द्र ।
गूळ्हे इति । द्यावापृथिवी इति । अनु । अविन्दः । विभुमत्ऽभ्यः । भुवनेभ्यः । रणम् । धाः ॥ १६ ॥

हे इन्द्र त्वं[2] खलु त्यत् तत् कर्म कृतवानसि । किं तत् उच्यते । जायमानः त्वं प्रादुर्भवन्नेव अशत्रुभ्यः शत्रुरहितेभ्यः सप्तभ्यः कृष्णवृत्रनमुचिशम्बरादिसप्तभ्यो बलवद्भ्यः शत्रुभ्यः तदर्थं[3] शत्रुः अभवः । यद्वा । सप्तभ्यः । सप्तैवाङ्गिरसः । सप्तभ्योऽङ्गिरोभ्यो गवानयनार्थं प्रादुर्भवन्नेवाशत्रुभ्यो बलवद्भ्यः पणिभ्यः शत्रुरभवः । किंच हे इन्द्र त्वं गूळ्हे तमसा गूढे संवृते द्यावापृथिवी द्यावापृथिव्यौ सूर्यात्मना ते प्रकाश्यानुक्रमेण अविन्दः अलभथाः । तथा विभुमद्भ्यः महत्त्वयुक्तेभ्यः भुवनेभ्यः लोकेभ्यः रणं[4] रमणं धाः धारयसि । विदधासीत्यर्थः ॥

**त्वं ह त्यदप्रतिमानमोजो वज्रेण वज्रिन्धृषितो जघन्थ ।**
**त्वं शुष्णस्यावातिरो वधत्रैस्त्वं गा इन्द्र शच्येदविन्दः ॥ १७ ॥**

त्वम् । ह । त्यत् । अप्रतिऽमानम् । ओजः । वज्रेण । वज्रिन् । धृषितः । जघन्थ ।
त्वम् । शुष्णस्य । अव । अतिरः । वधत्रैः । त्वम् । गाः । इन्द्र । शच्या । इत् । अविन्दः ॥ १७ ॥

हे इन्द्र त्वं ह त्वं खलु त्यत् एतत् कर्माकार्षीः । किं तत् अभिधीयते । हे[5] वज्रिन् वज्रवन्निन्द्र धृषितः धृष्टः संग्रामेषु शत्रुहनने कुशलः सन् । यद्वा । धृष्टो धीरः सन् अप्रतिमानम् । प्रतिमानमुपमा[6] । निरुपमम् । अस्य सदृशमन्यदीयं वीर्यं नास्तीत्यर्थः । तादृशं शुष्णस्य ओजः बलं वज्रेण आयुधेन जघन्थ हतवानसि । 'अभ्यासाच्च' इति हन्तेर्घत्वम् । पूर्वं[7] शुष्णस्य बलं विनाश्ये-

१. ख-ग-त-भ-श-तत् संहरत । २. घ-भ-त्वं ह त्वं । ३. भ-तदर्थं त्वं । ४. ख-त-भ-शरणं ।
५. ख-त-भ-श-यतः हे; ग-यत् हे । ६. श-उपमारहितं । ७. ख-सपूर्वत्वं; ञ-त२-सपूर्वं; भ-सर्वं ।

दानीं शुष्णमपि हतवानित्याह। ᵛत्वं ᵛवधत्रैः हननसाधनैरायुधैः ᵛशुष्णस्य। 'क्रियाग्रहणं कर्तव्यम्' इति संप्रदानसंज्ञा। 'चतुर्थ्यर्थे बहुलम्°' इति षष्ठी। शुष्णम् ᵛअवातिरः। कुत्साय राजर्षयेऽवाङ्मुखं कृत्वावधीः। तथा च निगमः—'कुत्साय शुष्णमशुषं नि बर्हीः' (ऋ. सं. ४. १६. १२) इति। तथा हे ᵛइन्द्र ᵛत्वं ᵛशच्या स्वकीयया प्रज्ञया कर्मणा वा ᵛगाः शत्रून् हत्वा तेषां गाः ᵛअविन्दः अलभथाः। यद्वा। अङ्गिरसां गाः पणीन् संप्रहृत्य लब्धवानसि॥

त्वं ह त्यद्वृषभ चर्षणीनां घनो वृत्राणां तविषो बभूथ।
त्वं सिन्धूँरसृजस्तस्तभानान् त्वमपो अजयो दासपत्नीः॥ १८॥

त्वम्। ह। त्यत्। वृषभ। चर्षणीनाम्। घनः। वृत्राणाम्। तविषः। बभूथ।
त्वम्। सिन्धून्। असृजः। तस्तभानान्। त्वम्। अपः। अजयः। दासऽपत्नीः॥ १८॥

ᵛत्वं खलु तत् कर्म कृतवानसि। किं तत्। हे ᵛवृषभ कामानां वर्षितरिन्द्र ᵛचर्षणीनां यष्टॄणां मनुष्याणां भावितानां ᵛवृत्राणाम् उपद्रवाणां ᵛघनः हन्ता। अमूर्त्यर्थेऽपि छन्दोविषयत्वान्निपातनम्। तादृशस्त्वं ᵛतविषः प्रवृद्धो बलवान् वा ᵛबभूथ बभूविथ। 'बभूथा ततन्थ°' इतीडभावो निपात्यते। ततः ᵛत्वं ᵛतस्तभानान् असुरैर्विरुध्यमानाः ᵛसिन्धून् सप्त गङ्गाद्याः नदीः सरणाय ᵛअसृजः[1]। पश्चात् ᵛत्वं ᵛदासपत्नीः। दासा उपक्षपयितारः शत्रवः। ते पतयः स्वामिनो यासां ताः। 'नित्यं सपत्न्यादिषु' (पा. सू. ४. १. ३५) इत्यत्र 'दासाच्च' इत्युपसंख्यानात् ङीप्। असुरस्वामिकाः ᵛअपः ᵛअजयः जितवानसि। तानसुराञ्जित्वोदकानि च प्रासृज इत्यर्थः॥

स सुक्रतू रणिता यः सुतेष्वनुत्तमन्युर्यो अहेव रेवान्।
य एक इन्नर्यपांसि कर्ता स वृत्रहा प्रतीदन्यमाहुः॥ १९॥

सः। सुऽक्रतुः। रणिता। यः। सुतेषु। अनुत्तऽमन्युः। यः। अहाऽइव। रेवान्।
यः। एकः। इत्। नरि। अपांसि। कर्ता। सः। वृत्रऽहा। प्रति। इत्। अन्यम्। आहुः॥१९॥

अथ परोक्षकृताः[2]। ᵛसः इन्द्रः ᵛसुक्रतुः शोभनप्रज्ञः शोभनकर्मा भवति ᵛयः ᵛसुतेषु अभिषुतेषु सोमेषु ᵛरणिता तत्पानार्थं रमणशीलः किंच ᵛअनुत्तमन्युः परैरनुन्नक्रोधः शत्रुभिर्नोत्तुमशक्यः[3] तादृशः ᵛयः इन्द्रः ᵛरेवान् धनवान्। तत्र दृष्टान्तः। ᵛअहेव। यथा अहानि दिवसा धनवन्तः। दिवसेषु हि धनानि प्रादुर्भवन्ति न रात्रिषु। तद्वत्। तथा ᵛयः इन्द्रः ᵛएक ᵛइत् असहाय एव ᵛनरि कर्मनेतरि मनुष्ये ᵛअपांसि कर्माणि ᵛकर्ता कर्तृशीलो भवति। ताच्छीलिकस्तृन्। अत एव षष्ठीप्रतिषेधः। ᵛसः पूर्वोक्तगुणोपेत इन्द्रः ᵛवृत्रहा। अपामावरकस्यासुरस्य उपद्रवस्य वा हन्तृत्वाद्वृत्रहेति सर्वैः श्रूयते। तमेवेन्द्रम् ᵛअन्यं ᵛप्रति। ᵛइत् अवधारणे। अन्यं प्रत्येव ᵛआहुः। इन्द्रः सर्वमन्यं शत्रुसंघं[4] प्रति भवति। अभिभवत्येवेति वदन्ति॥

स वृत्रहेन्द्रश्चर्षणीधृत्तं सुष्टुत्या हव्यं हुवेम।
स प्राविता मघवा नोऽधिवक्ता स वाजस्य श्रवस्यस्य दाता॥ २०॥

---

१. ख-ग-त-भ-श—उदसृजः। २. ख-त—परोक्षकृतः। ३. ख-ग-त-श—शत्रुभिर्नेतु°। ४. ज्ञ-त१-२-३-श—शत्रुसर्वं।

सः । वृत्रऽहा । इन्द्रः । चर्षणिऽधृत् । तम् । सुऽस्तुत्या । हव्यम् । हुवेम ।
सः । प्रऽअविता । मघऽवा । नः । अधिऽवक्ता । सः । वाजस्य । श्रवस्यस्य । दाता ॥२०॥

वृत्रहा वृत्रस्य हन्ता सः इन्द्रः चर्षणीधृत् मनुष्याणां धनादिदानेन पोषको भवति । तम् इन्द्रं वयं सुष्टुत्या शोभनया स्तुत्या हुवेम अस्मद्यज्ञेष्वाह्वयामः । किमर्थं यूयमाह्वयथेति चेत् कारणं ब्रूमः । सः इन्द्रः प्राविता प्रकर्षेणास्माकं रक्षिता भवति । किंच मघवा धनवानिन्द्रः नः अस्माकम् अधिवक्ता अधिकं वक्ता बहुमानेन वक्ता भवति । यद्वा । धनदानेनास्मानधिकं वक्तुमर्हति । 'अर्हे कृत्यतृचश्च' ( पा. सू. ३. ३. १६९ ) इति तृच् । किंच सः एवेन्द्रः श्रवस्यस्य श्रवसः कीर्तेर्निमित्तस्य वाजस्य अन्नस्य । यद्वा । श्रवसोऽन्नस्य हिताय वाजस्य बलस्य । दाता भवति खलु । तस्मादेवंगुणमिन्द्रं वयमाह्वयामः ॥

**स वृत्रहेन्द्र ऋभुक्षाः सद्यो जज्ञानो हव्यो बभूव ।**
**कृण्वन्नपांसि नर्या पुरूणि सोमो न पीतो हव्यः सखिभ्यः ॥ २१ ॥**

सः । वृत्रऽहा । इन्द्रः । ऋभुक्षाः । सद्यः । जज्ञानः । हव्यः । बभूव ।
कृण्वन् । अपांसि । नर्या । पुरूणि । सोमः । न । पीतः । हव्यः । सखिऽभ्यः ॥ २१ ॥

ऋभुक्षाः महान् । यद्वा । ऋभुशब्देनर्भ्वादयस्त्रयो गृह्यन्ते । ऋभुभिः सह क्षियति निवसतीति तादृशः । वृत्रहा सः इन्द्रः सद्यः तदानीमेव जज्ञानः प्रादुर्भवन् हव्यः सर्वैः स्तोतृभिः यष्टृभिराह्वातव्यो बभूव । किंच नर्या नर्याणि । नरा मनुष्याः कर्मनेतारः । तेभ्यो हितानि पुरूणि बहूनि अपांसि कर्माणि कृण्वन् कुर्वन् सखिभ्यः हविष्प्रदानेनोपकारकत्वान्मित्रेभ्य ऋत्विग्भ्यः हव्यः आह्वातव्यो हवनयोग्यो वाभूत् । तत्र दृष्टान्तः । सोमो न यथा पीतः सोमो यष्टृभ्यः स्वर्गादिफलानि कुर्वन् देवैराह्वातव्यो भवति तद्वत् ॥ ॥ ३५ ॥

'या इन्द्र' इति पञ्चदशर्चं चतुर्थं सूक्तं काश्यपस्य रेभस्यार्षमैन्द्रम् । दशम्यतिजगती द्वापञ्चाशदक्षरा । एकादशीद्वादश्यावुपरिष्टाद्बृहत्यौ ऋष्टकान्तद्वादशकवत्यौ । त्रयोदश्यतिजगती । चतुर्दशी त्रिष्टुप् । पञ्चदशी जगती । शिष्टा बृहत्यः । तथा चानुक्रम्यते— 'या इन्द्र पञ्चोना रेभः काश्यपो बार्हतमतिजगत्युपरिष्टाद्बृहत्यावतिजगती त्रिष्टुब्जगतीत्यन्ततः' इति । सूक्तविनियोगो लैङ्गिकः । महाव्रते निष्केवल्ये बार्हततृचाशीतौ 'या इन्द्र' इत्यादिका नवर्चः । तथैव पञ्चमारण्यके सूत्र्यते— 'या इन्द्र भुज आभर इति नव सूददोहाः' ( ऐ. आ. ५. २. ४ ) इति । चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिनो वैकल्पिकानुरूपतृचस्य 'या इन्द्र' इत्यादिके द्वे द्वितीयातृतीये । सूत्र्यते च— 'तमिन्द्रं जोहवीमि या इन्द्र भुज आभर इत्येका द्वे च' ( आश्व. श्रौ. ७. ४ ) इति ॥

**या इन्द्र भुज आभरः स्वर्वाँ असुरेभ्यः ।**
**स्तोतारमिन्मघवन्नस्य वर्धय ये च त्वे वृक्तबर्हिषः ॥ १ ॥**

याः । इन्द्र । भुजः । आ । अभरः । स्वः॒ऽवान् । असुरेभ्यः ।
स्तोतारम् । इत् । मघऽवन् । अस्य । वर्धय । ये । च । त्वे इति । वृक्तऽबर्हिषः ॥ १ ॥

ऋषिरिन्द्रं प्रार्थयते । हे इन्द्र स्ववान् सुखवान् स्वर्गवान् वा । अथवा स्वःशब्दः[1] सर्वपर्यायः । सर्वं भूतजातम् । आत्मन एवोत्पन्नत्वात्तद्वान् । एवंगुणस्त्वं याः यानि भुजः भोक्तव्यानि

---

१. ख-त-न-भ-श-स्वशब्दः ।

धनानि ᵛअसुरेभ्यः बलवद्भ्यो राक्षसेभ्यः ᵛआभरः आहरः तान् हत्वाहृतवानसि। 'हृग्रहोः°' इति भकारादेशः। अत एव हे ᵛमघवन् धनवन्निन्द्र ᵛअस्य। अन्वादेशेऽशादेशः। एतस्याहृतस्य धनस्य दानेन ᵛस्तोतारमित् तव स्तोत्रकारिणमेव ᵛवर्धय वृद्धिमन्तं कुरु। ᵛये ᵛच अन्ये यष्टारः ᵛत्वे त्वदर्थं ᵛवृक्तबर्हिषः स्तीर्णबर्हिषो भवन्ति अतस्तांश्च धनेन वर्धय॥

यमिन्द्र दधिषे त्वमश्वं गां भागमव्ययम्।
यजमाने सुन्वति दक्षिणावति तस्मिन्तं धेहि मा पणौ ॥ २ ॥

यम्। इन्द्र। दधिषे। त्वम्। अश्वम्। गाम्। भागम्। अव्ययम्।
यजमाने। सुन्वति। दक्षिणाऽवति। तस्मिन्। तम्। धेहि। मा। पणौ ॥ २ ॥

हे ᵛइन्द्र ᵛत्वं ᵛयम् ᵛअश्वं गमनसाधनान् हरीन् ᵛगाम् अग्निहोत्रकर्मणि पयःप्रदानेनोपकारिका गाः ᵛअव्ययं व्ययरहितमविनश्वरं ᵛभागं भजनीयं धनम्। सर्वत्रैकत्वमविवक्षितम्। एतान्[1] शत्रुभ्य आहृत्य ᵛदधिषे[2] बिभर्षि तं सर्वं ᵛसुन्वति सोमाभिषवं कुर्वति ᵛदक्षिणावति यज्ञ ऋत्विग्भ्यो दक्षिणादेयत्वेन तद्वति ᵛयजमाने यागं कुर्वाणे ᵛतस्मिन् त्वं ᵛधेहि। सर्वत्र धनादिदानं मा कुर्वित्याह। ᵛमा ᵛपणौ। 'पण व्यवहारे'। द्रव्यव्यवहारादयष्टा जनः पणिः। तस्मिन्नेतत् सर्वं मा देहि॥

य इन्द्र सस्त्यव्रतोऽनुष्वापमदेवयुः।
स्वैः ष एवैर्मुमुरत्पोष्यं रयिं सनुतर्धेहि तं ततः ॥ ३ ॥

यः। इन्द्र। सस्ति। अव्रतः। अनुऽस्वापम्। अदेवऽयुः।
स्वैः। सः। एवैः। मुमुरत्। पोष्यम्। रयिम्। सनुतः। धेहि। तम्। ततः ॥ ३ ॥

हे ᵛइन्द्र ᵛअदेवयुः देवान् युष्मानकामयमानः[3] ᵛअव्रतः व्रतरहितः कर्मरहितो भूत्वा[4] ᵛअनुस्वापम् अनुवृत्तस्वप्नं यथा भवति तथा ᵛयः[5] ᵛसस्ति स्वपिति। 'षस स्वापे'। आदादिकः। ᵛसः जनः ᵛस्वैः आत्मीयैः ᵛएवैः गमनैरेव ᵛपोष्यं पोषणीयं ᵛरयिं स्वीयं धनं ᵛमुमुरत् मारयतु विनाशयतु। अमार्गैर्द्यूतादिभिस्तस्य[6] धनं नश्यतु न तु देवानां हविष्प्रदानेनेति। ᵛततः त्वं ᵛतम् अयष्टारं जनम्। सनुतरित्यन्तर्हितनाम। ᵛसनुतः अन्तर्हिते कर्मरहिते कस्मिंश्चिद्देशे ᵛधेहि स्थापय॥

यच्छक्रासि परावति यदर्वावति वृत्रहन्।
अतस्त्वा गीर्भिर्द्युगदिन्द्र केशिभिः सुतावाँ आ विवासति ॥ ४ ॥

यत्। शक्र। असि। पराऽवति। यत्। अर्वाऽवति। वृत्रऽहन्।
अतः। त्वा। गीःऽभिः। द्युऽगत्। इन्द्र। केशिऽभिः। सुतऽवान्। आ। विवासति ॥४॥

हे ᵛशक्र शत्रुहननसमर्थेन्द्र ᵛयत् यदा ᵛपरावति विप्रकृष्टेऽतिदूरे द्युलोके देशे ᵛअसि विवसे हे ᵛवृत्रहन् वृत्रस्य हन्तरिन्द्र ᵛयत् यदि ᵛअर्वावति अर्वाचीने तस्मादधस्तात्स्थिते तदपेक्षया समीपे देशेऽन्तरिक्षे भवसि तस्मादपि ᵛअतः अस्माद्द्युलोकाद्वा ᵛद्युगत्। 'गम्लृ गतौ'। क्विपि 'गमः क्वौ'

---

१. ख-ज्ञ-त१-२-न-भ-एतान् यानश्वादीन्। २. ख-त-न-भ-दधिषे धत्से। ३. ख-त-न-भ-श-युष्मान् कामयमानः। ४. घ-भूत्वा यः। ५. ख-ग-घ-त-न-भ-श-'यः' नास्ति। ६. ज-चोराग्निद्यूता°।

इत्यनुनासिकलोपः। लुक्। 'सुपां सुलुक्°' इति लुक्। द्युलोकं प्रति गच्छद्भिः स्वभासा सर्वतो गच्छद्भिः <sup>v</sup>केशिभिः केशवद्भिर्हरिभिरिव स्थिताभिः <sup>v</sup>गीर्भिः स्तुतिभिः <sup>v</sup>त्वा त्वां <sup>v</sup>सुतवान् अभिषुतसोमवान् यजमानः <sup>v</sup>आ <sup>v</sup>विवासति। आत्मीयं यज्ञं प्रत्यागमयति त्वामेतैः स्तोत्रैः परिचरतीति वा ॥

**यद्वासि रोचने दिवः समुद्रस्याधि विष्टपि।**
**यत्पार्थिवे सदने वृत्रहन्तम यदन्तरिक्ष आ गहि ॥ ५ ॥**

यत्। वा। आसि। रोचने। दिवः। समुद्रस्य। अधि। विष्टपि।
यत्। पार्थिवे। सदने। वृत्रहन्ऽतम। यत्। अन्तरिक्षे। आ। गहि ॥ ५ ॥

हे इन्द्र <sup>v</sup>यद्वा यदि वा <sup>v</sup>दिवः द्युलोकस्य <sup>v</sup>रोचने दीपनशीले स्थाने[1] भवसि। यद्वा <sup>v</sup>समुद्रस्य मध्ये <sup>v</sup>अधि अधिगते <sup>v</sup>विष्टपि विष्टपे तत्संबद्धे कस्मिंश्चित् स्थाने भवसि। हे <sup>v</sup>वृत्रहन्तम अतिशयेन वृत्रस्यासुरस्य पापस्य वा हन्तरिन्द्र <sup>v</sup>यत् यदि वा <sup>v</sup>पार्थिवे पृथिव्यां भवे <sup>v</sup>सदने स्थाने विद्यसे। यदि वा <sup>v</sup>अन्तरिक्षे तस्मिँल्लोके वर्तसे। यत्रकुत्र भवसि तथाप्यस्मदीयं यज्ञं प्रति <sup>v</sup>आ <sup>v</sup>गहि आगच्छ ॥ ॥ ३६ ॥

**स नः सोमेषु सोमपाः सुतेषु शवसस्पते।**
**मादयस्व राधसा सूनृतावतेन्द्र राया परीणसा ॥ ६ ॥**

सः। नः। सोमेषु। सोमऽपाः। सुतेषु। शवसः। पते।
मादयस्व। राधसा। सूनृताऽवता। इन्द्र। राया। परीणसा ॥ ६ ॥

हे <sup>v</sup>सोमपाः सोमस्य पातः हे <sup>v</sup>शवसस्पते बलस्य पालयितः <sup>v</sup>इन्द्र <sup>v</sup>सः पूर्वोक्तलक्षणस्त्वं <sup>v</sup>सुतेषु अस्माभिरभिषुतेषु <sup>v</sup>सोमेषु[2] <sup>v</sup>नः अस्मान् <sup>v</sup>राधसा बलसाधनेनान्नेन[3] <sup>v</sup>सूनृतावता अनृतरहितत्वोपेतेन[4]। यद्वा। सूनृतेति वाङ्नाम। शोभनवाक्ययुक्तेन। अनेन पुत्रादिकं लक्ष्यते। पुत्रोपेतेनान्नेन। <sup>v</sup>परीणसा। बहुनामैतत्। बहुना <sup>v</sup>राया धनेन च नोऽस्मान् <sup>v</sup>मादयस्व मोदय। सोमस्य प्रदातृभ्योऽस्मभ्यमन्नपुत्रधनादिकं देहीत्यर्थः ॥

**मा न इन्द्र परा वृणग्भवा नः सधमाद्यः।**
**त्वं न ऊती त्वमिन्न आप्यं मा न इन्द्र परा वृणक् ॥ ७ ॥**

मा। नः। इन्द्र। परा। वृणक्। भव। नः। सधऽमाद्यः।
त्वम्। नः। ऊती। त्वम्। इत्। नः। आप्यम्। मा। नः। इन्द्र। परा। वृणक् ॥ ७ ॥

हे <sup>v</sup>इन्द्र <sup>v</sup>नः हविषां प्रदातॄनस्मान् <sup>v</sup>मा <sup>v</sup>परा <sup>v</sup>वृणक् मा परित्याक्षीः। 'वृजी वर्जने'। रौधादिकः। लङि रूपम्। तदेवाह। त्वं <sup>v</sup>नः अस्माकं सोमेन <sup>v</sup>सधमाद्यः सधमादनशीलः <sup>v</sup>भव। किंच हे इन्द्र <sup>v</sup>नः अस्मान् <sup>v</sup>त्वम् एव <sup>v</sup>ऊती ऊत्यां स्थापय। यद्वा। ऊती। व्यत्ययेन कर्तरि

---

१. ज-भ१–स्वस्थाने। २. ख-ग-त-न-भ-श–'सोमेषु' नास्ति। ३. ख-ज्ञ-त१-२-न-भ१–बलसाधनान्नेन; ग–बलसाधकान्नेन; त३-४-श–बलसाधसान्नेन। ४. ख-त-न-भ-श–°रहितस्योपेतेन; ग-ज–°रहितसत्योपेतेन।

क्चिि[1] वा निपातितः[1]। त्वमेवास्माकं रक्षिता खलु। तथा ᵛत्वमित्। इदवधारणे। त्वमेव अस्माकम्[2] ᵛआप्यं ज्ञातेयम्। त्वमेव बन्धुरित्यर्थः। अत एव ᵛमा ᵛन ᵛइन्द्र ᵛपरा ᵛवृणक् इत्येष गतार्थः॥

अस्मे इन्द्र सचा सुते नि षदा पीतये मधु।
कृधी जरित्रे मघवन्नवो महदस्मे इन्द्र सचा सुते॥ ८॥

अस्मे इति। इन्द्र। सचा। सुते। नि। सद। पीतये। मधु।
कृधि। जरित्रे। मघऽवन्। अवः। महत्। अस्मे इति। इन्द्र। सचा। सुते॥ ८॥

हे ᵛइन्द्र ᵛअस्मे अस्माभिः ᵛसचा सह ᵛसुते अभिषुते सोमे ᵛनि ᵛषद अस्मदीये यज्ञे निषीद। किमर्थम्। ᵛमधु ᵛपीतये मधुनः। 'सुपां सुलुक्°' इति ङसो लुक्। मदकरस्य सोमस्य पीतये पानाय। किंच हे ᵛमघवन् धनवन् इन्द्र ᵛमहत् ᵛअवः रक्षणं ᵛजरित्रे ᵛकृधि कुरु। कस्मिन् सति। ᵛअस्मे ᵛइन्द्र ᵛसचा ᵛसुते इति व्याख्यातः पादः॥

न त्वा देवास आशत न मर्त्यासो अद्रिवः।
विश्वा जातानि शवसाभिभूरसि न त्वा देवास आशत॥ ९॥

न। त्वा। देवासः। आशत। न। मर्त्यासः। अद्रिऽवः।
विश्वा। जातानि। शवसा। अभिऽभूः। असि। न। त्वा। देवासः। आशत॥ ९॥

हे ᵛअद्रिवः वज्रवन्निन्द्र ᵛत्वा त्वां ᵛदेवासः त्वदन्ये सर्वे देवाः ᵛन ᵛआशत। स्वकर्मणा स्वबलेन वा न व्याप्नुवन्ति। ᵛन ᵛमर्त्यासः मर्त्या मनुष्याश्च न व्याप्नुवन्ति। कुत एतदवसीयते तदाह। ᵛविश्वा विश्वानि सर्वाणि ᵛजातानि भूतजातानि ᵛशवसा स्वबलेनैव ᵛअभिभूरसि। अभिभावुकोऽसि भवसि। तस्मात् ᵛन ᵛत्वा ᵛदेवास ᵛआशत इति गतार्थः॥

चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिनः 'विश्वाः पृतनाः' इति वैकल्पिकः स्तोत्रियः। सूत्रितं च—'विश्वाः पृतना अभिभूतरं नरं तमिन्द्रं जोहवीमि' (आश्व. श्रौ. ७. ४) इति॥

विश्वाः पृतना अभिभूतरं नरं सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे।
क्रत्वा वरिष्ठं वर आमुरिमुतोग्रमोजिष्ठं तवसं तरस्विनम्॥ १०॥

विश्वाः। पृतनाः। अभिऽभूतरम्। नरम्। सऽजूः। ततक्षुः। इन्द्रम्। जजनुः। च। राजसे।
क्रत्वा। वरिष्ठम्। वरे। आऽमुरिम्। उत। उग्रम्। ओजिष्ठम्। तवसम्। तरस्विनम्॥ १०॥

ᵛविश्वाः सर्वा व्याप्ता वा ᵛपृतनाः। 'पृङ् व्यायामे[3]'। व्याप्रियन्त इति पृतनाः सेनाः। ᵛसजूः परस्परं संगताः सत्यः ᵛअभिभूतरं शत्रूणामत्यर्थमभिभवितारं ᵛनरं सर्वस्य नेतारम् इन्द्रं ᵛततक्षुः। आयुधादिभिस्तीक्ष्णीकुर्वन्ति। आयुधवन्तमश्ववन्तं च चक्रुरित्यर्थः[4]। यद्वा पृतना इति संग्रामनाम। व्याप्रियन्तेऽत्रेति पृतनाः संग्रामाः। सर्वानेव संग्रामानभिभावुकमिन्द्रं स्तोतारोऽन्योन्यं संगताः स्तुतिभिस्तीक्ष्णमकुर्वन्। स्तुते सति बलवान् भवतीति। यद्वा। यष्टारो हविष्प्रदानेन वीर्य-

१. ग—क्चिच पूर्वसवर्णः। २. घ—नोस्माकं। ३. ख-त-न-भ—व्याप्रियामे; श—व्याप्रियामो। ४. ख—चक्रतुरित्यर्थः; त-न-भ-श—चक्रथुरित्यर्थः।

वन्तं कुर्वन्तीति । किंच स्तोतारः ᵛराजसे । राजतेस्तुमर्थेऽसेप्रत्ययः । आत्मनो विराजनार्थं प्रकाशनार्थं सूर्यात्मानम् इन्द्रं ᵛजजनुः जनयामासुः । स्तोत्रं यज्ञे प्रादुरभावयन्नित्यर्थः । उत ᵛअपि च ᵛक्रत्वा स्वीयवृत्रवधादिकर्मणैव ᵛवरिष्ठम् उरुतरम् ᵛआमुरिं शत्रूणामाभिमुख्येन मारयितारमिन्द्रं ᵛवरे वरणीये धने स्तोतारश्चक्रुः । आत्मनां धनलाभार्थं स्तुवन्तीत्यर्थः । कीदृशम् । ᵛउग्रम् उद्गूर्णबलमत एव ᵛओजिष्ठम् ओजस्वितमं ᵛतवसं प्रवृद्धं ᵛतरस्विनं संग्रामे शत्रुवधार्थं वेगवन्तमिन्द्रं धनार्थं स्तुवन्ति ॥　　॥ ३७ ॥

**समीं रेभासो अस्वरन्निन्द्रं सोमस्य पीतये ।**
**स्वर्पतिं यदीं वृधे धृतव्रतो ह्योजसा समूतिभिः ॥ ११ ॥**

सम् । ईम् । रेभासः । अस्वरन् । इन्द्रम् । सोमस्य । पीतये ।
स्वःऽपतिम् । यत् । ईम् । वृधे । धृतऽव्रतः । हि । ओजसा । सम् । ऊतिऽभिः ॥ ११ ॥

ᵛरेभासः । ' रेभृ शब्दे ' । शब्दयितारः स्तोतारः । यद्वा । रेभासः[1] कश्यपपुत्रा रेभा एतन्नामका ऋषयः । ᵛईम् एनम् ᵛइन्द्रं ᵛसम् ᵛअस्वरन् सम्यगशब्दयन् समस्तुवन् । किमर्थम् । ᵛसोमस्य ᵛपीतये सोमपानाय । किंच ᵛस्वर्पतिं स्वर्गस्य पालयितारं धनस्य स्वामिनं वा ᵛईम् एनमिन्द्रं ᵛयत् यदा ᵛवृधे हविर्भिर्वर्धनाय संस्तुवन्ति तदा ᵛधृतव्रतः धृतकर्मेन्द्रः ᵛओजसा बलेन स्तोतृभिः ᵛऊतिभिः मरुद्भिः पालनैश्च सह संगच्छते[2] । स्तुतिभिर्बलं मरुद्भिः पालनं चेन्द्रस्य भवतीत्यर्थः ॥

**नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरा ।**
**सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः ॥ १२ ॥**

नेमिम् । नमन्ति । चक्षसा । मेषम् । विप्राः । अभिऽस्वरा ।
सुऽदीतयः । वः । अद्रुहः । अपि । कर्णे । तरस्विनः । सम् । ऋक्वऽभिः ॥ १२ ॥

ᵛनेमिम् । अरान् यथा नेमिर्व्याप्नोति तद्वत् सर्वं[3] व्याप्नुते[3] । तादृशं नमनशीलमिन्द्रं ᵛचक्षसा दर्शनमात्रेणैव ᵛनमन्ति । काश्यपा रेभाः स्तोतारो वा नमस्कुर्वन्ति । ततः ᵛविप्राः मेधाविनः ᵛमेषम्[4] । इन्द्रो मेषो भूत्वा मेधातिथिं स्वर्गमनयत् । तस्मात् मेधातिथेर्मेषभूतमिन्द्रम् ᵛअभिस्वरा अभिस्वरणेन स्तोत्रेण प्रणमन्ति । इदानीं यजमानः स्तोतॄनाह । ᵛअपि च ᵛसुदीतयः शोभनदीप्तयः ᵛअद्रुहः कस्याप्यद्रोग्धारः ᵛवः यूयम् । छान्दसो वसादेशः । ᵛतरस्विनः कर्मसु स्तोत्रेषु वा त्वरायुक्ताः सन्त इन्द्रस्य ᵛकर्णे श्रोत्रसमीपे ᵛऋक्वभिः अर्चनायुक्तैर्मन्त्रैः[5] । यद्वा । ऋचो बह्व्यो येषु सन्ति तैः शस्त्रादिभिः । संस्तुत । इन्द्रो यथा युष्मदीयानि स्तोत्रशस्त्रादीनि शृणोति तथा सम्यगभिष्टुतेत्यर्थः[6] ॥

पूर्वोक्त एव शस्त्रे वैकल्पिकस्यानुरूपतृचस्य ' तमिन्द्रम् ' इत्याद्या । सूत्रमुदाहृतम्[7] ॥

**तमिन्द्रं जोहवीमि मघवानमुग्रं सत्रा दधानमप्रतिष्कुतं शवांसि ।**
**मंहिष्ठो गीर्भिरा च यज्ञियो ववर्तद्राये नो विश्वा सुपथा कृणोतु वज्री ॥१३॥**

---

१. ज-त१-रेभाः । २. घ-संगच्छंते हि । ३. ग-सर्वे व्याप्नुवते । ४. भ२-मेषमिंद्रं । ५. ग-अर्चन° । ६. ज-तमभि° । ७. न-सूत्रमुदाहृतं । आश्वमेधिके अश्ववपायाश्च चरोः हविषोनुवाक्या । सूत्रांतरेपि दृष्टत्वात् । तमिंद्रं जोहवीमि इंद्रश्रेष्ठातीति । तरति ब्रह्महत्यां योश्वमेधेन यजेत् इत्यादिसूत्रांतरेपि विषयप्रामाण्यात् चरुं निर्वपेत् ।

तम्। इन्द्रम्। जोहवीमि। मघऽवानम्। उग्रम्। सत्रा। दधानम्। अप्रतिऽस्कुतम्। शवांसि। मंहिष्ठः। गीःऽभिः। आ। च। यज्ञियः। ववर्तत्। राये। नः। विश्वा। सुऽपथा। कृणोतु। वज्री ॥ १३ ॥

तं पूर्वोक्तगुणोपेतम् इन्द्रं जोहवीमि। यद्वाहं पुनःपुनराह्वयामि। ह्वयतेः 'अभ्यस्तस्य च' इति संप्रसारणम्। कीदृशम्। मघवानं मंहनीयधनवन्तम् उग्रम् उद्गूर्णबलं सत्रा सत्यं यथार्थमेव शवांसि बलानि दधानम् अत एव अप्रतिष्कुतं शत्रुभिरप्रतिरोधनीयमाह्वयामि। किंच मंहिष्ठः पूज्यतमो दातृतमो वा यज्ञियः यज्ञार्ह इन्द्रः गीर्भिः अस्मदीयाभिः स्तुतिभिः आ ववर्तत् च यज्ञेष्वाभिमुख्येन वर्ततां च। वर्ततेर्ण्यन्तस्य चङि रूपम्। 'चवायोगे प्रथमा' इति न निघातः। 'चङ्यन्यतरस्याम्' इति स्वरः। ततः वज्री वज्रवानिन्द्रः नः अस्माकं राये धनाय विश्वा विश्वानि सर्वाण्येव सुपथा सुमार्गाणि कृणोतु च करोतु। धनं सर्वदिक्स्थमस्मान् प्राप्नोत्वित्यर्थः ॥

**त्वं पुर इन्द्र चिकिदेना व्योजसा शविष्ठ शक्र नाशयध्यै।**
**त्वद्विश्वानि भुवनानि वज्रिन् द्यावा रेजेते पृथिवी च भीषा ॥ १४ ॥**

त्वम्। पुरः। इन्द्र। चिकित्। एनाः। वि। ओजसा। शविष्ठ। शक्र। नाशयध्यै। त्वत्। विश्वानि। भुवनानि। वज्रिन्। द्यावा। रेजेते इति। पृथिवी इति। च। भीषा ॥ १४ ॥

हे शविष्ठ बलवत्तम अत एव हे शक्र शत्रुहननसमर्थ हे इन्द्र त्वम् एनाः। अन्वादेशे। एतानि पुरः शम्बरस्य पुराणि ओजसा स्वीयेनैव तेजसा वि नाशयध्य विनाशयितुं चिकित् ज्ञाता भवसि। नशेर्ण्यन्ताच्छध्यैप्रत्ययः। पुनरपि सामर्थ्यं प्रशंसति। हे वज्रिन् वज्रवन्निन्द्र विश्वानि सर्वाणि भुवनानि भूतजातानि त्वत् त्वत्तो भीत्या कम्पन्ते। तथा द्यावापृथिवी। 'दिवो द्यावा' इति द्यावादेशः। आद्युदात्तश्च। पृथिवी ङीषन्तत्वेनान्तोदात्तः। 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरत्वम्। विप्रकर्षस्तु छान्दसः। द्यावापृथिवी च भीषा त्वत्तो भीत्या रेजेते कम्पेते। 'अरेजेतां रोदसी' ( ऋ. सं. १. ३१. ३ ) इति निगमः। सर्वे त्वदधीना इत्यर्थः ॥

**तन्म ऋतमिन्द्र शूर चित्र पात्वपो न वज्रिन् दुरितातिं पर्षि भूरिं।**
**कदा न इन्द्र राय आ दशस्येर्विश्वप्स्न्यस्य स्पृहयाय्यस्य राजन् ॥ १५ ॥**

तत्। मा। ऋतम्। इन्द्र। शूर। चित्र। पातु। अपः। न। वज्रिन्। दुःऽइता। अति। पर्षि। भूरिं। कदा। नः। इन्द्र। रायः। आ। दशस्येः। विश्वऽप्स्न्यस्य। स्पृहयाय्यस्य। राजन् ॥ १५ ॥

हे शूर बलवन् चित्र चायनीय विविधरूप वा। 'इन्द्रो मायाभिः पुरुरूप ईयते' ( ऋ. सं. ६. ४७. १८ ) इत्यादिषु दृष्टत्वात्। बहुविधरूप हे इन्द्र तत् प्रशस्तं त्वदीयम् ऋतं सत्यं मा मां पातु सर्वतो रक्षतु। किंच हे वज्रिन् वज्रवन्निन्द्र भूरि। सुपो लुक्। भूरीणि बहूनि दुरिता दुरितानि पापानि अति पर्षि अतीत्य पारय। तत्र दृष्टान्तः। अपो न यथा नाविक उदकानि मनुष्यान् पारयति तद्वदस्मान् पापानि पारय। हे राजन् दीप्यमान हे इन्द्र विश्वप्स्न्यस्य। प्स[1] इति रूपनाम। रूपे साधु प्स्यम्। नकारोपजनश्छान्दसः। बहुरूपं तत् स्पृहयाय्यस्य सर्वैः स्पृहणीयं

१. ख-ग-त-भ-श-'प्स' नास्ति।

ᵛरायः। 'क्रियाग्रहणम्'[1] इति संप्रदानसंज्ञा। 'चतुर्थ्यर्थे बहुलम्'[1] इति षष्ठी। तद्धनं ᵛनः अस्मभ्यम् ᵛआ आभिमुख्येन ᵛकदा ᵛदशस्येः कस्मिन् काले प्रयच्छेः। तदा तव स्वभूतं सत्यं मा[1] रक्षतु। मह्यं धनं दत्वा कर्माणि च मयानुष्ठाप्य मां पापरहितं कुर्वित्यर्थः॥ ॥ ३८ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये षष्ठाष्टके षष्ठोऽध्यायः॥

---

॥ श्रीगणेशाय नमः॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥

अथ षष्ठस्य सप्तमोऽध्याय आरभ्यते। तत्र 'इन्द्राय' इति द्वादशर्चं पञ्चमं सूक्तमाङ्गिरसस्य नृमेधाख्यस्यार्षमैन्द्रम्। सप्तमी दशम्येकादश्यौ च तिस्रः ककुभो मध्यमपादस्य द्वादशाक्षरत्वात्। 'मध्यमश्चेत्ककुप्' (अनु. ५. ३) इति हि तल्लक्षणम्। नवमीद्वादश्यौ पुरउष्णिहौ। प्रथमपादस्य द्वादशाक्षरत्वात्। 'आद्यश्चेत् पुरउष्णिक्' (अनु० ५. २) इति हि तल्लक्षणम्। शिष्टा उष्णिहः। तथा चानुक्रम्यते—'इन्द्राय द्वादश नृमेध औष्णिहं सप्तम्युपान्त्ये च ककुभोऽन्त्यानवम्यौ पुरउष्णिहौ' इति। महाव्रते औष्णिहतृचाशीताविदं सूक्तम्। तथैव पञ्चमारण्यके सूत्रितम्—'इन्द्राय साम गायत सखाय आ शिषामहि' (ऐ. आ. ५. २. ५) इति। आभिप्लविकेषूक्थ्येषु[2] तृतीयसवने ब्राह्मणाच्छंसिनः 'इन्द्राय साम गायत' इति वैकल्पिकः स्तोत्रियस्तृचः। सूत्रितं च—'इन्द्राय साम गायत सखाय आ शिषामहि' (आश्व. श्रौ. ७. ८) इति। पूर्वोक्तस्यैव ब्राह्मणाच्छंसिन आभिप्लविकेषूक्थ्येषु[3] 'एन्द्र नो गधि' इति वैकल्पिकः स्तोत्रियः। सूत्रितं च—'एन्द्र नो गध्येदु मध्वो मदिंतरम्' (आश्व. श्रौ. ७. ८) इति। उक्थ्ये[4] तृतीयसवनेऽच्छावाकस्य 'अधा हीन्द्र' इति स्तोत्रियस्तृचः। सूत्रितं च—'अधा हीन्द्र गिर्वण इयं त इन्द्र गिर्वणः' (आश्व. श्रौ. ६. १) इति। पूर्वोक्त एव शस्त्रे 'त्वं न इन्द्रा भर' इति तृचो वैकल्पिकः स्तोत्रियः। सूत्रितं च—'त्वं न इन्द्रा[5] भर वयमु त्वामपूर्व्य यो न इदमिदं पुरा' (आश्व. श्रौ. ७. ८) इति॥

**इन्द्राय साम गायत विप्राय बृहते बृहत्। धर्मकृते विपश्चिते पनस्यवे॥ १॥**

इन्द्राय। साम। गायत। विप्राय। बृहते। बृहत्। धर्मऽकृते। विपःऽचिते। पनस्यवे॥१॥

हे उद्गातारः ᵛविप्राय मेधाविने ᵛबृहते महते ᵛधर्मकृते कर्मणः कर्त्रे ᵛविपश्चिते विदुषे ᵛपनस्यवे स्तुतिमिच्छते ᵛइन्द्राय ᵛबृहत् बृहन्नामकं ᵛसाम ᵛगायत पठत॥

**त्वमिन्द्राभिभूरसि त्वं सूर्यमरोचयः। विश्वकर्मा विश्वदेवो महाँ असि॥ २॥**

त्वम्। इन्द्र। अभिऽभूः। असि। त्वम्। सूर्यम्। अरोचयः।
विश्वऽकर्मा। विश्वऽदेवः। महान्। असि॥ २॥

---

१. ख-भ-मां। २. ख-झ-त१-२-३-भ१-श-°षूकथेषु। ३. ख-झ-त१-२-३-भ१-श-°षूक्थेषु। ४. ख-झ-त१-२-३-भ१-उक्थे। ५. त-न-इंद्राय।

हे ᵛइन्द्र ᵛत्वम् ᵛअभिभूः शत्रूणामभिभविता ᵛअसि भवसि। किंच ᵛत्वं ᵛसूर्यम् आदित्यम् ᵛअरोचयः तेजोभिरदीपयः। किंच ᵛविश्वकर्मा विश्वस्य कर्ता ᵛअसि ᵛविश्वदेवः सर्वदेवश्चासि। तथा च यजुर्ब्राह्मणम्—'अग्निं वा अन्वन्या देवता इन्द्रमन्वन्याः' (तै. ब्रा. ३. ७. १. ८) इति। अतो ᵛमहान् सर्वाधिकोऽसि॥

वि॒भ्राज॒ञ्ज्योति॑षा॒ स्व१॒॑रग॑च्छो रोच॒नं दि॒वः।
दे॒वास्त॑ इन्द्र स॒ख्याय॑ येमिरे॥ ३॥

वि॒ऽभ्राज॑न्। ज्योति॑षा। स्वः॑। अग॑च्छः। रो॒च॒नम्। दि॒वः।
दे॒वाः। ते॒। इ॒न्द्र॒। स॒ख्याय॑। ये॒मि॒रे॒॥ ३॥

हे ᵛइन्द्र त्वं ᵛज्योतिषा तेजसा ᵛदिवः आदित्यस्य ᵛरोचनं प्रकाशकमधिकरणत्वेन ᵛस्वः स्वर्गं ᵛविभ्राजन् प्रकाशयन् ᵛअगच्छः प्राप्नोः। किंच ᵛदेवाः सर्वे ᵛते तव ᵛसख्याय मित्रत्वाय ᵛयेमिरे स्वं स्वमात्मानं नियमितवन्तः। अस्माकमिन्द्रः सखा यथा स्यादिति सर्वे[1] देवाः[1] प्रयत्नमकार्षुरित्यर्थः॥

एन्द्र॑ नो गधि प्रि॒यः स॑त्रा॒जिदगो॑ह्यः। गि॒रिर्न वि॒श्वत॑स्पृ॒थुः पति॑र्दि॒वः॥ ४॥

आ। इ॒न्द्र॒। नः॒। ग॒धि॒। प्रि॒यः। स॒त्रा॒ऽजित्। अगो॑ह्यः।
गि॒रिः। न। वि॒श्वतः॑। पृ॒थुः। पतिः॑। दि॒वः॥ ४॥

हे ᵛइन्द्र ᵛप्रियः प्रियतमः ᵛसत्राजित् महतां जेता ᵛअगोह्यः केनापि गूहितुमशक्यः ᵛगिरिर्न पर्वत इव ᵛविश्वतः सर्वतः ᵛपृथुः पृथुतमः ᵛदिवः स्वर्गस्य ᵛपतिः ईश्वरस्त्वं ᵛनः अस्मान् ᵛआ ᵛगधि आगच्छ॥

अ॒भि हि स॑त्य सोमपा उ॒भे ब॒भूथ॒ रोद॑सी।
इन्द्रासि॑ सु॒न्व॒तो वृ॒धः पति॑र्दि॒वः॥ ५॥

अ॒भि। हि। स॒त्य॒। सो॒म॒ऽपाः॒। उ॒भे इति॑। ब॒भूथ॑। रोद॑सी॒ इति॑।
इन्द्र॑। असि॑। सु॒न्व॒तः। वृ॒धः। पतिः॑। दि॒वः॥ ५॥

हे ᵛसत्य ᵛसोमपाः सोमस्य पातः ᵛइन्द्र यस्त्वम् ᵛउभे ᵛरोदसी द्यावापृथिव्यौ ᵛअभि ᵛबभूथ सामर्थ्येनाभिभवसि स त्वं ᵛसुन्वतः सोमाभिषवं कुर्वतो यजमानस्य ᵛवृधः वर्धकः ᵛअसि। ᵛदिवः स्वर्गस्यापि ᵛपतिः ईश्वरः असि[2]॥

त्वं हि शश्व॑तीना॒मिन्द्र॑ द॒र्ता पु॒राम॑सि। ह॒न्ता दस्यो॒र्मनो॑र्वृ॒धः पति॑र्दि॒वः॥ ६॥

त्वम्। हि। शश्व॑तीनाम्। इन्द्र॑। द॒र्ता। पु॒राम्। असि॑।
ह॒न्ता। दस्योः॑। मनोः॑। वृ॒धः। पतिः॑। दि॒वः॥ ६॥

हे ᵛइन्द्र ᵛत्वं ᵛशश्वतीनां बह्वीनां ᵛपुरां शत्रुनगरीणां ᵛदर्ता ᵛअसि दारयिता भवसि। किंच ᵛदस्योः[3] उपक्षपयितुरसुरस्य[4] ᵛहन्ता असि घातको भवसि। ᵛमनोः मनुष्यस्य यागादिकं कुर्वतः ᵛवृधः वर्धकश्चासि। ᵛदिवः स्वर्गस्यापि ᵛपतिः ईश्वरोऽसि॥ ॥ १॥

१. ख-त-न-भ-सर्वदेवा। २. घ-असि हि। ३. ख-ग-त-न-भ-श-दस्योः वृथा कालस्य। ४. ख-त-न-भ२-उपलक्षयितु°; ग-श-उपक्षयितु°।

**अधा हीन्द्र गिर्वण उप त्वा कामान्महः ससृज्महे ।**
**उदेव यन्त उदभिः ॥ ७ ॥**

अध । हि । इन्द्र । गिर्वणः । उप । त्वा । कामान् । महः । ससृज्महे ।
उदाऽइव । यन्तः । उदऽभिः ॥ ७ ॥

हे गिर्वणः गीर्भिर्वननीय इन्द्र अधा हि संप्रति हि त्वा त्वां महः महतः कामान् कमनीयान् स्तोमान् उप ससृज्महे उपसृजामः । प्रापयाम इत्यर्थः । तत्र दृष्टान्तमाह[1] । उदेव यथोदकेन[1] यन्तः गच्छन्तः उदभिः अञ्जलिना उत्क्षिप्य उदकैः समीपस्थान् पुरुषान् क्रीडार्थं संसृजन्ति तद्वदित्यर्थः ॥

**वार्ण त्वा यव्याभिर्वर्धन्ति शूर ब्रह्माणि । वावृध्वांसं चिदद्रिवो दिवेदिवे ॥ ८ ॥**

वाः । न । त्वा । यव्याभिः । वर्धन्ति । शूर । ब्रह्माणि ।
ववृध्वांसम् । चित् । अद्रिऽवः । दिवेऽदिवे ॥ ८ ॥

हे अद्रिवः वज्रिन् शूर इन्द्र वार्ण यथोदकमुदकस्थानं[2] यव्याभिः नदीभिः । 'अवनयो यव्याः' इति नदीनामसु पाठात् । वर्धन्ति वर्धयन्ति तथा ब्रह्माणि स्तोत्रैः ववृध्वांसं चित् यथा निरुदकं देशं नदीभिस्तथा न किंतु प्रवृद्धमेव त्वां दिवेदिवे अन्वहं[3] वर्धन्ति । स्तोतारो वर्धयन्ति ॥

**युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे । इन्द्रवाहा वचोयुजा ॥ ९ ॥**

युञ्जन्ति । हरी इति । इषिरस्य । गाथया । उरौ । रथे । उरुऽयुगे ।
इन्द्रऽवाहा । वचःऽयुजा ॥ ९ ॥

इषिरस्य गमनशीलस्येन्द्रस्य उरुयुगे महायुगे उरौ महति रथे इन्द्रवाहा इन्द्रस्य वाहनभूतौ वचोयुजा वचनमात्रेणैव युज्यमानौ हरी अश्वौ गाथया स्तोत्रेण स्तोतारः युञ्जन्ति योजयन्ति ॥

**त्वं न इन्द्रा भरँ ओजो नृम्णं शतक्रतो विचर्षणे । आ वीरं पृतनाषहम् ॥ १० ॥**

त्वम् । नः । इन्द्र । आ । भर । ओजः । नृम्णम् । शतक्रतो इति शतऽक्रतो । विऽचर्षणे ।
आ । वीरम् । पृतनाऽसहम् ॥ १० ॥

हे शतक्रतो बहुकर्मन् विचर्षणे विद्रष्टः इन्द्र त्वं नः अस्मभ्यम् ओजः बलं नृम्णं धनम् । 'गयो नृम्णम्' इति धननामसु पाठात् । आ भर आहर । वीरं वीर्योपेतं पृतनाषहं[4] सेनासहं[5] सेनामभिभवितारं[6] त्वाम् आ याचामह इति शेषः ॥

**त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ ।**
**अधा ते सुम्नमीमहे ॥ ११ ॥**

---

१. घ–दृष्टांतः । महः उदेव यथा महदुदकेन । २. न–°स्थानं वा । ३. घ–अहन्यहनि । ४. ख-ग-त-न-भ-श–पृतनासहं । ५. ख-घ-न-भ–'सेनासहं' नास्ति । ६. ग-भ१-३-य–सेनानाम° ।

त्वम् । हि । नः । पिता । वसो इति । त्वम् । माता । शतक्रतो इति शतऽक्रतो । बभूविथ । अध । ते । सुम्नम् । ईमहे ॥ ११ ॥

हे ^v^वसो वासयितः ^v^शतक्रतो बहुकर्मन्निन्द्र ^v^त्वं ^v^नः अस्माकं ^v^पिता पितृवत्पालकः ^v^बभूविथ भव । ^v^त्वं ^v^माता मातृवद्धारकश्च बभूविथ । ^v^अध अथ च वयं ^v^ते तव स्वभूतं ^v^सुम्नं सुखम् ^v^ईमहे याचामहे ॥

त्वां शुष्मिन्पुरुहूत वाजयन्तमुप ब्रुवे शतक्रतो ।
स नो रास्व सुवीर्यम् ॥ १२ ॥

त्वाम् । शुष्मिन् । पुरुऽहूत । वाजऽयन्तम् । उप । ब्रुवे । शतक्रतो इति शतऽक्रतो । सः । नः । रास्व । सुऽवीर्यम् ॥ १२ ॥

हे ^v^शुष्मिन् बलवन् ^v^पुरुहूत बहुभिर्यजमानैराहूत ^v^शतक्रतो बहुकर्मन्निन्द्र ^v^वाजयन्तं बलमिच्छन्तं ^v^त्वाम्[1] ^v^उप ^v^ब्रुवे उपस्तौमि । ^v^सः त्वं ^v^नः अस्मभ्यं ^v^सुवीर्यं धनं ^v^रास्व देहि ॥ ॥२॥

'त्वामिदा ह्यः' इत्यष्टर्चं षष्ठं सूक्तं नृमेधस्यार्षमैन्द्रम् । अयुजो बृहत्यो युजः सतोबृहत्यः । तथा चानुक्रान्तं—'त्वामिदाष्टौ प्रागाथम्' इति । चातुर्विंशिकेऽहनि माध्यंदिनसवनेऽच्छावाकस्य 'त्वामिदा ह्यः' इति (आश्व. श्रौ. ७. ४)। महाव्रतेऽपि निष्केवल्ये बार्हततृचाशीतावयं प्रगाथः। तथैव पञ्चमारण्यके सूत्रितं—'त्वामिदा ह्यो नर इत्येतं प्रगाथं प्रत्यवदधाति' (ऐ. आ. ५. २. ४) इति । चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिनः 'श्रायन्तइव' इति वैकल्पिकः स्तोत्रियः प्रगाथः। सूत्रितं च—'श्रायन्तइव सूर्यं बण्महाँ असि सूर्य' (आश्व. श्रौ. ७. ४) इति । चातुर्विंशिकेऽहनि माध्यंदिने 'त्वमिन्द्र प्रतूर्तिषु त्वमिन्द्र यशा असि' (आश्व. श्रौ. ७. ४) इति । तस्मिन्नेवाहनि निष्केवल्ये वैराजयोनिभूतोऽयं प्रगाथः शंसनीयः । सूत्रितं च—'तयोरक्रियमाणस्य योनिं शंसेद्वैरूपवैराजशाक्वररैवतानां च[2]' (आश्व. श्रौ. ७. ३) इति ॥

त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः ।
स इन्द्र स्तोमवाहसामिह श्रुध्युप स्वसरमा गहि ॥ १ ॥

त्वाम् । इदा । ह्यः । नरः । अपीप्यन् । वज्रिन् । भूर्णयः । सः । इन्द्र । स्तोमऽवाहसाम् । इह । श्रुधि । उप । स्वसरम् । आ । गहि ॥ १ ॥

हे ^v^वज्रिन् ^v^इन्द्र यं ^v^त्वां ^v^भूर्णयः हविर्भिर्भरणशीलाः[3] ^v^नरः कर्मणां नेतारो यजमानाः ^v^इदा अद्य ^v^ह्यः च ^v^अपीप्यन् सोममपाययन् ^v^सः त्वं ^v^स्तोमवाहसां स्तोत्रवाहकानामस्माकं स्तोत्रम् ^v^इह यज्ञे ^v^श्रुधि शृणु । ^v^स्वसरं गृहं च । 'दुर्याः स्वसराणि' इति गृहनामसु पाठात् । ^v^उप ^v^आ ^v^गहि उपागच्छ ॥

मत्स्वा सुशिप्र हरिवस्तदीमहे त्वे आ भूषन्ति वेधसः ।
तव श्रवांस्युपमान्युक्थ्या सुतेष्विन्द्र गिर्वणः ॥ २ ॥

---

१. ग-घ-ञ-त१-२-न-यं त्वां; त३-४-यं तां; श-यं तं । २. ख-त-श-वा । ३. ग-हविर्भरण° ।

मत्स्वं । सुऽशिप्र । हरिऽवः । तत् । ईमहे । त्वे इति । आ । भूषन्ति । वेधसः ।
तव । श्रवांसि । उपऽमानि । उक्थ्या । सुतेषु । इन्द्र । गिर्वणः ॥ २ ॥

हे ᵛसुशिप्र शोभनहनो शोभनोष्णीषिन् वा ᵛहरिवः अश्ववन् ᵛगिर्वणः गीर्भिर्वननीय ᵛइन्द्र ᵛत्वे त्वयि ᵛवेधसः परिचारकाः ᵛआ ᵛभूषन्ति आभवन्ति । ᵛमत्स्व सोमेन मादयात्मानम् । किंच ᵛतत्[1] त्वां वयम् ᵛईमहे याचामहे । किं याच्यमित्यत्राह । ᵛसुतेषु सोमेष्वभिषुतेषु सत्सु ᵛतव ᵛश्रवांसि अन्नानि ᵛउपमानि उपमानभूतानि ᵛउक्थ्या प्रशंस्यानि च सन्त्विति ॥

श्रायन्तइव सूर्यं विश्वेदिन्द्रस्य भक्षत ।
वसूनि जाते जनमान ओजसा प्रति भागं न दीधिम ॥ ३ ॥

श्रायन्तःऽइव । सूर्यम् । विश्वा । इत् । इन्द्रस्य । भक्षत ।
वसूनि । जाते । जनमाने । ओजसा । प्रति । भागम् । न । दीधिम ॥ ३ ॥

हे अस्मदीया जनाः ᵛश्रायन्तइव ᵛसूर्यं यथा समाश्रिता रश्मयः सूर्यं भजन्ते तथा ᵛइन्द्रस्य ᵛविश्वेत् विश्वान्येव धनानि ᵛभक्षत भजत । स च यानि ᵛवसूनि धनानि ᵛजाते उत्पन्ने ᵛजनमाने जनिष्यमाणे च ᵛओजसा बलेन करोति ᵛभागं ᵛन पित्र्यं भागमिव तानि धनानि ᵛप्रति ᵛदीधिम प्रतिधारयामेति । यद्वा । श्रायन्तइव सूर्यं यथा समाश्रिता रश्मयः सूर्यमुपतिष्ठन्ते तथेन्द्रस्य विश्वा विश्वानि विभक्तुमिच्छन्तः समाश्रिता मरुत इन्द्रमुपतिष्ठन्त इति शेषः । उपस्थाय च मरुतो वसूनि उदकलक्षणानि धनानि जाते जाताय जनमाने जनिष्यमाणाय च मनुष्याय च ओजसा बलेन भक्षत विभजन्ते[2] । तत्र चास्माकं यो भागस्तं भागम् । नेति संप्रत्यर्थे[3] । प्रतीत्येषोऽन्वित्येतस्य स्थाने । अनु दीधिम वयमनुध्यायाम[4] । तथा च यास्कः—' समाश्रिताः सूर्यमुपतिष्ठन्ते । अपि वोपमार्थे स्यात्सूर्यमिवेन्द्रमुपतिष्ठन्त इति । सर्वाणीन्द्रस्य धनानि विभक्ष्यमाणाः[5] । स यथा धनानि विभजति जाते च जनिष्यमाणे च वयं भागमनुध्यायाम[6] ' ( निरु. ६. ८ ) इति ॥

अनर्शरातिं वसुदामुप स्तुहि भद्रा इन्द्रस्य रातयः ।
सो अस्य कामं विधतो न रोषति मनो दानाय चोदयन् ॥ ४ ॥

अनर्शऽरातिम् । वसुऽदाम् । उप । स्तुहि । भद्राः । इन्द्रस्य । रातयः ।
सः । अस्य । कामम् । विधतः । न । रोषति । मनः । दानाय । चोदयन् ॥ ४ ॥

हे स्तोतः ᵛअनर्शरातिम् अपापकदानम् । अपापिष्ठस्य दातारमित्यर्थः । तथा च यास्कः— ' अनर्शरातिमनश्लीलदानमश्लीलं पापकम् ' ( निरु. ६. २३ ) इति । ᵛवसुदां धनस्य दातारमिन्द्रम् ᵛउप ᵛस्तुहि । यतः ᵛइन्द्रस्य ᵛरातयः दानानि ᵛभद्राः कल्याणानि । महदैश्वर्यकारीणीत्यर्थः । यतश्च ᵛसः इन्द्रः स्वकीयं ᵛमनः ᵛदानाय अभीष्टप्रदानाय ᵛचोदयन् प्रेरयन् ᵛविधतः परिचरतः ᵛअस्य स्तोतुः ᵛकामम् इच्छां ᵛन ᵛरोषति न हिनस्ति ॥

---

१. न-भ१–तं । २. ख-ग-ज्ञ-त१-२-३-श–विभजते । ३. ख-त-न-भ३–संप्रत्यर्थे ध; श–संप्रत्यर्थे त्व । ४. ख-त-न-भ३-श–°मनुध्यायेम; ग–°मनुधारयेम । ५. ख-ग-त-न-भ३-श–विभज्यमानाः । ६. ख-त१-२-३-न-भ३–°मनुध्यायेम ।

त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
अशस्तिहा जनिता विश्वतूरसि त्वं तूर्य तरुष्यतः ॥ ५ ॥

त्वम् । इन्द्र । प्रऽतूर्तिषु । अभि । विश्वाः । असि । स्पृधः ।
अशस्तिऽहा । जनिता । विश्वऽतूः । असि । त्वम् । तूर्य । तरुष्यतः ॥ ५ ॥

हे इन्द्र त्वं प्रतूर्तिषु संग्रामेषु विश्वाः सर्वाः स्पृधः युद्धकारिणीः शत्रुसेनाः अभि[1] असि अभिभवसि । किंच हे तूर्य शत्रूणां बाधकेन्द्र त्वम् अशस्तिहा दैव्यानामशस्तीनां[2] हन्ता असि । जनिता असुरेभ्योऽशस्तीनां जनयिता चासि । विश्वतूः सर्वस्य शत्रुवर्गस्य हिंसिता चासि । तरुष्यतः बाधकांश्च बाधमानोऽसि ॥

अनु ते शुष्मं तुरयन्तमीयतुः क्षोणी शिशुं न मातरा ।
विश्वास्ते स्पृधः श्नथयन्त मन्यवे वृत्रं यदिन्द्र तूर्वसि ॥ ६ ॥

अनु । ते । शुष्मम् । तुरयन्तम् । ईयतुः । क्षोणी इति । शिशुम् । न । मातरा ।
विश्वाः । ते । स्पृधः । श्नथयन्त । मन्यवे । वृत्रम् । यत् । इन्द्र । तूर्वसि ॥ ६ ॥

हे इन्द्र ते तव शुष्मं बलं तुरयन्तं हिंसन्तं शत्रुं क्षोणी द्यावापृथिव्यौ मातरा मातरौ शिशुं न शिशुमिव अनु ईयतुः अनुगच्छतः । गमनमात्रे दृष्टान्तः । किंच हे इन्द्र त्वं यत् यस्मात् वृत्रं शत्रुं तूर्वसि हंसि अतः ते तव मन्यवे क्रोधाय विश्वाः सर्वाः स्पृधः संग्रामकारिण्यः सेनाः श्नथयन्त श्रथिताः खिन्ना भवन्ति ॥

इत ऊती वो अजरं प्रहेतारमप्रहितम् ।
आशुं जेतारं हेतारं रथीतममतूर्तं तुग्र्यावृधम् ॥ ७ ॥

इतः । ऊती । वः । अजरम् । प्रऽहेतारम् । अप्रऽहितम् ।
आशुम् । जेतारम् । हेतारम् । रथिऽतमम् । अतूर्तम् । तुग्र्यऽवृधम् ॥ ७ ॥

हे अस्मदीयजनाः वः यूयम् अजरं जरारहितं प्रहेतारं शत्रूणां प्रेरकम् अप्रहितं केनाप्यप्रेषितम् आशुं वेगवन्तं जेतारं शत्रूणां हेतारं[3] गन्तारं[4] रथीतमं रथिनां श्रेष्ठम् अतूर्तं केनाप्यहिंसितं तुग्र्यावृधम् उदकस्य वर्धयितारमिन्द्रम् ऊती ऊत्यै रक्षणाय इतः कुरुत । पुरस्कुरुतेति यावत् ॥

इष्कर्तारमनिष्कृतं सहस्कृतं शतमूतिं शतक्रतुम् ।
समानमिन्द्रमवसे हवामहे वसवानं वसूजुवम् ॥ ८ ॥

इष्कर्तारम् । अनिःऽकृतम् । सहःऽकृतम् । शतम्ऽऊतिम् । शतऽक्रतुम् ।
समानम् । इन्द्रम् । अवसे । हवामहे । वसवानम् । वसुऽजुवम् ॥ ८ ॥

---

१. त-श- स अभि । २. ख-त१-२-३-मु-दैत्याना॰ । ३. ख-ञ-त२-३-हंतारं; घ-होतारं । ४. घ-देवानामाह्वातारं ।

ᐯइष्कर्तारं शत्रूणां संस्कर्तारम् ᐯअनिष्कृतं स्वयमन्यैरसंस्कृतं ᐯसहस्कृतं बलेन कृतं ᐯशतमूतिं बहुरक्षणं ᐯशतक्रतुं बहुप्रज्ञं बहुकर्माणं वा ᐯसमानं बहूनां साधारणं ᐯवसवानं धनान्याच्छादयन्तं ᐯवसूजुवं यजमानेभ्यो वसूनां प्रेरयितारम्[1] ᐯइन्द्रमवसे रक्षणाय वयं ᐯहवामहे ह्वयामः ॥ ॥ ३ ॥

'अयं ते' इति द्वादशर्चं सप्तमं सूक्तं भृगुगोत्रस्य नेमस्यार्षम्। 'अयमस्मि जरितः' इति द्वृचेनेन्द्रो नेमसमीपमेत्य स्वकीयं माहात्म्यमवोचत् अतस्तस्य द्वृचस्य स एवर्षिः 'यस्य वाक्यं स ऋषिः' (अनु. २. ४) इति न्यायात्। षष्ठी जगती। सप्तम्याद्यास्तिस्रोऽनुष्टुभः। शिष्टास्त्रिष्टुभः। इन्द्रो देवता। 'यद्वाग्वदन्ती[2]' 'देवीं वाचम्' इत्येते वाग्देवत्ये शिष्टा ऐन्द्र्यः। तथा चानुक्रान्तम्— अयं ते द्वादश नेमो भार्गवस्त्रैष्टुभं षष्ठी जगती परास्तिस्रोऽनुष्टुभोऽयमिति द्वृचेनेन्द्र आत्मानमस्तौदुपान्त्ये वाच्यौ' इति। वाग्देवत्ये पशौ 'यद्वाग्वदन्ती' इति वपाया अनुवाक्या। सूत्रितं च— 'यद्वाग्वदन्त्यविचेतनानि पतङ्गो वाचं मनसा बिभर्ति' (आश्व. श्रौ. ३. ८) इति। पूर्वोक्त एव पशौ 'देवीं वाचम्' इति हविषो याज्या। सूत्रितं च—'देवीं वाचमजनयन्त देवा जनीयन्तो न्वग्रव इति तिस्रः' (आश्व. श्रौ. ३. ८) इति। प्रयाणसमये वयसाममनोज्ञा वाचः श्रुत्वैतां जपेत्। सूत्रितं च—'कनिक्रदज्जनुषं प्रब्रुवाण इति सूक्ते जपेद्देवीं वाचमजनयन्त देवा इति च' (आश्व. गृ. ३. १०. ९) इति ॥

अयं त एमि तन्वा पुरस्ताद्विश्वे देवा अभि मा यन्ति पश्चात्।
यदा मह्यं दीधरो भागमिन्द्रादिन्मया कृणवो वीर्याणि ॥ १ ॥

अयम्। ते। एमि। तन्वा। पुरस्तात्। विश्वे। देवाः। अभि। मा। यन्ति। पश्चात्।
यदा। मह्यम्। दीधरः। भागम्। इन्द्र। आत्। इत्। मया। कृणवः। वीर्याणि ॥ १ ॥

हे ᐯइन्द्र ᐯते तव ᐯपुरस्तात् अग्रतः ᐯतन्वा पुत्रेण सह ᐯअयम् अहम् ᐯएमि। शत्रूनभिभवितुं गच्छामि। तवाग्रतो गच्छन्तं मां ᐯविश्वे ᐯदेवाः त्वया सह ᐯपश्चात् ᐯअभि ᐯयन्ति अभिगच्छन्ति। ᐯयदा त्वं ᐯमह्यं भार्गवाय नेमाय ᐯभागं शत्रुषु स्थितं भागं ᐯदीधरः धारयसि ᐯआदित् अनन्तरमेव ᐯमया सह मच्छत्रूञ्जेतुं ᐯवीर्याणि पौरुषाणि ᐯकृणवः कुरु। यदि शत्रुषु स्थितं धनं मह्यं दित्ससि[3] तर्हि शत्रुजयार्थं गच्छतः सपुत्रस्य मम साहाय्यं कुर्विति भावः ॥

दधामि ते मधुनो भक्षमग्रे हितस्ते भागः सुतो अस्तु सोमः।
असश्च त्वं दक्षिणतः सखा मेऽधा वृत्राणि जङ्घनाव भूरि ॥ २ ॥

दधामि। ते। मधुनः। भक्षम्। अग्रे। हितः। ते। भागः। सुतः। अस्तु। सोमः।
असः। च। त्वम्। दक्षिणतः। सखा। मे। अध। वृत्राणि। जङ्घनाव। भूरि ॥ २ ॥

हे इन्द्र ᐯते तुभ्यं ᐯमधुनः मदकरस्य सोमस्य ᐯभक्षमग्रे प्रथमं ᐯदधामि धारयामि। ᐯसुतः अभिषुतः ᐯभागः भजनीयः ᐯसोमः ᐯते तव हृदये ᐯहितः निहितः ᐯअस्तु भवतु। अपि च ᐯत्वं ᐯमे मम ᐯदक्षिणतः दक्षिणपार्श्वे ᐯसखा सन् ᐯअसः स्थितो भव। ᐯअध अथ ᐯभूरि बहूनि ᐯवृत्राणि अस्मदीयाञ्छत्रून् ᐯजङ्घनाव त्वमहं चोभौ आवां हन्वः ॥

प्र सु स्तोमं भरत वाजयन्त इन्द्राय सत्यं यदि सत्यमस्ति।
नेन्द्रो अस्तीति नेम उ त्व आह क ईं ददर्श कमभि ष्टवाम ॥ ३ ॥

---

१ ख-ग-त-भ-प्रेरकं। २. ख-ग-त-भ२-३-श-°ग्वदंति। ३. त-न-देच्छांत्ससि।

प्र । सु । स्तोमम् । भरत । वाजऽयन्तः । इन्द्राय । सत्यम् । यदि । सत्यम् । अस्ति ।
न । इन्द्रः । अस्ति । इति । नेमः । ऊँ इति । त्वः । आह ।
कः । ईम् । ददर्श । कम् । अभि । स्तवाम ॥ ३ ॥

हे जनाः वाजयन्तः संग्राममिच्छन्तो यूयम् । 'पौंस्ये वाजे' इति संग्रामनामसु पाठात् । इन्द्राय सत्यं सत्यभूतं स्तोमं[1] सु सुष्ठु प्र भरत । इन्द्रोऽस्तीत्येतत् यदि सत्यमस्ति भवति । इन्द्रास्तित्वे कः संदेहः । तत्राह । नेम उ भार्गवो नेम एव इन्द्रः नाम त्वः कश्चित् न अस्ति इति आह । तत्र कारणं दर्शयति । क ईम् एनमिन्द्रं ददर्श अद्राक्षीत् । न कोऽप्यपश्यत् । अतः कं वयम् अभि ष्टवाम अभिष्टुमः । तस्मादिन्द्रो नाम कश्चिद्विद्यत इति वादमात्रं न तु तत्सत्यमित्यर्थः ॥

अयमस्मि जरितः पश्य मेह विश्वा जातान्यभ्यस्मि मह्ना ।
ऋतस्य मा प्रदिशो वर्धयन्त्यादर्दिरो भुवना दर्दरीमि ॥ ४ ॥

अयम् । अस्मि । जरितरिति । पश्य । मा । इह । विश्वा । जातानि । अभि । अस्मि । मह्ना ।
ऋतस्य । मा । प्रऽदिशः । वर्धयन्ति । आऽदर्दिरः । भुवना । दर्दरीमि ॥ ४ ॥

एवं नेमस्यर्षेर्वचनमाकर्ण्य इन्द्रस्तस्य समीपमाजगाम । आगत्य चात्मानमनेन तृचेन स्तौति । हे जरितः स्तोतः अयम् अहम् अस्मि । इह तव समीपे स्थितं मा मां पश्य । विश्वा सर्वाणि जातानि[2] भुवनानि मह्ना महत्त्वेन अभ्यस्मि अहमभिभवामि । किंच माम् ऋतस्य सत्यस्य यज्ञस्य वा प्रदिशः प्रदेष्टारो विद्वांसः स्तोत्रैः वर्धयन्ति । अपि च आदर्दिरः आदरणशीलोऽहं भुवना भुवनानि शत्रुभूतानि[3] दर्दरीमि भृशं विदारयामि ॥

आ यन्मा वेना अरुहन्नृतस्यँ एकमासीनं हर्यतस्य पृष्ठे ।
मनश्चिन्मे हृद आ प्रत्यवोचदचिक्रदञ्छिशुमन्तः सखायः ॥ ५ ॥

आ । यत् । मा । वेनाः । अरुहन् । ऋतस्य । एकम् । आसीनम् । हर्यतस्य । पृष्ठे ।
मनः । चित् । मे । हृदे । आ । प्रति । अवोचत् । अचिक्रदन् । शिशुऽमन्तः । सखायः ॥ ५ ॥

यत् यदा ये ऋतस्य यज्ञस्य यज्ञम् । कर्मणि षष्ठी । वेनाः कामयमानाः हर्यतस्य कान्तस्यान्तरिक्षस्य पृष्ठे आसीनम् उपविष्टम् एकं मा माम् आ अरुहन् तदानीं तेषां भवतामारोहं मनश्चित् मन एव मे मम हृदे हृदयाय प्रत्यवोचत् अब्रवीत् । अज्ञासिषं च तदाह्वानं शिशुमन्तः पुत्रयुक्ताः सखायः प्रिया अमी अचिक्रदन् मां क्रन्दन्तीति ॥

विश्वेत्ता ते सवनेषु प्रवाच्या या चकर्थ मघवन्निन्द्र सुन्वते ।
पारावतं यत्पुरुसंभृतं वस्वपावृणोः शरभाय ऋषिबन्धवे ॥ ६ ॥

---

१. ख-ग-त-न-भ-श—सोमं । २. ख-ज्ञ-भ-श—जातानि जनितानि; घ-ज्ञ-त१-२—जातानि जनितानि तानि; त३—जातानि तानि; न—जातानि जातानि । ३. ज्ञ-त१-२-४-भ२-श—शत्रुभूतानि भूतानि ।

विश्वा । इत् । ता । ते । सवनेषु । प्रऽवाच्या । या । चकर्थ । मघऽवन् । इन्द्र । सुन्वते ।
पारावतम् । यत् । पुरुऽसंभृतम् । वसु । अपऽअवृणोः । शरभाय । ऋषिऽबन्धवे ॥ ६ ॥

स्वसमीपमागतमिन्द्रं दृष्ट्वा संतुष्ट ऋषिरिन्द्रस्य विविधानि कर्माणि दानं च 'विश्वेत्ता ते' इत्यनेन तृचेन स्तौति । हे मघवन्निन्द्र त्वं सवनेषु यज्ञेषु सुन्वते सोमाभिषवं कुर्वते यजमानाय या यानि कर्माणि चकर्थ अकरोः ते तव ता तानि कर्माणि प्रवाच्या प्रवक्तव्यानि विश्वेत् अनन्तान्येव । किंच त्वं पारावतं परावन्नामकस्य कस्यचिच्छत्रोः स्वभूतं[1] यत् धनमस्ति तत् ऋषिबन्धवे[1] शरभाय[2] शरभनाम्न ऋषये अपावृणोः अपवृतवानसि । पुरुसंभृतं यथा[3] बहुसंभृतं भवति[4] ॥ ॥ ४ ॥

प्र नूनं धावता पृथङ्नेह यो वो अवावरीत् ।
नि षीं वृत्रस्य मर्मणि वज्रमिन्द्रो अपीपतत् ॥ ७ ॥

प्र । नूनम् । धावत । पृथक् । न । इह । यः । वः । अवावरीत् ।
नि । सीम् । वृत्रस्य । मर्मणि । वज्रम् । इन्द्रः । अपीपतत् ॥ ७ ॥

यः शत्रुः नूनम् इदानीं प्र धावत प्रधावति पृथक् इह पृथङ्न तिष्ठति च वः युष्मान् न अवावरीत् न विवारयति च तस्य वृत्रस्य शत्रोः मर्मणि मर्मस्थाने इन्द्रः वज्रं कुलिशं नि अपीपतत् नितरामपातयत् ॥

मनोजवा अयमान आयसीमतरत्पुरम् ।
दिवं सुपर्णो गत्वाय सोमं वज्रिण आभरत् ॥ ८ ॥

मनःऽजवाः । अयमानः । आयसीम् । अतरत् । पुरम् ।
दिवम् । सुऽपर्णः । गत्वाय । सोमम् । वज्रिणे । आ । अभरत् ॥ ८ ॥

सुपर्णः गरुत्मान् मनोजवाः मनोवेगः अयमानः गच्छन् आयसीं हिरण्मयीं पुरं नगरीम् अतरत् अतारीत् । ततः दिवं स्वर्गं गत्वाय गत्वा वज्रिणे इन्द्राय सोमम् आभरत् आहरत् ॥

समुद्रे अन्तः शयत उद्ना वज्रो अभीवृतः ।
भरन्त्यस्मै संयतः पुरःप्रस्रवणा बलिम् ॥ ९ ॥

समुद्रे । अन्तरिति । शयते । उद्ना । वज्रः । अभिऽवृतः ।
भरन्ति । अस्मै । सम्ऽयतः । पुरःऽप्रस्रवणाः । बलिम् ॥ ९ ॥

यः वज्रः समुद्रे अन्तः समुद्रस्य मध्ये शयते शेते यश्च उद्ना उदकेन अभिवृतः अस्मै[5] वज्राय संयतः संग्रामस्य । 'सग्मन् संयतः' इति संग्रामनामसु पाठात् । पुरःप्रस्रवणाः पुरस्तात्प्रच्छन्तः शत्रवः बलिम् उपहारं भरन्ति धारयन्ति । तस्य छेद्या भवन्तीत्यर्थः ॥

---

१. ख-ग-त-स्वभूतं यद्वृत्तमस्ति तदृषिप्रियाय । २. न-भ-श-ऋषिप्रियाय शरभाय । ३. ग-वसु धनं । ४. ख-चेति; ग-घ-त-न-श-वेति । ५. ख-ग-घ-त-न-श-तस्मा अस्मै ।

यद्वाग्वद॑न्त्यविचेत॒नानि॒ राष्ट्री॑ दे॒वानां॑ निष॒साद॑ म॒न्द्रा ।
चत॑स्र॒ ऊर्जं॑ दुदुहे॒ पयां॑सि॒ क्व॑ स्विदस्याः पर॒मं ज॑गाम ॥ १० ॥

यत् । वाक् । वद॑न्ती । अ॒वि॒ऽचे॒त॒नानि॑ । राष्ट्री॑ । दे॒वाना॑म् । नि॒ऽस॒साद॑ । म॒न्द्रा ।
चत॑स्रः । ऊर्ज॑म् । दु॒दु॒हे॒ । पयां॑सि । क्व॑ । स्वि॒त् । अ॒स्याः॒ । प॒र॒मम् । ज॒गा॒म॒ ॥ १० ॥

राष्ट्री राजनशीला देवानां मन्द्रा मादयित्री[1] वा यत् यदा वाक् अविचेतनानि विज्ञानरहितानप्रज्ञातानर्थान् वदन्ती प्रज्ञापयन्ती निषसाद यज्ञे निषीदति तदा चतस्रः दिशः प्रति ऊर्जम् अन्नं पयांसि तत्कारणभूतानि उदकानि दुदुहे। अस्याः माध्यमिकाया वाचः स्वभूतं यत् परमं श्रेष्ठं तत् क्व जगाम क्व गच्छतीति न दृश्यत इत्यर्थः। तथा च यास्कः—'यद्वाग्वदन्त्यविचेतनान्यविज्ञातानि राष्ट्री देवानां निषसाद मन्द्रा मदना चतस्रोऽनु दिश ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगामेति यत्पृथिवीं गच्छतीति वा यदादित्यरश्मयो हरन्तीति वा' (निरु. ११. २८) इति ॥

दे॒वीं वाच॑मजनयन्त दे॒वास्तां वि॒श्वरू॑पाः प॒शवो॑ वदन्ति ।
सा नो॑ म॒न्द्रेष॒मूर्जं॒ दुहा॑ना धे॒नुर्वाग॒स्मानुप॒ सुष्टु॒तैतु॑ ॥ ११ ॥

दे॒वीम् । वाच॑म् । अ॒ज॒न॒य॒न्त॒ । दे॒वाः । ताम् । वि॒श्वऽरू॑पाः । प॒शवः॑ । व॒द॒न्ति॒ । सा । नः॒ । म॒न्द्रा । इष॑म् । ऊर्ज॑म् । दुहा॑ना । धे॒नुः । वाक् । अ॒स्मान् । उप॑ । सु॒ऽस्तु॑ता । आ । ए॒तु॒ ॥ ११ ॥

एषा माध्यमिका वाक् सर्वप्राण्यन्तर्गता धर्माभिवादिनी भवतीति विभूतिमुपदर्शयति[2]। यां देवीं द्योतमानां माध्यमिकां वाचं देवाः माध्यमिकाः अजनयन्त जनयन्ति तां वाचं विश्वरूपाः सर्वरूपा व्यक्तवाचोऽव्यक्तवाचश्च पशवो वदन्ति। तत्पूर्वकत्वाद्वाक्प्रवृत्तेः। सा वाक् देवी मन्द्रा मदना स्तुत्या हर्षयित्री वा वृष्टिप्रदानेनास्मभ्यम् इषम् अन्नम् ऊर्जं पयोघृतादिरूपं रसं च दुहाना क्षरन्ती धेनुः धेनुभूता सुष्टुता अस्माभिः स्तुता[3] अस्मान् नेमान् उप एतु उपगच्छतु। वर्षणायोद्युक्तेत्यर्थः[4]। तथा च यास्कः—'देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च सा नो मदनान्नं च रसं च दुहाना धेनुर्वागस्मानुपैतु सुष्टुता' (निरु. ११. २९) इति ॥

सखे॑ विष्णो वित॒रं वि क्र॑मस्व॒ द्यौर्दे॒हि लो॒कं वज्रा॑य वि॒ष्कभे॑ ।
हना॑व वृ॒त्रं रि॒णचा॑व॒ सिन्धू॒निन्द्र॑स्य यन्तु प्रस॒वे विसृ॑ष्टाः ॥ १२ ॥

सखे॑ । विष्णो॒ इति॑ । वि॒ऽत॒रम् । वि । क्र॒म॒स्व॒ । द्यौः । दे॒हि । लो॒कम् । वज्रा॑य । वि॒ऽस्कभे॑ ।
हना॑व । वृ॒त्रम् । रि॒णचा॑व । सिन्धू॑न् । इन्द्र॑स्य । य॒न्तु॒ । प्र॒ऽस॒वे । वि॒ऽसृ॑ष्टाः ॥ १२ ॥

हे सखे विष्णो त्वं वितरम् अत्यन्तं वि क्रमस्व विक्रमं कुरु। हे द्यौः त्वं वज्राय वज्रस्य विष्कभे विष्कम्भनाय लोकम् अवकाशं देहि प्रयच्छ। हे विष्णो त्वं चाहं चोभौ आवां

१. घ–मादयित्री माध्यमिका वाक्; श–मादयित्री मोहयित्री। २. ख-ग-त-न-भ१-२-श–°मुपदर्शयतीति। ३. घ–सम्यक् स्तुता; श–नः। ४. ख–°योद्युतमित्यर्थः; ग-त-न-भ-श–°योद्युक्तामित्यर्थः।

^v^वृत्रम् असुरं ^v^हनाव हन्वः । ^v^सिन्धून् वृत्रावष्टब्धा नदीश्च ^v^रिणचाव नयावः[1] । तेऽमी ^v^विसृष्टाः सिन्धवः ^v^इन्द्रस्य ^v^प्रसवे ^v^यन्तु प्रेरणे गच्छन्तु । तमिममर्थं संगृह्य श्लोकैः शौनको दर्शयति— ' त्रीँल्लोकानभिवृत्यैतान् वृत्रस्तस्थौ स्वया त्विषा ॥ तं[2] नाशकद्धन्तुमिन्द्रो[2] विष्णुमभ्येत्य सोऽब्रवीत् । वृत्रं हनिष्ये तिष्ठस्व विक्रमस्याद्य ममान्तिके ॥ उद्यतस्य तु वज्रस्य द्यौर्ददातु ममान्तरम् । तथेति विष्णुस्तच्चक्रे द्यौश्चास्य विवरं ददौ ॥ तदेतदखिलं प्रोक्तं सखे विष्णो इति त्वृचा ' ( बृहद्दे. ६. १२१–१२४ ) इति ॥ ॥ ५ ॥

' ऋधक् ' इति षोडशर्चमष्टमं सूक्तम् । अत्रानुक्रम्यते—' ऋधक् षोडश जमदग्निर्भार्गवो मैत्रावरुणं प्रगाथं त्रित्रिष्टुबन्तं तृतीयादि गायत्री सतोबृहती स्तोत्रं राजस्वृक्सपादादित्याश्विन्यौ[3] वायव्ये सौर्यौ[4] बृहत्युषस्या सूर्यप्रभास्तुतिर्वा पावमानी गव्ये ' इति । भृगुगोत्रो जमदग्निर्ऋषिः । चतुर्दश्याद्यास्तिस्रस्त्रिष्टुभः । त्रयोदशी बृहती शिष्टानामयुजो बृहत्यो युजः सतोबृहत्यः । तृतीया गायत्री[5] । ' स्तोत्रं राजसु गायत ' इति पादेन सहिता ' ते हिन्विरे ' इत्यादित्यदेवताका । ' आ मे वचांसि ' इति द्वे अश्विदेवताके[6] । ' आ नो यज्ञं दिविस्पृशम् ' इति द्वे वायुदेवत्ये । ' बण्महाँ असि सूर्य ' इति द्वे सूर्यदेवताके । ' इयं या नीच्ची ' इत्येषा उषोदेवत्या । यद्वा । सूर्यप्रभानया स्तूयते । अतः सैव देवता । ' प्रजा ह तिस्रः ' इत्येषा पवमानदेवताका । ' माता रुद्राणाम् ' इति द्वे गोदेवत्ये । शिष्टाः पञ्चर्चो मैत्रावरुण्यः । सूक्तविनियोगो लैङ्गिकः । संग्रामार्थं राज्ञः संनहने[7] ' प्र यो वां मित्रावरुणा ' इति द्वे राजानं वाचयेत् । सूत्रितं च—' अभीवर्तं वाचयति प्र यो वां मित्रावरुणेति च द्वे ' ( आश्व. गृ. ३. १२. १२ ) इति । पृष्ठ्यस्य पञ्चमेऽहनि प्रउगे वायव्यतृचस्य ' आ नो यज्ञम् ' इत्यादिके द्वे ऋचावाद्ये । सूत्रितं च— ' आ नो यज्ञं दिविस्पृशमिति द्वे आ नो वायो महे तन इत्येका ' ( आश्व. श्रौ. ७. १२ ) इति । आश्विनं शंसिष्यन् होता ' बण्महाँ असि सूर्य ' इति द्वाभ्यामग्निं जुहुयात् । सूत्रितं च—' बण्महाँ असि सूर्येति द्वाभ्यामिन्द्रं वो विश्वतस्परीति च ' ( आश्व. श्रौ. ६. ५ ) इति । माध्यंदिनसवने सोमातिरेक एकं शस्त्रमुपजायते । तत्र 'बण्महाँ असि' इति प्रगाथः स्तोत्रियः । सूत्रितं च —' बण्महाँ असि सूर्योदु त्यद्दर्शतं वपुरिति प्रगाथौ स्तोत्रियानुरूपौ ' ( आश्व. श्रौ. ६. ७ ) इति । अयमेव प्रगाथश्चातुर्विंशिकेऽहनि माध्यंदिने ब्राह्मणाच्छंसिनो वैकल्पिकोऽनुरूपः । सूत्रितं च—' श्रायन्तइव सूर्यं बण्महाँ असि सूर्य ' ( आश्व. श्रौ. ७. ४ ) इति । मधुपर्के गामुत्सृज्य ' माता रुद्राणाम् ' इति जपेत् । सूत्रितं च—' माता रुद्राणां दुहिता वसूनामिति जपित्वोमुत्सृजतेत्युत्स्रक्ष्यन्[8] ' ( आश्व. गृ. १. २४. २५ ) इति ॥

**ऋधगित्था स मर्त्यः शशमे देवतातये ।**
**यो नूनं मित्रावरुणावभिष्टय आचक्रे हव्यदातये ॥ १ ॥**

ऋधक् । इत्था । सः । मर्त्यः । शशमे । देवऽतातये ।
यः । नूनम् । मित्रावरुणौ । अभिष्टये । आऽचक्रे । हव्यऽदातये ॥ १ ॥

^v^यः मनुष्यः ^v^नूनं क्षिप्रं ^v^हव्यदातये हविषां प्रदात्रे यजमानाय ^v^मित्रावरुणौ ^v^अभिष्टये अभिमतसिद्ध्यर्थम् ^v^आचक्रे अभिमुखौ करोति ^v^सः ^v^मर्त्यः मनुष्यः ^v^ऋधक् सत्यम् ^v^इत्था इत्थं ^v^देवतातये यज्ञार्थं ^v^शशमे हविः संस्करोति ॥

---

१. ख-त-न-श–मवयावः; ग–गमयावः; भ–मेचीयाव । २. ख-त–तेनाप्राक° । ३. ख-त-न-भ–राजस्विति सपादा°; ग-रजस्विति सपादा; श–राजस्वृगिति सपादा° । ४. ख-त२-३-४-भ-श–सूर्यौ । ५.ख-त-भ-श–गायत्री सतोबृहती । ६. ख-त-न-शं-मु–अश्विनीदेवताके । ७. ख-त-न-भ–संहनने । ८. ख-त१-२-३-४-न–जपित्वा गामुत्सृजतेत्युत्सृज्यन्; भ–जपित्वा गामुत्सृतेत्युत्सृजन्; श–जपित्वा गामुत्सृजतेत्युत्स्रक्ष्यन् ।

वर्षिष्ठक्षत्रा उरुचक्षसा नरा राजाना दीर्घश्रुत्तमा ।
ता बाहुता न दंसना रथर्यतः साकं सूर्यस्य रश्मिभिः ॥ २ ॥

वर्षिष्ठऽक्षत्रौ । उरुऽचक्षसा । नरा । राजाना । दीर्घश्रुत्ऽतमा ।
ता । बाहुता । न । दंसना । रथर्यतः । साकम् । सूर्यस्य । रश्मिऽभिः ॥ २ ॥

वर्षिष्ठक्षत्रौ अतिशयेन वृद्धबलौ उरुचक्षसा महादर्शनौ नरा नेतारौ कर्मणां राजाना दीप्यमानौ दीर्घश्रुत्तमा अतिशयेन विद्वांसौ ता तौ मित्रावरुणौ बाहुता न भुजाविव सूर्यस्य रश्मिभिः किरणैः साकं सह दंसना दंसनानि कर्माणि। 'अप्नः' दंसः' इति कर्मनामसु पाठात् । रथर्यतः प्राप्नुतः। यथा बाहू सह कर्म प्राप्नुतः तथा मित्रावरुणौ सह यज्ञं प्राप्नुत इत्यर्थः ॥

प्र यो वां मित्रावरुणाजिरो दूतो अद्रवत् । अयःशीर्षा मदेरघुः ॥ ३ ॥

प्र । यः । वाम् । मित्रावरुणा । अजिरः । दूतः । अद्रवत् । अयःऽशीर्षा । मदेऽरघुः ॥३॥

हे मित्रावरुणौ वां युवाम् अजिरः गमनशीलः[१] यः[२] यजमानः प्र अद्रवत् अभिगच्छति स देवानां दूतः भवति । अयःशीर्षा हिरण्यालंकृतशिरस्कश्च भवति। मदेरघुः मदकरे धने गन्ता च भवति ॥

न यः संपृच्छे न पुनर्हवीतवे न संवादाय रमते ।
तस्मान्नो अद्य समृतेरुरुष्यतं बाहुभ्यां न उरुष्यतम् ॥ ४ ॥

न । यः । सम्ऽपृच्छे । न । पुनः । हवीतवे । न । सम्ऽवादाय । रमते ।
तस्मात् । नः । अद्य । सम्ऽऋतेः । उरुष्यतम् । बाहुऽभ्याम् । नः । उरुष्यतम् ॥ ४ ॥

यः शत्रुः संपृच्छे संप्रश्नाय न रमते न क्रीडते न[३] च पुनःपुनः हवीतवे हवनाय रमते[४] न च संवादाय रमते तस्मात् शत्रोः समृतेः संग्रामात् नः अस्मान् अद्य उरुष्यतं हे मित्रावरुणौ युवां रक्षतम् । किंच तस्य शत्रोः बाहुभ्यां नः अस्मान् उरुष्यतं रक्षतम् ॥

प्र मित्राय प्रार्यम्णे सचथ्यमृतावसो ।
वरूथ्यं वरुणे छन्द्यं वचः स्तोत्रं राजसु गायत ॥ ५ ॥

प्र । मित्राय । प्र । अर्यम्णे । सचथ्यम् । ऋतवसो इत्यृतऽवसो ।
वरूथ्यम् । वरुणे । छन्द्यम् । वचः । स्तोत्रम् । राजऽसु । गायत ॥ ५ ॥

हे ऋतवसो यज्ञधन मित्राय सचथ्यं सेवार्हं वरूथ्यं यज्ञगृहे भवं च स्तोत्रं प्र गायत प्रकर्षेण गायत। अर्यम्णे च प्र गायत। वरुणे छन्द्यं प्रीणनसाधनं चैतादृशं वचः प्र गायत। प्रगायतेति बहुवचनं पूजार्थम्। एतदेव दर्शयति। राजसु मित्रादिषु राजसु स्तोत्रं गायत पठत । मित्रादीन्स्तुतेति समुदायार्थः ॥ ॥ ६ ॥

१. ख-ग-ज्ञ-त१-२–अपः अप्नः । २. ख-त-न-भ-श–गमनशीलोपि; ग-घ–गमनशीलोपि यो।
३. ख-स–'न' नास्ति । ४. ख-घ-भ१-३–न रमते ।

**ते हिन्विरे अरुणं जेन्यं वस्वेकं पुत्रं तिसृणाम् ।**
**ते धामान्यमृता मर्त्यानामदब्धा अभि चक्षते ॥ ६ ॥**

ते । हिन्विरे । अरुणम् । जेन्यम् । वसु । एकम् । पुत्रम् । तिसृणाम् ।
ते । धामानि । अमृताः । मर्त्यानाम् । अदब्धाः । अभि । चक्षते ॥ ६ ॥

Vअरुणम् अरुणवर्णं Vजेन्यं जयसाधनं[1] Vवसु वासकं Vतिसृणां[2] पृथिव्यादीनाम् Vएकं Vपुत्रं Vते देवाः Vहिन्विरे प्रेरयन्ति त्रैलोक्यस्य तमोनिवारणाय। किंच Vअदब्धाः केनाप्यहिंसिताः Vअमृताः[3] मरणरहिताः[3] Vते देवाः Vमर्त्यानां मनुष्याणां Vधामानि स्थानानि Vअभि Vचक्षते अभिपश्यन्ति ॥

**आ मे वचांस्युद्यता द्युमत्तमानि कर्त्वा ।**
**उभा यातं नासत्या सजोषसा प्रति हव्यानि वीतये ॥ ७ ॥**

आ । मे । वचांसि । उत्ऽयता । द्युमत्ऽतमानि । कर्त्वा ।
उभा । यातम् । नासत्या । सऽजोषसा । प्रति । हव्यानि । वीतये ॥ ७ ॥

हे Vनासत्या नासत्यौ सत्यस्य प्रणेतारौ[4] Vसजोषसा संगतौ Vउभा उभौ युवां Vमे जमदग्नेर्मम Vउद्यता उद्यतानि Vद्युमत्तमानि दीप्ततमानि Vवचांसि स्तोत्ररूपाणि वाक्यानि Vकर्त्वा कर्माणि च Vआ Vयातम् । किंच Vहव्यानि हवींषि Vवीतये भक्षणाय Vप्रति गच्छतम् ॥

**रातिं यद्वामरक्षसं हवामहे युवाभ्यां वाजिनीवसू ।**
**प्राचीं होत्रां प्रतिरन्तावितं नरा गृणाना जमदग्निना ॥ ८ ॥**

रातिम् । यत् । वाम् । अरक्षसम् । हवामहे । युवाभ्याम् । वाजिनीवसू इति वाजिनीऽवसू ।
प्राचीम् । होत्राम् । प्रऽतिरन्तौ । इतम् । नरा । गृणाना । जमत्ऽअग्निना ॥ ८ ॥

हे Vवाजिनीवसू अन्नधनावश्विनौ Vवां युवयोः संबन्धि Vयत् Vअरक्षसं रक्षोवर्जितं दानमस्ति तत् यदा Vहवामहे[5] । एतदेव विशदयति । Vयुवाभ्यां क्रियमाणां[6] Vरातिं दानं हवामहे इति । तदानीं Vप्राचीं प्राङ्मुखां Vहोत्रां स्तुतिं Vप्रतिरन्तौ वर्धयन्तौ Vनरा नेतारौ Vजमदग्निना ऋषिणा गृणानौ स्तूयमानौ च सन्तौ Vइतम् आगच्छतम् ॥

**आ नो यज्ञं दिविस्पृशं वायो याहि सुमन्मभिः ।**
**अन्तः पवित्र उपरि श्रीणानो३ऽयं शुक्रो अयामि ते ॥ ९ ॥**

आ । नः । यज्ञम् । दिविऽस्पृशम् । वायो इति । याहि । सुमन्मऽभिः ।
अन्तरिति । पवित्रे । उपरि । श्रीणानः । अयम् । शुक्रः । अयामि । ते ॥ ९ ॥

---

१. ग-त-श–जयनसाधनं । २. ग-न-भ२-३–तिसृणां । ३. ख-ग-त१-२-३-श–अमरणाः सहिताः; झ–अमृताः अमरणसहिताः; न–अमृताः अमरणरहिताः । ४. न-भ–प्रणेतारौ वा । ५. घ-झ–हवामहे याचामहे । ६. ग–क्रियमाणं ।

हे <sup>v</sup>वायो त्वं <sup>v</sup>नः अस्माकं <sup>v</sup>दिविस्पृशं तं <sup>v</sup>यज्ञम् <sup>v</sup>आ <sup>v</sup>याहि । किमर्थमागमनमित्यत्राह । <sup>v</sup>सुमन्मभिः सुष्टुतिभिः <sup>v</sup>अन्तः <sup>v</sup>पवित्रे पवित्रस्य मध्ये <sup>v</sup>उपरि <sup>v</sup>श्रीणानः श्रयमाणो निषिच्यमानः <sup>v</sup>अयं <sup>v</sup>शुक्रः[1] सोमः <sup>v</sup>ते तुभ्यम् <sup>v</sup>अयामि नियत आसीदिति ॥

वेत्यध्वर्युः पथिभी रजिष्ठैः प्रति हव्यानि वीतये ।
अधा नियुत्व उभयस्य नः पिब शुचिं सोमं गवाशिरम् ॥ १० ॥

वेति । अध्वर्युः । पथिऽभिः । रजिष्ठैः । प्रति । हव्यानि । वीतये ।
अध । नियुत्वः । उभयस्य । नः । पिब । शुचिम् । सोमम् । गोऽआशिरम् ॥ १० ॥

हे <sup>v</sup>नियुत्वः नियुत्संज्ञकाश्ववन् वायो <sup>v</sup>अध्वर्युः हविर्धानात् <sup>v</sup>रजिष्ठैः ऋजुतमैः <sup>v</sup>पथिभिः मार्गैः <sup>v</sup>वेति गच्छति । <sup>v</sup>वीतये भक्षणाय तव भक्षणानि <sup>v</sup>हव्यानि हवींषि च <sup>v</sup>प्रति नयतीति शेषः । <sup>v</sup>अध अथ <sup>v</sup>नः अस्माकं संबन्धिनम् <sup>v</sup>उभयस्य उभयविधं सोमम् । कर्मणि षष्ठी । <sup>v</sup>पिब । उभयविधत्वं दर्शयति । <sup>v</sup>शुचिं शुद्धं <sup>v</sup>सोमं <sup>v</sup>गवाशिरं गव्येन पयसा मिश्रितं चेति ॥ ॥ ७ ॥

बण्महाँ असि सूर्य बळादित्य महाँ असि ।
महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ असि ॥ ११ ॥

बट् । महान् । असि । सूर्य । बट् । आदित्य । महान् । असि ।
महः । ते । सतः । महिमा । पनस्यते । अद्धा । देव । महान् । असि ॥ ११ ॥

हे <sup>v</sup>सूर्य त्वं <sup>v</sup>महान् तेजसाधिकः <sup>v</sup>असि । <sup>v</sup>बट् सत्यम् । नैतन्मिथ्येत्यर्थः । हे <sup>v</sup>आदित्य अदितेः पुत्र त्वं <sup>v</sup>महान् बलेनाप्यधिकः[2] <sup>v</sup>असि । <sup>v</sup>बट् सत्यम् । <sup>v</sup>महः महतः <sup>v</sup>सतः भवतः <sup>v</sup>ते <sup>v</sup>महिमा महत्त्वं <sup>v</sup>पनस्यते स्तोतृभिः स्तूयते । हे <sup>v</sup>देव द्योतनादिगुणयुक्त सूर्य त्वं <sup>v</sup>महान् वीर्येणाप्यधिकः <sup>v</sup>असि भवसि । <sup>v</sup>अद्धा सत्यमेव । अत्र न संशय इत्यर्थः । 'बट् सत्रा अद्धा' इति सत्यनामसु पाठात् ॥

बट् सूर्य श्रवसा महाँ असि सत्रा देव महाँ असि ।
मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥ १२ ॥

बट् । सूर्य । श्रवसा । महान् । असि । सत्रा । देव । महान् । असि ।
मह्ना । देवानाम् । असुर्यः । पुरःऽहितः । विऽभु । ज्योतिः । अदाभ्यम् ॥ १२ ॥

हे <sup>v</sup>सूर्य त्वं <sup>v</sup>श्रवसा श्रवणेन <sup>v</sup>महान् सर्वाधिकः <sup>v</sup>असि <sup>v</sup>बट् सत्यम् । हे <sup>v</sup>देव द्योतमान सूर्य त्वं <sup>v</sup>देवानां मध्ये <sup>v</sup>मह्ना महत्त्वेन <sup>v</sup>महान् अधिकः <sup>v</sup>असि <sup>v</sup>सत्रा सत्यमेव । <sup>v</sup>असुर्यः असुराणां हन्ता चासि । किंच त्वं देवानां <sup>v</sup>पुरोहितः हितोपदेष्टासि । किंच ते <sup>v</sup>ज्योतिः तेजः <sup>v</sup>विभु महत् <sup>v</sup>अदाभ्यं केनाप्यहिंस्यं च ॥

इयं या नीच्यर्किणी रूपा रोहिण्या कृता ।
चित्रेव प्रत्यदर्श्यायत्य१न्तर्दशसु बाहुषु ॥ १३ ॥

---

१. घ—शुक्रः शुद्धोयं । २. ख-घ-त-य-श—बलेनाभ्यधिको; ग—बलेनाधिको ।

इयम् । या । नीची । अर्किणी । रूपा । रोहिण्या । कृता ।
चित्राऽइव । प्रति । अदर्शि । आऽयती । अन्तः । दशऽसु । बाहुषु ॥ १३ ॥

अस्यामृचि उषसः स्तुतिः सूर्यप्रभाया वा । ᵛया ᵛइयं ᵛनीची अवाङ्मुखी ᵛअर्किणी स्तुतिमती ᵛरूपा रूपवती ᵛरोहिण्या प्रकाशयुक्ता ᵛकृता उषाः[1] सूर्यप्रभा वोत्पादिता[1] सा ᵛअन्तः ब्रह्माण्डस्य मध्ये ᵛबाहुषु बाहुस्थानीयासु ᵛदशसु दशसंख्याकासु दिक्षु ᵛआयती आगच्छन्ती ᵛचित्रेव चित्रा गौरिव ᵛप्रत्यदर्शि सर्वैरदृश्यत ॥

प्रजा ह तिस्रो अत्यायमीयुर्न्य१न्या अर्कमभितो विविश्रे ।
बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आ विवेश ॥ १४ ॥

प्रऽजाः । ह । तिस्रः । अतिऽआयम् । ईयुः । नि । अन्याः । अर्कम् । अभितः । विविश्रे ।
बृहत् । ह । तस्थौ । भुवनेषु । अन्तरिति । पवमानः । हरितः । आ । विवेश ॥ १४ ॥

याः ᵛतिस्रः ᵛप्रजाः ᵛअत्यायमीयुः अत्यायमायन् ᵛअन्याः ता इमाः प्रजाः ᵛअर्कम् अर्चनीयमग्निम् ᵛअभितो[2] ᵛविविश्रे[2] अभितो निविष्टास्ततो न पराबभूवुः । ᵛभुवनेष्वन्तः मध्ये ᵛबृहत् महान् असावादित्यः । प्रजापतिरित्येके । ᵛतस्थौ प्रकाशयन्नतिष्ठत् । ᵛहरितः दिशः ᵛपवमानः वायुः ᵛआ ᵛविवेश आविष्टः । तथा चैतरेयब्राह्मणं—'प्रजा ह तिस्रो अत्यायमीयुरिति या वै ता इमाः प्रजास्तिस्रो अत्यायमायंस्तानीमानि वयांसि वङ्गावगधाश्चेरपादाः । न्यन्या अर्कमभितो विविश्र इति ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निं बृहद्ध तस्थौ भुवनेष्वन्तरित्यद उ एव बृहद्भुवनेष्वन्तरसावादित्यः पवमानो हरित आ विवेशेति वायुरेव पवमानो दिशो हरित आविष्टः' ( ऐ. आ. २. १. १ ) इति । वाजसनेयिनोऽप्यामनन्ति—'स तपोऽतप्यत स प्रजा असृजत ता अस्य प्रजाः सृष्टाः पराबभूवुस्तानीमानि वयांसि' इत्युपक्रम्य 'प्रजा ह तिस्रो अत्यायमीयुरिति या अमूः प्रजा अत्यायन्[3] न्यन्या[4] अर्कमभितो विविश्र इत्ययमग्निर्वा अर्कस्तमिमाः प्रजा अभितो निविष्टास्ता इमाः पराभूताः । बृहद्ध तस्थौ भुवनेष्वन्तरिति प्रजापतिमेवैतदभ्यनूक्तं पवमानो हरित आ विवेशेति दिशो वै हरितस्ता अयं पवमान आविष्टः' ( श. ब्रा. २. ५. १. १–५ ) इति ॥

माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः ।
प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥ १५ ॥

माता । रुद्राणाम् । दुहिता । वसूनाम् । स्वसा । आदित्यानाम् । अमृतस्य । नाभिः ।
प्र । नु । वोचम् । चिकितुषे । जनाय । मा । गाम् । अनागाम् । अदितिम् । वधिष्ट ॥ १५ ॥

अस्मिन् तृचे गौः स्तूयते । या गौः ᵛरुद्राणां[5] मरुतां ᵛमाता जननी ᵛवसूनां ᵛदुहिता पुत्री ᵛआदित्यानां ᵛस्वसा भगिनी ᵛअमृतस्य पयसः ᵛनाभिः आवासस्थानं ताम् ᵛअनागाम् अनागसम् ᵛअदितिम् अदीनां ᵛगां गोरूपां देवीं ᵛमा ᵛवधिष्ट हे जनाः मा हिंसिष्टेति ᵛचिकितुषे चेतनावते ᵛजनाय ᵛनु इदानीं ᵛप्र ᵛवोचम् अहं प्रावोचमिति शुश्रूषमाणेभ्य उपदेशः ॥

---

१. ख–उषसा सूर्ये वोत्पात्यादिता प्रभा; ग-न-भ-श–उषसा सूर्येण वोत्पादिता प्रभा; त–उषसा सूर्ये वोत्पादिता प्रभा । २. ख-ग-त-न-भ२-श–अभिनिविविश्रे । ३. ग–अत्यायमायन् । ४. ख-त-श–अन्या; भ–न्या । ५. झ-भ–रुद्राणां रुद्रपुत्राणां ।

वचोविदं वाचमुदीरयन्तीं विश्वाभिर्धीभिरुपतिष्ठमानाम् ।
देवीं देवेभ्यः पर्येयुषीं गामा मावृक्त मर्त्यो दभ्रचेताः ॥ १६ ॥

वचः॒ऽविद॑म् । वाच॑म् । उ॒त्ऽई॒रय॑न्तीम् । विश्वा॑भिः । धीभिः॑ । उ॒प॒ऽतिष्ठ॑मानाम् ।
दे॒वीम् । दे॒वेभ्यः॑ । परि॑ । आ॒ऽई॒युषी॑म् । गाम् । आ । मा॒ । अ॒वृ॒क्त॒ । मर्त्यः॑ । द॒भ्रऽचे॑ताः ॥ १६ ॥

वचोविदं वचसो लम्भयित्रीं वाचम् उदीरयन्तीं पयः पीत्वा पश्चाद्वाचमुदीरयन्तीम्। क्षुधितो हि जनो न वाचमुदीरयति भुक्त्वा पश्चादुदीरयति । विश्वाभिः सर्वाभिः धीभिः वाग्भिः उपतिष्ठमानां देवीं द्योतमानां देवेभ्यः देवार्थं मा माम् एयुषीम् अवगच्छन्तीं गां दभ्रचेताः अल्पबुद्धिः मर्त्यः मनुष्यः परि आ अवृक्त परिवर्जयति ॥ ॥ ८ ॥

'त्वमग्ने' इति द्वाविंशत्यृचं नवमं सूक्तं गायत्रमाग्नेयम्। भृगुगोत्रः प्रयोगो नामर्षिः। बार्हस्पत्यः पावकविशेषणविशिष्टोऽग्न्याख्यो वा । यद्वा। सहोनाम्नः पुत्रौ गृहपतियविष्ठसंज्ञकौ द्वावग्नी। तौ सहेदं सूक्तमपश्यताम्। तस्मादस्य तावृषी। अथवा तयोरन्यतरः। तथा चानुक्रान्तं— 'त्वमग्ने द्व्यधिका भार्गवः प्रयोगो बार्हस्पत्यो वाग्निः पावकः सहसः सुतयोर्वाग्न्योर्गृहपतियविष्ठयोर्वान्यतर आग्नेयं तु' इति। प्रातरनुवाकस्याग्नेये क्रतौ गायत्रे छन्दस्यादितोऽष्टादशर्चः। सूत्रितं च—'त्वमग्ने बृहद्वय इत्यष्टादशार्चन्तस्त्वेति सूक्ते' (आश्व. श्रौ. ४. १३) इति। देवसुवां हविःष्वग्नेर्गृहपतेरनुवाक्या[1] 'त्वमग्ने बृहद्वयः' इत्येषा। सूत्रितं च—'त्वमग्ने बृहद्वयो हव्यवाळग्निरजरः पिता नः' (आश्व. श्रौ. ४. ११) इति। अन्वारम्भणीयायामग्नेर्भगिनोऽनुवाक्या 'आ सवं सवितुः' इत्येषा। सूत्रितं च—'आ सवं सवितुर्यथा स नो राधांस्या भर' (आश्व. श्रौ. २. ८) इति। आभिप्लविकेषूक्थ्येषु[2] तृतीयसवने मैत्रावरुणस्य 'अग्निं वो वृधन्तम्' इति वैकल्पिकः स्तोत्रियस्तृचः। सूत्रितं च—'अग्निं वो वृधन्तमग्ने यं यज्ञमध्वरम्' (आश्व. श्रौ. ७. ८) इति। दशमेऽहनि 'इमं नो यज्ञम्' इति स्तोकसूक्तस्य द्वितीयस्य स्थाने 'अग्ने घृतस्य' इत्येषा। सूत्रितं च—'स्तोकसूक्तस्य द्वितीयतृतीययोः स्थानेऽग्ने घृतस्य धीतिभिरुभे सुश्चन्द्र सर्पिष इत्येते' (आश्व. श्रौ. ८. १२) इति ॥

त्वमग्ने बृहद्वयो दधासि देव दाशुषे । कविर्गृहपतिर्युवा ॥ १ ॥

त्वम् । अ॒ग्ने॒ । बृ॒हत् । वयः॑ । दधा॑सि । दे॒व॒ । दा॒शुषे॑ । क॒विः । गृ॒हऽप॑तिः । युवा॑ ॥ १ ॥

हे देव द्योतमान अग्ने कविः क्रान्तकर्मा गृहपतिः गृहपालकः युवा नित्यतरुणः त्वं दाशुषे हविषां प्रदात्रे यजमानाय बृहद्वयः महदन्नं दधासि प्रयच्छसीत्यर्थः ॥

स नु ईळानया सह देवाँ अग्ने दुवस्युवा । चिकिद्विभानवा वह ॥ २ ॥

सः । नः॒ । ई॒ळान॑या । स॒ह । दे॒वान् । अ॒ग्ने॒ । दु॒व॒स्युवा॑ ।
चि॒कि॒त् । वि॒भा॒नो॒ इति॑ विऽभानो । आ । व॒ह॒ ॥ २ ॥

हे विभानो विशिष्टदीप्ते अग्ने सः त्वं चिकित् ज्ञाता सन् नः अस्माकं दुवस्युवा परिचरणशीलया ईळानया स्तुवत्या वाचा सह देवान् आ वह ॥

त्वया ह स्विद्युजा वयं चोदिष्ठेन यविष्ठ्य । अभि ष्मो वाजसातये ॥ ३ ॥

---

१. ख-त-न-भ१-श–हवींष्यग्ने° । २. ख-त-भ–°षूक्थेषु ।

त्वया । ह । स्वित् । युजा । वयम् । चोदिष्ठेन । यविष्ठ्य । अभि । स्मः । वाजऽसातये ॥३॥

हे vयविष्ठ्य युवतमाग्ने vचोदिष्ठेन अतिशयेन धनानां प्रेरयित्रा vत्वया vयुजा vस्वित् vह सहायेनैव[1] vवयं भार्गवः[2] प्रयोगो[2] बार्हस्पत्याः पावका अग्नयो वा vवाजसातये अन्नलाभाय vअभि vस्मः शत्रूनभिभवेम ॥

**और्वभृगुवच्छुचिमप्नवानवदा हुवे । अग्निं समुद्रवाससम् ॥ ४ ॥**

और्वभृगुऽवत् । शुचिम् । अप्नवानऽवत् । आ । हुवे । अग्निम् । समुद्रऽवाससम् ॥ ४ ॥

vसमुद्रवाससं समुद्रमध्यवर्तिनं वाडवं vशुचिं शुद्धम् vअग्निम् vऔर्वभृगुवत् यथा और्वभृगुः vअप्नवानवत् यथाप्नवानः[3] तथा vआ vहुवे आह्वयाम्यहम् ॥

**हुवे वातस्वनं कविं पर्जन्यक्रन्द्यं सहः । अग्निं समुद्रवाससम् ॥ ५ ॥**

हुवे । वातऽस्वनम् । कविम् । पर्जन्यऽक्रन्द्यम् । सहः । अग्निम् । समुद्रऽवाससम् ॥ ५ ॥

vवातस्वनं वातसदृशध्वनिं vकविं क्रान्तकर्माणं vपर्जन्यक्रन्द्यं पर्जन्यसदृशक्रन्दनं vसहः सहस्विनं वाडवम् vअग्निं vहुवे ह्वयामि[4] । अन्यद्गतम् ॥　　॥ ९ ॥

**आ सवं सवितुर्यथा भगस्येव भुजिं हुवे । अग्निं समुद्रवाससम् ॥ ६ ॥**

आ । सवम् । सवितुः । यथा । भगस्यऽइव । भुजिम् । हुवे । अग्निम् । समुद्रऽवाससम् ॥६॥

vसवितुः प्रेरकस्य देवस्य vसवं vयथा प्रसवमिव[5] vभगस्येव vभुजिं भगाख्यस्य देवस्य भोगमिव च vसमुद्रवाससम् vअग्निं vहुवे[6] आह्वयामि ॥

**अग्निं वो वृधन्तमध्वराणां पुरूतमम् । अच्छा नप्त्रे सहस्वते ॥ ७ ॥**

अग्निम् । वः । वृधन्तम् । अध्वराणाम् । पुरुऽतमम् । अच्छ । नप्त्रे । सहस्वते ॥ ७ ॥

vअध्वराणाम् अहिंस्यानां बलिनां vनप्त्रे बन्धुं vसहस्वते बलवन्तम्[7] । विभक्तिव्यत्ययः । vवृधन्तं ज्वालाभिर्वर्धमानं vपुरूतमम्[8] अतिशयेन बहुम् vअग्निम् ऋत्विजः vवः यूयम् vअच्छ अभिगच्छत ॥

**अयं यथा न आभुवत्त्वष्टा रूपेव तक्ष्या । अस्य क्रत्वा यशस्वतः ॥ ८ ॥**

अयम् । यथा । नः । आऽभुवत् । त्वष्टा । रूपाऽइव । तक्ष्या । अस्य । क्रत्वा । यशस्वतः ॥८॥

vअयम् अग्निः vनः अस्मान् vतक्ष्या विकर्तव्यानि vरूपेव vत्वष्टा रूपाणि वर्धकिरिव[9] vयथा येन प्रकारेण vआभुवत् आभवति तथैनमग्निमभिगच्छतेत्यर्थः । किंच वयम् vअस्य अग्नेः vक्रत्वा प्रज्ञानेन युक्ताः vयशस्वतः यशस्वन्तो भवामेति शेषः ॥

---

१. ग–स्वित्त्वत्सहायेनैव; श–त्वत्सहायेनैव । २. ख-त१-३–भार्गवगः प्रयोगाः; ग-त२-भ१-२-श–भार्गवाः प्रयोगाः; घ–भार्गवादयः; ङ–भार्गवगः प्रयोगः; त४–भार्गवगः प्रायोगाः; न–भार्गवाः प्रायोगाः । ३. न-भ–यथा चाप्रवानः । ४. घ–ह्वयामि कीदृशं समुद्रवाससं । ५. ख-त२–प्रभव; ग–प्रसवं च; घ–प्रभवं; ङ–प्रसवत्व; त१-३–प्रभवत्व; त४–प्रभव च; न–प्रभवमिव; श–प्रभवं च । ६. घ–आ हुवे । ७. घ–तेजसा बलवंतं । ८. ख-ग-घ-भ१-३–पुरुतमं । ९. ख-त-न-भ२–वर्धकिंच; घ–वर्धकः इव; भ१–वर्धकिव; श–वर्धकः च ।

अयं विश्वा अभि श्रियोऽग्निर्देवेषु पत्यते । आ वाजैरुप नो गमत् ॥ ९ ॥

अयम् । विश्वाः । अभि । श्रियः । अग्निः । देवेषु । पत्यते । आ । वाजैः । उप । नः । गमत् ॥ ९ ॥

मनुष्याणां विश्वाः सर्वाः श्रियः संपदः देवेषु देवानां मध्ये यः अयम् अग्निः अभि पत्यते अभिगच्छति सोऽग्निः नः अस्मानपि वाजैः अन्नैः उप आ गमत् उपागच्छतु ॥

विश्वेषामिह स्तुहि होतॄणां यशस्तमम् । अग्निं यज्ञेषु पूर्व्यम् ॥ १० ॥

विश्वेषाम् । इह । स्तुहि । होतॄणाम् । यशःऽतमम् । अग्निम् । यज्ञेषु । पूर्व्यम् ॥ १० ॥

विश्वेषां सर्वेषां होतॄणां मध्ये यशस्तमं यशस्वितमं यज्ञेषु पूर्व्यं मुख्यम् अग्निम् इह अस्मदीये यज्ञे हे स्तोतः स्तुहि ॥ ॥ १० ॥

शीरं पावकशोचिषं ज्येष्ठो यो दमेष्वा । दीदाय दीर्घश्रुत्तमः ॥ ११ ॥

शीरम् । पावकऽशोचिषम् । ज्येष्ठः । यः । दमेषु । आ । दीदाय । दीर्घश्रुत्ऽतमः ॥ ११ ॥

ज्येष्ठः देवानां मुख्यः दीर्घश्रुत्तमः अतिशयेन विद्वान् अग्निः[१] दमेषु यज्वनां[२] गृहेषु आ दीदाय आदीप्यते । तं शीरम् अनुशायिनम् । तथा च यास्कः—'अनुशायिनमिति वाशिनमिति वा' ( निरु. ४. १४ ) इति । पावकशोचिषं पावकदीप्तिं स्तुहीत्यर्थः ॥

तमर्वन्तं न सानसिं गृणीहि विप्र शुष्मिणम् । मित्रं न यातयज्जनम् ॥ १२ ॥

तम् । अर्वन्तम् । न । सानसिम् । गृणीहि । विप्र । शुष्मिणम् । मित्रम् । न । यातयत्ऽजनम् ॥ १२ ॥

हे विप्र मेधाविन् स्तोतः अर्वन्तं न अश्वमिव सानसिं संभजनीयं शुष्मिणं बलिनं मित्रं न सखायमिव यातयज्जनं हतशत्रुजनं[३] तम् अग्निं गृणीहि स्तुहि ॥

उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः । वायोरनीके अस्थिरन् ॥ १३ ॥

उप । त्वा । जामयः । गिरः । देदिशतीः । हविःऽकृतः । वायोः । अनीके । अस्थिरन् ॥ १३ ॥

हे अग्ने हविष्कृतः यजमानार्थं[४] गिरः स्तुतयः जामयः स्वसार इव देदिशतीः तव गुणान् दिशन्त्यः[५] त्वा त्वामुपतिष्ठन्ते । वायोरनीके समीपे त्वां समेधयन्त्यः अस्थिरन् अतिष्ठंश्च ॥

यस्य त्रिधात्ववृतं बर्हिस्तस्थावसन्दिनम् । आपश्चिन्नि दधा पदम् ॥ १४ ॥

यस्य । त्रिऽधातु । अवृतम् । बर्हिः । तस्थौ । असम्ऽदिनम् ।
आपः । चित् । नि । दध । पदम् ॥ १४ ॥

यस्य अग्नेः त्रिधातु त्रिः[६] अवृतम् अनावृतं[६] च असंदिनम् अबद्धं च । स्तरणकाले हि बर्हिरबद्धं भवति । बर्हिस्तस्थौ आसनार्थं तिष्ठति तस्मिन्नग्नौ आपश्चित् आपोऽपि पदं नि दध निदधति । अन्तरिक्ष्या माध्यमिके पदं निदधतीत्यर्थः ॥

---

१. ग-घ-योमिः । २. ख-त२—यज्विना; ग—यजमानानां; घ-ज्ञ-त४-भ१-२-श—यज्विनां; न—यज्ञिनां । ३. घ—शत्रुहननं; ज्ञ—शत्रूजननं; त२-३-४-न—हशत्रुजननं । ४. ग—यजमानस्य । ५. ख-घ-ज्ञ-त१-२-३-श—आदिशंत्यः । ६. ख-ज्ञ-त२-३-४-भ१-२—त्रिर्वा अवृतमनावृतं; ग-घ—अवृतमनावृतं; त१—त्रिर्वा अवृतं; न—त्रिवावृतंनावृतं ।

पदं देवस्य मीळ्हुषोऽनाधृष्टाभिरूतिभिः । भद्रा सूर्यइवोपदृक् ॥ १५ ॥

पदम् । देवस्य । मीळ्हुषः । अनाधृष्टाभिः । ऊतिऽभिः । भद्रा । सूर्यःऽइव । उपऽदृक् ॥ १५ ॥

Vमीळ्हुषः कामानां सेक्तुः Vदेवस्य द्योतमानस्याग्नेः Vपदं स्थानम् Vअनाधृष्टाभिः शत्रुभिः अनाधृष्टाभिः Vऊतिभिः रक्षाभिर्भजनीयं भवतीत्यर्थः । तथैवास्य Vउपदृक् उपदृष्टिरपि Vसूर्यइव यथा सूर्यस्तद्वत् Vभद्रा मनुष्यैर्भजनीया भवति ॥   ॥ ११ ॥

अग्ने घृतस्य धीतिभिस्तेपानो देव शोचिषा । आ देवान्वक्षि यक्षि च ॥ १६ ॥

अग्ने । घृतस्य । धीतिऽभिः । तेपानः । देव । शोचिषा । आ । देवान् । वक्षि । यक्षि । च ॥ १६ ॥

हे Vदेव द्योतमान Vअग्ने Vघृतस्य दीप्तिसाधनस्याज्यस्य Vधीतिभिः[1] निधानैः[1] Vतेपानः तपन् Vशोचिषा ज्वालया Vदेवान् प्रति Vआ Vवक्षि आवह Vयक्षि यज Vच ॥

तं त्वाजनन्त मातरः कविं देवासो अङ्गिरः । हव्यवाहममर्त्यम् ॥ १७ ॥

तम् । त्वा । अजनन्त । मातरः । कविम् । देवासः । अङ्गिरः । हव्यऽवाहम् । अमर्त्यम् ॥ १७ ॥

हे Vअङ्गिरः अग्ने Vकविं क्रान्तकर्माणम् Vअमर्त्यं मरणरहितं Vहव्यवाहं हविषां वोढारं Vतं प्रसिद्धं Vत्वा त्वां Vदेवासः देवाः Vमातरः इव Vअजनन्त जनयन्ति ॥

प्रचेतसं त्वा कवेऽग्ने दूतं वरेण्यम् । हव्यवाहं नि षेदिरे ॥ १८ ॥

प्रऽचेतसम् । त्वा । कवे । अग्ने । दूतम् । वरेण्यम् । हव्यऽवाहम् । नि । सेदिरे ॥ १८ ॥

हे Vकवे क्रान्तकर्मन् Vअग्ने Vप्रचेतसं प्रकृष्टबुद्धिं Vवरेण्यं वरणीयं Vदूतं देवानां Vहव्यवाहं हविषां वोढारं Vत्वा त्वां Vनि Vषेदिरे देवा निषीदन्ति ॥

नहि मे अस्त्यघ्न्या न स्वधितिर्वनन्वति । अथैतादृग्भरामि ते ॥ १९ ॥

नहि । मे । अस्ति । अघ्न्या । न । स्वऽधितिः । वनन्ऽवति । अथ । एतादृक् । भरामि । ते ॥ १९ ॥

हे अग्ने Vमे मम भार्गवस्य प्रयोगस्यर्षेः Vअघ्न्या गौः । 'अघ्न्या उस्रा' इति गोनामसु पाठात् । Vनहि Vअस्ति न विद्यते यस्याः पयसा आज्येन च त्वां यजेय । किंच Vस्वधितिः नहि Vवनन्वति काष्ठानि हन्ति यैः काष्ठैस्त्वां समिन्धीय[2] । Vअथैतादृक् अग्निहोत्रार्थं पयसो दोग्ध्रीं गाम् इन्धनसाधनानि काष्ठानि चैतत्सर्वं Vते तुभ्यमहं Vभरामि ॥

यदग्ने कानि कानि चिदा ते दारूणि दध्मसि । ता जुषस्व यविष्ठ्य ॥ २० ॥

यत् । अग्ने । कानि । कानि । चित् । आ । ते । दारूणि । दध्मसि । ता । जुषस्व । यविष्ठ्य ॥ २० ॥

पूर्वस्यामृच्युक्तस्यैवार्थस्य विवरणमत्र । हे Vयविष्ठ्य युवतम Vअग्ने तुभ्यं[3] Vयत् यदा Vकानि Vकानि Vचित् यानि कान्यपि Vदारूणि काष्ठानि Vआ Vदध्मसि आधारयामि तदा Vता तानि अपरशुवृक्णान्यपि[4] Vजुषस्व सेवस्व । तथा च यजुर्ब्राह्मणं—' न ह स्म वै पुराग्निरपरशुवृक्णं दहति

---

१. ख-घ-ञ-त१-२—धीतिभिर्दीप्तिभिर्निधानः; त३-४—दीप्तिभिर्निधानः; श—निधानः । २. ख-ञ-त१-२—समिधाय । ३. घ-भ१-३—ते तुभ्यं । ४. घ—काष्ठानि ।

तदस्मै प्रयोग एवर्षिरस्वदयद्यदग्ने यानि कानि चेति समिधमा दधात्यपरशुवृक्णमेवास्मै स्वदयति सर्वमस्मै स्वदते' (तै. सं. ५. १. १०. १) इति ॥

यद॒त्त्यु॑प॒जिह्वि॑का॒ यद्व॒म्रो अ॑ति॒सर्प॑ति । सर्वं॒ तद॑स्तु ते घृ॒तम् ॥ २१ ॥

यत् । अत्ति॑ । उ॒प॒ऽजिह्वि॑का । यत् । व॒म्रः । अ॒ति॒ऽसर्प॑ति । सर्व॑म् । तत् । अ॒स्तु॒ । ते॒ । घृ॒तम् ॥ २१ ॥

हे अग्ने ᵛयत् काष्ठादिकम् ᵛउपजिह्विका[1] । उपजिघ्रतीत्युपजिह्विका* । ᵛअत्ति भक्षयति । ᵛयत् च काष्ठादिकं[1] ᵛवम्रः । वमत्युदकमिति वम्रः । उपजिह्विकावम्रशब्दौ यद्यपि पर्यायौ तथापि पृथगुपादानात् वम्रशब्दस्तद्विशेषे पर्यवस्यति । सोऽपि ᵛअतिसर्पति अतिगच्छति । ᵛतत् ᵛसर्वं ᵛते तव ᵛघृतं घृतसदृशम् ᵛअस्तु । यथा घृतं तव प्रियकरं भवति तथा प्रियकरं भवत्वित्यर्थः ॥

अ॒ग्निमि॒न्धानो॒ मन॑सा॒ धियं॑ सचेत॒ मर्त्यः॑ । अ॒ग्निमी॑धे वि॒वस्व॑भिः ॥ २२ ॥

अ॒ग्निम् । इ॒न्धानः॑ । मन॑सा । धिय॑म् । स॒चे॒त॒ । मर्त्यः॑ । अ॒ग्निम् । ई॒धे॒ । वि॒वस्व॑ऽभिः ॥ २२ ॥

ᵛमर्त्यः मनुष्यः ᵛअग्निमिन्धानः काष्ठैः प्रज्वलयन् ᵛमनसा एव श्रद्दधानः ᵛधियं कर्म ᵛसचेत काले भजेत । ᵛविवस्वभिः ऋत्विग्भिश्च ᵛअग्निम् एव ᵛईधे प्रज्वलयति ॥ ॥ १२ ॥

'अदर्शि' इति चतुर्दशर्चं दशमं सूक्तं काण्वस्य सोभरेरार्षम् । अत्रानुक्रम्यते—'अदर्शि षळूना सोभरिर्बार्हतं पञ्चम्याद्ययुजः[2] सतोबृहत्योऽष्टम्यादियुजः ककुब्गायत्री ककुबनुष्टुबन्त्याग्निमारुती' इति । पञ्चमीसप्तमीनवम्येकादशीत्रयोदश्यः पञ्च सतोबृहत्यः । अष्टमीद्वादश्यौ ककुभौ दशमी गायत्री चतुर्दश्यनुष्टुप् । शिष्टा बृहत्यः । 'आग्नेयं तु' इत्युक्तत्वादग्निर्देवता । अन्त्यायास्त्वग्निर्मरुतश्च । प्रातरनुवाकस्याग्नेये क्रतौ बार्हते छन्दस्यादितः सप्तर्चः । सूत्रितं च—'अदर्शि गातुवित्तम इति सप्तेति बार्हतम्' (आश्व. श्रौ. ४. १३) । आभिप्लविकेषूक्थ्येषु मैत्रावरुणस्य 'प्र मंहिष्ठाय' इति वैकल्पिकः स्तोत्रियस्तृचः । सूत्रितं च—'प्र मंहिष्ठाय गायत प्र सो अग्ने तवोतिभिः' (आश्व. श्रौ. ७. ८) इति । अध्यायोपाकरणोत्सर्जनयोर्मण्डलान्त्यहोमे 'आग्ने याहि' इत्येषा । सूत्रितं च—'मा चिदाग्ने याहि मरुत्सखा यत्ते राजन्नग्ने' (आश्व. गृ. ३. ५. ७) इति ॥

अद॑र्शि गातु॒वित्त॑मो॒ यस्मि॑न्व्र॒तान्या॑द॒धुः ।
उपो॑ षु जा॒तमार्य॑स्य॒ वर्ध॑नम॒ग्निं नक्ष॑न्त नो॒ गिरः॑ ॥ १ ॥

अद॑र्शि । गा॒तु॒वित्ऽत॑मः । यस्मि॑न् । व्र॒तानि॑ । आ॒ऽद॒धुः ।

उपो॒ इति॑ । सु । जा॒तम् । आर्य॑स्य । वर्ध॑नम् । अ॒ग्निम् । न॒क्ष॒न्त॒ । न॒ः । गिर॑ः ॥ १ ॥

ᵛयस्मिन् अग्नौ ᵛव्रतानि कर्माणि ᵛआदधुः यजमाना आदधन् ᵛगातुवित्तमः अतिशयेन मार्गाणां ज्ञाता सोऽग्निः ᵛअदर्शि प्रादुरभूत् । किंच ᵛसु ᵛजातं सम्यक् प्रादुर्भूतम् अस्य ᵛआर्यस्य उत्तमवर्णस्य ᵛवर्धनं वर्धयितारम् ᵛअग्निं ᵛनः अस्माकं ᵛगिरः स्तुतिरूपा वाचः ᵛउपो ᵛनक्षन्त उपगच्छन्त्येव ॥ 'नक्ष गतौ' इति धातुः ॥

---

१. ख-ग-त-'उपजिह्विका ······ काष्ठादिकं' नास्ति । * न-भ-श-°त्युपजिह्विका उपदहिका (न-श-उपदीहिका) । २. त१(प्रान्ते)-अनु.-पंचमी विराड्रूपा सप्तम्याद्ययुजः ।

प्र दैवोदासो अग्निर्देवाँ अच्छा न मज्मना ।
अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य सानवि ॥ २ ॥

प्र । दैवःऽदासः । अग्निः । देवान् । अच्छ । न । मज्मना ।
अनु । मातरम् । पृथिवीम् । वि । ववृते । तस्थौ । नाकस्य । सानवि ॥ २ ॥

दैवोदासः दिवोदासेनाहूयमानः अग्निः मातरम् । सर्वस्य लोकस्य धारणवत्त्वात् पृथिवी माता । तां पृथिवीम् अच्छ प्रति देवान् तस्य दिवोदासस्य यज्ञे देवान् अनु[1] प्रति हविर्वोढुं न प्र[2] वि वावृते[2] । यस्मादेनमग्निं दिवोदासः मज्मना बलेन आजुहाव तस्मादयमग्निः नाकस्य स्वर्गस्य सानवि समुच्छ्रिते देशे स्वायतन एव तस्थौ अतिष्ठत् ॥

यस्माद्रेजन्त कृष्टयश्चर्कृत्यानि कृण्वतः ।
सहस्रसां मेधसाताविव त्मनाग्निं धीभिः सपर्यत ॥ ३ ॥

यस्मात् । रेजन्त । कृष्टयः । चर्कृत्यानि । कृण्वतः ।
सहस्रऽसाम् । मेधसातौऽइव । त्मना । अग्निम् । धीभिः । सपर्यत ॥ ३ ॥

यस्मात् कारणात् चर्कृत्यानि कर्तव्यानि कर्माणि कृण्वतः कुर्वाणात् मनुष्यात् कृष्टयः इतरे मनुष्याः रेजन्ते कम्पन्ते तस्मादिदानीं हे जनाः[3] यूयं सहस्रसां गवां धनानां च सहस्रस्य दातारम् अग्निं मेधसातौ यज्ञे धीभिः कर्तव्यैः कर्मभिः त्मना आत्मनैव सपर्यत परिचरत ॥

प्र यं राये निनीषसि मर्तो यस्ते वसो दाशत् ।
स वीरं धत्ते अग्न उक्थशंसिनं त्मना सहस्रपोषिणम् ॥ ४ ॥

प्र । यम् । राये । निनीषसि । मर्तः । यः । ते । वसो इति । दाशत् ।
सः । वीरम् । धत्ते । अग्ने । उक्थऽशंसिनम् । त्मना । सहस्रऽपोषिणम् ॥ ४ ॥

हे वसो वासक अग्ने त्वं यं तव स्तोतारं राये धनार्थं प्र निनीषसि प्रणेतुमिच्छसि यः च मर्तः मनुष्यः ते तुभ्यं दाशत् हवींषि प्रयच्छति सः मनुष्यः उक्थशंसिनम् उक्थानां[4] शंसितारं त्मना आत्मनैव सहस्रपोषिणं बहुधनं वीरं पुत्रं धत्ते धारयति ॥

स दृळ्हे चिदभि तृणत्ति वाजमर्वता स धत्ते अक्षिति श्रवः ।
त्वे देवत्रा सदा पुरूवसो विश्वा वामानि धीमहि ॥ ५ ॥

सः । दृळ्हे । चित् । अभि । तृणत्ति । वाजम् । अर्वता । सः । धत्ते । अक्षिति ।
श्रवः । त्वे इति । देवऽत्रा । सदा । पुरुवसो इति पुरुऽवसो । विश्वा । वामानि । धीमहि ॥५॥

हे[5] पुरूवसो बहुधनाग्ने यस्तुभ्यं हवींषि प्रयच्छति सः यजमानः दृळ्हे चित् दृढेऽपि शत्रुपुरे स्थितं वाजम् अन्नम् अर्वता अश्वेन अभि तृणत्ति हिनस्ति । तथा सः यजमानः अक्षिति अक्षीणं

---

१. ख-ग-त-भ-‘ अनु ’ नास्ति । २. ख-त१-२-प्र वि वव्रृते; ग-त४-भ-प्र वव्रृते । ३. ख-त-न-याजनाः; ग-श-यजमानाः । ४. घ-स्तोत्राणां । ५. ख-ग-घ-त-भ-श-अर्वता अश्वेन ।

श्रवः अन्नं धत्ते धारयति । तथा च सति तुभ्यं हविषां प्रदातारो वयमपि देवत्रा देवे त्वे त्वयि स्थिताः विश्वा सर्वाणि वामानि वननीयानि धनानि सदा सर्वदा धीमहि धारयाम ॥ ॥ १३ ॥

यो विश्वा दयते वसु होता मन्द्रो जनानाम् ।
मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्यग्नये ॥ ६ ॥

यः । विश्वा । दयते । वसु । होता । मन्द्रः । जनानाम् ।
मधोः । न । पात्रा । प्रथमानि । अस्मै । प्र । स्तोमाः । यन्ति । अग्नये ॥ ६ ॥

होता देवानामाह्वाता मन्द्रः मोदमानः यः अग्निः विश्वा सर्वाणि वसु वसूनि धनानि जनानां जनेभ्यः दयते प्रयच्छति तस्मै अस्मै अग्नये मधोर्न मदकरस्य सोमस्येव प्रथमानि मुख्यानि पात्राणि[1] स्तोमाः प्र यन्ति प्रगच्छन्ति ॥

अश्वं न गीर्भी रथ्यं सुदानवो मर्मृज्यन्ते देवयवः ।
उभे तोके तनये दस्म विश्पते पर्षि राधो मघोनाम् ॥ ७ ॥

अश्वम् । न । गीःऽभिः । रथ्यम् । सुऽदानवः । मर्मृज्यन्ते । देवऽयवः ।
उभे इति । तोके इति । तनये । दस्म । विश्पते । पर्षि । राधः । मघोनाम् ॥ ७ ॥

हे दस्म दर्शनीय विश्पते विशां पतेऽग्ने यं त्वां सुदानवः शोभनदानाः देवयवः देवानात्मन इच्छन्तो यजमानाः रथ्यं रथस्य वोढारम् अश्वं न अश्वमिव गीर्भिः स्तुतिभिः मर्मृज्यन्ते परिचरन्ति स त्वमस्माकं यजमानानां तोके पुत्रे तनये पौत्रे च उभे उभयस्मिन् मघोनां धनवतां रायः धनं पर्षि प्रयच्छ ॥

प्र मंहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे । उपस्तुतासो अग्नये ॥ ८ ॥

प्र । मंहिष्ठाय । गायत । ऋतऽव्ने । बृहते । शुक्रऽशोचिषे । उपऽस्तुतासः । अग्नये ॥ ८ ॥

हे यूयम् उपस्तुतासः उपस्तोतारः मंहिष्ठाय दातृतमाय ऋताव्ने यज्ञवते सत्यवते वा बृहते महते शुक्रशोचिषे दीप्ततेजसे अग्नये प्र गायत स्तोत्रं पठत ॥

आ वंसते मघवा वीरवद्यशः समिद्धो द्युम्न्याहुतः ।
कुविन्नो अस्य सुमतिर्नवीयस्यच्छा वाजेभिरागमत् ॥ ९ ॥

आ । वंसते । मघऽवा । वीरऽवत् । यशः । सम्ऽइद्धः । द्युम्नी । आऽहुतः ।
कुवित् । नः । अस्य । सुऽमतिः । नवीयसी । अच्छ । वाजेभिः । आऽगमत् ॥ ९ ॥

मघवा धनवान्[2] द्युम्नी अन्नवान् यशस्वी[3] वा । तथा च यास्कः—' द्युम्नं द्योततेर्यशो वान्नं वा ' ( निरु. ५. ५ ) इति । यशः यशस्करमन्नम्[3] आ वंसते यजमानेभ्य आ प्रयच्छति[4] । अस्य

---

१. घ-श—पात्रा पात्राणि । २. ग—धनवान् समिद्ध आहुतः । ३. घ—समिद्धः दीप्त आहुतः अग्निः यशः यशस्करं वीरवत् पुत्रयुक्तमन्नं । ४. श—प्रयच्छति । तस्या सामे समिद्धः दीप्तः आहुतः अग्निः यशः यशस्करं वीरवत् पुत्रयुक्तमन्नमावंसते यजमानेभ्य आयच्छति ।

अग्नेः ᵛनवीयसी नवतरा ᵛसुमतिः अनुग्रहबुद्धिः ᵛनः अस्मान् ᵛअच्छ[1] प्रति[1] ᵛवाजेभिः अन्नैः सह ᵛकुवित् बहुवारम्[2]। 'सलिलं कुवित्' इति बहुनामसु पाठात्। ᵛआगमत् आगच्छतु॥

प्रेष्ठमु प्रियाणां स्तुह्यासावातिथिम्। अग्निं रथानां यमम्॥ १०॥

प्रेष्ठम्। ऊँ इति। प्रियाणाम्। स्तुहि। आऽसाव। अतिथिम्। अग्निम्। रथानाम्। यमम्॥ १०॥

हे ᵛआसाव स्तोतः ᵛप्रियाणां ᵛप्रेष्ठं प्रियतमम् ᵛअतिथिम् अभ्यागतं ᵛरथानां ᵛयमं यन्तारम् ᵛअग्निम् एव ᵛस्तुहि॥ ॥ १४॥

उदिता यो निदिता वेदिता वस्वा यज्ञियो ववर्तति।
दुष्टरा यस्य प्रवणे नोर्मयो धिया वाजं सिषासतः॥ ११॥

उत्ऽइता। यः। निऽदिता। वेदिता। वसु। आ। यज्ञियः। ववर्तति।
दुस्तराः। यस्य। प्रवणे। न। ऊर्मयः। धिया। वाजम्। सिसासतः॥ ११॥

ᵛवेदिता वेत्ता ᵛयज्ञियः यज्ञार्हः ᵛयः[3] अग्निः ᵛउदिता उदितान्युद्गतानि ᵛनिदिता निदितानि श्रुतानि च ᵛवसु वसूनि धनानि ᵛआ ᵛववर्तति आवर्तयति[4]। ᵛधिया कर्मणा ᵛवाजं संग्रामं ᵛसिषासतः संभक्तुमिच्छतः ᵛयस्य चाग्नेर्ज्वालाः[5] ᵛप्रवणे ᵛनोर्मयः प्रवणाभिमुखाः समुद्रस्य तरङ्गा इव ᵛदुष्टराः तर्तुमशक्याः। तमग्निं हे स्तोतः स्तुहीत्यर्थः॥

मा नो हृणीतामतिथिर्वसुरग्निः पुरुप्रशस्त एषः। यः सुहोता स्वध्वरः॥ १२॥

मा। नः। हृणीताम्। अतिथिः। वसुः। अग्निः। पुरुऽप्रशस्तः। एषः।
यः। सुऽहोता। सुऽअध्वरः॥ १२॥

ᵛवसुः वासकः ᵛअतिथिः अतिथिवत् प्रियः ᵛपुरुप्रशस्तः बहुभिः स्तुतः ᵛसुहोता सुष्ठु देवानामाह्वाता ᵛस्वध्वरः सुयज्ञश्च ᵛयः ᵛअग्निः सः ᵛएषः अग्निः ᵛनः अस्मभ्यं ᵛमा ᵛहृणीतां केनापि न रुध्यताम्। केनाप्यनवरुद्धः सन् अग्निः अस्मभ्यमभीष्टं प्रयच्छत्वित्यर्थः॥

मो ते रिषन् ये अच्छोक्तिभिर्वसोऽग्ने केभिश्चिदेवैः।
कीरिश्चिद्धि त्वामीट्टे दूत्याय रातहव्यः स्वध्वरः॥ १३॥

मो इति। ते। रिषन्। ये। अच्छोक्तिऽभिः। वसो इति। अग्ने। केभिः। चित्। एवैः।
कीरिः। चित्। हि। त्वाम्। ईट्टे। दूत्याय। रातऽहव्यः। सुऽअध्वरः॥ १३॥

हे ᵛवसो वासक ᵛअग्ने त्वां ᵛये मनुष्याः ᵛअच्छोक्तिभिः अभिष्टुतिभिः ᵛकेभिः कैः सुखकरैः ᵛएवैः ᵛचित् अभिगमनैरपि ᵛते स्तोतारः ᵛमो ᵛरिषन् मैव हिंसन्ताम्। ᵛरातहव्यः दत्तहविष्कः[6] ᵛकीरिश्चित् स्तोतापि ᵛदूत्याय हविर्वहनादिलक्षणाय दूतकर्मणे ᵛत्वामीट्टे ᵛहि स्तौति खलु॥

---

१. ख-झ-त१-२–अच्छ अभिलक्ष्य (ख–आलक्ष्य; झ–'अभिलक्ष्य' नास्ति; त२–आभिलक्ष्य) प्रयच्छति; घ-श–अच्छ आभिलक्ष्य; त४-न-भ२–प्रयच्छति। २. ख-ग-त-न-भ–बहु। ३. ग-त-भ–'यः' नास्ति। ४. ख-ग-घ-त-श–आवर्तयते। ५. ख-त-न-भ–वाग्ने°। ६. घ-श–दत्तहविष्कः स्वध्वरः सुयज्ञः।

आग्ने याहि मरुत्सखा रुद्रेभिः सोमपीतये ।
सोभर्या उप सुष्टुतिं मादयस्व स्वर्णरे ॥ १४ ॥

आ । अग्ने । याहि । मरुत्ऽसखा । रुद्रेभिः । सोमऽपीतये ।
सोभर्याः । उप । सुऽस्तुतिम् । मादयस्व । स्वः॒ऽनरे ॥ १४ ॥

हे अग्ने मरुत्सखा[1] मरुतां प्रियस्त्वं स्वर्णरे अस्माकं यजनलक्षणे कर्मणि सोमपीतये सोमपानाय रुद्रेभिः रुद्रैर्मरुद्भिः सह आ याहि आगच्छ । सोभर्याः सोभरेर्मम सुष्टुतिं शोभनां स्तुतिं चोपागच्छ । मादयस्व । स्तुतिं श्रुत्वा सोमं पीत्वास्मानं मादय[2] च[2] ॥ ॥ १५ ॥

॥ इत्यष्टमे मण्डले दशमोऽनुवाकः समाप्तं चाष्टमं मण्डलम् ॥

---

१. न-भ-मरुत्सखा मरुत्सखः । २. ब्र-न-मादयस्व ।

# संहितापदपाठशुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| २ | १ | हाता | होता |
| १४ | ५ | °षर्भूद्वू° | °षर्भुद्वू° |
| १९ | २२ | कृष्णयामम् | कृष्णऽयामम् |
| ३१ | २७ | अस्मे | अस्मै |
| ३५ | ३ | विऽभावा | विभाऽवा |
| ११९ | १५ | विप्रेभिः | विप्रेभिः |
| ११९ | २४ | अर्कैः । | अर्कैः । आ । |
| १२२ | ४ | सत्राः | सत्रा |
| १२२ | १७ | वृत्रऽतूर्ये | वृत्रऽतूर्ये |
| १३३ | ४ | नियुत्वान् | नियुत्वान् |
| १६६ | ३ | दिवेदिवे | दिवेदिवे |
| १९८ | २३ | उभे इा | उभे इति |
| २२१ | २३ | वरांस्यमिता | वरांस्यमिता |
| २३९ | २० | मित्रावरुणौ | मित्रावरुणौ |
| २४८ | १४ | मधुऽव्रते | मधुऽव्रते |
| २५२ | २३ | श्रुत्यम् | श्रुत्यम् |
| ३११ | ४ | व्युच्छान् | व्युच्छान् |
| ३३६ | ७ | रायः | रायो |
| ३७९ | २६ | विप्राः | विप्रा |
| ३८६ | १२ | °द्रातमूर्मिम् | °द्रातुमूर्मिम् |
| ४०४ | २२ | शुचयः | शुचयः |
| ४०९ | ७ | तन्व१ः | तन्व१ः |
| ४३७ | ११ | सुमतिश्चनिष्ठा | सुमतिश्चनिष्ठा |
| ४९७ | ७ | वधान | वृधान |
| ६३५ | ५ | विपन्यभिः | विपन्युभिः |
| ७५१ | ८ | विभाऽवसुः | विभाऽवसुः |
| ८८६ | ११ | अर्यऽमा | अर्यमा |
| ९५० | २० | °ञ्शिरशुमन्तः | °ञ्छिशुमन्तः |

---

# भाष्यशुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ७ | १२ | २. १. २९ | २. १. २. ९ | ४२१ | ७ | सुब्रामन्त्रिते ‘ | ‘ सुब्रामन्त्रिते |
| ७ | १३ | १. ७. ८ | १. ३. ६ | ४४५ | १८ | अविचलित | अविचलितं |
| ३८ | २ | तनकुर्वन् | तनू कुर्वन् | ४४८ | १७ | विनियोग. | विनियोगः |
| ४४ | २३ | °रादरार्था | °रादरार्था । एवं° | ४९९ | २९ | लृटि | लृटि |
| | | | विवस्त्वं | ५०४ | १७ | सच | स च |
| ४६ | ८ | अद्रहम् | अद्रुहम् | ५०५ | १२ | अवतीनां | अर्वतीनां |
| ६३ | २० | दशरात्र | दशरात्रे | ५१७ | ८ | ऋषिश्चानुक्त- | ‘ ऋषिश्चानुक्त- |
| ७० | १० | ब्रहि | ब्रूहि | | | गोत्रः ‘ | गोत्रः |
| १०० | २ | कृण्वते | कृण्वैते | ५२७ | २० | दशगुणितः | दशगुणितैः |
| ११५ | २७ | धावापृथिव्यौ | द्यावापृथिव्यौ | ५४० | २३ | रुद्रापुत्रा | रुद्रपुत्रा |
| १२१ | १४ | बहुभिरुहूतः | बहुभिराहूतः | ५५१ | १३ | सम्यकु | सम्यक् |
| १३० | १३ | स्तुत्यरायुधैः | स्तुत्यैरायुधैः | ५७५ | ५ | °मित्यर्यः | °मित्यर्थः |
| १४१ | ३० | शत्रन् | शत्रून् | ६३२ | २३ | प्रागाथ | प्रागाथं |
| २०० | ५ | °स्याष | °स्यार्षं | ६५१ | ११ | चा आभि- | च आभि- |
| ३४१ | २ | क्रतु | क्रतुं | | | मुख्येन व | मुख्येन वा |
| ३४५ | २१ | इशिषे | ईशिषे | ७०८ | ६ | य | यः |
| ३४८ | १३ | °दशम्यादिभिः | °दंशम्यादिभिः | ७१६ | १ | सोमलता | सोमलतां |
| ३७५ | १८ | ऋग्वि. २. २५ | ऋग्वि. २.३०६ | ७७४ | १८ | स्म | स्मः |
| ४०९ | २८ | प्रत्यक्षणो° | प्रत्यक्षेणो° | ७८६ | २४ | वर्तमानभिषुतं | वर्तमानमभिषुतं |
| ४१० | १७ | नियतोऽपोष्य | नियतोपोष्य | ८८९ | २ | वृष्टे° | वृष्टे° |
| ४१४ | १६ | इरयति | ईरयति | ९२३ | ११ | मरुतामपि । | मरुतामपि |
| ४१४ | २७ | सूक्त | सूक्तं | ९४२ | १६ | नाशयध्य | नाशयध्यै |